श्रीगणेशायनमः ॥ श्रीवेदव्यासायनमः ॥ श्रीगुरुभ्योनमः ॥ श्रीलक्ष्मीनारायणायनमः ॥ श्रीमदानंदतीर्थभगवत्पादाचार्येभ्योनमः ॥ ॐनमोनारायणाय ॥ ॥ यतोजन्माद्यस्यश्रुतिसुनिगमानेकविषयात्स्वतंत्रस्तंत्रज्ञोगुरुरपिगुरोर्यश्चजगताम् ॥ विमूढायत्तत्त्वंप्रकटमिहवेत्तुंसुगनसोमुकुंदंध्यायामापहतकुहकंतंस्वमहसा ॥ १ ॥ त्रिसर्गोयत्रायंल्लसतिचिदचिद्विष्णुविषयोऽनल्पोदोनानेयंविश्वतिरिवतेजोजलमृदां ॥ विशुद्धंचैतन्यंप्रकृतिविकलंयंचविततंम्परंब्रह्मात्मानंस्मरहृदयसत्यंगुरुनमम् ॥ २॥ यदीयकृतिरंजसासुमनसांसुधानंसतांसतीसकलसन्नतासकलवेदवाणीनिधिः ॥ सचित्सुखपयोनिधिःरूरारेक्षणःश्रीपतिःपराशरशरीरजःशरणमस्तुमेसंततम् ॥ ३॥ ममवचसिमंगलदेवताप्रणयतांतिसन्निदधात्वियं ॥ विलसद्दुरसीवमधुंद्विपःकमलवनमध्यइवान्वहम् ॥ ४ ॥ ' जयतिजनकःशंभोरगोजनाभसुतामणीःप्रथमकवीनांमुख्योयःसर्वजीवननायकः ' ॥ श्रुतिविततावाग्यस्यत्राह्मीप्रमाणमनाकुलंपरमविषयेसम्यक्प्रेक्षावतांनमृषाक्वचित् ॥ ५ ॥ हिगकरलसद्विंबद्योतःसुधारसराजित्वरीसममसुहृदंदयादानंदतीर्थमहामुनिः ॥ मणिगणवराःशाणोल्लीढाइवाधिसमुत्त्विषःशमदमगुणायत्रोल्लसंतिसंततमेधसि ॥ ६ ॥ चरणमलिनेदैत्यारातेर्भवार्णवांतरसत्तरी ॥ दिशतुविशदांभक्तिंमह्यंमहेंद्रतीर्थयतीश्वरः ॥ ७ ॥ क्वशब्दःकाभ्यासःश्रुतिरतिगुरोःक्वाग्रसरणीःसमीक्षापौराणीक्वखलुविबुधामत्सरधियः ॥ तथापिव्यामोहाद्गुरुगुरुकटाक्षैकशरणोमनाग्व्याकुर्वेहंभागवतपुराणंप्रगहनम् ॥ ८ ॥ आचार्यैःपरैरपिप्रविवृतेमार्गेमनश्चोदितंखद्योतस्तपनप्रकाशितपदेकिंतत्रकुर्यादिति ॥ तन्मार्गानुगमेनवाक्तनुमनःशुद्धिक्रियायैततःश्रीमद्भागवतंपुराणमतुलंव्याकर्तुकामोयते ॥ ९ ॥ तदस्यांपद्यायांझटितिकृतयांजयथे

## ॥ श्रीवेदव्यासायनमः ॥ ॥ जन्माद्यस्ययतोन्वयादितरतश्चार्थेष्वभिज्ञःस्वराट्तेनेब्रह्महृदायआदिकवयेमुह्यंतियंसूरयः ॥ तेजोवारिमृदांयथाविनिमयोयत्रत्रिसर्गोमृषाधाम्नास्वेनसदानिरस्तकुहकंसत्यंपरंधीमहि ॥ १ ॥

कृपांमहतींकुर्वंतोदैवविभुविवसंतःसदयनाः ॥ निरस्तामूयायेपरमपदमक्षिक्षितिधरोद्वहमह्वग्रीवाविपुलकरुणाःसर्वसुहृदः ॥१०॥ आनंदतीर्थविजयतीर्थौप्रणम्यमरकारिवरवचौ ॥ तयोःकृतिस्फुटमुपजीव्यप्रवच्मिभागवतपुराणं ॥ ११ ॥ अथकलिमलापनुत्तयेविधिभवपुरःसरैरमरवरैरादरात्प्रार्थितोदितिसुतबलभरपरिखिन्नधरणितलेत्रिरसमयसमाचीर्णतपसासत्यवत्यापराशरादवतीर्णोव्यासनामासुरमथनःसमुद्धृतसमुत्सन्ननिगमकल्पतरुरल्पमतिमनुजदयालुःशाखोपशाखं ²तेनविभक्तवेदस्तदर्थनिर्णयेच्छुर्विरचितब्रह्मसूत्रस्तदनधिकारिजनापवर्गायप्रकाशितपुराणसंहितोवेदांतार्थप्रकाशिकांद्वादशस्कंधसंमितामष्टादशसहस्रसंख्योपेतांभागवतपुराणसंहितांचिकीर्षुःकालदोषेणविहितानुभागवतधर्मानाविश्चिकीर्षुर्निरंतरापरोक्षितब्रह्मस्वरूपोनिरंतरायोपिप्रेक्षावच्छिक्षायैमंगलाचरणानामनेकप्रयोजनायचसर्वेष्टदेवतांनारायणाख्यामनुस्मरति जन्माद्यस्ययतइति । अत्रैवच्छद्धश्रुतेरतच्छब्दोऽध्याहार्यः अस्यजगतोजन्मादियत' यश्चार्थेष्वभिज्ञःयश्चस्वराट्यश्चब्रह्महृदाआदिकवयेतेने यंप्रतिसूरयोमुह्यंति तेजोवारिमृदांविनिमयोयथातथात्रिसर्गोऽपियत्रमृषा । तंस्वेनधाम्नासदानिरस्तकुहकंसत्यंपरंधीमहीतिसमस्तान्वयः तत्रप्रथमंपरंधीमहीत्यस्यान्वयः पश्चादाक्षावशादादितःसर्वेषामन्वयः परंपूर्णंगुणैरितिशेषः पृपालनपूरणयोरितिधातोः द्विविधाहिदेवताग्रंथारंभेनमस्कारादिमंगलक्रियामर्हति आधिकारिकीअभीष्टाचेति यथाज्योतिःशास्त्रेपीठादिलक्षणदेवताधिकारिकीनमनादिक्रियार्हा परमप्रेमादिविषयात्वभीष्टाचेति भगवांस्तूभयरूपइत्यभिप्रायेणपरमित्युक्तं परमात्माहिसकलप्राणिनांसंसारोन्मूलनायपरिपत्त्रमार्गप्रायस्थितदेवतोपेयःपुरुषार्थ

---

१ सुनियमानेकविषयादितिपाठान्तरम् । २ स्वमनसाइ०पा० । ३ अनलीकइ०पा० । ४ नितत्त्वंव्यातम् । ५ मुरद्विपइतिपाठान्तरम् । ६ ईदमथनकत्रानीत । ७ श्रुतिपवितितायस्यत्राह्मीतिपाठः । ८ तयोतेरतेण०

योन्यस्मात्सर्वस्मादंतरंयदयमात्मेतिश्रुतेः सएवपरमप्रेमविषयःपरोपिनारायणएवनान्यःकश्चित् । यदेतत्परमंब्रह्मवेदवादेषुपठ्यते । सदेवःपुंडरीकाक्षःस्वयंनारायणःपरइतिहारितेः [illegible] यतपःप्रश्नोत्तरते नदुर्वाससःप्रतिवचनेपरस्यनारायणत्वोक्तेः ब्रह्मविदाप्नोतिपरमितिश्रुतेश्च धीमहिध्यायेम जन्माद्यस्ययतइत्यादिविशेषणैःपरशब्दोक्तान्गुणान्विशिनष्टि पालनपूरणाभ्यांपथासंभवसृष्टयादयोवाक्याद् त्यूहनीयं अलौकिकवस्तुनोलक्षणोपदेशमंतरेणज्ञातुमशक्यत्वात्शशविषाणकल्पंतदित्यतोवालक्षणमाह जन्माद्यस्ययतइति अस्यप्रत्यक्षस्यजगतोजन्मआदिर्यस्यतज्जन्मादीतितद्गुणसंविज्ञानो बहुव्रीहिः यतोयस्माद्भवतीतिशेषः आदिशब्देनस्थितिसंहारानियमनज्ञानाज्ञानबंधमोक्षाश्चह्यतेनकेवलंस्थितिसंहारौ श्रुतिस्मृतिविरोधात् यथासास्नादिमान्गौरितिवृद्धोपदिष्टसास्नादिमंतंपदार्थम् श्वादिभ्योव्यावृत्तंगोशब्दवाच्यंप्रत्येति तथाजगज्जन्मादिकारणंपरमितिश्रुत्याचार्योपदिष्टंजन्मादिकंप्रत्येकंपरब्रह्मलक्षणतयाज्ञातव्यं वेदांतसूत्रेषुप्रतिपादितत्वात् ननु परस्यजन्मादिकारणत्वंकुतइ तितत्राह अन्वयादिति यतोवाइमानिभूतानिजायंते येनजातानिजीवंतीत्यादिश्रुतीनां । अहंसर्वस्यप्रभवोमत्तःसर्वंप्रवर्तते । स्रष्टापातातथैवात्तानिखिलस्यैकएवत्वित्यादिस्मृतीनांचजगत्कारणेहरावन्वयात् उपक्रमोपसंहारादितात्पर्यलिंगात् परंब्रह्मैवजगत्कारणंनान्यदितिभावः । ननु रुद्रादीनामपिजन्मादिकारणत्वंश्रूयते अतःकथंपरस्यैवेत्यवधार्यते उच्यते यद्यपिरुद्रादीनांवेदैकदेशप्रतिपाद्यत्वमस्ति तथाप्यनंतवेदकदंबप्रतिपादितत्वंविष्णोरेवसर्वेवेदायत्पदमामनंति वेदैश्चसर्वैरहमेववेद्यइत्यादिश्रुतिस्मृतिभ्यः ननुश्रुत्यादेःपिपीलिकादिलिपिवत्अप्रमाणत्वान्माणवकदृष्टशार्दूलकल्पनेनतान्निश्चयाभावादतःपरमाणुपुंजस्यैवकारणत्वमितितत्राह इतरतइति प्रत्यक्षागमाभ्यामनुगृहीतादितरस्मात्तर्कात् परब्रह्मणःकारणत्वंज्ञायते समुदायउभयहेतुकोपितदप्राप्तिरितिभगवताकृष्णद्वैपायनेनपरमाणुपुंजवादस्यनिरस्तत्वात् अत्रश्रुत्याद्यनुगृहीततर्काभावात्केवलतर्कस्याप्रतिष्ठितत्वात् ननु कार्यंकारणपूर्वकंकार्यत्वादितिकारणसामान्यमात्रसिद्धं विशेषतःकुतःसिद्धिरितिचेन्सत्यं प्रधानादेरचेतनत्वेनबुद्धिपूर्वककर्तृत्वानुपपत्तेरस्वातंत्र्याच्चाक्षित्यादेश्चेतनकर्तृकत्वंपरिशेषसिद्धं चेतनाद्धिपित्रादेःपुत्राद्युत्पत्तिदर्शनाच्चदृष्टांतेनब्रह्मादिचेतनजातंपरमचेतनाद्विष्णोरुत्पद्यतइतिसुशकोऽयंतर्कःसमुत्तिष्ठते चशब्दःसमुच्चयेवेदानामपौरुषेयत्वेनकर्तृप्रसिद्ध्यभावादसंदिग्धप्रमाणत्वेनतदनुगृहीततर्कस्यापिप्रतितर्कपराहतिर्नाशंकनीयेत्यस्मिन्नर्थेवा अनेनअथातोब्रह्मजिज्ञासा जन्माद्यस्ययतः । शास्त्रयोनित्वात् तत्तुसमन्वयादितिचतुःसूत्रीचव्याख्याता जिज्ञासैवधीमहीत्यनेनोच्यते वेदविचारनिर्णीतगुणोपसंहाररूपत्वात् इयानेवविशेषःध्यानमेवज्ञानसाधनंनकर्मादिकमित्यतोधीमहीतिपदं कर्मणःशुद्धांतःकरणस्यध्यानसंभवादिति यस्तुश्रुतिस्मृतीअनादृत्यकेवलतर्केणब्रह्मणोजन्मादिकारणत्वंविघटय्यप्रत्यवतिष्ठते सोन्वयव्यतिरेकात्मकतर्केणापहसितव्यइत्यतोवाह अन्वयादितरतइति अन्वयात् अन्वयानुमानात् इतरतोव्यतिरेकानुमानात् तेचदर्शिते चशब्दस्तूक्ततर्कस्यकेवलव्यतिरेकव्याप्तिशून्यत्वादस्यचप्रत्यक्षगृहीतव्याप्तिकत्वेनबलीयस्त्वादप्रतिहतःस्वार्थंसाधयतीत्येतस्मिन्नर्थेवर्तते ननु यथापयोंब्वादेरचेतनस्यस्पंदनादिप्रवृत्तिदर्शनात्तन्निदर्शनेनप्रधानस्यकारणत्वंकिंनस्यादितितत्राह अर्थेष्विति अर्थेषुघटपटादिष्वभितःसर्वतःअशेषविशेषाकारेणजानातीत्यभिज्ञःप्रधानस्यजडत्वेनज्ञानाश्रयत्वलक्षणासंभवान्नितरां सर्वज्ञत्वंविष्णोस्तुसर्वज्ञत्वंश्रुतिस्मृतिसिद्धं यःसर्वज्ञःससर्ववित् तान्यहंवेदसर्वाणिनत्वंवेत्थपरंतपेत्यादि नन्वस्यहेतोःसर्वज्ञेरुद्रादावपिवृत्तेरसाधकत्वमितितत्राह स्वराडिति स्वयमेवराजतइतिस्वराट् स्वस्यस्वयमेवराजानान्योधिपतिरितिवा अयंभावः यंकामयेतंतमुग्रंकृणोमीतिरुद्रादीनांश्रीप्रसादायत्तज्ञानादिगुणवत्त्वदर्शनान्ममयोनिरप्स्वं तारितिश्रियश्च विष्णवनुगृहीतज्ञानादिमत्त्वदर्शनाद्विष्णोस्त्वनन्याधीनज्ञानादिगुणवत्त्वाच्चद्रुतानांविशेषाणामनंतानांतैरज्ञातत्वान्नतेषांनिरुपचरितसर्वज्ञत्वमतोनान्येषुतस्यहेतोर्व्यभिचारइतिसएव सर्वकर्तेति नतेविष्णोजायमानः सएषसर्वेश्वरएषभूताधिपतिरित्यादिश्रुतिरनन्याधिपतित्वेसर्वाधिपत्येचमानं स्रष्टृराजांतररहितइतिवास्वराट्स्वात्मानंस्वयमेवराजयतिप्रकाशयतिनपरेच्छयेतिवा ननु श्रुतीनामनंतत्वादेकत्रहरेरन्याधीनत्वकथनसंभवादतः कुतोनिश्चयः परोनान्याधीनइतितत्राह तेनइति यःपरआदिकवयेचतुर्मुखायब्रह्मसांगंवेदंहृदास्नेहेनतेनेविस्तारितवान् तस्यसकृदुपदेशमात्रेणाशेषविशेषग्रहणसामर्थ्येऽपि वक्तव्यंब्रह्मगुरुणाचतुर्वारमथापिवे

१ परमपदंनैकस्मिन्पुस्तके । २ परोक्ततर्कस्य ।

त्युपदेशशास्त्रमनुसृत्यतेनइत्युक्तं शिष्यशिक्षायैतथोपदेशसंभवात् चतुर्मुखस्यवेदोपदेशेनहरेरनन्याधिपतित्वस्यकिमायातमितिचेन्न प्रजापतेनत्वदेतान्यन्यो विश्वाजातानिपरितावभूवेति श्रुतौचतुः
र्मुखस्यनिरतिशयमाहात्म्यकथनात्तदुपदेशाच्चस्यानन्याधिपतित्वसिद्धेः योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्माइतिश्रुतेः सकलवेदविद्योपदेशोपिसिद्धः आदिकवित्वंचब्रह्मणःकविर्यःपूर्व
सइमाचिकेतेत्यादिश्रुतिसिद्धं ब्रह्मवेदस्तपस्तत्त्वंब्रह्माविप्रःप्रजापतिरित्यभिधानं हृत्स्नेहेमनसिस्निग्धेसुहृद्धंधौहरावपीतिच नप्रहेलिकावदुपदेशइतिद्योतनायहृदेत्युक्तं तेनेब्रह्मेतिसर्वज्ञत्वेयुक्त्यंतरं
सकलचेतनाराश्युत्तमस्यचतुराननस्योपदेष्टुःशार्ङ्गपाणेःसर्वज्ञत्वंन्यायप्राप्तमितिभावः वेदाहमेतंपुरुषंमहांतमादित्यवर्णंतमसःपरस्तादितिश्रुतौनारायणविषयज्ञानेस्वातंत्र्यकथनात्तदुपदिष्टज्ञानेनैवतज्ज्ञानं
कथंसंगच्छतइत्याशंक्ययमेवैषवृणुतेतेनलभ्यइतिश्रुतेः तत्प्रसादायत्तज्ञानेनैतद्विषयंज्ञानंनतुस्वायत्तं अन्यथाज्ञानमेवनस्यादुक्तहेतोरित्यभिप्रेत्याह मुह्यंतियंसूरयइति भूतभविष्यद्वर्तमानब्रह्मादयः
यत्प्रसादमंतरेणमुह्यंति मुहवैचित्त्यइतिधातोश्चित्तिर्ज्ञानंनजानंतिकिंचिदन्यथाचजानंतीत्यर्थः तेनेत्युक्तेरस्माद्ब्रह्मादिचेतनराश्यांचित्यमहिमामहीधरः इतिप्रतीयते नन्दीश्वरःसृष्ट्यादौप्रवर्तमानःप्र
योजनार्थीभवति अन्यथावा नप्रथमः यत्प्रयोजनार्थंप्रवर्ततेतस्यतत्पूर्वंतदभावादपूर्णत्वेनाशक्तत्वात्सृष्ट्यनुपपत्तेः नाद्वितीयःप्रवृत्तिमात्रस्यस्वप्रयोजनोद्देशेनदृष्टत्वाद्वृथातदनुपपत्तेरतोमायामयीसृष्टिरे
ष्टव्येत्यतआह तेजोवारीतितेजोवारिमृदांविनिमयोयथातथात्रिसर्गः यत्रयस्मिन्भगवतिविषयेमृषैवपूर्वाप्तसप्रयोजनप्रापकोनभवति कथंतर्हिप्रवृत्तिरितिचेत् उच्यते देवस्यैषस्वभावोयमाप्तकामस्यकास्पृ
हा लोकवत्तुलीलाकैवल्यमितिश्रुतिसूत्रबलादाप्तसमस्तप्रयोजनस्यहरेःलीलयैवप्रवृत्तिरितिभावः जीवेश्वरजडानांसर्गस्त्रिसर्गः यथाएकमेवमूलंतेजःस्वकार्येषुपार्थिवादिपदार्थंपुनर्बहुधाभूत्वाप्रविशतिबहिश्च
मथनादिनाविर्भवतितथेश्वरोपिजगत्सृष्ट्वाबहुरूपीभूयजगदंतःप्रविशति बहिश्चभूतानुकंपयावासुदेवादिबहुरूपआविर्भवति अयमीश्वरसर्गः दीपादीपांतरोत्पत्तिर्यथातथेश्वरसर्गइतिवा यथासूर्यादि
तेजसांजलाद्युपाधिनिमित्तैर्बहूनिप्रतिबिंबानिसूर्यकांतादीनिसूर्यादेर्जायंते तथैवसूक्ष्मस्थूलशरीराद्युपाधिनिमित्तैःप्रतिबिंबभूताजीवाहरेरुत्पद्यंते एषजीवसर्गः यथाकुलालोमृदमुपादानीकृत्यघटादीन्
सृजति तथेश्वरोजडप्रकृतिमुपादायमहदहंकाराद्यशेषजडपदार्थान्सृजत्येषजडसर्गः अनेनमायामयीसृष्टिरित्यस्यकिमायातमितिचेदुच्यते यत्रेश्वरइतिविशेषणादन्यत्रजगत्यमृषामिथ्यानभवति द
थाचयोजना यथातेजोवारिमृदांविनिमयः कार्यंअर्थक्रियायोग्यस्वात्सदसद्विलक्षणोनभवति तथायत्रयदाधारतयाक्रियमाणस्त्रिसर्गोमिथ्यानभवति अर्थक्रियोपपत्तेरेवामिथ्यात्वबाधिकेतिभावः न
नुतेजःकार्यंकेशोड्रकादि वारिकार्यंफेनादि मृत्कार्यंघटादि यथामिथ्यातथायत्रजगन्मिथ्येत्यर्थःस्यात्तथाचश्रुतिः वाचारंभणंविकारः अनुमानंचविमतंमिथ्यादृश्यत्वादित्यतोमायामयीसृष्टिरित्यत
आह धाम्नेति स्वेनधाम्नास्वरूपज्ञानमहिम्नासदानित्यंनिरस्तंकुहकंइंद्रजालादिमायायेनयस्यवासतथोक्तःतं यःसर्वज्ञःअथैनमाहुःसत्यकर्मेति विश्वंसत्यमित्यादिश्रुतिविरोधादुदाहृतश्रुतेरर्थांतर
त्वसंभवादनुमानस्यव्याप्तिशून्यत्वेनतद्विरोधाभावान्नित्यनिरस्तेंद्रजालोविष्णुर्मायामयसृष्टिंनविदधाति किंतुसत्यामेव लोकेवाऽसमर्थःसन्निंद्रजालादिकंसृजति नतुसमर्थःविष्णुस्तुनित्यपरिपूर्ण
शक्तिःकिमर्थंतत्करोतीत्यर्थः मुक्तव्यावृत्तयेसदेत्युक्तंतेषांमुक्तेःपूर्वंबंधभाक्त्वेनकुहकत्वसंभवात् ननुविष्णोःसदानिरस्तकुहकत्वेमुक्तामुक्तव्यावृत्तिर्घटते तदेवकुतइतितत्राह सत्यमिति सत्यंनिर्दुःखनित्यनिर
तिशयानंदाद्यनुभवरूपं सच्छब्दउत्तमंब्रूयादानंदंतीतिवैवदेत् । येतिज्ञानंसमुद्दिष्टमितिवचनान्नित्यनिरस्तकुहकत्वेनमुक्तव्यावृत्तिर्युज्यतइतिभावः एतदुक्तंभवति उपक्रमादितात्पर्ययुक्त्युपेतसर्वश्रुतिस्मृ
तितात्पर्यपर्यालोचनयाजगत्सृष्ट्यादिकर्तृत्वात्सर्वज्ञत्वादनन्याधिपतित्वाच्चतुर्मुखज्ञानोपदेष्टृत्वात्स्वानुग्रहमंतरेणदुर्ज्ञेयत्वात्स्वप्रयोजनानुद्देशेनकेवललीलयैव जगत्सर्जनादिप्रवृत्तिमत्त्वात्स्वतएवनित्यानिर
स्तेंद्रजालत्वेनसत्यमहिमत्वान्निर्दुःखनित्यानिरतिशयानंदाद्यनुभवरूपत्वाच्चसर्वगुणपूर्णोविष्णुःसर्वैर्ध्येयइतिवातात्पर्यार्थः ननुधीमहीतिछांदसः प्रयोगःकस्मात्कृतः उच्यते गायत्रीप्रतिपाद्यंनारायणाख्यं
परब्रह्मैवनसूर्यः तस्यचक्षोःसूर्योअजायतेतिश्रुत्यातदंगजननोक्तेरितिदर्शयितुं यथावेदाध्ययनोपक्रमेगायत्र्यभिधीयते विशिष्टफलहेतुत्वात्तथाभागवतोपक्रमेइतिवागायत्र्याद्यशेषवेदप्रतिपाद्योनारायणएव
भागवतेप्रतिपाद्यतइतिवा इतरेषांभगवत्कृतत्वेनतत्परत्वेपितद्व्यावृत्तयेइतिवा इतरेभ्योप्यस्यमाहात्म्याधिक्यप्रकटनायेतिवा धीमहीतिछांदसंपदंप्रायुंक्तभगवान्बादरायणः तथाचमत्स्यपुराणपुराण

---

१ तस्माद्ब्रह्मादि०इ०पा० २ महीधरप्रसा० । ३ मुक्ताइत्यक्षरत्र्‌ किमि०

ज्ञानमाहात्म्येप्रस्तावमाहात्म्यतल्लक्षणंप्रदर्श्यते यत्राधिकृत्यगायत्रींवर्ण्यतेधर्मविस्तरः। वृत्रासुरवधश्चापियत्तद्भागवतंविदुः। लिखित्वातच्चयोदद्याद्धेमसिंहसमन्वितं। पौर्णमास्यांप्रौष्ठपद्यांसयातिपरमंपदं। अष्टादशसहस्राणिपुराणंतत्प्रकीर्तितमिति। स्कांदेच ग्रंथोष्टादशसाहस्रोद्वादशस्कंधसंमितः। हयग्रीवब्रह्मविद्यायत्रवृत्रवधस्तथा। गायत्र्याचसमारंभोयत्रभागवतंविदुरिति। गारुडेच अर्थोयंब्रह्मसूत्राणांभारतार्थविनिर्णयः गायत्रीभाष्यरूपोऽसौवेदार्थपरिबृंहितः। पुराणानांसाररूपःसाक्षाद्भगवतोदितः। द्वादशस्कंधसंयुक्तःशतविच्छेदसंयुतः। ग्रंथोऽष्टादशसाहस्रःश्रीमद्भागवताभिधइति। अन्येचतुर्विंशत्साहस्रंभागवतमितिवदंति। असंप्रदायविदांवचनमित्युपेक्षणीयं। गायत्र्यर्थोप्यनेनश्लोकेनसूचितः तथाहि तत्सवितुर्देवस्येत्यस्यार्थोजन्माद्यस्ययतइत्यादीति वामंवरेण्यंपरमित्यभिधानाद्वरेण्यमित्यस्यव्याख्यानंपरमिति। भर्गइत्यस्यव्याख्यानंधाम्नास्वेनसदानिरस्तकुहकमिति भर्गःसकलदुरितभर्जनंज्योतीरूपं तत्पदार्थव्याख्यानंस्वराडिति धियोयोनःप्रचोदयादित्यस्यविवरणंतेनेब्रह्महृदायआदिकवयइति यःसविताजन्मादिकर्तानःअस्माकंधियःधर्मादिविषयाबुद्धीः उपलक्षणमेतत् सर्वेंद्रियाणि इत्यादि स्वतत्त्वविषयंज्ञानंगुरुमुखेनोपादेश्यतज्ज्ञानसाधनानिसर्वाणिकरणानिप्रचोदयात्प्रचोदयातेस्वाभिविषयतयाप्रेरयति तस्यसवितुर्देवस्यक्रीडादिगुणसंपन्नस्यनारायणस्यअनन्याधीनतयातत्त्वाद्वयात्सत्वाच्चवरेण्यंसकलगुणाकरतयापरममंगलंभर्गः ज्योतीरूपंभरणगमनयोगात्सर्वज्ञत्वाद्यु ज्ञानादिगुणरचितचरणकराद्यवयवमितियावत् धीमहिध्यायेमज्ञानमेवतत्प्रीतिजनकंनकर्मादिकंतस्मात्तच्चिंतनंकर्तव्यमित्यर्थः। यत्तु केनचिद्वेदसमितैवंविधंग्रंथव्याख्यानारंभसमयेप्रजल्पितं पदच्छेदःपदार्थोक्तिर्विग्रहोवाक्ययोजना आक्षेपश्चसमाधानमितिव्याख्यानलक्षणं। अतिरिक्तपदंत्याज्यंहीनंवाक्येनिवेशयेत्। विप्रकृष्टंचसंदध्यादानुपूर्व्यंचकल्पयेत्। लिंगधातुविभक्तिंचयोजयेच्चानुलोमतः। वाक्यार्थस्यानुसारेणतेषांचप्रत्ययोपिचेति तदनुपासितग्रंथसंप्रदायवित्सज्जनचरणैरुपेक्षितमितिविदुषांपरिषदिसारस्यआधत्तेनहि यथावेदादावकरोदित्यत्राकरोदितिपदंअशक्यनिवेशनं तथात्राप्यतिरिक्तंपदंसंत्यज्यहीनमप्रयोज्यंयतएतद्व्याख्यानंतल्लक्षणंनभवति तस्माद्यथास्थितग्रंथव्याख्यानमेवसज्जनचित्तरंजनमितिसंतोष्टव्यं। ननु नायंश्लोकार्थःकिंत्वन्यएव तथाहि तंसत्यंधीमहि ननु मृत्तिकेत्येवसत्यमितिमृदादेरपिसत्यत्वंश्रूयते तद्वदस्यापीतितत्राह परमिति मृदादेःकार्यापेक्षयासत्यत्वंअयंतुपरमार्थिकःसत्यः तत्सत्यंसआत्मेतिश्रुतेः परस्यसत्यस्यावाङ्मनोगोचरस्यकथंध्यातृध्यानध्येयादिव्यवहारगोचरत्वमित्याशंक्याह जन्मादीति अस्यजगतोजन्मस्थितिभंगायतःपरास्सत्यात्तंधीमहीत्यर्थः यतोवाइमानिभूतानिजायंतइतिश्रुतिसिद्धजगत्कारणत्वरूपेणावाङ्मनोगोचरस्यापिध्यातृध्यानादिव्यवहारोघटतइतिभावः ननुब्रह्मणःसिद्धरूपत्वात्प्रमाणांतरागोचरत्वमतस्तत्रवेदांतानामनुवादकत्वादप्रामाण्यमित्याशंक्याह अन्वयादिति। वेदांतानांब्रह्मण्येवान्वयात्तात्पर्यादित्यर्थः तथाचश्रुतिस्मृती सर्वेवेदायत्पदमामनंति वेदैश्चसर्वैरहमेववेद्यइतिप्रमाणांतरासिद्धत्वेनह्यननुवादकत्वंसिद्धमित्यपिज्ञातव्यं नकेवलंश्रुत्यन्वयात् स्मृत्यन्वयाच्चेत्याह इतरतश्चेति अहंसर्वस्यजगतःप्रभवःप्रलयस्तथेतिस्मृतितश्चेत्यर्थः अथवाप्रतिपदोक्ताविवक्षितार्थसिद्धयेहेतुमाह अन्वयादितरतश्चेति अस्तिप्रकाशतेइतिब्रह्मणश्चकार्यप्रपंचेमृदादेरिवघटादौसमन्वयादितरतोप्रकाशव्यतिरेकेणकदाचिदपिकस्याप्यप्रतिभासान्मृदादिव्यतिरेकेणघटादेरिवेत्यन्वयव्यतिरेकौदर्शितौ अथवा ब्रह्मणिकारणापन्नेमहदादिकार्यदर्शनादन्यथाऽदर्शनादितिसत्तास्थित्योरन्वयव्यतिरेकौदर्शितौ ननु तर्हिसांख्यपरिकल्पितप्रधानमेवजगत्कारणमस्तुकिंब्रह्मणेतितत्राह अर्थेष्वभिज्ञइति उत्पाद्यसर्वपदार्थेष्वभिज्ञःसःअभितःसर्वतःसर्वमिदंजानातीति एवंविधस्यैवकारणत्वंनेतरस्यप्रधानस्यजडत्वान्नसर्वज्ञत्वं तथाच यःसर्वज्ञइतिश्रुतिःतर्ह्यर्थेष्वभिज्ञानांजीवानामेवजगत्कारणत्वमस्त्वित्याशंक्याह स्वराडिति स्वयमेवराजतइतिस्वराट् जीवानांपरिच्छिन्नज्ञानत्वेनपराधीनत्वान्नस्रष्टृत्वंसंभवतीत्यर्थः एषसर्वेश्वरःएषसर्वलोकपालइतिश्रुतेः नन्वीश्वरस्यापिनतस्यकार्यंकरणंचविद्यतइतिश्रुत्याकार्यकारणाद्यभावात् कथंसर्वज्ञत्वमितितत्राह तेनेब्रह्मेति आदिकवयेब्रह्मणेयःब्रह्मऋग्वेदादिलक्षणसांगवेदंहृदामनसामनोमात्रेणसाधनांतरनिरपेक्षतयातेनेस्वरमात्रावर्णपदवाक्यादिक्रमेणविस्तारितवान् ब्रह्मणउपाधिभूताबुद्धिर्निर्मायतत्रवेदंप्रकाशितवानित्यर्थः अथवाहृदोपनिषदासहसंकल्पमात्रेणकार्यकारणसंबंधरहितोपिभगवान्सर्वांतर्यामीब्रह्मादिकार्यकारणसाक्षित्वेनसर्वज्ञइत्यर्थः एवंजगत्कारणेसच्चिदानंदात्मकेवेदैकवेद्येनिरवद्येसर्वेश्वरेपरैरुद्भाव्यदोषकलापिनास्तीत्यभिधत्ते मुह्यंतीति यमितिसूरयःकापिलादयःशास्त्रप्र

१ अविदुषा परि० इ० पा०।

णेतारः मुह्यंतीत्युक्तेतत्प्रणीतशास्त्रस्य निर्मूलत्वेनाप्रामाण्यात्तद्विरोधिग्रंथो नास्तीत्यर्थः नानाऽसत्तर्ककलिलांतःकरणदुरवग्रहवादिनां विवादानवसरे ऽउपरतसमस्तमायामये भगवति कोऽनुद्भवः इति स्तोके॰ अतःपरमसत्यादप्युत्पन्नस्य जगतः कुतः सत्यत्वं किंतु मिथ्यात्वमेवेति दर्शयति तेजोवारीति विनिमयः कार्यं तेजोविनिमयः केशांड्रकादिः वारिणो विनिमयः हिमकरकादिः मृदो विनिमयो धन्वादि यथा येन प्रकारेण तथा कारणसत्ताप्रतीतिव्यतिरेकेण कार्यस्य पृथक्सत्ताप्रतीतिशून्यत्वमेवात्र मिथ्यात्वं तद्वत्तेजोवारिमृदामपि कारणसत्ताप्रतीतिव्यतिरेकेण कार्यस्य पृथक्सत्ताप्रतीत्यभावान्मिथ्यात्वमि त्यर्थः किंच त्रिवृत्कृतानां वोभयेषां दृष्टांतदार्ष्टांतिकव्याजेन मिथ्यात्वं कथितमिति संप्रदायविदामभिप्रायः। ननु ब्रह्मणो जगत्कारणत्वे क्रियाकारकादिसंबंधादसंगोऽह्ययं पुरुष इति विरुध्येतेत्यत आह तेजोवा रीति त्रिसर्गस्त्रयाणां सर्गः तेजोवारिमृदां सर्गः उपलक्षणं चैतत् पंचभूतानां सृष्टिः यत्र मृषा कथं यथा तेजोवारिमृदादिनिमयो मिथ्या तथा जगदपि मिथ्येत्यर्थः वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव स त्यमिति श्रुतेः इदानीमेवंविधप्रपंचकारणत्वेन कल्पितमायासंबंधनिबंधनं किंचिदपि चिद्रूपपरमसत्यात्मके ईश्वरे स्वदृष्ट्या वस्तुगत्यापि नास्तीति दर्शयति धाम्नेति धाम्ना प्रकाशेन स्वेन स्वरूपभूतेनात्मचै तन्येनोपचारतः कारणत्वेन कल्पितेन सदा सर्वदा निरस्तं निराकृतं कुहकं कपटाख्यं येन सत तथोक्तः तं सदेति जीवाद्वैलक्षण्यप्रदर्शनाय अर्थादसंगत्वं कूटस्थत्वं चोक्तं तस्मादेकमेव ब्रह्मोपाहितानुपाहितभेदेन द्वेवा व ब्रह्मणो रूपे मूर्तं चैवामूर्तं चेति श्रुत्या प्रतिपाद्यते तत्र सगुणब्रह्मोपासनार्जितेन ज्ञानेन शुद्धांतःकरणस्य निर्गुणब्रह्मोपास्तौ बुद्धिरुपतिष्ठते ततश्च सकलं स्वात्मानं पश्यन्नात्मन्यतिरिक्तं किंचिदप्यपश्यन्निर्गुण एवावतिष्ठते इत्येषोऽर्थोऽनेन प्रतिपाद्यते नापरोऽप्रामाणिक इति तदेतत्कंठशोषणप्रलापज्वलनज्वालातुल्यमिति न परीक्षकाः क्षणमपि कटाक्षेण प्रेक्षंते पूर्वापरपर्यालोचनया स्वोत्प्रेक्षितयुक्तिवि

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ॥
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् २

रुद्धत्वाच्छ्रुतिस्मृतीनामतात्पर्यार्थत्वात्प्रत्यक्षादिप्रमाणप्रहरणप्रहतशिरस्कत्वादाचार्यैस्तत्र तत्र निराकृतत्वाच्छ्रुत्यादीनां मिथ्यात्वपरत्वे विरोधस्य दर्शितत्वाद स्मदुक्तार्थे बहुप्रमाणसंभवाद्ग्रंथबाहुल्यभयान्नतन्नि राकरणं प्रपंच्यते नहि अपरस्परसंभूतं किमन्यत्कामहैतुकमिति वदतां संप्रदायविस्त्वामिति १ ननु जन्माद्यस्य यत इत्यनेन सकलपुराणार्थस्य संक्षेपतो दर्शितत्वात्किमुत्तर श्लोकेनेत्यतो ग्रंथारंभे मंगलाचरण युक्त्या नारायणस्य प्रस्तुतत्वं न तु साक्षाद्विषयत्वेन विषयस्त्वन्य एवेति शंकानिरासार्थं विषयतत्साधनाधिकारिप्रयोजनानि द्वितीयश्लोकेन दर्शयति धर्म इति ननु यदिष्टसाधनत्वावबोधकं प्रायस्तदेव प्रमाणत योपादेयं अतः कथमस्य ग्रंथस्येत्यत आह धर्म इति अत्र श्रीमद्भागवते प्रोज्झितकैतवः परमो धर्मः प्रतिपाद्यते अत्र श्रीमद्भागवते निर्मत्सराणां सतां वेद्यं वास्तवं शिवदं तापत्रयोन्मूलनं वस्तु प्रतिपाद्यते किं विशि ष्टे महामुनिकृते अपरैः किं वा शुश्रूषुभिः कृतिभिः अत्र श्रीमद्भागवते अभ्यस्यमाने ईश्वरः सद्यस्तत्क्षणात् हृदि अवरुध्यत इत्येकान्वयः अत्रास्मिन् श्रीमद्भागवते श्रीमच्छब्देनाम श्रूयमाणरमणीयत्वपाऽर्थपर्यालोचन याचास्येतरेभ्यः आधिक्यं तथाचोक्तं राजंते तावदन्यानि पुराणानि सतां गणे। यावन्न दृश्यते साक्षाच्छ्रीमद्भागवतं परमिति ध्रियते अनेन अधः पतन्पुरुष इति धर्मः धारयतीति धरो भगवान्समीपतो ज्ञायते अनेनेति वा वृधातिकर्तारं रमयतीति मिनुते हिनस्ति पापमिति वा भगवतः प्राप्तिसाधनभूतः ननु धर्मोऽन्यत्रापि प्रतिपाद्यते किमत्रैवेति तत्राह प्रोज्झित इति प्रोज्झितकैतवः कितवस्य भावः कैतवं प्रकर्षेणोज्झितं कैतवं येन स तथोक्तः कितवो नाम लोके मनस्यन्यदभिसंधायान्यदभिधत्ते अन्यदेवाभिचरतीति तद्वदत्रापि भगवत्प्रीतिमंतरेण स्वर्गादिफलं मनस्यनुसंधाय भगवद्गुणप्रतिपादनलोलुपनिगमार्थमन्यथा वदन्स्वात्मानो देहेंद्रि याणामीश्वराधिष्ठितत्वमीश्वरनियम्यत्वं निगूह्य हरेः कारयितृत्वं फलदातृत्वमपि अवगणय्याहमेवेदं करिष्ये ऽर्थी समर्थो विद्वानहमेव स्वतंत्र इति बुद्ध्या वा युक्तः कितवः तेन क्रियमाणो धर्मः कैतव इत्युच्यते अतोऽफ लकामनयैव धर्मः कर्तव्य इत्ययमर्थोऽत्र प्रतिपाद्यत इत्यर्थः तत्कर्म यन्न बंधाय सा विद्या या विमुक्तय इति श्रीविष्णुपुराणे। तर्हि तावतापूर्वत इतितत्राह परम इति यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्त

१ तर्कलीनान्तःकरण इ॰पा॰ । २ सकलपुरुषार्थस्य इ॰पा॰ । ३ मनुते इ॰पा॰ ।

स्यसि कौंतेयतत्कुरुष्वमदर्पणमितिस्मृतेः भगवदर्पणतःपरमोभवतीत्यर्थः किंवपरःपरमात्मामीयतेऽनेनेत्येतदभिप्रायेणपरमइत्यभिधायिपरोरिपरमात्मनोरित्यभिधानात् सएव शत्रुःसंसारः मीयतेप्रक्षीयते इतिवा मीञ्हिंसायां प्रमीयाहिंसाचसंज्ञपनमित्यभिधानं किंचयतोअधिकंनमःसुखहेतुर्भवतिसपरमोधर्मः सचभक्तियोगलक्षणएव तथाचभारतेभीष्मयुधिष्ठिरसंवादे कोधर्मःसर्वधर्माणांभवतःपरमोमतः। इतिपृष्टे एषमेसर्वधर्माणांधर्मोधिकतमोमतः यद्भक्त्यापुंडरीकाक्षंस्तवैरर्चेन्नरःसदेति उक्तंच एतावानेवलोकेस्मिन्पुंसांधर्मःपरःस्मृतः भक्तियोगोभगवतितन्नामग्रहणादिभिः नृणामयंपरोधर्मःसर्वेषांसमु दाहृतःत्रिशल्लक्षणवान्साक्षात्सर्वात्मायेनतुष्यतीतिस्वोक्तेः केषामधिकारःकथंसाक्षाद्विषयइतितत्राह निर्मत्सराणामित्यादिनाभावप्रधानोनिर्देशःनिर्गतंमात्सर्यंयेषांतेतथोक्ताःतेषांसतांप्रशस्तकर्मणांपुरुषा णां सतामपिकचित्कचिन्मात्सर्यंस्यात्तन्नकर्तव्यंस्वोत्तमेष्वित्यतोनिर्मत्सराणामित्युक्तंज्ञेयं कृद्योगेषष्ठीति सतामिति वेदनंज्ञानपेवनकर्मादिकमित्यतोवेद्यमित्युक्तं वास्तवनिरस्तदोषंपूर्णगुणं व स्तुअप्रतिहतंनित्यंअप्रतिहतनित्यत्वेनवसनशीलत्वादित्यर्थः दुःखनिवृत्तिसुखप्राप्तिलक्षणस्यपुरुषार्थत्वात्तदभावात्किमनेनेतितत्राह शिवदमिति परमानंदंददातीतिच तापत्रयोन्मूलनं आध्यात्मिकादि सकलदुःखनिवर्तकंच वेद्यावेद्यस्यसर्वस्यमुनिःसद्भिरुदाहृतइत्यभिधानान्मुनयोब्रह्मादयःतेभ्योप्यतिशयितसार्वज्ञान्महामुनिर्व्यासःसाक्षान्नारायणःकृष्णद्वैपायनंव्यासंविद्धिनारायणंप्रभुमितिवचनं तेनकृ तेप्रणीते ननुकिमितिईश्वरतुष्टिकरोभक्तियोगलक्षणोधर्मईश्वरश्चात्रप्रतिपाद्योनधर्मादिरितितत्राह किंवेति भक्तियोगलक्षणधर्मस्यहरेरपरोक्षज्ञानमुत्पाद्यतत्प्रसादांतरंगसाधनत्वेनापवर्गलक्षणानश्वरफल हेतुत्वाद्बहिर्मुखमनोरंजकत्वेनस्वर्गादिक्षयिष्णुवत्फलमुत्पाद्यसंसारावृत्तिहेतुत्वात्धर्मादिकथनैःकिंवाप्रयोजनंनकिमपीत्यतःतानंतरेणभक्तियोगलक्षणधर्मस्तद्विषयईश्वरश्चात्रप्रतिपाद्यतइत्यर्थः। ननुदृष्टफ लप्रवृत्तिद्वाराऽदृष्टफलप्रवृत्तिदर्शनात् किमत्रदृष्टफलमितितत्राह ईश्वरइति अस्मिन्भागवतशास्त्रेसम्यगभ्यस्यमानेकृतिभिःशिक्षितबुद्धिभिःशुश्रूषुभिः मनोवाक्कर्मभिः गुर्वादिपरमपुरुषपरिचर्याकर

## निगमकल्पतरोर्गलितंफलंशुकमुखादमृतद्रवसंयुतम् ॥ पिबतभागवतंरसमालयंमुहुरहोरसिकाभुविभावुकाः ॥ ३ ॥

णकुशलैःसाधनसामग्र्युपेतैरेभिःईश्वरःलक्ष्मीशादिचेतनगणाद्वरउत्तमःतत्प्रवर्तनशीलोवापरमात्माहृदिहृदयकमलेसद्यःशीघ्रंतत्क्षणात्कालव्यवधानमंतरेणअवरुध्यते भक्तिशृंखलयाबद्धोदृश्यतइत्य र्थः अत्रसद्यःतत्क्षणशब्दावधिकारिविशेषद्योतकतयाप्रयुक्तौ येसाधनसामग्रीमंतस्तेषांयस्मिन्क्षणेग्रंथोपक्रमस्तस्मिन्क्षणएवभगवान्दृश्यते तदुक्तं शनकैर्भगवल्लोकान्नृलोकंपुनरागतइति येभाविष्य त्साधनसंपत्तिसंपादनयोग्यास्तेषामपिसद्यःसाधनसामग्र्यांसत्यांदृश्यते यन्नियतंकालांतरभावितज्झटितिभवत्येवेतिचवक्तुंशक्यत्वाद्भक्तियोगलक्षणधर्मेश्वरौविषयतयानिर्मत्सरसदाधिकारिभि र्भाग्यंनि र्दुःखपरमानंदाख्यंप्रयोजनमित्येतत्त्रितयमत्रप्रतिपाद्यतइत्यभिप्रायेणात्रेतित्रिशःकथितं नतुसगुणब्रह्मतत्तुष्टिकरःपरमधर्मःनिराकारंनिर्गुणंब्रह्मचेतित्रितयाभिप्रायेणात्रेतित्रित्वमिति कर्मदेवब्रह्मकांडा र्थोप्यत्रैवनिर्णीतइतिवा धर्मइतिकर्मकांडार्थः निर्मत्सराणांसतामितिदेवताकांडार्थः देवतानामेवमात्सर्यराहित्येनमुख्यसत्त्वेनोत्तमाधिकारित्वाच्च वेद्यमितिब्रह्मकांडार्थः तस्मान्नारायणावतारेण सर्वज्ञतमेनकृष्णद्वैपायनेनाप्ततमेनप्रणीतत्वेनप्रमाणतमत्वादिदंश्रीमद्भागवतंसर्वमुमुक्षुभिर्निरंतरमभ्यसनीयमितिसिद्धम् २ एवंज्ञातफलानामपिप्रेक्षवताप्रशंसाविधिभ्यांभागवतशास्त्रश्रवणाभ्यासेक्षि प्रप्रवृत्तिःस्यादितिप्रशस्यविधत्ते निगमकल्पतरोरिति भुविभावुकारसिकाः यन्निगमकल्पतरोर्गलितंशुकमुखादमृतद्रवसंयुतंभागवतंफलंतस्यरसमालयंमुहुःपिबतेत्येकान्वयः मर्त्यलोकेभवनशीलारसज्ञा यूयंनिगमयतिनितरांज्ञापयत्यपेक्षिताशेषपुरुषार्थानितिनिगमोवेदःसएवकल्पतरुःकल्पितंसंकल्पितंभक्ताकांक्षितंतरतिवितरतिददातीतिकल्पतरुःसुरपादपःउपसर्गःस्वयंधातुलीनमर्थंप्रकाशयतिनस्वतउ त्पादयतीतिवृत्तिकारवचनदर्शनात्तरतिर्दानार्थोपिभवति विश्राणनंवितरणंस्पर्शनंप्रतिपादनंइत्यभिधानाच्च तस्माद्व्यासनाम्नाभयागलितंपातितं शिवावतारस्यभत्पुत्रस्यशुकनाम्नोमुनेर्मुखात्सरीक्षि तेप्रवचनादमृतद्रवेणसंयुतंपूर्वमप्यमृतवत्द्रवसंयुतं पश्चाच्छुकाचार्यमुखप्रवचनेनातीवद्रवीकृतमित्यर्थः तथाचपद्मपुराणे अंबरीषप्रतिगौतमवचनं अंबरीषशुकप्रोक्तंशृणुभागवतंसदा। पठस्वस्वमुखेनापिय

१ मयाशातितं गलित पा० इतिवापाठः।

दीच्छसिभवक्षयामिति भागवताख्यंफलंनिष्पन्नंपक्वमितियावत् तस्यफलस्यमधुरंरसंलिंगशरीरमोक्षपर्यंतंमुहुःपरावृत्यश्रवणांजलिपुटैःपिबतपानंकुरुतश्रवणादिनाऽस्वादयतेत्यर्थः अहोइतिवा ग्र
नुन्मुखीकरोतिअस्यफलस्यामृतरसास्वादसुखानुभवंपश्यतेतिरसशब्दस्यतिक्तादिषुषट्सुवृत्तावप्यमृतद्रवेत्यादिस्वोक्तेस्तदन्यथानुपपत्यामधुररसोग्राह्यः पानप्रारंभसमयेऽतिमधुरएवायंरसःइतिवाऽ
होइति निगमकल्पःवेदाख्यकल्पवृक्षःकल्पःसुरपादपेपिसंप्रोक्तइतिवचनात्तमवतारयतिप्रकाशयतीतिनिगमकल्पतरुः तस्याच्छुकाचार्याननात् गलितंव्याख्यातंपरीक्षितेइतिशेष अमृतंकैवल्यंत
स्यद्रवोगलितःतथायुक्तंकैवल्यप्रापकमितियावत् रससंपत्तेर्निवासस्थानंभागवतंफलंपिबतेतिवाअत्रपिबतेर्भक्षणार्थः अनेकार्थत्वाद्धातूनांनचायमाचार्योक्तोर्थोनेत्यश्रद्धेयं चतुर्मुखमुखलेखबुद्धिगोच
रापरिमितार्थभागवततात्पर्यार्थदर्शयतां पूर्णमतीनामाचार्याणामप्ययंकश्चित्बुद्धिसमुद्रतरंगइतिनिश्चित्यवक्तुंशक्यत्वात् भुविगलितमितिवा देवलोकेदेवैःपीयमानंसज्जनमनुजकृपयाभुविपातित
मित्यर्थः ३ ननु ब्रह्मज्ञानेनवामुक्तिःप्रयागमरणेनवा । अथवास्नानमात्रेणगोमत्यांकृष्णसन्निधाविति स्मृतेः प्रकारांतरेणापिपुरुषार्थःस्यात्किमनेनेत्यतोनेनैवपुरुषार्थोनान्येनेतिख्यापनयाऽस्याशिष्टपरि
गृहीतत्वज्ञापनाय श्रोतृप्रवक्तॄणांमहापुण्यफलवत्त्ववेदनायचशौनकादिमुनिवरसूतप्रश्नप्रतिवचनरूपामाख्यायिकामाह नैमिषइति शौनकादयऋषयःआनैमिषक्षेत्रेनैमिषेस्वर्गायलोकायसहस्रसमंसत्र
मासतेत्यैकान्वयः शुनकस्यापत्यंशौनकःतदेवतस्यनामशौरिरितिवत्सआदिर्येषांतेतथोक्ताः ऋषयस्त्रिकालदर्शिनः मंत्रद्रष्टारोवाअनिमिषक्षेत्रेश्रीनरहर्यादिसुरवरसंनिधानावासेनिमिषाअपिसेव्य
फलाःवृक्षविशेषाःतस्मिन्संतीतिनैमिषं चित्रक्वानिमिषोनेमिश्चंचुलोथायुगच्छदइत्यभिधानात् विशिष्टक्षेत्रदर्शनायदेवप्रेरितस्यसुदर्शनस्यनेमिर्यस्मिन्विशीर्यतेतत्तन्निमिषंतदेवनैमिषंइतियत्तार्चितंयं निमिष

नैमिषेऽनिमिषक्षेत्रेऋषयःशौनकादयः ॥ सत्रंस्वर्गायलोकायसहस्रसममासत ४ तएकदातुमुनयःप्रातर्हुतहुताशनाः ॥ सत्कृतंसूतमासीनंपप्रच्छुरिद
मादृताः ५ ॥ ऋषयऊचुः ॥ त्वयाखलुपुराणानिसेतिहासानिचानघ ॥ आख्यातान्यप्यधीतानिधर्मशास्त्राणितान्युत ६ यानिवेदविदांश्रेष्ठोभगवान्बादरा
यणः ॥ अन्येचमुनयःसूतपरापरविदोविदुः ७

नाम्नाऋषिणायत्रतपश्चीर्णंतत्संबंधाद्वानैमिषंतस्मिन्नैमिषारण्ये स्वरजोविष्णुःतेनगतोलोकोवैकुंठाख्यःतस्मै सदानंदज्ञानमूर्तित्वात्स्वर्गोविष्णुःलोकआश्रयःतदर्थमितिवा स्वरितिविष्णुस्तंगमयातीतिप्राप
यतिज्ञापयतीतिस्वर्गं लुक्प्रकाशनइतिधातोर्लोकःप्रकाशःज्ञानंविष्णुस्तद्विषयपुराणधर्मज्ञानार्थमितिवा नतुमनःप्रीतिकरःस्वर्गोनरकस्तद्विपर्ययइतिदुःखासंभिन्नदेवसेव्यदेशविशेषायेति तस्यनश्वरत्वाप्रि
तिश्रुतेः सहस्रंसमायस्मिंस्तत्तथोक्तंवर्षसहस्रसमाप्यमित्यर्थः सतःसुजनान्त्रायतइतिसत्रोब्रह्मणस्त्राणमस्येतिवासत्रंप्रशस्ततरकर्मसुश्रेष्ठमितिवासत्रं बहुकर्तृकंयागविशेषंआसतउपाविशन् अदीक्षयन्नित्य
र्थः ४ येसत्रयागेदीक्षितास्तेमुनयःसर्वज्ञाअपिएकदाकस्मिंश्चित्कालेस्वाश्रमंप्रत्यागतं सत्कृतंतद्योग्यसंस्कारैःपूजितमासीनंसुखंपीठेउपविष्टंसूतं इदंस्वबुद्धिस्थितंपप्रच्छुःकिंविशिष्टाःआदृताःविनीताः
तेनापिपूजिताइतिवा हुतंहविरश्नातीतिहुताशनोग्निः प्रातःकालेहुतःहुताशनोयैस्तेतथोक्ताः हुतेनपयआदिद्रव्येणहुतोग्निर्यैरतेहुतहुताशनाइत्यसत् हुतशब्दस्यपयआदिष्वपाठात् तुलो
कानुकंपाद्योतकः पृच्छतेर्द्विकर्मकत्वात्सूतमिदंपप्रच्छुरितिकर्मद्वयमुच्यते ५ प्रशंसितः प्रवक्तासूतःस्वप्रश्नोत्तरंसंतुष्यसम्यग्वक्तीतिहृदिकृत्वाप्रष्टव्यार्थपृष्ठतःकृत्वातंप्रशंसंतिशौनकादयइत्याह त्वयाख
ल्विति अनघदुःखेनोव्यसनेष्वघमित्यभिधानान्निरस्तसमस्तकार्पण्यसन त्वयासेतिहासानिभारतादीतिहाससहितानिपुराणानिचशब्दादुपपुराणानिअधीतानिवेदतत्पाठतानिआख्यातानिव्याख्याता
न्यपियानिमनुयाज्ञवल्क्यादिप्रणीतानिधर्मशास्त्राणितान्युतअपिअधीत्यव्याख्यातानीत्येकान्वयः ६ तस्यज्ञानेयत्तांवदंतीत्याह यानीति वेदविदांश्रेष्ठःबादरायणोभगवान्व्यासोवेद अन्येचपरावर
विदःमुनयःतान्येवविदुः किंचतेमुनयोवेदादन्यत्रयानिविदुः हेसौम्यत्वंतत्वतःतत्सर्वंवेत्थेत्येकान्वयः वेदजाद 'वादिनामात्रत्वाज्जादरायणः वन्नयोःसावर्ण्यात् बादरायणोव्यासःस्मृतःश्रयणं

कुरुजांगलंकुरुविषयंप्राप्तः गजसाह्वयेहस्तिनापुरेक्वचिदुन्मत्तवत्क्वचिन्मूकवत्क्वचिज्जडवद्विचरन्मुनिःपुरः पौरैःकथमालक्षितःशुकत्वेनेतिशेषः पौरैरपितज्ज्ञानंदुःशकंकिंपुनरंतःपुरनिवासिभिः ५ किंच परीक्षितः तद्दर्शनानंतरकालीनस्तेनसहसंवादःसुतरामसुलभइत्याशयवानाह कथंवेति यत्रयपोःसंवादेसात्वतोहरेस्तत्संबंधिनीसात्वतीश्रुतिर्वर्तते तादृशःसंवादःपांडवेयस्यराजर्षेःपरीक्षितःतेनमुनिनासहकथंवा समभूत्नकथमपिघटतइत्येकान्वयः ६ इतोपितस्यतेनसहसंवादोदुर्घटइत्याशयवानाह सइति तदाश्रमंतेषांगृहस्थानांसतांगृहंतीर्थीकुर्वन् स्वपादक्रमणेनपवित्रीकुर्वन्महाभागः शुकःगृहमेधिनांगृहंगत्वापाणिभिक्षामाचरन् गोदोहनमात्रं ततोनाधिकंअवाङ्मुखतयैकमनास्तिष्ठतिपरमन्यतोयातिहियस्मात्तद्दर्शनमसुलभमित्येकान्वयः ७ किंच हेसूत सुज्ञाःअभिमन्युसुतं परीक्षितं भागवतश्रेष्ठमाहुः किमितितत्राह तस्येति तस्यपरीक्षितःमहाश्चर्यश्रोतॄणामितिशेषः जन्मकलिबंधनादीनिकर्माणिचअस्माकंगृणीहीत्यन्वयः ८ तस्यवैराग्यहेतुंपृच्छति ससम्राडिति पांडवानामभिमानवर्धनः ससम्राट्अप्रतिहताज्ञश्चक्रवर्तीकस्यवाहेतोराधिराट्श्रियंचक्रवर्तिसंपद्लक्ष्मीमनादृत्यतृणवत्कृत्वा गंगायांप्रायोपविष्टोभूदित्यन्वयः ९ एवंविधश्रीसंगत्यागेमहत्कारणेनभवितव्यंतत्किमित्याशंक्याह नमंतीति शत्रवःमंडलपतयःआत्मनःशिवायस्वकल्याणायधनानिचानीययस्यपरीक्षितःपदयोर्निकेतंपीठाख्यस्थानंनमंतीत्यन्वयः अंगसूत सधीरःअसुभिःसहदु

कथमालक्षितःपौरैःसंप्राप्तःकुरुजांगलम् ॥ उन्मत्तमूकजडवद्विचरन्गजसाह्वये ५ कथंवापांडवेयस्यराजर्षेर्मुनिनासह ॥ संवादःसमभूत्तातयत्रैषासात्वतीश्रुतिः ६ सगोदोहनमात्रंहिगृहेषुगृहमेधिनाम् ॥ अवेक्षतेमहाभागस्तीर्थीकुर्वंस्तदाश्रमम् ७ अभिमन्युसुतंसूतप्राहुर्भागवतोत्तमम् ॥ तस्यजन्ममहाश्चर्यंकर्माणिचगृणीहिनः ८ ससम्राट्कस्यवाहेतोःपांडूनांमानवर्धनः ॥ प्रायोपविष्टोगंगायामनादृत्याधिराट्श्रियम् ९ नमंतियत्पादनिकेतमात्मनःशिवायचानीयधनानिशत्रवः ॥ कथंसवीरःश्रियमंगदुस्त्यजामियेषचोत्स्रष्टुमहोसहासुभिः १० शिवायलोकस्यभवायभूतयेयउत्तमश्लोकपरायणाजनाः ॥ जीवंतिनात्मार्थमसौपराश्रियंमुमोचनिर्विद्यकुतःकलेवरम् ११ तत्सर्वंनःसमाचक्ष्वपृष्टोयदिहकिंचन ॥ मन्येत्वांविषयेवाचांस्नातमन्यत्रछांदसात् १२ ॥ सूतउवाच ॥ द्वापरेसमनुप्राप्तेतृतीयेयुगपर्यये ॥ जातःपराशराद्योगीवासव्यांकलयाहरेः १३ सकदाचित्सरस्वत्याउपस्पृश्यजलंशुचिः ॥ विविक्तएकआसीनउदितेरविमंडले ॥ १४ ॥

स्त्यजांश्रियं अधिराज्यसंज्ञांउत्स्रष्टुंहातुंइयेषऐच्छदहोआश्चर्यमेतदतोमहताहेतुनाभवितव्यंतत्किमितिभावः १० पुनरपितदेवपृच्छति शिवायेति येउत्तमश्लोकपरायणाजनाः तेलोकस्यशिवादिप्राप्तयेजीवंतिनस्वार्थंजीवंतीत्यन्वयः तस्मात्परार्थैकजीवनोऽसौकस्मात्कारणात्परामुत्कृष्टांश्रियंनिर्विद्यविरज्यकलेवरंदेहंमुमोचेत्यन्वयः ११ इहास्यामवस्थायां प्रश्नराशौयत्किंचित्प्रश्नरूपं पृष्टस्त्वंतत्सर्वंकिंचनेत्यनुवृत्तिकृत्यसम्यगाचक्ष्व कुतः छांदसाद्वेदविषयादन्यत्रपुराणादौवाचांविषयेस्नातंनिष्णातंमन्यइतियस्मात्तस्मादित्यन्वयः १२ कस्मिन्युगेइतिप्रश्नंपरिहरति द्वापरइति कृतयुगापेक्षयातृतीयेद्वापरेयुगेयुगपर्यवसानेसमनुप्राप्तेसतिहरेःकलयांशेनपराशरात्पराकृतःशरोहिंसायेनसतथोक्तःतस्माद्वासव्यांवसोरुपरिचरस्यपुत्र्यांसत्यवत्यांयोगीनित्यज्ञानीनगर्भाज्ञातोवतीर्णोसौद्वापरेयुगपर्यवसानेभागवतप्रवृत्तिरितिभावः १३ अवतारप्रयोजनमाह सकदाचिदिति सव्यासोभगवान्शुचिःशुद्धःकदाचित्सरस्वत्यानद्याजलमुपस्पृश्यसंध्याक्रियादिकंनिर्वर्त्यपश्चाद्रविमंडलेउदितेसतितत्तटेविविक्तेएकांतेस्वाश्रमएवासीन एकाकी १४

१ तद्ग्राजत्वाद्बहुवचनेऽणोलुक् इत्यतआह पांडूनां पाण्डवानांपांडुकुलोत्पन्नानामित्यर्थः । २ प्रायेणाऽनशनेनउपविष्टः प्रायश्चानशनेमृत्याविति विश्वः । प्रायोपवेशनं व्रतविशेषोवा ।

परावरज्ञ:कालत्रयज्ञानी सः सर्वतःसारःसर्वोत्तमः ऋषिकुलावतीर्णः परावरज्ञत्वेहेतुर्वा त्रिकालदर्शित्वाद्वा अव्यक्तरंहसाअनभिव्यक्तवेगेनभुवियुगंयुगेप्राप्तंयुगधर्मव्यतिकरंयुगधर्मसांकर्यं १५ त थातत्कृतंकालकृतंभौतिकानांभूतकार्याणांभावानांपदार्थानांशक्तिह्रासंचातएवजनांश्चाश्रद्दधानान् तात्पर्यशून्यान्निःसत्त्वान्निरुत्साहान् दुष्टामेधायेषांतेदुर्मेधास्तान्धारणाशक्तिशून्यान्वा एधशब्दव दयमप्यकारांतः ह्रसितायुषः अल्पायुषः १६ दुष्टभाग्यान्वीक्ष्यमुनिर्मौनवान्दिव्येनचक्षुषाअपरोक्षज्ञानेनसार्वाश्रमाणांयद्धितंतच्चिरंदध्यौचिंतितवानित्येकान्वयः सर्वज्ञस्यापिचिरंध्यानमज्ञदृष्ट्यपेक्ष याद्दुष्टमोहनार्थंचेतिज्ञातव्यं अमोघदृक्अवंध्यज्ञानः १७ किंहितमपश्यदितितत्राह चातुर्होत्रमिति चत्वारोहोतारोहोत्रध्वर्यूद्गातृब्रह्माणोयस्मिंस्तत्तेषांकर्मचातुर्होत्रं चातुर्होत्रपर्यंतैर्मंत्रैःप्रकाश्यंदाअ ग्निष्टोमादिकंकर्मप्रजानांवैदिकीनांशुद्धंशुद्धिकरं रागादिवर्जितंवा वीक्ष्य यज्ञसंतत्यैअग्निष्टोमादियज्ञपरंपराप्रवर्तनायएकमविभक्तंवेदंऋगादिभेदेनचतुर्विधंव्यदधादित्येकान्वयः आदिमध्यावसानेषुहरि स्मृत्यातत्पूज्यत्वेनक्रियमाणंकर्मप्रजानांज्ञानद्वाराशुद्धिकरमपश्यदितिभावः १८ कथंविभक्ताइतितत्राह ऋगिति वेदव्यासेनमूलवेदसमुदात् ऋग्यजुःसामाथर्वाख्याश्चत्वारोवेदाःउद्धृता नतुकृताःतद र्थज्ञानायकृतंइतिहासपुराणंचवेदार्थावेदकत्वात्पंचमोवेदइत्युच्यतेपंचमोवेदइत्युक्तेः इतिहासादीनांशब्दतोरचनत्वर्थतः तस्यानित्यत्वादितिज्ञातव्यं १९ तत्रतेषांवेदानांमध्येऋग्वेदप्रवर्तकःपैलोभूदि तिप्रत्येकमन्वयः जैमिनस्यापत्यंजैमिनिःसामगायतिशिष्येषुगमयतिप्रवर्तयतीतिवासामगःकविःसूक्ष्मज्ञानी ततोजैमिनेरनंतरंएकःप्रधानःवैशंपायनएवयजुर्वेदानांनिष्णातः प्रवर्तकतयेतिशेषःएवशब्दे

परावरज्ञःसऋषिःकालेनाव्यक्तरंहसा ॥ युगधर्मव्यतिकरंप्राप्तंभुवियुगेयुगे १५ भौतिकानांचभावानांशक्तिह्रासंचतत्कृतम् ॥ अश्रद्दधानान्निःसत्त्वान्दु र्मेधान्ह्रसितायुषः १६ दुर्भगांश्चजनान्वीक्ष्यमुनिर्दिव्येनचक्षुषा ॥ सर्ववर्णाश्रमाणांयद्दध्यौहितममोघदृक् १७ चातुर्होत्रंकर्मशुद्धंप्रजानांवीक्ष्यवैदि कम् ॥ व्यदधाद्यज्ञसंतत्यैवेदमेकंचतुर्विधम् १८ ऋग्यजुःसामाथर्वाख्यावेदाश्चत्वारउद्धृताः ॥ इतिहासपुराणंचपंचमोवेदउच्यते १९ तत्रर्ग्वेदधरः पैलःसामगोजैमिनिःकविः ॥ वैशंपायनएवैकोनिष्णातोयजुषामुत २० अथर्वांगिरसामासीत्सुमंतुर्दारुणोमुनिः ॥ इतिहासपुराणानांपितामेरोमहर्षणः २१ तएतऋषयोवेदंस्वंस्वंव्यस्यन्ननेकधा ॥ शिष्यैःप्रशिष्यैस्तच्छिष्यैर्वेदास्तेशाखिनोभवन् २२ तएववेदादुर्मेधैर्धार्यंतेपुरुषैर्यथा ॥ एवंव्यवस्यद्भगवा न्व्यासःकृपणवत्सलः २३ स्त्रीशूद्रद्विजबंधूनांत्रयीनश्रुतिगोचरा ॥ कर्मश्रेयसिमूढानांश्रेयएवंभवेदिति ॥ इतिभारतमाख्यानंकृपयामुनिनाकृतम् २४

नसूर्यादन्यःप्रतिषिध्यतेनतुसूर्यस्तथासतिवक्ष्यमाणाविरोधात् २० वारुणोवरुणपुत्रःसुमंतुर्नाममुनिरथर्वांगिरसांनिष्णातःअथर्ववेदानांप्रवर्तकआसीत् मेपितारोमहर्षणःइतिहासपुराणानांप्रवर्तकः २१ भगवदाज्ञाप्रवर्तकंचतुर्णांवेदानांशाखोपशाखाभेदेनऋषिकृतविभागमाह तएवेति तएवपैलादयःऋषयःस्वंस्वंवेदमनेकधाव्यस्यन्व्यभजन्नित्यन्वयः तेवेदाःशिष्यप्रशिष्यादिभिःशाखिनःतन्नामपूर्वशा खावंतोभवन्नित्यन्वयः २२ व्यासनामनिर्वचनायाह तएवेति दुर्मेधैःअल्पप्रज्ञैःपुरुषैःतएववेदायथाधार्यंतेपठिताःअवधृतार्थाःक्रियंतेएवंतथाशिष्यप्रशिष्यादिभिःशाखोपशाखाभेदेनव्यवस्यत्चकार तस्मात्व्यासइति किमर्थमितितत्राह कृपणवत्सलःदीनजनस्निग्धः २३ एवंभगवद्भक्तानांत्रैवर्णिकानांवैदिककर्मानुष्ठानेनशुद्धांतःकरणानामधोक्षजोपासनाजनितज्ञानेनमुक्तिःस्यादितिव्यासेनस्था पितंतदनधिकारिणांस्त्रीशूद्रादीनांहरिभजनंकुत्रोक्तमुपायेनेत्याकांक्षायामाह । स्त्रीशूद्रेति । वेदोक्तकर्माख्यश्रेयसिपुरुषार्थसाधनेमूढानामतएवानधिकारिणांस्त्रीशूद्रद्विजाधमानांत्रयीनयोवेदाःश्रोतुं नयोग्याइतितस्मादतएवंमयाकरिष्यमाणभारतादिशास्त्रोक्तविधिनाइहजनेश्रेयोभवेदितिकृपयामुनिनासर्वज्ञेनव्यासेनभारताख्यानंकृतमित्यन्वयःअत्रैतत्प्रमेयमवगंतव्यं स्त्रीशूद्रादिकृपयाभगवताभा

१ सइत्यस्यसारइतिव्याख्या । सर्वोत्तमइतिनिष्कृष्टार्थः । सस्यसारार्थत्वंचदशमगीतातात्पर्यवचनेनन्यायदीपिकायांचोक्तम् ।

स्ताख्यानस्यकृतत्वात्तेषामेवतत्राधिकारोनान्येषामितिशंकामाभूदितिहासपुराणाभ्यांवेदंसमुपबृंहयेदितिवचनात्ब्राह्मणादीनामपिवेदार्थपरिज्ञानायभारताद्यभ्यासस्यआवश्यकत्वेनोक्तत्वादुभयत्राधिका
रोऽस्त्युक्तं तेषांस्त्रीशूद्रादीनांतुगत्यंतराभावात्तदुक्तानुष्ठानेनमुक्तिरिभावः २४ केनहेतुनाकुतःसंचोदितइतिप्रश्नंपरिहरिष्यन्प्रथमःकृतावतारकार्यस्यदुर्जनान्मोहयतोव्यासस्यलोकानुकरणप्रका
रमाह एवमित्यादिना हेद्विजाः भूतानांसदाश्रेयसिनित्यमुक्तिसाधनेएवंप्रवृत्तस्यापियदाहृदयंसर्वात्मकेननातुष्यत्ममनेवतारप्रयोजनेनसर्वप्रकारेणालमित्यलंबुद्धिंनापततदा २५ धर्मज्ञानी
नातिप्रसन्नहृदयःअवतारप्रयोजनानलंबुद्धिमान्सरस्वत्यास्तटेतत्रापिशुचौदेशेविविक्तस्थएकांतेतिष्ठन् लोकदृष्ट्याऽनलंबुद्धिकारणंकिंचेतिविविधंतर्कयन्विचारयन्निदंवक्ष्यमाणमेवात्मानमप्युवाचे
त्यन्वयः २६ धृतव्रतेनलौकिकाचारापेक्षयावेदव्रतधारणवतामयानिर्व्यलीकेननिर्व्याजेनचेतसेतिशेषःछंदांसिवेदाःगुरवोध्यापकाःअग्नयःमानिताःसत्कृताःअनुशासनमाज्ञाचगृहीता हिशब्देन
विप्रादिभिर्वेदव्रतादिवैदिककर्मावश्यंकर्तव्यमितिदर्शयति २७ यत्रभारतेस्त्रीशूद्रादिभिरपित्रैवर्णिकैरुवानुष्ठेयोधर्मोदृश्यते तस्यभारतस्यकरणेनाम्नायार्थःवेदादिसंप्रत्ययार्थःप्रदर्शितोहि । त
त्किंचिदुर्वारितंनास्तीत्यर्थः २८ अथापिभारतकृत्याआम्नायार्थप्रदर्शनानंतरमापेदैह्योदेहरूपआत्माआत्मनास्वतएवविभुर्व्याप्तोमेममात्माअवतारप्रयोजनासंपत्त्याअसंपन्नोऽप्राप्तप्रयोजनइवा

एवंप्रवृत्तस्यसदाभूतानांश्रेयसिद्विजाः ॥ सर्वात्मकेनापियदानातुष्यद्धृदयंततः २५ नातिप्रसन्नहृदयःसरस्वत्यास्तटेशुचौ ॥ वितर्कयन्विविक्तस्थ
इदंप्रोवाचधर्मवित् २६ धृतव्रतेनहिमयाछंदांसिगुरवोऽग्नयः ॥ मानितानिर्व्यलीकेनगृहीतंचानुशासनम् २७ भारतव्यपदेशेनह्याम्नायार्थःप्रदर्शितः ॥
दृश्यतेयत्रधर्मोहिस्त्रीशूद्रादिभिरप्युत २८ अथापिबतमेदैह्योह्यात्माचैवात्मनाविभुः ॥ असंपन्नइवाभातिब्रह्मवर्चस्विसत्तमः २९ किंवाभागवताधर्मा
नप्रायेणनिरूपिताः ॥ प्रियाःपरमहंसानांतएवह्यच्युतप्रियाः ३० तस्यैवंखिन्नमात्मानंमन्यमानस्यखिद्यतः ॥ कृष्णस्यनारदोभ्यागादाश्रमंप्रागुदाहृ
तम् ३१ तमभिज्ञायसहसाप्रत्युत्थायागतंमुनिम् ॥ पूजयामासविधिवन्नारदंसुरपूजितम् ॥ ३२ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेचतुर्थो
ध्यायः ॥ ४ ॥ ॥ सूतउवाच ॥ अथतंसुखमासीनउपासीनंबृहच्छ्रवाः ॥ देवर्षिःप्राहविप्रर्षिंवीणापाणिःस्मयन्निव १ नारदउवाच ॥ पाराशर्य
महाभागभवतःकच्चिदात्मना ॥ परितुष्यतिशारीरआत्मामानसएववा २

ति कीदृशःब्रह्मवर्चस्विसत्तमःवृत्ताध्ययनसंपन्नानांमध्येश्रेष्ठइत्यन्वयः ब्रह्मवर्चस्यसत्तमइतिपाठेप्ययमेवार्थः २९ प्रायइदमेवानलंबुद्धौकारणमाह किंवेति भागवताधर्माःप्रायेणनि
रूपिताःकिंचभारतेनिरूपिताःअपिपुनःशास्त्रांतरेणानिरूपणीयाइत्यतःप्रायेणेत्युक्तं किंविशिष्टाःपरमहंसानांप्रियाः ततःकिं तेपरमहंसाएवाच्युतप्रियाहियस्मादसंपन्नइवाभातीतिभावः ३० के
चित्प्रेरितएवमहापुरुषःस्वकार्येप्रवर्ततइतिन्यायात्भागवतकीर्तिरेवालंबुद्धिहेतुरितिनिश्चयवानपिनारदप्रेरितःभागवतमकार्षीदितिनारदस्यलोकेमहतीकीर्तिःस्यादितिभक्तवत्सलत्वान्नारदागमनमाकांक्ष
माणंव्यासंमत्वातदागमनमाह तस्येति खिन्नंअनलंबुद्धिमाप्तंअतःखिद्यतःखिद्यमानस्यअनलंबुद्धिंगतस्य ३१ अभिज्ञायसंज्ञापूर्वकंविज्ञायसहसाकालक्षेपमंतरेण सरस्वतीतीरवर्तिस्वाश्रमस्थितो
भागवतधर्मज्ञापनहेतोर्नारदेनचोदितःश्रीकृष्णोभागवतसंहितामकरोदितिशौनकप्रश्नपरिहारः ॥ ३२ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजयध्वजकृतटीकायांचतुर्थोध्यायः ॥ ४ ॥ ॥ अ
र्घ्यपाद्यादिसमर्हणानंतरंसुखमुपविष्टोविस्तृतकीर्तिःवीणामहतीनामपाणौयस्यसतथोक्तः मंदस्मितंकुर्वन्निवप्रसन्नवदनोदेवर्षिःसमीपउपविष्टंतंविप्रर्षिंव्यासंप्राहेत्येकान्वयः १ निज्ञातभगवदभिप्रायःतदन
न्तरमनुगुणानुकारणवान्नारदोनित्यकुशलंतस्यसंजानन्नपितदनुवदन्निवकुशलंपृच्छतीत्याह पाराशर्येति महाभागऐश्वर्याद्यनंतभाग्यनिधे पाराशर्यपराशरपुत्र भगवत् शारीरःमानसोवाशरीरसंबंधो

रूपेवाभेदाभावादेवमुक्तिः आत्मावतारप्रयोजनंकृत्वाआत्मनास्वतएवपरितुष्यतिकश्चित्स्वतंत्रतयाकृतावतारकार्यत्वात्परितुष्यतीत्येवकारार्थः १ कुतइतितत्राह जिज्ञासितमित्यादि यस्त्वंधर्मादिसर्व पुरुषार्थबृंहितंपूर्णंभारतंकृतवांस्तेत्वयासुसंपन्नंसुसपूर्णमद्भुतंसर्वस्मादाश्चर्यतमं अत्ताश्रुद्रोयस्माद्भवतितदद्भुतंवा महद्देशतःकालतोगुणतश्चापरिच्छिन्नंब्रह्मजिज्ञासितंविचारितं अपिचशब्दौवक्ष्यमाणसमु च्चये शब्दतोर्थतोपिमहत् अद्भुतंगहनं व्यवहारेधनेशास्त्रेवस्तुहेतुनिवृत्तिष्वितिवचनात्त्त्त्याद्येनार्थशब्दस्यद्विरावृत्त्यासर्वशास्त्रार्थपरिबृंहितंकृतवानितियस्मात्तस्मात्तेनलोकानांज्ञातुमिष्टंसुष्ठुसुपूर्णंभू दितिवा ३ किंचयच्चोपाध्यायपरंपरयाभवताधीतंसनातनंनित्यंवेदात्मकंशब्दब्रह्मतदपिजिज्ञासितंविचारितं तस्मात्कृतावतारकार्योपितितएवनातुष्टिकारणंपश्यामीत्यर्थः तथाप्येवमपिकृतानता रकार्योपिअकृतावतारप्रयोजनइवात्मानंशोचसिप्रकाशयसिहेप्रभो प्रभूतज्ञानेत्यन्वयः ४ एवंनारदेनपृष्टोऽपरिमितज्ञानस्वरूपोपिअज्ञवत्दुष्टजनमोहनायतत्कारणंतमेवपृच्छतीत्याह अस्त्येवेति हे नारद त्वयोक्तमिदंसर्वंमेअस्त्येव नकिंचिदवशिष्टमस्ति तथापिमेआत्मामनःनपरितुष्यतेनालंबुद्धिंप्राप्नोति तुष्यतीतिवक्तव्येतुष्यतइतिप्रयोगात् अज्ञजनमोहनार्थमेवहरिणाप्रश्नःक्रियते नाज्ञानादि तिमहान्विशेषोविज्ञापते आत्मनोविष्णोर्भवतीत्यात्मभवोब्रह्मातस्यात्मनःशरीरादुद्भूतउत्पन्नआत्मभवात्मभूतब्रह्मपुत्रइत्यर्थः आत्मनिभवतीतिवा त्वामव्यक्तंसूक्ष्मंतस्यापरितोषस्यमूलंकारणंपृ च्छामहे अल्पज्ञश्चेत्प्रश्नोत्तरंकथंब्रूयादितितत्राह अगाधेति अपरिमितज्ञानप्रश्नोत्तरवचनसमर्थमित्यर्थः अत्रापिसमित्युपसर्गमंतरेणपृच्छतेरात्मनेपदप्रयोगेणनारदस्यज्ञानंचुलुकजलपरिमितंव्या

जिज्ञासितंसुसंपन्नमपितेमहदद्भुतम् ॥ कृतवान्भारतंयस्त्वंसर्वार्थपरिबृंहितम् ३ जिज्ञासितमधीतंचब्रह्मयत्तत्सनातनम् ॥ तथापिशोचस्यात्मानमकृतार्थ इवप्रभो ४ व्यासउवाच ॥ अस्त्येवमेसर्वमिदंत्वयोक्तंतथापिनात्मापरितुष्यतेमे ॥ तन्मूलमव्यक्तमगाधबोधंपृच्छामहेत्वाऽऽत्मभवात्मभूतम् ५ सत्वंभवा न्वेदसमस्तगुह्यमुपासितोयःपुरुषःपुराणः ॥ परावरेशोमनसैवविश्वंसृजत्यवत्यत्तिगुणैरसंगः ६ त्वंपर्यटन्नर्कइवत्रिलोकीमंतश्चरोवायुरिवात्मसाक्षी ॥ परा वरेब्रह्मणिधर्मतोव्रतैःस्नातस्यमेन्यूनमलंविचक्ष्व ७ नारदउवाच ॥ भवतानुदितप्रायंयशोभगवतोऽमलम् ॥ येनैवासौनतुष्येतमन्येतद्दर्शनंखिलम् ८

सज्ञानंप्रलयसमुद्रवदपरिमितमितितात्पर्यंशब्दज्ञैरेवज्ञायते आत्मभुवात्मभूतमितिकेचित्पठंतितत्रोवङादेशश्छांदसः ५ नारदस्यस्वात्मानलंबुद्धिहेतुवेदनकारणंवक्तीत्याह सत्वमिति योगुणैर्विरच तशरीरगतसुखदुःखफलसंगरहितोविश्वंमनसैवस्वतंत्रसाधनांतरनिरपेक्षतयासृजत्यवतिसंहरतिसपरावरेशोमुक्तामुक्तप्रपंचयोरीशइतिपरावरेशः जगदुत्पत्तेःपुराप्यस्तीतिपुराणः पुरमणतीतिवा पुरूणि कर्मफलानिसनोतिददातीतिपुरुषः उपासितइति अतःभवान्समस्तगुह्यंवेदेत्येकान्वयः एतदुक्तंभवति चतुर्मुखप्रियपुत्रत्वात्त्वैवसर्वजगत्सृष्ट्यादिकर्तृभगवदुपासकत्वेनसर्वज्ञत्वात्तत्प्रसादादस्मदनलं बुद्धिहेतुवेदनमस्तीति ६ तवभगवत्प्रसादेनजनितापरोक्षज्ञानेनसर्वत्राव्याहतगतिकर्मणाचयोगप्रभावेनसर्वप्राणिशरीरांतश्चरणेनवानलंबुद्धिहेतुवित्त्वमाह त्वमिति त्रिलोकींपर्यटन्अर्कइवत्रिलो क्यांअव्याहतगतिःसर्वप्राण्यंतश्चरोवायुरिवात्मसाक्षीसर्वजीवबुद्धिवर्तिवृत्तज्ञःत्वं परेब्रह्मणितथाअवरेतत्प्रतिपादकवेदाख्यशब्दब्रह्मणि धर्मतोवेदोक्तभगवद्धर्मानुष्ठानेनतदधिकारोपपादकवेदव्रतादिभि श्चानुष्ठापितैःलोकमोहायचमयानुष्ठितैःस्नातस्यकृतकृत्यस्यमेअवतारप्रयोजनंन्यूनंनितरामुर्वरितंअलंयथाभवतितथाविचक्ष्वविशिष्टतयाब्रूहीत्येकान्वयः ७ नारदोपिसर्वज्ञस्यव्यासस्यहृदिस्थिताभिप्रायावि द्वान्तत्प्रसादमादित्सुरनावतारप्रयोजनंवक्तीत्याह भवतेति हेव्यास भवताभगवतोहरेरमलंयशोऽनुदितप्रायंबहुत्वेन नप्रतिपादितंयेनानुदितेनयशःप्रतिपादकशास्त्रेणासौभवतआत्मानैवतुष्येत अहंतस्य यशसःप्रतिपादकंशास्त्रंखिलमुर्वरितंमन्यइत्यन्वयः ८

१ प्रभोइत्योकारान्त प्रभोशब्दस्यैवसंबुद्धिरितिकेचित् प्र प्रकर्षे भा ज्ञाने उतातिशये ।

भारतादिशास्त्रेषुहरियशसोनहूदितत्वात्कथंखिलंमन्यइत्युच्यतइतितत्राह यथेति हेमुनिवर्यसर्वज्ञतम मुनिभिःप्रियतइतिवा मुनिवरप्राप्याइतिवामुनिवर्याधर्मादयःपुरुषार्थाः यथानुवर्णितास्तथावा सुदेवस्यमहिमानानुवर्णितोहियस्मात्तस्मादनुवर्णनीयः धर्मादीनामल्पकथनेनापिपूर्तिःस्यान्नतथावासुदेवस्यमहिम्नोभारतादावतिकथितस्यापि सतांतत्रतात्पर्यातिशयात्फलाधिक्याच्च नहिसूर्योदय माकांक्षमाणस्यखद्योतोदयेनेच्छानिवर्ततइत्येतदर्थं हिशब्देनाह द्वितीयोहिशब्दोहेत्वर्थः ९ धर्मादीनांअल्पकथनेनकथंपूर्तिःस्यादितितत्राह नेति यद्वचोजगत्पावनकरंहरेर्यशोनगृणीतकर्हिचिद पिनप्रतिपादयेत्तच्चित्रपदमपिचित्राणिपदानियस्मिंस्तत्तथोक्तं तद्वचःशास्त्रंनभवतीत्यर्थः कुतःतद्वायसंवयोमात्रानुजीवितार्थंशास्त्रंउशंतिइच्छंति यत्रकाकोच्छिष्टतीर्थेमानसाःप्रेक्षावंतः मानसा ख्यसरोविहारिणोवा हंसाःपरमहंसाः धवलपक्षावाजलपयोविवेककारिणः निमंक्षयाविचारलक्षणस्नानेच्छयानन्यपतन्ननिपतंति नप्रविशंतीतिपथातथायत्रयस्मिन्तीर्थेमानसाब्रह्मणोमन सोजाताःसनकादयःहंसाःनिर्लेपाइतिवा तस्मात्सज्जनानादरणीयत्वेनधर्मादीनामल्पकथनेनपूर्तिरितिभावः विरमंत्युशिकूक्षयाउशिकूशुद्धंक्षयंस्थानंयेषांतेतथोक्ताः शुद्धंब्रह्मतदेवक्षयोयेषांतेतथोक्ताइ तिवेतिपठित्वाकेचिद्व्याचक्षतेतच्चिंत्यं १० वासुदेवमहिम्नोऽतिकथितस्यापिकथंनपूर्तिरितितत्राह सवागिति यस्मिन्निबंधेप्रतिश्लोकमपशब्दादबद्धवत्यपिशाब्दिकैर्जुगुप्सिते देशकालगुणैरनंतस्य हरेः पारिजातहरणाद्यात्मकयशोलांछितानिनारायणादिनामानिसंति साधवःपरमभागवताःशुकादयोयच्चशृण्वंतिगायंतिगृणाति स.जनतायाःजनसमूहस्याघंपापंविप्लावयतिनाशयतीतिजनता घविप्लवःवाचांविसर्गः विशिष्टरचनाविशेषइत्येकान्वयः यस्मिन्सतिप्रशस्तानिअनंतस्यनामानिसाधवःशृण्वंतीतियत्यस्मात्तस्मात्सएववाग्विसर्गइतिवा जनतापापविनाशहेतुत्वात्

## यथाधर्मादयोह्यर्थामुनिवर्यानुकीर्तिताः ॥ नतथावासुदेवस्यमहिमाह्यनुवर्णितः ९ नयद्वचश्चित्रपदंहरेर्यशोजगत्पवित्रंनगृणीतकर्हिचित् ॥ तद्वायसं तीर्थमुशंतिमानसानयत्रहंसान्यपतन्निमंक्षया १० सवाग्विसर्गोजनताघविप्लवोयस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनंतस्ययशोंकितानियच्छृ ण्वंतिगायंतिगृणंतिसाधवः ११ नैष्कर्म्यमप्यच्युतभाववर्जितंनशोभतेज्ञानमलंनिरंजनम् ॥ कुतःपुनःशश्वदभद्रमीश्वरेनचार्पितंकर्मयदप्यकारणम् १२ अतोमहाभागभवानमोघदृक्शुचिश्रवाःसत्यरतोधृतव्रतः ॥ उरुक्रमस्याखिलबंधमुक्तयेसमाधिनानुस्मरयद्विचेष्टितम् १३

सज्जनगृहीतत्वाच्चवासुदेवमाहात्म्यप्रतिपादकमेवशास्त्रं । नान्यदतस्तदेवशास्त्रंभवतेत्युभीरचनीयमितिभावः ११ नकेवलंवासुदेवमहिमद्योतकयशोंकविधुरशास्त्ररचनमेवमोघंकिंतुहरिभक्तिविरहितनि मित्तज्ञानकर्मणीअपिनिष्फलेएवेतिविज्ञापयतीत्याह नैष्कर्म्यमिति नैष्कर्म्यंस्वतोनिष्कर्मणोमुक्तेःसाधनंअलंनिरंजनंविषयसंमार्जनमलराहित्यंअत्यंतारिरिकिमद्वेदार्थविषयंपरोक्षज्ञानमप्यच्युतभाव र्जितंभगवद्भक्तिरहितं हरावच्युततयानिरंतरभावनयामनोयोजनेनरहितंवानशोभते अधिकारिणोभीष्टफलनप्रकाशयतिबंधकतयाशश्वत्सर्वदाअभद्रममंगलंईश्वरेहरौचनार्पितंकर्मनशोभतइतिकुतः पुनःकिमुवक्तव्यंयद्यप्यकारणंफलकामनादिविधुरंतथापीत्यर्थः शश्वदभद्रमनुष्ठानकालेफलकालेवामंगलंयत्काम्यंकर्मनशोभतइतिकुत.पुनःयदप्यकारणंनित्यंकर्महरौनार्पितंचेत्तन्नशोभतइतिकिंवक्तव्यमि तिवा अच्युतभाववर्जितमित्यनेनापरोक्षज्ञानस्यभक्तिसाध्यत्वात्परोक्षोपपदमेवात्रज्ञानंविवक्षितमितिज्ञापयते १२ अधुनालंबुद्धिहेतुंविज्ञापयतीत्याह अतइति हेमहाभागअपरिमितभाग्यनिधे उक्तप्रकारेणकर्मज्ञानयोर्हरिभक्तिरहितयोर्निष्फलत्वाद्धर्मादीनामल्पकथनेनापिपूर्तिर्भगवन्महिम्नातिकथितेनाप्यपूर्तिरेवेति यतःसाक्षाच्छुचिश्रवाःविष्णुरेवातएवसत्योनिर्दुःखानंदानुभवेरतःशरणा गतपालनादिधृतंव्रतंयेनसतथा अतएवामोघज्ञानोतएवभवान्पूज्यस्त्वंसकलसज्जनसंसारबंधनविध्वंसनायउरुक्रमस्यबहुपराक्रमस्यतस्यजगत्सृष्टिपालनादिविशिष्टचेष्टितंतत्समाधिना दर्शनगुह्य समाधिभेदेनत्रिधाभिधानांभाषाणांमध्येयथास्थितवस्तुकथनलक्षणयासमाधिभाषयाऽनुस्मरभगवन्महिमप्रतिपादकश्रीभागवताख्यग्रंथंकुरु तेनकृतावतारप्रयोजनालंबुद्धिर्भविष्यतीतिभावःअखिलधर्मगु

स्येइतिपाठेसमस्तभागवतधर्मरक्षणायेत्यर्थः १३ केवलधर्मादिविषयशास्त्रकृत्यानर्थोपिभवतीतिज्ञापयतीत्याह अतोन्यथेति अतएवमभवन्यहिज्ञोन्यथाविरुद्धधर्मादिपुरुषार्थकथनादिदिशित तत्किंचनयत्किंचित्पुरुषार्थोपयोगि कुतस्तत्कृतरूपनामभिस्तस्मिन्ग्रंथे धर्मादिफलत्वेनप्रतिपादितस्वर्गादिगतलावण्यादिरूपमदनकौलेकत्यादिनामवत्पदार्थैः पृथक्‌दृशस्तेभ्यस्तुखहेतवइतिवस्तुतः यार्थज्ञानिनोरागादिदोषदुष्टत्वेनदुःस्थितामतिः कर्हिचित्कापिकस्मिंश्चिद्विषयेपिसमुद्रेवातेनवायुना आहताविघटितानौस्तरीवास्पदमाश्रयंनलभेतेत्येकान्वयः तस्मात्केवलधर्मादिविषयशास्त्रंनतिरनर्थकारीतिभावः । अतोन्यथाश्रीभागवतकीर्तिमंतरेणयत्किंचनग्रंथकरणंविवक्षितंतत्ग्रंथंतत्कल्पितरूपनामाभिर्मुग्धस्येतिशेषः । चशब्दान्नरकपातफलमेवस्यादितिसूचयति १४ नकेवलमनर्थकार्येवभवेदन्येषामिदिताऽधर्मकारीचेतिज्ञापयति जुगुप्सितमिति स्वतएवप्रवृत्तिधर्मादिपुरागिणोऽज्ञस्यप्रवृत्तिधर्मादिकृतेऽनुशासनंकुर्वितिप्रेरणंजुगुप्सितंत्वाद्दशैरितिशेषः नकेवलंनिंदितंकिंतुमहान्व्यतिक्रमःवृक्षादधःपतितस्यदंडेनताडनवन्निःसीमोऽन्यायः कुतःसयत्प्रमाणंकुरुतइतिन्यायाद्यद्वाक्यतोधर्मइतितस्यजनस्यइतरःस्थितोजनोनिवारणंनमन्यतेइत्यन्वयः एतस्यप्रवाहशस्यवचनाद्धर्मोयमिस्यनुष्ठितस्तस्यप्रवृत्तिमार्गेस्थितस्यजनस्येतरस्मिन्निवृत्तिमार्गेस्थितःजनःशुकादिर्नायंधर्मःनचरतेतिनिवारणंनकरोति तस्मात्तादृशग्रंथकर्तारनपेक्षितोतिभावः यद्वाक्यतइति यस्यप्रवाहशस्यश्रेष्ठस्यवाक्यतोवचनात् प्रतीतएवधर्मःमुख्यपुरुषार्थहेतुरितिपदुत्तरोजनःअधिकारीस्थितःविश्वस्तस्यजनस्यकुमार्गेप्रवर्तमानस्यनिवारणंसःनमन्यतेचेत्तस्यश्रेष्ठस्यमहान्व्यतिक्रमःअन्यायोयतःअतोजुगुप्सितमितिसंबंधः कुमार्गेसक्ताःस्वस्मिन्विश्वस्तास्तेतस्मात्तेवारणीयाएवनपुनःप्रवर्तनीयाइतिकृपालोर्धर्मएवेतिभावः १५ समाधिभाषात्मकग्रंथेधिकार्यभावादुपरम्यतइतिनवक्तव्यमितिविज्ञापयति

अतोन्यथाकिंचनयद्विवक्षितंपृथग्दृशस्तत्कृतरूपनामभिः ॥ नकर्हिचित्कापिचदुःस्थितामतिर्लभेतवाताहतनौरिवास्पदम् १४ जुगुप्सितंधर्मकृतेनुशासनंस्वभावरक्तस्यमहान्व्यतिक्रमः ॥ यद्वाक्यतोधर्मइतीतरःस्थितोनमन्यतेतस्यनिवारणंजनः १५ विचक्षणोस्यार्हतिवेदितुंविभोरनंतपारस्यनिवृत्तितःसुखम् ॥ प्रवर्तमानस्यगुणैरनात्मनस्ततोभवान्दर्शयचेष्टितंविभोः १६ त्यक्त्वास्वधर्मंचरणांबुजंहरेर्भजन्नपक्कोथपतेत्ततोयदि ॥ यत्रक्कवाभद्रमभूदमुष्यकोवार्थआप्तोभजतांस्वधर्मतः १७

विचक्षणइति निवृत्तितोगुणैःप्रवर्तमानस्यानात्मनोरयानंतपारस्यविभोःसुखंविचक्षणोवेदितुमर्हतियस्मात्ततोभवान्पूज्यस्त्वंविभोश्चेष्टितंदर्शयेत्येकान्वयःअनुष्ठितनिवृत्तिधर्मोत्सत्वादिगुणैर्जगत्सृष्ट्यादौप्रवर्तमानस्यानात्मनःअस्वामिकार्यस्यजीवस्यअपरिमितमूर्तेर्विभोर्भगवतःसकाशात्यद्भविष्यत्सुखंभवतितत्सुखंविचक्षणोविशिष्टाचार्यःसात्विकप्रकृतिर्ज्ञातुंयोग्य इतियस्मात्तस्माद्विभोः सर्वगस्यहरेश्चरितंसमाधिभाषात्मकग्रंथकरणेनज्ञापयेत्यतोधिकार्यभावान्नोपरंतव्यमितिभावःअनात्मनोबुद्ध्यादेर्गुणैःसत्वादिभिःशब्दादिषुप्रवर्तमानस्यजनस्यसुखायविभोश्चेष्टितंदर्शयेतिवा १६ इतोपिप्रवृत्तिधर्मोपदेशान्निवृत्तिधर्मोपदेशोवरीयानित्याह त्यक्त्वेति अथस्वधर्मत्यक्त्वाहरेश्चरणांबुजंभजंस्ततःपचपक्कःपतेत्तदाअमुष्यपत्रकवाभद्रमभूत् स्वधर्मंभजताकोवाअर्थआप्तएवेत्येकान्वयः भगवदविषयस्वधर्मानुष्ठानात्मकप्रवृत्तिधर्मंत्यक्त्वानिवृत्तिधर्मविधायकशास्त्रोक्ताचारैःहरेःपादपद्मंसेवमानःपुरुषस्तस्मादनधिगतापरोक्षज्ञानादिस्तत्फलपरिपाकोरागाद्यंतरायविहतःस्खलेत्तथाप्यमुष्यपुंसः क्षिप्रंभवतिधर्मात्मेत्यादिप्रमाणाद्यत्रक्ववाजन्मांतरेश्रीमदादिकुलोद्भूतस्यनिवृत्तिधर्मात्मकंभद्रमेष्यतीतिनिश्चितंयत्तदतीतत्वेनभण्यतइतिवचनादभूद्भविष्यत्येव केवलंप्रवृत्तिधर्मंभजतामनुतिष्ठतांअस्खलनेपिधर्मादिपुकोवापुरुषार्थआप्तोनकोपीतिभावः तस्मान्निवृत्तिधर्मविधायकशास्त्रंभवान्करोत्वितिप्रार्थये १७

१ मोक्षधर्म विवरण शास्त्र मित्यर्थः ।

तस्माद्विवेकिना प्रवृत्तिधर्मं विहाय निवृत्तिधर्म एवानुष्ठेय इत्याह तस्येति कोविदस्तस्यैव हेतोः प्रयतेत उपर्यधो भ्रमतां यन्न लभ्यते गभीररंहसा कालेनान्यतः सर्वत्र तद्दुःखवत् सुखं लभ्यत इत्यैकान्वयः अनंतपारस्यापि हरेर्मुख्यप्रसादलभ्यं यत्सुखमुक्तं तस्यैव हेतोर्नान्यस्य तत्सुखहेतुनिवृत्तिधर्माख्यसाधनस्यार्थे प्रयत्नं कुर्यात् यत्सुखं भूस्वर्गादिषु प्रवर्तमानानां प्रवृत्तिधर्मा गां पुरुषाणां न सुलभमिति रंसरं निवृत्तिधर्मसंबंधानां नाप्यव्यक्तवेगेनानेकजन्मपरिमितेन कालेनान्यतः सर्वदेवेभ्योऽत्यंतभिन्नाद्धरेः सर्वदेशकालेषु निर्दुःखं स्वस्वरूपसुखमभिव्यज्यते तस्मान्निवृत्तिधर्म एव श्रेयानिति भावः यथा पापिनां प्रयत्नं विनाऽदृष्टेरेण दुःखं लभ्यते तथा निवृत्तिधर्माणामपि साधनसामग्रीं विनाऽनिरायासेन सुखं लभ्यत इत्यस्मिन्नर्थे दुःखवदिति दृष्टांतो वा स्वर्गादौ भ्रमतां यत्सुखं न लभ्यते तो विवेकी तस्यैव सुखस्य हेतोः प्रयतेत एवशब्दव्यावर्त्यमाह तदिति अन्यतो विषयभोगात् यद्दुःखोपेतं सुखं तद्गभीररंहसा कालेन सर्वत्र लभ्यते तस्मात्तादृशसुखार्थं न यतनीयं किंतु तद्व्यतिरिक्तस्यानित्यस्य केवलस्य स्वरूपसुखस्येति भावः १८ इतोपि निवृत्तिधर्म एव श्रेयानित्याह नवा इति अंग हे भगवन् मुकुंदसेवी जनोऽन्यवन्मुकुंदासेवमानवज्जातु कदाचिदपि कथंचन कस्माच्चिन्निमित्तात्संसृतिं न व्रजेत् वैशब्देन नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति इतिवाक्यं प्रमाणयति कुत इति तत्राह स्मरन्निति मुकुंदस्य मनसा चरणारविंदालिंगनसुखं स्मरन्ननुभवन् रसज्ञो जनः पुनर्विहातुं नेच्छेदित्यन्वयः १९ मुकुंदरूपमाह इदमिति स भगवानिदं विश्वमिव न तु विश्वं किंतु इतरः विलक्षणलक्षणः कुतः जगत्स्थाननिरोधसंभव इति यतः जगत्स्थापयति निरोधयति संहरति तं भावयति उत्पादयतीति तथोक्तः जगत्स्रष्टृत्वादिलक्षणलक्षितसार्वज्ञसर्वस्वातंत्र्यसर्वशक्तिसर्वस्वामित्वादिगुणपूर्णत्वादसर्वज्ञत्वादिगुणविशिष्टाज्जगतो

तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः ॥ तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा १८ नवै जनो जातु कथंचनव्रजेन्मुकुंदसेव्यन्यवदंग संसृतिम् ॥ स्मरन्मुकुंदांघ्र्युपगूहनं पुनर्विहातुमिच्छेन्न रसग्रहो जनः १९ इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसंभवः ॥ तद्धि स्वयं वेद भवांस्तथापि प्रादेशमात्रं भवतः प्रदर्शितम् २० त्वमात्मनात्मानमवेह्यमोघदृक्परस्य पुंसः परमात्मनः कलाम् ॥ अजं प्रजातं जगतः शिवाय तन्महानुभावाभ्युदयोऽधिगण्यताम् २१ इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः ॥ अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनम् २२ अहं पुरातीतभवेऽभवं मुने दास्यास्तु कस्याश्चन वेदवादिनाम् ॥ निरूपितो बालक एव योगिनां शुश्रूषणे प्रावृषि निर्विविक्षताम् २३

भवो नु भवांसिद्ध इति हिशब्दः किंच भगवान्स्वयं तद्वैलक्षण्यं वेद जानाति हि यस्मात्तस्माद्वैक्यकथनं प्रमाणविरुद्धमिति भावः तथापि भवतः सर्वं सिद्धं न मया वक्तव्यांशोऽस्ति तथाप्युपाध्यायपुरो बालवद्व्याकुलाकाशसदृशज्ञानवतः भवतः केवलं प्रादेशाकाशपरिमितं ज्ञानं प्रदर्शितं मयेति शेष इत्यन्वयः २० तद्धि स्वयं वेदेत्युक्तं विविच्य विज्ञापयति त्वमिति हे अमोघदृक् त्वमजमात्मानं परमात्मनः परस्य पुंसः कलां जगतः शिवाय प्रजातमात्मनाऽवेहीत्यन्वयः आदानादिकर्तुः परमपुरुषस्यांशमवतीर्णं स्वत एव परोपदेशमंतरेण जानासि अत्र लोट् लडर्थे अन्यथाऽमोघदृक्त्वमेवानुपपन्नं स्यात् तद्धि स्वयं वेदेति च विरुद्धं स्यात्तन्महानुभावाभ्युदयः तस्य तव महासामर्थ्यलक्षणचरित्रोदयस्त्रिलोकहिताय गण्यतां प्राधान्येन संख्यापकथ्यतां तेन जगतः शिवं भवतीत्यभिप्रायः २१ भगवन्महिमाभ्युदयवर्णनात्कथं जगतः शिवं स्यादिति तत्राह इदमिति यदुत्तमश्लोकस्य हरेर्गुणानुवर्णनं इदं हि पुंसस्तप आदेरपरोक्षज्ञानद्वारा मोक्षसाधनत्वात्कविभिरविनष्टफलात्मकोऽर्थो निरूपितः हिशब्दोऽवधारणे हेतौ वा तपः कायक्लेशलक्षणं श्रुतं शास्त्रश्रवणं स्विष्टं उत्तमकल्पनया यजनं सूक्तमध्ययनं बुद्धं ज्ञानं दत्तं दानं एवं हरिमहिमानुवर्णनेन सर्वस्य शिवसंभवात्तदेव त्वया कर्तव्यमिति भावः २२ इदानीं हरिकथाश्रवणादि शिवकरमिति वक्तुं स्वातीतजन्मकथनपूर्वकं स्वस्य भागवतत्वं गतिप्रकारमाह अहमिति पुराशब्दस्यातीतकालसामान्यवाचित्वेनानिश्चयानुदयात्तदर्थमतीतेत्युक्तं अनंतरातीतजन्मनीत्यर्थः तुशब्द इतरदासीजातिवैशिष्ट्यद्योतनार्थः योगिनां संन्यासिनां कथंभूतानां प्रशंसायां लौल्यादिदोषरहितो बालः प्रावृषि चतुर्मासे काले निर्विविक्षतां एकत्र वासं कर्तुमिच्छताम् २३

शिष्यगुणेनतेषांप्रवृत्तिमाह तइति निरस्तसमस्तचंचलस्वभावेजिह्वादींद्रियनिग्रहवति अतएवनिरस्तबालक्रीडासाधनेअनुकूलवर्तिनिपरिचराति अत्यल्पबालविग्रहधारिणिमयितेयोगिनोऽनुग्रहलक्ष पांकृपांचक्रुरित्यन्वयः किंविशिष्टास्तुल्यदर्शनाः यद्यपितुल्यंगुणक्रियारूपैःसमंब्रह्म पश्यंतः यथास्थितवस्तुदर्शिनोतथापीतिशेषः २४ किंतच्छुश्रूषाकर्मेतितत्राह उच्छिष्टेति ब्रह्मकुलोद्भवानाम चतुर्थाश्रमइति प्रकाशनायद्विजैरितिकथितं । उच्छिष्टपात्रोद्धरणंगोमयोदकेनमार्जनंवातत्स्थलेलेपनंतत्रानुज्ञातः नहि शूद्रस्यतदनुज्ञानाभावेउच्छिष्टस्पर्शनंसुतरांतद्भक्षणंवाशक्यं लिप्यंते उपदिश्यंतेसिध्यंतेप्राणाएतैरितिलेपाओदनास्तदुक्तोच्छिष्टानामोदनानामदनंप्रत्यनुज्ञातइतिवा अनेनस्वशरीरयात्रानिर्वाहमाह तदनुवर्तित्वंस्पष्टमाह सकृदिति चशब्दएवार्थे यतयःसकृदेव मुंजतेतथाहमपिसकृदेवमुंजे तत्फलमाह तदिति तेनकर्मणासकृद्भोजनेनअपास्तंनिरस्तंकिल्बिषंपापंयस्यसतथा ततःकिमभूदितितत्राह एवमिति एवमुक्तप्रकारेणप्रवर्तमानस्यविशेषेणशुद्धांतःकरणस्यतेषांपरमहंसानांधर्मेविषयवैराग्यलक्षणेभगवत्कथाश्रवणाद्यभ्यासलक्षणेवा अभिरुचिरुत्कंठाप्रजायतेइत्यन्वयः संततानुवृत्तिसूचनायलट्प्रयोगः २५ अभिरुच्याकिंजातमितितत्राह तत्रेति

तेमय्यपेताखिलचापलेऽर्भकेदांतेयतक्रीडनकेऽनुवर्तिनि ॥ चक्रुःकृपांयद्यपितुल्यदर्शनाःशुश्रूषमाणेमुनयोल्पभाषिणि २४ उच्छिष्टलेपाननुमोदितो द्विजैःसकृत्स्मभुंजेतदपास्तकिल्बिषः ॥ एवंप्रवृत्तस्यविशुद्धचेतसस्तद्धर्मएवाभिरुचिःप्रजायते २५ तत्रान्वहंकृष्णकथाःप्रगायतामनुग्रहेणाशृणवंमनोहराः ॥ ताःश्रद्धयामेनुसवंविशृण्वतःप्रियश्रवस्यंगतदाऽभवन्मतिः २६ तस्मिंस्तदालब्धरुचेर्महामुनेप्रियश्रवस्यस्खलितामतिर्मम ॥ ययाहमेतत्सदसत्स्व मायया पश्येमयिब्रह्मणिकल्पितंपरे २७ इत्थंशरत्प्रावृषिकावृतूहरेर्विशृण्वतोमेनुसवंयशोमलम् ॥ संकीर्त्यमानंमुनिभिर्महात्मभिर्भक्तिःप्रवृत्तात्मरज स्तमोपहा २८ तस्यैवंमेनुरक्तस्यप्रश्रितस्यहतैनसः ॥ श्रद्दधानस्यबालस्यदांतस्यानुचरस्यच २९ ज्ञानंगुह्यतमंयत्तत्साक्षाद्भगवतोदितम् ॥ अन्व वोचन्गमिष्यंतःकृपयादीनवत्सलाः ३० येनैवाहंभगवतोवासुदेवस्यवेधसः ॥ मायानुभावमविदंयेनगच्छंतितत्पदम् ३१

तत्रतत्सकाशेमनोहराःकृष्णकथाअनुदिनंप्रातःसवनादनंतरंप्रगायतांकीर्तयतांपरमहंसानांअनुज्ञालक्षणानुग्रहेणअशृणवमित्यन्वयः अंगश्रीवेदव्यास तदाश्रद्धयानुसवंत्रिसंध्यमपिताःकथाविशृण्वतोमे मतिःध्यानलक्षणोपासना प्रियश्रवसिपरममंगलकीर्तौहरावभवदित्यन्वयः २६ अखंडस्मरणोपासनाफलमाह तस्मिन्निति रागाद्यवचैरनुपहतत्वादस्खलितानिरंतरंस्थिरतयाऽखंडोपासनमभवदि त्यन्वयः अहंययाऽखंडोपासनयाएतत्सदसत्कार्यकारणात्मकंजगन्मयिस्थितेबिंबभूतेब्रह्मणिपूर्वेहरौतत्सृष्टंतत्पालितंतत्संहृतंचेतिपश्ये कथंभूतंस्वमायया स्वेच्छयामदनुग्रहाभिमुख्यायत्रस्थापितामि तिकल्पितंसंकल्पितमित्यन्वयः ब्रह्मण्यध्यस्तंजगत्पश्यइत्यंगीकारेमिथ्याज्ञानित्वंप्रसज्जते नहिशुक्त्यध्यस्तरजतंपश्यन्यथार्थज्ञानीभवति किंतुनेदंरजतंशुक्तिरेवेतिपश्यंस्तथानेदंजगत्किंतु ब्रह्मैवेति नचात्रतथेत्यलमतिप्रसंगेन २७ भक्त्युपासनयोरन्योन्यनिमित्तकभावोस्तीत्यभिप्रेत्याह इत्थमिति इत्थमुक्तप्रकारेणमुनिभिःसर्वज्ञैर्योगिभिःसम्यक्कीर्त्यमानंअमलंहरेर्यशोनुसवनंश रत्प्रावृषिकावृतूविशेषेणशृण्वतोममहरौतदितरविरागवती आत्मनोमनसोरजोगुणतमोगुणनिमित्तरागाद्यन्यथाज्ञानादिदोषहरामहत्त्वज्ञानलक्षणाभक्तिःप्रवृत्ताभूदित्यन्वयः २८ तत्सहकारिभगवदंतरे णकेवलंयशःश्रवणेनैवकथंज्ञानोदयइतिचेत्तत्राह तस्येति २९ गमिष्यंतश्चातुर्मास्यानंतरम् ३० ३१

एतन्मयोक्तंज्ञानंतापत्रयात्मकसंसारनिवर्तकौषधंसमीचीनंसूचितंलोकस्येतिशेषःतस्मादेतादृशंज्ञानमेवापाद्यमितिभावःतर्हिकर्मकरणंव्यर्थमितितत्राह यदीति यायजूकैःक्रियमाणमग्निष्टोमादितदपिय
न्निब्रह्मणिअपरिच्छिन्नगुणेईश्वरेईशादपिपरेहरौभावितमर्पितंतर्हिज्ञानमुत्पद्यते तेनतापत्रयचिकित्सितं एतदुक्तंभवति ब्रह्मार्पणबुद्ध्याक्रियमाणेनकर्मणाशुद्धांतःकरणस्य[illegible]
प्रथाभक्त्याजनितापरोक्षज्ञानेनतापत्रयात्मकःसंसारोनिवर्ततइति यत्ब्रह्मणिभावितंयत्कर्मतदेततापत्रयचिकित्सितंसंसूचितमित्येकान्वयोवा ३२ ननुकर्मणांबंधस्वभावात्कथंतापत्रय[illegible]मित्यत
आह आमयइति सुव्रमेवव्रतंयेनसतथातस्यसंबुद्धिः हेसुव्रत सत्यसंकल्पादिव्रतोपेतेतिवा येनद्रव्येणभूतानामामयंआमयःश्लेष्मादिर्जायतेतदेवामयकारणंद्रव्यंचिकित्सितमौषधीकृतं तद्रोगलक्षणंपुना
तिपरिहरतीतिहि तदिदमनुभवसिद्धमितिहिशब्दार्थः एवकारस्तुतस्यप्राधान्यद्योतनार्थः नतुद्रव्यांतरनिषेधार्थः कुतःऔषधीकरणायद्रव्यांतरसंयोगदर्शनाच्चशब्दउपमार्थः सयथा ३३ एवंतथा
नृणांसंसारिणांक्रियालक्षणायोगाउपायाःस्वतःसंसारहेतवः तएवक्रियायोगाःपरेपूर्णेब्रह्मणिकल्पिताःअर्पिताःआत्मविनाशायअनेकजन्मसंचितदुष्कर्मस्वरूपनाशायकल्पंते तस्मात्केवलंकर्म बंधकं
ब्रह्मार्पणेनौषधीकृतंभक्तिज्ञानद्वारासंसाराख्यरोगनिवर्तकमितिभावः ३४ ज्ञानद्वाराकर्मणोमोचकत्वमाह यदिति अत्रकर्मभूमौभगवदर्पणेनभगवत्परितोषणंयत्कर्मजीवैःक्रियतेयद्भक्तियोगसमन्वितं
परोक्षापरोक्षोपपदंज्ञानंतज्ज्ञानं तस्यकर्मणोधीनंहिकर्मणाज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानिकर्माणीतिश्रुतेः कर्मणाज्ञानजायतेहियस्मात्तस्मात्कर्म ज्ञानद्वाराबंधनिवर्तकमितिभावः अ

एतत्संसूचितंब्रह्मन्तापत्रयचिकित्सितम् ॥ यदीश्वरेभगवतिकर्मब्रह्मणिभावितम् ३२ आमयोयंचभूतानांजायतेयेनसुव्रत ॥ तदेवह्यामयद्रव्यंतत्पुना
तिचिकित्सितम् ३३ एवंनृणांक्रियायोगाःसर्वेसंसृतिहेतवः ॥ तएवात्मविनाशायकल्पंतेकल्पिताःपरे ३४ यदत्रक्रियतेकर्मभगवत्परितोषणम् ॥ ज्ञानं
यत्तदधीनंहिभक्तियोगसमन्वितम् ३५ कुर्वाणायत्रकर्माणिभगवच्छिक्षयासकृत् ॥ गृणंतिगुणनामानिकृष्णस्यानुस्मरंतिच ३६ ॐनमोभगवतेतुभ्यं
वासुदेवायधीमहि ॥ प्रद्युम्नायानिरुद्धायनमःसंकर्षणायच ३७ इतिमूर्त्यभिधानेनमंत्रमूर्तिममूर्तिकम् ॥ यजतेयज्ञपुरुषंससम्यग्दर्शनःपुमान् ३८

त्राग्निष्टोमादिकर्मसुयत्कर्मभगवत्परितोषणमितिवा ३५ कथंकारंकर्मणाज्ञानमुत्पद्यतइतितत्राह कुर्वाणाइति यत्रयस्ययजमानस्यार्थेयस्मिन्यज्ञेहवनादीनिकर्माणिकुर्वाणावैदिकाऋत्विगादयः
स्मर्तव्यःसततंविष्णुर्विस्मर्तव्योनजातुचिदितिभगवच्छिक्षयाऽसकृन्निरंतरंआदिमध्यावसानेषुवाकृष्णस्यगुणान्स्मरंतिनामानिगृणंति ३६ योयजमानःस्वयंचनित्यमोंनमोभगवतइत्यादिमूर्त्यभि
धानेनमूर्तिवाचकेनमंत्रेणमंत्रप्रतिपाद्यमूर्तिं अमूर्तिंकंप्रकृतिवैकृतविग्रहविधुरं वासुदेवादिरूपं यज्ञपुरुषं चत्वारिशृंगात्रयोअस्यपादाइत्यादिऋक्प्रतिपाद्याकारंभगवंतंउद्दिश्ययजते सपुमान्यजमानः
परोक्षापरोक्षज्ञानवान्भवति तेचऋत्विगादयःसम्यक्दर्शनाःसमीचीनशास्त्रीयज्ञानाःसर्वज्ञाश्चसम्यक्भगवंतंदर्शयंतिज्ञापयंतीतिसम्यक्दर्शनाःसर्वेषांहरिपरायणत्वात् ॐसर्वगुणपूर्ण सर्वजनरंजके
तिवा ओमित्येवंरूप भगवतेषड्गुणपूर्णायतुभ्यंनमः सर्वत्रवसतिदीव्यतीतिवासुदेवः बलज्ञानरूपत्वाद्दैत्यनिरसनशीलत्वात्क्रीडाशीलत्वाद्वातस्मैधीमहिस्मरेम प्रकृष्टंद्युम्नंहिरण्मयंतद्रूपंयस्यसःप्र
द्युम्नः हिरण्यश्मश्रुर्हिरण्यकेशआप्रणखात्सर्वएवसुवर्णइतिश्रुतेःतस्मै नकेनापिनिरुद्धइत्यनिरुद्धः अतोमुख्यप्राणःसोस्यास्तीत्यनीतेनानिनामुख्यप्राणप्रसादवतापुरुषेणरुद्धःवशीकृतइतिवा अनि
रुद्धःसंसारमुक्तास्तान्दधातिधारयतिपोषयतीतिवा अनिरस्तंमुखाख्यंनामयत्तइतिवा तस्योदितिनामेतिश्रुतेः तस्मै सम्यक्पापकर्षणशीलत्वात्संकर्षणःसमीचीनंकर्षणो[illegible] सम
न्तःप्रत्येकंपृथक्मंत्रत्वद्योतनार्थःइतिशब्दःप्रभृतिवचनः तस्माहत्विगादिभिर्वैष्णवैर्यजमानाभगवंतयजानाज्ञानवंतोभवंतीतिभावः ३७ ३८

स्वानुभवसिद्धमेतदितिविज्ञापयति इममिति केशवःमदनुष्ठितमिमंस्वधर्मनियममवेत्यऐश्वर्यमीश्वरविषयंज्ञानंस्वस्मिन्भावंभक्तिंचमेमह्यं अदादित्यन्वयः ३९ इदानींभवतारम्भप्रयोजनालंबुद्धिका रणविज्ञापनमुपसंहरति त्वमिति हेअदभ्रश्रुत श्रोतामंतेत्यादेःसंपूर्णश्रोतृत्वादिगुणसंपन्न त्वंईश्वरोपिऐश्वर्यादिगुणसपन्नत्वेनाप्तव्यार्थनिधुरोपि सज्जनवात्सल्यादेव हेनतत्कीर्तिगर्भग्रंथकरणेनाद्रि यांविदंतीतिविदोज्ञानलाभकामाः तेषांवाविचारकाणांवाबुभुत्सितंज्ञातुमिष्टसमाप्यतेसंपूर्णभवति तादृशंश्रीभागवतलक्षणंविभोःसमर्थस्यतवविश्रुतंयशःप्रख्याहिमुहुर्धापयेत्यन्वय तस्मादन्येषांभाग वतकरणशक्त्यभावात्तत्कृतिरेवालबुद्धिकारणमितिभावः ॥ ४० ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजयध्वजकृतटीकायांपंचमोऽध्यायः ॥ ५ ॥ इदंव्यासनारदसंवादोपाख्यानंसूत शौनकादि भ्योब्रवीदितिविज्ञापयितुमाह एवमिति हेब्रह्मन् सत्यवतीसुतोव्यासःदेवर्षेर्जन्मकर्मच एवंश्रुत्वापुनरपितनारदंपप्रच्छेत्येकान्वयः १ नारदस्नेहपाशात्तद्यशःख्यापनायचसर्वज्ञोपिव्यासस्तद्वयःश्र वणाच्चपृच्छति भिक्षुभिरिति तवविशिष्टज्ञानोपदेष्टृभिर्भिक्षुभिर्ज्ञानभिक्षादानशीलैर्विप्रवासितेदेशांतरंगते आद्येबाल्येवयसिवर्तमानोभवान्तदनंतरंकिमकरोदित्येकान्वयः २ तदेवविविच्यपृच्छति स्वा यंभुवेति स्वयंभुवोब्रह्मणःपुत्रस्तेतव परंज्ञानोपदेशोत्तरकालीनंवयः कयावृत्त्यावर्तितं मरणकालेप्राप्तेइदंशरीरंवाउदस्राक्षीरुत्सृष्टवानसीत्येकान्वयः ३ सर्वेषांपूर्वजन्मसंज्ञादीनांनिराकृति

इमंस्वधर्मनियममवेत्यमदनुष्ठितम् ॥ अदान्मेज्ञानमैश्वर्यंस्वस्मिन्भावंचकेशवः ३९ त्वमप्यदभ्रश्रुतविश्रुतंविभोःसमाप्यतेयेनविदांबुभुत्सितम् ॥ प्र ख्याहिदुःखैर्मुहुरर्दितात्मनांसंक्लेशनिर्वाणमुशंतिनान्यथा ॥ ४० ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेपंचमोऽध्यायः ॥ ५ ॥ सूतउवाच ॥ एवंनिश म्यभगवान्देवर्षेर्जन्मकर्मच ॥ भूयःपप्रच्छतंब्रह्मन्व्यासःसत्यवतीसुतः ॥ १ ॥ व्यासउवाच ॥ भिक्षुभिर्विप्रवसितेविज्ञानादेष्टृभिस्तव ॥ वर्तमानोव यस्याद्येततःकिमकरोद्भवान् २ स्वायंभुवकयावृत्त्यावर्तितंतेपरंवयः ॥ कथंवेदमुदस्राक्षीःकालेप्राप्तेकलेवरम् ३ प्राक्कल्पविषयामेतांस्मृतिंतेसुरसत्तम ॥ नह्येषव्यवधात्कालएषसर्वनिराकृतिः ४ नारदउवाच ॥ भिक्षुभिर्विप्रवसितेविज्ञानादेष्टृभिर्मम ॥ वर्तमानोवयस्याद्येततएतदकारषम् ५ एकात्मजामे जननीयोषिन्मूढाचकिंकरी ॥ मय्यात्मजेऽनन्यगतौचक्रेस्नेहानुबंधनम् ६ साऽस्वतंत्रानकल्पासीद्योगक्षेमंममेच्छती ॥ ईशस्यहिवशेलोकोयोषादा रुमयीयथा ७ अहंचतद्ब्रह्मकुलऊषिवांस्तदपेक्षया ॥ दिग्देशकालाव्युत्पन्नोबालकःपंचहायनः ८

निराकरणंयस्मात्सर्वनिराकृतिरेषकालः सुरसत्तमज्ञानिश्रेष्ठ तवातीतब्रह्मकल्पविषयामेतांस्मरणशक्तिंनैवव्यवधात्तिरोहितांनैवाकरोत् आश्चर्यमेतदित्यस्मिन्नर्थेहिशब्दःएवकारस्त्ववधारणार्थः ४ विज्ञातस्वकीर्तिवितरणव्यासाभिप्रायोनारदस्तत्प्रश्नंपरिहरति भिक्षुभिरिति उक्तार्थःश्लोकोयम् ५ स्वस्यसंन्यासिनामननुगमनेकारणमाह एकात्मजेति अहमेकएवआत्मजोपत्यंयस्याःसातथा यो षितांमध्येमूढाविवेकज्ञानशून्याकिंकरीदासीचएवंविधाममजननी नअन्यागतिराश्रयोयस्यसोनन्यगतिःतस्मिन्नात्मजेमयिस्नेहानुबंधनंचक्रइत्येकान्वयः ६ केवलंस्नेहमेवबद्धवतीनत्वशनवस नादिदानपूर्वकमित्याह सेति ममयोगक्षेम अप्राप्तस्यप्राप्त्युपाययोग प्राप्तस्यपरिपालनंक्षेममिच्छतीअस्वतंत्रापराधीनाकल्पासमर्थानासीदित्येकान्वयः कुतोलोकःसेवकोजनःईशस्यस्वामिनोवशेहिय स्माचस्मादित्यर्थः ईशावास्यमितिश्रुतेरीशस्यपरमेश्वरस्येतिवा कथमिवदारुमयीकाष्ठनिर्मितायोषायथाजडप्रवर्तकयंत्रपुरुषाधीनातथेत्यन्वयः ७ तर्हिकिमितितत्रवासइतितत्राह अहमिति चशब्द स्त्वर्थःपूर्वेणसमुच्चयार्थोवा अहंतस्यामातुरपेक्षयातस्मिन्ब्रह्मकुलएवब्राह्मणगृहएवऊषिवानित्यन्वयः कुलंवंशेगृहेसार्थेजातिसाकल्ययोरपीत्यभिधानात् तत्रवासेहेत्वंतरमाह दिगिति दिगाद्यन भिज्ञानेकारणमाह बालकइति पंचहायनाःसंवत्सरायस्यसतथोक्तः योहिदिगाद्यनभिज्ञःपंचहायनोबालकःसोहमित्येकान्वयः ८

कियंतं कालमवात्सीदितिप्रश्नस्ययावन्मरणपर्यंतमवात्समितिपरिहारमभिप्रेत्याह एकदेति स्पृशउपतापइतिधातोःआक्रमणेनतप्तःगांगोमतांल्लिकां अदशत् अभक्षयत् कालेनमृत्युनाचोदितःप्रे
रितः ९ सोहंतदामातुरंत्यंकर्मकृत्वा तन्मरणंभक्तानामभीष्टमीशस्यानुग्रहंमन्यमानउत्तरांदिशंप्रातिष्ठमित्यन्वयः १० एकएवसहायरहितःअहंतत्रोत्तरस्यांदिशिदेशान्समेतान्तीत्वयातइति
चतुर्थश्लोकेनान्वयः व्यालाश्चदुष्टगजाश्चउलूकाश्चशिवाःशृगाल्यश्चव्यालोलूकशिवाःतासामाजिरंक्रीडास्थानं प्रतिभयाकारंमृत्युमाह्वयदिवस्थितं अतएवघोरंमहदपारंविपिनमद्राक्षमित्येकान्वयः स
वैर्तुसंपत्त्यास्फीतान्समृद्धान् पुराणिग्रामाश्चव्रजाश्चआकराश्चपुरग्रामव्रजाकराःपुरंराजाश्रयः ग्रामोबहुजनाकीर्णः गोपालानांगवांचनिवासस्थानंव्रजः रत्नाद्युत्पत्तिस्थानआकरः खेटान्कृषकोपजी
वनप्रदेशान् पट्टनानिवाटयश्चतास्तथोक्तास्ताःपट्टनवाटीः जलस्थलयातिस्थितााराजधानीपट्टनं पुष्पोपजीविनांनिवासस्थानंवाटी वृक्षसमुदायोवनं आरोपितवृक्षसमुदायउपवनम् ११ इभैर्गजैर्भ
ग्नभुजद्रुमान्भर्जवृक्षायेषुतेतथोक्ताः भूर्जपत्रेभुजोभूर्जेमृदुत्वक्चर्मयष्टिकावितियादवः इभभग्नाःभुजाःशाखायेषांतेतथोक्ताःइभभग्नभुजद्रुमाःयेषुतेतथोक्ताइतिवातान् विचित्रधातुभिर्नानाविधगैरि
कहरितालादिभिःचित्राआश्चर्यरूपाअद्रयःगिरयःतान् शिवजलान्गुरुत्वादिदोषरहितान्जलाशयान्सरोवरादिजलाधारान् देवनिषेवितानलिनीःपुष्करिणीः १२ चित्रस्वनैर्नानाविधस्वरमधुरैः
पत्ररथैःपक्षिभिः सहविभ्रमंतःइतस्ततश्चलंतःभ्रमराभृंगाःविभ्रमद्भ्रमराःविभ्रमद्भ्रमराणांश्रीःशोभासमृद्धिर्यासुतास्तथोक्तास्ताः शराणांस्तंबाःशरस्तंबाःनलानिचवेणवश्चशरस्तंबाश्चकुशाश्चतेतथोक्ता

एकदानिर्गतांगेहाद्दुहंतींनिशिगांपथि ॥ सर्पोऽदशत्पदास्पृष्टःकृपणांकालचोदितः ९ तदातदहमीशस्यभक्तानांसमभीप्सितम् ॥ अनुग्रहंमन्यमानःप्रा
तिष्ठंदिशमुत्तराम् १० स्फीताञ्जनपदांस्तत्रपुरग्रामव्रजाकरान् ॥ खेटान्पट्टनवाटीश्चवनान्युपवनानिच ११ विचित्रधातुचित्राद्रीनिभभग्नभुजद्रुमान् ॥ जलाशयाञ्छिवजलान्नलिनीःसुरसेविताः १२ चित्रस्वनैःपत्ररथैर्विभ्रमद्भ्रमरश्रियः ॥ नलवेणुशरस्तंबकुशकीचकगह्वरम् १३ एकएवातिया
तोहमद्राक्षंविपिनंमहत् ॥ घोरंप्रतिभयाकारंव्यालोलूकशिवाजिरम् १४ परिश्रांतेंद्रियात्माहंतृट्परीतोबुभुक्षितः ॥ स्नात्वापीत्वाह्रदेनद्याउपस्पृष्टोग
तश्रमः १५ तस्मिन्निर्मनुजेरण्येपिप्पलोपस्थआश्रितः ॥ आत्मनात्मानमात्मस्थंयथाश्रुतमचिंतयम् १६ स्वप्नोमायाग्रहःशय्याजाग्रद्भासआत्मनः
॥ नामरूपक्रियाव्रात्तिःसंविच्छास्त्रंपरंपदम् १७

स्तैर्गह्वरःनिबिडोऽरण्यविशेषः वायुनाउद्धूताःस्वतःस्वनाःवेणवःकीचकाउच्यंते १३ १४ तृषापरीतःपानीयपानेच्छुःबुभुक्षितोअन्नकामः अतएवपरिश्रांतेंद्रियदेहोहं तत्रमहारण्येनद्याह्रदेउपस्पृ
ष्टःकृतपादप्रक्षालनादिकःस्नात्वातर्पणादिसकलाःक्रियाःविधायस्वादूदकंपीत्वातेनहेतुनागतश्रमोऽपगतालस्योभूत्वा १५ मनुष्यसंचाररहितेऽरण्येपिप्पलोपस्थेअश्वत्थमूलेआश्रितःस्थिरसु
खासनउपविष्टःसमाहितचित्तोभूत्वाआत्मनाविषयेभ्यःआहृतेनमनसाहृदिसंस्थितंआत्मानंप्रत्यगात्मानंयथापरमहंसेभ्यःश्रुतंतथाअचिंतयमित्येकान्वयः १६ यथाश्रुतमचिंतयमित्येतद्दर्शयितुंजाग्रदा
वस्थास्वरूपंनिरूपयति स्वप्नइति स्वप्नाद्यवस्थाआत्मनःपरमात्मनःसकाशादात्मनोजीवस्योत्पद्यंतेइत्यन्वयः तंत्रेणोपात्तत्वादात्मशब्दस्याद्विरावृत्तिःकर्तव्या जीवमनःस्थितमायारूपदृष्टश्रुत
वस्तुसंस्कारोपादानकोजाग्रत्पदार्थसदृशकारितुरगाद्यनेकपदार्थदृष्टिरूपःस्वप्नःसर्वेंद्रियोपरतिरूपत्वात्स्वप्नजागरितविषयग्रहणरहिताशय्यापरपर्यायासुषुप्तिः नामरूपक्रियासुवृत्तिर्यस्यतथोक्तः आ
भासःप्रत्ययःनामरूपक्रियाविषयप्रत्ययोजाग्रत् एतदवस्थात्रयकारणंब्रह्मनमृदादिवत्कार्यानुस्यूतं किंतुततोविलक्षणंतदित्यभिप्रेत्याह संविदिति समीचीनाप्रकृतिप्राकृतभिश्ररहिताविज्ञानंप
रमेतच्चयोक्तं सम्यक्निर्दोषमात्मानंवेत्तीतिसंवित्तदात्मानमेव वेदाहंब्रह्मास्मीतिश्रुतेःशास्त्रंसर्वंनियंतृ पद्यतइतिपदंपरममुत्तमंप्राप्तव्योत्तमं एवंजाग्रदाद्यवस्थाकर्तृत्वेनात्मादिभ्योन्यंतोपलक्षकंविशिष्टज्ञान
घनंसर्वांतर्यामि प्राप्तव्योत्तमंतुर्यंब्रह्मस्वरूपंश्रुतंतदेवाचिंतयमितिभावः १७

एतदेवविविच्यदर्शयति नेति चित्रमाश्चर्यरूपं चित्रंअविमिश्रमज्ञानात्मकंवा चित्तंचेतनंजविंत्रायतइतिवा चित्ज्ञानंतनोतिरातिज्ञानिनांबहुलीकरोतितदन्येषांददातिगुरुमुखेनातिवा चित्तरतंवा स्वहितत्रंमनोवृत्तिभेरकःसमुदाहृतइतिस्मृतेः चिनोतीतिचित्चेतासष्टाब्रह्मातत्तरातिअतीत्यवर्त्तते चिनोतिसृजतिरमयतिवा तस्मादुत्तमामितिवा भगवदैश्वर्यादिगुणसामग्रीभत्त्वंददूपं ... ह्वातं व्यासंभगवतःहरेःपदंवाएवंविधंतत्प्रकृत्यादिसंबंधविधुरत्वादिंद्रियार्थंजाग्रदवस्थांनानुगच्छेन्नस्वप्नावस्थांनसुषुप्त्यवस्थां चिंतितोर्थोमनोरथइत्यभिधानात् नमनोरथमतएवननिरोधंमरणंअनुगच्छेदि त्यस्यप्रत्येकमन्वयःचशब्दोमिथःसमुच्चयार्थे १८ ननुकालतोपिस्वप्नाद्युत्पत्तिदर्शनात्तत्कर्तृत्वंहरेःकथमित्याशंक्यसकलप्रपंचकर्तृत्वेनमुख्यकर्तृत्वात्तदंतःपातिस्वप्नाद्यवस्थाकर्तृत्वंकिंवक्तव्यमित्यभिप्र त्यप्रपंचसृष्ट्यादिकर्तृत्वमाह । सइति । सृष्ट्यग्रेसएकोभगवानासीदित्यवांतरान्वयः । सपुनःसिसृक्षुःअंतर्यामितयाअवतारैश्चक्रीडिष्यन्क्रीडितुमिच्छन्नात्मनःस्वस्मात्स्वोदरात्ब्रह्मादिपरमाणुपर्यंतमिदंजगत्सृष्ट्वाअंतर्यामितयाप्रविश्य प्रादुर्भावैश्चविहृत्यपुनश्चतज्जगच्चसंहृत्यप्रलयेकेवल एकाकी उदास्ते जीवप्रवृत्तिमत्युदासीनोवर्ततइत्यन्वयः । जगच्चाउदास्तइतिसंभवमावःप्रकृत्यादिसाधनांतर मंतरेणापिस्रष्टुंशक्तइतिमाहात्म्यंद्योतयितुं सृष्टिस्थितिसंहारकर्तृत्वमेवन ज्ञानादिकर्तृत्वंचास्तीति १९ इदानीमुपास्तिफलमाह ध्यायतइति भावेनभक्त्यानिर्वृतंपरमानंदमाप्तंचेतोयस्यसतथा तस्याउत्कंठायाःजातानामश्रूणांबाष्पाणांकलाभिर्बिंदुभिर्युक्तेअक्षिणीयस्यसतथातस्य शनैरव्यग्रेगस्वचरणकमलंध्यायतोमेहृदिहरिरासीत्प्रत्यक्षोभूदित्येकान्वयः २० प्रेम्णातिशयितभारेणनिर्भिन्नः

नेंद्रियार्थंनचस्वप्नंनसुप्तंनमनोरथम् ॥ ननिरोधंचानुगच्छेच्चित्रंतद्भगवत्पदम् १८ सएकोभगवानग्रेक्रीडिष्यन्निदमात्मनः ॥ सृष्ट्वाविहृत्यतज्जग्ध्वाउदास्तेकेवलःपुनः १९ ध्यायतश्चरणांभोजंभावनिर्वृतचेतसः ॥ औत्कंठ्याश्रुकलाक्षस्यहृद्यासीन्मेशनैर्हरिः २० प्रेमातिभरनिर्भिन्नपुलकांगोतिनिर्वृतः ॥ आनंदसंप्लवेलीनोनापश्यमुभयंमुने २१ रूपंभगवतोयत्तन्मनःकांतंशुचापहम् ॥ अपश्यन्सहसोत्तस्थौवैक्लव्याद्दुर्मनाइव २२ दिदृक्षुस्तदहंभूयःप्रणिधायमनोहृदि ॥ वीक्षमाणोपिनापश्यमवितृप्तइवातुरः २३ एवंयतंतंविजनेमामाहागोचरोगिराम् ॥ गंभीरश्लक्ष्णयावाचाशुचःप्रशमयन्निव २४ हंतास्मिन्जन्मनिभवान्नमांद्रष्टुमिहार्हति ॥ अविपक्वकषायाणांदुर्दर्शोहंकुयोगिनाम् २५ सकृद्यद्दर्शितंरूपमेतत्कामायतेनघ ॥ मत्कामःशनकैःसाधुःसर्वान्मुंचतिहृच्छयान् २६

समुल्लसन्जातःपुलकःरोमांचःप्रेमातिभरनिर्भिन्नपुलकोंगेयस्यसतथा आनंदसंप्लवेसुखप्रलयोदकेमग्नोहं तमेवापश्यमुभयंद्वितीयंसमाधिकंवानापश्यंसर्वोत्तमत्वादित्यन्वयः २१ ततःपरंकिमभूदि तितत्राह रूपमिति मनःकांतंमनोहरंहरेर्यद्रूपंअद्राक्षंतत्सहसाअपश्यन्नचक्षाणोदुर्मनाःदुःखितांतःकरणःमुक्तिप्राप्तःकैवल्यान्मोक्षादिवोत्तस्थावुदतिष्ठमित्यन्वयः २२ पुनःहरेरूपंदिदृक्षु हृदिमनःप्रणिधायस्थितःआतुरोरोगीवाचवितृप्तःअसंतुष्टोवीक्षमाणोप्यहंनापश्यमित्यन्वयः २३ हरेर्भक्तिवात्सल्यमाश्चर्यमितिदर्शयति एवमिति गिरावाचामगोचरोऽविषयोऽदृश्योगंभीरयाअगाधयाश्लक्ष्णया मधुरयावाचामानसीःशुचःप्रशमयन्निव नष्टाःकुर्वन्निवस्थितोहरिरेवंविजनेजनसंचाररहितेद्रष्टुंयतमानमाहेत्येकान्वयः २४ किमाहहरिरितितत्राह हंतेति हंताविस्मये भवानिहभूलोकेअस्मिन्जन्मनिशूद्रयोनौमांद्रष्टुंनार्हति कुतःकषेणभोगेनापतेगच्छतीतिकषायःपापंअभुक्तपापफलानां कुयोगिनांजन्मनाऽनभिज्ञानेनवाकुत्सितःयोगोध्यानादिकएषामस्तीतिकुयोगिनः । तेषांपुंसांदुर्दर्शःद्रष्टुमशक्यः २५ तर्हिकिमितिदर्शितमितितत्राह सकृदिति अनघ सांसारिकदुःखरहित तेतवकामाय अथकदाहमुपश्येयमित्युत्कंठायै । तयाकिंफलमभूदितितत्राह मत्कामइति मद्भक्तःपुरुषःक्रमेणसर्वान्हृच्छयान्प्राकृतान्कामान्साधुमुंचतीत्यन्वयः २६

परमहंससेवाफलमाह सदिति दीर्घयाबहुकालीनयासतांपरमहंसानांसेवयापरिचर्ययामयिदृढामतिः मननलक्षणाभक्तिर्जातैवयस्मादतःअवद्यंदोषरूपंशूद्रजातित्वादिमंलोकंदेहंहित्वापश्चात्प्रथुद्ध्वेन जातस्त्वंमज्जनतांममजनतांपरमभागवतत्वंगंतासीत्यन्वयः २७ मयिनिबद्धाइयंमतिःकदाचिदपिनविपद्येतननश्येत् प्रजानांसर्गःसृष्टिःनिरोधःसंहारएतयोःस्मृतिर्नाशकयोःरपिहिस्मृतिरपिस्मृतिर्भवेत् श्चनविपद्येत कस्मान्मदनुग्रहात् अनेनभगवद्भक्तसंगोभिमतफलइत्युक्तंभवति २८ ईश्वरंईगनशीलंसकलजनप्रवर्तनशक्तिमत् अलिंगंजडशरीररहितरुद्रादन्यद्वा ईश्वरमित्युक्तेपिमहिमहत्तान् हरइतिशंकानिरासार्थंवाअलिंगमित्युक्तं नभःलिंगंगमकंदृष्टांतत्वेनयस्यतत्तथोक्तंआकाशवत्सर्वगमित्यर्थःतन्महद्भूतंब्रह्मएतावदुक्त्वाविरराम तेनानुकंपितःकृपापात्रीकृतःअहंतस्मैमहतांमहीयसेतस्मैमहा भूताय शीर्ष्णाशिरसा अवनामंनमस्कारं विदधेकृतवानित्यन्वयः २९ गतत्रपःलज्जारहितः अनंतस्यहरेःकृतानिकर्माणिविक्रमलक्षणानि नामानितुष्टमनाः यदृच्छालाभेनालंबुद्धिमान् गतस्पृहः परवस्तुस्पृहारहितः पटगतावितिधातोःपटोगतिःनविद्यतेगतिरीश्वरादन्योयस्यसोपटःअनन्यगतिरित्यर्थः असंगतोविरक्तइतिवा कंथादिमावरणरहितोवा अथवाअपःपुराणार्थविरीतिवाक्यात्अतःइतिसंदो

सत्सेवयादीर्घयावैजातामयिदृढामतिः ॥ हित्वावद्यमिमंलोकंगंतामज्जनतामसि २७ मतिर्मयिनिबद्धेयंनविपद्येतकर्हिचित् ॥ प्रजासर्गनिरोधेपिस्मृतिश्च मदनुग्रहात् २८ एतावदुक्त्वोपरराममतन्महद्भूतंनभोलिंगमलिंगमीश्वरम् ॥ अहंचतस्मैमहतांमहीयसेशीर्ष्णावनामंविदधेनुकंपितः २९ नामान्यनंत स्यगतत्रपःपठन्गुह्यानिभद्राणिकृतानिचस्मरन् ॥ गांपर्यटंस्तुष्टमनागतस्पृहःकालंप्रतीक्षन्नपटोविमत्सरः ३० एवंकृष्णमतेर्ब्रह्मन्नसक्तस्यामलात्मनः ॥ कालःप्रादुरभूत्कालेतडित्सौदामिनीयथा ३१ एवंमयिप्रयुंजानेशुद्धांभागवतींतनुम् ॥ प्रारब्धकर्मनिर्वाणोन्यपतत्पांचभौतिकः ३२ कल्पांतइदमा दायशयानेंभस्युदन्वतः ॥ शिशयिषोरनुप्राणंविविशेंतरहंविभोः ३३ सहस्रयुगपर्यंतउत्थायेदंसिसृक्षतः ॥ मरीचिमिश्राऋषयःप्राणेभ्योहंचजज्ञिरे ३४ अंतर्बहिश्चलोकांस्त्रीन्पर्येम्यस्कंदितव्रतः ॥ अनुग्रहान्महाविष्णोरविघातगतिःक्वचित् ३५ देवदत्तामिमांवीणांस्वरब्रह्मविभूषिताम् ॥ मूर्छयित्वाहरि कथांगायमानश्चराम्यहम् ३६

धनंवा हेव्यास पटःसमर्थः । अपटोनिकेतरहितइतिकेचित्तच्चिंत्यं । विमत्सरःविगतमात्सर्यःएवंविधोहंमरणकालंप्रतीक्षमाणोभवमितिशेषः ३० कृष्णेपरमानंदरूपेकालेदेहरोगादिर्यस्यसतथातस्य कालःमरणाख्यःप्रावृट्कालेप्राप्तेसौदामिन्याख्याविद्युद्यथासहसापद्यतेतथेत्यर्थः तडिदीप्ताशतह्रदासौदामिन्यैरावतीचतद्धेद्याभिमंत्रणामितिवचनात्कुरुपांडववत्पृथगुक्तिर्दृष्टव्याइतिभावः ३१ मयिशुद्धांनिर्दोषांभागवतींतनुंहरिमूर्तिंएवंप्रयुंजानेध्यायतिसतिफलदानायप्रारब्धकर्मविनाशवान्पंचाभिभूतैर्निर्मितोदेहोन्यपतदित्यन्वयः ३२ हरिंध्यायन्मुक्तस्त्वंक्वलोकंगतइतितत्राह कल्पांतइति अहंकल्पावसानेस्वसृष्टमिदंविश्वमादायस्वोदरेनिवेश्यउदन्वतोंभसिशेषपर्यंकेशयानेहरौशिशयिषोःशयितुमिच्छोर्विरिंचस्यअंतरनुप्राणंअंतर्गच्छच्छ्वासमनुविवेशप्रविष्टवानस्मीत्यन्वयः ३३ सहस्रयुग पर्यंतेचतुर्युगसहस्रपरिमितस्वनिशावसानेविष्णोरुत्थायोत्पाद्यइदंसिसृक्षतोविरिंचस्यांकादहंजज्ञे मरीच्यत्रिमुख्याऋषयश्चतस्यप्राणेभ्योजज्ञिरइत्येकान्वयः ३४ विष्णुनाद्वाज्ञोपजनाजाल्पिमहतो विष्णोरनुग्रहादप्रतिहतगमनोऽस्खलितब्रह्मचर्यादिव्रतोहंत्रीन्लोकानंतर्बहिश्चपर्येमिपर्यटामीत्येकान्वयः ३५ तदेवाह देवेति स्वरब्रह्मविभूषितांसप्तस्वरलक्षणवेदेनालंकृतांनाम्नादेवदत्तांजिर्णांवीणांमूर्छ यित्वास्वराणामारोहणावरोहणाक्रमोमूर्छामूर्छनांगतिंकारयित्वा हरिकथांगायमानोहंचरामीत्यन्वयः ३६

तीर्थं गंगाख्यं पादे यस्य सतीर्थपात्तस्य वीर्याणि चरितलक्षणानि प्रकर्षेण गायतः चशब्द एवार्थे एवमुपासकस्यैव मम चेतसि प्रियश्रवाः भगवान् आहूत इव शीघ्रं विश्वंवितं दर्शनं याति अपरोक्षो भवतीत्यन्वयः ३७ हरिचर्यानुवर्णनं समाधिभाषया भगवच्चरितवर्णनं यत्तदेतत् मुहुर्मात्रास्पर्शेच्छया तत्मात्रासिनिमित्त आतुरचित्तानां क्लिश्यमानानां पुंसां भवसिंधुप्लवः संसारसागरतरीविशेषः दृष्टः साक्षात्प्रमाणैरिति शेषः इतिपरमात् स्मात्सात्विकहितायसैववर्णनीयेतिभावः ३८ तर्हि यमादियोगानुष्ठानविधानं व्यर्थमितितत्राह यमादिभिरिति मुकुंदकथासेवया यथात्मा जीवोऽञ्जसा शाम्यति भगवन्निष्ठबुद्धिर्भवति तथा काम लोभाभ्यां वैरिभ्यां हतः पीडितो नुष्ठितैर्योगमार्गैर्यमादिभिरद्धा न शाम्यति तस्माद्धरिकथासेवैव संसारतरीत्येकान्वयः ३९ उपसंहरति सर्वमिति अतीतजन्मविषयत्वात् रहस्यं भवजन्मकर्मयत्पृष्टं त्व यापृष्टः तदिदं सर्वमाख्यातं तुभ्यमिति शेषः । कीदृशं नित्यसंतुष्टस्य तवापि भवतः आत्मनोमनस्तोषणं तुष्टिजनकं भवतआख्यातमितिवा चशब्दः जन्यकर्मणोः समुच्चये श्रोतृणामात्मनांजीवानां तृप्तिकरं कर्मितिवा ४० सूतः व्यासनारदसंवादं शौनकादीन् ब्रूत इत्याह एवमिति वासवीसुतं सत्यवत्याः पुत्रं व्यासं एवं पूर्वोक्तप्रकारेण संभाष्य उक्त्वा गच्छामीति आमंत्र्य आज्ञां गृहीत्वा वीणां रणयन् वादयन् याइच्छिकः अतर्कितगमनागमनः यतिर्निर्जितेंद्रियग्रामः ४१ शार्ङ्गधन्वनो हरेः कीर्तिं माध्व्या मधुरया गिरा तंत्र्या वीणया गायन् आतुरं क्लिष्टं जगद्रमयति यः सोयं देवर्षिर्नारदः धन्यः कृतकृत्यः अहो...

प्रगायतःस्ववीर्याणितीर्थपादःप्रियश्रवाः ॥ आहूतइवमेशीघ्रंदर्शनंयातिचेतसि ३७ एतदातुरचित्तानांमात्रास्पर्शेच्छयामुहुः ॥ भवसिंधुप्लवोदृष्टोहरि चर्यानुवर्णनम् ३८ यमादिभिर्योगपथैःकामलोभहतोमुहुः ॥ मुकुंदसेवयायद्वत्तथात्माद्धानशाम्यति ३९ सर्वंतदिदमाख्यातंयत्पृष्टोहंत्वयानघ ॥ ज न्मकर्मरहस्यंमेभवतश्चात्मतोषणम् ४० सूतउवाच ॥ एवंसंभाष्यभगवान्नारदोवासवीसुतम् ॥ आमंत्र्यवीणांरणयन्ययौयादृच्छिकोयतिः ४१ अहोदे वर्षिर्धन्योयंयत्कीर्तिंशार्ङ्गधन्वनः ॥ गायन्माद्यन्निदंतंत्र्यारमयत्यातुरंजगत् ४२ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेषष्ठोध्यायः ॥ ६ ॥ शौनकउवाच ॥ निर्गतेनारदेसूतभगवान्बादरायणः ॥ श्रुतवांस्तदभिप्रेतंततःकिमकरोद्विभुः १ ॥ सूतउवाच ॥ ब्रह्मनद्यांसरस्वत्यामाश्रमःपश्चिमेतटे ॥ शम्याप्रासइ तिप्रोक्तऋषीणांसत्रवर्धनः २ तस्मिन्स्वआश्रमेव्यासोबदरीखंडमंडिते ॥ आसीनोपउपस्पृश्यप्रणिदध्यौमनःस्वयम् ३ भक्तियोगेनमनसिसम्यक्प्र णिहितेमले ॥ अपश्यत्पुरुषंपूर्णंमायांचतदपाश्रयाम् ४

मेतत् शूद्रयोनेरप्येतादृशमाहात्म्यमभूदिति नारज्ञानं ददातीति नारदः अरदो दोषदो न भवतीति वा आरवदंगारकवदायुःखंडको न भवतीति वा । दोऽवखंडने ४२ ॥ इतिश्रीभागवते महापुराणे प्रथमस्कंधे विजयध्वजकृतटीकायां षष्ठोध्यायः ॥ ६ ॥ भागवतकरणापदेशेन भगवति भक्तिस्तन्माहात्म्यं च प्रतिपाद्यते स्मिन्नध्याये निर्गतइति तत् अभिप्रेतं भागवतकरणं तस्य नारदस्य वा । ततो नारदनिर्गमनानंतरम् १ लकुटीकृतशम्यानाम यज्ञीयतरुशाखा पातितस्थलेकृतशालातयज्ञकरणात् शम्याप्रासइति लोके रूढिः सत्रवर्धयति अधिकफलं करोतीति सत्रवर्धनः २ ऋष्युपयोगयोग्यफलबदरीवृक्षसमूहालंकृते ऋषिशा मान्याश्रमे अतीतानागतवर्तमानानंतकोटिब्रह्मांडबाह्याभ्यंतरवर्त्यपरिमितपदार्थान् निःशेषविशेषैः सह करतलामलकवत्सततमपरोक्षीकुर्वतः स्थिरं मनः प्रणिधानमसुरजनमोहनायेति बोद्धव्यम् ३ ध्यानेनाविक्लि ष्टमभूदितितत्राह भक्तीति भक्तियोगेन सम्यगेकाग्रतया हरौ प्रणिहिते सम्यक् स्थापिते अमले रागादिदोषरहिते सर्वपुरुषाणां मनसि प्रत्यक्षीभवंतं पूर्णं देशतः कालतो गुणतश्चापरिच्छिन्नं पुरुषं परमात्मानं जीवानां संसारकरीं मायां बंधकशक्तिं च तदपाश्रयां तस्य हरेरधीनामपश्यदित्येकान्वयः भक्तिपुरुषौ विविक्ततया दृष्टौ लोकान् मनसि सम्यक् प्रणिहिते सति शक्त्याविर्भावनया दर्शितं तथा तदभिप्रायेण तदपाश्र यामित्युक्तं तत्रोपगत्याश्रित्यास्थितां स्थातुमिच्छ पश्चेमुच्येति वक्ष्यति ४

अनिर्वाच्याविद्यामायानामअत कथंबंधकशक्तिरियमित्याशंक्य आनिर्वाच्यायाः अर्थक्रियायोगादस्यास्तद्दर्शनादन्नबंधकशक्तिर्बोध्यत इत्यभिप्रेत्याह यथेति परोपित्रिगुणात्मकमहंकारस्योपि यथासंमो
हितोजीवआत्मानंत्रिगुणात्मकं । त्रिगुणोपादानकदेहरूपं मनुते तत्कृतंमायाकृतंतादृशमानकृतंवा जननमरणाद्यनर्थं अहंकर्तेत्यनर्थं चाभिपद्यतइत्यन्वयः । तस्मादेवंविधमायादंडनिवर्तकस्यपरमेश्वरस्य
दृष्टा भक्तियोगमद्राक्षीदितिभावः ५ ततःकिमकरोदितितत्राह अनर्थेति तन्निवृत्तिसाधनमाहेतिवा अनर्थेति साक्षादाहेतीशनिष्ठमपिपरिहारोपायमजानतोलोकस्यसात्विकपकृतेर्भक्तिनिमित्तमनर्थदुप
शमनतिनाशयतिइत्यनर्थोपशमं अधोक्षजेभक्तियोगंविद्वान् महत्त्वज्ञानपूर्वकप्रेमलक्षणभक्तियोगप्रदर्शनायसात्वतसंहितांचक्रइत्येकान्वयः ६ अनयाकथंभक्तिरुत्पद्यतइतितत्राह यस्यामिति ७ अनुक्रम्यसं
शोध्यतत्त्वबुद्ध्या निवृत्तिनिरतमित्यस्यफलाभिसंधिरहितमित्यर्थः ८ अविद्वानिवशौनकश्चोदयति सवाइति आत्मनिरमतइत्यात्मारामःमुनिः सर्वज्ञोमौनीवा अतएवसर्वत्रशिष्यसंग्रहणादावुपेक्षकउ
दासीनबुद्धिर्निवृत्तिनिरतःशुकःकस्यफलस्यार्थेबृहतींमहतीमेतांसमभ्यसद्वाइत्यन्वयः चतुर्षुपुरुषार्थेषुकस्यपुरुषार्थस्येतिविकल्पार्थोवाशब्दः । शुकगताविति धातोःपरब्रह्मण्यव्याहतबुद्धिगतित्वाच्छुकः
९ परिहरतीत्याह आत्मारामाइति चशब्दोप्यर्थे आत्मारामाः स्वरूपसुखएवरममाणाअप्यतएवनिर्ग्रंथाःनिरुपादेयाःमुनयः उत्तमाधिकारिणः उरुक्रमेउरवःक्रमाःपादविक्षेपायस्यसतथातस्मिन्

यथासंमोहितोजीवआत्मानंत्रिगुणात्मकम् ॥ परोपिमनुतेनर्थंतत्कृतंचाभिपद्यते ५ अनर्थोपशमंसाक्षाद्भक्तियोगमधोक्षजे ॥ लोकस्याजानतोविद्वां
श्चक्रेसात्वतसंहिताम् ६ यस्यांवैश्रूयमाणायांकृष्णेपरमपूरुषे ॥ भक्तिरुत्पद्यतेपुंसांशोकमोहभयापहा ७ ससंहितांभागवतींकृत्वानुक्रम्यचात्मजम् ॥
शुकमध्यापयामासनिवृत्तिनिरतंमुनिम् ८ शौनकउवाच ॥ सवैनिवृत्तिनिरतःसर्वत्रोपेक्षकोमुनिः॥ कस्यवाबृहतीमेतामात्मारामःसमभ्यसत् ९ सूतउवा
च ॥ आत्मारामाश्चमुनयोनिर्ग्रंथाअप्युरुक्रमे ॥ कुर्वंत्यहैतुकींभक्तिमित्थंभूतगुणोहरिः १० हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः ॥ अध्यगान्महदा
ख्यानंनित्यंविष्णुजनप्रियम् ११ परीक्षितोथराजर्षेर्जन्मकर्मविलापनम् ॥ संस्थांचपांडुपुत्राणांवक्ष्येकृष्णकथोदयाम् १२ यदामृधेकौरवसृंजयानांवी
रेष्वथोवीरगतिंगतेषु ॥ वृकोदराविद्धगदाभिमर्शभग्नोरुदंडेधृतराष्ट्रपुत्रे १३ भर्तुःप्रियंद्रौणिरितिस्मपश्यन्कृष्णासुतानांस्वपतांशिरांसि ॥ उपाहरद्वि
प्रियमेतदस्यजुगुप्सितंकर्मविगर्हयंति १४

अहैतुकींप्रयोजनविधुरामानंदरूपांभक्तिंकुर्वंति किंपुनर्बहुजन्मस्वपरोक्षितपरतत्त्वाःयेभक्त्यादिसाधनातिशयेनमुक्तावानंदातिशयमाकांक्षमाणाःशुकादयः उरुक्रमेभक्तिंकुर्वंतीतिकिंवर्णनीयमित्येकान्वयः
इत्थंभूतगुणः निरपेक्षमुक्तमनोवशीकरणक्षमःकिमुतामुक्तमनोवशीकरणक्षमगुणइतित्राच्यामीतिभावः १० अतःशुकेनभागवताभ्यसनंकृतमित्याह हरेरिति हरेरतिशयज्ञानानंदादिगुणैराक्षिप्ताआ
कृष्टामतिर्यस्यसतथोक्तःबादरायणसुतोभगवान्नित्यंभागवतजनहृदयंगमं महदाख्यानंआख्यायतेभगवन्महिमाऽनेनेत्याख्यानं भागवतपुराणमध्यगादन्यांश्चाख्यापयामासचेत्येकान्वयः ११ क
स्मिन्युगइत्यादिशौनकप्रश्नंपरिहृत्यतस्यजन्मेतिप्रश्नंपरिहरतीत्याह परीक्षितइति अथपरीक्षितोराजर्षेर्जन्म कर्म विलापनंमरणं वक्ष्ये तदर्थंप्रथमतःपांडुपुत्राणांसंस्थांस्वर्गारोहणं युद्धादुपरि
तनमहाभिषेकादिमहाप्रस्थानांतांसंस्थांस्थितिंचवक्ष्ये कीदृशींसंस्थां कृष्णकथयाउदयोयस्यांसातथोक्तातां १२ अथोकथांतरानिरूप्यते यदेति कौरवपांडवानांमृधेयुद्धेभीष्मादिषुवीरेषुवीरग
तिंस्वर्गंगतेषु धृतराष्ट्रपुत्रेदुर्योधनेवृकोदरेणाविद्धायाभ्रामितायागदायाअभिमर्शेनसम्यक्ताडनेनभग्नऊरुदंडोयस्यसतथोक्तःतस्मिन्सतिदुर्योधनपातमारभ्य १३ भर्तुःस्वस्वामिनोदुर्योधनस्यप्रियः
प्रियंकार्यमितिस्मपश्यन्विद्रावयन्द्रौणिर्यदास्वपतांनिद्रांकुर्वतांकृष्णासुतानांद्रौपदीपुत्राणांशिरांस्यपाहरत्तदा १४

सुतानांमाताद्रौपदीशिशूनांसुतानांनिधनंनिशम्यघोरंयथाभवतितथापरितप्यमानानिश्चलंविद्धं [illegible] निधनाल्लंकर्णादि [illegible] अन्वयः [illegible]
रवत्रिप्रियंनतुदुर्योधनस्य भारतेपांस्वभिषेकादिनाप्रियत्वोक्तेः इदानींद्रौणिनाशिश्वादिवधात्पूर्वंदुःखमाह तमिति किरीटमालीअर्जुनःसांत्वयन्नुवाच [illegible]
स्तैःविविधशिखैःशरीरंखानित्वाविशंतीतिवा शरैराततायिनः हनिष्यन्मरिष्यामीतिक्रूरांक्रियांकारिणः ब्रह्मबंधोर्ब्राह्मणाधमस्यद्रौणेःशिरउपाहरे [illegible]
निमित्तनयनजातैर्जलैःस्नास्यसिस्नानंकरिष्यसीतियस्मात्तस्मात्हेभद्रेमाशुचःशोचनंमाकुरु अश्रुपाणिनानिरुजन् हेभद्रेशरुदेत्यसांत्वयदित्यन्वयः शुचोनैर्मल्यं [illegible]
इः। क्षेत्रदारहरश्चैवषडेतेह्याततायिनइति आततायिनमायांतंहन्यादेवाविचारयन्इतिस्मृतेः १६ सकपिध्वजइति वल्गवोमनोहराःविचित्राविविधाश्चर्यभूताजल्पावाग्विशेषाः [illegible] प्रियां
भार्यांसांत्वयित्वारथेनगुरुपुत्रमभ्यद्रवदित्यन्वयः अच्युतएवमित्रमानीयत्वबंधुःसूतोयंतायस्यसतथोक्तः दंशितःकवचितः उग्रभयंकरधनुःयस्यसतथोक्तः १७ कुमारहाकुमारान्हतवान्द्रौणिः [illegible]
यावद्गमंगंतुंशक्यं तावद्रथेनपराद्रवदित्यन्वयः किंकृत्वाआपतंतंतमर्जुनंदूराद्विलोक्यउद्विग्नमनाःसंभ्रांतचेताःप्राणपरीप्सुर्जीवनलाभेप्सुः कइवरुद्रस्यभयात्आर्कःकपुत्र [illegible]

मताशिशूनांनिधनंसुतानांनिशम्यघोरंपरितप्यमाना ॥ यदारुदद्बाष्पकलाकुलाक्षीतांसांत्वयन्नाहकिरीटमाली १५ तदाशुचस्तेप्रमृजामिभद्रे
यद्ब्रह्मबंधोःशिरआततायिनः ॥ गांडीवमुक्तैर्विशिखैरुपाहरेत्वाक्रम्ययत्स्नास्यसिनेत्रजैर्जलैः १६ इतिप्रियांवल्गुविचित्रजल्पैःससांत्वयित्वाच्युतमित्र
सूतः ॥ अभ्यद्रवद्दंशितउग्रधन्वाकपिध्वजोगुरुपुत्रंरथेन १७ तमापतंतंसविलोक्यदूरात्कुमारहोद्विग्नमनारथेन ॥ पराद्रवत्प्राणपरीप्सुरुर्व्यांयाव
द्गमंरुद्रभयाद्यथार्कः १८ यदाशरणमात्मनमैक्षतश्रांतवाहनम् ॥ अस्त्रंब्रह्मशिरोमेनआत्मत्राणंद्विजात्मजः १९ अथोपस्पृश्यसलिलंसंदधेतत्समाहितः ॥
अजानन्नपिसंहारंप्राणकृच्छ्रउपस्थिते २० ततःप्रादुष्कृतंतेजःप्रचंडंसर्वतोदिशम् ॥ प्रापतत्तदभिप्रेक्ष्यविष्णुंजिष्णुरुवाचह २१ अर्जुनउवाच ॥ कृष्ण
कृष्णमहाभागभक्तानामभयंकर ॥ त्वमेकोदह्यमानानामपवर्गोसिसंसृतेः २२ त्वमाद्यःपुरुषःसाक्षादीश्वरःप्रकृतेःपरः ॥ मायांव्युदस्यचिच्छ
क्त्याकैवल्येस्थितआत्मनि २३

पनेत्रस्यतेजसोभयादार्कःपरिभावितथेति वायुपुराणांतरप्रसिद्धमिदं यथाकइतिकेचित्पठंति ब्रह्मपंचमशिरच्छेदनायप्रवृत्तंरुद्रंदृष्ट्वाब्रह्मापरिभावतीत्यतदनुरंजनमोहापोतिद्वा [illegible] १८ [illegible]
करहितंआत्मत्राणंआत्मानंत्रायतइतिब्रह्मशिरोनामास्त्रम् १९ ब्रह्मास्त्रप्रयोगइतिकर्तव्यतामाह अथेति अथईक्षणानंतरमुपस्पृश्य आचम्य संहारंउपसंहारंअपि [illegible]
ति तर्हिकिमर्थंसंदधइतितत्राह प्राणेति २० ततस्तस्मादस्त्रादुत्पन्नंसर्वतोदिशंप्रापतद्व्याप्नुवत्प्रचंडंअभिप्रेक्ष्यदृष्ट्वाजिष्णुःअर्जुनः हेत्यनेनमनस्याश्चर्यंकृत्वेतिदर्शयति २१ कृष्णसदानंदा [illegible]
ष्णद्दुःखकर्षणशील संसृतेर्जातेनतापाग्निनादह्यमानानांपुंसांत्वमेकएवसंसृतेरपवर्गोसिदुःखनाशकरोसीत्यन्वयः २२ [illegible] इत्याह त्वमिति [illegible]
र्वान्पाप्मनऔषत्तस्मात्पुरुषइतिश्रुतेः पुरुबहुसरतीतिवा सर्वेषामादौभवनादाद्यः साक्षादीश्वरःनिरुपचारितैश्वर्योपेतः । [illegible]
च्छक्त्यास्वरूपज्ञानशक्त्यामायांबंधकशक्तिंनिरस्यकैवल्येप्रकृतिप्राकृतबंधरहितेआत्मनिस्वरूपेस्थितोसीत्यन्वयः । [illegible]

समक्रतिमाकृतसंबंधरहितएवबंधकशक्त्यामोहितबुद्धेर्जीवलोकस्यस्वरूपवीर्येणधर्मादिलक्षणंश्रेयोविवित्सुरवतरतीत्यन्वयः २४ भगवदवतारास्तेयथाऽऽसामनुध्यानादिनामोक्षहेतवस्तथाभुवोभारजिही
र्षयाकृतोऽयंचावतारश्चानन्यभक्तानांस्वानामसकृदनुध्यानायस्यादित्यतोमोक्षसाधयतस्तवभक्तैहिकदुःखनिवारकत्वंकिंवर्णनीयमितिभावः भूभारानुध्यानयोःसमुच्चयेचकारद्वयम् २५ तदेतत्परमदारु
णंसर्वतोमुखमायाति हेदेवतदिदंकिंस्वित्कुतोवेति अहंनवेद्मीत्यन्वयः २६ यत्तेज तदिदंद्रोणपुत्रस्यब्राह्ममस्त्रंवेत्थेत्यन्वयः कीदृशंप्राणबाधेजीवाधिष्ठितदेहनाशेउपस्थितेआत्मरक्षार्थंप्रदर्शितं प्र
णबाधइत्येतत्कुतोवाऽवगतंइत्यत्राह नेति असौद्रौणिःअस्यअस्त्रस्यसंहारंनवेदेतियस्मादतोज्ञायते प्राणबाधेमुक्तमिति २७ अस्त्राणामन्यतमंकिंचिदप्यस्यप्रत्यवकर्षणप्रतीकारस्तस्मिन्प्रति
वर्तकंनाहि अतोब्रह्मःविसर्गोपसंहारपूर्वकमस्त्रस्त्वमस्त्रतेजसाउन्नद्धमुद्धतमस्त्रतेजःजहीत्यन्वयः हिशब्दोहेतौ २८ परेषांशत्रूणांसंबंधिनोवीरान्हंतीतिपरवीरहाशत्रुवीरघातीनिवा तंकृष्णं
परिक्रम्यप्रदक्षिणीकृत्य २९ उभयोःशरसंवृतेतेजसीअन्योन्यंसंहत्यसंघट्टनंकृत्वारोदसीद्यावापृथिव्यौखमाकाशंचावृत्यार्कवह्निवत्ववृधातेइत्यन्वयः ३० सांवर्तकंप्रलयकालीनदाहममंसत

सएषजीवलोकस्यमायामोहितचेतसः ॥ विधित्सुःस्वेनवीर्येणश्रेयोधर्मादिलक्षणम् २४ यथायंचावतारस्तेभुवोभारजिहीर्षया ॥ स्वानांचानन्यभावा
नामनुध्यानायचासकृत् २५ किमिदंस्वित्कुतोवेतिदेवदेवनवेद्म्यहम् ॥ सर्वतोमुखमायातितेजःपरमदारुणम् २६ श्रीभगवानुवाच ॥ वेत्थेदंद्रोणपुत्रस्य
ब्राह्ममस्त्रंप्रदर्शितम् ॥ नैवासौवेदसंहारंप्राणबाधउपस्थिते २७ नह्यस्यान्यतमंकिंचिदस्त्रंप्रत्यवकर्षणम् ॥ जह्यस्त्रतेजउन्नद्धमस्त्रज्ञोह्यस्त्रतेजसा २८ सूतउवा
च॥ श्रुत्वाभगवताप्रोक्तंफाल्गुनःपरवीरहा ॥ स्पृष्ट्वापस्तंपरिक्रम्यब्राह्मंब्राह्मायसंदधे २९ संहत्यान्योन्यमुभयोस्तेजसीशरसंवृते ॥ आवृत्यरोदसीखंचववृधा
तेर्कवह्निवत् ३० दृष्ट्वास्त्रतेजस्तुतयोस्त्रींल्लोकान्प्रदहन्महत् ॥ दह्यमानाःप्रजाःसर्वाःसांवर्तकममंसत ३१ प्रजोपद्रवमालक्ष्यलोकव्यतिकरंचतम् ॥ मतंचवासु
देवस्यसंजहारार्जुनोद्वयम् ३२ ततआसाद्यतरसादारुणंगौतमीसुतम् ॥ बबंधामर्षताम्राक्षःपशुंरशनयायथा ३३ शिबिरायनिनीषंतंरज्ज्वाबध्वारिपुंबला
त् ॥ प्राहार्जुनंप्रकुपितोभगवानंबुजेक्षणः ३४ मैनंपार्थार्हसित्रातुंब्रह्मबंधुमिमंजहि ॥ योसावनागसःसुप्तानवधीन्निशिबालकान् ३५ मत्तंप्रमत्तमुन्मत्तं
सुप्तंबालंस्त्रियंजडम् ॥ प्रपन्नंविरथंभीतंनरिपुंहंतिधर्मवित् ३६

न्यरूपयन् ३१ व्यतिकरोनाशःअस्त्रोपसंहारलक्षणंवासुदेवमतम् ३२ गौतमीसुतंकृपीपुत्रं रशनयारज्ज्वा ३३ शिबिरायस्कंधावाराय सेनानिवेशनस्थानायेतिवा [illegible]
मिच्छंतं ३४ हेपार्थब्रह्मबंधुंब्राह्मणाधममेनमश्वत्थामानंत्रातुंनार्हसि किंतुयोसौनिशिरात्रौसुप्तान्बालकान्अवधीदितीमंजहिहनेत्यन्वयः अनागसःअकृतापराधान् [illegible]
बालकत्वमितिहेतुत्रयमनादृत्य तद्धननेकारणमितिज्ञातव्यं अनागसंप्रसुप्तंचबालकंहंतियोनरः । सस्वर्गंनैवलभ्यतेरौरवंनरकंव्रजेदितिस्मृतेः ३५ रिपुणानैवहंतव्याइत्याह मत्तमिति मत्तमद्य
दिपानेनमदांधं प्रमत्तंविस्मृतिमंतं उन्मत्तंग्रहग्रस्तं जडंस्वतोविवेकज्ञानशून्यं सुप्तंनिद्रितं बालंविशेषानभिज्ञं स्त्रियंबालवेताऽप्येवाल्पेऽपराधेनिवृत्तिः [illegible]
पर्यं युद्धमार्गादपक्रांतमितिकेचित्पठित्वाऽप्याचक्षते तद्वयचजनयोरिविधातोः भीतंपलायितंयुद्धमार्गादपक्रांतमित्येनेनदुरुक्तं [illegible] ३६

खलः इन्द्रियारामः अघृणः दयारहितः तद्वधः तस्य हिंसकस्य हननं श्रेयः साधु कृतः येषां हिंसादोषात् अधो नरकं यातीति तस्मात्त्वमपीति ३७ प्रतिज्ञां च रक्षणीयेत्याह प्रतिश्रुतमिति पाञ्चाल्यै [illegible] तव पुत्रान् हतवान् तस्य शिर आहरिष्य इति मम शृण्वतः सतः पाञ्चाल्यै द्रौपद्यै प्रतिज्ञातं त्वया तस्मात्तस्मादित्यन्वयः ३८ [illegible] सुतस्तोकः पुत्रो [illegible] तस्मादसौ पापः विप्रियं तु लोकद्वयेऽपीति ज्ञातव्यम् ३९ हरिणाऽर्जुनं प्रति द्रौणिवधप्रतिपादनमर्जुनस्य धर्मपरीक्षणाभिप्रायमेव न तु [illegible] एवमिति पार्थः गुरुसुतं हन्तुं नैच्छदित्यन्वयः कथंभूतः यद्यप्येवं धर्मं परीक्षता कृष्णेन चोदितः तथापि नैच्छत् कथंभूतं आत्मानं हतवन्तं अयमपि [illegible] पुनरपि कथंभूतः [illegible] गुरुपुत्रहननं नैच्छदिति भावः ४० अथ गोविन्दः प्रियश्च सारथिश्च यस्य स तथोक्तः स पार्थः स्वशिबिरमुपेत्य द्रौणिना हतानात्मजान् पुत्रान् प्रति शोचन्त्यै प्रियायै द्रौपद्यै तं न्यवेदयदित्येकान्वयः ४१ [illegible] यावत्कृष्णा तथाहृतं तदेवाह पशुत्वात्पाशेन बद्धं कर्मजुगुप्सितेन कर्मणा लज्जया अवाङ्मुखं अपकृतं पुत्रहत्यया अपकर्तारमपि गुरोः सुतं निरीक्ष्य कृपया ननामेत्येकान्वयः ४२ [illegible] तु वचनं चोवाचेत्याह उवाचेति अस्य द्रौणेर्बन्धनेनानयनं असहमाना सती प्रशस्तसौशील्यादिगुणवती ब्राह्मण एव वर्णानां गुरुः अयं च नितरां युष्माकं गुरुः ४३ अतिशयितगुरुत्वमाह सरहस्येति सरहस्यः स

स्वप्राणान्यःपरप्राणैःप्रपुष्णात्यघृणःखलः ॥ तद्वधस्तस्यहिश्रेयोयद्दोषाद्यात्यधःपुमान् ३७ प्रतिश्रुतंचभवतापाञ्चाल्यैशृण्वतोमम ॥ आहरिष्येशिरस्तस्ययस्तेमानिनिपुत्रहा ३८ तदसौवध्यतापापआततायात्मबंधुहा ॥ भर्तुश्चविप्रियंवीरकृतवान्कुलपांसनः ३९ सूतउवाच ॥ एवंपरीक्षताधर्मंपार्थःकृष्णेनचोदितः ॥ नैच्छद्धंतुंगुरुसुतंयद्यप्यात्महनंमहान् ४० अथोपेत्यस्वशिबिरंगोविंदप्रियसारथिः ॥ न्यवेदयत्तंप्रियायैशोचंत्याआत्मजान्हतान् ४१ तथाहृतंपशुवत्पाशबद्धमवाङ्मुखंकर्मजुगुप्सितेन ॥ निरीक्ष्यकृष्णापकृतंगुरोःसुतंवामस्वभावाकृपयाननामच ४२ उवाचचासहंत्यस्यबंधनानयनंसती ॥ मुच्यतांमुच्यतामेषब्राह्मणोनितरांगुरुः ४३ सरहस्योधनुर्वेदःसविसर्गोपसंयमः ॥ अस्त्रग्रामश्चभवताशिक्षितोयदनुग्रहात् ४४ सएषभगवान्द्रोणःप्रजारूपेणवर्तते ॥ तस्यात्मनोर्धंपत्न्यास्तेनान्वगाद्वीरसूःकृपी ४५ तद्धर्मज्ञमहाभागभवद्भिर्गौरवंकुलम् ॥ वृजिनंनार्हतिप्राप्तुंपूज्यंवंद्यमभीक्ष्णशः ४६ मारोदीदस्यजननीगौतमीपतिदेवता ॥ यथाहंमृतवत्सार्तारोदिम्यश्रुमुखीमुहुः ४७

कीलकः धनुर्वेदः सविसर्गोपसंयमः प्रयोगोपसंहारसहितः अस्त्रग्रामः ब्रह्माद्यस्त्रसमूहः यस्य द्रोणस्यानुग्रहात् भवता शिक्षितः अभ्यस्तः ४४ स एष द्रोणो भगवान् प्रजारूपेण आत्मा वै पुत्रनामासीदिति श्रुतेः पुत्ररूपेण वर्तते यतो गुरुपुत्रस्य गुरुवत्पूजार्हत्वादिति भावः किंतु अन्योऽपि हेतुरस्तीत्याह तस्येति तस्य द्रोणस्यात्मनः शरीरस्यार्धं अर्धाङ्गी सती वीरसूः वीरपुत्रवती कृपी सा पत्न्यास्ते पतिं नान्वगात् अनु [illegible] गुरुपत्नीभक्त्या च मुच्यतामिति भावः ४५ न केवलं गुरुभक्तिरेवात्र हेतुः अन्योऽप्यस्तीत्याह तदिति गुरौ गुरुपुत्रेषु वाचारनयनलक्षणो यो धर्मस्तं जानातीति धर्मज्ञः हे धर्मज्ञ भगा [illegible] महान् भागो यस्य स तथा तस्य संबुद्धिर्महाभाग अश्वत्थाम्नो दुःखे सति तन्मातुरपि दुःखं स्यात्तेन तत्कोपेनास्मत्कुलस्यापि पापं भवेदिति यस्मात्तस्मादभीक्ष्णशः सर्वदा सर्वैः पूज्यं वंद्यं गौरवं कुलं भवद्भिर्वृजिनं पापं तन्निमित्तं दुःखं वा प्राप्तुं नार्हति योग्यं न भवति ४६ यथा अश्रुमुखी मृतवत्सा मृतपुत्रा अत एवार्ताहं मुहुरनिशं रोदिमि तथा पतिरेव देवता यस्याः सा तथा गौतमी कृपी अस्याश्वत्थाम्नो जननी माता मा रोदीदित्येकान्वयः तस्मादस्मत्कुलहिताय वा मुच्यतामयं गुरुपुत्र इत्यर्थः ४७

विशेषबाधकमाह यैरिति अकृतात्मभिरशिक्षितबुद्धिभिर्यैराजन्यैर्ब्राह्मणकुलंकोपितंतत्कुपितं कुलंशुचार्पितंप्राप्तशोकंमानुबंधंसमूलभूतंतेषांराज्ञांकुलंतत्क्षणमेवप्रदहतीत्यन्वयः ४८ धर्म्येधर्मादनपे तंन्याय्यंन्यायोपेतंदयासहितंनिर्व्यलीकंसमंशत्रुमित्रभावशून्यंसर्वशास्त्रानुसृतंवा अर्थतोमहत् ४९ एतेनकुलादयश्चप्रत्यनंदन्नित्यध्याहृत्यान्वयः युयुधानःसात्यकिःयेचान्येनुजीविनः तेचया श्चस्त्रियःताश्चननंदुरितिभावः ५० तत्रतस्यामवस्थायाममर्षितोभीमःआहेत्यन्वयःयोभर्तुर्दुर्योधनस्यात्मनःस्वस्यचनार्थे सुप्तान्शिशून्वृथाहन्हतवान् । वृथाशब्दोवध्यविषय. तथ्यानामर्थेन भवति तस्यवधस्तस्यैवश्रेयान्स्मृतःनास्माकंपापमितिभावः ५१ चतुर्भुजःभीमगदितंश्रुत्वाद्रोपद्याश्चवचनमितिशेषः सख्युरर्जुनस्यवदनमवलोक्यमंदस्मितंकुर्वन्निदमाहेत्येकान्वयः ५२ इन नहनेत्युभयं मयैवाम्नातं अभिहितंयस्मात्तस्मादनुशासनमात्मवचनंपरिपाहीत्यन्वयः ५३ ५४ अर्जुनःसहसाझटितिहरेर्हृदिस्थितंआज्ञायसम्यक्ज्ञात्वाक्षुरधारेणअसिनाद्विजस्यसहमूर्धजं केशैःसहि तंमूर्ध्नासहोत्पन्नंमणिंजहारेत्यन्वयः ५५ तेजसासामर्थ्येनशरीरकांत्यावारत्नेनचरहितंशिशूनांवधेनहतप्रभंअलक्ष्मीनिधानंरज्ज्वाबद्धंविमुच्यशिबिरान्निरवापयत्शवनिर्गमनवन्निष्कासयामासेत्येका

यैःकोपितंब्रह्मकुलंराजन्यैरकृतात्मभिः ॥ तत्कुलंप्रदहत्याशुमानुबंधंशुचार्पितम् ४८ सूतउवाच ॥ धर्म्यंन्याय्यंसकरुणंनिर्व्यलीकंसमंमहत् ॥ राजा धर्मसुतोराज्याःप्रत्यनंदद्वचोद्विजाः ४९ नकुलःसहदेवश्चयुयुधानोधनंजयः ॥ भगवान्देवकीपुत्रोयेचान्येयाश्चयोषितः ५० तत्राहामर्षितोभीमस्तस्यश्रे यान्वधःस्मृतः ॥ नभर्तुर्नात्मनश्चार्थेयोऽहन्सुप्तान्शिशून्वृथा ५१ निशम्यभीमगदितंद्रौपद्याश्चचतुर्भुजः ॥ आलोक्यवदनंसख्युरिदमाहहसन्निव ५२ श्रीभगवानुवाच ॥ ब्रह्मबंधुर्नहंतव्यआततायीवधार्हणः ॥ मयैवोभयमाम्नातंपरिपाह्यनुशासनम् ५३ कुरुप्रतिश्रुतंसत्यंयत्तत्सांत्वयताप्रियाम् ॥ प्रियंचभीमसेनस्यपांचाल्यामह्यमेवच ५४ सूतउवाच ॥ अर्जुनःसहसाज्ञायहरेर्हार्दमथासिना ॥ मणिंजहारमूर्धन्यंद्विजस्यसहमूर्धजम् ५५ विमुच्य रशनाबद्धंबालहत्याहतप्रभम् ॥ तेजसामणिनाहीनंशिबिरान्निरयापयत् ५६ वंधनंद्रविणादानंस्थानान्निर्यापणंतथा ॥ एषहिब्रह्मबंधूनांवधोनान्योस्ति दैहिकः ॥ ५७ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेसप्तमोऽध्यायः ॥ ७ ॥ सूतउवाच ॥ पुत्रशोकातुराःसर्वेपांडवाःसहकृष्णया ॥ स्वानांमृतानांय त्कृत्यंचक्रुर्निर्हरणादिकम् १ अथोनिशामयामासकृष्णायैभगवान्पुरा ॥ पतितायाःपादमूलेरुदंत्यायत्प्रतिश्रुतम् २

न्वयः ५६ ब्रह्मबंधूनांप्राणत्यागलक्षणमरणप्रतिनिधिरयंवधइत्याह वंधनमिति ब्रह्मबंधूनामेषएववधःवधप्रतिनिधिःअन्योदैहिकोनेत्रोत्पाटनादिकोनास्तीत्यन्वयःशास्त्रविहितोनास्तीतिभावः कोसावितितदाह बंधनमिति पाशेनकरौपृष्ठेकृत्वाबंधनं द्रविणादानंहिरण्याहरण स्थानान्निर्यापणंस्वदेशान्निर्यापणं तथाशब्दःप्रत्येकमभिसंबंधयितव्यः । सांत्वयान्वित्यारभ्यनान्योस्तिदैहिकइ त्यंतंपद्युक्तादिदंद्रौणिनास्वप्नेदृष्टंसंकथितम् अन्यथाग्रंथांतरविरोधः तत्रभीमेनकृतमित्युक्तत्वादितिज्ञातव्यम् ॥ ५७ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजयध्वजकृतटीकायांसप्तमोऽध्या यः ॥ ७ ॥ भक्तिविधानार्थभक्तवात्सल्याद्यचिंत्यमाहात्म्यंमुरारेर्निरूप्यतेऽस्मिन्नध्याये तदर्थंमृतानांयत्कर्तव्यंलौकिकंतत्उच्यते पुत्रशोकेति सर्वेपांडवाःमृतानांप्राणवियोगप्राप्तानांस्नानाबंधूना यत्कृत्यंनिर्हरणादिकंतच्चक्रुरित्यन्वयः १ भीमहत्वान्दर्शयइतिपुरायत्प्रतिश्रुतं तदस्यैद्रौपद्यैनिशामयामासदर्शयांचकारेत्यन्वयः २

हेराज्ञिवेत्वअरिदारान्शत्रुभार्याः मुक्तमूर्धजान्मुक्तकेशीः भीमस्यगदयाभग्नाऊरवःउत्संगाश्चवक्षांसिचयेषांतेतथोक्ताः जङ्घाणिविदीर्णानिवक्षांसीतिवा ३ स्त्रियःपुरस्कृत्यतंएरेत्याधुद्धमृता' कृष्णाद्रौपद्यासहिताःकृष्णेनयादवेंद्रेणसहितावा ४ तेपांडवारितलोदकनिनीयदत्वाभृशंविलप्यपरिदेवनलक्षणरोदनंकृत्वाएपश्चाद्धरेःपादपद्मपरागेणपूतेषुद्वेतारितांगंगायाःजलेआप्लुताः स्नाताः अभवन्नित्यन्वयःअनुजेनसंजयेनसहवर्तमानम् ६ मुनिभिःसह हताःपुत्रायेषांतेषांतेतथातान् भूतेषुप्राणिषुकालरूपस्यहरेःगतिंविक्रमप्रणतिंक्रियामपरिहार्यांदर्शयन् ७ घातयित्वावधंकारयित्वाधूर्तैवैरितिशेषः कचानांकेशानांस्पर्शेनहतानिनष्टानिआयूंषियेषांतेतथातान् अजातःसुयोधनःशत्रुर्यस्यसःतथोक्तः तथाचोक्तं सुयोधनादयःसर्वेत्वजाताजज्ञिरेयतात् । व्यासेनानंतवीर्येणभार्गवाश्रितकतेजसा । इतिप्रयोगात् नजातःशत्रुर्यस्यसतथोक्तइतिकेचित् कितवैश्चोरप्रायैर्दुर्योधनादिभिः ८ मध्यमाधमकल्पयोरुत्तमकल्पकैः शतमन्यव क्रतवोयस्यसतथातस्यैंद्रस्ययशोवाश्चनान्तारेहरिर्यथाततानतथाऽतनोत् तनुविस्तारे ९ १० भगवान्प्रद्द्वारकांगंतुंकृतमतिः रथमास्थितः तदापाहिपाहीत्यादिवादिनींभयेनविवशामात्मानमुद्दिश्यागच्छती उत्तरांउपलेभेददर्शेत्यन्वयः यत्र

पश्यराज्ञ्यरिदारांस्तेरुदतोमुक्तमूर्धजान ॥ आलिंग्यस्वपतीन्भीमगदाभग्नोरुवक्षसः ३ अथतेसंपरेतानांस्वानामुदकमिच्छताम् ॥ दातुंसकृष्णागंगायांपुरस्कृत्ययपुःस्त्रियः ४ तेनिनीयोदकंसर्वेविलप्यचभृशंपुनः ॥ आप्लुताहरिपादाब्जरजःपूतसरिज्जले ५ तत्रासीनंकुरुपतिंधृतराष्ट्रंसहानुजम् ॥ गांधारींपुत्रशोकार्तांपृथांकृष्णांचमाधवः ६ सांत्वयामासमुनिभिर्हतपुत्राञ्छुचार्पितान् ॥ भूतेषुकालस्यगतिंदर्शयन्नप्रतिक्रियाम् ७ घातयित्वासतोराज्ञः कचस्पर्शहतायुषः ॥ साधयित्वाजातशत्रोःस्वराज्यंकितवैर्हृतम् ८ याजयित्वाश्वमेधैस्तंत्रिभिरुत्तमकल्पकैः ॥ तद्यशःपावनंदिक्षुशतमन्योरिवातनोत् ९ आमंत्र्यपांडुपुत्रांश्चशैनेयोद्धवसंयुतः ॥ द्वैपायनादिभिर्विप्रैःपूजितैःप्रतिपूजितः १० गंतुंकृतमतिर्ब्रह्मन्द्वारकांरथमास्थितः ॥ उपलेभेभिधावंतीमुत्तरांभयविह्वलाम् ११ पाहिपाहिमहायोगिन्देवदेवजगत्पते ॥ नान्यंत्वदभयंपश्येयत्रमृत्युःपरस्परम् १२ अभिद्रवतिमामीशशरस्तप्तायसोविभो ॥ कामंदहतुमांनाथमामेगर्भोनिपात्यताम् १३ सूतउवाच ॥ उपधार्यवचस्तस्याभगवान्भक्तवत्सलः ॥ अपांडवमिदंकर्तुंद्रौणेरस्त्रमबुध्यत १४ तर्ह्येवाथमुनिश्रेष्ठपांडवाःपंचसायकान् ॥ आत्मनोभिमुखान्दीप्तानालक्ष्यास्त्राण्युपाददुः १५ व्यसनंवीक्ष्यतत्तेषामनन्यविषयात्मनाम् ॥ सुदर्शनेनस्वास्त्रेणस्वानांरक्षांव्यधाद्विभुः १६

मर्त्यलोकेपरस्परंमृत्युःतत्रत्वदन्यमभयमभयप्रदंचनपश्ये स्वस्याभिमतप्रकाशनायात्मनेवदमप्रयोगः ११ १२ अयसोविकारःआयसः तप्तश्चासावायसश्चेतितथोक्तःशरःहननशीलोबाणः शरीरविनाशनशक्तिप्रकाशनायआयसेति अपरिच्छिन्नस्यतवगर्भरक्षणंशक्यसाधनमितिद्योतनायविभोइति नाथऐश्वर्यशक्तियुत मांयथेष्टंदहतु किंतर्हि ममगर्भोमानिपात्यतामिति १३ भगवान्हस्यउत्तरायावचउपधार्यश्रुत्वानिश्चित्यइदमवनिमंडलमपांडवंपांडुपुत्ररहितंकर्तुंमुक्तंद्रौणेरस्त्रमबुध्यतेत्यन्वयः १४ हेमुनिश्रेष्ठ अथतर्ह्येवतदानींतेपंचपांडवाःआत्मनोभिमुखान्[illegible]पंचसायकान्[illegible] बाणानालक्ष्यानंतरमेवास्त्राण्युपाददुरित्येकान्वयः षोंतकर्मणीतिधातोःसमंतंकुर्वंतीतिसायकाः पतुर्आपादानेश्च १५ नअन्यविषयआत्माचित्तंयेषांतेअनन्यविषयात्मानः [illegible] पुविषयेषुशब्दादिषुआत्मामनोनगच्छतियेषांतेतथोक्तास्तेषामितिवा पांडवानांतद्व्यसनंवीक्ष्यविभुःसुदर्शनाख्यस्वास्त्रेणस्वानांपांडवानांरक्षांव्यधादित्येकान्वयः १६

किमाहेतितत्राह अहोइति मेहृदिरूढमंकुरितमज्ञानंतत्पश्यत अहो आश्चर्यं कथंभूतस्य पारक्यस्य परकीयस्य श्वशृगालभोग्यस्यैवदेहस्यार्थे बह्व्योक्षौहिणीर्हताः [illegible]
ह नमइति मेनिरयान्मोक्षोवर्षाणामयुतायुतैर्नस्यात् कथंभूतस्यमे बालान्सौभद्रादीन्द्विजान्द्रोणादीन्सुहृदः [illegible]
धनादीन्गुरून्भीष्मादीन्द्रोहितवान्हिंसितवान् इतिबालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः ४ प्रजाभर्तुः [illegible] द्विषांवधो नैनः [illegible]
नामितिचेत् यःपदातिंहंतिसभवतिचातुर्मास्ययाजीत्यादिशाश्वतंनित्यंवेदवचोमेबोधायभ्रमनिरसनाय [illegible]
नामपाहतबंधवोयासांतास्तथातासां मन्निमित्तहतबंधवोयासामितिवा स्त्रीणांयोसौद्रोहोहिंसालक्षणो वैधव्यप्राप्त्यात्मकः [illegible]
समर्थइत्येकान्वयः ६ तत्रदृष्टांतमाह यथेति पंकांभःकर्दमजलंपंकेनकर्दमेनपुनःशोधयितुंयथानशक्नोति [illegible]

अहोमेपश्यताज्ञानंहृदिरूढंदुरात्मनः ॥ पारक्यस्यैवदेहस्यबह्व्योमेऽक्षौहिणीर्हताः ३ बालद्विजसुहृन्मित्रपितृभ्रातृगुरुद्रुहः ॥ नमेस्यान्निरयान्मोक्षो
ह्यपिवर्षायुतायुतैः ४ नैनोराज्ञःप्रजाभर्तुर्धर्मयुद्धेवधोद्विषाम् ॥ इतिमेनतुबोधायकल्पतेशाश्वतंवचः ५ स्त्रीणांमद्धतबंधूनांद्रोहोयोसाविहोत्थितः ॥
कर्मभिर्गृहमेधीयैर्नाहंकल्पोव्यपोहितुम् ६ यथापंकेनपंकांभःसुरयावासुराकृतम् ॥ भूतहत्यांतथैवैतांनयज्ञैर्मार्ष्टुमर्हति ७ सूतउवाच ॥ इतिभीतःप्रजाद्रोहा
त्सर्वधर्मविवित्सया ॥ ततोविनशनंप्रागाद्यत्रदेवव्रतोपतत् ८ तदातेभ्रातरःसर्वेसदश्वैःस्वर्णभूषितैः ॥ अन्वगच्छन्रथैर्विप्राव्यासधौम्यादयस्तथा
९ भगवानपिविप्रर्षेरथेनसधनंजयः ॥ सतैर्व्यरोचतनृपःकुबेरइवगुह्यकैः १० दृष्ट्वानिपतितंभूमौदिवश्च्युतमिवामरम् ॥ प्रणेमुःपांडवाभीष्मंसानुगाःसह
चक्रिणः ११ तत्रब्रह्मर्षयःसर्वेदेवर्षयश्चसत्तम ॥ राजर्षयश्चतत्रासन्द्रष्टुंभरतपुंगवम् १२ पर्वतोनारदोधौम्योभगवान्बादरायणः ॥ बृहदश्वोभरद्वाजःस
शिष्योरेणुकासुतः १३ वसिष्ठइंद्रप्रमदस्त्रितोगृत्समदोऽसितः ॥ कक्षीवान्गौतमोत्रिश्चकौशिकोथसुदर्शनः १४ अन्येचमुनयोब्रह्मन्ब्रह्मरातादयोमलाः
॥ शिष्यैरुपेताआजग्मुःकश्यपांगिरसादयः १५

यत्वादेतांभूतहत्यांमार्ष्टुमार्जयितुंनार्हतीत्येकान्वयः ज्ञानपक्षमाश्रित्ययुधिष्ठिरेणाज्ञोनिंदितोनत्वकर्तृत्वबुद्ध्या ब्रह्मार्पणंब्रह्महविः [illegible]
तीत्यादेश्च ७ प्रजाद्रोहादितिभीतःयुधिष्ठिरःसर्वधर्मज्ञानेच्छयाततोहास्तिनपुरात् विनशनंयुद्धस्थानंकुरुक्षेत्रंप्रागात्यत्रापिदेवव्रतोभीष्मोपतदित्येकान्वयः ८ [illegible]
संतःप्रशस्ताअश्वायेषांतेतथातैःतथाव्यासादयोविप्राअन्वगच्छन्नित्यन्वयः ९ सधनंजयःसार्जुनः गुह्यकैर्यक्षैः कुबेरोवैश्रवणः [illegible] १० [illegible]
[illegible] च्युतंसमागतंदेवमिवद्योतमानम् ११ तत्रतदासर्वेदेवर्षयोनारदादयःब्रह्मर्षयोव्यासादयः राजर्षयःविश्वामित्रादयः [illegible]
स्यादिना रेणुकासुतःश्रीपरशुरामः १३ कौशिकोविश्वामित्रः १४ ब्रह्मरातःशुकः [illegible]

विवक्षितकथनंनिगमयति तस्मादिति तस्मादुक्तहेतुभ्योदेवस्यहरेस्तंत्रमधीनंजगदिति व्यवस्यहरेरनुकूल्यमस्मिन्स्मृतिः [illegible] ग्रहवाधनवद्धिहृत्ददुर्बाधिनिरूपणीय [illegible]
तः निधिमनुवर्तमानःतत्राथर्मबुद्धिमपहायहेभरतकुलश्रेष्ठप्रभोसमर्थनाथअनाथाभ्त्वदन्यनाथरहिताःप्रजाःपाहीत्येकान्वयः २४ [illegible]
शब्निर्वानिर्दिशति एषवाइति य.साक्षादाद्योनारायणोभगवान्सएषपुमाल्लोकसृष्टजनंयथार्थज्ञानाच्छादिकयामाययामनुष्यदृतिमोहयन्गूढोऽविज्ञातोवृष्णिषुवर्तते [illegible]
त्येकान्वयः २५ तर्हिकएनंयथावद्वेदेतितत्राह अस्येति हेनृपसदाशिवोभगवानस्यहरेर्गुह्यतमनुभाववेद तथादेवर्षिर्नारदः साक्षात्कपिलोभगवानपिजानातीत्येकान्वयः २६ [illegible]
मातुलस्यवसुदेवस्यापत्यंप्रियंबंधुमित्रसंकटेषुमित्वाज्ञात्वारक्षितारंसुहृत्तमंअतिशयेनसुहृदंमन्यसेयंत्वंसौहार्दात्सचिवंमंत्रिणंदूतंसंदेशहरंसारथिंयंताररमकरोःतस्यहरेरेतिपूर्वेणसं० २७ [illegible]
द्दोसर्वोत्तमोहमनेनसारथित्वादिषुविहितइतिविषमाबुद्धिर्नास्तीत्याह सर्वात्मनइति सर्वांतर्यामिण. । पितामातासुहृन्बंधुरित्यादिवाक्यात्कंध्वादिषुस्थितस्य [illegible]
बंध्वादित्वात्बंध्वादिसर्वरूपत्वात्सर्वात्मनोवा समदृशःयथावस्तुतथासर्वपदार्थान्पश्यतः अद्वयस्यसमाधिकरहितस्य अनहंकृतेःप्राकृतवैकसशरीररहितत्वाद्देहाभिमानरहितस्य [illegible]
गादिदोषरहितस्यैतैर्हेतुभिरस्यकृष्णस्यवत्कृतंसारथित्वादिकृतिनिमित्तंत्वयिमतिवैषम्यंकचिदपिनास्ति अनेकविधानांजीवानांहितस्यादित्येकान्वय २८ एवंविधविषमत्वस्य [illegible]

तस्माज्जगदेवतंत्रंव्यवस्यभरतर्षभ ॥ तस्यानुविहितोनाथानाथपाहिप्रजाःप्रभो २४ एषवैभगवान्साक्षादाद्योनारायणःपुमान् ॥ मोहयन्माययालोकं
गूढश्चरतिवृष्णिषु २५ अस्यानुभावंभगवान्वेदगुह्यतमंशिवः ॥ देवर्षिर्नारदःसाक्षाद्भगवान्कपिलोनृप २६ यंमन्यसेमातुलेयंप्रियंमित्रंसुहृत्तमम् ॥
अकरोःसचिवंदूतंसौहृदादथसारथिम् २७ सर्वात्मनःसमदृशोह्यद्वयस्यानहंकृतेः ॥ तत्कृतंमतिवैषम्यंनिरवद्यस्यनक्वचित् २८ तथाप्येकांतभक्तेषुपश्य
भूपानुकंपितम् ॥ यन्मेऽसूंस्त्यजतःसाक्षात्कृष्णोदर्शनमागतः २९ भक्त्यावेश्यमनोयस्मिन्वाचायन्नामकीर्तयन् ॥ त्यजन्कलेवरंयोगीमुच्यतेकामकर्मभिः
३० सदेवदेवोभगवान्प्रतीक्षतांकलेवरंयावदिदंहिनोम्यहम् ॥ प्रसन्नहासारुणलोचनोल्लसन्मुखांबुजोध्यानपथश्चतुर्भुजः ३१

कारणंकिमित्याशंक्ययुष्मद्विधभक्तभक्त्याद्रवीकृतमनोनुकंपैवकारणमित्याह तथापीति हेभूप तथापिएवमुक्तप्रकारेणकृतकृत्यस्यापि यस्यएकांतभक्तेषु [illegible]
कंपितंअनुकंपांकृपांपश्य । कुतइतितत्राह यदिति प्राणत्यागकालेप्राय.स्वेनपुत्रापुत्रादयोपिपूर्वमेवनियुक्तागच्छंत्यहे असून्प्राणान्त्यजतोमेममयत्कृष्णःश्रीकृष्णःसाक्षाद्दर्शनंदृष्टिविषयमागतइति यद्
स्मात्तद्भक्तानुकंपैवसंसर्गकारणमित्येकान्वयः २९ प्राणत्यागकालेहरिदर्शनफलमाह भक्त्येति भक्त्याहरौमनआवेश्य वाचायस्यहरेर्नारायणादिनामकीर्तयन्कलेवरंशरीरंत्यजन्योगीकामकर्मभि
र्मुच्यतेमुक्तःस्यात्तंप्रत्यक्षतोदृष्ट्वाम्रियमाणस्यमेमुक्तिःकिंवर्णनीयेतिवाक्यशेषः तस्मात्तत्प्रीतिकृद्धर्मोऽतस्तदुक्तप्रकारेणस्वधर्मधर्मेबुद्धिंहित्वात्वंराज्यंकुर्वितिपरमतात्पर्यार्थः ३० युधिष्ठिरंप्रत्यभिधा
येदानींस्वच्छंदमृत्युर्भीष्मउत्तरायणसमयपर्यंतंभगवतोवस्थानंप्रार्थयते सइति अहंयावदिदंपंचभूतराशिकंकलेवरंदेहंहिनोमि त्यजामियावदुत्तरायणपर्यंतंसदेवोभगवान्प्रतीक्षतांसमेदृष्टयाऽनुग्रहंकुर्वन्नास्तां दे
तिप्रार्थयइत्यन्वयः कथंभूतःप्रसन्नहासश्चारुणेलोचनेनेत्रेप्रसन्नहासारुणलोचनानितैरुल्लसन्मुखमेवांबुजंयस्यसतथा ध्यानपथः [illegible]
सतथा इदमेवध्यानविषयंवपुःपुरतःस्थितस्याद्विभुजत्वादयमेवसइतिपरोक्षतयानिर्देशः ३१

इहयुद्धे यंनिरीक्ष्यहताः स्वरूपंवैष्णवंधामगताः मुमूर्षोर्ममापिस्यमे रतिरिस्तुभगवदि रतिरस्त्वित्यन्वयः कथंभूते विजयस्यअर्जुनस्यरथएव [illegible] अतएवविजय [illegible] दोवे धृताहयरश्मयःकशिकामुखरज्जवोयेनसतथा जितश्रमइतिभावप्रधानोनिर्देशःजितश्रमइतिकृष्णविशेषणंवा स्वरूपंस्वरूपं ३९ [illegible] अविलासश्चवल्गुहासःमंदस्मितंचप्रणयेननिरीक्षणंचतथोक्तानि तैःकल्पितमुरुपृथुमानंयासांताःतथोक्ताः ललितगत्यादिभिःकृष्णेकल्पितसर्वस्वसमर्पितमनुस्मानं [illegible] अतएव उत्कृष्टेनमदेनांधाः कृतंपूतनावधादिपराक्रममनुकृतवत्यः कृष्णायमानत्वेनानुकुर्वाणाः गोपवध्वःगोपस्त्रियः [illegible] तस्मिन्कृष्णेरतिरस्त्विति पूर्वेणान्वयः ४० मुनीनांगणैःनृपाणांवर्यैश्चसंकुलेनिबिडेयुधिष्ठिरराजसूयेयज्ञेअंतःसदसिसर्वेषामस्माकंचपश्यतांयोर्हणमग्रपूजामभिपेदेमाप्तवान् [illegible] यादत्तेतिवा सएषआत्मापरमात्मा मत्कारुण्यान्मरणसमयेममदृशिगोचरःदृष्टिविषयआविरभूदहोमममहाभाग्यमितिशेषः आविरात्मा [illegible] ४१ [illegible] मिति चक्षुरभिमानित्वेनप्रतिदृशं दृशंदृशंप्रति नैकधाचक्षुरिंद्रियनियामकतयाअनेकरूपंस्थितमर्कंयथैकमेवसमधिगच्छतिज्ञानी [illegible] शरीरभाजांजीवानां

विजयरथकुटुंबआत्ततोत्रेधृतहयरश्मिजितश्रमेक्षणीये ॥ भगवतिरतिरस्तुमेमुमूर्षोर्यमिहनिरीक्ष्यहतागताःस्वरूपम् ३९ ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः ॥ कृतमनुकृतवत्यउन्मदांधाःप्रकृतिमगुःकिलयस्यगोपवध्वः ४० मुनिगणनृपवर्यसंकुलेंतःसदसियुधिष्ठिरराजसूयएषाम् ॥ अर्हणमुपपेदईक्षणीयोममदृशिगोचरएषआविरात्मा ४१ तमिममहमजंशरीरभाजांहृदिहृदिधिष्ठितमात्मकल्पितानाम् ॥ प्रतिदृशमिवनैकधार्कमेकंसमधिगतोस्मिविधूतभेदमोहः ४२ क्षितिभरमवरोपितुंकुरूणांश्वसनइवास्रजदक्षवंशवह्निम् ॥ तमिममजमनुव्रतार्तिहांघ्रिंहृदिपरिरभ्यजहामिमर्त्यनीडम् ४३ सूतउवाच ॥ कृष्णएवंभगवतिमनोवाग्दृष्टिवृत्तिभिः ॥ आत्मन्यात्मानमावेश्यसोंतःश्वासउपारमत् ४४

हृदिहृदिधिष्ठितंविविधंबहुरूपंस्थितंतमिममजंकृष्णंएकत्वसंख्याविशिष्टं नष्टत्वोपेतं समधिगतोस्मिज्ञातवानस्मि कीदृशोहंविधूतभेदमोहः अवतारगुणानुस्मृति [illegible] ज्ञानंवा अधिगंतुरधिगमनाधिगम्यानांभेदस्याबाधितानुभवसिद्धत्वादन्योहंकृष्णोन्यइतिभेदमोहानिरासवचनंनिजदर्शनदुराग्रहविजृंभितैरविद्याकल्पितमात्मपदप्रयोगेण निरस्तं अन्यथातस्यवैयर्थ्यंस्यात् शरीरभाजामित्यनेनचेतनबहुत्वसिद्धेश्च नित्योनित्यानांचेतनश्चेतनानामितिश्रुतेः ४२ स्तुतिमुपसंहरति क्षितिभरमिति श्वसनइववायुर्यथावंशेषुवेणुषुमिथःसंघर्षणाद्वह्निंसृजतितथाऽयंश्रीकृष्णः क्षितिभरंभूभारंअसुरबललक्षणंअवरोपितुमवतारयितुंकुरूणामक्षवंशेअक्षतवंशेवाद्यूताख्यदहनमसृजत् तमिममनुव्रतानांभक्तानामार्तिंहतवानार्तिहांघ्रिर्यस्यसतथोक्तस्तंअजंश्रीकृष्णंहृदिपरिरभ्यमर्त्यनीडंमरणधर्मशरीरंजहामिसकृष्णोत्रानुग्रहंकरोत्विति वाक्यशेषः ४३ कथंकारंशरीरमत्याक्षीदितितत्राह कृष्णइति एवमुक्तप्रकारेणमनसोवाचोदृष्टेर्वृत्तिभिर्हृदिपरिरंभप्रेरितत्वादस्मिन्हृदिस्थितेबहिःस्थितेचश्रीकृष्णेभगवति आत्मानंस्वजीवचैतन्यलक्षणंअंतःकरणनाहंस्वतंत्रस्तदधीनएवेत्यावेश्यनिधायसभीष्मःअतःश्वासःरेचकपूरकैःकृत्वाश्वासोच्छ्वासरूपप्राणापानौकुंभकेकृत्वामूलाधाराद्ब्रह्मनाड्यानाभिचक्रादिक्रमेणउदानवायुमूर्ध्वंनीत्वोपारमत्शरीरमजहादित्येकान्वयः ४४

मार्दंगिकादिभिराहतामृदंगादयोनेदुरित्यन्वयः भेरीनामचर्मपिहितोदीर्घमहद्दारुकृतोवाद्यविशेषः धुंधुरिकारूपात्मकवाद्यं दुंदुभिःतिरश्चीनवाद्यविशेषः आनकः पटहः पणवोढक्काविशेषः १६ प्रेम्णा व्रीडेनस्मितेनचसहितमीक्षणंदर्शनंयासातास्तथोक्ताःव्रीडाशब्दउभयलिंगःप्रेमव्रीडाभ्यांयत्स्मितं तत्पूर्वमीक्षणंयासामितिवा कुसुमैःकुसुमानि व्यत्ययोभक्त्यतिशयद्योतनार्थः पुष्पैःकरणैरितिवा १७ गुडाकानिद्रा। निद्रागुडाकासंप्रोक्ताप्रमीलामृत्युरुच्यतइत्यभिधानं तस्याःईशःगुडाकेशःजितनिद्रोऽर्जुनःइंद्रकीलकेविनिद्रोभूत्वातप्ततपाःपशुपतेरेतन्नामलब्धवान् गुडवद्रक्तकेशोवा दीर्घस्तुच्छांदसः। मुक्तादामविभूषितंमौक्तिकमालालंकृतप्रांतमंडलंरत्नखचितदंडंसितातपत्रंश्वेतच्छत्रंजग्राहेत्यन्वयः हरेरात्मादेरतिशयेनाप्रियत्वंतदेतत्प्रेयइत्यादिश्रुतिप्रसिद्धंहशब्देनाह अर्जुनस्यकैंकर्यातिशयदर्शीवा। स्वसारथ्यकरणलक्षणापराधपरिहारार्थोवा १८ उद्धवसात्यकीचव्यजनेजगृहतुरितिपूर्वेणसंबंधः एवशब्दःस्वहस्ताभ्यामेवजगृहतुर्नत्वन्याभ्यांस्वदासाभ्यांइत्यस्मिन्नर्थे मधूनांयादवगोत्रविशेषाणांपतिः मुक्ताधीशोवा कुसुमैःकुरुपुरपुरंध्रिकरकमलमुक्तैरितिशेषः पथिराजमार्गे १९ कुरुपुरेतत्रतत्रतत्तन्मार्गेद्विजवरमुखनिःसृताः दुष्टान्जहिसाधून्पालयपालयास्माननुगृहाणेत्यादिकाशिषःशुभवाक्यप्रबंधाःअश्रूयंतेत्यन्वयः कीदृश्यःसत्याःयथार्थविषयाः निर्गुणस्यसत्वादिगुणप्रवृत्त्युदासीनस्यांडाद्बहिःस्थितस्यनानुरूपाअननुकूलाइति सत्वादिगुणकार्यांडेस्थित्वासत्वादिगुणानातयतिसत्वंप्रवर्तयतीतिगुणात्मा अतसातत्यगमनइतिधातोः उणादिप्रत्ययनिमित्तमेतद्रूपं। तस्यपालनादिकर्तुरनुरूपाः पालनानुग्रहादिगुणात्मनोवा चशब्दःसमुच्चयेइवार्थोवा २० नवै

मृदंगशंखभेर्यश्चवीणापणवगोमुखाः ॥ धुंधुर्यानकघंटाद्यानेदुर्दुंदुभयस्तथा १६ प्रासादशिखरारूढाःकुरुनार्योदिदृक्षया ॥ ववृषुःकुसुमैःकृष्णंप्रेमव्रीडस्मितेक्षणाः १७ सितातपत्रंजग्राहमुक्तादामविभूषितम् ॥ रत्नदंडंगुडाकेशःप्रियंप्रियतमस्यह १८ उद्धवःसात्यकिश्चैवव्यजनेपरमाद्भुते ॥ विकीर्यमाणैःकुसुमैरेजेमधुपतिःपथि १९ अश्रूयंताशिषःसत्यास्तत्रतत्रद्विजेरिताः ॥ नानुरूपानुरूपाश्चनिर्गुणस्यगुणात्मनः २० अन्योन्यमासीत्संजल्पउत्तमश्लोकचेतसाम् ॥ कौरवेंद्रपुरस्त्रीणांसर्वश्रुतिमनोहरः २१ ॥ स्त्रियऊचुः ॥ सवैकिलायंपुरुषःपुरातनोयएकआसीदविशेषआत्मनि ॥ अग्रेगुणेभ्योजगदात्मनीश्वरेनिमीलितात्मानिशिसुप्तशक्तिषु २२ सएवभूयोनिजवीर्यचोदितांस्वजीवमायांप्रकृतिंसिसृक्षतीम् ॥ अनामरूपात्मनिरूपनामनीविधित्समानोनुससारशास्त्रकृत् २३

वलंकुरुपुरस्त्रियोहरौपुष्पावकीरणमकुर्वन्किंतुस्तुतिमपीतिभावेनाह । अन्योन्यमिति उत्तमश्लोकचेतसांकौरवेंद्रपुरस्त्रीणांसर्वश्रुतीनांवेदाभिमानिनीनांदेवतानां मनोहरः सर्वेषांजंतूनांश्रुतीः श्रवणानिमनांसिचहरतीतिवापरस्परंसंजल्पःस्तुतिलक्षणःसंलापआसीदित्येकान्वयः २१ कोसावितितत्राह सवाइति इयंपेक्षयाऽप्रधानत्वात्गुणशब्दवाच्येभ्योमहदादितत्त्वेभ्योऽग्रेनिशिमहाप्रलयेसुप्तशक्तिषुशक्त्यन्वात्तदधीनत्वाच्छक्तिशब्दवाच्यासुसत्वादिगुणाभिमानिनीषुश्रीभूदुर्गासुसुप्तासुजगद्व्यापारान्विहायहरौरममाणासुसतीषुयएकःप्रधानोजगदात्मनिजगदादानकर्तरिजगत्सहर्तरि नविशेषोविकोयस्मात्सोविशेषः तस्मिन्नीश्वरेईशानादिशक्तिमति सभगवःकस्मिन्प्रतिष्ठितइतिश्रुतेःस्वरूपाधारेस्थितःनिमीलितात्मा। तुच्छ्येनाभ्वपिहितंयदासीदितिश्रुतेर्गुणतो[illegible]रूपप्रकृत्यानिगूहितआसीत्सपुरातनःपुरुषोविष्णुरयंकृष्णः किलपरमार्थःसत्यं नैवानयोःकाश्चिद्विशेषइत्यन्वयः २२ सएवएकएव भूयः पुनः[illegible] ससारतस्यांवीर्यमधादित्यर्थः कथंभूतांनिजवीर्यचोदितांस्वसामर्थ्येनप्रेरितांसिसृक्षतींसृष्टीच्छावतीं कथंभूतः[illegible] विधित्समानःरूपनामात्मकंप्रपंचंस्रष्टुमिच्छन् शास्त्रकृत्सकलनियमनकर्ता[illegible] २३

ताः काइतितत्राहुः २९ इति विशुष्मिणः विशिष्टबलान् चैद्यप्रमुखान् शिशुपालादीन् प्रमथ्य विलोड्य पराजित्य स्वयंवरे वीर्यमेव शुल्कं उत्कोचं तेन याः स्त्रियो हृता आनीतास्ताः प्रद्युम्नश्च साम्बश्च तौ प्रमुखौ येषां ते तथा प्रद्युम्नसांबप्रमुखाः ते आत्मजा यासां तास्तथोक्ताः रुक्मिण्याद्याः याश्चापराः सहस्रशः कशेर्वा दिशतोत्तर षोडशसहस्रसंख्याः भौमवधे आहृताः ३० एताः पुराश्रित्य उन्नत्वे कृष्णभार्यात्वात् पत्नीत्वम् अरण्ये आपुंसमं संभूय साधु शोभनं तप आख्यं कुर्वत अकुर्वत बत हर्षे निरस्तशोकमिति क्रियाविशेषणं वा कुतः पुष्करलोचनः पुंडरीकाक्षः पतिः आकृतिभिः आकारैः श्रेष्ठाविशेषैः हृदि स्पृशन् यासां गृहात् जातु कदाचिदपि नापैति यस्मात्तस्मादित्यन्वयः ३१ ३२ परेभ्यः गोपीथाय रक्षणाय चतुरंगिणीं हस्त्यश्वरथपदातिवर्तीं पृतनां सेनां स्नेहात् स्नेहमात्रात्तदा नां माहात्म्यज्ञानं नास्तीति भावः ३३ स्वनगरीं द्वारवतीं प्रियैः पुरुषैः सह ३४ ३५ हे भार्गव शौनक कुरुजांगलप्रभृत्येकादशदेशानतिक्रम्य आगात् श्रांताश्वो विभुः आनर्तान् स्वाधिकतान् देशान् उपागादित्यन्वयः ३६ यदा हरिः सायं संध्यासमये पश्चाद्दिशं पश्चिमां दिशं भेजे कथंभूतः

यावीर्यशुल्केन हृताः स्वयंवरे प्रमथ्य चैद्यप्रमुखान्विशुष्मिणः ॥ प्रद्युम्नसांबप्रमुखात्मजाः परायाश्चाहृता भौमवधे सहस्रशः ३० एताः पुरास्त्रित्वमवाप्य यत्समं निरस्तशोकं बत साधु कुर्वते ॥ यासां गृहात्पुष्करलोचनः पतिर्न जात्वपैत्याकृतिभिर्हृदिस्पृशन् ३१ सूत उवाच ॥ एवंविधा गदंतीनां स गिरः पुरयोषिताम् ॥ निरीक्षणेनाभिनंदन्सस्मितेन ययौ हरिः ३२ अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ॥ परेभ्यः शंकितः स्नेहात्प्रायुंक्त चतुरंगिणीम् ३३ अथ दूरागताञ्छौरिः कौरवान्विदुरान्वितान् ॥ सन्निवर्त्य दृढं स्निग्धान्प्रायात्स्वनगरीं प्रियैः ३४ कुरुजांगलपांचालान् शूरसेनान्सयामुनान् ॥ ब्रह्मावर्तं कुरुक्षेत्रं मत्स्यान्सारस्वतानथ ३५ मरुधन्वमतिक्रम्य सौवीराभीरसैंधवान् ॥ आनर्तान्भार्गवोपागाच्छ्रांतवाहो मनाग्विभुः ३६ तत्र तत्र च तत्रत्यैर्हरिः प्रत्युद्यतार्हणः ॥ सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा ३७ आनर्तान्स उपव्रज्य स्वृद्धाञ्जनपदान्स्वकान् ॥ दध्मौ दरवरं तेषां विषादं शमयन्निव ३८ स उच्चकाशे धवलोदरो दरोऽप्युरुक्रमस्याधरशोणशोणिमा ॥ दाध्मायमानः करकंजसंपुटे यथाब्जखंडे कलहंस उत्स्वनः ३९ तमुपश्रुत्य निनदं जगद्भयभयावहम् ॥ प्रत्युद्ययुः प्रजाः सर्वा भर्तृदर्शनलालसाः ४०

तत्र तत्र च स्वराष्ट्रे प्रतिपदं तत्रत्यैर्जनैः प्रत्युद्यतार्हणः प्रदत्तमाहृतधनः तदा गविष्ठः दिवि स्थितः आदित्यः गां समुद्रोदकं गतः अस्तं गत इत्यर्थः असौ वा गविष्ठोऽप्सूदेत्य अप्स्वस्तमेतीति श्रुतेः ३७ स कृष्णः ऋद्धान् सुष्टु संपन्नान् स्वकान् स्वीयान् आनर्तान् जनपदान् उपगम्य इति दरवरं शंखश्रेष्ठं दध्मौ पूरयामास तेषां विषादं राजकभयं शमयन्परिहरन्निवेत्यन्वयः ३८ स दरः पांचजन्याख्य उच्चकाशे धवलं शुक्लं उदरं यस्य स धवलोदरः अपि धवलोदरोऽपि उरुक्रमस्य श्रीकृष्णस्य अधरोष्ठस्य शोणेन रागेण शोणिमा रक्तभावो यस्य स तथोक्तः दाध्मायमानः पुनः पुनः पूर्यमाणः कराविव कंजे हस्तकमले तयोः संपुटे मध्ये वर्तमान इति शेषः करकंजसंपुटे निधाय पदाध्मायमान इति वा तत्र दृष्टांतः अब्जखंडे कमले स्थितः उत्स्वनः उच्चध्वनिः कलहंसः राजहंसः यथा तथेत्यन्वयः ३९ भर्तृदर्शनलालसाः श्रीकृष्णस्य दर्शनोत्सुकाः सर्वाः प्रजाः जगद्भयः भवः संसारः तस्माद्भयं ददातीति जगद्भयभयापहः तं जगद्भयभयापह इति पाठे जगद्भयानां दैत्यानां भयावहं तं निनदं शंखध्वनिं श्रुत्वा तत्राजं प्रत्युद्ययुरित्यन्वयः ४०

निरपदानिजलाभेनस्वतोलब्धेनपूर्णकामं अतएवात्मारामंआत्मन्येवरममाणंकृष्णंनत्वाहर्षेणगद्गदयागिरा [illegible]
नीतःसमर्पितःबलिःभागधेयःयाभिस्तास्तथाबलिःपूजासाधनंवा कथमिवतेजःपुंजस्यरवेर्दीपमिवआत्मारामस्यबलिर्दीपवदितिक्षेपः [illegible]
दानेनपालत्वात्पितरं सर्वस्यादात्मादेःसुहृदमनिमित्तबंधुं ज्ञानादिदानेनावनकर्तृत्वादवितारं ४१ ४२ हेनाथतवांघ्रिपंकजंसदानताःस्मेत्यन्वयः [illegible]
इहचेतनाराशिमध्येपरंक्षेमंमोक्षमिच्छतांभक्तानांपरायणंउत्तमाश्रयं परस्यहिरण्यगर्भस्यप्रभुःसमर्थोजननमरणधर्मोपादकोपिकालःयत्रपदारविंदेभक्तानांनप्रभवेत् [illegible]
प्रभुःकालः यत्रभक्तानांनप्रभवेदतस्तस्यांघ्रिपंकजस्यनसमर्थइतिकिंवाच्यमितिवा ४३ हेविश्वभावन जगतःसत्तादिप्रद त्वंनोस्माकंभवायज्ञानभक्त्यादिकल्याणाय [illegible]
नानुवर्तनेनकृतिनःसुकृतिनोबभूविम सत्वंनःपरमंदैवतंइष्टदेवतानःसद्गुरुर्निर्दोषगुरुस्थानीयश्च त्वमेवमाताऽभीष्टदानेनात्मनात्वयैवनास्माकं [illegible] ४४ [illegible]
मेति यद्यस्मात्तस्माद्वयंभवतासनाथाःस्म नाथवंतोभवाम अहोअस्मद्भाग्यमित्यन्वयः कथंभूतंत्रैविष्टपानांइंद्रादिदेवानामपिदूरतःचिरकालकृतःचीर्णतपःसप[illegible]दर्शनं [illegible]

नत्वोपनीतबलयोरवेर्दीपमिवादृताः ॥ आत्मारामंपूर्णकामंनिजलाभेननित्यदा ४१ प्रीत्युत्फुल्लमुखाःप्रोचुर्हर्षगद्गदयागिरा ॥ पितरंसर्वसुहृदमवि

तारमिवार्भकाः ४२ नताःस्मतेनाथसदांघ्रिपंकजंविरिंचवैरिंचसुरेंद्रवंदितम् ॥ परायणंक्षेममिहेच्छतांपरंनयत्रकालःप्रभवेत्परःप्रभुः ४३ भवायन

स्त्वंभवविश्वभावनत्वमेवमाताथसुहृत्पतिःपिता ॥ त्वंसद्गुरुर्नःपरमंचदैवतंयस्यानुवृत्त्याकृतिनोबभूविम ४४ अहोसनाथाभवतास्मयद्वयंत्रैविष्टपाना

मपिदूरदर्शनम् ॥ प्रेमस्मितस्निग्धनिरीक्षणाननंपश्येमरूपंतवसर्वसौभगम् ४५ यर्ह्यंबुजाक्षापससारभोभवान्कुरून्मधून्वाथसुहृद्दिदृक्षया ॥ तत्रा

ब्दकोटिप्रतिमःक्षणोभवेद्रविंविनाक्ष्णोरिवनस्तवाच्युत ४६ इतिचोदीरितावाचःप्रजानांभक्तवत्सलः ॥ शृण्वानोनुग्रहंदृष्ट्यावितन्वन्प्राविशत्पुरम् ४७

मधुभोजदशार्हार्हकुकुरांधकवृष्णिभिः ॥ आत्मतुल्यबलैर्गुप्तांनागैर्भोगवतीमिव ४८ सर्वर्तुसर्वविभवैःपुण्यवृक्षलताश्रमैः ॥ उद्यानोपवनारामैर्वृतप

द्माकरश्रियम् ४९

साधनसाध्यैवाभिप्रेता नतुदर्शनाभावः तैःप्रार्थितत्वेनतत्कार्यार्थमवतीर्णत्वाद्दर्शनतारतम्याभिप्रायोवा प्रेम्णास्मितंस्निग्धंनिरीक्षणंमधुरावलोकनंताभ्यांयुक्तमाननंयस्यरूपस्यतथोक्तं संपूर्णसौभगं
सौंदर्यंयस्मिंस्तत्तथोक्तं ४५ हेअंबुजाक्षअथयर्हियदामाधवःश्रीवल्लभोभवान्मधुविषयेभ्यःसुहृदापांडवानांदिदृक्षयादर्शनेच्छया कुरून्कुरुविषयान् कुरुविषयेभ्योमधून्वाद्वारकांगच्छति हेअच्युतत
त्रतस्यामवस्थायांतवेतिषष्ठीद्वितीयार्थे त्वांविनाकुरूणांमधूनांचनोस्माकंयथारविंविनाक्ष्णोस्तथैकःक्षणःकालःअब्दकोटिप्रतिमःवर्षकोटिसमानःस्यादित्येकान्वयः ४६ दृष्ट्यादर्शनेन शृण्वानः
शृण्वन् चशब्दाद्बंदिमागधादीनांगिरः ४७ गुप्तारक्षिता भोगवतीनामनागानांपुरी आत्मतुल्यबलैःपरस्परमात्मनातुल्यवीर्यैरधिकहष्टांतंन्यायोवा ४८ वसंतादिसर्वर्तूनांसर्वविभवैः पुण्यैः
पुष्पसंपत्तिभिःपुण्यैर्वृक्षैरश्वत्थादिभिर्न्यग्रोधरुहाभिःकल्पवल्लीभिर्वा । आश्रमैऋषिदेवस्थानैः । उद्यानैःप्रमदाभिःसहराज्ञांक्रीडाभूमिभिः उपवनैः [illegible]
द्भिःरथ्योभयपार्श्वरोपितवृक्षसमुदायैरेतैःसर्वर्तुसर्वविभवादिभिःवृतापद्माकराणांश्रीःशोभायस्यास्तांतथोक्ताम् ४९

गोपुरेषुपुरद्वारेषुअन्यद्वारेषुमार्गेषुकृतानि कौतुकतोरणानिउत्सवतोरणानियस्यांसातथातां अंबरप्रतिहतःनिवारितआतपो यस्यांसातथाताम् ५० संमार्जितानिविशुद्धोपस्करणानिमहामार्गरथ्यापणचत्वराणि यस्यांसातथातां महामार्गोराजमार्गः रथ्यारथमार्गः । आपणकानिपण्यविक्रयस्थानानि चत्वरंचतुष्पथं गंधजलैश्चंदनादितोयैःसिक्तांप्रोक्षितां क्रमुकफलपुष्पाक्षताङ्कुरैर्गृहाणांद्वारिदध्यक्षतफलेक्षुभिःपूर्णकुंभैर्बलिभिःपूजासाधनैर्धूपदीपादिकैरलंकृताएवंविधांपुरींप्राविशदितिपूर्वेणान्वयः ५२ वसुदेवाक्रूरादयःआयांतंकृष्णंनिशम्यश्रुत्वा... पुरस्कृत्यपुरस्कृतैर्ब्राह्मणैश्चसार्थंरथै साधनैः प्रत्युज्जग्मुरित्यन्वयः किंविशिष्टाः महर्षवेगेनउच्छ्वसितानिसहसापरित्यक्तानिशयनासनभोजनानियैस्तेतथा तूर्यकाहलं ब्रह्मघोषोवेदघोषः, ... मानाभिजग्मुरितिहार्दोभावः साध्वसंप्रणयेनागतंसाध्वसंयेषांतेपौरा वारमुख्याःनर्तकीपुगणिकासुश्रेष्ठाःतस्यकृष्णस्यदर्शनोत्कंठावत्यःचलद्भिःकुंडलैर्निर्भातानिकपोलानियेषांतानितथाकानिचलत्कुंडलनिर्भातकपोलानिच तानिवदनानिचचलत्कुंडलनिर्भातकपोलवदनानितेषांश्रीःयासातास्तथोक्ताः ५३ ५४ ५५ ५६ अभिनयेनशृंगाराद्यनुकरणकर्तारोनटः गीतवाद्यानुसारेणनृत्यकर्तारोनर्तकाः ...

गोपुरद्वारमार्गेषुकृतकौतुकतोरणाम् ॥ चित्रध्वजपताकाग्रैरंतःप्रतिहतातपाम् ५० संमार्जितमहामार्गरथ्यापणकचत्वराम् ॥ सिक्तांगंधजलैरुप्तांफलपुष्पाक्षतांकुरैः ५१ द्वारिद्वारिगृहाणांचदध्यक्षतफलेक्षुभिः ॥ अलंकृतांपूर्णकुंभैर्बलिभिर्धूपदीपकैः ५२ निशम्यकृष्णमायांतंवसुदेवोमहामनाः ॥ अक्रूरश्चोग्रसेनश्चरामश्चाद्भुतविक्रमः ५३ प्रद्युम्नश्चारुदेष्णश्चसांबोजांबवतीसुतः ॥ प्रहर्षवेगोच्छ्वसितशयनासनभोजनाः ५४ वारणेंद्रंपुरस्कृत्यब्राह्मणैःससुमंगलैः ॥ शंखतूर्यनिनादेनब्रह्मघोषेणचादृताः ५५ प्रत्युज्जग्मूरथैर्हृष्टाःप्रणयागतसाध्वसाः ॥ वारमुख्याश्चशतशोयानैस्तद्दर्शनोत्सुकाः ५६ चलत्कुंडलनिर्भातकपोलवदनश्रियः ॥ नटनर्तकगंधर्वाःसूतमागधबंदिनः ॥ गायंतिचोत्तमश्लोकचरितान्यद्भुतानिच ५७ भगवांस्तत्रबंधूनांपौराणमनुवर्तिनाम् ॥ यथाविध्युपसंगम्यसर्वेषांमानमादधे ५८ प्रह्वाभिवंदनाश्लेषकरस्पर्शस्मितेक्षणैः ॥ आश्वास्यचाश्वपाकेभ्योवरैश्चाभिमतैर्विभुः ५९ स्वयंचगुरुभिर्विप्रैःसदारैःस्थविरैरपि ॥ आशीर्भिर्युज्यमानोन्यैर्बंधुभिश्चाविशत्पुरम् ६० राजमार्गंगतेकृष्णेद्वारकायाःकुलस्त्रियः ॥ हर्म्याण्यारुरुहुर्विप्रास्तदीक्षणमहोत्सवाः ६१ नित्यंनिरीक्षमाणानांयदपिद्वारकौकसाम् ॥ नवितृप्यंतिहिदृशःश्रियोधामांगमच्युतम् ६२ श्रियोनिवासोयस्योरःपानपात्रंमुखंदृशाम् ॥ बाहवोलोकपालानांसारंगाणांपदांबुजम् ६३

दिकुशलाःगंधर्वाः पुराणाद्यर्थानुसारेणस्तावकाःसूताः पराक्रमांकितस्तुतिकर्तारोमागधाः मंगलपाठकाबंदिनः ५७ तत्रतेषुवसुदेवादिष्वागतेषुसत्सुश्रीकृष्णोभगवान्सर्वेषांबंध्वादीनांयथाविध्युपसंगम्य मानमादधेचकारेत्यन्वयः ५८ कैः प्रह्वादिभिः ५९ ६० हर्म्याणिसौधानितदीक्षणंतस्यश्रीकृष्णस्यदर्शनमेवमहानुत्सवोयासांताः तथोक्ताः ६१ दृष्टचरस्याप्यदृष्टपूर्ववद्दर्शनेकिमित्युत्कंठातिशय इतितत्राह नित्यमिति श्रियोधामस्थानमंगंवपुर्यस्यसतथातं अच्युतंनित्यंनिरीक्षमाणानांद्वारकानिवासिनामपिदृशोनवितृप्यंतिपुनःपुनर्द्रष्टुमिच्छंतिदर्शनेनेतियावत्... उत्कंठातिशयोस्तीत्यन्वयः ६२ नेनदाश्चर्यमित्याह श्रियइति यस्यहरेःउरःवक्षस्थलंश्रियोलक्ष्म्यानिवासस्थानं यस्यमुखंदृशांलावण्यपानपात्रं यस्यबाहवोलोकपालानांत्रलस्थानं ... सारग्राहिणांब्रह्मादीनांपरायणम् ६३

सतातपत्रव्यजनादिभिरलंकृतोभगवांस्तथाबभौ यथार्कादिभिरन्वितोमेघोभातीत्यन्वयः अत्रायंविभागः अध्याह्लार्कस्थानीयंश्वेतच्छत्रं उडुपस्थानीयंव्यजनं इंद्रचापस्थानीयामाला नीलवस्त्रंविद्युत्स्थानीयं मेघस्थानीयोभगवान् अर्कस्थानीयंकिरीटं उडुपस्थानीयंश्वेतच्छत्रं मंदारादिपसूनमालाइंद्रचापस्थानीयं विद्युत्स्थानीयंव्यजनमितिवा ६४ पित्रोःमातापित्रोः स्वमातृभिःदेवक्यादिभिःपरिष्वक्तःआश्लिष्टः ६५ तामातरःपुत्राम्नोनरकात्त्रायतइतिपुत्रःतंकृष्णंसिषिचुः अभ्यषिंचन् हर्षेणविह्वलीकृतःविवशीकृत:आत्मांत:करणंयासांतास्तथोक्ताः ६६ यत्रयस्मिन्भवनेवज्रवैदूर्यमणिमंडितानां षोडशसहस्राणिपुनरष्टोत्तरशतंपत्नीनांप्रासादा.संतितदनुत्तमंसर्वकामंस्वभवनमाविशदित्येकान्वयः काम्यन्तइतिकामाइच्छाविषयास्तेसर्वेयत्रसंतितत्तथोक्तम ६७ पत्न्य आराद्दूरादेवविलोक्यसंजातोमनसिमहोत्सवोयासातास्तथोक्ताः सहसाझटितिउत्तस्थुरित्यन्वयः कथंभूतंप्रोष्यप्रवासंकृत्वागृहानुपागतं कीदृश्यःपत्न्यःसाकंपिताश्चव्रीडितलोचनाननाश्चसाकंपितव्रीडितलोचनानना.सहिताकंपितंयाभिसस्तथाव्रीडितानिलोचनानिआननानिचयासांतास्तथा ६८ दुरतभावाः वेलातीतस्नेहाः अनंतशृंगारावा अन्यैरज्ञाताभिप्रायावा . दृष्टिभिरात्मजैरंतरात्मनामनसाचतंपतिपरिरेभिरे

सितातपत्रव्यजनैरुपस्कृतःप्रसूनवर्षैरभिवर्षितःपथि ॥ पिशंगवासावनमालयाबभौधनोयथार्कोडुपचापवैद्युतैः ६४ प्रविष्टस्तुगृहंपित्रोःपरिष्वक्तःस्वमातृभिः ॥ ववंदेशिरसासप्तदेवकीप्रमुखामुदा ६५ ताःपुत्रमंकमारोप्यस्नेहस्नुतपयोधराः ॥ हर्षविह्वलितात्मानःसिषिचुर्नेत्रजैर्जलैः ६६ अथाविशत्स्वभवनंसर्वकाममनुत्तमम् ॥ प्रासादायत्रपत्नीनांसहस्राणिचषोडश ॥ शतमष्टोत्तरंचैववज्रवैदूर्यमंडिताः ६७ पत्न्यःपतिंप्रोष्यगृहानुपागतंविलोक्यसंजातमनोमहोत्सवाः ॥ उत्तस्थुराराःसहसासनाश्रयाःसाकंपितव्रीडितलोचनाननाः ६८ तमात्मजैर्दृष्टिभिरंतरात्मनादुरंतभावाःपरिरेभिरेपतिम् ॥ निरुद्धमप्यस्रवदंबुनेत्रयोर्विलज्जतीनांभृगुवर्यवैक्लवात् ६९ यद्यप्यसौपार्श्वगतोरहोगतस्तासांतथाप्यंघ्रियुगंनवंनवम् ॥ पदेपदेकाविरमेततत्पदाच्चलापियंश्रीर्नजहातिकर्हिचित् ७० एवंनृपाणांक्षितिभारजन्मनामक्षौहिणीभिःपरिवृत्ततेजसाम् ॥ विधायवैरंश्वसनोयथानलंमिथोवधेनोपरतोनिरायुधः ७१ सएषनरलोकेस्मिन्नवतीर्णःस्वमायया ॥ रेमेस्त्रीरत्नकूटस्थोभगवान्प्राकृतोयथा ७२ उद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनिहतोमदनोपियासाम् ॥ संमुह्यचापमजहात्प्रमदोत्तमास्तायस्येंद्रियंविमथितुंकुहकैर्नशेकुः ७३

क्लवात्पारवश्याद्विलज्जितानांतासांनेत्रयोर्निरुद्धमप्यंबुअस्रवदित्यन्वयः ६९ नैतत्तासांस्नेहकार्यंकिमित्याह यदीति यद्यप्यसौकृष्णःरहोगतःएकांतगतःसदातासांपार्श्वगतःसमीपस्थः तथाप्यनुपदंतासांतस्यांघ्रियुगंनवंनवंनूतनान्नूतनं तथाहि काश्रीतस्यपादकमलादलमितिविरमेत विरामंकुर्यात् अन्यत्रचंचलविभवप्रदायिनीश्रीःयंभगवंतंकर्हिचिन्नजहातीत्येकान्वयः ७० वायुर्यथावनदहनायवेणूनांमथःसंघट्टनेनाग्निमुत्पादयति तथाअक्षौहिणीभिःक्षितिभारजन्मनांभूमेर्भाररूपंजन्मयेषांतेतथोक्ताःतेषांपरिवृत्तंपरिवृद्धंतेजोयेषांतेतथोक्तास्तेषाअसुराणांविनाशायकुरुपांडवपक्षपातिनांनृपाणांमिथोवैरंविधायस्वयंनिरायुधःपरस्परवधेनविनाशंविधायचोपरतउदास्तइत्यन्वयः ७१ स्वमायया स्वेच्छया प्राकृत स्त्रीजितः स्त्रीरत्नकूटस्थःस्त्रीश्रेष्ठसमूहस्थः ७२ स्त्रीश्रेष्ठसमूहस्थःस्त्रीजितानन्नुकरोत्येवपरंतु नस्वयंस्त्रीजितइत्याह उद्दामेति यासामुद्दामभावस्यउत्कृष्टशृंगारचेष्टितस्यपिशुनःसूचकःअमलःनिर्व्यलीकःवल्गुःकोमलःहासःस्मितंव्रीडयाअवलोकःकटाक्षवीक्षणंउद्दामभावपिशुनामलवल्गुहासव्रीडावलोकनेनचनिहतःताडितःमदनोपिसंमुह्यपुष्पाख्यंचापमजहात्मुक्तवांस्ताःप्रमदोत्तमाःकुहकैरुद्दामभावादिभिर्यस्यश्रीकृष्णस्येंद्रियंप्रमथितुंवशीकर्तुंनशेकुः तस्यकुतःस्त्रीजितत्वमित्यन्वयः ७३

उस्यस्त्रीजितत्वपरिवादोऽज्ञसंमत्येत्याह मन्यतइति अज्ञलोकः स्वसुखानुभवेनैवाप्रकामतयास्त्रीष्वसक्तमपिआत्मौपम्येनात्मानंदृष्टांतीकृत्यस्त्रीसंगिनंतन्मयंस्त्रीमयंमन्यतेहियस्मात्चरमाःस्वयंजनोऽबुध अज्ञःकथंभूतंमनुजंप्रावृण्वानंआच्छादयंतम् ७४ तर्हिज्ञानिप्रवादःकीदृशइतितत्राह यत्तादेति प्रकृतिस्थोपिसदात्मस्थैः स्वाधारैस्तद्गुणैःप्रकृतिगुणैःसत्वादिभिःशब्दादिभिश्चनयुज्यतेनसंबध्यतइतियत्त दीशस्येशनंईश्वरत्वं तत्रव्यत्यासदृष्टांतमाह यथेति यथाप्रकृतिस्थानांज्ञानिनांतदाश्रयातस्यकृष्णस्याश्रयाबुद्धिःप्रकृतिगुणैःनबध्यतेकिमुतस्यप्रकृतिगुणसंबंधेनेत्यतोबुधजनप्रवादइतिभावः ७५ तथाविदोऽसुराइतिसोदाहरणमाह तमिति खलाःइंद्रियारामामूढाःशास्त्रार्थाविदःतामसराजसप्रकृतयोतएवाप्रमाणविदोनंतगुणत्वादिप्रमाणाविदस्तंकृष्णमनुव्रतभृत्यवदनुगतंस्त्रैणंस्त्रीजितंमेनिरे वैशेषिका दिवादिनांमतयोयथेश्वरंयथामतिमेनिरेतथा तस्मान्नतस्याप्रकामस्यस्त्रीजितत्वमितिभावः ७६॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविज०टी०दशमोध्यायः॥१०॥ वैराग्यप्रकारोहरेर्भक्तानुकंपित्वंचास्मि न्नध्यायेप्रतिपाद्यते उपलेभेभिधावंतीमुत्तरामित्यादिश्रुतानुवादपूर्वकंपरीक्षिज्जन्मादिप्रवृत्तिपृच्छतिशौनकइत्याह अश्वत्थाम्नेत्यादिना उरुतेजसाश्वत्थाम्नाविसृष्टेनब्रह्मास्त्रेणउत्तरायाहतोगर्भःपुनरी

मन्यतेतन्मयंलोकोह्यसंगमपिसंगिनम् ॥ आत्मौपम्येनमनुजंप्रावृण्वानमतोऽबुधः ७४ यत्तदीशनमीशस्यप्रकृतिस्थोपितद्गुणैः ॥ नयुज्यतेसदात्मस्थै र्यथाबुद्धिस्तदाश्रया ७५ तंमेनिरेखलामूढाःस्त्रैणंचानुव्रतंहरेः ॥ अप्रमाणविदोभर्तुरीश्वरंमतयोयथा ॥ ७६ ॥ इतिश्रीभागवतेमहा०प्रथमस्कंधेदशमोध्या यः ॥१० ॥ शौनकउवाच ॥ अश्वत्थाम्नाविसृष्टेनब्रह्मशीर्ष्णोरुतेजसा ॥ उत्तरायाहतोगर्भईशेनोज्जीवितःपुनः १ तस्यजन्ममहाबुद्धेःकर्माणिचगृ णीहिनः ॥ निधनंचयथैवासीत्सप्रेत्यगतवान्यथा २ तदिदंश्रोतुमिच्छामिवक्तुंवायदिमन्यसे ॥ ब्रूहिनःश्रद्दधानानांयस्यज्ञानमदाच्छुकः ३ सूतउवाच ॥ अपीपलद्धर्मराजःपितृवद्रंजयन्प्रजाः ॥ निस्पृहःसर्वकामेभ्यःकृष्णपादानुसेवया ४ संपदःक्रतवोविप्रामहिषीभ्रातरोमही ॥ जंबुद्वीपाधिपत्यंचयशश्च त्रिदिवंगतम् ५ किंतेकामाःसुरस्पार्हामुकुंदमनसोद्विजाः ॥ नाधिजह्रुर्मुदंराज्ञःक्षुधितस्ययथेतरे ६ मातुर्गर्भगतोवीरःसतदाभृगुनंदन ॥ ददर्शपुरुषंकंचि द्दह्यमानोस्त्रतेजसा ७ अंगुष्ठमात्रममलंस्फुरत्पुरटमौलिनम् ॥ अपीच्यदर्शनंश्यामंतडिद्वाससमच्युतम् ८ श्रीमद्दीर्घचतुर्बाहुंतप्तकांचनकुंडलम् ॥ क्षत जाक्षंगदापाणिमात्मनःसर्वतोदिशम् ९ परिभ्रमंतमुल्काभांभ्रामयंतंगदांमुहुः ॥ अस्त्रतेजःस्वगदयानीहारमिवगोपतिः ॥ विधमंतंसन्निकर्षेपर्यैक्षतकइत्यसौ १०

शेनोज्जीवितइत्येकान्वयः १ निधनंमरणं यथाकथं प्रेत्यमृत्वागतवान्कंलोकमितिशेषः २ वक्तुंवायदिमन्यसइत्यनेनवक्तव्यस्यातिगोप्यत्वंसूचयति ३ अपीपलत्अरक्षत् निस्पृहःसर्वकामेभ्यइ त्यनेनकृष्णपादसेवायाअतिस्वादुत्वंदर्शितंकामानांतिक्तत्वंच ४ एतदेवस्पष्टयाह संपदइति ५ कामातुरस्यार्थाःविषयाःविषयविरक्तस्यमुकुंदमनसोयुधिष्ठिरस्यार्थाःकिं पुरुषार्थत्वेननार्थाः । कुतइतितत्राह नेति यथाक्षुधितस्येतरेवीणादयोनतृप्तिंकुर्वंति तथाऽतेदुःखहेतुत्वान्मुदंनाकुर्वन्नित्यर्थः अनेनवैराग्यातिशयोमोक्षसुखातिशयोदर्शितः ६ कंचिल्लोकविलक्षणम् ७ स्फुरत्पुरटमौ लिनंदेदीप्यमानस्वर्णमुकुटंआपीच्यदर्शनंषोडशवर्षवद्दृश्यमानंमेघश्यामम् ८ क्षतजवद्रक्तेआक्षिणीयस्यसतथातं आत्मनःस्वस्यसर्वतोदिशंपूर्वादिदिक्षुविदिक्षुपरिभ्रमंतंपरितोदृश्यमानं उल्काभागग नात्पतच्चारकाविशेषसदृशी गोपतिःसूर्यःनीहारंहिमंविधमंतंशमयंतंपुनःसन्निकर्षेसमीपेदृष्ट्वाचकोयंपुरुषइतिपर्यैक्षतआलोचनमकरोत् ९ १०

१ व्यत्यासोनन्वयश्चैवप्रसिद्धोभूतएवच । सर्वसांहारिकश्चैतिदृष्टांतःपंचधास्मृतइतिब्राह्मवचनात्ज्ञेय. ।

धर्मंगोपायतिनिरीक्षतीतिधर्मगुप् अमेयात्माअनंतरूपःदशमास्यस्यदशमासारंभस्यकुमारस्यपश्यतःसतइतिशेषः विभुःसमर्थोहारिः सर्वपापकर्षणशीलः भगवान्षड्गुणोपेतः ११ ततइतिहंगोनानंतरं सर्वगुणोदर्केसकलगुणोत्तरफलेसानुकूलायेग्रहास्तेषामुदयोयस्मिन्सतथोक्तःतस्मिन्कालेपांडोर्वंशधरः संतानानुच्छेदकर्ताओजसाभूयःपुनरुत्पन्नःपांडुरिवस्थितः १२ जातकर्मजातकर्म स्नात्वापुण्या हम् १३ तीर्थंशास्त्रंपात्रंवावेत्तीतितीर्थवित् प्रजातीर्थंपुत्ररूपशुद्धजलेपुत्रजन्मकालेवामंगलंपुण्याहंसतीर्थेनिमित्तेएकंवापदंसतीर्थइत्यर्थः १४ प्रश्रयान्वितंप्रान्वयगुणान्वितंकुरूणांकुरुवंशजानां अतिसंकुलेप्रजातंतौपुत्ररूपसंतानसंस्थाविनाशमुपेयुषिगच्छतिसतिवोयुष्माकमनुग्रहारूपप्रयोजनायप्रभविष्णुनाविष्णुनारातोदत्तइतियस्मात्तस्माल्लोकेनाम्नाविष्णुरातइतिबृहच्छ्रवाविख्यातयशाभविष्यति १५ १६ १७ ब्राह्मणवचनानंतरंयुधिष्ठिरस्तानप्राक्षीदित्याह अपीति हेसत्तमाःअपिशब्दस्यास्विदित्यनेनान्वयःसाधुषवादोयस्यसतथासाधुरितिवादेनवा १८ हेपार्थपृथायाःसुतयुधिष्ठिर मान

विधूयतदमेयात्माभगवान्धर्मगुब्विभुः ॥ मिषतोदशमास्यस्यतत्रैवांतर्दधेहरिः ११ ततःसर्वगुणोदर्केसानुकूलग्रहोदये ॥ जज्ञेवंशधरःपांडोर्भूयःपांडुरिवौजसा १२ तस्यप्रीतमनाराजाविप्रैर्धौम्यकृपादिभिः ॥ जातकंकारयामासवाचयित्वाचमंगलम् १३ हिरण्यंगांमहींग्रामान्हस्त्यश्वान्नृपतिर्वरान् ॥ प्रादात्स्वन्नंचविप्रेभ्यःप्रजातीर्थेसतीर्थवित् १४ तमूचुर्ब्राह्मणास्तुष्टाराजानंप्रश्रयान्वितम् ॥ एषह्यस्मिन्प्रजातंतौकुरूणांपौरवर्षभ १५ दैवेनाप्रतिघातेन कुलेसंस्थामुपेयुषि ॥ रातोवोनुग्रहार्थायविष्णुनाप्रभविष्णुना १६ तस्मान्नाम्नाविष्णुरातइतिलोकेबृहच्छ्रवाः ॥ भविष्यतिनसंदेहोमहाभागवतोमहा न् १७ राजोवाच ॥ अप्येषवंश्यान्राजर्षीन्पुण्यश्लोकान्महात्मनः ॥ अनुवर्तितास्विद्यशसासाधुवादेनसत्तमाः १८ ब्राह्मणाऊचुः ॥ पार्थप्रजाविताsसा क्षादिक्ष्वाकुरिवमानवः ॥ ब्रह्मण्यःसत्यसंधश्चरामोदाशरथिर्यथा १९ एषदाताशरण्यश्चयथाह्यौशीनरःशिबिः ॥ यशोवितनितास्वानांदौष्यंतिरिवयज्व नाम् २० धन्विनामग्रणीरेषतुल्यश्चार्जुनयोर्द्वयोः ॥ हुताशइवदुर्धर्षःसमुद्रइवदुस्तरः २१ मृगेंद्रइवविक्रांतोनिषेव्योहिमवानिव ॥ तितिक्षुर्वसुधेवासौस हिष्णुःपितराविव २२ पितामहसमःसाम्येप्रसादेगिरिशोपमः ॥ आश्रयःसर्वभूतानांयथादेवोरमाश्रयः २३ सर्वसद्गुणमाहात्म्यएषकृष्णमनुव्रतः ॥ रंति देवइवोदारोययातिरिवधार्मिकः २४ धृत्याबलिसमःकृष्णेप्रह्लादइवसद्ग्रहः ॥ आहर्तैषोश्वमेधानांवृद्धानांपर्युपासकः २५ राजर्षीणांजनयिताशास्ताचो त्पथगामिनाम् ॥ निग्रहीताकलेरेषभुवोधर्मस्यकारणात् २६ तक्षकादात्मनोमृत्युंद्विजपुत्रोपसर्जितात् ॥ प्रपत्स्यतउपश्रुत्यमुक्तसंगःपदंहरेः २७

वोमनुपुत्रःप्रजानामविताsदाशरथिःदशरथपुत्रःसत्यसंधःसत्यप्रतिज्ञः १९ औशीनरःउशीनरपुत्रःदौष्यंतिःदुष्यंतपुत्रइवयज्वनांयथाविस्तारकर्तातथायमपिस्वानांस्ववंशजन्मनांयशोवितनिता २० द्व योरर्जुनयोःकार्तवीर्यपांडवयोःतुल्यःदुर्धर्षःदुःसहः २१ तितिक्षुःक्षमावान् पितरौसहिष्णुःसहनशीलः २२ साम्येसामञ्जस्ये पितामहब्रह्मविरिंचस्यसमःप्रसन्नतायांशिवसमः । रमाया आश्रयःपतिः २३ सर्वैःसतांगुणैःमाहात्म्यंमहात्म्यत्वंयस्यतथोक्तः । अथवासर्वसद्गुणमाहात्म्यविषयेकृष्णपादवेद्मनुगतः तथाभूतःकृष्णमर्जुनवा २४ धृत्याधैर्ये श्रद्धातीतिसद्ग्रहोभक्तःसद्ग्रहः भक्तिर्यस्यसतथोक्तः ध्रुववदग्रहणात्तुनतथात्वमितिसूत्रात् २५ राजर्षीणांकुमाराणांजनयिताउत्पादकः उत्पथगामिनामशास्त्रविहितमार्गवर्तिनांशास्ता धर्मस्यभगवदनुग्रहकारणात्कलेर्निग्रहीता निग्रहशिक्षाकर्ता २६ द्विजपुत्रोपसर्जितात् द्विजकुमारप्रेरितात्तक्षकात् मुक्तसंगः पुत्रादिसंगरहितः २७

व्यासुताच्छ्रीशुकात् मुनेर्जिज्ञासितंविचारितंआत्मनःपरमात्मनःयथास्वरूपसंबंधिगुणाधिक्यंयेनसतथोक्तः, इदंशरीरंअद्धा समीचीनंअकुतोभयस्वरूपानंदाविर्भावलक्षणंमोक्षंयापयतीत्यन्वयः २८ ल
ब्धामाप्ताऽपचितिःपूजायैस्तेतथोक्ताः २९ यःप्रभुःसर्पदष्टिंतक्षकाख्यसर्पदर्शनंअनुध्यायन् निरंतरंचिंतयन्इहनरेषुसमीपआगच्छत्सुपरीक्षेतेतियस्मात्तस्मात्सएवलोकेपरीक्षिदितिविख्यातइ
तिपरीक्षिन्नामनिरुक्तिरित्यन्वयः ३० उडुपश्चंद्रःशुक्लपक्षेकाष्ठाभिर्दिक्देवताभिरस्वतीगोभिरन्वहं यथातथासराजपुत्रोपिपितृभिर्युधिष्ठिरादिभिरन्वहअन्नपानादिभिःपूर्यमाणएधतेस्पर्धः ३१ ज्ञाति
द्रोहजिहासयाभीष्मादिवधनिमित्तपापहननेच्छयाअश्वमेधयज्ञेनभगवंतंयष्टुकामोराजाकरदंडयोरन्यत्रकरदंडंचवर्जयित्वानलब्धधनंयेनसोऽलब्धधनःदध्यावित्यन्वयः ३२ उदीच्याउत्तरस्याःदिशः
भूरिशःबहुलप्रहीणंयज्ञशिष्टंमरुत्तेनपूर्वंजेनस्थापितंधनम् ३३ तेनद्रव्येणसंभृतःसंपन्नःसंभारोयज्ञसाधनंयेनसतथोक्तः ३४ सुहृदःयुधिष्ठिरस्यप्रियेच्छया ३५ बंधुभिःसहकृष्णद्रौपद्याद्या
भ्यनुज्ञातःसार्जुनःअर्जुनेनसहितः यदुभिश्चपरिवृतः कृष्णोद्वारवतींययावित्यन्वयः ३६ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजय०टीकायाएकादशोध्यायः ॥ ११ ॥ विषयरागः
संसाराय तदभावोविमुक्तयेइत्यतोमुमुक्षुणास्वतोवैराग्यंपरतोवासंपादनीयमित्ययमर्थःप्रतिपाद्यतेऽस्मिन्नध्याये तत्रशुद्धांतःकरणस्यैवाविषयाविरागःसुहृद्ज्ञातिसूचकमणातीर्थसेवयावास्यादित्यभि

जिज्ञासितात्मयाथात्म्योमुनेर्व्याससुतादसौ ॥ हित्वेदंनृपगंगायांयास्यत्यद्धाकुतोभयम् २८ इतिराज्ञउपादिश्यविप्राजातककोविदाः ॥ लब्धापचित
यःसर्वेप्रतिजग्मुःस्वकान्गृहान् २९ सएषलोकेविख्यातःपरीक्षिदितियःप्रभुः ॥ सर्पदष्टिमनुध्यायन्परीक्षेतनरेष्विह ३० सराजपुत्रोववृधआशुशुक्लइवो
डुपः ॥ आपूर्यमाणःपितृभिःकाष्ठाभिरिवसोन्वहम् ३१ यक्ष्यमाणोश्वमेधेनज्ञातिद्रोहजिहासया ॥ राजालब्धधनोदध्यावन्यत्रकरदंडयोः ३२ तद
भिप्रेतमालक्ष्यभ्रातरोच्युतनोदिताः ॥ धनंप्रहीणमाजह्रुरुदीच्यांभूरिशोदिशः ३३ तेनसंभृतसंभारोलब्धकामोयुधिष्ठिरः ॥ वाजिमेधैस्त्रिभिर्भीतोय
ज्ञैःसमयजद्धरिम् ३४ आहूतोभगवान्राज्ञायाजयित्वाद्विजैर्नृपम् ॥ उवासकतिचिन्मासान्सुहृदःप्रियकाम्यया ३५ ततोराज्ञाभ्यनुज्ञातःकृष्णयासहबं
धुभिः ॥ ययौद्वारवतींब्रह्मन्सार्जुनोयदुभिर्वृतः ३६ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेएकादशोध्यायः ॥ ११ ॥ सूतउवाच ॥ विदुरस्तीर्थयात्रायांमैत्रे
यादात्मनोगतिम् ॥ ज्ञात्वागाद्धास्तिनपुरंतयावाप्तविवित्सितः १ यावतःकृतवान्प्रश्नान्क्षत्ताकौषारवाग्रतः ॥ जातैकभक्तिर्गोविंदेतेभ्यश्चोपरराम ह २ तंबंधु
मागतंदृष्ट्वाधर्मपुत्रःसहानुजः ॥ धृतराष्ट्रोयुयुत्सुश्चसूतःशारद्वतःपृथा ३ गांधारीद्रौपदीब्रह्मन्सुभद्राचोत्तराकृपी ॥ अन्याश्चजामयःपांडोर्ज्ञातयःससुताःस्त्रियः ४

प्रेत्यविदुरस्यतीर्थसेवांकृत्वायुधिष्ठिरादिबंधुदिदृक्षयाहास्तिनपुरागतिमाह विदुरइति विदुरोहास्तिनपुरमगादित्यन्वयः किंकृत्वातीर्थयात्रांकृष्णादिष्टान्मैत्रेयादात्मनःपरमात्मनोगतिंज्ञानम् । जीवस्य
गतिस्वर्गनरकादिविषयामितिवा तयापरमात्मविद्ययाअवाप्तंविवित्सितंज्ञातुमिष्टंयेनसतथोक्तः १ नापृष्टःकस्यचिन्ब्रूयादितिवचनात्प्रश्नप्रतिवचनाभ्यांतन्ध्यवगम्यालंबुद्धिरभूदित्याह यावतइ
ति क्षत्ताविदुरःकुषारवस्यापत्यस्यमैत्रेयस्याग्रतोयावतःप्रश्नान्कृतवान्तेभ्यःप्रश्नेभ्योमैत्रेयेणपरिहृतेभ्यउपरराम ज्ञातत्वादलंबुद्धिमानभूत् हशब्दःतृप्तिसूचकःचशब्दएवार्थे तत्त्वज्ञानेनफलमाह
जातेति ततोज्ञानातिशयेनजाताएकाप्रधानाभक्तिर्यस्यसतथोक्तः कुत्रगोविंदेश्रीकृष्णे अनेनभक्तिज्ञानयोरन्योन्यहेतुत्वमुक्तंभवति २ सूतःसंजयः शारद्वतःकृपः ३ अन्याःपांडोर्ज्ञातयः कुन्त्याद्याः
स्त्रिनामानःजामयः स्वसारोवा ४

भगवान्प्राणान्दृष्ट्वा तन्वः भोगायतनानि शरीराणीव तत्प्राणे प्रपन्न उदतिष्ठदिति विश्रुतेः ५ मिथः प्रेमबाष्पौघं प्रेमनिमित्तनेत्रजलप्रवाहं अर्हयांचक्रे पूजयामास औत्कंठ्यकातराः औत्कंठ्येन परवशाः
कृतआसनस्य पीठस्य परिग्रहः स्वीकारो येन स तथोक्तस्तम् ६ स्वकीयानांच शृण्वतां सताम् ७ नो रमान्स्मरथ यूयमिति शेषः मात्रा सह वर्तमानाः समातृकाः विषाग्न्यादेर्विपद्गणान्मोचिताः भवद्भिः नतस्मा
देति शेषः ८ एवमुक्तादिव्रतेन किमिति शेषः इह भूतले क्षेत्रप्रधानानि तीर्थानि यानि तानि सर्वाणि च सेवितानीत्यन्वयः ९ हे प्रभो स्वात्मस्थेन गदाभृता हरिणा तीर्थभूता भवादृशाः भागवताः
गंगादितीर्थानि तीर्थीकुर्वंति न स्वधर्मात्मशुद्ध्यपेक्षया तीर्थानि गच्छंतीति शेषः १० कृष्णो दैवतं येषां ते तथोक्ताः ११ भ्रमता परिवर्तमानेन क्षितितलमिति शेषः स्वेन यथानुभूतं तथा तत्सर्वमवर्णयत्
कंतु यदुकुलक्षयं विना । तीर्थयात्रायां यमुनायां भगवदाज्ञया बदरीं गच्छंतमुद्धवं दृष्ट्वा तस्मात् विप्रशापाद्धेतोः षट्त्रिंशद्वर्षादुपरि नाशमेष्यद्यदुकुलं श्रुत्वा तन्नावर्णयदिति भावः १२ तत्किमिति नावर्णय
दित्यत्राह तत्त्विति १३ विदुरः किमकार्षीदिति तत्राह कंचिदिति सुखलक्षणं श्रेयः ज्येष्ठस्य भ्रातुर्धृतराष्ट्रस्य २४ एवं भगवद्भक्तिज्ञानादिमानयं विदुरो देवेषु कस्यावतार इति तत्राह अबिभ्र

प्रत्युज्जग्मुः प्रहर्षेण प्राणांस्तन्व इवागतान् ॥ अभिसंगम्य विधिवत्परिष्वंगाभिवंदनैः ५ मुमुचुः प्रेमबाष्पौघं मिथ औत्कंठ्यकातराः ॥ राजा तमर्हयांचक्रे कृता
सनपरिग्रहम् ६ तं भुक्तवंतमासीनं विश्रांतं सुखमासने ॥ प्रश्रयावनतो राजा प्राह स्वानांच शृण्वताम् ७ युधिष्ठिर उवाच ॥ अपि स्मरथ नो युष्मत्पक्षच्छा
यासमेधितान् ॥ विपद्गणाद्विषाग्न्यादेर्मोचिता यत्समातृकाः ८ कया वृत्त्या वर्तितं वश्चरद्भिः क्षितिमंडलम् ॥ तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले ९
भवद्विधा भागवतास्तीर्थभूताः स्वयं प्रभो ॥ तीर्थीकुर्वंति तीर्थानि स्वांतःस्थेन गदाभृता १० अपि नः सुहृदस्तात बांधवाः कृष्णदेवताः ॥ दृष्टाः श्रुता वा
यदवः स्वपुर्यां सुखमासते ११ इत्युक्तो धर्मराजेन सर्वं तत्समवर्णयत् ॥ यथानुभूतं क्रमशो विना यदुकुलक्षयम् १२ नन्वप्रियं दुर्विषहं नृणां स्वयमुपस्थितम् ॥
नावेदयत्सकरुणो दुःखितान्द्रष्टुमक्षमः १३ कंचित्कालमथावात्सीत्सत्कृतो देववत्सुखम् ॥ भ्रातुर्ज्येष्ठस्य श्रेयस्कृत्सर्वेषां प्रीतिमावहन् १४ अबिभ्रदर्यमा दंडं
यथावदघकारिषु ॥ यावद्दधार शूद्रत्वं शापाद्वर्षशतं यमः १५ युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कुलंधरम् ॥ भ्रातृभिर्लोकपालाभैर्मुमुदे परया श्रिया १६ अ
थामंत्र्याच्युतो बंधून्निर्वर्त्यानुगतान्विभुः ॥ अर्जुनोद्धवशैनेयैर्ययौ द्वारवतीं हयैः १७

देति योऽर्यमा वैवस्वतोऽघकारिषु पापकृत्सु यथा यथं पापमनतिक्रम्य दंडमबिभ्रत् शिक्षामकरोत्पापफलमभोजयदित्यर्थः स यमो मांडव्यशापाद्यावद्वर्षशतं तावच्छूद्रत्वं बभारेत्यन्वयः मांडव्यो नाम कश्चिदृषिः
...ग्रामाद्बहिस्तीरे तपश्चरंस्तत्र कस्माच्चिन्नगराच्चौर्यं गृहीत्वागतैश्चोरैः सहानुधावद्भिर्नगरपालैरज्ञानाद्गृहीत्वा राज्ञे निवेद्य तदनुज्ञया शूले समारोपितोऽभूत् तत्रापि शूले तपः कुर्वंतमपि जाज्वल्यमानं दृष्ट्वा ज
नैर्निवेदितो राजा ससंभ्रममुपागम्य शूलादवरोप्य प्रसाद्य प्रस्थापयामास कोपेन जाज्वल्यमानेन यमसमीपं गतेन मुनिना कस्मादहं शूलमारोपित इति पृष्टो यमः तस्मात्शापमादातुकामो बाल्यावस्थायां काचि
न्मक्षिका शूले समारोपिता तेन दोषेण अयमवस्थाविशेषः प्राप्त इतिमाह तस्मै क्रुद्धो मुनिः शूद्रो भवेति शशाप तमिति मांडव्यशापः १५ अथ युधिष्ठिरः किंचकारेति तत्राह युधिष्ठिर इति इंद्रादिलोकपा
लसमानैर्भीमादिभ्रातृभिर्लब्धराज्यो युधिष्ठिरः कुलंधरं पौत्रं दृष्ट्वा परमया श्रिया संपदा मुमुद इत्येकान्वयः कुलं धारयतीति कुलंधरः १६ ययौ द्वारवतीमित्युक्तश्रीकृष्णप्रयाणशेषमाह अथेति अथ विभुर्व्याप्तो
ऽच्युत आगमिष्यामीत्यामंत्र्य संभाष्य यांतं अनुगतान् बंधून्निवर्त्य अर्जुनादियुक्तो हयैर्युक्तेन रथेन द्वारवतीं ययावित्येकान्वयः १७

अधुनाधृतराष्ट्रस्यस्वर्गप्राप्तिप्रकारंवक्तुमुपक्रमते एवमिति एवमुक्तप्रकारेणहरिपरायणानांपांडवादिवत्यःकालएकमपिक्षणमवंध्यंवर्तितुंशक्यःसकालोहरिविमुखानांगृहेषुपुनःमित्रारिलक्षणेषुकेवलंशि श्नोदरंभरतयासक्तानांगृहपोषणधनान्वेषणप्रयत्नैःप्रमत्तानांविस्मृतपरमात्मतत्त्वानांअतएवाविज्ञातोत्यक्तामदतिक्रांतोभूदित्येकान्वयः १८ तत्कालस्यातिक्रमण विदुरइतिनामसार्थंसाधयन् नि र्गम्यतांगृहादितिशेषः प्राप्तमिदंमरणभयंपश्येत्यन्वयः १९ यस्यकालस्यकुतश्चित्कारणात्कर्हिचिदपिप्रतिक्रियानिवर्तनक्रियानास्तिसएषभगवान्कालरूपीनःसर्वेषांसमागतः शरीरवियोगकरणा द्[illegible] २ इतोपिनिर्गमनमुचितमित्याह येनेति इहजीवलोकेयेनकालरूपिणाहरिणाअभिपन्नोग्रस्तः अयंजनोतिशयेनहृदयंगमैःप्राणैरपिवियुज्येतान्यैर्धनादिभिर्वियुज्येतइतिकिमु तेत्यन्[illegible] [illegible]नुममापिमरणंततःकिमितितत्राह पित्रिति तवपित्रादयोहताः वयश्चविगतं आत्मादेहश्चजरयाग्रस्तइतियत्तथापित्वंपरगेहमुपाससे नश्रेयःसाधनायेहसे मृतस्य त[illegible]तःपरलोकेनसुखावाप्तिरित्यर्थः २२ परलोकेसुखंनेतिचेदिहैवदीर्घजीवनमस्त्वित्यभिप्रायश्चेत्तर्हित्वंनिरपत्रपइत्यभिप्रेत्याह अहोइति जंतोर्जीविताशाबहुकालंजीवामीत्याशाइच्छामहीयसीमहत्तरा अहोअज्ञानातिरेकः ययाजीविताशयाभवान्भीमापवर्जितं भीमेनातिरश्चीनहस्तेनदत्तंपिंडमादत्ते कइवगृहपालवत् सारमेयइव २३ ननुविषमउपन्यासः कनिष्ठपुत्रत्वेनमत्पुत्रत्वात्तद्दत्तान्नेन

एवंगृहेषुसक्तानांप्रमत्तानांगृहेहया ॥ अत्यक्रामदविज्ञातःकालःपरमदुस्तरः १८ विदुरस्तदभिप्रेत्यधृतराष्ट्रमभाषत ॥ राजन्निर्गम्यतांशीघ्रंपश्येदंभयमा गतम् १९ प्रतिक्रियानयस्येहकुतश्चित्कर्हिचित्प्रभो ॥ सएषभगवान्कालःसर्वेषांनःसमागतः २० येनचैवाभिपन्नोयंप्राणैःप्रियतमैरपि ॥ जनःसद्यो वियुज्येतकिमुतान्यैर्धनादिभिः २१ पितृभ्रातृसुहृत्पुत्राहतास्तेविगतंवयः ॥ आत्माचजरयाग्रस्तःपरगेहमुपाससे २२ अहोमहीयसीजंतोर्जीविताशाय याभवान् ॥ भीमापवर्जितंपिंडमादत्तेगृहपालवत् २३ अग्निर्निसृष्टोदत्तश्चगरोदाराश्चदूषिताः ॥ हृतंक्षेत्रंधनंयेषांतद्दत्तैरसुभिःकियत् २४ तस्यापि तवदेहोयंकृपणस्यजिजीविषोः ॥ परैत्यनिच्छतोजीर्णोजरयावाससीइव २५ गतस्वार्थमिमंदेहंविमुक्तोमुक्तबंधनः ॥ अविज्ञातगतिर्जह्यात्सवैधीरउदाहृतः २६ यःस्वतःपरतोवेहजातनिर्वेदआत्मवान् ॥ हृदिकृत्वाहरिंगेहात्प्रव्रजेत्सनरोत्तमः २७

शरीरपोषणमुचितमितिचेत्सत्यं विषदानादिनात्वयाऽपराद्धत्वात्तद्दत्तंविषोपममित्यभिप्रेत्याह अग्निरितिआग्नेदाहाद्यपराधाःत्वयायेषांकृताः तेषामन्नैःपुष्टैरसुभिःकियत्प्रयोजनं लज्जाकरत्वान्मृतिरेववरी यस्यतोनिर्गम्यतामित्यन्वयः २४ युधिष्ठिरादीनामयितात्पर्यान्नाहंनिर्जगमिष्यामीतिचेत्तत्राह तस्येति जरयाग्रस्तेवाससीइववस्त्रेइवयथातथाअनिच्छतोजिजीविषोर्जीवितुमिच्छोःकृपण[illegible] रान्नादनानिरतस्यापितवायजीर्णोदेहःपरैतिनिरस्तासुःस्यादतोदेहस्यानित्यत्वान्निर्गच्छत्वितिवदामीतिभावः २५ ननुप्रथममेवपतिष्यतीतिदेहमुपेक्ष्यमाणस्यआत्महननाख्यदोष[illegible] गतेति गतःस्वार्थःऐहिकामुष्मिकसुखसाधनोयस्मात्सतथोक्तः तंइमंदेहंदेहाभिमानं मुक्तस्तदनुभार्यादिस्नेहानुबंधान्मुक्तःअविज्ञातगतिरन्यैर्जनैरनवबुद्धारण्या[illegible] दाहृतः तस्मात्पुरुषार्थसाधनायोग्यदेहहानौदोषाभावात्निर्जनवनंगत्वातपश्चर्ययाशरीरमिदंसाधितस्वार्थंकुर्वितिभावः २६ इतोपिप्रास्तवनस्यततवतपः[illegible] [illegible]यइति यःस्वतःस्वबुद्ध्यापरतःपरबोधनेनवाजातनिर्वेदउत्पन्नवैराग्यः आत्मवान्वशीकृतमनाःहरिंहृदिकृत्वागेहात्प्रव्रजेत्सनरोत्तमःपुरुषश्रेष्ठःइत्येकान्वयः २७

अथतस्माद्गवानुदीचींदिशंयातुकथंभूतःस्वैरज्ञानगतिःविविक्तगतिः नतुस्वैःपांडवैरविज्ञातगतिःपांडवानुज्ञयैवतस्यवनवासायगत्युक्तेःकथंतर्हिशब्दयोजना स्वैरिणीशब्दार्थवत्स्वेच्छानुसारेणज्ञातागति र्यस्यनपरेच्छातःसतथोक्तइतिविवरणोपपत्तेः अन्यथाअविज्ञातगतिरित्येतदपहसितंस्यात् इतोर्वाक्पूर्वतनःकालःपुंसामधिकारिणांज्ञानभक्त्यादिगुणसामग्र्यापादकः इतउपरितनःकालःप्रायेणगुणेषुवि षयेषुविकृष्यनाशयतीतिगुणविकर्षणःविविच्यदर्शयतीतिवा वेदस्यवाविकर्षणमित्युक्तेः २८ एवमुक्तप्रकारेणानुजेनविदुरेणबोधितोतःप्रज्ञानमेवचक्षुर्यस्यसतथा स्वतोजात्यंधःप्रज्ञयाचष्टे पश्यति नतुमांसदृष्ट्येतिवाआजमीढःअजमीढवंशोद्भवः आजेनज्ञानेनमीढःसिक्तइतिवा मिहसेचनइतिधातो. द्राढिम्नःदृढतरान् स्वेषुस्नेहाख्यपाशान्छित्वाभ्रात्राविदुरेणसम्यग्दर्शितउभय विधोवैदिकलौकिकाख्योध्वामार्गोयस्यसतथोक्तः राजाधृतराष्ट्रःनिश्चक्रामनिर्गतोबभूवेत्येकान्वयः गृहादितिशेषः २९ सुबलस्यपुत्रीगांधारी पतिशुश्रूषैवव्रतंयस्याःसातथोक्ता प्रयांतंपतिमनुज गामेत्यन्वयः चकारात्कुंतीचगत्वाकुत्रावसदितितत्राह हिमालयमिति कायवाङ्मनोभिर्न्यस्तःपरित्यक्तःभूतद्रोहलक्षणोदंडोयैस्तेषांप्रकर्षेणहर्षंजनयतीतिन्यस्तदंडप्रहर्षंअतएवमनस्विनांवशीकृतें द्रियग्रामाणांसंन्यासिनांसम्यग्विहारंक्रीडास्थानंहिमालयंहिमवंतंपर्वतंगत्वा तत्रबदरिकाश्रमेऽवसदित्यन्वयः ३० इदानींयुधिष्ठिरस्यमनस्तिपस्तपतोधृतराष्ट्रस्यप्रायेणमृतिरभूत् तथाविधशकुनप्रति

अथोदीचींदिशंयातुस्वैरज्ञातगतिर्भवान् ॥ इतोर्वाक्प्रायशःकालःपुंसांगुणविकर्षणः २८ एवंराजाविदुरेणानुजेनप्रज्ञाचक्षुर्बोधितआजमीढः ॥ छित्वा स्वेषुस्नेहपाशान्द्राढिम्नोनिश्चक्रामभ्रातृदर्शिताध्वा २९ पतिंप्रयांतंसुबलस्यपुत्रीपतिव्रताचानुजगामसाध्वी ॥ हिमालयंन्यस्तदंडप्रहर्षंमनस्विनाम वसत्संविहारम् ३० अजातशत्रुःकृतमैत्रोहुताग्निर्विप्रान्नत्वातिलगोवस्त्ररुक्मैः ॥ गृहंप्रविष्टोगुरुवंदनायनचापश्यत्पितरौसौबलींच ३१ तत्रसंजयमा सीनंपप्रच्छोद्विग्नमानसः ॥ गावल्गणेक्वनस्तातोवृद्धोहीनश्चनेत्रयोः ॥ अंबावाहतपुत्रार्तापितृव्यःक्वगतोइतः ३२ अपिमय्यकृतप्रज्ञेहतबंधुःसभार्यया ॥ आशंसमानःशमलंगंगायांदुःखितोपतत् ३३

भासादित्यभिप्रेत्याह अजातशत्रुरिति मित्रः सूर्यः तद्विषयंकर्ममैत्रंसंध्योपासनादितत्कृतंयेनसकृतमैत्रःगार्हपत्याद्याग्निषुहुतंयेनसहुताग्निः तिलगोवस्त्ररुक्मैःविप्रांस्तर्पयित्वारुक्मंसुवर्णंचदत्वापित्राद्युप वेशनस्थलेपित्रादिगुरुवंदनायपितृगृहान्प्रविष्टोऽजातशत्रुस्तदायतनंनमस्कुर्वन्पितरौकुंतीधृतराष्ट्रौसौबलींगांधारीमनसाजीवंतौनापश्यत्संप्रतितेमृताइतितस्यमनसितथाप्रत्यभादित्यन्वयः पितर.वित्य त्रपितृशब्देनविदुरोत्रनाभिप्रेतः तस्यशूद्रजातित्वेनावंद्यत्वात् धृतराष्ट्रादिमृतेःपूर्वंयुधिष्ठिरेणैकीभूतत्वाच्च नचापश्यदित्यस्यानुक्त्वा धृतराष्ट्रंगमनार्थांगीकारेभारतादौयुधिष्ठिरायनुज्ञयागत्युक्तेःत द्विरोधोदुर्वारः ३१ मनसिप्रतीतपितृस्वर्याणस्ययुधिष्ठिरस्यतन्मरणानंतरंतदवसरेतत्रागत्यासीनंसंजयंप्रतिपारलौकिकगतिप्रश्नमाह तत्रेति गवल्गणस्यापत्यंगावल्गणिःतस्यसंबुद्धिःहेगावल्गणे न स्तातःक्व कंलोकंप्रतिगतः कथंभूतः नेत्रयोरितितृतीयार्थेषष्ठी नेत्राभ्यांहीनः नेत्रयोर्योगेनवा वृद्धः जरयाचग्रस्त.अंबाकुंतीवा हतपुत्रत्वादार्तागांधारीचपरत्रलोकंकंप्रतिगते पितृव्योधृतराष्ट्रः क्वगतइतिपुनःप्रश्नस्तात्पर्यातिशयात् ३२ धृतराष्ट्रस्यमरणकालेस्वस्मिन्प्रियाप्रियविवेकंतस्यमरणप्रकारंचपृच्छति अपीति अकृतप्रज्ञेअशिक्षितबुद्धौमयिस्वभार्ययासहशमलंपापमपराधमाशंसमानः हतबंधुःदुःखितःसन्गंगायामपतदपिबंधून्सर्वान्मारयित्वास्वयंराज्यमादायमांनिष्कासितवानितिशमलबुद्धिःनाभवत्किंतदुःखातिशयादेवगंगायांगतिस्त्वामृतानन्वितिभावः ३३

स्वस्याकृतप्रज्ञत्वमुपपादयति पितरीतिनःअस्माकंपितरिपांडौउपरतेसति पौगांधारीधृतराष्ट्रौ शिशून्सर्वान्व्यसनतोऽरक्षतां सुहृत्त्वंशिशुत्वंचरक्षणीयत्वेहेतुः तौपितृव्यौगांधारीधृतराष्ट्रौमृत्वेतः अस्माल्लोकात्परत्रकंलोकंगताविवित्यन्वयः तयोरनवरतशुश्रूषणादेवकृतप्रज्ञतातदभावादकृतप्रज्ञत्वमितिभावः ३४ अतिपीडितःदुःखेनेतिशेषः आत्मनःस्वस्यईश्वरंस्वामिनंधृतराष्ट्रमचक्षाणः मृतत्वादे वापश्यन् अतएवविरहेणवियोगेनकर्शितःकृशतरः कुतःस्नेहपारवश्यात् दाक्षिण्याचसंजयोयुधिष्ठिरंचोचोत्तरंवक्तुंनाशकदित्यन्वयः ३५ आत्मनामनसाआत्मानंविष्टभ्यसंस्थाप्यप्रभोर्धृतराष्ट्रस्य ३६ प्रजारंजयित्वाकुलंनंदयति नत्वन्यथाइत्यतःपदद्वयंप्रायोजि नकेवलंत्वमेवव्यंसितोहंवियोजितइतिचार्थः पित्रोःकुंतीधृतराष्ट्रयोःपरलोकगतिमितिशेषःमुषितःवंचितोस्मि ३७ एतस्मिन्नंतरेयुधि ष्ठिरसंजयसंवादमध्येत्रितंत्रींतंत्रीत्रयमेलनोपेतांवीणांध्वनयन्वादयन्तुंबुरुणासहवर्तमानःभगवान्हरेःषड्गुणवेत्ता पूज्योवा ३८ राज्ञादरेणोपनीतंदत्तमर्घ्यंयस्मैसतथातंप्रत्युत्थानंकृत्वाभिवंदितंपरमा सनेसिंहासनसमानपीठेआसीनमुपविष्टंनारदंकौरवेंद्रोयुधिष्ठिरोभ्यभाषतइत्यन्वयः ३९ हेभगवन्मृतयोःपित्रोःपरलोकगतिंनवेद तांभवंतंपृच्छामि तौमृत्वेतःकंलोकंप्रतिगताविति अपारेसंसारे सीदतांबिभ्यतांकर्णधारोनाविकइव तस्माच्चदुःखार्णवेमग्नानांपारंपरंतीरंदुःखशमनोपायंदर्शयतीतिपारदर्शनः ४० धृतराष्ट्रादिषुकंचनमाशुचःशोकंमाकार्षीःकुतः जगदीश्वरवशमितियद्यस्मात्सएवे

पितर्युपरतेपांडौसर्वान्नःसुहृदःशिशून् ॥ अरक्षतांव्यसनतःपितृव्यौक्कगताविवितः ३४ सूतउवाच ॥ कृपयास्नेहवैक्लव्यात्सूतोविरहकर्शितः ॥ आत्मेश्वरम चक्षाणोनप्रत्याहातिपीडितः ३५ विमृज्याश्रूणिपाणिभ्यांविष्टभ्यात्मानमात्मना ॥ अजातशत्रुंप्रत्यूचेप्रभोःपादावनुस्मरन् ३६ संजयउवाच ॥ अहंच व्यंसितोराजन्पित्रोर्वःकुलनंदन ॥ नवेदसाध्व्यागांधार्यामुषितोस्मिमहात्मभिः ३७ सूतउवाच ॥ एतस्मिन्नंतरेविप्रानारदःप्रत्यदृश्यत ॥ वीणांत्रितंत्रींध्वन यन्भगवान्सहतुंबुरुः ३८ राज्ञादरोपनीतार्घ्यंप्रत्युत्थानाभिवंदितम् ॥ परमासनआसीनंकौरवेंद्रोभ्यभाषत ३९ राजोवाच ॥ नाहंवेदगतिंपित्रोर्भगव न्क्कगताविवितः ॥ अंबावाहतपुत्रार्तांक्कगताचतपस्विनी ॥ कर्णधारइवापारेसीदतांपारदर्शनः ४० नारदउवाच ॥ माकंचनशुचोराजन्यदीश्वरवशंजगत् ॥ ससंयुनक्तिभूतानिसएववियुनक्तिच ४१ यथागावोनसिप्रोतास्तंत्यांबद्धाःस्वदामभिः ॥ वाक्तंत्यांनामभिर्बद्धावहंतिबलिमीशितुः ४२ यथाक्रीडोपस्क राणांसंयोगविगमाविह ॥ इच्छयाक्रीडितुःस्यातांतथैवेशेच्छयानृणाम् ४३

श्वरःभूतानिसंयुनक्तिस्वकर्मानुसारेणसंयोजयतिसएवस्वकर्मावसानेवियुनक्तिवियोजयति एतस्मादस्ववशत्वान्माशुचइतिभावः ४१ ईश्वरजीवस्वातंत्र्यपारतंत्र्येसोदाहरणंदर्शयति यथेति यथागा वोबलीवर्दाः नसिनासिकायांत्रिवृत्कृततंतुदामभिःप्रोतास्यूतानासिकाछिद्रस्यूताहस्वदामभिःआधारभूतायांदीर्घायांतंत्यांबद्धाःईशितुःस्वामिनोब्रीह्यादिगोणीर्वहंति तथाब्राह्मणक्षत्रियवैश्यशूद्रब्रह्मचारि गृहस्थवानप्रस्थयतयइतिनामात्मकदामभिर्वाक्तंत्यांविधिनिषेधात्मकवेदलक्षणायाबद्धाः स्ववर्णाश्रमविहितकर्मभिरीश्वरस्यबलिंयज्ञादिलक्षणपूजांवहंतिकुर्वंति तस्मात्सएवस्वतंत्रोजीवास्तदधीनाइतिशो कपरिहारायसईशःस्वविहितकर्मणापूज्यइतिभावः ४२ वेदस्यानेकार्थत्वेनतात्पर्यस्यदुर्ज्ञेयत्वाद्धारेयाणाचगौण्यादिपातनेनस्वामिकार्यवज्ञानदर्शनाद्विषमोयमुपन्यासइत्यतोनिदर्शनांतरमाह यथेति य थाक्रीडोपस्कराणांलीलासाधनानांसंयोगविगमौक्रीडितुःपुरुषस्येच्छया तथैवेशेच्छयापितृपुत्रादिरूपाणांनृणामिथःसंयोगविगमौस्यातामित्यन्वयः अनेनवेदस्यमुख्यार्थःश्रीनारायणएवेतिनिर णायि तस्मात्पराधीनत्वान्नशोकेनप्रयोजनंतवेतिभावः ४३

यस्तकैणानुसंधत्तेसधर्मवेदनेतरइतिस्मृतेरुक्तार्थेनिर्णयेकेयंयुक्तिरितितत्राह यदीति यत्पादिलोकंशरीरंध्रुवंमन्यसेअध्रुवमनित्यंवा अथवोभयंनित्यानित्यंयत्तुषइतिविकल्पंपरिहरति सर्वथेति सर्वप्रका रेणतेपितरोनशोच्याः । तथाहि नित्यत्वेनाशाभावात्तस्यचादर्शनादनित्यामितिवक्तव्यं तस्यापरिहार्यत्वात्तृतीयोनुपपन्नः व्याहतत्वात्तर्हिशोकेकिंकारणमितितत्राह स्नेहादिति अहंममेतिमोहोत्तुद्धेभ्रमः तस्माज्जातस्नेहादन्यत्रकृतेशोककारणंनास्तितस्माद्भ्रमजन्यस्नेहएवतस्यहेतुरितिभावः४४ ननुयस्यदेवेपराभक्तिर्यथादेवेतथागुरावितिश्रुतेःगुरुविषयस्नेहलक्षणभक्तेःपुरुषार्थहेतुत्वेनोपयोगात्कथंतस्य ... हजन्यत्वंइत्याशंक्यतस्यैवलक्षण्यान्ममतत्पोषणकर्तृत्वेनमन्नाथत्वान्मद्गतेजीवनमेवनास्ति तेषामीशरक्ष्यत्वादिज्ञानाभावादित्यात्मन्यन्यथाभिमाननिमित्तकातर्यत्वयात्यक्तव्यमित्याह तस्मादिति ... नःपरमात्मनोऽज्ञानेनजातंवैक्लव्यंजहित्यजेत्यन्वयः परमात्मनःस्वातंत्र्यपरामर्शेनेतिशेषः ४५ किंच तवायंदेहःस्वाधीनःपराधीनोवास्वाधीनश्चेभोगयोग्यदुःखनिवारणाक्षमतोऽस्य ... तद्दुःखंमेस्यादित्याकांक्षातिविचक्षणः तस्मात्पराधीनइतिचवक्तव्यं तथाचतस्यपररक्षणसामर्थ्यंनघटतइत्याह कालेति कालःपक्षमासादिलक्षणःकर्मफलपाचकं पुण्यपापलक्षणमदृष्टं गुणाः... न मित्तोपादानकारणजन्यत्वेनकालाद्यधीनःसजीवोयंदेहःपंचभिर्भूतैरारब्धःस्वव्यतिरिक्तान्कथंगोपायेत्रक्षेत् तत्रदृष्टांतः सर्पग्रस्तोमंडूकःसर्पग्रस्तपरंरक्षितुसमर्थःतथेति तच्छब्देनानुभवसिद्धमेवेदमि तिद्योतयति तस्माद्दहपित्रादिरक्षाकर्तृत्वज्ञानंत्यजेतिभावः ४६ ननुभगवन्सत्यमेतत्तथापिवृद्धानामंधानांचान्नादिदौस्थ्यात्तज्जीवनेममसंदेहइतिचेत्तत्राह अहस्तानीति हतावदस्तसअहस्तानिशश

यन्मन्यसेध्रुवंलोकमध्रुवंचाथवोभयम् ॥ सर्वथाहिनशोच्यास्तेस्नेहादन्यत्रमोहजात् ४४ तस्माज्जह्यंगवैक्लव्यमज्ञानकृतमात्मनः ॥ कथंत्वनाथाःकृपणा वर्तेरंस्त्वनमाश्रिताः ४५ कालकर्मगुणाधीनोदेहोयंपांचभौतिकः ॥ कथमन्यांस्तुगोपायेत्सर्पग्रस्तोयथापरम् ४६ अहस्तानिसहस्तानामपदानिचतु ष्पदाम् ॥ अणूनितात्रमहतांजीवोजीवस्यजीवनम् ४७ तदिदंभगवान्राजन्नेकआत्मात्मनांस्वदृक् ॥ अंतरोऽनंतरोभातिपश्यत्वंमाययोरुधाम् ४८ सोयमद्यमहाराजभगवान्भूतभावनः ॥ कालरूपोवतीर्णोस्यामभावायसुरद्विषाम् ४९

पारावतपक्षिप्रभृतीनिसत्वानिसहस्तानांमनुष्याणांजीवनंदेहधारणसाधनं द्विचतुष्पदांचान्नंतृणादयःतत्रद्विपत्स्वपिअणूनिमनुष्यादीनिमहतांराक्षसादीनांजीवनमित्यनुवर्तते एवंजीवस्यजीवनंवि धात्राविहितमतोनतान्प्रतिचिंताकर्तव्येत्यर्थः ४७ इतोपिनशोकःकर्तव्यःकिंतुअखिलस्यहर्यधीनत्वात्तद्भजनमेवावश्यंकर्तव्यमित्याह तदिति एवंइदंहरेरितरत् सर्वमनित्यमस्वतंत्रंचेतियस्मात्तच स्मात्हेराजन्भगवानात्मनांजीवानामात्माऽदानादिकर्ताएकोऽद्वितीयःस्वदृक्स्वयंप्रकाशःविवेकज्ञानिनांअंतरःअस्यजगतोंतःस्थित्वारतिकृत्अनंतरागुणगुण्यादिभेदरहितोभाति तस्मात्त्वमपिदेदो त्तयावतारत्वेनाविवेनाविवेकित्वान्माययास्वेच्छयाकृतामुरुतामनेकावतारांतर्याम्याद्यात्मिकांनिभेदांहरेर्विभूतिंपश्यध्यातमेवभजेतिवाक्यशेषः स्वदृक्भगवानात्मासएकएवेदंजगद्भातिकथंभोक्तृरूपेणां तरःभोग्यरूपेणानंतरःनित्यस्यानेकत्वंकथंतत्राह पश्येति तंपरमेश्वरंमाययाबहुधावर्तमानंपश्येतिकेचिद्योजयंति एकस्यभोक्तृभोग्यरूपत्वानुपपत्तेरनिर्वाच्यमायायाअप्रामाणिकत्वेनानंगीकार्य त्वादनादरणीयमेवतदिति ४८ ननुभवतेश्वरवशंजगदित्युक्तंतमीश्वरंवयंकथंबुध्यामहइतितत्राह सोयमिति यःसकलंस्ववशंविधायास्तेसोयमद्यदेवैःप्रार्थितोस्यामुष्याद्यदुकुलेऽवतीर्णइत्यन्वयः कथंभूतःभूतानांभावनोवर्धनः कालरूपःसंहाररूपः किमर्थं सुरद्विषामभावायविनाशाय ४९

१ तस्माच्छोकानकार्यइतिभावः । २ तद्दर्शनमावश्यकमितिवाक्यशेषः । तस्यदेहस्येत्यर्थः । ३ जीवानधिष्ठितदेहस्यगोपनायोगेनसजीवइतिअध्याहृतः ।

अवतारप्रयोजनंचसंपन्नमायामितिब्रूतइत्याह निष्पादितमिति भूभारदैत्यसंहाराख्यंदेवकार्यंतेनानिष्पादितं सपुनरवशेषंअवशिष्टयदुकुलक्षयंप्रतीक्षते पश्चाद्वैकुंठमेष्यतीतिशेषः श्रीकृष्णः इहभूतलेयावंतंकालंतिष्ठतियूयमपितावंतंसमयमनुवर्तध्वमित्यन्वयः ५० नाहंवेदगतिमितिप्रश्नपरिहरिष्यन्धृतराष्ट्रस्यतपश्चरणाश्रमतीर्थनामवर्णयन्नाह धृतराष्ट्रइति भ्रात्राविदुरेण चशब्दात्कुंत्यासहगतः हस्तिनपुरान्निर्गम्यहिमवतःपर्वतस्यदक्षिणेनदक्षिणदिशिगतमृषीणामाश्रमंसप्तस्रोतोनामगतोभूदित्यन्वयः ५१ कस्मात्सप्तस्रोतस्त्वंतस्येतितत्राह स्रोतोभिरिति यत्रयस्मिन्नाश्रमेस्वर्धुनीभागीरथीसप्तानामृषीणांप्रीतयेसप्तभिःस्रोतोभिःजलस्यंदनधाराभिःसप्तधासप्तभिःद्रोणीभिरभ्यगात्समुद्रमितिशेषइतियस्मात्तेनविचक्षणाःसप्तस्रोतइतिसंज्ञांप्रचक्षतइत्यन्वयार्थः ५२ उपशांतआत्माअंतःकरणंयस्यसतथोक्तः विगतेक्षणःनष्टमांसदृष्टिः वौपरमात्मनिगतंप्राप्तमीक्षणंनिरंतरंचिंतनंयस्येतिवा अब्भक्षःकृतजलाहारःसधृतराष्ट्रस्तस्मिन्नाश्रमेस्नात्वायथाविधिअग्नींश्चहुत्वाऽऽस्तइत्यन्वयः आस्तइतिलट्भूतार्थे अन्यथोक्तार्थविरोधःस्यात् ५३ अपिमेप्रीतिमृत्युकालीनवैमनस्यविषयंप्रश्नंपरिहरतीत्याह जितासनइति धृतराष्ट्रउक्तविधिनातपःकुर्वन्नभ्यासपाटवेनजितासनःस्वस्तिकाद्यासनजयवान्निर्जितश्वासःप्राणजयवान्विषयेभ्यःप्रत्याहृतश्रोत्रादिषडिंद्रियःसन् हरिभावनयाहरिनिरंतरध्यानेनध्वस्तंसत्वरजस्तमोनिमित्तंमनोमलंयेनसतथा ५४ स्वरूपज्ञानेनस्वस्वरूपमारभ्यपरतत्व

निष्पादितंदेवकृत्यमवशेषंप्रतीक्षते ॥ तावद्यूयमवेक्षध्वंभवेद्यावदिहेश्वरः ५० धृतराष्ट्रःसहभ्रात्रागांधार्याचस्वभार्यया ॥ दक्षिणेनहिमवतऋषीणामाश्रमंगतः५१स्रोतोभिःसप्तभिर्यत्रस्वर्धुनीसप्तधाभ्यगात् ॥ सप्तानांप्रीतयेनानासप्तस्रोतःप्रचक्षते ५२स्नात्वात्रिषवणंतस्मिन्हुत्वाचाग्नीन्यथाविधि ॥ अब्भक्षउपशांतात्माआस्तेविगतेक्षणः ५३ जितासनोजितश्वासःप्रत्याहृतषडिंद्रियः ॥ हरिभावनयाध्वस्तरजःसत्त्वतमोमलः५४विज्ञानात्मनिसंयोज्यक्षेत्रज्ञेप्रविलाप्यतम् ॥ ब्रह्मण्यात्मानमाधारेघटांबरमिवांबरे ५५ ध्वस्तमायागुणोद्रेकोनिरुद्धकरणाशयः ॥ निवर्तिताखिलाहारआस्तेस्थाणुरिवाधुना ५६ तस्यांतरायोमैवाभूत्संन्यस्ताखिलकर्मणः ५७ सवा अद्यतनाद्राजापरतःपंचमेहनि ॥ कलेवरंहास्यतिहतच्च भस्मीभविष्यति ५८

पर्यंतानिअशेषतत्वान्यपरोक्षीकृत्यसर्वंजगद्विज्ञानात्मनिविज्ञानतत्वाभिमानिनिविरिंचेसंयोज्यतत्रप्रविलाप्यलयमेष्यतीतिध्यात्वातंविरिंचंक्षेत्रज्ञेस्वहृदिस्थितेहरावंतर्यामिणिप्रविलाप्य घटांबरमंबरइवउत्पद्यमानघटवर्तिमहाकाशस्वरूपतद्भिन्नजायमानाकाशयोर्मध्येमहाकाशस्वरूपघटाकाशोमहाकाशेघटेभिन्नेयथैकीभवतितथात्मानं स्वांतर्यामिणंहरिमाधारेसर्वाधारेब्रह्मणिसर्वगतेप्रविलाप्यैकीभावेनचिंतयन् ५५ अतएवध्वस्तमायागुणोद्रेकइतिहेतुगर्भं । निरस्तप्रकृतिसत्वादिगुणोद्रेकत्वाद्बहिरावेवनिरुद्धाशेषकरणमनाअतएवनिवर्तिताखिलाऽशनोऽधुनास्थाणुरिवाचलआस्तेतदामृतिकालेप्यासीदित्येकान्वयः तस्मात्त्वयिशमलमाशंसमानोनापिदुःखितोगंगायामभ्यपतदितिभावः ५६ ब्रह्मार्पणबुद्ध्यासंन्यस्तसमस्तकर्मणःतस्यधृतराष्ट्रस्यतपोविघ्नोमाभूदित्यन्वयः ५७ इदानींधृतराष्ट्रमृतिकालंवक्तीत्याह सवाइति सधृतराष्ट्रःअद्यतनादह्नःपरतःपूर्वस्मिन्पंचमेऽहनिकलेवरंहास्यातिजहौ । तच्चभस्मीभविष्यतिभस्मसादभूत् । हशब्देनसुप्तिङुपग्रहलिंगनराणामितिव्याकरणसूत्रमत्रप्रमाणीकरोतिइतिहासंवासूचयति । वाइत्यनेन तांस्तदानारदोविद्वान्छमयामासधर्मवित् । उक्त्वोत्तमांगतिंतेषांनिशांतात्कालिकींतथेति । स्कंदपुराणोक्तंवाक्यंसूचयति । चशब्दएवार्थेतत्कलेवरमेवभस्मीभविष्यति नतुतःस्वयंशून्यतामेष्यति । चेतनस्यनित्यत्वात् ५८

१ द्विरावृत्त्यायोजितः । २ भारतानुरोधेनधृतराष्ट्रमृतेःभूतत्वेनोक्तत्वात् । ३ पूर्वश्लोकप्रतीकमिदम् । ४ अनेनविशेषणेनवैमनस्यनेनिसूचितम् ।

उटजेनपर्णशालयासहवर्तमानः सहोटजः तस्मिन्प्रवेक्ष्यति प्राविशत् साध्वीशब्देनकुंतीच साचाग्निमाविशत् । तस्मादुत्तरगतिंप्राप्तान्प्रतिपरलोकमुद्दिश्यनशोचितव्यमितिभावः ५९ एवंज्ञस्यापिवि
दुरस्यधृतराष्ट्रवनप्रवेशात्पूर्वतनाचरणप्रकारमाह विदुरइति । सर्वज्ञोविदुरोदिव्यज्ञानेनभविष्यदाश्चर्यंधृतराष्ट्रपांडवयादवानांस्वनिर्याणनिशम्यहरिसायुज्यस्मरणेनबंधुमरणस्मरणेनचहर्षशोकान्वितः
सर्वेषामनित्यमीशएवनित्यस्ततस्तीर्थयात्रादितत्सेवैवपुरुषार्थप्रदेत्यतःकारणात्तीर्थनिषेवणकोगंतागम्यादितीर्थानांभागवतादिशास्त्राणांचसेवनोयपौ । तुशब्दोगंतेतिलुट्भूतार्थत्वभेदमाह तुःस्याद्भेदे
वधारणेइत्यभिधानात्सचपुनर्धृतराष्ट्रपरिसरमागतोभवत् धृतराष्ट्रादिदिदृक्षयावनंगतेषुभवंतंप्रविश्य एकत्वमागतोहितस्मान्नतस्यगतिर्मयावर्णनीयेतिभावः । पुरादिदृक्षार्थंवनमागतेषुपांडवेषुराजानंप्र
विश्यएकत्वमागतइतिस्कांदकथितार्थभेदेवावर्ततइतितुशब्दः ६० सतुंबुरुरितिवक्तव्येसहतुंबुरुणेतिनारदःसर्वदातुंबुरुणासहैववर्ततेनतंविहायेतिद्योतनार्थः कुंत्यादिविषयाःशुचः ६१ इतिश्रीभागवत
महापुराणेप्रथमस्कंधेविजयध्वजकृतटीकायांद्वादशोध्यायः ॥ १२ ॥ दुर्निमित्तादिसंसारयात्राप्रतिपादनात्तस्यानित्यत्वज्ञापनेनहरौपराभक्तिर्जायतइत्यर्थोनिरूप्यतेऽस्मिन्नध्याये तत्रावशेषंप्रतीक्षतइ
त्युक्तयदुकुलसंहारकथनपूर्वकंश्रीकृष्णस्यस्वधामप्राप्तिंवक्तुमुपक्रमते संप्रस्थितइति नारदोक्तपरामर्शेनवीतशोकतयाराज्यंपालयन्नृपःस्वानुमतेनजिष्णावर्जुनेद्वारकायांस्थितानांबंधूनांदर्शनेच्छया भगवच्

दह्यमानेग्निभिर्देहेपत्युःपत्नीसहोटजे ॥ बहिःस्थितापतिंसाध्वीतमग्निमनुवेक्ष्यति ५९ विदुरस्तुतदाश्चर्यंनिशम्यकुरुनंदन ॥ हर्षशोकयुतस्तस्माद्गंता
तीर्थनिषेवकः ६० सूतउवाच ॥ इत्युक्त्वाथारुहत्स्वर्गंनारदःसहतुंबुरुः ॥ युधिष्ठिरोवचस्तस्यहृदिकृत्वाजहाच्छुचः ६१ इतिश्रीभागवतेमहापुराणे
प्रथमस्कंधेद्वादशोध्यायः ॥ १२ ॥ सूतउवाच ॥ संप्रस्थितेद्वारकायांजिष्णौबंधुदिदृक्षया ॥ ज्ञातुंमायामनुष्यस्यवासुदेवस्यचेहितम् १ व्यतीताःकति
चिन्मासास्तदातुशतशोनृपः ॥ ददर्शघोररूपाणिनिमित्तानिभृगूद्वह २ कालस्यचगतिंरौद्रांविपर्यस्ततुर्धर्मिणः ॥ पापीयसींनृणांवार्तांक्रोधलोभान्
तात्मनाम् ३ जिह्मप्रायंव्यवहृतंसाध्यमिश्रंचसौहृदम् ॥ पितृमातृसुहृद्भ्रातृदंपतीनांचकल्किताम् ४ निमित्तान्यप्यरिष्टानिकालेत्वनुगतेनृणाम् ॥ लो
भाद्यधर्मप्रकृतिंदृष्ट्वोवाचानुजंनृपः ५ युधिष्ठिरउवाच ॥ संप्रेषितेद्वारकायांजिष्णौबंधुदिदृक्षया ॥ ज्ञातुंचपुण्यश्लोकस्यकृष्णस्यचविचेष्टितम् ६ गताः
सप्ताधुनामासाभीमसेनतवानुजः ॥ नायातिकस्यवाहेतोर्नाहंवेदेदमंजसा ७

च्छयागृहीतमनुष्यवेषस्यवासुदेवस्यईहितंचेष्टितंचज्ञातुंद्वारकांप्रतिसंप्रस्थितेगते १ यदाकतिचिन्मासाःदिवसाःव्यतीताःअतिक्रांताःतदाशतशःसहस्रशोघोररूपाणिभयंकराणिनिमित्तान्याध्यात्मिका
धिभौतिकाधिदैविकानुत्पातान्ददर्शेत्यन्वयः अहस्तुमासशब्दोक्तंयन्नोंचितायुतंव्रजेदित्यभिधानं तुशब्देनगृहीतम् २ उत्पातंदृष्ट्वाकिंचकारनृपइतितत्राह कालस्येति कालगत्यादिकंदृष्ट्वानृपोऽनुजंभी
मसेनमित्यभाषतेत्यन्वयः विपर्यस्ताःव्यत्यस्ताःवसंतादीनामृतूनांधर्माःपुष्पोद्गमाःअस्यसंतीतिविपर्यस्ततुर्धर्मस्यकालस्य रौद्रामितिपाठात् गतेरपरिहार्यत्वंवक्ति क्रोधादिषु आत्मामनोयेषांतेतथोक्ताःते
षान्नृणांवार्तांश्रुत्वाजीवनोपायंप्रवृत्तिपापीयसीपापभूयिष्ठांदृष्ट्वा ३ व्यवहृतंदानोपादानादिव्यवहारंजिह्मप्रायंकापट्यप्रचुरंसौहृदस्नेहंसाध्यमिश्रंस्वप्रयोजनोपेतंपित्रादीनांकल्किताकलंकताकलहंवा
४ अरिष्टानिअशुभानि अरिष्टंपापशुभयोरारिष्टमशुभेपिचेत्यभिधानमपिशब्देनाग्राहि पूर्वकालैर्लक्षणद्योतकस्तुशब्दः लोभादिनाअधर्मस्वभावम् ५ ६ अत्रापिमासाःदिवसाः अहमंजसेदं
कारणंनवेदत्वमिदंवेत्थकिमितिवाक्यशेषः ७

आत्मनःस्वस्याक्रीडंक्रीडास्थानमंगांनिजांभूमिं यस्यपृथिवीशरीरमित्यादेः यद्यदादेवर्षिणानारदेनपूर्वंतावद्देवेक्षध्वमितिनिर्दिष्टःस कालःप्रत्युपस्थितःआसन्नःअपिकिम् ८ यस्यकृष्णस्यानुग्रहात्येषाम स्माकंसंपदादयआसंस्तेषांनःसकालआसन्नइत्यन्वयः दाराभार्याःसपत्नानांशत्रूणांविजयोलोकाःस्वर्गादयःप्रजाःपुत्राः ९ कुतःआशंकसइतितत्राह पश्येति दिव्यान्सूर्यप्रकाशादीन्भौमान्भूकंपादीन्देहभवादैहिकानेत्रोरुस्फुरणादय.तैःसहवर्तमानाःसदैहिकास्तान्इतित्रिविधान् दृष्टव्यातिरिक्तकारणशून्यानशुभसूचकानुत्पातान्पश्यइत्यन्वयः कीदृशान्बुद्धिमोहनंभयमदूरादिदानीमेवआशंसतःकथयतस्तस्मादाशंकइतिभावः १० दैहिकान्व्यक्तीत्याह ऊर्वक्षीति मभोत्संगादयःपुनःपुनःस्फुरंतिकंपंते एतेआरात्क्षिप्रविप्रियंमह्यंदास्यंतीत्यन्वयः ११ अनलोग्निराननेयस्याःसातथोक्तामुखादग्निज्वालामुद्गिरतीत्यर्थः एषाशिवासृगालीउपगच्छंतमरुणमादित्यमभिमुखंरौतिरटति रटःसृगालाक्रोशेकाकाह्वानेच सारमेयःश्वा १२ शस्ताःभारद्वाजादयःमांसव्यमप्रदक्षिणंअपरेपशवोवस्तगर्दभादयःमांप्रदक्षिणंकुर्वंति वाहानश्वादींश्चरोदनंकुर्वतःमनसानिरूपयामि १३ मृत्युदूतःमरणसूचकःकपोतःशिलाकणाशनपक्षीअग्रेपदंकरोति यत्कपोतःपदमग्रेकृणोती

अपिदेवर्षिणादिष्टःसकालोयमुपस्थितः ॥ यदात्मनोंगमाक्रीडंभगवानुत्सिसृक्षति ८ येषांनःसंपदोराज्यंदाराःप्राणाःकुलंप्रजाः ॥ आसन्सपत्नविजयोलोकाश्चयदनुग्रहात् ९ पश्योत्पातान्नरव्याघ्रभौमान्दिव्यान्सदैहिकान् ॥ घोरमाशंसतोऽदूराद्भयंनोबुद्धिमोहनम् १० ऊर्वक्षिबाहवोमह्यंस्फुरंत्यंगपुनःपुनः ॥ वेपथुश्चापिहृदयेआराद्दास्यंतिविप्रियम् ११ शिवैषोद्यंतमादित्यमभिरौत्यनलानना ॥ मामंगसारमेयोयमभिरौदित्यभीतवत् १२ शस्ताःकुर्वंतिमांसव्यंदक्षिणंपशवोपरे ॥ वाहांश्चपुरुषव्याघ्रलक्षयेरुदतोमम १३ मृत्युदूतःकपोतोग्रावुलूकःकंपयन्मनः ॥ प्रत्युलूकश्चहुंकारैरनिद्रौशून्यमिच्छतः १४ धूम्रादिशःपरिधयःकंपतेभूःसहाद्रिभिः ॥ निर्घातश्चमहानासीत्साकंचस्तनयित्नुभिः १५ वायुर्वातिखरस्पर्शोरजसाविसृजंस्तमः ॥ असृग्वर्षंतिजलदाबीभत्समिवसर्वतः १६ सूर्यंहतप्रभंपश्यग्रहमर्दंमिथोदिवि ॥ ससंकुलैर्भूतगणैर्ज्वलितेइवरोदसी १७ नद्योनदाश्चक्षुभिताःसरांसिचमनांसिच ॥ नज्वलत्यग्निराज्येनकालोयंकिंविधास्यति १८ नपिबंतिस्तनंवत्सानदुह्यंतिचमातरः ॥ रुदंत्यश्रुमुखागावोनहृष्यंत्यृषभाव्रजे ॥ दैवतानिरुदंतीवखिद्यंतिह्युच्चलंतिच १९

तिमंत्रात् इदंस्वप्नेदर्शनामितिज्ञातव्यं । मेमनःकंपयन्नुलूकःप्रत्युलूकश्चमिथोहुंकारैजगच्छून्यमिच्छतःसर्वनाशेयथातथाह्वानंकुरुतइत्यर्थःकुह्वानमितिकेचित्पठंति कुह्वानंनाप्रतज्ञातिध्वनिविशेषः १४ परिधयःदिशःधूम्राःधूम्रवर्णाःज्वलिताःपरिवेषावा स्तनयित्नुभिरशनिभिरकालमेघैर्वासाकंमहान्निर्घातःनिर्मेघगर्जितम् १५ वायु.शंसत्यपकर्षकालमित्याह वायुरिति रजसाधूल्यातमोंधकारंविसृजन्निष्ठुरस्पर्शःवायुर्वाति अथदिव्यानाह असृगिति जलदाःसर्वतोदिशंबीभत्समिवभीषकमिवअसृग्रुधिरंवर्षंति १६ दिविव्योम्निपरस्परंग्रहमर्दंग्रहयुद्धं भगणेनक्षत्रसमूहेससंकुलेसाकर्षसहितेभावप्रधानत्वद्योतनायससंकुलइत्युक्तं तेनापिभयप्रापकत्वमाह तुशब्देनैवंचेदेवंस्यादितिज्योतिःशास्त्रंप्रमाणीकरोतिरोदसीद्यावापृथिव्यौज्वालाकुलेइवभातः १७ पुनश्चभौमानाह नद्यइति स्वर्नद्यादीनांदिव्यत्वसंग्रहार्थमत्रनापाठि नदा.पुंनद्यःशोणादयः क्षुभिताःनिमित्तमंतरेणकलुषाः नियमाज्येनज्वलनस्वभावोवह्निःआज्येननज्वलतीतियस्मादतोयंकालः किंशमलंविधास्यति १८ व्रजेगोष्ठेअश्रुमुखेयासांतास्तथोक्ताःनहृष्यंतिनाविष्क्रंतितटाघातनकुर्वंतीत्यर्थःदैवतानिप्रतिमाःरोदनादौयोभावःतंकुर्वंति १९

भ्रष्टश्रिय अतएवनिरानंदाःसमृद्धिरहिताःसुखमुक्तावा अघंव्यसनम् २० एषामुत्पातानांफलंस्वयमेवानुमिनोमीत्याह मन्यइति एतैर्महोत्पातैःप्रायेणयादवेंद्रस्यभगवत. पदैर्हीनास्यक्तात्तएवहत सौभगाभूर्महीतिमन्ये कथंभूतै.पदैःअनन्यपुरुषस्त्रीभिर्नान्येपुरुषा.स्त्रियश्चसौंदर्येसाम्येआधिक्येचवर्ततेयेषांतान्यनन्यपुरुषश्रीणितै·दीर्घश्छांदसः अनन्यैर्भगवदेकशरणै.पुरुषै स्त्रीभिश्चहीनेतिवा २१ दृष्टारिष्टेनदृष्टाशुभेनव्यसनमनुमिमानेनचेतसातस्ययुधिष्ठिरस्यराज्ञइतिचिंतयतोनुजंप्रतिकथयतश्चसतइतिशेषः कपिध्वजोअर्जुनःयदुपुर्याःद्वारकायाःहस्तिनपुरप्रत्यागमदित्यन्वयः २२ अयथा पूर्वं पूर्वंयथातथानभवतीति आतुरंसंभ्रांतंरोगिकल्पंवा अधोवदनंअवाङ्मुखअप्बिंदून्जलबिंदून् २३ विच्छायंविगतश्रीकं अनुजंनिरीक्ष्योद्विग्नहृदय.त्वरितमना.पृच्छतिस्मअपृच्छदित्य न्वयः २४ आनर्तपुर्यांद्वारवत्यांमधवश्चभोजाश्चदशार्हाश्चअर्हाश्चसात्वताश्चअधकाश्चवृष्णयश्च मधुभोजदशार्हार्हसात्वतांधकवृष्णय· २५ मारिषःआर्यः मातामह·मातु·पिता मातुल·मातु सहोदरःआनकदुंदुभिर्वसुदेव.कच्चिच्छब्दःप्रश्नार्थे कुशलीसुखी २६ वसुदेवस्यसप्तस्वसारःसहोदर्यःकुशलवत्यःकिं तस्यवसुदेवस्यपत्न्यः अस्माकंमातुलान्य मातुलभार्याः आत्मजै·सहवर्त

इमेजनपदाग्रामाःपुरोद्यानाकराश्रमाः ॥ भ्रष्टश्रियोनिरानंदाःकिमघंदर्शयंतिनः २० मन्यएतैर्महोत्पातैर्नूनंभगवतःपदैः ॥ अनन्यपुरुषश्रीभिर्हीनाभूर्हतसौभगा २१ इतिचिंतयतस्तस्यदृष्टारिष्टेनचेतसा ॥ राज्ञःप्रत्यागमद्ब्रह्मन्यदुपुर्याःकपिध्वजः २२ तंपादयोर्निपतितमयथापूर्वमातुरम् ॥ अधोवदनमब्बिंदून्मुंचंतंनयनाब्जयोः २३ विलोक्योद्विग्नहृदयोविच्छायमनुजंनृपः ॥ पृच्छतिस्मसुहृन्मध्येसंस्मरन्नारदेरितम् २४ युधिष्ठिरउवाच ॥ कच्चिदानर्तपुर्यांनःस्वजनाःसुखमासते ॥ मधुभोजदशार्हार्हसात्वतांधकवृष्णयः २५ शूरोमातामहःकच्चित्स्वस्त्यास्तेचाथमारिषः ॥ मातुलःसानुजःकच्चित्कुशल्यानकदुंदुभिः २६ सप्तस्वसारस्तत्पत्न्योमातुलान्यःसहात्मजाः ॥ आसतेसस्नुषाःक्षेमंदेवकीप्रमुखाःस्त्रियः २७ कच्चिद्राजाहुकोजीवत्यसत्पुत्रोस्यचानुजः ॥ हृदीकःससुतोक्रूरोजयंतगदसारणाः २८ आसतेकुशलंकच्चिद्येचशत्रुजिदादयः ॥ कच्चिदास्तेसुखंरामोभगवान्सात्वतांप्रभुः २९ प्रद्युम्नःसर्ववृष्णीनांसुखमास्तेमहारथः ॥ गंभीररयोनिरुद्धोवर्ततेभगवानुत ३० सुषेणश्चारुदेष्णश्चसांबोजांबवतीसुतः ॥ अन्येचकार्ष्णिप्रवराःसपुत्राऋषभादयः ३१ तथैवानुचराःशौरेःश्रुतसेनोद्धवादयः ॥ सुनंदनंदशीर्षण्यायेचान्येसात्वतर्षभाः ३२ अपिस्वस्त्यासतेसर्वेरामकृष्णभुजाश्रयाः ॥ अपिस्मरंतिकुशलमस्माकंबद्धसौहृदाः ३३ भगवानपिगोविंदोब्रह्मण्योभक्तवत्सलः ॥ कच्चित्पुरेसुधर्मायांसुखमास्तेसुहृद्वृतः ३४

मानाः अनेनतत्पुत्राणांचकुशलप्रश्नःकृतइतिज्ञातव्यं स्नुषाभिःपुत्रभार्याभिःसहिताः २७ असद्दुष्टःपुत्रःकंसनामायस्यसोऽसत्पुत्रःआहुकउग्रसेनोऽस्यानुजोदेवकःससुतःकृतवर्माख्यपुत्रसहितोहृदीक.पुत्रैःसहितोअक्रूरोवा २८ येशत्रुजिदादयःतेचसुखमासतेकिंरामोबलभद्रः २९ सर्ववृष्णीनांमध्येमहारथःगंभीररयउग्रवेगः अगाधज्ञानोवा रयगतौगतिर्ज्ञानम् ३० कार्ष्णीनांकृष्णसुतानांप्रवराः कार्ष्णिप्रवराः ३१ श्रुतसेनोद्धवादयः शौरेरनुचराभृत्याःसुनंदनंदौशीर्षण्यौप्रधानौयेषांतेसुनंदनंदशीर्षण्याःसुनंदनंदप्रधानाइत्यर्थः नंदशीर्षाद्याइतिपाठेसुनंद·नंदशीर्षश्चाद्यौयेषांतेतथोक्ताइतियोजनीयंशीर्षशब्दःप्रधानवाचीपार्षदेषुप्रधानौसुनंदनंदौआद्यौयेषांतेतथोक्ताइतिवा ३२ ३३ सुधर्मायांसभायां ब्रह्मणावेदेनगम्यतइतिब्रह्मण्यःविप्रप्रियोवा नित्यसुखस्यहरे·कुशलोद्देशेनमेप्रश्नः किंतुलोकसुखकरत्वोद्देशइत्ययमर्थोऽपिशब्देनदर्शितः ३४

एतमेवार्थंदर्शयति मंगलायेति सः अनंतः शेषः सखायस्यसोनंतसखः आद्यः पुमान् लोकानांमंगलायशुभायक्षेमायप्राप्तपरिपालनायभवायवृद्धयेयदुकुलसमुद्रे आस्तेकच्चिदित्यन्वयः स्वभक्ताः स्त्रियःस मुच्चयार्थाः मंगलाद्यनेकप्रयोजनार्थाः ३५ यद्वोयस्यकृष्णस्यबाहुदंडैः रक्षितायांस्वपुर्यांक्रीडंतीत्यन्वयः कइवपरमानंदंप्राप्यमहापौरुषिकाइव मुक्ताइवपरमानंदापरपर्यायंवा वैश्रवणबाहुद ण्डगुप्तचैत्ररथंप्राप्यमहापौरुषिकायक्षाइववा ३६ यस्यहरेः पादयोः शुश्रूषणसेवालक्षणंतदेवमुख्यंकर्मतेनसाधनेनसत्यादयः सत्यभामापुरःसराः द्व्यष्टसहस्रयोषितः षोडशसहस्रसंख्याः स्त्रियःसंख्ये युद्धेत्रिदशानिंद्रादीन्निर्जित्यवज्रायुधस्यैंद्रस्यवल्लभायाः शच्याः उचितास्तदाशिषस्तेषामिंद्रादीनामाशिषः पारिजातादिकाः हरंतिआच्छिद्यस्वीकुर्वंतीत्यन्वयः ३७ यस्यहरेर्बाहुदंडानामभ्युदयो दिग्विजयश्रीस्तामनुजीवितुंशीलाः अतएवाकुतोभयाः यदुप्रवीराः सुरसत्तमस्यैंद्रस्यउचिताबाहुबलाहृतामानीतांसुधर्माख्यांसभामंघ्रिभिरनुदिनमधिक्रमत्याक्रम्यतिष्ठंतीत्यन्वयः ३८ तर्हिकिमेताहश दुःखनिमित्तमितिपृच्छतीत्याह कच्चिदिति हेतात तेतवअनामयं कच्चित्सुखंकिं कुतः कुशलप्रश्नइतितत्राह भ्रष्टतेजाइति भ्रष्टतेजस्त्वेकारणपृच्छति अलब्धेति अलब्धोमानोयेनस तथोक्तः नकेवलमानाभावः किंतुअवज्ञातश्चकिमित्याह अवज्ञातइति पूर्वंचिरोषितोवाकिंवाक्षिप्रमागतः तत्ब्रूहीत्यर्थः ३९ अवज्ञाचइंगितैः क्रिययावाचावास्याच्चतत्रतैःकैनसर्वैः किवेत्याभि

भंगलायचलोकानांक्षेमायचभवायच ॥ आस्तेयदुकुलांभोधावाद्योनंतसखः पुमान् ३५ यद्बाहुदंडैर्गुप्तायांस्वपुर्यांयदवोर्चिताः ॥ क्रीडंतिपरमानंदंमहापौरुषि काइव ३६ यत्पादशुश्रूषणमुख्यकर्मणासत्यादयोद्व्यष्टसहस्रयोषितः ॥ निर्जित्यसंख्येत्रिदशांस्तदाशिषोहरंतिवज्रायुधवल्लभोचिताः ३७ यद्बाहुदंडाभ्युदया नुजीविनोयदुप्रवीराह्यकुतोभयामुहुः ॥ अधिक्रमंत्यंघ्रिभिराहृतांबलात्सभांसुधर्मांसुरसत्तमोचिताम् ३८ कच्चित्तेनामयंतातभ्रष्टतेजाविभासिमे ॥ अलब्ध मानोवज्ञातः किंवाततचिरोषितः ३९ कच्चिन्नाभिहतोभावैः शब्दादिभिरमंगलैः ॥ नदत्तंयुक्तमर्थिभ्यआशयायत्प्रतिश्रुतम् ४० कच्चित्त्वंब्राह्मणंबालंगां वृद्धंरोगिणंस्त्रियम् ॥ शरण्योपसृतंसत्त्वंनात्याक्षीः शरणप्रदः ४१ कच्चित्त्वंनागमोगम्यांगम्यांवासत्कृतांस्त्रियम् ॥ पराजितोवाथभवान्नोत्तमैर्नाधमैः पथि ४२ अपिस्वित्पर्यभुङ्क्थास्त्वंसंभोज्यान्वृद्धबालकान् ॥ जुगुप्सितंकर्मकिंचित्कृतवानसदक्षमम् ४३ कच्चित्प्रेष्ठतमेनाथहृदयेनात्मबंधुना ॥ शून्योस्मिरहितो नित्यंमन्यसेतेऽन्यथाहिरुक् ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ छ ॥ ॥ ॥

प्रेत्यपृच्छति कच्चिदिति आदिशब्देनेंगितक्रियेगृहीते शब्दादिभिरवज्ञानेकारणं स्वदोषः परदोषोवातत्रस्वदोषोनास्तिहीतिपृच्छति नदत्तमिति वित्ताशयाप्राप्तेभ्योऽर्थिभ्योयुक्तंयोग्यंदास्यामीतिप्र तिज्ञातंतन्नदत्तंकिमितीयंवैस्वदोषात् दत्वापितदाशापूर्तिपर्यंतंनदत्तमितीयंपरदोषात् उभयंचनप्राप्तहीतिवावाक्यार्थः ४० ब्राह्मणादिसत्त्वंजीवजातंशरण्योपसृतंशरणार्थितयाप्राप्तंशरणप्रदस्त्वंनात्याक्षीः रक्षामकृत्वात्यक्तवानसिकिं अरक्षितैस्तैरवज्ञातइतिवाक्यार्थः ४१ अगम्याविधवांपरस्त्रियंवा गम्याअसत्कृतांवास्नानादिसंस्काररहितां प्रदानकर्मरहितांवास्त्रियंनागमः नगतवानसि किंइयंचप्रा र्थएवंविधकर्मकरोतीतिकाचित्स्वदोषनिमित्तावज्ञा ४२ आवृद्धबालकान्बालावधिसर्वान्अभोज्यान्भोजयित्वापर्यभुंक्थाः भुक्तवानसिकिंसंभोज्यानीतिपाठेसहभोक्तुंयोग्यान्वर्जयित्वाभुक्तवानसी त्यर्थः असदक्षमंकर्तुमशक्यंतादृशंकिंचित् शास्त्रेनिषिद्धंकर्मकृतवान्किं एकादशीभोजनंस्वर्णस्तेयंनिधानोद्धरणमित्यादिजुगुप्सितंकर्म ४३ उक्तंसर्वंविच्छायत्वेनपूर्णमितिमत्वाकारणां तरंपृच्छति अथेति अथयंनित्यंप्रेष्ठादिगुणत्वेनमन्यसेतेनसर्वतःप्रेष्ठेनप्रियतमेनहृदयेनमनोहारिणाऽत्मबंधुनास्वाभाविकबंधुनाकृष्णेनरहितोवियुक्तःसन् शून्योऽप्रगल्भोसिकच्चित्तवहृद्शरीर

रमाऽन्यथा नपूर्ववाद्धि यस्मात्तस्मात्तेनवियुक्तोऽमंगलोभवितुमर्हसीतिमन्ये नित्यंप्रेष्ठतमेनराहितःशून्योस्मीत्यात्मानंहृदयेनमन्यसे सर्वथातवशरीरकांतिस्त्वन्यथा नपूर्ववदितिवा प्रेष्ठेनतेनरहितःशून्यो स्मीतिमन्यसेअन्यथातथा मननाभावेरुक्रोगोमनोऽन्यथाकथमितिवा त्वंमान्निष्ठत्वादात्मैकनिष्ठत्वाच्चकृष्णप्रेष्ठत्वाच्चलोकशास्त्रनिषिद्धंनकरोषिहि तस्मात्तेनकृष्णेनवियुक्तत्वात्त्वंविच्छायत्वमितिमन्यइ तिहिशब्दार्थः ४४ इतिश्रीभा०म०प्रथमस्कंधेविजय०टीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ भगवतिभक्तिविधानार्थंदुःखकथनव्याजेनतन्माहिमाप्रतिपाद्यतेऽस्मिन्नध्याये कृष्णस्यविश्लेषेणवियोगेनकर्षितः उक्तनानाशंकायाआस्पदंशोकाग्निनाशुष्यतीवदनहृत्सरोजेयस्यतत्तथोक्तः अतएवहतप्रभंनष्टकांतिरूपंआकारंदृष्ट्वा भ्रात्राराज्ञाविकल्पितः एवंवाएवंवेतिबहुकोटिविषयीकृतःतमेवविभुमनुध्यायन्निरंत रंचिंतयन्कृष्णस्यसखाअर्जुनःप्रतिभाषितुंनाशक्नोदित्येकान्वयः १ २ शोकहेतूनामनेकत्वाद्बहुवचनं शुचःशोकान्कृच्छ्रेणसंस्तभ्यपाणिनानेत्रजमश्रुआमृज्यकृष्णस्यपारोक्ष्येणाप्रत्यक्षत्वेनसमुन्नद्धेनप्रण येन कदानुपश्येयमित्यौत्कंठ्येनकातरःविवशः ३ सारथ्यादिषुकर्मसख्यादिकंसम्यक्स्मरन्अर्जुनोबाष्पेणनिमित्तेनगद्गदयास्खलंत्यागिराअग्रजंनृपमितिवक्ष्यमाणप्रकारेणाहेत्येकान्वयः ४ दे वानपिविस्मापयतीतिदेवविस्मापनंमहत्तेजःसामर्थ्यलक्षणंयेनकृष्णेनापहृतंसएवनीतंतेनबंधुरूपिणाप्रधानबंधुनाहरिणाअर्जुनोहंवंचितइत्येकान्वयः वंचितइविहरानेदोषआरोप्यते किंतुतेनावियुक्तइति

सूतउवाच ॥ एवंकृष्णसखःकृष्णोभ्रात्राराज्ञाविकल्पितः ॥ नानाशंकास्पदंरूपंकृष्णविश्लेषकर्षितः १ शोकाग्निशुष्यद्वदनहृत्सरोजंहतप्रभम् ॥ विभुं तमेवानुध्यायन्नाशक्नोत्प्रतिभाषितुम् २ कृच्छ्रेणसंस्तभ्यशुचःपाणिनामृज्यनेत्रजम् ॥ पारोक्ष्येणसमुन्नद्धप्रणयौत्कंठ्यकातरः ३ सख्यंमैत्रींसौहृदंचसा रथ्यादिषुसंस्मरन् ॥ नृपमग्रजमित्याहबाष्पगद्गदयागिरा ४ अर्जुनउवाच ॥ वंचितोहंमहाराजहरिणाबंधुरूपिणा ॥ येनमेपहृतंतेजोदेवविस्मापनंमह त् ५ यस्यक्षणवियोगेनलोकोह्यप्रियदर्शनः ॥ उक्थेनरहितोह्येषमृतकःप्रोच्यतेयथा ६ यत्संश्रयाद्द्रुपदगेहउपागतानांराज्ञांस्वयंवरमुखेस्मरदुर्मदा नाम् ॥ तेजोहृतंखलुमयाविहतश्चमत्स्यःसज्जीकृतेनधनुषाऽधिगताचकृष्णा ७

तद्वियोगमात्रं वियोगोपिगृहीतमानुषाकारेणनसाक्षात्सर्वहृदिसन्निहितत्वाच्चस्येत्यभिप्रायेणबंधुरूपिणेत्युक्तं तस्माच्छोकाच्छून्योस्मीतिभावः ५ एतमर्थंसदृष्टांतमाह यस्येति यथोक्थेनप्राणेनर हितएषदेहोमृतकःकुणपइतिप्रोच्यते तथायस्यकृष्णस्यक्षणवियोगेनलोकोप्यप्रियममंगलंपश्यतीत्यप्रियदर्शनः यस्मात्तस्माच्छून्यत्वमित्यर्थः प्राणत्यागेपित्रादिशरीरमपिपुत्रादेरप्रियत्वाद्बहिर्भूमौ निक्षिप्यतेयथातथाहमपिबंधुभिरप्रियत्वादवज्ञातइवदृष्टइतिभावः ममायलोकोदेहोऽप्रियदर्शनोजातइतिवा प्रथमहिशब्देनप्राणावियुक्तदेहस्यकुणपत्वंश्रुतिसिद्धमितिदर्शयति नकेवलमहमेवाप्रियदर्शनः किंत्वयंलोकोबंधुजनोद्वारवत्यादिप्रदेशोवा उक्थेनपित्रादिनावियुक्तएवंबंधुजनोपीतिदृष्टांतयोजना ६ यत्संश्रयात्सन्निधावित्यादियदनुभावनिरस्तचित्ताइत्यंतानांश्लोकानांतेनाहमद्यमुषितइति मध्यगतेनश्लोकेनमध्यकुलकन्यायेनान्वयः यत्संश्रयाद्यस्यकृष्णस्यसेवाबलात्द्रुपदगेहेपांचालपुरे स्वयंवरमुखेस्वयंवरश्रेष्ठेउपागतानांमिलितानांस्मरकारणेनजातोदुष्टोमदोयेषांतेतथोक्ताःते षांराज्ञांजरासंधादीनांतेजोभिमानलक्षणंमयेदृशेनहृतं किंचसज्जीकृतेनधनुषायंत्रविहितोमत्स्योविहतःपातितश्च किंच मयाकृष्णाद्रौपदीचाधिगतावेदाऽध्ययनवदादरेणप्राप्तेत्येकान्वयः ७

यस्यसन्निधावहमेवामरगणैःसहवर्तमानमिंद्रंचतरसावेगेनबलेनचविजित्यखांडवाख्यंवनमपिदाचमानायअग्नयेअदांदत्तवानस्मि अद्भुतानिशिल्पानिस्थलेजलप्रत्ययादीनिमायाश्चयस्यांसंतिसातथो कामयनाम्नातक्ष्णाकृतासभामयालब्धा यत्संनिधानविशेषादितियोज्यं तेनवाध्वरेयज्ञेराजसूयलक्षणेदिग्भ्यआगतनृपतयोबलिंतेतुभ्यमहरन्ददुरित्यन्वयः ८ गदाख्यमायुधंयस्यसत्वंचहृदयसारश्च वीर्यंवीरभावश्चसत्वंमानसबलंचवीर्यंकायबलंचवायस्यसगदायुधसत्ववीर्यः तवानुजोमयज्येष्ठोभीमसेनोनृपाशिरःस्वांघ्रियस्यसतथोक्तःतंजरासंधंयत्संनिधावहन्हतवानित्यन्वयः किमर्थमस्वार्थेराज सूययज्ञमुद्दिश्यजरासंधेनतेनप्रमथनाथमखायरुद्रमुद्दिश्यपुरुषमेधाख्ययज्ञायाहृताश्चगृहीतायेनकृष्णेनमोचिताः जरासंधवधेनेतिशेषः भूयस्तेतवाध्वरेबलिमभ्युदनयन्आभिमुख्यानीतवंतइत्यन्वयः वक्षिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यत्राभेरप्युपसंख्यानंकर्तव्यम् ९ कुरुसभायांतवपत्न्याद्रौपद्याअपिराजसूयनाम्निमखेक्लृप्तेनकृतेनमयाभिषेकेणश्लाघिष्ठंअतिशयेनश्लाघ्यतममतएवचारुरुचिरंकब रंकेशबंधनंयैरक्षकितवैर्दुःशासनादिभिःस्पृष्टंयत्ततकबरांविकीर्ययत्पदयोःपतितायाःअश्रुमुख्यःअश्रुप्रधानोयेसःतत्पदयोःपतितत्वादेवतत्स्त्रियःतेषांकितवानांस्त्रियोभार्याःविमुक्तकेश्यः श्रीगाविद्धगदा

यत्सन्निधावहमुखांडवमग्नयेदामिंद्रंचसामरगणंतरसाविजित्य ॥ लब्धासभामयकृताद्भुतशिल्पमायादिग्भ्योहरन्नृपतयोबलिमध्वरेते ८ यत्सन्निधौनृपशिरोंघ्रिमहन्मखार्थआर्योनुजस्तवगदायुधसत्ववीर्यः ॥ तेनाहृताःप्रमथनाथमखायभूपायन्मोचितास्तेभ्युदनयन्बलिमध्वरेते ९ पत्न्यास्तवापिमखक्लृप्तमहाभिषेकश्लाघिष्ठचारुकबरंकितवैःसभायाम् ॥ स्पृष्टंविकीर्यपदयोःपतिताश्रुमुख्योयैस्तत्स्त्रियोन्यकततरसविमुक्तकेश्यः १० यत्तेजसाथभगवान्युधिशूलपाणिर्विस्मापितःसगिरिशोस्त्रमदान्निजंमे ॥ अन्येपिचाहममुनैवकलेवरेणप्राप्तोमहेंद्रभवनेमहदासनार्धम् ११ तत्रैवमेविहरतोभुजदंडयुग्मंगांडीवलक्षणमरातिवधायदेवाः ॥ सेंद्राःश्रितायदनुभावितमाजमीढतेनाहमद्यमुषितःपुरुषेणभूम्ना १२ यद्बांधवःकुरुबलाब्धिमनंतपारमेकोरथेनततरसातरमार्यसत्वः ॥ प्रत्याहृतंपुरधनंचमयापरेषांतेजःपरंमणिमयंचहृतंशिरोभ्यः १३

भग्नोरुदंडान्स्वपतीन्नालिंग्यरुदतीर्विकीर्णकेशपाशाःन्यकतनितरामकार्षीदित्येकान्वयः अश्रुशब्दउभयालिंगोप्यस्तिधनुःशब्दवत् १० यस्यतेजसायुधिवराहनिमित्तयुद्धेविस्मापितःविस्मयंगमितःशूलंपाणौयस्यसशूलपाणिःसगिरिशःनिजमस्त्रंपाशुपताख्यंमेमह्यमदादित्यन्वयः अन्येलोकपालाअपिस्वंस्वमस्त्रंददुरितिशेषः अपिचार्जुनोहममुनैवकलेवरेणमानुषेणमहेंद्रभवनेअमरावत्यांमहतो देवेंद्रस्यासनार्धंप्राप्तइत्येकान्वयःअथान्यच्चश्रीकृष्णमाहात्म्यंवक्ष्यामिविशेषतइत्यथशब्दार्थः ११ येनकृष्णेनानुभावितंप्रवृद्धबलवत्कृतं गांडीवज्याघातलांछनभुजदंडयुग्मंश्रिताःकेइंद्रेणसहवर्तमानाः देवाःअरातिवधायनिवातकवचनाम्नांशत्रूणांहननाय कस्यभुजदंडयुग्मं तत्रमहेंद्रभवनएवविहरतःक्रीडयानस्यमेमम १२ येषांबाधवोहंकुरुभिर्विराटगोग्रहणेअनंतपारंअदृश्यतीरांतरं अनंतमपरिच्छिन्नःपारःशूर्तिर्यस्यसतथातंकुरुसेनासमुद्रंरथेनतरसावेगेनातरंतीर्णवानस्मीत्यन्वयः कथंभूतःएकोऽसहायःआर्यसत्वःपूज्यबलःकिंच यद्बांधवेनमयाविराटपुरगोधनंचप्रत्याहृतंपुनरानीतं तथापरेषांशत्रुभूतानांभीष्मादीनांशिरोभ्योमणिमयंधनमुष्णीषलक्षणंनकेवलंहृतंकिंतुपरंकेवलंतेजाभिमानलक्षणंसामर्थ्यमेवापहृतमित्यन्वयः १३

१ कर्तृवाचक: । २ अन्यथा अश्रुमुख्यमितिस्यादितिभावइतिदीपिका ।

राजन्यवर्याणां श्रेष्ठानां रथानां मंडलैः समूहैर्मंडितासु अलंकृतासु भीष्मश्च कर्णश्च गुरुश्च शल्यश्च तैस्तथोक्ताः तेषां सेनापतीनां च मूषु सेनासु मध्ये यम योरथः तस्मिन् रथेयः अग्रेचरः सारथिः त्वात्पुरो भागवर्तीति भामे वरथयूथपानां भीष्मादीनां आयुर्मनांसि च सहसाशीघ्रं दृशादर्शनेनाच्छैत् अपाहरदित्येकान्वयः चशब्द एवार्थे यदाछैत्तदृशैव नायुधादिना समुच्चयेवा १४ गुरुभीष्मादिभिर्निरूपितानि प्रयुक्तानि अप्रमेयमहिमानि अचिंत्यसामर्थ्यानि अस्त्राणि यस्यदोःषु भुजेषु प्रणिहितं निक्षिप्तं मां नोपस्पृशुः नतापं चक्रुरित्यन्वयः स्पृश उपतापे इति धातुः कानि कमिव असुराणि हिरण्यकशिपोरिरितानि आसुरप्रयुक्तानि नृहरिदासं प्रह्लादं यथा न व्यथयंति तथेति १५ हे नरेंद्र दर्शी सर्वज्ञो यईशो रणमूर्ध्नि अलब्धरूपैकनाप्यज्ञातपूर्वरूपं मे अवदत् सूत्रादयः मुख्यप्राणमुखादेवास्तं न विदुरिति यञ्चस्यात्तत्स्मादीशोऽतर्क्यविहारः अचिंत्यक्रीड इत्यन्वयः लब्धरूपमानंदरूपमितिवा कथंभूताः सूत्रादयः यस्य मायया मोहकशक्त्या आवृतदृशः पिहितनेत्राः नष्टज्ञाना इति यावत् कथमावृतदृश इति तत्राह अहमदायेति मव्या आतुं यो ग्यतावंतः सकलमंगलरूपा इतिवा १६ भव्या मुमुक्षवो यत्पादपद्ममभवाय भजंति यस्य श्रीकृष्णस्यानुभावेन माहिम्ना निरस्तं मुग्धं चित्तं येषां ते तथोक्ताः अरयः कर्णादयो मां नप्राहरन् नायुध्यन् कथंभूता रथिनः

योभीष्मकर्णगुरुशल्यचमूष्वदभ्रराजन्यवर्यरथमंडलमंडितासु ॥ अग्रेचरोममरथेरथयूथपानामायुर्मनांसि च दृशासहसायआर्छत् १४ यद्दोःष्वमांप्रणिहितंगुरुभीष्मकर्णद्रौणित्रिगर्तशलसैंधवबाल्हिकाद्यैः ॥ अस्त्राण्यमेयमहिमानिनिरूपितानिनोपस्पृशुर्नृहरिदासमिवासुराणि १५ यन्मेनृपेंद्र तदतर्क्यविहारईशोयोलब्धरूपमवदद्रणमूर्ध्निदर्शी ॥ यन्माययावृतदृशोनविदुःपरंतंसूत्रादयोहमहमस्मिममेतिभव्याः १६ सौत्येवृतःकुमतिनात्मदईश्वरोमेयत्पादपद्ममभवायभजंतिभव्याः ॥ संश्रांतवाहमरयोरथिनोभुविष्ठंनप्राहरन्यदनुभावनिरस्तचित्ताः १७ नर्माण्युदाररुचिरस्मितशोभनानिहेपार्थहेऽर्जुनसखेकुरुनंदनेति ॥ संजल्पितानिनरदेवहृदिस्पृशानिस्मर्तुर्लुठंतिहृदयंममसाधवस्य १८ शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्यऋतवानितिविप्रलब्धः ॥ सख्युःसखेवपितृवत्तनयस्यसर्वंसेहेमहामहितयाकुमतेरघंमे १९

रथादियुद्धसाधनोपेताः किंविशिष्टं मां भुविष्ठं भूमौ स्थितं सम्यक्श्रांता वाहा अश्वा यस्य स तथोक्तः तं श्रांतानां वाहानां जलपानाय रथादवरुह्य युद्धसाधनमंतरेण भूमितले स्थितमित्यर्थः सोस्मदीश्वर कुमतिना मया मे मत्संबंधिनि सौत्ये सारथ्यकर्मणि वृतः किंविशिष्टः आत्मानं ददातीत्यात्मदः य आत्मदा बलदा इति श्रुतेः अद्य तेन भूम्ना पुरुषेण मुषितोस्मीति परमोन्वयः १७ हे नरदेव साधवस्य हृदिस्पृशानि मनोहराणि हे पार्थ अर्जुनेत्यादीनि गोष्ठ्यां संजल्पितानि नर्माणि परिहासलक्षणानि स्मर्तुर्मम हृदयं लुठंति परिवर्तंते हृदयान्न निर्गच्छंतीति कथंभूतानि उदारगंभीरं रुचिरं यत् स्मितं तेन शोभनानि भंगवंति १८ मया यं कृष्णो वयस्यः अहमेतादृशेन कृष्णेन समानवयस्कत्वादृभुमान् सदैव इति भावेन परमेष्टदेवेन श्रीकृष्णेन शय्यादिष्वैक्यात्तेन वंचितः तादृशबुद्धेस्तदधीनत्वात्परदेवतया शय्यादैक्यमपराधो हि यस्मात्तस्माद्वंचितोस्मि शय्या शयनं विकत्थनं गालीवचनं स्तवनं वा तथापि स कृष्णो महतो महिम्नेन सख्युरघमपराधं सखेव पुत्रस्यापि पितेव कुत्सितबुद्धेर्मेऽघं मया विप्रलब्धोपि सं वंचितोपि महामहितया कुमतेर्मेऽघं सेहे इतिवा शय्यादिषु ऋभुमान्महात्मा मया विप्रलब्धः तिरस्कृतः किमिति वयस्यः सखेत्यैकपव्यवहारात्तथापि महामाहात्म्येन ममापराधं सेहे इतिवा १९

शून्योस्मीतिविकल्पंपुनःस्पष्टंपरिहरतीत्याह सोहमिति हेनृपेंद्रसख्याजन्मप्रभृतिसहवर्तमानेनप्रियेणविषयादिसुखप्रापकेणसुहृदाअनिमित्तबंधुनाहृदयेनातिस्निग्धेनआत्तिक्रांतेनवापुरुषोत्तमेनक्षराक्षर मतीत्यवर्तमानेनश्रीकृष्णेनरहितःशून्योऽमंगलोस्मीत्येकान्वयः येनमेपहृतंतेजइत्येतद्विवृणोतिअध्वनीति अंगराजन्उरुक्रमस्यहरेः परिग्रहकलत्रंरक्षन्आगच्छन्असद्भिरसाधुभिर्गोपैरबलाइवापिवविनिर्जितो स्मितस्यात्तेनमत्तेजोपहृतमितिभावः २० तदेवस्पष्टयतीत्याह तादिति धनुस्तद्वैतदेव तइषवः तादृशाःशराःसरथःतादृशोरथःतेहयाःतादृशाअश्वाःरथीसोहमान्वयः यतःयस्मैनृपतयःआमनंति त त्सर्वमीशरिक्तंश्रीकृष्णतेजसाविहीनक्षणेनअसत्नाशवत्अप्रयोजकमभूत्कथमिव भस्मनिहुतमिव कुहकेनराद्धंचौरेणासिद्धमिव ऊषेऊखरेउप्तमिव भस्मनिहुतस्यमंत्रोच्चारणादिनाकिंचित्फलंस्या दित्यतःकुहकेति ऐंद्रजालिकेनकुटुंबभरणमुद्दिश्यद्रव्याहरणात्तज्जीवनेनैहिकफलदर्शनादित्यतउक्तमुप्तमूषइति नतत्रकिंचित्बीजंप्ररोहतीत्यभिप्रायेणनिदर्शनत्रयमुक्तमितिवेदितव्यम् २१ कच्चिदानर्तपु र्यामित्यादिबांधवकुलप्रश्नपरिहरतीत्याह राजन्निति सुहृत्पुरेद्वारवत्याम् २२ नाम्नावारुणींवरुणनिर्मितांमदिरांमदकरींसुरांपीत्वा अन्यच्चनिमित्तमस्तीत्याह विप्रशापेति ब्राह्मणशापेनविमूढानां कृत्याकृत्यज्ञानरहितानां अतएवात्मानमजानताम् २३ इदंयादवनिधनमपिश्रीकृष्णकृतमित्यभिमेत्यमूतइत्याह प्रायेणेति भूतानिमिथोनिघ्नंतिभावयंतिउत्पादयंतिचेतीतियत्तदीश्वरस्यभगवतोविशिष्ट

सोहंनृपेंद्ररहितःपुरुषोत्तमेनसख्याप्रियेणसुहृदाहृदयेनशून्यः ॥ अध्वन्युरुक्रमपरिग्रहमंगरक्षन्गोपैरसद्भिरबलेवविनिर्जितोस्मि २० तद्वैधनुस्तइषवःस रथोहयास्तेसोहंरथीनृपतयोयतआमनंति ॥ सर्वंक्षणेनतदभूदसदीशरिक्तंभस्मन्हुतंकुहकराद्धमिवोप्तमूषे २१ राजंस्त्वयानुपृष्टानांसुहृदांनःसुहृत्पुरे ॥ विप्र शापविमूढानांनिघ्नतांमुष्टिभिर्मिथः २२ वारुणींमदिरांपीत्वामदोन्माथितचेतसाम् ॥ अजानतामिवात्मानंचतुःपंचावशेषिताः २३ प्रायेणैतद्भगवतई श्वरस्यविचेष्टितम् ॥ मिथोनिघ्नंतिभूतानिभावयंतिचयन्मिथः २४ जलौकसांजलेयद्वन्महांतोदंत्यणीयसः ॥ दुर्बलान्बलिनोराजन्महांतोबलिनोमि थः २५ एवंबलिष्ठैर्यदुभिर्महद्भिरितरान्विभुः ॥ यदून्यदुभिरन्योन्यंभूभारंसंजहारह ॥ कंटकंकंटकेनेवद्वयंचापीशितुःसमम् २६ देशकालार्थयुक्तानि हृत्तापोपशमानिच ॥ हरंतिस्मरतश्चित्तंगोविंदाभिहितानिमे २७ सूतउवाच ॥ एवंचिंतयतोजिष्णोःकृष्णपादसरोरुहम् ॥ सौहार्देनातिगाढेनशातासी द्विमलामतिः २८ इतिश्रीमद्भागवतेमहापुराणेप्रथमस्कंधेचतुर्दशोध्यायः ॥ १४ ॥ ॥ ॥ छ ॥ ॥

चेष्टितमितिमन्येमापःशब्दस्यमातुर्यार्थवाचित्वेप्यत्रावधारणार्थएव चशब्दःसमुच्चयार्थः २४ इममर्थंसोदाहरणंस्पष्टयतीत्याह जलौकसामिति जलौकसांयादसांमध्येमहांतोऽणीयसोऽणुतरान्दं ति बलिनोदुर्बलान्भक्षयंति येमहांतःयेचबलिनःतेमिथोन्योन्यंभक्षयंतियथा २५ एवंविभुर्बलिष्ठैर्महद्भिरितरान्हत्वायदुभिरेवयदूनन्योन्यंहत्वाभूभारंदैत्यकुलंसंजहारेत्येकान्वयः भूभारहरणमेवाव तारप्रयोजनमित्येतत्हशब्देनाह यद्वाहुदंडाभ्युदयानुजीविनः यदून्यदुभिरन्योन्यमित्याशुक्तंपालनंसंहरणंचहरेर्विषममितिचेत्तत्राह द्वयमिति तत्तत्कर्मानुसारिफलदातुरीश्वरस्याप्तकामस्यतेषांसंजीव नंमरणंचेतिद्वयंसममेव जीवनेनोपादेयाभावान्मरणेनहान्यभावाच्चातःद्वयंनविषममितिभावः २६ स्वदुःखकारणंभूतइत्याह देशेति देशकालार्थयुक्तानितत्तद्देशतत्तत्कालतत्तद्वस्तूचितानिहृत्तापोपशमना निअहंकाराश्रितसंसारसमुद्रशोषणकारणानिगोविंदस्याभिहितानिवचनानिस्मरतोममचित्तंहरंतीतियस्मात्तस्मात्तद्रहितत्वेनशोचामीत्येकान्वयः २७ बांधवनिमित्तस्नेहलक्षणभक्त्यतिशयेनतच्चर णस्मरणमाह एवमिति अविगाढेनातिशयेनदृढनतत्रैवातिशयेनमग्नेनवा सौहार्देनप्रेमलक्षणभक्तिसाधनेनकृष्णपादपद्ममेवमुक्तप्रकारेणस्मरतोजिष्णोर्निर्मलामतिर्मननसमर्थाबुद्धिः शातासुखरू पापूर्वस्मादतिशयेनभगवन्निष्ठावतीआसीदित्येकान्वयः ॥ २८ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजयध्वजकृतटीकायाचतुर्दशोध्यायः ॥ १४ ॥

नन्वर्जुनस्यनानाविधक्षत्रहत्यापापोपरक्तायास्तामस्याबुद्धेर्नैर्मल्यंकथंयुज्यतइत्याशंक्यजीवन्मुक्त्यैकत्वात्भगवदर्पणबुद्ध्याकृतदुष्टक्षत्रहत्यस्यतस्यमतेर्नैर्मल्यंयुक्तमितिदर्शयति वासुदेवेति ब्रह्मसंप
त्त्या ब्रह्मणोवगत्याब्रह्मापरोक्षज्ञानेन विशोकस्तस्मादेवछिन्नौनिवृत्तौद्वैतसंशयौयस्मात्सतथोक्तः द्वेइतंद्वीतंद्विधागतंज्ञानंतस्यभावः द्वैतं अन्यथाज्ञानमितियावत्संशयइदंवाऽदोवेत्युभयकोटिविषयंज्ञान
विच्छिन्नोजीवब्रह्मभेदविषयःसंशयोयेनेतिवा लीनाअपसारिताप्रकृतिरहंकारात्मिकायस्मात्सतथोक्तः भावप्रधानोनिर्देशःतस्माल्लीनप्रकृतित्वान्निर्गतानिसत्त्वादिगुणकार्याणियस्मात्सतथोक्तःत
स्यभावोनैर्गुण्यंतस्मादलिंगत्वात्सूक्ष्मशरीररहितत्वादसंभावोऽनारब्धकर्ममूलायापुनरुत्पत्तिस्तयावर्जितः अनारब्धकर्मणांज्ञानोदयेननाशादारब्धकर्मणामेवोर्वरितत्वाज्ज्ञानोदयकालएवंभूतःसन्नर्जु
नोरणमूर्धन्यारब्धकर्मणास्वधर्मैंअधर्मबुद्धयेस्वात्मनेभगवतायत्ज्ञानंगीतंउपदिष्टं तदारब्धकर्ममूलैःकालकर्मतमोभिः रुद्धंकालेनकर्मणातमसाचावृतंपुनरध्यगमदवगतवानावर्तितवानित्यन्वयः कीदृशः
वासुदेवस्यांघ्र्योरभिरतःसम्यक्ध्यानेनपरितोबृंहितंवृद्धंरंहोवेगोयस्याःसातथोक्तातयाभक्त्या निर्मथिताअशेषाःसमूलाःकषायाःपापलक्षणाःरागलक्षणावायस्याःसातथोक्तानिर्मथिताशेषकषायाधिषणा
बुद्धिर्यस्यसतथा अत्रनसर्वारब्धकर्मणांनिर्मथनमभिप्रेतंकिंतुमहताभगवत्कारुण्यादिनाकारणेनकेषांचिदेव अन्यथाभोगेनत्वितरेक्षपयित्वाथसपद्यते तस्यतावदेवचिरमित्यादिसूत्रश्रुतिविरो
धःस्यान्महताकारणेनैवप्रारब्धान्यपिकानिचित्कर्माणिक्षयमायांतिब्रह्मदृष्टिमतःकाचिदित्युक्तत्वाच्च अतोत्राशेषशब्दोनिर्मथनयोग्याशेषप्रारब्धविषयइतिभावः १ २ ३ एवंयादवसंस्थां

सूतउवाच ॥ वासुदेवांघ्र्यभिध्यानपरिबृंहितरंहसा ॥ भक्त्यानिर्मथिताशेषकषायधिषणोऽर्जुनः १ गीतंभगवताज्ञानंयत्तत्संग्राममूर्धनि ॥ कालकर्मत
मोरुद्धंपुनरध्यगमद्विभुः २ विशोकोब्रह्मसंपत्त्यासंछिन्नद्वैतसंशयः ॥ लीनप्रकृतिनैर्गुण्यादलिंगत्वादसंभवः ३ निशम्यभगवन्मार्गंसंस्थांयदुकुलस्यच
॥ स्वःपथायमतिंचक्रेनिभृतात्मायुधिष्ठिरः ४ यदामुकुंदोभगवानिमांमहींजहौस्वतन्वाश्रवणीयसत्कथः ॥ तदाहरावप्रतिबुद्धचेतसामभद्रहेतुःकलिरन्ववर्तत ५ युधिष्ठिरस्तत्परिसर्पणंबुधःपुरेचराष्ट्रेचगृहेतथात्मनि ॥ विभाव्यलोभानृतजिह्महिंसनाद्यधर्मचक्रंगमनायपर्यधात् ६ स्वराट्पौत्रंविनीतंतमा
त्मनोऽनवमंगुणैः ॥ तोयनीव्याःपतिंभूमेरभ्यषिंचद्गजाह्वये ७ मथुरायांततोवज्रंशूरसेनपतिंततः ॥ प्राजापत्यांनिरूप्येष्टिमग्नीनपिबदीश्वरः ८

श्रीकृष्णस्वधामप्राप्तिंचाभिधायपांडवस्वर्याणमुपक्रमते निशम्येति भगवतःश्रीकृष्णस्यस्वधामगमनप्रकारंयदुकुलस्यसंस्थांविनाशंचश्रुत्वानिवृत्तात्मागज्यादिभ्योव्यावृत्तमनाःनितरांवृत्तेसदाचारेआत्मा
यस्येतिवा युधिष्ठिरःकामक्रोधादिजयलक्षणयुद्धेस्थिरः स्वःपथायस्वर्गमार्गाय वीराध्वनेमतिंचक्रइत्यन्वयः ४ स्वर्याणनिर्णयेकारणमाह यदेति यदाश्रवणीयसत्कथोमुकुंदःस्वतन्वास्वाभिमत
यामूर्त्याइमांमहींजहौत्यक्तवांस्तदाहरावप्रतिबुद्धचेतसां हरिविषयबोधरहितबुद्धीनांपुंसामभद्रहेतुःपापकारणंकलिरन्ववर्ततेत्यन्वयः ५ बुधःविवेकज्ञानीयुधिष्ठिरःराज्येपुरेचगृहेभार्यादौचतथात्मनि
स्वस्मिन् तस्यकलेःपरितःसर्पणंव्याप्तिंविभाव्यज्ञात्वा कलिव्याप्तिमूलंलोभाद्यधर्मसमुदायंचविज्ञायगमनायवीराध्वगमनायपर्यधान्निश्चितवानित्येकान्वयःप्रणिधानंतुनिक्षेपःपरिधानंतुनिश्चयइत्यभि
धानं लोभश्चानृतंचजिह्मंकौटिल्यंचहिंसनंचलोभानृतजिह्महिंसनानिआदिर्यस्यपरुषादेस्तत्तथोक्तम् ६ स्वराट्चक्रवर्ती स्वपौत्रंतंगुणैरनवमंयोग्यंपौत्रमभिमन्योःसुतंपरीक्षितंतोयनीवीवसनं
यस्याःसातथोक्तातस्याः ७ मधुपुर्यामनिरुद्धपुत्रंनाम्नावज्रंशूरसेनाविषयपतिमभ्यषिंचदितिशेषः प्राजापत्यःप्रजापतिदैवत्यामिष्टिंनिरूप्यसर्वस्वदक्षिणामिष्टिंकृत्वा त्रेताग्नीनपिबत् आत्मन्यसमा
रोपयामास सकीदृशईश्वरः राज्यादिषुनिर्बंधसंन्यसनेसमर्थः ८

तदेवाह विसृज्येति संछिन्नाशेषपापादिबंधनः ९ स्वमरणकालएवचचिंतनीयमित्यभिप्रेत्यतत्कृतमित्याह वाचमिति वाचंचवागभिमानिनींसुमांमनसिमनोभिमानिनिरुद्रेजुहोत् अस्याअहिम
न्लयोभवतीत्यचिंतयत्नतुतदानींकृतवानित्यर्थः ततमनःप्राणे मनःकारणेजुहाव मनसःपरंउत्तमंप्राणंइतरेइतरस्मिन्अपानेउत्सर्गकर्माभिमानिनिजुहाव धृत्वामनसएकाग्रतया सोत्सर्गस्तव्
चिकं अपानंतत्परस्त्वेतस्मादपानात्पूर्वभाविनिव्याने अजोहवीदितथाहिग्रंथांतरप्रसिद्धिः १० अथव्यानापानचिंतनानंतरंअवशिष्टावुदानसमानौत्रित्वेत्रित्वसंख्याविशिष्टेषुस्वकारणेषुप्राणापानव्याने
षुहुत्वालयंविचिंत्यतच्चपंचत्वंपंचत्वसंख्याविशिष्टान्प्राणापानव्यानोदानसमानाश्चैकत्वेएकत्वसंख्याविशिष्टेपंचानांकारणेमूलप्राणेअजुहोन्मुनेर्मौनीतत्पूर्वोक्तसर्वंतस्यमूलप्राणस्यापिकारणेआत्मनिस्वहृ
दिस्थितेविष्णावजुहोत् तंचात्मानंअव्ययेविनाशरहितेब्रह्मणिसर्वगतेतदभिव्यक्तिकारणेविष्णावजुहोदित्येकान्वयः अत्रवागादींद्रियाणातदभिमानिदेवानांदेवशरीराणांचाप्रावाज्यलयवत्स्वकारणे
षुविलयएवेतिज्ञातव्यम् ११ चीरवासाःवल्कलवस्त्रः निराहारःमनुष्यान्नवर्जितः बद्धवाग्वचनवृत्तिविधुरः मूर्धजाःकेशाः जडादिवदात्मनोरूपंदर्शयन्बाधिरोयथा तथाअशृण्वन्नतएवानपेक्षमाणः
स्वयंगेहान्निरगादित्येकान्वयः १२ यावच्छरीरपातंभुवंप्रदक्षिणीकृत्य निरंतराटनमेवसकल्प्यहृदिपरंब्रह्मध्यायन्क्षत्रियैर्महात्मभिःगतपूर्वामुदीचीमाशामुत्तरांदिशंप्रविवेशवीरगातिंगमिष्यन्यतो
गतोनावर्तेत यांवीरगतिंगतःपुनर्नावर्तेततामित्यन्वयः १३ भ्रातरःभीमसेनादयः अधर्ममिश्रेणअधर्मप्रधानेन १४ आत्मनःपरमात्मनःस्वरूपमात्यंतिकंसर्वातिशयमथवात्मनःस्वस्यआ

विसृज्यतत्रतत्सर्वंदुकूलवलयादिकम् ॥ निर्ममोनिरहंकारःसंछिन्नाशेषबंधनः ९ वाचंजुहावमनसितत्प्राणइतरेपरम् ॥ धृत्वाह्यपानंसोत्सर्गंतत्पश्चैव्द्यजो
हवीत् १० त्रित्वेहुत्वाथपंचत्वंतच्चैकत्वेजुहोन्मुनिः ॥ सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ११ चीरवासानिराहारोबद्धवाङ्मुक्तमूर्धजः ॥ दर्शयन्नात्मनो
रूपंजडोन्मत्तपिशाचवत् ॥ अनपेक्षमाणोनिरगादशृण्वन्बाधिरोयथा १२ उदीचींप्रविवेशाशांगतपूर्वांमहात्मभिः ॥ हृदिब्रह्मपरंध्यायन्नावर्तेतगतोय
तः १३ सर्वेतमनुनिर्जग्मुर्भ्रातरःकृतनिश्चयाः ॥ कलिनाधर्ममिश्रेणदृष्ट्वास्पृष्टाःप्रजाभुवि १४ तेसाधुकृतसर्वार्थाज्ञात्वात्यंतिकमात्मनः ॥ मनसाधा
रयामासुर्वैकुंठचरणांबुजम् १५ तद्ध्यानोद्रिक्तयाभक्त्याविशुद्धधिषणाःपरे ॥ तस्मिन्नारायणपदेएकांतमतयोपतन् १६ अवापुर्दुरवापंतेअसाद्भिर्विषया
त्मभिः ॥ विधूतकल्मषस्थानंविरजेनात्मनैवहि १७

त्यंतिकमंतकालेकर्तव्यंज्ञात्वासाधुसम्यक्कृतोऽनुष्ठितःसर्वार्थोधर्मादिर्यैस्तेतथा साधुनाकर्मणापुण्यलक्षणेनकृताश्छिन्नानिरस्ताःसर्वेअर्थाःशब्दादिविषयायैस्तेतथोक्ताइतिवा कृतीछेदनइतिधातुः
अत्रहरौमनोधारणंनामाखंडस्मरणमितिज्ञातव्यम् १५ इत्थंनारायणचरणाबुजंहृदिसंविधायतद्ध्यानेनोद्रिक्तयाभक्त्याविशुद्धमतयोऽह्नोभिःसप्तभिर्भुवंप्रदक्षिणीकृत्यगंधमादनगिरिंविदरेबदर्याख्यंना
रायणाश्रमंप्राप्यतस्मिन्परेमनोहरेनारायणपदेनारायणाश्रमेएकांतमतयःएकातंनारायणध्यायंतस्तेपाडवाःअपतञ्छरीराणितत्यजुरित्यन्वयार्थः एकमनस्कावा १६ शब्दादिविषयमनस्कैरसद्भिरसं
गलैःपुरुषैर्दुरवापंगंतुमशक्यंनिरस्तजरामरणादिकल्मषस्थानंस्वस्वमूलरूपंविरजेनरजआदिगुणात्मकलिंगशरीराभिमानरहितेनात्मनामनसाउपलक्षितास्तेमापाइत्येकान्वयःएवकारस्तुदेवदूतदर्शितया
यथायुधिष्ठिरदृष्टभीमादिरोदनापादकलोकंनापुरित्यस्मिन्नर्थे नतुरजोमिश्रितात्मनेत्यत्र हिशब्दस्तुनदोषात्देहपातःकिंतुप्रारब्धकर्मनाशादित्यस्मिन्नर्थेश्रुतिप्रसिद्धिंचोतयति श्रुतिरपिसकलसुरोत्तमा
ङ्घ्रिपुरःसरगणैराराधितचरणैःश्रीभगवत्पादैः सकलपुराणसारसंग्रहगुहेश्रीमहाभारततात्पर्यनिर्णयेउदाहृतानास्माभिरत्रोदाहृ्यतेग्रंथबाहुल्यभयादिति विदुरोपिपरित्यज्येतिप्रक्षेपश्लोकः १७

अनपेक्षदांदेहाद्यनभिमानतां एकांतमतिरेकाग्रचित्ता १८ श्रीकृष्णपांडवानांस्वधामप्रवेशश्रवणादिनाकिंप्रयोजनंयेनात्रावश्यंवक्तव्यंस्यादितितत्राह यइति एतत्भगवत्स्वधामप्रयाणंभक्तानांचपां डवानांचप्रयाणादिकशृणोतिसहरौभक्तिलब्ध्वाशांतिमुक्तिउपैतीत्यन्वयः अलात्रकरणशुद्ध्या १९ इतिश्रीभागवतेम० प्रथमस्कंधेविजयध्वजकृतटीकायांपंचदशोध्यायः ॥ १५ ॥ ॥ ७ ॥ अत्रभग वतिभक्तिविधानार्थंभगवद्भक्तपरीक्षितःकलिबंधनादिमाहात्म्यवर्णनेनहरिमहिमैवप्रतिपाद्यतइतितन्महिमाप्रतिपाद्यतेऽस्मिन्नध्याये तत्रप्रथमंराज्यपालनादिप्राहिप्रोच्यतइत्याह ततइति ततःपांडव स्वर्याणानंतरंद्विजवर्यशिक्षयाकृपादिब्राह्मणश्रेष्ठसदुपदेशेन शिक्षाविद्योपादान अभिजातकोविदा जातकज्ञानपटव सूत्यामुत्पत्तौयथामहद्गुणानुपादिशंस्तथातदनुसारेणमहींशशासेत्यन्वयः १ उ त्तरस्यविराट्पुत्रस्यपुत्रीनाम्नीरावतींउपयेमे उपयमनंविवाहः उत्पादयत् उदपादयत् अजनयत् चतुरइतिपाठः २ शारद्वतंकृपंयत्रयेषुअश्वमेधेषुदेवाइंद्रादयः अक्षिगोचराःप्रत्यक्षास्तादृशा निविशेषः ३ सधीरःदिशांजयेओजसास्वाभाविकशक्त्याकलिंनिगृहीतवानित्यन्वयः नृपाणांलिंगंलक्षणंधारयतीतिनृपलिंगधरःतंकर्मणाशूद्रंतदेवाह पदेति गदागोमिथुनंघ्नंतंताडयंतंक्वचिदेकां

द्रौपदीचतदाज्ञायपतीनामनपेक्षताम् ॥ वासुदेवेभगवतिह्येकांतमतिरापतत् १८ यःश्रद्धयैतद्भगवत्प्रयाणंपांडोःसुतानामपिसंप्रयाणम् ॥ शृणोत्यलं स्वस्त्ययनंपवित्रंलब्ध्वाहरौभक्तिमुपैतिशांतिम् ॥ १९ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेपंचदशोऽध्यायः ॥ १५ ॥ सूतउवाच ॥ ततःपरीक्षि द्द्विजवर्यशिक्षयामहींमहाभागवतःशशासह ॥ यथाहिसूत्यामभिजातकोविदाःसमादिशन्विप्रमहद्गुणांस्तथा १ सउत्तरस्यतनयामुपयेमइरावतीम् ॥ जन मेजयादींश्चतुरस्तस्यामुत्पादयत्सुतान् २ आजहाराश्वमेधांस्त्रीन्गंगायांभूरिदक्षिणान् ॥ शारद्वतंगुरुंकृत्वादेवायत्राक्षिगोचराः ३ निजग्राहौजसावीरःक लिंदिग्विजयेक्वचित् ॥ नृपलिंगधरंशूद्रंघ्नंतंगोमिथुनंपदा ४ शौनकउवाच ॥ कस्यहेतोर्निजग्राहकलिंदिग्विजयेनृपः ॥ नृदेवचिह्नधृक्शूद्रःकोसौगांयः पदाहनत् ५ तत्कथ्यतांमहाभागयदिविष्णुकथाश्रयम् ॥ अथवास्यपदांभोजमकरंदलिहांसताम् ६ किमन्यैरसदालापैरायुषोयदसद्व्ययः ॥ क्षुद्रायुषांनृ णामंगमर्त्यानांमृतिमिच्छताम् ७ इहोपहूतोभगवान्मृत्युःशामित्रकर्मणि ॥ नकश्चिन्म्रियतेतावद्यावदास्तइहांतकः ८ एतदर्थंहिभगवानाहूतःपरमर्षि भिः ॥ अहोनृलोकेपीयेतहरिलीलामृतंवचः ९

तमदेशे ४ नृपलिंगधृग्यःशूद्रःपदागामहनत्तंकलिंदिग्विजयेनिजग्राहअसौकः कष्टकर्मेइत्याक्षेपःनप्रश्नः कलिमित्युक्तयाज्ञातत्वेनासिद्धप्रश्नान्वापातात् ५ विष्णुकथाआश्रयोयस्यतत्एतादृशंकलिबंधनचेत्तर्हिकथ्यतां अथपक्षांतरे वा यदिअस्यहरेः अकरंमदकरंभावदद तीतिमकरंदःतल्लिहंतिआस्वादयंतितेषांकथाश्रयंतर्हिकथ्यतामित्यन्वयः ६ किमितिविष्णुवैष्णवकथाकथनमितितत्राह किमन्यैरिति असदालापैरमंगलप्रसंगैःकिंप्रयोजनंनकिमपि कुतःआयुषोऽ सद्व्ययःव्यर्थक्षयइतियद्यस्मादतइत्यर्थः यद्वैरसदालापैरायुषोऽसमीचीनोव्ययइतिवा इतोपीतरप्रसंगोनापेक्षितइतिब्रूतइत्याह क्षुद्रायुषामिति क्षुद्रायुषामल्पायुषामर्त्यानांमरणधर्माणामतएव तिमिच्छतांनृणांमारकःमृत्युःभगवान्नरसिंहःशामित्रकर्मणि पशुसंज्ञपनकर्मकर्ताशमिता तस्यकर्मशामित्रंतादर्थ्येसप्तमी शामित्रकर्मार्थं ऋषिभिर्नैमिषारण्यवासिभिरिहोपहूतःआहूयप्रसादस्था पितःअंतंकरोतीत्यंतकःसभगवान्यावदिहास्तेनतावत्कश्चिन्म्रियतइत्यन्वयः ७ ८ अनेनप्रकृतेकिमायातमितितत्राह एतदर्थमिति अतःसंप्रतिनृलोकेमृत्युभयविधुरतयास्थितैर्मर्त्यैर्लीलामृतंवचः पीयेतैतदर्थंहिपरमऋषिभिरिहाहूतः अहोआश्चर्यंमरणधर्मिणामपिहरिलीलाऽमृतत्वपदंहियस्मात्तस्माद्विष्णुवैष्णवकथाश्रयचेत्तत्कथ्यतामितिभावः ९ ।

१ अथेत्यस्यव्याख्यानंपक्षांतरइति । तर्हिवेत्यस्यवैयर्थ्यमित्यत.तस्यार्थं यदीति । एतद्धीजंतुतात्पर्यतो ज्ञायते ।

यथामर्त्यस्यासत्प्रसंगात् आयुर्वैयर्थ्यं तथानिद्रार्थादिपरस्यापीत्याह मंदस्येति अल्पस्यापिप्रज्ञाबाहुल्यादनेकवेदशास्त्रतदर्थग्रहणंस्यादित्यतोमंदप्रज्ञस्येति मंदप्रज्ञस्यअल्पायुषस्तस्यादि स्यतोमंदायुषइतिअल्पायुषोपिभाग्यवशात्तस्यादित्यतोमंदस्येति मंदस्यनिर्भाग्यस्यएवंविधस्यमर्त्यस्य नक्तंरात्रिःनिद्रयाह्रियते हिरण्याद्यर्थान्वेषणकर्मभिर्दिवादिनमपिह्रियते चशब्दोहेत्वर्थे तस्मा त्रिद्रादिजयेनहरितत्परायणकथाऽत्रत्वयाकथ्यतामितिभावः वैइत्यनेनानुभवसिद्धमेतदितिदर्शयति सत्रादिहक्षपात्रागतैर्मर्त्यैश्चाकर्ण्यतां । भृत्यावत्रसद्भिर्वेत्यस्मिन्नर्थेआद्यश्चशब्दः १० कुरुजांग लेकुरुविषयेहस्तिनपुरेवसन्परीक्षिद्यदानिजचक्रवर्तितेनिजचक्रेणस्वानुज्ञयानिजानांपांडवानामाज्ञयावर्तितेराष्ट्रेप्रविष्टंकलिंशुश्रावेतिशेषः ततस्तदासंयुगरोचिर्युद्धेच्छुः राष्ट्रविप्लवरूपामनतिप्रियांवार्तां निशम्यशरासनमाददइत्यन्वयः संयुगंरोचयतीतिधनुर्विशेषणंवा ११ श्यामैर्नवसुवीथिषुविशिष्टगतिभिः नीलवर्णैर्वा तुरंगैर्योजितंमृगेंद्रोध्वजेयस्यसतथा तंसिंहलांछनध्वजंरथाश्चअश्वाश्चद्विपा श्चपत्तयश्चरथाश्वद्विपपत्तयःतैर्युक्तयापुरान्निर्गतोभूदित्यन्वयः १२ सपरीक्षित् भद्राश्वादिवर्षाणिउत्तरकुर्वादिजनपदानिचविजित्यबलिंकरंजगृहइत्यन्वयः १३ समहामनास्तत्रतत्रवर्षेषुविषये षुचस्वपुरतोगायकैरुपगीयमानंकृष्णमाहात्म्यसूचकं महात्मनांस्वपूर्वेषांपांडवानांमाहात्म्यमुपशृण्वानः १४ कथंमाहात्म्यंसूच्यतइतितत्किंचिदाह आत्मानमिति अश्वत्थाम्नोस्त्रतेजसःकृष्णेनप रिरक्षितमात्मानंचवृष्णीनांपांडवानांमिथःस्नेहंचउभयेषांकृष्णेभक्तिंचशृण्वन् १५ तेभ्योगायकेभ्यःपरमसंतुष्टोऽतएवप्रीत्याउज्जृंभितेविकासितेलोचनेयस्यसतथोक्तः महाधनानिअनर्घ्याणि

मंदस्यमंदप्रज्ञस्यप्रायोमंदायुषश्चवै ॥ निद्रयाह्रियतेनक्तंदिवाचाप्यर्थकर्मभिः १० ॥ सूतउवाच ॥ यदापरीक्षित्कुरुजांगलेवसन्कलिंप्रविष्टंनिजचक्र वर्तिते ॥ निशम्यवार्तामनतिप्रियांततःशरासनंसंयुगरोचिराददे ११ स्वलंकृतंश्यामतुरंगयोजितंरथंमृगेंद्रध्वजमास्थितःपुरात् ॥ वृतोरथाश्वद्विपपत्तियुक्त यास्वसेनयादिग्विजयायनिर्गतः १२ भद्राश्वंकेतुमालंचभारतंचोत्तरान्कुरून् ॥ किंपुरुषादीनिसर्वाणिविजित्यजगृहेबलिम् १३ तत्रतत्रोपशृण्वानः स्वपूर्वेषांमहात्मनाम् ॥ प्रगीयमानंपुरतःकृष्णमाहात्म्यसूचकम् १४ आत्मानंचपरित्रातमश्वत्थाम्नोस्त्रतेजसः ॥ स्नेहंचवृष्णिपार्थानांतेषांभक्तिंचकेशवे १५ तेभ्यःपरमसंतुष्टःप्रीत्युज्जृंभितलोचनः ॥ महाधनानिवासांसिददौहारान्महामनाः १६ सारथ्यपार्षदसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्र णामैः ॥ स्निग्धेषुपांडुषुजगत्प्रणतस्यविष्णोर्भक्तिंकरोतिनृपतिश्चरणारविंदे १७ तस्यैवंवर्तमानस्यपूर्वेषांवृत्तमन्वहम् ॥ नातिदूरेकिलाश्चर्यंयदासीत्त न्निबोधमे १८ धर्मःपदैकेनचरन्विच्छायामुपलभ्यगाम् ॥ पृच्छतिस्माश्रुवदनांविवत्सामिवमातरम् १९

वस्त्राणिहारान्मौक्तिकमालास्तेभ्योददावित्यन्वयः १६ नृपतिःपरीक्षित् कृष्णेस्निग्धेषुपांडुषुपंडुपुत्रेषुमुकामुक्रमपंचप्रणतस्याविष्णोःसारथ्यादिनाअहोहरिश्चरणनतजनतासुकरुणार्णवोनान्विति तस्यचर णारविंदेविशेषतोभक्तिंकरोतीत्येकान्वयः सारथेःकर्मसारथ्यं पार्षदंसभापतिकर्म द्वारस्थत्वंवा परिषदांकर्मेतिवा सेवनंउक्तकर्मकरणंसख्युःकर्मसख्यं दूतस्यकर्मतद्देशकरत्वंदौत्यं । वीरासनंरात्रौ खड्गपाणिःस्थित्वास्वामिरक्षार्थंजागरणंवीरोचितासनं गच्छतःपृष्ठतोगमनमनुगमनं स्तवनंस्तुतिः । प्रणामोनमस्कारः प्रह्वत्वंवा वीरासनानुगमनंसिंहासनोपसर्जनंतथाउपवेशनंवा १७ पूर्वेषांपि त्रादीनांवृत्तमाचरितमनुदिनमेवंवर्तमानस्य नातिदूरेअस्मद्दृष्टिगोचरेयदाश्चर्यमासीत्तन्निबोधेत्येकान्वयः १८ किंतदितितत्राह धर्मइति सत्याख्येनैकेनपदेनचरन्वृषरूपधर्मः वृषभोऽशुसत्वात्सरहितामातर मिवाश्रुवदनां अतएवविच्छायाविगतकांतिंगोरूपिणींगांभूमिमुपलभ्यापृच्छदित्येकान्वयः १९

भद्राणीगौर्मताङ्किकेत्यभिधानं हेभद्रेतेतवात्मनःदेहस्यानामयमारोग्यंकच्चित्किं म्लायताम्लानिंगच्छतामुखेनविच्छायाविगतकांतिरसीति यद्यस्मात्तस्माद्भवतीमंतराधिमनःपीडावतीमालक्षयेपश्यामि किंवकंचनदूरेबंधुंपरोक्षप्रदेशेस्थितंबंधुंप्रतिशोचसीतिनेति २० अपिचात्रिभिःपदैर्न्यूनंहीनमेकपादंमामांप्रतिशोचासि उतपक्षांतरेआहोस्वित् वृषंधर्मंशीननष्टंकुर्वंतीतिवृषलाः राजाभासाःशूद्रप्राया. नैर्भोक्ष्यमाणमात्मानंशोचासि अथोअथवा हृतोयज्ञेभागोयेषांतेतथोक्तास्तान्सुरादीन्शोचासिकिं मघवतींद्रेऽवर्षतिपज्ञाभावाद्वर्षमकुर्वतिसति सस्यादिसमृद्ध्यभावेनदरिद्राःप्रजाअपिशोचस्युत स्वित्तुअर्थिस्वित् २१ अथवाहेउर्विभूःराजकुलेअब्रह्मण्येअरक्ष्यमाणास्त्रियउद्दिश्यशोचासिअथवापुरुषादैर्मनुष्यभक्षकैरिवस्थितैरुपद्रवकरैराजभिर्दुःखितान्बालांश्चशोचासिकिं ब्रह्मकुलेब्राह्मण कुलेकुत्सितकर्मणेदुष्प्रतिग्रहोच्छेदनादिकर्मकुर्वतिसति राजकुलेअब्रह्मण्येब्राह्मणबहुमानमकुर्वतिसत्कारादीनाददानेसतिच कुलाग्र्यांश्रेष्ठां कुलीनेवर्तमानामितिवादेवींवाचंवेदवा णीमाचारकुलहीनाअध्येष्यंतीतिशोचसिस्वित् । बिभेत्यल्पश्रुताद्वेदोमामयंप्रचालिष्यतीतिवचनात् २२ कलिनोपसृष्टानुपहतान्क्षत्रबंधून्शोचसि तैःक्षत्रबंधुभिःअवरोपितानिविनाशिता निराष्ट्राणिवाशोचासि यद्वा एवंवाइतस्ततः अनियमेनाशनंचपानंचवासःस्नानंचव्यवायोग्राम्यधर्मश्चतेतथोक्तास्तेषूत्सुकमुत्कंठावंतंजीवलोकंप्राणिसमूहंकिंशोचसि २३ अथेतिपक्षांतरारंभः

धर्मउवाच ॥ कच्चिद्भद्रेनामयमात्मनस्तेविच्छायासिम्लायतायन्मुखेन ॥ आलक्षयेभवतीमंतराधिंदूरेबंधुंशोचसिकंचनंब २० पादैर्न्यूनंशोचसिमैक पादमुतात्मानंवृषलैर्भोक्ष्यमाणम् ॥ अथोसुरादीन्हृतयज्ञभागान्प्रजाउतस्विन्मघवत्यवर्षति २१ अरक्ष्यमाणास्त्रियउर्विबालान्शोचस्यथोपुरुषादैरि वार्तान् ॥ वाचंदेवींब्रह्मकुलेकुकर्मण्यब्रह्मण्येराजकुलेकुलाग्र्याम् २२ किंक्षत्रबंधून्कलिनोपसृष्टान्राष्ट्राणिवातैरवरोपितानि ॥ इतस्ततोवाशनपानवास स्नानव्यवायोत्सुकजीवलोकम् २३ यद्वाथतेभूरिभरावतारकृतावतारस्यहरेर्धरित्रि ॥ अंतर्हितस्यस्मरतीविसृष्टाकर्माणिनिर्वाणविलंबितानि २४ इदं ममाचक्ष्वतवाधिमूलंवसुंधरेयेनविकर्शितासि ॥ कालेनवातेबलिनाऽवलीढंसुरार्चितंकिंप्रभुणाद्यसौभगम् २५ धरोवाच ॥ भवान्हिवेदतत्सर्वंयन्मांध र्मानुपृच्छसि ॥ चतुर्भिर्वर्तसेयेनपादैर्लोकसुखावहैः २६ सत्यंशौचंदयादानंत्यागःसंतोषआर्जवम् ॥ शमोदमस्तपःसाम्यंतितिक्षोपरतिःश्रुतम् २७

तेतवभूमेर्महतोभारस्यावतारोवरोपणंतस्मैभूरिभारावतारायकृतोवतारःस्वरूपप्रकाशोयेनसतथोक्तःतस्यांतर्हितस्यनिर्वाणंस्वरवयोग्यंमोक्षंविशेषणलंबयंतिपुरःस्थितंकारयतीतिनिर्वाणविलंबितानिनिर्वाणंविलंबयंत्यपहरंतीतिवा हरेःकर्माणिचरितानिस्मरंतीतिहरिणाहमद्यविसृष्टाअन्वितिशोचस्यपिकिं २४ येनमनोदुःखेनविकर्शिताकृशतराऽसि हेवसुंधरेतदिदमाधेर्मनःपीडायामूलंममाख्याहीत्यन्वयः अथवासंप्रतिप्रभुणासमर्थेनबलिनासर्वांगपुष्टेनकालेनतवसुरार्चितंसौभाग्यमवलीढंग्रस्तंचेत्यन्वयः २५ धर्मेणपृष्टाभूमिःतंप्रतिब्रूतइत्याह भवानिति हेधर्मयदाधिमूलंत्वंमामनुपृच्छसितत्सर्वंभवान्वेदइतिथापिवक्ष्यइतिशेषः येनश्रीकृष्णेनत्वंलोकसुखावहैः तपःशौचदयासत्याख्यैश्चतुर्भिःपादैःकलावपिवर्तसेअवर्ततेत्यर्थः २६ यत्रयस्मिन्श्रीकृष्णेइमेउक्ताःसत्यादयोनुक्ताअन्येचमहागुणाःप्रत्येकमनंताःसंति कीदृशाःमहत्त्वमिच्छद्भिःपुरुषैःप्रतिबिंबितादृशगुणलाभायप्रार्थ्याउपास्यास्तेकदाचिदपितोनयांतिचअभिन्नत्वादित्येतमर्थंस्मेत्यनेनश्रुतिसिद्धंदर्शयतिहेदेवोत्तम तेनगुणपात्रेणश्रीनिवासेनसांप्रतंरहितंपापात्मनाकलिनेक्षितंदृष्टंआत्मानंमांचभवंतंचशोचामीत्यन्वयः सत्यंनिर्दुःखानंदानुभवःभूतहितयथार्थभाषणंवा शौचंनित्यशुद्धिःप्रकृतिसंबंधाभावात्स्वयंबाह्याभ्यंतरशुद्धिताहरेरेव अन्यत्र मृज्जलाभ्यांरागराहित्येन । दयासज्जनेष्वाविर्भावेषु चित्तद्रवत्वंवाउभयत्रसमं। दानंभक्ताभक्तमध्यमेषुसुखदुःखामिश्रफलवितरणं । अन्यत्रधर्मार्थंपात्रेवित्तविश्राणनंतथा

१ अस्मिन्पक्षेबाणंलिंगशरीरमित्यर्थः । एतद्बाणमवष्टभ्येत्यत्र दृष्टत्वात् । बवयोरभेदः ।

गोऽस्वकीयेस्वकीयताबुद्धचपरपर्यायमिथ्याभिमानोत्सन्नता । अन्यत्रसंन्यासः । संतोषःस्वरूपानंदपानेनान्यत्रालंबुद्धिः अन्यत्रयदृच्छयाप्राप्तभोगेष्वलंप्रत्ययः । आर्जवंव्यवहारेष्ववक्रतामनसिवचसिचैकविधताउभयत्रसमानम् । शमःस्वतःप्रियरूपत्वादिदंप्रियमिदमप्रियमितिबुद्धिविधुरता शंरूपतयामीयतइतिवा । अन्यत्रबुद्धेर्भगवन्निष्ठता । दमःइंद्रियाणांस्ववशत्वंउभयत्रसमानं स्वतःपरतइतिविशेषःशत्रुनिग्रहोवा । तपआलोचनमुक्तिज्ञानं । अन्यत्रकृच्छ्रचांद्रायणाद्युपवासानियमः । साम्यसर्वावतारांतर्यामिरूपेषुनिर्दोषगुणपूर्णत्वेनसमतायथास्थितवस्तुदर्शनंवाउभयत्रसमानम् । ननुसर्वत्रशत्रुमित्रभावराहित्यंतितिक्षामहापराधसहनंयथाभृगोःपादाहत्यपराधं अन्यत्रद्वंद्वसहिष्णुता उपरतिःस्वरूपरतिः । उपःमुख्यप्राणःतस्मिन्रतिर्वाऊरुंद्रः । अन्यत्रकाम्यकर्मनिर्वृत्तिः । कृतकृत्यतयाव्यर्थसर्वव्यवहारोपरमोवा । श्रुतंसर्वत्रश्रवणशक्तिःश्रोतेत्यादेःश्रुतिप्रसिद्धतावा अन्यत्रशास्त्रार्थतात्पर्यावधारणंश्रुत्यर्थविचारोवा २७ ज्ञानंसर्वज्ञता अन्यत्रपरोक्षापरोक्षभेदेनपरयार्थविषयं विरक्तिःस्वतरविषयेअसारताबुद्धिः अन्यत्रशब्दादिविषयरागराहित्यम् । ऐश्वर्यंसमस्तजगदीशित्वसामर्थ्यं अन्यत्राणिमादिकंशौर्यंसंग्रामेष्वपलायित्वंउभयत्रसमानं तेजःपरैरप्रधृष्यत्वं अन्यत्रब्रह्मवर्चसं धृतिःसर्वधारणं एषसेतुर्विधृतिरितिश्रुतेः विकारहेतावविकारित्वंवा अन्यत्रजिह्वोपस्थजयः स्मृतिरतीतानागतानंतब्रह्मांडादिस्मरणं अन्यत्रावगतपदार्थानुसंधानं स्वातंत्र्यमपराधीनत्वं अन्यत्रस्वतंत्रोविष्णुःतदधीनत्वंकुमारीकंकणवदेकाकित्वंवा कौशलंसर्वकर्मणिवैचित्र्यकरणबुद्धिः अन्यत्रशिल्पविद्यावैशारद्यं कांतिर्देहगतादीप्तिः अन्यत्रभगवद्भक्तिकामन सौभगशुभैकभागित्वं अन्यत्रलोकमनोह

## ज्ञानंविरक्तिरैश्वर्यंशौर्यंतेजोधृतिःस्मृतिः ॥ स्वातंत्र्यंकौशलंकांतिःसौभगंमार्दवंक्षमा २८ प्रागल्भ्यंप्रश्रयःशीलंसहओजोबलंभगः ॥ गांभीर्यंस्थैर्यमास्तिक्यंकीर्तिर्मानोनहंकृतिः २९ इमेचान्येचभगवन्नित्यायत्रमहागुणाः ॥ प्रार्थ्यामहत्त्वमिच्छद्भिर्नवियांतिस्मकर्हिचित् ३० तेनाहंगुणपात्रेणश्रीनिवासेनसांप्रतम् ॥ शोचामिरहितंलोकंपाप्मनाकलिनेक्षितम् ३१ आत्मानंचानुशोचामिभवंतंचामरोत्तम ॥ देवान्पितॄनृषीन्साधून्सर्वान्वर्णांस्तथाश्रमान् ३२ ब्रह्मादयोबहुतिथंयदपांगमोक्षकामायथोक्तविधिनाभगवत्प्रपन्नाः ॥ साश्रीःस्ववासमरविंदवनंविहाययत्पादसौभगमलंभजतेनुरक्ता ३३ तस्याहमब्जकुलिशांकुशकेतुकेतैःश्रीमत्पदैर्भगवतःसमलंकृतांगी ॥ त्रीनत्यरोचमुपलभ्यतपोविभूतिर्लोकान्समांव्यसृजदुत्स्मयतीतदंते ३४

रत्वं मार्दवंभक्तेषुमृदुत्वंउभयत्रसमानं क्षमाक्रोधासमुत्थितिः उभयत्रसमम् २८ प्रागल्भ्यंधाष्टर्यंउभयत्रसमं प्रश्रयोविनयः उभयत्रसमं शीलंलोकमनोहरस्वभावत्वंसमं सहःसहनशक्तिःप्राणस्यस्वाभाविकसामर्थ्यंवासमं ओजःपराभिभवशक्तिःअन्यत्रमानसबलम् । बलंस्वेच्छाकरणशक्तिःअन्यत्रशरीरादिधारणसामर्थ्यंवा भगःषड्गुणवत्त्वंभाग्यंवा, अन्यत्रोत्पत्त्यादिज्ञानंगांभीर्यंपरैरनवगाह्यत्वं अन्यत्रस्तिमितत्वं स्थैर्यंनित्याकंपनंअन्यत्रधर्मादचलनं आस्तिक्यंवेदाद्युक्तमस्तीतिबुद्धिः अन्यत्रगुरुवाक्येषुश्रद्दधानता कीर्तिर्दिक्षुख्यातिः अन्यत्रहरिनामकीर्तनं मानःपरेषांमानन अन्यत्राभिमानःअनहंकृतिःस्वरूपभेदादावहमितिबुद्धिराहित्यं अन्यत्रनाहंकर्ताहरिरेवमयिस्थित्वासर्वंकरोतीतिबुद्धिः २९ ३० ३१ नकेवलंभवंतंशोचामिकिंतुदेवादीनपि ३२ श्रीकृष्णविरहएवममाधिमूलमित्याख्याति ब्रह्मादयइति यस्याःश्रियःअपांगःकटाक्षःतस्यमोक्षउन्मीलनविशेषः तंकामयंतइतिपदपांगमोक्षकामाःस्वेषुश्रियःकटाक्षनिपातमाकाक्षमाणाइत्यर्थः शास्त्रोक्तप्रकारेणभगवत्प्रपन्ना.ब्रह्मादयोबहुतिथंबहुकालंभगवतीमभजन्नितिशेषेणान्वयः साश्रीरनुरक्तासद्भक्तिमतीस्वनिवासमरविंदवनंपद्मवनंविहाययस्यश्रीकृष्णस्यपादयोः सौभगंसौभाग्यंअलंभजतइत्यन्वयः ३३ उपलब्धातपोविभूतिर्ययासातथातपसा विविधफलंप्राप्तासतीतस्यभगवतःअब्जंचकुलिशंचांकुशश्चकेतुर्ध्वजश्चअब्जकुलिशांकुशकेतवःलेखारूपाएतेकेताश्चिह्नानियेषांतानितैः श्रीमद्भिःपदैःसम्यगलंकृतसर्वांगाऽहंत्रीन्लोकानतिक्रम्यारोचंशोभितवती सःश्रीकांतःतदंतेतपोविभूतेरवसाने उत्स्मयंतीकानुमत्सदृशीस्त्रीत्यहंकुर्वाणांमांव्यसृजदित्येकान्वयःतदंतइतित्विनरापेक्षयोक्तं नतुभूमेःपुण्यावसानमस्ति भगवत्पत्नीत्वात् ३४

१ अनेन उरुंद्रपातीतिउपःमुख्यप्राणइत्यसूचि । १ नारदादीनाक्रियमाग.संमान. ।

योवैअसुराणांसंबंधीवंशआसुरवंशःतस्मिन्जातानांराज्ञांअक्षौहिणीशतंममातिभरमपानुददपाहरत् शतमितिशब्दसहस्रादिवाचीत्वथिचतुष्पदत्वेनपूर्णंपदंसंपादयन् आत्मवंतनोयदुपुरम्यंरमणीयमंगांजिभ्रत् ३५ यश्चप्रेम्णावलोकश्चरुचिरंस्मितंचवल्गुमधुरोजल्पश्चतैस्तथोक्तास्तैर्मधुमानिनीनांसमानंअभिमानेनसहवर्तमानंस्थैर्यमहरत् पत्यांघ्रिभ्यांविटंकितापाश्चिह्नितायाअलंकृतायावा ममरोमोत्सवःरोमांचोऽभूदितिशेषःतस्यपुरुषोत्तमस्यविरहंकावास्त्रीसहेत नकापीत्यन्वयः ३६ तदवसरेतत्रपरीक्षितोगमनमाह तयोरिति परीक्षिन्नामराजश्रेष्ठः कुरुक्षेत्रेप्राचीदिशंउद्दिश्यस्यंदमानांनाम्नासरस्वतींनदींप्राप्तइत्यन्वयः ॥ ३७ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजयध्वजकृतटीकायांषोडशोऽध्यायः ॥ १६ ॥ अत्रापिभगवद्भक्तप्रधानस्यपरीक्षितःकलिबंधनादिमाहात्म्यवर्णनेनहरेर्महिमैववर्ण्यतइतितन्महिमोच्यते तत्रनातिदूरइतिकथितमाश्चर्यमाह तत्रेति तत्रकुरुक्षेत्रेप्राच्याःसरस्वत्यास्तीरेअनाथवन्नाथःस्वामीतेनरहितोयथाहन्यतेतथाताड्यमानंगोमिथुनम् १ मिथुनंविविच्याह वृषमिति मृणालधवलंकमलनालसूत्रवद्धवलंशुक्लवर्णंविभ्यतंभीतमिवमेहंतंशकृन्मुंचंतंवेपमानंएकेनपदास्थितत्वात्सीदंतभग्नांगवचिह्नंतंशूद्रेणकलिनापीडितंवृषमद्राक्षीत् २ एवसत्तृणमाकांक्षमाणांअतएवकृशामश्रुवदनांअश्रुमुखींविवत्सांवत्सराहितामिवस्थितांशूद्रस्यपदाताडितांभृशमत्यर्थंदीनांकृपणांधर्मदुघांयज्ञयोग्यपयोदोग्ध्रींगांचैवंविधामपश्यदित्यन्वयः ३ पप्रच्छचतांराजाप्रश्नमित्यन्वयः कथंभूतःकार्तस्वरपरिच्छदंसुवर्णपरिकरपरिष्कृतंरथमारूढःसमारोपितकार्मुकःसज्जीकृतधन्वा ४ तत्रप्रथमंशूद्रंप्रतिप्रश्नप्रकारमाह कस्त्वमिति यस्त्वंनटवद्वेषेणनरदेवोसि नतुराजा कर्मणाअद्विजःशूद्रोसि अद्विजइत्युक्त्याशूद्रस्त्वंकथंज्ञातमितिचेत्कर्मणेत्यनेनक्षत्रियवैश्ययोःपरिहृतत्वात् मच्छरणेअहमेवरक्षकोयस्यसतथातस्मिन् शरणंगृहरक्षित्रोरित्यभिधानं बलीत्वमबलोदुर्बलोगोवृषौबलात्प्रसह्यहंसिपीडयसित्वंकः ५ गांडीवधन्वनासहकृष्णेदूरंगतेसतियःशोच्योरहसिअशोच्यान्प्रहरन्नासिसत्वंवधमर्हसीत्यन्वयः ६ इदानींवृषभंपृच्छति त्वंवेति हेवृषभपादैन्यूनः यथाचरसितथात्रिभिःपादैन्यूनःएकेनचरन्मृणालवद्धवलस्त्वंकोवावृषभरूपेणास्मान्परिखेदयन्अस्मद्बुद्धेःपरिघातंकुर्वन्गतस्त्वंकश्चिद्देवःकिम् ७ कुतःपरिखेदकत्वमितितत्राह नजात्विति कौरवेंद्राणांदोर्दंडैःपरिरंभितेरक्षितेऽस्मिन्भूतलेप्राणिनांशुचःशोकनिमित्ताश्रुबिंदवः जातुकदाचिदपिनानिपतंतित्वांविना त्वंतुबाष्पकलाक्षःशोचसियस्मात्तस्मात्परिखेदयसीतिभावः ८

योवैममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्मतंत्रः ॥ त्वांदुस्थमूनपदमात्मनिपौरुषेणसंपादयन्यदुषुरम्यमबिभ्रदंगम् ३५ कावासहेतविरहंपुरुषोत्तमस्यप्रेमावलोकरुचिरस्मितवल्गुजल्पैः ॥ स्थैर्यंसमानमहरन्मधुमानिनीनांरोमोत्सवोममयदंघ्रिविटंकितायाः ३६ तयोरेवंकथयतोःपृथिवीधर्मयोस्तदा॥ परीक्षिन्नामराजर्षिःप्राप्तःप्राचींसरस्वतीम् ३७ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेषोडशोऽध्यायः ॥ १६ ॥ सूतउवाच ॥ तत्रगोमिथुनंराजाहन्यमानमनाथवत् ॥ दंडहस्तंचवृषलंददृशेनृपलांछनम् १ वृषंमृणालधवलंमेहंतमिवबिभ्यतम् ॥ वेपमानंपदैकेनसीदंतंशूद्रपीडितम् २ गांचधर्मदुघांदीनांभृशंशूद्रपदाहताम् ॥ विवत्सामश्रुवदनांक्षामांयवसमिच्छतीम् ३ पप्रच्छरथमारूढःकार्तस्वरपरिच्छदम् ॥ मेघगंभीरयावाचासमारोपितकार्मुकः ४ कस्त्वंमच्छरणेलोकेबलाद्धंस्यबलान्बली ॥ नरदेवोसिवेषेणनटवत्कर्मणाऽद्विजः ५ सत्वंकृष्णेगतेदूरंसहगांडीवधन्वना ॥ शोच्योस्यशोच्यान्रहसिप्रहरन्वधमर्हसि ६ त्वंवामृणालधवलःपादैर्न्यूनःपदाचरन् ॥ वृषरूपेणकिंकश्चिद्देवोनःपरिखेदयन् ७ नजातुकौरवेंद्राणांदोर्दंडपरिरंभिते ॥ भूतलेनिपतंत्यस्मिन्विनात्वांप्राणिनांशुचः ८

हेसौरभेयसुरभिवंशोद्भव माशुचःशोकंमाकार्षीः तेतववृषलाद्भयंव्येतुनश्यत्वित्यन्वयः इदानींसौरभींपृच्छति मारोदीरिति हेसौरभेयित्वमपिकासीत्यध्याहारःकर्तव्यः कृत्स्नमित्युक्त्वा त् हेअंबमारोदीःअश्रुविमोक्षणंमाकार्षीःतेतुभ्यंभद्रमस्तु कुतःमयिदुष्टानांशास्तरिसति ९ यस्यराष्ट्रेराज्येऽसाधुभिर्दुष्टैःप्रजाःसाधुर्हिंस्यंतेपीड्यंतेमत्तस्यतस्यकीर्त्यादयोनश्यंतीत्यन्वयः गतिःपरलो कः १० यःआर्तानामार्तिनिग्रहःएषःराज्ञःपरोधर्मोहियस्मात्तस्मादार्तिनिग्रहःस्यस्वधर्मत्वादसत्तमंभूतद्रुहमेनंवृषलंवधिष्यामीत्यन्वयः अनेनकस्यहेतोर्निजग्राहेतिचोद्यंपरिहृतं ११ हेसौरभेय चतुष्प दस्तवत्रीन्पादान्कोऽवृश्चत्छेदितवान्सकः ज्ञातश्चेत्परिहरिष्यामीतिशेषः कुतइतितत्राह माभूवन्निति त्वादृशात्वद्विधाः १२ अकृतागसांअकृतापराधानांसाधूनांनिर्दोषाणांवात्वाकंभद्रमस्तु पा र्थानांकीर्तिदूषणंयशोदूषणंआत्मवैरूप्यकर्तारंपुरुषमाख्याहीत्यन्वयः हेगलेसुरभियोऽनागसिअघमपराधंयुंजन्प्रयुंजानोवर्ततेअस्यतत्तस्मादपराधात्सर्वत्रइहपरलोकेचभयंभवत्येवेतिशेषः सौरभेयीग व्याधेनुर्भद्रानंदाऽमृतस्रवेत्यभिधानम् १३ निरंकुशःअनिवारितःअंगदेनबाहुभूषणेनसहवर्तमानंअमर्त्यस्यदेवस्यापिआहर्तास्मिछेत्तास्मि १४ कुतइतितत्राह राज्ञइति स्वविहितधर्ममनुतिष्ठतांअ नुपालनंतत्तद्योग्यतयारक्षणंराज्ञःपरोधर्मोहि किंविशिष्टस्य इहानापदिआपदभावेपिउत्पथान्मार्गमुत्सृज्यवर्तमानानन्यान्दुष्टान्यथाशास्त्रंशासतः १५ श्रीकृष्णोभगवान्येषांपांडवानांज्ञानभक्ति

मासौरभेयानुशुचोव्येतुतेवृषलाद्भयम् ॥ मारोदीरंबभद्रंतेखलानांमयिशास्तरि ९ यस्यराष्ट्रेप्रजाःसर्वास्त्रस्यंतेसाध्व्यसाधुभिः ॥ तस्यमत्तस्यनश्यंतिकीर्ति रायुर्भगोगतिः १० एषराज्ञःपरोधर्मोह्यार्तानामार्तिनिग्रहः ॥ अतएनंवधिष्यामिभूतद्रुहमसत्तमम् ११ कोवृश्चत्तवपादांस्त्रीन्सौरभेयचतुष्पदः ॥ माभूवं स्त्वादृशाराष्ट्रेराज्ञांकृष्णानुवर्तिनाम् १२ आख्याहिवृषभद्रंवःसाधूनामकृतागसाम् ॥ आत्मवैरूप्यकर्तारंपार्थानांकीर्तिदूषणम् ॥ जनेऽनागस्यघंयुंजन्स र्वतोस्यचतद्भयम् १३ अनागःस्विहभूतेषुयआगस्कृन्निरंकुशः ॥ आहर्तास्मिभुजंसाक्षादमर्त्यस्यापिसांगदम् १४ राज्ञोहिपरमोधर्मःस्वधर्मस्थानुपालन म् ॥ शासतोन्यान्यथाशास्त्रमनापद्युत्पथानिह १५ धर्मउवाच ॥ एतद्वःपांडवेयानांयुक्तमार्ताभयंवचः ॥ येषांगुणगणैःकृष्णोदौत्यादौभगवान्कृतः १६ नवयंक्लेशबीजानियतःस्युःपुरुषर्षभ ॥ पुरुषंतंविजानीमोवाक्यभेदविमोहिताः १७ केचिद्विकल्पवसनाआहुरात्मानमात्मनः ॥ दैवमन्येपरेकर्मस्वभावमप रेप्रभुम् १८ अप्रतर्क्यादनिर्वाच्यादितिकेष्वपिनिश्चयः ॥ अत्रानुरूपंराजर्षेविमृशस्वमनीषया १९ एवंधर्मेप्रवदतिससम्राड्द्विजसत्तम ॥ समाहितेनमन साविदित्वाप्रत्यचष्टतम् २०

विरक्त्यादिगुणगणैर्दौत्यादौवृतःतेषांपांडवेयानांपांडुवंशोद्भवानांवःएतदार्तानामभयंकरंवचःयुक्तमुचितमित्यन्वयः १६ हेपुरुषर्षभ यतोजीवानांक्लेशबीजानिस्युर्वयंतंपुरुषंअयमेवेतिनजानीमःअने कशोकबीजप्रतिपादकवेदव्याक्यविमोहिताः १७ वाक्यभेदमेवाह केचिदित्यादिना केचिद्विकल्पंविकल्पसमूहोपेतंवचोयेषांतेतथोक्ताः संदिग्धवचसइत्यर्थः आत्मनःस्वस्यक्लेशबीजमात्मानंस्व यमेवाहुः केचित्सांख्याआत्मानमंतःकरणंतत्कारणमाहुः वैकल्पवचसःप्रकृतिपुरुषयोर्विवेकाग्रहवचनाएकेसम्यक्ज्ञानिनःदैवंसर्वदेवप्रधानंहरिंक्लेशबीजमाहुः सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषादितिश्रुतेः स्वशब्दवाच्याद्विष्णोर्भावःयस्यसःस्वभावः १८ अनंतत्वात्सर्वात्मनाऽप्रतर्क्यात्तर्काविषयादनिर्वाच्यात्प्रधानात्क्लेशपरंपरास्तवैषांजीवानांप्रकृत्यापिहितत्वादितिकेष्वपिनिश्चयः अथवाऽप्रतर्क्या त्प्रकर्षेणतर्कायोग्यात्सत्त्वेनासत्त्वेनसदसत्त्वेनवानिर्वक्तुमशक्यात् भावाद्रूपाज्ज्ञानादितिकेषुमायावादिषुनिश्चयः भोराजश्रेष्ठएषुपक्षेष्वनुरूपंश्रुतिस्मृत्यनुकूलंविमृशस्वबुद्ध्यालोच्यानिश्चिन्विति १९ ध र्मएवंप्रवदतिसतिसम्राट्समाहितेनएकाग्रेणमनसालोच्य स्वाधीनैःकर्मकालमधानैः दैवमेवास्वतंत्राणांजीवानांदुःखादिबीजंनत्वन्यंतरं स्वातंत्र्येणकर्मादीनांदुःखबीजत्वंहेयएवेत्येवंधर्मान्विदित्वा

तैर्मत्याश्रष्टेत्येकान्वयः आत्मादिशब्दवाच्यंपरमात्मानंक्लेशबीजंविदित्वेतिवा आदानादिकर्तृत्वादात्मा देवोत्तमत्वाद्दैवं क्रियाविषयत्वात्स्वकउक्तकारणशब्दोमत्वाच्चकर्म स्वभावः स्वभांस्वरूपभूतांभांप्रकाशं वातिगच्छति नपरप्रकाशमितिस्वभावः स्वयंप्रकाशइत्यर्थः अप्रतर्क्यात् दुस्तर्क्यविषयत्वादप्रसिद्धत्वादनिर्वाच्यात् अप्रसिद्धेरवाग्गतादितिस्मृतेः इतिस वैष्णवपक्षेषुहरिरेवोच्यतेक्लेशबीजत्वेन अहंसर्वस्यप्रभवोमत्तःसर्वंप्रवर्तते । इतिमत्वाभजतेमांबुधाभावसमन्विताः । बुद्धिर्ज्ञानमसंमोहःक्षमासत्यंदमःशमः । सुखंदुःखंभवोभावोभयंचाभयमेवच अहिंसासमतातुष्टिस्तपोदानंयशोयशः । भवंतिभावाभूतानांमत्तएवपृथग्विधाःइत्यादेश्च । अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच । नतुमामभिजानंतितत्त्वेनातश्च्यवंतितेइतिस्मृतेः । पृथक्कल्पनायाः ज्ञानिविषयत्वादित्यादिकं समाहितेनसम्राडितिपदद्वयेनोक्तमितिज्ञातव्यं सम्यग्राजतेप्रकाशतेसर्वमस्येतिसम्राट् अतएवात्मवैरूप्यकर्तारंनविजानीमइतिवदंतंधर्मंप्रत्यब्रवीदित्यन्वयः समाहितेनचेतसाज्ञानेन तंधर्मंभगवंतंप्रत्यचष्टदृष्टवान् अपरोक्षदर्शनेनतस्यनिजरूपमद्राक्षीदित्यर्थः दृष्ट्वाचाब्रवीदितिशेषः २० किमब्रवीदितितत्राह धर्ममिति हेधर्मज्ञधर्मंब्रवीषिपरमात्मस्वरूपंगोप्तासि नतूष्णींअपितु अज्ञजनमोहनायवृषरूपंधत्से यदुक्तमात्मवैरूप्यकर्तारंनविजानीमइतितत्राह यदिति असत्कृतमधर्मंतुवदन्धर्मंप्राप्नुयादितिवचनादस्यवृषरूपस्यात्मवैरूप्यकर्तृत्वात्सूचनेदोषाभावेऽपि अधर्मकृतः सद्भिर्नसवाच्यःकथंचनेतिवाक्यात्सज्जनेष्वधर्मकृतोयत्स्थानंनरकादिलक्षणंतत्सूचकस्यापितत्स्थानंभवेदितिज्ञापनायत्वयाऽऽत्मवैरूप्यकर्तानज्ञापितइत्यतोधर्मंब्रवीषीत्यर्थः २१ गतक्लेशदीजानितंनावि

# धर्मंब्रवीषिधर्मज्ञधर्मोसिवृषरूपधृक् ॥ यदधर्मकृतःस्थानंसूचकस्यापितद्भवेत् २१ अथवादेवमायायानूनंगतिरगोचरा ॥ चेतसोवचसश्चापिभूतानामितिनिश्चयः २२ तपःशौचंदयासत्यमितिपादाःकृतेकृताः ॥ अधर्मांगैस्त्रयोभग्नाःस्मयसंगमदैस्तव २३ इदानींधर्मपादस्तेसत्यंनिर्वर्तयेद्यतः ॥ तंजिघृक्षत्यधर्मोयमनृतेनैधितःकलिः २४ इयंचभूर्भगवतान्यासितोरुभरासती ॥ श्रीमद्भिस्तत्पदन्यासैःसर्वतःकृतकौतुका २५ शोचत्यश्रुकलासाध्वीदुर्भगेवोज्झिताधुना ॥ अब्रह्मण्यानृपव्याजाःशूद्राभोक्ष्यंतिमामिति २६ ॥ सूतउवाच ॥ इतिधर्मंमहींचैवसांत्वयित्वामहारथः ॥ निशातमाददेखड्गंकलयेऽधर्महेतवे २७ तंजिघांसुमभिप्रेक्ष्यविहायनृपलांछनम् ॥ तत्पादमूलंशिरसासमगाद्भयविह्वलः २८ पतितंपादयोर्वीरःकृपयादीनवत्सलः ॥ शरण्योनावधीच्छ्लोक्यआहचेदंहसन्निव २९

जानीमइतिवदतः तवाभिसंधिरयंवेतिवक्तीत्याह अथवेति यादृशानांगोचरापिनूनंप्रायेणभूतानांचेतसोवचसश्चदेवमायायाःसर्वजीवानांमुख्यक्लेशबीजस्यदेवस्यहरेरिच्छायागतिःस्थितिरधर्मेणधर्म शोचामीत्यादिकाअगोचरेतिज्ञापयितुंसर्वज्ञेनभवतानविजानीमइत्युक्तमितिभावः अभिप्रायनिश्चयइति २२ तवतपआदिचत्वारःयेपादाःकृतयुगेकृताःपूर्णाअवर्ततंतेषांमध्येत्रयःपादास्तपःशौचदयाख्याःअधर्मांगैरधर्मपादैःस्मयसंगमदैर्भग्नाःस्मयेनतपोभंगः स्त्रीसंगेनशौचभंगःमदेनदयाभंगः २३ इदानीमास्मिन्युगेयतोयेनपादेनानिर्वर्तसे हेधर्मतेसपादःसत्यंसत्यमात्रमेकस्त्ववशिष्टोऽनृतेनाधर्मपादेन एधितोवर्धितोऽधर्मात्मकःकलिः तंसत्याख्यंपादंजिघृक्षतितंग्रहीतुमिच्छति ग्रसितुमाकांक्षतेइत्यन्वयः २४ इयंभूश्चभगवतान्यासितोऽवरोपितउरुर्महान्भरोभारोयस्याःसातथोक्ताश्रीमद्भिस्तस्यहरेः पदन्यासैःपदपरिक्रमणैःसर्वतःकृतकौतुकारचितालंकाराराचितरोमांचेतिवा सतीनिर्मलाभूत् २५ सेयंसाध्वीअधुनातत्पदन्यासैरुज्झितादुर्भगेवभाग्यहीनाश्रीवशोचंतीअश्रुकलासततस्रुतनेत्रजलधाराऽऽस्तइत्यन्वयः किंकृत्वाअब्रह्मण्याब्राह्मणभक्तिरहितानृपव्याजाःशूद्रामांभोक्ष्यंतिपालकव्याजेनभुंजतइति २६ अधर्महेतवेअधर्मकारणाय निशातं तेजितंहंतुमितिशेषः २७ जिघांसुहंतुकामंपादमूलंसमगात् अष्टांगविशिष्टतयाऽऽसीदित्यन्वयः २८ श्लोक्यःकीर्तिकामः २९

गुडाकेशयशोधराणांअर्जुनकीर्तिविभ्रतांकौरवाणामस्माकमर्थेबद्धांजलिर्येनसतथोक्तस्तस्यगुडाकेशयशोधराणांसकाशात्भयंनास्तीति वांकितुहेकलेत्वंमदीयेक्षेत्रे ... नवर्तितव्यमित्यन्वयः
देहमारभ्यराष्ट्रपर्यंतस्यानविवक्षयाक्षेत्रइत्युक्तम् कुतइतितत्राह त्वमितिअधर्मएवबंधुर्यस्यसतथोक्तः अधर्मबंधुत्वादितिभावः ३० ततश्चकिमितितत्राह त्वामिति नरदेवानांधर्मपालकानांराज्ञां
देहेषुवर्तमानंसंनिधानंत्वामन्वनंतरंअयंलोभाद्यधर्मयूथःप्रवृत्तोभवतीतियस्मात्तस्मादधर्मबंधोहेकलेसत्येनधर्मेणचवर्तितव्येब्रह्मावर्तेविंध्याहिमवत्पर्वतयोर्मध्येपुण्यदेशेनवर्तितव्यमित्यन्वयः ...
इतिघातोलोभः परवित्ताभिलाषःसद्व्ययपेशप्रेस्वविचापरित्यागोवा ज्येष्ठाअलक्ष्मीःमायानिकृतिः यत्रयस्मिन्ब्रह्मावर्तेस्वाध्यायादिर्ब्रह्मयज्ञश्चरुपुरोडाशादिद्रव्यलक्षणावितानयज्ञश्चयेषांतेब्रह्मवितानयज्ञा
मुनयः यज्ञैर्यज्ञेश्वरंयजंति ३१ ३२ यस्मिन्निच्छात्ममूर्तिःइच्छातनुः इज्यमानोहरिर्भगवान्यजतांपुंसांशंसुखंतनोतिप्रपंचयति अमोघान्कामानपितनोतीति किंविशिष्टोहरिःस्थिरजंगमानांअं

राजोवाच ॥ नतेगुडाकेशयशोधराणांबद्धांजलेर्भोभयमस्तिकिंचित् ॥ नवर्तितव्यंभवताकथंचित्क्षेत्रेमदीयेत्वमधर्मबंधुः ३० त्वांवर्तमानंनरदेवदेहेष्वनु
प्रवृत्तोयमधर्मयूथः ॥ लोभोनृतंचौर्यमनार्यमंहोज्येष्ठाचमायाकलहश्चदंभः ३१ नवर्तितव्यंयदधर्मबंधोधर्मेणसत्येनचवर्तितव्ये ॥ ब्रह्मावर्तेयत्रयजंतियज्ञै
र्यज्ञेश्वरंब्रह्मवितानयज्ञाः ३२ यस्मिन्हरिर्भगवानिज्यमानइच्छात्ममूर्तिर्यजतांशंतनोति ॥ कामानमोघान्स्थिरजंगमानामंतर्बहिर्वायुरिवैषआत्मा ३३
परीक्षितैवमादिष्टःसकलिर्जातवेपथुः ॥ तमुद्यतासिमाहेदंदंडपाणिमिवोद्यतम् ३४ यत्रक्ववाथवत्स्यामिसार्वभौमतवाज्ञया ॥ लक्षयेतत्रतत्रापित्वामात्तेषुश
रासनम् ३५ तन्मेधर्मभृतांश्रेष्ठस्थानंनिर्देष्टुमर्हसि ॥ यत्रैवनियतोवत्स्यआतिष्ठंस्तेनुशासनम् ३६ सूतउवाच ॥ अभ्यर्थितस्तदातस्मैस्थानानिक
येददौ ॥ द्यूतंपानंस्त्रियःसूनायत्राधर्मश्चतुर्विधः ३७ पुनश्चयाचमानायजातरूपमदात्प्रभुः ॥ ततोनृतंमदंकामंरजोवैरंचपंचमम् ३८ अमूनिपंचस्था
नानिह्यधर्मप्रभवःकलिः ॥ औत्तरेयेणदत्तानिन्यवसत्तन्निदेशकृत् ३९ अथैतानिनसेवेतबुभूषुःपुरुषःक्वचित् ॥ विशेषतोधर्मशीलोराजालोकपतिर्गुरुः ४०
वृषस्यनष्टांस्त्रीन्पादांस्तपःशौचंदयामिति ॥ प्रतिसंदधआश्वास्यमहींचसमवर्धयत् ४१ सएषएतर्ह्यध्यास्तआसनंपार्थिवोचितम् ॥ पितामहेनोपन्यस्तं
राज्ञारण्यंविविक्षता ४२ आस्तेधुनासराजर्षिःकौरवेंद्रश्रियोल्लसत् ॥ गजाह्वयेमहाभागश्चक्रवर्तीबृहच्छ्रवाः ४३

तर्बहिश्चवर्तमानः कइववायुरिवात्मान्यासः ईशः प्रवर्तकः ३३ उद्यतंसंबद्धंदंडपाणिंयममिवस्थितंउद्यतासिंउद्धृतखड्गम् ३४ यत्रक्ववास्त्वदुक्तस्थलेवत्स्यामीत्यन्वयः लक्षयेपश्यामि ३५ हेधर्म
भृतांश्रेष्ठ तत्स्थानंनिर्देष्टुमर्हसीत्यन्वयः आतिष्ठन्अनुतिष्ठन्वत्स्येवसामि ३६ कानितानिस्थानानीतितत्राह द्यूतमिति द्यूतंदेवनं पीयतइतिपानंमद्यं सूनाप्राणिहिंसन यत्रयेषुस्थानेषुचतुर्विधोऽधर्म
पापंस्यादितिशेषः ३७ जातरूपंसुवर्णं तत्फलमाह ततइति ततोद्यूतादिभ्योऽनृतादीनिपापसाधनानिभवंतीतिशेषः ३८ तस्यराज्ञोनिदेशकृदाज्ञाकृत् अधर्मप्रभवः अधर्मोत्पादकः अमूनि
द्यूतादीनिपंचस्थानानि ३९ बुभूषुः पुरुषार्थकामः लोकपतिर्लोकपालः गुरुरुपदेष्टा धर्मस्येतिशेषः ४० वृषस्यधर्मस्य ४१ एतर्हितदानींपार्थिवानांराज्ञामुचितंआसनंसिंहासनंअध्यास्तइतिसंबन्धः
अरण्यंप्रवेक्ष्यतीत्यरण्यंवनंविविक्षतामवेष्टुकामेनपितामहेनपितुःपित्रा युधिष्ठिरेण ... इत्संदर्भआसनमध्यास्तइति ... बृहच्छ्रवा महाकीर्तिः ४२ ४३

यस्यक्षोणींपालयतःसतः यूयंसत्रायपज्ञविशेषायदीक्षिताः सोयमभिमन्युसुतोनृपः इत्थंभूतानुभावः कल्यादिदंडनलक्षणसामर्थ्योपेतइत्यन्वयः ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजयध्वजकृतटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ पुनरपिभगवतिभक्तिविधानार्थंतन्माहात्म्यमुच्यतेस्मिन्नध्याये तदर्थंपारीक्षितंस्वर्याणमुपक्रमते यइति योऽद्भुतकर्मणःश्रीकृष्णस्यानुग्रहात् द्रौण्यस्त्रदग्धोपिमातुरुत्तरायाउदरेनमृतः १ यश्चब्रह्मशापोत्थितात्ब्राह्मणशापप्रेरितात्तक्षकनागात्प्राणविप्लवेजीवनाशेप्राप्तेसतिभगवत्यर्पितचित्तत्वान्मरणाख्योरुभयात्नसंमुमोह सपरीक्षित्सर्वतःसर्वेषु राज्यादिषुस्नेहलक्षणंसंगमुत्सृज्यवैयासकेःश्रीशुकस्यशिष्योभूत्वातदुपदेशेनात्मयोग्यंविज्ञानंस्वरूपबिंबपरतत्त्वापरोक्षज्ञानं तेनअर्जितासंपादितासंस्थितिर्मुक्तिर्येनसतथोक्तःगंगायांभासादेस्वकलेवरंजहावित्यन्वयः ३ नैतदाश्चर्यमित्याह नेति उत्तमश्लोकस्यवार्ताप्रसंगोयेषांतेतथा उत्तमश्लोकस्यवार्ताजीविकायेषांतेतथेतिवा । तेषांश्रवणपुटेनतस्यहरेःकथामृतंजुषतांश्रवणव्याजेनसेवमानानांतस्यपादपद्मंचस्मरतांअंतकालेसंभ्रमोनस्यादित्यन्वयः निरंतरंहारिचरणनिषेवणेनात्यंतिकप्रलयेसर्वदेहविरहमिच्छतांदैनंदिनमरणभयंनास्तीतिकिंवर्णनीयमित्यपिशब्दार्थः । उत्तमश्लोकवार्तादिरूपेकमेवाऽऽ

इत्थंभूतानुभावोयमभिमन्युसुतोनृपः ॥ यस्यपालयतःक्षोणींयूयंसत्रायदीक्षिताः ४४ इतिश्रीभा०महापुराणेप्रथमस्कंधेसप्तदशोऽध्यायः ॥१७॥ सूतउवाच ॥ योवैद्रौण्यस्त्रविप्लुष्टोनमातुरुदरेमृतः ॥ अनुग्रहाद्भगवतःकृष्णस्याद्भुतकर्मणः १ ब्रह्मशापोत्थितायस्तुतक्षकात्प्राणविप्लवे ॥ नसंमुमोहोरुभयाद्भगवत्यर्पिताशयः २ उत्सृज्यसर्वतःसंगंविज्ञानार्जितसंस्थितिः ॥ वैयासकेर्जहौशिष्योगंगायांस्वकलेवरम् ३ नोत्तमश्लोकवार्तानांजुषतांतत्कथामृतम् ॥ स्यात्संभ्रमोंतकालेपिस्मरतांतत्पदांबुजम् ४ तावत्कलिर्नप्रभवेत्प्रविष्टोपीहसर्वतः ॥ यावदीशोमहानुर्व्यामाभिमन्यवएकराट् ५ यस्मिन्नहनियर्ह्येवभगवानुत्ससर्जगाम् ॥ तदैवेहानुवृत्तोसावधर्मप्रभवःकलिः ६ नानुद्वेष्टिकलिंसम्राट्सारंगइवसारभुक् ॥ कुशलान्याशुसिध्यंतिनेतराणिकृतानियत् ७ किमुबालेषुशूरेणकलिनाशूरभीरुणा ॥ अप्रमत्तःप्रमत्तेषुयोवृकोनृषुवर्तते ८ उपवर्णितमेतद्वःपुण्यंपारीक्षितंमया ॥ वासुदेवकथोपेतमाख्यानंयदपृच्छत ९ यायाःकथाभगवतःकथनीयोरुकर्मणः ॥ गुणकर्माश्रयाःपुंभिःसेव्यास्तास्ताबुभूषुभिः १० ऋषयऊचुः ॥ सूतजीवसमाःसौम्यशाश्वतीर्विशदंयशः ॥ यस्त्वंशंससिकृष्णस्यमर्त्यानाममृतंहिनः ११

मिलितकिमुवर्णनीयमितिवा ४ मदीयेराष्ट्रेनवर्तितव्यमित्यस्याभिप्रायःकलेःसामर्थ्यप्रकटनाभावः नतुप्रवेशाभावइत्यभिप्रेत्याह तावदिति आभिमन्यव अभिमन्योःपुत्रःपरीक्षिदेकराट्चक्रवर्तीयावद्धावंतंकालमुर्व्यामास्तइत्यन्वयः कीदृशःमहानीशःसप्तद्वीपवत्याःभूमेरधिपतिः नमंडलेशइत्यर्थःतावत्तावंतंकालमिहसंप्रविष्टोपिकलिःनप्रभवेत्स्वशक्तिप्रकटनसमर्थोनाभूदित्यन्वयः ५ कदानूर्व्यां कलिःप्रविष्टइतितत्राह यस्मिन्निति ६ सारंगोमधुकरइव सारभुक्सारग्राही सम्राट्कलिंनद्वेष्टीत्यन्वयः कुतइतितत्राह कुशलानीति कुशलानिसुकृतानि इतराणिपापानियद्यस्मात् ७ इतोप्युदास्तइत्याह किम्विति धर्मज्ञानादिकंवृणोतीत्यावृणोतिनाशयतीतिवृकः शूरेषुभीरुणाबालेषुशूरेणकलिनाकिमुकिंप्रयोजनम् ८ उपसहरति उपवर्णितमिति ९ यथेयंपारीक्षितीकथाभगवतोगुणकर्माश्रयत्वात्सेव्यासीत्तथान्याअपितादृशाःकथाःमुमुक्षुभिःसेव्याइत्याह यायाइति कथनीयानिउरूणिकर्माणियस्यसतथोक्तः तस्यबुभूषुभिर्मोक्षकामैः १० सूतयस्त्वंश्रीकृष्णस्यविशदंयशोऽमृतंमरणधर्मिणांअस्माकंशंसासिहियस्मात्तस्मादाशीर्लक्षणम् सोमार्हभद्रेतिवा सुमायाःवत्सेतिवा सुमारोमहर्षणभार्या शाश्वतीःसमाःबहुवर्षान्जीवशतवर्षानुपर्यपिमाणान्धारयेत्येकान्वयः ११

कर्मणाज्ञानमातनोतीत्यादिश्रुतिप्रत्ययादंतःकरणशुद्धिद्वाराहरिज्ञानलब्ध्वयेयागपरंपराभिरनाश्वासेश्वासमोक्षानवसरे अन्यत्रसंगात्स्वरविधुरेदाऽतएवहरिकथावर्णनेतावत्तरेअस्मिन्नुपक्रांतेऽस्माकंदेहमं
णि इर्युद्देशेनसुहुतहविराज्याद्युद्भूतधूमेनधूम्रआत्मामनआदीद्रियजातंयेषांतेतथोक्ताः कर्मणिषष्ठीदर्शनात् तेनधूमेनधूम्रतपापविचित्रीकृतशरीरानस्मान्मधुमधुरंगोविंदपादपद्मासवंआपाययतीत्यन्वयः
पादपद्मादासूयतइत्यासवंमधुत्रा अनेनसत्रयागःसफलोजातइत्युक्तंभवति १२ दीर्घकालीनसत्रकरणमंतरेणाल्पकालीनयज्ञकरणेनशुद्धांतःकरणजन्यज्ञानान्मोक्षःसुकरइत्याशंक्याह तुलयामे
ति भगवत्संगिनांवैष्णवानांसंगस्यसेवालक्षणस्यसकाशाद्यत्सुखंतस्यलवेनापिलवलक्षणकालावच्छिन्नभागेनसहस्वर्गंदुःखासंभिन्नप्रदेशनाकलक्षणं अपुनर्भवंकैवल्यंसम्यक्स्वरूपाभिव्यक्तिजन
नाभावलक्षणंनतुलयामःतुलयितुंनप्रभवामः लडर्थेलोट्प्रार्थनायांवा मर्त्यानांमर्त्यशरीरभोगाराज्यादिसंपदः किमुत नतुलयामेतिकिवक्तव्यं सायुज्यादिविशिष्टफलहेतुत्वेनांतरंगत्वान्नसमइत्यर्थः भ
गवत्कौतदनंतरंपूर्वस्मादतिरिक्तफलविशेषाभावाच्चिरसमयस्यसंचीर्णमहत्सेवादिलक्षणसंगस्यातिसुखहेतुत्वेनतस्यचेहदीर्घसत्रकरणव्याजेनसंभवादिदमेवसर्वैरनुमंतव्यमित्युक्तमनेनेतिभावः १३ श्रुतभ
गवत्कथानामप्यस्माकंनतत्कथायामलंबुद्धिरित्याशयवंतःआहुरित्याह कोनामेति येभवपाद्यमुख्याःभवःशिवःपाद्मोब्रह्मातौमुख्यौयेषांतेतथोक्ताःयोगेश्वराः तत्तदधिकारियोग्यमोक्षोपा

कर्मण्यस्मिन्ननाश्वासेधूमधूम्रात्मनांभवान् ॥ आपाययतिगोविंदपादपद्मासवंमधु १२ तुलयामलवेनापिनस्वर्गंनापुनर्भवम् ॥ भगवत्संगिसंगस्यमर्त्या
नांकिमुताशिषः १३ कोनामतृप्येद्रसवित्कथायामहत्तमैकांतपरायणस्य ॥ नांतंगुणानामगुणस्यजग्मुर्योगेश्वरायेभवपाद्ममुख्याः १४ ततोभवान्वै
भगवत्प्रधानोमहत्तमैकांतपरायणस्य ॥ हरेरुदारंचरितंविशुद्धंशुश्रूषतांनोवितनोतुविद्वन् १५ तन्नःपरंपुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम् ॥
आख्याह्यनंताचरितोपपन्नंपारीक्षितंभागवताभिरामम् १६

योपदेष्टृप्रधानास्ते अगुणस्यसत्वादिगुणरहितस्यसर्वकार्येषुप्रधानस्यवा यस्यज्ञानादिगुणानामंतमवसानंनजग्मुः कोनामपुमांस्तस्ययुक्तामुक्तब्रह्मादीनांमहत्तमानामेकांततोनियमेनपरायणम्य
उत्तमाश्रयस्यमहत्तमेभ्यः एकांततःपरायाउत्कृष्टायाः श्रियोप्ययनस्यवा हरेःकथायांतृप्येदलंबुद्धिमाप्नुयादित्यन्वयः कीदृशःरसवित्सारज्ञानीविद्वान् १४ ततःकिमितितत्राह ततइ
ति अलंबुद्धिर्नास्तीतिपतस्ततोहेविद्वन्भगवतांसौभाग्यवतांपुंसांप्रधानोभवान्हरेरुदारंचरितमस्माकंवितनोतुविस्तारयत्वित्यन्वयः। भगवानेवप्रधानोयस्यप्रतेसतथेतिवा महत्तमश्चएकांतश्चपराय
णश्चेतिमहत्तमैकांतपरायणः महतांब्रह्मादीनामतिशयेनश्रेष्ठःअंतेप्रलयेएकएवनाद्वितीयोस्तिपरामुक्तास्तेषामाश्रयः शुश्रूषतामित्यनेनश्रवणशीलत्वंस्वाभाविकमितिदर्शयति १५ हरेरुदाराचरि
तानामनंतत्वात्तेषांमध्येकिंवक्ष्यामीतिप्रश्नोमाभूदित्यभिलषितचरितमिदमित्याहुरित्याह तन्नइति तदाख्यानमस्माकंआख्याहीत्यन्वयः परमुत्कृष्टंपुण्यंपुनानं असंवृतःरपष्टोर्थःपुरुषार्थोयस्मात्तदतितथो
क्तंतत् अत्यद्भुतानांयोगानांभक्तिज्ञानादिलक्षणानांनिष्ठाप्रतिपादकतयानितरांस्थितिर्यस्मिंस्तत्तथोक्तं तत्कालतोदेशतश्चानंतस्यापरिच्छिन्नस्यहरेश्चरितेनोपपन्नं सहितंतथापरीक्षित्संबंधिभागवतानां
मभिराममनोहरं भागवताःअभिरमंतेयस्मिन्निति वा भगवत्संबंधित्वाद्वाऽभिरामम् १६

---

१ सम्यक्स्वरूपाभिव्यक्त्यभावलक्षणंजननाभावलक्षणंचेत्यर्थःतात्पर्योक्तिः ।

तदितिकिंतत्राह सवाइति अदभ्रबुद्धिःपूर्णज्ञानः महाभागवतःपरीक्षिद्वैयासकिनाशुकेनशब्दितेनोपदिष्टेनश्रुतेनज्ञानेनयेनापवर्गाख्यं खगेंद्रध्वजस्यगरुडध्वजस्यपादमूलमेजइत्यन्वयः ताइत्यनेनाख्या
नस्यइष्टसाधनावबोधकत्वेनोपादेयत्वंदर्शयतीति १७ हेमहात्मन्शौनक विलोमजाताःहीनजन्मानोपिवयज्ञानवृद्धानामनुवृत्त्यासेवयाजन्मभृतः सफलजन्मानोऽभूमेत्यन्वय अहोआश्चर्यअस्म
द्भाग्यं कुतः महत्तमानामभिधानगोष्ठीतस्ययोगःसंबंधः अभिधानेननाम्नायोगइतिवा दुष्कुलोत्पत्तिनिमित्तंदौष्कुल्यमाधिमनाड्‌खंशीघ्रंविधुनोतीत्येकान्वयः १८ कैमुत्यमाह कुतइति महत्तमै
कांतपरायणस्यहरेर्नामगृणतःपुंसःआधिंविधुनोतीतिकुतःपुनःकिंवक्तव्यमित्यन्वयः अनंताअपरिमिता शक्तयोयस्यसतथा देशादितःपरिच्छेदोनविद्यतेयस्यसोनंतःयोभगवाननंतशक्तिरनंतश्च नकेवलं
ताभ्यामानंत्यगुणानंत्यमप्यस्तीत्याह महदिति महांतोगुणाःमहद्गुणाःतेषांभावःमहद्गुणत्वं तस्मात्छांदसत्वान्महच्छब्दस्यमहादेशाभावःयमनंतमनंतगुणतःपरिच्छेदरहितंसत्यज्ञानमनंतमित्या
दिवेदांताआहुरित्यन्वयः १९ प्रार्थयतः कटाक्षमोक्षमितिशेषःइतरान्ब्रह्मादीन्हित्वाकटाक्षवीक्षामकृत्वाविभूतिर्महालक्ष्मीःस्वरतत्वादनभीप्सोरनिच्छोर्यस्यहरेरंघ्रिरेणुमनवरतंजुषतेसेवते
तस्यास्यहरेरसाम्येअद्वितीये तथागुणैरनातिशायितेआधिक्यरहितेसर्वोत्तमत्वेचसूचितेनलक्ष्मीपतिरित्येतावताअलंनन्वित्येकान्वयः । अहमेवस्वयमिदंवदामिजुष्टंदेवेभिरुतमानुषेभिः श्रीमन्मंद

सवैमहाभागवतःपरीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः ॥ ज्ञानेनवैयासकिशब्दितेनभेजेखगेंद्रध्वजपादमूलम् १७ सूतउवाच ॥ अहोवयंजन्मभृतोमहा
त्मन्वृद्धानुवृत्त्यापिविलोमजाताः ॥ दौष्कुल्यमाधिंविधुनोतिशीघ्रंमहत्तमानामभिधानयोगः १८ कुतःपुनर्गृणतोनामतस्यमहत्तमैकांतपरायणस्य ॥
योनंतशक्तिर्भगवाननंतोमहद्गुणत्वाद्यमनंतमाहुः १९ एतावतालंननुसूचितेनगुणैरसाम्येऽनतिशायितेऽस्य ॥ हित्वेतरान्प्रार्थयतोविभूतिर्यस्यांघ्रिरेणुंजु
षतेनभीप्सोः २० अथापियत्पादनखावसृष्टंजगद्विरिंचोपहृतार्हणांभः ॥ सेशंपुनात्यन्यतमोमुकुंदात्कोनामलोकेभगवत्पदार्थः २१ यत्रानुरक्ताःसहसैव
धीराव्यपोह्यदेहादिषुसंगमूढम् ॥ व्रजंतियत्पारमहंस्यमंत्यंयस्मिन्नहिंसोपरमश्चधर्मः २२ अहंहिपृष्टोर्यमणोभवद्भिराचक्षआत्मावगमोत्रयावान् ॥
नभःपतंत्यात्मसमंपतत्रिणस्तथासमंविष्णुगतिंविपश्चितः २३

कटाक्षलब्धविभवब्रह्मेंद्रगंगाधरमित्यादिश्रुतिस्मृतिशतैरितरेषामशेषाणांलक्ष्म्याअनतरत्वाल्लक्ष्मीपतित्वंविष्णोःसर्वोत्तमत्वेयुक्तिरितिभावः २० अथसर्वोत्तमत्वाद्वितीयत्वसमर्थनस्यबहुयुक्तिसंदृष्ट
त्वप्रकटनायेदमपिभवतीत्याह अथापीति यस्यपादनखावसृष्टंगलितंविरिंचेनब्रह्मणाउपहृतंसमर्पितमर्हणांभः अर्घ्यजलंश्रीपादावनेजनोदकमितियावत् रुद्रेणसहवर्तमानंजगच्चतुर्दश
भुवनंपुनातियस्मादथतस्माल्लोकेभुवनेमुकुंदान्मोक्षप्रदान्नारायणादन्यतमःअन्यः स्वार्थेतमप्प्रत्ययः कोनामभगवत्पदार्थः निरतिशयज्ञानादिगुणवत्तयाभगवानितिनामवाच्योस्तिसर्वेषांतदर्वा
क्तनत्वान्नकोप्यस्तीत्यर्थःअनेनाविरिंचिपूज्यत्वाशेषशुद्धिकरतीर्थत्वभगवन्नामगाच्यत्वाद्वितीयत्वाःसर्वोत्तमत्वसूचकानीतिज्ञातव्यं २१ मुकुंदस्वविवृणोति यत्रेति यत्रमुकुंदेअनुरक्ताःस्निग्धाः
धीराविषयवार्तानिवृत्तायाबुद्धौरताःसंतोदेहादिपूढंगूढंसंगंस्नेहलक्षणंसहसाविमर्शज्ञानेनव्यपोह्यनिरस्यतत्परमहंसाश्रमप्राप्यंसत्यंसाधुगुणयुक्तंब्रह्ममुकुंदाख्यंव्रजंति यस्मिन्परमहंसाश्रमेअहिंसादेहि
ताऽतिरिक्तहिंसावर्जनमुपरमउदूर्ध्वप्रातिपिबानिहिनस्तीतिवाउपाविष्णुः सर्वाधिकस्तस्मिन्हरौरमारमणंरतिर्विषयनिवृत्तिर्वाधर्मौविहितइतिशेषः अनेनमुक्तिदानमपिसर्वोत्तमत्वद्योतकमितिसूचितंभव
ते २२ आख्याहीतिशौनकप्रश्नोत्तरंवक्ति अहंहीति अर्यमणःगुणान्वक्तुंभवद्भिः पृष्टोहंअत्रहरिगुणेषुयावानात्मावगमआत्मनोममअवगमः ज्ञानंतावत्आचक्षेव्याकरिष्ये गुणानामनंतत्वात्क
स्यापिसर्वात्मनाज्ञातुंशक्तिर्नास्तीत्येतदर्थंहेशब्देनाह नकेवलमहमेवाशक्तः किंतुअतीतानागतवर्तमानाब्रह्मादयःसर्वेप्येवमेवहरिगुणविषयइतिसोदाहरणमाह नभइति यथापतत्रिणः पक्षिणः

नमःआत्मसर्मस्वशक्त्यनुसारेणपतांति शक्त्यभावादेवोपरमंतिननभोऽस्त्वानादनंतरास्य तथाब्रह्मादयोविपश्चितोज्ञानिनोविष्णुगतिंविष्णुज्ञानंप्रतिसममात्मशक्त्यनुसारेणपतंते शक्त्यभावादुपरमंति
नतोऽविदगुणानामितत्वादितिभावः २३ पारीक्षितमास्यानंवक्ष्यंस्तस्यनिर्वेदनिमित्तब्रह्मशापंउपक्रमते एकदेति धनुरुद्यम्यसज्जंकृत्वामृगयामुद्दिश्यवनेविचरन् २४ जलाशयजलाधारं
तटाकविशेषं अचक्षाणोऽपश्यन्सपरीक्षित्आश्रमंआलस्यपरिहारकारणंस्थानविशेषंप्रविवेशेत्यन्वयः शांतंअसंप्रज्ञातसमाधिस्थंकिंचिन्मीलितनेत्रम् २५ प्रतिरुद्धाःपरमात्मन्येवसन्निधापिताः
श्रोत्रादींद्रियाणिचप्राणश्चमनश्चबुद्धिश्चयेनसतथोक्तःतं प्राणरोधः कुंभकेश्वासरोधःचेष्टानिवृत्तिर्वा अतएवशब्दादिज्ञानेभ्यउपारतं तदेवस्पष्टयति स्थानेति जाग्रदादिस्थानत्रयात्परमतीतंतुरी
यंब्रह्मप्राप्त अतएवब्रह्मणिभूतंप्रयत्नमंतरेणस्वतएवमनसास्वांबिबरूपंपरमात्मानंअनुभवंत अतएवाविक्रियं निश्चेष्टंनिवातस्थदीपोपमंविरुद्धक्रियारहितंवा २६ विप्रकीर्णाभिर्जटाभिःछन्नंसवृतं रु
रोःकृष्णमृगस्यविद्यमानेनाजिनेनचसंवृतं आसीनंवा विशुष्यत्नीरसं तालुजिह्वामूलंगूढजिह्वायस्यसतथा सपरीक्षित्तथाभूतंएवंविशिष्टंमुनिंउदकमयाचतप्रार्थितवानित्यन्वयः २७ सराजा
चुकोपेत्यन्वयः । तस्माइतिशेषः अलब्धंतृणभूम्यादियेनसतथोक्तः आदिशब्देनमधुपर्कादिगृह्यते स्वागतमित्यादिप्रियवचनंसूनृतं तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृतेतिस्मृतेः आत्मानंमुनि

एकदाधनुरुद्यम्यविचरन्मृगयांवने ॥ मृगाननुगतःश्रांतःक्षुधितस्तृषितोभृशम् २४ जलाशयमचक्षाणःप्रविवेशसआश्रमम् ॥ ददर्शमुनिमासीनंशांतं
मीलितलोचनम् २५ प्रतिरुद्धेंद्रियप्राणमनोबुद्धिमुपारतम् ॥ स्थानत्रयात्परंप्राप्तंब्रह्मभूतमविक्रियम् २६ विप्रकीर्णजटाच्छन्नंरौरवेणाजिनेनच ॥ विशु
ष्यत्तालुरुदकंतथाभूतमयाचत २७ अलब्धतृणभूम्यादिरसंप्राप्तार्घ्यसूनृतः ॥ अवज्ञातमिवात्मानंमन्यमानश्चुकोपह २८ अभूतपूर्वःसहसाक्षुत्तृड्भ्या
मर्दितात्मनः ॥ ब्राह्मणंप्रत्यभूद्ब्रह्मन्मत्सरोमन्युरेवच २९ सतस्यब्रह्मर्षेरंसेगतासुमुरगंरुषा ॥ विनिर्गच्छन्धनुष्कोट्यानिधायपुरमागमत् ३० एष
किंनिभृताशेषकरणोमीलितेक्षणः ॥ मुधासमाधिराहोस्वित्किंनुस्यात्क्षत्रबंधुभिः ३१ तस्यपुत्रोऽतितेजस्वीविहरन्बालकोऽर्भकैः ॥ राज्ञाघंप्रापितंतातं
श्रुत्वातत्रेदमब्रवीत् ३२ अहोअधर्मःपालानांपृथ्व्याबलिभुजामिव ॥ स्वामिन्यघंयद्दासानांद्वारपानांशुनामिव ३३

नाऽवज्ञातमिवमन्यमानः क्षुधादिनिमित्तोयंकोपइत्यस्मिन्नर्थेहशब्दः इतिहासद्योतकोवा २८ तस्यपरीक्षितःब्राह्मणंप्रतिमन्युरभूत्नकेवलंमन्युःकिंतुमत्सरश्चाभूदित्यन्वयः मन्युरेवनप्रसादइत्येवशब्दा
र्थः मत्सरोनायंमद्वशइत्यप्रीतिश्च कीदृशः अभूतपूर्वःइतःपूर्वमनुत्पन्नः कीदृशस्य क्षुत्तृड्भ्यामर्दितात्मनःपीडितमानसस्य २९ शापनिमित्तमाह सइति सराजातस्यब्रह्मर्षेःस्कंधेगतासुंमृ
तंसर्पंधनुष्कोट्यानिधायपुरमागमदित्यन्वयः ३० पुरमागच्छतस्तस्यालोचनप्रकारमाह एषइति एषमुनिःविषयेभ्यःप्रत्यङ्मुखतयानिभृताशेषकरणःपरतत्त्वविषयीकृतसकलेंद्रियः मीलितेक्षणः
किंनोस्माकंक्षत्रबंधुभिः किंस्यादितिमुधासमाधिर्मीलितेक्षणःआहोस्विदितिमनसापितर्कयन्पुरमगादितिपूर्वेणान्वयः ३१ तस्यब्रह्मर्षेःपुत्रःशृंगीनामकःतत्रेदमब्रवीदित्यन्वयःइदमितिवक्ष्यमाणं किंकृत्वा
राज्ञापरीक्षिताघंअपराधंप्रापितंपितरंश्रुत्वाअशुचितांप्रापितमितिवा अतितेजस्वीत्यनेनशापदानसामर्थ्यमस्यास्तीतिदर्शितं अर्भकैःबालैःसहविहरन्वयसाबालःनतुसामर्थ्येनेत्येतद्दर्शितंकप्रत्ययेन
३२ किमाहेतितत्राह अहोइति बलिभुजाकाकानामिवपृथ्व्याःपालानांराज्ञांअधर्मोऽन्यायोयास्माभिर्दृष्टः अहोकष्टं तत्कुतइतितत्राह स्वामिनीति शुनांस्वामिन्यघमिवब्राह्मणदासानांतद्द्वा
रपानाराज्ञांसंप्राप्तंस्वामिनिब्राह्मणेऽघदृष्टमिति पद्यस्माच्चसमादिति ३३

राज्ञांविप्रदासत्वंकथमितितत्राह ब्राह्मणैरिति ब्राह्मणैर्दासतयाद्वारपालोनिरूपितःसराजातस्यविप्रस्यगृहे द्वाःस्थोद्वारपालःकथंसमांडंभांडेनसहवर्तमानंगृहंभोक्तुंनाश्रयितुमर्हतिनार्हत्येवअहियस्मा त्तस्मात् असौस्वामिनादंडयइत्यर्थः ३४ तर्हिसमतिकोदंडकर्त्तातेषांइतितत्राह कृष्णइति उत्पथगामिनांविहितमार्गपरित्यज्यगच्छतांशास्तरिकृष्णेभगवतिगतेभिन्नसेतून्लंघितमर्यादांस्तानद्या हंशास्मिदंडयामीत्यन्वयः मेबलसामर्थ्यंपश्यतहेबालाइतिशेषः ३५ सचदंडःकीदृशइतितत्राह इतीति रोषताम्राक्षःरक्तनेत्र.कौशिकीकुशपाणिःअपउपस्पृश्यआचम्यतत्कृशापरूपंवाग्विसर्जं दत्तवान् राज्ञइतिशेषःइतिहासद्योतकेनहशब्देनकौशिकीनदीतस्याअपउपस्पृश्येत्यपव्याख्यानमपहस्तितमितिज्ञातव्यं ३६ इतोद्यतनादह्नःसप्तमेहनिमयाचोदित.प्रेरितस्तक्षकःसर्पविशेषः लं घितमर्यादंकुलांगारंकुलनाशकं ममापत्रुद्रुहंपरीक्षितंनामराजानंधक्ष्यतिस्मदग्धंकुर्यादित्येकन्वयः धक्ष्यतीतिलट्स्मशब्दसामर्थ्याल्लोडर्थोत्र.व्यत्ययः भागवतप्रधानराजदहनेपिसामर्थ्यद्योतनायवायं व्यत्ययः ३७ आश्रमंगतः ततःगलेसर्पकलेवरंकंठस्थितसर्पशरीरंपितरंदृष्ट्वामुक्तकंठःउच्चैरुरोदेत्यन्वयःसमाधिस्थितोवाचानोबोधनीयइत्यतोरोदनमुच्चैःकृतमित्यर्थद्योतकोहशब्दः ३८ वैअपिएवं गिरसकुलोत्पन्नः सःशमीकोपिसुतस्यविलापितंरोदनम् ३९ उरगविसृज्य परिहृत्यकस्माद्धेतोःविरोदिषीतिपुत्रंपप्रच्छेत्यन्वयः विप्रकृतंविपरीतंकृत ४० अतदर्हंतस्यशापस्याहौंसोप्यनेनभन

ब्राह्मणैःक्षत्रबंधुर्हिद्वारपालोनिरूपितः ॥ सकथंतद्गृहेद्वाःस्थःसभांडंभोक्तुमर्हति ३४ कृष्णेगतेभगवतिशास्तर्युत्पथगामिनाम् ॥ तान्भिन्नसेतूनद्याहंशास्मिपश्यतमेबलम् ३५ इत्युक्त्वारोषताम्राक्षोवयस्यानृषिबालकान् ॥ कौशिक्यपउपस्पृश्यवाग्वज्रंविससर्जह ३६ इतोलंघितमर्यादंतक्षकःसप्तमेऽहनि ॥ धक्ष्यतिस्मकुलांगारंचोदितोमेपितृद्रुहम् ३७ ततोभ्येत्याश्रमंबालोगलेसर्पकलेवरम् ॥ पितरंवीक्ष्यदुःखार्तोमुक्तकंठोरुरोदह ३८ सवाआंगिरसोब्रह्मन्श्रुत्वासुतविलापितम् ॥ उन्मील्यशनकैर्नेत्रेदृष्ट्वाचांसेमृतोरगम् ३९ विसृज्यपुत्रंपप्रच्छवत्सकस्माद्विरोदिषि ॥ केनवातेविप्रकृतमित्युक्तःसन्यवेदयत् ४० निशम्यशप्तमतदर्हंनरेंद्रंसब्राह्मणोनात्मजमभ्यनंदत् ॥ अहोबतांहोमहदद्यतेकृतमल्पीयसिद्रोहउरुर्दमोधृतः ४१ नवैनृभिर्नरदेवंपराख्यंसंमातुमर्हस्यविपक्वबुद्धे ॥ यत्तेजसादुर्विषहेणगुप्ताविंदंतिभद्राण्यकुतोभयाःप्रजाः ४२ अरक्ष्यमाणेनरदेवनाम्निरथांगपाणावयमंगलोकः ॥ तदाहिचोरप्रचुरोविनंक्ष्यत्यरक्ष्यमाणोविवरूथवत्क्षणात् ४३ तदद्यनःपापमुपैत्यनन्वयंयन्नष्टनाथस्यवसोर्विलुंपकात् ॥ परस्परंघ्नंतिशपंतिवृंजतेपशून्स्त्रियोर्थान्पुरुदस्यवोजनाः ४४

तीत्यतदर्हंरतं । नकेवलंनाभ्यनंददानिंदच्चेत्याह अहोइति । अंहःपापं बतखेदे अल्पीयसिअणुतरेद्रोहेअपराधलक्षणेउरुश्रमोमहादंडः ४१ कुतअनिंददितितत्राह नवाइति नराणांदेवोग जा तदधीनैर्नृभिःनापराध्यइति दुर्विषहेणयस्यराज्ञस्तेजसागुप्ताः रक्षिताः नकुतोपिभयंयासांताः अकुतोभयाःप्रजाःभद्राणिविंदंतिलभंतइतिवैयतः तद्धुश्रेयोविवक्षयाभद्राणीतिबहुवचनम् ४२ बाधकंचाह अरक्ष्यमाणइति नरदेवातर्यामित्वान्नरदेवनाम्निरथांगपाणौविष्णौअरक्षमाणेपालनमकुर्वाणेसति तदानीमेवायंअरक्ष्यमाणोऽपाल्यमानः चोरप्रचुरःलोकोजनोविवरूथवत्सरक्षारहितसेनावत् क्षणाद्विनंक्ष्यविहतित्येकान्वयः सेनारक्षावरूथःस्यादवरोधोनिवेशनमित्यभिधानम् ४३ नष्टनायकस्यपालकरहितस्यवसोराष्ट्रस्यचोरादयोविलुंपकाःनाशकाःइतियद्यस्मात्तस्माद्यनोऽस्माकंअनन्वयमनुपमं अन्वयविरोधिसंततिनाशकरंवापापमुपैतीत्यन्वयः उक्तमेवविवृणोति परस्परमिति वृंजतेअपहरंतिछिंदतीतिवा दसुहिंसायामितिधातोःनगरनाशकाः परस्परावितिधातोःइत्यस्ततोयत्रावि प्रकारावा पशून्घ्नंतिस्त्रियःशपंति उपालभंतेधर्षयंति अर्थान्वृंजतइतिविवेकः ४४

तस्यपरिपाकमाह तदेति यदापथ्यादिहंतृशिक्षानाक्रियतेतदाआर्याणांशिष्टानांसंमतोधर्मोधर्मैधिकृतानामनुष्ठातॄणांविलीयतेक्रमेणह्रसितस्तिरोभवतिच कीदृशः त्रय्याश्रितिर्वेदैर्यथेवेश्रयमिधिर्पात पाद्यतइतित्रयीमयः अतएववर्णाचारैराश्रमाचारैश्चयुतःधर्मलवपरिपाकमाह ततइति ततःवर्णाश्रमाचारयुतवैदिकार्थधर्मनाशानंतरंकनकार्थैपुस्त्रकृचंदनवनितादिभोगलक्षणकामेषु अभिनिवे शितः आत्मामनोयेषांततथोक्तास्तेषांपुंसांयथाशुनांकपीनांचमक्षणभोगादावनवस्थातथाहीनजातीनामुत्तमजातिभिरुत्तमजातीनांहीनजातिभिर्भोगसंभोगादिनावर्णानांसंकरः कलुषीभावोभविष्यती त्येकान्वयः ४५ परीक्षितोऽदुष्टत्वेनान्विर्दतदेवकथमितितत्राह धर्मपालइति अत्रधर्मपालादिविशेषणानिहेतुगर्भाणि धर्मपालत्वान्महाभागवतत्वात्राजर्षित्वाद्धयमेधयाजित्वाच्चसम्राट्नदुष्टोऽद ४६ इत्थं क्षुत्तृट्श्रमान्वितत्वेनबुभुक्षापिपासयादीनोऽस्मदाश्रममागतोऽर्घ्यादिपूजायोग्योनैवास्मत् अस्मत्तःशापमर्हति तस्मादनिवार्यमघमापन्नमितिभावः इयमेधैरश्वमेधैरिष्टवानितिहयमेधयाट् ४६ इत्थं मघस्यसिद्धत्वमापाद्यानुतापपूर्वकंतदघनिष्कृतिंकरोति अपापेष्विति सर्वात्मासर्वांतर्यामीश्रीनारायणःबालेनस्वभृत्येषुकृतंतत्पापंक्षंतुमर्हतीत्यन्वयः ४७ अस्मदाश्रममागतोऽज्ञातःपरीक्षित्प्र भुरपिनतत्प्रतिचकइत्याशयेनाह तिरस्कृताइति तिरस्कृतानिंदिताः विप्रलब्धावंचिताःशप्ताःउपालब्धाःक्षिप्ताः अधिक्षिप्ताःहताःताडिताः अपिशब्दःप्रत्येकमभिसंबध्यते प्रभवोपिप्रतिकर्तुंसमर्था

तदार्यधर्मश्चविलीयतेनॄणांवर्णाश्रमाचारयुतस्त्रयीमयः ॥ ततोर्थकामाभिनिवेशितात्मनांशुनांकपीनामिववर्णसंकरः ४५ धर्मपालोनरपतिःसतुसम्राड्बृह च्छ्रवाः ॥ साक्षान्महाभागवतोराजर्षिर्हयमेधयाट् ॥ क्षुत्तृट्श्रमान्वितोदीनोनैवास्मच्छापमर्हति ४६ अपापेषुस्वभृत्येषुबालेनापक्वबुद्धिना ॥ पापंकृतंतद्भ गवान्सर्वात्माक्षंतुमर्हति ४७ तिरस्कृताविप्रलब्धाःशप्ताःक्षिप्ताहताअपि ॥ नास्यतत्प्रतिकुर्वंतितद्भक्ताःप्रभवोपिहि ४८ इतिपुत्रकृताघेनसोनुतप्तोमहा मुनिः ॥ स्वयंविप्रकृतोराज्ञानैवाघंतदचिंतयत् ४९ सायवःप्रायशोलोकेपरैर्द्वंद्वेषुयोजिताः ॥ नव्यथंतिनहृष्यंतियतआत्माऽगुणाश्रयः ५० ॥ ॥ इति श्रीभागवतेमहापुराणेप्रथमस्कंधेअष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ सूतउवाच ॥ महीपतिस्त्वथतत्कर्मगर्ह्यंविचिंतयन्नात्मकृतंसुदुर्मनाः ॥ अहोमयानीचमनार्यवत्कृतंनिरागसिब्रह्मणिगूढतेजसि १

अपिप्रतिशापंकर्तुंवा तद्भक्तास्तस्यहरेर्भक्ताः अस्यतिरस्कारादिकर्तुः संबंधिततिरस्कारादिरूपनप्रतिकुर्वंति प्रतिक्रियानैवकुर्वंतीत्यर्थः हिशब्देन क्षमाबलमशक्तानांशक्तानांभूषणंक्षमेतिप्रसि द्धिदर्शयति ४८ तदघंतेनराज्ञाकृतमपराधं महामुनिरिरितिहेतुगर्भंविशेषणं सर्वज्ञतमत्वाच्छरीराभिमानिनएवदुःखादिप्राप्त्याकोपोत्पत्तिर्नत्वसंप्रज्ञातसमाधेस्तस्यपद्मपत्रपानीयवदश्लिष्टहरिरित्याहि स्यादिविशेषत्वादित्यर्थः ४९ साधूनामयंस्वभावइत्याह साधवइति द्वंद्वेषुसुखदुःखादिषुयोजिताःसाधवःयथास्थितवस्तुदर्शिनः कुतोऽन्यथाचभावइतितत्राह यतइति आत्माऽगुणाश्रयइत्यस्याकार प्रश्लेषाप्रश्लेषाभ्यांपदच्छेदःकर्तव्यः गुणस्यागुणस्यदोषस्यवात्माकर्ताजीवःस्वयमेवाश्रयःतत्तस्मादिति ५० ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजयध्वजकृतटीकायांअष्टादशोऽध्यायः ॥ १८ ॥ प्रश्लेषाप्रश्लेषाभ्यां... ननुपरीक्षितोधर्मपालत्वादिकंनयुज्यते नृशंसवच्चावकर्मकरणात्प्रश्नात्तत्रा विमुक्तिसाधनेषुप्रथमापाद्यसाधनत्वेनवैराग्यमवश्यमापाद्यंमुमुक्षुणेतिपरीक्षिच्चिंताकथनापदेशेनतत्प्रतिपद्यतेऽस्मिन्नध्याये तुदयाचेत्याशंकापरिहारत्वेनाह महीपतिरिति मुनेःस्कंधेमृतसर्पशरीरार्पणलक्षणमात्मनाऽनुष्ठितंयत्कर्मतच्चिंतयन्सुदुर्मनाःसुष्ठुदुःखितमनाअभूदितिशेषः सुशब्दइश्वरेच्छाधीनत्वंदर्शयति अपराधा दपिकष्टत्वंब्रह्मेशानादयःसुराइतिस्मृतेः कस्मिन्विषयेअनुष्ठितंयेनमहतींचिंतासंभाव्यतइतितत्राह अहोइति मयानिरागसिनिरपराधेगूढतेजसिअप्रकाशिततेजोब्रह्मण्यरिष्टिर्ह[illegible]

मूर्खवत्नीचैः कृतं अहो कष्टमिति । महीपतेः कर्मणो गर्ह्यत्वद्योतनाय ब्रह्मणीति सोऽप्यपराधी चेत्कथं चिद्दुष्टत इत्यतो निरागसीति अतिक्षियामसामर्थ्यप्रकटनाय गूढतेजसीति । ब्रह्मवेदः तपस्तत्त्वं ब्रह्मा विप्रः प्रजापतिरित्यभिधानात् ब्राह्मणो नावमंतव्यो निरागास्तु विशेषत इति वचनात् ॥ १ ॥ तच्च दुष्कृतमपरिहार्यं विपत्तिकरमिति चिंतयतीत्याह ध्रुवमिति ब्राह्मणस्यारय अवज्ञा विष्णोरवज्ञैव तस्तत्तस्माद्देवस्य हरेर्हेलनादवज्ञानात् ध्रुवमवश्यं दुरत्ययमत्येतुमशक्यं व्यसनं दुःखं नातिदीर्घाद चिरान्मे मम भविष्यतीत्यन्वयः तद्व्यसनं मनसाभ्युपगच्छतीत्याह तदिति अपनिष्कृताघपापप्रायश्चित्तापतद्व्यसनं काममस्तु कुतः अद्धा निरंकुशतया अहं पुनरेवंविधमघं यथा न कुर्यां तथास्त्वित्यतिशेषः २ नौपचारिकमिदमांतरमेवेत्यभिप्रेत्य तदेवाह अद्यैवेति प्रकोपितब्रह्मकुलभवानलः नहु दाहेऽप्यलं शुद्धिर्नास्तीत्यनलः मे मदीयत्वेन अभिमतराज्यादिकमद्यैव कालक्षेपमंतरेण दहतु भूयः अभद्रस्य मे द्विजदेवतासु पापीयसी बुद्धिर्न भूयादित्यन्वयः अभूदिति व्यत्यययो राज्ञो महानुतापसूचनायेति ज्ञातव्यं द्विजाश्च देवताश्च द्विजदेवताः द्विजेषु सन्निहिता देवता वा द्विजरूपदेवता वा तासु न विद्यते भा दीप्तिर्येषां ते अभास्तान् द्राति कुत्सयतीत्यभद्रः द्रा कुत्सायामिति धातुः तद्वत् द्राणमज्ञानं यस्य स तथोक्तो वा द्राणिद्रायामिति धातुः तस्य ३ अथेत्थं चिंतयन् स परीक्षित् तक्षकाख्यान्मुनेः सुतोक्तात् सुतेन प्रेरितात् विक्रांतं कृतापराधपरिहारं देहवियोगलक्षणं यथावदशृणोदित्यन्वयः आकर्ण्य किमकार्षीदिति तत्राह स इति सचाकर्ण्य तक्षकादचिरेण मरणं राज्यादिषु अलं प्रसक्तस्य विरक्तिकारणमभूदिति साधु मेने इत्यन्वयः ४ स सम्राट् कस्य वा हेतोरिति शौनकप्रश्नं परिहरति अथो इति अथो ब्रह्मशापाकर्णनसमनंतरमेव

ध्रुवं ततो मे कृतदेवहेलनाद्दुरत्ययं व्यसनं नातिदीर्घात् ॥ तदस्तु काममघनिष्कृताय मे यथा न कुर्यां पुनरेवमद्धा २ अद्यैव राज्यं बलमृद्धकोशं प्रकोपितब्रह्मकुलानलो मे ॥ दहत्वभद्रस्य पुनर्न मेऽभूत्पापीयसी धीर्द्विजदेवतासु ३ सचिंतयन्नित्थमथाशृणोद्यथा मुनेः सुतोक्तो निकृतिस्तक्षकाख्यात् ॥ स साधु मेने नचिरेण तक्षकादलं प्रसक्तस्य विरक्तिकारणम् ४ अथो विहायेममभुं च लोकं विमृश्य तौ हेयतया पुरस्तात् ॥ कृष्णांघ्रिसेवामधिमन्यमान उपाविशत्प्रायममर्त्यनद्याम् ५ या वै लसच्छ्रीतुलसीविमिश्रकृष्णांघ्रिरेण्वभ्यधिकांबुनेत्री ॥ पुनाति लोकानुभयत्र सेशान्कस्तां न सेवेत मरिष्यमाणः ६ इति व्यवस्थाय स पांडवेयः प्रायोपवेशं प्रति विष्णुपद्याम् ॥ दध्यौ मुकुंदांघ्रिमनन्यभावो मुनिव्रतो मुक्तसमस्तसंगः ७

ममायं शापोऽपि विरक्तिहेतुत्वात् साधुरिति मन्वानः पुरस्तात्प्रथमं ताविहलोकपरलोकावनित्यत्वदुःखमिश्रत्वादिना हेयतया विमृश्याधिराट् श्रीपुत इमं भूलोकं तथा अमुं स्वर्गलोकं निर्विद्य विहाय अस्मिन्संसारे कृष्णांघ्रिसेवैवात्यंतिकदुःखनिवृत्तिसुखसाधनत्वात् कर्तव्येति च विमृश्य तामेव म्रियमाणस्यात्मनः कर्तव्यमभिमन्यमानः परीक्षित् अमर्त्यनद्यां गंगायां प्रायमुपाविशत् यावज्जीवमनशनव्रतं चकारेत्यन्वयः ५ किमिति गंगायामेव प्रायोपवेशोऽन्यत्रापि किं न स्यादिति तत्राह या वा इति लसंती श्रीमती तुलसी लसच्छ्रीतुलसी ब्रह्मज्ञानेन तुलामितोनोतीति तुलसी ब्रह्मज्ञानसदृशी ब्रह्मज्ञानस्य संसारनिवर्तकत्वं यन्माहात्म्यं तदस्या अप्यस्तीति तत्सदृशी तनोति करोति मोक्षादिपुरुषार्थमिति तु विष्णुस्तत्र लसतीति वा तुलसी तस्या मंजरीरजोभिर्विमिश्राः कृष्णस्यांघ्रिरेणवः तैः सहाधिकानि यान्यंबूनि जलानि तेषां नेत्री लसच्छ्रीतुलसीमंजरीरजोविमिश्रश्रीकृष्णचरणरेणुसमधिगतमाहात्म्याभ्यधिकसलिलप्रवाहाकुलेत्यर्थः या चात एवाशेषान् लोकानुभयत्रांतर्बहिश्च पुनातीति उभयत्र इह लोके शिष्टव्यवहारयोग्यतालक्षणां शुद्धिं परलोके नरकप्राप्त्यादिनिवर्तनलक्षणां करोतीति वा अतो मरिष्यमाणः पुमान् कस्तां गंगां न सेवेत ६ अतो मरिष्यमाणोऽहं तीर्थोत्तमस्यां विष्णुपद्यां गंगायामनशनव्रतं करिष्य इति प्रायोपवेशं प्रति व्यवस्थाय निश्चित्यानन्यभावोऽनन्यचेता राज्यभारादिचिंतारहितांतःकरणो विष्ण्वैकचेता वा मुनीनां निवृत्तानां ज्ञानिनां व्रतमिव व्रतं यस्य स मुनिव्रतः वाचालत्वरहितो वा अत एव मुक्ताः समस्ताः संगाः पुत्रादिविषयस्नेहा यस्य स मुक्तसमस्तसंगः मुक्ते हरौ समस्तसंगः श्रोत्रादींद्रियैरन्यप्रसंगमंतरेण तत्कथाश्रवणादिप्रसंगो यस्य स तथोक्तो वा स पांडवेयः परीक्षित् विष्णुपद्यां प्रायोपवेशं प्रति स्थितः मुकुंदं तदंघ्रिमेव वा

ध्यावित्येकान्वयः चः समुच्चये ऽवधारणे वा ७ यत्र परिक्षित्तिष्ठति तत्रोपजग्मुः ८ मुनीनां नामानि निर्दिशति इत्याह अत्रिरिति गाधिसुतो विश्वामित्रः रामः परशुरामः इंद्रप्रमतिश्च इध्मवाहश्च इंद्रप्रमतीध्मवाहौ ९ कुंभयोनिरगस्त्यः १० अन्ये च प्रसिद्धाः प्रसिद्धनामानः नारदादयो देवर्षयः रामादयो ब्रह्मर्षयः विश्वामित्रादयो राजर्षयः जातिभेदकथनार्थं पुनर्वचनं अरुणः आदिर्येषां ते तथोक्ताः ऋषीणां समूहः आर्षेयं तस्मिन्प्रवराः नानार्षेयप्रवराः तानभ्यर्च्य अर्घ्यपाद्यादिभिरिति शेषः शिरसा वंदनं नाम नमस्कार एवात्राभिप्रेतः कृतप्रणाम इत्युत्तरवचनात् ११ ऋषीणामग्रे उपस्थितः अर्घ्यगृहीतपाणिः येन स यत्स्वेन कर्तुमिष्टं तदेभ्यो विज्ञापयामासेत्यन्वयः १२ महत्तमैः महापुरुषैरनुग्रहणीयं शीलं येषां ते तथोक्ताः वयं नृपाणां मध्ये धन्यतमाः अहो अस्मद्भागधेयं कुतः राज्ञां कुलं गर्ह्यकर्मानि यकर्म तत्कष्टं येन राजकुलेन ब्राह्मणपादशौचमारात् दूराद्विसृष्टं विरहितं तदिति शेषः १३ स्वचिकीर्षितमाह तस्येति परावरेशो भुक्तामुक्तप्रपंचनाथो हरिः व्यासक्तचित्तस्य अनुरक्तबुद्धेः मे तेषु गृहेषु अयं द्विजशापरूपो दंडोऽभीक्ष्णं अलं निर्वेदमूलो वैराग्यहेतुरस्तु यत्र येषु गृहेषु प्रसक्तः संसारभयमेव धत्ते यत्र यस्मिन् भगवति प्रसक्तो भयमोक्षमेव धत्ते प्राप्नोति तस्मिन् हराविति वा १४ सोऽहं मां महत्तमानुग्रह

तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः ॥ प्रायेण तीर्थाभिगमापदेशैः स्वयं हि तीर्थानि पुनंति संतः ८ अत्रिर्वसिष्ठश्च्यवनः शरद्वानरिष्टनेमिर्भृगुरंगिराश्च ॥ पराशरो गाधिसुतोऽथ राम उतथ्य इंद्रप्रमतीध्मवाहौ ९ मेधातिथिर्देवल आर्ष्टिषेणो भारद्वाजो गौतमः पिप्पलादः ॥ मैत्रेय और्वः कवषः कुंभयोनिर्द्वैपायनो भगवान्नारदश्च १० अन्ये च देवर्षिब्रह्मर्षिवर्या राजर्षिवर्या अरुणादयश्च ॥ नानार्षेयप्रवरान्समेतानभ्यर्च्य राजा शिरसा ववंदे ११ सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत् ॥ विज्ञापयामास विविक्तचेता उपस्थितोऽग्रेऽभिगृहीतपाणिः १२ राजोवाच ॥ अहो वयं धन्यतमा नृपाणां महत्तमानुग्रहणीयशीलाः ॥ राज्ञां कुलं ब्राह्मणपादशौचाद्दूराद्विसृष्टं बत गर्ह्यकर्म १३ तस्यैव मेऽघस्य परावरेशो व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम् ॥ निर्वेदमूलो द्विजशापरूपो यत्र प्रसक्तो भयमाशु धत्ते १४ तं मोपयातं प्रतियंतु विप्रा गंगा च देवी धृतचित्तमीशे ॥ द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः १५ पुनश्च भूयाद्भगवत्यनंते रतिः प्रसंगश्च तदाश्रयेषु ॥ महत्सु यां यामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः १६ इति स्म राजाऽध्यवसाययुक्तः प्राचीनमूलेषु कुशेषु धीरः ॥ उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुतन्यस्तभारः १७

णीयशीलः तमामां द्विजोपसृष्टः द्विजकुमारेण प्रेरितः वेषांतरधारी यथा तथा कुहकः कपटी सर्पजातिविशिष्टो वा तक्षकः दशतु भक्षयतु युष्माभिरेतत्कर्तव्यमित्याह अलमिति यूयं देवकीनंदनामेत्यादिकां विष्णुविषया गाथाश्चरणत्रयाद्युपलक्षितान् श्लोकानलं देहवियोगपर्यंतं गायत षड्जादिस्वरैरिति शेष इत्यन्वयः १५ न केवलमस्मिन् जन्मन्येव हर्यादौ मनोरतिप्रसंगोऽपितु जन्मांतरेपीति प्रार्थयइत्याह पुनश्चेति तदाश्रयेषु भगवद्भक्तेषु युष्मद्विधेषु मम मैत्री अस्मदीयोयमिति चित्तवृत्तिलक्षणा सृष्टिं जन्म १६ कुत्र गंगायां स्थित इति तत्राह इतिस्मेति स्वसुते जनमेजये न्यस्तो निहितो राज्यभारो येन स तथोक्तः इत्युक्तप्रकारेण अध्यवसायं निश्चित्य मनोयोगयुक्तः निश्चययुक्तो वा राजा परीक्षित् समुद्रपत्न्या गंगाख्याया नद्या उदङ्मुख एवं क्वचिद्दक्षिणकूले दक्षिणतीरभागे प्रासादे प्राचीनाग्रेषु कुशेषु उदङ्मुख आस्त इत्यन्वयः मृत्युचिंतारहितत्वाद्धीर इत्युक्तं कूलशब्दस्य लक्षणार्थमनाश्रित्य मुख्यार्थांगीकारे भारतविरोधः स्यात् यथा गंगायां घोष इति गंगापदेन तीरं लक्ष्यते कूलपदेनापि जललक्षणोपपत्तेः आस्त इति लङप्येवं विधिविशेषद्योतनार्थं १७

१ अनेनाध्यवसायचपांडवेय इति पाठ इति भाति । अन्यथाऽत्र चशब्दाभावात् एतच्छब्द्याख्यानमसंगतं स्यात् ।

श्वेतच्छत्रचामरादिनरदेवचिन्हं नकेवलंतावदेव किंतुकेयूरादींश्चनिरस्यत्यक्त्वा चर्म कृष्णाजिनादि मुनिवेषः १८ व्यकिरन्वर्षितवंतः १९ यदुत्तमश्लोकस्यहरेर्गुणानुरूपंगुणप्रकटनानुकूलंतद्दृष्यऊचुरित्यन्वयःप्रजानुग्रहमंतरेणान्यस्वभावोनास्तियेषांतेतथोक्ताः २० अध्यासनंसिंहासनंराज्ञांमंडलपतीनांकिरीटैर्जुष्टंसेवितं कालक्षेपराहित्यद्योतनार्थःसद्यःशब्दः २१ असावयं विशोकंनित्यंनिर्दुःखं कुतः विरजस्कंअशोभनेशोभनाध्यासबुद्धिरहितंकुतःपरंत्रिगुणातीतंपूर्णंवा कुतः अजंजन्मजरामरणरहितंहरिंपास्यतीत्यन्वयः २२ मधुअमृतंश्च्योततीतिमधुश्च्युत्श्रवणसुखमतएवगुरोर्ब्राह्मणकुमारस्यशापंव्यलीकयतिअनृतंकरोति फलवद्इति गुरुशापव्यलीकं अनेनदुर्मरणदोषपरिहारोलक्ष्यते नतुतक्षकदंशनाभावः तत्कृतदंशनदर्शनात् ऋषिगणवचआश्रुत्य एतान्ऋषीनाभाषतेत्यन्वयः २३ त्रिपृष्ठेसत्यलोकेशीलसमाधावितिधातोःपरमात्मसमाधिमंतःवोयुष्माकंइहलोकेअथवाअमुत्रचपरलोकेकश्चनार्थःसाध्यंप्रयोजनंनास्तीतियतस्ततःपरानुग्रहकरणस्वभावात् वोयुष्मानिमंप्रश्नंविपृच्छेपृच्छामीत्यन्वयः किंकृत्याइतिकृत्यतायांइत्थंकर्तव्यतायांविप्राविशिष्टज्ञानिनःअकुटिलबुद्धयःसात्विकप्रकृतयइति विश्रभ्यविश्वस्यकोसावितितत्राह

विहायसर्वंनरदेवचिन्हंकेयूरहारांगदमौलिरत्नान् ॥ रत्नांगुलीयान्विमलान्निरस्यपवित्रपाणिर्मुनिवेषआस्ते १८ एवंचतस्मिन्नरदेवदेवेप्रायोपविष्टेदिविदेवसंघाः ॥ प्रशस्यभूमौव्यकिरन्प्रसूनैर्मुदामुहुर्दुंदुभयश्चनेदुः १९ महर्षयोवैसमुपागतायेप्रशस्यसाध्वित्यनुमोदमानाः ॥ ऊचुःप्रजानुग्रहशीलसारायदुत्तमश्लोकगुणानुरूपम् २० नवाइदंराजर्षिवर्यचित्रंभवत्सुकृष्णंसमनुव्रतेषु ॥ येध्यासनंराजकिरीटजुष्टंसद्योजहुर्भगवत्पार्श्वकामाः २१ सर्वेवयंतावदिहास्महेथकलेवरंयावदसौविहाय ॥ अजंपरंविरजस्कंविशोकंयास्यत्ययंभागवतप्रधानः २२ आश्रुत्यतदृषिगणवचःपरीक्षित्समंमधुच्युद्गुरुशापव्यलीकम् ॥ आभाषतैनानभिवंद्ययुक्तःशुश्रूषमाणश्चरितानिविष्णोः २३ राजोवाच ॥ समागताःसर्वतएवसर्वेदेवायथामूर्तिधरास्त्रिपृष्ठे ॥ नेहाथवामुत्रचकश्चनार्थऋतेपरानुग्रहमात्मशीलाः २४ ततश्चवःप्रश्नमिमंविपृच्छेविश्रभ्यविप्राइतिकृत्यतायाम् ॥ सर्वात्मनाम्रियमाणैस्तुकृत्यंशुद्धंचतत्रामृशताभियुक्ताः ॥२५॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेएकोनविंशोध्यायः ॥ १९ ॥ सूतउवाच ॥ तत्राभवद्भगवान्व्यासपुत्रोयदृच्छयागामटमानोनपेक्षः ॥ अलक्ष्यलिंगोनिजलाभतुष्टोवृतश्चबालैरवधूतवेषः १

सर्वात्मनेति तत्रकृत्यशतेषुम्रियमाणैःपुरुषैःसर्वप्रकारेणशुद्धंनिर्दोषंपुरुषार्थपर्यवसायिकृत्यंकर्तव्यंचाभियुक्ताआग्रहयुक्तास्तात्पर्योपेताआमृशतआलोचयत आलोच्यवास्माकंब्रूतेतितुशब्दः २४ ॥ २५ ॥ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजयध्वजकृतटीकायांएकोनविंशोध्यायः ॥ १९ ॥ ज्ञानादिनैवसत्संगत्यासकलपापक्षयोभवतीतिप्रतिपाद्यतेस्मिन्नध्यायेतत्रादौशुकागमनंवक्तितत्रेतिय त्रपरीक्षित्तामुनिभिश्चास्थितंतत्रतस्यामवस्थायांवाव्यासपुत्रः शुकोभगवान् यदृच्छयादैवेच्छयाभवदित्यन्वयः पूर्वस्मात्कांतिविशेषद्योतनायाभवदित्युक्त आगमनस्यतावताचारितार्थस्यात् अटनस्यस्वाधीनत्वप्रकाशनायाटमानइतिशानच्प्रत्ययः तर्ह्यर्थाभिलाषीकिमटतीत्यतउक्तमनपेक्षइति बाह्यविषयापेक्षारहितः तत्कुतःइत्यस्यापितदेवोत्तरं अनपःप्राणनाथःश्रीविष्णुःतद्विषयेईक्षाईक्षणंदर्शनंयस्यसतथोक्तः नहिकरतलामलकवत्सततमपरोक्षीकुर्वाणस्यतस्यबाह्यपदार्थापेक्षाभवतीतिवा बाह्यपदार्थापेक्षाभावेशरीरयात्रा कथमित्यस्याप्येतदेवोत्तरं अनंप्राणंपिबतीत्यनपाईक्षादर्शनंकाकचंचुपुटन्यायपानज्ञानंयस्यास्तिसतथाकथितइतिवा । श्रीप्रसादाभावादशनदारिद्र्यंकिमित्यस्येदमप्युत्तरं शश्वदपगतानभवतीत्यनपालक्ष्मीस्तस्याःईक्षणंयस्यास्तिसतथेतिवा तत्कटाक्षस्यपात्रीभूतइत्यर्थः

संततमभमानगवनेस्वभावेनवायुनातृप्ति कथंस्यादितितत्राह निजेति स्वरूपानंदेनालंबुद्धिमान्यदृच्छालाभेनतुष्टः किमाश्रमइतितत्राह अलक्ष्येति नलक्ष्याण्याश्रमादिलिंगानियस्यसतथोक्तःतत्कुतइतितत्राह अवधूतेति अवधूतानादिगंबराणां वेषोयस्यसतथोक्तः अवधूतःपरित्यक्तःवेषोऽलंकारोयेनसतथेतिवा अतएवबालैश्चवृतः १ मुनयस्तंदृष्ट्वाआसनेभ्य.प्रत्युत्थिताइत्यन्वयः चशब्दादन्येपतंत्राःस्थिताउत्तस्थुरितिश्राह्यगूढवर्चसंआच्छादितानिजतेजोलक्षणमहिमानमपितल्लक्षणज्ञाः किंविशिष्टद्व्यष्टवर्षैद्विःकृत्वाऽष्टवर्षाणियस्यसतथोक्तःषोडशवर्षं सुकुमाराणिकोमलानिपादादीनियस्यसतथोक्तस्तं पादौचकरौचऊरूचबाहूचअंसौचकपोलौचगात्रंचतानितथोक्तानिचारुणीईषदरुणेरक्तेचअक्षिणीयस्यसतथाउन्नतानासिकायस्यसतथा तुल्यौपरस्परसमौकर्णौयस्यसतथातं शुभ्रशोभनंआननंयस्यसतथातं कंबुवत्त्रिरेखांकितशंखवत्सुजातः लक्षणवत्तमःकंठोयस्यसतथातम् २ अंसवक्षस्थलयोर्मध्यंजत्रुनिगूढंपूरितविवरं पीवरंजत्रुयस्यसतथातं पृथुविस्तीर्णतुंगमुन्नतवक्षोयस्यसतथातं आवर्तःपयसांभ्रम.तद्वन्निम्नावृत्तानाभिर्यस्यसतथातं वलिभिःरेखाभिर्वल्गुसुंदरउदरंयस्यसतथातम् ३ अपीच्यंषोडशवर्षीयंवयोयस्यतदपीच्यवयःतच्चांगंतस्यलक्ष्म्यास्त्रीणांमनोज्ञं मनोहरं रुचिरस्मितेनचमनोहरमितिशेषः ४ विष्णुरातःविष्णुदत्तःनतिथिर्दिनविशेषोयस्यसतथातस्मै आजहार नकार द्विशब्दोनुधत्वेहेतुः अनेनकथमालक्षितःपौरैःकथंवापांडवेयस्येतिप्रश्नःपरिहृतइतिज्ञातव्य

तंद्व्यष्टवर्षंसुकुमारपादकरोरुबाहंसकपोलगात्रम् ॥ चार्वायताक्षोन्नसतुल्यकर्णसुभ्र्वाननंकंबुसुजातकंठम् २ निगूढजत्रुंपृथुतुंगवक्षसमावर्तनाभिंवलिवल्गूदरंच ॥ दिगंबरंवक्त्रविकीर्णकेशंप्रलंबबाहुंस्वमरोत्तमाभम् ३ श्यामंसदापीच्यवयोंगलक्ष्म्यास्त्रीणांमनोज्ञंरुचिरस्मितेन ॥ प्रत्युत्थितास्तेमुनयःस्वासनेभ्यस्तल्लक्षणज्ञाअपिगूढवर्चसम् ४ सविष्णुरातोतिथयेआगतायतस्मैसपर्यांशिरसाजहार ॥ ततोनिवृत्ताह्यबुधाःस्त्रियोर्भकामहासनेसोपविवेशपूजितः ५ ससंवृतस्तत्रमहान्महीयसांब्रह्मर्षिराजर्षिदेवर्षिसंघैः ॥ व्यरोचतालंभगवान्यथेंदुर्ग्रहर्क्षतारानिकरैःपरीतः ६ प्रशांतमासीनमकुंठमेधसंमुनिंनृपोभागवतोभ्युपेत्य ॥ प्रणम्यमूर्ध्नावहितःकृतांजलिर्नत्वागिरासूनृतयान्वपृच्छत् ७ राजोवाच ॥ अहोअद्यवयंब्रह्मन्सत्सेव्याःक्षत्रबंधवः ॥ कृपयाऽतिथिरूपेणभवद्भिस्तीर्थकाःकृताः ८ येषांसंस्मरणात्पुंसःसद्यःशुध्यंतिवैगृहाः ॥ किंपुनर्दर्शनस्पर्शपादशौचासनादिभिः ९ सान्निध्यात्तेमहायोगिन्पातकानिमहांत्यपि ॥ सद्योनश्यंतिवैपुंसांविष्णोरिवसुरेतराः १० अपिमेभगवान्प्रीतःकृष्णःपांडुसुतप्रियः ॥ पैतृष्वसेयप्रीत्यर्थंतद्गोत्रस्यात्तबांधवः ११

म्. ५ सःपरीक्षित्महीयसांमहत्तराणामध्येमहान्संवृतः शूद्रः महत्त्वप्रकाशनायराजाब्रह्मर्ष्यादिभिःपरीतोव्यरोचतेत्युक्तं तक्षकान्मरिष्यइतिमरणभियामुखांगकांतिम्लानिर्नास्तीतियस्मात्तस्मादित्यर्थः ६ सूनृतयागिराप्रियवचनेन ७ हेब्रह्मन्ज्ञानिन्क्षत्रबंधवोवयमद्यसद्भिःसेव्याअभूमअहोभाग्यंकुतःअतिथिरूपेणआगतैर्भवद्भिस्तीर्थकाःतीर्थेषुप्रशस्तास्तीर्थाःकृताःयथाभवंतोनिष्कलुषत्वायतीर्थानिभवंति तथावयमपियुष्मत्संगत्येत्यर्थः तत्रकृपैवकारणमित्यतःकृपयेत्युक्तम् ८ तीर्थीकरणमेवविशिनष्टि येषांभवतांसंस्मरणात्पुंसोगृहाःसद्यःशुध्यंतिवैयस्मात् अतोदर्शनादिनाशुध्यंतीतिकिंपुनर्वक्तव्यमित्यन्वयः ९ भवत्संगत्याविशेषोप्यस्तीत्याह सान्निध्यादिति अनेनब्रह्महत्यादिपापपरिहारोभवतीत्युक्तंभवति ज्ञानात्पूर्वतनानिभस्मीभवंतिपश्चात्तनानिनाश्लिष्यंतीतिशास्त्राणिस्थितंवैशब्देनाह नकेवलमस्मत्पापहानिरेवकिंतुअस्मत्संगतानामपीति पांडुसुतानांप्रिय.पांडुसुताःप्रियायस्येतिवा कृष्णोभगवान्मेमह्यप्रीतोपिभविएव कुत. पितावसुदेव.तस्यस्वसाकुंतीतस्याःपुत्राःपैतृष्वसेयाःयुधिष्ठिरादयस्तेषांप्रीतयेतेषांगोत्रस्यसोहंतद्गोत्रःतस्यमेआप्तबांधवोजातइतियस्मात्तस्मादितीति ११

अन्यथात्तस्मीत्यभावे अव्यक्तगतेरज्ञातगमनस्यसंसिद्धस्यब्रह्मज्ञानिंतयाकृतकृत्यस्यवरीयसःवरणीयेषुपूज्यस्यतेदर्शनंनृणांनःकथंघटते म्रियमाणानांनितरांनघटतइतिशेषः १२ भवद्दर्शनंदुर्लभमि तियतोतः दैवात्प्राप्तंयोगिनांपरमगुरुंसंसिद्धंकैवल्यभूतंभवंतामिहम्रियमाणस्यपुंसःसदायत्कार्यंयच्चश्रोतव्यंअथोपच्चजाप्यंअथवानृभिर्यत्कर्तव्यंभजनीयंवा यद्वा विपर्ययंअकर्तव्यास्मर्तव्यादितच्चपृच्छामि तदस्माकंब्रूहीत्येकान्वयः १३ १४ गृहमेधिनांगृहस्थानांगृहेषुक्वचिदेकत्रापिगोदोहनक्षणमपिभवतोवस्थानंनलक्ष्यते नूनंनिश्चितोहियस्मात्तस्मात्ज्ञानिनि स्वतः प्राप्तेसतिकर्तव्याद्यज्ञानेऽस्माकंम

अन्यथातेऽव्यक्तगतेर्दर्शनंनः कथंनृणाम् ॥ नितरांम्रियमाणानांसंसिद्धस्यवरीयसः १२ अतःपृच्छामिसंसिद्धंयोगिनांपरमंगुरुम् ॥ पुरुषस्येहयत्कार्यंम्रियमाणस्यसर्वदा १३ यच्छ्रोतव्यमथोजाप्यंयत्कर्तव्यंनृभिःसदा ॥ स्मर्तव्यंभजनीयंवाब्रूहियद्वाविपर्ययम् १४ नूनंभगवतोब्रह्मन्गृहेषुगृहमेधिनाम् ॥ नलक्ष्यतेह्यवस्थानमपिगोदोहनंक्वचित् १५ सूतउवाच ॥ एवमाभाषितःपृष्टःसराज्ञाश्लक्ष्णयागिरा ॥ प्रत्यभाषतधर्मज्ञोभगवान्बादरायणिः ॥ १६ ॥

इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविंशोध्यायः ॥ २० ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥ ॥ ॥

हासुरत्वंस्यादितिभवंतंपृच्छामीतिभावः १५ एवमाभाषितः पृष्टः संबोध्यकृतप्रष्टव्यः गुरुशिष्यसंवादलक्षणधर्मज्ञोबादरायणिःशुकःश्लक्ष्णयामधुरयागिराराजानंप्रत्यभाषतेत्येकान्वयः १६ ॥ भागवतविवरणमिदंतुलसीदलमिवसमर्पयामिहरेः ॥ चरणनलिनयुगलेहंप्रथमस्कंधोपगंसतांप्रीत्यै ॥ ॥ इतिश्रीभागवतेमहापुराणेपारमहंस्यांसंहितायांविजयध्वजतीर्थभिक्षुविरचितप्रथमस्कंधटीकायांविंशोध्याय. ॥ २० ॥ ॥ ॥ ॥ ७ ॥ ॥ ॥

॥ अथ श्रीमद्भागवते द्वितीयः स्कंधः प्रारभ्यते ॥

श्रीलक्ष्मीवेंकटेशायनमः ॥ श्रीगुरुभ्योनमः ॥ श्रीवेदव्यासायनमः ॥ ॥ वरीयान्प्रष्टव्योनिगमविषयोयोऽस्यजनकोवराहाद्यात्मायोऽवतरतिसुरारातिहृदये ॥ अदाद्धात्रेज्ञानंसकलविषयंयश्चवि नुतस्तमंगोपास्वत्वहृदयसततंस्वेष्टकृतये ॥ १ ॥ संप्रतिपरीक्षित्प्रश्नंपरिहरिष्यन्स्तौति वरीयानिति श्रीभागवतसंहिताप्रारंभकारणंसविस्तरमभिधायेदानींश्रीभागवतसंहिताप्रारभ्यतइत्यतोवा ह वरीयानिति यच्छ्रोतव्यमथोजाप्यमित्यादिनायस्त्वयाकृतःसएषप्रश्नोवरीयान् अंगीकार्यतमः सर्वोत्कृष्टत्वात् लोकहितायेतिक्रियाविशेषणं यथालोकस्यहितंभवतितथाकृतइत्यनेननकेवलंत वैवहितकरोयंकिंतुसर्वस्येत्युक्तंभवति उत्कृष्टत्वेहेतुगर्भविशेषणमाह आत्मविदिति मुख्यतआत्मविदोब्रह्मादयस्तेषामपिसंमतत्वात् तत्कथमत्राह पुंसामिति आत्मविदित्यनुवर्तते इहजगतिनृणांस हस्रशःश्रोतव्यानिसंतिम्रियमाणानांचपुंसांश्रोतव्यादिषुयःपरःपरमात्मासएवात्मवित्संमतइतियत्तस्मादित्यत्यर्थः आत्मावाअरेद्रष्टव्यइत्यादिश्रुतेः अनेनपरमात्मविषयत्वेनास्यवरीयस्त्वमित्युक्तंभ वति १ इतोपिपरमात्मश्रवणादिकमंतरेणसंसारस्यतदज्ञाननिबंधनस्यदुरुच्छेद्यत्वात्सएवतेषुमुख्यत्वेनसंमतइत्युपसंहरन्नज्ञलोकप्रवृत्तिप्रकारमाह अपश्यतामित्यादिना हशिरत्रज्ञानार्थः आत्मनः परमात्मनस्तत्त्वमनारोपितंरूपंज्ञानादिलक्षणं आत्मनांलक्ष्मीब्रह्मादिचेतनानांकदाप्यनभिभूततरतमभावेनावस्थितिंचापश्यतामजानतां निद्रयेत्यत्राप्यनुसंधेयं गृहमेधिनां गृहमेधानांगृहाश्रमएवकर्तुंयो ग्याःपंचमहायज्ञाःस्मृतिविहितप्रत्यवायपरिजिहीर्षयातान्कर्तुंशीलमेषामस्तीतिगृहमेधिनः तेषांगृहेषुगृहाश्रमेष्वेववर्तमानानांपुंसाम् २ निद्रयाव्यवायेनचस्त्रीभोगेनचनक्तंरात्रिर्नेवंवयोह्रियते दिवा

## श्रीशुकउवाच ॥ वरीयानेषतेप्रश्नःकृतोलोकहितंनृप ॥ आत्मवित्संमतःपुंसांश्रोतव्यादिषुयःपरः १ श्रोतव्यानीहराजेंद्रनृणांसंतिसहस्रशः ॥ अपश्य तामात्मतत्त्वंगृहेषुगृहमेधिनाम् २ निद्रयाह्रियतेनक्तंव्यवायेनचवावयः ॥ दिवाचार्थेहयाराजन्कुटुंबभरणेनवा ३ देहापत्यकलत्रादिष्वात्मसैन्येष्वस त्स्वपि ॥ तेषुप्रसक्तोनिधनंपश्यन्नपिनपश्यति ४ तस्माद्भारतसर्वात्माभगवान्हरिरीश्वरः ॥ श्रोतव्यःकीर्तितव्यश्चस्मर्तव्यश्चेच्छताऽभयम् ५

चाहश्चार्थेहयाश्रीनारायणाराधनानुपयोगिहिरण्याद्यापादनायासेन अप्यकार्यशतंकृत्वाभर्तव्यामनुरब्रवीदितिवचनात् कुटुंबभरणेनवा ह्रियतइत्यन्वयः ३ आत्मतत्त्वाज्ञानेकारणमाह देहेत्यादिना अपिर्गर्हार्थः आत्मनःस्वस्यदीनत्वंक्षीणत्वमापादयंतीत्यात्मदैन्यानितेषु दीङ्क्षयइतिधातोः यद्वा स्वतएवदीनभावोयेषांतेतथातेषु अतएवासत्स्वभद्रेषुतदुक्तं सद्भावेसाधुभावेचेति निधनंनाशं प्रक र्षेणसक्तः प्रसक्तःनपश्यतिस्वस्येतिशेषः अपिनाऽसच्छब्दस्यमिथ्यार्थाभिधायित्वं गर्हितमितिदर्शयतितेषुप्रमत्तोनिधनमितिपाठोऽनन्वितः ४ यतःश्रीनारायणश्रवणादिनाविनानसंसारनिवृत्तिस्त स्मात्सर्वात्मासर्वव्यापी । सर्वमभीष्टमाददानोवा । भगवान्निरतिशयैश्वर्यादिगुणवान्ब्रह्मादिचेतनराशिपूज्योवा हरिःस्मरणमात्रेणाशेषसंसारक्लेशसंहर्ता सर्वेजगदीश्वरोनित्यभयरूपादस्मात्संसारा दभयंमोक्षमिच्छतापुरुषेणश्रवणादिविषयःकर्तव्यइत्यन्वयः श्रवणादित्रयेणाज्ञानसंशयादिनिरासंकरोति श्रुत्वामत्वातथाध्यात्वातदज्ञानविपर्ययौ । संशयंचपराणुद्यलभतेब्रह्मदर्शनमितिवच नात् श्रवणेनाज्ञानं । कीर्तनापरपर्यायमनननेनसंशयविपर्ययौनिरस्यस्मरणलक्षणध्यानेनब्रह्मापरोक्षज्ञानंलभतइति । श्रोतव्योन्योजप्तव्योन्यइतिशंकानिरासार्थंश्रवणादीनांचतुर्णामकविषयत्वंद्योतयितुं सर्वात्मेत्यादिविशेषणचतुष्टयमुपात्त अहंकाररूपेणसर्वव्यापित्वेनसर्वात्मारुद्रःकिंनस्यादित्यतउक्तं हरिर्भगवानिति तथापिसूर्याद्यन्यतमःकिंनस्यादतउक्तमीश्वरइति ईशाद्रुद्राद्धरइतियोगेनतस्यरुद्रप्र सिद्धिरपिनिरस्तेतिज्ञातव्यं ५

---

१ तात्पर्यानुसारेणाह निद्रयेति निद्राऽविद्या बंधकप्रकृतिरित्यर्थः

एतदेवसर्वेवेदेतिहासपुराणेषुतात्पर्येणप्रतिपादितमितिदर्शयति एतावानिति अंतेमरणकालेनारायणस्मरणंयथास्यात्तथाबहुशास्त्राभ्यासःकर्तव्यइतिभावेनेत्यतोवाह एतावानिति सांख्यशास्त्रोक्तसा
रूयेनतत्त्वज्ञानेनयोगशास्त्रोक्तभगवत्पूजादियोगानुष्ठानेन तथास्वधर्मपरिनिष्ठयास्वविहितवर्णाश्रमोक्तस्वधर्मानुष्ठानेनचांतेमरणकालेनारायणस्मृतिरितियावानेतावानियानेवपुंसांपरउत्कृष्टोजन्मलाभो
जन्मनःसाफल्यमित्यन्वयः अतोवेदादिशास्त्रेषुश्रियमाणेनसर्वथानारायणस्मरणंकर्तव्यंनान्यदितिप्रतिपाद्यतइति अतःमक्तुःपरिहारःसुप्रसिद्धइतिसिद्धम् ६ सर्वथानारायणश्रवणादिकार्यमित्यत्रकैमु
त्यन्यायमाह प्रायेणेति मुनयःस्वस्वयोग्यज्ञानवंतोविधिनिषेधाभ्यांनिवृत्ताः निर्गुणोभगवान्तेनदीयमानत्वात्तत्संबंधिनिर्वाणंनैर्गुण्यं तत्स्थामुक्ता हरेर्गुणानुकथनेरमतइत्यन्वयः गुणान्स्मारं
स्मारंकथयंतइत्यस्मिन्नर्थेस्मेतिपदं कदाचिद्ध्यानाभिप्रायेणोक्तंप्रायेणेति अतोज्ञानार्थिभिर्निरंतरंहरिगुणश्रवणादिकार्यमितिकिंवाच्यमित्यर्थः ७ इदानींभागवतप्रतिपाद्यमर्थंतस्माद्भारतेत्यादिश्लोकत्र
येणाभिधायपुनस्तद्विस्तरेणवक्तुमुपक्रमते इदमिति बुद्धिसन्निहितत्वादिदमित्युच्यते ब्रह्मसंमितंवेदसमं । तदर्थव्याख्यानरूपत्वात् द्वापरादौकृष्णावतारापेक्षयाद्वापरेआदौच । ननुद्वापरस्या
दाविति । व्यासःषट्शतवर्षीयोधृतराष्ट्रमजीजनदितिवचनात् द्वापरांतेभारतकथाप्रवृत्तिकथनाच्च ८ नन्वस्तुभवतोभागवताध्ययनंतत्किमर्थमितितत्राह परिनिष्ठितइति यत्रयच्छ्रद्दधतायत्रयस्मिन्भा
गवतेप्रतिपादितमर्थंश्रद्दधतामितिवाअहंभागवतंनामयदाख्यानमधीतवान् । तत्तेतुभ्यमभिधास्यामीत्यन्वयः अभिधानेनिमित्तमाह महापुरुषिकइति पूर्णषड्गुणत्वात्पुरुषोभगवांस्तद्भक्ताःपुरुषिकास्ते

एतावान्सांख्ययोगाभ्यांस्वधर्मपरिनिष्ठया ॥ जन्मलाभःपरःपुंसामंतेनारायणस्मृतिः ६ प्रायेणमुनयोराजन्निवृत्ताविधिनिषेधतः ॥ नैर्गुण्यस्थारमंते स्मगुणानुकथनेहरेः ७ इदंभागवतंनामपुराणंब्रह्मसंमितम् ॥ अधीतवान्द्वापरादौपितुर्द्वैपायनादहम् ८ परिनिष्ठितोपिनैर्गुण्यउत्तमश्लोकलीलया ॥ गृहीतचेताराजर्षेआख्यानंयदधीतवान् ९ तदहंतेऽभिधास्यामिमहापुरुषिकोभवान् ॥ यत्रश्रद्दधतामाशुस्यान्मुकुंदेमतिःसती १० एतन्निर्विद्यमाना नामिच्छतामकुतोभयम् ॥ योगिनांनृपनिर्णीतंहरेर्नामानुकीर्तनम् ११ किंप्रमत्तस्यबहुभिःपरोक्षैर्हायनैरिह ॥ एकंमुहूर्तंविदितंघटतेश्रेयसेयतः १२ खट्वांगोनामराजर्षिर्ज्ञात्वेयत्तामिहायुषः ॥ मुहूर्तात्संगमुत्सृज्यगतवानभयंहरिम् १३

षांमध्येमहानितियस्तस्मादित्यर्थः स्थितप्रज्ञतयाकृतकृत्यस्यभवतोभागवताध्ययनंकिमर्थमितितत्राह परिनिष्ठितइति नैर्गुण्येमुक्तौपरिनिष्ठितः मुक्तिरस्यभवतीतिनिश्चयवानपि । उदरंसंशयःप्रोक्तःपरिनि
ष्ठाविनिश्चयइत्यभिधानात् । कथमनेनास्यपरिहारआयातइतितत्राह उत्तमश्लोकेति अनेनैवंविधमाहात्म्यादतिशयोभगवानित्युक्तंभवति ९ १० नकेवलंतवैवैतन्निर्णीतमपितुसर्वयोगिनामपीत्याह एत
दिति निर्विद्यमानानांविरज्यमानानांक्लेशैरितिशेषः अकुतोभयंमोक्षः एवंवैराग्यादिसाधनसामग्रीमतांयोगिनांहरेर्नामानुकीर्तनंयदेतत्तदंतेहरिस्मरणकारणमित्यर्थः ११ अनेनभागवताकर्णनमभिप्रे
तं तदत्यंताल्पायुष्ट्वेननघटतइतिशंकामाभूदित्याह किमिति हायनैर्वत्सरैःपरोक्षैरागामिभिः यतोयेनमुहूर्तेनहरिस्मरणाख्यश्रेयसेघटतेतदेकंमुहूर्तंघटिकाद्वयमपिपरमुत्तमंविदितंप्रख्यातम् १२ एतमर्थ
माख्यानेनद्रढयति खट्वांगइति नामशब्दःप्रख्यात्यर्थे इहमनुष्यलोके मुहूर्तात्पूर्वमायुषइयत्तांमर्यादांज्ञात्वाराज्यादिसंगमुत्सृज्यहरिमुद्दिश्येंद्रियाणिचदत्त्वाऽभयलक्षणंमोक्षंगतवानित्यन्वयः त्यागो
विहापितंदानमुत्सर्जनविसर्जनइत्यभिधानं अभयंपुरुषार्थरूपंहरिंगतवानितिवा १३

---

१ अत्रप्रायेणेत्यस्य कदाचित् इतिनार्थोग्राह्यः इतितात्पर्यमतमाह कदाचिदिति । २ अत्रनामशब्दोग्रंथपरः । सोहनामविदेवास्मीत्यादौग्रंथेप्रयोगदर्शनात् । हरिविषयग्रंथश्रवणादिकामितियावत् ।

तवतदपेक्षयानेकायुष्मान्नहृत्ताप:कार्यंइत्यतस्तत्सर्वंहरिचरणारविंदस्मरणविषयत्वेनकल्पयेत्याह तवापीति एतर्हीदानीं सप्तानामह्नांसमाहारःसप्ताहंजीवितावधिरायुष्यस्येयत्ता यत्तावदायुःतत्सर्वमपि सांपरायउत्तरकालोमुक्तिकालस्तत्संबंधियथाभवतितथा तावंतंकालंहरिचरणस्मरणगोचरमुपकल्पय भागवताकर्णनेनतात्पर्यंकुर्वित्यर्थः । सांपरायस्तुसंग्रामआपदागामिकालयोरितियादवः। मरणलक्षणापत्कालेहरिचरणस्मरणंयथाभवतितथातावतंकालंभागवताकर्णनंकुर्वितिवा १४ मरणकालंज्ञात्वाहरिस्मरणमिच्छतांवैराग्यंप्रथमसाधनमित्याह अंतकालइति आगतेस्वतःपरतोवाज्ञातेसति गतसाध्वसः देहनाशप्रयुक्तभयरहितः पुत्रादिस्नेहलक्षणःसंगः तद्विरोधिविवेकज्ञानलक्षणोऽसंगस्तेनशस्त्रेणतंदेहमनुयेस्त्रीपुत्रादयस्तेषुचस्पृहांछिंद्यादित्यन्वयः १५ अथकिंकर्तव्यमत्राह गृहादिति गृहात्प्रव्रजितःसंन्यासलक्षणवैराग्यंप्राप्तः धीरःप्रतिबंधकनिवर्तनसमर्थः पुण्यतीर्थजलाप्लुतोभागवतादिपुण्यशास्त्रजलस्नातस्तथागंगादिपुण्यतीर्थजलस्नातोनिर्धूतबाह्यांतमलःसन् शुचौशुद्धेविविक्तेदुर्जनसंगरहितेदेशेनात्युच्छ्रितंनातिनीचमितिविधिवत्कल्पितासनआसीनोभवेदितिशेषः १६ स्थिरासनस्यकृत्यमाह अभ्यसेदिति रेचकादिक्रमपरंपरयाप्राणायामेनजितश्वासःप्राप्तप्राणप्रसादः मनोयच्छेत् स्ववशंकुर्यादेवंजितमनस्कःसन् बीजंसर्वजगद्व्यंजकं शुद्धंपरंब्रह्मानुस्मरन् अकारादींस्त्रीन्वर्णान्विवृणोतीतित्रिवृदक्षरंब्रह्मवाचकत्वात्सर्वगतंपरमुत्कृष्टमोंकारंमनसाऽभ्यसेदावर्तयेदित्य

तवाप्येतर्हिकौरव्यसप्ताहंजीविताावधिः ॥ उपकल्पयतत्सर्वंयत्तावत्सांपरायिकम् १४ अंतकालेतुपुरुषआगतेगतसाध्वसः ॥ छिंद्यादसंगशस्त्रेणस्पृहांदेहेऽनुयेचतम् १५ गृहात्प्रव्रजितोधीरःपुण्यतीर्थजलाप्लुतः ॥ शुचौविविक्तआसीनोविधिवत्कल्पितासने १६ अभ्यसेन्मनसाशुद्धंत्रिवृद्ब्रह्माक्षरंपरम् ॥ मनोयच्छेज्जितश्वासोब्रह्मबीजमनुस्मरन् १७ नियच्छेद्विषयेभ्योऽक्षान्मनसाबुद्धिसारथिः ॥ मनःकर्मभिराक्षिप्तंशुभार्थेधारयेद्धिया १८ तत्रैकावयवंध्यायेदव्युच्छिन्नेनचेतसा ॥ मनोनिर्विषयंयुक्त्वाततःकिंचिन्नसंस्मरेत् ॥ पदंतत्परमंविष्णोर्मनोयत्रप्रसीदति १९ रजस्तमोभ्यामाक्षिप्तंविमूढंमनआत्मनः ॥ यच्छेद्धारणयाधीरोहंतियातत्कृतंमलम् २० यस्यांसंधार्यमाणायांयोगिनोभक्तिलक्षणः ॥ आशुसंपद्यतेयोगआश्रयंभद्रमीक्षतः २१

न्वयः १७ जाप्यमुक्त्वाध्यानप्रकारमाह नियच्छेदिति बुद्धिःसारथिर्यस्यसतथासत्पुरुषोजितेनमनसाऽक्षानिंद्रियाणिविषयेभ्योनियच्छेत्प्रत्याहरेत् प्रत्याहृत्यचसंस्कारवशाद्बहिर्मुखतयाकर्मभिराक्षिप्तंमनः स्वधियासारथिनाशुभार्थेपरममंगलार्थेहरौधारयेदित्यन्वयः १८ एवंहरौनियतचेतसोयोगिनोध्यानाभ्यासप्रकारमाह तत्रेति तत्रयुगपत्सर्वावयवध्यानाशक्तौ विषयैरव्युच्छिन्नेनाखंडितेनचेतसाएकावयवमेकैकावयवंश्रीपादादिलक्षणंध्यायेदेवमनायासेनस्मरणविषयंकुर्यात् तत्परिपाकमाह मनइति एवमभ्यासपाटवेनयुगपत्सर्वावयवस्मरणसमर्थःसंस्ततोनंतरंनिर्विषयंविषयेभ्योनिर्गत्यस्थितंमनस्तस्मिन्हरौसर्वावयवव्यापितयायुक्त्वानियुज्य यत्रमनःप्रसीदतिनिरतिशयंसुखंलभते तद्विष्णोःपरमंपदं समग्ररूपमेवस्मरेच्चतोन्यत्किंचिन्नस्मरेदित्यन्वयः १९ अखंडध्यानोपायमाह रजस्तमोभ्यामिति रजसाऽऽक्षिप्तमितस्ततोविषयैराकृष्टं । तमसाविमूढंकृत्याकृत्यज्ञानशून्यं आत्मनःस्वस्य मनः । धारणयातैलधारावदव्युच्छिन्नयास्मृत्यायच्छेद्विषयेभ्यआवृत्यध्यानमग्नंकुर्यात् । याधारणातत्कृतंरजस्तमोभ्यामाक्षिप्तंरागाविद्यादिमलंहंतितत्यजेत्यन्वयः २० नकेवलंमलनाशोधारणायाःफलंकिंतुनिरंतरंभक्तिलक्षणयोगश्चेत्याह यस्यामिति । यस्यांधारणायां । सर्वजगदाश्रयंभद्रंभगवंतमीक्षमाणस्यतयोयोगिनोभक्तिलक्षणोयोगआशुसंपद्यतइत्यन्वयः । भदिकल्याणइतिधातोः । कल्याणंमंगलं मंगलंभगवान्विष्णुरितिवचनम् २१

परीक्षिद्विशेषबुभुत्सयाशुकंपृच्छति यथेति अत्रयथायत्रयादृशीतियच्छब्दाःप्रश्नार्थाः । यतश्चोदेतिसूर्यः । यच्छब्दस्तुपरामर्शेप्रश्नार्थेचापिभण्यतइत्यभिश्रुत्यभिधानाभ्यांनिश्चितत्वात् । तथाचयथाकथं यत्रकुत्रयादृशीकीदृशीतिसपद्यतइत्यर्थः २२ तत्रप्रथमतोयथाप्रश्नंपरिहरति जितासनइति यत्रेत्यनंतरंप्रश्नंप्रत्याह स्थूलइति २३ क्रमप्राप्तत्वाद्यादृशीतिप्रश्नंप्रतिवक्ति विशेषइति यदिदंभूतंभव्यंभवच्चज डाजडंतद्विश्वंयत्रांडकोशेदृश्यते सोयंस्थवीयसांस्थूलतराणांसकाशात्स्थविष्ठःस्थूलतमोविशेषआंडकोशःशिलालक्षणप्रतिमावत्तस्यतदंतस्थस्यहरेर्देहः नतुसाक्षाद्देहइत्यन्वयः । तदुक्तं शिलावत्तस्यदे होयमंडकोशस्तुसावृतिरिति २४ पृथिव्यादिपंचभूताहंकारमहत्तत्त्वसंज्ञैःसप्तभिरावरणैःकवचस्थानीयैःसंयुतेबाहिरावृते । शरीरेशीर्यमाणत्वात् । तस्मिन्नांडकोशेयोसौविशेषेणप्रकाशनाद्वैराजाख्यां डांतर्वर्तित्वात्सर्वतोवरत्वाद्वैराजाख्यःपुरुषः पुरुबहुकर्मफलंसनोतिददातीतिपुरुषः असौभगवान्धारणाश्रयः तद्विषयतयाकृताधारणामनोमलंहरतीत्यन्वयः अंडकोशोविराट्प्रोक्तोविशेषेणप्रका शनात् । वैराजस्तद्गतइत्यादेः २५ उपदिष्टरूपध्यानप्रकारमाह पातालमित्यादिना अंडाख्यप्रतिमायाः पातालादिसत्यलोकपर्यंतालोकाः पादमूलादिशिरोंतान्यंगानि नत्वंडस्थितस्यतस्यह रेस्तान्यंगानि किंतर्हि । तत्पादमूलाद्यवयवेभ्योजातानितदाश्रितानिवातानितेषांकेवलंचिदानंदाद्यात्मकभगवदवयवैरभेदःशंकनीयः । एतस्यपादमूलमित्याद्यभेदोक्तिस्तुब्राह्मणोस्यमुखमासीदित्या

राजोवाच ॥ यथासंधार्यतेब्रह्मन्धारणायत्रसंमता ॥ यादृशीवाहरेदाशुपुरुषस्यमनोमलम् २२ ॥ श्रीशुकउवाच ॥ जितासनोजितश्वासोजितसंगोजि तेंद्रियः ॥ स्थूलेभगवतोरूपेमनःसंधारयेद्धिया २३ विशेषस्तस्यदेहोयंस्थविष्ठश्चस्थवीयसाम् ॥ यत्रेदंदृश्यतेविश्वंभूतंभव्यंभवच्चयत् २४ आंडकोशे शरीरेस्मिन्सप्तावरणसंयुते ॥ वैराजःपुरुषोयोसौभगवान्धारणाश्रयः २५ पातालमेतस्यहिपादमूलंपठंतिपार्ष्णिप्रपदेरसातलम् ॥ महातलंविश्वसृ जःसुगुल्फौतलातलंवैपुरुषस्यजंघे २६ द्वेजानुनीसुतलंविश्वमूर्तेरूरुद्वयंवितलंचातलंच ॥ महीतलंतज्जघनंमहीपतेनभस्तलंनाभिसरोगृणंति २७ उरः स्थलंज्योतिरनीकमस्यग्रीवामहर्वदनंवैजनोस्य ॥ तपोरराटिंविदुरादिपुंसःसत्यंतुशीर्षाणिसहस्रशीर्ष्णः २८ इंद्रादयोबाहवआहुरस्यकर्णौदिशःश्रोत्र ममुष्यशब्दः ॥ नासत्यदस्रौपरमस्यनासेघ्राणंचगंधोमुखमग्निरिद्धः २९ द्यौरक्षिणीचक्षुरभूत्पतंगःपक्ष्माणिविष्णोरहनीउभेच ॥ तद्भ्रूविजृंभःपरमेष्ठि धिष्ण्यमापोस्यतालूरसएवजिह्वा ३०

दिवद्युज्यत्ते । एवमेवेंद्रादिदेवादीनामत्रतदवयवेंद्रियगोलकाद्यभेदकथनंतत्तदंगादिभ्यउत्पन्नत्वात्तदाश्रितत्वात्तदधीनत्वाभिप्रायंनतुस्वरूपैक्याभिप्रायम् । तेषांस्वतस्तेभ्योभिन्नत्वात्प्रतिमापेक्षयांगानि भूरादीनिस्वरूपतइत्यादेः तथाचाक्षरयोजना एतस्यांडांतर्वर्तिनोहरेःपादमूलंपातालंपठंतीत्यन्वयः चिदानंदाद्यात्मकात्पादमूलाज्जातंतदाश्रितंचेतिज्ञानिनःशिष्टेभ्यउपदिशंति । उपदिष्टारत थोपासतेचेत्तत्राप्येवमेवानुसंधेयम् । हिशब्दउक्तार्थप्रमाणप्रसिद्धिप्रकाशकः पार्ष्णिश्चप्रपदंचपार्ष्णिप्रपदे पार्ष्णिःपादस्यपृष्ठभागःप्रपदंपादाग्रं विश्वंसृजतीतिविश्वसृट्तस्यगुल्फौप्रशस्तलक्षणापिंडकाख्य पर्वणीमहातलंपठंतीतिपूर्वेणान्वयः २६ अधोभागेवितलमुपरिभागेत्वतलमितिविभागः । जघनंकटितलं एतत्स्मरणंविशेषात्त्वयाकार्यमित्यतोमहीपतइतिसंबोधितं अगाधत्वप्रब्रह्मजनकपद्मानिदान त्वाभिप्रायेणनाभिसरइत्युक्तं नभस्तलंभुवर्लोकः २७ ज्योतिरनीकंज्योतिश्चक्रस्थानंस्वर्लोकः महर्लोकोस्यहरेर्ग्रीवेतिगृणंति । जनोजनलोकः । तपस्तपोलोकः रराटिंललाटं २८ इंद्रादयोलोक पालास्तस्यबाहवइत्याहुः दिशःकर्णौगोलकस्थानीयौ । अमुष्यहरेःश्रोत्रमिंद्रियं शब्दइति । नासत्यदस्रावश्विनौनासेनासिके गंधोभूमेर्गुणः घ्राणंगंधग्राहींद्रियंगंधजनकमाहुरित्यर्थः इद्धोदीप्तः २९ द्यौर्द्युलोकः । अक्षिणीगोलके पतंगः सूर्यः मनुष्याणामहनीदेवादीनामहनीइतिउभेचविष्णोःपक्ष्माणिततोजातेतदाश्रितेच परमेष्ठिधिष्ण्यंब्रह्मलोकः मधुरादिरसः ३०

गायत्र्यादिच्छंदांसिगिरोवचनानिगृणंति अर्यमेंदूसूर्यचंद्रौदंष्ट्राद्वयाज्जातावितिशेषः बहुरूपत्वात्पुनर्वचनं। बहंगत्वंबहुत्वतइतिवचनात् उडुगणानक्षत्राणि द्विजानिदंताः अत्रप्रगृह्यसंज्ञाऽभावोलिंगव्य त्ययश्चवैलक्षण्यद्योतनायेतिज्ञातव्यं मायामोहनशक्तिःहासोहासादभिव्यक्ता सप्तसुप्रथमेतिसूत्रात्। दुरंतसर्गोऽनवसानाविश्वसृष्टिः ३१ व्रीडालज्जा अधरोऽधरोष्ठः। एवशब्दोन्ययोगव्यवच्छेदकः कःप्र जापतिः मेढ्रमिंद्रियं वृषणौबीजद्वयंमित्रइत्युपलक्षणंवरुणश्च ३२ विश्वातत्तत्पदार्थेषुप्रविष्टातनुर्यस्यसतथा तस्य विश्वंतनुःप्रतिमायस्यसतथा तस्येतिवा वीर्यंरेतोन्नप्राणिभोग्यं गतिर्गमनं तस्माद्वयआयुःप्राणिनांजीवनावधिलक्षणमुत्पन्नं कर्मव्यापारः तस्मात्सत्त्वादिगुणानांप्रवृत्तिक्रमः ३३ संध्येद्वे अव्यक्तंमूलप्रकृतिं मनोभिमानत्वाच्चंद्रस्यकामादिनानाविकारगृहत्वमुपचारः मनो मनसोजातः ३४ विज्ञानशक्तिर्विरिंचं गिरिकैलासंत्रायतइतिगिरित्रोयोत्राणंयस्यसतथेतिवा गिरित्रोरुद्रः सर्वात्मनः सर्वस्वामिनः अंतःकरणमहंकारःतस्माज्जातःनखानिनखेभ्यः। गर्दभाद्वडवाया मुत्पन्नाऽश्वतरी श्रोणिदेशेस्थितास्तस्माज्जाताश्च ३५ वचांसिलौकिकवैदिकानिविचित्रंतस्यव्याहरणशब्दःव्याहरणाश्रितानितज्जातानिच मनुर्वायुः तस्यमनीषाबुद्धिः। तेवायवेमनवेबाधितायेतिश्रु तिः। मनुःस्वायंभुवोवा मनीषाविचारःभगवद्विचारशक्तिजातत्वात्स्मृतिकर्तृत्वंमनोर्निवासोनिवसनंकर्मजनितत्वात् गंधर्वादीनामुत्पादिकेस्वरस्मृतीयस्यसतथा स्वरःषड्जादिलक्षणः स्मृ

छंदांस्यनंतस्यगिरोगृणंतिदंष्ट्रायमेंदूडुगणाहिजानि ॥ हासोजनोन्मादकरीचमायादुरंतसर्गोयदपांगमोक्षः ३१ व्रीडोत्तरोष्ठोधरएवलोभोधर्मस्तनोधर्म पथश्चपृष्ठम् ॥ कस्तस्यमेढ्रंवृषणौचमित्रःकुक्षिःसमुद्रागिरयोस्थिसंघाः ३२ नद्योस्यनाड्योथतनूरुहाणिमहीरुहाविश्वतनोर्नृपेंद्र ॥ अनंतवीर्यःश्वसितं मातरिश्वागतिर्वयःकर्मगुणप्रवाहः ३३ ईशस्यकेशान्विदुरंबुवाहान्वासस्तुसंध्येकुरुवर्यभूम्नः ॥ अव्यक्तमाहुर्हृदयंमनस्तुसचंद्रमाःसर्वविकारकोशः ३४ विज्ञानशक्तिंमहिमामनंतिसर्वात्मनोंतःकरणंगिरित्रः ॥ अश्वाश्वतर्युष्ट्रगजानखानिसर्वेमृगाःपशवःश्रोणिदेशे ३५ वचांसितव्याहरणंविचित्रंमनुर्मनीषाम नुजोनिवासः ॥ गंधर्वविद्याधरचारणाप्सरःस्वरस्मृतीरसुरानीकवीर्यः ३६ ब्रह्माननःक्षत्रभुजोमहात्माविड्रूरुरंघ्रिश्रितकृष्णवर्णः ॥ स्वाहास्वधावीर्यगु णोपपन्नोहव्यात्मकःकर्मवितानयोगः ३७ इयानसावीश्वरविग्रहस्ययःसन्निवेशःकथितोमयाते ॥ संधार्यतेस्मिन्वपुषिस्थविष्ठेमनःस्वबुद्ध्यानयतोस्तिकिं चित् ३८ ॥ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेप्रथमोऽध्यायः ॥ १ ॥ श्रीशुकउवाच ॥ एवंपुराधारणयात्मयोनिर्नष्टास्मृतिंप्रत्यवरुह्यतुष्यन् ॥ तथाससर्जेदममोघदृष्टिर्यथाप्ययात्प्राग्व्यवसायबुद्धिः १

तिरतीतादिविषया असुरानी कस्यजनकंवीर्यंयस्यसतथा ३६ ब्रह्मणः ब्राह्मणजातेर्जनकमाननंयस्यसतथा क्षत्रजातेरुत्पादकौभुजौयस्यसतथा विशांजनकौऊरूयस्यसतथा। अंघ्रिश्रितःकृष्णवर्णःशूद्रजातिर्यस्यसतथा दे वपितृभ्योविनियुज्यमानस्वाहास्वधातयोरुत्पादकोवीर्यगुणोरेतोगुणस्तेनोपपन्नः हव्यजनकआत्मामध्यदेहोयस्यसतथा अग्निष्टोमादिकर्मवितानस्योत्पादकोयोगउपायोयस्यसतथा वितानविस्तारः ३७ उक्तार्थमुपसंहरति इयानिति ईश्वरविग्रहस्यवैराजाख्यहरिदेहस्ययःसन्निवेशोऽवस्थितिविशेषःसइयानित्थंभूतोमयातेतवकथितः यतोऽस्मादीश्वरविग्रहात्स्थविष्ठमुत्तमंचनास्ति। योगिभिर्मनोस्मि न्स्थविष्ठेसर्वोत्तमेवपुषिस्वबुद्ध्यासंधार्यते। मनोनैर्मल्यायेतिशेषइत्यन्वयः ३८ ॥ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेविजयध्वजकृतटीकायांप्रथमोऽध्यायः ॥ १ ॥ एवंवैराजाख्यस्थूलरूपस्य धारणाश्रयत्वमुक्त्वाऽस्मिन्नध्यायेतत्तद्धृदयकमलकर्णिकांतर्वर्तिनोहरेरंगुष्ठमात्ररूपस्यधारणाविषयत्वंतदुपासकानांफलंचोपदिशति। तत्रप्रथमतोधारणायाक्षिप्रप्रवृत्तयेकुत्रकस्यदृष्टफलेयंधारणेति शंकाशंकुमुन्मूलयन्ब्रूहि यद्वा विपर्ययमितिप्रश्नंपरिहरति एवमित्यादिना आत्मापरमात्मायोनिःकारणंयस्यसतथासब्रह्मा पुराआदिसृष्टौकालेननष्टातिरोहिताप्राक्कल्पविषयास्मृतिमेवमुक्तधारणयाप्रत्य

वक्त्राऽङ्कुरीकृत्यमतिलभ्यतुण्यत्नलंबुद्धिंगच्छन्व्यवसायेजगत्सर्जनलक्षणोद्योगेबुद्धिर्यस्यसतथा ततएवधारणायाएवामोघदृष्टिः । अप्ययात्मल्पात्पूर्वंयथावस्थितंतथेदंजगत्ससर्जेत्यन्वयः ब्रह्मणोदृष्ट फलत्वादिदंविश्वसनीयंतितिज्ञापते १ वाङ्मनोऽगोचरस्यकथंधारणावलंबनत्वमत्राह शब्दस्येति उक्तप्रकारेणश्रोतव्यादित्वेनविपश्चितांसंमतत्वात् स्वतन्त्रत्वात् ब्रह्मादिसर्वजगत्स्रष्टृत्वात्सर्वांतःस्थितत्वा त्सर्वस्यतदधीनत्वात्सर्वगुणसंपूर्णत्वाच्चशब्दस्यब्रह्मणोवेदादिसर्वशब्दराशेरेषहरिः पथाविषयोमुख्यवाच्यइत्यन्वयः । इंद्रादिनाम्नांपुरंदरादिष्वेवरूढत्वात्हरेस्तन्नामवाच्यत्वेरूढेःकाप्यप्रयोजकत्वमत्रा ह यन्नामभिरिति मायामयईश्वरेच्छानिर्मितत्वात्तदधीनेसंसारेशयानः परिश्रमन्किमप्यजानन्वर्तमानोतएववासनयानानाकर्मवासनयानानायोनिषुपरिभ्रमन्योजीवस्तस्यधीर्यत्पुरंदरादिकमिद्रादिनाम भिध्यायति तत्रपुरंदरादावर्थानिद्रादिनाम्नामनुग्रहतपरमैश्वर्यादिलक्षणान्नविंदतेअलब्धुद्धिंनप्राप्नोति किंचतदुपास्त्यातेभ्यःपुरुषार्थांश्चनलभते । कुतइत्यतउक्त अपार्थैरिति तत्रैश्वर्याद्यर्थानामसंभवात् अ तोहरिरेवपरमैश्वर्यादिगुणाकारत्वेनाभिधेयइतिसएवस्मर्तव्यइति अन्यत्सर्वमस्मर्तव्यप्राधान्येनेतिभावः अनुपसर्गोपिपक्षिप्रसपविधानाद्ध्यायतीतिधीज्ञानाश्रयःपुरुषोवापादित्यस्याव्ययत्वेनापार्थैरित्यने नसंयोज्यपदपार्थैर्यस्मिन्पुरदरादावपार्थैरिंद्रादिनामभिःपुरंदरादिकंध्यायतितत्रपुरंदरादावितिवा सर्वनामायतोविष्णुस्तदन्यार्थान्नतुस्मरेदितिस्मृतिप्रसिद्धिंहिशब्देनाह २ सर्वशब्दानांविष्णवैकविषय त्वेविदुषामभिवादनादिसर्वव्यवहारोच्छेदप्रसंगइतितत्राह अतइति एवंसर्वनामार्थतयाहरिरेवध्येयस्तद्व्यवहार्यश्चयतोऽतःकविःसर्वज्ञः । अप्रमत्तोजागरणशीलोनाम्नांहरिविषयस्वमविस्मरन्नित्यर्थः अत

**शब्दस्यहिब्रह्मणएषपंथायन्नामभिर्ध्यायतिधीरपार्थैः ॥ परिभ्रमंस्तत्रनविंदतेऽर्थान्मायामयेवासनयाशयानः २ अतःकविर्नामसुयावदर्थःस्यादप्रमत्तो व्यवसायबुद्धिः ॥ सिद्धेन्यथार्थनयतेततत्तत्परिश्रमंतत्रसमीक्षमाणः ३ सत्यांक्षितौकिंकशिपोःप्रयासैर्बाहौस्वसिद्धेह्युपबर्हणैःकिम् ॥ सत्यंजलौकिंपु रुपर्णपात्रैर्दिग्वल्कलाभेसतिकिंदुकूलैः ४ चीराणिकिंपथिनसंतिदिशंतिभिक्षांनोवांघ्रिपाःपरभृतःसरितोप्यशुष्यन् ॥ रुद्धागुहाःकिमवधूतसुहृन्नकृष्णःक स्माद्भजंतिकवयोधनदुर्मदांधान् ५**

एवंव्यवसायबुद्धिर्निश्चयबुद्धिर्नामसुहरीतराविषयेषुघटादिषु अभिवंदनादिनायावदर्थः स्वप्रयोजनंयस्यसतथास्यात् । नातोधिकप्रयोजनइत्यर्थः अन्यथाघटादिलोकविषयव्यवहारमंतरेणार्थेस्वप्रयोज नेसिद्धेस्वयमेवसंपन्नोनतत्रयतेतेत्यन्वयः कुतोत्राह तत्तदिति तत्तत्पदार्थेषुतत्तत्परिश्रममर्थपूर्त्यभावेनमनःक्लेशंसमीक्षमाणइत्यन्वयः ३ इदानींस्वतःसिद्धिप्रकारंदर्शयति सत्यामिति देवनिर्मितायां क्षितौसत्यांकशिपोःशय्यायाःसंपादनेप्रयासैःकिंनकिमपिप्रयोजनम् । शरीरयात्रानिर्वाहस्यद्रव्यांतरेणासिद्धत्वादितिभावः । बाहौस्वसिद्धेस्वतोऽनायासेनसंपन्नेसतिउपबर्हणैःशिरःपीठैरुच्छीर्षकैःकिम् । करांजलौसतिपुरुभिर्विस्तीर्णैःपर्णपात्रैःकिम् । बर्हपर्णदलंपत्रमित्यभिधानं । दिशामेववस्त्राणांलाभेसतिदुकूलैर्निष्कापाद्यक्षौमादिवसनैःकिं ४ ननुभवादृशानांयोगिनांक्षित्यादिनाशरीरयात्रासिद्धावप्यप रिपक्वयोगिनांपुंसांकथमुपभोगःसंपद्यतइत्यत्राह चीराणीति पटचीराणिगृहिभिर्देयानि पथितोरणे दरिद्राणांचभिक्षूणामाच्छादनकराणिचेतिस्मृतेः पथितोरणेगृहस्थैर्निहितानिचीराणिजीर्णवस्त्रा णि । मूषकादिप्रभिन्नानिवा । नसंतिकिं भोजनार्थमितिचेत्परान्फलपाकादिनाबिभ्रतीतिपरभृतः अंघ्रिपावृक्षाःफलादिनानोदिशंतिवादिशंत्येवउदकार्थमितिचेत्सरितःस्यंदमानानद्योऽशुष्यन्नापिकिंना शुष्यन्नित्यर्थःशयनार्थमितिचेत् गुहारुद्धाःपिहिताःकिं केनचिदितिशेषः गुहासुसिंहादिभयेनकथंवासःसंपद्यतइतितत्राह किमिति कृष्णोवधूतानांधूलिधूसरांगानांयोगिनांसुहृन्नकिम् सुहृदेव अतोव ज्ञाद्याशयाकवयोधनादिदुर्मदेनांधान्विवेकचक्षुरहितान् राजादीन्कस्माद्भजंतिनभजंत्येव अतोमुमुक्षुणायदृच्छयालब्धाशनादिनाभाव्यमितिभावः ५

१ हरिः इंद्रादिशेषशब्दवाच्यः तथाध्यानेनपुरुषार्थप्रदत्वात् । व्यतिरेकेणेंद्रादिवदित्यनुमानमत्राभिप्रेतम् ॥ नविंदतेर्थानित्यनेनोक्तहेतोः सूचनमत् ॥ इतिपादुपत्यं

इदानीमुक्तानुष्ठानपरिपाकप्रकारमाह एवमिति एवमुक्तप्रकारेणयदृच्छयालब्धाशनादिनावृत्तिंहष्टप्रसन्नस्यस्वतःस्वतंत्रस्यहरेः प्रसादात्स्वचित्तेस्वाधीनतयावर्तमानेसतिभगवानैश्वर्यादिगुणसमुद्रोऽनं तःपरिच्छेदशून्यः आत्मापरमात्मादेहपुत्रादिभ्योत्यंतंप्रियोर्थइतिकृत्वानिर्वृतःसमुद्भूतरोमांचोनियतार्थएतंमितःप्रेत्याभिसंभावितास्मीतिनिश्चितार्थःपुरुषस्तंभगवंतंभजेत । कदाचिदपितद्भजनंनमुंचेत् । ततःकिंफलमत्राह संसारेति यत्रयस्मिन्सेव्यमानेसेवकस्यसंसारहेतूनामविद्यादीनामुपरमः । अविद्यादीनांसद्भावेसोस्तीतिशक्यशंका । तएवनसंतियतइतिशंकमानोऽमुरगक्रांतेरितिभावः तदेतत्प्रेयइ त्यादिश्रुतिसिद्धंहरेः प्रियार्थत्वंच । नकेवलंसंसारहेतूपरमःफलं । किंतुनिर्दुःखानंदानुभवलक्षणमोक्षप्राप्तिश्चेतिचशब्दः ६ भजनापरपर्यायोपासनंगुणोपसंहारेणकार्यमितियदतस्तद्गुणकथन पूर्वकंतदेवोपासनंस्पष्टीकुर्वन्विपक्षेबाधकमाह ससर्वविदिति प्राणएवैतस्मिन्पुरेजाग्रतीतिश्रुतेःपंचवृत्तिरेकोमुख्यप्राणएवयथासुप्तजनस्येक्षिताद्रष्टा । तथासहरिःसर्वान्वेत्तीतिसर्ववित् हृदिस्थित्वानुभूय थेष्टानंदानुभवनात् सर्वोगुणपूर्णः आत्मास्वामीत्येवंगुणानुपसंहृत्यसत्यंसर्वतःसारमानंदनिधितंविष्णुंभजेतोपासीत आधिव्याध्यादिसमुद्भावेप्युपासनंनहातव्यमित्याशयेनोक्तंसर्वात्मनेति अतोन्यतः परमात्मानुपासनेपिआत्मघातः अहितकरणादिनास्वात्महननारूपदोषापत्त्यानित्यदुःखतमप्राप्तिःस्यादित्यन्वयः चशब्दस्तत्तद्योग्यतानुसारेणेत्यस्मिन्नर्थे यथैकस्तुबहून्सुप्तानसुप्तःपश्यतिप्रभुः यथेष्टम दनाद्विष्णुरनुभूःपरिकीर्तितइत्यादेरुक्तएवार्थइति । स्वेच्छयानुकूलविग्रहग्रहणाद्वाऽनुभूः अनेनप्राणेनदत्तानिचेष्टालक्षणानिकर्माणीत्यानंदशब्देनकर्माण्युच्यतेतेषांफलपर्यंतंनिधायकत्वेननिधिपाल

एवंस्वचित्तेस्वतएवसिद्धआत्माप्रियोर्थोभगवाननंतः ॥ तंनिर्वृतोनियतार्थोभजेतसंसारहेतूपरमश्चयत्र ६ ससर्वविद्व्यनुभूश्चसर्वआत्मायथासुप्तजने क्षितैकः ॥ तंसत्यमानंदनिधिंभजेतसर्वात्मनातोन्यतआत्मघातः ७ कस्तंत्वनादृत्यपरानुचिंतामृतेपशुत्वमसतीनामयुंज्यात् ॥ पश्यन्जनंपतितंवैत रण्यांस्वकर्मजान्परितापान्जुषाणम् ८ केचित्स्वदेहांतर्हृदयावकाशेप्रादेशमात्रंपुरुषंवसंतम् ॥ चतुर्भुजंकंजरथांगशंखगदाधरंधारणयास्मरंति ९ प्रस न्नवक्त्रंनलिनायतेक्षणंकदंबकिंजल्कपिशंगवाससम् ॥ लसन्महाहारहिरण्मयांगदंस्फुरन्महारत्नकिरीटकुंडलम् १०

त्वात्स्वामित्वाद्वाऽऽनंदनिधिर्हरिस्तंच ७ भगवदुपासनामकुर्वाणस्यपशोरपिवैलक्षण्यंनास्तीत्याह कस्तमिति नरकेविगततरणत्वाद्वैतरणीनामनदीपातस्यांहेरनुपासनारूपदोषात्पतितंस्तकर्मजा न्स्वकृतकर्मसमुद्भूतान्परितापान्सर्वतोदिशमायातान्दुःखविशेषान्जुषाणंभुंजानंजनंगुरुशास्त्रोपदेशदृष्ट्यापश्यंस्तुशब्दसूचिततादृशदु सनिवर्तकालंबुद्धिगोचरसुलभदंहरिंचपश्यन्कोविवेकीतंभगवंत मनादृत्यासतीमशुभांपरानुचिंतामितरविषयानुपास्तिलक्षणांस्मृतियुंज्यात् पशुत्वंविवेकबुद्धिराहित्यमृते । यदियुंज्यात्तर्हिसपशुरेवनविवेकीत्यन्वयः चतुर्वेदापियोविप्रोवासुदेवंनाविंदति । वेदभारभराक्रां तःसवैब्राह्मणगर्दभइति ८ योग्यतातारतम्येनाधिकारिणांबहुत्वात्स्थूलरूपोपासनयोग्यानांतदुपास्तिमभिधायाधुनास्वदेहहृदयकमलकर्णिकानिकेतनात्मोपासनायोग्यानां तदुपासनांविधत्ते केचिदि ति केचिदात्मोपासनायोग्याःस्वदेहांतर्हृदयावकाशेवसंतंप्रादेशमात्रंप्रादेशपरिमाणम् । कंजंपद्मंरथांगंसुदर्शनंशंखंपांचजन्यंगदांकौमोदकींधारयतीतिकंजरथांगशंखगदाधरस्तं धारणयातैलधारावदखं डितमनोवृत्त्यास्मरंतीत्यन्वयः ९ श्लोकचतुष्टयेनतमेवविशिनष्टि प्रसन्नवक्त्रमित्यादिना नलिनवद्रक्तपद्मदलवदायतेदीर्घेईक्षणेयस्यसतथातं कदंबःकृष्णप्रियस्तरुस्तस्यपुष्पस्यकिंजल्कमंकुरविशे षस्तद्वत्पिशंगंपीतंवासोयस्यसतथातं लसन्महाहारश्चहिरण्मयांगदश्चेतिलसन्महाहारहिरण्मयांगदस्तम् । स्फुरंतिशोभमानानिमहांतिचरत्नानितैर्युक्तंकिरीटंकुंडलेचयस्यसतथातम् १०

१ कृतश्चरमदेहात् प्रेत्यमृत्वा एतंहरिं अभि आभिमुख्येन संभावितास्मि सम्यक् यथायोग्यंप्राप्तोभविष्यामीतिनियतार्थइति तात्पर्यदीपिका।

उन्निद्रस्य विकसितस्य हृत्पंकजस्य कर्णिकाख्यालये योगेश्वरैः सनकादिभिरास्थापितौ पादपल्लवौ यस्य स तथा तं श्रीरेवलक्षणं चिह्नं यस्य वक्षसि स तथा तं कौस्तुभात्समुद्राज्जातं कौस्तुभं तेन रत्नेन युक्ता कंधरा यस्य स तथा तं अम्लानानां नवपल्लवदलानां लक्ष्मीर्यस्याः सा तथा तया ११ मेखलया कांच्या अंगुलीयकैरंगुलीभूषणैः महांति धनानि येषु तैर्महाधनानि तैः स्निग्धाश्चामलाश्च तैः कुंचिताश्च ते नीलाश्च कुंतलास्तैर्विरोचमाने आनने यो हासस्तेन पेशलं सुंदरम् १२ अदीनलीलयोद्भूताभ्यां हसितेक्षणाभ्यामुल्लसंत्योर्भ्रुवोर्भंगेन स्फुरणविशेषेण संसूचितो भूयाननुग्रहो येन स तथा तं । ईक्षेत चिंतयेत । चिंतामयं चिंताप्रधानं यस्मात्संचिंतितो विष्णुर्धियं ददात्यजड इत्यादेः कियंतं कालं चिंतनमत्राह यावदिति यावद्धारणया समग्रांगे मनोऽचलमवतिष्ठते तावदिति शेषः १३ सर्वांगस्मरणाशक्तस्य स्मरणप्रकारमाह एकैकश इति ध्यानेन जितमनाः यासेन ध्यानविषयं स्थानमवयवमपोह्य वशीकृत्य परं परमजितमजितमनभ्यस्तमवयवं पादमारभ्य यावद्धसितं पुष्पितं वनमिति वद्धासेन विकसितं मुखं हसितमिति लभ्यते । मुखपर्यंतं सांगोपांगमविधिया मनो धारयेत् । यथा यथा धीः शुध्यति सर्वांगध्यानक्षमा भवति तथा तथाभ्यस्तं कुर्यादतः सर्वांगध्यानासामर्थ्ये तावत्पर्यंतमेकैकावयवमनुभावयेदित्यर्थः १४ इममेवार्थमुपसंहरति यावदिति परा ब्रह्मादयोऽप्यवरा यस्मात्स परावरस्तस्मिन् । द्रष्टरि सर्वसाक्षिणि । विश्वेश्वरे हरौ । यावत्सर्वोत्तमो मम महोपकारकोऽत एव सर्वतः प्रियतम इति ज्ञानपूर्वकप्रेमलक्षणभक्तियोगो भक्ति

उन्निद्रहृत्पंकजकर्णिकालये योगेश्वरास्थापितपादपल्लवम् ॥ श्रीलक्षणं कौस्तुभरत्नकंधरमम्लानलक्ष्म्या वनमालयांचितम् ११ विभूषितं मेखलयांगुलीयकैर्महाधनैर्नूपुरकंकणादिभिः ॥ स्निग्धामलैःकुंचितनीलकुंतलैर्विरोचमानाननहासपेशलम् १२ अदीनलीलाहसितेक्षणोल्लसद्भ्रूभंगसंसूचितभूर्यनुग्रहम् ॥ ईक्षेत चिंतामयमेनमीश्वरं यावन्मनो धारणयावतिष्ठते १३ एकैकशोंगानि धियानुभावयेत्पादादि यावद्धसितं गदाभृतः ॥ जितं जितं स्थानमपोह्य धारयेत्परं परं शुध्यति धीर्यथा यथा १४ यावन्न जायेत परावरेऽस्मिन्विश्वेश्वरे द्रष्टरि भक्तियोगः ॥ तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत १५ स्थिरं सुखं चासनमास्थितो यतिर्यदा जिहासुरिममंग लोकम् ॥ काले च देशे च मनो न सज्जेत्प्राणान्नियच्छेन्मनसा जितासुः १६ मनः स्वबुद्ध्यामलया नियम्य क्षेत्रज्ञ एतां निनयेत्तमात्मनि ॥ आत्मानमात्मन्यवरुध्य धीरो लब्धोपशांतिर्विरमेत कृत्यात् १७

क्ष्यो ध्यानप्रापको न जायेत तावत्पर्यंतं पातालमूलमित्यादिनोक्तं सर्वलोकदेवाद्याधारं । पुरुषस्य । स्थवीयोऽतिस्थूलं रूपं स्मरेत । तत्रापि निरंतरध्यानासक्तः सन् नित्यक्रियावसाने प्रयतः प्रयत्नवान् स्मरेतेत्यन्वयः १५ इदानीमुक्तविद्योपासनाजनितज्ञानेनापरोक्षीकृतपरमात्मतत्त्वस्य तत्प्रसादाद्विज्ञातब्रह्मादितत्त्वस्य ज्ञानिनो यदा देहत्यागेच्छा तदा स्वदेहगतेंद्रियाद्यभिमानिदेवतालयक्रमणपूर्वकं मोक्षप्रकारमाह स्थिरमिति यतिर्निर्जितेंद्रियग्रामोऽपरोक्षज्ञानी इमं लोकं देहं यदा जिहासुस्त्यक्तुमिच्छति तदा यथा सुखं भवति तथा स्थिरमचलमासनमास्थितः काले देशे च कालस्थेषु देशस्थेषु च विषयेषु यथावन्मनो न सज्जेत् सक्तं न कुर्यात् अथ मनसा स्ववशेन प्राणान् विषयाननुधावंतींद्रियाणि च नियच्छेत् ततः आहरेदाहृत्य च प्राणान्नियच्छेत् प्राणायामान् कुर्याद्यथा जितासुर्भक्त्या प्राप्तप्राणप्रसाद इंद्रियप्रेरकान् दिशादिदेवान् मनोभिमानिनींद्रे नियच्छेत् इंद्राधीनान् चिंतयेत् १६ मनश्च मनोभिमानिनमिंद्रं चामलया बुद्ध्या बुद्धिदेवतया उमया नियम्य तदधीनं स्मृत्वैतां बुद्धिदेवतामुमां क्षेत्रज्ञे जीवात्मनि अभिमानिहरौ निनयेत् नितरां तदधीनां चिंतयेत् तं क्षेत्रज्ञमात्मनि देहमध्यस्थे हरौ निनयेत् तदैक्येन चिंतयेत् तं देहगतमात्मानं हरिमात्मनि सर्वगते हरौ अवरुध्य तदेकीभावेन संचिंत्य देहाद्युत्क्रम्य लब्धोपशांतिः प्राप्तसर्वाधिकसंग

१ पुष्पितमित्युक्ते यथा वनमित्यर्थो लभ्यते तद्वदित्यर्थः

लाख्यविष्णुरूपोधीरःकृत्याद्विधिनिषेधलक्षणात्कार्याद्विरमेदित्यन्वयः। भक्त्याप्राणंवशेनीत्वाजितप्राणोभवत्युत। जीवस्योभगवान्विष्णुःक्षेत्रज्ञइतिगीयते। हृद्गतस्तुसएवात्माव्याप्तोप्यात्मेतिभण्यते।
हरौहरेभेदैवेत्यौतिस्तदेकत्वस्याचितनं। अन्यत्रतन्नियम्यादिर्चिंतनंनीतिरुच्यते इतिप्रमाणेभ्यउक्तएवार्थोन्योन्यस्वकपोलकल्पितइतिभावः। मनस्तत्त्वंबुद्धितत्त्वंबुद्धितत्त्वंक्षेत्रज्ञेऽधिष्ठानभूतेतंक्षेत्रद्रष्टारमात्म
निरोधयतत्त्वंपदार्थेचिन्मात्रेतमात्मानंशोधितत्वंपदार्थभूतमात्मानिशोधिततत्पदार्थभूतेपरमात्मन्यवरुध्यैकीकृत्यभेदहेतुभविद्याधिष्ठानंयथार्थज्ञानेननिरस्यकृत्याद्विरमेतेतिमायावादिनः एतांव्यष्टिरूपां
बुद्धिंक्षेत्रज्ञेसमष्टिरूपेहिरण्यगर्भात्मनितंक्षेत्रज्ञमात्मनिकारणात्मकेकारणात्मानमात्मनिशुद्धेब्रह्मण्यवष्टभ्यकृत्याद्विरतःस्यादितिपौराणिकंमन्याः इतिद्वयमपिप्रमाणविरुद्धत्वादुपेक्षणीयं मनश्चेतिचशब्दे
नमनःशब्दवाच्यंरुद्रंबुद्धिशब्दवाच्यांवाणींविरिंचलक्ष्मीद्वाराक्षेत्रज्ञेलयं तत्त्वानांस्वस्वकारणेषुकल्पतइतिज्ञातव्यं उपाधिकेसमीपेचेति शांतिःप्रशममंगलेइतिच मंगलंभगवान्विष्णुरितिच १७
एवमुत्क्रांतोज्ञानीयंलोकमाप्नोतितामितरलोकेभ्योव्यावर्तयति। नयत्रेति। यत्रयस्मिंल्लोकेऽनिमिषाणांरुद्रादिदेवानांप्रभुःकालोवायुर्नप्रभुःस्वशक्तेरुद्बोधकः। हरिश्चप्रकृतिश्चैवब्रह्मवायूतथैवचेत्या
देः यरुद्रादयोदेवाः जगतामीशिरेजगंतिस्वस्वकार्येप्रवर्तयामासुस्तेदेवानप्रभवंति कुतोन्यावकाशोनकुतोपीत्यर्थः। यत्रयस्मिन्स्थानेसत्त्वादिगुणत्रयंचस्वशक्तिप्रकाशकंन। विकारोवैभूतें
द्रियात्मकोहंकारश्चन। महान्महत्तत्त्वंप्रधानंप्रकृतिश्चन। जरादिस्वधर्मापादिकानभवंतीत्यर्थः १८ ननकालादिसंसर्गाभावाद्शशविषाणवन्नास्तीतितत्राह। परंपदमिति। तद्वैष्णवंविष्णो

**नयत्रकालोनिमिषांपरःप्रभुःकुतोनुदेवाजगतांयईशिरे॥ नयत्रसत्त्वंनरजस्तमश्चनवैविकारोनमहान्प्रधानम् १८ परंपदंवैष्णवमामनंतियन्नेतिनेतीत्यतदु
त्सिसृक्षवः॥ विसृज्यदौरात्म्यमनन्यसौहृदाहृदोपगुह्यावरमंपदेपदे १९ इत्थंमुनिस्तूपरमेद्व्यवस्थितोविज्ञानदृग्वीर्यसुरंधिताशयः॥ स्वपार्ष्णिना
पीड्यगुदंततोनिलंस्थानेषुषट्सून्नमयेज्जितक्लमः २०**

विद्यमानंपरंपदंप्राप्तव्योत्तमंलोकमामनंतिपठंतीत्यन्वयः। अनेनयथाकालादिकृतोपद्रवोहरेर्नास्तितथालोकस्यापीत्युक्तंभवति। यत्संबंधाल्लोकोपिताहृक्महिमासविष्णुःकिंमहिमेतितत्राह यन्नेतीति
वैष्णवमित्यनेनप्रस्तुतोविष्णुरयमुच्यते। अतत्तस्माद्ब्रह्मणइतरत्संसारलक्षणंदुःखमुत्सिसृक्षवस्त्यक्तुकामाः विशिष्टाधिकारिणोयंविष्णुंनेतिनेतिपृथिव्यादिवन्नाकाशादिवच्चन तत्कारणमहदादिव
च्चन तदभिमानिवच्चनेत्युपास्यतदौरात्म्यंदुरात्मनामसुरप्रकृतीनांविद्यमानंसंसारदुःखंविसृज्यानन्यसौहृदा अनन्यभक्ताहृदानिरतिशयस्नेहलक्षणभक्त्योपगुह्यपदेपदेमनसानिरंतरंपरिरभ्याप्नुमापुः एवं
विधस्यहरेर्विद्यमानमितिपूर्वेणान्वयः यद्वायत्सर्वोत्तमंपरममंगलंविष्णुरूपमाप्तवान्तद्रूपमितरेभ्योव्यावर्तयति नयत्रेति अतत्तस्माद्ब्रह्मणोन्यद्जगदुत्सिसृक्षवस्त्याजयितुकामाः सवाएषआत्मानेतिने
तीत्यामनंतितदित्यन्वयः देवानामचेतनत्वेनबुद्धिपूर्वकप्रवृत्त्यसंभवात्कथंतदुक्तंनिर्णेतुंशक्यतइत्यत्राह विसृज्येति। वेदोक्तंनिर्णीयदौरात्म्यंदुष्टोपास्तिमैक्यविषयाविसृज्यपदेपदेऽन्वहंहृदोपगुह्यापरोक्षी
कृत्यानन्यसौहृदाभूत्वाविष्णुंतोऽमुमापुरामुत्रंत्याप्स्यंतिवाऽतोयुक्तमुक्तमिति १९ संप्रतिज्ञानिनोदेहादुत्क्रमणप्रकारमाह इत्थमिति तुशब्दःप्रकरणभेदार्थः इत्थंस्थिरसुखचासनमित्युक्तप्रकारेण
मुनिरुपरमेदुत्क्रांतोभवेत्। कथमत्राह व्यवस्थितइति देहादुत्क्रमणेव्यवस्थितोनिश्चितबुद्धिः। विज्ञानमात्मयोग्यज्ञानंस्वाबिंबविषयंतदेवदृक्तस्यावीर्येणसत्त्वराधितोदग्धआशयोवासनांतःकरणंयस्यसत
थोक्तः। विज्ञानंब्रह्मेतिश्रुतेर्विज्ञानस्यब्रह्मगोचरशोर्यैर्णेतिवा जितक्लमःशरीरग्लानिरहितःप्रथमंस्वपार्ष्णिनागुल्फाधोभागेनगुदमपानद्वारमापीड्य ततोपानद्वारनिरोधानंतरं। ततोमूलाधाराच्चतुर्दल

पश्चादनिलमुदानवायुमुत्थाप्यनाभिहृदयोरस्तालुमूलभ्रूमध्यमूर्धसुषट्स्थानेषुक्रमादुन्नमयेदूर्ध्वंगमयेदित्यन्वयः २० संक्षिप्योक्तंविशिनष्टि नाभ्यामित्यादिना मुनिर्मूलाधाराच्चतुर्दलपद्मादुन्नीयनाभ्यां
स्थितंषड्दलपद्मेनीतमुदानगत्याब्रह्मनाड्याहृदिदशदलपद्मेऽवरोप्यसन्निधाय ततोदशदलपद्मात्तमुरसिद्वादशदलपद्मेनयेत् मनस्वीमनःसमाधानानिरतस्ततोद्वादशदलपद्माद्यथानाड्यंतरंनगच्छेत्तथा
धियानुसंधायशनकैरसंभ्रमेणस्वतालुमूलषोडशदलकमलंनयेत् २१ तस्माद्भ्रुवोरंतरंभ्रूमध्यस्थितंद्विदलंकमलमुन्नयेत् तत्रापीतिकर्तव्यतयाभाव्यमित्याह निरुध्येति । निरुद्धाःसप्तानामश्वानांकर्णा
क्षिनासिकादिसप्तानांपंथानोयेनसतथोक्तः । अनपेक्षोबाह्यसुखानिच्छुः । अत्रापीत्थंभावमाह स्थित्वेति मनसापरंगतोभ्रूमध्येतुमुहूर्तार्धंस्थित्वामार्गगम्यविशेषेष्वकुंठदृष्टिर्मूर्धन्मूर्धनिशिरोमध्येनिर्भि
द्यविसृजेत्शरीरमितिशेषः गतइत्यनेनाचिंतनमुच्यते अथैकयोर्ध्वमुदानः । प्राणापानाविडायाचापिंगलायांचवर्ततः । व्यानःसंधिषुसर्वत्रउदानोब्रह्मनाडिगइतिश्रुतिस्मृतिभ्यामुदानगतिर्ब्रह्मनाड्यामि
तिसिद्धं ॥ इत्थंमुनिरित्यनेननिर्गुणविद्याफलमुक्त्वास्वपार्ष्णिगनेत्यनेनसगुणविद्याविदोदेहोत्क्रमणप्रकारउच्यतइत्येतदनुपपन्नमेकवाक्यतयामुख्यार्थेसंभवतिवाक्यभेदायोगादिति २२ एवंदेहादुत्क्रा
न्तानांयोगिनांप्राप्यस्थानंगम्यंचाह यदीत्यादिनाश्लोकद्वयेन अत्रयदिअथउतेतिशब्दाः पुनरावृत्त्यान्वेतव्याः तथाहि यदिसम्यक्परिपक्वभक्त्यादिसाधनवांस्तर्हि अथोत्क्रमणानंतरमेवपारमेष्ठ्यंपरमे
ष्ठिनोब्रह्मणोलोकंप्रयास्यति तत्रायंकिंकरोतीतितत्राह अथेति अथतल्लोकप्राप्त्यनंतरं पुनरुत्पत्तिहीनोब्रह्मसालोक्यमात्रप्राप्य अथभक्त्यादिलक्षणपरिपाकाययोगीवसति अनंतरंब्रह्मप्रलयेब्रह्मणासह
स्वयोग्यांमुक्तिंप्राप्नोतीतिशेषः । उतशब्दोऽप्यर्थे यद्यपिततउतपूर्वोक्तयोगिनोऽप्यपरिपक्वभक्त्यादिकल्याणवास्तर्हिवैहायसानांवैमानिकानांसिद्धानांविहारंक्रीडास्थानंमहर्लोकादिप्रयास्यतितत्रास्ययो

नाभ्यांस्थितंहृद्यधिरोप्यतस्मादुदानगत्योरसितंनयेन्मुनिः ॥ ततोनुसंधायधियामनस्वीस्वतालुमूलंशनकैर्नयेत २१ तस्माद्भ्रुवोरंतरमुन्नयेतनिरुद्धसप्ता
श्वपथोनपेक्षः ॥ स्थित्वामुहूर्तार्धमकुंठदृष्टिर्निर्भिद्यमूर्धन्विसृजेत्परंगतः २२ यदिप्र[illegible]स्यत्यथपारमेष्ठ्यंवैहायसानामुतयद्विहारम् ॥ अष्टाधिपत्यंगुण
सन्निवायेसहैवगच्छेन्मनसेंद्रियैश्च २३ योगेश्वराणांगतिमाहुरंतर्बहिस्त्रिलोक्याःप[illegible]ांतरात्मा ॥ नकर्मभिस्तांगतिमाप्नुवंतिविद्यातपोयोगसमाधि
भाजाम् २४

गफलमाह अष्टाधिपत्यमिति अथमहर्लोकादिस्थानेऽष्टानामणिमादियोगानामाधिपत्यमिवाप्यवसतिअथ सम्यक्परिपक्वभक्त्यादिमानप्रतीकालंबनस्तर्हियत्रपवनस्यांतरात्माविकुंठनाथस्तत्रविकुंठना
थलोकेऽमुक्तस्थानेऽमुक्तैर्देवैरुपास्यमानंहरिंप्रयास्यति यदिप्रतीकालंबनस्तर्हियत्रपवनश्चासावंतरात्माचेति ब्रह्माचतत्रसत्यलोकेवायुंब्रह्माणंचप्रयास्यति २३ किमुक्तंभवतितत्राह योगेश्वराणामि
ति । त्रिलोक्याभूम्यंतरिक्षस्वर्गसंज्ञायाबहिर्महर्लोकादौयोगेश्वराणांगतिमामनंतिनत्ववर्वाक् । तल्लोकप्राप्तौसा विशेषमाह विद्येति विद्याऽपरोक्षज्ञानंतदादिपुरुषार्थसाधनसामग्रीमतांपुंसांतामह
र्लोकादिगतिंकेवलकर्मभिर्नाप्नुवंति किंत्वपरोक्षज्ञानेनैव अत्रायंकथनाविशेषः । गुणानांसत्त्वादीनांसन्निवायन्निवासोयत्रसगुणसन्निवायस्तस्मिन्महर्लोकादिवैकुंठान्तमुक्तस्थानादाधिकेप्रदेशेप्रयास्यन्
बाह्येंद्रियमनोभिःसहैवगच्छेत् आविष्कृतनिजरूपस्यापितस्यारब्धकर्ममोक्षपर्यंतंदग्धपटवत्तेशांस्थित्युक्तेः प[illegible]ज्ञानादिगुणसन्निवायेमुक्तस्थानेचिन्मात्रेंद्रियमनोभिःसहैववसति । तदुक्तं । चिन्मा
त्राणींद्रियाण्याहुर्मुक्तानामन्यदेवहीति । ईप्सुश्रीन्क्रमशोलोकान्ज्ञानेनैवतदुत्तरान् । तत्रमुख्याहरिंयातितदन्यवायुमेवतु । अपक्वायेनतेयातिवायुंशाहरिमेववा । स्थानमात्राश्रितास्तेतुपुनर्जानिविव
र्जिताइतिसमाख्यावचनबलादध्याहारेणव्याख्यातम् । नतुस्वमनीषोत्प्रेक्षावशादिति । यदिपारमेष्ठ्यादिलोकंप्रयास्यतितर्हिमनसेंद्रियैःसहैवगच्छेदितिवान्वयः यत्रयोगेश्वराणांगतिंत्रिलोक्याबहि
राम्नंति यत्रपवनस्यान्तरात्मातत्रविद्यादिभाजांतांगतिंकर्मभिर्नाप्नुवंतीतिवा २४

ब्रह्मपथेतियोजा..२८ । वैश्वानरमिति सुषुम्नयानाड्योत्क्रम्यविहायसाहृदयाकाशेनब्रह्मपथेनसुषुम्नाख्यपाशोचिषा । रोचिः शोचिरुभइत्याद्यभिधानं । गतोनिर्गतोर्चिरादिदेवान्गत्वाथवैश्वानरं याति अथवैश्वानरमाप्याविधूतकल्कोदग्धपापतृणस्ततोवैश्वानरलोकादुदस्तादुपरिहरेःशैशुमारंचक्रंशिशुमारस्वरूपंप्रयातीत्यन्वयः । वैश्वानरेचूनद्यांदाहएवादेहएवता । विधूयसर्वपापानियातीतिकिंतु प्रक्षेशपासित्येतदर्थेतिसूचितम् २५ वैश्वानरोनामकइतितत्राह यइति योभूतानामंतःकोष्ठगाग्नौस्थित्वातद्भुक्तंचतुर्विधमन्नंपचति यश्चब्रह्मांडमध्यगःस्वपुरमध्यगस्तपतिप्रकाशतेसप्रधानवह्निर्वैश्वानराख्यो ब्रह्मदेवपितृलोकंगंतुमुनेर्योगिनःकर्मयोगिनश्चगम्यत्वान्मार्गइतीरितइत्यन्वयः । पितृयानंदेवयानंब्रह्मयानमितित्रिधा । गच्छन्वैश्वानरंयातितस्मान्मार्गःसईरितः । देवयानेनगंतृणांवैश्वानरादवागर्चिरादयोगम्याःसंति । ब्रह्मदेवपितृलोकंगंतृभिःसर्वैरपिवैश्वानरःप्राप्यतइतिद्योतनायवैश्वानरंयातीतिप्रथमतएववैश्वानरप्राप्तिकथनमितिज्ञातव्यं २६ केतर्हितइतितत्राह देवयानमिति शरीरदक्षिणपार्श्वस्थपिंगलाख्यनाडीभिःशतायुषामरणाख्योत्क्रमणादहान्यहःसंज्ञंदेवयानमेति इडाभिर्देहवामपार्श्वस्थेडाख्यनाडीभिःशतायुषामरणेनरात्रीः रात्रिसंज्ञंपितृणांयानंपितृयानमेति । देवयानपितृयानमार्गस्थानामहरादिकालाभिमानिनीनांदेवतानांप्राचुर्यादहानिरात्रीरितिबहुवचनं । दक्षिणाःपिंगलाःसर्वाइडावामाःप्रकीर्तिताः । माहच्चोथमध्यमाप्रोक्तासुषुम्नावेदपारगैरिति । देवयानस्यमार्गस्थाअहःशब्दाभिसंज्ञिताः । पितृयानस्यमार्गस्थारात्रिशब्दाह्वयायता इतिवा । पिंगलेडामध्यस्थयासुषुम्नयानाड्याशतायुषाविशिष्टसुखवत्त्वाद्विषुवत्ताख्यंब्रह्मयानमेति । विशिष्टसुखंविषु ।

वैश्वानरंयातिविहायसागतःसुषुम्नयाब्रह्मपथेनशोचिषा ॥ विधूतकल्कोथहरेरुदस्तात्प्रयातिचक्रंनृपशैशुमारम् २५ योंतःपचतिभूतानांयस्तपत्यंडमध्यगः ॥ सोग्निर्वैश्वानरोमार्गोदेवानांपितृणांमुनेः २६ देवयानंपिंगलाभिरहान्येतिशतायुषा ॥ रात्रीरिडाभिःपितृणांविषुवत्तांसुषुम्नया २७ तद्विश्वनाभिंप्रतिपद्यविष्णोरणीयसाविरजेनात्मनैकम् ॥ नमस्कृतंब्रह्मविदामुपैतिकल्पायुषोयद्विबुधारमंते २८ अथोअनंतस्यमुखानलेनदंदह्यमानंसनिरीक्ष्यविश्वम् ॥ निर्यातिसिद्धेश्वरजुष्टधिष्ण्यंयद्द्वैपरार्ध्यंतदुपारमेष्ठ्यम् २९

तदस्यास्तीतिविषुवत् । तस्यभावोविषुवत्तातां । सषयोरभेदाद्वीत्युपसर्गयोगाद्वासकारस्यषकारःविषुवत्ताब्रह्मयानंविशेषेणसुखंयतइति रागःपरक्तसुखादिदातृत्वात्पिंगलादेर्देवयानादिशब्दताख्यत्वं । तदुक्तं पिंगलादेवयानंस्यात्पिंगाख्यसुखदायतः । इडाश्चदानात्पितृणामेवंमार्गाःप्रकीर्तिताइति । अत्रदेवयानब्रह्मयानभेदोऽवांतरोवगंतव्यः २७ अधुनाशिशुमारलोकादुपरितनमार्गप्रकारमाह । तद्विति । शैशुमारइत्यनेनयद्रूपमुक्तंविष्णोस्तद्विश्वनाभिंविश्वाधारंरूपंप्रतिपद्य तुशब्दसूचितान्तदनुज्ञामादाय । विरजेनविगतरागादिदोषेणाऽणीयसासूक्ष्मतरेणात्मस्वरूपेणसर्वोपिब्रह्मज्ञानिजनस्तल्लोकमुपैति । तंविशिनष्टिकल्पायुषइति कल्पायुषोविबुधायत्ररमंतेक्रीडंतितमितिशेषः । किंविशिष्टंरूपं । ब्रह्मविदांसमुदायेननमस्कृतमेकंमुख्यंकेवलमितिवा मन्वंतरायुषःस्वर्ग्यामहर्लोकेतुकल्पिकाइति पिंगलाभिरुत्क्रम्यदेवयानेनगतः परांतेब्रह्मप्रयास्यंस्तत्रमहर्लोकेऽष्टाधिपत्यमित्युक्तोणिमाद्यैश्वर्यशालीवसति कश्चनजनलोकेकश्चनतपोलोकेज्ञानादिपरिपाकायास्ते कश्चित्सत्यलोकेहयोग्यपावसति ब्रह्मयानेनगताःप्रतीकालंबनाःप्रतीकालंबनाश्चशैशुमारहरिणानुज्ञातास्तदैवानिरुद्धप्रद्युम्नसंकर्षणादिदेवान्प्राप्यादिवस्पतिंवायुंप्राप्यतेनकार्यब्रह्मप्रापिताःतदुपदेशंप्राप्यप्रतीकोपासकानिवसंति अन्येतुतेनवायुनापरंब्रह्मप्रापितास्तल्लोकेनिवसंतिइत्यादिविशेषस्तुशब्देनसूचितइतिज्ञातव्यम् २८ महर्लोकादिषुविहरतांतथाज्ञानादिसाधनपरिपाकायचनिवसतांचतुर्मुखप्राप्तिप्रकारमाह अथोइति महर्लोकादिषुवसन्सज्ञानिसंघोऽथाद्विपरार्धावसानेब्रह्मप्रलयेब्रह्मणासहमुक्तिंयास्यन्सिद्धैःसनकादिभिर्जुष्टस्यचतुर्मुखस्याधिष्ण्यंनिवासस्थानंयत्द्वैपरार्ध्यंद्वयोःपरार्धयोःसंबंधि । चतुर्मुखस्याऽऽपरेतिनामत्व

तु सुखप्राचुर्यं लक्षणशतसंवत्सरभोग्यमित्यर्थः । तत्पारमेष्ठ्यं नियाति महर्लोकादेर्निर्गत्य सत्यलोकमाप्नोतीत्यर्थः गंतुं हेतुमाह अनंतस्याते अनंतस्य भगवतो मुखानलेन मुखान्निर्गताग्निना पुनःपुनर्दह्यमानं विश्वं निरीक्ष्य । संकर्षणमुखाग्निना परं विश्वस्य दाहो हेतुरित्यर्थः उ शब्दो ब्रह्मलोकं प्राप्य तेनैव सह मुक्तिं प्राप्नोतीत्यस्मिन्नर्थे वर्तते २९ सत्यलोकस्येतरलोकेभ्यो वैशिष्ट्यमाह नयत्रेति यत्र सत्यलोके शोकादयो न संति आधिस्तु व्यसने चित्तदुःखे धिष्ठानबंधयोरिति व्यसनमाधिरत्रोच्यते यत्रानिदं विदां क्रियया दुःखस्य प्रभवस्य जननादिलक्षणस्यानुदर्शनात् जनस्य यश्चित्तोदः सोपि नास्ति तं सत्यलोकं प्राप्नोतीति पूर्वेणान्वयः । जनादिलोकापेक्षया सत्यलोकस्य वैशिष्ट्यं न तु मुक्तिविशेषात् तदुक्तं सर्वदुःखविहीना ये मुक्ताः प्रायस्तु तादृशाः । अमुक्तास्तु जनाद्येषु विशेषेण तु सत्यगा इति ननु यदि ब्रह्मणा सहैव मुक्तिः सर्वेषां तर्हि ततः पूर्वमायासेन साधनसामग्रीसंपादनं व्यर्थमिति चेन्न योग्यताबाहुविध्यान्मुक्तिप्राप्तेरपि बाहुविध्यात् तदुक्तं विष्णोर्लोकं तदैवैके यांति कालांतरे परे । आज्ञयैव हरेः केचिदपूर्तैः केचिदंजसा विहृत्यैवान्यलोकेषु मुच्यंते ब्रह्मणा सहेति ३० एवं देवयानेन गत्वा सत्यलोके परब्रह्मलोके च स्थितानां ज्ञानिनां मोक्षं वक्तुं देवमुक्तिप्रकारमाह तत इति प्रतीकालंबना अप्रतीकालंबनसंज्ञः सज्ज्ञानिसंघो ब्रह्मप्रलये स्वाविर्भावविशेषो गरुडशेषलक्षणमार्गद्वयेन वा अर्चिः प्रविश्य तया भौतिकशरीरं ब्रह्माणं प्रविश्य ततस्तेन ब्रह्मणा सह विशेषं पृथिवीं प्रतिपद्य तेन पृथिव्यात्मना सह अपः प्रतिपद्य तेनात्मनाऽनलमूर्तिं प्रतिपद्य तेन ज्योतिर्मयो अग्निप्रधानो भूत्वा वायुमुपेत्य मुक्तिकाले तेन वाय्वात्मना हरो लिंगमाकाशवद्व्याप्तं नित्यं चेति बृहन्महत् खं प्रविशतीत्यन्वयः निर्भयः संसारभयान्मुक्तः अतएव त्वरन् त्वरमाणः । अत्रेदं तात्पर्यं चशब्दादवगंतव्यं तथाहि विशेषाख्यांडे व्यवस्थिते विशेषनाम्नि विरिंचे स्थितं वैराजाख्यं हरिं पुनस्ताद्दृगुणांडकटाहात्मकविशेषाख्यपृथिव्यां स्थिते विरिंचे स्थितमन्ननामानं हरिं तेनान्ननाम्ना हरिणाप्सु स्थिते चतुर्मुखे स्थितमन्नाख्यं हरिं

**नयत्र शोको न जरा न मृत्युर्नाधिर्न चोद्वेगऋते कुतश्चित् ॥ यश्चित्ततोदः क्रिययाऽनिदं विदां दुरंतदुःखप्रभवानुदर्शनात् ३० ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनापोनलमूर्तिरत्वरन् ॥ ज्योतिर्मयो वायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिंगम् ३१ घ्राणेन गंधं रसनेन वै रसं रूपं तु दृष्ट्या श्वसनं त्वचैव ॥ श्रोत्रेण चोपेत्य नभोगुणत्वं प्राणेन चाकूतिमुपैति योगी ३२ स भूतसूक्ष्मेंद्रियसन्निकर्षं मनोमयं देवमयं विकार्यम् । संसाद्य गत्या सह तेन याति ३३**

तेनान्नेन विष्णुना तेजोगतविरिंचस्थं प्राणनामानं हरिं तेनाग्निगतेन हरिणा वायुस्थितचतुराननस्थितं प्राणाख्यं प्राप्य तेन वायुस्थविरिंचांतर्यामिणाऽऽकाशस्थितविरिंचस्थप्राणाख्यं हरिं प्रविशतीति पृथिव्यादिकार्याणां स्वस्वकारणेष्वबादिप्रधानांतेषु लयः । तदभिमानिदेवताशरीराणां च । तत्र विरिंचकेशवयोस्तत्तत्पदार्थस्थितस्वस्वरूपैरेकीभावो दीपानां दीपांतरैरिव । अन्येषां द्वारमात्रमिति ज्ञानिनः प्रलये सर्वे ब्रह्मणा सह पार्थिव । भूम्यपामन्ननामानं प्राणमग्न्यादिसंस्थितमित्यादिवाक्यद्वयेन च शब्दगृहीतेन निष्प्रमाणमिति शंका निरस्तेति ज्ञातव्यम् ३१ इदानीं पंचतन्मात्राप्रलयप्रकारमाह घ्राणेनेति घ्राणेंद्रियाद्यधिष्ठितविरिंचस्थेन हरिणा गंधतन्मात्राद्यधिष्ठातृविरिंचस्थितं हरिमुपेत्य योगी पुनरावृत्तिं नोपैतीत्यन्वयः तत्र वाय्वादीनां पुनरावृत्तिसद्भावात्प्रायेणेत्युक्तम् यद्वा एवमुक्तवक्ष्यमाणप्रकारेण मुक्तानां तेषां ज्ञानिनां भोगप्रकारमाह घ्राणेनेति एवमुक्तः केवलचिदानंदैकदेहो योगी सः ज्ञानिसंघस्तादृशैरिंद्रियैर्घ्राणादिभिरत्युत्तमान् गंधादीन् पंचविषयानुपेत्य श्वेतद्वीपादिस्थानेष्वाश्रितः प्रलयेपि न पुनरावृत्तिमुपैतीत्यन्वयः । वा इत्यनेन पंचेंद्रियैर्विषया द्रष्टव्याः सर्वतो वरा इत्यादिमानसिद्धिं द्योतयति इयमेव मुक्तिर्नाद्वैतवादिकथितेत्येवशब्दः तुना मम स्याद्धि परेज्ञाने किं न दुःखतरं भवेदिति मानं सूचयति ३२ उक्तमुक्तिं शेषमाह स इति भूतसूक्ष्मेंद्रियसन्निकर्षात्[1] भूतसूक्ष्मैः पंचभूतैः शब्दादितन्मात्रादिभिः तथाभूतसूक्ष्मैर्जीवराशिभिश्चेंद्रियैश्च तदभिमानिभिश्च सहितो नादिः सनातनः सोसौ भगवान् विकार्यं विविधकार्ययुक्तं देवमयं देवप्रधानं मनोमयं मनस्तत्त्वस्थेंद्रियस्थितविरिंचगतमानसनामानं स्वात्मानं यातीत्यन्वयः नातेनेन नादेन[2] सहितत्वात्सनातनः । नादेन तेन महता सनातन इतिरूपेति । मन.

[1] ल्यब्लोपनिमित्तेयं पंचमीतिदीपिका । [2] नादनं वेदात्मकः शब्दः

स्थितोहरिर्नित्यंसर्वदेवेषुसंस्थितः। देवप्रधानकान्लोकान्करोत्यनुगतःसदेतिच। योसावनादिर्मनोमयोविष्णुस्तंयातीतिचोभ्यथापितस्यैवगम्यत्वंगंतृत्वंचज्ञातव्यं मनःस्थंमानसस्थंमानसनामानंस्वात्मानंसंसाधसहहरिरुमास्थितविरिंचस्थितस्वात्मद्वारामतिशब्दवाच्यमहंकारगतवाणीस्थविरिंचस्थंस्वात्मानंमत्यामतिस्थेनतेनमनस्थेनचसहविज्ञाननामानंविज्ञानतत्त्वाख्यवाणीगतविरिंचस्थंस्वात्मानंयाति ३३ तेनविज्ञानतत्त्वगतेनहरिणागुणसन्निरोधंसत्त्वादिगुणविधुरंसर्वमूलकारणंमहत्तत्त्वाख्यविरिंचगतंविज्ञाननामानंयाति एवंसर्वांतर्यामिरूपैरेकीभूतःसमहत्तत्त्वांतर्यामीविज्ञाननामाहरिस्तेनात्मना विरिंचेनसहशांतिंचित्प्रकृतिस्थितमानंदनामानंहरिंयाति सआनंदमयःपूर्णानंदः आनंदनामामहत्तत्त्वगतोविष्णुःश्रियानुज्ञातंब्रह्माणमादायावसानेद्विपरार्धावसानेसर्वात्मकेसर्वांतर्यामिणिगुणबृंहितेपरिपूर्णेब्रह्मापिवासुदेवाख्येविहरति। जीवसंघःस्वस्वयोग्यतानुसारेणबृंहितत्वाच्चब्रह्माख्येस्वमूलरूपेविहरतीतिशेषः। इत्येषादेवानांमुक्तिरितिभावः। एवंस्वस्वबिंबद्वारेणहरिंप्रविष्टानांपुनरावृत्तिर्नास्तीत्याह वासुदेवइति ३४ योभागवतआत्यंतिकोभक्तोवासुदेवएतांसायुज्याख्यांगतिंमुक्तिंगतःसब्रह्मादिसंघःपुनरिहसंसारेनविषज्जतेसंसारविषयोनेत्यन्वयः वैशब्देनानंदसंज्ञकेनापिब्रह्मणापरस्परैक्यंसमुद्रेप्रविष्टनदीवदित्यादिदर्शयति नन्वितआनंदातिशये। नेहविषज्जतेइतीदंयुक्तम्। तदभावेप्रशंसामात्रमिदंकिंनस्यादित्येतच्चोद्यम् वासुदेवाश्रितादेवाब्रह्माद्यामुक्तबंधनाइत्यादिनापरिहर्तव्यंउपसंहरति एतेइति पुराचतुर्मुखेनाराधितःपृष्टोभगवान्वासुदेवोद्रेसतिब्रह्मणेआह। तेएतेसृतीमयातेकथितेइत्यन्वयः। वक्तव्यत्वेहेतुमाह त्वयेति तत्रापिनिमित्तमाह वेदेति अथेत्यनेनअथये

**विज्ञानतत्त्वंगुणसन्निरोधंतेनात्मनात्मानमुपैतिशांतिम् ॥ आनंदमानंदमयोवसानेसर्वात्मकेब्रह्मणिवासुदेवे ३४ एतांगतिंभागवतोगतोयःसवैपुनर्नेहविषज्जतेंग ॥ एतेसृतीतेनृपवेदगीतेत्वयाभिपृष्टेथसनातनेच ॥ येवैपुराब्रह्मणआहपृष्टआराधितोभगवान्वासुदेवः ३५ नह्यतोन्यःशिवःपंथाविशतःसंसृताविह ॥ वासुदेवेभगवतिभक्तियोगोयतोभवेत् ३६ भगवान्ब्रह्मकार्त्स्न्येनत्रिरन्वीक्ष्यमनीषया ॥ तदध्यवस्यत्कूटस्थोरतिरात्मन्यतोभवेत् ३७ भगवान्सर्वभूतेषुलक्षितःस्वात्मनाहरिः ॥ दृश्यैर्बुद्ध्यादिभिर्द्रष्टालक्षणैरनुमापकैः ३८ तस्मात्सर्वात्मनाराजन्हरिःसर्वत्रसर्वदा ॥ श्रोतव्यःकीर्तितव्यश्चस्मर्तव्योभगवान्नृणाम् ३९**

स्येश्रद्धातपइत्युपासतेतेऽर्चिषमभिसंभवंतीत्यादिवेदंसूचयति वेदगीतत्वेप्यश्रद्धेयत्वेनहेयत्वंदृष्टमत्राह सनातनेइति नित्यास्थितिहेतुत्वादित्यर्थः ३५ अतोत्रानिःश्रेयसार्थिभिर्भागवतमेवाभ्यसनीयमितिभावेनाह नहीति इहसंसृतौअतोभागवताख्यात्ग्रंथादविशतःशिवःपंथानास्ति सज्जनकरुणयाभागवतोक्तत्वादितिशेषः। हेत्वंतरमाह वासुदेवइति ३६ एकस्यप्रतिभानंतुकृतकात्नविशिष्यतइत्यतआप्तिमूलत्वेनतदुक्तंप्रमाणमेवेत्याह भगवानिति ब्रह्मवेदमन्वीक्ष्यआलोच्य। यतोग्रंथादभ्यस्तादात्मन्नात्मकूटस्थेनिर्विकारेहरौभक्तिलक्षणारतिर्भवेत् तद्भागवतंपुराणमध्यवस्यदित्यन्वयःहिशब्देननित्यज्ञानेनसिद्धश्चपुनःपुनरवेक्षतइत्यादिकंसूचयति ३७ उत्तमाधिकारिणांवेदादिनाभगवत्सद्भावसिद्धेऽपीतरेषांतदस्तित्वंकथमवगंतुंशक्यमित्याशंक्याह भगवानिति इतोपीदमेवानिःश्रेयसहेतुत्वात्श्रवणादिनाभ्यसनीयमित्यतोवाह भगवानिति द्रष्टासाक्षीभगवाननुमापकैर्निश्चयज्ञानजनकैर्दृश्यैर्हरेःसर्वस्वातंत्र्यादिनाब्रह्मादिजीवराशेरस्वातंत्र्यादिनाचप्रमाणेनगृहीतव्याप्तिकैर्बुद्ध्यादिलक्षणैर्लिंगैःसर्वभूतेषुनियामकत्वेनस्थितइति आत्मनाजीवेनास्मिन्पुराणेलक्षितोज्ञातइत्यतस्तदस्तित्वेसिद्धेतेनप्रोक्तत्वाद्वेदमूलत्वेनाप्तिमूलत्वाच्चेदमवश्यमभ्यसनीयमित्यायातमितिभावः इदंबुध्येयंनचेदमित्यत्रबुद्ध्यादीनांपरवश्यत्वदर्शनादन्योनियंतास्तीत्यस्यस्वानुभवसिद्धत्वात्सचान्योहरिरेवेत्यस्यावधारणायचशब्दः तदुक्तं। समायावसमायोचानिःस्वतंत्रस्यदेहिनइत्यादि ३८ उक्तमुपसंहरति तस्मादिति यस्मात्सर्वज्ञेनव्यासेनैषनारायणएववेदवेद्येषुसर्वोत्तमत्वेनद्रष्टव्यस्तेनोक्तः तस्मात्सएवश्रोतव्यः ३९

श्रवणादिफलमाह पिबंतीति सतांसकाशात्श्रवणपुटेपुसंभृतंपूरितं विषयैर्विशेषेणदूषितम् ॥ ४० ॥ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेविजयध्वजकृतटीकायांद्वितीयोऽध्यायः ॥ २ ॥ हरेःश्रवणा दिजनितभगवद्भक्तिरेवापेक्षिताशेषपुरुषार्थसाधनंनान्यदन्यदेवतायागादिकंप्रातिस्विकफलदंतदपिहयैकायत्तामित्येतदस्मिन्नध्यायेनिरूप्यते तत्रप्रथमतोवृत्तमनुवदति एवमिति भवान्मनुष्येपुमध्येम्रि यमाणानांमनीषिणांनृणांयत्कर्तव्यत्वेनममसकाशेपृष्टवान्तदेतदेवंनिगदितं यद्वा मनुष्येषुम्रियमाणानांनृणांयत्कर्तव्यत्वेनमनीषिणांमतंपृष्टवानेतदिति १ इदानींप्रातिस्विकफलप्रदंयागप्रकारमाह ब्रह्मेति ब्रह्मवर्चसकामोवृत्ताध्ययनसंपत्कामः । शिष्यप्रशिष्यादिषुवेदप्रणेतृत्वेन ब्रह्मणस्पतिंवेदस्यपतिंबृहस्पतिं बृहजातिजीवकमलासनशब्दराशिष्वितिधातोश्च यजेत । तत्तत्तंत्रोक्ततत्तद्द्रव्यैरितिशे षः तुनाब्रह्मणिवृद्धिंसूचयति इंद्रियकामश्चक्षुरादींद्रियपाटवकामःशुक्रस्तंभनकामोवा प्रजाकामःप्रजातुजनपुत्रयोरितियादवः प्रजापतीन्कश्यपादीन् २ मायांदेवींलक्ष्मीं विभावसुमग्निं तेजोबले प्रभावेत्विज्योतिष्ण्यांचवीरेतसीतिच वसुकामोहिरण्यकामः वीर्यकामः वीर्यंपराक्रमेतेजस्यन्नमाहात्म्ययोरपीतिच ३ विशांवैश्यानाम् ४ इलांभूमिं प्रतिष्ठाकामःस्वस्थानाभ्रंशेच्छुः लोकमातरौ

पिबंतियेभगवतआत्मनःसतांकथामृतंश्रवणपुटेषुसंभृतम् ॥ पुनंतितेविषयविदूषिताशयंव्रजंतितेतच्चरणसरोरुहांतिकम् ४० इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेद्वितीयोऽध्यायः ॥ २ ॥ श्रीशुकउवाच ॥ एवमेतन्निगदितंपृष्टवान्यद्भवान्मम ॥ नृणांयन्म्रियमाणानांमनुष्येषुमनीषिणाम् १ ब्रह्मवर्चसकामस्तुयजेतब्रह्मणस्पतिम् ॥इंद्रमिंद्रियकामस्तुप्रजाकामःप्रजापतीन् २ देवींमायांतुश्रीकामस्तेजस्कामोविभावसुम् ॥ वसुकामोवसून्रुद्रान्वीर्यकामस्तुवीर्यवान् ३ अन्नाद्यकामस्त्वदितिंस्वर्गकामोदितेःसुतान् ॥ विश्वान्देवान्राष्ट्रकामःसाध्यान्संसाधकोविशाम् ४ आयुष्कामोऽश्विनौदेवौपुष्टिकामइलांयजेत् ॥ प्रतिष्ठाकामःपुरुषोरोदसीलोकमातरौ ५ रूपाधिकामोगंधर्वान्स्त्रीकामोप्सरउर्वशीम् ॥ आधिपत्यकामःसर्वेषांयजेतपरमेष्ठिनम् ६ यज्ञंयजेद्यशस्कामःकोशकामःप्रचेतसम् ॥ विद्याकामस्तुगिरिशंदांपत्यार्थउमांसतीम् ७ धर्मार्थमुत्तमश्लोकंतंतुंतन्वन्पितॄन्यजेत् ॥ रक्षाकामःपुण्यजनानोजस्कामोमरुद्गणान् ८ राज्यकामोमनून्देवान्निर्ऋतिंत्वभिचरन्यजेत् ॥ कामकामोयजेत्सोममकामःपुरुषंपुमान् ९ अकामःसर्वकामोवामोक्षकामउदारधीः ॥ तीव्रेणभक्तियोगेनयजेतपुरुषंपरम् १०

लोकस्यमातापितरौ मावापृथिवी द्यौःपिता मधुद्यौरस्तुनःपितेतिश्रुतिः ५ अप्सराश्चासावुर्वशीचेत्यप्सरउर्वशी । तां परमेष्ठिनंचतुर्मुखम् ६ यज्ञमिंद्रं फलभेदान्नपुनरुक्तिः कोशकामोनिधिकामःप्रचेतसंवरुणं गिरिशंदक्षिणमूर्तिधरं दांपत्यार्थेऽखंडितदांपत्याय ७ धर्मार्थमक्षयपुण्यफलार्थमुत्तमश्लोकंविष्णुं अकामोधर्मकामोवामोक्षकामोपियोभवेत् । अथवासर्वकामोयःसविष्णुंपुरुषंयजेदित्यनेनविष्णुरेवोत्तमइतिनिश्चीयते अकामःपुरुषंपुमानित्यत्रापिपुरुषोविष्णुरेवास्माडुक्तप्रमाणात् तंतुंसंतत्यविच्छेदंतन्वन्विततंकुर्वन् पुण्यजनान्यक्षान्मणिभद्रादीन् ८ अभिचरन्परोपद्रवकर्म कुर्वन् निर्ऋतिंकोणदिक्पतिं सोमंचंद्रं अकामोनिषिद्धकामरहितः पुरुषंपूर्णषड्गुणम् ९ अकामोभगवत्प्रसादमंतरेणान्यत्राकाम' सर्वकामाउक्तसर्वकामोन्यदेवतायजनमिच्छन्परंपुरुषं यजेत विष्णुयजनेसाधनमाह तीव्रेणेति १०

काम्यानुष्ठानस्ययथामुक्तिसाधनतास्यात्तत्प्रकारमाह एतावानिति इहकर्मभूमौयजतांकाम्यानुष्ठानंकुर्वतांनिःश्रेयसोदयएतावान्भागवतानांसंगतसेवालक्षणात् भगवतिहरौअचलोभावोभक्तिलक्षणइ तियत्सइति ११ भागवतसंगादचलोभावःकथंस्यादित्याशंक्यतेषांसदसिप्रसक्तानांहरिकथामृतानांश्रवणलक्षणपानादिनाप्रसन्नांतःकरणस्यपुंसोहरेरितरत्रविरक्तस्यज्ञानसाधनंभगवत्यचलाभक्तिस्त याज्ञानंभविष्यतीत्याह ज्ञानमिति यदासत्सभासुप्रसक्ताभिःश्रुताभिर्याभिर्हरिकथाभिःपुंसःआत्मप्रसादोमनसःप्रसन्नतानैर्मल्यलक्षणा तदोभयत्रइहपरत्रचस्वर्गादौगुणेषुविषयेष्वसंग'फलस्नेहराहित्य लक्षणवैराग्यंभवति अथभक्तिसाधनवैराग्यजन्मानंतरंकैवल्यसंभृतपथ.सम्यक्संपादितमोक्षमार्गोभक्तियोगोजायते तुशब्दात्तद्भक्तेष्वपि अथात्मनोहरे.प्रसादःस्यादनंतरंहरेरपरोक्षज्ञानंभवति कीदृशंप्र तिनिवृत्तमपक्रांतंसत्त्वादिगुणनिमित्तानामस्तिजायतइत्यादिषड्र्मीणांचक्रंपुनःपुनरावर्तनंयेनतत्तथोक्तं यद्वापसारितसत्त्वादिगुणाएवऊर्मयस्तरंगास्तेषांचक्रंयेनतत्तथेति यद्वा यासांहरिकथानांश्रवणा द्भगवदपरोक्षज्ञानंतदाप्रतिनिवृत्तगुणोर्मिचक्रंसत्त्वादिगुणनिमित्ताशनापिपासाशोकमोहरागद्वेषलक्षणाऊर्मयस्तेषांचक्रंनिरस्तंभवतितस्मादात्मप्रसादस्तस्मादुभयत्रगुणेष्वसंगस्तस्माद्वैराग्यात् कैवल्यंसं श्रियतेनेनेतिकैवल्यसंभृतमपरोक्षज्ञानंतदेवपंथामार्गोयस्यसतथोक्तः एवंविधोभक्तियोगोजायते अथकस्मात्कोनिवृत्तोरसज्ञःपुरुषस्तासुहरिकथासुरतिंनकुर्यादित्यर्थः १२ परीक्षित्पृष्टशुकोक्तभगवत्क

एतावानेवयंजतामिहनिःश्रेयसोदयः ॥ भगवत्यचलोभावोयद्भागवतसंगतः ११ ज्ञानंयदाप्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसादउभयत्रगुणेष्वसंगः ॥ कैव ल्यसंभृतपथस्त्वथभक्तियोगःकोनिर्वृतोहरिकथासुरतिंनकुर्यात् १२ ॥ शौनकउवाच ॥ इत्यभिव्याहृतंराजानिशम्यभरतर्षभः ॥ किमन्यत्पृष्टवान् भूयोवैयासकिमृषिंकविम् १३ एतच्छुश्रूषतांविद्वन्सूतनोर्हसिभाषितुम् ॥ कथाहरिगुणोदर्काःसतांस्युःसदसिध्रुवम् १४ सवैभागवतोराजापांडवेयोम हारथः ॥ बालक्रीडनकैःक्रीडन्कृष्णक्रीडांयआददे १५ वैयासकिश्चभगवान्वासुदेवपरायणः ॥ उरुगायगुणोदाराःसतांस्युर्हिसमागमे १६ आयुर्ह रतिवैपुंसामुद्यन्नस्तंचयन्नसौ ॥ तस्यर्तेयःक्षणोनीतउत्तमश्लोकवार्तया १७ तरवःकिंनजीवंतिभस्त्राःकिंनश्वसंत्युत ॥ नखादंतिनमेहंतिकिंग्रामपशवोऽपरे १८ श्वविड्वराहोष्ट्रखरैःसंस्तुतःपुरुषःपशुः ॥ नयत्कर्णपथोपेतोजातुनामगदाग्रजः १९

थांताद्विगुणीभूतरसेवस्यादित्याशयवान्शौनकःसूतंपृच्छति इतीति ऋषिमात्रस्यत्रिकालदर्शित्वमस्तीत्यतःकविमितिभगवंतमपरोक्षतोजानातीति १३ शुश्रूषतांश्रोतुकामानां सत्सभायांकदाचित्प्रसं गादितरकथापिसंभाव्यतइतिनेत्याह कथाइति ध्रुवमित्यनेननियमोयदर्शितः १४ अनयोरेकस्याप्यसत्त्वेनियमभंगःस्यादितिनेत्याह सवाइति तत्रहेतुमाह बालइति १५ अस्तूभयोःसत्त्वंततःकिं तत्राह उरुगायेति उरुगायेत्यनेनहरिकथायाअवश्यसद्भावंदर्शयति उरुभिर्वेदविद्याविशारदैर्महद्भिर्गीयतइतिउरुगायःसतांसामितोप्राचुर्येणहरिकथासत्त्वेपिप्रसंगादन्यकथास्यात् । नतथाश्रीशुक परीक्षितोरित्येतस्मिन्नर्थेहिशब्दः कथाइतिशेषः १६ वासुदेवकथामंतरेणजीवनंव्यर्थमित्याह आयुरिति उद्यन्अस्तंचयन्गच्छन्नसावादित्यःपुंसांयदायुर्हरतिवै । आदित्यस्यगतागतैरहरहः संक्षीयतेजीवनमितिवचनात् तस्यायुषोयउत्तमश्लोकवार्तयाऋतेविनाक्षणःकालविशेषःसनीतएववृथेत्यन्वयः १७ हंतलोकेदीर्घकालंजीवन्पुमान्स्तूयतइतितत्राह तरवइति तरूणांश्वासाद्यभावादि त्यतउक्तंभस्त्राइति भस्त्राहतयः । अयःसंतापनार्थाश्चर्मविशेषाः ॥ भस्त्राणांनिश्चैतन्यात्ततत्साम्यमत्राह नेति ग्रामपशवः सारमेयादयो मेहंतिरेतोमूत्रादिकमुत्सृजंति अपरेतिर्यग्जातिव्यतिरिक्ताःस्त्रीपुरु षाः अनेनहरिचरित्रश्रवणाभावेचेतनत्वमप्रयोजकमित्युक्तंभवति १८ एतदेवविशिनष्टि श्वविडिति विड्वराहोऽमेध्यसूकरः पशुर्विवेकशून्यः गदाभूतइतिपाठेगदांभृतइतिपदार्थःग्रामंश्रितइतिवत् १९

हतोपिहरिकथाश्रावंश्रावंवर्तमानस्यपुंसःश्रोत्रादींद्रियसाफल्येनायुषःसाफल्यमन्यथाऽव्यर्थमित्याशयेनाह बिलइति शृण्वतःशृणुतः बिलपर्वतस्येतिशेषः उरुगायगाथांनप्रगायतिचेत्ताहिंदार्दुरिकाद र्दुरस्यविद्यमानाजिह्वाऽसतीव २० वापदि शावौशवस्यविद्यमानौ २१ बर्हायितेपिच्छनेत्रवदाचरितेनिष्फलेइत्यर्थः लिंगानिप्रतिमाः द्रुमवत्जन्मभजतइति क्षेत्राणिपुण्यस्थानानि क्षेत्रंपु रेग्रहेदेहेकेदारेयोनिभार्ययोः । पुण्यस्थानेसमूहेचघृतमाज्यंबुसर्पिषोरितियादवः २२ भागवतस्यभगवद्भक्तजनस्यांघ्र्योरेणुं यद्वा भागवतयोर्भगवतोविद्यमानयोरंघ्र्योरेणुंनाभिलषेतनकांक्षेतजीवञ्छवो जीवन्मृतः श्रीविष्णुपद्याःश्रीविष्णुपदप्रियायाः । श्वसञ्छवःश्वासकृत्कुणपतुल्यः २३ पुरुषस्ययत्हृदयंकथारूपेणगृह्यमाणैर्हरिनामधेयैर्नविक्रियेतद्रवीभावात्मकंविकारंनाप्नोति तदिदमश्मसारवदति कठिनमयोघनंवा अथदैवाद्यदिविकारः तस्येदंलक्षणं । मुखेविकासलक्षणोविकारः । नेत्रेजलंस्रवति । गात्ररुहेषुरोमसुहर्षो रोमांचलक्षणःस्यादितिशेषः २४ यतएवंहरिकथाश्रवणाभावेजन्मा दे र्नैष्फल्यमथतस्मात्नृपतिनासाधुपृष्टः आत्मविद्याविशारदःपरमात्मविद्यायांपटुतरोवैयासकिर्नृपातियदाहतन्मामभिधेहि हरिकथाभिधानेमदन्यःकिंनस्यादत्राह मनइति मनोनुकूलंयथाभवतितत

बिलेबतोरुक्रमविक्रमान्येनशृण्वतःकर्णपुटेनरस्य ॥ जिह्वाऽसतीदार्दुरिकेवसूतनचेत्प्रगायत्युरुगायगाथाम् २० भारःपरःपट्टकिरीटजुष्टमप्युत्तमांगंन नमेन्मुकुंदम् ॥ शावौकरौनोकुरुतःसपर्यांहरेर्लसत्कांचनकंकणौवा २१ बर्हायितेतेनयनेनराणांलिंगानिविष्णोर्ननिरीक्षतोये ॥ पादौनृणांतौद्रुमजन्म भाजौक्षेत्राणिनानुव्रजतोहरेर्यौ २२ जीवञ्छवोभागवतांघ्रिरेणुंनजातुमर्त्योऽभिलषेतयस्तु ॥ श्रीविष्णुपद्यामनुजस्तुलस्याःश्वसञ्छवोयस्तुनवेदगंधम् २३ तदश्मसारंहृदयंबतेदंयद्गृह्यमाणैर्हरिनामधेयैः ॥ नविक्रियेताथयदाविकारोनेत्रेजलंगात्ररुहेषुहर्षः २४ अथाभिधेह्यंगमनोनुकूलंप्रभाषसेभागवतप्र धानः ॥ यदाहवैयासकिरात्मविद्याविशारदोनृपतिंसाधुपृष्टः २५ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेतृतीयोऽध्यायः ॥ ३ ॥ सूतउवाच ॥ वैयास केरितिवचस्तत्त्वनिश्चयमात्मनः ॥ उपधार्यमतिंकृष्णेऔत्तरेयःसतींव्यधात् १ आत्मजायासुतागारपशुद्रविणबंधुषु ॥ राज्येचाविकलेनित्यंनिरूढांम मतांजहौ २ पप्रच्छचेममेवार्थंयन्मांपृच्छथसत्तमाः ॥ कृष्णानुभावश्रवणेश्रद्दधानोमहायशाः ३

थाप्रभाषसे हेत्वंतरमाह भागवतेति अलस्त्वत्तएवश्रोतुमिच्छाप्रवर्ततइति २५ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेविजयध्वजकृतटीकायांतृतीयोऽध्यायः ३ संक्षेपतःश्रुतहरिचरितत्वात्तस्मिन्नेवावहि तांतःकरणस्यपरीक्षितोभक्त्यतिशयात्पुनर्विशेषतःश्रोतुकामस्यहरिसज्जनलीलाविलासविषयप्रश्नप्रकारःश्रीशुकाचार्यस्यगुरुदेवतानमस्कारपुरःसरंतत्प्रश्नप्रतिवचनप्रतिज्ञाप्रकारश्चास्मिन्नध्यायेप्रतिपाद्य ते तत्रप्रथमतःशुकोपदेशात्तस्यप्रवृत्तविज्ञानविरक्तीअनुवदति वैयासकेरिति आत्मनःसर्वगुणपूर्णस्यहरेस्तत्त्वस्यनिश्चयोयेनतत्तथा उपधार्यहृदिनिधायसतींमतिंभक्तिपरिप्लुताम् १ आत्मजायाराज्यादि ष्वितामलकालिलांत,करणस्यतस्यकृष्णेसन्मातिविधानंकथमत्राह आत्मेति सऔत्तरेयआत्मजायादावन्येषांनित्यंनिरूढांममताजहावित्यन्वयः हरेःसर्वस्वातंत्र्यादिज्ञानविधुराणामहंममेतिनित्य निरूढामनेनानित्यंतद्विदुषापुरैवत्यक्तामपितदाविशेषतस्त्यक्तवानित्यस्मिन्नर्थेचशब्दः आत्मादेहः स्वाम्यमात्यौपुरंराष्ट्रंकोशदंडौचतथासुहृत् । सप्तैतानिसमस्तानिलोकेस्मिन्राज्यमुच्यतइतिमनुवचना दविकलेसप्तप्रकृतिपूर्णे २ किमन्यत्पृष्टवानितिप्रश्नंपरिहरति पप्रच्छेति ३

संस्थामर्त्यं । यत्त्रैवर्गिकंधर्मार्थकामसाधनंयत्कर्मतत्त्वस्त्यात्मास्वामीतिभावंमक्तिगतः   एवमधिकारसामग्रीमान्राजायमर्थंयूयंमांपृच्छथइममेवार्थंपरिपप्रच्छ   शुकमितिशेषः ४ स्वाभीष्टंप्रष्टुंशु कवचनंस्तौति समीचीनमिति   यदिष्टसाधनावबोधकंतत्प्रतिबंधनिवर्तकंचतदेववचनंसमीचीनंदृष्टमेतत्कथमत्राह   तमइति   मह्यंममतमआंतरमज्ञानंविशीर्यतइत्यनेनसमूलभूतमुच्छिद्यतइत्युक्तंभवति मह्यमित्यनेनस्वेष्टसाधनंज्ञानंचयेनदीयतइतिसूचितंभवति   हेतुर्वाऽनेनोच्यते   मह्यंतमोविशीर्यतइतियेनतस्मात्समीचीनमिति   ५   आत्ममाययास्वेच्छयापारवश्यतयाप्रकृत्यावाऽन्यैर्दुर्विभाव्यं दुरूह्यमिदंविश्वंयथायेनप्रकारेणसृजते ६   येनप्रकारेणगोपायतिरक्षति   पुनर्येनप्रकारेणसंयच्छतेसंहरतितंप्रकारंभूयःपुनरपिविवित्सामिज्ञातुमिच्छामिपुरुशक्तिरनंतशक्तिः   परःपुमान् ७ आत्मानंजीवंसंसारेक्रीडयन्नवतारैश्चक्रीडयन्यांयांशक्तिमुपाश्रित्यविश्वस्यपदपेक्षितंतत्सर्वंसामान्यतोविशेषतश्चकरोति   तदपिविवित्सामीति चशब्देनानिर्विकारःसदाशुद्धइतिवाक्यंप्रमाणयति भगव च्चेष्टाविषयस्यज्ञानस्यवक्तारोज्ञानिष्वपिदुर्लभाइतिभावेनाह नूनमिति   अद्भुतंविज्ञेयमितिकिंवक्तव्यमित्यस्मिन्नर्थेचशब्दः ८ अथाप्येकःप्रश्नोस्तीत्याह यथेति   एकोहरिर्जन्मभिर्वासुदेवाद्यवतारैर्भूरिशः सृष्ट्यादिकर्माणिकुर्वन्प्रकृतेःसत्त्वादिगुणान्बिभ्रद्यथाकथंबिभर्ति   युगपत्क्रमशःक्रमेणवेति   तुशब्देनगुणानांविरुद्धस्वभावत्वेनयुगपद्ग्रहणेऽनुपपत्तिंसूचयति   अपिपदेनक्रमशोग्रहणंसं

संस्थांविज्ञायसंन्यस्यकर्मत्रैवर्गिकंचयत् ॥ वासुदेवेभगवतिस्वात्मभावंदृढंगतः ४॥ राजोवाच ॥ समीचीनंवचोब्रह्मन्सर्वज्ञस्यतवानघ ॥ तमोविशीर्यतेमह्यंहरेःकथयतःकथाः ५ भूयएवविवित्सामिभगवानात्ममायया ॥ यथेदंसृजतेविश्वंदुर्विभाव्यमधीश्वरैः ६ यथागोपायतिविभुर्यथासंयच्छतेपुनः ॥ यांयांशक्तिमुपाश्रित्यपुरुशक्तिःपरःपुमान् ७ आत्मानंक्रीडयन्क्रीडन्करोतिविकरोतिच ॥ नूनंभगवतोब्रह्मन्हरेरद्भुतकर्मणः ॥ दुर्विभाव्यमिवाभातिकविभिश्चापिचेष्टितम् ८ यथागुणांस्तुप्रकृतेर्युगपत्क्रमशोपिवा ॥ बिभर्तिभूरिशस्त्वेकःकुर्वन्कर्माणिजन्मभिः ९ विचिकित्सितमेतन्मेब्रवीतुभगवान्यथा ॥ शब्दब्रह्मणिनिष्णातःपरस्मिंश्चभवान्खलु १० ॥ सूतउवाच ॥ इत्युपामंत्रितोराज्ञागुणानुकथनेविभोः ॥ हृषीकेशमनुस्मृत्यप्रतिवक्तुंप्रचक्रमे ११ श्रीशुकउवाच ॥ नमःपरस्मैपुरुषायभूयसेसदुद्भवस्थाननिरोधलीलया ॥ गृहीतशक्तित्रितयायदेहिनामंतर्भवायानुपलभ्यवर्त्मने १२

भवितव्यमिति ९ नकेवलंविवित्सामिकिंतुवक्तव्यमित्यभिप्रार्थयेइत्याह विचिकित्सितमिति   यथायथावत्   एतद्वक्तुंतवपांडित्यंचास्तीत्याशयेनाह   शब्देति अनेनालौकिकमपिवस्तुयथाबोद्धुंशक्यंतथा वक्तावोधयितुंत्वंसमर्थइत्युक्तंभवति १० परीक्षित्पृष्टःकिंचकारेतिसूतःशौनकस्यहार्दशंकांपरिहरति   इतीति इतिशब्दःप्रकारवचनः हृषीकेशमित्यनेनमुख्यतोवागादींद्रियशक्त्युद्बोधकत्वंहरेरित्यभिप्रे तिप्रतिवक्तुंप्रचक्रमेप्रारब्धवान् भागवतसंहितामितिशेषः ११ परीक्षित्प्रश्नोत्तररूपत्वेनभागवतपुराणंवक्तुकामःशुकःशिष्टाचारंपरिपालयन्स्वेष्टदेवतांप्रणमति   नमःपरस्माइत्यारभ्यनमस्तस्माइत्यंतैः श्लोकैः । भूयस्त्वमुपपादयति सदित्यादिना सतःसत्यस्यजगतः   उद्भवउत्पत्तिस्थानं पालनरूपस्थितिः निरोधोलयः एतन्निमित्तंलीलयागृहीतंशक्तीनामिच्छाज्ञानक्रियाख्यानांत्रितयंयेनसततथोक्तस्त स्मै   इच्छाज्ञानंक्रियाचेतिनित्याःशक्तयईशितुरितिवचनान्नित्येतिपदमध्याहार्यंनित्यंगृहीतशक्तित्रितयायेत्यर्थः   वेदादिरेवात्रप्रमाणंप्रत्यक्षमितिभावेनाह   देहिनामितिदेहिनांजीवानांचक्षुरादिनानुपल भ्यवर्त्मनेदुर्ज्ञेयमार्गाय दूरस्थत्वादितिनेत्याह अंतर्भवायेति   अंतर्यामित्वेनसततमंतःस्थिताय योवैभूमातत्सुखं द्वाविमौपुरुषौलोकेइत्यादिवाक्यमत्रप्रमाणम् १२

सर्वस्मान्नारायणप्रसादसाधनाद्भक्तिपूर्वकंपुनर्नमनमेवतत्प्रीतिजनकमितिभावेनाह भूयइति भूयोपिपरस्मैपुरुषायनमइत्यन्वयः यतइष्टावाप्तितत्प्रतिबंधकनिवृत्तीस्यातांसएवंवंद्योदृष्टोस्यकथमितितत्राह । सदिति सतांनमनादिप्रशस्तकर्मणांपुंसांवृजिनंदुःखकारणंपापंछिनत्तिनिर्मूलयतीतिसवृजिनच्छित्तस्मै असतामप्रशस्तकर्मणामसुरादीनामसंभवायासत्तापादकाय सुखप्रतिबंधकजननिर्मूलकायेत्यर्थः । एतत्करणसामर्थ्यमस्यास्तीतिभावेनाह अखिलेति अखिलसत्त्वमूर्तयेपूर्णसाधुभावस्वरूपाय । निःशेषगुणपूर्णत्वात्सत्त्वइत्येवतंविदुरितिवचनात् साधुभावोगुणइतिज्ञायते अनेनसमस्तचराचरलक्षणप्राणिमूर्तयइत्येतन्निरस्त अथाप्यस्मादिष्टावाप्तिःकथमवगतेत्यत्राह पुंसामिति परमहंससबंधिन्याश्रमेव्यवस्थितानांसंन्यासधर्मवतांपुंसामनुमृग्यदाशुषेनिजानंदानुभवलक्षणमोक्षदात्रे । दाशृदानइतिधातुः अवधारणवाचिनापुनःशब्देनान्ययोगंनिवारयति एतेभ्यएवानुमृग्यंददातिनान्येभ्यइत्यर्थः १३ नन्वन्यशब्देनसंन्यासीतरज्ञानिविवक्षायांतमेवंविद्वानमृतइतीदमप्रमाणंस्यादज्ञविवक्षायामज्ञानांज्ञानदोविष्णुरितिचातःकेत्रविवक्षिताइतिमंदाशंकापरिहरिष्यन्भागवतशास्त्रोक्तविरुद्धयोगायेतइतिवक्ति नमोनमइति सात्वतसंहितोक्तविधिनाविष्णुमर्चयंतःसात्वतास्तेषांसात्वताऋषंज्ञानंभासयतिदीपयतीत्यृषभः ज्ञानमुद्दीप्यमुक्तिददातीत्यर्थस्तस्मै सत्त्वंतुशोभनत्वंस्यात्तद्युक्ताःसात्वतामताइतिवचनात्सात्वताःशोभनत्ववंतःतेपामनुत्पन्नज्ञानानातद्योगपुण्यवतांज्ञानंददातीत्यृषभःतस्माइतिवाऽनेनोक्तंवाक्यद्वयमपिप्रमाणमित्यायातमिति यःपरस्मैपुरुषायेतिप्रक्रांतःतेतस्मै यद्वा स्वचित्तस्थंसंबोध्यतेतुभ्यंनमइति एवंविधफलदातृत्वेनतत्स्वामीतिवाक्यार्थः । भसभर्त्सनदी

भूयोनमःसद्वृजिनच्छिदेसतामसंभवायाखिलसत्त्वमूर्तये ॥ पुंसांपुनःपारमहंस्यआश्रमेव्यवस्थितानामनुमृग्यदाशुषे १३ नमोनमस्तेस्त्वृषभायसात्वतांविदूरकाष्ठायमुहुःकुयोगिनाम् ॥ निरस्तसाम्यातिशयेनराधसास्वधामनिब्रह्मणिरंस्यतेनमः १४ यत्कीर्तनंयच्छ्रवणंयदीक्षणंयद्वंदनंयत्स्मरणंयदर्हणम् ॥ लोकस्यसद्योविधुनोतिकल्मषंतस्मैसुभद्रश्रवसेनमोनमः १५ विचक्षणायच्चरणोपसादनात्संगंव्युदस्योभयतोंतरात्मनः ॥ विंदंतिहिब्रह्मगतिंगतक्लमास्तस्मैसुभद्रश्रवसेनमोनमः १६ तपस्विनोदानपरायशस्विनोमनस्विनोमंत्रविदःसुमंगलाः ॥ क्षेमंनविंदंतिविनायदर्पणंतस्मैसुभद्रश्रवसेनमोनमः १७

स्योरितिधातोर्ष्टिलोपेनसलोपः । शास्त्रकुत्सितोयोगः ऐक्यध्यानलक्षणःसएषामस्तीतिकुयोगिनस्तेषांविदूरेकाष्ठापरिपूर्तिरपरिच्छिन्नलक्षणायस्यसतथातस्मै भगवदधिष्ठितदिङ्मात्रमपिनजानंतीत्यतोवाविदूरकाष्ठायेति । दिशस्तुककुभःकाष्ठाइत्यमरः । स्वतस्तृप्तत्वेनस्वप्रयोजनमपेक्ष्यज्ञानादिदातृत्वमितिभावेनाह निरस्तेति निरस्तौसाम्यातिशयौयेनतथोक्तं तेनराधसासंसिद्ध्यास्वधामनिस्वयंप्रकाशेब्रह्मणिअनवच्छिन्नचिदानंदैकरसेरंस्यतेरममाणाय सदातनोनुभावोयमितिशतृप्रत्ययः लोकविलक्षणेयंरतिरितिद्योतयितुंपरस्मैपदप्रयोगः प्रतिपदमनुसंधेयमितिनमसांबहुत्वम् १४ कीर्तनादिनाविधूतकल्मषस्यनमस्क्रियासंपद्यतइतिभावेनाह यत्कीर्तनमिति सुभद्रश्रवसेसुमंगलकीर्तये सद्यइत्यनेनभक्तिपूर्वकमितिसूचयति भद्रोप्यस्त्रीतुमंगलइतियादवः १५ वैराग्येणदृढीभूतयाभक्त्याभगवच्चरणनिषेवणंब्रह्मज्ञानसाधनंभवतीतिभावेनाह विचक्षणाइति यच्चरणोपसादनात् यच्चरणैकशरणप्राप्तिलक्षणनिषेवणादंतरात्मनोऽतःकरणस्य उभयत इहामुत्रविषयेषुसंगंस्नेहंव्युदस्यनिरस्यब्रह्मगतिंब्रह्मज्ञानंतेनमोक्षंचविंदंति । यस्यगुरुरूपस्यहरेश्चरणोपसत्तेरंतरात्मनः क्षेत्रज्ञस्योभयतःसंगंस्थूलसूक्ष्मशरीरसंगंव्युदस्यापोह्यब्रह्मगतिंब्रह्मस्वरूपंविंदंत्यवगच्छंतीतियन्मतंतद्धेतुवाचिनाहिशब्देननिरस्तं यतोभेदःप्रत्यक्षादिप्रमाणसिद्धोऽतोनुपपन्नऐक्यवादः । सुभद्रंश्रवःश्रवणंयस्यसतथातस्मै १६ १७

सज्जनसेवायाअप्येतादृशमाहात्म्यंकिमुतभगवत्सेवायाइतिभावेनतन्माहिमविशिष्टंनमति किरातेति । किरातादयोयेऽन्येपापास्तेसर्वेयदपाश्रयाश्रयाच्छुध्यंतीत्यन्वयः यस्मादन्यआश्रयोनास्तिये पातेयदपाश्रयाविभादयस्तेषामाश्रयात्सेवालक्षणात्शुध्यंतिविपापाभवंतीत्यर्थः शबरात्पर्णशबरीजाताःकिराताः आटविकाः वैदेहात्पुल्कसीजाताहुणाः । वैश्यात्ब्राह्मणीजातोवैदेहकः वैदेहकपुत्रा आंध्राः पुलिंदा अज्ञातविप्रादिभाषा मधुपायिनः । निष्ठ्यात्किरातीजाताःपुलिंदाः व्यभिचाराज्जातश्चौरस्तस्माज्जातावा शूद्राद्ब्राह्मणीजातश्चाडालस्तस्माज्जाताःपुल्कसाः ब्राह्मणाद्वैश्यायाजातो बष्ठः ब्राह्मणात्तस्यांबष्ठस्यकन्यायांजाताआभीराः कंकाःकर्पराः नृपाद्वैश्यायांजातायवनाःश्मश्रुलाः शकास्तुरुष्कविशेषाः डोंबुकुरुविंदपूतिवपूर्वाआदिशब्दगृहीताः तथाचानुक्तैःसहचतुःषष्टिजात यस्तथाचोक्तं ब्राह्मणस्यत्रयःपुत्रावर्णास्त्रिष्वनुलोमजाः । शूद्रस्यचत्रयःपुत्रास्तेष्वेवप्रतिलोमजाः । त्रयस्त्रयःक्षत्रविशोःप्रतिलोमानुलोमजाः । एतेद्वादशवर्णानांपुत्राएकैकशस्तुतं । चातुर्वर्ण्यंप्रसूयंतेचतुरश्च तुरःसुतान् । तेचत्वारिंशदष्टौचपूर्वैर्द्वादशभिःसह । ब्राह्मणाद्यैश्चतुर्भिश्चचतुःषष्टिर्हिजातयः । तेसर्वेदस्यवोदोषैःश्चौर्याद्यैःसद्भिःकृताइतिजातिवेकाभिधाने अन्येपापाब्रह्महत्यादिकर्तारः।तस्मैप्रभविष्णवे प्रभ वनशीलायनमइत्यन्वयः १८ यएवंविधमाहिमत्वेनप्रसिद्धःसएषआत्मापरमात्माभगवान्प्रसीदतामित्यन्वयः किंविशिष्टः । आत्मवतांभक्त्याऽपरोक्षीकृतपरमात्मतत्त्वानांमुक्तानां प्रशंसायांमतुबिति प्रश स्तमनसांज्ञानिनांवाधीश्वरःवेदधर्मतपोनुसारिणांपुंसांवशगत्वात्त्रयीमयोधर्ममयस्तपोमयइत्यनेनभक्तवात्सल्यंदर्शितं । तदुक्तं वेदानुसारिवशगःस्वेच्छयेति तत्रप्रमाणमाह गतेति व्यलीकंत्वप्रियेनृतइत्य

किरातहूणांध्रपुलिंदपुल्कसाआभीरकंकायवनाःशकादयः ॥ येन्येचपापायदपाश्रयाश्रयाच्छुध्यंतितस्मैप्रभविष्णवेनमः १८ सएषआत्मात्मवतामधीश्वर स्त्रयीमयोधर्ममयस्तपोमयः ॥ गतव्यलीकैरजशंकरादिभिर्वितर्क्यलिंगोभगवान्प्रसीदताम् १९ श्रियःपतिर्यज्ञपतिःप्रजापतिर्धियांपतिर्लोकपतिर्धरा पतिः ॥ पतिर्गतिश्चांधकवृष्णिसात्वतांप्रसीदतांमेभगवान्सतांपतिः २० यदंघ्र्यभिध्यानसमाधिधौतयाधियानुपश्यंतिहितत्त्वमात्मनः ॥ वदंतिचैत त्कवयोयथारुचंसमेमुकुंदोभगवान्प्रसीदताम् २१

भिधानात् गतव्यलीकैरजशंकरादिभिर्ब्रह्मशिवादिभिर्वितर्क्यैर्विशेषेणानुमेयंलिंगंजगज्जन्मादिलक्षणंयस्यसतथोक्तः १९ चित्तीकृततत्तदभीष्टसिद्धयेतत्तद्गुणविशिष्टस्यहरेःप्रसादंप्रार्थयते श्रियःपति रिति श्रीधरयोःपतित्वकथनेनसर्वाधिपत्येसिद्धेऽपितदवांतरदेवानामाधिपत्यंनिवारयति वेदादिवाङ्मात्राभिमानित्वेनश्रीप्रसादोऽपिप्रार्थनीयइत्याभिप्रायेणाश्रियःपतिरितीतरविशेषणान्येवमनुसंधेया नीति । बहुजनाश्रयत्वेनक्षमागुणनिधित्वेनस्थिरायाधरायाःपतिः । मनआदींद्रियव्यापारसाध्यस्यदेहांतरभोग्यफलस्ययज्ञकर्मणःफलदातृत्वेनतत्फलपालकः । फलपालनंकिमर्थमित्यतआह प्रजापति रिति कर्मण्यधिकृतस्यजनस्यजीवनहेतुत्वेनपतिः । प्रजातुजनपुत्रयोरिति । प्रजापतिशब्दवाच्यत्वंमुख्यमस्येतिवा प्रवृत्तेर्ज्ञानपूर्वकत्वेनसंभवात्तदर्थंधियांपतिरिति । लोकपतिरित्यनेनपुरंदरादीनांतत्पति त्वंनिवारयति पतिर्गतिश्चेत्यादिनाभक्तवात्सल्यातिशयत्वंदर्शयति निरपेक्षत्वेनसतांस्वामित्वापेक्षानास्तीतिशंकांनिवारयति सतांपतिः २० उक्तार्थजातमिदंकिंप्रमाणकंकथंवाज्ञातुंशक्यमितितत्राह यदंघ्रीति कार्त्स्न्येनानिवृत्तविषयसंस्कारस्मरणमभिध्यानंनिवृत्तविषयसंस्कारोऽसंप्रज्ञाताख्यःसमाधिः यदंघ्रिविषयाभ्यांताभ्यांधौतयानिर्णिक्ताविद्याकाममलयाधियाआत्मनःपरमात्मनस्तत्त्वमनुपश्यं तिहियस्मात्तस्मात्तद्दर्शनंप्रमाणम् दृष्ट्वाचयथारुचंयथारुचिशिष्यादिभ्यस्तत्तत्त्वंवदंतिचेत्यतस्तदुपदेशशास्त्रेणज्ञातुंचशक्यमित्यर्थः २१

ग्रंथारंभेसरस्वतीचतुर्मुखादिप्रसादश्चाभीष्टसाधनंभवतीत्यभिप्रायेणाह प्रचोदितेति पुरासर्गादौअजस्याऽऽपरब्रह्मणोजातस्यचतुर्मुखस्यहृदिसतींसर्वचेतनेभ्यउत्तमांस्थितिंसनियमलक्षणांवितन्वतासं स्कारोद्बोधद्वारेणविस्तारयतायेनभगवताप्रचोदितापेरितास्वलक्षणास्वरूपभूतनित्यत्वाख्यलक्षणास्वरूपनिर्णायकषडंगाख्यलक्षणावा सरस्वतीवागृग्वेदादिवेदरूपा तस्यास्यतश्चास्यचतुष्टयात्प्रा दुरभूदभिव्यक्ताभूत् चत्वारोनिर्गतावेदास्तस्यवक्त्रचतुष्टयादित्यादेश्च ऋषीणाब्रह्मज्ञानिनामृषभोज्ञानप्रदःपरमवागीश्वरीपतिर्नारायणोमेप्रसीदतां प्रसन्नोभवत्वित्यन्वयः किलेत्यनेनसर्वश्रुत्यादिसंवादंद शयति वार्तासंवादयोःकिलेतियादवः । यद्वा पुराशास्त्रप्रबंधेऽधिकृतेनाजस्यममपितामहस्यपराशरस्यहृदिसतींज्ञानोपदेशलक्षणांस्थितिंवितन्वतायेनव्यासेनप्रचोदितासक्षमास्वलक्षणास्वयोग्यसर्गादि दशलक्षणासरस्वतीभागवतसंहितारूपायस्यास्यतःप्रादुरभूत् सऋषीणामृषभोव्यासोमेप्रसीदतामित्यन्वयइति अजःपितामहेऽनादाविति प्रबंधेनिकटेतीतेपुराणेनागतेपुरेतिच । छागेविष्णौहरेब्रह्मजइत्य तोऽजस्यविष्णोःसतींस्थितिंवितन्वताहृदिलोकस्येतिशेषइतिवा २२ इदानींदेहेंद्रियादिप्रवर्तकंहरिंप्रसादयति भूतैरिति योविष्णुर्महद्भिर्व्याप्तैर्भूतैःपृथिव्यादिभिःपुरःशरीराणिनिर्माया
मूषुपूर्षुआत्मादि रूपैः शेतेइतियत्ततएवयःपुरुषःपुरिशयनयोगेनपुरुषनामा । तस्येदमेवशिरइतिश्रुतेःगोलकात्मकदेहव्याप्तत्वाद्वाषोडशात्मकएकादशेंद्रियपंचभूतव्यापीषोडशगुणान्शब्दादिविषयसारान्भुंक्ते नदुःखा निसभगवान्स्वविषयपुराणंव्याकर्तुकामस्यमेवचांस्यलंकृषीष्टस्वप्रीतिजनकानिकुर्यादित्यन्वयः २३ इदानींभक्त्यतिशयेनदेवकीनंदनंकटाक्षीकृत्यनमति नमइति सौम्याज्ञानसोमाहाः ब्रह्मादयोज्ञा

प्रचोदितायेनपुरासरस्वतीवितन्वताऽजस्यसतींस्थितिंहृदि ॥ स्वलक्षणाप्रादुरभूत्किलास्यतःसमेऋषीणामृषभःप्रसीदताम् २२ भूतैर्महद्भिर्यइमाःपुरोवि भुर्निर्मायशेतेयदमूषुपूरुषः ॥ भुंक्तेगुणान्षोडशषोडशात्मकःसोलंकृषीष्टभगवान्वचांसिमे २३ नमस्तस्मैभगवतेवासुदेवायवेधसे ॥ पपुर्ज्ञानमयंसौ म्यायन्मुखांभोरुहासवम् २४ एतदेवात्मभूराजन्नारदायेतिपृच्छते ॥ वेदगर्भोभ्यधात्साक्षाद्यदाहहरिरात्मनः ॥ २५ ॥ इतिश्रीभागवतेमहापुराणेद्वि तीयस्कंधेचतुर्थोध्यायः ॥ ४ ॥ नारदउवाच ॥ देवदेवनमस्तेस्तुभूतभावनपूर्वज ॥ तद्विजानीहियज्ज्ञानमात्मतत्त्वनिदर्शनम् १

नमयंज्ञानात्मकंयस्यहरेर्मुखांबुरुहादुत्पन्नमासवंमधुपपुस्तस्मैवेधसेकर्त्रेवासुदेवायभगवतेनमः सौम्या उद्धवादयोज्ञानमयंयन्मुखांभोरुहासवंपपुस्तस्मैवेधसेकंसाद्यसुरहंत्रेवासुदेवायशौरयेनमइतिवासौम्या नारदादयोज्ञानमयंज्ञानप्रतिपादकंभागवतपुराणंनामयन्मुखांभोरुहासवंपपुस्तस्मैवेधसेचतुर्मुखायनमः कीदृशायवासुदेवायनारायणपुत्राय शौरेःपुत्रःशौरिरितिवत्सौम्याः व्यासादयस्तस्मैवेधसेविधिपुत्रा यनारदायवासुदेवायवासुदेवभक्ताय सौम्यावैशंपायनादयः तस्मैवासुदेवायवासुदेवावतारायव्यासायनमःवेधसेभारतादिशास्त्रकर्त्रे २४ स्वाभीष्टदेवताप्रसादंप्रार्थयित्वासांप्रतंपरीक्षित्प्रश्नंप्रतिवक्तुमुपक्रमते एतदेवेति हरिरात्मनः स्वस्ययत्पुराणमाह आत्मभूःपरमात्मपुत्रोवेदगर्भोब्रह्मातदेतत्सर्वमितित्वत्प्रश्नप्रकारेणपृच्छतेनारदायाभ्यधादित्यन्वयः अर्थव्यत्यासोनास्तीत्येवशब्दः एतदुक्तंभवति यादौना रायणेनब्रह्मणेप्रोक्तं ब्रह्मणानारदाय नारदेनव्यासायव्यासेनमह्यंतदहंत्वत्प्रश्नपरिहारत्वेनवक्ष्यामीति २५ ॥ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेत्रिजयध्वजकृतटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ अस्मिन्नध्यायेवेदगर्भनारदाख्यायिकाकथनव्याजेनग्रंथादौप्रतिज्ञातंजगज्जन्मादिकारणत्वलक्षणंतदेकनिष्ठमितिसप्रपंचंप्रतिपाद्यते तत्रादौनारदप्रश्नप्रकारमाह देवदेवेति यदज्ञानमात्मनःपरमात्मन स्तत्त्वंनिदर्शयतीत्यात्मतत्त्वनिदर्शनंतज्ज्ञानंमह्यंविजानीहिविज्ञापय आत्मब्रह्मणोस्तत्त्वज्ञानेमहान्विशेषोस्तीतिभेदस्यपरमेश्वरप्रसादमंतरेणवागादींद्रियप्रवृत्तिरपिविपरीताभवतीतितत्स्वातंत्र्यस्य ब्रह्माकर्ताहंकरणमितिकरणस्यविवक्षयाव्यत्ययस्योक्तं जीवब्रह्मभेदोहरेःस्वातंत्र्यंनारदस्यकरणत्वमितित्रयव्यत्ययार्थः तदुक्तं व्यत्ययाभेदेस्वातंत्र्यकरणोष्विति १

ज्ञेयंपृच्छति यद्रूपमिति इदंविश्वंयस्यरूपमिवरूपंनतुसाक्षाद्रूपंचित्त्वेनसत्वेनचसादृश्याद्वशत्वाच्च । तदुक्तं । तद्वशत्वादिदंरूपंहरेर्नैवस्वरूपतइति । योधिष्ठानंभूलाधारोयस्यतद्यदधिष्ठानंनत्वारोप्यमाणसर्पस्यरज्जुवदधिष्ठानं अधिष्ठानमितिप्रोक्तंमूलाधारंविचक्षणैरिति । इदंयतः सृष्टंसंभूत यतोवाइमानिभूतानिजायंतइतिश्रुतेः । पीठवद्यस्मिन्संस्थासंस्थानंपरयतद्यत्संस्थं । यत्रिस्थतंदृश्यते वस्तुसंस्थानंतदुदीरितमितिच पूर्वंपृथिव्यादिवत् अत्रतुपीठवदितिविशेषान्नपुनरुक्तिः यःपरोयस्माज्जगतस्तद्यत्परं । हरिःपरोस्यजगतोह्यव्यक्तादेश्चकृत्स्नशइति यस्मात्संस्थामृत्युःसंहारोयस्यतद्यत्संस्थ येनपरंपालनंयस्यतद्यत्परं येनजातानिजीवंतियत्प्रयंत्यभिसंविशंतीतिवा यच्चयदधीनंच यदधीनायस्यसत्तातत्तदित्येवमण्यतइति। विभेदेविद्यमानेपिमिथोनित्यस्वरूपतइतिच तस्यहरेस्तत्त्वंतत्त्वतोयथावद्वदेत्यन्वयः२ भगवत्कर्त्र्यांशेभवतोज्ञानसामग्रीविद्यतइत्याह सर्वमिति हिशब्देन प्रजापतेनत्वदेतान्यन्यइत्यादिश्रुतिप्रसिद्धिंद्योतयति सर्वमेतदिति । प्रतिज्ञा भूतादिप्रभुरितिहेतुः हीतिव्याप्तिदर्शनं । करतलामलकवदितिनिदर्शनंविज्ञानेतिनिगमनं ३ नैतत्सामान्यज्ञानंकिंतुविशिष्टमेवहरिप्रसादायत्तत्वादितिभावेनाह यद्विज्ञानइति यस्यप्रसादाद्विज्ञानंयस्यतवसत्त्वयाद्विज्ञानः यआधारोयस्यसतथा यःपरोयस्मात्सतथा यआत्मास्वामीयस्यसयदात्मकः स्वंतंवेदेतिशेषः उक्तादधिकंज्ञातुंपूर्वपक्षंदर्शयति एकःसृजसीत्यादिना एकस्त्वमेवात्ममायया स्वेच्छया भूतानिचराचराणिपृथिव्यादिपंचभूतैःसृजसि ४ कुञ्जलादेःकालाद्यधिष्ठानंदृष्टं किमस्याधिष्ठानमत्राह आत्मन्निति अक्लमस्त्वंतानिभूतानिसूत्रनाभिरूर्णनाभिरिवात्मशक्तिंनिजसामर्थ्यमवष्टभ्यात्मन्नात्मनिभावयसेउत्पादयसिपालयसिच

**यद्रूपंयदधिष्ठानंयतःसृष्टमिदंविभो ॥ यत्संस्थंयत्परंयच्चतत्तत्त्वंवदतत्त्वतः २ सर्वंह्येतद्भवान्वेदभूतभव्यभवत्प्रभुः॥ करामलकवद्विश्वंविज्ञानावसितंतव ३ यद्विज्ञानोयदाधारोयत्परस्त्वंयदात्मकः ॥ एकःसृजसिभूतानिभूतैरेवात्ममायया ४ आत्मन्भावयसेतानिनपराभावयंस्वयम् ॥ आत्मशक्तिमवष्टभ्यसूत्रनाभिरिवाक्लमः ५ नाहंवेदपरंत्वस्मान्नावरंनसमंविभो ॥ नामरूपगुणैर्भाव्यंसदसत्किंचिदन्यतः ६ सभवानचरद्घोरंयत्तपःसुसमाहितः ॥ तेनखेदयसेनस्त्वंपराशंकांचयच्छसि ७ एतन्मेपृच्छतःसर्वंसर्वज्ञसकलेश्वर ॥ विजानीहियथैवेदमहंबुध्येनुशासितः ८ ब्रह्मोवाच ॥ सम्यक्कारुणिकस्येदंवत्सतेविचिकित्सितम् ॥ यदहंचोदितःसौम्यभगवद्वीर्यदर्शने ९ नानृतंबततच्चापियथामांप्रब्रवीषिभो ॥ अविज्ञायपरंमत्तएतावत्त्वंयतोहिमे १०**

पराकृत्वत्तोबहिर्नभावयेः ५ भावयसेवर्धयसेचइतियत्तस्मादस्माद्भवतोविश्वस्यपरमुत्तमंकारणमहनवेद अवरंहीनंसमंकारणंचनवेद तुशब्देनोक्तार्थमवधारयति । निगमयतिनामेति नाम्नावाचकेन रूपेणशुक्लादिना गुणैःसत्त्वादिभिःसत्स्थूलमसत्सूक्ष्मंचकिंचिद्वस्तुयद्भाव्यमुत्पाद्यंतत्त्वदन्यतइत्यपिगर्हितंनिदितं अतस्त्वमेवसर्वकारणमित्यर्थः६ ज्ञाततत्त्वेनत्वयाप्रश्नःकिमितिकृतइतितत्कारणमाह सभवानितितपोऽचरदितियत्तेनहेतुनात्वंनोऽस्मान्खेदयसे त्वय्यनलबुद्धिंप्रापयसित्वादितरकर्तृसद्भावेपराशंकांचयच्छसीत्यन्वयः तस्मात्प्रश्नःकृतइतिभावः ७ एतन्मेपृच्छतःसर्वसर्वज्ञसकलेश्वरेतिविशेषणद्वयमुक्तार्थस्थिरीकरणायोक्तं यथाबुध्येजानामितथेतिशेषः त्वदधीनायतःसत्ताह्यवरस्यापिकेशवेत्यनेनपूर्वपक्षोयमितिज्ञायते ८ नारदप्रश्नपरिहरिष्यन्नृतज्जिज्ञासितस्तौति सम्यगिति अहंभगवतोहरेर्वीर्यस्यसृष्ट्यादिलक्षणस्यदर्शनेख्यापनेचोदितइतियद्यस्मादतस्तेचिकित्सितंसम्यक्समीचीनमित्यन्वयः कारुणिकस्येत्यनेनलोकोपकारकंचेदमितिलक्षयति ९ तत्रप्रथमतःपूर्वपक्षाशमाक्षिपति । नानृतमिति त्वमेकःसृजसीतियथामांप्रब्रवीषितथातदनृतंनाकिं । अनृतमेव । बतत्वद्वचनंश्रुत्वाऽहंखिन्नः खेदानुकंपासंतोपविस्मयामंत्रणेबतइति [illegible] परमाधिकमीश्वरमविज्ञायनाहंवेदपरंत्वस्मादितिमामात्थतच्चानृतंतदप्यनृतमेव कुतइतितत्राह अपीति अतिगर्हितत्वात् अपिःपदार्थसंभावनान्ववसर्गगर्हासमुच्चयेष्वितिसूत्रात् । गर्हासमुच्चयप्रश्नशंकासंभावनास्वपीत्यभिधानाच्च । कस्मान्मदुक्तमाक्षिपसीतितत्राह एतावत्त्वमिति हिशब्दएवार्थे मेएतावत्त्वंतद्रोचिषारोचितरोचकत्वंह्येव । नातोधिकमितियत्तस्मादितिशेषः १०

एतदेवस्पष्टयति येनेति तत्रप्रमाणमाह यथेति तमेवाभांतमनुभातिसर्वं यदादित्यगतंतेजोजगद्भासयतेऽखिलमित्यादेः ११ बुभूषुणादुर्मतश्रवणप्राप्तापराधोभगवन्नमनेनपरिहर्तव्यइतिभावेनभगवंतं नमति नमइति तस्मैवासुदेवायभगवतेनमः वयंतंधीमहीत्यन्वयः अनेन ओंनमोभगवतेवासुदेवाय । नारायणायविद्महे वासुदेवायधीमहि तन्नोविष्णुःप्रचोदयात् । इतिद्वादशाक्षरीचतुर्विंशत्यक्षरीचेति द्वेविद्येहिरण्यगर्भेणनित्यंसेव्येइतिदर्शितं यद्वा मत्तःपरमविज्ञाय यथा एकःसृजसीत्यादियंप्रकारंमांब्रवीषितच्चतत्प्रकारविषयवचनमेवानृतंनान्यत् यद्रूपमित्यादि तदेवानृतंकुतइत्यतआह नेति प्रमाणविरोधात् नाभावान्यविरोधेष्वितिवचनात् अयंपक्षःसंभावितइत्याह अपीति बलसंतोषहेतुत्वात् कुतोनृतमिति तत्राह एतावत्त्वमिति यतोयस्माद्विष्णोर्मएतावत्त्वपरिच्छिन्नप्रभावत्वहिप्रसिद्धं कथंप्रसिद्धमित्यतउक्तमेवविशिनष्टि येनेति । अनेनहरेःकरणत्वंतत्रकर्तृत्वंप्रतीतं नतुहरेःस्वातंत्र्यकर्तृत्वमित्याशंक्य दासभावकथनेनतत्स्पष्टयति नमइति रामेणमुक्तःशरोरावणमवधीदित्यादौविवकरणत्वमपिमुख्यकर्तृत्वंप्रयोजयतीत्यतःकरणत्वप्रयोगोनकिंचित्करः नन्वेवंचेच्चवकर्तृत्वप्रवादःकथमत्राह यन्माययेतित्रिविधामाया एकाहरेरिच्छामुख्या द्वितीयाऽमुख्याप्रकृतिस्तृतीयाऽमुख्यतमाजीवानांबंधकशक्तिरिति तत्रयस्याविष्णोरिच्छाधीनयादुर्जययाहरिभजनवर्जितैर्जेतुमशक्यया १२ यस्यहरेरीक्षापथेदृष्टिमार्गेस्थातुंविलज्जमानयाचित्प्रकृत्याऽभिमन्यमानयाशैवल्याख्ययाजीवस्वरूपाच्छादिकयाऽमुयामाययामोहिताअन्यथाज्ञानमाप्ताअतएवदुर्धियोजनाममवशेविश्वमस्ति । सर्वस्याहंकर्तेतिविकत्थंतेतंधीमहीत्यन्वयः मुख्यामायाहरेःशक्तिरमुख्याप्रकृतिर्मतेत्यादिनात्रैविध्यावगमात्रैंद्रजाललक्षणामायाऽत्रोच्यते १३ ननुविष्णोरितरत्कारणंनास्तीतिकथमुच्यते । पृथिव्यादीनांप्रातिस्विककारणत्वप्रतीतेरितितत्राह द्रव्यमिति द्रव्यंपृथिव्यादि कर्मपुण्यपापलक्षणं पृथिव्यादीनांप

**येनस्वरोचिषाविश्वंरोचितंरोचयाम्यहम् ॥ यथार्कोऽग्निर्यथासोमोयथर्क्षग्रहतारकाः ११ तस्मैनमोभगवतेवासुदेवायधीमहि ॥ यन्माययादुर्जययामांवदंतिजगद्गुरुम् १२ विलज्जमानयायस्यस्थातुमीक्षापथेऽमुया ॥ विमोहितादिकत्थंतेममाहमितिदुर्धियः १३ द्रव्यंकर्मचकालश्चस्वभावोजीवएवच ॥ वासुदेवात्परोब्रह्मन्नचान्योऽर्थोऽस्तितात्त्वतः १४ नारायणपरावेदादेवानारायणांगजाः ॥ नारायणपरालोकानारायणपरामखाः १५ नारायणपरोयोगोनारायणपरंतपः ॥ नारायणपरंज्ञानंनारायणपरागतिः १६**

रिणामविशेषोवा कालःपरिणामहेतुःत्रुटिलवात्मकः स्वभावःसात्त्विकादिः जीवःसुखदुःखाश्रयः द्रव्यंपुरोडाशादि कर्मऋत्विगादिव्यापारः कालोवसंतादिः स्वभावोब्राह्मणत्वादिः जीवोयजमानसंज्ञइतिवा द्रव्याद्यन्यतरोअन्योर्थोवासुदेवात्परोधिकोनास्तितर्हितत्समःकश्चित्स्यादत्राह तात्त्वतइति नेत्यनुवर्तते तात्त्वतःतद्वदेवस्थितः समोपिनास्तीत्यर्थः तद्वदेवस्थितंयत्तुतात्त्वतंतत्प्रचक्षतइतिवचनात् अनेनद्रव्यादीनांप्रातिस्विककारणत्वस्यभगवदेकनियतत्वेनहरेरखंडकर्तृत्वंसुस्थिरमितिसिद्धम् १४ ननु हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआसीत् ब्रह्मादेवानांप्रथमःसंबभूवविश्वस्यगोप्ताभुवनस्यकर्तेत्यादिश्रुतयस्तद्गुणप्रतिपादनपराःकथमन्यविषयाःस्युरित्याशंक्यमदंतस्थस्यमन्नाम्नोहरेर्गुणप्रतिपादकाइत्याशयेनाह नारायणपराइति स्वप्रतिपाद्येषुवस्तुषुनारायणएवप्रतिपाद्यत्वेनपरोऽधिकोयेषांतेतथोक्ताः सर्वस्मादुत्कृष्टंनारायणमेवप्रतिपादयंतीतिकुतइतितत्राह देवाइति नारायणस्यचक्षुराद्यवयवेभ्योजाताइत्यनेनदेवानामवरत्वंनारायणस्योत्कृष्टत्वमुक्तमितिज्ञायते नारायणएवपालकत्वेनपरोयेभ्यस्तेतथोक्ताः अहंहिसर्वयज्ञानामित्यादेरिज्येष्विंद्रादिष्वयंपरइतिकृत्वानारायणपरानखाइत्युक्तम् १५ अष्टांगयोगेनयोज्यमानेष्वपिपरःहरिरेव कृच्छ्रचांद्रायणादितपसांविषयोपिसएवअत्रापितपसासायुज्यमानानांपरइत्यर्थः नारायणपरंज्ञानंज्ञानेनपरमज्ञेयोहरिः नारायणपरागतिराश्रयेषुगम्येषुवामुख्याश्रयोमुख्यगम्यश्चायमेव तदुक्तं गम्येज्ञेयेवाज्येषुगोज्येषुचपरोहरिरित्यादि अनेनहिरण्यगर्भादिशब्दानांचतुर्मुखादिविषयत्वमपहस्तितं सर्ववेदायत्पदमामनंतीति १६

ननुभवतःस्रष्टृत्वाभावेकथंस्वनामलोकेख्यातंवर्ततइत्यतस्तंप्रकारंदर्शयति तस्यापीति तद्दृष्टिप्रतिष्ठध्युंकोपिसमर्थोनास्तीति । ईशस्येति ईशित्वंचवरादिप्रासनेति निर्विकारस्येति एतदपिमलवत्प्रतिबंध केनान्यथानभवतीत्यखिलस्वामिनइति एवंविधस्यतस्यहरेरपिशब्दात्तांश्रयश्चईक्षयैवकटाक्षवीक्षणेनैवाभिचोदितस्तेनसृष्टोहंसृज्यंजगत्सृजामीत्यन्वयः एवशब्देनसृष्टौप्रयोजकांतरंनिवारयति १७ एवंहरेर्मुख्यकर्तृत्वंप्रदर्श्याधुनायुगपत्क्रमशोपिवेतिप्रश्नंपरिहरति सत्त्वंरजस्तमइति तेनहरिणानित्यंगृहीताअपिसत्त्वंरजस्तमइतित्रयोगुणा।निर्गुणस्यसततंसत्त्वादिगुणरहितस्यविभोर्माययेच्छयास्थित्या दिषुनिमित्तभूतेषुक्रमशोयुगपच्चगृहीताइत्यन्वयः माययेतिविशेषणान्मूलसृष्ट्यादिषुक्रमशोदैनंदिनसृष्ट्यादिषुयुगपत्गृहीताइतिविशेषः तदुक्तं नित्यंगृहीताःसत्त्वाद्याःस्थित्यादिषुविशेषतः।युगपत्क्रमश श्चैवेति १८ रजोगुणमुपादानीकृत्यसृष्टिंवक्ष्यन्हरेःसत्त्वादिगुणैर्जीवबंधकत्वमहिमानमाह कार्येति पुरुषमितिजातावेकवचनं द्रव्यज्ञानक्रियाश्रयाः द्रव्यंतामसाहंकारकार्यंशरीरं । ज्ञानंवैकारिकाहंका रकार्यंमनःश्रोत्रेंद्रियाणिच । क्रियातैजसाहंकारकार्यंवागादींद्रियजातं आश्रयोयेषांतेतथोक्ताः एवंविधाः प्रकृतेःसत्त्वादयोगुणाअभिमानमतरेणानित्यदामुक्तंप्रकृतिसंबंधविधुरंमायिनंस्वतोज्ञानिनंपुरु षंजीवसमुदायंकार्यकारणकर्तृत्वेचबध्नंतीत्यन्वयः तत्रायंविभागः तमोगुणःकार्येशरीरेतद्गतदुःखाद्यनुभवेनबध्नाति रजोगुणःकर्मकारणैरिंद्रियैःकारणेषुकर्मसुबध्नाति सत्त्वगुणस्तुमनसाज्ञानेंद्रियैश्चांतरं यत्सुखमनुभवामीतितत्रकर्तृत्वेबध्नाति इदमुक्तंभवति। शरीरगतदुःखाद्यनुभवे तमोगुणः । कर्मसुरजोगुणोहंसुखीतिसुखानुभवेसत्त्वगुणःकारणं । गुणानामचेतनत्वेनस्वतःप्रवृत्त्यनुपपत्तेः तन्नियमनेषु

तस्यापिद्रष्टुरीशस्यकूटस्थस्याखिलात्मनः ॥ सृज्यंसृजामिसृष्टोहमीक्षयैवाभिचोदितः १७ सत्त्वंरजस्तमइतिनिर्गुणस्यगुणास्त्रयः ॥ स्थितिसर्गनिरो धेषुगृहीतामाययाविभोः १८ कार्यकारणकर्तृत्वेद्रव्यज्ञानक्रियाश्रयाः ॥ बध्नंतिनित्यदामुक्तंमायिनंपुरुषंगुणाः १९ सएषभगवाँल्लिंगैस्त्रिभिरेतैरधोक्षजः ॥ स्वलक्षितगतिर्ब्रह्मन्सर्वेषांममचेश्वरः २० कालंकर्मस्वभावंचमायेशोमाययास्वया ॥ आत्मन्यदृच्छयाप्राप्तंविबुभूषुरुपाददे २१

स्वकारणमीश्वरेच्छेति तदुक्तं ज्ञानेंद्रियैश्चमनसासत्त्वंबध्नातिपूरुषं । रजःकर्मेंद्रियैर्नित्यंशरीरेणतमस्तथेत्यादि १९ नकेवलमेतानिदेहेंद्रियमनांसिबंधकानि । हरिप्रसादसामग्र्योयोग्यानामुक्तिसाधकानि चेत्याह सएषइति योयेनस्वरोचिषाविश्वमित्यारभ्यकार्यकारणकर्तृत्वइत्यंतेनग्रंथेनप्रतिपादितःसएषोधोक्षजोभगवानेतैस्त्रिभिर्देहेंद्रियमनोभिर्लिंगैर्ज्ञानोपायलक्षणैर्यमादिसाधनैर्यतमानैरेतैर्जीवैःस्वलक्षि तगतिःप्रदर्शितस्वरूपोभवति एतदुक्तंभवति देहेंद्रियमनोजयिनस्तैरेवसाधनैर्भगवद्विषयैस्तंपश्यंतीति स्वप्रसादादिमंजीवःपश्येत्तेनस्वलक्षितामितिच अधःकृतेंद्रियजन्यज्ञानत्वेनमुक्तोप्यधोक्षजःस्यादि त्यतःसर्वेषामिति सर्वेषांमुक्तानां। स्वस्यसर्वांतर्यामित्वेपिनारदस्यविशेषशंकापरिहारायममचेतिविशेष्योक्तम् २० सृज्यंसृजामिसृष्टोहमितीममर्थंस्पष्टयतुंसृष्टिप्रकारमाह कालमिति ब्रह्मज्ञानेमुख्यलक्षणंजग ज्जन्मादिकारणत्वमेवेतिज्ञापयितुमित्यतोवासृष्टिप्रकारमाह कालमिति मायेशोलक्ष्मीपतिःपरनामस्वानिमेषांतेसृष्टिकालेप्राप्तेविबुभूषुः बहुधाभवितुकामः अनादितएवात्मन्यात्मानियदृच्छयास्वेच्छयाप्राप्त मेवकालं । कर्मजीवानांनानाविधादृष्टं । स्वभावंसात्त्विकादिलक्षणं । चशब्दात्सगुणत्रयांप्रकृतिंस्वमाययास्वशक्त्याविशेषतउपाददेइत्यन्वयः प्रकृतिंप्रविश्यस्वशक्त्याक्षोभयामासेत्युक्तंभवति । प त्रान्यहेत्वभावःस्यादीश्वरेच्छादिनाविना तदिच्छाहियदृच्छास्यादतस्तत्रयदृच्छयेति । कालकर्मस्वभावादिनित्यंयदृच्छयासदा । प्राप्तमेवविशेषेणसृष्ट्यादावुपनयत्यजइतिच । ईशोबह्वीःपुरःसृष्ट्वातत्रैवब हुरूपतां । तच्चनियामकतयाप्राप्तंकालाद्युपाददइतिवचनेभ्योनमायामयीसृष्टिरत्रोच्यतइतिसिद्धम् २१

गुणव्यतिकरात्मकमूलप्रकृतेर्महत्तत्त्वोत्पत्तिप्रकारमाह । कालादिति । यदासिसृक्षुर्विष्णुः कालकर्मस्वभावरजोगुणानाविश्यसृष्टयेप्रेरकस्तमोगुणोरजोगुणेनचसंयुक्तोभूत्सः गुणत्रैरूप्यात्मकोगुणव्यतिकरः तस्मात्कालादितिपंचमीतृतीयार्थे कालेनसृष्टिहेतुना । कर्मणः कर्मणाहिरण्यगर्भादृष्टेनतदुपकृतात् परिणामस्वभावतइतितसिः सतृतीयार्थे विकारस्वभावयामूलप्रकृत्याचसहितात्पुरुषाधिष्ठितादिति पुरुषेणविष्णुनाधिष्ठायक्षोभमाणान्महतोमहत्तत्त्वस्यचतुर्मुखदेहस्थानीयस्यजन्माभूदित्यन्वयः गुणानांव्यतिकरोविषमावस्थायस्मिन्तस्मादव्यक्तादितिवा । तदुक्तं गुणकालस्वभावेष्वीशेनाधिष्ठितेष्वहः । जगदादिर्महत्तत्त्वमभूत्तस्येच्छयाहरेरिति २२ तुशब्देनकालादिकमनुकर्षतिकालकर्मस्वभावेभ्योविकुर्वाणाद्रजःसत्त्वोपबृंहितात्सत्त्वेनानुस्यूतरजोगुणेनप्रवृद्धान्महत्तत्त्वात्तमः प्रधानस्तत्त्वविशेषोभवदित्यन्वयः द्वितीयस्तुशब्दोमहत्तत्त्वमपेक्ष्यतमःप्रधानत्वंनेतरापेक्षयातदपेक्षयासत्त्वप्रधानएवेत्यस्मिन्नर्थे इतोपितमःप्रधानत्वमौपचारिकमितिभावेनाह द्रव्येति द्रव्याणिभूतानिज्ञानंज्ञानेंद्रियाणिक्रियाकर्मेंद्रियाणिचात्मास्वरूपंयस्यसतथा २३ किंनामकोसौपदार्थइतितत्राह सोहंकारइति तद्विभागमाह कुर्वन्निति त्रीणिदर्शयति वैकारिकइति यस्याहंकारस्यभिदाभेदः २४ प्रकारांतरेणतद्भेदमाह द्रव्यशक्तिरितिद्रव्यनामकपंचभूतोत्पादनशक्तिमत्त्वात्क्रियानामककर्मेंद्रियजननशक्तिमत्त्वाच्चथाज्ञाननामकज्ञानेंद्रियजननशक्तिमत्त्वान्मनोदिगादिदेवानांचोत्पत्तिशक्तिमत्त्वात्तस्याहंकारात्मनःप्रभोरुद्रस्यद्रव्यशक्तिरित्यादिभेदोऽवगंतव्यः । तथाचोक्तं भूतानिद्रव्यनामानिज्ञानंज्ञानेंद्रियाणिचेत्यादि । द्रव्याद्युत्पादनशक्तिमत्त्वात्द्रव्यादिशक्तिरित्युक्तं तंप्रकारमाह तामसादपीति अपिशब्दः कालकर्माद्यनुक

कालाद्गुणव्यतिकरात्परिणामस्वभावतः ॥ कर्मणोजन्ममहतःपुरुषाधिष्ठितादभूत् २२ महतस्तुविकुर्वाणाद्रजःसत्त्वोपबृंहितात् ॥ तमःप्रधानस्त्वभवद्द्रव्यज्ञानक्रियात्मकः २३ सोहंकारइतिप्रोक्तोविकुर्वन्समभूत्त्रिधा ॥ वैकारिकस्तैजसश्चतामसश्चेतियद्भिदा २४ द्रव्यशक्तिःक्रियाशक्तिर्ज्ञानशक्तिरितिप्रभो ॥ तामसादपिभूतादेर्विकुर्वाणादभून्नभः २५ तस्यमात्रागुणःशब्दोलिंगंयद्द्रष्टृदृश्ययोः ॥ नभसोथविकुर्वाणादभूत्स्पर्शगुणोऽनिलः २६ परान्वयाच्छब्दवांश्चप्राणओजःसहोबलम् ॥ वायोरपिविकुर्वाणात्कालकर्मस्वभावतः ॥ उदपद्यततेजोवैरूपवत्स्पर्शशब्दवत् २७ तेजसस्तुविकुर्वाणादासीदंभोरसात्मकम् ॥ रूपवत्स्पर्शवच्चांभोघोषवच्चपरान्वयात् २८

र्णार्थः भूतादेर्भूतानांमूलकारणात् २५ तस्याकाशस्यमात्रागुणःपंचेंद्रियैर्मेयत्वान्मात्रागुणःशब्दोऽभूत्तस्मान्नभोप्यभूदित्युत्पत्तिविशेषोऽत्रज्ञातव्यः । तथावक्ष्यमाणत्वात्तत्प्रयोजनमाह लिंगमिति यच्छब्दरूपंद्रष्टृदृश्ययोर्द्रष्टुर्हरेर्दृश्यस्यविश्वस्यचलिंगंज्ञापकंप्रमाणं तदुक्तं पंचेंद्रियाभिमेयत्वान्मात्रागुणइतीरितः । शब्देनैवपरोद्रष्टाज्ञायतेजगदेवचेति चशब्दःक्वचिदाश्रितोगुणत्वादिति स्पर्शाख्योगुणस्त्वगिंद्रियैकग्राह्योयस्यसतथा २६ परस्याकाशस्यान्वयात् संसर्गात्शब्दवान्शब्दगुणोपेतः वायोरौत्पत्तिकगुणानाह प्राणइति सर्वचेष्टयितृत्वात्प्राणः । अभिभवशक्तित्वात्ओजोऽवष्टंभशक्तिर्वा अनभिभाव्यत्वात् सहःस्वेच्छाकारणशक्तिस्वरूपत्वाद्बलं तदुक्तं सर्वचेष्टयितृत्वात्तुप्राणाभिभवशक्तितः । ओजास्त्वित्यादि । ओजोऽवष्टंभबलयोरितिपादवः । कालकर्मस्वभावतोविकुर्वाणाद्वायोस्तेजउदपद्यतउत्पन्नमभूत् तेजःस्वतोरूपवत्कारणानुस्यूतत्वात्स्पर्शादिगुणवत् उपाधिवशात्स्पर्शादिगुणवत्त्वंनस्वतइति वैशेषिककल्पितरवकपोलकल्पितमितिदर्शितं वाइत्यनेन २७ विकुर्वाणात्तेजसइत्यादौकालकर्मस्वभावतइत्येतदनुवर्तनीयं तदन्वयात्कारणपरंपरान्वयात्रसगुणआत्मास्वरूपंयस्यतत्तथारसगुणोत्पत्तिपूर्वकमितिभावः घोषवच्छब्दवत् २८

१ मात्राशब्दःकर्मव्युत्पत्त्यामेयार्थः । पंचेंद्रियेतियोग्यता[illegible] । [illegible] त्वगादिवेद्यत्वस्यापिसंभवात्पंचेंद्रियाभिमेयत्वमुक्तम् ॥

सर्वेगुणाःपृथिव्यांविशिष्यंतइतिविशेषः पृथिवी गंधवानितिगंधतन्मात्रागुणोत्पत्तिपूर्वकमित्यर्थः परान्वयात्करणसंसर्गात् २९ वैकारिकाहंकारात्सृष्टिप्रकारमाह वैकारिकादिति वैकारिकाहंका रात्सात्त्विकात्मनोऽतःकरणं। शब्दज्ञानादिविशिष्टकार्यशक्तित्वाद्वैकारिकनामानोदेवाः तेअपितस्माज्जज्ञिरइतिशेषः। तदुक्तं। विशिष्टकार्यशक्तित्वाद्देवावैकारिकाःस्मृताइति। न्यूनाधिकसंख्या ...देवानामसंकीर्तनंकरोति दिग्वातेति प्रचेतावरुणः अश्वीइत्यश्विनौ। उपेंद्रोविष्णुस्तस्यपादाभिमानित्वं किंतुपादाभिमानिनोयज्ञनाम्नोदेवस्यांतर्यामित्वेनपादांगुष्ठमधिष्ठायशरी ...संकीर्तनं अनाद्यनंतोपिहरिर्वैकारिकगुणेष्वजः। अवतीर्णःपदांगुष्ठमध्यास्तेविश्वभुग्विभुरित्यादेः कोदक्षप्रजापतिः ३० तैजसाहंकारकार्याणिकिमितिनोच्यतइतिपक्षमपेतिभावेना ...तैजसादितित्रापिकालाद्यनुकर्षःकर्तव्यः। तेषांशक्तिवैषम्यात्कोडीकारेणविभागमाह ज्ञानशक्तिरिति अचेतनानामिंद्रियाणांज्ञानादिजनकत्वंकथंघटतइतितत्राह बुद्धिरिति ज्ञानेंद्रियाणांज्ञाने ...जनकत्वेऽधिक्येस्याःसाज्ञानशक्तिः बुद्ध्यभिमानिन्युमाबुद्धिः कर्मेंद्रियाणांक्रियायांक्रियाजननेशक्तिर्यस्य साक्रियाशक्तिः प्राणोऽहंकारिकश्चतैजसः तैजसाहंकारादुत्पन्नावित्यर्थः ज्ञानेंद्रियाणांदे वानांज्ञानशक्तिरुदाहृतेत्यादावुदीर्यमाणेदेवानांज्ञानादिशक्तिरपिबुद्धिप्राणयोःप्रसादादित्यवगंतव्यं इंद्रियाणांतैजसाभिधानमतिजाज्वल्यमानत्वात् भूतानांतामसत्वंचज्ञानक्रियाशक्त्योरभावात् तदु क्तं अतिजाज्वल्यमानत्वात्तैजसानींद्रियाण्यपीत्यादि भूतानांद्रव्यत्वंचद्रवणप्राप्त्यानिमित्तं अहंपूर्वमहंपूर्वमितिविवदमानयोरिवास्थितयोर्द्वयोः पृथिव्यपोर्वायुतेजसोर्वावेगलक्षणसंस्कारसंपर्का

**विशेषस्तुविकुर्वाणादंभसोगंधवानभूत् ॥ परान्वयाद्रसस्पर्शरूपशब्दगुणान्वितः २९ वैकारिकान्मनोजज्ञेदेवावैकारिकादश॥ दिग्वातार्कप्रचेतोश्विवह्नींद्रोपेंद्रमित्रकाः ३० तैजसात्तुविकुर्वाणादिंद्रियाणिदशाभवन् ॥ ज्ञानशक्तिःक्रियाशक्तिर्बुद्धिःप्राणस्तुतैजसः ३१ श्रोत्रंत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्रांघ्रिपायवः ॥ यएतेऽसंगताभावाभूतेंद्रियमनोगुणाः ॥ यदायतननिर्माणेनशेकुर्ब्रह्मवित्तम ३२ तदासंहत्यचान्योन्यंभगवच्छक्तिचोदिताः ॥ सदसत्त्वमुपादायनोभयंससृजुर्ह्यदः ३३ वर्षपूगसहस्रांतेतदंडमुदकेशयम् ॥ कामकर्मस्वभावस्थोजीवोजीवमजीजनत् ३४**

न्मिथोद्रवणंयुज्यते आकाशस्यव्यापकत्वेनद्रवणाभावेऽपिप्रदेशात्मनातत्संभवात् द्रव्यत्वंयुक्तं तदुक्तं द्रव्यंतुद्रवणप्राप्यंद्वयोर्विवदमानयोः। पूर्ववेगादिसंबंधादाकाशश्चप्रदेशतइति ३१ इंद्रियाणांविशेष नामान्याह श्रोत्रमिति श्रोत्रं त्वक्त्वगिंद्रियं दोषौहस्तौ मेढ्रंगुह्येंद्रियं बाह्यसृष्टिमुक्त्वातेभ्यस्तत्त्वेभ्योब्रह्मांडसृष्टिप्रकारमाह यएतेइति येएतेकथिता भूतेंद्रियमनोगुणाइत्युपलक्षणं पंचभूतदशेंद्रियदे जसबुद्धिप्राणमनःशब्दादिसत्त्वादिगुणमहदहंकाराख्याभावाःपदार्थाः अन्योन्यमसंगता असंश्लिष्टाः यदायतननिर्माणेब्रह्मांडकरणेनशेकुःशक्तिमंतोनासन् ३२ तदाभगवंतमभिष्टूयशरणंगताः ततः स्तुतिप्रसन्नस्यतस्यचेष्टकरूपेणतंगणंप्रविष्टस्यहरेःशक्त्याचोदितामिथःसंहत्यसंश्लिष्यसदसत्त्वंव्यक्ताव्यक्तत्वधर्मवत्पृथिव्यादिभूतत्रयमाकाशवाय्वाख्यभूतद्वयंचोपादायउपादानीकृत्य नोऽस्माकंसंसा रमयजनकमदोब्रह्मांडं समसृजुरित्यन्वयः नोभयंसदसद्विलक्षणमित्येतदयुक्तं यतःसत्यत्वंप्रत्यक्षादिप्रमाणसिद्धमतइति हेतुवाचिनोहिशब्दाद्ब्रह्मांडंसंसारेनोभयकारणमितिभयहेतुत्वंप्रतीयते। तदुक्तं ब्र ह्मांडंहिक्वदंतीतिजीवानांभयकारणं। तत्रहिसंसृतिरिति। आकाशवायूत्वव्यक्तौइतरेऽव्यक्ताशिवाइत्यादेर्भूतानांसदसत्त्वंयुक्तं ३३ ब्रह्मांडांतःसृष्टिंवक्तुंहरेस्तत्रव्यक्तिप्रकारमाह वर्षपूगेति कालाद्युद्बोधकत्वे नकालकर्मस्वभावस्थोजीवःसंसारव्यतिरिक्तःपरमेश्वरःसहस्रवत्सरमुदकेशयमावरणजलमध्येस्थितंतदंडंवर्षपूगसहस्रांतेतैस्तत्त्वैःसहप्रविश्य तदंडंयदास्वात्मानंप्रसूतेतदापरिवृत्यजीवंस्वात्मानंतत्राजीज नत् व्यंजयामास यःप्राणधारणंप्राणप्रसादात्कुरुतेनित्यं। सजीवइतिसंदिष्टइत्यादेरजीवइत्येवपदच्छेदः कालकर्मस्वभावस्थोवासुदेवःपरःपुमान्। अकरोदंडपुटद्वयात्मप्रसवकारणमितिवचनात् अजी

वमित्येव यद्वा जीवःप्राणधारकःपरमात्माजीवंतथाविधार्थंस्वात्मानंतत्राजीजनदिति प्राणान्धारयतेयस्मात्सजीवःपरमेश्वरइतिच । जीवादत्पुद्रिक्तेजस्त्वादजवीजगज्जविहेतुत्वाज्जीवइतिहेतुद्वया दिर्वयुक्तंच अजीवोपिमहातेजास्त्वथवाजीवयज्जगदितिवचनात् यद्वा अजीवःपरमेश्वरोजीवंसर्वजीवप्रधानंचतुर्मुखमुत्पाद्यतदंतर्यामित्वेनप्राणधारकत्वात्मानमजीजनत् विरिंचस्यापिविराडाख्याडांत र्वर्तिरूपजननस्यात्राभिप्रेतत्वात् तदुक्तं । अंडेजातौपुमांसौद्वौहरिर्ब्रह्मातथैवचेत्यादि ३४ तामेवाभिव्यक्तिंस्फुटीकरोति सएषइति अयमर्थः योमहदादितत्त्वानिसृष्ट्वातदंतर्विष्टस्तदुपादानतयाडं निर्मायतदंतःप्राविशत्सएषपुरुषःकरचरणाद्यवयवत्वेनपुरुषनामाहरिरंडंनिर्भिद्यबृंहयित्वातस्मादंडान्निर्गतः प्रकाशितोभूत्पुरुषत्वेपिलोकविलक्षणोयमितिभावेनविशिनष्टि सहस्रेति अत्रसहस्रशब्द स्यथासंभवमर्थोवक्तव्यः ३५ पुरुषाख्यविष्णोरवयवेभ्यएवचतुर्दशभुवनसृष्टिरन्येभ्यस्त्वमुख्येतिभावेनाह यस्येति इहपंचाशत्कोटिविस्तीर्णब्रह्मांडेआयामतोविस्तारतस्तावद्विपुलानंदादिदेहत्वे नावतीर्णस्यचतुर्दशभुवनेभ्योऽप्यभिन्नस्यपुरुषाख्यस्यहरेरवयवैर्नैमित्तिकारणैर्मनीषिणश्चतुर्दशलोकान्सृष्टान्कल्पयंतीतियत्परमात्तस्मात्तत्सृष्टेर्ज्ञानिप्रत्यक्षसिद्धत्वात् अन्यतःसृष्टिरमुख्येतिभावः हेत्ववयवैःसृष्टालोकाइतिविकल्पनमित्यादेश्च । तत्सृष्टिकल्पनाप्रकारमाह । ऊर्वादिभिरिति । ऊर्वादिभिःपादतलांतैरवयवैरतलादिपातालांताः । सप्तलोकानिर्मिताः । जघनादिभिर्मूर्धांतैरवयवैरूर्ध्वंभू

सएषपुरुषस्तस्मादंडंनिर्भिद्यनिर्गतः ॥ सहस्रोर्वंघ्रिबाह्वक्षिःसहस्राननशीर्षवान् ३५ यस्येहावयवैर्लोकान्कल्पयंतिमनीषिणः ॥ ऊर्वादिभिरधः सप्तसप्तोर्ध्वंजघनादिभिः ३६ पुरुषस्यमुखंब्रह्मक्षत्रमेतस्यबाहवः ॥ ऊर्वोर्वैश्योभगवतःपद्भ्यांशूद्रोव्यजायत ३७ भूर्लोकःकल्पितःपद्भ्यांभुवर्लोकोस्यनाभितः ॥ हृदास्वर्लोकउरसामहर्लोकोमहात्मनः ३८ ग्रीवायांजनलोकश्चतपोलोकःस्तनद्वयात् ॥ मूर्धभिःसत्यलोकस्तुब्रह्मलोकःसनातनः ३९ तत्क ट्यामतलंक्लृप्तमूरुभ्यांवितलंविभोः ॥ जानुभ्यांसुतलंशुद्धंजंघाभ्यांतुतलातलम् ४० महातलंतुगुल्फाभ्यांप्रपदाभ्यांरसातलम् ॥ पातालंपादतलतइ तिलोकमयःपुमान् ४१ भूर्लोकःकल्पितःपद्भ्यांभुवर्लोकस्तुनाभितः ॥ स्वर्लोकःकल्पितोमूर्ध्निइतिवालोककल्पना ॥ ४२ ॥ इतिश्रीभागवतेमहापु राणेद्वितीयस्कंधेपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ ७ ॥

विर्भ्वादिसत्यांताःसप्तलोकाःसृष्टाइति ३६ इदानींपुरुषस्यमुखाद्यंगेभ्योब्राह्मणादिजातिजनिमाह पुरुषस्येति ब्राह्मणोस्यमुखमित्येवमुखाज्जातत्वहेतुतइत्यादेर्मुखमित्यादिप्रथमापंचम्यर्थे । प्रमाणांतरगवेष णायाख्येनकर्तव्योऽत्रैवदर्शनादितिभावेनाह ऊर्वोरिति अनेनपुरुषनाम्नोहरेर्यथामुखाद्यंगेभ्योब्राह्मणादिजात्युत्पत्तिरेवलोकसृष्टिरपितदंगेभ्यःसिद्धान्तान्यतः ३७ तामेवसृष्टिंप्रपंचयति । भूर्लोकइति भू रितिभूमेरव्ययंनामांतरं भूर्लोकःपद्भ्यांजातइति कल्पितइतिअन्वेतव्यं भुवइत्यंतरिक्षलोकः इदमव्ययं जघनपादयोःसामीप्याज्जघनादिभिरित्यनेननविरोधः ३८ ३९ कट्योर्जघनांतर्भावे प्यर्वोस्तत्सामीप्यादूर्वादिभिरित्यस्याविरोधइति ४० उपसंहरति इतीति यतएवंहरेर्लोकनिर्मातृत्वलोकव्यापित्वंलोकाधारत्वंलोकोत्तमत्वंच अतोवैराजाख्योविष्णुर्लोकमयइतिउपा सीतेतिशेषः ४१ प्रकारांतरेणपुरुषावयवेभ्योलोकसृष्टिप्रकारमाह भूर्लोकइति अत्रातलादीनांभूम्यंतर्भावेनमहरादीनांस्वर्लोकांतर्भावेनत्रिलोकविवक्षाज्ञेया अतोनोक्तविरोधः अत्रेदंतात्पर्यमुक्तंभवति च तुर्दशलोकपक्षस्त्वेकःसप्तलोकपक्षस्त्वपर त्रिलोकपक्षस्त्वन्योऽधिकारिभेदेनध्यानार्थत्वात्कल्पनापार्थक्यंतताविकल्पउपपन्नइति ॥ ४२ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेविजयध्वजकृत टीकायांपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥ ७ ॥

आध्यात्मिकाधिदैवाधिभौतिकादिरूपस्यजगताहरेर्मुखादिभ्यउत्पत्तिस्तस्यततोभिन्नत्वंतदुत्तमत्वंप्रतिमादिस्वरूपत्वंचप्रतिपाद्यतेऽस्मिन्नध्याये तत्रप्रथमम-ध्यात्मेंद्रियतदभिमानिदेवतादिसर्वपदार्थानां तदंगेभ्यउत्पत्तिप्रकारमाह। वाचइत्यादिना वाचोवागिंद्रियस्यवक्तव्यस्यचतदभिमानिनोवह्नेरग्निदेवस्यचपुरुषस्यमुखंक्षेत्रंयोनिःकारणमुत्पादकमित्यर्थः । क्षेत्रंपुरेशरीरेदेहेकेदारेयोनिभार्ययोरपीति योनिःश्री णांभगेस्थानेकारणेताम्रकेपणइतियादवः । गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगतीसंज्ञानांछंदसामस्यपुरुषस्यत्वङ्मांसरुधिरमेदोमज्जास्थ्याख्याःसप्तधातवः । क्षेत्रमित्यनुवर्ततेअत्रतदुत्पत्तिस्थानं दाश्रितत्वंचेतितात्पर्यमुत्तरत्राप्यनुसंधेयं हव्यादिसर्वान्नानांजिह्वेंद्रियस्यचकषायमधुरादिसर्वरसस्यचतस्यपुरुषस्यजिह्वाक्षेत्रम् १ सर्वासूनांसर्वमारुतांमुख्यवायोश्चतन्नासेतस्यहरेर्नासापुटक्षेत्रेपरमायनेचो त्तमाश्रयणेच अभिमानिनोरश्विनोर्व्रीह्याद्यौषधीनांचघ्राणेंद्रियस्यगंधस्यचसुरभ्यसुरभिलक्षणस्यचतरयघ्राणंक्षेत्रं नपुंसकस्यघ्राणस्यपुंशक्तिमत्त्वद्योतनायघ्राणइत्युक्तं क्लीबेघ्राणंगंधवहोघोणानासाच नासिकेत्यमरः २ चक्षुरिंद्रियस्यतद्विषयाणांचरूपाणांविषयप्रकाशकानांतेजसांज्योतिषांचहरेश्चक्षुःक्षेत्रं दिवोद्युलोकस्याभिमानिनःसूर्यस्यचहरेरक्षिणीचक्षुर्गोलकेक्षेत्रमितिशेषः दिशांदिग्देवतानां तीर्थानांशास्त्राणांचहरेःकर्णौक्षेत्रं तीर्थंमंत्राद्युपाध्यायेशास्त्रेष्वंभसिपावनइत्यभिधानं श्रोत्रेंद्रियस्यतद्विषयस्यशब्दस्याकाशस्यचहरेःश्रोत्रेंद्रियंकारणम् ३ वस्तुसाराणांवस्तुश्रेष्ठानांवस्तुबलानांवा सौभाग्यस्यतस्यहरेर्गात्रमुत्पादकंभाजनंनिधानंनिशानपात्रंच । त्वगिंद्रियस्यस्पर्शगुणस्यस्पर्शाभिमानिनोवायोःसर्वमेधस्यसर्वज्ञस्यचास्यहरेरत्वगिंद्रियंक्षेत्रम् ४ यैरुद्विजजातिविशिष्टैःपालाशादिवृक्षै

ब्रह्मोवाच ॥ वाचोवह्नेर्मुखंक्षेत्रंछंदसांसप्तधातवः ॥ हव्यकव्यामृतान्नानांजिह्वासर्वरसस्यच १ सर्वासूनांचवायोश्चतन्नासेपरमायने ॥ अश्विनोरोषधीनां चघ्राणोगंधस्यचैवहि २ रूपाणांतेजसांचक्षुर्दिवःसूर्यस्यचाक्षिणी ॥ कर्णौदिशांचतीर्थानांश्रोत्रमाकाशशब्दयोः ३ तद्गात्रंवस्तुसाराणांसौभाग्यस्यच भाजनम् ॥ त्वगस्यस्पर्शवायोश्चसर्वमेधस्यचैवहि ४ रोमाण्युद्भिजजातीनांयैर्वायज्ञस्तुसंभृतः ॥ केशश्मश्रुनखान्यस्यशिलालोहाभ्रविद्युताम् ५ बा हवोलोकपालानांप्रायशःक्षेमकर्मणाम् ॥ विक्रमोभूर्भुवःस्वश्चक्षेमस्यशरणस्यच ६ सर्वकामवरस्यापिहरेश्चरणआस्पदम् ७ अपांवीर्यस्यसर्गस्यपर्ज न्यस्यप्रजापतेः ॥ पुंसःशिश्नउपस्थस्तुप्रजात्यानंदनिर्वृतेः ॥ पायुर्यमस्यमित्रस्यपरिमोक्षस्यनारद ८

र्यज्ञःसंभृतःसंपादितः यज्ञकारिभिरितिशेषः तेषामुद्भिजजातीनांवृक्षाणांरोमाणिहरेरोममूलानिक्षेत्रं यैर्यज्ञःसंभृतोयज्ञादन्यःकार्यविशेषःसाधितस्तेषांहरेरोमांतर्भागाः अयंविकल्पोवाशब्दसूचितात् या ज्ञिकारोममूलस्थारोमांतस्थास्तुतत्परइतिवचनात्ज्ञायते तुशब्दउक्तार्थावधृतौवर्तते अस्यहरेःकेशाअभ्राणां । श्मश्रूणिविद्युतां । शिलालोहानां नखानिक्षेत्रं । पुनर्भवःकररुहोनखोस्त्रीनखरोस्त्रियामि त्यमरः । हरेःश्मश्वाश्रयाविद्युच्छिलालोहानखाश्रयाइतिवचनात् ५ ब्राह्मणवैश्यादीन्वर्जयितुंप्रायशइत्युक्तं भूर्भुवःस्वरितिभुवनत्रयमस्यहरेर्विक्रमःपादविक्षेपस्थानं क्षेमस्यमंगलस्यमाप्तरक्षा यावा शरणस्यमोक्षस्यच ६ सर्वकामवरस्यचसर्वाभिमतलाभस्यचहरेश्चरणआस्पदं दातृत्वेनेतिशेषः मोक्षःशांतिश्चशरणंनिर्वाणंचाभिधीयतइतिवचनात् । शरणंमोक्षः भेजेखगेंद्रध्वजपादमूल मित्यतोमोक्षोऽपिपादमूलमितिभावः स्वोत्पत्त्यंगेषुदेवानामन्येषांपादमूलतः मुक्तिस्तुविहिताविष्णोर्निर्दिष्टेषुयथावचइतिवचनाच्चशब्दसूचितान्नोक्तविरोधः ७ अपाजलस्यवीर्यस्यरेतसःसर्गस्यसृ ष्टेर्जलाभिमानिनःपर्जन्यस्य सर्गाभिमानिनोदक्षप्रजापतेःशिश्नस्यचपरस्यपुंसःशिश्नंक्षेत्रं प्रजातिःप्रजननमानंदःसुखंताभ्यांराहितायानिर्वृतिः अथवाप्रजातिर्मैथुनक्रिया तन्निमित्तादानंदाद्यानिर्वृ तिस्तस्याः हरेरुपस्थंगुह्येंद्रियं तुशब्दाद्गुह्येंद्रियस्यचक्षेत्रं मित्रनाम्नोदेवस्यपाय्विंद्रियस्यतद्विषयस्यपरिमोक्षस्यगुदक्रियाविषयस्ययमनाम्नोदेवस्यचपुंसः पाय्विंद्रियंक्षेत्रमित्येतन्संदमतीनांसुबो धनाथमन्वीयते ८

हिंसादीनांपुंसोगुदोगुदमपानद्वारंक्षेत्रं पराभूतेःपराजयस्याऽलक्ष्म्यावाऽधर्मस्यपापस्यतदभिमानिनोऽधर्मस्यकलेश्चतमसस्तमोगुणस्यचपश्चिमःपृष्ठभाग.क्षेत्रम् ९ नदनदीनांशोणगंगादीनांतुशब्दादे तरनदीनांचपुंसोनाड्य.क्षेत्रं गोत्राणांपर्वतानांहरेरस्थ्नांसंहतिःक्षेत्रं । अव्यक्तस्यमूलप्रकृतेः । रसादीनांमधुरादीनां । सिंधूनांसमुद्राणां । भूतानांजीवानां । निधनस्यचसंसरस्य १० पुंसउदरंक्षेत्रमिति विदितंमनसःपरस्यहृदयंपदंक्षेत्रं धर्मस्यसुकृतस्यतदभिमानिनोधर्माख्यदेवस्यचतुर्मुखनाम्नोममतुभ्यंतवकुमाराणांसनकादीनांचतुर्णांभवस्यरुद्रस्यच विज्ञानस्यतत्त्वस्यचतदभिमानिन्या.सरस्वत्या श्च परस्यपुंसआत्मामध्यदेहःपरायणं कुमारब्रह्मरुद्राद्याहरेर्मध्यात्समुद्भताइत्यनेनात्माजीवेधृतौदेहेइत्याद्यभिधानेनापिसिद्ध । सृजामितन्नियुक्तोहामितियत्सर्वस्वातंत्र्यंहरेरुक्तंतत्पुरुषसूक्तसंवादे नविवृणोति अहंभवानित्यादिना अग्रजामुनयःसनकादयः ११ १२ १३ घटादिवन्नभातीतिनभआकाशोऽकारांतोप्यस्ति १४ यदेतदस्मदादिकमातृणंभूतंभव्यंभवज्जगदेतस्माद्धरेरुत्प न्नंतदिदंसर्वंपुरुषएवपुरुषाधीनसत्ताद्येव । त्रिकालमपितदधीनमेवनतुतेनैकीभूतं यदधीनायस्यसत्तातत्तदित्येवमण्यतइतिवचनात् यद्वा पुरुषएवेदंपुरुषेणैवेदंव्याप्तं पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यमितिपुरु षेणेवेदंव्याप्तमातृणादाकरीषात् सर्वंभगवानितिमिथ्यादृष्टिरेवेतिश्रुतेः । तामेवव्याप्तिंस्पष्टीकरोति तेनेदमिति वितस्तिमात्रंजीवहृदयमधितिष्ठतातेनपुरुषेण सर्वंपुरुषएवेतिभण्यतेभेदवज्जगत् । वितस्तिमात्रहृदयमास्थायव्याप्तुतेजगदित्यादेःसर्वंसिद्धम् १५ हृदयोपाध्यवच्छिन्नस्यहरेर्जीववैलक्षण्यमाह स्वधिष्ण्यमिति तपसंतापदर्शनयोरितिधातोः स्वधिष्ण्यंस्वस्थानंहृदयमधिष्ठायांतःसर्वंप्रतप

हिंसायानिर्ऋतेर्मृत्योर्निरयस्यगुदःस्मृतः ॥ पराभूतेरधर्मस्यतमसश्चापिपश्चिमः ९ नाड्योनदनदीनांतुगोत्राणामस्थिसंहतिः ॥ अव्यक्तरससिंधूनांभू तानांनिधनस्यच १० उदरंविदितंपुंसोहृदयंमनसःपदम् ॥ धर्मस्यममतुभ्यंचकुमाराणांभवस्य च ११ विज्ञानस्यचतत्त्वस्यपरस्यात्मापरायणम् ॥ अहंभवान्भवश्चैवयइमेमुनयोग्रजाः १२ सुरासुरनरानागाःखगामृगसरीसृपाः ॥ गंधर्वाप्सरसोयक्षारक्षोभूतगणोरगाः १३ पशवःपितरःसिद्धाविद्याध्रा श्चारणाद्रुमाः ॥ अन्येचविविधाजीवाजलस्थलनभौकसः १४ग्रहर्क्षकेतवस्तारास्ताडितस्तनयित्नवः ॥ सर्वंपुरुषएवेदंभूतंभव्यंभवच्चयत् ॥ तेनेदमावृतंवि श्वंवितस्तिमधितिष्ठता १५ स्वधिष्ण्यंप्रतपन्प्राणोबहिश्चप्रतपत्यसौ १६ एवंविराजंप्रतपंस्तपत्यंतर्बहिःपुमान् ॥ सोमृतस्याभयस्येशोमर्त्यमन्नंयदत्यगात् १७ महिमैषततोब्रह्मन्पुरुषस्यदुरत्ययः ॥ पादोऽस्यसर्वभूतानिपुंसःस्थितिविदोविदुः १८

न्पश्यन्असौप्रकृष्टचेष्टायोगात्प्राणनामापरमात्मादेहाद्बहिश्चबहिष्ठान्विषयानपिप्रतपतिपश्यति १६एवंविराजंविराडाख्यांडांतस्थान्बहिर्ब्रह्मांडाद्बहिष्ठान्विशेषादिमूलप्रकृत्यंतान्सर्वान्पदार्थानशेषावि शेषाकारेणतपतिपश्यति पश्यन्स्वाधिष्ण्यंदेहंसबाहिष्ठान्विषयानपि एवमंडांतरंपश्यन्बहिःसर्वंचपश्यतीतिवचनात् नन्वरत्वमुक्तप्रपंचात्वैलक्षण्यंमुक्तप्रपंचवैलक्षण्यंकुतइतितत्राह सइति स पुरुषोऽभयस्यजननादिभयरहितस्यामृतस्यानंतमुक्तसमुदायस्यईशःस्वामीसर्वाभीष्टदानेनेतिशेषः आत्मनोन्नंभोग्यंनित्यमुक्तलक्ष्मीतत्त्वंतदभिमन्यमानमव्यक्तंजडतत्कार्यंमर्त्यंदेहनाशादिनाविनाशिनं महदादितत्त्वाभिमानिनंब्रह्मादिसर्वजीवसमुदायंतानितत्त्वादीनिचानाद्यनंतकालतोऽत्यगादितिशेषः १७ नानैकांतोऽयहेतुरितिभावेनाह महिमेति ब्रह्मादित्वंपक्षांतर्भूतमितिपत्ततइति अव्य क्तमात्मनोन्नंचमहदादिविनाशिच । यदतीतःपरोविष्णुःसएवातोविमोक्षदइतिस्मृतेः जीवानांपरमांशत्वात्कथंदुरत्ययत्वंमहिम्नइतितत्राह पादइति स्वरूपांशोभिन्नांशइति द्विविधोंऽशोहरेरस्तितत्रसर्वभू तानिसर्वजीवाअस्यपुरुषस्यपादोभिन्नांशइतिस्थितिविदः सर्वस्ययथावत्स्थितिज्ञाविदुरतःखद्योतस्यकालाग्न्यंशत्वेपितन्महिमात्ययत्वंयथानास्तिप्रमाणविरुद्धत्वादेवंजीवानामपीतिभावः १८

तर्हिस्वरूपांशाःकेकुत्रसंतीतितत्राह अमृतमिति अमृतमनंतासनाख्यंक्षेमंवैकुंठाख्यमभयंश्वेतद्वीपाख्यमितिपुरत्रयंत्रिमूर्ध्नोहरेस्त्रिपुमूर्धस्वधायिधृतं रूपांतरेणेतिशेषः । नन्वनेनप्रश्नपरिहारःकथमागतइ स्यस्यापीदमेवोत्तरं तथाहि त्रिविधामूरोजीवास्तान्धत्तइतित्रिमूर्धातस्यहरेरमृतमनंतगतंरूपमनंतासनमितियावत् अनतेऋतंगतंरूपमिति अमनंतंविदुर्बुधाइत्येकाक्षरमालायाम् । विकुंठनाम्नोपमृत्यु लक्षणंक्लेशंक्षिणोतीतिक्षेमंवैकुंठाख्यं भार्दीश्वाविवितियातोदीशिविरोधित्वादभानिजस्थानियात्याप्नोतिआश्रयत्वेनेत्यभयंनारायणाख्यमितिरूपत्रयम् । एषुत्रिषुमूर्धसूत्तमेषुबहुलक्षोच्छ्रितेषुपुरेष्वधायिनिहितं तस्मादनंतासनवैकुंठनारायणाःस्वरूपांशायेषुलोकेषुवसंतीतिभावः तदुक्तं स्वरूपांशोविभिन्नांशइतिद्वेधांशइष्यतइत्यादि । त्रिमूर्धासन्हरिर्धत्तेद्युत्रयंमूर्धभिस्त्रिभिरित्यादिना ब्रह्मविष्णुमहेश्वरात्म नात्रयोमूर्धानोयस्यसत्रिमूर्धा तस्यमूर्धसुसत्यवैकुंठकैलासाख्यस्थानेषुतेषामेवनामांतरविशिष्टममृतमित्यादिरूपत्रयमधायीत्यपव्याख्यानमपहरितम् । तेचलोकास्त्रिलोक्याबहिरेवासन्नित्याह पादाइ तिपादयंतिप्रापयंतीत्यात्मानमितिपादाः येलोकायेचतेषुवसंतःस्वरूपांशाः अप्रजानामपुत्राणांमदाद्यादीनांब्रह्मादिदेवानामाश्रयास्तेभूम्यादित्रिलोक्याबहिरेवासन्नित्यन्वयः अत्रतुनासूचितमिदंप्रमाणं अनतासनवैकुंठनारायणपुराणित्वित्यादि १९ तस्यैवत्रिधाम्नोविष्णोस्त्रिलोक्यंतर्गतस्वरूपांशांतरमाह अंतरितिबृहदितिभावप्रधानः सएवत्रिष्णुस्त्रिलोक्याअंतरपरोयज्ञपुरुषाख्यः गृहमेधैर्गृह स्थैः । बृहत्त्वेनब्रह्मत्वेनब्रह्मार्पणबुद्ध्येतियावत् हुतोवसतीतिशेषः तुनातस्यस्थानस्यशक्रलोकसामीप्यंसूचयति तदुक्तं सएवान्यस्वरूपेणशक्रलोकसमीपगइत्यादि । नकेवलंशक्रलोकानिकटवार्नि लोकस्थएवपूज्यते अपितुत्रिलोक्याअंतर्ध्रुवादिलोकस्थोपीति इममर्थमपितुशब्देनाह तदुक्तं यतीनांध्रुवलोकस्थोवाननामेरुमध्यगइत्यादि एतत्रयोपिस्वरूपांशाइतिनिर्णयापमूलकर्वाद्वन्नांशे

**अमृतंक्षेममभयंत्रिमूर्ध्नोधायिमूर्धसु ॥ पादास्त्रयोबहिस्त्वासन्नप्रजानांयआश्रयाः १९ अंतस्त्रिलोक्यास्त्वपरोगृहमेधैर्बृहद्व्रतः ॥ सृतीविचक्रमेविष्वक् साशनानशनेउभे २० यदविद्याचविद्याचपुरुषस्तूभयाश्रयः ॥ तस्मादंडाद्विराड्जज्ञेभूतेंद्रियगुणाश्रयः २१ तद्द्रव्यमत्यगाद्विश्वंगोभिःसूर्यइवातपन् ॥ यदास्यनाभ्यान्नलिनादहमासंमहात्मनः २२**

षुदेवादिसर्वजीवेषुतेषांव्याप्तिप्रकारमाह सृतीइति अनंतासनवैकुंठनारायणाख्यस्त्रिपादभगवान्विद्याब्रह्मविद्यातदविद्याचआश्रिते तेविरुद्धलक्षणत्वादुभेदेवमनुष्यसंज्ञेसृतीसरणीमार्गौविष्वक्सर्वतो विचक्रमेआप देवमनुष्यसंज्ञेकुतोवगतेइतितत्राह साशनानशनेइति साशनामनुष्याअनशनादेवास्तद्विषयवत्त्वात्तथोक्ते यद्वायेविद्यावाविद्याचतेसृतीइत्यनेनतद्वंतःपुरुषालक्ष्यंते तेषुविक्रम्यस्थितः तदुक्तं त्रिपात्सएवभगवान्सर्वप्राणिषुसंस्थितः निरत्रेषुचविद्वत्सुत्रिदशेष्वितरेषुचेति ननुहरेराधेयत्वेनपारतंत्र्यमागतमत्राह पुरुषइति पुरुषोविष्णुरुभयोराश्रयआधारः तुशब्देनान्येमत्स्यादयः स्व रूपांशाअपिसर्वव्याप्तिमंतइतिसूच्यते । अंडव्याप्तचतुर्मुखोत्पत्तिमाह तस्मादिति पूर्वंमहदादितत्त्वोत्पादनायहरिणायदंडंनिरमायितस्मादंडाद्ब्रह्मनामाविराड्जज्ञे अंडव्यापिनंतंविशिनष्टि भूतेति भूतानांपृथिव्यादीनांजीवानांवा इंद्रियाणांश्रोत्रादीनांगुणानांशब्दादिविषयाणांविषयवृत्तौसहकारिणांदिगादिदेवानांवाऽऽश्रयआधारः यद्वा स्वसृष्टात्तस्मादंडाद्विश्वासौराट्चेतिविराड्विष्णुः जज्ञेशे षशायित्वेनप्रादुर्भूतः किंचांडादभिव्यक्तात् तस्माच्छेषशायिनोहरेर्नाभिपद्मात्रूपांतरेणभूतेंद्रियगुणाश्रयोविराड्ब्रह्माजज्ञइत्यन्वयः तस्माद्धरेरंडमभूदंडादपिचतुर्मुखइत्यादेरुक्तार्थएवायंश्लोकः २० २१ एतस्माद्गुणयोगात्परमेष्ठिनामचास्याभूदितिभावेनाह तद्द्रव्यमिति यदाब्रह्मांडातरुभयात्मकोब्रह्माजज्ञेतदैवसलोकपितामहोहरेःस्वस्माद्वायच्छरंपूर्वादिविश्वमुत्पन्नंतद्द्रव्यंगोभिर्भक्ति ज्ञानादिगुणलक्षणादिभिरत्यमादुद्रिक्तोभूत् कथमिवयथासूर्योदिगंतविश्रांतैरश्मिभिरंतरिक्षाद्याश्रयमत्येतितथेत्यन्वयः तदुक्तं यदोभयात्मकोजज्ञेब्रह्मालोकपितामहइत्यादि । प्रथमरूपस्यविरिंचस्या

इत्युक्तस्यवैराजपुरुषाभिधस्यहरेर्मुख्याधिष्ठानत्वाद्यस्येहावयवैरित्याद्युक्तलक्षणंचतुर्मुखेसंभवति तत्परिहारायाह यदेति यदास्यनाभ्यान्नाभिप्रदेशाज्जातान्नलिनादहमासंद्वितीयरूपेणोत्पन्नोऽभवं महात्म
नइत्यनेनतन्माहात्म्यात्स्वमाहात्म्यस्यात्यंतार्वाचीनत्वंसूचयति २२ तदाभक्त्यातंयियक्षुरहंपुरुषावयवानृतेअंडस्यपुरुषप्रतिमात्वात् लोकादियागसंभाराणामुक्तप्रकारेणतदवयवोत्पन्नत्वात्तदवय
वव्याप्तत्वात्तदाश्रितत्वाच्चपुरुषावयवान्विहायलोकादियज्ञसंभारान्नाविदंनलब्धवानित्यन्वयः अनेनयज्ञकर्मणाभगवद्विषयेणशुद्धांतःकरणस्यपुंसःसमुद्रिक्तभक्तिज्ञानादिभिस्तत्प्रसादातिशयोभवतीत्युक्तंभवति । पुनर्ब्रह्मणाकिमकारीत्याशंक्यतदर्थत्वेनतत्सृष्टत्वनतत्सन्निधानविशिष्टैस्तैस्तैर्हरियजनाद्धारेप्रीतिर्भवतीतिविमृश्ययज्ञसंभरणप्रकारमाह तेष्विति तेषुपुरुषावयवेषुतदाश्रितयज्ञसंभारोमया
संभृतःसाधितइत्यन्वयः । यज्ञाअग्निष्टोमादयः । पशवोऽजादयः । वनस्पतयोऽश्वत्थादयः । यैररण्यादिनिर्माणंक्रियते २३ देवयजनंयागभूमिः । कालोवसंतादिः । तस्यगुणाधर्माद्याः । वसूनिकांच
नादीनि । ओषधयोव्रीह्यादयः । स्नेहाआज्यादयः । रसाःक्षीरगुडादयः । लोहाअयःप्रभृतयः । मृदोवल्मीकमृदिष्टिकादयः । जलंगंगादिगतम् २४ नियतपादबद्धाऋचः । अनियतच्छंदोबंधोपेता
नियजूंषि । गानप्रधानानिसामानिचतुर्भिरध्वर्य्वादिभिःक्रियमाणंकर्मचातुर्होत्रं नामधेयानींद्रइत्यादीन्यग्निहोत्रदर्शादीनिवा मंत्रा द्विविधा बीजात्मका मालात्मकाः विंशद्वर्णादर्वाग्बीजमंत्राः । ततोधि
का मालारूपाः । तेचदेवताद्रव्यादिप्रकाशकाः । चंद्रकलावत् बिंदुमंडितशिरसोवर्णाबीजारूपाः चतुर्थ्यंताइंद्रादिनामाविशिष्टा नमःस्वाहाफडंतामालामंत्राः उभयेचजपाधिकान्यूनजपाइति कर्मदक्ष

नाविदंयज्ञसंभारान्पुरुषावयवान्नृते ॥ तेषुयज्ञाश्चपशवःसवनस्पतयःकुशाः २३ इदंचदेवयजनंकालश्चोरुगुणान्वितः ॥ वसून्योषधयःस्नेहारसलोहमृदोज
लम् २४ ऋचोयजूंषिसामानिचातुर्होत्रंचसत्तम ॥ नामधेयानिमंत्राश्चदक्षिणाश्चव्रतानिच २५ देवतानुक्रमःकल्पःसंकल्पःसूत्रमेवच ॥ गतयोमतयःश्रद्धाप्रा
यश्चित्तंसमर्पणम् २६ पुरुषावयवैरेतैःसंभाराःसंभृतामया ॥ इतिसंभृतसंभारःपुरुषावयवैरहम् ॥ तमेवपुरुषंयज्ञंतेनैवायजमीश्वरम् २७ ततस्तेभ्रातरइ
मेप्रजानांपतयोनव ॥ अयजन्व्यक्तमव्यक्तंपुरुषंसुसमाहिताः २८ ततश्चमनवःकालईजिरेऋषयोपरे ॥ पितरोविबुधादैत्यामनुष्याःक्रतुभिर्विभुम् २९

यंतीतिदक्षिणाः होत्रादिभ्योद्रव्यदानसंबंधाः व्रतानिब्रह्मचर्यादीनि २५ देवतास्तत्तन्मंत्रवाच्याअग्न्यादिकाः। अनुक्रमस्तासांतारतम्यंपौर्वापर्यलक्षणमनुपाठोवाकर्मक्रमोवा कल्पःप्रयोगविधिप्रतिपादको
बौधायनादिः संकल्पइदंकरिष्येइतिमनोवाग्भ्यांस्मरणकीर्तनलक्षणः सूत्रंमीमांसासूत्रचशब्दात्कर्मदैवमीमांसासूत्रेचगृहीते गतयःस्वर्गादिफलानिमतयोज्ञानानि ऋषिमतभेदभिन्नानिवा श्रद्धाआस्तिक्य
बुद्धिःइदंसत्यमस्मात्प्रयोजनमस्तीत्येवंरूपा प्रायश्चित्तमंतरालाबाधांतरायपरिहारत्वेनयथोक्तकर्मफलसाधनंकर्म समर्पणंब्रह्मणीतिशेषः २६ इतिशब्दआदिवचनः एवमादिसंपादितयज्ञसाधनोऽहंपुरुषा
वयवैःकल्पितैःपश्वादिभिस्तमेवयज्ञपुरुषंतेनमय्यनुविष्टेनप्रेरितोदेशकालपश्वादिसाधनेषुवाहितेनमदृष्टिविषयेणवाऽयजमित्यन्वयः ईश्वरमित्यनेनस्वेनयष्टव्यमाहात्म्यंसूचयति २७ स्वकृतयज्ञ
स्यव्याप्तिकथयति ततइति अनेनस्वस्यसर्वस्मात् श्रैष्ठ्यंस्वकर्मणःप्रामाण्यंचदर्शितं तेतवभ्रातरोमरीच्यादयः नसनकादयइतिपरिच्छिनत्ति प्रजानांपतयइति व्यक्तंगम्यमव्यक्तमगम्यं अनेनसाधन
सामग्र्यसामग्रीभ्यांहरेःकथनस्वभावोदर्शितः पुरुषंबहुफलप्रदसमाहिता इदमेवश्रेयोनातोऽन्यदित्येकाग्रचित्तगुणाः २८ कालेवसंतादिसमये अपरेमरीच्यादिव्यतिरिक्ताः पितरोग्निष्वात्तादयः विबु
धा इंद्रादयः दैत्याःप्रह्लादादयः मनुष्याःप्रियव्रतप्रभृतयः क्रतुभिर्यागैः अत्राहंभवानित्यारभ्यततश्चमनवइत्यंतैर्ग्रंथैःपुरुषसूक्तार्थोविवृतइतिज्ञातव्यं । तथाहि सर्वंपुरुषइत्यनेनपुरुषएवेदंसर्वमित्यस्यार्थः
प्रदर्शितःवेनेदमित्यनेनसहस्रशीर्षेत्यस्य । सोऽमृतस्येत्यनेनउतामृतत्वस्येशानइत्यस्य।महिमैषइत्यनेनएतावानस्येत्यस्य। पादास्त्रयइत्यनेनत्रिपादूर्ध्वइत्यस्य।सृतीइत्यनेनततोविष्वङ्व्यक्रामदित्यस्य । तस्मा

दंडादित्यनेनतस्माद्विराळजायतेत्यस्य । तत्तद्द्रव्यमित्यनेनसजातइत्यस्यतेपुयज्ञादयइत्यनेनब्राह्मणोस्यमुखमासीदित्यस्य इतिसंभृतेसनेनयत्पुरुषेणेत्यस्य ततस्तेभ्रातरइत्यनेनयज्ञेनयज्ञइत्यादेः २९ तद्द्रव्यमत्यगादित्यनेनभक्त्यादिभिरेवोत्तमत्वमुच्यते नतुस्वरूपतइत्युक्तमेवार्थंस्फुटयन्नुपसंहरति । नारायणइति श्रीमत्पुंडरीकाक्षकटाक्षप्रेक्षणप्राप्तसर्वप्रभावोऽहंतमेवनारायणंयज्ञादिभिरयजामिति यस्मात्तस्मादिदमस्मदादिविश्वंतस्मिन्नारायणएवाहितंतदाधारतयातदधीनतयातद्व्याप्ततयाऽवस्थितमित्यन्वयः आहितत्वेहेतुमाह गृहीतेति सत्वादिगुणाधीनंसर्वं तेचानेनगृहीताः । अतःसर्वंतस्मिन्नाहितं ग्रहउपादानइतिधातोः सर्गादावुपादानीकृतप्रकृत्युरुगुणे अन्यदासमीपावाप्तमायोरुगुणे ननुहरेर्जीववज्जडवद्गुणसंबंधःकिंनस्यादितितत्राह अगुणइति जीवस्यस्वतोगुणराहित्येपिमिथ्याभिमानाज्जडस्यतुतन्मयत्वाद्गुणित्वंयुक्तं हरेस्तदुभयाभावादगुणित्वं गुणस्वातंत्र्यात्बहिःसमीपएवसदावस्थानात्गृहीतगुणत्वंयुक्तं उर्वित्यनेनहरेरतिशयितमाहात्म्यंसूचयति नित्यगृहीताःसत्वाद्याजीववज्जडवत्तु । मिथ्यामानात्स्वरूपत्वात्स्वातंत्र्याद्धाहरेर्वाक्तित्येतदत्रमानम् ३० येनस्वरोविषाविश्वमिसाद्युक्तमुपसंहरन्हरस्यसंहारस्वातंत्र्यंमंदमतीनामतीयमानंपरिहरति सृजामीति पुरुषरूपेणविष्णुरूपेण त्रिशक्तिधृक्सृष्टिपालनसंहारशक्तिधरोज्ञानबलक्रियाशक्तिधरोवा ३१ प्रश्नप्रतिवचनमुपसंहरति इतीति अथकुत्रापिकदाचिदपिमेजगतःस्वातंत्र्यबुद्धिंनकुर्वितिभावेनाह नान्यदिति सदसदात्मकव्यक्ताव्यक्तात्मकंज्ञेयाज्ञेयस्वरूपत्वाच्चतत्स्वभावंभाव्यमुत्पाद्यंमहदहंकारादियज्जगत्किंचिदपिहरेरन्यत्स्वतंत्रंनभवति किंतुतदधीनसत्ताकमतोयुज्यतेतदनन्यादित्यर्थः तदुक्तं सदितिव्यक्तमुद्दिष्टमसदव्यक्तमुच्यतइत्यादि ३२ एवंविधमाहात्म्यस्यहरेःप्रसादःकस्यस्यादित्याशंक्यभक्तिनदीस्नानेनविधूतमनोमलस्यसदाभगवदेकविषयेंद्रियव्यापारस्यस्यादितिभावेनाह नेति हृषीकाणींद्रियाणि अ

**नारायणेभगवतितादिदंविश्वमाहितम् ॥ गृहीतमायोरुगुणेसर्गादावगुणेस्वतः ३० सृजामितन्नियुक्तोऽहंहरोहरतितद्वशः ॥ विश्वंपुरुषरूपेणपरिपातित्रिशक्तिधृक् ३१ इतितेभिहितंतातयथेदमनुपृच्छसि ॥ नान्यद्भगवतःकिंचिद्भाव्यंसदसदात्मकम् ३२ नभारतीमेंगमृषोपलक्ष्यतेनकर्हिचिन्मेमनसोमृषागतिः ॥ नमेहृषीकाणिपतंत्यसत्पथेयन्मेहृदौत्कंठ्यवताधृतोहरिः ३३ सोहंसमाम्नायमयस्तपोमयःप्रजापतीनामभिवंदितःपतिः ॥ आस्थाययोगंनिपुणंसमाहितस्तंनाध्यगच्छंयतआत्मसंभवः ३४ नतोस्म्यहंतच्चरणंसमीयुषांभवच्छिदंस्वस्त्ययनंसुमंगलम् ॥ यःस्वात्ममायाविभवंस्वयंगतोनाहंनभस्वांस्तमथापरेकुतः ३५**

त्रहेतुमाह यन्मइति औत्कंठ्यंप्रियवस्तुनिमनोवृत्तिविशेषः स्नेहलक्षणभक्तिस्तद्वताहृदामनसाधृतइतियत्तस्मादित्यर्थः अनेनभगवत्प्रसादसामग्रीसंपादनेभक्तिरंगमित्युक्तंभवति ३३ इतोपिपुंसाभक्तिरेवसाध्यातत्प्रसादजननीअन्यथासोदुर्ज्ञेयइतिभावेनाह सोहमिति मद्भक्तिविषयोयोविष्णुस्तस्यानुग्रहेणतमंतरेणाम्नायमयोवेदप्रतिपाद्येषुप्रधानः समीचीनज्ञानसंप्रदायप्राचुर्याद्वा तपोमयस्तपस्विषुप्रधानः दक्षादिप्रजापतीनां पतिस्तैरभिवंदितश्चसमाहितएकाग्रतयानिश्चलमनाभूत्वानिपुणंचतुरतमंयोगध्यानलक्षणमुपायमास्थाययतआत्मनोममसंभवस्तंभगवंतंनाध्यगच्छं । अधीतिविशेषणादनंतत्वेनाधिगतविशेषस्याधिक्यात्नाज्ञासिषमित्यर्थः ३४ नारदायैवंविधंहरिमहिमानंव्याचक्षाणःस्मारस्मारंभक्तिप्रसरसिंधुनिमग्नःतन्नतिंकरोति नतोस्मीति योविष्णुःस्वात्ममायायाःस्वरूपभूतमहिम्नोविभवंविविधभवनमनंततास्वयंगतःस्वयमेवजानाति विशेषोक्तौनिमित्तमाह नाहमिति नभस्वान्वायुः । अपरेवाणीशेषाद्याः अथशब्दात्साकल्यज्ञानमेवनिषिध्यतेनतुतद्विषयज्ञानमात्रं सर्वजीवनिकायेषुब्रह्मवायुहरोर्वेदावित्यादिवाक्यसूचकादयंविशेषोबोद्धव्यः प्रेक्षावतेति । मंगलानंतरारंभप्रश्नकार्त्स्न्येष्वथोअथेत्यमरः अथातोनंतराप्यथ विकल्पारंभमंगलेइतिच । समीयुषांशरणंप्राप्तानांस्वस्त्ययनमलंबुद्धिगोचरस्यानंदानुभवप्रदं । सुमंगलंमंगलानांमंगलंतच्चरणंतस्यहरेश्चरणंनतोस्मीत्येतावदेवसुशकमितिभावः मंगलानांचमंगलमितिच ३५

१ तत्सत्ताया भगवदधीनत्वेनेतिभावः

इदानींस्वात्मानंनिदर्शनीकृत्यकस्यापिसाकल्यज्ञानंनास्तीत्याह नाहमिति लुप्तोपममिदं यथाहंसाकल्येनतद्गतिंनवेद्मि तथायूयंभवंतोपिनविदुः अत्रापिव्यस्तयावत्साकल्यज्ञानमेवनिषिध्यते
उत्तरखंडेनस्वयोग्यज्ञानस्योक्तत्वादितिज्ञातव्यं त्रिपुरांतकःसर्वज्ञइत्यज्ञरूढिरेवनाविद्वद्रूढिरितिभावेनाह नवामदेवइति वामोनिर्दोषोदेवोनारायणोयस्यमतेसतथोक्तः वामंतुशुभंपेशलमित्यभिधानं अनेनै
वान्यस्यासद्भावंसिद्धमुद्गल्याति किमुतेति अत्रहेतुमाह यन्मायमेति यस्यहरेर्मायाबंधकशक्त्यामोहितबुद्धित्वादित्यर्थः । तत्फलमाह इदमितिविनिर्मितमिदंजगत् स्वात्मसमंपरमात्मसह
शंविचक्षते ननुभवंतोप्यघ्नेकेकिमित्याशंक्यसत्याविशेषोस्तीत्याह इदानीति वयंतुयेनेदंनिर्मितंतस्वात्मसमंस्वयोग्यतानुसारंविचक्ष्महे नातोधिकंतदपितत्प्रसादायत्तमतोनविदुरितिब्रूमइत्ययंविशेषस्तु
शब्दादवगंतव्यइति तुःस्याद्भेदेवधारणइति स्वाप्नसममितिपाठेस्वप्नपदार्थवदनित्यमस्वतंत्रमिदमतएवतन्नियामकेनस्वतंत्रेणपरमनित्येनभवितव्यमितिविचक्ष्महइतिभावः ३६ इतोपितत्स्वरूपसाक
ल्यज्ञानमेवनिषिध्यते नतुतद्विषयज्ञानमात्रमन्यथावागिंद्रियप्रवृत्तिस्तद्विषयानोपपद्यते याचास्तितस्मादुक्तयुक्तमितिभावेनाह यस्येति एकदेशज्ञानमपिस्वातंत्र्येणेत्याभिमानेतदपिनस्यादितिभावेनपौ
नःपुन्येननमनमितिभावः ३७ युक्तंचांतस्थरूपबाहुल्यंतन्नियमनलक्षणकर्मचांतरेणान्यावताराणांतत्कर्मणांचसद्भावेकिंप्रमाणमित्याशंक्यसंक्षिप्यतदाह सएषइति योमदादिभिःसर्वैःसाकल्येनाविज्ञा
तःसएषपुरुषःश्रीनारायणआत्मास्वयमेवकल्पेकल्पेआत्मनास्वेच्छयानियतमनसात्मनेस्वाधारतयात्मानंमत्स्यादिरूपेणसृजति दीपाद्दीपांतरवद्व्यक्तंकरोति देवदत्तवन्नजायतइत्यजइति आद्यउ
पजीव्यइति व्यक्तीकरणं । उपजीव्यत्वमेवाह ससंयच्छतीति तैरवतारैः देवादिस्वजनंपातिहयग्रीवादिदैत्यान्संयच्छतीति चशब्दउक्तार्थसमुच्चयेव्यासाद्यवतारांतरसूचनेचवर्तते तथाच व्यासाद्य

**नाहंनयूयंबततद्गतिंविदुर्नवामदेवःकिमुतापरेसुराः ॥ यन्माययामोहितबुद्धयस्त्विदंविनिर्मितंस्वात्मसमंविचक्ष्महे ३६ यस्यावतारकर्माणिगायंतिह्य स्मदादयः ॥ नयंविदंतितत्त्वेनतस्मैभगवतेनमः ३७ सएषआद्यःपुरुषःकल्पेकल्पेसृजत्यजः ॥ आत्मात्मन्यात्मनात्मानंससंयच्छतिचपातिच ३८ वि शुद्धंकेवलंज्ञानंप्रत्यक्सम्यगवस्थितम् ॥ सत्यंपूर्णमनाद्यंतंनिर्गुणंनित्यमद्वयम् ३९ ऋतंविदंतिमुनयःप्रशांतात्मेंद्रियाशयाः ॥ यदातदेवासत्तर्कैस्तिरो धीयेतविप्लुतम् ४०**

वतारैर्मणिमदादितामसजनवचनेनातिरोहितस्वरूपंशास्त्रप्रवर्तनेनप्रकाशयतीतिज्ञायते तथाचोक्तं स्वयमेवस्वरूपाणिमत्स्यकूर्मादिकान्यजः । स्वात्मन्येवेच्छयासृष्ट्वातैर्देवादीन्प्रपात्यसावित्यादि ३८ शा
स्त्रतःकीदृशंप्रकाशितमत्राह विशुद्धमिति । विशुद्धंनिर्दोषत्वात् केवलमद्वितीयं । ज्ञानंविषयनिरपेक्षसंविद्रूपं । प्रत्यक्सर्वेषामंतरमभिमुखत्वेनास्थितं स्वतःशुद्धस्यापिपरतोदोषित्वंस्यादित्यतः
सम्यगवस्थितंदुष्टांशरहितत्वात् सत्यंनिर्दुःखानित्यनिरतिशयानंदानुभवरूपं । पूर्णंदेशतःकालतोगुणतश्चापरिच्छिन्नं अनाद्यंतमादिविनाशवर्जितं निर्गुणंसत्त्वादिगुणरहितं अतएवनित्यपरिणा
मस्वभाववर्जितं अद्वयंस्वगतभेदवर्जितं ३९ स्वतोविकाराभावेपिनिमित्तेनस्यादित्यतः ऋतंशश्वदेकप्रकारं तदुक्तं ऋतंतदात्मनाज्ञप्तेःसत्त्वंसाधुत्वतःपरमित्यादि एतज्ज्ञानस्यमोक्षैकफलहेतुत्वा
दिदमेवशास्त्रेणप्रकाशितंनान्यदित्याशयेनाह विदंतीति प्रकर्षेणशांताःअंगलीभूताआत्मामनःश्रोत्रादीनींद्रियाण्याशयोबुद्धिर्येषांतेतथोक्ताः यदाभगवदेकनिष्ठयानिर्मलीभूतमनआदींद्रियप्रवृत्तयोमुनयः
सर्वज्ञाब्रह्मादयएवंविधगुणोपेतंब्रह्मापरोक्षीकृत्याविंदंतिस्वानंदंलभंते तदैवासत्तर्कैर्विमतंमिथ्याहरयत्वादिभिर्विप्लुतमुपहतमन्यथाभूतबाह्यांतःकरणसंसारबीजभूतंतिरोधीयेतदग्धबीजवद्भवतीत्यन्वयः अने
नावतारकर्मकीर्तनश्रवणादिनाकिंफलमितिचोद्यमपिनिरस्तं किंचमूलरूपस्ययादृशंरूपंयादृशंकर्मयादृशोगुणस्तत्सर्वमवताराणामस्तीति अतस्तत्स्वरूपत्वंयुक्तमितिच ज्ञापितं यद्वा असत्तर्कैर्यादिगुण
ब्रास्तर्हिदोषवान्यदिकर्तावाहिभ्रांतःस्यात् देवदत्तादौदृष्टत्वात् इत्यादिरूपैस्तिरोहितंविरुद्धत्वादिलक्षणंरूपंव्यासादिप्रणीतशास्त्रनिशितयाबुद्ध्यायदासम्यग्विदंतिमुनयस्तदैवदोषित्वादिरूपंतिरोधीयेत

तत्सद्विषयाबुद्धिर्निवर्तत इति । कदावतारप्रसंग इत्यतोवाह सएषइति यदावैन्द्याद्यसत्तर्कैर्विप्लुतंधर्मशास्त्रंतिरोधीयेत । अधर्मशास्त्रमुज्जृंभतेचतदात्मानंसृजतीत्यन्वयः कीदृशमात्मानमित्यतउक्तं वि शुद्धमित्यादि तत्रकिंप्रमाणमत्राह विंदंतीति मत्स्याद्यवतारा विष्णोःस्वरूपांशाइत्यत्रतेषांप्रत्यक्षप्रमाणमवतारप्रसंगेचेत्यर्थः ४० तत्रप्रथमावतारःकइत्याशंक्यतमाह आद्यइति परस्यपरा यणस्यहरेराद्योवतारःपुरुषइतिवदंतीतिशेषः प्रलयोदकेशयानोमहाकृतिर्नराणामाश्रयत्वेननारायणःशून्यनामाभूत् सिसृक्षोस्तस्यदीपाद्दीपांतरंयथातथाद्वितीयंरूपमभूत् तत्त्वविदोजनास्तद्रूपं नाम्नापुरुषइतिसंवदंते । सपुरुषः प्रकृतिनाम्न्यांरमायांद्वितीयेरूपेस्ववीर्यमाधत्त तस्माद्वीर्यान्नाम्नामहानभूत् यंहिरण्यगर्भःपुरुषइतिचसंगिरंते तत्पत्नीश्रद्धेति । तौप्रलयेस्थूलशरीररहितत्वात् विश्लिष्टौपुरुषादेहंप्राप्यसंयोगंकृत्वा जगदंकुरंमहत्तत्त्वंपुनरुद्भावयतां स्वस्यैवपुत्रतांयातान्महतत्त्वादहंतत्त्वमजीजनदितीतिहासमाचक्षतेयःशेतेप्रलयेविष्णुःशून्यनामामहाकृतिरित्यादिवाक्यसिद्धं सन्निधानविशेषाधिष्ठानत्वादंशत्वंब्रह्मादीनांनसाक्षादितीममर्थंस्पष्टमाह कालइत्यादिना यद्यत्कालाद्यद्भुतार्णांतं । तत्परंविशिष्टंसर्वंनारायणस्यरूपवत्प्रतिमावदधिष्ठान । तत्प्रीतिहेतुत्वात्स्वतोऽस्वरू पंप्राकृतत्वात् पुरुषाद्याहरेरूपंब्रह्माद्यास्तत्प्रियाःस्मृताः । प्रधानत्वेनसर्वस्मान्मत्स्यकूर्मादयोहरेः । अवताराःश्रुतौख्याताःसएवैतेततःस्मृताइत्यादेः । कालःपरमाण्वादिपरममहदंतः स्वभावोवस्तुस्वभा वःसत्प्राणः असत्सूक्ष्मत्वान्मूलप्रकृतिः मनोमनस्तत्त्वं कालोवस्तुस्वभावश्चप्रकृतिःप्राणएवचेत्यादेः सदितिप्राणइतिश्रुतेश्च द्रव्यंपंचभूतानि विकारोंड गुणःसत्त्वादिः विराड्गरुडः स्वराडिंद्रः।

आद्योवतारःपुरुषःपरस्यकालःस्वभावःसदसन्मनश्च ॥ द्रव्यंविकारोगुणइंद्रियाणिविराट्स्वराट्स्थास्नुचरिष्णुभूम्नः ४१ अहंभवोयज्ञइमेप्रजेशादक्षादयोयेभवदादयश्च ॥ स्वर्लोकपालाःखगलोकपालानृलोकपालास्तललोकपालाः ४२ गंधर्वविद्याधरचारणेशायेयक्षरक्षोरगनागनाथाः ॥ येवाऋषीणामृषभाःपितॄणांदैत्येंद्रसिद्धेश्वरदानवेंद्राः ४३ अन्येचयेप्रेतपिशाचभूतकूष्मांडयादोमृगपक्ष्यधीशाः ॥ यत्किंचलोकेभगवन्महस्वदोजःसहस्वद्बलवत्क्षमावत् ॥ ह्रीःश्रीर्विभूत्यात्मवदद्भुतार्णंतत्त्वंपरंरूपवदस्वरूपम् ४४

द्रव्यंतुपंचभूतानिविकारोंडमुदाहृतं । विराजंगरुडंप्राहुःस्वराडिंद्रउदाहृतइतिच । स्थास्नुचरिष्णुस्थावरंजंगमंच भूम्नइत्यनेनस्थावरादिव्याप्तित्वंयुक्तमित्याह ४१ अहमिति अहंचतुर्मुखः । भवःश र्वः । यज्ञोयज्ञाभिमानीरुद्रच्छिन्नः यज्ञशब्दोदितौह्यौतुदेवौलोकपुरस्कृतावित्यादेः भवदादयःपरमहंसाः । स्वर्लोकपाला इंद्रादयः । खगलोकपालागरुडादयः । नृलोकपालाःप्रियव्रतादयः । तललो कपालाअनंतबल्यादयः ४२ गंधर्वेशाविश्वावस्वादयः विद्याधरेशाश्चित्रकेत्वादयः । चारणेशाःपुष्पदंतादयः । यक्षनायकाःकुबेरादयः । रक्षोनाथानिर्ऋत्यादयः । उरगनाथावासुक्यादयः । नाग नाथाअनंतादयः । पूर्वोक्तोनंतएककुंडलः । ऋषीणामृषभावशिष्ठादयः । पितॄणामृषभोयमः । दैत्येंद्राःप्रह्लादादयः । सिद्धेशाःसनकादयः । दानवेंद्रावृषपर्वादयः ४३ प्रेतेशोपियमः । रूपांतरविवक्षया पुनर्वचनंव्यासवासुदेववत् । पिशाचेशाघंटाकर्णादयः। भूतेशाभैरवादयः। कूष्मांडेशाभृंगीरुक्मादयः । यादसामीशास्तिमिंगिलादयः। मृगाणामीशाःसिंहादयः। पशूनामीशानंदिकेश्वरादयः। भगवद्य शोज्ञानादिमत् । महस्वत्स्वतःमहत्त्ववत् । ओजस्वत्अवष्टंभवत् । सहस्वत्सहनगुणवत् । बलवत् इच्छाकरणशक्तिमत् । क्षमावत्क्रोधासमुत्थितिमत् । ह्रीमत्योग्यलज्जावत् । श्रीमत्लक्षणोन्ना हविभूतिमत् विशेषप्राप्तियोग्यतावत् । स्वतोमहत्त्वाच्चमहोविशेषमाप्तिशक्तिता विभूतिर्लक्षणोन्नाहालक्ष्मीशब्देनभण्यतइति आत्मवत् धृतिमत् मनोजयवद्वा । अद्भुतार्णमाश्चर्यसमुद्रं । स्वेच्छयैषांविशि ष्टत्वंकुरुतेतत्तथास्मृतामित्यतोमिथ्याविभूतित्वंप्रत्युक्तम् ४५

पुरुषनामकएवस्वरूपांशावतारोनान्यइतिशंकांपरिहरन्निवतदवतारानुक्रमणंप्रतिजानीते प्राधान्यतइति ऋषयोब्रह्मादिज्ञानिनोभूम्नआनंदादिगुणपूर्णस्यपुरुषस्ययान्लीलावतारानामनंतिपठंति अभ्यासेनोपासतेच तांस्तेतवप्राधान्यतोनुक्रमिष्येगणयिष्यामीत्यन्वयः भवतातदनुक्रमणरसःकर्णपुटेनापीयतांमभिगम्यतां यद्वापीयतांगायतांध्यायतांपश्यतांपिबतांजनानांकर्मकषायोदेहारंभहेतुःकर्मरूपरसस्तस्यशोषोयैस्तेतथोक्तास्तान् पेयत्वेगुणमाह सुपेशलानितिमधुरेभ्योप्यतिमधुरानिमानितिस्वमनसिप्रकाशितत्वेनकालक्षेपंक्षिपति ४५ ॥ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेविजयध्वजकृतटीकायांषष्ठोऽध्यायः ॥ ६ ॥ अस्मिन्नध्यायेप्रतिज्ञातान्परमपुरुषस्यावतारांस्तच्चरितानिचवक्ति तत्रप्रथमतोवराहकल्पमनुष्ठस्यवराहावतारंतत्कर्मचाह यत्रेति अत्रदंष्ट्राशब्देनसुदर्शनंगदाचोपलक्ष्यते सकलयज्ञमयींसुक्स्रुवादिसर्वयज्ञोपकरणजननींतदाधारांक्रौडींक्रोडस्यवराहस्यविद्यमानांतनुंबिभ्रत् ब्रह्मादिभिःस्तुतोनंतोयत्रयदाक्षितितलोद्धरणायउद्यतःसमुद्रेनिमज्ज्यरसातलगतांमहीमुद्धृत्यदंष्ट्राग्रेनिधायोर्ध्वंगतोभवति तदांतर्महार्णवेतद्रोधायोपागतंतमादिदैत्यंहिरण्याक्षंवज्रधरइंद्रोवज्रेणाद्रिंयथातथादंष्ट्रयाददार गदयाविदिर्णगात्रंमुष्टिभिःकर्णमूलेहत्वागतासुमकरोदित्यर्थः दृविदारणइतिधातोः येनांतर्महार्णवेभूर्नीतातामितिवा १ सुपूज्यंयशोयस्यससुयशाः उत्तमश्लोकशिखामणि स्वार्पणबुद्ध्याक्रियमाणःशोभमानोयज्ञोयस्यससुयज्ञःक्रियाभिमानीयज्ञनामेंद्रसूनुःशोभनोयस्मात्सइतिवा सनारायणोरुचेःप्रजापतेःसकाशात्यज्ञइतिनाम्नाऽऽकूत्यांरुचिपत्न्यांजातोभूत् अथेंद्रपदस्थआकूतिसूनुर्यज्ञोदक्षिणायांरमावतारायांस्वपत्न्यांस्वायंभुवमन्वंतरेतुषिताख्यानमरानजीजनत् योराक्षसैरत्तुं

## प्राधान्यतोयानृषयआमनंतिलीलावतारान्पुरुषस्यभूम्नः ॥ आपीयतांकर्मकषायशोषाननुक्रमिष्येतइमान्सुपेशलान् ४५ ॥ इतिश्रीभागवतेमहापुराणे द्वितीयस्कंधेषष्ठोध्यायः ॥ ६ ॥ ब्रह्मोवाच ॥ यत्रोद्यतःक्षितितलोद्धरणायबिभ्रत्क्रौडींतनुंसकलयज्ञमयीमनंतः ॥ अंतर्महार्णवउपागतमादिदैत्यंतंदंष्ट्रयाद्रिमिववज्रधरोददार १ जातोरुचेरजनयत्सुयशाःसुयज्ञआकूतिसूनुरमरानथदक्षिणायाम् ॥ लोकत्रयस्यमहतीमहरद्यदार्तिंस्वायंभुवेनमनुनाहरिरित्यनूक्तः २ जज्ञेचकर्दमगृहेद्विजदेवहूत्यांस्त्रीभिःसमंनवभिरात्मगतिंस्वमात्रे ॥ ऊचेययात्मशमलंगुणसंगपंकमस्मिन्विधूयकपिलःस्वगतिंप्रपेदे ३ अत्रेरपत्यमभिकांक्षतआहतुष्टोदत्तोमयाहमितियद्भगवान्सदत्तः ॥ यत्पादपंकजपरागपवित्रदेहायोगर्धिमापुरुभयींयदुहैहयाद्याः ४

प्राप्तेनस्वायंभुवेनमनुनासंसारक्लेशसंहरणाद्धरिरितिज्ञात्वाईशावास्यमित्यादिनाऽनूक्तोवेदवचनेनस्तुतः त्रयीश्रुतिर्नित्यवाक्यंवेदोनुवचनंतथेत्यभिधानं किंच यश्चासुरजनादुत्पन्नांलोकत्रयस्यमहतीमार्तिंमहरदितियस्मात्तस्माद्धरिरितिज्ञात्वाऽनूक्तइतिवा । क्रियाभिमानाद्यज्ञोसावेंद्रसूनुःप्रकीर्तितः । यज्ञेशत्वात्स्वयंविष्णुर्यज्ञोरुचिसुतःस्मृतइत्यावेरयंयज्ञोहरिरेवेति २ चशब्दआनंतर्यार्थे । हेद्विज । अथसविष्णुःकर्दमप्रजापतिपत्न्यांनाम्नादेवहूत्यांनवभिर्मरीच्यादिपत्नीभिःसमंसहकपिलनामाजज्ञइत्यन्वयः तच्चरितमाह आत्मगतिमिति यःकपिलःस्वमात्रेआत्मगतिंतत्त्वसंख्यानरूपामात्मविद्यामूचे सकपिलोऽस्मिन्सात्विकप्रकृतिचेतनगणेविद्यमानंगुणसंगपंकंशब्दादिगुणानांसंगात्निरंतरानिषेवणादुत्पन्नमविद्याकामकर्माख्यंपंकमात्मशमलंमनःकल्मषंसांख्यशास्त्रश्रवणजातज्ञानवारिणाविधूयप्रक्षाल्यस्वगतिंदत्त्वास्वलोकंप्रपेदेइत्यन्वयः ३ हरिणासममपत्यमभिकांक्षत इच्छतोत्रेर्मुनेस्तपसातुष्टोभगवांस्तपसाप्रसन्नेनमयायंतवपुत्रत्वेनदत्तइत्याहेतियस्मात्सहरिरत्रेरनुसूयायामवतीर्णोनाम्नादत्तइतिप्रसिद्धोभूत यस्यदत्तस्यपादपंकजपरागनिषेवयापवित्रदेहा यदुःकार्तवीर्यस्यपूर्वजः हैहयःकार्तवीर्यार्जुनःतौआद्यौयेषांतेतथा अमर्योविष्णुप्रधानांयोगर्द्धिंअणिमादियोगसिद्धिमापुरित्यन्वयः अइतिब्रह्मेतिश्रुतेः । मयटोपिप्राधान्येप्रयोगदर्शनात् । उभयीमितिपाठेइहलोकपरलोकविषयां सगुणनिर्गुणविषयाचेतिव्याख्यानंचनाम्नायज्ञानामितिज्ञातव्यम् ४

आदाविस्युमपत्रसंबध्यते अत्रादौमयाविविधलोकासिसृक्षयातपस्तप्तंकृतं। तदामेममतपत तपःकुर्वतःसतः। सुतपसःसर्वपूज्यतपसःसनादादौसनोत्पत्ते पूर्वनोस्माकमर्थेसविष्णुनामाभूदित्यन्वयः अवतीर्यचयत्तत्त्वंमुनयः आत्मन्यात्मनिहृदयपद्मकर्णिकायामचक्षत प्राक्कल्पस्यसंप्लवेनजलीभावेनप्रलयेनइहजगतिविनष्टंतिरोहितमात्मतत्त्वंसम्यग्जगादमत्रोपदिदेशेत्यन्वयः। ब्रह्मणस्तपतःपूर्वविष्णुर्जातउरुक्रमइत्यादिवाक्यंचेममर्थमनुवदति। सनात्सभाजनात्समाराधनलक्षणात्सुतपसःसाधनात्ज्ञानभक्तिरूपात्करणादितियावत्सआराधितोदेवःचतुःसनोभूत् सनकःसनंदनःसनातनःसनत्कुमारइतिचतुर्मूर्तिरभवदितीदंपूर्वोक्ततुल्यमिति अस्याऽवतारस्यमुख्यप्रयोजनंजगद्रक्षणमात्मतत्त्ववचनप्रासंगिकमितिज्ञातव्यं तदभिप्रायेणोक्तमाचार्यैःसर्वज्ञैः यश्चपातिसदालोकानजितोजयतांवरइत्यादेः ॥ ५ ॥ धर्मस्यसकाशात्दक्षदुहितरिदक्षपुत्र्यांस्वमूर्त्यासाच्चिदानंदलक्षणस्वदेहेननारायणोनरइतिनाम्नाऽजनि कीदृशःस्वतपसःस्वज्ञानस्यप्रभावोमाहात्म्यंयस्मिन्सस्वतपःप्रभावः प्रतापमाहात्म्ययोःप्रभावःस्यादित्यतोलोकशिक्षार्थंस्वतपसःप्रभावःप्रतापवान्वा अत्रेदंतात्पर्यं नारायणोहरिःकृष्णइतित्रयोविष्णोःसाक्षादवतारानरनाम्न्यंतर्यामितयानरनामावतीर्णइति तत्रलोकशिक्षार्थंतपःकुर्वाणोबदर्यांवसंतौसहैवतिष्ठतइति नारायणोनरइत्येतावेवोक्ताविति ज्ञातव्यंनरोनारायणश्चैवहरिःकृष्णस्तथैवचेत्यादिवचनात्। स्वतपःप्रभावइत्युक्तंविवृणोति दृष्टात्मनइतिदृष्टात्मनोनित्यमपरोक्षीभूतनिजस्वरूपस्यनरनारायणात्मनोभगवतोनियमावलोपंतपआदेर्भंगं अनंगस्यपृतनाःसेनास्थानीया देवस्त्रियोघटितुंकर्तुंनशेकुरित्यन्वयः किंच स्वतोप्यधिकसौंदर्यमंदिराणांभगवतातत्क्षण

**तप्तंतपोविविधलोकसिसृक्षयामआदौसनात्सुतपसस्तपतःसनोभूत् ॥ प्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वंसम्यग्जगादमुनयोयदचक्षतात्मन् ५ धर्मस्यदक्षदुहितर्यजनिस्वमूर्त्यानारायणोनरइतिस्वतपःप्रभावः ॥ दृष्टात्मनोभगवतोनियमावलोपंदेव्यस्त्वनंगपृतनाघटितुंनशेकुः ६ कामंदहंतिकृतिनोननुरोषदृष्ट्यारोषंदहंतमुततेनदहंत्यसह्यम् ॥ सोयंयदंतरमलंनिविशन्बिभेतिकामःकथंनुपुनरस्यमनःश्रयेत ७ विद्धःसपत्न्युदितपत्रिभिरंतिराज्ञोबालोपिसन्नुपगतस्तपसेवनाय ॥ तस्माअदाद्ध्रुवगतिंगृणतेप्रसन्नोदिव्याःस्तुवंतिमुनयोयदुपर्यधस्तात् ८ यद्वेनमुत्पथगतंद्विजवाक्यवज्रनिष्प्लुष्टपौरुषभगंनिरयेपतंतम् ॥ त्रात्वाऽर्थितोजगतिपुत्रपदंचलेभेदुग्धावसूनिवसुधासकलानियेन ९**

सृष्टानांस्त्रीणांदर्शनाल्लज्जितास्ततोन्ववर्ततेत्यस्मिन्नर्थेतुशब्दः यद्यप्यनंगपृतनास्तथापीत्यस्मिन्नर्थेवा ६ क्रोधवतएवमनसिकामःपदंलभते हरेस्तुसएवपदंनप्राप्नोतिनितरांकामोतस्तत्साधनंनकार्यक्षममभूदित्याह काममिति कृतिनोमहात्मानःशंकरादयोरोषाविष्टदृष्ट्याकामंदहंतिननुप्रसिद्धोपमर्थः उतशब्दोऽप्यर्थे तेऽपिदहंतंरोषंनदहंति तत्रहेतुगर्भविशेषणमाह असह्यमिति सोयंरोषोमधुसूदनेअंतःमनोनिविशन्निवेष्टुमिच्छन्अलंबिभेति अत्रहेतुरमलमितिवा क्रोधनिवेशनसहकारिरागद्वेषलक्षणमलविधुरत्वादित्यर्थः कामोऽस्यहरेर्मनःकथंनुश्रयेतनकथमपि सहकारिणःक्रोधस्यप्रवेशसंदेहादित्यर्थः कंचनावसरमासाद्यापीत्यस्मिन्नर्थेपुनरिति ७ यदुत्तानपादनाम्नोराज्ञोंतिकेसुनीत्यासपत्न्याउदितपत्रिभिर्वाग्बाणैर्विद्धःसन्बालोपिपुरादुपगतोनिर्गतस्तपसेवनायाऽगमदितिशेषःतत्रनारदोपदिष्टविधिनातपश्चरतेप्रत्यक्षंदृष्ट्वाग्रगतेस्तुवतेतस्मैध्रुवायतपसाप्रसन्नोहरिर्वासुदेवनामविग्रहविशेषं गृहीत्वाध्रुवगतिंनित्यस्थानमदादित्यन्वयः। वैकुंठाद्यन्यतममदात्किमित्याशंक्यतद्विशिनष्टिदिव्याइति यदुपर्यधस्तात् यस्याध्रुवगतेरुपर्यधस्तात्स्थिताअंबरचारिणोमुनयोयांस्तुवंतितामितिशेषः अवतारोमहाविष्णोर्वासुदेवइतीरितइत्यादेःकिंनामायमवतारइतिशंकानिरस्तेति ८ अथोत्पथगतंप्राभेव्यजव्वंमचोन्यदैवंनास्तीत्यद्वैतमार्गवर्तिनमतएवद्विजवाक्यवज्रेणनिष्प्लुष्टपौरुषभगविनाशिनपुरुषाकारभागधेयंमृत्वानिरयेपततंवेनंज्ञात्वापरमार्थिभिर्जगत्पालनायार्थितोजगतिभूलोकेपुत्र

---

१ नाम्नायज्ञानामिति २ इदमुपलक्षणहरिःकृष्णइतिच। तथाचचत्वारोधर्मतनयाइत्यर्थः ३ मूर्तिसंज्ञायामितिशेषः।

पदंमथितवेनदक्षिणभुजोत्पन्नपृथ्वाख्यमहाराजस्यानंलेभइत्यन्वयः स्वयंचपृथुनामातत्रविष्णुरित्यर्थंचशब्देनानुवदति । पृथुर्नामममहाराजस्तत्रविष्णुःस्वयंविभुरित्यादेः । तत्कर्माह । दुग्धेति येनपृथ्वाविष्टेनपृथुनाम्नाहरिणावसुधाभूमिःसकलानिवसूनिथमृतादिद्रव्याणिचदुग्धेत्यन्वयः ९ असौनारायणोनाभेराज्ञःसकाशात्सुदेविसूनुरासेत्यन्वयः मेरुदेव्याःसुदेवीतिनामांतरंराजकृतं तदवतारप्रयोजनमाह योवाइति ऋषभनामायोवैहरिःसमदृक्सर्वांतर्हृदिस्थितंसर्वंब्रह्मपश्यतीतिनित्यापरोक्षीकृतस्वरूपइत्यर्थः योगचर्यांपरमहंसधर्मंचचार ऋषयोयद्रूपंपारमहंस्यंपरमहंसप्राप्यमामनंति यश्च स्वस्थःस्वाधारःप्रशांतकरणःप्रकृष्टसुखात्मकदेहेंद्रियः अतएवपरिमुक्तसंगोबाह्यसुखानपेक्षः । विधिनिषेधविमुक्तस्ययोगचर्याकरणं किमर्थमित्याशंकावाइत्यनेननिरस्ता लोकसंग्रहार्थत्वेनतदाचरणप्रसिद्धेरिति स्वस्थइत्यादिविशेषणबाहुल्याच्च प्राप्यप्रयोजनांतरंनास्ति १० साक्षात्तुर्यः । एषयज्ञपुरुषोममसत्रेयज्ञेनाम्नाहयशीर्षआसेत्यन्वयः तिर्यग्योनित्वेप्यैश्वर्यादिगुणसामग्रीमानित्याह भगवानिति तपनीयंरूप्यहेम्नोरित्यभिधानान्मूलावताररूपापेक्षयोभयवर्णत्वमुक्तं अनेनसाक्षान्नारायणएवेतिनिरणायि हिरण्यश्मश्रुरित्यादिश्रुतेः इतोप्ययंनारायणएवेत्याह छंदोमयइति छंदआदीनामाधारत्वात्विषयत्वादुद्देश्यत्वादंतर्यामित्वात्तन्मयत्वं तत्कर्मचाह वाचइति अस्यहयग्रीवस्यश्वसतःश्वासंकुर्वतोनस्तःनासिकाया उशतीर्भगवद्गुणप्रतिपादकत्वेनशुद्धाः श्वासरूपावाचोवेदादिलक्षणाबभू

नाभेरसावृषभआससुदेविसूनुर्योवैचचारसमदृग्जडयोगचर्याम् ॥ यत्पारमहंस्यमृषयःपदमामनंतिस्वस्थःप्रशांतकरणःपरिमुक्तसंगः १० सत्रेममासभगवान्हयशीर्षएषःसाक्षात्सयज्ञपुरुषस्तपनीयवर्णः ॥ छंदोमयोमखमयोऽखिलदेवतात्मावाचोबभूवुरुशतीःश्वसतोस्यनस्तः ११ मत्स्योयुगांतसमयेमनुनोपलब्धःक्षोणीमयोनिखिलजीवनिकायकेतः ॥ विस्रंसितानुरुभयेसलिलेमुखान्मआदायतत्रविजहारहवेदमार्गान् १२ क्षीरोदधावमरदानवयूथपानामुन्मथ्नताममृतलब्धयआदिदेवः ॥ पृष्ठेनकच्छपवपुर्विदधारगोत्रंनिद्रेक्षणोऽद्रिपरिवर्तकषाणकंडूः १३ त्रैविष्टपोरुभयहारिनृसिंहरूपंकृत्वाभ्रमद्भ्रुकुटिदंष्ट्रकरालवक्त्रम् ॥ दैत्येंद्रमाशुगदयाभिपतंतमाराद्रूरौनिपात्यविददारनखैःस्फुरंतम् १४ अंतःसरस्युरुबलेनपदेगृहीतोग्राहेणयूथपतिरंबुजहस्तआर्तः ॥ आहेदमादिपुरुषाखिललोकनाथतीर्थश्रवःश्रवणमंगलनामधेय १५

वुरित्यन्वयः छंदांसिचमखाश्चैवदेवालोकाश्चसर्वशइत्यादिर्नामपटोविकारार्थत्वंप्रयुक्तं ११ मेमुखाद्विस्रंसितान्निर्गतान्वेदमार्गान्हयग्रीवदैत्येनापहृतान्दृष्ट्वामत्स्योवतीर्यतंहत्वातान्समादायस्थितः पुनर्युगांतसमयेमन्वंतरप्रलयेसप्तऋषिभिःसहस्तुवतावैवस्वतमनुनोपलब्धोदृष्टः क्षोणीमयःक्षोणीमयनावाश्रयत्वादतएवानिखिलजीवनिकायानांकेतआश्रयः तत्रोरुभयेमहाभयंकरेसलिलेप्रलयसमुद्रजलेविजहारेत्यन्वयः १२ अमृतलब्धयेऽमरदानवयूथपानांक्षीरसमुद्रमुन्मथ्नतांसतामतिभारेणक्षीरोदधौमज्जंतंगोत्रंपर्वतं सआदिदेवःकच्छपवपुर्भूत्वापृष्ठेनविदधारेत्यन्वयः उपर्यधोनेत्रगोत्रयोरित्यर्थद्योतकोवीत्युपसर्गः तज्जातिस्वभावमाह निद्रेक्षणइति निद्रयेषन्मीलितनेत्रः निद्राहेतुमाह अद्रीति मंदराद्रेःपरिवर्तःपरिभ्रमणंतेनकषाणंविलेखनंतेनजातःकंडूःकंडूयनंयस्यसतथा १३ त्रिविष्टपानांदेवानांदैत्याद्युरुभयंतद्धारितद्धननशीलं भ्रमंत्यास्फुरंत्याभ्रूकुट्यादंष्ट्राभ्यांचकरालभयंकरंचवक्त्रंयस्यतत्तथा नृसिंहयोर्नरस्यसिंहस्यचरूपमिवरूपंकृत्वासहरिरारात्दूराद्गदयाभिपतंतंस्फुरंतंदैत्येंद्रंहिरण्यकशिपुंवेगेनोरौनिपात्यनखैर्विददारेत्यन्वयः दृविदारणइतिधातोः १४ यदायूथपतिर्गजेंद्रःसरस्युरुग्राहेणपदेगृहीतआर्तःसन्नंबुजहस्तः हेआदिपुरुष अखिललोकनाथ तीर्थश्रवःपावनकीर्ते श्रवणमात्रेणमंगलप्रदनारायणाद्यभिधान स्वमस्माद्रक्षइतीदमाह १५

---

सर्वंविष्णौस्थितायस्मादतःसर्वमयोह्यसौइतिमहासंहितायां २ अनेनमत्स्यावतारोद्विवारमितिज्ञायते

तदातापसोनामभगवानरणार्थिनंशरणार्थिनंस्मृत्वातत्रागत्यकृपयातंहस्तेप्रगृह्योज्जहार भगवच्छब्दवाच्यत्वमृष्यादीनामप्यस्तीतितितोव्यावर्तयति अप्रमेयइत्यादिना अप्रमेयइयत्तारहितः एतदाका शस्याप्यस्तीत्यतश्चक्रायुधइति नन्वनेनयोद्धाप्युच्यतइतितत्राह पतगेति पतगराजोगरुडस्तस्यभुजमधिरूढः भुजस्कंधयोरतिसामीप्यादेवमुक्तं किंकृत्वा चक्रेणसुदर्शनेननक्रस्यग्राहस्यवदनंविनिपा ट्यछित्त्वा हारिस्तापसनामासौजातस्तपसिवैमनुरित्यादेः कोयमवतारोनामेतिशंकानिरस्ता १६ वामनत्रिविक्रमावतारौतत्कर्मचाह ज्यायानित्यादिश्लोकद्वयेन अत्रपत्तच्छब्दावध्याहार्यौ त थाहि योधियज्ञोभगवान्गुणैर्ज्यायानप्यदितेःसुतानामवरजोऽभूत्तेनभगवता दैत्यानांगर्ववामयतिउद्गारयतीतिवामनः तेनवामनरूपेणात्रिपदच्छलेनक्ष्मांजगृहेइतियत्तदथोतस्मात्सएववामनइमांल्लो कांस्त्रिभिःपदैर्विचक्रमे तस्मात्त्रिविक्रमश्चाभूदितिवाक्यशेषइत्यर्थः किमर्थमेवंहारिणाकृतमत्राह याच्ञामिति मार्गवर्तीपुमानप्रभुभिरप्युपायैर्विनानचाल्यइतिन्यायदर्शनार्थमेवंकृतमितिभावः य द्वा अधियज्ञःक्ष्मायामुर्व्यांवामनेनह्रस्वतरेणरूपेणजगृहेत्रिलोकीमितिशेषः कथंत्रिपदच्छलेनइमाँल्लोकान्विचक्रमेइतियत्तस्माददितेःसुतानांजन्मनाऽवरजोपिगुणैर्ज्यायान् । सममन्यत् १७ त्रिपद च्छलेनत्रैलोक्यंयद्दत्तवतोबलेर्दानफलमिंद्रपदावाप्तिरितिसंगिरंतेकेचितन्न किंतुहरितोषणद्वारामुक्त्यानंदोद्रेकताएव ऐंद्रंपदंनांतरीयंफलंतुहरितोषणमित्यादेरित्याशयेनाह नार्थइति अंगनारद । प्रति

स्मृत्वाहरिस्तमरणार्थिनमप्रमेयश्चक्रायुधःपतगराजभुजाधिरूढः ॥ चक्रेणनक्रवदनंविनिपाट्यतस्माद्धस्तेप्रगृह्यभगवान्कृपयोज्जहार १६ ज्यायान्गु णैरवरजोप्यदितेःसुतानांलोकान्विचक्रमइमान्यदथोधियज्ञः ॥ क्ष्मांवामनेनजगृहेत्रिपदच्छलेनयाच्ञामृतेपथिचरन्प्रभुभिर्नचाल्यः १७ नार्थोबलेर यमुरुक्रमपादशौचमंभःशिवंधृतवतोविबुधाधिपत्यम् ॥ योवैप्रतिश्रुतमृतेपिचशीर्षमाणमात्मन्यमंगमनसाहरयेऽभिमेने १८ तुभ्यंचनारदभृशंभगवा न्विवृद्धभावेनसाधुपरितुष्टउवाचयोगम् ॥ ज्ञानंचभागवतमात्मसुतत्त्वदीपंयद्वासुदेवशरणाविदुरंजसैव १९ चक्रंचदिक्ष्वविहतंदशसुस्वतेजोमन्वंत रेषुमनुवंशधरोबिभर्ति ॥ दुष्टेषुराजसुदमंविदधत्स्वकीर्तिंसत्येत्रिपृष्ठउशतींप्रथयंश्चरित्रैः २० धन्वंतरिश्चभगवान्स्वयमासदेवोनाम्नानृणांपुरुरुजांरुजआ शुहंति ॥ यज्ञेचभागममृतायुरवापचाद्धाआयुश्चवेदमनुशास्त्यवतीर्यलोके २१

श्रुतं पदत्रयमृतेपिचात्मन्यंस्वसंबंधिशीर्षमाणंशीर्यमाणमानंमनसामनःपूर्वंकहरयेऽभिमेनेसमर्पयामास तस्यास्योरुक्रमपादशौचमंभःशिवंशिरसाधृतवतोबलेर्यद्विबुधाधिपत्यलक्षणंफलमयमर्थोन । साक्षा त्फलंनभवति तन्नांतरीयकमेवेत्यन्वयः वाइत्यनेनास्यार्थस्यानन्यथात्वंवक्ति १८ महिदासनाम्नोहरेरवतारस्यचरित्रमाह तुभ्यमिति विवृद्धभावेनसमुद्रिक्तभक्त्यासाधुपरितुष्टोनाम्नामहिदासोभगवांस्तुभ्य मस्मदादिभ्यश्चभगवद्विषयंकर्मयोगंज्ञानयोगंचोवाचेत्यन्वयः आत्मेत्यनेनभागवतत्वंस्पष्टयति अत्रप्रमाणमाह यदिति यत्ज्ञानंवासुदेवशरणा ब्रह्मादयः अवैष्णवनिषेधार्थंएवशब्दः तदुक्तं ऐतरेयोहरिः प्राहनारदायस्वकांतनुं । यत्प्रापुर्वैष्णवानान्येवदतेनसुखंपरमिति १९ राजराजेश्वरावतारंतच्चरितंचाह चक्रंचेति राजराजेश्वरइतिनाम्नाऽवतीर्णोहरिःस्वायंभुवादिमनुवंशधरःसन्दुष्टेषुराजसुदमंविदधत् सत्येधर्मेसत्यसंधानेवानिविष्टउशतींकमनीयांस्वकीर्तिंचरित्रैः प्रथयन्प्रख्यापयन्मन्वंतरेषुभगवान्प्रियव्रतादिचक्रवर्तिष्वप्यास्थितोदशसुदिक्षुअविहतमप्रतिहतंतेजःस्वरूपभूतप्रभावंचक्रमाज्ञालक्षणंबिभर्ती त्यन्वयःमन्वंतरेषुभगवांश्चक्रवर्तिषुसंस्थितइत्यादिकमत्रमानम् २० देवोभगवान्स्वयमेवविशेषावेशमंतरेणमन्वंतरिश्चासाववतीर्णश्च पुरुरुजांबहुरोगाणांरुजोरोगान्नाम्नोच्चारितेनहंति सएवामृतायुर्नि त्यमुक्तःसन्नद्धा । यज्ञभागंचावापआयुर्वेदंचबाहटंशास्त्रंचानुशास्तिकृत्वालोकेप्रवर्तयति २१

१ बाहटंतन्नामकंवैद्यशास्त्रं ।

मार्गवरामावतारंतत्कर्मचसंक्षिप्याह क्षत्रमिते उरुद्रंप्रसतीतिउग्रंवीर्यंयस्यसउग्रवीर्यः आत्मभ्यः पुरुषेभ्योमहान्पुरुषोत्तमोऽसौ उर्वीधारानिशिताग्रंयस्यतउरुधारः सचासौपरश्वधः परशुः तेनावनिकंटक मतएवनरकार्तिलिप्सुनरकदुःखलिप्सुकामं उज्झितपथंत्यक्तसन्मार्गं ब्रह्मध्रुक्ब्राह्मणद्रोहि अतएवविधिनादैवेनक्षयायोपहृतंसमर्पितं क्षत्रंक्षत्रियकुलं उद्धंत्युन्मूलयतीत्यन्वयः त्रिःसप्तकृत्वएकविंशद्वारं २२ रामावतारंतद्विक्रमंचश्लोकत्रयेणाह कृत्स्नप्रसादेति दशकंधरोरावणोयस्मिन्विरुध्यार्तिंमरणलक्षणामार्च्छत्प्राप सःकलेशःप्राणःश्रद्धावायुरित्यादिश्रुत्युक्तानां कलानांस्वकार्यशक्तिप्रदः कृत्स्नःपूर्ण प्रसादआनंदोयस्यसतथा कार्येणकारणोपलक्षणं सुसुंदरंमुखंयस्यसतथा कृत्स्नप्रसादश्चासौसुमुखश्चेतिसमासः इक्ष्वाकुवंशेकलयास्वरूपांशेनावतीर्यगुरोर्दशरथस्यानिदेशेनियोगेतिष्ठन्सदयितानुजःसीता लक्ष्मणाभ्यांसहितोरामोवनमाविवेशेत्यन्वयः २३ दूरेस्थितासुहृत्सीतायस्यसः तस्यरामस्योज्ज्वलितोरोषएवसुशोषोऽग्निःतेनयुक्तयादृष्ट्या अग्निःसुशोषःकस्मान्नस्तिमिरारिर्हिरण्यदइति मकराश्चउ रगाश्चनक्राश्चमकरोरगनक्राः तातप्यमानानांपुनःपुनःपच्यमानानांमकरोरगनक्राणांचक्राणियस्मिन्सतथा ऊढंभयंयेनसतथा अगेवेपःकंपोयस्यसतथाऊढभयश्चासावगेवेपथुश्चएवंविधउदधिस्त्रिपुरंहरवदरिपु रंलंकादिधक्षोर्दग्धुकामायतस्मैरामायसपदिमार्गमदादित्यन्वयः २४ वक्षस्थलस्पर्शेनरुग्णाभग्नामहेंद्रवाहस्यैरावतस्यदंतावक्षस्थलस्पर्शरुग्णमहेंद्रवाहदंतास्तैर्विलंबितःककुभांजयः विलंबितककुब्ज

क्षत्रंक्षयायविधिनोपहृतंमहात्माब्रह्मध्रुगुज्झितपथंनरकार्तिलिप्सु ॥ उद्धंत्यमाववनिकंटकमुग्रवीर्यस्त्रिःसप्तकृत्वउरुधारपरश्वधेन २२ कृत्स्नप्रसादसुमुखः कलयाकलेशइक्ष्वाकुवंशअवतीर्यगुरोर्निदेशे ॥ तिष्ठन्वनंसदयितानुजआविवेशयस्मिन्विरुध्यदशकंधरआर्तिमार्च्छत् २३ तस्माअदादुदधिरूढभयांगवे पोमार्गंसपद्यरिपुरंहरवद्दिधक्षोः ॥ दूरेसुहृन्मथितरोषसुशोषदृष्ट्यातातप्यमानमकरोरगनक्रचक्रः २४ वक्षस्थलस्पर्शरुग्णमहेंद्रवाहदंतैर्विलंबितककुब्जयरू ढहासः ॥ सद्योसुभिःसहविनेष्यतिदारहर्तुर्विस्फूर्जितैर्धनुषउच्चरितैःससैन्यः २५ भूमेःसुरेतरवरूथविमर्दितायाःक्लेशव्ययायकलयासितकृष्णकेशः ॥ जातःकरिष्यतिजनानुपलक्ष्यमार्गःकर्माणिचात्ममहिमोपनिबंधनानि २६

यस्तेनरूढ उत्पन्नोहासोऽट्टहासोयस्यसतथा सैन्येनसहितोरावणस्तस्यदारहर्तुः दारान्सीतामाहर्तुकामस्यरामस्य धनुषउच्चरितैर्नियतैर्विस्फूर्जितैरसुभिःसहविनेष्यति विनयंमदाविनाशमेष्यति पुनःस यस्तत्क्षणएवराममुक्तैःशरैर्विनेष्यतिविनाशंप्राप्नोतीत्यन्वयः धनुर्विस्फूर्जितैर्नष्टोरावणःपूर्वमेवतु। पुनःशरैराममुक्तैःसानुबंधोविनेष्यतीत्यनेनधनुर्विस्फूर्जितैर्विनाशःकथमभूदितीयमाशंकानिरस्तेति स सैन्यइत्यस्यविवरणंसानुबंधइति २५ कृष्णावतारमनन्यसाध्यंतत्कर्मवसंक्षेपकथयति भूमेरित्यादिश्लोकदशकेन सहरिःसितकृष्णकेशइतिनामकलयाजातःकर्माणिकरिष्यतीत्यन्वयः कर्मणातत्त्वज्ञा नंकस्माद्बोदेत्यतउक्तं जनेति प्राकृताज्ञेयमार्गत्वादित्यर्थः अवतारप्रयोजनमाह सुरेतरेषामसुराणांवरूथेनसमूहेनसेनयावाविमर्दितायाःपीडितायाभूमेःक्लेशव्ययायेति कीदृशानिकर्माणिआत्ममहिमो पनिबंधनानिस्वमहिमनिमित्तानिपूतनावधादीनिहरेःकर्माणिपरकर्मनिबंधनानिनभवंति अन्येषांकर्माणितन्महिमनिबंधनानीतिचार्थः तदुक्तं विष्णोर्नान्येनकर्माणिपरेषांतन्निबंधनमिति अत्रानंतांशे रौहिणेयेरामेशुक्लकेशात्मकरामाभिधानेनहरिरिस्तिष्ठन्जगद्रक्षपतीत्येतद्रामएकोऽनंतांशस्तत्ररामाभिधोहरिरित्यादिनोक्तं अतएवग्राह्यमितिभावः २६

१ षट्प्रश्नोकश्रुतिरित्यर्थः २ दारहर्तुःरावणस्येत्यन्यथाप्रतीतिवारणायप्रवृत्ततात्पर्यानुरोधेनरामपरत्वेनार्थमाह इतितात्पर्यदीपिका

तदातापसोनामभगवानरणार्थिनंशरणार्थिनंस्मृत्वातत्रागत्यकृपयातंहस्तेप्रगृह्योज्जहार भगवच्छब्दवाच्यत्वमृष्यादीनामप्यस्तीतितितोव्यावर्तयति अप्रमेयइत्यादिना अप्रमेयइयत्तारहितः एतदाका शस्याप्यस्तीत्यतश्चक्रायुधइति नन्वनेनयोद्धाप्युच्यतइतितत्राह पतगेति पतगराजोगरुडस्तस्यभुजमधिरूढः भुजस्कंधयोरतिसामीप्यादेवमुक्तं किंकृत्वा चक्रेणसुदर्शनेननक्रस्यग्राहस्यवदनंविनिपा ट्यछित्त्वा हरिस्तापसनामासौजातस्तपसिवैमनुरित्यादेः कोयमवतारोनामेतिशंकानिरस्ता १६ वामनत्रिविक्रमावतारौतत्कर्मचाह ज्यायानित्यादिश्लोकद्वयेन अत्रयत्तच्छब्दावध्याहार्यौ त थाहि योधियज्ञोभगवान्गुणैर्ज्यायानप्यदितेःसुतानामवरजोऽभूत्तेनभगवता दैत्यानांगर्वंवामयतिउद्गारयतीतिवामनः तेनवामनरूपेणत्रिपदच्छलेनक्ष्मांजगृहेइतियत्तदथोतस्मात्सएववामनइमांस्त्रींल्लो कांस्त्रिभिःपदैर्विचक्रमे तस्मात्त्रिविक्रमश्चाभूदितिवाक्यशेषइत्यर्थः किमर्थमेवंहरिणाकृतमत्राह याच्ञामिति मार्गवर्तीपुमानप्रभुभिरप्युपायैर्विनानचाल्यइतिन्यायदर्शनार्थमेवंकृतमितिभावः य द्वा अधियज्ञःक्ष्मायामुर्व्यांवामनेनह्रस्वतरेणरूपेणजगृहेत्रिलोकीमितिशेषः कथंत्रिपदच्छलेनइमाँल्लोकान्विचक्रमेइतियत्तस्मादादितेःसुतानांजन्मनाऽवरजोपिगुणैर्ज्यायान् । समग्रमन्यत् १७ त्रिपद च्छलेनत्रैलोक्यंदत्तवतोबलेर्दानफलमिंद्रपदावाप्तिरितिसंगिरंतेकेचित्तन्न किंतुहरितोषणद्वारामुक्तावानंदोद्रेकताएव ऐंद्रंपदंनांतरीयकफलंतुहरितोषणमित्यादेरित्याशयेनाह नार्थइति अंगनारद । प्रति

स्मृत्वाहरिस्तमरणार्थिनमप्रमेयश्चक्रायुधःपतगराजभुजाधिरूढः ॥ चक्रेणनक्रवदनंविनिपाट्यतस्माद्धस्तेप्रगृह्यभगवान्कृपयोज्जहार १६ ज्यायान्गु णैरवरजोप्यदितेःसुतानांलोकान्विचक्रमइमान्यदथोधियज्ञः ॥ क्ष्मांवामनेनजगृहेत्रिपदच्छलेनयाच्ञामृतेपथिचरन्प्रभुभिर्नचाल्यः १७ नार्थोबलेर यमुरुक्रमपादशौचमंभःशिवंधृतवतोविबुधाधिपत्यम् ॥ योवैप्रतिश्रुतमृतेपिचशीर्षमाणमात्मन्यभंगमनसाहरयेऽभिमेने १८ तुभ्यंचनारदभृशंभगवा न्विवृद्धभावेनसाधुपरितुष्टउवाचयोगम् ॥ ज्ञानंचभागवतमात्मसतत्त्वदीपंयद्वासुदेवशरणाविदुरंजसैव १९ चक्रंचदिक्ष्वविहतंदशसुस्वतेजोमन्वंत रेषुमनुवंशधरोबिभर्ति ॥ दुष्टेषुराजसुदमंविदधत्स्वकीर्तिंसत्येत्रिपृष्ठउशतींप्रथयंश्चरित्रैः २० धन्वंतरिश्चभगवान्स्वयमासदेवोनाम्नानृणांपुरुरुजांरुजआ शुहंति ॥ यज्ञेचभागममृतायुरवावरुन्धआयुश्चवेदमनुशास्त्यवतीर्यलोके २१

श्रुतं पदत्रयमृतेपिचात्मन्यंस्वसंबंधिशीर्षमाणंशीर्षाख्यमानंमनसामनःपूर्वकंहरयेऽभिमेनेसमर्पयामास तस्यास्योरुक्रमपादशौचमंभःशिवंशिरसाधृतवतोबलेर्यद्विबुधाधिपत्यलक्षणंफलमयमर्थोन । साक्षा त्फलंनभवति तन्नांतरीयकमेवेत्यन्वयः वाइत्यनेनास्यार्थस्यानन्यथात्वंवक्ति १८ महिदासनाम्नोहरेरवतारस्यचरित्रमाह तुभ्यमिति विवृद्धभावेनसमुद्रिक्तभक्त्यासाधुपरितुष्टोनाम्नामहिदासोभगवांस्तुभ्य मस्मदादिभ्यश्चभगवद्विषयकर्मयोगंज्ञानयोगंचोवाचेत्यन्वयः आत्मेत्यनेनभागवतत्वंस्पष्टयति अत्रप्रमाणमाह यदिति यज्ज्ञानंवासुदेवशरणा ब्रह्मादयः अवैष्णवनिषेधार्थएवशब्दः तदुक्तं ऐतरेयोहरिः माहनारदायस्वकांतनुं । यत्प्रापुर्वैष्णवानान्येतद्दत्तेनसुखंपरमिति १९ राजराजेश्वरावतारंतच्चरितंचाह चक्रंचेति राजराजेश्वरइतिनाम्नाऽवतीर्णोहरिःस्वायंभुवादिमनुवंशधरःसन्दुष्टेषुराजसुदमंविदधत् सत्येधर्मेसत्यसंधानेवानिविष्टउशतींकमनीयांस्वकीर्तिंचरित्रैः प्रथयन्प्रख्यापयन्मन्वंतरेषुभगवान्प्रियव्रतादिचक्रवर्तिष्वप्यास्थितोदशसुदिक्षुअविहतमप्रतिहतंतेजःस्वरूपभूतप्रभावंचक्रमाज्ञालक्षणंबिभर्ती त्यन्वयःमन्वंतरेषुभगवांश्चक्रवर्तिषुसंस्थितइत्यादिकमत्रमानम् २० देवोभगवान्स्वयमेवविशेषावेशमंतरेणमन्वंतरिश्चासाववतीर्णश्च पुरुरुजांबहुरोगाणांरुजोरोगान्नाम्नोच्चारितेनहंति सएवामृतायुर्नि त्यमुक्तःसन्यद्वा । यज्ञभागंचावापआयुर्वेदंचबाहटंशास्त्रंचानुशास्तिकृत्वालोकेप्रवर्तयति २१

१ बाहटंतन्नामकंवैद्यशास्त्रं ।

येप्रलंबादयःकृष्णाख्येनहरिणाऽदर्शनमिताः येचान्येमैंदादयस्तथाजरासंधादयः येचकुरुपांडवसेनागता कांबोजादयःबलपार्थभीमद्रोणद्रौण्यादिव्याजाह्वयनहारिणामरणंप्रापितास्तेसर्वेतदीयांने
लयंयांतीत्यन्वयः द्वेषिणउदासीनाभक्ताइतित्रिविधाजीवास्तत्रद्वेषिणोनितरांलीयतेसुखंयास्मिंस्तदधंतमोयांति उदासीनानिरयंनरकं भक्तानिष्कामस्याभीष्टानंदस्यप्राप्तिर्यस्मिंस्तंवैकुंठादिकंयांतीत्य
र्थः सर्वंचस्थानंहरेर्विद्यमानं तदुक्तं विद्वेषिणोप्युदासीनाभक्ताअपिनसंशयः । हरेर्हिंसदनंयांतिव्यक्तंभक्तैस्तुगम्यते । आरभ्यतमआमुक्तेःकृष्णस्यसदनंयतः । अव्यक्तहरिलोकत्वादन्येषामन्यलोकते
ति रामभीमादिनामानिहरेरेवमुख्यानि रमणशक्त्यभयवर्णादीनांशक्तिवृत्तिहेतूनांहरेर्मुख्यत्वादन्यत्रामुख्यत्वात् व्यवहारार्थंसंकेतितत्वाद्व्याजानि तदप्युक्तं रामभीमार्जुनादीनिविष्णोर्नामानिसर्वं
शः । रमणाभयवर्णाद्याःशब्दवृत्तेर्हिहेतवइत्यादि । रयगतावितिधातोःरलयोरभेदः न्यक्भावंनिरयंनीचगतितमइतिवा निर्न्यग्भावनिकामयोरिति ३४ ३५ कालबलेनमीलितदृशामुत्सन्नज्ञानानांस्वो
कायुषांअल्पायुषांनृणांस्वनिगमःस्वविषयोवेदोदूरपारइत्यवमृश्यसविष्णुर्वतकृपयासत्यवत्यामाविर्हितोऽवतीर्णोवेदद्रुमविटपशःशाखोपशाखाभेदेनविभजिष्यतीत्यन्वयः कस्मिन्युगेइत्यतउक्तं अनुयुग
मितिएतदुक्तंभवति तृतीयेसप्तमेषोडशेपंचविंशेअष्टाविंशेचद्वापरेपूर्वेषुचान्यैर्व्यासनामभिर्विभजिष्यतीति अष्टाविंशेस्वयमेवविभजिष्यतीति । तृतीयेसप्तमेचैवषोडशेत्यादिवचनंच विशेषवाचिनातुशब्देनसू
चीतंकृष्णावतारादुपरिव्यासावतारकथनंतदुपरितनमन्वंतरेष्वपिव्यासावतारसद्भावादविरुद्धमित्यस्मिन्नर्थेहिशब्दः पुराणप्रसिद्धेरिति ३६ देवद्विषांमतिविमोहंबुद्धिमोहजनकमतिप्रलोभंमतिवंचकंबाल्ये

येचप्रलंबखरदर्दुरकेश्यरिष्टमल्लेभकंसयवनाःकुजपौंड्रकाद्याः ॥ अन्येपिशाल्वकपिबल्वलदंतवक्रसप्तोक्षशंबरविदूरथरुक्मिमुख्याः ३४ येवामृधेसमि
तिशालिनआत्तचापाःकांबोजमत्स्यकुरुसृंजयकैकयाद्याः ॥ यास्यंत्यदर्शनमितावलपार्थभीमव्याजाह्वयेनहरिणानिलयंतदीयम् ३५ कालेनमीलितदृ
शामवमृश्यनृणांस्तोकायुषांस्वनिगमोबतदूरपारः ॥ आविर्हितस्त्वनुयुगंसहिसत्यवत्यांवेदद्रुमंविटपशोविभजिष्यतिस्म ३६ देवद्विषांनिगमवर्त्मनिनिवि
ष्ठितानांपूर्भिर्मयेनविहिताभिरदृश्यमूर्तिः ॥ लोकान्घ्नतांमतिविमोहमतिप्रलोभंवेषंविधायबहुभाषतऔपधर्म्यम् ३७ यर्ह्यालयेष्वपिसतांनकथाहरेः
स्युःपाषंडिनोद्विजजनावृषलानृदेवाः ॥ स्वाहास्वधावषडितिस्मगिरोनयत्रशास्ताभविष्यतिकलेर्भगवान्युगांते ३८ सर्गेतपोहमृषयोनवयेप्रजेशाःस्थाने
थधर्ममखमन्वमरावनीशाः ॥ अंतेत्वधर्महरमन्युवशासुराद्यामायाविभूतयइमाःपुरुशक्तिभाजः ३९

षंविधाययदौपधर्म्यंशुपधर्माणांपाषंडधर्माणांप्रतिपादकंशास्त्रंतदभाषतेत्यन्वयः नारायणइतिशेषः । एतेऽसुराःकेइत्याशंक्यपूर्वजन्मकर्मपूर्वकंतान्विशिनष्टि निगमेत्यादिना प्राग्जन्मनिमयेनविहिताभि
स्तिसृभिःपूर्भिःपूरीभिः लोकान्घ्नतांनाशयतांरुद्रेणहतानांपुनर्विप्रजन्मलब्धवतांनिगमेनाविहिताभिःक्रियाभिःनिगमवर्त्मनिनिविष्ठितानांवेदमार्गेप्रतिष्ठाय यज्ञादिविशिष्टकर्मानुष्ठानोत्स्थिराणामदृश्यामूर्तिर्य
स्यसतथा दैत्यैरज्ञेयस्वरूपइत्यनेनततोवेदमार्गाच्चलनायदेवैःप्रत्यक्षीकृत्यप्रार्थितइतिज्ञातव्यं बुद्धोक्तशास्त्रस्यवेदबाह्यधर्मप्रतिपादकत्वमज्ञजनदृष्ट्या वेदोप्रमाणमित्यादिरूपस्यतस्यैवविष्णोःप्रमाण
मित्यादिवेदप्रतिपाद्यार्थत्वेनदेवेभ्यःप्रशांतसहितायांहरिणोक्तत्वादितिद्योतनायाभाषतेत्युक्तं स्वसूत्राणांभाष्यंचकृतवानित्यर्थः ३७ यर्हियस्मिन्युगेसतामालयेष्वपिहरेःकथानस्युः द्विजजना
श्चपाषंडिनःपाषंडवर्तिनःस्युर्नृदेवावृषलाधर्मविनाशकाः । यत्रयस्मिंश्चयुगेस्वाहादिगिरोनसंतिस्मवचनाभावेस्मरणमपिनास्ति इतिशब्दआद्यर्थे तदातस्यकलेर्युगस्यांतेऽवसानेभगवान्शास्ताभविष्यति
दुष्टानामितिशेषइत्यन्वयःइतिशब्दःस्वरूपावतारकथनसमाप्तिवचनोवेति ३८ मायाविभूतीराह सर्गइति योहंचतुर्मुख.येचकर्दमाद्यास्तपः येचमरीच्याद्यानवप्रजापतयः तेसर्वे । सर्गेसृष्टिसमये
प्राप्ते । पुरुशक्तिभाजःपूर्णशक्तिभाजोहरेर्मायाविभूतयः । अथयोधर्मः येमखाः येचतुर्दशमनवोयेचामरेशाश्चचतुर्दशेंद्राः येचावनीशाःप्रियव्रतादयःतेसर्वेस्थानेस्थितिकालेप्राप्तेपालनायविष्णोर्माया

विभूतयः । योऽधर्मोपश्रइरोरुद्रोयेचमन्युवशासुराद्याःक्रोधवशाःसुरपुरःसरास्तेसर्वेअंतेतुसंहारकालेवशोप्रेसंहारायहरेर्मायाविभूतयइत्यन्वयः । सृष्टिपालनसंहारकालेषुमाययास्वेच्छयाविविधोभूत्वाऽस्मदादिषुस्थित्वासृष्टिपालनसंहारान्करोति यद्वा माययाभगवदिच्छयाऽस्मदादीनांसदाविभूतयोभवंतीत्यतोऽस्मदादयोहरेर्मायाविभूतयोन तुस्वस्वरूपविभूतयइत्यर्थविशेषस्तुशब्दसूचितया हरीच्छयाविभूतिर्यद्ब्रह्मादीनांसदाभवेत् । इच्छयावाबहुविधस्तेषुविष्णुःस्वयंस्थितः । अतोमायाविभूतित्वंतेषांमत्स्यादयःस्वयमितिस्मृत्याप्रहीतइति ३९ ननुस्वरूपमाययाविभूतीनामेतावत्त्वंचेदिदंसर्वंसुकरंज्ञानमित्याशंक्यानंतायुषापिविभूतीनांगणनंनसुशकमित्याह विष्णोर्न्विति यत्रिपृष्ठस्यसदनाद्विशरणाचाशादुरुकंपमानंमांनिशाम्यस्वरमसात्रिविक्रमक्रमणवेगेनस्वलितंचलितमासन्नपतनंत्रिपृष्ठं सत्यलोकंचस्कंभस्तंभितवांस्तस्यविष्णोर्वीर्यगणनांविभूतिलक्षणमाहात्म्यप्रसंख्यानंप्रतिकवीनांकतमोर्हति नकोपीत्यन्वयः आदिकविरपिनसमर्थइत्याह पार्थिवानीति यःकविःप्रतिभाविशेषसंपन्नोऽपिब्रह्मापार्थिवानिरजांसिभूमिपरमाणून्विममेगणितवान् सोपिनशक्नोतीतिशेषान्वयः यदितिहेत्वर्थे अनंतानियचस्मात्तस्मादिति ४० अनंतत्वमुपपादयति नांतमिति विदामीतिविकरणव्यत्ययेनचतुर्मुखाद्ब्रह्मण शेषस्यसहस्रमुखत्वकथनात्ज्ञानाधिक्यमस्तीत्यस्त्रशंकांनिवारयति नसमवस्यतिननिश्चिनोति माल्याक्षतादिदामेवीशेषइतिवैजयंतीकोशात् अक्षबाधाशीर्वचनवान्शेषः

विष्णोर्नुवीर्यगणनांकतमोर्हतीह यःपार्थिवान्यपिकविर्विममेरजांसि ॥ चस्कंभयःस्वरभसास्खलितंत्रिपृष्ठंयस्मांनिशाम्यसदनादुरुकंपमानम् ४० नांतं विदाम्यहममीमुनयःप्रजेशामायाबलस्यपुरुषस्यकुतोपरेये ॥ गायन्गुणान्दशशताननआदिदेवःशेषोऽधुनापिसमवस्यतिनास्यपारम् ४१ येषांसएवभगवान्दययेदनंतःसर्वात्मनाश्रितपदोयदिनिर्व्यलीकम् ॥ तेवैविदंत्यतितरंतिचदेवमायांनैषांममाहमितिधीःश्वसृगालभक्ष्ये ४२ वेदाहमंगपरमस्यहियोगमायायूयंभवश्चभगवानथदैत्यवर्यः ॥ पत्नीमनोःसचमनुस्तदपत्यभूताःप्राचीनबर्हिर्ऋभुरंगउतध्रुवश्च ४३ इक्ष्वाकुरैलमुचकुंदविदेहगाधिरघ्वंबरीषसगरागयनाहुषाद्याः ॥ मांधात्रलर्कशतधन्वनरंतिदेवदेवव्रताबलिरमूर्तरयोदिलीपः ४४ सौभर्युदंकशिबिदेवलपिप्पलादाःसारस्वतोद्धवपराशरभूरिषेणाः ॥ येन्येविभीषणहनूमदुपेंद्रदत्तपार्थार्ष्टिषेणविदुरश्रुतदेवमुख्याः ४५

कश्चित्पुमानितिसंशयंनिरस्यति दशशताननइत्यनेन अयमपिनागेष्वन्यतमःकश्चिदित्यतआह आदिदेवइति अपरेऽर्वाचीनाः अनेनश्लोकद्वयेनविष्णोर्नुकंवीर्याणिप्रवोचं नतेविष्णोजायमानइत्यृगर्थमुदाहरति ४१ नन्वेवंचेत्कस्यापिज्ञानाभावेनपुरुषार्थप्राप्तिरित्याशंक्यतत्प्रसादेनसर्वसुलभमित्याह येषामिति सोनंतोभगवान्स्वयमेवयेषांदययेत्दयांकरोति तेदेवस्यमायांस्वरूपशक्तिं विदंति संसारहेतुंशैवलींमायांतरंतितत्साधनमंतरेणदययेच्चेत्तस्यवैषम्यनैर्घृण्येचस्यातामित्यत्राह सर्वात्मनेति तत्रेत्थंभावमाह नैषामिति येषांसेवकानांश्वसृगालभक्षणयोग्येदेहेममाहमितिधीर्नास्ति देहाद्यभिमानशून्यत्वेनभाव्यमितिभावः तत्तद्योग्यतानुसारेणतत्प्रसादोपिबहुविधइत्यस्मिन्नर्थेवैशब्दः ४२ ननुतर्हितत्प्रसादयोग्याः केइतितानाह वेदाहमिति ऋतस्यतंतुंविततंनिवृत्त्यतदपश्यत्तदभवत्प्रजासुइतिश्रुतिद्योतकोहिशब्दः । प्रथमप्रक्रांतत्वाच्चतुर्मुखःसर्वस्मादधिकंवेत्ति तदन्येयथायोग्यतयोवत्तारइत्यर्थस्मारकोवा भगवानितिविशेषणाद्भवस्यनारदादेर्ज्ञानातिशयोस्तीतिसूचयति अथेत्यनेनदैत्येषुप्रह्लादस्यज्ञानेनैर्मल्यंसूचयति अंगोवेनस्यपिता ४३ ऐलइलायाःपुत्रःपुरूरवाःनाहुषोययातिः ४४ हरेःस्वरूपांशानामुपेंद्रदत्तादीनांनित्यबद्धगुणेषुसहयोगोदुष्टजनमोहनार्थः ४५

अत्रकैमुत्यन्यायमाह । तेइतिये स्त्रीशूद्रहूणशबराः पापजीवास्तेपिदेवस्यमायांविदंतिसंसारमतितरंतिच किमुतास्मदादयइत्यन्वयः तर्हिकिमितिसर्वैनिस्तीर्णाःसंसारान्नाभूवन्नितितत्राह यदीति अद्भुत क्रमोविष्णुःसएवपरायणंतस्यशीलंतस्याशिक्षाचयेषांतेतथोक्ताः अद्भुतंजगत्क्रमतीत्यद्भुतक्रमः अत्रापिकैमुत्यन्यायमाह तिर्यगिति वृंदावनगताः पशुपक्ष्यादयोस्तिर्यग्जनाअपिदेवमायांविदंतितरंति च येश्रुतधारणास्तेविदंतीतिकिमुवक्तव्यमित्यन्वयः ४६ अद्भुतक्रमःकिंलक्षणकइतितत्राह शश्वदिति यत्शश्वत्सदैकप्रकारम् । प्रशांतंप्रकृष्टपूर्णसुखं अद्वितीयत्वादभयं द्वितीयाद्वैभयंभवतीतिश्रुतेः यच्चप्रतिबोधमात्रंनिर्दोषज्ञानस्वरूपं मात्रशब्दोवधारणार्थः प्रतिशब्दोमुख्यार्थः अतएवशुद्धंरागादिदोषरहितं यच्चसमंपरमाण्वादिपरममहदंतेषुपदार्थेषुनातिरेकेणगुणविधुरंवैषम्यादिरहितंवा सत् सतःपदंव्यक्ताव्यक्तजगतोविलक्षणमात्मतत्त्वमव्यक्तादिसर्वप्रपंचाहंभावरहितं पुरूणिबहूनिकारकपदानिकर्तृकर्मक्रियावाचीनियस्मिन्संतिसतथा अग्निष्टोमाद्यनेकक्रियार्थःशब्दोवाक्यलक्षणानंतवे दाख्योयत्रयस्मिन्साकल्येनवाचकत्वेननवर्तते तदुक्तं अव्यक्ताद्यनहंमानादात्मतत्त्वंहरिःस्मृतः । अशब्दश्चाप्रसिद्धत्वाच्छांतःपूर्णसुखत्वतइति हरिःस्वयंमायाधीनश्चेत्तदुपासकाःकथंतातरतीतितत्राह माये ति मायासंसारकारणंप्रकृतिर्यस्याभिमुखेस्थातुंविलज्जमानायस्मादुपासकेभ्यश्चपरैत्यपसरतिदाष्टिमार्गंविहायवर्ततइति ४७ यच्चसर्वगुणपूर्णत्वात्ब्रह्मेत्यजस्रसुखंनिरंतरसुखमितिविदुरतीतानागतवर्तमा नाःब्रह्मादयः श्रवणादिभिर्यतमानत्वाद्यतयः साधनपरिपाकेनयत्सम्यङ्शाम्य इंद्रःसुधांप्राप्यनिपानखनित्रंकूपखननसाधनकुद्दालादीव यमेनाधिकृतोलोकोनरकाख्यस्तस्यहेतुंसंसारंजह्युस्त्यज

तेवैविदंत्यतितरंतिचदेवमायांस्त्रीशूद्रहूणशबराअपिपापजीवाः ॥ यद्यद्भुतक्रमपरायणशीलशिक्षास्तिर्यग्जनाअपिकिमुश्रुतधारणाये ४६ शश्वत्प्रशांतमभ यंप्रतिबोधमात्रंशुद्धंसमंसदसतःपरमात्मतत्त्वम् ॥शब्दोनयत्रपुरुकारकवान्क्रियार्थोमायापरैत्यभिमुखेचविलज्जमाना४७तद्वैपदंभगवतःपरमस्यपुंसोब्रह्मे तियद्विदुरजस्रसुखंविशोकम् ॥ सम्यङ्शाम्ययतयोयमलोकहेतुंजह्युःसुधामिवनिपानखनित्रमिंद्रः ४८ सश्रेयसामपिविभुर्भगवान्यतोस्यभावस्वभाव विहितस्यसतःप्रसिद्धः ॥ देहेस्वधातुविगमेनुविशीर्यमाणेव्योमेवतत्रपुरुषोनविशीर्यतेऽजः ४९ सोयंतेभिहितस्तातभगवान्विश्वभावनः ॥ समासेन हरेर्नान्यदन्यस्मात्सदसच्चयत् ५०

ति परमस्यपुंसोनारायणस्यपदंस्वरूपंतद्वैतादृग्लक्षणंहीत्यन्वयः इंद्रईश्वरोधनवान्सुधाममृतंजलंप्राप्येतिवा ४८ इदानीमेवंविधभगवज्ज्ञानाधिकारीसत्पुरुषइत्याह सइति नकेवलंधर्मादिसर्वश्रेयसां विभुः । अपितुफलदाताच अधर्मादिसर्वाश्रेयसामपीतिवाभगवाननादिकालमारभ्यहरिप्रसादेनपरिवृद्धेनभावस्वभावेनभक्तिस्वभावेनविहितस्यनिर्मितस्यास्यसतोजीवराशेःप्रसिद्धः करतलामल कवत्प्रत्यक्षःस्यादितियतोतोत्रसात्त्विकप्रकृतिजीवराशिस्तादृशोज्ञानाधिकारी एतेनोक्तार्थेज्ञानेप्रत्यक्षंप्रमाणमुक्तंभवति । भावोभक्तिःप्रमाणश्चश्रावण्यमपिचादरइति । उत्पत्तिमतोस्यानित्यत्वेनकथंतस्यप रमात्माप्रसिध्येतइतितत्राह देहइति स्वारंभकाणांपृथिव्यादिधातूनांविगमेविनाशलक्षणविश्लेषेसतिदेहेतुविशीर्यमाणेस्वकारणेषुविलीयमानेसति तत्रदेहस्थःपुरुषःस्वकर्मानुसारेणपुराणिसरन्स्वतोजो जननविधुरोपिकेवलदेहाभिमानेनजायमानोयथादेहस्थितंव्योमनशीर्यते तथाजीवोनविशीर्यते अतोदेहस्यैवोत्पत्तिमरणधर्मवत्त्वाच्चेतनस्यानित्यत्वादुचितस्तस्यप्रसिद्धःपरमइति । अनेनपरमात्मा पिव्याख्यातः तत्रजीववदभिमाननिमित्तजन्मादिमानापिनभवतीतिविशेषः अतएवदृष्टांतेनहरेःशश्वत्प्रतिबोधादिरूपत्वंनाविघटनीयमितिभावः ४९ देवदेवनमस्तुभ्यमित्यारभ्यप्रश्नप्रतिवचनाभ्यामुक्त मर्थमुपसंहरति सोयमिति समासेनसंक्षेपेण एतावज्ज्ञानंसर्वथानविस्मर्तव्यमितिभावेनाह हरेरिति चशब्दएवार्थे यत्सदसत्कार्यकारणात्मकंजगत्सर्वमस्मादन्यस्माद्विलक्षणाद्धरेर्नान्यद्भिन्नं एतदुक्तंभवति

स्वतोहरेर्भिन्नमपितदात्मत्वेनस्वातंत्र्याभावेनाभिन्नमिवोच्यते नस्वतोभेदाभावात्तस्मात्सहरिःस्वतंत्रोन्यदस्मदादिकंसर्वंतदधीनमितिविजानीहीति । तदधीनसत्त्वादिमत्त्वात्तदित्युच्यतेतत्रकिंमानमित्येत चोक्तं सत्तादिर्यत्स्वतोविष्णोस्तस्मादन्यःससर्वतइत्यादिनापरिहर्तव्यम् ५० भगवद्विभूतिसंग्रहरूपमिदंभागवतपुराणंनृलोकेप्रवर्तनायत्वयाव्यासायविज्ञापनीयमित्यभिप्रायवानाह इदमिति सर्गादौय द्भगवतामेममोदितंतदिदंभागवतंनामप्रकाश्योपादेशोतिशेषःकस्माद्भागवतमितिप्रकाश्यामीतितत्राह संग्रहइति यत्रोद्यतइत्युक्तविभूतीनां सर्गेतुपोहमित्याद्युक्तमायाविभूतीनांचसंग्रहःक्रोडीकारइतिहे तुगर्भः संक्षिप्योक्तमितिनश्रद्धेयमितितत्राह तदेतदिति तदेतन्नृलोकेज्ञानप्रदानायावतीर्णव्यासरूपनारायणायविज्ञाप्यविपुलीकुरु एतदर्थंविस्ताररूपंभागवतंपुराणंकुर्विति विज्ञापयेत्यर्थः । नामप्रका श्यसंभाव्यक्रोधापगमकुत्सनेइति ५१ एतदेवविशदयति यथेति यथासात्त्विकप्रकृतीनांनृणांसर्वात्मनिसर्वस्यात्मनिअतएवाखिलाधारेभगवति सर्वोत्तमत्वज्ञानपूर्वकप्रेमलक्षणाभक्तिर्भविष्यति इत्थं वंहेतुपूर्वकंसंकल्प्यसमर्थ्यसमाधिभाषयासम्यक्कृत्वाशुकादिशिष्येभ्योवर्णयेतिविज्ञापयेत्यन्वयः ५२ इतोपिहरिभक्तिजनकपुराणरचनमेवतवावतारप्रयोजनंनान्यदित्यभिप्रेत्याह नृजन्मनीति भ क्तिविषयोन्यस्तत्फलदोन्यइत्यतउक्तम् । अपवर्गेशेति । कृष्णेपूर्णबलप्राणात्मनिहरौ यद्यनपायिनीनित्याभक्तिर्नचेन्नजायतेचेन्नृजन्मापुमान्यमनश्वरेपमादंतकान्नाशंगच्छतिनृजन्मनिनतुष्येत अलं पुरुषार्थसाधनांबुद्धिनाप्नुयात् धर्मादिफलमस्तीत्यत्राह किंफलमिति धर्मादेरनित्यस्वर्गादिफलंकिंनैवफलमल्पफलत्वादित्यर्थः तस्मात्कृष्णभक्तेरेवनृजन्मफलत्वात्तत्प्रतिपादकपुराणकरणेविज्ञापनंयुक्तमि

इदंभागवतंनामयन्मेभगवतोदितम् ॥ संग्रहोयंविभूतीनांतदेतद्विपुलीकुरु ५१ यथाहरौभगवतिनृणांभक्तिर्भविष्यति ॥ सर्वात्मन्यखिलाधारइतिसं कल्प्यवर्णय ५२ नृजन्मनिनतुष्येतकिंफलंधमनश्वरे ॥ कृष्णेयद्यपवर्गेशेभक्तिःस्यादनपायिनी ५३ किंस्याद्वर्णाश्रमाचारैःकिंदानैःकिंतपःश्रुतैः ॥ स र्वाघघ्नोत्तमश्लोकेनचेद्भक्तिरधोक्षजे ५४ मायांवर्णयतोमुष्यईश्वरस्यानुमोदतः ॥ शृण्वतःश्रद्धयानित्यंमाययात्मानमुह्यति ५५ ॥ इतिश्रीभागवतेमहा पुराणेद्वितीयस्कंधेसप्तमोऽध्यायः ॥ ७ ॥ राजोवाच ॥ ब्रह्मणाचोदितोब्रह्मन्गुणाख्यानेऽगुणस्यच ॥ यस्मैयस्मैयथाप्राहनारदोदेवदर्शनः १ एतद्वे दितुमिच्छामितत्त्वंवेदविदांवर ॥ हरेरद्भुतवीर्यस्यकथालोकसुमंगलाः २

तिभावः ५२ किंफलमित्युक्तंविवृणोति । किंस्यादिति किंस्यादित्याक्षेपः । तदुक्तं । आक्षिप्यतेकिमित्येतद्यत्राल्पफलताभवेदिति । प्रश्नेक्षेपेविकल्पेकिमितियादवः ५४ भागवतपुराणोक्तप्रकारेण भगवतिभक्तिंकुर्वतःपुंसःपुत्रकलत्रादिलक्षणामायासंसारहेतुर्नस्यादतएतत्पुराणकरणंविज्ञापनीयमितिभावेनाह मायामिति अमुष्येश्वरस्यजगत्स्रष्टृत्वादिलक्षणंमायांमाहात्म्यंसद्गुरुमुखाच्छ्रुत्वा मनन पूर्वकंसच्छिष्येभ्योवर्णयतः तथातांमायांश्रद्धयानुमोदतोऽनुमोदमानस्य तथाव्याख्यानाद्यशक्तयाशृण्वतोयावज्जीवंश्रवणैकपरायणस्यपुंसः आत्मामनोमाययाबंधकशक्त्यानमुह्यति अहंकारममका राभ्यांनभ्रमतीत्यतःसर्वसज्जनपुरुषार्थकारणंभागवतकरणविज्ञापनमितिभावः । अमुष्येश्वरस्येतिसंध्यकरणेनास्यभागवतस्यवेदसाम्यंसूचयति यद्वा ईश्वरशब्देनशिवोनोच्यते तद्विलक्षणशीलईल क्ष्मीस्तस्याईश्वरोनारायणइतिद्योतयति अत्रसवर्णदीर्घत्वमनुसंधेयमिति ५५ ॥ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेविजयध्वजकृतटीकायांसप्तमोऽध्यायः ॥७॥ अस्मिन्नध्यायेपरीक्षित्भागवतपुराण प्रतिपाद्यंशुकंपृच्छति तत्रप्रथमंनारदेनविरिंचाज्ञापालनंकथमकारीतिभावेनपृच्छतिब्रह्मणेति अगुणस्यनित्यनिर्मुक्तसत्त्वादिगुणस्यसर्वत्रप्रधानस्येतिवा गुणाख्यानइतिवादर्थ्येसप्तमीव्यासादन्यस्मैयस्मै १ नारदव्याससंवादानंतरंव्यासमुखविगलितभागवतोक्तहरिकथाप्रथनमेवमदभीष्टमितीदमेवतत्त्वंवेदितुमिच्छामीत्युक्तमितिभावेनाह हरेरिति २

यथाप्रथितश्रुतगुणोपसंहारपूर्वकंनिःसंगंमनःकृष्णेनिवेश्याहमिदंकलेवरंत्यक्ष्येतथाप्रथयस्वेत्यन्वयः ३ श्रवणादिनेदंफलंस्यादित्याह शृण्वतइति ४ ततःकिंतत्राह प्रविष्टइति ५ तत्फलमाह धौतात्मेति पांथःपथिकःस्वशरणंस्वगृहं। शरणंगृहरक्षित्रोरित्यभिधानम् ६ इत्थंभागवतार्थकथनश्रवणादेःपुरुषार्थहेतुत्वमुक्त्वाऽत्रतावद्रूपस्यादेहस्यदेहसंबंधहेतुंपृच्छति यदीति अधातुमतः स्वतःप्रकृत्यादिधातुसंबंधरहितस्यानित्यस्यजीवस्यास्यधातुभिःप्रकृत्यादिभिरुपादानकारणैःदेहारंभोस्तीतियत्तत्किंयदृच्छयाकेवलेश्वरेच्छया निमित्तभूतयोतान्येनहेतुनाकर्मणात्रहरीच्छैवहेतुस्तांविनाहेत्वंतरमप्यस्तीतिप्रश्नतात्पर्यं भवंतस्तदेतद्यथायथावज्जानंतेतदस्माकंवदंत्वितिशेषः धातुभिर्नित्ययोगोनास्तीत्यधातुमतइत्युक्त। धातुर्वातादिशब्दादिगैरिकादित्वगादिषु। महाभूतेंद्रियेषुशब्दयोनिस्वभावयोरित्यभिधानम् ७ पुराणाधिकारिलब्धयेजीवानांबंधहेतुंपृष्ट्वाश्रुतार्थमनुवदति आसीदिति आदौमहाप्रलयेश्रीसहायतयाशयानस्यतस्यनारायणस्यासिसृक्षोःपरमपुरुषतयावतीर्यतत्तत्सृष्टिपूर्वकंसंसृष्टैस्तत्त्वैःसहांडोदंप्रविश्यांडोदेपिशेषपर्यंकेशयानस्यतस्योदराल्लोकसंस्थानलक्षणंचतुर्दशभुवनसन्निवेशरूपंपद्ममासीत् सएवांडातवैराजाख्योऽवतीर्णइतियावत् अयंपुरुषोंडकोशःपुरुषाकारभगवद्रूपेणअधिष्ठितत्वात्पुरुषइत्युच्यते पातालादिभिरियत्तावयवैरियत्तावच्छिन्नावयवैर्यावान्यावत्परिमाणः असावपिवैराजोविष्ण्वाख्यस्तावांस्तावत्परिमाणइतिप्रोक्तस्तथावयववानिवतदवस्थितस्त्वा

प्रथयस्वमहाभागयथाहमखिलात्मनि ॥ कृष्णेनिवेश्यनिःसंगंमनस्त्यक्ष्येकलेवरम् ३ शृण्वतःश्रद्धयानित्यंगृणतश्चस्वचेष्टितम् ॥ कालेनानातिदीर्घेणभगवान्विशतेहृदि ४ प्रविष्टःकर्णरंध्रेणस्वानांभावसरोरुहम् ॥ धुनोतिशमलंकृष्णःसलिलस्ययथाशरत् ५ धौतात्मापुरुषःकृष्णपादमूलंनमुंचति ॥ मुक्तसर्वपरिक्लेशःपांथःस्वशरणंयथा ६ यदधातुमतोब्रह्मन्देहारंभोस्यधातुभिः ॥ यदृच्छयाहेतुनावाभवंतोजानतेयथा ७ आसीद्यदुदरात्पद्मंलोकसंस्थानलक्षणम् ॥ यावानयंवैपुरुषइयत्तावयवैःपृथक् ॥ तावानसाविति प्रोक्तस्तथावयववानिव ८ अजःसृजतिभूतानिभूतात्मायदनुग्रहात् ॥ ददृशेयेनतद्रूपंनाभिपद्मसमुद्भवः ९ सचापियत्रपुरुषोविश्वस्थित्युद्भवाप्ययः ॥ मुक्त्वात्ममायांमायेशःशेतेसर्वगुणाश्रयः १० पुरुषावयवैर्लोकाःसपालाःपूर्वकल्पिताः ॥ लोकैरमुष्यावयवाःसपालैरितिशुश्रुम ११

त्वद्भिरुक्तोपितथातादृशावयववानिवप्रोक्तइत्यन्वयः वाइत्यनेनप्रोक्तार्थस्यप्रमाणप्रसिद्धिंअपमाध्यात्मिकःशिरःपाण्यादिमानस्मदादिदेहःपृथगियत्तावयवैर्यावत्परिमाणोऽसावधिदैवकोविराड्देहोपि तावत्परिमाणइत्यपरव्याख्यानस्यपापहेतुत्वंचसूचयति। समुच्चयेवैचपापेवाक्यारंभप्रसिद्धयोरिति ८ आसीद्यदुदरादित्युक्तभगवद्रूपदर्शनप्रकारंतदवस्थितिप्रदेशंचपृच्छतिअजइति भूतात्मास्वसृष्टतत्तत्कार्यव्यापीसर्वविलक्षणाद्विष्णोर्जातत्वादजोब्रह्मा भूतान्यहंकारादिजीवांस्तदभिमन्यमानानिचतत्त्वानिसृजति सृष्टिरपिनस्वातंत्र्यादित्युक्तं यदनुग्रहादिति पाद्मकल्पेचनाभिपद्मभवोविरिंचःस्वकारणंपद्मनाभंदिदृक्षुर्येनप्रकारेणतद्रूपंददृशेतस्यास्योत्तरत्रान्वयः ९ विश्वस्यस्थित्युद्भवाप्ययाःयस्मात्सतथोक्तःलक्ष्म्याईशःज्ञानानंदादिसर्वगुणानामाश्रयः सृष्ट्यादौगुणभूतानांब्रह्मादीनामाश्रयोवा पुरुषःपुरुषाकारवान्सपद्मनाभ आत्ममायां स्वेच्छाधीनाबंधकशक्तिंमुक्त्वातत्प्रवर्तकत्वंविरम्यमुक्तप्रवर्तकत्वेनयत्रयस्मिन्लोकेशेते १० अधुनापुनरपिश्रुतार्थमनुवदति पुरुषेतिअंडस्थितस्यवैराजाख्यस्यपुरुषस्यहरेर्निजावयवैःसपालाइंद्रादिलोकपालैःसहिताःपातालादयोलोकाः पूर्वकल्पिताःप्रथमंसृष्टाःपातालादिलोकैरमुष्यवैराजस्यहरेर्बाह्यावयवाःकल्पिताः प्रतिमात्मकब्रह्मांडावयवैःकृताइत्यन्वयः सपालैर्लोकैरमुष्यावयवाःप्रतिमावत्संकल्पिताइतिवा ११

श्रुतार्थमनूद्याधुनाप्रस्तुतपुराणार्थंपृच्छति यावानित्यादिना कल्पोब्रह्मकल्पःद्विपरार्धाख्यःब्रह्मणोदिनंवायावान्यावत्परिमितः । विकल्पोमन्वादिकालोवाराहादिर्वा भूतोभव्योभवच्चितिशब्दोपस्थि न्सतथोक्तः अतीतानागतवर्तमानारूयइत्यर्थः यथायथार्थतयानुमीयतेज्ञायते । कथंवाऽऽयुषोमानंप्रमाणंचयेनकालेनकृतंसकालः १२ अण्वीपरमाणुलक्षणा । महतीपरममहत्परिमिताकालस्यग तिःसापिकथंलक्ष्यते कर्मगतयःकर्मफलानियावतीःकतिसंख्यानियादृशीःकीदृशानि १३ यस्मिन्कस्मिन्जीवेकिंकिकर्मसमवायः यथाकथंयेनकेनसकर्मसमवायउपगृह्यते कर्मसमवायकर्ताकः सत्त्वादिगु णानापरिमाणंगुणिनामहदादिजीवानांसामर्थ्यपरिमाणं गुणानांशब्दादीनांगुणिनामाकाशादीनामितिव्याख्यानंनयुक्तं परिमाणानुक्तेः देवासुरेभ्योमघवानित्यादिनोक्तेश्चान्यत्र १४ भूपातालादीना चपरिमाणं एतानिभूम्यादीनिओकांसियेषांतेतथातेषांसंभवमुत्पत्तिंच १५ बाह्याभ्यंतरेचवर्तमानस्यवस्तुनोहरेःपरमाण्वादिपरममहदंतानांरूपाणांचपरिमाणं सतएवेत्यादिनावक्ष्यमाणत्वात् महतामरीचि ऊर्ध्वमादीनामनुचरितंवर्णानामाश्रमाणांविशेषतोनिर्णयम् १६ यदाश्चर्यतममन्येषामितिशेषः हरेरवतारानुचरितंतच्च कतियुगानियुगमानंवर्षैरियत्तयापरिच्छेदः अनुयुगंयोयोधर्मस्तंतच १७ साधारणो धर्मोजातिमात्रप्रयुक्तः अहिंसादिलक्षणोयोधर्मोविशेषसहितः यादृशःकीदृशःश्रेणीनामंगरक्षकाणांधर्मोयुद्धेषूच्यते राजर्षीणांप्रियव्रतादीनांकृच्छ्रेष्वापत्सुजीवताम् १८ तत्त्वानांमहदादीनापरिसं

यावान्कल्पोविकल्पोवायथाकालोनुमीयते ॥ भूतभव्यभवच्छब्दआयुर्मानंचयत्कृतम् १२ कालस्यानुगतिर्यातुलक्ष्यतेण्वीमहत्यपि ॥ यावतीःकर्मगतयो यादृशीर्द्विजसत्तम १३ यस्मिन्कर्मसमवायोयथायेनोपगृह्यते ॥ गुणानांगुणिनांचैवपरिमाणंसुविस्तरम् १४ भूपातालककुब्व्योमग्रहनक्षत्रभूभृताम् ॥ सरित्समुद्रद्वीपानांसंभवंचैतदोकसाम् १५ प्रमाणमंडकोशस्यबाह्याभ्यंतरवस्तुनः ॥ महतांचानुचरितंवर्णाश्रमविनिर्णयम् १६ अवतारानुचरितंयदाश्चर्यतमंहरेः ॥ युगानियुगमानंचधर्मोयश्चयुगेयुगे १७ नृणांसाधारणोधर्मःसविशेषश्चयादृशः ॥ श्रेणीनांराजर्षीणांचधर्मःकृच्छ्रेषुजीवताम् १८ तत्त्वानांपरिसंख्यानंलक्षणंहेतुलक्षणम् ॥ पुरुषाराधनविधिर्योगस्याध्यात्मिकस्यच १९ योगेश्वरैश्वर्यगतिर्लिंगभंगंचयोगिनाम् ॥ वेदोपवेदधर्माणामितिहासपुराणयोः २० संभवःसर्वभूतानांविक्रमःप्रतिसंक्रमः ॥ इष्टापूर्तस्यकाम्यानांत्रिवर्गस्यचयोविधिः २१ योवानुशायिनांसर्गःपाखंडस्यचसंभवः ॥ आत्मनोबंधमोक्षौचव्यवस्थानंस्वरूपतः २२ यथात्मतंत्रोभगवान्विक्रीडत्यात्ममायया ॥ विसृज्यचयथामायामुदास्तेसाक्षिवद्विभुः २३

ख्यानंसामान्यविशेषसंख्या तेषांलक्षणंव्यावर्तकंधर्मं हेतोःकारणस्यब्रह्मणोलक्षणंस्वरूपंपुरुषस्यविष्णोः आध्यात्मिकस्यपरमात्मसंबंधिनोयमादियोगस्यभक्तियोगस्यचविधिः तंच १९ योगे श्वरैश्वर्यगतिर्योगेश्वराणामणिमाद्यष्टैश्वर्यप्राप्तिस्तेषांस्वरूपंच योगिनांयमादियोगाभ्याससिद्धानांवेदांतादिशास्त्राभ्याससिद्धानांचयोगतोलिंगभंगंसूक्ष्मशरीरनाशकप्रकारं । स्थिरंसुखंचेत्यादिनोक्तोयं पानेनतेदेवकथासुधायाइत्यादिपश्चाच्च । ऋगादिवेदानामायुर्वेदाद्युपवेदानांवेदादिविहितवर्णाश्रमधर्माणांचयःसंभवउद्धारादिस्तंच इतिहासपुराणयोःसंभवउत्पत्तिः २० विक्रमोविविधचारि त्रलक्षणःप्रतिसंक्रमःसंहारः इष्टस्ययोगादेः पूर्तस्यवापीकूपादेः काम्यानांकारीर्यादीनां त्रिवर्गस्यधर्मार्थकामलक्षणस्य २१ प्रकृतावनुशयनादनुशायिनःसंसारिणस्तेषांसर्गादेःपरिभ्रष्टानांस्वभा वंवा आत्मनोजीवस्यमोक्षंविशिनष्टि व्यवस्थानामिति यद्वा तारतम्येनावस्थानम् २२ आत्मतंत्रोभगवानात्ममायया स्वेच्छयाचित्प्रकृत्याचजगत्सृष्ट्यादिनायथायेनप्रकारेणविक्रीडति द्विविधा ह्यमायास्ति स्वरूपभूतातद्वशाचेति तत्रतद्वशयाजीवंसंसारयन् । स्वरूपभूतयाभक्त्यादिसाधनसंपन्नंसाधयन्संसाराद्विमोचयन्सुखेनरमयन्पुनस्तद्वशांबंधकशक्तिंविसृज्यसाक्षिरूपपुरुषवन्निर्लेपो

यथोदास्तेप्रकृतिंमुक्त्वातिष्ठति । द्वेधाचात्ममायातद्रूपातद्दशाचेतितद्दशयासंसारयतिस्वरूपयाविमोचयत्युदास्तेइत्यादिश्रुतेर्नोनिर्वाच्यामायात्रोच्यते २१ प्रश्नराशिमुपसंहरति सर्वमिति चशब्दादन्य दपृष्टंचयदनुपूर्वशः पूर्ववक्तव्यमितिप्रतीयतेतत्क्रमेणउदाहर्तुमर्हसीति प्रपन्नायेत्यनेन आनुकूल्यस्यसंकल्पःप्रातिकूल्यस्यवर्जनं। रक्षिष्यतीतिविश्वासोगोप्तृत्ववरणंतथा। आत्मनिक्षेपकार्पण्येषड्विधाशरणागतिरित्युक्तमर्थमात्मनः सूचयति । महामुनेइत्यनेनशुकस्यस्वप्रतिवचनसामर्थ्यसद्भावंसूचयति २४ सर्वज्ञस्यापिकेनचिन्निमित्तेनान्यथावचनंसंभाव्यतइतिमंदमत्याशंकांपरिहरति अत्रेति यथात्मभूःपरमात्मनउत्पन्नःपरमेष्ठीसर्वजीवोत्तमोब्रह्मासर्वजनानांसर्वशास्त्रेषुप्रमाणंसम्यक्वक्तृत्वेनाप्ततमस्तथाव्यासपुत्रोभवानप्यत्रास्मदर्थेप्रमाणं हियस्माच्चस्मादुक्तंयुक्तमिति एतदेवोपपादयति अपरइति अपरेन्येपूर्वेषांमरीच्यादीनामपिपूर्वजैर्ब्रह्मवादिभिःकृतंशास्त्रार्थमनुतिष्ठंतीतिहिप्रसिद्धं यद्यदाचरतिश्रेष्ठइत्यादौ अनेनापरेऽनुतिष्ठंतीतियस्माच्चस्मात्परमेष्ठीप्रमाणमतोभवानप्यत्रप्रमाणमितिवाक्यार्थउक्तोभवतीति २५ अनश्नतस्तवमनआदींद्रियदौर्बल्यादस्मदुक्तावधारणाशक्तेररण्यरोदनवद्वृथार्थमापद्यतइतितत्राह नमइति नपरायंति नम्रतमप्रायाभवंति अशनादप्यतिबलहेतुरसायनपानादित्याह पिबतइति अच्युतकथापीयूषं २६ सूतस्तावन्मुनिसंसदिराज्ञापृष्टःशुकःकिंप्रावोचदितिशौनकादिमुनीनांमानसीं शंकांपरिहरति सइति मुनिसंसदि विष्णुरातेनविष्णुदत्तेनपरीक्षितासताब्रह्मादीनांपत्युर्हरेःकथायामित्युपामंत्रितःसत्कृत्यव्याख्यातुंव्यापारितोऽतएवभृशंप्रीतोब्रह्मरातःशुकोभागवतंनामपुराणंतत्प्रश्नोत्तरत्वेनाहेत्यन्वयः बालोपिसगुरुत्वेनमुनिभ्योब्रह्मणायतः । दत्तोतोब्रह्मरातेतिनामवैयासिके

सर्वमेतच्चभगवन्पृच्छतोमेनुपूर्वशः ॥ तत्वतोर्हस्युदाहर्तुंप्रपन्नायमहामुने २४ अत्रप्रमाणंहिभवान्परमेष्ठीयथात्मभूः ॥ अपरेचानुतिष्ठंतिपूर्वेषांपूर्वजैःकृतम् २५ नमेऽसवःपरायंतिब्रह्मन्ननशनादमी ॥ पिबतोच्युतपीयूषंत्वद्वाक्याब्धिविनिःसृतम् २६ ॥ सूतउवाच ॥ सउपामंत्रितोराज्ञाकथायामितिसत्पतेः ॥ ब्रह्मरातोभृशंप्रीतोविष्णुरातेनसंसदि २७ आहभागवतंनामपुराणंब्रह्मसंमितम् ॥ ब्रह्मणेभगवत्प्रोक्तंब्रह्मकल्पउपागते २८ यद्यत्परीक्षिदृषभःपांडूनामनुपृच्छति ॥ आनुपूर्व्येणतत्सर्वमाख्यातुमुपचक्रमे २९ इतिश्रीभागवतेमहापुराणेद्वितीयस्कंधेऽष्टमोध्यायः ॥ ८ ॥ श्रीशुकउवाच ॥ आत्ममायामृतेराजन्परस्यानुभवात्मनः ॥ नघटेतार्थसंबंधःस्वप्नद्रष्टुरिवांजसा १

रभूत् इतिवचनाच्छुकस्यब्रह्मरातत्वंनान्यस्येति २७ आविर्भूतत्वमाह ब्रह्मणइति अतीतब्रह्मप्रलयानंतरंब्रह्मकल्पेब्रह्मांतरोत्पत्तिनिमित्तेप्राप्तेसतिस्वपुत्रायब्रह्मणेभगवतानारायणेनप्रोक्तमाहेतिशेषः २८ परीक्षित्प्रश्नप्रतिवचनतयाशुकेनोक्तमुतान्यत्किंचिदितिशंकांपरिहर्तुमाह यद्यदिति २९॥ इतिश्रीभा०महा०द्वितीयस्कंधेविजयध्वजकृतटीकायामष्टमोध्यायः ॥ ८ ॥ चतुर्मुखस्यभगवदनुग्रहेणतल्लोकदर्शनंतेन विनाभूतंतत्स्वरूपदर्शनंप्रकृतिजीवयोस्तदधीनत्वमित्यादिमाहात्म्यस्यवर्णनेहरेर्हृदयद्रवीभावहेतुर्भक्तिरेवेत्यतःसाहरौकर्तव्येत्यस्मिन्नध्यायेप्रतिपाद्यते तत्रादौयदधातुमतइत्यस्योत्तरंवक्ति आत्ममाययामिति परस्यधातुशब्दवाच्यार्थेभ्यःप्रकृत्यादिभ्योव्यतिरिक्तस्यानुभवात्मनोज्ञानात्मनोऽतएवस्वतोऽशरीरस्यजीवस्यात्ममायांहरेरिच्छांतदधीनांसत्त्वादिगुणरूपांप्रकृतिंचऋतेविनाअर्थसंबंधोदेहादिसंबंधोनघटेतयथास्वप्नेकरितुरगादिपदार्थानांद्रष्टुर्जीवस्यभगवदिच्छानियतैर्वासनोद्बोधकैरजस्तमोभावैर्विनातेस्वाप्नपदार्थसंबंधःकरितुरगादिदर्शनंनयुज्यते तस्माद्देहस्यजीवस्यदेहसंबंधेनभवादेच्छाप्रथमहेतुः द्वितीयास्वगुणैःसहप्रकृतिरित्युत्तरम् । अंजसेत्यनेनअशरीरस्यजीवस्यशरीरोत्पत्तिकारणम् । ईश्वरेच्छामाथमिकीताविनानहिकिंचनेत्यादिप्रमाणंसूचयति । यद्वाअंजसेदमेवतत्त्वम् । स्वप्नस्यार्थक्रियाकारित्वेनसत्यत्वादसत्यस्यतदयोगात्तत्राघटितघटनापटीयस्यनिर्वाच्यलक्षणामायोच्यते किंत्वीश्वरेच्छैवसूचकश्चहिश्रुतेराचक्षतेच तद्विदइतिसूत्राच्चेति अंजसात्वरितंतत्त्वहतिपादवः १

नन्वशरीरस्यजीवस्यभगवदिच्छानियतैःप्रकृतेर्गुणैर्देहारंभःकथमत्राह बहुरूपइति ईशेच्छयानादितएवास्याःप्रकृतेर्गुणेषुमूढइतिवत् गुणकार्येषुदेहेंद्रियेषुचरममाणःसत्त्वादिगुणात्मकलिंगशरीरब्रूतयावर्तमानःसृष्टिकालेमहदहंकारादिपंचभूतोपादानकत्वेममानुषदेवासुरशरीरादिबहुरूपत्वेनबहुरूपतयाविकृतयाप्रकृत्यासहस्वयमविकृतोऽपितदभिमानाद्विकृतत्वेनात्मानंचमन्यमानोबहुरूपइवमानुषादिरूपइवाभाति अहंमनुष्योहंदेवइत्यात्मानंमन्यते देहेदैहिकेषुत्रिगुणसंपातजयाहंमत्या०ममेतिमन्यतेचेत्यर्थः तदुक्तं तेषांसंपातजोभावोममाहमितियामतिरिति तस्मात्प्रकृत्यैवपुमान्मानुषादिविकारया मानुषादिरिवाभातिनित्यंचैतन्यरूपवानितिच तस्मादीशेच्छयानियतत्रिगुणात्मकलिंगशरीरेऽहंमानात्तन्मूलतयाधातुभिर्देहारंभोयुक्तइतिभावः २ एवंबंधप्रकारमुक्त्वाततोऽधुनाजीवस्यमुक्तिप्रकारमाह यर्हीति चशब्दएवार्थे यर्हियदायंजीवोवैराग्यादिसाधनसामग्र्यासमुत्पन्नभगवज्ज्ञानेनापरोक्षितनिजस्वरूपःकालमाययोः कालप्रकृत्योःपरस्मिन्विलक्षणेतच्छक्तिसंसर्गरहितेस्वेमहित्वेसच्चिदानंदलक्षणस्वरूपेरमतेचाव्यवधानेनरमत्येव स्वस्वरूपेतदागतसंमोहोनिरस्ताविद्यातत्कार्यै। उभयंबाधकयाद्यापादकांमायांदेहारंभहेतुभूतांचतन्मूलंसंसारंत्यक्त्वेतियावत् उदास्तेउत्कृष्टोवर्ततेनीचत्वापादकात्संसारान्मुक्तोभवतीत्यर्थः तदुक्तं यदास्वरूपंजानातिकालप्रकृतिवर्जितं। वासुदेवप्रसादेनतदामुक्तोभवत्यसाविति अनेनसागुण्यंत्यक्त्वानैर्गुण्यमाप्नोतीत्यपव्याख्यानमपास्तं तत्रप्रमाणाभावादिति ३ अत्रापिकिंप्रमाणमित्याशंक्यभगवदुक्तंभागवतमेवैतादृशमोक्षप्रमाणमित्याह आत्मेति आत्मनःपरमात्मनोजीवस्यवायत्तत्त्वमनारोपितंसच्चिदानंदलक्षणरूपंतस्याविशुद्धयर्थानिर्दोषत्वे

बहुरूपइवाभातिमाययाबहुरूपया ॥ रममाणोगुणेष्वस्याममाहमितिमन्यते २ यर्हिचायंमहित्वेस्वेपरस्मिन्कालमाययोः ॥ रमतेगतसंमोहस्त्यक्त्वोदास्तेतदोभयम् ३ आत्मतत्त्वविशुद्ध्यर्थंयदाहभगवानृतम् ॥ ब्रह्मणेदर्शयद्रूपमव्यलीकव्रतादृतः ४ सआदिदेवोजगतांपरोगुरुःस्वधिष्ण्यमास्थायसिसृक्षयैक्षत ॥ तांनाध्यगच्छद्दृशमत्रसंमतांप्रपंचनिर्माणविधिर्ययाभवेत् ५ संचिंतयन्द्व्यक्षरमेकदांभस्युपाशृणोद्द्विर्गदितंवचोविभुः ॥ स्पर्शेषुयत्षोडशमेकविंशंनिष्किंचनानांनृपयद्धनंविदुः ६ निशम्यतद्वक्तृदिदृक्षयादिशोविलोक्यतत्रान्यदपश्यमानः ॥ स्वधिष्ण्यमास्थायविमृश्यतद्धितंतपस्युपादिष्टइवादधेमनः ७

नानिश्चयार्थमनुभवार्थंवाव्यासोभवान्पद्मभागवतंपुराणमाह तद्दत्तंयथोक्तंमुक्तिसाधनंज्ञानसाधनंशास्त्रं नव्यामोहकमतोभगवदुक्तत्वेनोक्तमुक्तौप्रमाणत्वात् त्वत्प्रश्नानामुत्तरत्वेनवदिष्यामीतिशेषइत्यर्थः प्रथमंतावत्पाद्मकल्पंविवक्षुर्दर्शयेनतद्रूपमितिप्रश्नप्रतिवक्ति ब्रह्मणइति अव्यलीकेनाप्रियत्वेनप्रसन्नताहेतुनाव्रतेनभक्तिलक्षणेनादृतोऽर्चितःसहरिः स्वनाभिपद्मादुत्पन्नायब्रह्मणेचतुर्मुखायरूपमदर्शयन्निजमितिशेषइत्यन्वयः ४ एतदेवाविवृणोति सइति भजतांसनकादीनां। स्वधिष्ण्यंनाभिकर्णिकास्थानमैक्षताचिंतयत् ययादृशाअत्रप्रपंचनिर्माणे ५ ततःकिमत्राह संचिंतयन्निति कथनुसृष्टिविषयादृष्टिःस्यादितिसंचिंतयन्विभुर्ब्रह्माद्व्यक्षरेयस्मिंस्तत्द्व्यक्षरंवचः अक्षरयोःस्वरूपंलक्षयति स्पर्शेष्विति ककारादिमकारांतेषुस्पर्शेषुयत्षोडशमक्षरंतकारः। एकविंशंपकारस्तद्रूपंवचइतियावत् तद्वाच्यंस्पष्टंलक्षयति निष्किंचनानांपरमहंसानांयद्धनंविदुस्तद्वाच्यंवचनंतपोलक्षणमित्यर्थः कादयोमावसानाःस्पर्शाः ६ किमनेननिरणायीतितत्राह निशम्येति ब्रह्मातद्वचोनिशम्यश्रुत्वायेनैतद्वचउक्तं तद्वक्तृदिदृक्षयादशदिशोविलोक्यतत्रतासुदिक्षुअन्यदपश्यमानः पद्मनालनाडीभिराविश्यान्विष्यादृष्ट्वास्वधिष्ण्यंपद्ममेवास्थायाध्यास्यतद्वचस्तच्छ्रुतवंचः आत्मनोहितंहितसाधनंविमृश्याहंप्रजनकेनप्रपंचनिर्माणोपायेतवतपोनपूर्वतेतस्मात्पुनस्त्वयातपःकर्तव्यं तपेतिवा तपस्युपादिष्टआज्ञप्तोस्मीतिवालोच्य तपसीवतपस्येवमनः आदधइत्यन्वयः ७

विमर्शफलमाह दिव्यमिति  अखिललोकतापनमखिललोकप्रकाशनंतपोज्ञानरूपंविश्मात्प्यताश्लोचयामास दध्याविति्यावत्  । तपोरूपंपरंब्रह्मब्रह्माचिंतयदंजसेति । जितमनस्कत्वादिसर्वसाधारणामि त्यतोविशिनष्टि तपीयानिति तपतांतपीयानत्युत्तमोत्तमः द्विवचनविभज्योपपदेतरबीयसुनावित्युत्तमार्थत्वेईयसुन् । किंप्रमाणमित्यतउक्तं  ब्मोति  स्मृतौवृत्तौनिषेधेस्मेतिअभिधानाद्  अनेनसुमहान्वह्वी घसामाविंभूयादत्युत्तमोत्तममित्येतत्सूचयति  विजितोभयेंद्रियत्वाद्यपितपद्वयइतरेभ्यआधिक्यसूचनायोक्तमितिज्ञातव्य ।  यत्राधिकंददेत्किंचित्तेपोर्थस्तत्रचाधिकइतिवचनात् अन्यथातपोतप्यतेत्येता वदेवालं अतउभयेंद्रियजयोऽपिब्रह्मणऔत्पत्तिकोगुणः  पराचिखानिव्यतृणात्स्वयंभूरितिस्मृतेः  हरिमंतरेणामोघदर्शनत्वंचास्यैवाधिकं  प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूवेतिश्रुतेः ८ इदानींसचापियत्रपुरुषइतिप्रश्नंपरिहरति तस्माइति प्रीतिजनकतपसासभाजितःपूजितः   यद्यतोलोकोत्परमधिकंपदंस्थानंनतस्मात्संदृष्टवाद्भिःसम्यगपरोक्षज्ञानवद्भिर्विबुधैरभिष्टुतमभितोमुख्यत्वेनस्तुतं अविद्यास्मितरागद्वेषादिनिवेशाःसंक्लेशा  मौढ्यंविमोहः  व्याकुलत्वंसाध्वसम् । व्यपेता संक्लेशादयोयस्मात्सतथातं  ९  संक्लेशाद्यभावेकारणमाह नेति । तयोरजस्तमसोर्मिश्रंसत्त्वं ।  सत्त्वरजसो र्मिश्रंतमः । सत्त्वतमसोर्मिश्रंरजः । केवलंचित्प्रकृतिमयएवकालविक्रमःकालकृतोत्पत्तिनाशवृद्धिक्षयादिलक्षणः सत्त्वाद्यभावेकारणमाह  नेति मायात्रिगुणात्मिकाजडप्रकृतिः  अपरेमायाविकाराः त स्यलोकस्यमायातीतत्वात्  तर्ह्येवंशून्यागारतुल्यइतितत्राह  हरेरिति  असनादसुर्हरिस्तस्मिन्रमंतइत्यसुराः  असुरत्वगुणोपेतैःसुरैरर्चिताः  महद्देवानामसुरत्वमेकमितिश्रुतेः । तंलोकमित्यन्वयः  १०

दिव्यंसहस्राब्दममोघदर्शनोजितानिलात्माविजितोभयेंद्रियः ॥ अतप्यतस्माखिललोकतापनंतपस्तपीयांस्तपतांसमाहितः ८ तस्मैस्वलोकंभगवान्सभाजितःसंदर्शयामासपरंनयत्परम् ॥ व्यपेतसंक्लेशविमोहसाध्वसंसंदृष्टवद्भिर्विबुधैरभिष्टुतम् ९ नवर्ततेयत्ररजस्तमस्तयोःसत्त्वंचमिश्रंनचकालविक्रमः ॥ नयत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताः १० श्यामावदाताःशतपत्रलोचनाःपिशंगवस्त्राःसुरुचःसुपेशसः ॥ सर्वेचतुर्बाहवउन्मिषन्मणिप्रवेकनिष्काभरणाःसुवर्चसः ११ प्रवालवैदूर्यमृणालवर्चसःपरिस्फुरत्कुंडलमौलिमालिनाम् ॥ भ्राजिष्णुभिर्यःपरितोविराजतेलसद्विमानावलिभिर्महात्मनाम् १२ विद्योतमानःप्रमदोत्तमाभिःसविद्युदभ्रावलिभिर्यथानभः ॥ श्रीर्यत्ररूपिण्युरुगायपादयोःकरोतिमानंबहुधाविभूतिभिः १३ प्रेंखंस्थितायाःकुसुमाकरानुगैर्विगीयमानाप्रियकर्मगायती ॥ ददर्शतत्राखिलसात्वतांपतिंश्रियःपतिंयज्ञपतिंजगत्पतिम् १४

श्यामवर्णाअवदातानिर्मलाश्च अवदातःसितेगौरेशुद्धइतियादवः ।  अतस्तइंद्रनीलवन्निर्मलाः दशदोषविनिर्मुक्तःश्यामइंद्रमणिःस्मृतइतिवा । शतपत्रंपद्मं  सुष्ठुरुक्प्रभायेषांतेसुरुचः सुष्ठुपेशःसौंदर्यंयेषांते सुपेशसः मृदुपिंडश्चपेशःस्यादितिवचनात् सुकुमारतरशरीराइतिवा उन्मिषंतश्चक्षुष्मंतःमणिप्रवेका रत्नश्रेष्ठा येषुतेतथा  तेचनिष्कहेमनिर्मितावक्षोलंकारायेषांतेतथा  निष्कोस्त्रीहेम्निदीनारेसाष्टेकर्षेश तेपले । वक्षोविभूषणेकर्षइति । सुवर्चसः सुतेजसः । अनेनसारूप्यादिभाजोमुक्ताअपिसंतीत्युक्तंभवति ११ पुनरपितलोकंविशिनष्टि । प्रवालेति योलोकोमहात्मनां भ्राजिष्णुभिर्लसद्विमानावलिभिःस र्वतोविराजतइत्यन्वयः प्रवालवत्वैदूर्यवन्मृणालवद्वर्चःप्रभायेषांतेतथा  परिस्फुरंतःकुंडलमौलयःकुंडलानिमौलयश्चकुंडलमौलयस्तेषांमाला पंक्तयोयेषांसंतीतिपरिस्फुरत्कुंडलमौलिमालिनः  तेषां । प रिस्फुरंतिकुंडलानिमौलयःकिरीटानिमालास्रजश्चयेषांसंतीतितेतथातेषामितिवा १२ तत्रदृष्टांतमाह सविद्युदिति १३ प्रेंखंस्थितायारत्नदोलामास्थितायाविभूतयस्ताभिर्विभूतिभिःस्वमूर्तिभिःसह । कुसु माकरोवसंतस्तस्यानुगभृंगकोकिलादयस्तदाकारयिताब्रह्मादयस्तैर्विगीयमानाप्रियस्यभर्तुःकर्माणिगायतीति  प्रयोजकपुरुषदर्शनंविनालोकमात्रदर्शनेनाकिमस्यप्रयोजनमत्राह ददर्शेति तत्रैवंविधेप्येतद्वी

१ यत्तदित्यादयःशब्दाःपंचम्यंताःप्रकीर्तिताइतितात्पर्यानुसारेणव्याख्यानम् ।

पाभिधेलोकेमुक्तसमामध्येमुक्तैःसेव्यमानमात्मनोबंधकशक्तिप्रवर्तनंविरम्यमुक्तप्रवर्तकत्वेनशपानंलक्ष्मीकांतंददर्शेत्यन्वयः अनेनमुक्त्वात्ममायायेत्यस्यपरिहाराप्युक्तोभवति मुक्तश्चपार्षदैःपूर्वैर्ब्रह्माद्यैश्चैव संयुतं । ब्रह्माददर्शतपसाभगवंतंहरिंप्रभुमित्यनेनब्रह्मासगुणंब्रह्मददर्शेत्येतन्निरस्तं । सतःशोभनस्यभावःसत्त्वंतेनयुक्ताःसात्त्वतास्तेषांसात्त्वतांपातिंतदुक्तं सत्त्वंतुशोभनत्वंस्यात्तद्युक्ताःसात्त्वतामताइति १४ विभुंसर्वगतमिति अनेनपरिच्छिन्नरूपमत्रोच्यतइतिनिरस्तं विभुःसर्वगतेपत्यौचंद्रेरविकुबेरयोरिति दृगासवे नेत्राभ्यांपानिदर्शनानितान्येवामृतानितैः दृक्स्त्रीस्यादर्शनेबुद्धौनेत्रेद्रष्टरिचत्रिष्विति । प्रसन्नेन हासेनारुणाभ्यांसहितमाननयस्यसतथातम् १५ किरीटिनंकुंडलिनमित्यस्यइन्प्रत्ययस्यमतुबादित्वादयमिन्नित्ययोगार्थः । भूमनिंदाप्रशंसासुनित्ययोगेतिशायने । संसर्गेस्तिविवक्षायांभवंतिमतुबादयइ तिवचनात् । वक्षसिस्थितयालक्षितमित्येतल्लक्षणंहरेरेवेत्यभिप्रायेणोक्तं नारायणत्वनिर्णयायलक्षणांतरमाह वृतमिति चतुःषोडशपंचशक्तिभिर्वृतं इच्छाज्ञानाक्रियाबलाख्याभिः प्रह्वीसत्येशानानुग्रहाख्याभिः आत्मांतरात्मापरमात्माज्ञानात्माख्याभिरितिचतुःशक्तिभिर्वृतं मोचिकासूक्ष्मासूक्ष्मामृताज्ञानामृताप्यायिनीव्योमरूपिण्यनंताणिमामहिमालघिमाप्राप्तिप्रकाशेशित्वप्राकाम्याख्याभिःषोडशशक्तिभिश्चवृतं । वासुदेवादिदामोदरांताभिःषोडशशक्तिभिश्चवृतं । तथापंचांगाभिधाभिर्विमलोत्कर्षिणीज्ञानाक्रियायोगवशित्वाख्याभिःपंचशक्तिभिश्चपरिवृत । मोचिकाचैवसूक्ष्माचतथासूक्ष्मापरामृता । ज्ञानामृताप्यायिनीचव्यापिनीव्योमरूपिणी । अनंताचैवसंप्रोक्तामोचिकाद्याश्चशक्तयः । इतिवायुप्रोक्ते । इच्छाद्यामोचिकाद्याश्चअणिमाद्याश्चशक्तयइत्यादेः १६ युक्तमित्यनेनस्वरूपभूतानभवंतीतिनाशं

सुनंदनंदप्रबलार्हणादिभिःस्वपार्षदमुख्यैःपरिसेवितंविभुम् ॥ भृत्यप्रसादाभिमुखंदृगासवैःप्रसन्नहासारुणलोचनाननम् १५ किरीटिनंकुंडलिनंचतुर्भुजंपीतांशुकंवक्षसिलक्षितंश्रिया ॥ अध्यर्हणीयासनमास्थितंविभुंवृतंचतुःषोडशपंचशक्तिभिः १६ युक्तंभगैःस्वैरितरत्रचाध्रुवैःस्वएवधामन्रममाणमीश्वरम् ॥ तद्दर्शनाह्लादपरिप्लुतांतरोहृष्यत्तनुःप्रेमभराश्रुलोचनः १७ ननामपादांबुजमस्यविश्वसृक्यत्पारमहंस्येनपथाधिगम्यते १८ तंप्रीयमाणंसमुपस्थितंकविंप्रजाविसर्गेनिजशासनार्हणम् ॥ बभाषईषत्स्मितशोचिषागिराप्रियःप्रियंप्रीतमनाःकरेस्पृशन् ॥ १९ ॥ श्रीभगवानुवाच ॥ त्वयाहंतोषितःसम्यग्वेदगर्भसिसृक्षया ॥ चिरंभृतेनतपसादुस्तोषःकूटयोगिनाम् २० वरंवरयभद्रंतेवरेशंमाभिवांछितम् ॥ सर्वश्रेयःपरिश्रामःपुंसांमद्दर्शनावधिः ॥ २१ ॥

कनीयं योगशब्दस्यसंन्नहनेवृत्तेः तत्स्वरूपाश्चशक्तयइतिच इतरत्रपुरुषांतरेष्वध्रुवैरनित्यैःस्वैःस्वरूपैर्भगैरैश्वर्यादिभिश्चयुक्तं । स्वएवधामन्स्वरूपानंदएवरममाणंनान्यत्रेत्येवशब्दार्थः ब्रह्मैवंविधमीश्वरंददर्शेतिपूर्वेणान्वयः तस्यहरेर्दर्शनादुद्भूतेनाह्लादेनपरिप्लुतमार्द्रीभूतमांतरंयस्यसतथाहृष्यंतीरोमांचंकुर्वतीतनुर्यस्यसतथा प्रेमभरेणाश्रुपूर्णेलोचनेयस्यसतथा १७ यत्पादांबुजंपारमहंस्येनपरमहंसत्वेनसंबाधिनापथाज्ञानमार्गेणाहिंसादिधर्मजन्येनाधिगम्यतेज्ञायते १८ प्रीयमाणंहृष्यंतंकविंब्रह्माणं आदिकवयइत्युक्तेः । कविर्यःपुत्रःसईमाचिकेतेतिश्रुतेश्च । ईषद्भाषेइत्यनेनशब्दतोल्पत्वमर्थतोगुरुत्वंचोक्तं । प्रकृत्यामितभाषिणइतिवचनात् । करेस्पृशन्नित्यनेनप्रीतमनस्कत्वंप्रकाशयति । मनसिप्रसन्नेतदितरेंद्रियाणांप्रसन्नत्वंकिंवक्तव्यमित्यर्थः १९ आदरेंऽतःकरणप्रीतिंवाचोद्गमयति त्वयेतिकिंधनादिनेत्यतउक्तं तपसेति किमर्थेनेत्यतउक्तंसिसृक्षयेति । अनुगविताणोपांगेनइत्यतउक्तं चिरमिति अहंतपोमात्रेणतुष्यामिकिंवुत्वादृशानामधिकारिणामेवेतिभावेनाह दुस्तोषइति २० स्वतुष्टिफलमाह वरमिति पुंसांसर्वश्रेयःपरिश्रामः तपआदिसर्वकल्याणानांपरिश्रामःपरिपाकोमद्दर्शनावधिर्मद्विषयावलोकएवावधिः पर्यवसानंयस्यसतथा मद्दर्शनमेवसर्वश्रेयसांफलमितिपतोऽतोमद्दर्शनाख्यसर्वश्रेयःफलवांस्त्वमिष्टंमायपादानीकृत्यवांछितंवरंवरयेत्यन्वयः तेतुभ्यंभद्रमस्त्विति वरेशमित्यनेनयाचितंदातुंसमर्थइतिद्योतयति २१

तपसःकर्तव्यत्वंश्रद्धापयति मनीषितेति यत्तद्व्यक्षरंतपइतिवचउपश्रुत्यरहासिमद्गुणालोचनरूपंपरमंतपस्त्वंचकर्थकृतवान् यन्ममलोकावलोकनंममावलोकनंचायंममनीषितस्याभिमतस्यतपसोनु
भावोमहिमेत्यन्वयः २२ तपसःस्वमनीषितत्वंकथयति मत्याऽिष्टमिति तत्रतदात्वायिकर्मविमोहितेइदंकर्तव्यमित्यजानतिसतिमयातपःकुर्विति प्रत्यादिष्टंत्वमुद्दिश्योक्तं तस्मान्मनीषितंतपइत्यन्वयः
त्वत्प्रसादजनकंतपएवेतिकुतोऽन्यत्किंनस्यादितितत्राह तपइति हृदयंप्रिय प्रियंहृदयमुद्रिक्तंकांतामित्य'भधीयतइति । तदुपपादयति साक्षादिति अहंसाक्षात्तपस आत्माज्ञानात्मेतियस्मात् २३
तस्मादिदंतपसैवसृजामि । पदार्थविषयाशेषविशेषज्ञानाभावेतदनुपपत्तेः उपसंहरति वीर्यमिति वीर्यंमाहात्म्य । जडोपचितज्ञानत्वात्सुतरामितरेषां । इदमुनताहशमतोदुस्तरमित्यर्थः । कायक्लेशसा
ध्येनतपसासृष्ट्यादिकंचेद्धरेरपिक्लेशित्वमापद्यतइत्याशंका तपःप्रियंसदाविष्णोस्तपसैवाप्यतेहरिरित्यादिनापरिहृतेतिज्ञातव्यं साक्षादात्मावीर्यमितिकथनाच्च नाहिपूर्णानंदस्यहरेः क्लेशात्मकत्वयुज्यते
तस्मात्तपःशब्देनज्ञानमेवोच्यतइत्यर्थः २४ वरमादास्यतोब्रह्मणोहरिंप्रतिविज्ञापनप्रकारमाह भगवन्निति भगवतावरंवरयेतिमांप्रतियदादिष्टंतद्विडंबनंमन्ये तथाहि सर्वभूतानाहृदयगुहामध्यक्षोऽव
स्थितोभगवानप्रतिरुद्धेनाप्रतिहतेनज्ञानेनसर्वेषांचिकीर्षितंवेद हियस्मात्तस्मान्मच्चिकीर्षितमपिवेत्त्येव २५ तथापिवरंवरयेतित्वदाज्ञाकर्तव्यतयावरंयाचइतिविज्ञापयति अथापीति नाथमानाययाच

मनीषितानुभावोऽयंममलोकावलोकनम् ॥ यदुपश्रुत्यरहसिचकर्थपरमंतपः २२ प्रत्यादिष्टंमयातत्रत्वयिकर्मविमोहिते ॥ तपोमेहृदयंसाक्षादात्माहं
तपसोनघ २३ सृजामितपसैवेदंग्रसामितपसापुनः ॥ बिभर्मितपसाविश्वंवीर्यंमेदुस्तरंतपः २४ ब्रह्मोवाच ॥ भगवन्सर्वभूतानामध्यक्षोवस्थितोगुहाम्
॥ वेदह्यप्रतिरुद्धेनप्रज्ञानेनाचिकीर्षितम् २५ अथापिनाथमानायनाथनाथयनाथितम् ॥ परावरेयथारूपेजानीयांतेत्वरूपिणः २६ यथात्ममायायोगे
ननानाशक्त्युपबृंहितः ॥ विलुंपन्विसृजन्गृह्णन्बिभ्रदात्मानमात्मना २७ क्रीडस्यमोघसंकल्पऊर्णनाभिर्यथोर्णुते ॥ तथातद्विषयांधेहिमनीषांमयिमाधव
२८ भगवच्छिक्षितमहंकरवाणिह्यतंद्रितः ॥ नेहमानःप्रजासर्गंबध्येयंयदनुग्रहात् २९ यावत्सखासख्युरिवेशतेकृतःप्रजाविसर्गेविभजामिभोजनम् ॥
अविक्लवस्तेपरिकर्मणिस्थितोमामेसमुन्नद्धमदोजमानिनः ३०

मानाय नाथितंयाचितं तंवरं नाथयसमर्थय नाथृनाधृयाच्ञोपतापैश्वर्याशीःष्वितिधातुः । कोसौचित्तीकृतोवरइतितत्राह परावरेति अरूपिणःप्राकृतरूपरहितस्यतवचिदानंदाद्यात्मकवैराजाख्यंपरं
रूपंसनवावरणांडाख्यमवरमपरंरूपमितिद्वेपरावरेरूपेयथायेनप्रकारेणजानीयांतथातद्विषयांमनीषांमयिधेहि आधेहीत्यन्वयः तुशब्देनतेचरूपेसत्येइत्यवधारयतिद्वेवावब्रह्मणोरूपइतिश्रुतिसिद्धत्वा
त् । अनेनकार्यकारणरूपेव्यावर्तयति २६ किंच यथोर्णनाभिर्लूताकीट ऊर्णामूर्णुतेसृजतेबिभर्तिच ऊर्णामंडलमध्येक्रीडति अथवात्मन्येवलुंपतितथात्ममायायोगेनस्वरूपेच्छायोगेनाऽवियोगिन्या
श्रियाचजगत्सृजन्नात्मनास्वभावेनात्मानमवतारंगृह्णन्बिभ्रत्पालयन्विलुंपन् क्रीडसिच यथातथाचतद्विषयांमनीषांधेहीति नानाशक्त्युपबृंहितोऽमोघसंकल्पइत्याभ्यामूर्णनाभेर्हरेर्वैशिष्ट्यंदर्शयति
२७ २८ तादृशमनीषाप्रयोजनमाह भगवच्छिक्षितमिति यदनुग्रहाद्यस्यामनीषायाआनुकूल्येनग्रहणादतंद्रितोऽहंभगवताशिक्षितंकरवाण्यथयदनुग्रहाच्चप्रजासर्गमीहमानःकुर्वाणोनबध्येयं तादृशीं
मनीषां यस्यभगवतोनुग्रहाच्चनबध्येयंतेनभगवताशिक्षितमेवकरवाणीतिवरांतरप्रार्थनंवा २९ इदानींबंधमूलाहंकारनाशंप्रार्थयतेइत्याह यावदिति ईशयथासखाराजादिःस्वोक्तकारिणःसख्युर्ज
मपदाद्यधिकारंददाति तथातेत्वयाप्रजाविसर्गेकृतोऽधिकृतोऽविक्लवस्त्वत्प्रसादादैन्यहीनस्तेतवपरिकर्मणिजगत्सृष्ट्यादिशुश्रूषाकर्मणिस्थितोऽहंयावद्रुद्रादिप्रजानांत्वदाज्ञयातदेवेदंपदंतत्वाधंभोगइत्यादि

रूपंभोजनंविभजामिविभज्याविभज्यददामि तावन्मच्छतायुःपर्यंतमजमानिनः आत्सर्वविलक्षणात्त्वज्जातोऽहमित्यभिमानवतोमेसमुन्नद्धमदः समुत्पन्नोहंकारोजगतःस्रष्टाहमित्यादिलक्षणोमाभूदित्यन्वयः।
भोस्वामिन्यथासख्युर्व्यापारेऽधिकृतःसखातात्पर्यात्तत्कार्यंकरोति तथाहमपित्वत्प्रजासर्गेऽधिकृतोयावज्जन्यतइतिजनोजन्यपदार्थस्तंविभजामि सुरनरतिर्यगादिरूपेणोत्पादयामि तावत्समुन्नद्धमदो
माभूवमितिवा ३० यत्किंचित्पृष्टंयःकश्चित्परिहारइत्यतःपरावरेइतिप्रार्थितवरदानप्रकारंवक्ति ज्ञानमिति नियतमुक्तिप्रापकेणस्वांबिंबविषयेणविज्ञानेनसमन्वितंमेस्वरूपविषयंसरहस्यमुपनिषत्सं
वादसहितंयज्ज्ञानंतस्यज्ञानस्ययदंगंचतन्मयागदितंगृहाणेत्यन्वयः उपनिषदोबाह्यार्थरूपंचेदिदमनुपादेयंस्यादित्यतउक्तं परमेति ज्ञानंशास्त्रार्थविषयम् विज्ञानंस्वानुभवइत्यपव्याख्यानंगदितमित्य
नेनसूचितयायेनयेनयथाज्ञात्वानियतंमुक्तिराप्यते। तद्विज्ञानमितिप्रोक्तंज्ञानंसाधारणंस्मृतमितिस्मृत्यानिरस्तम् ३१ यथात्ममायायोगेनेतियाचितवरप्रदानप्रकारमाह यावानिति देशकालव्याप्त्याया
वाननंतपरिमाणोपेतोऽहं यथाभावोयादृशसत्तावान्निरुपाधिकसत्तोपेतः यद्रूपगुणकर्मकः यादृशावतार. यादृशगुणः यादृशकर्माचाहंमदनुग्रहात्तेतवतथैवतत्त्वविज्ञानमस्त्वित्यन्वयः एवशब्देनसोपाधि
करूपंव्यावर्तयति ३२ ज्ञानोपदेशप्रकारमाह अहमिति अग्रेसृष्टेःप्रागहमेवासं चशब्दात्सदसदासीत्कालप्रकृत्यादिकमभूत्तथापिप्रलयेयत्कालकर्मादिकमन्यत्तद्धरेर्भिन्नमभूत्तत्परंस्वतंत्रंनास किंच माया
वृतत्वेनमदधीनमेवाभूत् पश्चात्सृष्ट्यनंतरंस्थितिकालेत्वमहमेतज्जगच्चासीरासमासीत् फलितमाह यइति स्थितिकालेभोक्ताहंकर्ताहंइतिस्वातंत्र्यप्रतीतेः सृष्टेःप्राक्प्रलयानंतरंचास्यजगतःस्वातं
त्र्यंस्यादितिचेन्नतत्प्रतीतेःबुद्धिमोहमूलत्वात् तदुक्तं विष्णोरधीनंप्राक्सृष्टेस्तथैवप्रलयादनु। अस्पसत्त्वप्रवृत्त्यादिविशेषेणाधिगम्यते। स्वातंत्र्यंस्थितिकालेतुकथंचिद्बुद्धिमोहतः। प्रतीयमानमपितुतस्मा

श्रीभगवानुवाच ॥ ज्ञानंपरमगुह्यंमेयद्विज्ञानसमन्वितम् ॥ सरहस्यंतदंगंचगृहाणगदितंमया ३१ यावानहंयथाभावोयद्रूपगुणकर्मकः ॥ तथैवतत्त्ववि
ज्ञानमस्तुतेमदनुग्रहात् ३२ अहमेवासमेवाग्रेनान्यद्यत्सदसत्परम् ॥ पश्चादहंयदेतच्चयोवशिष्येतसोऽस्म्यहम् ३३ ऋतेऽर्थंयत्प्रतीयेतनप्रतीयेतचा
त्मनि ॥ तद्विद्यादात्मनोमायांयथाभासोयथातमः ३४ यथामहांतिभूतानिभूतेषूच्चावचेषुच ॥ प्रविष्टान्यप्रविष्टानितथातेषुनतेष्वहम् ३५ एतावदेव
जिज्ञास्यंतत्त्वजिज्ञासुनात्मनः ॥ अन्वयव्यतिरेकाभ्यांयत्स्यात्सर्वत्रसर्वदा ३६

न्नैवेतिगम्यतामित्यादि। अनेनकालत्रयेऽपिस्वतंत्रोहंत्वदादिकंसर्वमदधीनमेवेत्युक्तंभवति ३३ अस्वतंत्रस्यप्रकृत्यादेःस्वरूपमुपदिशतीत्याह ऋतेर्थमिति यद्वस्तुआप्तकामस्यममार्थंप्रयोजनमृतेसर्वत्रवेदादि
षुप्रतीयेत यच्चात्मनिमयिबाधकंनप्रतीयेत नहीश्वरस्यजीवप्रकृतिभ्यामर्थोबाधश्चस्तः तत्प्रकृत्यादिवस्तुआत्मनःपरमात्मनोमायांविद्यादित्यन्वयः । मायेतिनेंद्रजालमुच्यते। किंतु जीवप्रकृतिएवेत्याह
यथेति यथायथार्थत्वेनैवसत्यत्वेनैवप्रतीयमान आभासोममप्रतिबिंबभूतोजीवोयथायथार्थत्वेनैवतमोग्लानिहेतुर्मूलप्रकृतिश्चमायेत्युच्यते। मुख्यतोविष्णुशक्तिर्हिमायाशब्देनभण्यते उपचारतस्तुप्रकृतिर्जी
वश्चैवहिभण्यतइतिवचनात् एतदुक्तंभवति यथाछत्रधरावारथस्थाअपिरथिनोनोच्यंतेतथाजीवप्रकृतिकर्मकालाःसदामयिवर्तमानाअपिजीवेन जीवनाभावात्प्रकृत्याबंधाभावात्कर्मणाफलाभावात्कालतः
परिणामाभावाच्चमयिस्थिताइतिनोच्यंते सर्वपरोस्थितमपिनैवतत्रेतिभण्यतइत्यादेरिति ३४ भगवान्स्वव्याप्तिंसोदाहरणामुपदिशतीत्याह यथामहांतीति यथामहांतिपंचभूतानिउच्चावचेषुभूतेषुस्वकार्य
शरीरेषुप्रविष्ट निवर्तंते ततोऽप्यधिकरूपाप्तिसद्भावात्तेष्वप्रविष्टानिच तथाहमप्यनंतदेशकालव्यापीतेषुभूतेषुप्रविष्टस्तेभ्योबहिरपिस्थितत्वात्तेषुनप्रविष्टश्च यथामहांतिभूतानिशरीरेषुबहिस्तथेत्यादेः ३५
उक्तव्याप्तिस्फुटीकरणपूर्वकमुपदेशमुपसंहरति एतावदिति यद्वस्तुसर्वत्रसर्वदेशेसर्वदासर्वस्मिन्कालेचान्वयव्यतिरेकाभ्यामन्यवस्त्वन्वितानन्वितदेशकालस्वरूपाभ्यांव्याप्तंस्यादेतावदेवमत्स्वरूपमात्मन.
परमात्मनस्तत्त्वजिज्ञासुनात्वयाजिज्ञास्यंविचार्यंस्यादित्यन्वयः अनेनवस्त्वंतरसद्भावासद्भावरूपाभ्यामन्वयव्यतिरेकाभ्यांसर्वदेशकालयोरेकप्रकारेणगुणक्रियाभिर्व्याप्तमितिविचार्यमित्युक्तंभवति ३६

अस्मिन्नध्यायेवैराजाख्यहरेःसकलजगत्सृष्टिःप्रपंच्यते तत्रादौभागवतपुराणंदशलक्षणमित्युक्तं दशलक्षणानिकथयतीत्याह अत्रेति अत्रश्रीभागवतेसर्गादिदशलक्षणानिप्रतिपाद्यंतइतिशेषः १ मु
क्त्यादुक्रमपंचाधारस्यदशमस्यहरेर्माहात्म्यवर्णनस्यावश्यापेक्षितत्वात्सर्गादिनवानांवर्णनंक्वोपयुज्यतइतितत्राह दशमस्येति महात्मानोब्रह्मादयइहपुराणेदशमस्याश्रयस्यविशुद्ध्यर्थंसर्गादिनवानांलक्षणं
वर्णयंतीत्यन्वयःअनेनार्थात्ब्रह्मज्ञानलब्ध्यर्थत्वमुक्तंभवति अत्रकिंप्रमाणमत्राह श्रुतेनेति अंजसामुख्ययावृत्त्यानंतवेदार्थसंवादेनेत्यर्थः ब्रह्मणःसर्वगुणपूर्णत्वसर्वोत्तमत्वादिज्ञानार्थत्वेनतदुपयोगात्त
ल्लक्षणकथनंयुक्तमितिभावः २ तत्रप्रथमंसर्गंलक्षयति भूतेति सृष्टिकालेपरब्रह्मणःसकाशाज्जाताद्गुणवैषम्यात्तन्नामकान्महत्तत्त्वादहंकारद्वाराभूतमात्रेंद्रियधियापंचमहाभूतानांशब्दादितन्मात्राणां
श्रोत्रादिदशेंद्रियाणांधियोबुद्धेश्चांडपर्यंतंयज्जन्म सःसर्गउदाहृतइत्यन्वयः । विसर्गंलक्षयति विसर्गइति पौरुषोविसर्गःस्मृतइत्यन्वयः अंडांतर्गतपुरुषनाम्नोहरेर्भूतानांयद्द्विविधंजन्मसविसर्गःस्मृ
तःशास्त्रांतरोक्तइतिशेषः तदुक्तं महदाद्यंडपर्यंतःसर्गोंडेब्रह्मणस्तुयः । अनुसर्गइतिप्रोक्तःपौरुषश्चेतिकथ्यते । किंचपंचभूतसमूहेनजातःपुरुषोजीवःतद्विषयसर्ग.पौरुषःसर्गइत्युच्यतेअत्राप्युक्तैवस्मृतिःप्रमा
णं पंचभूतसमूहेनजातःपुरुषउच्यते । अंडांतर्हितजातानांनानाजीवानांसात्त्विकादिस्वभावानाव्यक्तिस्तेषुजीवेषुतैजसाप्यादिकार्यापेक्षयाभूतानांबहुत्वात्भूयस्त्वाच्चथाचभूतानांकाठिन्यादिस्वभावव्यंज
कत्वेनकृतार्थत्वाज्जीवतत्त्वमेकस्माद्भूतसमूहाज्जातत्वादेकजमित्युच्यते । बहुत्वात्तत्रभूतानांतावत्त्वात्तत्त्वमेकजमितिच ३ स्थानंलक्षयति स्थितिरिति वैकुंठस्यहरेर्दुष्टशिष्टनिग्रहानुग्रहलक्षणोविज

श्रीशुकउवाच ॥ अत्रसर्गोविसर्गश्चस्थानंपोषणमूतयः ॥ मन्वंतरेशानुकथानिरोधोमुक्तिराश्रयः १ दशमस्यविशुद्ध्यर्थंनवानामिहलक्षणम् ॥ वर्णयंतिम
हात्मानःश्रुतेनार्थेनचांजसा २ भूतमात्रेंद्रियधियांजन्मसर्गउदाहृतः ॥ ब्रह्मणोगुणवैषम्याद्विसर्गःपौरुषःस्मृतः ३ स्थितिर्वैकुंठविजयःपोषणंतदनुग्र
हः ॥ मन्वंतराणिसद्धर्मऊतयःकर्मवासनाः ४ अवतारानुचरितंहरेश्चास्यानुवर्तिनाम् ॥ पुंसामीशकथाःप्रोक्तानानाख्यानोपबृंहिताः ५ निरोधोऽस्यानु
शयनमात्मनःसहशक्तिभिः ॥ मुक्तिर्हित्वान्यथारूपंस्वरूपेणव्यवस्थितिः ६ आभासश्चनिरोधश्चयतस्तत्त्रयमीयते ॥ सआश्रयःपरंब्रह्मपरमात्मे
तिशब्द्यते ॥ ७ ॥

यःस्थितिरित्युच्यतइत्यन्वयः तस्यवैकुंठस्यानुग्रहोऽनुकंपिताप्रसादविशेषःपोषणमित्युच्यते तत्तद्भक्तस्यैकविषयत्वात्पूर्वस्माद्विशेषः मन्वंतरंलक्षयति मन्वंतराणीति सद्धर्मामन्वंतरेषुसतांधारकाध
र्माःमन्वंतराणीत्युच्यंते ऊतीराह ऊतयइति नानाजीवानामनादिकर्माणितत्संस्काराश्चनानासृष्टिहेतुभूताऊतयइत्युच्यते ४ ईशानुकथामाह अवतारेति हरेर्मत्स्याद्यवताराणामनुचरितमस्यहरे
रनुवर्तिनांब्रह्मादीनांपुंसामनुचरितंचनानाख्यानोपबृंहिताविविधेतिहासपूर्णाईशकथेत्युच्यते ५ निरोधंलक्षयति निरोधइति आत्मनइतिजातावेकवचनम् अस्यात्मनोजीवसमुदायस्यानभिव्यक्त
स्वरूपेच्छादिशक्तिभिः सहश्रीविष्णुमनुप्रविश्यानुशयनंस्वापोनिरोधइत्युच्यते अनुप्रविश्यपरमंजीवस्यशयनंतुयत् । सहैवशक्तिभिःस्वीयैरिच्छाद्यैरप्रकाशितैरित्यादेः मुक्तिंलक्षयति मुक्तिरिति अन्य
थारूपंप्राकृतवैकृतसूक्ष्मस्थूलेंद्रियादिकंहित्वा केवलचिदानंदात्मकेनस्वरूपेणव्यवस्थितिर्विशेषेणावस्थानंमुक्तिरित्युच्यते ६ आश्रयस्वरूपंलक्षयति आभासइति यतोयस्माज्जगतआभासोमुख्य
गौणवृत्त्यासृष्टिश्चशब्दात्स्थितिर्निरोधश्चभवति तत्त्रयमपि यदाधारतयाईयतेवेदान्तेषुज्ञायतेसआश्रयइत्युच्यते किंनामधेयोऽयमितितत्राह परंब्रह्मेति मुख्यावृत्त्यर्थंपरमात्मेति सृष्टिस्थित्य
प्ययाभासायद्यलाद्यत्रचास्थिताइत्यादिनालक्ष्यतइत्यर्थः ७

प्रकारांतरेणाश्रयं लक्षयिष्यन्नाध्यात्मिकादिभगवद्रूपैक्यकथनपूर्वकं जीवानामीशतंत्रतामाह आध्यात्मिकइति आध्यात्मिकःशरीरसंबंधिषु चक्षुरादिषु तत्प्रेरकत्वेनास्थितःपुरुषोविष्णुः सोऽसावेवाधिदैविकआधिदैवेष्वादित्यादिषु स्थितः यस्तत्राधिभूतेषु घटादिपदार्थेषु स्थितत्वात्पोरुभयोराध्यात्मिकाधिदैविकयोश्चक्षुःप्रकाशयोर्विच्छेदः सम्यक्निश्चायकोविष्णुराधिभौतिकोहिस्मृतइत्यन्वयः ८ हेत्वर्थवाचिनाहिशब्देनसूचितहेतुंव्यनक्ति एतादिति एतेषांत्रयाणांमध्येएकतमाभावे चक्षुराद्यभावे प्रकाशाभावेवा तद्विषयघटादिपदार्थाभावेवानोपलभामहे घटादिविषयामुपलब्धिंज्ञानंनाप्नुमइतियेतस्मात्तस्माज्ज्ञानस्वातंत्र्याभावात् सर्वेवयमस्वतंत्राइत्यर्थः ननुकोऽसौज्ञानेस्वतंत्रइतितत्राह त्रितयमिति तत्रतेषामस्वतंत्राणांजीवानांमध्येयोऽध्यात्मादित्रितयंवेदसआत्माविष्णुराश्रयइत्यन्वयः नन्वन्यदैवंविधज्ञानमस्तुनसुषुप्त्यादावितिस्येदमेवोत्तरम् तत्रसुषुप्त्यादावपींद्रियप्रकाशविषयाननपेक्ष्यैवयोजीवानांसर्वस्वरूपज्ञानेनैववेत्ति सआत्माश्रयइति ननुमाणस्याप्येतत्त्रयापेक्षाभावेनज्ञानसंभवात् प्राणावाएवैतस्मिन्पुरेजाग्रतीतिश्रुतेः श्रियोपिनित्यमुक्तत्वान्मुक्तानांनिर्देहकत्वाच्च कथमेतल्लक्षणंलक्ष्यव्यावर्तयतीतितत्राह स्वाश्रयाश्रयइति मुक्ताश्रयाणांरमामुख्यप्राणादीनास्वाश्रयाणामाश्रय आधारोऽनेनस्वातंत्र्येणप्रतीयमानंसर्वज्ञत्वंलक्षयन्लक्ष्म्यादिभ्योलक्ष्यंव्यावर्तयतीत्युक्तंभवति सुप्त्यादावीश्वरस्यसर्ववेत्तृत्वंच स्वप्नेनशारीरमभिप्रहत्यासुप्तःसुप्तानभिचाकशीतीतिश्रुतिसिद्धम् ९ एवंपुराणलक्षणमभिधायाधुनाविराडाख्यविरिंचोत्पत्तिंवक्ष्यन्प्रथमतस्तत्स्रष्टृपुरुषाख्यहरेरवतारकथनपूर्वकमस्यसृष्टिमाह पुरुषइति यदासपुरुषःसृष्टैस्तत्त्वैःसहांडंप्रविश्यतानिनिर्भिद्यविभज्यविनिर्गतः

अध्यात्मिकोऽयंपुरुषःसोऽसावेवाधिदैविकः ॥ यस्तत्रोभयविच्छेदःसस्मृतोह्याधिभौतिकः ८ एतदेकतमाभावेयदानोपलभामहे ॥ त्रितयंतत्रयोवेदसआत्मास्वाश्रयाश्रयः ९ पुरुषोंडंविनिर्भिद्ययदासौसविनिर्गतः ॥ आत्मनोयनमन्विच्छन्नपोस्राक्षीच्छुचिःशुचीः १० तास्ववात्सीत्स्वसृष्टासुसहस्रंपरिवत्सरान् ॥ तेननारायणोनामयदापःपुरुषोद्भवाः ११ द्रव्यंकर्मचकालश्चस्वभावोजीवएवच ॥ यदनुग्रहतःसंतिनसंतियदुपेक्षया १२ एकोनानात्वमन्विच्छन्योगतल्पात्समुत्थितः ॥ वीर्यंहिरण्मयंदेवोमाययाव्यसृजत्त्रिधा १३ अधिदैवमथाध्यात्ममधिभूतमितिप्रभुः ॥ पुनस्तत्पौरुषंवीर्यंत्रिधाभिद्यततच्छृणु १४

प्रकाशितःपुरुषाभिधएवप्रादुर्भूतस्तदात्मनएवदीपाद्दीपांतरवत् रूपांतरेणशेषपर्यंकेशयनायायनमाश्रयमन्विच्छन्नित्यशुचिःसभगवानात्मनोऽयनभूताःशुचीःस्वपूजासाधनयोग्याअपोस्राक्षीदित्यन्वयः । अंडंप्रविष्टोयोविष्णुःसोऽडंभित्त्वाप्रकाशितइत्यादेः १० ततःकिंतत्राह तास्विति स्वसृष्टासुतास्वप्सुसहस्रंपरिवत्सरानवात्सीदितियत् तेननारायणोनामाभूदित्यन्वयः ननुअनेनायनमप्स्वासेतिअयनइतिवाजलायनइतिचांतरेणनारायणइतिनामकथमत्राह यदिति अनाशात्पुरुषोनरस्तदुद्भवाआपोनाराइतियद्यस्मात्तानाराअयनंयस्यसनारायणइति सोपोसृजत्ततोनारानरोऽनाशात्परायतइतिच ११ हरेरियंसृष्टिःस्वाधीनसाधनांतरसहकृतेत्याशयेनाह द्रव्यमिति द्रव्यंपृथिव्यादि १२ ब्रह्मांडस्यांतस्त्रैविध्यमपिश्रीनारायणेनैवकृतमित्याह एकइति जलेशेषपर्यंकेशयानएकोनाराणएवस्वसृष्टतत्तद्वस्तुनियामकतयांतर्यामिरूपैर्नानात्वंबहुत्वसंख्यागोचरत्वमाप्तुमन्विच्छन् योगतल्पात्समुत्थितोदेवोलीलालोलोहिरण्मयंस्ववीर्यमंडंमाययास्वेच्छयांतस्त्रिधाव्यधात् तत्तन्नियामकत्वेनबहुत्वंप्राप्तुमीश्वरइत्यादेः किंच हिरण्मयंपूर्णसुखंशतानंदवीर्यंस्वरेतोरूपंत्रिधाव्यसृजदित्यन्वयः अंतःस्थितहरेःकामादंडेब्रह्मतनोर्जनिरित्यादेः १३ अंडांतस्त्रैविध्यप्रकारंकथयति अधिदैवमिति प्रभुरितित्रिधाव्यसृजदितिशेषः हरिवीर्यरूपस्यविराजोपित्रैविध्यमस्तीतिकथयति पुनरिति पुनर्यथातत्पौरुषंपुरुषाख्यस्यहरेर्वीर्यंविराण्नामब्रह्मात्मकंजातंत्रिधाभिद्यतइतित्रिविधमभवत् तथाशृणुइत्यन्वयः १४

तचैविध्यंविवृणोति अंतरिति विराडाख्यब्रह्मशरीरेंतराकाशेविचेष्टतःपुरुषस्यहरेरोजःसहोबलंपराभिभवसहनस्वेच्छाकरणशक्तयोजज्ञिरे ततस्तेभ्यओजआदिभ्योमहान्प्राणोमुख्यप्राणोजज्ञइत्यन्व यः ब्रह्मांतर्यामिहर्योजःसहोबलानुविष्टहिरण्यगर्भौजःसहोबलेभ्यःसर्वेंद्रियनायकः ओजःसहोबलात्मकोमुख्यप्राणोजातइत्युक्तंभवति एतेनचपूर्वप्रकृताध्यात्माधिभूताधिदैवानांब्रह्मस्थनारायणब्रह्मप्राणे भ्यःसृष्टिरितिज्ञातव्यं प्राणेनाक्षिपतेत्यादिवक्ष्यमाणत्वात् १५ प्राणस्यसर्वेंद्रियप्रभुत्वंस्पष्टयति अनुप्राणंतीति पिंगलयानाड्याअपानंतमधश्चेष्टमानम् १६ इडापिंगलयोःप्राणापानचेष्टाफ लमाह प्राणेनेति प्राणेनापानेनच विभोर्विरिंचस्य चतुर्मुखावयवोत्पत्तिकथनपूर्वकंतेभ्योऽध्यात्मादीनामुत्पत्तिप्रकारंप्रपंचयति पिपासतइति प्रागादौमुखंनिरभिद्यतव्यक्तमभवत् १७ मुखतो मुखे तत्रताल्वनिरभिनत् जिह्वयाजिह्वेंद्रियेण १८ वाक्वागिंद्रियं। तयोर्वह्निवाचोरनंतरंव्याहृतमभिवादनं शरीरातस्थेनभस्वतिवायौदोधूयति पुनःपुनर्धुन्वतिकंपमानेसति जलेऽडोदकेवर्तमानस्यवायु विरिंचस्यनिर्गमद्वाराभावेननिरोधःक्लेशविशेषोभूत् १९ तदनंतरंनासिकेश्वासोच्छ्वासरूपवायुनिर्गमागमद्वारेव्यक्ते वायुरित्यनेनाघ्राणापिनिरोधोनुभवसिद्धइत्याह जिघृक्षतोघ्रातुमिच्छतोघ्रातुस्तत्रनासिना सिकायांघ्राणोनासिक्यःप्राणःसगंधग्राहीवायुर्घ्राणेंद्रियंतद्विषयोगंधश्चजातइतिशेषः २० यदासविरिंचआत्मनिनिरालोकोनिष्प्रकाशस्तदात्मानंस्वशरीरमन्यच्चादिदृक्षतस्तस्याऽक्षिणीगोलकेव्यक्तेततो

अंतःशरीरआकाशेपुरुषस्यविचेष्टतः ॥ ओजःसहोबलंजज्ञेततःप्राणोमहानभूत् १५ अनुप्राणंतियंप्राणाःप्राणंतंसर्वजंतुषु ॥ अपानंतमपानंतिनरदेवामि वानुगाः १६ प्राणेनाक्षिपताक्षुत्तृडंतराजायतेविभोः ॥ पिपासतोजक्षतश्चप्राङ्मुखंनिरभिद्यत १७ मुखतस्तालुनिर्भिन्नंजिह्वातत्रोपजायते ॥ ततोनानार सोजज्ञेजिह्वयायोधिगम्यते १८ विवक्षोर्मुखतोभूम्नोवह्निर्वाग्व्याहृतंतयोः ॥ जलेचैतस्यसुचिरंनिरोधःसमजायत १९ नासिकेनिरभिद्येतांदोधूयतिनभ स्वति ॥ तत्रवायुर्गंधवहोघ्राणोनसिजिघृक्षतः २० यदात्मनिनिरालोकआत्मानंचदिदृक्षतः ॥ निर्भिन्नेअक्षिणीतस्यज्योतिश्चक्षुर्गुणग्रहः २१ बोध्यमान स्यऋषिभिरात्मनस्ताञ्जिघृक्षतः ॥ कर्णौचनिरभिद्येतांदिशःश्रोत्रंगुणग्रहः २२ वस्तुनोमृदुकाठिन्यंलघुगुर्वुष्णशीतताम् ॥ जिघृक्षतस्त्वङ्निर्भिन्नात स्यांरोममहीरुहाः ॥ तत्रचांतर्बहिर्वातस्त्वचालब्धगुणावृतः २३ हस्तौरुरुहतुस्तस्यनानाकर्मचिकीर्षया ॥ तयोस्तुबलवानिंद्रआदानमुभयाश्रय म् २४ गतिंचिकीर्षतःपादौरुरुहातेऽभिकामिनः ॥ पद्भ्यांहव्यंस्वयंयज्ञःकर्मभिःक्रियतेनृभिः २५

ज्योतिःसूर्योरूपगुणग्रहश्चक्षुरिंद्रियंतद्ग्राह्यंरूपंचोत्पन्नमितिशेषः २१ ऋषिभिर्ज्ञानसाधनैर्वेदादिभिरध्यादिभिर्वाबोध्यमानस्यवेदान्निबोधेति विज्ञाप्यमानस्यतस्यविरिंचस्यात्मनस्तान्विज्ञापनंजिघृक्ष तःग्रहीतुकामस्यकर्णौजातौ तयोर्दिशोदिग्देवतागुणग्रहःश्रोत्रेंद्रियंचतद्विषयश्चशब्दः २२ वस्तुनोघटादिपदार्थस्यमृदुत्वादिगुणान्जिघृक्षतोज्ञातुमिच्छतस्तस्याविधेस्त्वगिंद्रियं तस्यांत्वचिरोममही रुहास्तत्रत्वचिचांतर्बहिर्व्याप्तोऽपित्वचात्वगिंद्रियेणस्पर्शलब्धेनज्ञानेन स्पर्शगुणेनावृतोवातः स्पर्शवायुःस्पर्शश्चाभवदित्यन्वयः। गुर्वुष्णेतिछांदसः २३ उभौइंद्रियौंद्रियाभिमानिनावाश्रयौयस्यतत्तथोक्तं आदानमुपादानाहानादिकर्मच २४ गतिंगमनलक्षणंकर्म यज्ञइंद्रपुत्रःस्वयं तदभिमानी गतिश्चपद्भ्यामभूतां तथानृभिर्यद्धव्यंहविःसंबंधिहवनादिकर्मक्रियते यमुद्दिश्यसउपेंद्रोभगवान्प ज्ञात्वपोमितयाभिव्यक्तइतिशेषः २५

प्रजासंततिस्तन्निमित्तापारातिस्तस्यांजातआनंदःसएवामृतंतदर्थंपितुंशीलमस्येतिप्रजानंदामृतार्थिनस्तस्यविधेःशिश्नमिंद्रियस्थानं तस्मिन्शिश्नेकामानांप्रियंपरमप्राप्यसुखसाधनं साहशमुपस्थेंद्रियं तदुभयाश्रयंशिश्नोपस्थाश्रयंरतिःसुखंवासीत् कामानांभोगसाधनमितिवा २६ धातुमलंपुरीषसंज्ञमुत्सिसृक्षोरुत्सृष्टुकामस्यगुदमपानद्वारंततस्तस्मिन्गुदेपायुनामेंद्रियं ततइंद्रियानंतरंमित्रनामादेवः उभयाश्रयःपायुमित्राश्रयोवा इत्यनेन मलादिकंकदाचित्तुब्रह्मलोकाभिपत्तये । आत्मनोनिर्ममेकामात्सर्वेषामभवत्तत इत्यादिवाक्यंस्मारयति२७ परकायप्रवेशप्रकारमाह आसिसृक्षोरिति पुरःस्वा धिष्ठितादेहात्पुर्यामन्यस्मिन्देहेपुरितव्यामनाडीविशेषमासिसृक्षोःप्रवेष्टुकामस्य विरिंचस्येत्युपलक्षणं योगिनां नाभिद्वारमपावृतंविवृतं ततोनाभिद्वाराद्पानवायुस्तस्मान्मृत्युस्तदुभयाश्रयंपृथक्त्वंदे हांतरप्राप्तिलक्षणंचोत्पन्नं अत्रमृत्युर्मरणंतत्प्रापकश्चापानः इदंब्रह्मणोनांकिंतुदेहिनामित्यनुसंधेयम् २८ अन्नपानानामन्नपानानिआदित्सोरादातुकामस्यविरिंचस्यकुक्षिनाड्यावभूतां असृक्लोहधिर स्यस्थानंकुक्षिरंत्रस्थाननाडीद्वासप्ततिभेदभिन्ना । तयोःकुक्षिनाड्योःसमुद्रानद्यश्चासन् तृप्तिःपुष्टिश्चतदाश्रयेतृप्तिःकुक्ष्याःश्रयापुष्टिर्नाड्याश्रया २९ आत्ममायांविष्णुसृष्ट्यादिमहिमानंनिदिध्यासोर्ध्या तुकामस्यहृदयंमनोनिवासस्थानमभूत् ततोहृदयान्मनोमनसश्चंद्रोऽधिदेवता संकल्पःकामश्चमनोवृत्तिविशेषावभूतां इतिशब्दोनिरुद्धग्रहणार्थः ३० त्वगाद्याःसप्तधातवःशरीरस्थितिहेतुभूताजाताइति शेषः तेषांनिदानमाह भूमीति मुख्यप्राणाभिमन्यमानजडरूपप्राणोपादानकारणमाह प्राणइति मुख्यप्राणेनाभिमन्यमानजडप्राणोव्योमांबुवायुभिःसृष्टइतिशेषः ३१ इंद्रियोपादानकारणमाह

निरभिद्यतशिश्नोवैप्रजानंदामृतार्थिनः ॥ उपस्थआसीत्कामानांप्रियंतदुभयाश्रयम् २६ उत्सिसृक्षोर्धातुमलंनिरभिद्यतवैगुदम् ॥ ततःपायुस्ततोमित्रउ त्सर्गउभयाश्रयः २७ आसिसृक्षोःपुरंपुर्यानाभिद्वारमपावृतम् ॥ ततोपानःस्वतोमृत्युःपृथक्त्वमुभयाश्रयम् २८ आदित्सोरन्नपानानामसृक्कुक्ष्यंत्रनाडिकाः ॥ नद्यःसमुद्राश्चतयोस्तुष्टिःपुष्टिस्तदाश्रये २९ निदिध्यासोरात्ममायांहृदयंनिरभिद्यत ॥ ततोमनश्चंद्रइतिसंकल्पःकामएवच ३० त्वक्चर्ममांस रुधिरमेदोमज्जास्थिधातवः ॥ भूम्यप्तेजोमयाःसप्तप्राणोव्योमांबुवायुभिः ३१ गुणात्मकानींद्रियाणिभूतादिप्रभवागुणाः ॥ मनःसर्वविकारात्माबु द्धिर्विज्ञानरूपिणी ३२ एतद्भगवतोरूपंस्थूलंतेव्याहृतंमया ॥ मह्यादिभिश्चावरणैरष्टभिर्बहिरावृतम् ३३ अतःपरंसूक्ष्मतममव्यक्तंनिर्विशेषणम् ॥ अना दिमध्यनिधनंनित्यंवाङ्मनसोःपरम् ३४

गुणेति गुणाःसत्वादयः गुणकारणमाह बुद्धिरिति विज्ञानरूपिणीनिश्चयज्ञानरूपिणी ३२ ब्रह्मशरीरस्यभगवत्प्रतिमात्वंस्पष्टयति एतदिति पंचभूताहंकारतत्त्वमहत्तत्त्वप्रकृत्याख्याष्टावरणा वृतमेतत्स्थूलंविराडाख्यंब्रह्मशरीरंभगवतोनारायणस्यप्रतिमारूपंतेतवमयाव्याहृतमित्यन्वयः तदुक्तं स्थूलंभगवतोरूपंब्रह्मदेहउदाहृतम् । तत्तंत्रस्वाच्चेति ३३ ननुतर्हिहरेर्निजरूपंकीदृशमत्राह अतइति अतोब्रह्मणोदेहाच्चपरंविलक्षणमपिस्थूलंकिंनेत्याह सूक्ष्मतममिति सूक्ष्माणामप्यतिशयेनसूक्ष्मं अणोरणीयानितिश्रुतेःमहत्परिमाणाभावेनाचाक्षुषत्वेनभक्तानांदिदृक्षोपासनाव्यर्थेत्यतउक्तम् अव्यक्तमिति महत्परिमाणवत्त्वेऽपिस्वप्रसादमंतरेणचाक्षुषंनस्यादित्यर्थः महतोमहीयानितिश्रुतिः यमेवैषवृणुतेतेनलभ्यइतिश्रुतेः सूक्ष्मंशंखचक्रगदाधरमितिच अन्यस्यकस्यचिदतिशयलक्षणवि शेषणसंभवेकथमेतदित्यतउक्तम् निर्विशेषणमिति निर्गतंविशेषणमतिशयलक्षणंयस्मात्तत्तथोक्तम् अस्यकाव्यस्यकवयोनसमर्थाविशेषणइतिदर्शनात् एवंविधस्यापिवस्तुत्वेनघटवदाद्यंतवत्त्वंकिंन स्यादितिमंदाशंकापरिहारायोक्तम् अनादीति आदिमध्यांतशून्यम्नैतदौपचारिकमतउक्तंनित्यमिति नित्यमविनाशि नित्योनित्यानामितिश्रुतिः चाक्षुषत्वभावाभावेऽपिवागादिविषयत्वस्यादतउक्तं वाङ्मनसोःपरमितिवाङ्मनसयोरगोचरं । सरस्वतीरुद्रोत्तमंवा ३५

येक्षावद्गृहीतत्वेनते उभेअपिमाहेइत्याशयेनोपसंहरति अमुनीइतिस्थूलसूक्ष्मेअमुनीभगवद्रूपेमयातेतवानुवर्णिते मायासृष्टेभगवदिच्छयाप्रकृत्याचविरचिते जगतियेऽविपश्चितः ज्ञानदुर्बलास्तेजना उभेअपिरूपेनगृह्णंति नजानंतीत्यन्वयः ३५ मायामयेजगतिविपश्चितउपेकार्यकारणरूपेनगृह्णंतिनांगीकुर्वंतीत्येतदपव्याख्यानंप्रत्याह सवाच्येति नामैववाचकत्वेननामरूपक्रियाअपि। वाच्यत्वेनह रिर्दैवोनिधायपतिचैकराट्। कर्तृत्वात्तुसकर्मासौनिष्फलत्वादकर्मकइत्यनेनव्याख्यातोयंश्लोकः निष्फलत्वात्कर्मफलानपेक्षत्वात् नन्वेकस्यनानानामरूपक्रियाकारकत्वंमायामंतरेणकथंसंजाघटीत्य तउक्तं ब्रह्मेति अंतर्बहिर्व्याप्तं यद्ब्रह्मशब्दवाच्यंरूपंतस्यधारकत्वाद्घटतइत्यर्थः ब्रह्मवेदतपस्तत्त्वमित्यतोवेदादिशब्दराशिधृतत्वाद्वा अनेनप्रपंचस्यवेदादिसिद्धत्वेनसत्यत्वात्तस्यमायामयत्वेवेदादेरप्र माणत्वेन तदुक्तदैक्यस्यापितथात्वेनविश्वस्यैवसत्यत्वंन्यायप्राप्तमित्युक्तंभवति ३६ उक्तमेवविशदयति प्रजापतिरित्यादिना सर्वनामरूपक्रियायतःप्रजापत्यादिनामरूपक्रियाश्चधत्तइतिपूर्वेणान्व यः ३७ मातरोऽदित्यादयोब्राह्म्याद्यावा पिशाचाघंटाकर्णादयः भूताभृंगिरुद्रानुगाः विनायकाविघ्नादय ३८ कूष्मांडारुक्मांड्वादयः । उन्मादा कालकर्णादय. । यातुधानारक्षोविशेषाभृ गुकुत्सादयः। ग्रहाअष्टादशनवग्रहावा हेनृप नृपाःप्रियव्रतादयोवा सरीसृपाःसहस्रपादादयः ३९ संख्यातुमशक्यत्वात्सामान्यतोनिर्दिशति द्विविधाइति व्योमअंबरमाकाशनभःशब्दगुणांबरं। पुष्करं गगनंविष्णोःपदंद्यौरात्रमुच्यतइत्यभिधानान्नभःशब्दउभयलिंगः। तेषामुत्तमादित्वेकारणमाह कुशलेति उक्ताइमाजातयःकुशलादिकर्मणांगतयःफलानि ४० उक्तजातीस्त्रिधाविभजति सत्त्वमि

अमुनीभगवद्रूपेमयातेह्यनुवर्णिते ॥ उभेअपिनगृह्णंतिमायासृष्टेऽविपश्चितः ३५ सवाच्यवाचकतयाभगवान्ब्रह्मरूपधृक् ॥ नामरूपक्रियाधत्तेसकर्मा कर्मकःपरः ३६ प्रजापतीन्मनून्देवानृषीन्पितृगणान्पृथक् ॥ सिद्धचारणगंधर्वान्विद्याध्रान्सुरगुह्यकान् ३७ किंनराप्सरसोनागान्सर्पान्किंपुरुषानपि ॥ मातृरक्षःपिशाचांश्चप्रेतभूतविनायकान् ३८ कूष्मांडोन्मादवेतालान्यातुधानान्ग्रहानपि ॥ खगान्मृगान्पशून्वृक्षान्गिरीन्नृपसरीसृपान् ३९ द्विविधाश्चतुर्विधाश्चान्येजलस्थलनभौकसः ॥ कुशलाकुशलमिश्राणांकर्मणांगतयस्त्विमाः ४० सत्त्वंरजस्तमइतितिस्रःसुरनृनारकाः ॥ तत्राप्येकैकशो राजन्भिद्यंतेगतयस्त्रिधा४१यदैवैकतमोन्याभ्यांस्वभावउपहन्यते॥ तदैवेदंजगद्धाताभगवान्धर्मरूपधृक्॥ पुष्णातिस्थापयन्विश्वंतिर्यङ्नरसुरात्मभिः४२

ति सत्त्वंरजस्तमइतिगुणत्रयहेतुकाःसुरनृनारकाइतितिस्रोज्ञेयाइत्यन्वयः सत्त्वहेतुकपुण्यफलासुरगतिः। रजोहेतुकपुण्यपापफलामनुष्यगतिः । तमोहेतुकपापफलानारकीगति. । अनेननरकयोग्याअ सुराइत्युक्तंभवति अवांतरभेदोपित्रिधेत्याह तत्रापीति गुणत्रयमूलकर्मभ्यःप्राप्तसुरनरासुरगतयः प्रत्येकंसात्त्विकराजसतामसतयात्रिधाभवंति तथाहि कल्पादिप्रधानाअसुरास्तामसतामसाःप्रधानासुर भृत्यास्तामसराजसाः अप्रसिद्धासुरास्तामससात्त्विकाः केवलपापचारिणोमनुष्याराजसतामसा. मिश्रकर्मकृतोमनुष्याराजसराजसाः मनुष्येषुपुण्यैककर्मकृतउत्तमामनुष्याराजससात्त्विकाः। पृथगप्र सिद्धादेवाःसात्त्विकतामसाः अतत्त्वाभिमानिनोलोकख्याताःसात्त्विकराजसाः तत्त्वाभिमानिनोदेवाःसात्त्विकसात्त्विकाः सात्त्विकेभ्योपिसात्त्विकाः गरुडादित्रिकतद्भार्याः तेभ्योपिसात्त्विकोब्रह्मभा र्यासरस्वती ततोपिसात्त्विकोब्रह्मेतिभेदः एकैकशइतिशप्रत्ययेनज्ञायते तदुक्तं तामसास्तामसादैत्याःप्रधानादेवशत्रवइत्यादिना ४१ एवंजगत्स्वरूपंनिरूप्याधुनाभगवदवतारावसरमाह यदेति यदैकतम स्वभाव.सात्त्विकोन्याभ्यांराजस्तमोभ्यामुपहन्यते तदैवतस्मिन्नवसरएवधातापोषणादिकर्तावर्णाश्रमधर्मप्रवर्तकरूपधरोभगवान् तिर्यङ्नरसुरात्मभिः मत्स्यकूर्मवराहरामकृष्णोपेंद्रादिरूपैरव तीर्येदंजगत्सत्त्वेनस्थापयन्पुष्णाति संवर्धयतिस्थितंरक्षतीत्यन्वयः तेषुत्रिष्वेकतमोभावःसात्त्विकतामसः सात्त्विकराजसःसात्त्विकसात्त्विकोवा तामसराजसाभ्यामुपहन्यते यदेतिवा यदातस्तामसादि भीराजसतामसादिभिश्च दैत्यदानवराक्षसादिभिः वे त्रयः सात्त्विकभेदाबाध्यते तदावराहादिरूपैरितिवा तदुक्तं सात्त्विकेषुत्रिषुयदात्वेकस्यप्रतिबाधनमित्यादिना ४२

नगुसंहारोन्यनियतश्चेत्तदुपद्रवेणजगद्रक्षणंदुःशकमित्याशंक्य स्वनियतरूपभेदेनसंहारस्याक्रियमाणत्वात् नतदुपरोधोजगद्रक्षणस्येतिध्वनयति ततइति ततःस्थित्यनंतरंप्रलयकालेप्राप्तेकालाग्निरुद्रा पामात्मांतर्यामीसभगवानात्मनोब्रह्मणोंतर्यामिणःस्वोदराचत्सृष्टंजगत्तादिदंसर्वंनियच्छति कथमिव अनिलोघनानीकंमेघपटलमिवेत्यन्वयः तदुक्त मत्स्यादिरूपीपोषयतिनृसिंहोरुद्रसंस्थित इत्या दिना । कालोयमः ४३ उक्तमर्थंप्रमाणइति इत्थंभावेनेति भगवंतोब्रह्मादयस्तेभ्योतिशयेनोत्तमोभगवत्तमोभगवानैश्वर्यगुणोनासर्वजगन्नेतापरमपुरुषः । इत्थंभावेनसृष्टिस्थितिसंहारादिकर्तृत्वेन सर्वस्माद्भिन्नत्वेनसर्वदोषविवर्जितत्वेनकथितःप्रतिपादितः श्रुत्यादाविति शेषः यतोवाइमानिभूतानिजायंतइत्यादि । तथाकथनेकारणमाह इत्थमितिसूरयःपरंपरमात्मानमित्थंभावेनसर्ववैलक्षण्येनद्र ष्टुमर्हंतिहि नाभेदज्ञानेनातस्तत्कथनंयुक्तमितिभावः यद्वाभगवान्जगत्स्रष्टृत्वादिलक्षणविशिष्टत्वेनकथितइतियद्यस्मात्तस्मात्सूरय.परमार्थदर्शिनइत्थंभावेऽचेतसिपरंद्रष्टुनार्हंतीतिन अर्हंत्येवेति अ नेनज्ञानिप्रत्यक्षमपिप्रोक्तार्थेप्रमाणमितिसूचितम् ४४ अत्रोच्यमानंजन्मादिकर्तृत्वंमायामयंकिंनस्यादत्राह नचेति अस्यपरस्यकर्तृत्वंजन्मकर्माणियथाजीवानांबंधस्यप्रतिषेधार्थंभवंति तथानवीधीयतइ तिन वेदादौकर्तृत्वंजन्मकर्मचविधीयतएव अतोमाययास्वेच्छयारोपितंनित्यारूढम् । स्वरूपाविभिन्नत्वात् कर्तृत्वंनानिर्वाच्यम् । प्रतिषेधाय बंधस्यजीवानापरमेशितुः । स्वेच्छयैवतुकर्तृत्वंनित्यारू ढंचिदात्मकमितिवचनात् रुपउपरिभावइतिधातोः सुभद्रांरथमारोप्येतिप्रयोगाच्च स्वाभाविकीज्ञानबलक्रियाचेतिच अनेनमायाशब्दस्येच्छार्थत्वंनमिथ्यार्थत्वमित्युक्तंभवति हिशब्देननिरस्तकु

ततःकालाग्निरुद्रात्मायत्सृष्टमिदमात्मनः॥सन्नियच्छतितत्कालेघनानीकमिवानिलः॥४३इत्थंभावेनकथितोभगवान्भगवत्तमः ॥नेत्थंभावेनहिपरंद्रष्टुमर्हंति सूरयः ४४ नचास्यजन्मकर्माणिपरस्यनविधीयते॥कर्तृत्वंप्रतिषेधार्थंमाययारोपितंहितत् ४५ अयंतुब्रह्मणःकल्पःसविकल्पउदाहृतः॥ विधिःसाधारणो यत्रसर्गाःप्राकृतवैकृताः ४६ परिमाणंचकालस्यकल्पलक्षणविग्रहम् ॥ यथापरस्ताद्व्याख्यास्येपाद्मंकल्पमिमंशृणु ४७ शौनकउवाच ॥ यदाहनोभवा न्सूतक्षत्ताभागवतोत्तमः ॥ चचारतीर्थानिभुवस्त्यक्त्वाबंधून्सुदुस्त्यजान् ४८ कुत्रकौषारवेस्तस्यसंवादोध्यात्मसंश्रवः ॥ यद्वासभगवांस्तस्मैपृष्टस्तत्त्वमु वाचह ४९ ब्रूहिनस्तदिदंसौम्यविदुरस्यविचेष्टितम् ॥ बंधुत्यागनिमित्तंचयथैवागतवान्पुनः ५० सूतउवाच ॥ राज्ञापरीक्षिताप्रष्टोयदवादीन्महामुनिः ॥ तद्वोऽभिधास्येशृणुतराज्ञःप्रश्नानुसारतः ॥५१॥ इतिश्रीमद्भागवतेमहापुराणेपारमहंस्यांसंहितायांद्वितीयस्कंधेदशमोऽध्यायः॥ १० ॥ ॥ छ ॥

हकमितिपूर्वोक्तंसूचयति ४५ संप्रत्युक्तब्रह्मकल्पेनान्यब्रह्मकल्पानांसाधारण्यमाह अयमिति अयंब्रह्मणःप्रथमःकल्पस्तवोदाहृतः मयेतिशेषइत्यन्वयःकीदृशः सविकल्पः मन्वंतरादिविविधकल्पे नसहितः यत्रब्रह्मकल्पेऽन्यब्रह्मकल्पानामन्यकल्पानांचसाधारणःसमानोविधिः यत्रचप्राकृतवैकृताःसर्गाःसंतीत्यर्थः अनेनप्राकृतादिसर्गकथनंसाधारण्येकारणमित्युक्तंभवति ४६ श्रोतृप्रवृत्त्यर्थमुत्त रस्कंधार्थंप्रतिजानीते परिमाणमिति कल्पानांलक्षणानिविग्रहमियत्तांचकल्पलक्षणस्वरूपंच परस्तात्पश्चाद्यथायथावद्व्याख्यास्ये प्रथमतइमंपाद्मंकल्पंशृण्वित्यन्वयः४७ अस्यग्रंथस्यशुकशिष्यसूत शौनकसंवादत्वंस्पष्टयन् शौनकप्रश्नप्रकारमाह यदाहेति विदुरस्तीर्थयात्रायांमैत्रेयादात्मनोगतिमित्यादिना क्षत्ताबंधूंस्त्यक्त्वाभुवस्तीर्थानिचचार तत्रतीर्थसंचरणसमयेमैत्रेयादात्मज्ञानंचापेतियद्व वानाह ४८ ततःकिंतत्राह कुत्रइति तस्यविदुरस्याध्यात्मसंभवः आत्मनांपुरुषाणामधिकस्यहरेःकथायाःसंभवोयस्मात्सतथा यद्वात्मानशरीरमधिकृत्यवर्तमानंदेहेंद्रियादि तद्विषयोविदुरेणपृष्टःसभ गवांस्तस्मैविदुराय यद्वा तत्त्वमुवाचह हेत्यनेनग्रंथांतरप्रसिद्धिमाह मत्यारंभेप्रसिद्धौहेतिपादवः ४९ ५० तत्रसूतःशौनकप्रश्नपरिहारप्रकारंप्रतिजानीते राज्ञेति यत्समाधानं राज्ञःप्रश्नानुसारत इतिपुनरुक्त्याप्रश्नयोरेकविषयत्वेनपरिहारोपितदविनाभूतइतितत्प्रश्नप्रतिवचनमपिपुंप्रत्प्रश्नप्रतिवचनमेवेतिदर्शयति ५१ ॥ द्वितीयस्कंधगाह्वापदरत्नावलीमपा । स्वार्पिताचरणांभोजपद्मनाभस्यभास ताम् ॥ १ ॥ इतिश्रीमन्महेंद्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थयतींद्रकृतायांश्रीमद्भागवतटीकायांपदरत्नावल्यांद्वितीयस्कंधेदशमोऽध्यायः ॥ १० ॥ द्वितीयस्कंधःसमाप्तः ॥ ७ ॥ ७ ॥

# ॥ अथ श्रीमद्भागवते तृतीयः स्कंधः प्रारभ्यते ॥

॥ श्रीवेदव्यासायनमः ॥ यच्छ्रीलाजलराशिलोललहरीस्नानक्षमाणांनृणांसंसारादावैराशुशुष्यातितरामङ्घ्रयुग्मशुष्कैधवत् ॥ यस्माद्विश्वमशेषमुद्भवतियस्तत्त्वंपरंयोगिनांश्रीमंतंतमुपास्महेसुमनसामिष्टप्रदंविठ्ठलम् ॥१॥ अगाधश्रीमद्भागवतजलराशौमणिगणंतृतीयस्कंधोदभ्रममनवगाहंमृगयति ॥ निमज्ज्योन्मज्ज्यार्थेऽनुपदमनुरक्तेऽमलधियःकृपालेशंसंतःखलुविदधतांमय्यनुपदम् ॥२॥ अत्रमुमुक्षूणांस्वस्वयोग्यभगवदपरोक्षज्ञानोत्पत्तौप्रधानसाधनंभक्तिरेवतत्साधनमितरत्सर्वमितिप्रपंच्यते तत्रसूतःशौनकप्रश्नपरिहारायशुकपरीक्षित्संवादंकथयति एवमिति यथाहंचत्वयाएतत्प्रमेयंप्रतिपृष्टएवंतथाक्षत्रापिविदुरेणापिभगवांस्त्रिकालज्ञोमैत्रेयःपृष्टइत्यन्वयः । ऋद्धिमत्स्वगृहंत्यक्त्वेत्यनेनवैराग्यंप्रथमसाधनमितिसूचितम् १ विदुरमैत्रेयसंवादंघटयितुंतीर्थयात्राकालउपदेशेनप्रश्नबीजमुत्थापयति यदात्विति वःपितामहानामर्थेमंत्रकृत्संधिकृत् संधिकार्येऽनुत्पन्नेपौरवेंद्रपुरंहस्तिनापुरंत्यक्त्वा आत्मसात्कृतमुपप्लाव्याख्यपुरंपदाप्रविवेशतदाविदुरस्तीर्थयात्रार्थंगतइतिशेषइत्यन्वयः अत्रतुशब्देन युद्धकालेतुविदुरस्तीर्थयात्रांगतोपिसन् । मायआस्तेगजपुरेपांडवानांहितेच्छुरेतिवाक्यंविशिनष्टि अनेनविदुरेणतीर्थसेवाकदाचित्कृतानयुद्धकालमारभ्यतत्समाप्तिपर्यंतमित्युक्तंभवति २ तीर्थनिषेविणोविदुरस्यसामान्यतोज्ञातमैत्रेयसंगकालघटनोपिराजादेशविशेषबुभुत्सयापृच्छतिकुत्रेति कुत्रकस्मिंस्तीर्थविशेषे पुरानिर्याणहेतुरपिवक्तव्यइत्यतोवर्णयेत्युक्तं ३ विविदिषालौल्यकारणमाह नहीति हिशब्दोहेत्वर्थः यस्मादल्पार्थोदयोनतस्माद्वर्णयेत्यर्थः अत्रापिहेतुमाह साध्विति साधुभिःपूजितेसौम्येसज्जनेवाङ्क्षुपौरुमानितियादवः ४ सूतःशौनकप्रश्नपरिहारायतत्संवादंकथयति सएवमिति । बहुपूर्णतायाः

श्रीशुकउवाच ॥ एवमेतत्पुरापृष्टोमैत्रेयोभगवान्किल ॥ क्षत्त्रावनंप्रविष्टेनत्यक्त्वास्वगृहमृद्धिमत् १ यदात्वयंमंत्रकृद्वोभगवानखिलेश्वरः ॥ पौरवेंद्रपुरंहित्वाप्रविवेशात्मसात्कृतम् २ परीक्षिदुवाच ॥ कुत्रक्षत्तुर्भगवतामैत्रेयेणाससंगमः ॥ कदावासहसंवादएतद्वर्णयनःप्रभो ३ नह्यल्पार्थोदयस्तस्यविदुरस्यामलात्मनः॥ तस्मिन्वरीयसिप्रश्नःसाधुवादोपबृंहितः॥ ४ सूतउवाच ॥ सएवमृषिवर्योऽयंपृष्टोराज्ञापरीक्षिता ॥ प्रत्याहतंसुबहुवित्प्रीतात्माश्रूयतामिति ५ श्रीशुकउवाच ॥ यदातुराजास्वसुतानसाधून्पुष्णन्नधर्मेणविनष्टदृष्टिः ॥ भ्रातुर्यविष्ठस्यसुतान्विबंधून्प्रवेश्यलाक्षाभवनेददाह ६ यदासभायांकुरुदेवदेव्याःकेशाभिमर्शंसुतकर्मगर्ह्यम् ॥ नवारयामासनृपःस्नुषायाअस्रैर्हरंत्याःकुचकुंकुमानि ७ द्यूतेत्वधर्मेणजितस्यसाधोःसत्यावलंबस्यवनागतस्य ॥ नयाचतोऽदात्समयेनदायंतमोजुषाणोयदजातशत्रोः ८

मितिधातोर्देवादिसज्जननिषेवितपूर्णभगवंतंवेत्तीतिसुबहुविदिति तज्ज्ञानफलमाह प्रीतात्मेति प्रियोहिज्ञानिनोत्यर्थमितिस्मृतेः प्रसन्नमनावाश्रूयतामित्यनेनवक्तव्यार्थेआदरंजनयति उच्यमानंसहेतुकंचेच्छ्रद्धांजनयति अस्यकथंतदित्यतउक्तमितीति इतिहेतुप्रकरणप्रकारादौष्वितियादवः ५ विदुरस्यतीर्थयात्रायानिमित्तमाह यदात्विति अत्रयदाशब्दोहेत्वर्थे यदातदेतिहेत्वर्थेकालार्थेपिचभण्यतइतिवचनात् ।अधर्मेणेत्यस्यावधारणार्थेतुशब्दः विनष्टाभगवद्विषयादृष्टिर्यस्यसतथा असाधूनन्यायवर्तिनः। अधर्मेणधर्मविरुद्धकर्मणा । यविष्ठस्य कनिष्ठस्य । विबंधून्लौकिकबंधुरहितान् । लाक्षाभवने लाक्षोपगूढगृहेददाह यदायस्मात्तदातस्मादित्येकोहेतु ६ अयमेकोहेतुरित्याह यदेतिनृपोधृतराष्ट्रः कुचकुंकुमान्यस्रैर्नेत्रजलैर्हरंत्याः क्षालयंत्याः स्वस्यस्नुषायाः कुरुदेवस्ययुधिष्ठिरस्यदेव्याःपट्टाभिषिक्तायाः द्रौपद्याःसभायागर्ह्यंनिंद्यं सुतस्यदुःशासनस्यकर्मकेशाभिमर्शंकबरीभारपरामर्शलक्षणं नन्यवारयामास यदायस्माच्चस्मात् ७ अयंतृतीयोहेतुरित्याह द्यूतेत्विति तुशब्दोऽवधारणार्थः अधर्मेणेत्यनेनसंबध्यते साधुत्वादीनिपितृधनदानयोग्यत्वहेतवइतिप्रकाशनायोक्तानीति अवलंबआधारयष्टिः दायंस्वस्यप्राप्तियोग्यंपितृधन वनवासावसानसमयेनादादितियत्तस्मादितिशेषः तत्रहेतुः तमइति तमोयथार्थज्ञानग्लानिकारणंपुत्रवचनंजुषाणःसेवमानोऽङ्गीकुर्वाणइत्यर्थः ८

चतुर्थहेतुमाह यदात्विति पार्थेनयुधिष्ठिरेण प्रहितःप्रेषित पुंसाममृतायनानिमोक्षादिसकलपुरुषार्थसाधनानि हतःपुण्यलेशोयस्यसतथा लिशअल्पीभावइतिधातुः अनेनपापंबहुलंपुण्यमल्पं तदपिनष्टमित्युक्तंभवति इदमेवसुखलेशविनाशकारणमित्यस्मिन्नर्थेतुशब्दः गुरुमात्रस्यापिवाक्यंग्राह्यंकिंपुनर्जगद्गुरोरित्यभिप्रायेणतथोक्तम् ९ ततःकिंविदुरस्यतीर्थयात्रायामित्यतोविशेषहेतुमाह यदेति पूर्वजेनज्येष्ठेनयदोपहूतोभवनंप्रविष्टोविदुरोमंत्रायस्वकर्तव्यतालोचनायपृष्टःकिंकार्यंतद्ब्रूहीतिइति अथतदामंत्रदशांमंत्रज्ञानांवरीयांस्तंधृतराष्ट्रमाह मन्त्रदत्त्वरीयस्त्वंकुतइतितत्राह यदिति वैदुरि कांविदुरेणोक्तंयचस्मात्तस्मादितिशेषः कृष्णेसंधिकार्यमनुल्लंघ्योपप्लाव्यंगतेसत्युपहूतइतिअस्मिन्नर्थेकिलशब्दः १० किमाहेतितत्राहअजातशत्रोरिति प्रतियच्छप्रदेहि प्रदानेहेतुमाह सहानुजइति हिश ब्दोहेत्वर्थः यत्रयस्ययुधिष्ठिरस्याभिप्रेतसाधकइतिशेषः किमसौयमइतितत्राह यमिति यमीमंमति अत्रापिहेतुमाह स्वशत्रुहेति स्वस्यराज्यलक्षणद्रव्यस्यशत्रवोदुर्योधनादयस्तान्हतवानितिनिश्चि तत्वाच्चथाप्रयोगः ११ राज्यप्रदानेबलवद्धेत्वंतरंचाह यदात्विति क्षितिदेवाःब्राह्मणाःतेषांदेवःपूज्यः मुक्तिमपिददातिकिमुराज्यमित्यतोमुकुंदइतिएवंविधसामर्थ्यवान्पार्थान्गृहीतवानिति यदातस्माच्च

यदातुपार्थप्रहितःसभायांजगद्गुरुर्यानिजगादकृष्णः ॥ नतानिपुंसाममृतायनानिराजोनुमेनेहतपुण्यलेशः ९ यदोपहूतोभवनंप्रविष्टोमंत्रायपृष्टःकिलपूर्वजे न ॥ अथाहतंमंत्रदशांवरीयान्यन्मंत्रिणोवैदुरिकंवदंति १० अजातशत्रोःप्रतियच्छदायंतितिक्षतोदुर्विषहंतवागः ॥ सहानुजोयत्रवृकोदरोहिस्वशत्रुहायं त्वमलंबिभेषि ११ यदातुपार्थान्भगवान्मुकुंदोगृहीतवान्सक्षितिदेवदेवः ॥ आस्तेस्वपुर्यांयदुदेवदेवोविनिर्जिताशेषनृदेवदेवः १२ सएषदोषःपुरुषद्विडास्ते गृहंप्रविष्टोयमपत्यमत्या ॥ पुष्णासिकृष्णाद्विमुखोगतश्रीस्त्यजाश्वशैवंकुलकौशलाय १३ इत्यूचिवांस्तत्रसुयोधनेनप्रवृद्धकोपस्फुरिताधरेण ॥ असत्कृ तःसत्स्पृहणीयशीलःक्षत्तासकर्णानुजसौबलेन १४ कएनमत्रोपजुहावजिह्मंदास्याःसुतंयद्बलिनैवपुष्टः ॥ तस्मिन्प्रतीपःपरकृत्यआस्तेनिर्वास्यतामाशुपुरा च्छ्वसानः १५ सइत्थमत्युल्बणकर्णबाणैर्भ्रातुःपुरोमर्मसुताडितोऽपि ॥ स्मयन्धनुर्द्वारिनिधायमायांगतव्यथोऽयादुरुमानयानः १६

सोपिनदूरस्थइत्याह आस्तइति स्वेषांपांडवानांपुर्यांमुपप्लाव्याख्यायामास्तइति यस्माच्चस्माच्च सांप्रतंसावसरइत्याह विनिर्जितेति १२ पुत्रसंवादाभावाद्युधिष्ठिरायराज्यंनदत्तमितिधृतराष्ट्राभिप्रायं विज्ञाय्विदुरोविष्णुवैष्णवद्वेषिणःपुत्रस्यापिपरित्यागःश्रेयानितिवक्ति सएषइति हेज्येष्ठत्वंयमपत्यमत्या नपतंतिकुलंयस्मात्तदपत्यमितिबुद्ध्यापुष्णासिसएषगृहंप्रविष्टः आस्तइत्यन्वयः कीदृशोदोषःपा पात्मा पुरुषंपूर्णषड्गुणंविष्णुंद्वेष्टीतिपुरुषद्विट् कुतःकृष्णाद्विमुखः उपलक्षणमेतत्तद्भक्तविमुखश्चातएवगतश्रीःश्रीप्रसादरहितः यतएवंविधोयतस्मात्कुलकौशलायाशुकालक्षेपमंतरेणैनंदुर्योधनंत्यजेत्य न्वयः १३ स्ववचनादिकंधृतराष्ट्रेणनांगीकृतमित्येतावताविदुरस्यतीर्थयात्राकारणविरागहेतुःकःप्राप्तइतितत्राह इतीति इतिशब्दआदिवचनः एवमादिवाक्यमुक्तवान्प्रकारवचनोवा स्फुरणंसंचलनं तत्रज्येष्ठस्यपुरतःअसत्कृतोधिक्कृतः १४ धिक्कारप्रकारमाह कएनमिति दास्याःसुतमित्याक्रोशेषष्ठीउपजुहावाहूतवान् जिह्मंवक्रहृदयं यस्यपुंसोबालिनाऽपवर्जितान्नेन तस्मिन्पुंसिप्रतीपोविरोधी परे षांममविरोधिनांपांडवानांकृत्येकार्येआस्तेयस्मात्तस्यादितिशेषः निर्वास्यतांनिष्कास्यतां श्वसानःश्वासमात्रावशेषी स्वकृतोदोषःस्वस्यैवेतिसूचनायशानच्प्रयोगः १५ संभावितस्यताडनात्प्रागेवनिर्गम नंश्रेयइतिभावंश्लोकद्वयेनसूचयन्नाह सइति भ्रातुर्धृतराष्ट्रस्य स्मयन्मंदस्मितंकुर्वन् मायांपुत्रइत्यादिस्नेहलक्षणांहरेर्बंधकशक्तिमुरुमानयानोबहुमन्वानःसोऽयाद्ययौ तीर्थमितिशेषः १६

पुण्यलब्धइत्यनेनहास्तिनपुरमपिपुण्यक्षेत्रमितिसूचयति तीर्थपदोहरेःपदानिस्थानानि सहस्रमूर्तिरनंतमूर्तिः तदेतत्सहस्रंतत्सर्वमितिश्रुतिः १७ एतदेवविशिनष्टि वनेष्विति तीर्थानांशुद्धजला नामायतनेषुस्थानेषु नित्यशुद्धस्यहरेःसन्निधानस्थानेषुवा पुण्यशब्दःप्रत्येकमभिसंबध्यते उपवनेषुपुरोपकंठवनेषु अद्रिषुश्रीपर्वतादिषु कुंजेषुसिंहगिरिव्रजाद्यणुतरपर्वतेषु वनेषुवृंदावनेषु सेव्यत्वे हेतुमाह अपंकेति सरित्सुगोदावर्यादिनदीषुसरःसुपुष्करादिषु अनंतस्यहरेर्लिंगैःप्रतिमाभिःसम्यगलंकृतेषु १८ चरणंविशिनष्टि गामिति गांभूमिं मेध्यैःशुद्धैः विविक्तैःपृथग्भूतैःवृक्षात्पतितैःप त्रादिभिर्वृत्तिराजीविकाजीवनंयस्यसतथोक्तः यद्वाशुद्धएकांतस्थलेवृत्तिरवस्थानंयस्यसतथा अधःशयनेनस्थंडिलेशयनेनावधूतोरजोरूषितदेहः स्वैःस्वकीयैरलक्षितोऽविज्ञातः अवधूतावायुनोद्धूताःकेशा यस्यसतथा यद्वापाठांतरेअवधूतवेषवद्वेषोयस्यसतथाकीदृशानिव्रतानिहारितोषणानियानि यानिव्रतानिचेरेतानितानिसर्वाण्यपिहरिप्रसादजनकानीत्यर्थः अनेनोद्देश्यव्रतदेवतावशीकरणसमर्थानीतिव्र तशब्दनिर्वचनंसूचितं वृञ्वरणइतिधातोर्व्रिपतेनेनैतादित्यस्मिन्नर्थेव्रतमितिरूपंसिध्यति १९ कर्मभूमित्वाद्भारतवर्षमेवाटितवान् नान्यदित्यस्मिन्नर्थेएवशब्दः केनचित्कालेनयावद्यदातावत्तदापार्थोऽजिते नकृष्णेनोक्तविधिनैकचक्रामेकाज्ञां एकमेवातपत्रंश्वेतच्छत्रंयत्रसातथातां क्षिनिवासगत्योरितिधातोः सर्वत्रसन्निवासःसुगमनंचाराद्युपद्रवोनास्तीत्येतत्सूचनायक्षितिमितिप्रयोजि इत्थमित्यनेनानियम

सनिर्गतःकौरवपुण्यलब्धगजाह्वयात्तीर्थपदःपदानि ॥ अन्वाक्रमत्पुण्यचिकीर्षयोर्व्यामधिष्ठितोयानिसहस्रमूर्तिः १७ वनेषुपुण्योपवनाद्रिकुंजेष्वपंकतोयेषुसरित्सरःसु ॥ अनंतलिंगैःसमलंकृतेषुचचारतीर्थायतनेष्वनन्यः १८ गांपर्यटन्मेध्यविविक्तवृत्तिःसदाप्लुतोऽधःशयनावधूतः ॥ अलक्षितःस्वैरवधूतवेषोव्रतानिचेरेहरितोषणानि १९ इत्थंव्रजन्भारतमेववर्षंकालेनयावद्गतवान्प्रभासम् ॥ तावच्छशासक्षितिमेकचक्रामेकातपत्रामजितेनपार्थः २० तत्राथशुश्रावसुहृद्विनष्टिंवनंयथावेणुजवह्निनाश्रयम् ॥ संस्पर्धयादग्धमथानुशोचन्सरस्वतींप्रत्यगियायतूष्णीम् २१ तस्यांत्रितस्योशनसोमनोश्चपृथोरथाग्नेरसितस्यवायोः ॥ तीर्थंसुदासस्यगवांगुहस्ययच्छ्राद्धदेवस्यसआसिषेवे २२ अन्यानिचेहद्विजदेवदेवैःकृतानिनानायतनानिविष्णोः ॥ प्रत्यंकमुख्यांकितमंदिराणियद्दर्शनात्कृष्णमनुस्मरंति २३

भंगोनास्तीतिसूच्यते २० प्रभासतीर्थगमनेनकश्चिदर्थविशेषःसूचितः कोसावितितत्राह तत्रेति अथप्रभासक्षेत्रगमनानंतरं तत्रप्रभासेतिष्ठन्विदुरःसुहृदांयदूनांविनष्टिंविप्रशापनिमित्तविनाशं शुश्रावेत्यन्वयः । विदुरस्तुप्रभासस्थः शापंसक्षेपतोऽशृणोत् । यदूनांविस्तरात्पश्चादुद्धवाद्यमुनामनुइतिवचनात् । विप्रशापेनभविष्यंतंयदुविनाशंश्रुतवान् अन्यथामहाभारतविरोधःस्यादित्यर्थः तज्जिज्ञासुस्तत्रागमत्किंनेत्याह यथेति वायुनोद्धूतवेणुसंघर्षणलक्षणसंस्पर्शोत्थितवह्निनातदाश्रयंवनयथादग्धंभविष्यतितथाविप्रशापहेतुसंस्पर्धयान्योन्यमर्मस्पर्शनवचनोत्थितकलहवह्निनादाहिष्यत्स्व कुलमनुशोचन्नथप्रत्यक्सरस्वतींपश्चिमवाहिनींनाम्नासरस्वतीं नदीमियायेत्यन्वयः तूष्णीमित्यनेनदुःखेनक्षेत्रवासिनोनापृच्छदितिसूचयति २१ दुःखाग्निसंतप्तस्तत्रसरस्वत्यामतुकिंगतइतितत्राह तस्यामितिअनेनविदुरस्यज्ञानाधिक्यंसूचयति यतःसंसारःक्षणभंगुरोऽतस्तीर्थस्नानादिनाशुद्धांतःकरणस्यभगवदपरोक्षज्ञानेनपुरुषार्थःस्यादित्यनेनतीर्थस्नानमकारि नान्योव्यापारइति २२ नकेवलं नदीतीर्थान्येवनिषेवितानिकिंतुतद्देशभवानिक्षेत्राणीत्याह अन्यानिचेतिइहचासुराष्ट्रे च कीदृशान्यायतनानिप्रत्यंकाःसम्यक्लक्षणवंतोब्रह्मादयस्तेषांमुख्योविष्णुस्तस्यप्रतिमाभिरंकितानिचिह्नितानि मंदिराणियेषुतानितथा । ब्रह्माप्रत्यंकवान्सम्यग्विष्णुर्लक्षणवत्तमइति । प्रत्यंकमुख्यमायुधश्रेष्ठंचक्रंतदंकितानीतिव्याख्यानंचित्यंनिघंटुकारैस्तथानभिहितत्वादिति येषांक्षेत्राणांदर्शनात् २३

विदुरस्यतीर्थसेवायांतात्पर्याधिक्यंसूचितमृद्धामित्यनेन अन्यथासमृद्धदेशत्यागेकारणाभावात् कालेनकेनचिदितिशेषः २४ तत्रनीर्थस्नानमंतरेणोद्धवंदृष्ट्वानेनकिमकारितन्मह्यंब्रूहीतिपरीक्षितोहार्दंचो चंपरिहरति सइति प्रशांतमित्यादिविशेषणत्रयेणोद्धवस्यभगवन्निष्ठायावैराग्यस्यशास्त्रज्ञानस्यप्रख्यातेश्चाधिक्यंसूचयति भगवान्कृष्णःप्रजापुत्रोयेषांततथोक्तास्तेषां अपृच्छादितिद्विकर्मकोधातुः तेनोद्धवमित्यन्वेतव्यम् २५ स्वोविष्णुस्तस्यनाभ्योनाभिजातःपद्मोब्रह्मातस्यानुवृत्त्याप्रार्थनालक्षणसेवयाकृतक्षणौकृतावसरौ कच्चित्कामप्रवेदनइतिवचनात्प्रश्नार्थेवर्ततेकच्चिच्छब्दः । पद्मोब्रह्मासमुद्दिष्टः पद्माश्रीरपिचोच्यतइतिच । लोकानांसुखकर्तृत्वमपेक्ष्यकुशलंविभोः । पृच्छ्यतेसततानंदात्कथंतस्यैवपृच्छ्यतइतिवचनात् हरेःकुशलप्रश्नोलोकानांसुखकर्तृत्वमपेक्ष्येतिज्ञातव्यम् २६ भामःपूज्यः वदा न्योदानशीलः वरतर्पणेनमर्तृतर्पणेन २७ यदूनांवरूथाधिपतिःसेनाधिपतिः आदिसर्गेपूर्वजन्मनि स्मरंकामं विप्रानाराध्येतिकथनंलोकवनितानांब्राह्मणप्रसादेनस्वाभीष्टावाप्तिरितिप्रदर्शनपरंनतुस्वार्थं परमित्यभिप्रायः २८ सात्वतानामधिपउग्रसेनः शतपत्रनेत्रःपुंडरीकाक्षः नृपासनाधिंसिंहासनंममनाभूदितियआधिःमनस्तंपरिहृत्य आधिर्मनोवल्लभंचआत्माख्यमपिचोच्यतइति २९ सद्दक्षःपुत्रत्व

ततस्त्वतिव्रज्यसुराष्ट्रमृद्धंसौवीरमत्स्यान्कुरुजांगलांश्च ॥ कालेनतावद्यमुनामुपेत्यतत्रोद्धवंभागवतंददर्श२४सवासुदेवानुचरंप्रशांतंबृहस्पतेःशक्तनयंप्रतीतम् ॥ आलिंग्यगाढंप्रणयेनभद्रंस्वानामपृच्छद्भगवत्प्रजानाम् २५ कच्चित्पुराणौपुरुषौस्वनाभ्यपद्मानुवृत्त्येहकिलावतीर्णौ ॥ आसातउर्व्याःकुशलंविधायकृतक्षणौकुशलंशूरगेहे २६ कच्चित्कुरूणांपरमःसुहृन्नोभामःसआस्तेसुखमंगशौरिः ॥ योवैस्वसॄणांपितृवद्ददातिवरान्वदान्योवरतर्पणेन २७ कच्चिद्वरूथाधिपतिर्यदूनांप्रद्युम्नआस्तेसुखमंगवीरः ॥ यंरुक्मिणीभगवतोभिलेभेआराध्यविप्रान्स्मरमादिसर्गे २८ कच्चित्सुखंसात्वतवृष्णिभोजदाशार्हकाणामधिपःसआस्ते ॥ यमभ्यषिंचच्छतपत्रनेत्रोनृपासनाधिंपरिहृत्यदूरात् २९ कच्चिद्धरेःसौम्यसुतःसदृक्षआस्तेग्रणीरथिनांसाधुसांबः ॥ असूतयंजांबवतीव्रताढ्यादेवंगुहंयोंऽबिकयाधृतोऽग्रे ३० क्षेमंसकच्चिद्युयुधानआस्तेयःफाल्गुनाल्लब्धधनूरहस्यः ॥ लेभेंऽजसाधोक्षजसेवयैवगतिंतदीयांयतिभिर्दुरापाम् ३१ कच्चिद्बुधःस्वस्त्यनमीवआस्तेश्वफल्कपुत्रोभगवत्प्रपन्नः ॥ यःकृष्णपादांकितमार्गपांसुष्वचेष्टतप्रेमविभिन्नधैर्यः ३२ कच्चिच्छिवंदेवकभोजपुत्र्याविष्णुप्रजायाइवदेवमातुः ॥ यावैस्वगर्भेणबभारदेवंत्रयीयथायज्ञवितानमर्थम् ३३ अपिस्विदास्तेभगवान्सुखंवोयःसात्वतांकामदुघोऽनिरुद्धः॥ यमामनंतिस्माहिशब्दयोनिंमनोमयंसत्त्वतुरीयमर्थम् ३४

योग्यः दक्षइतिपाठेकर्तव्यत्वेनयुगपदनेकेषुकार्येषुप्राप्तेष्वव्यामोहेनक्रमेणकर्तादक्षइत्यर्थः अग्रेपूर्वजन्मनिअंबिकयापार्वत्या धृतो गर्भइतिशेषः ३० युयुधानःसात्यकिःफाल्गुनादर्जुनात् अनेनधनुर्वेदज्ञानाधिक्यंभगवत्प्रियतमत्वंचमष्टव्यत्वेहेतुरितिसूचयति एवमुत्तरत्राप्यूह्यम् ३१ अनमीवोनिष्पापःश्वफल्कपुत्रोऽक्रूरः प्रेम्णाभक्त्याविभिन्नंनष्टंधैर्यंरजोवेष्टनाहंकाररूपमनोयस्यसतथा ३२ विष्णुःप्रजापुत्रोयस्याःसाविष्णुप्रजातस्याः देवकश्चासौभोजश्चदेवकभोजः । नाम्नादेवकःकुलेनभोजःतस्यपुत्र्या देवक्यादेवमातुरदितेरिवविष्णुप्रजायाइतियोजना यज्ञोविष्णुर्वितानोविभूतिर्विष्णुविभूतिरूपस्तमर्थंप्रतिपाद्यंयागलक्षणमर्थंवा कदाचित्कर्दवक्यागर्भधारणंत्रय्याअर्थधारणंसनातनमतस्तन्निदर्शनंकथंस्यादित्यतउक्तंवाइति दृष्टांतदार्ष्टांतिकयोरेकदेशसाम्येनादृष्टांतत्वमसिद्धेरीति ३३ अनिरुद्धोभगवान्वासुखमास्तेऽपिस्वित्किमित्यन्वयः अनिरुद्धशब्दार्थंलक्षयति यःसात्वतामिति नकेवलंकामेनरुणद्धिकिंतुतत्तदिष्टदायकआश्रितानामतोऽनिरुद्धःपूज्यश्च कामदुघइति

प्रयोगेणसूचितंवैदिकत्वंस्पष्टमाह यामिति शब्दोवेदोयोनिर्ज्ञप्तिकारणंयस्यसतथोक्तस्तं भद्रंणोअपिवातयमनइत्येवंरूपःशब्दः नमुहेमनस्त्वंक्रतुंदक्षंदक्षेनमुतभद्रंमंगलंविष्णुंमातिपालयगमयोविमनोविषय
प्रतीतेःकथमस्यानिरुद्धविषयत्वमत्राह मनोमयामिति सर्वकार्येषुमनःप्रथयतीतिमनोभिमानित्वादनिरुद्धस्यमनःशब्देनसएवोच्यते मनसावाअग्रेसंकल्पयति मनएवमनुष्याणांकारणंबंधमोक्षयोरित्यादेः
नोमनोभद्रंवातयेतिमनसःकर्मत्वप्रतीतेःकथमनेनउच्यतेइतिचेत्सत्यंसएववर्ज्ञानिरुद्धःस्यात् ननुहंततर्हिमनःशब्दाभिधेयत्वंगतमत्राह सत्त्वेति सत्त्वाच्चितातुरीयंचतुर्थमनःशब्दार्थमनिरुद्धमामनंति मनो
बुद्धिरहंकारश्चित्तमित्यंतरात्मनः । पाद्दिदुर्ज्ञानिरुद्धाख्यंहृषीकाणामधीश्वरम् । शारदेंदीवरश्यामंसंराध्यंयोगिभिःशनैरित्यादिना हेमनोनाथानिरुद्धनोस्माकंक्रतुंसंकल्पदर्शनंज्ञानंतत्त्वविषयंकुरु हेभगव
ञोमनोदक्षंसमर्थंक्रतुमध्वरंचभद्रंत्वंवातयप्रापयेत्युभयथापिहितद्विषयत्वंसगच्छते दक्षौदर्शनपंडिताविति यादवः कामदुघत्वादिमाहात्म्यंहरेरितरत्रासंभावितकथमस्मिन्योज्यतइत्यतोवाह यामिति यंक्रा
मपुत्रंसत्त्वस्यबलविज्ञानपूर्णस्यचतुर्मूर्तेर्हरेस्तुरीयमर्थमनिरुद्धनामानंहरिमामनंतीत्यतोयुक्तंतदावेशित्वात्ताहशमाहात्म्यकथनंपृथ्व्यादौदर्शनादिति ३४ उक्तकुशलप्रश्नंप्रसिद्धाप्रसिद्धेष्वप्यतिदिशति
अपिस्विदिति ३५ धर्मोधर्मपुत्रः । विजयाच्युताभ्यांस्वदोर्भ्यांधर्मेणधर्मशास्त्रमनतिक्रम्यधर्मसेतुंपरिपातिकिमित्यन्वयः यस्ययुधिष्ठिरस्यसभायां दिग्विजयेनानुवृत्तिरनुगमनंयस्याःसातथा विजयाद

अपिस्विदन्येचनिजात्मदैवमनन्यवृत्त्यासमनुव्रताये ॥ हार्दिक्यसत्यात्मजचारुदेष्णगदादयःस्वस्तिचरंतिसौम्य ३५ अपिस्वदोर्भ्यांविजयाच्युताभ्यां
धर्मेणधर्मःपरिपातिसेतुम् ॥ दुर्योधनोऽतप्यतयस्सभायांसाम्राज्यलक्ष्म्याविजयानुवृत्त्या ३६ किंवाकृताघेष्वघमत्यमर्षीभीमोऽहिवद्दीर्घतमंव्यमुंचत् ॥
यस्यांघ्रिपातंरणभूर्नसेहेमार्गंगदायाश्चरतोविचित्रम् ३७ कच्चिद्यशोधारथयूथपानांगांडीवधन्वोपरतारिरास्ते ॥ अलक्षितोयच्छरकूटगूढोमायाकिरातो
गिरिशस्तुतोष ३८ यमावुतस्वित्तनयौपृथायाःपार्थैर्वृतौपक्ष्मभिरक्षिणीव ॥ रेमातउद्धृत्यमृधेस्वरिक्थंसुधांसुपर्णाविवद्वज्रिवक्त्रात् ३९ अहोपृथापिध्रि
यतेऽर्भकार्थेराजर्षिवर्येणविनापितेन ॥ यस्त्वेकवीरोऽतिरथोविजिग्येधनुर्द्वितीयःककुभश्चतस्रः ४० सौम्यानुशोचेतमधःपतंतंभ्रात्रेपरेतायविदुद्रुहेयः ॥
निर्यापितोयेनसुहृत्स्वपुर्याअहंस्वपुत्रानसमनुव्रतेन ४१ सोहंहरेर्मर्त्यविडंबनेनदृशोनृणांभावयतोविधातुः ॥ नान्योपलक्ष्यःपदवींप्रसादाच्चरामिपश्यन्
गतविस्मयोऽत्र ४२

र्जुनादनुवृत्तिरुत्पत्तिर्यस्याःसातथा विजयस्यहरेरनुवृत्तिर्यस्याःसातथातयावा श्रीमदादितरेषाधर्मसेतुलंघनंसंभाव्यतेनास्यतदस्तीतिप्रश्नः ततएवधर्मइत्तिपायोजि ३६ भीमःकृताघेषुदुर्योधनादिषु
अघंव्यमुंचात्किंवा पुनरपराधबुद्धिमुक्त्वास्तेकिं प्रश्ननिमित्तमाह अत्यमर्षीति तस्यपराक्रममाह यस्येति अंघ्रिपातेनिमित्तमाह मार्गमिति ३७ रथयूथपानांयशोदधातीतियशोधाः यच्छरकूटेनयस्य
शरपंजरेणगूढोनिलीनः माययेच्छयाकिरातः गृहीतशबरवेषः ३८ पक्ष्मभिरावृतेअक्षिणीइवपार्थैरावृतौरक्षितौमाद्र्यास्तनयौयमौवज्रिणइंद्रस्यवक्त्रात्सुपर्णौगरुडौसुधामिवमृधेयुद्धेस्ववैरिमुखात्स्वरि
क्थंनिजराज्याख्यं धनमुद्धृत्यरेमाते उतस्वित्किमित्यन्वयःसुपर्णाविति द्वाष्टींतिकापेक्षयाद्विवचनम् ३९ तेनराजर्षिवर्येणपांडुचक्रवर्तिनाविनारहिताधिध्रियते पुत्रैरितिशेषः राजर्षिवर्यत्वंदर्शयति यस्त्वि
ति चतस्रःचतसृः ४० परेतायमृतायभ्रात्रेपांडवे कुधद्रुहेर्ष्यासूयार्थानायंप्रतिकोपइतिचतुर्थी सुहृत्सुत्सुराकारकर्ता ४१ विधातुःकृष्णस्यपदवींनिवृत्तिमार्गंचरामि पश्यन्संसारिणाक्लेशमितिशेषः ४२

ननुकंसादिवधवत्कुरूणांहननंझटितिकिमितिनकृतंनकारितंचेत्याशंक्यप्रयोजनांतरसद्भावादुपेक्षितामित्याशयेनाह नूनमिति भगवान्कुरूणामघमपराधमुपैक्षत नूनमुपेक्षितवानितिसिद्धवदेवमि तर्कनिश्चययो र्नूनमित्यमरः । तद्धननासामर्थ्यान्नेत्यतउक्तं ईशोपीति तर्हिकिंनिमित्तमितितत्राह नृपाणामिति त्रिमदाद्विद्याधनाभिजनानिमित्तान्मदादुत्पथानासन्तंपंथानमपहायवर्तमानानांचमूभिः कांक्षौहिणी भिर्मुहुर्महींचालयतांनृपाणांकंसादीनांवधाद्धेतोः तद्वधमाथम्येपीदंनिमित्तमित्याह प्रपन्नेति प्रपन्नानांदेवावताराणांवसुदेवादीनामार्तिजिहीर्षयाऽसह्यदुःखहरणेच्छयाकारणेन ह्वलेनहरंभक्तिर्भक्ताभीष्टानुसारिणीतिदर्शितंभवति ४३ भक्ताभीष्टंचभूभारायितदुष्टजननिधनंयत्तदेवावतारप्रयोजनमितिभावेनाह अजस्येति अजस्यविष्णोर्जन्मावतारः उत्पथनाशनायकंसादिनिधनाय प्रयोज नांतरंचास्तीत्याह कर्माणीति फलमननुसंधायाकर्तुःस्वतएवस्रष्ट्यादेःकर्तुर्हरेःकर्माणिजगत्सर्जनादिलक्षणानि पुंसांशरणागतानांग्रहणायश्रवणमननादिरूपजिज्ञासायै हरिःकर्ताप्यकर्तैतिफलाभा वेनभण्यतइति बालवल्लीलार्थदेहंगृह्णातीतिकिंनस्यादितीमंपक्षमाक्षिपति नत्विति अन्यथाभक्तजनग्रहणादिकमंतरेणस्वप्रयोजनमपेक्ष्यनैव कुतः । असंभवात् तथाहिकःपुरुषःशुक्रशोणितसंपृक्तदेहम र्हतीति नकोप्यर्हतीति हरिरर्हतीतिनेत्याह परइति गुणानांसकाशात्परस्तदतीतस्तेनोत्तमः गुणसंसर्गोपिनास्तीति गुणानामितिषष्ठी संदेहइतिहरेर्देहित्वप्रतीतेःकोर्हतीतिकथमाक्षिप्यतेइत्यतउक्तंकर्म

नूनंनृपाणांत्रिमदोत्पथानांमहींमुहुश्चालयतांचमूभिः ॥ वधात्प्रपन्नार्तिजिहीर्षयेशोह्युपैक्षताघंभगवान्कुरूणाम् ४३ अजस्यजन्मोत्पथनाशनायकर्माण्य कर्तुर्ग्रहणायपुंसाम् ॥ नत्वन्यथाकोऽर्हतिदेहयोगंपरोगुणानामुतकर्मतंत्रम् ४४ तस्यप्रपन्नाखिललोकपानामवस्थितानामनुशासनेस्वे ॥ अर्थायजातस्य यदुष्वजस्यवार्तांसखेकीर्तयतीर्थकीर्तेः ४५ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविदुरोद्धवसंवादेप्रथमोऽध्यायः ॥१॥ श्रीशुकउवाच ॥ इतिभागवतः पृष्टःक्षत्त्रावार्तांप्रियाश्रयाम् ॥ प्रतिवक्तुंनचोत्सेहेऔत्कंठ्यात्स्मारितेश्वरः १ यःपंचहायनोमात्राप्रातराशाययाचितः ॥ नैच्छत्तद्रचयन्यस्यसपर्यांबाललील या २ सकथंसेवयातस्यकालेनजरसंगतः ॥ पृष्टोवार्तांप्रतिब्रूयाद्भर्तुःपादावनुस्मरन् ३ समुहूर्तमभूत्तूष्णींकृष्णांघ्रिसुधयाभृशम् ॥ तीव्रेणभक्तियोगे ननिमग्नःसाधुनिर्वृतः ४ पुलकोद्भिन्नसर्वांगोमुंचन्मीलद्दृशाश्रुसः ॥ पूर्णार्थोलक्षितस्तेनस्नेहप्रसरसंप्लुतः ५

ति मनुष्यादिदेहयोगाद्यसंभवेपिदेवादिशरीरयोगःस्याद्वेत्यतउक्तं उतेति उताप्यर्थविकल्पयोरिति विकल्पोपिनघटतइत्यर्थः नदेहयोगादिजनिर्विष्णोर्व्यक्तिर्जनिःस्मृतेतिविशेषवचनाद्देहयोगांगी कारपक्षोगर्हितइतिभावः ४४ किंबहुनोक्तेनेतिविदुरःस्वाभीष्टंवक्ति तस्येति ४५ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांप्रथमोऽध्यायः ॥ १ ॥ अत्राध्यायेप्रश्नेउद्धवेनाविदुरप्र श्नप्रतिवचनायहरेःश्रीकृष्णावतारसंक्षेपकथानिरूप्यते तत्रप्रथमतउद्धवस्यभगवतिभक्त्युद्रेकलक्षणंशुकःपरीक्षितकथयतीत्याह सूतःशौनकाय इतीति आत्मादेरपिप्रियःप्रेष्ठोहरिराश्रयोयस्याःसातथा तां वार्तांकथामौत्कंठ्यं चित्तविद्रवणहेतुभूतौत्सुक्यं तस्माद्गद्गदकंठत्वादिविशेषः स्मारितेश्वरःप्रसंगविशेषादितिशेषः १ एकांतभक्तानामेतच्चुक्तमितिभावेनाह यइति एवंहायनावत्सरायस्यसतथा प्रातराशायप्रातर्भोजनायतस्यातर्भोजनं सपर्यांपूजांरचयन्प्रपंचयन् २ तस्यहरेर्जरसंजरांवार्धकंवयः ३ कृष्णांघ्रिस्मरणसुधया तृतीयासप्तम्यर्थे तस्यांनिमग्नोनिर्वृतःपरमानंदंप्राप्तः ४ उद्धवस्यैवंविधाव स्थांपश्यतोविदुरस्यमनसिकिमभूदत्राह पुलकेति तेनविदुरेण पुलकोरोमांचस्तेनोद्भिन्नमंकुरितंसर्वांगंयस्यसः मीलद्दृशाऽर्धोन्मीलितनेत्रेणाश्रुबाष्पकणांमुंचन्स्नेहप्रसरसंप्लुतोभक्तिनदीप्रवाहमग्नःस उद्धवः पूर्णार्थःकृतकृत्योलक्षितोलक्षणतोज्ञातइत्यन्वयः ५

ततःपरंविदुरस्य काभीष्टसिद्धिरभूदित्याशंक्य तत्प्रश्नप्रवचनोपक्रमसिद्धिरित्याह शनकैरिति भगवल्लोकादसंप्रज्ञातावस्थालक्षणान्नृलोकंमनुष्यदेहाभिमानमागतः उत्स्मयन्नुत्कृष्टंमंदस्मितंकुर्वन् ६
कीदृशीसेत्यत्राह कृष्णेति कृष्णएवद्युमणिःसूर्यस्तस्यनिम्लोचेअस्तमयेसति अतएवगतश्रीषुनष्टाल्लोकेषु अतएवकालाजगरेणगीर्णेषुग्रस्तेषुअस्तंगतेषुविनाशंयातेषुनःसंबंधिषुयदुषु किंनुकुशलंब्रूयां हे
स्यनेनकुशलप्रश्नप्रवचनप्रत्यारंभोनकर्तव्योविप्रशापेनसविकष्टनाशस्यप्रसिद्धत्वादितिदर्शयति प्रत्यारंभेप्रसिद्धेहेतियादवः ७ दुष्टनिधनव्याजेनज्ञानोपदेशार्थमवतीर्णस्यकृष्णस्यज्ञानेननाशंयास्य
तामपियदूनां त्रिलोक्याश्चश्रेयःसिद्धिःस्यादित्याशंक्यज्ञानेसतिश्रेयस्तदेवनास्तीत्यनुतपन्नुद्धवइत्याह दुर्भगइति लोकोजन' बतशब्द'खेदवचनःहरिनविदुर्दुस्तरसंसारसंहारकत्वेनेतिशेषः ८
नकेवलमज्ञामिथ्याज्ञानिनोपिजाताइत्याह इंगितज्ञाइति अत्रेंगितशब्दोद्विरावृत्त्याव्याख्यातव्यः इगिचेष्टायामितिधातुः लोकस्येंगितेनचेष्टितेनेंगितंहृद्गतभावजानंतीतींगितज्ञाः इंगितंहृद्गतोभा
वइंगितंचांगचेष्टितमित्यभिधानं पुरप्रौढाःशरीराभिमानिनः गृहस्वामिनोवाएकारामाःकेवलक्रीडालोलाः एकेमुख्यान्यकेवलाइतिच एवंविधाःसर्वेसात्वताःयादवाःसात्वतांब्रह्मादिभागवतानामृष
भंस्वामिनंप्राकृतप्रधानपुरुषवत्भूतावासंकतिपयजनावासहेतुभूतममंसतामन्यंतेत्यन्वयः एकोदेवइतिप्रतिपाद्यत्वेनप्रसिद्धंभूतावासमविशेषेणसकलजगन्निवासभगवद्सात्वतायादवानामेवऋषभममंसते
तिवा ९ प्रसंगाज्ज्ञानिलक्षणमाह देवस्येति देवस्यहरेर्माययाबंधकशक्त्यास्पृष्टाउपतप्रज्ञानत्वादन्ययाज्ञानिनोयेचान्येअसतांजनानाममंगलानाविषयाणावाश्रयास्तद्वाक्यैस्तेषांनृणांवाक्यैरात्मानिपरमात्म
न्युप्तात्मनांसंततन्यस्तनिर्दोषमनसांज्ञानिनांधीर्नभ्राम्यते नान्यथाभवतीत्यनेनसम्यग्ज्ञानित्वमेवंविधमित्युक्तंभवति हरावित्यक्षरद्वयेन । ओहाक्र्गतावितिहेतिज्ञानं रमुक्रीडायामितिरतिरत्यातिशयितसुख

शनकैर्भगवल्लोकान्नृलोकंपुनरागतः ॥ विमृज्यनेत्रेविदुरंप्रत्याहोद्धवउत्स्मयन् ६ उद्धवउवाच ॥ कृष्णद्युमणिनिम्लोचेगीर्णेष्वजगरेणह ॥ किंनुनःकुशलंब्रूयांगतश्रीषुयदुष्वहम् ७ दुर्भगोबतलोकोऽयंयदवोनितरामपि ॥ येसंवसंतोनविदुर्हरिंमीनाइवोडुपम् ८ इंगितज्ञाःपुरप्रौढाएकारामाश्चसात्वताः ॥ सात्वतामृषभंसर्वेभूतावासममंसत ९ देवस्यमाययास्पृष्टायेचान्येअसदाश्रयाः ॥ भ्राम्यतेधीर्नतद्वाक्यैरात्मन्युप्तात्मनांहरौ १० प्रदर्श्यातप्ततपसामवितृप्तदृशांनृणाम् ॥ आदायांतरधाद्यस्तुस्वबिंबंलोकलोचनम् ११ यन्मर्त्यलीलौपयिकंस्वयोगमायाबलंदर्शयतागृहीतम् ॥ विस्मापनंस्वस्यचसौभगर्द्धेः परंपदंभूषणभूषणांगम् १२ यद्धर्मसूनोर्बतराजसूयेनिरीक्ष्यदृक्स्वस्त्ययनंत्रिलोकः ॥ कार्त्स्न्येनचात्रोपगतंविधातुरर्वाक्सृतौकौशलमित्यमन्यत १३

मितिसाच्चिदानंदलक्षणोविष्णुरुच्यतइतिज्ञातव्यम् १० योज्ञानिबुद्धिविषयोहरिःसएवायंकृष्णइत्याह प्रदर्श्येति अतप्ततपसामस्मिन्जन्मनीतिशेषः अनेनपूर्वतनतप्ततपस्त्वसूच्यते स्वबिंबमिति
सच्चिदानंदलक्षणंस्वरूपंतत्प्रतिमाचगृह्यते तेनज्ञानिनांसाक्षादितरेषामितररूपमितिज्ञायते लोकस्यजनस्यलोचननेत्रयस्मिंस्तल्लोकलोचनं जनरंजनंवा अधादितिलुङ्लडर्थे अंतर्धास्यतीत्यर्थः
बिंबोब्रह्ममंडलंसमं प्रतिमासुखलक्ष्मस्त्विति तुनाद्वेवावब्रह्मणोरूपेइत्यादिश्रुतिंसूचयति ११ पुनरपियद्वपुःस्वयोगमायाबलंस्वरूपेच्छासामर्थ्यंदर्शयताहरिणागृहीतं यच्चमर्त्यलीलौपयिकंमानुषललीलाबा
लकौमारादिविषयामुपयातीति अनेनस्वतएकप्रकारलक्षणमुक्तंभवति स्वस्यकृष्णस्यचाविस्मापनंविस्मयकरं यच्चसौभगर्द्धेःसौदर्यसमृद्धेःपरंपदस्थानं यच्चभूषणानामपिभूषणान्यंगानियस्मिन्नृतत् १२ पु
नरपिकीदृशं धर्मसूनोराजसूयेयज्ञे पश्यतोजनस्यदृशांस्वस्त्ययनं आनंदाश्रयं यद्वपुर्निरीक्ष्यत्रिलोकइत्यमन्यत कथंविधातुर्विरिंचस्यार्वाक्सृतावर्व्यसृष्टौकार्त्स्न्येनकौशलमत्रकृष्णवपुषिउपगतंप
र्याप्तमितिनैवतत्सत्यमित्याह बतेति अनेनत्रिलोकस्याज्ञानमाश्चर्यमितिविस्मयकरोति । आनंदरूपदृष्ट्वापिलोकोभौतिकमेवतु । मन्यतेविष्णुरूपंचअहोभ्रांतिर्बहुरिभतेतिवचनात् ज्ञान्यज्ञानिनामुक्तचेव
कारः तथाचैवंयोजना अत्रजीवराशौ त्रिषुवेदादिषुलोकःप्रकाशोज्ञानयस्यसतथा वेदैकप्रमाणोजनोधर्मसूनोराजसूयेउपगतंसर्वाधिकत्वेनस्थितंयद्वपुर्निरीक्ष्यसृतौमनुष्यसृष्टयांगमवर्त्मानस्यधातु
र्वैस्कार्त्स्न्येनकौशलंमंगलविषयंनिर्माणपाटवंतदर्वाक्नाचमित्यमन्यत श्रीकृष्णसौंदर्यस्याकृत्रिमत्वात् अतएवानंतत्वाच्चतज्ज्ञान्यज्ञानिनांज्ञानेऽज्ञानेवावैचित्र्यमहोइत्याख्याति १३

यस्यश्रीकृष्णस्यानुरागेणस्नेहेनकुतोहासरासौअनुस्मितहासरासक्रीडिताभ्यांसहितेनलीलावलोकेनप्रतिलब्धोमानोयाभिस्तास्तथोक्ताः हासरासशब्दौरसपरस्तेनवा रस.सीरोवरइतिवचनात् रसएव रासःवार्तासंभावयोःकिलेतिवचनात्संभावितोयमर्थःव्रजेगोष्ठे १४ अवतारप्रयोजनमाह स्वशांतेति स्वस्यशांतरूपेषुसात्विकप्रकृतिषुसुरादिषुइतरैरशांतरूपैरसुरैरभ्यर्द्यमानेषुसत्सु अनुकंपिनात्मा अनुकूलचित्तो महदंशयुक्तः महांश्चासावंशोमहदंशोमुख्यप्रतिबिंबभूतोब्रह्मादेनप्रार्थितस्तेनयुक्तोविनियुक्तोपरावरेशो ऽजोविष्णुर्जातोभवतीत्यन्वयः यथाग्निर्दारुणइतिशेषः अनेनजनीप्रादुर्भावइतिधात्वर्थो विवृतइति १५ ब्रह्मादीनामपिभगवद्विषयज्ञानंमध्याह्नार्कवत्संचलतिकिमुतास्मदीयमितिभावेनाह मांखेदयतीति वसुदेवस्यगृहेभार्यायांजन्मविडंबनंजातवदनुकरणं अरिःकंसोजरासंधश्च पुरा न्मथुरापुरात् गोमंतद्वारकयोर्विवासःप्रवासः अनंतवीर्यइत्ययंलोकानुकरणस्मारयति १६ एतत्कंसवधानंतरंक्रियमाणंकर्म पित्रोर्देवकीवसुदेवयोःअकृतनिष्कृतीनामननुष्ठितकंसकृतप्रतिक्रियाणाम् १७ विस्फुरद्भ्रूविटपेनविस्फुरत्योर्भ्रमंत्योर्भ्रुवोर्विटपेनलेशेनकृतांतेनकालोपमेन १८ रसज्ञेनपुरुषेणहरोवैरहोनसोढुंयुक्तइतिभावेनाह दृष्टेति योगिनोयुक्त्युपक्रमादिलक्षणेनवेदतात्पर्यवेदिनोयांसिद्धिंस्पृहय विवांछंति राजसूयेप्रवाद्विश्चासुरप्रवेशात्कृष्णंद्विषतोपिचैद्यस्यकृष्णप्रवेशलक्षणासिद्धिर्दृष्टा अपिनानिंदितात्द्वेषात् भक्त्यैकलभ्यातत्प्रवेशलक्षणासिद्धिःकथंसंभवतीतिचोद्यंनन्वित्यनेनपरिहृतं त

यस्यानुरागप्लुतहाससरासलीलावलोकप्रतिलब्धमानाः ॥ व्रजस्त्रियोदृग्भिरनुप्रवृत्तधियोवतस्थुःकिलकृत्यशेषाः १४ स्वशांतरूपेष्वितरैःस्वरूपैरभ्यर्द्यमा नेष्वनुकंपितात्मा ॥ परावरेशोमहदंशयुक्तोह्यजोपिजातोभगवान्यथाग्निः १५ मांखेदयत्येतदजस्यजन्मविडंबनंयद्वसुदेवगेहे ॥ व्रजेचवासोऽरिभयादि वस्वयंपुराद्व्यवात्सीद्यदनंतवीर्यः १६ दुनोतिचेतःस्मरतोममैतद्यदाहपादावभिवंद्यपित्रोः ॥ तातांबकंसादुरुशंकितानांप्रसीदतंनोऽकृतनिष्कृतीनाम् १७ कोवाअमुष्यांघ्रिसरोजरेणुंविस्मर्तुमीशेतपुमान्विजिघ्रन् ॥ योविस्फुरद्भ्रूविटपेनभूमेर्भारंकृतांतेनतिरश्चकार १८ दृष्टाभवद्भिर्ननुराजसूयेचैद्यस्यकृष्णंद्विष तोऽपिसिद्धिः ॥ यांयोगिनःसंस्पृहयंतिसम्यग्योगेनकस्तद्विरहंसहेत १९ तथैवचान्येनरलोकवीरायआहवेकृष्णमुखारविंदम् ॥ नेत्रैःपिबंतोनयनाभिरामं पार्थास्त्रपूताःपदमापुरस्य २० स्वयंत्वसाम्यातिशयस्त्र्यधीशःस्वाराज्यलक्ष्म्याप्तसमस्तकामः ॥ बलिंहरद्भिःसुरलोकपालैःकिरीटकोट्येडितपादपीठः २१

थाहि प्रश्नावधारणेतिह्यसमीहानुमतेनान्वितिवचनात् यथाप्रमाणेनानुमतंतथांगीकर्तव्यं प्रमाणंतु असुराअपियेविष्णुंशंखचक्रधरंरणे । भक्तिपूर्वंप्रवेक्षंतेज्ञेयाभागवताइति । विद्विषंतिनुयेविष्णुमृषिपुत्राअपिस्फुटम् । असुरास्तेपिविज्ञेयागच्छंतिचसदातमइति । अतएवसम्यग्योगेनेत्युक्तं सर्वथाभक्तितोमुक्तिर्द्वैपायनउदीरितमित्यादेः ततःकिंतत्राह कइति यस्मात्जीवद्वयसमायोगेनजा तान्जयादीन्भक्त्यादुष्टावेशाद्विमोच्यदुष्टांस्तमसिप्रापय्यप्रवर्तते तस्मात्कृपालोस्तस्यविरहंविस्मरणलक्षणंकःपुमान्सहेत भक्तिमानितिशेषः जीवद्वयसमायोगाद्धिरण्यकमुखाःपरइत्यादेः एकास्मिन्जीवद्व यसमायोगोऽस्तीतिज्ञायते १९ चैद्यवदन्येपिस्वयोग्यांसिद्धिमापुरित्याह तथैवेति येभारतयुद्धेदुर्योधनपक्षपातिनोन्येनरलोकवीराःकर्णादयोनयनाभिरामंनेत्रोत्सवजनकंकृष्णमुखारविंदंनेत्रैःपिबंतः पार्थास्त्रपूताःपार्थस्यपाशुपतादस्त्रेणपूताश्छिन्नशिरस्कामृतास्तेपितथैवचैद्यवदेवास्यकृष्णस्यप्रसादाच्चदधीनंस्वयोग्यंपदमापुरित्यन्वयः स्वपदप्राप्त्यनंतरंमुक्तिंचप्रापुरित्यस्मिन्नर्थेचशब्दः पुंछेदनइति धातुः पूङ्पवनइतिधातुपाठेद्वेषंमुक्त्वाभक्त्याशुद्धाइत्यर्थः २० एवंविधस्यहरेर्भक्तानुकंपामंतरेणनान्यत्प्रयोजनमस्त्यावतारादिनेत्याशयेनाह स्वयंत्विति नसाम्यातिशयौयस्यसतथोक्तः एकमेवा द्वितीयमितिश्रुतेः स्वाराज्यलक्ष्म्यास्वरूपानुभवलक्ष्म्या स्वेमहिम्नीतिश्रुतेः बलिंपूजाम् २१

१ कोट्याहत इतिपाठांतरम् ।

इदमपितन्माहात्म्यातिशयसूचकंयस्मादेवंविधज्ञानवतोस्मान्विग्लापयतितत्कैंमितिभावेनाह तत्तस्येति तद्वचःकैंकर्यंदासत्वंविग्लापयति माहात्म्यविषयेऽज्ञानलक्षणांग्लानिमुत्पादयति तदितिकिंतत्रा
इ यदिति परमेष्ठिधिष्ण्येसिंहासनेनिषण्णमुग्रसेनंस्वयमुत्तिष्ठन्पद्मचोन्यबोधयत्विज्ञापयामास हेदेवअस्मद्विज्ञापनंनिधारयःचित्तेकुर्विति २२ पूर्वमर्थंतउक्तदयालुत्वमधुनावाक्यतःकथयति अहोइति व
कभक्षणइतिधातोर्भक्षणशीलत्वात्बकीपूतनाअपिनाटकागर्हयति धात्रीणांशुभानांयोग्यताभेदेनोचिता कंसपूतनिकाद्याश्चदांधवादियुतायतः। जीवद्वयसमारोपाद्रतिद्वयत्रिगीषवत्तिवचनात द
पालुत्वमुर्वशीपति २३ असुरयोनित्यमप्रयोजकंभागवतत्त्वेकिंतुनिर्दोषाभक्तिरेवेत्याशयेनाह मन्यइतिसंरंभमार्गाभिनिविष्टचित्तानिति यथाकीटःपेशरकारिणाकुड्येनिरुद्धस्तस्मिन्भृंगेप्रथमंद्वेषयुक्तः
पश्चाद्भयदानाच्चद्वेषंविहायस्नेहेनतंभृंगंस्मरन्तत्सरूपतांयाति तथातेप्यसुराःसंरंभमार्गेणस्मरंतस्तस्मिन्संरंभंविहायभक्त्यैवतस्मिन्नभिनिविष्टचित्ताः निरंतरंतन्मनस्काइत्यर्थः इदंतत्रहेतुगर्भविशेषणं सु
नाभायुधंचक्रायुधमचक्षतापश्यन् अतएव असुराअपियेविष्णुंशंखचक्रधरंरंगइत्युक्तं तार्क्ष्यपुत्रस्यगरुडस्यांसेस्थितम् २४ नातिचिरेणकृष्णस्ययादवानांचस्वलोकप्रयाणंभविष्यतीतिनिवेद्यभक्त्याते

तत्तस्यकैंकर्यमलंभृतान्नोविग्लापयत्यंगयदुग्रसेनम् ॥ तिष्ठन्निषण्णंपरमेष्ठिधिष्ण्येन्यबोधयद्देवनिधारयेति २२ अहोबकीयंस्तनकालकूटंजिघांसयापा
ययदप्यसाध्वी ॥ लेभेगतिंधात्र्युचितांततोऽन्यंकंवादयालुंशरणंव्रजेम २३ मन्येसुरान्भागवतांस्त्र्यधीशेसंरंभमार्गाभिनिविष्टचित्तान् ॥ येसंयुगेऽचक्षत
तार्क्ष्यपुत्रस्यांसेसुनाभायुधमापतंतम् २४ वसुदेवस्यदेवक्यांजातोभोजेंद्रबंधने ॥ चिकीर्षुर्भगवानस्याःशर्मअज्जेनाभियाचितः २५ ततोनंदव्रजमितःपि
त्राकंसाद्विबिभ्यता ॥ एकादशसमास्तत्रगूढार्चिःसबलोऽवसत् २६ परीतोवत्सपैर्वत्सांश्चारयन्व्यचरद्विभुः ॥ यमुनोपवनेकूजद्द्विजसंकुलितांघ्रिपे २७ कौ
मारादर्शयंश्चेष्टाःप्रेक्षणीयाव्रजौकसाम् ॥ रुदन्निवहसन्मुग्धबालसिंहावलोकनः २८ सएवगोकुलंलक्ष्म्यानिकेतंसितगोवृषम् ॥ चारयन्ननुगान्गोपान्र
णद्वेणुररीरमत् २९ प्रयुक्तान्भोजराजेनमायिनःकामरूपिणः ॥ लीलयाव्यनुदत्तांस्तान्बालःक्रीडनकानिव ३० विपन्नान्विषपानेननिगृह्यभुजगाधिप
म् ॥ उत्थाप्यापाययद्गावस्तत्तोयंप्रकृतिस्थितम् ३१ अयाजयद्गोसवेनगोपराजंद्विजोत्तमैः ॥ वित्तस्यचोरुभारस्यचिकीर्षन्सद्व्ययंविभुः ३२ वर्षतींद्रे
व्रजःकोपाद्भग्नमानेतिविह्वले ॥ गोत्रलीलातपत्रेणत्रातोभद्रानुगृह्णता ३३

इयाचस्यावतारलीलाअनुक्रमिष्यन्नादौतदवतारमाह वसुदेवस्येत्यादिना वसुदेवस्यसकाशाद्देवक्यांजातःप्रयोजनमाह भोजेंद्रेति भोजेंद्रेणतयोःकारागृहेबंधनेसतितंकंसंहत्वाबंधनादुन्मुच्यतयोःशर्म
चिकीर्षुरितिहेतुगर्भं। निमित्तांतरंचाह अब्जजेनेति २५ ततोमथुरापुरात् गूढार्चिरप्रकाशितस्वमाहात्म्यः २६ कूजतोऽव्यक्तशब्दकुर्वतोद्विजाः पक्षिणस्तैःसंकुलिताअंघ्रिपावृक्षायस्मिन्तस्मिन्तथो
क्तेतस्मिन् २७ कौमाराइत्यत्र जीवभावश्चेष्टानांवैलक्षण्यप्रदर्शनार्थः बालसिंहस्यावलोकनमिवावलोकनंयस्यसतथोक्तः २८ लक्ष्म्यानिकेतंमंदिरं सितास्तंतूनांरज्ज्वानासिकायास्युताःप्रोताःगोवृषाः
ककुद्मंतोयस्मिन्तथोक्तं चारयंस्तृणानीतिशेषः २९ प्रयुक्तान्प्रहितान् मायिनः। माययावेषांतरधारिणस्तांस्तानितिजातिभेदायोक्तं क्रीडनकान्लीलासाधनानि ३० विपन्नान्मृतप्रायान् यमुनायाउ
त्थाप्यगावोगास्तस्यायमुनायास्तोयंप्रकृतिस्थितंविषमिश्रणात्प्राग्यथाशुद्धंतथास्थितम् ३१ गोसवेनगोयज्ञेनउरुभारस्यबहुसंख्याविशेषविशिष्टस्य सद्व्ययःसतोव्ययस्त्यागविशेषस्तम् ३२ भग्नमाने
नष्टाभिमानेअतएवातिविह्वले कर्तव्यमूढेगोत्रलीलातपत्रेणपर्वताख्यक्रीडाश्वेतच्छत्रेण भोभद्रकल्याणात्मन् ३३

१ अत्रत्यटीकास्थैकोनविंशतिश्लोकतात्पर्यमितिशेषः।

शरद्दतामुदितःशशीशरच्छशीतस्यकरैर्मृष्टमलंकृतंरजनीमुखंप्रदोषं कलपदंयथाभवतितथा मंडलंमंडयतीतिमंडलमंडनः ३४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांद्वितीयोऽध्यायः ॥ २ ॥ ततोवृंदावनात् आशादिगतिनृष्णयोरितिस्वपित्रोराकांक्षितंचिकीर्षयाकर्तुमिच्छया व्यसुंगतमायम् १ ब्रह्मवेदं पंचजनोदरात्पंचजनाख्यदैत्योदरात् सांदीपिनेरधीत्यसकृत्प्रोक्तंतेनेति शेषः २ भीष्मककन्ययेतितृतीयातादर्थ्ये भीष्मककन्यायारुक्मिण्याअर्थे सवर्णेनक्षत्रियत्वमात्रयोग्यतयासमाहूताः एषांक्षत्रियाणांश्रियोजिहीर्षया तेषांमूर्ध्निपदंदधदित्यनेनश्रीहरणप्रकारः मिषतांपश्यतां सुपर्णःसुपरानंदात्काकुत्स्थोवापिसंस्थितोरितिवचनात् सुष्टुपरमानंदरूपः सुपर्णइत्यनेनसोप्यक्लेशेनेतिदर्शितं गांधर्ववृत्त्याकन्यासंवादलक्षणयाइत्यनेनबहवोविवाहविधयोदर्शिताभवंति स्वभागमित्यनेनस्वयोग्यामितिदर्शयति ३ अविद्धनसोऽच्छिद्रनासिकान्ककुद्मतोवृषभान् वृषभाणामाटोपसमयसूचनायस्वयंवरइत्युक्तं किंच स्वयमक्षतःसन्स्वयंवरार्थमागतास्तान्क्षत्रियान्जघ्नइत्यन्वयः कन्यायाःस्वालाभेनभग्नमानानभिगृध्यतःकन्यामाकांक्षमाणानज्ञान्कृष्णमाप्तियोग्यामजानतः शस्त्रभृतइत्यनेनगृह्णंतेक्षत्रियाएवनवृषाइतिज्ञापते चशब्दःसमुच्चये ४ ग्राम्योविषयभोगासक्तइवप्रियायाः

शरच्छशिकरैर्मृष्टंमानयन्रजनीमुखम् ॥ गायन्कलपदंरेमेस्त्रीणांमंडलमंडनः ३४ ॥ इतिश्रीभा०म०तृतीयस्कंधेद्वितीयोऽध्यायः ॥२॥ उद्धवउवाच ॥ ततःसआगत्यपुरंस्वपित्रोश्चिकीर्षयाशांबलदेवसंयुतः ॥ निपात्यतुंगाद्रिपुयूथनाथंहतंव्यसुंव्यकर्षद्व्यसुमोजसोर्व्याम् १ सांदीपिनेःसकृत्प्रोक्तंब्रह्माधीत्यसविस्तरम् ॥ तस्मैप्रादाद्वरंपुत्रंमृतंपंचजनोदरात् २ समाहुताभीष्मककन्ययायेश्रियःसवर्णेनजिहीर्षयैषाम् ॥ गांधर्ववृत्त्यामिषतांस्वभागंजह्रेपदंमूर्ध्निदधत्सुपर्णः ३ ककुद्मतोविद्धनसोदमित्वास्वयंवरेनाग्नजितीमुवाह ॥ तान्भग्नमानानभिगृध्यतोऽज्ञान्जघ्नेऽक्षतःशस्त्रभृतश्चशस्त्रैः ४ प्रियंप्रभुर्ग्राम्यइवप्रियायाविधित्सुरार्छद्द्युतरुंयदर्थे ॥ वज्र्याद्रवत्तंसगणोरुषांधःस्वार्थंपुरातैर्यमयाचतानतः ५ सुतंमृधेखंवपुषाग्रसंतंदृष्ट्वासुनाभोन्मथितंधरित्र्याः ॥ आमंत्रितस्तत्तनयायशेषंदत्त्वातदंतःपुरमाविवेश ६ तत्राहृतास्तानरदेवकन्याःकुजेनदृष्ट्वाहरिमार्तबंधुम् ॥ उत्थायसद्योजगृहुःप्रहर्षव्रीडानुरागप्रहितावलोकैः ७ आसांमुहूर्तएकस्मिन्नानागारेषुयोषिताम् ॥ सविधिंजगृहेपाणिंपुरुरूपःस्वमायया ८ तास्वपत्यान्यजनयदात्मतुल्यानिसर्वतः ॥ एकैकस्यांदशदशप्रकृतेर्विबुभूषया ९

सत्यभामायाःप्रियमभीष्टंविधित्सुःकर्तुकामःप्रभुः । द्युतरुंस्वर्गवृक्षंपारिजातमाच्छिनत् अहार्षीत् रुषांधःसगणोमरुद्गणेनसहितः वज्रीइंद्रः । यदर्थेयस्यद्युतरोरर्थे । तंकृष्णमाद्रवत् शच्यावचनादितिशेषः स्वार्थंस्वप्रयोजनायपंकृष्णंतैःसहानतःप्रणतिविशिष्टोभूत्वा ५ धरित्र्याःसुतंनरकआमंत्रितस्तयेतिशेषः ६ तत्रांतःपुरे । कथंजगृहुरितितत्राह व्रीडेति प्रहर्षेणसहिताभ्यांव्रीडानुरागाभ्यांलज्जास्नेहाभ्यांप्रहितैःप्रेरितैरवलोकैर्गृहीतवत्यइत्यर्थः ग्रहणंचपतित्वेनेतिशेषः ७ भगवतापुनःकिंकृतमत्राह आसामिति विधिनाशास्त्रोक्तकर्मणासहवर्ततइति एकस्यनानाविधगृहेषुस्त्रीणांकरग्रहणंकथंघटतइत्यतउक्तंपुरुरूपइति योगिवत्स्वसामर्थ्येनगृहीतबहुरूपेणघटतइत्यर्थः ८ उत्तमैःसर्वतःसाम्यंकिंचित्साम्यमुदीरितमितिवचनात् सर्वतआत्मतुल्यत्वंकिंचित्साहश्यविवक्षयेतिनाहत्वं पुत्रत्वेनपुत्रत्वप्राप्तिसंभवाद्दशत्वसंख्याकिमभिप्रायेणेत्यतउक्तं प्रकृतेरिति जडप्रकृतेर्विबुभूषयाविविधभावेच्छयाबहुत्वसंख्याविशिष्टत्वेच्छया ९

१ नतुरुक्मिणीप्राप्तियोग्यतयेतिमात्रशब्दार्थः । २ प्रार्थितः ।

यदर्थमवतीर्णस्तत्प्रयोजनमाह कालेति कालोगर्गनिर्मितः तेजःप्रभावं अनेनमुचुकुंदादिकृतंतंवधमप्यात्मनैवकृतंज्ञापयतिइत्यतोऽजीघनदित्यपंलौकिक. १० एतदेवांकिंचिद्विदेकयति शंबरमिति शंबरविविदौप्रद्युम्नबलभद्राभ्यामघातयत्मुरादीन्स्वयमेवावधीदितिविवेकः ११ अथदंतवक्त्रवधानंतरं तेतवभ्रातृपुत्राणांकुरूणांपांडवानांचकुरुक्षेत्रेपत्यापततांयेषांनृपाणां १२ श्रीकृष्णदुर्योधनपातेन भीमेप्रसादातिशयमाह सकर्णेति सकृष्णः सुयोधनंभग्नोरुमुर्व्यांशयानंपश्यन्ननंद भीमायेतिशेषइत्यन्वयः अनुचरैर्दुःशासनादिभिःशृगालादिभिर्वासहवर्ततइतिसानुचरस्तं हतेनष्टेश्रीश्चायुश्चयस्यसतथातं १३ कलियुगेसज्जनप्रायुर्यावस्थानस्यदुष्टभारस्यैवानभीष्टत्वात्सोपिसंहार्यइतियादवबलसंहरणोपायसंचिंतनप्रकारमाह कियानिति मत्सन्निधानविशेषयुक्तत्वान्मदंशैर्द्रोणभीष्मार्जुनभीमशल्यैःक्षपितोऽष्टादशाक्षौहिणिकोभुवोपचोयंभारःसकियानल्पएव कुतःसुरासुरैर्दुर्विषहंयदूनांबलमास्तइति यस्मात्तस्मादित्यन्वयः १४ तन्नैषायदूनावधोपायइयानेतावानेव यदामाध्व्यावारुण्याःपानादुत्पन्नान्मदाद्भ्रष्टबुद्धीनांताम्रलोचनानांरक्तनेत्राणांरजोगुणोपरक्तज्ञानानांवायदूनांमिथोविवादोभवितातदासएववधोपायोभविष्यत्यतोन्योनास्ति तदर्थांकिंकर्तव्यमितिनाचिंतनीयमित्याह मयीति

**कालमागधशाल्वादीननीकैरुंधतःपुरम् ॥ अजीघनत्स्वयंदिव्यंस्वपुंसांतेजआदिशन् १० शंबरंविविदंबाणंमुरंबल्वलमेवच ॥ अन्यांश्चदंतवक्रादीनवधीत्कांश्चघातयन् ११ अथतेभ्रातृपुत्राणांपक्षयोःपतितान्नृपान् ॥ चचालभूःकुरुक्षेत्रंयेषामापततांबलैः १२ सकर्णदुःशासनसौबलानांकुमंत्रपाकेनहतश्रियायुषम् ॥ सुयोधनंसानुचरंशयानंभग्नोरुमुर्व्यांसननंदपश्यन् १३ कियान्भुवोयंक्षपितोरुभारोयद्द्रोणभीष्मार्जुनभीमशल्यैः ॥ अष्टादशाक्षौहिणिकोमदंशैरास्तेबलंदुर्विषहंयदूनाम् १४ मिथोयदैषांभविताविवादोमाध्व्यामदाताम्रविलोचनानाम् ॥ नैषांवधोपायइयानतोन्योमय्युद्यतेंतर्दधतेस्वयंस्म १५ एवंसंचिंत्यभगवान्स्वराज्येस्थाप्यधर्मजम् ॥ नंदयामाससुहृदःसाधूनांवर्त्मदर्शयन् १६ उत्तरायांधृतःपूरोर्वंशःसाध्वभिमन्युना ॥ सवैद्रौण्यस्त्रसंछिन्नःपुनर्भगवताधृतः १७ अयाजयद्धर्मसुतमश्वमेधैस्त्रिभिर्विभुः ॥ सोऽपिक्ष्मामनुजैरक्षन्रेमेकृष्णमनुव्रतः १८ भगवानपिविश्वात्मालोकवेदपथानुगः ॥ कामानसिषेवेद्वार्वत्यामसक्तःसांख्यमास्थितः १९ स्निग्धस्मितावलोकेनवाचापीयूषकल्पया ॥ चरित्रेणानवद्येनश्रीनिकेतेनचात्मनां २० इमंलोकममुंचैवरमयन्सुतरांयदून् ॥ रेमेक्षणदयादत्तक्षणस्त्रीक्षणसौहृदः २१**

मय्युद्यतेसतिस्वयंसर्वैतर्दधतेतिरोधानलक्षणंमरणंप्राप्नुवंतिस्मस्मृतमित्यर्थः १५ स्वाराज्येस्वर्गसमराज्ये १६ यःपूरोर्वंशोऽभिमन्युनासाधूत्तरायांधृतःसन्द्रौण्यस्त्रेणसंछिन्नःसंछादितःपुनर्भगवताधृतोरक्षितोभूदित्यन्वयः १७ १८ अपीत्यनेनलोकसंग्रहणार्थंगृहस्थधर्मानुचरणंनतुस्वार्थंसत्यसंकल्पत्वादितीममर्थंसूचयति विषयसेवयापितल्लेपोनास्तीत्यसक्तइति तत्रहेतुगर्भंविशेषणमाह सांख्यमिति केवलंभगवज्ज्ञानंसांख्यमित्यभिधीयतइतिवचनात् नसांख्यशास्त्रोक्तविधिःकिंतुस्वरूपज्ञानमेवगृह्यते तद्ब्रह्मावेदाहंब्रह्मास्मीतिश्रुतेः १९ श्रियोनिकेतेनावासेनात्मनादेहेन २० क्षणदयारात्र्यादत्तक्षणोदत्तावसरः अनेनक्षणदाशब्दार्थोदर्शितः स्त्रीषुक्षणकालंसौहृदंयस्यसस्त्रीक्षणसौहृदः । स्त्रीक्षणोरुद्रस्तस्यसौहृदंयस्मिन्सतथावा अनेनरुद्रगणचरणयोग्यसमयेस्त्रीभिःसहरमणंकथमितिचोद्यंपरिहृतम् २१

१ अघातयदित्यनुवर्तते

ह्यस्थधर्ममनुवर्तमानस्यहरेर्लोकशिक्षार्थंबाह्यविषयेषुवैराग्यप्रदर्शनमित्यभिप्रेत्याह तस्येति सर्वदाऽपिविरक्तःसन्मासपीतविरागवत् । कदाचित्कःकुतस्तस्यलोकशिक्षार्थमपबद्ध इत्याह ॥ याग विषयसाधनेषुविरागःसमजायतवैराग्यप्रभूदितिदर्शयामास २२ नित्यविरक्तस्यकदाचित्कविरक्तत्वनुपपत्तेर्लोकशिक्षार्थमेवदर्शितमित्येतत्स्पष्टयति दैवेति नित्यविरक्तेनापिभगवताविरागःप्रदर्शितः तेयस्मात्तस्मात्स्वयंदैवाधीनोयोगेनध्यानलक्षणोपास्त्यायोगेश्वरंकृष्णमनुव्रतःकःपुमान्दैवाधीनेषुकामेषुविषयेषुविश्रंभेत निस्स्वाइतिविश्वासंकुर्यात् नकोपीत्यर्थः अत्रदैवाधीनत्वहरेर्नित्यविरक्तत्वेन वैपयाणामागमापायित्वेननश्वरत्वेहेतुः २३ इत्थंभगवच्चरितमुक्त्वायदुकुलनाशनिमित्तमाह पुर्यामिति भगवन्मतकोविदाइत्यनेनमुनिशब्दार्थोदर्शितः २४ भविष्यद्यदुकुलनाशंवक्ष्यंस्तेषांप्रभा नयात्राणमाह ततइति एष्यंतुनिश्चितंयत्तदतीतत्वेनभण्यते । चक्रवत्परिवृत्तेर्वादुष्टानामोहनायवेतिवचनाद्ययुरित्यादिप्रयोगोयुज्यते सुखहेतुत्वान्मासैरिवसंवत्सरैः २५ बहुगुणाःसौशील्यादिस गुणोपेतागावोगाः २६ नकेवलंगाएवददुःकिंतुपरलोकेयद्यत्स्वात्मनःपुण्यफलत्वेनप्राप्यंतत्तद्द्रव्यजातंददुरित्याह हिरण्यमित्यादिना । हिनोतिद्युःखंराति सुखमितिहिरण्यं रजनंरागंजनयतीतिरजतं ।

तस्येत्थंरममाणस्यसंवत्सरगणान्बहून् ॥ गृहमेधेषुयोगेषुविरागःसमजायत २२ दैवाधीनेषुकामेषुदैवाधीनःस्वयंपुमान्॥ कोविश्रंभेतयोगेनयोगेश्वरमनुव्रतः २३ पुर्यांकदाचित्क्रीडद्भिर्यदुभोजकुमारकैः ॥ कोपितामुनयःशेपुर्भगवन्मतकोविदाः २४ ततःकतिपयैर्मासैर्वृष्णिभोजांधकादयः ॥ ययुःप्रभासंसंहृष्टारथैर्दैवविमोहिताः २५ तत्रस्नात्वापितृन्देवानृषींश्चैवतदंभसा ॥ तर्पयित्वाथविप्रेभ्योगावोबहुगुणाददुः २६ हिरण्यंरजतंशय्यांवासांस्यजिनकंबलान् ॥ हयानरथानिभान्कन्यांधरांवृत्तिकरीमपि २७ अन्नंचोरुरसंतेभ्योदत्त्वाभगवदर्पणम् ॥ गोविप्रार्थासवःशूराःप्रणेमुर्भुविमूर्धभिः २८ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविदुरोद्धवसंवादेतृतीयोध्यायः ॥ ३ ॥ उद्धवउवाच ॥ अथतेतदनुज्ञाताभुक्त्वापीत्वाचवारुणीम् ॥ तयाविभ्रंशितज्ञानादुरुक्तैर्मर्मपस्पृशुः १ तेषांमैरेयदोषेणविषमीकृतचेतसाम् ॥ निम्लोचतिरवावासीद्वेणूनामिवमर्दनम् २ भगवानात्ममायायागतिंतामवलोक्यसः ॥ सरस्वतीमुपस्पृश्यवृक्षमूलमुपाविशत् ३

अजिनंनयतीत्यजिनं । कंमुखंबलयतीतिकंबलः । हयत्यनेनगंतव्यमितिहयः । पुंसिसंज्ञायांघःप्रायेणेतिघः हयगताविविधातुः रथगताविदिरथतिचरति रतिस्थाण्यतीतिवा इष्टभा यंतीतिइभाः भादीप्ताविवितिधातुःकनंदीप्तिंपापयतीतिकन्या भ्रियतेनयेतिधरा २७ उरुरसंषड्रसोपेतं भगवदर्पणं ब्रह्मार्पणं गवार्थेविप्रार्थेअसवोजीवनंयेषांतेतथोक्ताः २८ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेपदरत्नावल्यांटीकायांतृतीयोध्यायः ॥ ३ ॥ अथतदनुज्ञातास्तैर्विप्रैर्भोजनायानुज्ञाताः तयावारुण्याविभ्रंशितंस्वःपरइतिज्ञानंयेषांतेतथोक्ताः पस्पृशुस्ताडितवंतः स्पृशउपतापे १ मैरेयदोषमैरेयाख्यमद्यपानदोषेण रवावादित्येनिम्लोचतिअस्तंगच्छतिसतिआसीत्भविष्यति विमर्दनंविनाशलक्षणःकलहोऽन्योन्यसंघर्षलक्षणः २ तदाभगवताकिमकारीतितत्राह भगवानिति आत्ममायायाआत्मसामर्थ्यस्यगतिमवलोक्यपूर्वमेवेतिशेषः तच्चयोग्यतयातत्तद्वस्तुप्राकट्येनयावर्ततेतां ज्ञात्वाकतिपयैर्वर्षैःपूर्वमेवजनार्दनः । मौसलंज्ञानसंततत्याउद्धवंबदरीनयदिति नयदनैषीत् ३

१ स्वर्गारोहणापेक्षयाषड्विंशत्यावत्सरेभ्यःपूर्वमित्यर्थः

संक्षिप्योक्तंविवेचयति अहंचेति संजिहीर्षुणासंहर्तुकामेन हेत्यनेन तज्ज्ञानंतत्रविस्तीर्यपुनर्द्वारवतीमगादितिवचनात् स्वर्गारोहणात्पूर्वमपिभगवदाज्ञयाबदरीगमनंस्पष्टयति ४ हेअरिंदमविदुर
अथापिपूर्वंदिष्टोऽहंपुनःस्वर्गारोहणकालेभर्तुःपृष्ठतोऽन्वगममनुगमिष्यइत्यन्वयःचार्वितचर्वणवत् अनुगमनंनिष्प्रयोजननेत्याह तदभिप्रेतमिति तस्यकृष्णस्याभिप्रेतंज्ञानोपदेशलक्षणहार्दंजानन्
प्रयोजनांतरंचास्तीतिध्वनयति पादेति तदुक्तं पूर्वमेवोपदिष्टोपिहरिणाज्ञानमुद्धवः । स्वर्गारोहणकालेतुपुनःपप्रच्छकेशवमित्यादि ५ ननुअनुगमनवचनेनमौसलावस्थायामनवस्थानंप्रतीयतेतथाच
तद्दर्शनाभावेनतज्ज्ञानोपदेशासंभवःस्यादित्युक्तमयुक्तमितितत्राह अद्राक्षमिति विचिन्वन्मार्गमाण. । दयितंप्रेष्ठं पतिमात्मज्ञानदानेनपातारं सरस्वत्यांतत्तीरे । कृतकेतंकृतनिवासंकेतनम
न्याधारम् ६ श्यामश्चायमवदातश्चनिर्मलश्चेतिश्यामावदातस्तं श्यामायांरात्र्यामप्यवदातमरुणंसूर्यवत्प्रकाशमानमित्यर्थः । अवदातःसितेरुणइत्यभिधानाद्योग्यताभेदात्सितोरुणश्चाधिकारिणा
भेदात्प्रतीयतइतिद्योतनायतथोक्तमितिवा प्रशांतेस्तिमितेअरुणेलोचनेयस्यसतथातं कृमिकोशेनरचितंकौशेयंतेनाम्बरेणचविदितंविशेषितं कौशेयंकृमिकोशोत्थमित्यभिधानं छंदोभंगभयात्प्रशि
तं अण्प्रत्ययाद्वा ७ अपाश्रितार्भकावस्थमवतारदशायांयाऽवस्थातामाश्रितं अकृशंपूर्णं त्यक्तपिप्पलं त्यक्तकर्मफलं योगाद्वोत्सृष्टाश्वत्थफलम् ८ तस्मिन्नवसरेद्वैपायनस्यवेदव्यासस्यसुहृत्सखाच

अहंचोक्तोभगवताप्रपन्नार्तिहरेणह ॥ बदरींत्वंप्रयाहीतिस्वकुलंसंजिहीर्षुणा ४ अथापितदभिप्रेतंजानन्नहमरिंदम ॥ पृष्ठतोऽन्वगमंभर्तुःपादविश्ले
षणाक्षमः ५ अद्राक्षमेकमासीनंविचिन्वन्दयितंपतिम् ॥ श्रीनिकेतंसरस्वत्यांकृतकेतमकेतनम् ६ श्यामावदातंविरजंप्रशांतारुणलोचनम् ॥ दोर्भि
श्चतुर्भिर्विदितंपीतकौशांबरेणच ७ वामऊरावधिश्रित्यदक्षिणांघ्रिसरोरुहम् ॥ अपाश्रितार्भकावस्थमकृशंत्यक्तपिप्पलम् ८ तस्मिन्महाभागवतो
द्वैपायनसुहृत्सखा ॥ लोकाननुचरन्सिद्धआससादयदृच्छया ९ तस्यानुरक्तस्यमुनेर्मुकुंदःप्रमोदभारानतकंधरस्य ॥ आशृण्वतोमामनुरागहासस्मी
क्षयाविश्रमयन्नुवाच १० श्रीभगवानुवाच ॥ वेदाहमंतर्मनसीप्सितंतेददामियत्तद्दुरवापमन्यैः ॥ सत्रेपुराविश्वसृजांमुनीनांमांसिद्धिकामेनवसोत्वयेष्टः
११ सएषसाधोचरमोभवानामासादितस्तेमदनुग्रहोऽयम् ॥ यन्मांनृलोकंरहउत्सृजंतंदिष्ट्यादृदृश्वान्विशदानुवृत्त्या १२ पुरामयाप्रोक्तमजायनाभ्ये
पद्मेनिषण्णायममादिसर्गे ॥ ज्ञानंपरंमन्महिमावभासंयत्सूरयोभागवतंवदंति १३

भूम्यादिलोकाननुचरन्पर्यटन्सिद्धोज्ञानीमैत्रेयोयदृच्छयाभगवदिच्छयाससाद हरिमितिशेषः ९ हरेरनुग्रहातिशयसूचनायमुनेराशृण्वतःसतइत्युक्तं सस्मितानुरागहासाभ्यांस्नेहयुक्ताभ्यांसमताभ्यां स
हितयासमीचीनयाकटाक्षेक्षयाविश्रमयन्संसारक्लेशंपरिहृत्यानंदंजनयन् समभेदंसमीचीनइतियादवः १० किमित्याहहरिरितितत्राह वेदेति हेवसोमद्भक्तशिखामणे तेतवमनस्यंतर्हृदियदीप्सितंतद
हंवेदततःकिंतत्राह ददामीति तेतुभ्यंत्वदभीष्टंददामिदास्यामीतीच्छामि अन्यैःप्राप्यंचेत्किमनेनेत्यतउक्तं दुरवापमिति अन्यैर्मद्भक्तिरहितैः । त्वन्मुखारविंदादिःसूतंश्रोतुमहतापुण्येनभाव्यं अनु
ष्ठितपुण्यकर्मणामेतत्कथंस्यादितितत्राह सत्रइति पुरापूर्वजन्मनिनित्यंभगवदुपासनशीलत्वान्मुनिशब्दवाच्यानांदेवानांसत्रेयज्ञविशेषेमत्सिद्धिकामेनमत्तोज्ञानादिसिद्धिकामेनत्वयेष्टःपूजितः ११ कृतार्थं
चाह सएषइति हेसाधोउद्धवतेत्वयाऽऽसादितोयोभवःशरीरसंयोगलक्षणःसएषभवानांजन्मनांचरमोभवः अयंमदनुग्रहः ईदृशोममचित्तद्रवीकरणलक्षणःप्रसादविशेषः कुतोवगतमेतदितितत्राह यन्मा
मिति भवान्रहएकांतेनृलोकमुत्सृजंतंमांविशदानुवृत्त्यानिर्मलसेवयादृदृश्वान्निर्गतपदतइत्यन्वयः दिष्ट्येत्यनयैवभद्रमित्येतस्मिन्नर्थेवर्तते १२ वक्तव्यार्थेश्रद्धातिशयजननार्थंज्ञानस्तौति पुरेति [illegible]
मुपदेक्ष्यामीत्यध्याहृत्यान्वयःकर्तव्यः मयापुरादिसृष्टौअमनाभ्येनाभेरुत्पन्नेपद्मेनिषण्णायाजायप्रोक्तंयज्ज्ञानंयत्परमुत्तमंमन्महिम्नोविभासःप्रकाशोयस्मात्तत्सूरयोभागवतंवदंति [illegible]

इतिश्रव्येनज्ञानस्यविशेषणात्तविशिष्टत्वंसूचयति । अमत्रंभाजनंपात्रमित्यभिधानं । स्नेहोत्थरोमास्वत्पालकुत्पवरोमाचः [illegible]
भवतामपेक्ष्येतिज्ञापते सुलोहंकिलविलज्ञापेत्यादौदृष्टत्वात् १४ भगवदन्तरंगज्ञानसाधनपादारविंदभक्तिमंतरेणनान्यदाशंकाकरत्वाह कोन्विति [illegible]
नप्रवृणोमि उत्तरत्रकथमितिनजानइत्यपव्याख्यानंप्रयुक्तं अध्याहारस्याप्रामाणिकत्वात् उत्सुकत्वस्यसदातनत्वप्रतीतेश्च १५ ज्ञानान्तरंगगुणोपसंहारलक्षणोपात्त [illegible]
त्याशंक्यहरेर्देवदत्तकर्मवत्कर्मप्रतीतेर्गुणानादुरवबोधत्वंनिमित्तमित्याह कर्माणीति अनीहत्वादिमतस्तत्कर्तादिदर्शनंलोकादिदृष्ट [illegible]
तस्यभवोजन्म नित्यमुक्तस्यबंधोवा अदुर्गस्यनित्यनिकटवर्तिनोद्वारकादिदुर्गाश्रयः अतएवजरासंधादिभयात्पलायनंगोपतामिदिशेषः कलकामधेनगवि [illegible]
स्वात्मनिरतिःरमणंयस्यसतथातस्यप्रमदानामयुताश्रयइतियत्तत्सर्वविरुद्धमदइति अपिनालोकविडंबनमिदंनतुतत्त्वमितिसूचयति १६ इदमपिज्ञानदुर्बलानांबुद्धिव्यामोहकरमित्याह मंत्रेष्विति [illegible]

इत्यादरोक्तःपरमस्यपुंसःप्रतीक्षणानुग्रहभाजनोऽहम् ॥ स्नेहोत्थरोमास्खलिताक्षरस्तंमुंचञ्शुचःप्रांजलिराबभाषे १४ कोन्वीशतेपादसरोजभाजांसुदु
र्लभोऽर्थेषुचतुर्ष्वपीह ॥ तथापिनाहंप्रवृणोमिभूमन्भवत्पदांभोजनिषेवणोत्सुकः १५ कर्माण्यनीहस्यभवोऽभवस्यतेदुर्गाश्रयोथारिभयात्पलायनम् ॥
कालात्मनोयत्प्रमदायुताश्रयःस्वात्मन्रतेःखिद्यतिधीर्विदामपि १६ मंत्रेषुमांवाउपहूययत्त्वमकुंठिताखंडसदात्मबोधः ॥ पृच्छेःप्रभोमुग्धइवाप्रमत्तस्त
न्नोमनोमोहयतीवदेव १७ ज्ञानंपरंस्वात्मरहःप्रकाशंप्रोवाचकस्मैभगवान्समग्रम् ॥ अपिक्षमंनोग्रहणायभर्तर्वदांजसायद्वृजिनंतरेम १८ इत्यावेदितहा
र्दायमह्यंसभगवान्परः ॥ आदिदेशारविंदाक्षआत्मनःपरमांस्थितिम् १९ सएवमाराधितपादतीर्थादधीततत्त्वात्मविबोधमार्गः ॥ प्रणम्यपादौपरिवृत्य
देवमिहागतोऽहंविरहातुरात्मा २० सोहंत्वद्दर्शनाह्लादवियोगार्तियुतःप्रभो ॥ गमिष्येदयितंतस्यबदर्याश्रममंडलम् २१ यत्रनारायणोदेवोनरश्चभग
वानृषिः ॥ मृदुतीव्रंतपोदीर्घंतेपातेलोकभावनौ २२

दक्रूरादिकंआह्वयति अकुंठितोऽविमिश्रितः अखंडःपूर्णःसन्निर्दोषः आत्मबोधःस्वरूपज्ञानंयस्यसतथा १७ ज्ञानाख्याव्याकृताकाशस्तत्त्वयोग्यतामेवंजानन्नात्मयोग्यमुपादिशदित्याह [illegible]
स्याद्विज्ञापयामीत्याह ज्ञानमिति स्वात्मरहःप्रकाशोयस्मात्तत्तथातत् कस्मैब्रह्मणेनोस्माकंतत्समग्रमपिग्रहणायक्षमपर्याप्तंनोऽक्षमं योग्यताभेदाच्चाहंकीदृशमुपदिशामीतितत्राह वेदेति [illegible]
धिकारिणोयोग्यंवेद वयंचयथेनज्ञानेनांजसावृजिनंसंसारदुःखंतरेमतदुपदिशेत्यन्वयः अनेनब्रह्माद्युत्तमाधिकार्युपदिष्टज्ञानैकदेशंसंसारदुःखनिर्मूलनसमर्थंयोग्यमुपदिशेत्युक्तंभवति १८ एतदेवोपादेयं [illegible]
रिणानान्यदितिविवक्ति इतीति हार्दंहृद्गतं परमांस्थितिं ब्रह्मादिजीवराशेरुत्कृष्टतामन्येषामपकृष्टतामन्योन्यंतारतम्यंच १९ एवमित्यनेनदधीतेत्यनेनान्वेतव्यं आराधितंपादतीर्थपादोदकं [illegible]
त्श्रीकृष्णादेवमुक्तप्रकारेणाधीतोधिगतस्तत्त्वात्मनःअनारोपिताद्वितीयज्ञानानंदात्मनोहरेःविबोधमार्गोविशिष्टज्ञानमार्गोयेनसतथा परिवृत्यप्रदक्षिणीकृत्य विरहेणातुर [illegible]
इतःकुत्रयास्यसीतितत्राह सोहमिति त्वद्दर्शनजाताह्लादेनकृष्णवियोगोत्पन्नार्त्याचयुतः बदर्याश्रममंडलंबदरिकाश्रमपरिसरवर्तिकलापग्रामम् २१ कृष्णप्रियत्वेनिमित्तं [illegible]
त्वेनावतीर्णःसाक्षान्नारायणांशोनारायणनामा शेषांशोनरोभगवांश्च मृदुलोकसुखकरं [illegible] २२

परमात्मनोजीवात्मनश्चस्वातंत्र्यपारतंत्र्यादिविशेषज्ञानेन वधंभाविष्यतंम् २३ नन्वत्रविदुरेणयदूनामैष्यद्धवश्रवणेनोत्पन्नशोकशमनप्रयत्नएवकृतउतान्योपिप्रसंगइत्यत्राह सतमिति कृष्णपारेग्रहे कृष्णपरिवारजने विश्रंभादयमुद्धवोमदभीष्टंरक्ष्यतीतिविश्वासात् २४ इदमित्युक्तंविशिनष्टि ज्ञानमिति अत्रहेतुमाह यदिति हिशब्दोवधारणार्थः हिहेतावधारणइतियादवः स्वभृत्याःस्वदासास्ते षामर्थंप्रयोजनकुर्वतःस्वभृत्यार्थकृतश्चरंति २५ नन्वत्रोद्धवेनश्रुत्वातूष्णींगतमुतकिमप्यभिहितंतत्राह नन्विति ननुशब्दोहेत्वर्थः तत्त्वसराद्धः तत्त्वज्ञानसिद्धः कौषारवोमैत्रेयः इदगुणनामापिवैशंपायन वल्लोकेप्रसिद्धत्वादुच्यते अंतिकेमसमीपेस्थितस्तेतवभगवताऽऽदिष्टः । तत्त्वज्ञानोपदेशायेतिशेषः जिहासताहातुकामेन तस्मात्त्वमयापृथग्वक्तव्यमितिशेषः २६ सूतःशौनकायेमाकथांकथयति इती ति गुणकथाख्ययासुधयाहृतोगतउरुस्तापोयस्यसतथा हृतगताविविधातुः यमस्वसुः यमुनायाःयस्याःपूर्वसंध्यायांविदुरदर्शनंतांनिशासमुषितःसुखमुषितऔपगविःउपगोरपत्यमुद्धवस्ततोयमुनायाः २७ परीक्षिद्धदरींत्वंप्रयाहीत्यादिश्रुतकथनत्वेनज्ञातोद्धवावशेषोविशेषबुभुत्सयापृच्छति निधनमितितुशब्दःएवार्थःतेषुवृष्ण्यादिषुनिधनंदेहत्यागलक्षणंनाशमुपगतेषुसत्सुसउद्धवएवकथमवशिष्टइत्य न्वयः अयोद्धमुख्यत्वादुवरितइतितत्राह अधिरथेति अधिरथानांयूथंपांतीतिअधिरथयूथपास्तेषांयूथंपांतीतिअधिरथयूथपयूथपास्तेषुमुख्योमुख्यतोयोद्धा हरेरवशिष्टत्वाच्चदपेक्षयेतितत्राहयद्धरिरिति

श्रीशुकउवाच ॥ इत्युद्धवादुपाकर्ण्यसुहृदांदुःसहंवधम् ॥ ज्ञानेनाशमयत्क्षत्ताशोकमुत्पतितंबुधः २३ सतंमहाभागवतंव्रजंतंकौरवर्षभः ॥ विश्रंभादभ्यधत्तेदंमुख्यंकृष्णपरिग्रहे २४ ज्ञानंपरंस्वात्मरहःप्रकाशंयदाहयोगेश्वरईश्वरस्ते ॥ वक्तुंभवान्नोर्हतियद्धिविष्णोर्भृत्याःस्वभृत्यार्थकृतश्चरंति २५ उद्धवउवाच ॥ ननुतेतत्त्वसंराद्धऋषिःकौषारवोंतिके ॥ साक्षाद्भगवतादिष्टोमर्त्यलोकंजिहासता २६ सूतउवाच ॥ इतिसहविदुरेणविश्वमूर्तेर्गुणकथयासुधयाप्लुतोरुतापः ॥ क्षणमिवपुलिनेयमस्वसुस्तांसमुषितऔपगविर्निशांततोगात् २७ राजोवाच ॥ निधनमुपगतेषुवृष्णिभोजेष्वधिरथयूथपयूथपेषुमुख्यः ॥ सतुकथमवशिष्टउद्धवोयद्धरिरपितत्यजआकृतिंत्र्यधीशः २८ श्रीशुकउवाच ॥ ब्रह्मशापापदेशेनकालेनामोघवांछितः ॥ संहृत्यस्वकुलंनूनंत्यक्ष्यन्देहमचिंतयत् २९ अस्माल्लोकादुपरतेमयिज्ञानंमदाश्रयम् ॥ अर्हत्युद्धवएवाद्धासंप्रत्यात्मवतांपरः ३० नोद्धवोण्वपिमन्न्यूनोयद्गुणैर्नार्जितःप्रभुः ॥ अतोमद्वयुनंलोकंग्राहयन्निहतिष्ठतु ३१

हरिरप्याकृतिंपृथिवींतत्यजेतत्याजेत्यन्वयः इतिपदतस्तदपेक्षापिदूरोत्सारिता त्रिलोकेशत्वमिंद्रस्याप्यस्तीति । त्र्यधीशइति अनेनभूलोकात्स्वर्गलोकंगतइत्यर्थःसंपद्यते आकृतिशब्दस्यपृथिव्य भिधेयत्वेसर्वमुपपद्यते तत्कथमितीयमाशंका शरीरमाकृतिर्देहःकुःपृथ्वीचमहीतथेत्यनेनपरिहृता अस्त्वाकृतेःपृथिवीपर्यायत्वं तथाप्यत्रतच्छब्देनशरीरमेवोच्यतइतिअंगीकर्तव्यं अनंतरमपिनिश्चेतनत्वेन सदाकारदर्शनात् अतोयुक्तिर्वक्तव्येतिचेन्न नित्यानंदस्वरूपत्वनदेहत्यागायोगात् अतोदेहत्यागोनामपृथिवीलोकत्यागएव तेनतदाकारदर्शनंदुष्टजनमोहनायकृतं तदुक्तं पृथिवीलोकसंत्यागोदहत्यागो हरेःस्मृतः । नित्यानंदस्वरूपत्वादन्योनैवोपलक्ष्यते । दर्शयन्जनमोहायसदर्शीतत्तदाकृतिं । नटवद्भगवान्विष्णुःपरज्ञानाकृतिःसदेति राजन्परस्यतनुभृज्जननाप्ययेहांमायाविडंबनमवेहियथा नटस्येत्यत्राप्युक्तं २८ परिहारंवक्ष्यन्नृपंशुकोवक्ति ब्रह्मेति ब्रह्मशापापदेशेनविप्रशापाभिधानेनकालेनमृत्युना देहंपृथिवीं यस्यपृथिवीशरीरमितिश्रुतिः २९ परिहरति अस्मादिति अस्मात्पृथि वीलोकात् । उपरतेस्वर्लोकंगतेसतिअर्हति उपदेष्टुमितिशेषः । आत्मवतांब्रह्मज्ञानिनांमध्येपरः ३० एतदेवनिर्धारयति नोवि प्रभुरहंयद्गुणैर्यस्यभक्त्यादिगुणैर्नार्जितोवशीकृतः सउद्धवोण्वपि

किंचिदपिमत्तःपूनोमत्तोहीनोनभवति किंतुममसमएव उत्तमैरधिकत्वंवासाम्यंवापिजयोपिवा । उच्यतेतपितुनीचानांमोहार्थंवाप्युपेक्षयेत्यादेर्दुष्टजनमोहार्थं तत्कालेस्वज्ञानोपदेष्टःपुरुषाधिक्यज्ञापना र्थंवा श्रीकृष्णेनस्वस्वाम्यमुद्धवस्योक्तं नतुतत्त्वार्थमितिज्ञातव्यं यतोमज्ज्ञानोपदेष्टृपुरुषाधिकोयमतःपुनर्मद्वत्लोकंजनंज्ञानादिकंग्राहयन्निहतिष्ठतु इत्यर्चितपादित्यन्वयः एतेनकारणेनाद्धवोविशिष्टइतिभ्र मपरिहारः ३१ उद्धवेनाप्येतदाज्ञाकृतेत्याह एवमिति शब्दोवेदोयोनिर्ज्ञप्तिकारणंयस्यसतथा तेनईजेपूजयामास ३२ औद्धवींसमाप्यवैदुरींकथामाह विदुरोपीत्यादिना ३३ देहन्यासंपृथिवीलो कत्यागं पशूनामज्ञानाम् ३४ आत्मानंस्वमनसेक्षितंस्मृतम् ३५ द्युसरितंगंगां मित्रासुतोमैत्रेयः ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांचतुर्थोध्यायः ॥ ४ ॥ अत्रगंगाद्वारेमैत्रेयंप्राप्यविदुरस्यप्रश्नप्रकारंकथयति द्वारीति क्षत्ताद्युनद्याद्वारिगंगाद्वारेआसीनमगाधबोधमनवगाह्यज्ञानं विदुरस्यसौशील्यादिगुणैरतितृप्तंमैत्रेयमभिसृत्यगुरूपसत्तिविधिनाप्राप्यपप्रच्छे त्यन्वयः अच्युतभावेनभगवद्भक्त्याशुद्धः । अच्युतभावतृप्तइतिपाठे अच्युतलीलामृतपानेनशरीरयात्रावानित्यर्थः । भावोलीलाक्रियाचेष्टेत्यभिधानम् । कुरूणामृषभइत्यनेनकुलीनत्वेनज्ञानग्र

एवंत्रिलोकगुरुणासंदिष्टःशब्दयोनिना ॥ बदर्याश्रममासाद्यहरिमीजेसमाधिना ३२ विदुरोप्युद्धवाच्छ्रुत्वाकृष्णस्यपरमात्मनः ॥ क्रीडयोपात्तदेहस्य कर्माणिश्लाघितानिच ३३ देहन्यासंचतस्यैवंधीराणांधैर्यवर्धनम् ॥ अन्येषांदुष्करतरंपशूनांविक्लवात्मनाम् ३४ आत्मानंचकुरुश्रेष्ठकृष्णेनमनसेक्षित म् ॥ ध्यायन्गतेभागवतेरुरोदप्रेमविह्वलः ३५ कालिंद्याःकतिभिःसिद्धअहोभिर्भरतर्षभ ॥ प्रापद्यतद्युसरितंयत्रमित्रासुतोमुनिः ॥ ३६ ॥ इतिश्रीभा गवतेमहापुराणेतृतीयस्कंधेचतुर्थोध्यायः ॥ ४ ॥ श्रीशुकउवाच ॥ द्वारिद्युनद्याऋषभःकुरूणांमैत्रेयमासीनमगाधबोधम् ॥ क्षत्ताभिसृत्याच्युतभावशु द्धःपप्रच्छसौशील्यगुणाभितृप्तम् १ विदुरउवाच ॥ सुखायकर्माणिकरोतिलोकोनतैःसुखंनान्यदुपारमंवा ॥ विंदेतभूयस्ततएवदुःखंयदत्रयुक्तंभगवान्व देन्नः २ जनस्यकृष्णाद्विमुखस्यदैवादधर्मशीलस्यसुदुःखितस्य ॥ अनुग्रहायेहचरंतिनूनंभूतानिभव्यानिजनार्दनस्य ३ तत्साधुवर्यादिशशर्मवर्त्मसंरा धितोभगवान्येनपुंसाम् ॥ हृदिस्थितोयच्छतिभक्तिपूतेज्ञानंस्वसत्ताधिगमंपुराणम् ४

हणयोग्यत्वंसूचयति १ ननुपृच्छतेर्द्विकर्मकत्वेनभाव्यत्वादत्रतदप्रतीतेर्निरर्थकोयंप्रश्नइतितत्राह सुखायेति लोकोजनःसुखायसुखप्राप्तयेयागादिकर्माणिकरोतितैःकर्मभिःसुखमन्यस्यदुःखस्योपर मंविनाशंवानविंदेत किंचातोबहुतराअनर्थप्राप्तिरित्यादित्याह भूयइति ततःकर्मभ्योभूयोदुःखमेवाप्नोति तदस्तुतत्किमत्राह यदत्रेति अत्रसुखप्राप्तयेदुःखनिवृत्तयेचयद्युक्तमविप्रतिपन्नत्वेनयोग्यंत त्किंनोवदेदित्यन्वयः अनेनसुखप्राप्तिंदुःखनिवृत्तिंचपप्रच्छेत्युक्तंभवति २ नन्वत्रसुखप्राप्तिदुःखनिवृत्त्युपायप्रश्नएवक्रियतेनभगवत्तत्त्वविषयइतितत्राह जनस्येति स्वतोज्ञानाभावात् बोधकपुरुषालाभा त्कृष्णाद्विमुखस्येत्याह नत्वयोग्यत्वादन्यथातस्यानुग्रहाय जनार्दनस्यभूतानिचरंतीत्युक्तिर्विरुद्धास्यात् भव्यानिमंगलानि एवंविधानिजनार्दनस्यभूतानिज्ञानोपदेशलक्षणप्रसादकार णायेहकर्मभुविदेहधारणंकृत्वावर्ततइतिभावः ३ फलितमाह तदिति यत्रोलोकानुग्रहायभवज्जीवनंतत्तस्मात्साधुवर्य शर्मवर्त्म सुखप्राप्तिमार्गमादिशेत्यन्वयः येनशर्मवर्त्मनास्वसत्ताधिग मंस्वव्याप्तिज्ञापकंपुराणंसंप्रदायागतम् ४

मुखस्यत्यांपिभगवत्स्रष्टृत्वादिगुणकर्मकथनश्रवणादिकमेव नातोन्यदित्याशयवान्तत्स्रष्टृत्वादिप्रकारंपृच्छति करोतीति देवदत्तव्यावृत्तयेआत्मतंत्रइति स्वातंत्र्यंचकतिपयवस्तुष्वेवनसर्वत्रेत्यतउक्तंभग वांश्चपधीशइति तानिकर्माणिदुष्टनिग्रहादीनिवर्णयेतिप्रत्येकमन्वेतव्यं किंचाग्रेआदिकालेयथाइदंजगत्ससर्जतत्प्रकारमितिसर्वत्रयोज्यं ततसेतौसंस्थाप्यन्यस्ययथाजगतोवृत्तिंजीविकांविधत्ते तवेयमिति अस्तोवक्ति ५ पुनःप्रलयेस्वेनिजोदराकाशेगुहायामिदंनिवेश्यनिवृत्तजगत्स्रष्टृत्वादिवृत्तिःसहरिर्यथाशेते एतज्जगत्स्रष्ट्वातदनुप्रविष्टोहरिर्यथाबहुधासीत् अनायासेनबहुरूपंगृह्णातीतियोगेश्वराधी श्वरइत्युक्तम् ६ जगत्सर्जनादिकर्मकथनश्रवणादेरवतारभेदैःक्रियमाणकर्मकथनादौसम्यक्मनोनिर्विशतीत्यतस्तानिकर्माणिअवश्यंवक्तव्यानीत्याशयेनपुनरुक्तंकरोति क्रीडन्निति द्विजगोसुराणां क्षेमायेतिचतुर्थ्यांतदेवप्रयोजनमित्यवधारयति भवताश्रुतपूर्वाणिहरेःकर्माणिपुनःप्रश्नस्यकोर्थइत्याशंक्यसत्यांकिंत्वलंबुद्ध्यभावाद्विशेषश्रवणेच्छार्थइत्याह मनोनेति चरितश्रवणपानंकुर्वतामित्य र्थः ७ ननुचतुर्मुखेनलोकादयःकल्प्यते सूर्याचंद्रमसौधातायथापूर्वमकल्पयदित्यादिश्रुतेः अतःकथंहरेःसकाशात्लोकादिसर्जनादिकंतत्कथनीयमितिप्रश्नइत्याह यैरिति महदादितत्त्वभेदैः भे दोविशेषोदलनमित्यभिधानं भूरादिलोकान्अलोकान्पृथिव्यादिबाह्यावरणविशेषान् तत्त्वभेदैरित्युक्त्याप्रथमतोब्रह्मांडनिर्माणतदनंतरंलोकादिकल्पनमितिग्राह्यं तथावक्ष्यमाणत्वात् तेनयत्रब्रह्मांडेऽ सल्लोकेषुसर्वसत्त्वानांसर्वप्राणिनांनिकायस्यदेवमनुष्यादिभेदोधिकृतः । तत्तत्पदाधिकारयोग्य तयाक्लृप्तःप्रतीतःप्रत्यक्षानुमानाभ्यामवगतःकथमित्येतदपिवर्णयेति ८ नारायणोयेनवाप्रजाना

करोतिकर्माणिकृतावतारोयान्यात्मतंत्रोभगवांस्त्र्यधीशः ॥ यथाससर्जाग्रइदंनिरीहःसंस्थाप्यवृत्तिंजगतोविधत्ते ५ यथापुनःस्वेखइदंनिवेश्यशेतेगुहा यांसनिवृत्तवृत्तिः ॥ योगेश्वराधीश्वरएकएतदनुप्रविष्टोबहुधायथासीत् ६ क्रीडन्विधत्तेद्विजगोसुराणांक्षेमायकर्माण्यवतारभेदैः ॥ मनोनतृप्यत्य पिशृण्वतांनःसुश्लोकमौलेश्चरितामृतानि ७ यैस्तत्त्वभेदैरधिलोकनाथोलोकानलोकान्सहलोकपालान् ॥ अचीक्लृपद्यत्रहिसर्वसत्त्वनिकायभेदोऽधिकृतः प्रतीतः ८ येनप्रजानामुतआत्मकर्मरूपाभिधानेनभिदांव्यधत्त ॥ नारायणोविश्वसृगात्मयोनिरेतच्चनोवर्णयविप्रवर्य ९ परावरेषांभगवन्व्रतानिश्रुतानि मेव्यासमुखादभीक्ष्णम् नतृप्नुमःकर्णसुखावहानांतेषामृतेकृष्णकथामृतौघात् १०

मात्मनादेहेनस्वभावेनवाकर्मणाचेष्टालक्षणेनादृष्टेनवा रूपेणशुक्लनीलाद्याकारविशेषेणाभिधानेनघटादिनाम्नाभिदाव्यावृत्तिमुतापिव्यधत्तएतदप्यस्माकंवर्णयेत्यन्वयः सर्वसत्त्वनिकायेतिसामान्येनो क्तस्यविशेषोयं नारायणोदेवदत्तइवेत्यतउक्तंविश्वसृगिति स्वयमन्येनसृष्टःकथंविश्वसृक्स्यादित्यतउक्तमात्मयोनिरितिआत्मास्वयमेवयोनिःकारणंयस्यसतथा । स्रष्टाधातेति चतुर्मुखस्यस्रष्टृत्वप्र सिद्धेःकथमस्यविश्वसृक्त्वमित्यतोवेत्युक्तमात्मयोनिरिति आत्मनोविरिंचस्ययोनिरित्यर्थः ९ भगवज्ज्ञानोपयोगित्वेनापादनीयत्वाद्भवत्वेवंमनुष्यादिभेदज्ञानेनकिंप्रयोजनमित्याशंक्यतज्ज्ञानस्यभ गवज्ज्ञानोपयोगित्वेन युक्तमापाद्यत्वमित्याह परावरेषामिति परावरेषांब्रह्मादिदेवमनुष्याणां कृतानिमेमयाव्यासमुखादभीक्ष्णंश्रुतानि ततःकिंतत्राह नेति श्रुतानांतेषांब्रह्मादिचरित्राणामृतेऽ वगमेतात्पर्यज्ञानेसति ब्रह्मादिमहिम्नामपिभगवन्महिमावलंबित्वात्कृष्णकथामृतौघएवासौइतियतोऽतस्तेषामागतानांकृष्णस्यचकथामृतौघात्श्रुतात्नतृप्नुमः तात्पर्यज्ञानेसतिकृष्णकथामृतौघत्वंकु तइतितत्राह कर्णेति कृष्णकथामृतौघस्यैवकर्णसुखावहत्वंनान्यस्य तस्यकर्णकर्कशत्वमित्यर्थः ऋगतावितिधातोर्निष्ठांतमृतामितिरूप नतुऋतइत्यव्ययं तदंगीकारेतेभ्योनतृप्नुमइतिप्रयोगःस्यात् नतुतेषामितिग्रंथांतरेभारतस्यप्रशंसानुपपत्तेश्च १०

इतोपिश्रीकृष्णस्य गुणगणकथामृतस्यपात्रीभूतात्भारतात् नकस्यापितृप्तिरित्याह कस्तृप्नुयादिति योयुष्माकंसत्रेषुसूतादिसूरिभिरीड्यमानात् स्तूयमानात्तीर्थपदोहरेरभिधानात् भारतनामकीर्तना त्प्रसन्नःकःपुरुषः तृप्नुपादलमितिबुद्धिंकुर्यादित्यन्वयः। अलंबुद्ध्यभावेहेतुमाह यइति यस्तीर्थपात्पुरुषस्यकर्णनाडीद्वाराहृदयगुहांप्रविष्टःसंसारप्रदागेहरतिंगृहजायापुत्रादिस्नेहलक्षणांरतिंछिनत्तितस्ये तिशेषः ११ यन्मोक्षसुखानुवादिशास्त्रंतदेवाभ्यसनीयंभारतस्यग्राम्यसुखानुवादित्वेनपुरुषार्थानुपयोगित्वादितितत्राह मुनिरिति गुणानामितिषष्ठीद्वितीयार्थे भगवद्गुणान्वक्तुकामस्तेतवसखामु निःसर्वज्ञोपिकृष्णोभारतमाह। ननुगुणानुवक्तुमकामयतनत्वभ्यधाद्यतोग्राम्यसुखानुवादेननृणांमतिर्गृहीतेतितत्राह यस्मिन्निति यस्मिन्भारतेश्रवणादिनाभ्यस्यमानेसतिनृणांमतिर्ग्राम्यसुखानुवादैर्ने गृहीता हरेःकथायामेवगृहीता भारतान्नपरंविष्णोर्महिमावाचकंक्वचित्। भारतान्नविरागायभारतान्नविमुक्तयइतिवचनात् सत्यकामेनहरिणाविवक्षितागुणाभारतेकथिताइत्यतइदमेवशास्त्रंमुमुक्षुणा भ्यसनीयमित्यविगीतम् १२ अस्तुहरेःकथायांगृहीतानृणांमतिः ततःकिंफलंविधत्तइतितत्राह साश्रद्दधानस्येति ग्राम्यसुखानुवादैर्नगृहीता हरेःकथायांविवर्द्धमानाश्रद्दधानस्यपुंसोमतिरन्यत्रविषयेषुवि रक्तिंकरोतीतिप्रथमंवैराग्यं द्वितीयंभक्तिलक्षणं तृतीयमुपासनाजनितापरोक्षज्ञानं चतुर्थंसमस्तसंसारदुःखोच्छेदेनपरमानंदलक्षणंमोक्षाख्यंफलंकरोति एतदेवाह हरेरिति सदानुस्मृत्याजातापरोक्षज्ञाने

कस्तृप्नुयात्तीर्थपदोभिधानात्सत्रेषुवःसूरिभिरीड्यमानात् ॥यःकर्णनाडींपुरुषस्ययातोभवप्रदांगेहरतिंछिनत्ति ११ मुनिर्विवक्षुर्भगवद्गुणानांसखापितेभारत माहकृष्णः ॥ यस्मिन्नृणांग्राम्यसुखानुवादैर्मतिर्गृहीतानहरेःकथायाम् १२ साश्रद्दधानस्यविवर्द्धमानाविरक्तिमन्यत्रकरोतिपुंसः ॥ हरेःसदानुस्मृतिनिर्वृ तस्यसमस्तदुःखात्ययमाशुधत्ते १३ ताञ्छोच्यशोच्यानविदोनुशोचेहरेःकथायांविमुखानघेन ७ क्षिणोतिदेवोऽनिमिषस्तुतेषामायुर्वृथावादगतिस्मृती नाम् १४ तदस्यकौषारवशर्मदातुर्हरेःकथामेवकथासुसारम् ॥ उद्धृत्यपुष्पेभ्यइवार्तबंधोशिवायनःकीर्तयतीर्थकीर्तेः १५ सविश्वजन्मस्थितिसंयमार्थेकृ तावतारःप्रगृहीतशक्तिः ॥ चकारकर्माण्यतिपूरुषाणियानीश्वरःकीर्तयतानिमह्यम् १६ श्रीशुकउवाच ॥ सएवंभगवान्पृष्टःक्षत्त्राकौषारविर्मुनिः ॥ पुं सांनिःश्रेयसार्थायतमाहबहुमानयन् १७॥ मैत्रेयउवाच ॥ साधुपृष्टंत्वयासाधोलोकान्साध्वनुगृह्णता ॥ कीर्तिंवितन्वतालोकेआत्मनोधोक्षजात्मनः १८ नैतच्चित्रंत्वयिक्षत्तर्बादरायणवीर्यजे ॥ गृहीतोनन्यभावेनयत्त्वयाहरिरीश्वरः १९

त्तनिर्वृतस्यासंप्रज्ञातसमाध्यवस्थासुखंप्राप्तस्याशुकालक्षेपमंतरेण १३ व्यतिरेकमुखेनहरेःकथायादुःखाप्ययहेतुत्वमाह तानिति अविदोज्ञानदुर्बलान् अघेनव्यसनेनआत्मनःशोकाधिकरणत्वं यथार्थं नमिथ्याभूतमितिद्योतयितुमनुशोचइत्यात्मनेपदप्रयोगः अनिमिषोदेवः कालात्माविष्णुः वृथावादोवृथागतिर्वृथास्मृतिश्चयेषांतेतथातेषामायुर्वृथाक्षिणोतिइतिवावृथावादोविवादस्तत्सहितेगतिस्मृ तीयेषांतेतथातेषां नहरिकथावर्तांवृथेतिविशेषद्योतकस्तुशब्दः १४ स्वार्थप्रश्नमुपसंहरति तदिति हरिकथाविमुखाव्यर्थायुषइतियस्मात्तस्मात्तीर्थंयथासेवमानानापापंक्षिणोति तथाहरेःकीर्तिरपि तादृशी तीर्थरूपाकीर्तिर्यस्यसतथा तस्य नान्यकथाशिवसाधनमित्यस्मिन्नर्थेएवशब्दः १५ सारकथापिसृष्ट्यादिविषयलीलैवेत्याशयेनाह सइति पुरुषाब्रह्मादयस्तत्कर्मातिक्रांतानिअतिपुरुषाणिकृ तवासुदेवाद्यवतारःसृष्ट्यादिकर्तारौब्रह्मरुद्राविति भ्रांतिनिवारणार्थमीश्वरइत्युक्तंब्रह्मशिवेशनशीलईश्वरइत्यर्थः प्रगृहीतसृष्ट्यादीच्छाशक्तिःवशीकृतप्रकृतिशक्तिर्वा १६ मैत्रेयोविदुरप्रश्नपरिहारंवक्तुमुपक्रम तइत्याहशुकःसएवमिति निःश्रेयसार्थायमोक्षादिपुरुषार्थाय १७ बहुमानप्रकारंवक्ति साध्विति अधोक्षजेहरावात्मामनोयस्यसतथा तस्यआत्मनोममस्वस्यपरमात्मनोवा १८ तवतद्विषयप्रश्नउचितएवेति कथयति नैतदिति यादृशोभावोविष्णोरन्यस्मिन्वस्तुनिनास्तितादृशोभावोनन्यभावस्तेनसर्वोत्तमत्वज्ञानपूर्वकबहुमानेनेत्यर्थः हरिरीश्वरइत्येतौशब्दौअन्योन्यव्यावर्तकत्वेनप्रवृत्ताविति ज्ञातव्यम् १९

देवयोनित्वात्त्वहरिकथाप्रश्नोनाश्चर्यंकरइति भावेनकथयति मांडव्येति व्यासस्यभ्रातुर्विचित्रवीर्यस्यक्षेत्रेवीर्याधानयोग्यायांभुजिष्यायांदास्यांयःसत्यवतीसुताज्जातः प्रजासंयमनोयमोभवानितियस्मात् २० किंचस्वधामव्रजन्तत्वज्ञानोपदेशायमामादिशदितियस्मात्तस्मात्भवान्सानुगस्यभगवतोनित्यंप्रियत्वेनसंमतोतोयुक्तइतिभावः । हिशब्देनसंमतत्वेग्रंथांतरप्रसक्तिंद्योतयति २१ श्रोतुरभिमुखीकरणार्थं वक्तव्यार्थंप्रतिजानीते अथेति योगमायोपबृंहिताःस्वरूपसामर्थ्योपेताः २२ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांपंचमोध्यायः॥५॥ भगवानेकइदमग्रेअस्याग्रेआत्मापरमात्मा आत्मनांजीवानांविभुरधिपतिःआत्माआदानादिकर्ताआत्मेच्छांस्वरूपभूतांसृष्टीच्छामनुगतःसिसृक्षामीति भावमुपगतः तदुपकरणाभावेदेवदत्तेच्छावत्तदिच्छापिव्यर्थेत्याह नानाशक्तीति स्वाधीन नानासाधनोपलक्षितःनानामत्युपलक्षितइतिपाठे । सदेवसौम्येदमग्रआसीदसदेवेदमग्रआसीदित्यादिश्रुतितात्पर्यार्थज्ञानिनानावादिमतोपलक्षितइत्यर्थः । सतोबंधुमसतिनिरविंदन्नित्यादिश्रुतेः । असत्त्वमतमासुरमतमितिप्रसिद्धेः १ एकस्यसतोहरेःसृष्टीच्छोत्पत्तिप्रकारमाह सवाइति योसावेकराडेकोराजाचक्रवर्तीसएषतदाप्रलयेविश्वंनापश्यत् सर्वकार्याणांमूलप्रकृतौलीनत्वादि तिशेषःदर्शनशक्त्यभावादित्यतउक्तं द्रष्टेति नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतइतिश्रुतिर्वाइत्यनेनगृहीता असुप्तदृगित्यनेनएतदेवविव्रियते । जीवानांनित्यत्वेनालीनत्वाद्दर्शनसंभवात्कथंनापश्यदितितत्राह मेनइति आत्मानमितिजातावेकवचनं परमात्मायतोजीवंमेनेऽसंतमशक्तइतिवचनादसत्त्वमशक्तत्वमेवनतुस्वव्यतिरेकेणासत्त्वं पुरुषआसीदितिश्रुतेः क्षेत्रज्ञःपुरुषोह्यात्मासंसारीचेतनोमतइत्यभिधानं सु

मांडव्यशापाद्भगवान्प्रजासंयमनोयमः ॥ भ्रातुःक्षेत्रेभुजिष्यायांजातःसत्यवतीसुतात् २० भवान्भगवतोनित्यंसंमतःसानुगस्यहि ॥ ज्ञानोपदेशाय चमामादिशद्भगवान्व्रजन् २१ अथतेभगवल्लीलायोगमायोपबृंहिताः ॥ विश्वस्थित्युद्भवांतार्थावर्णयाम्यनुपूर्वशः २२ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेपंचमोध्यायः ॥ ५ ॥ ॥ ६ ॥ मैत्रेयउवाच ॥ भगवानेकआसेदमग्रआत्मात्मनांविभुः ॥ आत्मेच्छानुगतोह्यात्मानानाशक्त्युपलक्षितः १ सवाएषतदाद्रष्टानापश्यद्दृश्यमेकराट् ॥ मेनेऽसंतमिवात्मानंसुप्तशक्तिरसुप्तदृक् २ सावाएतस्यसंद्रष्टुःशक्तिःसदसदात्मिका ॥ मायानाममहाभागययेदंनिर्ममेविभुः ३ कालवृत्त्यांतुमायायांगुणमय्यामधोक्षजः ॥ पुरुषेणात्मभूतेनवीर्यमाधत्तवीर्यवान् ४ ततोभवन्महत्तत्त्वमव्यक्तात्कालचोदितात् ॥ विज्ञानात्मात्मदेहस्थंविश्वंव्यंजंस्तमोनुदन् ५

प्ताआत्मन्येवातिविरताशक्तिः शक्यत्वाद्भार्यारमायस्यससुप्तशक्तिः तदुक्तं शक्यत्वाच्छक्तयोभार्याःशक्तिःसामर्थ्यमुच्यतइति सुप्तिस्तुप्रकृतेःप्रोक्ताअतीवभगवद्रतिरितिच अनेनप्रकृतिदर्शनमपिप्रत्युक्तं पृथगनवस्थानात् हरिरपिनिद्रामुद्रितनेत्रत्वेननापश्यदितिकिंनस्यादित्यतउक्तं असुप्तदृगिति क्वापितथोच्यमानस्यगतिः अनास्थान्यत्रचप्रोक्ताविष्णोश्चक्षुर्निमीलनमितिवक्तव्या २ शक्तेर्नामाह सावा इति महान्भागोभाग्यसमूहोयस्यसतथामहतींभांप्रतिगच्छतीतिमहाभागोवा तस्यसंबुद्धिः महाभागेति एतस्यसंद्रष्टुःसर्वदर्शनशक्तिमतोनारायणस्ययाप्रलयेसायुज्यंप्राप्यरमतेसाशक्तिर्मायानामसर्व प्रधानत्वान्मयोविष्णुस्तस्येयंमाया चार्थेवैशब्दःसाजडात्मकाशक्तिर्व्यमायानाम सविभुर्ययेदंजगन्निर्ममे कीदृशी सदसदात्मिका आद्यामहदादिकारणव्यापिनी द्वितीयातद्रूपा ३ ययेदंनिर्ममेजग दित्युक्तंप्रपंचयति कालवृत्त्यामिति जगद्धेपौरुषंरूपमित्यारभ्योक्तात्ममूलरूपाविर्भूतपुरुषरूपेणाधोक्षजः कालेनपुरुषादृष्टाख्यफलपाककेनवृत्तिःसिसृक्षत्वादिलक्षणायस्याश्चेतनायाः सातथोक्ता अन्यत्रक्षोभलक्षणावृत्तिः गुणमय्यासत्त्वादिगुणाभिमानिन्या इतरत्रतद्रूपायां मायायांचेतनायामचेतनायांचवीर्यंरेतआख्यंपरिणामकरंसामर्थ्यंचाधत्त तुशब्देनउभयोर्महद्वैलक्षण्यंवक्ति वी र्यवानिति हरेर्नपुंसकरूपंनास्तीतिलक्षयति नैनंवाचास्त्रियंब्रुवन्नैनमस्त्रीपुमान्ब्रुवन्निति श्रुतेः यद्वा स्वेनाहितवीर्यस्यजनकत्वशक्तिंद्योतयति ४ नहिलोकेवंध्यादधानाःकार्यंजनयंतोदृश्यंते

नचैवमयं तत्कुतः कार्योत्पत्तिदर्शनादित्याह ततइति यत्रवीर्यमाहितं ततोमायारूपवस्तुनोमहत्तत्त्वंचतुर्मुखशरीरमभवत्मायायानामांतरमाह अव्यक्तादिति अतिसूक्ष्मत्वाच्चाव्यक्तः का लेनसकलप्राण्यदृष्टसाक्षिणापुरुषेणसृष्ट्युद्बोधकेनचचोदितात् प्रेरितात् । अभिमानिनोऽभिमानानुत्पादेशरीरोत्पादोऽव्यर्थइतितत्राह विज्ञानात्मेति विज्ञानात्माब्रह्माचततोऽव्यक्ताभिमानित्वात्तस्माद्घोरमा त्स्यात् कूटस्थादभूत्मदीयोयंदेहइत्यभिमानोत्पत्तिमानभूदित्यर्थः उत्पत्तेःप्रागपिज्ञाननाशोनास्तीतिद्योतनायविज्ञानात्मेतिपदं अभिमानोत्पत्तेःकिंलक्षणमत्राह आत्मदेहस्थमिति निरालोकेकथमिदंव्य ज्यतइत्यतउक्तं तमोनुदन्निति नारायणप्रसादप्रादुर्भूतज्ञानलक्षणप्रकाशेनसूर्यइवतत्कालभवंतमोनुदन्नभिभूयसूर्यवद्वर्तमानइत्यर्थ. शरीरनिमित्तग्लानिरहितोवात्माभिमानरहितोवा ५ प्रपंच पंचीकरणप्रकारंप्रपंचयति सोपीति सआत्मामहत्तत्त्वाभिमानीविरिंचोपि अंशोजीवो गुणाःसत्वादयः कालःफलपाचकः एषामात्माभिमानीभगवतोहरेर्दृष्टेःकटाक्षवीक्षणस्यगोचरोविष योऽस्यप्रपंचस्यासिसृक्षयात्मानंस्वकीयत्वेनाभिमन्यमानंमहत्तत्त्वंव्यकरोत्परिणामोन्मुखंकृतवान् चैतन्यस्याविकारित्वेन । अत्रात्मपदनचैतन्यवाचि किंतुदेहवाच्येव कालजीवगुणादीना मभिमानीचतुर्मुखइतिवचनात् अंशगुणकालात्मेत्यत्रात्मपदेनाभिमानित्वमुच्यते नदेहः क्वचिच्चहिरण्यगर्भस्याशशब्दवाच्यत्वमंगीकर्तव्यम् । सर्वजीवाभिमानित्वादंशइत्येवचोच्यतइतिवचनात् ६ अहंतत्त्वमजायतेत्यत्रजडात्जडस्योत्पत्तिरभिमानिनोगरुडादयउदभूवन्निति तात्पर्यंग्राह्यं भूतभूताभिमानीचेतिवचनात्तत्स्वरूपमाह कार्येति कार्यंशरीरम् । कारणानींद्रियाणि । कर्तृमनः । एषामात्मादिकारणं । किमुक्तंतत्राह भूतेति भूतेंद्रियमनसाभवउत्पत्तिर्यस्मात्सतथा ७ भूतादीनांत्रयाणांकारणस्याहंकारस्यनामभेदेनत्रित्वमाह वैकारिकइति अधुनात्रित्वसंख्याविशिष्टाहंकारात् पृथ

सोप्यंशगुणकालात्माभगवद्दृष्टिगोचरः ॥ आत्मानंव्यकरोदात्माविश्वस्यास्यसिसृक्षया ६ महतत्त्वाद्विकुर्वाणादहंतत्त्वमजायत ॥ कार्यकारणकर्त्रात्मा भूतेंद्रियमनोभवः ७ वैकारिकस्तैजसश्चतामसश्चेत्यहंत्रिधा ॥ अहंतत्त्वाद्विकुर्वाणान्मनोवैकारिकादभूत् ८ वैकारिकाश्चयेदेवाअर्थाभिव्यंजनंयतः ॥ तैजसानींद्रियाण्येवज्ञानकर्ममयानिच ९ तामसोभूतसूक्ष्मादिर्यतःखंलिंगमात्मनः १० कालमायांशयोगेनभगवद्वीक्षितंनभः ॥ तामसानुसृतंस्पर्शंविकुर्वन्निर्ममेऽनिलम् ११ अनिलोपिविकुर्वाणोनभसोरुबलान्वितः ॥ ससर्जरूपतन्मात्रंज्योतिर्लोकस्यलोचनम् १२ अनिलेनान्वितंज्योतिर्विकुर्वत्परवीक्षितम् ॥ आधत्तांभोरसमयंकालमायांशयोगतः १३ ज्योतिषांभोनुसंसृष्टंविकुर्वत्परवीक्षितम् ॥ महींगंधगुणामाधात्कालमायांशयोगतः १४

क्सृष्टिभेदमाह अहंतत्त्वादिति अंशगुणकालानामंशस्यचप्रेरणयाविकुर्वाणादहंतत्त्वाद्वैकारिकनाम्नोमनस्तत्त्वमभूदित्यन्वयः ८ येभ्योर्थानांविषयाणामभिव्यंजनंतद्विषयज्ञानंभवति येचेंद्रिया भिमानिनोवैकारिकनामानोदेवास्तेचवैकारिकादहंतत्त्वादभूवन्निति संबंधः ज्ञानकर्ममयानिज्ञानप्रधानानिश्रोत्रादीनिकर्मप्रधानानिवागादीनिचतैजसान्येव तैजसादहंकारादेवोत्पन्नानिनान्यस्मादहंकारा दित्यन्वयः ९ तामसाहंकारोभूतसूक्ष्माणामादिःकारणं शब्दादितन्मात्रास्तामसाहंकाराज्जाताइत्यर्थः तत्रकीदृशीशब्दतन्मात्रा यतःशब्दतन्मात्रायाआत्मनोहरेर्लिंगंगमकंप्रमाणंखसमुत्पन्नमि त्यन्वयः १० कालमायांशयोगेनकालस्यसृष्टिविशिष्टस्यमायायाःप्रकृतेरंशस्यजीवाभिमानिनश्चतुर्मुखस्यसन्निकर्षलक्षणसंबंधेनभगवतावीक्षितंकटाक्षितंतामसानुसृतंस्वकारणतामसाहंकारेणानुस्यूतम तएवविकुर्वन्नभःस्पर्शतन्मात्रांनिर्ममेतस्मात्स्पर्शादनिलंवायुंनिर्ममे ११ कालादिसहकारिणानभसास्वकारणेनानुस्यूतत्वादुरुबलान्वितोविकुर्वाणोनिलोरूपतन्मात्रांससर्ज तन्मात्रयालोकस्यलोचनं प्रकाशकं लुच्प्रकाशनइतिधातोः ज्योतिस्तेजस्तत्त्वमसाक्षीत् १२ रसमयंरसतन्मात्राकार्यंपरेणहरिणावीक्षितंकालमायांशयोगतःकालात्परिणामात्मायायाःप्रकृतेरंशाद्धिरण्यगर्भाच्च १३ गंधाख्यो गुणोयस्यास्तांगंधगुणकांपृथ्वीमित्यर्थः १४

विशेषगुणत्वाच्छब्दादयोनभआदिव्यावर्तकाइतियद्वैशेषिकमतंतन्निराकरोति भूतानामिति नभआदीनांभूतानांमध्येयद्यत्परात्परस्मात्पूर्वस्मात्परंपश्चात्यद्भाव्यमुत्पाद्यंतेषांपरानुसंसर्गात्पूर्वेषांकारणानामु परोत्तरकार्येषुअनुप्रवेशाद्यथासंख्यंएकद्वित्र्यादिसंख्याविशिष्टान्शब्दादीन्गुणान्विदुः वैशेषिकादितरइतिशेषः १५ ब्रह्मांडोत्पत्तिप्रकारंवक्तुंमहदाद्यभिमानिदेवानांस्तुतिप्रकारंकथयति एतेदेवाइति ये महदाद्यभिमानित्वेनहरिणासृष्टाएतेब्रह्मादयोदेवाविभुंप्रोचुरित्यन्वयः कीदृशाःविष्णोःकलाः भिन्नांशाः कालनिमित्तेनमायानिमित्तेनांशनिमित्तेनचलिंगशरीरमेषामस्तीतिकालमायांशलिंगिनः अ त्रैकस्यैवविरिंचस्यकलांशाभिमानिरूपद्वयमस्तीतिग्राह्यं कालजीवाभिमानेनरूपद्वंद्वीचतुर्मुखइतिवचनात् स्तुतौनिमित्तमाह नानात्वादिति नानात्वादश्लिष्टत्वात्स्वक्रियायांब्रह्मांडोत्पादनक्रियायाम नीशाअसमर्थाः शिरसिप्रकृष्टोंजलिर्येषांतेतथा १६ किमूचुरितितत्राह नताःस्मेति तेतव प्रपन्नानांपुंसामाध्यात्मिकादितापोपशमायातपत्रमिवस्थितं आतपात्त्रायतइत्यातपत्रंछत्रं नकेवलंतात्कालिक तापनिवारणपटुअनादिसंसारदुःखनिवारणसमर्थमितिभावेनाह यन्मूलेति यत्पदारविंदमेवमूलकेतमधिष्ठानंगृहंयेषांतेतथा यतयोनिर्जितेंद्रियग्रामाअंजसाऋजुमार्गेणसंसाराख्यंदुःखंहृदयग्रंथिलक्षणंबहिरु त्क्षिपंति निर्मूलयंति १७ ईशअणिमादिपूर्णैश्वर्यमूर्तेऽस्मिन्भवेसंसारेजीवा बंधमोक्षोपायभूतपादारविंदमृतेतत्सेवांविनाआत्मन्नात्मनिशर्मनलभंते यदतोभगवंस्तवांघ्रिच्छायायाः ब्रह्मविद्यायाः अंश

भूतानांनभआदीनांयद्यद्भाव्यंपरात्परम् ॥ तेषांपरानुसंसर्गाद्यथासंख्यंगुणान्विदुः १५ एतेदेवाःकलाविष्णोःकालमायांशलिंगिनः ॥ नानात्वात्स्वक्रियानीशाःप्रोचुःप्रांजलयोविभुम् १६ ॥ देवाऊचुः ॥ नताःस्मतेदेवपदारविंदंप्रपन्नतापोपशमातपत्रम् ॥ यन्मूलकेतायतयोंजसोरुसंसारदुःखंबहिरुत्क्षिपंति १७ ऋतेयदस्मिन्भवईशजीवास्तापत्रयेणाभिहतानशर्म ॥ आत्मँल्लभंतेभगवंस्तवांघ्रिच्छायांसविद्यामतआश्रयेम १८ मार्गंतियत्तेमुखपद्मनीडैश्छंदःसुपर्णैर्ऋषयोविविक्ते ॥ यस्याघमर्षोदसरिद्वरायाःपरंपदंतीर्थपदःप्रपन्नाः १९ यच्छ्रद्धयाश्रुतवत्याचभक्त्यासंमृज्यमानेहृदयेवधार्य ॥ ज्ञानेनवैराग्यबलेनधीराव्रजंतियत्तेंघ्रिसरोजपीठम् २० विश्वस्यजन्मस्थितिसंयमार्थेकृतावतारस्यपदांबुजंते ॥ व्रजेमसर्वेशरणंयदीशस्मृतंप्रयच्छत्यभयंस्वपुंसाम् २१ यत्सानुबंधेऽसतिदेहगेहेममाहमित्यूढदुराग्रहाणाम् ॥ पुंसांसुदूरंवसतोपिपुर्यांभजेमतत्तेभगवन्पदाब्जम् २२

विद्यामेकदेशविद्यामाश्रयेम ब्रह्मविद्याहरेच्छायातदंशोहिसुरेष्वपि । सर्वविद्याश्रयःप्रोक्तःप्रधानांशश्चतुर्मुखइतिवचनात् योग्यतातारतम्यमपेक्ष्यांशविद्यामित्युक्तमनेनव्यतिरेकन्यायोदर्शितः १८ इतो पिभगवत्पदज्ञानमेवस्वाभीष्टसाधनमितिभावेनस्तुवंति मार्गंतीति ऋषयोब्रह्मादिज्ञानिनोविविक्तेस्थित्वामुखपद्मनीडैः मुखपद्ममेवनीडंयेषांतेतथातैःछंदांसिवेदाएवसुपर्णाःपक्षिणस्तैः । तेतवयत्पदं मार्गंतिअन्विच्छंतिविचारयंति अथापिमृगयंतइतिवा यच्चयस्माच्चप्रपन्नानामघमर्षःदुःखनाशःस्यात् यच्चधुसरितोधरापाश्रयपरपदं वयंतीर्थपदस्तेतवपदंप्रपन्नाइत्यन्वयः १९ एतत्पदप्राप्तौसाधनमा हुःयच्छ्रद्धयेति संमृज्यमानेसम्यक्शोध्यमाने अवधार्यसंनिधाप्य वैराग्यमेवबलयस्यसतथा तेनअंघ्रिसरोजाख्यपीठम् २० हरेर्विक्रमोलोकोपकाराय नस्वार्थाय यदतःस्मरणमात्रेणप्रीतोस्मद भीष्टंकरोतीतिभावेनस्तुवंति विश्वस्येति तवयत्पदांबुजंस्मृतंस्वपुंसामभयंप्रयच्छति सर्वेतच्छरणंव्रजेमेत्यन्वयः कृतावतारस्यगृहीतपुरुषादिप्रादुर्भावस्य २१ हरेःपदंविरक्तयेकलभ्यमितिभावेनस्तु वंति यत्सानुबंधइति सानुबंधेपुत्रादिपरिकरसहितेऽसत्यमंगलेदेहगेहेजातिभिन्नेदेहेऽहमितिगेहेममेदमितिचोढदुराग्रहाणांदुष्टज्ञानस्यचोढॄणांपुंसांपुर्यांदेहेवसतोपितवयत्पदांबुजंसुदूरमत्यंतमगोचरं हेभगवन्तेपदांबुजंभजेमेत्यन्वयः २२

१ आत्मँल्लभंतेत्यत्रवोर्लीतिसूत्रात् विद्वाँल्लिखतीत्यादिवत्आत्मन्लभंते आर्षेचमंनूत्रर्मणीतिप्राप्तेलुगितिवचनात् आत्मन्आत्मनि । इतिभागवतक्रोडेउक्त । २ ज्ञानभावेसंसारनिवृत्त्यभावरूपः ।

निकटवर्तिनोहरेर्दर्शनासंभवेकिंकारणमितितत्राह तंत्वामिति यस्त्वमेवमुक्तमहिमाअथोतस्मात्तेतंत्वांनूनंनिश्चयेननपश्यंतिइत्यन्वयः असद्वृत्तिभिराक्षिभिरिंद्रियैःपराहृतंबहिष्कारितमंतःस्थितंमनोये षांतेपराहृतांतर्मनसोयस्मात् अंतःस्थितंप्रत्यगात्मानंविषयीकर्तुंयोग्यमितिसूचनायांतरितिविशेषणंकीदृशम् न्यासेनसकलकर्मणांपरब्रह्मार्पणेनविलासोयेषांतेन्यासविलासास्तेषांलक्ष्म्याः लक्षदर्श नांकयोरितिधातोः दर्शनस्यपदंविषयं अनेनपरमहंसाश्रमस्थाएनंपश्यंतीत्युक्तं मुद्रागमोङीप्।तज्ज्ञानस्यातिशयंसूचयतः पदयोर्न्यासोभुविक्षेपविशेषः तस्याविलासलक्ष्म्याःपदमितिद्विरावृत्त्यान्वेतव्यम् अनेनपदविषयास्तुतिरयुक्तेतिशंकानिरस्तेतिज्ञातव्यमितिवा २३ एवंविधस्यहरेरपरोक्षज्ञानसाधनोपासनाद्विविधा ध्यानरूपा वेदांतशास्त्रश्रवणादिलक्षणाच तत्रक्षिप्रप्रवृत्त्यर्थंप्रथमाक्लेशसाध्या द्वि तीयासुखसाध्येति उभेविशिनष्टिपानेनेतिहेदेवतेकथासुधायाःपानेनश्रवणादिलक्षणेनप्रवर्धमानयाभक्त्याविशदाशयानिर्मलांतःकरणाःवैराग्यसारंवैराग्यफलंबोधमपरोक्षज्ञानंप्रतिलभ्यप्राप्यअंजसाऋजु मार्गेणाकुंठधिष्ण्यमप्रतिहतवैकुंठादिस्थानंअपरिच्छिन्नस्वरूपत्वात्त्वांयथाईयुः २४ तथापरेऽन्येयोगिनःयमनियमादियोगनिष्ठाः आत्मसमाधियोगबलेनपरमात्मचित्तैकाग्र्यलक्षणध्यानसामर्थ्येन बलिष्ठामन्पसाधनाजेयांप्रकृतिंबंधकशक्त्यभिमानिनीं प्रसादाज्जित्वाधीराधीपुरप्रमाणाअपरोक्षज्ञानिनःपुरुषंपूर्णषड्गुणंत्वामेवविशंति तुःस्याद्भेदेऽवधारणइतिवचनात् तत्रतेषांयोगिनांश्रमःस्याच यातथातेतवश्रवणादिरूपयासेवयानतुनैवश्रमःस्यात्किंतुसुखमेवेत्यन्वयः अत्रप्रकृतिजयोनामतत्प्रसादैकलभ्योनान्यः तदुक्तं यायोश्वप्रकृतेर्विष्णोर्जयोभक्त्यैवनान्यथेति २५ स्तुत्याप्रसन्नीकृत्य

तंत्वामसद्वृत्तिभिरक्षिभिर्येपराहृतांतर्मनसःपरेश ॥ अथोनपश्यंत्युरुगायनूनंयत्तेपदंन्यासविलासलक्ष्म्याः २३ पानेनतेदेवकथासुधायाःप्रवृद्धभक्त्या विशदाशयाये ॥ वैराग्यसारंप्रतिलभ्यबोधंयथांजसात्वेयुरकुंठधिष्ण्यम् २४ तथापरेचात्मसमाधियोगबलेनजित्वाप्रकृतिंबलिष्ठाम् ॥ त्वामेवधीराः पुरुषंविशंतितेषांश्रमःस्यान्नतुसेवयाते २५ तत्तेवयंलोकसिसृक्षयाद्यत्वयाविसृष्टास्त्रिभिरात्मभिर्ये ॥ सर्वेवियुक्ताःस्वविहारतंत्रंनशक्नुमस्तत्प्रतिकर्तवे ते २६ यावद्बलिंतेऽजहरामकालेयथावयंचान्नमदामयत्र ॥ तथोभयेषांतइमेहलोकाबलिंहरंतोन्नमदंत्यनीशाः २७ त्वंनःसुराणामसिसान्वयानांकूट स्थआद्यःपुरुषःपुराणः ॥ त्वंदेवशक्त्यांगुणकर्मयोनौरेतस्त्वजायांकविरादधेऽजः २८

स्वाभीष्टंविज्ञापयंतीत्याह तत्तेवयमिति यस्मात्त्वंलोकदयालुस्ततस्मात्त्वयालोकसिसृक्षयात्रिभिरात्मभिःकालमायांशैर्विसृष्टायेतेवयमद्यसर्वेवियुक्ताविश्लिष्टाः स्वविहारतंत्रंस्वस्यतवक्रीडोपकरणं यत्ब्रह्मांडंतत्प्रतिकर्तवेप्रतिकर्तुंनशक्नुमइत्यन्वयः २६ ब्रह्मांडनिर्माणेप्रयोजनमाहुरित्याह यावदिति यावद्बलिंभक्ष्यंपाहराम तावत्पर्यंतंब्रह्मांडंसमुत्पाद्यतस्मिन्स्थित्वात्वद्विषयज्ञानकर्मलक्षणंबलि मुपहारंसमर्प्यत्तर्पयामः यत्रब्रह्मांडेस्थितावयंकालेकालेयथान्नमदामस्वविषयेषुव्यवहराम तथोभयेषामस्माकंयुष्माकंचबलिंहरंतःसमर्पयंतस्तइमेऽनीशाः अस्मत्प्रेरणामंतरेणप्रवृत्तावसमर्थालोका जनाःअन्नंज्ञानकर्मलक्षणमदंति तादृशब्रह्मांडनिर्माणोपायंकुर्वितिवाक्यशेषइत्यन्वयः तादृशमंडंकर्तुंनशक्नुमइतिपूर्वेणसंबंधइतिवा अजाविष्णो।अजाविष्णुहरच्छागाइत्यभिधानम् २७ किमिति मांप्रत्येतद्विज्ञापनमन्यस्य स्यादितितत्रैवमूचुरित्याह त्वंनइति आद्यःआदेरुत्पत्तेःकर्तापितृत्वात् त्वांविज्ञापयामइतिभावः अस्मत्पदंविशिनष्टि सुराणामिति नकेवलमस्माकमेवजनयिताकिंत्व स्मत्संततीनामितिभावेनोक्तं सान्वयानामिति त्वंकइतिपुराणःपुरुषःश्रीनारायणःकूटस्थःविकारकूटेषुतिष्ठति नतुविकारवान् हरेःपितृस्थानीयत्वंस्पष्टयितुमाहुरित्याह त्वंदेवेति हेदेवत्वंकविरातिकां तदर्शीअजश्चदेवदत्तवत्भवतोगर्भाधानादिकर्माण्यसंभावितानितथापिभवान्शक्त्यांभार्यायांसत्त्वादिगुणानांकर्मणामदृष्टानांयोनौकारणभूतायामजायांजननधर्मरहितायांचिदचिद्रूपक्तौरेतोगर्भंयादधइ त्यन्वयःतुशब्देनोभयेषांमहान्विशेषोस्तीतिसूचयति २८

ततस्तस्याःप्रकृतेः । वयंसत्प्रमुखामहत्तत्त्वप्रमुखाबभूविम ततःकिंतत्राह यदर्थइति आत्मन्स्वामिन्यदर्थेयत्प्रयोजनायबभूविमतदर्थेतेतवकिंकरवामावेपुक्ताअस्वतंत्रायस्मात्तस्मात्त्वंचक्षुर्ज्ञानंमंड निर्माणोपायविषयंपरिदेहि कीदृशंतत्राहुः शक्ताइतियस्यज्ञानस्यानुग्रहेणक्रियार्थेब्रह्मांडनिर्माणायशक्ताःस्यामेत्यन्वयः २९ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांषष्ठोध्यायः ॥ ॥६॥ अस्मिन्नध्यायेतदनन्यत्वमारंभणशब्दादिभ्यइत्यधिकरणार्थःप्रपंच्यतइत्यभिप्रेत्यादौहरेस्तत्त्वेषुप्रवेशंवक्ति इतीति उरुक्रमस्त्रयोविंशतितत्त्वानागणयुगपदाविशदित्यन्वयः आकाशादिपंचभूता निशब्दादिपंचतन्मात्राःश्रोत्रादिदशेंद्रियाणि मनोमहदहंकाराइतित्रयोविंशतितत्त्वानि तदुक्तं शब्दाद्यानभआद्याश्चमनोयुक्तेंद्रियाणिच । अहंकारोमहांश्चैवत्रयोविंशतिकोगणइति । देवतेंद्रियाणामेकत्व विवक्षयापृथङ्नोक्तंदेवतेंद्रिययोरैक्यात्नपृथग्गणनंतयोरिति प्रकृतिश्चतुर्विंशा तत्प्रवेशस्यपूर्वसिद्धत्वान्नोक्ता हरिराविशदितिपंचविंशत्वेनसूचितः अत्रापियदाजडांशस्वीकारस्तदाजीवःपंचविंशकःविष्णुः श्रियासहषड्विंशकःसप्तविंशकोवायदाजडांशस्वीकारोजीवस्तत्पंचविंशकइत्यादेरिदसर्वमुरुक्रमपदेनसूचितं।प्रवेशेकारणमाह इतीतिसमेत्यासतीनामसमेतानांविश्लिष्टानांस्वशक्तीनांशक्यत्वात्स्वाधीन त्वाच्छक्तिशब्दवाच्यानांप्रसुप्तलोकतंत्राणामनाविर्भूतलोकसृष्टिशक्तीनां प्रलीनलोकसृष्ट्युपकरणानांवा तनुते येनकार्यंयत्तंत्रंसाधनमुच्यते। करणानांस्वशक्तिर्वाप्रधानसाधनंयतइति तासामित्युक्तप्रकारां

ततोवयंसत्प्रमुखायदर्थंबभूविमात्मन्करवामकिंते ॥ त्वंनःस्वचक्षुःपरिदेहिशक्त्यादेवक्रियार्थेयदनुग्रहेण २९ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेषष्ठोध्यायः॥६॥ छ ॥ ऋषिरुवाच ॥ इतितासांस्वशक्तीनामसतीनांसमेत्यसः॥ प्रसुप्तलोकतंत्राणांनिशम्यगिरमीश्वरः १ कालसंज्ञांतदादेवींबिभ्रच्छक्तिमुरुक्रमः ॥ त्रयोविंशतितत्त्वानांगणंयुगपदाविशत् २ सोनुप्रविष्टोभगवान्चेष्टारूपेणतंगणम् ॥ भिन्नंसंयोजयामाससुप्तंकर्मप्रबोधयन् ३ प्रबुद्धकर्मादैवेनत्रयोविंशतिकोगणः॥ प्रेरितोजनयत्स्वाभिर्मात्राभिरधिपूरुषम् ४ परेणविशतास्वस्मिन्मात्रयाविश्वसृग्गणः॥ चुक्षोभान्योन्यमासाद्ययस्मिन्लोकाश्चराचराः ५

गिरंनिशम्य शक्यत्वाच्छक्तयोविष्णोर्महदाद्यारमातथेतिवचनात् शक्तिशब्दवाच्यत्वंमहदादीनांयुक्तम् प्रवेशोपिरमयासहेतिभावेनाह कालसंज्ञामिति यदाप्रवेष्टुमैच्छत्तदा त्रयोविंशतितत्त्वानिप्राविशद्रमयासह । कालाख्ययास्वयंविष्णुःशक्यत्वाच्छक्तिरूपयेतिवाक्यंमानं तत्रकाराग्रहप्रवेशवन्नायंप्रवेशः किंतु स्वातंत्र्येणेतिद्योतनायेश्वरइति १ २ निलयेनिलीनइवक्रियमाणंतूष्णीमास्तेकिंचित्कर्मकार्षीदितितत्राह सोनुप्रविष्टइति सर्वचेष्टकरूपेणस्वसामर्थ्येनकेशवः । तानिभिन्नानितत्त्वानियोजयामासवाशतइति अनेनचास्यार्थोदर्शितः भिन्नंविश्लिष्टं प्रलयेसुप्तंकर्मप्रतिबुद्धशक्तिकंसृष्टिनिमित्तमदृष्टंप्रबोधयन्कार्योन्मुखंकुर्वन् यद्यपीश्वरः स्वमनसैवांडंस्रष्टुंशक्तः तथापिकर्त्रापुरुषेणसोपकरणेनभाव्यमितिदर्शयितुंसंश्लिष्टोगणः३किंकार्यंचकारेतितत्राह प्रबुद्धकर्मेति प्रबुद्धमुन्मुखीकृतकर्मादृष्टंयस्यसःप्रबुद्धकर्मादैवेनहरिणाप्रविश्यप्रेरितः । त्रयोविंशतिकोगणः स्वाभिर्मात्राभिरंशैःपुरुषस्यब्रह्मणःशरीरत्वात्पुरुषशब्दवाच्यंब्रह्मांडमजनयदित्यन्वयः अधिपुरुषमितिपाठेअधिगतःपुरुषसूक्तवाच्योयस्मिंस्तत्तथेत्यर्थः ईश्वरोदैवमुद्दिष्टंसर्वस्यापिप्रमुखत्वतइत्यतःपूर्वोक्तेश्वरोदैवशब्देनगृह्यते ४ एतदेवस्पष्टयति परेणेति चुक्षोभब्रह्मांडाकारेणविकृतवन् यस्मिन्नंडेउत्पन्नः ५

१ तत्र च लोकदृष्ट्या घटवत् स्वतन्त्रसाधनापेक्ष्यमिति पूर्वपक्षे ' विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तस्वतंत्रसापेक्षा, सृष्टित्वात्, घटादिसृष्टिवत् इति युक्तिसिद्धानुमानात् । तन्निराकर्तुमिदमधिकरणम् । अध्यायः २ पा० अधिक० ६ सू० १५ यद्यपि घटादिसृष्टिः । स्वतन्त्रबहुसाधनसापेक्षा दृष्टा तथापि नैतदृष्टान्तेन ब्रह्मणो जगत्सृष्टिस्तथाकल्प्या किंतु स्वतंत्र साधनस्य तदनन्यत्व किमुक्त भवति स्वरूपसामर्थ्यादेव तस्य सृष्टिः । कुतः यतः किंस्विदित्यादिश्रुतावधिष्ठानादिसाधनाद्याक्षेपः क्रियते आक्षेपस्य विपर्यये पर्यवसानात् । अनुमानं तु श्रुतिविरोधादप्रमाणमेवेति भावः । तत्त्व० ।

प्रथमक्षयांशरीरप्रवेशोहरेरनंतरंभोगिनश्चेतनस्येतिदर्शयितुकामस्यहरेरंडप्रवेशमाचष्टे हिरण्मयइति यस्यप्रेरणयातत्त्वगणोंडमजनयत् सहिरण्मयोज्ञानानंदात्मककरचरणाद्यवयववान्पुरुषाख्योहरिरं डकोशेंडकोशस्थाप्सुअंडकोशस्थोदकेशेषपर्यंकेसहस्रपरिवत्सरानुवासेत्यन्वयः प्रलयेसर्वचेतनानांपरमचेतनेनैकीभावइतिशंकांनिवारयति सर्वेति सर्वसत्त्वैःसर्वजीवैरुपबृंहितोवर्धितः ... चेतनानांप्रलयेवस्थानंकथमितिशंकानिरस्ता परमात्मन्यवस्थानोपपत्तेः ६ चिरकालोर्हरेर्गर्भोदकेबहुकालव्यापकेननिवासेनसृष्टिकथोपरतेतिशंकांपरीक्षितोहार्दीपरिहरन्नंडांतर्वर्तिनोहरेर्विक्रमविशेष माह सवाइति योगर्भोदकेशेषपर्यंकेशयानःसविश्वसृजांब्रह्मांडस्रष्टवतांतत्त्वानांगर्भोंतर्यामीदैवंब्रह्मादिदैवतेप्वाधिकंकर्मप्राण्यदृष्टंसुखदुःखभोगसाधनमात्मशक्तिःप्रकृति नित्यमेतैर्युक्तत्वाद्दैवकर्मात्मश क्तिमान् ब्रह्मणोविराडाख्यशरीरंसृष्ट्वातत्प्रविश्यात्मनापरप्रेरणामंतरेणस्वेच्छयात्मानंतदेहहृदयादिनियामकत्वेनएकधादिविबभाज विभक्तवानित्यन्वयः वाइत्यनेनोक्तार्थस्यग्रंथांतरप्रसिद्धिद्यो तकेनविश्वसृजांगर्भःकार्यात्माआत्मानमंडरूपमेकधादिभेदेनाविबभाजेत्येतदपव्याख्यानंप्रत्याख्याति स्वतोऽचेतनस्यकार्यकारणत्वशक्त्यदर्शनात् अप्रसिद्धत्वाच्चेति ७ ननुविसृजांगर्भआंडकोशए वभवेदेषह्यशेषसत्त्वानामात्मेतिसर्वप्राण्याधारत्वेनपरामर्शात्तदर्थंसृष्टत्वाच्चेतितत्राह एषहीति नायमंडकोशस्यपरामर्शःकिंतुपुरुषेणात्मभूतेनवीर्यमाधत्तवीर्यवानितियःपुरुषाख्योहरिरभिहितःसएषपरा मृश्यते परमात्मनोंशइत्युक्त्वाद्यावताराइत्यवताररशब्देनविशेषितत्वाच्च महांडकोशस्यहरेरवतरत्वानिर्देशःक्वचिद्दृष्टःश्रुतोवा तथाचायमक्षरार्थः योमहदादितत्त्वानिसृष्ट्वातेषामंडसृष्टावस्वातंत्र्यं प्रकाश्यात्मानंतैस्तावपित्वातदनुग्रहायसर्वचेष्टकरूपेणपरमयासहप्रविश्यसंयोज्यक्षोभयित्वातदंशैरंडंसृष्ट्वातत्प्रविश्यअप्सुसहस्रपरिवत्सरानुषित्वातदंतब्रह्मणोविराट्शरीरंसृष्ट्वा तदेहेंद्रियादिनियामकत्वे

हिरण्मयःसपुरुषःसहस्रपरिवत्सरान् ॥ आंडकोशउवासाप्सुसर्वसत्त्वोपबृंहितः ६ सवैविश्वसृजांगर्भोदैवकर्मात्मशक्तिमान् ॥ विबभाजात्मनात्मानमेक धादशधात्रिधा ७ एषह्यशेषसत्त्वानामात्मांशःपरमात्मनः ॥ आद्योवतारोयत्रासौभूतग्रामोविभाव्यते ८ साध्यात्मंसाधिदैवंचसाधिभूतमितित्रिधा ॥ विराट्प्राणोदशविधएकधाहृदयेनच ९ स्मरन्विश्वसृजामीशोविज्ञापितमधोक्षजः ॥ विराजमतपत्स्वेनतेजसैषांविवृत्तये १०

नाविर्भूव एषह्यशेषसत्त्वानामात्मानियामकःपरमात्मनःस्वरूपांशआद्योवतारएतादृशमहिमेतिशेषइति कोसावितितात्पर्यात्श्रद्धातिशयजननार्थपूर्वोक्तमेवाह यत्रेति यत्रयस्मिन्नाद्यावतारेपुरुषना म्निभूतग्रामोभूतसमूहोविभाव्यतेसत्तांप्राप्यदृश्यतेसइत्यर्थः हिशब्दः आद्योवतारोविष्णोस्तुपुरुषोनामकीर्तितइत्यादौप्रसिद्धोयमर्थइतिदर्शयति ८ एकधेत्याद्युक्तंविवृणोति साध्यात्ममिति क्रमोल्लंघ नंप्राधान्यदर्शनाय आध्यात्मादित्रित्वस्यनित्यत्वात्द्वादशानींद्रियाण्याहुरितिश्रुतेरिंद्रियाणांदशविधत्वस्यप्रायिकत्वात् हृदयस्यज्ञानविवक्षयैकत्वादंतःकरणविवक्षयाचातुर्विध्यात् ।अध्यात्मसाहित्ये नवर्तमानरूपमित्यादियोज्यं विशेषणराजनाद्विराट् प्रकृष्टचेष्टकत्वात्प्राणनामात्रब्रह्मांतर्यामी । ब्रह्मदशेंद्रियांतस्थत्वेनदशविधः ब्रह्महृदयस्थरूपेणैकविधः । चशब्दस्त्वध्यात्मादिषुत्रिषुश्रोत्रादीद्रि येषुहृदयेचप्रवेशसंभवाद्धरेःसंख्याभेदःतत्सृष्ट्वातदेवानुप्राविशदितिश्रुतिसिद्धत्वाद्युज्यतइतिदर्शयति प्राणादिनागादिदशप्राणाअपिअध्यात्मादिभेदेनत्रिधाज्ञातव्याः तदुक्तं प्राणादिपंचकंचैवतथानागा दिपंचकं । एवंतुदशधाप्राणाअध्यात्मादित्रिधाऽखिलाइति अधिभूतमपिद्विधा प्रधानवायुस्त्वगादिभेदेन प्राणःप्रथमजोयस्तुप्रधानोवायुरीरितः । त्वगात्माद्यास्तुतत्पुत्राद्विधाभूतमुदाहृतमितिवचनादि दंप्रसंगादुक्तम् ९ इदानींतत्त्वानामस्याकमायतननिर्माणेशक्तिंदेहीतियदुदितंतत्करणप्रकारमाह स्मरन्निति अधोक्षजोविराजंब्रह्मशरीरमंतर्यामिरूपेणप्रविश्यस्वेनतेजसातत्तदैराजाख्यंब्रह्मशरीरमेषा मग्न्यादिदेवानांपृथगायतनानिभवंतितथाविवृत्तयेऽतपदवकाशवदकरोदित्यन्वयः १०

तापकार्यमाह अथेति देवानांयान्यायतनानितस्याभितप्तस्यशरीरस्यसकाशान्निरभिद्यंतविवृतानि अथगदतोममसकाशात्तानिशृणिवत्यन्वयः कतिचेत्येकंपदं चशब्दश्चित्पर्यायः हेत्यनेनसोद्वयए वपुरुषंसमुद्भूत्यामूर्च्छयत्तमभ्यतपत्तस्याभितप्तस्यमुखंनिरभिद्यतेत्यादिसमाख्यांसूचयति ११ शरीरावयवेभ्योमुखलक्षणावयवस्यप्राधान्यज्ञापनायतदुत्पत्तिंतदभिमान्याभिमानोत्पत्तिंचाह तस्येति त स्यब्रह्मातर्यामिणोविवक्षोर्हरेरास्यंमुखसंज्ञायतनंयन्निर्भिन्नंविवृतंतत्पदंस्थानं लोकपालोग्निर्वाचावागिंद्रियाख्यस्वांशेनसहाविशदित्यन्वयः अग्निर्वाग्भूत्वामुखंप्राविशदितिश्रुतिः ययावाचायेनवा गिंद्रियेणब्रह्मशरीरवर्तीहरिर्वक्तव्यंवागिंद्रियविषयंव्यवहाराख्यंप्रतिपद्यतेविज्ञायव्यवहरतीत्यन्वयः उत्तरग्रंथाएवमेवव्याख्येयाः १२ तालुजिह्वामूलंअसौहरिः प्रतिपद्यतेजानाति १३ नासे ना सिके १४ १५ चर्माणित्वगिंद्रियस्थानानि १६ १७ ओषधीरोषध्यभिमानिदेवताः अस्यहरेःरोमभिरंशेन १८ कःप्रजापतिः रेतसागुह्येंद्रियेणानंदंमैथुनोत्थसुखम् १९ विसर्गंधातुमलो

अथतस्याभितप्तस्यकतिचायतनानिह ॥ निरभिद्यंतदेवानांतानिमेगदतःशृणु ११ तस्याग्निरास्यंनिर्भिन्नंलोकपालोविशत्पदम् ॥ वाचास्वांशेनवक्तव्यं ययासौप्रतिपद्यते १२ निर्भिन्नंतालुवरुणोलोकपालोविशद्धरेः ॥ जिह्वयांशेनचरसान्ययासौप्रतिपद्यते १३ निर्भिन्नेअश्विनौनासेविष्णोराविशतांपदम् ॥ घ्राणेनांशेनगंधस्यप्रतिपत्तिर्यतोभवेत् १४ निर्भिन्नेअक्षिणीत्वष्टालोकपालोविशत्प्रभोः ॥ चक्षुषांशेनरूपाणांप्रतिपत्तिर्यतोभवेत् १५ निर्भिन्नान्यथ चर्माणिलोकपालोनिलोविशत् ॥ प्राणेनांशेनसंस्पर्शंयेनासौप्रतिपद्यते १६ कर्णावस्यविनिर्भिन्नौधिष्ण्यंस्वंविविशुर्दिशः ॥ श्रोत्रेणांशेनशब्दस्यसि द्धिंयेनप्रपद्यते १७ त्वचमस्यविनिर्भिन्नांविविशुर्धिष्ण्यमोषधीः ॥ अंशेनरोमभिःकंडूंयैरसौप्रतिपद्यते १८ मेढ्रंतस्यविनिर्भिन्नंस्वधिष्ण्यंकउपाविशत् ॥ रेतसांशेनयेनासावानंदंप्रतिपद्यते १९ गुदंपुंसोविनिर्भिन्नंमित्रोलोकेशआविशत् ॥ पायुनांशेनयेनासौविसर्गंप्रतिपद्यते २० हस्तावस्यविनिर्भिन्नाविंद्रः स्वर्पतिराविशत् ॥ वार्तयांशेनपुरुषोययावृत्तिंप्रपद्यते २१ पादावस्यविनिर्भिन्नौलोकेशोविष्णुराविशत् ॥ गत्यास्वांशेनपुरुषोययाप्राप्यंप्रपद्यते २२ हृदयंचास्यनिर्भिन्नंचंद्रमाधिष्ण्यमाविशत् ॥ मनसांशेनयेनासौविक्रियांप्रतिपद्यते २३ आत्मानंचास्यनिर्भिन्नंवाचस्पतिरुपाविशत् ॥ बुद्ध्यास्वांशेन येनासौनिश्चयंप्रतिपद्यते २४ अहंचास्यविनिर्भिन्नमभिमानोविशत्पदम् ॥ कर्त्रास्वांशेनयेनासौकर्तव्यंप्रतिपद्यते २५

त्सर्जनादिक्रियाम् इंद्रोवृषात्मशक्रोकेथुइत्यभिधानादिंद्रशब्दस्यपुरंदरादन्यविषयत्वनिरासायस्वर्पतिरित्युक्तं वार्तयाहस्तेंद्रियेणांशेन वृत्तिमादानाख्याम् २१ गत्यागतिसाधनपादेंद्रियेण २२ हृदयंमनोनिवासस्थानंमनसेंद्रियेणविक्रियांसंकल्पविकल्परूपाम् २३ आत्मानमात्मनाडीविशेषमुत्पन्नं वाचस्पतिर्बृहस्पतिः । बुद्ध्यास्वांशेनाविशत् ययाबुद्ध्याऽसौहरिनियतोब्रह्मानिश्चयं प्राप्नोति आत्मनाड्यांतथाबुद्धिस्तत्रस्थश्चबृहस्पतिरित्यतआत्मशब्देनात्रनाड्येवोच्यते २४ अस्यब्रह्मणोदेहस्यनिर्भिन्नमहन्नामनाडीविशेषं अभिमानोहंकारोहरःपदंस्वस्थानमविशत् कर्त्रास्वा शेनअहंकर्तेत्यभिमानेनसहयेनकर्त्रंशेन २५

१ अत्रैवं—ब्रह्मनाडी द्विप्रकारा अहंनाडी सत्वनाडीति तत्राहंनाडीगोलकंइन्द्रियंतु मनोबुद्धिरहं काराश्चेत्यमितिभेदभिन्नंअहकाररूपं मनएव अभिमानीतु कर्तातद्रूपोरुद्रः । एवं सत्वनाडीगोलकामिंद्रियं तु मनोभेदश्चित्तम् अभिमानी तु चित्तनामाहर इत्यवधेयम् ।

महान्ब्रह्मासत्त्वंसत्त्वनाडीविशेषंधिष्ण्यंस्वस्थानंचित्तेनाविशत् असौब्रह्मांतर्यामीब्रह्माच शतंचैकास्यहृदयस्यनाड्यइतिश्रुते बहुत्वान्नाडीनांकिमेतेविशेष्योच्यंतइतिचेदुच्यते ब्रह्मनाड्यास्यवांतरत्व
ज्ञापनायएतयोर्मुख्याभिमानीब्रह्माचेति तदुक्तं। अहंसत्त्वमितिद्वेधाब्रह्मनाड्यावांतरं। कर्तृनामात्वहंकारस्त्वहंनाड्यांव्यवस्थितः। सत्त्वनाड्यांतथाचित्तमभिमानोहरस्तथा। अहंनाड्यांसत्त्व
नाड्यांब्रह्माचैवव्यवस्थितइति २६ शीर्ष्णःशिरसः धराभूमिः खमंतरिक्षं येषुगणेषुसत्त्वादिगुणानांवृत्तयःसुखकर्मप्रमादलक्षणाःस्वतोदृश्यंते तेषुलोकेषुसुरासुरादयोवसंतीतिशेषः आदिशब्देनमनुष्या
रुद्रपार्षदगणागृह्यंते २७ एतदेवविवृणोति औत्पत्तिकेनेति औत्पत्तिकेनस्वाभाविकेनसत्त्वेनस्वाभाविकसात्त्विकत्वात् पणयोहानोपादानव्यवहारंकुर्वंतोमनुष्याःयेचतान्पणीननुअनुगतास्तेपि२८ तार्तीं
येनतामसेनस्वभावेनभगवन्नाभिमंतरिक्षमाश्रिताःरुद्रपार्षदगणाः उभयोर्द्यावापृथिव्योरंतरंमध्यंव्योमाश्रिताइतिशेषः२९ इदानींवर्णोत्पत्तिंतदभिमान्युत्पत्तिंचवक्ति मुखतइति पुरुषस्यब्रह्मांतर्यामिणोमुख
तोब्रह्मजातिरवर्तत अत्रब्रह्मशब्देनब्राह्मणजातिःतदुत्पन्नाब्राह्मणास्तज्जात्यभिमानिनउच्यंतइतिज्ञापनायब्रह्मेत्युक्तं उत्तरत्राप्येवमेवानुसंधेयं ब्रह्माभिमानीतुभृगुरजनिब्रह्मणोमुखात्।क्षत्राभिमानीतुमनुर्ब्रह्म
बाह्वोरजायतेत्यादिवचनेनाश्रुतव्याख्येयमितिअपवादंनिवारयति यत्रहरावुन्मुखत्वाद्ब्राह्मणास्त्रिवर्णानांमुख्योगुरुरभवत् तस्यपुरुषस्यैवतत्त्वोपदेशात् तत्त्वज्ञानदानेनाविद्यादिदोषनिगरणाच्चगुरुरित्यर्थः
गुशब्दे गृनिगरणइतिधातुः ३०तंब्राह्मणमनुव्रतः क्षत्रशब्दंनिर्वक्ति यइति कंटकाःशत्रवः वेणोर्दुर्मागेरोमांचेक्षुद्रशत्रौचकंटकइतियादवः क्षतात्त्रायतइतिक्षत्रम् ३१ विशोवैश्यजातयःतदभिमानीवास्तुश्च

सत्त्वंचास्यविनिर्भिन्नंमहान्धिष्ण्यमुपाविशत् ॥ चित्तेनांशेनयेनासौविज्ञानंप्रतिपद्यते २६ शीर्ष्णोऽस्यद्यौर्धरापद्भ्यांखंनाभेरुदपद्यत ॥ गुणानांवृत्तयो
येषुप्रतीयंतेसुरादयः २७ औत्पत्तिकेनसत्त्वेनदिवंदेवाःप्रपेदिरे ॥ धरांरजःस्वभावेनपणयोयेचताननु २८ तार्तीयेनस्वभावेनभगवन्नाभिमाश्रिताः ॥
उभयोरंतरंव्योमयेरुद्रपार्षदागणाः २९ मुखतोवर्ततब्रह्मपुरुषस्यकुरूद्वह ॥ यस्तून्मुखत्वाद्वर्णानांमुख्योभूद्ब्राह्मणोगुरुः ३० बाहुभ्योवर्ततक्षत्रंक्षत्रिय
स्तदनुव्रतः ॥ योजातस्त्रायतेवर्णान्पौरुषात्कंटकक्षतात् ३१ विशोवर्तंततस्योर्वोर्लोकवृत्तिकरीर्विभोः ॥ वैश्यस्तदुद्भवोवार्तांनृणांयःसमवर्तयत् ३२ पद्भ्यां
भगवतोजज्ञेशुश्रूषाकर्मसिद्धये ॥ तस्यांजातःपुराशूद्रोयद्वृत्त्यातुष्यतेहरिः ३३ एतेवर्णाःस्वधर्मेणयजंतेस्वगुरुंहरिम् ॥ श्रद्धयात्मविशुद्ध्यर्थंयज्जाताः
सहवृत्तिभिः ३४ एतत्क्षत्तर्भगवतोदैवकर्मात्मरूपिणः ॥ कःश्रद्दध्यादुदाहर्तुंयोगमायाबलोदयम् ३५

वार्ताकृषिगोरक्षणादिजीवनं आजीवोजीविकावार्तावृत्तिर्वर्तनजीवने। स्त्रियांकृषिःपाशुपाल्यंवाणिज्यंचेतिवृत्तयइत्यमरः। विष्णुब्रह्मवायुरुद्रेभ्योजातत्वाद्विशइतिबहुवचनं एतेपूर्वंहरेर्जाताब्रह्मणस्तदनं
तरमित्यादेः विरिंचादिभ्योजन्मचेत्यद्वृत्त्यातुष्यतेहरिरेतत्कथंयुक्तमितिचेन्न तदंतस्थस्यहरेर्जातत्वात् तदंतस्थहरेर्जनिरितिवा ३२ शूद्रजात्यभिमानीकृतिःकृतिनामाशुश्रूषाकर्मसिद्धयेशुश्रूषाख्यक
र्मसाधनायपुरादिसृष्टौयस्यशुश्रूषाख्ययावृत्त्या ३३ एतेषांस्वस्ववर्णविहितकर्मैवश्रीहरियजनात्मकत्वेनतत्तुष्टिकरंनान्यदितिभावेनाह एतइति तत्रहेतुमाह यज्जाताइति स्वस्वविहितवृत्तिभिःसहाविष्णो
र्जातायद्यस्माद्यस्मात्पितृत्वाद्गुरुत्वादिष्टदेवतात्वात्स्वामित्वाच्च आत्मविशुद्ध्यर्थंमंतःकरणनैर्मल्याय ३४ एवंविधस्यहरेर्माहात्म्यंपुरुषायुषशतेनापिवर्णयितुंनकस्यापिशक्तिरित्याह एतदिति भगवानेवय
तीतानागतवर्तमानानंतब्रह्माण्डानांनिर्मातेतियतोऽतोदैवकर्मात्मरूपिणः देवेष्वधिकत्वाद्दैवंसर्वस्यमूलकारणत्वात्कर्मव्याप्तत्वादात्माएवंत्रिधरूपंस्वभावोस्यास्तीति रूपंशब्देपशौश्लोकेग्रंथावृत्तौहितादिषु
सौंदर्येचस्वभावेचेतियादवः तस्यभगवतोयोगमायायाःस्वरूपमहिम्नोबलोदयंशक्तिप्रसरंकःपुमानुदाहर्तुं सम्यक्तंवक्तुंश्रद्दध्यान्श्रद्धांकुर्यादनंतत्वादितिशेषः अधिकत्वाद्दैवशब्दोदैवतेष्वाधिक्योयतः। दै
वंहरिःकर्ममूलंकर्तिरित्येवमण्यते। व्याप्तत्वादात्मशब्दश्चश्रीपतिस्त्वात्ममाधवइतिवचनादुक्तएवार्थोदैवंदिष्टंभागधेयमित्याद्यभिहितोनभवति ३५

भगवन्माहात्म्यकथानुवर्णनसामर्थ्याभावेपिस्वप्रयोजनवशाद्वक्ष्यामीत्याह अथापीति यद्यप्यानंत्याद्वक्तुंनशक्नोमितथापिहरेरन्यस्याभिधानंयस्याःसाअन्याभिधातांस्वांगिरंसंस्कर्तुमन्यथाशातांपरित्यागेन सतींकर्तुमित्यर्थः ३६ वागादींद्रियाणांजन्मलाभोपमेवेत्याह एकांतलाभइतिपुंसोवचसोवागिंद्रियस्यसुश्लोकमौलेर्हरेर्गुणानुवादंगुणानामभिवंदनमेकांतलाभमव्यभिचारितपुरुषार्थंफलमाहुः प्रेक्षावंतइतिशेषः श्रुतेःश्रवणेंद्रियस्यचविद्वद्भिरुपाकृतायाव्याख्यातायाःकथासुधायाःसंप्रयोगएकांतचित्तत्वेनश्रवणमेकांतलाभ. उतशब्दाच्चक्षुरादिग्रहणंकर्तव्यं तमुत्तोजारःपूर्वयथाविदं । यन्नामस कृच्छ्रवणात्पुल्कसोपिविमुच्यत इत्यादिश्रुतिस्मृतयोप्यस्मिन्नर्थेप्रमाणम् ३७ नन्वादिकविनाहरेर्महिम्नःसमापितत्वादेषउदाहर्तुंकथंनशक्यतइतितत्राह आत्मनइति आदिनाकविनाविरिंचेनसं वत्सरसहस्रंयोगेनशमदमाद्युपायेनाविपक्वयापरिपाकंप्राप्तयाधियासकलशास्त्रार्थावधारणशक्तिमत्याबुद्ध्याअवासितउपाश्रितः आत्मनःपरमात्मनोमहिमाऽवासितः परोक्षीकृत्यज्ञातोयदतोभगवतो मायामहिमा मायिनांज्ञानिनामपिमोहिनीबुद्धिभ्रंशकरीति ३८ ब्रह्मणाज्ञातत्वात्कथंमोहकरीत्याशंक्यतस्यापिसाकल्येनज्ञानंदुष्करमित्याशयेनाह यदिति आत्मवर्त्मापरमात्मज्ञानोपदेशाचार्य आत्माब्रह्मास्वयमपिभगवतोमायांनवेदेति यद्यस्मात्सर्वात्मनेतिशेषः अतोपरेस्मदादयोनविदुरितिकिमुत मायातुमहिमाप्रोक्तःप्राचुर्येतुमयड्यतइति । गुणपूर्तेरात्मशब्दोब्रह्माहीनत्वतोहरः । अहं शब्दस्तथाप्येतौनजानीतोहरिंपरमितिस्मृतिः अहंरुद्रः ३९ नैतच्चित्रमितिभावेनाह यतइति वाचोनंतवेदाभिमानिन्यःश्रियश्चानादिकालमारभ्यमनसागुणगणान्ध्यायंत्योवागिंद्रियेणानिरंतरंव

अथापिकीर्तयाम्यंगयथामतियथाश्रुतम् ॥ कीर्तिंहरेःस्वांसंस्कर्तुंगिरमन्याभिधांसतीम् ३६ एकांतलाभंवचसोनुपुंसःसुश्लोकमौलेर्गुणवादमाहुः ॥ श्रु तेश्चविद्वद्भिरुपाकृतायाःकथासुधायाउतसंप्रयोगः ३७ आत्मनोवसितोवत्समहिमाकविनादिना ॥ संवत्सरसहस्रांतेधियायोगविपक्वया ३८ अ तोभगवतोमायामायिनामपिमोहिनी ॥ यत्स्वयंचात्मवर्त्मात्मानवेदकिमुतापरे ३९ यतोप्राप्यन्यवर्तंतवाचश्चमनसासह ॥ अहंचान्यइमेदेवास्तस्मैभ गवतेनमः ४० ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेसप्तमोध्यायः ॥ ७ ॥ श्रीशुकउवाच ॥ एवंब्रुवाणंमैत्रेयंद्वैपायनसुतोबुधः ॥ प्रीणयन्निवभारत्या विदुरःप्रत्यभाषत १ ॥ विदुरउवाच ॥ ब्रह्मन्कथंभगवतश्चिन्मात्रस्याविकारिणः ॥ लीलयाचापियुज्येरन्निर्गुणस्यगुणाःक्रियाः २

र्पर्यंत्योगुणकथावसानमप्राप्यनशक्यमितियतोनिवर्तंतेअनंतगुणपूर्णइतिनिश्चित्यनित्यपरिचितगुणकथनेचानितरांवर्ततइति अहंचाहंकाराभिमानिनोरुद्रगरुडशेषाअन्येइमेदेवाइंद्रियाभिमानिनइंद्रादि देवायन्मायांनविदुरितियतस्तस्मैभगवतेनमइत्यन्वयः वाचइतिबहुवचनंश्रियोरूपानंत्याद्युज्यते श्रीर्यत्ररूपिण्युरुगायपादयोःकरोतिमानंबहुधाविभूतिभिरितिच अहंत्रिधेत्यहंशब्दस्याहंकारे प्रयुक्तत्वान्मैत्रेयोत्रोच्यते अहीनत्वतोहरः अहंशब्दस्तथाप्येतौनजानीतोहरिंपरमितिच ॥ ४० ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांसप्तमोध्यायः ॥ ७ ॥ दुर्भगशरीर स्यस्यहरेर्दैववत्तस्यैवमाहात्म्यातिरोभावोदुःखभोगश्चनास्तीत्ययमर्थः विदुरस्यवक्ष्यमाणार्थप्रश्नग्रामश्चास्मिन्नध्यायेनिरूप्यते तत्रादौविदुरप्रश्नोपक्रमंवक्ति एवमिति भरतस्यमुख्यमाणस्यापियथावा च १ कालवृत्त्यातुमायायामित्यादिनानिर्गुणोपि सत्त्वादिगुणैरुपादानकारणैर्जगत्सृष्ट्यादिकरोतिईश्वरइत्युक्तं तत्रचोदयति विदुरइत्याह ब्रह्मन्निति हेब्रह्मन् शमदमादिगुणबृंहितचिन्मात्रस्यज्ञानैकर सशरीरस्यावएवनिर्गुणस्यसत्त्वादिगुणरहितस्यातएवाविकारिणोभगवतऐश्वर्यादिगुणसमुद्रस्यहरेःसत्त्वादिगुणास्तन्निमित्तजगत्सृष्ट्यादिक्रियाश्च कथंयुज्येरन्नकथमपिउक्तहेतोरित्यन्वयः लीलार्थंघटतइ तितत्राह लीलयेति नहिकश्चिल्लीलयाकंटकाग्रेपादंनिक्षिपति अपितुमत्युतदूरादेवपरिहरति ऐश्वर्यादपियुज्यतइत्यतोवापीतिनिरंजनोनिरवद्यइतिश्रुतेर्गर्हितत्वात् करोतिचातइदंतच्चलोकलीलाभार्थः२

क्रीडायावानपुज्यतइतितत्रकिंबाधकमत्राह क्रीडायाइतिक्रीडायामुत् क्रीडासंबंधिसुखमर्हस्यापूर्णसुखस्ययतोयस्मात्तस्मान्नघटतइति तत्रकैमुत्यमाह कामंति यथेष्टंक्रीडितुमिच्छापि अन्यतोऽरातेत स्तंद्र्यासंभवति अन्येनसमेनपुरुषेणवासह एतद्रूपमप्याक्षिपति स्वतइति शब्दादिविषयनिमित्ततृप्तिमंतरेणस्वभावेनैवालंबुद्धिगोचरानंदसमुद्रमग्नस्याततएवानिर्वृतस्यरोमांचितगात्रस्यारत्यसंभवात् सच्चासावात्माचसदात्मातस्य सदेवसौम्येदमग्रआसीदात्मावाइदमेकएवाग्रआसीदेकमेवाद्वितीयमित्यादिश्रुतेरसमत्वान्नपुरुषांतरेणसहक्रीडेच्छायाएवासंभवात् किमुतलीलासंभवइति । सदानिर्वृतस्य आत्मनइतिभिन्नंवापदं समस्तगुणपूर्णत्वेनलीलाप्राप्यप्रयोजनानवकाशादित्यर्थः तुनाप्रकारांतरंनिवारयति ३ ननुहरेर्गुणैःसृष्ट्यादिक्रीडायांसत्यामियंचिंतासैवनास्ति निष्क्रियमितिश्रुतेरिति तत्राह अस्राक्षीदिति आत्ममाययास्वाधीनयाप्रकृत्याभूयःपुनस्तयारजोरूपयाऽस्राक्षीत् सत्वरूपयासंस्थापयति तमोरूपयातद्विश्वंप्रत्यभिधास्यतिसंहरिष्यतीत्यतोगुणक्रियासंसर्गदर्शनान्नप्रमापंसं शयइत्यर्थः ४ इतोपिसंशयोदुरुत्सादइत्याह देशतइति देशादिनिमित्तत्वेनस्वतोन्यतःपरतोविलुप्तावबोधात्माअविनष्टज्ञानस्वरूपोयोसौभगवान्सोऽजयाप्रकृत्याकथंयुज्येत युक्त्यागुणरूपप्रकृतिसं सर्गोनसंभवति दृश्यतेतथा तुच्छ्येनाभ्वपिहितमितिश्रुतेःअतःसंदेहइत्यर्थः अवस्थानोजाग्रदाद्यवस्थानिमित्तेन ५ विदुरःप्रकारांतरेणसंशयतेइत्याह भगवानिति नित्यनिरतिशयसकलैश्व र्यादियोगोस्तिहरेरित्याशयेनोक्तं भगवानिति तथादेवदत्तस्यदुर्भगत्वमैश्वर्यादिराहित्यमविद्यास्थितरागद्वेषाभिनिवेशात्मकसंसारजन्यदुःखलक्षणःक्लेशोवादृश्यते तथादुर्भगसर्वक्षेत्रेषुसत्वादमुष्यापि

**क्रीडायामुद्यतोर्हस्यकामंचिक्रीडिषान्यतः ॥ स्वतस्तृप्तस्यतुकथंनिर्वृतस्यसदात्मनः ३ अस्राक्षीद्भगवान्विश्वंगुणमय्यात्ममायया ॥ तयासंस्थापयत्येतद्भूयःप्रत्यभिधास्यति ४ देशतःकालतोयोसाववस्थातःस्वतोन्यतः ॥ अविलुप्तावबोधात्मासंयुज्येताजयाकथम् ५ भगवानेषएवैकःसर्वक्षेत्रेष्ववस्थितः ॥ अमुष्यदुर्भगत्वंवाक्लेशोवाकर्मभिःकुतः ६ एतस्मिन्मेमनोविद्वन्खिद्यतेज्ञानसंकटे ॥ तन्नःपराणुदविभोकश्मलंमानसंमहत् ७ श्रीशुकउवाच ॥ सइत्थंचोदितःक्षत्त्रातत्त्वजिज्ञासुनामुनिः ॥ प्रत्याहभगवच्चित्तःस्मयन्निवगतस्मयः ८ मैत्रेयउवाच ॥ सेयंभगवतोमायायन्नयेनविरुध्यते ॥ ईश्वरस्यविमुक्तस्यकार्पण्यमुतबंधनम् ९**

तत्संसर्गःसंभाव्यःसनयुज्यते कुतोभगवच्छादतःसंशयइत्यर्थः ६ युक्तिज्ञानपूर्वकत्वादयंसंशयःस्वयमेवश्लथितोभवतीत्याशंक्यज्ञानदार्ढ्याभावात्स्थाणुवदवस्थानात्त्वयैवानिर्मूलनीयइतिभावेना ह एतस्मिन्निति ज्ञानसंकटेज्ञानसंबाधेनिश्चितज्ञानाभावइत्यर्थः पराणुदनिराकुरु मूर्च्छातुकश्मलंमोहइत्यभिधानं । संतआत्मनिअल्पमपिदोषंमहत्त्वेनभावयंतीत्याशयेनमहदित्युक्तं नतुतत्त्वेन अतएवंमानसंनतुबुद्धिसंस्थम् ७ शुकस्तस्यप्रश्नपरिहरतीत्याह सइति गतस्मयोगताहंकारःस्मयन्मंदहसन्निव ८ दुर्भगशरीरस्थस्यापिदुःखादिकर्दमास्पर्शोमहात्म्यातिशयादितिपरिहर ति सेयमिति ईश्वरस्यैश्वर्यमूर्तेर्हरेःकार्पण्यंदैन्यंविमुक्तस्यनित्यमुक्तस्यापिबंधनंविरुध्यते प्रमाणतोयुक्तितश्चविरुद्धामितियेनतेनतत्र्याय्यंन्यायोपेतमेवकथं सेयंभगवतोमायाअयंहिहरेर्महिमा यत्प्रमाणयु क्तिभ्यामुपपन्नंतत्परमार्थवस्तु यत्ताभ्यांदुर्घटंतथापिप्रतीयतेशुक्तिरजतवत् सामायेत्यनुभवसिद्धमित्यभिप्रेत्यप्रश्नपरिहरति सेयमिति यन्नयेनन्यायेनविरुध्यतेसाभगवतोमायाअनिर्वाच्याऽवि द्यालक्षणेयमितिसर्वानुभवसिद्धत्वान्नापाकरणयोग्येतिन्यायविरोधंदर्शयति ईश्वरस्येति इत्येतद्भगवतइत्युक्त्यापह्नस्तितमितिज्ञायते तथाहि समस्तैश्वर्यादिमतोभगवच्छब्दार्थत्वेनप्रसिद्धत्वान्नतस्य कार्यंकारणेवाप्यपेक्षा अशक्ताहिसाल्वादयोमायामपेक्षंते अशक्ताःसत्यसृष्टौहिमायासृष्टिंवितन्वतेइतिच । कथंदेहपरोदेवोनलिप्येतेहबंधनैः । कथंनदुःखीसभवेद्दुःखीचेदीश्वरःकुतः । साहिमायपरमस्यैषय देहस्यौनबाध्यते इत्यादिश्रुतिविरुद्धत्वादुक्तएवार्थइति प्राकृतदेहवत्त्वात् देवदत्तवन्मायायोगोघटतइतीयमाशंका अलुप्तबोधरूपत्वान्नासौप्राकृतदेहवानितिवाक्यमदतारस्यकृत्स्नपैवपरिहृता अविलुप्त

बौधात्मेति अतएवमायासृष्ट्याद्यर्थतद्योगइतिचनयुक्तं यच्चिकेतसत्यामिसत्त्वमोघमितिसत्यत्वावधारणात् एवमपितदंगीकारेदानवमतप्रवेशःस्यात्तदुक्तं नचसृष्ट्यादिकभ्रांतिर्भ्रांतिवादाहिदानवाः । अतोभ्रांत्यादिसंबंधोनास्यकथंचनयुज्यतइति ९ तर्हिकस्यभ्रांत्यासंसारइत्याशंक्य प्रक्रांतसंबंधात्तयाजीवस्यैवसंसारइतीममर्थंसदृष्टांतमाह यथेति अमुष्यपुंसोजीवस्योपद्रष्टुः स्वप्नंपश्यतोऽर्थेनविनायथो जनादृतेस्वप्नेस्वशिरश्छेदनादिकआत्मविपर्ययः आत्मनोदेहस्यविपर्ययोदृष्टश्रुतवासनयाऽविद्यमानएवप्रतीयते अत्रेदंतात्पर्यं अस्मिन्जन्मनिजन्मांतरेवाशिरश्छेदःस्कंधारोहणंवादृष्टःश्रुतोवास्वप्नेपेका धिकरण्येनदर्शनभ्रांत्यादृश्यते तद्दर्शनेनचप्रयोजनवदतएवार्थेनविनेत्युक्तं नचतावतास्वप्नस्यमिथ्यात्वमर्थक्रियाकारित्वात् सूचकश्चहिश्रुतेराचक्षतेचतद्विदइतिसूत्रात् निमित्तकारणेशेच्छानियतोपादा नकारणभूतजीवमनोगतवासनाजन्यत्वाच्चेति वैदिकाधिकारविवक्षयापुंसइत्युक्तं स्वाधीनज्ञानाभावादुपद्रष्टुरिति १० यथाचजलेचंद्रप्रतिबिंबस्यतत्कृतोजलचलनादिकृतःकंपादिर्जलगुणोसन्नपिद्र ष्टुःपश्यतःपुरुषस्यदृश्यते एवमेवात्मनोजीवस्यातत्त्वज्ञानादीशेच्छयाऽनात्मनोदेहस्यजननमरणादिगुणोजातोहंमृतोहंकर्ताहमित्यादिप्रतीयते अतःस्वतोद्रष्टुर्ज्ञानादिरूपस्यजीवस्येशेच्छयातत्स्वातं त्र्यस्वपारतंत्र्याद्यज्ञानाज्जातयाभ्रांत्यासंसारस्तस्माद्यथाजपाकुसुमसंपर्कंकृतंस्फटिकलौहित्यंतथाप्रकृतिसंबंधकृतःसंसारःसत्यएवनानिर्वाच्याविद्याजन्यत्वेनभ्रांतिः । तदुक्तं भ्रांत्याजीवस्यसंसारइति । स्वप्नस्यवासनाजन्यत्वेनास्पष्टत्वाच्चदृष्टांतेनसंसारस्यसत्यत्वंदुष्प्रतिपादमितिद्वितीयदृष्टांतकथनम् ११ ननुसंसारस्यसत्यत्वेनिवृत्त्यभावेनकदापिमोक्षोनस्यादितितत्राह सवाइति इहजीवेदृश्यमानः भगवद्भक्तियोगेनजातयावासुदेवानुकंपयायस्यप्रसादादितिश्रुतेःतिरोधत्तेविलीयतेवाइत्यनेनईशज्ञानाद्विलीयतइतिमानदर्शयति यथागरुडध्यानाद्विषनाशइति सत्यस्यापिनाशोघटतइत्यस्मिन्नर्थेवाईश

**यथार्थेनविनामुष्यपुंसआत्मविपर्ययः ॥ प्रतीयतउपद्रष्टुःस्वशिरश्छेदनादिकः १० यथाजलेचंद्रमसःकंपादिस्तत्कृतोगुणः ॥ दृश्यतेसन्नपिद्रष्टुरात्मनो नात्मनोगुणः ११ सवैनिवृत्तिधर्मेणवासुदेवानुकंपया ॥ भगवद्भक्तियोगेनतिरोधत्तेशनैरिह १२ यदेंद्रियोपरामार्थोद्रष्टात्मनिपरेहरौ ॥ विलीयंतेतदा क्लेशाःसंसुप्तस्येवकृत्स्नशः १३ अशेषसंक्लेशशमंविधत्तेगुणानुवादश्रवणंमुरारेः ॥ किंवापुनस्तच्चरणारविंदपरागसेवारतिरात्मलब्धा १४ ॥ विदुरउवाच ॥ संछिन्नःसंशयोमह्यंतवसूक्तासिनाविभो ॥ उभयत्रापिभगवन्मनोमेसंप्रधावति १५**

स्वातंत्र्याज्ञानादुत्पन्नकर्तृत्वाभिमानलक्षणभ्रांतिविलयईशज्ञानाद्युज्यते भ्रांतिर्हिदेहाभिमतिरीशज्ञानाद्विनश्यतीतिच । बहूनांजन्मनामंतइतिवचनाच्छनैरिति १२ सर्वनामसंज्ञाभावात्परइति सर्वोत्तमे हरौसंसारकारणदुरितदूरीकरणसमर्थेभगवतिदृष्टात्मनि अपरोक्षीकृतस्वरूपेसतियदेंद्रियाणाविष्णुसमीपरमणाख्यपुरुषार्थोमुक्तिस्तदासर्वेक्लेशाविलीयंते संसुप्तस्यसम्यक्सुप्तस्यजीवस्यसुप्त्यवस्था यांकृत्स्नशःक्लेशायथाविलीयंतेतथेत्यर्थ. १३ क्लेशनिवृत्तौकैमुत्यन्यायप्रदर्शनव्याजेनसुगमोपायंदर्शयति अशेषेति गुणानामनुवादयुक्तश्रवणं यद्वा गुणानामनुवादोयेषुतेगुणानुवादाभागवतादयस्ते षांश्रवणमेवाशेषसंक्लेशविनाशंकरोति किंपुनर्व्याख्यानमितिसिद्धत्वात्पृथङ्नोक्तं आत्मनिलब्धातस्यमुरारेश्चरणारविंदपरागसेवायांरतिःक्लेशशमंविधत्तेइति किंवाकिंवक्तव्यंपुनरितिसंदेहनिवारयति पुनरप्यथमेप्रश्नेव्यावृत्तावधारणइतिवचनात् अनेनश्रवणमननव्याख्यानोपासनानामुत्तरोत्तरप्राबल्यमुपायांतराभावश्चेतिदर्शितम् १४ विदुरोमैत्रेयस्यावश्यवक्तव्यत्वेतात्पर्यंजनयितुमुक्तार्थवक्तव्यां शोनास्तीत्याह संछिन्नइति सूक्तमेवासिःखड्गः । तेनात्रसंशयपदेनान्यथाज्ञानंग्राह्यमन्यथोभयत्रेत्युत्तरार्धमनुपपन्नंस्यादज्ञानंवा शीङ्स्वप्नइतिधातुजत्वात् स्वप्नस्त्वज्ञानशब्दोक्तोविपरीतमथापिचेति वचनात् दुर्भगदेहस्थस्यापिहरेस्तद्गतदुःखादिभोगःसंभाव्यतइति अन्यथाज्ञानंनिरस्तमित्यर्थ. मह्यंममेतिव्यत्यासः चिरकालस्थायीनस्यादित्याशयेनोक्तं नन्वन्यथाज्ञानस्याच्छिन्नत्वात्किमुत्तरग्रं थेनेतितत्राह उभयत्रेति उभयत्रदेहाद्यहंममतादौहरौचान्यथाज्ञाननाशादिदमदोवेतिसंदेहोजायतेइतिभावः अपिशब्दःसमुच्चयार्थः १५

अस्यामुक्तवचनैश्चित्याभावात्तवसंशयःकिंनेत्याह साध्विति हेविद्वन् ब्रह्मसाक्षात्कारयोग्यज्ञानवन् हरेरात्ममायायनंस्वरूपसामर्थ्याश्रयमयांहिभगवन्माहिमेतियद्व्याहृतंत्वयोक्तंतत्साधुसंशयनिरासनौशि
त्योचितं आत्वेत्यनेनमायाशब्दस्यैंद्रजालाभिधेयत्वंदूरोत्सारितं यद्यप्येवंतथाप्यपार्थंप्रयोजनशून्यं अतएवनिर्मूलं पूर्वादृष्टमंतरेणकारणांतरशून्यंदेहात्मत्वादिप्रत्यस्यान्यानि ... [illegible]
ब्रह्मैर्नभवति यद्यस्मात्तस्मादंतरितउभयभ्रष्टइवास्मीतिशेषः १६ एतदेवस्पष्टयति यश्चेति लोकेब्रह्मणासृष्टेजनेयोमूढतमः अत्यंतज्ञानविवेकशून्यः यश्चबुद्धेःप्रकृतेःपरं... [illegible] तावुभौसुखमेधतु
भवत्सुखमेधेतेअंतरितस्तयोर्मध्यवर्तीजनःस्वप्नदर्शिवत्क्लिश्यति क्लेशंप्राप्नोति तथाहमपिक्लिश्यामीत्यर्थः १७ स्वमंतरितजनेष्वेकश्चेत्संशयानुपगमेनमुक्तोभस्यास्तत्त्वसंशययुक्तायेसर्वेतेनिरोपता
इतिवचनादित्याशंक्यस्थाणुर्वापुरुषोवेतिसंदिहानोयथाप्तवाक्याद्वक्रकोटरादिदर्शनाद्वासंशयप्रतीतिंपराहृत्यस्थाणुरेवायंनपुरुषइतिनिश्चयज्ञानंप्रतिपद्यते तथाहमपियुष्मच्चरणसेवाप्रसन्नयुष्मदुपदेशाद
नात्मनोदेहस्यसंबंधिनोहंममतादेःमोहात्मत्वेनप्रतीतस्यापिअर्थाभावंजीवस्वरूपपर्यालोचनयाप्रयोजनाभावंनिश्चित्यचोभयविषयांतांप्रतीतिंनिरस्यपुरुषार्थोपयोगिज्ञानंलभत इत्यभिप्रायवानाह अर्था
भावमिति द्वितीयापिशब्देनसेवायाःप्राधान्यंवक्ति चशब्दःसंशयनिरासनिश्चयज्ञानलब्ध्योःसमुच्चयेवर्तते पराणुदइत्यनेनानियतपरस्मैपदेनान्यथाप्रयुक्तेनाविद्यमानमपिअनुभवमन्यथावदतीतिविदुरइतिसूच्य
तेनचशूद्रयोनौजातस्ययथार्थज्ञानमेवनास्तीतिवाच्यं द्रोणद्रौणिकृपाःपार्थाभीष्मोविदुरसंजयौ । येचान्येतत्रदेवांशाःसम्यक्तत्त्वापरोक्षिणइतिवचनात्सम्यक्तत्त्वापरोक्षत्वात् तत्संनृतभाषित्वेनदोषित्व

साधुतद्व्याहृतंविद्वन्नात्ममायायनंहरेः ॥ आभात्यपार्थंनिर्मूलंविश्वमूलंनयद्बहिः १६ यश्चमूढतमोलोकेयश्चबुद्धेःपरंगतः ॥ तावुभौसुखमेधेतेक्लिश्यत्यंतरि
तोजनः १७ अर्थाभावंविनिश्चित्यप्रतीतस्यापिनात्मनः ॥ तांचापियुष्मच्चरणसेवयाहंपराणुदे १८ यत्सेवयाभगवतःकूटस्थस्यमधुद्विषः ॥ रतिरा
सोभवेत्तीव्रःपादयोर्व्यसनार्दनः १९ दुरापाह्यल्पतपसःसेवावैकुंठवर्त्मसु ॥ यत्रोपगीयतेनित्यंदेवदेवोजनार्दनः २० सृष्ट्वाग्रेमहदादीनिसविकाराण्यनुक्र
मात् ॥ तेभ्योविराजमुद्धृत्यतमनुप्राविशद्विभुः २१ यमाहुराद्यंपुरुषंसहस्रांघ्र्युरुबाहुकम् ॥ यत्रविश्वइमेलोकाःसविकाराःसमासते २२

मापन्नमितिचेन्नपृष्टमेववक्तव्यंनापृष्टमिति अपृष्टार्थप्रवचनोपरमार्थत्वेनगुणत्वात् आत्मनस्तुगुणाभावंवदतोनत्वसत्यता । अपृष्टस्यदमार्थंचगुणायैवभवत्यपीतिवचनात् १८ श्रीनारायणचरणार
विंदनिषेवासंसारव्यथानिरासकत्वेनपुरुषार्थोपयोगिनीस्यात्किमस्मच्चरणसेवाकरिष्यतीतिशंकामाभूदित्याह यत्सेवयेति येषांहरिस्वरूपद्रष्ट्णांयुष्माकंसेवया भगवतःपादयोः तीव्रःपटुतरोरतिरा
सोरतिरूपाक्रीडारतिलक्षणोरागोवाभवेदित्यन्वयः मधुद्विषइत्यनेनहरेर्बाहिरेवावस्थानंप्रतीयतेतन्निरासार्थंकूटस्थस्येति चेतनाचेतनराशिनियामकत्वेनतदंतस्थस्यक्रोधादिविकारनाशस्यवा १९
पूर्वसंचितपुण्यैरेवभवादृशानांमहतांसेवालभ्यानान्यैरित्याह दुरापेति वैकुंठस्यवर्त्मज्ञानोपदेशमार्गोयेषांतेषुमहत्सुसेवा हिशब्दएवार्थे दुष्प्रापत्वेनिमित्तमाह यत्रेति यत्रयेषांभवादृशानांपरिसरेभग
वद्गुणानांजनार्दनप्रसंगोदुःसहइतियस्मादतस्तत्कथाप्रसंजकेषुसत्सुदुःसहत्वेनसेवादुरापेत्यर्थः जनोजननमुपलक्षणंमरणंचार्दयतिनाशयतीतिजनार्दनः अर्दहिंसागत्योरितिधातुः २० विदुरो
विशेषंश्रोतुमनुवदति सृष्ट्वेति अग्रेजगदादौषोडशविकारास्तैःसहितानितेभ्योमहदादिभ्योंडसृष्ट्वांडांतर्वर्तिविराजंब्रह्माणमुद्धृत्य सृष्ट्वातंब्रह्माणमनुप्राविशत् तत्त्वप्रवेशानंतरंब्रह्मप्रवेशइतिज्ञापनाया
न्विति विभुर्व्यासः २१ नन्वंतर्बहिर्व्याप्तस्यपरिच्छिन्नयोग्यःप्रवेशःकथमित्याशंक्यतत्तद्वस्तुपरिमितरूपग्रहणेनसुकरइतिभावेनाह यमाहुरिति यत्रयस्मिन्पुरुषेइमेपातालादयः २२

यस्मिन्ब्रह्मांतर्यामिणिपुरुषे प्राणापानौतथाव्यानस्तथोदानसमानकौ । नागःकूर्मश्चकृकलोदेवदत्तधनंजयाइतिदशविधः सेंद्रियार्थेंद्रियइंद्रियार्थैःशब्दादिभिश्चक्षुरादींद्रियैश्चसहितः । त्रिवृदोजःस होबलरूपोवर्ततइतिशेषः श्रुतमनूद्यवक्तव्यांशंप्रार्थयते त्वयेरिताइति त्वयायेब्राह्मणादिवर्णायतांब्रह्मांतर्यामिणःसृष्टाईरितास्तद्विभूतीस्तेषांवर्णानांतस्यब्रह्मांतर्यामिणश्चविभूतीर्नोऽस्माकंवदस्व यथा ज्ञातुंशक्यंतेतथाब्रूहीत्यन्वयः भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषुवदइत्यात्मनेपदम् २३ यत्रयेषुवर्णेषुजातैर्नृभिःपुत्रपौत्रैर्विचित्राकृतयः परस्परव्यावृत्तलक्षणोपेताकाराः विभुर्ब्रह्माविरा जंब्रह्मांडजलादुद्धृत्यावकाशवत्कृत्वानुप्राविशदितिप्रतीतार्थपरित्यज्याप्रतीतार्थांगीकारेकोनियामकसृष्टिश्चब्रह्मणइतिप्रसिद्धेरितिचेन्न ब्रह्माणमाविशद्विष्णुःसहस्राक्षःसहस्रपात् । अनुप्रविश्यब्रह्माणं प्राणंदशविधंतथा । इंद्रियाणींद्रियार्थांश्चवर्णांश्चैवासृजद्धरिरितिप्रमाणद्वयेनानियतत्वादहरूढेर्दुर्बलत्वाच्च २४ २५ आसतेविष्ठांति संस्थांव्यवस्थां २६ सरीसृपाःसर्पादयःसहस्रपादादयोवा सर्गसंव्यूहंसृष्टिविस्तारं गर्भजस्वेदजोद्भिजामितिवापाठःअस्मिन्पक्षेपुनरुक्तिर्नास्ति २७ ब्रह्मांतर्यामिणो विभूतीर्वदस्वेतिउक्तंविशेषतःप्रार्थयते गुणावतारैरिति सर्गस्थित्यप्ययात्मनोविश्वस्यजगतो र्थेसृजतः आत्मानमितिशेषः । ज्ञानादिगुणयुक्तावतारैःसत्त्वादिगुणनिमित्तावतारैर्वा यदायदाहिधर्मस्यग्लानिर्भवतिभारत । अभ्युत्थानमधर्मस्यतदात्मानंसृजाम्यहमित्यादेर्वीर्यादिगुणप्रकाशैर्वा

यस्मिन्दशविधःप्राणःसेंद्रियार्थेंद्रियस्त्रिवृत् ॥ त्वयेरितायतोवर्णास्तद्विभूतीर्वदस्वनः २३ यत्रपुत्रैश्चपौत्रैश्चनप्तृभिःसहगोत्रजैः ॥ प्रजाविचित्राकृतय आसन्याभिरिदंततम् २४ प्रजापतीनांसपतिश्चिक्ऌपेकान्प्रजापतीन् ॥ सर्गांश्चैवानुसर्गांश्चमनून्मन्वंतराधिपान् २५ एतेषामपिवंशांश्चवंशानुच रितानिच ॥ उपर्यधश्चयेलोकाभूमेर्मित्रात्मजासते ॥ तेषांसंस्थांप्रमाणंचभूर्लोकस्यचवर्णय २६ तिर्यङ्मानुषदेवानांसरीसृपपतत्रिणाम् ॥ व दनःसर्गसंव्यूहंगर्भस्वेदद्विजोद्भिदाम् २७ गुणावतारैर्विश्वस्यसर्गस्थित्यप्ययात्मनः ॥ सृजतःश्रीनिवासस्यव्याचक्ष्वोदारविक्रमम् २८ वर्णाश्रमवि भागांश्चरूपशीलस्वभावतः ॥ ऋषीणांजन्मकर्माणिवेदस्यचविकर्षणम् ॥ यज्ञस्यचवितानानियोगस्यचपथःप्रभो २९ नैष्कर्म्यस्यचसांख्यस्यतंत्रंवा भगवत्स्मृतम् ॥ पाषंडपथवैषम्यंप्रतिलोमनिवेशनम् ३० जीवस्यगतयोयाश्चयावतीर्गुणकर्मजाः ॥ धर्मार्थकाममोक्षाणांनिमित्तान्यविरोधतः ३१ वार्तायादंडनीतेश्चश्रुतस्यचविधिंपृथक् ॥ श्राद्धस्यचविधिंब्रह्मन्पितॄणांसर्गमेवच ३२ ग्रहनक्षत्रताराणांकालावयवसंस्थितिम् ॥ दानस्यतपसोवा पियच्चेष्टापूर्तयोःफलम् ३३

श्रीनिवासस्योदारविक्रमंप्रख्यातचरितंव्याचक्ष्वेत्यन्वयः । उदारोमहतिख्यातइत्यभिधानं । सर्वस्मादिदंश्रीहरिचरितंविस्तृत्यवदेत्यतोव्याचक्ष्वेतिश्रियासहनिवासोस्यास्तीतिश्रीनिवासस्तस्य अनेन द्वावेतौनित्यमुक्तावितिश्रुतिःसूच्यते श्रीर्निवसत्यस्मिन्नितिवा अकर्तरिचकारकेसंज्ञायामिति घञ् २८ रूपतःशीलतःस्वभावतः विकर्षणंविभागंयज्ञस्यवितानानिविस्तारान् योगस्याष्टांगयोगस्य । पथो मार्गान् २९ नैष्कर्म्यस्यसांख्यस्यमोक्षसाधनज्ञानस्य स्मृतंप्रणीतं तंत्रंशास्त्रं पाषंडपथवैषम्यं पाषंडमार्गोत्पत्तिविशेषं गुणानांविषमावस्थासंभवःपरिकीर्तितः । साम्यंतुप्रलयोज्ञेयइतितत्त्वविदोविदुरि तिवचनात् यद्वा पाषंडस्यपापलिंगस्यधर्मस्यसकाशाद्बुद्धिवैषम्यं प्रतिलोमनिवेशनंब्राह्मणादिकन्यकानांक्षत्रियादिविवाहलक्षणं ३० यावतीर्यावत्यः तावतीरितिशेषः सत्त्वादिगुणकर्मभ्योजाताः नि मित्तानिसाधनान्यविरोधतःपरस्पराविरोधेन ३१ वार्तायावाणिज्यादेः दंडनीतेरर्थशास्त्रोक्तस्यराजधर्मस्य श्रुतस्यश्रुत्युक्तस्यविधिंप्रकारम् ३२ ग्रहाःसूर्यादयः नक्षत्राण्यश्विन्यादीनि ताराध्रुवादयः कालावयवानांपरमाण्वादीनांसंस्थितिः इष्टंयागादि पूर्तंतडागखननादि ३३

धर्मात्पुण्यात् योनिराविर्भावलक्षणोत्पत्तिर्यस्यसतथा धर्मस्ययोनिःकारणंलोकसंग्राहकत्वेनकर्तेत्यर्थः ३४ ३५ प्रतिसंक्रमःप्रलयः ३६ तत्रप्रलयेइमंहरिं उनाहृत्तापंसृत्यपाति पश्चप्रदचनपर्यंसं सोस्तीति उतापेव्वयधर्मीशानेइतियादवः चेत्यस्मिन्नर्थेवापुरुषस्यावतारसंस्थानंपरस्यपरमात्मनःस्वरूपं अवतारेष्वपिनिजावतारःकइत्यर्थः यद्वा पुरुषस्यजीवस्यएकत्वादिविषयं परस्यमुक्तस्यस्वरूपं मुक्तिर्हित्वान्यथारूपंस्वरूपेणव्यवस्थितिरितिविवक्षति ३७ गुरुशिष्ययोःप्रयोजनंव्याख्यानश्रवणाभ्यांनैःशिल्यनिश्चयलक्षणं यद्वा गुरुशिष्यौप्रयोजयतीतिवा नैगमंवेदातजन्यज्ञानं इहशास्त्रेतस्य ज्ञानस्योपायानिमित्तानिसाधनानितान्यपि ३८ पुंसास्वतःसाधनानिविनाज्ञानंकुतोभवेत् भक्तिर्वैराग्यंवाकुतःस्यातामितिशेषः ३९ कर्मविवित्सयावेत्तुमिच्छयापृच्छतइतिशेषः वक्तव्यत्वे निमित्तमाह मित्रत्वादिति आपत्सुमित्रंजानीयादितिवचनात् कातवआपदितितत्राह अजयेति अजयाप्रकृत्या पुरुषस्यांधत्वाधिकापन्नास्तीत्यर्थः अंधकारेणनष्टचक्षुःशक्ते पुंसोयथामित्रंसूर्यःप्रयोजकः तथात्वमपीतिभावेनोक्तं मित्रत्वादिति ४० त्वदभीष्टत्वेकुतएतदेववक्तव्यमन्यत्किंनस्यादत्राह सर्वइति जीवाभयहेतुज्ञानप्रदानस्यकलांषोडशीं । अपिनावेदादिज्ञानप्रवक्तृप्रयोक्तृपुरुषसंतरेणेति

प्रवासस्थस्ययोधमायश्चपुंसउतापदि ॥ येनवाभगवांस्तुष्येद्धर्मयोनिर्जनार्दनः ३४ संप्रसीदतिवायेषामेतदाख्याहिमेनघ ॥ अनुव्रतानांशिष्याणां पुत्राणांचद्विजोत्तम ३५ अनापृष्टमपिब्रूयुर्गुरवोदीनवत्सलाः ॥ तत्त्वानांभगवंस्तेषांकतिधाप्रतिसंक्रमः ३६ तत्रेमंकउपासीरन्कउस्विदनुशेरते ॥ पुरुषस्यचसंस्थानंस्वरूपंवापरस्यच ३७ ज्ञानंचनैगमंयत्तद्गुरुशिष्यप्रयोजनम् ॥ निमित्तानिचतस्येहप्रोक्तान्यनघसूरिभिः ३८ स्वतोज्ञानंकुतः पुंसांभक्तिर्वैराग्यमेववा ३९ एतान्मेपृच्छतःप्रश्नान्हरेःकर्मविवित्सया ॥ ब्रूहिमेऽधस्यमित्रत्वादजयानष्टचक्षुषः ४० सर्वेवेदाश्चयज्ञाश्चतपोदानानि चानघ ॥ जीवाभयप्रदानस्यनकुर्वीरन्कलामपि ४१ ॥ श्रीशुकउवाच ॥ सइत्थमापृष्टपुराणकल्पःकुरुप्रधानेनमुनिप्रधानः ॥ प्रवृद्धहर्षोभगवत्कथायांसं चोदितस्तंप्रहसन्निवाह ४२ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेअष्टमोध्यायः ॥ ८ ॥ मैत्रेयउवाच ॥ सत्सेवनीयोबतपूरुवंशोयल्लोकपालोभगव त्प्रधानः ॥ बभूविथेहाजितकीर्तिमालांपदेपदेनूतनयस्यभीक्ष्णम् १ सोहंनृणांक्षुल्लसुखायदुःखंमहद्गतानांविरमायतुभ्यम् ॥ प्रवर्तयेभागवतंपुराणंयदा हसाक्षाद्भगवानृषिभ्यः २

सूचयति ४१ शुकःपृष्टेनमैत्रेयेणपृष्टमेवोक्तमन्यद्वेतिपरीक्षितोहार्दांशंकांपरिहरति सइत्थमिति प्रश्नाख्यपुराणविषयःकल्पःविकल्पः कल्पोन्यायसुरद्रुमेविकल्पेचेतियादवः बालकथाप्रश्नवद्गुहीकथै वसारभूतानभगवत्कथापृष्टेतिमंदाशंकापरिहरति भगवत्कथायामिति अनेनसर्वोपिप्रश्नाभगवत्कथाविषयाइतिसूचितंभवति ४२ ॥ इतिश्रीभागवतेतृ०टी०अष्टमोध्यायः ॥ ८ ॥ अस्मिन्नध्यायेसर्व जीवोत्तमहिरण्यगर्भस्रष्टृत्वमभिधानेन हरेःसर्वोत्तमोत्तमत्वमाहात्म्यमवधृतमतस्तज्ज्ञानमवश्यमापाद्यंमुमुक्षुभिरितिनिरूप्यते तत्रादौप्रश्नान्परिहरिष्यन्तंविदुरंमानयन्स्वस्यपुराणावगतिप्रकारंकथयति सत्सेवनीयइति बतानुकंपायां यद्यस्मिन्पूरोर्वंशेभगवानेवप्रधानःसर्वोत्तमोयस्यसतथालोकपालस्त्वंलिष्टालोकविडंबनार्थंगर्भवासानुभवंपरोक्षयति भगवत्प्रधानत्वंप्रकाशयति इहेति इहलोकेऽजि तस्यहरेःकीर्तिपुष्पमालांनूतनयसिनवांकरोषि यस्मात्तस्मादित्यध्याहार्यौ १ अधुनाप्रश्नप्रतिवचनंप्रतिजानीते सोहमितियोहंकृष्णेनतवज्ञानोपदेशायादिष्टोयश्चममज्ञानमुपदिशेतित्वयाप्रार्थितः सोहक्षुल्ल सुखायाल्पसुखायमहद्दुःखगतानांनृणांदुःखस्यविरामायनिर्मूलनायसाक्षात्संकर्षणोभगवान्सनत्कुमारादिभ्यःऋषिभ्योयदाह तद्भागवतंपुराणंत्वत्प्रश्नपरिहारत्वेनप्रवर्तयइत्यन्वयः २

सूचितमाभिमूलत्वंमपंचयति आसीनमुर्व्यामिति उर्व्यांपाताले त्रिलोकीविवक्षयाभूमिपदेनपाताळाभिधेयत्वंयुक्तं अतःसंकर्षणात्परस्यहरेस्तत्त्वंविवित्सवोज्ञातुकामाः कुमारमुख्यामुनयःऊर्व्यांपाताले विस्तृतायांवृस्यामासीनमाद्यंसनकादिभ्यःपूर्वजातंदेवंश्रीहरिस्तुत्यामेवप्रकाशमानं अकुंठसत्वमप्रतिबद्धज्ञानशक्तिं नकुंठोपस्यतदकुंठं अकुंठसत्वंवैष्णवस्वभावोयस्यसोकुंठसत्वस्तमितिवा संकर्षणंभगवंतमन्वपृच्छन्नित्यन्वयः ३ भगवदुपास्तिमंतरेणान्योव्यापारोस्यनास्तीतिताहशैर्विशेषणैस्तंविशिनष्टि स्वमेवेति प्रेक्षावंतोयंवासुदेवाभिधमामनंतितंस्वंसदानंदरूपंस्वतंत्रंवा धिष्ण्यंस्थानमाधारंभगवंतमेवबहुमानयंतं भक्त्योपासमानं पुनरपिकीदृशं प्रत्यगात्मनिस्वांतर्यामिणिधृतमाहितमक्षाख्यमंबुजकोशं विबुधानामुदयायईषदुन्मीलयंतंविकसितंकुर्वाणं अनेन संप्रेक्षणनासिकाग्रंस्वांदिशश्चानवलोकयन्नितिवचनादवनतजनानुग्रहायोन्मीलनमन्यदानयुक्तमित्युपास्ताविथंभावोदर्शितः आधारआश्रयोधिष्ण्यंनिधानंचाभिधीयतइतिवचनात् । धिष्ण्यंशुक्रानिलौधिष्ण्यमृक्षेस्थानेबलेगृहइत्युक्तशुक्रादिकंनग्राह्यमनुपयोगात् वासुदेवाभिधमित्युक्तत्वाच्च ४ पथिकस्यार्थंप्रश्नवन्नायंप्रश्नोऽवश्यंज्ञातव्यत्वेनेतिबहुमानंवक्ति स्वर्धुन्युदारैरिति सप्रेमेतिक्रियाविशेषणं अहिराजकन्याः नानाबलिभिर्बहुविधपूजासाधनैर्यंत्पत्रमर्चयंति वराहांवरप्राप्तियोग्याइत्यनेनोत्तमभर्तृप्राप्तयेपूजेतिसूच्यते स्वर्धुन्याभागीरथ्याउदस्यउदकस्याराशानलक्षणामाप्तिर्येषांतेरवर्धुन्युदारास्तैः ऋगताविविधातोर्यंत्र

आसीनमुर्व्यांभगवंतमाद्यंसंकर्षणंदेवमकुंठसत्त्वम् ॥ विवित्सवस्तत्वमतःपरस्यकुमारमुख्यामुनयोन्वपृच्छन् ३ स्वमेवधिष्ण्यंबहुमानयंतंयंवासुदेवाभिधमामनंति ॥ प्रत्यक्धृताक्षांबुजकोशमीषदुन्मीलयंतंविबुधोदयाय ४ स्वर्धुन्युदारैःस्वजटाकलापैरुपस्पृशंतश्चरणोपधानम् ॥ पद्मंयदर्चंत्यहिराजकन्याःसप्रेमनानाबलिभिर्वरार्हाः ५ मुहुर्गृणंतोवचसानुरागस्खलत्पदेनास्यकृतानितज्ज्ञाः ॥ किरीटसाहस्रमणिप्रवेकप्रद्योतितोद्दामफणासहस्रम् ६ प्रोक्तंकिलैतद्भगवत्तमेननिवृत्तिधर्माभिरतायतेन ॥ सनत्कुमारायसचाहपृष्टःसांख्यायनायांगधृतव्रताय ७ सांख्यायनःपारमहंस्यमुख्योविवक्षमाणोभगवद्विभूतीः ॥ जगादसोस्मद्गुरवेन्वितायपराशरायाथबृहस्पतेश्च ८ प्रोवाचमह्यंसदयालुरुक्तोमुनिःपुलस्त्येनपुराणमाद्यम् ॥ सोहंतवैतत्कथयामिवत्सश्रद्धालवेनित्यमनुव्रताय ९ उदप्लुतंविश्वमिदंतदासीद्यन्निद्रयामीलितदृङ्न्यमीलयत् ॥ अहींद्रतल्पेधिशयानएकःकृतक्षणःस्वात्मरतावनीहः १०

त्ययेनारइतिरूपंपद्मास्वर्धुन्याअवगाहेनउदारैर्महद्भिः उदारंदातृमहतोरित्यभिधानं एवंविधैःस्वजटाकलापैस्तस्यसंकर्षणस्यचरणयोरुपधानंपीठायमानंतत्पद्ममुपस्पृशंतः पादप्रसादंस्पृष्ट्वानमंतइत्यर्थः ५ नमस्कारस्याष्टांगविशिष्टत्वंसूचयतीत्याह मुहुर्गृणंतइति अस्यशेषस्यकृतानिकर्माणि अनुरागेणभक्त्यास्खलितपदानियस्मिंस्तत्तथोक्तं तेनवचसातज्ज्ञानमननप्रकारंकर्मप्रकारंचजानंतइत्यर्थः देवाःकिरीटाद्यलंकारवंतःश्रूयंतेकोस्यालंकारोयेनदेवमित्युक्तिःसार्थास्यादितितंविशिनष्टि किरीटेति सहस्रमेवसाहस्रंकिरीटानांसहस्रेप्रत्युप्तानांमणीनांप्रवेकैःश्रेष्ठैःप्रद्योतितंप्रकाशितमुद्दाममुत्कृष्टंचफणानांसहस्रंयस्यसतथोक्तस्तम् ६ तेनसंकर्षणेनसनत्कुमारायप्रोक्तं इदंपुराणंत्वत्प्रश्नपरिहारत्वेनवक्ष्यामीत्येतावतापूर्णत्वात् सांख्यायनायेत्यादिकथनेनकिंप्रयोजनमित्याशंक्यपुराणाध्येतृगुरुपरंपराकथनंश्रोतॄणामतिशयबुद्ध्यातच्छ्रवणादौक्षिप्रंनिरंतरंप्रवृत्तिःस्यादितिमहाप्रयोजनमस्तीतिमन्वानआह । प्रोक्तमित्यादिना । निवृत्तिधर्माभिरतत्वादिकंपुराणश्रवणाद्यधिकारसंपत्त्यर्थमुच्यतइतिज्ञातव्यम् ७ ८ ९ तदेवंशुकःपाद्मकल्पमिमंशृण्वित्युक्तंपाद्मंकल्पंमैत्रेयेणविदुरप्रश्नपरिहाररूपत्वेनकथयति उदप्लुतमिति अनीहोऽक्लिष्टकारी अनःप्राणोस्यास्तीतिअनीप्राणीतदर्थमीहाचेष्टावतार।

१ तात्पर्यानुसारेणेदं अतएवप्रमाणमव्यग्रे न निवासस्थानमर्थः ।

दृचरितंयस्यसोनीहः उपरतसर्गादिव्यापारोवा स्वात्मनिरतौक्तक्षणोलब्धावसरःअहींद्रस्यानंतस्यतल्पेभोगाख्यशय्यायामेकोधिशयानोयद्यदामीलितदृक्वीविनिद्रोपिनिद्रामीलितलोचनोन्यमीलयत् योगनिद्रामुद्रितनेत्रःअभूत् तदेदंविश्वंउदस्तुतंउदेजलेलुतंगतंमग्नंकल्पमलयेजलशायिश्रीनारायणोदरगतमासीदित्यर्थः १० तदोदरीकृतलोकयात्रोहरिःकिंचकारेतितत्राह सोंतरिति दृथानलोदारु णिकाष्ठेरुद्धवीर्यःप्रतिबद्धदाहकत्वशक्तिर्वसतितथाहरिरपिशरीरांतर्हृदयाकाशेपिंत्वानिस्थूलकार्यदेहस्यलीनत्वाद्भूतानांसूक्ष्माणिरूपाणियस्यसतथा यद्वाशब्दादितन्मात्रारूपाणि एतदात्मकत्वात्सव स्येतिचराचरात्मकंसर्वंशृण्वतेकालात्मिकांप्रलयकालमात्राख्यांशक्तिं यद्वाप्रलयकालाभिमानिनींशक्तिंभार्यांसुखेप्रेरयन्स्वेपदेस्वस्थानेसलिलेउवासेत्यन्वयः उदीरयाणउदीरयमाणइति ज्ञानचास्यात्म नीतिसूचयति ११ स्वापावधिमाह चतुर्युगानामिति चशब्देनोवासेतिपदमनुकर्षति चतुर्युगानांसहस्रमितिसंख्यातंकालंस्वपन्नप्सुवासेति ततउत्तरकालेकाक्रियाभूदितितत्राह तयेति सृष्टिसंहारशक्त्यो रेकत्वद्योतनायतयेतिपरामृष्टं सृष्टिकालाख्ययोदीरितयाप्रेरितयास्वशक्त्याऽऽसादितकर्मतंत्रःसृष्ट्यर्थमुपस्थापितजगत्सर्गादृष्टाख्यसाधनःनित्यज्ञानगोचरत्वादिमान्लोकान्स्वदेहेहृदयाकाशेददृगे अपिशब्दात्त्रिविधानपश्यदितिग्राह्यं दृष्ट्वासिसृक्षुरभूदितिवा अपीतानित्यपपाठः १२ सिसृक्षोस्तस्यादादौकिमभूद्येनतद्विशेषणोपादानंप्रयोजकंस्यादितितत्राह तस्येति यदासिसृक्षुरभूत्तदार्थोगर्भोद कलक्षणस्तस्यहरेर्नाभिदेशादभिद्यतनाभिदेशंभित्त्वाप्राकाशतेत्यन्वयः हरेःस्वातंत्र्यद्योतनार्थंभावप्रयोगः हरेःसृज्येष्वशेषविशेषज्ञानमस्ति नकेवलंकुलालवद्युक्तिज्ञानमेवेतिभावेनाह आत्मेति आत्मनि स्थितेषुसूक्ष्मेषुयोगिप्रत्यक्षविषयेषुआकाशादिभूतेषुइंद्रियेषुजीवेषुवाभिनिविष्टासम्यक्विषयीकृतादृष्टिरपरोक्षज्ञानंयस्यसतथातस्य घटकारणादिवत्बाह्यार्थोनेत्याह अंतर्गतइति अनेनाऽभूतस्योदरस

सोंतःशरीरेर्पितभूतसूक्ष्मःकालात्मिकांशक्तिमुदीरयाणः ॥ उवासतस्मिन्सलिलेपदेस्वेयथानलोदारुणिरुद्धवीर्यः ११ चतुर्युगानांचसहस्रमप्सुस्वपंस्त योदीरितयास्वशक्त्या ॥ कालाख्ययासादितकर्मतंत्रोलोकानपीतान्ददृशेस्वदेहे १२ तस्यात्मसूक्ष्माभिनिविष्टदृष्टेरंतर्गतोर्थोरजसातनीयान्॥ गुणेनका लानुगतेनविद्धःशुष्यंस्तदाभिद्यतनाभिदेशात् १३ सपद्मकोशःसहसोदतिष्ठत्कालेनकर्मप्रतिबोधितेन ॥ स्वरोचिषातत्सलिलंविशालंविद्योतयन्नर्कइवा त्मयोनिः १४ तल्लोकपद्मंसउएवविष्णुःप्रावीविशत्सर्वगुणावभासम् ॥ तस्मिन्स्वयंवेदमयोविधातास्वयंभुवंयंस्मवदंतिसोभूत् १५

त्यमुक्तंभवति इतोपिबाह्योदकंनेत्याह तनीयानिति परमाणुत्वंप्राप्तः । गर्भोदकस्यप्रागेवसत्त्वात् किमितिकार्यानुत्पत्तिरितितत्राह रजसेति रजसागुणेनविद्धोऽनुस्यूतःरजसोपिसत्त्वात्किमितितत‍ःपू र्वमनुत्पत्तिरित्यतःकालेति सृष्टिकालशक्त्याअनुत्पन्नइत्यनुत्पन्नइतिभावः । अनेनेश्वरस्येच्छामुख्यंकारणमित्युक्तंभवति वायुमंतरेणकथमुत्पत्तिर्घटतइत्यतउक्तं शुष्यन्निति शुष्यन्घनीभवन्वायु नेतिशेषः उदकंवायुनाशुष्यद्भिन्नपद्मभूद्धरेरिति १३ उक्तकारणानांबहुत्वात्किमस्यमुख्यंकारणंकिंवास्यनामधेयमितितत्राह सपद्मकोशइति लयोदकंविनान्यस्यवस्तुनोभावादनिरूपितत्वेनैतद् र्शनात्सहसेत्युक्तं आत्माविष्णुर्योनिर्मुख्यंकारणंयस्यसआत्मयोनिः कर्मणाऽदृष्टेनप्रतिबोधितेनफलदानायप्रेरितेनकालेनेरितइतिशेषःउदतिष्ठत् यथाचतुर्दशभुवनरचनात्तथाप्रवृद्धोभूदित्यर्थः १४ चेतन संबंधमंतरेणाचेतनस्यपद्मस्यसूर्यवत्प्रकाशकत्वंकथंमण्यादीनामीश्वरेच्छयातेजःपरमाणूनामाप्तुर्येणसंयोगसंभवात्कथंचिद्युज्यते अस्यतुरजसेतिपार्थिवपरमाणुभ्यउत्पत्तिकथनात्तेषामीदृशशक्त्यदर्शनाद तःकारणांतरेणभाव्यं तत्किंतत्राह तल्लोकेति यस्मात्पद्ममभूत्सएवविष्णुस्तल्लोकविभागकारणंपद्ममाविशत् यथापूर्वंप्रकाशकत्वमाहात्म्यंस्यात्तथाविष्टवान् उकारेणरूपांतरेणप्रवेशंसूचयति एवका रेणाणुमात्रमपिभेदोनास्तीतिनिर्धारयति भेददर्शनेनसंतापलक्षणंदुःखंस्यादित्यर्थःराचीरोकारः उतापेऽव्ययमीशानेइतियादवः विष्णोरेवप्रकाशकत्वंनपद्मस्यतस्यपृथिव्यात्मकत्वादितिभावेनाह

सर्वेति सर्वेषांशब्दादिगुणानामवभासःप्रतीतिर्यस्यांपृथिव्यांसासर्वगुणावभासा तदात्मकत्वात्पद्ममपिगुणावभासमित्युच्यते तदुक्तं तस्यासनविधानार्थंपृथिवीपद्ममुच्यतइति तत्प्रवेशप्रयोजनमाह तस्मिन्निति तस्मिन्पद्मेसन्निविष्टात्स्वयंप्रधानात्सर्वोत्तमाद्धरेःसविधाताभूदित्यन्वयःप्रधानवाचकस्स्वेक स्त्वनन्यःकेवलःस्वयमिति अतःस्वयंशब्दस्यप्रधानवाचित्वेपिविष्णोर्जातत्वंकथमवगतमितीयंशंका पद्मसंस्थाद्धरेस्तत्रब्रह्माजज्ञेचतुर्मुखइत्येनेनपरिहर्तव्येति ननुविधातेतिकइतितत्राह स्वयंभुवमिति अनेनाजत्वमपिव्याख्यातं आत्विष्णोर्जातइति पद्मेस्वयंसंभूतइतिचप्रत्युक्तं उक्तप्रमाणादन्यथाजनिकर्तुःप्रकृतिरितिसूत्रविरोधश्च सर्वस्याग्रेहरेर्जातश्चतुर्मुखइतिनिश्चेतुंतस्यनामांतरंध्वनयति वेदमयइति मयगताविितिधातोर्वेदेनगम्यइतिवेदमयः लक्ष्मीनारायणावंतरेणवेदप्रतिपाद्येषुप्रथमत्वाद्धा हिरण्यगर्भःसमवर्तताग्रेभूतस्येतिश्रुतिः योब्रह्माणंविदधातिपूर्वमितिच पद्मभूतत्वमपिपद्मस्थितविष्णुभूतत्वमेवार्थइत्यंगीकर्तव्यम् १५ नन्वत्रजातःस्वयंभूर्विष्णुःस्यात्स्वभूरितिप्रसिद्धेर्नब्रह्मा विष्णोःपद्मप्रवेशाच्चेतितत्राह तस्यामिति लोकंपृथिव्यादिकंस्वेतरंजनंवाऽपश्यमानः विवृत्तनेत्रःपर्यस्तलोचनः अत्रजातोब्रह्मैवभवेत्तस्यचतुर्मुखत्वोक्तेः १६ इतोपिब्रह्मैवोच्यतइत्याह तस्मादिति युगांतश्वसनःप्रलयवायुः तेनावघूर्णक्षुब्धंमहतीनामूर्मीणांचक्रंमंडलंयस्मिंस्तत्तथातस्मात्सलिलाद्विरूढमुत्पन्नंलोकतंत्रंपृथिव्यादिलोकनिर्माणकारणंकंजंपद्मं उएवआदौउत्पन्नोदेवआदिदेवः आत्मानंस्वंपरमात्मानंचाद्धाप्रत्यक्षंनाविदत्नज्ञातवान् अनेनविष्णुःस्वयंब्रह्मासमभूदित्याशंकापरिहृता तस्याज्ञानासंभवात् अद्धाप्रत्यक्षसत्ययोरितियादवः १७ ब्रह्मणःसंशयप्रकारंदर्शयति कएषइति योसा

तस्यासचांभोरुहकर्णिकायामवस्थितोलोकमपश्यमानः ॥ परिक्रमन्व्योम्निविवृत्तनेत्रश्चत्वारिलेभेनुदिशंमुखानि १६ तस्माद्युगांतश्वसनावघूर्णमहोर्मिचक्रात्सलिलाद्विरूढम् ॥ अपाश्रितःकंजमुलोकतंत्रंनात्मानमद्धाविददादिदेवः १७ कएषयोसावहमब्जपृष्ठएतत्कुतोवाब्जमनन्यदप्सु ॥ अस्तिह्यधस्तादिहकिंचनैतदधिष्ठितंयत्रसतानुभाव्यम् १८ सइत्थमुद्वीक्ष्यतदब्जनालनाडीभिरंतर्जलमाविवेश ॥ नार्वाग्गतस्तत्खरनालनालीःसर्वैर्विचिन्वंस्तदविंदताजः १९ तमस्यपारेविदुरात्मसर्गंविचिन्वतोभूत्सुमहांस्त्रिनेमिः ॥ योदेहभाजांभयमीरयाणःपरिक्षिणोत्यायुरजस्यहेतिः २०

वब्जपृष्ठेनिषण्णः एषोहंकःअप्स्वनन्यत्प्रधानमेतदब्जंकुतउत्पन्नंकारणाभावेचपद्मलक्षणकार्यस्याप्यसंभवात् केनचित्कारणेनभवितव्यमितियुक्त्यानिरचिनोद्ब्रह्मेत्याह अस्तीति हिशब्दोवधारणार्थः इह जलेअधोदेशेकिंचनपृथिव्यादिविलक्षणंकारणंवस्तुअस्तिह्येव। एतत्पद्मंयत्राधिष्ठितंयत्कारणंपृथिव्याद्यन्यतमंनस्यात्तेषामनुत्पन्नत्वात् अतोब्रह्मैवमूलकारणमितिपारिशिष्टमाह सतेति सताब्रह्मणाऽनुभाव्यमनुभवसिद्धत्वेनांगीकार्यमित्यर्थः सब्रह्माचिंतयत्कुतोनुपद्मंब्रह्मणःस्यादितिश्रुतेः कुतोनुपद्ममितिसंदिह्यब्रह्मणउत्पन्नंस्यादितिनिश्चितवानित्यर्थः अनेनचतुर्मुखस्याज्ञानंक्षणिकंजीवत्वस्वरूपसवद्वंद्वबलहाष्ट्रिभिःकल्प्यमानंमध्येदिनार्कक्षोभवदितिज्ञायते १८ युक्त्याज्ञातपद्मकारणोब्रह्मापुनःकिमकार्षीदितितत्राह सइत्थमिति इत्थंपरिशिष्टप्रमाणेन उद्ब्रह्म तस्योदितिनामेतिश्रुतेः वीक्ष्यालोच्यतस्याब्जस्यनालस्यदंडस्यनालीभिःनाडीभिःसुषिरैः ततश्चकितत्राह नेति खरनालस्यपद्मस्यनालसंबंधिनीर्नालीर्विचिन्वन्नन्विच्छन्मार्गमाणइत्यर्थः तत्कारणंनाविंदत चक्षुर्विषयंनलब्धवान् १९ भगवत्प्रसादमंतरेणपुरुषायुषेणापितद्दर्शनंदुःशकंताहृग्माहात्म्योपेतत्वादितितत्कालस्यानेकसंख्ययाविशिष्टत्वमाह तमसीति अपारेऽनवसानेतमसिस्वरूपाच्छादकमायालक्षणांधकारे आत्मनःसर्गोयस्मात्सआत्मसर्गःतंस्वकारणं विसृष्टोनेमयश्चतुर्मास्यलक्षणायस्यसात्रिनेमिः अजस्यविष्णोर्हेतिश्चक्राख्य· २०

एतद्दर्शनमपिनस्वप्रयत्नेन साध्यंकिंतुतत्प्रसादेनैवतत्प्रसादश्चतत्समाधियोगेनेतितंकरवाणीति तदुपास्तिप्रकारंकथयति ततइति अप्रतिलब्धाअदृष्टाकाष्ठोत्कर्षोब्रह्मलक्षणोयेनसतथा अदृष्टस्वरूप ब्रह्मरूपइत्यर्थः ततोनिमार्गणात् स्वधिष्ण्यंपद्ममास्थायारुह्यशनैःप्राणंकुंभकेनिरुध्यजितश्वासोभूत्वाविषयेभ्योनिवृत्तचित्तःसन्आरूढसमाधियोगः असंप्रज्ञातचित्तैकाग्र्य... पांचैलाजिनलक्षणायान्यषीदन् स्वनासाग्रावलोकनोतिष्ठदित्यन्वयः पुनःशब्दोनिरंतरमित्यर्थः २१ योगफलमाह कालेनेति पुरुषायुषाशतवर्षावधिनाकालेनतत्कारण... पासनाजनितज्ञानफलमिदंदर्शनमितिभावेनाह अभिप्रवृद्धेति अनुदिनंचंद्रोदयेनसमृद्धसमुद्रवत्प्रवृद्धयोगेनप्रकर्षेणसमृद्धेनध्यानापरपर्यायोपासनयाविरूढबोधःसमुत्पन्नापरोक्षज्ञानः ... सादेनेतिभावेनाह अंतर्हृदयइति अवभातंप्रकाशितं स्वयंप्रधानंअनेनतस्मिन्स्वयमित्युक्तत्वात् ब्रह्मोत्पादकमेवापश्यन्नान्यदितिसिध्यति अवभातमितिविशेषणंविशिनष्टि अपश्यतेति पूर्वंपद्मनालानु मार्गणसमयेयन्नापश्यत्तदितिशेषः आत्मनेपदप्रयोगेणप्रमेयमेवेष्टदेवतानान्येतिध्वनयति २२ कीदृशंहरिमपश्यदित्याशंक्यनवभिःश्लोकैस्तंविशिनष्टि मृणालेति फणानांसहस्राणामयुतेपुञ्ज विमिश्रितेषुअन्योन्यसंपर्करहितेषुमूर्धसु औत्पत्तिकानांरत्नानांद्युभिर्द्युतिभिर्हतंनष्टंध्वांतंयस्यतद्धतध्वांतंतच्चयुगांततोयंहतध्वांतयुगांततोयंतस्मिन्कल्पप्रलयजलस्थितेमृणालगौरायतशेषभोगपर्यंकेशया नं शेषस्यानंतस्यनागस्यभोगोदेहःशेषभोगः अहेःशरीरंभोगःस्यादित्यभिधानं मृणालवद्गौरश्चायतश्चमृणालगौरायतःसचासौशेषभोगश्चमृणालगौरायतशेषभोगः सएवपर्यंकःशयनीयतस्मिन्पुरुषं

**ततोनिवृत्याप्रतिलब्धकाष्ठःस्वधिष्ण्यमास्थायपुनःसदेवः ॥ शनैर्जितश्वासनिवृत्तचित्तोन्यषीददारूढसमाधियोगः २१ कालेनसोजःपुरुषायुषाभिप्रवृद्धयोगेनविरूढबोधः ॥ स्वयंतदंतर्हृदयेवभातमपश्यतापश्यतयन्नपूर्वम् २२ मृणालगौरायतशेषभोगपर्यंकएकंपुरुषंशयानम् ॥ फणासहस्रायुतमूर्धरत्नद्युभिर्हतध्वांतयुगांततोये २३ प्रेक्षांक्षिपंतंहरितोपलाद्रेःसंध्याभ्रनीवेरुरुरुक्ममूर्ध्नः ॥ रत्नोदधारौषधिसौमनस्यवनस्रजोवेणुभुजांघ्रिपांघ्रेः २४ आयामतोविस्तरतःस्वमानदेहेनलोकत्रयसंग्रहेण ॥ विचित्रदिव्याभरणांशुकानांकृतश्रियोपाश्रितदिव्यवेषम् २५ पुंसांस्वकामायविविक्तमार्गैरभ्यर्चतांकामदुघांघ्रिपद्मम् ॥ प्रदर्शयंतंकृपयानखेंदुमयूखभिन्नांगुलिचारुपत्रम् २६**

पुरुषाकारं एकंकेवलमप्राकृतमित्यर्थः २३ ध्यानसौकर्यायनीलपर्वतसाधर्म्येणवर्णयति प्रेक्षामिति हरितोपलाद्रेर्नीलपर्वतस्यप्रेक्षांदर्शनीयकांतिंक्षिपंतंनिराकुर्वंतं कीदृशस्यनीलगिरेःसंध्याभ्रनीवेःसंध्याकालीनाभ्रमेवनीविर्वस्त्रंयस्यसतथातस्य उरूणिबहूनिरुक्माणिसुवर्णानिमूर्ध्निशृंगेयस्यसतथातस्य रत्नैरुदधिस्तस्यरत्नाकरस्येत्यर्थः ओषधयःसौमनस्यानिसुमनसांसमूहएववनस्रक्वनमालायस्यसतथातस्य वेणवएवभुजायस्य अंघ्रिपावृक्षाएवांघ्रियःयस्यसतथातस्य अनेनहरिरपिनीलद्युतिदेहः पीतांबरधरःसुवर्णकिरीटालंकृतमूर्धाकौस्तुभरत्नकंधरःवनमालाचितोदीर्घदोर्दंडमंडितः प्रणतार्तिहारिश्रीपादपद्मइत्युत्प्रेक्षितंभवति संध्याभ्रवन्नीविर्यस्येत्यादिव्याख्यानंप्रेक्षांक्षिपंतमित्यनेनानान्वितंस्यात् २४ लोकत्रयंसंगृह्णातीतिलोकत्रयसंग्रहस्तेनाऽऽयामतोविस्तरतः दैर्घ्यपरिमंडलाभ्यांसमानेनन्यग्रोधपरिमंडलत्वादिलक्षणवतादेहेनविचित्रदिव्याभरणाद्यानांकृतश्रियापूर्णश्रिया उपाश्रितःसमाश्रितः दिव्यऔत्पत्तिकोवेषःसौंदर्यंयस्यसतथातं यद्वा आभरणादीनांकृतश्रियाउपगम्याश्रितःसेवितोदिव्यवेषोयस्यसतथातमिति २५ कामंदोग्धीतिकामदुघंतच्चांघ्रिपद्मंपुंसांप्रदर्शयंतमित्यन्वयः नन्वेवंतर्हिकिमितिसर्वेपुरुषार्थभाजोनाभूवन्नितितत्राह स्वकामायेति विचिर् पृथग्भावइतिधातोर्विविक्तैर्वैदिकादिभेदेनपृथक्कृतैर्मार्गैरभ्यर्चतांयथाभिमुखोभवति तथार्चनंकुर्वता नखाएवेंदवस्तेषांमयूखाररमयस्तैर्भिन्नाइतरेतरविलक्षणाअंगुलयस्ताएवचारूणिपत्राणियस्याङ्घ्रिपद्मस्यतथातत अज्ञजनबुद्ध्यारोहार्थंएवमुक्तंस्वतइतरपद्मविलक्षणमिदमंघ्रिपद्ममित्यर्थः २६

मुखेनप्रत्यर्हयंतंशरणागतजनान्सम्मानयंतमिवस्थितमितिशेषः लोकार्तिहरस्मितेनेत्यादिनामुखंविशिनष्टि अधरबिंबभासाशोणायितेनरक्तवद्वर्तमानेनसुनसेनशोभमाननासिकेनसुशोभनाभ्रूर्यस्यतत्सुभ्रुतेनसुभ्र्वा नपुंसकश्चसुवालुशब्दवदयंशब्दः २७ किंजल्कःकेसरःकदंबेतितत्पुष्पं मेखलाकांचीअनंतधनेनेतिहारस्यानर्घ्यत्वंवक्ति हेवत्सविदुर श्रीवत्सलक्षणस्यवक्षस्थलस्यवल्लभेनप्रियेण २८ अधुनावृक्षसाधर्म्येणहरिंवर्णयति परार्ध्येति परार्ध्यैरनर्घ्यैःकेयूरैः मणीनांप्रवेकाःश्रेष्ठाःयेषुतैःकंकणैश्चपर्यस्तंपरितोन्यस्तमलंकृतं दोर्दंडसहस्रमेवशाखायस्यसतथोक्तस्तं अव्यक्तंप्रधानंत्रिगुणंमूलेपादेयस्यसतथातं प्रकृतेःकारणंवा तस्मादव्यक्तमुत्पन्नंत्रिगुणंद्विजसत्तमेतिवचनात् अविज्ञाताधःप्रदेशमितिवा प्रधानेऽव्यक्तमव्यक्तोब्रह्मण्यस्पष्टमूलयोरितिपादवः भुवनेषुविद्यमानानामंघ्रिपाणामिंद्रं यद्वा चतुर्दशभुवनाख्यांघ्रिपाणामिंद्रंश्रेष्ठं अहींद्रस्यशेषस्यभोगैःशरीरविशेषैरधिवीतवल्कंसंवीतत्वचं उभयत्रसममिदम् २९ पुनरपिपर्वतसाधर्म्येणवर्णयति चराचरौकइति भगवन्महीध्रंश्रीनारायणाख्यपर्वतमपश्यदित्यन्वयः चराचरस्यजगतओकोमंदिर ओकसीमंदिराश्रयावितिव प्रलयसलिलेन किरीटानांसहस्राण्येवहिरण्यशृंगाणिपस्यसतथातं कंठेआविर्भवत्कौस्तुभरत्नगर्भप्रकाशमानकौस्तुभं कुस्तुभात्समुद्राज्जातं तत्नामरत्नंगर्भआभरणंयस्यसतथातं गर्भोपचारकेतुर्देनेपथ्येप्रसितेपिचेत्यभिधानम् ३० आम्नायाएवमधुव्रताभृंगास्तेषामाश्रयया स्वरूपकीर्तिमय्यावनमालया निवीतंसंवीतकंठइतिशेषः इयंतंकालंअमुकंशबलंब्रह्मब्रह्माददर्श ननित्यमुक्तंनिर्गुणमितितत्राह सूर्येति त्रिधाम्नोविष्णोरगच्छद्भिर्नैसंततसमीपएवतिष्ठद्भिर्मुक्तैःसूर्येंदुवाय्वग्निभिर्वृतं अत्रव्यत्यासात्पादादि

मुखेनलोकार्तिहरस्मितेनपरिस्फुरत्कुंडलमंडितेन ॥ शोणायितेनाधरबिंबभासाप्रत्यर्हयंतंसुनसेनसुभ्र्वा २७ कदंबकिंजल्कपिशंगवाससास्वलंकृतंमेखलयानितंबे ॥ हारेणचानंतधनेनवत्सश्रीवत्सवक्षस्थलवल्लभेन २८ परार्ध्यकेयूरमणिप्रवेकपर्यस्तदोर्दंडसहस्रशाखम् ॥ अव्यक्तमूलंभुवनांघ्रिपेंद्रमहींद्रभोगैरधिवीतवल्कम् २९ चराचरौकोभगवन्महीध्रमहींद्रबंधुंसलिलोपगूढम् ॥ किरीटसाहस्रहिरण्यशृंगमाविर्भवत्कौस्तुभरत्नगर्भम् ३० निवीतमाम्नायमधुव्रतश्रियास्वकीर्तिमय्यावनमालयाहरिम् ॥ सूर्येंदुवाय्वग्न्यगमंत्रिधामभिःपरिक्रमत्प्राधनिकैर्दुरासदम् ३१ तर्ह्येवतन्नाभिसरःसरोजमात्मानमंभःश्वसनंवियच्च ॥ ददर्शदेवोजगतोविधातानातःपरंलोकविसर्गदृष्टिः ३२ स्वकर्मबीजंरजसोपरक्तःप्रजाःसिसृक्षन्नियदेवदृष्ट्वा ॥ अस्तौद्विसर्गाभिमुखस्तमीशमव्यक्तवर्त्मन्यभिवेशितात्मा ३३ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेनवमोध्यायः ॥ ९ ॥ ॥ छ ॥ ॥

शब्दप्रक्षेपोज्ञातव्यः सूर्येंदुवाय्वग्न्यादिभिरित्याचार्यवचनात्परिक्रमद्भिःप्रदक्षिणंकुर्वद्भिःप्राधनिकैःप्रधानस्यहरेर्भृत्यैःपुरपालकैश्चवृतमितिशेषः तदुक्तं मुक्तंवाय्वादिभिर्विष्णुंवृतंब्रह्माददर्शहेत्यादिविशिष्टवचनाच्च दुरासदमित्यनेनापिमुक्तैर्निषेवितंविष्णुमपश्यदितिगम्यते ३१ अनेनैतच्चलब्धमित्याह तर्हीति यदेवंविधंहरिमपश्यत्तर्हितदेवनाभिसरसिउत्पन्नेसरोजेस्थितमात्मानंस्वं । ब्रह्मणोलोकविसर्गदृष्टिःलोकेनज्ञानेनविशिष्टमुक्तस्वभावोयेषांसूर्यादीनांलोकविसर्गास्तेषांदर्शनं । लोकेविसर्गाःसृष्टिरहितालयोदकवाय्वादयएवतेषांदर्शनमभूदतःएतद्दर्शनात्परमन्यद्दर्शननाभूत्मुक्तसूर्यादिकंप्रलयजलादिकमेवब्रह्माददर्श परंनददर्शेत्युक्तंभवति यद्वा लोकस्यज्ञानस्यविसर्गस्यसृष्ट्याद्दिव्यापारशून्यस्यनिर्गुणस्यदृष्टिरतःपरंनभवति इदमेवनिर्गुणदर्शनमितिभावः ३२ यदर्थमहंहरिणासृष्टस्तत्कर्तुंतदनुग्रहंतरेणनशक्नोम्यतःस्तुत्यातंप्रसाद्यतत्कटाक्षेधिवज्ञानवीर्योभिष्टंकार्यंशुश्रूषालक्षणंकरोमीतिभावेनतंस्तौतीत्याह स्वकर्मबीजमिति सब्रह्मातमीशमस्तौदस्तौषीदित्यन्वयः कीदृशंस्वकर्मबीजंसृष्टौस्वनिमित्तकारणादृष्टस्यव्यंजकम् कीदृशोब्रह्मारजसागुणेनउपरक्तः उपरागफलमाह प्रजाइति सृष्टिसाधनमिदमादिंदृष्ट्वाविसर्गाभिमुखःविविधसृष्ट्यभिमुखः अव्यक्तवर्त्मनिब्रह्मलक्षणमार्गेअभिनिवेशितात्मानिर्विषयात्निविष्टमनाः ॥ ३३ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांनवमोध्यायः ॥ ९ ॥ ॥ ७ ॥ ॥ ७ ॥

ब्रह्मणः स्तुतिप्रकारोस्माकमपिश्रवणगोचरःकिमितिमनःशंकामाभूदितिभावेनततस्तुतिप्रकारंकथयति ज्ञातोसीत्यादिना नन्वित्यवधारणार्थोनुनयार्थोवा मेननुममसुचिरात्तपआद्यनुनयेनअद्यज्ञातो
सि नन्वेवंमेअव्यक्तस्वभावस्यज्ञानंकथंघटतइतितत्राह देहभाजामिति भगवतोगतिः स्वरूपंदेहभाजामनुनयेननज्ञायतेइतियत्तदवद्यंदुष्टम् अतोऽव्यक्तस्वभावोपिभक्त्यादिसाधनसामर्थ्याज्ज्ञायत
एवेत्यर्थः ननुतर्हिकस्मात्सर्वैःपुरुषार्थभाजःकिंनाभूवन्नित्यस्येदमेवोत्तरम् तवगतिर्नज्ञायतेइत्यत्रावद्यंपापंकारणंनन्वित्यर्थः देहभाजामितिस्वस्वामिसंबंधज्ञापनायषष्ठीस्वस्वामिभावज्ञानाभावात्नज्ञा
यतइतिभावः ननुस्वव्यतिरिक्तवस्तुनोऽसत्त्वान्नज्ञायतइतिकिंनस्यादत्राह नेति त्वदन्यद्वस्तुअस्तिस्ववतोनास्तित्वदधीनसत्ताकत्वात् द्रव्यंकर्मचकालश्चेत्यादेस्तर्हितेनज्ञायेतेतितत्राह तदितितुशब्दोभे
देऽवधारणेवा त्वत्तोभिन्नंतज्जगदशुद्धंसदोषमेवातःसदोषत्वान्निर्दोषोभवान्नज्ञायतइत्यर्थः त्वदन्यस्यसदोषत्वंभवतोनिर्दोषत्वंचकथमत्राह मायेति मायायाःप्रकृतेःसत्त्वादिगुणानांव्यतिकरात्क्षुब्धिकारा
ज्जातेषुमहदादितत्त्वेषुअंतर्यामिरूपैरवतारैश्चउरुर्बहुत्वसंख्याविशिष्टोविभासीतियत्तस्मादितरत्सर्वंसदोषंत्वंनिर्दोषइत्यतोविभासीत्युक्तम् अत्रयत्त्वनानात्वंतदपिस्थानभेदादसदेवभाति एकोपि
स्याननानात्वान्नानेवहरिरीयते । सर्वांतर्यामिणस्तस्यनभेदोविद्यतेक्वचिदितिवचनात् १ इतोपिवाङ्मनसागोचरंभवतःस्वरूपमित्येतदवद्यमित्याह रूपमित्यादिश्लोकद्वयेन अवबोधरसोदयेनअपरो
क्षज्ञानरससमुद्रेकेण शश्वन्निवृत्ततमसःनित्यनिरस्तप्रकृतिगुणासक्तेः तवयदेतदवतारशतैकबीजं मत्स्याद्यवतारशतानांव्यंजकंरूपमादौगृहीतमनादितएवनेदानींगृहीतं यत्ताद्दिव्यंहरेरूपंक्षीरसागरस

ब्रह्मोवाच ॥ ज्ञातोसिमेद्यसुचिरान्ननुदेहभाजांनज्ञायतेभगवतोगतिरित्यवद्यम् ॥ नान्यत्त्वदस्तिभगवन्नपितन्नशुद्धं मायागुणव्यतिकराद्यदुरुर्विभासि १ रू
पंयदेतदवबोधरसोदयेनशश्वन्निवृत्ततमसःसदनुग्रहाय ॥ आदौगृहीतमवतारशतैकबीजंयन्नाभिपद्मभवनादहमाविरासम् २ नातःपरंपरमयद्भवतःस्वरू
पमानंदमात्रमविकारमविद्धवर्चः ॥ पश्यामिविश्वसृजमेकमविश्वमात्मन्भूतेंद्रियात्मकमदस्तउपाश्रितोस्मि ३ यद्वाइदंभुवनमंगलमंगलायध्यानात्मनो
दर्शितंतउपासकानाम् ॥ तस्मैनमोभगवतेनुविधेमतुभ्यंयोनादृतोनिरयभाग्भिरसत्प्रसंगैः ४

ध्यगं । इत्यतःक्षीरसमुद्रशायियन्नाभिपद्मभवनाद्यन्नाभिकमलाख्यगृहादहमाविरासंजातोस्मि अनादिनित्यादव्यक्तात्तस्माज्जज्ञेचतुर्मुखइतिवचनात् २ हेपरमयदानंदमात्रसत्ज्ञानानंदैकरसमतएवाऽवि
कारंषड्विकाररहितं अतएवाविद्धवर्चः अप्रतिहतार्चीरूपंभवतःस्वरूपं पश्यामिअतःपरंनिर्गुणंनास्तीतिपश्यामि सज्ज्ञानानंदैकमात्रंनततःपरमंकाचिदितिवचनाच्च यच्चविश्वसृजंविश्वस्यस्रष्टृ एकंस्रष्टृंतरर
हितं अविश्वंप्रपंचविलक्षणं आद्यंसर्वस्यादिभूतं उपजीव्यंवा भूतेंद्रियाणामात्मकंव्यापकं यच्चाप्नोतीत्यादेः तेतवादोरूपमुपाश्रितोस्मीत्यतोनज्ञायतेवाङ्मनसागोचरत्वादित्येतदवद्यं अवस्तुअभद्रंमत अ
स्युत्तमाधिकार्यपेक्षयोक्तंनदेवदत्ताद्यधमापेक्षयेतितत्त्वं अनेनप्रकृतिगुणविकृतपदार्थैःपुतिष्ठतोहरेरज्ञानादिकथंनस्यात् कथंवोदासीनस्याद्वितीयस्यरूपांतरग्रहणं कथंवाविकारिसृज्यंसृजतोविकाराभाव
इत्येतच्छंकात्रयमुन्मीलितमुक्तयुक्तेरितिभावः अदइत्यनेनदूरस्थवस्तुवाचिना पूर्णमदःपूर्णमिदमितिश्रुतेः जगद्व्यापिरूपेणस्वहृद्विषयरूपस्यएकत्वंध्वनयति ३ नकेवलंमयैवज्ञातोसित्वत्प्रसादेना
न्यैरपिज्ञायमानत्वान्नज्ञायतइत्यवद्यमितिभावेनाह यद्वाइति ध्यानात्मनोज्ञानरूपस्यतत्तद्ध्यानानुगुणरूपस्यवा तेतवोपासकानांयदिदंदर्शितंतादृक्रूपाविशिष्टायानुविधेमकुर्मः तर्हिदुर्ज्ञेयाहिहरेर्गति
रित्यादेःकोभिप्रायइतितत्राह यइति असत्सुविषयेषुप्रकर्षेणसंगोयेषांतेतथातैः इदानीमभावेपिजन्मांतरेपिसत्प्रसंगस्यासद्गतिःस्यात्तत्राह निरयेति अयगताविति धातोःअयनंगमनंनिरस्तंयस्मात्सनि
रयोनिर्गमशून्यमंधंतमइत्यर्थः तद्भजंतीतिनिरयभाजस्तैरंधंतमःप्राप्तियोग्यैरित्यर्थःयैश्चानादृतःसादरंनार्चितस्तैर्दुर्ज्ञेयइतिविशेषः तस्मैनमः वाइत्यनेनसाधनसामर्थ्यादर्शनंभवत्येवेतिसूचयति ४

बलिसमयेपक्षप्रत्यक्षवद्दूरेऽप्रत्यक्षस्त्वंनसाक्षादतोनज्ञायतइतितत्राह येत्विति उपासकत्रैविध्यसूचकस्तुशब्दः तत्रयेतउपासकामहांतोगुरुमुखेभ्यः श्रुतिवातनीसमुपनिषदुक्तप्रकारेणश्रवणाख्यवायुना कर्णविवरैःप्रापितंत्वदीयचरणांबुजकोशस्यक्षीराब्ध्यादिस्थितमूलरूपाख्यपद्ममुकुलस्यगंधं हृदि व्यक्तरूपंजिघ्रंतिअपरोक्षीकृत्यानुभवंति हृदिव्यक्तंतुपद्मरूपहरेर्गंधःसउच्यतइति । उत्तमानांतुपादेनसर्वं रूपंतुकथ्यतइतिवचनाच्चचरणःपादइतिपर्यायः गंधगंधवतोर्यस्मान्नभेदःक्वचनेष्यतइतिवचनात् गंधोलेशोविनिर्दिष्टइतिभेदशंकापिनकार्येत्यर्थः हेनाथतेषांस्वपुंसांहृदयांबुरुहान्नापैषिनापसरासिनांतरोभवसि तत्रनिमित्तमाह भक्त्येति भक्तिलक्षणदृढपाशेनगृहीतचरणः प्रबद्धपादइत्यर्थः अनेनभगवद्वशीकरणेभक्तिरेवप्रधानमित्युक्तंभवति ५ द्रविणादिनिमित्तभयंयावत्तावन्नज्ञायतइतिमतंनिर्मूलयितिभावेनाह तावदिति ६ कस्मात्तर्हिनज्ञायतइत्याग्रहोननिवर्ततइत्याशंक्यभवदनुग्रहापात्रत्वादित्याशयेनाह दैवेनेति अंधःतमःप्राप्तिपर्यंतंशश्वदकुशलकरणान्नज्ञायतइत्याग्रहोननिवर्ततइतिभावः दैवेनसर्वोत्तमेनहरिणाविमुखवागादींद्रियाःसुखलेशलवायाल्पादल्पसुखाय लुभगार्ध्यइतिधातोर्लोभो गार्ध्यमभिलाषस्तेनाभिभूतंमनोयेषांतेतथा यद्वासद्भ्ययानिच्छुत्वंतेन ७ त्वयिज्ञातेसर्वमिदंज्ञायतेअविज्ञातंविज्ञातमितिश्रुतेः अतस्तवगतिर्नज्ञायतइत्यत्यंतसाहसमितिसूचनायब्रह्मादुर्ज्ञानफलभोगिप्रजानुकंपाव्याजेनसज्ज्ञानोत्पत्तौप्रथमंवैराग्यमेवसाधनीयंबुभूषुणेतिभावेनाह क्षुत्तृडिति क्षुधातृषात्रिभिर्धातुभिर्वातादिभिराध्यात्मिकैरिमाः प्रजा शीतोष्णवातवर्षैराधिदैविकैः इतरेतरादन्योन्यनिमित्तादाधिभौतिकैःसुदुर्भरेणकामाग्निनासुदुर्भरयारुषाच ८ त्रिविधोजीवसंघोमुक्तियो

## येतुत्वदीयचरणांबुजकोशगंधंजिघ्रंतिकर्णविवरैःश्रुतिवातनीतम् ॥ भक्त्यागृहीतचरणःपरयाचतेषांनापैषिनाथहृदयांबुरुहात्स्वपुंसाम् ५ तावद्भयंद्रविणगेहसुहृन्निमित्तंशोकःस्पृहापरिभवोविपुलश्चलोभः ॥ तावन्ममेत्यसदवग्रहआर्तिमूलंयावन्नतेंघ्रिमभयंप्रवृणीतलोकः ६ दैवेनतेहतधियोभवतःप्रसंगात्सर्वाशुभोपशमनाद्विमुखेंद्रियाये ॥ कुर्वंतिकामसुखलेशलवायदीनालोभाभिभूतमनसोऽकुशलानिशश्वत् ७ क्षुत्तृट्त्रिधातुभिरिमामुहुरर्द्यमानाःशीतोष्णवातवर्षैरितरेतराच्च ॥ कामाग्निनाच्युतरुषाचसुदुर्भरेणसंपश्यतोमनउरुक्रमसीदतेमे ८ यावत्पृथक्त्वमयमात्मनइंद्रियार्थमायाबलंभगवतोजनईशपश्येत् ॥ तावन्नसंसृतिरसौप्रतिसंक्रमेतव्यर्थापिदुःखनिवहंवहतीक्रियार्था ९

ग्यःसंसारयोग्यस्तमोयोग्यइतितत्रभगवतोगतिर्नज्ञायतइत्यादिरूपा मुक्तियोग्यानांसंसृतिःकदानिवर्ततइतितत्राह यावदिति चशब्दोनुक्तसमुच्चयार्थोवाधारणार्थोवा यावद्यदाआत्मनःस्वस्यभगवतःसकाशादिंद्रियार्थइंद्रियविषयभोगार्थमयमुक्तियोग्योजनोध्यायामिपश्यामिशृणोमीत्यादिपृथक्त्वंविभागलक्षणंमायाबलंभगवदिच्छाबलं भगवदिच्छया प्रणीतंचेष्टितमित्यर्थः बलप्राणनइतिधातोः पश्येत् चशब्दान्मुक्तावपि ध्यायेमंस्येतथापश्येशृणोमीतिविभक्तता । जीवस्यतुहरेरिच्छाबलादिंद्रियभुक्तयइत्यतोनानिर्वाच्यलक्षणोभेदःपृथक्त्वम् पश्येदिति दृग्विषयत्वेनज्ञेयत्वोक्तेर्हरेरिच्छैवमायानानिर्वाच्याविद्या तदुक्तम् ज्ञेयत्वंदुर्घटस्यापिघटनाधिकशक्तिता । अभेदईश्वरेणापिसृष्ट्यादावंतरंगता । उच्येतयस्याःसामायाहरेरिच्छाथवाबलमिति ननुतर्हिमायाशब्दवाच्ययोर्लक्ष्मीबंधकशक्त्योर्दैभागज्ञानंकथमचेतनप्रकृतेश्चेतिप्रसक्ताशंका भगवत्स्वंत्रतायस्यास्तद्वर्यात्वंसुरूपता । उच्यतेमायासातुश्रीर्दोषयुक्ताजडास्मृता । परिणामिनीचयस्यास्तुदोषाश्चेतनतातथा । शैवलीनामसामायाजगद्बंधात्मिकासदेत्यनेनपरिहर्तव्या इत्यभिप्रायेणाचार्यैःशेषोदाहरणंकृतम् तावत्तदा व्यर्थापिआत्यंतिकप्रयोजनशून्यापि धर्मादिक्रियार्था दुःखनिवहंदुःखपरंपरावहतीसंसृतिःगतिसंक्रमेतनाशंगच्छत्येवेत्यन्वयः अघटितंघटकशक्तिरस्तीतिद्योतनायईशेतिसंबोधनम् एतदभिप्रायेणोक्तम् ज्ञेयत्वंदुर्घटस्यापिघटनाधिकशक्तितेति ९

नित्यसंसारिणांसंसरणप्रकारंनिरूपयति अध्याहृतेति अध्याहृतार्थानिआकृष्टशब्दादिविषयाणिकरणानींद्रियाणियेषांतेतथाऽन्योन्याकर्षणत्वज्ञापनायैवमुक्तम् । तत्रनिमित्तमाह निशीति अज्ञानंतु नि
शामेक्ताेदिवाज्ञानमुदीर्यतइतिवचनान्निश्यज्ञानेनितरांशयानाःपरमतत्त्वाज्ञानंकारणमित्यर्थः नानामनोरथधियइतिहेतुगर्भविशेषणम् तस्मात्प्रतिक्षणंभंगयुक्तनिद्राः निद्रालुमध्यवसरोनास्तीत्यर्थः नि
ष्फलुमकर्मानुष्ठानत्वेनदैवादनुदितप्रसादाद्धतार्थरचनाः । विनाशितार्थाभीष्टवस्तुचमत्काराऋषयोपिऋषिकुलप्रसूताअपि अत्रसर्वत्रस्पष्टंनिमित्तमाह युष्मदिति इहजीवलोकेस्वर्गेनरकेच १० एव
मत्त्वंमायाबलपश्येदितियदपरोक्षज्ञानमुक्तंतदुत्पत्तावित्थंभूतसाधनमाह त्वद्भावेति पुंसांनाथपुरुषोत्तम सतोलोकमान्यात्श्रेष्ठादाचार्यात्श्रुतेनशास्त्रश्रवणेनईक्षितोदर्शितःपंथाविष्णुभक्त्यादिलक्षणो
येषांतेतथोक्ताः अतएवत्वद्भावयोगेनत्वद्विषयेणचभक्तियोगेनभावितमधिवासितंहृत्सरोजमंतःकमलंयेषांतेतथोक्तामनइत्युपलक्षणम् वेदांतादिसच्छास्त्रश्रवणसंजातत्वद्भक्तियोगेननिर्मलीकृतेंद्रिया
मायेमुक्तियोग्याजनाः हेउरुगायविष्णो तेपुरुषास्तवयद्यद्वपुर्नन्वनुमतंयथायथास्वस्वयोग्यज्ञानानंदादिगुणत्वेनानुज्ञातंधियाविभावयंति तदनुग्रहायतेषामनुग्रहायतत्तद्वपुस्तादृशंशुभाकारंप्रणयसेव्य
क्तीकरणेनाभिव्यक्तंकरिष्यसीत्यन्वयः नन्वित्यनेनैवविज्ञवाविना यादृशोभावितस्त्वीशस्तादृशोजीवआभवेत् तंयथायथोपासतेतदेवभवतीतिवाक्यद्वयंप्रमाणयति एतदुक्तंभवति सद्गुरुमुखात्सच्छास्त्रश्रव
णेतरविरक्तिद्वाराहरौभक्तिस्तयास्वयोग्यगुणोपसंहारलक्षणोपासनातयास्यहरेरपरोक्षज्ञानम् तेनपृथक्त्वस्यमायाबलविषयत्वम् तस्माद्धरेःप्रसादस्तेनज्ञायतेभगवतोगतिरित्यादिलक्षणाद्दुष्टजनसंग

अध्याहृतार्थकरणानिशिनिःशयानानानामनोरथधियाक्षणभंगनिद्राः ॥ दैवाहृतार्थरचनाऋषयोपिदेवयुष्मत्प्रसंगविमुखाइहसंसरंति १० त्वद्भावयो
गपरिभावितहृत्सरोजायेसच्छ्रुतेक्षितपथाननुनाथपुंसाम् ॥ यद्यद्धियातउरुगायविभावयंतितत्तद्वपुःप्रणयसेतदनुग्रहाय ११ नातिप्रसीदसितथोपचि
तोपचारैराराधितःसुरगणैर्हृदिबद्धकामैः ॥ यःसर्वभूतदययाऽसदलभ्ययैकोनानाजनेष्ववहितःसुहृदंतरात्मा १२ पुंसामतोविविधकर्मभिरध्वराद्यैर्दानेन
चोग्रतपसाव्रतचर्ययाच ॥ नाराधनंभगवतस्तवसत्क्रियार्थोधर्मोर्पितःकर्हिचिद्ध्रियतेनयत्र १३ शश्वत्स्वरूपमहसैवनिपीतभेदमोहायबोधधिषणायन
मःपरस्मै ॥ विश्वोदयस्थितिलयेषुनिमित्तलीलारामायतेनमइदंचकृमेश्वराय १४

संजातासंसृतिर्ननिवर्ततइति ११ धियायद्विभावयंतीत्यत्रसकामैरेवोपासतइत्यन्यथाप्रतीयते सामुक्तिपरिपंथिनीतिसानकर्तव्येतिभावेनाह नेति हृदीत्युभयत्रान्वेतव्यम् सर्वभूतदयायाःकर्तव्यत्वेहेतुर्नाना
जनेष्ववहितइतिदुर्भगशरीरस्थत्वेप्यणुमात्रंदुःखमस्यनास्तीत्यत्रहेतुरंतरात्मेति अंतःस्थित्वापिपरोतिरूपइत्यर्थः अतएवसुहृदनिमित्तबंधुः एवंविधोयस्त्वमसद्भिरसुरप्रकृतिभिरलभ्यपालभ्यमानकयासर्व भू
तदययासुरगणैर्हृद्याराधितोयथातिप्रसीदसि सत्त्वंतथाहृदिबद्धकामैर्जनैरुपचितोपचारैराराधितोनातिप्रसीदसि मंत्रगुरुदेवताशक्त्यात्वन्नियतयाकिंचित्फलदानाभिमुखोपिनात्यंतिकमुक्तिफलदत्वेनप्रस
न्नोभवसीत्यतोतीत्युक्तं आराधितोयोब्रह्माद्यैर्भक्तिज्ञानदयादिभिः । किंतस्यकामुकजनैःकृतयापरिचर्ययेतिवचनादुक्तएवार्थः इतरेषांसेवानुगुणफलदत्वेपित्वमेकएवंविधस्वभावइत्येकइति १२ नकेवलंनि
ष्कामतयाकृतंमन्मयत्प्रसादजनकंकिंतुभगवदर्पणसहितमित्याह पुंसामिति पुरुषैर्यत्रयेषुयज्ञादिषुसत्क्रियार्थःस्तवपूजाप्रयोजनाहष्टाख्योधर्मोयत्रयस्मिन्त्वय्यर्पितोनक्रियतेतेषांपुंसामध्वराद्यैःक्रियमाणंभ
गवदाराधनंप्रसादजनकंनभवतीत्यन्वयः १३ हरेस्तत्वाज्ञानादुत्पन्नोयोनज्ञायतेगतिरित्यादिरूपःसंसारस्तन्निवर्तकोपास्तौतादृग्गुणोपसंहारःकर्तव्यइत्याह शश्वदिति देवदत्तवदेकदापिभेदमोहोस्तीत्य
न्वेथाप्रतीतिनिरासायशश्वदिति परोपदेशमंतरेणस्वरूपज्ञानेनैव तद्ब्रह्मावेदअहंब्रह्मास्मीतिश्रुतेर्निपीतभेदमोहायसम्पाडिरस्तेशापूर्णतादिषड्विधभेदमोहाय ईशस्यापूर्णताज्ञानंविष्णोरन्यस्यचेशता । भेदस्त
स्यावतारेषुजीवस्येशत्वमेवच । तथाजीवत्वमीशस्यजडभेदस्तयोरपि । भेदमोहइतिप्रोक्तःससदानहरेःक्वचित् । अन्येपातत्प्रसादेनशनैर्यातिसतामपि । इत्यादिवचनात्स्वतोमोहाभावेविशकृतबुद्ध्यास्य

दितित्त्राह बोधेति अप्राकृतज्ञानरूपबुद्धये नन्वेतज्जीवस्याप्यस्तीत्यतउक्तं परस्माइति स्वानियतकालप्रकाशितत्वेनतदुत्तमत्वेनततोविलक्षणत्वेनदूरीकृतबहुपद्रवत्वेनजीवस्यतद्धर्मत्वात्कर्मवशत्वात्तन्मन्मत्वा त्अलौकिकंतद्वस्तुलक्षणमंतरेणज्ञातुमशक्यमितिमन्वानोजगत्कर्तृत्वादिलक्षणविशिष्टत्वेननमति विश्वेति निमित्तभूतालीलाशृंगारचेष्टातस्याआरामायक्रीडावनाय तेतुभ्यंएवंविधलक्षणवतः किंनामेत्यतउ क्तंईश्वरायेति प्राक्कालीनजन्मप्रचितपुण्यराशेरिदानीमपिभगवद्दर्शनंप्राप्तमितिसूचयितुंचक्रमेविलिट्प्रयोगः १४ भगवतोवताराणांगतिरपिनज्ञायतइत्येतदपिमतंदुष्टं यतोमूलस्वरूपवदवताराणामपि मुक्त्यादिदानसामर्थ्यंहश्यतेतस्मादितिभावेनाह यस्येति यथाहरावतारभेदमोहोनास्तीतितथातत्प्रसादाच्चदोषेष्वपिनास्तीतिद्योतयन्नितिवास्तौति यस्यति असुविगमेप्राणप्रयाणकालेविवशाभक्तिवि वशाः अनेनपूर्वाभ्यासपाटवंदर्शयति । येभक्त्याविवशाविष्णोर्नाममात्रैकजल्पकाः । तेपिमुक्तिंव्रजंत्याशुकिमुतद्ध्यायिनःसदेति कैमुत्यन्यायसिद्धत्वाद्बलवत्प्रतिबंधकात्तत्कालमुक्त्यभावेपिकालांतरे निश्चितेति सहसेति अपावृतंस्वाच्छादिकमायावरणरहितं सृष्टिप्रलयादिषुविकारराहित्याहतं ऋतत्वेहेतुरजमिति १५ सृष्टिप्रलयहेत्वोर्भवतःशिवस्यचजाग्रतोःसतोर्हरेर्विश्वोद्भवादिलीलारामत्वं कथमितितटस्थशंकांपरिहर्तुमाह योवाइति चशब्दाःसमुच्चयार्थाः अनंतासनवैकुंठक्षीराब्धिस्थोहरीत्रिपादिति एकोहरिरात्मानारायणोमूलंकारणंयेषांतेआत्ममूलाः । योवाविभुःस्वयंविष्णुर्योवाअ हंसदंतर्यामीब्रह्माख्योयश्चगिरिशाख्यःशिवांतर्यामीस्थित्युद्भवप्रलयहेतवोभूत्वावर्तीयंसृज्यपदार्थानांनानाविधत्वात्तेषुअंतर्यामित्वेनोरुप्ररोहोबहुरूपोववृधेतस्मैभुवनद्रुमायनमइत्यन्वयः वृक्षसाधर्म्यं

यस्यावतारगुणकर्मविडंबनानिनामानियेऽसुविगमेविवशागृणंति ॥ तेनैकजन्मशमलंसहसैवहित्वासंयांत्यपावृतमृतंतमजंप्रपद्ये १५ योवाअहंचगिरिशश्चविभुःस्वयंचस्थित्युद्भवप्रलयहेतवआत्ममूलाः ॥ भूत्वात्रिपाद्ववृधएकउरुप्ररोहस्तस्मैनमोभगवतेभुवनद्रुमाय १६ लोकोविकर्मनिरतःकुशलेप्रमत्तःकर्मण्ययंत्वदुदितेभवदर्चनेस्वे ॥ यस्तावदस्यबलवानिहजीविताशांसद्यश्छिनत्त्यनिमिषायनमोस्तुतस्मै १७ यस्माद्बिभेम्यहमपिद्विपरार्धधिष्ण्यमध्यासितःसकललोकनमस्कृतंयत् ॥ तेपेतपोबहुतपोवरुरुत्समानस्तस्मैनमोभगवतावसखायतुभ्यम् १८

कथनेनाविकारित्वमुक्तमितिबिभ्यच्चतुर्मुखोभगवतइत्याह नायंलोकद्रुमवद्विकारीकिंतुऐश्वर्यादिगुणाविग्रहइति तस्माद्बुद्ध्यवतारायतथोक्तमितिभावः वाइत्यनेनब्रह्मादिभावोविष्णोस्तुतन्नियामकता भवेत् । मत्स्यादितास्वभावस्तुनान्यथाक्वचिदिष्यतइतिप्रमाणसिद्धिंसूचयतामत्स्यादिवदेतौनसाक्षात्स्वरूपेइतिज्ञापितं १६ शतंवर्षसहस्राणांजीवामितदनंतरेपुण्यसंचिनोमिकिमिदानींतत्करणमिति मत्वाभगवदुपासनादिसत्कर्मण्यालस्यंनकर्तव्यमितिभावेनकालांतर्यामिणंभगवंतंनमति लोकइति तावत्तदाबलवान्योरयजनस्येहजीविताशांसद्यःकालक्षेपमंतरेणछिनत्तिअपराधमंतरेणजीविताशा छेदनंसाहसमितिनमंतव्यमित्यतउक्तंविकर्मेति विहिताकरणादिनात्महत्यादिदोषापत्तेरतोधिकोपराधोस्तीत्यतोनवैषम्यनैर्घृण्येहरेरितिभावः स्वेस्वविहिते तस्मैअनिमिषायनित्यज्ञाननेत्रेणनित्यं पश्यतेकालांतर्यामिणेनित्यंतुभ्यंनमइत्यन्वयः नित्यज्ञानदृशानित्यंलवकालमपीश्वरः। पश्यतेचात्कालिकंचैवतस्मादनिमिषोहरिरित्यादेर्नमात्रमत्रग्राह्यं कालांतर्यामिणोनिमिषत्वंनित्यंलवादिकालनिरीक्ष णात्तच्चोक्तं कालस्यानिमिषत्वंचलवादेर्नित्यवीक्षणात्इति इतरस्यतच्छब्दवाच्यत्वंतन्नियतत्वात् १७ कृतकालोहमपियस्माद्बिभेमिकिंत्वितरेतस्मात्कालांतर्यामिहरिप्रसादोवश्यंसंपादनीयःपुण्यानि चयंसंपादयिषुभिरितिभावेनकालांतर्यामिणंविशिनष्टि यस्मादितिधिष्ण्यमध्यासितइतिसप्तम्यर्थेद्वितीया द्विपरार्धंधिष्ण्यब्रह्मशतवर्षकालावस्थायिस्थानंसत्याख्यं स्वस्यभीतिश्चानेनज्ञातव्येत्या शयेनाह तेपइति मुक्तावानंदवृद्धिकरंबहुतपःपूर्णज्ञानंचावरुरुत्समानःप्राप्तुमिच्छन्नूतपस्तेपे गुणोपसंहाररूपामुपास्तिमकरवमित्यर्थःस्वक्रियमाणेकर्मणिसहायांतरमनपेक्षणाद्भगतःसखायस्य सतथातस्मै १८

तिर्यगादिजीवयोनिषुविज्ञानविलोपहेतुष्ववतरन्नित्योदितज्ञानानंदत्वेनानन्यसाध्यंविक्रमंकुर्वन्क्रीडतीतिपक्षेनैवतत्त्वज्ञानंसुलभंपुंसामतोपिनज्ञायतेगतिरित्यहोदुराग्रहोदुष्टानामितिभावेनश्रीहरिस्तौ
ति तिर्यगिति आत्मेच्छयास्वेच्छया प्रयोजनमाह आत्मेति परीप्सयापालनेच्छया तिर्यगादिजीवयोनिष्वप्यनिरस्तरतिः अन्यत्रनित्यरतिरपितु किमु अत्रहेतुगर्भविशेषणमाह उपलब्धकाष्ठइति
नित्यानंदानुभवलोपेहि दुःखानुभवःसंभाव्यतेनान्यथा नित्यानुभूतानंदोत्कर्षत्वादित्यर्थः १९ हरेःश्रमोद्रेकोत्थनिद्रादिदर्शनात्तद्गतिर्दुःखबोधेतितत्राह यइति दशार्धैनपंचसंख्ययाप्रवृत्तिर्यस्या
स्तथातथापंचपर्ववत्येत्यर्थः एवंविद्याविद्ययानुपहतोऽबाधितोपीत्यनेनएकमेवब्रह्माविद्ययासंसरतीतिविद्ययामुच्यतइतिमतदूरादुत्सादितं भीमाभयकर्यऊर्मीणांमालाअस्यसंतीतिभीमोर्मिमालीतस्मि
न्नंतर्जले अहिकशिपुस्पर्शानुकूलमितिक्रियाविशेषणं अहिःशेषएवकशिपुरुत्तरवस्त्रास्तृतशय्यातस्यस्पर्शानुकूलंस्पर्शसुखानुगुणंयथाभवतितथा नस्वार्थेयंनिद्रा किंतुपरार्थेत्याशयेनाह जनस्येति
अनेनापिनिद्रामुद्रितनेत्रत्वमेवनसर्वेंद्रियोपरमत्वमुक्तंभवति २० पितृनमस्कारोपिपुत्रेणावश्यंकार्यइत्याशयेनतंनमति यन्नाभीति यदनुग्रहेणेत्युभयत्रान्वयः अहंयदनुग्रहेणयन्नाभिपद्मभवनाद्या
संपदनुग्रहेणलोकत्रयोपकरणश्चासमिति लोकत्रयसृष्टौसहकारीत्यनेनमुख्यसृष्टौमुख्यस्रष्टासएवेत्युक्तंभवति शिवोपिभवदाज्ञानियतइतिभावेनाह उदरस्थेति उदरेतिष्ठतीत्युदरस्थः उदरस्थो
भवोरुद्रोयस्यसतथातस्मैअनेनसर्वसंहर्तृत्वमपिरुद्रकृतमप्युपचारमात्रं मुख्यंतुहरेरित्युक्तंभवति रुद्रस्यापिसंहर्ताकिमुतजगतइतिवा ब्रह्मरुद्रौनारायणात्मानावितिश्रुतिरपहस्तितेतिचज्ञात

तिर्यङ्मनुष्यविबुधादिषुजीवयोनिष्वात्मेच्छयात्मकृतसेतुपरीप्सयायः ॥ रेमेनिरस्तरतिरप्युपलब्धकाष्ठस्तस्मैनमोभगवतेपुरुषोत्तमाय १९ योऽवि
द्ययानुपहतोपिदशार्धवृत्त्यानिद्रामुवाहजठरीकृतलोकयात्रः ॥ अंतर्जलेहिकशिपुस्पर्शानुकूलंभीमोर्मिमालिनिजनस्यसुखंविवृण्वन् २० यन्नाभिपद्म
भवनादहमासमद्यलोकत्रयोपकरणोयदनुग्रहेण ॥ तस्मैनमस्तउदरस्थभवाययोगनिद्रावसानविकसन्नलिनेक्षणाय २१ सोयंसमस्तजगतांसुहृदेकआत्मा
सत्वेनयन्मृडयतेभगवान्भगेन ॥ तेनैवमेदृशमनुस्पृशताद्यथाहंस्रक्ष्यामिपूर्ववदिदंप्रणतप्रियोसौ २२ एषप्रपन्नवरदोरमयात्मशक्त्यायद्यत्करिष्यतिगृ
हीतगुणावतारः ॥ तस्मिन्स्वविक्रमइदंसृजतोपिचेतोयुंजीतकर्मशमलंचयथाविजह्याम् २३

ण्यं योगनिद्रावसानेविकसन्नलिनेक्षणायेत्युक्तिर्नित्यविकसन्नलिनेक्षणस्यकादाचित्कविकासोक्तिरज्ञजनदृष्टमपेक्ष्योक्ता अतोभगवतोगतिर्नज्ञायतइतिमतमवद्यात्मकत्वाद्बुभूषुभिर्नग्राह्यमितिसिद्धम् २१
अधुनास्वाभीष्टंप्रार्थयतइत्याह सोयमिति सइति ज्ञातोसीत्युक्तःपरामृश्यते सुहृत्त्वादेकत्वात् सुहृदंतररहितत्वादात्मत्वादुत्कृष्टत्वादिमंवरंप्रार्थयइतिभावः आत्मशब्दस्यमुख्यार्थोविष्णुरेकःसनात
नः । संदोहदेहमनसोबुद्धिर्जीवाःस्वयंतथा । ब्रह्माप्यमुख्यःक्रमशउत्कर्षोप्यात्मताभवेदितिवचनान्मुख्यार्थोविष्णुरेवतस्यैवग्राह्यत्वात् यद्येनभगेनऐश्वर्यादिरूपेणसत्वेनात्मभावेनपराक्रमेणवामृडय
तेरक्षति विश्वमितिशेषः स्पृशदानइतिधातोः अनुस्पृशतात् ददातु दृशंविशिनष्टि यथेति एवंप्रपन्नतःप्रतिदानमिदमेवेतिभावेनाह प्रणतेति अनेनेश्वरस्यस्वतस्तृप्तस्यतर्पकांतरानपेक्षांसूचयति २२
उक्तमेवार्थंविशेषणांतरप्रक्षेपेणप्रार्थयते एषइति आत्मशक्त्यास्वभार्ययारत्वसामर्थ्येनवा स्वसामर्थ्यात्सकर्माणिरमयासहकेशवः । कुरुतेस्वयमेवैषकानिचित्पुरुषोत्तमइतिवचनात् । यद्यत्
यंयंविक्रमं तस्मिन्स्वविक्रमेस्वव्यापारेवीर्यलक्षणेजगत्सर्जनव्यापरमग्नस्यापिमेचेतः स्मृतिकारणंज्ञानंयुंजीत अपुष्टंपुष्टंकुर्वीष्ट इयदेवनालमित्याह कर्मेति ज्ञानप्रतिबंधकंपापात्मदैत्यादिसृष्टिपापकर्मणा
प्राप्तंशमलंयथायेनजह्यामिताद्दशमितिशेषःसत्त्वादिगुणाधीनेज्ञानाज्ञानेकिमनेनस्यातामित्यतउक्तं गृहीतेति स्वनियतसत्त्वादिगुणप्रकाशः हयग्रीवादिप्रसादप्राप्यंज्ञानमस्मात्कथंस्यादित्यतोवेत्युक्तं गृही
तेति स्वप्रकाशितज्ञानादिगुणहयग्रीवाद्यवतारः । एतत्प्रार्थनयारूपांतरप्राप्यफलमपिस्यादित्यर्थः २३

वैदिकप्रतिपाद्यवस्तुनोज्ञानविशेषोवेदार्थतात्पर्यज्ञानांतरीयकइतितद्विषयकज्ञानमपिनविनष्टंस्यादितिप्रार्थयते नाभिहृदादिति इहअंभसि सतोस्यहरेः रूपंगातिमास्थानीयंनिगमस्यसंबंधिनीनां गिरांवाचोविसर्गोविशिष्टनिश्चयोविष्णुरेवसर्वोत्तमइत्यादिलक्षणोमारीरिषीष्टक्षीणोनष्टोमाभूदित्यर्थः २४ अनुग्रहमात्रेणाभिमायसिद्धावपिसंलापेनाधिकविश्वासोभवतीतिसृष्टिविषादापनयनप्रार्थ नव्याजेनसंलापमभिप्रैति सोसाविति योसौमयावर्णितगुणोऽदभ्रकरुणःपूर्णदयासमुद्रः सपुराणपुरुषोभगवान्विश्वविजयापशेषपर्यंकादुत्थायविवृद्धप्रेमस्मितेन पूर्णस्नेहप्रसरप्रादुर्भूतमंदहासेनसहनय नांबुरुहंविजृंभन्नुन्मीलयन् माध्व्या मदिरावद्रोमांचंजनयंत्यागिरानोमनोविषादंभयमपनयतादित्यन्वयः हेवेदगर्भभयंमाभूत् सर्गोद्यमंकुर्वित्यादिवचनेनप्रीतिमावहेत्यर्थः २५ हरिगुणानंत्यात्स्तो नविरिंचेनयावदायुःस्तुतोहरिःकिमितिमंदाशंकांपरिहरति मैत्रेयइति स्वसंभवंस्वजनकंविद्यामंत्रलक्षणानिष्ठास्तुतेरुपरमोगुणानामानंत्यादप्रतिभानात् स्वाभीष्टसिद्धेरित्यनेकविधोहष्टोत्रतुप्रथमपक्षएवेति भावेनाह यावदिति खिन्नवदलंबुद्धिरहितवत्इत्यनेनपुनरपिस्तोतुमिच्छांसूचयति २६ तर्ह्यनयास्वाभीष्टंनसेत्स्यतीतितत्राह अथेति कल्पव्यतिकरःप्रलयस्तदंभसा २७ आत्मनःस्वस्य लोकानासंस्था नस्यावयवशोविन्यासविशेषस्यविज्ञानेपरिखिद्यतोऽलंबुद्धिमकुर्वतस्तस्यब्रह्मणोऽभिप्रेतमालक्ष्यलक्षणतोज्ञात्वा कश्मलंज्ञानसंकटम् २८ तद्वींलोकसंस्थानविज्ञानविषयंपरिखेदंमागाः भवान्य

नाभिहृदादिहसतोंभसियस्यपुंसोविज्ञानशक्तिरहमासमनंतशक्तेः ॥ रूपंविचित्रमिदमस्यविवृण्वतोमेमारीरिषीष्टनिगमस्यगिरांविसर्गः २४ सोसावद भ्रकरुणोभगवान्विवृद्धप्रेमस्मितेननयनांबुरुहंविजृंभन् ॥ उत्थायविश्वविजयायमनोविषादंमाध्व्यागिराऽपनयतात्पुरुषःपुराणः २५ मैत्रेयउवाच ॥ स्वसंभवंनिशाम्यैवंतपोविद्यासमाधिभिः ॥ यावन्मनोवचःस्तुत्वाविररामसखिन्नवत् २६ अथाभिप्रेतमालक्ष्यब्रह्मणोमधुसूदनः ॥ विषण्णचेतसस्ते नकल्पव्यतिकरांभसा २७ लोकसंस्थानविज्ञानआत्मनःपरिखिद्यतः ॥ तमाहागाधयावाचाकश्मलंशमयन्निव २८ श्रीभगवानुवाच ॥ मावेदगर्भ गास्तंद्रींसर्गउद्यममावह ॥ तन्मयाचोदितंह्यग्रेयन्मांप्रार्थयतेभवान् २९ भूयश्चतपआतिष्ठविद्यांचैवमदाश्रयाम् ॥ ताभ्यामंतर्हृदिब्रह्मन्लोकान्द्रक्ष्य स्यपावृतान् ३० ततआत्मनियोगेनभक्तियुक्तःसमाहितः ॥ द्रष्टासिमांततंब्रह्मन्मयिलोकांस्त्वमात्मनि ३१ यदातुसर्वभूतेषुदारुष्वग्निमिवस्थितम् ॥ प्रतिचक्षीतमांलोकोजह्यात्तर्ह्येवकश्मलम् ३२

लोकसंस्थानविज्ञानंप्रार्थयतेतन्मयापूर्वमेवतपइतिद्व्यक्षरकथनेनचोदितं तत्प्रार्थनमपिनस्वार्थीनंकिंतुमत्प्रेरणयैवेतीममर्थंहिनासूचयति २९ नैतावतालमित्याह भूयश्चेति तपआलोचनंप्रोक्तंवि द्यानिष्ठाप्रकीर्तितेतिवचनात्तपआलोचनगुणोपसंहारलक्षणंध्यानं विद्यांनिष्ठांभक्तिलक्षणां ततःकिंस्यादितितत्राह ताभ्यामिति ३० लोकदर्शनमेवाविशिनष्टि ततइति भक्तियुक्तःसमाहितः एका ग्रचित्तस्त्वंततःस्वेनयोगेनध्यानेनात्मनिदेहमध्येहृदिततंसर्वगुणपूर्णमांद्रष्टासिआत्मनित्वयिस्थितेमयिलोकान्द्रष्टासीत्यन्वयः देहेदेहेहरिस्तस्मिन्सर्वेलोकाःप्रतिष्ठिताः । अंगुष्ठमात्रेपिपरेपरशक्तिं यतोविभुरितिवचनात् इत्थंतल्लोकदर्शनंयुक्तमितिभावः ३१ लोकसंस्थानविज्ञानयोगमुपदिश्याधुनाब्रह्मणःसर्वेषांगुरुत्वात्तदुपदिष्टज्ञानस्यमुक्तिसाधनत्वाल्लोकोपकारकंतज्ज्ञानप्रकारमुपदिशति यदा त्विति तुशब्दोज्ञानविशेषसूचकः लोकोयोग्यजनोदारुष्वग्निमिवनिःसंगतयासर्वभूतेषुस्थितं तुशब्दात्सर्वभूतेषुस्थितंगुष्ठमात्रेमय्यपिलोकान्यदाप्रतिचक्षीतप्रतिदेहंपश्येत् तर्हितदानीमेवकश्मलंजीवेश्व राभेददर्शननिमित्तदुःखंजह्यात्जहाति देहेदेहेहरिस्तस्मिन्नित्येवदत्राप्युदाहर्तव्यम् ३२

नैतावतापिपूर्णतइतिपूर्वोपदिष्टज्ञानमुपचिनोति यदेति यदात्मानंभूतेंद्रियगुणाशयैराहितंपश्यतिस्वाराज्यमृच्छतीत्यन्वयः किंतुविशेषोप्यस्तीत्याह स्वरूपेणेति स्वरूपेणमयोपेतंहृदिस्थितंजीवस्वरूपं
पश्यन्मुक्तोभवति अयंभावः यदात्मानंस्वरूपंजीवसंज्ञंभूतेंद्रियादिरहितंदेहादिष्वात्मभावंत्यक्त्वाहृदिस्थितेजीवरूपेआत्मभावंदृष्ट्वाहृदिस्थितेनस्वरूपेणस्वबिंबरूपेणमयोपेतंसमीपेस्थितं ममपादाब्जसे
वकत्वेनवर्तमानंपश्यतितदास्वरूपानंदानुभवमुपैतीति तदुक्तं त्यक्त्वादेहाद्यात्मभावंजीवरूपेहृदिस्थिते । दृष्ट्वात्मभावंतंचापिहारिपादाब्जसंस्थितं । यदापश्यत्यापरोक्ष्यात्तदामुक्तिंव्रजत्यसाविति ३३
इदानींतस्मिन्स्वविक्रमइतिप्रार्थितंतदानप्रकारमाह नानेति अस्मिन्सृष्टिकर्मणिनानाविधादृष्टाख्यकर्मणांविपाकेनफलदानोन्मुखेनकालेनबह्वीःप्रजाःसिसृक्षतस्तेतवात्माबुद्धिर्नावसीदति नजश्यति
तत्रनिमित्तमाह वर्षीयानिति वर्षीयान्बहुसंवत्सरकालसंपन्नः मदनुग्रहोस्तीतियत्तस्मादितिशेषः वर्षीयान्ज्यायानितिवा ३४ एतदेवस्पष्टयति ऋषिमिति ऋषिस्त्रिकालदर्शीस्यादितिवचनात्
ज्ञानित्वादाद्यमादौभवंतंत्वां प्रथमोत्पन्नत्वेनतवश्रेष्ठत्वात् हेत्वंतरमाह यन्मनइति प्रजाःसंसृजतस्तेतवात्माबुद्धिर्नावसीदतिवेतिअन्यव्यापारग्रस्तस्यान्यत्रमनोनिधानंदुष्करंतथापितत्कृतमतइत
रान्प्रतिपापीयानपिरजोगुणस्त्वांनबध्नातीत्यर्थः ३५ मनोनिबंधनफलमाह ज्ञातइति यथास्थितवस्तुज्ञानमेवमत्प्रसादजनकंतत्तवास्तीत्याह यन्मामिति त्वंभूतेंद्रियगुणात्मभिर्भूतेंद्रियत्रिगुणमनोबु
द्धिभिर्नियामकतयायुक्तंमांमन्यसेनतुतदात्मकत्वेनेतियत्तस्माद्यथार्थज्ञानित्वादित्यर्थः भूतेंद्रियमनोबुद्धित्रिगुणादिषुसर्वशः । युक्तंनियामकतयापश्यञ्जानातिकेशवमितिवचनात् भूतेंद्रियानियाम

यदारहितमात्मानंभूतेंद्रियगुणाशयैः ॥ स्वरूपेणमयोपेतंपश्यन्स्वाराज्यमृच्छति ३३ नानाकर्मविपाकेनप्रजाबह्वीःसिसृक्षतः ॥ नात्मावसीदत्यस्मिंस्ते वर्षीयान्मदनुग्रहः ३४ ऋषिमाद्यंनबध्नातिपापीयांस्त्वांरजोगुणः ॥ यन्मनोमयिनिर्बद्धंप्रजाःसंसृजतोपिते ३५ ज्ञातोहंभवतात्वद्यदुर्विज्ञेयोपिदेहिनाम् ॥ यन्मांत्वंमन्यसेयुक्तंभूतेंद्रियगुणात्मभिः ३६ तुभ्यंमद्विचिकित्सायामात्मामेदर्शितोबहिः ॥ नालेनसलिलेमूलंपुष्करस्यविचिन्वतः ३७ यच्चकर्थममस्तोत्रंमत्कथाभ्युदयांकितम् ॥ यद्वातपसिनिष्ठाचसएषमदनुग्रहः ३८ प्रीतोहमस्तुभद्रंतेलोकानांविजयेच्छया ॥ यदस्तौषीद्गुणमयंनिर्गुणंमानुवर्णयन् ३९ यएतेनपुमान्नित्यंस्तुत्वास्तोत्रेणमांभजेत् ॥ तस्याहंसंप्रसीदेयंसर्वकामवरेश्वरः ४०

कतयायुक्तज्ञानमेवज्ञानमितिभावः ३६ इतःपूर्वंस्वरूपानाविष्करणमपितवानुग्रहविशेषार्थमित्याशयेनाह तुभ्यमिति प्रलयसलिलेपुष्करस्यपद्मस्यनालेननालनाडीद्वारापुष्करस्यमूलंकारणंमांवि
चिन्वतस्तवमद्विचिकित्सायांमद्दिदृक्षाजिज्ञासायामात्मासच्चिदानंदलक्षणस्तुभ्यंत्वदर्थंबहिर्दृग्विषयत्वेनदर्शितः ३७ त्वत्कथातपोनिष्ठाबलात्त्वंप्रत्यक्षोभूर्नतुस्वतइतिदर्पोमाभूदितिभावेनाह यच्चकर्थेति
कथवाक्यप्रबंधइतिधातोः स्तोत्रलक्षणोवाक्यप्रबंधःकथातस्याःसम्यगुदयउत्कर्षस्तेनांकितंयुक्तं । वागिंद्रियव्यापारस्यमदनुग्रहमंतरेणानुपपत्तेस्तेनशुभविषयाप्रवृत्तिरभूत्तव । सएवमदनुग्रहइत्युच्यते
योवाचीतिष्ठन्योमनसितिष्ठन्नित्यादेः ३८ कथापिस्तोत्रलक्षणानप्रहेलिकाबालप्रियेतिभावेनोक्तंस्फुटयति प्रीतइति लोकानांसृष्टिविजयेच्छयागुणमयंसार्वज्ञ्यादिगुणपूर्णंनिर्गुणंसत्वादिगुणरहितं
मामनुवर्णयन्नस्तौषीदिति यत्तेनाहंप्रीतोस्मितेभद्रंकल्याणमस्तुइत्यन्वयः । सार्वज्ञ्यादिगुणैर्युक्तंसत्वादिगुणवर्जितं । योजानातिहरिंतस्यप्रीतोभवतिकेशवइतीदंप्रमाणंगुणोत्कर्षज्ञानमेवप्रीतिजनकंन
निर्गुणज्ञानमितिभावेनोदाहृतम् ३९ त्वत्कृतस्तोत्रेणमांभजमानोयस्तस्मैप्रसन्नोभीष्टंददामिकिंपुतुभ्यमित्यभिप्रेत्याह यएतेनेति आधिकारिकदेवानांस्वाधिकारामिकामनं । भवतिप्रीतयेविष्णो
र्भक्तपादेरपियत्सदेत्यनेनसृष्टिस्वाधिकारकामेनब्रह्मणाकृतमिदंस्तोत्रंकथंहरिप्रीतिजनकंस्यादितीदंचोद्यंनिर्मूलनीयं अतएवसर्वकामवरेश्वरइत्युक्तंसर्वकामितवराणामीश्वरइत्यर्थः ४०

मत्प्रीतेरेवसर्वपुरुषार्थोत्तमत्वंनान्यस्येत्याह पूर्तेनेत्यादिना तुष्टापुरुषादिहिरण्यदानैःपुंसांमत्प्रीतिःनिःश्रेयसंराज्यंरंजनीयं तत्त्वविन्मतंतत्त्वज्ञानिभिर्मतं रंजनीयमित्यनेनमोक्षेपिरंजनीयामत्प्रीतिरेवेतिध्वनयति तदुक्तं मुक्तस्यापिहरेःप्रीतिःसर्वतोप्यनुराजइतइवि ४१ मुक्तावपिमत्प्रीतिरेवरंजनीयेत्युक्तं तत्रमुख्यसाधनंभक्तिरेवेत्याह अहमिति हेधातश्चतुर्मुख अहमात्मनांसर्वजीवानामात्मांतर्यामित्वेनानंदादिनिर्माताऽतएवप्रेयसामतिशयेनप्रियाणांस्त्वात्मादीनामपिसम्यग्भ्यर्हितःप्रेष्ठःप्रियतमः सर्वस्मात्प्रियादेहादेस्तवप्रेष्ठत्वंकथमित्यतउक्तं देहादिरिति देहादिर्यस्यस्वात्मनःकृतेथैप्रियः अस्यस्वात्मनोदेहादिःप्रियःस्यादितिमय्येवापादितत्वादितियदतःस्वात्मादिभ्यःप्रियतमत्वान्मयिरतिंभक्तिंभवान्कुर्यादित्यन्वयः सर्वतोपिप्रियोह्यात्मातस्यापिमेयतांहारिः । आपादयतियत्तस्मात्स्वात्मनोपिप्रियोहरिरितिच ४२ सृष्टावेवाधिकृतत्वात्ब्रह्मणःसृष्टिकामनंनदोषहेतुः किंतुहरेःप्रीतिहेतुस्तदाज्ञाकारित्वादितिसूचितं तदिदानींस्पष्टमाह सर्वेति सर्ववेदमयेन प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपारितावमूवेस्याद्याखिलवेदप्रतिपाद्येनात्मनोमत्तोयोगःसंबंधोस्यास्तीतिआत्मयोगीतेनमत्तोजातेनात्मनादेहेनात्माब्रह्मात्वयामय्यनुशेरतेताइमाःप्रजायथापूर्वंयथापूर्वकल्पेसृष्टास्तथासृजेत्य

पूर्तेनतपसायज्ञैर्दानैर्योगैःसमाधिना ॥ राज्यंनिःश्रेयसंपुंसांमत्प्रीतिस्तत्त्वविन्मतम् ४१ अहमात्मात्मनांधातःप्रेष्ठःसन्प्रेयसामपि ॥ अतोमयिरतिंकुर्याद्देहादिर्यत्कृतेप्रियः ४२ सर्ववेदमयेनेमाआत्मनात्मात्मयोनिना ॥ प्रजाःसृजयथापूर्वंयाश्चमय्यनुशेरते ४३ मैत्रेयउवाच ॥ तस्माएवंजगत्स्रष्टाप्रधानपुरुषेश्वरः ॥ व्यज्येदंस्वेनरूपेणकंजनाभस्तिरोदधे ४४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेदशमोध्यायः ॥ १० ॥ विदुरउवाच ॥ अंतर्हितेभगवतिब्रह्मालोकपितामहः ॥ प्रजाःससर्जकतिधादैहिकीर्मानसीर्विभुः १ येचमेभगवन्पृष्टास्त्वय्यर्थाबहुवित्तम ॥ तान्वदस्वानुपूर्व्येणछिंधिनःसर्वसंशयान् २ ॥ सूतउवाच ॥ एवंसंचोदितस्तेनक्षत्त्राकौषारवोमुनिः ॥ प्रीतःप्रत्याहतान्प्रश्नान्हृदिस्थानथभार्गव ३ मैत्रेयउवाच ॥ विरिंचोपितथाचक्रेदिव्यंवर्षशतंतपः ॥ आत्मन्यात्मानमावेश्ययथाहभगवानजः ४ तद्विलोक्याब्जसंभूतोवायुनायदधिष्ठितम् ॥ पद्ममंभश्चतत्कालकृतवीर्येणकंपितम् ५ तपसाह्येधमानेनविद्ययाचात्मसंस्थया ॥ विवृद्धविज्ञानबलोन्यपाद्वायुंसहांभसा ६ तद्विलोक्यवियद्व्यापिपुष्करंयदधिष्ठितः ॥ अनेनलोकान्प्राग्लीनान्कल्पितास्मीत्यचिंतयत् ७

न्वय. त्वदन्यस्यानधिकृतत्वात्त्वमेवैतत्कुर्वित्यवधारणार्थेचशब्दोरुद्राद्युपसंग्रहार्थोवा ४३ एवंविधमहिम्नोब्रह्मणोप्यदृश्योभून्नारायणइतिमाहात्म्यातिशयप्रकटनायहरेस्तिरोधानंकथयति तस्माइति प्रधानपुरुषयोःप्रकृतिब्रह्मणोरीश्वरः यद्ब्रह्मणोमनसिसन्निहितमिदंव्यज्यव्यक्तीकृत्य ४४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांदशमोध्यायः ॥ १० ॥ अस्मिन्नध्यायेनवविधसृष्टिकथनेननिरतिशयमहिमाहरेरुच्यते तत्रशुकोमैत्रेयंप्रतिविदुरःपृच्छतीतिपरीक्षितमाह अंतर्हितइति दैहिकीर्मानसीरितिदेहमनोभ्यांसृष्टाः १ २ हृदिस्थान्विदुरस्येतिशेषः ३ भूयश्चतपआतिष्ठेतिहारिणायदुक्तंतदाज्ञाकरणप्रकारमाह विरिंचोपीति आत्मनिपरमेश्वरेआत्मानंमनआविश्यनिधाय ४ यदात्मनाधिष्ठितंतत्पद्मंतत्कालकृतवीर्येणप्रलयकालकृतपराक्रमेणतीव्रेणेत्यर्थः वायुनाकंपितमंभश्चकंपितंविलोक्य ५ मूलोन्मूलनन्यायेनअंभसासहवायुंन्यपादित्यन्वयः निपानमुदपानंस्यादापानंपानकोष्ठिकइतिहलायुधः ६ हरिणास्रष्टुमुपदिष्टोब्रह्मासंहर्तुमुपक्रमते किमिदंहंतेत्याशंक्यसर्वांविरोधित्वात्तपोःपानंयुक्तमितिभावेनाह तद्विलोक्येति वियद्व्यापिआकाशवन्महत्परिमाणोपेतम् ७

एकेनपद्मेनत्रित्वादिसंख्याविशिष्टंलोकरचनंकथमितितत्राह पद्मकोशमिति यदाचितयत्तदैवचतुर्दशभुवननिर्माणनिमित्तेनकर्मणादृष्टेनचोदितःकर्मणाविषयभूतेनहारिणाप्रेरितोभगवान्ज्ञानवैराग्या दिगुणशालीपद्मकोशमाविश्यएकत्वसंख्याविशिष्टमुरुधाबहुत्वसंख्याविशिष्टत्वेनव्यभांक्षीद्विभक्तवान् किमनंतसंख्याविशिष्टमकरोन्नेत्याह त्रिधेति भूम्यंतरिक्षस्वर्गात्मनात्रिधाभाव्यक्तत्वात्त्रयंपुनर्द्वि सप्तधाचतुर्दशभुवनात्मनाविभक्तवानितिशेषः ८ न्यूनातिरेकसंख्यांनिषेधयति एतावानिति जीवानांलोकस्यावस्थानस्यसंस्थाभेदोव्यवस्थाविभागःसमासतःसंक्षेपतोमयातवकथितइतिशेषःइद मपिनस्वशक्त्याकृतमित्याह धर्मस्येति परमेष्ठिनोब्रह्मणोऽनिमित्तस्य अनिषेधेपुमान्विष्णावित्यभिधानादःपरमात्मानिमित्तंयस्यसोऽनिमित्तस्तस्यब्रह्मार्पणबुद्ध्याकृतस्येत्यर्थः धर्मस्यकृतस्यविपाको विशिष्टफलमितिविद्धीतिशेषः अइतिब्रह्मेतिश्रुतेः निर्निमित्तोनार्थः तपआदीनांभगवद्विषयत्वोक्तेः ९ श्रुतहरिमहिमाविदुरःकथांतरप्रसंगेनमैत्रेयोभगवत्कथांसमापयतीतिभीत्यामैत्रेयंपृच्छति यदि ति बहुरूपस्यानंतरूपस्यहरेःकालाख्यंलक्षणंस्वरूपंयथायथावत् । लक्षणंलक्ष्ययात्माचस्वरूपमितिकथ्यतइत्यभिधानान्नान्योर्थःकिंतुस्वरूपमेव १० कालस्यसर्वप्रवर्तकत्वेनप्रधानत्वात् सूचीकटाह न्यायेनतत्स्वरूपंवक्ष्यन्मैत्रेयआदौजगत्सृष्ट्याद्यर्थंगुणत्रयोपादानकर्तृभगवद्रूपत्रयप्रादुर्भावप्रकारंवक्ति गुणेति प्रलयेगुणानांद्रष्टृत्वेनास्थितोगुणानांव्यतिकरंविकारविशेषंसम्यक्करोतीतिगुणव्यतिकरा कारः कर्मण्यण्प्रत्ययः पुरुषःपूर्णषड्गुणः अतएवनिर्विशेषः निर्विकारः अधिकांतररहितोवा अतएवाप्रतिष्ठितः अन्यत्रेतिशेषः सभगवान्कस्मिन्प्रतिष्ठितइतिस्वेमहिम्नीतिश्रुतेः तस्यगुणव्यति करस्योपादानंस्वीकारोयेनसतथातंगुणव्यतिकरोपादानकर्तारमित्यर्थः त्रिरूपत्वेनात्मानंलीलयासृजत्आविरभावयत् ११ स्वार्थाभावेप्यन्यस्यकिंप्रयोजनमुद्दिश्यरूपांतरग्रहणंहरेरिति

**पद्मकोशंतदाविश्यभगवान्कर्मचोदितः ॥ एकंव्यभांक्षीदुरुधात्रिधाभाव्यद्विसप्तधा ८ एतावान्जीवलोकस्यसंस्थाभेदःसमासतः ॥ धर्मस्यह्यनिमित्त स्यविपाकःपरमेष्ठिनः ९ विदुरउवाच ॥ यदात्थबहुरूपस्यहरेरद्भुतकर्मणः ॥ कालाख्यंलक्षणंब्रह्मन्यथावर्णयनःप्रभो १० मैत्रेयउवाच ॥ गुणव्यति कराकारोनिर्विशेषोऽप्रतिष्ठितः ॥ पुरुषस्तदुपादानमात्मानंलीलयासृजत् ११ विश्वंवैब्रह्मतन्मात्रंसंस्थितंविष्णुमायया ॥ ईश्वरेणपरिच्छिन्नंकालेनाव्य क्तमूर्तिना १२ यथेदानींतथाचाग्रेपश्चादप्येतदीदृशम् ॥ सर्गोनवविधस्तस्यप्राकृतोवैकृतश्चयः १३**

तत्राह विश्वमिति सृष्ट्याद्यर्थत्वेनतस्यपुरुषस्यब्रह्माविष्णुरीश्वरइतित्रीणिरूपाण्यात्मनासृष्टानीत्यनेनोच्यते तथाहि विश्वंब्रह्मतन्मात्रंवैब्रह्माणंसृष्ट्वाचतुर्मुखत्वेनतंप्रविश्यसृष्टिबृंहणाद्ब्रह्मनाम्नातेनवि ष्णुनामितंत्रातंचेतितथोक्तं विष्णुनाम्नोहरेर्मायपासामर्थ्येनसंस्थितंव्यवस्थापितंस्वस्वाधिकारइतिशेषः अत्रपदीश्वराख्यंसंहर्तृरूपंतत्कालाख्यंतेनरुद्रंसृष्ट्वापंचमुखत्वेनतंप्रविश्य कालेनसंहर्त्राव्यक्तमूर्ति नाचक्षुराद्यगम्यस्वरूपेणहरिणापरिच्छिन्नंसंहृतमित्यन्वयः चतुर्मुखंसृष्ट्वातंप्रविश्यस्वयंचतुर्मुखोब्रह्मनामाहरिःसृष्टयेरजोगुणमुपादत्ते अन्यरूपप्रवेशमंतरेणस्वयंविष्णुनामारक्षार्थंसत्वमुपादत्ते पंचमुख मीशानंसृष्ट्वापंचमुखस्तंप्रविश्येश्वरनामाहरिःसंहारार्थंतमोगुणमुपाददातीतितात्पर्यार्थोपिवाइत्यनेनश्रुतिप्रसिद्धिद्योतकेनज्ञायते अथत्रयीवावप्रकृतिःसत्त्वंरजस्तमइति तानारायण.पर्यपश्यत्पनन्यप्रति ष्ठत्वंवाएनमाहु पुरुषइतिपूर्णोह्येषभवति सत्रेधाबभूवैषांगुणानामुपादानायविष्णुर्वैसत्वस्यरजसोब्रह्मेशोनामतमसः सआविवेशब्रह्माब्रह्माणंचतुर्मुखमीशईशानंपंचमुखंयोवावईशईशानमाविवेशतकाल इत्याचक्षतेकालइत्याचक्षतेइतिसौकरायणश्रुतिः १२ तदुपादानंसोव्यक्तलक्षणोबोधउपादानंकार्याधिकरणंयस्यसतथातंतदुपादानंआत्मानमेवचेतनाचेतनस्वरूपेणासृजदात्मानमसृजदित्युक्त त्वादाकाशादेरविद्यमानस्यैवोत्पत्तिर्नैवतत्सारं यतोविश्वमाकाशादिब्रह्मतन्मात्रंप्रलयकालेबभूव तत्कथं संस्थितंप्रलीनंनष्टमितियावत्विष्णुमाययाव्याप्तस्यब्रह्मणोमायायाव्यक्तलक्षणंवाईश्वरेणब्रह्मणा परिच्छिन्नंविषयीकृतंकालेनकलनात्मकेनज्ञानस्वरूपेणसाक्षिणाऽव्यक्तमूर्तिना चक्षुराद्यगम्यस्वरूपेणेतित्रैकालिकामत्त्वेनव्याख्यानमयुक्तं प्रपंचत्रैकालिकाबाध्यत्वस्यानुमानासिद्धत्वादित्याह यथेति

यथेदानींसृष्टिकालेअर्थक्रियाकारित्वात्सत्यत्वमनुभूयतेतथाग्रे सृष्टेःपूर्वंप्रलयेपश्चादुत्तरत्राप्येतज्जगदीदृशंसत्यमित्यनुमातव्यंयथेदानींकारणरूपेणसचैतन्यंदृश्यमाकाशादिकार्यमुपलभ्यतेतथाग्रेप्रलय कालेचकारणरूपेणसचैतन्यंदृश्यमितिचानुमातव्यमितित्रैकालिकासत्त्वेऽयंदृष्टांतइतिवेन्नअस्मदुक्तस्यप्रमाणानुकूल्यादन्यस्याननुकूल्यादनर्थहेतुत्वाच्च तदुक्तं सृष्टिश्चप्रलयश्चैवसंसारोमुक्तिरेवच । देवर्षिप्रभृतयोलोकालोकाभूरादयस्तथा । आनाद्यनंतकालीनाःसर्वैवैकप्रकारतः । जगत्प्रवाहःसत्योयंनैवमिथ्याकथंचन । येत्वेतदन्यथाब्रूयुःसर्वहंतारएवते इत्यादिप्रवाहरूपेणसत्यस्यविश्वस्यसर्गस्यन वविधत्वाच्चसत्यत्वंसिद्धं नहींद्रजालवन्मिथ्याभूतस्यनियतसंख्याविषयत्वमनेकविधत्वाच्चस्येतिभावेनाह सर्गइति तस्यविश्वस्य विधाविधाःप्रकारःस्यादित्यभिधानं प्रकृतिविकृतत्वाच्चनानिर्वाच्यमाया कृतमित्याह प्राकृतइति यःसर्गःप्राकृतोवैकृतश्चेत्यन्वयः । अव्यक्ताद्याःपृथिव्यंताःसर्गाःप्रकृतयःस्मृताः । तदुपादानकःसर्गःप्राकृतःपरिपठ्यते । अंडंतुविकृतंज्ञेयंतज्जोवैकृतउच्यतइतिवचनात् । अं डाद्बहिःसर्गःप्राकृतः विकृतांडांतस्थःसर्गोवैकृतइतिज्ञातव्यं चशब्देनमायामयस्यपरिणामादर्शनांल्लिंगमितिसूचयति स्वरूपादप्रच्युतादन्यथास्फुरणंमायेत्यंगीकारात् १३ प्रतिपन्नोपाधौसत्त्वमाति षेधवद्बाधाभावाच्चसत्यइतिभावेनाह कालेति अस्यविश्वस्यप्रतिसंक्रमःप्रलयाख्योनाशः कालद्रव्यगुणनिमित्तभेदेनत्रिविधोज्ञेयः शतवर्षादिसंख्याज्ञातःकालतः घटादेर्मुसलादिनाद्रव्यतःप्रवृद्धेनसत्त्वे नतामसज्ञानमुल्बणेनतमसा सात्त्विकंसुखं क्वचिदुद्रिक्तेनरजसा सात्त्विकतामसयोरपि क्वचित्सत्त्वेनराजसतामसयोरपीत्यादिकोविलयोगुणतः । रजस्तमश्चाभिभूयसत्त्वंभवतीत्युदाहृतंतामसस्यपदार्थ स्यसत्त्वंहिलयकारणम् । सात्त्विकस्यतमश्चैवतयोरपिरजःक्वचित् । गुणतोयंलयःप्रोक्तोद्रव्यतस्तुविरोधिना । कालतःकालसंख्याकोलयःसर्वस्यवस्तुनः । इतिवचनाच्चविश्वस्यत्रैकालिकासत्त्वलक्ष णोबाधोनोपपन्नइति तत्रप्राकृतवैकृतयोर्मध्येप्राकृतसर्गमाह आद्यइति आत्मनःपरमात्मनःसकाशाद्गुणवैषम्यंगुणवैषम्यनामकोमहतश्चतुर्मुखदेहस्थतदभिमन्यमानमहत्तत्त्वस्यचप्राकृतेष्वाद्यःसर्गउच्यते

कालद्रव्यगुणैरस्यत्रिविधःप्रतिसंक्रमः ॥ आद्यस्तुमहतःसर्गोगुणवैषम्यमात्मनः १४
द्वितीयस्त्वहमस्तत्रद्रव्यज्ञानक्रियादयः ॥ भूतसर्गस्तृतीयस्तुतन्मात्रद्रव्यशक्तिमान् १५

अत्रेदमाकूतम् तमोगुणाद्रजोगुणोद्विगुणः रजोगुणात्सत्त्वगुणोद्विगुणः एवंप्रकृतिजानांगुणानांपरिमाणंस्यात्तत्रत्रिगुणेषुसत्त्वगुणः केवलोरजस्तमोभ्यामविमिश्रः रजोगुणस्तुत्रिविधः तथाहि मूलंरजसिरजोगुणाच्छताधिकःसत्वगुणःरजःशतांशस्तमोगुणइतिरजोराशिः मूलतमोगुणोपित्रिविधोमूलतमसि तमोगुणाद्दशगुणाधिकःसत्त्वगुणः रजस्तमसएकादशधाविभक्तादेकांशसंमितम् एवंगु णानांनिजस्थितिःतत्रप्रलयेमूलरजएकादशधाविभक्तंदशांशेनशुद्धसत्वेनामिश्रितंभवति एकांशेनमूलतमस्यपिमिश्रितंस्यादेतांगुणानांसाम्यावस्थामाहुः तत्रयदामूलसत्त्वेनसंगतंदशांशंतद्रजःसर्वंतन्मूल तमसासहसंगतंसंयुक्तंभवति तदामहत्तत्त्वंसमुत्पन्नमाहुः तत्केवलसत्त्वगुणमुच्यते प्रलयेमूलसत्त्वेनसंगतंमूलरजः मूलतमसिसंगतंमूलरजः मूलरजसिस्वाभाविकरजइतिरजांस्येवत्रिभागाएकांशस्त मइतिचतुर्भागाएषांसंयोगेनोत्पन्नगुणवैषम्यनामकंमहत्तत्त्वंब्रह्मणोरूपमिति तदुक्तं तमसोरजस्तुद्विगुणंरजसःसत्त्वमेवच । परिमाणतएवंस्युस्त्रयःप्रकृतिजागुणाः । तत्रसत्वंकेवलंस्याद्रजस्यपिश ताधिकम् । सत्वंरजःशतांशंतुतमस्तत्रप्रकीर्तितम् । तमस्यपितथासत्वंतमसस्तुदशोत्तरम् । तद्दशांशेनतुरजोमूलजंयद्रजस्तुतत् । विलयेदशाशतःसत्वएकांशेनतमस्यपि । मिश्रितंभवतिह्येतासाम्यावस्थां विदुर्बुधाः । यदातुतद्रजःसर्वंतमसासहसंगतम् । तदात्वाहुर्महत्तत्त्वंतच्चतुर्भागसंभवम् । तत्रत्रिभागोरजसएकांशस्तमसस्तथा । तदाहुर्ब्रह्मणोरूपंगुणवैषम्यनामकम् । तदेवकेवलसत्त्वमितरापेक्षयाभवे त् । श्रीर्मूलसत्त्वंविज्ञेयाभूर्मूलंरजउच्यते । मूलतमस्तथादुर्गामहालक्ष्मीस्त्रिमूलिका । गुणेभ्योगुणमूलाच्चयोतीतःसजनार्दनइति १४ द्वितीयसर्गमाह द्वितीयइति द्वितीयोहंकारस्यसर्गः तत्राहंकार सर्गेद्रव्याणिविषयादिभूतानिज्ञानक्रियाज्ञानेंद्रियाणिकर्मेंद्रियाणिआदिशब्दगृहीतामनइंद्रियाभिमानिदेवाश्चजायंतइतिशेषः भूतादीनांसर्गक्रमेणतृतीयादित्येनाह भूतसर्गइति भूतानामाकाशादीनांसर्ग

स्वन्मात्रद्रव्यशक्तिमान् तन्मात्राःशब्दादयः आकाशादीनांशब्दादिस्वरूपत्वात्तन्मात्रशक्तिमान् द्रवणशक्तिमत्त्वाद्द्रव्यशक्तिमान् अहंकारतत्त्वेपिगुणवैषम्यमस्तीतिज्ञातव्यम् तथाहि मूलेरजसि शब्दो मूलेतमसिचयम एतदात्मकंमहत्तत्त्वंब्रह्मणोरूपमेकादशधाविभज्यदशांशाःसत्वंस्युः एकांशोरजः । रजएकादशधाविभज्यैकांशस्तमस्तस्मात्तमसउत्पन्नोहंकारस्तदाभिमन्यमानमहंकारतत्त्वंचेतिमहत्ताहं कारसर्गः सोहंकारोपित्रिविधः तस्मिन्नहंकारेपिदशांशाःसत्वमेकांशोरजस्तद्रजएकादशधाविभज्यैकांशस्तमस्तमोंशात्तामसाहंकारः रजोंशात्तैजसाहंकारःसत्वांशाद्वैकारिकाहंकारइति तत्रापितामसो भूतसर्गः तैजसादिंद्रियसर्गः । वैकारिकादेवसर्गः यद्रजोमूलरजसिमूलेतमसियद्रजः । तमश्चमूलेतमसिमहत्तत्वंतदात्मकम् । दशांशास्तत्रसत्वंस्युरेकांशोरजएवतु । तद्दशांशतमोज्ञेयमहंकार स्तदात्मकः । सरुद्रस्तामसोज्ञेयोविरिंचापेक्षयैवतु । इतरापेक्षयासत्वंसत्वाद्यास्तद्वदस्यतु । तत्तमोंशात्सात्त्विकांशोमनआद्यःप्रकीर्तितः । रजसोंशास्त्विंद्रियाणितामसांशाश्चखादयः । इतिवचना दिदंतात्पर्यमवगम्यते १५ ज्ञानक्रियात्मकोज्ञानेंद्रियकर्मेंद्रियात्मकःपंचमोवैकारिकाहंकाराद्वैकारिकनामादेवसर्गः इंद्रियप्रेरकत्वेनातिविकारित्वाद्वैकारिकनामवत्त्वंतेषां यस्माद्वैकारिकाहंकाराद् त्पन्नत्वान्मनश्चयन्मयमित्युच्यते भूतानिद्रव्यशक्तीनिभूतेषुद्रवणंयतः । तथातन्मात्रशक्तीनिशब्दाद्यात्मकतायतः । क्रियाशक्तीनिवागाद्यानींद्रियाणीतराणिच । ज्ञानशक्तीनिमनसादेवाश्चज्ञानशक्त यः । एतेषांमूलभूतत्वादहंकारस्त्रिशक्तिमान् । मानुषापेक्षयादेवाःसात्त्विकाःपरिकीर्तिताः । तत्रापिसात्त्विकाःप्रोक्ताःसात्विकायास्तुदेवताः । तत्रापिसात्विकोरुद्रस्तत्रापितुचतुर्मुखः । अविकारौब्रह्मरुद्रौ देहभेदादिसंभवे । विकारवंतइंद्राद्यास्तस्माद्वैकारिकामताः । तएतेंद्रियरूपेणयतस्त्वतिविकारिणः । ज्ञानमात्रगुणोद्रिक्तास्तस्मात्तैजसनामकाः । अविकारित्वयोग्यत्वंनिवृत्तंहींद्रियेषुतु । वैकारिक त्वनामापितत्तस्तेषांनविद्यते । यथाविप्रकुलेमूर्खोमूर्खइत्यभिधीयते । विद्यायोग्यत्वतःशूद्रोनमूर्खोमूर्खएवसन् । तामसानांहिभूतानांकिंचिद्व्यवहितत्वतः । ज्ञानस्यसुष्ठुज्ञत्वेपिपूर्णज्ञानोहरिःस्वयं । इतिव

चतुर्थऐंद्रियःसर्गोयस्तुज्ञानक्रियात्मकः ॥ वैकारिकोदेवसर्गःपंचमोयन्मयंमनः १६ षष्ठस्तुतमसःसर्गोयस्त्वबुद्धिकृतःप्रभो ॥ षडिमेप्राकृताःसर्गावै कृतानपिमेशृणु १७ रजोभाजोभगवतोलीलेयंहरिमेधसः ॥ सप्तमोमुख्यसर्गस्तुषड्विधस्तस्थुषांचयः १८

चनात्तुशब्दचतुष्टयसूचितएषांविशेषोज्ञातव्यः १६ तमसोऽविद्यायाःतुशब्दएवार्थे अःविष्णुस्तस्मिन् बुद्धिरबुद्धिस्तत्पूर्वमेवकृतःसदाविष्णुबुद्धित्वेपितमःसंसर्गेणस्वबुद्धिभ्रंशोभवतिइतिभीत्याविशेषत स्तद्बुद्ध्यैवेत्युक्तं सर्वदातद्बुद्धिद्योतनायैवेति योभूतानांतामसोंशस्तस्मादंशादविद्याब्रह्मणोत्पादिताइतिद्योतनायप्रथमस्तुशब्दः तदुक्तं । अबुद्धिपूर्वमिवतुब्रह्मणोहरिबुद्धितः । तामसानांतुभूतानांसहस्रं सत्त्वभागिनां । शतांशरजसामेकतमसांसर्ववेदिनां । केवलस्तामसोयोंशःसोविद्यापंचपर्विका । जातातिकृष्णातदेहादैत्यरक्षःपिशाचका इति । अबुद्धिपूर्वकस्तस्यप्रादुर्भूतस्तमोमयः । तमोमोहोमहामो हस्तामिस्रोह्यंधसंज्ञितः । अविद्यापंचपर्वैषाप्रादुर्भूतामहात्मन इतिश्रीविष्णुपुराणे । पंचपर्वात्वविद्यातुभूतेभ्योहरिणापुरा । उद्धृताब्रह्मणिक्षिप्तासापुनस्तेननिःसृता । तत्स्रष्टत्वज्ञापनायतस्मात्सातामसाम तेतिच यथाइमेषट्प्राकृताःसर्गास्तवकथिताइतिशेषः प्राकृतसर्गकथनानंतरमन्यःप्रसंगोमाभूदितिपरीक्षिद्वाक्यस्यानवकाशवांक्ते वैकृतानिति १७ प्राकृतवैकृतसर्गकथनश्रवणेनांकिंफलमित्या शंक्यभगवल्लीलात्वाच्छ्रवणेनमुक्तिरेवफलमितिभावेनाह रजोभाजइति सृष्ट्यर्थंरजोगुणप्रवर्तकस्यहरिवत्सूर्याग्निवन्मेधापस्यसतथातस्यजाज्वल्यमानबुद्धेरित्यर्थः भगवतोनारायणस्येयंसृष्टिर्लीला नस्वार्थपरा योग्यजनमुक्त्यर्थेत्यर्थः विरिंचविषयत्वेहरौमेधापस्यतसतथातस्यअनेनाबुद्धिकृतइतिपदंविवृतं विरिंचस्यापिश्रीनारायणानुग्रहेणसृष्टिरियंनश्रमजननीकिंतुलीलारूपेत्यनेनाप्यबुद्धिकृतत्वा च्छ्रमकरीत्यन्यथाप्रतीतिर्निरस्ता सृष्ट्यादावेतेगुणाहरेरेवमुख्याः तदुक्तं एतेगुणाहरेःसम्यक्स्वातंत्र्यविषयाःसदेत्यादि । यस्तस्थुषांस्थावराणांमुख्यःसर्गःसप्तमः । सचषड्विधः स्थास्नुभिर्निम्न मान्मुख्यास्थितेर्गतिरवाप्यते । मायःपरोपकर्तृत्वाच्चेमुख्यस्रोतसस्ततः । इतिमुख्यस्रोतस्त्वंस्थावराणांयुक्तम् १८

षड्विधमाह -वनस्पतीति फलंतियेविनापुष्पैस्तान्वदंतिवनस्पतीन् । इत्यतःपनसादयोवनस्पतयः । ओषधयः फलपाकांताव्रीह्यादयः । लताःपराश्रयबलाः । त्वक्सारावेण्वादयः । वीरुधःकांडरुहा णिगुल्मानि । द्रुमाश्रूतादयः । प्रमाणवचनेनयन्मुख्यस्रोतसइत्युक्तंतदेवोत्स्रोतसइतिकथ्यते उत्स्रोतसइत्यस्यार्थऊर्ध्वस्रोतसइतिकिंनस्यान्नस्यादसंभवात्तथाहि ऊर्ध्वगंतारोदेवामोक्षैकभागित्वात् त दुक्तं नियमादूर्ध्वगंतारोदेवामोक्षैकभागिनः । ऊर्ध्वस्रोतसइत्येवंतस्मात्तेपरिकीर्तिता इति तर्हिदेवानामयमर्थःकथंसंपत्स्यते उच्यते उच्चतमत्वमूर्ध्वत्वंतदेवोच्छब्दस्यापीति तदुक्तं ऊर्ध्वइत्येवयस्तू च्चतमएवाभिधीयते । ऊर्ध्वस्रोतसएतस्मादेवाएवनतत्परइति स्थावराणामेतच्छब्दवाच्यत्वमुच्चंवर्धमानेषुमुख्यत्वात् तदुक्तं उच्छब्दउच्चमात्रेपितस्मात्स्थास्नुषुभण्यते इति । अनेनमुख्यशब्दस्या र्थांतरंदर्शितं तत्स्वभावमाह तमःप्रायाइति तमःप्रायाअज्ञानप्रचुराःकल्पवृक्षादिव्यावृत्त्यर्थंप्रायःशब्दःअतःस्पर्शाःस्पर्शनेसत्यंतर्ज्ञानवंतःविशेषिणःछेदनेसातिसपदिशोषवंतः १९ तिरश्चांतिर्य क्स्रोतसां । नाधोनोर्ध्वेतिरश्चांतुपुनस्तत्रैवयज्जनिः । यज्ञोपयोगंचसतामुपकारंविनापिवा । तिर्यक्स्रोतसइत्येवप्रोच्यतेज्ञानिभिस्ततइति । अनेनातिरश्चांतिर्यक्स्रोतस्त्वंविवृतमितिज्ञातव्यं तिरश्चालक्ष णमाह अविदइति अविदःकार्याकार्यविशेषज्ञानशून्याः भूरितमसः शरीरमात्रेहंममाभिमानवंत्यः यद्वा आहारनिद्राव्यतिरिक्तविषयेज्ञानरहिताः । घ्राणेनैवजानंतिइतिघ्राणज्ञाः । हृद्येववेदो ज्ञानंयेषांतेतथोक्ताः । इदमुभयेषांतस्थुषांतिरश्चासमंलक्षणं । तदुक्तं । तिरश्चीनाःस्थावराश्चअतस्पर्शाइतीरिताः । यत्प्रत्यक्षानुमानाभ्यांहृद्यंज्ञानंनशास्त्रतइति । पदप्रयत्नात्हृदयंगमंतदेवजानंति नशास्त्रपु

वनस्पत्योषधिलतात्वक्सारावीरुधोद्रुमाः ॥ उत्स्रोतसस्तमःप्रायाअंतस्पर्शाविशेषिणः १९ तिरश्चामष्टमःसर्गःसोष्टाविंशद्विधोमतः ॥ अविदोभूरितम सोघ्राणज्ञाहृद्यवेदिनः २० गौरजोमहिषःकृष्णःसूकरोगवयोरुरुः ॥ द्विशफाःपशवश्चेमेअविरुष्ट्रश्चसत्तम २१ खरोश्वोश्वतरोगौरःशरभश्चमरीतथा ॥ एतेचैकशफाःक्षत्तःशृणुपंचनखान्पशून् २२ श्वाशृगालोवृकोव्याघ्रोमार्जारःशशशल्यकौ ॥ सिंहःकपिर्गजःकूर्मोगोधाचमकरादयः २३ कंकगृध्रबकश्ये नाभासभल्लूकबर्हिणः ॥ हंससारसचक्राह्वकाकोलूकादयःखगाः २४ अर्वाक्स्रोतस्तुनवमःक्षत्तरेकविधोनृणाम् ॥ रजोधिकाःकर्मपरादुःखेचसुखमानिनः २५

क्षिप्यामित्यर्थः अष्टाविंशद्विधत्वंप्रतिज्ञायाधिकोक्तिर्विशेषतोयज्ञेपूपकृतत्वाभिप्रायेणयोयस्यसदृशःसतत्रांतर्गतइतिज्ञापनंवोतिनदुष्यति तदुक्तं अष्टाविंशद्वि शेषेणयज्ञेषूपकृतंयतः । तिरश्चांतावदेत स्माद्गण्यतेशास्त्रवेदिभिरिति अष्टाविंशत्प्रधानास्तुतिरश्चांयास्तुजातयः । योयस्यसदृशस्त्वन्यःसतत्रांतर्गतोभवेत् । जलजांतर्गताःसर्पाःकीटाद्याश्चजातयः । तेषांजलप्रधानत्वाच्छरीरस्यतुसर्वशः इतिच २० गवादिगोधांतैःषड्विंशत्कूर्ममकरादिभिःसप्तविंशत्कंकादिभिरष्टाविंशत्तदुक्तं गौरजोमहिषःकृष्णःसूकरोगवयोरुरुः । अन्युष्ट्रौचखरश्चैवतथैवाश्वतरोपरः । गौरश्चशरभश्चैवचमरीश्वसृगाल कौ । वृकोव्याघ्रश्चमार्जारोहरिश्चशशशल्यकौ । कपिर्गजश्चगोधाचाजलजाःपक्षिणस्तथेति २१ २२ तत्रकूर्मोजलत्वेनाष्टाविंशत्स्वंतर्भूतोपिपंचनखत्वप्रदर्शनार्थंपृथगुक्तः । तत्तदाकारसंयुक्तान्स्रज्या न्स्रष्टारमेवच । यःसदासंस्मरेद्योगीनसभूयोभिजायतइतिवचनात् प्रसिद्धानामपिद्विशफादीनांस्मरणविधानार्थमुक्तिः उच्यतेसुप्रसिद्धंचस्मरणार्थंचकुत्रचित् । अप्रसिद्धज्ञापनार्थंद्विधाशास्त्रवचःस्मृत मितिच बल्लूरोनृत्तपक्षीचसभल्लूकश्चकथ्यतइत्यभिधानम् २३ २४ नवमःसर्गोर्वाक्स्रोतोनामकेषांनृणांविषयः तुशब्दादेकविधोपिद्विविधः । असुराद्यामानुषाइति मानुषाणांस्वभावमाह रजोधिकाइ ति भौतिकरजोंशजातत्वाद्रजोनिष्ठाः तदुक्तं यद्रजोभौतिकंतेनमानुषाणांसदाजनिः । तमोगूढेनरजसात्विवरस्यानुचारिणामिति । अनेनभूरितमसइतिपदंविवृतं । रजोनिष्ठत्वादेवकर्मपराः । नाहिकश्चि त्क्षणमपिजातुतिष्ठत्यकर्मकृदितिवचनात् किंच रजोनिष्ठास्तमोनिष्ठाद्वेधार्वाक्स्रोतसःस्मृताः । असुराद्यास्तमोनिष्ठामानुषास्तुरजोधिकाइतिवचनाच्च । मानुषलक्षणमुक्त्वाअसुरादिलक्षणमाह दुःखेचे

ति यशब्दएवार्थे दुःखएवसुखमानिनः अनेनसर्वार्थेषुविपरीतज्ञानित्वमासुरलक्षणमुक्तंभवति सर्वार्थान्विपरीतांश्चबुद्धिःसापार्थतामसीतिवचनात् । सुखेसुखैकभावास्तुदेवानै ऽतुदानवा इतिवशब्दान्मानुषाजभयात्मकाइतिज्ञातव्यंतर्हिअर्वाक्स्रोतस्त्वंमनुषाणांकथमितिचेत् शुभप्रयत्नमंतरेणाधोगमनात् तदुक्तं प्रायोधोगमनंयस्मात्प्रयत्नेनविनाभवेत् । अर्वाक्स्रोतसइत्येवमानुषाःपरिकीर्तिताइति । तिरश्चांस्थावराणांचबुद्धिपूर्वप्रवर्तिनाम् । असुराणारक्षसांचपिशाचानांतथैवच । अर्वाक्स्रोतस्त्वमुद्दिष्टनियमादसुरादीनामितिवचनात् तिर्यगादिसाधारणमपिअसुरादीनामर्वाक्स्रोतस्त्वंनियतमिति ज्ञातव्यम् २५ सत्तम सत्सुश्रेष्ठ एतेत्रयस्तस्थुस्तिर्यङ्मानुषविषयाएववैकृताअडांतरसर्गाउक्ताइतिशेषः एवसाम्येवधारणइत्यभिधानादेवशब्दस्यसाम्यार्थमाह देवसर्गइति देवसर्गःप्राकृतोवैकृतश्चेत्यर्थः तदेवविशदयति वैकारिकश्चेति योवैकारिकोदेवसर्गःप्राकृतत्वेनप्रोक्तःसकौमारश्चेत्युभयात्मकः प्राकृतोवैकृतश्चेति कौभूमौमामानंनिर्माणंतस्यारःप्राप्तिर्यस्यसतथोक्तः अंडाद्बहिर्जातानांदेवानांपुनरंडांतर्भूमौ जन्मकौमारइत्युच्यतइत्यर्थः मानिर्माणइतिधातुः कुमारतीतिकौमारोदेवानामंडजोद्भवः । वैकारिकाणांजननात्प्राकृतेवैकृतश्चसः । वैकारिकेष्वेवान्येषामीषद्योगित्वहेतुतः । उभयात्मकत्वंनैवप्रोच्यंतेसगुणा अपीतिवचनात् २६ देवसर्गविभजतिदेवसर्गश्चेति चशब्देनसंख्याविशेषंकेषांचिदंतर्भावंसूचयति तदुक्तं प्रोक्ताअष्टविधादेवाविबुधाःसर्वएवतु । पितृणांशतमेवात्रअसुरास्त्रिंशदेवतु । गंधर्वाप्सरसांचैवशद्विशतंपरिकीर्तितम् । सप्ततिर्यक्षरक्षःसुत्रिंशच्चारणजातिषु । शतंसिद्धास्तथान्यासुसप्ततिःसर्वजातिषु । ऊर्ध्वस्रोतसएवैतेअन्येर्वाक्स्रोतसःस्मृताः । वैकारिकेषुदेवेषुएतेवैमुख्यभोगिनः । अभोगिनस्तदन्येतु देवाएवेततःस्मृताः । सर्वज्ञास्तैःसहाराध्याभक्तास्तेष्वंतरेषुच । नृत्तगानादिकर्तारोवाहनादिकृतस्तथा । सिद्धासिद्धेतिवक्तारश्चाराश्चैषांकचित्कचित् । सेवाकराइतिज्ञेयैर्भेदैरष्टविधामताः अन्येचयेतुसर्वज्ञाविबुधास्तेप्रकीर्तिताः । तथान्येकर्मभिस्तैस्तैरष्टभेदांतरंगताइति । अंडांतर्भूमौजायमानानांदेवानांभूतगतगुणत्रयादुत्पत्तियोग्यतामेदेनानेकविधा तदुक्तं भौतिकेनतुसत्त्वेनगूढंत्रह्मणआंडजम् । रूपंतत्रापि

**वैकृतास्त्रयएवैतेदेवसर्गश्चसत्तम ॥ वैकारिकस्तुयःप्रोक्तःकौमारस्तूभयात्मकः २६ देवसर्गश्चाष्टविधोविबुधाःपितरोऽसुराः ॥ गंधर्वाप्सरसःसिद्धायक्षरक्षांसिचारणाः २७ भूतप्रेतपिशाचाश्चविद्याध्राःकिन्नरादयः ॥ दशैतेविदुराख्याताःसर्गास्तेविश्वसृक्कृताः २८ अतःपरंप्रवक्ष्यामिवंशान्मन्वंतराणिच ॥ एवंरजःप्लुतःस्रष्टाकल्पादिष्वात्मभूर्हरिः ॥ सृजत्यमोघसंकल्पआत्मैवात्मानमात्मना २९**

तुतमःशतांशेनप्रकीर्तितम् । तज्जोरुद्रस्ततस्त्वेवमिंद्रादीनांपुनर्जनिः । गूहितंभूतरजसातत्सत्त्वंमानुषायदा । देवाएवंगुणास्त्वेतेसर्वेंऽप्यप्यवस्थिताः । गुणातीतंचयद्रूपंब्रह्मादीनांसुखात्मकम् । चिद्रूपंतस्यसत्त्वंस्यैवोत्कर्षोयत्रविद्यते । तत्रोत्कृष्टंतमोयत्रहीनंततुस्वभावतः । उपगूहनेतुनैवास्तिविशेषोनित्यचिन्मये । प्रकृतेर्गुणरूपायामूलिकायाश्चनकचित् । विशेषःपरमेतत्त्वेवासुदेवेकुतःपुनरिति । देवानांशापादिदोषाद्भूमौजननेपिभूतगुणस्वभावेनदेवत्वमासुरत्वंज्ञायतेतदुक्तं यदिदेवादयोदोषाज्जायेरन्मानुषादिषु । तथापिदेवाविज्ञेयाअसुराद्यास्तथाध्रुवमिति प्रकृतमुपसंहरति दशेति देवसर्गस्यप्राकृतवैकृतभेदेनोक्तसर्गाणांदशत्वंयुज्यते २७ २८ मूलसृष्टिर्हरिणैवास्तुमन्वंतरेष्ववांतरसृष्टिरन्यैरितिशंकामाभूदित्याशयेनाह एवमिति आत्मभूरजोहरिरात्मनास्वेच्छयाकल्पादिष्वात्मैवस्वयमेवस्वतंत्रोभूत्वाप्रकृत्युपादानेनदेवादिदेहान्सृष्ट्वातान्नियंतृतयात्मानंसृजति । प्रादुर्बभूवबहुरूपत्वेनेतिशेषः कीदृशोहरिरेवमुक्तप्रकारेणस्रष्टा अनेनविरिंचादीनांस्रष्टृत्वद्वारमात्रमुक्तंभवति कथंस्रष्टृत्वउक्तं रजःप्लुतइतिरजआदिगुणानांमध्यवर्तित्वाद्रजोगुणप्लुतोनतुगुणाधीनत्वादभिमानाच देवदवचद्धरिरिंद्राद्यन्यतमःकिंनस्यादित्यतउक्तमात्मभूरिति । कामोनेत्याह स्रष्टेति तर्हिविरिंचःकिमित्यतउक्तंहरिरिति रजोगुणेनद्रवीभूतोरजःप्लुतइतिप्रसिद्धार्थपरित्यज्याप्रसिद्धार्थकल्पनेकिंप्रमाणमित्यतआचार्यैरिदमानमुदाहृतं । गुणाप्लुतोहरिर्नित्यंगुणानामप्यगोचरः । अनहंवेदनात्तस्यगुणासंस्पर्शएवचेति । सृष्ट्वादेवादिदेहान्सआत्मानंबहुधाकरोत् । तन्नियंतृतयात्मानंप्रकृतितदेहभेदतः । इतिवचनंसवबहुत्वेप्रमाणं एकत्वेऽस्यकर्तृकर्मादिभावःकथमितीदंचोद्यं । कर्ताचकरणंचैवकर्मचैवस्वयंहरिः । आत्मनोबहुधाभावेप्रकृतेस्तुस्वतंत्रतइतिवाचापरिहर्तव्यं एतदभिप्रायेणामोघसंकल्पइत्युक्तम् २९

तर्हि कथं सृष्टिः प्रथमेत्याशंक्य तन्नियमो नास्तीति सदृष्टांतमाह गुणेति एतस्मिन् गुणव्यत्यये गुणव्यतिकरे पौर्वापर्यं पूर्वापरीभावं नेच्छंति विपश्चित इति शेषः कुतः अधीशितुरखंडैश्वर्यस्य हरेर्मायावत्त्वात् इच्छानियतत्वात् नद्यां भ्रमंत्याः पुनःपुनरावर्तमानाया भ्रमेरावर्तस्येव ३० एतत्कल्पसृष्टेभ्योऽन्यस्मिन्कल्पेऽन्ये सृज्यंत इति भ्रांतिं निवारयति देवेति इंद्रादिनाम्ना सहस्राक्ष शुक्रादिरूपेण च ॥ ३१ ॥ इति श्रीभागवते महापुराणे तृ० दि० टीकायामेकादशः ॥ ११ ॥ हरेरुभयानंत्यज्ञानं मोक्षैककारणमित्ययमर्थोऽस्मिन्नध्याये निरूप्यते। तत्र कालाख्यं लक्षणं ब्रह्मा त्रिति विदुरप्रश्नपरिहाराय न परमाणुकालज्ञानाय द्रव्यं परमाणुपरिमाणमाह चरमइति तुशब्द एवार्थे एकस्यार्थे यो विशेषाणां पार्थिवादिपदार्थानां चरमोंऽत्यो विशेषः तर्हि निरवयवः किं नेत्याह अनकेति यश्चानेकैरवयवैः समंतात्सम्यक्युत अनेकावयवत्वे चरम इति विशिष्योक्तिः कथमित्यतस्तुशब्देन विशिनष्टि देवलोके स्थितामनुष्याविशेषेण सौक्ष्म्येण दर्शने यस्यांशांशित्वविशेषं द्रष्टुं न शक्ताः स एव चरमो विशेष इत्याचक्षते प्रेक्षावंतः नृणां काणादीनां यतायेस्मादैक्य भ्रमः यतः परिमाणुर्नास्ति स पदार्थः परमाणुरिति भ्रांतिः तेषां भ्रांतिज्ञानं युक्तमिति दर्शयितुं नृणामित्युक्तं नाम्ना परमाणुर्विज्ञेय इत्यर्थः मनुष्या देवलोकेऽपि विशेषेणैव दर्शने । अंशांशित्वविशेषं तु यस्य द्रष्टुं न शकुयुः । चरमो विशेष इति तं मुनयो ब्रूयुरंजसा । परमाणुः स विज्ञेयः काणादाद्यानिरंशिनम् । अनंतांशयुतत्वेऽपि यं ब्रूयुर्भ्रांतिदर्शनात् । ततोऽपि रमाणुत्वं तद्दर्शनांतु यद्यपि । अनतत्वाद्विवेकार्थमस्योक्ताप रमाणुतेति वचनात् अस्यैव परमाणुत्वं नान्यस्येति ज्ञायते अत एव विज्ञेय इति [1] अणुपरिमाणं निरूप्य महत्परिमाणं दर्शयति सत इति सत परब्रह्मण एव यत्कैवल्यं यः केवलभावः स परममहानित्यन्वयः कालतो देशतो गुणतश्चानंतत्त्वं सतः परब्रह्मण एव मुख्यमित्यर्थः सन्घट इत्यादौ सच्छब्दवृत्तिदर्शनादित्यतः पदार्थस्येति सदित्यनुवर्तते सत्पदमुख्याभिधेयस्य मुख्याभिधेयस्त्वर्थः स्याद्वाच्यमन्यच्च भण्यते अमुख्येष्वर्थशब्दस्तु नीचोपरिहितो भवेदिति वचनात् मुख्यस्योपपत्तावमुख्यस्वीकारायोगात् अणुतरवस्तुनिस्थितस्य सत्पदमुख्याभिधेयस्य तत्परिणामत्वेन भाव्यं यदेवसमः प्लुषिणेत्यादौ दर्शनादित्यतः स्वरू

**गुणव्यत्यय एतस्मिन्मायावत्त्वादधीशितुः ॥ नपौर्वापर्यमिच्छंति नद्यां भ्राम्यद्भ्रमेर्यथा ३० देवासुरादयः क्षत्तः कल्पेऽस्मिन्न्ये प्रकीर्तिताः ॥ त एव नामरूपाभ्यामासन्मन्वंतरांतरे ॥ ३१ ॥ इति श्रीभागवते महापुराणे तृतीयस्कंधे एकादशोऽध्यायः ॥ ११ ॥ मैत्रेय उवाच ॥ चरमस्तु विशेषाणामनेकाऽसंयुतः सदा परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः १ सत एव पदार्थस्य स्वरूपावस्थितस्य यत् ॥ कैवल्यं परममहानविशेषो निरंतरः २**

पावस्थितस्येति स्वरूपमेवावष्टभ्य स्थितस्य स्वे महिम्नीति श्रुतिः जगदावरकस्य वासुदेवाख्यस्य हरेर्जगत्प्रविष्टरूपात् किंचिन्महत्त्वात्स्वरूपावस्थितत्वाच्च तद्व्यावृत्तिः कथमित्यतः कैवल्यमिति जगदावरण व्यापारोदासीनतयास्थितं तादृशरूपाणामनेकत्वात्कथं निर्णय इत्यतोऽविशेष इति तादृग्रूपविशेषरहितः सर्वगतस्यापि प्रादेशमात्रतयास्थितत्वेन विशेषवत्त्वात्कथमविशेष इत्यतो निरंतर इति प्रादेशमात्रादि विशेषरहितः एतदुक्तं भवति परब्रह्मणः यः केवलभावोंडांतःप्राविष्टं तदावरकं तस्यैव परमपुरुषादिरूपांतरतदेकदेशप्रादेशमात्रादिविशेषं च विना यत्सर्वगतं स्वरूपं तदेव परममहानित्युच्यते। कालकोटिविहीनत्वं कालानंत्यं विदुर्बुधाः। देशकोटिविहीनत्वं देशानंत्यं तथैव च। गुणानामप्रमेयत्वं वस्त्वानंत्यं विदो विदुः। आनंत्यं त्रिविधं नित्यं हरेर्नान्यस्य केनचित्। तस्य सर्वस्वरूपेष्वप्यानंत्यं तु त्रिलक्षणम्। तथापि देशतस्तस्य परिच्छेदोऽपि विद्यते। परिच्छेदस्तथाव्याप्तिरेकरूपेऽपि युज्यते। तस्याचिंत्यात्तु तैश्वर्याद्व्यवहारार्थमेव च। गुणतः कालतश्चैव परिच्छेदो न कुत्रचित्। व्याप्तत्वं देशतोऽप्यस्ति पूर्वरूपेषु यद्यपि। न च भेदः क्वचित्तेषामणुमात्रोऽपि विद्यते। तथापि विद्यतेऽणुत्वं तस्माद्धैश्वर्ययोगतः। तस्माद्धु द्व्यवतारार्थं मव्याप्तत्वं च भण्यते। यत्तस्य व्यापकं रूपं परनारायणाभिधम्। शून्यं ब्रह्मेति यत्प्राहुर्द्वितीयस्तु पृथक्ततः। परमं पुरुषो नामभितं तद्देशतो विभोः। तृतीयं वासुदेवाख्यं जगदावरकं मितम्। देशतो जगदाविष्टतुरीयं विष्णुनामकमिति वचनेन मंदमतीनां शंकोपद्रवाः परिहृता इति ज्ञातव्यं किंच सर्वगतस्यापि ब्रह्मरूपस्य कालादिरूपा यात्मकत्वात्समव्याप्तावपि दार्ष्टांतिकत्वभावात् तदन्यस्मिन्ननवस्थानात्स्वरूपावस्थितस्येत्युक्तं। देव्यां कालादिरूपिण्यां स्थितं ब्रह्मापि सर्वगम्। उच्यते नान्यगं यस्मादात्मवत्साहरेर्विभोः। महदादिगतं यत्तु तदन्यगतमुच्यत इति च २

[1] तस्य चरमत्वं नाम प्रमाणोक्तरीत्या देवलोकस्थमनुष्याणामविशेषाकारेण प्रत्यक्षत्वप्रयोजकमहत्त्वाभावरूपं वैवक्षिकमिति दर्शयितुं तु गद्ध । [2] शक्ता अपीति शेषः ।

उक्तमर्थंदार्ष्टांतिकेकरोति एवमिति सौक्ष्म्येपरमाणुत्वेस्थौल्येपरममहत्त्वेवर्तमानकालोप्येवमनुमितः कलामुहूर्तादइत्यादिशास्त्रेणसाक्षिप्रत्यक्षानुगृहीतव्याप्तिमल्लिंगज्ञानवताजनेनानुमितः ज्ञातइत्य
न्वयः अनुमेतिद्वयंमाहुर्यथाज्ञानंचालिंगजामित्यभिधानादर्थद्वयसंसेत्स्याति यावंतंदेवलोकस्थोमानुषस्त्ववधारयेत् । महाप्रज्ञोदेवजूकःसकालःपरमाणुकः । सर्गाद्यैरनवच्छिन्नस्तदनंतरइत्यपि । तथैवप
रमाण्वादिविशेषात्मापिनोभवेत् । पूर्वापरादिभेदेनसकालःपरमोमहानितिशास्त्रवचनंचात्रप्रमाणं । यज्ञादिकर्मणाप्रीतदेवताप्रसादेनप्राप्तैश्वर्योमानवोदेवजूकइति । नकेवलमुभयविधःकालोनुमितःकिंतु तदंत
र्यामीतदाख्योहरिरपिअनुमितइत्यभिप्रेत्याह संस्थानभुक्त्येति विभुर्व्याप्तोभगवान्संस्थानभुक्त्यासंस्थानयोःपरमाणुत्वेनपरममहत्त्वेनव्यवच्छिन्नयोःस्थित्यातदंतर्यामित्वेनाव्यक्तोऽहश्य.परमाणु.परम
महानित्यनुमितइत्यन्वयः तत्रस्थित्वाकिंकरोतीत्यतउक्तं व्यक्तभुगिति व्यक्तंतत्कालवृत्तिजगत्सृजतिपातिसंहरतीतिव्यक्तभुगिति यद्वा स्वसमानधर्मवत्त्वादव्यक्तंप्रकृतिरूपंसृष्ट्यादौप्रवर्तयतीति अत्रवि
शेषस्तु देशतःकालतश्चैववस्तुतश्चात्रेधाहरेः । यथानंत्यंनचान्यस्यप्रकृतेर्देशकालतः । तथाशब्दस्यकालस्यदेशानंत्यंचकालतः । कालशब्दात्मिकासैवतथापितुहरेःसदा । नास्याःसामर्थ्यलेशोपिज्ञा
नानंदगुणेष्वपि । ज्ञेयस्तदवरोवायुःशेषवींद्रहरास्ततः । अवरास्ततइंद्राद्यागुणैःसर्वैर्नसंशयः । इतिवचनादवगंतव्यः । किंच कालांतर्यामिणः परमाण्वादिनामवाच्यत्वंतत्तद्विशेषभोक्तृत्वात्तदुक्तं अण्वादि
कालसंस्थानभोक्तृत्वात्परमेश्वरः । अण्वादिनामवाच्योसौकालश्चेत्यभिधीयतइति ३ सामान्यतउक्तंविशिनष्टि सकालइति यःकालःकालांतर्यामीहरिश्चपरमाणुतांचरमस्तुविशेषाणामित्याद्युक्तलक्षण
वत्तांभुंक्तेसकालः हरिश्चपरमाणुर्वैइतिपरमाणुनाम्नावाच्यइत्युक्तस्मृतिप्रसिद्धमित्यर्थः सतोब्रह्मणोऽविशेषंस्वरूपंस्वरूपावस्थितकैवल्याद्यविशेषांनिरंतरलक्षणंपरममहद्रूपंयःकालःकालांतर्यामीचभुंक्ते

एवंकालोप्यनुमितःसौक्ष्म्येस्थौल्येचसत्तम ॥ संस्थानभुक्त्याभगवानव्यक्तोव्यक्तभुग्विभुः ३ सकालःपरमाणुर्वैयोभुंक्तेपरमाणुताम् ॥ सतोऽविशे
षभुग्यस्तुसकालःपरमोमहान् ४ अणुर्द्वौपरमाणूस्यात्त्रसरेणुस्त्रयःस्मृतः ॥ जालार्करश्म्यवगतःखमेवानुपतन्नगात् ५ त्रसरेणुत्रिकंभुंक्तेयःकालःसात्रु
टिःस्मृता ॥ तच्छतभागस्तुवेधःस्यात्तैस्त्रिभिस्तुलवःस्मृतः ६ निमेषस्त्रिलवोज्ञेयआम्नातास्तेत्रयःक्षणः ॥ क्षणान्पंचविदुःकाष्ठांलघुतादशपंचच ७ लघू
निवैसमाम्नातादशपंचचनाडिका ॥ तेद्वेमुहूर्तंप्रहरःषड्यामःसप्तवानृणाम् ८

सकालःकालांतर्यामिब्रह्मरूपंपरममहानितिनाम्नावाच्यं तस्यकालांतर्यामिणोपित्रिधापरिच्छेदाभावात् तदुक्तं सर्वत्रसर्वभोक्तापिविशेषादेवभोक्तृवत् । स्थितोहरिरचिंत्यात्मानिजैश्वर्यादजोविभुरि
ति । अनेनसतएवपदार्थस्येत्यादिनायानिविशेषणानिपरममहतोब्रह्मणःकथितानितानिमहत्कालांतर्यामिणोपिसंतीत्युक्तंभवति तथाहि यःसच्छब्दस्यमुख्यार्थःपरमाण्वादिकालांतर्यामिस्वरूपव्यावृ
त्तस्तथामन्वंतरादिकालांतर्यामिस्वरूपव्यावृत्तस्ततोपिस्थूलपरार्धपरादिकालांतर्यामिस्वरूपव्यावृत्तोयश्चाखंडतत्त्वेपितदेकदेशाद्यवतारभेदव्यावृत्तत्वेनपरममहद्रूपभोक्तासपरममहानिति यावताकालेन
परमाणुपरममहतोरुत्पत्तिप्रलयौस्यातांतौकालौपरमाणुपरममहांतावित्ययमर्थःप्रमाणशून्यत्वादुपेक्षणीयः ४ इदानींपरमाणुपरममहतोरंतरालकालावयवानांसंख्यायोगेननामान्याह अणुर्द्वाविति
द्वौपरमाणूमिलितौद्व्यणुकनामकालःस्यात् उत्तरत्राप्येवमेवज्ञातव्यानि त्रयोद्व्यणुकामिलितास्त्रसरेणुस्त्र्यणुकःकालः सोयमयोगिप्रत्यक्षसिद्धइत्याह जालेति जालंगवाक्षंतत्रवर्तमानार्करश्मिना
वगतःखमेवानुपतन्नगात् दृष्टिविषयंप्राप्यगतइत्यर्थः अत्रसर्वत्रतत्तत्कालावयवांतर्यामित्वेनतत्तच्छब्दवाच्यत्वेनतत्तत्कालवर्तिद्रव्यप्रवर्तकत्वेनास्थितंसच्चिदानंदलक्षणमनंतसंज्ञंस्वरूपमनुभवतीतिज्ञातव्यं
अतएवसर्वत्रसर्वभोक्तेत्युक्तं ५ तासांत्रिसृणांत्रुटीनांभागोभजनंयस्यसतावच्छतभागः तिस्रस्त्रुट्योवेधइत्युक्तंभवति ६ निमेषाअंगुलिस्फोटेनज्ञेयाः ताःकाष्ठाःपंचदशलघु ७ पंचदशलघूनिनाडिका
तेद्वेनाडिकेमुहूर्तंविदुः षण्नाडिकाःप्रहरःसप्तनाडिकायामः सूर्यगतिलक्षितराशिभेदादूनातिरेकाद्धातिविकल्पः ८

नाडिकावर्धिवस्तुतत्पात्रलक्षणमाह द्वादशेति द्वादशार्धैःषड्भिःपलैःकृतमुन्मानमुत्कृष्टमानंयस्यतत्द्वादशार्धपलोन्मानंचतुर्भिश्चतुरंगुलैः । चतुरंगुलदीर्घैःस्वर्णमाषैः कृताच्छिद्रंकृतद्वारमेवंरचितंनाडिपात्रं यावत्प्रस्थंजलंपिबेत्तावताकालेनप्रस्थंजलेस्थापितंतज्जलंपीत्वा निमज्जतिसानाडिकेत्यन्वयःइदमुक्तंभवति चतसृभिःकाकिणिकाभिःकृतोविंशांशः तैश्चतुर्भिर्यतोमाषश्चतुरंगुलदीर्घैर्माषचतुष्टयेकृतेसाति यावान्परिणाहःस्यात्तावतातत्कृतद्वारचतुष्टयेनषट्पलरूपंनाडिपात्रमतिशैत्यकलंकमांद्यादिदोषवर्जितंनिर्मलंसमोष्णंनित्यसूर्यरश्मिसुतप्तंप्रवाहगतं वसंतकालीनंप्रयागगतंवाजलंपिबतिसकलोनाडिकेत्यु च्यते तदुक्तं काकिणिकाचतुष्कंचविंशांशेत्यभिधीयते । कृष्णलेत्यपितंब्रुयुस्तैश्चतुर्भिस्तुमाषकः । चतुरंगुलदीर्घैस्तुकृतेमाषचतुष्टये । यावान्स्यात्परिणाहेनतावद्द्वारंविधीयते । प्रस्थस्यनाडिपात्रस्यष ट्पलस्यशुभेजले । भाराधिक्येनोदकेनाक्षिप्रंपूर्तिर्भविष्यति । अतिशैत्यकलंकेचमांद्येनैवतुपूरणं । तस्माद्वसंतकालेचप्रयागस्थोदकेनच । नाडिशुद्धिःपरीक्षास्यादन्यथानैवसंभवोदिति । निर्मलेनसमोष्णे ननित्यंसूर्यांशुवारिणा । प्रवाहगेनकार्यास्यात्कालशुद्धिःसदैवाविति च ९ उभेअहनीअहोरात्रे अहनीत्युक्तेद्वोद्वित्व रात्रिर्नसिध्यतीत्यतउभेति । यत्रोभयोःसशब्दःस्यात्तत्तद्विवचनेप्युभइत्यभिधानात् १० उत्तरलिंगापेक्षयातदित्युक्तं समनुष्यमासःपितृणामहोरात्रे तौद्वौमासावृतुः षट्ऋतवोदक्षिणायनमुत्तरायणमितिसंज्ञिताः ११ दिविस्वर्गेदेवानांद्वेअयने अहनीअहोरात्रे रात्रिक्रियाभवाद्रात्रिरप्य हःशब्देनोच्यतइत्यहनीइत्युक्तं मानुषद्वादशमासावत्सरः १२ सूर्यादिनवग्रहाणामश्विन्यादिनक्षत्राणांध्रुवादितारकाणांचक्रस्थोमंडलस्थप्राणिनांपुण्यपापकर्मदर्शनादानिशंमिषणाद्गमनाद्वाविकसना

द्वादशार्धपलोन्मानंचतुर्भिश्चतुरंगुलैः ॥ स्वर्णमाषैःकृतच्छिद्रंयावत्प्रस्थंजलंपिबेत् ९ यामाश्चत्वारश्चत्वारोमर्त्यानामहनीउभे ॥ पक्षःपंचदशाहानिशु क्लःकृष्णश्चमानद १० तयोःसमुच्चयोमासःपितॄणांतदहर्निशम् ॥ द्वौतावृतुःषडयनंदक्षिणंचोत्तरंदिवि ११ अयनेअहनीप्राहुर्वत्सरोद्वादशस्मृतः ॥ सं वत्सरशतंनृणांपरमायुर्निरूपितम् १२ ग्रहर्क्षताराचक्रस्थःपरमाण्वादिनाजगत् ॥ संवत्सरावसानेनपर्येत्यनिमिषोविभुः १३ संवत्सरःपरिवत्सरइडावत्सर एवच ॥ अनुवत्सरोवत्सरश्चविदुरैवंप्रभाष्यते १४ यःसृज्यशक्तिमुरुधोच्छ्वसयन्स्वशक्त्यापुंसोऽभ्रमायदिविधावतिभूतभेदः ॥ कालाख्ययागुणम यीक्रतुभिर्वितन्वंस्तस्मैबलिंहरतवत्सरपंचकाय १५

द्वा मिषणतोविकासेचा । निमिषोविभुःपरमाण्वादिसंवत्सरावसानेनकालेनपर्येतिजगदितिशेषः सर्वदादर्शनात्तस्यानिमिषत्वंविदुर्बुधाः । सततंगमनाद्वापिकालस्थस्यमहात्मनइति अनेनापिमुख्यतः कालशब्दवाच्योहरिरितिसिद्धम् १३ तत्तत्संज्ञकालस्थत्वेनतन्नियंतृत्वेनतत्तन्नामवानित्याह संवत्सरइति सौरद्वादशमासाःसंक्रमणावसानास्तेषुद्वादशमासेषुस्थितः संवत्सरः द्वादशराशिषुबृह स्पतेरावृत्त्यायःकालः तस्यद्वादशेभमभोगयस्तिष्ठति सपरिवत्सराख्यः सप्तविंशन्नक्षत्राणितद्द्वादशमासेषुस्थितइडावत्सरनामा तिथीनांद्वादशावर्तोयोद्वादशमासरूपस्तत्रस्थितोहरिरनुवत्सरः अह्नां षष्ट्युत्तरशतत्रयात्मद्वादशमासेषुस्थितोहरिर्वत्सरनामाकालांतर्यामीहरिरेवंरूपोभाष्यतइत्यन्वयः तदुक्तं इडावत्सरनामासौनक्षत्रद्वादशेस्थितः । तिथीनाद्वादशावर्तेयोहरिःसोनुवत्सरः । वत्सरोऽह्नां स्थितस्त्वह्नांषष्ट्युत्तरशतत्रये । गुर्वावर्तद्वादशांशेयःस्थितःपरिवत्सरः । सौरद्वादशमासेषुयस्थःसंवत्सरोहरिः । एवंसकालनामापिकालस्थःपरमेश्वरः । इतिस्मृतिसिद्धत्वादिदंग्राह्यम् १४ वत्सरा दिनामकरणप्रयोजनमाह यइति कालांतर्यामीहरिःक्रतुभिःस्वमज्ञाभिःस्वेच्छानुरूपाभिःकालाख्ययास्वशक्त्याप्रकृत्यागुणमय्यासत्त्वादिगुणविकाररूपासृज्यशक्तिंस्रष्टव्यपदार्थविषयांप्रकृतिमुरुधोच्छ्वसय न्जृंभयन्पदार्थान्वितन्वन्विस्तारयन्पुंसोऽभ्रमायाज्ञाननिवृत्तयेभूतानांभेदोज्येष्ठ्यकानिष्ठ्यविवेकज्ञानंयस्मात्सतथोक्तः भूतानाज्यैष्ठ्यकानिष्ठ्यज्ञप्त्यैयज्ञादिवृत्तये । बोधयन्सृज्यशक्तिंचकालस्थो वर्ततेहरिरितिच दिविव्योम्निधावति सूर्यस्थोभूत्वावेगेनगच्छति तस्मैवत्सरपंचकायसंवत्सरादिपंचकांतर्यामिणेबलिंहरतकुरुतेत्यन्वयः अनेकार्थत्वाद्धातूनाम् १५

विदुरउक्तार्थमनूद्यवक्तव्यार्थंविज्ञापयतिपितृदेवेति येविदोज्ञानिनः कल्पात्‌लोकत्रयात्‌ बहिर्महर्लोकादिषुवर्तमानास्युस्तेपांपरेषामुत्तमानांगतिंस्थितिमाचक्ष्वेत्यन्वयः १६ मैत्रेयस्यवक्तव्यार्थेज्ञा नपाठवमस्तीत्याह भगवानिति कालस्यकालांतर्यामिणोभगवतोगतिंगमनंवर्तनंवेद ननुकुतःधीराधीःधुरममाणाज्ञानिनोयोगराद्धेनाष्टांगयोगसिद्धेनचक्षुपाविश्वंविचक्षतेभगवदात्मपितेष्वेकइतिचत्तस्या हितिशेषः १७ महर्लोकादिस्थितानामायुर्वक्ष्यन्कृतादिचतुर्युगतत्संध्याकालपरिमाणंवक्ति कृतमिति दिव्यैर्देवानांविद्यमानैः १८ एतदेवविवेचयति चत्वारीति एवंकृतादिषुदशसहस्राणिएकैक ह्रासक्रमेणसंख्यातानिद्विगुणानिशतानिअवशिष्टद्विसहस्रगतशतानिकृतादिपूर्वापरसंध्यारूपाणिकलियुगपूर्वापरसंध्यामारभ्यद्विगुणानिज्ञेयानि तथाहि कलियुगपूर्वापरसंध्येशत द्वापरपूर्वापरसंध्येद्वि शतं त्रेतायुगपूर्वापरसंध्येत्रिशतं कृतयुगपूर्वापरसंध्येचतुःशतमेवंविंशच्छतानायुगेभ्योद्विगुणित्वम्‌ १९ एवंतर्हिकृतादियुगत्वंकस्यकालस्येतितत्राह संध्येति शतसंख्ययोःसंध्यासंध्यांशयोरंतरस्थोयः कालोयत्रतत्तद्युगधर्मोविधीयतेतमेवयुगज्ञायुगमानमाहुः कृतादिषुसंध्याकालाःपूर्वापरकोटिसंबद्धदूरस्थाःकालविशेषाःसंध्यांशाख्याइति २० कृतादिषुयोधर्मोविधीयतेसाकिमवयवोवर्ततइतितद्वृत्ति प्रकारंवक्ति धर्मइति तपःसत्वंदयाशौचमितिचतुष्पान्मनुजानुद्दिश्येतिशेषः अन्येषुत्रेतादिषुस्वनामानुसारेणतपोविरोधिनावर्धतावर्धमानेनाधर्मेणव्येतिह्रसतिक्रमेणेतियोज्यम्‌ २१ तत्रपेस्युःक

विदुरउवाच ॥ पितृदेवमनुष्याणामायुःपरमिदंस्मृतम्‌ ॥ परेषांगतिमाचक्ष्वयेस्युःकल्पाद्बहिर्विदः १६ भगवान्वेदकालस्यगतिंभगवतोननु ॥ विश्वं विचक्षतेधीरायोगराद्धेनचक्षुषा १७ मैत्रेयउवाच ॥ कृतंत्रेताद्वापरंचकलिश्चेतिचतुर्युगम्‌ ॥ दिव्यैर्द्वादशसाहस्रैःसावधानंनिरूपितम्‌ १८ चत्वारित्रीणि द्वेचैकंकृतादिषुयथाक्रमम्‌ ॥ संख्यातानिसहस्राणिद्विगुणानिशतानिच १९ संध्यांशयोरंतरेणयःकालःशतसंख्ययोः ॥ तमेवाहुर्युगंतज्ज्ञायत्रधर्मोवि धीयते २० धर्मश्चतुष्पान्मनुजान्कृतेसमनुवर्तते ॥ सएवान्येष्वधर्मेणव्येतिपादेनवर्धता २१ त्रैलोक्याद्युगसाहस्रंबहिराब्रह्मणोदिनम्‌ ॥ तावत्येवानि शातातयन्निमीलतिविश्वसृक्‌ २२ निशावसानआरब्धोलोककल्पोनुवर्तते ॥ यावद्दिनंभगवतोमनून्भुंजंश्चतुर्दश २३ स्वंस्वंकालंमनुर्भुंक्तेसाधिकामेक सप्ततिम्‌ ॥ मन्वंतरेषुमनवस्तद्वंश्याऋषयःसुराः ॥ भवंतिचैतेयुगपत्सुरेशाश्चानुयेचतान्‌ २४ एषदैनंदिनःसर्गोब्राह्मस्त्रैलोक्यवर्तनः ॥ तिर्यङ्नृपितृदेवानांसं भवोयत्रकर्मभिः २५

ल्पाद्बहिर्विदइतिप्रश्नपरिहारमारभते त्रैलोक्यादिति त्रैलोक्याद्बहिराब्रह्मणोब्रह्मपर्यंतंब्रह्मलोकपर्यंतमित्यर्थः तावत्पर्यंतंवर्तमानंचतुर्युगसहस्रंब्रह्मणएकंदिनमाहुः तावत्येवचतुर्युगसहस्रीतस्यनिशा यचस्यांनिशायांविश्वसृक्‌ब्रह्मानिमीलतिनिद्रामुद्रितलोचनोभवति २२ चतुर्युगसहस्ररूपनिशावसानेपुनर्ब्रह्मणोर्थायारब्धोलोककल्पःलोकानांजनानांतथाभूरादिलोकानांकल्पःसृष्ट्यादिलक्षणस्ता वदनुवर्तते यावद्भगवतोब्रह्मणश्चतुर्दशमनून्भुंजन्भुंजानंदिनंस्यादितिशेषः दिनस्यभोक्तृत्वंनामोपचारमात्रं तत्रयज्ञादिमूर्त्यावतीर्णस्यहरेर्मुख्यभोक्तृत्वमित्येतज्ज्ञापनायभुंजन्निति लिंगव्यत्ययः २३ भु नानाभोज्यमन्वंतरकालमाह स्वंस्वमिति साधिकैकसप्ततिर्मनोःकालइत्यन्वयः सार्धाष्टदशलक्षवर्षाधिकैकसप्ततिचतुर्युगावसानमनुकालइत्यर्थः तदुक्तं युगैकसप्ततेरूर्ध्वंसार्धाष्टादशलक्षकं । वत्सराणांम नोर्भुक्तिःसहस्रंचतुरुत्तरं । शतानांप्रलयश्चैवपंचाशत्तरमथापिच । आद्येपुष्पट्सुप्रथमेद्विसाहस्रंप्रकीर्तितं । वत्सराणांमनोरतएवमिंद्रादीनांभवोदिति । मन्वंतरेष्वधिकृतमन्वादीनाह मन्वंतरेष्विति तद्वं श्याःमनुवंशभवाराजानः सुरेशाइंद्रादयःयेचतानन्विंद्रादीननुचरंतोगंधर्वाद्याः एतेसर्वेयुगपदेककालएवभवंतीत्यन्वयः २४ ब्राह्मोब्रह्मकृतःदैनंदिनोब्रह्मणोदिनेदिनेक्रियमाणः त्रैलोक्यंवर्तयतीतित्रैलो क्यवर्तनःयत्रयस्मिन्दैनंदिनसर्गेतिर्यगादीनांसंभवउत्पत्तिः २५

मन्वादयोजगत्पालनादिकुर्वंतीतियत्तद्भगवदनुगृहीतमेवेत्याह मन्वंतरेष्विति सत्वंसत्वगुणं उदितपौरुषोनित्योदितपराक्रमः २६ जगत्पालनमेवभगवान्नियतंनप्रलयइतिमंदाशंकांनिवारयाति त मोमात्रामिति दिनात्ययेब्रह्मदिनापगमेरात्रिसमयेभगवांस्तमोमात्रांस्वनियततमोगुणप्रवर्तककालसंकर्षणरुद्रादिरूपमुपादायप्रतिसंरुद्धविक्रमःकालेनकालनाम्नाब्रह्मणानुगतःकल्पप्रलयोदकेशेषेअनं तभोगपर्यंकेतूष्णींनिवृत्तजगद्व्यापारआस्तेशेतइत्यर्थः ब्रह्मणाकालनाम्नातुसहशेतेहारीर्निशि । इतिवचनात्कालेनेतिनप्रलयकालोत्रविवक्षितस्तस्यदिनात्ययइत्यनेनगतार्थत्वात् २७ देवदत्तस्वापविल क्षणाभगवत्स्वापःकुतोस्मिश्चराचराणामनवशेषंविनाशादित्याशयेनतल्लयप्रकारंवक्ति तमेवेति लोकेनिर्मुक्तशशिभास्करेसति ब्रह्मणिचशयानेइवहरिंप्रविष्टेसातितत्रिशायामनुवृत्तायांसत्याभूरादयो लोकास्तंब्रह्माणमनुविलीयंते । अनुविधीयंतइतिपाठेशयानंहरिं अनुविधीयंतेब्रह्मणासहसुप्ताःक्रियंतइत्यर्थः २८ तमेवलयंस्पष्टयति त्रिलोक्यामिति संकर्षणमुखनिर्गताग्निनाशक्त्याज्वालन याऋभ्वादयोमहर्लोकनिवासिनः तस्मान्महर्लोकाज्जनलोकंयदायांति २९ तावत्तदाविषसिंधवःसंकर्षणमुखविषसंमिश्राःसप्तसिंधवः उत्कटआटोपोपस्यसतथा अतएवचंडःउत्कटाटोपश्चासौ

मन्वंतरेषुभगवान्बिभ्रत्सत्वंस्वमूर्तिभिः ॥ मन्वादिभिरिदंविश्वमवत्युदितपौरुषः २६ तमोमात्रामुपादायप्रतिसंरुद्धविक्रमः ॥ कालेनानुगतःशेषआ स्तेतूष्णींदिनात्यये २७ तमेवानुविलीयंतेलोकाभूरादयस्त्रयः ॥ निशायामनुवृत्तायांनिर्मुक्तशशिभास्करे २८ त्रिलोक्यांदह्यमानायांशक्त्यासंकर्षणा ग्निना ॥ यांत्यूष्मणामहर्लोकाज्जनंऋभ्वादयोर्दिताः २९ तावत्त्रिभुवनंसद्यःकल्पांतेविषसिंधवः ॥ प्लावयंत्युत्कटाटोपचंडवातेरितोर्मयः ३० अंतःसत स्मिन्सलिलेआस्तेनंतासनोहरिः ॥ योगनिद्रामीलिताक्षःस्तूयमानोजनालयैः ३१ एवंविधैरहोरात्रैःकालगत्योपलक्षितैः ॥ अपेक्षितमिवास्यापिपरमा युर्वयःशतम् ३२ यदर्धमायुषस्तस्यपरार्धमभिधीयते ॥ पूर्वःपरार्धोपक्रांतोह्यपरार्धोद्यवर्तते ३३ पूर्वस्यादौपरार्धस्यब्राह्मोनाममहानभूत् ॥ कल्पोय त्राभवद्ब्रह्माशब्दब्रह्मेतियंविदुः ३४ तस्यैवचांतेकल्पोभूद्यंपाद्ममभिचक्षते ॥ यद्धरेर्नाभिसरसआसील्लोकसरोरुहम् ३५ अयंतुकथितःकल्पोद्वितीयस्या पिभारत ॥ वाराहइतिविख्यातोयत्रासीत्सूकरोहरिः ३६

चंडश्चोत्कटाटोपचंडस्तादृशेनवातेनेरिताउन्नमिताउर्मयोयेषुतेतथोक्ताः । आटोपःकोलाहलः ३० कल्पप्रलयोदकेहरेःस्थितिप्रकारंवक्ति अंतरिति अनंतासनइत्यनेनहरेःस्वापःप्रलयार्थमुपचर्यते नतुता त्विकइत्युपगम्यते ३१ एवंविधाहोरात्रवर्णनेनकिंप्रयोजनमत्राह एवमिति अस्यब्रह्मणोप्येवंविधैरहोरात्रैर्वर्षःशतंपरमायुस्तथापिपुनरपेक्षितमिवेत्यन्वयः कीदृशैःकालनाम्नःसूर्यांतर्यामिणोहरेर्गत्योपल क्षितैः ब्रह्मकालस्यसूर्यगत्योपलक्षणं मनुष्यकालस्यतुदर्शनामितिविवेकः अस्येतिनपरमात्मनउच्यते । नायुर्मानंभगवतःकस्मिन्रूपेपिविद्यते । अनादित्वादमध्यत्वादनंतत्वाच्चसोव्ययइतिवचनेनहरेःक ल्पितायुर्निषेधाद्धहिराब्रह्मणोदिनमिति तस्यप्रस्तुतत्वाच्च ३२ ब्रह्मणआयुरधुनैवतावद्गतमितिज्ञापयितुतदायुर्विभजति यदर्धमिति ३३ यत्रयस्मिन्कल्पेसब्रह्मासर्वस्मात्प्रथममभवत् पाद्मादिकल्पेषुप द्मोत्पत्त्यनंतरंब्रह्मोत्पत्तेर्ब्राह्मंब्रह्माणंवाशब्दब्रह्मेतिवेदवेद्यमितिविद्वांसोनिनइतिशेषः ३४ प्रथमपरार्धावसानेकल्पमाह तस्यैवेति यद्यस्मिन्कल्पे ३५ द्वितीयपरार्धस्याद्यकल्पमाह अयमिति द्वितीय परार्धस्यायंवाराहइतिविख्यातः प्रथमःकल्पः ३६

हरेःकालमितायुर्मानंनास्तीतिध्वनितमिदानींस्पष्टयति कालइति निमेषश्चिलवइत्युपचर्यते नतुपरमार्थः हरेरितिशेषः तस्यनिमेषोस्तिचेत्तद्धर्मत्वेनकालाभिभूतत्वमायातमितिमंदाशंकांप्रत्याह अव्याकृत स्येति यःपरमाण्वादिर्द्विपरार्धांतस्त्वयेरितःकथितःयश्चधाम्नांलोकानांमानिनांममाहमित्यभिमानवतांब्रह्मादीनांप्रभुरन्यथाकर्तेश्वरः सकालोभूम्नोदेशतःकालतोगुणतश्चपूर्णस्यनवैष्टेनैवेश्वरोनप्रभुर्नान्यथा कर्तुंसमर्थश्चेतियस्मात्तस्मादज्ञबोधनायनिमेषइत्युक्तमतएवोपचर्यतइत्युक्तं। भूमत्वमुपपादयति अव्याकृतस्येत्यादिना अव्याकृतस्यनिमेषादिविकाररहितस्य परिच्छिन्नत्वेनविकारसंभवःस्यादित्यतउक्तं अनंतस्येति देशाद्यंतत्रयरहितस्य आकाशेनीलिमोदेतीति श्रुतेरनंतस्याप्याकाशस्येवजनिमत्त्वंकिंनस्यादतउक्तं अनादेरिति कारणशून्यस्यविचित्रजगत्सुएकांकिंकारणंनस्यादतउक्तं जगदात्मनइति जगत्स्वामिनः हीत्यनेनानादित्वादमव्ययत्वादनंतत्वादितिहेतुत्रयंस्मृत्युक्तंसूचितं अत्रकालशब्देनबहूनामभिधेयत्वेपिसर्वसंहर्त्रीश्रीदुर्गैवाभिधीयते तस्याएवब्रह्मादिप्रभुत्वादन्यथाचेतनसान्निधानरहित स्यपाषाणादेरपिप्रभुत्वंस्यान्नचेदंक्वापिदृष्टमित्यभिप्रायेणाचार्यैः यमःकालोमानुषाणांतस्यकालःसुदर्शनः। तस्यापिरुद्रस्तत्कालोब्रह्मादुर्गापितस्यत्वित्याद्युदाहृतम् ३७ ३८ प्रकारांतरेणभगवन्माहात्म्यंकं थयति विकारैरिति अंतर्दशेंद्रियपंचभूतमनआख्यैःषोडशविकारैर्युक्तः दशेंद्रियाणिचमनोभूतान्यंडगतानितु विकाराइतिवचनात् बहिर्द्विगुणयाविशेषनाम्न्यापृथिव्यावृतःततःपरतआदिशब्दगृहीतैः दशोत्तरैःअप्तेजोवाय्वाकाशाहंकारमहत्तत्वप्रकृतिभिःपृथिव्यासहाष्टप्रकृतिसंज्ञांगतैरावृतः।पृथ्वीविशेषइत्याहुःशब्दादीनांबहुत्वतः।सासूक्ष्मत्वाद्गुणोत्थंडंद्विगुणातुदशोत्तराः। अबादयःप्रकृत्यंताअष्ट

**कालोयंद्विपरार्धाख्योनिमेषउपचर्यते ॥ अव्याकृतस्यानंतस्यह्यनादेर्जगदात्मनः ३७ कालोयंपरमाण्वादिर्द्विपरार्धांतईरितः ॥ नैवेष्टेसप्रभुर्भूम्नईश्वरोधाममानिनाम् ३८ विकारैःषोडशभिर्युक्तोविशेषादिभिरावृतः ॥ अंडकोशोबहिरयंपंचाशत्कोटिविस्तृतः ३९ दशोत्तराधिकैर्यत्रप्रविष्टःपरमाणुवत् ॥ लक्ष्यतेंतर्गताश्चान्येकोटिशोह्यंडराशयः ४० यमाहुरक्षरंब्रह्मसर्वकारणकारणम् ॥ विष्णोर्धामपरंसाक्षात्पुरुषस्यमहात्मनः ४१ इतिश्रीभागवतेमहापुराणे तृतीयस्कंधेद्वादशोध्यायः ॥ १२ ॥ छ ॥ मैत्रेयउवाच ॥ इतितेवर्णितःक्षत्तःकालाख्यःपरमात्मनः ॥ महिमावेदगर्भोथयदस्राक्षीन्निबोधमे १**

प्रकृतयःस्मृता। इतिच। कियत्संख्याविस्तारइत्यतउक्तं पंचाशदिति एवंविधोंडकोशोऽयंयत्रहरौप्रविष्टःपरमाणुवल्लक्ष्यते तस्मिन्नंडकोशेंतर्गताश्चान्येचकोटिशोहरेःशरीररूपाअंडराशयोलक्ष्यंते ३९ ४० परमाणुपरममहच्छब्दवाच्यः पदार्थःसाक्षान्नारायणएवनपार्थैवाद्यन्यतमइत्याह यमिति यमंडाधारंभगवंतंअक्षरंब्रह्मसर्वकारणानांब्रह्मादीनामपिकारणमाहुः तस्यमहात्मनोमहत्परिमाणोपेतस्य साक्षात्पुरुषस्यात्यंताणुतरशरीरेषुसरणाद्वर्तमानात्पुरुषनाम्नोविष्णोरयमंडकोशःपरंधामकेवलगृहवद्वर्तते। हिशब्देनतदंतर्गताअंडराशयोपिगृहवद्वर्तमानाः एकमेवांडंबहुत्वेनप्रत्येकंरोमकूपगतत्वाद नंतमित्यादिविशेषस्मृतिप्रसिद्धंसूचयति तदुक्तं अंतर्गताः[१]शरीराणि शरीराणाबहुत्वेनअतीतानागतैस्तथा। अस्यैवदेवकार्येषुप्रतिप्रतिचदर्शनात्। विष्णुसामर्थ्यतोंडानांबहुत्वंनान्यथाभवेदिति। एकमंडंबहुत्वेनप्रत्येकंरोमकूपगम्। ब्रह्मापश्यत्तथात्मानंहरेस्तेषुपृथक्पृथगितिच। अतोतीतानागतवर्तमानानंतब्रह्मादिपरमभागवतैरनवरतागणितांचिंत्यमहिमत्वादायुर्मानहीनत्वात्तस्यदेशकालगुणानं त्यज्ञानस्यानंतकालीनतत्सामीप्यादिनिर्वाणमुख्यसाधनत्वाच्चास्मान्निरतिशयभक्त्यातज्ज्ञानंसर्वथासंपाद्यं मुमुक्षुणेतिभावः ४१ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांद्वादशो ध्यायः॥१२॥ अत्रहरेरानंत्यज्ञानंयथाप्रीतिजनकत्वेनमुक्तिसाधनंतथाब्रह्मादितारतम्यज्ञानंचेत्येतदर्थंसृष्टिप्रकारःकथ्यतेतत्राविद्यायाःहेयेषुप्राथम्यात्तत्सृष्टिंवक्तुंवृत्तमनूद्यवक्तव्यार्थंप्रतिजानीते इतीति १

[१] तात्पर्यगतंस्ववाक्यमिदं तथाचशरीराणि अंतर्गताः प्रविष्टाः विष्णुशरीरबहुत्वेनतद्गतानामंडानांबहुत्वमित्युक्तंभवति ॥

आदिकृद्ब्रह्मा अग्रे तमःससर्जेत्यन्वयः अथमोहादिकमत्रैकवचनंनयथातारतम्येनसृष्टिरितिज्ञापनायेतिज्ञातव्यं। क्रमस्तु। तमस्तुशार्वरंप्रोक्तंमोहश्चैवविपर्ययः। तदाग्रहोमहामोहस्तामिस्रःक्रोधउच्यते। मरणं त्वंधतामिस्रमविद्यापंचपर्विकेत्युक्तएव। तमोज्ञानंविपर्यासोमोहोऽन्येतुतदाग्रहाइतिवचनात्। एषांमूलकारणमाह अज्ञानेति आज्ञानाद्वृत्तियेषांतेतथा २ अविद्याहेयेत्याशयेनाह दृष्ट्वेति ततस्तर्हिसृष्टिनिवृत्ताकिंनेत्याह भगवद्ध्यानेति अनेनसर्वप्रायश्चित्तरूपोपायःभगवद्ध्यानमितिसूचितम् ३ आत्मभूर्ब्रह्मावसिष्ठादिव्यावृत्त्यर्थंनिष्क्रियानितिपरमहसान् ४ ऊर्ध्वरेतसइत्यनेनैवस्वाज्ञाविमुखा एतइतिजानन्नपिब्रह्मासृष्ट्यंतरकरणाशयोवक्ति तानिति स्वोविष्णुस्तस्मादुद्भूतवानितिस्वभूस्तत्सृष्टिकर्म मोक्षधर्माणोनिवृत्तिमार्गस्थाः ५ कथमवज्ञातइत्यतउक्तं प्रत्याख्यातेति निरस्तमनुशासनमाज्ञाकरणंयैस्तेतथातैःसुक्रोधेतिशेषः क्षणिकोयंकोपश्चतुर्मुखस्यनदीर्घकालीनइतिभावेनाह क्रोधमिति ६ प्रजापतेर्ब्रह्मणःसचासौमन्युःक्रोधःतन्मन्युःसद्योनियमनात्पूर्वक्षणमेवक्रोधसमयेभ्रुकुटीनीलशि

ससर्जाग्रेंधतामिस्रमथतामिस्रमादिकृत् ॥ महामोहंचमोहंचतमश्चाज्ञानवृत्तयः २ दृष्ट्वापापीयसींसृष्टिंनात्मानंबह्वमन्यत ॥ भगवद्ध्यानपूतेनमनसान्यांस्ततोसृजत् ३ सनकंचसनंदंचसनातनमथात्मभूः ॥ सनत्कुमारंचमुनीन्निष्क्रियानूर्ध्वरेतसः ४ तान्बभाषेस्वभूःपुत्रान्प्रजाःसृजतपुत्रकाः ॥ तन्नैच्छन्मोक्षधर्माणोवासुदेवपरायणाः ५ सोवज्ञातःसुतैरेवंप्रत्याख्यातानुशासनैः ॥ क्रोधंदुर्विषहंजातंनियंतुमुपचक्रमे ६ धियानिगृह्यमाणोपिभ्रुवोर्मध्यात्प्रजापतेः ॥ सद्योजायततन्मन्युःकुमारोनीललोहितः ७ सवैरुरोददेवानांपूर्वजोभगवान्भवः ॥ नामानिकुरुमेधातःस्थानानिचजगद्गुरो ८ इतितस्यवचःपाद्मोभगवान्परिपालयन् ॥ अभ्यधाद्भद्रयावाचामारोदीस्तत्करोमिते ९ यदरोदीःसुरश्रेष्ठसोद्वेगइवबालकः ॥ ततस्त्वामभिधास्यंतिनाम्नारुद्रइतिप्रजाः १० हृदिंद्रियाण्यसुर्व्योमवायुरग्निर्जलंमही ॥ सूर्यश्चंद्रस्तपश्चैवस्थानान्यग्रेकृतानिमे ११ मन्युर्मनुर्महिनसोमहाञ्छिवऋतध्वजः ॥ उग्ररेताभवःकालोवामदेवोधृतव्रतः १२ धीर्वृत्तिरुशनोमाचनियुत्सर्पिरिलांबिका ॥ इरावतीसुधादीक्षारुद्राण्योरुद्रतेस्त्रियः १३ गृहाणैतानिनामानिस्थानानिचसयोषणः ॥ आभिःसृजप्रजाबह्वीःप्रजानामसियत्पतिः १४ इत्यादिष्टःसगुरुणाभगवान्नीललोहितः ॥ सत्वाकृतिस्वभावेनससर्जात्मसमाःप्रजाः १५ रुद्राणांरुद्रसृष्टानांसमंताद्ग्रसतांजगत् ॥ निशाम्यसंख्यशोयूथान्प्रजापतिरशंकत १६ अलंप्रजाभिःसृष्टाभिरीदृशीभिःसुरोत्तम ॥ मयासहदहंतीभिर्दिशश्चक्षुर्भिरुल्बणैः १७

रानेत्रंरोहितंस्यादित्यतोनीललोहितइति कारणगुणाःकार्येसमन्वयंतीतिन्यायात् अनेनसद्योजातोनीललोहितइतिनामद्वयंनिरुक्तम् ७ लोकेबालस्वभावप्रवर्तनायतस्यतंवक्ति सवाइति इंद्रादिदेवानांपूर्वजः ८ पाद्मोब्रह्मा मारोदीरितिपदम् ९ प्रधाननामाह यदिति १० हृन्मनः ११ नामानीतिनामबहुत्वस्यप्रार्थितत्वात्कथंरुद्रेत्येकनामकरणमितितत्राह मन्युरिति अहरेताःमहराग्निः। महरग्निः कृष्णवर्त्माशुचिर्वह्निरुषर्बुधः। धूमध्वजश्चित्रभानुर्दहनोहव्यवाहनइत्यभिधानात् वह्निवीर्यइत्यर्थः ऊर्ध्वरेतस्त्वादिव्रतधारणाद्धृतव्रतः। ऊर्ध्वरेतंविरूपाक्षंशंकरंनीललोहितमितिश्रुतेः १२ रुद्राण्योरुद्रभार्यास्तेतुभ्यंदत्ताइतिशेषः १३ सयोषणमितिक्रियाविशेषणं पुष्णात्यनयागार्हस्थ्यधर्ममितियोषणाभार्या प्रजानांपतिरसियद्यस्मात्तस्मात्प्रजाभवेतत्पतित्वमपिगच्छतीति १४ गुरुणाब्रह्मणासत्वाकृतिर्वर्णाकृतिःसत्वंबलमाकृतिर्मूर्तिःस्वभावेनोग्रत्वादिगुणैरात्मसमाः १५ १६ १७

भवृत्तंकर्मनिवार्यपुनःकिंव्यधत्तेतितत्राह तपइतितपोबहुविधंतत्रेदंकीदृशमत्राह सर्वेति भगवद्गुणस्मरणलक्षणंतपआतिष्ठेत्यर्थः तपआलोचनइतिधातोः सृष्टावनुपयुक्तेनानेनकिमितिमाभूच्छंकेतिव क्ति तपसेति भवांस्तपसैवयथापूर्वंतथेदंविश्वंस्रष्टासंभविष्यतीत्यन्वयः १८ निर्विषयेनानेनकिमितितत्राह तपसेति स्वविषयेणतपसोपलब्धस्यहरेः प्रसादेनलब्धज्ञानोभवान्स्रष्टाभविष्यतीतिभा वः सूर्यादिज्योतिर्वैलक्षण्यात्परं तर्हिनिराकारंकिनेत्याह भगवंतमिति ऐश्वर्यादिगुणशालिनंतर्हिकिंनदृश्यतइत्यतउक्तं अधोक्षजमिति अबाह्येंद्रियज्ञानविषयं तर्हिशशशृंगतुल्यमित्यतउक्तं सर्वेति न्विदंजीववदतत्त्वंकिनेत्याह अंजसेति इदमेवतत्त्वं नान्यदित्यर्थः । अंजसात्वरितेतत्त्वेप्यहहोद्भुतखेदयोरितियादवः । तत्त्वेप्यद्धांजसाद्वयमित्यमरश्च १९ सत्वाकृतिःस्वभावेनेत्युक्तसत्त्वस्वभावो स्यस्पष्टः गुर्वाज्ञाकरणादितिभावेनाह एवमिति वनंजलम् २० तपस्तप्त्वारुद्रएवसृष्टिशेषंकरिष्यतीतिमत्वाब्रह्मणातूष्णींस्थितंकितत्राह अथेति भगवतोहरेरजोमिश्रसत्वशक्त्यायुक्तस्यचतुर्मुखस्यअंगे भ्यइतिशेषः २१ किंनामानस्तइतिचोद्यानवकाशायाह मरीचिरित्यादिना २२ कस्मात्कस्मादंगादेषांजन्मेतितत्राह उत्संगादितिउत्संगादूरोः सकलतत्त्वनिर्णायकेस्मिञ्छास्त्रेऽयथातारत म्यसृष्टिकथनंदुष्टजनमोहनायतस्यापिशास्त्रतात्पर्यार्थत्वात् महतांप्रियत्वाच्चसृष्टेश्चबहुविधत्वात्तत्सृज्यानांचबहुरूपत्वादतोनिर्णायकग्रंथांतरानुसारेणास्यतात्पर्यमवगंतव्यं । तदुक्त । कालतोबलतश्चै

तपआतिष्ठभद्रंतेसर्वभूतसुखावहम् ॥ तपसैवयथापूर्वंस्रष्टाविश्वमिदंभवान् १८ तपसैवपरंज्योतिर्भगवंतमधोक्षजम् ॥ सर्वभूतगुहावासमंजसाविंदतेपु मान् १९ मैत्रेयउवाच ॥ एवमात्मभुवादिष्टःपरिक्रम्यगिरांपतिम् ॥ बाढमित्यमुपामंत्र्यविवेशतपसेवनम् २० अथाभिध्यायतःसर्गंदशपुत्राःप्रजज्ञिरे भगवच्छक्तियुक्तस्यलोकसंतानहेतवः २१ मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुः ॥ भृगुर्वसिष्ठोदक्षश्चदशमस्तत्रनारदः २२ उत्संगान्नारदोजज्ञेदक्षोंगुष्ठा त्स्वयंभुवः ॥ प्राणाद्वसिष्ठःसंजातोभृगुस्त्वचिकराक्रतुः २३ पुलहोनाभितोजज्ञेपुलस्त्यःकर्णयोर्ऋषिः ॥ अंगिरामुखतोक्ष्णोत्रिर्मरीचिर्मनसोभवत् २४ धर्मःस्तनाद्दक्षिणतोयत्रनारायणःस्वयम् ॥ अधर्मःपृष्ठतोयस्मान्मृत्युर्लोकभयंकरः २५ हृदिकामोभ्रुवोःक्रोधोलोभश्चाधरदच्छदात् ॥ आस्याद्वा क्सिंधवोमेढ्रान्निर्ऋतिःपायोरघाश्रयः २६ छायायाःकर्दमोजज्ञेदेवहूत्याःपतिःप्रभुः ॥ मनसोदेहतश्चेदंजज्ञेविश्वसृजोजगत् २७

ज्ञानानंदादिकैरापि।सर्वैर्गुणैर्विष्णुरेवश्रेष्ठस्तदवरारमा। अनंतांशेनकालात्तुसमातस्याश्चतुर्मुखः। अत्ररोबहुलांशेनतत्समोवायुरुच्यते । नियमाद्वायुरेवैकोब्रह्मत्वंयातिनापरः। तस्मात्समानतामुक्तौवायुत्वोर्के ज्ञानानंदादिकैरापि।सर्वैर्गुणैर्विष्णुरेवश्रेष्ठस्तदवरा रमा। ... चिद्रूनता। दशवर्षंतुतत्पश्चाज्जननंतत्त्रियोरपि। आनंदादिस्तदशांशःकालःसंवत्सरात्परः। यावत्पश्चाज्जनिस्तावत्पूर्वंदेहक्षयोभवेत् । ब्रह्मवाय्वोस्तुयेदेव्यौतदशांशःसुखादिकः। शेषस्यगरुडस्यापिकालो दिव्यसहस्रकः । शेषरुद्रौब्रह्मवायूयथातद्वत्परस्परम् । तदेव्यस्तदशांशाःस्युस्ततस्विंद्रादयोमताः । एवंमुक्तौचपूर्वंचनान्यथाक्वचिदिष्यते । अन्यथोक्तिर्यत्रचस्यात्तन्मोहार्थंभविष्यति । पूर्वापरविपर्यासो बहुरूपत्वहेतुतइतिवचनात्। इंद्राद्याःसनकाद्याश्चदक्षाद्यायेपिचापरे। ऋषयोमनवोदेवास्तद्वंश्यायेचकेचन । उमायाअवराःसर्वेगुणैःसर्वैरसंशयः। तत्समोनभविष्योवानभूतोद्यतनोपिवा । ऋतेहरिब्रह्मवायु शेषवींद्रान्सभार्यकान् । शंकरंचेतिवक्तव्यमन्यन्मोहार्थमुच्यतइत्यन्यत्रापि २३ २४ यत्रयस्यधर्मस्यगृहेनारायणःस्वयंहरिर्नरनारायणकृष्णनाम्नाजातइतिशेषः यस्मादधर्मान्मृत्युर्देहवियोगलक्षणः २५ उत्पत्त्यनंतरमपिस्वकारणंमुक्त्वानतिष्ठतीति हृदीति अधरदच्छदादधरोष्ठात् वाङ्मानुषी पायोर्गोलकात् अघाश्रयःदुःखाद्यभिमानी २६ शरीरच्छायायाःकर्दमोप्यन्योस्तीतिदेवहूत्याः पतिरिति संक्षिप्यफलितमाह मनसइति २७

भगवन्मद्दत्तस्त्वविद्धिर्महद्भिरसुरजनमोहनंकर्तव्यमितिनियममवेक्षमाणस्यब्रह्मणःकामिजनविडंबनप्रकारमाह वाचमिति दुहितरंशृंगाररसदोग्ध्रींतन्वींसुंदरींअकामामकुत्सितांवाचंमानुषीं नोस्माकं श्रुतंवार्तामात्रंनतुतथ्यमित्यर्थः २८ भगवदुपासनयातेनतत्रनित्यसन्निहितमनरकत्वाददुष्टमनसःस्वयंभुवोदुष्टजनमोहनरीतिमाह तमिति २९ कथमब्रुवन्नितितत्राह नैतिर्योगजंकाममनिगृह्यस्वां दुहितरंगच्छेत्तस्यएतत्कर्मपूर्वैस्त्वदन्यैर्नकृतं येअपरेपश्चात्तनास्तेपिनकरिष्यंतीत्यन्वयः ३० ननुपामरस्येदंदुष्करमग्निवत्दुष्कर्मेंधनभस्मीकरणसमर्थस्यनमद्विधस्येतितत्राह तेजीयसामिति एकस्य चेदिदंदुष्कीर्तिकरंनबहूनामितिमंदाशंकानिरासायतेजीयसामितिबहुवचनं बहुभिरनुष्ठितमपिसुरापानंयथानिंद्यंतथापीतिहिशब्देनलोकप्रसिद्धिंसूचयाति इतोप्यनुपपन्नमित्याह यद्वृत्तमिति अनेनजग द्गुरुत्वेनैतत्त्वद्वृत्तकरणेनतेरेषामनर्थःस्यादितिध्वनितम् ३१ क्रोधभीत्यासांत्वयंतोनमंतीत्याशयेनाह तस्माइति संलापेनप्रार्थयमानाइतिभावेनाह यइति स्वेनस्वयंप्रतिभासमानेनरोचिषाज्ञानेना त्मस्थंपरमात्मस्थमिदंविश्वंव्यंजयामाससब्रह्मास्वसृष्टंधर्मंपातुमर्हतीत्यन्वयः ३२ त्यागात्यागौत्वितरप्रार्थनयामहतांस्वभावइतिभावेनाह सइत्थमिति अद्यापिसहास्थितत्वान्नेयंनिजासरस्वतीकिंत्वन्यैव त्यक्तासाकेतिमंदाशंका । यांतत्याजविभुर्ब्रह्मामानुषीवाक्तुसास्मृता । सरस्वतीनिजाभार्यादेवींवाचंतुतांविदुरिति वाक्येनपरिहर्तव्या ३३ दिशइतिदिक्स्थाजनालक्ष्यंते अन्यथामानुषीविविशेष्योक्ति

वाचंदुहितरंतन्वींस्वयंभूर्हरतींमनः ॥ अकामांचकमेक्षत्तःसकामइतिनःश्रुतम् २८ तमधर्मेकृतमतिंविलोक्यपितरंसुताः ॥ मरीचिमुख्यामुनयोविश्रं भात्प्रत्यबोधयन् २९ नैतत्पूर्वैःकृतंत्वद्यनकरिष्यंतियेपरे ॥ यस्त्वंदुहितरंगच्छेदनिगृह्यांगजंप्रभुः ३० तेजीयसामपिह्येतन्नसुश्लोक्यंजगद्गुरो ॥ यद्वृत्त मनुतिष्ठन्वैलोकःक्षेमायकल्पते ३१ तस्मैनमोभगवतेयइदंस्वेनरोचिषा ॥ आत्मस्थंव्यंजयामाससधर्मंपातुमर्हति ३२ सइत्थंगृणतःपुत्रान्पुरोदृष्ट्वा प्रजापतीन् ॥ प्रजापतिपतिस्तन्वींतत्याजव्रीडितस्तदा ३३ तांदिशोजगृहुर्घोरांनीहारंयद्विदुस्तमः ॥ कदाचिद्ध्यायतःस्रष्टुर्वेदाआसंश्चतुर्मुखात् ३४ कथंस्रक्ष्याम्यहंलोकान्समवेतान्यथापुरा ॥ चातुर्होत्रंकर्मतंत्रमुपवेदनयैःसह ॥ धर्मस्यपादाश्चत्वारस्तथैवाश्रमवृत्तयः ३५ ॥ विदुरउवाच ॥ सवैवि श्वसृजामीशोवेदादीन्मुखतोसृजत् ॥ यद्यद्येनासृजद्देवस्तन्मेब्रूहितपोधन ३६ ॥ मैत्रेयउवाच ॥ ऋग्यजुःसामाथर्वाख्यान्वेदान्पूर्वादिभिर्मुखैः ॥ शस्त्रमिज्यांस्तुतिस्तोमंप्रायश्चित्तंव्यधात्क्रमात् ३७

र्थ्यर्थोस्यात् तथाचयद्यस्याउत्पन्नंनीहाराख्यंतमोविदुरित्यर्थः वेदादितदभिमानिनीनांसृष्टिरुर्वरितेतिसुप्तप्रतिबुद्धइवतत्सृष्टिंकथयाति कदाचिदिति चतुर्मुखादिति चतुर्भ्योमुखेभ्यइत्यर्थः ३४ चातुर्होत्रकर्मादिकमपिभगवद्ध्यानपूर्वकंसृष्टत्वाद्वाह्यामितिभावेनाह कथमिति कर्मणासमवेतानुपपन्नाँल्लोकान्कथंस्रक्ष्यामिद्रक्ष्यामीतिध्यायतोब्रह्मणोवाचाकर्मतंत्रंकर्मशास्त्रंसमुत्पन्नंउपवेदस्मृतिलक्ष णैर्नयैरुपोद्घातग्रंथैःसह अत्रविशेषस्तु अभिमानिनःशब्दतश्चब्रह्मावेदान्ससर्जह । यज्ञादींश्चरूपेवाचातथासर्वाभिमानिनः । इतिहासपुराणेतुश्रुत्वाहीरमुखात्स्वयम् । भारतादीन्विनापश्चाद्धारिणान्यै श्चनिर्मितान् इत्यनेनज्ञातव्यः आश्रमवृत्तयः आश्रमाश्चतदाचाराश्च ३५ विदुरःस्वयंविभागंजानन्नपिलोकहितार्थंविविच्यवक्तव्यमितिपृच्छतीत्याह विदुरइति ३६ मैत्रेयोपिलोकहितायविस्तर तोविदुरप्रश्नंपरिहरतीत्याह ऋग्यजुरिति पूर्वादिभिःपूर्वदक्षिणपश्चिमोत्तरदिक्भेदाभिन्नैः शस्त्रंमंत्रंऋग्वेदगतमिज्यामंत्रंयाजुषं स्तुतिस्तोमंत्रंत्रौसामवेदगौ स्तोम.क्रियमाणकर्मपुरत.क्रियमाणस्तु तिविशेषः अन्यदाक्रियमाणास्तुतिः प्रायश्चित्तमाथर्वणंव्यधात्विभागंकृतवान् वेदानांपूर्वमेवोद्भूतत्वात् ३७

आयुर्वेदंवाहदं धनुर्वेदमायुधविद्यां गांधर्वंभरतशास्त्रं स्थापत्यंतक्षशास्त्रं ३८ इतिहाससहितंपुराणं शब्दतएवरचनंनत्वर्थतःतस्यवैदिकत्वात् वेदस्यव्यक्तिमात्रमेवकरणं नचजनित्वादित्याद्यक्य स्याविषयत्वेनाप्रामाण्यं तस्यस्वाभिमान्युत्पत्त्याचारितार्थत्वात् अभिमानिनःशब्दतश्चब्रह्मावेदान्ससर्जेहेत्यादेः । सर्वदर्शनःसर्वज्ञः अनेनब्रह्मोक्तस्याप्रिमूलत्वंदर्शितं सर्वाणिदर्शनानिच्चस्मादुत्पन्नानितस्य तथोक्तइतिवा ३९ षोडश्यादयोयज्ञविशेषाःतद्भेदःकल्पतोबोद्धव्यः अथपुरीष्याग्निष्टुतादिकंद्वयंद्वयंपंचदक्षिणादिवक्त्रेभ्यउत्पन्नम् ४० तपआदिधर्मपादानामपिचतुष्टयाज्जन्मेतिज्ञातव्यं आश्रमां स्थंब्रह्मचर्याद्याश्रमांश्चपूर्वादिवक्त्रेभ्यःससर्ज भैक्ष्यचर्यादिवृत्तिभिःसह ४१ यथासंख्यमित्यनेनाश्रमचतुष्टयावान्तरभेदोपिविवक्षितस्तत्रब्रह्मचर्याश्रमावान्तरभेदमाह सावित्र्यमिति गुरुकुलेब्रह्मचारिणो द्वादशवर्षपर्यंतमध्ययनकर्मसावित्रं। प्राजापत्यंब्रह्मचर्यएकभार्यर्तुगमनं। प्राजापत्यंब्रह्मचर्यमेकभार्यर्तुगामितितिवचनात्। ब्राह्मंब्रह्मचर्यंयावद्विवाहमध्ययनं बृहन्नामब्रह्मचर्यंयावज्जीवंनैष्ठिकं। गृहेगृहस्था श्रमेपीत्येवंचातुर्विध्यं । वार्तायायावरंभैक्ष्यचर्येविशेषः । असंचयएकाहिकत्वं तत्तद्दिनार्जितव्रीह्यादेस्तद्दिनएवव्ययः । शालीनंतु वत्सरपर्यंतंस्ववृत्तिहेतोःकुसूलमंजूषादिषुव्रीहिधान्यादिग्रहणं शिलोंछ स्तुव्रीहिसस्यक्षेत्रेषुगलितव्रीह्यादिनादेहयात्रावर्तनं । वार्तायायावरंज्ञेयमेकाहिकत्वमसंचयइति ४२ वनेवानप्रस्थाश्रमे। वैखानसामूलभक्षाःफलभक्षाउदुंबराः । वालखिल्याःसर्वभक्षाःफेनपावत्सफेनपा । इत्यनेनव्याख्यातोयंश्लोकः । वत्समुखगलितपयःफेनपानेनजीवंतः । न्यासेयत्याश्रमेपूर्वंकुटीचकःकुट्यांस्वगृहएवपुत्रादिदत्तान्नादिनाचकतेतृप्यति अलंबुद्धिमाप्नोतीति ! चकतृप्ताविति धातुः। द्वितीयो

आयुर्वेदंधनुर्वेदंगांधर्वंवेदमात्मनः ॥ स्थापत्यंचासृजद्वेदंक्रमात्पूर्वादिभिर्मुखैः ३८ इतिहासपुराणंचपंचमंवेदमीश्वरः ॥ सर्वेभ्यएववक्त्रेभ्यःससृजेसर्वदर्शनः ३९ षोडश्युक्थ्यौपूर्ववक्त्रात्पुरीष्याग्निष्टुतावथ ॥ आप्तोर्यामातिरात्रौचवाजपेयंसगोसवम् ४० तपःशौचंदयासत्यंधर्मस्येतिपदानिच ॥ आश्रमांश्चयथासंख्यमसृजत्सहवृत्तिभिः ४१ सावित्रंप्राजापत्यंचब्राह्मंचाथबृहत्तथा ॥ वार्तासंचयशालीनंशिलोंछइतिवैगृहे ४२ वैखानसावालखिल्योदुंबराःफेनपावने ॥ न्यासेकुटीचकःपूर्वंबहूदोहंसनिष्क्रियौ ४३ आन्वीक्षिकीत्रयीवार्तादंडनीतिस्तथैवच ॥ एवंव्याहृतयश्चासन्प्रणवेनास्यदंगताः ४४ तस्योष्णिगासील्लोमभ्योगायत्रीचत्वचोविभोः ॥ त्रिष्टुम्मांसात्स्नुतोनुष्टुब्जगत्यस्थ्नःप्रजापतेः ४५ मज्जायाःपंक्तिरुत्पन्नाबृहतीप्राणतोभवत् ॥ स्पर्शास्तस्याभवन्जीवात्स्वरोदेहउदाहृतः ॥ ऊष्माणइंद्रियाण्याहुरंतस्थाबलमात्मनः ४६

बहूदःसवनत्रयस्नानंविनात्वकालेतीर्थजलदर्शनेतत्रस्नानंकुर्वंस्त्रिदंडी । तृतीयचतुर्थौहंसएकदंडीयज्ञोपवीतीच। निष्क्रियएकदंडी । हिंसादिक्रियारहितःपरमहंसः ४३ आन्वीक्षिकीवेदानुसारिणीतंत्र विद्या त्रयीत्रयोवेदाः वार्तावाणिज्यादि दंडनीतिःराजधर्मः एतेयथाब्रह्मणोवक्त्रचतुष्टयादासन् । एवंभूरादिव्याहृतयश्च । अजस्यमुखचतुष्टयादपिव्यक्ताःप्रणवेनसहतद्वक्त्रस्यास्पदंगताश्चेत्यन्वयःत्र व्यासहपाठात्त्रशिवप्रोक्तान्वीक्षिकी तस्यावेदबहिष्कराद्विष्णुप्रोक्तेयं । तदुक्तं । आन्वीक्षिकीतंत्रविद्यासाचवेदानुसारिणी । विष्णुप्रोक्ताशिवाद्युक्ताज्ञेयावेदबहिष्कृता । दंडनीतीराजधर्मस्त्रयीवेदाःप्रकीर्तिताइति । आन्वीक्षिक्यात्रय्याचब्राह्मणानांजीवनं। दंडनीत्याराज्ञां। वार्तयावैश्यादीनामित्येतत्ख्यापयितुंचपुनस्त्रयीग्रहणं। वार्तावाणिज्यकादिस्यादेताभिर्यत्तुजीवनं। तदान्वीक्षिक्यादिनामब्रह्मणानिर्मितंपुरोतिच। यद्वाप्रणवेनसहास्पदंब्रह्मगतास्तत्प्रतिपादकत्वेनतदेकविषयत्वंप्राप्ताइत्यर्थः। प्रणवेनेतितृतीययाप्रणवस्याप्राधान्यंनश्चद्धेयं तस्यपूर्ववक्त्रजत्वात्तदुक्तं। प्रणवःपूर्ववक्त्रेगभूराद्याश्चमुखत्रयात् । प्रदक्षिणमवर्तंतवेदाश्चैवाश्रमास्तथेति । तस्मात्प्रणवंमुखीकृत्यब्रह्मप्राप्ताइत्येवमर्थंतृतीयेति ४४ तस्यब्रह्मणोरोमादिभ्यःसप्तच्छंदसांसर्गप्रकारमाह तस्येति अत्रक्रमव्यत्ययस्तस्योष्णिग्लोमानीत्यादिश्रुत्यनुसारात्कारणानुगुण्याच्च ४५ पंचाशद्वर्णानामपिब्रह्मणोभिव्यक्तिप्रकारमाह स्पर्शाइति कादयोमावसानाःस्पर्शास्तस्यब्रह्मणोजीवाच्चैतन्यादभवन्नभिव्यक्ताआसन्वर्णानांनित्यत्वादभिव्यक्तिरेव स्वरो

कारादिर्देहः देहादुदाहृतउद्धृतः शषसहाऊष्माण. श्रोत्रादींद्रियाणिइंद्रियेभ्यउत्पन्नाइत्याहुः यरलवाअंतस्थाआत्मनोब्रह्मणोबलंबलादभिव्यक्ताः। अत्रसामानाधिकरण्यवचनं यस्माद्यज्जायतेचांगात्तत्तदंगाभिधंभवेदितिवचनाद्युक्त प्रथमापंचम्यर्थे अकुहविसर्जनीयानांकंठइत्यादिस्थानभेदवत्ग्रंथांतरेस्थानभेदसंभवेकथमत्रोक्तंएवंस्थानमितिनिर्णयइतीदंचोद्यं स्पर्शास्तस्याभवन्जीवात्स्वरादेहात्प्रजज्ञिरे। ऊष्माणइंद्रियेभ्यश्चअंतस्थाबलतोविभोरित्यनेनपरिहर्तव्यम् ४६ निषादर्षभगांधारषड्जमध्यमधैवताः। पंचमश्चेत्यमीसप्ततंत्रीकंठोत्थिताःस्वराइतिसप्तस्वराःप्रजापतेर्विहारेणशरीरसंवरणविशेषेणभवंतिस्मअभवन्नित्यन्वयः स्वराणांसप्तविशेषत्वात्तत्सामग्रीमतस्तदुत्पादनसामर्थ्यंस्यात्तदस्यकथमितितत्राह शब्देति। शब्दब्रह्मात्मकोब्रह्मासर्वशब्दाभिधेयतः। ऋतेनारायणादीनिनाम्नांसविषयोयतइतिवचनान्नारायणादिनाम्नांव्यतिरेकेणसर्ववेदादिशब्दराशेर्विषयत्वात्तदुत्पादनसामर्थ्यमस्तीत्यर्थः नित्यवर्णात्मकवेदानांनित्यत्वेनव्याप्तत्वात्परिच्छिन्नस्यब्रह्मणस्तद्विषयत्वकथमत्राह व्यक्तेति व्यक्तंब्रह्माण्डमुद्दिष्टमव्यक्तंमहदादिच। तद्व्यापकत्वाद्ब्रह्मातुव्यक्ताव्यक्तात्मकःस्मृतइत्यतोव्याप्तिमत्त्वात्तद्विषयत्वंयुक्तं उक्तादन्यत्रापिव्याप्तिशक्तिमत्त्वात्प्रभोरित्युक्तम् ४७ देहात्तदवयवेभ्योब्रह्मणःसृष्टिमुक्त्वाऽधुना

स्वराःसप्तविहारेणभवंतिस्मप्रजापतेः॥ शब्दब्रह्मात्मनस्तातव्यक्ताव्यक्तात्मनःप्रभोः ४७ ब्रह्मानुभावविततोनानाशक्त्युपबृंहितः॥ ततोपरामुपादाय ससर्गायमनोदधे ४८ ऋषीणांभूरिवीर्याणामपिसर्गमविस्तृतम्॥ ज्ञात्वातद्धृदयेभूयश्चिंतयामासकौरव ४९ अहोअद्भुतमेतन्मेव्यापृतस्यापिनित्यदा॥ नह्येधंतेप्रजानूनंदैवमत्रविघातकम् ५० एवंयुक्तिमतस्तस्यदैवंचावेक्षतस्तदा॥ यस्यरूपमभूद्द्वेधायत्कायमभिचक्षते ५१ ताभ्यांरूपविभागाभ्यांमिथुनंसमपद्यत॥ यस्तुतत्रपुमान्सोभून्मनुःस्वायंभुवःस्वराट् ५२ स्त्रीयासीच्छतरूपाख्यामहिष्यस्यमहात्मनः॥ तदामैथुनधर्मेणप्रजाएधांबभूविरे ५३ सचापिशतरूपायांपंचापत्यान्यजीजनत्॥ प्रियव्रतोत्तानपादौतिस्रःकन्याश्चभारत ५४ आकूतिर्देवहूतिश्चप्रसूतिरितिसत्तम॥ आकूतिंरुचयेप्रादात्कर्दमायतुमध्यमाम्॥ दक्षायादात्प्रसूतिंचयतआपूरितंजगत् ५५॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेत्रयोदशोऽध्यायः॥ १३॥ ॥ छ॥

प्रकारांतरेणतस्मात्सृष्टिंवक्ति ब्रह्मेति। ब्रह्माततःपूर्वस्मादपरांस्त्रीपुरुषीकरणशक्तिमुपादायसर्गायमनोदधइत्यन्वयः। परतंत्रस्यब्रह्मणःस्वाधीनसृष्टिःकथमतउक्तं अनुभावेति अनुभावेनपरब्रह्मणा विततः तस्यानुग्रहामृतेनपूर्णइत्यर्थः। ब्रह्मानुभावविततइत्येकंवापदं परब्रह्मणःप्रभावेणविततः हरेरनुकूलेनभावेनसत्तयावितताधिकृतोविशेषसन्निधानवानितिवा अतएवनानाशक्त्युपबृंहितः नानाविधसृष्टिसामर्थ्यपूर्णः ४८ तत्रसिंहावलोकनप्रकारेणापरांसृष्टिंचिंतयतीत्याह ऋषीणामिति यत्रपश्चात्तनःश्रेष्ठस्तत्रसिंहावलोकनमितिवचनात् पश्चादुत्पत्स्यमानस्यमनोःश्रैष्ठ्यादत्रसिंहावलोकनंकृतमित्यर्थः। मरीच्यादिऋषीणांसकाशादपि तत्तस्मादविस्तृतत्वादेव अनेनमहतापिपुरुषेणक्रियमाणंकार्यमालोच्यकर्तव्यंनसहसेतिनिदर्शितम् ४९ चिंतनविधादर्शयति अहोइति सृष्ट्यौव्यापृतस्यकुतस्तत्राह नहीति चिंतयानिश्चितमाह दैवमिति दैवानुग्रहोस्तिचेत् सृष्टिःपूर्यतइतिनिरचिनोदित्यर्थः ५० फलितमाह एवमिति युक्तिमतो ध्यानवतः दैवानुग्रहमप्यपेक्षमाणस्यकस्यब्रह्मणोरूपंद्विधाभूत्यद्रूपंकेनब्रह्मणाप्राप्तत्वात्कायनामाभिचक्षतेनिरुक्तज्ञाइतिशेषः ५१ तद्रूपद्वयंकिमभूदितितत्राह ताभ्यामिति तयोर्नामविशेषमाह यस्त्विति स्वराट्चक्रवर्ती ५२ अस्यमनोरथंयोगोविभूतिकरइत्याह तदेति तदातन्मिथुनसृष्टिकालमारभ्य ५३ अनेनमनुनाकान्यपत्यान्युत्पादितानीतितत्राह सचेति तन्नामान्याह प्रियव्रतेत्यादिना यतःकन्यात्रयात् ५४ ५५॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांत्रयोदशोऽध्यायः॥ १३॥ ॥ ७॥ ॥ ७॥ ॥ ७॥ ॥ ७॥

अस्मिन्नध्यायेहरेरवतारकथाश्रवणादिनासाक्षात्पुरुषार्थःस्यादितिनिरूप्यते श्रीशुकःपरीक्षितेपुनरापविदुरप्रश्नप्रकारंवक्ति निशम्येति १ स्वधर्माचारैःस्वपतिंस्वर्गंनयतीतिपत्नीतांप्रतिलभ्य ततइत्यने नव्यापारांतरंनिषेधति २ कोसौवैदुरिकःप्रश्नइत्यत्राह चरितमिति मेमह्यं वक्तव्यत्वेहेतुमाह विष्वक्सेनेति विष्वक्सर्वत्रसेनाज्ञानलक्षणायस्यसतथोक्तः ३ विष्वक्सेनस्य रतंतद्भक्तचरितंचेतिद्वयमेवपु रुषार्थांतरंगत्वेनमुमुक्षुणाश्रोतव्यंसूरिभिरीडितत्त्वादित्याह श्रुतस्येति सुचिरंश्रमआयासोयस्यसतथा तस्यपुंसांश्रुतस्यवेदाद्यर्थश्रवणस्यअंजसातत्त्वेनसूरिभिरीडितार्थोयं ननुइदंफलंहियत्तस्यहरेर्गुणा नुवादश्रवणंयेषांहृदयेषुमुकुंदस्यपादारविंदंलसतीतिविशेषः तेषांपुंसांचरितश्रवणंवा ज्ञानिभिरभिष्टुतोर्थः इतिपस्मात्तस्मात्स्वायंभुवमनोर्विष्वक्सेनकथाविनाभूतत्वात्तत्कथाब्रूहीतिभावः ४ श्रीशुकःपरी क्षितेविदुरप्रश्नप्रकारंवक्तीतिवाक्तिसूतःशौनकादिभ्यइत्याह इतिब्रुवाणमिति सहस्रशीर्ष्णोहरेश्चरणोपधानंपादपीठायितं भगवत्कथायांप्रगयिमानःप्रेर्यमाणः अभ्यचष्टाहेत्यन्वयः विदुरमितिशेषः ५ संभाषणानंतरमन्यकथाप्रसंगोनास्तीतिभावेनाह यदेति नायमंजलिर्दांभिकइतिभावेनोक्तं प्रणतइति ६ ननुकिमियंभाषागुह्याद्यन्यतमा सांकेतिकीवा नह्वितीयः अप्रस्तुतत्वादसंभवाच्च प्रथमाचसमाधि

श्रीशुकउवाच ॥ निशम्यवाचंवदतोमुनेःपुण्यतमांनृप ॥ भूयःपप्रच्छकौरव्योवासुदेवकथादृतः १ ॥ विदुरउवाच ॥ सवैस्वायंभुवःसम्राट्प्रिय पुत्रःस्वयं भुवः ॥ प्रतिलभ्यप्रियांपत्नींकिंचकारततोमुने २ चरितंतस्यराजर्षेरादिराजस्यसत्तम ॥ ब्रूहिमेश्रद्दधानायविष्वक्सेनाश्रयोह्यसौ ३ श्रुतस्यपुंसांसुचिरश्रम स्यनन्वंजसासूरिभिरीडितोर्थः ॥ यत्तद्गुणानुश्रवणंमुकुंदपादारविंदंहृदयेषुयेषाम् ४ श्रीशुकउवाच ॥ इतिब्रुवाणंविदुरंविनीतंसहस्रशीर्ष्णश्चरणोपधानम् ॥ प्रहृष्टरोमाभगवत्कथायांप्रणीयमानोमुनिरभ्यचष्ट ५ मैत्रेयउवाच ॥ यदास्वभार्ययासाकंजातःस्वायंभुवोमुनिः ॥ प्रांजलिःप्रणतश्चेदंवेदगर्भमभाषत ६ त्वमेकःसर्वभूतानांजन्मकृद्वृत्तिदःपिता ॥ अथापिनःप्रजानांतेशुश्रूषाकेनवाभवेत् ७ तद्विधेहिनमस्तुभ्यंकर्मस्विज्यात्मशक्तिषु ॥ यत्कृत्वेहयशोविष्व गमुत्रचभवेद्गतिः ८ ब्रह्मोवाच ॥ प्रीतस्तुभ्यमहंतातस्वस्तिस्याद्वांक्षितीश्वर ॥ यन्निर्व्यलीकेनहृदाशाधिमेत्यात्मनार्पितम् ९ एतावत्यात्मजैर्वीरकार्याह्यपचितिर्गुरौ ॥ शक्त्याप्रमत्तैर्गृह्येतसादरंगतमत्सरैः १० सत्वमस्यामपत्यानिसदृशान्यात्मनोगुणैः ॥ उत्पाद्यशासधर्मेणगांयज्ञैःपुरुषंयज ११ परंशुश्रूषणंमह्यंस्यात्प्रजारक्षयानृप ॥ भगवांस्तेप्रजाभर्तुर्हृषीकेशोनुतुष्यति १२ येषांनतुष्टोभगवान्यज्ञलिंगोजनार्दनः ॥ तेषांश्रमोह्यपार्थाययदा त्मानादृतःस्वयम् १३ मनुरुवाच ॥ आदेशेहंभगवतोवर्तेयामीवसूदन ॥ स्थानंत्विहानुजानीहिप्रजानांममचप्रभो १४

रेवेतिभावेनाह त्वमेकइति अथजन्मकृत्त्वाद्वृत्तिदत्वात्पितृत्वाच्च पोष्यैःशुश्रूषाकर्तव्यासाकेनयेनकर्मणास्यादित्यर्थः अपिशब्देनकार्याकरणेपातकंसूचयति ७ तदिति तत्कर्म इतोपिभगवच्छुश्रूषाक र्तव्येत्याह कर्मस्विति आत्मशक्तिषुस्वकेपुनित्यनैमित्तिकेषुकर्मस्विज्यापूजा तत्कर्मविशिनष्टि यत्कृत्वेति इहलोकेसर्वत्रयशोमुत्रपरलोकेगतिःसुखप्राप्तिलक्षणास्याचादृशमितिशेषः ८ सान्द्रियेसतुरु णाएवमनुग्रहःकर्तव्यइतिभावंध्वनयन्ब्रह्मावक्ति प्रीतइति तद्यस्माच्छाधिशिक्षस्व आत्मनापरप्रेरणामंतरेण ९ इयमेकागुरोःक्रियमाणापूजेत्याह एतावतीति अपचितिःपूजा एतावतीतिकेयमित्य त्राह शक्त्येति अथगुरुनियोगानंतरमेवशक्त्याशासनमाज्ञागृह्येतेतियत्सेयमित्यर्थः १० आज्ञामाह सत्वमिति अस्यांशतरूपायां ११ केनवेत्यस्यप्रश्नंपरिहरति परमिति अनेनाज्ञाग्रहणमेकमित्युक्तरक्ष जापालनमितिद्वयंशुश्रूषणमुक्तंभवति पुरुषस्यपुरुषार्थायश्रीनारायणप्रसादएवततःप्रजापालनेनांकितत्राह भगवानिति १२ बाधकमाह येषामिति यज्ञोलिंगंज्ञापकोयस्यसतथा श्रमःइदंनःश्रेयः साधनमित्यनुष्ठानायासः आत्मापरमात्मा १३ ब्रह्मणाप्रजापालनायोपदिष्टोमनुस्तदाज्ञामादायब्रह्माणंप्रार्थयते आदेशेहमिति कामाद्यरिसूदन अनुजानीहिअनुज्ञापयादिशेत्यर्थः १४

मूम्याख्येस्थानेस्थितिंविधायप्रजापालनंकर्तव्यमित्याज्ञांतावदाशंक्यपरिहरति यदोकइति सर्वसत्त्वानांपिपीलिकादिसर्वप्राणिनांयदोकआवासस्थानंसामहीमहांभसिप्रलयजलेमग्नाभूत् हेदेवअस्याद्
व्याभूमेरुद्धरणेयत्नःक्रियतामित्यन्वयः १५ पूर्वमेवभूमेरभावंजानन्नपिब्रह्माप्रार्थनापूर्वकंकृतमेवोपकृतंस्यादितिमन्वानोभूमेरुद्धारमालोचयतीत्याह परमेष्ठीति यथोन्नेतुमशक्यात्तथःसन्नाममाप १६
मज्जनेनिमित्तमाह पीतमिति यावतापीतेनजलस्योद्रेकःशाम्यति तावत्सर्वमित्युच्यतेनतुनिःशेषत्वेन अन्यथावार्भिःप्लाव्यमानेत्यसंगतंस्यात् निवेशितानिवेशनीकृता १७ १८ वार्भिर्जलैः
प्लाव्यमानाचंचलीक्रियमाणारसांगतामग्ना प्रजानांभारेणेतिशेषः सृजतःसतः अत्रास्यामवस्थायाम् १९ इदमेवानुष्ठेयमित्याह यस्येति सत्यसंकल्पस्यहरेर्भक्तत्वात्ब्रह्मापिसत्यसंकल्पइतीमम
र्थंध्वनयन्हरेःप्रादुर्भावप्रकारमाह इतीति नासाविवरान्नासाबिलात्सहसासद्योनिःसृतत्वेनवराहतोकोवराहशिशुः २० तस्यब्रह्मणः खस्थआकाशेस्थितः २१ कुमारैःसनकादिभिः २२
सौकरंसूकरस्यविद्यमानंतर्कयामासमीमांसितवान् मीमांसाप्रकारंवक्ति किमेतादिति अहोइत्यनेनानिकटवर्तिनोमुनीनुन्मुखीकरोति बतखेदयन् २३ किंबहुनेदंमहाश्चर्यं अंगुष्ठशिरोमात्रःअंगुष्ठ

यद्ओकःसर्वसत्वानांमहीमग्नामहांभसि ॥ अस्याउद्धरणेयत्नोदेवदेव्याविधीयताम् १५ मैत्रेयउवाच ॥ परमेष्ठीत्वपांमध्येतथासन्नामवेक्ष्यगाम् ॥ कथ
मेनांसमुन्नेष्यइतिदध्यौधियाचिरम् १६ पीतंमयाजलंपूर्वंपृथिवीचनिवेशिता ॥ तथापिकिमिदंसाचप्लाव्यतेपुनरंबुभिः १७ प्रजादेवासुरपितृमनुष्यप
शुपक्षिणः ॥ सरीसृपान्नगान्नागान्भूतान्युच्चावचानिच १८ सृजतोमेक्षितिर्वार्भिःप्लाव्यमानालयंगता ॥ अथात्रकिमनुष्ठेयमस्माभिःसर्गयोजितैः १९
यस्याहंहृदयादासंसईशोविदधातुमे ॥ इत्यभिध्यायतोनासाविवरात्सहसानघ २० दराहतोकोनिरगादंगुष्ठपरिमाणतः ॥ तस्याभिपश्यतःखस्थःक्षणेन
किलभारत २१ गजमात्रःप्रववृधेतदद्भुतमभून्महत् ॥ मरीचिमुख्यैर्विप्रैश्चकुमारैर्मनुनासह २२ दृष्ट्वातत्सौकरंरूपंतर्कयामासचित्रधा ॥ किमेतत्सौकर
व्याजंसत्वंदिव्यमवस्थितम् ॥ अहोबताश्चर्यमिदंनासायामेविनिःसृतम् २३ दृष्टोंगुष्ठशिरोमात्रःक्षणाद्गंडशिलोपमः ॥ अपिस्विद्भगवानेषयज्ञोमेखेदयन्म
नः २४ इतिमीमांसतस्तस्यब्रह्मणःसहसूनुभिः ॥ भगवान्यज्ञपुरुषोजगर्जागेंद्रसन्निभः २५ ब्रह्माणंहर्षयामासहरिस्तांश्चद्विजोत्तमान् ॥ स्वगर्जितेन
ककुभःप्रतिस्वनयताविभुः २६ निशम्यतद्घर्घरितंस्वखेदक्षयिष्णुमायामयसूकरस्य ॥ जनस्तपःसत्यनिवासिनस्तेत्रिभिःपवित्रैर्मुनयोऽगृणन्स्म ॥ २७
तेषांसतांवेदवितानमूर्तिर्ब्रह्मावधार्यात्मगुणानुवादम् ॥ ननर्दभूयोविबुधोदयायगजेंद्रलीलोजलमाविवेश २८

प्रपरिमाणः गलिताःस्थूलपाषाणामंडशैलाइतिस्मृताः । एषवराहोमेमनःखेदयन्यज्ञोभगवानपिस्वित् २४ ब्रह्मणःसहसोत्पन्नाज्ञाननिरासप्रकारमाह इतीति मीमांसतोमीमांसमानस्यसतः मरी
च्यादिसूनुभिः २५ गर्जितफलमाह ब्रह्माणमिति प्रतिस्वनयताप्रतिध्वनिमतीःकुर्वतागर्जितेन २६ अयंहरिरितिज्ञात्वाएतैः किमकारीतितत्राह निशम्येति मायायास्सूकरस्येच्छामयस्यराद्
स्य स्वखेदक्षयिष्णुस्वखेदविनाशकरं घर्घरितंसूकराणांनादविशेषंश्रुत्वाजनादिलोकनिवासिनोमुनयस्त्रिभिःपवित्रैर्निर्दोषवेदैस्तंयज्ञपुरुषमगृणन्नित्यन्वयःस्मेत्यनेनगुणानुपूर्वकस्तुतिसूचयति जनस्त
पइति छंदोभंगभयाद्वेदानुकारित्वाद्वाविसर्गांतं २७ स्तुतिस्तत्प्रसादजननीसमभूदितिभावेनाह तेषामिति वेदानांवितानेनविस्तारेणप्रतिपादितामूर्तिर्यस्यसत्तथा यद्वा वेदएववितानमुल्लोचमुप
रिपतदवकरनिवारणवस्त्रंयस्याःसावेदवितानातादृशीमूर्तिर्यस्यसत्तथा यज्ञवितानमूर्तिरितिपाठेयज्ञविस्तारेषुगृहीतमूर्तिरित्यर्थः आत्मनोज्ञानानंदादिगुणानामनुवादोयस्मिंस्तत्तथा ब्रह्मस्तुतिलक्षणंवेदमव
धार्यननर्दननादभूयइत्युभयत्रसंबध्यते प्रलयजलम् २८

तत्त्वतोनिजानातितत्क्रियार्थातत्तद्भावोऽनिवार्यइतिजलप्रवेशेतद्भावंवक्ति उत्क्षिप्तेति सभगवान्महीध्रः नारायणाख्यःपर्वतः कंप्रलयजलमविशदित्यन्वयः तंविशिनष्टि उत्क्षिप्तवालउद्धृतपुच्छः । अन्यत्रोन्नतकपोलः वालंतुकपिलंवज्रंह्रीबेरंदीर्घरोमकमित्यभिधानात् ह्रीबेरंवा खेआकाशेचरतीतिखचरः उभयत्रसमानं कठोराःपरिदृढाःसटाबहलकेसरान्धुन्वन्कंपयन् अन्यत्रसटालताविशेषाः खराःपरुषारोमशारोमवतीत्वग्यस्यसतथोक्तः अन्यत्ररोमशःपिचुमंदःखरापिचुमंदस्यत्वग्यस्मिन्सतथा खुरैराहतमभ्रंयेनासौखुराहताभ्रःसंताडितमेघः अन्यत्रखुरैःशृंगैःसितशृंगोधवलदंष्ट्रः अन्यत्रस्पष्टं ईक्षायानेत्रस्यज्योतिस्ताराकनीनिकातयाविभासोविभासनंदीप्तिर्यस्यसतथोक्तः पद्धादर्शनाख्याभिज्ञालयाशोभमानः २९ घ्राणेनेंद्रियेणविजिघ्रन्गंधोपादानंकुर्वन्क्रोडापदेशोदेवकायोनि मित्तेनवराहः नतुसाक्षाद्वराहः किंतुस्वयंस्वतोध्वरांगोयज्ञमूर्तिःश्रीनारायणःपूर्वत्रपर्वतोपमत्वेनश्लेषोक्तिरत्रतुअशांतत्वद्योतनायेतिनपुनरुक्तिःअध्वरस्ययज्ञस्यअंगानिकुशादीनिसाधनानियस्मिन्सोध्वरांगइतिवा । अपदेशोलक्षणेस्यान्निमित्तव्याजयोरपीतियादवः ३० जलप्रवेशसमयेसमुद्रेणस्तुतिरेवाकारिनत्वाक्रोशइत्याशयेनाह सवज्रेति सउदन्वान्समुद्रो हेयज्ञेश्वरमांपाहीतिभावेनचुक्रोशजुहावोन्नादेत्यर्थः रक्षामार्थनायांकःक्लेशःप्राप्तइत्यतउक्तं वज्रकूटवद्योघनवद्दारिण्योपेतस्यांगस्यनिपातवेगेनविशीर्णोतिनिष्पिष्टःकुक्षिर्यस्यसतथा अतएवोदरवेदनयास्तनयन् शब्दंकुर्वन् आवर्तवदुत्सृष्टाऊर्ध्वंगताअतएवदीर्घाऊर्मयएवकरास्तैःउदरादिवेदनार्तःपुरुषोयथाशिरसिकरंनिधायआक्रोशति तथेतिलौकिकार्थः अध्यात्मस्तुतिरेवकृतेत्यर्थः ३१ खरतरतरणिकिरणपरितप्तलोकवराहवन्मह

उत्क्षिप्तवालःखचरःकठोरसटाविधुन्वन्खररोमशत्वक् ॥ खुराहताभ्रःसितदंष्ट्रईक्षाज्योतिर्बभासेभगवान्महीध्रः २९ घ्राणेनपृथ्व्याःपदवींविजिघ्रन्क्रोडापदेशःस्वयमध्वरांगः ॥ करालदंष्ट्रोप्यकरालदृग्भ्यामुद्वीक्ष्यविप्रान्गृणतोविशत्कम् ३० सवज्रकूटांगनिपातवेगविशीर्णकुक्षिस्तनयन्नुदन्वान् ॥ उत्सृष्टदीर्घोर्मिभुजैरिवार्तश्चुक्रोशयज्ञेश्वरपाहिमेति ३१ खुरैःक्षुरप्रैर्दरयंस्तदापउत्पारपारंत्रिरुरूरसायाम् ॥ ददर्शगांतत्रसुषुप्सुरग्रेयांजीवधानींस्वयमभ्यधत्त ३२ स्वदंष्ट्रयोद्धृत्यमहींविमग्नांसउत्थितःसंरुरुचेरसायाः ॥ तत्रापिदैत्यंगदयापतंतंसुनाभसंदीपिततीव्रमन्युः ३३ जघानरुंधानमसह्यविक्रमःसलीलयेभंमृगराडिवांभसि ॥ तद्रक्तपंकांकिततुंडगंडोयथागजेंद्रोजगतींविभिंदन् ३४

रैर्जलप्रवेशःकिंतुयदर्शनार्थंप्रावेशितदर्शनमनेनकृतमित्याह खुरैरिति उत्पारपारमितिक्रियाविशेषणं पारेतीरांतरेस्थितंजलंवायथोद्गतंभवतितथाक्षुरप्रैःक्षुरसाधर्म्यपूरयंतीतिक्षुरप्रैर्निशितैरित्यर्थः यद्वा स्वर्धचंद्रैः अर्धचंद्रःक्षुरप्रःस्यादितियादवः । खुरैस्तस्यसमुद्रस्यापोदरयन् भिदन्त्रिभिर्वेदैर्वेद्यतइतित्रिवरुः त्रिषुयुगेषुअवतारंवृणोतीतिवा गुरुशब्दवत्प्रक्रिया ढ्लोपेपूर्वस्यदीर्घोणइतिदीर्घः अग्रेसर्गवेलाप्यसुषुप्सुर्निद्रांकर्तुकामःसहरिर्यांजीवधानींसर्वप्राण्याधारभूतामभ्यधत्तजलस्योपरिनिहितवान् तांगांतत्ररसायांपातालेददर्शेत्यन्वयः वरुःसुगलरेखास्याद्वराहस्यचविस्तृतेत्यभिधानाद्वलित्रयांकितग्रीवोवा पारंवृणोतीतिपारवारः कर्मण्यणित्यण्प्रत्ययः पश्चादिप्राणिजातंतद्यथोद्गतंस्यात्तथेतिवा ३२ भगवतामहींदृष्ट्वाकिमकारीतितत्राह स्वदंष्ट्रयेति विमग्नांरसातलेबंदीगृहवत्स्थितांमहीं स्वदंष्ट्रयोद्धृत्यरसायाउत्थितःसआदिवराहः संरुरुचेउपर्यारुरोह रसाख्यैरसुरैःस्वभूतभूम्युन्नयनसमयेनिद्रितंकितत्राह तत्रापीति सहरिस्तत्रभूम्युद्धरणसमयेपिस्वंरुंधानंगदयापतंतंदैत्यमादिहिरण्याक्षंदंष्ट्रयाजघानेत्यन्वयः कीदृशः सुनाभवच्चक्रवत्संदीपिततीव्रमन्युःप्रज्वलितात्युग्रकोपोऽतएवासह्यविक्रमःमृगराट्सिंहइभंगजंयथातथा अंभसीत्यनेनरसातलात्तांकिंचिदूर्ध्वमागत्येतिसूचयति तस्यदीप्तिविशेषमाह तद्रक्तेति यथाजगतींतटभूमिंविभिंदन्तिर्यग्दंतप्रहारेणगोल्लिखन्तत्पंकांकिततुंडगंडोभवति तथादंष्ट्रयाहिरण्याक्षंहत्वा तस्यरक्तपंकेनांकिततुंडगंडउच्चकाशइतिशेषःअनेननविशेषणेन हिरण्याक्षोद्वौतत्रैकोदंष्ट्रयाहतइतरस्त्वन्येनापुषेनेति ज्ञापते ब्रह्मजस्तुहिरण्याक्षःप्रथमंदंष्ट्रयाहतः । सएवपार्षदाविष्टोद्वितीयःकर्णताडनात् । पूर्वंलयोदकेमग्नाद्वितीयंतेनमज्जिताम् । भुवमुद्धरतेवासौ

हरिणाक्रोडमूर्तिनेत्यवगंतव्यः अत्रैवोत्तरग्रंथेविदुरप्रश्नंपरिजिहीर्षुणाहरिणाहिरण्याक्ष एकएवव्यत्यस्योच्यते तद्दुष्टमोहनार्थमविविच्यकथनंदेवानांप्रियार्थंचेति तदुक्तं व्यत्यासेनापिचोच्यंतेअविवेकेन कुत्रचित्। दुष्टानांमोहनार्थायतत्रयत्रकथाःक्वचिदिति अविवेकोनामनवकुर्हरेरज्ञानं । सर्वज्ञस्यकुतोज्ञानंव्यासस्योदारकर्मणइतिवचनात् ३४ अयंहरिरेवनलोकवराहइतिज्ञापनायविरिंचप्रमुखानांदेवाना मुपपत्तिविधिवाक्ति तमालेति उत्क्षिपंतमुद्धरंतं अनुवाकैरियत्संख्याविशिष्टैर्वेदवाक्यैः ३५ उपस्थायकिंकृतंतत्राह जितंजितमिति त्रयीतनुंत्रिवेदप्रतिपाद्यांमूर्तिंपरिधुन्वते रोमजलत्यागायकंपमाना य निलिल्युर्निलीनाः तेतुभ्यम् ३६ अनेनाविष्णुरयंनलोकवराहइत्यस्यकिमायातमितितत्राह रूपमिति दुष्कृतात्मनामितिविशेषणेनसुकृतात्मनांसुदर्शनमितिध्वनितं अतइदमेवास्यपरब्रह्मत्वे मानंसूचितं अध्वरात्मकंयज्ञसाधनप्रसूतिकारणं अनेनापिनकेवलभूम्युद्धरणायकिंतुसकलयज्ञसाधनप्रसूतयेइदंरूपमितिसूचितं यद्वा यज्ञाख्यपरमात्मरूपं यज्ञोविष्णुर्देवतेतिश्रुतेः अनेनब्रह्मत्वंस्पष्टमुक्तंभ वति अयमात्माब्रह्मेतिच अस्ययज्ञात्मकत्वंस्पष्टयति छंदांसीत्यादिना सप्तच्छंदांसीत्यादयोयस्यतवत्वगादिषुवर्तंतेतेतुभ्यंनमइत्यन्वयः बर्हिर्दर्भः दृशिचक्षुषिचतुर्भिर्होतृभिःक्रियमाणंकर्मचातुर्होत्रं ३७ इडायज्ञपात्रं चमसश्चतुष्कोणसंनिवेशोयज्ञपात्रं प्राशित्रंयज्ञपात्रंपुरोडाशादिर्वा द्वादशसोमग्रहाः रसनेजिह्वायांक्रियायांच चर्वणंदंतैश्चर्वणं । चर्वणचूर्णनंदंतैरितियादवः ३८ आत्मजन्मतवजननं

**तमालनीलंसितदंतकोट्याक्ष्मामुत्क्षिपंतंगजलीलयांग ॥ प्रज्ञायबद्धांजलयोनुवाकैर्विरिंचमुख्याउपतस्थुरीशम् ३५ देवाऊचुः ॥ जितंजितंतेऽजितयज्ञभा वनत्रयींतनुंस्वांपरिधुन्वतेनमः ॥ यल्लोमगर्तेषुनिलिल्युरध्वयस्तस्मैनमःकारणसूकरायते ३६ रूपंतवैतन्ननुदुष्कृतात्मनांदुर्दर्शनंदेवयदध्वरात्मकम् ॥ छंदांसियस्यत्वचिबर्हिरोमस्वाज्यंदृशित्वंघ्रिषुचातुर्होत्रम् ३७ स्रुक्तुंडआसीत्स्रुवईशनासयोरिडोदरेचमसःकर्णरंध्रे ॥ प्राशित्रमास्येग्रसनेग्रहास्तुतेयच्च र्वणंतेभगवन्नग्निहोत्रम् ३८ दीक्षात्मजन्मोपसदःशिरोधरस्त्वंप्रायणीयोदयनीयदंष्ट्रः ॥ जिह्वाप्रवर्ग्यस्तवशीर्षणंक्रतुःसभ्यावसथ्यांचितयोऽसवोहिते ३९ सोमस्तुरेतःसवनान्यवस्थितिःसंस्थाविभेदास्तवदेहधातवः ॥ सत्राणिसर्वाणिशरीरसंधिस्त्वंसर्वयज्ञक्रतुरिष्टिबंधनः ४० नमोनमस्तेखिलमंत्रदेवताद्रव्याय सर्वक्रतवेक्रियात्मने ॥ वैराग्यभक्त्यात्मजयानुभावितज्ञानायविद्यागुरवेनमोनमः ४१**

दीक्षाव्रतसंग्रहः उपसदः उपसन्नामानोयज्ञविशेषाः उपसच्चिविशेषावाशिरोधोग्रीवात्वंप्रायणीयोदयनीयदंष्ट्रः यस्यदंष्ट्रयोरुपक्रमावसानकर्मणीइष्टीप्रायणीयोदयनीयसंज्ञेवर्तेतेसतथोक्तः । क्रतुःसंकल्पः क्रतोरितिपाठेक्रतोःसत्यसंकल्पस्यसर्वक्रत्वाधारस्यवातवशीर्षकंशिरः सभ्यावसथ्यौ अग्निचितय सप्तकृतवस्तवासवः प्राणाजन्मभूमयःचितयइतीष्टकाचयनविशेषावा ३९ सोमोलता प्रातरादित्रीणिसवनानि अवस्थितिर्निश्चलत्वेनगतिनिवर्तनं संस्थाविभेदाअग्निष्टोमादयःसप्त । अग्निष्टोमादयःसंस्थाभेदाःसप्तास्यतंतवइतियादवश्च । त्वगादिसप्तदेहधातवः । अत्रश्लोकद्वयेसप्त सुप्रथमेतिसूत्रात् प्रथमायाःसप्तमीत्वंयुक्तं त्वचीत्यादिसप्तमीप्रयोगाच्च । सर्वाणिसत्राणिबहुभिःसंभूयकर्तव्यानिदीर्घकालीनानियज्ञविशेषकर्माणि । किंबहुनोक्तेनेत्युपसंहरति त्वंसर्वेति एकाहिकद्व्याहि कादिसर्वयज्ञस्थापकेच्छावान् इष्टिबंधनः तवदेहबंधनेसंहननेइष्टिःप्रतिपत्तिव्यादिषुक्रियमाणकर्मविशेषोवर्ततइत्यर्थः ४० उक्तानुक्तविशेषणानिसमुच्चीयविशिषति अखिलेत्यादिना सत्वाप्रदत्वे नमंत्रादिषुसन्निहितत्वादखिलमंत्रदेवताद्रव्यायसर्वक्रतवःसंकल्पायस्माद्भवंतिससर्वक्रतुःतस्मैक्रियात्मनेकर्मकारयितृत्वेनतद्व्याप्ताय आत्मजयात्मनस्तवप्रसादाज्जातयावैराग्यजृंभितभक्त्यानुभावितंस्व स्वयेत्यत्तानुत्तारेणसमुत्पादितंस्वविषयंज्ञानंयेनसतथातस्मै वेदादिपरविद्यागुरवे ४१

पूर्वंयनाथत्वेनविलक्षमित्यनेनस्त्रीणामल्पवत्क्रशत्वंध्वनितमधुनासनाथत्वेनपर्वताद्यवयवपुष्टामूर्मिर्विराजतइतिस्तुवंतीत्याह दंष्ट्राग्रकोटयेति दतादंतेन मतंगजेंद्रस्यसपत्रपद्मिनी सपत्राबिसिनी नलि न्यांतुबिसिनीपद्मिनीमुखाइत्यमरः अनेनहरेर्धरणीधरेतिनामसार्थकमितिसूचितं ४२ इतरसंयोगेनेतरेषांविराजनंहरेस्त्वात्मनैवेतिभावेनस्तुवंतीत्याह त्रयीमयमिति सूपंसुकं घृतेनदत्तान्यका स्विविराजते चकास्तृदीप्ताविति धातुरदादिः शृंगेणोढेनघनेनविभ्रमः कांतिविशेषः ४३ ब्रह्माद्यभीष्टंजानताप्येनाकिंकरोमीतिहरेःप्रश्नात्प्रागेनस्वाभीष्टंविज्ञापयंतीत्याह संस्थापयेति जगतांजंग मानां तस्थुषांस्थावराणां मातरंतवपत्नीमेनांसंस्थापयजलस्योपरीतिशेषः कीदृशस्त्वंपितासिसर्वस्येतिशेषः यद्वा त्वंजगतांपितासि तस्थुषांमातरमेनामितिस्वत्कृतोपकारप्रत्युपकारमन्यदपश्यंतोव यमियंनमस्कारंकुर्मइतिविज्ञापयंतीत्याह विधेमेति उभयोर्मातृत्वंपितृत्वंचतस्मादितिव्यंजयंतोविशिषंतीत्याह यस्यामिति अनेनभूमेर्माहात्म्यंचसूचितं अरणिरग्निमथनदारुविशेषः ४४ त्वदन्येनेदं कर्मनिरूपयितुमशक्यं किंपुनःकरणमितिविज्ञापयंतीत्याह कइति उद्विबर्हणमुद्धरणमिदमस्माकमेवाश्चर्यंनतवेतिश्रावयंतीत्याह नेति इतोप्यधिकोविस्मयोस्तीतिविज्ञापयंतीत्याह यइति अतिविस्म योतिशयितविस्मयः ४५ वाचातवगुणगणानांसंकीर्तनेनमनसासंस्मरणेनअंतःशुद्धाः बहिस्तवसटाग्रसमुद्भूतशुद्धजलबिंदुभिः पावितावयमितिविज्ञापयंतीत्याह विधुन्वतेति तृतीयाषष्ठ्यर्थे विधुन्व

दंष्ट्राग्रकोटयाभगवंस्त्वयाधृताविराजतेभूधरभूःसभूधरा ॥ यथावनान्निःसरतोदताधृतामतंगजेंद्रस्यसपत्रपद्मिनी ४२ त्रयीमयंरूपमिदंचसौकरंभूमंड लेनाथदताधृतेनते ॥ चकास्तिशृंगोढघनेनभूयसाकुलाचलेंद्रस्ययथैवविभ्रमः ४३ संस्थापयैनांजगतांसतस्थुषांलोकायपत्नीमसिमातरंपिता ॥ विधे मयस्यैनमसासहत्वयायस्यांस्वतेजोग्निमिवारणावधाः ४४ कःश्रद्दधीतान्यतमस्तवप्रभोरसांगतायाभुवउद्विबर्हणम् ॥ नविस्मयोसौत्वयिविश्वविस्मये योमाययेदंससृजेतिविस्मयः ४५ विधुन्वतावेदमयंनिजंवपुर्जनस्तपःसत्यनिवासिनोवयम् ॥ सटाशिखोद्धूतशिवांबुबिंदुभिर्विमृज्यमानाभृशमीशपावि ताः ४६ सवैबतभ्रष्टमतिस्तवैषतेयःकर्मणांपारमपारकर्मणः ॥ त्वद्योगमायागुणयोगमोहितोविस्रंसतांनोभगवन्विधेहिशम् ४७ ॥ मैत्रेयउवाच ॥ प्रत्युप स्थीयमानस्तैर्मुनिभिर्ब्रह्मवादिभिः ॥ सलिलेस्वखुराक्रांतउपाधत्तावितावनिम् ४८ सइत्थंभगवानुर्वींविष्वक्सेनःप्रजापतिः ॥ रसायालीलयोन्नीताम प्सुन्यस्ययर्यौहरिः ४९ यएवमेतांहरिमेधसोहरेःकथांसुभद्रांकथनीयमायिनः ॥ शृण्वीतभक्त्याश्रवयेतवोशतींजनार्दनोऽस्याशुहृदिप्रसीदति ५० त स्मिन्प्रसन्नेसकलाशिषांप्रभौकिंदुर्लभंताभिरलंलवात्मभिः ॥ अनन्यभक्त्याभजतांगुहाशयःस्वयंविधत्तेस्वगतिंपरःपुमान् ५१

तस्तव यद्वा विधुन्वतात्वयापाविताःतत्कथमित्यतोविशिषंति सटेति त्वयापाविताइतियत्सटाग्रशिवांबुबिंदुभिरिति ४६ वराहस्यगंडशीलाद्युपमत्वेनपरिच्छिन्नत्वात्कर्मणोपितथात्वान्नायंविष्णुरित्या शंक्यतथामन्वानोभ्रष्टमतिरित्याह, सवाइति यःपुरुषोऽपारकर्मणोनंतविक्रमस्यतवकर्मणांभूम्युद्धरणादिलक्षणानांपारमंतमेषतेसम्यगिच्छति सभ्रष्टमतिर्वाइत्यनेननरकपातंलक्षयति नोस्माकंतादृश ज्ञानेनदुःखोदर्कोलोकोमाभूत्किंतुसुखोदर्कएवस्यादितिप्रार्थयंतइत्याह त्वद्योगेति तवबंधकशक्त्याभ्रष्टमनस्कत्वेनविस्रंसतांगलिततत्त्वज्ञानानांनःशंसुखसाधनज्ञानसाध्यंलोकंविधेहीत्यन्वयः ४७ भक्तव त्सलोहमितिभावयंस्तदुक्तंकरोतिहरिरित्याह प्रत्युपस्थीयमानइति ४८ हरिस्ततःपरंकिंचकारेतितत्राह सइत्थमिति प्रजापतिःप्रजापालनशीलः उन्नीतामुद्धृताम् ४९ अस्यवराहस्यविक्रमस्यपु रुषार्थैकहेतुत्वादयंहरिरेवेतिभावेनतच्छ्रवणादिफलमाह यइति हरिमेधसःसंसारसंहारिबुद्धेःकथनीयमायिनःकथनयोग्यसामर्थ्यस्य उशतीमभीष्टदोग्ध्रीम् ५० तत्प्रसादफलमाह तस्मिन्निति लवात्म भिर्लवकालरूपाभिःपश्चात्क्षयंवरीभिस्ताभिःस्वर्गाद्याशीर्भिःप्रसादोपिगाथावच्छ्रवणादिनानस्यादितिध्वनयन्नाह अनन्यभक्त्येति ५१

ननुकंचित्कालंहरिकथांनिषेव्यपश्चान्मुंचंतोदृश्यंतेतत्रसारत्वंकथमित्याशंक्यतेपशुकल्पाइत्याह कोनामेति नामशब्दःकुत्सनेकोनाम कःकुत्सितः। पुराशब्दःपुराणेनिकटातीतेअनागतेचवर्त्तते पुराणकथानांनिकटातीतकथानामनागतकथानांचमध्येसारभूतांतामितिशेषः। प्रबंधेनिकटातीतेपुराणेनागतेपुरेतियादवः। सुपूजितेमोक्षेचतेससुखंशपयतीतिवा सुधा। डुधाञ्धारणपोषणयोर्धेट्पानइतिधातुः। भवापहांसंसारविनाशनींभद्रावहांच पपौशशाविविप्राच्याइतिसूत्रात्पकारवकारः भवोभद्रइतियादवः नरेतरंपशुं ॥ ५२ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांचतुर्दशोध्यायः ॥ १४ ॥ रुद्रादीनांहर्याज्ञाकारित्वेनतद्वशाविरुपमचरितस्वातंत्र्यगुणाकरेहरौमनोरतिः कर्तव्यापुरुषेणेतिविधीयतेस्मिन्नध्याये। तत्रादौविदुरःपुनर्मुनिनावर्णितंवराहचरितमाकर्ण्यहरिकथायामलंबुद्धिरहितोविशेषतःश्रोतुकामोमैत्रेयंपृच्छतीतिशुकःपरीक्षितंकथयाति निशम्येति समुद्यतांजलिर्हरिमुद्दिश्येतिशेषः कुतएवमवगतमित्यतउक्तं नचेति अनेनहरिकथाश्रवणतृष्णातिशयंध्वनयातिततोहरिप्रसादेनहरिकथाश्रवणंस्यादिति शिरसिमुकुलितकरकमलइत्यर्थः कथाश्रवणविघ्नपरिहारायधृतव्रतइति १ उक्तकथांशेवक्तव्यंनास्तीतिद्योतयितुंश्रुतमनुवदतिविदुरइत्याह तेनेति येनलयोदकेमग्नाभूरुद्धृता

कोनामलोकेपुरुषार्थसारवित्पुराकथानांभगवत्कथासुधाम् ॥ आपीयकर्णांजलिभिर्भवापहामहोविरज्येतविनानरेतरम् ५२ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेचतुर्दशोध्यायः ॥ १४ ॥ श्रीशुकउवाच ॥ निशम्यकौषारविणोपवर्णितांहरेःकथांकारणसूकरात्मनः ॥ पुनःसपप्रच्छसमुद्यतांजलिर्नचातितृप्तोविदुरोधृतव्रतः १ विदुरउवाच ॥ तेनैवचमुनिश्रेष्ठहरिणायज्ञमूर्तिना ॥ आदिदैत्योहिरण्याक्षोहतइत्यनुशुश्रुम २ तस्यचोद्धरतःक्षोणींस्वदंष्ट्राग्रेणलीलया ॥ दैत्यराजस्यचब्रह्मन्कस्माद्धेतोरभून्मृधः ३ मैत्रेयउवाच ॥ साधुवीरत्वयापृष्टमवतारकथांहरेः ॥ यत्त्वंपृच्छसिमर्त्यानांमृत्युपाशविशातनीम् ४ ययोत्तानपदःपुत्रोमुनिनागीतयार्भकः ॥ मृत्योःकृत्वैवमूर्ध्न्यंघ्रिमारुरोहहरेःपदम् ५ अथात्रापीतिहासोयंश्रुतोमेवर्णितःपुरा ॥ ब्रह्मणादेवदेवेनदेवानामनुपृच्छताम् ६ दितिर्दाक्षायणीक्षत्तर्मारीचंकश्यपंपतिम् ॥ अपत्यकामाचकमेसंध्यायांहृच्छयार्दिता ७ इष्ट्वाग्निजिह्वंपयसापुरुषंयजुषांपतिम् ॥ निम्लोचत्यर्कआसीनमग्न्यागारेसमाहितम् ८ दितिरुवाच ॥ एषमांत्वत्कृतेविद्वन्कामआत्तशरासनः ॥ दुनोतिदीनांविक्रम्यरंभामिवमतंगजः ९

रितैवरूपांतरेण २ तद्श्रोतव्यांशंपृच्छति तस्येति रणोत्पत्तौमहतापराधेनभवितव्यं तादृशोपराधःकइतिप्रश्नार्थः ३ मैत्रेयोविदुरप्रश्नंस्तौतीत्याह साध्विति साधुसत्सभासूचितं वेहरेरिच्छायांरमतइतिवीरः पुरुषार्थोपयोगित्वात्साधुत्वमस्येत्याह यत्त्वमिति ४ नकेवलंसंसारलक्षणमृत्युपाशविच्छेदनीहरिकथाअपित्वैहिकामुष्मिकसिद्धिकरीतिनिदर्शयति ययेति मुनिनानारदेनार्भकः पंचवर्षः अस्याःप्रपंचश्चतुर्थेवक्ष्यते ५ श्रोतॄणाश्रद्धातिशयजननार्थंविदुरप्रश्नपरिहारत्वेनपुरावृत्तंकथयाति अथेति अथशब्देनपूर्वंत्रब्रह्मपुत्रोहिरण्याक्षोवराहहरिणाहतोनतुदितिपुत्रः सएवपार्षदावितोनिहन्यतइतिकथाविशेषआरभ्यतइतिसूचयति वधस्यैककर्तृत्वाद्दुष्टजनमोहनार्थत्वाच्च एवंकथनंसंभावितमित्यपिपदेनवक्ति श्रुतोवक्ष्यतइतिशेषः ६ कोयमितितत्राह दितिरिति दाक्षायणीदक्षस्यपुत्री नाम्नादितिः मारीचंमरीचेःपुत्रं रामवैरिमारीचव्यावृत्त्यर्थंकश्यपमिति हृच्छयःकामः ७ मारीचविशिनष्टि इष्ट्वेति अग्निरेवजिह्वायस्यसतथातंयजुषांपतिं यजुर्वेदगतमंत्राणांविषयत्वेनस्वामिनं निम्लोचतिअस्तंगच्छति अग्न्यागारेऽग्निगृहे ८ मनसैवचकमेनतुवाक्पूर्वकमितितत्राह एषइति त्वत्कृतेत्वामुद्दिश्य रंभाकदलीम् ९

नकेवलंविषयभोगेच्छुरहंत्वांयाचेकिंतुप्रयोजनांतरेच्छयापीत्याह तद्भवानिति प्रजावतीनांपुत्रवतीनां मयिअयुंक्तामितिपदच्छेदः संभ्रमादिकाराशिराअकारोनलुप्तः १० अस्मदनुग्रहात्किंतवप्रयोजन मितितत्राह भर्तरीति सप्तपीपंचम्यर्थे भर्तुराप्तोरुमानानामित्यर्थः मानमपिपुत्रावाप्तिलक्षणमित्याशयेनाह पतिरिति ११ श्रुतगुणत्वेनस्नेहोदर्कयामयाभवान्वृतइत्यतोपिमदनुग्रहःकार्य मितितत्राह भर्तरीति इत्याशयेनाह पुरेति १२ भावंहृद्गताभिप्रायं अददाददात् १३ उपसंहरति अथेति अथतस्मात्भवतोमहत्त्वमत्वान्ममभवच्छरणगमनंसफलंस्यात् तथाहृष्टत्वादितिभावेनाह आप्तेति महीयसि पुरुषे आप्तत्वेनोपसर्पणंशरणगमनम् १४ एवंप्रार्थ्यमानामेनामगणय्यमारीचःकिंतूष्णीमभूच्चकिंचिदुत्तरमवददुतेतिसंशयोमाभूदितिभावेनाह इतीति १५ यतोयस्याभार्यायात्रैवर्गिकीत्रयाणां धर्मार्थकामानांसंबंधिनीसिद्धिः १६ एतदेवविशदयति सर्वाश्रमानिति कलत्रवान्प्रशस्तभार्यायुक्तः स्वाश्रमेणगार्हस्थ्याश्रमेणान्नदानादिनाब्रह्मचर्यादिसर्वाश्रमानुपादायसंभाव्यसंसाराख्यव्यसनसमुद्र

तद्भवान्दह्यमानायांसपत्नीनांसमृद्धिभिः ॥ प्रजावतीनांभद्रंतेमय्यायुंक्तामनुग्रहम् १० भर्तर्याप्तोरुमानानांलोकानाविशतेयशः ॥ पतिर्भवद्विधोयासां प्रजयाननुजायते ११ पुरापितानोभगवान्दक्षोदुहितृवत्सलः । कंवृणीतवरंवत्साइत्यपृच्छतनःपृथक् १२ सविदित्वात्मजानांनोभावंसंतानभावनः ॥ त्रयोदशाददात्तासांयास्तेशीलमनुव्रताः १३ अथमेकुरुकल्याणकामंकंजविलोचन ॥ आर्तोपसर्पणंभूमन्नमोघंहिमहीयसि १४ इतितांवीरमारीचःकृ पणांबहुभाषिणीम् ॥ प्रत्याहानुनयन्वाचाप्रवृद्धानंगकश्मलाम् १५ एषतेऽहंविधास्यामिप्रियंभीरुयदिच्छसि ॥ तस्याःकामंनकःकुर्यात्सिद्धिस्त्रैवर्गि कीयतः १६ सर्वाश्रमानुपादायस्वाश्रमेणकलत्रवान् ॥ व्यसनार्णवमत्येतिजलयानैर्यथार्णवम् १७ यामाहुरात्मनोह्यर्धंश्रेयस्कामस्यमानिनि ॥ यस्यां स्वधुरमध्यस्यपुमांश्चरतिविज्वरः १८ यामाश्रित्येंद्रियारातीन्दुर्जयानितराश्रमैः ॥ वयंजयेमहेलाभिर्दस्यून्दुर्गपतिर्यथा १९ नवयंप्रभवस्तांत्वामनुकर्तुं गृहेश्वरि ॥ अप्यायुषावाकार्त्स्न्येनयेचान्येगुणगृध्नवः २० अथापिकाममेनंतेप्रजायैकरवाण्यलम् ॥ यथामांनातिवाचंतिमुहूर्तंप्रतिपालय २१ एषाघोरत माबेलाघोराणांघोरदर्शना ॥ चरंतियस्यांभूतानिभूतेशानुचराणिह २२ एतस्यांसाध्विसंध्यायांभगवान्भूतभावनः ॥ परीतोभूतपर्षद्भिर्वृषेणाटतिभू तराट् २३ श्मशानचक्रानिलधूलिधूम्रविकीर्णविद्योतजटाकलापः ॥ भस्मावकुंठामलरुक्मदेहोदेवस्त्रिभिःपश्यतिदेवरस्ते २४

मत्येतीत्यन्वयः स्वधुरंस्वव्यापारभारमध्यस्यानिक्षिप्य १८ इतोपित्वंसंभाव्येत्याह यामिति इंद्रियाण्येवारातयःशत्रवइंद्रियारातयस्तान्इंद्रियाणामरातयोविषयास्तानितिवा एवंचेदृष्टांतोपिसंगच्छ तेउभयेषामपिबाह्यत्वात् पूर्वत्रसंभावनामात्रतयोक्तम् १९ वक्ष्यमाणस्ववाक्यार्थंकारयितुंमुनिःस्तुतिंकरोति नवयमिति भवंतोनप्रभवश्चेदन्योभवादृशोनेतितत्राह येचेति येन्येचगुणगृध्नवोगुणलुब्धाः पुरुषास्तेपिभार्यामनुकर्तुंनप्रभवइत्यर्थः २० किमितिस्तोत्रेणनिःप्रयोजनेनेतिमाभूच्छंकेत्याह अथापीति यद्यप्येवमथापितर्हिकिमितिकालःक्षिप्यतेइतितत्राह यथेति अतिवाचंतिनिंदंतितर्हिदंवच नगुडजिह्विकाकल्पमित्यतउक्तं मुहूर्तमिति प्रतिपालयप्रतीक्षस्व २१ प्रतीक्षायांकिंकारणमत्राह एषेति घोराणांबेलेत्युक्तंस्पष्टयति चरंतीति २२ भवत्सामर्थ्येनभूतानिकिंकुर्वंतीतितत्राह ए तस्यामिति २३ अस्मात्पशुपतेरपिकिंभयमित्याशंक्यतस्यादस्मदवधदर्शनेभयमित्याशयवानाह श्मशानेति श्मशानेविद्यमानश्चक्रानिलोवात्यावायुःश्मशानमंडलवर्तीवातस्तस्माद्धुतपन्नयाधूल्याधू

ध्रोधूम्रवर्णः विशीर्णश्चविद्योतश्चजटाकलापोयस्यसतथा विशिष्टोद्योतःप्रकाशोयस्यसतथा भस्मनावकुंठोऽवरूपणंयस्यसतथोक्तः अमलरुक्मरंजतभस्मावकुंठश्चरजतवद्धवलोदेहोयस्यसतथा त्रिभि र्नेत्रैरितिशेषः तेतवदेवरःसहोदर्यःसत्याःपतिः २४ गर्भिणीवधनोदार्थपिशाचचर्यायाह यंआज्ञाकारित्वेनहरेःप्रियत्वादतस्तदप्रियंतस्याप्यप्रियमितीदानीमिदंनकार्यमित्यभिप्रेत्यतस्यहरेरतिशायितमा हात्म्यमाह नयस्येति अतेहरिप्रीतिकरैर्यस्यचरणापविद्धांपदातिरस्कृतांभुक्तभोगामप्यजांगृहभार्यापुत्रादिरूपांप्रकृतिशब्दवाच्यांश्रियमाशास्महेइच्छामःबतेत्यनेनहरिमाहात्म्यमाश्चर्यमित्याश्वादयति २५ अविद्यालक्षणंपटलंदर्शनप्रतिबंधकनेत्रदोषंविभित्सवोभेत्तुकामामनीषिणोयस्यानवद्याचरितंजगत्सृष्ट्यादिकर्मगृह्णंति श्रवणादिनेतिशेषः यश्चहरिर्निरस्तसाम्यातिशयस्तस्यहरेराज्ञयादेवंद्रादिस तामाश्रयोहरःपिशाचचर्यामचरादित्यन्वयः। पिशाचचर्यामचरद्रुद्रोविष्ण्वाज्ञयैवतु। गर्भिणीवधनोदार्थमहोविष्णुर्विडंबकादितिवचनबलान्मध्यहर्याज्ञयेतिपदमध्याह्रियते पशुपतावुक्तगुणानामसंभवाच्च अहंरुद्रायधनुरातनोमीतिपराधीनतामतीतेश्च २६ ननुकेचिद्धरेश्चरितमपिनिंदंतितत्कथमित्याशंक्य तेतमःप्राप्तियोग्याअसुरजनाइति भावेनाह हसंतीतियैःशुनोभोजनमन्नमिदशरीरंवस्त्रादिभिःस्वात्म तयानिजस्वरूपतयाउपलालितंतेपुरुषाःसमीहितंविडंबनरूपचेष्टाविशेषमविदुषोऽविद्वांसोऽज्ञानवंतोऽतएवदुर्भगाःदुःखरूपतमःप्राप्तुंयोग्याःस्वात्मनिस्वरूपएवरतस्याचरितमुपनयात् ज्येष्ठविवाहाच्चपूर्वं पुत्रोत्पत्त्यादिरूपंहसंति नदेवचरितंचरेदितिद्योतकोहिशब्दः २७ इतोपिब्रह्मरुद्राद्यधिकस्यमाहिमापरमात्मेत्याह ब्रह्मादयइति ब्रह्मादयोदेवायेनहरिणाकृतंधर्मसेतुंतदाज्ञयापालयंति इतितत्कृत

नयस्यलोकेस्वजनःपरोवानात्याद्दतोनोतकश्चिद्विगर्ह्यः ॥ वयंव्रतैर्यच्चरणापविद्धामाशास्महेजांबतभुक्तभोगाम् २५ यस्यानवद्याचरितंमनीषिणोगृह्णं त्यविद्यापटलंबिभित्सवः ॥ निरस्तसाम्यातिशयोहरःस्वयंपिशाचचर्यामचरत्सतांगतिः २६ हसंतियस्याचरितंहिदुर्भगाःस्वात्मन्रतस्याविदुषःसमीहि तम् ॥ यैर्वस्त्रमाल्याभरणानुलेपनैःश्वभोजनंस्वात्मतयोपलालितम् २७ ब्रह्मादयोयत्कृतसेतुपालायत्कारणंविश्वमिदंचमाया ॥ आज्ञाकरीतस्यपिशा चचर्याअहोविभूम्नश्चरितंविडंबनम् २८ मैत्रेयउवाच ॥ एवंसंवेदितामर्त्रामन्मथोन्मथितेंद्रिया ॥ जग्राहवासोब्रह्मर्षेर्वृषलीवगतत्रपा २९ संविदित्वाथभार्या यास्तन्निर्बंधंविकर्मणि ॥ नत्वादिष्टायरहसितयाथोपविवेशह ३० अथोपस्पृश्यसलिलंप्राणानायम्यवाग्यतः ॥ ध्यायन्जजापविरजंब्रह्मज्योतिःसनातन म् ३१ दितिस्तुव्रीडितातेनकर्मावद्येनभारत ॥ उपसंगम्यविप्रर्षिमधोमुख्यभ्यभाषत ३२

सेतुपालाःइदंविश्वंयोहरिःकारणंनिमित्तंयस्यतयत्कारणंतत्कारणत्वंचमाययास्वेच्छयानपराधीनतयाहिशब्देनसाहिकर्मफलोज्झितइतिनानंसूचयति तस्यहरेराज्ञांकरोतीतिआज्ञाकरी केयंशिवस्य पिशाचचर्या हरेराज्ञयाशिवःपिशाचचर्यामकरोदित्युक्तंभवति ततःकिंतत्राह अहोइति विभूम्नःपरिपूर्णस्यहरेर्विडंबनंलोकानुकारिरूपंचरितमहोजगत्पूज्यान्रुद्रादीनपिस्वाज्ञाकर्मणिप्रवर्तयतीति अत्ररुद्रविषयत्वेनयथास्थितव्याख्यानस्यानुपपत्तिरुक्तेतिनेहप्रपंच्यते २८ हरेर्माहात्म्यंदुरवबोधंयदैवंज्ञापितया।दित्यापापकर्मणिप्रवृत्तमितिभाववान्मैत्रेयएवमुक्तपातयाकिमकारीतिवैदुरीमनःशकांप रिहरन्नाह एवमिति संविदितासम्यग्ज्ञापिता वासःपरिधानम् २९ निर्बंधंदुराग्रहं दिष्टायकर्मसाक्षिणेदेवाय। निर्वेशउपभोगःस्यादुपवेशस्तुमैथुनमित्यभिधानं। मत्यारंभेप्रसिद्धेहेत्यभिधानाद्धेत्य नेनमत्यारंभंसूचयति ३० अप्सरोमुग्धमुनिवदाकल्पमारीचेनतयोपविष्टःकिंनेत्याह अथेति अथवीर्यपातानंतरमेवाचम्यसुप्तंतेनाकिमत्राह ध्यायन्निति ज्योतिःस्वज्योतीरूपंविरजंकज्जलादि रजोमलविधुरंब्रह्मध्यायन्तून्नातंनंप्रणवनादेनसहितंब्रह्मगायत्र्यात्मकंमंत्रंजजापेत्यन्वयः ३१ दित्यापुनश्चकिंकार्यमभूदथाकिमितिगर्वीभूयाऽस्थत्तांक्रियांतरमारब्धमुतेतितत्राह दितिस्त्विति स्वकर्म प्रत्यालोचनावद्येन ३२

स्वकृतपापकर्मप्रतीकारोपायमाह नमइति भूतानामृषभइत्यस्यव्याख्यानंपातिरीरिति अंहसमपराधम् ३३ समस्तापराधानांप्रतीकारोनमस्कारादन्योनास्तीतिमत्वातमेवतद्दोषनिरासपटुगुण विषयत्वेनकरोति नमइति रुद्रीयापराधलक्षणरोगद्रावकाय रोदनाद्रुद्रइतिशिशुस्वभावोनयुक्तइत्याह महतइति तस्यलोकानुकरणार्थत्वान्नदोषायस्यादितिभावः यक्षादेरपिमहत्त्वादितिअ तउक्तं देवायेति तस्यापिदेवयोनित्वादित्यतउक्तं उग्रायेति उद्धृतंसर्वंग्रसतीत्युग्रस्तस्मै तर्ह्ययंसर्वभक्षकोनतुनिजाभीष्टवर्षीत्यतउक्तं मीढुषइति मिहसेचनइतिधातुःस्वयंसुखित्वेनवर्ततेचेन्निजायसुखद द्रातीति तत्कथमित्यतःशिवायेति अनेनप्रसिद्धमामकरणेनकृत्यकर्तरिन्यस्तदंडायतह्रिरुद्रकर्तरिधृतदंडायेतितत्तद्योग्यतातिरेकेणक्रियांनकरोतीत्युक्तं उभयार्थसूचकविशेषणमाह मन्यवेमनन्दशी लायक्रोधात्मनेवा गुणदोषौमत्वानिग्रहानुग्रहौकरोतीति अनेनइमारुद्रायस्थिरधन्वनेगिरःक्षिप्रेषवेदेवायस्वधाव्नेइत्यादिमंत्रोदर्शितः ३४ फलितमाह सनइति भामीरीतिभीमःप्रसादकर्तृत्वेहेतु माह व्याधस्येति व्याधिंहिंसायामितिधातोःसंततहिंसाशीलस्य अपिपदेनकैमुत्यलक्षणोहेतुरुक्तः ॥ ३५ ॥ गर्भःसर्वथारक्षणीयइतिलौकिकीलोक्यातामनुसरंतीमाशासानांकाययमानांप्रवेपतींकंपमा

नमेगर्भमिमंब्रह्मन्भूतानामृषभोवधीत् ॥ रुद्रःपतिर्हिभूतानांयस्याकरवमंहसम् ३३ नमोरुद्रायमहतेदेवायोग्रायमीढुषे ॥ शिवायन्यस्तदंडायधृत दंडायमन्यवे ३४ सनःप्रसीदताद्भामोभगवानुर्वनुग्रहः ॥ व्याधस्याप्यनुकंप्यानांस्त्रीणांदेवःसतीपतिः ३५ ॥ मैत्रेयउवाच ॥ स्वगर्भस्याशिषंलो कयामाशासानांप्रवेपतीम् ॥ निवृत्तसंध्यानियमोभार्यामाहप्रजापतिः ३६ ॥ कश्यपउवाच ॥ अप्रायत्यादात्मनस्तेदोषान्मौहूर्तिकादुत ॥ मन्निदे शातिचारेणदेवानांचैवहेलनात् ३७ भविष्यतस्तवाभद्रावभद्रेजाठराधमौ ॥ लोकान्सपालांस्त्रींश्चंडौमुहुराक्रंदयिष्यतः ३८ प्राणिनांहन्यमानानांदी नानामकृतागसाम् ॥ स्त्रीणांनिगृह्यमाणानांकोपितेषुमहात्मसु ३९ तदाविश्वेश्वरःक्रुद्धोभगवान्लोकभावनः ॥ हनिष्यत्यवतीर्यासौयथाद्रींञ्छतप र्वधृक् ४० ॥ दितिरुवाच ॥ वधंभगवतासाक्षात्सुनाभोदारबाहुना ॥ आशासेपुत्रयोर्मह्यंमाक्रुद्धाद्ब्राह्मणात्प्रभो ४१ नब्रह्मदंडदग्धस्यनभूतभयदस्य च ॥ नारकाश्चानुगृह्णंतियांयांयोनिमसौगतः ४२ कश्यपउवाच ॥ कृतशोकानुतापेनसद्यःप्रत्यवमर्शनात् ॥ भगवत्युरुमानाच्चभवेमय्यपिचादरात् ४३

नाम् ३६ आत्मनोमनसोऽप्रायत्यात् उपशमनलक्षणप्रयत्नाभावात्उपवायाख्यदोषान्मन्निर्देशातिचारेणमदाज्ञातिक्रमणेनहेलनादवज्ञानात् ३७ जाठराधमौपुत्राधमौअधमत्वमुपपादयति लोकानिति ३८ प्राणिनांहन्यमानानांसनामकृतापराधानांस्त्रीणांनिगृह्यमाणानांसतीनांमहापुरुषेषुकोपितेषुसत्सु ३९ शतपर्वधृक्देवेंद्रः ४० भर्त्रैवमुक्तादितिःकिमाहेतितत्राह वधमिति सुनाभेनचक्रेणयुक्तःउदा रोमहान्बाहुर्यस्यसतथोक्तः । उदारोमहतिख्यातइतियादवः । तेनमह्यंममाशासेइच्छामि किंतुविशेषोस्तीत्याह माक्रुद्धादिति ४१ ब्रह्मशापेनहतस्यकोदोषइतितत्राह नब्रह्मेति एतादृशःकोऽप्यस्तीतितत्राह नभूतेति नारक्यःनरकेपच्यमानाःप्रजाःअसौब्रह्मशापदग्धभूतभयदोवा चशब्दोवार्थे ४२ सुनाभायुधात्पुत्रयोर्वधंसद्गतिमाशासइतिपत्न्याभिलषितंतत्तद्भक्तस्य नत्वभक्तस्यायोग्यस्यासुरस्य तदुक्तं । विष्णु हस्तवधाल्लोकोभक्तस्यान्यस्यनकचित् । तथाप्यसुरयोरायनविविकंकचित्कचिदित्याशयवान्कश्यपःप्रकारांतरेणतयोःसद्गतिःस्यादितिध्वनयन्नुत्तरंवक्ति कृतशोकेति कृतपापकर्मनिमित्तशोकाज्जाते नानुतापेनपश्चात्तापेनतवपुत्रस्यहिरण्यकशिपोःपुत्राणांमध्येसतांसंमतएकःपुत्रोभवितासतवपुत्रस्यसद्गतेर्हेतुःस्यादितिशेषः तदुक्तं हिरण्यकशिपुश्चापिभगवन्निंदयातमइत्यादि । नपुनर्मात्राद्यपिनादेःसद्गतिः किंतुनिर्वैरादिगुणविशिष्टादितिभावेनतद्गुणमाह गायंतीति भगवद्यशसोविनाभूतत्वात्समग्रमित्युक्तम् ४३

४४ साधवोयस्यप्रह्लादस्यशीलंशमादिस्वभावमनुवर्तितुमात्मनिकर्तुंनिर्वैरादिभिर्यथास्थितवस्तुदर्शनादिगुणैरात्मानमंतःकरणं भावयिष्यंतिशमादिमत्कुर्वंति दोषानपनीयकथमिवयोगैरौषध्याद्युपायै र्दुर्वर्णंदुष्टवर्णंहेमेवयथाभावयंति अष्टादशदोषान्निरस्यस्वस्वरूपास्थितिंकुर्वंति तथेत्यर्थः अनेननिदर्शनेनात्रेदंतात्पर्यमवगंतव्यं तथाहिहिरण्यकशिपौद्वौचेतनौतत्रैकःसद्गतियोग्यएकोन्यगतियोग्यः अनादिभक्तिलक्षणयोग्यतौषधेनदुःसंगदोषलक्षणदुर्वर्णमपनीयपुत्रादिःसच्चेतनस्यसद्गतिहेतुःस्यान्नविष्णुभक्तिविधुरस्यातोन्यदुष्टजनमोहनार्थं तदुक्तं। स्वतःसद्गतियोग्यस्यपुत्रदेहेतुताभवेत्। योग्यता नादिभक्तिःस्यादयोग्यस्यकुतोगतिरिति ४५ तवपौत्रस्यप्रह्लादस्यमाहात्म्यंभगवत्प्रसादायत्तमितिभावेनाह यत्प्रसादादिति यस्यहरेःप्रसादात् प्रसन्नत्वेहेतुमाह यदात्मकमिति यदात्मकंयत्स्वा मिकंयेनव्याप्तंचशश्वदृक्सर्वदैकप्रकारज्ञानोभगवान्यस्यानन्ययासर्वोत्तमोहरिरेतत्सदृशोन्योनास्तीत्येवंविशिष्टयादृशाज्ञानेनतोष्यते ४६ सवाइति सएवपौत्रोमहात्माएतादृशमहिमा अतत् तस्मा द्धरेरन्यत्सर्वमनित्यमसारंहीनंचेतिनिरूप्यविहास्यतित्यक्ष्यतीत्यन्वयः महानुभावोमहाप्रभावःवैष्णवसिद्धांतेमहानिश्चयोवा वैकुंठंनारायणम् ४७ निर्वैरादिभिरित्यत्रादिशब्दोक्तान्गुणानाह अलंपटइत्यादि

पुत्रस्यैवचपुत्राणांभवितैकःसतांमतः ॥ गायंतियद्यशःशुद्धंभगवद्यशसासमम् ४४ योगैर्हेमेवदुर्वर्णंभावयिष्यंतिसाधवः ॥ निर्वैरादिभिरात्मानंयच्छीलमनुवर्तितुम् ४५ यत्प्रसादादिदंविश्वंप्रसीदतियदात्मकम् ॥ शश्वदृक्भगवान्यस्यतोष्यतेऽनन्ययादृशा ४६ सवैमहाभागवतोमहात्मामहानुभावो महतांमहिष्ठः ॥ प्रवृद्धभक्त्याह्यनुभाविताशयेनिवेश्यवैकुंठमतद्विहास्यति ४७ अलंपटःशीलधरोगुणाकरोहृष्टःपरार्थ्यव्यथितेपुदुःखितः ॥ अभूतशत्रुर्जगतःशोकहर्तानैदाघिकंतापमिवोडुराजः ४८ अंतर्बहिश्चामलमब्जनेत्रंस्वपूरुषेच्छानुगृहीतरूपम् ॥ पौत्रस्तवश्रीललनाललामंद्रष्टास्फुरत्कुंडलमंडिताननम् ४९ ॥ मैत्रेयउवाच ॥ श्रुत्वाभागवतंपौत्रममोदतदितिर्भृशम् ॥ पुत्रयोश्चवधंकृष्णाद्विदित्वासीन्महामनाः ५० ॥ इतिश्रीभागवतेमहापुराणे तृतीयस्कंधेदितिकश्यपसंवादेपंचदशोध्यायः ॥ १५ ॥ मैत्रेयउवाच ॥ प्राजापत्यंतुतत्तेजःपरतेजोहनंदितिः ॥ दधारवर्षाणिशतंशंकमानाऽसुरार्दनात् १ लोकेतेनहृतालोकेलोकपालाहतौजसः ॥ न्यवेदयन्विश्वसृजेध्वांतव्यतिकरंदिशाम् २

ना अलंपटोविरक्तः शीलधरःशीलसमाधावितिधातोःसमाधिंकुर्वाणः गुणाकरोगुणनिधिःव्यथितेषुदुःखितेषुपरेषुदुःखितस्तद्दुःखमात्मीयंकरोतीत्यर्थः अभूतशत्रुरजातशत्रुःनैदाघिकमुष्णकालजातम् ४८ अतद्धास्यतीत्यनेनब्रह्मेतरजगद्धास्यतिनतुब्रह्मेतिध्वनितमर्थंस्पष्टयति अंतर्बहिरिति श्रियोललनायाःस्त्रियोललामंतिलकस्थानीयंद्रष्टाद्रक्ष्यति ४९ एतच्छ्रुत्वादित्याकिमकारीतितत्राह श्रुत्वेति अ मोदतेत्यनेनदितिरपिसद्गतियोग्येतिनिरूपितामिति ५० ॥ इतिश्रीभागवतेम० तृतीयस्कंधेविजयध्वजकृतटीकायांपंचदशोध्यायः ॥ १५ ॥ जयविजययोःशापमोक्षयोःप्रदानरूपसनकादिमाहिम्नावर्ण नेनतेषांभगवत्समाधिसमुद्रेकसमुद्भूतमाहात्म्येनानिरुपमचरितमाहिमाहरिरितिनिरूप्यतेस्मिन्नध्याये तत्रादौदित्यापुनःकिमकारीतिविदुरस्यहार्दप्रश्नंपरिहरति प्राजापत्यमिति प्रजापतेःकश्यपस्येदं इतियथाविहितप्रत्ययः परेषांतेजस्विनांतेजोहन्तिहरतीतिपरतेजोहनं असुरार्दनाद्धरेर्वधंशंकमाना १ किमतस्तत्राह लोकइति तेनगर्भेणलोके हृतालोकेअपहृतप्रकाशेसति तत्परिहारार्थंहतौजसोन ष्टसामर्थ्याः इंद्रादिलोकपालाः दिशांध्वांतव्यतिकरमंधकारेणप्राप्तंव्यत्ययमुपद्रवमित्यर्थः २

यद्येनसंविप्राभ्रांतावयमेतत्तमोवेत्थजानासि तत्रनिमित्तंवदंति नहीति कालादिव्यवधानेनाज्ञानंस्यादित्यतउक्तं कालेनेति अस्पृष्टमव्यवहितंज्ञानवर्त्मयस्यसतथातस्याप्रतिबद्धज्ञानमार्गस्येत्यर्थः ३ त्व
देवविवृणोति देवदेवेति परेषामुत्तमानामपरेषामधमानामतीतानागतानांवाभूतानाभाववित्हृदयज्ञोसीतियदतोव्यक्तंजानासीतिभावः ४ सर्वस्मात्मणतिरेवप्रसादजनीतिमत्वातत्पूर्वकंस्तुवंति नमइति
विज्ञानवीर्यायाप्रतिबद्धज्ञानाय तदेवविशदयति माययेति माययाश्रीनारायणानुगृहीतप्रज्ञाबलेनइदंविश्वमुपेयुषेज्ञातवते रजआदिगुणेनज्ञानप्रतिबंधःसंभाव्यतइत्यतउक्तं गृहीतेति इयांज्ञायाउपद्राव
कत्वेनगृहीतरजआदिगुणविशेषाय इतोपिज्ञानवीर्यंतवैवेतिभावेनस्तुवंति नमस्तइति व्यक्तंब्रह्मांडंतस्ययोनयेकारणाय सृज्येषुवस्तुषुब्रह्मांडसर्जनस्यातिबहुलज्ञानसापेक्षत्वात्तस्यस्रष्टुर्ब्रह्मणोतिशयि
तज्ज्ञानमस्तीतिकिंवक्तव्यमितिनिरूपितं सर्वेषांज्ञानादिगुणप्रतिबंधकारजआदिगुणाः कथमस्यनविरोधकाहारिप्रसादादितिचेतत्प्रसादसंभवोपिकथमित्यतोवाह अव्यक्तेति अव्यक्तंब्रह्मतद्योनिःका
रणंयस्यसतथातस्मै। योब्रह्माणंविदधातीतिश्रुतेः। तेनेब्रह्महृदायआदिकवयइतिच । अतःस्वपुत्रत्वेनसर्वानुग्रहपात्रत्वान्नतस्यसत्त्वादिगुणाः परिपंथिनइति ५ यस्ययदभीष्टंतत्प्राप्यतेनतथानुष्ठेयमिति
मन्वानादितिगर्भनिमित्ततिमिरप्राप्तपराभवपरिहरणायताहशगुणविशिष्टत्वेनस्तुवंतीत्याह यइति येपुरुषाअनन्यभावेनहरेरन्यःस्वतंत्रोनास्तीतिज्ञानदृढीकृतभक्त्यात्वांभावयंतिनिरंतरोपासनयावशीकु
र्वंतितेषांपुंसांनकुतश्चित्पराभवइत्यन्वयः पराभवकर्तॄणांत्वत्सृष्टजीवांतर्गतत्वेनत्वात्प्रियतत्वान्नतेतावकान्द्रुह्यंतीतिभावेनोक्तं आत्मभावनमिति आत्मनोजीवान्भावयत्युत्पादयतीत्यात्मभावनस्तं आत्म

देवाऊचुः ॥ तमएतद्विभोवेत्थसंविग्नायद्वयंभृशम् ॥ नह्यव्यक्तंभगवतःकालेनास्पृष्टवर्त्मनः ३ देवदेवजगद्धातर्लोकनाथशिखामणे ॥ परेषामपरेषां
त्वंभूतानामसिभाववित् ४ नमोविज्ञानवीर्यायमाययेदमुपेयुषे ॥ गृहीतगुणभेदायनमस्तेव्यक्तयोनये ५ येत्वनन्येनभावेनभावयंत्यात्मभावनम् ॥ आत्म
निप्रोतभुवनंपरंसदसदात्मकम् ६ तेषांसुव्यक्तयोगानांजितश्वासेंद्रियात्मनाम् ॥ लब्धयुष्मत्प्रसादानांनकुतश्चित्पराभवः ७ यस्यवाचाप्रजाःसर्वागावस्तं
त्येवयंत्रिताः ॥ हरंतिबलिमायत्तास्तस्मैमुख्यात्मनेनमः ८ सत्वंविधत्स्वशंभूमन्तमसालुप्तकर्मणाम् ॥ अदभ्रदययादृष्ट्याआपन्नानर्हसीक्षितुम् ९

नःपरमात्मनोभावनयानिरंतरोपासनयाप्रवृद्धतदनुग्रहस्यतवासाध्यंनास्तीत्यतोवात्मभावनमिति आत्मनोभावनंयस्यसतथातं नकेवलंजीवजातंत्वदुत्पन्नत्वेनत्वदधीनं किंतु चेतनाचेतनात्मकंसर्वमपि
त्वयाधृतमित्याहुरित्याह आत्मनीति त्वमपिजीवेष्वेकइतिमंदाशंकांनिवारयति परमिति परंसर्वोत्तमं अनेनजीवोत्पादकत्वेऽनुपपत्तिःपरिहृता । महदादिकार्यकारणव्यापित्वेनसर्वोत्तमत्वंयुक्तमिति
भावेनोक्तंसदसदात्मकमिति । नकेवलंभारधरदेवदत्तवज्जगद्धारकत्वमस्यकिंत्वंतर्बहिर्व्याप्तत्वेनापीत्यतोवेत्युक्तं सदसदात्मकमिति ततोविशेषंप्रतिपद्येत्यादिद्वितीयेसर्वव्याप्तिमत्त्वमुक्तं मुक्तामुक्तप्रपंचस्यसु
खादिदातृत्वाद्युक्तंयुक्तमित्यतोवेत्युक्तं सदसदात्मकमिति संतआत्मानोमुक्ताअसंतःआत्मानोऽमुक्तायेषामुभयेषामपिकंसुखंयस्मात्तत्तथोक्तम् ६ विशिष्टध्यानमनसएवैवंविधफलवत्त्वंनतुतन्मात्रस्यतत्प्रा
त्रेणयोगादीनांपरिपाकाभावेनयुष्मत्प्रसादानुत्पत्तिरितिभावेनतान्विशिंषंतीत्याह सुव्यक्तेति अष्टांगलक्षणोयोगः ७ विधिनिषेधलक्षणयावेदवाचाप्रवर्तमानाःप्रजाःस्वस्वकर्मानुसारेणसुखादिकम
श्नंति तत्रायंकुत्रोपयुज्यते इत्याशंक्यतयात्वदीययानियतास्त्वदुक्तप्रकारेणत्वत्पूजांकुर्वंतितदनुसारेणभवान्फलंप्रयच्छतीत्यतस्त्वंसर्वोत्तमइत्याहुरित्याह यस्येति यस्यतवतंत्यागोबंधनोपरचितयादी
र्घयारज्ज्वायंत्रिताबद्धाः यत्रिबंधनइतिधातुः हरंतिनयंति मुख्यात्मनेसर्वेभ्योजीवेभ्योमुख्याय ८ भवतामहतासंरंभेणस्तवनाभिप्रायःकइत्यतस्तमाहुरित्याह सत्वमिति सइतितच्छब्दे
नपूर्वोक्तवैशिष्ट्यंस्मारयति दितिगर्भनिमित्ततिमिरेणलुप्तसंध्यादिकर्मणां । तदर्थमयमेवोपायइतिविज्ञापयतीत्याह अदभ्रेति अदभ्रापूर्णादयायस्यांसातथोक्तातयादृष्ट्याईक्षितुंद्रष्टुम् ९

किमिदानींभयानिमित्तमितितद्विज्ञापयंतीत्याह एषइति काश्यपंकश्यपस्यविद्यमानंदित्यामर्पितमोजस्तेजःएषगर्भःसर्वादिशस्तिमिरयन्अंधकारयन्लोकप्रदीपानांसूर्यादिग्रहाणांतेजोवष्टंभनंदिशामंधकारि त्वमतोस्यतेत्वयापरिहारोद्रष्टव्यइतियावत् १० स्वप्रज्ञाधिगमंस्तुवतामेषामुत्तरंभंतिजानीते ब्रह्मेति मैत्रेयोविदुरंवक्ति सप्रहस्येति शब्दगोचरोमिथोव्यवहारविषयः वेदवेद्योवा प्रीणन्प्रीणयन् प्रत्याचष्टभवदुक्तस्योत्तरंवक्ष्यामीत्याह ११ स्ववचनमध्येतत्प्रश्नोमाभूदितिभगवानआदितएववक्तुमारभतेमानसाइति ममनसोजाताः अंतरिक्षादिलोकान् किंप्रयोजनवंतइत्यतआह लोकेष्विति १२ ततःकिमत्राह तइति विकुंठाख्यंनिलयंगृहंनितरांलीयतेस्मिन्सर्वमिति १३ शून्यागारत्वंनिवारयति वसंतीति येनित्यमनिमित्तेन अःविष्णुर्निमित्तंयस्यसोऽनिमित्तःतेनाविष्णवर्पणबुद्ध्याक्रियमाणेनेत्यर्थः धर्मेणहरिमाराधयंस्तेयत्रवसंतीत्यन्वयः वैकुंठवन्मूर्तिर्येषांतेतथोक्ताःसारूप्यभाजइत्यर्थः १४ यत्रलोकेवृषःश्रेष्ठआद्य सर्वेरुपजीव्योभगवान्स्वैर्भगैर्मूर्तिमाद्रूपेतःशब्दगोचरोऽनंतानांश्रुतिधराणांवेदानांविषयःपुमान्नारायणो विरजंदूरीकृतरजोगुणं सत्वंबलज्ञानसमाहाराख्यत्वमवष्टभ्यस्वानांनोयदस्तितत्सर्वंमृडयन्रक्षन्आस्तइत्यन्वयः १५ कैवल्यंब्रह्मकैवल्यममृतमक्षरंब्रह्मेत्यभिधानं ज्ञानपुण्यसाध्यत्वान्नैःश्रेयसम् १६ सललनाललनाभिःस्त्रीभिःसहितावैमानिकाविमानेनचरंतःपुरुषाः लोकस्यजनस्यशमलक्षपणानिपापनाशनानिभर्तुर्हरेश्चरितानियत्रगायंति नन्वत्रगा

एषदेवदितेर्गर्भओजःकाश्यपमर्पितम् ॥ दिशस्तिमिरयन्सर्वाएधतेग्निरिवैधसि १० मैत्रेयउवाच ॥ सप्रहस्यमहाबाहोभगवाञ्छब्दगोचरः ॥ प्रत्याचष्टात्मभूर्देवःप्रीणन्रुचिरयागिरा ११ ब्रह्मोवाच ॥ मानसामेसुतायुष्मत्पूर्वजाःसनकादयः ॥ चेरुर्विहायसालोकान्लोकेषुविगतस्पृहाः १२ तएकदाभगवतोवैकुंठस्यामलात्मनः ॥ ययुर्वैकुंठनिलयंसर्वलोकनमस्कृतम् १३ वसंतियत्रपुरुषाःसर्वेवैकुंठमूर्तयः ॥ येनिमित्तनिमित्तेनधर्मेणाराधयन्हरिम् १४ यत्रचाद्यःपुमानास्तेभगवान्शब्दगोचरः ॥ सत्वंविष्टभ्यविरजंस्वानांनोमृडयन्वृषः १५ यत्रनैःश्रेयसंनामवनंकामदुघैर्द्रुमैः ॥ सर्वर्तुश्रीभिर्विभ्राजत्कैवल्यमिवमूर्तिमत् १६ वैमानिकाःसललनाश्चरितानियत्रगायंतिलोकशमलक्षपणानिभर्तुः ॥ अंतर्जलेनुविकसन्मधुमाधवीनांगंधेनखंडितधियोप्यनिलंक्षिपंतः १७ पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणांयः ॥ कोलाहलोविरमतेचिरमात्रमुच्चैर्भृंगाधिपेहरिकथामनुगायमाने १८

नंवद्वनव्यादानेननघटतेपुष्पसौरभ्यसमावेशादिंद्रियक्षोभसंभवादित्याशंक्यपरिहरतिअंतर्जलइति अत्रांतःशब्दःसमीपवचनः जलसमीपेतटेविलसंतीनांमधौवसंतेविद्यमानानांमाधवीनांवासंतीलतापुष्पाणांगंधेनखंडितधियोविक्षुब्धबुद्धयोप्यनिलंगंधप्रापकंवायुंक्षिपतःपरिहरंतः तुशब्देनभेदवाचिनामुक्ताअमुक्ताश्चेत्युभयेसंति तत्रमुक्तानांकचिदपिपुष्पगंधवहवायुनेंद्रियक्षोभलक्षणोभ्रमोनास्तिअमुक्तानांकचित्स्यादितितात्पर्यंनिरूप्यते । मुक्ताश्चैवाधिकारस्थाद्विधावैकुंठलोकगाः । अमुक्तानांभ्रमःक्वापिनमुक्तानांकचिद्भवेदितिवचनात् १७ तत्रत्यानांभक्तानांहरेश्चरणारविंदार्चनावसरःकदास्त्विति तत्राह पारावतेत्यादिना भृंगाधिपेहरिकथामनुगायमानेसप्तस्वरसमाहारेणगातुमुपक्रांतेसति तद्गानमकूजद्भिःपारावतादिपक्षिगणैश्चिरमात्रयात्रिमात्राः स्वरेणकोलाहलेकलकललक्षणेकूजनेविरचितेसत्यपंसमपदइतिमत्वापस्मिन्वैकुंठेतुलसीदलेमंदारादिपुष्पराशौचभक्तैरंघ्रिमूलेर्चितेसतितुलसिकाभरणेनतुलसीमालाधारिणाहरिणान्यपुष्पदलमपहायइत्तेनतुलसीदलमुद्दृत्यतद्गंधघ्राणेनार्चितेसंभाविते सति मंदराद्याःसुमनसोमंदारादिशब्दवाच्यास्तद्देवतास्तस्यास्तुलस्यास्तपोबहुमानयंति । गंधार्थंकृतमितिशेषः । तिरश्चीनास्थावराश्चसर्वेज्ञानाद्विकुंठगाः । अमुक्तामुक्तिमायांतिनियमात्कर्मणः

क्षपदइतिविवचनात् ज्ञानान्मुक्तत्वाच्चत्समयज्ञानंगानंप्रशंसनंचभृंगाधिपानांतिर्यंचांमंदारादीनांस्थावराणांचयुज्यते यद्वा तुलसिकाभरणेनतुलसिकाभरणेकृतेसति गंधार्थंतपोबहुमानयंति गंधइतिताद
थ्र्येसप्तमी ऊर्णं करवीरपुष्पं नागोनागकेसरः पुन्नागः सुरकर्णिकारः १८ १९ बृहंतःकठितटाःश्रोणीभागायासांतास्तथोक्ताः स्मितशोभिमुख्यःस्मितेनशोभमानवक्त्राःस्त्रियः उरस्मयाद्यैर्मैदहासशृंगा
रादिरसविशेषैःकृष्णेहरावात्मामनोयेषांतेतथातेषांयेषांरजोरागंनआदधुर्नाकुर्वंस्तेषांविमानैर्वैकुंठारूयंस्थानंसंकुलंव्याप्तं मंचस्थपुरुषन्यायेनविमानानिविशिनष्टि हरीति हरिपदयोरानतिमात्रेणतु
ष्टैःकृतार्थंवयमितिभाववद्भिः यद्वा हरिपदेव्योम्नि आनतिमात्रतुष्टैःसंचरणमात्रप्रयोजनैः वैदूर्यपद्मरागमरकतमिंद्रनीलहेमसुवर्णएतैर्विराजितैः २० वैकुंठस्येतोधिकंमाहात्म्यंकिंवक्तव्यमितिभावेनाह
श्रीरिति अन्येषामुपासकानामस्मदादीनामुपासनादिप्रयत्नायस्या अनुग्रहणेऽनुग्रहार्थंस्युःसानूपुरालंकृतचरणारविंदंक्वणयतीशब्दयंतीजननादिसमस्तदोषैर्मुक्ताकृपिणीसौंदर्यसागरमूर्तिः श्रीर्य
त्रवैकुंठेहरिवेश्मनि अंतःपुरे उपेतहेम्निसुवर्णखचितस्फटिककुड्येलीलांबुजेनावस्करधूननसाधनरथानीयेनसंमार्जयंतीवसंलक्ष्यतइत्यन्वयः । कुड्यंगृहभित्तिः २१ अंगहेदेवाः यद्यत्रप्रेष्याभिर्दासीभिर
न्वितानिजवनेकमलवनेतुलसीभिरीशमभ्यर्चंतीरूपिणीसौंदर्यसागरमूर्तिःश्रीरमलामृताप्सुविद्रुमरत्नबद्धतटासुवापीषुसुखावतारकूलासुप्रतिबिंबितस्वलकंशोभनकुंतलमुन्नसंकिंचिदुन्नतनासिकवक्त्रमुद्वी

मंदारकुंदकुरबोत्पलचंपकोर्णपुन्नागनागबकुलांबुजपारिजाताः ॥ गंधेर्चितेतुलसिकाभरणेनतस्यायस्मिंस्तपःसुमनसोबहुमानयंति १९ तत्संकुलंहरि
पदानतिमात्रदृष्टैर्वैदूर्यमारकतहेममयैर्विमानैः ॥ येषांबृहत्कटितटाःस्मितशोभिमुख्यःकृष्णात्मनांनरजआदधुरुत्स्मयाद्यैः २० श्रीरूपिणीक्वणयती
चरणारविंदंलीलांबुजेनहरिसद्मनिमुक्तदोषा ॥ संलक्ष्यतेस्फटिककुड्यउपेतहेम्निसंमार्जतीवयदनुग्रहणेन्ययत्नाः २१ वापीषुविद्रुमतटास्वमलामृताप्सु
प्रेष्यान्वितानिजवनेतुलसीभिरीशम् ॥ अभ्यर्चतीस्वलकमुन्नसमीक्ष्यवक्त्रमुच्छेषितंभगवतेत्यमतांगयच्छ्रीः २२ यन्नव्रजंत्यघभिदोऽरचनानुवादाःशृ
ण्वंतियेन्यविषयाःकुकथामतिघ्नीः ॥ यास्तुश्रुताहतभगैर्नृभिरात्तवीर्यास्तास्तान्क्षिपंत्यशरणेषुतमःसुहंत २३ येभ्यर्थितामपिचनोनृगतिंप्रपन्नाज्ञानंचत
त्त्वविषयंसहधर्मयत्र ॥ नाराधनंभगवतोवितरंत्यमुष्यसंमोहितावितयानुमायया ते २४ यन्नव्रजंत्यनिमिषामृषभानुवृत्त्यादूरेयमाह्युपरिनःस्पृहणी
यशीलाः ॥ भर्तुर्मिथःसुयशसःकथनानुरागवैक्लव्यबाष्पकलयापुलकीकृतांगाः २५

क्ष्य हरिणेदंतुंबितमित्यमतेत्यन्वयः २२ स्वर्गादीनामसुरादिगम्यत्वादस्यतदभावात्ततोतिशयमाहात्म्यमस्तीतिभावेनाह यन्नव्रजंतीति अघभिदःसंसारदुःखहेतुभूतपापानांभेत्तुःकृष्णस्यरचनानांबालक्री
डादिचरितानांजगत्सृष्ट्यादिकर्मणांवानअनुवादायेषांतेअरचनानुवादाअसुरायत्स्थानंनव्रजंति अनुवादःश्रवणमननादिलक्षणः येचान्यविषयाः । मतिघ्नीर्यथार्थज्ञाननाशनीःकुकथाःकुत्सितरतिवर्णनादि
रूपाःकथाःशृण्वंतितेयत्स्थानंनयांति तासांकथानामेतत्स्थानप्राप्तिप्रतिबंधकत्वमेवनफलंकिंतुतमःप्रापकफलमपीत्याह याइति हतभगैर्विनष्टभक्त्यादिभाग्यैर्नृभिःश्रुतायाःकथास्ताअशरणेपुनिराश्र
येषुतमस्सुक्षिपंति आत्तवीर्याः तमःपातनेबहुभ्यासेनसमुन्नद्धशक्तयः हंतअहोकष्टं तुशब्दोअधःपतितानांतारतम्यद्योतकः २३ केचिज्ज्ञानसाधनयोग्यांमनुष्ययोनिंप्राप्यापितत्साधनंनकुर्वंतितत्रकिं
कारणमित्याशंक्यासुरत्वमितिभावेनाह येभ्यर्थितामिति येपुरुषानोस्माकमभ्यर्थितांज्ञानादिप्राप्तियोग्यत्वादाकांक्षितांनृगतिंमनुष्ययोनिंप्राप्ययत्रयस्यांनृगतौसहधर्मंधर्मेणसहवर्तमानंतत्त्वविषयंज्ञा
नंचनप्रपन्नास्तेअमुष्यहरेर्जगतिविततयामायया बंधकशक्त्यायथर्मज्ञानप्राप्तावपेरजस्त्वेनसंमोहिताः नभगवतआराधनंकुर्वंति नवितरंत्यर्थिभ्योनोपदिशंत्यतोधर्मज्ञानादिवर्जिताअसुरत्वात्ते नमनुष्या
इतीयमर्थध्वनयतिनन्वित्यनेन २४ संतोदेवप्रकृतयएवभगवतआराधनंकृत्वातज्ज्ञानेनयत्रस्थितंहरिंप्राप्नुवंतीत्याह यत्रेति यत्रनोस्माकमुपरिस्थितंवैकुंठाख्यंतंहरिंप्रयांतीत्यन्वयः येअनिमिषादेवानामृषभ

स्यस्वामिनोहरेरनुवृत्त्यानिरंतरसेवयादूरेयमाःदूरीकृतयमलोकाःअतएवसर्वैःस्पृहणीयशीलाःसुयशसोभर्तुर्हरेर्गुणगणानांमिथःकथनेयोनुरागस्तस्मादुत्पन्नंयद्वैक्लव्यंपारवश्यंतन्निमित्तेनजातायाबाष्पकला नंदाश्रुधारातयापुलकीकृतान्यंगानिशरीरतदवयवायेषांतेतथोक्ताः सुयशसइतिभागवतानाविशेषणंवा वैकुंठादप्युपरिशिवलोकइतिकेचिदाचक्षतेतत्स्यामस्तुतत्वादनुपपन्नत्वादितिहेतुद्वयंहीत्यनेनसूचय ति २५ प्रकृतमनुसरति तद्विश्वगुर्वधिकृतमिति अथमुनयःपरांमुदमापुरित्यन्वयः भगवत्समाधिनानित्यतृप्तानांमुनीनांकादाचित्कमोदप्राप्तौकिंकारणमुच्यतेतत्वैकुंठस्थानमुपेत्य कीदृशं। उतामृतत्वस्ये शानोयदन्नेनातिरोहति । इत्यादिनायोमुक्तामुक्तप्रपंचाधारत्वेनश्रुतःसचासौविश्वगुरुस्तेनमुक्तामुक्तप्रपंचगुरुणाहरिणाधिकृतविशेषतः स्वामित्वेनाभिमतं भुवनशब्देनतत्स्था.पुरुषालक्ष्यंतेतैःशिवलोको त्तमतयावंद्यंदिव्यमप्राकृतं विचित्राणिनानावर्णानिविबुधाग्र्याणांविमानानिशोचयतिदीपयतिइतिविचित्रविबुधाग्र्यविमानशोचिः । शुचिदीप्ताविति धातुः । अपूर्वंपूर्वमदृष्टंयोगमायाबलेनभगवदुपा सनालब्धज्ञानबलेनप्राप्येत्यर्थः २६ मुदमुपेत्यबहिरेवावतिष्ठंतउतांतराविशन्आविश्यचकिंचक्रुरितितत्राह तस्मिन्नितीति तस्मिन्वैकुंठेषट्कक्ष्या.गोपुरद्वाराण्यतीत्यतत्रासज्जमानाअनिवार्य माणाःसप्तमायांकक्ष्यायांस्थितौदेवावचक्षतापश्यन्नित्यन्वयः केयूरादिभिर्विटंकोऽलंकृतोवेषोययोस्तौतथोक्तौ २७ तयोर्भविवर्णयतिमत्तेति असितानांश्यामानांबाहूनांचतुष्टयस्यमध्येवक्षसिवि न्यस्तयामत्ताद्विरेफाभृंगायस्यांसामत्तद्विरेफावनमालिकावनमालातयानिवीतौपरिवृतौ कुटिलयावक्रयावक्रस्थितयाभ्रुवासहस्फुटंनिर्गतेनरक्तेक्षणेनरक्तांतकटाक्षनिरीक्षणेनमनाक्किंचिद्भ्रमसंकोपंद

तद्विश्वगुर्वधिकृतंभुवनैकवंद्यंदिव्यंविचित्रविबुधाग्र्यविमानशोचिः ॥ आपुःपरांमुदमपूर्वमुपेत्ययोगमायाबलेनमुनयस्तदथोविकुंठम् २६ तस्मिन्नतीत्यमु नयःषडसज्जमानाःकक्ष्याःसमानवयसस्त्वथसप्तमायाम् ॥ देवावचक्षतगृहीतगदौपरार्ध्यकेयूरकुंडलकिरीटविटंकवेषौ २७ मत्तद्विरेफवनमालिकयानिवी तौविन्यस्तयाऽसितचतुष्टयबाहुमध्ये ॥ वक्रभ्रुवाकुटिलयास्फुटनिर्गतेनरक्तेक्षणेनचमनाग्रभसंदधानौ २८ द्वार्येतयोर्निविविशुर्मिषतोरपृष्ट्वापूर्वायथापु टवज्रकपाटिकायाः ॥ सर्वत्रतेऽविषयामुनयःस्वदृष्ट्यायेसंचरंत्यविहताविगताभिशंकाः २९ तान्वीक्ष्यवातरशनांश्चतुरःकुमारान्वृद्धान्दशार्धवयसोवि दितात्मतत्वान् ॥ वेत्रेणचास्खलयतामतदर्हणांस्तौतेजोविहस्यभगवत्प्रतिकूलशीलौ ३० ताभ्यांमिषत्स्वनिमिषेषुनिषिध्यमानाःस्वर्हत्तमाह्यपिहरेःप्रति हारपाभ्याम् ॥ ऊचुःसुहृत्तमदिदृक्षितभंगईषत्कामानुजेनसहसातउपप्लुताक्षाः ३१

यानौअनुसंधानंकुर्वंतौअंतःप्रविशतोनिर्गच्छतश्चजनान् ज्ञात्वातिष्ठतइत्यर्थः २८ येमुनयःसर्वंवस्तुषुस्वस्यस्वतंत्रस्यहरेर्दृष्ट्यांतर्यामित्वदर्शनेनअविषयानिस्पृहाः अतएव विगताभिशंकाः । अविहताःअप्रतिहतगतयः सर्वत्रसंचरंतिहियस्मात्तस्मा त्तेमुनयःतावपृष्ट्वामिषतोःपश्यतोस्तयोर्द्वारितथाप्रविविशुरित्यन्वयः । यथापूर्वाःषड्द्वारःप्रविविशुःनिःशंकतया कीदृशीद्वारः याआरपुटवज्रकपाटिकाआरेणपिचलेनालंकृतंपुटंयस्याःसाआरपुटा वज्र शिल्पाकृताकपाटिकाआरपुटाचवज्रकपाटिकायासांतास्तथा । लोहमप्यारकूटंस्यात्पित्तलंचारमस्त्रियामितियादवः २९ ततःकिमभूदितितत्राह तानिति वातोवायुरेवरशनावस्त्रंयेषांवेतथातान् कुमारानि त्युक्तंविवृणोति दशार्धवयसइतिदृष्ट्यापंचवर्षान्विदितात्मतत्वान्ज्ञातपरमात्मस्वरूपान् वेत्रेणयष्ट्यास्खलयतांप्रवेशप्रतिरोधंचक्रतुः अतदर्हणान्स्खलनायोग्यान् तेजस्तेषांप्रभावंविहस्याऽग णय्य तत्रनिमित्तमाह भगवदिति भगवतोहरेः प्रतिकूलंविरुद्धंशीलंययोस्तौतथाते । जयस्यविजयस्यापिकदाचिद्ब्रह्मशापतः । कृष्णावतारपर्यंतंप्रातिकूल्यंचजायतइतिवचनेनशापनिमित्त प्रातिकूल्यंसावधिकंचेतिज्ञायतेअन्यथातयोस्तत्राहस्थानमेवनयुज्यते रजआद्यभावस्योक्तत्वात् ३० न्यस्तदंडत्वात्प्रतिषिद्धास्तेतूष्णींयथागतंययुःकिमत्राह ताभ्यामिति सुष्ठुअर्हत्तमाःपूज्यतमाःसुहृत्त मस्यहरेर्दिदृक्षितस्यदर्शनेच्छायांभंगोविघ्नेसतिईषत्कामानुजेनाल्पकोपेनउपप्लुतानिअतिकलुषीकृतान्यक्षीणियेषांतेतथोक्ताः प्रतिहारपाभ्यामनिमिषेषुदेवेषुमिषत्सुपश्यत्सुनिषिध्यमानाऊचुरित्यन्वयः ३१

क्रोधाकुलितनेत्रत्वाद्धितंनांकित्वहितमेवतत्कीदृशमूत्रुरितितत्राह कोवेति भगवतउच्चैःपरिचर्ययासमुन्नतपूजादिसेवयाइहवैकुंठेस्वयोग्यंस्थानमेत्यतद्धर्मिणांतस्यहरेर्ध्यानादिधर्मवतांसतांभागवतानाम पिमध्येकःपुमान्विषमस्वभावःशत्रुरयमिदंमित्रमितितामसशीलः वाइत्यनेनात्यंतानुपपत्तिंसूचयति भगवद्विषयेशंकनीयोस्तीतिभवन्निषेधःक्रियतइतितत्राह तस्मिन्निति कुहकयोर्मिथ्याद्दृष्टिमतोर्युव योरात्मवत्यथात्मापरिशंकनीयस्तथेहतस्मिन्भगवतिविषयेपरिशंकनीयोविरुद्धस्वभावः कोवास्तिनकोपीत्यन्वयः कुतोनास्तीत्यतआह प्रशांतेति लोकेअप्रशांतस्यपरेणसहोत्पादितवैरस्यचशंकनी योदृष्टस्तथानायंपुरुषेषुप्रशांतत्वात्अनुत्पादितवैरत्वाच्च किंचप्रकृष्टानंदस्वरूपत्वादनुपहतैश्वर्यादिषड्गुणपूर्णत्वात्सर्वशरीरेषु गतत्वादप्रतिद्वंद्वत्वादप्राकृतशरीरत्वाच्चातोस्मिन्निषेधोऽप्यर्थइत्यर्थः ३२ आ पादितदोषएवपुरुषोदंडयोग्यइतितयोर्दौषित्वमुपपादयंति नहीति इहास्मिँल्लोकेस्थिताधीराज्ञानिनःसमस्तस्यमुक्तामुक्तप्रपंचस्यकुक्षयःशरीरकुहराणियस्यावासभूतानिससमस्तकुक्षिस्तस्मिन् यद्वा समस्तकुक्षौस्थितेभगवतिअंतरंछिद्रंभेदंनपश्यंतिकिंतुयत्रयस्मिन्लोकेनभसिमहाकाशेनभोघटाकाशमिवात्मानंस्वात्मस्थंभगवद्रूपमात्मनिव्याप्तेभगवद्रूपेपश्यंतितयोरैक्येनेत्यर्थः ततःकिमत्राह यु वयोरिति एवंज्ञानिप्रत्यक्षेजाग्रतिसुरलिंगिनोर्देवलक्षणवतोर्युवयोर्मनसायतोभेददर्शनादस्यभेदस्यद्रष्टुःपुंसःसर्वत्रदुःखप्राप्तिरूपंभयंभवति तादृशमुदरभेदि उद्गताअराःदोषायस्मात्तदुदरंब्रह्मतस्यभे ददर्शननिमित्तंभयंव्युत्पादितंकिंप्रतिशरीमंतर्यामित्वेनस्थितस्याभयस्यहरेरन्यस्माद्भयमस्तीतिबुद्धिःकृता अन्यथा स्मन्निवारणंकिमितिकृतम् । हिशब्देनतत्स्वानुभवसिद्धंदर्शयंति । यद्वा । सर्वोदरगतं

**कोवाइहैत्यभगवत्परिचर्ययोच्चैस्तद्धर्मिणामापिसतांविषमस्वभावः॥ तस्मिन्प्रशांतपुरुषे गतविग्रहेवांकोवात्मवत्कुहकयोःपरिशंकनीयः३२नह्यंतरंभवगती हसमस्तकुक्षावात्मानमात्मनिनभोनभसीवधीराः॥ पश्यंतियत्रयुवयोःसुरलिंगिनोःकिंव्युत्पादितंह्युदरभेदिभयंयतोस्य ३३ तद्वामुष्यपरमस्यविकुंठभ र्तुःकर्तुंनयुक्तमितिधीमहिमंदधीभ्याम् ॥ लोकानितोव्रजतमंतरभावदृष्ट्यापापीयसस्त्रयइमेरिपवोस्ययत्र ३४तेषामितीरितमुभाववधार्यघोरंतंब्रह्मदंडमनि वारणमस्त्रपूगैः॥ सद्योहरेरनुचरावुरुबिभ्यतस्तत्पादग्रहावपततामतिकातरेण ३५ भूयानघानिभगवद्भिरकारिदंडोयोनौहरेतसुरहेलनमप्यशेषम्॥ मावोनुतापकलयाभगवत्स्मृतिघ्नोमोहोभवेदिहतुनौव्रजतोरधोधः॥ ३६॥**

ब्रह्मयेभेदेनविचक्षते । सर्वत्रापिभयंतेषांभूतानांतमएवचेतिवाक्यंप्रमाणयंति । युवयोरितितृतीयार्थेषष्ठी । तयातद्द्वारपालत्वेनस्वस्वामिसंबंधस्यस्वानुभवसिद्धत्वेनतदपलोपेनसर्वापलापप्रसंगात्भगवदपराधएवकृतइतिद्योतयंति ३३ एवंदोषानुपपाद्यतद्योग्यंदंडंकर्तुमुपक्रमं ते तद्वाइति मंदधीभ्यांकपटबुद्धिभ्यांयुवाभ्याममुष्यविकुंठभर्तुर्मूलरूपस्यपरंपश्चादस्यावतारांतर्यामिरूपस्यचयद्भेददर्शनतत्कर्तुंनयुक्तमितिधीमहिचिंतयामः । तद्युवाभ्यांकृतमतोंतरभावदृष्ट्याभेददर्श नेनेतोवैकुंठलोकाद्यत्रयेषुत्रिष्विमेत्रयोस्यहरेरिपवःस्युःतान्पापीयसोऽतिपापाज्जन्मयोग्यान्लोकान्देहान्व्रजतमित्यन्वयः त्रीनासुरान्देहान्यातमित्यर्थः । वाइत्यनेनयथोदकंदुर्गैर्वृक्षपर्वतेषुविधावती त्यादिश्रुतिंप्रमाणयंति ३४ स्वतोजयविजयौसचेतनावितिध्वनयंति तेषामिति । तावुभौहरेरनुचरौजयविजयौउरुबहुबिभ्यतइत्यन्वयः । ब्रह्मास्त्राद्यस्त्रपूगैरनिवारणंप्रतिषेद्धुमशक्यंघोरंतेषामिती रितंब्रह्मदंडंब्रह्मशापमवधार्यहृदिकृत्वाकिंचतेषांपादौगृह्णीवइतितत्पदग्रहावपततांभूमावितिशेषः अतिकातरेणेतिभयातिरेकंदर्शयंति सद्यइतिनिर्दोषत्वम् ३५ पादयोःपतित्वाताभ्यांपुनःकिंकृतमत्रा ह भूयानिति हेचतुर्थाश्रमशिखामणयोभगवद्भिर्भवद्भिरस्मत्कृतादघादपराधाद्धिहेतोर्भूयान्महान्दंडोऽकारियुक्तएवायमितिब्रुवाते यद्वाते योदंडोनावावयोः नकेवलंयुष्मदपराधमेवहरति किंत्व शेषंयथातथासुरहेलनंश्रीब्रह्मादिदेवावज्ञानमपिहरेतहर्तुंसमर्थोभवति तत्रेदंभगवतः प्रार्थयावहे नावावयोरिहवैकुंठेस्थितयोरंशिनोवोयुष्माकमनुतापकलयापश्चात्तापलेशेनपुनःपूर्ववत्भगवत्स्मृति घ्नोभगवतोयथास्वरूपज्ञाननाशकोमोहोमाभवेत्माभूत् कीदृशयोर्युष्मच्छापेनाधोधालोकादप्यधरलोकमासुरंव्रजतोरंशेनेतिशेषः ३६

जयविजययोःसनकादीनांमंत्रापोहरेःकर्णताडितःकिंनाभूदत्राह एवमिति द्वयोरप्यंशांशिविवक्षयाबहुत्वात्स्वानामितिबहुवचनं एवंस्वानांस्वपार्षदानांसत्सुसनकादिषुअतिक्रमंप्रतिघातलक्षणमपराधंनि शम्यनिलयात्मुक्तस्थानात्तदैवतस्मिन्सप्तमकक्ष्यास्थानेस्थितांस्तान्ययावित्यन्वयः स्वानांस्वभक्तानांसदतिक्रमविद्यमानमपराधमितिवा आर्याणांज्ञानिनांहृद्योहृदयंगमः भगवदागमनंसनका दीनांपुण्याधिक्यंध्वनयति परमेति ३७ शेषकलुषितशेमुषित्वात्धृत्यापराधंतत्स्वामिन्यारोप्यतस्मिन्नागतेतेमुनयास्तिर्यक्दृष्टयोभूवन्किमत्राह तंत्विति तुशब्दोरोषस्तात्कालिकोमध्यंदिनचल नार्कवन्नतुचिरकालभावीतिनिरूपयति स्वपुंभिःस्वभृत्यैःप्रतिहृतंप्रत्यर्पितमौपयिकमुपायनादिसत्कारद्रव्यंयस्मैसतथोक्तस्तं सहसोत्थायागमनात्संक्षिप्तवाहनादिगमनयोग्यसाधनंवा चक्षुर्विषयमित्य नेनप्राप्तांमायारूपभ्रांतिमुन्मूलयति स्वसमाधिगम्यमितिसच्चिदानंदलक्षणमपश्यन्नित्यर्थः तदानींतनवैभववैशिष्ट्यंवर्णयति हंसश्रियोरितिहंसवद्धवलश्रियोर्व्यजनयोःशिववायुनासुखस्पर्शवायुनालोलं चंचलंशुभ्रंधवलंचातपत्रमुष्णनिवारणच्छत्रंतदेवशशीचंद्रमास्तस्यकेसरेभ्योरश्मिभ्योनिःसृतानिशीकराणिवातास्तएवचांबूनिवारीणियस्मिन्सशिववायुलोलशुभ्रातपत्रशशिकेसराम्बुस्तम् ३८ कृत्स्नः पूर्णःप्रसादःप्रसन्नतायस्यसतथासुप्रशस्तमेवंविधंमुखंयस्यसतथातस्पृहणीयधामकमनीयतेजःपुंजमिच्छाविषयस्थानंवा स्नेहोद्भूतयावलोककलयाकटाक्षकलयाभक्तानांहृदिसंस्पृशंतंत्वगिंद्रियसुखंकु

एवंतदैवभगवानरविंदनाभःस्वानांविबुध्यसदतिक्रममार्यहृद्यः ॥ तस्मिन्ययौपरमहंसमहामुनीनामन्वेषणीयचरणौचलयन्सहश्रीः ३७ तंत्वागतंप्रति हृतौपयिकंस्वपुंभिस्तेचक्षताक्षविषयंस्वसमाधिगम्यम् ॥ हंसश्रियोर्व्यजनयोःशिववायुलोलशुभ्रातपत्रशशिकेसरशीकरांबुम्३८ कृत्स्नप्रसादसुमुखंस्पृ हणीयधामस्नेहावलोककलयाहृदिसंस्पृशंतम् ॥ श्यामेपृथावुरसिशोभितयाश्रियास्वश्रीवामणिंसुभगयंतमिवात्मधिष्ण्यम् ३९ पीतांशुकंपृथुनितंबम धिस्फुरंत्याकांच्यालिभिर्विरुतयावनमालयाच ॥ वल्गुप्रकोष्ठवलयंविनतासुतांसेविन्यस्यहस्तमितरेणधुनानमब्जम्४० विद्युत्क्षिपन्मकरकुंडलमंडनार्हगं डस्थलोन्नसमुखंमणिमत्किरीटम् ॥ दोर्दंडखंडविवरेचरतापरार्ध्यहारेणकंधरगतेनचकौस्तुभेन ४१ अत्रोपसृष्टमितिचोत्स्मृतमिंदिरायाःस्वानांधिया विरचितंबहुसौष्ठवाढ्यम् ॥ मह्यंभवस्यभवताचभजंतमंगंनेमुर्निरीक्ष्यनवितृप्तदृशोमुदाकैः ४२

र्वंतं श्यामेइंद्रनीलरत्नकांतिनिभेपृथौविस्तीर्णेउरसिशोभितयाश्रियाश्रीवत्सरूपयात्मनश्चतुर्मुखस्यधिष्ण्यंगृहस्थानीयरूपं कौस्तुभोब्रह्मणोरूपंप्राणश्चूडामणिस्तथेतिवचनात् स्वग्रीवायांस्थितंमणिं कौस्तुभंनामसुभगयंतमिवविकासयंतमिवस्थितम् ३९ पीतांशुकंपृथुनितंबमधिपीतांबरावीतविस्तीर्णकटितटोपरिस्फुरंत्यासहस्रगुणयाकांच्याअलिभिर्विरुतयाशब्दितयावनमालयाचशोभमानंवल्गु निसुंदरेप्रकोष्ठेमणिबंधस्थानेवलयःकंकणोयस्यसतथातं इतरेणदक्षिणेनकरेणाब्जंकमलंधुनानंकंपयंतम् ४० कांत्यादिगुणैर्विद्युतंक्षिपतीनिरस्यतीमकराकारकुंडलेविद्युत्क्षिपन्मकरकुंडलेतयोर्मंडना र्हैअलंकारयोग्यैगंडस्थलेयस्मिंस्तत्तथा तच्चोन्नसमुन्नतनासिकंमुखंचयस्यसतथातं प्रशस्तामणयोयस्यसंतीतिमणिमत्ताहशकिरीटंयस्यसतथातदोर्दंडानांखंडस्यसमूहस्यविवरेमध्येचरतावर्तमानेन परार्ध्यहारेणअनर्घ्यमुक्तामालयाकंधरगतेनकंठालंबिनाकौस्तुभेनमणिनाचयुक्तं एवंविशिष्टभगवंतमचक्षतेतिपूर्वेणान्वयः ४१ यौंतर्गर्भितभक्त्युद्रेकोभगवद्दर्शनानंतरंबाहिरापिनिर्गतइतिभावेनाह अत्रे ति तेमुनयोहरेरंगंवीक्ष्यमुदानवितृप्तदृशः । अलंबुद्ध्यभावनेत्राःकैःशिरोभिर्नेमुरनाधारदंडवत्भुविपेतुरित्यर्थः अंगांगिनोरणुरपिभेदोनास्तीतितस्येतिविशेष्यावचनमित्यतस्तदंगंविशिनष्टि अत्रेति चश ब्दोप्यर्थः यथाब्रह्मादिभिराराध्येंदिरायालक्ष्म्याअपिअत्रास्मिन्कालेउपसृष्टमुद्भूतमित्युत्स्मृतं यद्वात्रकेशादिपादावयवविशिष्टेवपुषिइदंमयोपसृष्टमवसितंनिश्चितंनातःपरमिति तथापिस्वानांस्वभक्तानांधि

पाविरचितंसंस्मृतं केचित्स्वदेहांतर्हृदयावकाशेप्रादेशमात्रंपुरुषंवसंतमित्यादिना। अविद्यमानकरणंविद्यमानस्मृतिस्तथा। उभयंरचनंप्रोक्तंपूर्वंसिद्धेषुतुस्मृतिरित्यभिधानाच्च। तस्माद्रचनाशब्दस्यस्मरणार्थत्वंसिद्धं इतोपिभक्तधियास्मृतंनरूपंकुतस्यन्यूनातिरेकसंभवादितिभावेनाह बर्हिति विपुलानेकपोर्वहुरितिवचनादनंतसौंदर्यादिगुणपूर्णं इतोपिमायारचितंनेत्याह गम्भीरादि महत्वमस्वर्हणीयमितिवा ४२ अर्थक्रियाकारित्वान्नेदंमायारचितमित्याह तस्येति स्वविवरेणस्वनासिकारंध्रेणांतर्गतःप्रविष्टस्तस्यहरेःपदारविंदयोःकिंजल्कैःकेसरैरिवस्थितैरजोभिर्मिश्रासंपृक्तातुलसीतस्यामकरंदेनमधुनायुक्तोमंदोवायुस्तेषांसनकादीनांचित्ततन्वोः संक्षोभंकंचनविकारंचकारेत्यन्वयः। विकारानुत्पत्तौकाउपपत्तिरितितत्राह अक्षरजुषामिति वैराग्यादिगुणैरक्षरजुषांब्रह्मसेवतांनिर्विकारचित्तानामपि तेनपंचप्यपूर्वविकारसंभावनाप्राप्तिर्नास्तितथापिहरिचरणार्पितत्तुलसीमहिमातिशयद्योतनाय मनोविकासलक्षणविकारादानंदाश्रुधारासंपातस्तदनुसंक्षोभाद्रोमांचइतिसूचितं। क्षुभसंचलनइतिधातोः ४३ मनश्चलनेनेंद्रियचलनंतस्मात्तनोःसचलनमितिनियमादतोऽयमपिकथनसंक्षोभइतिध्वनयन्नाह तेवाइति योनित्यंस्वहृदिअंतरेऽपरोक्षीक्रियतेसएवायमित्यतोमुष्येति। षिञ्बंधनइतिधातोःसितंबद्धंमुकुलितंअसितंनवोत्फुल्लंवदनमेवासितपद्मकोशमन्यथासितंशुक्लंअसितंकृष्णमितिवाशापप्रदानस्यानभीष्टत्वेनमुखस्यकार्ष्ण्यंजातंतदयुक्तमुत्तरत्रशापानुमतिप्रतीतेः। यद्वानेत्रयोर्नीलिनवर्णत्वेनतद्युक्तंत्वद्वदनाख्यनीलपद्मकोशमुद्वीक्ष्यस्वयंवामनत्वाद्धरेःप्रांशुत्वादूर्ध्वमुखाः दृष्ट्वालब्धाशिषोभगवदवयवेषुमुख्यमुखदर्शनात् प्राप्तपुण्योच्चयाः सुंदरतराधरश्चकुंदवद्धलोहासश्चयस्मिन्स्तथातंपुनर्मुखदर्शनानंतरं

तस्यारविंदनयनस्यपदारविंदकिंजल्कमिश्रतुलसीमकरंदवायुः ॥ अंतर्गतःस्वविवरेणचकारतेषांसंक्षोभमक्षरजुषामपिचित्ततन्वोः ४३ तेवाअमुष्यवदनासितपद्मकोशमुद्वीक्ष्यसुंदरतराधरकुंदहासम् ॥ लब्धाशिषःपुनरवेक्ष्यतदीयमंघ्रिद्वंद्वंनखारुणमणिश्रयणंनिदध्युः ४४ पुंसांगतिंमृगयतामिहयोगमार्गैर्ध्यानास्पदंबहुमतंनयनाभिरामम् ॥ तेतद्वपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैःसमगृणन्युतमष्टभोगैः ४५ कुमाराऊचुः ॥ योंतर्हितोहृदिगतोपिदुरात्मनांत्वमद्यैवनोनयनमूलमनंतराद्धः ॥ यर्ह्येवकर्णविवरेणगुहांगतोनःपित्रानुवर्णितरहोभवदुद्भवेन ४६ तंत्वांविदामभगवन्परमात्मतत्त्वंसत्त्वेनसंप्रतिरतिंरचयंतमेषाम् ॥ यत्तेनुभावविदितैर्दृढभक्तियोगैरुद्ग्रंथयोहृदिविदुर्मुनयोनुरागाः ४७

तदनंतरंनखाएवारुणारक्तमणयस्तेषांश्रयणमाश्रयणमाश्रयं तदीयमंघ्रिद्वंद्वमवेक्ष्यावाङ्मुखादृष्ट्यामुखमारभ्यपादांतंसर्वांगमवलोक्यानितरांदध्युरित्यन्वयः हृदिचनिदध्युः आलोकयन्नितिवा बहिष्ठस्यहृद्गतस्यचैकत्वमपश्यन्नित्यर्थः ४४ मनःसंकल्पेनवागिंद्रियप्रवृत्तिदर्शनादयमपिकथनसंक्षोभःसंजातइत्यभिनयंतःस्तुवंतीत्याह पुंसामिति ध्यानास्पदमुपासनाविषयं बहुपूर्णतायामितिधातोर्बहुत्वेनपूर्णत्वेनमतंज्ञातंनयनान्यभिरमयतिसुखयतिइतिनयनाभिराममेवंविधंतद्वपुर्दर्शयानंदर्शयंतमनन्यसिद्धैरन्यैरननुभूतैरौत्पत्तिकैःसहजैरष्टभोगैरणिमाद्यष्टैश्वर्यैर्युतमिश्रितमभिन्नंहरिसमगृणन्नित्यन्वयः। गृस्तुताविितिधातुः ४५ गुरूपदिष्टगुणानुसंकीर्तनरूपत्वादियंस्तुतिःपारमार्थिकीनलौकिकीत्याशयेनाह योंतर्हितइति त्वंदुरात्मनामशुभमनस्कानांहृदिगतोपिअंतर्हितोसिअत्यंतसमीपवर्तिनोऽदर्शनवचनंस्तुतित्वाद्युज्यतांनामनपरमार्थतइत्यतउक्तमनंतराद्धइति अनवसितमाहात्म्यादिदमपिकिंचनमाहात्म्यमित्यर्थः सत्वमद्यनोनयनमूलमेपिचक्षुर्विषयंगतोसि किंगुणविशिष्टत्वेनेत्यतआह यर्हीति भवतउद्भवोजननंयस्यसतथा तेननःपित्रानाम्नाब्रह्मणायर्हियेनलक्षणेनानुवर्णितरहःयथावदुपदिष्टरहस्यः हरिरस्मत्कर्णविवरेणहृदयगुहांगतोभूत्तल्लक्षणविशिष्टत्वेनेतिशेषः। अनेनसच्चिदानंदलक्षणंभगवंतमद्राक्षन्नतुमायामयमिति एवकारेणोपदिष्टदृष्टयोरूपयोरेकत्वंद्रढयति ४६ इतोपिनेदंतत्कालोपपन्नमायामयरूपंकिंतुसाक्षाज्जगज्जन्मादिकारणमितिभावेनस्तुवंतीत्याह तंत्वामिति हेभगवन्नःपित्राजन्मादिकारणत्वेनोपदिष्टःतथेदानींचक्षुर्विषयश्चतंत्वांपरमात्मनःपरब्रह्मणस्तत्त्वमनारोपितंरूपंविदामविद्मः। कीदृशंत्वांसंप्रतीदानीमेषांलोकानांसत्त्वेनगुणेनरतिंसुखं

रचयंतमुत्पादयंतं सृष्ट्यादौ प्रवर्तमानस्यानारोपितरूपत्वे किंप्रमाणमित्याशंक्य सम्यग्ज्ञानिज्ञानं मानमित्याहुरित्याह यन्नइति तवानुभावस्य जगत्सृष्ट्यादिमाहिम्नोनुभावेन निश्चयज्ञ. नेनविदितैर्ले ढ्यैर्दृढैरचलैर्भक्तियोगैर्विरागा विषयेषु शोभनाध्यासबुद्धिविधुराअतएवोद्ग्रंथयउन्मीलिताहंकारबंधा उत्पाटितपुत्रभार्यादिस्नेहरूपहृदयग्रंथयोवामुनयः सर्वज्ञाः परमहंसा यत्तत्त्वंविदुरुप. स्वापरोक्षीकुर्वंते तादृक्तत्त्वात्मकंत्वांविद्मइत्यन्वयः ४७ इतोप्युपनिषत्कामिन्यापरिष्वक्तंब्रह्मत्त्वमेवयतोभगवत्कथारसायनस्वादुज्ञामुक्तावानंदसमृद्धिहेतुभूतभक्तिज्ञानमंतरेण दर्शनमात्रेणापरिपक्वभक्तिज्ञानानांपुंसां योग्यांमुक्तिंनाकांक्षतइत्याह नात्यंतिकमिति आत्यंतिकंप्रसादंभवगवद्दर्शनमात्रेणलिंगशरीरात्ययसमयेविद्यमानभक्तिज्ञानपरिपाकाभावात्सम्यगनभिव्यक्तानंदंमोक्षमपिनविगणयंतिविशिष्टोयमितिनब हुमन्यंते । भक्तिज्ञानपरिपाकात्किंचित्पूर्वंचमुच्यते । दर्शनेनहरेस्तत्रनानंदःपूर्णतांव्रजेदितिवचनात् । तवभक्त्याकथामृतपानतृप्तत्वात् भ्रुवउन्नयैरुज्जृंभणविशेषैरर्पितभयमन्यत्पारमेष्ठ्यादिपदंकिंचाकि मुतकथ्यं कुशलाइत्यनेनमुमुक्षोःकेवलोभक्तोमुक्तावपिसुखीभवेदित्यतोमोक्षेच्छुभ्योनापेक्षकाणांमुक्तावानंदोद्रेक स्यादितिभक्त्यापादनमेवसाधीयानितिबुद्धिपाटवंसूचयति कीर्तन्यकीर्तनीयंतीर्थंशुद्धंय शोयस्यसतथातस्यअत्रमुक्तीनांबाहुविध्यात्तदधिकारिणांचतथात्वान्मुक्तावपिभेदःपारमार्थिकः तद्दातुरेकत्वेनाणुरपिस्वगतोभेदोनास्तिअनेकत्वेमिथोवैषम्येणनाश्यत्वापत्तेःप्रमाणविरोधाच्चोतिद्योतितं

नात्यंतिकंविगणयंत्यपितेप्रसादंकिंचान्यदर्पितभयंभ्रुवउन्नयैस्ते ॥ येंगत्वदंघ्रिशरणाभवतःकथायाःकीर्तन्यतीर्थयशसःकुशलारसज्ञाः ४८ कामंव्रजेम वृजिनैर्निरयेषुनश्चेतोलिवद्यदिनुतेपदयोरमेत ॥ वाचश्चनस्तुलसिवद्यदितेंघ्रिशोभाःपूर्येततेगुणगणैर्यदिकर्णरंध्रः ४९ प्रादुश्चकर्थयदिदंपुरुहूतरूपंतेने शनिर्वृतिमवापुरलंदृशोनः ॥ तस्माइदंभगवतेनमइद्विधेमयोनात्मनांदुरुदयोभगवान्प्रतीतः ५० ॥ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेषोडशो ध्यायः ॥ १६ ॥ ब्रह्मोवाच ॥ इतितद्गृणतांतेषांमुनीनांयोगधर्मिणाम् ॥ प्रतिनंद्यजगादेदंविकुंठनिलयोविभुः १ श्रीभगवानुवाच ॥ एतौवैपार्षदौ मह्यंजयोविजयएवच ॥कदर्थीकृत्यमांयद्वोबह्वक्रातामतिक्रमम् २ यस्त्वेतयोर्धृतोदंडोभवद्भिर्मामनुव्रतैः ॥ सएवानुमतोस्माभिर्मुनयोदेवहेलनात् ३

४८ वयमपित्वदंघ्र्येकशरणत्वादिदमेवाकांक्षामहेनान्यदितिविज्ञापयंतीत्याह काममिति अंघ्रीशोभयंतीत्यंघ्रिशोभाःस्तुतिद्वारेणेतिशेषः निरयेषुपश्वादियोनिषुवृजिनैर्दुःखैर्नष्टाःक्लिष्टाः । यावत्परमभक्तैस्तु मुज्यतेदुःखमुल्बणम् । तावन्मुक्तौसुखोद्रेकस्तत्रचेद्भक्तिवर्धनमितिवचनार्थमभिप्रेत्यनिरयप्राप्तिप्रार्थनाक्रियतेइत्यभिप्रायः ४९ सत्याभक्तौसर्वत्रानंदोद्रेकःस्याद्यथातवापरोक्षसंभवोवृतस्तथेहा स्मदपराधमविगणय्येतिभावेनाहुरित्याह प्रादुरिति पुरुविस्तीर्णंहुतंयशोयस्यसतथाहेपुरुहूतअलंनिर्वृतिमापुरित्यनेनातदृष्टेर्बाह्यदृष्टेःस्पष्टत्वसूचयति तस्येयंप्रत्युपक्रियेत्याहुरित्याह तस्माइतियोभगवा न्प्रतीतःप्रेक्षितोभक्तैरितिशेषः यश्चदुरात्मनादुरुदयःदुःप्रकाशस्तस्मैभगवतेइदमुत्कृष्टंनमःविधेमकुर्मइत्यर्थः ॥ ५० ॥ इतिश्रीभागवतेमहापु०तृतीयस्कंधेविजयध्वजकृतटीकायांषोडशोऽध्यायः ॥ १६ ॥ दुस्तरापत्तिपरिहारायभक्त्याहरिरेवप्रार्थनीयइत्ययमर्थःप्रतिपाद्यतेऽस्मिन्नध्यायेतत्रादौभक्तपराधीनोहमितिप्रकटयिष्यतोहरेःसनकादीन्प्रतिस्नेहवचनप्रकारमाह इतीति । योगोभक्तियोगः सएवधर्मएषा मस्तीतियोगधर्मिणःतेषामिदंवक्ष्यमाणं तत्स्तवनं प्रतिनंद्यवैकुंठनिलयइत्यनेनप्रतीतंपरिच्छिन्नत्वंनिवारयति विभुरिति विभु.सर्वगतेपत्याविवियादवः १ मह्यमिति । व्यत्ययेनजयविजययोःपार्षद प्राधान्यंसूचयति माकदर्थीकृत्याविगणय्याप्रयोजनीकृत्येतिवा तत्कुतइतितत्राह यद्वइति बह्विति क्रियाविशेषणं यथाबहुःपूर्णोभवतितथातिक्रमपराधमक्रातामकुर्वतां यत्तस्मादितिशेषः २ तर्हिभगव ताप्येतौदंड्याविति शंकित्वायुष्माकमस्माकंवैकमनस्कत्वाद्युष्माभिर्दत्तएवदंडोस्माभिर्दत्तइत्याह यस्त्विति ३

किंवास्वइतितत्राह तद्वइति तत्तेनदंडानुज्ञानेन किमेषांप्रसादनमत्राह ब्रह्मेति सर्वेषामितिपदमध्याहृत्यान्वेतव्यं मेममभक्तियुक्तंब्रह्मविप्रकुलंसर्वेषांपरदैवंपूज्यंहिप्रसिद्धं मेपरंमत्तात्पर्थयुक्तमिति
वा अन्यकृतापराधस्यस्वात्मन्यारोपणंकथमत्राह तद्वीति ४ एतदेवोपपादयति यन्नामानीति ततःकाहानिरित्यतआह सइति आंमयः कुष्ठलक्षणः । अमरोगइत्यस्माद्धातोःस्वार्थेयत्प्रत्ययः
रोगमंगमभंयापयतीतिअस्मिन्नर्थेणिचिवा ५ लोकेपूज्यत्वायहरिर्ब्राह्मणेषुपरमाप्रियत्वंप्रतिपादयति यस्येत्यादिना यस्यममामलामृतत्वप्रदयशः श्रवणादिलक्षणोवगाहःस्नानरूपप्रवेशःसद्यस्तत्क्षणादे
वाश्वपचंजगत्पुनाति भवद्भ्यउपलब्धाविस्तृतासुतीर्थासुपावनीकीर्तिर्यस्यसतथा सोहंविकुंठःवोयुष्माकंप्रतिकूलवृत्तिंस्वबाहुमपिछिंद्यामित्यन्वयः सर्वोत्तमोपिभगवान्विप्रादेःपूजनायच । गु
णलब्धिततोभूतेनित्यपूर्णगुणोपिसन् । भूपुश्चान्येकाचित्तुतदुक्तेरनुसारतः । उपादत्तेवरांश्चापिलोकानांमोहनायचेतिवचनेनकथपूर्णगुणस्यस्वतस्तृप्तस्यहरेरन्यतोगुणलब्धिरितिचोद्यंनिरस्तम् ६
विप्राणांचरणपद्मपवित्ररेणोःसेवयासेवाविडंबनेनप्रतिलब्धशीलंविडंबिततत्स्वभावमिदंकेवलंविडंबनार्थंमोहनार्थमुच्यतइतिभावेनात्मानंविशिनष्टि सद्यइति नामसंकीर्तनादिनासद्यस्तत्क्षणादेवक्षतंनष्ट
मखिलंजनस्यमलंअघंयेनसतथातं । मलंकिट्टाघयोर्नस्त्रीतियादवः । स्वरतत्त्वेनविरक्तंतदपेक्षयारहितमिवास्थितमपिमांश्रीर्नजहातीतियद्यस्मात्स्वबाहुमपिछिंद्यामितिपूर्वेणान्वयः । अनुक्ताश्चगुणाविं
ष्णोरुक्तादोषानतस्यतु । अज्ञानाद्दोषविज्ञानंगुणज्ञानंयथार्थतइतिश्रुत्याविप्रचरणसेवयाहरेर्नष्टमलत्वंकिंनस्यादितिचोद्यंनिरस्तं संदिग्धवचनंतुमोहार्थत्वादितिज्ञायते विप्राणांचापिभक्तानामन्येषांच

तद्वःप्रसादयाम्यद्यब्रह्मदैवंपरंहिमे ॥ तद्धयेवात्मकृतंमन्येयत्स्वपुंभिरसत्कृताः ४ यन्नामानिचगृह्णातिलोकोभृत्येकृतागसि ॥ सोसाधुवादस्तत्कीर्तिंहंति त्वचमिवामयः ५ यस्यामृतामलयशःश्रवणावगाहःसद्यःपुनातिजगदाश्वपचंविकुंठः ॥ सोहंभवद्भ्यउपलब्धसुतीर्थकीर्तिश्छिंद्यांस्वबाहुमपिवःप्रतिकूलवृत्तिम् ६ यत्सेवयाचरणपद्मपवित्ररेणोःसद्यःक्षताखिलमलंप्रतिलब्धशीलम् ॥ नश्रीर्विरक्तमपिमांविजहातियस्याःप्रेक्षालवार्थमितरेनियमोन्वहंतेतत ७ नाहंतथाद्मियजमानहविर्वितानेश्च्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन ॥ यद्ब्राह्मणस्यमुखतश्चरतोनुघासंतुष्टस्यमय्यवहितैर्निजकर्मपाकैः ८ येषांबिभर्म्यहमखंडविकुंठयोगमायाविभूतिरमलांघ्रिरजःकिरीटैः ॥ विप्रांस्तुकोनविषहेतयदर्हणांभःसद्यःपुनातिसहचंद्रललामलोकान् ९

जनार्दनः । ब्रह्मणःशंकराद्वापिदेवताभ्यस्तथैवच । आत्मनश्चश्रियश्चैवसकाशात्प्रीयतामपि । पूज्यतामत्ययुक्तंववदेत्क्वापिविमोहयन् इत्यनेनपरिहर्तव्यंस्त्रीत्वविशेषात्मांनजहातीतिकिंमाहात्म्यंविशि
ष्योच्यतइतितत्राह यस्याइति मदितरेषांब्रह्मादीनांनियमस्तपोलक्षणोयस्याःश्रियःप्रेक्षालवार्थंकटाक्षनिरीक्षणलेशार्थमर्हतइत्यन्वयः यद्वा मदितरेषांनियमोयस्याःप्रेक्षालवार्थमर्हतेसाश्रीर्ममचरणपद्म
पवित्ररेणोःसेवयाप्रतिलब्धशीलानिरंतरंमदुपासनास्वभावमितिक्रियाविशेषणं मांनजहातीतियत्तस्मादेवंविधमाहात्म्योहंयुष्मद्विरोधकरंस्वबाहुमपिछिंद्यामिति विप्रेभ्यःकिमपिप्रयोजनमनपेक्षमाणंकिंने
त्याह सद्यइति सद्यइत्यनेनेतरसेवकेभ्यःस्वसेवकानाकालक्षेपमंतरेणफलप्राप्तिंध्वनयति श्रियोमत्तःप्रयोजनसद्भावेपिनममतस्याअर्थंइत्याह विरक्तमिति वीविशिष्टेमयिरक्तंस्वरतमित्यर्थः स्वरतस्यान्यतः
प्रयोजनापेक्षांधिक्करोति अपीति ७ वदान्यान्पुरुषान्शिक्षमाणइवपुनरपिविप्रान्स्तौतीत्याह नाहमिति अहंवितानैरुत्तमकल्पैर्यज्ञैःकरगैश्च्योतद्गलद्घृतंतेनाज्येनप्लुतंस्यंदमानंयजमानस्यहविर्हुतभुङ्
मुखेनादंस्तथातृप्तिंनयामि अहंयथामय्यवहितैरर्पितैर्निजकर्मणांपाकैःफलैस्तुष्टस्यचरतोभुंजानस्यब्राह्मणस्यमद्भक्तिलक्षणस्यविप्रस्यानुघासंप्रतिकवलंमुखेनाश्नअदनेनप्रीतोभवामीतियत्तस्मान्मेतेपि
यत्वाद्विप्राःपूज्याइतिभावः ८ इदानींस्पष्टमसुरजनमोहकवचनमिदमितिप्रकटयन्विप्रान्स्तौतीत्याह येषामिति अखंडापूर्णाविकुंठाविगतभेदाचयोगमायास्वरूपेच्छातयाविभूतिर्विविधभवनं
आदित्यानामहंविष्णुरित्यादिस्वरूपंयस्यसतथोक्तः अहंकिरीटैर्येषांविप्राणाममलांघ्रिरजोबिभर्मिकोनुपुमान्तान्विप्रान्नविषहेतसोढानभवेदित्यन्वयः एकस्मिन्नवतारेपिविप्राब्राह्मणानास्तीतिद्यो

तनापाकिरीटैरितिबहुवचनं केवलंविप्रबहुमानार्थंतदंघ्रिरजोभरणमित्याशयेनात्मानंविविनष्टि यद्दहंणेति पद्दर्हणांभोयस्यममब्रह्मणाकृतपादप्रक्षालनोदकंगंगाख्यमंभः चंद्रलक्ष्मणेनचंद्रशेखरेण सहवर्तमानान्लोकान्जनान्पुनाति ९ इदमपिमद्दिमांतरकथनंविप्रद्वेषोपिमद्द्वेषएवाधःपातहेतुत्वादित्याह येमइति येपुरुषामेतनूःप्रतिमास्थानीयान्मदीयान्मद्भक्तान्द्विजवरान्तथा। शरणंप्रहराभि ओरित्यभिधानादलब्धशरणानिरक्षकरहितानिभूतानिभेदबुद्ध्याविलक्षणबुद्ध्यादुदुहुःपीडयाचक्रुःयेचायेनक्षतदृशोऽधीकृतदृष्टयोमितोमन्युर्येषांतेतथाद्रक्ष्यंतितान्ममाधिनेतुर्दंडनायकस्ययमस्यगृध्रा स्येनाःकर्षंतिनेत्राण्युत्पाट्यभक्षयंतीत्यन्वयः १० इदानींमद्भक्तब्राह्मणसत्कारपरिपाकंवक्ष्यतीत्याह येब्राह्मणानिति तुष्यद्धृदःहृष्यन्मनसःस्मितारव्यसुधयाउक्षितमासिक्तपद्मवक्त्रंयेषांतेतथाअनुराग कलयास्नेहबद्धया। कलबंधनइतिधातोः। वाण्याआत्मजवत्गृणंतःप्रशंसंतः अहमिवयथाहंविप्रान्संबोधयामितथासंबोधयंतियेमद्वत्कारुषाक्षिपतोमत्संयतः ब्राह्मणानर्चयंतिकथंभाविधियाहरिरेषुविशेषतः संनिहितइतिबुद्ध्याहंतैर्विप्रार्चकैरुपाकृतोवशीकृतइत्यन्वयः ११ नन्वेवमुभयेषांयुष्माकंशापोभिमतश्चेत्कदापिशापमोक्षोनेत्यतस्तन्मोक्षमाह तन्मेस्वभर्तुरिति विप्राणांममात्यंतंप्रियत्वात्तद्विरोधिनो मद्विरोधिनएवेतियस्मात्तथापियुष्मद्व्यतिक्रमगतिंयुष्मदपराधफलमसुरत्वादिलक्षणंप्रतिपद्य सद्योभूयोममांतिकमितामागच्छतामित्यन्वयः भगवतोक्तमिदंतात्कालिकंनतुतत्त्वमित्यत्राह येस्व भर्तुरितिस्वभर्तुर्मेअनसायंविप्रानुरागलक्षणंनिश्चयंअलक्षमाणौविप्रार्चनादिलक्षणैरप्यजानंतौ अज्ञानंचब्रह्मशापनिमित्तंतयोरितिध्वनयति नहिवैकुंठेअज्ञानादिसंभवोस्ति ननुममांतिकमितामित्यनेनशा

येमेतनूर्द्विजवरान्दुदुहुर्मदीयान्भूतान्यलब्धशरणानिचभेदबुद्ध्या ॥ द्रक्ष्यंत्यघक्षतदृशोह्यभिमन्यवस्तान्गृध्रारुषाममकुषंत्यधिदंडनेतुः १० येब्राह्मणान्मयिधियाक्षिपतोर्चयंतितुष्यद्धृदःस्मितसुधोक्षितपद्मवक्त्राः ॥ वाण्यानुरागकलयात्मजवद्गृणंतःसंबोधयंत्यहमिवाहमुपाकृतस्तैः ११ तन्मेस्वभर्तुरव सायमलक्षमाणौयुष्मद्व्यतिक्रमगतिंप्रतिपद्यसद्यः ॥ भूयोममांतिकमितांतदनुग्रहोमेयत्कालतोप्यविरतोहृतयोर्विवासः १२ ॥ ब्रह्मोवाच ॥ अथत स्योशतींदेवीमृषिकुल्यांसरस्वतीम् ॥ आस्वाद्यमन्युदष्टानांतेषामात्माप्यतृप्यत १३ सतींव्यादाय शृण्वंतोलघ्वींगुर्वर्थगह्वराम् ॥ विगाह्यागाधगंभीरं नविदुस्तच्चिकीर्षितम् १४ तेयोगमाययारब्धपारमेष्ठ्यमहोदयम् ॥ प्रोचुःप्रांजलयोविप्राःप्रहृष्टाःकंपितत्वचः १५

पमोक्षलक्षणःकोनुग्रहविशेषोध्वनितःस्यादितितत्राह तदनुग्रहइति हृतयोर्युष्मच्छापेनसुरेतरगतिंगमितयोरेतयोर्विवासः वैकुंठादसुरादिव्यवस्थानंकालतोबहुनाकालेनाप्यविरमोवसानरहितामि तिमत्तस्मात्समेनुग्रहःपुनर्ममलोकप्राप्तिलक्षणःशापमोक्षइत्यर्थः मदनुग्रहाभावेबलवताब्राह्मणशापेनकदाप्यसुरयोनिमोक्षोनस्यादितिभावः हिशब्देनसनकादीनामपिशापमोक्षानुमतिरस्तीतिद्योतय ति यतःस्वामिनोभिमतंभृत्यैरप्यनुमंतव्यम् १२ कोपाहिदष्टानांतेषांशापमोक्षानुमतिःकथंसंगच्छतइति तत्राह अथेति तस्यहरेरुशतींमभीष्टप्रदामृषिकुल्यामृषिकुलस्तुतिपरामन्यत्रमुनिकुलाप्रियांदे वीमभिधेयमणिभिर्द्योतमानामन्यत्रदेवादिस्नानक्रीडायोग्यांसरस्वतीं वाचमन्यत्रनदीमास्वाद्य श्रवणादिनाऽन्यत्रस्नानादिना भवदिदृक्षाभंगांकुरितेनमन्युनासर्पेणदष्टानांतेषांसनकादीनामात्मामनोन्य त्रबाह्याभ्यंतराविशिष्टोदेहोतृप्यत कोपापगमेनभगवदुक्त्युद्भूतानंदपूर्णोभूदन्यविषयापगमेनप्रकृतिस्थितोभूदित्यर्थः १३ वचनमाधुर्यास्वादनेनमनसस्तृप्तिर्नत्वर्थज्ञानेनतस्यानवगाह्यत्वादितिभावेनाह स तीमिति सुलंव्यादायशृण्वंतःशब्दतोलघ्वींमितांगुरुणामहतार्थेनगह्वरामप्रवेश्यांवाचंविगाह्यावचार्यगाधप्रतिष्ठायामितिधातोरगाधमतलस्पर्शमतएवगंभीरमवगाढुमशक्यंतस्यहरेश्चिकीर्षितंकिंचनकर्तु मिष्टंकंचनक्षेप्तुंवेतिनविदुः। क्षिविक्षेपेइतिधातुः १४ तर्हियावत्ज्ञानमपिकिंचननोचुःकिमितितत्राह तेयोगेति सनकादयःयोगमाययास्वरूपेच्छयाजातेनभ्रूभंगेनारब्धउत्पादितःपारमेष्ठ्यमहोदयोब ह्मपदसंबंधिप्रभूतैश्वर्ययस्यसतथातंहरिंप्रोचुरित्यन्वयः कंपितत्वचोरोमांचितगात्राः १५

किमूचुरित्याशंक्यनविदुस्तच्चिकीर्षितमितिहृद्गतंवाचोद्गलयंतीत्याह नवयमिति अध्यक्षः सर्वेश्वरस्त्वंसएवानुमतोदंडस्तदनुग्रहोमेइत्यादिनाममानुग्रहःकृतइतिप्रभाषसइतियत्तस्मात्तवचिकीर्षितंनावि
द्मइति १६ अस्मदुक्तेरन्यथाकरणासंभवात्कस्मादज्ञानंभवतामित्याशंक्यास्माद्वचनादित्याहुरित्याह ब्रह्मण्यस्येति किलेत्यनेनास्मदितरेषांमोहकं अस्माकंतुस्तुतिपरमिदमितिसूचितं तत्कथमि
त्यत्राहुरित्याह विप्राणामिति हेदेवआत्मदैवतंकुलदेवता १७ कुतोहेतोरित्यतउक्तं त्वत्तइतिविप्रादिसर्ववर्णैर्ब्रह्मचर्याद्याश्रमिभिश्चानुष्ठेयःसनातनोवेदवेद्यत्वेनानित्योधर्मस्त्वत्तोभूत्वावर्तते क्षेत्रादि
वत्कालतोद्रव्यतोनोत्साद्यते कथंवृत्तिरत्राहुरित्याह रक्ष्यतइति तनुभिर्मत्स्याद्यवतारैः यदायदाहिधर्मस्यग्लानिर्भवतिभारतेत्यादेर्लटासनातनत्वमवधारयति भवान्कइतितत्राहुरित्याह धर्म
स्येति वायुनावैगौतमसूत्रेणेत्यादिश्रुत्यासर्वधारकत्वेनमतोधर्मोवायुस्तस्यमातृत्वेनपरोत्तमामाश्रीर्यस्यसतथोक्तः लक्ष्म्यादिमुक्तसमुदायात्वाय्वाद्यमुक्तजगतोपिश्रेष्ठोभवानित्यर्थः अत्रांकिंप्रमाणमि
त्युक्तंगुह्यइति धर्मस्येत्यनुवर्तते अपीतिपदमध्याहृत्यवाक्ययोजना गुहसंवरणइतिधातोः वायोरपिगुह्यःसवायोः दुर्ज्ञेयइत्यर्थः नीलिम्नाकाशादिवत्केनापिविकारेणयःकिंनस्यादित्यतउक्तं निर्विकार
इति उक्तचोद्यस्यकिमुत्तरमित्यतउक्तंमतइति भवानितिवर्ततेमनअवबोधनइतिधातोःएषसर्वेश्वरइत्यादिनानिर्विकारःसदाशुद्धइत्यादिनाच भवानवबुद्धःसम्यक्ज्ञातइत्यादिकंमानमुत्तरमुक्तंभवति
अनेनवायोरपिदुर्ज्ञेयत्वेशशशृंगतुल्यमिदमितिचोद्यंनिरस्तंतेनतद्विषयज्ञानसाकल्यंनिषिध्यतेनतुज्ञानमात्रं अतएवगुह्यइत्युक्त समाधिनाज्ञातुंशक्योनघटादिवत्सुज्ञेयइति यद्वा धर्मस्यमुख्यविषयो

ऋषयऊचुः ॥ नवयंभगवन्विद्मस्तवदेवचिकीर्षितम् ॥ कृतोमेनुग्रहश्चेतियदध्यक्षःप्रभाषसे १६ ब्रह्मण्यस्यपरंदैवंब्राह्मणाःकिलतेप्रभो ॥ विप्राणांदेवदे
वानांभगवानात्मदैवतम् १७ त्वत्तःसनातनोधर्मोरक्ष्यतेतनुभिस्तव ॥ धर्मस्यपरमोगुह्योनिर्विकारोभवान्मतः १८ तरंतिह्यंजसामृत्युंनिवृत्तायदनुग्र
हात् ॥ योगिनःसभवान्किंस्विदनुगृह्येतयत्परैः १९ यंवैविभूतिरुपयात्यनुवेलमन्यैरर्थार्थिभिःस्वशिरसाधृतपादरेणुः ॥ धन्यार्पितांघ्रितुलसीनवदा
मधाम्नोलोकंमधुव्रतपतेरिवकामयाना २० यस्तांविविक्तचरितैरनुवर्तमानांनात्याद्रियत्परमभागवतप्रसंगः ॥ सत्वंद्विजानुपथपुण्यरजःपुनीतिःश्रीव
त्सलक्ष्मकिमगाभगभाजनत्वम् २१

भवानेवनस्वर्गादिरित्याहुरित्याह धर्मस्येति कुतोनस्वर्गादिरित्यतउक्तंनिर्विकारइति स्वर्गादेःप्राकृतत्वेनानित्यत्वादस्यतुनिर्गुणत्वेनस्वतोवातद्धर्मराहित्यात्धर्मकारयितृत्वेनानिरुपमस्वातंत्र्यात्तद्दत्तफ
लस्यचनित्यत्वसंभवादितिभावः १८ मुक्तामुक्तप्रपंचोत्तमत्वमर्थादुक्तंतदिदानींघटयंतीत्याह तरंतीति निवृत्तानिवृत्तिधर्मनिष्ठायोगिनोज्ञानिनोयस्यानुग्रहात्मृत्युंसंसारमंजसातरंतिहियस्यप्रसादा
दित्यादिश्रुतिसिद्धत्वात्संसारोन्मूलकत्वेनसमुक्तामुक्तोत्तमोभवान्परैरन्यैर्ब्राह्मणादिभिरनुगृह्येतानुग्रहपात्रीक्रियेतेतियत्तत्किंस्वित्विप्रस्तुतिमंतरेणनकिमपीत्यर्थः १९ लक्ष्म्याउत्तमत्वंस्पष्टयंतीत्याह
यंवाइति वाइत्यनेनममयोनिरप्स्वंतरित्यादिवाक्यंप्रमाणयंति विभूतिःश्रीरन्यैर्ब्रह्मादिभिर्विरक्तिभक्त्याद्यर्थार्थिभिःनित्यप्राप्तभगवदनुग्रहायानित्यमुक्तायाःप्राप्यप्रयोजनांतराभावादुपयानंकिमर्थमि
त्याशंक्यसेवायामानंदैकरूपत्वेन स्वभावत्वेपिलोकविडंबनमेवप्रयोजनमितिभावेनविशिषंतीत्याह धन्येति धन्यैर्भक्तिज्ञानादिगुणपूर्णत्वेनस्वर्गादिफलानिच्छुभिरर्पितमंघ्रितुलसीनवदामयत्तस्यधाम्नो
धारकस्यवक्षःस्थलस्यालोकंस्थानंचरणयुगलमुत्तोरसिस्थितास्पर्धयेवकामयमानायमैतत्स्थानंभूयादितिभावंदर्शयंतीयंनिषेवतइत्यर्थः नचेदमविज्ञातंहरिणेतिभावेनोक्तं मधुव्रतपतेरिति मधुनोरसस्य
व्रतंभुक्तिर्येषांतेमधुव्रताःसारभोजिनस्तेषांपत्युः। व्रतंवैविष्णुर्वैज्यातपोमासाभिभुक्तिर्ष्वित्यभिधानं लब्ध्वापिवक्षसिपदमित्यस्यादुक्तएवार्थः २० एवमितरेभ्योधिकंनिषेव्यमाणायामस्यांकिमपिप्राप्यप्र
योजनांतराभावात्पूर्वस्मादपरविशेषेणाऽऽस्त्वांकतुभागवतानांगुणतारतम्यप्रस्तावेपरमभागवतत्वेनप्रशंसाप्रसंगएवेत्याह यस्तामिति विविक्तचरितैरनन्यैरसाधारणसेवाकरणैरनुवर्तमानांतांश्रियंयःनात्या

द्रियत् गुणानामप्रतीयमानत्वात्तदपि कार्योत्तयाआदरंनाकरोत्किंतुपरमभागवतत्वेनप्रसंगोयस्यसतथोक्तः एवंविधमाहात्म्यः सत्वंद्विजानामनुपथेनानुगमनेनतत्पादपुण्यरजसापुनीतिःशुद्धियस्य साद्विजानुपथपुण्यरजःपुनीतिः पथगतावितिधातु श्रीवत्सलक्ष्मश्रीवत्साख्यलांछनमगाः किमगभाजनस्त्वंसौभाग्यपात्रत्वंवागच्छः किमित्याक्षेपः अतइदंभगवदुक्तंसर्वंविप्रस्तुतिपरमितिसिद्धं पद्ययंशा खतात्पर्यार्थःस्यात्तर्हीदंस्तुतिपरंस्यात्तत्कुतइतीयमाशंका । हरिभक्तिर्हरेःप्रीतिर्ज्ञानानंदादयोगुणाः । अधिकारेचमुक्तौचब्रह्मवाय्वोश्चतास्त्रियोः । शेषवींद्रहराणांचतत्स्त्रीणांवासवादिनां । यथाक्रमंतुविज्ञेया भूमौकारणतोन्यथा । देहस्यलक्षणंचैवभूमावप्यन्यथाभवेत् । ब्रह्मादिषुक्रमेणैवनित्यंस्यादेहलक्षणं । श्रियोधिकागुणाःसर्वेसर्वेभ्योनियमेनतु । उक्ताश्चैवाप्यनुक्ताश्चततोविष्णोर्नसंशयइत्यनेनपरिहृतेति २० इतोपिद्विजकुलस्यगोपनीयत्वाभिप्रायेणभगवताद्विजावनादिकंक्रियतेइतिविज्ञापयंतीत्याह धर्मस्येति नूनमन्यत्प्रयोजनमंतरेणधर्मस्यधारकस्यधारणाद्भगवान्धर्मइत्यादेर्भगवतस्तेतवस्वैःस्वरूपभूतैस्त्रिभि रनंतासनवैकुंठक्षीरसागरशायिभिः पद्भिरंशैर्मूर्तिभिश्चराचरमिदंविश्वंद्विजानांदेवतानांप्रयोजनमुद्दिश्यभृतंरक्षितमित्यन्वयः हेत्रियुगत्रियुगेष्ववतारोयस्यसतथातस्यसंबुद्धिः तत्प्रतिनिषेधपक्षनिर्मूलना भावेरक्षणंकथंसंगच्छतेइत्यतउक्तं तदभिघातीति तपआद्यनुष्ठानविरोधिरजस्तमश्चतनुवामूर्त्यानिरस्याभिभूय कथंमूर्तिरित्यतउक्तंनोवरदयेति अस्माकंज्ञानप्रदाननिरतया किमाख्ययेत्यस्या पिइदमेवोत्तरंवरदयाकपिलाख्यया । कपिलोवरदश्चैवविकल्पश्चेतिकथ्यतइत्यतोगुणवाचकस्याविशेष्याभिधेयत्वंकथमितिनिरस्तं तापसस्यशांतस्यकपिलस्यक्षत्रियवदायुधाद्यग्रहणात्कथंविरोधिवि नाशकत्वमित्यतउक्तं सत्वेनेति सत्वेनसत्ववर्धनेननिरासइतिशेषः तृतीययासत्वगुणस्यकारणमात्रत्वंनमुख्यत्वंकपिलस्यैवमुख्यत्वंज्ञायते शरेणरामइतिवत् एवंविशेषार्थःकस्मादयंकल्प्यतइति

धर्मस्यतेभगवतस्त्रियुगत्रिभिःस्वैःपद्भिश्चराचरमिदंद्विजदेवतार्थम् ॥ नूनंभृतंतदभिघातिरजस्तमश्चसत्वेननोवरदयातनुवानिरस्य २२ नत्वंद्विजोत्तम कुलंयदिहात्मगोपंगोप्तावृषस्वर्हणेनसुसूनृतेन ॥ तर्ह्येवनंक्ष्यतिशिवस्तवदेवपंथालोकोग्रहीष्यदृषभस्यहियत्प्रमाणम् २३ तत्तेनभीष्टमिवसत्वनिधेर्वि धित्सोःक्षेमंजनायनिजशक्तिभिरुद्धृतारेः ॥ नैतावतात्र्यधिपतेर्बतविश्वभर्तुस्तेजःक्षतिस्त्ववनतस्यसतेविनोदः २४

चोक्तं अनंतासनवैकुंठक्षीरसागरगैस्त्रिभिः । रक्षांकरोतिभगवान्कपिलःसत्ववर्धनात् । असत्वोपिरजश्चैवतमश्चापिनिरस्यत्वित्यनेननिरस्तम् २२ हेवृषइंद्रपरमैश्वर्यवारिधेयोद्विजदेवतारक्षैकनिरतःस त्वंयद्यदीहजगतिआत्मैवगोपोगोपकोयस्यतदात्मगोपंद्विजोत्तमकुलंतुसूनृतेनशोभनामधुरावाग्यस्यसतथातेनस्वर्हणेनलोकमान्यसत्कारेणनगोप्तानरक्षितासि देवक्रीडादिगुणपूर्णतर्हितदानीमेवत वशिवःशुद्धःपंथाःतत्त्वविषयोज्ञानमार्गःशिष्टाचारश्चनंक्ष्यतिउत्सन्नोभविष्यति तत्रहेतुगर्भविशेषणमाह लोकइति लोकइतरोजनःऋषभस्यतद्धर्मप्रवृत्तिसमर्थस्ययत्प्रमाणंतद्धयेवाग्रहीष्यत् यद्यदाचरति श्रेष्ठइत्यादेः २३ ततःकिमनिष्टंतत्राह तत्तइति यस्मादसुराअप्रियाअपिलोकस्ययथादुःखजनकत्वेननतथाहरेः नित्यानंदपूर्णत्वात् दुःखप्रवेशानवकाशात्किंतुनिषेधयोग्यज्ञानविषयमप्रियंभगवतोमतं तदुक्तं असुराअप्रियाश्चापिनित्यानंदात्रलोकवत् । निषेध्यबुद्धिविषयमप्रियंहिहरेर्मतमितितस्मादनभीष्टमिवेत्युक्तंसत्वनिधेरित्ययंहेतुःसुखकरमार्गनाशनंतत्तेतवानभीष्टमिवदुःखजनकत्वेननकिंतुनिष ध्यत्वेनैवानभीष्टं कुतइतितत्राह विधित्सोरिति अशक्तस्येच्छयाकोर्थइतितत्राह निजेति नन्देवंविधस्यतवमानभंगहेतुःविप्रप्रणामःकिमितिक्रियतइतितत्राह नैतावतेति विप्रावनतस्यतवावन तइत्येतावतातेजःक्षतिःमानभंगलक्षणतेजोभंगोनास्ति तत्रहेतुगर्भविशेषणमाह त्र्यधीति नकेवलंत्रिलोकीमात्रस्याधिपतिस्तत्रत्यानांसमस्तानामविशेषेणवोढेत्याह विश्वभर्तुरिति नचानेनकिमपिप्र योजनमित्याह सतइति विप्रप्रणामोविनोदोलीलाविलासः तुशब्देनप्रयोजनांतरंनिवारयति २४

अधीशानिरुपमपरित्तार्थंडेशभवाननयोर्यथावत् यंदमंदंडंविचष्टेपश्यति अथवात्रैववृत्तिंस्थितिलक्षणांवयंतत्तयोरेकोनिव्र्यलीकमनुमन्महिअनुजानीमहे पूर्वंदंडादल्पोदंडोभिमतश्चेत्सोस्त्वित्यभिप्रेत्यपं वादमाहेत्युक्तंयेवयमनागसौस्वतोनिष्पापौकिल्बिषेणदोषेणायुष्माहियोजितवंतस्तेष्वस्मासुयउचितोदंडःसवाधियतामित्यनेनापिहरेर्विप्रप्रियत्वमुक्तं दंडावत्वंवच्छनितं किल्बिर्षुकेतिसूत्रात् किल्बिषैत्य क्रीडनयोरित्यस्माद्धातोरिलच्प्रत्ययोभवतिबुगागमश्चदोषेभिर्येनेनार्किल्बिषमितिभवतीत्यनेनस्वतएतौनिर्दोषौनिमित्तात्सदोषावितिसूचितम् २५ सनकाद्युक्तेरुत्तरत्वेननपुरुर्क्तिकरोति एतांदिति संरंभेद्वेषोत्कर्षःतेनसंभृतःसंपादितोयःसमाधिर्मनसएकाग्रतारूपस्तेनानुबद्धोयोगोभक्तियोगोययोस्तौतथाउपयास्यतःउपयातामिति व्यत्ययस्तत्क्रियायाः अंतर्भक्ताबाहिःक्रुद्धाहिरण्याद्याहरिंप्रति । स वैकुद्धाःशंबराद्याअंतःक्रोधवशास्तयेतिविशेषंसूचयति तत्तयोः २६ अथोत्तरकथाप्रसंगःकइतितत्राह अथेति अथशापमोक्षानतरम् २७ अनुमान्यानुज्ञाप्य श्रियंस्वरूपतां स्वरूपश्रीस्तथाभार्याद्वेधा श्रीस्तुहरेर्मतेति २८ मामैष्टंभयंनकुरुतशंसुखमस्तु इच्छेइच्छामि २९ अपराधांतरसद्भावान्मतामित्युक्तं कोसावपराधइतितत्राह एवदिति अपवारितानिवारिता योगनिद्रामुपागते ३० ब्रह्म

यंवानयोर्दममधीशभवान्विचष्टेवृत्तिंचवातदनुमन्महिनिर्व्यलीकम् ॥ अस्मासुवायउचितोध्रियतांसदंडोयेऽनागसौवयमयुंक्ष्महिकिल्बिषेण २५ ॥ श्री भगवानुवाच ॥ एतौसुरेतरगतिंप्रतिपद्यसद्यःसंरंभसंभृतसमाध्यनुबद्धयोगौ ॥ भूयःसकाशमुपयास्यतआशुयोवःशापोमयैवविहितस्तदवैतविप्राः २६ ब्रह्मोवाच ॥ अथतेमुनयोदृष्ट्वानयनानंदभाजनम् ॥ वैकुंठंतदधिष्ठानंविकुंठंचस्वयंप्रभुम् २७ भगवंतंपरिक्रम्यप्रणिपत्यानुमान्यच ॥ प्रतिजग्मुःप्रमुदिताःशंसंतोवैष्णवींश्रियम् २८ भगवाननुगावाहयातंमाभैष्टमस्तुशम् ॥ ब्रह्मतेजःसमर्थोपिहंतुंनेच्छेमतंतुमे २९ एतत्पुरैवनिर्दिष्टंरमयाक्रुद्धयायदा ॥ तदापवारिताद्वारिविशंतीमय्युपारते ३० मयिसंरंभयोगेननिस्तीर्यब्रह्महेलनम् ॥ प्रत्येष्यतंनिकाशंमेकालेनाल्पीयसापुनः ३१ द्वाःस्थावादिश्यभगवान्विमानश्रेणिभूषणम् ॥ सर्वातिशययालक्ष्म्याजुष्टंस्वंधिष्ण्यमाविशत् ३२ तौतुगीर्वाणऋषभौदुस्तराद्धरिलोकतः ॥ हतश्रियौब्रह्मशापादभूतांविगतस्मयौ ३३ तदाविकुंठधिषणात्तयोर्निपतमानयोः ॥ हाहाकारोमहानासीद्विमानाग्र्येषुपुत्रकाः ३४ तावेवह्यधुनाप्राप्तौपार्षदप्रवरौहरेः ॥ दितेर्जठरमाविष्टंकाश्यपंतेजउल्बणम् ३५ तयोरसुरयोरद्यतेजसायमयोर्हिवः ॥ आक्षिप्तंतेजएतर्हिभगवांस्तद्विधित्सति ३६

शापनिवारकसंरंभएवभक्तियोगवरमुपदिशन्निवाह संरंभेति एतयोर्भक्तियोगोस्तीतिकस्मादवगतमितीदंचोद्यं । अंतर्भक्ताबहिर्वैराहिरण्याद्याहरेर्मताः । तत्रभक्त्याभवन्पूताद्वेषआवेशकान्मतः । ब्रह्मजाअसुरायेतुविष्णोःपार्षदतांगताः । बाणाद्याश्चहरेर्द्वेषमंतःकृत्वातमोगताइत्यनेनेनिरस्तं । अनेनसंरंभोनीचफलोभक्तियोगएवब्रह्मशापनिस्तारकइत्युक्तंभवति पुनःशापाद्व्यावृत्तौस्वरूपावाप्तौकालक्षेपोनास्तीत्याशयेनोक्तं कालेनेति ३१ द्वाःस्थौद्वारपालौ ३२ दुर्मदानांदंडएवमदशांतिहेतुरितिभावेनाह तौत्विति गीर्वाणऋषभौइति संधिकार्याभावादेवश्रैष्ठ्यमौपचारिकमितिदर्शयति दुस्तराद्ब्रह्मशापतोविगतस्मयौनष्टमदावभूतामित्यन्वयः ३३ मदाभावात्तत्रैवावस्थानमभूत्किंनेत्याह तदेति विकुंठधिषणात्वैकुंठलोकात् विमानाग्र्येषुस्थितानामितिशेषः ३४ कथाप्रसंगंप्रकृतेसंगमयति तावेवेति दितेरुदरंप्रविष्टंकश्यपस्यविद्यमानंकाश्यपंतेजोवीर्यंयाभ्यां ३५ असुरयोरसुराविष्टयोः आक्षिप्तमभिभूतंतस्यप्रतीकारमुपदिशति एतर्हीति एतर्हिइदानींतत्तस्यप्रतीकारंविधित्सतिकर्तुमिच्छति कालांतरेक्षिपमाणत्वादपराधपूरणस्यचापेक्षितत्वादिदानीमिच्छेवेत्यतोविधित्सतीति ३६

अधुनैवभवताकोऽश्वुपायोनिरूपणीयइत्याशंक्योक्तमेवविवृणोति विश्वस्येति विश्वस्यस्थित्यादिहेतुरित्यनेनास्यतत्कर्तृत्वंसूचयति योगेश्वरैर्ब्रह्मादिभिरपिदुरत्ययोदुर्ज्ञेयोयोगमार्गउपायप्रकारोयस्यसत थाक्षेमंप्राप्तरक्षांविधास्यतीत्यनेननेदानींकालइतिसूचयति उक्तकालेकोनिश्चयइत्यतउक्तं त्रातेति त्राणशीलत्वात्करिष्यत्येवेतिनिश्चयोपपत्तेः हेत्वंतरंचाह त्र्यधीशइति त्रयाणांलोकानामीश्वराइंद्रादय स्तेषामीश्वरऐश्वर्यकर्तृत्वेनस्वामी त्राणोपेक्षायामिंद्राद्यैश्वर्यमपिनस्यादिति फलितमाह अस्मदीयेति अस्मदीयेनविमर्शेनोपायनिर्मार्गणेनाकियानर्थः नकोपीत्यर्थः । स्यादप्यधिकईश्वरइतियादवः ३७ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांसप्तदशोध्यायः ॥ १७ ॥ अनन्यवध्ययोर्हिरण्यकशिपुहिरण्याक्षयोर्निहंतुर्हरेरमितमहिम्नोवगतत्वादस्मिन्भगवतिभक्तिः कर्तव्येतित न्महिमाप्रतिपाद्यतेस्मिन्नध्यायइत्यपेतत्रादौदेवानांत्रिदिवगमनंवक्ति निशम्येति आत्मभुवाब्रह्मणागीतंकथितम् १ अपत्यपरिशंकिनीअपत्ययोर्हरेर्नाशशंकावती यमौयमलौ २ आभ्यांदैत्याभ्यां यथाजनोपद्रवाभवंतितथासूचकानुत्पातानाह उत्पाताइति ३ सहाचलाःसपर्वताःप्रदेशबहुत्वाद्भुवइतिबहुवचनं सोल्काउल्कापातसहिताअशनयोनिर्घाताः ४ फट्कारश्चैवफूत्कारस्तथाकिलकि

विश्वस्ययःस्थितिलयोद्भवहेतुराद्योयोगेश्वरैरपिदुरत्यययोगमार्गः ॥ क्षेमंविधास्यतिसनोभगवांस्त्र्यधीशस्त्रातास्मदीयविमृशेनकियानिहार्थः ३७ ॥ इति श्रीभागवतेम० तृतीयस्कंधेसप्तदशोऽध्यायः ॥ १७ ॥ मैत्रेयउवाच ॥ निशम्यात्मभुवागीतंकारणंशंकयोज्झिताः ॥ ततःसर्वेन्यवर्ततत्रिदिवायदिवौकसः १ दितिस्तुभर्तुरादेशादपत्यपरिशंकिनी ॥ पूर्णेवर्षशतेसाध्वीपुत्रौप्रसुषुवेयमौ २ उत्पाताबहवस्तत्रनिपेतुर्जायमानयोः ॥ दिविभुव्यंतरिक्षेचलोकस्यचभ यावहाः ३ सहाचलाभुवश्चेलुर्दिशःसर्वाःप्रजज्वलुः ॥ सोल्काश्चाशनयःपेतुःकेतवश्चार्तिहेतवः ४ ववौवायुःसुदुस्पर्शःफट्कारारावान्मुहुः ॥ उन्मूल यन्नगपतीन्वात्यानीकोरजोध्वजः ५ उल्लसत्तडिदंभोदघटयानष्टभागणे ॥ व्योम्निप्रविष्टतमसानस्मव्यादृश्यतेपदम् ६ चुक्रोशविमनावार्धिरुदूर्मिःक्षुभि तोदरः ॥ सोदपानाश्चसरितश्चुक्षुभुःशुष्कपंकजाः ७ मुहुःपरिधयोभूवन्सराह्वोःशशिसूर्ययोः ॥ निर्घातरवनिर्ह्रादाविवरेभ्यःप्रजज्ञिरे ८ अंतर्ग्रामेषुमुख तोवमंत्योवह्निमुल्बणम् ॥ सृगालाउलूकटंकारैःप्रणेदुरशिवाःशिवाः ९ संगीतवद्रोदनवदुन्नमय्यशिरोधरान् ॥ व्यमुंचन्विविधावाचोग्रामसिंहास्ततस्त तः १० खरोष्ट्राःकर्कशैःक्षत्तःखुरैर्घ्नंतोधरातलम् ॥ खात्काररभसामत्ताःपर्यधावन्वरूथशः ११

लादयः । अनुकारशब्दाविज्ञायाश्चान्येतादृशामता इत्यभिधानात् । फट्कारोनुकारशब्दःतद्वान्फट्कारारावान्तादृशाइतिटंकारादयः वात्यानांमंडलवायूनामनीकंसमूहोपस्यसतथा रजएवध्वजो यस्यसरजोध्वजः ५ उल्लसंत्यस्तडितोयेषुतेतथाउल्लसत्तडितःतेचतेअंभोदामेघास्तेषांघटयामालया नष्टोभानांनक्षत्राणांगणोयस्मिंस्तत्तथातस्मिन् तारकंतारकेतिवत् भंभेतिनामद्वयम् ६ वार्धिः समुद्रःसोदपानावापीकूपादिभिःसहिताः शुष्कानिम्लानानिपंकजानियासुतास्तथा ७ परिधयःपरिवेषाःनिर्घातरवोनिर्मेघगर्जनशब्दःतस्यनिर्ह्रादाःप्रतिध्वनयःविवरेभ्यःपर्वतगुहादिभ्यः ८ सृगालाः पुमांसःशिवाःसृगालस्त्रियःउलूकटंकारैर्निंदितानुकारस्वरैःप्रणेदुरित्यनेननाशसूचयति तदुक्तं अपिःसंभावनाप्रश्नगर्हाशंकासमुच्चये । नाशस्तत्रसृगालानांशिवानांचान्यथास्वरइति ९ ग्रामसिंहाःसार मेयाःशिरोधराःकंठास्तानुन्नम्यऊर्ध्वीकृत्यसंगीतवन्नाट्यगानवत् १० खराःक्रूराःउष्ट्राःखरोष्ट्राःखात्कारोप्यनुकारशब्दःतस्यरभसावेगेन ११

रासभगर्दभागर्दभादिध्वनित्रस्ताःखगाःपक्षिणोनीडादुदपतन् १२ गावःसौरभेय्यःअत्रसन्भीताःदेवलिंगानिप्रतिमाः १३ अन्येदुष्टग्रहाः १४ अन्यान्भूकंपादीन्नतयोर्जयविजययोस्तत्त्वेशा पादिनिमित्तंविदंतिजानंति नत्वेषामुत्पातादीनांतत्त्वंजयविजयनिमित्तंविदंतीतिवा १५ इदानींदैत्ययोर्भाववक्ति ताविति सहसाबलेन पौरुषंपराक्रमःअश्मवत्सारेणदृढेन १६ कोटिभिरिति बहुवचनंचतुरस्रापेक्षयाकाष्ठादिशः १७ तयोर्नामकरणंवक्ति प्रजापतिरितिप्रजापतिःकश्यपःतयोर्नामाकार्षीदित्यन्वयः कथमत्राह यइति ययोस्तयोर्मध्येयःस्वदेहात्प्रागजायतजातस्तंहिरण्यक शिपुंविदुर्वैतयोर्मातासाततःपश्चाद्यमसूतप्रजास्तंहिरण्याक्षंविदुरित्यर्थः १८ पूर्वजस्यजयस्यादिग्विजयंवक्ति चक्रइति नकुतोपिबहिरंतःशुष्कादेरपिमृत्युर्यस्यसोकुतोमृत्युः १९ अनुजस्यादिशांज

रुदंतोरासभत्रस्तानीडादुदपतन्खगाः ॥ घोषेरण्येचपशवःशकृन्मूत्रमकुर्वत १२ गावोत्रसन्नसृग्दोहा स्तोयदाःपूयवर्षिणः व्यरुदन्देवलिंगानिद्रुमाःपेतु र्विनानिलम् १३ ग्रहान्पुण्यतमानन्येभगणाश्चापिदीपिताः ॥ अतिचेरुर्वक्रगत्यायुयुधुश्चपरस्परम् १४ दृष्ट्वान्यांश्चमहोत्पातान्नतत्तत्त्वविदःप्रजाः ॥ ब्रह्मपुत्रानृतेभीतामेनिरेविश्वसंप्लवम् १५ तावादिदैत्यौसहसाव्यज्यमानात्मपौरुषौ ॥ ववृधातेश्मसारेणकायेनाद्रिपतीइव १६ दिविस्पृशौ हेमकिरीटकोटिभिर्निरुद्धकाष्ठौस्फुरदंगदैर्भुजैः ॥ गांकंपयंतौचरणैःपदेपदेकट्यासुकांच्यार्कमतीत्यतस्थतुः १७ प्रजापतिर्नामतयोरकार्षीद्यःप्राक्स्व देहाद्यमयोरजायत ॥ तंवैहिरण्यकशिपुंविदुःप्रजायंतंहिरण्याक्षमसूतसाततः १८ चक्रेहिरण्यकशिपुर्दोर्भ्यांब्रह्मवरेणच ॥ वशेसपालान्लोकांस्त्रीनकु तोमृत्युरुद्धतः १९ हिरण्याक्षोनुजस्तस्यप्रियःप्रीतिकृदन्वहम् ॥ गदापाणिर्दिवंयातोयुयुत्सुर्मृगयन्रणम् २० तंवीक्ष्यदुःसहजवंरणत्कांचननूपुरम्॥ वैज यंत्यास्रजाजुष्टमंसन्यस्तमहागदम् २१ मनोवीर्यमदोत्सिक्तमधृष्यमकुतोभयम् ॥ भीतानिलिल्यिरेदेवास्ताक्ष्यत्रस्ताइवाहयः २२ सवैतिरोहितान्दृष्ट्वा माहसास्वेनदैत्यराट् ॥ सेंद्रान्देवगणान्क्षीबानपश्यन्व्यनदद्भृशम् २३ ततोनिवृत्तःक्रीडिष्यन्गंभीरंभीमनिःस्वनः ॥ विजगाहेमहासत्त्वोवार्धिंमत्त इवद्विपः२४तस्मिन्प्रविष्टेवरुणस्यसैनिकायादोगणाःसन्नधियःससाध्वसाः ॥ अहन्यमानाअपितस्यवर्चसाप्रधर्षितादूरतरंप्रदुद्रुवुः २५ सवर्षपूगानुदधौमहा बलश्चरन्महोर्मीञ्श्वसनेरितामुहुः ॥ गुर्व्याभिजघ्नेगदयाविभावरीमासेदिवांस्तातपुरींप्रचेतसः २६ तत्रोपलभ्यासुरलोकपालकंयादोगणानामृषभंप्रचे तसम् ॥ स्मयन्प्रलब्धुंप्रणिपत्यनीचवज्जगादमेदेह्यधिराजसंगरम् २७

यंविस्तृत्याह हिरण्याक्षइति युयुत्सुर्योद्धुकामः २० रणत्कांचननूपुरंकणत्कनकपादवलयं पुष्पैश्चतुर्गुणामालावैजयंतीविदुर्बुधाइत्यभिधानाच्चतुर्गुणितावैजयंतीनाम २१ मनोभिमतवीर्यम देनोत्सिक्तमुद्रिक्तं निलिल्यिरेनिलीनाःताक्ष्यॊगरुडस्तेन २२ सहसाबलेन २३ २४ सन्नाधियोनष्टबुद्धयः प्रधर्षिताअभिभूताः २५ तातविदुर प्रचेतसोवरुणस्यनाम्नाविभावरींपुरमासेदि वान्प्राप्तः महत्यागदयाभिजघ्नइत्यन्वयः २६ प्रलब्धुंविप्रलब्धुंस्मयन्नुपाधन्नीचवत्म्लेच्छवदेकहस्तेननत्वा २७

बृहच्छ्रवालोकव्याप्तकीर्तिः दुष्टोमदोदुर्मदः तेनवीरावयमित्यात्मानंक्षंतुंशीलमेषामस्तीतिदुर्मदवीरमानिनः तेषांवीर्यमात्मन्यावहतिसन्निधापयतीति वीर्यरहितान्करोतीतिवीर्यावहः एतदेवाविवृणोति विजित्येति राजसूयेनयज्ञेनायजदिति यदतोदुर्मदवीरमानिनांवीर्यावहत्वादाधिराजत्वाच्चमेयुद्धंदेहीतिगतेनान्वयः २८ विनिषेधमेवावोचत्कथमित्यतउक्तमंगेति यद्वाविपृथक्भूतंपुरुषमवोचत् २९ सकइतिनत्राह पश्यामीति आवारयिष्यतिआवृणोति सम्यङ्निरोत्स्यतीतिवा तत्ररुचिंजनयति मनस्विनइति ३० सकुत्रेतिविचारोमाभूदित्याह तमिति वीरंशूरमारात् निकटमधुनै ववीराःशेरतेऽस्मिन्निति। बाहुलकादधिकरणेअच् यद्वापुंसिसंज्ञायांघःप्रायेणेत्यधिकरणेघः वीरशयोरणांगणस्तस्मिन् ममविरूपेणतेनसंगमः कथंघटतइतिशंकामाभूदित्याह यस्त्वद्विधानामिति प्रशांतयेवि नाशायवराहादिरूपाणि यच्चोत्पत्तिकजयभाजनानांदेवादीनांजयोनयोःकथमितिशंकेयं नदेवानांप्रजापानाविजेतावरतोविना। बलेनविद्ययावापिनसमस्तत्पतीन्विना। वरोपिताहशोयावच्छरीरंनान्य देहगइत्यनेनपरिहर्तव्येति ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांअष्टादशोध्यायः ॥ १८ ॥ एकमर्थमनेकधाप्रतिपद्यमानोमहामनास्तद्वरुणोक्तंविगणय्यावज्ञायविचा र्यवा आगच्छेति यद्यपिविशतेःसंपूर्वात्स्वापार्थत्वंतथाप्यत्रजलेनेत्रेनिमील्यप्रवेशाभिप्रायेणोक्तम् १ अग्रदंष्ट्रयादंष्ट्राग्रेणप्रकर्षेणोर्ध्वंनीयमानाऽवनिर्येनसतथातं धराधरंपर्वतांकिन्नेत्युक्तमविजितामिति अक्ष्णा

त्वंलोकपालाधिपतिर्बृहच्छ्रवावीर्यावहोदुर्मदवीरमानिनाम् ॥ विजित्यलोकेऽखिलदैत्यदानवान्यद्राजसूयेनपुराऽयजत्प्रभो २८ सएवमुत्सिक्तमदेन विद्विषादृढंप्रलब्धोभगवानपांपतिः ॥ रोषंसमुत्थंशमयन्स्वयाधियाव्यवोचदंगोपशमंगतावयम् २९ पश्यामिनान्यंपुरुषात्पुरातनाद्यःसंयुगेत्वांरणरंग कोविदम् ॥ आवारयिष्यत्यसुरर्षभेहितंमनस्विनोयंगृणतेभवादृशाः ३० तंवीरमारादभिपद्यविस्मयःशयिष्यसेवीरशयेश्वभिर्वृतः ॥ यस्त्वद्विधानामस तांप्रशांतयेरूपाणिधत्तेसदनुग्रहेच्छया ॥३१॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेअष्टादशोध्यायः ॥१८॥ मैत्रेयउवाच ॥ तदेवमाकर्ण्यजलेशभाषि तंमहामनास्तद्विगणय्यदुर्मदः ॥ हरेर्विदित्वागतिमंगनारदाद्रसातलंसंविविशेत्वरान्वितः १ ददर्शतत्राभिजितंधराधरंप्रोन्नीयमानावनिमग्रदंष्ट्रया ॥ मु ष्णंतमक्ष्णांबुरुहारुणश्रियंजहासचाहोवनगोचरोमृगः २ आहैनमेह्यज्ञमहींविमुंचनोरसौकसांविश्वसृजेयमर्पिता ॥ नस्वस्तियास्यस्यनयाममेक्षितःसुरा धमासादितसूकराकृते ३ त्वंनःसपत्नैरभवायकिंभृतोयोमाययाहंत्यसुरान्परोक्षजित् ॥ त्वांयोगमायाबलमल्पपौरुषंसंस्थाप्यमूढंप्रमृजेसुहृच्छुचः ४ त्व यिसंस्थितेगदयाशीर्णशीर्षण्यस्मद्भुजच्युतयायेचतुभ्यम् ॥ बलिंहरंत्यृषयोयेचदेवाःस्वयंसर्वेनभविष्यंत्यमूलाः ५

अंबुरुहारुणश्रियंरक्तपद्मदलकांतिंमुष्णंतंचोरयंतंवनेजलेगविचभूमौचरतीतिवनगोचरोमृगोवराहः २ ननुभुवियतमानोवनेजलेचहग्विषयोभूदहोइतिप्रहस्यातिरश्चीनोगतःकिंनेत्याह आहेति विश्वसृजा ब्रह्मणारसौकसांदैत्यानामर्पितादत्ताअमुयाभूम्यासुराअधमायस्मात्ससुराधमइतितात्पर्यार्थः अनेनहिरण्याक्षस्यांतर्भक्तिंध्वनयति प्रातीतिकेनद्वेषंप्रकटयसि यथासंभवमुत्तरत्राप्येवमूहनीयम् ३ अस्माकंशत्रुभूतैर्देवैरभयायवृतस्त्वान्माययासूकरादिव्याजेनासुरान्होहंसिमारयसि अन्यत्रनोऽभयायसपत्नैर्वृतःकिंयस्त्वंमाययाअसुरान्हंसीति कीदृशस्त्वंपरोक्षजित्परोक्षेणाप्रत्यक्षतयाचौर्येणजयती ति अक्षाणींद्रियाणिजयतीत्यक्षजित् अतएवपरःयोगमायाबलंकपटोपायबलमतएवाल्पपौरुषंत्वांसंस्थाप्यहत्वासुहृदांशुचःप्रमृजइत्यन्वयः स्वरूपेच्छाबलं स्वसमपुरुषसमूहरहितप्रेक्षान्वत्त्वेस्तःऽल्पकृत्याप पितुंयोग्यंमूढंभक्तबाहवंकृत्वासर्वेन्मुहृदहंसंसारशुचःप्रमृजइत्यन्वयः ४ इदानींबाह्यद्वेषमुद्रूपयति त्वयीति अमूलामूलाश्रयरहिताः ५

तस्यांतरमर्किंविदधानइवबाह्यद्वेषंसहमानोयदर्थंजलमज्जनंतत्करोमीतिमन्वानउदमज्जदित्याह सइति उपलभ्यदृष्ट्वा करेणुर्हस्तिनी ६ हरेरभीष्टकार्यमध्येहिरण्याक्षेणकिमकारीत्याह तमिति अनुद्रुतोनुयातःहिरण्यकेशोहिरण्याक्षः ७ त्रिलोक्यामेकीभूयागतायामप्यबिभ्यतोहरेःकिमेकेनहिरण्याक्षेणानुयातेनेतिभावेनभूमेःप्रतिष्ठापनप्रकारंवक्ति सगामिति गांभूमिमुदस्तादुपरिगोचरेऽदूरप्रदेशे स्वसत्त्वंस्थैर्यलक्षणंस्वबलम् ८ अथजलेभूमिंप्रतिष्ठाप्यपृष्ठतोनुद्रुतंरिपुमविगणय्यहरिणाकिंकृतमत्राह परानुषक्तमिति परानुषक्तपृष्ठतोनुगतं तपनीयोपकल्पासुवर्णाभरणभूषितामहतीगदायस्यतथाभूतं कांचनैराभरणैश्चित्रितान्यलंकृतान्यंगान्यवयवायस्यसतथातं प्रहसन्नित्यनेनबाह्यकोपलक्षणंनिरुणद्धि इदंमहतांलक्षणम् ९ किमाहेत्यतआह सत्यमिति जलशायित्वाद्वनगोचराजलविषयाः ग्रामसिंहाञ्छुनःमृत्युपाशैःप्रतियुक्तस्यबद्धस्यपुंसोविकत्थनमसंबद्धभाषणम् १० न्यासहरानिक्षेप
निर्मिमृग्यत्वात्मार्गणाचमृगाइत्येतरसत्यं तत्रकेषांमार्गणंक्रियतइत्यतउक्तं युष्मद्विधानिति

सतुद्यमानोरिदुरुक्ततोमरैर्दंष्ट्राग्रगांगामुपलभ्यभीताम् ॥ तोदंमृषंनिरगादंबुमध्याद्ग्राहाहतःसकरेणुर्यथेभः ६ तंनिःसरंतंसलिलादनुद्रुतोहिरण्यकेशोद्विरदंयथाझषः ॥ करालदंष्ट्रोशनिनिःस्वनोब्रवीद्गतह्रियांकिंत्वसतांविगर्हितम् ७ सगामुदस्तात्सलिलस्यगोचरेविन्यस्यतस्यामदधात्स्वसत्त्वम् ॥ अभिष्टुतोविश्वसृजांप्रसूनैरापूर्यमाणोविबुधैःपश्यतोऽरेः ८ परानुषक्तंतपनीयोपकल्पमहागदंकांचनचित्रितांगम् ॥ मर्माण्यभीक्ष्णंप्रतुदंतंदुरुक्तैःप्रचंडमन्युःप्रहसंस्तंबभाषे ९ ॥ श्रीभगवानुवाच ॥ सत्यंवयंभोवनगोचरामृगायुष्मद्विधान्मृगयेग्रामसिंहान् ॥ नमृत्युपाशैःप्रतियुक्तस्यवीराविकत्थनंतवगृह्णंत्यभद्र १० एतेवयंन्यासहरारसौकसांगतह्रियोगदयाद्राविताऽस्ते ॥ तिष्ठामहेथापिकथंचिदाजौस्थेयंक्वयामोबलिनोत्पाद्यवैरम् ११ त्वंपद्रथानांकिलयूथपाधिपोघटस्वनोस्वस्तयआश्वदुद्रुहः ॥ संस्थाप्यचास्मान्प्रमृजाश्रुस्वकानांयःस्वांप्रतिज्ञांनातिपिपर्त्यसभ्यः १२ सोधिक्षिप्तोभगवताप्रलब्धश्चरुषाभृशम् ॥ आजहारोल्बणंक्रोधंक्रीड्यमानोहिराडिव १३ विसृजन्नहिवच्छ्वासंमन्युप्रचलितेंद्रियः ॥ आसाद्यतरसादैत्योगदयाभ्यहनद्धरिम् १४ भगवांस्तुगदावेगंविसृष्टंरिपुणोरसि ॥ अवंचयत्तिरश्चीनोयोगारूढइवांतकम् १५ पुनर्गदांस्वामादायभ्रामयंतमभीक्ष्णशः ॥ अभ्यधावद्धरिःक्रुद्धःसंरंभाद्दष्टदच्छदः १६

हारिणः रसौकःसुस्थितेषुकथंनिक्षेपापहरणमित्यतउक्तं गतह्रियइति तद्वद्भवतह्रीत्वेनभवानपिवद्रातिचेत्तुल्यःसमाधिरित्यतउक्तंतिष्ठामहइति बलिनारिपुणावैरमुत्पाद्यकथंचिदाजौस्थेयंस्थातव्यंक्कुत्रयामोगंतव्यप्रदेशाभावात् अथतस्मात्तिष्ठामहेआत्मानंप्रकाशयास्थितिंकुर्मः प्रकाशनस्थेयाख्ययोश्चेतिसूत्रादात्मनेपदप्रयोगः ११ नाहंबलीतिनेत्याह त्वमिति रथानामिति रथिनोलक्ष्यंतेरथानांरथिनांयूथपाधिपस्त्वंनोस्मान् अस्वस्तयेनाशाख्यामंगलायादुद्रुहः द्रोहमकार्षीरितियत्तत्किल क्रीडनमसुराणांहिंसनं विहारस्वभावोह्यतोयुद्धायघटस्वेत्यन्वयः किलृश्चैत्यक्रीडनयोःइतिधातुः । ततःकिंकृत्यमत्राह संस्थाप्येति इयंतवप्रतिज्ञाअस्याअपालनेतवाप्रशस्तकर्मत्वंस्यादित्याह यःस्वामिति अनिपिपर्तिप्रशस्यपाल्यति पृपालनपूरणयोः अतिःस्यादधिकार्थोक्तौप्रशंसायामतिक्रमइति १२ आविष्टासुरभावानिमित्तंबाह्यक्रोधभावमाह सइति प्रलब्धोवाचावंचितः क्रीड्यमानोऽनिष्टक्रीडाविषयंक्रियमाणःपोडयमानइतिवा । १३ मन्युनाप्रचलितानिस्वस्थानच्युतानींद्रियाणियस्यसः १४ योगारूढोयोगाविष्टः १५ दष्टोदच्छदोऽधरोष्ठोयेनसतथा १६

आजघ्नइत्यस्याकर्मकत्वस्यद्योतनायदक्षिणांसमुवीत्युक्तं आङोयमहनइत्यात्मनेपदं कोविदोगदायुद्धमार्गप्रभेदज्ञानपटुः १७ हर्यक्षोहिरण्याक्षःहारिरच्युतः १८ स्पृधोःस्पर्धमानयोःक्षतस्रवस्यरुधिरस्याघ्राणेनविवृद्धंयुद्धंययोस्तौतयोः इलायांभुविशुष्मिणोर्मत्तवृषभयोः १९ इदयुद्धंकाकग्राम्यकर्मवदज्ञातंनकिंतुब्रह्मादिदेवैर्दृष्टमितिभावेनब्रह्मागमनंवक्ति दैत्यस्येति यज्ञास्तत्साधनानिशावयवेषुयस्यसतथातस्य माययास्वेच्छयास्वंस्वतंत्रंपरमात्मानंराजयतिदीपयतिप्रकाशयतीतिस्वराट्ब्रह्मातदुपदिष्टब्रह्मज्ञानेनहिसर्वेषांमुक्तिरिति २० नकेवलंयुद्धदर्शनायब्रह्मणआगमनंकिंतुदैत्यवधोपायनिवेदनलक्षणकार्यांतरज्ञापनायचेत्यनेनाशयेनहरिंप्रतिब्रह्मविज्ञापनप्रकारंवक्ति आसन्नेति अनेनकोविदेनापद्यपितत्परिहारप्रकारोवक्तव्यइतिन्यायदर्शनार्थमुक्तंनतुहरेरुपायाज्ञानादितितात्पर्यं आसन्नशौंडीरंप्राप्तपाटवं अहार्यंआहर्तुमशक्योविक्रमोयस्यसतथातं विलक्ष्यदृष्ट्वासहस्रणीःअनेककल्पजननेतृत्वात् ब्रह्मणोपोगनाम २१ प्रथमतोदैत्यस्यवध्यत्वेदोषानाह एषइति २२ द्रव्यादानाद्यपहारेणागस्कृत् आगोमंत्रश्चविप्रियमिति । वधादिनाभयकृदग्निहोत्रादिदूषणेनदुष्कृत् तत्रनिमित्तमाह अस्मल्लब्धेति २३ क्रीडायाअकरणेकारणमाह यदिति आशीविषंकृष्णसर्पविषमुत्थि

ततःस्वगदयारातिंदक्षिणांसमुविप्रभुः ॥ आजघ्नेसतुतांसौम्यगदयाकोविदोहनत् १७ एवंगदाभ्यांगुर्वीभ्यांहर्यक्षोहरिरेवच ॥ जिगीषयासुसंरब्धावन्योन्यमभिजघ्नतुः १८ तयोःस्पृधोःस्निग्धगदाहतांगयोःक्षतस्रवाघ्राणविवृद्धयुद्ध्योः ॥ विचित्रमार्गांश्चरतोर्जिगीषयाव्यभादिलायामिवशुष्मिणोर्मृधः १९ दैत्यस्ययज्ञावयवस्यमाययागृहीतवाराहतनोर्महात्मनः ॥ कौरव्यमह्यांद्विषतोर्विमर्दनंदिदृक्षुरागादृषिभिर्वृतःस्वराट् २० आसन्नशौंडीरमपेतसाध्वसंकृतप्रतीकारमहार्यविक्रमम् ॥ विलक्ष्यदैत्यंभगवान्सहस्रणीर्जगादनारायणमादिसूकरम् २१ ब्रह्मोवाच ॥ एषतेदेवदेवानामंघ्रिमूलमुपेयुषाम् ॥ विप्राणांसौरभेयीणांभूतानामप्यनागसाम् २२ आगस्कृद्भयकृद्दुष्कृदस्मल्लब्धवरोऽसुरः ॥ अन्वेषयन्नप्रतिरथोलोकानटतिकंटकः २३ मैनंमायाविनंदृप्तंनिरंकुशमसत्तमम् ॥ आक्रीडबालवद्देवयदाशीविषमुत्थितम् २४ नयावदेषवर्धेतस्वांवेलांप्राप्यदारुणः ॥ स्वांदेवमायामास्थायतावज्जह्यघमच्युत २५ एषाघोरतमासंध्यालोकशंबट्करीप्रभो ॥ उपसर्पतिसर्वात्मन्सुराणांजयमावह २६ अधुनैवाभिजिन्नामयोगोमौहूर्तिकोभ्यगात् ॥ शिवायनस्त्वंसुहृदामाशुनिस्तरदुस्तरम् २७ दिष्ट्यात्वाविहितंमृत्युमयमासादितःस्वयम् ॥ विक्रम्यैनंमृधेहत्वालोकानाधेहिशर्मणि ॥ २८ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेएकोनविंशोध्यायः ॥ १९ ॥ मैत्रेयउवाच ॥ अवधार्यविरिंचस्यनिर्व्यलीकामृतंवचः ॥ प्रहस्यप्रेमगर्भेणतदपांगेनसोऽग्रहीत् १

तमुज्ज्वलितंयत्तस्मादिति २४ स्वांवेलामासुरीमपराह्णांतावत्ततःपूर्वमेवस्वांमायांमहिमानंत्वदन्येनननहन्यतइत्यर्थःब्रह्माच्युतेत्यनेन अक्षतःक्षतवद्विष्णुरसमःसमवत्तथा । अजितोजितवच्चैवज्ञोज्ञवत्प्रकाशयेत् । सर्वरूपेष्वनंतोपिब्रह्माद्याश्चैवतन्मतेः । अनुसारितयाब्रूयुःकुर्युश्चनसदुःखभागिति वाक्यद्योतयति कीदृश्यासुरीवेलेतितत्राह एषेति आदरंतुमुखंविद्याच्छंबट्कारंतुभक्षणमित्यभिधानात् । लोकशंबट्करीसर्वजनभक्षिणी २६ इदानींसमीचीनोयोगःकइतितत्राह अधुनेति मध्याह्नस्त्वभिजित्प्रोक्तआषाढोत्तरएवच । श्रवणस्यापिपूर्वार्धेविषुवच्चाभिजित्स्मृतमित्यतोभिजिद्योगोमध्यंदिनमुहूर्तं २७ अस्यानन्यवध्यत्वंस्पष्टंध्वनयति दिष्ट्येति मृत्युंमारकंत्वात्वा शर्मणिसुखेआधेहिस्थापय ॥ २८ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायाएकोनविंशोध्यायः ॥ १९ ॥ ब्रह्मवचनंहरिणावधृतंकिमत्राह अवधार्येति अपांगेनकटाक्षेण १

विरिंचवाक्यग्रहणंहरिणाकृतमितिकथंज्ञायतइतितत्राह ततइति मुखतःपुरतः हनौकपोले हस्तेनवराहेणउत्पत्यासुरस्यकपोलेहननंकथमित्यतउक्तं उत्पत्येति २ दुष्टजनमोहनायसाहतेति विघूर्णिताविभ्राम्यन्त्यक्तारेजेउल्कावदितिशेषः ३ तदाजन्मप्रतिअसुरोपिस्वस्यधर्मयुद्धवित्त्वंप्रकाशयति सइति लब्धवीर्यःप्राप्तावकाशःमृधेधर्मप्रत्ययार्थंनिरायुधेसायुधेनेतरेणनप्रतिप्रहर्तव्यमितिलौ किकम् ४ अथान्यत्हरिप्रियंतदुक्तं धर्मःसत्यमितिप्रोक्तोधर्मश्चापिहरेःप्रियइति अनेनयोहरेःप्रियःसधर्मोन्योलौकिकइत्युक्तंभवति अतएवमानयामासेत्युक्तं नतुप्रियमिति अपाविद्धगदाप्रत्यादा नंयोधानांजुगुप्सितंकिमुतहरेरतोहरिणाकिमकारीतितत्राह सुनाभमिति सुनाभंसुदर्शनम् ५ महानपीतरप्रेरितएवस्वकर्तव्यंकरोतिनतुस्वयमितिभावज्ञाःखेचराअस्यवधायप्रेरयंतीत्याह तामिति व्यग्रंशत्रुहननायविभ्रमच्चक्रंयस्यसतथाततद्विदातस्यहरेःस्वरूपज्ञानाम् ६ दैत्यस्यवीरस्वभावंदर्शयति सइति खेचराणांतद्वचनंनिशम्यामर्षेणदुःसहद्वेषेणपरिलुप्तानिस्वस्थानच्युतानीन्द्रियाणियस्य सतथा स्वदंतच्छदंस्वाधरोष्ठमदशद्दष्टवान् ७ वीरत्वादधरोष्ठदशनफलमाह करालेति संचक्षाणःपश्यन्हतोसीत्याभाष्येति ८ हरेर्युद्धलाघवंवक्ति पदेति शत्रोस्तांगदां वातरंहसावायुवेगे

ततःसपत्नंमुखतश्चरंतमकुतोभयम् ॥ जघानोत्पत्त्यगदयाहनावसुरमक्षतः २ साहतातेनगदयाविहताभगवत्करात् ॥ विघूर्णितापतद्रेजेतदद्भुतमिवाभ्वत् ३ सतदालब्धवीर्योपिनबबाधेनिरायुधम् ॥ मानयन्समृधेधर्मंविष्वक्सेनंप्रकोपयन् ४ गदायामपविद्धायांहाहाकारेचनिर्गते ॥ मानयामासतं धर्मंसुनाभंचास्मरद्विभुः ५ तंव्यग्रचक्रंदितिपुत्राधमेनस्वपार्षदमुख्येनविषज्जमानम् ॥ चित्रावाचस्तद्विदांखेचराणांतत्रस्मासन्स्वस्तितेऽमुंजहीति ६ सतन्निशम्यात्तरथांगमग्रतोव्यवस्थितंपद्मपलाशलोचनम् ॥ विलोक्यचामर्षपरिप्लुतेंद्रियोरुषास्वदंतच्छदमादशच्छ्वसन् ७ करालदंष्ट्रश्चक्षुर्भ्यांसंचक्षाणोदहन्निव ॥ अभिद्रुत्यस्वगदयाहतोसीत्यहनद्धरिम् ८ पदासव्येनतांसाधोभगवान्यज्ञसूकरः ॥ लीलयामिषतःशत्रोःप्राहरद्वातरंहसा ९ आहचायुधमाधत्स्वघटस्वत्वंजिगीषसि ॥ इत्युक्तःसतयाभूयस्ताडयन्व्यनदद्भृशम् १० तांसआपततींवीक्ष्यभगवान्समवस्थितः ॥ जग्राहलीलयाप्राप्तांगरुत्मानिवपन्नगीम् ११ स्वपौरुषेप्रतिहतेहतमानोमहासुरः ॥ नैच्छद्गदांदीयमानांहरिणाविगतप्रभः १२ जग्राहत्रिशिखंशूलंज्वलितज्वलनोपमम् ॥ यज्ञायधृतरूपायविप्रायाभिचरन्यथा १३ तदोजसादैत्यमहाभटार्पितंचकासदंतःखउदीर्णदीधितिः ॥ चक्रेणचिच्छेदनिशातनेमिनाहरिर्यथातार्क्ष्यपतत्रमुज्झितम् १४

म अनेनप्रतिवीरस्यपरिहारायोग्यत्वप्रकाशेनहरेरतिमाहात्म्यंप्रकाशितम् ९ एतदेवध्वनयति आहेति चःसमुच्चये नह्यल्पमाहात्म्यस्यायुधमाधत्स्वेत्यादिप्रवचनंयुज्यतेभीत्यावागनुद्गलनादूढ माक्षिपतीत्याह त्वमिति त्वकंसत्यमितिमन्वानःस्वपाटवंव्यनक्ति इतीति १० हरिरपियुद्धलाघवंदर्शयतीत्याह तांसइति ११ दैत्यस्याभिमानमुद्गलयति स्वपौरुषइति १२ ततःकिंचकारेति तत्राह जग्राहेति अभिचरन्कृत्यांप्रयुंजानः १३ स्मरणादागतंमांवैरिवधायकिमितिनप्रायुंक्तभगवानितिसुदर्शनचैत्यंजानन्निवतेनशूलमच्छिनदित्याह तदेति यदोजसाबलेनदैत्येनमहाभटेनार्पितंमुक्तंतदाभगवान्निशातनेमिनाउत्तेजितधारेणानेनानेकसंख्यापरिच्छेदनेप्यस्यनैशित्यनाशोनास्तीतिसूचनेनहरिचक्रस्यहरेरिवातिमाहात्म्यमुक्तं चक्रेणशूलंचिच्छेदेत्यन्वयः आत्मस्पर्शात्पूर्वमेवाच्छिनदितिद्योतनायोक्तमंतःखइति अंतःखेआकाशमध्येउदीर्णादीधितिर्यस्यतत्तथोक्तं अनेनहरिचक्रादन्येनाच्छेद्यत्वमुत्द्योतितं मंदबुद्ध्यवतारार्थंनिकृष्टमपिदृष्टांतयति हरिरिति दधीचेर्महामुनेरस्थ्नाविरचितवज्रस्यामोघत्वेनतदच्छेदेमुनेरवज्ञानिमित्तकोपभयात्गरुडेनोज्झितंत्यक्तंपत्रमिंद्रोच्छिनदितितदिहोच्यतेहरिरित्यादिना १४

किंदैत्यआयुधाभावादधावदितितत्राह वृक्णइति वृक्णेछिन्ने विभूतिर्लक्ष्मीरस्यास्तीतिविभूतिमत् प्रहृत्यप्रहारंकृत्वाअसुरःमाययाअसनशीलःअसेरुरदितिसूत्रादसुक्षेपणइतिधातोस्ताच्छील्यार्थउ रत्यत्ययोभवति १५ दैत्यमुष्टिप्रहारेणकिंहरिणापातितंमूर्छितंपलायितामितिविदुरस्यमानसींशंकापरिहरति तेनेति द्वाभ्यांपिबतीतिद्विपोगजः १६ अंतर्धायदैत्येनाकिमकारीतितत्राह अथेतियोग मायेश्वरस्वरूपभूतानामणिमादिमहिम्नामधिपतांचित्यनेनासुर्यामायाहरेर्बाधिकानस्युरितिसूचितं अस्याविश्वस्योपसंयमंप्रलयम् १७ पांसवंधूलिमयंक्षेपणैःपाषाणक्षेपणै.पाषाणक्षेपणयंत्रैः १८ द्यौर्व्योमाभ्रौघैर्मेघजालैर्विद्युच्चडित्स्तनयित्नवोगर्जन्मेघाविद्युतस्तनयित्नवस्तैःसहवर्ततइतितैः १९ युधसंप्रहारइतिधातोः नानायुधानिनानाविधसंप्रहारान्मुंचंतीति दिग्वाससोनग्नाः २० अतिवैशसाअतिक्रूराःयक्षादिभिरुत्सृष्टाउच्चारिताहिंस्रावाचोश्रूयंतेतिशेषः २१ यथेच्छयैवसर्वंतुमनसादेहतोपिवा । कर्तुंशक्तोपिशत्राद्यालीलैवानंतशक्तितइति वचनान्मनआदिनाऽसुरमायाविनाशेस

वृक्णे चशूलेबहुधारिणाहरेःप्रत्येत्यविस्तीर्णमुरोविभूतिमत् ॥ प्रवृद्धरोषःसकठोरमुष्टिनानदन्प्रहृत्यांतरधीयतासुरः १५ तेनेत्थमाहतःक्षत्तर्भगवानादिसूकरः ॥ नाकंपतमनाग्वापिस्रजाहतइवद्विपः १६ अथोरुधाऽसृजन्मायांयोगमायेश्वरेहरौ ॥ यांविलोक्यप्रजास्त्रस्तामेनिरेस्योपसंयमम् १७ प्रववुर्वायवश्चंडास्तमःपांसवमीरयन् ॥ दिग्भ्योनिपेतुर्ग्रावाणःक्षेपणैःप्रहिताइव १८ द्यौर्नष्टभगणाभ्रौघैःसविद्युत्स्तनयित्नुभिः ॥ वर्षद्भिःपूयकेशासृग्विण्मूत्रास्थीनिचासकृत् १९ गिरयःप्रत्यदृश्यंतनानायुधमुचोनघ ॥ दिग्वाससोयातुधान्यःशूलिन्योमुक्तमूर्धजाः २० बहुभिर्यक्षरक्षोभिःपत्त्यश्वरथकुंजरैः ॥ आततायिभिरुत्सृष्टाहिंस्रावाचोतिवैशसाः २१ प्रादुष्कृतानांमायानामासुरीणांविनाशनम् ॥ सुदर्शनास्त्रंभगवान्प्रायुंक्तचततत्रिपात् २२ तदादितेःसमभवत्सहसाहृदिवेपथुः ॥ स्मरंत्याभर्तुरादेशंस्तनाच्चासृक्प्रसुस्रुवे २३ व्युदस्तासुस्वमायासुभूयश्चाव्रज्यकेशवम् ॥ उपोपगूहमानोमुंददृशेवस्थितंबहिः २४ तंमुष्टिभिर्विनिघ्नंतंवज्रसारैरधोक्षजः ॥ करेणकर्णमूलेऽहन्यथात्वाष्ट्रंमरुत्पतिः २५ समाहतोविश्वसृजाह्यवज्ञयापरिभ्रमद्गात्रउदस्तलोचनः ॥ विकीर्णबाह्वंघ्रिशिरोरुहोऽपतद्यथानगेंद्रोलुलितोनभस्वता २६ क्षितौशयानंतमकुंठवर्चसंकरालदंष्ट्रंपरिदष्टदच्छदम् ॥ अजादयोवीक्ष्यशशंसुरागताअहोइमांकोनुलभेतसंस्थितिम् २७

मर्थापिभगवान्लीलयैवतन्नाशायसुदर्शनंप्रायुंक्तेत्याह प्रादुष्कृतानामिति विनाशनंविनाशकारणं अमृतंक्षेममभयमितित्रयःपादायस्यसत्रिपात् २२ सुदर्शनप्रयोगेणभगवान्दितेःपुत्रमरणंसंज्ञापयतीतदेति २३ प्रभातेनक्षंचरवत्स्वमायानाशेपराद्रवत्किन्नेत्याह व्युदस्तास्विति शस्त्राद्यभावात्कथंयुद्धायप्राप्तइत्याशंक्यद्विमुखादिवत्पदावेष्ट्यनिष्पीड्यहन्मीतिभावोप्यप्रयोजकइत्याशयेनाह उपेति उपोपात्यंतसमीपेवर्तमानममुंभगवंतंगूहमानःस्वहस्तवलयात्बहिरवस्थितंहरिंददर्शइत्यन्वयः २४ ममशत्रुहननादावायुधग्रहणंमंदजनानुकरणार्थंनत्वशक्यत्वतःस्वहस्तादिनैवशक्तिरस्तीतिज्ञापयन्शत्रुंहंतीत्याह तमिति अहन्प्राहरत् त्वाष्ट्रंत्वष्टुःपुत्रंवृत्रं मरुत्पतिरिंद्रः २५ हरेरयंप्रहारोरिपोर्दीर्घनिद्राहेतुरित्याह समाहतइति विश्वसृजाहरिणाअवज्ञयानिरायासेनसमाहतःलुलितउन्मूलितः नभस्वता वायुना २६ वीराणांरणरंगेमरणंशस्तंकिंपुनर्भगवन्निमित्तमितिभावेनब्रह्मादयोस्यासुरस्यमरणंस्तुवंतीत्याह क्षिताविति संस्थितिंमरणम् २७

इतरमरणादस्यमरणस्यवैशिष्ट्येकिंकारणमत्राह यमिति असतोऽमंगलात्सूक्ष्मशरीरात्मुमुक्षवः करपादयोरैक्यादन्योन्यक्रियाशक्तिमत्वाच्चपदाहतइत्युक्तंयोगिनामस्यदैत्यस्यमहान्विशेषोस्ती
तिद्योतयितुंचहेत्यनेनएतद्देहत्यागोपिदेहांतरारंभोस्तीतिसूचनात् अतोस्यसुकृताधिक्यंहरिमुखंदृष्ट्वामरणेनस्यात्तदपिपार्षदस्यैवनतदाविष्टस्यासुरस्य २८ पार्षदत्वंस्मारयति एताविति कतिपयैरि
रीयोर्नि जन्मभिरितिबहुवचनेनशापमोक्षानंतरंजन्मांतरमाप्यज्ञानमापाद्यवैकुंठेमुक्तिस्थानप्राप्तिरितिसूचयति २९ इदानीमापरोक्षतःस्तुवंतीत्याह नमइति अखिलयज्ञतंतवेऽखिलयज्ञानांप्रदर्तनेर्द
तानभूतायस्थितौनिमित्तभूतायअरुंतुदोव्यथकःअयंविक्रमोस्माकमपिपरमानंदहेतुरभूदित्याह त्वत्पादेति ३० हिरण्याक्षहननानंतरंहरिणाकोविक्रमोकारिसोस्तिचेत्तमाख्याहीतिमानसींविदुरशंकां
प्रत्याह एवमिति संसादयित्वानिहत्य नितरांहननेस्वातंत्र्यंदर्शयति पुष्करविष्टरादिभिर्ब्रह्मादिभिः ३१ हरेर्वराहावतारस्यचरितमुपसंहरति मयेति यथायेनप्रकारेणहिरण्याक्षोहतोनिराकृतस्तथाते

यंयोगिनोयोगसमाधिनाहरेर्ध्यायंतिलिंगादसतोमुमुक्षवः ॥ तस्यैषदैत्यऋषभःपदाहतोमुखंप्रपश्यंस्तनुमुत्ससर्जह २८ एतौहिपार्षदावस्यशापाद्या
तावसद्गतिम् ॥ पुनःकतिपयैःस्थानंप्रपत्स्येतेहजन्मभिः २९ नमोनमस्तेखिलयज्ञतंतवेस्थितौगृहीतामलसत्वमूर्तये ॥ दिष्ट्याहतोयंजगतामरुंतुदस्त्व
त्पादभक्त्यावयमीशनिर्वृताः ३० मैत्रेयउवाच ॥ एवंहिरण्याक्षमसह्यविक्रमंसंसादयित्वाहरिरादिसूकरः ॥ जगामलोकंस्वमखंडितोत्सवंसमीडितः
पुष्करविष्टरादिभिः ३१ मयायथानूक्तमथादितोहरेःकृतावतारस्यसुमित्रचेष्टितम् ॥ यथाहिरण्याक्षउदारविक्रमोमहामृधेक्रीडनवन्निराकृतः ३२ श्री
शुकउवाच ॥ इतिकौषारवाख्यातामाश्रुत्यभगवत्कथाम् ॥ क्षत्तानंदंपरंलेभेमहाभागवतोनृप ३३ अन्येषांपुण्यश्लोकानामुद्दामयशसांसताम् ॥ उप
श्रुत्यभवेन्मोदःश्रीवत्साङ्कस्यकिंपुनः ३४ योगजेंद्रंझषग्रस्तंध्यायंतंचरणांबुजम् ॥ क्रोशंतीनांकरेणूनांकृच्छ्रतोमोचयद्द्रुतम् ३५ तंसुखाराध्यमृजुभि
रनन्यशरणैर्नृभिः ॥ कृतज्ञःकोनसेवेतदुराराध्यमसाधुभिः ३६ योवैहिरण्याक्षवधंमहाद्भुतंविक्रीडितंकारणसूकरात्मनः ॥ शृणोतिगायत्यनुमोदतेंज
साविमुच्यतेब्रह्मवधादपिद्विजः ३७

नविधिनाकृतवराहावतारस्यहरेश्चेष्टितंमयानूक्तंश्रुतवत्कथितमथादितआरभ्य अथातोनंतराप्यर्थविकल्पारंभमंगलइतियादवः ३२ शुकोप्येतांकथांश्रोतृशेमुषीमनुकूलयति इतीति यथाममपरानं
दोभूत्तथाविदुरस्यापिकिमितिपरीक्षितोमनःशंकापरिहरतिशुकइत्यतोवाह इतीति ३३ अत्रकैमुत्येनपरमानंदंसंपादयति अन्येषामिति ३४ इतोपिहरेःकथाश्रवणात्परमानंदावाप्तिःस्यादित्याह यइति
करेणूनांकरिणीनांक्रोशंतीनांरुदंतीनांकृच्छ्रादासन्नमरणात्कृतस्मरणानंतरंकालक्षेपमंतरेण ३५ एवंविधोहरिर्भक्त्यैकसाध्यइत्याह तमिति अन्ययोगव्यवच्छेदार्थमाह दुराराध्यमिति ३६ फल
श्रवणेक्षिप्रंप्राप्तिःस्यादितितद्वक्ति योवाइति अपिशब्देनान्यदुष्कृतानांसंग्रहात् ब्रह्मपरमात्मतत्त्वमज्ञजनेनवध्यतइतिब्रह्मवधःसंसारस्तस्मात् तत्फलेधिकारिणमाह द्विजइति न
स्यैवहरौनिरतिशयभक्तिसंभवात् ३७

गानायशक्तानांश्रवणैकरतानांकिंफलमत्राह एतदिति अंतइतिविशेषणात् श्रवणाभ्यासेनमननादिशक्तिसंभवात् अपरोक्षज्ञानसामर्थ्यांलिंगशरीरविनाशेनारायणोगम्यतइतिगतिर्भवतीतिध्वनय ति ॥ ३८ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांविंशोध्यायः ॥ २० ॥ सृष्टिप्रलयाभ्यांस्फुटविज्ञेयस्यदेवादीनातारतम्यज्ञानस्यहरिप्रीतिजनकत्वेनपुरुषार्थहेतुत्वादनुक्त समुच्चयार्थंचपूर्वोक्तसृष्टिप्रपंचयत्यस्मिन्नध्याये । सृष्टौलयेतारतम्यंदेवानांज्ञायतेस्फुटम् । तारतम्यपरिज्ञानेमहातात्पर्यमिष्यते । अतस्तद्बहुश सूक्तमन्यच्चैतत्प्रकाशकमितिवचनात्प्रवक्ताश्रोतुरभी ष्टमर्थंब्रूतेकिमन्यद्वेतिज्ञातुंनशक्यनेतस्मात्तन्निरासार्थंतत्रादौराजाशुकंपृच्छति महीमिति महीमध्यास्यमह्यांस्थित्वा । अधिशीङ्स्थासांकर्मेतिसूत्रात्सप्तम्यर्थेद्वितीया । अवरजन्मनापश्चात्तनका लेजातानांप्राणिनांमार्गायवर्णाश्रमस्वरूपभेदज्ञानायकानिद्वाराणिसृष्टिसाधनानिअध्यतिष्ठत्तत्रास्थित्वासृजदित्यर्थः १ विदुरप्रश्नवचनानुसारेणप्रवक्तव्यमितिभावेनपृच्छति क्षत्तेति सन्निकृष्टभृत्यो स्तवविदुरप्रश्नोग्राम्यविषयत्वेनकथंसंगच्छतइत्याशंक्यनमादृशोसावितितद्गुणानाहक्षत्तामहाभागवतइत्यादिना अत्रैतानित्रिशेषणानिमिथोहेतुहेतुमद्भावसूचकानीतिज्ञायते क्षतसंचूर्णनइतिधातोःसं

एतन्महापुण्यमलंपवित्रंधन्यंयशस्यंपदमायुराशिषाम् ॥ प्राणेंद्रियाणांयुधिशौर्यवर्धनंनारायणोंतेगतिरंगशृण्वताम् ॥ ३८ ॥ इतिश्रीभागवतेमहापुरा णेतृतीयस्कंधेविंशोध्यायः ॥ २० ॥ ॥ राजोवाच ॥ महींप्रतिष्ठामध्यास्ययोसौस्वायंभुवोमनुः ॥ कान्यध्यतिष्ठद्द्वाराणिमार्गायावरजन्मनाम् १ क्षत्तामहाभागवतःकृष्णस्यैकांतिकःसुहृत् ॥ यस्तत्याजाग्रजंकृष्णेसापत्यमघवानिति २ द्वैपायनादनवरोमहित्वेतस्यदेहजः ॥ सर्वात्मनाश्रितःकृष्णंतत्प रांश्चाप्यनुव्रतः ३ किमन्वपृच्छन्मैत्रेयंविरजास्तीर्थसेवया ॥ उपगम्यकुशावर्तआसीनंतत्त्ववित्तमम् ४ तयोःसंवदतोःसूतप्रवृत्ताह्यमलाःकथाः ॥ आ पोगांग्यइवाघघ्नीर्हरेःपादांबुजाश्रयाः ५ तानःकीर्तयभद्रंतेकीर्तन्योदारकर्मणः ॥ रसज्ञःकोनुतृप्येतहरिलीलामृतंपिबन् ॥ ६ ॥ सूतउवाच ॥ एवंपरी क्षितापृष्टोभगवान्बादरायणिः ॥ भगवत्यर्पिताध्यात्मस्तमाहश्रूयतामिति ७॥ श्रीशुकउवाच ॥ हरेर्धृतक्रोडतनोःस्वमाययानिशम्यगोरुद्धरणंरसातलात् लीलांहिरण्याक्षमवज्ञयाहतंसंजातहर्षोमुनिमाहभारत ८ विदुरउवाच ॥ प्रजापतिपतिःसृष्ट्वाप्रजासर्गेप्रजापतीन् ॥ किमारभतमेब्रह्मन्प्रब्रूह्यव्यक्तमार्गवि त् ९ येमरीच्यादयोविप्रायस्तुस्वायंभुवोमनुः ॥ तेवैब्रह्मणआदेशात्कथमेतदभावयन् १० सद्वितीयाःकिमसृजन्स्वतंत्राउतकर्मभिः ॥ आहोस्वित्संह ताःसर्वइदंस्मसमकल्पयन् ११

सारगिरिसंचूर्णनात्क्षत्ता एकःप्रधानःसर्वोत्तमोहरिरंतोनिर्णयोस्यास्तीतिअस्मिन्नर्थेयथाविहितप्रत्ययःअघवानपराधवान् २ सर्वात्मनेतिप्रोक्तहेतुनिगमनरूपम् ३ किमन्वपृच्छन्मयापृष्ट मन्यद्वेति कुशावर्तेगंगाद्वारे ४ तत्रान्यप्रसंगादगीभूताएवेतिभावेनाह तयोरिति ५ बहुशःश्रुतत्वात्तवतंत्र्यनिद्रालुत्वंस्यादितितत्राह रसज्ञइति ६ एतमर्थंसूतःशौनकादिभ्यःकथयति एवमिति अर्पिताध्यात्मःअर्पितंशरीरमधिकृत्यवर्तमानंमनआदीन्द्रियजातंयेनसोर्पिताध्यात्मः ७ शुकोस्वित्पृष्टमर्थंप्रष्टुंविदुरोमैत्रेयंवक्तीत्याह हरेरिति ८ किमाहेतितत्राह प्रजापतीति अव्यक्तानांपरमात्मादि तत्त्वानांमार्गंप्रकारंवेत्तीति ९ राजविदुरप्रश्नयोरेकविषयत्वंवक्ति यइति अभावयन्प्रावर्धयन् १० द्वितीयाभार्या स्वतंत्राअन्यापेक्षारहिताःकर्मभिःप्रेरिताइतिशेषः संहता संमिलिताःस्मेत्यनेनसं हत्यसर्जनंप्रधानंस्मारयति ११

किमारभतेति यत्पृष्टंतस्योत्तरंवक्तुंपूर्वोक्तसृष्टिमविस्मरणायादितोनुवदति दैवेनेति दुर्वितर्क्येणप्राण्यदृष्टानांबहुत्वादनुमातुमशक्येनादृष्टेन नैषातर्केणमतिरापनेयेतिश्रुतेरदृष्टांतर्यामिणाहरिणा
वा दुर्विकल्पेनेतिपाठइदमदोवेतिसंशयाविषयेणानिमिषेणसर्वतोविलक्षणेनसृष्टिकालेनतदंतर्यामिणाहरिणावासर्वेषामूलकारणस्यप्रलयसमुद्रेलक्ष्मीपर्यंकेशयानस्यभगवतःप्रेरणयाजातक्षोभात्कार्याभि
मुखोत्पन्नविकाराद्विषमावस्थामुपगताद्गुणत्रयाद्यथासंख्यंसयुक्तसत्वादिगुणत्रयान्महान्महत्तत्वाभिमानीब्रह्मासीत्तदभिमन्यमानमहत्तत्त्वंचाभूत् । किंचभगवतोवीर्याधानेनजातक्षोभाद्गुत्पन्नासिसृक्षतरविशे
षात् स्वजीवशक्त्यांगुणकर्मयोनौइत्यतोगुणत्रयाभिधानादक्षरान्महत्तत्त्वाभिमानीवायुश्चसरस्वतीभारतीचजाताइत्यर्थः महतोब्रह्मवायूचतद्भार्येचाभिमानिनइतिवाक्यादयमर्थःकल्प्यतइति १२
महत्तत्वादहंकारस्योत्पत्तिमाह रजःप्रधानादिति साम्यावस्थायांमूलेरजासियद्रजो मूलेतमसिमिश्रितंयद्रजो मूलेसत्वेपद्रजइति त्रिधाविभक्तेनसमस्तेनरजसायुक्तत्वाद्रजःप्रधानत्वंमहत्तत्त्व
स्यतस्मान्महतोमहत्तत्त्वाद्दैवचोदिताद्विकुर्वाणाज्जातोवैकारिकतैजसाभ्यांसहितःत्रिलिंगस्त्रिरूपोभूतादिस्तामसाहंकारो वियदादीनिपंचभूतानिससर्जेत्यन्वयः अनेनैतच्चसिद्धं तैजसाहंकारःश्रोत्रादि
दशेंद्रियाणि वैकारिकाहंकारोमनोदिगाद्यभिमानिदेवान्ससर्ज मूलाहंकारादनंतगरुडरुद्राद्याःस्वभार्याभिःसहजाताः मनोभिमानिनावनिरुद्धचंद्रौवैकारिकाभिमानिदेवविशेषाज्जातौ तदुक्तम् । अहमः
शेषवींद्रौचरुद्रेंद्रौकामतस्त्रियः ।मनसस्त्वनिरुद्धश्चचंद्रश्चान्येयथोदितम् । एवंक्रमोव्यत्ययस्तुसूक्ष्मस्थूलादिभेदतः । सृष्टौगुणेचज्ञानादौमुक्तिस्थेप्यंक्रमः । नियमेनान्यथोक्तिस्तुमोहायासुरजन्मना

**मैत्रेयउवाच ॥ दैवेनदुर्वितर्क्येणपरेणानिमिषेणच ॥ जातक्षोभाद्भगवतोमहानासीद्गुणत्रयात् १२ रजःप्रधानान्महतस्त्रिलिंगोदैवचोदितात् ॥ जातः ससर्जभूतादिर्वियदादीनिपंचच १३ तानिचैकैकशःस्रष्टुमसमर्थानिभौतिकम् ॥ संहत्यदैवयोगेनहैममंडमवासृजन् १४ सोशयिष्टाब्धिसलिलआंडकोशोनिरात्मकः ॥ साग्रंवैवर्षसाहस्रमन्ववात्सीत्तमीश्वरः १५ तस्यनाभेरभूत्पद्मंसहस्रार्कोरुदीधिति ॥ सर्वजीवनिकायौकोयत्रस्वयमभूत्स्वराट् १६ सोनुविष्टोभगवतायःशेतेसलिलाशये ॥ लोकसंस्थांयथापूर्वंनिर्ममेसंस्थयास्वया १७ ससर्जच्छाययाऽविद्यांपंचपर्वाणमग्रतः ॥ तामिस्रमंधतामिस्रंतमोमोहोमहातमः १८**

मिति १३ सूक्ष्मसृष्टिमनूद्यस्थूलसृष्टिंवक्तुमारभते तानीति यद्वासाद्वितीयाइत्यादिप्रश्नंपरिहरति तानीति तानित्रयोविंशतितत्त्वानिभौतिकंहैमंब्रह्मांडंदेवस्यक्रीडादिगुणसंपन्नस्यहरेर्योगेनचेष्टकलक्षणप्र
वेशसंबंधेनसंहत्यसंयुज्यावगम्यवासृजन् १४ सृज्यवस्तूनिविमृश्यस्रष्टव्यानिनसहसेतिन्यायमनुसदधतोहरेरंडोत्पत्त्यनंतरंतदंतःसर्जनक्रमेणस्यादित्यभिमतत्वेनजलावगाहेनदार्व्यादिकंचस्यादित्यंड
स्यजलावस्थानंवक्ति सोशयिष्टेति निरात्मकः अप्रकाशितपरमात्मस्वरूपः परमात्मातत्रनास्तीतिकिंनस्यादत्राह अन्ववात्सीदिति अव्यक्ततयास्थितः १५ योब्रह्मांडगर्भोदकेश्रीमयपर्यं
केकालनाम्नाब्रह्मणातद्धृशयानस्तस्यहरेर्नाभेःपद्ममभूदित्यन्वयः इदमितरपद्माद्विशिनष्टि सहस्रेति सहस्रधासंख्यासंख्यातेभ्योर्केभ्य उर्वीदीधितिर्दीप्तिर्यस्यतत्तथोक्तं अनेनसर्वप्रकाशकसूर्यागुरत्वेः
पूर्वंतमसावगूढाकाशेकथंप्रवृत्तिरितिनिरस्तं सर्वजीवनिकायस्यौकोगृहस्थानीयंयतोयस्मात्तस्मात्स्वयंसर्वजीवप्रधानःस्वराड्ब्रह्माभूदित्यन्वयः १६ यदर्थंब्रह्मोत्पन्नस्तत्प्रयोजनमाह सोनुविष्टइति यो
हरिःसलिलाशयेगर्भोदकलक्षणेवारिधौश्रीसन्निहितशेषपर्यंकेशेतेतेनभगवतानुविष्टः सब्रह्मास्वयासंस्थयापरमात्मनिस्थितसामर्थ्येनयथापूर्वंलोकसंस्थानेनपद्मेचतुर्दशलोकरचनास्थानिर्ममेइत्यन्वयः १७
विधेकापनोद्यत्वादविद्यायास्तज्ज्ञापनार्थंतत्सृष्टिंप्रथमतोवक्ति ससर्जेति छाययारात्रपरपर्यायमातन्वा पर्वाण्याह तामिस्रमित्यनेनोक्तवक्ष्यमाणेन कान्यल्पतिष्ठन्द्वाराणीत्यस्योत्तरमुक्तंभवति १८

अधिष्ठानभावेनाविस्रष्टोदेहोनष्टोभूत्किंनेत्याह जगृहुरिति क्षुत्तृषौसमुद्भवोयस्यास्तथोक्तातामू १९ क्षुत्तृषौज्ञानविरोधिन्यौयतोब्रह्मणःस्वोत्पादकत्वेनगुरुत्वमविज्ञायपञ्चादिभिस्तद्भक्षणार्थमद्रावी तिभावेनाह क्षुत्तृड्भ्यामिति उपसृष्टाउपद्रुताअस्यविवरणंक्षुत्तृडर्दिता इत्युच्चैर्वदंतोभिदुद्रुवुः एवंब्रह्माणंमारक्षतकिंतुजक्षध्वंभक्षयतेति २० तत्रब्रह्मणाकिंकृतमत्राह देवइति यूयंमामायाजक्षत किंतुरक्षत आपदिमित्रजनोबोधनीयइतिभावेनाह अहोइति अहोयुष्माकमज्ञानंयूयंमेप्रजाःपुत्राभविष्यथतस्मात्जक्षणमयुक्तंकिंतुरक्षणमेव कीदृश्योयुष्माकंमध्येयेयूयंमाजक्षनकिंतुरक्षतेत्यूचि ध्वंतेयक्षाभविष्यथयेकेचिद्यूयंमारक्षतकिंतुजक्षतेत्यूचिध्वंतानिरक्षांसिभविष्यथ २१ देवानांविद्यायोग्यत्वेनतद्विरोध्यविद्यासृष्ट्यनंतरंदेवसृष्टिमाह देवताइति याःयादिव्याःक्रीडादिगुणयुक्तास्तास्ता देवताःप्रभया भादीप्ताविति धातोःसर्वप्रकाशकलक्षणयाविद्यापरपर्यायया तन्वासृजदित्यन्वयः सर्वसृष्टिभ्यः प्रधानत्वात्प्रमुखतइति देवयंतःक्रीडादिगुणान्द्योतयंतोदेवास्ताप्रभाख्यातनुमहार्षुरंगी कृतवंतस्तदहरभवच्च २२ अदेवानसुरान् जघनतोजघननाम्नादेहेन २३ क्रुद्धोभीतइतिविडंबनं परापतत्पलायितवान् २४ पलायनावधिमाह सइतिहरिमाप्यजगादेतिशेषः अनुरूपमुपा सकानांयोग्यतानुकूलमात्मनोदर्शनंयस्यसतथातम् तेतव पभितुं यभमैथुनइतिधातुःमैथुनंकर्तुं नित्यंभगवत्प्रीतिकृत्प्रेष्येणआपदिहरिरेवस्तोतव्यइतिभावेनाह त्वामिति अनासन्नानप्राप्तापादौयै

विससर्जात्मनःकायंनाभ्यनंदत्तमोमयम् ॥ जगृहुर्यक्षरक्षांसिरात्रिंक्षुत्तृट्समुद्भवाम् १९ क्षुत्तृड्भ्यामुपसृष्टास्तेतंजग्धुमभिदुद्रुवुः ॥ मारक्षतैनंजक्षध्वमि त्युचैःक्षुत्तृडर्दिताः २० देवस्तानाहसंविग्नोमामाजक्षतरक्षत ॥ अहोमेयक्षरक्षांसिप्रजायूयंभविष्यथ २१ देवताःप्रभयायायादीव्यन्प्रमुखतोसृजत् ॥ तेऽ हार्षुर्देवयंतोविसृष्टांतांप्रभामहः २२ देवोदेवान्जघनतःसृजतिस्मातिलोलुपान् ॥ तएनंलोलुपतयामैथुनायाभिपेदिरे २३ ततोहसन्सभगवा नसुरैर्निरपत्रपैः ॥ अन्वीयमानस्तरसाक्रुद्धोभीतःपरापतत् २४ सउपव्रज्यवरदंप्रपन्नार्तिहरंहरिम् ॥ अनुग्रहायभक्तानामनुरूपात्मदर्शनम् २५ पाहिमांपरमात्मंस्तेप्रेषणेनासृजंप्रजाः ॥ ताइमायभितुंपापाउपक्रामंतिमांप्रभो २६ त्वमेकःकिललोकानांक्लिष्टानांक्लेशनाशनः ॥ त्वमेकःक्लेशदस्तेषामना सन्नपदांतव २७ सोवधार्यास्यकार्पण्यंविविक्ताध्यात्मदर्शनः ॥ विमुंचात्मतनुंघोरामित्युक्तोविमुमोचह २८ तांक्वणच्चरणांभोजांमदविह्वललोचनाम् ॥ कांचीकलापविलसद्दुकूलच्छन्नरोधसम् २९

स्तेतथातेषामनासन्नपदाम् २७ स्वानिष्टवारणेसमर्थस्यापिभगवान्स्वप्रियार्थंशरणंगतस्यब्रह्मणस्तन्निवारणोपायमाह सइति सर्वज्ञस्यापिविरिंचस्याज्ञवदशक्तवत्कार्पण्यमवधार्य तदुक्तं जानन्न पिसमर्थोपिकश्चिद्ब्रह्माहरेःप्रियम् । ज्ञात्वाकरोतिकर्माणिह्यज्ञवच्चाप्यशक्तवदिति अनेनस्वापदंपरिहर्तुंसमर्थस्यतत्प्राप्तौहरिशरणगतौहरिप्रीतिःस्यादितिन्यायोदर्शितः विविक्तमनन्याधीनमध्यात्मदर्श नंशरीरादिकर्माधिकृत्यवर्तमानंज्ञानंयस्यसविविक्ताध्यात्मदर्शनोऽशेषविशेषज्ञानवानित्यर्थः चेतनाचेतनराशेर्विविक्तोभिन्नोऽतएवाध्यात्मासर्वजीवराशेरधिकईश्वरइतिदर्शनमपरोक्षज्ञानंयस्यसतथोक्तः तद्ब्रह्मावेदाहंब्रह्मास्मीतिश्रुतेरितिवा । स्यादप्यधिकईश्वरइतियादवः हेत्यनेनस्वाज्ञाकरणाद्धरेरभ्यधिकाप्रीतिरभूदितिसूचयति अतएवविमुंचेति भवतश्चेन्मदनुग्रहपात्रज्ञानसाधनयोग्यातनुरस्तिकिं मनयाघोरयेति २८ निश्चेतनासातनुःकिमभूदितितत्राह तामिति असुरास्तातनुस्त्रियंस्त्रीभूतामुपलभ्यदृष्ट्वा कीदृशीं शरीरपूर्वोत्तरयोःसंधौजघनेजातत्वान्नाम्नासंध्यांसर्वैरसुरैरितांपरिवृता कला पोभूषणेबर्हेस्त्यभिधानात्कांचीकलापेनकांचीभूषणेनविलसताहुकूलेनछन्नंपिहितंरोधः कटितटयस्याःसातथाताम् २९

अन्योन्याश्लेषेण परस्परसंबंधेन उत्तुंगौ उन्नतौ निरंतरौ अनवकाशौ च पयोधरौ स्तनौ यस्याः सा तथा ताम् ३० नीलालकानां वरूथः समूहोस्या अस्तीति नीलालकवरूथिनी ताम् उपलभ्य प्राप्य स्त्रियं जातां तां तनुं मुदितस्य मुहुः हरिति वा ३१ अत्र मोहो नाम न मूर्छा किंतु वैक्लव्यहेतुको वितर्क इति भावेनाह अहोरूपमिति ३२ ततः किं चक्रुरिति तत्राह वितर्कयंत इति ३३ भामिनि कांतिमति रूपमेव द्रविणं तदेव पण्यं क्रययोग्यं तेन दुर्भगान् त्वत्संगोपभोगभाग्यरहितान् ३४ त्वत्संदर्शनमेवास्माकं सुरतक्रियेति भावेनाहुः यावेति एवमपि तत्र वेयं कंदुकक्रीडास्मन्मनः खेदयतीत्याहुः उद्घ्नोषीति ३५ इतरकंदुकक्रीडाया इयं वैशेषिकीत्याह नैकत्रेति हे शालिनि भार्ये पतत्पतंगं मुखमदवन मत्कंदुकं जयति ते पादपद्मं शाप्रोति विषीदति भंगं प्राप्नोति जटावरूथो वेणीभारो ऽमलो मुक्तश्च मल्लबंधन इति धातोः ३६ सर्वभावैः स्त्रियो वंदहेतव इति भावेन असुराणां तद्ग्रहणमाह इतीति संध्यां व्यावर्तयति सायंतनीमिति प्रातःकालीनायाः पुण्यहेतुत्वात् प्रलोभयंती मात्मनीच्छां कुर्वतीं ३७ देवासुरसर्गयोरनंतरं गंधर्वादिसर्गस्याभ्यर्हितत्वात्तमाह प्रहस्येति भावगंभीरमिति क्रियाविशेषणं भावः शृंगारचेष्टा कथं ज्ञातुं शक्यत इति वितमभिनयति जिघ्रंत्यात्मानमात्मनेति नाम्ना कांत्या तन्वा

अन्योन्याश्लेषयोत्तुंगनिरंतरपयोधराम् ॥ सुनासां सुद्विजां स्निग्धहासलीलावलोकनाम् ३० गूहंतीं व्रीडयात्मानं नीलालकवरूथिनीम् ॥ उपलभ्यासुरा संध्यां सर्वे तां मुमुहुः स्त्रियम् ३१ अहो रूपमहो धैर्यमहो अस्या नवं वयः ॥ मध्ये कामयमानानामकामेव विसर्पति ३२ वितर्कयंतो बहुधा तां संध्यां प्रमदाकृतिम् ॥ अभिसंभाव्य विस्रंभात्पर्यपृच्छन्कुमेधसः ३३ कासि कस्यासि रंभोरु को वार्थस्तेत्र भामिनि ॥ रूपद्रविणपण्येन दुर्भगान्नो विबाधसे ३४ यावा कासि त्वमबले दिष्ट्या संदर्शनं तव ॥ उद्घ्नोषीक्षमाणानां कंदुकक्रीडया मनः ३५ नैकत्र ते जयति शालिनि पादपद्मं घ्नंत्या मुहुः करतलेन पतत्पतंगम् ॥ मध्यं विषीदति बृहत्स्तनभारभीतं शांतेव दृष्टिरमलसुजटावरूथः ३६ इति सायंतनीं संध्यामसुराः प्रमदायतीम् ॥ प्रलोभयंतीं जगृहुर्मत्वा मूढधियः स्त्रियम् ३७ प्रहस्य भावगंभीरं जिघ्रंत्यात्मानमात्मना ॥ कांत्या ससर्ज भगवान्गंधर्वाप्सरसां गणान् ३८ विससर्ज तनुं तां वै ज्योत्स्नां कांतिमतीं प्रियाम् ॥ तामेव चाददुः प्रीत्या विश्वावसुपुरोगमाः ३९ सृष्ट्वा भूतपिशाचांश्च भगवानात्मतंद्रिणा ॥ दिग्वाससो मुक्तकेशान्वीक्ष्य चामीलयद्दृशौ ४० जगृहुस्तद्विसृष्टां तां जृंभणाख्यां तनुं प्रभो ॥ निद्रामिंद्रियविक्लेदो यया भूतेषु दृश्यते ॥ तयोच्छिष्टान्धर्षयंति तमुन्मादं प्रचक्षते ४१ ऊर्जस्वंतं मन्यमान आत्मानं भगवानजः ॥ साध्यान्गणान्पितृगणान्परोक्षेणासृजत्प्रभुः ४२

३८ ज्योत्स्नां चंद्रिकावदाह्लादकरीं संज्ञांतरं वा प्रियां मनोदृष्टिसुखकरीं ३९ भूतादीनां देवयोनित्वाद्गंधर्वादिसृष्ट्यनंतरं भूतादिसृष्टिमाह सृष्ट्वेति । आत्मनो देहिनस्तंद्री मुखव्यादानादिलक्षणमुत्पादयतीत्यात्मतंद्री तेन जृंभणाख्येन देहेन ४० तस्याः स्वभावलक्षणमाह निद्रादीति विक्लेदो वैक्लव्यं तया तन्वोच्छिष्टान्ग्रस्तान्देहिनो धर्षयंति तस्य चेष्टादिविशेषान्कारयंति तं चेष्टाविशेषमुन्मादं प्रचक्षते तज्ज्ञा इति शेषः व्यसृजन्मलवद्देहं वा ब्रह्मं तनुनिजं पुरा । अज्ञातचाहरादित्वं प्रापदेवादिदैवतामिति वचनात् ब्राह्ममेव प्रभादिशरीरं त्यजतः तब्रह्मा तनुनिजं देहमिति ज्ञायते पुरा सृष्टिसमये ४१ स्वयोग्यात्मदानेन तृप्ताः साध्यादिगणाः पितृपिशाचादिग्रहदोषं निवारयंत्यत स्तत्सर्गानंतरं साध्यादिगणसृष्टिं वक्ति ऊर्जस्वतमिति अनेन प्रेतादिग्रहाणां मुख्या चिकित्सेयमिति दर्शितं ऊर्जस्वंतं सारानंदं ऊर्जसारामुद्दिश्य देवपितृभक्षणमिति च नाम्ना परोक्षेण देहेन अत एवाचापि मांसदृष्टचगोचरेभ्यः पित्रादिभ्यस्तत्तुष्ट्यै पिंडादिकं प्रयच्छंते ४२

आत्मनःसर्गःसृष्टिर्यस्मात्सआत्मसर्गस्तं यत्सारात्वांवितन्वते बलिहरणादिनाविविसृत्यतरांते ४३ सिद्धादीनांसाध्याद्यवरत्वादनंतरंतत्सर्गमाह सिद्धानितिनाम्नातिरोधानेनकायेनअंतर्धानाख्यमंतर्धानाप रपर्यायमात्मानं देहमितरस्मादद्भुतमदृश्यहेतुत्वादितरेषांवरादिनाअदृश्यत्वमेतेषांस्वतएवेतिविशेषःहरिशंकरौ चत्यत्वादितिभावः ४४ स्वबोधनविडंबनायस्वसन्निकृष्टपुरुषसृष्टेःप्रागस्त्यबुद्धिजनना यचपुरुषाभाससृष्टिमाह सकिन्नरानिति किंप्रश्नाक्षेपकुत्सायांवितर्काभासगोचरइतिवचनात् किन्नराभासान्किंपुरुषान्पुरुषाभासान्आत्मनारूपेणकायेनासृजदित्यन्वयः येनभावेनब्रह्मापदार्थान्सृजति सचेष्टादिलक्षणोभावस्तेषामौत्पत्तिकत्वयावच्छरीरंवर्ततइत्यतस्तंभावंदर्शयतीत्याह मानयन्निति आत्मनामनआदिनाआत्मानंस्वशरीरंगंधपुष्पादिभिर्मानयन्पूजयन्दर्पणादिनाआत्माभासस्वच्छा यांविलोकयन्नसृजदितिपूर्वेणान्वयः अयंन्यायःपूर्वत्रोत्तरत्रचानुसंधेयः ४५ परमेष्ठिनात्यक्तंतेकिन्नरास्तद्रूपंस्वभावलक्षणकमाकारजगृहुरित्यन्वयः रूपंशब्देपशौश्लोकेग्रंथावृत्तौहितादिषु । सौंदर्ये चस्वभावेचेत्यभिधानं । तेषांकृत्यमाह मिथुनीभूयेति तंब्रह्माणंकर्मभिश्चरितैःपद्यादिनाग्रथितैः अनेनपक्षिणांसृष्टिरपिव्याख्याताकिन्नरादीनांमुखस्यैवनराकारत्वादंडजत्वाविशेषात् ४६ सर्पादि सृष्टिप्रकारंवक्ति देहेनेति भोगवतासर्पशरीराकारवतादेहेनशयानोब्रह्माप्रजासर्गेअनुपचितेअलंभावरहितेबहुचिंतयाजातात्क्रोधात्तद्वपुरुत्ससर्ज हिशब्दोहेत्वर्थः यस्मात्क्रोधादस्मात्क्षीत्तस्मादीषदुष्वृता. क्रुद्धाःसर्वान्लोकानुपद्रवंतीति ४७ एकस्माद्देहादुत्पन्नानामवांतरभेदमाह यइति अमुतःअमुष्माच्छरीराद्येकेशाअहीयंतत्यक्ताआसंस्तेऽहयोजज्ञिरइत्यन्वयः क्रियापदस्यसुवतत्वंयदश्चत्तस्मादग्वइति

तआत्मसर्गंतंकायंपितरःप्रतिपेदिरे ॥ साध्येभ्यश्चपितृभ्यश्चकवयोयद्वितन्वते ४३ सिद्धान्विद्याधरांश्चैवतिरोधानेनसोसृजत् ॥ तेभ्योददात्तमात्मान मंतर्धानाख्यमद्भुतम् ४४ सकिन्नरान्किंपुरुषानात्मनाचासृजत्प्रभुः ॥ मानयन्नात्मनात्मानमात्माभासंविलोकयन् ४५ तेतुतज्जगृहूरूपंत्यक्तंयत्परमेष्ठिना मिथुनीभूयगायंतस्तमेवोषसिकर्मभिः ४६ देहेनवैभोगवताशयानोबहुचिंतया ॥ सर्गेनुपचितेक्रोधादुत्ससर्जहितद्वपुः ४७ येहीयंतामुतःकेशाअहय स्तेंगजज्ञिरे ॥ सर्पाविसर्पतःक्रूरानागाभोगोरुकंधराः ४८ सआत्मानंमन्यमानःकृतकृत्यमिवात्मभूः ॥ तदामनून्ससर्जांतेमनसालोकभावनान् ४९ तेभ्यःसोऽव्यसृजद्देहंपरःपुरुषआत्मनः ॥ तांदृष्ट्वायेपुरासृष्टाःप्रशशंसुःप्रजापतिम् ५० अहोएतज्जगत्स्रष्टःसुकृतंबततेकृतम् ॥ प्रतिष्ठिताःक्रियायस्मिन्सा कमन्नमदामहे ५१

वेदेदृष्टत्वादुक्तं विसर्पतोविविधसर्पणात्सर्पाः तत्स्वभावमाह क्रूराःक्षिप्रंक्रोधशीलत्वान्नगच्छंतीत्यगाअगानभवंतीतिनागाःक्षिप्रगंतृत्वात् तल्लक्षणमाह भोगोरुकंधराइति भोगवदुर्व्योबृहत्यःकंधरायेषांतेतथाभित्तिप्रदीपन्यायेनोरुशब्दउभयत्रान्वेतव्यः उरुभोगाश्चोरुकंधराश्चोरुभोगोरुकंधराः उरुभोगायविद्महेमहाकंठायधीमहि तन्नोनागःप्रचोदयादितिजांगलिकतंत्रे ४८ सृष्टानांसर्वेषांसर्वकर्मायि कारित्वेनोपकारकत्वेनमनुसृष्टिमाह सआत्मानमिति यदात्मभूर्ब्रह्मात्मानंदेहंकृतकृत्यमिवमन्यमानोभूत्तदंतेवसानेमनःपूर्वंलोकभावनान्लोकवृद्धिकरान्मनून्ससर्ज सपरःपुरुषोब्रह्मात्मनस्तंदेहंतेभ्यो ऽव्यसृजदित्यन्वयः। सर्वस्याःसृष्टेरियसृष्टिःप्रशस्तेतिभावेनाह तांदृष्ट्वेति येपुरासृष्टादेवास्तेतामनुसृष्टिंदृष्ट्वाहोइतिप्रजापतिंप्रशशंसुः ४९ ५० एतदेवविवृणोतिएतदिति हेजगतःस्रष्टस्तेत्वयैवतत्कृ तंकर्मसुष्ठुकृतंपर्याप्तमितोधिकंनास्तीत्यर्थः बतेत्यनेन ताअब्रुवन्सुकृतंबतेतिश्रुतिर्मानमिति किंचयस्मिन्मनुसर्गेयागादिक्रियाःप्रतिष्ठिताः ततःप्रयोजनमाह साकमिति तैर्दत्तमन्नंभवतासाकमदामहे तेनास्मत्प्रसादाच्चेशामपिमहतीप्रजावृद्धिःस्यादित्यदामहेइति व्यत्ययेनप्रयोजनमसूचि दृष्ट्वातुपौरुषींसृष्टिंदेवाःसुकृतमूचिरे । इत्यनेनयेपुरासृष्टाअसुरास्तेतांसृष्टिंदृष्ट्वाप्रजापतिंप्रशशंसुरित्यपव्याख्यानं अत्युक्तेदेवसृष्ट्यनंतरत्वाच्च ५१

सुरसृष्टेःप्रथमतःकृतमप्यृषिसर्गंदेवसुरादिसाधारणत्वप्रकटनायतत्सर्गंपश्चाद्वक्ति तपसेति हृषीकेशोब्रह्मांतर्यामीतपआदिनायुक्तः सर्वस्मादादौसर्वाभिमता प्रजाऋषीन्ससर्जेत्यन्वयः सर्वत्रापिश्रीनारा
यणएवब्रह्मांतर्यामित्वेनस्रष्टानान्यइतिप्रकाशनायहृषीकेशइतिभगवत्येवरूढंनामप्रायोजीतिज्ञातव्यं अभेदाभिप्रायेणकिंनस्यादितिचेन्नदैत्योपद्रवेतत्परिहारायब्रह्मणाक्रमेणविष्णुशरणोपगतेरुक्तत्वा
त् यत्रापितुहरेर्नामतदन्यत्रप्रयुज्यते । तदांतरहरेस्तत्रगृहीतिर्नान्यथाभवेत् । स्वातन्त्र्यादवरत्वंचपरस्यापिप्रयुज्यते। स्थितस्यापियथाराज्ञःस्वानांजयपराजयावित्यनेनमुख्यार्थानुपपत्तावमुख्यार्थो
पपत्तेःसिद्धत्वात् ५२ अजोब्रह्मायत्तत्स्वशरीरंसमाधियोगपूर्तिमत्तपोविद्याविरक्तिमच्चतस्यशरीरस्यैकैकांशंसमाध्यादिकंतेभ्यःऋषिभ्यःप्रादादित्यन्वयः५३ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजय
ध्वजकृतटीकायांएकविंशोध्यायः ॥ २१ ॥ अकामःसर्वकामोवामोक्षकामोहरिभजेदितियदुक्तपूर्वंतदिहकर्दमचरितव्याजेनप्रपञ्च्यतेध्यायत्रयेणतत्रमैत्रेयंविदुरःपृच्छति स्वायभुवस्येति परमत्वेनोत्तमत्वे
नसंमतःसंमतिपन्नस्तस्मात्कथ्यतामितिहेत्वर्थेचशब्दःएधिरेएधांचक्रिरे १ देवहूत्याःकथायाअवश्यश्रोतव्यत्वेपिप्रथमस्तत्कथनेमनोःकन्यैवनतुपुत्राविातिप्रतीतायास्तस्याअभ्रातृमतीत्वेनपरिणेतुःमाश

तपसाविद्ययायुक्तोयोगेनसुसमाधिना ॥ आदावृषीन्हृषीकेशःससर्जाभिमताःप्रजाः ५२ तेभ्यश्चैकैकशस्तस्यदेहस्यांशमदादजः ॥ यत्तत्समाधियोगर्द्धितपोविद्याविरक्तिमत् ५३ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेएकविंशोध्यायः ॥ २१ ॥ विदुरउवाच ॥ स्वायंभुवस्यचमनोर्वंशःपरमसंमतः ॥ कथ्यतांभगवन्यत्रमैथुनेनैधिरेप्रजाः १ प्रियव्रतोत्तानपादौसुतौस्वायंभुवस्यवै ॥ यथाधर्मंजुगुपतुःसप्तद्वीपवतींमहीम् २ तस्यवैदुहिताब्रह्मन्देवहूतीतिविश्रुता ॥ पत्नीप्रजापतेरुक्ताकर्दमस्यत्वयानघ ३ तस्यांसवैमहायोगीयुक्तायांयोगलक्षणैः ॥ ससर्जकतिधावीर्यंतन्मेशुश्रूषवेवद ४ रुचिर्योभगवान्ब्रह्मन्दक्षोवाब्रह्मणःसुतः ॥ यथाससर्जभूतानिलब्ध्वाभार्यांचमानवीम् ५॥ मैत्रेयउवाच ॥ प्रजाःसृजेतिभगवान्कर्दमोब्रह्मणोदितः ॥ सरस्वत्यांतपस्तेपेसहस्राणांसमादश ६ ततःसमाधियुक्तेनक्रियायोगेनकर्दमः ॥ संप्रपेदेहरिंभक्त्याप्रपन्नवरदाशुषम् ७ तावत्प्रसन्नोभगवान्पुष्कराक्षःकृतेयुगे ॥ दर्शयामासतंक्षत्तःशाब्दंब्रह्मदधद्वपुः ८ सतंविरजमर्काभंसितपद्मोत्पलस्रजम् ॥ स्निग्धनीलालकव्रातवक्त्राब्जंविरजांबरम् ९ किरीटिनंकुंडलिनंशंखचक्रगदाधरम् ॥ श्वेतोत्पलक्रीडनकंमनःस्पर्शस्मितेक्षणम् १०

स्त्यबुद्धिर्नस्यादितितत्प्रीत्यैतत्पुत्रावाह प्रियव्रतेति वाइत्यनेनौरसत्वमवधारयति एतच्चरितंवक्तव्यमित्यस्मिन्नर्थेवा २ देवहूत्या भ्रातृमतीत्वमुक्त्वातच्चरितंश्रोतुमुक्तमनूद्यशेषंपृच्छति तस्यवाइति अ
स्तुमनोःपुत्रीततःकिमित्यतआह प्रजापतेरिति त्वयायाकर्दमस्यप्रजापतेर्जायेत्युक्ता ३ सकर्दमस्तस्यांकतिधावीर्यंससर्ज तद्वीर्यसर्जनलक्षणंचरितं यमनियमादियोगलक्षणैः ४ अनंतररुचिद
क्षयोश्चरितंवक्तव्यमित्याह रुचिरिति ५ मैत्रेयःप्रथमतोमनुपुत्रयोःकथायावक्तव्यत्वेपिसूचीकटाहन्यायेनरुचिदक्षयोश्चरितयोरनंतरंपृष्टत्वाच्चदेवहूतीचरितविनाभूतंकर्दमचरितंवक्तुमुपक्रमते प्रजा
इत्यादिना सहस्राणांदशसमाः ६ किंविषयमिदंतपइतितत्राह ततइति समाधियुक्तेनक्रियायोगेनवैदिकतांत्रिकलक्षणोपायेन दाशुषं दाशृदानेवरदम् ७ साधनसामग्रीफलमाह तावदिति यःस्वयाचि
तीकृतस्तमात्मानंशाब्दंवेदैकवेद्यंब्रह्मसर्वगुणपूर्णं अथकस्मादुच्यतेब्रह्मेति बृंहतोह्यस्मिन्गुणाइतिश्रुतिवेद्यत्वदर्शनायब्रह्मपदप्रयोगः वपुःशुभाकारं शुभाकारेतनौवपुरिति नमायामयम् ८ शुभाकारत्वं
विवृणोति सतमिति ९ क्रीडनकंक्रीडासाधनं द्रष्टृणांमनःस्पर्शमनोविषयेस्मितेक्षणेयस्यसतथातम् १०

११ स्वभावात्मा अव्यग्रमनाः स्वतंत्रोभावोपस्यसस्वभावोहरिःसआत्मनिमनासियस्यसतथेतिवा स्वभावेआत्मापरयसतथेतिवा १२ स्तुतिरपिस्तुत्यस्यहरेःक्षिप्रप्रीतिकरीयथार्थत्वेनानुकंपादे तुस्त्वादुत्तरत्रफलोदयाचेतिभावेनाह जुष्टमिति ईईड्यसतात्पर्यवेदादिभिःस्तुत्यअचअखिलसत्वराशेःपूर्णज्ञानबलसमुद्रस्यतवदर्शनात्साक्षात्कारान्नोस्माकमक्ष्णोर्जुष्टंनिषेवणंत्वत्क्षेत्रलिंगादिविषयंसंसि द्धंसम्यक्फलितमभूत् बताश्चर्यमिदंदुर्भगेष्वस्मासुअनुकंपेति उपलक्षणमेतत् श्रोत्रादेस्तथाश्रवणादिनिषेवणं अक्षण्वंतइत्यादिश्रुतेः। तवानुग्रहएवमुख्यंनिमित्तंनत्वस्मत्प्रयत्नामितिभावेनाह यद् र्शनमिति रूढयोगानिरंतरानुवृत्तध्यानायोगिनोयमादिमंतःपुरुषायदर्शनंआशासतेवांछंति तादृशमितिभावः। महताकालेनप्रयतमानानांयोगिनामाकांक्षामात्रमस्माकंतुअल्पेनैवकालेनाभूदित्य तोबतेति १३ इदानीमनुग्रहकातरंभगवद्भावंपश्यन्कर्दमःस्वमनोरथगर्हयन्विज्ञापयति यइतिईशऐश्वर्यवारिंवेतवमाययाबधकशक्त्याहतचेतसोनष्टज्ञानातःकरणाः पुरुषाभवसिंधुपोतंसंसारसमुद्रस्यो त्तरणेतरीभूतंत्वत्पादारविंदंकामलवायउपासतेसेवंतेयेकामानिरयेपिस्युःसुलभास्तांस्तेषांरासि रादानइतिधातुः निरयःसूकरादियोनिरतितुच्छत्वद्योतनायेदमुदितंअनेनेहश्यमपिभगवत्कटाक्षोप क्षिप्तकिमुतराज्यादीतिसूचितम् १४ किमनेनप्रकृतेइत्याशंक्याहमप्येष्वेकोलंपटइत्याह तथेति तथापूर्वोक्तकामोपासकवत् सोहंचकामदुघांघ्रिपस्याभीष्टवर्षणशीलकल्पतरोस्तवाशेषमूलम् अपेक्षि

विन्यस्तचरणांभोजमंसदेशेगरुत्मतः॥ दृष्ट्वाखेवस्थितंवक्षःश्रियंकौस्तुभकंधरम् ११ जातहर्षोपतन्मूर्ध्नाक्षितौलब्धमनोरथः॥ गीर्भिस्त्वभ्यगृणा त्प्रीतस्वभावात्माकृतांजलिः १२ जुष्टंबताद्याखिलसत्त्वराशेःसंसिद्धमक्ष्णोस्तवदर्शनान्नः॥ यद्दर्शनंजन्मभिरीड्यसद्भिराशासतेयोगिनोरूढयोगाः॥ १३ येमाययातेहतचेतसस्त्वत्पादारविंदंभवसिंधुपोतम्॥ उपासतेकामलवायतेषांरासीशकामान्निरयेपियेस्युः १४ तथासचाहंपरिवोढुकामःसमा नशीलांगृहमेधिधेनुम्॥ उपेयिवान्मूलमशेषमूलंदुराशयःकामदुघांघ्रिपस्य १५ प्रजापतेस्तेवचसाधीशतंत्यालोकःकिलायंकामहतोर्निबद्धः॥ अहं चलोकानुगतोवहामिबलिंचशुक्लानिमिषायतुभ्यम् १६ लोकांश्चलोकानुगतान्पशूंश्चहित्वाश्रितास्तेचरणातपत्रम्॥ परस्परंत्वद्गुणवादसीधुपीयूषनि र्यापितदेहधर्माः १७

तसमस्तपुरुषार्थकारणंपादमूलमुपेयिवान्इत्यन्वयः किंकामस्त्वमित्यतउक्तं परिवोढुकामइति समानशीलांगृहमेधिधेनुंगृहस्थयज्ञांगभूतांभार्यांपरिवोढुकाम.परिणेतुकामःतत्रनिमित्तमाह दुरा शयइति दुरशोभनेविषयेआशयोयस्यसतथा दुरशोभनदुःखयोरितियादवः १५ अघटितघटकमहिमाभगवान्यतःसकामोपास्तिनिकृष्टांजानंतोपिमादृशास्त्ववेदारूपवचनमाययानियताःसंस रंतीत्याह प्रजापतेरिति अधीशेतिसंबुद्धेःप्रजापतिर्हरिरेवनविरिंचस्तस्यतत्रमुख्यार्थानुपपत्तेरिंद्रादिशब्दवत् अथयईश्वराब्रह्मादयस्तेषामपीशजगत्सृष्ट्यादिविभूतिप्रवर्तकत्वात् प्रजापतेस्तववच सावेदलक्षणतंत्यातस्यवाकृतंतिनामानिदामानीतिश्रुतेः अयंजनःस्वर्गादिकामहतोर्निबद्धःकिल तत्पूजालक्षणंबलिंवहतीतिशेषः हेशुक्लसंसारशुचविलाप्यकंसुखंआदायददातीतिलोकानुगतत्वाद हमप्यनिमिषायप्राणिचीर्णपुण्यपापनिरीक्षणार्थमुन्मीलितनेत्रत्वात्तच्छब्दवाच्यायकालांतर्यामिणेतुभ्यंबलिंवहामि उत्तरत्रसभार्योवहेयमितिचार्थः १६ अयमेवबलिर्भगवदर्पणबुद्ध्याचिकीर्षितो भक्तिहेतुरपिभवतीतिभावेनाह लोकांश्चेति अस्माल्लोकात्प्रेत्येतिश्रुतेः लोकान्जडशरीराणिचलोकानुगतानसून्प्राकृतेंद्रियाणिचहित्वातेतवचरणातपत्रंश्रिताःपुनश्चपरस्परंतवगुणवादएवसीधुपीयुषं सुखजनकनवसूतगवीदुग्धंचतेननिर्यापिताःप्रवर्तितादेहधर्माः सच्चिदानंदात्मकशरीरधर्मायेषांतेतथा यद्वा निर्यापितानिवारिताजननमरणादिलक्षणादेहधर्मायेषांतेतथा १७

लक्षणंदर्शनाल्लक्ष्यमध्याहृत्यान्वेतव्यं तेतवचक्रमेषामायुर्नेछिनत्तीतिशेषः सुदर्शनाचावर्तयाति अजरेति अजरेकदापिजरादोषरहितेअक्षेनाभिद्वारेभ्रमतीत्यजराक्षभ्रमिःनिपतांऽगत्वाद्विरिशब्दवत् अधिमासैःसहत्रयोदशमासाःआराणिदलानियस्यतत्तथा त्रीणिशतानिषष्टिसंख्यासहितानिअहोरात्रलक्षणानिदिनान्येवपर्वाणियस्यतत्तथात्रिशतंषष्टिपर्वछांदसत्वादनुस्वारलक्षणबिंदुलोपोनास्तिषट् कत्वोनेमयश्चक्रप्रांतदेशायस्य तत्षण्नेमिअनंताःपरमाणुद्व्यणुकादिलक्षणाच्छिदाःछिद्राअतिशयितच्छिद्राअवयवायस्यसंतीतिअनंतच्छिदि तृतीयोतिशयेइतिसूत्रादिकारोलोकवैलक्षण्यलक्षणा तिशयार्थः यद्वाछददृत्यस्मिन्नर्थेछिदीतिनिपातनं । मथनान्मथिलोजातइतिवदुक्तंच । त्रीणिचातुर्मास्यानिनाभियस्यसात्रिनाभिः करालस्रोतोऽतिदूरवेगजगदाच्छिद्यकवलीकृत्यधावत्गच्छत्पुनः पुनरावर्तमानमित्यर्थः यदेवंविधंकालचक्रंतदितिशेषः एषामायुराच्छिद्यनधावत् जगदाच्छिद्यधावदित्यनेनगृहाश्रमंगृहीत्वापामरवन्नसंसरामिकिंतुत्वदनुग्रहकरंकर्मकारंकारंजरसंगच्छन्नंतेनिवृत्तिमार्ग मनुतिष्ठामीतिध्वनितम् १८ भक्तजनविषयस्वेच्छानियतसंसारोन्मूलनंकैमुत्येनसिद्धमितिभावेनाह एकइति निर्गुणस्यगुणेषुसत्सुतदमृतपानेननिर्यापितदेहधर्मत्वंसंभवातितत्तुचिंत्यमित्यतोवाह एकइति ब्रह्माद्यन्यतमासाध्यजगत्सर्जनादेस्त्वत्कटाक्षलेशानियतत्वेनबंधध्वंसनंकिमुवक्तव्यं सार्वज्ञादिगुणाभावेसृष्ट्यादिकमनुपपन्नमतोन्यथानुपपत्त्यागुणानामानंत्यंसिद्धमतउक्तंयुक्तामिति आत्मनिस्वोदरेऽस्य तस्यजगतःसिसृक्षयास्वाधीनयायोगमाययाचित्प्रकृत्याजडप्रकृत्याचलोकविडंबनार्थंद्वितीयपदेत्युक्त द्वितीयआत्मन्नितिपाठपुरुषरूपोभूत्वेत्यर्थः स्वशक्तिभिः स्वरूपसामर्थ्योपेतमत्स्याद्यवतारैःपालनादि

## नत्तेजराक्षभ्रमिरायुरेषांत्रयादेशारंत्रिशतंषष्टिपर्व ॥ षण्नेम्यनंतच्छिदियत्त्रिनाभिकरालस्रोतोजगदाच्छिद्यधावत् १८ एकःस्वयंसन्जगतःसिसृक्षया द्वितीययात्मन्नधियोगमायया ॥ सृजस्यदःपासिपुनर्ग्रसिष्यसेयथोर्णनाभिर्भगवन्स्वशक्तिभिः १९ नैतद्बताधीशपदंतवेप्सितंयन्माययाजगृहेभूतसूक्ष्मम् ॥ अनुग्रहायत्वयियर्हिमालयालसत्तुलस्याभगवान्विलक्षितः २० तंत्वानुभूत्योपरतक्रियार्थंस्वमाययावर्तितलोकतंत्रम् ॥ नमाम्यभीक्ष्णं नमनीयपादसरोजमल्पीयसिकामवर्षम् २१

कंकरोषीति सृष्ट्यादेलक्षणंवास्तवमितिविज्ञापनायोर्णनाभिनिदर्शनमुक्तं । यथोर्णनाभिःसृजतेगृह्णतेचेतिश्रुतेः १९ यथासृष्ट्यादिलक्षणज्ञानंपुरुषार्थसाधनमित्याशयेनसृष्ट्यादिकमुक्तंएवंभ्रष्टसृज्ययोर्भेद ज्ञानंतत्साधनमित्यभिप्रायेणाह नतदिति अधीश यत्भूतसूक्ष्मंब्रह्मांडमाययास्वेच्छयानन्यप्रेरणयारूपत्वेनजगृहेअंगीकृतवान् भूतसूक्ष्मैर्निर्मितमपिमृदटवदित्युच्यते तवैवरूपमीप्सितंसत्यंज्ञानमनंतं ब्रह्मेतिउपनिषदभीष्टपदंरूपंनभवति बतएवंज्ञानमेवतोषलक्षणपुरुषार्थकरमभेदेनज्ञानखेदलक्षणदुःखकरमित्यर्थः तर्हिकिमित्यग्रहीदित्यतउक्तं अनुग्रहायेति त्वयिभक्तिभाजांमंदाधिकारिणांभगवतिभ क्त्युत्पादकानुग्रहायाग्रहीदित्यर्थः त्वयैतत्कुतोज्ञातं यर्हीतिविलक्षितइतिपदमावृत्ययोजनीयं सभगवान्यर्हियदालसंतीतुलसीयस्यांसालसत्तुलसीतयामालया उपलक्षणमेतत् मकरकुंडलाद्यलंकारै श्चयाविशिष्टत्वेनलक्षितोंकितोन्यवस्तुवैलक्षण्येनलक्षितोध्यानपदंगमितस्तथेदानीमपिलक्षितोदृष्टइतियर्हियस्मात्तस्मादिदमेवाभीष्टमितिज्ञातं यद्वानूनयइतिधातोर्नायवान् भगवान्भूतानांसूक्ष्मंद्रु ष्टुमशक्यंयत्रूपंजगृहेएतत्तवेप्सितंपदं तर्हिकथंदृष्टमितितत्राह अनुग्रहायेति तर्ह्यनुग्रहोपितथाविशिष्टःकिमितिनाभूदत्राह यर्हीति यदा याहशलक्षणवत्तयालक्षितोध्यातस्तथाभयाविलक्षितोदृष्टइतिय स्मात्तस्मात् भक्त्यनुकंपितत्वात्त्वत्स्वामित्वज्ञानश्रेयःसाधनमितिसूचितम् २० मदनुग्रहेणसच्चिदानंदलक्षणंवपुर्दर्शयतोभवतोनमनोपायनदानेनानित्यतृप्तस्यप्रत्युपकरोमीतिभावेनाह तंत्वेतियस्त्वदनाया सेनजगत्सृष्ट्यादिकंकरोषिअहंतंत्वात्वानमामीत्यन्वयः ननुयदिनंतुर्नम्योविशिष्टःस्याचर्हिसतत्क्रियाविषयःस्यादित्यतस्तंविशिनष्टिअनुभूत्येति अनुभूत्यास्वरूपानुभवेनोपरतोनिवृत्तोन्तस्तःक्रियार्थः है

हादिनिमित्तकर्मफलविपर्ययोयस्यसतथास्वरूपानंदानुभवेननिवृत्तविषयसुखोवातं स्वमायया स्वेच्छयावर्तितंलोकतंत्रंदेहादिलक्षणलोकप्रवृत्तिसाधनंयेनसतथातं अभीक्ष्णशःपुनःपुनरित्यनेनतात्प र्यातिशयद्योतकेनइदमेवस्वत्प्रीतिसाधनमितिसूचयति भवानौषधपानवत्बलात्कर्मणाऽचिविषयोनकिंतुस्वतएवेतिभावेनाह नमनीयेति इतोपित्वमेवनंतव्यइत्याह अल्पीयसीतिअल्पाधिसिजात्याणु येनवाल्पतरमत्केकीठव्यासमिवाभीष्टंवर्षतंकामस्याभीष्टस्यवर्षोयस्मात्सतथोक्तः तमित्यक्षरयोजना । यद्वा महदहंकारादिजगत्स्रष्टृपदरूपंतन्निजंनभवतीतियन्मततद्दूषयितुमेवाह तंत्वेतिउक्तार्थोयंश्लो कः आवर्तितलोकाख्यराज्यव्यापारोयेनसतथातम् २१ कर्दमेनप्रणतद्रूपंसत्यज्ञानानंदलक्षणमेवनमायाशबलमितिभावेनाह इतीति प्रेम्णायुक्तेनस्मितेनसहसकृदुत्कृष्टंवीक्षणंतेनविलोकनेनविभ्रमंती विस्फुरंतीभ्रूर्यस्यतथोक्तः २२ पुरामेमयातवचैत्यंचित्तस्थमभिप्रायंविदित्वैवसमयोजि तंमेरितंतदेवाह यदर्थमिति २३ पूजाकर्मणःक्षणभंगुरत्वेनतस्मादिदंफलमभूदितिनिश्चेतुंनशक्यतइतिशंकामाभून्म दर्पितत्वेनाक्षीणफलत्वादित्यभिप्रेत्याह नवाइति जातुवैकदाचिदपिपाशुपतशास्त्रोक्तवन्मयिसंगृहीतात्मनांसमाहितमनआदींद्रियाणांयुष्माकंयन्मदर्हणंतादिदंभवद्विधेषुपुरुषेषुमृषाक्षणभंगुरत्वेन निष्फलंनस्यान्मदर्पणचिकित्सायुक्तत्वादभक्तव्यावृत्त्यर्थमविततरामिति संगृहीतात्मनामितिषष्ठीसप्तम्यर्थेवा संनिकृष्टत्वादुभयोःस्वस्वामित्वसंबोधोनित्यमनुसंधेयइतितात्पर्यद्योतनायप्रायोज्यन्यथाम

ऋषिरुवाच ॥ इत्यव्यलीकंप्रणतोब्जनाभस्तमाबभाषेवचसामृतेन ॥ सुपर्णपक्षोपरिरोचमानःप्रेमस्मितोद्वीक्षणविभ्रमद्भ्रूः २२ श्रीभगवानुवाच ॥ विदित्वातवचैत्यंमेपुरैवसमयोजितम् ॥ यदर्थमात्मनियमैस्त्वयैवाहंसमर्चितः २३ नवैजातुमृषैवस्यात्प्रजाध्यक्षमदर्हणम् ॥ भवद्विधेष्वतितरांमयिसं गृहीतात्मनाम् २४ प्रजापतिपतिःसम्राड्मनुर्विख्यातमंगलः ॥ ब्रह्मावर्तेयोधिवसञ्छास्तिसप्तार्णवांमहीम् २५ सचेहविप्रराजर्षिर्महिष्याशतरूपया ॥ आयास्यतिदिदृक्षुस्त्वांपरश्वोधर्मकोविदम् २६ आत्मजामसितापांगींवयःशीलगुणान्विताम् ॥ मृगयंतींपतिंदास्यत्यनुरूपायतेप्रभुः २७ समाहितंतेहृ दयंयत्रेमान्परिवत्सरान् ॥ सात्वांब्रह्मन्नृपवधूःकाममाशुभजिष्यति २८ यातआत्मधृतंवीर्यंनवधाप्रसविष्यति ॥ वीर्येत्वदीयऋषयआधास्यंस्तेजआत्मनः २९

यिसंगृहीतात्मस्विवितिप्रयोक्तुंशक्यते अनेनश्रेयोर्थिभिरभेदवार्तादूरादेवपरिहृत्यभेदज्ञानमेवापाद्यमितिसूचितम् २४ कर्दमंप्रशस्यप्रकृतमनुसरति प्रजापतीति प्रजापतयोमरीच्यादयस्तेषांपतिःसप्तार्ण वामितिअनेनसम्राट्त्वंविवृतं ब्रह्मावर्तक्षेत्रमाधिवसन् अधिशीङ्स्थासांकर्मेत्यतःसप्तम्यर्थेद्वितीया २५ ततःकिमस्माकमत्राह सचेतिहेविप्र २६ वनवासिनोममसम्राजाकिंतत्राह आत्मजामिति अ सितापांगींनीलद्युतिनेत्रांतां नीलांजनांशितत्वेनार्पितत्स्वभावःस्यादितिगुणांतराण्याह वयइति कियद्वयइतिप्रश्नमंतरेणवयोलक्षयति मृगयंतीमिति आसन्नरजःकामुकत्वेनपाणिग्रहणयोग्यामित्यर्थः २७ राजपुत्र्यास्तापसोहंकथमनुरूपःस्यामितितत्राह समाहितमिति राजपुत्रीत्वादिविशेषणमंतरेणयत्रयस्यांवध्वामिमानतीतान्परिवत्सरान्तेहृदयंसमाहितंममानुकूलाभार्यास्यादितिसकृत्तम् २८ इदंचत्वत्संकल्पात्मूर्तंसत्यंभवतीतिभावेनकन्यांविशिनष्टि येति याचात्मधृतंतेवीर्यंरेतोलक्षणंगर्भंनवधाप्रसविष्यति नवधाविभक्तयाप्रसूतंतववीर्यंवंशवृद्धिकरंचेत्याह वीर्यइति मरीच्याद्यृषयोपि इदंयेवीर्यंनवधाविभज्यपुत्रीभूतेआत्मनस्तेजोगर्भलक्षणमाधास्यन्यदिभवान्मदुक्तमकरिष्यत्तर्हीतिशेषः सानृपस्यवधूःकन्यात्वांकामंभजिष्यति संसेविष्यतइत्यन्वयः आशुकालक्षेपोनैवेति २९

मदर्पणंबुद्ध्याचिकित्सितस्यस्वधर्मानुष्ठानस्यमत्प्राप्तिरेवफलमित्याह त्वंचेति ३० गार्हस्थ्यानंतरंचतुर्थाश्रमोप्यवश्यमनुष्ठेयइत्याशयेनाह कृत्वेति अभयंदत्त्वाभूतेभ्यइतिशेषः आत्मवान्यदे कस्वरणः संन्यासाश्रमानुष्ठानफलमाह मयीति सहजगदितिक्रियाविशेषणं यथाजगतासहवर्तमानस्तथात्मानंत्वांमयिद्रक्ष्यसि मदाधारंपश्यसीत्यर्थः आत्मनित्वयिस्थितंमांचपश्यसि अनेना धाराधेयभावेनोपास्तिकुर्वतएवंविधज्ञानेनमत्प्राप्तिरुक्तेत्यतोभेदज्ञानमेवपरमपुरुषार्थसाधनमुक्तंभवति ३१ पिंडविच्छेदात्पितृशापःस्यादित्यातंकोमाभूदितिभावेनाह संभूयेति तवक्षेत्रेभार्यायां क्षेत्रंपुंगे हेदेहेकेदारेयोनिभार्ययोः पुण्यस्थानेसमूहेचेतियादवः । त्वद्वीर्येणसहगर्भंप्रविश्येतिशेषः स्वांशकलयाशुक्ररक्तसंबंधरहितयासच्चिदानंदलक्षणयासंभूयसम्यगभिव्यज्यतत्त्वसंहितांतत्वसंख्यानलक्षणंसां ख्यशास्त्रंप्रणेष्येकरिष्यइत्यन्वयः ३२ कर्दमायाशेषपुरुषार्थसाधनमभीष्टंहरिरुपदिश्यपुनःकिमकार्षीदितितत्राह एवंतमिति प्रत्यगक्षमंतर्यामिविषयमिंद्रियंविषयत्वेनगच्छत्येनंप्रतीतिप्रत्यगक्षगः अ परोक्षज्ञानविषयइत्यर्थः प्रत्यक्स्थितोपीदानीमिंद्रियविषयगतोवा ३३ अशेषसिद्धेश्वरैःसमस्तब्रह्मादिभिरभिष्टुतः सिद्धैःसनकादिभिर्मृग्यतइतिसिद्धमार्गश्च मार्गोमृगपदेयासिसौम्यर्क्षेन्वेषणेध्वनि ।

त्वंचसम्यगनुष्ठायनिदेशंमउशत्तरः ॥ मयितीर्थीकृताशेषक्रियार्थोमांप्रपत्स्यते ३० कृत्वादयांचजीवेषुदत्त्वाचाभयमात्मवान् ॥ मय्यात्मानंसहजगद्र क्ष्यस्यात्मनिचात्मवान् ३१ संभूयस्वांशकलयात्वद्वीर्येणमहामते ॥ तवक्षेत्रेदेवहूत्यांप्रणेष्येतत्त्वसंहिताम् ३२ एवंतमनुभाष्याथभगवान्प्रत्यगक्षगः ॥ जगामबिंदुसरसःसरस्वत्यापरिश्रितात् ३३ निरीक्षतस्तस्ययथावशेषसिद्धेश्वराभिष्टुतसिद्धमार्गः ॥ आकर्णयन्पत्ररथेंद्रपक्षैरुच्चारितंस्तोममुदीर्णसाम ३४ एवंसंप्रस्थितेशुक्लेकर्दमोभगवानृषिः ॥ आस्तेस्मबिंदुसरसितंकालंप्रतिपालयन् ३५ मनुःस्यंदनमास्थायशातकौंभपरिच्छदम् ॥ आरोप्यस्वांदुहित रंसभार्यःपर्यटन्महीम् ३६ तस्मिन्सुधन्वन्नहनिभगवान्यत्समादिशत् ॥ उपायादाश्रमपदंमुनेःशांतव्रतस्यतत् ३७ यस्मिन्भगवतोनेत्रान्न्यपतन्नश्रुबिंद वः ॥ कृपयासंपरीतस्यप्रपन्नेर्पितयाभृशम् ३८ तद्वैबिंदुसरोनामसरस्वत्यापरिप्लुतम् ॥ पुण्यंशिवामृतजलंमहर्षिगणसेवितम् ३९ पुण्यद्रुमलताजालैःकू जत्पुण्यमृगद्विजैः ॥ सर्वर्तुफलपुष्पाढ्यंवनराजिश्रियान्वितम् ४० मत्तद्विजगणैर्घुष्टंमत्तभ्रमरविभ्रमम् ॥ मत्तबर्हिनटाटोपमाह्वयन्मत्तकोकिलम् ४१

पत्ररथाःपक्षिणस्तेषामिंद्रोगरुडस्तस्यपत्रैःपक्षैरुदीर्णमुत्कृष्टंसामयस्मिन्तथातंस्तोमं स्तुतिविशेषम् ३४ अनंतरंकर्दमोपितपश्चेत्संपन्नंकिमत्रेत्यन्यत्रवागमदित्कितत्राह एवमिति प्रतिपालयन्प्रती क्षमाणः ३५ ऋष्याद्युक्तमपिनमृषाभवतिकिमुतेश्वरभाषितमितिभावेनमनोर्गमनंवक्ति मनुरिति पर्यटन्महीमिति ३६ अनेनपित्रादुहित्रर्थंवरानुगमनंनलौकिकमितिराज्यपरीक्षाव्याजेनयदृच्छया प्राप्तइतिभावंसूचयति हेसुधन्वन्विदुर शांतव्रतस्यपूर्णव्रतस्य ३७ कर्दमाश्रमस्यबिंदुसरइतिनामकस्मादितितत्राह यस्मिन्निति ३८ बिंदूनांसरणंप्रसरणंयत्रतद्बिंदुसरइति कन्यादानकार्यमंतरे णापिश्रेयोर्थिनागंतुंयोग्यमित्याशयेनतदाश्रमगुणानाह पुण्यमिति शिवंचामृतमयाचितंचजलंयस्मिंस्तत्तथा । अमृतंव्योम्निदेवान्नयज्ञशेषरसायने । अयाचितेचदुग्धाव्धावित्यभिधानम् ३९ पु ण्यद्रुमाअश्वत्थादयः लतामाधव्यादयःतेषांजालैःसमूहैःमुकुलैश्चयुक्तंइतिशेषः पुण्यमृगाःकृष्णसारंगादयःद्विजाजारितर्यादिपक्षिणः ४० मत्तेनद्विजगणेनविशिष्टपक्षिसमूहेनउद्घुष्टमाघोषितं भ्रमता नांभ्रमराणांविभ्रमःशृंगारविशेषोयस्मिंस्तत्तथा बर्हाणियेषांसंतीतिबर्हिणोमयूरास्तएवनटास्तेषामाटोपोनृत्यसंभ्रमोयस्मिंस्तत्तथा मिथआह्वयंतोमत्ताःकोकिलायस्मिंस्तत्तथा ४१

नकेवलमश्वत्थादयोपत्राऽन्येपिसंतीत्याह कदंबेत्यादिना ४२ सामान्येनोक्तान्पक्षिणोविशेषनाम्नानिर्दिशति कारंडवैरित्यादिना कारंडवाख्यमहापक्षिभिः ४३ श्वाविच्छ्वोवृकागवयावन्यागावः गोपुच्छाश्चमर्यः हरिभिःसिंहैः मर्कैर्वनमार्जारैःनाभिभिर्मृगनाभिभिः ४४ ४५ तपसिविषयेउग्रतरइत्युग्रयुक्तीव्रवेगवतेत्यर्थः उग्रयोगतपस्त्वेवपु कार्श्येनदृष्टिसुखाजनकेकन्यादानेवैराग्यंस्या दितितत्राह नातिक्षाममिति तत्रहेतुद्वयमाह भगवतइति ४६ पुरुषलक्षणाभावेनातिक्षामत्वमप्रयोजकमितितत्राह प्रांशुमिति प्रांशुमुन्नतं तपोवेषगूढत्वेनान्यल्लक्षणंअत्रनदृश्यतइतिभावेनाह जटिलं असंस्कृतमनलंकृतम ४७ उटजंपर्णशालामनुरूपयाराजयोग्यया ४८ तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृतेतिअस्यार्थमनुसंदधानोमुनिर्वाचापितंमानयतीत्याह गृहीतेति श्लक्ष्ण यामधुरया ४९ किमर्थांसुरसांवाणीमाहेत्यत्राह नूनमिति मुकुरेमुखस्येवास्मिन्राज्ञिहरेर्विशेषसन्निधानस्यप्रतीयमानत्वादेवेतिवक्ति हिशब्दोहेत्वर्थः सप्तसुप्रथमेतिसूत्रात्त्वामितिसप्तम्यर्थे त्व यिहरेःपालिनीसात्विकीशक्तिःसन्निहिताहियस्माच्चेत्तवचंक्रमणंसम्यक्पर्यटनंसतामस्माद्दृशानांसंरक्षणायासतामस्मद्विरोधिनांचवधाय नूनंनिश्चयइत्यन्वयः ५० एतदेवविवृणोति यइति अर्कस्य

कदंबचंपकाशोककरंजबकुलासनैः ॥ कुंदमंदारकुटजैश्चूतपोतैरलंकृतम् ४२ कारंडवैर्बकैर्हंसैःकुररैर्जलकुक्कुटैः ॥ सारसैश्चक्रवाकैश्चचकोरैर्वल्गुकूजितम् ४३ शशकैर्हरिणैःक्रोडैःश्वाविड्गवयकुंजरैः ॥ गोपुच्छैर्हरिभिर्मर्कैर्नकुलैर्नाभिभिर्वृतम् ४४ प्रविश्यतत्तीर्थवरमादिराजःसहानुगः ॥ ददर्शमुनिमासीनंतस्मि न्हुतहुताशनम् ४५ विद्योतमानंवपुषातपस्युग्रयुजाचिरम् ॥ नातिक्षामंभगवतःस्निग्धापांगविलोकनात् ४६ तद्व्याहृतामृतकलापीयूषश्रवणेनच ॥ प्रांशुंपद्मपलाशाक्षंजटिलंचीरवाससम् ४७ उपसंसृत्यमलिनंयथार्हणमसंस्कृतम् ॥ अथोटजमुपायांतंनृदेवंप्रणतंपुरः ४८ सपर्ययाप्रत्यगृह्णात्प्रतिनं द्यानुरूपया ॥ गृहीतार्हणमासीनंसंयतंप्रीणयन्मुनिः ॥ स्मरन्भगवदादेशमित्याहश्लक्ष्णयागिरा ४९ नूनंचंक्रमणंदेवसतांसंरक्षणायते ॥ वधायचास तांयस्त्वंहरेःशक्तिर्हिपालिनी ५० योर्केंद्वग्नींद्रवायूनांयमधर्मप्रचेतसाम् ॥ रूपाणिस्थानआधत्सेतस्मैशुक्लात्मनेनमः ५१ नयदारथमास्थायजैत्रंम णिगणार्पितम् ॥ विस्फुरच्चंडकोदंडोरथेनत्रासयन्नघान् ५२ स्वसैन्यचरणक्षुण्णंवेपयन्मंडलंभुवः ॥ विकर्षन्बृहतींसेनांपर्यटस्यंशुमानिव ५३ तदैवसेत वःसर्वेवर्णाश्रमनिबंधनाः ॥ भगवद्रचिताराजन्भिंद्येरन्बतदस्युभिः ५४ अधर्मश्चसमेधेतलोलुपैर्व्यंकुशैर्नृभिः ॥ शयानेत्वयिलोकोयंदस्युग्रस्तो विनंक्ष्यति ५५

रूपंप्रकाशकत्वंचंद्रस्याह्लादकत्वमग्नेरघृष्टत्वमिंद्रस्यैश्वर्यकरत्वंवायोःश्रेष्ठत्वंयमस्यदुष्टजनदमनेनिर्घृणत्वं धर्मस्यपुण्यापुण्यविवेकवैशद्यंप्रचेतसोवरुणस्यगाभीर्यंदस्त्वमेतानिरूपाणिस्थानेतत्ताद्विनियोग कालेप्राप्तेआधत्सेधारयसि तस्मैशुक्लस्यहरेरात्मनेमतिमाद्रूपायविशेषावेशसन्निधानस्थानायनमइत्यन्वयः प्रतीयमानंतादात्म्यंविहायतत्प्रतिमात्वकल्पनानाप्रामाणिकी स्वायंभुवोमनुश्चैवपृथुरैलोर्जुना वपि । ब्रह्मशेषविपारुद्रइंद्रऋष्यादयस्तथा । विष्ण्वावेशयुताःसर्वेनतुविष्णुस्वरूपकाःइतिवचनात्युक्तमुक्तम् ५१ जगद्रक्षणार्थंमुत्पन्नत्वात्तवहरेर्विशेषावेशोयुक्तइत्यभिप्रेत्यव्यतिरेकमुखेनराजानप्रशंसति नयदेति जैत्रंजयशीलमघान्पापपुरुषान्त्रासयन्कंपयन् ५२ अंशुमानादित्यः ५३ दस्युभिर्हिंसाशीलैःपुरुषैःसेतुभेदःस्यात् ५४ ततःकिमत्राह अधर्मस्येति व्यंकुशैःनिरकुशैःअतोपिकिमत्राह शयान इति शयानेन्यायान्यायविचारशून्ये ५५

ऋषित्वाभिमानभंगभयात्किंचिज्जानन्विकर्दमःकार्यविशेषंपृच्छति अथापीति अनेनराज्ञोर्थनाशभंगभयंनिवृत्तमितिध्वनयति ५६ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांद्वाविंशोध्यायः ॥२२॥ राज्ञाकर्दमपृष्टंश्रुत्वाचतूष्णींआस्थायिकथनवाग्व्यवहारोवाकारीतितत्राह एवमिति सव्रीडइवेतिविनयगुणंभूषयति उपारतंयावदपेक्षितमुक्त्वातूष्णींस्थितं यद्वाउपाधिकेसर्वेश्वरेहराव कारशब्दवाच्येरतंनिरतंश्रीनारायणध्यानोपेतमित्यर्थः अथाअंभःपुराणर्षिरितिपाठे १ इत्यनेनविप्रक्षत्रिययोःसूचितांसमानसंबंधप्रसिद्धिंप्रपंचयति ब्रह्मेति अस्मत्परीप्सयाऽस्मद्रक्षणेच्छया छंदोम यान्वेदप्रधानान् तपःकायक्लेशः विद्याशास्त्रज्ञानंयोगोभगवद्भक्तिलक्षणः अनेनक्षत्ररक्षासामर्थ्यमुक्तंभवति अलंपटान्विरक्तान्शमदमादिगुणसंपन्नानित्यर्थः २ विप्राणांत्राणायरक्षणाय अनंतत्वद्योत नायदोःसहस्रादिति उभयोर्हरेःकिंप्रियतममितितत्राह हृदयमिति तस्यहरेर्ब्रह्मकुलहृदयमतिप्रियंहि छिन्द्यांस्वबाहुमपीत्युक्तंहि तर्हिकिंक्षत्रेणेत्यतउक्तं क्षत्रमिति अंगांगिभावेनतारतम्येनातिप्रियत्वम् ३ यतएवांगांगित्वमतएवब्रह्मक्षत्रंरक्षतिक्षत्रंचब्रह्मरक्षतिआत्मानं चोपदेशादिनारक्षति यःसदसदात्मकःकार्यकारणव्यापीदेवोद्वयमपिरक्षतीत्यन्वयः ४ स्वप्रार्थनांग्राहयितुकर्दमंप्रशंसति तवेति दर्शनादित्यनेनचक्षुःसन्निकर्षः शास्त्रीयवचनंचेतिद्वयंविवक्षितं धर्मराज्यपालनादिकम् ५ भगवद्दर्शनंसुपूतानामेवलभ्यतेनापुण्यानामित्याह दिष्ट्येति अंगसंगस्तुततोभ्यधिकपुण्याल्लभ्यतइति

अथापिपृच्छेत्वांवीरयदर्थंत्वमिहागतः ॥ तद्वयंनिर्व्यलीकेनप्रतिपाद्यमहेहृदा ५६ ॥ इतिश्रीभागवतम० तृतीयस्कंधेद्वाविंशोध्यायः॥२२॥ मैत्रेयउवाच ॥ एवमाविष्कृताशेषगुणकर्मोदयंमुनिम् ॥ सव्रीडइवतंसम्राडुपारतमुवाचह १॥ मनुरुवाच ॥ ब्रह्मासृजत्स्वमुखतोयुष्मानस्मत्परीप्सया ॥ छंदोमयांस्तपोविद्यायोगयुक्तानलंपटान् २ तत्त्राणायासृजच्चास्मान्दोःसहस्रात्सहस्रपाद ॥ हृदयंतस्यहिब्रह्मक्षत्रमंगंप्रचक्षते ३ अतोह्यन्योन्यमात्मानंब्रह्मक्षत्रंचरक्षतः ॥ रक्षतिस्माव्ययोदेवःसदासदसदात्मकः ४ तवसंदर्शनादेवच्छिन्नामेसंशयाहृदः ॥ यत्स्वयंभगवान्प्रीत्याधर्ममाहरिरक्षिषोः ५ दिष्ट्यामेभगवान्दृष्टोदुर्दर्शोयोकृतात्मनाम् ॥ दिष्ट्यापादरजःस्पृष्टंशीर्ष्णामेभवतःशिवम् ६ दिष्ट्यात्वयानुशिष्टोहंकृतश्चानुग्रहोमहान् ॥ अपावृतैःकर्णरंध्रैर्जुष्टादिष्ट्योशतीर्गिरः ७ सभवान्दुहितुःस्नेहपरिक्लिष्टात्मनोमम ॥ श्रोतुमर्हसिदीनस्यश्रावितंकृपयामुने ८ प्रियव्रतोत्तानपदोःस्वसेयंदुहितामम ॥ अन्विच्छतिपतिंयुक्तंवयःशीलगुणादिभिः ९ यदातुभवतःशीलश्रुतरूपवयोगुणान् ॥ अशृणोन्नारदात्सैषात्वय्यासीत्कृतनिश्चया १० तत्प्रतीच्छद्विजाग्र्येमांश्रद्धयोपहृतांमया ॥ सर्वात्मनानुरूपांतेगृहमेधेषुकर्मसु ११

भावेनाह दिष्ट्येति ६ अपावृतैर्विवृतैरुशतीरुशत्योनिर्मलाः ७ अलमनुलापेनकिमिच्छुरागतोसितद्ब्रूहीतितत्राह सभवानिति ८ आवृमतीत्वेनप्राप्तत्वेहेतुंपुत्रिकाणत्रधर्मराहित्यंध्वनयन्नाह प्रियव्रतेति सामान्यविशेषाभ्यांव्यवहारःसंभवतिअतएवकथमस्यावरविचारइतितत्राह अन्विच्छतीति यदावयःशीलगुणादिभिर्युक्तंपतिमन्विच्छातिसंभोगवयःप्राप्तासीत् नहिकन्यास्वयंपतिंमृगयतेप्रत्युत बांधवाएवातोन्विच्छतीत्यनेनवयएवलक्ष्यते ९ यदातुनारदाद्भवतःशीलादिगुणानशृणोत् ततःकिमत्राह सैषेति याश्रुतवतीसैषासएवममपतिःस्यादितिकृतनिश्चयासीत् १० अत्रापिकीदृशोसौकुत्रास्तइत्यादिविशेषप्रश्नादिनानिश्चयोलभ्यतइत्यतएकोंशोनिरगापि अतोद्वितीयोपिनिर्धार्यइतिभावेनाह तत्प्रतीच्छेति कन्येच्छयाःप्रीतांनधिरेवेनेच्छांकुरुगृहाणेत्यर्थः अत्रान्योपिगुणोस्तीत्याह श्रद्धयेति उपहृतांदत्तां अतोपिगुणात्गृहाणेत्याशयेनाह सर्वात्मनेति गृहमेधेषुगृहस्थाश्रमयोग्ययज्ञादिषुकर्मसुतेतवसर्वात्मनायुक्तायुक्तविचारमंतरेणस्वतएवानुरूपामनुकूलांशब्दादिगुणा । रूपंशब्देपद्मौश्लोकेमंथावृत्तोहितादिषु सौंदर्यंचस्वभावेचेति ११

किंचनेदानीमितिप्रतिपादनेनकांचनस्त्रियंपरिहरेत्तद्व्रतमितिश्रुतिविरोधोपिस्यादितिभावेनाह उद्यतस्येति निर्मुक्तसंगस्यविषयसंगमनिच्छतोपिनतुसर्वात्मनासंगस्यनिषिद्धत्वादनर्थहेतुत्वाच्च तदुक्तं य स्तुप्रव्रजितोभूत्वापुनःसेवेतमैथुनम्।षष्टिवर्षसहस्राणिविष्ठायांजायतेक्रिमिरिति कामरक्तस्ययोग्यस्यप्रतिवादःप्रत्याख्यानंनिषेधइत्यर्थः ११ भवंतमंतरेणान्य.कश्चित्प्रत्याख्यातिचेद्वाधकंचास्तीत्याह यउ द्यतमिति कीनाशंकदर्यंकर्षकंवा १२ अनापृच्छ्यागमनमात्मदोषंपरिहरति अहंचेति अनेनबहिर्मुखेषुअयंदोषोनपंडितेष्वितिदर्शितम् । उपकुर्वाणोविवाहकामः । वेदानधीत्यपथोवर्णीविवाहार्थंगुरोः कुलात् । कृतानुज्ञोनिवर्तेतउपकुर्वाणउच्यते १४ प्रतिबुद्धप्रत्युत्तरोमुनिःकिमकार्षीदितिराज्ञोंतःशंकानिवारयति बाढमिति बाढमित्युक्तंविवृणोति उद्वोढुकामइति बाढंत्वभिमतेभृशइतिच तवपुत्रीवो ढुंयोग्येत्याह अप्रमत्तेति । पतिशुश्रूषणेयत्ताविषयासक्तिनिःस्पृहाधर्मार्थकामहेतुर्यात्वप्रमत्तेतितांविदुरिति। त्वप्रमत्तेतिपाठेर्थेतायान्यस्मैवाचाप्यदत्तत्वात्परामृष्टशंकाभावादुपयंतुंयोग्येत्याह अप्रत्तेति चशब्दोहेत्वर्थः किंनामायंविवाहइतितत्राह आवयोरिति चतुर्णांविवाहविधीनामयंवैवाहिकोविधिराद्योब्राह्मः । शक्त्याकन्यामलंकृत्याहूययत्रप्रदीयतेसब्राह्मइतिस्मार्तः।मुहूर्तंप्रतीक्ष्यनस्थेयमित्यतोवाह आवयोरिति आद्योद्यतनोदिवसएवविवाहयोग्योविधीयतइतिविधिः विभक्तिप्रतिरूपकंचाव्ययंभवतीतिवचनादद्येत्यव्ययं सुबंतरूपमपिविवक्षावशाद्भवति प्रतिःप्रतिनिधिप्रतिदानयोरितिसूत्रा

उद्यतस्यहिकामस्यप्रतिवादोनशस्यते ॥ अपिनिर्मुक्तसंगस्यकामरक्तस्यकिंपुनः १२ यउद्यतमनादृत्यकीनाशमभियाचते ॥ क्षीयतेतद्यशःस्फीतंमान श्चावज्ञयाहतः१३ अहंत्वाशृणवंविद्वन्नुद्वाहार्थंसमुद्यतम् ॥ अतस्त्वमुपकुर्वाणःप्रत्तांप्रतिगृहाणमे १४ ॥ ऋषिरुवाच ॥ बाढमुद्वोढुकामोहमप्रमत्तातवात्म जा ॥ आवयोरनुरूपोसावाद्योवैवाहिकोविधिः १५ कामःसभूयान्नरदेवतेऽस्याःपुत्र्याःसमाम्नायविधौप्रतीतः ॥ कएवतेतनयांनाद्रियेतस्वयैवकांत्या क्षिपतीमिवश्रियम् १६ यांहर्म्यपृष्ठेक्वणदंघ्रिशोभांविक्रीडतींकंदुकविह्वलाक्षीम् ॥ विश्वावसुर्न्यपतत्स्वाद्विमानाद्विलोक्यसंमोहविमूढचेताः १७ तां प्रार्थयंतींललनाललामामसेवितश्रीचरणैरदृष्टाम् ॥ वत्सांमनोरुच्चपदःस्वसारंकोनानुमन्येतबुधोभिजातः १८ अतोभजिष्येसमयेनसाध्वींयावत्तेजो बिभृयादात्मनोमे ॥ अतोधर्मान्पारमहंस्यमुख्यान्शुक्लोपदिष्टान्बहुमन्येऽविहिंस्रान् १९

च १५ संतानलक्षणःस्त्रीणांमुख्यकामःसविधिनास्यात्तादृशोभूयादितिराज्ञोभिप्रायंजानन्विवकर्दमोनिर्मुक्तेकामइति यःकामःसमाम्नायविधौवेदवाक्येदशास्यांपुत्रानाधेहिपतिमेकादशंकृधीतिप्रतीतोऽख्या ख्यातो हेनरदेवसकामस्तेतवास्याःपुत्र्याःस्यादित्यन्वयः अनंतरमपिभवतामरपुत्रीलालनीयेतिनप्रार्थनीयामितिभावेनाह कएवेति स्वयौत्पत्तिक्याकांत्यान्याःस्त्रियःक्षिपंतींनिरस्यंतींश्रियंलक्ष्मीमिवस्थि तां अनादरहेतुरूपलावण्याद्यभावाभावादित्यर्थः १६ यथापुरास्यानारदवाक्यादस्मद्गुणविषयाभिरुचिरभूत्तथास्माकमपिकेनाचित्पथिकेनश्राविताायामस्यांशृंगारादिगुणपंक्तिमाकर्ण्याकांक्षासमुत्पन्ने तिभावेनतल्लावण्यंस्तौति यामित्यादिश्लोकद्वयेन विश्वावसुर्गंधर्वःसमीचीनोमोहोयस्मात्तत्सौंदर्यात्तत्तथातेनसंमोहेनसौंदर्येणविमूढंकृत्याकृत्यशून्यंचेतोयस्यसतथा यद्वासंमोहोदर्शनाज्जातंपारवश्यंतेन मूढचेताअनेनकर्दमस्यक्वापित्वमन्वर्थमितिदर्शितं यद्वासंमोहोनामवस्तुनिस्नेहविशेषस्तेन १७ प्रार्थयंतीमित्यादीनिपंचविशेषणानिस्वीकारेकारणानि ललनानांविलासिनीनांस्त्रीणांललामांतिलकभूतां नसेवितौश्रियोलक्ष्म्याश्चरणौयैस्तेतथातैः पुरुषैरदृष्टामित्यनेनदृष्टिविषयीकारयोग्यतापिनकिंपुनःस्वीकारइतिसूचयति मनोःसुतामितिकुलं उच्चपदउत्तानपादस्यस्वसारंभगिनीमितिभ्रातृमत्तांत्वं कोप्य स्यानेजातोपिबुधःस्यादभिजातइति अनेनात्मनोयोग्यताविशेषंध्वनयति १८ किमनुलापेनोक्तंसर्वंसत्यंप्रत्यक्षचपरांकिंक्रियतेइतितत्राह अतइति यतएवंविधगुणाअतइति समयेनकालेन कालश्चवाक्ि

यावदिति इयंतव पुत्रीयावद्यदायेआत्मनःशरीरस्यमुक्तान्वविकारकृतरेतोलक्षणंतेजोबिभृयाद्धिभर्ति अहमपितावदेवाविभर्मीतिशेषः ततःपरंकिमत्राह अतइति अतोऽत्रापत्योत्पत्त्यनंतरंपारमहंस्यमुख्या नृपरमहंससंबंधिनोतएवमुख्यान् शुक्लेनानित्यशुद्धेनहरिणोपदिष्टानाविहिंस्रान्पन्थाचालंमनाविधुरान्पमानूबहुमन्येअनुतिष्ठामिसंप्राप्स्यामीत्यर्थः १९ अस्मिन्नर्थेहरिरेवावयोःसाक्षीत्याह यतइति ग्रेनसंस्थाप्यतेस्वसेतौनिधायरक्ष्यतेप्रलयेयत्रयस्योदरेसचप्रमाणंसाक्षीअनतइतितसाक्षिणःकालत्रयेप्यवस्थानमाह २० मैत्रेयोविदुरंप्रतिकर्दमस्यमितभाषित्वगुणंवक्ति सउग्रधन्वन्निति इ यदेवएतावदेव स्वमनीषितंचेदभूदतोहरिणाकिमितिहरावनादरबुद्धिर्नाभूत्तत्प्रसादादेवेदंसमस्तंकार्यंजातमभूदितिसततंश्रीनाराणस्मृतिमानितिभावेनउक्तमरविंदनाभमिति । नवोद्वाहयोग्या याःकन्यायाःप्रथमःकर्षणमंत्रःपत्युः स्मितशोभिमुखमन्यथेदानीमंगारलिप्तमिवोत्तरत्रकिमुतवैमुख्यादिकंस्यादित्यतइदमौत्पत्तिकंननैमित्तिकमितिभावेनायमेवपतिःस्यान्नान्यइतिस्मितशोभिनामु खेनदेवहूत्यामनआकर्षितामित्याह स्मितशोभितेनेति लुभगाध्येंगृधुअभिकांक्षायामित्याकांक्षणमप्याकर्षणविशेषः २१ महिषीदुहित्रोःपूर्वसंवादइदानीमपिसन्नेतद्दर्शनेनान्यथाभूदितिवि विदिषुरिवराजातन्निश्चयज्ञानपूर्वकंकन्यामस्माअदादित्याह सइति अन्वनंतरम् २२ तत्रराज्ञ्याकिमदायीतितत्राह शतरूपेति परिबर्हान्वरवध्वोर्दीयमानद्रव्याणि तानि

यतोभवद्विश्वमिदंविचित्रंसंस्थाप्यतेयत्रचवावतिष्ठते ॥ प्रजापतीनांपतिरेषमह्यंपरंप्रमाणंभगवाननंतः २० ॥ मैत्रेयउवाच ॥ सउग्रधन्वन्नियदेवाबभा षआसीच्चतूष्णीमरविंदनाभम् ॥ धियोपगृह्णन्स्मितशोभितेनमुखेनचेतोलुलुभेदेवहूत्याः २१ सोनुज्ञात्वाव्यवसितंमहिष्यादुहितुःस्फुटम् ॥ तस्मै गुणगणाढ्यायददौतुल्यांप्रहर्षितः २२ शतरूपामहाराज्ञीपारिबर्हान्महाधनान् ॥ दंपत्योःपर्यदात्प्रीत्याभूषावासपरिच्छदान् २३ प्रत्तांदुहितरंसम्राट् सदृक्षायगतव्यथः ॥ उपगुह्यचबाहुभ्यामौत्कंठ्योन्मथिताशयः २४ अशक्नुवंस्तद्विरहंमुंचन्बाष्पकलांमुहुः ॥ आसिंचदंबवत्सेतिनेत्रोदैर्दुहितुःशिखाः २५ आमंत्र्यतंमुनिवरमनुज्ञातःसहानुगः ॥ प्रतस्थेरथमारुह्यसभार्यःस्वपुरंनृपः २६ उभयोर्ऋषिकुल्यायाःसरस्वत्याःसुरोधसोः ॥ ऋषीणामुपशां तानांपश्यन्नाश्रमसंपदः २७ तमायांतमभिप्रेत्यब्रह्मावर्तात्प्रजाःपतिम् ॥ गीतसंस्तुतिवादित्रैःप्रत्युदीयुःप्रहर्षिताः २८ बर्हिष्मतीनामपुरीसर्वसंपत्सम न्विता ॥ न्यपतन्यत्ररोमाणियज्ञस्यांगंविधुन्वतः २९ कुशकाशास्तएवासन्शश्वद्धरितवर्चसः ॥ ऋषयोयैःपराभाव्ययज्ञघ्नान्यज्ञमीजिरे ३०

लोकविलक्षणानिकिंकिनेत्याह शहेति २३ पुत्रींदत्त्वाकिंचित्कालमत्रैवतत्स्नेहादवात्सीत्किंकिनेत्याह प्रत्तेति सदृक्षायसमानाय अनेनमनुःस्वकुमारीराजकुमाराभावाच्छांदसायदत्तवानित्यपवा दमपाकरोति २४ बाष्पकलाअश्रुबिंदून् नेत्रोदैर्नेत्रजलैः शिखाःकेशभारान् २५ २६ राजामहतिगहनेकक्षेस्थितायकस्मैचिन्मूलफलाशनायतापसायपुत्रींदत्त्वायाम्यहमित्यनुशोकानुत्पादकं स्वराजधानीविशिष्टसंपत्समुद्रमृषीणामाश्रममंडलंददर्शस्वपुरीमयादित्याह उभयोरिति ऋषिकुल्यायाऋषिकुलप्रियायारोधसोस्तीरयोःस्थितानामुपशातानामतिशयितभगवन्निष्ठानाम् २७ मनोःराजे तिशब्दार्थलक्षयति तमायांतमिति अनेनप्रजानुरागेणरंजनाद्राजेतिशब्दोनिरुक्तइतिध्वनयति २८ इयमपिनगरीतरक्षेत्रेभ्योपिपुण्यतमेतिश्रैष्ठ्यमाह न्यपतन्निति जलार्द्रमंगंविधुन्वतोयज्ञवराहस्यां गात्रोमाणिज्ञानानंदलक्षणानियत्रबर्हिष्मत्यांन्यपतन् सहसशोवताराअभिव्यक्ताअभूवन्नित्यर्थः २९ रोम्णामवतारत्वेकुशकाशात्मकत्वंकथमितितत्राह तइति सप्तसुप्रथमेतिसूत्राच्चेभ्योज्ञानान दलक्षणेभ्योवतीर्णेभ्योरोमभ्यएवकुशकाशाआसन्नित्यन्वयः प्रथमप्राप्तपरित्यागेकिंकारणमितिचेन्नहरेर्हेयोपादेयराहित्यात् न्यपतन्नित्युक्तयाकिंनस्यादितिचेन्न ज्ञानानंदस्वरूपेभ्योरोमभ्योस्यकुशाद य । विधुन्वतःप्रपामेतुवाराहवपुषोभवन् । तानिरोमाणिदेवस्यरूपाण्यासन्सहस्रशइतिवाक्यविरोधात् । रोम्णांकर्कशत्वात्कुशकाशानामकर्कशत्वेनसुकुमारकांतिमत्त्वात्नरोमत्वंयुक्तमिति भावेनाह

लसदिति लसद्धरितवर्चसोभास्वद्दूर्वांकुरश्यामरोचिष  यथायोदाहकस्वमन्यनियतमेवंकुशादीनामवध्यराक्षसपरिभावकत्वंभगवद्रोमशक्तिनियुक्त मतस्तएवासन्निति व्यपदेशइतिभावेनाह ऋषयइति पराभा व्यपराभूययज्ञंभगवंतं ३० इतोपिकुशादीनांरोमव्यपदेशोयुज्यते यज्ञांगत्वेनविष्णुपदप्राप्तिहेतुत्वादित्याशयेनाह कुशेति कुशकाशमयंकुशकाशनिर्मितं यत्रकुशकाशाकरेपुरेस्थित्वामनुर्यज्ञपुरुषमयजत्तेन मनुनायतोयस्यबर्हिषोगुणात्स्थानगुणाद्वादृढमक्षयंस्थानंविष्णुपदंलब्धं  अनेनबर्हिष्मतीतिशब्दार्थोनिरुक्तइतिज्ञायते ३१ समनुरेवंविधांबर्हिष्मतींनामपुरींनिर्विश्यसुखमावसदित्यन्वयः तस्याविषयभो गाभावेशून्यागारस्थवत्किंसुखमत्राह  तस्यामिति  तस्यांपुर्यांविद्यमानंभवनंप्रविष्टःकामान्भोगान्विषयभोगोधर्मादिपुरुषार्थविरोधेनदुःखहेतुरित्यतउक्तमन्याविरोधतइतिअन्यस्यधर्मादेरविरोधेन ३२ धर्माद्यविरोधेनविषयभोगः कथमत्राह संगीयमानेति अनुबद्धेनास्निग्धेन ३३ ग्राहग्रस्तस्यैवविषयासक्तस्यहरिकथाश्रवणेनकिंफलमत्राह निष्णातामिति योगमायासुयोगसामर्थ्येष्वणिमादिषु मुनिंसर्वज्ञं वेत्तावेद्यस्यसर्वस्यमुनिःसद्भिरुदाहृतइत्यभिधानं स्रंसयितुंहरिकथाश्रवणात्श्लथयितुम् ३४  विषयसेवायाःप्राबल्येकथंनशेकुरितिवचनमित्याशंक्यहरिकथाश्रवणादेर्निरंतरत्वेनसंवर्धितापचयत्वेनततो

कुशकाशमयंबर्हिरास्तीर्यभगवान्मनुः ॥ अयजद्यज्ञपुरुषंलब्धंस्थानंयतोदृढम् ३१ बर्हिष्मतींनामपुरींनिर्विश्यसुखमावसत् ॥ तस्यांप्रविष्टोभवनंता पत्रयविनाशनम् ॥ सभार्यःसप्रजःकामान्बुभुजेन्याविरोधतः ३२ संगीयमानसत्कीर्तिःसस्त्रीभिःसुरगायकैः ॥ प्रत्यूषेष्वनुबद्धेनहृदाशृण्वन्हरेःकथाः ३३ निष्णातंयोगमायासुमुनिंस्वायंभुवंमनुम् ॥ यदास्रंसयितुंभोगानशेकुर्भगवत्परम् ३४ अयातयामास्तस्यासन्यामाःस्वांतरयापनाः ॥ शृण्वतो ध्यायतोविष्णोःकुर्वतोब्रुवतःकथाः ३५ सएवंस्वांतरंनिन्येयुगानामेकसप्ततिम् ॥ वासुदेवप्रसंगेनपरिभूतगतित्रयः ३६ शारीरामानसादिव्याःपर्यासे येचमानुषाः ॥ भौतिकाश्चकथंक्लेशाबाधंतेहरिसंश्रयम् ३७ यःपृष्टोमुनिभिःप्राहधर्मान्नानाविधाञ्छुभान् ॥ नृणांवर्णाश्रमाणांचसर्वभूतहितःसदा ३८ एतत्तआदिराजस्यमनोश्चरितमद्भुतम् ॥ वर्णितंवर्णनीयस्यतदपत्योदयंशृणु ३९ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेत्रयोविंशतितमोध्यायः॥२३॥ श्रीशुकउवाच ॥ पितृभ्यांप्रस्थितेसाध्वीपतिमिंगितकोविदा ॥ नित्यंपर्यचरत्प्रीत्याभवानीवभवंप्रभुम् १ विस्रंभेणात्मशौचेनगौरवेणदमेनच ॥ शु श्रूषयासौहृदेनवाचामधुरयाप्रभो २

पिप्राबल्यातिशयादितिभावेनाह अयातयामाइति यातयामंगतरसं। गतसारंयातयामंयामःसारइहोच्यतइतिवचनादयातयामाअगतसारानिष्फलाइत्यर्थः। यामाःकालावयवाःस्वांतरयापनाःस्वावसान कारिणः ३५ सकालावधिःकियानित्यत्राह सएवमिति स्वांतरंस्वकालावधिंपरिभूतंनिरस्तंगतीनांतिर्यग्यातनातमसांत्रयंयेनसतथा ३६ शारीरादिक्लेशोपद्रुतत्वेनयामानामगतसारत्वंकथमत्राह शारी राइति पर्यासेमानुषत्वेनावस्थानेपिमानुषामनुष्येभ्योजाताः भौतिकाभूतप्रेतादिभ्योजाताः ३७धर्मशास्त्रप्रणेतृत्वाल्लोकहितकरस्यनकोप्युपद्रवइत्याशयेनाह यःपृष्टइति ३८ मनुचरितमुपसंहृत्यवक्तव्यांशं प्रतिजानीते एतत्तइति तस्यमनोरपत्यस्यदेवहूत्याउदयंसमृद्धिंशृण्विति ॥३९॥ इतिश्रीभा०म०तृतीयस्कंधेविजयध्वजकृतटीकायांत्रयोविंशोध्यायः ॥२३॥ पितृभ्यांमातापितृभ्यांमातापितरौपितरावि त्यभिधानं। इंगितकोविदाचित्तस्थविज्ञाननिपुणा। भवानीपार्वती १ विस्रंभेणपत्युरेवाभीष्टसिद्धिःस्यादितिनिश्चयलक्षणेनविश्वासेनआत्मशौचंमनःशुद्धिःशुश्रूषयाहितश्रवणेच्छया सौहृदमनिमित्तस्नेहः २

कामोविषयेच्छा दंभआत्मनिअविद्यमानमाहात्म्यप्रकटनं अर्थपापव्यसनं तेजीयांसमतींद्रियकरणशक्तियुतम् ३ संतोषलक्षणमादिमंसंभाषणंतदभूदित्याह सवाइति पुत्रादिमहाशिषआशासा नाम्निच्छंतीम् ४ क्षामांम्लानामतएवकर्शितांलघ्वीभूतशरीरयष्टिम् ५ परमभक्त्यादिकमस्तीतिकुतोलक्ष्यतइतितत्राह यइति योदेहिनामत्यंतसुहृत्अयंस्वदेहः समुचितंस्नानालंकारभोज नादिलक्षणंप्रति नापेक्षितःकिमितितत्राह क्षयितुमिति यदर्थेयस्यममयोर्थेक्षयितुंकृशीकर्तुं ममकृशदेहदर्शनेनैवयथायंतुष्टःस्यादितियदतोहंतवतुष्टइत्यन्वयः ६ किमनयागुडजिह्विकयाप्र धुरयावाप्यापुरुषार्थानुपयोगिन्येत्याशंक्यतुष्टिफलंप्रत्यक्षयति यामइति स्वधर्मनिरतस्यमेममतपआदिसाधनैर्विजितोपार्जितातस्यहरेरनुभावनयानिरंतरोपासनयाउत्पन्नभगवत्प्रसादादवरुद्धावशी कृतायातांमेममविद्यमानांदृष्टिंप्राप्य सन्निकृष्टफलत्वात्तुभ्यंवितरामि तत्रापिकितत्राह अभयामिति अभयप्रदामशोकांदुःखविनाशनीं मदनुभावनयेतिपाठेममनित्यशुश्रूषालक्षणयोपासनया त्वयावरुद्धाउपदेशयोग्यताकारितेत्यर्थः आत्मयोगश्चित्तनिरोधलक्षणः ७ मोक्षव्यतिरिक्तपुरुषार्थानांक्षणभंगुरत्वेनतत्साधनमायासेननपृथगनुष्ठेयमेतदविनाभूतत्वाच्चेत्यभिप्रेत्याह अन्यइति स्व र्गादिप्राप्तिसाधनोपदेशंविहायचतुर्थपुरुषार्थमात्रस्योपायोपदेशःकस्मादित्यतोवाह अन्येपुनरिति उरुक्रमस्यभगवतोभ्रुवउद्विजृंभतोविनाशकलक्षणस्फुरणेनविभ्रंशिताविनाशिताअर्थरचनाविषयभो

विसृज्यकामंदंभंचद्वेषंलोभमघंमदम् ॥ अप्रमत्तोद्यतानित्यंतेजीयांसमतोषयत् ३ सवैदेवर्षिवर्यस्तांमानवींसमनुव्रताम् ॥ दैवाद्गरीयसःपत्युराशासा नांमहाशिषः ४ कालेनभूयसाक्षामांकर्शितांव्रतचर्यया ॥ प्रेमगद्गदयावाचापीडितःकृपयाब्रवीत् ५ तुष्टोहमद्यतवमानिनिमानदायाःशुश्रूषयापरमया परयाचभक्त्या ॥ योदेहिनामयमतीवसुहृत्स्वदेहोनापेक्षितःसमुचितंक्षयितुंयदर्थे ६ यामेस्वधर्मनिरतस्यतपःसमाधिविद्यात्मयोगविजिताभगवत्प्र सादात् ॥ तामेवतेतदनुभावनयावरुद्धादृष्टिंप्रपश्यवितराम्यभयामशोकाम् ७ अन्येपुनर्भगवतोभ्रुवउद्विजृंभविभ्रंशितार्थरचनाःकिमुरुक्रमस्य ॥ सिद्धा सिभुंक्ष्वविभवान्निजधर्मदोहान्दिव्यान्नरैर्दुरधिगानपिविक्रियाभिः ८ ॥ मैत्रेयउवाच ॥ एवंब्रुवाणमबलाखिलयोगमायाविद्याविचक्षणमवेत्यगताधिरा सीत् ॥ संप्रश्रयप्रणयविह्वलयागिरेषद्व्रीडावलोकविलसद्धसिताननाह ९ ॥ देवहूतिरुवाच ॥ राद्धंबतद्विजवृषैतदमोघयोगमायाधिपेत्वयिविभोतदवैमि भर्तः ॥ यस्तेभ्यधायिसमयःसकृदंगसंगोभूयाद्गरीयसिगुणप्रसवःसतीनाम् १०

गचमत्कारायेषांतेतथोक्ताः इतियस्मात्तस्मात्तदुपदेशेनाकिंन।किमपीत्यर्थःस्वर्गादीनांभवद्विजृंभानुगृहीतावस्थानत्वात्तदनुग्रहेणतत्प्राप्तिःकिंवाच्येतिस्वनियमितंकंठोक्तीकरोति सिद्धासीतिनकेवलंचतुर्थ पुरुषार्थेनत्वंसिद्धासिकिंत्वपेक्षिताशेषपुरुषार्थैनापि तत्कथमत्राह भुंक्ष्वेति निजधर्मस्यदोहोयेषांतेतथातान् अश्वमेधादिविशिष्टक्रियाभिःसाधनैरपिनरैर्दुरधिगान् अधिगंतुमशक्यान् अनेनभगवदनुग्र हवबालमेतदवाप्यनेनकर्मादिकमित्युक्तंभवति ८ एवमुपदिष्टायादेवहूत्यामनसिकिमभूदितितत्राह एवमिति अखिलासुयोगमायाविद्यासुअणिमाद्यष्टांगयोगसामर्थ्यसिद्धिकरीषुविचक्षणंनिपुण भर्तुःप्रस न्नतामवेत्यावेक्ष्यसदाशुश्रूषानिरतत्वेनतदवसरोपिनास्तीतिगताधिःनिरस्तमनःपीडा एतत्कथमवगतमत्राह संप्रश्रयेति प्रश्रयेणविनयगुणेनसहवर्ततइतिसप्रश्रयःसचासौप्रणयःस्नेहप्रसरःतेनविह्वला स्वलंतीतयागिराईषद्व्रीडयावलोकनेविलसच्छृंगारविशेषंकुर्वद्धसितंमंदस्मितंयस्यतत्तथा व्रीडावलोकविलसद्धसितमाननंयस्याःसातथा ९ स्वयंप्रसन्नेंद्रियत्वात्श्रोतुःप्रसादजनकवाक्यमाहेत्याह राद्धमिति हेद्विजवृषब्राह्मणश्रेष्ठपद्भ्रवीष्येतत्तवराद्धंसिद्धं हेभर्तःअमोघयोगमायायाअधिपेत्वयिपपद्यतेयोगसामर्थ्यंतदहमवैमीति अर्थोकितवापेक्षितमत्राह यस्तइति तेतवसकृदंगसंगःशरीरस्पर्शलक्षणोग्राम्यधर्मः सम योभ्यधायिसमूपादितिपार्थःइतिशेषः सकृदंगसंगेनकिंफलंस्यादितितत्राह वरीयसीति सतीनांपतिव्रतानांस्त्रीणांवरीयसिगुणोत्तमेपत्यौसकृदंगसंगोगुणप्रसवःगुणाढ्यःपुत्रःप्रसूतेइतिसफलएवेत्यर्थः १०

तर्हि तथास्त्वित्याशंक्य कृत्यं किंचिदस्तीत्याह तत्रेति तत्र सकृदंगसंगविषये यथोपदेशं शास्त्रोपदेशमनतिक्रम्य कृत्यमिति कर्तव्यतामुपशिक्ष विद्यामुपादत्स्व कुतो विद्योपादानमत्राह येनेति अतीरिरंसया आत्मा स्यधर्मैच्छपाकर्शितएष मेमम आत्मा देहो येन विद्योपादानेन सिध्येत सफलो भूयात् स कामोस्तु किमुद्दिश्येत्यत उक्तं तेकृत इति त्वत्कृतमनोभवेन तत्रनिमित्तकामेन धर्षितायाः अभिभूतया. कीदृक् विद्योपादा नकाम इति तत्राह तदीशेति यत्सार्वभौमपुत्र्यामम सदृशं योग्यं तद्भवनं विद्यासामर्थ्येन विचक्ष्व दृष्ट्वा कुर्वित्यन्वयः अतितरां रिरंसया रंतुमिच्छया तेतव मनोभवधर्षितायामेष कामः कमनीय आत्मा कायो येन विद्याबलेन रचितेन गृहादिना सिध्येत तादृशं भवनं विचक्ष्वेति वा ११ विषयेभ्य आहृत्यात्मन्येवाधिष्ठापित सर्वेंद्रियग्रामो पिकर्दमः आश्रितवत्सला महांत इति भावं दर्शयन् प्रियावचनं पालयन् योगविद्याबले न तत्क्षण एव गृहं निर्ममइत्याह प्रियाइति यादृशेन भगवद्ध्यानेनाभीष्टं स्यात्तादृशं योगमनुतिष्ठन् आविरचीकरत् प्रकाशयामास १२ श्रोतॄणा भगवद्ध्यानमाहात्म्ये श्रद्धातिशयजननाय प्राकृतं प्राकृतमिव वर्ण

तत्रेतिकृत्यमुपशिक्षयथोपदेशं येनैषमेकर्शितोतिरिरंसयात्मा ॥ सिध्येत तेकृतमनोभवधर्षितायाःकामस्तदीशभवनं सदृशं विचक्ष्व ११ ॥ मैत्रेय उवाच ॥ प्रियायाःप्रियमन्विच्छन्कर्दमोयोगमास्थितः ॥ विमानंकामगंक्षत्तस्तर्ह्येवाविरचीकरत् १२ सर्वकामदुघंदिव्यंसर्वरत्नसमन्वितम् ॥ सर्वर्द्ध्युपचयोदर्कं मणिस्तंभैरुपस्कृतम् १३ दिव्योपस्करणोपेतंसर्वकालसुखावहम् ॥ पट्टिकाभिर्विचित्राभिःपताकाभिरलंकृतम् १४ स्रग्भिर्विचित्रमालाभिर्मंजुशिंजत्षडंघ्रिभिः ॥ दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् १५ उपर्युपरिविन्यस्तनिलयेषुपृथक्पृथक् ॥ क्लृप्तैःकशिपुभिःकांतंपर्यंकव्यजनासनैः १६ तत्रतत्रविनिक्षिप्तनानाशिल्पोपशोभितम् ॥ महामरकतस्थल्याजुष्टंविद्रुमवेदिभिः १७ द्वास्सुविद्रुमदेहल्याभातंवज्रकपाटिमत् ॥ शिखरेष्विंद्रनीलेषुहेमकुंभैरधिश्रितम् १८ चक्षुष्मत्पद्मरागाग्र्यैर्वज्रभित्तिषुनिर्मितैः ॥ जुष्टंविचित्रवैतानैर्महार्हैर्हेमतोरणैः १९ हंसपारावतव्रातैस्तत्रतत्रनिकूजितम् ॥ कृत्रिमान्मन्यमानैःस्वानधिरुह्याधिरुह्यच २० विहारस्थानशयनसंवेशप्रांगणाजिरैः ॥ यथोपजोषंरचितैर्विस्मापनमिवात्मनः २१ ईदृग्गृहंतत्पश्यंतींनातिप्रीतेनचेतसा ॥ सर्वभूताशयाभिज्ञःप्रावोचत्कर्दमःस्वयम् २२ निमज्ज्यास्मिन्ह्रदेभीरुविमानमिदमारुह ॥ इदंशुक्लकृतंतीर्थमाशिषामापयेन्नृणाम् २३ सातद्भर्तुःसमादायवचःकुवलयेक्षणा ॥ सरजंबिभ्रतीवासोवेणीभूतांश्चमूर्धजान् २४ अंगंचमलपंकेनसंछन्नंशबलस्तनम् ॥ आविवेशसरस्वत्याःसरःशिवजलाशयम् २५

यति सर्वकामेत्यादिना सर्वासां समृद्धीनां उपचयेन समाहारेण उदर्कमुत्कृष्टं एतदेव विविनक्ति मणिस्तंभैरिति उपस्कृतमलंकृतम् १३ दिव्यानि कुलालादिरचनारहितान्युपस्कराणि भांडादिगृहसाधनानि तैर्युक्तं पट्टिकाभिः पट्टवस्त्रकृताभिः १४ विचित्रमालाभिः नानाविधपुष्परचिताभिः स्रग्भिर्मालाभिर्मंजुमधुरं सिंजंतः शब्दं कुर्वंतः षडंघ्रयो भ्रमरा यासु तास्तथोक्तास्ताभिः १५ कशिपुभिः शय्याभिः पर्यंकैर्मंचैः १६ १७ द्वास्सु द्वारेषु विद्रुमदेहल्या निर्मितद्वारबंधेन । देहली द्वारबंधः स्यादिति च । वज्ररत्नकृताः कपाटयो यस्मिन् संतीति वज्रकपाटिमत् १८ चक्षुष्मंतो दीप्तिमंतः पद्मरागाग्र्या मणयः विचित्राणां वितानानां समूहैः १९ कृत्रिमान् शोभार्थं कृतान् स्वान् अकृत्रिमान्मन्यमानैः २० शयनानि वेशनं संवेशः प्रांगणं गृहपूर्वभूमिः अजिरं गृहबाह्यसंस्कृतभूमिः यथोपजोषं यथासुखम् २१ परिचारिकाभावान्नातिप्रीतेन सर्वभूतानामाशयमभिप्रायमभितो जानातीति सर्वभूताशयाभिज्ञः २२ आशिषां शुभानां चाप्तये प्राप्तये एवंविधे ह्रदे तीर्थे २३ सरजं धूलिधूसरम् २४ मलेन किट्टेन दृढबद्धेन पंकेन कर्दमेन कल्मषेण वा शबलौ कृष्णपांडुरौ स्तनौ यस्मिन् तत्तथा तत् सरस्वत्याः सरो ह्रदं शिवानां जलानामाश्रयं स्थानम् २५

ह्रदंप्रविश्यकिमकरोदित्यत्राह सांतःसरसीति वेश्मगृहं तत्रस्थितादशशतानिसहस्रंकैशोरवयसःषोडशवर्षवयसउत्पलगंधवत्गंधोयासांताउत्पलगंधयः २६ पतिवृणदर्शनवदेतद्दर्शनेनाकिमस्याः प्रयोजनमितितत्राह तांदृष्ट्वेति अनेनाभ्युत्थानप्रणामसंभाषणादिप्रयोजनमुक्तंभवति कर्मकरीःकर्मकर्यः शाधिअनुशासनंकुरु २७ कीदृशंपरिचारकर्मकुर्वन्नितितत्राह स्नानेनेति महत्याराध्याअर्हेणयोग्येन मनस्विनींप्रसन्नमनसं नूत्नेनूतने २८ वरीयांसिवरणीयतमानिद्युमंतिकांतिमंति सर्वगुणैर्भक्ष्यभोज्यचोष्यलेह्यलक्षणैरुपेतं मधुरादिषड्रसोपेतंवा आमृतवत्स्वादुमद्यंयस्मिंस्तदमृतासवम् २९ भर्तृसान्निध्याभावेशरीरशृंगारेणांकितत्रवक्ति अथेति आदर्शेदर्पणे आत्मानंशरीरंविरजंनिर्मलंकृतस्वस्त्ययनंदासीभिःकृताशीर्वचनम् ३० कुलस्त्रीतुशिरःस्नानमुत्सवेस्नातुतैलतः । वारेवापैतृकेकर्मण्यन्यदाकंठसंप्लुताइतिस्मार्ताः ३१ पूर्वपश्चिमभागानेश्रयाश्रोण्योरिति रुचकेनवृत्ताकारेणकंठाभरणेन ३२ सुभ्रुवादिभिश्चलसत्चकासन्मुखंयस्मिंस्तत्तथोक्त पद्मकोशंस्पर्धतइतिपद्मकोशस्पृक्तेन ३३ एवंविधमात्मानंदृष्ट्वायदाऋषीणांऋषभंदयितंप्रेष्ठंपतिं पतिसमीपेइदंसर्वंशोभतइतिसस्मारततस्तदासप्रजापतिर्यत्रास्तेस्वयंचताभिःस्त्रीभिःसहतत्रैवास्तइत्यन्वयः ३४ यदासाभर्तुःपुरस्तात्स्थितंस्त्रीसहस्रैश्चवृतंआत्मानमद्राक्षीत्तदातस्यकर्दमस्ययोगगतिंभगवद्ध्यानफलंनिशाम्यकिमिदंचित्रमितिसंशयंविस्मयप्रत्यपद्यत नतुकोटिद्वयावलंबिविकल्पं प्रागेवनिश्चायकधर्मदर्शनाद्

सांतःसरसिवेश्मस्थाःशतानिदशकन्यकाः ॥ सर्वाःकिशोरवयसोददृशोत्पलगंधयः २६ तांदृष्ट्वासहसोत्थायप्रोचुःप्रांजलयःस्त्रियः ॥ वयकर्मकरीस्तुभ्यंशाधिनःकरवामकिम् २७ स्नानेनतांमहार्हेणस्नापयित्वामनस्विनीम् ॥ दुकूलेनिर्मलेनूत्नेददुरस्यैचमानद २८ भूषणानिपरार्ध्यानिवरीयांसिद्युमंतिच ॥ अन्नंसर्वगुणोपेतंपानंचैवामृतासवम् २९ अथादर्शेस्वमात्मानंस्रग्विणंविरजांबरम् ॥ विरजंकृतस्वस्त्ययनंकन्याभिर्बहुमानितम् ३० स्नाकृतशिरःस्नानंसर्वाभरणभूषितम् ॥ निष्कग्रीवंवलयिनंकूजत्कांचननूपुरम् ३१ श्रोण्योरध्यस्तयाकांच्याकांचन्याबहुरत्नया ॥ हारेणचमहार्हेणरुचकेनचभूषितम् ३२ सुभ्रुवासुदताश्लक्ष्णस्निग्धापांगेनचक्षुषा ॥ पद्मकोशस्पृधानीलैरलकैश्चलसन्मुखम् ३३ यदासस्मारऋषभमृषीणांदयितंपतिम् ॥ तत्रचास्तेसहस्त्रीभिर्यत्रास्तेसप्रजापतिः ३४ भर्तुःपुरस्तादात्मानंस्त्रीसहस्रवृतंतदा ॥ निशाम्यतद्योगगतिंसंशयंप्रत्यपद्यत ३५ सतांकृतमलस्नानांविभ्राजंतीमपूर्ववत् ॥ आत्मनोबिभ्रतीरूपंसंवीतरुचिरस्तनम् ३६ विद्याधरीसहस्रेणसेव्यमानांसुवाससम् ॥ जातभावोविमानंतदारोहयदमित्रहन् ३७ तस्मिन्नलुप्तमहिमाप्रिययानुषक्तोविद्याधरीभिरुपचीर्णवपुर्विमाने ॥ बभ्राजउत्कचकउद्गुणपानवीच्यस्ताराभिरावृतइवोडुपतिर्नभस्थः ३८

त्यर्थः ३५ अर्थक्रियायोग्यत्वान्नविकल्पापरपर्यायःसंशयोभूत्किंतुविस्मयएवेतिभावेनव्यवायोपक्रमंवक्ति सतामिति स्तनपट्टिकयासंवीतौरुचिरौस्तनौयस्यतत्तथा ३६ जातभावःप्रादुर्भूतव्यवायलीलारंभः ३७ जातभावइत्युक्तंविवृणोति तस्मिन्निति सतस्मिन्विमानेबभ्राजेचकासइत्यन्वयः प्रकाशयोग्यगुणानाह अलुप्तेत्यादिना अलुप्तमहिमाअपरिच्छिन्नमाहात्म्यःग्राम्यकर्मासक्तस्यापितत्सामर्थ्यलोपोनास्तीत्यर्थः सर्वेंद्रियाणांजरयंतितेजइतिश्रुतेरितरेषांसस्यादितिमाहात्म्यलोपशंकाकारणमाह प्रियेयेति आलिंगनेचुंबनेवाप्यनुषंगोनुवर्ततइति अंगमर्दनादिनाउपचीर्णउपचूर्णितंशुश्रूषितंवपुर्यस्यसतथा अनेनसुरतालयेस्त्रियएवपरिचारकाइतिसूचितं कचःकलंकेदोषेचकुंतलेभ्रमरेतथाइत्यभिधानादुत्कचकउद्धृतदोषः उत्कृष्टोगुणोयस्यतदुद्गुणंतच्चपानंपातुंयोग्यमधरामृतंतदुद्गुणपानंतस्यवीचिःपरंपरास्यास्तीत्युद्गुणपानवीच्यःमत्वर्थेयत्प्रत्ययः यद्वाउद्गुणपानःउत्तमाधरामृतश्चवीच्यएवाशीचरःप्राप्तषोडशवर्षः प्राप्तषोडशवर्षःसन्नावीच्यइतिकथ्यतइतिच बुद्धयवतारार्थद्योतमाहताराभिरिति उडुपतिश्चंद्रःउक्तविशेषणाभियथासंभवंचंद्रेपिघटनीयानि ३८

वनचक्रक्रीडादीनांसुरतांगत्वात् तदप्यनेनानुष्ठितमितिभावेनकामगामित्युक्तंविवृणोतिश्लोकद्वयेन तेनेति तेनविमानेनाष्टानांलोकपालानामिंद्रादीनांविहारःक्रीडायासुतास्तथोक्ताःकुलाचलेंद्राणांस प्तकुलपर्वतानांद्रोण्योनितंबगुहास्तासुअष्टलोकपविहारकुलाचलेंद्रद्रोणीषुवैश्रवणवच्चिरंरेमेइत्यन्वयः पाषाणसंधिषुसूर्यकिरणसंतापसंभूतनिदाघेषुस्वतःकामाग्निनातप्तस्यसुरतेऽस्वास्थ्यानुभवःकथंघटतइत्य तउक्तमनंगेति अनंगसखोमारुतोवायुस्तेनसौभगासुसुंदरसुखासुद्युधुनीआकाशगंगातस्याःपातेनप्रस्रवणेनशिवःकर्णसुखःस्वनःशब्दोयासुतास्तासु अनेनविशेषणद्वयेनशांधशैत्यमितिगुणद्वयमुक्तं लल नाःस्त्रियःवरूथःसमूहः उभयत्रसमम् ३९ इदानींसौरभ्यंध्वनयन्नाह वैस्रंभकेसुरवनइति ४० इतरेषांवैमानिकानांविमानानांस्वाधिकृतेष्वेवप्रदेशेषुसंचारादस्यविमानस्यविशेषाभावादयंसर्वातिशयी त्याह भ्राजिष्णुनेति विमानेनचरंतीतिवैमानिकास्तान् ४१ एतदैश्वर्यंनस्वानियतंश्रीनारायणप्रसादायत्तमित्याशयेनाह किंदुरापादनमिति उद्दामचेतसामगाधबुद्धीनांतीर्थशुद्धजलंगंगापदोर्य स्यसतीर्थपात्तस्य ४२ ब्रह्माश्रयात्भूगोलकादधिकैश्वर्यातिशयःस्वाश्रमइतिभावेनततस्तस्यनिवृत्तिंवक्तिप्रेक्षयित्वेति स्वसंस्थयास्वसमाध्यायास्तावत्प्रदेशोपेतंभूगोलकंभूमण्डलम् ४३ विदुरः

तेनाष्टलोकपविहारकुलाचलेंद्रद्रोणीष्वनंगसखमारुतसौभगासु ॥ सिद्धैर्नुतोद्युधुनिपातशिवस्वनासुरेमेचिरंधनदवल्ललनावरूथी ३९ वैस्रंभकेसुरवने नंदनेपुष्पभद्रके ॥ मानसेचैत्ररथ्येचसरेमेरामयासह ४० भ्राजिष्णुनाविमानेनकामगेनमहीयसा ॥ वैमानिकानत्यशेतचरन्लोकान्यथानिलः ४१ किं दुरापादनंतेषांपुंसामुद्दामचेतसाम् ॥ यैराश्रितस्तीर्थपदश्चरणोव्यसनात्ययः ४२ प्रेक्षयित्वाभुवोगोलंपत्न्यैयावान्स्वसंस्थया ॥ बह्वाश्चर्यंमहायोगीस्वाश्र मायन्यवर्तत ४३ विभज्यनवधात्मानंमानवींसुरतोत्सुकाम् ॥ रामांनिरमयन्रेमेवर्षपूगान्मुहूर्तवत् ४४ तस्मिन्विमानउत्कृष्टांशय्यांरतिकरींश्रिता ॥ नचाबुद्ध्यततंकालंपत्यापीच्येनसंगता ४५ एवंयोगानुभावेनदंपत्योरममाणयोः ॥ शतंव्यतीयुःशरदःकामलालसयोर्मनाक् ४६ तस्यामाधत्तरे तस्तांभावयन्नात्मनात्मवित् ॥ नवधाविधायरूपंस्वंसत्यसंकल्पविद्विभुः ४७ ततस्तासुषुवेसद्योदेवहूतिःस्त्रियःप्रजाः ॥ सर्वास्ताश्चारुसर्वांग्योलोहितो त्पलगंधयः ४८

स्वाश्रमंप्राप्यकिमकार्षीत्कर्दमइतितत्राह विभज्येति महायोगित्वाद्बहुशरीरग्रहणसमर्थःकर्दमआत्मानंस्वंनवधाविभज्य योगशक्त्यानवसंख्याविशिष्टानिशरीराणिगृहीत्वासुरतोत्सुकांमानुषरतिकामु कींमानवींमनुपुत्रींरामामपितावद्रूपवतींनितरांरमयन्वात्स्यायनोक्तविधिनावर्षपूगान्मुहूर्तवद्रेमेइत्यन्वयः ४४ तृतीयपुरुषार्थानुभवईदृगितिव्यनक्ति तस्मिन्निति मसृणत्वाद्रतिकरीं योबहुतिथस्तंका लम् ४५ इदानींकालसंख्यातिएवमिति शरदोवत्सराःव्यतीयुरतिक्रांताःकामलालसयोश्चंद्रोदयेवर्धमानसमुद्रतरंगवद्विषयभोगाभिलाषयोः ४६ सुरतफलितमाह तस्यामिति । आत्मविच्चेविवृ णोति सत्येति सत्यसंकल्पोहरिः तंसत्यसंकल्पत्वादिगुणविशिष्टत्वेनवेत्तीति येनयोगुणोहरावुपसंह्रियतेसतद्गुणविशिष्टोभवतीतिन्यायात्स्वयमपिसत्यसंकल्पःस्वंस्वरूपंनवधाविधायतामप्या त्मनामनसानवधाभावयन्तस्यागर्भलक्षणंरेतआधत्तेत्यन्वयः योगशक्त्यानवसुस्वस्यव्याप्तिसामर्थ्यंसूचयति विभुरिति अर्धमात्मनइतिपाठेआत्मनोर्धपत्नींभावयन्नित्यर्थः अर्धोवाएषआत्म नोयत्पत्नीतिश्रुतेः ४७ शुक्लेनहरीणाकृष्णपक्षअध्यास्यंस्तेजआत्मनइत्यादावभिहितत्वादाहितःसगर्भःस्त्रीलिंगइतिनिश्चितेपिकतिपुकालावयवेष्वुगतेषुताकिमसूतेतितत्राह ततइति सद्यइत्य नेननिरस्यातिकविप्वितिशंका ४८

मद्दैवायदुत्तरंकार्यंतत्प्रार्थनापूर्वंकंकर्तव्यमित्यतोदेवहूतिःपुत्रीणांदानंपुत्रंचपतिंप्रार्थयते पतिमिति प्रव्रजिष्यंतंसंन्यासंकर्तुमिच्छंतंआलक्ष्यविषयविरागादिलक्षणेनज्ञात्वा उशतीपुत्रंकामयमानाऽतएव स्मयमानाविषयाभिलाषिणीवात्मानंदर्शयंतीउरपस्त्यमानंभर्तृविरहजेनविक्लवेन ४९ विषयाभिलाषंव्यनक्तिलिखंतीति नखाएवमणयःनखमणयस्तेषांश्रीर्यस्यसतथातेन अनेनकामार्ताःपदांगुष्ठेनभूमिंलिखंतीतिवात्स्यायनप्रसिद्धमितिसूचयति ५० किमाहेतिवृत्तमनुवदति सर्वमिति उपोवाहोपचकार अर्थाकितत्राह अथापीति अभयमभयलक्षणंपुत्रम् ५१ किंचतुभ्यंतव दुहितृभिःसमाःअभयमितिसमान्यतउक्तंस्पष्टयति अपीति त्वयिवनंप्रव्रजितेसंन्यस्यवनंगतेसति ममविशोकायसंसारदुःखप्रहाणायपुत्रःस्यादपिसंभवेत्किंतत्समवायभवदनुग्रहोभूयादितिशेषः सचिदिति पाठेसच्चिदानंदलक्षणःपरमात्मेतिध्वनयति कश्चिदितिपाठेअयमेवार्थःसुटूछांदसः ५२ अथापिपुत्रप्रार्थनव्याजेनयंविषयाभिलाषुरितिशंकामाभूदित्याह एतावतेति इंद्रियार्थेषुशब्दादिषुप्रसंगो गुणबुद्ध्यातिस्नेहलक्षणोयस्तेनपरित्यक्तोविस्मृतः परमात्मासर्वोत्तमोहरिर्येनसातथोक्तातस्याः ५३ ममगतकालोपिपुरुषार्थहेतुःस्यादितिप्रार्थयतेइत्याह इंद्रियार्थेष्विति यद्यपिइंद्रियार्थेषुसज्जंत्याभवतःपरमितरविलक्षणंभावंयोगैश्वर्यमजानंत्यामेत्वयिकृतोयःप्रसंगःसतथापिपरमभागवतत्वेनत्वत्संगत्वान्मेअभवायअपुनर्भवायास्त्वित्यन्वयः ५४ ज्ञानंविनासंगस्यपुरुषार्थहेतुत्वंकथमित्यतस्तंविशिनष्टि

पतिंसाप्रव्रजिष्यंतंतदालक्ष्योशतीसती ॥ स्मयमानाविक्लवेनहृदयेनविदूयता ४९ लिखंत्यधोमुखीभूमिंपदानखमणिश्रिया ॥ उवाचललितांवाचंनिरुध्याश्रुकलांशनैः ५० सर्वंतद्भगवान्मह्यमुपोवाहप्रतिश्रुतम् ॥ अथापिमेप्रपन्नायाअभयंदातुमर्हसि ५१ ब्रह्मन्दुहितृभिस्तुभ्यंविमृश्याःपतयःसमाः ॥ अपिस्यान्मेविशोकायत्वयिप्रव्रजितेवनम् ५२ एतावतालंकालेनव्यतिक्रांतेनमेप्रभो ॥ इंद्रियार्थप्रसंगेनपरित्यक्तपरात्मनः ५३ इंद्रियार्थेषुसज्जंत्याप्रसंगस्त्वयिमेकृतः ॥ अजानंत्यापरंभावंतथाप्यस्त्वभवायमे ५४ संयोगःसंसृतेर्हेतुरसत्सुविहितोधिया ॥ सएवसाधुषुकृतोनिःसंगत्वायकल्पते ५५ नेहयत्कर्मधर्मायनविरागायकल्पते ॥ नतीर्थपदसेवायैजीवन्नपिमृतोहिसः ५६ साहंभगवतोनूनंवंचितामाययादृढम् ॥ यत्त्वांविमुक्तिदंप्राप्यनमुमुक्षेहबंधनात् ५७ ॥ इतिश्रीभागवतेमहा० तृतीयस्कंधेचतुर्विंशोध्यायः ॥ २४ ॥ मैत्रेयउवाच ॥ निर्वेदवादिनीमेवंमनोर्दुहितरंमुनिः ॥ दयालुःशालिनीमाहशुक्लाभिव्याहृतंस्मरन् १

संयोगइति साधुषुभागवतेषुनिःसंगत्वायसंसारविरागाय अनेनवैराग्यभक्तिज्ञानद्वारासत्संगःपुरुषार्थहेतुरित्युक्तंभवति ५५ सत्संगत्योत्पन्नब्रह्मार्पणबुद्ध्याचिकित्सितस्यकर्मणोद्वारद्वारिकयापरमपुरुषार्थहेतुत्वंनकेवलस्यक्षणिकत्वेनचाचेतनत्वेनचस्वाभीष्टफलदानसामर्थ्याभावादित्याह नेहेति इहकर्मभूमौयेनपुरुषेणयत्क्रियमाणंकर्मधर्मायधर्माख्यपुरुषार्थप्राप्तयेनस्यात् विरागायनकल्पतेवैराग्योत्पत्तौनसमर्थंस्यात् तीर्थपदस्यहरेःसेवायैचनस्याचादृशकेवलस्यकर्मणःकर्तासपुरुषोजीवन्मृतइत्युच्यते अपिशब्देनतस्यजन्मगर्हयति यस्माचस्माद्भागवतसंगत्याशिक्षितंकर्मैवकर्तव्यमित्यर्थः ५६ तर्हिकिमर्थंसकृदंगसंगोभूयादितिविषयाभिलाषःप्रार्थितइतितत्राह साहमिति सातादृश्यहंभगवतोहरेर्माययाबंधकशक्त्यावंचितानूनंतर्कयामि तर्कनिश्चययोर्नूनमितिच तत्रहेतुमाह यत्त्वामिति संसारविमुक्तिदंत्वांप्राप्यसंसारबंधनान्नमुमुक्षेमुक्तिंनेच्छामीतियस्मादतइति इत्यनेनसंसारप्रवृत्त्यारंभमेवेच्छामीतिसूचयति ५७ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांचतुर्विंशोध्यायः ॥ २४ ॥ हरेरवताराअपिसच्चिदानंददेहत्वाच्छुक्रशोणितसंपर्कप्रारब्धशरीरानभवंतीत्याद्यर्थतात्पर्यावबोधायास्याध्यायस्यारंभःतत्रादौकर्दमेनदेवहूत्युक्तस्यकिमुत्तरत्वेनाभाणीतितत्राह निर्वेदवादिनीमिति निर्वेदंवैराग्यंवदितुंप्रतिपादयितुंशीलमस्यास्तीतिनिर्वेदवादिनीशालिनींभार्यां । शालिनीमालिनीमान्याचार्याभार्येतिचोच्यतेइत्यभिधानात् शुक्लानाम्नोहरेरभिव्याहृतवचनम् १

आत्मानंत्वांचमांचप्रतिपितुःशुक्ररूपेणमातृयोनौनक्षरतीत्यक्षरः तत्रहेतुर्भगवानिति २ कदाप्रतिपत्स्यतइत्याशंक्यमदुक्तनियमानंतरमाविर्भविष्यतीतिभावेननियममाह धृतव्रतेति ३ अपिस्यान्मेवि शोकायेतिप्रश्नंप्रत्याह सत्वयेति ब्रह्माणंचतुर्मुखंविभावयत्युत्पादयतीति ब्रह्मपरमात्मतत्त्वंग्राहयती.तिवा तपश्चर्याबुद्धिमुत्पादयतीतिवा ब्रह्मभावनः औदर्यःपुत्रतयावतीर्णः हृदयग्रंथिमहंकारबंधंसंसार मू ४ देवहूत्यपिदमादीनांदुःसहत्वान्नेदानींतत्करणंप्रकारांतरंचेदुपदिश्यतामितिभावेनभर्तृवचनंनोदास्तेकिंतुश्रद्धयान्वतिष्ठदित्याह देवहूतीति संसारिचेतनव्यावृत्तयेकूटस्थमिति सर्वव्यापिरूपवत्त्वो दासीनंब्रह्मादिज्ञानोपदेष्टारमितिभावेनोक्तं गुरुमिति ५ बह्व्यामपिसाधनसामग्र्यांकार्यानुत्पत्तिवदत्रापितथाकिंनेत्याह तस्यामिति बहूनातिथिविशेषाणांकालावयवानापूरणेकालेगतेसतिकार्दमंकर्द मशुक्रात्मविकाररमणीयोगवीर्यरेतआपन्नःप्रविष्टस्तस्यरेतसआपदविलापनलक्षणानयतीतिआपन्नोवा तस्यांदेवहूत्यांजज्ञेप्रादुर्बभूव अस्यायमेवार्थइत्यत्रतादृशंदृष्टांतमाह अग्निरिवेति यथाग्निर्दारु णिस्थितोदारुतश्चाभिव्यक्तोभवति अतएवतस्यामित्युक्तं पूर्वमपितत्रसत्त्वात् एतत्सर्वं नावतारेष्वपिहरेर्देहःशुक्रादिसंभवः । तथापिशुक्रसंस्थःसन्मातृदेहमाविशच । विलाप्यशुक्रंतत्रैवकेवलज्ञानरूप तः । उदेतिभगवान्विष्णुःकालेलोकांविडंबयन् । इत्यादिग्रंथांतरसिद्धं । कालेदशमेमासे ६ तत्रसाक्षान्नारायणएवरूपांतरेणाभिव्यक्तोलोकविलक्षणोत्सवदर्शनादितिभावेनतंकालंविशिनष्टि अवादय

ऋषिरुवाच ॥ माखिदोराजपुत्रीत्थमात्मानंप्रत्यनिंदिते ॥ भगवांस्तेक्षरोगर्भमदूरात्संप्रपत्स्यते २ धृतव्रतासिभद्रंतेदमेननियमेनच ॥ तपोद्रविणदानैश्चश्रद्धयाचेश्वरंभज ३ सत्वयाराधितःशुक्लोवितन्वन्मामकंयशः ॥ छेत्स्यतिहृदयग्रंथिमौदर्योब्रह्मभावनः ४ ॥ मैत्रेयउवाच ॥ देवहूत्यापिसंदेशंगौरवेणप्रजापतेः ॥ सम्यक्श्रद्धायपुरुषंकूटस्थमभजद्गुरुम् ५ तस्यांबहुतिथेकालेभगवान्मधुसूदनः ॥ कार्दमंवीर्यमापन्नोजज्ञेग्निरिवदारुणि ६ अवादयंस्तदाव्योम्निवादित्राणिघनाघनाः ॥ गायंतितंस्मगंधर्वानृत्यंत्यप्सरसोमुदा ७ पेतुःसुमनसोदिव्याःखेचरैरपवर्जिताः ॥ प्रसेदुश्चदिशःसर्वाअंभांसिचमनांसिच ८ तत्कर्दमाश्रमपदंसरस्वत्यापरिश्रितम् ॥ स्वयंभूःसार्धमृषिभिर्मरीच्यादिभिरभ्ययात् ९ भगवंतंपरंब्रह्मसत्वेनांशेनशत्रुहन् ॥ तत्त्वसंख्यानविज्ञप्त्यैजातंविद्वानजःस्वराट् १० सभाजयन्विशुद्धेनचेतसातच्चिकीर्षितम् ॥ प्रहृष्यमाणैरसुभिःकर्दमंचेदमभ्यधात् ११ ॥ ब्रह्मोवाच ॥ त्वयामेऽपचितिस्तातकल्पितानिर्व्यलीकतः ॥ यन्मेसंजगृहेवाक्यंभवान्मानदमानयन् १२

न्नित्यादिना घनाघनाःगर्जन्मेघाजगर्जुरितिशेषः ७ तस्मिन्हरौव्यज्यमाने अपवर्जिताअधःपातिताः ८ इतोपिहरिरेवाभिव्यक्तइत्तरकथाब्रह्माद्यागमनासंभवादित्याशयेनाह तत्कर्दमेति ९ सरस्वत्या परिश्रुतमितिविशेषितत्वात्तीर्थस्नानार्थंतेषामागमनंकिंतत्राह भगवंतमिति आद्विष्णोर्जातइत्यजस्यचतुर्मुखत्वेसिद्धेपितस्यभक्त्याद्यतिशयत्वद्योतनायस्वराडिति मनोवाक्कायकर्मभिःस्वतंत्रेराजतइ तिस्वेनराजतइतिवा नभारतीमेंगमृषेत्यादेः सत्त्वेनसर्वगुणपरिपूर्णत्वेनसिद्धेनांशेन किंप्रयोजनोयमवतारइत्यतउक्तं तत्त्वेति चतुर्विंशतितत्त्वानांसंख्यानंसम्यग्ज्ञानंतस्यविज्ञप्त्यैविज्ञापनाय सत्व स्यप्रकृतिगुणेष्वेकत्वात्तेनप्राकृतदेहेनजातइत्येवार्थइतीदंचोद्यं । महागुणाभिपूर्णत्वंसत्त्वमित्युच्यतेबुधैरित्यनेनपरिहर्तव्यं । केवलोनिर्गुणश्चेतिश्रुतेश्च अत्रसंख्यानमित्यनेनसम्यग्ज्ञानमेवकथ्यते नतुदुष्टक पिलोक्तंशास्त्रं कुतः सम्यक्ज्ञानंतुसांख्यंस्यात्तदर्थोयोगउच्यतइतिवचनात् १० ब्रह्मणागत्यकिंवचनमुक्तंतत्राह सभाजयन्नितितस्यहरेश्चिकीर्षितंसम्यक्ज्ञानसाधनशास्त्रनिर्माणेच्छासभाजयन्साध्वि तिबहुमानयन् हरेर्भक्तानुकंपितत्वेनप्रहृष्यमाणैरसुभिरिंद्रियैरुपलक्षितश्चशब्देनहरेश्चिकीर्षासभाजनंकर्दमसंभाषणंचसमुच्चिनोति ११ सामान्येनोक्तंविशिनष्टि त्वयेति अपचितिःपूजा केयमपचि तिरत्राह यन्मेसंजगृहइति १२

एतावतैवकथमपचितिरभूदित्यत्राह एतावतीति बाढमभिमतमनुमन्येत करोमीतियावन्तावत्येव १३ किमनयास्तुत्याप्रजाःसृजेतिभवदाज्ञानिस्तीर्णेतितत्राह इमाइति सत्यःसंस्थितिशेषः सतीगुणे नार्कफलंतत्राह सर्गमिति सर्गमवशिष्टामितिशेषः अनेनमदाज्ञाचकृतास्यादित्युक्तंभवति १४ मानुषसर्गस्तुमिथुनेनभाव्यतइतियस्मादतआसांयोग्येभ्योयथारुचिदेहीत्याह अतइति अनेनोमौलो कौचमाप्रोषीत्याशयेनाह विस्तृणीहीति विस्तृणीहिविस्तृतंकुरु १५ अयंतवगृहेवतीर्णःसाक्षान्नारायणएवनान्यस्तल्लक्षणसद्भावादित्यहंवेद्मि त्वमपितथाविद्धीत्यभिप्रेत्याह वेदाहमिति भूतानांजी वानांशेवधिंपुरुषार्थसाधननिर्धिंदेहांविश्राणं कंपिबतिलातिचेतिकपिलंनाम्नाहंवेदेत्यन्वयः १६ योज्ञानविज्ञानयोगेनकर्मणास्वरूपमुद्धरन्प्रकाशयन् उन्मूलयन्वा यश्चाहिरण्यकेशादिस्वलक्षणलक्षितस्तमि तिशेषः हिरण्यश्मश्रुर्हिरण्यकेशइत्यादिश्रुतेः १७ स्वस्यजगद्गुरुत्वादिसिद्धयेदेवहूत्याअपिस्वविज्ञानमुपदिशतीति एषमानवीति तवतत्त्वविज्ञापनेनाविद्यासंशयग्रंथिंअज्ञानमविद्याविकल्पःसंशयस्ता भ्यामुत्पन्नग्रंथिंबंधनंपाशलक्षणछित्त्वागांभूमिंविचरिष्यति स्वपादैकशरणानांतत्त्वज्ञापनायेतिशेषः १८ नकेवलंतवाविद्यासंशयग्रंथिंछिनत्तिकिंत्वन्येषामपीतिभावेनाह अयमिति अयमभगवान्लो

एतावत्येवशुश्रूषाकार्यापितरिपुत्रकैः ॥ बाढमित्यनुमन्येतगौरवेणगुरोर्वचः १३ इमादुहितरःसत्यस्तववत्ससुमध्यमाः ॥ सर्गमेताःप्रभावैःस्वैर्बृंहयिष्यं तिनैकधा १४ अतस्त्वमृषिमुख्येभ्योयथाशीलंयथारुचि ॥ आत्मजाःपरिदेह्यंगविस्तृणीहियशोभुवि १५ वेदाहमाद्यंपुरुषमवतीर्णंस्वमायया ॥ भू तानांशेवधिंदेहंबिभ्राणंकपिलंमुनिम् १६ ज्ञानविज्ञानयोगेनकर्मणामुद्धरंश्चयः ॥ कालोपसृष्टंयत्सांख्यंवक्ष्यत्यासुरयेविभुः ॥ हिरण्यकेशःपद्माक्षःपद्म मुद्रापदांबुजः १७ एषमानवितेगर्भंप्रविष्टःकैटभार्दनः ॥ अविद्यासंशयग्रंथिंछित्त्वागांविचरिष्यति १८ अयंसिद्धगणाधीशःसांख्याचार्यैःसुसंमतः ॥ लोकेकपिलइत्याख्यांगंतातेकीर्तिवर्धनः १९ ॥ मैत्रेयउवाच ॥ तावाश्वास्यजगत्स्रष्टाकुमारैःसहनारदः ॥ हंसोहंसेनयानेनत्रिधामपरमंययौ २० ग तेशतधृतौक्षत्तःकर्दमस्तेनचोदितः ॥ यथोदितंस्वदुहितॄःप्रादाद्विश्वसृजांततः २१ मरीचयेकलांप्रादादनसूयामथात्रये ॥ श्रद्धामंगिरसेयच्छत्पुलस्त्या यहविर्भुवम् २२ पुलहायगतिंयुक्तांक्रतवेचक्रियांसतीम् ॥ ख्यातिंसभृगवेयच्छद्वसिष्ठायाप्यरुंधतीम् २३ अथर्वणेददाच्छांतिंययायज्ञोवितन्यते ॥ विप्रर्षभान्कृतोद्वाहान्सदारान्समलालयत् २४ ततस्तऋषयःक्षत्तःकृतदारानिमंत्र्यतम् ॥ प्रातिष्ठन्नंदमापन्नाःस्वंस्वमाश्रममंडलम् २५

केकपिलइत्याख्यांगंताइत्यन्वयः संसारकंपलयहेतुत्वात्कपिलइत्यस्मिन्नर्थेविप्रतिपत्तिर्नास्तीत्याह सांख्येति सांख्यशास्त्रंकृत्वाप्रवर्तकत्वेनतदाचार्याणांपुरुषाणांपरमगुरुत्वेनतैःसुसंमतोऽविप्रतिपन्नः कुतर्कबृंहितसांख्यकर्तानायमित्याह सिद्धेति सिद्धामुक्तास्तेषांगणस्याधीशः अन्यकपिलस्यैतदभावात् । इतोपिनदुष्टकपिलोयमित्याह तेकीर्तिवर्धनइति १९ मानुषैःसहबहुलसंभाषणंनन्या य्यमितिभावेनजगत्स्रष्टुःस्वधामाभिगमनंवक्ति ताविति हंसोनिर्मलः २० कर्दमेनपुत्राननदर्शनेनधातुर्वचनंनविस्मृतमितिभावेनतदुक्तंकरोतीत्याह गतइति शतधृतौशतानंदेचतुर्मुखे ततइत्यनेनन विलंबःकृतइतिध्वनयति २१ मंदमतीनांसम्यगवबोधायवराण्व्यनक्ति मरीचयइति २२ २३ कर्दमोजामातॄणांदुहितॄणांप्रीत्यर्थंकिमकार्षीदितितत्राह विप्रर्षभानिति समलालयद्धनमानाभ्यामितिशे षः २४ तल्लालिताजामातरस्तत्रैवेत्यर्थंतदाश्रमएवकिमवसन्नुतस्वाश्रममयासिषुरुभयमपिसंभावितमितितत्राह ततइति कृतदाराविहितभार्याभार्यांतरप्राप्तीच्छारहितावा युगेक्षपावेपर्यासेकृतंऽभिवे हितैर्षेवादितियादवः नंदंधनमानाभ्यांसमृद्धिमापन्नाःप्राप्ताः २५

सूचीकटाहन्यायेनकर्दमजामातॄणामनवसराद्दुक्तकथाप्रसंगंविश्राव्यपुनरपिकर्दमचरितशेषंवक्ति सर्वेति कृतादिषुत्रिषुयुगेषुप्रादुर्भावोयस्यसत्रियुगस्तं । युगत्रयावतारेणत्रियुगशब्दोक्तिकथ्यतइतिच आत्मना ब्रह्मवचनेनचसम्यक्ज्ञात्वाविविक्तएकांते २६ स्वाभीष्टश्रवणायोपोद्घातंरचयति अहोइति निरयेनरकतुल्येसंसारे देवताः स्वान्तिकाइंद्रियाभिमानिदेवताः २७ भगवत्प्रसादंविनादेवताप्रसादेनाकिस्यादि त्याशंक्यतत्प्रसादाविनाभूतोन्यथातत्प्रसादएवनस्यादतस्तस्यश्रीनारायणस्यप्रसादोनैकेनजन्मनाकिंतुबहुभिर्जन्मभिः योग्यानामेवोपासकानास्यादित्याह बहुजन्मेति यतयोनिर्जितेंद्रियग्रामाः शून्यागारेषुएकांतस्थानेषुप्रधुवनादिषुतमीचीनेनानिर्दोषेणभक्तियोगेनाष्टांगयोगेनवायुक्तेनसमाधिनासंप्रज्ञातसंज्ञेनयस्यपदंस्वरूपम् २८ यश्चस्वानास्वभक्तानांपक्षंपुष्णातीतिपक्षपोषणः सएवभगवानद्य ग्राम्याणांविषयलोलानांनोहेलनमवज्ञांनगणय्यानाहत्य केवलानुग्रहलक्षणबुद्ध्याग्रहेषुजातःप्रादुर्भूतइत्यन्वयः नइत्युक्तानुसारेणग्रहेष्वितिबहुवचन यद्वामाहशानामितिवा २९ किंचभक्तानामभिव र्धनस्तेषामेवशर्मसुखंचिकीर्षुस्त्वंतवपुत्रत्वेनावतरिष्यामीति स्वीयंवाक्यंऋतंसत्यंकर्तुमेवगृहेभार्यायामवतीर्णोसीत्यन्वयः भक्तशर्मकरणायतदाभिमानवर्धनायस्ववाक्यसत्यत्वकरणायचेत्यवतारइतिगम्य ते ३० अर्थांतरंचास्तीतिकथयति तान्येवेति स्वजनानांस्वभक्तानांवसुदेवदेवक्यादिरूपाणिअभिव्यक्त्यर्थंरोचंतेअभीष्टानिभवतितान्येव नरूपंप्राकृतमस्यास्तीतिअरूपीतस्यतवाभिरूपाणिप्रियाण्य सइदानींब्रह्मादिभक्तानामस्मद्गृहेऽवतारस्येष्टत्वादस्मत्पुत्रत्वेनावतीर्णोसीतिपूर्वेणान्वयः । रुच्यर्थानांप्रीयमाणइतिसूत्रात् स्वजनेभ्यइतिवक्तव्येस्वजनानामितिषष्ठीस्वस्वामित्वज्ञापनायेति ज्ञातव्यं यत्तुब्रह्मादिरूपाणीतिश्रीमद्भगवत्पादाचार्यवचन तत्पविमात्वेनतयोग्यानांभवेदुपासनादिसंग्रहार्थत्वद्योतनाय । सत्वंविशुद्धंवसुदेवशब्दितमित्यादिनैवतत्सिद्धेश्चेतिसंतोष्टव्यं यद्भक्तानामभीष्ट

सचावतीर्णंत्रियुगमाज्ञायविबुधर्षभम् ॥ विविक्तउपसंगम्यप्रणम्यसमभाषत २६ अहोपापच्यमानानांनिरयेस्वैरमंगलैः ॥ कालेनभूयसानूनंप्रसीदंतीहदेवताः २७ बहुजन्मविपाकेनसम्यग्योगसमाधिना ॥ द्रष्टुंयतंतेयतयःशून्यागारेषुयत्पदम् २८ सएवभगवानद्यहेलनंनगणय्यनः ॥ गृहेषुजातोग्राम्याणांयःस्वानांपक्षपोषणः २९ स्वीयंवाक्यमृतंकर्तुमवतीर्णोसिमेगृहे ॥ चिकीर्षुर्भगवन्शर्मभक्तानामभिवर्धनः ३० तान्येवतेऽभिरूपाणिरूपाणि भगवंस्तव ॥ यानियानीहरोचंतेस्वजनानामरूपिणः ३१ त्वांसूरिभिस्तत्त्वबुभुत्सयाद्धासदाभिवादार्हणपादपीठम् ॥ ऐश्वर्यवैराग्ययशोवबोधवीर्यश्रियापूर्णमहंप्रपद्ये ३२ परंप्रधानंपुरुषंमहांतंकालंकविंत्रिवृतंलोकपालम् ॥ आत्मानुभूत्यानुगतप्रपंचंस्वच्छंदशक्तिंकपिलंप्रपद्ये ३३

रूपंतत्रावतारइत्यत्रकिंप्रमाणमवलंब्यावधियतइत्यतएवकारेणव्यक्तोभवेद्धारिस्तत्रयत्स्थानंरुचितंसतामितिसूचितम् ३१ कर्दमआत्मनःपुत्रत्वाभिमानंविहायापरोक्षज्ञानीतंविजानन्ननन्यसाधारणैर्ल क्षणैस्तंस्तौतीत्याह त्वांसूरिभिरिति ब्रह्मादिसूरिभिःअद्धाप्रत्यक्षसत्ययोरितिच श्रियेत्येकवचनमेषामन्योन्यमभेदद्योतनाय अत्रहरेर्वैराग्यंनामस्वेतरस्यसमस्तस्यासारतादर्शनम् ३२ प्रधानंपुरु षंमक्तापुरुषयोःपरमुत्तमं यद्वापिपर्तिपूरयतिजनंसंपदेतिपरस्तं सृष्ट्यापूरकत्वंब्रह्मादेरप्यस्तीत्यतःप्रधानं प्रकर्षेणधीयतेजगदितिप्रधानं भर्तासन्प्रियमाणोबिभर्तीतिश्रुतेः । कार्यानुविष्टतयाप्रकृतेरपिप्रधा नत्वमस्तीत्यतःपुरुषमिति पुरुगताविति धातोर्गमनशीलत्वात्पुरुषस्तं ताच्छील्यार्थेउषन्प्रत्ययः प्रकृतेरचेतनत्वेनगमनशक्त्यभावात् तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेरनुविश्यमुख्याधारकत्वंहरेरे व द्वाविमौपुरुषौलोकेइतिपुरुषशब्दवाच्यत्वात् । चित्प्रकृतेरपिकथंचिदुक्तलक्षणयोग्यता इत्यतउक्तं महांतमिति त्रिविधानंत्यमुक्तंप्रधानंस्यंकालगुणादिनेतिभावेनाह कालंकविंत्रिवृतमिति नहिका लस्यकाप्यंतोदृष्टः कविशब्दस्यातिक्रांतदर्शित्वार्थत्वेनगुणानंत्यमप्रतिहतं त्रीणिपृथिव्यप्तेजांसिआवृत्यव्याप्यतिष्ठतीतिस्वरूपानंत्यमपि अथवानेनोक्तार्थेप्रमाणमुच्यते त्रिभिर्वेदैर्वेद्यतइति । वेदैर्वृ तत्वाद्भगवांस्त्रिवृदित्युच्यतेबुधैरिति । तथाच । सर्वेवेदायत्पदमामनंतीत्यादिश्रुतिः । नचेदलोकाविलक्षणमत्राह लोकपालमिति लोकपालत्वमिंद्रादीनामप्यस्त्यतआत्मानुभूत्येतिआत्मानुभूत्यास्वरूपज्ञा नेनैवसम्यगशेषविशेषतयाज्ञातःप्रपंचोयेनसतथातं इदमपिलक्षणंतस्यैवयुक्तमित्याह स्वच्छंदशक्तिमिति स्वेच्छानुसारिजगत्सृष्ट्यादिशक्तियुक्तं कंब्रह्माणंपिपिनाकिनंरुद्रंचलालयतीतिकपिलस्तं यस्मादुत्पद्यतेब्रह्मापद्मयोनिःपितामहः । ब्रह्मादिषुप्रलीनेषु इतिमोक्षधर्मवचनादवगतानिलक्षणानिबहुभिरेवज्ञातव्यानिनास्मादृशैरितिस्थितम् ३३

एवंस्तुत्वाभगवंतंप्रसाद्यस्वाभीष्टानुज्ञांप्रार्थयतइत्याह तंत्वामिति उताप्यर्थविकल्पयोरित्युक्तेरत्राप्यर्थः अवतीर्णेनत्वयाप्तकामोपितथापियएवंविधलक्षणस्तंत्वानुपृच्छेअनुज्ञांप्रार्थये किमर्थंतत्राह परिव्राजामिति परिव्राजांसंन्यासिनांपदवींमास्थितःसंन्यस्तोहृदित्वांयुंजन्त्वामुद्दिश्यमनोयोगंकुर्वन्अतएवविशोकःत्वद्वियोगनिमित्तशोकरहितोग्रामैकरात्रविधिनाचरिष्येअटिष्यामीत्यन्वयः ३४ एवंस्तुत्याप्रसन्नोभगवांस्तस्मैज्ञानमुपदिशति मयेति आभासोज्ञानमालोकोलोकाभासश्चकथ्यतेइत्यभिधानादत्रलोकशब्देनज्ञानंविवक्षितंसत्यलौकिकेयथार्थज्ञानविषयेयन्मयाप्रोक्तंतदेवलोकस्यजनस्यप्रमाणंकारणं हिशब्देनाप्ततमत्वादितिहेतुंसूचयति ब्रह्माविष्णुर्हिलोकस्येतिस्मृतेःद्वितीयंब्रह्मणोक्तमपिप्रमाणमितिध्वनयति अज्ञानविप्रलंभादिदोषराहित्यमाप्तत्वंतदस्माकमस्तीतितवासिद्धमिति भावेनाह अथेति अहंतुभ्यमवोचंतवपुत्रत्वेनावतरिष्यइतियच्चस्मात्तदलंकर्तुंमयाऽजनित्वत्कृतइतिशेषः अतोहमपिनाविप्रलंभकइतितवासिद्धमिति अतोहमाप्ततमइत्यर्थः ३५ स्वानापक्षपोषणइतियदुक्तंतत्राह एतन्मइति स्थानेभिप्रायआशयइत्यभिधानात् दुराशयाद्दुःस्थानात्संसारान्मुमुक्षूणांपुंसां देहमधिकृत्यवर्तमानानांपरमात्मादितत्त्वानांप्रसंख्यानायसम्यक्ज्ञापनायाप्तकामस्यापिमेएतास्मिन्लोकेजन्मावतारइतिज्ञातव्यं तच्चपरोक्षज्ञानिनांनानेनार्थइतितत्राह समत्वायेति आत्मदर्शिनामात्मज्ञानिनांसमत्वाययथार्थज्ञानस्थिरीकरणायचेति ३६ लोकेसांख्यशास्त्रप्रवृत्तिदर्शनात्पुनस्तत्करणेनकिंकार्यमितितत्राह एषइति सम्यग्ज्ञानप्रवर्तकशून्येनभूयसा महताकालेनाव्यक्तःसूक्ष्मएववक्ष्यमाणात्मपथःपरमात्मतत्त्वविषयोमार्गोनष्टस्तिरोहितोभूत् यथार्थज्ञानसाधनसांख्यशास्त्रेणतमात्ममार्गंप्रवर्तयितुंमयाधृतमिमंदेहंविद्धीत्यन्वयः

तंत्वाभिपृच्छेद्यपतिंप्रजानांत्वयावतीर्णेनउताप्तकामः ॥ परिव्राजांपदवीमास्थितोहंचरिष्येत्वांहृदियुंजन्विशोकः ३४ ॥ श्रीभगवानुवाच ॥ मयाप्रोक्तंहिलोकस्यप्रमाणंसत्यलौकिके ॥ अथाजनिमयातुभ्यंयदवोचमृतंमुने ३५ एतन्मेजन्मलोकेस्मिन्मुमुक्षूणांदुराशयात् ॥ प्रसंख्यानायतत्त्वानांसम्मत्यायात्मदर्शिनाम् ३६ एषआत्मपथोव्यक्तोनष्टःकालेनभूयसा ॥ तंप्रवर्तयितुंदेहमिमंविद्धिमयाभृतम् ३७ गच्छकामंमयापृष्टोमयिसंन्यस्तकर्मणा ॥ जित्वासुदुर्जयंमृत्युममृतत्वायमांभज ३८ मामात्मानंस्वयंज्योतिःसर्वभूतगुहाशयम् ॥ आत्मन्येवात्मनावीक्ष्यविशोकोभयमृच्छसि ३९ विश्वमेतद्विशास्त्रेणविज्ञायात्मानमीश्वरम् ॥ मुनिःशांतमनोवाक्यस्तदानाख्यात्युपप्लवः ४० मात्रआध्यात्मिकींविद्यांशमनींसर्वकर्मणाम् ॥ वितरिष्येययाचासौभयंचातितरिष्यति ४१

३७ अवतारप्रयोजनमुक्त्वातंत्वानुपृच्छइत्यस्योत्तरमाह गच्छेति आपृष्टोनुज्ञातः कामंयथासुखंगत्वाप्येवंकुर्वित्याह मयीति मयिसंन्यस्तेनार्पितेनकर्मणासुदुर्जयंमृत्युमिंद्रियग्रामंजित्वामृतत्वायमांभजेत्यन्वयः ३८ भजनप्रकारमुपदिशति मामात्मानमिति सर्वभूतानांहृदयगुहायांशेतइतिसर्वभूतगुहाशयस्तं स्वयंज्योतिःस्वप्रकाशमात्मानमादानादिकर्तारंआत्मनिचिद्रूपेत्वय्येवात्मनालिंगशरीरव्यतिरिक्तत्वेननित्यचैकर्यलक्षणेनचिदानंदस्वरूपेणवीक्ष्यविशोकोविनष्टसंसारक्लेशस्त्वमभयममृतमृच्छसिमुक्तोभविष्यसीत्यन्वयः । ३९ भयराहित्यंमुक्तत्वमीदृशमित्याह विश्वमेतदिति विश्वमेतद्देहादिशमनित्यमसारमितितवसिद्धंहियस्मादतः शास्त्राचार्योपदेशेनात्मानमंतर्यामिणमीश्वरमखंडैश्वर्यगुणाकरंविज्ञायमुनिरपरोक्षज्ञानीशांतमनोवाक्योनिवृत्तलिंगशरीररूपमनआदीन्द्रियोपहितदोषपुनोदुःखाज्ञानभयशोकादिलक्षणउपद्रवोनाख्यातिनप्रकाशते एतादृशंमुक्तत्वमित्यर्थः ४० मातुःकागतिरितिशंकामाभूदित्याह मात्रआध्यात्मिकीमिति अहमाध्यात्मिकींपरमात्मादितत्त्वविषयांसर्वकर्मणांशमनींविद्यामात्रेवितरिष्येउपदेक्ष्यामियया विद्ययासौमाताभयमतितरिष्यति चशब्दात्संसारंतीर्त्वानित्याभयंहरिपुरंगच्छतीतिसूचयति । तृप्लवनतरणयोरितिधातुः क्षुगतावितिधातुश्च ४१

मैत्रेयस्तत्रैवमुपदिष्टःकर्दमःपुत्रस्नेहात्किमकार्षीदितिविदुरस्यहार्दंचोद्यंपरिहरति एवमिति एवंसमुदितउपदिष्टः दक्षिणीकृत्यप्रदक्षिणीकृत्य भिक्षार्थंग्रामप्रवेशंविनान्यदानास्तीत्येवकारार्थः ४२ वनमित्यनेनैकत्रावस्थानंप्रतीयतेनभूवलयभ्रमणंतथाचसंन्यासाचारभंगइतितत्राह व्रतमिति मौनंवागिंद्रियनिग्रहलक्षणंतेनहिप्रियाप्रियव्यवहारेणस्नेहद्वेषसभवेनस्वतोदुःस्थस्यमनसःकालुष्येणतयोः प्रियाप्रिययोर्निवृत्तिर्नस्यादयमेवसंसारइतिप्रथमतस्तन्निग्रहःकर्तव्यतइतिदर्शितं मुनिर्मननशीलःनिःसंगोऽद्वितीयः अग्निनात्मसमारोपणादनग्निर्गृहाद्याश्रमरहितः आत्माहरिरेकःशरणंरक्षिता गृहंचयस्यसतथाच ४३ एवंविचरन्किमनुतिष्ठत्तत्राह मनइति यत्सदसतोर्मूर्तामूर्तलक्षणात्प्रपंचात्परंविलक्षणंतस्मिन्ब्रह्मणिमनोयुंजानः अनेनपर्यटतश्चित्तविक्षेपेणतदुपासनानुपपत्तिःपरिहृता न न्वेवमपिस्वरूपमात्रप्रतिपत्तावपिविशिष्टगुणोपसंहारः सर्वोत्तमत्वविरोधिगुणपर्युदासश्चनस्तइतितत्राह गुणावभासेविगुणइति ज्ञानादिगुणानामवभासःप्रकाशोयस्मिन्सतथाज्ञानादिगुणात्मत्वे नप्रकाशमानइत्यर्थः तस्मिन् यद्वा गुणेषुसृष्टावुपकारकेषुमहदादिषुनियामकत्वेनावभासोयस्यसतथादृश्यमानइत्यर्थस्तस्मिन् अनेनाधिष्ठानविशिष्टत्वेनापितदुपास्तिरस्तीतिद्योतितं विगतानिषिद्धा सत्त्वादिगुणायेनसतथोक्तस्तस्मिन् अनेनरागद्वेषादिदोषराहित्यंध्वनयति दुर्निग्रहस्यमनसोन्यत्रागमनेकारणमाह एकभक्त्येति एकोमुख्यःसर्वोत्तमोहरिर्नान्यइतिसम्यक्ज्ञानपूर्वकयाभक्त्यानु भावितेधिवासिते अनेकजन्मभिःप्रचितसंस्कारेणदृढीयस्तयाशृंखलितत्वादन्यत्रयातीत्यर्थः किमत्रप्रमाणमित्यतोवाह एकभक्त्येति एकभक्त्याएकयाकेवलयाअनीशत्वादिदोषलेशशून्ययाभक्त्यानु भावितेसम्यक्ध्याते सतांभावनात्रप्रमाणमित्यर्थः ४४ एवमाटित्वास्यकर्दमस्यदेहावसानमथवाकथनविशेषोभूदितिमंदाशंकांपरिहरन्कपिलोपदिष्टानुष्ठानान्मुक्तियोग्यापरोक्षज्ञानोदयंवक्ति निरहं

मैत्रेयउवाच ॥ एवंसमुदितस्तेनकपिलेनप्रजापतिः ॥ दक्षिणीकृत्यतंप्रीतोवनमेवजगामह ४२ व्रतंसआस्थितोमौनमात्मैकशरणोमुनिः ॥ निःसंगो व्यचरत्क्षोणीमनग्निरनिकेतनः ४३ मनोब्रह्मणियुंजानोयत्तत्सदसतःपरम् ॥ गुणावभासेविगुणएकभक्त्यानुभाविते ४४ निरहंकृतिर्निर्ममश्चनिर्द्वंद्वः समदृक्स्वदृक् ॥ प्रत्यक्प्रशांतधीर्धीरःप्रशांतोर्मिरिवोदधिः ४५ आत्मानंसर्वभूतेषुभगवंतमवस्थितम् ॥ अपश्यत्सर्वभूतानिभगवत्यपिचात्मनि ४६ वासुदेवेभगवतिसर्वज्ञेप्रत्यगात्मनि ॥ परेणभक्तिभावेनलब्धात्मामुक्तबंधनः ४७ इच्छाद्वेषविहीनेनसर्वत्रसमचेतसा ॥ भगवद्भक्तियोगेनप्राप्तोभागवतींगतिम् ॥ ४८ ॥ इतिश्रीभागवतेमहापुराणेतृतीयेकपिलोपाख्यानेपंचविंशोध्यायः ॥ २५ ॥

कृतिरिति सकर्दमःसर्वभूतेष्ववस्थितंसदैवाप्तगुणत्वादात्मानंभगवंतंसर्वसौभाग्यगुणाकरंभूतगर्भंनारायणमपश्यदपरोक्षीचकार सर्वभूतानिचात्मनिसर्वगतेहरौतदाधारयास्थितान्यपश्यदित्यन्वयः अनेनभूतगर्भोभूतस्थइतिरूपद्वयमात्मशब्दोक्तमितिज्ञाप्यते भूतगर्भश्चभूतस्थःपूर्णएवद्विरूपवान् । अतआत्मेतितंप्राहुःसदैवाप्तगुणोयतइतिवचनात् निर्द्वंद्वःशीतोष्णादिद्वंद्वसहिष्णुःसमदृक्यथास्थितवस्तुदर्शीयथार्थज्ञानीत्यर्थः स्वंस्वतंत्रंदृष्टवान्स्वदृक् तदुक्तं अनन्याधीनशक्तित्वाद्धरिःस्वइतिचोच्यतइति प्रत्यक्प्रत्यग्गतःस्वांतर्यामिणिरतिमानयंनिरहंकारादौहेतुरतएवशांतधीःक्रोधग्रहाविष्टबुद्धिरहितोधीरःसंपदिविपदिचनिश्चलः अत्रदृष्टांतःप्रशांतोर्मिरिति ४५ ४६ फलितमाह वासुदेवइति वासुदेवेसर्वत्रस्थित्वाक्रीडतिअशेषविशेषाकारेणसर्वंजानाति प्रत्यगात्मनिस्वांतर्यामिणि भगवति परेणपूर्णेनभक्तिभावेनलब्धात्मालब्धमनाअतएवमुक्तबंधनः मुक्तदेहाभिमानः यद्वा प्रथमंवासुदेवेश्रीकृष्णेभगवतिलब्धात्मासमनंतरंसर्वज्ञेसर्वज्ञत्वात्सृष्ट्यादिकर्तरिभगवतिलब्धात्माक्रमेणप्रत्यगात्मनिसूक्ष्मेस्वबिंबभूतेभगवतिलब्धात्मा ४७ एवंहरौलब्धात्मनस्तस्यकर्दमस्यसंसारापत्तिर्नास्तिकिंतुपुनरनावृत्तिरूपाश्रीनारायणावाप्तिलक्षणामुक्तिरत्रोतिदर्शयति इच्छाद्वेषेति इच्छाद्वेषाभ्यां निषिद्धेच्छावैष्णवद्वेषाभ्यांविहीनेन सर्वत्रसर्वपदार्थेषुस्थितभगवद्रूपेषुनिर्दोषत्वसर्वगुणपूर्णत्वादिसमत्वज्ञानयुक्तेनचेतसाज्ञानेनभागवतींगतिंभगवत्प्राप्तिरूपामुक्तिंप्राप्तइत्यन्वयः ४८ ॥ इतिश्रीभागवते महापुराणेतृतीयस्कंधेध्वजकृतटीकायांपंचविंशोध्यायः ॥ २५ ॥

आत्यंतिकभक्तियोगस्यहरौमनोयोगप्रकारस्यभक्त्यधिकारिणस्तत्साधनस्यचप्रतिपादनायास्याध्यायस्यप्रारंभः अत्रादौकपिलदेवहूतीसंलापसंहितांश्रोतुकामःपरीक्षिच्छुतमनूद्यप्रश्नस्यवक्तव्यशेषंप्रा र्थयतइत्याह कपिलइति अजाविष्णुरच्छागाइत्यभिधानात्कोत्राभिधीयतइतिसंशयनिरासायसाक्षादितिविशेषणं साक्षात्प्रत्यक्षतुर्ययोरित्यतस्तुयोजः श्रीनारायणःस्वयमावेशविनात्ममाययास्वेच्छयैवनृ णामात्मप्रज्ञप्तयेस्वस्वरूपज्ञानायतदर्थंतत्त्वसंख्याताअव्यक्तादितत्त्वविषयंसम्यग्ज्ञानंकरिष्यनकपिलनामाजातइतिभवतोक्तंश्रुतंचेतिशेषः १ श्रीनारायणसच्चरितश्रवणादौप्रवर्तमानस्याशनादी च्छारहितस्यापि लोकस्यावित्तनिरोधेनालंबुद्धिर्जायतेनेममतथाप्रस्तुतरसायनसेविनइवाशनादिभोगरहितस्यापिइंद्रियाणिहृष्यंतीत्याह अर्हस्येति निवृत्तिलक्षणमोक्षधर्माएवास्वरूपभूताःसंतीतिधर्मि णस्तेषांपुंसामर्हस्यसंमान्यस्य अर्हतोजिनसंमान्यावित्यभिधानं सनकादिसर्वयोगिनागरिम्णःगुरुतमस्य · शास्त्रेणश्रुतादेवाःक्रीडादिगुणाश्रीःनारायणस्यविद्यमानायस्यसश्रुतदेवस्यतस्यकपिलनाम्नो हरेर्महिम्नोविश्रुतौविशेषेणश्रवणेमेअसवइंद्रियाणिभूरितृप्यंतिपरमानंदंप्राप्नुवंतीत्यन्वयः २ इदंचेच्छ्रुतंप्रथमतःपरंकिंनुप्रार्थ्यतइत्यत्राह यद्यदिति स्वच्छंदःस्वतंत्रआत्मामनोयस्यसतथा भागवतानांकी र्तन्यानिनित्यंकीर्तनीयानि ३ तत्रशुकोविदुरमैत्रेयसंवादेनराज्ञःप्रश्नंपरिहरतीत्याह द्वैपायनसखश्चेति यथाहत्वयाआन्वीक्षिक्यातत्त्वविद्याविषयेप्रचोदितस्तथाविदुरेणापिपृष्टोमैत्रेयोमयावक्ष्यमा णमर्थंप्राहेत्यन्वयः ४ कोयमर्थइतितत्राह पितरीति ५ तत्रदेवहूतिरयमवसरइतिमत्वाकपिलंवक्तीत्याह तमासीनमिति आसीनमकर्माणमितिविशेषणद्वयेनसर्वदानिश्चलबुद्धिःसाचस्वतस्तथापिलो

## राजोवाच ॥ कपिलस्तत्त्वसंख्याताभगवानात्ममायया ॥ जातःस्वयमजःसाक्षादात्मप्रज्ञप्तयेनृणाम् १ अर्हस्यधर्मिणांपुंसांगरिम्णःसर्वयोगिनाम् ॥ विश्रुतौश्रुतदेवस्यभूरितृप्यंतिमेऽसवः २ यद्यद्विधत्तेभगवान्स्वच्छंदात्मात्ममायया ॥ तानिमेश्रद्दधानस्यकीर्तन्यान्यनुकीर्तय ३ श्रीशुकउवाच ॥ द्वैपायनसखश्चैवंमैत्रेयोभगवांस्तथा ॥ प्राहेदंविदुरंप्रीतआन्वीक्षिक्यांप्रचोदितः ४ पितरिप्रस्थितेऽरण्यंमातुःप्रियचिकीर्षया ॥ तस्मिन्बिंदुसरेऽवात्सीद्भगवान्कपिलःकिल ५ तमासीनमकर्माणंतत्त्वमार्गाग्रदर्शनम् ॥ स्वसुतंदेवहूत्याहधातुःसंस्मरतीवचः ६ देवहूतिरुवाच ॥ निर्विण्णानितरांभूमन्नसदिंद्रियतर्पणात् ॥ येनसंभाव्यमानेनप्रपन्नांधंतमःप्रभो ७ तस्यत्वंतमसोंधस्यदुष्पारस्याद्यपारगम् ॥ सच्चक्षुर्जन्मनामंतेलब्धंमेत्वदनुग्रहात् ८ यआद्योभगवान्पुंसामीश्वरोवैभवान्किल ॥ लोकस्यतमसांधस्यचक्षुःसूर्यइवोदितः ९

कदृष्टयापितथेतिसूचयति आसीनमित्यनेनाकर्मत्वोसिद्धेपुनस्तद्वचनंकंडूयनादिविधिर्नास्तीतिसूचनेनहरेःसच्चिदानंदाद्यात्मत्वंविज्ञायते एवंविधस्यहरेःस्ववक्तव्यत्वेविज्ञानमस्तीतिकिंवक्तव्यमितिभावे नाह तत्त्वेति स्वसुतमितिसिद्धमातत्वं धातुःसंस्मरतीवचइत्यनेनचपोष्यते ६ श्रोतव्यार्थेस्यास्तात्पर्यमस्तीत्युपोद्घातंरचयतीत्याह निर्विण्णेति भूमन्स्वतःपूर्ण असतामसंगलानामिंद्रियाणांत र्पणादतितरांनिर्विण्णाविरक्ताविषयेष्वासमितिशेषः असत्त्वंकथयन्नाह येनेति संभाव्यमानेनलाल्यमानेनयेनेंद्रियप्रीणनेनाधंतमस्तत्त्वाज्ञानंप्रपन्नेत्यन्वयः अनेनाधिकारिगुणौविद्वत्त्वार्थितादर्शितावेति ज्ञायते ७ आत्मनोविद्वत्तास्फोरयति तस्येति अतीतानामनेकेषांजन्मनामंतेचरमलक्षणेजन्मनितस्यदुष्पारस्यदूरीकृततीरांतरस्याधस्यतमसःपारगमयतीतिपारगंत्वंनामसच्चक्षुस्त्वदनुग्रहान्मया लब्धमित्यन्वयः एतत्सन्निकृष्टंनदूरस्थमित्यर्थः अनेनप्रोक्तार्थग्रहणेसामर्थ्यंगुणोप्यसूचि प्राचीनाचीर्णपुण्यनिचयेनचक्षुर्लाभात् ८ नकेवलंममैवैतदनुग्रहायोदितंचक्षुर्मन्निमित्तंलोकस्याप्यतोहंपुण्य सागराइत्याशयेनाह यआद्यइति यःपुंसांब्रह्मादीनांपुरुषाणामाद्यस्तेषामीश्वरःऐश्वर्यप्रदःभगवानैश्वर्यादिगुणसमृद्धःसवैसएवभवास्तमसांधस्यलोकस्यदृष्टिप्रदःसूर्यइवोदितःकिलसंभावितमित्यन्वयः वार्तासंभाव्ययोःकिलेतियादवः ९

एवंभगवंतंस्वामीष्टार्थेभिमुखीकृत्यस्वाभिप्रायंविज्ञापयति अथेति यथाविहितक्रियाकरणेमहताप्रत्यवायेनानर्थरूपनरकप्राप्तिस्तथाज्ञानस्यग्राहकेत्वादृशेप्रभौसंनिहितेसति तदग्रहणेनुत्थानतमःप्राप्तिः स्यादितियस्मादथतस्मात्त्वयायएतस्मिन्देहगेहादावहममेत्यवग्रहोज्ञानदृष्टिप्रतिबंधकोमिथ्याभिमानोयोजितःपूर्वादृष्टानुसारेणेतिशेषः तंसंमोहंमिथ्याज्ञानलक्षणभ्रममेविद्यमानमपाकर्तुमुत्कृत्यत्यक्तु महसित्वज्ज्ञानोपदेशेनेत्यन्वयः १० उपसन्नायशिष्यायवक्तव्यंब्रह्मशाश्वतमितिवचनादुपसत्त्यभावात्तवकथमुपदिशामीतिशंकामाभूदितिभावेनाह तंत्वेति यस्त्वमिहासिद्धज्ञानोपदेशायावतीर्णस्तंत्वा शरणंगतेत्यन्वयःकेनहेतुनेत्यतउक्तं जिज्ञासयेति नारायणोब्रह्मवायूवींद्रशेषौहरस्तथा । कामःशक्रोगुरुर्दक्षमन्वाद्याभास्करादयः । सर्वजीवाश्चक्रमशःपुरुषाख्याभिशब्दिताः । एतत्पत्न्योबंधश क्तिःस्त्रियःसर्वास्तथाजडे । क्रमात्प्रकृतिशब्दोक्तास्तज्ज्ञानाद्धिमुच्यतइतिवचनात्पुरुषस्यनारायणादेःप्रकृतेर्लक्ष्म्यादेश्चविवेकलक्षणतारतम्यजिज्ञासयाज्ञातुकामेनहेतुनेत्यर्थः त्वंचसमग्रानुग्रहंकर्तुंसमर्थ इत्याशयेनाह स्वभृत्येति नकेवलमिदमुपसादनंवाचिकंकिंतुकायिकंचेत्याह नमामीति संसारतरोःकुठारस्यनैशित्यभावेतदुक्तिः स्तोत्रंस्यादित्यतउक्तं सद्धर्मेति ११ अत्रमैत्रेयोमात्राप्रार्थितःक पिलस्तामतिवक्तीतिविदुरंप्रत्याह इतीति ईप्सितंज्ञातुमिष्टंअपवर्गस्यसंसारविनाशस्यचोदनंसूचकं ईषद्भाषे मितमाह महतामल्पभाषितंगुणमनेनद्योतयति १२ नन्वहमोक्ष्योंकिंपितृवत्प्रव्रजि

अथमेदेवसंमोहमपाक्रष्टुंत्वमर्हसि ॥ योवग्रहोहंममेतीत्येतस्मिन्योजितस्त्वया १० तंत्वागताहंशरणंशरण्यंस्वभृत्यसंसारतरोःकुठारम् ॥ जिज्ञासयाप्रकृतेः पूरुषस्यनमामिसद्धर्मविदांवरिष्ठम् ११ मैत्रेयउवाच ॥ इतिस्वमातुर्निरवद्यमीप्सितंनिशम्यपुंसामपवर्गचोदनम् ॥ धियाभिनंद्यात्मवतांसतांगतिर्बभाषईषत्स्मितशोभिताननः १२ श्रीभगवानुवाच ॥ योगआध्यात्मिकःपुंसामतोनिःश्रेयसायमे ॥ अत्यंतोपरतिर्यत्रदुःखस्यचसुखस्यवै १३ तमिमंतेप्रवक्ष्यामियमवोचंपुरानघे ॥ ऋषीणांश्रोतुकामानांयोगंसर्वांगनैपुणम् १४ चेतःखल्वस्यबंधायमुक्तयेचात्मनोमतम् ॥ गुणेषुसक्तंबंधायरतंवापुंसिमुक्तये १५ अहंममाभिमानोत्थैःकामलोभादिभिर्मलैः ॥ वीतंयदात्मनःशुद्धमदुःखमसुखंसमम् १६

ष्यामिकिंचरकोभवानीतितिकिंतत्राह योगइति परमात्मादिकंदेहेयदध्यात्मकमीरितमितिवचनादध्यात्मिकःदेहमधिकृत्यवर्तमानानांपरमात्मादितत्वानांस्वरूपलक्षणोयोगोमयापुंसांनिःश्रेयसायमतो निरूपितो यत्रमोक्षेशरीरभोग्यस्यसुखस्यदुःखस्यसाकल्येनोपरतिर्नाशस्तमिमंयोगंतववक्ष्यामीत्यन्वयः १३ आप्तत्वायाह यमवोचामीति ऋषीणांब्रह्मादिज्ञानिनामुरुभिरंगैर्यमनियमादिसाधनैर्नै पुणंपाटवगुणोपेतं । सुखंनास्तिचेन्मुक्तौसुखमाप्तवान्नदुःखामित्याशीःकथंजागर्तीत्याशंकाचशब्दसूचितया सुखंशरीरभोग्यंतुदुःखंसर्वंतथैवच । मुक्तौविलयमायातिनित्यानंदस्तुभुज्यतइत्यनयापरिहृतेति मुक्तावतःस्वरूपानंदएवाशास्यतेनभौतिकइतिसर्वत्रद्रष्टव्यं वैशब्देनस्वरूपानंदावाप्तिलक्षणंनिःश्रेयसंध्वनयतिनस्वर्गादिकंतस्यहेयत्वेनोक्तत्वाद्वक्ष्यमाणत्वाच्च १४ प्रतिज्ञातयोगसाफल्यसाधनाय मनोवशीकरणंप्रथमसाधनमित्याह चेतइतिचिनोतिआत्मानिमलमितिचेतोमनःअस्यात्मनोजीवस्यचेतःसंसारबंधायतस्मान्मुक्तयेचात्मनोममयतं एकस्यकार्यद्वयापादनसामग्रीकथमत्राह गुणेष्वि तिशब्दादिगुणेषुसक्तंबंधायतेषुगुणेष्वसक्तंमुक्तये १५ शब्दादिगुणेष्वसक्त्यैवालंकिमित्याशंक्यविशिनष्टि अहंममेति यदात्मनोहंममाभिमानोत्थैःकामलोभादिभिर्मलैर्वीतरहितंशुद्धंचित्स्वरूपंदूरीभू तांचिन्मनःसंपर्कं परतत्त्वानुभवेनबाह्येशब्दादिसुखेऽनासक्तेरिच्छाभावादसुखमतएवदुःखास्पर्शाददुःखं समंनिश्चलंभक्तिरसायनेनैवानित्यानंदंभवति १६

तदापुरुषआत्मानंस्वबिंबभूतंहरिंपरिपश्यतीत्यन्वयः परीत्युपसर्गात्माणपर्यंतंपरितोवर्तमानाःस्त्रोबिंबदेवताश्चापरोक्षीकृततत्प्रसादादितिग्राह्यं । बाह्येसुखेत्वनासक्तेरसुखंदुःखवर्जनात् । अदुःखंहरिभक्तय यानित्यानंदंपरात्मनः । तदातंपरमात्मानंपश्यत्यात्मप्रसादतइतिविशेषवचनाददुःखमसुखंसममितिप्रतीतार्थेनुशास्त्रइति आत्मप्रसादतइत्यत्रात्मशब्देनप्राणादयोपिग्राह्याः तस्यदेवताविशेषेः । इत्येवंकालेंपरोक्षीभूतमात्मानंस्वंपश्यतीतिमंदाशंकांपरिहरति केवलमित्यादिविशेषणेन अभेदात्स्वावतारेषुनिरंतरउदाहृतः । गुणदेहेंद्रियाभेदात्केवलोऽसदृशत्वतः । अखंडपूर्णशक्तित्वादहमेकः सदाप्रभवइत्यनेनव्याख्यातोयंग्रंथः उक्तंसुखंस्यात्प्रकृतेःपरत्वेनदेवकथमित्यतउक्तंप्रकृतेःपरमिति चिज्जडप्रकृत्योःपरमेनस्थानंकरयापीत्यतोऽपाधारणमित्यर्थः अणिमानामित्यनेनन्याविबद्धपमेवो च्यते यथात्मनितिष्ठन्नित्यादेःकेनेत्यतउक्तमात्मनाचिन्मनसेति अस्यसद्दर्शनत्वात् १७ इतःपूर्वंकिमितिनापश्यदतउक्तं ज्ञानेति प्रकृतिज्ञानभावेतत्परत्वदर्शनंकथमित्यतउक्तंउदासीनामिति प्र योजकाभावेनपरिणामलक्षणकार्यानाभिमुखीकृतोनुदितमिदामित्यतउक्तंहतौजसामिति हतमोजोबंधकशक्तिर्यस्याःसातथातां तदुक्तं बंधशक्तिःप्रकृत्याख्याविष्णुशक्त्याविमुच्यतइति १८ मुक्तेरेतदे वसाधनंभक्तेरन्यन्नास्तीत्याह नयुज्यमानयेति १९ इदानींब्रह्मज्ञानोत्पन्नौप्रतिबंधकमाह प्रसंगमिति असद्वार्यादिषुप्रसंगमतिस्नेहंअजरंपुनर्नवत्वेनाक्षयं सएवेति तद्वयमेवसत्सुकृतश्चेत्किंका र्यक्षमइतितत्राह अपावृतमुद्घाटितविवृतमित्यर्थः २० किंलक्षणाःसाधवोयेनतत्संगोभक्तिज्ञानद्वारामुक्तिसाधनंस्यादितितत्राह तितिक्षवइति अजाशब्देनतत्कार्यदेहउपलक्ष्यते अतसातत्पग

तदापुरुषआत्मानंकेवलंप्रकृतेःपरम् ॥ निरंतरंस्वयंज्योतिरणिमानमखंडितम् १७ ज्ञानवैराग्ययुक्तेनभक्तियोगेनचात्मना ॥ परिपश्यत्युदासीनांप्रकृ तिंचहतौजसम् १८ नयुज्यमानयाभक्त्याभगवत्यखिलात्मनि ॥ सदृशोस्तिशिवःपंथायोगिनांब्रह्मसिद्धये १९ प्रसंगमजरंपाशमात्मनःकवयोविदुः ॥ सएवसाधुषुकृतोमोक्षद्वारमपावृतम् २० तितिक्षवःकारुणिकाःसुहृदःसर्वदेहिनाम् ॥ अजातशत्रवःशांताःसाधवःसाधुभूषणाः २१ मय्यनन्येनभावेनभ क्तिंकुर्वंतियेदृढाम् ॥ मत्कृतेत्यक्तकर्माणस्त्यक्तस्वजनबांधवाः २२ मदाश्रयाःकथामृष्टाःशृण्वंतिकथयंतिच ॥ तपंतिविविधास्तापानैतान्मद्गतचेतसः २३ तएतेसाधवःसाध्विसर्वसंगविवर्जिताः ॥ संगस्तेष्वथतेप्रार्थ्यःसंगदोषहराहिते २४

मनइतिधातोस्तेनसहैवसततंवर्तमानत्वात्तस्मिन्गतेगच्छंतिस्थितेतिष्ठंतिइत्यतोजाताः कामलोभादयस्तेषांशत्रवःअत्रहेतुरयंशांताःश्रीनारायणेनिष्ठावंतोऽतएवसाधवोनिष्ठासाधनशीलाः साधुहचिता भगवद्भक्तिःसैवभूषणंयेषांतेसाधुभूषणाः साधुत्रिषुचितेसौम्येइतियादवः २१ एतदेवविशिनष्टिमयीति अनन्यभावेनान्यस्मिन्विष्णोः अन्यस्मिन्ब्रह्मादौतादृशोभावःस्नेहोनास्तीतिअनन्यभाव स्तेन तदुक्तं यादृशीमयिभक्तिःस्यात्तादृश्यन्यत्रनैवचेत् । अनन्यभक्तिरुद्रेकात्सायथैवतरेत्स्मृतिमिति दृढांमरणसद्भावेप्यचलां तदेवविशदयति मत्कृतइति स्वजनबांधवालौकिकाननुपारलौकि काः २२ एवंनिःसंगानांकालयापनाकथमत्राह मदाश्रयाइति तपआदिकर्माभावेविधेषुकथंतिष्ठतीतितत्राह तपंतीति तापान्तपाति ब्राह्मीवावतपउपनिषदंब्रूमेतितस्यैवतपोदमइत्यादिश्रुतिः नन्वेवंविधतपःसंचरणसमयेशीतोष्णोपवासादिनाइंद्रियदौर्बल्यहेतुनाहरेःसर्वोत्तमत्वादिज्ञानंतिरोहितंभवतीतिमंदाशंकांपरिहरति ऐकात्म्येति एकःपूर्णोहरिर्नान्यस्तदन्येतद्वशामताः । इतिज्ञानं स्थिरंयत्तदैकात्म्यज्ञानमुच्यतइतिस्मृतेः ऐकात्म्येहरेःसर्वोत्तमत्वपूर्णज्ञानेगतंस्थिरंस्थितंचेतोयेषांतेतथोक्ताः २३ उपसंहरति तएतइति त्यक्तस्वजनबांधवाइत्युक्तंविशदयति सर्वसंगेति दुष्टसर्व संगवर्जिताइत्यर्थः संत्वेवंविधाःसाधवस्तत्रकिंममोपादिशसीतितत्राह संगस्तेष्विति अथतस्मात्तत्रहेतुमाह संगदोषेति २४

स्वच्चरितश्रवणादिनादुष्टसंगदोषनाशोहष्टचरः सत्संगात्कथमित्याशंक्य सत्संगेहरिकथाश्रवणादिसंभवेनतत्संगाद्दुष्टसंगदोषविनाशःप्रतिज्ञायते तेषामन्यप्रसंगाभावादितिभावेनाह सतांप्रसंगादिति प्रसंगात्प्रकृष्टसंगात्वीर्याणांपराक्रमाणांसंपदोयासुतास्तथा हृत्कर्णानांरसमानदमयंतीतिहृत्कर्णरसायनाः श्रयगताविंतिधातुः ततःकिंतत्राह तज्जोषणादिति तच्छब्देनोभयेचग्राह्यास्तेभ्यःसद्भ्यः तासांकथानांजोषणात्सेवनादपवर्गवर्त्मनिहरौश्रद्धावतीआस्तिक्यबुद्ध्युपेताभक्तिःअनुक्रमिष्यतिपदंनिधास्यतीत्यन्वयः २५ भक्त्याकिंफलंस्यादितितत्राह भक्त्येति पुमानर्थीसमर्थोविद्वान्याहिषपशा त्र्श्रवणादिनोत्पन्नयामद्भक्त्याऐंद्रियात्शब्दादिविषयाज्जातविरागः ब्रह्मादिस्तंबपर्यंतपदार्थानामसारत्वानित्यत्वसदुःखत्वज्ञानवास्तथाजातःगौपरमात्मनिरागःस्नेहःसागस्त्वानित्यत्वानिर्दुःखत्वज्ञानपू र्वकोयस्यसतथा कैश्चिदुत्तमाधिकारिभिर्दृष्टस्यकैश्चिदवराधिकारिभिःश्रुतस्यात्मद्रविणस्यपरमात्माख्यवस्तुनोनुचिंतयानिरंतरध्यानेन तथाचित्तस्यनवस्थानस्यमनसोग्रहणेविषयाद्व्यावर्तनेयत्तःप्रय त्नवानृजुभिरक्लेशदैर्योगमार्गैर्यमादिसदुपायप्रकारैर्योगयुक्तःसत्संगवान्यतिष्यतेपरमात्मापरोक्ष्यायेतिशेषः केषांचिद्दृष्टानांकेषांचिच्छ्रुतानामात्मद्रविणानांजीवादिपदार्थानामसारत्वादिचिंतयाऐंद्रिया ज्जातविरागइतिवा २६ अधिकारिणामेवंविधःप्रयत्नोननिष्फलःकिंतुसफलएवभवतीत्याह असेवयेति प्रकृतेर्गुणानांसेवामुमुक्षुणाक्षुरधारावत्तृणपिहितमुखकूपवदलंपरिहर्तव्येतिपुनर्वचनं वैराग्येणवि विजृंभितेनप्रवर्धितेनपरमात्मादीनामांतरतत्त्वानांतारतम्यज्ञानेनचमय्यर्पितयाभक्त्यायोगेनमयिमनोनिधानलक्षणेनप्रत्यगात्मानंस्वांतर्यामिणंमामिहप्रारब्धप्रतिबंधकाभावेस्मिन्जन्मनिअवरुंधेवशीकृत

सतांप्रसंगान्ममवीर्यसंपदोभवंतिहृत्कर्णरसायनाःकथाः ॥ तज्जोषणादाश्वपवर्गवर्त्मनिश्रद्धारतिर्भक्तिरनुक्रमिष्यति २५ भक्त्यापुमान्जातविरागऐंद्रि याद्दृष्टश्रुतान्मद्रचनानुचिंतया ॥ चित्तस्ययत्तोग्रहणेयोगयुक्तोयतिष्यतेऋजुभिर्योगमार्गैः २६ असेवयायंप्रकृतेर्गुणानांज्ञानेनवैराग्यविजृंभितेन ॥यो गेनमय्यर्पितयाचभक्त्यामांप्रत्यगात्मानमिहावरुंधे २७ देवहूतिरुवाच ॥ कास्वित्त्वय्युचिताभक्तिःकीदृशीममगोचरा ॥ ययापदंतेनिर्वाणमंजसान्वा प्नुयामहम् २८ योयोगोभगवद्बाणोनिर्वाणात्मंस्त्वयोदितः ॥ कीदृशःकतिचांगानियतस्तत्त्वावबोधनम् २९ तदेतन्मेविजानीहियथाहंमंदधीर्हरे ॥ सुखंबुध्येयदुर्बोधंयोषाभवदनुग्रहात् ३० मैत्रेयउवाच ॥ विदित्वार्थंकपिलोमातुरित्थंजातस्नेहोयत्रतन्वाभिजातः ॥ तत्त्वाम्नायंयत्प्रवदंतिसांख्यंप्रोवा चवैभक्तिवितानयोगम् ३१

वत्पश्यतीत्यन्वयः विरक्तिभक्त्युपास्तिजनितज्ञानमेवपुरुषार्थसाधनंनकर्मेत्यनेनोक्तवाह असेवयेति मय्यर्पितयाभक्त्यायोगेनसमुत्पन्नेनयोगध्यानोत्पन्नेनज्ञानेनप्रत्यगात्मानंस्वांविवभूतंमांपश्यतीति की दृशेनभक्तियोगेनप्रकृतेर्गुणानामसेवयोत्पन्नेनवैराग्यविजृंभितेन २७ देवहूतीमय्यर्पितयेतिविशेषणेनोत्पन्नोत्कंठयादत्तावसराप्च्छति कास्विदिति कीदृशीममगोचराज्ञातुंशक्येति निर्वाणंनित्यनिर्वृत म् २८ ऋजुभिर्योगमार्गैरित्युक्तयोगलक्षणंपृच्छति योयोगइति निर्वाणात्मन्परमानंदमूर्ते यतोयस्माद्योगात् २९ तदेतद्योगलक्षणंभक्तिलक्षणंविजानीहिविशेषेणज्ञापय योषितिहेतुगर्भविशेषणं त्वच्छास्त्रज्ञानाभावादित्यर्थः ३० मैत्रेयोविदुरायेमाकथांकथयतीतिशुकःपरीक्षितेवक्ति विदित्वार्थमिति यत्रयस्यांसच्चिदानंदमयकरचरणादिमत्यातन्वाभिजातःशुक्रशोणितसंपर्कदूरीकृत्यप्रकाशितः त स्यामातुरित्थमर्थमभिप्रायंविदित्वाभन्मातुर्भगवद्भक्तिश्रवणेतात्पर्यमभून्नान्यत्रेतिजातःप्रवृद्धःस्नेहोनुग्रहलक्षणोयस्यसतथा कपिलोभगवान्यत्तत्त्वाम्नायंपरमात्मादितत्त्वप्रतिपादकंसांख्यशास्त्रंप्रवदंति त द्भक्तियोगवितानंभक्तियोगविस्तारलक्षणंशास्त्रंमात्रेप्रावोचत्तत्व्याख्यातवानित्यन्वयः हरेरितरवज्जननागीकारे शुक्लेनजनिरन्येषांहरेःस्वतनुवैवतु । नित्योदितज्ञानतनोःकुतःस्याच्छुक्लतोजनिरितिप्रमा णविरोधोदुर्निवारः अतएवपुरास्वयैवतन्वेत्युक्तं इतरेषांमागशरीराणांपश्चाच्छरीरत्वेनजन्मदर्शनात् ३१

यद्यपिसत्त्वादिगुणभेदेनभक्तिरप्यनेकविधातथापिसात्त्विकसंज्ञमुत्तमाधिकारियोग्यंभक्तियोगंनिरूपयति देवानामिति   सत्वेएकमनसइत्येतत्पदद्वयंतंत्रेणोपात्तन्यायेनावृत्त्यावृत्त्याव्याख्येयं सदासर्वगुणा त्सत्वात्सत्त्वोविष्णुरुदीरितइतिवचनात् सत्त्वेसर्वगुणाढ्येएवहरावेवएकमनसएकाग्रमनसःपुरुषस्यमनुष्याचन्यतमस्यगुणलिंगानांशब्दादिज्ञापनलक्षणानामिंद्रियाभिमानिनामानुश्राविककर्मणांवेदोक्तक मीनुष्ठानेनतदुक्तानतिलंघिनां आनुश्राविककर्मासौश्रुत्युक्तंयोनलंघयेदित्युक्तेःदेवानांतात्विकसंज्ञानांसत्वेभगवतिएकमनस'एकाग्रतयान्यव्यापारमंतरेणांतःकरणस्ययावृत्तिःसाभक्तिरित्युच्यते। कीदृशी स्वाभाविकीगंगाप्रवाहलक्षणा अनिमित्ताफलसंकल्परहिता अत्यंतचित्तनिरोधरूपत्वाद्दुःखहेतुशंकानकार्येत्युतपूर्णानंदरूपत्वादपक्रमकस्यावाप्तमुक्तेरुत्तमेत्याह सिद्धेरिति   यस्मिन्कालेपूर्णभक्तय स्व ज्ञाणोमुक्तिमेष्यंति तस्मिन्नेवसमयेमुक्तिप्राप्तियोग्यस्यभक्तिपरिपाकमनवाप्तस्यपुंसोयासिद्धिरपूर्णसुखलक्षणामुक्तिस्तस्याःसिद्धेर्गरीयसी तदुक्तं  अपूर्णभक्तेर्मुक्तौतुनसुखंपूर्तिमेष्यति ।  अतस्तादृशमुक्ते श्चभक्तिःपूर्णागरीयसीति । पूर्णसुखहेतुत्वात्ज्ञानवदंतरंगत्वाच्चगरीयस्त्वंयुक्तमित्याह जरयतीति  कोशंलिंगशरीरं। कोशोस्त्रीकुड्मलेदिव्येशालेर्थैथतनाविति यादवः। समूलतूलनाशस्यविवक्षितत्वात् तस्मिन्नेवार्थेदृष्टांतमाह  निगीर्णमिति निगीर्णंसर्वतोग्रस्तं   देवानामसुरेंद्रियाभिमानित्वेनचपापकर्मणिप्रेरणयातदर्शनेनजुगुप्सादिनाचित्तविक्षेपसंभवेनभक्तेरात्यंतिकत्वायोगादन्यत्रोभयेषामपिभगवति मनोवृत्तेर्गंगाप्रवाहवत्सिद्धत्वेनतदभावात्सत्त्वेएवएकमनसःपुंसोगुणलिंगानांइतिविशिष्योक्तेरभिप्रायः   संभावनामात्राभिप्रायेणोक्तमिदमित्येतावताभक्तेर्न्यूनांतरकभावोनकल्पनीयः   हर्याज्ञाकारि त्वेनतस्मीतिहेतुत्वात्  देवजातिमात्रपरिहारायगुणलिंगानामिति कल्प्यावासुरव्यावृत्तयेआनुश्राविककर्मणामिति  तेषांवेदोक्तानुष्ठाननियमाभावात्  उक्तविशेषणवतादेवानांसत्वेभगवत्येकमनसोवृत्ति

**श्रीभगवानुवाच ॥ देवानांगुणलिंगानामनुश्राविककर्मणाम् ॥ सत्त्वएवैकमनसोवृत्तिःस्वाभाविकीतुया ३२ अनिमित्ताभगवतिभक्तिःसिद्धेर्गरीयसी ॥ जरयत्याशुयाकोशंनिगीर्णमनलोयथा ३३ नैकात्म्यतांमेस्पृहयंतिकेचिन्मत्पादसेवाभिरतामदीहाः ॥ येन्योन्यतोभागवताःप्रसज्यसभाजयंतेम मपौरुषाणि ३४ पश्यंतिमेतेरुचिराण्यंबसंतःप्रसन्नवक्त्रारुणलोचनानि ॥ रूपाणिदिव्यानिमनोहराणिसाकंवाचंस्पृहणीयावदंति ३५**

र्भक्तिरित्युक्तेऽधमाधिकारिभिःक्रियमाणायाःअभक्तित्वमात्यंतिकाभावश्चस्यात्तस्मात्कीदृशीममगोचरेतिपृष्टत्वात्तत्परिहारायचविभागोवक्तव्यः     देवानांसत्त्वएकमनसोवृत्तिरित्येतद्देवसामान्यभक्ति लक्षणं     गुणलिंगानामितितद्विशेषभक्तिलक्षणं     आनुश्राविककर्मणामितिसर्वसामान्यभक्तिलक्षणं  स्वाभाविक्यनिमित्तेतिसर्वत्रसमं  अधमाधिकारिभिःक्रियमाणाभक्ति'कीदृशीसिद्धेर्मुक्तेर्ग रीयसीप्रधानसाधनभूता ३२ ३३ अनेनकेतेआत्यंतिकभक्तिकर्तारोयेनतद्भक्तेर्मुक्तेर्गरीयस्त्वंस्यादितितत्राह नैकात्म्यतामिति येभागवताअन्योन्यतःप्रसज्यमिलित्वाममपौरुषाणिपराक्रमान्सभाजयंतेसं भाव्यवदंति शृण्वंतिच तेमेममपादीयमानामप्यैकात्म्यतांमुक्तिं नस्पृहयंतिनेच्छंति  यदिभक्तिसंतुष्टोहरिःकिमपिददातितदपितदाज्ञात्वेनैवगृह्णतिनभक्तिफलत्वेनदीयमानां  बालोपिसन्गृह्णातिकिमुतमे क्षावानतइदंभगवतास्तूपतेनतुतत्त्वमितिमंदाशंकानेच्छंति     सायुज्यमपिफलत्वेनहरिर्यदिददातिभक्तिसंतुष्टआज्ञात्वेनैवगृह्णते     तादृशानांमुख्याविकल्पंपुनर्मुक्तौभविष्यतीत्यनेनपरिहृताति   कुतोनेच्छ तीतितत्राह मत्पादेति   ममचरणनिषेवायाःपूर्णानंदहेतुत्वादित्यर्थः   भगवदंघ्रिसेवायाःपूर्णानंदहेतुत्वंकथंनद्रनानामप्यन्यत्रप्रवृत्त्यादुःखसंभवादित्यतउक्तंमदीहाइति   अनेनचप्रासंगिकान्य प्रवृत्तावप्यंतेमदर्पणेन सापिमत्कर्मवत्मत्प्रीतिजनकत्वेनमदीहैवेत्युक्तंभवति तेचकियंतइतितत्राह केचिदिति ३४ ऐकात्म्याकांक्षाभावेहेत्वंतरमाह पश्यंतीति  भगवद्रूपसल्लापादे कोन्योस्तिसुख हेतुरितिअतोनेच्छतीत्यर्थः ३५

ननुकालशंकेर्दुरतिक्रमत्वेनकिंचित्कालंभगवतिभक्तिंकुर्वतोन्यथापिसंभवेनसंसारस्यानिवृत्तिसंभवेनभक्तेर्नकिमपिप्रयोजनमित्याशंक्याह तैर्दर्शनीयेति । यैःसहदावंवदंति यानिचपश्यंतितैरूपैर्हृतात्मनः
अपहृतमनसोहृतप्राणस्यतद्विषयीकृतसर्वेंद्रियचेष्टस्यभक्तिमेवानिच्छतोपिपुंसः प्रसन्नोहमण्वींसूक्ष्मांसायुज्यलक्षणांगतिंमुक्तिंप्रयुंजेददामीत्यन्वयः उदारशब्दःप्रत्येकमभिसंबध्यते उदाराणिविलास
सहासेक्षितवामसूक्तानियेषांतानितथा वामान्यनुकूलानिसूक्तानिशोभनवचनानि ३६ ननुसायुज्यभाजामंतर्धूमदाहवद्दुःखरूपंस्यादितितत्राह अथोइति येमप्रसादप्राप्तितांनिर्मितांध्वजच्छत्रव्यज
नादिलक्षणांविभूतिमथोतथाअष्टांगयोगमनुप्रवृत्तमनुप्राप्तमणिमाद्यैश्वर्यं तथाभद्रांसर्वांगसंपन्नांचोतमानाश्रियंगवाश्वादिसंपदंनस्पृहयंति तेपरस्यममलोकेसच्चिदानंदलक्षणेदेहेऽश्नुवतेव्याप्य
सुखमेवानुभूयतिष्ठंतीत्यन्वयः हिशब्दोमुक्तेर्विलक्षणत्वान्नलोकवदित्यर्थद्योतनार्थः यद्वा सालोक्यमुक्तिमनेनवक्ति तथाहि भक्तिज्ञानफलत्वेनाविभूतिसर्वमहर्लोकेवृत्तमष्टांगैश्वर्यमिहलोकेचसमृद्धान्
तुंगमासादादिसंपदंचनेच्छंति परिपक्ववैराग्यसमुद्भमत्वात्तेमेलोकेवैकुंठादावतिसुखमश्नुवतेइत्यतस्त्वमपिस्वर्गादीच्छांहित्वासर्वोत्तमःसच्चिदानंदलक्षणोममात्पंतमुपकारकत्वेनसर्वस्मात्प्रेष्ठोहरिरिति
कृत्वाभजस्वत्वयापीदृशोलोकःप्राप्यतइति कीदृशीममगोचरेत्यस्यपरिहारउक्तइति ३७ कालस्यसर्वत्रसत्त्वात्स्वतंत्रत्वाच्चतोपिकेनचिद्धेतुनातान्निवर्तयतीतितत्राह नकर्हिचिदिति हेत्वभावादित्या

तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः ॥ हृतात्मनोहृतप्राणस्यभक्तिमनिच्छतोगतिमण्वींप्रयुंक्ते ३६ अथोविभूतिंमममाययाचितामैश्वर्यम
ष्टांगमनुप्रवृत्तम् ॥ श्रियंभागवतींवास्पृहयंतिभद्रांपरस्यमेतेऽश्नुवतेहिलोके ३७ नकर्हिचिन्मत्पराःशांतरूपानंक्ष्यंतिमेनोनिमिषोलेढिहेतिः ॥ येषामहंप्रिय
आत्मासुतश्चसखागुरुःसुहृदोदैवमिष्टम् ३८ इमंलोकंतथैवामुमात्मानमुभयायिनम् ॥ आत्मानमनुयेचेमेयेरायःपशवोगृहाः ३९ विसृज्यसर्वानन्यांश्चमा
मेवंविश्वतोमुखम् ॥ भजंत्यनन्ययाभक्त्यातान्मृत्योरतिपारये ४० नान्यत्रमद्भगवतःप्रधानपुरुषेश्वरात् ॥ आत्मनःसर्वभूतानांभयंतीव्रंनिवर्तते ४१
मद्भयाद्वातिवातोयंसूर्यस्तपतिमद्भयात् ॥ वर्षतींद्रोदहत्यग्निर्मृत्युश्चरतिमद्भयात् ४२ ज्ञानवैराग्ययुक्तेनभक्तियोगेनयोगिनः ॥ क्षेमायपादमूलंमे
प्रविशंत्यकुतोभयम् ४३ एतावानेवलोकेस्मिन्पुंसांनिःश्रेयसोदयः ॥ तीव्रेणभक्तियोगेनमनोमय्यर्पितंस्थितम् ४४ इतिश्रीभागवतेमहापुराणेकापिलो
पाख्यानेपड्विंशोध्यायः ॥ २६ ॥ ॥ ॥ ७ ॥ ॥ ॥ । ॥

ह मेनोइति मेहेतिरायुधमनिमिषःकालचक्रंवान्लोकेनोलेढिनाशादयतिनाशलक्षणंकार्यंनकरोतीत्यर्थः अत्रापिहेतुरस्तीत्याह येषामिति आत्मास्वामीज्ञानवतोभिव्यक्तोभवतीतिश्रुतेः चशब्दा
त्पिताच अनेकविधव्यसनप्राप्तावहमेवानिमित्तबंधुरिति सुहृदइतिबहुवचनम् ३८ किंबहुनावैराग्यविजृंभितयाभक्त्याभजतांसंसारतारकोहमेवेत्याह इमंलोकमिति आत्मानंजीवमुभयायिनंलोकद्वय
संचारिणंविज्ञायेतिशेषः येचेमइत्युक्तंविवृणोति येरायइति रायोनिष्कादयः यद्वायेचेमेसुतादयः ३९ विश्वतोमुख सर्वत्रमान्मुख्यं सर्वज्ञंवा मृत्योःसंसारादत्यिपारयेपारंमांप्रापयामि य
द्वापारसमाप्तावितिधातोःसंसारसमाप्तिंकृत्वा मुक्तान्करोमीति ४० मत्तोन्यःसंसारतारकोस्तीतिशंकांमाकार्षीरित्याह नान्यत्रेति प्रधानपुरुषयोःप्रकृतिहिरण्यगर्भयोःईश्वरादात्मनःआदानादिक
र्तुः ४१ वाय्वादीनांस्वाधिकारप्रवृत्तिर्नैस्वनियताकिमुतमुक्तिदानप्रवृत्तिः अतउक्तार्थेतच्छंकादरोत्सारितेत्याशयेनाह मद्भयादिति ४२ अहमेवमुक्तिदानेनियतःशक्तइत्येवात्रमुख्यसाधनमि
त्याह ज्ञानेति योगिनोज्ञानेन वाय्वादिवदन्यानियतत्वेतन्मुक्तिदानशक्तिःमहतास्यादित्यतउक्तमकुतोभयमिति ४३ एकग्रामप्रवेशेबहुमार्गवदनेकेमार्गाःसंभवेयुरित्याशंकापरिहरन् अन्ययोगं
व्यवच्छिनत्ति एतावानेवेति स्थितमचलत्वेनेतिशेषः ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांषड्विंशोध्यायः ॥ २६ ॥

अथेमामध्यायेसंख्यानाय तत्त्वानामितिपदुक्तंतत्प्रपंचःक्रियतेइतिप्रतिजानीते अथभक्तिनिरूपणानंतरम् । यत्पुरुषार्थोपयोगितदेवतत्त्वानांलक्षणज्ञानेनप्रयोजनमितितत्राह य द्विदित्वेति गुणैःसत्त्वादिभिः १ परमात्मज्ञानमेवानिर्विचारंमुक्तिसाधनंश्रुतंतत्त्वलक्षणज्ञानस्यचकथंतत्साधनत्वंस्यादित्याशंक्यतत्त्वलक्षणज्ञानंपरमात्मज्ञानादिनाभूतंतेषांमुख्यकार णत्वात्परमात्मनइतितज्ज्ञानमेववर्णयइतिप्रतिजानीते ज्ञानमिति आत्मानंपरमात्मानंदर्शयतीति आत्मदर्शनयत्ज्ञानंपुरुषस्यश्रेयोर्थिनोनिःश्रेयसायमोक्षादिसर्वपुरुषार्थायाहुस्तत्हृदयग्रंथि भेदनंसंसारपाशच्छेदकरंज्ञानंतेवर्णये इत्यन्वयः २ यत्ज्ञानंहृदयग्रंथिभेदनमुक्तंतत्ज्ञानंकिंगुणविशिष्टमुदीर्यमाणंसंसारसमुच्छेदसमर्थंस्यादितितत्राह अनादिरिति यअनादिराद्यंतरहितः कारणमात्रशून्योवात्माविज्ञानादिगुणराशिः पुरुपूर्णानंदंसनोतिददातीतिपुरुषः सर्वांतर्यामीवा निर्गुणःगुणत्रयरहितःचेतनप्रकृतेःपरः प्रत्यग्धामाभिमुखप्रकाश्यधामास्वयंज्योतिःस्वप्रकाशेनदीप्यमा नोविश्वंस्थावरजंगमात्मकंजगद्येनसमन्वितंव्याप्तम् ३ सआत्मातपरमात्मानजातोनम्रियते अजआत्मामहान्ध्रुवः नजायतेम्रियतेवाकदाचिदित्यादिश्रुतिस्मृतिप्रसिद्धआद्यंतरहितइत्यनेनापिजन्मा द्यभावेसिद्धेनजातइत्यादिपुनर्वचनंप्रमाणप्रसिद्धिद्योतनाय युक्तिपूर्वंश्रुत्यादेर्बलीयस्त्वंनकेवलस्येतिभावेनकैमुत्यन्यायमाह देहाद्युपाधिभिरिति देहाद्युपाधिलक्षणैर्निमित्तैरात्तत्तद्धर्मास्वीकृतजननादि धर्मांजीवोपिनस्वरूपतोजायते किंतुभ्रांत्याभिमानेनजायतेम्रियतेभ्रांतत्वाद्देहात्मत्वस्य अत्रदृष्टांतमाह यथेतियथास्वप्नेतस्यस्वप्नस्योक्षितादृष्टाजाग्रतिदृष्टश्रुतजननादिसंस्कारवशाज्जातोमृतइतिपश्य तिनहितेजननमरणेसत्येस्तःकिंतुभ्रांत्यात्मनोमन्यतेतथाप्रकृते किमुसर्वज्ञत्वस्वतंत्रत्वप्राकृतवैकृतदेहराहित्यदूरीकृताविद्यत्वादिवैलक्षण्ययुतईश्वरोनजायतइति तदुक्तं परस्यजन्ममृत्याद्याःस्युःस्वतंत्र

श्रीभगवानुवाच ॥ अथतेसंप्रवक्ष्यामितत्त्वानांलक्षणंपृथक् ॥ यद्विदित्वाविमुच्येतपुरुषःप्राकृतैर्गुणैः १ ज्ञानंनिःश्रेयसार्थायपुरुषस्यात्मदर्शनम् ॥ यदाहुर्वर्णयेतत्तेहृदयग्रंथिभेदनम् २ अनादिरात्मापुरुषोनिर्गुणःप्रकृतेःपरः ॥ प्रत्यग्धामास्वयंज्योतिर्विश्वंयेनसमन्वितम् ३ नजातोनम्रियेतात्मासाद्दि देहाद्युपाधिभिः ॥ निमित्तैरात्तधर्मोयंयथास्वप्नेतदीक्षिता ४ सएवप्रकृतिंसूक्ष्मांदैवींगुणमयींविभुः ॥ यदृच्छयैवोपगतामभ्यपद्यतलीलया ५ गुणैर्विचि त्राःसृजतींसरूपाःप्रकृतिंप्रजाः ॥ विलोक्यमुमुहेसद्यःसइहज्ञानगूहया ६

स्यकिंपुनः जीवस्यापियतोभ्रांतिर्जन्ममृत्यादिसंगतिरिति । निरवयवस्यजीवस्योपाधिसंबंधईशेच्छयाघटतइत्यंगीकारेणनयुक्तिविरोधोपिशंकनीयः यद्धियत्कृपाविरुध्येततदीशकृतमेवहीतिवचना च ४ अधुनाजीवेश्वरयोःपारतंत्र्यापारतंत्र्यादिवैलक्षण्यज्ञापनायपरस्यजगत्सृष्ट्यादिमाहात्म्यादिकथनपूर्वकंजीवस्यतदधीनत्वेनप्रकृतिबद्धत्वंवक्तुमाह सएवेति योनादित्वादिगुणविशिष्टोपश्चज न्मादिरहितोजन्मादिमज्जीवविलक्षणःससूक्ष्मांदैवींक्रीडादिगुणवतींदेवस्यविष्णोरियंइतिवा गुणमयींनसत्त्वादिगुणाभिमानिनीयदृच्छयाहरेरिच्छयोपगतांसदासमीपस्थितांप्रकृतिंश्रियमभ्यपद्यत लीलयेतिप्रयोजनांतरंनिवारयति । अत्रप्रकृतिशब्देनचिदचिदात्मकेउभेग्राह्ये विभुःसर्वगतइत्यनेनप्रकृत्यभिपादनंनौपचारिकंकिंतुसृष्ट्यभिमुखीकरणंकार्यंसूचयति तदपिस्वप्रयोजननेत्यतउक्तं लीलयेति ५ अभिपद्यकिमभूदितितत्राह गुणैरिति स्वप्रेरणयासत्त्वादिगुणैःसात्त्विकादिभेदेनविचित्राःकरचरणादिमत्त्वेनसमानरूपाःप्रजाःसृजतींप्रकृतिंविलोक्यसहीरारिहसंसारेजीवस्यज्ञानगूहयाज्ञा नगूहेच्छयाजीवज्ञानंगूहयंत्यायाप्रकृत्यावासद्यःसंभावनानंतरमेवतंजीवंमुमुहेमोहयामास तदेतन्मेविजानीहि । कृत्वाविवाहंतुकुरुप्रवीराद्ब्यादात्रिवातर्गतणिजर्थोवेदितव्यः अन्यथासदानिरस्तकुहक मित्यादिकंविरुद्धंस्यात् । प्रकृतिविषयत्वेज्ञानगूहशब्दोज्ञानशब्दवदकारांतःस्वस्वातंत्र्यप्रकटनार्थंचमुमुहइति तदुक्तं परकारयितादीशःस्वतंत्रस्तत्प्रकर्तृता । गोप्यहेतुप्रमाद्रह्मक.संसारभागिति लयेत्राप्यथवाप्रभवंतरालेपिनकश्चित् । प्रकृत्याःरहितंब्रह्मकदाचिदपिकुत्रइतिवचनात् गमीपस्तंत्रासिद्धम् ६

ज्ञानगूहनेफलमाह एवमिति पराभिध्यानेनपरमात्मेच्छयैवमुग्धत्वादेवप्रकृतेःसत्त्वादिगुणैःसात्त्विकादिकर्मसुक्रियमाणेषुसत्सुपुमान्जीवःप्रकृतेःकर्तृत्वमहंकर्तेत्यात्मनिमन्यते ७ अभिमानफलमाह तदस्येति । तस्मादविद्यमानकर्तृत्वाभिमानादस्यजीवस्यसंसृतिलक्षणोबंधस्तत्कृतंपारतंत्र्यंनस्वाधमाद्यधीनताचभवति । कस्मात्प्रयोजकादितितत्राह अकर्तुरिति अक्लिष्टकारित्वान्नक्रियतइतिवा अकर्तुःसाक्षिणःपुण्यपापेसाक्षादीक्षमानस्यनिर्वृतात्मनःपरमानंदस्वरूपस्येश्वरस्यसकाशाद्भवतीत्यर्थः । विष्णोःसुराणागुरूणानित्याजीवस्यतंत्रता । यत्तुनस्यान्यतंत्रत्वंतत्ज्ञानाद्विनिवर्ततइतिवचने नतत्रतात्पर्यार्थोवगंतव्यइति अक्लिष्टत्वादकर्तास्यादकार्यत्वादथापिवेतिवचनात्क्रियामात्रशून्यत्वार्थोत्रेष्यतइति । एषकर्तानक्रियतेकारणंचजगत्प्रभुरितिच ८ अत्रकर्तृत्वविशेषंविवेचयति कार्यकारणेति । कार्यंशरीरंकारणमिंद्रियंकर्तृमनःएषांकारणंप्रकृतिंप्रधानाभिमानिनींश्रिय जीवानासुखादिभोक्तृत्वेकारणं प्रकृतेःपरःपुरुषोविष्णुरिति परमेष्ठिशक्तिप्रकारंप्रतियमानंविहायाप्रसि द्धार्थकथनंकथमितीदंचोद्यं । ब्रह्मादिभिःसर्गकरीश्रीर्विष्णुबलसंश्रयात् । सुखदुःखप्रदोविष्णुःस्वयमेवसनातनः । कर्तृत्वंसुखदुःखानामन्येषांचतदाज्ञया । भोक्तृत्वंसुखदुःखानांकरोत्येकोहरिःस्वयं । भो क्तृत्वमात्रेहेतुत्वंजीवेनान्यत्रकुत्रचिदित्यनेनपरिहृतं । प्रकृतिंपुरुषंचैवविद्ध्यनादीइतिचोक्तार्थेप्रमाणम् ९ अत्रदेवहूतिःप्रकृतिपुरुषयोःकारणत्वविशेषंश्रुत्वालब्धावसराविवेकविवित्सयालक्षणंपृच्छति प्र कृतेरिति अस्यजगतःकारणयोः सदसत्स्थूलसूक्ष्मलक्षणंजगद्यदात्मकंयाभ्यांव्याप्तम् १० कपिलोभगवान्तत्रहरेरनंतत्वेनतत्स्वरूपेबुद्ध्यनारोहात्प्रकृतिलक्षणज्ञानेनतल्लक्षणस्यज्ञातप्रायत्वात्प्रकृतिलक्ष

एवंपराभिध्यानेनकर्तृत्वंप्रकृतेःपुमान् ॥ कर्मसुक्रियमाणेषुगुणैरात्मनिमन्यते ७ तदस्यसंसृतिर्बंधःपारतंत्र्यंचतत्कृतम् ॥ भवत्यकर्तुरीशस्यसाक्षिणो निर्वृतात्मनः ८ कार्यकारणकर्तृत्वेकारणंप्रकृतिंविदुः ॥ भोक्तृत्वेसुखदुःखानांपुरुषंप्रकृतेःपरम् ९ ॥ देवहूतिरुवाच ॥ प्रकृतेःपुरुषस्यापिलक्षणंपुरुषोत्त म ॥ ब्रूहिकारणयोरस्यसदसच्चयदात्मकम् १० ॥ श्रीभगवानुवाच ॥ यत्तत्त्रिगुणमव्यक्तंनित्यंसदसदात्मकम् ॥ प्रधानंप्रकृतिंप्राहुरविशेषंविशेषवत् ११ पंचभिःपंचभिर्ब्रह्मन्चतुर्भिर्दशभिस्तथा ॥ एतच्चतुर्विंशतिकंगणंप्राधानिकंविदुः १२ महाभूतानिपंचैवभूरापोग्निर्मरुन्नभः ॥ तन्मात्राणिचतावंतिगंधादी निमतानिमे १३ इंद्रियाणिदशश्रोत्रंत्वग्दृग्रसननासिकम् ॥ वाक्करौचरणौमेढ्रंपायुर्दशमउच्यते १४

णंवक्तियत्तदिति । यत्तत्त्वंसत्त्वादिगुणत्रयरूपमव्यक्तंसूक्ष्मंनित्यमविनाशिसदसदात्मकंव्यक्ताव्यक्तात्मकंज्ञानिनस्तत्तत्त्वंप्रधानंनाम्नाप्रकृतिमाहुरित्यन्वयः । अत्रत्रिगुणमित्येतदितरव्यावर्तकंल क्षणमितराणितुस्वरूपाख्यानपराणिअविशेषमकार्यं विशेषवन्महदादिकार्यवत् । अत्रोभयेषांअभिमन्यमानाभिमानिनांप्रकृत्यादिशब्दवाच्यत्वमंगीकार्यं । तथाहि शब्दादिगुणवतोजगदुपादानत्वस त्त्वादिगुणाभिमानिन्याश्रीभूदुर्गाभिधायाःश्रियश्चसत्त्वादिगुणप्रवर्तकत्वेनततोविप्रकर्षेणजगद्गुरुःमहदादिशरीरवद्ब्रह्मादिजनिकर्तृत्वेनतच्छब्दवाच्यत्वंविवक्षितं केवलासृतिकर्मोदासीनाऽव्यक्ता सिसृक्षुत्व विशेषोपेताव्यक्ताव्यक्ता महदादिकार्यव्यापिनीव्यक्तैवेतिविशेषात्त्रिरूपिणीश्रीरुच्यते एवंजडरूपाप्रकृतिरपिप्रधानरूपाऽव्यक्ताउपादानरूपाव्यक्ताव्यक्तामहदादित्वेनपरिणीयमानाव्यक्तैव सर्वकार्ये षुप्रधानत्वात्प्रधानं नचेदंस्वकपोलकल्पितंकिंतुप्रमाणांतरसिद्धत्वात् तदुक्तंव्यक्ताव्यक्तात्मकंयत्तद्द्विधात्सदसदात्मकं । असर्गाकेवलाव्यक्तासिसृक्षुरुभयात्मिका । व्यक्तैवकार्यरूपातुप्रकृतीत्रिविधामता कार्यतःसाप्रधानत्वात्प्रधानमितिकीर्त्यते । अविशेषाह्यकार्यत्वात्साचश्रीर्विष्णुसंश्रयेति । विशेषंकार्यमुद्दिष्टंविशेषोदृश्यतेयतइति ११ तत्त्वानिप्रधानकार्याणीत्याह पंचभिःपंचभिरिति । चतुर्विंश तिवच्चैःब्रह्मपूर्णनातोऽधिकसंख्यावत् प्राधानिकं प्रधानकार्यं १२ तानिकानीत्यतोनिर्दिशति महाभूतानीति १३ १४

अंतरात्मनोंतःकरणस्यमनसः बुद्धिरध्यवसानायसंशयंकुरुतेमनः । अभिमानोहमहंकारश्चित्तंस्मरणकारणमितिलक्षणरूपयावृत्त्यावर्तनयामनोबुद्धिरहंकारश्चित्तमितिचतुर्धाभेदोलक्ष्यते दृश्यतइत्यन्व
यः १५ तत्त्वसंख्यानमुपसंहरति एतावानेवेति । सगुणस्यब्रह्मणःप्रधानस्यतदभिमानिन्याःश्रियश्चयःसन्निवेशःसंस्थानविशेष सएतावानेवचतुर्विंशएवसंख्यातस्तवमयाप्रोक्तः कालात्मापरमात्मा
कमित्यैवेपुनर्गणितइत्याशंक्यानन्याधीनत्वद्योतनायेतिभावेनाह यःकालइति यःकालइत्याख्यायतेसपंचविंशकइतिज्ञातव्यं ननुश्रियोपिहरिंविनानन्याधीनत्वात्किमितितत्रगणनंकृतमित्याशं
कानकार्या हरिस्तुनिर्गुणंब्रह्मश्रीब्रह्मसगुणंस्मृतम् । तदंगजानितत्त्वानितस्मात्तद्रूपमुच्यतइतिवचनात्तेषुगणनीयत्वाभिप्रायेणेति १६ अनुत्पन्नस्यपुत्रस्यनामकरणमिवकालःपरमात्मेतिसंज्ञयाख्या
यतइतिएतत्कथंशोभतइतितत्राह प्रभावमिति पुरुषोहृदिस्थःपरमःकालःसर्वगतोहरिः । अथवारुद्रदेहस्थोहरिःकालइतीरितइतिवचनात् पौरुषंपुरुषस्यहृदिस्थितस्यहरेर्विद्यमानंप्रकर्षेणभावव्या
तद्रूपंपुरुषाकारंरुद्रदेहस्थंवाकालसंज्ञमाहुःकइत्यतउक्तं एकइति एकेसम्यक्ज्ञानिनोनप्राकृताइत्यर्थः अहंकर्तैत्यहंकारेणममेदमितिममकारेणचविमूढस्यमिथ्याज्ञानिनःप्रकृतिमीयुषःप्रकृतिबद्ध
स्यातएवपराधीनकर्तुर्जीवस्ययतोयस्माद्भयंजननमरणलक्षणंभवतितदितिशेषः १७ इतोपिहरिरेवकालनामानन्तुदेवत्वात्प्रकइत्याह प्रकृतेरिति निर्विशेषस्यकार्योदासीनायागुणसाम्यस्यब्रह्मप्रलया
वस्थाविशिष्टायाःप्रकृतेःप्रधानाभिमानिन्यामूलक्ष्म्याःपुनःश्रीभूदुर्गादिरूपभेदेनासिसृक्षुत्वादिविशेषलक्षणाचेष्टायतोभवति सभगवान्कालइत्युपलक्षितइतीदंलक्षणंलक्ष्यमात्रव्यापकत्वान्नाव्याप्त्यतिव्या

मनोबुद्धिरहंकारश्चित्तमित्यंतरात्मनः ॥ चतुर्धालक्ष्यतेभेदोवृत्त्यालक्षणरूपया १५ एतावानेवसंख्यातोब्रह्मणःसगुणस्यहि ॥ सन्निवेशोमयाप्रोक्तोयः कालःपंचविंशकः १६ प्रभावंपौरुषंप्राहुःकालमेकेयतोभयम् ॥ अहंकारविमूढस्यकर्तुःप्रकृतिमीयुषः १७ प्रकृतेर्गुणसाम्यस्यनिर्विशेषस्यमानवि ॥ चेष्टायतःसभगवान्कालइत्युपलक्षितः १८ अंतःपुरुषरूपेणकालरूपेणयोबहिः ॥ समन्वेत्येषसत्वानांभगवानात्ममायया १९ दैवात्क्षुभितधर्मिण्यांस्वस्यांयोनौपरःपुमान् ॥ आधत्तवीर्यंसासूतमहत्तत्त्वंहिरण्मयम् २० विश्वमात्मगतंव्यंजन्कूटस्थोजगदंकुरः ॥ स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनंतमः २१

प्यसंभवदुष्टमितिज्ञातव्यम् १८ अनेनकालरूपात्पुरुषरूपंनभिन्नमित्याह अंतरिति योभगवानात्ममाययास्वरूपेच्छयासत्वानांसर्वप्राणिनामंतःपुरुषरूपेणबहिःकालरूपेणसर्वांतर्यामिसर्वव्यापक
रूपभेदेनव्याप्नोतीत्यतोऽत्यंतमेषएकएवेतिनात्रदोषशंकाकार्येति १९ प्रकृतेश्चेष्टाप्रदत्वप्रकारंवक्ति दैवादिति दैवात्प्रकृतिक्षोभकनारायणाख्यात्क्षुभितधर्मिण्यांस्वस्यांयोनौपरःपुमान्वीर्यमाधत्तेत्यन्वयः
इदमुक्तंभवति दैवाख्यमूलरूपादभिव्यक्तोनाम्नापरःपुमान्तस्यनारायणस्यप्रेरणयासिसृक्षुत्वविशेषधर्मवत्याःप्रधानाभिमानिन्यालक्ष्म्याअभिव्यक्तायांनाम्नाश्रियाप्रागुक्तविशेषवत्यांस्वभार्यायांरेतोरू
पंवीर्यमधादिति । तदुक्तं । प्रकृतेःक्षोभकंरूपंदैवंनारायणाभिधम् । प्रकृतौमहतःस्रष्टापरमःपुरुषोत्तमइति । अमोघवीर्योहरिरितिभावेनतत्फलमाह सासूतेति । साश्रीनाम्नीहिरण्मयंमहत्तत्त्वम
सूतेति २० प्रकृत्यागूढमिदंजगद्दैवाख्याद्धरेःकथंकारंव्यज्यते तमसागूढमग्रइतिश्रुतिरितितत्राह विश्वमात्मगतमिति ब्रह्मादिसर्वजीवानांकूटस्थआत्मोदरगतंविश्वंव्यंजन्व्यक्तंकर्तुकामोजगतो
ंकुरमंकितत्वात्जगदंकुरःपरमःपुरुषआत्मप्रस्वापनंयोगनिद्राकारणंतीव्रंनिबिडंतमःस्वतेजसास्वरूपप्रभयाअपिबत्विनष्टमकरोदित्यन्वयः जगतोंकुरोजगदंकुरइतिविग्रहेतद्विकारोहरिरित्यर्थोनुपपन्नः
निर्विकारोक्षरःशुद्धइत्यादिश्रुतिविरोधात् । अतः अंकेरमयतेयस्मात्केशरोजगदंकुरः । महांतंयोसृजज्जीवमोहकंचतमोप्रसदितिप्रमाणबलादुक्तएवार्थः २१

दैवत्वान्मोहरेरभिव्यक्तात्परमपुरुषान्महत्तत्त्वसृष्टिमुक्त्वामहत्तत्त्वेनाभिमन्यमानस्यचित्तस्यसृष्टिंवक्ति यत्तत्सत्वगुणमिति । सत्वगुणंपूर्णानंदादिगुणंस्वच्छंधवलंशांतमकलुषंस्तिमितंभगवतोहरेःपदंस्व रूपंपंचज्ञानिनोवासुदेवाख्यमाहुः तस्मान्महत्तत्त्वाभिगताद्वासुदेवात् महत्तत्त्वेनाभिमन्यमानंसर्वप्राणिनांचित्तंजायतइतिशेषः । तदुक्त नदेववासुदेवाख्यंमहत्तत्त्वनियामकमिति। सत्वशब्देनचोच्यंते पूर्णानंदादयोगुणाइतिच । महत्तत्त्वगतोयोसौवासुदेवाभिधोहरिः । सचित्तजनकःप्रोक्तःप्राणिनांहिपृथक्पृथगितिवचनात् नचित्तस्यवासुदेवादन्योजनकोस्तीतिज्ञायते २२ कारणगुणाःकार्येपिसंक्रम्यं तइतिभावेनास्यचित्तस्यलक्षणमाह स्वच्छत्वमितिस्वच्छत्वंनिर्मलत्वंअविकारित्वंस्तिमितोदकवदल्पविकारत्वं नसर्वात्मनाविकाराभावः स्तिमितोदकंचित्तादेरविकारोल्पविक्रियोतिवचनात् शांतत्वंप्रसन्न तायथापांपराविशिष्टाप्रकृतिरुपाद्विमंतरेणधावल्यस्वभावस्तथाचित्तस्यवृत्तिभिःस्वभावैर्लक्षणंकथितमित्यन्वयः। वृत्तिःस्वभावोवृत्तंचस्थितिरित्यभिधीयतइतिवचनात्स्वाभाविकंलक्षणमुक्तमित्यर्थः २३ म हत्तत्त्वादहंकारसृष्टिमाचष्टे महत्त्वादिति ज्ञानप्रधानस्तुमहानहंकारःक्रियाधिकः इतरापेक्षयासोपिज्ञानाधिकउदाहृतइतिविवक्षयाक्रियाशक्तिर्नतुज्ञानशक्तिरहितत्वादन्यथाहंकारस्यशक्तिद्वयकथनं व्यर्थंस्यादिति २४ पृथक्नाम्नात्रैविध्यंवक्ति वैकारिकइति यतोयस्मात्रिविधाहंकारान्मनआदीनांभवउत्पत्तिःसइति महतांभूतानांपृथिव्यादीनाम् २५ प्रकारांतरेणत्रैविध्यंवक्ति वैकारिकइति सप्तसुप्रथमायत्रस्वातंत्र्यंपद्विवक्षितामितिवचनात् वैकारिकात् अधिदैवमित्यादिप्रथमापंचम्यर्थेवक्तव्या दैवताधिकृतंयत्तदधिदैवमितिस्मृतमितिवचनात् दिगादिदेवतासर्गमधिकृत्यवर्तमा नाद्वैकारिकाहंकारात्दिगादिदेवताजाताइत्यर्थः तैजसात्तैजसाहंकारात् बुद्धिर्बुद्धितत्त्वंतदभिमानिन्युमाऽहंकारिकःप्राणश्चजातइतिशेषः अर्थमात्रंशब्दादितन्मात्राचतमसात्तामसाहंकारादभूदितिशे

**अतत्सत्वगुणंस्वच्छंशांतंभगवतःपदम् ॥ यदाहुर्वासुदेवाख्यंचित्तंतन्महदात्मकम् २२ स्वच्छत्वमविकारित्वंशांतत्वमितिचेतसः ॥ वृत्तिभिर्लक्षणंप्रोक्तं यथापांप्रकृतिःपरा २३ महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यसंभवात् ॥ क्रियाशक्तिरहंकारस्त्रिविधःसमपद्यत २४ वैकारिकस्तैजसश्चतामसश्चयतोभवः ॥ मनसश्चेंद्रियाणांचभूतानांमहतामपि २५ वैकारिकोधिदैवंतुबुद्धिःप्राणश्चतैजसः ॥ तामसस्त्वर्थमात्रंचगुणव्यतिकरास्त्रिवृत् २६ सहस्रशिरसंसाक्षाद्यम नंतंप्रचक्षते ॥ संकर्षणाख्यंपुरुषंभूतेंद्रियमनोमयम् २७ कर्तृत्वंकरणत्वंचकार्यत्वंचेतिलक्षणम् ॥ शांतघोरविमूढत्वमितिवास्यादहंकृतेः २८**

षः तामसोहंकारोर्थानांशब्दादीनांमात्रंनिर्मातेतिवाऽनेनकिमुक्तंस्यादित्यतउक्तं गुणव्यतिकरइति गुणानांसत्वादीनांशांतत्वादिव्यंजकानांव्यतिकरोयस्मिन्सतथासोऽहंकारएवंत्रिवृत्रिविधः २६ अहंकारतत्त्वस्यसूक्ष्मस्थूलरूपभेदेनास्थितस्याभिमानिविशेषमाह सहस्रशिरसमिति भूतेंद्रियमनोमयमित्यत्रमयट्प्रत्ययःप्राधान्यार्थः । तथाचभूतादीनांप्रधानकारणंमुख्यंप्रवर्तकमित्यर्थः । सं कर्षणाख्यस्तुहरिःसूक्ष्माहंकारयामकः । स्थूलाहंकारनियमीविष्णुःप्रद्युम्ननामकः । अनिरुद्धोमनस्तत्त्वनियंताभगवान्हरिः । महत्तत्त्वादिजीवास्तुब्रह्माशेषोगजस्तथा। सूक्ष्मस्थूलविभेदेनकामजश्चानि रुद्धकइतिविशेषवचनादर्थविशेषोत्रबुभुत्सुभिर्ज्ञातव्यइति । साक्षादितिविशेषणात्संकर्षणादिनाम्नात्रिधाभिव्यक्तेनहरिणाप्रेरितःसंकर्षणनामानंतःत्रिविधाहंकाराभिमानीतिसम्यगवगंतव्यम् २७ अहंकारलक्षणंवक्ति कर्तृत्वमिति वैकारिकाहंकारस्यमनोरूपेणपरिणतत्वात् मनोव्याप्तित्वेनदेहावहंममतोत्पादकत्वेनकर्तृत्वंनामलक्षणंतैजसाहंकारस्यकरणानामिंद्रियाणांकारणत्वादिंद्रियाभिमानि नियतेंद्रियद्वाराज्ञानजनकत्वेनकरणत्वं तामसाहंकारस्यकार्यापरपर्यायदेहकारणत्वाद्देहस्यचपांचभौतिकत्वात् देहरूपेणकार्यत्वंच इतिशब्दःप्रकारवाची तदुक्तं मनोरूपेणकर्तृत्वंदेहरूपेणकार्यता । इंद्रियात्मतयाचैवकरणत्वमहंकृतेः । यतोमनस्यहंभावस्तस्मात्कर्तामनःस्मृतं । स्वभावकर्तृजीवस्यत्वासत्वोपाधितद्यतः । कर्मज्ञानेकारणतायतःकरणमिंद्रियं । कार्यंदेहःसमुद्दिष्टमुत्पाद्यत्वात्पुनः । पुनरितिस्वोत्पन्नपदार्थेषुवर्तत्स्वभावस्फुरणात्सवत्क्षणमितिभावेनलक्षणांतरमाह शांतेति देवपितृजनकवैकारिकस्यसत्वांशप्राचुर्येणोत्पन्नत्वात्शुक्लात्मनोभगवच्छिष्टोपेतत्वात् शांतत्वंकरणापरपर्या

येभ्योंद्रियाणामुत्पत्तिस्तैजसाहंकारस्य सत्वरजोंशप्राचुर्येणजातत्वात् ज्ञानेंद्रियैर्नानाविधघोरपदार्थविषयज्ञानजनकत्वात्कर्मेंद्रियैर्घोरतरनानाविधकर्मकारयितृत्वात्घोरत्वं वैकारिकतैजसयोर्यावद्ज्ञानस्यज
नकत्वंतावत्ज्ञानजनकत्वाभावेनतमोंशप्राचुर्येणोद्भूतत्वात्भूतादेश्चतामसाहंकारस्यविमूढत्व शांतरूपोदेवपिताघोरःकरणएवमतः। तावज्ज्ञानस्याप्रकाशान्मूढोभूतपितास्मृतः। त्रिरूपोयमहंकारःशेषइत्ये
वर्तविदुरीतिवचनात् अर्थविशेषःकल्प्यतइत्यर्थः २८ वैकारिकाद्यहंकारेभ्योमनआदीनामुक्तानामुत्पत्तिमधुनास्पष्टयति वैकारिकादिति तल्लक्षणमाह यत्संकल्पेति यन्मनःसंकल्पविकल्पाभ्यां
वृत्तिविशेषाभ्यांवर्ततेदेहइतिशेषःलक्षणांतरमप्याह कामसंभवइति यदितिवर्तते यचस्मान्मनसःकामानांनानाविधानांसंभवोजन्मेत्यनेनज्ञातुंशक्यतइति २९ तस्याभिमानिनमाह यद्विदुरि
ति स्थूलांतर्यामित्वेनावतीर्णात्प्रद्युम्नरूपादभिव्यक्तमनिरुद्धाख्यंयचस्यमनसोभिमानिनःकामपुत्रस्यानिरुद्धस्यांतर्यामित्वेनप्रादुर्भूतंविदुर्ज्ञानिनइतिशेषः मनसःसर्वेंद्रियनेतृत्वात्तन्नियंतृत्वोक्त्यास्य
सर्वेंद्रियनेतृत्वमपिसिद्धमित्याह हृषीकाणामिति तद्ध्यानार्थमाह शारदेंदीवरश्याममिति शरत्कालीननीलोत्पलनीलं अधिकारिणमाह संराध्यमिति शनैरव्यग्रमनसःसनकादियोगिभिः
यद्वा यन्मनोनिरोधरहितत्वेनप्रसिद्धमतएवसर्वेंद्रियाणांनियंतृत्वेसमर्थं तद्वर्णमाह शारदेति एवंविधंमनःकस्यवशेभवतीत्यतउक्तं संराध्यमिति योगिभिःपवनाभ्यासिभिःसंराध्यंवशीकर्तुंशक्यमित्य
र्थः ३० चक्षुरादींद्रियाणांकाचकामलादिदोषाभावलक्षणानुग्रहाद्द्रव्यस्फुरणेसतियद्विज्ञानंविशेषज्ञानंजायतेतादृशंबुद्धितत्त्वमभूदित्यर्थःहेसति सामान्यमनसाज्ञानंविशेषात्बुद्धिजंभवेदितिवचनाज्ज्ञा

वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत ॥ यत्संकल्पविकल्पाभ्यां वर्तते कामसंभवः २९ यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम् ॥ शारदेंदीवरश्या
मं संराध्यं योगिभिः शनैः ३० तैजसात्तु विकुर्वाणाद्बुद्धितत्त्वमभूत्सति ॥ द्रव्यस्फुरणविज्ञानमिंद्रियाणामनुग्रहात् ३१ संशयोथ विपर्यासो निश्चयः स्मृ
तिरेव च ॥ स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तिभिः पृथक् ३२ तैजसानींद्रियाण्येव क्रियाज्ञानविभागशः ॥ प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ३३ ताम
साच्च विकुर्वाणाद्भगवद्वीर्यचोदितात् ॥ शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम् ३४ अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिंगत्वमेव च ॥ तन्मात्रत्वं च नभसो लक्षणं
कवयो विदुः ३५

नस्यसामान्यविशेषलक्षणेविशेषणेस्तइति ३१ तादृशबुद्धितत्त्वलक्षणमाह संशयइति नकेवलमेकमेवलक्षणंकिंत्वन्यान्यपिलक्षणा
निसंतीतिभावेनोक्तमर्थेवि विपर्यासोमिथ्याज्ञानमिदमेवतत्त्वंनान्यदिति अतत्त्वेयत्ज्ञानंतन्मिथ्येति मनसोपिसंशयोस्तिअतःकथंबुद्धेःसंशयलक्षणमुच्यतइतिचेदुच्यतेनिश्चायकलक्षणदर्शनेनमनःसंश
योनिवर्ततेनबुद्धेःसंशयःकदापीति तदुक्तं अचलःसंशयोबुद्धेश्चलोमानसउच्यतेचंचलातुस्मृतिर्बुद्धेश्चित्तजैवस्थिरास्मृतिरिति। येनधर्मेणयद्वस्तुज्ञायतेसधर्मस्तस्यलक्षणंयथासास्नादिमत्त्वमिति येनयज्ज्ञा
यतेतत्तुतत्तल्लक्षणमुच्यते । तत्स्वरूपंपृथक्चेतिद्विविधंकवयोविदुरितिवचनादस्वरूपाणांसंशयादीनांनिवृत्तिर्पुंक्तानस्वरूपाणामितितात्पर्यमवगंतव्यं स्वापोऽज्ञानम् ३२ इंद्रियाणितैजसानितैजसाहं
काराद्युत्पन्नान्येवतद्विवेकमाह क्रियाज्ञानेति क्रियाज्ञानविभागेनकर्मेंद्रियज्ञानेंद्रियसंज्ञाभेदेन तदभिमानिविशेषंवक्ति प्राणस्यहीति प्राणस्याहंकारिकस्यक्रियाशक्तिः कर्मेंद्रियप्रेरकत्वशक्तिः बुद्धेरुपा
याविज्ञानशक्तिताश्रोत्रादींद्रियैर्विज्ञानजनकत्वशक्तिः ३३ शब्दमात्रंशब्दाख्योगुणस्तस्माच्छब्दाख्यगुणान्नभउत्पन्नं शब्दंगमयतिज्ञापयतीतिशब्दगंश्रोत्रेंद्रियमुत्पन्नमितिशेषः ३४ शब्दतन्मात्राल
क्षणमाह अर्थाश्रयत्वमिति अर्थाश्रयत्वमर्थविषयत्वमभिधेयैकनिष्ठत्वमित्यर्थः द्रष्टुःसर्वज्ञस्यलिंगत्वंज्ञापकत्वं नभसआकाशस्यतन्मात्रत्वंस्पर्शाद्यभावात्तदेकनिष्ठत्वंशब्दस्यलक्षणंकवयोविदुरित्यन्वयः
तदुक्तं शब्देनैवयतोज्ञेयोहरिर्लिंगंतुतस्यतत् । स्पर्शाद्यभावाचन्मात्रानभसश्चेतिकीर्त्यते । स्पर्शादयश्चतन्मात्राइतरेपूर्वसंस्थिते । तिष्ठत्येकोगुणोभूतेप्रत्येकंपंचसुस्थितः । शब्दोवर्णात्मकोनित्योध्व
निराकाशसंभवः । आकाशएवसूक्ष्मस्तुध्वनिरित्येवशब्द्यते । सएवव्यज्यमानस्तुभवेत्कर्णैकगोचरइति ३५

आकाशलक्षणंवक्ति भूतानामिति । भूतानांजीवानांछिद्रदातृत्वंगमनाद्यर्थमवकाशदातृत्वंबहिरंतर्दिगादिरूपत्वमेकंप्राणापानादीनामिंद्रियाणामात्मनांजीवानांधिष्ण्यत्वमावासस्थानत्वंचनभसोवृत्तिलक्षणंस्वभावलक्षणंकवयोविदुरितिशेषः३६ नभसःस्पर्शोत्पत्तिंब्रूते नभसइति शब्दाख्यातन्मात्रायस्यतत्तथातस्मान्नभसःकालगत्याभगवत्प्रेरणयाविकुर्वतःस्पर्शोभवत्स्पर्शतन्मात्राभूत् ततःस्पर्शतन्मात्रायावायुरभूत्प्रधानवायुःसूत्रात्मामहतासहजायते। तैजसश्चस्वजःस्पर्शइत्याद्यास्तत्सुताःस्मृताः। तदाविष्टाअन्यजीवास्तदाधाराश्चतद्भला इतिवचनात्तैजसोवायुराकाशाज्जातःस्पर्शवायुश्चमुख्यवायोःसुतइतिज्ञातव्यं तेजसादिवायुभिराविष्टत्वात्तदुद्भूतत्वाच्चभलत्वाच्चतद्विशिष्टाइत्युच्यंते स्पर्शादयोपिवाय्वादेःसूक्ष्मावस्थाःप्रकीर्तिताइतिवचनादत्रकार्यकारणभावउपचयविवक्षयेतिज्ञायते तदुक्त सूक्ष्मेंद्रियाणिसंत्येवस्युःस्थूलान्यप्यहंकृतेः । भूतेभ्यश्चोपचीयंतेपुनर्ब्रह्मशरीरतइति स्पर्शस्यस्पर्शतन्मात्रायाःसंग्रहोज्ञातृत्वगिंद्रियंचोपचितमभूदितिशेषः ३७ स्पर्शतन्मात्रालक्षणमाह मृदुत्वमित्यादिना मृदुत्वमित्यादीनिनभस्वतोवायोःस्वभावलक्षणानि३८स्वरूपलक्षणमाह चालनमित्यादि स्वरूपमपिकर्मेतिविपयत्वादुदीर्यतइतिवचनादेतानिचालनादीनिकर्मनिमित्तलक्षणानि चालनंचलनकर्तृत्वंव्यूहनंपृथक्स्थितानामेकीकरणं प्राप्तिःसर्ववस्तुव्याप्तिः।प्राप्नोतिवायुःसर्वंतुस्वतएवहरेस्तथा । अतःप्राप्तिरितिप्राहुर्वायुंभूतपतिंप्रभुं। प्रधानवायुरन्येषुनित्याविष्टोयतःस्वतः। तद्गुणास्तेषुचोच्यंतेनीचतानास्यतत्क्तेतिवचना

भूतानांछिद्रदातृत्वंबहिरंतरमेवच ॥ प्राणेंद्रियात्मधिष्ण्यत्वंनभसोवृत्तिलक्षणम् ३६ नभसःशब्दतन्मात्रात्कालगत्याविकुर्वतः ॥ स्पर्शोभवत्ततोवायुस्त्वक्स्पर्शस्यचसंग्रहः ३७ मृदुत्वंकठिनत्वंचशैत्यमुष्णत्वमेवच ॥ एतत्स्पर्शस्यस्पर्शत्वंतन्मात्रत्वंनभस्वतः ३८ चालनंव्यूहनंप्राप्तिर्नेतृत्वंद्रव्यशब्दयोः ॥ सर्वेंद्रियाणामात्मत्वंवायोःकर्माभिलक्षणम् ३९ वायोश्चस्पर्शतन्मात्राद्रूपंदैवेरितादभूत् ॥ समुत्थितंततस्तेजश्चक्षूरूपोपलंभनम् ४० द्रव्याकृतित्वंगुणताव्यक्तिसंस्थात्वमेवच ॥ तेजस्त्वंतेजसःसाध्विरूपमात्रस्यवृत्तयः ४१ द्योतनंपचनंपानमदनंहिममर्दनम् ॥ तेजसोवृत्तयस्त्वेताःशोषणंक्षुत्तृडुद्भवः ४२ रूपमात्राद्विकुर्वाणात्तेजसोदैवचोदितात् ॥ रसमात्रमभूत्तस्मादंभोजिह्वारसग्रहः ४३ कषायोमधुरस्तिक्तःकट्वम्लइतिनैकधा ॥ भौतिकानांविकारेणरसएकोविभिद्यते ४४

त् द्रव्यशब्दयोःपर्णादिद्रव्यस्यशब्दस्यवर्णात्मकस्यचनेतृत्वंदेशांतरप्रापकत्वं सर्वेंद्रियाणामात्मत्वंस्वामित्वंतदविनाभूतप्रकृतित्वंवा कर्माभिलक्षणंस्वरूपलक्षणं ३९ स्पर्शएवतन्मात्रोगुणोयस्यसःस्पर्शतन्मात्रः तस्माद्वायोरूपंरूपतन्मात्राऽभूत् ततोरूपतन्मात्रायास्तेजःसमुत्थितं रूपस्योपलंभनंज्ञानंयस्मात्तादृशंचक्षुरिंद्रियंचोत्पन्नमित्यर्थः ४० रूपतन्मात्रायालक्षणमाह द्रव्याकृतित्वमितिद्रव्याकृतित्वंयावद्द्रव्यव्याप्तित्वं गुणताप्रकाशित्वंव्यक्तिसंस्थात्वंव्यक्तित्वेनास्थितिः तेजस्त्वमुग्रत्वं। आलोकोगुणइत्यत्रप्रकाशश्चापिकथ्यतइति। तेजस्त्वमथचोग्रत्वंकौर्यमित्यपिचोच्यतइतिवाक्यार्थेभिधानं। रूपमात्रस्यरूपतन्मात्रायावृत्तयःस्वभावलक्षणानि ४१ तेजसोलक्षणमाह द्योतनमिति द्योतनंप्रकाशनं द्युतप्रकाशनइतिधातुः पचनंपाककरणं पानंरसादनमर्दनंभक्षणं हिममर्दनंशीतनिवारकत्वंशोषणंशुष्कीकरणं क्षुत्तृडुद्भवः प्राणिनांक्षुत्तृड्जनकत्वं । वृत्तयःस्वभावलक्षणानि ४२ क्रमप्राप्तांतेजसोवारिसृष्टिंवक्ति रूपतन्मात्रादिति रूपमेवतन्मात्रायस्यतद्रूपतन्मात्रंतस्मात्तेजसःरसमात्रंरसतन्मात्राभूत् यया रसग्रहोभवतिसाजिह्वाजिह्वेंद्रियंचाभूत् ४३ रसगुणलक्षणंवक्ति कषायइत्यादिना कटुपुकोऽम्लःकट्वम्लःअम्ललवणोपिग्राह्यः भौतिकानांभूतकार्याणांपदार्थानांविकारेणएकोरसःषडात्मनाभिद्यते ४४

उदकलक्षणंवक्ति क्लेदनमित्यादिना क्लेदनमार्द्रीकरणं पिंडनंपिंडीकरणं तृप्तिरलंबुद्धिजनकत्वं प्राणनंचेष्टाहेतुत्वं आप्यायनंसुखकरत्वं उंदनंबिंदुभावः तापापनोदस्तापनिवारणत्वं अन्येभ्योभूतेभ्यः भूयस्त्वमाधिक्यं इमाअंभसोवृत्तयः जलस्यस्वरूपलक्षणानि। उंदिबिंदुभावइतिधातुः। उंदनंबिंदुभावःस्यात्स्यंदनंस्रवणंस्मृतमित्यभिधानात् पृथिवीतेजःपरमाणुयोगादंभसउंदीभावइति ४५ अहङ्कारःपृथिव्युत्पत्तिंवक्ति रसमात्रादिति रसएवमात्रायस्यतत्तथातस्मादंभसोगंधमात्रंगंधतन्मात्राभूत् तस्मात्गंधात् पृथिव्यभूत् गंधंगमयतिज्ञापयतीतिगंधगोघ्राणइंद्रियविशेषोप्यभूत् ४६ गंधलक्षणानिब्रूते करंभेति करंभोदग्धपार्थिवविषयः पूतिःक्लिन्नक्षतविषयः शांतोमिश्रगंधः उग्रोवचादिविषयः आम्लःआरनालादिविषयः आदिशब्देनकषायादिलक्षणोविवक्ष्यते एकस्यगंधस्यनानाविधत्वंकथमित्यत्तउक्तं द्रव्येति द्रव्याणामवयवानामंशानांचवैषम्यात्विशेषलक्षणात्एकोगंधोनानाविधोभवतीत्यर्थः ४७ पृथिवीलक्षणंवक्ति भावनमित्यादिना भावनमुत्पादकत्वं ब्रह्मस्थानंतुपृथिवीशरीरेब्रह्मदर्शनादितिवचनात् पार्थिवशरीरेषुब्रह्मणःसन्निधानात्तत्रैवब्रह्मदर्शनाच्च यःपृथिव्यांतिष्ठन्नित्यादेश्च धारणंमूर्तद्रव्याणामितिशेषः सद्विशेषणं भूतत्रयमपेक्ष्यविशेषेणव्यक्तत्व तदुक्तं अस द्व्यक्तनामस्याद्व्यक्तंसदितिचोच्यतइति सर्वसत्त्वगुणोद्भेदःसर्वेषांसत्वानांप्राणिनांशरीरेसर्वगुणानामुद्भेदोव्यक्तिःसापिसंसारावस्थायामितिज्ञातव्यं।शरीरंपार्थिवंज्ञेयमिंद्रियाण्यौदकानितु। तैजसःकोष्ठ

क्लेदनंपिंडनंतृप्तिःप्राणनाप्यायनोंदनम् ॥ तापापनोदोभूयस्त्वमंभसोवृत्तयस्त्विमाः ४५ रसमात्राद्विकुर्वाणादंभसोदैवचोदिताद् ॥ गंधमात्रमभूत्तस्मात्पृथ्वीघ्राणस्तुगंधगः ४६ करंभपूतिसौरभ्यशांतोग्राम्लादिभिःपृथक् ॥ द्रव्यावयववैषम्याद्गंधएकोविभिद्यते ४७ भावनंब्रह्मणःस्थानंधारणंसद्विशेषणम् ॥ सर्वसत्त्वगुणोद्भेदःपृथिवीवृत्तिलक्षणम् ४८ नभोगुणविशेषोर्थोयस्यतच्छ्रोत्रमुच्यते ॥ वायोर्गुणविशेषोर्थोयस्यतत्स्पर्शनंविदुः ४९ तेजोगुणविशेषोर्थोयस्यतच्चक्षुरुच्यते ॥ अंभोगुणविशेषोर्थोयस्यतद्रसनंविदुः ५० भूमेर्गुणविशेषोर्थोयस्यसघ्राणउच्यते ॥ परस्यदृश्यतेधर्मोह्यपरस्मिन्समन्वयात् ५१ अतोविशेषोभावानांभूमावेवोपलक्ष्यते ॥ एतान्यसंहत्ययदामहदादीनिसप्तवै ५२ नशेकुःपुरुषंस्रष्टुंभोगायतनमंजसा ॥ कालकर्मगुणोपेतोजगदादिरुपाविशत् ५३

गोवह्निश्छिद्रमाकाशसंभवं। प्राणावायुसंभवाःसर्वेप्रत्येकंपंचधापुनरितिवचनात् पृथिव्याःप्राधान्यादितरेषामल्पत्वात्तुक्तमुक्तं पृथिव्या वृत्तिलक्षणम् ४८ श्रोत्रादीनांलक्षणंवक्ति नभइत्यादिना यस्य नभोगुणविशेषः शब्दोर्थोविषयस्तच्छ्रोत्रमिंद्रियमित्यादिज्ञातव्यं नभोगुणविशेषोत्यइतिपाठेयस्यविषयःशब्दोद्भवःशब्दएवार्थइति ४९ ५० शब्दादयआकाशादीनांविशेषगुणत्वेनव्यावर्तकधर्मानव्य भिचारिणइतियावैशेषिकाणांप्रक्रियातांविघटयितुमाह परस्येति परस्यपूर्वस्यकारणस्याकाशादेर्धर्मःशब्दादिगुणोऽपरस्मिन्पश्चात्तनेकार्येवाय्वादौदृश्यतेहिकुतःसमन्वयात्संबंधात् ५१ ततःकिंतत्राह अतइति यएवंगुणानांसंबंधोस्त्यतआकाशादिसर्वभावानांविशेषगुणोभूमावेवोपलक्ष्यतइति सर्वसत्वगुणोद्भेदइत्युक्तंसाधुवैशेषिककल्पनायाःस्वमनीषोत्थत्वादप्रमाणत्वमित्यतोदृश्यतइतिदृष्टेर्वलवत्त्व माणत्वान्नहिरोषोपिदुर्वारइति महदाद्यभिमानिदेवतास्तुतिमसबध्श्रीनारायणाविष्टैरुज्जृंभितशक्तिभिस्तैस्तैरवयविनिर्माणात् परमाणुभिर्द्व्यणुकादिक्रमेणखंडावयव्यंत्यावयवीचजायतइतिकल्पना निर्मूलेत्यभिप्रेत्याह एतानीति यदैतानिमहदादीनिसप्ततत्त्वानिभोगायतनंब्रह्मांडलक्षणपुरुषविराट्पुरुषशरीरंचस्रष्टुंनशेकुःकुतइत्यतउक्तमसंहत्येति असंहत्याचेतनत्वेनस्वतःसंयोजनशक्त्यभावेन विश्लिष्यस्थितत्वादित्यर्थः अतएवांजसेत्युक्तं तदाकालकर्मगुणोपेतोजगदादिःश्रीनारायणोमहदादीन्युपाविशत्यथाकार्योत्पत्तिक्षमाशक्तिःस्यात्तथासन्निहितवानित्यर्थः ५२ ५३

तत्फलमाह ततइति तदनंतरं तनहरिणानुविशयान् विद्भ्यःपरेभ्यस्तत्त्वेभ्योनंतत्त्वसंदेवताद् पुत्थितमुत्पन्नं अचेतनाचतस्त्वंडात् ब्रह्मासमजनिस्फुटम् । अतोब्रह्मांडमित्याहुर्विराद्ब्रह्मप्रकाशनादिति वाक्यमस्मिन्नर्थेमानमितिभावेनाह पुरुषइति यस्मादंडादसौविराड्वशेषेणप्रकाशमानःपुरुषःहिरण्यगर्भउदतिष्ठदुत्पन्नइत्यन्वयः ५४ अस्यांडस्यपृथि०पंचाशानांभूपस्त्वंनामांतरंचपुक्तमितिभावेनाह ए तदंडमिति तोयाद्यावरणविशेषविशेषित्वाच्चविशेषाभिधानंयुक्तमितिभावेनाह क्रमवृद्धैरिति क्रमवृद्धिमेवविशिनष्टि दशोत्तरैरिति ततोबहिर्गुणत्रयेणप्रधानेनमूलप्रकृत्याचावृतं अंतश्चतुर्दशभुवनलक्ष णोर्वीशत्वाद्विशेषाख्यमित्याशयेनाह यत्रेति यत्रयस्मिन्नंडेयंलोकवितानःपातालादिलोकविस्तारोविशेषितइतिशेषः । अयमपिकश्चनविशेषोस्तीत्याह रूपमिति रूपंमूर्तिःप्रतिमासान्निधानविशि ष्टत्वात् ५५ इदानीमुदतिष्ठदसौइत्युक्तंविवृणोति हिरण्मयादिति प्रासादात्प्रेक्षतइतिवत् द्वितीयार्थेपंचमी महादेवोदेवोत्तमोहरिः सलिलेशयहिरण्मयांडकोशमुत्थायोत्थाप्यतदंतःप्राविश्यस्वस्मादुत्पन्न स्यविराट्पुरुषस्यांडवत्स्थितंशरीरंपुनःसमाविश्ययथासन्निधानविशेषोभवतितथांतःस्थित्वामुखविवरादिलक्षणंखमाकाशंनिर्बिभेदव्यक्तमकरोदित्यन्वयः ५६ ब्रह्मशरीरस्यमुखादिव्यक्तिप्रकारंवक्तिनि रभिद्यतेत्यादिना अस्यब्रह्मणःप्रथमंमुखंनिरभिद्यतव्यक्तमभूत् ततोमुखाद्वाणीवागिंद्रियंतस्माद्वागिंद्रियाच्चदभिमानीवह्निरभूदित्येवमेवोत्तरत्रानुसंधेयं नासेनासापुटेप्राणोनामनासिका अध्यात्माधिदैव

ततस्तेनानुविद्धेभ्यस्तत्त्वेभ्योंडमचेतनम् ॥ उत्थितंपुरुषोयस्मादुदतिष्ठदसौविराट् ५४ एतदंडंविशेषाख्यंक्रमवृद्धैर्दशोत्तरैः ॥ तोयादिभिःपरिवृतंप्रधा नेनावृतंबहिः ॥ यत्रलोकवितानोयंरूपंभगवतोहरेः ५५ हिरण्मयादंडकोशादुत्थायसलिलेशयात् ॥ तमाविश्यमहादेवोबहुधानिर्बिभेदखम् ५६ नि रभिद्यतास्यप्रथमंमुखंवाणीततोभवत् ॥ वाण्यांवह्निरथोनासेप्राणोतःप्राणएतयोः ५७ प्राणाद्वायुरभिद्येतामक्षिणीचक्षुरेतयोः ॥ तस्मात्सूर्योन्वभिद्ये तांकर्णौश्रोत्रंततोदिशः ५८ निर्बिभेदविराजस्त्वग्रोमश्मश्र्वादयस्ततः ॥ ततओषधयःपश्चाच्छिश्नंनिर्बिभिदेततः ५९ रेतस्तस्मादापआसन्निरभिद्यतवै गुदम् ॥ गुदादपानोपानाच्चमृत्युर्लोकभयंकरः ६० हस्तौचनिरभिद्येतांबलंताभ्यांततःस्वराट् ॥ पादौचनिरभिद्येतांगतिस्ताभ्यांततोहरिः ६१ नाड्यो स्यनिरभिद्यंतताभ्योलोहितमाहृतम् ॥ नद्यस्ततःसमभवन्नुदरंनिरभिद्यत ६२ क्षुत्पिपासेततःस्यातांसमुद्रस्तुतयोरभूत् ॥ अथास्यहृदयंभिन्नंहृदयान्म नउत्थितम् ६३ मनसश्चंद्रमाजातोबुद्धिर्बुद्धेर्गिरांपतिः ॥ अहंकारस्ततोरुद्रश्चित्तंचैत्यस्ततोभवत् ६४

भेदेनएकस्यप्राणोवायुरितिनामद्वयम् ५७ दिशःदिग्देवताः ५८ विराजःब्रह्मणःततोरोमादिभ्यःशिश्नंलिंगंततउपस्थेंद्रियम् ५९ ततोरेतःतस्माद्रेतसोगुदशब्दस्तुगोलकेंद्रिययोरपिवाचकः गुदात्पायवींद्रियंततोपानोमृत्युर्मरणलक्षणः ६० स्वराडिंद्रस्ताभ्यांपादाभ्यांगतिर्गंतव्यामिंद्रियंतादिंद्रियाद्धरिरित्यत्रेदंतात्पर्यंइंद्रियाद्यज्ञदेवनामाभिमानीतदंतर्यामीहरिश्च ब्राह्मणांगुष्ठजलपायिनांफल दानार्थत्वेनकृतसन्निधानविशेषत्वाद्धरिरिति यज्ञनामातुदेवोन्योविज्ञेयःपाददेवता । तमाविष्टोहरिर्नित्यंतमाहुःपाददैवतमितिवचनात् ६१ विरिंचशरीरान्नाड्युत्पत्तिंवक्ति नाड्यश्चेति आहृत मुत्पन्नं ततोरुधिरात्ततउदरात् ६२ तयोःक्षुत्पिपासयोः अथोदरोत्पत्त्यनंतरंभिन्नंव्यक्तम् ६३ तस्मात्हृदयात्मनोभेदरूपाबुद्धिर्जातातस्याबुद्धेर्गिरांपतिर्बृहस्पतिर्जातइत्यर्थःततोहृदयादेवमनोभे दरूपोहंकारोपितदभिमानीरुद्रश्चततएतस्मात् हृदयान्मनोविशेषरूपाचित्तंततश्चित्ताच्चैत्यश्चित्ताभिमानीविरिंचोरूपांतरेणासीत् अत्रचित्ताभिमानित्वेनविष्णुरपिचैत्यइतिग्राह्यं ब्रह्मांतर्यामिणोपिस्वे च्छयातदभिव्यक्तरूपांतरेणतज्जत्वंचपुक्तंप्रामाणिकत्वादुक्तंच चैत्योपिभगवान्विष्णुरंतर्यामीचतुर्मुखात् । स्वेच्छयाव्यक्तिमगमत्ततोसौब्रह्मजःस्मृतइति । इदंसर्वस्याभितस्यमुखंनिरभिद्यतेत्या चैतरेय्याद्युपनिषद्युक्तम् ६५

प्रत्येकार्थकारित्वेनैकस्योत्तमत्वकथनेऽन्यस्यतदविनाभूतमितिकृत्वाप्राणस्यसर्वचेतनोत्तमत्वंज्ञापयितुमग्न्यादिदेवानांविवादेनतन्निर्णयप्रकारंवक्ति एतेहीति एतेनाहमुक्थमस्मीत्यादिवाक्यार्थोपिविवृतइतिज्ञातव्यं अस्यब्रह्मशरीरस्योत्थापनेस्वानिगोलकस्थानानि ६५ ६६ ६७ ६८ ६९ गत्यैवेत्यत्रकारेणविष्णोरुत्थापनाशक्तिर्नविधीयते किंतुब्रह्मवाय्वोर्बलज्ञापनायैवेति यद्वातस्थःस्वपादौविशन्नोत्थापयद्धरिः। शक्तोपित्रह्मवाय्वोस्तुबलज्ञप्त्यैजनार्दनः । तत्स्थउत्थापयामासब्रह्मदेहंविशन्प्रभुरितिवचनात्। अनेनश्रियस्तदुत्तमत्वतस्याहरेरनंतगुणोत्तमत्वध्वनित । अहंसुरोपितरमप्युर्वीत्यादः ७० ७१ ब्रह्माबृहस्पतिः यस्मिन्ब्रह्माराजनिपूर्वएवेतीतिश्रुतेः बृहस्पतिःपुरोगश्चब्रह्माचब्रह्मणस्पतिरितिचाभिधानम् ७२ नन्वेवंतर्हिसलिलेपतितंब्रह्मशरीरमुत्थापकाभावात् किमर्थंमभवेदित्याशंक्यवायुनासहनिर्गमात्शरीरमपतत् सएवक्षेत्रज्ञोब्रह्मांतर्यामीवायुब्रह्मभ्यांसहप्रवेशेनशरीरमुत्थापयदित्याह चित्तेनेति । अंशेनसुप्तोब्रह्मातुअंशेननिरगात्तथा । स्वदेहाद्वायुसहितोविष्णुनाचजगत्प्रभुः । तमुत्थापयितुंदेवास्तानृतेत्रीन्महाबलान् । नाशक्नुवन्नेकसंस्थास्ततस्तेस्वविशंस्त्रयः । उदतिष्ठत्ब्रह्मदेहस्तदातेषांप्रभावतः । विशेषेणहरेरेवप्रभावेनश्रियःपतेः । चित्ताभिमानीब्रह्मैवक्षेत्रज्ञस्तद्गतोहरिः । प्राणोवायुरितिप्रोक्तस्तयोरीशोहरिःस्वयमित्यनेनक्षुद्रोपद्रवशंकापरिहृतेतिसंतोष्टव्यम् ७३ नन्वत्रविष्णोःसर्वोत्तमत्वेनसर्वशक्तिमत्त्वंसम्यक्नप्रतीतंबलादाकृष्यप्रवेशपते

एतेह्यभ्युत्थितादेवानैवास्योत्थापनेऽशकन् ॥ पुनराविविशुःखानितमुत्थापयितुंक्रमात् ६५ वह्निर्वाचामुखंभेजेनोदतिष्ठत्तदाविराट् ॥ घ्राणेननासिकोवायुर्नोदतिष्ठत्ततोविराट् ६६ अक्षिणीचक्षुषादित्योनोदतिष्ठत्ततोविराट् ॥ श्रोत्रेणकर्णौचदिशोनोदतिष्ठत्ततोविराट् ६७ त्वचंरोमभिरोषध्योनोदतिष्ठत्ततोविराट् ॥ रेतसाशिश्नमापस्तुनोदतिष्ठत्ततोविराट् ६८ गुदंमृत्युरपानेननोदतिष्ठत्ततोविराट् ॥ हस्ताविंद्रोबलेनैवनोदतिष्ठत्ततोविराट् ६९ विष्णुर्गत्यैवचरणौनोदतिष्ठत्ततोविराट् ॥ नाडीनद्योलोहितेननोदतिष्ठत्ततोविराट् ७० क्षुत्तृड्भ्यामुदरंसिंधुर्नोदतिष्ठत्ततोविराट् ॥ हृदयंमनसाचंद्रोनोदतिष्ठत्ततोविराट् ७१ बुद्ध्याब्रह्मापिहृदयंनोदतिष्ठत्ततोविराट् ॥ रुद्रोभिमत्यहृदयंनोदतिष्ठत्ततोविराट् ७२ चित्तेनहृदयंचैत्यःक्षेत्रज्ञःप्राविशद्यदा॥ विराट्तदैवपुरुषःसलिलादुदतिष्ठत ७३ यथाप्रसुप्तंपुरुषंप्राणेंद्रियमनोधियः ॥ प्रभवंतिविनायेननोत्थापयितुमोजसा ७४ तमस्मिन्प्रत्यगात्मानंधियायोगप्रवृत्तया ॥ भक्त्याविरक्त्याज्ञानेनविविच्यात्मनिचिंतयेत् ७५॥ इतिश्रीभागवतेतृतीयस्कंधेतत्त्वसमाम्नायेसप्तविंशोध्यायः॥ २७॥ श्रीभगवानुवाच ॥

प्रकृतिस्थोपिपुरुषोनाज्यतेप्राकृतैर्गुणैः ॥ अविकारादकर्तृत्वान्निर्गुणत्वाज्जलार्कवत् १

इत्याशंक्यभातीतिकोप्राणस्योक्तौ अन्वयव्यतिरेकौविष्णोरेवेतिविशदयंस्तदुपास्तिंविदधाति यथेति अनेनप्रसुप्तंपुरुषंब्रह्माणंप्राणेंद्रियमनोधियःप्राणेंद्रियाद्यभिमानिनोदेवास्तत्तदिंद्रियार्थक्रियावत्त्वेनौजसायेनक्षेत्रज्ञेनविनोत्थापयितुंनप्रभवंतीदंयथायथार्थंसत्यंयस्मात्तस्मात्तंसर्वोत्तमंप्रत्यगात्मानंक्षेत्रज्ञंश्रीनारायणमस्मिन्शरीरेंतर्यामित्वेनस्थितंविरक्त्याष्टांगयोगाविपक्वक्रमाविवृद्धयाभक्त्याचजाताधिगतिनिश्चयलक्षणबुद्ध्याजातेनज्ञानेनात्मनिहृदयेचिंतयेदित्यन्वयः ७४ ॥ ७५ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेवि०टीकायांसप्तविंशोध्यायः ॥ २७ ॥ श्रोतृप्रवक्तृभेदाद्गुणानिकायात्तात्पर्यांतिशयज्ञानायउक्तमेवप्रपंच्यतेस्मिन्नध्याये तत्रजीवपरमयोरेकशरीरस्थत्वात् जीववत्तद्गतदुःखादिभोगःपरस्यकथंनस्यादित्याशंक्यपरिहरति प्रकृतिस्थइति सवाएतंपूर्णमाचक्षतेपुरुषइतिश्रुतेः । पूर्णत्वात्पुरुषोविष्णुःप्रकृतिस्थःजडप्रकृतौतत्कार्येशरीरेषुअंतःस्थितोपिप्राकृतैः प्रकृतिनिर्मितशरीरगतैःसुखदुःखादिगुणैर्जननादिभिर्नाज्यतेनालिप्यते तत्रहेतुमाह अविकारादिति अविकारात्षड्विकाररहितत्वादकर्तृत्वात्परतंत्रकर्तृत्वरहितत्वान्निर्गुणत्वात्सत्वादिगुणरहितत्वाच्चजलार्कवत्यथाजलगतः सूर्योजलदोषैःकंपभेदादिभिर्नसंबध्यतेतथाप्रकृतेपीत्यर्थः १

ननुयदिपरमस्यसुखदुःखादिसंबंधोनास्तितर्हिसुखीदुःखीजातोमृतोदरिद्रइतिव्यवह्रियमाणःकइतितत्राह सएषइति यर्हियदानंतरःातीताध्यायेप्रत्यगात्मा नमात्मनिचिंतयेदिति प्रकृतःसोहमितिप्र स्वक्षसिद्धत्वादेषजीवःप्रकृतेर्गुणेषुसत्वादिगुणरचितशरीरेषुअभिविषज्जतेशरीरवान्जायते तदातेषांत्रयाणांगुणानासन्निपातजाताहंकारममकाराभ्यांविमूढात्माविस्मृतपरमात्मस्वरूपःसन् पराधीन कर्तृत्वमंतरेणस्वतःकर्तृत्वाभावेप्यहंकर्तास्मीत्यभिमन्यते २ तत्फलमाह तेनेति तेनाविद्यमानकर्तृत्वाभिमानेनमनसाशब्दादिषुक्षणभंगुरत्वेनानिर्वृतोलब्धुद्धेगोचरानंदराहित्येति प्रासंगिकैर्विषया सक्तिजातैःकर्मदोषैःसदसन्मिश्रयोनिषुदेवासुरमनुष्ययोनिषुजातःसुखदुःखलक्षणांसंसारपदवीमभ्येतीत्यन्वयः ३ आभिमानिकसंसारानिवृत्तौकिंनिमित्तमित्याशंक्यविषयाभिध्यानमित्याह अर्थेही ति स्वतःचित्सुखरूपस्यास्यजीवस्यार्थेसुखीदुःखीअहमित्यादिव्यवहारेअविद्यमानेसत्तारहितेपिसंसृतिर्ननिवर्तते ध्यायतोविषयानितिहेतुगर्भविशेषणं ध्यायतोविषयान्पुंसःसंगस्तेषूपजायतइत्यादि प्रसिद्धिंहिशब्दआपादयति विषयध्यानसंस्कारपरंपराबीजांकुरन्यायेनान्योन्यकारणत्वस्यानादित्वेनभगवत्प्रसादमंतरेणानुच्छेदादित्यर्थः एतमर्थंनिदर्शयति स्वप्नइति यथाजाग्रदवस्थायांना नाविधपदार्थान्ध्यायतःस्वप्नेपर्दभाद्यारोहणादिनामरणाद्यनर्थागमोननिवर्तते पुरुषंकृष्णंकृष्णदंतंपश्यतिसएनंहंतीत्यादेरनेनार्थक्रियाकारित्वात्स्वप्नस्यामिथ्यात्वमपिप्रत्युक्तं यद्वाअर्थेऽबाधितप्रयोज नेऽसत्यपीति ४ अस्यसंसारस्यनिवृत्त्युपायमाह प्रबुद्धेति अज्ञानंसुप्तिशब्दोक्तंस्वप्नश्चैवविपर्ययइतिवचनात् स्वप्नसुषुप्तिभ्यांविपरीतज्ञानाज्ञानाभ्यांविषयाणांसेवयास्यात्सास्वतोननिवर्ततेइतिशास्त्रा

सएषयर्हिप्रकृतेर्गुणेष्वभिविषज्जते ॥ अहंकारविमूढात्माकर्तास्मीत्यभिमन्यते २ तेनसंसारपदवीमवशोऽभ्येत्यनिर्वृतः ॥ प्रासंगिकैःकर्मदोषैःसदसन्मिश्रयोनिषु ३ अर्थेह्यविद्यमानेपिसंसृतिर्ननिवर्तते ॥ ध्यायतोविषयानस्यस्वप्नेनर्थागमोयथा ४ प्रबुद्धचस्वप्नसुप्तिभ्यांसंस्मरन्नात्मवैशसम् ॥ वैतथ्यंव्यभिचारंचनासौध्यायेद्यतोऽभयम् ५ अतएवशनैश्चित्तंप्रसक्तमसतांपथि ॥ भक्तियोगेनतीव्रेणविरक्त्यात्मवशंनयेत् ६ यमादिभिर्योगपथैरभ्यसञ्छ्रद्धयान्वितः ॥ मयिभावेनसत्येनमत्कथाश्रवणेनच ७ सर्वभूतसमत्वेननिर्वैरेणाप्रसंगतः ॥ ब्रह्मचर्येणमौनेनस्वधर्मेणमहीयसा ८ यदृच्छयोपपन्नेनसंतुष्टोमितभुङ्मुनिः ॥ विविक्तशरणःशांतोमैत्रःकरुणआत्मवान् ९

द्युपदेशेनप्रबुध्यप्रकृष्टंबोधंप्राप्यात्मवैशसंदुर्विषयसेवयात्मनाशंसंस्मरन्नसौपुरुषो विषयाणांवैतथ्यंनिष्फलत्वंव्यभिचारमनित्यत्वंचज्ञात्वा यतोविषयात् भयंसंसारलक्षणंस्यात् तन्नध्यायेन्न संस्मरेदित्यर्थः आत्मसमृतेरितिपाठेतस्यामिथ्यात्वमनैकांतत्वंचदृश्यमानंसंस्मरन्नित्यर्थः ५ मनसिविजितेसर्वंविजितंस्यादितिकृत्वामनोविजयप्रकारंवक्ति अतइति यतएवंमनसोविषये पुसंगःसंसारहेतुरतएवविषयसंगिनामसतांपथिप्रसक्तंचित्तंशनैर्हरौतीव्रेणभक्तियोगेनविषयविरक्त्याचात्मवशंनयेदित्यन्वयः असतामर्मंगलानांविषयाणांपथीतिवा ६ मनसःस्ववशानयनमेव नालंकितुयमादिसाधनसामग्र्यासमुत्पन्नेनापरोक्षज्ञानेनानावृत्तिलक्षणश्रीनारायणप्राप्तिःस्यादित्याह यमादिभिरिति अभ्यसन्प्रणवमितिशेषः सत्येनभूतहितवचनेन ७ सर्वभूतसमत्वेनसर्वां तर्यामिगोममपूर्णस्यादिज्ञानेनवचद्वस्तुयोग्यतानुकूलदर्शनेनवा निर्वैरेणवैष्णवद्वेषराहित्येनाप्रसंगतः विषयरागिभिःसहसंलापादिप्रसंगराहित्येनमौनेनउपासनेनस्वधर्मेणस्वविहितवर्णाश्रमधर्मानु ष्ठानेन ८ यदृच्छयोपलब्धेनदैवतःप्राप्तधनेनसंतुष्टोलंबुद्धिमान्शांतःमदेकनिष्ठःसतामापदं मित्वाज्ञात्वात्रापतइतिमित्रंसाबुद्धिर्यस्यास्तिसमैत्रः मित्रादिदेवतानिष्ठइतिवा करुणोमित्रोदा सीनेषुसत्सुकृपावान्वशीकृतमनाः ९

पुत्रमित्रसुसंबंधसहितेस्मिन्देहेऽसदाग्रहंमदीयंतदीयमितिभेदज्ञानमकुर्वन्प्रकृतेःपुरुषस्यदृष्टतत्त्वेनयथावत्ज्ञानस्वरूपेणज्ञानेन १० निवृत्तबुद्ध्यवस्थानः निवृत्तंबुद्धेरवस्थानंनिद्रादि लक्षणंयस्यसतथा दूरीभूतमन्यदर्शनंशब्दादिविषयज्ञानंदुःशास्त्रंवायस्यसतथा चक्षुषार्कमिवात्मनाऽन्तःकरणेनाविमिश्रस्वरूपांतःकरणेनआत्मानंस्वस्वरूपउपलभ्यदृष्ट्वा द्रष्टव्यनामादिप्राणात देवतानांचस्वस्व रूपंदृष्ट्वातत्प्रसादादात्मानंस्वांतर्यामिणंचएकामुख्याद्दृगेवज्ञानमेवयस्यसतथा ११ प्रारब्धक्षयेसतिमुक्तलिंगःसमुत्सृष्टलिंगशरीरःदेवयानेनविरिंचलोकमुपागम्यासतिब्रह्मप्रलयेअनिरुद्धद्वारेणविरिं चंप्रविश्यतेनसहसत्प्राणआभासःप्रतिबिंबोयस्यतद्ब्रह्मप्रतिपद्यतेइत्यन्वयः शेषस्यप्रतिबिंबास्तुदेवाःशेषश्चब्रह्मगः । सपरत्रब्रगश्चैतेस्वबिंबप्रदर्शकाः । ततःस्वबिंबद्वारेणपरमात्मप्रदर्शनामि त्यनेनसर्वोप्युक्तार्थोज्ञायते सदाभासविशिनष्टि सतोबंधुमिति पितृत्वादिनासत.प्राणस्यबंधुभूतं सतोबंधुमसतिनिरविंदन्नित्यादेः सर्वरूपेषुपूर्णगुणत्वादिनासमं चक्षुःसर्वज्ञसर्वेषुमुक्तामुक्तप्रपंचेषु मणिषुसूत्रमिवधारकत्वेनानुस्यूतंप्रोतमद्वयमसमाधिकम् १२ मुख्यप्राणादिप्रतिबिंबस्याबिंबभूतपरमात्मप्रदर्शकत्वमुक्तं तत्रप्रतिबिंबानांबिंबप्रदर्शकत्वप्रकारःकथमितितत्राह यथेति गगनतलवर्तिनः सूर्यस्याभासोजलेभवति जलस्यापिकदाचित्स्थलेभित्त्यादौभवत्येवंस्थितेयथास्थलस्थेनभित्त्यादिगतेनाभासेनजलस्थआभासोदृश्यतेज्ञायतेयथायथाचजलस्थेनस्वाभासेनप्रतिबिंबेनादिविस्थितःसूर्यः बिंबभूतोवगम्यते एवंवायोजनाभेदः जलस्थआभासःस्थलस्थेनजलेप्रतिबिंबितंमुखतीरस्थपुरुषमुखमेवादृशलक्षणमितियथाज्ञापयति यथाजलस्थेनस्वाभासेनप्रतिबिंबेनादिविस्थित.सूर्योदृश्यते ज

**सानुबंधेचदेहेस्मिन्नकुर्वन्नसदाग्रहम् ॥ ज्ञानेनदृष्टतत्त्वेनप्रकृतेःपुरुषस्यच १० निवृत्तबुद्ध्यवस्थानोदूरीभूतान्यदर्शनः ॥ उपलभ्यात्मनात्मानंचक्षुषेवा र्कमात्मदृक् ११ मुक्तलिंगःसदाभासमसतिप्रतिपद्यते ॥ सतोबंधुंसमंचक्षुःसर्वानुस्यूतमद्वयम् १२ यथाजलस्थआभासःस्थलस्थेनावदृश्यते ॥ स्वाभा सेनयथासूर्योजलस्थेनदिविस्थितः १३ एवंत्रिवृदहंकारोभूतेंद्रियमनोगुणैः ॥ स्वाभासैर्लक्षितोनेनसदाभासेनसत्यदृक् १४ भूतसूक्ष्मेंद्रियमनोबुद्ध्या दिष्विहनिद्रया ॥ लीनेषुसत्सुयस्तत्रविनिद्रोनिरहंक्रियः १५ मन्यमानस्तदात्मानमनष्टोनष्टवन्मृषा ॥ नष्टेहंकरणेद्रष्टानष्टवित्तइवातुरः १६ एवंप्रत्य वमृश्यासावात्मानंप्रतिपद्यते ॥ साहंकारस्यद्रव्यस्ययोवस्थानमनुग्रहः १७**

लेस्थितसूर्यमंडलंव्योम्निस्थितंबिंबभूतंसवितृमंडलमवगमयति १३ एवंतथात्रिवृद्वैकारिकतैजसतामसाहंकाराभिमानीशेषः स्वाभासेस्वप्रतिबिंबैःभूतेंद्रियमनोगुणैरभिमानिभिरिन्द्रादिदेवैर्ल क्षितोभवत्यनेनशेषाख्येनप्रतिबिंबेनसत्ब्रह्माळक्षितस्तेनदाभासेनचतुर्मुखाख्यप्रतिबिंबेनसत्यदृग्यथार्थज्ञानीश्रीनारायणोलक्षितोभवति १४ ननुस्वत.सत्यदृक्त्वेप्याभासेनास्यासत्यदृक्त्वमभ्युपेयं अन्यथास्वतोसंगस्यसंबंधाभावेनलक्षणानुपपत्तिस्तदनुपपत्तावुक्तार्थानुपपत्तिरितितत्राह भूतसूक्ष्मेति इहसंसारेभूतसूक्ष्मेंद्रियमनोबुद्ध्यादिषुकर्तेनुनिद्रयानष्टवृत्तिषुसत्सु अतिसुप्तेषु योविनिद्रः अलुप्तलोचनःससत्यदृक् अनेनकदाप्यस्यब्रह्मणोऽज्ञानासंभवोदर्शितोऽतउक्तानुपपत्तिःप्रेक्षावतांहृदिपदंनधत्ते १५ परमात्मस्थितिंनिरूप्यजीवस्थितिमाह मन्यमानइति योऽनष्टोपिमनोधर्मअहं कारेनष्टेस्वात्मानंनष्टवन्मृषामन्यमानःकदातदासुप्तावस्थायांनष्टवित्तइवातुरोद्रष्टाजीवइत्यन्वयःअनेनकदाप्यविनष्टद्रष्टृत्वंपरस्यलक्षणमितरस्यतदन्यथेतिवैलक्षण्यमुभयोरुक्तम् १६ जीवपरयोर्वै लक्षण्यज्ञानस्यफलमाह एवमितिएवमुक्तप्रकारेणब्रह्मादिजीवराशेः परस्यहरेर्जीवाद्वैलक्षण्यंप्रत्यवमृश्ययुक्त्यालोच्यनिश्चित्यासावुपासकोजीवः । साहंकारस्यद्रव्यस्ययोवस्थानंस्थितिहेतुरनुग्रहश्चसत्ताप्र वृत्तिर्वाभेदानुग्रहातीतिब्रह्मतःतमात्मानंविष्णुंप्रतिपद्यतइत्यन्वयः एकस्यैवपरब्रह्मणोवस्थाद्वयमत्रोच्यते नतुवैलक्षण्यंनिश्चायकप्रमाणाभावादितीयमाशंका नित्यदृक्परमात्मासौमृतवद्योनकिंचन । ज्ञानातिजीवसंक्षेपःपरमात्मातदाश्रयइत्यनेननिश्चायकेनपरिहर्तव्या १७

जीवपरयोर्भेदज्ञानमेवप्रकृतिबंधमोक्षकारणंश्रुत्वादेवहूतिस्तदर्थमाक्षिपति पुरुषंप्रकृतिरित्यादिना त्रिगुणात्मिकाप्रकृतिःपुद्धाणिपापपुण्यलक्षणानिकर्माणि सनंतंभजंतं वनपणसंभक्तावितिधातुः कर्हिचित्कदापिनविमुंचाति तत्रहेतुरन्योन्येति अनयोःप्रकृतिपुरुषयोर्नित्यत्वादविनाशित्वादन्योन्यापाश्रयत्वाच्चशरीरंविनापुरुषस्यचेष्टाभावात्पुरुषमंतरेणाचेतनत्वेनप्रकृतेरपीतरेतरोपकारित्वाच्च १८ तत्रदृष्टांतमाह यथेति भूमेस्तद्गुणस्यगंधस्यचव्यतिरेकतोभावः विनाभावोनास्ति अपामित्यनेनैवव्याख्यातं बुद्धेःप्रकृतेःपरस्यजीवस्यतथापृथक्भावोनास्ति १९ इतोपिप्रकृतिबंधमोक्षोनघटतइत्याह अकर्तुरिति अकर्तुःस्वातंत्र्येणकर्तुमशक्तस्यपुरुषस्यायंसंसारबंधोयदाश्रयः यःप्रकृतिगुणसमुदायआश्रयोयस्यबंधस्यसयदाश्रयः तेषुप्रकृतेर्गुणेषुसत्सुपुरुषस्यातःगुणेभ्यः कैवल्यंमोक्षलक्षणंकथं नकथमपीत्यन्वयः प्रकृतिगुणानिवृत्त्यातत्कृतसंसारबंधानिवृत्तिरित्यर्थः २० वैलक्षण्यज्ञानेनबंधोनिवर्ततइतिअनेनमयाऽयंप्रश्नोपिपरिहृतोनन्वितितत्राह सक्रादिति भवतोवचनश्रवणात्तत्त्वावमर्शेनतत्त्वालोचनेनोत्पन्नंप्रकृतिबंधभयंसकृन्निवृत्तं भयनिमित्तस्यबाह्यांतःकरणस्यानिवृत्तत्वात्पुनःसंशयरूपंभयंमत्यवतिष्ठतेप्रत्यवस्थानंकरोतिनापसरतीत्यर्थः २१ प्रकृतावपसृतायांतद्गुणाःस्वतएवापसरंतीतिभावेनतच्चनिवृत्तिरप्यसंक्षयफलस्वधर्मादिनास्यादितिपूर्वोक्तमेवतत्परिहारत्वेनाह अनिमित्तप्रवृत्तेनेति अनिमित्तेनफलाभिसंधिराहित्येनप्रवृत्तेननिरंतरमनुष्ठितेनातएवामलात्मनातिशुद्धस्वरूपेणाचिरंश्रुत्या

देवहूतिरुवाच ॥ पुरुषंप्रकृतिर्ब्रह्मन्नविमुंचतिकर्हिचित् ॥ अन्योन्यापाश्रयत्वाच्चनित्यत्वादनयोःप्रभो १८ यथागंधस्यभूमेश्चनभावोव्यतिरेकतः॥अपांरसस्यचयथातथाबुद्धेःपरस्यच १९ अकर्तुःकर्मबंधोयंपुरुषस्ययदाश्रयः ॥ गुणेषुसत्सुप्रकृतेःकैवल्यंतेष्वतःकथम् २० सक्रतत्त्वावमर्शेननिवृत्तंभयमुल्बणम् ॥ निमित्तस्यानिवृत्तत्वात्पुनःप्रत्यवतिष्ठते २१ श्रीभगवानुवाच ॥ अनिमित्तप्रवृत्तेनस्वधर्मेणामलात्मना ॥ तीव्रयामयिभक्त्याचश्रुतिसंभृतयाचिरम् २२ ज्ञानेनदृष्टतत्त्वेनवैराग्येणबलीयसा ॥ तपोयुक्तेनयोगेनतीव्रेणात्मसमाधिना २३ प्रकृतिःपुरुषस्येहदह्यमानात्वहर्निशम् ॥ तिरोभवित्रीशनकैरग्नेर्योनिरिवारणिः २४ भुक्तभोगापरित्यक्तादृष्टदोषाचनित्यशः ॥ नेश्वरस्याशुभंधत्तेस्वेमहिम्निस्थितस्यच २५ यथाह्यप्रतिबुद्धस्यप्रस्वापोबह्वनर्थकृत् ॥ सएवप्रतिबुद्धस्यनवैमोहायकल्पते २६ एवंविदिततत्त्वस्यप्रकृतिर्मयिमानसम् ॥ युंजतोनापकुरुतेआत्मारामस्यकर्हिचित् २७

वेदांतशास्त्रश्रवणेनसंभृतयासंपादितया २२ दृष्टतत्त्वेनापरोक्षीकृतविष्ण्वादिदेवतास्वरूपेण योगेनाष्टांगयोगेनात्मसमाधिनामनसएकाग्रतालक्षणेनध्यानेनएवमुक्तसाधनसामग्रीसंपन्नज्ञानाग्निनाहर्निशंदह्यमानापुरुषस्यप्रकृतिःशनैःस्तिरोभवित्रीनाशंगंत्रीस्यादित्यन्वयः योनिरुत्पत्तिस्थानमग्नेर्ज्वालयेतिशेषः गंधरसयोःपृथिवीजललमवेतत्वेनयावद्द्रव्यभावित्वसंभवेपिप्रकृतिपुरुषयोर्द्रव्यत्वेनतदभावात्संयोगमात्रसंबंधलक्षणस्यनाशलक्षणविभागोपपत्तेर्विषमस्त्वदुक्तोदृष्टांत,इतिद्योतनायाग्न्यरणिदृष्टांतकथनम् अन्यथातदुपपादनव्यर्थंस्यादिति २३ २४ समूलसमुत्सृष्टायाःप्रकृतेर्भयंपुनरागतचोरादिवन्नास्तीत्याह भुक्तभोगेति भुक्तभोगत्वंनित्यशोदृष्टदोषत्वंपरित्यागहेतुःस्वेमहिम्निज्ञानानंदात्मकेअच्छेद्याभेद्याक्लेद्यादिस्वरूपमाहात्म्येस्थितस्यापरोक्षीकृतस्वबिंबभगवत्प्रसादादीश्वरस्यसमर्थस्याशुभंदुःखरूपंसंसारभयंनधत्तइत्यन्वयः २५ एतदेवसदृष्टांतंविवृणोति यथाहीति अप्रतिबुद्धस्यनिद्रितस्यप्रस्वापोनिद्राबह्वनर्थकृत् व्याघ्रादिनिमित्तभयजनकःस्यात् प्रतिबुद्धस्यनिद्रायाउत्थितस्यजाग्रतः २६ दृष्टांतार्थंदार्ष्टांतिकेयोजयति एवमिति विदितमपरोक्षितंनामादिमदंतदेवतानांतत्त्वंनिजरूपंयेनसतथातस्य २७

इदानीमनुष्ठीयमानश्रेयःसाधनफलंवक्ति यदैवमिति यदैवमुक्तप्रकारेणबहुजन्मनाकालेनाध्यात्मरतःस्वोत्तममारभ्यमदंततत्त्वेषुरतस्तदितरत्रानित्यत्वेनासारत्वेनाब्रह्मभुवनात्सत्यलोकपर्यंतंजातवैराग्योभूत्वामुनिर्निरंतरमदुपासनाशीलोमद्भक्तोभूयसामत्प्रसादेनप्रतिबुद्धार्थोऽपरोक्षीकृतनामादिमदंतविषयोऽतएवस्वदृशास्वरूपज्ञानेनच्छिन्नसंशयोनिश्चिततत्त्वः स्वसंस्थानस्वरूपावस्थानमदाश्रयंकैवल्याख्यंनिःश्रेयसंपुरुषार्थमंजसाप्राप्नोति तंविशिनष्टि यद्गत्वेति योगीलिंगशरीराविनिर्गमेयद्गत्वानविवर्तेततादृशंपुरुषार्थमित्यर्थः २८ २९ ३० प्राप्तस्वांतरायानुपहतश्चेदुक्तपुरुषार्थमाप्नोतीत्याह यदानेति यदैवंसाधनसिद्धस्ययोगोपचितासुअष्टांगयोगप्राप्तासुमायासुअणिमादिविभूतिषुबुद्धिर्नैविषज्जते अनुभवानीतिनविलंबते अथतदापत्रयस्यांगतौमृत्योरंतकस्यहासःपुनरावृत्तिलक्षणोनस्यात् आत्यंतिकीगतिर्मुक्तिलक्षणास्यादित्यन्वयः नान्योहेतुर्यासांतास्तथातासामप्यहमेवाश्रयइत्यर्थः तास्वनेनाणिमाद्यैश्वर्यमनुभूयपश्चान्मुक्तावाप्तेर्नमद्भक्तिर्निष्फलेतिध्वनितम् ३१ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायामष्टाविंशोध्यायः ॥ २८ ॥ कपिलोभगवानेवंतावद्विरक्तस्यभगवद्भक्तिलंपक्ष्रयपरमात्मोपासनयाजनितज्ञानेनस्वरूपाविर्भावलक्षणंकैवल्यंभवतीत्युक्त

यदैवमध्यात्मरतःकालेनबहुजन्मना ॥ सर्वत्रजातवैराग्यआब्रह्मभुवनान्मुनिः २८ मद्भक्तःप्रतिबुद्धार्थोमत्प्रसादेनभूयसा ॥ निःश्रेयसंस्वसंस्थानंकैवल्याख्यंमदाश्रयम् २९ प्राप्नोतीहांजसाधीरःस्वदृशाछिन्नसंशयः ॥ यद्गत्वाननिवर्तेतयोगीलिंगविनिर्गमे ३० यदानयोगोपचितासुचेतोमायासुसिद्धस्यविषज्जतेच ॥ अनन्यहेतुष्वथमेगतिःस्यादात्यंतिकीयत्रनमृत्युहासः ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयेऽष्टाविंशोऽध्यायः ॥ २८ ॥
श्रीभगवानुवाच ॥ योगस्यलक्षणंवक्ष्येसबीजस्यनृपात्मजे ॥ मनोयेनैवविधिनाप्रपन्नंयातिसत्पथम् १ स्वधर्माचरणंशक्त्याविधर्माच्चनिवर्तनम् ॥ दैवलब्धेनसंतोषआत्मविच्चरणार्चनम् २ ग्राम्यधर्मनिवृत्तिश्चमोक्षधर्मरतिस्तथा ॥ मितमेध्याशनंशश्वद्विविक्तक्षेत्रसेवनम् ३ अहिंसासत्यमस्तेयंयावदर्थपरिग्रहः ॥ ब्रह्मचर्यंतपःशौचंस्वाध्यायःपुरुषार्चनम् ४

इदानींतस्यज्ञानस्यसाधनभूताष्टांगयोगप्रकारंवक्ष्यामीतिप्रतिजानीते योगस्येत्यादिना बीजंविष्णुस्तेनसहितस्यवैष्णवस्येत्यर्थः योगस्यलक्षणंवक्ष्येऽस्मिन्नध्यायइत्यन्वयः । सबीजोवैष्णवोयोगोनिर्बीजस्त्वन्यदैवतः । बीजंविष्णुर्हिजगतःशाखाद्याअन्यदेवताइति । सदितिब्रह्मेतिश्रुते । सतोब्रह्मणःपंथानंयातीत्यतश्चयोगस्यविष्णुविषयत्वंज्ञायते १ योगस्तुज्ञानसाधनमेवतस्यकिंसाधनमितितत्राह स्वधर्माचरणमित्यारभ्यसमाधानंतथात्मनइत्यंतेनग्रंथेन विधर्माच्चनिवर्तनंधर्मवदवभासमानानाचशास्त्रानिषिद्धानांपंचविधधर्मादीनांत्यागः संतोषोलंबुद्धिः दैवंस्वादृष्टप्रेरकोभगवान्तदनुग्रहलब्धेनात्मविदांब्रह्मज्ञानिनांश्रीपादार्चनम् २ ग्राम्यधर्मोविषयसेवाततोनिवृत्तिःप्रवृत्तिधर्मत्यागोवामोक्षधर्मरतिर्निवृत्तिधर्मसेवा । शश्वन्मितस्य सव्यंजनस्याशनस्यार्धमुदकस्यतृतीयंवायोःसंचरणार्थंचतुर्थमवशेषयेदित्येवंपरिमितस्यमेध्यस्यशास्त्रविहितस्यान्नस्यादनं विविक्तोहरिस्तत्स्थक्षेत्रसेवनम् ३ अहिंसाशास्त्रनिषिद्धहिंसावर्जनंसत्यंमिथ्यावावर्जनंभूतहितकथनंवा अस्तेयंस्वाम्यननुज्ञातस्यतृणाग्रस्याप्यग्रहणंयावताशरीरावस्थितिर्भवतितावत्परिमाणोर्थोयावदर्थस्तस्यपरिग्रहःस्वीकारोयावदर्थपरिग्रहः अष्टांगंब्रह्मचर्यं स्मरणंकीर्तनंकेलिः प्रेक्षणंगुह्यभाषणम् । संकल्पोऽध्यवसायश्चक्रियानिर्वृत्तिरेवच । एतन्मैथुनमष्टांगंप्रवदंतिमनीषिणः । विपरीतंब्रह्मचर्यमेतदेवाष्टलक्षणम् । तपउपवासादितत्त्वपर्यालोचनंवा शौचंबाह्याभ्यंतरशुद्धिःस्वाध्यायोब्रह्मयज्ञः पुरुषस्यश्रीनारायणस्यवैदिकतांत्रिकार्चनम् ४

सदापद्माद्यासनजयः वैष्णवसिद्धांतादचलनंस्थैर्यविपद्यप्यात्मावष्टंभनंधैर्यंवा प्राणायामैःप्राणानांजयःश्रोत्रादींद्रियाणांशब्दादिविषयेभ्योमनसाहृदिस्थितंहरिंप्रत्याहरणंनामेंद्रियस्थापनंप्रत्याहारः ५ स्वस्यविष्णोर्धिष्ण्यानांपदादिस्थानानामेकदेशेएकैकावयवेमनसाप्राणस्यवृत्तेर्धारणं वैकुंठस्यहरेर्लीलायाःसृष्ट्यादिरूपायाः अभिध्यानंनिरंतरस्मरणं तथात्मनोमनसःसमाधानमप्रयत्नेनहरौस्थितिः तदुक्तं समाधिरप्रयत्नेनमनसःसंस्थितिर्भवेदिति ६ स्वधर्माचरणाद्युक्तस्यप्रयोगप्रकारमाह एतैरिति असद्विषयसंगेनदुष्टमतएवासत्पथंदुर्मार्गवर्तिमन ७ योगेइतिकर्तव्यतामाह शुचावित्यादिना योग मभ्यसेदित्यन्वयः ८ प्रतिकूलेनरेचकादिक्रमेण ९ प्राणायामादिफलमाह मनइति विरजंरजोगुणरहितं एतदेवसोदाहरणमाह वाय्वग्निभ्यामिति १० प्राणायामैरिति रागादिदोषान् किल्बिषान्जन्मांतरसंचितपापानिदुर्जनसंसर्गाद्यासदुरितानि अनीश्वरानैश्वर्यविरोधिनः सक्तेःसत्वादिगुणान् ११ मनसिविरजासिसतिकर्तव्यमाह यदामनइति यदामनोविरजस्यात्तदाभगवतोहरेःकाष्ठांपू

मौनंसदासनस्थैर्यंप्राणानांचजयःशनैः ॥ प्रत्याहारश्चेंद्रियाणांविषयान्मनसाहृदि ५ स्वधिष्ण्यानामेकदेशेमनसाप्राणधारणम् ॥ वैकुंठलीलाभिध्यानं समाधानंतथात्मनः ६ एतैरन्यैश्चपथिभिर्मनोदुष्टमसत्पथम् ॥ बुद्ध्यायुंजीतशनकैर्जितप्राणोह्यतंद्रितः ७ शुचौदेशेप्रतिष्ठाप्यविजितासनआसनम् ॥ तस्मिन्स्वस्तिकमासीनऋजुकायःसमभ्यसेत् ८ प्राणस्यशोधयेन्मार्गंपूरकुंभकरेचकैः ॥ प्रतिकूलेनवाचित्तंयथास्थिरमचंचलम् ९ मनोचिरात्स्याद्विरजंजितश्वासस्ययोगिनः ॥ वाय्वग्निभ्यांयथालोहंध्मातंत्यजतिवैमलम् १० प्राणायामैर्दहेद्दोषान्धारणाभिश्चकिल्बिषान् ॥ प्रत्याहारेणसंसर्गान् ध्यानेनानीश्वरान्गुणान् ११ यदामनःस्वंविरजंयोगेनसुसमाहितम् ॥ काष्ठांभगवतोध्यायेत्स्वनासाग्रावलोकनः १२ प्रसन्नवदनांभोजंपद्मगर्भारुणेक्षणम् ॥ नीलोत्पलदलश्यामंशंखचक्रगदाधरम् १३ लसत्पंकजकिंजल्कपीतकौशेयवाससम् ॥ श्रीवत्सवक्षसंभ्राजत्कौस्तुभामुक्तकंधरम् १४ मत्तद्विरेफाकुलयापरीतंवनमालया ॥ परार्ध्यहारवलयकिरीटांगदनूपुरम् १५ कांचीगुणोल्लसच्छ्रोणिंहृदयांभोजविष्टरम् ॥ दर्शनीयतमंशांतंमनोनयननंदनम् १६ अपीच्यदर्शनंशश्वत्सर्वलोकनमस्कृतम् ॥ संतंवयसिकैशोरेभक्तानुग्रहकातरम् १७ कीर्तन्यतीर्थयशसंपुण्यश्लोकयशस्करम् ॥ ध्यायेद्देवंसमग्रांगंयावन्नच्यवतेमनः १८ स्थितंव्रजंतमासीनंशयानंवागुहाशयम् ॥ प्रेक्षणीयेहितंध्यायेच्छुद्धभावेनचेतसा १९

र्णांमूर्तिंध्यायेत् नासाग्रेणावलोकनंनिरीक्षणंयस्यसतथा १२ काष्ठोत्कर्षेस्थितौदिशीतिअभिधानात्काष्ठाशब्दस्यअनेकार्थत्वादत्रविवक्षितःकइत्याशंक्यसर्वगुणोत्कृष्टंभगवद्रूपंविवक्षितमितितत्स्वरूपं वाकि प्रसन्नवदनेति १३ लसतःपंकजस्यकिंजल्कंकेसरस्तद्वत्पीतंकौशेयंवासोयस्यसतथातं श्रीवत्सोवक्षसियस्यसतथातं भ्राजताकौस्तुभेनामुक्ताबद्धाकंधरायस्यसतथातम् मत्तैर्द्विरेफैर्भृंगैराकुलयाव्याप्तया परार्ध्यान्यनर्घत्वेनश्रेष्ठानिहारश्चवलयश्चकिरीटंचांगदंचनूपुरंचपरार्ध्यहारवलयकिरीटांगदनूपुराणियस्यसतथातम् १५ कांचीगुणेनोल्लसंतीश्रोणीयस्यसतथातं भक्तानांहृदयांभोजमेवविष्टरंयस्यसतथातम् १६ अपीच्यदर्शनंप्राप्तषोडशवर्षवद्दृश्यमानं स्वतःकैशोरेवयसिद्वादशवर्षलक्षणेसंतंवर्तमानम् १७ कीर्तन्यंकीर्तनीयंतीर्थंशुद्धंयशोयस्यसतथातं पुण्यश्लोकाःब्रह्मादयस्तेषांतुष्ट्यादिनायशस्करोतीतिपुण्यश्लोकयशस्करस्तं मनोयावन्नच्यवतेनचलतिसर्वांगध्यानसक्तंयथास्यात्तथाध्यायेदित्यर्थः १८ हृदयगुहायांशेतइतिगुहाशयं प्रेक्षणीयानीहितंचेष्टितंयस्यसतथातम् १९

एवं समग्रांगध्यानमुक्त्वा तदशक्तौ एकैकांगध्यानप्रकारमाह तस्मिन्निति तस्मिन् हरौ समग्रांगे लब्धपदं प्राप्तास्पदं सर्वावयवसंस्थितं सर्वावयवं व्याप्यास्थितं चित्तं विलोक्य भगवतः सर्वावयवसंस्मरणाशक्तावेकत्रांगे एकस्मिन्नवयवे पादमारभ्योत्तमांगपर्यंते चित्तं संयुज्यादित्यन्वयः । तदुक्तं स्मर्तुमशक्तः सन्नेकांगं चिंतयेद्बुध इति वचनात् २० नन्वत्र पृथक्पृथगवयवस्थितं चित्तमेकस्मिन्नवयवे न भावनायां संयुज्यात् नन्वैकैकावयवस्य ध्यानं विधीयते ऽशक्तस्येत्याशंक्यैकैकांगध्यानविधानादुक्तं युक्तमिति भावेन तद्विशिनष्टि संचिंतयेदित्यादिना उत्तुंगान्युन्नतानि रक्तानि विलसंति नखान्युत्तुंगरक्तविलसन्नखानि तान्येव चक्रवालं चंद्रमंडलं तस्य ज्योत्स्नाभिराहतो निर्दलितो महतां योगिनां हृदयांधकारो ऽज्ञानाख्यो येन तत्तथोक्तं नखानां चक्रवालमावलिस्तस्य ज्योत्स्नाभिरिव निर्मलाभिर्दीप्तिभिर्वा २१ यस्य चरणारविंदस्य शौचात्प्रक्षालनलक्षणान्निःसृता सरित्प्रवरा गंगा तस्या उदकेन तीर्थेन पावनेन मूर्ध्न्यधिधृतेनाधिगतजटाबंधधृतेन शिवो महादेवः शिवो ऽतिशयितपुण्यभाजनीभूतोऽभूत् ध्यातुः पुरुषस्य मनसि वर्तमानं यच्छमलं पापं तदेव शैलः पर्वतस्तस्य विदारणाय नितरां सृष्टं वज्रमिव वज्रं लुप्तोपमा तच्चरणारविंदं ध्यायेदित्यन्वयः २२ जंघांतं तु चरणारविंदांतर्भूतं जानुनी ऊर्वोरंतर्भूते इति भावेनोरूपास्तिमाह ऊरू इति हरेरूरू ध्यायेदित्यन्वयः सुपर्णो गरुडस्तस्य भुजयोरध्युपरि स्कंधे ओजसां बलानां निधी ओजो ऽवष्टंभबलयोरित्यभिधानं स्वतसिकाकुसुमं प्रोत्फुल्लकल्पकुसुमं तद्वदवभासो ययोस्तौ तथोक्तौ हेअंबहरेर्नितंबं ध्यायेदित्यन्वयः व्यालंबि वा प्रपदा

तस्मिँल्लब्धपदं चित्तं सर्वावयवसंस्थितम् ॥ विलक्ष्यैकत्र संयुज्यादंगे भगवतो मुनिः २० संचिंतयेद्भगवतश्चरणारविंदं वज्रांकुशध्वजसरोरुहलांछनाढ्यम् ॥ उत्तुंगरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयांधकारम् २१ यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोऽभूत् ॥ ध्यातुर्मनःशमलशैलनिसृष्टवज्रं ध्यायेच्चिरं भगवतश्चरणारविंदम् २२ ऊरू सुपर्णभुजयोरधिशोभमानावोजोनिधी स्वतसिकाकुसुमावभासौ ॥ व्यालंबिपीतवरवाससि वर्तमानकांचीकलापपरिरंभि नितंबबिंबम् २३ नाभिह्रदं भुवनकोशगुहोदरस्थं यत्रात्मयोनिधिषणाखिललोकपद्मम् ॥ व्यूढं हरिन्मणिवृषस्तनयोरमुष्य ध्यायेद्द्वयं विततहारमयूखगौरम् २४ वक्षोऽधिवासमृषभस्य महाविभूतेः पुंसां मनोनयननिर्वृतिमादधानम् ॥ कंठं च कौस्तुभमणेरधिभूषणार्थं कुर्यान्मनस्यखिललोकनमस्कृतस्य २५ बाहूंश्च मंदरगिरेः परिवर्तनेन निर्णिक्तबाहुवलयानधिलोकपालान् ॥ संचिंतयेद्दशशतारमसह्यतेजः शंखं च तत्करसरोरुहराजहंसम् २६

तं च वर्णेन पीतं च वरं च यद्वासस्तद्व्यालंबि पीतवरवासस्तत्र वर्तमानो यः कांचीकलापः सप्तगुणितरसनाभूषणं तस्य परिरंभोऽस्यास्तीति तदंतर्वर्तमान इत्यर्थः २३ हरेर्नाभिह्रदं ध्यायेदित्यन्वयः निम्नत्वधोतनाय ह्रदरूपकं जन्महेतुत्वाच्च ह्रदमिति चतुर्दशभुवनानां कोशो गृहं भुवनकोशो ब्रह्मांडं तत्गुहं यो विश्वसतीति भुवनकोशगुहं तदुदरं जठरं तत्रास्थितं यद्वा भुवनकोशनिगरणगुहास्थानीयोदरे तिष्ठतीति यद्वा भुवनकोशगुहो देवब्रह्मांडगर्भोदकेरत्वास्थितं यत्र यस्मिन्नाभिह्रदे आत्मयोनेश्चतुर्मुखस्य धिषणं धिष्ण्यं चाखिललोकात्मकं च पद्ममात्मयोनिधिषणाखिललोकपद्मं व्यूढमुत्पन्नमित्यर्थः हरिन्मणिवृषः हरिन्मणीन्द्रनीलरत्नं तस्य प्रभां मुष्णतोऽमुष्य हरेः स्तनयोर्द्वयं ध्यायेत् विततस्य विस्तृतस्य हारस्य मयूखेन गौरमतिधवलम् २४ स्मर्तॄणां पुंसां मनोनयनानां निर्वृतिमानंदमादधानमुत्पादयंतं महाविभूतेर्लक्ष्म्या आश्रितस्यात्मऋषभस्य हरेर्वक्षो मनसि कुर्यादित्यन्वयः । कौस्तुभमणेरधिकं भूषणमेवार्थः प्रयोजनं यस्य तथा तं कंठं च मनसि कुर्यात् अखिललोकनमस्कृतत्वात् हयमत्वं युक्तम् २५ हरेर्बाहूंश्च दशशतारं च शस्त्रं च संचिंतयेदित्यन्वयः मंदरगिरेः परिवर्तनेन परिभ्रमणेन निर्णिक्ताः शोभिताः बाहुवलया अंगदादयो येषां ते तथा तान् अधिश्रिता लोकपाला इंद्रादयो येषु ते तथा तान् दशशतं सहस्रमराणि दलानि यस्य तत् तथोक्तं शत्रूणामसह्यमशक्यं तेजो वीर्यं यस्य तत् तथोक्तं तस्य हरेः करा एव सरोरुहाणि पद्मानि तेषु राजहंसमिव वर्तमानम् २६

देहएवसर्वैषामहंगन्छामीतितिष्ठामीत्यात्मत्वेनाभिमतोयतस्तस्मात्तदभजनंमरणएवभवतीतिदेहात्मत्वमतनिरासायाह यथेति यथापुत्रादेरात्मत्वेनाभिमतान्मर्त्योमरणशीलोदेहःपृथक्प्रतीयते तथापुरु षोजीवथात्मत्वेनाभिमताद्देहाद्भिन्नइत्यन्वयः अपिपदेनदेहात्मवादस्यनिंदितत्वंसूचयति रेतोधातुवटकणिकेत्यादिवाक्यात् ३८ इदानींजीवपरमात्मनोरपिभेदएवेत्याह यथोल्मुकादिति यथा त्मत्वेनाभिमतादुल्मुकादेस्तद्दाहकोग्निः पृथङ्मतः ३९ तथाभूतेंद्रियांतःकरणात्पंचभूतदशेंद्रियमनोभ्यःप्रधानात्प्रकृतेःजीवसंज्ञितात्संसारिणश्चद्रष्टासर्वज्ञोब्रह्मसंज्ञितआत्मापरआत्माभगवान्पृथ गेवेत्यन्वयः ४० भिन्नेषुजीवेषुस्थितस्यपरमात्मनउपास्तिप्रकारंकथयति सर्वभूतेष्विति सर्वभूतेष्वंतर्यामित्वेनात्मानंहरिमीक्षेतसर्वभूतान्यात्मनिहराबाधारत्वेनेक्षेतकिंचानन्यभावेनसदौतयोथि रूपाण्यभेदेनेक्षेत अभेदेनेत्युक्तिंविहायानन्यभावेनेतिवचनमनर्थहेतुत्वात्तद्रूपाणामन्यत्वभावनासर्वथानकार्येतिद्योतनाय किंच भूतेष्वपिजीवेष्वपितदात्मतांतस्यहरेरादानादिकर्तृताचेक्षेत अनेना नुग्राह्यानुग्राहकत्वंद्योततेनेनजीवपरमात्मनोर्भेदःपारमार्थिकइत्युक्तंभवतिआदानकर्तृत्वंभूतविषयेनस्वविषयेनित्यतृप्तत्वात् ४१ अधिष्ठानवैलक्षण्यादधिष्ठातृरूपाणांवैलक्षण्यंनशंकनीयमितिइममर्थंसदृष्टां तंसमर्थयते स्वयोनिष्विति यथैकंज्योतिरग्न्याख्यंस्वयोनिषुकारणेषुकाष्ठेषुयोनीनांदारूणांगुणवैषम्याद्दार्द्रशुष्कत्वादिवैलक्षण्यात् नानाविधलक्षणमिवप्रतीयतेतथाप्रकृतौप्रकृतिकार्येजगतिस्थितआ त्माहरिःविलक्षणइवप्रतीयते क्वचिद्बहुसामर्थ्याभिव्यक्तिमान्क्वापिअल्पसामर्थ्याभिव्यक्तिमानित्यादिरूपेण ४२ मथितार्थमाह तस्मादिति यस्मात्सर्वस्मादन्यःश्रीनारायणःतस्मात्स्वांस्वा

यथापुत्राच्चवित्ताच्चपृथङ्मर्त्यःप्रतीयते ॥ अप्यात्मत्वेनाभिमताद्देहादेःपुरुषस्तथा ३८ यथोल्मुकाद्विस्फुलिंगाद्धूमाद्वापिस्वसंभवात् ॥ अप्यात्मत्वेना भिमताद्दाहकोग्निःपृथङ्मतः ३९ भूतेंद्रियांतःकरणात्प्रधानाज्जीवसंज्ञितात् ॥ आत्मातथापृथग्द्रष्टाभगवान्ब्रह्मसंज्ञितः ४० सर्वभूतेषुचात्मानंसर्वभू तानिचात्मनि ॥ ईक्षेतानन्यभावेनभूतेषुचतदात्मताम् ४१ स्वयोनिषुयथाज्योतिरेकंनानाप्रतीयते ॥ योनीनांगुणवैषम्यात्तथात्माप्रकृतौस्थितः ४२ तस्मादिमांस्वांप्रकृतिंदैवींसदसदात्मिकाम् ॥ दुर्विभाव्यांपराभाव्यस्वरूपेणावतिष्ठते ४३ अन्वयव्यतिरेकाच्चसाक्ष्यात्माव्यभिचारिणः ॥ वैतथ्यंव्य भिचारंचनिद्रांतेस्यानुचिंतयेत् ४४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेएकोनत्रिंशोध्यायः ॥ २९ ॥ देवहूतिरुवाच ॥ लक्षणंमहदादीनांप्रकृतेः पुरुषस्यच ॥ स्वरूपंलक्ष्यतेऽमीषांयेनतत्पारमार्थिकम् १

भीनांजडप्रकृतिंदैवींकार्यरूपेणद्योतमानांतदभिमानिनींदैवींचित्प्रकृतिंचसदसदात्मिकांकार्यकारणव्यापिनींदुर्विभाव्यांब्रह्मादिभिरपिनिरूपयितुमशक्यांपराभाव्यातिक्रम्यतद्गुणसंस्पर्शेनैवस्थित्वाविरस्त साम्यातिशयेनसर्वदोषविवर्जितेनसर्वगुणपूर्णेनत्रिकालेष्वेकप्रकारेणस्वरूपेणावतिष्ठतइत्यन्वयः तदुक्तं सर्वभूतस्थमीशेशंजेतारंप्रकृतेरपि । अविशेषंसदैवैकंचितयन्प्रविमुच्यतइति ४३ सिद्धाव लोकन्यायेनोपासकस्येत्थंभावांतरंवक्ति अन्वयेति अन्यदेशेन्यरहितदेशेन्यकालेन्यरहितेकालेचसत्त्वलक्षणादन्वयव्यतिरेकात्सिद्धोयश्चसाक्षादीक्षतइतिसाक्षी नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतइ तिश्रुतेःआत्मायश्चाप्नोतियदादत्तइत्यादेःसर्वव्यापीपरमात्मातेयच्छक्षणंतल्लक्षणंव्यभिचारिणः अनित्यस्यास्यप्रपंचस्यवैतथ्यंनिष्प्रयोजनत्वंव्यभिचारमनित्यत्वंचनिद्रांतेब्राह्ममुहूर्तइत्यावचिंतयेदेवंहरि प्रसादजनकमितिशेषइत्यर्थः ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायामेकोनत्रिंशोध्यायः ॥ २९ ॥ एवंतत्त्वज्ञानान्योन्याज्ञानंचाष्टांगयोगेनप्रतिहतयाभगवदुपा सनयाजायतइत्याभिहितं अधुनाभक्तियोगस्यतारतम्यमभिधीयतेस्मिन्नध्यायेतत्प्रसंजयितुंसामान्यतोज्ञातमपिविविच्यज्ञातुंमहदादिलक्षणंपृच्छतिदेवहूतिर्लक्षणमित्यादिना येनलक्षणेनामीषांमहदादी नांपारमार्थिकंस्वरूपंलक्ष्यतेज्ञायते १

वक्तव्यार्थंनियममाह यथेति यथासांख्येषूक्तंतथाकथितंमहदादिलक्षणज्ञानंपुरुषार्थोपयोगिस्यादितिशेषः अन्यथाश्रोतॄकांकनस्यादितितत्राह यन्मूलमिति यत्सांख्यमूलंतल्लक्षणंप्रचक्षतेभाक्षाइदित्ति
षेः तल्लक्षणंममब्रूहीत्यन्वयः यद्वायथायथावत्सांख्येषूक्तंतथाकथितंमेब्रूहीत्यन्वयः सांख्यमूलत्वाल्लक्षणस्येत्यर्थमितिउक्तमपीममर्थंविस्तरेणब्रूहीत्याह भक्तियोगस्येति मार्गप्रकारं २ तदेकैकंभक्ति
योगमार्गेणात्वैराग्याभावेतस्यचंचलत्वसंभवादसौविरक्तिमताभाव्यमतस्तत्प्रकारोपिवक्तव्यइत्याह विरागइति पुरुषःसर्वतोविरागोविगतरागोभवेदितियेनात्सोजीवलोकस्यगर्भवासादिलक्षणाःविविधाः
कर्मसंसृतीर्ममाचक्ष्वेत्यन्वयः यद्वायेनसंसृतीनांज्ञानेनविरागोभवेत्तादृग्ज्ञानोत्पत्तिमाचक्ष्वेति ३ कालस्वरूपज्ञानमपिपुरुषार्थोपयोगीतितद्विषयप्रश्नंकरोतिकालस्येति जनाःयद्धेतोर्यस्यकालना
म्नस्तवभयनिमित्तात्कुशलंकुर्वंतिपरेषामुत्तमानांसकाशादपिपरस्योत्तमस्यचतेतवईश्वररूपस्यैश्वर्यमूर्तेःकालस्यस्वरूपमाचक्ष्वेत्यन्वयः बलाद्भुतं श्रीत्वादिदंबोद्धुमशक्यंतथापित्वत्प्रसादाच्छक्ष्यामी
त्यामंत्रयामि वतत्वामंत्रणेद्भुतइतियादवः ४ ऋषिदेवादिष्वेकंप्रत्ययंप्रश्नःकिंनस्यात्किमितिमांमतीत्याशंक्यतस्यताहशप्रश्नवचनप्रभुत्वाभावादिहलोकेतवज्ञानप्रवर्तनायावतीर्णत्वात्त्वमेवसमर्थ
इतिभावेनाह लोकस्येतिलुक्प्रकाशइतिधातोःप्रकाशोज्ञानंलोकस्यपरमात्मज्ञानप्राप्तियोग्यस्यजनस्यसंसारान्मुमुक्षोरित्यर्थः हिताययोगभास्करःज्ञानयोगादित्यस्त्वमाविरासीः किलशेकेशादिवार्ता

यथासांख्येषुकथितंयन्मूलंतत्प्रचक्षते ॥ भक्तियोगस्यमेमार्गंब्रूहिविस्तरशःप्रभो २ विरागोयेनपुरुषोभगवन्सर्वतोभवेत् ॥ आचक्ष्वजीवलोकस्य विविधाःकर्मसंसृतीः ३ कालस्येश्वररूपस्यपरेषांचपरस्यते ॥ स्वरूपंबतकुर्वंतियद्धेतोःकुशलंजनाः ४ लोकस्यमिथ्याभिमतेरचक्षुषश्चिरंप्रसुप्तस्यतम स्यनाश्रये ॥ श्रांतस्यकर्मस्वनुविद्धयाधियात्वमाविरासीःकिलयोगभास्करः ५ मैत्रेयउवाच ॥ इतिमातुर्वचःश्लक्ष्णंप्रतिनंद्यमहामुनिः ॥ आबभाषेकुरु श्रेष्ठप्रीतस्तांकरुणार्दितः ६ श्रीभगवानुवाच ॥ भक्तियोगोबहुविधोमार्गैर्भामिनिभाव्यते ॥ स्वभावगुणमार्गेणपुंसांभावोविभिद्यते ७ अभिसंधाय योहिंसांदंभंमात्सर्यमेवच ॥ संरंभीभिन्नदृग्भावंमयिकुर्यात्सतामसः ८ विषयानभिसंधाययशऐश्वर्यमेवच ॥ अर्चादावर्चयेद्योमांपृथग्भावःसराजसः ९

अन्यस्येदृक्सामर्थ्याभावादिदंसंभावितंच वार्तासंभाव्ययोःकिलेतिच अवतारसाफल्यमेवोपपादयति अचक्षुषइत्यादिना प्रत्यक्षतोदृश्यमानत्वाच्चक्षुर्हीनत्ववचनंव्याहतमितिस्यत्तउक्तंचिरंप्रसुप्तस्येति
तमाश्रयेऽपारेतमस्यविद्यालक्षणेऽनादितएवप्रसुप्तस्यशयानस्य तत्फलमाह मिथ्याभिमतेरिति बोधकाभावादन्यथाज्ञानिनोदेहाद्यभिमानित्वादेतत्फलमाह श्रांतस्येति कर्मसुपुण्यपापलक्षणेष्वनु
विद्धयानुरक्तयाधियाश्रांतस्यानवस्थितेरिति ५ मातुर्वचःश्रुत्वाकपिलेनभगवताकिमुत्तरंप्रत्युक्तमितीतरच्चोद्यंपरिहरति मैत्रेयइति अर्दितार्दितिधातोःकरुणामर्दितोगतःअनेनकरुणैववक्तव्यत्वेकार
णमित्यसूचि ६ पुरुषार्थसाधनेषुभक्तियोगस्यप्राधान्यादत्रप्रथमतस्तत्प्रकारंनिरूपयति भक्तियोगइति भामिनिसौंदर्यादिगुणपूर्णेमन्मातःशास्त्रमार्गैर्भाव्यतेनिरूप्यते बाहुविध्येनिमित्तमाह स्वभा
वेति तामसादिस्वभावोद्बोधकसत्त्वादिगुणभेदेनभावोभक्तिर्विभिद्यते तामसादिभेदेननानाभवतीत्यर्थः ७ बाहुविध्यंदर्शयति अभिसंधायेति । योहिंसांपरोपद्रवंदंभंधर्मध्वजवृत्तिमात्सर्यंचाभिसं
धायमनसिकृत्वाहरिभक्तेषुसंरंभीगूढद्वेषोभिन्नदृक्पृथग्दर्शीमयिभावंकुर्यात्सतामसभक्तइत्युच्यतइत्यन्वयः ८ शब्दादिविषयानभिसंधायसहस्रच्चापशाहोऽपवैश्वदसाभिप्रायकंकुर्वन् यो
चौतोयतिमादौमामर्चयेत् सपृथक्भावस्तद्रूपाणांभेददर्शीअर्चादिरथिवानांतेषांरूपाणांभेदंपश्यन्राजसोभक्तः ९

यः कर्मनिर्हारं पापक्षयमुद्दिश्य मायि यजेत् परस्मिन्सर्वकर्मार्पितदर्पणं कर्मार्पणं वोद्दिश्य यजेत् यष्टव्यमिति हिंसत्वान्समभेदं कर्तव्यमिति वा मयि यजेदपृथग्भावः मद्रूपाणामभेददर्शी सात्त्विको भक्तः राजसतामसादिषु कर्मभेदे पृथगपृथग्भावावेव निमित्तं नत्वर्चादावर्चनमज्ञस्याविहितत्वात्तज्ज्ञस्य गुणहेतुत्वान् तदुक्तं अज्ञो वै ये देवार्चायामन्यथा दोषवान्भवेत् । ज्ञस्त्वर्चयन्नगुणवानन्यथा दोषवानिति १० निर्गुणभक्तिलक्षणं वक्ति मद्गुणेति यथा गंगाम्भसो गतिरविच्छिन्ना तथा मद्गुणश्रवणमात्रेण यस्य सर्वगुणाश्रये सर्वगुणानामाश्रये निधौ एवं यस्मिन्सतथा सर्वगुणमूर्तिरित्यर्थः तस्मिन्मयि मनोगतिरविच्छिन्ना निरंतरा ११ तेन क्रियमाणस्य निर्गुणस्य भक्तियोगस्य लक्षणमुदाहृतं हीत्यन्वयः आत्यंतिकभक्तिलक्षणं ब्रूते अहैतुकीति १२ सार्ष्टिसमानैश्वर्यं १३ तद्भक्तिफलमाह येनेति येनात्यंतिकभक्तियोगेन त्रिगुणान्त्रिलिंगशरीरेंद्रियाणि अतिव्रज्यातिक्रम्य संत्यज्येत्यर्थः मद्भावाय चिदानंददेहेन मयि सत्तायै भक्तस्य स्थित्यै उपपद्यते योग्यो भवतीत्यर्थः १४ एतादृगभक्त्युत्पत्तौ कं साधनमत आह निषेवितेनेति निषेवितेनानिमित्तेन निष्कामेन नितरां सेवितेन अनिमित्त इति पाठे यः फलाभिसंधिरहितो यस्तेन तथा निषेवितेनेत्यर्थः अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिविहितेन स्वधर्मेणाक्रियायोगेन भगवत्पूजालक्षणयोगेन कर्मयोगेन वा नातिहिंस्रेण प्राण्युपद्रवरहितेन १५ मद्धिष्ण्यानां क्षेत्रादिप्रतिमानां दर्शनादिभिर्भूतेषु जीवेषु अंतर्यामित्वेन मद्भावनया ...

कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ॥ यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः १० मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ॥ मनोगतिरविच्छिन्ना यथा गंगांभसोऽम्बुधौ ११ लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ॥ अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे १२ सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥ दीयमानं न गृह्णंति विना मत्सेवनं जनाः १३ स एव भक्तियोगाख्य आत्यंतिक उदाहृतः ॥ येनातिव्रज्य त्रिगुणान्मद्भावायोपपद्यते १४ निषेवितेनानिमित्तेन स्वधर्मेण महीयसा ॥ क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः १५ मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवंदनैः ॥ भूतेषु मद्भावनया सत्त्वेनासंगमेन च १६ महतां बहुमानेन दीनानामनुकंपया ॥ मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च १७ आध्यात्मिकानुश्रवणान्नामसंकीर्तनाच्च मे ॥ आर्जवेनार्यसंगेन निरहंक्रियया तथा १८ मद्धर्मणो गुणैरेतैः परिसंशुद्ध आशयः ॥ पुरुषस्यांजसाभ्येति श्रुतमात्रगुणं हि माम् १९ यथा वातरथो घ्राणमावृंक्ते गंध आशयात् ॥ एवं योगरतं चेत आत्मानमविकारि यत् २०

हितेन वचसाऽसंगमेन दुर्जनसंगराहित्येन १६ महतां स्वोत्तमानां बहुमानेनार्चनेन हीनानां स्वाधमानामनुकंपया तुल्येषु स्वसमेषु मैत्र्या मित्रभावेन ज्ञान्त्वा तद्रक्षणभावेनेत्यर्थः १७ आध्यात्मिकानुश्रवणाद्वेदांतशास्त्रश्रवणात् आर्जवेनाऽवक्रबुद्धित्वेनार्याणां पंडितानां संगमेन निरहंक्रियया देहादावहंममत्ववर्जनेन १८ मद्धर्मणोर्ध्वपुंड्रादिधारणादिना स्वधर्माद्यनुष्ठानफलमाह यद्धीति पुरुषस्योपासकस्य यर्हि यदा कथितैरेतैः धर्मादिभिरनुष्ठितैः अंतःकरणमाशयः परितः शुद्धः स्यात्तदांजसा कालक्षेपमंतरेण श्रुतमात्रगुणं केवलं गुणा एव श्रुता न दोषा यस्येति स श्रुतमात्रगुणस्तमंजसा तत्क्षणमभ्येतीत्यन्वयः गुणाः श्रुताः सविरुद्धाश्च देवे इत्यादिवाक्यं हि शब्दग्रहीतं १९ परिशुद्धाशयस्य हरौ मनःप्रसादप्रकारं वक्ति यथेति यथाऽऽशयात्पुष्पादागत्य वातरथो वात एव रथो यस्य स तद्गंधो घ्राणमावृंक्ते स्वाधीनं करोति एवमुक्तसाधनाख्ययोगेन हरौ रतं यच्चाविकारि विषयविकाररहितं तच्चेत आत्मानं हरिं प्रसाद्याभिमुखं करोतीत्यन्वयः अनेन निर्गुणभक्तियोगवानात्यंतिकभक्तियोगवान्भूत्वा तस्यापरोक्षवान्भवतीत्युक्तम् २०

एवंविधैर्योगिभिःकुत्रध्येयइतितत्राह अहंसर्वेष्विति भूतानांजीवानामादानादिकर्तृत्वाद्भूतात्मांतर्यामित्वेनध्येयइतिभावः नाम्नस्तराजसभक्तयोरधमत्वेकारणमेकोक्तयाह तमिति सर्वेष्वेवमदिन्द्वगुणरी
योहंसर्वभूतेष्ववस्थितस्तंमामवज्ञायमर्त्यस्तामसोराजसश्चार्चायामर्चाविडंबनंकुरुतइति यस्मादतस्तामसोराजसश्चापामित्यर्थः २१ एतदेवविवृणोति योमामिति भगवनीत्युक्त्वातारतम्यं...
त्वमवबोद्धव्यं मंत्रावृत्त्याफलसंभवात् २२ तामसस्यनकिंचित्फलमित्याह द्विषतइति परकायेमांद्विषतइत्यस्यविवरणंभिन्नदर्शिनइति शांतिर्नाममाप्नोति भूतेषुबद्धवैरस्य २३ ...
र्चाविडंबनत्वंस्पष्टयाह अहमिति भूतग्रामेभूतसमूहेस्थितंमामवमत्यतुशीघ्रमस्याप्नोतिभूतग्रामावमानिनस्य २४ नह्यर्चादिपूजाविधायकशास्त्रंव्यर्थमितितत्राह अर्चादाविति ...
स्वकर्मकृद्विहितंकुर्वन्निषिद्धंपरित्यजन्स्वहृदिस्थितंदेवदत्तादिसर्वभूतेष्ववस्थितंमामभेदतोनवेद सर्वभूतांतर्यामिरूपेषुभेददर्शनस्यानर्थफलत्वमितिच २५ अंतर्यामिरूपाणिभिन्नानिपश्यतीतिभि
न्नदृक्त्वमित्याह आत्मनश्चेति यआत्मनःस्वस्यहृदिस्थितंपरस्यदेवदत्तादेर्हृदिगतंअंतरेणभेदेनयुक्तमुदरंब्रह्मकरोति स्वतस्त्वाभिन्नंब्रह्माभिन्नंपश्यतीत्यन्वयःउदरमंतरंकुरुतइतिश्रुतेः उदरमंतरंकुरुतइतिश्रुतेः
रूपाणिभिन्नानिपश्यतीतिभिन्नदृक्तस्यमृत्युःसंसाराख्यदुर्जनमारयिताश्रीनृसिंहःस्वरूपीउल्बणंभयंविदधातीत्यन्वयः २६ उक्तार्थोपसंहारमुखेनसर्वांतर्यामिपूजाप्रकारमाह

अहंसर्वेषुभूतेषुभूतात्मावस्थितःसदा ॥ तमवज्ञायमांमर्त्यःकुरुतेर्चाविडंबनम् २१ योमांसर्वेषुभूतेषुसंतमात्मानमीश्वरम् ॥ हित्वार्चांभजतेमौढ्याद्
भस्मन्येवजुहोतिसः २२ द्विषतःपरकायेमांमानिनोभिन्नदर्शिनः ॥ भूतेषुबद्धवैरस्यनमनःशांतिमृच्छति २३ अहमुच्चावचैर्द्रव्यैःक्रिययोत्पन्नयानघे २
नैवतुष्येर्चितोर्चायांभूतग्रामावमानिनः २४ अर्चादावर्चयेत्तावदीश्वरंमांस्वकर्मकृत् ॥ यावन्नवेदस्वहृदिसर्वभूतेष्ववस्थितम् २५ आत्मनश्चपरस्या
पियःकरोत्यंतरोदरम् ॥ तस्यभिन्नदृशोमृत्युर्विदधेभयमुल्बणम् २६ अथमांसर्वभूतेषुभूतात्मानंकृतालयम् ॥ अर्हयेद्दानमानाभ्यांमैत्र्याऽभिन्नेनचक्षु
षा २७ जीवाःश्रेष्ठाह्यजीवानांततःप्राणभृतःशुभे ॥ ततःसचित्ताःप्रवरास्ततश्चेंद्रियवृत्तयः २८ तत्रापिस्पर्शवेदिभ्यःप्रवरारसवेदिनः ॥ तेभ्योगंधवि
दःश्रेष्ठास्ततःशब्दविदोवराः २९

येति अंतर्यामिरूपाणांभिन्नत्वज्ञानमनर्थकमितियस्मादथतस्मात्सर्वेषुभूतेषुकृतालयंहरेरंतर्यामिरूपंभूतात्मानमांद्रव्यादिदानमानाभ्यांमैत्र्यादासस्मादनेनममाहं.सुहृदितिभावेनाभिन्नेनाभिन्नेनचक्षु
षाभेददर्शनेनार्हयेदर्चयेदित्यर्थः २७ हरेरंतर्यामिरूपाणांतत्रतत्रसन्निधानविशेषाच्चतत्त्वमत्वाच्चचेतनानांतारतम्यंतज्ज्ञानंचपुरुषार्थसाधनमितिद्योतयंस्तत्तारतम्यमाह जीवाइत्यादिनासंसाराव
स्थायांव्यत्ययेपिपशुवृक्षादिभेदेनस्थितानांजीवानांमुक्तौनिजमेवरूपमपेक्ष्यतारतम्यमत्रोच्यते तदुक्तं । पशुवृक्षादिभेदेनजीवगणएवस्वतःस्थिताः । संसृतौव्यत्ययस्तेषांमुक्तौतत्स्वरूपतः । तत्रस्था
वरमुक्तेभ्योवराजंगममुक्तकाः । तेभ्योमानुषमुक्ताश्चविप्रामुक्तास्ततोधिकाः । तत्रोपदेशमात्रेणमुक्तेभ्योवेदवादिनः । अर्थज्ञाऋषयस्तेभ्योदेवतासंशयच्छिदः । पूर्णधर्मास्ततस्त्व
द्रोनिःसंयोगरुद्रस्ततः । भक्तिपूर्णोहरेर्ब्रह्मातस्मान्नान्योधिकस्ततः । मुक्तौवासंसृतौवापिसम्यगेषुहितेगुणाइति । अजीवाश्चलनरहिताःस्थावरमुक्तास्तेषांसकाशाज्जीवाजंगममुक्ताःश्रेष्ठाः
अत्रापिविशेषद्योतनार्थंइत्थंमत्स्ययःहिशब्देनेश्वरशक्तेरौचित्यत्वंसूचयति प्राणंप्रकृष्टचेष्टांबिभ्रतीतिप्राणभृतःश्रेष्ठाइत्यनुवर्तते ततःसचित्तामनोव्यापारयुक्ताइंद्रियवृत्तयश्चक्षुरादींद्रियेप्रवृत्तास्ताः २८
अत्रापींद्रियवृत्तिष्वपिस्पर्शज्ञाःप्रवरास्तेभ्योमाधुर्यादिरसज्ञाः गंधविदोगंधगुणज्ञाःशब्दविदःशब्दज्ञाः २९

रूपभेदविदः शुक्लादिरूपविशेषज्ञाः उभयतोदत उत्तराधरदंतयुक्ताबहुपदः शरभादयः चतुष्पादोगवादयः द्विपान्मनुष्योवर्णहीनः ३० ब्राह्मणादिलक्षणाश्चत्वारोवर्णाः ब्राह्मणोवेदसंप्रदायः तत्रब्राह्मणे ष्वप्युपदेशमात्रानुष्ठानेन जातापरोक्षज्ञानेनवेदज्ञोविप्रउच्यते । अर्थज्ञोवेदार्थज्ञः रूढविरुक्तः ३१ वेदार्थसंशयच्छेत्तादेवः जातावेकवचनं स्वस्यस्वतंत्रस्यहरेर्धर्मंकरोतीतिस्वधर्मकृत् त्रैलो क्यरक्षणलक्षणपूर्णधर्मकर्तृत्वादिंद्रः मुक्तसंगोगरुडः अस्याविवरणंनदोग्धेति आत्मनः स्वरूपधर्मंनदोग्धाभगवत्प्रसादमंतरेणकर्मफलमनकांक्षमाणोभूयानुत्तरः ३२ तस्मात्गरुडान्मय्यर्पिता शेषक्रियार्थश्चमय्यर्पितसमस्तक्रियाफलश्चात्मरतिश्चमय्येवमनोरतिश्चसमय्यर्पिताशेषक्रियार्थात्मरतिः भक्त्यानरोपतेनक्षीयतइतिनरः पूर्णभक्तिः ब्रह्मा श्रेष्ठः पूर्वोक्तेभ्यः सर्वेभ्यस्तुमुक्तब्रह्मणोप्युत्तमोस्ति किंनेत्याह मयीति ३३ परमुत्तमं अः हरिः कर्त्ता स्रष्टाजनकोयस्यसोऽकर्त्तातस्मात्समदर्शनान्निर्दोषब्रह्मज्ञानवतः यद्वापरमुक्तौसंसारावस्थायांभूतमुत्तमंपुरुषंब्रह्मणः समधिकंवानपश्यामीति सम दर्शनात्कालत्रेपुसम्यग्दर्शिनः एवंतारतम्यज्ञानवतांकिंकर्तव्यमित्याह मनसेति अत्रजीवकलयेतिद्विरावृत्त्याव्याख्येयंजीवकलयासहैतानिस्थावरादिनमस्कार्याणिभूतानिमनसाबहुमानयन्नीश्वरोभगवान् जीवकलयाऽनिरुद्धाख्यांशेनेषुप्रविष्टस्तदालयत्वेनास्थितइतिवमीश्वरंप्रणमेदियमुपास्तिर्योग्यस्येतिशास्त्रांतरसिद्धमितिज्ञातव्यम् ३४ उक्तार्थमुपसंहरति भक्तियोगश्चेति हेमातर्विमयातव भक्तियोगश्च

रूपभेदविदस्तत्रततश्चोभयतोदतः ॥ तेषांबहुपदः श्रेष्ठाश्चतुष्पादस्ततोद्विपात् ३० ततोवर्णाश्चचत्वारस्तेषांब्राह्मणउत्तमः ॥ ब्राह्मणेष्वपिवेदज्ञोह्यर्थ ज्ञोऽभ्यधिकस्ततः ३१ अर्थज्ञात्संशयच्छेत्तातत: श्रेयान्स्वधर्मकृत् ॥ मुक्तसंगस्ततोभूयानदोग्धाधर्ममात्मनः ३२ तस्मान्मय्यर्पिताशेषक्रियार्थात्मरति र्नरः ॥ मय्यर्पितात्मनः पुंसोमयिसंन्यस्तकर्मणः ३३ नपश्यामिपरंभूतमकर्तुःसमदर्शनात् ॥ मनसैतानिभूतानिप्रणमेद्बहुमानयन् ॥ ईश्वरोजीवकलया प्रविष्टोभगवानिति ३४ भक्तियोगश्चयोगश्चमयामानव्युदीरितः ॥ ययोरेकतरेणैवपुरुषः पुरुषंव्रजेत् ३५ एतद्भगवतोरूपंब्रह्मणः परमात्मनः ॥ परं प्रधानात्पुरुषाद्दैवंकर्मविचेष्टितम् ३६ रूपभेदास्पदंदिव्यंकालइत्यभिधीयते ॥ भूतानांमहदादीनांयतोभिन्नदृशांभयम् ३७ योंतःप्रविश्यभूतानिभू तैरत्त्यखिलाश्रयः ॥ सविष्ण्वाख्योधियाज्ञोयः कालः कलयतांप्रभुः ३८

ज्ञानयोगश्च चशब्दादर्चादावित्यादिनाकथितकर्मयोगश्चगृह्यते सचकथितइत्यन्वयः एवद्वयमेवपुरुषार्थसाधनंनान्यदितिनिर्धारयति ययोरिति ययोर्ज्ञानभक्त्योरेकतरेणैवज्ञानयोगेनैवपुरुषः पुरुषंपरमात्मा नंव्रजेदित्यन्वयः एकतरोऽलंचेदितरविधानंव्यर्थंस्यात् एकतरभावेन्यतरस्यानियतत्वात् एकतरेणैवेत्युक्तं धूमाग्न्योरिवाविनाभावात् ३५ भक्तियोगमभिधानंतरं षष्ठजीवसंस्थतेर्वक्तव्यत्वेपिकालस्तुल्यात् तदुल्लंघ्यसूचीकटाहन्यायेनकालस्वरूपंवक्ति यच्चदित्यादिनाब्रह्मणः पूर्णस्यपरमात्मनः सर्वांतर्यामिणोभगवतोभाग्यनिधेर्यत्प्रधानात्प्रकृतेः पुरुषाद्धिरिचात्परमुत्तमम् दैवंसर्वदेवोत्तमंयच्चकर्मविचेष्टितम् सर्वकर्मार्थियस्वाविशिष्टचेष्टानिमित्तानितत्तथोक्तम् ३६ यच्चरूपभेदास्पदंशुक्लादिरूपभेदानांब्रह्माण्डादिपदार्थभेदानांचास्पदंदिव्यमप्राकृतंयतोयस्मात्कालाद्भिन्नदृशामल्पज्ञानिनामहदादिजीवानांभयं भवतितद्वस्तुकालइत्यभिधीयते । भिन्नमल्पंविजानीयादभिन्नंपूर्णमित्यपतइतिवचनादीश्वरापेक्षयाऽभिन्नशब्दोल्पवाची ३७ केचित्पूर्वापरकलाविकलः क्षणः कालइत्याहुरित्यपमामाशंक्यतेतन्नेतिभावेनाह योंतरिति योभूतानामंतः प्रविश्यभूतैर्भूतान्यत्तिसंहरति यश्चाखिलजनानामाश्रयः यश्चकलयतांसंहरतांरुद्रादीनांप्रभुः संहारसमर्थः सविष्ण्वाख्यः कालोधियासाक्षिज्ञानेनज्ञेयइत्यन्वयः धियाहिव्यवच्छेदार्थ विष्ण्वाख्यइति ३८

आत्मजायादिष्वहंममताज्ञानफलमाह संदह्यमानेति एषामात्मजायादीनाम् ७ कश्चिद्द्रव्यालाभादिनाऽमनोदुःखाग्निनासंदीप्तांगत्वादसारोयंसंसारइतिविरक्तोभविष्यतिस्वदमेवेतितत्राह आक्षिप्तात्मेति मायया मोहकशक्त्या ८ कूटंवंचनमेवधर्मोयत्रतेषुवंचनधर्मयुक्तेषु दुःखानांतंत्रेषुसाधनेषुदुःखानांप्रतीकारंसुखवन्मननाद्विरक्तोनभवतीत्यर्थः ९ ननु वृद्धौचमातापितरौसाध्वीभार्यासुतःशिशुः। अप्यकार्यशतंकृत्वाभर्तव्यामनुरब्रवीदितियथाकथंचिद्विधयाकुटुंबभरणस्यविहितत्वात्तदकृत्यस्याततस्त्यागेमहान्दोषःस्यादतोनविरागोभवतीत्याशंक्यशास्त्राविहितहिंसादिनातन्महापातकेनाधःपातएवेत्याह अर्थैरिति विमादेःसेव.दिकमकार्यशतंमहाविपदादिविहितत्वात्तत्कृत्वानदोषइत्यर्थपरंस्मार्तवचनं । पोष्यजनभुक्तशेषस्यभोक्ता १० अतिवृष्ट्यनावृष्टिव्याधिगोजरनाशादिनाकुंठितजीवनस्यवृत्तिंकथयति वार्तायामिति पुनःपुनरारब्धायामृणद्रव्याद्यानीतगोवृषादिनोपक्रांतायांवार्तायांकृषिगोरक्ष्यवाणिज्यादिलक्षणायांलुप्यमानायांविनाशगच्छंत्यां लुभगार्ध्यइतिधातोर्लोभेनपरद्रव्यादेरसाल्लक्षणेनाभिभूतोऽतएवनिःसत्वःसत्वगुणशून्योबलरहितोवापरार्थेचौर्यादिनापरद्रव्यादानेस्पृहांकुरुतइत्यन्वयः ११ परार्थेचान्यशक्तत्वेनस्वकुटुंबभरणाकल्पस्यचरमावस्था

संदह्यमानसर्वांगएषामुद्वहनादिना ॥ करोत्यविरतंमूढोदुरितानिदुराशयः ७ आक्षिप्तात्मेंद्रियःस्त्रीणामसतीनांचमायया ॥ रहोरचितयाऽऽलापैःशिशूनांकलभाषिणां ८ गृहेषुकूटधर्मेषुदुःखतंत्रेष्वतंद्रितः ॥ कुर्वन्दुःखप्रतीकारंसुखवन्मन्यतेगृही ९ अर्थैरापादितैर्गुर्व्याहिंसयेतस्ततश्चतान् ॥ पुष्णातियेषांपोषेणशेषभुग्यात्यधःस्वयम् १० वार्तायांलुप्यमानायामारब्धायांपुनःपुनः ॥ लोभाभिभूतोनिःसत्वःपरार्थेकुरुतेस्पृहाम् ११ कुटुंबभरणाकल्पोमंदभाग्योवृथोद्यमः ॥ श्रियाविहीनःकृपणोध्यायञ्छ्वसितिमूढधीः १२ एवंस्वभरणाकल्पंतत्कलत्रादयस्तदा ॥ नाद्रियंतेयथापूर्वंकीनाशइवगोजरम् १३ तत्राप्यजातनिर्वेदोभ्रियमाणःस्वयंभृतैः ॥ जरयोपात्तवैरूप्योमरणाभिमुखोगृहे १४ आस्तेवमयापत्याद्यैर्गृहपालइवाहरन् ॥ आमयेनाप्रदीप्ताग्निरल्पाहारोल्पचेष्टितः १५ वायुनोत्क्रमतोत्तारकफसंरुद्धनासिकः ॥ कासश्वासकृतायासःकंठेघुरघुरायते १६ शयानःपरिशोचद्भिःपरिवीतःस्वबंधुभिः ॥ वाच्यमानोपिनब्रूतेकालपाशवशंगतः १७ एवंकुटुंबभरणेव्यापृतात्माजितेंद्रियः ॥ म्रियतेरुदतांस्वानामुरुवेदनयास्तधीः १८ यमदूतौतदाप्राप्तौभीमौसरभसेक्षणौ ॥ सदृष्ट्वात्रस्तहृदयःशकृन्मूत्रंविमुंचति १९ यातनादेहआवृत्यपाशैर्बद्ध्वागलेबलात् ॥ नीयतेदीर्घमध्वानंदंड्यंराजभटायथा २० तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथुः ॥ पथिश्वभिर्भक्ष्यमाणआर्तोघंस्वमनुस्मरन् २१

माह कुटुंबभरणाकल्पइति श्रियासंपदाशरीरकांत्यावा श्वसितिदीर्घश्वासंकरोति मूढधीःकर्तव्यबुद्धिरहितः १२ कीनाशःकर्षकः गोजरमुक्षेत्रवनासमर्थंवृषभम् १३ स्वउत्कटविनादरंदृष्ट्वाविरक्तोमोक्षःपथविष्यतइतिचेत्तत्राह तत्रापीति तस्यामवस्थायामपि १४ अपत्याद्यैरवमत्याअवज्ञानेनदत्तान्नमाहरन्गृहपालःश्वेवगृहआस्तइत्यन्वयः संसारेणआसक्तमस्यास्तस्थायामपिविरागोनोत्पद्यतइत्याशयेनाह आमयेनेत्यादिना १५ यस्यकासश्वासाभ्यांकृतायासःपूर्णक्लेशःकंठेघुरघुरायतेऽनुकारशब्दंकरोति सआतुरःकिमपिनब्रूतइत्यन्वयः उत्क्रमतानिर्गच्छता उत्तारमुद्गतंकफश्लेष्मातेनसंरुद्धानालिकायस्यसतथा अनेनासनशयनानुक्तमवस्थायामपिविरागोनाभूदहाहोमोहात्म्यमित्यदर्शि १६ १७ तस्यांसत्यामवस्थामाह एवमिति १८ म्रियमाणस्यावस्थामाह यमदूतादिति पदार्थेरुप्यावस्थेवदामूत्रंशकृत्पुरीषंचविमुंचतिरभसेनक्रोधवेगेनसहवर्तमानेईक्षणेययोस्तौतथोक्तौ १९ नरकदुःखभोगक्षमोदेहोयातनादेहस्तस्मिन्नावृत्यप्रवेश्य २० २१

नरकंश्रुतिमच्छतोदशामाह क्षुत्तृडिति वालुकाःसिकताः २२ यमसादनंयमगृहंनरकमित्यर्थः २३ द्वाभ्यांवेति वाशब्देनदशदिनानिपक्षोमासश्चगृह्यते तदुक्तं त्रिभिर्मुहूर्तैर्द्वाभ्यांवादिनैर्दशभिरेववा । पक्षान्मासेनवायातियमलोकमितोमृतइति यातनांनरकम् २४ स्वानुष्ठितदुष्कृतानुसारेणनरकदुःखानुभवंवक्ति आदीपनमित्यादिना स्वगात्राणांस्वावयवानाम् २५ आत्मवैशसमात्मनोहिंसाम् २६ रोधनंगृंखलावंधोविष्ठागर्तै २७ बाहुल्यात्संक्षिप्ययातनांब्रवीति यास्तामिस्रेति २८ तानातिदूरेवर्तंतेकिंतुसमीपएवेत्याह अत्रैवेति तदुपपादयति यातनाइति इहापिस्थलोकेराजादिभिर्दृश्य सूपलक्षिताहष्टाइत्यर्थः वैशब्देनदंड्येषुस्वर्गिष्वपीतिदर्शित । सामीप्येचप्रधानेचएवशब्दोवधारणइतिच २९ कीदृशाःपापिनएवंविधनरकभोगभोग्याइतितत्राह एवमिति उभयंकुटुंबमुदरंचावि सृज्यतयोःकुटुंबोदरपोषणयोःफलम् ३० यःपापकृत्सएकएवनारकंपंथानमाप्नोतिनान्यइत्याह एकइति कुशलादितरत्पापंतदेवपाथेयंशंबलंयस्यसतथा यत्कलेवरंभूतद्रोहेणभृतंपोषितम् ३१

क्षुत्तृट्परीतोर्कदवानलानिलैःसंतप्यमानःपथितप्तवालुके ॥ कृच्छ्रेणपृष्ठेकशयाचताडितश्चलत्यशक्तोपिनिराश्रयोदके २२ तत्रतत्रपतञ्छ्रांतोमूर्छितःपु नरुत्थितः ॥ तथापापीयसानीतस्तमसायमसादनम् २३ योजनानांसहस्राणिनवतिंनवचाध्वनः ॥ त्रिभिर्मुहूर्तैर्द्वाभ्यांवानीतःप्राप्नोतियातनाम् २४ आदीपनंस्वगात्राणांवेष्टयित्वोल्मुकादिभिः ॥ आत्ममांसादनंक्वापिस्वकृत्तंपरतोपिवा २५ जीवतश्चांत्राभ्युद्धारःश्वगृध्रैर्यमसादने ॥ सर्पवृश्चिकदंशा द्यैर्दशद्भिश्चात्मवैशसम् २६ कृंतनंचावयवशोगजादिभ्योभिदापनम् ॥ पातनंगिरिशृंगेभ्योरोधनंबंधगर्तयोः २७ यास्तामिस्रांधतामिस्रारौरवाद्या श्चयातनाः ॥ भुंक्तेनरोवानारीवामिथःसंगेननिर्मिताः २८ अत्रैवनरकःस्वर्गइतिमातःप्रचक्षते ॥ यायातनावैनारक्यस्ताइहाप्युपलक्षिताः २९ एवंकु टुंबंबिभ्राणउदरंभरएववा ॥ विसृज्येहोभयंप्रेत्यभुंक्तेतत्फलमीदृशम् ३० एकःप्रपद्यतेध्वांतंहित्वेदंस्वकलेवरम् ॥ कुशलेतरपाथेयोभूतद्रोहेणयद्भृतम् ३१ दैवेनासादितंतस्यशमलंनिरयेपुमान् ॥ भुंक्तेकुटुंबपोषस्यहृतवित्तइवातुरः ३२ केवलेनह्यधर्मेणकुटुंबभरणोत्सुकः ॥ यातिजीवोंधतामिस्रंचरमं तमसःपदम् ३३ अधस्तान्नरलोकस्ययावतीर्यातनास्तुताः ॥ क्रमशःसमनुक्रम्यपुनरत्राव्रजेच्छुचिः ३४ ॥ ॥ इतिश्रीभागवतेमहापुराणेतृतीय स्कंधेएकत्रिंशोध्यायः ॥ ३१ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

ननुदेहादिवत्पापमपिपरित्यज्यगच्छतिकिंनेत्याह दैवेनेति कुटुंबपोषणस्यतस्ययच्छमलंदैवेनपुण्यपापयोर्नियंत्राहरिणासादितंप्रापितं पुमान्निरयेतदेवभुंक्तेपरित्यक्तुंनशक्नोति दैवाधीनत्वात् यथाह तवित्तआतुरोवादैवोपनीतंदुःखंभुंक्तेतथेति ३२ यास्तामिस्राद्यायातनाःप्रस्तुतास्तासांमध्येतामिस्राधतामिस्रशब्दितेद्वयंतत्साधनंचाह केवलेनेति योसुरप्रकृतिर्जीवः केवलंनैकेनाधर्मेणहरिभक्ति द्रूपलक्षणेनतमसः पदमंधकारस्यैकस्थानं चरमंपश्चात्तनंपुनरावृत्तिरहितमंधतामिस्रंतामिस्रमपियोग्यंयातीत्यन्वयः इहशब्दःअनुत्थानवाची दुःखानुभवेनात्यल्पसाचीवा । तामिस्रश्चां धतामिस्रौद्वौनित्यौसंप्रकीर्तितावितिवाक्यंसूचितं तामिस्रंयातीत्येतदर्थसूचकोवा ३३ अन्येषांपुनरावृत्तिरस्तीत्याह अधस्तादिति अत्रमनुष्यलोकेपुनःपुनःस्वकर्मानुसारयोनिप्राप्त्यातिपापफलभो गाच्छुचिःपुनःस्वर्गंयाति अशुचिश्चेन्नरकंयाति पुनर्दरिद्रःपुनरेवपापीतिवचनात् ३४ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेश्रीव्रजराजकृतटीकायांएकत्रिंशोध्यायः ॥ ३१ ॥ ॥ छ ॥

अस्मिन्नध्यायेसंसारासारज्ञानलक्षणवैराग्यायगर्भवासादिदुःखानुभवःप्रतिपाद्यते तस्माद्धि रक्तौभक्तिसाध्यमज्ञानाशायमयदेतद्याति तत्रनरकैकर्मफलंभुक्त्वावृष्टिरूपेणनरलोकेप्राप्तोर्धाह्लाद्वा तिरज्जातिदेह गतोदैवाधीनेनकर्मणाशरीरस्वीकारायपुरुषभुक्तान्नपरिणतरेतोविंदुप्रवेशरूपेणऋतुकालेयोनिद्वाराञ्स्त्रियाउदरंप्रविष्टोभवतीत्यन्वयः । सूक्ष्मलेशलवश्लक्ष्णक्षुद्रदभ्रकणाणवइतिहलायुधः । स्त्रियांमात्रात्रु टिःपुंसिलवलेशकणाणवइत्यमरः । कणतिनिमीलतीतिकणः १ स्त्रियाउदरंप्रविष्टस्यरेतसःकालक्रमेणशरीराकारतयापरिणामप्रकारंवक्ति कलिलमिति तुशब्दाच्छोणितसंपर्कमाह कलिलंरक्तधातुर स.मिश्रत्वाज्वर्णसतुल्यंभवति । कर्कंधुरीषत्काठिण्योपेतमांसःपिंडतुल्यःपेशीमासखंडीतद्वान्भवति मनुष्यादीनामयंविशेषःनपक्ष्यादीनामंडंपिंडाकारवत् । नानाविधागर्भवृद्धिःकर्मभेदाद्भविष्यति । अतो नानाविधंअंधेगर्भसंस्थानमुच्यतइतिवचनात् अंडंवेतिविकल्पोक्तम् २ बाह्वंघ्र्यादिभिरंगैरवयवैर्युक्तोविग्रहोदेहोभवतिलिंगस्यपुंलिङ्गादिलक्षणस्यछिद्रस्येंद्रियद्वारस्यचोद्भवउत्पत्तिः धातवस्त्वगादयः सप्त आवीतःसंवेष्टितः ४ सप्तमेमासेगर्भस्थस्यज्ञानोत्पत्तिरित्याह सप्तमइति जगत्यांकर्मभूमौयानिगतानिजन्मानिकर्माणिचस्वकृतानितथाचदेवस्यहरेर्मायेच्छदाकटाक्षितमात्मनःस्वरूपबंधंच ऋषिर्ज्ञानवान्स्मरते क्वचित्स्मरतिकश्चिद्विस्मरतिवेदनयाग्रस्तत्वादितिद्योतनायआत्मनेपदंसंधिकार्यभावश्च ५ तत्रतस्यदेहयात्राप्रकारंवक्ति मातुरिति आतुरोरोगीतन्म्यसंमतःयथासौपरन्तःखदेह

श्रीभगवानुवाच ॥ कर्मणादैवनेत्रेणजंतुर्देहोपपत्तये ॥ स्त्रियाःप्रविष्टउदरंपुंसोरेतःकणाश्रयः १ कलिलंत्वेकरात्रेणपंचरात्रेणबुद्बुदम् ॥ दशाहेनतुकर्कंधुःपे श्यंडंवाततःपरम् २ मासेनतुशिरोद्वाभ्यांबाह्वंघ्र्याद्यंगविग्रहः ॥ नखरोमास्थिचर्माणिलिंगच्छिद्रोद्भवस्त्रिभिः ३ चतुर्भिर्धातवःसप्तपंचभिःक्षुत्तृडुद्भवः ॥ षड् भिर्जरायुणावीतःकुक्षौभ्रमतिदक्षिणे ४ सप्तमेजन्मकर्माणिगतानिस्मरतेऋषिः ॥ जगत्यांयानिदेवस्यमाययावंधनात्मनः ५ मातुर्जग्धान्नपानाद्यैरेधद्धातुरसंमतः ॥ आस्तेविण्मूत्रयोर्गर्तेसजंतुर्जंतुसंभवे ६ कृमिभिःक्षतसर्वांगःसौकुमार्यात्प्रतिक्षणम् ॥ मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यैःक्षुधितैर्मुहुः ७ कटुती क्ष्णोष्णलवणक्षाराम्लादिभिरुल्बणैः ॥ मातृभुक्तैरुपस्पृष्टःसर्वांगोत्थितवेदनः ८ उल्बेनसंवृतस्तस्मिन्नंत्रैश्चबहिरावृतः ॥ आस्तेकृत्वाशिरः कुक्षौभुग्नपृष्ठशिरोधरः ९ अकल्पःस्वांगचेष्टायांशकुंतइवपिंजरे ॥ तत्रलब्धस्मृतिर्दैवात्कर्मजन्मशतोद्भवम् ॥ स्मरन्दीर्घमनुच्छ्वासंशर्मकिंनाम विंदते १०

ग्रस्त्राम.प्रीतिस्तथापामिति अन्नादीनाप्रवेशस्तुआप्यायिनीनामनाडीनामिमूलादुत्पन्नाजरायुमुल्वंच निर्भिद्यास्यद्वारसंबद्धोष्ठपुटचुंबिकमलदंडनाडीवत् तद्द्वारेत्यर्थः तस्यानिवासस्थानमाह सजंतुर्जंतुभिःसहवर्तमानः अनेनचात्रैवेतिविवृतं जंतूनासंभवोयस्मिन्स्तथातस्मिन् अनेनजंतूनामनवसान भयपरंपरोत्पत्तिः सूचिता ६ इदानींतस्यदुःखानुभवप्रकारमाह कृमिभिरित्यादिना सर्वंचकंड्वाशेपुपुरस्यसक्षतकंडूंगः ७ कटुर्मरीचिसंज्ञःद्रव्यविशेषःतीक्ष्णःसर्षपः उष्णमाग्निमद्द्रव्यं क्षा रंदग्धमत्स्यास्थिचूर्णमाम्लश्चूतादिसंज्ञःउल्बणैरतिक्रूरैस्तैरुपस्पृष्टउपतप्तः सर्वांगेपूत्थितात्पन्नावेदनायस्यसतथा ८ भुग्नेकुटिलेपृष्ठशिरोधरेयस्यसतथा ९ मार्कंडेयेपितृपुत्रसंवादेकथितमेतत् । नाडीचाप्यायिनीनामनाभ्यांतस्यनिबध्यते । स्त्रीणांतथांत्रसुषिरेसानिबद्धाथजायते । क्रमतेभुक्तपीतानिस्त्रीणांगर्भोदरेतथा । तैराप्यायितदेहोसौजन्तुर्वृद्धिमुपैति च । नारिकेलफलयद्वत्सकोशांवृद्धि मृच्छति । तद्वत्प्रयात्यसौवृद्धिंसकोशोधोमुखस्थितः । एवंवृद्धिक्रमाद्यातिजंतुःस्त्रीगर्भसंस्थितः । तलेतुजानुपार्श्वाभ्यांकरयोर्न्यस्यवर्तते । अंगुष्ठौचोपरिन्यस्यजान्वोरग्रेतथांगुली । जानुपृष्ठेतथाने

भगवतोहरेर्बोहिमाऽगणितप्रभावइतिध्वनयन् गर्भस्थस्यप्रसूतिप्रकारंवक्ति एवमिति ऋष्यादिकुलउत्पत्स्यमानस्यतत्क्षणेज्ञानंभवतीतिद्योतनायसप्तमाेऽपिमित्युक्तं । ऋषिर्भिकालदर्शी स्यादिति [illegible]
सर्वोपिवेत्तिकिंइत्याशयेनोक्तं सद्यइति अवाचीनमधःशिरसम् २३ तेनवायुनादेनेदेहाभिमानेनपूर्वमुपसृष्टःसंसारमन्यभूतेनदेहाभिमानेनस्पृष्टइतिवा शिरोऽप्रकृष्टेस्यादीन [illegible] देहं [illegible]
प्रार्थ्यंमनजन्मप्रापिकमिदमेवसर्वत्रप्रधानमितिध्वनयति गतस्मृतिर्नष्टजन्मांतरज्ञानः २४ विष्ठैवभूःस्थानंयस्यसतथा विष्ठायामेव [illegible] रोरूयति [illegible] तदेवविपरीता
गतिमनुष्यवासनामतः २५ परच्छंदमन्यस्याभिप्रेतं प्रत्याख्यातुंनापेक्षितमितिनिराकर्तुमनीश्वरोऽसमर्थः २६ अशुचिपर्यंकेशयनम् [illegible] २७ आत्म
चर्मपूर्वकपनूतनत्वचंदंशाःसूचीमुखामशकाःसूक्ष्ममक्षिकाःक्रामिकंमणिकीटम् २८ पंचवर्षपर्यंतंशैशवंतत आसप्तमवर्षात्कौमारंततआदशवर्षात्पौगंडं । आज्ञानादिति [illegible] मितिशेषः २९
सहदेहेनमानेनदेहाभिमानेनविग्रहंवैरमात्मनोऽतायस्वस्यनाशाय कामिषु विषयलालसेषु ३० सहदेहेनेत्यतद्विवृणोति भूतैरिति अहंममेत्यसद्ग्राहाेदुराग्रह [illegible] ३१ तदर्थमहंम

श्रीभगवानुवाच ॥ एवंकृतमतिर्गर्भेदशमास्यंसपद्यृषिम् ॥ सद्यःक्षिपत्यवाचीनंप्रसूत्यैसूतिमारुतः २३ तेनोपसृष्टःसहसाकृत्वावाक्शिरआतुरः ॥ विनिष्क्रामतिकृच्छ्रेणनिरुच्छ्वासोगतस्मृतिः २४ पतितोभुव्यसृङ्मूत्रेविष्ठाभूरिवचेष्टते ॥ रोरूयतिगतज्ञानोविपरीतांगतिंगतः २५ परच्छंदंनविदुषापुष्यमाणोजनेनसः ॥ अनभिप्रेतमापन्नःप्रत्याख्यातुमनीश्वरः २६ शायितोऽशुचिपर्यंकेजंतुःस्वेदजदूषिते ॥ नेशःकंडूयनेंगानामासनोत्थानचेष्टने २७ तुदंत्यामत्वचंदंशामशकामत्कुणादयः ॥ रुदंतंविगतज्ञानंकृमयःकृमिकंयथा २८ इत्येवंशैशवंभुक्त्वादुःखंपौगंडमेवच ॥ अलब्धाभीप्सितोज्ञानादिद्धमन्युःशुचार्पितः २९ सहदेहेनमानेनवर्धमानेनमन्युना ॥ करोतिविग्रहंकामीकामिष्वंतायचात्मनः ३० भूतैःपंचभिरारब्धेदेहेदेह्यबुधोसकृत् ॥ अहंममेत्यसद्ग्राहःकरोतिकुमतिर्मतिम् ३१ तदर्थंकुरुतेकर्मयद्बद्धोयातिसंसृतिम् ॥ तमोविशतियद्बद्धोयेनानौमर्त्यजन्मनि ३१ येनयातीदृशंक्लेशमविद्याकर्मबंधनम् ३२ यद्यसद्भिःपथिपुनःशिश्नोदरकृतोद्यमैः ॥ आस्थितोरमतेजंतुस्तमोविशतिपूर्ववत् ३४ सत्यंशौचंदयामौनंबुद्धिःश्रीर्ह्रीर्यशःक्षमा ॥ शमोदमोभगश्चेतियत्संगाद्यातिसंक्षयम् ३५ तेष्वशांतेषुमूढेषुखंडितात्मावसाधिषु ॥ संगंनकुर्याच्छोच्येषुयोषित्क्रीडामृगेषुच ३६

मेत्यसद्ग्राहदृढीकरणाययेनकर्मणाबद्धः ३२ एतदेवस्पष्टयति येनेति ईदृशंनरकादिलक्षणक्लेशमविद्याकर्मबंधनंच ३३ मनुष्ययोनेःपुरुषार्थहेतुत्वात्कथंनिंद्यत्वमत्राह यदीति पथिपुरुषार्थहेतौमनुष्य
योनौस्थितोजंतुःशिश्नोदरयोःपोषणेकृतउद्यमःप्रयत्नोयैस्तेतथातैरसद्भिर्जीवपरमात्मायभेदविद्भिश्चासुरप्रकृतिभिःसहयदिरमतेतर्हिपूर्ववत्तमोविशतीत्यन्वयः ३४ मुक्तिसाधनसत्यादिगुणवत्त्वेकथमसत्सं
गात्तमःप्रवेशइतितत्राह सत्यमित्यादिना बुद्धिःपुरुषार्थविषया श्रीर्भगवद्भक्तिसंपल्लक्षणा ह्रीरकार्यकरणेलज्जा क्षमासापराधेपुर्वेष्वपितत्सहनशीलता शमोबाह्येंद्रियनिग्रहःदमोंतःकरणनिग्र
हःभगोविद्याधिपत्याद्यैश्वर्यादिलक्षणः ३५ अशांतेषुहरिनिष्ठादिगुणरहितेषुअविवेकिष्वखंडितात्मापरमात्माऽपरिच्छिन्न [illegible]
शीन्येइत्येवंसाधोर्वेषाविषयादेवजीवमात्रज्ञानिषुसंगंस्नेहादिलक्षणंयोषितांक्रीडामृगवद्वर्तमानेषु ३६

जीवेश्वरामेददर्शिसंगवदुष्टस्त्रीसंगोपिमोहकारणतयादुःखकरइतिनिरूपयति नतथेत्यादिना अन्येषांप्राकृतानांप्रसंगतस्तासांसंगिनांपुंसांसंगतः ३७ अत्रकिंपुनरन्योयमाह प्रजापतिरिति रोहिद्भूतां मृगीभूतांऋक्षरूपःस्वांदुहितरमितिवचनंस्त्रीणामतिमोहकत्वद्योतनायदुष्टजनमोहनार्थंचेतिज्ञातव्यंअन्यथा नकर्हिचिन्मेमनसामृषागतिरितिवचनविरोधःस्यात् ३८ तत्स्रष्टस्रष्टृसृष्टेष्विति तस्यब्रह्मणःस्रष्टाःसृष्टाःस्वायंभुवादय स्तैःसृष्टाःप्रियव्रतादयस्तेषुसृष्टास्तथामरीच्यादयस्तत्सृष्टाःकश्यपादयस्तत्सृष्टाउत्तमादयस्तेष्वितिवा योषिन्मय्यात्ममायया मोहकशक्त्याऽखंडितधीःकःपुमान्नकोपीत्यर्थः किमत्राह ऋषिमिति ३९ अन्येषांतज्जयित्वेंकिंनस्यादेवमत्राह बलमिति याकेवलंभ्रूविजृंभेणदिशांजयिनोराजादीन्विजयनान्स्वाधीनान्करोति तस्यामेस्त्रीमय्याःमायायाः मयस्थप्रधानस्यममशक्तायामोहकशक्त्याबलंप श्येत्यन्वयः । अयःप्रधानउद्दिष्टोमायातद्वशउच्यतेइतिवचनात् मेमायायाइति ४० फलितमाह संगंनकुर्यादिति तत्त्वविस्मरणहेतुत्वात्प्रमाखंडनसाधनत्वाद्वायक्लेशप्रदजनकत्वाद्वाप्रमदाःस्त्रियस्ता सुजातुकदाचित्महेलिकाविषयेपिसंगंरागादिलक्षणंनकुर्यादित्यन्वयःकुतइत्यतउक्तं योगस्येति अयोग्यत्वेकेवल्ययोगारोहेच्छयाकिंस्यादित्यतउक्तं मत्सेवयेति वेदांतादिशास्त्रश्रवणादिलक्षणयाम त्सेवयाप्रतिलब्धआत्मलाभोविषयत्यागेनस्वरूपानंदोयेनसतथा निर्जितेंद्रियग्रामत्वेनस्वरूपानंदानुभवेनसंतुष्टइत्यर्थः प्रतिलब्धात्मभावइतिपाठेलब्धसंप्राप्तपरमात्मभक्तिरित्यर्थः अनेनस्वज्ञानदा नयोग्यपुरुषेपुयुक्तोनियतमार्यासुचसंगमतरेणेतरसंगोवर्जनीयइतिप्रकाशितं तदुक्तं सत्पुंसुचतयास्त्रीषुनसंगोदोषमावहेत् । यथायोग्यगुणायैवदोषकृद्दुष्टजंतुष्वेति । तत्संगात्कोनर्थइत्यतउक्तंयामि

**नतथास्यभवेन्मोहोबंधश्चान्यप्रसंगतः ॥ योषित्संगाद्यथापुंसांयथातत्संगिसंगतः ३७ प्रजापतिर्दुहितरंदृष्ट्वातद्रूपधर्षितः ॥ रोहिद्भूतांसोन्वधावदृक्षरूपीहतत्रपः ३८ तत्सृष्टसृष्टसृष्टेषुकोन्वखंडितधीःपुमान् ॥ ऋषिंनारायणमृतेयोषिन्मय्येहमायया ३९ बलंमेपश्यमायायाःस्त्रीमय्याजयिनोदिशाम् ॥ याकरोतिपदाक्रांतान्भ्रूविजृंभेणकेवलम् ४० संगंनकुर्यात्प्रमदासुजातुयोगस्यपारंपरमारुरुक्षुः ॥ मत्सेवयाप्रतिलब्धात्मलाभोवदंतियांनिरयद्वारमस्य ४१ योपयातिशनैर्मायायोषिद्देवविनिर्मिता ॥ तामीक्षेतात्मनोमृत्युंतृणैःकूपमिवावृतम् ४२ यांमन्यतेपतिंमोहान्मन्मायामृषभायतीम् ॥ स्त्रीत्वंस्त्रीसंगतःप्राप्तोवित्तापत्यगृहप्रदाम् ४३ तामात्मनोविजानीयात्पत्यपत्यगृहात्मकम् ॥ दैवोपसादितंमृत्युंमृगयोर्गायनंयथा ४४ देहेनजीवभूतेनलोकाल्लोकमनुव्रजन् ॥ भुंजानएवकर्माणिकरोत्यविरतंपुमान् ४५**

ति अस्यकामुकस्य अनेनस्त्रियःसर्वथावर्जनीयाइत्युक्तं तदुक्तं अंगारसदृशीनारीघृतकुंभसमःपुमान् । तस्मान्नारीषुसंसर्गंदूरतःपरिवर्जयेत् । गौडीमाध्वीतथापैष्टीविज्ञेयात्रिविधासुरा । चतुर्थीप्र मदाज्ञेयाययेदंमोहितंजगत् । माद्यतिप्रमदांदृष्ट्वासुरांपीत्वैवमाद्यति । यस्माद्दृष्टिमदानारीतस्मात्तांनावलोकयेदिति ४१ इतोपिसर्वप्रयत्नेनदुष्टास्त्रीवर्ज्येत्याह योपयातीति यादेवनिर्मितायोषिन्मा याभार्यात्वेनोपयाति मुमुक्षुस्तामात्मनोमृत्युमीक्षेत किंवत्तृणैरावृतंकूपमिव ४२ पतिर्यांमोहात्स्त्रीसंगतः । ऋषैश्चैशब्दसंघातइतिधातोःशब्दादेर्श्वासःकृतःकारणात् स्त्रीत्वंप्रमदाभावंप्राप्तामृषभाय तीरतौपुरुषीकरणंनामारोपितपुरुषधर्मस्तमाचरंतींमन्मायांवित्तापत्यगृहप्रदांमन्यतेतामितिपूर्वेणसंबंधः ४३ हरिभक्त्यादियुतापत्यपिहरिभक्तिरहितंपतिमात्मनोमृत्युमीक्षेतनरकहेतुंपश्येत् । किं विशिष्टं अपत्यगृहात्मकं कथमिव यथामृगयोःमृगान्वधार्थंयातीति मृगव्यादयश्चेतिकुः मृगयुस्तस्यमृगयोर्व्याधस्य । व्याधेमृगवधाजीवोमृगयुर्लुब्धकोपिसइत्यमरः । गायनंमृगस्यमृत्युहेतुस्तथे त्यर्थःसत्पुंसुचतयास्त्रीष्वित्याद्युक्तमत्रापिप्रमाणं ४४ ज्ञानंविनानकर्मक्षयःकिंतुकर्मपरंपरामेवकरोतीत्याह देहेनेति जीवभूतेन जीवानांकर्मजातेनलोकाल्लोकंदेहाद्देहंस्वाशोऽप्यभावोदिमातोऽहंकार धर्मित्यबोवाकर्मकारणमित्याह देहेनेति ४५

जीवलक्षणमाह जीवइति भूतेंद्रियमनोमयोदेहोयस्यानुगःसजीवइति मृतोजातइतिव्यवहारात् जीवोऽनित्यएवेतिनशंकनीयं तस्यदेहवियोगसंयोगावेवमरणजननेनतुस्वरूपनाशः तथासतिमो क्षादियोग्यताकथनंव्यर्थंस्यादितिभावेनाह तन्निरोधइति अस्यजीवस्यतन्निरोधस्तस्यदेहस्यनाशोभूतेपुलयोमरणमाविर्भावोभूतसंयोगलक्षणोविशेषतयाप्रकाशःसंभवोजननंनामतुशब्दस्तेषांकोवि द्विशेषद्योतकः ४६ उक्तमर्थंस्पष्टयति द्रव्योपलब्धीति द्रव्याणांपंचभूतानामुपलब्धिस्थानस्यशरीरस्यपृथिव्यादिविषयज्ञानाश्रयत्वात् द्रव्येक्षायाघटादिदर्शनस्यायोग्यताघटादिद्रव्यदर्शनयो ग्यत्वंयदानास्तितदातद्दर्शनंपंचत्वंमरणसंज्ञंभवति अहंमानादहमिदंशरीरमित्यभिमानात्द्रव्यदर्शनमेवोत्पत्तिरित्यन्वयः ४७ इदंदृष्टांतयति यथेति यथाचाक्ष्णोश्चक्षुषोर्द्रव्यावयवःशौक्ल्यादिरूपं तस्यदर्शनेऽयोग्यताकामलादिदोषदुष्टतयासामर्थ्यंनास्तितदैवचक्षुषःसकाशाद्द्रष्टुरात्मनोद्रष्टृत्वंनेतिशेषः यदाऽनयोश्चक्षुषोर्योग्यताअस्तीतिशेषः तदाचक्षुषःसकाशात्द्रष्टृत्वंप्रतीयतइत्यन्वयः ४८ नन्विहसंसरन्जीवोब्रह्मैवचेतनत्वात्ब्रह्मैवसंसरतिब्रह्मैवमुच्यतइत्याचार्योक्तिस्तत्राह पुंसइति पुंसःपुरुषस्यचक्षुरादीन्द्रियाणियथापरंकेवलंस्वगतंस्वविषयंरूपादिकंतत्तन्निमित्तसुखादिकंविंदंतिनान्यगतं च क्षुर्ग्राह्यंश्रोत्रंनजानातिश्रोत्रग्राह्यंचक्षुरित्यादिवोमिथइंद्रियाणांभेदःप्रसिद्धः तथेशांशाःजीवाःसंसरंतःपृथक्कलाःअन्योन्यंहरेश्चभिन्नाइत्यतआचार्योपिवच्वज्ञानीत्याद्यर्थः यःसर्वज्ञइतिश्रुतेश्च ४९

जीवोयस्यानुगोदेहोभूतेंद्रियमनोमयः ॥ तन्निरोधोस्यमरणमाविर्भावस्तुसंभवः ४६ द्रव्योपलब्धिस्थानस्यद्रव्येक्षायोग्यतायदा ॥ तत्पंचत्वमहंमाना दुत्पत्तिर्द्रव्यदर्शनम् ४७ यथाक्ष्णोर्द्रव्यावयवदर्शनायोग्यतायदा ॥ तदैवचक्षुषोद्रष्टुर्द्रष्टृत्वंयोग्यतानयोः ४८ पुंसोयथेंद्रियाणिविंदंतिस्वगतंपरम् ॥ सुखंदुःखंनान्यगतंतथेशांशाःपृथक्कलाः ४९ आत्मनःकेवलंज्ञानमर्थेदेहाद्यसंगिनः ॥ सुखदुःखादयोभावानदेहस्यनचात्मनः ५० तस्मान्नकार्यःसंत्रा सोनकार्पण्यंनसंभ्रमः ५१ बुद्ध्वाजीवगतिंधीरोमुक्तसंगश्चरेदिह ॥ सम्यक्दर्शनयाबुद्ध्यायोगवैराग्ययुक्तया ॥ मायाविरचितेलोकेचरेन्न्यस्यकलेवरम् ५२

इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेद्वात्रिंशोध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

नन्वेवंतर्हिपापजीवमस्यसंसारबंधएवनास्त्यान्मुक्तिरीदृक्दुःखनिवर्तकसाधनाभावादित्यत्राह आत्मनइति आत्मनोजीवस्यकेवल्यहरिज्ञानमेवार्थःपुरुषार्थ. ईदृक्दुःखनिवृत्तिसाधनलक्षणइत्य र्थः एवंविधज्ञानोत्पत्तौमुख्यसाधनंध्वनयति देहादीति अहंममेतिदेहाद्यसंगएवसाधनमित्यर्थः ननुदेहाद्यसंगिनोजीवस्योत्पद्यमानंकथंकारमुत्पद्यतेज्ञानमित्यतस्तत्प्रकारमाह सुखदुःखादयइति पत्थमानंब्रह्मोजश्चेत्यादिश्रुतेः स्वतःसुखादिरूपत्वादात्मनोजीवस्यसुखदुःखादयोभावानसंति किमुतदेहस्याचेतनत्वादितिचशब्दार्थः ५० तस्मादिति यस्माद्देहदेहिनोर्नसर्वसुखादयोभावाः किंवा भिमानिकाःअज्ञानादुत्पद्यंते तस्मात्त्रासादिकंनकार्यमित्यर्थः ५१ ननुजीवन्मुक्तोस्मिंल्लोकेकथंवर्ततइतितत्राह बुद्ध्वेति यस्यदेहाद्यसंगिनोजीवस्यकलेवरंमायाविरचितेश्रीनारायणेन्न्यस्ते मितेलोकेकर्मभूमौचरेद्वर्तेतवर्तेत समुक्तसंगोधीरोगंभीरोज्ञानी सम्यक्यथार्थदर्शनंज्ञानंयस्याःसातथातयाभक्तियोगवैराग्ययुक्तयाबुद्ध्याजीवानांगतिंस्वर्गनरकादिरूपांमायाश्रयंश्रीनारायणंबुद्ध्वाचरेत् निरंतरंनिषेव्यमाणश्चरेद्वर्तेतइत्यन्वयः ॥ ५२ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांद्वात्रिंशोध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ ७ ॥ ॥ ८ ॥ ॥ ७ ॥

अर्चिरादिमार्गेणयानांवृत्तिमुक्तिसाधनंसत्वमभक्तयैकलभ्यइत्यर्थमस्मिन्नध्यायेवक्ति      तत्रादौधूमादिमार्गेःकर्मिणांस्वर्गप्राप्तिसाधनंसोपिपिद्धगवद्भक्तिमनपेक्षतेत्येवंप्रतिपादनार्थंभक्तिरेवैतिदर्शयितुमाह      अ
थेति अथप्रवृत्तिमार्गस्थस्यफलमुच्यते किंतदिति      योगृहेस्थितोगृहमेधीयान्गृहस्थयोग्यान्धर्मानेवावसन्तेष्वेववर्तमानोधर्ममर्थंचकामंचदोग्धितत्फलमितिशेषः भूयस्तानेवपिपर्ति पुनःपुनःपूरय
तीत्यर्थः पुत्रादिषूपदेशेनरक्षतिस्वपंक्तत्वावर्ततीत्यर्थः   १   तद्धर्मनप्रकारमाह   सचापीति   चशब्दोहेत्वर्थः   दुःखनिवृत्तिसुखप्राप्तिलक्षणभगवद्धर्माद्भक्तिसाधनात्पराङ्मुखोपिकाममूढ
श्चक्स्रक्चंदनवनितादिकाममूढत्वेनसक्रतुभिर्देवान्यजतेश्राद्धादिनापितॄंश्चेत्यन्वयः   २   तत्पूजाफलमाह तच्छ्रद्धयेति   तेषांदेवादीनांयजनकर्तव्यताश्रद्धयापितॄणांदेवानांसंतुष्टियोग्यव्रतंदस्यसत
था धूमादिमार्गेणचांद्रमसंचंद्रेणाधिकृतंलोकंस्वर्गैकदेशंगत्वाभगवद्धर्मात्पराङ्मुखःपुमान्पुण्यफलंभुक्त्वापुनःपापफलंभोक्तुंनिरयमेष्यति   भगवद्धर्मापद्वकःस्वर्गकाममूढः पुमान्स्वर्गंगत्वाभुक्तपुण्यशेषेण
पुनर्भूलोकमुपैष्यतिइत्येतच्चात्पर्यार्थः ईषद्भक्तोभगवति सुकर्मास्वर्गमेष्यति । अभक्तोनिरयंयातिसुकर्मापिनसंशयइत्यनेनगावगम्यते   ३   प्रवृत्तिधर्मिणांलोकानामंतवत्त्वेनतच्छ्रद्धानकार्येतिभावेनतन्ना
शावधिमाह यदेति चशब्देनलोकनाशस्यावश्यंभावित्वमाह ४ ५ निवृत्तिधर्मिणांमार्गगम्यंतत्साधनंचसंक्षिप्याह निवृत्तीति पुरुषस्यदृष्टकर्मस्वधर्माख्येन यत्तो...

श्रीभगवानुवाच ॥ अथयोगृहमेधीयान्धर्मानेवावसन्गृहे ॥ धर्ममर्थंचकामंचदोग्धिभूयःपिपर्तितान् १ सचापिभगवद्धर्मात्काममूढःपराङ्मुखः ॥ यजतेक्रतुभिर्देवान्पितॄंश्चश्रद्धयान्वितः २ तच्छ्रद्धयाक्रांतमतिःपितृदेवव्रतःपुमान् ॥ गत्वाचांद्रमसंलोकंसोमपाःपुनरेष्यति ३ यदाचाहींद्रशय्यायांशेतेनंतासनोहरिः ॥ तदालोकालयंयांतितएतेगृहमेधिनाम् ४ येस्वधर्मान्नदुह्यंतिधीराःकामार्थहेतवे ॥ निःसंगान्यस्तकर्माणःप्रशांताःशुद्धचेतसः ५ निवृत्तिधर्मनिरतानिर्ममानिरहंकृताः ॥ स्वधर्माख्येनसत्वेनपरिशुद्धेनचेतसा ६ सूर्यद्वारेणतेयांतिपुरुषंविश्वतोमुखम् ॥ परावरेशंप्रकृतिमस्योत्पत्त्यंतभावनम् ७ द्विपरार्धावसानेयःप्रलयोब्रह्मणस्तुते ॥ तावदध्यासतेलोकंपरस्यपरचिंतकाः ८ क्ष्मांभोनलानिलवियन्मनइंद्रियार्थभूतादिभिःपरिवृतः प्रतिसंजिहीर्षुः ॥ अव्याकृतंविशतियर्हिगुणत्रयात्माकालंपराख्यमनुभूयपरःस्वयंभूः ९

६ सूर्यद्वारेणार्चिरादिमार्गेणमानवनामानंपुरुषंयाति किंतत्रैवावस्थानमुतान्यत्रापीतितत्राह विश्वतोमुखमिति विश्वंकार्यविकारेणाप्येनपुरुषेणेत्यनुवर्तनं एवं मानवपुरुषेणामतीकालंबनाअपिविश्वतोमु
खंसर्वज्ञंपरावरेशंमुक्तामुक्तप्रपंचेश्वरंप्रकृतिंमूलकारणमस्यजगतउत्पत्त्यंतभावनं सृष्टिसंहारकारणंविष्णुंयातीत्यन्वयः इदमुक्तंभवति प्रतीकालंबनाअप्रतीकालंबनाउभयेपिज्ञानिनोविष्णुप्राप्त्या
भिमानवपुरुषेणकार्यब्रह्मप्रापितास्तत्समीपेवसंतीति ७ प्रतीकालंबनानामप्रतीकालंबनानांचकियंतंकालंतत्रनिवासइतितत्राह द्विपरार्धेति द्विपरार्धस्यावसानसमाप्तिर्यस्मिन्कालेसतथोक्तः सब्रह्म
णःप्रलयोयावताकालेनभवतितावंतंकालंपरस्यपरचिंतकाःपरमात्मोपासकास्तेउभयेपिकार्यब्रह्मलोकेसत्याख्येऽध्यासतेमुक्तास्तिष्ठतीत्यन्वयः नात्राधिकःकर्मापेक्षा किंत्वधिकस्येविज्ञातव्यम् ८
ब्रह्मप्रलयेविमुक्तिःकीदृशीतितत्राह क्ष्मेत्यादि गुणत्रयात्मासत्वादिगुणत्रयादानकर्ता परःसर्वजीवोत्तमः स्वयंभूःब्रह्मापरंद्विपरार्धाख्यंस्वंकालमनुभूयप्रतिसंजिहीर्षुःस्वसृष्टंजगत्संहर्तुकामःक्ष्मांभो
नलानिलवियन्मनइंद्रियार्थभूतादिभिःपृथिव्यादिपंचभूताभिमानिदेवैर्मनोभिमानिभिरिंद्रियाभिमानिभिरर्थाःशब्दादयस्तदभिमानिभिर्भूतादिभिरहंकारतदभिमानिभिर्देवैः सार्धंब्रह्मरंध्रेणगरुडशेषमार्ग
द्व्येनात्मानंप्रविष्टैःपरिवृतःअव्याकृतंलक्ष्मीतत्वंयर्हियदाविशतिलक्ष्मीद्वारापरंब्रह्मविशतीत्यर्थः ९

तदापरेत्यदेहान्योगेनविसृज्यैवंमुक्तप्रकारेणदेवयानेनगत्वाभगवंतंवैकुंठनाथंब्रह्म.णंचानुप्रविष्टाजितमरुन्मनसः प्राणवायुमनोजयाअतएवविरागाविदग्धकृष्णरहिताःयेयोगिनोज्ञानिनस्तेस्वादिंब्रह्मारेणाप विष्टब्रह्माणस्तेनब्रह्मणासाकममृतंनित्यमुक्तंप्रधानसर्वोत्तमंपुरुषंपूर्णषड्गुणंब्रह्मोपयांतिलिंगशरीरस्यागलक्षणांमुक्तिंप्राप्नुवंतीत्यर्थः । ननु शरीराभावेजीवत्वमपिनष्टंस्यादित्यतउक्तं अगताभिमानाइति अत्यक्तजीवत्वाभिमानाः १० एतदेवमुक्तिस्वरूपंविविच्यदर्शयति आद्यइति योवेदगर्भोब्रह्मास्थिरचराणांस्थावरजंगमानामाद्यआदीभूत सर्षिभिर्मरुद्ध्योसहसकारूभरद्वाजोषानैर्ज्ञानिभिः सिद्धैःसाधनसामग्रीमद्भिर्योगेश्वरैःकुमाराद्यैःसनकाद्यैर्योगाचार्यैश्चसह ११ भेददृष्ट्याजीवेश्वरादिविषयपंचविधभेदज्ञानेनभेदज्ञानस्यमुक्तिरजनज्ञानवद्दृढत्वेनतेनमुक्तिनिश्चयइत्यतउक्तं अभिमानेनेति अभिमानेनपूर्णज्ञानेनयावतामुक्तिःस्यात्तावताज्ञानेनेत्यर्थः निःसंगेनफलाभिसंधिरहितेनज्ञानोत्तरकालीनेनकर्मणापिजगत्सृष्ट्यादिकर्तृत्वात्सगुणंज्ञानैश्वर्याद्यनंतगुणोपेतं नेदं शबलमित्याह ब्रह्मेति । अथकस्मादुच्यतेब्रह्मेतिबृहंतोह्यस्मिन्गुणाइतिश्रुतेः । स्वतएवसर्वगुणपूर्णमित्यर्थः नाकाशवन्निरूपमित्याह पुरुषमिति भक्तानुकंपयागृहीतपुरुषाकारं अनेनगुणाश्चैश्वर्यादयः नतुसत्त्वादयइतिव्यनक्ति ऐश्वर्यस्यसमग्रस्यवीर्यस्ययशसःश्रियइत्यादेः इतोपिनशबलमित्याह पुरुषर्षभमिति क्षराक्षरपुरुषातीतत्वात्पुरुषोत्तमंसंगतःप्रविष्टोभवति सायुज्यादिलक्षणांमुक्तिंप्राप्नोतीत्यर्थः १२ सब्रह्मादिजीवसंघःसृष्टावपिसायुज्यमेवभुंक्तेकिंततोनिर्गच्छतीतितत्राह ससंगत्येति सब्रह्मादिजीवराशिःसंगत्यप्रलयेप्रविश्यपरमेश्वरंपुनःकालेनकालांतर्यामिणेश्वरमूर्तिनाहरिणाकाले

एवंपरेत्यभगवंतमनुप्रविष्टायेयोगिनोजितमरुन्मनसोविरागाः ॥ तेनैवसाकममृतंपुरुषंपुराणंब्रह्मप्रधानमुपयांत्यगताभिमानाः १० आद्यःस्थिरचराणांयोवेदगर्भःसहर्षिभिः ॥ योगेश्वरैःकुमाराद्यैःसिद्धैर्योगप्रवर्तकैः ११ भेददृष्ट्याभिमानेननिःसंगेनापिकर्मणा ॥ कर्तृत्वात्सगुणंब्रह्मपुरुषंपुरुषर्षभम् १२ ससंगत्यपुनःकालेकालेनेश्वरमूर्तिना ॥ जातेगुणव्यतिकरेयथापूर्वंप्रजायते १३ ऐश्वर्यंपारमेष्ठ्यंचतेपिधर्मविनिर्मितम् ॥ निषेव्यपुनरायांतिगुणव्यतिकरेसति १४

गुणव्यतिकरेसृष्टिलक्षणेजातेप्राप्तेअगुणव्यतिकरेत्रिगुणव्यतिकररहितेबहिःश्वेतद्वीपेयथापूर्वंमुचुकुंदादिभावेनयथासंसारदशायामस्यं अन्योन्यभेदेनास्थितस्तथाप्रजायतेप्रादुर्भूतानदोदर्दते योवेदगर्भः प्रलयेप्राप्तेपरमेश्वरंसंगत्यपुनःसृष्टिकालेप्राप्तेयथापूर्वंप्रजायतइतिवा तदुक्तं । ब्रह्माद्यैःपरिवृतःप्रलयेपरमेश्वरं । प्रविश्यसर्गेतुपुनःश्वेतद्वीपेप्रमोदते १३ एषांमुक्तानामपिनिर्गमनिर्गमःप्रतिलपंभगवतः वेशश्चनित्यइतिभावेनाह ऐश्वर्यमिति तेमुक्ताअपिसंभाविताःहरिणेतिशेषः सृष्टिकालेप्राप्तेहरेर्निर्गताःश्वेतद्वीपेपारमेष्ठ्यंचपरमेष्ठिनः सर्वोत्तमस्यहरेःप्रसादादुपपन्नं धर्मविनिर्मितंज्ञानधर्मफलंऐश्वर्यं अणिमादिभोगजातंतत्विषेव्यभुक्त्वापुनर्गुणव्यतिकरेऽसतिप्रलयेप्राप्तेस्वोत्तमप्रवेशपूर्वकंपरमेश्वरमायांतीत्येवंमुक्तागमस्यसृष्टौसंहारेच संसर्गानिर्गमौस्वरूपानंदभोगोबहुविधःविषयभोगाश्चसंतीति तदुक्तं ज्ञानधर्मफलांस्तत्रभोगान्भुक्त्वालयेपुनः । नारायणंसमाविश्यज्ञानव्यक्तंनिजंसुखम् । भुंजतेत्वेवमेवैषांकालेसंसर्गनिर्गमौ । नित्यौनित्यसुखंचैवसृष्टौभोगास्तथोत्तमाः । गुणव्यतिकराभावेप्युचुकुंदादिपूर्ववत् । विष्णोश्चैवविमुक्तानांनकदाचनगच्छतीति । सर्वेऽस्मैदेवाबलिमावहंतीतिश्रुतेः । सर्वंजीवोत्तमस्यब्रह्मणोनीचत्वंहरेरेवनान्यस्मात् तदुक्तं अधारूपेहरेःसर्वंगुणैर्नीचात्मता सदा । ब्रह्मणश्चतथान्येषामन्येषांचयथापदमिति १४

मीत्यादिममर्थं कथं जानामीत्यत उदाहरति यथा महानिति महान्महत्तत्त्वाभिमानी ब्रह्मा वैकारिकात्मना त्रिवृत्त्रिविधोऽहंकारोऽहंकाराभिमानी रुद्रः आकाशादिपंचभूताभिमानित्वेन पंचविधः मनआद्येकादशेंद्रियाभिमानित्वेनैकादशविधः स्वराडिंद्रश्चैते अज्ञानिनां भौतिकशरीरत्वेनापि यथा प्रतीयंते तथा मत्स्यादिरूपं शरीरं ब्रह्मेत्यर्थः अभिमानित्वमात्रेणाभिमन्यमानदेहत्वं कथमित्यत उक्तं स्पष्टयति तस्येति इदमंडं सचराचरं जगत्तस्येंद्रस्य पुरीतिवयतो वदति अनेन ब्रह्मरुद्रयोरपि भौतिकदेहत्वं स्पष्टमित्युक्तं भवति अन्यथा प्रतीतावौदाहरणिके नुपयुक्तः स्यादित्येवं व्याख्यातमिति ज्ञातव्यम् । एकादशेंद्रियात्मा च पंचभूतात्मकस्तथा । सर्वाभिमानी भगवान्स्वराडिंद्रः पुरंदरः । इदमंडं जगत्सर्वं शक्रदेहं विदुर्बुधाः । तत्पाने त्रिगुणो रुद्रस्तस्य ब्रह्मा ततो हरिरिति वचनात् २९ तर्हि तद्ब्रह्म यथावज्ज्ञातुं कथं शक्यत इति तत्राह एतदिति एतैः साधनैः अधिकार्येतन्मत्स्याद्यवताररूपं ब्रह्म परिपश्यति प्राकृतदेहादिदोषराहित्येन ज्ञानानंदाद्यनंतगुणपूर्णत्वेनापरोक्षीकरोतीत्यन्वयः कैरित्यत उक्तम् श्रद्धयेत्यादिभिरिति नित्यशो नुक्षणं यमादियोगाभ्यासेन कीदृशोऽधिकारी समाहितात्मा हरावेव सम्यगर्पितमनाः निःसंगो दुष्टसंगरहितः निर्णीतसज्जनसंगो वा । निर्निर्णयनिषेधयोरिति यादवः । विरक्तः सर्वमसारमनित्यं चेति ज्ञानवान् इत्यनेनैतैरेव साधनैर्नापरैरैक्यज्ञानादिभिर्ब्रह्मदर्शनं स्यादिति सूचयति ज्ञानरूपमेकं निर्गुणं ब्रह्म भ्रांत्यार्थरूपेण पंचात्मनावभातीत्याद्यपव्याख्यानानिरासाय च मत्स्यकूर्मादिरूपं च विष्णोर्ज्ञानैकमात्रकामि

यथा महानहंकारस्त्रिवृत्पंचविधः स्वराट् ॥ एकादशविधस्तस्य वपुरंडं जगद्यतः २९ एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ॥ समाहितात्मा निःसंगो विरक्तः परिपश्यति ३० इत्येतत्कथितं गुर्वि ज्ञानं तद्ब्रह्मदर्शनम् ॥ येनैवबुध्यते तत्त्वं प्रकृतेः पुरुषस्य च ३१ ज्ञानं योगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ॥ द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ३२ यथेंद्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ॥ एको नानेयते तद्वद्भगवाञ्छास्त्रवर्त्मभिः ३३

त्याद्युदाहृतमाचार्यैरिति ज्ञातव्यम् ३० तत्त्वोपदेशमुपसंहरति इतीति ब्रह्म दर्शयतीति ब्रह्मदर्शनं तात्पर्यातिशयजननाय ज्ञानं विशिनष्टि येनेति प्रकृतिशब्दवाच्यस्य लक्ष्म्यादेः पुरुषशब्दवाच्यस्य विष्ण्वादेस्तत्त्वमनारोपितरूपं येन ज्ञानेनावबुध्यत इत्यन्वयः ३१ अवश्यज्ञानानुष्ठानार्थं येन विना मुक्तिमात्रं न स्यात्तत्साधनं निर्दिशति ज्ञानमिति यो नैर्गुण्यो भक्तिलक्षणो योगो यच्च ज्ञानं ज्ञानयोगस्तयोर्द्वयोरप्येक एवार्थो विषयः स क इति तत्राह भगवच्छब्देति भगवच्छब्दवाच्य इत्यर्थः भक्तिज्ञानयोगयोरैश्वर्याद्यनंतगुणपूर्णश्रीनारायणो विषय इति भक्तिज्ञाने मुक्तेरवश्यसाधने यथोपदिष्टे इति । ज्ञानभक्ती विना नैव मुक्तिः कस्यापि विद्यते । तयोरेकतरेणापि विष्णुगेनोभयं विना । एवमप्येतयोरेकभावेऽन्यनियतं ध्रुवम् । एकेनापि भवेन्मुक्तिस्तदर्थत्वान्यसाधनायेति वाक्यार्थं ज्ञानाय लक्षणमित्युक्तं लक्षणं नाऽनयोरिति विधा तोऽसूत्रितोपमर्थ इति ३२ एकस्यानेकगुणविषयत्वं कुत्र दृष्टमिति तत्राह यथेति यथा बहूनां शब्दस्पर्शरूपरसगंधगुरुत्वादीनां गुणानामाश्रयो बहुगुणाश्रय एकोऽर्थः पदार्थो नानेयते कैः पृथग्द्वारैः पृथक्कारणं वर्तनं येषां तानि तैर्भिन्नमार्गैरिंद्रियैः श्रोत्रेण शब्दवान् त्वचा स्पर्शवांश्चक्षुषा शुक्लादिरूपवान् जिह्वया रसवान् घ्राणेन गंधवान् पाणिना गुरुरिति ज्ञायते एवं स भगवानेको ज्ञानानंदादिबहुगुणाश्रयः शास्त्रवर्त्मभिर्वेदांतादिसच्छास्त्रमार्गैरानंदवान् ज्ञानवानित्यादि बहुगुणविषयत्वेन ज्ञायत इत्यन्वयः ३३

भक्तिज्ञानविषयवस्त्साधनक्रियादीनामपिभगवानेवविषयइत्याह क्रिययेत्यादिश्लोकत्रयेण क्रियया संध्यावंदनादिलक्षणया भगवल्लिंगानां दर्शनेनात्मनोमनसश्चक्षुरादींद्रियाणांजयेनकर्मणामशास्त्रविहि तानांसंन्यासेनत्यागेन ३४ एकस्यधर्मस्योभयचिह्नत्वंकथमितितत्राह यइति मतुप्प्रत्येकमभिसंबध्यते प्रवृत्तिमान्निवृत्तिमानिति भगवदुपासनादिप्रवृत्तिहिंसादिनिवृत्तिस्तद्वानित्यर्थः ३५ ३६ इदानींमुक्तपरममेयमुपसंहरति प्रावोचमिति ३७ संसृतीर्गतीःयासुसंसृतिषुप्रविशन्नयंजीवआत्मनः स्वस्यगतिंस्वरूपमात्मानंनवेद ३८ उपदिष्टतत्त्वज्ञानानधिकारिणआह नैतदिति खलइंद्रियारामोदुर्जनइत्यर्थः स्तब्धोगुरुनियोगमकुर्वाणःभिन्नोवैष्णवसमयेतरसमयनिष्ठः धर्मध्वजोदंभवान् ३९ लोलुपोविषयाभिलाषीखलत्वादिदोषरहितोपिभक्तश्चेदेवोपदेशयोग्यः भक्तं गेनापीत्याशयेनोक्तम् जात्विति नैतावतापूर्वतइत्याह नमद्भक्तद्विषामिति ४० तर्ह्यनधिकारित्वेनैतदुत्सादनंस्यादितितत्राह श्रद्दधानायेति अनसूयुर्गुणेषुदोषाविष्करणबुद्धिरहितः ४१ बहिःस्वर्गा

क्रिययाक्रतुभिर्दानैस्तपःस्वाध्यायदर्शनैः ॥ आत्मेंद्रियजयेनापिसंन्यासेनचकर्मणाम ३४ योगेनविविधांशेनभक्तियोगेनचैवहि ॥ धर्मेणोभयचिह्नेनयः प्रवृत्तिनिवृत्तिमान् ३५ आत्मतत्त्वावबोधेनवैराग्येणदृढेनच ॥ ईयतेभगवानेभिःसगुणोनिर्गुणःस्वदृक् ३६ प्रावोचंभक्तियोगस्यस्वरूपंतेचतुर्विधम् ॥ कालस्यचाव्यक्तगतेर्योंतर्धावतिजंतुषु ३७ जीवस्यसंसृतीर्बह्वीरविद्याकर्मनिर्मिताः ॥ यास्वंगप्रविशन्नात्मानवेदगतिमात्मनः ३८ नैतत्खलायोपदिशेन्नाविनीतायकर्हिचित् ॥ नस्तब्धायनभिन्नायनैवधर्मध्वजायच ३९ नलोलुपायोपदिशेन्नगृहारूढचेतसे ॥ नाभक्तायचमेजातुनमद्भक्तद्विषामपि ४० श्रद्दधानायभक्तायविनीतायानसूयवे ॥ भूतेषुकृतमैत्रायशुश्रूषाभिरतायच ४१ बहिर्जातविरागायशांतचित्तायदीयते ॥ निर्मत्सरायशुचयेयस्याहंप्रेयसांप्रियः ४२ यइदंशृणुयादंबश्रद्धयापुरुषःसकृत् ॥ योवाभिधत्तेमच्चित्तःसह्येतिपदवींचमे ४३ ॥ इतिश्रीमद्भागवते० तृतीयस्कंधेकापिलेयेत्रयस्त्रिंशोध्यायः ॥ ३३ ॥ मैत्रेयउवाच ॥ एवंनिशम्यकपिलस्यवचोजनित्रीसाकर्दमस्यदयिताकिलदेवहूतिः ॥ विस्रस्तमोहपटलातमभिप्रणम्यतुष्टावतत्त्वविषयांखिलसिद्धभूमिम् १

दौ प्रेयसांप्रियतमानांपुत्रादीनांसकाशात् तदेतत्प्रेयइतिश्रुतेः ४२ अधिकारिणःफलज्ञानात्क्षिप्रमप्रवृत्तिःस्यादित्यनस्तत्फलमाह यइदमिति अबहितादितवेदब्दइतिधातोरत्रस्यद्यापि कर्तृत्वेनैतत्संबुद्धिरंब मातःअभिधत्तेवक्ति हिदेतावधारणइत्यभिधानादुभयमपिग्राह्यं एत्येवममपदवीमितिहियस्मात्तस्मात्श्रवणादिकंकर्तव्यमिति ४३ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेविजयध्वजकृतटीकायांत्रयस्त्रिंशोध्यायः ॥ ३३ ॥ कपिलावतारेणोपदिष्टंतत्त्वज्ञानंदेवहूत्यांसिद्धमभूदितितत्स्तुतिव्याजेनविज्ञापयतइतितदेतत्प्रतिपाद्यतेस्मिन्नध्याये पूर्वंकर्दमस्यशुश्रूषयाकांतितांशीतिकरत्वाच्चदयितादिनामभेशाभूत्तादेवहूतिरेवंतदुक्तंनिशम्यतमभिप्रणम्यकपिलस्यविष्णुत्वंसूचयतीतंतुष्टावेत्यन्वयः कीदृशीविस्रस्तमुन्मीलितमोहपटलमज्ञानावरणंतिमिरंयस्याःसातथा कीदृशंतं ... श्रद्धयाभाषि ज्ञानमादयस्तेषांभूमिमाश्रयं यद्वा तत्त्वस्थितमज्ञानलक्षणंविषयपापयतीतितत्त्वविषयः भगवत्स्वाज्ञानरहितेत्यर्थ १

वस्यज्ञानंनास्तीतिध्वानैतंस्पष्टयति अथेति अयमंगलमस्तु भगवंस्तेतवजठराब्जजातःउदरनाभिपद्मसंभूतोब्रह्मास्वयंपद्मपुर्दध्यौ किंकिंयाविशिष्टमत्राह अप्ययांतइति अप्ययांतसलिलेप्रलयजलय ध्येशयानं प्रलयावसानेदध्याविति वा किंगुणविशिष्टमत्राह भूतेति आकाशादीनिभूतानिश्रोत्रादीनींद्रियाणिअर्थाःशब्दादय आत्मामनःएतेभ्योमयंरूपं । सर्वप्रधानमुद्दिष्टमितिवचनात् । तत्रप्रधान कार्यभूतादिभ्यःप्राधान्यकथनेनप्रधानादप्युत्तममितिज्ञातव्यं। स्वंप्रधानमपोदेवप्रधानादधिकोपतद्विवचनात् । अत्रप्रधानादिशब्देनउदभिमानिनोलक्ष्यादयोग्राह्या ततस्तद्गुणविशिष्टमित्यर्थः स्वतंत्रमपीतिभावेनाह गुणप्रवाहमिति सृष्ट्यादौसत्वादिगुणान्प्रवाहयतिप्रवर्तयतीति ज्ञानादिगुणाःप्रवहंति इतोवाह गुणप्रवाहमिति ज्ञानादिगुणानांप्रवाहोयस्मिंस्तथा तस्माद्गुणविशिष्टमित्य तदुक्तं सदिति सत्सत्यं सत्सत्वेभ्योहितंश्रेष्ठेसाधीयासिभवत्यपीतियादवः सदेवसौम्येदमग्रआसीदितिश्रुतेर्नशबलंकिंतुनिर्गुणं । इदंनिर्गुणंचेज्जगत्कथंअन्यस्मादित्यतउक्तं अशेषबीजमिति जगद्बीजं कंनिर्गुणमेवसृष्टइत्यर्थः २ जगद्बीजकत्वंस्पष्टयंतीभवानपिसएवेत्याह सएवेति सएवतादृक्त्वपुष्मानेवाणुमात्रभेदरहितोभगवान् विश्वस्यसर्गादिविधत्तइत्यन्वयः युगपत्केत्याह गुणप्रवाहेष्विति गुण प्रवाहेषुगुणैःसृष्ट्यादिपरंपरासुब्रह्मादिरूपेणविभक्तंराजससात्विकतामसप्रवर्तकत्वभेदेनपृथक्कृतंवीर्यंमाहात्म्यंयस्यसतथा कार्येषुप्रवर्तमानोदेवदत्तवत्क्लिष्टकारीकिंनेत्याह अनीहइति अत्रहेतुगर्भविशेष

देवहूतिरुवाच ॥ अथाप्ययांतेसलिलेशयानंभूतेंद्रियार्थात्ममयंवपुस्ते ॥ गुणप्रवाहंसदशेषबीजंदध्यौस्वयंयज्जठराब्जजातः १ सएवविश्वस्यभवान्वि धत्तेगुणप्रवाहेषुविभक्तवीर्यः ॥ सर्गाद्यनीहोवितथाभिसंधिरात्मेश्वरोऽतर्क्यसहस्रशक्तिः २ सत्वंभृतोमेजठरेणनाथकथंनुयस्योदरएतदासीत् ॥ विश्वंयु गांतेवटपत्रएकःशेतेस्ममायाशिशुरंघ्रिपानः ३ त्वंदेहतंत्रःप्रशमायपाप्मनांनिदेशभाजांचविभोविभूतये ॥ यथावतारास्तवसूकरादयस्तथायमप्यात्म पथोपलब्धये ४ यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपिक्वचित् ॥ श्वादोपिसद्यःसवनायकल्पतेकुतःपुनस्तेभगवन्नुदर्शनात् ५

णमाह अवितथाभिसंधिरिति सत्यसंकल्पादित्यर्थः एवंविधोन्योनास्तीतिभावेनाह आत्मेश्वरइति अविशेषेणात्मनांजीवानामीश्वरत्वादन्योनास्तीत्यर्थः एकस्मिन्नपिचिन्नशक्तित्वभावादीश्वरत्वंकथमु पपद्यतइतितत्राह अतर्क्येति विचित्रशक्तिःपुरुषःपुराणइतिश्रुतेः, २ अतर्क्यशक्तिसहस्रत्वमनुमापयति सत्वमिति नाथयस्यतवजठरएतद्विश्वमासीत्युगांतेमायपेच्छयाशिशुरंघ्रेरंगुष्ठस्यपानंयस्यसौ त्रिपानोभूत्वाएकएवसन्वटपत्रेशेतेसत्वंमेजठरेणकथंनुभृतःस्मअहोतवातर्क्यसहस्रशक्तित्वमनुमिनोमियतोहंसर्षपमात्रभारमपिवोढुमशक्तात्रैलोक्यधरंत्वामवहमिति ३ इदानींकपिलस्यभगवतोऽतर्क्य सहस्रशक्तिनाहारिणैकत्वंप्रकाशयतदवतारप्रयोजनंविज्ञापयति त्वंदेहतंत्रइति विभोव्याप्त देहेनतंत्रंसृतिः प्रकाशोयस्यसतथा सत्वंसाच्चिदानंदात्मकदेहेनेवप्रकाशितवानवतारवानसि नतुजीववत्प्राकृत भौतिकदेहवत्त्वेन देवयथानवसूकरादयोवताराःहिरण्याक्षादिपाप्मनांप्रशमायपयानिदेशभाजामाज्ञाकारिणांब्रह्मादिदेवानांविभूतयेक्रताःस्युस्तथायमप्यवतारः कल्पादिनाण्लुप्तस्यात्मपथस्य ज्ञानमार्गस्योपलब्धयेप्रकाशनायत्वयाकृतइतिशेषः ४ कीर्तनेपितवदर्शनादिनाकृतार्थाइत्यत्रकैमुत्यन्यायमाह यन्नामधेयेति श्वादःश्वभक्षकःसवनायसोमक्रतावहननाय यज्ञकरणायेत्यर्थः

नमपोतद्धापावदुक्तंकिंतुमात्रोपदेशवदतोत्रत्वयास्तिक्यबुद्धिःकर्तव्येत्याह श्रद्धस्वैतदिति मह्यंममया मुदिश्येतिवानैवत्तंत्रज्ञानमुक्तंकिंतुवैदिकभेदोविधानेनाह जुष्टमिति तस्माप्रमादरहेतुश्चेद्वैदिकसम्य प्रयोजकमितितत्राह येनेति अनेनत्वंसाक्षात्परंब्रह्मोविदेवहुत्यापदुक्तंतत्तत्यामितिद्योतितं विपक्षबाधकमाह मृत्युमिति नतन्मदंविदंतीत्यतद्विदःमृत्युसंसारंतन्मतविरुद्धमैक्यप्रतार्केतीति मृत्युंनिस्तरणरूपमंधंतमोगच्छंतीत्यर्थः ११ देवानांनृपुचिरवासोनधर्मइतिविदुषास्वयमपितज्ज्ञात्वा पुनर्हरिणाकिमकारीतितत्राह इतीति इतिशब्देनभगवज्ज्ञानरपसमग्रानुग्रहहेतुत्वलक्षणत्वंवक्तिउपदेशेनप्रदर्श्यमातुर्विश्वासार्थंकंचित्प्रसंगात्स्वात्मनोगतिंस्वरूपास्थितिंवाप्रदर्श्यैत्यनेनद्योतयति उशतीमभीष्टदर्शिणीं स्वेच्छाज्ञानोपदेष्टृत्वेनगुरुत्वादात्मपुत्रत्वेनसुहृत्त्वात्सादेवहूतिः पुत्रगमनंकथमनुज्ञासीन्निर्दयहृदयत्वेनेत्याशंक्यापरिहार्यत्वाद्ब्रह्मज्ञानित्वात्स्वात्मस्थत्वाच्च १२ तथापितस्याइतोधिकंदुःखंनाभूदितिलक्षयति साचापीति सादेवहूतिश्चस्वगार्हस्थ्यंतृणवद्दित्वा अक्लेशापिपुत्रविश्लेषणातुरासतीवदनंकिंचिच्चकारपुत्रविरहोत्पन्नदुःखानलशुष्कंकृतवतीत्यर्थः अपिसंभावितमेतत्लोकदृष्टत्वात् किंततोन्यत्रगतेत्यतउक्तं तस्मिन्निति सरस्वत्यास्तटेआसीनस्तत्समाहिता समाधानस्यफलमाह

श्रद्धस्वैतन्मतंमह्यंजुष्टंयद्ब्रह्मवादिभिः ॥ येनमामभयंयायान्मृत्युमृच्छंत्यतद्विदः ११ मैत्रेयउवाच ॥ इतिप्रदर्श्यभगवान्सतीमात्मनोगतिम् ॥ स्वमात्राब्रह्मवादिन्याकपिलोनुमतोययौ १२ साचापितनयोक्तेनयोगादेशेनयोगयुक् ॥ तस्मिन्नाश्रमआसीनासरस्वत्याःसमाहिता १३ अभीक्ष्णावगाहकपिशानजटिलान्कुटिलालकान् ॥ आत्मानंचोग्रतपसाबिभ्रतीचीरिणंकृशम् १४ प्रजापतेःकर्दमस्यतपोयोगविजृंभितम् ॥ स्वगार्हस्थ्यमनौपम्यंप्रार्थ्यंवैमानिकैरपि १५ पयःफेननिभाःशय्यादांतारुक्मपरिच्छदाः ॥ आसनानिचहैमानिसुस्पर्शास्तरणानिच १६ स्वच्छस्फटिककुड्येषुमहामारकतेषुच ॥ रत्नदीपार्चिषोभांतिललनारत्नसंयुताः १७ गृहोद्यानंकुसुमितैरम्यंबह्वमरद्रुमैः ॥ कूजद्विहंगमिथुनंगायन्मत्तमधुव्रतम् १८ यत्रप्रविष्टमात्मानंविबुधानुचराजगुः ॥ वाप्यामुत्पलगंधिन्यांकर्दमेनोपलालितम् १९ हित्वातदीप्सिततममप्याखंडलयोषिताम् ॥ किंचिच्चकारवदनंपुत्रविश्लेषणातुरा २०

योगादेशेनेति योगादेशेनज्ञानलक्षणोपायोपदेशेनकारणेनयोगंभगवद्ध्यानंयुंक्तइतियोगयुक् १३ तथानेनांतरशुद्धिरस्याएवंबाह्यशुद्धिरप्यस्तीतिभावेनाह अभीक्ष्णेति अनेननित्यस्नानेनस्त्रीणांविध्यादौस्नानंव्यावर्तयति आत्मानंदेहंकृशंबिभ्रतीत्यनेनफलमूलाद्यशनमपिनास्तीतिलक्ष्यते १४ स्वगार्हस्थ्यस्यत्यागेकिंकारणंयेनयोगनदुःसंस्पादितितत्राह अनौपम्यमित्यादिना नउपमायायोग्यंयस्यतदनौपम्यं वैमानिकैर्देवैरेवंविधमाहात्म्येनिमित्तमाह प्रजापतेरिति १५ प्रार्थ्यत्वेनिमित्तमाह पयःफेननिभाइति यत्रगार्हस्थ्ये गोक्षीरफेनमृदुशय्यादयःसंतीतिशेषः दांताःगजदंतनिर्मिताःरुक्मेणस्वर्णेनपरिच्छदोलंकारोयासांताः सुस्पर्शाःस्पर्शसुखकराःआस्तरणानिकटादयोयेपुतानितथा १६ ललनारत्नैःसंयुतारत्नदीपार्चिषःकुड्यपुन्यस्तस्त्रीरत्नहस्तन्यस्तरत्नदीपार्चिषःस्वच्छस्फटिकादिमणिमयकुड्येषुभांतीत्यर्थः १७ कुसुमितैर्बहुभिरमरद्रुमैःरम्यंगृहोद्यानंचभातीत्यर्थः १८ यत्रगृहोद्यानेउत्पलगंधिन्यांवाप्यांप्रविष्टंकर्दमेनोपलालितमात्मानंविबुधानुचराजगुरित्यन्वयः १९ पुनरपिकीदृशंस्वगार्हस्थ्यमाखंडलयोषितामिंद्रस्त्रीणामपीप्सिततममत्यर्थंकमनीयम् २०

पत्युर्विरहादपिपुत्रविरहोदुःसहइतिभावेनोक्तमेवविवृणोति वनमिति २१ नन्वेवंतर्हिपुत्रविरहोद्भूतदुःखार्तमनाभगवदुपास्तिमप्यमांक्षीत्किंतत्राह तमेवेति अनेनतस्याउपास्तिप्रकारोदर्शितःइ
ति एवकारेणसूचितांविजातीयव्यावृत्तिंस्पष्टयति निस्पृहेति २२ ननुसुतोक्तमन्यदन्यदुपास्तेपुत्रवियोगभ्रांतबुद्धित्वादित्याशंक्याह ध्यायतीति समस्तचिंतासर्वांगध्यानं व्यस्तचिंता
एकैकावयवचिंतातया २३ तस्याउपास्तेःफलमाह भक्तिप्रवाहेति सादेवहूतिर्विष्णुःसर्वोत्तमइतिज्ञानसहितनिरतिशयप्रेमलक्षणभक्तिनदीप्रवाहयोगेनबलीयसाब्रह्मादेःपुरुषार्थश्रुतिपुरुषद्व
ष्ठिरादिहेयेनबलिष्ठेनवैराग्येणयुक्तंयदनुष्ठानंप्रवणंध्यानंतस्माज्जातेनब्रह्महेतुनापरब्रह्मप्रसादजननकारणेन ब्रह्मेहेतिनेति पाठेब्रह्मवशीकरणायुधेनेत्यर्थः २४ अतएवविशुद्धेनैकत्वसंशयलक्षणदो
षरहितेनाविर्भूतेनज्ञानेनात्मनास्वस्वरूपमनसात्मानंस्वबिंबभूतंविश्वतोमुखंसर्वज्ञंच स्वतएवस्वानुभूत्यातिरोभूतदूरतोनिरस्तंमायागुणैःसत्वादिभिःदेहबंधलक्षणपस्यतथाल हरिंददर्शेतिशेषः २५
साऽपरोक्षज्ञानोदयानंतरमीदृशीमवस्थाप्रापेत्याह ब्रह्मणीति सायदापरमात्मानमद्राक्षीत्तदात्मानंस्वशरीरंनसस्मारेत्यन्वयः कीदृशीआत्मसंश्रयेस्वाधारेभगवतिषड्गुणपूर्णेब्रह्मणिकालनोदेश

वनंप्रव्रजितेपत्यावपत्यविरहातुरा ॥ ज्ञाततत्त्वाप्यभून्नष्टेवत्सेगौरिववत्सला २१ तमेवध्यायतीदेवमपत्यंकपिलंहरिम् ॥ बभूवाचिरतोवत्सनिस्पृहातादृशेगृहे २२ ध्यायतीभगवद्रूपंयदाहध्यानगोचरम् ॥ सुतःप्रसन्नवदनंसमस्तव्यस्तचिंतया २३ भक्तिप्रवाहयोगेनवैराग्येणबलीयसा ॥ युक्तानुष्ठानजातेनज्ञानेनब्रह्महेतुना २४ विशुद्धेनतदात्मानमात्मनाविश्वतोमुखम् ॥ स्वानुभूत्यातिरोभूतमायागुणविशेषणम् २५ ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये ॥ निवृत्तजीवभावत्वात्क्षीणक्लेशाप्तनिर्वृतिः २६ नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमा ॥ नसस्मारतदात्मानंस्वप्नदृष्टमिवोत्थितः २७ तद्देहःपरतःपोषोप्यकृशश्चाध्यसंभवात् ॥ बभौमलैरवच्छन्नःसधूमइवपावकः २८ स्वांगंतपोयोगमयंमुक्तकेशंगतांबरम् ॥ दैवगुप्तंनबुबुधेवासुदेवप्रविष्टधीः २९

तोगुणतोव्याप्तेइरावत्स्थितमतिरेकाग्रमनावृत्तजीवभावत्वान्मुक्तलिंगशरीराभिमानत्वाद्धीतक्लेशानिरस्तदुःखाप्राप्तनिर्वृतिराप्तपरमानंदा २६ नित्यारूढसमाधित्वान्नित्यंहरावेवसंनिविष्टमनस्क
त्वात्परावृत्तगुणभ्रमापरावृत्तःपराभूतःगुणेषुशब्दादिविषयेषुदुःखसाधनेषुसुखसाधनत्वबुद्धिभ्रमोयस्याःसाकथमिवस्वप्नदृष्टमिवोत्थितःस्वप्नादुत्थितः स्वप्नेदृष्टपदार्थमस्मरतितथेति नान्विदंनिदर्शनं
निवृत्तजीवभावत्वेकथमुपपद्यते स्वप्नद्रष्टाजीवत्वानिवृत्तेरितियमाशंका । जीवोपाधिप्रभूतयआमुक्तेःसर्वदेहिनाम् । नियमात्स्वप्नभावस्तुनिष्फलत्वादुदीयेत्यनेनपरिहरणीया । एतत्स्मृत्यर्थद्योतना
यस्वप्नोत्थितनिदर्शनमितितात्पर्यार्थोज्ञातव्यः २७ इदमपरोक्षज्ञानोदयानंतरंलक्षणमित्याह तद्देहइति यस्यदोषापगतःसतस्याःदेहःबभावित्यन्वयः आध्यसंभवाच्छरीरकार्श्यहेतुमनोदुःखाभावाद
कृशत्वंअकृतइतिपाठेविहितस्नानादिशून्यइत्यर्थः युगेऽक्षपातेपयसिक्लतर्कोबोहितेर्थवदितिपादव. पद्माक्षपर्यंतोसमायमारब्धकमा २८ शरीराभिमानाभावादाह्यसंभवोत्तुमीरतइतिभावेनाह स्वांगमिति
गोपत्रभावात्स्वर्थंतदेहावस्थानमत्राह दैवेति दैवेनहरिणागुप्तंरक्षितं रक्षणेनिमित्तमाह वासुदेवेति २९

श्रवणसुखस्याप्यस्यप्रसंगस्यकदानुसमाप्तिरितिमंदाशंकांपरिहरंस्तद्देहस्यप्रारब्धकर्मनिर्वाणेनतस्याः श्रीनारायणप्राप्तिंवक्ति एवंसेति आविरहंसर्वगतंनिर्वाणंप्रकृतिप्राकृतशरीररहितंनिर्वृतंवा हेत्य
नेनेतिहाससमाप्तिंसूचयति ३० पूर्वंशुक्लस्यहरेरश्रुबिंदुनिपाताद्बिंदुसरोनामाभूत् इदानीमस्याःदेवहूत्याःसिद्धपदहेतुत्वात्सिद्धपदमितिनामांतरंवक्ति तद्वीरेति वीरविदुर ३१ तत्रतद्देहोऽदृश्यभावं
चक्षुःपालगोचरत्वेञ्लोकहितैषणक्षेत्रस्तुतिव्यर्थांस्यादितितत्राह तस्याइति तन्मर्त्यंशरीरंस्रोतसांनदीनांप्रवराऽसरित् ३२ पूर्वंकपिलगमनस्यकर्मनोक्तत्वात्पूर्वंतद्गमनंवक्ति कपिलोपीति महायोगी
पूर्णज्ञानीप्रागुदीचींदिशंशंकररक्षिताम् ३३ दत्तेअर्हणनिकेतनेपूजानिवासस्थानेयस्मैसतथा ३४ योगंध्यानलक्षणंप्राणायामलक्षणंवा सांख्याचार्यैःयथार्थज्ञानोपदेष्टृभिःसनकादिभिः नाहं
योगःस्वप्रयोजनोपदेशार्थःकिंतुलोकसुखार्थइत्याह त्रयाणामिति उपशांत्यैमंगलाय ३५ मैत्रेयोविदुरंसंबोधयंस्तत्प्रश्नपरिहारकथनमुपसंहरति एतन्निगदितमिति नकेवलंदेवहूत्याएवसिद्धिहेतुः

एवंसाकपिलोक्तेनमार्गेणाचिरात्परम् ॥ आत्मानंब्रह्मनिर्वाणंभगवंतमवापह ३० तद्वीरासीत्पुण्यतमंक्षेत्रंत्रैलोक्यविश्रुतम् ॥ नाम्नासिद्धपदंयत्रसा
सिद्धिमुपेयुषी ३१ तस्यास्तद्योगविधुतमार्त्यंमर्त्यमभूत्सरित् ॥ स्रोतसांप्रवरासौम्यसिद्धिदासिद्धसेविता ३२ कपिलोपिमहायोगीभगवान्पितुराश्र
माद ॥ मातरंसमनुज्ञाप्यप्रागुदीचींदिशंययौ ३३ सिद्धचारणगंधर्वैर्मुनिभिश्चाप्सरोगणैः ॥ स्तूयमानःसमुद्रेणदत्तार्हणनिकेतनः ३४ आस्तेयोगं
समास्थायसांख्याचार्यैरभिष्टुतः ॥ त्रयाणामपिलोकानामुपशांत्यैसमाहितः ३५ मैत्रेयउवाच ॥ एतन्निगदितंतातयत्पृष्टोहंतवानघ ॥ कपिलस्यचसं
वादोदेवहूत्याश्चपावनः ३६ यइदमनुशृणोतियोभिधत्तेकपिलमुनेर्मतमात्मयोगगुह्यम् ॥ भगवतिकृतधीःसुपर्णकेतावुपलभतेभगवत्पदारविंदम्
॥ ३७ ॥ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयेचतुस्त्रिंशोध्यायः ॥ ३४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

किंतुलोकस्यचेतिचार्थः ३६ श्रोत्रादीनांक्षिप्रप्रवृत्त्यर्थंश्रवणादिफलमाह यइदमिति आत्मयोगगुह्यंपरमात्मप्राप्तिसाधनज्ञानोपायानांमध्येरहस्य य.सुपर्णकेतौगरुडध्वजेभगवतिकृतधीः श्रवणादि
नेदंमतमभिधत्तेअभ्यस्यति सचभगवत्पदारविंदमुपलभतेऽपरोक्षीकरोतीति ३७ ॥ सुनीलनीरदश्यामंसच्चिदानंदविग्रहं । रमारमणमीशानंविठ्ठलंसमुपास्महे ॥ १ ॥ यद्रत्नादलीनंगमृतोपाख्यानका
शिनी ॥ वनमालेवदेवेशतवकंठेविराजताम् ॥ २ ॥ तृतीयस्कंधमारुह्यगिरींद्रमिवगह्वरम् ॥ अवरूढेमायीमिन्गया कर्पाकुर्वतुसाधवः ॥ ३ ॥ इतिश्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणपरमहंसश्रीमद्बुधेः
द्रकृतायांश्रीमद्भागवतटीकायांपदरत्नावल्यांतृतीयस्कंधेचतुस्त्रिंशोध्यायः ॥ ३४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

इति श्रीमद्भागवते तृतीयः स्कंधः समाप्तः ॥

॥ अथ श्रीमद्भागवते चतुर्थस्कंधः प्रारभ्यते ॥

श्रीमध्ववल्लभहयग्रीवायनमः ॥ पशुपतिरपिप्रेक्षादक्षोयतोगमदुन्नतिंसकलजनतावंद्यंस्थानंध्रुवोयदनुग्रहात् ॥ पृथुन्यमहीदोहात्कीर्तिशुभ्रांसमपीपटत्तमिममजितंवंदारूणाममंदमुदंनुमः ॥ १ ॥ अभिनवरविप्रद्योतालोविभासिवपुःश्रियंहरिहयहरब्रह्मश्लाघ्यप्रभूतसदागिपन् ॥ कमलनयनस्वातंत्र्येक्षादयादरसत्क्रियांशरणमानेशंविश्वस्यास्योदयाश्रियमीमहे ॥ २ ॥ तृतीयस्कंधजलधेरुन्मज्ञोहंकथंचन ॥ चतुर्थस्कंधसरसीमवगाढुंपुनर्यते ॥ ३ ॥ मानेतिहाससंघातैरच्युताग्निसरोरुहे ॥ आत्मप्रद्योतनीभक्तिःपुनश्चप्रतिपाद्यते ॥ ४ ॥ अत्रादौहरौनिरतिशयप्रेमलक्षणभक्तिविधानायपशुपतेर्दक्षाध्वरध्वंसलक्षणचरित्रंवक्तुंस्वायंभुवमनुचरितमनुवदति । मनोस्त्विति । पुनःपुन.कथाप्रहुरभ्यासादुत्तमंफलं । विज्ञापयितुकामास्तुविद्वांसस्तत्रतत्रत्वितिवचनात् पुनरुक्तकथानुवादोनदोषायेतिज्ञातव्यं । विशेषवाचिनानुशब्देनापिफलाधिक्यं विशिनष्टि द्वौपुत्रौचेतिपुत्रानुकर्षणार्थश्चकारः ॥ १ ॥ भ्रातृमतीमप्याकूतिंपुत्रिकाधर्ममाश्रित्यरुचयेप्रादादित्यन्वयः । अस्यायःपुत्रोभवेत्समत्पुत्रएवेतिप्रतिज्ञायप्रदानंपुत्रिकाधर्मःराजा

ॐ नमोभगवतेवासुदेवाय ॥ मैत्रेयउवाच ॥ मनोस्तुशतरूपायांतिस्रःकन्याश्चजज्ञिरे ॥ आकूतिर्देवहूतिश्चप्रसूतिरितिविश्रुताः १ आकूतिंरुचयेप्रादादपिभ्रातृमतींनृपः ॥ पुत्रिकाधर्ममाश्रित्यशतरूपानुमोदितः २ प्रजापतिःसभगवान्रुचिस्तस्यामजीजनत् ॥ मिथुनंब्रह्मवर्चस्वीपरमेणसमाधिना ३ यस्तयोःपुरुषःसाक्षाद्विष्णुर्यज्ञस्वरूपधृक् ॥ यास्त्रीसादक्षिणाभूतेरंशभूतानपायिनी ४ आनिन्येस्वगृहंपुत्र्याःपुत्रंविततरोचिषम् ॥ स्वायंभुवोमुदायुक्तोरुचिर्जग्राहदक्षिणाम् ॥ ५ ॥

र्थंनपुत्राभावान्मनुनादौहित्रःपुत्रत्वेनवृतः किंतु ससाक्षाद्विष्णुरितिजानतातत्पितृत्वेज्ञानातिशयवन्नुकौसुखातिशयवान्स्यामितिभ्रातृमतीमित्यनेनपुत्रवत्त्वंप्रतीतेः । प्रियव्रतोत्तानपादाविनिवक्ष्यमाणत्वाच्च ॥ २ ॥ प्रजापतिशब्दस्यानेकाभिधेयवृत्तित्वेनकोत्रविवक्षितइत्यतउक्तं रुचिरिति । राजपुत्रीत्वेनपरिचर्यादावहंकारसंभवेनप्रेमाभावेनतत्त्यागसंभवेनापत्यानुत्पत्त्यामनोराशानिष्फलाभूदितिलोकापवादःपरिहृतोनेन अतएवभगवानिति ॥ ३ ॥ मिथुनंविवेचयति यस्तयोरिति । नाम्नायज्ञइतिस्वरूपधृक्औत्पत्तिकसौंदर्यधारी । यज्ञस्वरूपधृगित्येकंवापदं यज्ञोविष्णुर्देवतेतिश्रुतेः । अनेनविष्णुनामानंयजमानंव्यावर्तयति । भूतेर्लक्ष्म्याः भूतिःश्रीश्चसंज्ञेत्यभिधानंअनपायिनीजन्ममरणरहितेत्यनेनास्याःश्रीनारायणवदाविर्भावएवेतिध्वनयति ॥ ४ ॥ स्वायंभुवेनविवाहकालेयदुक्तंतन्मत्थंकर्तुंकार्यानंतरमप्यानावेस्मृतंतेनेतिभावेनाह आनिन्यइति ॥ ५ ॥

१ एतत्पक्षे स्वपरेशारि वाविसर्गलोपोवक्तव्य इतिविसर्गलोपोज्ञेयः

यजुषांपतिःसकलवेदप्रतिपाद्यत्वेनतदनुसारिहेतुत्वेनतत्प्रवर्तकत्वेनवेदपतिरित्यर्थः । हरिणायदर्थमवतीर्णंतत्प्रयोजनमाह तुष्टायामिति तुष्टायांदक्षिणायाम् ॥ ६ ॥ द्विषट्द्वा दश ॥ ७ ॥ तोषादीनांसमुदितंनामाह तुषिताइति । आदित्यानुत्पन्नत्वाद्यथाऽदित्यानामदेवास्तथानुष्ठायामुत्पन्नत्वात्तुषितानामदेवाः । मरीचिमिश्रा मरीचिप्रमुखाः । सुर गणेश्वरइंद्रः यज्ञःस्वयमिंद्रोभूत् ॥ ८ ॥ स्वायंभुवमन्वंतरंकैरनुवृत्तमिति तत्राह प्रियव्रतेति नप्तारः पौत्रपुत्राः ॥ ९ ॥ देवहूतिकथामनुवदति देवहूतिमिति । तत्सर्वादिचरितं श्रुतप्रायंप्राचुर्येणश्रुतं किंचिदवशिष्टमस्तीत्यर्थः ॥ १० ॥ प्रसूतिंकस्माअदादितितत्राह दक्षायेति ॥ ११ ॥ एवमनूद्यवक्तव्याशमाह याःकर्दमेति । पत्न्यः पत्न्यः प्रसू

तांकामयानांभगवानुवाहयजुषांपतिः ॥ तुष्टायांतोषमापन्नोजनयद्द्वादशात्मजान् ६ तोषःप्रतोषःसंतोषोभद्रःशांतिरिडस्पतिः ॥ इध्मःकविर्विभुर्वः स्वाह्नःसुदेवोरोचनोद्विषट् ७ तुषितानामतेदेवाआसन्स्वायंभुवांतरे ॥ मरीचिमिश्राऋषयोयज्ञःसुरगणेश्वरः ८ प्रियव्रतोत्तानपादौमनुपुत्रौम हौजसौ ॥ तत्पुत्रपौत्रनप्तृणामनुवृत्तंतदंतरम् ९ देवहूतिमदात्तातकर्दमायात्मजांमनुः ॥ तत्संबंधिश्रुतप्रायंभवतागदतोमम १० दक्षायब्र ह्मपुत्रायप्रसूतिंभगवान्मनुः ॥ प्रायच्छद्यत्कृतःसर्गस्त्रिलोक्यांविततोमहान् ११ याःकर्दमसुताःप्रोक्तानवब्रह्मर्षिपत्नयः ॥ तासांप्रसूतिप्रसरं प्रोच्यमानंनिबोधमे १२ पत्नीमरीचेस्तुकलासुषुवेकर्दमात्मजा ॥ कश्यपंपूर्णिमानंचययोरापूरितंजगत् १३ पूर्णिमासूतविरजंविश्वगांचपर तप ॥ देवकुल्यांहरेःपादशौचाद्याभूत्सरिद्दिवः १४ अत्रेःपत्न्यनसूयात्रीन्जज्ञेसुयशसःसुतान् ॥ दत्तंदुर्वाससंसोममात्मेशब्रह्मसंभवान् १५ ॥ ॥ विदुरउवाच ॥ अत्रेर्गृहेसुरश्रेष्ठाःस्थित्युत्पत्त्यंतहेतवः ॥ किंचिच्चिकीर्षवोजाताएतदाख्याहिमेगुरो १६ ॥ मैत्रेयउवाच ॥ ब्रह्मणाचोदितःसृष्टाव त्रिर्ब्रह्मविदांवर ॥ सहपत्न्याययावृक्षंकुलाद्रिंतपसिस्थितः १७

तिप्रसरंप्रसूतिप्रपंचं ॥ १२ ॥ चंद्रकलाव्यावृत्त्यर्थंकर्दमात्मजेति ययोःसंतत्या ॥ १३ ॥ विश्वगांविशिनष्टि देवकुल्येति दिवःसरित्स्वर्गनदी । देवकुल्यादेवकुलप्रिय। ॥ १४ ॥ जज्ञेजनयामास । आत्माविष्णुरीशोरुद्रोब्रह्माचतुर्मुखः । ब्रह्मणःसोमोविशेषावेशएवनतुपृथग्जननम् ॥ १५ ॥ विदुरश्रुतदत्ताद्यवतारोविशेषजिज्ञासयापृच्छती त्याह अत्रेरिति । गृहेभार्यायां । स्थित्युत्पत्त्यंतहेतवःपालनसंहारसृष्टीनांकारणभूताः ॥ १६ ॥ परमभागवतस्यात्रेःप्रियंचिकीर्षवःप्रथमंप्रयोजनंद्वितीयंयोगप्रवर्तनायावतार इतिभावेनमैत्रेयः प्रश्नंवक्तीत्याह ब्रह्मणेति । ऋक्षमृक्षनामानंकिमर्थंयातइतितत्राह तपसीति । गत्वातपसिस्थितोभूदित्यन्वयः ॥ १७ ॥

तस्मिन्नृक्षनाम्नि । प्रसूनानांस्तवकोयेषांतेप्रसूनस्तवकास्तेषांपलाशाशोकानांकाननंयस्मिन्स्तथातास्मिन्नाम्नानिर्विंध्यायानद्याःस्रवद्भिःस्यंदमानैर्वार्भिर्जलैःसमंततोप्युद्घुष्टेग जिते ॥ १८ ॥ वर्षशतमितिद्वितीययैकस्मिन्क्षणेपिपादद्वयेननातिष्ठदितिद्योतयति ॥ १९ ॥ तपोविषयमाह शरणमिति किंमनोगतंतवइतितत्राह प्रजामिति ॥ २० ॥ अत्रेस्तपोमाहात्म्यंतेनप्रसन्नानांत्रयाणांदेवानांतदाश्रमगमनंवक्ति तप्यमानमिति ॥ २१ ॥ अप्सरआदिभिर्वितायमानंप्रपंचीक्रियमाणंयशोयेषांतेतथा ॥ २२ ॥ तत्प्रादुर्भावस्तेषांप्रकाशस्तस्यसंबंधस्तेनविद्योतितमतिप्रकाशितंमनोयस्यसतथा ॥ २३ ॥ अर्हणमर्घ्यादिसाधनमंजलिश्चयस्यसतथा शूलकमंडलुचक्रादिभिश्चिह्नितानंकितान् ॥ ॥ २४ ॥ कृपयाप्रयुक्तेनावलोकितेनलसतावदनेनोपलंभितानुपलक्षितान् । तच्छोचिषातेषांवपुस्तेजसा । प्रतिहतेप्रतिबद्धदर्शनशक्तिनी ॥ २५ ॥ तत्प्रवणंतेषुमग्नं सं

तस्मिन्प्रसूनस्तवकपलाशाशोककानने ॥ वार्भिःस्रवद्भिरुद्घुष्टेनिर्विंध्यायाःसमंततः १८ प्राणायामेनसंयम्यमनोवर्षशतंमुनिः ॥ अतिष्ठदेकपादेन निर्द्वंद्वोऽनिलभोजनः १९ शरणंतंप्रपद्येहंयएवजगदीश्वरः ॥ प्रजामात्मसमांमह्यंप्रयच्छत्विति चिंतयन् २० तप्यमानंत्रिभुवनंप्राणायामैधसाग्निना ॥ निर्गतेनमुनेर्मूर्ध्नःसमीक्ष्यप्रभवस्त्रयः २१ अप्सरोमुनिगंधर्वसिद्धविद्याधरोरगैः ॥ वितायमानयशसोमुदाश्रमपदंययुः २२ तत्प्रादुर्भावसंयोगविद्योतितमनामुनिः ॥ उत्तिष्ठदेकपादेनददर्शविबुधर्षभान् २३ प्रणम्यदंडवद्भूमावुपतस्थेर्हणांजलिः ॥ वृषहंससुपर्णस्थान्स्वैःस्वैश्चिह्नैश्चचिह्नितान् २४ कृपावलोकेनलसद्वदनेनोपलंभितान् ॥ तच्छोचिषाप्रतिहतेनिमील्यमुनिरक्षिणी २५ चेतस्तत्प्रवणंयुंजन्नस्तावीत्संहतांजलिः ॥ श्लक्ष्णयासूक्तयावाचासर्वलोकगरीयसः २६ ॥ अत्रिरुवाच ॥ विश्वोद्भवस्थितिलयेषुविभज्यमानैर्मायागुणैरनुगुणंप्रगृहीतदेहाः ॥ हेब्रह्मविष्णुगिरिशाःप्रणतोस्म्यहंवस्तेभ्यःकएवभवतांमइहोपहूतः २७

हतांजलिर्बद्धांजलिः श्लक्ष्णयामधुरया । सूक्तयावैदिक्या ॥ २६ ॥ कान्गुणानुपसंहृत्यतुष्टावेतितत्राह विश्वेति विश्वस्योद्भवस्थितिलयेषुविभज्यमानैःपृथक्पृथक्क्रियमाणैर्मायायाःप्रकृतेर्गुणैःरजःसत्त्वतमःसंज्ञैरनुगुणंकार्यानुकूलं सृष्टयेरजोगुणप्रवर्तकत्वेन रक्षणायसत्त्वगुणप्रवर्तकत्वेन संहारायतमोगुणप्रर्तकत्वेन प्रगृहीतोदेहोयैस्तेप्रगृहीतदेहाःस्वीकृतावताराः हेब्रह्मविष्णुगिरिशाअहंवःप्रणतोऽस्मि प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव आस्यजानंतोनामचिद्विविक्तनमहस्तेविष्णोसुमतिंभजामहे इमारुद्रायस्थिरधन्वनेगिरः क्षिप्रेषवेदेवायस्वधाम्नेइत्यादिसूक्तोक्तायेयूयंतेभ्योवोयुष्मभ्यंभूयोभूयःप्रणतोस्मीत्यन्वयः ॥ भक्तिरोमाश्लिष्टमनाः ब्रह्मस्थोरुद्रस्थःपृथक्स्थितः स्वयमपिविष्णुस्त्रिपुरुषसमाःप्रजाःप्रयच्छत्वितियःपूर्वसंकल्पस्तंविस्मरन्निवात्रिर्दुष्टमोहनार्थंविज्ञापयति कएवेति भवतांमध्येमयेहकएवस्वित् कोनूपहूतइत्यन्वयः ॥ २७ ॥

१ प्रसूनानां स्तवका गुच्छा येषांते इतिपाठान्तरं युक्तम् ।

एतदेवविवृणोति एकोमयेति इहवनेतपःकुर्वतामथाविबुधप्रधानःसर्वदेवोत्तमोब्रह्मस्थोरुद्रस्थःस्वयंविष्णुरेकोभगवानेवप्रजननायपुत्रतयोत्पत्तये त्रिपुरुषसमानान्पुत्रान्मेहंददात्विातिचित्तीकृतोध्यातइत्येवंस्थितेतनुभृतांदेहिनांमनसोऽपिदूरात्रिपयायूयंकथंन्वत्रागतास्तद्ब्रूतसंभाषणेनप्रसीदत मेइहास्मिन्नर्थेएकस्मिन्ध्यातेत्रयाणामागमनलक्षणे महान्विस्मयइति । ब्रह्मस्थश्चैवरुद्रस्थःस्वयंचापिहरिःप्रभुः । प्रजांत्रिपूरुषसमांयच्छत्वित्यत्रिरैच्छत । तस्मात्सब्रह्मरुद्राभ्यांसहविष्णुर्जगत्पतिः । आगत्यतुत्रिमूर्तीशान्प्रादात्पुत्रान्जनार्दनः । भावित्वाच्चैवकार्यस्यलोकानांमोहनायचेतिवचनात् लोकमोहनार्थमत्रिणाविकल्पितंनतुतत्त्वार्थत्वेन ॥ २८ ॥ तत्त्वंत्विदंकार्यस्यभावित्वात्संकल्पोपेतत्वात् यथासंकल्पस्तथाकार्यमपिभविष्यति । संकल्पस्त्वेकएव । तस्माज्झटितिप्रत्यवमर्शनेनतंत्रिलोकमोहनार्थमुक्तविकल्पाभिप्रायंजानंतस्तत्त्वगूहनंविज्ञायप्रहसंतस्त्रयोदेवाआहुरित्याह इतीति ॥ २९ ॥ कर्माप्रतीतेःकिमाहुरितितत्राह यथेति तपश्चरतात्वयायथासंकल्पःकृतस्तेनसंकल्पेनतथैवभा

एकोमयेहभगवान्विबुधप्रधानश्चित्तीकृतःप्रजननायकथंनुयूयम् ॥ अत्रागतास्तनुभृतांमनसोपिदूराद्ब्रूतप्रसीदतमहानितिविस्मयोमे २८ ॥ मैत्रेयउवाच ॥ इतितस्यवचःश्रुत्वात्रयस्तेविबुधर्षभाः ॥ प्रत्यूचुःश्लक्ष्णयावाचाप्रहसंतोमुनिंप्रभो २९ ॥ देवाऊचुः ॥ यथाकृतस्तेसंकल्पोभाव्यंतेनैवनान्यथा ॥ तत्संकल्पस्यतेब्रह्मन्यद्वैध्यायसितेवयम् ३० अथास्मदंशभूतास्तेआत्मजालोकविश्रुताः ॥ भवितारोंगभद्रंतेविस्तारिष्यंतितेयशः ३१ एवंकामवरंदत्वाप्रतिजग्मुःसुरेश्वराः ॥ सभाजितास्तयोःसम्यक्दंपत्योर्मिषतोस्ततः ३२

व्यम् । कर्तुमकर्तुमन्यथाकर्तुंसमर्थानांभवतांमनीषितंममदुरवगाहमितितत्राह नान्यथेति सचासौसंकल्पस्तत्संकल्पस्तत्संकल्पस्यान्यथाभावोनैव त्वत्संकल्पानुसारेणास्मत्संकल्पोपिव्याख्यातइतिभावेनाहुःयद्वाइति ब्रह्मस्थोरुद्रस्थस्तथाविष्णुःस्वयंचात्रिपुरुषसमानान्पुत्रान्प्रयच्छत्वितियत्संकल्पंध्यायसि तेवयंब्रह्मविष्णुरुद्राइतित्रयस्तुभ्यंपुत्रान्दास्यामइतिसंकल्प्यात्रागताइतिशेषः निपातद्वयेनप्रमाणांतरप्रसिद्धिंद्योतयति ॥ ३० ॥ तर्हिप्रसन्नाश्चेत्प्रजाददतइत्यत्रोंजिह्वाग्रसंचलनावकाशमददानाह्युः अथास्मादिति । अथब्रह्मरुद्रस्थोविष्णुःस्वयमित्येतेवयमित्युक्त्यनंतरंव्यहारांतरंविरम्यते तवात्मजाभवितारोभविष्यंतीतिवरंददुरित्यर्थः यद्वा यतएवंचसंकल्पोऽथतस्मादितिलोकेतेयशोविस्तृत्यतुभ्यंभद्रंकल्याणंसुखंवितारिष्यंतीत्यन्वयः ॥ ३१ ॥ किमन्यद्ददुरितितत्राह एवमिति कामचरकामितपुत्रवरंनान्यमितिशेषः मिषतोःपश्यतोःसतोः । ततोत्रेराश्रमात् ॥ ३२ ॥

अंशेनेतितृतीययासोमःसाक्षाद्ब्रह्मणोंशोनभवति किंतुतेनविशेषेणसन्निहितएव । तथात्वेविष्णोरंशोदत्तःशंकरस्यांशोदुर्वासाइतीवप्रयोगःस्यात् । ब्रह्मणोनावतारोस्तिसान्नि धानंतुकेवलं । ऋतेविष्णोरात्मनस्तुतदंशोक्तिःप्रवेशतइतिवचनात् । आत्मनोजीवस्यतदंशोक्तिर्विष्ण्वंशवचनंप्रवेशतइतिज्ञेयमित्यर्थः । कथंतर्हिब्रह्मसंभवानितिप्रत्यक्षोक्तिरि तिचेन्न सृष्टिविशेषान्मानांतराविरुद्धवदुक्तेः । तथाचोक्तं सृष्टिभेदाद्विरूपंतुकथापंचोत्तरंशतं वैरूप्यमन्यद्विज्ञेयंतात्पर्यान्मोहनायचेति । अत्रग्रंथेकथापंचोत्तरंशतंसृष्टि भेदाद्विरूपंविपरीतामिवप्रतीयतइतिशेषः अन्यद्वैरूप्यंतात्पर्याज्ञानान्मोहनायोक्तमितिज्ञेयमित्यर्थः । कल्पादिभेदादपिकथाभेदोभवतीत्यतोपिविरोधोनास्ति । ऋतेतुपाड वकथांकार्ष्णीरामायणंतथा विष्णोर्ब्रह्मादितांचैवक्रमाद्व्यत्ययस्तशक्तितां एतदापादकंचान्यत्तेकल्पादिभेदतः कथाभेदस्तुविज्ञेयोमोहायैतेतुभिन्नतेतिवचनात् । विदित्त्वा वितिधातोर्योगवित्योगशास्त्रकृत् । अणिमादियोगज्ञोवा । बोधतेःशब्दविकरणेपठितत्वात्परस्मैपदम् । प्रजाःसंततीः ॥ ३३ ॥ कन्यकानामान्याह सिनीवा

**सोमोभूद्ब्रह्मणोंशेनदत्तोविष्णोस्तुयोगवित् ॥ दुर्वासाःशंकरस्यांशोनिबोधांगिरसःप्रजाः ३३ श्रद्धात्वंगिरसःपत्नीचतस्त्रोऽसूतकन्यकाः ॥ सिनी वालीकुहूराकाचतुर्थ्यनुमतिस्तथा ३४ तत्पुत्रावपरावास्तांख्यातौस्वारोचिषांतरे ॥ उचथ्योभगवान्साक्षाद्ब्रह्मिष्ठश्चबृहस्पतिः ३५ पुलस्त्योऽज नयत्पत्न्यामगस्त्यंचहविर्भुजि ॥ सोऽन्यजन्मनिदह्राग्निर्विश्रवाश्चमहातपाः ३६ तस्ययक्षपतिर्देवःकुबेरस्त्विडविलासुतः ॥ रावणःकुंभकर्णश्चत थान्यस्यांविभीषणः ३७ पुलहस्यगतिर्भार्यात्रीनसूतसतीसुतान् ॥ कर्मश्रेष्ठंवरीयांसंसहिष्णुंचमहामते ३८**

लीति । कृष्णचतुर्दश्यभिमानिनीसिनीवाली तत्पंचदश्यभिमानिनीकुहूः शुक्लचतुर्दश्यभिमानिनीअनुमतिः तत्पंचदश्यभिमानिनीराका ॥ ३४ ॥ तत्पुत्रौतस्याःश्रद्धायाः पुत्रौ । स्वारोचिषनाममनोः पुत्रयोर्नामाह उचथ्यइति । उचितंस्थापयितुमस्येत्युचथ्यः । साक्षाद्भगवान्प्रत्यक्षपूज्यः । बृहत्याःवाचःपालकत्वात्स्वामित्वाद्वाबृहस्पतिः तद्बृहतोःकरपत्योश्चोरदेवतयोःसुट्तलोपश्चेतिसूत्रात्तकारलोपःसुडागमश्चेति । ब्रह्मिष्ठोवैदिकतमः बृहस्पतेनपरःसाम्नोविदुरोतिश्रुतेः ॥ ३५ ॥ त्यक्त्वागादगस्त्यः स्यैष्टचैशब्द संघातयोरित्यतःशब्दादिविषयजातंप्रतिगतोनभवतीतिवा सोगस्त्योन्यजन्मनिअग्निरुदह्रोनामाग्निःदह्रोऽग्निरल्पाग्निरित्यर्थेऽन्यजन्मनीतिविशेषणंव्यर्थं । अत्रपूर्णाग्निःपूर्वत्राल्पा ग्निरितिविवेकस्तुगवेषणीयइति ॥ ३६ ॥ तस्यविश्रवसः । कोयंयक्षपतिरित्यतउक्तंदेवःकुबेरइति कुविआच्छादनइतिधातोर्धनदानेनदारिद्र्यंकुंदातिआच्छादयतीतिकुंवे रः । अयमर्थःकस्मिन्नित्पक्षेप्यतिव्याप्तःस्यादित्यतउक्तमिडविलासुतइति अन्यस्यांपत्न्याम् ॥ ३७ ॥ ३८ ॥

१ अत्रेः पत्न्यनसूयात्रीन्जज्ञे सुयशसः सुतान् । दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभवानिति श्लोकेन । २ कुंबेर्नलोपश्च इति उणादिरेरक् ।

वालखिल्यों (बाला.खिल्या) अल्पायेषांतेतथासंततिविधुराः ऊर्ध्वरेतसइत्यर्थः तान्ब्रह्मतेजसाब्रह्मनिमित्ततेजसा ॥ ३९ ॥ ४० ॥ अन्येषांनामान्यप्रतिषिद्धत्वात्किमि तिश्लोकानोतिशिकामाभूदित्याह चित्रकेतुरिति अपरेसमभ्यान्येतेके शक्त्यादयःशक्तिमुनिप्रमुखाः ॥ ४१ ॥ ४२ ॥ ४३ ॥ तयोरायतिनियत्योः ॥ ४४ ॥ यस्यकवेः ॥

क्रतोरपिक्रियाभार्यावालखिल्यानसूयत ॥ ऋषीन्षष्टिसहस्राणिज्वलतोब्रह्मतेजसा ३९ ऊर्जायांजज्ञिरेपुत्रावसिष्ठस्यपरंतप ॥ चित्रकेतुप्रधाना स्तेसप्तब्रह्मर्षयोमलाः ४० चित्रकेतुःसुरोचिश्वविरजोमित्रएवच ॥ उल्बणोवसुभृद्द्यानोद्युमानशक्त्यादयोऽपरे ४१ शांतिस्त्वथर्वणःपत्नी लेभेपुत्रंधृतव्रतम् ॥ दध्यंचमश्वशिरसंभृगोर्वंशंनिबोधमे ४२ भृगुःख्यात्यांमहाभागःपत्न्यांपुत्रानजीजनत् ॥ धातारंचविधातारंश्रियंचभगव त्प्रियाम् ४३ आयतिंनियतिंचैवसुतेमेरुस्तयोरदात् ॥ ताभ्यांतयोरभवतांमृकंडुःप्राणएवच ४४ मार्कंडेयोमृकंडोस्तुप्राणाद्वेदशिरामुनिः ॥ क विश्वभार्गवोयस्यभगवानुशनासुतः ४५ सर्वेतेमुनयःक्षत्तर्लोकान्सर्गैरभावयन् ॥ एषकर्दमदौहित्रसंतानःकथितस्तव ४६ शृण्वतःश्रद्दधान स्यसद्यःपापहरःपरः ॥ प्रसूतिंमानवींदक्षउपयेमेह्यजात्मजः ४७ तस्यांससर्जदुहितॄःषोडशामललोचनाः ॥ त्रयोदशादाद्धर्मायतथैकामग्नये विभुः ४८ पितृभ्यएकांयुक्तेभ्योभवायैकांभवच्छिदे ४९ श्रद्धामैत्रीदयाशांतिस्तुष्टिःपुष्टिःक्रियोन्नतिः ॥ बुद्धिर्मेधातितिक्षाह्रीर्मूर्तिर्धर्मस्यपत्न यः ॥ श्रद्धासूतशुभंमैत्रीप्रसादमभयंदया ५० शांतिःसुखंमुदंतुष्टिःस्मयंपुष्टिरसूयत ॥ योगंक्रियोन्नतिर्दर्पमर्थंबुद्धिरसूयत ५१ मेधास्मृतिं तितिक्षातुक्षेमंह्रीःप्रश्रयंसुतम् ॥ मूर्तिःसर्वगुणोत्पत्तीनरनारायणावृषी ५२ ययोर्जन्मन्यदोविश्वमभ्यनंदत्सुनिर्वृतम् ॥ मनांसिककुभोवाताः प्रसेदुःसरितोऽद्रयः ५३ दिव्यवाद्यंततूर्याणिपेतुःकुसुमवृष्टयः ॥ मुनयस्तुष्टुवुस्तुष्टाजगुर्गंधर्वकिन्नराः ५४ नृत्यंतिस्मस्त्रियोदेव्यआसीत्परममंग लम् ॥ देवाब्रह्मादयःसर्वेउपतस्थुरभिष्टवैः ५५

॥ ४५ ॥ अभावयन्अवर्धयन् ॥ ४६ ॥ कर्दमदौहित्रकथाश्रवणफलमाह शृण्वतइति अजात्मजोदक्षः ॥ ४७ ॥ ४८ ॥ युक्तेभ्योयोगेभ्योहरौमनोयोगसहितेभ्यइतिवा भवच्छिदेज्ञानोप देशेनसंसारनिर्मूलनाय ४९ तासांसंततिंस्वनामानुगुणमाह श्रद्धेत्यादिना ॥ ५० ॥ ५१ ॥ शमदमादिसर्वगुणानामुत्पत्तिर्ययोस्तौतथा ॥ ५२ ॥ ॥ ५३ ॥ ५४ ॥ अभिष्टवैःस्तोत्रैः ॥ ५५ ॥

१ वालखिल्या अल्पाया येषान्ते इतिपाठो लिखितेः ।

योविष्णुर्निजमाययास्वेच्छया । खेरूपभेदमिवयथाकाशेवाय्वादिरूपभेदआकाशाधारतयाप्रतीयतेतथात्मनिस्वात्मनिस्वाधारतयाविरचितमिदंविश्वं । तत्प्रतिचक्षणायत स्यजगतःस्वस्यचाधाराधेयभावज्ञापनायाद्यधर्मसदनेमूर्त्याख्यधर्मभार्यायां एतेनास्मदृष्टिगोचरेणऋषिमूर्तिनाऋषिवेषधारिणोमूर्तिर्यस्यतत्तथातेनरूपेण । प्रादुश्चकार तस्मै परस्मैपुरुषायनमइत्यन्वयः । यथाकाशस्थितोनित्यंवायुःसर्वत्रगोमहान् यथाकाशेविमानादिरूपभेदःप्रतीयते तथाहरौजगदिदंतत्सामर्थ्यात्प्रतीयतइत्यादेः ॥ ५६ ॥ किमिदानींविशेषमभीष्टमित्यतस्तत्प्रार्थयंते सोयमिति । योभगवान्भक्ताभीष्टैकचिंतामणिःसोयमवलोकनेनकटाक्षनिरीक्षणेनसुरगणान्नोस्माद्दृश्यादवलोकयत्वित्यन्वयः द्रष्टव्यत्वे स्वगुणान्लक्षयति ॥ स्थितीति स्थितिव्यतिकरोपशमायस्थितिविघ्नपरिहाराय सत्त्वेनगुणेनसृष्टान् ॥ अस्माभिरपिनसाकल्येनज्ञातुंशक्यतइतिभावेनाहुः अनुमेयतत्त्वइति प्रत्यक्षागमानुगृहीतव्याप्तिकेनलिंगज्ञानेनज्ञेयंतत्त्वमनारोपितज्ञानस्वरूपंयस्यसतथा । अवलोकनस्यस्वविषयेजनेगुणार्पकगुणोस्तिचेत्प्रार्थनीयतामर्हतीतिकथमत्राहुः

॥ देवाऊचुः ॥ ॥ योमाययाविरचितंनिजमात्मनीदंखेरूपभेदमिवतत्प्रतिचक्षणाय ॥ एतेनधर्मसदनेऋषिमूर्तिनाद्यप्रादुश्चकारपुरुषायनमःपरस्मै ५६ सोयंस्थितिव्यतिकरोपशमायसृष्टान्सत्त्वेननःसुरगणाननुमेयतत्त्वः ॥ दृश्याददभ्रकरुणेनविलोकनेनयच्छ्रीनिकेतममलंक्षिपतारविंदम् ५७ एवंसुरगणैस्तातभगवंतावभिष्टुतौ ॥ लब्धावलोकैर्ययतुरर्चितौगंधमादनम् ५८ ताविमौवैभगवतोहरेरंशाविहागतौ ॥ भारव्ययायचभुवःकृष्णौयदुकुरूद्वहौ ५९ स्वाहाभिमानिनश्चाग्नेरात्मजांस्त्रीनजीजनत् ॥ पावकंपावमानंचशुचिंचहुतभोजनम् ६० तेभ्योग्नयःसमभवंश्चत्वारिंशच्चपंचच ॥ तएवैकोनपंचाशत्साकंपितृपितामहैः ६१ वैतानिकेकर्मणियन्नामभिर्ब्रह्मवादिभिः ॥ आग्नेय्याइष्टयोयज्ञेनिरूप्यंतेग्नयस्तुते ६२

अदभ्रेति अदभ्राअनल्पापूर्णाकरुणायस्यतत्तथातेन नकेवलमनुग्रहगुणःकिंतुकांतिगुणोप्यस्तीत्याहुः क्षिपतेति अरविंदंक्षिपता । स्वकांतिगुणेन पद्मकांतिनिरस्यतेत्यर्थः । पद्मस्यकोयंमाहात्म्यातिशयइतितत्राहुः यच्छ्रीनिकेतमिति यदरविंदंश्रियोनिकेतंनिवासस्थानं । श्रियोनिवासस्थानोयत्केनाचिद्गुणेनभाव्यं सकइतितत्राहुः अमलमिति ॥ ५७ ॥ ततःकिंभगवंतावकार्ष्टामितितत्राह एवमिति ॥ ५८ ॥ तौकरतलामलकवत्ज्ञापयति ताविमाविति । यदूद्वहोयादवेश्वरःकृष्णः । कुरूद्वहोऽर्जुनः । अस्मिन्नरस्याविशेषावेशाद्धरेरंशत्वं । नतुसाक्षात् । तदुक्तं । नरेविष्णुःसमाविष्टःस्वयंनारायणोहरिः अर्जुनेचनरावेशःकृष्णोनारायणःस्वयमिति ॥ ५९ ॥ अग्न्यभिमानिनोदेवान्अग्नेःस्वाहानाम्नी हुतभोजनमितित्रयाणांविशेषणम् ॥ ६० ॥ तेभ्यस्त्रिभ्यः । पितरःपावकादयःपितामहः स्वाहापतिरग्निः ॥ ६१ ॥ वैतानिकेकर्मणियज्ञकर्मणिब्रह्मवादिभिर्येषामग्नीनांनामभिराग्नेय्याअग्निदेवत्याइष्टयोनिरूप्यंतेतेअग्नयएतादृशमहिमानइत्यर्थः ॥ ६२ ॥

तेषांजातिमान्याह अग्निष्वात्ताइति तेषामग्नीनाम् ॥ ६३ ॥ ब्रह्मवादिन्यौवेदविचारविचक्षणे ॥ ६४ ॥ भवपत्न्याःसत्याःकत्यपत्यानीत्याशंकांपरिहरति ॥ भवस्येति ॥ ६५ ॥ आत्मसमापत्यालाभात्तयासत्याकिमकारीतितत्राह पितरीति पितरिदक्षे अनागसेभवायाप्रतिरूपेऽननुकूलेविरोधिनिसति अप्रौढैवास्वीकृतेव । योगसंयुता प्राणोत्क्रमणनिमित्तयोगनिरतात्मनामनसाऽत्मानंहरिंध्यायंत्यात्मानंदेहमजहाज्त्याक्षोदित्यन्वयः ॥ ६६ ॥ ॥ इतिश्रीभागवतेचतुर्थस्कंधे वि०कृ० पदरत्नावलीटीका यांप्रथमोध्यायः ॥ १ ॥ ॥ ७ ॥ ॥ अत्रकतिपयैरध्यायैर्हरेर्भक्तिविधानार्थंतन्माहात्म्यातिशयज्ञापनाय तन्माहात्म्यातिशयाविनाभूतंदक्षाध्वरध्वंसलक्षणंरुद्रस्यमाहात्म्यं कथयति तत्रादौविदुरःसत्यात्मानमजहादितिश्रुतसतोदेहवियोगविशेषंजिज्ञासुर्मैत्रेयंपृच्छति भवेशीलवतामिति । विद्वेषाकरणेहेतवःशीलवत्त्वादिनाज्ञापनायोक्ताः ॥ १ ॥ स्व

अग्निष्वात्ताबर्हिषदःसौम्याःपितरआज्यपाः ॥ साग्नयोनग्नयस्तेषांपत्नीदाक्षायणीस्वधा ६३ तेभ्योदधारकन्येद्वेमेनांवैतरणींस्वधा ॥ उभेतेब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे ६४ भवस्यपत्नीतुसतीभवंदेवमनुव्रता ॥ आत्मनःसदृशंपुत्रंनलेभेगुणशालिनम् ६५ पितर्यप्रतिरूपेस्वेभवायानागसेरुषा ॥ अप्रौढे वात्मनात्मानमजहाद्योगसंयुता ६६ इतिश्रीभाग०च०प्रथमोध्यायः ॥ १ ॥ ॥ विदुरउवाच ॥ भवेशीलवतांश्रेष्ठेदक्षोदुहितृवत्सलः ॥ विद्वेषमकरोत्क स्मादनादृत्यात्मजांसतीम् १ कस्तंचराचरगुरुंनिर्वैरंशांतविग्रहम् ॥ आत्मारामंकथंद्वेष्टिजगतोदैवतंमहत् २ एतदाख्याहिमेब्रह्मन्जामातुःश्वशुरस्य च ॥ विद्वेषस्तुयतःप्राणानत्यजद्दुस्त्यजान्सती ३ मैत्रेयउवाच ॥ पुराविश्वसृजांसत्रेसमेताःपरमर्षयः ॥ तथामरगणाःसर्वेसानुगामुनयोऽग्नयः ४ तत्रप्रविष्टंमुनयोदृष्ट्वार्कमिवरोचिषा ॥ भ्राजमानंवितिमिरंकुर्वंतंतन्महत्सदः ५ उदतिष्ठन्सदस्यास्तेस्वधिष्ण्येभ्यःसहाग्नयः ॥ ऋतेविरिंचिंश र्वंचतद्भासाक्षिप्तचेतसः ६ सदसस्पतिभिर्दक्षोभगवान्साधुसत्कृतः ॥ अजंलोकगुरुंनत्वानिषसादतदाज्ञया ७

स्वगुरुत्वेपिस्वकर्मनिंदितमितिभावेनाह । कस्तमिति आत्मनिपरमात्मन्येवारानोरतिर्यस्यसतथातम् ॥ २ ॥ तथाचाकिमिति तत्राह एतदिति । विद्वेषोविद्वेषकारणम् ॥ ३ ॥ विद्वेषनिमित्तंवक्तुमुपोद्घातंरचयति पुरेति नकेवलंमहर्षयएवकिंतुमुनिमात्रनप्यत्रसमवेतामित्यतोमुनयइतिपुनर्वचनम् ॥ ४ ॥ किमनेनप्रकृतइतितत्राह तत्रेति । प्रविष्टंदक्षमि तिशेषः ॥ ५ ॥ ब्रह्मपुत्रत्वाद्रुद्रस्यश्वशुरत्वाच्चनायंप्राकृतःपुरुषइतिभावेनास्मिन्सभाबहुमानंवक्ति उदतिष्ठन्निति । तस्यदक्षस्यभासा ॥ ६ ॥ सर्वोत्थानलक्षणसत्काराभावा दतोनिर्गंसनमितरजनबहुमानेनोपवेशनंचसंभावितमनयोर्दक्षेणाकिमकारीतितत्राह सदसस्पतिभिरिति ॥ ७ ॥

१ मरूढाविवाहिता माढूढोढेतिवृद्धिः एतेन रुद्रस्य पक्षकोपात्तपुत्रीयमिति मनसः किंचिदन्यथाभाव सूच्यते ।

उपविष्टश्चेद्रुद्रविषयकोपोप्युपविष्टःकिंतत्राह प्राङ्निषण्णमिति । नामृष्यदित्यस्यकिंलिंगंतत्राह उवाचेति ॥ ८ ॥ वृत्तंसदाचारम् ॥ ९ ॥ किमिदानींवृत्तंवक्तुंप्राप्तमत्रा
इ अयन्त्विति ॥ १० ॥ स्वतउत्तमस्यशिवस्यदक्षावमानविषयत्वकथनत्राह एषइति । गायत्रीविषये पणव्यवहारइतिधातोः पाणिव्यःहरणमुच्चारणमित्यर्थः । साधुवच्योग्यव
त् ॥ ११ ॥ मृगशावोमृगपोतः । मर्कटलोचनेइवलोचनेयस्यसतथाकेकराक्षइत्यर्थः ॥ १२ ॥ भिन्नसेतवेलंवितमर्यादाय । उशतींगिरंपौरुषेयत्वादिदोषरहितांवेदवाणीम् ॥
१३ ॥ अशुचिकर्मकरणादशुचित्वमुक्तंनतुद्वेषादित्याह प्रेतावासेष्विति । व्युप्तकेशोमुक्तकेशः ॥ १४ ॥ चिताभस्मनाश्मशानभस्मनाकृतंस्नानंयेनसतथा । प्रेतानामस्थिग्रंथ

प्राङ्निषण्णंमृडंदृष्ट्वानामृष्यत्तदनादृतः ॥ उवाचवामंचक्षुर्भ्यामभिवीक्ष्यदहन्निव ॥ ८ ॥ दक्षउवाच ॥ श्रूयतांब्रह्मर्षयोमेसहदेवाःसहाग्नयः ॥ साधू
नांब्रुवतोवृत्तंनाज्ञानान्नचमत्सरात् ९ अयंतुलोकपालानांयशोघ्नोनिरपत्रपः ॥ सद्भिराचरितःपंथायेनस्तब्धेनदूषितः १० एषमेशिष्यतांप्राप्तोयन्मेदुहि
तुरग्रहीत् ॥ पाणिंविप्राग्निमुखतःसावित्र्याइवसाधुवत् ११ गृहीत्वामृगशावाक्ष्याःपाणिंमर्कटलोचनः ॥ प्रत्युत्थानाभिवादार्हेवाचाप्यकृतनोचितम् ॥
१२ लुप्तक्रियायाशुचयेमानिनेभिन्नसेतवे ॥ अनिच्छन्नप्यदांबालांशूद्रायेवोशतींगिरम् १३ प्रेतावासेषुघोरेषुप्रेतैर्भूतगणैर्वृतः ॥ अटत्युन्मत्तवन्नग्नो
व्युप्तकेशोहसन्रुदन् १४ चिताभस्मकृतस्नानःप्रेतास्थिग्रंथिभूषणः ॥ शिवापदेशोह्यशिवोमत्तोमत्तजनप्रियः १५ पतिःप्रमथभूतानांतमोमात्रात्मिका
त्मनाम् ॥ तस्माउन्मादनाथायनष्टशौचायदुर्हृदे १६ दत्तावतमयासाध्वीचोदितेपरमेष्ठिना ॥ १७ ॥ मैत्रेयउवाच ॥ विनिंद्यैवंसगिरिशमप्रतीपमव
स्थितम् ॥ दक्षोथापउपस्पृश्यक्रुद्धःशप्तुंप्रचक्रमे १८ अयंतुदेवयजनइंद्रोपेंद्रादिभिर्भवः ॥ सहभागंनलभतांदेवैर्देवगणाधमः १९ निषिध्यमानःससदस्य
मुख्यैर्दक्षोगिरित्रायविसृज्यशापम् ॥ तस्माद्विनिष्क्रम्यविवृद्धमन्युर्जगामकौरव्यनिजंनिकेतनम् २० विज्ञायशापंगिरिशानुगाग्रणीर्नंदीश्वरोरोषकषा
यदूषितः ॥ दक्षायशापंविससर्जदारुणंयेचान्वमोदंस्तदवाच्यतांद्विजाः २१

योऽस्थिभिर्ग्रंथितमालास्ताएवभूषणानियस्यसतथाशिवइतिअपदेशोनामयस्यसतथास्वयमपिअशिवोऽशुद्धोहि ॥ १५ ॥ उन्मत्तत्वंस्पष्टयति पतिरिति । केवलंतमोगुण
स्वरूपंमनोयेषांतेतथातेषां अतःकिमनुशोककारणमत्राह तस्माइति ॥ १६ ॥ १७ ॥ नकेवलंदक्षेणदोषाएवगणिताःकिंतुस्वानर्थहेतुःशापोपिदत्तइत्याह विनिंद्यैवमि
ति ॥ अप्रतीपमप्रातिपक्ष्यम् ॥ १८ ॥ इंद्रोपेंद्रादिभिर्देवैःसहदेवयजनेयज्ञभागंनलभतामित्यन्वयः ॥ १९ ॥ ततःकिमकारिदक्षेणेतितत्राह निषिध्यमानइति ॥ २० ॥ ए
वंदक्षेणशापेशिवायदीयमानेसतिकोपिशिवभक्तस्तमसहमानोभूत्किंतत्राह विज्ञायेति रोषनाम्नाकषायेणवाह्निनादूषितः तस्याशिवस्यावाच्यतादोपलक्षणम् ॥ २१ ॥

कोऽपराधोयेनेदंचइतितत्राह यएतदिति एतन्मर्त्यंशरीरमद्यश्वोवानश्वरमुद्दिश्य । अभिद्रुह्यति द्रोहंकरोति । भगवानितिभक्त्यादिसांमुख्यवानि । द्रुह्यति । वच नादिनेतिशेषः । तत्त्वतोयथार्थज्ञानाद्विमुखोभवति नंदीश्वरआदित्यन्वयः ॥ २२ ॥ नकेवलंभवति तत्त्वज्ञानं किंतुश्रौतमार्गपराङ्मुखः वेदवादरतःसकामश्चेत्याह गृहेष्वि ति वेदवादेनस्वर्गादिपुष्पवादिवेदवाक्येनविपन्नानष्टाधीर्यस्यसनथा अतत्त्वज्ञानविषयःशापस्तात्कालिकएव । नतुचिरकालीनः । विष्णुवाक्यस्यैवाचिरकालीनत्वा त्[1] तदुक्त येज्ञानविषयाःशापामुक्तिगाश्चाधिकारेणा कादाचित्कास्तेभवंतिनैवतेसार्वकालिकाः । नपातानस्त्वनुक्तेश्वनागतस्यस्यचैवहि भगवन्नियतत्वातुशापादिर्नात्रका रणमिति[2] ॥ २३ ॥ इतोपितात्कालिकएवशापइतिभावेनदक्षस्यशापविशेषंमुंचति बुद्ध्येति परामिध्यायिन्यानिंद्यशब्दादिविषयचिंताकातरयाबुद्ध्याविस्मृतात्मग तिर्विस्मृतपरमात्मगतिः विस्मृतपरमात्मज्ञानः पशुर्विवेकशून्यः अतिनरांस्त्रीकामःसदक्षोऽचिरान्वसनमुखोऽस्त्वित्यन्वयः ॥ २४ ॥ शापांतरंचाह विद्याबुद्धिरिति । अजोदक्षः।

॥ नंदिरुवाच ॥ यएतन्मर्त्यमुद्दिश्यभगवत्यप्रतिद्रुहि ॥ द्रुह्यत्यज्ञःपृथग्दृष्टिस्तत्त्वतोविमुखोभवेत् २२ गृहेषुकूटधर्मेषुसक्तोग्राम्यसुखेच्छया ॥ क र्मतंत्रंवितनुतेवेदवादविपन्नधीः २३ बुद्ध्यापराभिध्यायिन्याविस्मृतात्मगतिःपशुः ॥ स्त्रीकामःसोऽस्त्वतितरांदक्षोवस्तमुखोऽचिरात् २४ विद्याबुद्धिर विद्यायांकर्ममय्यामसावजः ॥ संसरंत्विहयेचामुमनुशर्वावमानिनम् २५ गिरःश्रुतायाःपुष्पिण्यामधुगंधेनभूरिणा ॥ मथ्नाचोन्मथितात्मानःसंमुह्यंतु हरद्विषः २६ सर्वभक्षाद्विजावृत्त्यैधृतविद्यातपोव्रताः ॥ वित्तदेहेंद्रियारामायाचकाविचरंत्विह २७

अविद्यायांविद्याबुद्धिरस्त्वितिशेषः । शक्तद्वेषिणांत्रिशापविशेषमाह संसरंत्विति ॥ २५ ॥ संसारकारणमाह गिरइति । पुष्पिण्याःस्वर्गादिपुष्पप्रतिपादिकायाः गर्भीकृतमुक्तिफ लायाः कालकूटनिगिरणात्दैत्यारूयपापनिगिरणाद्वागिरिर्मुख्यप्राणस्तेनशिष्यप्रशिष्यादिपुप्रणीतत्वेनव्याख्यातत्वेनचतस्यसुतायावेदवाचोभूरिणाबहुलेनमधुगंधेनविषयसुखल वमकरंदपरिमलेनमथ्नाकामेनोन्मथितोविलोडितआत्मामनोयेषांतेतथोक्तास्तेहरद्विषः संमुह्यंतु । मोक्षफलप्रतिपादकवेदतात्पर्यापरिज्ञानेनात्मनःस्वर्गादिरेवपरमश्रेयो स्त्वितिविपरीतज्ञानंगच्छंत्वित्यन्वयः । मुहवैचित्त्यइतिधातोर्वैचित्त्यंविपरीतज्ञानम् । गिरिःप्राणःसमुद्दिष्टस्तत्सुतावेदवाक्स्मृता पुष्पंस्वर्गादयःप्रोक्ताःफलंमोक्षउदाहृतइ तिवचनात् । उक्तएवार्थोनान्यइति । अनंगोमन्मथोमंथाःकामोगजउदाहृतइत्यभिधानात् ॥ २६ ॥ हरद्विषांशापांतरमपिविसृजति सर्वभक्षाइति पलांडुादिसर्वभक्षाः वृ त्त्यैजीवनाय । नधर्मायेतिशेषः ॥ २७ ॥

---

१ तात्पर्यं वाराहे । २ शापादिकारणं न किंतु प्रारब्धकर्मैव ।

ब्राह्मणकुलायदीयमानंशापंश्रुत्वापिभीत्याकश्चित्प्रतिशापदानसमर्थोनाभूदितितत्राह तस्यैवमिति ब्राह्मणानामिदमेवायुधंनान्यदितिद्योतनायब्रह्मदंडमित्युक्तम् ॥ २८ ॥ ॥ २९ ॥ शिवदीक्षायांचांडालादिजन्मनांविप्रत्वकरणलक्षणायां सुरयासुनांतर्पणयस्मिंस्तथोक्तं यद्वा सुरानामनारिकेलादिपुष्पसंभवं मधूकपुष्पादिसंभवमासवंवा ॥ ३० ॥ तीव्रशापप्रदानेनिमित्तंवक्ति ब्रह्मेति विशेषेणधारयत्याश्रितानितिविधारणम् ॥ ३१ ॥ सेतुंविशिनष्टिएषइति । यस्यप्रमाणंसम्यग्वक्ता ॥ प्रमाणंबोधनेत्यंतमर्यादाशास्त्रहेतुषु । सम्यग्वक्तरिवायःस्यात्प्रमाणंमरणेगताविति यादवः ॥ ३२ ॥ ब्रह्मवेदं भूतराट्भैरवः ॥ ३३ ॥ स्वापमानंश्रुत्वापिमहतांमहत्त्वविरोधिविकारोनयुक्तइतिभावेनतस्यहरस्यततोनिर्गमनंचवक्ति तस्यैवमिति ॥३४॥ एवंविवादेपिसत्रस्यांतरायोमाभूदित्याह तेपीति। अंतरायानुत्पादेनिमित्तमाह यत्रेति ॥३५॥ यत्रगंगाभागीरथी। यमुनया

तस्यैवंवदतःशापंश्रुत्वाद्विजकुलायवै ॥ भृगुःप्रत्यसृजच्छापंब्रह्मदंडंदुरत्ययम् ॥ २८ ॥ भृगुरुवाच ॥ भवव्रतधरायेचयएतान्समनुव्रताः ॥ पाखंडिनस्तेभवंतुसच्छास्त्रपरिपंथिनः २९ नष्टशौचामूढधियोजटाभस्मास्थिधारिणः ॥ विशंतुशिवदीक्षायांयत्रदैवंसुरासवम् ३० ब्रह्मचब्राह्मणांश्चैवयेयूयंपरिनिंदथ ॥ सेतुंविधारणंपुंसामतःपाखंडमाश्रिताः ३१ एषएवहिलोकानांशिवःपंथाःसनातनः ॥ यंपूर्वेचानुसंतस्थुर्यत्प्रमाणंजनार्दनः ३२ तद्ब्रह्मपरमंशुद्धंसतांवर्त्मसनातनम् ॥ विगर्ह्ययातपाखंडंदैवंवोभूतराट्सदा ॥ ३३ ॥ ॥ मैत्रेयउवाच ॥ ॥ तस्यैवंवदतःशापंभृगोःसभगवान्भवः ॥ निश्चक्रामततःकिंचिद्विमनाइवसानुगः ३४ तेपिविश्वसृजःसत्रंसहस्रपरिवत्सरान् ॥ संविधायमहेष्वासायत्रेज्यऋषभोहरिः ३५ आप्लुत्यावभृथंयत्रगंगायमुनयान्विता ॥ विरजेनात्मनासर्वेस्वंस्वंधामययुस्ततः ३६ ॥ इतिश्रीभागवतेचतुर्थस्कंधेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ४ ॥ ॥ मैत्रेयउवाच ॥ सदाविद्विषतोरेवंकालोविवदमानयोः ॥ जामातुःश्वशुरस्यापिसुमहानतिचक्रमे १ यदाभिषिक्तोदक्षस्तुब्रह्मणापरमेष्ठिना ॥ प्रजापतीनांसर्वेषामाधिपत्येस्मयोभवत् २ इष्ट्वासवाजपेयेनब्रह्मिष्ठोभूयएवसः ॥ बृहस्पतिसवंनामसमारेभेक्रतूत्तमम् ३

न्विता संगतातत्रप्रयागइतिशेषः । अस्यैवकर्मणःस्वाभीष्टफलप्राप्तिहेतुत्वादिदंसमाप्यनकर्मांतरंप्रारब्धंतैःकिंतुस्वगृहगमनमेवानुष्ठितमित्याह विरजेनेति कर्मणानिर्मलेनांतःकरणेनयुक्ताइतिशेषः ॥ ३६ ॥ इतिश्रीभागवतेचतुर्थस्कंधेविजयध्वजकृतटीकायांद्वितीयोध्यायः ॥२ ॥ अत्रशंकरदक्षयोर्विवादकथनव्याजेनशंकरस्यवासुदेवचरणारविंदस्मरणकथनेनहरेरमितमाहात्म्यमेवप्रकाश्यतेऽस्मिन्नध्याये। तत्रादावस्यवैरस्यदीर्घकालीनत्वंदक्षस्यगर्वाधिक्यंचवक्ति सदाविद्विषतोरिति ॥ १ ॥ यदादक्षःपरमेष्ठिनाब्रह्मणासर्वेषांप्रजापतीनामाधिपत्येऽभिषिक्तस्तदातस्यस्मयोमदविशेषोभूदित्यन्वयः ॥ २ ॥ अरुद्रभागयज्ञकरणादस्यस्मयोलक्ष्यतइत्याशयेनाह इष्ट्वेति सदक्षोनाम्नावाजपेयेनयज्ञेनहरिंब्रह्मिष्ठःकर्मप्रतिपादकवेदेनिष्णातोभूदित्यन्वयः । एतच्चकुतोज्ञानमत्राह भूयइति यज्ञांतरकरणात्सिद्धमित्यर्थः ॥ ३ ॥

तस्मिन्नृपञ्चेत्रिलोक्याःसंमेलनेनदक्षस्यस्मयातिशयोलक्ष्यतेऽन्याशयेनाह तस्मिन्निति ॥ ४ ॥ ननुकिमनेनप्रकृतइतितत्राह तदुपश्रुत्येति दाक्षायणीसतीदेवी । मिथः प्रजल्पतांखेचराणांयत्पितृयज्ञविषयवचनंतदुपश्रुत्यांतःपुरान्निर्गत्यस्वनिलयसमीपेउपदेवस्त्रियोदृष्ट्वांतःपुरंप्रविश्यपतिमभ्यभाषतेत्यन्वयः ॥ ५ ॥ ६ ॥ ७ ॥ किमभाषतेतितत्राह प्रजापतेरिति । निर्यापितःप्रवर्तितः । किलकिंवदंती । हेवामश्रेष्ठ यदितवार्थितास्तितत्रनर्हि ॥ गमनेहेतुमाह अमोडनि । हियस्मात्तस्मात् ॥ ८ ॥ गमनेनिमित्तांतरमप्याह तस्मिन्निति । मयिगतायांतस्मात्जनात्पूजाविशेषोऽपिभविष्यतीत्याह अहंचेति परिबर्हंचवरवस्त्रादीयमानम् ॥ ९ ॥ नकेवलमुक्तमेवप्रयोजनमर्थांतरमप्यस्तीत्याह तत्रेति अध्वरध्वजंयज्ञश्रेष्ठंद्रक्ष्यइत्यन्वयः । ध्वजोशेफसिकेतौचश्रेष्ठेचैत्योद्धतद्रुमेइत्यभिधान । स्वास्तिमेढ्रांकयोर्ध्वजइति अंकाश्चेह्लनिकोरसोरिति उरस्तुवक्ष

तस्मिन्ब्रह्मर्षयःसर्वेदेवर्षिपितृदेवताः ॥ आसन्कृतस्वस्त्ययनास्तत्पत्न्यश्चसभर्तृकाः ४ तदुपश्रुत्यनभसिखेचराणांप्रजल्पताम् ॥ सतीदाक्षायणीदेवी पितुर्यज्ञमहोत्सवम् ५ व्रजतीःसर्वतोदिग्भ्यउपदेववरस्त्रियः ॥ विमानयानाःसप्रेष्ठानिष्ककंठ्यःसुवाससः ६ दृष्ट्वास्वनिलयाभ्याशेलोलाक्षीर्मृष्टकुंडलाः ॥ पतिंभूतपतिंदेवमौत्सुक्यादभ्यभाषत ७ सत्युवाच ॥ प्रजापतेस्तेश्वशुरस्यसांप्रतंनिर्यापितोयज्ञमहोत्सवःकिल ॥ वयंचतत्राभिसरामवामतेयद्यर्थितामीविबुधाव्रजंतिहि ८ तस्मिन्भगिन्योममभर्तृभिःस्वकैर्ध्रुवंगमिष्यंतिसुहृद्दिदृक्षवः ॥ अहंचतस्मिन्भवताभिकामयेसहोपनीतंपरिबर्हमर्हितुम् ९ तत्रस्वसॄर्मेननुभर्तृसंमितामातृष्वसॄःक्लिन्नधियंचमातरम् ॥ द्रक्ष्येचिरोत्कंठमनामहर्षिभिरुन्नीयमानंचमृडाध्वरध्वजम् १० त्वय्येतदाश्चर्यमजात्ममाययाविनिर्मितंभातिगुणत्रयात्मकं ॥ अथाप्यहंयोषिदतत्त्वविच्चतेदीनादिदृक्षेभवमेभवक्षितिम् ११ पश्यप्रयांतीरभवान्ययोषितःस्वलंकृताः कांतसखावरूथशः ॥ यासांव्रजद्भिःशितिकंठमंडितंनभोविमानैःकलहंसपांडुभिः १२

सिश्रेष्ठइतियादवः ॥ १० ॥ एवंबहुविधालापैरप्यविकृतेंद्रियंपतिंदृष्ट्वातन्माहात्म्यविज्ञापनपूर्वकंस्वाभीष्टमुद्घलयति त्वयीति हेअजरुद्र अजाविष्णुहरच्छागाइतियादवः । आत्मनोहरेर्मायायेच्छयाविनिर्मितंगुणत्रयात्मकंरजआदिगुणत्रयोपादानकमाश्चर्यंनानावैचित्र्योपेतमेतद्विश्वंत्वयिभाति । नित्यापरोक्षितातस्थजगन्नारायणस्वरूपत्वात्तत्प्रसादेनकरतलामलकवदेतद्विश्वंतवज्ञानकोष्ठेवर्तते अथापितवद्रष्टव्यांशाभावेपिहेभवमंगलहरअहंभवक्षितिंजन्मभूमिंदिदृक्षइत्यन्वयः । अत्रहेतुगर्भविशेषणंयोषिदिति । युंषशब्दादिसेवायां । शब्दादिविषयसेवाशीलत्वादित्यर्थः । अतएवतेतव । अतत्त्ववित्यथास्थितत्वस्वरूपाज्ञानित्वात् । दीनाक्षोणाज्ञानदुर्बला ॥ ११ ॥ इतोपिगंतव्यमितिभावेनाहपश्येति अन्यास्त्रियोपिप्रयांतिकिंमयेत्यतोगंतव्यमित्यर्थः शितिकंठनीलकंठ कलहंसवत्पांडुभिर्धवलैः ॥ १२ ॥

---

१ श्रेष्ठवाची ध्वजशब्द इत्यस्य प्रमाणान्तरम् स्वस्तीत्यादि । २ विज्ञापयति । ३ युषसौत्रः शब्दादिसेवायां ' हसृरुहियुषिभ्यइदिः ' । इति इतिप्रत्ययः ।

युक्त्यापिगंतव्यत्वंवक्ति कथमिति नैगतेनचलतिआह्वानाभावेकथंगमनंस्यादित्याशंक्यानाह्वानेप्येपांगृहगमनमुचितंभवतीत्याह अनाहुताइति देहकृतःपितुः ॥ १३ ॥ उपसंहरति तन्मेइति यतएवंगंतव्येबहवोहेतवःसंतितत्तस्मात्भवान्पूज्यस्त्वंममप्रसीद । हेअमर्त्यदेव । इदंवांछितंकर्तुमर्हसीत्यस्मिन्नर्थेवतकृपाकर्तव्याकारुणिकत्वादित्यर्थः त्वमेवकारुणिकोनान्यइत्याशयेनाह त्वयेति अदभ्रचक्षुषासर्वज्ञेनत्वयासहायंधर्मःपूर्णःगरीयान्निरूपितइतियदतःकारुणिकत्वात्प्रार्थितस्त्वमनुगृहाणवांछितमितिशेषइत्यर्थः ॥ १४ ॥ तथापिप्रिययाप्रार्थितःशंकरःकिमुत्तरमन्यथादितिविदुरस्यमानसीशंकांपरिहर्तुमाह एवमिति । गिरित्रोगिरिशः । कुत्सितावाचएवइषवः शराःकुवागिषवस्तान् । कीदृशः ॥ १५ ॥ किंवाबहुनाप्रलपेनाऽनाहूताअप्याभियंतीतियदुक्तंतस्योत्तरंशृण्वितिभावेनाह त्वयोदितमिति किंतदुदितमित्यतउक्तं अनाहुताइति तर्ह्यनभियानेकिंकारणमत्राह यदीति तेबांधवाः । अनात्ममदेनदेहाभिमाननिमित्तदर्पेणजातेनमन्युनाक्रोधेन ॥ १६ ॥ असतांविद्यादिकमपिमदविषयजनकत्वेनाप्रयोजकमहोःप

कथंसुतायाःपितृगेहकौतुकंनिशम्यदेहःसुरवर्यनेंगते ॥ अनाहुताअप्यभियंतिसौहृदाद्भर्तुर्गुरोर्देहकृतश्चकेतनम् १३ तन्मेप्रसीदेदममर्त्यवाञ्छितंकर्तुंभवान्कारुणिकोबतार्हति ॥ त्वयापिपूर्णोऽयमदभ्रचक्षुषानिरूपितोऽतोनुगृहाणयाचितः १४ ॥ ऋषिरुवाच ॥ एवंगिरित्रःप्रिययाभिभाषितःप्रत्यभ्यधत्तप्रहसन्सुरप्रियः ॥ संस्मारितोमर्मभिदःकुवागिषून्यानाहकोविश्वसृजांसमक्षतः १५ ॥ शंभुरुवाच ॥ त्वयोदितंशोभनमेवशोभनेअनाहुताअप्यभियंतिबंधुषु ॥ तेयद्यनुत्पादितदोषदृष्टयोबलीयसानात्ममदेनमन्युना १६ विद्यातपोवित्तवपुर्वयःकुलैःसतांगुणैःषड्भिरसत्तमामदैः ॥ स्मृतौहतायामभिमानदुर्दृशस्तप्रानपश्यंतिहिधामभूयसाम् १७नैतादृशानांस्वजनव्यपेक्षयागृहान्प्रतीयादनवस्थितात्मनाम् ॥ येभ्यागतान्वक्रधियाभिचक्षतेआरोपितभ्रूभिरमर्षणाक्षिभिः १८ तथारिभिर्नव्यथतेशिलीमुखैःशेतेर्दितांगोहृदयेनदूयता ॥ स्वानांयथावक्रधियांदुरुक्तिभिर्दिवानिशंतप्यतिमर्मताडितः १९ ॥

यद्यानमिवेतिभावेनाह विद्यातपइति । असत्तमाविद्यादिभिःषड्भिःसताःयोग्यैर्गुणैरुत्पन्नैर्मदैः । स्मृतौहतायाशास्त्रश्रवणोत्पन्नज्ञानेनष्टे । भूयसांमहात्मनाम् । धामप्रभावम् । नपश्यंति । हियस्मात्तस्मादित्यन्वयः अदर्शनेकारणमाह अभिमानदुर्दृशइति विद्यामदोधनदस्तूनीयोभिजनोमदइतिमदलक्षणं कामादिदोषदुष्टेंद्रियत्वादित्यर्थः अतएवतत्साक्षात्कारोतिदोषः ॥ १७ ॥ किमतइतितत्राह नैतादृशानामिति आरोपितभ्रूभिरितिहस्वन्वाभावश्छांदसः उन्नमितभ्रूभंगैरमर्षणाक्षिभिरसहमानलक्षणोपेतनेत्रैः ॥ १८ ॥ दक्षाध्वराऽगमनेकारणांतरंचाह तथारिभिरिति प्रधनेयुद्धे शिलीमुखैःशरैः ॥ १९ ॥

१ समक्षम् ।

त्विद्दुह्यात्मुल्यत्वंदक्षस्यप्रियपुत्रीत्वेपिमदाश्रयत्वेनतप्यमानात्पितुःपूजानप्राप्तेत्याह व्यक्तमिति । उत्कृष्टगतेः प्राप्तसर्वाधिपत्यस्य ॥ २० ॥ मत्पितुर्ज्ञानाधिकारित्वेकत्वेन सर्वाधिकृतोभवतितद्द्वेषइतिआशंक्यसाम्राज्यमदलक्षणासुरवेगान्मत्पदाधिपत्यंनप्राप्तमनोद्वेषइतिभावेनाह तानप्यमानेनेति । पुरुषबुद्धिसाक्षिणापुरुषेंद्रियप्रेरकाणामस्मत्त द्दाननस्मृद्धिभिः एषांपुरुषबुद्धिसाक्षिणांपरंपदमजमात्मत्वेनाधिरोढुमकल्पोऽसमर्थोयतोयस्मात्ततोद्वेष्टि । इदमसुरत्वलक्षणमितिभावेनोक्तम् । यथेति ॥ २१ ॥ अभ्युत्थानाभि वादनाभावात्तानसंमानितोऽतोद्वेषइतिकिंनस्यादितितत्राह प्रत्युद्गमेति प्राज्ञैस्तत्त्ववेदिभिः पुरुषैर्यथाव्यवहारंत्वमिथःप्रत्युद्गमादिकंचेतसागुहाशयायहृदयेस्थितायपरस्मैपुरु षायैवविधीयतेक्रियते देहाभिमानिनेजीवायनक्रियतेइदंतूभयोःसमत्वे । बंधनागुरुत्वनिमित्तेनगुरुत्वेनोक्तमनोदक्षायज्ञानाभावात्तन्निमित्तद्वेषोनसंभाव्यतइति ॥ २२ ॥ किंच मयाप्रत्युत्थानादिनामुत्यज्ञःपूज्यस्तुब्रह्मादिशरीरांतःस्थितोहरिरित्याह सत्त्वमिति विशुद्धसत्त्वंब्रह्मादिशरीरम् । वसुदेवशब्दितंपृथिव्यादिपदार्थेषुस्थितत्वाविद्योनतेतल्क तमलालेपाभावादितितच्छब्देनशब्दितमित्यर्थः । तच्छब्दवाच्यत्वेनिमित्तमाह यदीयतइति । व्याप्तिकोडादिगुणाकरःपुमान्नारायणोपावृतोमायालक्षणावरणरहितईयते ज्ञा

व्यक्तंत्वमुत्कृष्टगतेःप्रजापतेःप्रियात्मजानामसिसुभ्रुसंमता ॥ अथापिमानंनपितुःप्रपत्स्यसेमदाश्रयात्कःपरितप्यतेयतः २० तातप्यमानेनहृदातुरें द्रियःसमृद्धिभिःपूरुषबुद्धिसाक्षिणाम् ॥ अकल्पएषामधिरोढुमंजसापदंपरंद्वेष्टियथासुराहरिम् २१ प्रत्युद्गमप्रश्रयणाभिवादनंविधीयतेसाधुमिथःसुमध्य मे ॥ प्राज्ञैःपरस्मैपुरुषायचेतसागुहाशयायैवनदेहमानिने २२ सत्त्वंविशुद्धंवसुदेवशब्दितंयदीयतेतत्रपुमानपावृतः ॥ सत्त्वंचयस्मिन्भगवान्वासुदेवोत्व धोक्षजोमेमनसाविधीयते २३ त्वयानिरीक्ष्योनपितापिदेहकृद्दक्षोममद्विट्तदनुव्रताश्चये ॥ योविश्वसृग्यज्ञगतंवरोरुमामनागसंदुर्वचसाकरोत्तिरः २४ ॥

यत्तइतियद्यस्मात्तस्मात् । निमित्तांतरंचाह सत्त्वंचेति । नत्सत्त्वंचयस्मिन्ह्नैयदधीनतयावर्ततेनत्सत्त्वंयात्तच्छब्दवाच्यमित्यर्थः । एवंचवसुदेवेनिवासलक्षणसंबंधाद्वासुदेवःसोऽधो क्षजोतींद्रियज्ञानोभगवान्ममनसाविशेषेणधीयतेचिंत्यते तदुक्तं रुद्रेणधीयतेविष्णुर्विष्णोर्ध्येयोनकश्चनेति । अनेनपुरस्थितचतुर्मुखब्रह्मणिप्रकाशमानश्रीविष्णुगुणगणो त्कर्षलक्षणोपासनैकाग्रचित्तत्वेनस्थितेनमयाकार्यातरप्रारंभस्यानुचितत्वात्दक्षांतस्थहरिस्मरणसत्कारेणतत्सत्कारोपिकृतइतिद्वेषकारणंनपश्यामीत्युक्तंभवति यद्वा यद्विशुद्धं तमआदिगुणानुपरक्तंसत्त्वंतद्वसुदेवशब्दितं चशब्दएवार्थे तत्सत्त्वंगुणोयस्मिन्पुरस्येवास्तिपुमान्श्रीहरिस्तत्रतस्मिन्नेवपुरुषपावृतईयतइतियस्मात्तस्मात्सवासुदेवः सात्त्विक विशेषोधोक्षजोभगवान्मेमनसाप्रत्युत्थानादिनाविशेषेणचिंत्यतइत्यनेनास्मद्दर्शनेत्याभिमानमुग्धत्वेनरजोगुणाभिभूतचित्तत्वेनचात्रहरेर्विशेषेणसन्निधानाभावात्तत्रपितानसत्का र्योऽस्यइतिकृत्वाप्रत्युत्थानादिनानमानितइति अनेनतमआदिगुणाभिभूतत्वेनतत्त्वाज्ञानान्द्वेषोद्रेकइत्युक्तंभवति ॥ २३ ॥ ममत्वत्पूज्यत्वान्ममद्वेपिजनकोपित्वयाद्रष्टु मेवायोग्योगुरुभ्रुर्दर्शनेदोषोक्तेरित्याह त्वयेति । देहकृदपि ॥ नकेवलमांतरद्वेषोपितुवाह्योपीतिभावेनाह तदनुव्रताइति । स्थानंनिर्दिशति यइति ॥ २४ ॥

बाधकंचाहयदीतिमरणंनामदेहवियोगलक्षणंनत्वकीर्तिलक्षणम् ॥ २५ ॥ इतिश्रीभागवतेचतुर्थस्कंधेविजयध्वजकृतटीकायांतृतीयोऽध्यायः ॥ ३ ॥ हरौभक्तिविधानार्थंगुर्वादावपि भक्तिरवश्यंकर्तव्येत्याभिप्रेयतेस्मिन्नध्याये तत्रदेवीमेवंबाधकंब्रुवन्शंकरःकिंचकारेतितत्राह एतावदिति । शंसुखंकरोयस्यसःशंकरोतीतिवाशंकरः । उभयत्रप्रस्थापनेनिवारणेच पत्न्या अंगनाशंशरीरनाशंहियस्मात्तस्माद्विरराम । ततस्तुदेवीकिमकरोदितितत्राह सुहृद्दिदृक्षुरिति सादेवीसुहृद्दिदृक्षुःस्वायाम्नोनिष्कामतीभवात्परिशंकितास्वधामनिर्विशतीचाभूदित्य न्वयः ॥ १ ॥ अंतःकरणवृत्तिभेदात्द्विधाप्रवृत्तिमतीभवानीकिमकृतेत्याशंक्यतस्याभर्तुःकामजनकमंत्रौषधैःस्त्रीस्वभावंवक्ति सुहृद्दिदृक्षेति ॥ सुहृद्दिदृक्षायाःप्रतिघातोभंगस्तेनदुर्म नादुःखितमना । अप्रतिपूरुषंप्रतिपक्षपुरुषराहितमनेनकोपरोदनाभ्यांवशीकरणमंत्राभ्यांवाशिवोभिमतानुमतिप्रदःस्यादितिभावोदर्शितः ॥ २ ॥ अनेनापिभावेनस्तिमितसमुद्भव

यदिव्रजिष्यस्यतिहायमद्वचोभद्रंभवत्यानततोभविष्यति ॥ संभावितस्यस्वजनात्पराभवोयदासस्सद्योमरणायकल्पते २५ इतिश्रीभागवतेमहापुराणे चतुर्थस्कंधेतृतीयोऽध्यायः ३ ॥ मैत्रेयउवाच ॥ एतावदुक्त्वाविररामशंकरःपत्न्यंगनाशंह्युभयत्रचिंतयन् ॥ सुहृद्दिदृक्षुःपरिशंकिताभवान्निष्कामतीनिर्वि शतीद्विधाचसा १ सुहृद्दिदृक्षाप्रतिघातदुर्मनाःस्नेहाद्रुदत्यश्रुकलातिविह्वला ॥ भवंभवान्यप्रतिपूरुषंरुषाप्रधक्षतीवैक्षतजातवेपथुः २ ततोविनिःश्वस्यस तीविहायतंशोकेनरोषेणचदूयताहृदा ॥ पित्रोरगात्स्त्रैणविमूढधीर्गृहान्प्रेम्णात्मनोयोर्धमदात्सतांप्रियः ३ तामन्वगच्छन्द्रुतविक्रमांसतीमेकांत्रिनेत्रानुच राःसहस्रशः ॥ सपार्षदमुख्यामणिमन्मदादयःपुरोवृषेंद्रास्तरसागतव्यथाः ४ तांसारिकामंडुकदर्पणांबुजैःश्वेतातपत्रव्यजनस्रगादिभिः ॥ ५ ॥ गीता यनैर्दुंदुभिशंखवेणुभिर्वृषेंद्रमारोप्याविलंबितायगुः ५

तृस्थितंशिवंदृष्ट्वातद्गमनप्रकारंवक्ति ततइति । दूयतातापवता सर्वैश्वर्याएवंभावःकथमित्यत उक्तंस्त्रैणेति । स्त्रीणांस्वभावःस्त्रैणंतेनविमूढाधीर्यस्याःसातथा । अज्ञास्त्रियाःस्वभावए वायंनतुदेवस्त्रियाइतिभावेनाह प्रेम्णेति । आत्मनइतिपदंद्विरावर्तनीयं स्वस्यशरीरस्यार्धमदात्सतअदत्त रासृदानइतिधातुः ॥ ३ ॥ स्वशरीरार्धदोहरस्तस्याएकस्यागमनं कथमसहतेत्याशंक्यतद्भावविदामनुचराणागमनप्रकारंवक्ति तामन्विति । द्रुतंविक्रमःपादविक्षेपोयस्याःसातथातांकेचनानुचराअन्वगच्छन्ननुमुख्याइत्यतउक्तं मणिमन्म दादयइति । पार्षदेषुमुख्यैःसहवर्तमानाःसपार्षदमुख्याआगतव्यथाः स्वस्तिस्यादस्वस्तिर्वेतिप्राप्तमनोदुःखाः ॥ ४ ॥ शीघ्रतंगच्छंत्याःरुद्राण्याः पाशारुद्धैरिवागच्छ द्भिरनुचरैःकिमभूदित्याशंक्यराज्ञीगमनवदन्वितयात्राभूदित्याह तांसारिकेति । सारिकाक्रीडाशुकी । मंडुकंजलक्रीडावाद्यं । विलंबितायथायथासंभूयगमनंस्यात्तथाशनैश्चर द्भिः । विटंकिताइतिपाठे शृंगारिताइत्यर्थः ॥ ५ ॥

एवं भूयोऽपि तानुचरसूचितस्नेहात् शांतमनस्कत्वेन पश्चाज्जगनार्किंतु पुन्नएव गत्वाऽऽसा पश्चात् नावि शदित्याह आब्रह्मेति । आसमंताद्ब्रह्मघोषेण वेदध्वनिना ब्रह्मलोकपर्यंतगा-
मिना ध्वनिना ऊर्जितं संकुलं यज्ञार्थं वैशसं पशुसंज्ञपनं पशुहिंसनं यस्मिन्नन्यथा मृच्च दारु च अयश्च कांचनं च दर्भाश्च चर्माणि च तैर्निसृष्टानि निर्मितानि भांडानि यस्मिंस्तथा ॥ ६ ॥
तस्याः अवज्ञाकरणप्रकारमाह तामागतामिति । यज्ञकृतो दक्षस्य ॥ कश्चनेत्यस्य व्यावृत्तिमाह ऋत इति । स्वसारः स्वसॄः । तत्स्नेहः कुतोऽवगत इति तत्राह सादराः सानुरागा इति ॥७॥
सपर्यायालिंगनादिकं किं कृतवती नेति भावेनाह सौदर्येति । प्रधानावज्ञादुःसहेति भावेनाह पित्रेति । अप्रतिनंदिता अकृतमनःसंतोषा ॥ ८ ॥ ततः किमकरोदिति तत्राह अरुद्र-
भागमिति । रुद्रस्य भागो यस्मिन्स तथा तं कृतहेलनं कृतावज्ञम् ॥ ९ ॥ अधीश्वर्याः कुपितमित्यत्र किं लिंगमत्राह जगर्हेति । अमर्षेण विपन्नया गद्गदभावप्राप्तया । धूमपंथाः
कर्ममार्गास्तद्विषयेश्रमः शिक्षा स्मयो गर्वो यस्य स तथा तं कर्ममार्गेऽतिनिष्णातमित्यर्थः । स्वतेजसा स्वप्रभावेन निगृह्य निवार्य ॥ १० ॥ त्वत्तोऽपि प्रमाणवद्युक्त्या निंदत्याह नयस्ये-

**आब्रह्मघोषोर्जितयज्ञवैशसं विप्रर्षिजुष्टं विबुधैश्च सर्वशः ॥ मृद्दार्वयःकांचनदर्भचर्मभिर्निसृष्टभांडं यजनं समाविशत् ६ तामागतां तत्र न कश्चनाद्रियद्विमा-**
**नितां यज्ञकृतो भयाज्जनः ॥ ऋते स्वसॄर्वै जननीं च सादराः प्रेमाश्रुकंठ्यः परिषस्वजुर्मुदा ७ सौदर्यसंप्रश्नसमर्थवार्तया मात्रा च मातृष्वसृभिश्च सादरम् ॥**
**दत्तां सपर्यां वरमासनं च सा नादत्त पित्राऽप्रतिनंदिता सती ८ अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेलनं विभौ ॥ अनादृता यज्ञसदस्यधीश्वरी चुको-**
**प लोकानिव धक्ष्यती रुषा ९ जगर्ह सामर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम् ॥ स्वतेजसा भूतगणान्समुत्थितान्निगृह्य देवी जगतोऽभिशृण्वतः १०**
**॥ देव्युवाच ॥ ॥ न यस्य लोकेऽस्त्यतिशायनः प्रियस्तथाऽप्रियो देहभृतां प्रियात्मनः ॥ तस्मिन्समस्तात्मनि मुक्तवैरके ऋते भवंतं कतमः प्रतीपकः ११**
**दोषान्परेषां हि गुणेषु साधवो गृह्णंति केचिन्न भवादृशा द्विजाः ॥ गुणांश्च फल्गून्बहुलीकरिष्णवो महत्तमास्तेष्वविदद्भवानघम् १२**

ति । लोके भुवने विद्यमानानां देहभृतां शरीरिणां प्रियात्मनो मनोऽभीष्टरूपस्य यस्य रुद्रस्य योग्यतातिरेकेणातिशायनः प्रियोऽतिप्रियस्तथाऽप्रियो द्वेष्यश्च नास्ति । तस्मिन्रुद्रे भवंतमृते गुरु-
णां कृतमः पुरुषः प्रतीपको न कोऽपीत्यर्थः । प्रतीपाकरणे हेतुत्वं तं चाह समस्तात्मनीति । विष्ण्वादीन् षट्कर्नेंद्रादीन् समस्तस्वामिनि नहि कश्चिद्विरोध्य तिष्ठति स्वाम्यपि वैरकृच्चेत्त-
स्मिन्द्वेषः संभावित इत्यत उक्तमेव हेतुं स्मारयति वैरक इति । मुक्तवैरेत्युपलक्षणं प्रेमापि विमुक्तप्रिय इत्यर्थः ॥११॥ नत्वत्तोऽपि भवानपि भवद्वेषं कर्तुं न योग्य इत्याह दोषानिति ॥ के-
चिदसाधवो दुर्जनाः परेषामुत्तमानां गुणेषु दोषानेव गृह्णंति न गुणान् । तदुक्तं दोषोऽप्येकोऽपि दिगुणगणे तत्र मुक्त्वा गुणौघान् दोषग्राही भवति हि खलः सल्लिकातुल्यधर्म इति ॥ भवादृशा
महत्तमाः द्विजाः फल्गून् अल्पान् गुणान् बहुलीकरिष्णवो न दोषान्गृह्णंति किंतु गुणानेव । दोषान्मुक्त्वा गुणमनुभवन स्वच्छमन्ये नितांतं साधुर्लोके सलिलमिलितक्षीरपायीव हंस इ-
ति । समेवं शास्त्रे स्थिते महत्तमेषु गणितो भवान् भवद्दोषादपमाविदद्धत्वान् हि अहो कष्टमिति शेषः । द्विजा इत्यनेन दक्षस्य शास्त्रविचारयोग्यतातिशयं सूचयति ॥ १२ ॥

असतांयोग्योमहत्त्वमेष्वेकस्यतवशिवद्वेषोममाश्चर्यंबुद्धिंजनयतीतिभावेनाह ॥ नाश्चर्यमिति कुणंकर्मफलंपिबतीतिकुणपोदेहः सएवात्मेतिवादिनस्तेषुअसत्सुईर्ष्ययासहवर्तमा ना महतांविनिंदास्तीतियत्तैतदाश्चर्यम् । किंतुतदेवमहद्विनिंदनमेवशोभनमित्यन्वयः । कुणपात्मवादित्वंचविद्वज्जननिषेवायाअभावादित्याह महापुरुषेतिकाचिद्विद्वज्जनसे वयाआप्तशास्त्रज्ञानेनेहितत्त्वज्ञानंस्यात्तद्वेषान्नास्त्यतोयुक्तंकुणपात्मवादित्वेनमहद्विनिंदनंभवान्नैतादृशोऽतोममाश्चर्यबुद्धिरिति ॥ १३ ॥ महद्विनिंदनंमयानकृतमितिवक्तुंनश क्यतइत्याह यद्द्व्यक्षरमिति । शिवइतिद्वेअक्षरेयस्मिंस्तत्द्व्यक्षरंयस्यभगवतोयद्व्यक्षरनामतत् । सकृत्कथाप्रसंगात्गिरावागिंद्रियेणेरितमुच्चारितंनृणामघं । अन्येनहंतुमश क्यंदुःखं । आशुहंतिनाशयति भवांस्तंशिवंद्वेष्टिचहो लुप्तक्रियायाशुचयेमानिनेभिन्नसेतवइत्यतोभवाञ्छिवेतरोलुप्तक्रियोऽशुचिः । शिवस्त्वशुचोनांपुंसांशुचिहेतुर्दुः

नाश्चर्यमेतद्यदसत्सुसर्वदामहद्विनिंदाकुणपात्मवादिषु ॥ सेर्ष्यंमहापूरुषपादपांसुभिर्निरस्ततेजस्सुतदेवशोभनम् १३ यद्द्व्यक्षरंनामगिरेरितंनृणांस कृत्प्रसंगादघमाशुहंतितत् ॥ पवित्रकीर्तिंतमलंघ्यशासनंभवानहोद्वेष्टिशिवंशिवेतरः १४ यत्पादपद्मंमहतांमनोलिभिर्निषेवितंब्रह्मरसासवार्थिभिः ॥ लोकस्ययद्वर्षतिचाशिषोर्थिनस्तस्मैभवान्द्रुह्यतिविश्वबंधवे १५ किंवाशिवाख्यमशिवंनविदुस्त्वदन्येब्रह्मादयस्तमवकीर्यजटाःश्मशाने ॥ तन्माल्यभ स्मनृकपाल्यवसत्पिशाचैर्येमूर्धभिर्दधतितच्चरणावसृष्टम् १६

खनाशनामित्यंशुचिरितिभावेनाह पवित्रेति । शिवनामकीर्तनादेकदानष्टंदुःखंपुनर्नरोहतीतिभावेनाह अलंघ्येति । नलंघ्यमन्यथाकर्तुंशक्यंतन्नामकीर्तनादुत्प त्रंशुभं । प्रनष्टमशुभंचेतिशासनंशास्त्रंयस्यसतथातम् ॥ १४ ॥ प्रेतावासेपुयोघोरैश्चिताभस्मकृतस्नानइत्यादेःश्लोकद्वयेनोत्तरंध्वनयति । यत्पादपद्ममिति ब्रह्मरसःब्रह्मज्ञानजन्यआनंदःसएवासवंइंद्रियतृप्तिकरंमधुतस्यार्थनाशोलंयेपांतेतथोक्ताःतैर्महतांसनकादीनांमनास्येवालयःभृंगास्तैर्यस्यपादपद्मंनितरासेवितं । यद्वेवदत्तपादव त्रिष्फलंनेत्याह लोकस्येति । आशिषअभ्युदयलक्षणाः अनेनगुरुद्रोहित्वंतवप्राप्तमित्युक्तंभवति । सनकादयोरुद्रशिष्यास्तेपामन्येतुयोगिनः ब्रह्मशिष्यस्तथारुद्रोब्रह्माना रायणस्येतिविशेषवचनान्महतामित्यनेनसनकादयोगृह्यंते ॥ १५ ॥ त्वदन्ये ब्रह्माआदिःपितायेषांतेब्रह्मादयः ब्रह्मपुत्राःसनकादयः योरुद्रस्तन्माल्यभस्मनृकपालीत स्मिन्श्मशानेविद्यमानप्रेतालंकारमालायोग्यास्थिभस्मनरकपालवान् जटाअवकीर्यप्रसार्यपिशाचैःसहश्मशानेऽवसदितिताशिवाख्यनशिवंविदुःकिं नविदुरेव नित्यशुद्धइत्ये वविदुः कुतइतितत्राह येमूर्धभिरिति येसनकादयः तच्चरणावसृष्टरजआदिकंमूर्धभिर्दधाति अनेनाशिवस्याशिवत्वेज्ञानपूर्वकतच्चरणरजोधारणासंभवस्तत्करणात्रातोनित्यशुद्धइति वक्तःसूचितः मूर्धभिर्दधतीत्यनेनपुरुषार्थापेक्षयापादपांसुधारणंनत्वन्यथेतिध्वनयति । तदुक्तं सुपर्णशेषप्राणेशेशब्रह्मविष्णून्नाश्रियगिरं ऋतेनमतिनोरुद्रंकएवपुरुषार्थभागिति १६

स्यार्कनैवेतियदतःपृथङ्मार्गत्वात् त्वन्निंदयानरुद्रस्यगुणहीनत्वं अतोनतस्यदूषणमुचितमितिभावः २१ किंबहुनोक्तेनेतिस्ववैराग्यमाश्रावयति एतेनेति हरेरुद्रे कृतागस कृतापराधस्यतवदे होद्भवेनदेहाज्जातेनातएवकुजन्मनालोकैर्निंदितोत्पत्तिना कस्मादीदृशंवैराग्यंतवेत्यतआह व्रीडेति । कुत्सितश्चासौजनश्चकुजनोभवादृशस्तस्यप्रसंगतोजन्यजनकसंबंधकथालक्षणस्तस्मात् कारणांतरं चाह तज्जन्मेति। यन्महतामवचक्रत्मनोविप्रियकारितज्जन्मधिङ्निंदितमित्यर्थः २२ ततःकिंफलितंतत्राह गोत्रमिति वृषध्वजोभगवान्दाक्षायणीदक्षपुत्रीतित्वदीयंगोत्रंत्वन्नामोपेतंनामविशेषंयदायाव त्सुदुर्मनास्त्वन्नामस्मरणमात्रेणसुतरांविषण्णमना अतएवव्यपेतनर्मस्मितमितिक्रियाविशेषण अपगतनर्मवचनयुक्तमंदहासोयथाभवतितथामांप्रत्याहवक्ष्यति । हेतातत्तावत्ततःपूर्वमेवत्वदंगजंतवशरी रादुत्पन्नंकुणपंकुत्सितशरीरमुत्सृक्ष्यइत्यन्वयः । वृषध्वजःस्नेहवशाद्यदादाक्षायणीतित्वदीयंगोत्रमाह । तावत्तदाआशुत्वदीयद्वेषस्मरणाद्व्यपेतनर्मस्मितंसुदुर्मनाभवत्यतउत.पगतथामाभूदितिकु णपमुत्सृक्ष्यइतिवा । ममदेहत्यागस्तृणत्यागतुल्यइतिद्योतनायात्मनेपदप्रयोगः २३ इतिचतुर्थेचतुर्थोध्यायः ॥ ४ ॥ ॥ ७ ॥ एवंदेहत्यागस्यायत्नसाध्यत्वेपीतिकर्तव्यतायाःफलाधिक्यंस्या द्वितिसूचनायर्योगिजनशिक्षणायचदेहत्यागइतिकर्तव्यतांदर्शयत्यस्मिन्नध्याये इत्यीति उदीचींदिशमुद्दिश्यक्षितौनिषसादेत्यन्वयः । यज्ञाद्यध्वनिरमयतीत्यध्वरस्तस्मिन्यज्ञे । स्पृष्ट्वाचम्य । पी

एतेनदेहेनहरेकृतागसोदेहोद्भवेनालमलंकुजन्मना ॥ व्रीडाममाभूत्कुजनप्रसंगतस्तज्जन्मधिक्यन्महतामवद्यकृत् २२ गोत्रंत्वदीयंभगवान्वृषध्वजो दाक्षायणीत्याहयदासुदुर्मनाः ॥ व्यपेतनर्मस्मितमाशुतावदुत्स्रक्ष्यएतत्कुणपंत्वदंगजम् २३ इतिश्रीभा०च०चतुर्थोध्यायः ४ ॥ मैत्रेयउवाच ॥ इत्यध्व रेदक्षमनूद्यशत्रुहन्क्षितावुदीचींनिषसादशांतवाक् ॥ स्पृष्ट्वाजलंपीतदुकूलसंवृतानिमील्यदृग्योगपथंसमाविशत् १ कृत्वासमानावनिलौजितासना सोदानमुत्थाप्यचनाभिचक्रतः ॥ शनैर्हृदिस्थाप्यधियोरसिस्थितंकंठाद्भ्रुवोर्मध्यमनिंदितानयत् २ एवंस्वदेहंमहतांमहीयसामुहुःसमारोपितमंकमा दराद् ॥ जिहासतीदक्षरुषामनस्विनीदधारगात्रेष्वनिलाग्निधारणम् ३

तंवसनंदुकूलतेनसंवृताच्छन्ना । दृक्दृशौनिमील्यनिमीलनयुक्तदृग्भूत्वा योगपथंदेहोत्क्रमणयोगमार्गम् । तंविवृणोति कृत्वेति जितासनाप्राणादिसंचारवेगेनदेहसंचलनरहिताऽनएवानिंदिताऽकुत्सि तामामतिः । प्रथमंरेचकपूरकेकृत्वाऽनिलौप्राणापानौसमानौऊर्ध्वाधोवृत्तिरहितौकृत्वाएकत्रिस्थगतीविधाय मध्याधारादुत्क्रमणकर्तारंसुषुम्नासंचारिणमुदानमुत्थाप्यांर्ध्वमुखंकृत्वानाभिचक्रमानीय ततोनाभिमध्याद्धियानिश्चलयाबुद्ध्या । शनैरुद्वेगंविना । हृदिस्थाप्यउरःस्थितंवायुंकंठंनीत्वाकंठाद्भ्रुवोर्मध्यमनयदित्यन्वयः । यद्वा सर्वसंधिसंचारिणंवायुंव्यानमुख्योर्ध्वाधोगानिनिमित्तौप्राणापानौसमान् वायुनैक्यंकृत्वातंसमानंवायुंसोदानमुदानसहितमुदानेनैकीकृत्यापर्युपरिस्थानंजीवनमहानयदिति अत्रप्रत्युत्पन्नस्यवायुनाजीवनमद्धप्रत्यनयत् ननुतन्मात्र । तस्ययोगिनोनित्याभ्यस्तत्वा त् २ एवंभ्रुवोर्मध्यमनिलमानीयस्वयमपिभ्रुवोर्मध्येस्थिताकिंचकारेतित्राह एवमिति । एवमुक्तप्रकारेणवायुमारोप्यतस्मिन्नेवत्याक्षरित्वता । मनस्विनीवशीकृतमना । महतामिंद्रादीनामहीयसा महत्तमेनमहादेवेनादरान्मुहुःसमारोपितमंकमारोपितंस्वदेहंजिहासतीत्यक्तुमिच्छती सामा गात्रपुष्करत्वगादावनलंनिवेशयान्मिग्नगात्रेदहभस्मीकरणायवायुरन्यूत्पत्तिलक्षणध्यानंदधारचकार अनकार्यन्वाद्भ्रात नाम् । दक्षकोपेनात्महत्यादोषमाह ३

ननुवाग्निध्यानदेहत्यागानंतरंचेदुक्तोतस्यवायोरनावृत्तेरग्निसंयोगाभावेनाभीष्टकार्यानुत्पत्तिः पूर्वचेदात्मनोपिनाशसंभवात्सचानुपपन्नश्चेतनस्यनित्यत्वेनानाशादिशाशक्यसमसमयत्वेनोपपत्तेरि तिभावः ॥ ददर्शेति । ततोवाय्वग्निधारणानंतरंसामतीज्ञानोपदेष्टृत्वेनजगतांगुरोरावार्यस्यस्वभर्तुःशिवस्यचरणाम्बुजाभ्यां नोत्पन्नानंदलक्षणमासवमधुचिन्वयत्यास्वादयतीअपरंतस्मादन्यनाचिंतयती त्यर्थः परंविष्ण्वादिकांचिंतयतीस्वदेहेविष्ण्वादिकंददर्शेदेहत्यागज्ञानवाक्यशेषः देहत्यागस्यान्यथानुपपत्त्यासिद्धत्वादन्याहन्यान्वीयतइत्यदोषः । रुद्रंचब्रह्मणायूनःविष्णुंचैवाश्रियंगिरम् उमांच दृष्टवतीदेहतस्याज्ञान्यंनचास्मरदितिवचनाच्चाध्याहारःप्रामाणिकइतिमतोयतने । ततइत्यनुवर्तते तनोदेहत्यागानंतरंसद्यस्तत्क्षणएवयादादिक्रमेणसमाधिजाताग्निनादेहःप्रजज्वालइत्यन्नमृतदेहस दृशोपिनपित्राविनाकार्यइतिध्वनयति । हतकल्मषेत्यनेनविष्ण्वादिदर्शनानंतरंपितृकोपनिमित्तंकिंचिन्नपमपिनष्टमितिमन्त्रयति । यद्वा दर्शनस्यानन्यथात्वद्योतने दोषादन्यथाज्ञानंजायतेनचास्या स्तीत्यर्थः ४ एवंजगत्सुंदरदेहत्यागेकस्याप्यंतःकरणेखेदोनाभूत्किंतत्राह तत्पश्यतामिति ५ किमनेनसिद्धानुवादेनएकत्रदोषानारोपणेनेतितत्राह अहोइति । अनात्म्यंमूर्खकर्म अहोत्वनार्यमिति पात्रेकन्याप्यमित्यर्थः । चराचराःप्रजायस्यवशे । यस्यसंततिरमृताइतिवा ६ ननुकथमेतदनार्यमभूदित्याशंक्यतस्यलोकाविद्विष्टफलदर्शनादित्याह सोयमिति यएतादृशमनार्यमकार्षीत्सोयदुर्मर्षहृ

ततःस्वभर्तुश्चरणांबुजासवंजगद्गुरोश्चिंतयतीनचापरम् ॥ ददर्शदेहेहतकल्मषासतीसद्यःप्रजज्वालसमाधिजाग्निना ४ तत्पश्यतांखेभुविचाद्भुतंमहद्धाहेतिवादःसुमहानजायत ॥ हंतप्रियादैवतमस्यदेवीजहावसून्केनसतीप्रकोपिता ५ अहोत्वनात्म्यंमहदस्यपश्यतप्रजापतेर्यस्यचराचराःप्रजाः ॥ जहावसून्यद्विमतात्मजासतीमनस्विनीमानमभीक्ष्णमर्हती ६ सोयंदुर्मर्षहृदयोब्रह्मबंधुर्लोकेपकीर्तिंमहतीमवाप्स्यति ॥ यदंगजांस्वांपुरुषद्विडुद्यतांनप्रत्यषेधन्मृतयेपराधतः ७ वदत्स्वेवंजनेसत्याद्दृष्ट्वासुत्यागमद्भुतम् ॥ दक्षस्तुदृष्ट्वासुहितुःस्वनिमित्तंविनाशनम् ॥ बहुतप्यतघोरेणमयाऽप्यायुक्तंवन ८ धिङ्मामविजितात्मानंनिर्गुणंनिरपत्रपम् ॥ योहंस्वीकृत्यमृतकंव्यर्थंमेनोमहीयसि ९ वदत्स्वेवंजनेसत्याद्दृष्ट्वाऽसुत्यागमद्भुतम् ॥ दक्षंतत्पार्षदाहंतुमुदतिष्ठन्नुदायुधाः १० तेषामापततांवेगंनिशाम्यभगवान्भृगुः ॥ यज्ञघ्नघ्नेनयजुषादक्षिणाग्नौजुहावह ११ अध्वर्युणाहूयमानेदेवाउत्पेतुरोजसा ॥ ऋभवोनामतपसासोमंप्राप्ताःसहस्रशः १२ तैरलातायुधैःसर्वेप्रमथाःसहगुह्यकाः ॥ हन्यमानादिशोभेजुरुशद्भिर्ब्रह्मतेजसा ॥ १३ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेसतीदेहोत्सर्गःपंचमोध्यायः ॥ ५ ॥

दर्मर्षः सुहृद्दयः अतएवब्रह्मबंधुर्द्विजाधमो ब्राह्मणानांमृदुहृदयत्वात् अयोअद्यप्रभृति । तस्मादितिहेत्वर्थोवा (?) यद्यस्मादित्यनेनसंबध्यते पुरुषंशिवद्वेष्टीतिपुरुषद्विट् तत्पुरुषायेतिश्रुतेः । अनेन विष्णुद्वेषमपिध्वनयति पुरुषोविष्णुरुच्यतइतिश्रुतेः । मृतयेमरणायोद्यतांप्रयतमानाम् ७ शिवद्वेषग्रहग्रस्तोदक्षोपुत्रीमरणंदृष्ट्वाकिमकरोदितितत्राह दक्षस्त्विति ८ निर्गुणशमादिगुणहीन । मृतकंदेहं महेशिसिमहादेवे । एनोपराधमकार्षमित्यन्वयः ९ सहमरणयोग्याभूतगणास्तदाकिमकार्षुरितितत्राह वदतीति । अजेदक्षे । सत्याइत्याः । असुत्यागप्राणवियोगलक्षणम् १० दक्षादपिभृगोःशिवे द्वेषोऽधिकइतिभावेनभूतगणशक्तिह्रासोपायंहोमंवक्ति तेषामितियज्ञघ्नापयज्ञविनाशकास्तान्हंतीतियज्ञघ्नघ्नस्तेनयजुषा । येनारम्भिदुस्तारितासोहन्मतासाअनृतवयत. तेषांवपूर्व्याचिपाजातवेदःशुक्रंनवृ अमुतसंघहस्वेत्यादियजुर्मंत्रेण ११ तत्किमभूत्तत्राह अध्वर्युणेति । सोमंसोमभागम् १२ अत्रब्राह्मणशक्तिर्नवक्लीयमीतिध्वनयन्नेतैर्देवैर्भूतगणानापराभववक्ति तैरिति । अलातान्युल्मुकान्येवा युधानियेषांतैस्तथोक्तास्तैः । ब्रह्मतेजसाभृगुमंत्रप्रभावेन । उशद्भिर्भृगोःसंकल्पंकर्तुमिच्छद्भिरित्यर्थः १३ ॥ ॥ इतिचतुर्थस्कंधेपंचमोऽध्यायः ॥ ५ ॥

विष्णुद्वेषवत्तद्भक्तद्वेषस्याप्यनर्थहेतुत्वान्मुमुक्षुणासनकर्तव्यइतिज्ञाप्यतेस्मिन्नध्याये । तत्रादौनारदश्रुतभवानीमरणाद्भवाद्वीरभद्रोत्पत्तिंवक्तुमाह भवइति । प्रजापतेरवमानेनाऽसत्कृतायाधिकृताया स्वस्यदक्षस्याध्वरस्येशत्वइतितदध्वरेशाभृग्वादयस्तैः । तदध्वरंयजंतइतितदध्वरेजःतैस्तदध्वरेड्भिरितिवापाठः क्विप्सम्प्रसारणंच १ क्रोधफलमाह क्रुद्धइति सुदष्टेओष्ठपुटेयस्यसतथा धूता जटाअस्यसंतीतिधूर्जटिः मत्वर्थेक्विप्प्रत्ययः । तडिद्वह्निसटा वैद्युताग्निज्वाला तद्वदुग्रंरोचिर्यस्याःसातथातां । रौद्रामध्याह्नातपइवतीक्ष्णः । आतप.कथ्यतेरौद्रइतिहलायुधः २ साजटाकि मभूदितितत्राह ततइति ततोजटायाःकश्चित्पुरुषोभूदितिशेषः । तनुवातन्वाशरीरेण । घनरक्तःसांद्रारुण सूर्यस्तद्वद्दृक्ताद्दशोयस्यसतथा । कपालानांमालासमूहोऽस्यास्तीतिकपालमाली ३ यदर्थ मसावुत्पन्नस्तत्कृत्यमाह तंकिमिति हेरुद्र । मद्भटानामग्रणीस्त्वंहेतुर्मेजटांशकइति । अनेनजटायाआत्मत्वसूचयति ४ नमस्तेरुद्रमन्यवइतिश्रुतेर्मन्युनामहादेवेन युयुत्सूनांयोधानांवीरस्वभावव क्ति मेनइति यदासोन्यासाध्यकर्मसाधनार्थमुपदिष्टस्तदात्मानंस्वमसंगरंहसंकाप्यसक्तवेगंमहीयसांसहनशक्तिमत्तराणांसहःसहनशक्तिस्तांसहिष्णुसहनशीलमेनइत्यन्वयः ५ यद्यात्राविक्रमएवलोक

मैत्रेयउवाच ॥ भवोभवान्यानिधनंप्रजापतेरसत्कृतायाअवगम्यनारदात् ॥ स्वपार्षदसैन्यंचतदध्वरेशैर्विद्रावितंक्रोधमपारमादधे १ क्रुद्धःसुदष्टो ष्ठपुटःसधूर्जटिर्जटांतडिद्वह्निसटोग्ररोचिषम् ॥ उत्कृत्यरौद्रःमहसोत्थितोहसन्गंभीरनादोविससर्जतांभुवि २ ततोऽतिकायस्तनुवास्पृशन्दिवंस हस्रबाहुर्घनरक्सूर्यदृक् ॥ करालदंष्ट्रोज्ज्वलदग्निमूर्धजःकपालमालीविविधोद्यतायुधः ३ तंकिंकरोमीतिगृणंतमाहबद्धांजलिंभगवान्भूतनाथः ॥ दक्षंसय ज्ञंजहिमद्भटानांत्वमग्रणीरुद्रजटांशकोमे ४ आज्ञप्तएवंकुपितेनमन्युनासदेवदेवंपरिचक्रमेविभुम् ॥ मेनेतदात्मानमसंगरंहसंमहीयसांतातमहःसाहिष्णुम् अन्वीयमानःसतुरुद्रपार्षदैर्भृशंनदद्भिर्व्यनदत्सुभैरवम् ॥ उद्यम्यशूलंजगदंतकांतकंसंप्राद्रवद्घोषणभूषणांघ्रिः ६ अथर्त्विजोयजमानःसदस्याः ककुभ्युदीच्यांप्रसमीक्ष्यरेणुम् ॥ तमःकिमेतत्कुतएतद्रजोभूदितिद्विजाद्विजपत्न्यश्चदध्युः ७ वातानवांतिनहिसंतिदस्यवःप्राचीनबर्हिर्जीवतिहोग्रदंडः॥ गावोनकाल्यंतइदंकुतोरजोलोकोऽधुनाकिंप्रलयायकल्पते ॥ ८ ॥ प्रसूतिमिश्राःस्त्रियउद्विग्नचित्ताऊचुर्विपाकोवृजिनस्यैवतस्य ॥ यत्पश्यंतीनांदु हितॄणांप्रजेशःसुतांसतीमवदध्यावनागसम् ९

स्योद्वेगजनकःकिमुतत्तद्युद्धविक्रमइतिभावेनतत्रात्राप्रभावंवक्ति अन्वीयमानइति यथासुष्ठुभैरवंभयंकरंभवतितथाव्यनदत् जगदंतकोजगन्मृत्युस्तस्याप्यंतकंमहत्तुंघोषणशब्दनशीलंभूषणंनूपुरलक्षण मंघ्रौयस्यसतथा ६ असौवीरभद्रोयज्ञवाटनिकटमापादितिवार्तापुरोगामिनीतत्सेनाधूलिंरव्यनक्तीतिभावेनऋत्विगादीनांधूलिदर्शनेनजिज्ञासाप्रकारंवक्ति अथेति उदीच्यांककुभिदिशि । ऋत्विजःयज्ञ प्रवर्तकाः । यजमानोयज्ञेदीक्षितः । सभास्थानेस्थित्वामंत्रतत्रकर्मेहविदेवताग्निसंबंधंविवेचयंतःसदस्याः ७ नकेवलंदध्युरभिदध्युश्चेत्याह वाताइति चोरगणाभावनिमित्तमाह प्राचीनबर्हिरि ति । उग्रोदंडोयस्य । उग्रेषुदंडोयस्येतिवासउग्रदंडः प्राचीनबर्हिर्नामतत्कालभवोराजा । जीवतिप्रमाणोवर्ततइत्यन्वयः । हेत्यनेनतज्जीवनसर्वेषांसिद्धमितिव्यनक्ति ८ तत्रकेचिदक्षभयात्कारणंजान तोपितूष्णीमासंस्तद्भयहीनाःप्रसूतिमुख्याःकारणमूचुश्चेत्याह प्रसूतिमिश्राइति । मिश्रशब्दोमुख्यार्थेवर्तते । प्रजेशोदक्षोदुहितॄणांप्रपश्यतीनांसतीनामनागसमनपराधांनाम्नासतींसुतामवदध्यौअवज्ञा तवानितियद्यस्मात्तस्याद्वृजिनस्यपापस्यविपाकःफलमेवेत्यन्वयः ९

सत्यवशात्तेषां परमेश्वरकोपादिदयमनर्थोऽभूदिति नीरुद्वर्त्तिरिति भावेन महाशिवमाहात्म्यं वर्णयन्नाह यस्त्वमिति । धूम्रजटाकलापः धूम्रा पिङ्गलजटासमूहः । वितन्वन् विस्तृत्य वा इत्याशनिशेषः । उदितान्यस्त्राणि धनुरादीनि येषु तैरुदितास्त्रा ये दोषा भुजा एव ध्वजा दोर्ध्वजा यस्य स तथोक्तः रूक्षाट्टहासः कठोरसिंहनादः स एव स्तनयित्नुः प्रलयकालीनमेघनादस्तेन भिन्नाविद्राविता दिशो येन स तथोक्तः । भिन्नदिगिति पाठे स्त नयित्नुवत्प्रवृद्धनादो यस्य स तथेत्यर्थः १० अनेन मत्कृतं किं तत्राह अमर्षयित्वेति । एवंविधं तं शिवममर्षयित्वा । विधातुर्दक्षस्य स्वस्तिः स्यात् किं । न स्यादेवेत्यन्वयः । दंष्ट्राभिरुदस्तो निरस्तो भागणो नक्षत्रगणो यस्य स तथोक्तस्तम् ११ न केवलं नर्कता दक्षस्यैव अपदं रिष्टं जायते किंतु दुर्निमित्तैरपीत्याह बह्वेवमिति किं बहुना अयं क्सर्वनोदिशं १२ उत्पातानां क्षिप्रमत्यक्षफलमभूदित्याह तावदिति यावदुत्पाता उत्पन्नास्तावत्कालक्षेपमन्तरेण स महान्मखो रुद्रानुचरैरन्वरुध्यत इत्यन्वयः ॥ नानाविधत्वमेव स्पष्टीक्रियते वामनकैरित्यादिना वामनकैर्ह्रस्वैर्ह्रस्वशिरोभिश्च पिंगैः कपिलैः पिशंगैः

यस्त्वंतकाले व्युप्तजटाकलापः स्वशूलसूच्यर्पितदिग्गजेंद्रः ॥ वितत्य नृत्यत्युदितास्त्रदोर्ध्वजो रूक्षाट्टहासस्तनयित्नुभिन्नदिक् १० अमर्षयित्वा तमसह्यतेजसं मन्युप्लुतं दुर्विषहं भ्रुकुट्या ॥ करालदंष्ट्राभिरुदस्तभागणं स्यात्स्वस्ति किं कोपयतो विधातुः ११ बह्वेवमुद्विग्नदृशोच्यमाने जनेन दक्षस्य मखे महात्मनः ॥ उत्पेतुरुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्यक् १२ तावत्स रुद्रानुचरैर्मखो महान्नानाविधैर्वामनकैरुदायुधैः ॥ पिंगैः पिशंगैर्मकरोदराननैः पर्याद्रवद्भिर्विदुरान्वरुध्यत १३ केचिद्बभंजुः प्राग्वंशं पत्नीशालां तथापरे ॥ सद आग्नीध्रशालां च तद्विहारं महानसम् १४ रुरुजुर्यज्ञपात्राणि तथैकेऽग्नीननाशयन् ॥ कुंडेष्वमूत्रयन्केचिद्बिभिदुर्वेदिमेखलाः १५ अबाधंत मुनीनन्ये एके पत्नीरतर्जयन् ॥ अपरे जगृहुर्देवान्प्रत्यासन्नान्पलायितान् १६ भृगुं बबंध मणिमान्वीरभद्रः प्रजापतिम् ॥ चंडीशः पूषणं देवं भगं नंदीश्वरोऽग्रहीत् १७ सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः ॥ तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाद्रवन् १८ जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान्भवः ॥ भृगोर्लुलुंचे सदसि योऽहसच्छ्मश्रु दर्शयन् १९ भगस्य नेत्रे भगवान्पातितस्य रुषा भुवि ॥ उज्जहार सदस्थोऽक्ष्णा यः शपंतमसूसुचत् २० पूष्णश्चापातयद्दंतान्कालिंगस्य यथा बलः ॥ शप्यमाने गरिमणि योऽहसद्दर्शयन्दतः २१ आक्रम्योरसि दक्षस्य शितधारेण हेतिना ॥ छिंदन्नपि तदुद्धर्तुं नाशक्नोत्त्र्यंबकस्तदा २२

रिद्रावद्भिर्मकरवदुदरमाननं च येषां तैस्तथोक्तास्तैः पर्याद्रवद्भिरितस्ततउत्पतद्भिः १३ तत्र तत्र स्वस्वानुकूलं रोधनं कुर्वन्त्युक्तं विशिनष्टि केचिदिति । प्राग्वंशः अग्निहोत्रस्थानम् । यज्ञशालायाः पूर्वपश्चिमस्तंभयोरुपर्यवस्थितवंशालंबनं पूर्वपश्चिमायत दारुवा प्राग्वंशस्तं यज्ञशालायाः पश्चिमतः पत्नीशाला । यज्ञशालायाः पुरतो मंडपः सदः । मंडपात पुरतो हविर्धानी । तस्योत्तरत आग्नीध्रशाला पशुविशसनस्थानं । तस्याग्नीध्रस्याग्निस्थानं विहारः । महानसं पचनस्थानम् १४ रुरुजुः रुजो भंग इति धातुः वेदिमेखला उत्तरवेदिसीमासूत्राणि १५ १६ मणिमान्कश्चिद्गणनाथः प्रजापतिं दक्षम् । चंडीशश्चंडेश्वरः १७ सर्वेऽप्येवमेव निगृहीताः किमेत्याह सर्व एवेति १८ भवो वीरभद्रः लुलुंचे उत्पाटयामास । लुञ्च छेदन इति धातुः । अनेन कोऽपराधः कृत इति तत्राह सदसीति विश्वसृजां सदसि १९ अत्र वीरभद्रस्यापराधानुकूलं दंडं करोतीति सर्वेषामित्याह भगस्येति २० कालिंगस्य दंतवक्रस्य द्यूते बलो बलभद्रः । भृगुणा गरिमाणि ज्ञानोपदेष्टृत्वेन गुरुतमे शिवे शप्यमाने सति यः पूषा दतः दंतान्दर्शयन्न हसत्तस्य २१ वीरभद्रो दक्षं बद्ध्वा किमकरोदिति तत्राह आक्रम्येति । शितधारेण तीक्ष्णाग्रेण त्रीणि अंबकानि नेत्राणि यस्य २२

२३ आलंफलमाह दृष्ट्वेति मखेपशूनांसंज्ञपनेहिंसनेयोगंमंत्रपूर्वकोपायं यजमानएवपशुस्तस्य तेनयोगेन २४ अयंहिविक्रमउभयेषामुभयथांत करणवृत्तिमकार्षीदित्याह साधुवादइतिअन्येषांदक्षप क्षिणाम् २५ मंत्रादिशक्त्यैतच्छिरःसंधानमपिनकार्यमितिभावेनशिरश्छेदोत्तराक्रियांवक्ति जुहावेति । ततःपरंकिमकारीदितितत्राह तद्देवयजनमिति देवयजनंयज्ञदग्ध्वाविनाश्यगुह्यकालयंकैलासंप्रा तिष्ठत्प्रायादिति । अत्रत्र्यंबकोहरःपशुपतिरितिविशेषनामनिर्देशात्किंचनतात्पर्यमस्तीतिध्वनयति पूर्ववीरभद्रेणस्वेनरूपेणगत्वायज्ञशालादिकंभंक्त्वा पश्चान्मूलरूपेणगत्वादक्षमवधीत् । तत्राप्युपेंद्रेण हरिणाधर्मपुत्रेणहरिणाचजितःशिवोन्यांस्तत्रास्थितान् जित्वाकैलासमगमदिति । तदुक्तं वीरभद्राख्यरूपेणस्वेनपूर्वंययौहरः मूलरूपेणपश्चात्तुगत्वादक्षमथावधीत् तत्रोपेंद्रेणहरिणाजितोधर्मात्मजे नच अन्यान्जित्वाययौकैलासंस्वंनिकेतनमिति २६ ॥ ॥ इतिश्रीभागवतेचतुर्थस्कंधेवि०कृ०टी०षष्ठोध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ भगवदपरोक्षीकरणायतत्प्रसादवत्स्वोत्तमभक्त्युत्कर्ष तारतम्येनतदनुग्रहोप्यापाद्यइत्यभिप्रायोवर्ण्यतेस्मिन्नध्याये । तत्रसर्वभक्तोत्तममहादेवप्रसादापादनायदेवानांब्रह्माणंप्राप्यस्वसंकटविज्ञापनप्रकारःकथ्यते अथदेवगणाइत्यादिना रुद्रस्यानीकैः सैन्यैः पार्षदैरित्यर्थः १ एतद्वृत्तम् २ ननुविष्णुब्रह्मणोर्यज्ञागतेरावश्यकत्वेनतत्स्थितौयज्ञविनाशोब्रह्माणंगत्वादेवविज्ञापनंचकथंयुक्तं अग्नाविष्णवंपुरोडाशंनिर्वपति प्रजापतेनत्वदेतान्यन्येत्यादिश्रुतेरित्यत

शस्त्रैरस्त्रान्वितैरेवमनिर्भिन्नत्वचंहरः ॥ विस्मयंपरमापन्नोदध्यौपशुपतिश्चिरम् २३ दृष्ट्वासंज्ञपनेयोगंपशूनांसपतिर्मखे ॥ यजमानपशोःकस्यकायात्ते नाहरच्छिरः २४ साधुवादस्तदातेषांकर्मतत्तस्यशंसतां ॥ भूतप्रेतपिशाचानामन्येषांतद्विपर्ययः २५ जुहावैतच्छिरस्तस्यदक्षिणाग्नावमर्षितः ॥ तद्देव यजनंदग्ध्वाप्रातिष्ठद्गुह्यकालयम् २६ ॥ ॥ इतिश्रीभागवतेचतुर्थस्कंधेषष्ठोध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ मैत्रेयउवाच ॥ अथदेवगणाःसर्वेरुद्रानीकैःपरा जिताः ॥ शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः १ संछिन्नभिन्नसर्वांगाःसर्त्विक्सभ्याःसमाकुलाः ॥ स्वयंभुवेनमस्कृत्यकार्त्स्न्येनैतन्न्यवेदयन् २ उपलभ्य पुरैवैतद्भगवानब्जसंभवः ॥ नारायणश्चविश्वात्मानकस्याध्वरमीयतुः ३ तदाकर्ण्यविभुःप्राहतेजीयसिकृतागसां ॥ क्षेमायभूयसेभूयान्नप्रायेणबुभूषताम् ४ अथापियूयंकृतकिल्बिषाभवंयेबर्हिषोभागभाजंपरादुः ॥ प्रसादयध्वंपरिशुद्धचेतसाक्षिप्रप्रसादंप्रगृहीतांघ्रिपद्माः ५ आशासानाजीवितमध्वरस्यलो कःसपालःकुपितेनयस्मिन् ॥ तमाशुदेवंप्रिययाविहीनंक्षमापयध्वंहृदिविद्धंदुरुक्तैः ६

आह उपलभ्येति । एतद्भाविकार्यंपुरैवोपलभ्यज्ञात्वाब्जसंभवोब्रह्मानिश्वात्माविश्वांतर्यामीत्रिमूर्तिगेनरूपेणनारायणश्चकस्यदक्षस्याध्वरंनेयतुर्नजग्मतुरित्यन्वयः अतोविष्णुब्रह्मणोस्तत्रानवस्थानाद्यज्ञविनाशोदेवानांब्रह्माणंगत्वाविज्ञापनंचयुज्यतइतिभावः ३ विज्ञापितसंकटश्रुत्वाब्रह्मणाशिक्षाकरंवाक्यमवादीत्याह तदेति । तेजीयसिबलिष्ठेपुंसि । विष्णुत्राणूविनाइत्यतःप्रायेणेत्युक्तम् ४ तर्हिनूर्णींभावोऽस्माकंकिमुपायांतरंआज्ञापयसीतितत्राह अथापीति । बर्हिषोयज्ञस्य भागंस्वविहितांशंभजतीतिभागभाक् तंपराकृत्यान्यस्माअदुरित्यर्थः । अथापिकृतापराधानामपियुष्माकं शिवप्रसादनमेवोपायइत्युक्तंभवति । प्रसादनेकिंसाधनमित्यतउक्त परिशुद्धेति । राहुग्रस्तचं द्रमण्डलवत्केवलएकस्मिन्नर्थेविकल्पमपत्वंनस्यादितिपरीत्युक्तं नकेवलंचेतोनैर्मल्यमलंकिंतुकर्मचापेक्षितमित्याह प्रगृहीतेति । प्रगृहीतंअंघ्रिपद्मंयैस्तेतथोक्ताः ५ नकेवलंकालांतरभाविनःश्रेयसःसाधनं तत्प्रसादनं किंतुअद्यतनस्यापीतिभावेनाह आशासानाइति । अध्वरस्यजीवितंपुनरनुसंधानलक्षणंजीवनमाशासानाआकांक्षमाणायूयम् दक्षदुर्वचनमेवनकारणमीश्वरस्यकोपस्यकारणांतरमप्यस्तीति ध्वनयन्नाह प्रियेति । नतत्कोपेनपरमध्वरस्यविनाशोऽपितुसपालस्यलोकस्यापीत्यतस्तदकरणाद्ध्वःप्रसादेनशांतोभवतिक्षिप्रप्रसादमेतिनस्वभावादितिभावेनोक्तं लोकइति ६

सुमुक्षुणाविष्णुद्वेषवत्तस्यहरेर्मनोनुसारितयावर्तमानस्यश्रीकंठस्यद्वेषः कर्तुंनयोग्यइत्याशयेनाह नाहमिति । अहंब्रह्मशर्मायस्यविष्णोस्तत्त्वं बलवीर्ययोगित्युपलक्षणंज्ञानादिगुणानांचप्रमाणंपरिमाण नवेदितिवापक्षइंद्रोपिनवेत्ति तथायूयंनविन्थ तथान्येप्रजापत्यादयोयेचदेहभाजःशरीरिणोमुनयः सनकादयश्चनविदुरित्यन्वय । तस्यविष्णोरात्मनोमनसस्तत्रस्यवशस्यरुद्रस्यक पुमानपराधम् कोपिचित्सेवकर्तुमिच्छेत् नकोपिनुभपुरित्यर्थः । यज्ञोयज्ञपत्यादयश्चनविदुरित्यन्वयः । यज्ञोपज्ञपतिस्त्विंद्रःपुरुहूतःपुरुष्टुत इत्यभिधानादिंद्रएवात्रयज्ञशब्दार्थः । नाहंनेंद्रोनचैवान्येयत्तत्त्वंनविदुःपरं । तस्यविष्णोर्दशोरुद्रोममवायोरथापिवा । नान्यस्यकस्यचिन्पुंसस्तस्येत्थंवकुतःकृतमितिवचनात । स्मृतिममाख्यानाच नयज्ञोविष्णुर्भमवायोग्थापिवेत्यनेनात्मनोब्रह्मणोवायोश्चतत्ररपत्ययथोपि भावितइतिज्ञायते अदिरयनेनसंसारनदीमुत्तर्तुकामैःशिवद्वेषोनकर्तव्यइतिसूचयति मोक्षस्यशिवाद्युपदिष्टज्ञानापेक्षित्वात् । तदुक्त मुमुक्षवोब्रह्मगत्वागिरीशादेद्रादिभिस्तथा श्रुत्वाज्ञानपरगुरुंरुच्यते भगवाणासहेति ७ ममासहगतचदेतेषदिवानाांएवशिवःक्षिप्रमप्रमादोभविष्यतीतिमहादयालोर्ब्रह्मणःकैलासंप्रतियात्रांशक्ति सइत्यमिति । अजोब्रह्मा पुरद्विपःशिव कैलासोगिरिशोमृड इत्यभिधानात् । तस्यनिवासइतिविग्रहेयथार्थविहिताण्प्रत्ययेनकैलासइतिरूपंसिध्यति ८ कंटकगुल्मसंदेरप्रवेशस्यगडशैलादिपाषाणरनारोहस्याचलस्यकिमाहात्म्यादुद्रप्रियत्वमित्यतस्तत्पर्वतचतुर्दशभि श्लोकै

नाहंनयज्ञोनचयूयमन्येयेदेहभाजोमुनयश्चतत्त्वम् ॥ विदुःप्रमाणंबलवीर्ययोर्वातस्यात्मतंत्रस्यकउद्विधित्सेत् ७ सइत्थमादिश्यसुरानजस्तुतैःसमन्वितःपितृभिःसप्रजेशैः ॥ ययौस्वधिष्ण्यान्निलयंपुरद्विषःकैलासमद्रिप्रवरंप्रियंप्रभोः ८ जन्मौषधतपोमंत्रयोगसिद्धैर्नरेतरैः ॥ जुष्टंकिन्नरगंधर्वैरप्सरोभिर्वृतंसदा ९ नानामणिमयैःशृंगैर्नानाधातुविचित्रितैः ॥ नानाद्रुमलतागुल्मैर्नानामृगगणावृतैः १० नानामलप्रस्रवणैर्नानाकंदरसानुभिः ॥ रमणंविहरंतीनांरमणैःसिद्धयोषिताम् ११ मयूरकेकाभिरुतंमदांधालिविमूर्च्छितम् ॥ प्लावितैरक्तकंठानांकूजितैश्चपतत्रिणाम् १२ आह्वयंतमिवोद्धस्तैर्द्विजैःकामदुघैर्द्रुमैः ॥ व्रजंतमिवमातंगैर्गृणंतमिवनिर्झरैः १३ मंदारैःपारिजातैश्चसरलैश्चोपशोभितम् ॥ तमालैःशालतालैश्चकोविदारासनार्जुनैः १४ चूतैःकदंबैर्नीपैश्चनागपुन्नागचंपकैः ॥ पाटलाशोकबकुलैःकुंदैःकुरबकैरपि १५ सुवर्णशतपत्रैश्चवीररेणुकजातिभिः ॥ कुब्जकैर्मल्लिकाभिश्चमाधवीभिश्चमंडितम् १६

वर्णयति जन्मेत्यादिना । नरेतरैर्नरत्वजातिरहितैर्जन्मनाविशिष्टकुलोत्पत्त्याकृष्णचित्रकाद्योषधेन कृच्छ्रचांद्रायणादितपसाऽष्टांगलक्षणयोगेनमृत्युंजयादिमंत्रेणएतैः सिद्धैरमरत्वादिसिद्धिंगतैर्जुष्टमित्यनेनमुक्तसाधनत्वध्वनत्ति नरतरैः किन्नरगंधर्वैर्जुष्टमप्सरोभिर्वृतमितिवा ९ मनःशिलादिनानाविध धातुभिर्विचित्रितैश्चित्राकारंगमितैरितिशृंगविशेषणं नानामृगगणावृतैः नानाद्रुमादिभिश्चवृत १० निर्झरःप्रस्रवोंऽम्भसामितिहलायुधः । जलस्यनानात्वंमरकतादिस्थलरूपकांत्यकर्दमराहित्येनामलत्वम् । नहस्वौकत्वेन । तथात्वेनानात्वविरुद्धं । कंदरागुहाः । सानूनितटानि । रमणैःसहविहरंतीनांसिद्धयोषितांरमणरतिप्रदम् ११ मयूरकेकाभिरुतंशब्दितंविमूर्च्छितविविधगीतं रक्तकंठानांकोकिलानांप्लावितैः तारस्वरैरन्येषांपतत्रिणांकूजितैरुतैः १२ किंचपक्षिग्राहकैःपुरुषैरुद्धस्तैरुद्धृत्तैर्द्विजैःकरणैःकामदुघद्रुमैराह्वयंतमिवस्थितम् १३ पारिजातैःपारिभद्रकैःसरलैर्देवदारुभिःसालतालैःसर्ज्जतृणराजैः कोविदारैःकांचनारकैःअसनैःपिशंगपुष्पैःअर्जुनैःककुभैः १४ नागैर्नागकेसरैः पुन्नागैःसुरवल्लभैःकुरबकैस्तिलकैः १५ सुवर्णं कृतमालः वीरःकरवीरः रेणुकंकेतकी कुब्जकैःकुंकुमतरुभिः माधवीवासंती अत्रसंस्कृताधिकारित्वात्पर्यायांतरमेवालिख्यते नानात्वेनापभ्रंशानांतैर्बोधनमशक्यते १६

हिंगुरामठः भूर्जैर्भूर्जपत्रैः ओषधीभिर्जंबूवृक्षैः १७ काश्मरीकृष्णवृंतिकः आम्रातकोविडुलः आम्रोजिह्वारसकरः प्रियालोलवंगःधनुर्वा मधुकोमधुकरसः इंगुदःकिंगुदकः तापसतरुर्वा १८ १९ शाखामृगैर्वानरैः क्रोडैर्वराहैः ऋक्षैर्भल्लुकैः शल्यकःकंटकवराहः गवयावनगावः शरभोऽष्टापदः रुरुर्हरिणेपुमहान् २० कर्णोमोकर्णःकर्णविहीनोवा कर्णःकर्णविहीनःस्याद्दंडस्तुच्छि अपुच्छकइतियादवः कर्णाश्चऔर्णाश्चएकपादाश्चाश्वास्याश्चकर्णौर्णैकपदाश्वास्यास्तैः । और्णादयोपिमृगविशेषाः । मृगनाभिभिः कस्तूरिकामृगैः । कदलीखंडेनसंरुद्धरयसंवृतस्य नलिनीपुलिन स्यपद्माकरसिकतामयोच्चस्थलस्यश्रीर्यस्मिन्सतथातम् २१ नदयागंगाआस्वयानद्यापर्यंस्तंपरिवृत भूतेशगिरि श्रीकैलासम् २२ तत्रकैलासेपुनःकिंचित्रमपश्यन्नितितत्राह ददृशुरिति । तन्नामसौगंधि कनाम २३ अलकायाबाह्यतोबहिर्भागेतीर्थपादः श्रीनारायणस्तत्पादपद्मरजसामाश्रितत्वादतीवपावनेशुद्धे २४ स्वधिष्ण्यतःस्वविमानात् २५ तासांस्नानेननदिभ्रष्टंसंक्रांतंकुचकुंकुमंतेनापिंजर पीवरकम् २६ तारैरजतैर्मौक्तिकैर्वाहेमभिःसुवर्णैर्महारत्नैर्माणिक्यादिभिरलंकृतानांविमानानांशतैःसंकुलांनिबिडां । कथमिवास्थितां तडिनाघनेनचसहवर्तमानंखमाकाशयथातथा २७ अलकां

**पनसोदुंबराश्वत्थप्लक्षन्यग्रोधहिंगुभिः ॥ भूर्जैरोषधिभिःपूगैराजपूगैश्चजंबुभिः १७ खर्जूराम्रातकाम्राद्यैःप्रियालमधुकेंगुदैः ॥ द्रुमजातिभिरन्यैश्च राजितंवेणुकीचकैः १८ कुमुदोत्पलकह्लारशतपत्रवनर्द्धिभिः ॥ नलिनीषुकलंकूजत्खगवृंदोपशोभितम् १९ मृगैःशाखामृगैःक्रोडैर्मृगेंद्रैरृक्षशल्यकैः ॥ गवयैःशरभैर्व्याघ्रैरुरुभिर्महिषादिभिः २० कर्णांत्रैकपदाश्वास्यैर्निर्जुष्टंमृगनाभिभिः ॥ कदलीखंडसंरुद्धनलिनीपुलिनश्रियम् २१ पर्यस्तंनंदयासत्याः स्नानपुण्यतमोदया ॥ विलोक्यभूतेशगिरिंविबुधाविस्मयंययुः २२ ददृशुस्तत्ररम्यामलकांनामवैपुरीम् ॥ वनंसौगंधिकंचापितत्रतन्नामपंकजम् २३ नंदाचालकनंदाचसरितौबाह्यतःपुरः ॥ तीर्थपादपदांभोजरजसातीवपावने २४ ययोःसुरस्त्रियःक्षत्तरवरुह्यस्वधिष्ण्यतः ॥ क्रीडंतिपुंसःसिंचंत्योविगाह्यरतिकर्शिताः २५ ययोस्तत्स्नानविभ्रष्टकुचकुंकुमपिंजरम् ॥ वितृषोपिपिबंत्यंभःपाययंतोगजागजीः २६ तारहेममहारत्नविमानशतसंकुलाम् ॥ जुष्टांपुण्यजनस्त्रीभिर्यथाखंसतडिद्घनम् २७ हित्वायक्षेश्वरपुरींवनंसौगंधिकंचतत् ॥ द्रुमैःकामदुघैर्हृद्यंचित्रमाल्यफलच्छदैः २८ रक्तकंठखगानीकस्वरमंडितषट्पदम् ॥ कलहंसकुलप्रेष्ठखरदंडजलाशयम् २९ वनकुंजरसंघृष्टहरिचंदनवायुना ॥ अधिपुण्यजनस्त्रीणांमुहुरुन्मथयन्मनः ३० वैदूर्यकृतसोपानावाप्युत्पलमालिनीः ॥ व्याप्तंकिंपुरुषैर्दृष्ट्वातआराद्ददृशुर्वटम् ३१**

तःप्रवेशेतद्वैचित्र्यदर्शनेनतत्रस्थजनसंलापेनकालक्षेपेणच्छिन्नदक्षदेहेनयज्ञानुसंधानंदुष्करंस्यादितिनिर्धियातापुरींतद्वनंचदृष्ट्वाहित्वाबहिरेवगच्छंतस्तेदेवाआराद्वटंददृशुरित्यन्वय । यक्षेश्वरपुरींहित्वात ...गंधिकंचवनंदृष्ट्वासमीपेवटंददृशुरितिवा । तद्वनंविशिनष्टि द्रुमैरित्यादिना चित्राणिमाल्यानिपुष्पाणिफलानिच्छदा पत्राणियेषुतैस्तथातैः २८ खरोदंडोयेषांतानितथा कलहंसकुलस्यप्रेष्ठानिप्रि यतमानिखरदंडानिपद्मानियेषुतेतथोक्ताःतेचजलाशयाजलाधारा कासारायस्मिंस्तनथोक्तम् २९ वनकुंजरवनमजे कंडूतिनिरासार्थंसंघृष्टानानिष्पिष्टानांहरिचंदनानांरजोगंधमिश्रवायुनाऽधिकंपुण्यजन स्त्रीणांमनोमुहुरुन्मथयद्विक्षोलयत् ३० उत्पलानांमालापाषुविद्यंतइत्युत्पलमालिनीरुत्पलमालिन्य. वैदूर्यैःकृतानिसोपानानिकृत्रिमावतारस्थलानियासुतास्तथा एवंविधावाप्योयत्रसतीतिशेषः तत्किं पुरुषैर्विलासार्थंव्याप्तम् ३१

वर्ण्यविशिनष्टि सयोजनेति। सवटो योजनानां शतमुत्सेध उन्नतिर्यस्य सतथोक्तः चतुर्द्धाविभक्तस्यशतस्य पादश्चतुर्थांशः पंचविंशतिसंख्या तयोनारहितामंख्यापंचसप्ततिः। तावद्दीर्घैर्विटपैरायतोविस्तृतः पर्यक्
रितोयत्नाकृतापूर्णा अमलाछायायस्य सतथा निर्गतानिनीडानिपक्षिमंदिराणि यस्मात्सतथा। तापवर्जित शीतोष्णरहित ३२ सुरामहायोगमये अष्टैश्वर्यस्वरूपे मुमुक्षूणां शरणे निवासभूते तस्मिन्वटमू
लेआसीनं शिवंददृशुरित्यन्वय ३३ सख्यावैश्रवणेन ३४ विद्याचतपश्चयोगश्चतेनतथातेषांपंथा मार्गस्तम.[illegible] तद्र्थं। कर्मणा विद्यादीनामर्थात्स्वंविषयमुपदेष्टारंस्वामिनंच। लोकंमंगलयती
तिलोकमंगलं विश्वस्यसुहृदमनिमित्तबंधुं श्रीनारायणंवात्सल्याद्भक्तस्नेहात्कारुण्याच्चध्यायंतम् ३५ संध्याभ्ररुचा [illegible] कालभवमेघवर्णेनाङ्गेनतापसा
नामीष्टम् भस्मचदंडश्चजटाचाऽजिनंचयस्मिंस्तथातल्लिंगं वेषं लिंगं शेफःसिवेपनाचिह्नं तु इत्यादिसहनाविनितयादव.। चंद्रस्यलेखाकलांचाबिभ्रतम् भस्मोद्धूलितेनतेनत्रायत्रयत्नानांरक्तत्वाद्वा सन्ध्याभ्ररुचेति ३६
वृस्यांपतितयोग्यासनं। यतीनामासनंवृसीतिहलः। सनातनंनित्यंब्रह्मनंदतत्त्वम् ३७ दक्षिणंऊरौसव्यंपादपद्मंकृत्वासव्यंजानुनिचसव्यबाहुंदक्षिणंजानुनिचदक्षिणबाहुंकृत्वा प्रकोष्ठकराग्रेऽक्षमालायस्यसत

सयोजनशतोत्सेधः पादोनविटपायतः ॥ पर्यग्गतामलच्छायोनिर्नीडस्तापवर्जितः ३२ तस्मिन्महायोगमये मुमुक्षुशरणे सुराः ॥ ददृशुः शिवमासीनंत्य
क्तामर्षमिवांतकम् ३३ सनंदनादिभिःसिद्धैःशांतैःसंशांतविग्रहम् ॥ उपास्यमानंसख्याचभर्त्रागुह्यकरक्षसाम् ३४ विद्यातपोयोगपथमास्थितंतदधीश्व
रम् ॥ ध्यायंतंविश्वसुहृदंवात्सल्याल्लोकमंगलम् ३५ लिंगंचतापसाभीष्टंभस्मदंडजटाजिनम् ॥ अंगेनसंध्याभ्ररुचाचंद्रलेखांचाबिभ्रतम् ३६ उपविष्टंदर्भ
मय्यांबृस्यांब्रह्मसनातनम् ॥ नारदायप्रवोचंतंपृच्छतेशृण्वतांसताम् ३७ कृत्वोरौदक्षिणेसव्यंपादपद्मंचजानुनि ॥ बाहुंप्रकोष्ठेक्षमालमासीनंतर्कमुद्रया
३८ तंब्रह्मनिर्वाणसमाधिमास्थितंव्युपाश्रितंगिरिशंयोगकक्ष्याम् ॥ सलोकपालामुनयोमनूनामाद्यंमनुंप्रांजलयःप्रणेमुः ३९ सतूपलभ्यागतमा
त्मयोनिंसुरासुरेशैरभिवंदितांघ्रिः ॥ उत्थायचक्रेशिरसाभिवंदनमर्हत्तमःकस्ययथैवविष्णुः ४० तथापरेसिद्धगणामहर्षिभिर्येवैसमंतादनुनीललोहितम्
नमस्कृतःप्राहशशांकशेखरंकृतप्रणामंप्रहसन्निवात्मभूः ४१

मालम् तर्कमुद्रयाज्ञानमुद्रयासीनम् ३८ एवंविधंशिवंदृष्ट्वाकिंचक्रुरितितत्राह तंब्रह्मेति। मनूनांमननशीलानामुपासकानामाद्यमनुं। ब्रह्मैवप्रापयोनिर्वाणसमाधिः शरीराभिमानत्यागलक्षणाच्चित्तैकाग्र
यतासदृशीमवस्थामाश्रितम्। योगकक्ष्यां योगपट्टिकाम् ३९ सर्वेषुप्रणमत्सुसत्सु ब्रह्माकिमकार्षीदित्याशंक्यपितृत्वाद्गुणज्येष्ठत्वात्गुरुत्वाद्धरेःप्रेष्ठत्वाच्चाभ्येत्यशिवशर्माहमभिवादयामीत्यभिवा
दयितवोब्रह्माणंनमतीत्याह सतूपलभ्येति शिरसेत्यनेनाष्टांगविशिष्टांनतिंध्वनयति। नतिंविशिनष्टि यथेति। यथाविष्णोरष्टांगविशिष्टत्वननमनंकरोतितथेत्यर्थः। सर्वदाचसूर्यादपितेजिष्ठेनरु
द्रेणब्रह्मणस्तस्यविरिंचस्यमाहात्म्यातिशयोस्तीतिकिंवक्तव्यमितिभावेनाशिवंविशिनष्टि महत्तमइति। अर्कस्यसकाशादपिमहत्तमस्तेजस्वित्तमइत्यर्थः। गुणगुणिनोरभेदाभिप्रायेणायप्रयोगः। तेजो
र्थेउत्तमार्थेचपूज्यार्थेचप्रयुज्यते महच्छब्दोमहःशब्दोमान्यशब्दस्तथैवचेतिवचनात्तेजोर्थोमहच्छब्दइतिसिद्धम् ४० तत्रब्रह्मास्वगुरुत्वमभिनयन्भवंवक्तीत्याह तथेति। तथारुद्रस्यसमंतात्स्थिताअ
परेयेसिद्धगणास्तैर्महर्षिभिःसहनीललोहितंअनुनमस्कृतःप्रहसन्निवात्मभूर्ब्रह्मात्मनेकृतप्रणामंशशांकशेखरंप्राहेत्यन्वयः ४१

भक्तद्वेषमसहमानेनशिवांतर्यामिणादक्षयज्ञविनाशनमकारीतिध्वनयंस्तद्यज्ञसंधिकामस्त्वस्मिंस्तुष्टेशिवोपितुष्टःस्यात्तस्यभक्तल्क्षणत्वाच्छिवस्यासंभाव्यैर्गुणैःशिवांतर्यामिणंनरसिंहंस्तौति जानेत्वामि ति । हेईश अखंडैश्वर्यविश्वस्याखिलस्यजगतोयोनिबीजयोर्मातृस्थानीयायाःशक्तेःप्रकृतेरुमायाःपितृस्थानीयस्यपुरुषशब्दवाच्यस्यशिवस्यचसकाशाद्यत्परमुत्तमंनिरंतरस्वगतभेदरहितंशिवशक्त्योः स्थित्वामातृत्वपितृत्वलक्षणशब्दप्रवृत्तिनिमित्तापादकत्वांजानइत्यन्वयः ४२ शिवशक्त्योर्योनिबीजत्वमुपचारिकंमुख्यंतुतदंतर्यामिणोहरेरेवेत्यभिप्रेत्याह त्वमेवेति । क्रीडयोर्णपदऊर्णनाभिर्यथोर्णांसृ जतितन्मध्येक्रीडतेचतांहरतितथात्वंभतिभावत् स्वरूपयोःसाक्षादरूपयोःशिवशक्त्योःस्थित्वाताभ्याकरणभूताभ्यांभगवंस्त्वमेवैतद्विश्वंसृजसिपासिरक्षस्यत्सिसंहरसीत्यन्वयः । प्रसिद्धपरित्यज्या प्रसिद्धांतर्याविकल्पनायांकिंकारणमित्यतउक्तं शक्तेःशिवस्यचपरमिति नाहिशिवशक्त्योःपर.शिवइतिवक्तुंयुक्तं प्रतीतिविरोधात् तर्हित्वमित्यादिप्रयोगप्रतीते कागतिरितिचेन्न अंतर्याम्यपेक्षयाच रितार्थत्वात् । तदुक्तं क्रियतेस्तुतयोन्यत्रतदंतर्याम्यपेक्षया । नजीवेषुगुणाःपूर्णायथायोग्याहितद्गताइति । तद्वशत्वात्स्वरूपंतुविष्णोःसर्वमुदीर्यते । स्वरूपसचसर्वस्यबिंबत्वादेवतूच्यते । साक्षात्स्वरूपंमत्स्याद्याविष्णोर्नान्येकथंचन तस्मादन्यगतादोषानतस्मिन्पुरुषोत्तमेइतिवचनात् शिवादीनामस्वरूपत्वंमत्स्यादीनांसाक्षात्स्वरूपत्वंचाभिद्धं नापलपनीयमितिभावः ४३ दक्षयज्ञवि नाशनंतदंतर्यामिणाहरिणाकृतमितिप्रमाणेनध्वनितंस्फुटयति । त्वमेवेति । त्वमेवनान्योधर्मार्थौदोग्धीतिधर्मार्थधुक् तेनधर्मार्थदुघा सूत्रणप्रत्युत्थानाद्यकरणनिमित्तदोषसूचकेनदक्षेणहेतुनाविसर्जिता

**श्रीब्रह्मोवाच ॥ जानेत्वामीशविश्वस्यजगतोयोनिबीजयोः ॥ शक्तेःशिवस्यचपरंयत्तद्ब्रह्मनिरंतरम् ४२ त्वमेवभगवन्नेतच्छिवशक्त्योःस्वरूपयोः ॥ विश्वंसृजसिपास्यत्सिक्रीडयोर्णपदोयथा ४३ त्वमेवधर्मार्थदुघाऽभिपत्तयेदक्षेणसूत्रेणविसर्जिताध्वरः ॥ त्वयैवलोकेवसिताश्चसेतवोयान्ब्राह्मणाःश्रद्दधतेधृतव्रताः ४४ त्वंकर्मणांमंगलमंगलानांकर्तासिलोकेतनुषेस्वयंफलम् ॥ अमंगलानांचतमिस्रमुल्बणंविपर्ययःकेनाचिदेवकस्यचित् ४५**

ध्वरःविनाशितयज्ञोभवसीतिशेषः । सोपिगुणएवाभूदित्याशयेनाह अभिपत्तयइति । तस्यदोषस्याभिपत्तयेप्रतीकारायपरिहारायपाणिमर्कटलोचनइत्यादिदोषसूचकेनदक्षेणयोयज्ञउपक्रांतस्तंत्वद्भक्तत्वे पित्वद्भक्तद्वेषित्वात्तद्दोषपरिहारायभक्तवत्सलस्त्वमेवनाशितवानित्यर्थः । दक्षोपित्वद्भक्तश्चेत्तद्यागविनाशंकिमकार्षीरित्यतआह त्वयैवेति । तत्तत्कर्मसुयानियानिव्रतानित्वयाविहितानितानिधारयंतो येब्राह्मणावेदशास्त्रपारगास्तेयान्सेतून्श्रद्दधतेमद्भक्तोपिस्वोत्तमभक्तद्वेषादिकं नकुर्यादित्यादिलक्षणधर्मसेतवोलोकेवेदेचत्वयैवावसितानिश्चित्यनिर्णीताइत्यर्थः ४४ एवकारेणमन्वादिपुस्थित्वावर्णा श्रमादिसहितांविध्वंसइतिध्वनितंस्पष्टयति त्वंकर्मणामिति । मगिरल्च् अगिवगिमगिरगिलगिगत्यर्थाः मंगेरल्च्प्रत्ययोभवतिसज्ञाविषयेनुमागमश्चकार.स्वरार्थस्तेनमंगलमितिरूपंतस्यसद्बुद्धिर्हेमगले ति हेमंगलविष्णोत्वंजीवलोकेस्थित्वामगलानांपुण्यानामप्रमंगलानामशुभानांचकर्मणाकर्तासि स्वयमन्यानपेक्षितस्तेषामुभयेषांकर्मणाफलंस्वर्गादिकमुल्बणतमिस्रनरकादिकंचतनुषेस्वस्वयोग्यता नुसारेणविस्तृत्यददासीत्यन्वयः । ननुनायंनियमोद्रढीयान् विपर्ययदर्शनादित्यतआह विपर्ययइति केनचिद्भक्तद्वेषादिहेतुनाकस्यचिदेवधर्मादेःफलविपर्ययः नतुसर्वस्येत्यज्ञानांधर्मसूक्ष्मज्ञानं दुर्लभमितिभावः ॥ ४५ ॥



१ क्रीडन्नूर्णपदोयथा इतिवापाठः । २ उणादिसूत्र । अ० ५ सू० ७० । २ चित्त्वम् ।

सम्येवंत्वाहिनब्रह्मणाहरौरोपलक्षणदोषारोपःकृतइत्यागतमित्याशंक्यत्वद्भक्ताएममप्यनुचितोरोषोनास्तिकिमुनर्वेतिभावेनाह नवाऽइति त्वच्चरणार्पितात्मनासर्वेषुभूतेष्वपिभिन्नतत्वंत्वांपश्यतामात्मन्याधारत भाभूतानिचपश्यतामेवापृथक्दिदृक्षतांयथार्थज्ञानंचक्षुर्नामनांप्रायेणतथारोषोनाभिभवेद्यथापशोरज्ञानिनोऽभिभवेदित्यन्वयः । अनेनरोषविषयेरोषःकर्तव्योनान्यत्रातोनहरौदोषारोपोब्रह्मणाकृतइत्युक्तं भवति । चतुर्थषष्ठीतिसूत्रात् द्वितीयादिचतुर्थषष्ठीवत्तडनिविधानात्तवेत्यस्यद्वितीयार्थत्वम्ज्यते विष्णुवधीनाजगन्मत्ताप्रतीतिश्चेष्टितगानि इतिपञ्चिश्चितंज्ञानमपृथक्दर्शनंस्मृतं मिथ्याज्ञानपृथक्ज्ञानमिति केचिद्वेदविदुःयथैवार्थस्तथाज्ञानमपृथक्दृष्टिरुच्यतइतिवचनात् अपृथक्दर्शननाभेदज्ञानंकिंतुयथावस्तुविज्ञानमितिज्ञायते ४६ हननयोग्यापराधगुरुपविपर्ययारोपःसकथंमहतोपिनाभिभवेदित्याशंक्य सत्यं । स्वदोषेणहन्यमानान्नावधीरितिप्रार्थयामहइतिज्ञापयति पृथक्दृशइति।येपृथक्दृक्त्वादिदोषाकराः दुरुक्तैःपरान्वितुदंति हेदेवभवांस्तान्मावधीदित्यन्वयः । पृथग्विधान्भिन्नप्रकारान्ज्ञानिलोक विलक्षणानित्यर्थः ४७ यद्यपिब्रह्मविज्ञापनेनप्रपन्नरयरुद्रांतर्यामिणोहरेःक्षांत्यारुद्रोपिशांतोभवतितथापिरुद्रोपिपृथगवाच्यइतिधियाधुनादक्षापकोपोनकर्तव्यइतिरुद्रंवक्ति येस्मिन्निति । अस्मिल्लोके येदक्षविधाजना दुर्लंघ्ययापुष्करनाभस्यमाययाबंधकशक्त्यास्पृष्टधियोपथैवपृथग्दृशोऽस्मिञ्जनेद्वेषादिकंकुर्वंतीतियद्यप्यस्मात्तस्मात्तत्रतेषुजनेषुभवादृशाःसाधवोनुकंपया हृदयद्रवीभावेनकृपांक्षमालक्ष

नैवसतांत्वच्चरणार्पितात्मनांभूतेषुसर्वेष्वभिपश्यतांतव ॥ भूतानिचात्मन्यपृथक्दिदृक्षतांप्रायेणरोषोभिभवेद्यथापशोः ४६ पृथग्दृशःकर्मदृशोदुरा शयाःपरोदयेनार्पितहृद्रुजोनिशम् ॥ परान्दुरुक्तैर्वितुदंत्यरुंतुदास्तान्मावधीदेवभवान्पृथग्विधान् ४७ येस्मिन्यदापुष्करनाभमाययादुर्लंघ्ययास्पृ ष्टधियःपृथग्दृशः ॥ कुर्वंतितत्रह्यनुकंपयाकृपांनसाधवोदैवबलात्कृतांःकथम् ४८ भवान्हिपुंसःपरमस्यमाययादुरंतयास्पृष्टमतिःसमस्तदृक् ॥ तथा हतात्मस्वनुकर्मचेतःस्वनुग्रहंकर्तुमिहार्हतिप्रभो ४९ कुर्वध्वरस्योद्धरणंहतस्यभोत्वयाऽसमाप्तस्यमनोःप्रजापतेः ॥ नयत्रभागंतवभागिनोददुःकुयष्टि नोयेनमखोनिनीयते ५० जीवताद्यजमानोयंप्रपद्येताक्षिणीभगः ॥ भृगोःश्मश्रूणिरोहंतुपूष्णोदंताश्चपूर्ववत् ५१

योपकारंकर्तुमिच्छांकथंनकुर्वंतीत्यन्वयः । हृदयस्यद्रवीभावस्त्वनुकंपेतिकथ्यते उपकारंकर्तुमिच्छाकृपेत्याहुर्मनीषिणः । तेपिसाधुष्वेवकेचित्कुतएवंकुर्वंतीतितत्राह दैवेति तादृग्विधपूर्वकर्मप्रबोधक स्यदेवस्यहरेर्बंधकशक्तिबलात्तथाकृताइतिहेतुगर्भविशेषण । हिशब्देनयोग्यताविशेषंकथयति ४८ विष्णुमायाहरेरिच्छाबंधशक्तिश्चतद्वशा सर्वत्रगाहरेरिच्छाबंधशक्तिर्ज्ञवर्जितेतिवचनात् । भवान्सर्वज्ञत्वे नबंधशक्तिस्पर्शाभावात्तेष्वेकोनस्यात् अतोस्मिन्नज्ञानिजनेऽनुग्रहंकर्तुमर्हतीत्याह भवान्हीति । हिशब्दोहेत्वर्थः तयाबंधकशक्त्याहतात्मसुनष्टबुद्धिगुणेषु । अतएवानुकर्मचेतःसुहिंसालक्षणकर्मानुविष्टचि त्तेषु । दक्षादिष्वितिशेषः । अस्पृष्टमतिः ॥ ४९ ॥ स्वबोधनेनांतर्यामिहरिप्रसादेनचप्रसादाभिमुखंरुद्रंप्रत्येतादृशोनुग्रहःकार्यइतिवक्ति कुर्वध्वरस्येति हतस्यत्वयाकृतांतरायेणेतिशेषः । अतएवासमाप्तस्याकृतावभृथस्नानादेरितिशेषः । मनोर्दक्षस्य । कोपमध्वरइतितत्राहनयत्रेति येनत्वयामखो निन्यग्भावेननीचत्वेननीयतेतस्यभागिनोयज्ञभागार्हस्यतवकुत्सितारुग्वाएषामस्तीतिकु यष्टिनऋत्विजोदेवायत्रयज्ञेभागविहितहविर्भागंनददुस्तस्याध्वरस्य । यद्वायेनयज्ञभागयोग्येनत्वयामखोनिकामंनीयते तस्यभागिनोदेवाभागंयत्रनददुस्तस्येति । निन्यग्भावनिकामयोरितियादवः । ॥ ५० ॥ यजमानसद्भावेयागोद्धारःसंभवतितस्यमयाहतत्वात्कथंनष्टाक्षादिवयवादीनांस्वभागनिरीक्षणकथंचायुधाश्मभिर्भग्नगात्राणामृत्विजांहोमागत्वमित्याशंक्यत्वदनुग्रहसुधासमुद्रमग्नाः सर्वे संपन्नाभवंत्वित्याह जीवतादित्यादिना ५१

अनातुरमारोग्यम् ५२ सर्वैनिरवद्यंस्यात्यदिममभागोस्तिचेदित्याशंक्यतवायमनुशोकोमाभूदित्याह । एषतइति उच्छिष्टःस्विष्टकृद्भागः । यदग्नयेस्विष्टकृतेसमवद्यति भागधेयेनैवतद्रुद्रंसमर्द्धयतिसकृत्सकृदवद्यतिसकृदिवहिरुद्रउत्तरार्धादवद्यत्येषावैरुद्रस्यदिक्स्वायामेवदिशिरुद्रंनिरवद्यतेइतिश्रुतेः ५३ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेविजयध्वजकृतटीकायांसप्तमोध्यायः ॥ ७ ॥

अत्रभगवज्ज्ञानोपचितंकर्महरेःसाक्षात्कारसाधनंभवतीतितात्पर्यतोनिरूप्यते तत्रब्रह्मोक्तमाकर्ण्यतुष्टेनरुद्रेणोच्यमानप्रतिवचनप्रकारंवक्ति । इतीति । धर्मपरिपंथिनोबाधतइतिबाहुःमहांश्चासौबाहुर्यस्यसतथा तस्यसंबोधनंमहाबाहो अर्जिदृशिकम्यमिपंसिबाधृतृजिपसितुक्तुकुदीर्घहकारश्च अर्जअर्जनेदृशिप्रेक्षणे कमुकांतौ अमरोगे पसिनाशने बाधृलोडने एभ्योधातुभ्यःकुप्रत्ययोभवति एषांधातूनांयथासंख्यंतृजिपसितुक्कुकुदीर्घहकाराश्चेत्येतेआगमादेशाश्चभवंति ऋजुरवक्रः अव्युत्पन्नोवापशुमैत्रहीनश्चतुष्पाच्च कमेस्तुगागमः कंतुःकंदर्पः अमेर्बुगागमःअंबुजलं पंसिःपंसेर्दीर्घः पांसुः रजः बाधेर्हकारादेशः बाहुःभाण्यंगम् १ किमभ्यधायीतितत्राह नाघमिति । हेप्रजेशसर्वजीवराश्युत्तम अघमपराधंनवर्णये अनेकत्वादज्ञानकालत्वादितिशेषः। तर्हिपश्चात्तापोस्तिकिंनेत्याह नानु

देवाश्चांभग्नगात्राणामृत्विजांचायुधाश्मभिः ॥ भवतानुगृहीतानामाशुमन्योऽस्त्वनातुरम् ५२ एषतेरुद्रभागोस्तुयदुच्छिष्टोध्वरस्यवै ॥ यज्ञस्तेरुद्रभागेनकल्पतामद्ययज्ञहन् ५३ ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेसप्तमोध्यायः ॥ ७ ॥ ॥ मैत्रेयउवाच ॥ इत्यजेनानुनीतेनभवेनपरितुष्यता ॥ अभ्यधायिमहाबाहोप्रहस्यश्रूयतामिति १ ॥ रुद्रउवाच ॥ नाघंप्रजेशबालानांवर्णयेनानुचिंतये ॥ देवमायाभिभूतानांदंडस्तत्रधृतोमया २ प्रजापतेर्दग्धशीर्ष्णोभवत्वजमुखंशिरः ॥ मित्रस्यचक्षुषेक्षेतभागंस्वंबर्हिषोभगः ३ पूषातुयजमानस्यदद्भिर्जक्षतुपिष्टभुक् ॥ देवाःप्रकृतसर्वांगायेमउच्छेषणंददुः ४ बाहुभ्यामश्विनोःपूष्णोहस्ताभ्यांकृतबाहवः ॥ भवंत्वध्वर्यवश्चान्येबस्तश्मश्रुर्भृगुर्भवेत् ५ ॥ मैत्रेयउवाच ॥ तदासर्वाणिभूतानिश्रुत्वामीढुष्टमोदितम् ॥ परितुष्टात्मभिस्तत्रसाधुसाध्वित्यथाब्रुवन् ६ ततोमीढ्वांसमामंत्र्यशुनासीराःसहर्षिभिः ॥ भूयस्तद्देवयजनंसमीढ्वद्वेधसोययुः ७ विधायकार्त्स्न्येनचतद्यदाहभगवान्भवः ॥ संदधुःकस्यकायेनसवनीयपशोःशिरः ८ संधीयमानेशीर्षणिदक्षोरुद्राभिवीक्षितः ॥ सद्यःसुप्तइवोत्तस्थौददृशेचाग्रतोमृडम् ९

चिंतयइति । पश्चात्तापंनकरोमीत्यर्थः । पश्चात्तापाकरणेकारणमाह दंडइति । अपराधानुसारिदंडाकरणेअनुतापःस्यात्तदनुसारिणीशिक्षामयाकृतेत्यर्थः २ पुत्रच्छात्रादिभिर्गुरुवाक्यसबहुमानंग्राह्यमितिभावंदर्शयन्वक्ति प्रजापतेरिति अजस्यछागस्यमुखंयस्यतत्तथोक्तम् पूर्वशिरोऽनुसंधानाकरणेकारणंदग्धशीर्ष्णइति । स्वपौरुषजयस्तंभस्थापनायाज्ञजनाशिक्षणायचभगादीनामप्यन्यावयवैरवस्वनिर्वाहःस्यादितिभावेनाह मित्रस्येत्यादिना । बर्हिषोयज्ञस्य ३ दद्भिर्दंतैः । तत्रदेवानांविशेषानुग्रहंकरोति देवाइति । प्रकृतसर्वांगाःपूर्वावस्थाप्राप्तसर्वावयवाः उच्छेषणभागोवैरुद्रइतिश्रुतेः । येमउच्छेषणंददुरितिविशेषानुग्रहेहेतुः ४ ऋत्विजांनैवमित्याह बाहुभ्यामित्यादि अध्वर्यवऋत्विजस्तेषांमध्येकेचिच्छिन्नबाहवः केचिच्छिन्नहस्तास्तेपुछिन्नत्राहवोश्विनोर्बाहुभ्यांकृतबाहवःपूर्वबाहुप्रयोजनाभवंतु । अन्येचपूष्णोहस्ताभ्यांकृतहस्ताभवंतु । कूर्परस्योपरिदेशोबाहुस्तदधोहस्तः । देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामितिश्रुतेः । हसदानादानयोरितिधातुः ।बस्तस्यश्मश्रूणियस्यसबस्तश्मश्रुः ५ कोसावुत्तरकथाप्रसंगइतितत्राहतदेति मिहसेचनइतिधातोः प्रणतजनस्याभीष्टंवर्षतोमीढ्वांसस्तेषामतिशयेनमीढ्वान्मीढुष्टमस्तेनकथितम् अनेनतदानींमतन्नामोपलब्धिरितिरहस्यंज्ञायते ६ शुनासीरादेवाः । सहितामीढ्वद्वेधोभ्यांरुद्रब्रह्मभ्यांयेतथोक्ताः ७ कस्यदक्षस्य सवनीयपशोर्यज्ञीयपशोः ८ शीर्षणिशिरसि ९

शिवस्यावनवपुंस्त्वनुग्रहस्मायश्यंन्यनाक्ति नदेति । अभ्रंमलिनदेह्योत्निरुन्नेकोदंडआयुधइतिशदरःअरन्मेघवत् १० तात्सम्यच्छत्वमेवतस्यनत्वांतरंनलक्षणाभावादिततत्राह भवस्तवायेति औत्कंठ्यादुत्पन्नबाष्पकलया आंतरनैर्मल्याभावेरुद्रस्तवएवनयुक्तः सचानंनकर्तृप्रपत्यंननस्मादांतरंगशुद्धिरनुमीयतइति ११ कादिकएवमदत्तोनतुवाचिकइतिशंकामाभूदित्याह कृच्छ्रादिति भावेनेशंतम १२ दक्षस्यशिवस्त्वांतरद्रेपोनास्तीतिज्ञापयितुंतदनुगुणगगौ स्तुतिंकरोति भूयानिति । त्वयाप्रमहापिमदपराधानुगुणोदंडोधृतइतियद्यस्मात्तस्माद्भूयाननुग्रहःकृत । अहोमेमहतांपुंसा मनुकंपा । शिरश्छेदादिलक्षणोनुग्रहोनस्यात्किंतुअत्यंतापकारएवायममरणमेवलोकेकोदर्शनात्तेनयुक्तइत्याशंक्यापरराधयिश्चेयं नायनियमइतिभावेनाह नब्रह्मेति । ब्रह्मबंधुपुब्राह्मणजातिमा त्रेषुयुष्मंतवहरेश्ववांयुवयोरवज्ञानास्तिधृतव्रतंपुनीक्षितेपुकुतएवावज्ञातः कृतावज्ञस्यान्मयिदंडकरणंयुक्त अन्यथायुष्मदवज्ञानेनानुत्थानतमःप्राप्तिःस्यादिति १३ अवज्ञानेनिमित्तमाह विद्यातपइ ति । ब्रह्मात्मतांवेदरक्षकतांब्रह्मणःपूर्णगुणस्यहरेरात्मतांविशेषसन्निधानदेहतांवा प्रथयितुंप्रख्यापयितुं अस्राअस्राक्षीःस्म । यस्मात्तत्तस्मात्त्वत्सन्निधानपात्रभूतान्ब्राह्मणान्विपत्सुपासीत्य

तदादृषध्वजद्वेषकलिलात्माप्रजापतिः ॥ शिवावलोकादभवच्छरदह्रइवामलः १० भवस्तवायकृतधीर्नाशक्रोदनुरागतः ॥ औत्कंठ्यबाष्पकलयासं परेतांसुतांस्मरन् ११ कृच्छ्रात्संस्तभ्यचमनःप्रेमविह्वलितःसुधीः ॥ शशंसानिर्व्यलीकेनभावेनेशंप्रजापतिः १२ ॥ दक्षउवाच ॥ भूयाननुग्रहअहोभवता कृतोमेदंडस्त्वयामयिभृतोयदपिप्रलब्धः ॥ नब्रह्मबंधुषुचवांभगवन्नवज्ञातुभ्यंहरेश्चकुतएवधृतव्रतेषु १३ विद्यातपोव्रतधरान्मुखतःस्मविप्रान्ब्रह्मात्मतत्त्वमवितुंप्रथमंत्वमस्राक्षीः ॥ तद्ब्राह्मणान्परमसर्वविपत्सुपासिपालःपशूनिवविभोप्रगृहीतदंडः १४ योसौमयाविदिततत्त्वदृशासभायांक्षिप्तोदुरुक्तिविशिखैर्विगणय्यतन्माम् ॥ अर्वाक्पतंतमर्हत्तमनिंदयापाद्दृष्ट्याऽऽर्द्रयासभगवान्स्वकृतेनतुष्येत् १५ ॥ मैत्रेयउवाच ॥ क्षमाप्यैवंसमीढ्वांसंब्रह्मणाचानुमंत्रितः ॥ कर्मसंतानयामाससोपाध्यायर्त्विगग्निभिः १६ वैष्णवंयज्ञसंतत्यैत्रिकपालंद्विजोत्तमाः ॥ पुरोडाशंनिरवपन्वीरसंसर्गशुद्धये १७ अध्वर्युणात्तहविषाहूयमानोयजुष्पतिम् ॥ यथाविशुद्धयादध्यौतथाप्रादुरभूद्धरिः १८ तदास्वप्रभयातेषांद्योतयंत्यादिशोदश ॥ मुष्णंस्तेजउपानीतस्ताक्ष्येणस्तोत्रनिर्जितः १९ श्यामोहिरण्यरशनोर्ककिरीटजुष्टोनीलालकभ्रमरकुंडलमंडितास्यः ॥ कंब्वब्जचक्रशरचापगदासिचर्मव्यग्रैर्हिरण्मयभुजैरिवकर्णिकारः २०

त्यः १४ भवान्कृपासमुद्रोऽहंनिर्घृणोदुष्टइत्यत्रविवेकयुक्तिमाह योसाविति नविदितातत्त्वदृग्यस्यसतथातेनाऽलब्धतत्त्वज्ञानेनैक्षददृक्षीर् नास्माकपुरुपायुषशतेनत्वत्कृतप्रतिनिधिकरणश क्यते अतःस्वकर्मणास्वयमेवतुष्टोभवेत्याह सभगवानिति १५ मत्कृतमनुमराति क्षमाप्येति । संतानयामासअनुसहितचकार १६ दुष्टस्ययज्ञस्यप्रायश्चित्तमंतरेणकथमनुसंधानंघटतइतितत्राह । वैष्णवमिति वैष्णवंविष्णुदैवत्यं । त्रीणिकपालान्यासनानियस्यसत्रिकपालस्त । वीरोवीरभद्रस्तस्यसंसर्गउपद्रवस्तस्यशुद्धयेपरिहारायनिर्वापणसमंत्रपचनम् १७ अध्वर्योःप्रतिपत्तिफलमाह अध्व र्युणेति । यजुष्पातिंमंत्रदेवताम् १८ तदात्मत्पक्षस्यहरेःकर्मविशेषस्वरूपविशेषंचाह तदेति । ताक्ष्र्येणगरुडेन स्तोत्रेणसामरूपेणानिर्जितोवशीकृतः १९ हिरण्मयारशनाकांचीयस्यसतथाहिरण्यवत्पीत मंबरंयस्यसतथेतिवा । अर्कवत्ज्वलताकिरीटेनजुष्टः नीलाश्चतेअलकाश्चनीलालकाः तएवभ्रमराश्चकुंडलेचनीलालकभ्रमरकुंडलानिएतैर्मंडितमास्ययस्यसतथा कंब्वादिभिर्व्यग्रैर्विवशैः शिक्षा भ्यासदर्शकैरंगदादिभूषणार्पितत्वाद्धिरण्मयैरिवस्थितैर्भुजैर्लक्षितःपुष्पितः कर्णिकारोवृक्षविशेषः २०

वक्षस्यधिश्रितावधूर्भार्यायस्यसतथा पुत्रभार्यावत्प्रेमास्पदत्वद्योतनायाधिश्रितरमइतिवक्तव्येवधूरित्युक्तम् । वहेश्च वहेर्द्धातोरूप्रत्ययोभवतिपुत्रभार्यायांगम्यमानायांचकारात्कनीयभ्रातृभार्यायाम् धका रस्यांतादेशः स्वभार्यात्ववधूः । सापिसेवार्थमत्रवसति नत्वालिंगनादिसुखावाप्त्यर्थमतः श्रितेति उदारहासावलोकयोःकल्पयाचंद्रकलावदाह्लादिकया पार्श्वेभ्रमद्भ्यव्यजनचामराख्यराजहंसाभ्यामुपरिगु भ्रातपत्रशशिनालक्ष्यमाणोदृश्यमानः एवंविधस्तार्क्ष्येणोपानीतइतिपूर्वेणान्वयः २१ ब्रह्मरुद्रौविष्णुसमानावितिलोकप्रवादंपरिहरंस्तत्पूर्वदेवतानांश्रीनारायणप्रणामंवक्ति तमुपागतमिति ब्रह्माचतुर्मुखइंद्रोवायुरूपक्षोरुद्रएतेनायकायेषांतेतथोक्ताः २२ ननुनप्रणाममात्रमुत्तमत्वादिनिश्चयात्मकसमानानामपिमिथोदर्शनादितित्राह तत्तेजसेति । सन्नाजिह्वा.जिह्वाशक्तिरहिता. गद्गद वाचइत्यर्थः अत्रनिमित्तंससाध्वसाइति । ननुसन्नजिह्वत्वेनकिंपश्चाज्जगुरितित्राह मूर्ध्नीति २३ स्तुतिलक्षणवागादीन्द्रियादिव्यापाराभावेनकेवलोपस्थानेकिंप्रयोजनमत्राह अप्यर्वागिति । यस्यमहि त्वेमाहात्म्यविषयेऽनंतत्वादर्वाग्वृत्तयोपिअप्राप्तवाङ्मनसव्यापाराअपिस्वभूर्ब्रह्मानदादयःकृतानुग्रहविग्रहंभक्तानुग्रहार्थंकृतोविग्रहोयेनसतथातंश्रीनारायणंयथामतिगृणातिस्मेत्यन्वयः २४ स्तुति प्रबंधकथनेग्रंथाधिक्यंस्यादितिमत्वापदर्थंहरेराविर्भावस्तस्यदक्षस्यभगवत्प्रतिपत्तिप्रकारंवक्ति दक्षइति २५ प्रतिपत्तिर्नामनिर्गुणत्वेनानिराकारत्वेनचेत्प्रतिपद्यमानात्रिषयानुसारिणीस्यात् केवलोनि र्गुणश्चाकाशंब्रह्मअनादिर्वायमाकाश.शून्योलौकिकइतिश्रुतेरन्यथाप्रतिपत्तिदोषेणानर्थापत्तिःस्यादितित्राह । शुद्धमिति । यद्रूपशुद्धानिर्दोपत्वेनशोधितम् । कथंशोधितमत्राह स्वधाम्नीति ।

**वक्षस्यधिश्रितवधूर्वनमाल्युदारहासावलोककलयारमयंश्चविश्वम् ॥ पार्श्वभ्रमद्व्यजनचामरराजहंसःश्वेतातपत्रशशिनोपरिलक्ष्यमाणः २१ तमुपागत मालक्ष्यसर्वेसुरगणादयः ॥ प्रणेमुःसहसोत्थायब्रह्मेंद्रत्र्यक्षनायकाः २२ तत्तेजसाहतरुचःसन्नजिह्वाःससाध्वसाः ॥ मूर्ध्निकृतांजलिपुटाउपतस्थुरधो क्षजम् २३ अप्यर्वाग्वृत्तयोयस्यमहित्वेस्वभुवादयः ॥ यथामतिगृणंतिस्मकृतानुग्रहविग्रहम् २४ दक्षोगृहीतार्हणसाधनोत्तमंयज्ञेश्वरंविश्वसृजंपरं गुरुम् ॥ सुनंदनंदाद्यनुगैर्वृतंमुदागृणन्प्रपेदेप्रयतःकृतांजलिः २५ ॥ दक्षउवाच ॥ शुद्धंस्वधाम्न्युपरताखिलबुद्ध्यवस्थंचिन्मात्रमेकमभयंप्रतिषिध्यमाया म् ॥ तिष्ठंस्तयैवपुरुषत्वमुपेत्यतस्यामास्तेभवानपरिशुद्धमिवात्मनंति २६**

स्वधाम्निस्वस्वरूपेउपरतानित्यनिवृत्ताअखिलाबुद्धेरवस्थाजाग्रदादिजीवावस्था यस्यतत्तथा । तर्हितन्निराकारंकिं नेत्याह । चिन्मात्रमिति । केवलंज्ञानात्मकम् । जीवस्याप्येतादृक्त्वात्किंविशेष्यो च्यतइतितत्राह । एकमिति । एकंप्रधानंसर्वोत्तमम् । नहीदृशमन्यदस्तीत्याह अभयमिति द्वितीयाद्वैभयंभवतीतिश्रुतेः एतादृशस्यान्यस्याभावात्कालत्रयेपिनिरस्तभयम् कुतएतत्सर्वमित्यतआह प्रतिषिध्येति । मायांजडात्मिकांप्रतिषिध्यदूरीकृत्यतिष्ठंस्तादृग्रूपोभवांस्तयामाययोपादानत्वेनमहदादिसृष्ट्वामहदाद्युपादानत्वेनाऽहंसृष्ट्वातदतोऽप्यहंकारविकृताकाशाद्युपादानत्वेनपुरुषशब्दवाच्यशरी राणिसृष्ट्वातदंतःस्थितिमत्तयापुरुषत्वंपुरुषशब्दवाच्यत्वमुपेत्यतदंतर्यामिरूपेणतत्कार्यकारणलक्षणायांप्रकृतावास्ते । तदनुप्रविश्य हितमितिश्रुतेः । नत्वाज्ञामायावादिनोऽपरिशुद्धमुप हितंजीवमिवात्मनंति स्वैतुभ्यंनमइतिवाक्यशेषः अपिकिंलक्षणमेवपुरुषत्वंनतुजीवलक्षणं मन्दस्मिन्ग्रंथेइत्यतः । उत्पत्तिर्ह्यात्मरूपाणामयत्निस्वनमदाय । उत्पत्तिस्वजीवानामहोरात्रिरुदीर्यतेऽनिवचनात् जडमायोपादानवस्त्वमितशरीरत्वेनकुत्रचित् सृष्ट्वानथाशरीराणिनानिस्थले पुरुषःस्मृतः मायाकार्याणिमायाभिर्विगुणस्वयंस्थितः । तस्मात्प्राकृतइत्येववर्जितस्तत्ववदतीति । अस्पृष्टत्वोपितद्धर्मैस्तद्वत्वादे वकारणादिविवचनात् । नैंद्रजाललक्षणामायात्रोच्यते किंतुजडाजगदुपादानभूतामत्रेतिः २६

१ वहीं... इत्यादि... ॥ १ ॥ ८३ ॥ २ ...र्हणमादरोत्तमानि पाठान्तरम् ।

ऋत्विगादिवैदिकैःश्रीनारायणएवस्तुत्योदेवश्चेतिभावेनतत्प्रतिपत्तिप्रकारंवक्ति तत्त्वंनतइति । अनंजनपुण्यपापलेपरहित ऋत्विजोवयंतेतवतत्त्वंनविदामः । कस्मादज्ञानमत्राह रुद्रशापादिति । यज्ञादि कर्मण्यवग्रहधियोदुराग्रहबुद्धित्वादित्यर्थः । नन्वेवंतर्हिएतस्मिन्कर्मणिभवतआविर्भावः कथंघटतइतिशंकामाशङ्क्याह धर्मेति सदाशिवस्यप्रसन्नदृष्ट्यवलोकनोत्फुल्लतत्त्वज्ञानैरस्माभिःक्रियमाणमि दमध्वराख्यंकर्मज्ञातंतत्पूजात्वेनेतिशेषः । कथमेतदवगतमित्यतउक्तं धर्मेति । भक्त्यादिधर्माणामुपलक्षकत्वादित्यर्थः किमत्रप्रमाणमित्यतस्तद्ब्रुवन्याति । त्रिवृदिति । त्रीन्प्रत्यक्षानुमानागमानावृणो तीति तदानींतनैःपुरुषैर्दृश्यमानत्वात् प्रत्यक्षंप्रथमप्रमाणं । द्वितीयंहरराविर्भावलिंगं तृतीयमेषमखर्वधर्माणाधर्म,विकलमोमन यद्भक्त्यापुंडरीकाक्षस्तवैरचेत्तर सदेत्यागमं । प्रत्यक्षरयतुलोकाविदं वनार्थत्वोपपत्तेलैंगस्यचविनोददर्शनायसंभवादागमस्यचमन्तुनिरूपत्वेनार्थवादत्वोपपत्तेः । अतोनिर्णायकाभावानमिकतावनिदहनिर्माणवस्तवशिथिलमभूदितितत्राह यदर्थमिति । त्वयस्याध्वरस्य भागस्वीकारार्थमदोधिदैवमुत्तमदैवंब्रह्मादिदेवताशरीरंआस्थाइतियदतइदंनिर्णायकमाणमित्यर्थः भुंक्तेयज्ञभुजोदेवानाविदथपुरुषोत्तमइतिवचनंचास्मिन्नर्थेमान यद्वा कुतोनविदामइतितत्राह धर्मे ति धर्ममदष्टमुपलक्षयतीतितथोक्तं ज्ञानिभिरिदमध्वराख्यंकर्मयदर्थयस्त्वमर्थोविषयोवस्यतत्तथाज्ञातं कुतःकर्मणस्त्वद्विषयत्वमत्राह अधिदैवमिति सत्त्वमधिदैवमास्थाअहहिमर्वज्ञानाभोक्तेति श्रुतेस्त्वद्विषयोयज्ञइति तच्चजनमस्माभिरिन्द्रादिविषयत्वेनज्ञातमतोनविदामइति २७ हेशरणदमोक्षलक्षणगृहप्रद अशरणंरक्षितृपुरुषरहितंउरवोबहव.अविद्यास्मितरागद्वेषाभिनिवेशा पंचक्लेशा

ऋत्विजऊचुः ॥ तत्त्वंनतेवयमनंजनरुद्रशापात्कर्मण्यवग्रहधियोभगवन्विदामः ॥ धर्मोपलक्षणमिदंत्रिवृदध्वराख्यंज्ञातंयदर्थमधिदैवमदस्त्वमास्थाः २७ ॥ सदस्याऊचुः ॥ उत्पत्त्यध्वन्यशरणउरुक्लेशदुर्गेंतकोग्रव्यालान्विष्टेविषयमृगतृष्णात्मगेहोरुभारः ॥ द्वंद्वश्वभ्रेखलमृगभयेशोकदावेऽज्ञसार्थःपादौकस्तेशरणदकदायातिकामोपसृष्टः २८ ॥ रुद्रउवाच ॥ तववरदवरांघ्रावाशिषाचानभिध्येह्यपिमुनिभिरसक्तैरादरेणार्हणीये ॥ यदिरचितधियंमाविद्वलोकापविद्धंजगतिनगणयेऽन्यंस्त्वत्परानुग्रहेण २९

स्वैर्दुर्गैरंतकाख्येनोग्रेणव्यालेनाजगरेणसर्पेणाक्रष्टेद्वंद्वानिसुखदुःखान्येव श्वभ्राणिगर्तान्यस्मिन्सतथातस्मिन् । खला.पिशुनास्तएवमृगास्तैर्भयंयस्मिंस्तथातस्मिन् । शोकोमनःपीडासएववन वह्निर्यस्मिंश्चैवंविधे । उत्पत्त्यध्वनिजननमरणादिमार्गे । अज्ञसार्थ.अज्ञानिपरिषत्त्ववशस्तौपादौकदायातिनकदापीतिमन्यामहे । कुतइतितत्राह कामेति कामेनोपहतत्वात् कामोपहतत्वस्फुटयति विषयेति । विषयमृगतृष्णाशब्दादिविषयाख्यमरीचिकाजलमुद्दिश्यात्मापत्नः गेहंगृहं एतद्द्वयमुरुभारोयस्यसतथा आत्मादेहेधृतोजीवस्वभावेपरमात्मनि यत्नेकैमौमतौवातइतियादवः यद्वा विषयमृ गतृष्णैवात्मगेहंस्वनिवासस्थानंतदेवोरुभारोयस्यसतथा २८ रुद्रस्तुत्यासर्वलोकस्यहरेःसर्वोत्तमत्वेसंशयमुन्मूलयति तवेति । हेवरदतवाशिषाकारणेनानभिध्येअभिध्यानाविषयेआशीरर्थध्यातु मशक्ये । असक्तैर्निःसंगैर्मुनिभिर्ब्रह्मादिज्ञानिभिरप्यादरेणार्हणीयेपूज्येवराघ्रौवरणीयगुणेश्रीपादे यदिरचितधियंकृतबुद्धिमाविद्धिमाजानासि लडर्थेलोट् कथंभूतंमालोकापविद्धलोकबाह्यं अनेनरुद्रस्यज्ञानयुक्तत्वद्योतयति तर्हिजगतित्वत्परानुग्रहेणनगणये यकंचनपुरुषनप्रार्थयइत्यर्थः फलेच्छयाध्यानाभावेऽपिनिष्कामत्वेनध्यानादन्याशिषोपिभवंतीत्यस्मिन्नर्थेचशब्दः हिशब्दे नगतिमर्यादांप्रयुंजइतिवाक्यंसूचयति २९

---

१ तद्रूत्थनंदिशापात् २ अधिकाश्चतेदेवाश्चाधिदेवाः । ब्रह्मादयः । तेषामिदंशरीरमधिदैवं । यद्वा देवानांब्रह्मादीनामिदंशरीरंदैवं । अधिकंचतद्दैवंचेतिविग्रहः । एतेनाधिदेवानामिदमाधिदैवमि तिस्यात् कथमधिदैवमितिशंकापरास्ता इतिभागवततात्पर्यदीपिका ।

ब्रह्मादीनामपि श्रीनारायणतत्त्वज्ञानं दुर्लभं किमुतास्माकं ततो रुद्रे द्वेषस्तत्तत्त्वाज्ञानहेतुक इति भावं ध्वनयन् भृगुस्तं भगवंतं स्तौति । यन्मायया इति श्लोकद्वयेन गहनया गंभीरया यस्य तव मायया अपहृत आत्मबोधः स्वरूपज्ञानं येषां ते तथा । अत एव तमस्यविद्यायां स्वपंतः शयाना ब्रह्मा आदिर्येषां देवानां ते ब्रह्मादयस्तनुभृतः शरीरिणः । अनेन देहवत एव ज्ञानग्रहणयोग्यतां सूचयति आत्मभुजीवे पुरेकत्वेनाश्रितं स्थितं तव तत्त्वमधुनापीत्यनेनोत्पाद्य दीर्घकालगतिं सूचयति नविदंति सोयं प्रणतानामात्मनां जीवानां बंधुर्भवान्प्रसीदत्वित्यन्वयः । यद्वा ब्रह्मादि कारणयेषां ते ब्रह्मादयस्तनुभृतो जीवा आत्मानं हृदयमाश्रितं अन्यत्समम् ॥ ३० सर्वस्य हरेस्तत्त्वविषयाज्ञानमुक्त्वेदानीं तत्तत्त्वप्रमाणाभावेन शून्यप्रायतत्त्वस्यादित्यतोऽव्यक्तादिविशेषज्ञानिप्रत्यक्षं प्रमाणमिति भावेनाह नैतादिति एतदव्यक्तादि भवतः स्वरूपं सच्चिदानंदात्मकं न भवति इह जगति यो वैराग्यभक्त्यादिसाधनसामग्रीमान् सौ पदार्थभेदग्रहोऽव्यक्तादिपदार्थविशेषज्ञानी ब्रह्माद्यन्यतमः पुरुषो यावत्पदार्थजातं तावत् पृथगीक्षेत् पश्यतीति यस्मात्तस्मादित्यर्थः भेदो तरं विशेषश्च सूक्ष्मेक्ष्य चामिथीयत इति विवचनात् अत्र भेदो विशेषः नन्वव्यक्तादेर्व्यतिरिक्तत्वे तत्तद्दर्शनं प्रमाणं स्यात्तदेव कुन इति तत्राह ज्ञानस्येति । ज्ञानस्येत्युपलक्षणं जातावेकवचनं ज्ञानेंद्रियाणां कर्मेंद्रियाणामर्थस्य शब्दादितन्मात्राणां चाकाशादिभूतानां च गुणस्य सत्त्वादेश्च चशब्दात्तत्कार्ययोर्महदहंकारयोश्चाश्रयान्मायामयात् प्रकृतिविकारान् प्रपंचाद्व्यतिरिक्तोऽत्यंतविलक्षणः केवल

॥ भृगुरुवाच ॥ यन्मायया गहनयापहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपंतः ॥ नात्माश्रितं तव विदंत्यधुनापि तत्त्वं सोयं प्रसीदतु भवान्प्रणतात्मबंधुः ३० नैतत्स्वरूपं भवतोसौ पदार्थभेदग्रहैः पुरुषो यावदीक्षेत् ॥ ज्ञानस्य चार्थस्य गुणस्य चाश्रयान्मायामयाद्व्यतिरिक्तो यतस्त्वम् ३१ ॥ इंद्र उवाच ॥ इदमप्युत विश्वभावनं वपुरानंदकरं मनोदृशाम् ॥ सुरविद्विट्क्षपणैरुदायुधैर्भुजदंडैरुपपन्नमष्टभिः ३२ ॥ यज्ञपत्न्य ऊचुः ॥ यज्ञोयं तव यजनाय केन सृष्टो विध्वस्तः पशुपतिनाद्य दक्षकोपात् ॥ तं नस्त्वं शवशयनाभशांतमेधं यज्ञात्मन्नलिनरुचा दृशा पुनीहि ३३

चिदानंदात्मकनित्यदेहस्त्वमिति यतोतइति । तदुक्तं अव्यक्तादिपदार्थानां विशेषज्ञानिनापि तु नदेहो वैष्णवो ज्ञेय आनंदः प्राकृतो नहीति अव्यक्तादिपदार्थानां विशेषज्ञानिना वैष्णवो देहोऽव्यक्तादिपदार्थानां संबंधेनानिर्मितो न ज्ञेयः तत्र हेतुमाह आनंद इति यद्वाऽसौ पदार्थभेदग्रहः पुरुषो यावद्वस्तत्त्वरूपमीक्षेत् तावदेतदव्यक्तादिभवतः स्वरूपं न भवतीति प्रतीयते ज्ञानिदर्शनस्य यथार्थत्वनियमात् अनेनाज्ञानिपक्षे पुनाव्यक्तादि स्वरूपं न ज्ञानिपक्ष इत्युक्तं अन्यत्समं । असत इति पाठे अमांगल्यादित्यर्थः ३१ अनंतरातीतश्लोके प्रत्यक्षमेतत् भवत स्वरूपं न भवतीत्यन्यथा प्रतीतिमिंद्र स्तुतिव्याजेन निरस्यति इदमिति अच्युत हेयोपादेयरहित हरे इदं दृश्यमानं तव वपुर्विश्वभावनं जगदुत्पादकं न भवतीत्यन्वयः वपुः शब्दस्यार्थांतरमाह आनंदकरमिति शुभाकारे तनौ वपुरित्यभिधानं यावद्गुणानुपसंहृत्योणास्त तदनुसारिफलं च स्वस्यापि स्यादित्याशयेनाह सुरविद्विडिति । सुरविद्विषोऽसुरास्तान् क्षपयंतीति सुरविद्विट्क्षपणास्तैः ३२ अतएव तस्य कर्मणः पूर्णफलत्वसिद्धिः श्रीनारायणकटाक्षेणैवेत्यभिप्रायेण पत्न्यः स्तुवंतीत्याह यज्ञोयमिति । शवं जलं तस्मिन् शेत इति शवशयः अधिकरणे शेतेरिति कर्तर्यच् प्रत्ययः कमलं नाभौ यस्य स तथोक्तः तस्य संबुद्धिः शवशयनाभ कमलनाभ शांतमेधं भग्नपरतंत्रं यज्ञपक्षे शवाः प्रेताः शेरते यस्मिन्निति शवशयः पुंसि संज्ञायां घः प्रायेणेत्यधिकरणे घः प्रत्ययः श्मशानं तस्य आभेव आभा यस्य सः श्मशानकांतिः श्मशानवद्गतश्रीकमित्यर्थः स तथोक्तस्तं पुनीहि शुद्धं कृत्वा पूर्णफलं कुर्वित्यर्थः ॥ ३३ ॥

१ अव्यक्तादिसर्वपदार्थाः ।

इत्योमीदृक्कपमुपनिपदंकवेचंनमायामयमितिभाविनरूपय मनुवंतीत्याह अनन्वितमिति । भगवंस्त्वविचेष्टितमनन्वितंलोककर्मभिरस्पृष्टं कुतस्त्वमात्मनाऽन्यसहायमंतरेणपरकर्मचरसिकरोपितेनकर्मणा
नाक्षपतेनलिप्यसेहियस्मात्तस्मात् सपत्तत्रकिंचित्तस्यपन्दनत्रागतमनेनभवत्यनगोत्रपयपुरुषइतिश्रुतेः । असंगित्वंनत्वेवोचितमित्याह विभूतयइति । यतोयस्याः श्रियःप्रमादाद्विभूतयः ईश्वरान्ब्रह्मादीन्
यसेदुःभणुस्तांश्रियंस्वयमनुवर्तिनीमपितएवनिपेवमाणाभवानमन्यते मनज्ञानइतियातो. अप्राप्तफलार्थसेवतइतिनजानाति किंतुऋतुयमंवज्जलस्पंदनवत्भक्तिकरणमस्याः स्वभावइत्येवजानातीत्यर्थः
३४ तेतवकथामृष्टपीयूषनद्यामवगाढोमस्रोयंमनोवारणःसंसारोरुदवदावेनमन्मार । स्मरणाभावेनिमित्तमाह ब्रह्मेति । ब्रह्मसंपन्नस्यापिनिर्गमनेस्मृतिःसंभवतीत्यतउक्तंनानिष्क्रामतीति । कथानद्येव
गाढेहेतुमाहक्लेशेत्यादिना । अनेनाप्यस्यरूपस्यब्रह्मत्वंनिरणायीतिज्ञायते ३५ पूर्वंत्रयजमानेनयथातत्त्वंस्तुत अत्रलोकमस्कारपूर्वकंभर्तुःस्तुत्याचस्वाभीष्टसिद्धयेयजमान्याप्रमत्त्यास्तूयते । स्वागत
मित्यादिनाश्रियाकांतयासहआहिरस्र कबंधइत्यनेनाशिरोराहित्यसिद्धेपिस्पष्टत्वाचशीर्षहीनइत्युक्तं । अंगेर्ऋत्विगादिभिरन्यत्रकरचरणादिभिः सहितोऽप्यनेनसर्वोत्तमत्वंहरेर्द्योतितम् ३६ लोकपालस्तु
स्यापिहरेरीदृक्रूपमनारोपितमितिज्ञापयतइत्याह दृष्टःकिमिति । येनत्वयाविश्वंसर्वंदृश्यतेज्ञानभवतिमप्रत्यग्दृष्टत्वाज्ञानदृष्ट्याचदृश्यस्त्वं । नोऽस्माकं असद्ग्रहैःशब्दाद्यसंगलविषयग्राहिभिर्दृग्भिः किं
अयोजनमुदिश्यदृष्टोऽनुग्रहमंतरेणेतिशेषःषष्ठःपंचभूतव्यतिरिक्तशरीरस्त्वं पंचभिर्भूतैर्निर्मितशरीरवद्भिर्दृष्टोभासीतियत्सेषाभवदीयामायाहिभवत्सामर्थ्यमेव । नह्यसद्दृष्टिगोचरस्वभावस्यतद्गोच

ऋषयऊचुः ॥ अनन्वितंतेभगवन्विचेष्टितंयदात्मनाचरसिहिकर्मनाज्यसे ॥ विभूतयेयतउपसेदुरीश्वरीन्नमन्यतेस्वयमनुवर्तिनींभवान् ३४ सिद्धाऊचुः ॥
अयंतेकथामृष्टपीयूषनद्यामनोवारणःक्लेशदावाग्निदग्धः ॥ तृषार्तोवगाढोनसस्मारदावंननिष्क्रामतिब्रह्मसंपन्नवान्नः ३५ ॥ यजमान्युवाच ॥ स्वा
गतंतेप्रसीदेशतुभ्यंनमःश्रीनिवासःश्रियाकांतयात्राहिनः ॥ त्वामृतेधीशनांगैर्मखःशोभतेशीर्षहीनःकबंधोयथापूरुषः ३६ ॥ लोकपालाऊचुः ॥ दृष्टः
किंनोदृग्भिरसद्ग्रहैस्त्वंप्रत्यग्द्रष्टाद्दृश्यतेयेनविश्वम् ॥ मायाह्येषाभवदीयाहिभूमन्यस्त्वंषष्ठःपंचभिर्भासिभूतैः ३७ ॥ योगेश्वराऊचुः ॥ प्रेयान्नतेन्यो
स्त्यमृतप्रियप्रभोविश्वात्मनीक्षेन्नपृथग्यआत्मनः ॥ अथापिभक्त्येशतयोपधावतामनन्यवृत्त्यानुगृहाणवत्सल ३८

रत्वंसामर्थ्यंविनायुज्यते भगवन्महिम्नैवासौपदृश्योभगवान्स्वयमितिवाक्यं हिशब्दसूचितं । भूमन्नित्यनेनपूर्णस्यायंस्वभावइतिदर्शयति । यद्वा प्रत्यग्द्रष्टाद्दृश्यस्त्वमस्माकंदृग्भिर्दृष्टः किमहोस्मद्भाग्यंदि
व्यदृष्टिगोचरस्यान्यदृष्टिगोचरत्वमिति । यत्पंचभिर्भूतैःसहषष्ठोभासीतियत्सेषाभवदीयामायाहीति ३७ योगेश्वरस्तुत्याप्रतीतंपंचभूतात्मकत्वंनिवारयंति प्रेयानिति । अमृतप्रियमुक्तप्रियप्रभो
समर्थविष्णोयोजीवोविश्वात्मानिजगदंतर्यामिणित्वयिपृथक्त्वमन्यथात्वंनेक्षेन्नपश्येत् सुरनरतिर्यगादिषुजीवराशिषुप्रत्यक्त्वेनस्थितानानारूपाणांगुणादीनांचाणुमात्रभेदनपश्यतीत्यर्थः । तस्मादात्मनो
जीवादन्यः प्रेयांस्तवनास्ति हेईशत्येशभृत्यानांदासानामस्माकमीशभक्तवत्सल तयाभक्त्यात्वनन्ययाशक्यअहमेवंविधोर्जुनेतिप्रसिद्धा तयाऽनन्यवृत्त्याउपधावनांसेवमानानामस्माकमनुग्रहोस्त्येवअ
थापिपुनरनुगृहाणेत्यन्वयः यथार्थज्ञानिनोनान्यःप्रियोविष्णोस्तुकश्चन तथाप्यधिकमंतुष्टेचप्रसीदेत्यर्थनंपुनारितिवचनादुपपन्नाप्रार्थनेति अत्राभेदज्ञानिनोहरेरतिशयप्रियत्वमुच्यतइत्ययमर्थःपृथक्ज्ञा
नंपदित्याहुर्यत्किंचिद्वीक्ष्यतेन्यथा ज्ञानज्ञेयाविरोधेनतत्पृथग्वस्तुनोदृशिः केचिद्भेदंविनिंदंतिह्यासुरज्ञानवृत्तय निराकुर्वंत्यथोमदाभेदस्यपरमार्थतां येतुतत्त्वविदोमुख्याभेदब्रह्मान्यवस्तुनोःपरमार्थ
मितिज्ञात्वानित्यंविष्णुमुपासतेइत्यादिप्रमाणविरुद्धइतिज्ञातव्य आचार्येणापिनपृथग्यआत्मनः । अन्यथायोनपश्यतीतिपृथगिन्नेतदन्यथेतिव्याख्यातंनभेदमिति ३८

विश्वांतर्यामित्वंतत्स्वामित्वंचहरेरेवमुख्यमित्याशयेनाहुः जगदिति जगदुद्भवस्थितिलयेषुजगदुत्पत्तिस्थितिसंहारेषुलीलयाप्रविभज्यमानगुणया सृष्टौरजःस्थितौसत्त्वंसंहारेतमइतिप्रकारेणविभज्य मानाःपृथक्क्रियमाणाःसत्त्वादिगुणायस्याःसातयात्माधीनयामायया। प्रकृत्याजडयामिथ्याज्ञानजनदतीश्वरः तस्यभ्रमश्चसत्त्वाद्यानसंतिपरमेशितुरितिवचनात्प्रकृत्या । रचिताकृताऽऽत्मनांजीवा नांभेदमतिर्मिथ्याज्ञानंयेनसतथातस्मै स्वसंस्थया एवार्थेहिशब्दःस्वरूपस्थित्यैवमहिमलक्षणयाअतिवर्तितानिरस्ताभ्रमोगुणाश्चसत्त्वाद्यायस्मात्सतथा सचासौआत्माचेसतिवर्तितभ्रमगुणात्मातस्मै हेअतिवर्तितभ्रमज्ञानानंदादिगुणात्मनइतिभिन्नंवापद । हिशब्दोज्ञानानंदात्मनोहरेरुपाधिनाभ्रमयोग्यत्वंनिवारयति ३९ हेअमितअनंततेतुभ्यनमः तत्त्वायाऽद्वयज्ञानाय अमितानारोपितद्व पायेतिवा धर्मादीनामस्माकंचसूतयउत्पत्तिकारणाय चशब्देनास्मत्कारणत्वनिवारयति । कारणस्यरजआदिगुणसंसर्गोनास्तीत्याह निर्गुणायेति सृष्टौप्रवर्तमानस्यतद्गुणास्पर्शोमाहात्म्यातिशयाद्यु ज्यतइतीममर्थंचशब्देनवक्ति अत्रप्रणतिःसम्यक्स्वरूपज्ञानाभावेपिसामान्यज्ञानेनघटतइतिभावेनाह यत्काष्ठामिति काष्ठोत्कर्षेसीम्निदिशीतियादवः । अपरेमदर्वाचीनाःकुतोविदुर्नकुतोपीत्यर्थः अनेनास्यपरमात्मत्वेनकोपिपरंदेहइतिदर्शितम् ॥ ४० ॥ अनेनापिमंदाशंकामुन्मूलयति यत्तेजसेति यस्यहरेस्तेजसा यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकमितिवचनात् सुसमिद्धतेजाःपूज्य

जगदुद्भवस्थितिलयेषुलीलयाप्रविभज्यमानगुणयात्ममायया ॥ रचितात्मभेदमतयेस्वसंस्थयाह्यतिवर्तितभ्रमगुणात्मनेनमः ३९ ॥ ब्रह्मोवाच ॥ नमस्तेऽमिततत्त्वायधर्मादीनांचसूतये ॥ निर्गुणायचयत्काष्ठांनाहंवेदापरेकुतः ४० ॥ अग्निरुवाच ॥ यत्तेजसाहंसुसमिद्धतेजाहव्यंवहाम्यध्वरआज्यसिक्तम् ॥ तंयज्ञियंपंचविधंचपंचभिःस्विष्टंयजुर्भिःप्रणतोस्मियज्ञम् ४१ ॥ देवाऊचुः ॥ पुराकल्पापायेस्वकृतमुदरीकृत्यविकृतंत्वमेवाद्यस्तस्मिन्सलिलउरगेंद्राधिशयने ॥ पुमाञ्शेषेसिद्धैर्हृदिविमृशिताध्यात्मपदविःसएवाद्याक्ष्णोर्नःपथिचरसिभृत्यानवसिच ४२ ॥ गंधर्वाऊचुः ॥ आशासानादेवमरीच्याद्यएतेब्रह्मेंद्राद्यादेवगणारुद्रपुरोगाः ॥ क्रीडाभांडंविश्वमिदंयस्यविभूम्नस्तस्मैनित्यंनाथनमस्तेकरवामः ४३

स्त्वेनसम्यक्प्रवृद्धतेजोबलंयस्यसतथा अहंजातवेदाअध्वरेयज्ञेआज्यसिक्तमाज्येनसृतंहव्यंवहामिदेवान्प्राप्यविभज्यार्पयामीत्यर्थः ओ३म् आश्रावय अस्तुश्रौषट् यज येयजामहे वषडितियजुर्वेदगतै र्यजुर्भिःपंचमंत्रैः । स्विष्टंसुष्ठुपूजितं । तंपंचविधपचधाविभक्तविग्रहं । यज्ञपज्ञपुरुषंयज्ञेशयज्ञभावनंयज्ञभुजमित्येवंविध । भगवंतप्रणतोस्मीत्यन्वयः । यज्ञंयज्ञेशमित्यादिपचविधमितिवायोज्य उक्तंच यज्ञोयज्ञपुमांश्चैवयज्ञेशोयज्ञभावनः यज्ञभुक्चेतिपंचात्मायज्ञेष्विज्योहरिःस्वयमिति आश्रावयास्तुश्रौषड्यजायेयजामहे ॥ वषट्कारातकैर्नित्यंयजुर्भिःपचभिर्विभुरिति ४१ कल्पापायेप्रलयेस्वे नकृतंविकृतंकार्यरूपंजगदुदरीकृत्यउदरेनिधाययज्जलंसृष्टिकालेत्वयापीततस्मिन्सलिलेउरगेंद्रएवाधिकशयनमुरगेंद्राधिशयन तस्मिन्नाद्यःपुमांस्त्वंशेषे अत्रप्रमाणंचाहुः सिद्धैर्मुक्तैर्वेदैर्वाविमृशिताविचारिताअध्यात्मनःपरमात्मनः पदवीयस्यसविमृशिताध्यात्मपदविः यएवंविधःश्रीनारायणःसएवनान्यः अद्यनोऽक्ष्णोःपथिचक्षुर्विषयेचरसिभृत्यानस्मानवसि चशब्देनभृत्यरक्षणमेवप्रयोजननान्यदित्यर्थं निर्धारयंति नैतत्स्वरूपंभवदइत्यादिनायदुक्तंतन्निर्धारितमनेनेति ४२ हेदेवआशासानाःफलमाकांक्षमाणायएतेमरीच्यादयोयएतेब्रह्मेंद्राद्यादेवगणायएतेरुद्रपुरोगाभूतगणाइतीदंविश्वंविभून्नोयस्यदवक्रीडाभांडंक्रीडोपकरणंवर्ततइत्यन्वयः हेनाथतस्मैतेतुभ्यनित्यंनमःकरवामइत्यनेनापिमंदशंकोन्मूलिता ४३

अन्यथाबादेस्त्वद्रूपकल्पनायास्त्वदिच्छाधीनत्वात्वत्प्रमादेनैवनिरासःस्यादित्याशयेनविद्याधराःस्तुवंतीत्याह त्वन्मायथेति। त्वन्मायया त्वदिच्छया त्वदधीनया प्रकृत्याचरचितमर्थं देहकलत्रादिलक्षणम भिपद्यप्रविश्य खिन्नमतिः अस्मिन्कलेवरे ममाहमितिमतिंकृत्वा तएव उत्पथैर्दुर्मार्गवर्तिभिः स्वैरिंद्रियैः क्षिप्तोऽपस्त्वमगच्छे पुविषयेषु लालसः उत्कंठावानपिपुमान्युष्मत्कथारसानिषेवकः अत्मामुत्यने भिस्वात्ममोहः संसारस्तमुद्भुत्सृजेदस्येश्वेरस्यनीप्यन्वयः ४४ ब्राह्मणस्तुतिव्याजेनहरेः सर्वस्वात्मत्वं दर्शयन्ति त्वक्रतुरिति त्वक्रतुरित्याद्यभेदेनोक्तिरंतर्यामिविषयेतिज्ञातव्या तदुक्तं सर्वशब्दाभिधे यत्वंसर्वांतर्यामित्वतः ननुसर्वस्वरूपत्वान्सर्वाभिन्नोयतोहरिरिति अत्रभ्रष्टचेतनैक्याभावेपिब्रह्मरुद्रादिविशिष्टचेतनैक्यंकिनस्यादितिचेत्तन्न प्रमाणविरुद्धत्वात् तदुक्तं अंतर्यामिस्वरूपेणब्रह्मरुद्राद्य भिन्नता। ननुजीवस्वरूपेणजीवाभिन्नः यतोहरेः विशेषाभेदवचनं नविधानविशेषत्वं सविधानंतुतत्स्वोक्तं सामर्थ्येस्यंजनहंगेरेति ४५ रसायारसातलात् योगिभिः सनकादिभिः यज्ञक्रतुर्यज्ञसंकल्पः ४६ सामगैःसामगायनध्वनिः परिभ्रष्टानिविलुप्तानिसत्कर्माणियेषांते तथोक्तास्तेषां यज्ञविघ्नाराक्षसाः ४७ भद्ररुद्रौवीरभद्रः उन्निन्येउर्ध्वंनीतवान् समाप्तंकृतवानित्यर्थः ४८ सर्वात्मेति ईश्वरस्यविशेषणम् । सर्वभूतांतर्यामित्वेन सर्वभागभुक् स्वेनभागेनहेतुनासर्वभागभुक्इतिसर्वभागभुक् । पूर्वंप्रीयमाणइदानींप्रीयमाणइत्युभयार्थाभिप्रायेणेवशब्दः इवोभयेचमाहइयइत्यभिधा

विद्याधराऊचुः ॥ त्वन्माययार्थमभिपद्यकलेवरेस्मिन्कृत्वाममाहमितिदुर्मतिरुत्पथैःस्वैः ॥ क्षिप्तोप्यसद्विषयलालसआत्ममोहंयुष्मत्कथामृतनिषेवक उद्व्युदस्येत् ४४ ॥ब्राह्मणाऊचुः ॥ त्वंक्रतुस्त्वंहविस्त्वंहुताशःस्वयंत्वंहिमंत्राःसमिद्दर्भपात्राणिच ॥ त्वंसदस्यर्त्विजोदंपतीदेवताअग्निहोत्रंस्वधासोमआज्यं पशुः ४५ त्वंपुरागांरसायामहान्सूकरोदंष्ट्रयापद्मिनींवारणेंद्रोयथा ॥ स्तूयमानोनदँल्लीलयायोगिभिर्व्युज्जहर्थत्रयीगात्रयज्ञक्रतुः ४६ सामगाऊचुः ॥ संप्रसीदत्वमस्माकमाकांक्षतांदर्शनंतेपरिभ्रष्टसत्कर्मणाम् ॥ कीर्त्यमानान्नृभिःसामगीरीशतेयज्ञविघ्नाःक्षयंयांतितस्मैनमः ४७ मैत्रेयउवाच ॥ इति दक्षःकविर्यज्ञंभद्ररुद्राभिमर्शितम् ॥ कीर्त्यमानेहृषीकेशेउन्निन्येयज्ञभावने ४८ भगवान्स्वेनभागेनसर्वात्मासर्वभागभुक् ॥ दक्षंबभाषआभाष्यप्रीय माणइवानघ ४९ ॥ श्रीभगवानुवाच ॥ अहंब्रह्माचशर्वश्चजगतःकारणंपरं ॥ आत्मेश्वरउपद्रष्टास्वयंदृगविशेषणः ५० मआत्ममायामाविश्ययोहंगु णमयींद्विज ॥ सृजन्रक्षन्हरन्विश्वंदध्रेसंज्ञाःक्रियोचिताः ५१

नम् यथाप्रीयमाणःप्रियंवक्ति तथेतिवा ४९ ननुभगवान्स्वागतंबभाषइतिनयुक्तं । दक्षस्यभागेवतत्रस्थितत्वात् अन्यदुक्तं त्वंनमतीयतइत्याशंक्यस्वात्मानंदक्षायोपदिशतीत्याह अहमिति । आत्मेश्वरः आत्मनांजीवानामीश्वरईशनशीलः । उपद्रष्टासर्वस्यादायिकोद्रष्टा स्वयंदृक्स्वयंप्रकाशः अविशेषणः सर्वोत्तमोहंविष्णुर्जगतःपरं पृपालनपूरणयोरितिधातुः पालकं कारणं । ब्रह्माब्रह्मसंज्ञोहंपरंसृष्ट्यापूरकंकारणं शर्वः शर्वसंज्ञोऽहंजगतःपरमुत्कृष्टंकारणंविलयकसंहारकंशृविक्षेपइतिधातुः मामेवंविधंजानीहीतिशेषः ५० एतदेवस्पष्टयति सइति हेद्विजदक्ष । योहमेवंत्रिरूपःसएवा हंसत्त्वादिगुणमयीमात्ममायामदधीनजडप्रकृतिमाविश्यरजोगुणोपादानरजेनब्रह्मारूपंसृष्ट्वा ब्रह्माख्यमद्रूपेणतंप्रविश्यजगत्सृजन् । सत्त्वगुणप्रवर्तकत्वेनविष्णुरूपेणविश्वंरक्षन् तमोगुणोपादानत्वेनाशिवंसृ ष्ट्वाशिवाख्यमद्रूपेणतंप्रविश्यविश्वंहरन्संहरन्तत्तत्क्रियोचिताःसंज्ञाअभिवृद्धिहेतुत्वाद्ब्रह्मनाम । सविलासव्याप्तिहेतुत्वाद्विष्णुनाम । संहारहेतुत्वाद्धरनामेतिदध्रइत्यन्वयः । अनेनब्रह्मरुद्रस्थमद्रूपाभ्यां विष्णुरूपेणचाहमेवजगत्सृष्ट्यादित्रयकृदित्यतोब्रह्मशिवयोःप्रसिद्धयोःसृष्टिसंहारकर्तृत्ववचनंभ्रांतिमूलमित्युक्तंभवति ५१

एतदेवस्पष्टयति तस्मिन्निति योऽहंविश्वस्यमुख्यंकारणंतस्मिन्मयि । केवलेप्रकृतिसंबंधरहिते । ब्रह्मणिगुणपूर्णेऽद्वितीयेसमाधिकरहिते । परमात्मनिस्थितेसति देहात्मबुद्धिर्देहोहमितिबुद्धिर्यस्य सतथाजीवः । भूतानिब्रह्मादीनि । भेदेनस्वातंत्र्येण । स्वतएवसृष्ट्यादिप्रवृत्तिमंतिनकेनचिन्नियंतानीत्यनुपश्यतीत्यन्वयः । अज्ञइतिहेतुगर्भविशेषणं यद्वा भेदेनास्थितानित्रह्मादिभूतानिपरमात्मन्यनु पश्यतीत्यभेदेनेतिशेषः ५२ अज्ञानिदर्शनमुक्त्वाज्ञानिदर्शनप्रकारमाह यथेति पुमान्जीवः शिरःपाण्यादिषुस्वांगेषुक्वचिदपिपारक्यबुद्धिंयथानकुरुतेकिंतुस्वकीयबुद्धिमेवकरोति एवमत्परोब्रह्मादि भूतेषुमामकत्वबुद्धिंकरोति नस्वातंत्र्यबुद्धिम् ५३ अतःफलितमाह त्रयाणामिति हेब्रह्मन्एवमुक्तप्रकारेणममैवस्वातंत्र्यादन्येषामस्वातंत्र्यात्ब्रह्मशिवस्थत्वेनब्रह्मशिवाख्ययोर्मद्रूपयोः पृथक्स्थि तस्यविष्ण्वाख्यस्यमद्रूपस्यचेतित्रयाणांत्रित्वसंख्योपेतानामेकभावानामेकरूपाणामेकैश्वर्याणां सर्वभूतात्मनासर्वभूतांतर्यामित्वेनयोजीवोभिदांनपश्यतिसशांतिंमोक्षंगच्छतीत्यन्वयः । यद्वा त्रयाणां ब्रह्मविष्णुशिवाख्यानांसर्वभूतस्वामिनामेकचित्तानांभिदांमिथोविरोधबुद्धिविषयत्वंनपश्यतिसशांतिंस्वस्थबुद्धितयाभगवन्निष्ठामाप्नोति ब्रह्मादिजीवानांहरिणाऽभेदवचनस्यकागतिरितिचेन्न तद्वश त्वतत्प्रियत्वदृष्टिविषयत्वात् तदुक्तं हरेर्वशत्वदृष्टिस्तुभूतानामपृथग्दृशिः प्रियत्वदृष्टिरथवाब्रह्मादीनांविशेषतइति ५४ शांतिमधिगच्छतीत्यनेनहरेःस्वात्मोपदेशश्रेत्समाप्तःपरंदक्षेणाकिमका

तस्मिन्ब्रह्मण्यद्वितीयेकेवलेपरमात्मनि ॥ देहात्मबुद्धिर्भूतानिभेदेनाज्ञोनुपश्यति ५२ यथापुमान्नस्वांगेषुशिरःपाण्यादिषुक्वचित् ॥ पारक्यबुद्धिंकुरुत एवंभूतेषुमत्परः ५३ त्रयाणामेकभावानांयोनपश्यतिवैभिदाम् ॥ सर्वभूतात्मनाब्रह्मन्सशांतिमधिगच्छति ५४ मैत्रेयउवाच ॥ एवंभगवतादिष्टःप्रजाप तिपतिर्हरिम् ॥ अर्चित्वाक्रतुनास्वेनदेवानुभगवतोऽयजत् ५५ रुद्रंचस्वेनभागेनह्युपाधावत्समाहितः ॥ कर्मणोदवमानेनसोमपानितरानपि ॥ उदवस्यसहर्त्विग्भिःसस्नाववभृथंततः ५६ तस्माअप्यनुभावेनस्वेनैवावाप्तराधसे ॥ धर्मएवमतिंदत्त्वात्रिदशास्तेदिवंययुः ५७ एवंदाक्षायणीहित्वा सतीपूर्वकलेवरम् ॥ जज्ञेहिमवतःक्षेत्रेमेनायामितिशुश्रुमः ५८ तमेवदयितंभूयस्त्ववापपतिमंबिका ॥ अनन्यभावैकगतिःशक्तिःसुप्तेवपूरुषम् ५९

रीतितत्राह एवमिति आदिष्टउपदिष्टःप्रजापतिःदक्षःस्वेनक्रतुनास्वयज्ञेनस्वेच्छयावाभागवतःभगवद्भक्तःस्वांशवतोवादेवानयजत्पूजयामास । उभयतइतिपाठेकथमुभयत सोमतोविष्टरादेभिश्च क मणुभयतःसोमसोद्धविषश्चेतिवा ५५ उपाधावदुपास्त ततोनिरपराधत्वेनशुद्धश्चाभूत् धावुगतिशुद्ध्योरितिधातुः उदवसानेनसमाप्तिलक्षणेनकर्मणा आग्नेयंपंचकपालमुदवमानीयंनिर्वपेदिति श्रुतेः सोमपानितिपाणिनेरपिसंज्ञेनव्यासेनप्रयुक्तत्वाद्विच्यत्ययःप्रायिकइतिज्ञातव्यं । इतरानसोमपानित्यर्थः । उदवस्यसमाप्तिंकृत्वा स्वेनानुभावेनभगवन्माहिम्नैवावाप्तराधसेप्राप्तयज्ञासि द्धये ५६ ५७ ननुदक्षकोपेनयोगमुक्तदेहयादक्षपुत्र्यासत्याऽन्यानिवृत्तिलक्षणामुक्तिरवापीतिनयुज्यतेभर्तुःशिवस्यामुक्तदेहत्वान्मतीनामंगनानाभर्तृभिःसहमुक्तिश्रवणात् अतोऽनयाकिमकारि त्याशंकांदृष्टांतपरिहरति एवमिति क्षेत्रेभार्यायां ५८ अत्रनिमित्तमाह अनन्यभावेति एकःशंकरोगतिर्यस्याःसातथाअनन्यभावत्वात् अन्यभक्तिरहितत्वात् । अस्मिन्नर्थेदृष्टांतमाह शक्तिरिति प्रल येसुप्तादरावेदरता । सृष्टिव्यापारंविनास्थिता । शक्तिर्मायालक्ष्मीःपुरुषंविष्णुमिवयथाभजतितथेत्यर्थः तदुक्तं शक्तित्वाद्विष्णुशक्तिस्तुशक्तिशब्देनसोच्यते शक्यत्वात्प्रकृतिश्चापिस्वात एवविनाह रौ । रतिस्तस्यास्तुकथितानान्यःस्वापइष्यतइति ५९

१ उभयत इतिपाठे भक्तानांपयुणार्थामर्नसेराह उभयतइ ने ।

मक्तोकेकस्याच्छुतमितितत्राह एतदिति बृहस्पतेःशिष्यादवताराद्ध दक्षस्याध्वरंयज्ञंद्रोहितवान्हंमितत्रत्राक्षितदाणितेदन्ता वरं कृतस्य ६० संप्रदायप्रवचनमुक्त्वातच्छ्रवणादिफलमाह इदमि ति ६१ शंकरःस्वांसतींमवाप्यकिमकार्षीदितितत्राह सतीमिति इतमित्युपलक्षण बह्वीःसमाइत्यर्थं ६२ अनेनरेतउत्सर्जनावधि सूचितः तत्रकुत्रेदमुत्ससर्ज । तस्यादेव्यामुनान्यत्र । नद्वथ म । भाग्रपरित्यागेकारणाभावात् नाद्वितीयस्त्वनुपपत्तेरितितत्राह स्ववीर्येति अकल्पामसमर्थां अनेनासामर्थ्यंदाराद्धमुक्तंभवतिइयमेवोपपत्तिः आकाशस्यनिरूपत्वेनतद्धारणायोगात् अथ पनत्तद्र त्याकाशनदींगंगाजग्राहेत्याह गंगेति ६३ गंगायाःअप्यशक्तिनिरीक्ष्यवह्निस्तत्पीत्वास्वांतरजीर्णम्वाहाद्वारेणनदीताग्निशरकाननेचच्छर्देत्याह पीत्वेति । स्वाहाद्वारेणेतिकस्मात्कल्प्यतइत्यतआ र्थोभारतोक्तेरित्युक्तेः भारतस्यनिर्णायकग्रंथत्वात् । अमोघरेतसोहरस्यवीर्यनिष्फलभवितुंनार्हत्यन्नतुगमनादिनिष्फलमिवप्रतीयतइतितत्राह कुमारइति ततोरेतस । मातृरहितस्यकुमारस्यस्त नपानंकथमत्राह तस्माइति ६४ एकेनमुखेनषट्कृत्तिकास्तनपानंकथंघटतइतितत्राह षड्भिरिति किमधिकार कुमारइति तत्राहततइति सुराइतिशेषः सर्वासुराणांभयंभीतिंस्वस्थानच्युतिंचकरोतीति

श्रुतद्भगवतःशंभोःकर्मदक्षाध्वरद्रुहः ॥ श्रुतंभागवताच्छिष्यादुद्धवान्मेबृहस्पतेः ६० इदंरहस्यंपरमीशचेष्टितंयशस्यमायुष्यमघौघमर्षणम् ॥ योनित्य दाकर्ण्यतुकीर्तयेद्धुनोत्यघंकौरवभक्तिभावितः ६१ सतींमेनात्मजांतातप्राप्यजायांभवःपुनः ॥ तयामैथुनमारभ्यरेमेदेवःसमाःशतम् ६२ स्ववीर्यधार णेकल्पांज्ञात्वाजायांसधूर्जटिः ॥ उत्ससर्जाविरेरेतोगंगाजग्राहतन्नदी ६३ पीत्वांतरजरंवह्निश्चच्छर्दशरकानने ॥ कुमारोभूत्ततस्तस्मैस्तनंषट्कृत्तिका ददुः ६४ षड्भिर्मुखैस्तनंपीत्वासबालःषण्मुखोभवत् ॥ ततश्चकुमैन्यपालंसर्वासुरभयंकरं ६५ ॥ इतिश्रीभागवतेचतुर्थस्कंधेऽष्टमोऽध्यायः ॥ ८ ॥ मैत्रेयउवाच ॥ सनकाद्यानारदश्चऋभुर्हंसोऽरुणिर्यतिः ॥ नैतेगृहान्ब्रह्मसुताह्यवसन्नूर्ध्वरेतसः १ मृषाधर्मस्यभार्यासीद्दंभंमायांचशत्रुहन् ॥ असू तमिथुनंतत्तुनिर्ऋतिर्जगृहेऽप्रजः २ तयोःसमभवल्लोभोनिकृतिश्चमहामते ॥ ताभ्यांक्रोधश्चहिंसाचदुरुक्तिश्चनयोःकलिः ३ दुरुक्तौकलिराधत्तभयंमृत्युं चसत्तम ॥ तयोश्चमिथुनंजज्ञेयातनानिरयस्तथा ४ एतेह्यधर्मवृक्षस्यवंशाःसंस्मृतिहेनवः ॥ श्रेयस्कामोनसेवेतनितरामाश्रमोत्तमी ५ संग्रहेणमयाख्या तस्त्वनुसर्गस्तवानघ ॥ त्रिःश्रुत्वैतत्पुमान्पुण्यंविधुनोत्यात्मनोमलम् ६ अथातःकीर्तयेवंशंपुण्यकीर्तेःकुरूद्वह ॥ स्वायंभुवस्यापिमनोर्हरेरंशांशजन्मनः ७

॥ ६५ ॥ इतिश्रीभा० च० वि० टी० अष्टमोध्यायः ॥ ८ ॥ ॥ ७ ॥ ॥ संसारविरक्तस्यपुंस श्रीनारायणश्रीपादपद्ममूलमेवशरणमितिनिरूपयन्नस्मिन्नध्याये तत्रपरमभागवतस्यध्रुवस्यच रित्रमनुवर्णयितुंहेयत्वेनाधर्मवंशानुचरितमाह सनकाद्याइति गृहान्नावसन्गृहस्थाश्रमंनाभजन्नित्यर्थः ऊर्ध्वरेतसइत्यनेनसंन्यासाश्रमंसूचयति १ अप्रजःसंततिरहित २ ३ ४ अत्रमायादयः क्रियोन्येषुमांसःसंसारहेतवोह्ययस्मात्तस्माच्छ्रेयस्कामोएतान्नसेवेतेत्यन्वय आश्रमोत्तमीसंन्यासी ५ मयाख्यातअनुसर्गइत्यत्रसंक्षेपभाव संग्रहात्स्याल्पत्वंनज्ञातव्यं महानयंग्रंथबहुलत्वाल्लोकेद्दश्य मानत्वाच्चेतिप्रदर्शनार्थइतिज्ञातव्यं अस्यानुसर्गस्यश्रवणफलमाह त्रिःश्रुत्वेति आत्मनोमनसोमलंविधुनोतिनिरस्यति ६ वक्तव्यायाःकथायाःसमाप्तत्वादनपरंकिंवक्तव्यमितितत्राह अथातइति । अ थेत्यनेनपूर्वस्माद्वक्ष्यमाणस्यार्थस्यमंगलत्वंवक्ति यतोऽधर्मादिकंहेयमतउपादेयंकथयामीत्यतइति अपिशब्देनवंशस्यानन्यत्वंश्रुतिस्मृतिभ्यांसंभावितत्वमाह हरेरिति हरेरंशांशेनविशेषावेशेनसंहितं जन्मयस्यसतथातस्य आविष्टाहारिणाजीवाब्रह्मादयोमनुःपृथुः । शक्त्याद्याःस्यपयश्चैवमत्स्यव्यासादयोहरिरिति ७

प्रियव्रतोत्तानपदोर्मनुपुत्रत्वेनपूर्वमुक्तयोःपुनरत्रोक्तिर्वंशस्यादित्वज्ञापनायानुवदति । प्रियव्रतेति । वासुदेवस्यराजराजाख्यस्यकल्यासन्निहितौ तदुक्तं प्रियव्रतोत्तानपादप्रमुखेषुहरिःस्वयं आविष्टःसर्व भूतेषुऋषभाद्याःस्वयंहरिरिति ८ प्रियव्रतोत्तानपदोर्मध्येप्रियव्रतविक्रमस्यप्रथमंवक्तव्यत्वेसत्युत्तानपादपुत्रस्यध्रुवस्यातिरमणीयत्वेनविरक्तिभक्तिजनकत्वेनश्रोतुःश्रद्धाजनकत्वेन भगवदुपास्तौ सिभगवृत्तिजनकत्वेनाऽऽश्चर्यबुद्धिजनकत्वेनचप्रथमतच्चरितंवक्तुमुपक्रमते जायेइति यस्याःसुनीतेःसुतः ९ सुनीतिःकथपत्युःप्रेष्ठानाभूदितिज्ञायतइतितंप्रकारंवक्ति एकदेति नाम्नोत्तमं आरुरु क्षंतमंकमारोढुकामम् १० तथाचिकीर्षमाणमंकमारोढुमिच्छंतं सपत्न्याःसुनीतेः सेर्ष्यमितिक्रियाविशेषणम् ११ धिष्ण्यंसिंहासनं । अनर्हत्वेनिमित्तमाह नगृहीतइति १२ नेदमाश्चर्यमित्याह बालइति ततः किमितितत्राह नात्मानमिति । स्वायोग्यमिच्छन्पतिष्यसीतिभावेनाह यस्येति । यस्यतव १३ तर्हिस्त्वत्पुत्रभावित्वेकिंकर्तव्यमत्राह तपसेति । पुरुषंविष्णुं १४ ध्रुवःसपत्न्या सुरुच्या वाक्यश्रुत्वाकिमकार्षी

प्रियव्रतोत्तानपादौशतरूपापतेःसुतौ ॥ वासुदेवस्यकलयारक्षायांजगतःस्थितौ ८ जायेउत्तानपादस्यसुनीतिःसुरुचिस्तयोः ॥ सुरुचिःप्रेयसीपत्युर्नेतरायत्सुतोध्रुवः ९ एकदासुरुचेःपुत्रमंकमारोप्यलालयन् ॥ उत्तमंनारुरुक्षंतंध्रुवंराजाभ्यनंदत १० तथाचिकीर्षमाणंतंसपत्न्यास्तनयंध्रुवम् ॥ सुरुचिःशृण्वतोराज्ञःसेर्ष्यमाहातिगर्विता ११ नवत्सनृपतेर्धिष्ण्यंभवानारोढुमर्हति ॥ नगृहीतोमयायत्त्वंकुक्षावपिनृपात्मज १२ बालोसिबतनात्मानमन्यस्त्रीगर्भसंभृतम् ॥ नूनंवेदभवान्यस्यदुर्लभेऽर्थेमनोरथः १३ तपसाराध्यपुरुषंतस्यैवानुग्रहेणमे ॥ गर्भेत्वंसाधयात्मानंयदीच्छसिनृपासनम् १४ मैत्रेयउवाच ॥ मातुःसपत्न्याःसुदुरुक्तिविद्धःश्वसन्रुषादंडहतोयथाहिः ॥ हित्वामिषंतंपितरंसन्नवाचंजगाममातुःप्ररुदन्सकाशम् १५ तंनिःश्वसंतंस्फुरिताधरोष्ठंसुनीतिरुत्संगमुदूह्यबालम् ॥ निशम्यतत्पौरमुखान्नितांतंसाविव्यथेयद्गदितंसपत्न्या १६ सोत्सृज्यधैर्यंविललापशोकदावाग्निनादावलतेवदग्धा ॥ वाक्यंसपत्न्याःस्मरतीसरोजश्रियादृशाबाष्पकलामुवाह १७ दीर्घंश्वसंतीवृजिनस्यपारमपश्यतीबालकमाहबाला ॥ माऽमंगलंतातपरेषुमंस्थाभुंक्तेजनोयत्परदुःखदस्तत् १८ सत्यंसुरुच्याभिहितंभवान्मेयद्दुर्भगायाउदरेगृहीतः ॥ स्तन्येनवृद्धश्चविलज्जतेयांभार्येतिवावोढुमिडस्पतिर्माम् १९

दितितत्राह मातुरिति मिषंतंपश्यंतं सन्नवाचंतूष्णींभूतं आमिषंहित्वामातुरिवास्थितस्याविलस्यमकाशमहिरिवेतिवा १५ अस्यामवस्थायांसुनीत्याकिमकारीतितत्राह तानि श्वसंतमिति १६ धातोरनेकार्थत्वात्कीदृशीव्यथातयाकारीतितत्राह सोत्सृज्येति । विलापस्योदरताडनाविनाभूतत्वेनतत्पूर्वकंतयापरिदेविनमित्यर्थ शोकदावाग्निनाशोकाख्यवनवह्निनादह्यमानेतिशेषः । दावलतावनवल्ली बाष्पकलांनेत्रजलधाराम् १७ वृच्यासस्यभक्षणवद्राज्ञाकृतावज्ञानस्यापरिहार्यत्वात्प्राप्तदुःखस्यावसानमचक्षाणाआत्मनोनिर्दुष्टमनस्कत्वंदर्शयंती बालंशिक्षयतीत्याह दीर्घंश्वसंतीति परदु खदोजनस्तद्दुःखस्वयंभुंक्तेइतियस्मात्तस्मात्परेष्वमंगलंमामंस्थाःननिरूपयेत्यन्वयः १८ परेणद्वेषादुक्तमपिगुणग्राहिणःस्वात्मनःपथ्यमेवभवतीतिभावेनाह । सत्यमिति चार्थेवाशब्दः । इडस्पतिःराजा । यांमाभार्येतिच वोढुंवकुंविलज्जते भवांस्तस्यादुर्भगायाःदुःखदेत्वदृष्टायामेउदरेगृहीतोऽतएवस्तन्येनैववृद्धोनतुपितृदत्तरसायनेनेतियस्माचस्मात्सुरुच्यातपसाराध्येतियदभिहितंतत्सत्यमित्यन्वयः १९

एवमेवविवृणोति आतिष्ठेति । यत्पुत्रउत्तमोदग्धातथायथध्यानमित्युक्तेआत्मनो हितमाकांक्षसेनर्द्धधोक्षजपादपद्ममाराधयेति यत्तुमाताकुरुन्याक्रायितेंतदव्यलीकंरुनुमातिष्ठ । तपइतिशेषः ॥ २० ॥
केवचित्श्रीनारायणश्रीचरणपरिचर्याफलंनिरूपममवाप्नंचेत्तर्हिश्रोतुंमत्रानिमंप्रवृत्तिर्भवतीतिनत्राह यत्पादेति परिचर्यापरिपूज्य विश्वविभावनायविश्वस्यविविधसृष्ट्यर्थमात्तगुणाभिपत्तेः अंगीकृतसा
त्त्वादिगुणमार्गिहेतोरजोत्रह्माजितात्मादशीकृतमनाःश्वसनस्यवायोरपिविभागगाहित्येनगंतुंयोग्यंवंधम् २१ चतुर्मुखस्यभगवत्पुत्रत्वेनतत्प्रसादाद्योग्यतयानस्यतादृशैश्वर्यावाप्तिर्युक्ताऽस्मत्पूर्व
जैवकेनाप्रयेमश्रद्धयास्माकमपितत्रज्ञाटितिप्रवृत्तिःस्यात् अतस्तदनुभावयेतितत्राह तथेति । अन्यतोभक्त्याद्यतिरिक्तसाधनेनाऽन्याभ्योदेवताभ्योवाभौमंमन्वंतराधिपत्यंदिव्यंस्वर्गलंबंधिआपव
र्ग्यंकैवल्यसंबंधि अथेत्यनेनदेहत्यागानंतरमेवापवर्गसुखावाप्तिर्नजन्मांतरंप्राप्येत्याह २२ किंवहुनोक्तेनसारंवक्ष्यामीत्याह तमेवेति यत्किंचिद्दोषदृष्ट्याविमुखोनस्यादित्यत उक्तंभृत्येति नकेवलंवि
षयलोलैरेवाराध्यंकिंतुसंसारमोक्षेच्छुभिरपीतिभावेनोक्तंमुमुक्षुभिरिति । अत्रप्रधानसाधनमिदमितिध्वनयति अनन्यभावइति । अनन्योभावोविषयोयस्यसतथातस्मिन् तस्यभक्तिसाधनत्वंध्वन
यति निजधर्मेति यमनियमादयोनिजधर्मास्तैर्भाविते कृतनरवभावे २३ कुतोयमेवापेक्षिताशेषपुरुषार्थावाप्तावितिनियमोन्य किंनस्यादितितत्राह नान्यंततइति योयुष्माकंकुलदेवताल्क्ष्मीकांत

आतिष्ठतत्तातविमत्सरस्त्वमुक्तंसमात्रापियदव्यलीकम् ॥ आराधयाधोक्षजपादपद्मंयदीच्छसेऽध्यासनमुत्तमोयथा २० यत्पादपद्मंपरिचर्यविश्वविभाव
नायात्तगुणाभिपत्तेः ॥ अजोऽध्यतिष्ठत्खलुपारमेष्ठ्यंपदंजितात्माश्वसनाभिवंद्यम् २१ तथामनुर्वोभगवान्पितामहोयमेकमत्त्यापुरुदक्षिणैर्मखैः ॥ इष्ट्वा
भिपेदेदुरवापमन्यतोभौमंसुखंदिव्यमथापवर्ग्यम् २२ तमेववत्साश्रयभृत्यवत्सलंमुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ॥ अनन्यभावेनिजधर्मभावितेमनस्यव
स्थाप्यभजस्वपूरुषम् २३ नान्यंततःपद्मपलाशलोचनाद्दुःखच्छिदंतेमृगयामिकंचन ॥ योमृग्यतेहस्तगृहीतपद्मयाश्रियेतरैरंगविमृग्यमाणया २४
॥ मैत्रेयउवाच ॥ एवंसंजल्पितंमातुराकर्ण्यार्थागमंवचः ॥ सन्नियम्यात्मनात्मानंनिश्चक्रामपितुःपुरात् २५ नारदस्तदुपाकर्ण्यज्ञात्वाचास्यचिकीर्षि
तम् ॥ स्पृष्ट्वामूर्धन्यघघ्नेनपाणिनाप्राहविस्मितः २६ अहोतेजःक्षत्रियाणांमानभंगममृष्यताम् ॥ बालोऽप्ययंहृदाधत्तेयत्समातुरसद्वचः २७

स्वतस्तस्मात्पद्मपलाशलोचनादनेनाकारतःनिरूपस्योपासनंनसंगच्छतइतिचोद्यंपरिहृतंस्वशानान्विग्गोक्तंविचारितेकाश्रितस्यादित्यतउक्तं मृगयामीति । लक्ष्मीतत्त्वंस्यादितितत्राह यइति श्रीत्वंभार
स्याववष्यस्तीत्यतउक्तम् इतरैरिति इतरैर्ब्रह्मादिभिःसेव्यापिसपद्महस्ताश्री किंनस्यादित्यतउक्तं हस्तेति अनेनश्रीःप्रियामूर्तिमतीसाक्षाल्लक्ष्मीरितिज्ञायते मृग्यतइत्यनेनहरेर्गुणतःस्वरूपतश्चोत्तम
त्वंध्वनयति विमृग्यमाणयेत्यनेनश्रीकटाक्षमोक्षस्यदुःसाधनत्वमाह २४ बाल्यादप्रतोयो क्षणकालीनत्वेन समतरान्मातृवचःश्रुत्वापिगृहएवास्थानहृदिमत्रिधायतत्समर्थनायततो निर्गम
नेवायुक्तमितिध्रुवेणद्रूयांमध्येकिमकारीत्यांतराशंकांपरिहर्तुमाह एवमिति अर्थस्याभिमतस्यागमःप्राप्तिर्यस्मात्तत्तथा तदात्मानंमन आत्मनाधैर्यगुणेन २५ ध्रुवोनाममहात्मेतिद्योतयंस्तस्य
स्वाभीष्टसिद्धिलक्षणंनारदसंवादंवक्ति नारदइति उपाकर्ण्येत्यनेननारदस्यदूरश्रवणशक्तियोगीन्द्रत्वान्स्वाभाविकीतिसूचयति सर्वमागिचित्तविषयंज्ञानंवायोगासिद्धमिति स्पृष्ट्वेत्यादिनागुरुप्रसादंध्वनय
ति अघघ्नेनसर्वदुरितविनाशकेनेतिपित्रादिद्वेषनिमित्तदोषनाशंसूचयति २६ विस्मितइत्युक्तमभिनयति अहोइति तेजोधैर्यलक्षणं अमृष्यतामसहमानाना समानु समानमातुःसुरुच्याः २७

किमाहेतितत्राह कथातीतिलक्षयेलक्षणवृत्त्याजानामि २८ अत्रध्रुवेणकिमुत्तरंदत्तमितितत्राह किंनतइतिध्यानेनज्ञानेलक्षयति । कार्यकारणसंबंधात् तेत्वयाध्यानजातेनयोगराधसाऽष्टांगयोगज नितदूरदर्शनशक्तिलक्षणसामर्थ्येनवाकिंनदृष्टंसर्वंदृष्टमेव । तथापिवक्ष्यामीतिशेषः किंतदितितत्राह नोत्सहइति २९ नारदेनापिकिंप्रत्युत्तरमुक्तमत्राह नाधुनेति ३० ननुक्रीडनादिपुसक्तस्यबाल स्यनयुक्तमन्यस्यविवेकिनः कथमित्याशंक्यनितरामीदृशस्यसतोषहेतुत्वमितिबोधयति विकल्पइति विकल्पेशत्रुमित्रादिविविधकल्पनेविद्यमानेपिपुंसोमोहमृतेभ्रममंतरेणासंतोषहेतवोमनःखेदजनकानस ति कुतःलोकाजनामित्राःस्वानुष्ठितैर्निजकर्मभिरुत्तमाधममध्यमभेदेननानाविधाइतियस्मात् ३१ ततईश्वरगतिंबुधोविद्वान्यावद्दैवोपसादितंवीक्ष्यतावन्मात्रेणपरितुष्येदित्यन्वयःईश्वरगतिवीक्ष्ययावद्दैवोप सादितंतावन्मात्रेणेतिवा अनेनसुरुच्यादुर्वचस्तवसंतापकारणंनभवतीत्युक्तंभवति ३२ हरेःप्रसादजनकेतपसिस्थितांबुद्धिंदृढांविधातुंबाधकमापेधत्ते अथेति । अथयदिमात्रोपदिष्टेनयोगेनोपायेनयस्य हरेःप्रसादार्थंहरिमवरुरुत्ससिअनुग्रहोन्मुखीकर्तुमिच्छसितर्ह्यपिसहरिर्ममपुंसांदुराराध्योमतः कुतस्तत्प्रसादावाप्तिःकुतस्तराफलाप्तिरित्यर्थः वाइत्यनेनस्वानुभवसिद्धमितिदर्शयति ३३ मुनयोपिय

॥ नारदवाच ॥ कथात्येकोभवान्वत्साहित्वास्वगृहमृद्धिमत् ॥ लक्षयेत्वावमत्यांगसंतसंस्वजनोत्थया २८ ॥ ध्रुवउवाच ॥ किंनतेध्यानजातेनदृष्टंवा योगराधसा ॥ नोत्सहेसुरुचेर्वाचासमाधातुंमनःक्षतम् २९ ॥ नारदउवाच ॥ नाधुनाप्यवमानंतेसन्मानंवापिपुत्रक ॥ लक्षयामःकुमारस्यसक्तस्यक्री डनादिषु ३० विकल्पेविद्यमानेपिनह्यसंतोषहेतवः ॥ पुंसोमोहमृतेभिन्नायल्लोकानिजकर्मभिः ३१ परितुष्येत्ततस्तावत्तावन्मात्रेणपूरुषः ॥ दैवोपसा दितंयावद्वीक्ष्येश्वरगतिंबुधः ३२ अथमात्रोपदिष्टेनयोगेनावरुरुत्ससि ॥ यत्प्रसादात्सवैपुंसांदुराराध्योमतोमम ३३ मुनयःपदवींयस्यनिःसंगेनोरुजन्म भिः ॥ नविदुर्मृगयंतोपितीव्रयोगसमाधिना ३४ अतोनिवर्ततामेषनिर्बंधस्तवनिष्फलः ॥ यतिष्यतिभवान्कालेश्रेयसांसमुपस्थिते ३५ यस्ययद्दैव विहितंसतेनसुखदुःखयोः ॥ आत्मानंतोषयन्देहीतमसःपारमृच्छति ३६ गुणाधिकान्मुदंलिप्सेदनुक्रोशंगुणाधमात् ॥ मैत्रींसमानादन्विच्छन्नतापैरभि भूयते ३७ ॥ ध्रुवउवाच ॥ सोयंशमोभगवतासुखदुःखहतात्मनाम् ॥ दर्शितःकृपयापुंसांदुर्दर्शोस्मद्विधैस्तुयः ३८ अथापिमेऽविनीतस्यक्षात्त्रंघोरमुपे युषः ॥ सुरुच्यादुर्वचोबाणैर्नभिन्नेश्रयतेहृदि ३९

न्मार्गंसमाराध्यनजानंति बालकस्त्वंकिमुतेत्याह मुनयइति ३४ ततःकिंतत्राह अतइति । तर्हिनिःश्रेयसायप्रयतमानस्यपुंसोजन्मनोनिरर्थकत्वमित्याशंक्यनायंकालःकिंतुकालांतरइत्याह यति ष्यतीति । कालेवार्धके ३५ सुखदुःखयोर्मध्येयत्सुखंदुःखंवायस्यदैवेनविहितंसदेहीतयोरेकेनतेनात्मानंतोषयंस्तमसःपारमज्ञानस्यांतं मोक्षमृच्छतिगच्छतीत्यन्वयः ३६ मनोदुःखाभावेउपायां तरमाह गुणाधिकादिति शमदमादिगुणाधिकात्पुरुषादितिप्रत्येकंसंबध्यते अनुक्रोशंदयां मैत्रींसौहार्दंतापैर्मनःखेदकरैर्भावैः ३७ नारदेनैवंबाधितोपिध्रुवस्तंमार्गप्रशस्यस्वहार्दंविज्ञापयति सोयमि ति योस्मद्विधैर्दुर्दर्शःशास्त्रदृष्ट्याज्ञातुमशक्यःसोयंशमोभगवन्विशालक्षणोभगवतासुखदुःखाभ्यांहतात्मनांपीडितमनसांपुंसांकृपयादर्शितोयद्यपि ३८ अथापितथापिअविनीतस्यकुतः क्षात्त्रंघोरंधर्ममु पेयुषोमच्छतोमेसुरुच्यादुर्वचोबाणैर्भिन्नेहृदिसशमोनश्रयतेस्थितिनलभतइत्यन्वयः ३९

१ विरुद्धोवितिपाठः । अत्रहेतुपरिणतयोदे । अत्र करणस्यपरिणामस्यभावत । ता० टी० ।

तर्हिवयाकांक्षया किंयानवार्थीरितितत्राह पदमिति अनेनराजासिंहासनस्याति [illegible] नतपःसाध्यत्वेनाकांक्ष्यत्वमिति [illegible] भगवद्भिरिन्द्रादिभिरप्यमनोरथेनाप्यनवाप्यमित्यसूचि ४०
भवान्लोकहितार्थाटनत्वान्मदर्भार्थमुपदिशतीत्याशयेनाह नूनमिति ४१ [illegible] इतीति तद्वाक्यं
श्रुत्वेति ४२ माकृत्वोक्तमेवद्रढीकर्तुमन्यपक्षा [illegible] जनन्येति । [illegible] । कोसावितितत्राह भगवा
निति योहरेर्विग्रहः वासुदेवनामाभगवांस्तंप्रवणात्मनाभजेत्यन्वयः ४३ [illegible] धर्मार्थेति कारणमितर [illegible] साधनं ४४ अभीष्टसिद्धिसाधनंक्षेत्रंचोपदिशति
तत्तातेति यस्माद्धरेरेवप्रधानसाधनत्वंतत्तस्मान्मधोःपूर्णानंदस्यहरेर्वनंभजनंयस्माद्भवतितन्मधुवनं नाम्नासूचितमर्थंप्रकाशयतिमन्त्रेति ४५ तत्रकिंकर्तव्यमितितत्राह स्नात्वेति उचितानितर्प

यदंत्रिभुवनोत्कृष्टंजिगीषोःसाधुवर्त्ममे ॥ ब्रूह्यस्मत्पितृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ४० नूनंभवान्भगवतोयोंगजःपरमेष्ठिनः ॥ वितुदन्नटतेवीणांहिता यजगतोर्कइव ४१ ॥ मैत्रेयउवाच ॥ इत्युदाहृतमाकर्ण्यभगवान्नारदस्तदा ॥ प्रीतःप्रत्याहतंबालंसद्वाक्यमनुकंपया ४२ ॥ नारदउवाच ॥ जनन्याभिहितःपंथाःसवैनिःश्रेयसस्यते ॥ भगवान्वासुदेवस्तंभजतत्प्रवणात्मना ४३ धर्मार्थकाममोक्षाख्यंयइच्छेच्छ्रेयआत्मनः ॥ एकंह्येवहरेस्तत्रकारणं पादसेवनम् ४४ तत्तातगच्छभद्रंतेयमुनायास्तटंशुचि ॥ पुण्यंमधुवनंयत्रसान्निध्यंनित्यदाहरेः ४५ स्नात्वानुसवनंतस्मिन्कालिंद्याःसलिलेशिवे ॥ कृत्वोचितानिनिवसन्नात्मनःकल्पितासनः ४६ प्राणायामेनत्रिवृताप्राणेंद्रियमनोमलम् ॥ शनैर्व्युदस्याभिध्यायेन्मनसागुरुणांगुरुम् ४७ प्रसादाभिमुखंशश्वत्प्रसन्नवदनेक्षणम् ॥ सुनासंसुभ्रुवंचारुकपोलंसुंदरंहारिम् ४८ तरुणंरमणीयांगमरुणोष्ठेक्षणाधरम् ॥ प्रणताश्रयणंनृम्णंशरण्यंकरुणार्णवम् ॥ ४९ श्रीवत्सांकंघनश्यामंपुरुषंवनमालिनम् ॥ शंखचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ५० किरीटिनंकुंडलिनंकेयूरवलयान्वितम् ॥ कौस्तुभाभरणग्रीवंपीतकौशेयवाससम् ५१ कांचीकलापपर्यस्तंलसत्कांचननूपुरम् ॥ दर्शनीयतमंशांतंमनोनयनवर्धनम् ५२ पद्भ्यांनखमणिश्रेण्याविलसद्भ्यांसमर्चताम् ॥ हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ५३

प्याणीति ४६ त्रिवृतारेचकादित्रित्वसंख्योपेतेन यद्वा परवइतित्र्यक्षरयुक्तेन यद्वा प्रणवयुक्तेन प्राणानामत्रशात्रमिन्द्रियाणांविषयाभिमुखत्वंमनसोनवस्थितत्वमितिमलत्रयं गुरूणांगुरुमुपदेष्टारम् ॥
४७ पुरुषापुषशतेनाऽप्रसन्नतादिगुणवांश्चेत्किमनेनेत्यतोऽश्रद्धानकर्तव्येतिध्येयस्वरूपमुपदिशतिप्रसादाभिमुखमित्यादिना ४८ अरुणत्वलक्षणज्ञापनायपुनरीक्षणं क्वचिद्धरिपीतवर्णंक्वचित्कृष्णम् ॥
४९ कचिद्घनवत्श्यामंनीलं पुरुषलक्षणसामग्रीसूचनायपुरुषग्रहणम् ५० ५१ कलापोभूषणेबर्हेइतिवचनात् कांचीकलापेनपर्यस्तंसंवेष्टितम् ५२ नखमणिश्रेण्याविलसद्भ्यांपादाभ्यांसमर्चताम
कानामात्मनिमध्यदेहेहृदयपद्मकर्णिकाधिष्ण्यमाक्रम्यावस्थितम् ५३

१ एं याभावान्नमत्स्यादीनीति पाठपत्ये ।

मनसैवविधं भगवतोरूपंध्यायेदित्यन्वयः किंविशिष्टेन मनसा नियमेन परिणततया भ्यस्ततया प्राप्तपरिपाकत्वेनैकस्मिन्ध्येयवस्तुनिभूतेन बाह्यविषयाभिनिवेशरहितेन ५४ निर्वृत्त्योद्रिक्तानंदेन संपन्नंपूर्णंध्येयादितरत्र न निवर्ततेन गच्छति ५५ जप्योमंत्रः ५६ द्रव्यमयींद्रव्यप्रधानां अर्चांपूजासपर्यास्यादित्यभिधानं ५७ द्रव्याण्याह सलिलैरिति वन्यैर्वनभवैः ५८ द्रव्यमयीमर्चांशिलादिप्रतिमां अर्चातुप्रतिमाप्रोक्तेत्यभिधानं क्षितौस्थंडिले आदिशब्दादादित्यमंडले ऽप्सुवा आहृतात्माविषयेभ्य आकृष्यवशीकृतमनाः मितंनिपतादर्धफलमूलादिवन्यंभुंक्तइतिमितवन्यभुक् ५९ निजमायया स्वरूपभूतमहिम्ना स्वेच्छया कृतावतारस्तस्यचरितैः कंसवधादिलक्षणैश्चरितंगुणसमूहंहृदयंगमान्यान्विभुविक्रमान्करिष्यतितान्ध्यायेदित्यन्वयः ६० परिचर्यादिसंक्षिप्य तत्करणप्रकारंवक्ति परिचर्याइति यावतीयावत्यः पूर्वाचार्यैः कल्पितास्तामंत्रहृदयेन मंत्रेणनमःशब्देनचओंनमोभगवतेवासुदेवायेत्यनेन मंत्रमूर्तये मंत्राक्षरप्रतिपाद्यवासुदेवाय प्रयुंज्यात्कल्पयेदित्यन्वयः ६१ एवंविधोपास

स्मयमानमभिध्यायेत्सानुरागावलोकनम् ॥ नियमेनैकभूतेन मनसावरदर्षभम् ५४ एवंभगवतोरूपंसुभद्रंध्यायतोमनः ॥ निर्वृत्यापरया पूर्णंसंपन्नंननिवर्तते ५५ जप्यस्तुपरमोगुह्यः श्रूयतांमेनृपात्मज ॥ यंसप्तरात्रंप्रपठन्पुमान्पश्यतिखेचरान् ५६ ॐनमोभगवतेवासुदेवाय ॥ मंत्रेणानेनदेवस्यकुर्याद्द्रव्यमयींबुधः ॥ सपर्यांविविधैर्द्रव्यैर्देशकालविभागवित् ५७ सलिलैःशुचिभिर्माल्यैर्वन्यैर्मूलफलादिभिः ॥ शस्तांकुरैरंशुकैश्चार्चेत्तुलस्याप्रियया प्रभुम् ५८ लब्ध्वाद्रव्यमयीमर्चांक्षित्यंब्वादिषुवार्चयेत् ॥ आहृतात्मामुनिःशांतोयतवाङ्मितवन्यभुक् ५९ स्वेच्छावतारचरितैश्चरितंनिजमायया ॥ करिष्यत्युत्तमश्लोकस्तान्ध्यायेद्धृदयंगमान् ६० परिचर्याभगवतोयावतीःपूर्वसेविताः ॥ तामंत्रहृदयेनैवप्रयुंज्यान्मंत्रमूर्तये ६१ एवंकायेनमनसावचसाचमनोगतः ॥ परिचर्यमाणोभगवान्भक्तिमत्परिचर्यया ६२ पुंसाममायिनांसम्यग्भजतांभाववर्धनः ॥ श्रेयोदिशत्यभिमतंयद्धर्मादिषुदेहिनाम् ६३ विरक्तश्चेंद्रियरतौभक्तियोगेनभूयसा ॥ तन्निरंतरभावेनभजेताद्धाविमुक्तये ६४ मैत्रेयउवाच ॥ इत्युक्तस्तंपरिक्रम्यप्रणम्यचनृपार्भकः ॥ ययौमधुवनंपुण्यंहरेश्चरणचर्चितम् ६५ तपोवनंगतेतस्मिन्प्रविष्टोंतःपुरंमुनिः ॥ अर्हितार्हणयाराज्ञासुखासीनउवाचतम् ६६ नारदउवाच ॥ राजन्किंध्यायसेदीर्घंमुखेनपरिशुष्यता ॥ किंवानरिष्यतेकामोधर्मोवार्थेनसंयुतः ६७ राजोवाच ॥ सुतोमेबालकोब्रह्मन्स्त्रैणेनाकरुणात्मना ॥ निर्वासितःपंचवर्षःसहमात्रामहान्कविः ६८

नाफलमाह एवमिति भक्तिमंतःसंतस्तेषांपरिचर्यया शुश्रूषया देहिनां धर्मादिषुयदभिमतंश्रेयस्तादिशतीत्यन्वयः ६२ ६३ सर्वस्मात्साधनाद्विरक्तिभक्तीमुक्तिसाधनेइत्याशयेनाह विरक्तश्चेति तयोरवश्यकर्तव्यत्वेचशब्दः इंद्रियरतौविषयभोगेविरक्तः ६४ उत्तरकथाप्रसंगमाह इत्युक्तइति ६५ नन्वस्त्वियंकथा पुनर्नारदःकुत्रायातस्तत्राह तपोवनमिति अर्हणयापूजासाधनेनार्हितः पूजितः ६६ नरिष्यतेनार्हस्यते ६७ नारदेनपृष्टोराजोत्तरमाह । सुतोमइति निर्वासितःनिष्कासितः कविरित्यनेनज्ञानित्वंद्योतयति ६८

---

१ एकभूतेनमनसेत्यत्रपरमात्मनो मनसैकत्वमुच्यतइत्यन्यथाप्रतीतेस्तात्पर्यानुसारेणयथावद्व्याख्याति । एकस्मिन्निति ॥ टी० २ मंत्रहृदयेनेत्यत्रमंत्रस्यहृदयेनेत्यन्यथाप्रतीतिवारणायतात्पर्यानुसारेणव्याख्याति मंत्रेणनमःशब्देनचेति हृदयंनमःशब्दइतिमंत्रोद्धारग्रंथेप्रसिद्धेर्नमोनमत्रेणेत्यर्थइत्युक्तंभवति ॥ टी० ३ सहमानामुनानासापत्नमानामुरुचिः तया ॥ सहभ्रांतेत्यादिनयोगवादोनिभागवतस्कंदे

यथीक्तंभक्तांसनपदादस्युत्तमपदंसाधयामीतिनिरूप्यमात्रादीन्विहायपुरान्निरगमदित्येवमनुतप्यमानोपिराजातद्वतंदुःखमुद्रुपति अनाथमिति ॥ ६९ ॥ एवमनुतप्यस्वदौरात्म्यंमुनिमपिसंबोधय ति अहोइति त्वयाकिमकारीदितत्राह यौंकमिति ७० प्रवक्तानारदस्तुमदाज्ञाभिमानस्यगतत्वादस्यहरिरेवरक्षकइतिकृत्वापुत्रंतंमानुतपेत्याह मामेति ततोप्यनुतापोनगच्छतीत्यतअज्ञानमूलोसावि त्याह तत्प्रभावमिति प्रावृंक्तःप्रांति ७१ अम्पत्निमित्तवैराग्येनगतःपुत्रोनपुनरेष्यतीतिखेदोमाभूदित्याह सुदुष्करमिति तत्कर्मनस्यध्रुवस्यैवयोग्यत्वात् लोकपालानांदुष्करं । ननुतेषामशक्य त्वात् नाशक्यंदेवतानांतुयदन्यै शंकितंकचिन् शक्ताअपिनकुर्वंतियदन्यविहिनंतुअाडनिवचनादपिपदेनसूचितान् ७२ एवंविस्रब्धस्यापिराज्ञोऽनुनापपरंपरामाह इतीति अनेनसंसारस्यदुस्तरत्वमसू चि ७३ ध्रुवोमध्रुवनंप्राप्यकिमकार्षीदित्राह तत्रेति आदेशेनोपदेशेननारदोक्तमार्गेणकृतयाहृष्टयानिरूपणयापुरुषवासुदेवंपर्यचरदित्यन्वयः ७४ तस्यतपआतिष्ठमानस्याशनप्रकारमाह त्रिरात्रांतइति क

अनाथंचवनेब्रह्मन्मास्वादंस्वर्भकंवृकाः ॥ श्रांतंशयानंक्षुधितंपरिम्लानमुखांबुजम् ६९ अहोमेबतदौरात्म्यंस्त्रीजितस्योपधारय ॥ योंकंप्रेम्णारुरुक्षंतं नाभ्यनंदमसत्तमः ७० नारदउवाच ॥ मामाशुचःस्वतनयंदेवगुप्तंविशांपते ॥ तत्प्रभावमविज्ञायप्रावृंक्तेयद्यशोजगत् ७१ सुदुष्करंकर्मकृत्वालोकपा लैरपिप्रभुः ॥ एष्यत्यचिरतोयशोविपुलयंस्तव ७२ मैत्रेयउवाच ॥ इतिदेवर्षिणाप्रोक्तंविस्रभ्यजगतीपतिः ॥ राज्यलक्ष्मीमनादृत्यपुत्रमेवान्वचिंत यत् ७३ तत्राभिषिक्तःप्रयतस्तामुपोष्यविभावरीम् ॥ समाहितःपर्यचरदृष्ट्यादेशेनपूरुषम् ७४ त्रिरात्रांतेत्रिरात्रांतेकपित्थबदराशनः ॥ आत्मवृत्त्यनुसा रेणमासंनिन्येऽर्चयन्हरिम् ७५ द्वितीयंचतथामासंषष्ठेषष्ठेर्भकोदिने ॥ तृणपर्णादिभिःशीर्णैःकृतान्नोभ्यर्चयद्विभुम् ७६ तृतीयंचानयन्मासंनवमेनवमे ऽहनि ॥ अब्भक्षउत्तमश्लोकमुपाधावत्समाधिना ७७ चतुर्थमपिवैमासंद्वादशेद्वादशेऽहनि ॥ वायुभक्षोजितश्वासोध्यायन्देवमपारयत् ७८ पंचमेमास्य नुप्राप्तेजितश्वासोनृपात्मजः ॥ ध्यायन्ब्रह्मपदैकेनतस्थौस्थाणुरिवाचलः ७९ देवाश्चकुस्तपोविघ्नंत्रासयंतःस्वमायया ॥ सर्पैभसिंहकूष्मांडैस्तान्नापश्य त्परंगतः ८० सर्वतोमनआकृष्यहृदिभूतेंद्रियाश्रयम् ॥ ध्यायन्भगवतोरूपंनाद्राक्षीत्किंचनापरम् ८१

पित्थबदरयोःफलमशनंयस्यसतथोक्तःफलभुक्अशननियतिंकथयति आत्मवृत्तीति यावतात्मनःशरीरस्यवृत्तिस्तदनुसारेण ७५ ७६ उपाधावत्उपास्त ७७ अपारयदतिक्रांतवान् ७८ अचलःस्थि रः ७९ देवाध्रुवस्यपशोविस्तृत्यर्थंतत्तपोविघ्नंचक्रुरित्याह देवाइति । स्वस्वसिद्धमाययेंद्रजालेन कूष्मांडाःपिशाचविशेषाः तान्नापश्यदित्यनेनध्रुवस्यदेवेभ्योत्यधिकतरशक्तिमत्त्वंनाभिप्रेतंकिंतु परमभाग वतस्तेनयशोविस्तृत्यैविघ्नकरणं नतुतत्तपःखंडनाय । तदुक्तं यत्रदेवैःकृतेविघ्नेखंडितोनपुमान्भवेत् तत्रतद्यशसेविघ्नंकुर्युर्नैतुविघातने । यत्रखंडिततातत्रखडनायैवकेवलं । सत्यकामायतोदेवास्तेचि रंचाभिमानिनः । अतोविमोहनायैवप्रापुस्तेपराजयं । तेषामशक्तितोक्तिश्चविमोहायसुरद्विषामिति ८० नापश्यदित्येतद्विवृणोति सर्वतइति । आकाशादिभूतानांतदुत्पन्नानांप्राणिनांचेंद्रियाणामा श्रयंभगवतोरूपंपापत्परंजगत्किंचनाल्पमस्वतंत्रमद्राक्षीत्स्वतंत्रंनाद्राक्षीदित्यन्वयः ८१

१ सुदुष्करमित्यत्रदेवानांध्रुवकृतकर्मण्यशक्तिरितिभातीत्यतउपपत्तिमाह ॥ २ दृष्टयादेशेनपूरुषमित्यत्रदृष्टयाचक्षुषाआदेशेनेति असंगतमिवभातीत्यतस्तात्पर्यानुसारेणव्याचष्टे ॥ ३ दृश्यते नयेतिदृष्टिः निरूपणातया । आसम्यक् दिश्यतेउपदिश्यतइत्यादेशउपदेशस्तेन । नतश्चनारदनसाधननिरूपणपूर्वकृतोपदेशेनेत्युक्तंभवति । दी० ॥ ४ भूतेंद्रियाश्रय देहं हृदिध्यायन्भगवतो रूपं किंचन ना द्राक्षीदिति विरुध्यति ततोयोजयति भूतेंद्रियाश्रयं भगवद्रूपमितिमिति ।

एकाग्रमनसातस्य वासुदेवंध्यायतःसतइदमेकमाश्रयमभूदित्याह आधारमिति ८२ सर्वाधारंब्रह्मधारयमाणेध्रुवेस्थिरत्वेनभाव्यंतत्रलोकानांकंपनंकथमित्याशंक्योपपत्तिमाह यदेकपादेनेति । तत्रतस्मि न्भागेतयाँमध्येइभेंद्रेणगजेनगरिम्णाधिष्ठितातरीव यथानौर्नताभवतितथा । तदेवविशिनष्टि सव्येतरतइति । सव्येनरयेवाभिदक्षिणयो पादयोःपदेपदेनुन्नानताभवतीति ८३ नकेवलंचलनमेवलोकाना मभूत्किंतुश्वासोच्छ्रासयोःप्रवृत्तिस्तंभेनमरणाधिकक्लेशोऽभूदित्याह तस्मिन्निति तस्मिन्ध्रुवेऽनन्ययाध्येयैकविषयतांगतयाधियाश्वासप्रवृत्तिकारणमसुप्राणंनिरुध्यकुंभकीकृत्यात्मनोजीवराशेरुत्पत्त्यादे र्द्वारंकारणंविश्वंविष्णुमभितःपरितइंद्रियाभिमानिदेवैःसहध्यायतिसतिनिरुच्छ्रासेननिरुद्धप्राणवृत्त्यानिपीडिताःसलोकपालालोकाहरिंशरणंययुरित्यन्वयः अत्रभृशमित्यनेनाक्षिमवाचिनाल्लोकानामेव निरुच्छ्रासांनलोकपालानांदेवतानामन्यप्रवृत्तिहेतूनांस्वोत्तमानुग्रहेणस्वावरानधीनप्रवृत्तीनातास्तुलोकश्वासार्थंक्रयाल्लवोहरिंशरणंययुरिनिध्वनयति उक्तंच ध्यातुर्ध्रुवस्यकीर्त्यर्थंहरिणामहत्त्वेनालोको च्छ्रासान्निरुध्याथश्वासार्थंचहरिंययुः अन्यप्रवृत्तयस्तेभ्योनतेषामन्यतःक्वचित् स्वोत्तमेभ्यस्तुदेवेभ्यस्तेपाल्युश्वप्रवृत्तयइति ८४ किमर्थंशरणंगताइतितत्राह नैवामिति अखिलानासत्त्वानांप्राणिनांधाम

आधारंमहदादीनांप्रधानपुरुषेश्वरम् ॥ ब्रह्मधारयमाणेतुत्रयोलोकाश्चकंपिरे ८२ यदैकपादेनसपार्थिवार्भकस्तस्थौतदंगुष्ठनिपीडितामही ॥ ननामत त्रार्धमिभेंद्रधिष्ठितातरीवसव्येतरतःपदेपदे ८३ तस्मिन्नभिध्यायतिविश्वमात्मनोद्वारंनिरुध्यासुमनन्यया धिया ॥ लोकानिरुच्छ्रासनिपीडिताभृशंसलोक पालाःशरणंययुर्हरिम् ८४ देवाऊचुः ॥ नैवंविदामोभगवन्प्राणरोधंचराचरस्याखिलसत्त्वधाम्नः ॥ विधेहितन्नोवृजिनाद्विमोक्षंप्राप्तावयंत्वांशरणंशरण्यम् ८५ ॥ श्रीभगवानुवाच ॥ ॥ माभैष्टबालंतपसोदुरत्ययान्निवर्तयिष्येप्रतियातस्वधाम ॥ यतोहिवःप्राणनिरोधआसीदौत्तानपादिर्मयिसंगतात्मा ८६ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेध्रुवचरितेनवमोध्यायः ९ ॥ मैत्रेयउवाच ॥ तएवमुत्सन्नभयाउरुक्रमेकृतप्रणामाःप्रययुस्त्रिविष्टपम् ॥ सहस्रशीर्षा पितितोगरुत्मतामधोर्वनंभृत्यदिदृक्षयागतः १ सवैधियायोगविपाकतीव्रयाहृत्पद्मकोशेस्फुरितंतडित्प्रभम् ॥ तिरोहितंसहसैवोपलक्ष्यबहिःस्थितंतदवस्थं ददर्श २ तद्दर्शनेनागतसाध्वसःक्षितावर्वदतांगंविनमय्यदंडवत् ॥ दृग्भ्यांप्रपश्यन्प्रपिबन्निवार्भकश्चुंबन्निवास्येनभुजैरिवाश्लिषन् ३

समूहोयत्रतत्तथोक्तस्य तेजःशक्तिसमूहश्चब्रह्मधामेतिकथ्यतइत्यभिधानात् । वृजिनाद्दुःखात् ८५ हरेःशरणंगतानांदेवानांभयव्यावर्तकप्रतिवचनप्रकारमाह माभैष्टेति । यतोयस्माद्वोयुष्माकंसकाशा त्सप्रवृत्तीनांलोकानांप्राणनिरोधआसीत् ततःसोनिवर्तयिष्यइत्यन्वयः कोसावितितत्राह औत्तानपादिरिति मयिसम्यग्गतआत्मामनोयस्यसतथा ध्रुवइत्युक्ते कश्यपपुत्रःकिंजातिरयमितिमाशंकास्या दित्यतऔत्तानपादिरिति ८६ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेवि०कृतटी०नवमोऽध्यायः ॥ ९ ॥ ॥ ७ ॥ हरेःकेवलंमोक्षाख्यपुरुषार्थरयप्रापिरेवनाकित्वैहिकस्यापीतिममर्थंप्रति पादयत्यस्मिन्नध्याये तत्रादौदेवानांस्वलोकगमनंहरेर्ध्रुववनयात्रांचवक्ति तएवमिति सहस्रशीर्षाभगवान्वेदः गरुत्मान्गरुडस्तार्क्ष्यइत्यभिधानम् १ ध्रुवस्यहरिदर्शनप्रकारंवक्ति सवाइति योगपरि पाकेनध्यानपरिणत्यातीव्रयास्वतएवभगवदुन्मुख्या । तदवस्थंहृत्पद्मकोशेयाऽवस्थातयाविशिष्टम् २ गुरुकृत्तुणनृपमहन्दभगवदुरास्तांअंक्रयध्रुवस्पकिपुनर्वदनादावितिभावेनतत्प्रावण्यप्रकारमा ह तद्दर्शनेति आगतसाध्वसःप्राप्तसंभ्रमःबालस्वभावंदर्शयन्विवभक्त्यतिशयमाह दृग्भ्यामिति ३

१ आत्मनःदेहस्यादेर्द्वारमिवत्वाहारेणयोजनाच्चनानुपपत्तिः दी० । २ अखिलसत्त्वधाम्नःत्वस्याऽखिलसत्त्वाश्रयस्यचराचरात्मकस्यहरेरित्यन्यत्प्रतीतेर्धामशब्दार्थमाह । समूहइति । तेनप्राणरोधो जीवसमुदायस्येत्यर्थः । दी० ।

दर्शनादहंखल्वयमेवेमंसंप्रत्यात्मानंजानात्ययमहमस्मीतिनोएवेमानिभूतानिविनाशमेवापीतोभवति नाहमत्रभोग्यंपश्यामीतिश्रुतौसुप्तौतत्स्थत्वेपिध्यानाभावात्सुखानुभवाभावस्यदृष्टत्वादितीममर्थम पिपदेनध्वनयति । स्वमहिमनिब्रह्मणिसुखनास्तीतियोजना अथकस्मादुच्यतेब्रह्मेति बृहतोह्यस्मिन्गुणाःएषह्येवानंदयतीत्यादिश्रुतिविरुद्धत्वेनउपेक्षणीयोयतःस्थितस्येत्यध्याहारोयुक्तिसिद्धत्वादंगी क्रियते ननुतर्हिस्वर्गोवैश्वर्यंतत्फलंकिंनस्यात् ज्ञानादेवसर्वेकामाःसंपद्यंतइतिश्रुतेरितितत्राह किमितिति अंतकस्यहरेःभ्रूविभ्रमलक्षणेनासिनाविलुलितात्पर्यस्ताद्विमानात्पततापुंसासानिर्वृतिर्न स्यादितिकिमु । एतदुक्तंभवति कर्मसाध्यज्ञानात्स्वर्गादिलक्षणविमानंप्राप्यइतस्ततोनंदनादिषुविहारार्थंपततांगच्छतांपुंसांसानिर्वृतिर्नास्तीतिकिमुवक्तव्यमिति विमानाद्भ्रश्यतामित्यर्थांगीकारेत त्रदुःखप्राचुर्यात्सानिर्वृतिर्नस्यादितिकैमुत्यमुक्तत्वादुक्तएवार्थः अंतकासिलुलितत्वमनित्यत्वद्योतनायोक्तमितिज्ञातव्यं अत्रध्यानंज्ञानोत्पत्त्यावंतरंगसाधनकथाश्रवणतत्साधनं श्रुतगुणानांपश्चादु पसंहारोपपत्तेरितिज्ञातव्यं । अधिकारिणामनंतत्वात्तत्तद्योग्यताविशेषादेवमुक्तमितिवा १० भवज्जनाभगवद्भक्ताःतेषांमुखनिःसृतायाभगवत्कथायाःश्रवणलक्षणोपासनयेत्युक्तं तत्रभवज्जनस्यचरि तलक्षणकथाश्रवणेनेतीममर्थमभिप्रेत्यभवज्जनसंगतोभवत्कथासुश्रवणंसुलभंस्यादितिमत्वातत्संगतिंप्रार्थयते भक्तिंमुहुरिति येनप्रसंगेनभवाब्धिंनेष्येतरिष्यामि । नमाप्स्यामीतिवा इषुगताविति धातुः ११ भक्तानांलक्षणमाह तेनेति येस्वान्सुतसुहृद्गृहवित्तदारान्संपदःस्मरंतितेअतितरांप्रियमाद्यमीशंत्वांनस्मरंति हेअब्जनाभ येभवदीयपदारविंदसौगंध्यलुब्धहृदयेषुभवद्भक्तेषु कृतप्रसंगा भव

भक्तिंमुहुःप्रवहतांत्वयिमेप्रसंगोभूयादनंतमहतामम्लाशयानाम् ॥ येनांजसोल्बणमुरुव्यसनंभवाब्धिंनेष्येभवद्गुणकथामृतपानमत्तः ११ तेनस्मरंत्य तितरांप्रियमीशमर्त्यंयेचान्वदःसुतसुहृद्गृहवित्तदारान् ॥ येत्वब्जनाभभवदीयपदारविंदसौगंध्यलुब्धहृदयेषुकृतप्रसंगाः १२ तिर्यङ्नगद्विजसरीसृप देवदैत्यमर्त्यादिभिर्विरचितंसदसद्विशेषम् ॥ रूपंस्थविष्ठमजतेमहदाद्यशेषंनातःपरंपरमवेद्मिनयत्रवाचः १३ कल्पांतएतदखिलंजठरेणगृह्णन्शेतेपुमान् स्वदृगनंतसखस्तदंके ॥ यन्नाभिसिंधुरुहकांचनलोकपद्मगर्भेद्युमान्भगवतेप्रणतोस्मितस्मै १४

द्भक्तास्तेस्वान्सुतादीन्संपदोनस्मरंतीत्यन्वयःअनेनश्रीहरिभक्तिरेवनभवाब्धिसंतारिणीकिंतुतद्भक्तभक्तिरपीतिसूचितम् ॥ १२ ॥ ब्रह्मादीनामपित्वत्प्रसादात्ऋतेत्वद्रूपदर्शनमसुकरंकिमुतमादृशाना मितिभावेनाह तिर्यङ्नगेति हेअजअशेषंसर्वावयवोपपन्नंमहदादिमहत्तत्त्वमादिर्यस्यतत्तथोक्तं । सतापृथिव्यादिभूतत्रयेणासतावाय्वादिभूतद्वयेनविशेषोयस्यतत्तथोक्तं स्थविष्ठस्थूलतमंतिर्यगादिभि र्विरचितंब्रह्मांडाख्यंरूपंवेद्मि हेपरम अतःस्थूलात्परंसूक्ष्मंरूपंनवेद्मि अत्रहेतुगर्भविशेषणमाह यत्रेति वाचइत्युपलक्षणं वेदाभिमानिनोलक्ष्म्यादयोयत्रयद्विषयज्ञानवंतोनभवंति किमुक्तंभवतिलक्ष्मी ब्रह्माद्याअनुदिनंपश्यंतोपिकिंचिदनंतत्वेनजानंति किम्वहं । तदुक्तं पश्यमानोपितुहरिंनतुवेत्तिकथंचन वेत्तिकिंचित्प्रसादेनहरेरथगुरोस्तथा द्वेवावब्रह्मणोरूपेमूर्तंचैवामूर्तंच यतोवाचोनिवर्तंतेअप्राप्यम नसासहइत्यादिश्रुतेः १३ सृष्टिसंहारकर्त्रोर्ब्रह्मरुद्रयोर्लोकहृद्गतांविष्णुसमत्वशंकांनिवर्तयितुमाह कल्पांतइति । अनंतःसखायस्यमतथोक्तःस्वदृक्स्वयंप्रकाशःपुमान्कल्पांतेएतदखिलजगज्जठरेणोदरे णगृह्णन्संहरंस्तस्यानंतस्यांकेशेते । यस्यनाभिसिंधुरुहंनाभिसरसोजातंतदेवकांचनंसुवर्णलोकात्मकंपद्मंतस्यगर्भेद्युमानतिद्युतिमान्ब्रह्माजातइतिशेषः अनेनरुद्रस्यसंहर्तृत्वंब्रह्मणःस्रष्टृत्वंचद्वारमात्रमि तिज्ञातव्यंएवंविधमाहात्म्यस्यहरेस्त्वयाकिमुपक्रियतइतितत्राह भगवतइति १४

१ तेनस्मरंतीत्यत्रभगवद्भक्तभक्ताःस्वान्संपदोयदानस्मरंतिनदाऽऽद्यमीशंत्वांनिरांनस्मरंतीत्यन्यथाप्रतीतिरतस्तात्पर्यानुसारेणयोजयति । यइति । टी०

त्कर्मभावस्यपंकलेपइवसृष्ट्यादौप्रपतमानस्यहरेरनित्यत्वंदोषवद्धत्वमशुद्धत्वंचस्यादित्याशंक्ययोगिनोपिदुर्भगशरीरस्थस्यनद्वन्द्वदुःखाद्यनुभावोनास्ति किमुतनित्यस्यनित्यमुक्तस्यनित्यशुद्धस्या तएवाबाधितस्वबोधस्येतिभावेनाह त्वंनित्येति । किमेवंभूतःपरिच्छिन्नइतिनेत्याह आत्मेति आततत्वादात्मा तर्हितत्तत्पदार्थसंबंधेनतत्तद्धर्माःसंगम्यतइत्यतउक्तं कूटस्थइति षड्विकारशून्यः । एवंकूटस्कोपमत्राह । आदिपुरुषइतिआदौत्युपलक्षण जगतआदावंतेचवर्तमानःपुरुषःपूर्णषड्गुणःश्रीनारायण । पूर्णषड्गुणत्वंस्पष्टमाह भगवानिति ऐश्वर्यस्यसमग्रस्येतिस्मृतेः । कुतोस्यसमग्रैश्व र्यमवगम्यतइत्यतउक्तं त्र्यधीशइति त्रयाणांलोकानांमुक्तामुक्तससारिणांवर्तमानादिकालानांवाजाग्रदाद्यवस्थानामृगादिवेदानांवाइत्यादित्रित्वसंख्यावतामधीशः । इंद्रादिव्यावृत्त्यर्थमधीशइत्यु क्तं । त्वमेवंविशिष्टइतियचस्मात्तस्मादखंडितयास्वबुद्ध्यास्वरूपज्ञानेन बंधसंसारस्यावधिभूतंबुद्धेरवस्थितंबुद्धौस्थितंत्वांदृष्ट्वावस्थितायेपुरुषास्तैःसहातोस्मात्प्रपंचाद्व्यतिरिक्तस्त्वमास्सइत्यन्वयः । वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरितिवचनादल्लोपःप्रामाणिकः १५ अघटितघटनशक्तिमत्त्वात्त्वमेवाभीष्टसिद्धयेप्रार्थनीयइत्याह यस्मिन्निति विरुद्धगतयोलोकेविरुद्धविषयाविवादयोविविधश क्तयोस्थूलत्वमणुत्वंह्रस्वत्वमित्यादयोयस्मिन्हरावनिशंपतंतिवर्तंते । तत्रप्रमाणमाह आनुपूर्व्येति आनुपूर्वीश्रुतिश्चैवत्रयीचाम्नायउच्यतइत्यभिधानात् विचित्रशक्तिःपुरुषःपुराणःअस्थूलमन

**त्वंनित्यमुक्तपरिशुद्धविशुद्धआत्माकूटस्थआदिपुरुषोभगवांस्त्र्यधीशः ॥ यद्बुद्ध्यवस्थितमखंडितयास्वबुद्ध्याद्रष्टास्थितावधिमतोव्यतिरिक्तआस्से १५ य स्मिन्विरुद्धगतयोह्यनिशंपतंतिविद्यादयोविविधशक्तयआनुपूर्व्या ॥ तद्ब्रह्मविश्वभवमेकमविश्वमाद्यमानंदमात्रमविकारमहंप्रपद्ये १६ सत्याशिषो हिभगवंस्तवपादमूलमाशिष्योनुभजतःपुरुषार्थमूर्तेः ॥ अप्येवमार्यभगवान्परिपातिदीनान्वाश्रेववत्सकमनुग्रहकातरोस्मान् १७ ॥ मैत्रेयउवाच ॥ अथाभिष्टुतएवंवैसत्संकल्पेनधीमता ॥ भृत्यानुरक्तोभगवान्प्रतिनंद्येदमब्रवीत् १८**

ण्वह्रस्वमित्यादिकयाश्रुत्यासिद्धमित्यर्थः अहंतद्ब्रह्मशरणंप्रपद्यइत्यन्वयः जगत्कारणमेवब्रह्मात्रविवक्षितंनजीवइतिभावेनाह । विश्वभवमिति । विश्वस्यभवउत्पत्तिर्यस्मात्तत्तथा नैतल्लक्षणंपरमाणु ष्वतिव्याप्तमित्याह एकमिति परमाणूनामनेकत्वादिदमेवमुख्यकारणमित्यर्थः । कारणत्वंमृद्वद्वेत्याह अविश्वमिति । जगतोन्यत् । अनंतमितिपाठेजीवाश्रितं कर्मकारणमस्तीत्याशंक्य कर्मणःक्षणभंगुरत्वेनानित्यत्वादचेतनत्वाच्चकारणत्वानुपपत्तिरित्यर्थः विश्वस्याद्यंतवत्त्वेनानित्यत्वादस्यतदभावात्कारणत्वंयुक्तमित्याह आद्यमिति । आद्यमित्युपलक्षणंविश्वस्यादावंतेचभवतीति अनाद्यनंतत्वंप्रधानस्यास्तीत्यतउक्तमानंदमात्रमिति इतोपिप्रधानस्यकारणत्वमनुपपन्नमित्याह अविकारमिति १६ इतरदेवतानुग्रहात्त्वदनुग्रहएवाभीष्टफलप्राप्तिहेतुरित्याह सत्याशिषइति पुरु षार्थमूर्तेरानंदानुभवरूपस्यतवपादमूलमनुभजतःपुरुषस्याऽऽशिष्टयःआचार्यैशिष्टाःसत्याशिषोयथार्थशुभफलप्रदाह्येव । एवमपितथापि । आर्यपूज्य अनुग्रहकातरोभवान्दीनानस्मान्शिष्या न्निशिक्षफलप्राप्तयेपुनः वाश्रेवनवप्रसूतागौरिववत्संपरिपातीत्यन्वयः । वाश्रेवविद्युन्मिमातिवत्संनमातासिषक्तीतिश्रुतिः १७ सत्संकल्पेन सत्सत्येभ्योहितेश्रेष्ठेसाधीयसिभवत्यपीतियादवः १८

१ पादमूलमाशीस्तथानुभजत इतिपाठान्तरं टीकायामपि आशिषआचार्येशिष्टा इतिच ।

मयरूपमहतांयोगिनामपिदुरापमित्यनेनायोग्यानामेवदुष्प्रापंनतुयोग्यानांतेषांसाधनसामग्र्याःसुलभत्वादित्यर्थः सूच्यतइत्युत्तरग्रंथेनज्ञायतइतिभावेनाविशिनष्टि नान्यैरिति । ध्रुवानित्याक्षितिर्निवा सोयस्मिंस्तत्तथोक्तं मेढीतितिलपीडोलूखलं कल्पलयेपिलयोनास्तीत्याशयेनाह स्थास्न्विति अनेनध्रुवक्षितीत्यस्यार्थविशेषोदर्शितः पुरस्तादग्रेधर्मादयोयत्स्थानंप्रदक्षिणीकृत्यचरंतितत्तुभ्यंदास्यामी त्यन्वयः वनौकसोवानप्रस्थाः १९ २० २१ सिंहासनाधिपतिरधिभूयादितिभावेनाह प्रस्थितइति गांभूमिम् २२ उत्तमेभ्रातरिसतिकथंसिंहासनाधिरितितत्राह त्वद्भ्रातरीति तस्मिन्नेवमनोय स्याःसातन्मनाः वनमन्वेषतीमार्गमाणा अनेनतन्मातृभयमपिप्रत्युक्तमितिज्ञायते २३ पुष्कलदक्षिणैःपुरुपुष्कलपूर्णमितिहलायुधः अनेनयज्ञानामुत्तमकल्पत्वंध्वनयति मातुस्मारिष्यसीत्यनेनसर्वं दारमरणपिमरणकालेविशेषतोमत्स्मरणंकुर्विंतिविधत्ते एष्यदर्थत्वादुभयोरिति ॥ २४ ॥ ततःकिमत्राह ततइति यतोनावर्ततेयातिरित्यनेनध्रुवस्यमुक्तेर्निपततत्वंध्वनयति ॥ २५ ॥ अति तरुणस्त्वा २६ सोपिध्रुवोपिसंकल्पजंसंकल्पाज्जातंविष्णोःपादसेवयोपसादितंप्राप्यसंकल्पनिर्वाणमितिज्ञाफलंप्राप्य ,२७ विदुरोमुक्तेरितरेपुरुषार्थेपुविरक्तेनभाव्यमितिजानन्नपितत्प्रकटनाय

श्रीभगवानुवाच ॥ वेदाहंतेव्यवसितंहृदिराजन्यबालक ॥ तत्प्रयच्छामिभद्रंतेदुरापमपिभूयसाम् १९ नान्यैरधिष्ठितंभद्रयद्भ्राजिष्णुध्रुवक्षिति ॥ यत्र ग्रहर्क्षताराणांज्योतिषांचक्रमाहितम् ॥ मेढ्यांगोचक्रवत्स्थास्नुपुरस्तात्कल्पवासिनाम् २० धर्मोग्निःकश्यपःशक्रोमुनयोयेवनौकसः ॥ चरंतिदक्षिणीकृ त्यभ्रमंतोयत्सतारकाः २१ प्रस्थितेतुवनंपित्रादत्त्वागांधर्मसंश्रयः ॥ षट्त्रिंशद्वर्षसाहस्रंरक्षिताऽव्याहतेंद्रियः २२ त्वद्भ्रातर्युत्तमेनष्टेमृगयायांतुतन्मनाः ॥ अन्वेषतीवनंमातादावाग्निंसाप्रवेक्ष्यति २३ इष्ट्वामांयज्ञहृदयंयज्ञैःपुष्कलदक्षिणैः ॥ भुक्त्वाचेहाशिषःसत्याअंतेमानुस्मरिष्यसि २४ ततोगंतासि मत्स्थानंसर्वलोकनमस्कृतम् ॥ उपरिष्टादृषिभ्यस्त्वंयतोनावर्ततेयतिः २५ ॥ मैत्रेयउवाच ॥ इत्यर्चितःसभगवानतिसृज्यात्मनःपदम् ॥ बालस्यप श्यतोधामजगामगरुडध्वजः २६ सोपिसंकल्पजंविष्णोःपादसेवोपसादितम् ॥ प्राप्यसंकल्पनिर्वाणंनातिप्रीतोभ्यगात्पुरम् २७ ॥ विदुरउवाच ॥ सुदुर्लभंयत्परमंपदंहरेर्मायाविनस्तच्चरणार्चनार्जितम् ॥ लब्ध्वाप्यसिद्धार्थमिवैकजन्मनाकथंस्वमात्मानममन्यतार्थवित् २८ मैत्रेयउवाच ॥ मातुःसप त्न्यावाग्बाणैर्हृदिविद्धस्तुतान्स्मरन् ॥ नैच्छन्मुक्तिपतेर्मुक्तिंतस्मात्तापमुपेयिवान् २९ ॥ ध्रुवउवाच ॥ समाधिनानेकभवेनयत्पदंविदुःसनंदादयऊर्ध्वरेतसः मासैरहंषड्भिरमुष्यपादयोश्छायामुपेत्यापहतःपृथङ्मतिः ३० अहोबतममानात्म्यंमंदभाग्यस्यपश्यत ॥ भवच्छिदःपादमूलंगत्वायाचेतदंतवत् ३१

पुनर्ध्वनि सुदुर्लभमिति मायाविनोभक्ताभीष्टफलप्रदानसामर्थ्यवतः । असिद्धार्थमसाधितप्रयोजनम् । अर्थवित्तत्तत्कालोचितप्रयोजनवेत्तीति २८ विदुषोपिसांसारिकोनिर्बंधोदुस्त्यजइतिभगवनेत बोधयन्परिहरति मातुरिति २९ अनेनभवनेतिभवपदभावृत्त्याव्याख्येयं तथाहि अनेकेषुभवेषुजन्मसुभवतिसमुत्पद्यतइतितेनाहममुष्यहरेःपादयोश्छायांमायापृथङ्मतिर्विषयबुद्धिस्तयादपहतास्मियत्कादि तद्दर्शनम् ३० राज्यभयादिनातापितस्यैवतस्यपश्चात्तापोद्रेकंवक्ति अहोबतेति अनात्म्यंजाड्यं अंतवदित्यनेनस्वस्यानित्याधिपत्यंसूचयति तदुक्तं आधिपत्यमनित्यंतुध्रुवलोकस्यपञ्चवे दतानावर्ततेयतिरित्युक्तिरपियुज्यतइत्याह नतुतत्स्थानगंतॄणांपतनंनास्तिनिवृत्तमोति आधिपत्यमनित्यंचेत्ततोनिवृत्त्यानकदापितस्यमुक्तिरित्यतआह तस्यापिमुक्तिर्नियतेति तर्हिंजानताविष्णुनेदं पदंकिमितिदत्तमितितत्राह नियतंचापितत्पदं तस्यक्षयत्वादुक्तमित्यर्थः तर्हिध्रुवेणकिमित्यानंदोतितत्राह तथापिकामनानिंद्याध्रुवेणमक्तात्त्वंर्तेति मुमुक्षुणाविषयाभिलाषोनकर्तव्यइतिशिक्षणार्थ मित्यर्थः कामनाविषयाभिलाषः । तस्यानिंदाधिकारः ३१

ज्ञा[illegible]स्तवकथंबुद्धिव्यामोहःप्राप्तइतितत्राह । मतिर्विदूषितेति नाधुनाप्यत्रमानंतइत्यादिनारदवचनम् ३२ एतदेवविशदयति दैवीमिति सर्वत्रनिर्मलत्वेनध्यातमानरयदेवस्यहरेर्विद्यमा नांमा[illegible]शक्तिमुपाश्रित्यस्पृष्टामसुप्तोऽज्ञानेशायितोयथाभिन्नहरयथावस्तुनपश्यति । विपरीतंपश्यतिच । तथाहमपिभ्रातायमुनमोभ्रातृव्यः शत्रुरितिहृद्रुजाहृदयभेदिरोगेणतप्ये स्वतंत्रस्या ऽन्य[illegible]द्वितीयसद्भावेसंतापःसंभावितइतिनेत्याह द्वितीयइति द्वितीयेस्वतंत्रेन्यस्मिन्नसत्यविद्यमानेपिसर्वस्यानन्येपमसर्वस्वयेणाद्वितीयत्वमीश्वरत्वंचब्रह्मादीशिनव्यस्यभावात्परमेश्वरत्वंहरेरेवयुक्तामि ति [illegible]मपिपदेनध्वनयति तदुक्तं द्वितीयस्यस्वतंत्रस्यत्वभावाद्दयमर्जितः ईश्वरस्यांशेनव्यस्यभावात्सनरमेश्वरइति ३३ ध्रुवलोकस्याधिपत्यस्यानित्यत्वात्सुतरांसिंहासनाधिष्ठानस्यसप्राप्यभिक्षण स्यर्थ[illegible]इत्याह मयैतदिति जगतामितिबहुवचनेनान्येषामाधिपत्यंश्लथयतिनेनद्वितीयस्वातंत्र्याभावोनिश्चीयतइतिज्ञातव्यम् ३४ अभीष्टपुरुषार्थदानसामर्थ्याभावान्नाभीक्षितामितिनमतव्यमित्याह भव[illegible]मिति भीभयसंचलनयोरितिधातोर्भयमात्रराहित्यंचेद्विवक्षितंलोकेप्यस्तीतिकिमित्यनुशोकइत्यतउक्तांविशिनष्टि तादात्म्यमिति तादात्म्यहरिनियतचित्ततयागृहवद्धारिप्रवेशलक्षणो मोक्षं तदुक्तं हरौनियतचित्तत्वाद्गृहवत्तत्प्रवेशनात् मोक्षंतादात्म्यमित्याहुर्नतुतद्रूपतःक्वचिदिति । नैकात्मतांमेस्पृहयतिकेचिदित्यत्रहरिणाकांक्षिताकांक्षितत्वमेवैकात्म्यम् । ननुतत्स्वरूप

मतिर्विदूषितादैवैर्यतद्भिरसहिष्णुभिः ॥ योनारदवचस्तथ्यंनाग्रहीषमसत्तमः ३२ दैवींमायामुपाश्रित्यप्रसुप्तइवभिन्नदृक् ॥ तप्येद्वितीयेप्यसतिभ्रातृभ्रातृव्यहृद्रुजा ३३ मयैतत्प्रार्थितंव्यर्थंचिकित्सेवगतायुषि ॥ प्रसाद्यजगदात्मानंतपसादुष्प्रसादनम् ३४ भवच्छिदमयाचेहंभवंभाग्यविवर्जितः ॥ तादात्म्यंयच्छतोमौढ्यान्मनोमेभिक्षितंबत ॥ ईश्वरात्क्षीणपुण्येनफलीकारानिवाधनः ३५ ॥ मैत्रेयउवाच ॥ नवैमुकुंदस्यपदारविंदयोरजोजुषस्तातभवादृशाजनाः ॥ वांछंतितद्दास्यमृतेर्थमात्मनोयदृच्छयालब्धमनःसमृद्धयः ३६ आकर्ण्यात्मजमायांतंसंपरेत्ययथागतम् ॥ राजानश्रद्दधेभद्रमभद्रस्यकुतोमम ३७ श्रद्धायवाक्यंदेवर्षेर्हर्षवेगेनधर्षितः ॥ वार्ताहर्तुरतिप्रीतोहारंप्रादान्महाधनम् ३८ सदश्वंरथमारुह्यकार्तस्वरपरिष्कृतम् ॥ ब्राह्मणैःकुलवृद्धैश्चपर्यस्तोमात्यबंधुभिः ३९ शंखदुंदुभिनादेनब्रह्मघोषेणवेणुभिः ॥ निश्चक्रामपुरात्तूर्णमात्मजाभीक्षणोत्सुकः ४० सुनीतिःसुरुचिश्चास्यमहिष्यौरुक्मभूषिते ॥ आरुह्यशिबिकेसार्धमुत्तमेनाभिजग्मतुः ४१

त्वम् हरीच्छितेच्छितैकात्म्यंनतेनैकस्वरूपतेतिवचनात् कामेनमेकामआगादित्युपास्तिसमयेप्रार्थनोक्तिश्च मेमनोव्रतदुःखानुभवयोग्यवस्तुभिक्षित क्षीणपुण्येनकारणेन अत्रदृष्टांतमाह फुल्कानीति फुल्कारतुच्छधान्यानिकुलित्थादीनिभक्तसिक्थानीव स्यात्पुलाकस्तुच्छधान्येसंक्षेपेभक्तसिक्थकइतियादवः ३५ मैत्रेयोध्रुवस्यानुशोकतात्पर्यमाह नवाइति तद्दास्यमित्यनेनतादात्म्यमित्येतद्विवृतमर्थतः अन्यपुरुषार्थंकुतोनवांछंतीतितत्राह यदृच्छयेति यदृच्छयाभगवदिच्छया आकांक्षामंतरेणापिमनोभीष्टानांप्राप्तत्वादित्यर्थः ३६ एवमस्तूत्तरकथाप्रसंगःकइतिवैदुरीशंकांपरिहरन्निवाहाकर्ण्येति ३७ नन्वभद्रस्यराज्ञः भाक्तनोद्वेषोनुमीयत अभद्रवचनंचौपचारिकंनिश्चायकप्रमाणाभावादितिशंकामाभूदित्याह श्रद्धायेति हर्षवेगेनहर्षोद्रेकेणधर्षितोविवशीकृतः महांतिधनानियस्यसतथा ॥ ३८ ॥ संतोभ्य[illegible]अमात्यस्यसतथातं पर्यस्तःपरिवृतः ३९ इदमपिराज्ञःस्नेहोद्रेकलक्षणमितिभावेनाह शंखेति ॥ ४० ॥ हरेःशक्तिरचिंत्येतिध्वनयन्सुनीतिसुरुच्योर्यात्रांचाह सुनीतिरिति रुक्महेमशिबिकेआंदोलिके ४१

१ अत्रात्मशब्देनमनोग्रहणम् । २ पुलाक पुलक इतिद्विरूपको० ।

दूरमदेशेदर्शनंसार्वजनीनंनस्यादितिहरिणापुरनिकटएवघटितमितिभावेनपुरोपवनसमीपेकुमारदर्शनंतदनंतरंराज्ञोमाननक्रियाविशेषंचाह तंदृष्ट्वेति ४२ अंगजंपुत्रं । विष्वक्सेनांघ्रीतिविशेषणेना लिंगनव्याजेनतत्स्पृष्टुरपिपापपरिहारःस्यादितिध्वनयति ४३ किमनेनालिंगनमात्रेणानंदातिरेकलक्षणाज्ञापकेनेत्यतस्तद्विशिनष्टि अथेति शांतैःसुशीतलैःसुखलक्षणतयाऽवसितैर्वा अतोह्यवसि तेमूर्ध्नुस्वभावेपरमात्मनीतियादवः शर्मतोषंचशंसुखमितिहलायुधः अनेनराज्याभिषेकमदूरेसूचयति एनमर्थंवध्वनयंस्तंविशिनष्टि आप्तेति आप्त प्राप्तः उद्दामउत्कृष्टोमनोरथोवीरासनादिल क्षणोयेनसतथातं ४४ भगवद्भक्तस्यापिरागद्वेषादिदोषोनास्तिकिमुतहरेरितीममर्थंध्वनयन्ध्रुवोपिपित्राद्युचितक्रियामाचरतीत्याहाभिवंद्येति मातरावित्युक्त्यापूर्वातिकरणकालुष्यंदूरीकृतमितिध्वन क्ति शीर्ष्णानिनामेत्यनेनपितुर्मातुर्गुरुत्वाधिक्यंसूचयति तदुक्तं दशाचार्यसमोभ्राताशतभ्रातृसमंपिता पितुर्दशशतमातागौरवेणातिरिच्यतइति सुरुच्यामुख्यमातृत्वाभावेपिसतस्वभावत्वेनभेदबुद्धिनं कृतेतिद्योतनायसज्जनाग्रणीरितिविशेषितम् ४५ ध्रुवप्रणामेसुरुच्याद्वेषंविहायकिमभ्यध्यायीतितत्राह सुरुचिरिति अर्भकमितिलुप्तोपमं अर्भकंपुत्रमिवेत्यनेनस्नेहविशेषान्ज्ञानगुरुत्वमगणय्यस

तंदृष्ट्वोपवनाभ्याशआयांतंतरसारथात् ॥ अवरुह्यनृपस्तूर्णमासाद्यप्रेमविह्वलः ४२ परिरेभेंगजंदोर्भ्यांदीर्घोत्कंठमनाःश्वसन् ॥ विष्वक्सेनांघ्रिसंस्प र्शहताशेषाघबंधनम् ४३ अथाजिघ्रन्मुहुर्मूर्ध्निशीतैर्नयनवारिभिः ॥ स्नापयामासतनयमाप्तोद्दाममनोरथम् ४४ अभिवंद्यपितुःपादावाशीर्भिश्चाभिमं त्रितः ॥ ननाममातरौशीर्ष्णासत्कृतःसज्जनाग्रणीः ४५ सुरुचिस्तंसमुत्थाप्यपादावनतमर्भकम् ॥ परिष्वज्याहजीवेतिबाष्पगद्गदयागिरा ४६ यस्यप्रसन्नोभगवान्गुणैर्मैत्र्यादिभिर्हरिः ॥ तस्मैनमंतिभूतानिनिम्नमापइवस्वयम् ४७ उत्तमश्चध्रुवश्चोभावन्योन्यंप्रेमविह्वलौ ॥ अंगसंगादुत्पुल कावस्रौघंमुहुरूहतुः ४८ सुनीतिरस्यजननीप्राणेभ्योपिप्रियंसुतम् ॥ उपगुह्यजहावाधिंयदंगस्पर्शनिर्वृता ४९ पयःस्तनाभ्यांसुस्रावनेत्रजैःसलिलैः शिवैः ॥ तदाभिषिच्यमानाभ्यांवीरवीरसुवोमुहुः ॥ ५० ॥ तांशशंसुर्जनाराज्ञींदिष्ट्यातेपुत्रआर्तिहा ॥ प्रतिलब्धश्चिरंनष्टोरक्षितामंडलंभुवः ५१ अभ्यर्चितस्त्वयानूनंभगवान्प्रणतार्तिहा ॥ यदनुध्यायिनोधीरामृत्युंजिग्युःसुदुर्जयम् ५२ लाल्यमानंजनैरेवंध्रुवंसभ्रातरंनृपः ॥ आरोप्यकरिणींहृष्टः स्तूयमानोविशत्पुरम् ५३

मुत्थाप्येतिज्ञापते ४६ ध्रुवस्यमरणमाकांक्षमाणासुरुचिःकथंजीवेतिवाण्युदस्थापीतितत्राह यस्येति मैत्र्यादिभिर्मैत्रीकरुणादिभिर्नमंतिप्रह्वीभवंति ४७ उत्तमस्यभ्रातृत्वेनध्रुवद्वेषाशंकादूरोत्सा दितेतिवयोरन्योन्यद्रेकनिमित्तक्रियामाह उत्तमश्चेति अस्रौघंवाष्पप्रवाहं ओघःपरंपरायांम्याज्जलस्रोतसिसंचयइतियादवः ४८ सूचीकटाहन्यायेनध्रुवेसुरुच्यादिप्रणयक्रियांप्रोच्याधुनासुनीतिविषयामा ह सुनीतिरस्येति ४९ अस्यजननीतिविशेषणंविशिनष्टि पयइति औरसपुत्रस्मरणादिनामातृस्तनयोःस्तन्यप्रस्रवणेनतज्जनकत्वानुमानसुलभमित्यर्थः वीरंपुत्रंसुवतीतिवीरसूःतस्याःवीरेपुत्रे यशसंवी रउत्तमामितिश्रुतिः ५० सुनीतिकथापिश्रोतॄणांपापप्रणाशिन्यपिभवतीतिभावेनतांविशिनष्टि तांशशंसुरिति दिष्ट्यारयान्मंगलादिद्विल्यभिधानात् दिष्ट्यापुण्येन ५१ पुण्यमपिविशिष्यंतीत्याह अ भ्यर्चितइति यदिप्रणतार्तिहरोहरिस्त्वयानाभ्यर्चितस्तर्हिचिरंनष्टःपुत्रोनप्रतिलब्धःस्यान्नतथातस्माद्भ्यर्चितइतितर्कः किंविशिष्टोभगवानितितत्राह यदनुध्यायिनइति अनेनतर्कस्याप्रतिपक्षतांदर्शय ति ५२ ध्रुवस्यजनलालनप्रक्रियांसंक्षिपुरिवमैत्रेयोराज्ञःपुरप्रवेशमाह लाल्यमानमिति कलभश्चैवकन्यानांकारिणीबालमगलइतिवचनात्कारिणीमित्युक्तं ५३

१ शीतैरितिपाठांतरं टीकायां शीतैःसुशीतलैरिति । २ गुरुत्वेनाधिःयम् ।

संवृत ए पुष्पबंधनसहितैस्तद्विधैः पुष्पबंधनसहितैः ५४ विलंबीनि चूतपल्लवादीनि येषु तेन तथा तैः प्रतिद्वारमुपसंस्कृतमलंकृतम् ५५ शातकुंभपरिच्छदैः सुवर्णालंकारैः श्रीमतां विमानानां शिखरा णां द्युतिभिरलंकृतं अनेन देवादीनां विमानानामागमनं सूचयति ५६ चत्वरश्चतुष्पथः रथ्या रथमार्गः आदिशब्देनातिर्यग्गाद्यवान्तरम् गृह्यते ५७ सिद्धार्था सितसर्षपाः ५८ तासां पुरस्त्रीणां वल्गूनि चारूणि गीतानि ५९ कशिपूत्तमे मंचोत्तमे भोजनाच्छादनादिना प्रेष्ठे वा ६० कशिपूत्तम इत्युक्तं प्रपंचयति पय फेननिभा इति दांता दंतनिर्मिताः रुक्मपरिच्छदाः सुवर्णपरिच्छदा उपर्या च्छादनवस्त्रादयो यासां तास्तथा उपस्कराः पात्राणि रौक्माणि सुवर्णनिर्मितानि ६१ रत्नं श्रेष्ठे च निर्दिष्टमिति हलायुधः ललनारत्नैः स्त्रीरत्नैः संयुताः शय्यादय आभांतीति तास्मिन्निति ॥ ६२ ॥ ६३ ॥

तत्रतत्रोपसंक्लृप्तैर्लसन्मकरतोरणैः ॥ संवृतैः कदलीस्तंभैः पूगपोतैश्च तद्विधैः ५४ चूतपल्लववासःस्रङ्मुक्तादामविलंबिभिः ॥ उपस्कृतं प्रतिद्वारमपां कुंभैः सदीपकैः ५५ प्राकारैर्गोपुरागारैः शातकुंभपरिच्छदैः ॥ सर्वतोलंकृतं श्रीमद्विमानशिखरद्युभिः ५६ मृष्टचत्वररथ्यादिमार्गं चंदनचर्चितम् ॥ लाजाक्षतैः पुष्पफलैस्तंदुलैर्बलिभिर्युतम् ५७ ध्रुवाय पथि दृष्टाय तत्रतत्र पुरस्त्रियः ॥ सिद्धार्थाक्षतदध्यंबुदूर्वापुष्पफलानि च ५८ उपजह्रुः प्रयुंजाना वात्सल्यादा शिषः सतीः ॥ शृण्वंस्तु वल्गुगीतानि प्राविशद्भवनं पितुः ५९ महामणिव्रातमये स तस्मिन्कशिपूत्तमे ॥ लालितो नितरां पित्रा न्यवसद्दिवि देववत् ६० प यःफेननिभाः शय्या दांता रुक्मपरिच्छदाः ॥ आसनानि महार्हाणि यत्र रौक्मा उपस्कराः ६१ यत्र स्फटिककुड्येषु महामारकतेषु च ॥ मणिप्रदीपा आभां ति ललनारत्नसंयुताः ६२ उद्यानानि च रम्याणि विचित्रैरमरद्रुमैः ॥ कूजद्विहंगमिथुनैर्गायन्मत्तमधुव्रतैः ६३ वाप्यो वैदूर्यसोपानाः पद्मोत्पलकुमु द्वतीः ॥ हंसकारंडवकुलैर्जुष्टाश्चक्राह्वसारसैः ६४ उत्तानपादो राजर्षिः प्रभावं तनयस्य तम् ॥ श्रुत्वा दृष्ट्वाद्भुततमं प्रपेदे विस्मयं परम् ६५ वीक्ष्योढवयसं पुत्रं प्रकृतीनां च संमतम् ॥ अनुरक्तप्रजं राजा ध्रुवं चक्रे भुवः पतिम् ६६ आत्मानं च प्रवयसमाकलय्य विशांपतिः ॥ वनं विरक्तः प्रातिष्ठद्विमृशन्नात्मनो गतिम् ॥ ६७ ॥ ॥ इतिश्रीभागवते महापुराणे चतुर्थस्कंधे दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ मैत्रेय उवाच ॥ प्रजापतेर्दुहितरं शिशुमारस्य वै ध्रुवः उपयेमे भ्रमिं नाम तत्सुतौ कल्पवत्सरौ १ इलायामपि भार्यायां वायोः पुत्र्यां महाबलः ॥ पुत्रमुत्कलनामानं योगेश्वरमजीजनत् २ उत्तमस्त्वकृतोद्वाहो मृ गयायां बलीयसा ॥ हतः पुण्यजनेनाद्रौ तन्माता तद्गतिं गता ३

६४ ध्रुवप्रभावो देवादीनामाश्चर्यबुद्धिजनकः किम्वितरेषामिति भावेनोत्तानपादांतःकरणप्रवृत्तिविशेषं वक्ति उत्तानपाद इति ६५ विस्मयफलमाह वीक्ष्येति ऊढवयसमित्यनेन राज्यपालनशक्तिं व्यनक्ति ६६ तदनु स्वयं किमकारीति तत्राह आत्मानं चेति आकलय्य ज्ञात्वा आत्मनः स्वस्य हरेश्च गतिं स्थितिं विमृशन्विचारयन्निति ६७ इतिश्रीभागवते चतुर्थस्कंधे विजयध्वजकृतटीकायां दशमोऽध्यायः १० ॥ अनन्तरं कैवल्यमोक्षप्रदं भगवत्प्रसादाय न तु किंतु बाह्याभ्यंतरशत्रुजयोपीत्यतस्तन्माहात्म्यं वर्ण्यते तत्रादौ ध्रुवविवाहादिप्रकार कथ्यते प्रजापतेरित्यादिना । तत्सुतौ तस्याश्रमे सुतौ कल्पो वत्सरश्च १ यो गेश्वरं भक्तियोगाद्यष्टांगयोगानामीश्वरं अनेन राज्यानिच्छुत्वात्पश्चादुक्तिरिति ज्ञायते २ राजपुत्र उत्तमः किमभूत् ध्रुवभ्रातृत्वेन तत्कथाया अपि श्रवणार्हत्वात्सापि वक्तव्येति तत्राह उत्तमस्त्विति तन्मा ता तस्योत्तमस्य माता सुरुचिस्तस्योत्तमस्य गतिं मरणत्वलक्षणां गतिं गता ३

अन्वयाकृतस्वभावेन ध्रुवेण किमकारीति तत्राह ध्रुवइति। कोपामर्षशुचार्पितः भागुरिन्यायेनास्य शब्दस्य पाठांतरत्वं साधु। पुण्यजनालयं अलकांपुरीं ४ पुररक्षकानाह रुद्रेति। हिमवतोगिरेर्द्रोण्यां निम्नप्रदेशे गुह्यकाः यक्षास्तैस्तैः संकुलां निबिडां स्तिमिताम् ५ उपदेव्यो यक्षस्त्रियः ६ उदतिष्ठन्निति वा पाठः ७ अहन् हतवान् ८ पत्रीरोपइषुर्द्वयोरित्यमरः ध्रुववीरकर्मस्तवनेन गुह्यकानां रजोवीरत्वमसूचि ९ तत्कर्म प्रशस्य गुह्यकैः किं पृष्ठतः प्रसुप्तमिति तत्राह तेपिचेति। युगपत्स भूपध्रुवकृतविक्रमात् द्विगुणं प्रकर्षेण कर्तुमिच्छंत एव न तु कर्तुं समर्थाः १० चित्रा नानावर्णा वाजाः पक्षा येषां ते चित्रवाजास्तैः ११ अयुतानां त्रयोदश लक्षादुपरि त्रिंशत्सहस्राणि प्राधान्य विवक्षयैतत् १२ तदा ध्रुवः किमभूत्तत्राह औत्तानपादिरिति आसारेण भगवता वर्षेण सततनिबिडवर्षधारयेत्यर्थः १३ मानवः मनोः पौत्रः सूर्यः ज्ञानिप्रियः सूर्यइव सूर्यो वा १४ नन्वत्र मग्नस्य श्वासनिरोधेन मरणं। जलं संस्तभ्यावस्थानमधोगमनमन्यत उन्मज्जनमिति पक्षेष्वेकः संभवति अन्यत उन्मज्जने पलायनापर

ध्रुवो भ्रातृवधं श्रुत्वा कोपामर्षशुचार्पितः ॥ जैत्रं स्यंदनमास्थाय गतः पुण्यजनालयम् ४ गत्वोदीचीं दिशं राजा रुद्रानुचरसेविताम् ॥ ददर्श हिमवद्द्रोण्यां पुरीं गुह्यकसंकुलाम् ५ दध्मौ शंखं महाबाहुः खं दिशश्चानुनादयन् ॥ येनोद्विग्नदृशः क्षत्तरुपदेव्योऽत्रसन्भृशम् ६ ततो निष्क्रम्य बलिन उपदेवमहाभटाः ॥ असहंतस्तन्निनादमभिपेतुरुदायुधाः ७ स तानापततो वीर उग्रधन्वा महारथः ॥ एकैकं युगपत्सर्वानहन्बाणैस्त्रिभिस्त्रिभिः ८ ते वै ललाटलग्नैस्तैरिषुभिः सर्व एव हि ॥ मत्वा निरस्तमात्मानमाशंसन्कर्म तस्य तत् ९ तेपि चामुममृष्यंतः पादस्पर्शमिवोरगाः ॥ शरैरविध्यन्युगपद्द्विगुणं प्रचिकीर्षवः १० ततः परिघनिस्त्रिंशैः प्रासशूलपरश्वधैः ॥ शक्त्यृष्टिभिर्भुशुंडीभिश्चित्रवाजैः शरैरपि ११ अभ्यवर्षन्प्रकुपिताः सरथं सहसारथिम् ॥ इच्छंतस्तत्प्रतीकर्तुमयुतानां त्रयोदश १२ औत्तानपादिः स तदा शस्त्रवर्षेण भूयसा ॥ नोपादृश्यत संछन्न आसारेण यथा गिरिः १३ हाहाकारस्तदैवासीत्सिद्धानां दिवि पश्यताम् ॥ हतोयं मानवः सूर्यो मग्नः पुण्यजनार्णवे १४ नदत्सु यातुधानेषु जयकाशिष्वथो मृधे ॥ उदतिष्ठद्रथस्तस्मान्नीहारादिव भास्करः १५ धनुर्विस्फूर्जयन्दिव्यं द्विषतां खेदमुद्वहन् ॥ अस्त्रौघं व्यधमद्बाणैर्घनानीकमिवानिलः १६ तस्य ते चापनिर्मुक्ता भित्त्वा वर्माणि रक्षसाम् ॥ कायानाविविशुस्तिग्मा गिरीनशनयो यथा १७ भल्लैः संछिद्यमानानां शिरोभिश्चारुकुंडलैः ॥ ऊरुभिर्हेमतालाभैर्दोर्भिर्वलयवल्गुभिः १८ हारकेयूरमुकुटैरुष्णीषैश्च महाधनैः ॥ आस्तृतास्ता रणभुवो रेजुर्वीरमनोहराः १९ हतावशिष्टा इतरे रणाजिराद्रक्षोगणाः क्षत्रियवर्यसायकैः ॥ प्रायो निकृत्तावयवा विदुद्रुवुर्मृगेंद्रविक्रीडितयूथपा इव २०

पर्याये जैत्रं स्यंदनमित्येतदनुपपन्नः स्यादतः किमभूदिति तत्राह नदत्स्विति अथ मज्जनानंतरमेव ध्रुवरथस्तस्माद्युद्धादुदतिष्ठदित्यन्वयः जलमग्नस्य सूर्यस्यान्यत उन्मज्जनं भवतीति मत्वा यत्र निमज्जनं तत्रोन्मज्जनं तद्दृष्टांतत्वेन नीहारादिति १५ द्विषतामस्त्रौघं व्यधमन्नष्टमकरोत् १६ एकत्र प्रयोगेण यक्षाणां गात्रधमनं तेषां चर्मभेदनं शरीरच्छेदनं चेति कार्यत्रयमभूदित्याह तस्यत इति पविरशनिः शतधारकुलिशं दंभोलिरिति हलायुधः दंभोलिरशनिर्द्वयोरित्यमरः १७ वीररसमाह भल्लैरिति भल्लैरर्धचंद्राकारैर्वराहशरैर्वा हेमतालाभैः सुवर्णतालसमानैरूरुभिरुत्संगैः १८ १९ कापि सर्वनाशो न दृष्टः श्रुतश्चेति किं वदंतीमनुसृत्याह हतेति मृगेंद्रेण सिंहेन विगतक्रीडोपक्रमा यूथपा गजाः २०

अस्यामवस्थायांपुरींप्रविश्यतत्सर्वमपहृत्यगमनंतत्रावस्थानंवेत्युभयस्मादेकंप्राप्तंतत्र ध्रुवेणकिमकारीत्याशंक्योभयमपिनकृतंमायिजनकुचेष्टाशकयेतिभावेनाह अपश्यमानइति । तथाहि जनोमायिनांचि
कीर्षितंनवेदनजानाति । पदतइति २१ इदंचिंतनमुतवाचिकमितिनज्ञायतेइति अतोविविनक्ति इतिब्रुवन्निति प्रतियोगेनपुनरुद्यमेनशंकित· जलधेरुत्पन्नमिव नभस्वतावायुनेरितंप्रेरितम् २२ पुनः
किंकिंकाकरमभूदितिप्रपंचयति क्षणेनेत्यादिना छादितंछन्नं विस्फुरंत्यस्तडितोयस्मिंस्तथातेनस्तनयित्नुनागर्जितेन ॥ २३ ॥ वव्रुपुर्मेघाइतिशेषः कबंधानिशिरोरहितशरीराणि ॥ २४ ॥
अश्मवर्षिणोगिरेर्गदादीनिसर्वतोदिशंनिपेतुः ॥ २५ ॥ दृषद्वरलयोरश्मत्वेश्मधाममत्वेशयोरित्यभिधानात् अश्मवर्षिणइत्यहिविशेषणंवा अहयश्चनिपेतुरशनिर्मेघवह्निज्वालातद्वन्निःश्वासो
येषांतेतथा २६ ह्रादोनादः २७ अमनस्विनांमनोबलरहितानां तिग्मगतयस्तीक्ष्णप्रवृत्तय आसुर्याअसुरजनप्रियया ॥ २८ ॥ स्वकर्तव्यतयामुनयोभगवत्प्रसादेनसर्वत्राजितायध्रुवायाहित

अपश्यमानःसतदाततायिनंमहामृधेकंचनमानवोत्तमः ॥ पुरींदिदृक्षन्नपिनाविशद्द्विषांनमायिनांवेदचिकीर्षितंजनः २१ इतिब्रुवंश्चित्ररथःस्वसारथिं यत्तःपरेषांप्रतियोगशंकितः ॥ शुश्रावशब्दंजलधेरिवेरितंनभस्वतादिक्षुरजोऽन्वदृश्यत २२ क्षणेनाच्छादितंव्योमघनानीकेनसर्वतः ॥ विस्फुरत्तडिता दिक्षुत्रासयंस्तनयित्नुना २३ ववृषूरुधिरौघासृक्पूयविण्मूत्रमेदसः ॥ निपेतुर्गगनादस्यकबंधान्यग्रतोनघ २४ ततःखेऽदृश्यतगिरेर्निपेतुःसर्वतोदिशम् ॥ गदापरिघनिस्त्रिंशमुशलाअश्मवर्षिणः २५ अहयोऽशनिनिःश्वासावमंतोऽग्निंरुषाक्षिभिः ॥ अभ्यधावन्गजामत्ताःसिंहव्याघ्राश्चयूथशः ॥ २६ समुद्रऊर्मिभिर्भीमःप्लावयन्सर्वतोभुवम् ॥ आससादमहाह्रादःकल्पांतइवभीषणः २७ एवंविधान्यनेकानित्रासनान्यमनस्विनाम् ॥ ससृजुस्तिग्मगतयआसुर्यामाययासुराः २८ ध्रुवेप्रयुक्तामसुरैस्तांमायामतिदुस्तराम् ॥ निशाम्यतस्यमुनयःशमशंसन्समागताः २९ मुनयऊचुः ॥ औत्तानपादेभगवांस्तवशार्ङ्गधन्वादेवःक्षिणोत्ववनतार्तिहरोविपक्षान् ॥ यन्नामधेयमभिधायनिशम्यचाद्धालोकोंजसातरतिदुस्तरमंगमृत्युम् ३० ॥ मैत्रेयउवाच ॥ निशम्यवदतामेवंऋषीणांधनुषिध्रुवः ॥ संदधेऽस्त्रमुपस्पृश्ययन्नारायणनिर्मितम् ३१ संधीयमानएतस्मिन्मायागुह्यकनिर्मिताः ॥ क्षिप्रंविनेशुर्विदुरक्लेशाज्ञानोदयेयथा ३२ तस्यार्षास्त्रंधनुषिप्रयुंजतःसुवर्णपुंखाःकलहंसवाससः ॥ विनिःसृताआविविशुर्द्विषद्बलंवनंयथाभीमरवाःशिखंडिनः ३३

मुपदिशंतीत्याह । ध्रुवइति संसुखं समभेदेसमीचीनेसुष्ठुपूजासुखेषुचेतियादवः । पपौशसावितिप्राच्याइतिसूत्राद्धासंसुखमितिज्ञायते ॥ २९ ॥ यन्नामधेयमभिधायेत्यनेनभगवन्नामस्मृत्वाभि
प्रायपुद्ध्यतस्तवशत्रुजयःस्यादित्युपदिष्टमितिज्ञातव्यम् ३० असुरमायाविनाशेसमर्थनारायणास्त्रमितिजानन्ध्रुवोमुनिभिरपितदेवोपदिष्टमितिनिरूप्यतदस्त्रंधनुषिसंदधइत्याह निशम्येति ॥ ३१ ॥
तस्यास्त्रस्यमाहात्म्यमचिंत्यमितिभावेनाह संधीयमानइति अविद्यास्मितरागद्वेषाभिनिवेशाःक्लेशाः ३२ आर्षास्त्रंऋषिच्छदादेवतासहितास्त्रज्ञानात्त्रंवा ऋषिज्ञानइतिधातोः सुवर्णालंकृताः
पुंखाःज्यानुसंधानप्रदेशायेषांतेसुवर्णपुंखाः वसआच्छादनइतिधातोः वासःशब्देनपक्षालक्ष्यंतेकलहंसानांवासांसिपक्षाइवपक्षायेषांतेकलहंसवाससः शिखंडिनोमयूराः भीमोभयंकरोरवोनादो
येषांतेतथा ३३

पुण्यजनानांवीररसमाह तैरिति तिग्मधारैरुग्राग्रैःशिलीमुखैःशरैःसुपर्णंगरुडं उन्नद्धफणाउद्धृतफणाः ३४ अर्कमंडलंनिर्भिद्य यंलोकंव्रजंतितंपरंलोकंनिनायेत्यन्वयः ॥ ३५ ॥ किमेवंध्रुवः सर्वाननवशिष्टानकरोदित्यस्योपयोगिकथांतरमाह तान्हन्यमानानिति अनागसोवधयोग्यापराधरहितान् चित्ररथेनध्रुवेण ३६ आगत्यनिःशेषंहननेत्युक्तंकिंनेत्याह अलमिति तमोद्वारेणयथा र्थज्ञानप्रतिबंधकत्वेननरकद्वारेण । पाप्मनापापहेतुना ३७ किंच धर्मशास्त्रानुवर्तिनामस्माकंकुलधर्मोनभवत्ययमित्याह नास्मदिति अकृतैनसामितिपदम् ३८ अकृतापराधत्वंकथंभ्रातृ वधलक्षणापराधकरणादिदितित्राह नन्विति नन्वेवार्थेवर्तते अपराधेनेतिसंबध्यते ३९ तस्यापराधिनःसगात्तदपरित्यागात्तेप्यपराधिनइतिसूक्ष्मदर्शनंभागवतानांनोपपन्नमित्याह । नायमिति आत्मानंमनोऽसंगृह्यानियम्यपशुवन्मूढवत् ॥ ४० ॥ इतोप्येकापराधेन बहूनांवधोनयुक्तःसर्वप्राणिनामंतर्यामित्वेनहरिमुपास्यप्राप्ततत्प्रसादत्वादित्याह सर्वभूतेति सर्वभूतानामात्मभावेनां

तैस्तिग्मधारैःप्रधनेशिलीमुखैरितस्ततःपुण्यजनाउपद्रुताः ॥ तमभ्यधावन्कुपिताउदायुधाःसुपर्णमुन्नद्धफणाइवाहयः ३४ सतान्पृषत्कैरभिधावतो मृधेनिकृत्तबाहूरुशिरोधरोदरान् ॥ निनायलोकंपरमर्कमंडलंव्रजंतिनिर्भिद्ययमूर्ध्वरेतसः ३५ तान्हन्यमानानभिवीक्ष्यगुह्यकाननागसश्चित्ररथेनभू रिशः ॥ औत्तानपादिंकृपयापितामहोमनुर्जगादोपगतःसहर्षिभिः ३६ ॥ मनुरुवाच ॥ अलंवत्सातिरोषेणतमोद्वारेणपाप्मना ॥ येनपुण्यजनानेतान वधीस्त्वमनागसः ३७ नास्मत्कुलोचितंतातकर्मैतत्सद्विगर्हितम् ॥ वधोयमुपदेवानामारब्धस्तेऽकृतैनसाम् ३८ नन्वेकस्यापराधेनतत्संगाद्बहवोहताः ॥ भ्रातुर्वधाभितप्तेनत्वयांगभ्रातृवत्सल ३९ नायंमार्गोहिसाधूनांहृषीकेशानुवर्तिनाम् ॥ यदात्मानमसंगृह्यपशुवद्भूतवैशसम् ४० सर्वभूतात्मभावेनभूता वासंहरिंभवान् ॥ आराध्यापदुराराध्यंविष्णोस्तत्परमंपदम् ४१ सत्त्वंहरेरनुध्याततत्पुंसामपिसंमतः ॥ कथंत्ववद्यंकृतवाननुशिक्षन्सतांव्रतम् ४२ ति तिक्षयाकरुणयामैत्र्याचाखिलजंतुषु ॥ समत्वेनचसर्वात्माभगवान्संप्रसीदति ४३ संप्रसन्नेभगवतिपुरुषःप्राकृतैर्गुणैः ॥ विमुक्तोजीवनिर्मुक्तोब्रह्मनिर्वा णमृच्छति ४४ भूतैःपंचभिरारब्धैर्योषित्पुरुषएवहि ॥ तयोर्व्यवायात्संभूतिर्योषित्पुरुषयोरिह ४५

सर्वान्तर्यामित्वेनभूतेषुप्राणिष्वावासोयस्यसतथा भूतान्यावसंत्यस्मिन्नितिवातम् ४१ प्राप्तपदत्वादद्यहरिणाकिमितिभावोनतवास्तीत्याह सत्त्वमिति त्वमपहरेःपुंसांभक्तानांसंमतः ततःकिंतत्राह कथमिति ४२ किंततसतांव्रतंतेनकिंफलंतत्राह तितिक्षयेति शत्रुपुशत्रुत्वदर्शनमुहृत्सु सुहृत्त्वदर्शनंसमत्वम् ४३ तत्प्रसादफलमाह संप्रसन्नइति ततः किंतत्राह जीवेति जीवन्त्वाभिमानाद्वितरामुक्तोभव ति तत्फलमाह ब्रह्मेति नित्यनिर्मुक्तशरीरःपरमानंदंवाब्रह्मऋच्छत्यप्राप्नोतीत्यन्वयः । ब्रह्मनिर्वाणंब्रह्मणिनाशमृच्छतीत्यशीकार्गमुक्ते गत्यभावत्वेननकेनाप्यर्थेनवस्थान् ४४ सृष्टिप्रकारज्ञानेत त्सोविरक्त्याप्रकृतिबंधहानेच्छास्यादतस्तामाह भूतैरिति पुरुषोयोपिच्चेनिभावः पंचभिःपृथिव्यादिभूतैरारब्धःसृष्टः अतःपरंकथमारभइत्यतआह तयोरिति इहजीवराशौतयोर्योषित्पुरुषयोर्व्यवा येनमैथुनधर्मेणसंभूतिःकरचरणादिविभागलक्षणंजन्मभवति सामित्यनेनपृथिव्यादिसंयोगेनजन्मसूचयति ४५

नकेवलमादिसर्गः किंतूत्तरत्राप्येवमेवेत्याह एवमिति स्थितिसंहारयोः सर्गविपरीतत्वात्कथं सर्गवदित्युच्यतइत्यत्राह गुणव्यतिकरादिति रजआदिगुणानांविषमसमावस्थाभेदकारणात् परप्रेरणामंतरे णकेभ्योगुणेभ्यएवंप्रवृत्तिःकथमत्राह माययेति। परमात्मनोमाययेच्छयाप्रेरितेभ्यइतिशेषः। इदमत्राकूतम्। रजोगुणकार्यभूतारब्धदेहाच्चेतनाधिष्ठितात्सर्गः पालकसत्त्वगुणकार्यभूतारब्धदेहात्स्थितिः तमोगुणकार्यभूतारब्धदेहात्संयमइतिच एतत्सर्वमीश्वरेच्छाधीनमिति ४६ एतदेवविशिनष्टि निमित्तमात्रमिति । यत्रयस्येश्वरस्यसन्निधाने । व्यक्ताव्यक्तकार्यकारणात्मकमिदंविश्वंभ्रम तिचेष्टते किमिव अयस्कांतस्यसन्निधानेलोहंसर्वंयथातथाम निर्गुणःसत्त्वादिगुणशक्त्यनुग्रहनशक्तिरात्मापरमात्मानत्रसृष्ट्यादौनिमित्तमात्रंननूपादानकारणम् ४७ तर्हिमुख्यकर्तृत्वंहरेर्गतमत्रा ह सखल्विति खलुशब्दोन्यकारणशक्तिनिषेधार्थः । सभगवान्योगशक्त्यागुणप्रवाहेषुसृष्ट्यादिषुतत्तत्क्रियानुसारेणविभक्तवीर्योविभक्तमाहात्म्यः अक्लिष्टकर्तृत्वादकर्तैवजगत्करोति अहतैवशत्रु भावरहितत्वान्निहंतिसंहरति । अनेनहरेःसमत्वभंगोनिरस्तइति एकस्यविरुद्धकर्तृत्वंकथमित्यतउक्तं चेष्टेति दुर्विभाव्याज्ञातुमशक्याऽस्माहशैरितिशेषः कर्तृत्वसामान्यनिषेधः हरिरक्लिष्टकारित्वा दयस्कांतवदुच्यते कामकर्मस्वभावेषुकालेचावस्थितोहरिः सर्वकारणभूतःसंस्तत्तन्नाम्नाभिधीयतइतिवाक्यविरुद्धस्यादितिनायमर्थः शोभते ४८ दुर्विभाव्यत्वमाह सोनंतइति यएवंविधःसहरिरस्य विश्वस्यांतकरःस्वयमनंतःस्वमारकमृत्युरहितः अंतोह्यवसितेमृत्यावितियादवः देवदत्तवत्स्वयंदंडमादायहंतिकिंनेत्याह कालइति आयुरादिफलपाचकत्वात् पूर्वापरत्वविशेषोपिनास्तीत्याह

एवंप्रवर्ततेसर्गःस्थितिःप्रलयएवच ॥ गुणव्यतिकराद्राजन्मायायापरमात्मनः ४६ निमित्तमात्रंतत्रात्मानिर्गुणःपुरुषर्षभः ॥ व्यक्ताव्यक्तमिदंविश्वंयत्रभ्रमति लोहवत् ४७ सखल्विदंभगवान्योगशक्त्यागुणप्रवाहेषुविभक्तवीर्यः ॥ करोत्यकर्तैवनिहंत्यहंताचेष्टाविभूम्नःखलुदुर्विभाव्या ४८ सोनंतोंतकरःकालो नादिरादिकृदव्ययः ॥ जनंजनेनजनयन्मारयन्मृत्युनात्मनः ४९ नवैस्वपक्षोस्यविपक्षएववापरस्यमृत्योर्विशतःसमंप्रजाः ॥ तंधावमानमनुधावंत्यनी शायथारजांस्यनिलंभूतसंघाः ५० आयुषोपचयंजंतोस्तथैवोपचयंविभुः ॥ उभाभ्यांरहितःस्वस्थोदुःस्थस्यविदधात्यसौ ५१ केचित्कर्मवदंत्येनंस्व भावमपरेनृप ॥ एकेकालंपरेदैवंपुंसःकाममुतापरे ५२ अव्यक्तस्याप्रमेयस्यनानाशक्त्युदयस्यच ॥ नवैचिकीर्षितंतातकोवेदाद्धास्यसंभवम् ५३

अनादिरिति नकेवलमंतकरःकिंत्वादिकृच्च। चौरवत्संवृतोनकरोत्यतोऽव्ययइति । अव्ययोऽसंवृतःनिमित्तमात्रत्वंस्पष्टयन्नुक्तमेवद्रढयति जनमिति जनेनपित्रादिशरीरेणजनंपुत्रादिशरीरंजनयन्नात्मनो ऽधीनेनमृत्युनाकालरूपेणमारयन्शरीरवियोगंकारयन्वर्ततइत्यन्वयः ४९ एवंप्रवर्तमानस्यनैर्घृण्यादिदोषापत्तिर्नास्तिसमत्वादित्याह नवाइति वाइत्यनेनावैषम्यादिसूत्रप्रसिद्धिंदर्शयति समंपुण्यपा पानुसारेण। मृत्योःपरस्यविलक्षणस्य । रुद्रादीनांमारकत्वादिकमेतत्कटाक्षोपक्षिप्तमितिभावेनाह तंधावमानमिति ५० आयुरादिफलपाचकत्वेनांतादिकरइत्युक्तंस्पष्टयति आयुषइति ५१ बहवः कालकर्मादिकमस्योत्पत्त्यादेःकारणमितिसंगिरंते । तत्पदार्थतात्पर्यापरिज्ञानादितिसंतोष्टव्यं यतस्तत्तद्वस्तुषुस्थित्वातत्तत्क्रियार्थंप्रवर्तकत्वेनतत्तन्नाम्नायमेवोच्यतइतिभावेनाह केचिदिति केचि न्मीमांसकाः अपरेचार्वाकादयः एकेपौराणिकादयः परेमौहूर्तिकाः अपरेवात्स्यायनकोविदाः कामकर्मस्वभावेष्वितिवचनात् अयमेवनिर्धीयतइति ५२ कामकर्मादिशब्दानांकथनिर्वचनंयेनते षांभगवद्विषयत्वंज्ञायतइतितत्राह अव्यक्तस्येति प्रत्यक्षादिप्रमाणाविषयश्चेत्शून्यकल्पोयमित्यतउक्तं नानाशक्तीति कर्मादिनानाशक्तीनामुदयोयस्मात्सतथोक्तस्तस्य अनेनपारिशेष्यप्रमाणसिद्धिं सूचयति चिकीर्षितंकर्तुमिष्टंकर्म । अस्यसंभवमुत्पत्तिं निरुक्तिप्रकारंचकोत्रज्ञास्यतीतिचेत्सोप्यद्धानजानातीत्यर्थः ५३

एवंसर्वत्रहरेःस्वातंत्र्यमुपपाद्यफलितमाह नैवेति विसर्गादानयोर्मरणजन्मनोः विसर्गस्यादानस्यांगीकारस्यचेतित्रा हिशब्दोहेतौ ५४ किंनदैवमित्यतोयज्जगत्कारणंब्रह्मतदेवात्रोक्तमितिसृष्ट्यादिवि
शेषणैर्विशिनष्टि सएवेति कर्दमक्षेत्रप्रवृत्तदेवदत्तवदस्यगुणकर्मलेपोनास्ति अहंकर्तेत्यभिमानाभावादित्याह अथापीति ५५ अनेनापिगुणकर्मलेशःकथमुद्घाटितइतितत्राह एषइति स्वशक्त्या
स्वाधीनयास्वरूपशक्त्यावा ५६ कार्यपदप्रयोगाभावान्नेदमनुष्ठानुयोग्यमित्याशंक्यैवंविधंदैवमितिगुणांतरसमर्पणेनोपसंहरति तमेवेति अमृतंनित्यमुक्तं नासिनासिकया यंत्रबधनइतिधातुः दाम्ना
यंत्रिताबद्धाः ५७ श्रीनारायणप्रसादेनावाप्तसमस्तसंपदस्तववतन्निपतभूतद्रोहोनघटतइतिभावेनाह यःपंचवर्षइत्यादिना सर्वप्राणिनःप्रतिप्रतिगतमक्षीण्यिंद्रियंयस्यसतथातं अनेनप्रयाक्रियमा
णंकर्मनासौपश्यतीत्येतत्परिहृतम् ५८ विमुक्तविग्रहैर्योगिभिर्व्यपाश्रितानिषेवित अनेनभूतविग्रहोम्यपिप्रियोनभवतीत्युक्तं निर्गुणमावृत्तिशून्यं कुपितत्वात्पुनःप्रसादानभिमुखमित्यर्थः भूतद्रोहेक्रुद्ध
स्यास्यतपसापिपुनःप्रसादापादनंदुष्करंतवेतिध्वनितं अनेनशब्दाद्यविषयंवावागादिनापिप्रसादयितुदु'शकमित्यर्थः कुतःनिर्गुणमतींद्रियमिंद्रियाविषयत्वादित्यर्थः । गुणस्त्वावृत्तिशब्दादिज्येंद्रियासु
स्यतंतुष्विंतियादवः । एककेवलमक्षरंमूलकारणं आत्मानंपरमात्मानं विशिष्टामुक्तिर्यस्मात्सतथातं एवंगुणविशिष्टंहरिमात्मनिहृद्यन्विष्यालोक्यभजस्वेत्यन्वयः तत्स्वरूपंकीदृशमितिनप्रश्ना

नैवतेपुत्रकभ्रातुर्हंतारोधनदानुगाः ॥ विसर्गादानयोस्तातपुंसोदैवंहिकारणम् ५४ सएवविश्वंसृजतिमएवावतिहंतिच ॥ अथापिह्यनहंकारान्नाज्यतेगुण
कर्मभिः ५५ एषभूतानिभूतात्माभूतेशोभूतभावनः ॥ स्वशक्त्यामाययायुक्तःसृजत्यत्तिचपातिच ५६ तमेवमृत्युममृतंतातदैवंसर्वात्मनोपैहिजगत्परा
यणम् ॥ यस्मैबलिंविश्वसृजोहरंतिगावोयथावैनसिदामयंत्रिताः ५७ यःपंचवर्षोजननींत्वंविहायमातुःसपत्न्यावचसाभिन्नवर्मा ॥ वनंगतस्तपसाप्रत्य
गक्षमाराध्यलेभेमूर्ध्निपदंत्रिलोक्याः ५८ तमेवमंगात्मनिमुक्तविग्रहैर्व्यपाश्रितंनिर्गुणमेकमक्षरम् ॥ आत्मानमन्विष्यविमुक्तमात्मदृग्यस्मिन्निदंभिन्नम
सत्प्रतीयते ५९ त्वंप्रत्यगात्मनिसदाभगवत्यनंतआनंदमात्रउपपन्नसमस्तशक्तौ ॥ भक्तिंविधायपरमांशनकैरविद्याग्रंथिंविभेत्स्यसिममाहमितिप्ररूढाम्
६० संयच्छरोषंभद्रंतेप्रतीपंश्रेयसांपरम् ॥ श्रुतेनभूयसाराजन्नगदेनयथामयम् ६१ येनोपसृष्टात्पुरुषाल्लोकउद्विजतेभृशम् ॥ नबुधस्तद्वशंगच्छेदिच्छ
न्नभयमात्मनः ६२ हेलनंगिरिशभ्रातुर्धनदस्यत्वयाकृतम् ॥ यज्जघ्निवान्पुण्यजनान्भ्रातृघ्नानित्यमर्षितः ६३

हइतिभावेनोक्तं आत्मदृगिति पूर्वमात्मानंदृष्टवानितियत्तस्मात्कथमित्यतउक्तं यस्मिन्निति असदस्वतंत्रंभिन्नंपंचविधभेदोपेतमिदंचेतनाचेतनात्मकंविश्वंयस्मिन्यदाधारतयाप्रतीयतइति ५९ ननु
आत्मदर्शिनोममसंसारपाशच्छेदःकिमितिनाभूदित्यतस्ताहृग्गुणानुपसंहृत्यबिंबोपास्त्यभावादतस्तथोपास्तौसस्यादितिभावेनतदुपास्तिप्रकारंविदधानआह त्वंप्रत्यगात्मनीति प्रत्यगात्मनितवा
भिमुखेबिंबरूपेभक्तिमुपास्तिलक्षणांसर्वा अन्यत्रानुपपन्नाअत्रोपपन्नाअविरुद्धाःसमस्ताअस्थूलानण्वादिलक्षणाःशक्तयोयत्रसतथातस्मिन् ॥ ६० ॥ तत्रप्रथमसाधनमिदमित्याह संयच्छेति ६१
श्रेयसांप्रतीपत्वंकथमत्राह येनेति येनरोषेणोपसृष्टाद्धुपरक्तात्सज्जनानुग्रहस्यापेक्षितत्वाल्लोकोज्ञानिजनोत्रोच्यते लुक्भ्रकाशइतिधातोः ६२ वैश्रवणस्यसत्स्वेकत्वेनास्यावज्ञाननिमित्तरोषोपिपरिहरणी
यइत्याह हेलनमित्यादिना वैश्रवणेहेलनमपिशिवावज्ञानंस्यात्तदवज्ञानंनश्रीनारायणविषयज्ञानमपिनोदेतीत्यभिप्रायेणोक्तं गिरिशभ्रातुरिति अतएवमहतामितिबहुवचनम् ६३

१ गिरिशोभ्राताभरणशीलःपालकःसखापिवायस्येतिनथा । डुभृञ्धारणपोषणयोः । दी० ।

६४ ध्रुवस्यचसत्त्वमत्वात् ध्रुवं नुशासनानुज्ञानं तथा मनोक्ष्यपौत्रं नभिनंद्य स्वपुरगमनं वक्ति इत्युक्तइति शोचतइत्यनेन यद्वैरानुगधानेन ध्रुवेण तष्णीस्थितं भ्रातृमातृमरणप्रतिक्रियां कर्तुं समर्थेनापीति जेनश्रु शिपीरहेतुर्भियक्षवधेमवृत्तमिति ध्वनयति ६५ ६६ इतिश्रीभागवतेचतुर्थस्कंधेविजयध्वजकृतटीकायामेकादशोऽध्यायः ॥ ११ ॥ ७ ॥ ॥ साधनसामग्र्यां भगवत्प्रसादात्स्वरूपानंदानुभवलक्षणो मोक्षोपि तत्तद्योग्यतानुसारेण प्राप्यतेपुरुषैरितिनिर्दिश्यतेऽस्मिन्नध्याये तत्रादौ ध्रुवकृतापराधं क्षांत्वा वैश्रवणेन ध्रुवायवरप्रदानप्रकारं वक्ति ध्रुवंनिवृत्तमित्यादिना वैशसाद्युद्धात् १ परितोषहेतुमाह य स्त्वमिति २ स्वस्यमनोऽभीष्टकमर्थं व्यनक्ति नभवानिति अप्ययभावयोर्मरणजन्मनोः ३ नन्वहं मच्छत्रूनवधिषं नन्वमेतद कार्षीरिति मद्दर्शनं कथमत्राह अहंत्वमिति पुरुषस्यपरमेश्वरस्यकर्तृत्वाज्ञाना दहंत्वं कर्तेतिधीरपार्था भ्रांता भाति नाहं कर्ता न कर्ता त्वं कर्तायस्तु स्वयं प्रभुरित्यनेन परमेश्वरकर्तृत्वस्य प्रामाणिकत्वप्रतीतेः । कथमिव स्वाप्नीव यथा स्वप्ने जाग्रत्त्वबुद्धिः । आत्मन्यविद्यमानकर्तृत्वाभिमाना दनर्थोपि स्यादित्याह अनुध्यानादिति अनुध्यानात्पुनःपुनरात्मनि कर्तृत्वस्मरणाद्यया कर्तृत्वधियासुखादिरूपस्यात्मनोबंधेन पुत्रमित्रादिस्नेहबंधेन विपर्ययो दुःखादिर्भवतीत्यतस्तादृशी बुद्धिस्त्वया नकार्येतिभावः ४ ननु जीवकृतकार्योपक्रमोपसंहारदर्शनात्कथं तस्य जीवस्य कर्तृत्वाभाव इत्याशंक्य कर्तृत्वादौ नियमाभावात्तद्दत्तमेव कर्तृत्वं न मम स्वतंत्रकर्तृत्वमिति निश्चित्य तत्क्रियाविशिष्टं भगवंतं भजस्वे

तं प्रसादयवत्साशु सन्नत्याप्रश्रयोक्तिभिः ॥ नयावन्महतांतेजःकुलंनाभिभविष्यति ६४ इत्युक्तस्तंप्रणम्याह भगवंस्तेनुशासनम् ॥ आतिष्ठेभ्रातृमात्रोर्मे शोचतःक्षम्यतामिति ६५ ॥ मैत्रेयउवाच ॥ एवंस्वायंभुवःपौत्रमनुशास्यमनुर्ध्रुवम् ॥ तेनाभिवंदितःसाकमृषिभिःस्वपुरंययौ ६६ इतिश्रीभागवतेचतुर्थस्कंधेएकादशोध्यायः ॥ ११ ॥ मैत्रेयउवाच ॥ ध्रुवंनिवृत्तंप्रतिबुध्यवैशसादपेतमन्युर्भगवान्धनेश्वरः ॥ तत्रागतश्चारणयक्षकिन्नरैःसंस्तूयमानोऽभ्यवद त्कृतांजलिम् १ ॥ धनदउवाच ॥ भोभोक्षत्रियदायादपरितुष्टोस्मितेऽनघ ॥ यस्त्वंपितामहादेशाद्वैरंदुस्त्यजमत्यजः २ नभवानवधीद्यक्षान्नयक्षाभ्रातरं तव ॥ कालएवहिभूतानांप्रभुरप्ययभावयोः ३ अहंत्वमित्यपार्थाधीरज्ञानात्पुरुषस्यहि ॥ स्वाप्नीवाभात्यनुध्यानाद्यया बंधविपर्ययः ४ तद्गच्छध्रुवभ द्रंतेभगवंतमधोक्षजम् ॥ सर्वभूतात्मभावेनसर्वभूतात्मविग्रहम् ५ भजस्वभजनीयांघ्रिमभवायभवच्छिदम् ॥ युक्तंविरहितंशक्त्यागुणमय्यात्ममा यया ६ वृणीहिकामंनृपयन्मनोगतंमत्तस्त्वमौत्तानपदेविशंकितः ॥ वरार्हणोऽम्बुजनाभपादयोर्निरंतरंत्वांवयमंगशुश्रुम ७

त्याह तद्गच्छेति सर्वभूतानामात्मभावेन कर्तृत्वदानादानयोःकर्ता परमात्मेतिस्नेहलक्षणयाबुद्ध्या सर्वभूतेष्वात्माविग्रहो ज्ञानादिगुणपूर्णा मूर्तिर्यस्य स तथा तं यद्वा सर्वभूतानामात्मनि देहे यो विग्रहः प्रादे शत्वादिलक्षणो यस्य स तथा तम् ५ प्रादेशाद्याकारत्वेनावस्थानं कथं गुणशक्तिमंतरेणेत्यत उक्तं युक्तमिति आत्मसामर्थ्याख्यया शक्त्या युक्तं गुणमय्यात्माधीनया मायया प्रकृत्या विरहितम् ६ यद्यपि हरेःकरुणावर्षधारापात्रत्वेनान्यतःप्राप्यो वरस्तवनास्ति तथापि वैश्रवणो ध्रुवे प्रसन्नः किलेति द्योतनाय वरं वरयेति वक्ति वृणीहीति अन्यतः कथं वृणोमीत्यविशंकित अंबुजनाभस्य हरेः पादयोः सेवायां निरंतरं सनातनं वदेकमानसामित्यर्थः ७

१ मिथ्याभाषणम् २ विषयेसप्तमी ३ अहंत्वमित्यनेन जीवद्वयाभावादहंत्वमिति धीरपार्थाऽपगतार्थेत्यन्यथाभानीत्यनो विविक्षितपदमन्वाह त्वग्याव द्योजयति ४ वा विपर्यय इत्यनेन वक्ता मिथ्यात्वमुच्यत इत्यन्यथा प्रतीतिवारणाय विपर्ययशब्दार्थमाह । दुःखादिरिति । टी०

मुमुक्षुणायमेववरोवरणीयइतिशिक्षणायतस्यवरादानप्रकारमाह सराजराजेनेति ८ ऐलिविलःइलिविलापुत्रोवैश्रवणः ९ ब्रह्मज्ञानोत्पत्तयेयज्ञएवकर्तव्यइतिप्रकटनायतस्ययज्ञकरणप्रकारमाहा थेति । अथविषयासक्तिंविहायपुरप्राप्त्यनंतरंमंगलंकर्मप्रारब्धवान् । किंतदित्यतउक्तं अयजनेति द्रव्यंक्रियादेवतानाकर्म विषयं अकर्मफलप्रदंमोक्षाख्यफलप्रदम् १० सर्वात्मनिसर्वांतर्यामिणि । सर्वेपूर्णे विश्वःपूर्णस्तथासर्वःसमस्तश्चाभिधीयतइत्यभिधानात् सर्वःशर्वःशिवस्थाणुरितिनामन्वग्सर्वनामत्तज्ञानास्ति आत्मानिस्वस्मिन्भूतेषुचावस्थितंतंविभुंव्याप्यपुरातपसाप्रत्यक्षीचकारतमि त्यर्थः ११ तस्यप्रजानुरंजनविधानमाह तमेवमिति १२ पुराकतिपयैर्मासैरेवभगवदनुग्रहमवाप्याभीष्टमातवतोध्रुवस्यकिमुवक्तव्यमेतैरिनिभावेनतस्यक्षितिपालनकालावधिमाह षट्त्रिंश दिति प्रारब्धपुण्यक्षयमशुभक्षयंज्ञानसामर्थ्यात् ॥ १३ ॥ बहुमवंबहुतिथं अविकलेंद्रियोवशीकृतेंद्रियः जरसाचक्षुरादीन्द्रियवैकल्यमधत्वादिलक्षणमप्राप्तइतिवात्रयाणांवर्ग.णाधर्मकामार्था नामौपयिकमुपयोगसाधनंदेहंनीत्वादेहयात्रांविधायेत्यर्थः १४ पुत्रायसिंहासनंदत्त्वायंकिमकार्षीत् गृहएवावस्थितश्चेद्वैराग्यादिसाधनहानिःलोकोपहासविषय स्यादित्यत.स्वपुरविहायदेशांतरग तइतिवक्तव्यमतःकंदेशंशुचितीर्थमगमदितितत्राह मन्यमानइत्यादिना सध्रुवइदविश्वंकालोपसृष्टमियताकालेननष्टंभवतीतिमन्यमानोविशालांवदरिकाश्रमेस्पदमानानर्दाप्रययावित्यन्वय. विशाला

मैत्रेयउवाच ॥ सराजराजेनवरायचोदितोध्रुवोमहाभागवतोमहामतिः ॥ हरौसवव्रेऽचलितांस्मृतिंययातरत्ययत्नेनदुरत्ययंतमः ८ तस्यप्रीतेनमनसातां दत्त्वैलिविलस्ततः ॥ पश्यतोंतर्दधेसोऽपिस्वपुरंप्रत्यपद्यत ९ अथायजतयज्ञेशंक्रतुभिर्भूरिदक्षिणैः ॥ द्रव्यक्रियादेवतानांकर्माऽकर्मफलप्रदम् १० स र्वात्मन्यच्युतेसर्वेतीव्रौघांभक्तिमुद्वहन् ॥ ददर्शात्मनिभूतेषुतमेवावस्थितंविभुम् ११ तमेवंशीलसंपन्नंब्रह्मण्यंदीनवत्सलम् ॥ गोप्तारंधर्मसेतूनांमे निरेपितरंप्रजाः १२ षट्त्रिंशद्वर्षसाहस्रंशशासक्षितिमंडलम् ॥ भोगैःपुण्यक्षयंकुर्वन्नभोगैरशुभक्षयम् १३ एवंबहुसवंकालंमहात्माऽविकलेंद्रियः ॥ त्रि वर्गौपयिकंनीत्वापुत्रायादान्नृपासनम् १४ मन्यमानइदंविश्वंमायारचितमात्मनि ॥ अविद्यारचितस्वप्नगंधर्वनगरोपमम् १५ आत्मस्त्र्यपत्यसुहृदोब लमृद्धकोशमंतःपुरंपरिविहारभुवश्चरम्याः ॥ भूमंडलंजलधिमेखलमाकलय्यकालोपसृष्टमितिसप्रययौविशालाम् १६

बदरीप्रोक्तानगरीनिम्नगात्वथेत्यभिधानं कीदृशंविश्वमात्मन्याधारतयाहरेर्माययेच्छयारचितं अनिपेयेपुमान्विष्णावित्यभिधानादस्यविष्णोर्विचयेच्छयारचितेस्वप्नगंधर्वनगरेउपमायस्यतत्तथोक्त महामायेत्यविद्येतिनियतिर्मोहिनीतिच प्रकृतिर्वासनेत्येवंतवेच्छानंतकथ्यतइत्यनेननिरुपपदमायाशब्दस्यहरेरिच्छावाचित्वंकथमितीपमाशंकापरिहृतेतिज्ञायते ॥ १५ ॥ नन्विदमीश्वरेच्छार चितमितिवक्तुंनयुक्तंतथात्वेमिथ्याभूतस्वप्नादिसाम्यकथनमनुपपन्नं । तदुच्यते तस्मान्मायाशब्देनेंद्रजालमेवोच्यते उक्तमानस्यानेकार्थवृत्तिगवादिशब्दवदुपपत्तेरित्यतउक्तकालेतिउर्वारुकउयाम तादिवत्कालान्तरेऽन्यथादर्शनाद्यदृष्टंतन्नष्टमितिक्षणभंगुरत्वात्स्वप्नादिसाम्यं । नतुमिथ्यात्वात्तस्यचार्थक्रियाकारित्वेनसत्यत्वस्यप्रामाणिकत्वात्तदुक्तं अन्यथात्वात्क्षिप्रनाशाज्जगत्स्वप्नादिवत्स्मृत वर्तमानंनिपत्यैवसदैवपरमात्मनीति आत्मनीत्युक्त्याचसत्यत्वमवगम्यते अनादिनित्यनिरस्तकुहकस्यहरेरिंद्रजालाश्रयत्वंनयुज्यते सदानिरस्तकुहकमितिस्वोक्तेश्च निष्कलंनिष्क्रियशांतमिति श्रुतेः । निष्क्रियब्रह्मैक्यमात्मनोजानतोध्रुवस्यविशालागमनक्रियायोगाच्च । आत्मस्त्रीपुत्रादीनाविश्वांतर्भूतत्वेनतद्ग्रहणेनगृहीतानामपिपुनर्वचनंदुष्करंत्यागमपिकृतवान्इतिध्रुवस्यवैराग्यातिशयद्योत नायेति । परितोविहारभुवः आकलय्यनिश्चित्य १६

१ कर्माकर्मफलप्रदमित्यसंगतमावीव्यतोयोजयति । द्रव्येति । तेनद्रव्यक्रियादेवतानाकर्मेत्येकवाक्य । कर्मशब्दोविषयवाचीत्यर्थः ।

तत्रभवतोपिपितापुत्रविषयस्नेहंमुक्त्वावैराग्यदृढीयस्तयाभगवद्भक्तिरामांश्लिगितस्यमुग्धस्येवस्थितस्यतद्रुपास्तिप्रकारंवक्ति तस्याइति । तस्याविशालायाः शिवंवाःमंगलंवारि स्थूलेपातालादिके । नैवभिक्षबित्यतउक्तं प्रतिरूपइति शिलावत्प्रतिमास्थाने । तदुक्तं शिलावत्प्रतिमैपाहिविष्णोर्लोकचतुर्दशीति । समाधौनिगयामेनाचित्तस्यध्येयवस्तुविपर्यीकरणमतिप्रवाहेसतिअभ्यस्तत्वात्स्थूल ध्यानंविमृजन्स्वाबिंबोपास्तेरावश्यकत्वेनस्थूलमाश्रिहितरूपंक्येनसूक्ष्मरूपमस्मरादित्यर्थः । अव्यवहित.स्थूलमाविहितसूक्ष्मरूपयोरभेदंपश्यन्नित्यर्थ १७ तस्यासम्प्रज्ञातसमाध्यवस्थामाह भक्तिरिति । अहमसौध्रुवइत्यात्मानंनास्मरत् किंतुभगवंतमेवास्मरदित्यनेनजीवन्मुक्तत्वंलक्षयति । मुक्तलिंग सूक्ष्मशरीराभिमानरहितः १८ ध्रुवस्यहरेरपरोक्षज्ञानोत्पन्नप्रसादचिह्नमाह सददर्शेति विभ्राजयत्दीपयत् राकापतिंपूर्णचंद्रम् १९ वृक्षात्ततरपर्णमिवस्वर्गाच्च्युतनक्षत्रमिवविमानंनाद्राक्षीत्किंतुमनाथमित्याह तत्रेति अनुअनंतरं तत्रविमानेस्थितौ २० उत्तमनिर्दोषत्वात्सहसाविमानपुरुषदर्शनाच्चदातस्यभ्रांतिज्ञानंनाभूदितिभावेनतत्सत्कारमकारमाह विज्ञायेति प्रागदृष्टश्रुतवस्तुदर्शनंसाध्वसलक्षणांत.करणवृत्तिविशेष.संभ्रमोभवति तेनसन्नोनष्टोविक्रम प्र

तस्याविशुद्धकरणःशिववार्विगाह्यबद्धासनंजितमरुन्मनसाहृताक्षः ॥ स्थूलेदधारभगवत्प्रतिरूपएतद्ध्यायंस्तदव्यवहितोव्यसृजन्समाधौ १७ भक्तिंहरौ भगवतिप्रवहन्नजस्रमानंदबाष्पकलयामुहुरर्द्यमानः ॥ विक्लिद्यमानहृदयःपुलकाचितांगो नात्मानमस्मरदसावितिमुक्तलिंगः १८ सददर्शविमानाग्र्यं नभसोवतरद्ध्रुवः ॥ विभ्राजयद्दशदिशोराकापतिमिवोदितम् १९ तत्रानुदेवप्रवरौचतुर्भुजौश्यामौकिशोरावरुणांबुजेक्षणौ ॥ स्थितावुवष्टभ्यगदांसुवाससौकिरीटहारांगदचारुकुंडलौ २० विज्ञायतावुत्तमगायकिंकरावभ्युत्थितःसाध्वसविस्मृतक्रमः ॥ ननामनामानिगृणन्मधुद्विषःपार्षत्प्रधानावितिसंहतांजलिः२१ तंकृष्णपादाभिनिविष्टचेतसंबद्धांजलिंप्रश्रयनम्रकंधरम् ॥ सुनंदनंदावुपसृत्यसस्मितंप्रत्यूचतुःपुष्करनाभसंमतौ २२॥ सुनंदनंदावूचतुः ॥ भोभोराजन्सुभद्रंतेवचोनोवहितःशृणु ॥ यःपंचवर्षस्तपसाभवान्देवमतीतृपत् २३ तस्याखिलजगद्धातुरावांदेवस्यशार्ङ्गिणः ॥ पार्षदाविहसंप्राप्तौनेतुंत्वांभगवत्पदम् २४ सुदुर्जयंविष्णुपदंजितंत्वयायत्सूरयोप्राप्यविचक्षतेपरम् ॥ आतिष्ठतच्चंद्रदिवाकरादयोग्रहर्क्षताराःपरियांतिदक्षिणम् २५ अनास्थितंतेपितृभिरन्यैरप्यंगकर्हिचित् ॥ आतिष्ठजगतांवंद्यंतद्विष्णोःपरमंपदम् २६ एतद्विमानप्रवरमुत्तमश्लोकमौलिना ॥ उपस्थापितमायुष्मन्नधिरोढुंत्वमर्हसि २७

हृद्वृत्तिविशेषोयस्यसतथोक्त. उत्तमोभावोलीलाक्रियावाविभूतिर्वायस्यसतथोक्तःतस्यहरेःकिंकरौसदाक्षिगतौभृत्यौ सहताजलिर्बद्धांजलिः २१ आत्मनोदेवत्वेनहस्तादिसंज्ञयास्वागमनज्ञापनविनैव स्वाभिप्रायमूचतुरित्याह तमिति उपसृत्यदृष्ट्वा २२ भवान्यंदेवमतीतृपत्तृप्तमकार्षीत्तस्यहरे.पार्षदौत्वांभगवत्पदंनेतुमिहप्राप्तौविद्धीत्यन्वयः २३ २४ वैकुंठंनेतुंकिंनेत्याहतुरितिब्रूते । सुदुर्जयमिति । जितंसाधितं सूरयःसप्तर्षिप्रभृतयोयदप्राप्यपरंदूराद्विचक्षतेपश्यंति तर्हितद्ब्रह्मनंविपिनंकिंनेत्यतउक्त चंद्रइति चंद्रादिवाकरादयोग्रहाऋक्षाणिसप्तविंशतिसंख्याताअश्विन्यादयस्तारामेषादिराशयोव्योमतलेदृश्यमानाज्योतिर्मूर्तयोवादक्षिणंपरियंतिप्रदक्षिणंकुर्वंतितदातिष्ठेत्यन्वयः २५ इतोपीदमास्थेयमितिप्रतिपादयतत्याह अनास्थितमिति अन्यैरनाधिष्ठितचेत्किंश्मशानतादित्यतउक्तं जगतामिति साकिंवसतिरतउक्तं तद्विष्णोरिति शिशुमारोध्रुवश्चैवसस्थितौयत्पुरेसदा तत्पश्यंतिनयांत्यन्येलोकयांतिसुरान्विनेतिवचनेनतत्रतात्पर्यमवगंतव्यम् २६ केनेदंविमानप्रेषितमितिशंकांनिवारयतइत्याह एतदिति । उत्तमश्लोकमौलिनाशिशुमारमूर्तिनाहरिणा २७

मैत्रेयोविदुरायाह भगवद्भक्तमाहात्म्यंशृण्विति भावेनतस्यपदमारोढुमितिकर्तव्यतांवक्ति निशम्येति वैकुंठस्यहरेर्नियोज्यानांपार्षदानांमध्येमुख्ययोःमधुपुष्परसमिवरसंच्योतति स्रवतीतिमधुच्युतां कृतानि त्यकर्माख्यमंगलंयेनसकृतनित्यमंगलः । अभ्यवादयदभिवादयामास २८ नेदंध्रुवस्यैवमंगलशकुनमन्येषामपिमहतांभवतीतिध्वनयंस्तत्राप्रारंभमांगल्यवक्ति परीत्येत्यादिना २९ यदाधि ष्ण्याग्र्यंविमानमधिष्ठातुमियेषतदादुंदुभ्यादयोनेदुरित्यन्वयः ३० नाहमेवसत्यसंकल्पशिरोमणिःकिंतुभक्तोपीतिभावेन हरिणास्फुरितांतःकरणवृत्तिविशेषोध्रुवएतादृशंपुत्रंसूतवत्या स्वकृतेत्यक्तविषय भोगायाःसुनीते पुत्रेणसहस्वर्लोकप्राप्तिर्नाभूत्स्वयमेवास्मार्षीदितिलोकापवादमन्वानइवपदास्वमातरमस्मार्षीत्तदाकैटभारेःसकल्पंजानमानौतौपार्षदौतस्यपुरतोयांतीमातरदर्शयामासतुरित्याह सचेति अनेनध्रुवस्यापिसत्यसंकल्पत्वंलोकेप्रकाशितमितिज्ञायते ३१ अग्रगामग्रतोगच्छंतीं ३२ ३३ ध्रुवानिश्चलागतिर्यस्यसतथा देवयानेनमार्गेण ३४ तत्पदप्राप्त्यधिकारिणोन्वयव्यतिरेकाभ्या माह नतइति येतुजंतुषुखलास्तेयन्नव्रजंति येतुजंतुषुअनुग्रहाद्दयालक्षणादनिशभद्राणिचरंतितेतयद्व्रजंति ३५ एनदेवविशिनष्टि शांताइति एतेखिलाइतिपाठेजंतुषुयेभद्राणिचरंति एतेखिलावि

**मैत्रेयउवाच ॥ निशम्यवैकुंठनियोज्यमुख्ययोर्मधुच्युतांवाचमुरुक्रमप्रियः ॥ कृताभिषेकःकृतनित्यमंगलोमुनीन्प्रणम्याशिषमभ्यवादयत् २८ परीत्याभ्यर्च्यधिष्ण्याग्र्यंपार्षदावभिवंद्यच ॥ इयेषतदधिष्ठातुंबिभ्रद्रूपंहिरण्मयम् २९ तदोत्तानपदःपुत्रोददर्शांतकमागतम् ॥ (sic) तदादुंदुभयोनेदुर्मृदंगपणवादयः ॥ गंधर्वमुख्याःप्रजगुःपेतुःकुसुमवृष्टयः ३० सचस्वर्लोकमारोक्ष्यन्सुनीतिंजननींध्रुवः ॥ अन्वस्मरदहंहित्वादीनांयास्येत्रिविष्टपम् ३१ इतिव्यवसितंतस्यव्यवसायंसुरोत्तमौ ॥ दर्शयामासतुर्देवींदेवयानेनचाग्रगाम् ३२ तत्रतत्रप्रशंसद्भिःपथिवैमानिकैःसुरैः ॥ अवकीर्यमाणोददृशेकुसुमैःक्रमशोग्रहान् ३३ त्रिलोकींदेवयानेनसोतिव्रज्यमुनीनपि ॥ परस्ताद्यद्ध्रुवगतिर्विष्णोःपदमथाभ्यगात् ३४ यद्भ्राजमानंस्वरुचैवसर्वतोलोकास्त्रयोह्यनुविभ्राजंतएते ॥ नतेखलाजंतुषुयेत्वनुग्रहाद्व्रजंतिभद्राणिचरंतियेऽनिशम् ३५ शांताःसमदृशःशुद्धाःसर्वभूतानुरंजनाः ॥ यांत्यंजसाच्युतपदमच्युतप्रियबांधवाः ३६ इत्युत्तानपदःपुत्रोध्रुवःकृष्णपरायणः ॥ अभूत्त्रयाणांलोकानांचूडामणिरिवामलः ३७ गंभीरवेगानिमिषंज्योतिषांचक्रमर्पितम् ॥ यस्मिन्भ्रमतिकौरव्यमेढ्यामिवगवांगणः ३८ महिमानंविलोक्यास्यनारदोभगवानृषिः ॥ आतोद्यंवितुदन्श्लोकान्सत्रेऽगायत्प्रचेतसाम् ३९**

ष्णोरनुग्रहाद्व्रजंति भद्राचरणंविशिनष्टि येऽनिशमिति। येनिशंशांत्यादिगुणयुक्तास्तेच्युतपदंयांतीत्यन्वयः एतत्पदंप्राप्यस्वरूपाविर्भावयोग्यान्विनापुरस्तादन्यैरित्युक्तम् ३६ ३७ चंद्रादिवाकरादयइ त्यत्रज्योतिश्चक्रंप्रदक्षिणीक्रियमाणमेतत्स्थानमित्युक्तं । तत्किंपतद्दूरतइतिनप्रतीतंनदिदानीलक्षयति गभीरेति गंभीरवेगानिअनिमिषीवगंभीरवेगानिमिषंपितेषां मिषनिमिषइतिधानोः ननिमेषंतिन मीलंतीत्यनिमिषःतेषामनस्तंगच्छतामित्यर्थः यस्मिन्नित्यनेनोपरीतिप्रतीतिंनिर्निवारयति मेढ्यामिति अनेनमेढ्याःसमीपेपरितोभ्रमंतीतियथाप्रतीतं तथात्रापीत्यर्थः ३८ इतिकेनायंमहिमाशालि तोयेनास्माकमपितत्रश्रद्धातिशयःस्यादित्यतआह महिमानमिति आतोद्यंमहद्वीणावाद्यं आतोद्यंवाद्यमिष्यतेइतिहलायुधः ३९

१ भूर्भुवःस्वरितित्रयाणांलोकानांसमाहारस्त्रिलोकीतामतिव्रज्येत्यर्थः । तथात्वेभूर्लोकाद्दुपरिपद्लक्षयोजनानन्तरभुवर्लोकः तदनन्तर चतुर्दशलक्षयोजनोच्चस्थयेस्वर्लोकःअर्कवर्कोट्युच्छ्रितःस्वर्गोविमानावलिमकुटइति प्रमाणात् । तमतिव्रज्येतिकथंसंगच्छतइत्याशंकायामत्रेदमवधेयं । ध्रुवःस्वस्थानरंद्रष्टुंस्वर्गंप्रतिगन्तानाहद्वादेवानानम्यतमनिव्रज्यध्रुवलोकंप्रतिगतवान् । ननुतदुपरिध्रुवलोकोस्तीत्यर्थ. । अस्मिन्विषयेवहुप्रमाणानि संतिग्रन्थविस्तरभयान्नलिख्यंतइतिकोंडे

तपसःप्रभावोमाहात्म्यंयस्यसतथातस्य प्रतापमाहात्म्ययोःप्रभावःस्यादितिपादवः ४० अजितंजिगायवशीचकार ४१ ४२ ४३ श्रौव्यंध्रुवस्यमोक्षस्यमाधनं ४४ अच्युतप्रियध्रुवस्यचेष्टितं ४५तीर्थमुपायः

सापवर्गंत्राधुपदेष्टृवदुपदेष्टृवा तेजोबलप्रभावेनत्योविष्णोर्विषिरंतासि नवनीतेनंछघर्मेदानहास्तिमद्देपिचेत्यमिथानात् तदिच्छूनांतेज आकांक्षमाणानांयत्रयस्मिश्चरितेऽभ्यस्यमानेतेजोभवतीत्यर्थः ।

४६ समवायेसमूहेकीर्तयेदित्यतस्तात्पर्यादिदमिविवक्ति पुण्यश्लोकस्येति ४७ ४८ श्रावयन् फलाभिमंथिंनकुर्यादितिभावेनाह नेच्छन्निति तत्रचरितेश्राविते श्रुतेवाफलंनेच्छन्वर्ततइतिशेषः कथंतर्हिफलासि

द्धिरित्यतआहात्मनेति । तत्रेत्युत्तरत्रापिसंबध्यते तत्रचरितेश्राव्यमाणेआत्मनामनसात्मानंपरमात्मानंप्रतिसंतुष्ट सिध्यतिप्राप्ताभीष्टफलोभवति ४९ ध्रुवचरितव्याख्यानव्याजेनभागवतंज्ञानमुपदिश

॥ नारदउवाच ॥ ॥ नूनंसुनीतेःपतिदेवतायास्तपःप्रभावस्यसुतस्यतांगतिम् ॥ दृष्ट्वाभ्युपायानपिवेदवादिनोनैवाधिगंतुंप्रभवंतिकिंनृपाः ४० यःपंचवर्षोगुरुदारवाक्शरैर्भिन्नेनयातोहृदयेनदूयता ॥ वनंमदादेशकरोऽजितंप्रभुंजिगायतद्भक्तिगुणैःपराजितम् ४१ यःक्षत्रबंधुर्भुवितस्याधिरूढमन्वारुरुक्षेदपिवर्षपूगैः ॥ यःपंचवर्षोयदहोभिरल्पैःप्रसाद्यवैकुंठमवापतत्पदम् ४२ ॥ मैत्रेयउवाच ॥ ॥ एतत्तेभिहितंसर्वंयत्पृष्टोहमिहत्वया ॥ ध्रुवस्योद्दामयशसश्चरितंसंमतंसताम् ४३ धन्यंयशस्यमायुष्यंपुण्यंस्वस्त्ययनंमहत् ॥ स्वर्ग्यंध्रौव्यंसौमनस्यंप्रशस्यमघमर्षणम् ४४ श्रुत्वैतच्छ्रद्धयाऽभीक्ष्णमच्युतप्रियचेष्टितम् ॥ भवेद्भक्तिर्भगवतिययास्यात्क्लेशसंक्षयः ४५ महत्त्वमिच्छतांतीर्थंश्रोतुःशीलादयोगुणाः ॥ यत्रतेजस्तदिच्छूनांमानोयत्रमनस्विनाम् ४६ प्रयतःकीर्तयेत्प्रातःसमवायेद्विजन्मनाम् ॥ सायंचपुण्यश्लोकस्यध्रुवस्यचरितंमहत् ४७ पौर्णमास्यांसिनीवाल्यांद्वादश्यांश्रवणेथवा ॥ दिनक्षयेव्यतीपातेसंक्रमेऽर्कदिनेपिवा ४८ श्रावयेच्छ्रद्दधानानांतीर्थपादपदाश्रयः ॥ नेच्छंस्तत्रात्मनात्मानंसंतुष्टइतिसिद्ध्यति ४९ ज्ञानमज्ञाततत्त्वाययोदद्यात्परमार्थविद् ॥ कृपालोर्दीननाथस्यदेवास्तस्यानुगृह्णते ५० इदंमयातेभिहितंकुरूद्वहध्रुवस्यविख्यातविशुद्धकर्मणः ॥ हित्वाऽर्भकःक्रीडनकानिमातुर्गृहंचविष्णुंशरणंयोजगाम ५१ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेद्वादशोध्यायः १२ ॥ श्रीशुकउवाच ॥ निशम्यकौषारविणोपवर्णितंध्रुवस्यवैकुंठपदाधिरोहणम् ॥ प्ररूढभावोभगवत्यधोक्षजेप्रष्टुंपुनस्तंविदुरःप्रचक्रमे १ ॥ ॥ विदुरउवाच ॥ ॥ केतेप्रचेतसोनामकस्यापत्यानिसुव्रत ॥ कस्यान्ववायेप्रख्याताःकुत्रवासत्रमासत २

न्नकेवलंभगवानेवानुग्रहंकरोति किंतुतदिंद्रियाभिमानिनोदेवाअपीत्याह ज्ञानमिति ५० पुनरपितन्माहात्म्यसूचयन्नुपसंहरति इदमयेति ५१ ॥ ॥ इतिश्रीभागवतेचतुर्थस्कंधेटीकायांद्वादशोध्यायः ॥ १२ ॥ अत्रहरितद्भक्तकथाश्रवणेनशुद्धांतःकरणस्याबिंबमतिर्बिंबज्ञानादेवापवर्गःस्यादितिदीप्यतेऽस्मिन्नध्याये तत्रादौविदुरस्यप्रचेतसांविषयप्रश्नप्रकारस्तदुत्तरत्वेनमैत्रेयेणाऽस्यवंशावलिवर्णनंक्रियतेनिशम्येत्यादिना प्ररूढभावःप्रवृद्धभक्तिः सत्रेऽनापत्यप्रचेतसामित्युक्तेःप्रश्नबीजं १ अन्ववायेवंशे २

---

२. आत्मनाऽऽत्मानंसंप्रतीत्यन्यथामतीतिवारणायप्रवृत्ततात्पर्यानुसारेणार्थमाह । मनसेति ॥ तेनतृतीयांत्वात्मशब्दोमनोवाचीद्वितीयातस्तुपरमात्मवाचीतितात्पर्यार्थः । दी०

महाभागवतेनविदुरेणहरिकथामश्नंविहायप्रचेतसांप्रश्नःकिमितिक्रियतेइत्याशंक्यतेषांकथापिहरिकथाविनाभूतानारदेनप्रोच्यमानत्वान्नारदस्तत्रन्यकथांनवक्तिभागवतचूडामणित्वादित्याह । मन्यइति । क्रियायोग-सकइतितत्राह । परिचर्याविधिर्हरेरिति ३ प्रवृत्तानांयोग्यःकथंनिवृत्तिविषयोभवतीत्याशंक्यसंकल्पविशेषात्स्यादित्याशयेनाह । स्वधर्मशीलैरिति । अयंभावःसाक्षान्नारायणएवचरुपुरोडाशादिद्रव्यस्वामित्वेनतदभिमानित्वेनाग्न्यादिदेवतांतर्यामित्वेनतच्छब्दप्रवृत्तिनिमित्तस्यमुख्यत्वेनदेवतात्वेनचमंत्रमूर्तित्वेनेज्यतइतिनारदेनप्रतिपादितइति ॥ ४ ॥ ततःकिंफलितमित्यत्राह यास्ताइति ५ अधिराजासनंराजासनमाधिकृत्यवर्तमानंसार्वभौमांश्रियंनैच्छदित्यन्वयः ६ कुतोनैच्छदितितत्राह सजन्मनेति जन्मप्रभृतिभगवन्निष्ठादिगुणयुक्तत्वात् । समदर्शनत्वंस्पष्टयति । ददर्शेति आत्मानपरमात्मानंलोकेवितंददर्श लोकमात्मनिपरमात्माधारतयास्थितमद्राक्षीदित्यन्वयः ७ तदेवविशिनष्टि आत्मानमिति ददर्शेत्यनुवर्तते आत्मानस्वबिंबंहरिमेवददर्शेत्यन्वय । कथंब्रह्मअथकस्मादुच्यतेब्रह्मेति बृहंतोह्यस्मिन्गुणाइतिश्रुतेः गुणतोदेशतोऽप्याप्तंहृदयगुहाकाशस्याल्पत्वेनतत्स्थितस्यापितथात्वात्कथंव्याप्तमित्युच्यतइत्याशंक्यप्राकृतवैकृतरूपवतएवानुपपत्तिः व्याप्तत्वेनहरेस्तादृशशरीराभावादितिभावेनोक्तं निर्वाणमिति एतद्बाणमवष्टभ्योतिश्रुतौबाणशब्दस्यशरीरेप्रयोगात् देहविनाशेतत्रस्थस्यापिविनाशसंभवात्कथंब्रह्मत्वमुच्यतइत्यतोवाह निर्वाणमिति निर्गतोनाशोयस्मात्तथोक्तं निर्वाणंनिर्वृतौमोक्षेविनाशेगजमज्जनइत्यादयः अनेनदेहिनोजीवस्यदेहोहमितितन्निमित्तदुःखित्वेऽपिहरेस्तन्नास्तीतिज्ञापितं हरेःप्राकृतदेहोनास्तीतिस्पष्टमाह प्रत्यस्तमितेति गात्रं

## मन्येमहाभागवतंनारदंदेवदर्शनं ॥ येनप्रोक्तःक्रियायोगःपरिचर्याविधिर्हरेः ३ स्वधर्मशीलैःपुरुषैर्भगवान्पुरुषोत्तमः ॥ इज्यमानोभक्तिमतानारदेनेरितःकिल ४ यास्तादेवर्षिणातत्रवर्णिताभगवत्कथाः ॥ मह्यंशुश्रूषवेब्रह्मन्कार्त्स्न्येनाचष्टुमर्हसि ५ मैत्रेयउवाच ॥ ध्रुवस्यचोत्कलःपुत्रःपितरिप्रस्थितेवनम् ॥ सार्वभौमंश्रियंनैच्छदधिराजासनंपितुः ६ सजन्मनोपशांतात्मानिःसंगःसमदर्शनः ॥ ददर्शलोकेविततमात्मानंलोकमात्मनि ७ आत्मानंब्रह्मनिर्वाणंप्रत्यस्तमितविग्रहम् ॥ अवबोधरसैकात्म्यमानंदमनुसंततम् ८ अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः ॥ स्वरूपमवरुंधानोनान्यदस्मात्तदैक्षत ९

वपुःसंहननंशरीरंवर्ष्मविग्रहइत्यमरः प्रतीत्युपसर्गयोगेनयानियान्यवताररूपाण्यंतर्यामिरूपाणिचतानितानिसर्वाण्यपिप्राकृतशरीररहितानीतिमचनेनमूलरूपस्यकिमुवक्तव्यमित्यायातं तर्हीदंशून्यकल्पमित्यतउक्तमवबोधेति अवबोधरसोज्ञानरसःसएवैकमात्मनोऽभिन्नंरूपंयस्यतत्तथोक्तं प्राकृतज्ञानमिश्रितंनभवतीत्येकेत्युक्तं तस्यापिज्ञानवाचित्वादवगच्छतीत्यादौसिद्धत्वात् ज्ञानज्ञानःसुखसुखइतिश्रुतिरपिसूचितास्यात् रूपरूपिणोरभेदद्योतनायैकात्म्यमित्युक्तं ऐकात्म्यप्रत्ययसारमितिश्रुतिश्च एवंचेद्विज्ञानवादानुप्रवेशइतितत्राह आनंदमिति आनंदयतीत्यानंदंसुखानुभवरूपमित्यर्थःविज्ञानमानंदंब्रह्मेतिश्रुतेः । उपसंहरति अनुसंततमिति अतःसर्वप्राणिष्वनुगतत्वेनतद्बहिर्भिन्नचगुणगुणिनोरूपरूपिणोरभेदेनततंव्याप्तमित्युपपन्नमित्यर्थः समभेदइत्यादयः ॥ ८ ॥ ज्ञानाग्निनादग्धबाह्यांतःकरणस्यैतादृशभगवद्रूपदर्शनंसंगच्छतइत्याह अव्यवच्छिन्नेति योगशब्देनतज्जनितज्ञानंलक्ष्यते अव्यवच्छिन्नयोगेननिरंतरंध्यानलक्षणोपासनयाजातेनज्ञानाग्निनादग्धंभस्मीभूतंकर्ममलंपापक्रियानिमित्तंमलंकिट्टंयस्यसतथा तादृशआशयोंतःकरणंयस्यसतथा निर्मलांतःकरणपात्रेप्रज्वलितेनज्ञानदीपेनलोकेविततमात्मानमात्मनिततंलोकंचददर्शेत्युक्तयाद्वयोःसमत्वमापातमितिमंदाशंकामपनुदन्विशदयति स्वरूपमिति स्वंरूपंजीवस्यबिंबरूपंपरमात्मानमवरुंधानःस्वज्ञानांतःस्थितंकुर्वाण साक्षात्कुर्वाणोऽस्माद्धरेरन्यत्स्वतंत्रमनियतंतज्जगन्नैक्षतोकिंतुतत्स्थं तत्स्थापितंतन्नियतंतत्संहृतंतज्ज्ञापितंतद्बद्धतन्मोचितमपश्यदित्यर्थः तदास्वरूपंप्रतिबिंबमस्माद्बिंबादन्यद्भिन्नंनैक्षतेतिबिंबप्रतिबिंबयोरत्रैक्यमुच्यतइतिवक्तुनयुक्तं । अत्र

१ स्वरूपमवरुंधानइत्यस्यजीव. स्वस्यरूपमवरुंधानदृत्यन्यथाप्रतीतिनिवारणाय्नतात्पर्यार्थमाह ॥ स्वरूपमिति ॥

रुध्यानइत्यस्यानिर्विषयत्वात् तदेतिकालस्यपृथङ्निर्देशानुपपत्तेश्च ददर्शेत्यत्रलोकात्मनोराधाराधेयत्वोक्तेश्चतस्यतभेदनिष्ठत्वात् तदुक्तं भिन्नस्वरूपमनिदंस्वरूपंतुद्विधाहरेः भिन्नस्वरूपंब्रह्माद्यंम स्यायाविमुच्यतइति ९ एवंविधोऽपिशोकसंभाषणविसर्जनार्थमविवेकिनामेवंदृष्टइत्याह जडेति अनन्यमतिस्तत्त्वद्रष्ट्रस्तुविषयज्ञानशून्यः विवेकिनांपक्षेएवसर्वविलक्षणोविष्णौययासमारतरंतिसामति वेत्सोऽनन्यमतिरिति प्रशांतार्चिर्भस्मगर्भोग्निरिव १० अस्मिन्नेवगतकोत्रराजाभूदत्राह मत्वेति कालावयवस्यवत्सरस्यराज्यार्हत्वकथामित्यतउक्तं यवीयांसामिति कुलवृद्धाज्येष्ठेकल्पनाम्निसुते स्थितेवत्सरंराजानंकथमकुर्वन्नित्यपेतश्चोचं कल्प कल्पाभिमानीमन्त्रशिशुमारानुगःस्थितः वत्सरोराज्यमकरोत्पित्रादत्तंमहाबलः चक्रेनागायण माक्षात्किंस्तुमः कल्पमात्मजामित्यनेनपरिहर्तव्यम् ११ वत्सरोपिनाम्नास्वर्वीथ्यांभार्यायांपट्सुतानापेत्याह स्वर्वीथीति स्वर्गमार्गाभिमानित्वात्स्वर्वीथीति १२ अत्रवंशमादायकथाप्रवर्ततेसमएववंशहेतुभूतः । अन्येत्वक्रनोद्वाहाःयोगिनोऽप्रजाश्चेतिवात्प

अन्धांधबधिरोन्मत्तमूकाकृतिरतन्मतिः ॥ लक्षितःपथिबालानांप्रशांतार्चिरिवानलः १० मत्वातंजडमुन्मत्तंकुलवृद्धाःसमंत्रिणः ॥ वत्सरंभूपतिंचक्रुर्यवीयांसंभ्रमेःसुतम् ११ स्वर्वीथिर्वत्सरस्येष्टाभार्यासूतषडात्मजान् ॥ पुष्पार्णंतिग्मकेतुंचइषमूर्जंवसुंजयम् १२ पुष्पार्णस्यप्रभाभार्यादोषाचद्वेबभूवतुः ॥ प्रातर्मध्यंदिनंसायमितिह्यासन्प्रभासुताः १३ प्रदोषोनिशिथोव्युष्टइतिदोषासुतास्त्रयः ॥ व्युष्टःसुतंपुष्करिण्यांसर्वतेजसमादधे १४ सचक्षुःसुतमाकूत्यांपत्न्यांमनुमवापह ॥ मनोरसूतमहिषीवैराजानड्वलासुतान् १५ पुरुंकुत्संत्रितंद्युम्नंसत्यवंतमृतंव्रतम् ॥ अग्निष्टोममतीरात्रंप्रद्युम्नंशिबिमुल्मुकम् १६ उल्मुकोजनयत्पुत्रान्पुष्करिण्यांषडुत्तमान् ॥ अंगंसुनासमाख्यातिंक्रतुमांगिरसंगयम् १७ सुनीथांगस्ययापत्नीसुषुवेवेनमुल्बणम् ॥ यद्दौःशील्यात्सराजर्षिर्निर्विण्णोनिरगात्पुरात् १८ यमंगशेपुःकुपितावाग्वज्रामुनयःकिल ॥ गतासोस्तस्यभूयस्तेममंथुर्दक्षिणंकरम् १९ अराजकेतदालोकेदस्युभिःपीडिताःप्रजाः ॥ जातोनारायणांशेनपृथुःपृथुपराक्रमः २० विदुरउवाच ॥ तस्यशीलनिधेःसाधोर्ब्रह्मण्यस्यमहात्मनः ॥ राज्ञःकथमभूद्दुष्टाप्रजायद्विमनाययौ २१ किंवांहोवेनमुद्दिश्यब्रह्मदंडमयूयुजन् ॥ दंडव्रतधरेराज्ञिमुनयोधर्मकोविदाः २२ नावध्येयःप्रजापालःप्रजाभिरघवानपि ॥ यदसौलोकपालानांबिभर्त्योजःस्वतेजसा २३ एतदाख्याहिमेब्रह्मन्सुनीथात्मजचेष्टितम् ॥ श्रद्दधानायभक्तायत्वंपरावरवित्तमः २४ ॥ मैत्रेयउवाच ॥ अंगोश्वमेधंराजर्षिराजहारमहाक्रतुम् ॥ नाजग्मुर्देवतास्तस्मिन्नाहूताब्रह्मवादिभिः २५

वेज्ञातव्यं एताःस्त्रियःसुताश्चकालादिवत्तद्रूस्त्वभिमानिनइतिच ॥ १३ ॥ १४ ॥ ससर्वतेजाश्चक्षुर्नामानंसुतंनाम्नाकूत्यांपत्न्यामवापेत्यन्वयः मनोर्महिषीनाम्नानड्वलावैराजावैराजपुत्रीपुरुकुत्सादीन्दशसुतानसूतेत्यन्वयः १५ १६ १७ अंगस्ययासुनीथानामपत्नीसोल्बणमसुरप्रकृतिवेनंसुषुवइत्यन्वय' १८ यंवेनं अगाविदुर गतासोर्मृतस्य १९ ततकिमभूत्तत्राह जातइति २० श्रवणमंगलत्वात्सामान्यतःकथितंविशेषतोविदुरः श्रोतुंपृच्छतीत्याह तस्येति यद्विमनाःयस्यादुष्टप्रजायाविषण्णमनाः २१ दंडव्रतहिमाख्यंव्रतधारयतीतिदंडव्रतधरः । दंडोत्रीशासनेराज्ञांहिंसा वाल्कुष्टेमुडइतिपादवः यद्वा शासनाख्यव्रतंबिभ्रति नतेष्वज्ञानलेशःसंभाव्यतइत्याह धर्मकोविदाइति २२ नावध्येयोनावज्ञेयःतत्रनिमित्तमाह यदसाविति २३ यतएवतत्त्वंतस्मादत्रमहान्निमित्तमस्ति एतन्मेआख्याहीत्यन्वयः ममात्रेतिहासज्ञाननास्तीतिवक्तुंनशक्यमित्यतउक्तं परावरेति २४ सूचितमर्थंविस्तरतोवक्तुमुपक्रमते अगइति २५

॥ २६ ॥ नद्रव्यादिदोषादित्याहुरित्याह राजन्निति आसादितान्यापादितानि अयातयामान्यगतवीर्याणि २७ हेलनमवज्ञानं २८ २९ आहुताआहूताः । ग्रहान्हविःपिंडान् ३० राज्ञापृष्टायजमानकर्मगुणदोषान्विविच्यतत्परिहृत्यकर्मप्रवर्तनायामंत्रिताःसदस्याऋत्विजःकिंविशेष्यमवलोक्यप्रोचुरितितत्राह नरदेवेति । इहास्मिन्जन्मनिईदृग्दृष्टोऽप्रजोऽनपत्यइति यदत प्राक्तनंपूर्वजन्मार्जितमघंबालहत्यादिकमेकमघमस्तीत्यनुमीयते ३१ तथातस्माच्चेआत्मानसप्रजंपुत्रेणसहवर्तमानंसादयकुरु ततोभद्रंभवति । तत्रकउपायइतितमाहुरित्याह इष्टइति ॥ ३२ ॥ किंभद्रंस्यादित्यत्राह यथेति । दिवौकसांहरेरंगोत्पन्नत्वेनतदाश्रितत्वेनस्थितेस्तन्मनस्कत्वेनतत्तुष्ट्यातत्तुष्टेःस्वभागादानानादानयोस्तदिच्छाविनाभूतत्वादधुनातदिष्टत्वात्सर्वसमंजसभवतीतिभावेना हुरित्याह यद्यज्ञपुरुषइति । अनेनापुत्रस्यलोकोनास्तीतिशायिकंसद्धर्मवतोधर्मबलाल्लोकोभवत्येव । हरीच्छयाविशिष्टपुरुषोत्पत्तयेदेवैर्हविर्नाहृतं अंगस्यापिबालहत्यादिदोषादनपत्यत्वादिकल्प्यतइतिज्ञाय

तमूचुर्विस्मितास्तातयजमानमथर्त्विजः ॥ हवींषिहूयमानानिनतेगृह्णंतिदेवताः २६ राजन्हवींष्यदुष्टानिश्रद्धयाऽऽसादितानिते ॥ छंदांस्ययातयामानि योजितानिधृतव्रतैः २७ नविदामेहदेवानांहेलनंवयमण्वपि ॥ यन्नगृह्णंतिभागान्स्वान्येदेवाःकर्मसाक्षिणः २८ ॥ मैत्रेय उवाच ॥ अंगोद्विजवचःश्रुत्वाय जमानःसुदुर्मनाः ॥ तत्प्रष्टुंव्यसृजद्वाचंसदस्यांस्तदनुज्ञया २९ नागच्छंत्याहुतादेवानगृह्णंतिग्रहानिह ॥ सदसस्पतयोब्रूतकिमवद्यंमयाकृतम् ३० ॥ स दस्याऊचुः ॥ नरदेवेहभवतोनाघंतावन्मनाक्स्थितम् ॥ अस्त्येकंप्राक्तनमघंयदिहेदृक्त्वमप्रजः ३१ तथासादयभद्रंतेआत्मानंसप्रजंनृप ॥ इष्टस्तेपुत्रकाम स्यपुत्रंदास्यतियज्ञभुक् ३१ यथास्वभागधेयानिग्रहीष्यंतिदिवौकसः ॥ यद्यज्ञपुरुषःसाक्षादपत्यायहरिर्वृतः ३२ तांस्तान्कामान्हरिर्दद्याद्यान्यान्कामय तेजनः ॥ आराधितोयथैवैषतथापुंसांफलोदयः ३४ इतिव्यवसिताविप्रास्तस्यराज्ञःप्रजातये ॥ पुरोडाशंनिरवपन्शिपिविष्टायविष्णवे ३५ तस्मात्पुरु षउत्तस्थौहेममाल्यमलांबरः ॥ हिरण्मयेनपात्रेणसिद्धमादायपायसम् ३६ सविप्रानुमतोराजागृहीत्वांऽजलिनोदनम् ॥ अवघ्रायमुदायुक्तःप्रादा त्पत्न्याउदारधीः ३७ सातत्पुंसवनंराज्ञीप्राश्यवैपत्युरादधे ॥ ततःकालउपावृत्तेकुमारंसुषुवेऽप्रजा ३८ सबालएवपुरुषोमातामहमनुव्रतः[1] ॥ अधर्मां शोद्भवंमृत्युंतेनाभवदधार्मिकः ३९

ते । तदुक्तं अनपत्योपिसद्धर्माल्लोकजिन्नात्रसंशयः देवैस्तुपृथुजन्मार्थंहविरंगस्यनोहृतमिति ३३ नकेवलंहरिपूजयापुत्रकामस्यपुत्रावाप्तिस्तत्तत्कामेनतत्तदवाप्तिरपिस्यादित्याह तांस्तानिति फलाकांक्षानुसा रेणपूजापितादृशीतिभावेनाहुः आराधितइति ३४ हितमुक्त्वातेतूष्णीमभूवन्किंनेत्याह इतीति प्रजातयेसंतत्यैशिपिविष्टोनामपुत्रकामेष्टिदेवताहरेरूपांतरं । अतएव शिपिविष्टस्तुखलतौदुश्चर्मणिमहेश्वर इत्यन्यवृत्तिनिवारणायविष्णवइति ३५ तस्मान्निरुप्तपुरोडाशात् ३६ अजलिनोदनमितिपाठः ३७ पुमांसंसूतइतिपुंसवनंपायसमुपावृत्तेप्राप्ते अप्रजापुत्ररहिता ३८ बालएवकौमारवयाएव अधर्मांशेनोद्भवोयस्यसतथातंमातामहंमातुःपितरंमृत्युनामानमसुरवरमनुव्रतइतियत्तेनसपुरुषोऽधार्मिकोधर्मविरुद्धकर्मकृदभूदित्यनेनविशेषणेनधर्मांशोद्भवोमृत्युरन्योस्तीतिरहस्यमवगंतव्यं तदुक्तं मृत्यु र्देवोयमभ्रातावेनमातामहोसुरइति ३९

---

१ मृत्युमनुव्रत इत्यत्र मृत्युनामकदेवतानुवृत्त्याऽधार्मिकत्वोक्तिरयुक्तेत्याशंक्य तात्पर्यमनुनस्त्वमाह मृ युनामानमसुरमिति ।

किंनामापवादकृत्यतस्तत्कर्मानुस्मृतंनामन्त्रोकाअकुरुवन्नित्याह सशरासनमिति वेनयातिपीडयतीतिवेनः । पीडयिंनेनेतिचप्राहुर्वेनोसौपीडनादभूदितिवचनादसाधुर्दुर्जनः ४० आक्रीडेक्रीडास्था नें पशुमारमितिलुप्तोपमा यथापशुमारोगोघ्नथंडालस्तथेति ४१ स्ववशामनमुल्लंघ्यवर्तमानंपुत्रमवलोक्यपित्राकिमकारीतितत्राह तंविलक्ष्येति दुरशोभनदुःखयोरित्यनेनसुष्ठुदुःखितमनाः ॥ ४२ ॥ कोपात्दुःखंचावगम्यतइत्याह प्रायेणेति येगृहमेधिनोऽप्रजाएवंदुर्भरंकदपत्यकृतंदुःखंनाविदन्तितैः सर्वैरपिप्रायेणदेवोनारायणोभ्यर्चितइत्यन्वयः ॥ ४३ ॥ अपकीर्त्यादिदोषहेतुत्वात्पं कितोनरकत्राणहेतुत्वात्साधुरयंपुत्रइतिबहुमानंनकरोतीत्याह यतइति ४४ ४५ नकेवलंदुःखमेवकदपत्यात्किंनुविवेकिन प्रयोजनंचास्तीत्याह कदपत्यमिति क्लेशसमूहेनातुरोमर्त्योस्वगृहान्नि र्विद्येतेतियस्माद्धिचेपणादिशुचापदात्सदपत्यात्कदपत्यंवैराग्यहेतुत्वात्साधुमन्यइत्यन्वयः । हलंतादरिष्टापंचेतिवचनाच्छुचेतिरूपंसाधु ४६ नन्वत्रशोकान्मरणदेशांतरगमनंवास्यात्तत्राकिम

सशरासनमुद्यम्यमृगयुर्वनगोचरः ॥ हंत्यसाधुर्मृगान्दीनान्वेनोसावित्यरौज्जनः ४० आक्रीडेक्रीडतोबालान्वयस्यानतिदारुणः ॥ प्रसह्यनिरनुक्रोशःपशु मारममारयत् ४१ तंविलक्ष्यखलंपुत्रंशासनैर्विविधैर्नृपः ॥ यदानशासितुंकल्पोभृशमासीत्सुदुर्मनाः ४२ प्रायेणाभ्यर्चितोदेवोयेऽप्रजागृहमेधिनः ॥ कदपत्यभृतंदुःखंयेनविंदंतिदुर्भरम् ४३ यतःपापीयसीकीर्तिरधर्मश्चमहान्नृणाम् ॥ यतोविरोधःसर्वेषांयतआधिरनंतकः ४४ कस्तंप्रजापदेशंवैमोहं बंधनमात्मनः ॥ पंडितोबहुमन्येतयदर्थाःक्लेशदागृहाः ४५ कदपत्यंवरंमन्येसदपत्याच्छुचापदात् ॥ निर्विद्येतगृहान्मर्त्योयत्क्लेशनिवहागृहाः ४६ एवं सनिर्विण्णमनानृपोगृहान्निशीथउत्थायमहोदयोदयात् ॥ अलब्धनिद्रोनुपलक्षितोनृभिर्हित्वागतोवेनसुवंप्रसुप्ताम् ४७ विज्ञायनिर्विद्यगतंपतिंप्रजाःपु रोहितामात्यसुहृद्गणादयः ॥ विचिक्युरुर्व्यामतिशोककातरायथानिगूढंपुरुषंकुयोगिनः ४८ अलक्षयंतःपदवींप्रजापतेर्हतोद्यमाःप्रत्युपसृत्यतेपुरीम् ॥ ऋ षीन्समेतानभिवंद्यसाश्रवोन्यवेदयन्पौरवभर्तृविप्लवम् ४९ इतिश्रीभागवतेम०चतुर्थस्कंधेत्रयोदशोध्यायः १३ ॥ मैत्रेयउवाच ॥ भृग्वादयस्तेमुनयो लोकानांक्षेमदर्शिनः ॥ गोप्तर्यसतिवैनृणांपश्यंतःपशुसाम्यताम् १ वीरमातरमाहूयसुनीथांब्रह्मवादिनः ॥ प्रकृत्यसंमतंवेनमभ्यषिंचन्पतिंभुवः २ श्रुत्वा नृपासनगतंवेनमत्युग्रशासनम् ॥ निलिल्युर्दस्यवःसद्यःसर्पत्रस्ताइवाखवः ३

वेनाकारीतितत्राह एवंसइति महानुदयोमहतीविभूतिस्तस्याउदयउद्रेकोयस्मिंस्तत्तथातस्मात् लक्षदर्शनांकनयोरितिधातोरनुपलक्षितोऽदृष्टः ॥ ४७ ॥ जलादौमृतोदूरंगतोवेतिसंशयेतयो रेकंनिश्चित्यकिमकार्षुस्तदीयाइतितत्राह विज्ञायेति विचिक्युरन्विष्यादृष्टवंतः हृदिगूढंपुरुषंहरिं ४८ अन्विष्यादृष्टवतःकिमकुर्वन्नित्यतआह अलक्षयतइति । पौरव विदुर । साश्रवःबाष्पसहिताः । साधीयसोविष्णुयाजिनोंगस्यैवदुष्टपुत्रोत्पत्तिस्तन्निमित्तेनविप्लवश्चकथमभूदितीदंचोद्यं अनपत्यत्वकर्मासौबालहत्याकृतःपुरा अतोदुष्टोभवत्पुत्रइष्टोविष्णुरतःपृथुरिति ॥ ४९ ॥ इतिश्रीभाग वतेम०च०स्कंधेवि०टीकायांत्रयोदशोध्यायः ॥ १३ ॥ गुरुवाक्यंश्रद्धयाऽनुतिष्ठतामिहामुत्रश्रेयःस्यादकुर्वतामनर्थश्चेत्येतन्निरूप्यतेऽस्मिन्नध्याये । तत्रादौभृग्वादिऋषिभिःक्रियमाणंराज्येवेनस्या भिषेकंवक्ति भृग्वादयइति क्षेमानामाप्तरक्षायामितियादवः पशुसाम्यतांपशुमात्स्यन्यायंसांकर्यं १ हेवीर प्रकृत्यास्वभावेनामात्यादिबुद्ध्याराज्यासंमतमनुचितम् २ अस्मिन्नभिषिक्तेसत्येकोगुणोराज्यस्यस्या दित्याह श्रुत्वेति । निलिल्युर्निलीनाः ३

पालकेराज्ञिबहवोगुणामवंतितत्रैकोगुणइतिविशिष्योच्यतइतिचेन्सत्यमस्यसर्वेदोषाएवसंतीतिवक्तुमुपक्रमते । सआरूढेति । आरूढंनृपस्थानंसिंहासनंयेनसतथा मंत्र्यमात्यदूतराज्यकोशदुर्गजनपदपुरोहितारूयैर्वाणिमादिभिर्वाष्टविभूतिभिरुन्नद्धस्तब्धःमहत्सूत्थानाद्याचारशून्यः ४ अतोलोकस्यकिमवद्यमभूदत्राह एवंमदांधइति उत्सिक्तउद्धृतः ५ हेद्विजाः ६ तत्रनिग्रहानुग्रहसमर्थाः मुनयःकिमकार्षुरितितत्राह वेनस्येति सत्रिणोयज्वानः ७ उभयतस्तस्करपालयोः । दारुणीतिसप्तमीपष्ठ्यर्थे दारुणउभयतोदीप्तोवह्निः ८ दारुणइवउभयतोव्यसनंकथमत्राह अराजकइति नतस्य राज्यस्यार्हणोयोग्योभवतीतिअतदर्हणः ९ अयमप्यस्माकमनर्थकरइत्याहुरित्याह अहेरिवेति १० युष्माभिःकथंपोषितइतितत्राह प्रकृत्येति सुनीथागर्भसंभवत्वात् अस्माभिःप्रजापालोनिरूपितःससांप्रतंप्रजाजिघांसतिवैहंतुमेवाकांक्षतिवै ११ तर्हिकिंक्रियतेइतितत्राह तथापीति प्रकृत्यासखलत्वादस्मदुक्तंनशृणोतियद्यपितथापीति । सांत्वनेहेतुमाह । मास्मानितियुष्मत्सांत्वना

सआरूढनृपस्थानउन्नद्धोष्टविभूतिभिः ॥ अवमेनेमहाभागान्स्तब्धःसंभावितःशठः ४ एवंमदांधउत्सिक्तोनिरंकुशइवद्विपः ॥ पर्यटन्रथमास्थायकंपयन्निवरोदसी ५ नयष्टव्यंनदातव्यंनहोतव्यंद्विजाःक्वचित् ॥ एवंन्यवारयद्धर्मंभेरीघोषेणसर्वतः ६ वेनस्यावेक्ष्यमुनयोदुर्वृत्तस्यविचेष्टितम् ॥ विमृश्यलोकव्यसनंकृपयोचुःस्मसत्रिणः ७ अहोउभयतःप्राप्तंलोकस्यव्यसनंमहत् ॥ दारुण्युभयतोदीप्तइवतस्करपालयोः ८ अराजकभयादेषकृतोराजाऽतदर्हणः ॥ ततोप्यासीद्भयंत्वद्यकथंस्यात्स्वस्तिदेहिनाम् ९ अहेरिवपयःपोषःपोषकस्याप्यनर्थकृत् १० वेनःप्रकृत्यैवखलःसुनीथागर्भसंभवः ॥ निरूपितःप्रजापालःसजिघांसतिवैप्रजाः ११ तथापिसांत्वयामोऽमुंनास्मांस्तत्पातकंस्पृशेत् ॥ तद्विद्वद्भिरसद्वृत्तोवेनोस्माभिःकृतोनृपः १२ सांत्वितोयदिनोवाचंनग्रहीष्यत्यधर्मकृत् ॥ लोकधिक्कारसंदग्धंदहिष्यामःस्वतेजसा १३ एवमध्यवसायैनंमुनयोगूढमन्यवः ॥ उपव्रज्याब्रुवन्वेनंसांत्वयित्वाचसामभिः १४ ॥ मुनयऊचुः ॥ नृपवर्यनिबोधैतद्यत्तेविज्ञापयामभोः ॥ आयुःश्रीबलकीर्तीनांतवतातविवर्धनम् १५ धर्मआचरितःपुंसांवाङ्मनःकायबुद्धिभिः ॥ लोकान्विशोकान्वितरत्यथानंत्यमसंगिनाम् १६ सतेमाविनशेद्वीरप्रजानांक्षेमलक्षणः ॥ यस्मिन्विनष्टेनृपतिरैश्वर्यादवरोहति १७ राजन्नसाध्वमात्येभ्यश्चोरादिभ्यःप्रजानृपः ॥ रक्षन्यथाबलिंगृह्णन्निहप्रेत्यचमोदते १८ यस्यराष्ट्रेपुरेचैवभगवान्यज्ञपूरुषः ॥ इज्यतेस्वेनधर्मेणजनैर्वर्णाश्रमात्मकैः १९ तस्यराज्ञोमहाराजभगवान्भूतभावनः ॥ परितुष्यतिविश्वात्मातिष्ठतोनिजशासने २० तस्मिंस्तुष्टेकिमप्राप्यंजगतामीश्वरेश्वरे ॥ लोकाःसपालाह्येतस्मैहरंतिबलिमादृताः २१

प्रहर्षोकिंबाधकंकरिष्यंतितदशक्तौतत्सांत्वनंव्यर्थमाह तद्विद्वद्भिरिति । असद्वृत्तइति नस्यादौरात्म्यंविद्वद्भिः १२ १३ एवंजिज्ञासमानाःकालक्षेपंनाकुर्वन्नित्याह एवमिति १४ १५ आनंत्यंमोक्षं असंगिनांफलाभिसंधिरहितानाम् १६ सधर्मोमाविनशेत् नष्टोनस्यात् बाधकमाहुरित्याह यस्मिन्निति अवरोहति अधोयाति १७ कामोयर्मोयोलोकान्दद्यातीतितत्राहुरित्याह राजन्निति असाधवोदुर्जनाः अमात्याःसचिवास्तेभ्यः साधुत्रिपृष्वितत्सौम्यसज्जनेवाधुरोपुमानित्यभिगानं यथासाहज्यपोग्यत्ववीप्साःस्वार्थानातिक्रमइतिवचनात् यथायोग्यपष्ठांशबलिकरम् १८ १९ २० तत्तुष्ट्याकिंफलंस्यादित्यत्राह तस्मिन्निति २१

इवोपिश्रीनारायणएवेज्यतइत्याहुरित्याह । तंसर्वेति । सर्वशब्दःप्रत्येकमभिसंबध्यते सर्वांल्लोकानमरान्यज्ञान्संगृह्णातीतिसर्वलोकामरयज्ञसंग्रहस्तं त्रय्यात्रिभिर्वेदैःप्रतिपाद्येषुमुख्यप्रतिपाद्यत्वात्र यीमयस्तं सर्वद्रव्याणांभगवद्विषयत्वाद्धरिर्द्रव्यमयस्तं अनेनैवतपोमयमितिव्याख्यातं सर्वसंग्रहणाद्विग्गुःसर्वसंग्रहउच्यते वेदस्यतस्यवक्तृत्वात्प्राधान्यंतुत्रयीमयः सर्वतद्विषयत्वेनमुख्यंसर्वद्रव्य स्वइतिवाक्यंचात्रमानं एवंविधश्रीहरिविचित्रैर्यज्ञैर्मेतेनभवायभद्रायपजन स्वदेशान्स्वस्यतवदेशआदेशउपदेशोयेभ्योयज्विभ्यस्तंतस्वदेशास्तान् स्वस्यदेशोविसर्जनंदानंयेषांततथानान्विप्रांस्त्वम नुरोद्धुमनुकूलीकर्तुमर्हसीत्यर्थः भवोभद्रेहरेप्राप्ताविति यादवः २२ इंद्रादिविषयेणस्वर्गादिफलप्रदेनयज्ञेनहरियजनंकथंगच्छतेप्रत्युततद्विघातेनानर्थएवस्यादित्याशंक्येंद्रादयोविष्णोर्मुख्यसन्निधा नपात्रत्वेनतदिज्यपात्रत्वात्प्रीताप्रीतायजमानायपदमभीष्टंतत्तद्दिशंत्यन्यथायजनेतदवज्ञयानर्थमेवप्रयच्छंतीत्याहुरित्याह यज्ञेनेति विष्णोःसन्निहितत्वात्सुमर्वेदेवाहरेःकलाइतिवचनान्मत्स्यादिवत्कला नभवंतीतिज्ञातव्यं कलबंधनइतिधातोरात्मनिहरेःसन्निधानंबध्नंतीतिकलाइत्यर्थः २३ ऋषीणांवाक्यामृतंशिरसिवज्रपातोपममिवमन्यमानोगूढाक्षेपाभिसंधिर्वेनःप्रतिवक्तीत्याह वेनइति २४

तंसर्वलोकामरयज्ञसंग्रहंत्रयीमयंद्रव्यमयंतपोमयम् ॥ यज्ञैर्विचित्रैर्यजतोभवायतेराजन्स्वदेशाननुरोद्धुमर्हसि २२ यज्ञेनयुष्मद्विषयेद्विजातिभिर्वितायमानेनसुराःकलाहरेः ॥ स्विष्टाःसुतुष्टाःप्रदिशंतिवांछितंतद्धेलनंनार्हसिवीरचेष्टितुम् २३ ॥ वेनउवाच ॥ बालिशाबतयूयंवैअधर्मेधर्ममानिनः ॥ येवृत्तिदंपतिंहित्वाजारंपतिमुपासते २४ अवजानंतियेमूढानृपरूपिणमीश्वरम् ॥ नानुविंदंतितेभद्रामिहलोकेपरत्रच २५ कोयज्ञपुरुषोनामयत्रवोभक्तिरीदृशी ॥ भर्तृस्नेहविदूराणांयथाजारेकुयोषिताम् २६ विष्णुर्विरिंचोगिरिशइंद्रोवायुर्यमोरविः ॥ पर्जन्योधनदःसोमःक्षितिरग्निरपांपतिः २७ एतेचान्येचविबुधाःप्रभवोवरशापयोः ॥ देहेतिष्ठंतिनृपतेःसर्वदेवमयोनृपः २८ तस्मान्मांकर्मभिर्विप्रायजध्वंगतमत्सराः ॥ बलिंचमह्यंहरतमत्तोन्यःकोग्रभुक्पुमान् २९ मैत्रेयउवाच ॥ इत्थंविपर्ययमतिःपापीयानुत्पथंगतः ॥ अनुनीयमानस्तद्याच्ञांनचक्रेभ्रष्टमंगलः ३० इतितेऽसत्कृतास्तेनद्विजाःपंडितमानिना ॥ भग्नायांभव्ययाच्ञायांतस्मैविदुरचुक्रुधुः ३१ हन्यतांहन्यतामेषपापःप्रकृतिदारुणः ॥ जीवञ्जगदसावाशुकुरुतेभस्मसाद्ध्रुवम् ३२ नायमर्हत्यसद्वृत्तोनरदेववरासनम् ॥ योवैयज्ञपतिंविष्णुंविनिंदत्यनपत्रपः ३३ कोवैनंपरिचक्षीतवेनमेकमृतेशुभम् ॥ प्राप्तईदृशमैश्वर्यंयदनुग्रहभाजनम् ३४

स्वबुद्ध्याबालिशत्वमुपपादयति अवजानंतीति २५ पुनरपिवेनःशापयोग्यापराधमात्मनिकर्तुंवक्ति कोयज्ञइति २६ अस्मद्भक्तिविषयोनाम्नाविष्णुःसृष्ट्यादिकारिणस्तदाज्ञानियताविरिंचादय स्तत्परिवारभूताइतिभ्रांतिर्माभूदितिएवंतेविष्णुप्रभृतयोमयिसन्निहिताअतस्तत्तच्छक्तिमत्त्वादहमेवाखिलोत्तमइज्यनमइत्याह विष्णुरित्यादिना २७ वरशापयोःदानेप्रभवःसर्वदेवमयइत्युपसंहारः २८ २९ किंफलितंतदाह इत्थमिति तेषामृषीणांयाच्ञाम् ३० आत्मनिशापसामर्थ्यंसमुल्लसितंकर्णौपिधायनिर्याणमनुचितमितिपश्यंत शापात्पूर्वंभाविकोपायुधमृषयउदाहरन्नित्याह इतीति इतिशब्दःप्रकारवचनः हव्यविषययाच्ञायाम् ३१ ऊचुश्चेत्याह हन्यतामिति जीवंश्चजगद्भस्मसात्करोति ३२ ३३ निंद्यदोषसद्भावान्निंदतीतिकिंनस्यादत्राह कोवेति निरनिष्ठोनिरवद्यइतिश्रुतेरशुभोयमेवनिंद्यदोषाकरइतिभावः यस्यहरेरनुग्रहस्यभाजनंयस्यानुग्रहोयस्मिन्सयदनुग्रहःपुमान्सएवभाजनंवातदनुग्रहरहितत्वादयंहंतव्यइत्यर्थः अत्रक्रोधवचनयोःक्रमकारणमेकैकंदृष्ट्वाऽस्मात्पंक्तिमापयेदितिविदुद्ध्याकृतमितिज्ञातव्यम् ३४

मेरेत्युक्तिःश्रोतॄणांश्रोत्रदुःसहेतिप्रकारांतरेणतंजघ्नुरित्याह इत्थमिति । एवंमारितोवेनःकंलोकमवापकरीगांतन्मतदूषकत्वात् केनस्यानुष्ठातारस्तन्मतनिरासिनःपृथोश्चक्षिप्रमाविर्त्वादुत्सन्नप्रायामि विचवकुंनयुक्तंतत्रतत्रहृश्यमानत्वादितिसर्वं अहंब्रह्मेतिवेनस्तुध्यायन्नापाधरंतमः तद्राद्धांतोमहींव्यापोमेयांख्यापयतांनिशं असुरराक्षसाश्चैवपिशाचास्तत्पथिस्थिताः भूमौतत्पृथुनासर्वांनिरस्तंमहिमा त्मना पुनःकलियुगंप्राप्तेऽष्टाविंशतिमेमनोः वैवस्वतस्यसमयेजाताःक्रोधवशाभुवि ख्यापयंतिदुरात्मानोमार्गमिमांस्तत्पुरःसर इत्यनेनात्रतुग्रंथबाहुल्यादन्यत्रविस्तृतत्वाच्चज्ञातुमनभ्यर्हितत्वाच्चनप्रपंचि तमितिज्ञातव्यं तेषांक्रोधवशानांपुरःसरोऽग्रगंतामुख्यइत्यर्थः ३५ वेनस्यपुत्राभावाद्दर्षिणाक्रोधान्पुरोहितस्यभीतत्वात्मृतकार्यमंत्रवक्रभावात्परं कलेवरंकिंकृतमत्राह ऋषिभिरिति विद्यायोगेनमंत्रौ षधादिविद्योपायेन शोचतीत्यनेनमातृस्वभावोदर्शितः ३६ एवंवेनेशान्तेतपोबलादन्यमेकराजानचक्रुस्तद्दृश्याभावात्तूष्णीमासुः कलेवरंमुनयःकिमकुर्वन्निितिपरीक्षित.शंकांपरिहरन्नुत्तरकथाप्रस गमाह एकदेति सरयूनाम्न्योनद्याःसलिलेआप्लुताः कृतस्नानाःसंतोभ्यर्हितस्यविष्णोःकथायदाचक्रुः ३७ तदामहोत्पातान्वीक्ष्याहुरित्यन्वयः किमाहुरितितत्राह अपीति अपिशब्दस्यभवेदित्यने

इत्थंव्यवसिताहंतुमृषयोरूढमन्यवः ॥ निर्जघ्नुर्हुंकृतैर्वेनंहतमच्युतनिंदया ३५ ऋषिभिःस्वाश्रमपदंगतेपुत्रकलेवरम् ॥ सुनीथापालयामासविद्यायो गेनशोचती ३६ एकदामुनयस्तेतुसरयूसलिलाप्लुताः ॥ हुत्वाग्निंसत्कथाश्चक्रुरुपविष्टाःसरित्तटे ३७ वीक्ष्योत्थितान्महोत्पातानाहुर्लोकभयंकरान् ॥ अप्यभद्रमनाथायादस्युभ्योनभवेद्भुवः ३८ एवंमृशन्तऋषयोधावतांसर्वतोदिशम् ॥ पांसुःसमुत्थितोभूमेश्चोराणांविलुंपताम् ३९ तदुपद्रवमाज्ञाय लोकस्यवसुलुंपताम् ॥ भर्तर्युपरतेतस्मिन्नन्योन्यंचजिघांसताम् ४० चोरप्रायंजनपदंहीनसत्त्वमराजकम् ॥ लोकानावारयञ्छक्ताअपितद्दोषदर्शिनः ४१ ब्राह्मणःसमदृक्शांतोदीनानांसमुपेक्षकः ॥ स्रवतेब्रह्मतस्यापिभिन्नभांडात्पयोयथा ४२

नान्वयः अनाथायाइतिहेतुगर्भविशेषणादभद्रंसंभावितमितिभावोचन्नित्यर्थः ३८ वसुलुंपतांचोराणांसकाशाद्भूमेःपांसुः समुत्थितइत्यन्वय ३९ ततःकिमभूदत्राह तदुपद्रवमिति तत्तदालोकस्यचो राणामुपद्रवमाज्ञायैवनिश्चित्यमृतस्यवेनस्यमहीपतेरुपरतस्यसामर्थ्यंधुरित्यन्वयः ४० युष्मत्तोन्येतन्निवारकानसंतिकिमितितटस्थचोद्यपरिहरंतीत्याह चोरप्रायमिति सत्यंतद्दोषदर्शिनोयद्यधर्मकर्तारं नवारयंतितर्हिसदोषस्तानपिस्पृशेदितिदोषंपश्यंतःकिंचशक्तास्तन्निवारणेसमर्थाअपिलोकाः लुक्प्रकाशनइतिधातोः । विशिष्टज्ञानाजनाहीनसत्त्वंपराक्रमविधुरमराजकंप्रजापालकरहितंजनपदंवी क्ष्यचोरान्नावारयन्नितियदतइत्यर्थः ४१ सामान्यमुक्त्वाजातिविशेषस्यदोषाधिक्यमाहुरित्याह ब्राह्मणइति ब्रह्मेतिभावप्रधानोनिर्देशः दुष्टोपद्रवंदीनानांजनानामुपद्रवंदृष्ट्वासमुपेक्षकस्तूष्णींभूतः स्यात्तस्यब्रह्मत्वंब्राह्मण्यंस्रवतेनश्यति तन्निदर्शयंतिभिन्नेति तस्मादस्माभिरनुष्ठेयमितिभावः ४२

---

१ अत्रभगवन्निंदायाःफलंनिजघ्नुरितिप्रसिद्धंहिवेवेतिभाति । नचतद्युक्तं । भगवन्निंदयावेनोद्विजैर्न्नमामिपान्निडानिप्रमाणेइत्याशक्यतम प्रातिलक्षणफलमित्युक्तत्वात् । भगवन्निंदयावेनस्यममाख्याप्रमाणेनाभि प्रायमाह ॥ अहंब्रह्मेति ( टीकास्थम् ) । वैवस्वतस्यसमयेएकमन्वन्तरेमहायुगलक्षणकालविशेषेतत्राप्यष्टाविंशकलौयुगेवैवस्वतस्यमनोर्महायुगेष्वष्टाविंशोयोमहायुगः तदन्तर्गतकलौयुगेप्राप्तेसतीत्यर्थः । पुनः येपूर्व गंधमादनगिरौभीमेनमणिमत्पुरोगमानिहताः तएवसंकारादिरूपेणपुनर्जाताइत्यर्थः । तेननिजघ्नुरित्युक्तहननं तमःप्राप्तिरेव । हनहिंसागत्योरितिधातोर्गतिर्वेहननम् । साचगतिस्तमसिस्थितिरूपा ॥ तथाचदैत्यह तिस्तमसिस्थिरानियतस्थितिरेवेनचान्यथेत्युक्तंगत्युक्तभवति ॥ उक्ताख्यायिकयाचअहंब्रह्मास्मीत्युपासनाशास्त्रप्रवर्तनेवेनएवमूलभूतः । तदीयसिद्धांतानुसारेणमणिमानेवसंकरोभूत्वाऽद्वैतप्रतिपादकभाष्यमकरोत् । तदनुसारेणचित्सुखादिदुरात्मानोपिपंचपादिकादिग्रंथाश्चक्रुरितिबोध्यम् ॥ ता०टी

इत्योपील्याहुरित्याह नांगस्येति संस्थातुंनाशंप्राप्तुं कुलइत्यत्तउक्तं अमोघेति ४३ यथाऽमृतमंथनेकालकूटमादावुद्भूदेवंमत्रापीतिभावेनाह तत्रेति तत्रमथ्यमानेमातिबाहुकोवामनः कुब्जक्षुद्रदीर्घत्वं हस्ववामनबाहुकाइत्यभिधानम् ४४ तंविशिनष्टि काकेति महाहनुःस्थूलकपोलः । निम्ननासाग्रोऽधोनतघ्राणशिरः ४५ ततोनिषीदेतिवचनात् ४६ सकइतितंविशिनष्टि । योपाहरदिति अनेनवेनस्य दुर्वाविमुक्तइतिज्ञापनइति । तथाहि तामसोराजसःसात्त्विकस्तामसतामसइति । तत्रनामसागोनिपादः । राजसांशःस्वर्गस्यगंता । सत्त्वांशःपृथुः । तामसतामसांशोवेनःस्वयमंधंतमोगतः । तदुक्तं । स्वांशोवेनःसमुद्दिष्टःसत्त्वांशःपृथुतामगात् रजोंशश्चदिवंप्रापनिपादस्तामसोभवत् स्वयंवेनश्चतुर्थस्तुमहातमसियातिनिनइतिग्जांशोवेनोदिवंगतइतिकेनावगम्यतइतिचोद्यं । पापरूपोपृथग्जातो निषादोवेनदेहतः यस्मात्तस्मात्पृथोःपुत्राद्रजोंशेनादिवंययावित्यनेनपरिहृतमिति ग्रंथांतरसिद्धत्वादत्रनविस्तृतम् ४७ अथसत्वांशात्पृथोरुत्पत्तिंवक्ति अथेति ४८ ४९ एषविष्णोःकलेतिलिंगव्यत्ययेन मत्स्यादिवत्साक्षाद्धरेरंशतावचः साक्षादंशानायांकिंतुविशेषावेशात्तदंशइतिवचनमितिध्वनयति तदुक्तं पृथुर्हैहयादयोजीवास्तेष्वाविष्टोहरिःस्वयं विशेषावेशतस्तेपुसाक्षाद्धयंशतावचः किंतुव्यासऋषभकपिलामत्स्यपूर्वकाः आकृतिजैतरेयौचयमजत्रयमेवच धन्वंतरिर्हयग्रीवोदत्तात्रेयश्चतापसः स्वयंनारायणस्त्वेतेनाणुमात्रविभेदिनः बलतोरूपतश्चैवगुणैरपिकथंचनेति इयंचलक्ष्मीःसं

नांगस्यवंशोराजर्षेरेषसंस्थातुमर्हति ॥ अमोघवीर्याहिनृपावंशेस्मिन्केशवाश्रयाः ४३ विनिश्चित्यैवमृषयोविपन्नस्यमहीपतेः ॥ ममंथुरूरुंतरसातत्रासीद्बाहुकोनरः ४४ काककृष्णोतिह्रस्वांगोह्रस्वबाहुर्महाहनुः ॥ ह्रस्वपान्निम्ननासाग्रोरक्ताक्षस्ताम्रमूर्धजः ४५ तंतुतेऽवनतंदृष्ट्वाकिंकरोमीतिवादिनम् ॥ निषीदेत्यब्रुवंस्तातसनिषादस्ततोभवत् ४६ तस्यवंश्यास्तुनैषादागिरिकाननगोचराः ॥ योपाहरज्जायमानोवेनकल्मषमुल्बणम् ४७ ॥ मैत्रेयउवाच ॥ अथतस्यपुनर्विप्रैर्विपन्नस्यमहीपतेः ॥ बाहुभ्यांमथ्यमानाभ्यांमिथुनंसमपद्यत ४८ तद्दृष्ट्वामिथुनंजातमृषयोब्रह्मवादिनः ॥ ऊचुःपरमसंतुष्टाविदित्वाभगवत्कलाम् ४९ ॥ ऋषयऊचुः ॥ एषविष्णोर्भगवतःकलाभुवनपावनी ॥ इयंचलक्ष्मीःसंभूतिःपुरुषस्यानपायिनी ५० ॥ इतिश्रीभागवतेम०चतुर्थस्कंधेचतुर्दशोध्यायः १४ ॥ ॥ ४ ॥ ॥ विप्राऊचुः ॥ अत्रतुप्रथमोराज्ञांपुमान्प्रथयितायशः ॥ पृथुर्नाममहाराजोभविष्यतिपृथुश्रवाः १

भूतिरितिविशेषणात् पृथुरपिहरेःसाक्षादंशइतरथास्यतत्पतित्वायोगादितिबुद्धिर्व्यामोहोनकर्तव्यः तत्रसन्निहिताश्रीश्चयत्रसन्निहितोहरिः नास्यसन्निधिमात्रेणरमापत्नीत्वमाव्रजेत् साक्षादेवतुसाक्षाच्च हरेःसन्निधितःक्वचित् गोप्यादिरूपामवतिविपरीतंनतुक्वचिदितिनिर्णायकवचनात् पुरुषोधातुःपुनीपुनात्पुंस्त्वात्मपरमात्मनोरित्यभिधानात् प्रकरणबलाच्च पुरुषपरमात्मानमपहायनातिष्ठतीत्यभिप्रायेणोक्तंपुरुषस्यानपायिनीति लक्ष्मीविशेषणवतीकापिरमणीभर्तृवियोगशून्याजातेतितात्पर्यमिति ५० ॥ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेविजयध्वजकृतटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥
श्रीनारायणचरणारविंदमकरंदनिषेविणांमहतांपुरुषाणामिहामुत्रानभिमताअपिभगवदिच्छयासकलाःसंपदोभवंतीतिनिरूप्यतेस्मिन्नध्यायेपृथुकथाकथनव्याजेन तत्रादौविप्राणांपृथुप्रशंसाप्रकारंवक्ति अत्रेति तुशब्देनभेदवादिनापृथोर्हरेश्चमहान्भेदोस्तीतिसूच्यते एतदर्थमेतत्प्रमाणसद्भावात्तथाह्युक्तं ब्रह्मण्यनंतेगरुडेरुद्रेकामेशचीपतौ अनिरुद्धेमनौचैवपृथोचक्रतवीर्यजे । नारदेचैवमात्स्येपुविशेशात्सन्निधिर्हरेः । सुदर्शनादिष्वस्त्रेपुतथासन्निहितोहरिः नरलक्ष्मणौबलश्चैवशेषस्यांशाःप्रकीर्तिताः । तथाभरतशत्रुघ्नौशंखचक्रावुदाहृतौ प्रद्युम्नश्चकुमारश्चस्कंदःकामांशकाःस्मृताइति । वैन्येपृथौसन्नि

१ ममन्थुरित्यादिना तामसबाहुकोत्पत्तिरचेतनादेहात् कथं? तथाच मथ्यमानाभ्यां बाहुभ्यां मिथुनोत्पत्तिः कथं? तथाच भगवन्निंद्यावेनोद्विजैस्तमभिपातित इत्युक्त्यातत्तामसदेहात्सात्त्विकोत्पत्तेरयुक्तत्वात्तदुत्पत्तिः कथम्? अतआह अनेनेति ।

हिर्वैराजरूपीजनार्दनइतिविशेषवचनेनायंवैन्यःपृथुःश्रीनारायणांशःअन्यस्तथाकश्चित्पृथुनामातत्रोच्यतइतिशंकानिर्मूलितेतिज्ञातव्यं अत्रास्मिन्वर्षेराज्ञांगणनसमयेप्रथमः । कथं यतोयशःप्रथायि
ता अतःप्रथयितृत्वात्पृथुर्नामप्रमहाराजेत्यत्रटच्प्रत्ययाभावस्तेभ्योवैशिष्ट्यद्योतनार्थः १ सुदतीशोभमानदंता । अर्चिर्नामगुणैरर्चितत्वाद्रूपेणैर्ज्वलितत्वात्अर्चिर्भाज्वालेत्यभिधानं वरोवरणीयआरो
होनितंबोयस्याःसातथोक्ता अवरुंधतीपतित्वेनस्वीकुर्वाणाभविष्यतीत्यर्थः २ एषपृथुःसाक्षाद्धरेःश्रीनारायणस्यांशइति सप्तसुप्रथमेतिसूत्राद्दशस्यसन्निधानस्यमुख्यंपात्रंलोकारिरक्षयाजनरक्षणे
च्छया यद्वाप्रत्यक्षसदृशोःसाक्षादित्यभिधानाद्धरेः साक्षादंशः पृथोर्यांजातिस्तज्जातिसदृशजातिरूपेणसन्निहितइत्यर्थः तदुक्तं राजरूपीजनार्दनइति यतोहरेःपृथौसाविधानविशेषात्तदंशत्वतस्माच्छ्रे
योपितथावचनमित्यस्मिन्नर्थेहिशब्दः हिर्हेतावनवधारणइतियादवः अवधारणार्थत्वे उक्तस्मृतिविरोधः ३ गंधर्वप्रवरादयस्तत्राद्विजप्रशंसासमयेगानादिकंचक्रुरित्यन्वयः ४ ५ तत्रदेवान्वि

इयंचदेवीसुदतीगुणभूषणभूषिता ॥ अर्चिर्नामवरारोहापृथुमेवावरुंधती २ एषसाक्षाद्धरेरंशोजातोलोकरिरक्षया ॥ इयंचतत्पराहिश्रीरनुजज्ञेऽनपायि
नी ३ ॥ मैत्रेयउवाच ॥ प्रशंसंतिस्मतंविप्रागंधर्वप्रमुखाजगुः ॥ मुमुचुःसुमनोधाराःसिद्धानृत्यंतिसास्त्रियः ४ शंखतूर्यमृदंगाद्यानेदुर्दुंदुभयोदिवि
तत्रसर्वउपाजग्मुर्देवर्षिपितृणांगणाः ५ ब्रह्माजगद्गुरुर्देवैःसहासृत्यसुरेश्वरैः ॥ वैन्यस्यदक्षिणेहस्तेदृष्ट्वाचिह्नंगदाभृतः ६ पादयोररविंदंचतस्मिन्मे
नेहरेःकलाम् ॥ यस्याप्रतिहतंचक्रमंशस्यपरमेष्ठिनः ७ तस्याभिषेकआरब्धोब्राह्मणैर्ब्रह्मवादिभिः ॥ आभिषेचनिकान्यस्मैआजह्रुःसर्वतोजनाः ८
सरित्समुद्रागिरयोनागागावःखगामृगाः ॥ द्यौःक्षितिःसर्वभूतानिसमाजह्रुरुपायनम् ९ सोभिषिक्तोमहाराजःसुवासाःसाध्वलंकृतः ॥ पत्न्यार्चिषालं
कृतयाविरेजेग्निरिवापरः १० तस्मैजहारधनदोहैमंवीरवरासनम् ॥ वरुणःसलिलस्रावमातपत्रंशशिप्रभम् ११ वायुश्चवालव्यजनेधर्मःकीर्तिमयीं
स्रजम् ॥ इंद्रःकिरीटमुत्कृष्टंदंडंसंयमनंयमः १२ ब्रह्माब्रह्ममयंवर्मभारतीहारमुत्तमम् ॥ हरिःसुदर्शनंचक्रंतत्पत्न्यव्याहतांश्रियम् १३ दशचंद्रमसिंरुद्रः
शतचंद्रंतथांबिका ॥ सोमोमृतमयानश्वांस्त्वष्टारूपाश्रयंरथम् १४ अग्निराजवगंचापंसूर्योरश्मिमयानिषून् ॥ भूःपादुकेयोगमयेद्यौःपुष्पबलिमन्व
हम् १५ नाट्यंसुगीतंवादित्रमंतर्धानंचखेचराः ॥ ऋषयश्चाशिषःसत्याःसमुद्रःशंखमात्मजम् १६ सिंधवःपर्वतानद्योरथवीथीर्महात्मनः ॥ सूतोथ
मागधोवंदीसंस्तोतुमुपतस्थिरे १७ स्तावकांस्तानभिप्रेत्यपृथुर्वैन्यःप्रतापवान् ॥ मेघनिर्ह्रादयावाचाप्रहसन्निदमब्रवीत् १८

शिनाष्टि ब्रह्मेति तस्मिन्पृथौसन्निहितांहरेःकलामेनइत्यन्वयः ६ ७ एवंप्रशस्यत्राह्मणैःकिमकारीतितत्राह तस्येति अभिषेकसाधनानिस्वयंसंपादितानिकिंवान्यैरित्यतआह आभिषेचनि
कानीति ८ तत्रोपायनानिकआजह्रुरितितत्राह सरिदिति ९ १० नकेवलंसरिदादयउपायनंददुःकिंत्वन्येलोकपालादयोपीत्याह तस्माइति ११ १२ तस्यहरेःपत्नीलक्ष्मी १३ नाम्नादश
चंद्रंखड्गं त्वष्टाविश्वकर्मा रूपाश्रयंरथं १४ योगमयेऽणिमादियोगसाधने १५ अंतर्धानमदृश्यता आत्मजमात्मनोजातं १६ रथवीथीरथमार्गान् । यथात्मविद्वंराजानिपेवणीयइतिभावेनसू
तादीनामुपस्थानप्रकारंवक्ति सूतोथेति १७ पृथोर्निरहंकारत्वप्रकटनायवक्ति स्तावकानिति मेघनिर्ह्रादवन्मेघध्वनिवत्ध्वनिर्यस्याःसातयातया १८

हेसूतमागधःयोज्यतां स्तुतिं प्रयुंजतांवोयुष्माकमेषःस्तवोमेकिंम्।अथ.कंगुणमाश्रित्यवर्तमानःस्यादित्यन्वयः तवशौर्यादिगुणमाश्रित्यवर्ततइतितत्राह लोकइति अस्पष्टगुणस्याप्रकाशितपराक्रमादि
गुणस्य यद्वा यथहंमख्यातगुणःस्यांतथैवनःस्तवोयोज्यतां । नन्वतथा तस्मात्किमाश्रयोयोज्यते यतएवमनोवोमयिप्रयुक्तागिरोवितथामाभूवन्नित्यन्वयः १९ किमिदानीमकल्पितमत्राह तस्मा
दिति यस्मादिदानीमनाविष्कृतगुणावयंतस्मादीडयवाचोयूयंपरोक्षेकाले कृतविक्रमाणंनरमस्मद्गुणाश्रितान्यस्मद्विषयाणिकर्माण्याश्रित्याल्पमप्यर्थंस्तोत्रंकरिष्यथेत्यन्वयः यद्वा कथंकारंचेदंवित
थंस्युरस्माद्गिरइतितत्राह तस्मादिति यतोवयमप्रकाशितगुणास्तत्रप्रवर्तमानाविषयाणामसत्त्वाद्वैतथ्यमाप्नुवंति तस्मात्तद्दोषपरिहारार्थमस्मदपरोक्षेचास्मन्निकटेस्मदग्रदेशेवर्तमानोयोहरिस्तस्ये
वयवाचोहरेराश्रितानिचरितान्यंगीकृत्यस्तोत्रमलंकरिष्यथभूषितंकुर्वंतु अन्यथादूषितमेवस्यादतस्तस्यगुणानांनित्यत्वात्तद्विषयायुष्मद्गिरःसफलाःस्यु. अविद्यमानकथकत्वेदिन.परिकीर्तिताइति
युष्मदोषोपिपरिहृतःस्यादिति भाविनोगुणान्सम्यक्स्तुयइतितत्राह सतीति उत्तमश्लोकगुणानामनुवादमन्यभ्यर्हितेनापिमन्याआत्मस्तवनजुगुप्सितमितिनस्तावयाति आत्मप्रशंसामरणमितिस्मृतेः
२० वयंतत्रतत्रतंप्रभुंस्तुत्वाततःफलंलभामहेनत्कथमित्याशंक्यतन्मूर्खविषयंनविद्वद्विषयमित्याशयेनाह महद्गुणानिति अनभिव्यक्तत्वेनवात्म्येऽसतोऽविद्यमानानपिमहतापृथिव्यादीनाक्षमादिगुणानात्म

पृथुरुवाच ॥ हेसूतहेमागधसौम्यवंदिन्लोकेऽधुनाऽस्पष्टगुणस्यमेस्यात् ॥ किमाश्रयोमेस्तवएषयोज्यतांमामय्यभूवन्वितथागिरोवः १९ तस्मात्परो
क्षेऽस्मदुपाश्रितान्यलंकरिष्यथस्तोत्रमपीडयवाचः ॥ सत्युत्तमश्लोकगुणानुवादेजुगुप्सितंनस्तवयंतिसभ्याः २० महद्गुणानात्मनिकर्तुमिच्छन्कस्ता
वकैःस्तावयतेसतोपि ॥ तेस्यभविष्यन्निति विप्रलब्धोजनापहासंकुमतिर्नवेद २१ प्रभवोह्यात्मनःस्तोत्रंजुगुप्संत्यपिविश्रुताः ॥ ह्रीमंतःपरमोदाराःपौरुषं
वाविगर्हितम् २२ वयंत्वविदितालोके सूताद्यापिवरीमभिः ॥ कर्मभिःकथमात्मानंगापयिष्यामबालवत् २३ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधे
पंचदशोध्यायः ॥ १५ ॥ मैत्रेयउवाच ॥ इतिब्रुवाणंनृपतिंगायकामुनिचोदिताः ॥ तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया १

निकर्तुमिच्छन्प्रकाशयितुकामःकोविद्वांस्तावकैर्भवादृशैःस्तावयतेनकोपीत्यन्वयः कथंतन्मूर्खविषयमभूदितितत्राह भवाइति यद्वा यदुक्तंहरिविषयंस्तोत्रमलंकरिष्यथेति तद्गुणसंबद्धंस्तोत्रंनिर्गुणेह
रौकथंसंगच्छतेतथात्वेवास्मद्गिरांवैतथ्यंसुलभंस्यादितितत्राह । सतीति उत्तमश्लोकस्यहरेर्गुणानामनुवादेसतिस्तोतॄणांपापहरत्वेनप्रशस्ते । सभ्या पंडिताःविण्मूत्रपूर्णमद्वपैतिकान्यंति जुगुप्सि
तमात्मानंनस्तावयंतीत्यन्वयःसभ्येष्वंकोपितथाविधःकिंनस्यादितिशंकमानोमूर्खएवेतिभावेनाह महद्गुणानिति आत्मन्यसतांमहतोअणोरणीयान्महतोमहीयानितिश्रुतिसिद्धस्यहरेर्गुणानौदार्यादि
कानात्मनिकर्तुमिच्छन्स्तावकैःकोविद्वान्स्तावयते अपिपदेनोक्तंजुगुप्सितमित्यनुकर्षति । किमित्याश्रयइत्यनेनोक्तःपरवादविषयत्वादित्याशयेनाह भवाइति २१ सद्गुणाःप्रभवोप्यात्मस्तुतिंजुगुप्सं
तेकिमुतवयमितिभावेनाह प्रभवोपीति विद्यमानगुणसंबद्धस्तोत्रंप्रत्यक्षप्रमितपारमार्थिकंपौरुषमपिनिंदनीयमर्थः २२ वरीमभिर्वरगीयैःश्रेष्ठैरित्यर्थः २३ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेवि
जयध्वजकृतटीकायांपंचदशोध्यायः ॥ १५ ॥ ७ ॥ पृथुस्तुतिव्याजेनहरौभक्तावतारार्थंतन्माहात्म्यंनिरूप्यते अस्मिन्नध्याये नन्वत्रसूतादयःस्तुतौपृथुनानिवारिताअन्येकेस्तोतारोयेनततः
स्तुत्याहरौभक्तिरवतारपरत्वइत्याशंक्यमुनिप्रेरितास्तएवतुष्टुवुरितितत्स्तुतिप्रकारमुपक्रमते इतिब्रुवाणमित्यादिना १

वर्यंस्तोष्यामइतिप्रारंभएवश्रेयान्नतुनत्रसमर्थाइत्याहुरित्याह नाल्ममिति अलंसमर्थाः पृथुमन्निहितश्रीहरेर्माहिमसंदर्भन्यादितिभावेनोच्यते यइति योदेवदेवःश्रीनारायणोमाययाभक्तानुकंपेच्छयावततार तस्य वेनांगजदेनस्यांगादवयवाज्जन्म । अतएवअवततातत्यगमनइतिधातोर्विदेयसन्निहितत्वेन्माहात्म्य । तत्रायिस्थितस्यहरेः पौरुषाणिवर्णयितुंवाचस्पतीनांब्रह्मादीनामपिधियोबभ्रमुरितियस्मात्तस्माद्वयंनसमर्थाइतिकिमुवर्णनीयं चशब्दःकैमुत्यार्थः अन्यत्रदेवोहरिस्तस्यदेवोदेवनंक्रीडनंयस्मिन्पृथौमंडवदेवःपृथुः माययाभगवदिच्छांद्योतितनुनीच्छयावततार प्रकाशितोभूत्तस्यतेवेनस्यांगादवयवाज्जातस्यपौरुषाणिकथयितुंवाचस्पतीनाकवीनांधियोवभ्रमुरितियदइति धीशब्देनमनोलक्ष्यते मनसावाअग्रेसंकल्पयत्यथवाचाव्याहरतीतिश्रुते वाचोभ्रमंनीतिकिमुवक्तव्यमित्यर्थः २ तर्हिनिवर्ततामित्याहुरित्याह अथापीति असमर्थाअपिकथामृतादहतत्वास्त्रितितुंमनोनायातीत्यर्थः तर्हिकिंनुकुर्वनीतितत्राहुरित्याह यथोपदेशमिति साकल्येनस्तवनाशक्तानिवर्तनंपरमित्यतउक्तं मुनिभिरिति आज्ञालंघनभीरुत्वाद्धितन्मेहमपंचयामः ३ किंगुणविशिष्टःप्रपंचइत्यत्रोच्यते एषइति तत्परिपंथिनातस्यधर्मसेतोर्विगोप्तिना ४ एषपृथौसन्निहितोहरिस्तनौस्वदेहेतनू शक्तिरूपेणा

सूतउवाच ॥ नालंवयंतेमहिमानुवर्णनेयोदेवदेवोऽवततारमायया ॥ वेनांगजातस्यचपौरुषाणितेवाचस्पतीनामपिबभ्रमुर्धियः २ अथाप्युदारश्रवसः पृथोर्हरेःकलावतारस्यकथामृतादृताः ॥ यथोपदेशंमुनिभिःप्रचोदिताःश्लाघ्यानिकर्माणिवयंवितन्महे ३ एषधर्मभृतांश्रेष्ठोलोकंधर्मेनुवर्तयन् ॥ गोप्ताचधर्मसेतूनांशास्तातत्परिपंथिनाम् ४ एषवैलोकपालानांबिभर्त्येकस्तनौतनूः ॥ कालेकालेयथाभागंलोकयोरुभयोर्हितम् ५ वसुकालउपादत्तेकालेचायंविमुंचति ॥ समःसर्वेषुभूतेषुप्रतपन्सूर्यवद्विभुः ६ तितिक्षत्यक्रमंवैन्यउपर्याक्रमतामपि ॥ भूतानांकरुणःशश्वदार्तानांक्षितिवृत्तिमान् ७ देवेवर्षत्यसौदेवोनरदेववपुर्हरिः ॥ कृच्छ्रप्राणाःप्रजाह्येषरक्षिष्यत्यंजसेंद्रवत् ८ आप्याययत्यसौलोकंवदनामृतमूर्तिना ॥ सानुरागावलोकेनविशदस्मितचारुणा ९ अव्यक्तवर्त्मैषनिगूढकार्योगंभीरवेधाउपगुप्तवित्तः ॥ अनंतमाहात्म्यगुणैकधामापृथुःप्रचेताइवसंवृतात्मा १० दुरासदोदुर्विषहआसन्नोपिविदूरवत् ॥ नैवाभिभवितुंशक्योवेनारण्युत्थितोनलः ११

मूर्तीःयथाभागंबिभर्ति ५ भरणप्रकारंदर्शयति वस्वित्यादिना वसुर्हिरण्यमौपोतकंशंवसुतोयंमहाधनइत्यभिधानात् यथासंभवंयोज्यं करादानकालेवसुधनमुपादत्तेदुर्भिक्षादौदानयोग्यपुरुषागमनकालेविमुंचति सूर्योपिग्रीष्मादिकालेवसुजलमुपादत्तेवर्षादौमुंचति समोयथायोग्यंदंडयादिषुप्रतपन्प्रतापंकुर्वन्नन्यत्रयथर्तुप्रतपन् ६ उपर्याक्रमतामाक्रमतामतिक्रम्यवर्तमानानामपितामक्रममपराधंतितिक्षतिमहते दारिद्र्यपार्तानांक्षितिवृत्तिमान्भूमिलक्षणवृत्तिदाता भूमार्थेमतुबर्थः ७ देवेऽवर्षतिअनावृष्टौसत्यांवृभुक्षयाकृच्छ्रप्राणाःक्लिष्टेंद्रियचेष्टाःप्रजारक्षिष्यतीत्यन्वयः ८ वदनामृतमूर्तिनामुखचंद्रेण ९ अव्यक्तंसूक्ष्मंवर्त्मचारैःप्रवेशमार्गोयस्यमतथा अव्यक्तानायोगिनांवर्त्मयस्येतिवा नितरांगुढंकार्यंकर्तव्यंयस्य । उपगुप्तवित्तःसुरक्षितकोशःसुराक्षितपरागारः । विलयग्राप्रनित्तोविद्वान्विश्रुतएवंवेत्यभिधानं । अनंतानांमाहात्म्यगुणानामेकंधामाश्रयोयस्यसतथा । अनंतमाहात्म्यगुणाएवैकंधामयस्यसतथावा । अन्यत्रशेषस्यमाहात्म्यगुणैकधाम । संवृतआत्मास्वरूपंयस्यसतथा १० अग्नेःशक्तिसन्निधानस्वभावमाह दुरासदइति ११

वायुसंनिधानफलमाह अंतर्बहिरिति अंतश्चारणैश्चामपंचारैर्बहिश्चारिगूढपुरुषैः प्रमलंबनमनन्यादेहिनमात्मा [illegible]
वैस्यादुपरिवर्तमानावक्षौपस्येतिवाध्यक्ष परितोवर्तमानंजानातिनचोनिश्चा ॥ १२ ॥ आत्मद्विषःमात्म [illegible]
अनेनधर्मराजसंनिधानफलमुक्तंभवति १३ परमेष्ठ्यंशसंनिधानफलमाह अस्येति आमानसाचल [illegible] १४ चंद्रगुणसंनिधानफलमाह रंजयिष्यती [illegible]
ति यद्यस्मादस्मात् १५ सत्योऽवधौमतिज्ञायामितिपाठः १६ १७ आनंदवर्धनः आनंद [illegible]
॥ १८ ॥ १९ ॥ उक्तमिदसर्वंश्रीनारायणसंनिधानफलमित्यभिप्रेत्याह अयंत्विति तुशब्दएवार्थे [illegible]

अंतर्बहिश्चभूतानांपश्यन्कर्माणिचारणैः ॥ उदासीनइवाध्यक्षोवायुरात्मेवदेहिनाम् १२ नादंड्यंदंडयत्येषसुतमात्मद्विषामपि ॥ दंडयत्यात्मजमपिदंड्यं धर्मपथेस्थितः १३ अस्याप्रतिहतंचक्रंपृथोरामानसाचलात् ॥ वर्ततेभगवानर्कोयावत्तपतिगोगणैः १४ रंजयिष्यतियल्लोकमयमात्मविचेष्टितैः ॥ अथामुमाहूराजानंमनोरंजनकैःप्रजाः १५ दृढव्रतःसत्यसंधोब्रह्मण्योवृद्धसेवकः ॥ शरण्यःसर्वभूतानामानदोदीनवत्सलः १६ मातृभक्तिःपरस्त्रीषुपत्न्या अर्धइवात्मनः ॥ प्रजासुपितृवत्स्निग्धःकिंकरोब्रह्मवादिनाम् १७ देहिनामात्मवत्प्रेष्ठःसुहृदानंदवर्धनः ॥ मुक्तसंगप्रसंगोयंदंडपाणिरसाधुषु ॥ १८ ॥ एषदोग्धामहींविरोगांसतीमोजसौषधीः ॥ समांकरिष्यतेचेमांधनुःकोट्याममंततः १९ अयंतुसाक्षाद्भगवांस्त्र्यधीशःकूटस्थआत्माकलयावतीर्णः ॥ यस्मिन्नविद्यारचितंनिरर्थकंपश्यंतिनानात्वमिवप्रतीतम् २० अयंभुवोमंडलमोदयाद्रेर्गोप्तैकवीरोनरदेवनाथः ॥ आस्थायजैत्रंरथमात्तचापःपर्यस्यतेदक्षिणतोयथार्कः २१ तस्मैनृपालाःकिलतत्रतत्रबलिंहरिष्यंतिसलोकपालाः ॥ मंस्यंतिएषांस्त्रियआदिराजंचक्रायुधंतद्यशउद्धरंत्यः २२ अयंमहींगांदुदुहेधिराजः प्रजापतिर्वृत्तिकरःप्रजानाम् ॥ योलीलयाद्रीन्स्वशरासकोट्याभिंदन्समांगामकरोद्यथेंद्रः २३ विस्फूर्जयन्नाजगवंधनुःस्वयंयदाचरत्क्ष्मामविषह्यमाजौ ॥ तदानिलिल्युर्दिशिदिश्यसंतोलांगूलमुद्यम्ययथामृगेंद्रः २४

वृत्तिस्थितिहेतुगर्भविशेषणद्वयमाह त्र्यधीशइति त्रयाणामीशाइंद्रादयस्तेषामप्यधिकत्वेनेशः । [illegible]
स्वतउक्तमात्मेति । गुणपूर्णत्वादात्मा । तर्हिस्थानभेदान्नानात्वमायातमत्राह्यपतं यस्मिन्निति यल्लोकेनिरर्थकंतयस्मिन्हरौ [illegible] । एतदुक्तं
भवति यल्लोकेत्वपृथगादिकमविद्यमानमत्स्यादिभगवद्रूपेषुप्रतीतंनानात्वंयथामिथ्याभ्रमंपश्यंतियोगिनस्तथेति [illegible]
दिवानात्वदृष्टत्वयानिरर्थकमितिपाठे एवधर्मान्पृथक्पश्यन्निति च अनेनतद्धर्मागमदिपृथक्त्वदर्शनेना [illegible] २० [illegible]
स्यतेपर्येति २१ अन्येपुराजसुतस्तुअस्याधिराज्यंकथमित्याशंक्यचक्रवर्तित्वाद्युच्यतइतिउच्यते तस्मात् [illegible] २२ [illegible] अयंमहीमिति २३ निलिल्युर्निलीना लांगूलंपुच्छम् २४

---

१ अन्यथास्मिन्परब्रह्मणिअविद्यारचितं अनिर्वचनीयाविद्याकल्पितं [illegible] । प्रतीतमपि [illegible]

अहार्षीदित्यनेनास्यप्रतिभटःशतमखएवनान्यइतिद्योतनायकथितामितिज्ञातव्यं चरमेअंत्येश्वमेधेवर्तमानेसति २५ यतोज्ञानात्परंब्रह्मप्रत्यक्षंभवतियोगिनः २६ तद्भविष्यत्कथाऽतीतत्वेनकथं कथ्यतइत्यत्रोच्यते तत्रेति आत्माश्रिताःस्वविषयास्त्रिभिःषड्भिश्चरणैरुपलक्षितायशोनिबंधाः २७ अप्रतिरुद्धचक्रोऽप्रतिहताज्ञो भविताभविष्यतीत्युपसंहरते २८ ॥ ॥ इतिश्रीभागवतेचतुर्थस्कंधेषोडशोध्यायः ॥ १६ ॥ ॥ ७ ॥ ॥ अस्मिन्नध्यायेसूतादिभिःश्रीहरिमहिमोगानेनद्वत्वेन पृथोर्महिम्न उक्तत्वात्तन्माहात्म्यमेवोच्यते तत्रादौसूतादितृप्तिकरणप्रकारमाह एवंभगवानित्यादिना छंदयामासतोषयामास १ राज्ञासमानवयसःश्रेणयस्त्वंगरक्षकाइत्यभिधानाच्छ्रेणयोंगरक्षकाः २ विदुरःसूतादिभिःसूचितंगोदोहनादिपृथुविक्रमंविस्तरतःश्रोतुंलोकोपकारायपृच्छति

एषोश्वमेधाञ्छतमाजहारसरस्वतीप्रादुरभूद्दियत्र ॥ अहार्षीद्यस्यहयंपुरंदरःशतक्रतुश्चरमेवर्तमाने २५ एषस्वसद्मोपवनेसमेत्यसनत्कुमारंभगवंतमेकम् ॥ आराध्यभक्त्यालभतामलंतज्ज्ञानंयतोब्रह्मपरंवदंति २६ तत्रतत्रगिरस्तास्ताइतिविश्रुतविक्रमः ॥ श्रोष्यत्यात्माश्रितागाथाःपृथुःपृथुपराक्रमः २७ दिशोविजित्याप्रतिरुद्धचक्रःस्वतेजसोत्पाटितलोकशल्यः ॥ एवंसुरेंद्रैरनुगीयमानोमहानुभावोभवितापतिर्भुवः २८ इतिश्रीभागवतेमहापुराणे चतुर्थस्कंधेपृथ्वाख्यानेषोडशोध्यायः १६ मैत्रेयउवाच ॥ एवंसभगवान्वैन्यःख्यापितोगुणकर्मभिः ॥ छंदयामासतान्कामैःप्रतिपूज्याभिनंद्यच १ ब्राह्मणप्रमुखान्वर्णान्भृत्यामात्यपुरोधसः ॥ पौरान्जानपदान्श्रेणीःप्रकृतीःसमपूजयत् २ ॥ विदुरउवाच ॥ कस्माद्दधारगोरूपंधरित्रीबहुरूपिणी ॥ यांदुदोहपृथुस्तत्रकोवत्सोदोहनंचकिम् ॥ ३ प्रकृत्याविषमादेवीकृतातेनसमाकथम् ॥ तस्यमेध्यंहयंदेवःकस्यहेतोरपाहरत् ४ सनत्कुमाराद्भगवतोब्रह्मन्ब्रह्मविदुत्तमात् ॥ लब्ध्वाज्ञानंसविज्ञानंराजर्षिःकांगतिंगतः ५ यच्चान्यदपिकृष्णस्यब्रह्मन्भगवतःप्रभोः ॥ श्रवःसुश्रवसःपुण्यंपूर्वदेहकथाश्रयम् ६ भक्तायमेऽनुरक्तायतवचाधोक्षजस्यच ॥ वक्तुमर्हसियोऽदुह्यद्वैन्यरूपेणगामिमाम् ७ श्रीशुकउवाच ॥ चोदितोविदुरेणैवंवासुदेवकथांप्रति ॥ प्रशस्यतंप्रीतमनामैत्रेयःप्रत्यभाषत ८ मैत्रेयउवाच ॥ यदाभिषिक्तःपृथुरंगविप्रैरामंत्रितोजनतायाश्चपालः ॥ प्रजानिरन्नेक्षितिपृष्ठएत्यक्षुत्क्षामदेहाःपतिमभ्यवोचन् ९ प्रजाऊचुः ॥ वयंराजन्जाठरेणाभितप्तायथाग्निनाकोटरस्थेनवृक्षाः ॥ त्वामद्ययाताःशरणंशरण्यंयःसाधितोवृत्तिकरःपतिर्नः १०

कस्मादिति दोहनंपात्रद्रव्यम् ३ ४ ५ पूर्वदेहाःपुरातनास्तेषांकथाश्रयंसत्कथासंबंधं सुश्रवसोहरेःश्रवोयशः ६ योदुह्यादितिसर्वप्राणिनांतच्छक्तिनियतत्वात्पुनर्वचनमादावैक्तव्यार्थम् ७ तत्रशुकोपिकथाप्रसंगंसंदधातीत्याह चोदितइति त्वयाहंयथाचोदितएवंविदुरेणेति ८ तत्रपूर्वोत्तरकथाविच्छेदपरिहारायादितएवमैत्रेयोवक्तीत्याह यदेति क्षितिपृष्ठेभूगोलकेनिरन्नेभोजनपदार्थरहितेसति ९ निरन्नइत्यनेनदुःखनिमित्तमितिज्ञातंतत्कीदृशमत्राह वयमिति जाठरेण जठरसंबंधिनाग्निना कोटरंवृक्षविवर युष्माकमीदृशाग्निपरिहारायअन्यशरणप्राप्तिः किंनस्यादत्राह यःशाधीति यस्त्वंनोस्माकंवृत्तिकरःपतिर्यस्मात्तस्मात्त्वमस्मान्शाधि अनुशिक्षस्वेयंबुद्धिरिति १०

१ अथकृष्णस्यपूर्वदेहकथाश्रयमित्यन्वयभ्रांतिवारणायान्वयंदर्शयति ॥ तथाचपूर्वदेहायेषांतेपूर्वदेहाःअतीताराजानःतेषांकथाश्रयम् । तत्पुरस्कारेणप्रवृत्तभगवतोयशइत्यर्थः । टी०

वृषिकुरस्त्वनेनक्षातामिप्रायस्यापिराज्ञःस्वाभिप्रायमुद्रूपंतीत्याह । तत्रइति । रानवेमरणाय उज्झितात्रास्त्यक्तात्राः पूर्वमेवेतिशेषः । वार्तापनिः जनानामन्नंदत्त्वारक्षकः इत्यर्थः ११ राज्ञोराज्ञ कुतमेवीस्तिसक्त्वसंभवेनांकिमुत्तरंकार्यमभूत्तत्राह पृथुरिति करुणंदयाजनकंनिमित्तमत्राभावस्यकारणमन्वपद्यतज्ञातवान् १२ ज्ञात्वाप्यशक्यामितिमन्वासाधयिष्यामइतिगुडाजेह्निकावाणीमुक्त्वा किंकार्यंवरवेनास्थापीतितत्राह इतीति विशिखंशरं त्रिपुरहाहरः १३ तत्रभूम्याकिमकारीतितत्राह प्रवेपमानेति वेपृकंपनइतिधातुः गोःसतीगोरूपा । मृगयोर्व्याधात् १४ अत्रपृथुनापलायं स्याकिंपार्कार्यविनिवृत्तंकिनेत्याह तामेवेतिअन्वव्रजत् पृष्ठतोगतोभूत् सारंगइवकार्यसारग्राहित्वात्पृष्ठतोऽयासींदवनवाणमुक्त्वावधीदित्याशयेनाह शरमिति १५ १६ राजरूपिणोहरेःसन्नि धानविशेषविच्चादुत्तरकार्यस्यापिस्वाभिप्रेतत्वाद्रैंद्राद्यन्यतमापितामत्रायतेत्याह लोकेनेति वैन्यादन्यस्माज्जीवनभद्राणिपश्यतीतिनुद्धयैवहरेःसर्वप्राणिप्रेरकत्वेनतच्छक्तिनियतत्वाच्चभूमरावृत्तिमाह इत्येवि १७ अतवचनमेवानुसर्तव्यनान्यदितिभावबलीवाक्ति उवाचेति १८ रक्षायांनियुक्तस्यतवापराधमंतरेणाभिहननंनयुक्तमित्याह सत्त्वमिति । एवमपिमांहनिष्यसिचेत्तवधर्मज्ञत्वमपहासित

तत्रोभवानर्हतिरातवेन्नंक्षुशार्दितानांनरदेवदेव ॥ यावन्ननंक्ष्यामहउज्झितान्नावार्तापतिस्त्वंकिललोकपालः ११ ॥ मैत्रेयउवाच ॥ पृथुःप्रजानांकरुणंनि शम्यपरिदेवितम् ॥ दीर्घंदध्यौकुरुश्रेष्ठनिमित्तंसोन्वपद्यत १२ इतिव्यवसितोबुद्ध्याप्रगृहीतशरासनः ॥ संदधेविशिखंभूमौक्रुद्धस्त्रिपुरहायथा १३ प्रवे पमानाधरणीनिशम्योदायुधंचतम् ॥ गौःसत्यपाद्रवद्भीतामृगीवमृगयोर्द्रुतम् १४ तामेवान्वव्रजद्वैन्यःकुपितोत्यरुणेक्षणः ॥ शरंधनुषिसंधाययत्रयत्रपला यति १५ सादिशोविदिशोदेवीरोदसीचांतरंतयोः ॥ धावतीतत्रतत्रैनंददर्शानूद्यतायुधम् १६ लोकेनाविंदतत्राणंवैन्यान्मृत्योरिवप्रजाः ॥ त्रस्तातदा निववृतेहृदयेनविदूयता १७ उवाचाथमहाभागंधर्मज्ञापन्नवत्सल ॥ त्राहिमामपिभूतानांपालनेवस्थितोभवान् १८ सत्वंजिघांससेकस्माद्दीनामकृ तकिल्बिषाम् ॥ अहनिष्यत्कथंयोषांधर्मज्ञइतियोमतः १९ प्रहरंतिनवैस्त्रीषुकृतागःस्वपिजंतवः ॥ किमुतत्वद्विधाराजन्करुणादीनवत्सलाः २० मां निहत्याजरांनावंयत्रविश्वंप्रतिष्ठितम् ॥ आत्मानंचप्रजाश्चेमाःकथमंभसिधास्यसि २१ ॥ पृथुरुवाच ॥ वसुधेत्वांवधिष्यामिमच्छासनपराङ्मुखीम् ॥ भागंबर्हिषियावृंक्तेनतनोषिचनोवसु २२ यवसंजग्ध्यनुदिनंनैवदोग्ध्यौधसंपयः ॥ तस्यामेवंहिदुष्टायांदंडोनात्रनशस्यते २३

कृपालुत्वस्याशयेनाह । अहनिष्यदिति । योभवान्धर्मज्ञइतिमतोऽभविष्यत्तर्हिकथंयोषांमामहानिष्यदित्यन्वयः १९ बालिशाअपिजंतवः स्त्रीवधंनकुर्वंति किंपुनर्भवादृशाइत्याह प्रहरंतीति २० नकेवलम हमेवानिरपितुहत्त्वाहानिरपिस्यादित्याह मांनिहत्येति । अजरांनूतनामिवस्थितां धास्यसिधारयिष्यसि २१ स्वोक्तकारित्वकरणायपृथुर्भीतिकरंवाक्यंवक्ति । वसुधइति । ननु वधयोग्यापराध कृतमितिचेत्तत्राह मच्छासनेति अनेनतवपत्युर्मयसीविधानदोषायभर्तृशासनातिक्रमएवापराधित्वादितिध्वनितम् । किंतत्त्वच्छासनातिलंघन येनापराधिनीस्यामत्राह भागमिति याभवती बर्हिषि यज्ञे भुक्त्वाहुतिहुतंस्वविभागं वृंक्तेवृणोति सात्वं वसुधनंयोग्यंनतनोषिपरि.केननप्रपंचयसीत्यन्वयः २२ एतदेवविशिनष्टि यवसमिति हरिताख्ययवसं पयःशब्दस्यजलेपिवृत्तेरित्यतऔधस मितिरविशेषणमुक्तिः । मत्पालितान्यःप्रजाभ्यः या पयोनदोग्धि तस्यामेवंदुष्टायामत्रभवत्यांदंडोनशस्यतइतिनाहि । शस्यतएवेत्यर्थः २३

आत्मन्यसत्त्वान्मुंचामीतिनेत्याह । त्वंखल्विति । त्वदधिकरणत्वेनमत्तोजीवनार्थत्वेनविरिंचिसृष्टौषध्यदानेचौर्याख्यदोषोपितवस्यादित्यर्थः आत्मनिमत्त्वात्नदास्यामीतिदुराग्रहबुद्धिरवज्ञेति २४ मद्वधस्तवकोपनिवारणावसायीनतुशरणागतप्रजारक्षणोपायसिद्धिरितितत्राह अमूषामिति अमूषांशरणागतानामंदसामांसविशेषेण २५ तथापिस्त्रीवधोनश्रेयइतितत्राह पुमानिति यएवंविधस्त द्वधः २६ यदुक्तंमांनिहत्यात्मानमिमाःप्रजाश्चांभसिकथंधारयिष्यसीतितत्राह त्वांस्तब्धामिति मायागामित्यनेननमेवधदोषोपिनास्तीतिसूचितंआत्मयोगबलेनेतिपत्तिरूपरूपधारणयाशक्त्या २७ त थ्राभिरुचरपाधरपाकिमकारीतितत्राह एवमिति २८ स्वयंदेवतात्वेकत्वेनहरेरन्यस्यैवंविधवाक्यानुदयादित्यादिहेतुनाज्ञातत्वान्धरापृथ्व्यन्तर्यामिणतद्योग्यैर्गुणैरन्यत्रायोग्यैःश्रीनारायणमभिष्टौति नमइति मायया प्रकृत्याचित्यकृत्यावा । विन्यस्तातद्योग्यतयाविरचितानानातनवोब्रह्मादिजीवदेहायेनसतथोक्तस्तस्मै । ब्रह्मादिजीवदेहास्तुमायादेहाःप्रकीर्तिताइतिवचनात् मायाशब्देन नैंद्रजालमप्रोच्यतइति । स्वस्यापिप्राकृतदेहसंभवेनदेववत्तत्कर्मणिश्रांतत्वेनप्रपंचरचनानुपपत्तिरित्यतउक्तमगुणात्मनइति सत्त्वादिगुणरहितस्वरूपाय यदिहर स्वरूपप्राकृतगुणरहितंतर्हिकीदृ शंयेनदेहित्वेनसृष्ट्यादौप्रवृत्तिःस्यादित्यस्यापीदमेवोत्तरंगुणात्मनइति ज्ञानानंदादिगुणदेहाय आत्माजीवंधृतौदेहइतियादवः अस्तुज्ञानादिगुणदेहत्वंतथापिप्रकृत्याप्रवर्तमानस्यकर्दममणेरिवकाथि तदोषानिस्वारइतितत्राह स्वरूपेति स्वरूपानुभवेनतद्ब्रह्मचेदाहब्रह्मास्मीतिश्रुतिसिद्धेनस्वरूपावरोक्षणनिर्धूतानिरस्ताद्रव्यक्रियाकारकनिमित्तानाविभ्रमाणामूर्मयोयेनसतथा द्रव्यादयस्तामसतै

त्वंखल्वौषधिबीजानिप्राक्सृष्टानिस्वयंभुवा ॥ नमुंचस्यात्मरुद्धानिमामवज्ञायमंदधीः २४ अमूषांक्षुत्परीतानामार्तानांपरिदेवितम् ॥ शमयिष्यामि मद्बाणैर्भिन्नायास्तवमेदसा २५ पुमान्योषिदुतक्लीबआत्मसंभावनोधमः ॥ भूतेषुनिरनुक्रोशोनृपाणांतद्वधोवधः २६ त्वांस्तब्धांदुर्मदांनीत्वामायागां तिलशःशरैः ॥ आत्मयोगबलेनेमाधारयिष्याम्यहंप्रजाः २७ एवंमन्युमयींमूर्तिंकृतांतमिवबिभ्रतम् ॥ प्रणताप्रांजलिःप्राहमहीसंजातवेपथुः २८ ॥ धरण्युवाच ॥ नमःपरस्मैपुरुषायमाययाविन्यस्तनानातनवेगुणात्मने ॥ नमःस्वरूपानुभवेननिर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये २९ येनाहमा त्मायतनुर्विनिर्मिताधात्रायतोयंगुणसर्गसंग्रहः ॥ सएवमांहंतुमुदायुधःस्वराडुपस्थितोऽन्यंशरणंकमाश्रये ३० यएतदादावसृजच्चराचरंस्वमाययात्मा श्रययाऽवितर्क्यया ॥ तयैवसोयंकिलगोप्तुमुद्यतःकथंनुमांधर्मपरोजिघांसति ३१

जसवैकारिकाहंकारसंज्ञाः यद्वा द्रव्यंगुणानामाधारोदेहःक्रियाकर्मेंद्रियंकारकंज्ञानेंद्रियं एतन्निमित्ताना विभ्रमाणांसंशयाद्यतःकरणधर्माणामूर्मयः परंपरादूरोत्सारितायेनसतथा विभ्रमःसंशयेभ्रांतौशो भायांचेतियादवः तत्रकिंकारणमित्यतउक्तं स्वरूपेति द्रव्यक्रियादिनिमित्तविभ्रमोर्मयोस्माकमेवनहरेरितिनिरणायि २९ यतःस्वामित्वेनपितृत्वेनगुरुत्वेनस्थितंहरिंशरणंविहायममान्योरक्षकोस्तीतिभ्रा त्वाऽलब्ध्वान्यच्चिवृत्तेत्यतस्तत्स्वामित्वादिकंतवैवेतिसयुक्तिकमाह येनेति येनधात्राहरिणाहमात्मीयतनुःस्वशरीरत्वेननिर्मिता यस्यपृथिवीशरीरमितिश्रुतेः यतोयस्मात्सत्त्वादिगुणैःसर्गसंग्र हः स्यात्सएवपितृभूतःस्वराट्स्वामीउदायुधः शिक्षागुरुर्मांहंतुमुपस्थितइत्यन्वयः किमतइतितत्राह अन्यमिति किंकुर्मःकस्यवाब्रूमोगरदायास्वमातरीतिवाक्यंध्वनयति कमित्यनेन ३० तवनिर्माते श्वरोन्यस्त्वांजिघांसुःपृथुराजाचापरइतिमदाशंकांपरिहरन्विवपूर्वोक्तार्थविवृणोति यएतदिति आत्मैवाश्रयोयस्याःसाआत्माश्रयातयाऽतएवावितर्क्ययाविविधतर्काविषयया अजामेकांलोहितशुक्लकृष्णा मित्यादिश्रुतिसिद्धत्वान्निर्वक्तुमशक्येत्येतदद्वैतवादितर्कागोचरेत्यर्थः एवंविधयास्वमाययास्वप्रकृत्यास्रष्टुःपालयितुश्चैकत्वेनतस्यहंतृत्वंनयुक्तमदर्शनादित्यर्थः वार्तासंभाव्ययोःकिलेत्यभिधानं अतः संभावितंनभवतीति । यथास्वस्यतर्काविषयत्वंतथामायायाअपीतिसूचितम् ३१

हरेस्सर्वाविषयत्वंस्पष्टयति नूनंतवेति । विभो । अकृतात्मभिरल्पबुद्धिभिरशिक्षितबुद्धिभिर्वाजनैर्दुर्जयपाम्वमायया । ईशस्यैश्वर्यादिगुणाकरस्य । समीहितंसमीचीनंचेष्टितंनलक्ष्यते । नूनंतकेयामी त्यन्वयः । तर्कानिश्चितयोर्नूनमितियादवः । समीहितंकिंतदित्यतआह । यस्त्विति यस्त्वकरोत्कार्यं । ब्रह्मणाजगदकारयच्च । अनेकःइंद्रोमायाभिःपुरुरूपईयतेइतिश्रुतेः । नत्वतएकः एकमेवाद्वितीयमिति श्रुतेः । एवंविधःसपरतःपरेषामीश्वराणामस्माकमार्तानामितिश्रोण्याक्षेपलक्षणमर्थविशेषंध्वनयति । अथांतरामभवान् ३२ कर्तृत्वेनकारयितृत्वेनसर्वस्य।तंत्यमतीते।पृथिव्यादीनाकर्तृत्वमीश्वरश क्यनुस्यूतत्वादित्याह । सर्गादिति द्रव्याणिपंचभूतानिक्रियाःकर्मेंद्रियाणिकारका।ज्ञानेंद्रियाणिचेतनोर्जीवएतान्व्याप्यनिष्ठंनीतिचेतनात्मानस्ताभि।शक्तिभिर्यास्यजगतःसर्गाद्यनुरुणद्धितत्तद्योग्य तानुकूल्येनकरोतितस्मैनमइत्यन्वयः । एकस्ययुगपदनेकवैचित्र्योपेतपदार्थप्रवृत्त्वंकथमुपपद्यतइत्यतउक्तं समुन्नद्धेति तदुक्त विरुद्धशक्त्योपस्यनित्यायुगपदेवतु तस्मैनमोभगवतेविष्णवेसर्वजिष्ण वादि कर्तृत्वशक्तिःस्वरूपभूतेत्युक्तं वेधसइति कर्तृत्वशक्तिमते । किंनामधेयमस्येत्यतउक्तं परस्माइति । अनेनपुंशक्तिमत्त्वादस्यैवोक्तमुपपन्नमित्यसूचि ॥ ३३ ॥ पूर्वत्वयैवभूतधात्रीत्वेनमंक्रम

नूनंतवेशस्यसमीहितंजनैःस्वमाययादुर्जययाकृतात्मभिः ॥ नलक्ष्यतेयस्त्वकरोदकारयद्योनेकएकःपरतःसईश्वरः ३२ सर्गादियोस्यानुरुणद्धिशक्तिभि र्द्रव्यक्रियाकारकचेतनात्मभिः ॥ तस्मैसमुन्नद्धविरुद्धशक्तयेनमःपरस्मैपुरुषायवेधसे ३३ सवैभवानात्मविनिर्मितंजगद्भूतेंद्रियांतःकरणात्मकंविभो ॥ संस्थापयिष्यन्नजमांरसातलादभ्युज्जहारांभसआदिसूकरः ॥ ३४ ॥ अपामुपस्थेमयिनाव्यवस्थिताःप्रजाभवानद्यरिरक्षिषुःकिल ॥ सवीरमूर्तिःसमभू द्धराधरोयोमांपयस्युग्रशरोजिघांससि ३५ नूनंजनैरीहितमीश्वराणामस्मद्विधैस्तद्गुणसर्गमायया ॥ नज्ञायतेमोहितचित्तवर्त्मभिस्तेभ्योनमोवीरयशस्करे भ्यः ३६ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेसप्तदशोध्यायः १७ ॥ मैत्रेयउवाच ॥ इत्थंपृथुमभिष्टूयरुषाप्रस्फुरिताधरम् ॥ पुनराहावनिर्भीतासंस्त भ्यात्मानमात्मना १ सन्नियच्छविभोमन्युंनिबोधश्रावितंचमे ॥ सर्वतःसारमादत्तेयथामधुकरोबुधः २ अस्मिँल्लोकेथवामुष्मिन्मुनिभिस्तत्त्वदर्शिभिः ॥ दृष्टायोगाःप्रयुक्ताश्चपुंसांश्रेयःप्रसिद्धये ३

त्वाद्धिरण्याक्षनीतांमामुदाहारितवांस्तत्रात्मयोगबलेनैवधारयिष्यामीत्यंगीकारेसंकल्पभंग।स्यादित्याशयेनाह सवाइति सवाइत्यनेनयएतादित्याद्युक्तंपरामृश्यते मामां ॥ ३४ ॥ भूमेरुद्धर्तान्योइम न्यस्तस्मात्संकल्पभंगःकथमितिमंदाशंकांपरिहरति अपामुपस्थेइति जलस्योपरिस्थितांमाजिघांससि सवीरमूर्तिर्भवानधरक्षितुकामोधराधरोभूमेर्भर्तासमभूदित्यन्वयः ३५ स्त्रीत्वमस्माद्विचेष्टितंकिंजा नासीत्याशंक्यसत्यं । तथाप्यस्माकंयुष्मत्प्रसादनायनमइत्येतावत्कर्तुमुचितमितिभावेनाह नूनजनैरिति त्वद्गुणसर्गमाययातवसृष्टयादौगुणकर्मभूतयासर्गमाययाप्रकृत्या ३६ इतिश्रीभागवतेचतुर्थस्कंधे टीकायांसप्तदशोध्यायः ॥ १७ ॥ ॥ ७ ॥ ॥ स्वरूपभूतागुणाहरेरपरोक्षज्ञानाद्धयज्यंतइत्येतदर्थसंग्रहार्थभूमेस्तत्तद्रसदोहननिरूप्यतेस्मिन्नध्याये तत्रादौ पृथोःक्रोधशमनायपुनर्भूमेस्त त्प्रतिवचनमकार्यंवाकि इत्याहेति १ कथंनियच्छामिक्रोधंयेनतच्छांतिहेतुंश्रुत्वाऽऽद्रीत।करणोभवामीतितत्राह निबोधेति पुंसेहसद्धर्मएवशिक्षणीयोनसाल्लिकोधर्मइत्याशयेनाह सर्वतइति ॥ २ ॥ कीदृशंश्राव्यतेयत्प्रकृतोपयोगिस्यादत्राह अस्मिन्निति लोकेदृष्यादिश्रेयःसिद्धदेवीजायजनोपायाअमुष्मिन्स्वर्गादौयागादियोगास्तत्त्वदर्शिभिर्मुनिभिर्दृष्टाःप्रयुक्ताश्चेत्यन्वयः ३

१ नास्तिकधर्मः ।

संकल्पनामयीं संकल्पमात्रेणाभीष्टसिद्धिप्रदां सिद्धिं येविद्याधरादयस्तेचनभसिविद्यांखेचरत्वलक्षणां सिद्धिमधुक्षतेत्यन्वयः १९ अंतर्धानगतात्मनाऽदृश्यत्वेनाद्भुतकरत्वेन अन्येमायिनोधारणा
मयींचित्ताभ्रताध्यांमायां २० पिशिताशनामांसभक्षाः भूतेशोभैरवाख्योरुद्रोवत्सोयेषांतेतथोक्ताः क्षतजासवंरुधिराख्यंमद्यम् २१ अहादीनांविषधरत्वसाम्येपिअवांतरविशेषत्वात्पृथगुक्तिः
२२ गोवृषंनंदिकेश्वरं मृगेंद्रेणसिंहेनदंष्ट्रिणः २३ क्रव्यादाःप्राणिनोहिंस्राः क्रव्यमपक्वमांसंस्वकलेवरपात्रेदुदुहुरित्यन्वयः चरंजंगमं अचरंतरुफलम् २४ वनस्पतयनिम्बादिभेदेनबहुत्वाद्रसस्य
पृथगित्युक्तं नानाधातून्सुवर्णादीन् २५ उपसंहरति सर्वइति स्वजातिषुमुख्यःस्वमुख्यःसएववत्सस्तेन सर्वान्कामानदोग्धीतिसर्वकामदुघातां २६ एकस्याःपृथ्व्याःक्षीरभेदःकथमत्राभूदित्याह
पृथगिति दोहभेदेनवत्सभेदेनादिशब्दाद्दोग्धृभेदेनच ॥ २७ ॥ राज्ञांकिमीतिंकुपितमुततूर्ष्णीभूतमितिसंशयावसरोनास्तीत्याह ततइति लोकगोविलक्षणक्षीरभेददातृत्वादत्रप्रीतिरेवसंभावितत्वात्

अकल्प्यवत्संकपिलंसिद्धाःसंकल्पनामयीम् ॥ सिद्धिंनभसिविद्यांचयेचविद्याधरादयः १९ अन्येचमायिनोमायामंतर्धानगतात्मना ॥ मयंप्रकल्प्यवत्सं तेदुदुहुर्धारणामयीम् २० यक्षरक्षांसिभूतानिपिशाचाःपिशिताशनाः ॥ भूतेशवत्सादुदुहुःकपालेक्षतजासवम् २१ तथाऽहयोदंदशूकाःसर्पानागाश्च तक्षकम् ॥ वत्संविधायदुदुहुर्बिलपात्रेविषंपयः २२ पशवोयवसंक्षीरंवत्संकृत्वाचगोवृषम् ॥ अरण्यपात्रेचाधुक्षन्मृगेंद्रेणचदंष्ट्रिणः २३ क्रव्यादाःप्रा णिनःक्रव्यंदुदुहुःस्वकलेवरे ॥ सुपर्णवत्साविहगाश्चरंचाचरमेवच २४ वटवत्सावनस्पतयःपृथग्रसमयंपयः ॥ गिरयोहिमवद्वत्सानानाधातून्स्वसानुषु ॥ २५ सर्वेस्वमुख्यवत्सेनस्वेस्वेपात्रेपृथक्पृथक् ॥ सर्वकामदुघांपृथ्वींदुदुहुःपृथुभाविताम् २६ एवंपृथ्वादयःपृथ्वीमदुहन्स्वन्नमात्मनः ॥ दोहवत्सादिभे देनक्षीरभेदंकुरूद्वह २७ ततोमहीपतिःप्रीतःसर्वकामदुघांपृथुः ॥ दुहितृत्वेचकारेमांप्रेम्णादुहितृवत्सलः २८ चूर्णयन्स्वधनुःकोटचागिरिकूटानिराजरा ट् ॥ भूमंडलमिदंवैन्यःप्रायश्चक्रेसमंविभुः २९ अथास्मिन्भगवान्वैन्यःप्रजानांवृत्तिदःपिता ॥ निवासान्कल्पयांचक्रेतत्रतत्रयथार्हतः ३० ग्रामान्पु रःपत्तनानिदुर्गाणिविविधानिच ॥ घोषान्व्रजांश्चशिबिरान्नगरान्खेटखर्वटान् ३१ प्राक्पृथोरिहनैवैषापुरग्रामादिकल्पना ॥ यथासुखंवसंतिस्मतत्र तत्राकुतोभयाः ३२ ॥ ॥ इतिश्रीभागवतेचतुर्थस्कंधेअष्टादशोध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

२८ इदानींभूमेःसमीकरणप्रकारंवक्ति चूर्णयन्निति गिरिकूटानिगिरिशृंगाणि कूटोऽस्त्रीशृंगमायाचेत्यद्रिकुंजस्वभेदयोरितियादवः कचित्कचिद्गिरिकूटादीनामत्यात्प्रायइत्युक्तं २९ भूमेःसमीकरणेनसु
खंवसतांनास्थिरप्रजानांप्रयोजनंकिमकारिराज्ञेतितत्राहाथेति ३० उक्तविशिनष्टि ग्रामानिति ग्रामोबहुजनाकीर्णोनगरराजाश्रयंपुरं समुद्रसंगतनद्युपकंठपत्तनजनाश्रयःपत्तनं जलपर्वतादिनागंतुमश
क्यंस्थानंदुर्गं गवांस्थानंघोषः गोपालानांस्थानंव्रजः गोष्ठंघोषइतिप्रोक्तोव्रजस्तत्पालसंस्थितिरित्यभिधानादोष्ठाध्वनिवहाव्रजाइतिसामान्यवचनंइतिज्ञातव्यं सेनानिवेशस्थानंशिबिरं वैश्यानामा
श्रयोनगरं कृषकोपजीवनंखेटः । आदित्यादिवारमुद्दिश्यपत्रवणिजांयोगस्तत्खर्वटाख्यंस्थानंवस्त्रभारविक्रयस्थानंवा । पार्श्वंडिनांनवामरस्थानंवा ३१ इदंपुरादिनिर्माणपृथोर्माहात्म्याविनाभूतमित्याह
प्राक्पृथोरिति किमतइतितत्राह यथेति अनेनेतःपूर्वंराज्ञांसत्वेपिसंबाधयाप्रजानांनिवासमुखंनास्तीतिसूचितम् ३२ ॥ ॥ इतिचतुर्थेऽष्टादशोध्यायः ॥ १८ ॥ ॥ ७ ॥ ॥ ७ ॥

ब्रह्मार्पितकर्मणाशुद्धांतःकरणस्यपुंसोहरेरापरोक्ष्यंस्यादितिविवेदयितुंपृथोर्यज्ञकरणव्याजेनहरेर्माहात्म्यंनिरूप्यतेस्मिन्नध्याये कर्मणाज्ञानमातनोतीतिश्रुतेः तत्रप्रथमतःपृथोर्यज्ञदीक्षाप्रकारमाह अथेति घो टकेवीथितुरगतुरंगाश्वतुरंगमाः वाजिवाहार्वगंधर्वहयसैंधवसप्तयइत्यमरः नाम्नात्रब्रह्मावर्ते सरस्वतीदृषद्वत्योरंतरंदेवनिर्मितं ब्रह्मावर्तमानवर्तविदुर्देशंविचक्षणाइत्यभिधानं प्राचीमैंद्रींदिशमुद्दिश्यस्यं दमाना १ अत्रेंद्रेणस्वनामाभिमृष्णौयज्ञेक्रियमाणेकथंक्षांतमत्राह तदभिप्रेत्येति २ शतक्रतोःकर्मणोतिशयमाह यत्रेति सर्वात्मासर्वव्यापी ३ निघंटवत्यज्ञपतिरित्यादिनाम्नांबहुत्वकथनेनकि मेकेनागतेनेत्यतउक्तमन्वितइति अनेनाधिराजेन्वयंनद्योतितमित्यतउक्तमुपगीयमानइति ४ गायकानांकिंचिदनुगम्यस्वाभिमतमुपेत्यपश्चादन्यतोगमनसंभवादित्यतोयावद्गम्यमनुगंतृनाह सिद्धे ति ५ तत्त्वविदामनुगमनमेवतन्माहात्म्यद्योतकमित्यतउक्तं कपिलइत्यादि नित्यविरोधिनांदैत्यादीनामनुगमनकथंसंगच्छतइत्यतउक्तं भागवताइति अनेनदैत्यादयोपिद्विविधाःसंतीतिध्वनितं येचतस्यहरेःसेवनोत्सुकास्तेचान्वीयुरिति ६ धर्मंदुघायज्ञयोग्यपयोदोग्ध्रीति । नकेवलमेतावदेवकिंतुसर्वकामदुघा नैतत्स्तुतिमात्रमनुभवसिद्धमित्याह महीति महित्वान्महनीयत्वाच्चमही ७ गोपा

मैत्रेयउवाच ॥ अथादीक्षितराजर्षिर्हयमेधशतेनसः ॥ ब्रह्मावर्तेमनोःक्षेत्रेयत्रप्राचीसरस्वती १ तदभिप्रेत्यभगवान्कर्मातिशयमात्मनः ॥ शतक्रतुर्नममृषेपृथोर्यज्ञमहोत्सवम् २ यत्रयज्ञपतिःसाक्षाद्भगवान्हरिरीश्वरः ॥ अन्वाहूयतसर्वात्मासर्वलोकगुरुःप्रभुः ३ अन्वितोब्रह्मशर्वाभ्यांलोकपालैःसहानुगैः ॥ उपगीयमानोगंधर्वैर्मुनिभिश्चाप्सरोगणैः ४ सिद्धाविद्याधरादैत्यादानवागुह्यकादयः ॥ सुनंदनंदप्रमुखाःपार्षदप्रवराहरेः ५ कपिलोनारदोदत्तोयोगेशाःसनकादयः ॥ तमन्वीयुर्भागवतायेचतत्सेवनोत्सुकाः ६ यत्रधर्मदुघाभूमिःसर्वकामदुघामही ॥ दोग्धिस्माभीप्सितानर्थान्यजमानस्यभारत ७ ऊहुःसर्वरसान्नद्यःक्षीरदध्यन्नगोरसान् ॥ तरवोभूरिवर्ष्माणःप्रासूयंतमधुच्युतः ८ सिंधवोरत्ननिकरान्गिरयोन्नंचतुर्विधम् ॥ उपायनान्युपाजह्रुःसर्वेलोकाःसपालकाः ९ इतिचाधोक्षजेशस्यपृथोर्यज्ञमहोदयम् ॥ असूयन्भगवानिंद्रःप्रतिघातमचीकरत् १० चरमेणाश्वमेधेनयजमानेयजुष्पतिम् ॥ वैन्येयज्ञपशुंस्पर्धन्नपोवाहतिरोहितः ११ तमत्रिर्भगवानैक्षत्त्वरमाणंविहायसा ॥ आमुक्तमिवपाखंडंयोऽधर्मेधर्मविभ्रमः १२

लानांरसानांचतुर्विधान्नजनित्वेनकथंतत्संभवइत्यत्राह ऊहुरिति अनेननदीनांमूर्तिमत्त्वंलक्षयति जलानांमूर्तिमधार्यमाणानांवोढुमसंभवात् वर्ष्मदेहप्रमाणयोरित्यभिधानात् स्थूलप्रमाणा ८ भक्ष्यभोज्यलेह्यपेयंचेतिचतुर्विधम् । व्यपार्थद्रव्यंनकोशादुद्धार्यंकिंतुसर्वैरानीतमेवालभ्यंत्यापिनत्यातिशुद्धत्वादितिभावेनाह उपायनानीति ९ भूमंडलेकोप्यजातशत्रुर्नास्ति यतः श्रीनारायणै कदेवस्यपृथोरपियज्ञविभ्रंशकोऽकरोदित्याह इतीति इतिशब्दःप्रकारवचनः उक्तप्रकारयज्ञमहोदयमसूयन्नसहमानःस्वार्थेवायत्प्रत्ययः १० कीदृशंविघ्नमकरोदित्यत्राह चरमेणेति चरमेणांत्येनशत तमेनयज्ञेनयजुष्पतिंयजुर्मत्रांधिदैवतंहरिंयजमानेसति स्पृधुस्पर्धायामितिधातोःशतृप्रयोगेणात्मनःशतक्रतुत्वतस्यपृथोरेकोनशतक्रतुत्वंहरेरभिप्रेतमितिध्वनयन्निंद्रोहरेरुल्लंघनन।करोदितिज्ञायते हरेरनभिप्रेतत्वेअश्वापहरणंतत्कदाक्षतोनक्षममिति । उत्तमश्लोकविग्रहावितिवक्ष्यमाणत्वात् ११ नन्वेवंतर्हिऋषीणांत्रिकालदर्शित्वख्यातिरपहास्तितोतितत्राहतमत्रिरिति विहायसागतुंत्वरमाणम् । पुनःकिमाकारमद्राक्षीदित्यतउक्तमामुक्तमिवेति पाखंडरूपमामुक्तंगृहीतमिवस्थितं पाखंडंलक्षयति योऽधर्मइति जनानांज्ञानदुर्बलानामधर्मेधर्मोयमितिविभ्रमोबुद्धिभ्रंशोपस्तत्पाखंडरूपम १२

अत्रिणा दृष्टे चैत्यकृते किमागतमत्राह अत्रिणेति १३ अनुधावेनेनप्रत्यावर्त्यशक्रेणमहद्युद्धमभाव्कि नेत्याह नामिति अधर्मशरीरिणंपापदेहिनमेनइत्यन्वयः । मुचानिमुमोच त्राणपाखंडिनानहयुद्धंनधर्म इति १४ चोरक्रियमनुवर्तमानस्यपुंसोवधोनदोषायेतिमुख्यधर्मविदुषातत्रप्रेर्यमाणेनमवितन्यमितिजानन्अत्रिः पुनश्चतमचोदयदित्याह पापान्निवृत्तमिति वैशब्देनपापशंकांनिवारयति । गुरोर्वं प्रत्यवायमितिस्मृतेः । विबुधाधिपत्यचतुर्मुखस्याप्यस्तीत्यनउक्तं महेंद्रमिति १५ गृध्रराड्जटायुः १६ अत्रेंद्रोऽसुरजनमोहायरवाममशंकितदर्शयन्निवाभवदित्याह सोश्वमिति तदुक्तं दवा.शक्ताश्रमो आपदर्शयेयुरशक्तवत् ऋषीणांचैवराज्ञांचनहितेदेवनामममा आज्ञयावाहरेःक्वापिकार्यतांवाकचित्कचिदिति यत्रकापितुदेवऋष्यादिप्रणिपातादिकक्रियतेसोपितत्स्थहरौमनमासकल्प्यक्रियतइ तितात्पर्यंज्ञातव्यंच तदुक्तं प्रणिपातादिकंदेवैर्ऋष्यादिषुजनार्दने क्रियतेतानेनेयाहितेजोभंगःकथचन अत्युत्तमानामवरेतेजोभगांनविद्यते यथानराणांतिर्यक्षुप्राप साम्येहिसस्मृतइति ऋष्यादिषु विषयेजनार्दनेक्रियतइत्यर्थः १७ इंद्रंजितवतापृथोःपुत्रेणलोकसंमतंकिंजयस्तभक्तअर्णयशःप्राप्तमत्राह तत्तस्येति १८ पुंनाम्वकार्यसिद्धिपर्यंतनयत्नवताभाव्यमितिन्यायमनुसदधानइंद्र.पूर्वस्मादाधे

अत्रिणाचोदितोहंतुंपृथुपुत्रोमहारथः ॥ अन्वधावतसंक्रुद्धस्तिष्ठतिष्ठेतिचाब्रवीत् १३ तंतादृशाकृतिंवीक्ष्यमेनेऽधर्मंशरीरिणम् ॥ जटिलंभस्मनाच्छन्नं तस्मैबाणंनमुंचति १४ पापान्निवृत्तंवैभूयोहंतवेऽत्रिरचोदयत् ॥ जहियज्ञहनंतातमहेंद्रंविबुधाधिपम् १५ एवंवैन्यसुतःप्रोक्तस्त्वरमाणंविहायसा २ अन्वधावदतिक्रुद्धोरावणंगृध्रराडिव १६ सोऽश्वंरूपंचतद्धित्वातस्थावंतर्हितःस्वराट् ॥ धीरःस्वपशुमादायपितुर्यज्ञमुपेयिवान् १७ तत्तस्याद्भुतंकर्मवि लक्ष्यपरमर्षयः ॥ नामधेयंददुस्तस्मैविजिताश्वइतिप्रभो १८ उपसृज्यतमस्तीव्रंजहाराश्वंपुनर्हरिः ॥ चषालयूपयोश्छन्नोहिरण्यरशनंविभुः १९ अत्रिः संदर्शयामासत्वरमाणंविहायसा ॥ कपालखट्वांगधरंवीरोनैनमबाधत २० अत्रिणाचोदितस्तस्मैसंदधेविशिखंरुषा ॥ सोऽश्वंरूपंचतद्धित्वा तस्थावंतर्हितःस्वराट् २१ वीरश्चाश्वमुपादायपितृयज्ञमथाव्रजत् ॥ तदवद्यंहरेरूपंजगृहुर्ज्ञानदुर्बलाः २२ यानिरूपाणिजगृहेइंद्रोहयजिहीर्षया ॥ तानि पापस्यखंडानिलिंगंखंडमिहोच्यते २३ एवमिंद्रोहरत्यश्वंवैन्ययज्ञजिघांसया ॥ तद्गृहीतविसृष्टेषुपाखंडेषुमतिर्नृणाम् २४

कपटंविधायदुर्जनमोहायवेषांतरंविधायाश्वमपाहार्षीदित्याह उपसृज्येति हरिरिंद्रः । चषालयूपयोरंतर्मध्येछन्नोनिलीनः चषालोयूपकटकःकंवासुगहनावृतिरित्यभिधानादक्षनिर्मितयूपवलयश्च षालः । हिरण्यमयरचितारशनाकांचीयस्यतम् १९ २० त्रिकापाच्छिरस.पृथक्भावकुर्वतीशिखायस्यसविशिखः । विनिषेधेपृथग्भावइतियादवः । एवंविधंशरंदृष्ट्वाकिंपगद्रवदिंद्रोनाकितुनि लीनोभूत्रूपांतरेणयज्ञांतरायकरणायेत्याह सोऽश्वमिति ॥ २१ ॥ अंतर्हितइत्यनेनगृहीतरूपविमुच्यरूपेणांतर्धानंगम्यते तत्रपूर्वरूपंकिमभूदचेतनस्यचेतनसंबंधएवहानादिक्रियासाम‍र्थ्यमन्यथो पसर्जनीभूयनष्टंस्यात् नतच्चुक्तं देवकृतस्यान्यथात्वादर्शनादत्राह तदवद्यमिति हरेरिंद्रस्यज्ञानदुर्बलाअन्य थाज्ञानिनइत्यर्थः २२ रूपस्यावद्यत्वमाह यानीति खंडानिलिंगानिखंडंसमुदायः किंमित्यतउक्तंलिंगमिति खंडपदस्यसमुदायवाचित्वेपीहास्मिन्प्रकरणेखंडशब्देनलिंगमुच्यते । अभ्यर्हितत्वादुभयोःसमुदायवाचित्वात् लिंगशेफसिवेषेशचिह्नबुद्ध्यादिसंहनादिस्वभिधानात्संहतिः समुदायइत्यर्थः पापस्यवेषोवा अप्यक्षरसाम्यान्निर्बूयादितिनिरुक्तिकारवचनादेकेनापिप्रकारेणविवक्षितार्थसिद्धिःस्फुटेति ॥ २३ ॥ सांप्रतंयेवर्तमानाःपाखंडाएतन्मूलाइत्याह एवमिति मतिरभि रुचिरबुद्धिविशेषः ॥ २४ ॥

---

१ सोऽश्वंरूपंचतद्धित्वातस्थौअंतर्हितःस्वराट् इत्यत्रइंद्रोभयेनान्तर्हितइतिभाति अतस्तात्पर्यानुरोधेनाह अत्रेति ।

धर्मधर्मइति निरूप्य स्वयंकिंरूपेपूपधर्मैपुस्वतोऽधर्मत्वेपिउपमितधर्मैषु तदुक्तं । धर्मोपमस्त्वधर्मायंउपधर्मःसउच्यतइति चक्षुर्विषयंलक्षणमाह नग्नेति आदिशब्देनकंथानरकपालढक्का दिमत्त्वंगृह्यते । तेषामनुत्पादनमाह प्रायेणेति संगेनिमित्तमाह पेशलेष्विति पेशलेष्वविचाररमणीयेषु । एतदपिकुतइत्यतउक्तं वाग्मिष्विति कुतर्कबृंहितशास्त्रवाचालेषु २५ एवमस्यामवस्थायां पृथुनाकृतःपराक्रमोनश्रूयतइतितत्राह तदभिज्ञायेति २६ विहितहिंसांविनान्याहिंसाधर्मतत्त्वविदांनेंद्रिताःकिंतत्राह ऋत्विजइति कुतोनयुक्तइत्यतउक्त अप्रचोदितइति अविहितत्वात् २७ कथंतर्हितन्निग्रहोपायइतितत्रोच्यते वयमिति अयातयामोपहवैरन्यत्राऽप्रयुक्तत्वेनागतसारैर्मंत्रैः मरुत्वंतामिंद्रं । अर्थनाशनंयज्ञाख्यप्रयोजनद्रुहं । आहूयकिंकुर्वतीतितत्रोच्यते तमग्नयइति उत्तवाहितम् २८ नन्विंद्रेनिधनंगतेयज्ञएवनस्यात् मंत्राणांतल्लिंगपरत्वात् मरुत्वंतंसख्यायहवामहइतिश्रुतेः अतोत्रधर्महरस्यवेदी कोपिनाभूदितिमभादोपपरिहर्तोब्रह्मणउक्तिप्रकारवक्ति इतीति क्रतुपतिंपृथुं । अस्यपृथोःसंबंधिनः स्रुक्हस्तंहविः मंत्रशक्त्येतिशेषः २९ किमाकारः प्रतिषेधइतितत्राह नवध्यइति कुतोनवध्यइत्यतउक्त यज्ञइति यज्ञस्माद्भगवतोहरेस्तनुर्यज्ञः अनेनेंद्र स्यावध्यत्वेकिमायातमत्राह यस्येति सुराइंद्राद्याहरेरिष्टास्तनवोविशेषसन्निधानयोग्यायस्मात्तस्मात्तस्येष्टतनुत्वादस्मिन्यज्ञेतामिंद्रंनाजिघांसतइंद्रजिघांसयाहरेरप्रीत्यायज्ञएवनस्यादित्यर्थः यद्वा य

धर्मइत्युपधर्मेषुनग्नरक्तपटादिषु ॥ प्रायेणसज्जतेभ्रांत्यापेशलेषुचवाग्मिषु २५ तदभिज्ञायभगवान्पृथुःपृथुपराक्रमः ॥ इंद्रायकुपितोबाणमादत्तोद्य तकार्मुकः २६ तमृत्विजःशक्रवधाभिसंधितंविचक्ष्यदुष्प्रेक्ष्यमसह्यरंहसा ॥ निवारयामासुरहोमहामतेनयुज्यतेत्रान्यवधोऽप्रचोदितः २७ वयंमरुत्वंत मिहार्थनाशनंह्वयामहेत्वच्छ्रवसाहतत्विषम् ॥ अयातयामोपहवैस्तमग्नयेप्रसह्यराजन्जुहवामतेऽहितम् २८ इत्यामंत्र्यक्रतुपतिंविदुरास्यर्त्विजोरुषा ॥ स्रुग्घस्तान्जुह्वतोऽभ्येत्यस्वयंभूःप्रत्यषेधत २९ नवध्योभवतामिंद्रोयद्यज्ञोभगवत्तनुः ॥ तंजिघांसतयज्ञेनयस्येष्टास्तनवःसुराः ३० तदिदंपश्यतमहद्धर्म व्यतिकरंद्विजाः ॥ इंद्रेणानुष्ठितंराज्ञःकर्मैतद्विजिघांसया ३१ पृथुकीर्तिःपृथोर्भूयास्त्वंह्येकोनशतक्रतुः ॥ अलंतेक्रतुभिःस्विष्टैर्यद्भवान्मोक्षधर्मवित् ॥ ३२ नैवात्मनेमहेंद्रायरोषमाहर्तुमर्हसि ॥ उभावपिहिभद्रंतेउत्तमश्लोकविग्रहौ ३३

ज्ञोभगवदंद्रस्यतनुर्यदनेष्टाःसुराश्चयस्येंद्रस्यतनवस्तस्मादस्मिन्यज्ञेतंनाजिघांसतेति ३० भीषयन्निववक्ति तदिदमिति इंद्रेणशतक्रतुत्वहानिलक्षणभीत्यैतदनुष्ठितमितिध्वनयति इंद्रेणेति पृथोरा ज्ञइतत्कर्मविजिघांसया ३१ इदानींपृथुमभिवदति पृथुकीर्तिरिति हेपृथोत्वमेकोनशतक्रतुरितिपृथुकीर्तिःप्रख्यातकीर्तिर्भूयाइत्यन्वयः हिशब्देनत्वमेवंविधकीर्तिमात्रान्पर्याप्तस्फोटयति शक्रःशतक्रतुर्भू यादहंत्वदाज्ञयाएकोत्तरशतक्रतुर्भूयासमित्येवमभिसंधिःस्यादत्राह अलंतइति तेशिष्टैरेकाद्भिर्नैःक्रतुभिरधिकःस्यामितिबुद्धिरलमितिष्ठतु अलंतुभूषणेशक्तौपर्याप्तौविनिवारणइतियादवः तवैतदेवभूषणमितिभा वेनाह यद्भवानिति मोक्षधर्मस्तारतम्यादिलक्षणस्तंवेत्तीतियतस्मात्तस्मान्निवृत्तिधर्मज्ञइतिवा अनेनपृथुजीवादिंद्रस्यात्युत्तमत्वंसूचितमितिज्ञापते ३२ फलितमाह नैवात्मनेति त्वत्सान्निहि तहरेर्निसेवनिवासहेतुत्वादात्मनइत्युक्तं एतदेवविशिनष्टि उभाविति उत्तमश्लोकस्यहरेर्विग्रहस्थितिहेतुविग्रहादेहोययोस्तौतुभ्यंभद्रमस्तुहरेःसन्निधानविशेषपात्रत्वान्अन्योन्यंजयपराजयानवक्तव्याः १३

रोषशमनमेवकर्तुमुचितमन्यथाचिंतयादेहनाशस्तवस्यादित्याह मास्मिन्निति यद्दैवहतंकार्यंतत्कर्तुमुपायंध्यायतः पुंसोमनोतिकष्टंयथातथाविशते तुशब्देनलोकद्वयेप्यनर्थपरंपरांसूचयति हेत्वर्थो वा यस्मादस्मिन्कार्येचिंतांस्मृत्वामाकृथाइत्यन्वयः स्मृतेर्वृत्तांनिषेधस्मानिषादव अथैतत्कुर्विन्याह निशामयेति निशामयशृणु ॥ ३४ ॥ किंतदत्राह क्रतुरिति नकेवलंक्रतोरेवोपरमणपूर्यते किंतुदेवेषुदुरवग्रहोविरमतां देवेषुकुपितेषुत्वद्राष्ट्रेवृष्टिविघातोपिस्यादतस्तद्दुरवग्रहविराम कर्तव्यइत्यर्थ क्रतुविशेषणंवा कुपितेषुदेवेषुदुष्टोवग्रहोयस्मात्तथा । देवधर्मात्यासुवृष्ट्यर्थंयज्ञा श्रूयन्ते तत्रदेवमतिहृतेक्रतौक्रियमाणेतद्धीत्याऽनावृष्ट्यांव्रीह्याद्योषध्यनुत्पत्त्याऽन्नाभावेनप्राणिनांप्राणधारणाभावेनदेहपियागलक्षणोविनाशःस्यादिति [illegible] प्रयोगविहायस्वार्थहानिसूचनायविरमतामित्यात्मनेपदप्रयोगः इतोपिक्रतुर्विरमत्वित्याह धर्मव्यतिकरइति यत्रयस्मिन्नश्वमेधेक्रियमाणेसतिइंद्रनिर्मितं पाखंडैर्धर्मव्यतिकरोऽधर्मेधर्मबु द्ध्याधर्मनाशःस्यात् ॥ ३५ ॥ धर्मव्यतिकरप्रत्यक्षतोपिपश्येत्याह एभिरिति हारिभिर्वशीकरणसमर्थैर्ह्रियमाणंमखंक्रियमाणमनेककर्मविचक्षणपश्य कोसाविंद्रस्तत्राह यइति यज्ञद्रुह्यतीतियज्ञध्रुक् अश्वंमुष्णातीतिअश्वमुट्सइंद्रइत्यर्थः ॥ ३६ ॥ धर्मावनार्थमवतीर्णत्वाच्चतस्यनाशप्रयत्नेमहाननिक्रमइत्याशयेनाह भवानिति चशब्दोधर्मविरोधिपरिहारार्थमपीतिग्राह्यं नानासमयानुरूपं

मास्मिन्महाराजकथाःस्मचिंतांनिशामयास्मद्वचआदृतात्मा ॥ यद्ध्यायतोदैवहतंतुकर्तुंमनोतिकष्टंविशतेतमोंधम् ३४ क्रतुर्विरमतामेषदेवेषुदुरवग्रहः धर्मव्यतिकरोयत्रपाखंडैरिंद्रनिर्मितैः ३५ एभिरिंद्रोपसंसृष्टैःपाखंडैर्हारिभिर्जनम् ॥ ह्रियमाणंविचक्ष्वैतद्यस्तेयज्ञध्रुगश्वमुट् ३६ भवान्परित्रातुमिहावतीर्णोधर्मंजनानांसमयानुरूपम् ॥ वेनापचारादवलुप्तमद्यतद्देहतोविष्णुकलासिवैन्य ३७ सत्वंविमृश्याभिभवंप्रजापतेःसंकल्पितंविश्वसृजोपिपीपृहि ॥ ऐंद्रींचमायामुपधर्ममातरंप्रचंडपाखंडपथंप्रभोजहि ३८ ॥ मैत्रेयउवाच ॥ इत्थंसलोकगुरुणासमादिष्टोविशांपतिः ॥ तथाचकृतवान्सख्यंमघोनापिचसं दधे ३९ कृतावभृथस्नानायपृथवेभूरिकर्मणे ॥ वरान्ददुस्तेवरदायेतद्बर्हिषितर्पिताः ४० विप्राःसत्याशिषस्तुष्टाःश्रद्धयालब्धदक्षिणाः ॥ आशिषोयुयु जुःक्षत्तरादिराजायसत्कृताः ४१ इतिश्रीभागवतेचतुर्थस्कंधेएकोनविंशोध्यायः १९

नानाविधशास्त्रानुसृतंवेनापचाराद्वेनाख्यापचारादवलुप्तंनष्टंतस्यवेनस्यदेहतः । अहंकर्तेतिभ्रांतिमाभूदित्यतस्तत्स्वरूपमुपदिशति विष्णुकलेति हेवैन्य । अनेनविष्णोःसत्त्वेनस्थितिहेतुत्वात्तत्कला विशिष्टत्वात्तद्धर्मविरुद्धाचरणंनयुक्तमितिसूचयति ३७ ॥ उक्तोपसंहारमुखेनकर्तव्यान्तरंवक्ते सत्वमिति यस्माद्धर्मावनार्थमवतीर्णोसितस्मात्सत्वंप्रजापतेरिंद्रस्याभिभवंत्वच्चिकीर्षितशतक्रतुत्व विघ्नरूपमनुष्ठितेधर्मविरोधःस्यादितिमयातन्नकार्यमितिविचार्यविश्वसृजइंद्रस्यसंकल्पितं पृथुनाशतक्रतुत्वंनविधेयमितिनिरूपितमतिपीपृहिअत्यंतंपूरयेत्यन्वयः इंद्रस्याविरोधाकरणेऽभितःसर्वतोभ यंस्युर्भवतीतिविमृश्यविश्वसृजःप्रजापतेर्ममतवैकोनशतक्रतुत्वंसंकल्पितमतिपीपृहिपिपूर्तिरिति [illegible] प्रचंडस्यपाखंडस्यपथानमैंद्रींमिंद्रनिर्मितामुपधर्मस्यमातरंजनयित्रींमायाचजहि निगि ह्यधर्माचरणेनविनाशयेत्यन्वयः ३८ सात्विकप्रधानत्वात्पृथुनाचतुर्मुखोक्तंकृतिनिमित्याह इत्थमिति मघोनेंद्रेण ३९ यज्ञान्तोवभृथस्तत्प्रभवमावभृथ्यंकृतमावभृथ्यंस्नानंयेनसतथोक्तस्तस्मै ४० एतदेवाशि शिनष्टि विप्राइति सत्याशिषोऽभीष्टसाधनसमर्थशुभवाक्यप्रबंधाःआशीर्वादलक्षणएवफलाविर्भावप्रदर्शनायपुयुजुरित्युक्त फलंनित्यमनंतर्भावा ददातेःकालांतरेपिफलप्राप्तिसंशयहेतुत्वसंभवात् ॥ ४१ ॥ इतिश्रीभागवतचतुर्थस्कंधेटीकायामेकोनविंशोध्यायः १९

अत्रोत्तमगुरुणास्वयोग्योपासनाविषयोहरिरुपदेष्टव्यइतिद्योतयितुंपृथुजीवायहरिणास्वात्मोपदिश्यतइतिप्रतिपादयितुमाह भगवानिति अपिशब्दस्यत्रभाषणेनपुनःसमुच्चयःकारयितृत्वेनस्वामित्वेनयो क्तृत्वेनाप्येकएवोच्यतइतिदर्शनायवैकुंठादिनामग्रहणं चशब्देनात्रपूजयेष्टइतितमुच्चिनोति जगदुत्पत्तौविश्लिष्टानांभूतानांसंयोजकत्वाद्वैकुंठः तदुक्तंशांतिपर्वणि मयासंश्लेषिताभूमिरद्भिर्व्योमचवायुना वा युश्चतेजसासार्द्धंवैकुंठत्वंततोममेति अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवचइति १ हयमेधशततमन्येतिव्याख्येयं अन्यथा चरमाश्वमेधासिद्धत्वात्तदेकभंगाभावेनसर्वभंगापत्त्यात्वमेकोनशतक्रतुरित्यनुपप त्त्यादिप्रसंगांतरेसिद्धंइत्यनेनसूचयति किमत्रकार्यंतदाज्ञापयेतितत्राह क्षमापयतइति आत्मानन्त्वाक्षमापयतोमुष्येंद्रस्यक्षंतुमर्हसीत्यन्वयः आत्मानंमांक्षमापयतइतिवा त्वयिसन्निहित त्वेनतवविरोधाचरणंममेतितत्तस्मान्मयक्षमापनंप्रार्थनमित्यर्थः २ अक्षमासाधुगुणोनस्यादित्याह सुधियइति तत्रनिमित्तमाह यहींति । कलेवरमनात्माजडमतएवानित्यंयहिंयस्मात्तस्मात् ३ इतोपिक्षमाकर्तव्येतिव्यतिरेकमुखेनाह पुरुषाइति ४ तर्हिकितत्राह अतएवेति ५ शरीरासंगफलमाह असंसक्तइति अमुनादेहेन । पुत्रादिगतममताबुद्धित्यागःफलमित्यर्थः ६ शरी राद्यसक्तिरप्येकत्वादिगुणविशिष्टपरमात्मज्ञानिनएवसुदृढास्यादित्यतस्तत्स्वरूपंनिरूपयति एकइत्यादिना घटादिष्वेकत्वादिकमौपचारिकंहरौतुनिरुपचरितमितिद्योतनायवेदांतसिद्धगुणानुप न्यस्यति तथाहि एकोदेवइति नजायतेम्रियतेवाविपश्चिदितिजननादिदोषाभावाच्छुद्धः । पूर्णःसत्यःशुद्धबुद्धस्वरूपोनित्यश्चिन्मयइति अत्रायपुरुषःस्वयंज्योतिः । परंज्योतिरुपसंपद्येति केव

॥ मैत्रेयउवाच ॥ भगवांश्चापिवैकुंठःसाकंमघवताविभुः ॥ यज्ञैर्यज्ञपतिःस्विष्टोयज्ञभुक्तमभाषत १ ॥ श्रीभगवानुवाच ॥ एषतेऽकार्षीद्भंगंहयमेधश तस्यह ॥ क्षमापयतआत्मानममुष्यक्षंतुमर्हसि २ सुधियःसाधवोलोकेनरदेवनरोत्तम ॥ नाभिद्रुह्यंतिभूतेभ्योयर्हिनात्माकलेवरम् ३ पुरुषायदिमुह्यंति त्वादृशादेवमायया ॥ श्रमएवपरंजातोदीर्घयावृद्धसेवया ४ अतएवइमंविद्वानविद्याकामकर्मभिः ॥ आरब्धमितिनैवास्मिन्प्रतिबुद्धोनसज्जते ५ असं सक्तःशरीरेस्मिन्नमुनोत्पादितेगृहे ॥ अपत्येद्रविणेदारेकःकुर्यान्ममतांबुधः ६ एकःशुद्धःस्वयंज्योतिर्निर्गुणोसौगुणाश्रयः ॥ सर्वगोऽनावृतःसाक्षीनिरात्मा नात्मनःपरः ७ देहादयपार्थास्तद्धर्मानस्युस्तद्द्रष्टुरात्मनः ॥ कैवल्यंतस्यवैधर्मःसुषुप्तंतन्निदर्शनम् ८

लोनिर्गुणश्चेति । विज्ञानमानंदंब्रह्मेति । अंतर्बहिश्चतत्सर्वंमिति । अनावृतःस्वस्यान्येषामावृतएव । अन्येषामावृतोविष्णुःस्वस्यानावृतएवचेति । साक्षीचेति । निर्गतआत्मास्वामीयस्यसनिरा त्मातस्यसत्स्वामान्योनविद्यतइति अनात्मनोगुणराशिरहिताज्जीवराशेःपरः । उत्तमःपुरुषस्त्वन्यइति ७ हरेःसर्वगतत्वेनजननादिदेहधर्माःसंभवंत्युतकथंदेहिपरत्वमत्राह देहादीति देहप्रभृतितद्धर्मादे हधर्मोजननादयस्तद्द्रष्टुस्तेषांधर्माणांद्रष्टुः । आत्मनःसर्वस्यजगतोऽतर्यामिणो हरेर्नस्युरित्यन्वयः आत्मासर्वस्यजगतस्तस्यात्मान्योनविद्यतइति कीदृशाअपार्थाः पुरुषार्थाख्यप्रयोजनशून्याः हरे र्धर्मःकइतितत्राह कैवल्यमिति अनन्यसदृशत्वाच्चकेवलोसौहरिःस्मृतइतिवचनात् कैवल्यंनामान्यसादृश्यराहित्यंधर्मइत्यर्थः वाइत्येतत्तत्त्वस्वभावकैवल्यमितिवाक्यंसूचयति नित्यनिर्दुःखत्वंचत स्यधर्मस्तद्बुद्धावारोहयति सुषुप्तमिति तस्यधर्मस्यनिदर्शनंदृष्टांतः । सुषुप्त शरीराभिमानाभावेनहर्षेकस्मिन्नि सुषुप्तिर्नामनहिनदाद्युःखन्नेशास्ति सताऽसौम्यतदासंपन्नोभवतीतिश्रुतेः सुषुप्तवच्चानि र्दुःखोजागृद्द्रव्यमवृत्तिमानितिच आत्मावगम्यत्वंवातद्धर्मः अत्रापिसुषुप्तमुदाहरणंहिमानं तस्यारिजन्यज्ञानाभावेनाहमितिस्वरूपज्ञानवेद्यत्वात् । आत्मनैवावगम्यत्वाद्धरिरपिसुषुप्तवत् केवलत्वेनावि ज्ञेयोमुक्तिस्तद्वद्दुःखितेतिच ८

१ सुषुप्तस्सुषुप्तवत्स्वापश्रभीववदात्मनैवावगम्यत्वाद्भगवान्सर्वदाकेवलत्वेन विज्ञेयइत्यर्थः । आत्यंतिकदुःखोच्छेदना यामुक्तिस्तद्वदनुस्मिता विज्ञायेयं धर्मोऽदुःखनालक्षणः स्यात्मुक्तिरित्यर्थः ॥

भगवद्धर्मैकाश्रयफलमाह यएवंसंतमिति यःपुरुषएवंसंतमात्मस्थंजीवांतर्यामिणमात्मानंवेदसप्रकृतिस्थोपितस्यशरीरगुणै क्षुत्पिपासादिलक्षणैर्नाऽज्यतेनलिप्यते समवस्थितःसम्यगाहितचित्तत्वादिति हेतुगर्भंविशेषणम् ९ मनःप्रसादस्यप्रथमसाधनत्वात्तत्संभवःकेनस्यादितितत्राह यइति १० मनःप्रसादफलमाह परित्यक्तगुणइति परितस्त्यक्ता गुणाविषयलक्षणाःयेनसतथाममस्थानंनिर्विकारं ब्रह्मकैवल्यंस्वस्वयोग्यतानुरोधेनपूर्णतालक्षणंकेवलभावंतल्लक्षणंशांतिमेप्रसादान्मुक्तिमश्नुतइत्यन्वयः ॥ ११ ॥ सम्यग्दर्शनइत्युक्तदर्शनप्रकारंदर्शयति उदासीनमिवेति द्रव्यज्ञानक्रियात्मनाता मसवैकारिकतैजसरूपाणांपदार्थानामध्यक्षमधिपतिं । उदासीनमिवाक्लिष्टकारिणमेव । कूटस्थंनिर्विकारमात्मानंहरिंयोवेदसशोभनंदर्शनमेवाप्नोतीत्यन्वयः । हरेरक्लिष्टकारित्वादुदासीनत्वमयंतइति भू १२ इदंचावश्यज्ञेयमित्याह । भिन्नस्येति । द्रव्यक्रियाकारकचेतनानिसंततंव्याप्यतिष्ठतीतिद्रव्याद्यात्मातस्य जीवाद्भिन्नस्य । कालादिव्यवधानेनलीनंपदार्थजातंगमयतिज्ञापयतीतिलिंगंत स्यमनसोयःसत्त्वादिगुणानांप्रवाहःप्रवर्तनविशेषस्तंद्रष्टाज्ञाता । प्रत्यक्षामुसंपत्सुविपत्सुचप्राप्तासुनविक्रियंते जातोहंमृतोहमित्यादिविकारंनप्राप्नुवंति केस्यरयः अत्रहेतुगर्भविशेषणमाह मयीति मयिबद्धंसौहृदंमहत्त्वबुद्धिलक्षणंप्रेमयैस्तेतथा तस्मादितिशेषः जीवाद्भिन्नस्यमनसोगुणाःसत्त्वादयोमताः तज्ज्ञात्वानविकुर्वंतिस्वस्वरूपंमनस्तथेतिवचनात् उक्तएवार्थोनान्यइत्यर्थः १३ इदमपिमु

यएवंसंतमात्मानमात्मस्थंवेदपूरुषः ॥ नाज्यतेप्रकृतिस्थोपितद्गुणैःसमवस्थितः ९ यःस्वधर्मेणमांनित्यंनिराशीःश्रद्धयान्वितः ॥ भजतेशनकैस्तस्यम नोराजन्प्रसीदति १० परित्यक्तगुणःसम्यक्दर्शनोविशदाशयः ॥ शांतिंमेसमवस्थानंब्रह्मकैवल्यमश्नुते ११ उदासीनमिवाध्यक्षंद्रव्यज्ञानक्रियात्मनाम् कूटस्थमिममात्मानंयोवेदाप्नोतिशोभनम् १२ भिन्नस्यलिंगस्यगुणप्रवाहंद्रव्यक्रियाकारकचेतनात्मनः ॥ दृष्ट्वासुसंपत्सुविपत्सुसूरयोनविक्रियंतेमयिबद्धसौ हृदाः १३ समःसमानोत्तममध्यमाधमःसुखेचदुःखेचजितेंद्रियाशयः ॥ मयोपक्लृप्ताखिललोकसंयुतोविधत्स्वधीराखिललोकरक्षणम् १४ श्रेयःप्रजापा लनमेवराज्ञोयत्सांपरायेसुकृतंषष्ठमंशम् ॥ अतोन्यथाहृतपुण्यःप्रजानामरक्षिताकरहारोघमत्ति १५ एवंद्विजाग्र्यानुमतानुवृत्तोधर्मप्रजानांचसमोविता स्याः ॥ हस्वेनकालेनगृहोपयातान्द्रष्टासिसिद्धाननुरक्तलोकः १६ वरंचमत्कंचनमानवेंद्रवृणीष्वतेहंगुणशीलयंत्रितः ॥ नाहंमखैर्वैसुलभस्तपोभि र्योगेनवापःसमवृत्तवर्ती १७

किंलक्षणायेत्याह समइति सुखेचदुःखेचसमोनिर्विकारःसमानाःस्वस्वयोग्यतानुसारेणउत्तममध्यमाधमाश्चयस्यमनयोक्तःसमत्वंकारणमाह जितेति रक्षायांकिंबलइत्यतउक्तं मयेति मयाउपक्लृप्तः अखिलःपूर्वः सत्त्वगुणस्तेनसंयुतः १४ अपवर्गानुपयोगिप्रजापालनेनाकिमित्याशंक्येदमेवतच्छ्रेयइत्याह श्रेयइति सांपरायेमोक्षे प्रजाकृतसुकृताद्भिभज्यषष्ठमंशंसुकृतंलभतइतियस्मात्तस्मादिति विपक्षेबाधकमाह अतइति अतोन्यथेत्यस्याविवरणमरक्षितेति दुःखैनोव्यसनेघमितियादवः १५ गुरूपदिष्टज्ञानस्यैवमुक्तिहेतुत्वात्किंप्रजारक्षणेनेत्याशंक्यतेनज्ञानोपदेष्टृसिद्धज्ञानिप्राप्तिस्ततःसं सिद्धप्राप्यतइत्याह एवमिति १६ साक्षात्कृतोवैकुंठोपिकचनवरंनाददादितिलोकापवादंपरिहरति वरंचेति अपवादभीरुर्वरंवृणीष्वेतिवक्ति नतुतद्गुणलुब्धइत्यतउक्तं तहमिति मखादीनंतरेणगुणशीलयं त्रितइतिकिंविशेषोच्यतइतितत्राह नाहमिति योगेनाष्टांगलक्षणेन । समंतत्तद्वरनुयोग्यतानुसृतवृत्तंवर्तनयेषांतेसमवृत्ताःपुरुषास्तन्नुवर्तितुंशीलमस्येतिसमवृत्तवर्ती यद्यस्मात्तस्माद्धहितवमखादिना सुलभःस्यांकिंतुगुर्वादिषुसंवृद्धभक्त्यैवेत्यर्थः १७

पृथुरात्मनिगुणग्राहित्वलक्षणंप्रकटयन्श्रीरमणोक्तमग्रहीदित्याह सइत्थमिति विश्वजित्समस्तजेता १८ विष्वक्सेनेनश्रीहरिणोक्तंगृहीतमितिगुणग्राहिकइवदर्शयतीत्याह ॥ स्पृशंतामिति मनसा पृथुसन्निहितराजरूपिणोहरेःपादयोः स्पृशंतं व्रीडितमसुरजनमोहायलज्जास्वभावंदर्शयत आयासदुःखव्रीडादीन्प्रायश सुखिनोपितु नियमाद्दृषिभूपपुमोहायादर्शयन्सुराइतिवचनाद्व्रीडितत्वंन त्यर्थः ॥ १९ ॥ विष्णोःपृथौप्रसादोद्रेकंदर्शयति भगवानिति विश्वात्मापूर्णात्मा जगत्समस्तंविश्वंचनिखिलंपूर्णमुच्यतेइत्यभिधानाद्विश्वपदस्यपूर्णार्थत्वमेवांगीकर्तव्यं नतुप्रपचात्मत्वं। तस्यबहुप्रमाणविरुद्धत्वात् । चंद्रोदयेसमुद्रवृद्धिवदनुदिनंसमुज्जिहानयाप्रवर्धमानयाभक्त्येत्यनेन अपक्वभक्तिमुक्तायेनतेषांहरिदर्शनं मायाभवतिदुःखस्यत्वभावःप्रायशोभवेत् इतिवचनात्सा क्षात्कृतमधोक्षजंमत्यक्षंपश्यतः पृथोरपक्वभक्तिमुक्तेभ्योप्युत्तमत्वंदर्शयन्तत्साक्षात्कारेभक्तेरेवप्रयोजकत्वात्तच्छृंखलयाकीलितत्वान्मद्धनेनैवसपादनयतीतिसूचयति ॥ २० ॥ यात्राप्रयाणंप्र स्थानमित्यभिधानं २१ नकेवलंपृथोर्भक्त्युद्रेकआंतरः अपितुबाह्योपिदृश्यतइतिभावेनाह सआदिराजइति । चक्षुर्वाग्व्यवहारोपरमेणपुनःकिमकारीतितत्राह हृदेति २२ किमनयातूष्णींव्यवस्थित्या द्रष्टुस्तंद्रोहेतुभूतयेतिनिरूप्यहर्युक्तस्योत्तरंवक्तुमुपक्रमते अथेतिअश्रुकणान्नेत्रजलबिंदून् अतृप्तयोरलंबुद्धिमप्राप्तयोर्दृशोर्गोचरंविषयं उरगाविद्विषःगरुडस्य २३ भगवदादिष्टंचेत्पृथुनागृहीतमथतदुक्ते

॥ मैत्रेयउवाच ॥ सइत्थंलोकगुरुणाविष्वक्सेनेनविश्वजित् ॥ अनुशासितआदेशंशिरसाजगृहेहरेः १८ स्पृशंतंपादयोःशीर्ष्णाव्रीडितंस्वेनकर्मणा ॥ शतक्रतुंपरिष्वज्यविद्वेषंविससर्जह १९ भगवानपिविश्वात्मापृथुनोपहृतार्हणः ॥ समुज्जिहानयाभक्त्यागृहीतचरणांबुजः २० प्रस्थानाभिमुखोप्येन मनुग्रहविलंबितः ॥ पश्यन्पद्मपलाशाक्षोनप्रतस्थेसुहृत्सताम् २१ सआदिराजोरचितांजलिर्हरिंविलोकितुंनाशकदश्रुलोचनः ॥ नकिंचनोवाचसबा ष्पविक्लवोहृदोपगुह्यामुमधाद्व्यवस्थितः २२ अथावमृज्याश्रुकणान्विलोकयन्नतृप्तदृग्गोचरमाहपूरुषम् ॥ पदास्पृशंतंक्षितिमंसउन्नतेविन्यस्तहस्ता ग्रमुरंगविद्विषः २३ ॥ पृथुरुवाच ॥ वरान्विभोत्वद्वरदेश्वराद्बुधःकथंवृणीतेगुणविक्रियात्मनाम् ॥ येनारकाणामपिसंतिदेहिनांतानीशकैवल्यपतेर्वृणी तकः २४ नकामयेनाथतदप्यहंक्वचिन्नयत्रयुष्मच्चरणांबुजासवम् ॥ महत्तमांतर्हृदयान्मुखच्युतोविधत्स्वकर्णायुतमेषमेवरः २५ सउत्तमश्लोकमहन्मुख च्युतोभवत्पदांभोजसुधाकणानिलः ॥ स्मृतिंपुनर्विस्मृततत्त्ववर्त्मनांकुयोगिनांनोवितरत्यलंवरैः २६

पृथुकस्योत्तरत्वेनवक्तव्यमस्यास्तीतिनपश्याम्यन्यदतःकिमाहेतित्राह वरानिति जातावेकवचनमितिन्यायेनवरंवृणीष्वेत्युक्तं तत्रदेयत्वेनाभिमताः किमैहिकाउतपारत्रिकाः आद्येस्रक्चंदनवनितादि योयदितर्हितत्रापिवदामीत्याह वरानिति सुलभत्वाद्वरणीयानभवंतीत्याह गुणेति गुणेषुविषयेषुविक्रियाविकारस्तेनयुक्तआत्मामनोयेषांतेतथातेषांनारकाणांनरकस्थानां अपिशब्देननरलोकोकिंव क्तव्यमितिसूचयति वैश्रवणात्पुलकादानवत्कैवल्यपतेस्त्वद्देत्ताद्दशवरादानंजुगुप्सितमित्यर्थः द्वितीयोप्यनेनैवप्रत्युक्तः सर्गसारूप्यादिलक्षणमोक्षभेदेनपारत्रिकाअपिद्विधाभिद्यते तत्रकैवल्येपिन ममाभिरुचिः किमुतस्वर्गादाविति २४ एवंतर्हितवकोभिप्रायइत्यतआह नकामयइति क्वचिदित्यनेनपुरुषार्थमात्रमाक्षिपति तर्हिमयादेयंनास्तीत्यत्राह महत्तमेति महत्तमानामंतर्हृदयान्मुखद्वारेण च्युतंनिःसृतंकर्णयोरमृतंतच्चरितलक्षणविधत्स्वेत्यन्वयः अनेनसर्वदैतत्तुभ्यमस्त्वितितत्रत्वदनुग्रहएवकारणमन्यथानस्यादितिध्वनयति अभीष्टपूरयति एषइति २५ हस्तप्राप्तमणित्यागवत्कै वल्यादिपुरुषार्थत्यागेनतवकिंफलितमितितत्राह सइति हेउत्तमश्लोक महतांमुखद्वारेणच्युतः ॥ २६ ॥

१ असुमधादवस्थित इतिपाठान्तरम् ।

ननुमत्कथाभवताबहुशोश्राविअतोऽस्मादाग्रहाद्विरम्यान्यंवरंवरयेतिचेत्तत्राह यशइति हेसुश्रवःशोभनकीर्ते आर्याणांत्वत्तत्त्वज्ञानांसंगमेयदृच्छयाप्रसंगतः प्राप्ततवयशः कथारूपेणग्रथितं भक्त्याउ
पशृणोतिसगुणज्ञःसारज्ञःपुरुषःपशुमज्ञपृतेकथमस्माद्विरमेदित्यन्वयः तत्रहेतुः श्रीरिति गुणस्त्वावृत्तिस्तत्संग्रहेच्छयायद्यशःप्रवव्रेइतियस्मात्तस्मात् अनेनयशःश्रवणमावृत्त्याक्रियतेचेदानंदाभिवृद्धिः
स्यादितिसूच्यते गुणस्त्वावृत्तिशब्दादिज्येंद्रियामुख्यतंतुष्वितिपादवः २७ अथतस्मादहत्वामभजंभजामि तथाप्येकमेवपतिस्पर्धेतेइत्येकपतिस्पृधौतयोस्त्वच्चरणैकतान योस्त्वत्पदैकनिष्ठयोरावयोः
कलिःकलहः कुतोनस्यात् अपिकिनस्यादेव २८ जंतुस्वभावमपेक्ष्यकालिःस्यादितिशंकानतुभगवद्भक्तस्येत्यभिप्रेत्याह जतोरिति हेजगदीशअखंडेश जगत्समस्तंविश्वंचानिखिलंपूर्णमुच्यते इतिच
जगत्यांराजप्रधानलोकेविद्यमानस्यजंतुसमूहस्यमिथोवैशसंहिंसालक्षणःकलहःस्यात् कलिस्वभावत्वात् । अत्रास्मद्विषयेसनस्यान्निमित्ताभावादित्युक्तं यत्कर्मणीति नोस्माकंकर्मणित्वत्पूजालक्षणे
यत्समीहितं शुभलक्षणंचेष्टितंतत्फल्गुअल्पमपिउरुमहत्करोषि । तत्रहेतुगर्भविशेषणमाह । दीनवत्सलइति । तत्राप्यल्पस्यापिशुभस्यफलप्रदानेनमहत्त्वकरणं नतुपरमाणुपरिमितस्यशुभस्यसुख
पर्वतीकरणम् । तथासतिवैषम्यापातःस्यात्तस्यनिर्दोषस्यासंभवादितिबोद्धव्यं इतोपिकलिर्नस्यादित्याह स्वएवेति स्वेस्वरूपभूतेधिष्ण्येमहिम्न्येव धिष्ण्यतेजश्चसामर्थ्यंमहिमाधामचोच्यते इत्यभि
धानं स्वसुखार्थमन्यापेक्षांविनाभिरतस्यतववात्सल्यंविनातयाश्रियापिकिं अत्रापिवात्सल्यमेवकारणं येनयेनभक्त्यातिशयःक्रियतेतत्रतत्राधिकवात्सल्यंस्यादितितात्पर्यमवबोद्धव्यम् । जगत्यामूल
प्रकृतौश्रियांजंतोरज्ञजनस्यवैशसंविषमबुद्धिलक्षणंस्यादेव । नतुपंडितस्य कुतःयद्यस्मान्नःकर्मणिश्रौतादिविषयेवैशसंयत्सज्ञपनलक्षणंतत्समीचीनमीहितंभक्तिपूर्वकत्वात् अल्पपुण्यस्यतवनमद्

## यशःशिवंसुश्रवआर्यसंगमेयदृच्छयाचोपशृणोतितेसकृत् ॥ कथंगुणज्ञोविरमेद्विनापशुंश्रीर्यत्प्रवव्रेगुणसंग्रहेच्छया २७ अथाभजंत्वाखिलपूरुषोत्तमंगुणालयंपद्मकरेवलालसः ॥ अप्यावयोरेकपतिस्पृधोःकलिर्नस्यात्कृतत्वच्चरणैकतानयोः २८ जंतोर्जगत्यांजगदीशवैशसंस्यादेवयत्कर्मणिनःसमीहितम् ॥ करोषिफल्ग्वप्युरुदीनवत्सलःस्वएवधिष्ण्येभिरतस्यकिंतया २९

क्रियोग्यत्वमत्राह करोषीति यमेवैषवृणुतेतेनलभ्यइतिश्रुतेः भक्तिवशत्वद्योतनायफल्ग्वप्युरुकरोषीत्युक्तं अनेनहरौभक्तिरवश्यंकर्तव्येतिज्ञायते अन्यत्समामिति भजनक्रियामपिनशक्नुमःकर्तुंत्वत्प्रसादा
तिरेकेणेत्याह । जगज्जगत्यामिति जगताजंगमेनोपलक्षणमेतत् स्थावरेणापियुक्तायाजगत्यां लोके । नोस्माभिःकर्मणिविषयेयत्समीहितंस्यात्तद्वैशसमेवहिंसारूपमेवातएवफलगुतुच्छफल ततःस्वल
पमेमाल्पमित्यर्थः अथभगवानुरुपरिपूर्णंकरोति अत्रहेतुगर्भविशेषणं हेदीनवत्सलेति हेत्वंतरमाह स्वएवेति परिपूर्णानंदरूपेभिरतस्य । तयाभजनक्रियया किंभृत्यवात्सल्यादुरुकरोतीत्यर्थः
अथवाअप्येकपतिस्पृधोःकलिःस्यादितिसंदेहःकृतःपूर्वमधुनातवमयिपक्षपातात्कलिरित्याह जगज्जगत्यामिति जगतोजंगमस्थावरलक्षणस्यप्राणिसमूहस्यजगत्याधारभूतामूलप्रकृतिर्लक्ष्मीस्तस्यां
वैशसंपीडास्यादेव हेजगदीश । कुतःयद्यस्मादस्माकंकर्मणिश्रौतादौफल्ग्वप्युरुकरोति नतथातयाकृतम् हेदीनवत्सल । अथवाकिमिदमाश्चर्यमित्याह स्वएवेति तयाश्रियाकिंप्रयोजनम् ।
कामिनामुपकारिण्येत्यर्थः जगज्जगत्यामित्येकपदेपिलक्ष्म्यामित्यर्थः । अथवाजगतोहिंसारूपत्वात्तदंतःपातीकथमहंत्वांभजामित्वत्प्रसादविनेत्याह जगदिति हेजगदीश जगत्यालोकेयज्जगत्प्रा
णिसमूहःतद्वैशसमेवाहिंसाप्रकृतिरेव । तथापितदंतःपातिभिरस्माभिः कर्मणियत्समीहितस्यात्तत्फल्गुहिंसारूपमप्युर्वहिंसारूपकमपिकरोतिभवान् हेदीनवत्सल । किमर्थमेवंपक्षपातेनकरोति नस्वं ध
ण्येभिरतस्यतयाअहिंसयातवाकिं । केवलंमामुद्धर्तुमेवेतिभावइतिकेचिद्व्याचक्षते तदसत् पदानांविवक्षितार्थावाचकत्वेनपाठसंप्रदायाभावेनप्रमाणविरोधेनप्रेक्षावद्भिरुपेक्षणीयत्वात्पूर्वापरविरोधाच्च
लक्ष्म्याहरेर्भक्तेषुपक्षपातकथनस्यस्वानुभवविरुद्धत्वाच्च २९

अस्मिन्नर्थेसाधुसंमतिमाह भजंतीति अथान्यथास्मिन्नर्थेप्रमाणमस्तीति । किंतदिति तदुच्यते अतएवभक्तवात्सल्यादेवसाधवःसज्जनास्त्वांभजंति कैगुणग्रुपसंहृत्योतितत्रोक्तं । व्युदस्तेति मायागुणानांविभ्रमोदयोविलासोदयोयैःसनिरस्तोयेनसतथातंसंसारोच्छेदोपिनस्वतएषामित्यभिप्रेत्याह भवत्पदेति अन्यत्कर्मादिकं ३० विमुक्तिमुख्यानिमित्तमंघ्रिस्मरणादन्यन्नास्तीतियद्यस्मात्तस्माद्भजंतंप्रतिवरंवृणीष्वेतिवाणीजगन्मोहकरीत्याह मन्येगिरामिति तदुपपादयति वाचेति तदस्येदंवाचातंत्यानामाभिर्दामाभि सर्वांसितामितिश्रुतिः पिञ्बंधने यथासितोबधनरहितस्तर्हिपुनः शश्वत्कथंकर्मकरोतीत्यन्वयः ३१ इतोपिमोहितइत्याह त्वन्माययेतिअबुधोयोजनः ऋतात्मनःसत्यात्मनोहरे.सकाशादन्यत्स्वर्गादिकमाशास्तइतियत्तस्मादेषत्वन्माययाखंडितस्त्वदुपास्तोवियोर्जितइत्यर्थः अस्यामवस्थायांबहुप्रजल्पात्किमिदमेवमार्थयइत्याह यथेति ३२ पृथूक्तंश्रीपतिमनसिसंविष्टमितिभावेनहरेस्तदुक्तिप्रशसाप्रकारमाह साध्विति साधूचितं । इदमात्यंतिकभक्तलक्षणमितिभावेनाह स्वर्गेति नरकान्नरकांवरप्राप्तिसमयेकिंचिन्निवृत्तिःसमत्वं ३३ मद्भक्तस्यरोषत्यागएवमत्प्रीतिसाधनमित्याह प्रीतइति ३४ प्रतिवचनंचेत्समाप्तपरिकिमकारि हार्रणेतितत्राह इतीति

भजंत्यथत्वामतएवसाधवोव्युदस्तमायागुणविभ्रमोदयम् ॥ भवत्पदानुस्मरणादृतेसतांनिमित्तमन्यद्भगवन्नविद्महे ३० मन्येगिरंतेजगतांविमोहिनींवरंवृणीष्वेतिभजंतमात्थयत् ॥ वाचानुतंत्यायदितेजनोऽसितःकथंपुनःकर्मकरोतिमोहितः ३१ त्वन्माययाद्धाजगदीशखंडितोयदन्यदाशास्तऋतात्मनोबुधः ॥ यथाचरेद्बालहितंपितास्वयंतथात्वमेवार्हसिनःसमीहितुम् ३२ ॥ श्रीभगवानुवाच ॥ साधुतेवसितंराजन्नाशास्तेनयदाशिषः ॥ स्वर्गापवर्गनरकान्समंपश्यतिमत्परः ३३ प्रीतोहंतेमहाराजरोषंदुस्त्यजमत्यजः ॥ श्रद्दधानोमदादेशंतन्मह्यंपरमार्हणम् ३४ मैत्रेयउवाच ॥ इतिवैन्यस्यराजर्षेःप्रतिनंद्यार्थवद्वचः ॥ पूजितोनुगृहीत्वैनंगंतुंचक्रेच्युतोमतिम् ३५ देवर्षिपितृगंधर्वसिद्धचारणपन्नगाः ॥ किन्नराप्सरसोमर्त्याःखगाभूतान्यनेकशः ३६ यज्ञेश्वरधियाराज्ञावाग्वित्तांजलिभक्तितः ॥ सभाजिताययुःसर्वेवैकुंठानुगतास्ततः ३७ भगवानपिराजर्षेःसोपाध्यायस्यपश्यतः ॥ हरन्निवमनोमुष्यस्वधामप्रत्यगात्प्रभुः ३८ अदृष्टायनमस्कृत्यस्वस्यसंदर्शितात्मने ॥ वासुदेवायदेवानांदेवायस्वपुरंययौ ३९ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेविंशोध्यायः ॥ २० ॥ मैत्रेयउवाच ॥ मौक्तिकैःकुसुमस्रग्भिर्दुकूलैःस्वर्णतोरणैः ॥ महासुरभिभिर्धूपैर्मंडितंतत्रतत्रवै १ चंदनागुरुतोयार्द्ररथ्याचत्वरमार्गवत् ॥ पुष्पाक्षतफलैस्तोक्मैर्लाजैरर्चिभिरर्चितम् २ सवृंतैःकदलीस्तंभैःपूगपोतैःपरिष्कृतम् ॥ तरुपल्लवमालाभिःसर्वतःसमलंकृतम् ३

३५ हरिमनुगतादेवादयःकिंचक्रुरत्राह देवेति ३६ सर्वप्राणिषुयज्ञेश्वरोहरिरवस्थितः तदुक्तं भूतेपुहरिरित्येवहर्यर्पणधियातथा सर्वभूतेषुचहरे.पजाकार्यात्मवेदिभिरितिवचनात् इदंसर्वंतदर्पणमस्त्वितिधीर्यज्ञेश्वरधीस्तयासभाजिताःसंभाविताः ३७ गंतुंमनएवकृतंनतुगतमितिशंकामाभूदित्याह भगवानपीति ३८ राज्ञोयज्ञशालातःस्वपुरप्रस्थानप्रकारमाह अदृष्टायेति अदृष्टायचक्षुषोरविषयाय स्वस्यसंदर्शितात्मनेसाक्षात्कारितस्वरूपाय ३९ इतिचतुर्थस्कंधेविंशतितमोध्यायः ॥ २० ॥ ॥ ७ ॥ देवादीन्विनाहरेर्ब्राह्मणा.सन्निधानपात्रमित्येतत्प्रतिपाद्यतेऽस्मिन्नध्यायेतत्रानंतरातीताध्यायेपृथुःपुरंययावित्युक्तं तत्पुरंवर्णयति मौक्तिकैरित्यादिना १ पिष्टचंदनागुरुमिश्रतोयैरार्द्रारथ्याचत्वरमार्गायस्मिंस्तत्तथोक्तं गोमयतोयैःअर्चिभिर्दीपज्वालाभिः २ पूगपोतैःक्रमुकपुष्पैःपरिष्कृतमलंकृतम् ३

संभृतानिसंपादितानिअशेषाणिमंगलानिदध्यादीनितैश्वयुक्ताः मृजुसंशुद्धावितिधातुः ४ भूयःपुरप्रवेशानंतरं गतस्मयोगर्वरहितः ५ प्रियानभीष्टान्वरान्प्रददातीतिप्रियवरप्रदः ६ प्रश्नमंकुरयत्नुपसं हरति सएवमिति भूयांसिमहांति स्फीतंपुष्टंलोकेनिधाय ७ गुणवद्भिःपुरुषैःसभाजितंपूजितं ८ किमाहेतितत्राह सोभिषिक्तइति सपृथुर्यत्कर्माकरोत्तन्मेवदेस्यन्वयः ॥ लब्धान्यशेषैःसुरैःकृतान्यर्हणानि येनसतथोक्तः ९ वक्तव्यत्वेगुणमाह कोन्वस्येति देवेभ्यंऋषयोभूपाश्चोच्यंतेशक्तिमत्तया क्वचित्कीचित्तुमोहार्थकादाचित्कात्तुहेतुतइतिवचनाद्युक्तंक्षपालाइति १० श्रद्धावतःश्रोतुर्यस्मिन्कृद्धाविदुषातदे वक्तव्यमितिभावयन्मैत्रेयस्तत्रोत्तरत्वेनतत्कथामाह गंगेति यावद्भिर्भोगैर्देहस्थितिःस्यात्तानेवनाधिकानित्येवकारार्थः तानपिपुण्यजिहासयापुण्यक्षयाभिप्रायेण नसुखार्थम् ११ सर्वत्रेत्युक्तंसंकोचयति अन्यत्रेति अच्युतगोत्रतोवैष्णवकुलात् गोत्रंनाम्निकुलेखलइतियादवः १२ ज्ञानिनःप्रारब्धकर्मभोगस्यानियतत्वेनासिद्धत्वान्नैतद्वर्णनमत्रापेक्षितमन्यत्किंचिच्छ्राव्यमस्तिचेद्वक्तव्यमितितत्राह एकदेति

प्रजास्तंदीपबलिभिःसंभृताशेषमंगलैः ॥ अमीयुर्मृष्टकन्याश्चमृष्टकुंडलमंडिताः ४ शंखदुंदुभिघोषेणब्रह्मघोषेणचर्त्विजाम् ॥ विवेशभवनंवीरःस्तूयमानोग तस्मयः ५ पूजितःपूजयामासतत्रतत्रमहायशाः ॥ पौरान्जानपदांस्तांस्तान्प्रीतःप्रियवरप्रदः ६ सएवमादीन्यनवद्यचेष्टितःकर्माणिभूयांसिमहन्महत्त मः ॥ कुर्वन्शशासावनिमंडलंयशःस्फीतंनिधायारुरुहेपरंपदम् ७ ॥ सूतउवाच ॥ श्रुत्वादिराजस्ययशोविजृंभितंगुणैरशेषैर्गुणवत्सभाजितम् ॥ क्षत्ता महाभागवतःसदस्पतेकौषारविंप्राहगृणंतमर्चयन् ८ ॥ विदुरउवाच ॥ सोभिषिक्तःपृथुर्विप्रैर्लब्धाशेषसुरार्हणः ॥ बिभ्रत्सवैष्णवंतेजोबाह्वोर्याभ्यांदुदोह गाम् ९ कोन्वस्यकीर्तिंनशृणोत्यभिज्ञोयद्विक्रमोच्छिष्टमशेषभूपाः ॥ लोकाःसपालाउपजीवंतिकाममद्यापितन्मेवदकर्मशुद्धम् १० ॥ मैत्रेयउवाच ॥ गंगा यमुनयोर्नद्योरंतराक्षेत्रमावसन् ॥ आरब्धानेवबुभुजेभोगान्पुण्यजिहासया ११ सर्वत्रास्खलितादेशःसप्तद्वीपैकदंडधृक् ॥ अन्यत्रब्राह्मणकुलादन्यत्राच्यु तगोत्रतः १२ एकदासीन्महासत्रदीक्षातत्रदिवौकसाम् ॥ समाजोब्रह्मर्षीणांचदेवर्षीणांचसत्तम १३ तस्मिन्नर्हत्सुसर्वेषुस्वर्चितेषुयथार्हतः ॥ उत्थितःसदसो मध्येताराणामुडुराडिव १४ प्रांशुःपीनायतभुजोगौरःकंजारुणेक्षणः ॥ सुनासःसुमुखःसौम्यःपीनांसःसुद्विजस्मितः १५ व्यूढवक्षाबृहच्छ्रोणिर्वलीवल्गु तूदरः ॥ आवर्तनाभिरोजस्वीकांचनोरुरुदग्रवाक् १६ सूक्ष्मवक्रासितस्निग्धमूर्धजःकंबुकंधरः ॥ महाधनेदुकूलाग्र्येपरिधायोपधायच १७

यज्ञभेदेसदादानेसत्रमाच्छादनेवने इत्यभिधानात् दीक्षेतिविशेषणाद्दीक्षायज्ञइत्यर्थः समाजःसंमेलनं १३ दानार्थंभोजनार्थंवामिथोनिरीक्षणार्थंचेतस्ततःसंगच्छंतेजनाःकिमत्रचोद्यमिति तत्राह तस्मिन्नि ति तस्मिन्समाजेऽर्हत्सुसंमान्येषु अर्हतौजिनसंमान्याविति यादवः उडुराट्चंद्रःसराजासमंततश्चतुर्दिशमुपविष्टानैक्षतेतिषष्ठश्लोकेनान्वयोवेदितव्यः १४ कथंभूतइतितल्लक्षणवांक्ति प्रांशुमित्यादिना गौरोनिर्मलः । यद्वा गौरोरुणेसितेपीतइतिवचनात् गौरशब्दाक्षिप्तवर्णविशेषविशिष्टत्वंवक्ति कंजारुणेक्षणइत्यादिना । सौम्यःसुंदरःविप्रप्रियोवा । सोमयोग्योवा । द्विजादंताः ॥ १९ ॥ व्यूढवक्षाउन्नतवक्षाः । वलीभीरेखाभिः अतिशयेनवल्गुसुंदरमुदरंयस्यसतथा उदग्रवागुन्नतवाक् १६ सूक्ष्माश्चवक्राश्चासितानीलाश्चस्निग्धाश्चमूर्धजाःकेशायस्यसतथा । कंबुवत्त्रिरेखांकितवृत्तशंख वत्कंधरायस्यसतथा उपधायोत्तरीकृत्य १७

१ अस्मिन्श्लोकेपृथोर्देवेभ्योप्यतिशायितशक्तिमत्त्वमितिभातीत्यतस्तदुक्तेरभिप्रायंप्रमाणेनाह ॥ दी०

नियमेयज्ञनियमविषये १८ किमर्थंनिरीक्षणमितिअविदुषांचित्तव्याकुलतांपरिहरति ऊचिवानिति चित्राणिपदानियस्मिंस्तत्तथा श्लक्ष्णंमधुरंहृद्यंहृदयप्रियं । गूढमर्थतोगंभीरं अविक्लवम कातरमस्खलितमितियावत् वचनमितिशेषः ॥ १९ ॥ किमनेनचित्तव्याकुलतापरिहृतेतितत्राह सभ्याइति वोभद्रमस्त्वित्युक्तंप्रथमंचित्तव्याकुलतापरिहारायेतिज्ञातव्य धर्मजिज्ञासुभिर्ज्ञातुकामैः पुरुषैःस्वमनीषितंसत्सुयोग्येष्वावेद्यं २० किंतत्स्वमनीषितमित्यतउक्तं अहमिति दंडोस्त्रीशासनेराज्ञांहिंसायांलकुटेगुडइत्यभिधानात् तत्तद्योग्येषुतत्तंदंडधारयतीतिदंडधरः धात्राहरिणा धातुशब्दार्थंलक्षयति रक्षितेत्यादिना स्थापितास्थापयिता २१ तस्यमेकामान्संदुहंतीतिकामसंदोहाःकर्मण्यण्प्रत्ययः कामानांसंदोहायेष्वितिवा लोकाःस्युरितिब्रह्मवादिनः आहुरितियद्य स्मात्तस्मादेतत्फलमन्वीक्ष्याहधात्रेहप्रजापालनादौयोजितइत्यन्वयः तदनुध्यानात्तस्यप्रजापालनस्यानुष्ठानादित्यनुवादः श्रीनारायणप्रसादेनभाविनोलोकाःकथंप्रजापालनेनस्युरितितत्राह यस्येति ॥ २२ ॥ व्यतिरेकमाह यउद्धरेदिति भागंषष्ठांशंपुण्यं २३ इदानींप्रजाःप्रत्याह तत्प्रजेति यस्मात्प्रजानामरक्षणेप्रत्यवायोभवतितत्तस्मात्हेप्रजाः यद्यनसूयवोयूयंअधोक्षजेहरौधियंकुरुत तर्हिनोनुग्रहःकृतोभवेदित्यन्वयः तत्रानेनकिंतत्राह भर्तृपिंडार्थमिति भर्तुर्ममषष्ठांशलक्षणसुकृताख्यप्रयोजनाय नकेवलंममयुष्माकमप्यस्तिप्रयोजनमित्याह स्वार्थमिति ॥ २४ ॥ सभ्या

व्यंजिताशेषगात्रश्रीर्नियमेन्यस्तभूषणः ॥ कृष्णाजिनधरःश्रीमान्कुशपाणिःकृतोचितः ॥ शिशिरस्निग्धताराक्षस्तानैक्षतसमंततः १८ ऊचिवानिदमुर्वीशःसदस्यान्हर्षयन्निव ॥ चारुचित्रपदंश्लक्ष्णंहृद्यंगूढमविक्लवम् १९ ॥ पृथुरुवाच ॥ सभ्याःशृणुतभद्रंवःसाधवोयइहागताः ॥ सत्सुजिज्ञासुभिर्धर्ममावेद्यंस्वमनीषितम् २० अहंदंडधरोधात्राप्रजानामिहयोजितः ॥ रक्षितावृत्तिदस्तेषुसेतुषुस्थापितापृथक् २१ तस्यमेतदनुष्ठानाद्यदाहुर्ब्रह्मवादिनः ॥ लोकाःस्युःकामसंदोहायस्यतुष्यतिदिष्टदृक् २२ यउद्धरेत्करंराजाप्रजाधर्मेष्वशिक्षयन् ॥ प्रजानांशमलंभुंक्तेभागंचस्वंजहातिसः २३ तत्प्रजाभर्तृपिंडार्थंस्वार्थमप्यनसूयवः ॥ कुरुताधोक्षजधियंतर्हिमेनुग्रहःकृतः २४ यूयंतदनुमोदध्वंपितृदेवर्षयोमलाः ॥ कर्तुःशास्तुरनुज्ञातुस्तुल्यंयत्प्रेत्यतत्फलम् २५ अस्तियज्ञपतिर्नामकेषांचिदिहसत्तमाः ॥ इहामुत्रचलक्ष्यंतेज्योत्स्नावत्यःक्वचिद्भुवः २६ मनोरुत्तानपादस्यध्रुवस्यापिमहीपतेः ॥ प्रियव्रतस्यराजर्षेरंगस्यास्मत्पितुःपितुः २७

नुद्दिश्याह यूयमिति तेनकिमस्माकंफलमित्यतउक्तं अनुज्ञातुरिति अनुज्ञात्रादीनांशास्त्रेषुयत्फलमुक्तंतत्तदनुज्ञानुसारिफलंस्यादित्यभिप्रायेणतुल्यमित्युक्तं नतुकर्त्रनुज्ञात्रोस्तुल्यफलत्वंस्यादन्यथाकृतहान्यादिदोषापत्तिरिति २५ ननुयद्यधोक्षजसद्भावंप्रमाणंस्यात्तर्हितद्धियंकुरुतेतिविधातुंयुक्तंतदेवकुतइतितत्राह अस्तीति यदृष्टंतदेवसत् यददृष्टंतदेवासदितिवादिनोपेक्ष्यकेषांचिदित्युक्तं केषांचिद्व्यासादीनांमहात्मनांपक्षेयज्ञपतिर्नामविष्णुरस्तीत्यन्वयः यज्ञोयज्ञपतिर्यज्वेत्यादिस्मृतेः श्रीनारायणस्यप्रसादेनप्राप्यालोकास्तेनानियतादेवताश्चसंतीत्येतदेकोक्त्याह इहेति इहमनुष्यलोकेतच्छरीरेच । अमुत्रस्वर्गादौ । ज्योत्स्नावत्यःप्रकाशभूयिष्ठाभुवःस्थानविशेषाःइंद्रियादिप्रेरकत्वेनभवनाद्भुवोदेवताश्चदृश्यंते । प्रमाणतइतिशेषः । प्रकाशवद्भुवोदेवामानुषाश्चापिकेचनेतिवचनात् दुर्लभत्वात्क्वचिदित्युक्तं इहेत्यनेनबिलस्वर्गंलक्षयति । सुखहेतुत्वेनचंद्रिकयातुल्यरत्नप्रकाशेनप्रकाशितत्वात्ज्योत्स्नावत्यइति २६ केषांचिदितिसूचितारतान्नामतोनिर्दिशति मनोरिति अस्मत्पितुर्वेनस्य पितुः । २७ ।

अजस्यब्रह्मणः। गदाभृतोहरेः। कृत्यंपूजालक्षणंकार्यमस्ति २८ स्वर्गादेरन्याधीनतयातत्प्राप्त्यर्थंतदुपाधानस्यैवकर्तव्यत्वेनतत्रकिंगदाभृतःकृत्येनेतितत्राह राज्येति राज्यादेःप्रायेणान्याधी नत्वमंतरेणैवैकात्मनःसमस्तात्प्रधानस्यहरेर्हेतुताकारणत्वं । एकात्माहरिरुद्दिष्टःप्रधानत्वात्समस्ततइतिवचनात् । ज्ञानादेवस्वर्गोज्ञानादेवापवर्गइतिश्रुतेः स्वर्गादिप्राप्त्यर्थमपिश्रीनारायण स्यपूजाज्ञानजनित्रीकार्येत्याशय' ननुप्रायःशब्दस्यप्राचुर्यार्थावधारणार्थत्वेनिषिध्यावशिष्टाल्पनिषेधःकथंक्रियतेइतिचेन्नतस्यावधारणाक्षेपेप्रयोगदर्शनात् तदुक्तं प्रायःपदंस्यात्प्राचुर्येचाक्षेपात्मा वधारणे अर्थतोवधृतिःक्षेपोमुखाक्षेपोवधारणमिति एकश्चेतनोजीवएवराज्यादेःकारणमधिकृतत्वादितिचेन्न विपक्षाविरोधात् अनाम्नायत्वाच्च एकात्माहारिरुद्दिष्टःप्रधानत्वात्समस्ततइति । ए तत्समाख्यानस्मृतिविरोधाच्च केषांचिदित्यनेनकेषांचिन्नास्तीत्युक्तं नास्तिकानाह दौहित्रादीनिति मृत्योर्दौहित्रोदुहितुःपुत्रोवेनः २९ यज्ञपतिस्तुराज्यादेर्हेतुर्येनविधिनाफलसिद्धिःस्यात्तंप्र कारमुपदिशत्यतआह यत्पादेति अत्रगंगादृष्टांतोबुद्ध्यवताराथं नतुगंगाकृष्णपादसेवयोःफलसाम्याभिप्रायेण कृष्णपादसेवासाक्षाज्ज्ञानसाध्यप्रसादसाधनं गंगासेवातुशुद्धांतःकरणस्यभगवत्से वाभुक्त्वाचतत्साधनमितिपरंपरयोपसंगच्छते ३० नष्टमनोमलस्यकिमात्यंतिकफलमत्राह विनिर्धुतेति निरस्तमनोदोषस्यपुंसोविषयासंगलक्षणवैराग्याज्जातायाभक्तेर्विज्ञानंभवति तदेवविशेषवीर्यं यस्यास्तीतिअसंगविज्ञानविशेषवीर्यवान् यस्यांघ्रिमूलेकृताश्रयः विज्ञानात्पूर्वंयथासंसारमाप्नोति तथानाप्नोतीत्यस्मिन्नर्थेपुनरिति संसारक्लेशमतिपत्तिमपिनाप्नोतिकिंपुनस्तत्प्राप्तिरित्यतःप्रपद्यत

**ईदृशानामथान्येषामजस्यचभवस्यच ॥ प्रह्लादस्यबलेश्चापिकृत्यमस्तिगदाभृतः २८ राज्यस्वर्गापवर्गाणांप्रायेणैकात्महेतुता ॥ दौहित्रादीनृतेमृत्योः शोच्यान्धर्मविमोहितान् २९ यत्पादसेवाभिरुचिस्तपस्विनामशेषजन्मोपचितंमलंधियः ॥ सद्यःक्षिणोत्यन्वहमेधतीसतीयथापदांगुष्ठविनिःसृतासरि त् ३० विनिर्धुताशेषमनोमलःपुमानसंगविज्ञानविशेषवीर्यवान् ॥ यदंघ्रिमूलेकृतकेतनःपुनर्नसंसृतिंक्लेशवहांप्रपद्यते ३१ तमेवयूयंभजतात्मवृत्तिभिर्म नोवचःकायगुणैःस्वकर्मभिः ॥ अमायिनःकामदुघांघ्रिपंकजंयथाधिकारावसितार्थसिद्धये ३२ असाविहानेकगुणाध्वरैःसतापृथग्विधैर्द्रव्यगुणक्रियोक्ति भिः ॥ संपद्यतेर्थाशयलिंगनामभिर्विशुद्धविज्ञानघनस्वरूपतः ३३**

इति ३१ एवंतत्सेवाफलमुक्त्वातदुपास्तिंविधत्ते तमेवेति फलस्यानुभवसिद्धत्वादन्ययोगव्यवच्छेदार्थएवशब्दः भजतैवेत्ययोगव्यवच्छेदोवा आत्मनिहरावेववृत्तिर्वर्तनंयेषातेतथातैः अ थयेवमनआदीनांगुणः । यद्विष्णुविषयत्वेनचरणं । स्वकर्मभिःस्वस्यविहिताश्रमादिकर्मभिः । उक्तमेतत्सर्वमप्रयोजकंव्याजिनइत्यतउक्तममायिनइति फलपूर्वविधानेक्षिप्रप्रवृत्तिर्भवतीतिभावे नोक्तं कामदुघेति वेदानुकूलमितिद्योतनायदुघेति इदमेवदर्शयन्नित्थंभावमाह यथेति अथातआनंदस्यमीमांसाभवतीत्यादिश्रुतौमनुष्योत्तममारभ्यब्रह्मपर्यंतंयोग्यमधिकारोयोग्यतालक्षणस्तस्मिन्न वसितानिर्णीता अर्थसिद्धिरानंदप्राप्तिर्यातदर्थमित्यर्थः । अर्थःमोक्षः । अर्थःस्याद्विषयेमोक्षेशब्दवाच्येप्रयोजनइतियादवः ३२ स्वकर्मभिरित्युक्तकर्मकरणप्रकारमाह असाविति आ त्मावाइदमेकएवाग्रआसीदित्यादिश्रुतिसिद्धोयोऽसौश्रीनारायणइहजीवराशौसतापुंसानुष्ठितैरनेकगुणाध्वरैःसंपद्यतेप्राप्यतइत्यन्वयः तेचाधिकारभेदात्बहवइत्याशयेनाह पृथगिति षोडशा दिभेदभिन्नैरनेकगुणत्वंव्यनक्ति द्रव्येति द्रव्यंपुरोडाशादिकल्पोक्तगुणविशिष्टं द्रव्यंगुणानामाधारइतियादवः । गुणोविशिष्टमातापितृजन्यत्वादि क्रियाऋत्विग्व्यापारः । इद्रायाग्नयइत्या द्युक्तयोयेषुतेतथातैः। अर्थेषुयजमानेषु। आशयोंतःकरणंयेषांतेदेवाअर्थाशयास्तेषांलिंगानिवज्रधरत्वादीनींद्रादिनामानिचयेषुतेतथातैःयद्वार्थाशयत्वंमुक्ताश्रयत्वंचक्रधरादिलिंगनारायणादिनामचयेषुते

१ आक्षेपोऽन्ययोगव्यवच्छेदस्तद्रूपावधारणे

तथावैः कथंमाप्यते । विशुद्धविज्ञानघनस्वरूपतः एवंज्ञानेनप्राप्यइत्यर्थः अनेनकर्मणाशुद्धांतःकरणाज्जातंज्ञानंसंसारनिवर्त्तकमित्युक्त्या कर्मणैवहिसंसिद्धिमास्थिताजनकादयइत्यादेर्गीतरुक्तेतिज्ञायते ३३ कर्मसाधनज्ञानेनज्ञायतइत्युक्तं तत्रविशिष्टतयाज्ञानंमुक्तिसाधनंस्यादितितंप्रकारंब्रूते प्रधानेति प्रधानंप्रकृतिःकालःफलपाचकः आशयोंतःकरणं कर्मजीवादृष्टमेतानिसंगृह्णातीतिप्रधानकालाशयकर्मसंग्रहः त्यक्तेषुसर्वेषुशरीरमेवशिष्यतेयस्यसशरीरशेषोजीवस्तंप्रतिपद्यप्राप्य चेतनोज्ञानशक्तिमान्नित्याविलुप्तज्ञानइत्यर्थः विभुःश्रीनारायणोयंक्रियाफलत्वेनकर्मफलदातृत्वेन पुण्यकर्मभिःपुरुषैर्विभाव्यतेज्ञायतेइत्यन्वयः फलमतउपपत्तेरितिसूत्राद्धरेःकर्मफलदातृत्वंसिद्धं अत्रदृष्टांतमाह यथेति यथानलोग्निस्तस्यदारुणोगुणस्थौल्यादिकमादत्तेदारुस्थौल्याद्यनुसारेणस्वयंचस्थौल्यादिमान्भवतीतितद्गुणात्मकोविध्युक्तगुणवत्सुदारुषुअग्निर्मथनादिनाभिव्यक्तोज्ञायते तथाप्रधानादिशब्दाभिधेयलक्ष्म्यादिभिःपरिवृतोजीवांतर्गतोजीवपरिमाणगुणानुकारीतदनुष्ठितकर्मफलदातृत्वेनगुरुशिष्यव्याख्यानश्रवणलक्षणमथनेनाभिव्यक्तोहरिर्ज्ञायतइतिभावः प्रधानादीनांहर्यधीनत्वं तद्भिन्नत्वंचदर्शयितुंतद्ग्रहण देहस्थत्वेपितद्गुणसंपृक्ताभावदर्शनायदार्वनलनिदर्शनं किंचानेनदेहदोषदारणसामर्थ्यंजगद्भक्षणेप्यलंबुद्धिराहित्यंसूचयितुंदार्वनलपदमुपात्तमितिज्ञापयति ३४ गुरुशिष्यव्याख्यानादिमथनेनहरिरभिव्यक्तोभवतीत्युक्तं तत्रगुरवःशिष्याश्चश्रीनारायणमुखोत्पन्नत्वात्व्याख्यानादेर्मुखव्यापारत्वेनातएवमुख्यत्वेनसात्त्विकत्वेनचस्वतएवव्याख्यानादौप्रवृत्तिसंभवाज्जलस्यंदनवद्ब्राह्मणाएवेत्यभिप्रेत्याधुनातानभिष्टौति अहोबतेति अमीत्यनेनहरेर्मुखजातत्वंप

प्रधानकालाशयकर्मसंग्रहःशरीरशेषंप्रतिपद्यचेतनः ॥ क्रियाफलत्वेनविभुर्विभाव्यतेयथानलोदारुषुतद्गुणात्मकः ३४ अहोबतामीवितरंत्यनुग्रहंहरिंगुरुंयज्ञभुजामधीश्वरम् ॥ स्वधर्मयोगेनयजंतिमामकानिरंतरंक्षोणितलेधृतव्रताः ३५ माजातुतेजःप्रभवेन्महर्द्धिभिस्तितिक्षयातपसाविद्ययाच ॥ देदीप्यमानेऽजितदेवतानांकुलेस्वयंराजकुलेद्विजानाम् ३६ ब्रह्मण्यदेवःपुरुषःपुरातनोनित्यंहरिर्यच्चरणाभिवंदनात् ॥ अवापलक्ष्मीमनपायिनींयशोजगत्पवित्रंचमहत्तमाग्रणीः ३७

रामृशति बतेतिचित्तंद्रवीकरोति अहोइतिसभ्यानुन्मुखीकरोति इष्टदेवतात्वेनगुरुत्वेनस्वविहितकर्मफलदातृत्वेनश्रीनारायणएवपूज्यइत्यतोविशेषणत्रयं एषमेसर्वधर्माणांधर्मोधिकतमोमतः यद्भक्त्यापुंडरीकाक्षंस्तवैरर्चेन्नरःसदेतिवचनात् स्वधर्मयोगोभक्तियोगस्तेनयजंतिपूजयंति भगवद्भक्तत्वेनस्वचेतःप्रीतिजनकत्वान्मामकाइत्युक्तं कृष्याद्यन्यव्यापाररहित्यप्रकटनार्थनिरंतरमिति एतत्सूचनाय धृतव्रताइति सत्रादिकर्मसुदीक्षितानामन्यव्यापाराभावस्तथात्रापीति कर्मणाफलाधिक्यद्योतनायक्षोणितलेपतनदुःखक्षयहेतुत्वात्प्रतिष्ठाहेतुत्वाच्चक्षोणितलइति क्षिणुक्षयेतलप्रतिष्ठायामितिधातुः३५ स्ववंश्यानांराज्ञांशिक्षामाह माजात्विति राजकुलेविद्यमानाभिर्महर्द्धिभिःसमुत्थितंतेजःप्रभावलक्षणं अजितःश्रीनारायणोदेवतायेषांतेतथातेषांतितिक्षादिनादेदीप्यमानेद्विजानांकुलेजातुकदाचिदपिमाप्रभवेत्कुलक्षयेसमर्थनभवेत् ३६ नकेवलब्रह्मकुलंनाभिवनीयंकिंतुतत्रभक्तिरपिकर्तव्येत्यत्रकैमुत्यन्यायमाह ब्रह्मण्यदेवइति अर्कमर्कटमंडूकविष्णुवासववायवः तुरंगसिंहशीतांशुयमाश्चहरयोदशेति निगदाद्धरिरिंद्रोपस्यश्रीनारायणस्यचरणाभिवंदनादनपायिनींलक्ष्मीमवाप जगत्पवित्रंयशश्चावाप सोपिपुरातनःपुरुषोब्रह्मण्यदेवोब्राह्मणप्रियश्च । देवः क्रीडादिगुणयुक्तश्चेत्यन्वयः ब्राह्मणप्रियत्वंक्रीडामात्रमितिदर्शयितुंदेवइतिपदं अतएवमहत्तमाग्रणीरित्युक्तंमहतामिंद्रादीनांसकाशादुत्तमाब्रह्मादयस्तेषामप्यग्रणीःश्रेष्ठस्तस्मात्क्रीडामात्रमिदं अतएवानुपपत्त्याहरिशब्देनेंद्रएवगृहीतः यत्प्रसादेनदेवेंद्रोवेदोदितयशाअभूत् सोपिविष्णुरमेयात्मासदाब्राह्मणवत्सलइतिस्मृतेश्चप्रतीतार्थपरित्यागोयुक्तः अजितदेवतानामित्युक्तिविरोधाच्च ३७

१ हरिर्नारायणः येषाचरणाभिवन्दनात् स्वपत्नीं अनपायिनीं लक्ष्मी अवापप्राप जगत्पवित्र यशश्चावाप इतियोजनाभ्राति निवारयितु तात्पर्यानुसारेण योजयति हरिरिंद्रइति ।

अस्तुविष्णुर्द्विजप्रियस्ततःप्रकृतेकिमित्याशंक्यविष्णुभक्तिमवमृश्यब्राह्मणसेवाकार्येत्याह यत्सेवयेति अपवर्गावाप्तौ श्रीलक्ष्मीकांतप्रसादएवापेक्षणीयोऽतःक्षितिदेवप्रीत्याकिमित्यतोवा यत्सेवयेति भगवत्प्रसादोत्पत्तौविप्रसेवाद्वारमित्यर्थः स्वराट्स्वतंत्रःयतोविष्णुप्रसादोभवति तस्माद्ब्राह्मणकुलंनिषेव्यतामित्युपसंहरति तदेवेति तद्धर्मपरैर्विष्णुधर्मपरैः ॥ ३८ ॥ ब्राह्मणसेवाप्रसन्नश्रीनारायणप्रसादान्मौक्तिकपरमानंदोपिभवतीत्याह पुमानिति यस्यहरेर्नित्यसंबंधोयेषांतेयन्नित्यसंबंधाद्विजास्तेषांनिषेवयासेवालक्षणसंगतःपुमानतिवेलंक्षिप्रंतस्यात्मनोहरेः प्रसादतोत्यंतशमंभगवन्निष्ठाजन्यमुक्तिसुखंलभेततस्तस्मान्मोक्षसुखात्परमन्यत्सुखंहविर्भुजामप्यत्रसंसारेस्तिकिंनास्त्येव हविर्भुजोदेवताः । किंविशिष्टंस्वयंस्वरूपभूतं । अस्वरूपमपिस्वरूपवन्नोपचरितमित्याह स्वतइति म हत्सेवांद्वारमाहुर्विमुक्तेरितिमहत्सेवायाअपिमुक्तिसाधनत्वंसिद्धं यद्वा यन्नित्यसंबधानांसतांनिषेवयापुमानात्मनोमनसःप्रसादतोत्यतशममतिशायितभगवन्निष्ठांलभेत ततःश्रीनारायणनिष्ठायाःस्वतोऽकृत्रिमंस्वयंस्वरूपसुखंलभेततततइत्युत्तरत्रापिसंबध्यतेशेषंपूर्ववत् ३९ इतोपिब्रह्मकुलसेवाकर्तव्येत्याह अश्नातीति । भगवत्तत्त्वकोविदैःपुरुषैरीड्यस्यहरेर्नामभिर्यन्मुखेश्रद्धयाहुतमनंतोयथाश्नाति तथाचेतनयाबहिष्कृतेजडेहुताशनेहुतंनाश्नातीत्यन्वयः अनंतइत्यनेननकेवलमात्रंफलंकिंतुअनंतमेवेतिध्वनयति अनुनयार्थःखलुशब्दः वाइत्यनेननाहंतथाश्नामीतिप्रसिद्धिस्मारयति ब्राह्मणेष्वपियतिमुखाश्नेनहरेर्विशेषतस्तृप्तिरित्यभिप्रेत्याह पारमहंस्येति पारमहस्यैःपरमहंसाश्रमस्थैर्वर्याधरणीयागावोयस्यसपारमहंस्यवर्यगुः । तएवतद्वचनाभिप्रायंविदित्वाश्रद्धयानुष्ठातारइत्यर्थः यद्वापरमहंसविषयावर्यामनोहरागावोयस्यसतथा यतीनधिकंस्तौतीतितेषामेवतत्त्वज्ञानाधिक्यादित्यर्थः चित्रगुशब्दवदयशब्दः ४० नन्वग्नितआधिक्येचेतनावत्त्वंप्रयोजकंचेदवैदिकानामाराध

**यत्सेवयाशेषगुणाश्रयःस्वराट्विप्रप्रियस्तुष्यतिकाममीश्वरः ॥ तदेवतद्धर्मपरैर्विनीतैःसर्वात्मनाब्रह्मकुलंनिषेव्यताम् ३८ पुमाँल्लभेताप्यतिवेलमात्मनःप्रसादतोत्यंतशमंस्वतःस्वयम् ॥ यन्नित्यसंबंधनिषेवयाततःपरंकिमत्रास्तिसुखंहविर्भुजाम् ३९ अश्नात्यनंतःखलुतत्त्वकोविदैःश्रद्धाहुतंयन्मुखइज्यनामभिः ॥ नवैतथाचेतनयाबहिष्कृतेहुताशनेपारमहंस्यवर्यगुः ४० यद्ब्रह्मनित्यंविरजंसनातनंश्रद्धातपोमंगलमौनसंयमैः ॥ समाधिनाबिभ्रदिहार्थसिद्धयेयत्रेदमादर्शइवावभासते ४१ तेषामहंपादसरोजरेणुमार्यावहेयाधिकिरीटमायुः ॥ यंनित्यदाबिभ्रतआशुपापंनश्यत्यमुंसर्वगुणाभजंति ४२ गुणालयंशीलधनंकृतज्ञंश्रद्धाश्रयंसंवृणतेनुसंपदः ॥ प्रसीदतांब्रह्मकुलंगवांचजनार्दनःसानुचरश्चमह्यम् ४३**

नपात्रत्वंस्यादित्याशक्यब्रह्मकुलस्यवैशिष्ट्यमाह यद्ब्रह्मेति अत्रयावद्ब्रह्माधिष्ठितंतावतीवागितिश्रुतिर्वेदस्यपरब्रह्मणश्चलक्षणसाम्यात्द्वयमप्येकोक्त्यावक्तियद्ब्राह्मणकुलंनित्यत्वादिगुणविशिष्टब्रह्मवेदंहरेस्तत्त्वंचाबिभ्रत् बिभर्ति तद्धारणेसामर्थ्यंवक्तिश्रद्धेति आचारहीनंनपुनंतिवेदाइतिवचनं मंगलंपुण्यं संयमोदमः समाधिरेकाग्रता । किमर्थमित्यतउक्तं अर्थसिद्धयइति पुरुषार्थोपयोगीतरज्ञानगयासोपिनकार्यइत्याह यत्रेति यत्रब्रह्मणिश्रीनारायणेइदंजगदादर्शेदर्पणइवावभासतेवेदेचेदंपुरुषार्थचतुष्टयंज्ञायते यद्वा यत्रब्रह्मकुलेइदमुक्तंब्रह्मद्वयंदर्पणइवावभाति ४१ एवंब्रह्मकुलमभिष्टूयात्माक्रियोपदेशतस्तत्सेवा यावदायुःकर्तव्येतिविधत्ते तेषामिति हेआर्याः तत्त्वज्ञानोत्पत्तौप्रथमसाधनंपापप्रणाशः सोप्यनेनस्यादित्याशयेनाह यंनित्यदेति उत्तरफलमाहामुमिति अमुंपुरुषम् ४२ एतदेवविशिनष्टिगुणालयमिति सपदोगुणालयत्वादिविशिष्टंपुरुषमनुसंवृणतइत्यन्वयः संवृणुतइतिपाठेसंवृण्वतइतिव्याख्येयंनित्यसंबंधनिषेवयेत्यादौप्रस्तुतोजनार्दनः पारमहंस्यवर्यगुरित्यनेनध्वनितागावश्चब्रह्मकुलंचप्रसीदत्वित्युपसंहरति प्रसीदतामिति ब्रह्मकुलसेवावद्गोकुलसेवाब्रह्मादिपरिवृतश्रीजनार्दनसेवाचयथाशास्त्रविहितंमुमुक्षुणाकर्तव्येत्यतोवाह प्रसीदतामिति ४३

---

१ अत्र येषां ब्राह्मणाना नित्यसंबधनिषेवयेत्यादि भ्रमार्थं निराकरोति

इदानींमैत्रेयपृथूक्तावविप्रतिपत्तिःसर्वस्याभूदितिवाक्ति इतीति साधुवादेनानिदोषवाक्येन ४४ सूचितंस्पष्टयति पुत्रेणेति सोयंमनुष्यलोकःपुत्रेणजय्यइत्यादिकंश्रौतमपिहृष्टचारितामित्याहुरित्याह ब्रह्मदंडेति शश्वत्पुत्रेणपितरोत्यायन्बहुलंतमइतिश्रुतिरत्रप्रमाणं । पापस्यवेनस्यतमस्तरणंसत्यंचेत्सर्वेपिमुक्तिप्राप्तियोग्याइत्यायातं नतुनारकींकोपीतिचेन्न वेनशब्दस्यतामसराजससात्विकभेदे नाभिधेयत्रित्वस्यप्रामाणिकत्वाद्वेनस्योराजसोजीवःपृथुनास्वर्गंतिंगतः स्वयंतुतमएवापसात्त्विकःपृथुतामगादितिस्मृतेः तथाचवाक्ययोजनाब्रह्मदंडहतोविप्रशापहतः पापोदैत्योनाम्नावेनरतमोतर दितियत्तदितिप्रशंसामात्रनतुसत्यं सत्यंतुसर्वस्मादत्याधिकंदुःखोदर्कतमोत्यतरदगच्छत्तृप्लवनतरणयोरितिधातोःक्षुगताविति च अतिःस्यादधिकार्थोक्तौप्रशंसायामतिक्रमइत्यभिधानात् यत्तामसोवेनःसर्व दुःखकरोदैत्यःसोत्यतरत्सुखभोगलोकमतिक्रम्यागच्छदंधंतमइतिशेषः ब्राह्मणानांविमाणादंडोराजयोग्यशिक्षातयाहतोगतः दंडोस्त्रीशासनेराज्ञामितियादवः हनहिंसागत्योरितिधातोः । रजोगुणपानं पातीतिवापापोराजसोवेनस्तमोत्यतरत् तमोतिक्रम्यस्वर्गंतिंगतः पृथुगुणेनेतिशेषः । यदतरत् तर्तुमशक्यं तमोगुणइतिशेष तदतिक्रम्यवर्तमानंसत्त्ववेत्तीतिज्ञानांशोवेनोत्याधिकारार्थभक्त्यादिगुण

मैत्रेयउवाच ॥ इतिब्रुवाणंनृपतिंपितृदेवद्विजातयः ॥ तुष्टुवुर्हृष्टमनसःसाधुवादेनसाधवः ४४ पुत्रेणजयतेलोकइतिसत्यवतीश्रुतिः ॥ ब्रह्मदंडहतःपापोयद्वेनोत्यतरत्तमः ४५ हिरण्यकशिपुश्चापिभगवन्निंदयातमः ॥ विविक्षुरत्यगात्सूनोःप्रह्लादस्यानुभावतः ४६ वीरवर्यपितःपृथ्व्याःसमाःसंजीवशाश्वतीः ॥ यस्येदृश्यच्युतेभक्तिःसर्वलोकैकभर्तरि ४७ अहोवयंह्यद्यपवित्रकीर्तेत्वयैवनाथेनमुकुंदनाथाः ॥ यदुत्तमश्लोकतमस्यविष्णोर्ब्रह्मण्यदेवस्यकथांव्यनंक्षि ४८ नात्यंतिकमिदंनाथतवजीव्यानुशासनम् ॥ प्रजानुरागोमहतांप्रकृतिःकरुणात्मनाम् ४९ अद्यनस्तमसःपारस्त्वयोपासादितःप्रभो ॥ भ्राम्यतांनष्टदृष्टीनांकर्मभिर्दैवसंज्ञितैः ५० नमोविवृद्धसत्वायपुरुषायमहीयसे ॥ योब्रह्मक्षत्रमाविश्यबिभर्तीदंस्वतेजसा ५१ ॥ इतिश्रीभागवतेचतुर्थस्कंधेएकविंशोध्यायः ॥ २१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

विस्ताराभिधेयंपृथुत्वमतरदाप्नोदिति । पापानपातिनरक्षतीतिवापिबतिसंहरतीतिवापापः ब्रह्मवेदस्तदुक्तोदंडोहिंसायस्यपशोःसब्रह्मदंडः तंपशुंहंतीतिनान्यमविहितमिति ब्रह्मदंडहतः हिंसायांलकुडे गुडइतिच ४५ हिरण्यकशिपुरपिसनकादिशप्तोजयःश्रीहरिपार्षदस्तस्यतमोतिगमनंयुक्तं अन्यस्यतदाविष्टस्यासुरस्यतमोनिगमनमौपचारिकमर्थवादवत् ४६ एवंतुष्टाःसर्वेस्वमनोगतंविज्ञापयंति वीरवर्येति हेपृथ्व्याःपितःपातृत्वात्पितृत्वंननुत्वयैवनाथेनेत्युत्तरश्लोकेपृथावपिभक्तेःकर्तव्यत्वंप्रतीयतेअतःकथंभगवत्येवभक्तिःकर्तव्येतिचेदुच्यते तत्रपृथुस्थपरमेश्वरमपेक्ष्यैवकारेणान्ययोगव्यवच्छेदः क्रियते योब्रह्मक्षत्रमाविश्येत्युत्तरत्रपृथुस्थत्वप्रतीतेः ४७ मुकुंदोनाथोयेषांतेतथाअनेनाप्युक्तशंकापरिहारः व्यनंक्षिअस्माभिरपृष्टामपिकथांव्यक्ताकरोषि ४८ तवभृत्यानामस्माकमनुशासननैकांतिकनियतमित्याहुरित्याह नात्यंतिकमिति ४९ उपासादितःप्रापितः भ्राम्यतामेकत्रावस्थानमलभमानानाम् ५० अहोवयमित्यत्रातथाम्यपेक्षयेत्युक्तं तत्तत्त्वज्ञानमेषांसिद्धमितिभावनतत्सिद्धांतं प्रकटयति नमइति योविष्णुःक्षत्रंराजकुलोत्पन्नंपृथुमाविश्येदंब्रह्मब्राह्मणकुलंबिभर्तीत्यन्वयः ५१ ॥ ॥ इतिश्रीभागवतेचतुर्थस्कंधेएकविंशोध्यायः ॥ २१ ॥ ॥ ७ ॥ ॥

१ यद्वेनोत्यतरत्तमः इतिवेनस्यतमस्तरणंभाति तदनुपपन्नमतआह

पृथुसनत्कुमारसंवादापदेशेनसर्वस्माद्भिन्नमनुग्रहमंतरेणदुर्ज्ञेयंभगवत्तत्त्वंनिरूप्यतेऽस्मिन्नध्याये तत्रादौसनत्कुमारादिमुनीनामागतिंवक्ति जनेष्विति १ अर्चिषालक्षितान्लक्षणतोज्ञातावचष्टअद्राक्षीत् २ तेषांदर्शनेनोद्गतान्प्राणान्प्रादातुमिच्छुरिव अयंभावः ऊर्ध्वंप्राणाह्युत्क्रामंतियूनःस्थविरआगते प्रत्युत्थानाभिवादाभ्यापुनस्तान्प्रतिपद्यतइतिश्रुतेः प्राणास्तावत्तेजसाक्षिप्तास्तान्प्रत्यागच्छंतिअतःस्वयमनभिगच्छतःप्राणहानिःस्यादितिभयादिवससंभ्रमःप्रत्युद्गमनंचकारेति इंद्रियेशोजीवोगुणानिंद्रियाणीव ३ ४ ५ हाटकासनेसुवर्णपीठे स्वधिष्ण्येषुस्वस्थानेस्थितान् संयमःप्रश्रयः भवाग्रजान्शिवज्येष्ठान् तृतीयस्कंधेहरात्पूर्वंजातत्वोक्तेः संसाराग्रजातत्वंतद्विरुद्धत्वादुपेक्षणीयम् ६ संसारिणांसतासदर्शनस्यदुर्लभत्वात् अतःपूर्वाचारितंमंगलंममास्तीतिध्वनयन्विस्मयीकरोति अहोइति कृष्णेकृष्णविषये ७ नैतच्चित्रमित्याह किंतस्येति अनुगतेनप्राणेनसहवर्ततइतिसानुगः कस्मिन्वहमितिश्रुतिः ८ दुर्दर्शत्वमधिकदृष्टांतत्वेनोपपादयति नैवेति लक्ष्यतेलक्षणवत्तयापिभवद्विषयंज्ञानंनाप्नोति असंभवपरिहारायपर्यटतइति सर्वोजनःसर्वदृशसाक्षित्वेनपश्यतमात्मानपरमात्मानंयथानजानाति | ब्रह्मादीनांतद्विषयज्ञानसंभवात्कथंसर्वइतिसर्वेकवली

मैत्रेयउवाच ॥ जनेषुप्रगृणत्स्वेवंपृथुंपृथुलविक्रमम् ॥ तत्रोपजग्मुर्मुनयश्चत्वारःसूर्यवर्चसः १ तांस्तुसिद्धेश्वरान्राजाव्योम्नोवतरतोऽर्चिषा ॥ लोकानपापान्कुर्वत्यासानुगोऽचष्टलक्षितान् २ तद्दर्शनोद्गतप्राणान्प्रत्यादित्सुरिवोत्थितः ॥ ससदस्यानुगोवैन्यइंद्रियेशोगुणानिव ३ गौरवाद्यंत्रितःसभ्यःप्रश्रयानतकंधरः ॥ विधिवत्पूजयांचक्रेगृहीताध्यर्हणासनान् ४ तत्पादशौचसलिलैर्मार्जितालकबंधनः ॥ तत्रशीलवतांवृत्तिमाचरन्मानयन्निव ५ हाटकासनआसीनान्स्वधिष्ण्येष्विवपावकान् ॥ श्रद्धासंयमसंपन्नःप्रीतःप्राहभवाग्रजान् ६ ॥ पृथुरुवाच ॥ अहोआचरितंकृष्णेमंगलंमंगलायनाः ॥ यस्यवोदर्शनंह्यासीद्दुर्दर्शानांकुयोगिनः ७ किंतस्यदुर्लभतरमिह लोकेपरत्रच ॥ यस्यविप्राःप्रसीदंतिशिवोविष्णुश्चसानुगः ८ नैवलक्षयतेलोकोलोकान्पर्यटतोपियान् ॥ यथासर्वदृशंसर्वआत्मानंयेस्यहेतवः ९ अधनाअपितेधन्याःसाधवोगृहमेधिनः ॥ यद्गृहाअर्हवर्यांबुतृणभूमिसुवाग्धराः १० व्याललयद्द्रुमाह्वेतेप्यरिक्ताखिलसंपदः ॥ यद्गृहास्तीर्थपादीयपादतीर्थविवर्जिताः ११

क्रियतेइत्यत्रउक्तं यइति येचब्रह्मादयोस्यजगतोहेतवः कारणभूतास्तेपिनविदंतीति अत्रेदंतात्पर्यं यथात्मानंस्वंहरिर्वेत्ति तथानजानंतीति तदुक्तं सवज्ञाश्चविरिंचाद्यानजानीयुर्हरिंपरं हेतवोजगतोप्यस्ययथासौवेदकेशवइति अनेनत्वेदाहमेतमित्यादेर्गतिरप्युक्ताभवति दुष्टजनव्यामोहनायचातद्विषयज्ञानस्यदुःसाध्यत्वज्ञापनायवाधिकदृष्टांतप्रयोजनं किंचजगत्कारणतामाददानोयंहेतुशब्दोविरिंचादीनांसार्वज्ञ्यमप्याक्षिपन्नसर्वात्मनाज्ञानाभावोयुक्तइतिश्रीनारायणवत्तद्विषयज्ञानाभावएवउच्यतइतिव्यनक्तीति ९ भवतापुरुषेष्वनुग्राहकत्वेभगवद्भक्तिसामग्रीमत्त्वमेवप्रयोजकंनतुधनिकत्वादिकमित्याशयेनाह अधनाअपीति अर्हवर्याःपूज्यश्रेष्ठास्तेभ्योदत्तमंबुचतृणंचभूमिश्चसुवाचश्चार्हवर्यांबुतृणभूमिसुवाचस्ताधारयंतिबिभ्रतीतितथोक्ताः १० तीर्थपादोविष्णुस्तस्यभक्तास्तीर्थपादीयास्तेषांपादतीर्थैर्वर्जिताःसंपर्करहिता हिशब्दोयथाशब्दार्थे यथाव्यालालयादुष्टसर्पाश्रयावृक्षावर्ज्यास्तथा तादृग्गृहाःसंपद्युक्तत्वेपिवर्ज्याइत्यर्थः ११

---

१ मनोर्वैवस्वतस्यादावथर्वाब्राह्मणोजनि । मित्रश्चवरुणश्चाथोप्रहेतिर्हेतिरेवच । ब्रह्मणःप्रथमेकल्पेशिवःप्रथमजःस्मृतः । सनकाद्यास्तुवाराहेब्रह्माविष्णोःसुताग्रजइतिब्रह्मांडे ।

किंबहुजल्पेनेतिभावेनतदागमनंलालयति स्वागतमिति वोयुष्माकंस्वागमनंसुष्ठुअस्माकंसुखहेतुत्वादितिशेषः कथमस्मदागमनंसुखहेतुरत्राह यद्व्रतानीति मुमुक्षवोधीराःश्रद्धयायद्व्रतानिचरंति तेयूयंवयोदर्शनेनबालाअपि बृहंतिज्ञानेनवर्धंते ज्ञानवृद्धत्वादागमनंभद्रमित्यर्थः १२ राजास्वस्वागतवचनानंतरं पृथुंप्रतितुभ्यंचस्वस्तिकिमितिमुनिवचनात्पूर्वंस्वकुशलमाक्षिपति कच्चिदिति व्यसनबीजान्युप्यंतेऽस्मिन्नितिव्यसनावापः तस्मिन्नेतस्मिन्संसारेस्वकृतकर्मभिःपतितानांनकुशलंकच्चित्किंनकिमपीत्यन्वयः आत्मनोवानेनकुशलंपृच्छति अस्माकंकुशलंभविष्यतिकच्चिदिति १३ नन्वभ्यागतास्मत्कुशलप्रशंसामंतरेणात्मकुशलप्रश्नःकथंसंजाघटीतीतितत्राह भवत्स्विति इदंकुशलमकुशलमितिमतिवृत्तयोयत्रयेषुभवत्सुनसंति अतोभवत्सुस्वप्रश्नोनेष्यते कुतः आत्मनासहआरा मोरमणंक्रीडायेषांतेतथातेषु अतोभवत्सुकुशलप्रश्नाशाभावादौत्सुक्यादात्मकुशलप्रश्नइतिभावः १४ अस्तुतर्हितवकुशलंभविष्यतीत्यभिमंतंचेयतोवयमकुशलाब्धिमग्नास्तस्मादेतादृशानांकेनप्रकारेण कुशलंस्यादितितंप्रकारंपृच्छामीत्याह तदहमिति तपस्विनांसुहृदोत्रपूज्यान्भवत्संसारेक्षेमः संसारोच्छेदलक्षणंमंगलमंजसाक्षिप्रंस्यात् झटित्यंजसाह्वायेत्यमरः १५ ननुमोक्षविषयप्रश्नपरिहारोदुरवबोधो ऽतोऽन्यंसुशकंपृच्छन्नाचिकेतोमरणंमानप्राक्षीरितिश्रुतेरित्याशंक्यभवतोभगवद्विशेषसन्निधानपात्रत्वात्पृष्टार्थव्याख्यानसमर्थाइत्यभिप्रेत्याह व्यक्तमिति व्यक्तंस्पष्टेत्वृधेतुनेत्यभिधात् अत्रस्पष्टंव्यक्तमि

स्वागतंवोद्विजश्रेष्ठायद्व्रतानिमुमुक्षवः ॥ चरंतिश्रद्धयाधीराबालाएवबृहंतिवै १२ कच्चिन्नःकुशलंनाथाइंद्रियार्थार्थवेदिनाम् ॥ व्यसनावापएतस्मिन्प तितानांस्वकर्मभिः १३ भवत्सुकुशलप्रश्नआत्मारामेषुनेष्यते ॥ कुशलाकुशलायत्रनसंतिमतिवृत्तयः १४ तदहंकृतविश्रंभःसुहृदोवस्तपस्विनाम् ॥ संपृच्छेभवएतस्मिन्क्षेमःकेनांजसाभवेत् १५ व्यक्तमात्मवतामात्माभगवानात्मभावनः ॥ स्वानामनुग्रहायेमांसिद्धरूपीचरत्यजः १६ ॥ मैत्रेयउवाच पृथोस्तत्सूक्तमाकर्ण्यसारंसुष्ठुमितंमधु ॥ स्मयमानइवप्रीत्याकुमारःप्रत्युवाचह १७ सनत्कुमारउवाच ॥ साधुपृष्टंमहाराजसर्वभूतहितात्मना ॥ भव ताविदुषाचापिसाधूनांमतिरीदृशी १८ संगमःखलुसाधूनामुभयेषांसुसंमतः ॥ सत्संभाषणसंप्रश्नःसर्वेषांवितनोतिशम् १९ अस्त्येवराजन्भवतोमधुद्विषः पादारविंदेऽस्यगुणानुवादिनी ॥ रतिःसदायाविधुनोतिनैष्ठिकीकामंकषायंमलमंतरात्मनः ॥ २० ॥ ॥ ॥ ॥

त्यर्थः आत्मवतांब्रह्मादियोगिनामात्माभीष्टवर्षी हि आत्मभावनोमनःप्रेरकश्चेतनानांसत्ताप्रदोजन्मादिरहितोभगवान्स्वभक्तानामनुग्रहायेमांभूमिं सिद्धरूपी भवादृशाःसिद्धास्तएवरूपंप्रतिमास्यास्ती ति चरतीत्यन्वयः हरेस्तुप्रतिमाःप्राज्ञास्तत्रस्थःकेशवःस्वयं ददातिज्ञानमीशेशःपरमात्मास्वयंप्रभुरित्यतोज्ञानिनांप्रतिमात्वंसिद्धमतोप्यत्रात्मवतांव्यक्तंस्पष्टमितिपुनरावृत्त्यायोज्यं १६ पृथो.कंठ शोषणपर्यंतंतदुक्तंश्रुत्वानिरपेक्षत्वादन्यतोगतंतैरतिशकामाभूत्सूक्तत्वात्सारत्वात्कर्णसुखत्वात्प्रत्युत्तरयितुंशक्तत्वाच्चेति तत्रसनत्कुमारस्तंप्रत्याहेत्याह मैत्रेयइति मधुनामसुखांविद्यादित्यादेः १७ किमाह साध्विति तथाहि साधूनांगतिःस्थिबिरीदृशीस्वयंविद्वानपिलोकोपकारायप्रवर्ततइति १८ नकेवलंतवैवास्मद्दर्शनेनशमस्माकमपीतिभावेनाह संगमइति शंभगवन्निष्ठालक्षणंसुखं १९ अत्राशिक्ष णीयांशोऽस्माकंनास्तीतिभावेनाह अस्त्येवेति भवतोऽस्यमधुद्विषःपादारविंदेगुणानुवादलक्षणारतिरस्त्येव यारतिः कषायंमनःकलुषीकुर्वाणं कामंविषयतृष्णालक्षणं कषेणकर्षणेनगच्छतीतिकषायपा पैषवमुभयविधमंतरात्मनोमलंलिंगदेहंविधुनोतीत्यन्वयःअनेनहरौरतिरितरत्रहरिद्विष्यरतिर्विरक्तिरितिद्वयंपुरुषार्थस्यमुख्यसाधनमुक्तमितिज्ञेयं तदुक्तं रतिःपरात्मनिहरावन्यत्रारतिरेवच पुमर्थसाध नेष्वेतौनान्यन्मुख्यमिष्यतइति २०

एतदेवविशिनष्टि शास्त्रेष्विति सम्यग्विमृशेषुसमीचीनविचारवत्सु कोसावित्यतआह असंगइति आत्मनोव्यतिरिक्तेपरमात्मनोभिन्नेब्रह्मादितृणांतवस्तुनिअसंगोहेयलक्षणाबुद्धिर्ब्रह्मणिपरिपूर्णेनि
र्गुणेसत्त्वादिगुणरहितेनिर्णीतानंदादिगुणेवा निर्निर्णयनिषेधयोरित्यभिधानात्हरौयारतिःएतत्द्वयंमुख्यसाधनमित्यर्थः २१ एतादृशंसाधनंकथंस्यादितितत्साधनान्याह तच्छ्रद्धयेति तस्मिन्हरौ
श्रद्धया भगवद्धर्माणांवर्णाश्रमादिविहितानांचर्ययाचरणेन जिज्ञासयाब्रह्मविचारेण आध्यात्मिकयोगोष्टांगयोगस्तन्निष्ठया पुण्यश्रवाहरिस्तस्यकथया २२ अर्थस्यदेहस्यइंद्रियाणावारामेषुक्रीडावने
षुगुणेषुविषयेष्वतृष्णयाहेयबुद्ध्या तेषांविषयाणांसंमतानांस्रक्चंदनवनितादीनामपरिग्रहेणास्वीकारेण आत्मन्देहभोगविषयेपरितोषोलंबुद्धिः २३ स्मृत्याजन्मजरादिचिंतया सीधुसुधा पूर्वत्रक
र्मणाकर्मप्रबंधइतिधातोः भगवद्गुणसंदर्भशास्त्रेणउत्तरत्रतत्कृतकंसवधादिपराक्रमलक्षणकर्मामृतपानेन अहिंसासत्यमस्तेयब्रह्मचर्यंदयार्जवं क्षमाधृतिर्मिताहारःशौचंचैतेयमादश कर्मणामनसावा
चासर्वभूतेषुसर्वदा अक्लेशजननंप्रोक्तमहिंसात्विहयोगिभिः तपःसंतोषआस्तिक्यंदानमीश्वरपूजनं सिद्धांतश्रवणंचैवह्रीर्मतिश्चजपोव्रतं एतेतुनियमाःप्रोक्ताइतियाज्ञवल्क्ययोगशास्त्रेअभिधानात्
अभिध्ययाअखंडस्मरणेन निरीहयाअनिषिद्धचेष्टया २४ तत्पराहरिपरास्तेषांकर्णपूरयतीतिकर्णपूरणंकर्णाभरणवायद्धरेर्मुहुर्गुणाभिधानंतेन लिंगव्यत्ययश्छांदसः यद्वा हरेर्गुणाभिधानेनविजृंभ

शास्त्रेष्वियानेवसुनिश्चितोनृणांक्षेमस्यसम्यग्विमृशेषुहेतुः ॥ असंगआत्मव्यतिरिक्तवस्तुनिदृढारतिर्ब्रह्मणिनिर्गुणेचया २१ तच्छ्रद्धयाभगवद्धर्मचर्य
याजिज्ञासयाध्यात्मिकयोगनिष्ठया ॥ योगेश्वरोपासनयाचनित्यंपुण्यश्रवःकथयापुण्ययाच २२ अर्थेंद्रियारामगुणेष्वतृष्णयातत्संमतानामपरिग्रहे
णच ॥ विविक्तरुच्यापरितोषआत्मन्विनाहरेर्गुणपीयूषपानात् २३ अहिंसयापारमहंस्यचर्ययास्मृत्यामुकुंदाचरिताग्र्यसीधुना ॥ यमैरकामैर्नियमैर
भिध्ययानिरीहयाद्वंद्वतितिक्षयाच २४ हरेर्मुहुस्तत्परकर्णपूरयागुणाभिधानेनविजृंभमाणया ॥ भक्त्याह्यसंगःसदसत्परात्मनिस्यान्निर्गुणेब्रह्मणिचांजसा
रतिः २५ यदारतिर्ब्रह्मणिनैष्ठिकीपुमानचार्यवान्ज्ञानविरागरंहसा ॥ दहत्यवीजंहृदयंजीवकोशंपंचात्मकंयोनिमिवोत्थितोऽग्निः २६ दग्धाशयोमुक्तस
मस्ततद्गुणोनैवात्मनोबहिरंतर्विचष्टे ॥ परात्मनोर्यद्व्यवधानंपुरस्तात्स्वप्नेयथापुरुषस्तद्विनाशे २७

माणयाभक्त्याकीदृश्यातत्परकर्णपूरया एतैरुक्तैःसाधनैःसदसत्कार्यकारणात्मकप्रपंचविषयेऽसंगःस्यात् प्रथमासप्तम्यर्थे परात्मनिमुक्तप्रपंचस्वामिनिनिर्गुणेब्रह्मणिचरतिःस्यादित्यन्वयः यद्वा सदस
तोजगतःपरश्चात्माचेतिसदसत्परात्मातस्मिन् २५ अस्तुब्रह्मण्यसंगनिशितारतिस्ततःकिंतत्राह यदेति यदाब्रह्मणिनैष्ठिकीसर्वोत्कृष्टारतिरपरोक्षज्ञानलक्षणाभवति तदाचार्यवांस्तदुपदिष्टार्थ
साफल्यात्तद्भक्तिमान्पुमान्ज्ञानवैराग्ययोरंहसोद्रेकेणाबीजहृदयंस्वरूपोपाधिविनाबाह्योपाधिदहतीत्यन्वयः किमनेनजीवस्येत्यतउक्तंजीवकोशमिति जीवस्यगृहस्थानीयं तर्हितद्दाहेजीवोपिदग्धः
स्यादित्यतउक्तं पंचात्मकमिति पंचभूतस्वरूपमतएवब्राह्ममित्युच्यते जीवोपाधिर्द्विधाप्रोक्तःस्वरूपंब्राह्ममेवच बाह्योपाधिर्लयंयातिमुक्तावन्यस्यतुस्थितिः सर्वोपाधिविनाशेहिप्रतिबिंबःकथंभवेत्
कथंचात्मविनाशायप्रयत्नःसेत्स्यतेक्वचित् अपुमर्थताचमुक्तेःस्यादभावात्पुंसएवतु ज्ञानज्ञेयाद्यभावाच्चसर्वथानोपपद्यते तस्मादेतन्मतंयेषातमोनिष्ठाहितेमताइतिवचनात् नस्वरूपबीजहृदयदाहोत्रार्थःकित्व
स्वरूपोपाधेरित्यभिप्रायः तत्रदृष्टांतमाह योनिमिति अरणेरुत्थितोऽग्निरिवेति २६ बीजाशयनाशेतद्गुणानांज्ञानादीनामपिनाशादात्मनोबहिरंतरितिभेदंनविचष्टेनविपश्यति अन्यदर्शनाभावेपिस्वात्मानप

१ अबीजहृदयमित्युक्ते संसारस्याकारणभूतांतःकरणमितियोजनाभातिसानुपपन्ना मनएवमनुष्याणां कारणं बंधमोक्षयोरितिहृदयस्य संसारबीजत्वोक्तेरित्यतः तात्पर्यानुसारेणव्याख्याति स्वरूपेति ।

स्यतीत्यतएवेतिअंधवदृष्ट्यभावात्नकिंचिदपिपश्यतीत्यर्थः कथंतर्हिसंसारावस्थायामत्राह परात्मनोरीति परस्येश्वरस्यात्मनोजीवस्यचयद्यदा पुरस्तात्संसारावस्थायां व्यवधानंजवनिकास्थानीयाव स्था तदायथास्वप्नेसंदिग्धज्ञानमेतावाज्ञानंभवतीतितत्रतद्विनाशेबीजहृदयनाशेत्वपुरुषएवात्मनाशएवातःस्वरूपज्ञाननाशात्संसारावस्थैवोत्तमास्यात्किंचित्ज्ञानस्यापिसंभवादित्यर्थः उक्तादन्यथास्वी कारेभिदायदिनदृश्येतजीवात्मपरमात्मनोःमुक्तौतदाविमोक्षायकोयत्नंकर्तुमर्हति ममस्याहिपरेज्ञानेकिंनदुःखतरंभवेत् प्रवृत्तिधर्ममेवाहंमन्येभरतसत्तमेतिप्रमाणविरोधआपद्येतइति २७ अतःफलितमा ह आत्मानमिति आत्मानंजीवमिंद्रियार्थंशब्दादिविषयंचयदप्युभयोरात्मेंद्रियार्थयोः परमुत्तममीश्वरतत्त्वंतदापिबीजाशयलक्षणउपाधौसत्येवपुमान्पश्यति अन्यदातदभावेनपश्यतीत्यन्वयः २८ तत्रदृष्टांतमाह निमित्तइति जीवात्मपरमात्मनोर्भेदस्यान्वयव्यतिरेकासिद्धत्वेनप्रामाणिकत्वात्तदपलापेमहासुरत्वमेवस्यादितिभावः २९ जीवपरयोःसत्यभेदाप्रतीतौकिंकारणमित्याशंक्याज्ञान मेवतत्रकारणंतदपिविषयातिसक्त्यास्यादित्याह इंद्रियैरिति पुंसोमनोबुद्धेश्चेतनांबहुस्मरणशक्तिंहरतइत्यन्वयः बहुस्मरणशक्तिस्तुचेतनेत्युच्यतेबुधैरितिवचनात् मनसोहरणेकारणानींद्रियाणी त्याह इंद्रियैरिति हरिकथाश्रवणादियोग्यैःश्रोत्रादींद्रियैराक्षेपेचायंहेतुरित्याह विषयाकृष्टैरिति दृष्टांतेनबुद्ध्यारूढंकरोति स्तुंबइति स्तुंबोजलनिर्गमद्वारम् ३० बुद्धेर्बहुस्मरणशक्तिभ्रंशेसर्वानर्थाआप द्यंतइत्याह भ्रश्यतीति भ्रष्टंचित्तमनुबहुस्मरणशक्तिभ्रंशानंतरंस्मृतिरनेकशास्त्रयथार्थस्मरणसामर्थ्यंभ्रश्यतिस्मृतिक्षयेऽनेकशास्त्रयथार्थस्मरणशक्तिनाशेसर्वोत्तमःस्वतंत्रःपंचविधभेदस्वामीयदादिसर्व

आत्मानमिंद्रियार्थंचपरंयदुभयोरपि ॥ सत्याशयउपाधौवैपुमान्पश्यतिनान्यदा २८ निमित्तेसतिसर्वत्रजलादावपिपूरुषः ॥ आत्मनश्चपरस्यापिभि दांपश्यतिनान्यदा २९ इंद्रियैर्विषयाकृष्टैराक्षिप्तंध्यायतोमनः ॥ चेतनांहरतेबुद्धेःस्तुंबस्तोयमिवह्रदात् ३० भ्रश्यत्यनुस्मृतिश्चित्तंज्ञानभ्रंशःस्मृतिक्षये ॥ तद्रोधंकवयःप्राहुरात्मापह्नवमात्मनः ३१ नातःपरतरोलोकेपुंसःस्वार्थव्यतिक्रमः ॥ यदध्यन्यस्यप्रेयस्त्वमात्मनःस्वव्यतिक्रमात् ३२ अर्थेंद्रियार्थाभि ध्यानंसर्वार्थापह्नवोनृणाम् ॥ भ्रंसितोज्ञानविज्ञानाद्येनाविशतिमुख्यताम् ३३ नकुर्यात्कर्हिचित्संगंतमस्तीव्रंतितीर्षुणा ॥ धर्मार्थकाममोक्षाणां यदत्यंतविघातकम् ३४

तदधीनमेनंभावंमरणेपिनमुंचामीतिभगवत्पक्षपातलक्षणंज्ञानंभ्रश्यति तदस्तुततःकिंतत्राह तद्रोधमिति कवयआत्मनोज्ञानस्वरूपस्यतस्यतादृशस्यज्ञानस्यरोधंनाशमात्मनःस्वरूपस्यापह्नवंनाशंप्राहुरित्य न्वयः ३१ अतश्चकिमनिष्टमापन्नमत्राह नातइति पुंसःस्वार्थव्यतिक्रमःस्वप्रयोजनस्यव्यतिक्रमोनाशोतःस्वरूपभूतज्ञाननाशात्परतरोन्यतमोनाशोलोकेनास्तीत्यन्वयः आत्मनोनिरवयवत्वात्तन्नाशोऽ नवशेषोघटादीनांसावयवत्वेनतन्नाशःसावशेषोदृष्टइतिविशेषद्योतनायलोकइत्युक्तं ननुदेहपुत्रादेरपिप्रेयस्त्वात्तन्नाशस्यापिमहानाशत्वेनदुःखहेतुत्वात्किंज्ञाननाशोविशिष्योच्यतइतितत्राह यद्यस्तीति आत्मनोन्यस्यदेहपुत्रादेर्यद्यपिप्रेयस्त्वमस्तितथापिपुत्रादेरात्मशेषत्वेनप्रियत्वात्तन्नाशस्यस्वव्यतिक्रमात्स्वरूपज्ञाननाशादाधिक्यंनास्तीतिपूर्वेणनञध्याहारेणान्वेतव्यं अतएवनातःपरतरइत्युक्तम् । केचि न्नह्यस्तीतिपठंति । तत्पक्षेध्याहारंविनान्वयःकर्तव्यः ३२ अथतस्मान्नृणामिंद्रियार्थानांविषयाणांमभिध्याननिरंतरंसंचिंतनसर्वार्थानांसर्वपुरुषार्थानामपह्नवोविनाशहेतुः येनेंद्रियेणेंद्रियार्थाभिध्यानेनज्ञा नविज्ञानात्सामान्यविशेषलक्षणज्ञानात्संसितोभ्रंशितोमुग्धतांविवेकराहित्यमाविशतिप्राप्नोतीत्यर्थः ३३ विषयाभिध्यानस्यापिदुष्टसंसर्गोमूलकारणंसविपश्चितानकार्यइत्याह नकुर्यादिति धर्मादीनामत्यं तविघातकमिति यदतोविपश्चितीव्रतमस्तितीर्षुणामनसाकदापिदुष्टसंगंनकुर्यादित्यन्वयः नकार्यःकर्हिचित्संगइतिवापाठः तदाविपश्चितेतियोज्यम् ३४

धर्मादिभिःसहपाठात्मोक्षस्यापितत्तुल्यतास्यादितिशंकांपरिहरति तत्रापीति स्वपक्षपातस्त्वभ्यासाद्भोगार्थव्यापृतस्यतु भवेत्ततोऽनेकशास्त्रयथार्थस्मरणेऽपिता नश्यत्यतःस्मृतेर्नाशाद्भगवत्पक्षपातिता
विनश्येत्तेनचैवास्यभवेज्ज्ञानविपर्ययः नचज्ञानविपर्यासादन्यन्नाशकरंकंचित् सर्वस्यैतस्यमूलंहिदुष्टसंसर्गएवतु दुष्टसंगोविरक्तस्याप्यन्यथाज्ञानकारणं दुष्टसंगाद्धिविष्णोश्चस्वात्मत्वंमन्यतेऽबुधः अ
भावंस्वात्मनोन्यस्यमुक्तिंचापिनिरात्मतामितिसमाख्यास्मृतिसिद्धत्वादयमेवार्थोनशुक्तीर्थाद्युक्तार्थोग्राह्यःतमोहेतुत्वात् मोक्षस्यात्यंतिकत्वंकस्माद्विशेष्यांच्यतेधर्मादेरापिपुरुषार्थत्वादित्यत्राह त्रै
वर्ग्यइतित्रिवर्गसंबंधिपुरुषार्थः कृत।तस्यकालात्मनोहरेर्भ्रूविभ्रमजनितनाशलक्षणभयसंयुतोयतस्तस्मादितिशेषः भविष्यन्नाशमवलोक्य नित्यमिति ३५ त्रैवर्ग्यार्थोब्रह्मलोकादिसंबंधीनां
नित्यइतितत्राह परावरेचेति गुणव्यतिकरान्मूलप्रकृतेरनुअनंतरंयेभावाःपदार्थाःपरावरेएष्यदतीतकालेयेवर्तमानाउत्कृष्टनिकृष्टलक्षणावा ईशस्यकालनाम्नोहरेर्भ्रूविभ्रमणाविध्वंसिताशिषाविनाशितशुभा
नांतेषांक्षेमीनित्यानंदीनास्तीत्यन्वयः अनेनब्रह्मलोकादिप्राप्तिलक्षणःपुरुषार्थोपिननित्यइत्युक्तंभवति ॥ ३६ ॥ जगतोहरिणाबुद्धिपूर्वंसृष्टत्वात्तत्प्रसादेनतस्यबंधनिवृत्तिरन्यथोक्तानर्थएवेत्याह
मनोमात्रमिति इदंप्रत्यक्षप्रमाणसिद्धं विश्वंब्रह्मादिस्तंबपर्यंतं हरेर्मनसामितानिर्मितंत्रातंरक्षितंमीयतेसंह्रियते मीहिंसायामितिधातोः अमात्रेअपरिच्छिन्नेमनसिस्थितत्वाद्वामनोमात्रं तदुक्तं
मनोमात्रंहरेर्यस्मान्मनसामीयतेजगदिति अत्रदृष्टांतमाह यथेति केयंक्रियानामेतितत्राह क्रियाचेति स्वप्नेहरेरिच्छयाजाग्रद्दृष्टकरितुरगादिवासनयानिर्मितामात्रंतिप्रवर्ततइतिवासनामात्रं व्यासेमन

तत्रापिमोक्षएवार्थआत्यंतिकतयेष्यते ॥ त्रैवर्ग्यार्थोयतोनित्यंकृतांतभयसंयुतः ३५ परावरेचयेभावागुणव्यतिकरादनु ॥ नतेषांविद्यतेक्षेमीईशविध्वं
सिताशिषाम् ३६ मनोमात्रमिदंविश्वंयथास्वप्नेमनःक्रिया ॥ क्रियाचवासनामात्रंसानीहायांप्रलीयते ३७ आत्मात्वनीहयासाक्षात्स्वयंज्योतिःप्रसिध्य
ति ॥ एवंव्युदस्यात्ममायांजानंस्तूपरमेन्मुनिः ३८ नयत्रनिद्रामूर्छावानार्थदृक्चमनोरथः ॥ नानुवृत्तिर्नप्रलयस्तद्ब्रह्मपरमंविदुः ३९ तत्त्वंनरेंद्रजगता
मथतस्थुषांचदेहेंद्रियासुधिषणात्मभिरावृतानाम् ॥ यःक्षेत्रवित्त्वमनयोर्हृदिविष्वगाधिःप्रत्यक्चकास्तिभगवांस्तमवेहिसोऽस्मि ४०

सिविष्णोश्चस्थितत्वाद्वासनामयामिति वसआच्छादनइतिधातोःईश्वरेच्छयाच्छाद्यमानत्वाद्वासनामयं वसआच्छादनेत्यस्माद्धातोर्वावासनामयमितिच यतएवंहरेरिच्छाधीनंजगदतोहरेरनीहायांस
त्क्रियापाररहित्यावस्थायांसत्त्वादिगुणसाम्यलक्षणायांलीयते स्वस्वकारणानुप्रवेशपूर्वकमव्यक्ततामाप्नोति नतुशून्यतां तदेतदाह अनीहायामिति यतोहरेरिच्छाधीनाजगतःस्थितिः अतोविष्णोरनी
हायांलीयतेसकलंजगदितिच ३७ ननुमुक्तैःकीदृशोविष्णुःप्राप्यतइतितत्राह आत्मेति स्वयंज्योतिर्नित्याविलुप्तप्रकाशःसाक्षात्तुर्यआत्मा जाग्रदाद्यवस्थानुभाविनोजीवात्मनोभिन्नोविष्णुरनीहया
अवस्थितस्तुजाग्रद्व्यापारशून्यएवव्याप्तरूपी प्रसिध्यतिप्राप्यते । मुमुक्षुभिरितिशेषइत्यन्वयः अनीहावस्थएवासौमुमुक्षुभिरवाप्यतइतिच फलमाह एवमिति जीवपरयोरेवमुक्ताविधयास्व
स्वामिभावंजानन्मुनिः भिदापरपर्यायामात्ममायांबंधशक्तिंव्युदस्योपरमेद्धरिमुपगम्यसुखलक्षणारतिंप्राप्यनिर्मूलितसंसारोभवेदित्यर्थः एवंविद्वान्बंधशक्तिंव्युदस्यहरिमाप्नुते प्रकृतिर्भिदाचमायाचप्र
मत्येत्यभिधीयते बंधशक्तिर्यपालोकोबंभ्रमीत्यनिशंभुवीतिच ३८ अनीहावस्थएवमुमुक्षुभिःप्राप्यइत्युक्तं तत्स्पष्टमाचष्टे नयत्रेति निद्रासुषुप्तिर्मूर्च्छामोहः अर्थदृग्जाग्रत् अनुवृत्तिर्जीवन्मुक्तिः अनुवृ
त्तिरितिप्राज्ञैर्जीवन्मुक्तिरुदीर्यतइतिच एताः निद्राद्यवस्थाःयत्रनसंति स्वशक्तिव्यंजितानभवंति तद्विजितात्मनोमनोजयवतोमुमुक्षोःप्राप्यब्रह्मेत्यन्वयः ३९ ननुजीवात्मातदुपजीव्यःपरमात्माचक
थंज्ञातव्यइत्याशंक्यतत्त्वंविविच्योपदिशन्नाह तत्त्वमिति हेनरेंद्रयस्त्वनयोःस्थावरजंगमयोर्मध्येविष्वगाधिर्नानादुःखःसन्नेकोजीवोसि सदुःखीतिश्रुतितत्त्वंहृदिस्थितमवेहि हृदिह्येषआत्मेतिश्रुतिः

अनेनजीवात्मनोदेहेकुत्रावस्थानमितिशंकापरिहृतेतिज्ञायते त्वंकइतितत्राह सोस्मीति योहंतवसदृशोजीवोस्मि तंमांज्ञानान्महान्भवामीत्यवैमिअनेनतारतम्यज्ञानमावश्यकमित्युक्तंभवति अथजीवस्व रूपज्ञानानंतरमीश्वरज्ञानंप्रददामीत्याह अथेति यःक्षेत्रवित्क्षेत्रज्ञःसर्वांतर्यामीसर्वस्यप्रत्यक् चकास्तिआभिमुख्येनप्रकाशते दुर्भगशरीरस्थोपितन्मलाद्यलिप्ततयाजीवव्यतिरिक्तोजीवस्यात्यंतोप कारित्वेनसाक्षित्वेनावभासतेसभगवांस्तुभ्यंसुखादिप्रदःश्रीनारायणइत्यवैहि तंविशिनष्टि जगतामिति देहश्चेंद्रियाणिचासवःप्राणाश्चधिषणाबुद्धिश्चात्माहंकारश्चेत्येतैरावृतानाजगतांजंगमानांतस्थुषां स्थावराणांचतत्त्वंसर्वसत्ताप्रदत्वात् तदुक्तं सर्वसत्ताप्रदत्वात्तुसर्वतत्त्वंहरिःस्मृतः सर्वत्रविततत्वाद्वासोहंत्वामितिचोच्यते सर्वांतर्यात्मकत्वात्तुनजीवात्मतयाहरिरितिच अभिमानस्त्वहंकारआत्माचेत्य मिथीयतइतिवचनात्तत्रात्माहंकारः व्यवधानेनान्वयोपियोग्यतापेक्षयाभवेदितिवचनात् सात्त्विकानांजीवपरभेदज्ञानेविशिष्टमुक्तिसाधनेयोग्यतामपेक्ष्यव्यवधानेनान्वयोयुक्तः अनेनेतरेषामभेदज्ञानेत मःसाधनेयोग्यतेतियथास्थितान्वयइतिदर्शितं किंच तत्त्वज्ञानस्यगोपनीयत्वेनपरोक्षत्वस्यदेवप्रीतिहेतुत्वात् परोक्षप्रियाइवहिदेवाःप्रत्यक्षद्विषइतिश्रुतेः अतोयथापाठमेवार्थवदंतोसुरप्रकृतित्वात्प्रमो क्षशास्त्राधिकारिणइतिबुद्ध्यासद्भिस्तत्संगःपरिहर्तव्यश्चंडालसंगवदितितात्पर्यम् ४० ननुमायाकल्पितपंचभूतात्मदेहेब्रह्मैवसुखदुःखेअनुभवति ब्रह्मैवसंसरतिब्रह्मैवमुच्यतइत्याचार्योक्तेःविमुक्तश्चमुच्यतइ तिश्रुतेश्चातोनस्वामिभृत्यभावेनात्रद्वयांगीकारोयुक्तइतितत्राह यस्मिन्निति इदंसत्पृथिव्यादिकमसद्गगनादिकंजगद्यस्मिन्भगवतिआत्मतयानिजस्वरूपतयाविभातीतियोयमयोगिराद्धांत समायाविवेक विधुतिः मायायोर्ज्ञानप्रकृत्यभिधेययोर्विवेकात् विजिरपृथग्भावइतिधातोः ज्ञानदेहोहरिःपंचभूतदेहोजीवइतिपृथङ्निश्चितज्ञानाद्विधुतिर्विध्वसोयस्यायोगिराद्धांतस्यसतथोक्तः एतदेवदृष्टांतेनस्पष्टय ति स्रजीति स्रजिमालाकृतौरज्जावहिबुद्धिर्वा अयंभावः यथारज्जुतत्त्वाज्ञानाद्रज्जौसर्पज्ञानमुत्पन्नंगुरूपदेशात्सर्पणदर्वीशिरोलक्षणफणाद्यभावज्ञानाद्वास्पर्शकार्कश्यज्ञानाद्वाविधूयते तथाप्रमाणबा

**यस्मिन्निदंसदसदात्मतयाविभातिमायाविवेकविधुतिःस्रजिवाहिबुद्धिः ॥ तंनित्यमुक्तपरिशुद्धविबुद्धतत्त्वंप्रत्यूढकर्मकलिलप्रकृतिंप्रपद्ये ४१ यत्पाद पंकजपलाशविलासभक्त्याकर्माशयग्रथितमुद्ग्रथयंतिसंतः ॥ तत्त्वंनतद्धिमतयोपिविरुद्धमार्गस्रोतोगुणास्तमरणंभजवासुदेवम् ४२**

हुल्यदर्शनात्तत्त्वज्ञानोपदेष्ट्राचार्यवाक्याद्वाब्रह्मणोजगदात्मत्वंविधूयते नित्यमुक्तत्वादिलक्षणानामनन्यसाधारणानांसत्त्वान्नब्रह्मणःसंसारोयुक्तइतिस्पष्टयन्यच्छब्देनोक्तंतच्छब्देनपरामृश्यप्रपद्यइति क्रियापदेनान्वेति तमिति जीवव्यावृत्त्यर्थंनित्यशब्दःप्रत्येकमभिसंपद्यते नित्यमुक्तंनित्यपरिशुद्धंचनित्यविबुद्धंचयत्तत्त्वमनारोपितंरूपंतद्यस्यसच अतएवप्रत्यूढेनिरस्तेकर्मपुण्यपापलक्षणमदृष्टसत्त्वादि गुणकलिलाप्रकृतिश्चयेनसतथातं यत्स्वरूपतयाभातमज्ञानांगगनादिकं विवेकज्ञानिनारज्जौसर्पमावाद्विधूयते तंनित्यमुक्तभावेनानिरस्तप्रकृतिंभजेत् नभ्रांतिर्जगतोदृष्टिर्नभ्रांतिर्हरिदर्शनं अन्योन्यात्म तयादृष्टिर्भ्रांतिरित्यवधार्यतां मायेतिज्ञाननामस्यान्मायेतिप्रकृतिस्तथा ज्ञानस्वरूपंविष्णोस्तुप्रकृतिर्नहरेस्तनुः एवंविवेकिनोविश्वंब्रह्मरूपेणनेष्यते पंचभूतात्मकदेहंविष्णोःपश्यंत्ययोगिनः तथानयो गिराद्धांतोज्ञानदेहोयतोहरेरितिप्रमाणबाहुल्यान्मायादिशब्दानामुक्तएवार्थोनदुर्वादिकल्पितइतिनिरवद्यं सर्पमावत्सर्पज्ञानवत् ४१ एवंविधसंसारोच्छेदेकारणंहरेः सर्वोत्तमत्वज्ञानंभक्त्याविनाभूतमतोभ क्तिरेवप्रधानमित्याह यत्पादेति यस्यपादपंकजयोःपत्रायमाणास्वंगुलीषुतत्त्वंनोद्ग्रथयंति कुतइतिहेतुगर्भविशेषणमाह विरुद्धेति विरुद्धमार्गाःस्रोतोगुणाःसंसारगुणायेषांतेतथोक्ताः संसारगुणानांवि रुद्धत्वेनहेयत्वेनप्रतीयमानत्वादित्यर्थः संसारगुणानांविरुद्धत्वेनप्रतीतौकिंकारणमितिचेन्ननैजःसर्वगुणोत्कर्षस्वभावोदुस्त्यजः तदुक्तं नैजःसर्वगुणोत्कर्षःसर्वेभ्योमहदुच्यतइतिच अनेनतत्त्वज्ञानिषु तत्तद्गुणोत्कर्षोमहत्त्वकारणमित्युक्तंभवति द्विमतौचज्ञानदौर्बल्यंकारणं अनाद्यंतंपरंब्रह्मनदेवाऋषयोविदुः एकस्तद्वेदभगवान्प्रभुर्नारायणोविराडिति अनेनश्रीनारायणादृतेसर्वेषामितिद्विमत्यसंभाव्य तइतिसूचितं अतस्त्वंतंवासुदेवमरणंशरणंव्रजेत्यन्वयः ॥ ४२ ॥

संसारोत्तारहेतुत्वाद्भक्तेरेवसर्वगुणोत्कृष्टत्वमित्यभिप्रेत्याह कृच्छ्रइति अक्लेशाभक्तिलक्षणतरीरहिताः षड्वर्गएवनक्रोयस्मिन्सतथा तंभवार्णवंयेतितीर्षंतितर्तुमिच्छंतितेषामिहमहान्कृच्छ्रइतियस्मात्त स्मात्त्वंहरेर्भजनीयमंघ्रिमुडुपंनावंकृत्वा व्यसनंविविधापद्युक्तं दुस्तरार्णवंज्ञाननावंविनातर्तुमशक्यं संसारसमुद्रमुत्तरेत्यन्वयःइतःपरमुपदेष्टव्यांशोनास्त्यतःपरंराज्ञाकिमुक्तमत्राह सएवमिति आत्म नोहरेर्मेधाज्ञानंयस्यसतथातेन मनोयोगवतावा ॥ ४४ ॥ किमवोचत्तत्राह कृतइति ॥ ४५ ॥ तदपूरणेभगवदागमनेनापिकिंप्रयोजनमितिशंकांशोनास्तीत्याशयेनाह निष्पादितामिति घृणालुभिर्दया शीलैः एवमुपकर्तृभ्योयुष्मभ्यंकापिगुरुदक्षिणामयादातव्या तद्गुरुदक्षिणालक्षणंकिंधनमात्मनादेहेनसहददेददामि नममकिंचित्स्वाधीनमस्तीत्यर्थः राज्यादिकमस्तिचेत्सर्वंतत्साधुभ्योदत्तं तदधी नमहंकथंदास्यामिपरकीयदानाच्चौर्यमापद्यतइतिभावेनोक्तं साधुदत्तमिति ४६ ननुतथापिसाधुभिरात्मसात्कृतंराज्यादिकंतद्दातव्यमितिचेत्सत्यंतद्दातुंयोग्यंचेद्दास्यामीत्याह प्राणाइति रायोवित्तानि ४७ युष्मभ्यंसर्वंनिवेदितमितिमोहादुक्तंतत्क्षंतव्यं सर्वस्ययुष्मदीयत्वान्नमयादातव्यमित्याह सेनापत्यमित्यादिना ४८ किंबहुनातुलापेनेदमेवभवदर्हणमित्याह यैरीदृशीति निगमिभिर्वैदिकैरात्मवा

कृच्छ्रोमहानिहभवार्णवमप्लवेशाःषड्वर्गनक्रमसुखेनतितीर्षंति ॥ तत्त्वंहरेर्भगवतोभजनीयमंघ्रिंकृत्वोडुपंव्यसनमुत्तरदुस्तरार्णम् ४३ ॥ मैत्रेयउवाच ॥ सएवंब्रह्मपुत्रेणकुमारेणात्ममेधसा ॥ दर्शितात्मगतिःसम्यक्प्रशस्योवाचतंनृपः ४४ ॥ पृथुरुवाच ॥ कृतोमेनुग्रहःपूर्वंहरिणार्तानुकंपिना ॥ तमापाद यितुंब्रह्मन्भगवन्यूयमागताः ४५ निष्पादितंचकात्स्न्र्येनभगवद्भिर्घृणालुभिः ॥ साधुदत्तंहिसर्वंमेआत्मनासहकिंददे ४६ प्राणादाराःसुताब्रह्मन्गृहाश्च सपरिच्छदाः ॥ रायोमहीबलंकोशइतिसर्वंनिवेदितम् ४७ सेनापत्यंचराज्यंचदंडनेतृत्वमेवच ॥ सर्वलोकाधिपत्यंचवेदशास्त्रविदर्हति ४८ यैरीदृशीभगव तोगतिरात्मवादएकांततोनिगमिभिःप्रतिपादितानः ॥ तुष्यंत्वदभ्रकरुणाःस्वकृतेननित्यंकोनामतत्प्रतिकरोतिविनोदपात्रम् ४९ ॥ मैत्रेयउवाच ॥ त आत्मयोगपतयआदिराजेनपूजिताः ॥ शीलंतदीयंशंसंतःखेऽभूवन्मिषतांनृणाम् ५० वैन्यस्तुधुर्योमहतांसंस्थित्याध्यात्मशिक्षया ॥ आप्तकाममिवात्मा नंमेनआत्मन्यवस्थितः ५१ कर्माणिचयथाकालंयथादेशंयथाबलम् ॥ यथोचितंयथावित्तमकरोद्ब्रह्मसात्कृतम् ५२ फलंब्रह्मणिविन्यस्यनिर्विषंगःसमाहि तः ॥ कर्माध्यक्षंचमन्वानआत्मानंप्रकृतेःपरम् ५३ गृहेषुवर्तमानोपिससाम्राज्यश्रियान्वितः ॥ नासज्जतेंद्रियार्थेषुनिरहंमतिरर्कवत् ५४ एवमध्यात्मयोगे नकर्माण्यनुसमाचरन् ॥ पुत्रानुत्पादयामासपंचार्चिष्यात्मसंमतान् ५५ विजिताश्वंधूमकेशंहर्यक्षंद्रविणंवृकम् ॥ सर्वेषांलोकपालानांदधारैकःपृथग्गुणान् ५६

दैवदांते एकांततोमुख्येननिर्णीतत्वात् यैर्भवद्भिरीदृशीहरेर्गतिरस्माकंप्रतिपादितातेयूयंस्वकृतेनतुष्यध्वमित्यन्वयः किंनीरसमधुरवचनेनेत्युक्तं तुष्यंत्विति ॥ ४९ ॥ तत्प्रियवचनांतेतैःकिम कारीत्यत्राह तआत्मेति आत्मयोगस्याध्यात्मयोगस्योपदेष्टृत्वेनपतयःमिषतापश्यतां खेआकाशे ५० पृथुनातेभ्यःसमग्रानुग्रहःप्राप्तइत्यस्यलक्षणमाह वैन्यइति महतांधुर्यःधूर्वोढा संस्थित्यासपूर्ण याध्यात्मशिक्षयापरमात्मतत्त्वज्ञानादानलक्षणया इवशब्दएवार्थे ५१ तस्यकर्मकरणप्रकारमाह कर्माणीति ५२ निर्विषंगः कर्मफलेष्वनासक्तः प्रकृतेःपरमात्मानंश्रीहरिंकर्मणामध्यक्षंसाक्षिणम न्वानः ५३ ५४ विषयासक्त्यावर्तमानस्यपुत्रानुत्पादनेनस्वपुरराज्यरक्षणपुण्यप्राप्तिःकथमत्राह एवमिति अर्चिषिभार्यायां ५५ एवंसन्यस्तसर्वकर्मापिराजाभगवदनुग्रहाविरोधेनतत्तत्कर्मणेंद्रादि तत्तद्गुणान्दधारेत्याह सर्वेषामिति ५६

जगत्सृष्टेर्गोपीथायरक्षणाय अच्युतैआत्मामनोयस्यसोऽच्युतात्मकः राजशब्दंनिर्वक्ति मनोवागिति ५७ रंजनाद्राजेति इंद्रादिगुणधारणप्रकारंविविच्यवक्ति सोमराजइत्यादिना वसुजलं वसुरत्नंजलंरश्मिर्वसुदेवोविभावसुरित्यभिधानम् ५८ ५९ अचलराट्मेरुः ॥ ६० ॥ कोशाढ्यःधनौघपतिः ॥ ६१ ॥ सर्वात्मासर्वांतरस्थः भूतराट्सदाशिवः ६२ मृगराट्सिंहःअजोब्रह्मा ६३ आत्मतत्त्वेपरमात्मतत्त्वज्ञाने अधिकदृष्टांतोयं अथापितमेवाह भक्त्येत्यादिना गवादिषुभक्त्यालज्जादिगुणेन ६४ पुंभिरूर्ध्वंगीतयाचैःकीर्तितयाकीर्त्यास्त्रीणांकर्णरंध्रेषुप्रविष्टः सतांकर्णरंध्रेषुप्रविष्टः परोद्यमेचात्मतुल्यः स्वकार्यसमोरामइवेत्यन्वयः गुरुविप्रेषुभक्त्याचपरेषांहितकृत्तथा प्रश्रयेणचकीर्त्याचपृथूराममनुव्रतइतिवचनात् नेदंस्तुतिमात्रंसत्यमित्यर्थः नगुरुर्नचधर्मोस्ति रामंदेवस्यकुत्रचित् तथापिधर्मरक्षार्थंगुरुभक्तिमदर्शयदित्यतोरामस्यलोकसंग्रहार्थं नत्वनवाप्तफलप्राप्त्यर्थंगुरुभक्त्यादिर्कामितिसंतोष्टव्यम् ६५ ॥ इतिश्रीभागवतेचतुर्थस्कंधेविजयध्वजकृतटीकायां

गोपीथायजगत्सृष्टेःकालेस्वेस्वेच्युतात्मकः ॥ मनोवाङ्मूर्तिभिःसौम्यैर्गुणैःसंरंजयन्प्रजाः ५७ राजेत्यधान्नामधेयंसोमराजइवापरः ॥ सूर्यवद्विसृजन्गृह्णन्प्रतपंश्चभुवोवसु ५८ दुर्धर्षस्तेजसेवाग्निर्महेंद्रइवदुर्जयः ॥ तितिक्षयाधरित्रीवद्द्यौरिवाभीष्टदोनृणाम् ५९ वर्षतिस्मयथाकामंपर्जन्यइवतर्पयन् ॥ समुद्रइवदुर्बोधःसत्त्वेनाचलराडिव ६० धर्मराडिवशिक्षायामाश्चर्येहिमवानिव ॥ कुबेरइवकोशाढ्योगुप्तार्थोवरुणोयथा ६१ मातरिश्वेवसर्वात्माबलेनमहतौजसा ॥ अविषह्यतयादेवोभगवान्भूतराडिव ६२ कंदर्पइवसौंदर्येमनस्वीमृगराडिव ॥ वात्सल्येमनुवन्नृणांप्रभुत्वेभगवानजः ६३ बृहस्पतिर्ब्रह्मवादेआत्मतत्त्वेस्वयंहरिः ॥ भक्त्यागोगुरुविप्रेषुविष्वक्सेनानुवर्तिषु ६४ ह्रियाप्रश्रयशीलाभ्यामात्मतुल्यःपरोद्यमे ॥ कीर्त्योर्ध्वगीतयापुंभिस्त्रैलोक्येतत्रतत्रह ॥ प्रविष्टःकर्णरंध्रेषुस्त्रीणांरामःसतामिव ६५॥ इतिश्रीभागवतेचतुर्थस्कंधेद्वाविंशोध्यायः॥ २२ ॥ मैत्रेयउवाच ॥ दृष्ट्वात्मानंप्रवयसमेकदावैन्यआत्मवान् ॥ आत्मनावर्धिताशेषसानुसर्गःप्रजापतिः १ जगतस्तस्थुषश्चापिवृत्तिदोधर्मभृत्सताम् ॥ निष्पादितेश्वरादेशोयदर्थमिहजज्ञिवान् २ आत्मजेष्वात्मजांन्यस्यविरहाद्रुदतीमिव ॥ प्रजासुविमनस्स्वेकःसदारोऽगात्तपोवनम् ३ तत्राप्यदाभ्यनियमोवैखानससुसंमते ॥ आरब्धउग्रतपसियथास्वविजयेपुरा ४ कंदमूलफलाहारःशुष्कपर्णाशनःक्वचित् ॥ अब्भक्षःकतिचित्पक्षान्वायुभक्षस्ततःपरम् ५ ग्रीष्मेपंचतपावीरोवर्षास्वासारषाण्मुनिः ॥ आकंठमग्नःशिशिरउदकेस्थंडिलेशयः ६

द्वाविंशोध्यायः २२ ॥ ॥ योगेनदेहत्यागप्रकारःपृथ्व्यादितत्त्वानांतदभिमानिदेवतानांचस्वस्वकारणप्रवेशलक्षणोलयश्चदेहत्यागकालेचिंतनीयइतिनिरूप्यतेऽस्मिन्नध्याये तत्रादौपृथोस्तपसिप्रारंभप्रकारंवक्ति दृष्ट्वेत्यादिना प्रवयसंगतवयसंस्थविरं आत्मवान्जितमनाः साहितोनुसर्गःपुत्रपौत्रादिलक्षणोयेनजनेनससानुसर्गः वर्धिताशेषःसानुसर्गःस्वराज्यकालीनजनोयेनसतथा १ आरामकरणेनस्थावरस्यवृत्तिदानम् २ आत्मजांपृथिवीं राज्ञएष्यद्वियोगाद्रुदतीमिवस्थितां ३ आत्मनियमःकंदमूलाद्याहारःशरीरयात्रार्थमापाद्योयेनसआपाद्यात्मनियमः पुरास्वविषयेस्वराष्ट्रेउग्राणांदुष्टानांतपसिसंतापेदंडेयथाप्रारब्धस्तथोग्रतपसिकायक्लेशादिलक्षणेप्रारब्धइत्यर्थः ४ आत्मनियमानाह कंदेति ५ चंडतपआह ग्रीष्मइति पंचतपांस्यग्नयोयस्यसपंचतपाः अत्रैकोऽर्कः आसारषाट्निराश्रयतयोग्रवृष्टिसेवी शिशिरेहिमर्तौ स्थंडिलेशयोनिशीतिशेषः ६

आरिराधयिषुराराधयितुकामस्तदर्थमुग्रंतपआचरदित्यन्वयः ७ ८ योगमुपासनोपायम् ९ भक्तिःप्रेमपूर्वंभजनं अनन्यविषयाभगवदेकविषया १० भक्तेःफलमाह तस्येति येनज्ञानेनसंशयपदंसंशय
विपर्ययज्ञानस्थानंनिजत्वेनाभिमतंजीवकोशंबाह्यांतःकरणंलिंगशरीरंवाचिच्छेदछिनत्तिस्मताद्दशंभगवतोज्ञानंतस्यपृथोरभूदित्यन्वयः तस्यहरेरनुस्मरणंनिरंतरध्यानंतत्पूर्वयानयाभक्त्यापरिशुद्धकर्मा
सत्त्वगुणयुक्तआत्मामनोयस्यसतथातस्य अभूदित्यनेनभूसत्तायामितिधातोः सतएवज्ञानस्याविर्भावउच्यते नतुप्रागसतः तस्यज्ञानित्वात्ज्ञानिनोज्ञानस्याविर्भावः नहिपुरोवर्तीघटःपटोवाआविरभवादि
तिव्यवहारोदृष्टचरइतिचेन्न बलवत्प्रतिबंधकेनतिरोभावसंभावात्तदुक्तं आविर्भावतिरोभावौज्ञानस्यज्ञानिनोपितु अपेक्ष्याज्ञस्तथाज्ञानमुत्पन्नमितिचोच्यते ज्ञानिनोपिज्ञानस्याविर्भावतिरोभावावपेक्ष्यासा
ज्ञस्तथातस्यज्ञानंसमुत्पन्नमितिव्यवहारोयुज्यतइत्यर्थः ११ उत्पन्नज्ञानस्यस्थितिमाह छिन्नेति येनवपुनेनेदमाच्छिनत्तज्ज्ञानंतत्यजइत्यन्वयः अन्यथाज्ञानसंभवइदमुक्तंकथंयुक्तं स्यादित्यतउक्तं छिन्ना
न्यधीरिति निरस्तान्यथाज्ञानः स्वरूपज्ञानाभावेकथमिदमित्यतउक्तं अधिगतात्मगतिरिति आत्मशब्देनस्वस्वरूपंपरमात्माचोच्यते अधिगतेअपरोक्षीकृतेपरमात्मास्वस्वरूपंचयेनसतथा
अतएवतत्साधर्म्यमाह निरीहइति ज्ञानोत्तरकालीनप्रवृत्तिमात्रतुपूर्ववाद्विधिबद्धइत्यर्थः अत्रज्ञानत्यागोनामनिर्लेपेनस्वरूपज्ञानेनकरतलामलकवत्प्रत्यक्षत्वेनवृत्तिज्ञानस्यबाह्यांतःकरणजन्यस्यभेद

## तितिक्षुर्यतवाक्दांतऊर्ध्वरेताजितानिलः ॥ आरिराधयिषुःकृष्णमाचरत्तपउत्तमम् ७ तेनक्रमानुसिद्धेनध्वस्तकर्मामलाशयः ॥ प्राणायामैःसन्निरुद्धषड्वर्गश्छिन्नबंधनः ८ सनत्कुमारोभगवान्यदाहाध्यात्मिकंपरम् ॥ योगंतेनैवपुरुषमभजत्पुरुषर्षभः ९ भगवद्धर्मिणःसाधोःश्रद्धयायततःसदा ॥ भक्तिर्भगवतिब्रह्मण्यनन्यविषयाभवत् १० तस्यानयाभगवतःपरिशुद्धकर्मसत्त्वात्मनस्तदनुसंस्मरणानुपूर्व्या ॥ ज्ञानंविरक्तिमदभून्निशितेनयेनचिच्छेदसंशयपदंनिजजीवकोशम् ११ छिन्नान्यधीरधिगतात्मगतिर्निरीहस्तत्तत्यजेऽच्छिनदिदंवयुनेनयेन ॥ तावन्नयोगगतिभिर्यतिरप्रमत्तो यावद्गदाग्रजकथासुरतिंनकुर्यात् १२ एवंसवीरप्रवरःसंयोज्यात्मानमात्मनि ॥ ब्रह्मभूतोदृढंकालेतत्याजस्वंकलेवरम् १३ संपीड्यपायुंपार्ष्णिभ्यांवायुमुत्सर्पयञ्छनैः ॥ नाभ्यांकोष्ठेष्ववस्थाप्यहृदुरःकंठशीर्षणि १४

निरीक्षणंमद्भिन्नमिदंनश्वरमितिदर्शनं नत्वन्यः तदुक्तं अपरोक्षतयावृत्तिज्ञानभेदानिरीक्षणं स्वरूपज्ञानसांस्थित्याज्ञानत्यागउदर्पितइति अयंविशेषोपितत्यजइतिव्यत्यासेनसूचितइति । कथमस्य
स्वरूपज्ञानमस्तीतिज्ञायतइतितल्लक्षयति तावदिति यावद्गदाग्रजस्यश्रीनारायणस्यकथासुरतिंनकुर्यात्तावद्यतिर्निर्जितेंद्रियग्रामोपिपुरुषोयोगगतिभिःप्राणायामादिलक्षणैर्योगसाधनैरप्रमत्तोऽनाविर्भूतस्व
रूपज्ञानोभवति अनेनभगवत्कथारतिःस्वरूपज्ञानेनेतिलक्ष्यते तदप्युक्त स्वरूपज्ञानतःसम्यग्रतिर्विष्णुकथासुचेति यद्वा योगादुत्पन्नैर्गतिशब्दवाच्यैर्ज्ञानैः स्वरूपाविषयैर्भगवत्तत्त्वंब्रह्मादितारतम्यं
पंचविधभेदंजीवस्वरूपमित्यादिविषयबाहुल्यात्स्वरूपज्ञानस्यबाहुल्यं प्रयत्नोनभवति १२ उपसंहरत्येवमिति ब्रह्मभूतःब्रह्मणिभूतः ब्रह्माधारतयास्थितइत्यन्वयः कालेप्रारब्धकर्मक्षयसमये ।
तत्याजेत्यनेनस्वकलेवरमेवात्याक्षीन्नतुस्वरूपज्ञानमित्यवगंतव्यं १३ स्वच्छंदमृत्यूनांयोगिनांदेहत्यागप्रकारंदर्शयितुमस्योत्क्रांतिप्रकारमाह संपीड्येति वज्रासनस्थितोवायुमुत्सर्पयन्नूर्ध्वंनयन्मूला
धाराप्राभ्यांहृदुरसिकंठशीर्षणिभ्रूमध्येचतेषुकोष्ठेषुस्थानविशेषेषुशनैरवस्थाप्य १४

अनेनक्रमेणामून्पंचवृत्त्याबहुवचनं मूर्ध्निशिरोमध्यप्रदेशेआवेश्यनिस्पृहःस्थिरचित्तास्तिष्ठेदित्यन्वयः देहेस्थितानांपंचभूतानांस्वस्वकारणेषुलयोऽनेनोच्यते देहेवायुभागंतत्कारणेधिदैववायावयूयुजत् अध्यात्मवायोराधिदैववायुःकारणंतत्रैवलयइत्याचिंतयादित्यन्वयः तदुक्तं अस्येदंकारणमितिज्ञानमेवविलापन समाधिकालेविज्ञेयंदेहादर्शनात्पुनरिति एवमेवोत्तरत्रापिज्ञानव्यम् १५ छिद्रबहुत्वा पेक्षयाखानीतिबहुवचनं ग्रंथांतरोक्तेर्यत्तदपेक्षयाविभागशइति इदानींपंचभूतानांस्वकारणेषुलयध्यानमाह क्षितिमिति १६ इंद्रियलयप्रकारध्यानमाह इंद्रियाणीति समस्तानींद्रियाणियथोद्भवं यथोत्पत्तिःस्वस्वकारणेषुलीयंतइतितन्मात्राणिशब्दादीनिचयथोद्भवलीयंतइतिव्यचिंतयदित्यन्वयः अत्रायंविभागः इंद्रियाणितैजसाहंकारेतदभिमानिदेवावैकारिकाहंकाराभिमानिषुतेषादेहावै कारिकाहंकारेपृथिव्यादयोगंधादिभिःसहभूतादौतामसाहंकारेलीयंतइति भूतादिरित्युपलक्षण एवंत्रिविधाहंकारस्तानिंद्रियादीन्समुत्क्षिप्यसभृत्यमहत्यात्मनिमहत्तत्त्वेतदभिमानिनिचतुर्मुखेचाहंकारा भिमानीरुद्रोलीयतइतिमनःसंदधइत्यन्वयः १७ सर्वेषांगुणानांभक्तिज्ञानादीनांविशेषेणन्यासोनिधानंयास्मिन्सतथातं सत्त्वादिगुणैर्विविधप्रपंचरचनायेनसतथा तंवा तन्महांतंचतुर्मुखंतत्त्वलक्षणं जडंचमायामयेमायाशब्दवाच्येजीवेप्राणधारणशक्तिमतिलक्ष्मीतत्त्वेन्यस्यातिप्रविशतीतिध्यायेत् अन्यत्तुजडप्रकृतौजीवतइतिजीवशब्दवाच्यत्वंचचेतनशरीराकारतयापरिणामादुपचारः प्रलयेके शवमनुशेतइत्यनुशयशब्दवाच्यत्वंपुंशक्तियुक्तत्वात्पुल्लिंगशब्दवाच्यांप्रकृतिंचजगदादानादात्मशब्दाभिधेयस्यहरेराधारतयातिष्ठतीत्यात्मस्थमचिंतयत् अनुशयीचित्प्रकृत्यधीनत्वात्तद्द्वारागतत्वाद्वा

उत्सर्पयन्नसून्मूर्ध्निक्रमेणावेश्यनिस्पृहः ॥ वायुंवायौक्षितौकायंतेजस्तेजस्ययूयुजत् १५ खान्याकाशेद्रवंतोयेयथास्थानंविभागशः ॥ क्षितिमंभसितत्ते जस्यदोवायौनभस्यमुम् १६ इंद्रियाणिसमस्तानितन्मात्राणियथोद्भवम् ॥ भूतादिस्तान्समुत्क्षिप्यमहत्यात्मनिसंदधे १७ तंसर्वगुणविन्यासंजीवेमा यामयेन्यधात् ॥ तंचानुशयमात्मस्थमसावनुशयीपुमान् ॥ ज्ञानवैराग्यवीर्येणस्वरूपस्थेव्यधात्प्रभुः १८ अर्चिर्नाममहाराज्ञीतत्पत्न्यनुगतावनम् ॥ सुकुमार्यतदर्हाचयत्पद्भ्यांस्पर्शनंभुवः १९ अतीवभर्तुर्व्रतधर्मनिष्ठयाशुश्रूषयाचार्षदेहयात्रया ॥ नाविंदतार्तिंव्रतकर्शितापिसाप्रेयस्करस्पर्शनमाननिर्वृ ता २० देहंविपन्नाखिलचेतनादिकंपत्युःपृथिव्यादयितस्यचात्मनः ॥ आलक्ष्यकिंचिच्चविलप्यसासतीचितामथारोपयदद्रिसानुनि २१ विधायकृत्यं ह्रदिनीजलाप्लुतादत्त्वोदकंभर्तुरुदारकर्मणः ॥ नत्वादिविस्थांस्त्रिदशांस्त्रिःपरीत्यविवेशवह्निंध्यायतीभर्तृपादम् २२

नुशयीशब्दवाच्योसौपुमानित्युपलक्षणंचेतनराशिः अप्राकृतशरीरत्वात्स्वरूपशब्दवाच्येब्रह्मणिचतुर्मुखेनसहतिष्ठतीतिध्यानंव्यधात्प्रभुरित्यनेनमनोनुसंधानमस्तीतिध्वनयति केनैतत्सामर्थ्य मभूदित्यतउक्तंज्ञानेति यद्वा एवंविधोपासनाजनितसामर्थ्येनानुशयीपृथुः स्वस्वरूपेब्रह्मणिसायुज्यलक्षणंमोक्षमाप्तुंव्यधादित्यन्वयइति मायेतिप्रकृतिश्चेतिमायाजविश्वकथ्यते शेतेनुकेशवपरमा त्तस्मादनुशयोपिच एतैस्तुनामभिर्वाच्याश्रीविष्णोरनपायिनी तथैवानुशयीजीवस्तयाबद्धोयतःसदा पुरुषःशयनात्पूर्षुतथाऽहानादहस्मृतः अप्राकृततनुत्वात्तुस्वरूपंहरिरुच्यते नित्यचिद्दर्शनाद्धि स्यब्रह्मपूर्णत्वतःसदेतिसमाख्यासिद्धत्वादुक्तएवार्थोनाद्वैतवादिकल्पितइतिसिद्धम् १८ पत्याचैवंगतेतत्रवनेऽर्चिषाभार्ययाकिमकारीतितत्राह अर्चिर्नामेति पद्भ्यांभुवःस्पर्शनयत्तदनर्हा १९ भर्तुर्व्र तंग्राम्यवर्जनादितदेवस्वस्याअपिधर्मः तत्रनिष्ठयाआर्षदेहयात्रयाकंदमूलफलाद्यशनलक्षणया एवंविधानुष्ठानेनपरिकर्शितापिप्रेयसःपत्युःकरस्पर्शलक्षणमानेननिर्वृतानंदाप्लुताआचीर्णव्रतानुष्ठाननि मित्तक्लेशंनाविंदतेत्यन्वयः २० एवंतस्याःपृथोःपत्नीत्वयोग्यतामनुवर्ण्योत्तराक्रियांवक्ति देहमित्यादिना पृथिव्याआत्मनः स्वस्याश्चदयितस्यपत्युर्देहंविपन्नाखिलचेतनादिकंचैतन्यप्राणादिवृत्ति लक्षणरहितमालक्ष्यचितां शवदहनसाधनकाष्ठं २१ ह्रदिनींनदींत्रिःपरीत्यप्रदक्षिणीकृत्य २२

सत्याःयनेपिराजश्रीभोगलक्ष्मीसामग्रीसमभूदित्याह विलोक्येति २३ कुसुमासारंपुष्पवृष्टिं २४ धन्यासर्वगुणैः पूर्णा अनपेक्षोगुणैःपूर्णोधन्यइत्युच्यतेबुधैरित्यभिधानं २५ २६ येमर्त्यानैष्कर्म्यं मोक्षलक्षणंभगवत्पदंसाधयंत्युत विद्युद्वल्लोलानिचलान्यायूंषियेषांतेतथातेषामन्यद्दुरापाकिंनकिमपीत्यर्थः २७आपवर्ग्यंमुक्तिसाधनकारणं२८पतिलोकंनाथवंतंलोकमितिशंकानिवृत्त्यर्थं वैन्योयल्लोकंप्रापतं पतिलोकंगतासूदितिस्पष्टितं २९ उपसंहरति इत्थमिति योऽसौपृथुरित्थंभूतानुभावः अनुभावःप्रभावेस्यान्निश्चयेभावसूचकइतियादव. भगोयोन्यांभगोयत्नेयशोवीर्यार्कभूतिषु कांतीच्छाज्ञानवैराग्यधर्मैश्वर्यतपःसुचेतिवचनात् सत्प्रयत्नादिगुणवतामतिशयेनप्रधानत्वात् भगवत्तमः ३० फलमाह यइति पदवींभक्तिज्ञानादिलक्षणां ३१ वर्णभेदेनफलंविविनक्ति ब्राह्मणइति ३२ श्रवणाद्यावृत्त्यासाधारणफलमाह त्रिःकृत्वइति ३३ प्रतिपंथिनिवारकंचेदभीष्टसिद्धिःस्यादनेनतत्कथंस्यादित्यतस्तद्विशिनष्टि इदमिति ३४ व्याख्यातुर्विशेषफलमाह धर्मार्थेति चारितस्यतादृक्

विलोक्यानुगतांसाध्वींपृथुंवीरवरंपतिम् ॥ तुष्टुवुर्वरदादेवैर्देवपत्न्यःसहस्रशः २३ कुर्वंत्यःकुसुमासारंतस्मिन्मंदरसानुनि ॥ नदत्स्वमरतूर्येषुगृणंतिस्म परस्परम् २४ अहोइयंवधूर्धन्यायाचैवंभूभुजांपतिम् ॥ सर्वात्मनापतिंभेजेयज्ञेशंश्रीवधूरिव २५ सैषानूनंव्रजत्यूर्ध्वमनुवैन्यंपतिंसती ॥ पश्यतास्मानतीत्यार्चिर्दुर्विभाव्येनकर्मणा २६ तेषांदुरापंकिंत्वन्यन्मर्त्यानांभगवत्पदम् ॥ विद्युल्लोलायुषोयेवैनैष्कर्म्यंसाधयंत्युत २७ सवंचितोबतात्मध्रुक्कृच्छ्रेणमहताभुवि ॥ लब्ध्वापवर्ग्यंमानुष्यंविषयेषुविषज्जते २८ ॥ मैत्रेयउवाच ॥ स्तुवंतीष्वमरस्त्रीषुपतिलोकंगतावधूः ॥ यंवाआत्मविदांधुर्योवैन्यःप्रापाच्युताशयः २९ इत्थंभूतानुभावोऽसौपृथुःसभगवत्तमः ॥ कीर्तितंतस्यचरितमुद्दामचरितस्यते ३० यइदंसुमहत्पुण्यंश्रद्धयावहितःपठेत् ॥ श्रावयेच्छृणुयाद्वापिसपृथोःपदवीमियात् ३१ ब्राह्मणोब्रह्मवर्चस्वीराजन्योजगतीपतिः ॥ वैश्यःपठन्विट्पतिःस्याच्छूद्रःसत्तमतामियात् ३२ त्रिःकृत्वइदमाकर्ण्यनरोनार्यथवादृतः ॥ अप्रजःसुप्रजतमोनिर्धनोधनवत्तमः ३३ अस्पष्टकीर्तिःसुयशामूर्खोभवतिपंडितः ॥ इदंस्वस्त्ययनंपुंसाममंगल्यनिवारणम् ॥ धन्यंयशस्यमायुष्यंस्वर्ग्यंकलिमलापहम् ३४ धर्मार्थकाममोक्षाणांसम्यक्सिद्धिमभीप्सुभिः ॥ श्रद्धयैतदनुश्राव्यंचतुर्णांकारणंपरम् ३५ संग्रामाभिमुखोराजाश्रुत्वैतदभियातियान् ॥ बलिंतस्मैहरंत्यग्रेराजानःपृथवेयथा ३६ मुक्तान्यसंगोभगवत्यमलांभक्तिमुद्वहन् ॥ वैन्यस्यचरितंपुण्यंशृणुयाच्छ्रावयेत्पठेत् ३७ वैचित्रवीर्याभिहितंमहन्माहात्म्यसूचकम् ॥ अस्मिन्कृतमतिमर्त्यःपार्थवींगतिमाप्नुयात् ३८ अनुदिनमिदमादरेणशृण्वन्पृथुचरितंप्रथयन्विमुक्तसंगः ॥ भगवतिभवसिंधुपारभूतेसचनिपुणांलभतेरतिंमनुष्यः ३९ ॥ ॥ इतिश्रीभागवतेचतुर्थस्कंधेत्रयोविंशोऽध्यायः ॥ २३ ॥

सामर्थ्याभावेतदिच्छयाकिमित्यतउक्तं चतुर्णामिति एतत्सामान्यस्वभावेकिमनेनेत्यतउक्तं परमिति परमुत्कृष्टं ३५ असकृदावृत्त्याक्षिप्रंदिग्विजयफलमपिस्यादित्याह संग्रामाभिमुखइति ३६ भगवद्भक्त्यविनाभावेनश्रवणादिकुर्वतउक्तफलस्यात्रान्यथाइत्याह मुक्तेति ३७ पुनस्तात्पर्यादस्मिन्भक्तिंग्रंथयति वैचित्रवीर्येति हेविदुर पार्थवींपृथोर्विद्यमानां ३८ तस्यचरितस्यशब्दादिविषयपरत्वेकथंभागवतानामुपकार्यतइवितत्राह अनुदिनमिति प्रथयन्व्याख्यांकुर्वन् भवसिंधोःसंसारसमुद्रस्यपारभूतेतरींतरीभूतेनिपुणांश्रीहरिप्रसादजननसमर्थां ३९ इतिश्रीभागवतेचतुर्थेविजयध्वजकृतटीकायांत्रयोविंशोऽध्यायः २३

ईश्वराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनादित्यतोमोक्षसिद्धयेरुद्राज्ज्ञानोपदेशप्रकारोब्रह्मपदयोग्यानामृभूनांदेवानामुत्तमाधिकारित्वंचेतिद्वयमस्मिन्नध्यायेनिरूप्यते तत्रादावेतस्योपोद्घातमाह ।विजिताश्वइति काष्ठादिशः १ तुर्यांचतुर्थीमुत्तरां २ अंतर्धानगतिमदृश्यविद्यांनाम्नाशिखंडिन्यांभार्यायां ३ पुरापूर्वजन्मनि । अग्नीनांमनुष्ययोनावुत्पत्तौनिमित्तमाह वसिष्ठेति तत्कस्माह पुनरिति ४ अंतर्धानोविजिताश्वएव तंविशिनष्टि यइंद्रमिति ५ कर्माधिकारेस्थितस्यतस्यसंन्यासप्रकारंवक्ति राज्ञामिति ६ भगवदर्पणक्रियया।क्रियमाणस्यकर्मणउत्पन्नज्ञानफलमाह तत्रापीति हंसंनिर्मलं ७ ८ हविर्धानपुत्रोबर्हिष्मत्कर्मकांडेषुप्रवृत्तमानोनिवृत्तिमार्गाविरोधेनोभयत्रानिष्णातोऽभूदित्याह बर्हिष्मत्विति ९ तत्रक्रियाकांडनैष्णात्यंविशदयति यस्येति अनेनप्राचीनबर्हिरितिनामध्वनयति देवयजनंयज्ञक्षेत्रम् ॥ १० ॥ अपत्नीकस्यास्ययज्ञकरणंकथमितिशंकांनिवारयितुमाह सामुद्रीमिति समुद्रपुत्री देवदेवेनब्रह्मणो

॥ मैत्रेयउवाच ॥ विजिताश्वोथराजासीत्पृथुपुत्रःपृथुश्रवाः॥ यवीयेभ्योददत्काष्ठाभ्रातृभ्योभ्रातृवत्सलः १ हर्यक्षायादिशत्प्राचींधूम्रकेशायदक्षिणाम् ॥ प्रतीचींवृकसंज्ञायतुर्यांद्रविणसंज्ञके २ अंतर्धानगतिंशक्राल्लब्ध्वांतर्धानसंज्ञितः ॥ अपत्यत्रयमाधत्तशिखंडिन्यांसुसंमतः ३ पावकःपवमानश्चशुचिरित्यग्नयःपुरा ॥ वसिष्ठशापादुत्पन्नाःपुनर्योगगतिंगताः ४ अंतर्धानोनभस्वत्यांहविर्धानमविंदत ॥ यइंद्रमश्वहर्तारंविद्वानपिनजघ्निवान् ॥ ५ ॥ राज्ञांवृत्तिंकरादानंदंडशुल्कादिदारुणम् ॥ मन्यमानोदीर्घसत्रव्याजेनविससर्जह ६ तत्रापिहंसंपुरुषंपरमात्मानमात्मदृक् ॥ यजंस्तल्लोकतामापपरमेणसमाधिना ७ हविर्धानाद्धविर्धानीविदुरासूतषट्सुतान् ॥ बर्हिष्मंतंगयंशुक्लंकृष्णंसत्यंजितव्रतम् ८ बर्हिष्मत्तुमहाभागोहाविर्धानिःप्रजापतिः ॥ क्रियाकांडेषुनिष्णातोयोगेषुचकुरूद्वह ९ यस्येदंदेवयजनमनुयज्ञंवितन्वतः ॥ प्राचीनाग्रैःकुशैरासीदास्तृतंवसुधातलम् १० सामुद्रींदेवदेवोक्तामुपयेमेशतद्रुतिम् ॥ यांवीक्ष्यचारुसर्वांगींकिशोरींसुष्ठ्वलंकृताम् ॥ परिक्रमंतीमुद्वाहेचकमेऽग्निःशुकीमिव ११ विबुधासुरगंधर्वमुनिसिद्धमहोरगाः॥ विजिताःसूर्यया दिक्षुक्वणयंत्यैवनूपुरैः १२ प्राचीनबर्हिषःपुत्राःशतद्रुत्यांदशाभवन् ॥ तुल्यनामव्रताःसर्वेधर्मस्नाताःप्रचेतसः १३ पित्रादिष्टाःप्रजासर्गेतपसेऽर्णवमाविशन् ॥ दशवर्षसहस्राणितपस्यंतस्तपस्विनः १४ यदुक्तंपथिदृष्टेनगिरिशेनप्रसीदता ॥ तद्ध्यायंतोजपंतश्चपूजयंतश्चसंयताः १५ ॥ विदुरउवाच ॥ प्रचेतसांगिरित्रेणयथासीत्पथिसंगमः ॥ यद्वाप्याहहरःप्रीतस्तन्नोब्रह्मन्वदार्थवत् १६

क्ता। तांविशिनष्टि यामिति शुकीमिवयथानाम्नाशुकींराजपुत्रीमग्निःप्रदक्षिणीकुर्वाणांकामित्वादादायांतरधात्तथायामेनाम्यादातुंशक्त्यभावेप्यग्निश्चकमेइत्यन्वयः राजपुत्रींशुकीमग्निरावर्ततींप्रदक्षिणं आदायांतरधादानसमयेमन्मथातुरइतिवचनादयंविशेषोज्ञातव्यः ॥ ११ ॥ अग्निश्चकमइतियन्नैतच्चित्रमितिभावेनाह विबुधेति अग्नेरपिविबुधेष्वेकत्वात् सूर्यानवोढा सूर्यविहर्तुंनालमिति श्रुतेः १२ तुल्यंनामव्रतंचयेषांतेतथा किंतत्तुल्यंनामेत्यत्राह प्रचेतसइति १३ तत्कर्माह पित्रादिष्टाइति १४ एष।कोगुरुःकिंजप्यंकिंध्येयमत्राह यदुक्तमिति १५ संक्षेपेणोक्तं विस्तरतःश्रोतुंविदुरः पृच्छति प्रचेतसामिति यद्वाकिंवा अर्थवत्प्रयोजनवत् १६

पथिकानांपुरुषाणांतत्रसंगमःसुलभःस्यादतःकिंचोद्यमत्राह संगमइति असंगामुनयःसतामभीप्सितमदधुस्तेनशिवेनसहसंगमः १७ जगतोनिरोगत्वायविचरतोपिशिवस्यात्मारामत्वेनानिस्पृहस्य संगमेपिसंभाषणंनसंभाव्यतइत्याशयेनाह आत्मारामोपीति यस्त्वस्यलोककल्पस्यजनस्यरोगान्मुक्तत्वस्यराधसेसिद्धये तीव्रयाशक्त्येत्यनेनसंभाषणानुपपत्तिंसूचयति ॥ १८ ॥ संभाषणस्ययो ग्यावस्थांवक्ष्यन्मैत्रेयःप्रचेतसांकथामादितआवर्तयति प्रचेतसइति १९ समुद्रमुपसमुद्रस्यसमीपे विस्तीर्णंदक्षिणोत्तरायतं महतःकण्वस्यमुनेर्मनइवस्वच्छं यद्वा महतांश्रीनारायणस्यचरणार विंदपरायणानांमनोयथानिर्मलंतथा ॥ २० ॥ कतिपयैःश्लोकैःसरसःसेवनीयत्वंवक्ति नीलेत्यादिना नीलोत्पलानांरक्तोत्पलानामब्जानामंभोजानां इंदीवराणांपद्मविशेषाणां कह्लाराणांसौगंधिकानां आकरमुत्पत्तिस्थानं मद्गुःकारंडवःप्लवइत्यभिधानम् ॥ २१ ॥ मत्तभ्रमराणांसौस्वर्येणशोभनस्वरपरंपरयाहृष्टरोमलतायुक्ताअंघ्रिपावृक्षायत्रतत्तथा तद्रोमलोमत्वगित्यर्थः दिक्षुपद्मकोशरजोविक्षिपतः प्रसारयतःपवनस्योत्सवःशैत्यमांद्यसौरभ्यलक्षणोयस्मिंस्तथातत् कोशोस्त्रीमुकुलेदिव्येशास्त्रइतियादवः ॥ २२ ॥ दिव्योमार्गोयेषांतेदिव्यमार्गादेवास्तेषांमनोहरं दिव्यमार्गमितिपाठेदिव्याःक्रीडा

संगमःखलुविप्रर्षेशिवेनाहिशरीरिणाम् ॥ दुर्लभोमुनयोदध्युरसंगाःसदभीप्सितम् १७ आत्मारामोपियस्त्वस्यलोककल्पस्यराधसे ॥ शक्त्यायुक्तोविचरति तीव्रयाभगवान्भवः १८ ॥ मैत्रेयउवाच ॥ प्रचेतसःपितुर्वाक्यंशिरसाधायसाधवः ॥ दिशंप्रतीचींप्रययुस्तपस्यादृतचेतसः १९ समुद्रमुपविस्तीर्णमपश्य न्सुमहत्सरः ॥ महन्मनइवस्वच्छंप्रसन्नसलिलाशयम् २० नीलरक्तोत्पलांभोजकह्लारेंदीवराकरम् ॥ हंससारसचक्राह्वकारंडवनिकूजितम् २१ मत्तभ्रमर सौस्वर्यहृष्टरोमलतांघ्रिपम् ॥ पद्मकोशरजोदिक्षुविक्षिपत्पवनोत्सवम् २२ तत्रगांधर्वमाकर्ण्यदिव्यमार्गमनोहरम् ॥ विसिस्म्यूराजपुत्रास्तेमृदंगपणवा द्यवत् २३ तर्ह्येवसरसस्तस्मान्निष्क्रामंतंसहानुगम् ॥ उपगीयमानममरप्रवरंविबुधानुगैः २४ तप्तहेमनिकषाभंशितिकंठंत्रिलोचनम् ॥ प्रसादसुमुखंवी क्ष्यप्रणेमुर्जातकौतुकाः २५ सतान्प्रपन्नार्तिहरोभगवान्धर्मवत्सलः ॥ धर्मज्ञान्शीलसंपन्नान्प्रीतान्प्रीतउवाचह २६ ॥ ॥ रुद्रउवाच ॥ यूयंबर्हिषदः पुत्राविदितंवश्चिकीर्षितम् ॥ अनुग्रहायभद्रंवएवंमेदर्शनंकृतम् २७ यःपरस्तमसःसाक्षात्त्रिगुणाज्जीवसंज्ञितात् ॥ भगवंतंवासुदेवंप्रपन्नःसप्रियोहिमे २८ स्वधर्मनिष्ठःशतजन्मभिःपुमान्विरिंचतामेतिततःपरंहिमाम् ॥ अव्याकृतंभागवतोथवैष्णवंपदंयथाहंविबुधाःकलात्यये २९

दिकेहेतवोमार्गाःसप्तस्वरभेदायस्मिंस्तत्तथाताद्दशं गांधर्वंगानंमृदंगादीनामनुकूलं २३ २४ तप्तहेमनिकषस्तप्तसुवर्णकषणपाषाणस्तद्वन्निर्मलं नैर्मल्येदृष्टांतोयंनतुधावल्ये तप्तहेमनिकषाभः त्यतोऽन्यःकश्चिदित्यतःशितिकंठमिति । सोपिमयूरःकिंनस्यादित्यतस्त्रिलोचनमिति २५ भणतिफलमाह सतानिति २६ वोयुष्माकमनुग्रहायैवैवंविधभद्रंकल्याणंदर्शनंकृतमित्यन्वयः अनेनतीव्रयाशक्त्याविचरतीत्यस्यपरिहारउक्तोभवति सभाषणयोग्यरूपदर्शनादिति २७ विष्णुभक्तानस्मान्कथंभवाननुगृह्णातीतिचेत्तत्राह यःपरइति योजीवसंज्ञितात्त्रिगुणात्तमसोलक्ष्मीतत्त्वा त् साक्षात्परस्तंभगवंतंवासुदेवंशरणंप्रपन्नःसमेप्रियोहियस्मात्तस्माद्भवंतोमदनुग्रहयोग्याइत्यर्थः सजीवमायांप्रकृतिंसिसृक्षंतीं तमआसीत्तमसागूढमग्रेप्रकेतमितिवचनद्वयेनलक्ष्मीतत्त्वस्यजीवश ब्दवाच्यत्वंतमःशब्दवाच्यत्वंचसिद्धं २८ इतोप्यनुगृह्णामीतिवक्तुमृजूनामपिबहुजन्मसाध्योभगवत्प्रसादःकिमुतान्येषामितिध्वनयन्विरिंचपदप्राप्तिसाधनसामग्रीमाह स्वधर्मेति वैराग्यभक्ति ज्ञानादयःस्वधर्मास्तेषुनिष्ठानितरांस्थितिर्यस्यसतथा सऋजुर्ण्वेकःपुमाञ्छतजन्मभिरेकोनशतजन्मभ्यःपूर्वकालमारभ्यसंचीर्णहर्युपासनाजनितभगवत्प्रसादेनविरिंचतामेति ब्रह्मपदंप्राप्नोतीत्यन्वयः

ततःपरंब्रह्मपरानुभवानंतरंमांश्रियमेति हिशब्देनश्रीद्वारमात्रंब्रह्मणइतिसूचयति अव्याकृतविशतिपरहिगुणत्रयात्माकालंपरस्वमनुभूयेत्युक्तेरव्याकृतंनिर्विकारंलक्ष्मीतत्त्वमित्यर्थः ऋजवोनामयंदेवाये ष्याब्रह्मपदस्यतु तएवशतजन्मानिविशेषोपासकाहरेः प्राप्यब्रह्मपदंपश्चाच्छ्रियंप्राप्यानुमोदिता. तयाततोहरियांतिवसंतिहरिसन्निधौ अनादिकालभक्ताश्चज्ञानिनस्तेनसंशयः. विशिष्टाज्ञानभक्तयादौ सर्वजीवनिकायतः सर्वदापिविशेषेणशतजन्मप्रयत्नतः स्त्वपदप्राप्तिरुद्दिष्टाततोमुक्तिरवाप्यत इतिनिर्णायकवचनादुक्तएवार्थोनापरः उक्तलयंविशिनष्टि भागवतइति अथश्रियंप्रविश्यभागवतोभगव द्विर्भाग्यवद्भिर्युक्तोब्रह्मा यथार्हयथायोग्यंविविधैःकार्यकारणसंघातैःसहकलात्ययेषोडशकलात्मकशरीरलयोपलक्षितजगत्प्रलये वैष्णवंपदमपरिच्छन्नंभगवत्स्वरूपमेतीत्यन्वयः अस्मदादयोप्यनेनै वव्याख्यातास्तथाहि यथाऋजुष्वेकःपुमान्बहुलजन्मसंचीर्णपुण्यसंचयेनब्रह्मपदमाप्यानुभूयश्रीद्वारासायुज्यलक्षणांमुक्तिमाप्नुतइतितथाहंचत्वारिंशज्जन्मभिरार्जितैः सुकृतैः शैवंपदंसमवाप्यानुभूयत थेंद्रोपिविंशद्भिर्जन्मभिरापादितैःपुण्यैरैंद्रंपदंसमेत्यानुभूय तथेंद्रादन्येदशभिर्जन्मभिरुत्पादितैःशुभैःस्वस्वयोग्यंपदंप्राप्यतत्तत्पदभोग्ययोग्यसुकृतभुक्त्वाब्रह्मणासहविमुक्तिमाप्नुमइति तदुक्तं तथैवचत्वा रिंशद्भिःपदंशैवंचजन्मभिः विंशद्भिरैंद्रंदशभिरन्येषामप्युदीरितमिति यथाहमितिपाठेयथाहंश्रीहरिप्रसादेनशैवंपदमाप्तोस्मि तथाऋजुष्वेकःपुमान्शतजन्मभिर्विरिंचतामेतीतियोज्यं विदेहिरुद्रोरुद्रियं महित्वमितिश्रुतिश्च ॥ २९ ॥ ततःप्रकृतेकिंफलितमत्राह अथेति अथैवमुक्तप्रकारेणानादिकालमारभ्यभगवद्भक्तोऽहंयस्मात्तस्माद्भागवताभगवद्भक्तत्वाद्यूयमेप्रियाःस्थयथाभगवानित्यधिकदृष्टांतः नकेवलंयूयमेवमत्प्रियाअन्येपिभगवद्भक्ताइत्याह नमइति भागवतानांसकाशात् चशब्दात्प्रेम्णोनिरुपमचरिततमाह अनेनासुरेभ्योवरदानेनतत्प्रीतिरौपचारिकीतिदर्शितं यद्वा युष्माकमपि

**अथभागवतायूयंप्रियाःस्थभगवान्यथा ॥ नमेभागवतानांचप्रेयानन्योऽस्तिकर्हिचित् ३० इदंविविक्तंजप्तव्यंपवित्रंमंगलंपरम् ॥ निश्रेयसकरंचापि श्रूयतांयद्वदामिवः ३१ ॥ मैत्रेयउवाच ॥ इत्यनुक्रोशहृदयोभगवानाहतांछिवः ॥ बद्धांजलीन्राजपुत्रान्नारायणपरोवचः ३२ ॥ रुद्रउवाच ॥ जितं तआत्मविद्धुर्यःस्वस्तयेस्वस्तिरस्तुवः ॥ भवताराधसेराध्यंसर्वस्माआत्मनेनमः ३३ नमःपंकजनाभायभूतसूक्ष्मेंद्रियात्मने ॥ वासुदेवायशांतायकूट स्थायस्वरोचिषे ३४ संकर्षणायसूक्ष्मायदुरंतायांतकायच ॥ नमोविश्वप्रबोधायप्रद्युम्नायांतरात्मने ३५**

भागवतएवप्रियोनापरोऽन्यथाभागवतत्वहानिरित्याशयेनाह नमइति ममभागवतानांयुष्माकंचभागवतादन्यःप्रेयान्नास्तीत्यन्वयः अनेनयुष्माकंचाहमपिप्रियइतिध्वनित ३० सुप्रसन्नेनभवता यत्किंचिदुपदिश्यतेचेद्भवत्प्रियत्वमानुभाविकंस्यादित्यस्ववाक्यस्यावसरमाददानआह इदमिति अनेनबहुपुरश्चरणमंतरेणक्षिप्रंसत्यंफलतीत्युक्तंभवति ३१ नकेवलंप्रतिज्ञामात्रं किंतूपदिष्टचेत्याह इ तीति अनुक्रोशेत्यादिविशेषणेनानुग्रहातिशयद्योतयति किंचोपदेशकालेशिष्याणामित्थंभावंचसूचयति ३२ स्वोपदेशःफलितोयुष्माकमितिभावेनाह जितमिति हेआत्मविद्धुर्यःपरमात्मज्ञानिषुश्रे ष्ठः वोजितंसर्वमितिशेषः कुतःस्वस्तयेभगवदुपासनाख्यसत्कर्मणेमयोपदिष्टमितियत्तस्मादितिशेषः प्रशस्तेकर्मणितथासच्छब्दःपार्थयुज्यतइतिस्मृतिः किंच भगवतिभवतांभक्तिरनुदिनमेधतामिति भावेनाह स्वस्तिरिति युष्माकंहरौस्वस्तिःसमीचीनसद्भावःसतीभक्तिरस्तु ततश्चतयाभक्त्याभवतांराधसेसिद्धयेभगवत्तत्त्वंराध्यंपूज्यं कथ सर्वस्मैसर्वांतर्यामिणेआत्मनेस्वामिनेनमइत्येतावदेवास्माकंशक्यं नातोन्यदितिसंकल्प्येत्यर्थः सर्वांतर्यामिकत्वात्सर्वनामाजनार्दनः नतुसर्वस्वरूपत्वात्सर्वेशेशोहरिर्यतइतिवचनात्सर्वनामा नजगदात्मत्वमनेनोच्यतइत्यर्थः ३३ इदानींध्येयस्वरूपंनिर्दिशति नमःपंकजनाभायेत्यादिना भूतानिपंचभूतानि पचभूतसूक्ष्माणि शब्दादीनि इंद्रियाणिश्रोत्रादीनि पतित्वात्सततंव्याप्यतिष्ठतीति अवसातत्यगमनइतिधातुः तस्मै ३४ दुरतायांतत्रयवर्जिताय विश्वप्रबोधायपूर्णज्ञानाय विश्वस्यप्रबोधोयस्मादितिवासतथावस्मै ३५

हृषीकमिंद्रियंभोक्तमित्यतोहृषीकेशोजीवस्तस्येंद्रियस्वामिने किंचइंद्रियामिंद्रस्याविद्यमानंयच्च किंचतस्यात्मास्वामीहृषीकेशश्चायामिंद्रियात्माचेतिविग्रहस्तस्मैनिभृतात्मनेस्तिमितरूपाय ३६ शुचा
यन्नौसीदतितिष्ठतीतिशुचिषत् तस्मै योग्नौतिष्ठन्निति श्रुतेः हिनोतिदुःखरातिंयापयतीतिहिरण्यंतादृशंवीर्यंयस्यसतथातस्मै स्वर्णवर्णरेतसइतिवा चतुर्षुहोतृषुस्थितत्वात्.क्रियमाणंयत्कर्मतत्कर्तृत्वाच्चातु
र्होत्रस्तस्मै तंतवेव्यापाय सततिप्रवर्तकायवा ३७ ऊर्जेपित्रन्नदात्रे इषेदेवान्नदात्रेइच्छारूपायवा यज्ञेरेतोरतिर्यस्यसतथातस्मै सर्वरसात्मनेसर्वरसानांदात्रे ३८ सर्वसत्त्वानांसर्वप्राणिनामा
त्मदाईहाचेष्टायस्यसतथातस्मै आत्मानंददातीत्यात्मदा यआत्मदेतिश्रुतेः सर्वप्राणिष्वात्मदेहस्तत्तदगुष्ठमात्रस्वरूपंयस्यसतथातस्मैइतिवा विशेषायविशिष्टायपृथिव्यांस्थितत्वातस्याःसर्वस्माद्विशे
षंकरोतीतिवा गुणगुणिनोरभेदाभिप्रायेणसहइत्याद्युक्तं सहस्तितिक्षाशक्तिः ओजोऽवष्टंभशक्तिः बलंबाह्वाद्यवयवशक्तिः ३९ अर्थःशास्त्रंवेदाख्यंलिंगंज्ञापकंप्रमाणयस्यसतथातस्मैअर्थस्यपुरुषा
र्थस्यलिंगंहेतुस्तस्माइतिवा नभसेआकाशवदसंगाय नभस्यतेप्रकाश्यतेनज्ञायतइतिवा भसभक्षणदीप्त्योरितिधातुः पुण्यायपुनानाय लोकायप्रकाशाय अमुष्मैअधिदैववासिने पुण्यायलोका
यस्वर्गादिलोकदात्रेवा ४० प्रवृत्तिनिवृत्तिमार्गप्रवर्तकत्वात्तस्मैपितृदेवेषुचस्थितत्वातत्तद्योग्यकारणवत्त्वात्तत्तच्छब्दवाच्याय कर्मणेविषयायक्रियारूपायवा धर्मविपाकायपुण्यफलप्रदाय मृतेरुद्गतोमृ

नमोनमोनिरुद्धायहृषीकेशेंद्रियात्मने ॥ नमःपरमहंसायपूर्णायनिभृतात्मने ३६ स्वर्गापवर्गद्वारायनित्यंशुचिषदेनमः ॥ नमोहिरण्यवीर्यायचातुर्हो
त्रायतंतवे ३७ नमऊर्जइषेत्रय्याःपतयेयज्ञरेतसे ॥ तृप्तिदायचजीवानांनमःसर्वरसात्मने ३८ सर्वसत्त्वात्मदेहायविशेषायस्थवीयसे ॥ नमस्त्रैलोक्यपा
लायसहओजोबलायच ३९ अर्थलिंगायनभसेनमोंतर्बहिरात्मने ॥ नमःपुण्यायलोकायअमुष्मैभूरिवर्चसे ४० प्रवृत्तायनिवृत्तायपितृदेवायकर्मणे ॥
नमोधर्मविपाकायमृत्यवेदुःखदायच ४१ नमस्तआशिषामीशमनवेकारणात्मने ॥ नमोधर्मायबृहतेकृष्णायाकुंठमेधसे ४२ पुरुषायपुराणायसांख्य
योगेश्वरायच ॥ शक्तित्रयसमेतायमीढुषेहंकृतात्मने ४३ चेतआकूतिरूपायनमोवाचोविभूतये ॥ दर्शनंनोदिदृक्षूणांदेहिभागवतार्चितम् ४४ रूपंप्रिय
तमंस्वानांसर्वेंद्रियगुणांजनम् ॥ स्निग्धप्रावृड्घनश्यामंसर्वसौंदर्यसंग्रहम् ४५ चार्वायतचतुर्बाहुसुजातरुचिराननम् ॥ पद्मकोशपलाशाक्षंसुंदरभ्रुसुना
सिकम् ४६ सुद्विजंसुकपोलास्यंसमकर्णविभूषितम् ॥ प्रीतिप्रहासितापांगमलकैरुपशोभितम् ४७ लसत्पंकजकिंजल्कदुकूलंमृष्टकुंडलम् ॥ स्फुर
त्किरीटवलयहारनूपुरमेखलम् ४८

त्युस्तस्मै मृत्यौस्थितत्वातत्करणाद्वामृत्युस्तस्मै दुःखदायअसुरेभ्यइतिशेषः दुःखदायिनइतिपाठे दुरशोभनदुःखयोरितियादवः खंसुखमितिश्रुतिः दुःखंदायतिशोषयतीति तस्माइतिवा दै
शोषणइतिधातुः ४१ मनवेमननशीलायमंत्रवाच्यायवा ४२ सांख्यंयथार्थज्ञानं योगउपायोऽष्टांगविशिष्टोवातयोरीश्वराय शक्तित्रयसमेतायज्ञानक्रियेच्छाशक्तियुक्ताय मीढुषेवीर्यवते अभीष्टदा
त्रेवा अहंकृतेरुद्रआत्मायस्यसतथातस्मै ४३ चेतसआकूतिरभिप्रायस्तंरूपयतिसमर्थयतिइतिचेतआकूतिरूपस्तस्मै वाचोविविधाभूतिःसृष्टिर्येनतस्मै किमभिप्रेत्यस्तुतामितितत्राह दर्शनमिति
कीदृशंदर्शनंसाकारविषयंनिराकारविषयंवा द्वितीयेगगनवत्व्याप्तमुतघटाकाशवत्परिमितं पक्षद्वयमप्यनभीष्टमनधिकारात्तस्मात्प्रथमएवपक्षस्तत्रापिरूपाणामानंत्यादीदृशंरूपंप्रकाशयेत्याहुः भा
गवतार्चितमिति यदेतदीदृशंरूपंप्रदर्शयेत्यन्वयः ४४ सर्वसौंदर्याणांसंग्रहपात्रं ४५ सुजातंकोमलंविदुरित्यभिधानं शोभनाद्विजादंतायस्यतत्सुद्विजं ४६ ४७ कर्णाभरणानांबहु
त्वद्योतनायमृष्टकुंडलमितिपुनर्वचनं ४८

  

शंखादयोयस्मिन्नधिष्ठितास्तच्छंखचक्रगदापद्ममालामणिना उत्तमाऋद्धयोस्यसंतीत्युत्तमर्द्धिमत् सौभगेत्युभयत्रसंबध्यते सौभाग्ययुक्तौग्रीवाकौस्तुभौयस्मिंस्तत् उरोविभ्रद्विस्तीर्णमितिशेषः ४९ संक्षिप्तमुरोविशिनष्टि अनपायिन्येति नित्ययाश्रिया आक्षिप्तसन्निहितंचानिकषाश्मास्वर्णघर्षणपाषाणस्तद्वद्वर्त्तमानमुरः आक्षिप्तनिकषाश्मोरस्तेनोल्लसत्श्वासानापूरकरेचकाभ्यांसंविग्नाःसंचालितावलयोरेखाअस्यसंतीतिपूररेचकसंविग्नवलिमत् तच्चपल्लवेनांकुरदलेनसदृशतत्तथा ५० दक्षिणावर्तेनगभीरयानिम्नयानाभ्याविश्वंप्रतिसंक्रामयत्प्रसादिवास्थितम् ५१ सप्तानानिचारूणिअंघ्र्यादीनियस्मिंस्तत्तथोक्तं सुदर्शनंसुचक्षुः ५२ नखद्युभिर्नखानांतेजोभिः नोतुःस्तोतुरघंपापंविधुन्वतानाशयतापदोपलक्षितः पुरोमार्गगुरुरुत्क्रांतस्याचिरादिमार्गोपदेष्टात्वं कीदृशानांनस्तमोजुषामज्ञानिनांपुरइत्यस्मत्पदान्वयोवा अस्माकंपुनःप्रदर्शयेति ५३ विनियोगमाह एतदिति आत्मनःस्वस्यशुद्धिःसंसारमुक्तिलक्षणातामिच्छतामितोन्यथास्यच्छुद्धिर्नस्यादित्यतोध्येयमिति वर्णाश्रमादिविहितस्वधर्मएवमुक्तिसाधनमितिभ्रांतिंनिवारयति यद्भक्तियोगइति वर्णाश्रमादिविहितस्वधर्मंकुर्वतांपुंसांभगवद्भक्तियोगोनित्याभयप्रदइतियत् ५४ तस्मादभक्तिमतांदुर्लभोभवान् सर्वदेहिनांभक्तिमतांलभ्यइति नकेवलमुक्त्यर्थमस्मदादेर्ध्येयःकिंत्विंद्रादेर्वापीत्यभिप्रेत्याह स्वाराज्यस्येति स्वःस्वर्गेराज्यंयस्येंद्रादेरात्मविदात्मज्ञःपरमात्मातदात्मानमेवावेदाहंब्रह्मास्मीतिश्रुतेः

शंखचक्रगदापद्ममालामण्युत्तमर्द्धिमत् ॥ सिंहस्कंधमुरोबिभ्रत्सौभगग्रीवकौस्तुभम् ४९ श्रियानपायिन्याक्षिप्तंनिकषाश्मोरसोल्लसत् ॥ पूररेचकसंविग्नवलिमत्पल्लवोदरम् ५० प्रतिसंक्रामयद्विश्वंनाभ्यावर्तगभीरया ॥ श्यामश्रोण्यधिरोचिष्णुदुकूलस्वर्णमेखलम् ५१ समचार्वंघ्रिजंघोरुनिम्नजानुसुदर्शनम् ५२ पदाशरत्पद्मपलाशरोचिषानखद्युभिर्नोंतुरघंविधुन्वता ॥ प्रदर्शयस्वीयमपास्तसाध्वसंपदंपुरोमार्गगुरुस्तमोजुषाम् ५३ एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम् ॥ यद्भक्तियोगोभयदःस्वधर्ममनुतिष्ठताम् ५४ भवान्भक्तिमतांलभ्योदुर्लभःसर्वदेहिनाम् ॥ स्वाराज्यस्याप्यभिमतएकांतेनात्मविद्गतिः ५५ त्वांदुराराध्यमाराध्यसतामपिदुरापया ॥ एकांतभक्त्याकोवांछेत्पादमूलंविनाबहिः ५६ यत्रनिर्विष्टमरणंकृतांतोनाभिमन्यते ॥ विश्वंविध्वंसयन्वीर्यशौर्यविस्फुरितभ्रुवा ५७ क्षणार्धेनापितुलयेनस्वर्गंनापुनर्भवम् ॥ भगवत्संगिसंगस्यमर्त्यानांकिमुताशिषः ५८ अथानघांघ्रेस्तवकीर्तितीर्थयोरंतर्बहिःस्नानविधूतपाप्मनाम् ॥ भूतेष्वनुक्रोशसुसत्त्वशीलिनांस्यात्संगमोनुग्रहएषनस्तव ५९

तस्यगतिर्मुक्तिलक्षणाएकांतेनानियमेनाभिमताअविप्रतिपन्नामुक्त्यर्थमेवभक्तिर्नस्वर्गाद्यर्थमित्यतोवाह स्वाराज्यस्येति इंद्रादेरित्यध्याहार्यं इंद्रादेःस्वाराज्यस्यावाप्तावपिआत्मवित्परमात्मागम्यतेनयेतिआत्मविद्गतिर्भक्तिर्यात्वेकांतेनाभिमतेत्यन्वयःयद्वा आत्मविदांपरमात्मज्ञानिनगतिरूपायाभक्तिर्यादृशीतादृशीति भक्त्यात्वनन्ययाशक्यइतिस्मृतेः ५५ भगवदिच्छाविनाभूतत्वादिंद्रादीनांस्वर्गादिकंतद्भक्त्याकामितंनस्वतोऽतोबुद्धिमान्नस्वातंत्र्येणान्यत्ज्ञायतइतिभावेनाह त्वांदुराराध्यमिति सतामपिदुरापयाबहिरैहिकं ५६ पादमूलंविशिनष्टि यत्रेति अरणशरणंवीर्यशौर्याभ्यांविस्फूर्जितयास्फुरितयाभ्रुवाविश्वंविष्टंभयन्वशेकुर्वन् ५७ भक्त्यायत्फलंस्वर्गादिकंनतुलयइत्यन्वयः भागवतसंगलब्धयाभक्त्यामुक्तावानंदोद्रेकलाभाभिप्रायेणेतितात्पर्यं तदुक्तं संगोभागवतैर्भूयानपुनर्भवमात्रतः यतोविशिष्टमानंदंमुक्तौजनयतिस्फुटमिति ५८ ननुसत्संगएवफलोऽस्तुततोयुष्माकंकिमपेक्षितमत्राह अथेतियस्मात्त्वद्भक्तानांसंगएवंविधफलोऽथास्मात्तवांघ्योजतियोः कीर्तितीर्थयोर्भागवतादिशास्त्रश्रवणलक्षणाकीर्तिस्तीर्थंविष्णुपद्यादितयोरंतर्बहिःस्नानाभ्यांविधूतपाप्मनां अतएवभूतेषुअनुक्रोशसुतत्वशीलिनांसात्विकस्वभावानांसतांसंगमोनोऽस्माकस्यात् अतोनेनवयंकृतार्थाइत्यतउक्तं अनुग्रहइति ५९

 

सत्संगयाज्ञाया:कोभिप्रायइत्यतआह । नयस्येति यद्यदासत्संगमस्तत्रतदासत्संगमेभक्तियोगेनानुगृहीतंयस्यपुंसश्चित्तंस्मृतिकारणमंत:करणंबाहिरर्थेषुशब्दादिषुविभ्रमंविविधभ्रमणंनाविशेत्नगच्छति यस्यमनश्चगुहायांहृदयेनिविष्टमात्मानमाविशतिसमुनिस्तेतवपदंस्वरूपमंजसाविचष्टेपश्यतिनान्वित्यन्वय: सत्संगत्यासमुत्पन्नभगवद्भक्त्यावैराग्यदृढयाप्रबलीकृतयाभगवदुपासनयापरोक्षज्ञानंभवती त्यभिप्राय: भक्त्यात्वनन्ययेत्यादे: ६० सत्संगति:सर्वथासंपाद्येतिप्रतिपाद्याधुनाभक्तिविषयतत्त्वंनिर्दिशति यत्रेति केचिज्जगद्ब्रह्माज्ञानकल्पितमितिसंगिरंते अन्येशून्यमेवसंवृत्त्यासदिवाभातीति अपरेतत्परिणतमिति इतरेप्रागसत:सत्तासमवायि येनजातमित्यदृष्टत्वान्नेश्वरोप्येकइति तान्सर्वानपिनिरस्यतीत्यतोवाह यत्रेति यत्रयदाधारतयाव्यज्यतेइत्यनेनैतेपक्षा:प्रतिक्षिप्ता:पूर्वसतए वव्यक्तिसंभवाच्चदनुगतपंचविधभेदानांव्यक्तत्वेनसत्यत्वसिद्धे: विश्वस्मिन्स्थितमप्यज्ञानांनभातीत्युक्त्यासुतरामीश्वरसद्भावोदर्शित: ब्रह्मतत्त्वमित्यनेनसुतरां परंज्योतिरित्यनेनाज्ञानसंपर्काभाव:स्पष्ट: आकाशइवेति निराकारपक्षोपिनिरासीतिज्ञायते अपरिच्छिन्नत्वएवाकाशदृष्टांतोनशून्यत्वेइतिग्रंथप्रपंचतयाउपरम्यतइति ६१ यत्रेत्यधिकरणनिर्देशाच्छुक्तिकायांरजतव्यक्तिवद्यस्मिन्कल्पितत्वा न्मिथ्याभूतंजगदितिभ्रांतिंनिराचष्टे योमाययेति योहरि:पुरुरूपयाशुक्ललोहितकृष्णभेदेनबहुरूपयामाययाप्रकृत्येदंजगदसृजत्बिभर्तिपुन:संहरति अत्रप्रकृतेरेवमहदाद्यात्मनाविकारोनतुपरमात्म नइत्याशयेनोक्तं अविक्रियइति अनेनशुक्त्याज्ञानविकारोरजतमित्यपास्तं एवमपिपरमात्माजीवादिभ्योभिन्नतयासम्यक्किमितिनप्रतीयतइत्याशंक्यसाप्रतीति:सम्यक्ज्ञानविषयेत्याह यद्भेदेति य स्यहरेर्जीवादिभ्योभेदबुद्धि: सदिवानिर्दोषज्ञानविषयैवेत्यर्थ: दिनवाचिनादिवाशब्देनकथंज्ञानार्थतोच्यते प्रसिद्ध्यभावादितिनवाच्यं रात्रिरज्ञानमुद्दिष्टंसम्यक्ज्ञानंदिवास्मृतमितिवचनात् शुक्तिरजत

नयस्यचित्तंबहिरर्थविभ्रमंतमोगुहायांचनिविष्टमाविशेत् ॥ यद्भक्तियोगानुगृहीतमंजसामुनिर्विचष्टेननुतत्रतेपदम् ६० यत्रेदंव्यज्यतेविश्वंविश्वस्मिन्नवभाति यत् ॥ तत्त्वंब्रह्मपरंज्योतिराकाशमिवविस्तृतम् ६१ योमाययेदंपुरुरूपयासृजद्बिभर्तिभूय:क्षपयत्यविक्रिय: ॥ यद्भेदबुद्धि:सदिवात्मसंस्थयातमात्मतंत्रं भगवन्प्रतीमहि ६२ क्रियाकलापैरिदमेवयोगिन:श्रद्धान्विता:साधुयजंतिसिद्धये ॥ भूतेंद्रियांत:करणोपलक्षणंवेदेचतंत्रेचतएवकोविदा: ६३ त्वमेकआद्य: पुरुष:सुप्तशक्तिस्तयारज:सत्त्वतमोविभिद्यते ॥ महानहंखंमरुदग्निवार्धरा:सुरर्षयोभूतगणाइदंयत: ६४

ज्ञानवन्नेदंपुरुषार्थोपयोगीतिचेन्न जीवेभ्योजडतश्चैवभेदज्ञानंहरे:सदा वास्तवंज्ञानमुद्दिष्टंतेनमुक्तिरवाप्यतइतिवचनात् तत्रयुष्मत्प्रतीति:कीदृशीतितत्राह आत्मसंस्थयेति ययास्वाधीनयाप्रकृत्या निर्विकार:सृष्ट्यादिकरोतितयात्मसंस्थयापरमात्मव्यवस्थयास्थितंत्वांप्रतीमहिविजानीमहे स्वाधीनामपिप्रकृतिंविहायसृष्ट्यादिकर्तुंसमर्थइतिद्योतनायात्मतंत्रमिति अतएवभगवन्निति संबोधयांबभू वुरिति ६२ अस्तुसृष्ट्यादिकर्तृब्रह्मस्वर्गकामोयजेतेत्यादिवाक्यप्रमाणेनेज्यमिंद्रादिकंस्यात्तादृक्प्रमाणसंभवादितितत्राह क्रियाकलापैरिति इदंप्रेत्यापिनमुंचामीतिश्रद्धयान्वितायेकर्मयोगिन: क्रि यासमूहैर्ज्ञानसिद्धयेइदंजगत्कर्तृब्रह्मैवसाधुयजंतेनेंद्रादिकं । तएवस्वर्गकामोमजेतेत्यादिवेदेशुद्धस्फटिकसंकाशंवासुदेवंनिरंजनमित्यादितंत्रेचकोविदास्तद्धृदयज्ञाइत्यर्थ: ॥ नकेवलंश्रुतिस्मृतिभ्यांज्ञात्वाय जंति किंत्वनुमानेनापीतिभावेनाह भूतेति भूतेंद्रियांत:करणैरुपलक्ष्यतेज्ञायतइतिभूतेंद्रियांत:करणोपलक्षणंभूतादीनामचेतनत्वेनस्वत:प्रवृत्त्यसंभवात्तत्प्रेरकोन्यश्चेतनोस्ति । सचेश्वरएवान्यस्यान्वय व्यतिरेकाभ्याशक्त्यदृष्टेरिति यद्वावेदेतंत्रेचश्रद्धान्वितायेयोगिनइदंयजंतितएवकोविदा:कर्मकांडसारस्यज्ञानपटवइति ।अनेनेंद्रादिकयजंतोवेदादितात्पर्यार्थंनजानंतीतिज्ञापितम् ६३ ननुजीवादिदंजगत्के चित्संगिरंते । इदंनिपुणप्रणीतंविशिष्टकार्यत्वाच्चित्रादिकार्यवदित्यनुमानं जीवाद्भवंतिभूतानीतिकानिचिद्वाक्यानिचोदाहरंत्यतइदंलक्षणमतिव्याप्तमितिशंकानिरासायाह त्वमेकइति आद्य:प्रपंचोत्पत्ते:पूर्व भव: पुरुषस्त्वमेकएवाभूदित्यन्वय:। ब्रह्मैवेदमग्रआसीदित्यादे: पुरुषइत्यनेनकर्तारमीशंपुरुषंब्रह्मयोनिमितिवाक्यंसूचितं अनेनजीवश्चव्यावृत्तोस्यब्रह्मयोनित्वोक्ते: स्वप्रतीतत्त्वस्याद्वितीयस्याविद्यमानत्वा

स्कथमेकइति विशेष्टुंशक्यतइतितत्राह सुप्तेति अत्रसुप्तेत्यनेनप्राप्तिरुपलक्ष्यते यदायंपुरुषःस्वपितिनामसतासौम्यतदासंपन्नोभवतीतिश्रुतेः स्वात्मन्येवाप्तशक्तिः मुख्यार्थांगीकारेऽज्ञत्वापत्तेरन्यैरदृष्टत्वमंगी कर्तव्यं प्रकृते स्वापउद्दिष्टइपैन्यत्रत्वदर्शनमितिवचनात् एवंप्रलयावस्थासंक्षिप्यसृष्ट्यवस्थामाह तयेति याप्रलयेहरावेवरतासृष्टिकालेप्राप्तेहरेःकटाक्षेणसिसृक्षुत्वविशेषप्राप्तयातयाशक्तिशब्दशब्दितयाप्रकृ त्यासाम्यावस्थामात्तयाविभिद्यतेविषमावस्थामापद्यते सृष्टिक्रममपेक्ष्यरजःसत्त्वतमइतिव्यत्यस्योक्तिःस्थित्यादेःसृष्ट्यनंतरत्वात् रजःसृष्टौसत्त्वंस्थितौतमःसंहृतौचेतिभिद्यतेरजः सत्त्वतमोभ्यांविभिद्यतेसत्त्वंर जस्तमोभ्यांतमश्चसत्त्वरजोभ्यामित्ययंभेदःप्रमाणांतरत्वात्तत्कार्यस्वभावदर्शनादवगंतव्यः उक्तभेदंविशिनष्टि महानहमिति ततोगुणवैषम्यात्सत्त्वप्रधानंमहत्तत्त्वंतदभिमानीब्रह्माचाभूदितिबोद्धव्य तत्रा हंकारंत्रिविधाभिन्नं। तामसाहंकारात्खादि। वैकारिकाहंकारादिंद्रियाभिमानिनोदेवाः। तैजसाहंकारात्ज्ञानहेतुत्वाद्दृषिशब्दवाच्यानींद्रियाणिखादिभ्यःसुरनरतिर्यगादिभूतगणाअभूवन् किंबहुनोक्तेने दंचराचरंजगद्यतोयस्मादुत्पन्नंतदेवंविभिन्नमितिज्ञातव्यं आत्मनआकाशःसंभूतइत्यादिश्रुत्यनुग्रहीतंमानमस्मिन्नर्थे ६४ अचेतनस्यस्वतःप्रवृत्त्यनुपपत्तेश्चेतनप्रकृतावस्वातंत्र्यप्रतीतेर्विचित्रप्रपंचरचना न्यथानुपपत्त्याविशिष्टचेतनासिद्धिःसचेश्वरएवार्थापत्तेरन्यथासिद्धिपरिहारायाह सृष्टमिति अनुप्रविश्येत्यनेनार्थापत्तेरन्यथासिद्धिःपरिहृतेति प्रपंचरतुग्रंथाधिक्यात्प्राज्ञानांसुबोधत्वाच्चोपरम्यते आत्मां शकेनस्वरूपांशेन तत्सृष्ट्वेत्यादिश्रुतेः जरायुजादिभेदेनचतुर्विधंपुरंप्रविश्यहृषीकैर्जीवेंद्रियैः सारघंसारमात्रंमधुसुखंभुंक्ते यस्मादथोतस्मात् अत्रपुरेसंतंत्वांपुरुषविदुरित्यन्वयः तदरयास्तीत्यस्मिन्नर्थेउ पचप्रत्ययः संतमित्यनेनानिर्दोषत्वंसूचयति अवधारणेघशब्दःस्यादितिवचनात् पुनर्मधुनामसुखंविंद्यात् केवलंसारमेवभुंक्तेनत्वसारमित्याशयेन सारवत्सारमात्रंतुसारघमित्यतोपिकथितएवार्थः ६५ सं

**सृष्टंस्वशक्त्येदमनुप्रविष्टश्चतुर्विधंपुरमात्मांशकेन ॥ अथोविदुस्त्वांपुरुषंसंतमत्रभुंक्तेहृषीकैर्मधुसारघंयतः ६५ सएषलोकानतिचंडवेगोविकर्षसित्वंख लुकालयानः ॥ भूतानिभूतैरनुमेयतत्त्वोघनावलीर्वायुरिवाविषह्यः ६६ प्रमत्तमुच्चैरितिकृत्यचिंतयाप्रवृद्धलोभंविषयेषुलालसम् ॥ त्वमप्रमत्तःसहसा भिपद्यसेक्षुल्लेलिहानोहिरिवाखुमंतकः ६७ कस्त्वत्पदाब्जंविजहातिपंडितोयत्तेपुमानप्ययमब्जकेतनः ॥ विशंकयास्मद्गुरुरर्चतिस्मयद्विनोपपत्तिंमन वश्चतुर्दश ६८ यत्स्पृष्टोहरहर्मुक्तक्लेशःशेतेऽमृतांबुधौ ॥ तावद्वेदाथतत्तेंघ्रिंजनोनुस्मरतेचतत् ६९**

हर्तृलक्षणस्यकालाधीनतयाप्रतीयमानत्वात्तन्नालिंग्यात्मेतितत्राह सएषइति योग्रतःसृष्टासएवलोकान्कालयानः कालद्रावणइतिधातुः कालरूपीभूत्वात्वंभूतैःकरणैर्धर्मादिभिर्भूतानिविचकर्षसिसंहरिष्यसीत्यन्वयः अविषह्योऽपरिहार्यः अत्रहेतुंध्वनयति अतिचंडेति अत्रानुमानंमानमित्याह अनुमेयेति उदाहरणमाह घनावलीरिति चलंतीर्घनावलीर्दृष्ट्वाचलनंवायुकर्तृकमितियथाकल्प्यतेतथाऽत्रापीति ६६ अवांतरसंहारस्त्वदन्येनाकिंनस्यादत्राह प्रमत्तमिति क्षुधालेलिहानःपुनःपुनर्जिह्वयासृक्किणीलिहन् ६७ एवंभगवतःस्वरूपंनिरूप्यतदुपासनात्याग्यसुरएवनविद्वानितिभावेनाह कइति पंडितएवंज्ञातेश्वरतत्त्वःपुमान्कस्त्वत्पदाब्जंत्यजति यद्यदाचरति श्रेष्ठइत्येतावदेतत्ध्वनयतित्यजतिचेत्सुरेतरः इतोपिमोक्तुंनिमित्तंनास्तीत्याह यत्तइति अयमब्जकेतन पुमानपिविगतशंकयातेतवयत्पदाब्जमर्चतिस्मस्मरतेइत्यन्वयः स्मृतौवृतौनिषेधेस्मेति यादवः कोयमब्जकेतनइत्यतोस्मद्गुरुरितिजनकत्वाज्ज्ञानोपदेष्टृत्वाच्चगुरुरिति अनेनततःपरंहिमामित्यत्रश्रीरेवोच्यतेनरुद्रइतिनिरणायीत्यतोमायावादिनाव्याख्यानंपूर्वापरविरुद्धत्वादुपेक्षणीयमि त्यस्माभिस्तन्मतनिरासायप्रयासोनक्रियतइति इतोपितत्पादसेवानहातव्येत्याह यद्विनेति चतुर्दशमनवोऽस्मादेतत्फलंभवतीत्युपपत्त्यपेक्षाविनापियच्चरणारविंदमर्चंति ६८ अनुदिनंसुनिद्र शायांश्रीनारायणस्पर्शेनपरमानंदोऽनुभूयतेकिमुतकैवल्यइतिवदयंस्तस्यदौर्लभ्यमाह यत्स्पृष्टइति येनांघ्रिणास्पृष्टोहरहर्मुक्तक्लेशोजनोऽमृतांभोधौपरमानंदसमुद्रेशेते यावत्तावत्तदानीवेदसुखंवेत्यथो त्थानानंतरंतेंऽघ्रिंवेदनुकिमित्याक्षेपः तत्सुखंस्मरतेच यद्यपिसुखमहमस्वाप्समितिपरामृशति तथापितवांघ्रिंनवेत्तिनस्मरतीतिभावः अनेनतादृशः पुरुषोदुर्लभइतिसूचितम् ६९

विचित्रेजगतिकश्चिद्धीरोऽस्मदभयदः किंनस्यादितिशंकांविहायैवंप्रार्थनीयइतिवाक्ति अथेति विश्वंरुद्रभयध्वस्तमितियस्मात् अथतस्मादेवंविपश्चितांनस्त्वमकुतश्चिद्भयागतिरसीत्यन्वयः ब्रह्मन्पर
मात्मन्नितिपदद्वयेनबहिरंतश्चत्वांविनान्योऽभयदोनास्तीतिसूच्यते ७० ध्येयस्वरूपंनिरूप्याधुनापूर्वोक्तंजाप्यंविधायोपसंहरति इदंजपतेति सर्वस्माआत्मनेनमइत्यारभ्यवाचोविभूतयइत्यतंयदुक्तं त
दिदंजपतेत्यन्वयः ७१ आत्मस्थमित्युपादिश्यसर्वभूतेष्ववस्थितमितिवचनंपरिच्छिन्नत्वपरिहारायोक्तमितिज्ञायते ७२ ७३ श्रद्धाजनयति । इदमाहेति । विश्वसृक्पतिर्ब्रह्मा ७४ नेदंश्रवण
मात्रंकिंत्वनुभवसिद्धमित्याह तेवयमिति ७५ नकेवलमिदंयुष्माकमेवान्येषामपिश्रेयस्करमित्याह अथेति ७६ तत्किंश्रेयइतितदाह श्रेयसामिति श्रेयसामस्यैवप्रधानश्रेयस्त्वमित्याह सुखंतरतीति ७७
नकेवलमनेनापवर्गिकंफलंकिंत्वपेक्षितंचेदैहिकमपिस्यादित्याह यइदमिति ७८ मद्गीतामित्यनेनगांधर्वंनस्तवमिति अस्मत्सोविनोमूढाइतिद्योतनायश्रेयसामित्युक्तं ७९ फलविशेषार्थंकालविशेष

अथत्वमसिनोब्रह्मन्परमात्मन्विपश्चिताम् ॥ विश्वंरुद्रभयध्वस्तमकुतश्चिद्भयागतिः ७० इदंजपतभद्रंवोविशुद्धायनृपनंदनाः ॥ स्वधर्ममनुतिष्ठंतोभगव
त्यर्पिताशयाः ७१ तमेवात्मानमात्मस्थंसर्वभूतेष्ववस्थितम् ॥ पूजयध्वंगृणंतश्चध्यायंतश्चासकृद्धरिम् ७२ योगादेशमुपासाद्यधारयंतोमुनिव्रताः ॥
समाहितधियःसर्वेएतदभ्यसतादृताः ७३ इदमाहपुरास्माकंभगवान्विश्वसृक्पतिः ॥ भृग्वादीनामात्मजानांसिसृक्षुःसंसिसृक्षताम् ७४ तेवयंचोदिताः
सर्वेप्रजासर्गेप्रजेश्वराः ॥ अनेनध्वस्ततमसःसिसृक्ष्मविविधाःप्रजाः ७५ अथेदंनित्यदायुक्तोजपन्नवहितःपुमान् ॥ अचिराच्छ्रेयआप्नोतिवासुदेवपरायणः
७६ श्रेयसामिहसर्वेषांज्ञानंनिःश्रेयसंस्मृतम् ॥ सुखंतरतिदुष्पारंज्ञाननौर्व्यसनार्णवम् ७७ यइदंश्रद्धयायुक्तोमद्गीतंभगवत्स्तवम् ॥ अधीयानोदुरा
राध्यंहरिमाराधयत्यसौ ७८ विंदतेपुरुषोऽमुष्माद्यद्यदिच्छतिसत्वरम् ॥ मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ७९ यइदंकल्यउत्थायप्रांजलिःश्रद्ध
यान्वितः ॥ शृणुयाच्छ्रावयेन्मर्त्योमुच्यतेकर्मबंधनैः ८० गीतंमयेदंनरदेवनंदनाःपरस्यपुंसःपरमात्मनःस्तवम् ॥ जपंतएकाग्रधियस्तपोमहच्चरध्वमंतेत
तआप्स्यथेप्सितम् ८१ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेचतुर्विंशोऽध्यायः ॥ २४ ॥ मैत्रेयउवाच ॥ इतिसंदिश्यभगवान्बार्हिषदैरभिपूजितः ८
पश्यतांराजपुत्राणांतत्रैवांतर्दधेहरः १ रुद्रगीतंभगवतःस्तोत्रंसर्वेप्रचेतसः ॥ जपंतस्तेतपस्तेपुर्वर्षाणामयुतंजले २

माह कल्यइति कल्येउषसि ८० श्रद्धातिशयजननार्थंपुनरुक्तंकरोति गीतंमयेति एकाग्रधियः ध्येयादनन्यविषयाधीर्येषांतेतथोक्ताः अग्रेजगदादावेकएवयः सएकाग्रस्तद्धरावेवधीर्येषांतेत
थेतिवा अंतेदेहांतेयुष्माद्भितायेदमुक्तमितिप्रकाशनायचरध्वमित्यात्मनेपदप्रयोगः ८१ इतिश्रीभागवतेचतुर्थस्कंधेवि॰ज॰टीकायांचतुर्विंशोऽध्यायः २४ अध्यात्मगर्भपुरजनोपाख्यानप्रकथनेन
संसारसागरेदुराग्रहग्राहदुरवरोहेनिमज्जतांदूरीकृतसत्संगानांहरिचरणारविंदमकरंदसेवानभिज्ञानांगमागमादिनानाव्यसनभराक्रांतशिरोधराणां शिशुकलभाषणाहतश्रवणानांकुटुंबभरणातिवाहित
दिनकरगमागमानांपुरुषाणांवैराग्यरसानुभावितनिपुणवल्लभक्तिप्रदीपानुगृहीतापवर्गलक्षणपुरुषार्थसाधनभगवदपरोक्षज्ञानललनाकटाक्षप्रसन्नमुरमथनप्रसादपरशुमंतरेणसंसारतरुच्छेदोनस्यादितिता
दृशीसाधनसामग्रीनिरूप्यते पंचस्वध्यायेषु तत्रोपोद्घातंरचयति इतीति १ रुद्रांतर्धानानंतरंप्रचेतोभिःकिमकारीतितत्राह रुद्रगीतमिति २

एतदंतरेश्रोतुंयोग्यांकथांवद तत्कथाशेषंतदनंतरंश्रोष्यामइतिक्षत्तुरांतरींशकांमैत्रेयःपरिहरतीत्याह प्राचीनबर्हिषमिति स्यात्कृपालुःकारुणिकइतिवचनात्साधुरयंशब्दः ३ ईहयाकर्मणाश्रेयसा मवाप्तिरिष्यते त्वंतत्रश्रेयसांकतमच्छ्रेयआत्मनईहसेकर्मणेच्छसि एतदेवविशिनष्टि दुःखहानिरिति अत्रायभावःपुरुषार्थिनापुरुषेणप्रार्थ्यानि श्रेयांसिबहूनिसंतितेषांकतमच्छ्रेयोदुःखहानिलक्षणमु तसुखावाप्तिमथवोभयमथान्यत्सदपत्यादिलक्षणमिति इहकर्मणितदुभयंन ४ अत्रराजासर्वश्रेयोवाप्तौमुख्यसाधनंज्ञानमेवेतिनारदस्यहार्दविद्वांस्तदेवभवतोपदेष्टव्यमितिप्रार्थयते नजानामीतिनारदे नसहोत्तरप्रत्युत्तरायासाज्जानामीतिवाक्यंसुस्वमितिमन्वानेनतत्तथोक्तं ५ काम्यधर्ममयेषुगृहाश्रमेषुपुत्रादिरेवार्थइतिधीर्यस्यसतथा ६ यद्यपिकर्मज्ञानोत्पत्तौसहकारितथापिकर्तुमसुशकमिति मत्वानिंदति भोभोइति यथावत्कर्मकर्तुस्तुज्ञानंसाहाय्यकारकं अन्यथाकुर्वतःकर्मनिरयायभविष्यति तथापिकर्मनिंदंतिनयतःकर्तुमंजसा शक्यंज्ञानफलस्यापिबहुत्वान्मोहनायचेतिवचनान्निदनं युक्तं तस्मात्कर्मविधानंचनव्यर्थमितितात्पर्यार्थइतिनिरणायि संज्ञापितान्हिंसितान् ७ संप्रतितेभ्यउपद्रवाभावेपिपरत्रास्तीत्याह एतेत्वामिति वैशसशस्त्रेणछेदन सपरेतमृत अयोनिर्मिताआ युधविशेषाःकूटाः, कूटोस्त्रीयुंजमायाद्येष्वद्रिशृंगेषुभेदयोरितियादवः ८ अत्रेममर्थमितिहासेनबोधयिष्यामीत्याह अत्रेति पुरेशरीरेअततिसततंविषयीकृत्यवर्ततइतिपुरातनं अध्यात्मविषय

प्राचीनबर्हिषंक्षत्तःकर्मस्वासक्तमानसम् ॥ नारदोध्यात्मतत्त्वज्ञःकृपालुःप्रत्यबोधयत् ३ नारदउवाच ॥ श्रेयस्त्वंकतमद्राजन्कर्मणात्मनईहसे ॥ दुःखहानिःसुखावाप्तिःश्रेयस्तन्नेहचेष्यते ४ प्राचीनबर्हिरुवाच ॥ नजानामिमहाभागपरंकर्मापविद्धधीः ॥ ब्रूहिमेविमलंज्ञानंयेनमुच्येयकर्मभिः ५ नारदउवाच ॥ गृहेषुकूटधर्मेषुपुत्रदारधनार्थधीः ॥ नपरंविंदतेमूढोभ्राम्यन्संसारवर्त्मसु ६ भोभोप्रजापतेराजन्पशून्पश्यत्वयाध्वरे ॥ संज्ञापिताञ्जीवसंघान्निर्घृणेनसहस्रशः ७ एतेत्वांसंप्रतीक्षंतेस्मरंतोवैशसंतव ॥ संपरेतमयःकूटैश्छिंदंत्युत्थितमन्यवः ८ अत्रतेकथयिष्येहमितिहासंपुरातनम् ॥ पुरंजनस्यचरितंनिबोधगदतोमम ९ आसीत्पुरंजनोनामराजाराजन्बृहच्छ्रवाः ॥ तस्याविज्ञातनामासीत्सखाविज्ञातचेष्टितः १०

मित्यर्थः अततसातत्यगमनइतिधातुः अन्यथाइतिहासःपुरावृत्तमितिवाक्यात्पुनरुक्तंस्यात् कमधिकृत्यवर्ततइत्यतउक्त पुरंजनस्येति ९ पुरंजनोनामकः यमाश्रित्येयंकथावर्तते बृहच्छ्रवाइत्यने नविशिष्टोजीवोभवतीत्युच्यते अभिमानेन सर्वेषांजीवानांमुख्याभिमानीचतुर्मुखोब्रह्मादेवानांविशेषतः अत्रपुरंजनस्तुजात्याक्षत्रियोमुक्तियोग्योऽसुरान्विनामनुष्यजीवाभिमानी असुराणांकलिं तत्रजीवसंसारज्ञप्त्यैश्रोतॄणांपापपरिहारायपुण्यवृद्धयेचनारदेनपुरंजनस्यकथाप्रसंगोकारीति तदुक्तं देवजीवाभिमानीतुब्रह्मैवतुचतुर्मुखः । मनुष्याणांतुजीवानामभिमानीपुरंजनः । सतुराजाहरे पुत्र श्चासुराणांकलिःस्वयं । जीवसंसृतिवत्तस्मात्पुरंजनकथापितु । तस्माज्जीवसृतिज्ञप्त्यैपुरंजनकथांमुनिः । नारदोश्रावयत्तस्मान्नृपंप्राचीनबर्हिषं । प्रायस्तुतत्कथाजीवेस्थिताप्रत्येकशोपितु । प्रत्येकंय त्तुयुज्येततदुक्तेयंयथातथा । उक्तंभागवतेप्येतत्पुराणेयावदिष्यते । प्रत्येकशस्तुजीवानांतदन्यत्तस्यकेवलमिति । अतोत्रयथासंभवंतत्तत्पदानितत्तदर्थपरतयायोज्यानीतितात्पर्यंज्ञायते पुरंस्वयोग्यानं दपूर्तिंजनयिष्यतिव्यक्तीकरिष्यतीतिपुरंजनः पॄपालनपूरणयोः अन्यस्तुकर्मभिः पुराणिशरीराणिचतुर्विधानिजनयतीतिनिर्वक्तव्यं आचतुर्दशाद्ब्रह्मादित्यादेः क्षत्रजातिज्ञापनायराजेति इतिहासत्ववचो तनायासीदितितस्यपुरंजनस्य शरीरिणोपिनामरूपादिभिःस्वरूपंनज्ञायतइत्यविज्ञातंनामयस्येतिसोऽविज्ञातनामा परमात्मासखासीदित्यन्वयः द्वासुपर्णेत्यादिश्रुतेः अन्यस्तुप्रसिद्धः तर्हिशून्यइत्यतो विज्ञातेति विज्ञातंचेष्टितंजगत्सृष्ट्यादिलक्षणंयस्यसतथा अन्यत्रनीतिशास्त्रप्रसिद्धव्यापारः १०

र्सःस्वर्गादिस्थानादवरोगतःकर्मणाशरणंसुखदुःखभोगयोग्यंशरीरमन्वेषमाणःपृथिवींकर्मभूमिंबभ्राम अन्यत्रपुरंप्रभवंत्यस्मात्कर्माणीतिप्रभुः अन्यत्रपरपापमर्दनसमर्थः अनुरूपंदुःखभोगमंतरेण सुखभोगयोग्यं अन्यत्रदुर्गादिलक्षणं ११ यावतीस्तिर्यगादिलक्षणाःपुरःशरीराणि । अभिपत्तयेप्राप्त्यै ताभ्योगामानयत्ताअब्रुवन्नवैनोयमलमित्यादिश्रुतिः अन्यत्रशत्रुसाध्यत्वात् १२ एकदाभी प्सितशुभकर्मफलोदयसमये । हिमवतोदक्षिणेषुसानुषुकर्मफलसभजनपटुषु वनषणसंभक्ताविति धातुः भारतभूप्रदेशेषु प्रत्येकंयत्तुपूज्येततदुन्नेयंयथातथेत्युक्तत्वात् यथासंभवमुन्नीयते श्रोत्रादिनवद्वारैर्लक्षितलक्षणां अंधपंगुबधिरत्वादिदुर्लक्षणशून्यांपुरींपुरुषशरीरंददर्श दृष्ट्वाप्राविशदित्यध्याहार्यं ताभ्यःपुरुषमानयत् ताअब्रुवन्सुकृतंबतेतिश्रुतिः अन्यत्रस्पष्ट ॥ १३ ॥ पुरीमित्यु पक्रांतत्वात्तदनुसारेणतद्वर्णनंक्रियते प्राकारेत्यादिना अध्यात्मंतैःशब्दाद्यैरस्थिनाड्यादयोयथानुकूललक्षणीयाः प्राकारोदुर्गभित्तिः अट्टालोभित्त्यंतर्भूप्रदेशः परिखादुर्गबाहिःपरित खातनदी स्व र्णादिभीरचितैः शृंगैःशिखरैः अन्यत्रसात्त्विकराजसतामसैःसकुलां १४ नीलादिभिरिंद्रनीलरत्नादिभिः क्लृप्ताविरचिताहर्म्यस्थल्योयस्यांसातथातांभोगवतींनागपुरीं ॥ १५ ॥ आक्रीडाक्रीडाभूमिः आपणःक्रयस्थानं चैत्यंवंदनशाला वेदिःपरिष्कृताभूमिरित्यमरः ॥ १६ ॥ सराजाविषयलक्षणबाह्योद्यानेस्थितः तत्रयदृच्छयागतांप्रमदोत्तमांददर्शेतिचतुर्थश्लोकेनान्वयः ॥ १७ ॥ हिमनिर्झरा

सोऽन्वेषमाणःशरणंबभ्रामपृथिवींप्रभुः ॥ नानुरूपंयदाविंददभूत्सविमनाइव ११ नसाधुमेनेताःसर्वाभूतलेयावतीःपुरः ॥ कामान्कामयमानोसौतस्यत स्याभिपत्तये १२ सएकदाहिमवतोदक्षिणेष्वथसानुषु ॥ ददर्शनवभिर्द्वारैःपुरींलक्षितलक्षणाम् १३ प्राकारोपवनाट्टालपरिखैरक्षतोरणैः ॥ स्वर्णरौप्या यसैःशृंगैःसंकुलांसर्वतोगृहैः १४ नीलस्फटिकवैदूर्यमुक्तामरकतारुणैः ॥ क्लृप्तहर्म्यस्थलींदीप्तांश्रियाभोगवतीमिव १५ सभाचत्वररथ्याभिराक्री डायतनापणैः ॥ चैत्यध्वजपताकाभिर्युक्तांविद्रुमवेदिभिः १६ पुर्यास्तुबाह्योपवनेदिव्यद्रुमलताकुले ॥ नदद्विहंगालिकुलकोलाहलजलाशये १७ हि मनिर्झरविप्रुष्मत्कुसुमाकरवायुना ॥ चलत्प्रवालविटपिनलिनीतटसंपदि १८ नानारण्यमृगव्रातैरनाबाधेमुनिव्रतैः ॥ आहूतंमन्यतेपांथोयत्रको किलकूजितैः १९ यदृच्छयागतांतत्रददर्शप्रमदोत्तमाम् ॥ भृत्यैर्दशभिरायांतीमेकैकशतनायकैः २०

णांशीतलतुंगस्थलपतज्जलधाराणांविप्रुष्मतातोयबिंदुमताकुसुमाकरसौरभवतावायुना चलंतःप्रवालायेषुतेतथातेचविटपि नश्चलत्प्रवालविटपिनस्तैर्युक्तानांनलिनीतटानांपद्माकरतीराणांसंपदोयस्मिंस्त त्तथातस्मिन् १८ आबाधामहतीपीडेत्यभिधानं अनाबाधेउपद्रवरहितेकोकिलकूजितानामात्राविशेषैरेहिआविशेत्याहूतमात्मानंनिरूपयति अन्यत्रप्राकारोदेहचर्म उपवनंरोमादि अट्टालतन्मध्येमे दोवसादि परिखामांसबाहिस्त्वक् तोरणस्थानीयोबाहुः अंगुल्यःपताकाःपार्श्वद्वयस्योर्ध्वमुखवंशस्यास्थिवातोरणं शृंगंशृंगस्थानीयंकर्णादि गुहाःउदरादिप्रदेशाःनीलवैदूर्याद्यैस्तोरणविशेषैःसमलंकृतं हर्म्यैस्थलीस्थानीयंचर्मादि भोगसाधनत्वाद्भोगवती सभाहृदय सर्वदेवानांनिवासस्थानीयत्वात् चत्वरंनाडीसंधिः रथ्याब्रह्मनाडी आक्रीडाहस्तःआयतनानींद्रियगोलकानि आपणोवाक् चैत्यंमस्तकं ध्वजःकेशपाशःविद्रुमवेदीरत्नाद्यलंकृतकटिप्रदेशः । बाह्योपवनंदेहबाह्यविषयोद्यानं तस्यरमणीयतांवर्णयति दिव्येत्यादिना वक्ष्याद्यध्यात्मार्थोवर्णनीयः बाह्येत्युक्तत्वात् प्रकर्षेणमदयंतीतिप्रमदाः वैषयिक्योबुद्धयस्तासांमध्येउत्कृष्टतमोस्थानंपुरुषाणांयस्याःसाप्रमदोत्तमा प्रधानेत्युक्ते आत्मानात्मविवेकविचक्षणाबुद्धिरित्यर्थःस्यात् सचानुपपन्नः तांबुद्धिंविहायवैषयिकींबुद्धिंप्राप्यमुग्धोभूदित्यर्थः अन्यथाऽप्रतीतएव कीदृशींदशभिर्भृत्यैर्ज्ञानकर्मेंद्रियसंज्ञैःसहागच्छंतीतिच कीदृशाः । एकैकस्यशतमित्यनंताः यावृत्तयस्तासांनायकाश्चकेचनवृत्तिविशेषास्तैर्युक्तैः १९ २०

१ स्पष्टंचैतदग्रे एकविंशतितमश्लोक टीकाया प्रमाणेन ।

अत्रपुरंजनस्ययेभृत्यायाश्चभार्याद्यास्तेसर्वेपिमानुषेंद्रियाभिमानिनः गायत्र्याद्यादेवेंद्रियतद्वृत्तीनामभिमानिन्यइति तदुक्तं येपुरंजनभृत्याद्याभार्याद्याःसर्वएवच तेपिमानुषबुद्ध्यादेर्विज्ञेयाअभिमानिनः। गायत्र्याद्यास्तुदेवानांतेपिचैतेषुसंस्थिताः। अलक्ष्मीद्वापराद्यास्तुआसुरास्तेपिमानुषाइति तेषांसर्वेषांपरिवृढोमनोनामाजीवोवा तत्तद्विषयवैचित्र्यमपेक्ष्यमनसोबहुरूपत्वं जीवस्यतुयोनीनांवैचित्र्यात् २१ पंचशीर्षाहिनाप्राणादिपंचवृत्त्याख्यशिरसामुख्यप्राणाख्यसर्पेणप्रतीहारेणद्वारपालकवद्वर्तमानेन ऋषभंपतिंस्वकृत्यनुकूलवृत्तिलक्षणंपुरुषमित्यर्थः अतएवाप्रौढामनूढामपरिगृहीतपाणिमिव स्थितामित्यर्थः कामरूपिणींविषयवैचित्र्यात्तत्तदाकारानुमिताकाराम् २२ उन्नताभिमानलक्षणनासिकां सुदतींविषयवृत्तिलक्षणदंतां बालांसुकुमारवृत्तिं बाह्याभ्यंतरवृत्तिलक्षणाभ्यांशोभनाभ्यां वरंवरणीयमाननंचेष्टायस्याःसातथातां अनचेष्टायामितिधातुः समंयथातथाविन्यस्ताभ्याकल्पिताभ्याबाह्यांतःकरणविशेषाभ्यांसकल्पविकल्पभेदेनद्वाभ्यांमनोरूपाभ्यांकुंडलाश्रियविषयेषुपरिवर्तनश्रियंबिभ्रतींवर्तयंतीम् २३ पिशंगाविषयोपरक्तानीवीआच्छादनवृत्तिर्यस्याःसातथातां सुश्रोणींसुष्ठाश्रयवृत्तिमतीं श्यामांतमोगुणप्रचुरां कनकमेखलारजोगुणलक्षणसुवर्णकांची पद्भ्यांरजस्तमोविकृतवृत्तिविशेषाभ्यांनूपुरैःशिशुकलभाषणलक्षणैः क्वणद्भ्यामित्यादिप्रयोगाल्लक्षणावृत्त्याऊहनीया नवाच्यवृत्त्या क्वचिच्चानयेति क्वचित्सद्वृत्तिविषयत्वादेवतामिवेति २४ व्यंजितकैशोरौ अभिव्यज्जि

तेषांपरिवृढो राजन्सर्वेषांबलिमुद्वहन् ॥ सखीकाणांसखातस्याबहुरूपोग्रणीःस्त्रियः २१ पंचशीर्षाहिनागुप्तांप्रतीहारेणसर्वतः ॥ अन्वेषमाणामृषभमप्रौढांकामरूपिणीम् २२ सुनासांसुदतींबालांसुकपोलांवराननाम् ॥ समविन्यस्तकर्णाभ्यांबिभ्रतींकुंडलश्रियम् २३ पिशंगनीवींसुश्रोणींश्यामांकनकमेखलाम् ॥ पद्भ्यांक्वणद्भ्यांचलतींनूपुरैर्देवतामिव २४ स्तनौव्यंजितकैशोरौसमवृत्तौनिरंतरौ ॥ वस्त्रांतेननिगूहंतींव्रीडयागजगामिनीम् २५ तामाहललितांवीरःसव्रीडस्मितशोभिनीम् ॥ स्निग्धेनापांगपुंखेनस्पृष्टःप्रेमभ्रमद्भ्रुवा २६ कात्वंकंजपलाशाक्षिकस्यासीहकुतःसति ॥ इमामुपपुरींभीरुर्किंचिकीर्षसिशंसमे २७ कएतेनुपथाएतएकादशमहाभटाः ॥ एताववाललनाःसुभ्रुकोयंतेऽहिःपुरःसरः २८ त्वंह्रीर्भवान्यस्यथवाक्रमापतिंविचिन्वतीकिंमुनिवद्रहोवने ॥ त्वदंघ्रिसाम्याप्तसमस्तकामःक्वपद्मकोशःपतितःकराग्रात् २९

तमध्यमावस्थौ मध्यमांवुद्धिसंस्थामित्युक्तेः ध्वनस्तनशब्दइतिधातोःस्तनौशब्दौ समवृत्तौवर्णवृत्तलक्षणोपेतौ निरंतरमेकास्मिन्नेववृत्तोविद्यमानौगुरुलघुभेदराहितावित्यर्थःव्रीडयावृत्तिविशेषेणवस्त्रांतेनवसआच्छादनइतिधातोराच्छादनशीलवृत्तिभागेननिगूहंतीमनभिव्यक्तिंकुर्वाणांगजगामिनी गजवदूर्ध्वमूलाधारादायांतींबुद्धिम् २५ तामाहेति। स्वकार्यविषयेप्रवर्त्तयितुमभिमुखीचकार वीरोविशिष्टप्राणबलोपेतःसव्रीडस्मितशोभिनींस्वकार्याभिमुखीं अपांगप्रेमेत्यादिनापितत्तद्योगवृत्तिविशेषंलक्षयति प्रेम्णाभ्रमतीभ्रूःप्रेमभ्रमद्भ्रूस्तया २६ कात्वमित्यादिलोकानुकारवचनभ्रांत्याप्रलापोवाउपपुरीमित्यनेनज्ञायतेअन्यथोपपुरीतिह्रस्वत्वेनप्रयोगःस्यात् देहसमीपेवर्तमानाम् २७ अनुपथाःस्वमार्गमनुवर्तमानाः येइमेमनसासहएकादशभटाएते ललविलासइतिधातोः। ललनाविलासोपेतावृत्तिविशेषाःहिगतावितिधातोः। अहिरगतः सहव्रजः। पुरःसरोनासिकारंध्रचरःश्वासः २८ त्वंह्रीरित्यादिकमनुकरणं लज्जावृत्तिविशिष्टत्वात्ह्रीः। सकल्पवृत्त्याभवानीति वचनवृत्त्यावाक् रमणवृत्त्यारमापतिंदेहस्वामिनं वनेदेहलक्षणेवासनावनेमुनिवन्मनोवत् त्वदंघ्रिसाम्येनाप्ताःसमस्ताःकामायेनसतथा अधिरघिलघिगत्यर्थाइतिधातोः यथा अंघ्र्योर्गतिसाधनत्वं तथामनसोपि मनसासंकल्प्यपुरुषस्यविषयोपगमनात् पद्मकोशः कंदुकलक्षणमनः कराग्राद्वृत्तिविशेषात्पतितोगतः क्वकांवृत्तिमुपगतइति बाह्यार्थःस्पष्टः २९

हेवरोरुयदित्वमासांह्रीमुखानांवृत्तिविशेषाणामन्यतमावृत्तिविशिष्टानासि किंतुस्थिरवृत्तिविशिष्टासि भुविसत्कर्मणिस्पृक्आशावतीत्वर्दभ्रकर्मणामहापराक्रमवतावीरवरेणमयासाकमिमांपुरींदे हलक्षणामलंकर्तुमर्हसि कथमिवयज्ञपुंसाश्रीनारायणेनसहश्रीःपरंलोकंवैकुंठाख्यमिवेत्यन्वयः अदभ्रकर्मणेतिकर्मानंतर्यलक्षयति ३० हेशोभनेव्रीडयासहितोहासःव्रीडाहासस्तेनयुक्तेनेक्षणेनावि भ्रमंत्यौभ्रुवौयस्याःसातथातस्यास्तवसकाशादुपसृष्टःप्राप्तएषमनोभवोमनसोजातोरागलक्षणोवृत्तिविशेषो भगवांस्ताभिःपूज्योमामांप्रबाधते स्वानुकूलकर्मणायःसन्नद्धंकरोति यद्यस्मादथतस्मा दनुगृहाणेत्यन्वयः कथंभूतं मामपांगेनशरीररहितेनवृत्तिविशेषेणविखंडितानींद्रियाणियस्यसतथातम् ३१ हेशुचिस्मितेनिर्मलविलासे त्वदाननंतवचेष्टाविशेषंमेदर्शयेत्यन्वयः सुभ्रुशोभना भ्रूभ्रमणशीलेविषयेषुयस्यतत्तथासुतरां शोभनंलोचनमालोचनंयौक्तिकंज्ञानंयस्यतत्तथा ततस्तर्हिकिमितिनप्रकाशतइत्यतउक्तं व्यालंबीति व्यालंबिनामविस्रंसिनांचंचलानांनीलालकोपमवर्णा नतामसानांवृत्तिविशेषाणांवृंदेनसंवृतंगूढं तस्मान्नप्रकाशतइत्यर्थः तर्हिकथंदर्शनमितितत्राह उन्नीयेति तामसवृत्तिविशेषान्पृथक्कृत्य पुनरपिकीदृशं वल्गुसुंदरंवाचकंवक्त्रंवाक्यंयस्यतत्तथा यदाननंव्रीडयावृत्तिविशेषेणममानभिमुखंनसंमुखंतदितिशेषः ३२ नरःपुरुषस्तत्संबंधिनीनारीवैषयिकीबुद्धिः हसंतीउल्लसंती विशिष्टईरोज्ञानंयस्यसवीरस्तमपिमोहयितुंशीलमस्याअस्तीतिवीरमोहि

नासावरोवन्यतमाभुवि स्पृक्पुरीमिमांवीरवरेणसाकम् ॥ अर्हस्यलंकर्तुमदभ्रकर्मणालोकंपरंश्रीरिवयज्ञपुंसा ३० यदेषमापांगविखंडितेंद्रियंसव्रीडहासेक्षणविभ्रमद्भ्रुवः ॥ तवोपसृष्टोभगवान्मनोभवःप्रबाधतेथानुगृहाणशोभने ३१ त्वदाननंसुभ्रुसुतारलोचनंव्यालंबिनीलालकवृंदसंवृतम् ॥ उन्नीयमेदर्शयवल्गुवाचकंयद्व्रीडयानाभिमुखंशुचिस्मिते ३२ इत्थंपुरंजनंनारीयाचमानमधीरवत् ॥ अभ्यभाषततंवीरंहसंतीवीरमोहिनी ३३ नविदामवयंसम्यक्कर्तारंपुरुषर्षभ ॥ आत्मनश्चपरस्यापिगोत्रंनामचयत्कृतम् ३४ इहाद्यसंतमात्मानंविदामनततःपरम् ॥ येनेयंनिर्मितावीरपुरीशरणमात्मनः ३५ एतेसखायःसख्योमेनरानार्यश्चमानद ॥ सुप्तायांमयिजागर्तिनागोयंपालयन्पुरीम् ३६ दिष्ट्यागतोसिभद्रंतेग्राम्यान्भोगानभीप्ससे ॥ उद्वहिष्यामित्वांस्नेहंस्वबंधुभिररिंदम ३७ इमांत्वमधितिष्ठस्वपुरींनवमुखींविभो ॥ मयोपनीतान्गृह्णानःकामभोगाञ्छतंसमाः ३८ कान्नुत्वदन्यंरमयेदरतिज्ञमकोविदम् ॥ असांपरायाभिमुखमश्वस्तनविदंपशुम् ३९

नीति ३३ यदुक्तंकस्यासीतितत्राह नेति हेपुरुषश्रेष्ठकर्तारमुत्पादकंभर्तारंपोषकंवासम्यग्लक्षणवत्तयानाविदामनजानीमहे गुणवदाश्रयःकश्चिदस्तीतिसामान्यमेवनतुविशिष्टमित्यतःसम्यगिति किंचात्मनोममपरस्योत्पादकस्यापियथानामकृतंयच्चगोत्रंतदपिनजानीमहइत्यन्वयः अनामगोत्रमितिश्रुतेः ३४ तर्हिकिमपिनवेत्सिचेद्बुद्धित्वहानिरितितत्राह इहेति इहसंतमात्मानंमामहमि त्यद्येदानींजानीमहे उत्तरकालेसंदेहःकर्मवशात् ततःपरंततोन्यत्किमपिनविदामइत्यन्वयः तस्मात्परमीश्वरंनविद्मःयेनेश्वरेणममशरणंनिवासयोग्येयंपुरीविरचितेतिवा ३५ केतनुपथाइ तितत्राह एतइति ३६ स्वबंधुभिरिंद्रियैः ३७ हस्तपादयोरेकत्वेननवत्वं मुखानिद्वाराणि शतंसमाइत्यनेनशतायुर्वैपुरुषइतिश्रुतेः मनुष्याणांशतायुष्ट्वनिर्देशान्मनुष्यशरीरमिहाभिप्रेतम् ३८ तत्रहिज्ञानोत्पत्तिःकुतइतितत्राह कान्विति काबुद्धिस्त्वदन्यंमनुष्यशरीरप्रविष्टंचेतनंविहायान्यंपश्वादिशरीरगतंरमयेत्सुखिनंकुर्यादित्यन्वयः कुतइत्यतउक्तं अरतिज्ञमिति यस्त्वात्मरति रेवस्यादात्मतृप्तश्चमानवइतिस्मृते परमात्मरतिज्ञानरहितं शब्दादिविषयरतिज्ञानहीनंवा तदपिकुतइत्यतउक्तं अकोविदमिति अपण्डितइत्यर्थः पांडित्यभावःकथमित्यत्राह असांपरायेति सांप रायोमोक्षस्तत्राभिमुखोनभवतीत्यसांपरायाभिमुखस्तं युद्धाभिमुखकामोनज्ञानाभिमुखत्वंकथमित्यतउक्तमश्वस्तनविदमिति श्वस्तनंभविष्यन्नवेत्तीत्यश्वस्तनवित्त नविदुःश्वस्तननलोकांल्लोकावितिश्रुतिः

श्वस्तनस्त्वमपीदृशमितिनवेत्तीत्यश्वस्तनवित्त्वं वा कोसावेवंविधइत्युक्तंपशुमिति तत्त्वज्ञानरहितं अत्रसद्बुद्धचसद्बुद्धीद्वेयथासंभवंविशेषणैस्तत्तदर्थतयाज्ञातव्येअसद्बुद्धिविवक्षायांवाशुपताागमज्ञानशून्यं अन्यत्रोक्तार्थं असद्बुद्धिपक्षेपिस्वमतानुसारेणमोक्षादिकंस्वस्यैवार्थंतइदंसमस्तमुपपन्नमिति ३९ इतोपिश्वस्तनोपिनास्त्येवेत्याह धर्मइति अत्रभवति धर्मादयःसंतीतिहियस्मात्तस्मात्प्रजानंदः पुत्रसुखममृतंमोक्षः अन्योन्यमविरोधेनधर्माद्यनुष्ठाननसुशकामितिभावेनाह यानिति केवलिनोनिष्किंचनाउदरंभरिजनावा ४० सर्वाश्रमाणामुपजीव्यत्वातगृहाश्रमएवत्याथानि याह पितृदेवेति आत्मनोस्यदेहस्यक्षेम्यंमोक्षयोग्यंशरण्यंवदंतीतियत्तस्मादितिशेषः ४१ किंबहुनोक्तेनफलितवक्तीत्याह कानामेति वदान्यंपुत्रकलत्राद्यभीष्टदानशीलंस्वयंप्राप्तत्वात् ४२ त्वादृशाभित्युक्ताकाचिद्विशिनष्टि कस्यामनइति अनाथवर्गस्यास्मदादेराधिमनोदुःखंमलमपोहितुंचरसि घृणयादययोद्धतमुज्जृम्भितंयत्स्मितंतत्पूर्वकोयोऽवलोकस्तेनदर्शनेनकस्याःस्त्रियाः ४३ परमफलितमाह इतीति समयप्रमाणपूर्वकंसंमुह्यसंवादंकृत्वादेहमाप्तेःपूर्वंतदनंतरंवा बाह्यार्थविवक्षयैतद्वचः पुरींदेहं शतंसमा इति शतंवर्षाण्यभ्यार्छादितिश्रुतेरर्थमनुकरोति मुदहर्षइतिधातोःहर्षशोकयोःसुखदुःखवद्द्वंद्वत्वादुभयंपर्यायेणबुद्धिपुरुषौप्राप्तवंतावित्यर्थः ४४ तत्रप्रथमंमोदप्रकारमाह उपगीयमानइतिजाग्रदाद्यवस्थायांतत्रतत्रप्रतींद्रियविषयगायकलक्षणैःशब्दादिभिर्विषयैरुपगीयमानःसेव्यमानः स्वप्नावस्थायांस्त्रीभिःकेवलंमनोवृत्तिलक्षणाभिःपरिवृतःस्त्रीभिर्वायानैर्वाइतिश्रुतेः शुचौतन्निमित्तेशोकेप्राप्तेशीतलामगाधतोयधारामिवसुषुप्तिकालेसच्छब्दवाच्यांब्रह्मस्वरूपांरथांतिमाविशत् सुप्तावस्थायामभूदित्यन्वयः ललितंयथा

धर्मोह्यत्रार्थकामौचप्रजानंदोऽमृतंयशः ॥ लोकाविशोकाविरजायान्नकेवलिनोविदुः ४० पितृदेवर्षिमर्त्यानांभूतानामात्मनश्चह ॥ क्षेम्यंवदंतिशरणंभवेस्मिन्यद्गृहाश्रमम् ४१ कानामवीरविख्यातंवदान्यंप्रियदर्शनम् ॥ नवृणीतपतिंप्राप्तंमादृशीत्वादृशंस्वयम् ४२ कस्यामनस्तेभुजगेंद्रभोगयोःस्त्रियोनसज्जेद्भुजयोर्महाभुज ॥ योऽनाथवर्गाधिमलंघृणोद्धतस्मितावलोकेनचरस्यपोहितुम् ४३ नारदउवाच ॥ इतितौदंपतीतत्रसंमुद्यसमयंमिथः ॥ तांप्रविश्यपुरींराजन्मुमुदातेशतंसमाः ४४ उपगीयमानोललितंतत्रतत्रचगायकैः ॥ क्रीडन्परिवृतःस्त्रीभिर्हृदिनीमाविशच्छुचौ ४५ सप्तोपरिकृताद्वारःपुरस्तस्यास्तुद्वेअधः ॥ पृथग्विषयगत्यर्थंतस्यांयःकश्चनेश्वरः ४६ पंचद्वारस्तुपौरस्त्यादक्षिणैकातथोत्तरा ॥ पश्चिमेद्वेअमूषातेनामानिनृपवर्णये ४७ खद्योताविर्मुखीचप्राग्द्वारावेकत्रनिर्मिते ॥ विभ्राजितंजनपदंयातिताभ्यांद्युमत्सखः ४८

तथा अन्यत्रशुचौऋतुविशेषे सतासोम्यतदासंपन्नोभवतीतिश्रुतेः सत्पुरुषःस्त्रीशब्दवाच्यैर्भक्त्यादिभिःपरिवृतःक्रीडन्विहरन्कालंयापयन् हृदिनींहृदिन्याब्रह्मनाड्यांहृदयस्थानेष्टदलपद्मेस्थितम् श्रीनारायणमाविशद्ध्यायादित्यर्थः ४५ देहाख्यंपुरंप्रसिद्धपुरसाम्येनवर्णयति सप्तेति तस्याःपुरउपरिसप्तद्वारःकृताः द्वेनेत्रेद्वेनासिकेकर्णौवदनंचेति अधोद्वेपायूपस्थे इतिकृत्यमाह विषयगत्यर्थमिति रूपादिविषयज्ञानार्थंनिर्मिताइत्यर्थः तस्यांपुर्यांकश्चनेश्वरः अनामरूपोलोकविलक्षणःश्रीनारायणोस्तीत्यन्वयः। जीवोवा जगत्सामर्थ्योपेतत्वादीश्वरइत्युच्यते देहस्वामित्वाद्वा अल्पशक्त्यादिमत्त्वात्तुच्छत्वेनयःकश्चनेति ४६ तत्रापिविभागमाह पंचेति तासामुपरिद्वारांमध्येपौरस्त्याःपुरस्ताद्भवाःपंचद्वारानेत्रादयइत्यर्थः पश्चाद्द्वे एकादक्षिण कर्णलक्षणादक्षिणा तथोत्तरावामकर्णलक्षणा पश्चिमेद्वेअधोभागेद्वेपायूपस्थेअमूषांनवद्वारां ४७ खेआकाशेसतिद्योततेरूपंगृह्णातीतिखद्योता खद्योतवद्द्योततइतिवा दक्षिणचक्षुर्लक्षणा आविःप्रकाशेसतिमुखयत्यभिमुखीभवतीतिसाविर्मुखीप्रकाशमुखीनन्नमोमुखीतमसिरूपग्रहणाभावादितिवामचक्षुर्लक्षणा ताभ्यांविभ्राजितंप्रकाशितंजनस्यद्रष्टुःपदमालंबनंरूपाख्यंयातिविषयीकरोतिगृह्णातीत्यर्थः कथंभूतः द्युमानादित्यश्चक्षुर्लक्षणःसखायस्यसतथा चक्षुरिंद्रियसहितइत्यर्थः द्युमानादित्यस्तस्यावासहेतुत्वाच्चक्षुषोपितनाम आदित्यश्चक्षुर्भूत्वाक्षिणीप्राविशदितिश्रुतेः आदित्योहवैचक्षुस्तेनानुगृहीतंरूपंगृह्णातीतिच ४८

नलोनामश्वासःसोस्याअस्तीतिनलिनीनलोदस्नामिधेयोस्याविद्यतइतिनालिनी नलनालौश्वासोच्छ्वासौतयोःसंचारेहेतुत्वान्नलिनीनालिनीतिद्वेगोलकेनासिकारंध्रे अवागुपरितिर्यक्धुनोतीत्यवधूतोवा
युः घ्राणेंद्रियाभिमानीतेनप्रेर्यमाणंघ्राणेंद्रियमपितच्छब्दवाच्यंतदेवसखायस्यसतथा घ्राणेंद्रियसहितइत्यर्थः सौरभंविषयंगंधलक्षणंगृह्णाति ४९ पुरस्तान्मुख्यानामद्वाःआस्यच्छिद्रलक्षणास्तिपुरश
ब्दःपुरंजनस्तयाद्वाराआपणबहूदनौ पणव्यवहारइतिधातोः आपणोवदनव्यापारः बहूदनोनानाविधभोज्यजातम् तौयातिव्यवहरतिअभ्यवहरतिच रसज्ञोजिह्वेंद्रियंविपणोवागिंद्रियंताभ्यामन्वितः।
५० नाम्नापितृभूःपावृत्वात्पितरोदेवाःप्रियाभवंत्यस्ययजमानस्यदक्षिणकर्णलक्षणा शरीरलक्षणायाःपुर्याद्वारस्थितेनदक्षिणकर्णलक्षणेनद्वारेणउत्क्रांतः पुरंजनोयजमानोदक्षिणपांचालंदक्षिणानांदे
वानांलोकलक्षणंराष्ट्रंयातिप्राप्नोति पंचेंद्रियाण्यलंपातिभूषयति अलभूषणइतिधातोः पंचेंद्रियाणामलंबुद्धिहेतुत्वाद्वेतिवा पुरंब्रह्मलक्षणंजनयतिप्रादुर्भावयतिप्रकाशयतीतिपुरंजनः तत्त्वज्ञानीदक्षिण
पांचालंनिवृत्तशास्त्रंपात्यवगंतुमितिवा दक्षिणस्तत्त्वज्ञापनसमर्थः इतिहासादिनासहपंचसंख्योपेतोवेदः सएवालंतत्त्वज्ञानायनान्यापेक्षेतिकृत्वा मध्यमपुरंजनोदक्षिणपाचालपचविषयसंज्ञंराष्ट्रंयाति र
तुमिवायम् । पंचानांशब्दानांसमूहःपांच.सएवालंभोक्तुमितिबुद्धिहेतुत्वादितिकृत्वा सर्वत्राप्ययमेवसखेत्याह श्रुतधरेति श्रुतंलोकंशास्त्रंवाविषयंवाधारयतीतिश्रुतधरःश्रोत्रेंद्रियतेनसख्यासहितः ५१
पुर्यावामकर्णलक्षणादेवभूर्नामद्वास्थितः प्रजादिरूपेणक्रीडादिगुणोपेतत्वादेवःपितृगणःप्रियोभवत्यस्यश्राद्धादिकर्तुरिति तेनोत्तरेणवामकर्णलक्षणद्वारेणोत्क्रांतःपुरजनः उत्तरपाचालमूर्ध्वलोकप्राप्ति

नलिनीनालिनीचप्राक्द्वारावेकत्रानिर्मिते ॥ अवधूतसखस्ताभ्यांविषयंयातिसौरभम् ४९ मुख्यानामपुरस्ताद्वास्तयापणबहूदनौ॥ विषयौयातिपुरराड्रसज्ञविपणान्वितः ५० पितृभूर्नृपपुर्याद्वार्दक्षिणेनपुरंजनः ॥ राष्ट्रंदक्षिणपांचालंयातिश्रुतधरान्वितः ५१ देवभूर्नामपुर्याद्वाउत्तरेणपुरंजनः ॥ राष्ट्रमुत्तरपांचालंयातिश्रुतधरान्वितः ५२ आसुरीनामपश्चाद्वास्तयायातिपुरंजनः ॥ ग्राम्यकंनामविषयंदुर्मदेनसमन्वितः ५३ निर्ऋतिर्नामपश्चाद्वास्तयायातिपुरंजनः ॥ वैशसंनामविषयंलुब्धकेनसमन्वितः ५४ अंधावमीषांपौराणांनिर्वाक्पेशस्करावुभौ ॥ अक्षण्वतामधिपतिस्ताभ्यांयातिकरोतिच ५५ स्वयंत्वंतःपुरगतोविषूचिनासमन्वितः ॥ मोहंप्रसादंहर्षंवायातिजायात्मजोद्भवम् ५६

हेतुत्वादुत्तराः उत्तरंतिवितरंतिददतीत्युत्तराःपितरस्तेषांलोकलक्षणंराष्ट्रंयाति अत्रापिपूर्वोक्तेनसख्योपेतः पुत्रलक्षणंपुरंजनयतीतिपुरुषप्रजननकर्मालोकोजीवः उत्तरउत्कृष्टंपांचालंप्रवृत्तशास्त्रमितिवा
अन्यस्तुपूर्वोक्तएव किमेतत्प्रतीतार्थपरित्यज्यव्यत्यस्यकथनेकारणमितिचेदुच्यते दक्षिणश्रोत्रमार्गेणदेवलोकंव्रजत्यसौ । वामश्रोत्रेणपितृणामितिवेदविदोविदुरितिप्रमाणम् ५२ असुरजनहितत्वा
दासुरीनामपश्चाद्वाःशिश्नलक्षणास्ति तयाद्वाराग्राम्यकंनाममैथुनकंसुखंविषयंयात्यनुभवति दुष्टोमदोयस्यसतथातेनोपस्थेंद्रियेणसहितः असूनामिंद्रियाणांरतिहेतुत्वादासुरीतिवा सुखहेतुत्वाद्वास
तामपिग्राह्यम् ५३ निर्गच्छत्यस्मात्पुरीषलक्षणमलमितिनिर्ऋतिनामाधोद्वाः गुदलक्षणंछिद्रं वैशसंपुरीषोत्सर्गलक्षणम् विषयम् पापंहिंसालक्षणनरकंवा लुब्धकेनावागिंद्रियेण कृच्छ्रेणमलमोचनादेषा
संज्ञा ५४ अमीषांद्वाराणांमध्येउभौनिर्वाक्पेशस्करौपादोहस्तश्चांधौज्ञानशून्यौभवतः । निर्गतंवाक्यंयस्मात्सनिर्वाक्यःपादःकर्तुःपुरुषस्योपकरणभूतत्वादुपस्करोहस्तः हसआदानइतिधातो
रादानृत्वात् अक्षाणींद्रियाणिविद्यंतेयेषांतेऽक्षण्वंतोजीवास्तेषापतिःपुरजनस्ताभ्यापादहस्ताभ्यांयातिकरोतिचेत्यन्वयः ५५ क्वचिद्भृदयाख्यांतःपुरगतोविष्वक्सर्वतोंचतीतिविषूचिमनस्तेनस
हितःस्वयंपुरंजनोजायात्मजेभ्यउद्भवोजन्मयस्यसतथा तमोमोहाद्यन्यतमयातीत्यन्वयः जायाभक्तिरात्मजोज्ञानंभक्तिज्ञाने तज्ज्ञानादुत्पन्नम् प्रसीदत्यनेनेतिप्रसादःपरमानंद. मुह्यत्यनेनेतिमोहोनिरयः
हृष्यत्यनेनेतिहर्षःस्वर्गस्तान् ५६

इदानीमसद्बुद्धेः प्रकारं दर्शयति एवमिति ग्राम्यकर्मसु कामा एव आत्मा मनो यस्य स तथा वंचितो दैवेनेति शेषः अबुधो विवेकशून्यः महिषी बुद्धिलक्षणा मतं हि नस्तीति महिषी अन्यत्र मतं ददातीति महिषी यद्यत्कर्म कारयितुमीहेत तत्तत्कर्म अन्ववर्तत अन्वकरोदेव ५७ तत्किं तदाह क्वचिदिति पिबंत्यां पातुमिच्छंत्यामित्याद्यूह्यं अनेन सद्बुद्धिरपि ध्वनितेति ज्ञातव्यम् ५८ ५९ ६० ६१ ६२ तथा हि महोऽस्यास्तीति महि ब्रह्म तस्मिन्नित्यां तत्सवसमुद्रेहरौ सीदति विषयीकृत्य वर्तत इति महिषी सद्बुद्धिस्तया विशेषेण प्रलब्धः प्राप्ताभीष्टकार्यलाभः सर्वप्रकृतिवंचितो वंचितसर्वस्त्रीजनस्वभावः अं विष्णुं जानातीत्यज्ञः सद्बुद्ध्यधीनत्वात्क्रीडामृगत्वमपि युक्तम् ६३ इति श्रीभागवते चतुर्थस्कंधे विजय० क्र० टीकायां पंचविंशोऽध्यायः २५ अधुना जाग्रदवस्थाप्रकारकथनेन संसारप्राप्तिं कथयन् जाग्रदवस्था प्रवेशं तावदाह स एकदेति स पुरंजनः एकदा स्वप्नविषयभोगप्रापककर्मक्षये जाग्रद्भोगप्रापककर्मागमने सति पंचेंद्रियद्वारेण सूनार्थम् आत्मा प्रतिष्ठते यस्मिन्निति पंचप्रस्थं वनं जाग्रद्विषयलक्षणकांतारम् अगात् अनुबभूव इत्यग्रेणान्वयः किं कृत्वा कथंभूत इति तदाह महेष्वास इति मह्यत इति महः प्रणवः स एवेष्वासो धनुर्यस्य स तथा यथार्थकथनमेतत् अन्यत्र महांश्चासौ इष्वासो यस्येति स्वर्णवर्णलक्षणरजोगुणाख्य वर्म यस्य स तथा अक्षये प्रवृत्तिनिवृत्तिलक्षणे इषुधी यस्य स तथा एकादशेंद्रियलक्षणाया अश्वम्वानाथः पंचेंद्रियाण्येवाश्वा यस्य स तथा तम् आशु गच्छत्यस्ति जायत इत्यादि विकारं परिणामलक्षणमित्याशुगस्तम्

**एवं कर्मसु संसक्तः कामात्मा वंचितोऽबुधः ॥ महिषी यद्यदीहेत तत्तदेवान्ववर्तत ५७ क्वचित्पिबंत्यां पिबति मदिरां मदविह्वलः ॥ अश्नंत्यां क्वचिदश्नाति जक्षत्यां सह जक्षिति ५८ क्वचिद्गायति गायंत्यां रुदत्यां रुदति क्वचित् ॥ क्वचिद्धसंत्यां हसति जल्पंत्यामनुजल्पति ५९ क्वचिद्धावति धावंत्यां तिष्ठंत्यामनुतिष्ठति ॥ अनुशेते शयानायामन्वास्ते क्वचिदासतीम् ६० क्वचिच्छृणोति शृण्वंत्यां पश्यंत्यामनुपश्यति ॥ क्वचिज्जिघ्रति जिघ्रंत्यां स्पृशंत्यां स्पृशति क्वचित् ६१ क्वचिच्च शोचतीं जायामनुशोचति दीनवत् ॥ अनुहृष्यति हृष्यंत्यां मुदितामनुमोदते ६२ विप्रलब्धो महिष्यैवं सर्वप्रकृतिवंचितः ॥ नेच्छन्ननुकरोत्यज्ञः क्लैब्यात्क्रीडामृगो यथा ६३ इति श्रीभागवते च० पंचविंशोऽध्यायः २५ नारद उवाच ॥ स एकदा महेष्वासो रथं पंचाश्वमाशुगम् ॥ द्विकर्मचक्रमेकाक्षं त्रिवेणुं पंचबंधुरम् १ एकरश्म्येकदमनमेकनीडं द्विकूबरम् ॥ पंचप्रहरणं सप्तवरूथं पंचविक्रमम् २ हैमोपस्करमारुह्य स्वर्णवर्माक्षयेषुधिः ॥ एकादशचमूनाथः पंचप्रस्थमगाद्वनम् ३**

द्वे पुण्यपापलक्षणे कर्मणी एव चक्रे यस्य स तथा तं एकः सूत्रात्मा वायुरक्षो यस्य स तथा तं त्रयः सत्त्वादिगुणा एव वेणवो ध्वजा यस्य स तथा तं पंचप्राणा एव विनतोन्नतप्रदेशा बंधुराख्या यस्य स तथा तं अनेन प्राणसंचारहेतवो नाडीविशेषाः कथ्यंते आधारो वा १ एको मन आख्यो रश्मिः प्रग्रहो यस्य स च एको बुद्ध्याख्यो दमनः सारथिर्यस्य स चैकरश्म्येकदमनस्तं बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । प्राणा बंधुरमुद्दिष्टा गुणाः सत्त्वादयो ध्वजाः । मूलवायुरक्षस्सज्ञश्चक्रे द्वे पुण्यदुष्कृते । इंद्रियाण्यश्वसंज्ञानि हृदयं नीडमुच्यते । शीतोष्णलक्षणौ द्वौ तु कूबरौ शब्दपूर्वकम् । पंचप्रहरणं सप्तत्वगाद्याः गुप्तयः स्मृताः । पृथिव्याद्या विक्रमाख्या देहाख्यो रथ उच्यते । इत्यध्यात्मयोगे एकहृदयलक्षणं नीडं यस्य स तथा तं द्वौ शीतोष्णलक्षणौ कूबरौ युगंधरौ यस्य स तथा तं पंचानामिंद्रियाणां पंच शब्दादिविषयाणां च सन्निकर्षलक्षणानि प्रहरणानि यस्मिन्स तथा तं पंचसूनासाधनानि प्रहरणानि यस्मिन्निति वा सप्तत्वगाद्या धातवो वरूथो गुप्तिर्यस्य स तथा तं पंचानां भूतानां विक्रमः प्रभावो यस्मिन्स तथा तम् २ हैमोपस्करं मुकुटकुंडलाभरणैः स्वर्णकारैर्भूषितं रथं रथगतावितिधातोः ज्ञानलक्षणगमनसाधनं देहम् आरुह्य अधिष्ठायेति अक्षये इषुधिः अनंतवृत्त्यालंबमानांतःकरणोपाधिरिति वा इषून् रागादीनस्यति निरस्यति श्लापयतीति इष्वासो ज्ञानलक्षणः सच महान् यस्य स इति वा ३

इषवश्चकार्मुकंचात्तंगृहीतंयेनसतथा रागाद्याइषवः । कार्मुकंविवेककार्यस्वकृत्यंमुंचत्यनेनेतिनिरुक्त्या । तत्रजाग्रद्विषयकानने मृगयांशब्दादिभोगलक्षणां चचारन्नुभुजइत्यन्वयः अतदर्हांत्यागायोग्यांसद्बुद्धिलक्षणांविहायासद्बुद्धिलक्षणांचादायेतिशेषइ.।विवेकः मृग्यंतइतिमृगाविषयास्तेषांव्यसनेभोगलक्षणेलालसउत्सुकः अन्यत्रहरिणानांहिंसनायोत्कटव्यापारवान् ४ आसुरींहिंसालक्षणांवृत्तिं घोरात्माविषयप्रसंगानिमित्तसंसारभयरहितः निर्गतोनुग्रहोदयालक्षणोयस्मात्सतथान्यहनत् हनहिंसागत्योरिति नितरामगच्छदसेवतेत्यर्थः निशितैर्बाणैःकपटमनोवृत्तिभिः वनेषुजाग्रद्विषयप्रदेशेषु वनगोचरांस्तत्रत्यशब्दादिविषयलक्षणान्मृगान् ५ ननु राज्ञोहिमृगयानिष्टातमयापशुहिंसया । राजामृगार्थीमृगयाचरन्दोषैर्नलिप्यतइति अग्नीषोमीयंपशुमालभेतेत्यादौविहितत्वात्कथमासुरींवृत्तिमाश्रित्येतिनिंद्यतइतितत्राह तीर्थेष्विति श्रुतिदृष्टेषु श्रुतिस्मृतिविहितेषुतत्तत्स्थानेषुराजास्वविहिताचारनिष्ठयाशोभमानोमेध्यान्पशूनजमृगप्रभृतीन्यावदर्थंयावत्प्रयोजनंलुब्धःफलार्थीहन्यादित्यलंनियम्यते विधिवाक्यैरितिशेषः अध्यात्मेतिप्रमाणकेषुतीर्थेषुशास्त्रेषुविहितान्मेध्यान्मेधयोग्यान्ज्ञानयोग्यान् पशून्गोसधर्मान्रमणीयान्विषयान्वनेविषयव्यवहारेवर्तमानोलुब्धोबुभुर्यावतादेहावस्थितिस्तावन्मात्रमलमत्यर्थंहन्याद्भुञ्ज्छेत्सेवार्थमितिशेषइतिनियम्यते शिक्षाविषयीक्रियतइति अलमितिविशेषणादलुब्धोलोकोपकारार्थंपशून्घ्नन् आत्मार्थादधिकमपिहननमपिकुर्वन्नदुष्यतीतितात्पर्यंज्ञापयते वदुक्तं उपकारःसतांयेनतत्कृत्वानैवदुष्यति । अतीवनिंदितमपिबहुहिंसायुगेववा । अथवाज्ञानिनःकर्मनदुष्टमपिलिप्यतइति ६ ननु नियतकर्माकरणेज्ञानिनोपि

चचारमृगयांतत्रदृप्तआत्तेषुकार्मुकः ॥ विहायजायामतदर्हांमृगव्यसनलालसः ४ आसुरींवृत्तिमाश्रित्यघोरात्मानिरनुग्रहः ॥ न्यहनन्निशितैर्बाणैर्वनेषुवनगोचरान् ५ तीर्थेषुश्रुतिदृष्टेषुराजामेध्यपशून्वने ॥ यावदर्थमलंलुब्धोहन्यादितिनियम्यते ६ यएवंकर्मनियतंविद्वान्कुर्वीतवानवा ॥ कर्मणातेनराजेंद्रज्ञानेनसनलिप्यते ७ अन्यथाकर्मकुर्वाणःकामरूढोनिबध्यते ॥ गुणप्रवाहपतितोनष्टप्रज्ञोव्रजत्यधः ८ तत्रनिर्भिन्नगात्राणांचित्रवाजैःशिलीमुखैः ॥ विप्लवोभूद्दुःखितानांदुःसहःकरुणात्मनाम् ९ शशान्वराहान्महिषान्गवयान्रुरुशल्यकान् ॥ मेध्यानन्यांश्चविविधान्विनिघ्नन्श्रममभ्यगात् १० ततःक्षुत्तृट्परिश्रांतोनिवृत्तोगृहमेयिवान् ॥ कृतस्नानोचिताहारःसंविवेशगतक्लमः ११

दुष्कर्मलेपःस्यादितितत्राह यएवमिति योनियतमनियतंवाविद्वान्ज्ञानश्चेवंविविधंपुण्यंपापंवाकर्मकुर्वीतनवाकुर्वीत सज्ञानीतेनोभयविधेनकर्मणानलिप्यते केनानिमित्तेनेत्यतउक्तंज्ञानेनेतिदयलेपाभावेज्ञानंकारणमित्यर्थः । तद्यथापुष्करपलाशआपोनश्लिष्यंतएवंविदिपापकर्मनश्लिष्यतइतिश्रुतेः अथवाज्ञानिनःकर्मनदुष्टमपिलिप्यतइतिस्मृतेश्च ७ अन्यपक्षेबाधकमाह अन्यथेति अन्यथाज्ञानाभावे । अनर्थोपिभवतीत्याह गुणप्रवाहइति ८ एवंप्रासंगिकीकथांसमाप्यप्रकृतमनुसरति तत्रेति तत्रविषयलक्षणेवनेचित्रवाजैरनेकांकुरमुखाख्यपक्षोपेतैः शिलीमुखैः शिलावत्दृढगुसैर्लपटेंद्रियमनोवृत्तिविशेषैर्निर्भिन्नगात्राणांमृदितनानावयवानांकरुणात्मनांपापनिमित्तेनमुक्तानामस्माकंपरलोकेपिनगतिरस्तीतिरुदितानामिवस्थितानांयथाशास्त्रमुक्तानांविषयाणांविप्लवोविनाशः सप्राप्तिलक्षणोभूदित्यन्वयः अन्यत्रव्यक्तं ९ शशान्वराहानितिमेध्यान्महिषानित्यादिनात्वमेध्यान् शशानतिशयितानंदलक्षणान्वरणीयत्वेनाहेयान्महिषान्महितंददातीति निरुक्त्या सनदानइतिधातुस्तस्माड्डप्रत्ययेसकारस्यमूर्धन्यादेशः गवयान्गतवयसः जरसंगतानितिशेषः रुरून्रोदनहेतून् शंसुखंविलापयतीतिशल्यकानित्येवमादिविषयान्निघ्नन्गच्छन्भुजानइत्यर्थः १० जाग्रद्विषयानुभूयसुषुप्तिप्राप्तिप्रकारमाह ततइति ततोजागरणान्निवृत्तःक्षुत्तृड्लक्षणमनोवृत्तिभ्यांव्याप्तः श्रांतः । हृल्लक्षणनाडीविशेषंप्राप्तःकृतंजाग्रद्विषयभागरजोमार्जनलक्षणंस्नानंयेनसः उचितआहारःस्वरूपसुखावाप्तिलक्षणोयस्यसतथा संविवेशसुप्तोभूदित्यन्वयः ११

स्वापात्पूर्वव्यापारमाह आत्मानमिति महिष्यांबुद्धौ अथवाधूपादिलक्षणवृत्तिभिरात्मानमंतर्यामिलक्षणंब्रह्मस्वरूपमर्हयांचक्रेसंपत्तिलक्षणमलंकारमकरोत् सताासोम्यतदासंपन्नोभवतीतिश्रुतेः सं पत्तिलक्षणालंकारयुक्तसर्वावयवः हृष्टइत्यादिनासुप्तावस्थाविशिष्टउच्यते अनेनस्वप्नप्राप्तिरपिनिरूप्यतइतिज्ञातव्यं तदावृत्त्याद्यवस्थानुभवःस्पष्टएव स्वप्नप्रापककर्मोद्रेकेसतिमहिष्यांबुद्धौमनआद भइत्युपपद्यते कस्वरूपसुखंदर्शयतिप्रकटयतीतिकंदर्पःस्वापस्तेनोत्कृष्टमानसंयस्यसतथा स्वप्नावस्थायामपिस्वापस्यसत्त्वात् १२ बुद्ध्याहितमनाःकिमकरोत्तत्राह नव्यचष्टेति गृहमेधिनी मुपात्तज्ञानवतीं गृहिणींनानावासनाकारमनोवृत्तिमतीं वरस्यहरेरारोहोविषयतयायस्याःसावरारोहातांशास्त्रीयांबुद्धिंनव्यचष्ट दर्शनंनामानिश्चयज्ञानंनोपैतीतिज्ञातव्यं स्वप्नस्यवासनात्मकत्वात्निर्णय ज्ञानवान्नाभूदित्यर्थः हेवेदिषन् प्राचीनबर्हिः अंतःपुरस्त्रियःइंद्रियवृत्तीर्मनोवृत्तीर्वाअपृच्छत् स्वप्नव्यापारमकरोत् १३ हेरामाइतिवृत्तयःसंबोध्यंते ईश्वरीबुद्धिः गृहसंपदःशरीरेंद्रियादिशोभाः बुद्धौवि द्यमानायांरोचंतेनान्यदेति १४ व्यंगेचक्राश्वादिरहितेरथे प्राज्ञोबुद्धिमान्रथीअंगलक्षणेनप्राणेनहीनेदेहेप्राज्ञःसुषुप्तिप्रवर्तकःपरमात्मा १५ पदेपदेऽनुक्षणंममप्रज्ञांदीपयतीभगवद्विषयज्ञानमुद्बोधयं ती यामामुद्धरतिसंसारादितिशेषः साललना शोभनाबुद्धिःक्ववर्ततइत्यन्वयः १६ बाह्यकथामनुसृत्योत्तरकथाप्रत्युत्तरमाह नरनाथेतियद्वचवस्यतियन्निश्चित्यतिष्ठतितन्नजानीमइत्यन्वयः निं

आत्मानमर्हयांचक्रेधूपालेपस्रगादिभिः ॥ साध्वलंकृतसर्वांगोमहिष्यामादधेमनः ॥ तृप्तोहृष्टःसुदृप्तश्चकंदर्पाकृष्टमानसः १२ नव्यचष्टवरारोहांगृहिणीं गृहमेधिनीम् ॥ अंतःपुरस्त्रियोपृच्छद्विमनाइववेदिषन् १३ अपिवःकुशलंरामाःसेश्वरीणांयथापुरा ॥ नतथैतर्हिरोचंतेगृहेषुगृहसंपदः १४ यदिनस्या द्गृहेमातापत्नीवापतिदेवता ॥ व्यंगेरथइवप्राज्ञःकोनामासीतदीनवत् १५ क्ववर्ततेसाललनामज्जंतंव्यसनार्णवे ॥ यामामुद्धरतिप्रज्ञांदीपयंतीपदेपदे १६ ॥ रामाऊचुः ॥ नरनाथनजानीमस्त्वत्प्रियायद्व्यवस्यति ॥ भूतलेनिरवस्तारेशयानांपश्यशत्रुहन् १७ ॥ नारदउवाच ॥ पुरंजनःस्वमहिषींनि रीक्ष्यावधुतांभुवि ॥ तत्संगोन्मथितज्ञानोवैक्लव्यंपरमंययौ १८ सांत्वयन्श्लक्ष्णयावाचाहृदयेनविदूयता ॥ प्रेयस्याःप्रेमसंरंभलिंगमात्मनिनाध्यगात् १९ अनुनिन्येऽथशनकैर्वीरोनुनयकोविदः ॥ पस्पर्शपादयुगलमाहचोत्संगलालिताम् २० नूनंत्वकृतपुण्यास्तेभृत्यायेष्वीश्वराःशुभे ॥ कृतागःस्वा त्मसात्कृत्वाशिक्षादंडंनयुंजते २१ परमानुग्रहोदंडोभृत्येषुप्रभुणार्पितः ॥ बालोनवेदतत्तन्विबंधुकृत्यममर्षणः २२ सात्वंमुखंसुदतिसुभ्र्वनुरागभारव्रीडा विलंबविलसद्धसितावलोकम् ॥ नीलालकालिभिरुपस्कृतमुन्नसंनःस्वानांप्रदर्शयमनस्विनिवल्गुवाक्यम् २३

रवस्तारेआस्तरणरहितेभूतलेपूर्णेभगवत्पादमूलेशयानांविषयाकुर्वाणांयथार्थवर्णनमेतत् १७ इदानीमसद्बुद्धिनिमित्तप्रवृत्तिप्रकारमाह पुरंजनइति प्राचीनकर्मवैचित्र्यात्प्रतिक्षणंवृत्तिभेदोऽपिप्रामाणिकएवे त्यतएतद्वचनमुपपद्यतइति अवधुतांसद्वृत्तिभिरितिशेषः तस्यावैषयिक्याबुद्धेःसंगेनस्वीकारेणतादृशकर्मणाप्राप्तेनोन्मथितंनष्टंज्ञानंयथार्थलक्षणंयस्यसतथा १८ प्रेयस्याबुद्धेःप्रेम्णासंरंभोहेसालक्षणोनाशः यस्तस्यालिंगंकारणमात्मानिस्वास्मिन्नाध्यगात्नज्ञातवान् रजसाकुलितांतरत्वात् रंभाहिंसायां १९ अनुनिन्यइत्यादिकथालंकारः अनुनयंनामविषयबुद्धिवश्यत्वप्रकटनं बुद्धेर्मनआदिचत्वार पादास्तेष्वंशद्वयंपस्पर्शस्वीकृतवान् मनोलक्षणउत्संगेसंभाविताामिदमेवस्वीकरणम् २० येयेषुकृतापराधेषुशिक्षालक्षणंदंडनकुर्वतेनूनंतेऽकृतपुण्याइत्यन्वयः २१ दंडस्यानिग्रहलक्षणत्वात् कथंप्र र्थ्यतइत्यतआह परमइति तर्हिलोकःकथंदुःखंमन्यतइति तत्राह बालइतिदंडस्यपापप्रायश्चित्तरूपत्वान्नजानातीत्यर्थः अनुतापादिवृत्तिविशेषइतिज्ञातव्यं २२ उपस्कृतंमंडितम् २३

भूसुरकुलात् ब्रह्मकुलात् क्रुद्धस्य मे सकाशाद्भीतभयं नष्टभयं तं न पश्ये २४ इतः पूर्वं वक्त्रादिकं विगततिलकादिकं न पश्यामीत्यन्वयः शुचाशोकाश्रुणोपहतौ सुजातौ कोमलौ २५ कुसुमास्त्रस्य कामस्य वेगेन विस्रस्तं श्लथितं पौंस्यं पौरुषं यस्य स तथा तं देवं रतिक्रीडादिकं रातिददातीति देवः पतिस्तं कृत्ये प्रयोजननिमित्ते मा मां उशती कामयमाना का स्त्री न भजेत २६ इति श्रीभागवते चतुर्थस्कंधे वि० टीकायां षड्विंशोध्यायः २६ ॥ ॥ ७ ॥ ॥ पुरंजननाम्नो जीवस्य जाग्रत्स्वप्नयोरन्यस्यामवस्थायां विषयप्रसरणमाह इत्थमिति विभ्रमैर्वृत्तिविशेषैः रेमे । विषयेषु व्यावृत्तवत्यां जयलक्षणवृत्त्यां सुषुप्तजन बुद्धिस्थितं १ रुचिरेण कमनीयेनांबरेण नानावसनेन संवृतां कृतं स्वस्त्ययनं स्वस्त्याशीर्वचनस्यायनं वृत्तिविशेषो यस्याः सा तथा तां तामसानां तामससंगमो सुखकारण इति द्योतनायैवमुक्तिः २ कया चिद्वृत्त्या परिरब्धवृत्त्यंतरा रुच्यकंधरः कंठो ग्रीवा कंधरा चेत्यभिधानं रहोनुमंत्रैर्भणितादिलक्षणवृत्तिभिरपकृष्टं चेतनस्वरूपज्ञानं यस्य स तथा इदं दिवा ज्ञानमियं निशाऽज्ञानमिति कालं रहो ज्ञानाज्ञान विशेषावस्थां प्रमदा वैषयिकबुद्धिरेव परिग्रहो यस्य स तथा ३ शयानस्तत्त्वमजानन्महार्हतल्पे ज्ञाननाशिनि वृत्तिविशेषे महिषीभुजोपधे बुद्धेरहंकारलक्षणवृत्तिशिरोधिष्ठाने तामेवामनुत कर्ताभोक्ता

तस्मिन्नदधे दममहं तव वीरपत्नि योन्यत्र भूसुरकुलात्कृतकिल्बिषस्तम् ॥ पश्ये न वीतभयमुन्मुदितं त्रिलोक्यामक्रुद्धस्य वै मुररिपोरितरत्रदासात् २४ वक्त्रं न ते वितिलकं मलिनं विहर्षसंरंभभीममविमृष्टमपेतरागम् ॥ पश्ये स्तनावपि शुचोपहतौ सुजातौ बिंबाधरं विगतकुंकुमपंकरागम् २५ तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य स्वैरंगतस्य मृगयाव्यसनातुरस्य ॥ का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्यमुशती न भजेत कृत्ये २६ इति श्रीभागवते चतुर्थस्कंधे षड्विंशोध्यायः २६ ॥ नारद उवाच ॥ इत्थं पुरंजनं सम्यग्वशमानीय विभ्रमैः ॥ पुरंजनी महाराज रेमे रमयती पतिम् १ स राजा महिषीं राजन्सुस्नातां रुचिरांबरसंवृताम् ॥ कृतस्वस्त्ययनां तृप्तामभ्यनंददुपागताम् २ तयोपगूढः परिरब्धकंधरो रहोनुमंत्रैरपकृष्टचेतनः ॥ न कालरंहो बुबुधे दुरत्ययं दिवा निशेति प्रमदापरिग्रहः ३ शयान उन्नद्धमदो महामना महार्हतल्पे महिषीभुजोपधे ॥ तामेव वीरोऽमनुत व्यवायतस्तमोभिभूतो न निजं परं हि तत् ४ तयैवं रममाणस्य कामकश्मलचेतसः ॥ क्षणार्धमिव राजेंद्र व्यतिक्रांतं नवं वयः ५ तस्यामजनयत्पुत्रान्पुरंजन्यां पुरंजनः ॥ शतान्येकादश विराडायुषोर्धमथात्यगात् ६ दुहितॄर्दशोत्तरशतं पितृमातृयशस्करीः ॥ शीलौदार्यगुणोपेताः पौरंजन्यः प्रजापते ७ स पांचालपतिः पुत्रान्पितृवंशविवर्धनान् ॥ दारैः संयोजयामास दुहितॄः सदृशैर्वरैः ८

सुखी दुःखीति तद्धर्मानात्मन्यमन्यत तत्र कारणमाह व्यवायत इति मैथुनलक्षणाज्ज्ञानवृत्तिविशेषात् इदमेवाह तम इति निजमात्मानं तत्परं ब्रह्मलक्षणं तत्त्वं नामन्यत निजमात्मीयमित्यभिधानं ॥ ४ ॥ वयः शुद्धज्ञानानंदरूपलक्षणं व्यतिक्रांतं गतप्रायमासीत् ५ अभिभूतनिजज्ञानस्य तस्य विषयबुद्धेर्नानावृत्त्युत्पत्तिप्रकारमाह तस्यामिति चक्षुरादीनि मनोंतानींद्रियाण्येकादश संज्ञानि विषयीकृत्य शतमनंताः परिणामवृत्तयो भवंति ताः शतान्येकादश पुत्रा उच्यंते बाल्यावस्थायां बुद्धिविस्ताराभावाद्यौवनावस्थायां तत्संभावनमपेक्ष्यायुषोर्धमगादित्युच्यते विषयमेव राजयतीति विराट् ६ परिणामानंतरं तु द्विवृत्तयो दुहितॄरित्युच्यंते पितृशब्दवाच्यानामिंद्रियाणां परिणामानां भ्रातृशब्दवाच्यानां ज्ञानानंदलक्षणयशसो नाशिनी कृ विक्षेप इति धातुः स्वजातिप्रसिद्धशीलौदार्यगुणयुक्ताः बाल्यविवक्षया संख्याकथनं तत्त्वने कत्वसंख्यैव पौरंजन्योऽनेकदेहजननहेतवः हे प्रजापते ७ पुत्रान्बुद्धिपरिणामान् दारैः परिणामानंतरचेष्टाभिः संयोजनं दुहितॄर्बुद्धिवृत्तीः सदृशैर्वरैर्वृत्तियोग्यविषयैः ८

पुत्राणांपुत्राअभवन्नितिपरिणतवृत्तिभ्योवृत्त्यंतराणीति पांचालेषुविषयेषु ९ तस्यरिक्थंविषयधनंहरंतीतितद्रिक्थहारास्तेषु नानावासनागृह्णातीतिगृहंतच्चकोशोमनस्तदुपजीव्यवर्ततइतिगृहकोशानुजीविनस्तेषु निगूढेनप्रविष्टेनममैतेपरिणामादयइतिकल्पितेनममत्वेनविशेषेणसक्तोनात्मानंपरंचजानातीत्यन्वयः १० देवान्काम्यफलदान्भूतपतीन्भैरवादीन् ११ एवंविधयाक्रिययायुक्तेषुकाम्येषुसक्तस्येतिशेषः हरौमनोयोगवत्सुज्ञानेषुएवमुक्तप्रकारेणप्रमत्तस्यतद्वार्तारहितस्येतिवा प्रियाहृद्यायोषितोयेषांतेतथातेषां विषयिणामपियोऽप्रियोनपेक्षितः १२ गंधर्वाणाकलाकाष्ठादीनास्त्वावयवानामधिपतिश्चंडोवेगोयस्यसतथेतिख्यातःसकालआससादेत्यन्वयःगंधर्वादिवसाः १३ गंधर्व्योरात्रयस्तावतीस्तावत्यः मिथुनीभूयवर्तमानामैथुन्यःसितादिवसाअसितारात्रयइतिसितासितपरिवृत्त्यापरिभ्रमणेनपुनःपुनरावर्तनेनकामान्विलुंपंतिक्षपयंतीत्यन्वयः १४ हर्तुंजीर्णबलांकर्तुंप्रजागरःप्राणःप्राणाग्नयएवैतस्मिन्पुरेजाग्रतीतिश्रुतेः प्राणबलाद्धृत्यापारायप्रवर्ततइत्यर्थः १५ सप्तभिःशतैर्विंशत्याअहोरात्रैःशतसमाःशतवर्षपर्यंतंयुयुधे तेषांपराक्रमंनिरुध्यस्वयंप्राणबलादेहमपालयदित्यर्थः १६ राष्ट्रेणविषयेणपुरेणदेहेनबांधवैरिंद्रियैःसहवर्तमानः १७ स्त्रीजितोबुद्ध्याऽविवेकप्रायः

पुत्राणांचाभवन्पुत्राएकैकस्यशतंशतम् ॥ यैर्वैपौरंजनोवंशःपांचालेषुसमेधितः ९ तेषुतद्रिक्थहारेषुगृहकोशानुजीविषु ॥ निगूढेनममत्वेनविषयेष्वन्वबध्यत १० ईजेचक्रतुभिर्विविधैर्दीक्षितःपशुमारकैः ॥ देवान्पितॄन्भूतपतीन्नानाकामोयथाभवान् ११ युक्तेष्वेवंप्रमत्तस्यकुटुंबासक्तचेतसः ॥ आससादसवैकालोयोऽप्रियःप्रिययोषिताम् १२ चंडवेगइतिख्यातोगंधर्वाधिपतिर्नृप ॥ गंधर्वास्तस्यबलिनःषष्ट्युत्तरशतत्रयम् १३ गंधर्व्यस्तावतीरस्यमैथुन्यश्चसितासिताः ॥ परिवृत्त्याविलुंपंतिसर्वकामाविनिर्मितान् १४ तेचंडवेगानुचराःपुरंजनपुरींयदा ॥ हर्तुमारेभिरेतत्रप्रत्यषेधत्प्रजागरः १५ सप्तभिःशतैरेकोविंशकेनशतंसमाः ॥ पुरंजनपुराध्यक्षोगंधर्वैर्युयुधेबली १६ क्षीयमाणेस्वसामर्थ्येएकस्यबहुभिर्युधि ॥ चिंतांपरांजगामार्तःसराष्ट्रपुरबांधवः १७ सएवपुर्यांमधुभुक्पांचालेषुस्वपार्षदैः ॥ उपनीतंबलिंगृह्णन्स्त्रीजितोनाविदद्भयम् १८ कालस्यदुहिताकाचित्त्रिलोकींवरमिच्छती ॥ पर्यटंतीनबर्हिष्मन्प्रत्यनंदतकश्चन १९ दौर्भाग्येनात्मनोलोकेविश्रुतादुर्भगेतिसा ॥ यांतुष्टोराजऋषयेपितादात्पूरवेवरम् २० कदाचिदटमानासाब्रह्मलोकान्महींगतम् ॥ वव्रेबृहद्व्रतंमांतुजानतीकाममोहिता २१ मयिसंरभ्यविपुलमदाच्छापंसुदुःसहम् ॥ स्थातुमर्हसिनैकत्रमद्याच्ञाविमुखोमुने २२ ततोविहतसंकल्पाकन्यकायवनेश्वरम् ॥ मयोपदिष्टमासाद्यवव्रेनाम्नाभयंपतिम् २३ ऋषभंयवनानांत्वांवृणेवीरेप्सितंपतिम् ॥ संकल्पस्त्वयिभूतानांकृतःकिलनरिष्यति २४

विषयेषुस्वपार्षदैरिंद्रियैरुपनीतंबलिंरूपादिविषयंगृह्णन्मधुभुक्कर्मफलभुक्कालनिमित्तंभयंनाज्ञासीदित्यन्वयः १८ अस्तिजायतेपरिणमतेवर्धतइतिचतुरूर्मिप्रकारप्राप्तिनिरूप्यप्रक्षीयतेविनश्यतीत्येतद्धकुर्जराप्राप्तिमाह कालस्येति कालात्जराजायतइतिकालस्यदुहितेति विशेषनामाश्रवणात्काचीदिति १९ या सात्मनःशरीरस्यदौर्भाग्यत्वेनसौंदर्याभावेनलोकेदुष्टोभगोयस्याःसातथेतिविश्रुतायांजरांतुष्टःपितायपातिःराजश्रेष्ठायपूरवेवरमदात् ताकश्चननप्रत्यनंदतेत्यन्वयः २० तुशब्दोप्यर्थे यामांबृहद्व्रतंब्रह्मचारिणंजानंत्यपिब्रह्मलोकान्महीमागतंवव्रइत्यन्वयः तत्रहेतुःकाममोहितेति २१ ततःकिमभूदितितत्राह मयीति २२ साकन्यायवनेश्वरंनानाव्याधीनांस्वामिनंनाम्नाभयंमृत्युंपतिंवव्रइत्यन्वयः २३ नरिष्यति नदश्यति २४

१ विंशकेनसहितैःसप्तभिः शतैः विंशत्याधिकसप्तभिः शतैरित्यर्थः ।

असन्नवग्रहआग्रहोपयोस्तौतथाबालौस्वकार्याज्ञौ । अनुशोचंतिसर्वइतिशेषः। कौतौयौलोकशास्त्रयोरविरोधतयोपनतंप्राप्तमर्थंभ्योनरातिनददातिदायंस्वीयंनेच्छतितावितिशेषः नन्वनेनलोक विद्विष्टंचेच्छास्त्रीयमपिनकर्तव्यमित्यायातंसमत्वेनसहोक्तेन तस्माच्छास्त्रंप्रमाणंतेकार्याकार्यव्यवस्थिताविन्यादिविधानंव्यर्थमितीयशंका अलौकिकंचशास्त्रीयंकर्तव्यंलौकिककुतः । लोकार्थशास्त्र हायातिनिरयंत्वितर·सुरानित्यनेनपरिहर्तव्या तस्माच्छास्त्रानुसारिलौकिकंकर्तव्यंनेतरादितितात्पर्यं इतर·शास्त्रानुकूललौकिककुर्वाण·सुरान्यातिस्वर्गादिपुरुषार्थंमाप्नोतीत्यर्थः २५ उपसंहरति अथोइति यस्मादिदंशास्त्रीयमथोतस्मात्संक्षिप्यस्वकार्यस्यकर्तव्यतामाह एतावानिति पौरुषःपुरुषानिष्ठः २६ तस्माद्दुर्भगत्वमनपेक्ष्यतद्वचनस्यादरप्रकारमाह कालकन्येति देवस्यविधातुर्गु ह्यंरहस्यंवक्ष्यमाणमर्थंसास्मितमभाषतेत्यन्वयः २७ तत्रभोगोपायमुपादिशति नाभिनंदतीति अयंलोकोऽसंमतांत्वानाभिनंदतीतियस्मात् २८ तस्मात्त्वमज्ञातगतिर्लोकंभुंक्ष्व २९ योयं ममभ्रातामज्वारः शैववैष्णवाभयलक्षणःसोऽप्रजोऽनपत्यस्त्वांप्रणेष्यतिग्रहीष्यतीत्यन्वयःभीमाभयंकराः सैनिकाःसेनापतयोयस्यससतथास·३० इतिभागवतेचतुर्थस्कधेविज०कृतटीकायासप्तविंशोध्यायः

द्वाविमावनुशोचंतिबालावसदवग्रहौ ॥ यल्लोकशास्त्रोपनतंनरातिनतदिच्छति २५ अथोभजस्वमांभद्रभजतींमेदयांकुरु ॥ एतावान्पौरुषोधर्मोयदार्तां ननुकंपते २६ कालकन्योदितांवाचंनिशम्ययवनेश्वरः॥ चिकीर्षुर्देवगुह्यंससस्मितंतामभाषत २७ मयानिरूपितस्तुभ्यंपतिरात्मसमाधिना॥नाभिनं दतिलोकोयंत्वामभद्रामसंमताम् २८ त्वमज्ञातगतिर्भुंक्ष्वलोकंकर्मविनिर्मितम् ॥ याहिमेपृतनायुक्तासोऽप्रजस्त्वांप्रणेष्यति २९ प्रज्वारोयंममभ्राता त्वंचमेभगिनीभव ॥ चराम्युभाभ्यांलोकेस्मिन्नव्यक्तोभीमसैनिकः ३० इतिश्रीभागवतेच०सप्तविंशोऽध्यायः २७ ॥ नारदउवाच ॥ सैनिकाभयना म्नोयेबर्हिष्मन्निष्टकारिणः ॥ प्रज्वारकालकन्याभ्यांविचेरुरवनीमिमाम् १ तएकदातुरभसापुरंजनपुरींनृप॥ रुरुधुर्भौमभोगाढ्यांजरत्पन्नगपालिताम् २ कालकन्यापिबुभुजेपुरंजनपुरींबलात् ॥ ययाभिभूतःपुरुषःसद्योनिःसारतामियात् ३ तयोपभुज्यमानांवैयवनाःसर्वतोदिशम् ॥ द्वार्भिःप्रविश्यसुभृ शंप्रार्दयन्सकलांपुरीम् ४ तस्यांप्रपीड्यमानायामभिमानीपुरंजनः ॥ अवापोरुविधांस्तापान्कुटुंबीममताकुलः ५ कन्योपगूढोनष्टश्रीःकृपणोविषया त्मकः ॥ नष्टप्रज्ञोहतैश्वर्योगंधर्वयवनैर्बलात् ६ विशीर्णांस्वपुरींवीक्ष्यप्रतिकूलाननादृतान् ॥ पुत्रपौत्रानुगामात्याञ्जायांचगतसौहृदाम् ७ आत्मानं कन्ययाग्रस्तंपांचालानरिदूषितान् ॥ दुरंतचिंतामापन्नोनलेभेतत्प्रतिक्रियाम् ८

२७॥ ७ ॥ ईश्वरेच्छोपनतकर्मवशाच्छरीरमनुविश्यस्थितस्यजीवस्यजाग्रदाद्यवस्थाभेदप्रतिपाद्याधुनाशरीरवियोगलक्षणामवस्थावक्तुमुपक्रमते । सैनिकाइत्यादिना वातादिव्याधिसमूहाइमा मवनींविचेरुरित्यनेनजरादिव्याधयोऽस्मिन्प्रपंचएवनान्यत्रेतिज्ञायते १ भौमभोगाअशनपानवसनलक्षणाः । रुरुधुःशरीराविविशुः जरत्पन्नगइतिप्राणबलाच्चेष्टाल्पत्वंलक्ष्यते नतुप्राणस्य । तस्यानिस्सीमबलत्वात् २ कन्यापिबुभुजइतियौवनानंतराविवेश ३ प्रार्दयन्निति जराग्रस्तस्यपालितस्याक्षिमांद्यंबधिरत्वदतभंगंक्षामाकुलत्वमग्निदौर्बल्यंकंठेघुरुघुरुत्वमित्यादिनानाव्याधयोहश्यंतेइ ति ४ ५ ६ पुत्रान्गोलकलक्षणान् पौत्रानिंद्रियाणि अमात्यानमासहवर्तनीयाअमात्याइंद्रियाभिमानिनोदेवास्तांश्च अतसातत्यगमनइतिधातोः बुद्धेरपिपूर्ववदतिश्चयोनास्तीतिगत सौहृदाम् ७ कन्ययाजरसापांचालान्विषयानरिदूषितान्विघ्नप्रतिहतान् ८

यातयामान्गतयामान् गतात्मसंविन्नष्टपरमात्मज्ञानः अतएवनिःस्नेहः परमात्मनिभक्तिरहितोविरुद्धस्नेहोवा ९ अनिकामतोऽनिच्छातः १० प्रज्वार पुरींदाहातिशरीरेचज्वरःप्रवृत्तइत्यर्थः भ्रातुर्मृत्युनाम्नोहितकरणेच्छया ११ १२ यवनैर्व्याधिभिरुपरुद्धमायतनंपत्तनंशरीरनाडीलक्षणंयस्यसतथा पुरपालः प्राणःअनुतापोजीवक्लेशंप्रेक्ष्य १३ सानलादग्निवृक्षात्शृहाविलादिव १४ १५ अधुनाकामिनांमरणव्यवस्थांदर्शयति दुहितॄरिति अत्रप्रवृत्तिमंतरेणबाह्यदुहित्रादयोपिग्रहीतुशक्यते १६ विप्रयोगेमरणलक्षणे प्रमदयाबुद्ध्याअन्ययाच १७ लोकांतरगतवतीत्यादिकथालंकारः १८ अनशितेअभुक्ते भर्त्सितेभर्त्सनेकृते यतवाक्तूष्णींभावमाश्रिता १९ व्युषितेन्यत्रस्थिते नेष्यत्यनुवर्तयिष्यतिकिं २० भिन्नानौर्येषांतेभिन्ननावः २१

कामानभिलषन्दीनोयातयामांश्चकन्यया॥गतात्मसंविन्निःस्नेहःपुत्रदारांश्चलालयन् ९गंधर्वयवनाक्रांतांकालकन्योपमर्दिताम् ॥ हातुंप्रचक्रमेराजातांपुरीमनिकामतः १० भयनाम्नोग्रजोभ्राताप्रज्वारःप्रत्युपस्थितः ॥ ददाहतांपुरींकृत्स्नांभ्रातुःप्रियचिकीर्षया ११ तस्यांसंदह्यमानायांसपौरःसपरिच्छदः ॥ कौटुंबिकःकुटुंबिन्याउपातप्यतसान्वयः १२ यवनोपरुद्धायतनोग्रस्तायांकालकन्यया ॥ पुर्यांप्रज्वारसंस्पृष्टःपुरपालोन्वतप्यत १३ नशेकेसोवितुंतत्रपुरुकृच्छ्रोरुवेपथुः ॥ गंतुमैच्छत्ततोवृक्षकोटरादिवसानलात् १४ शिथिलावयवोयर्हिगंधर्वैर्हृतपौरुषः ॥ यवनैररिभीराजन्नुपरुद्धोरुरोदह १५ दुहितॄःपुत्रपौत्रांश्चजामिजामातृपार्षदान् ॥ सत्वावशिष्टंयत्किंचिद्गृहकोशपरिच्छदम् १६ अहंममेतिस्वीकृत्यगृहेपुकुमतिर्गृही ॥ दध्यौप्रमदयादीनोविप्रयोगउपस्थिते १७ लोकांतरंगतवतिमय्यनाथाकुटुंबिनी ॥ वर्तिष्यतेकथंत्वेषाबालकाननुशोचती १८ नमय्यनशितेभुंक्तेनास्नातेस्नातिमत्परा ॥ मयिरुष्टेसुसंत्रस्ताभर्त्सितेयतवाग्भयात् १९प्रबोधयतिमांनित्यंव्युषितेशोककर्शिता ॥ वर्त्मैतद्गृहमेधीयंवीरसूरपिनेष्यति २० कथंनुदारिकादीनादारकामत्परायणाः ॥ वर्तिष्यंतेमयिगतेभिन्ननावइवोदधौ २१ एवंकृपणयाबुद्ध्याशोचंतमतदर्हणम् ॥ ग्रहीतुंकृतधीरेनंभयनामाभ्यपद्यत २२ पशुवद्यवनैरेषनीयमानःस्वकंक्षयम् ॥ अन्वद्रवन्ननुपथाःशोचंतोभृशमातुराः २३ पुरींविहायोपगतउपरुद्धोविहंगमः ॥ तदातमेवानुपुरीविशीर्णाप्रकृतिंगता २४ विकृष्यमाणःप्रसभंयवनेनबलीयसा ॥ नाविंदत्तमसाविष्टःसखायंसुहृदंपरम् २५ तंयज्ञपशवोनेनसंज्ञप्तायेऽदयालुना ॥ कुठारैश्चिच्छिदुःक्रुद्धाःस्मरंतोवैशसंतुतव् २६ अनंतपारेतमसिमग्नोनष्टस्मृतिःसमाः ॥ शाश्वतीरनुभूयार्तिंप्रमदासंगदूषितः ॥ २७ तामेवमनसागृह्णन्बभूवप्रमदोत्तमा ॥ अनंतरंविदर्भस्यराजसिंहस्यवेश्मनि २८

अतदर्हणंशोकायोग्यंमरणायोग्यमितिवा २२ स्वकंक्षयंकर्मणाशरीरांतरं अनुपथाःप्राणेंद्रियादयः २३ यदाविहंगमोभुजंगमः पुरींविहायोपगतस्तदातमनुशरीरंचविशीर्णंप्रकृतिंपंचभूतात्मतांगतंपंचभूतेभ्यउत्पन्नंपुनस्तदवशेषमापेत्यर्थः २४ तमआविष्टः अज्ञाननिमित्तमोहंप्राप्तः सखायंपरंसदासहवर्तमानंपरमात्मानं सुहृदमनिमित्तबंधुनाविंदन्नास्मरदित्यन्वयः २५ अदयालुनाक्रूरेणहिंसाकर्मरतेनेत्यर्थः तुशब्देनब्रह्मार्पणबुद्ध्याऽननुष्ठानंसूचयति २६ अनंतपारेऽवसानरहितेतमसिनिरये प्रमदासंगेनविषयबुद्धिस्वीकारेणदूषितोऽशुद्धः २७ तांविषयबुद्धिमेवउत्तमाउद्भूततमा प्रगतमदामदरहिताबुद्धिरभूत् अत्रमरणजननेकथालंकारार्थे अध्यात्मार्थस्यमंडूकप्लुतिन्यायेनपदाक्षिप्तस्यापिसंभवात् वाच्यामपच्युत्येतिवचनात् २८

उपयमनंनामस्वाधीनताकरणं वीर्यपणांब्रह्मचर्यादिसाधनसाध्यां वैदर्भीनिशितां कउपयेमे मलंयापयतीतिमलयः शांतमनःसंस्कारः सएवध्वजोयस्यसतथा हरिसेवादिनासंस्कृतमनाइत्यर्थः रूपक मात्रस्यलिंगव्यत्ययोनदोषाय मनसावाअग्रेसंकल्पयत्यथवाचाव्याहरतीतिश्रुते. मनसोपिबुद्ध्यधीनकरणशक्तिरुपपात्तिमतीतिबोद्धव्यं किंकृत्वा युधियमनियमादिलक्षणेयुद्धे राजन्यान् राजृदीप्ता वितिधातोर्दीपकानींद्रियाणिवशीकृत्य चंचलस्यमनसोबुद्ध्यधीनकरणशक्तिःकथमितितत्राह पांड्यइति पंडोर्धर्माज्जातंविवेकज्ञानंतेनसंपन्नः तत्कुतइतितत्राह परेति परेषामिंद्रियाणांविषयल क्षणंपुरंजयतीति आत्मानभिमतमार्गगंतृत्वादिंद्रियाणांपरत्वंतदभावेसुहृत्त्वमेव मननान्मनउद्दिष्टंइतिमनश्चेतनोवा बाह्यार्थस्त्वेवं पुरंजनःपुरंजनीसंगेनतद्वासनादूषितोनाम्नावैदर्भीप्रमदोसमाऽभूत्पु रंजनीतत्पुरंजनसंगातिशयेनवासनावशान्नाम्नामलयध्वजः पुमानभूत् विषयसंगातिरेकलक्षणकारणात्पुंसःस्त्रीत्वंस्त्रिया.पुंस्त्वंच तत स्त्रीत्वमेवावशिष्यते विषयसंगातिरेकोनकर्तव्यइतिशिक्षणार्थंचेदमु क्तमितितात्पर्यंज्ञातव्यं २९ तस्यांबुद्धौ असितोनित्यमुक्तोहरिस्तस्येक्षणंययाभवत्यसितेक्षणात्मजाविष्णुभक्ति. विरागविनयदानधैर्यास्पर्धनविवेकदमाःसप्तसंख्याताःबुद्धेर्जातत्वात्सुताइत्युच्यंतेविष्णु भक्त्यनंतरकालेस्पष्टत्वाद्यवीयसइति सप्तेत्यनेनजरायुबंधोलक्ष्यते सबंधोद्रविलःप्राप्तगर्भलक्षणगतिस्तस्यजीवस्यभूःस्थानंमुक्तिलक्षणाविश्रांतिउत्पाद्यददातीतिसप्तद्राविडभूभृतः डलयोरभेदः मूळाजरित्रइति दर्शनात् सर्वेंद्रियाणिवानेनोच्यंते रागादिभ्योमुक्ताःप्रकाशितरूपाःसुताइतिउच्यंते ३०अर्बुदमर्बुदमित्यनेनसत्योवृत्तयोगृह्यंते महीशास्त्राविरुद्धाविषयलक्षणामन्वंतरंमनुष्यजीवनावधिपरंशतवर्षंप्रारब्धपुण्य

उपयेमेवीर्यपणांवैदर्भींमलयध्वजः ॥ युधिनिर्जित्यराजन्यान्पांड्यःपरपुरंजयः २९ तस्यांसंजनयांचक्रेआत्मजामसितेक्षणाम् ॥ यवीयसःसप्तसुतान्सप्त द्रविडभूभृतः ३० एकैकस्याभवत्तेषांराजन्नर्बुदमर्बुदम् ॥ भोक्ष्यतेयद्वंशधरैर्महीमन्वंतरंपरम् ३१ अगस्त्यःप्राग्दुहितरमुपयेमेधृतव्रताम् ॥ यस्यांदृढ च्युतोजातइध्मवाहात्मजोमुनिः ३२ विभज्यतनयेभ्यःक्ष्मांराजर्षिर्मलयध्वजः ॥ आरिराधयिषुःकृष्णंसजगामकुलाचलम् ३३ हित्वागृहान्सुतान्भोगा न्वैदर्भीमदिरेक्षणा ॥ अन्वधावतपांड्येशंज्योत्स्नेवरजनीकरम् ३४ तत्रचंद्रवदानामताम्रपर्णीवटोदका ॥ तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनोमृजन् ३५

वशात् बुद्ध्यावरणादिभिःप्राणैरिंद्रियैरेवविषयान्भुंक्तइत्यर्थः ३१ स्त्यैष्ट्यैशब्दसंघातइतिधातोः अगंभगवंतंस्त्यायातिशब्दसमूहेनस्तुतिंकरोतीत्यगस्त्योभक्तःप्रांचंपुरातनंश्रीनारायणंदोग्धीतिदुहितात्र क्तिस्तामुपयेमे संसारनिवर्तनेशक्तिमत्तयाऽचलामकरोदित्यर्थःकीदृशींब्रह्मचर्यादिव्रतसाध्यां दृढंच्युतःपुत्रादिस्नेहोयस्मात्सदृढच्युत पूर्वस्माद्विरागोदृढतरोभूदित्यर्थः इध्मवाहोगुरुकुलवासएवात्मजोय स्यसतथावैराग्यादेवगुरुकुलवासोभवति परीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायान्नास्त्यकृतःकृतेनतद्विज्ञानार्थंसगुरुमेवाभिगच्छेदितिश्रुतेः सौम्येमाःसमिधआहरंतिच ३२ वैराग्यादिरूपत्याराज्ञ इतिराजा विवेकित्वादृषिःराजाचासावृषिश्चेतिराजर्षिःवैराग्यविवेकज्ञानसंपन्नः शुद्धवासनांकितःपुरुषस्तनयस्थानीयेभ्योविरागादिभ्यइंद्रियेभ्योवाक्ष्मांशास्त्रलक्षणांभोग्यलक्षणांवाविभज्येदंश्रोतव्यमेदं मितिविविच्यायंविषयःसेवनीयोनायमितिकुलाचलंनिश्चलंवासार्थंगुरुकुलंजगामवैराग्यादिगुणसंपन्नः शरीरयात्रानिर्वाहकविषयभोगीगुरुकुलसन्निधिमवात्सीदित्यर्थं कृष्णपूर्णानंदमाराध्यापरोक्षीकर्तुका मइत्यर्थः ३३मदिरेदृष्टिस्तांरातीतिमदिरेताहृशमीक्षणंज्ञानयस्यांसातथा शुद्धज्ञाना विषयानुषंगंविहायतदनुसारिणीबभूवेतिपांड्येशमन्वपद्यतेत्यभिप्रायः अत्रसुतशब्देनरागादयोलक्ष्यंते तान्विहायेत्यर्थ.मु क्तावपिबुद्ध्यात्मनोराहित्यंनास्तीतिदर्शयितुंज्योत्स्नेवेति ३४तत्रगुरुकुलवासेचंद्रवदाह्लादकांनिर्मलंचवदतिज्ञापयतीतिवेदांतशास्त्र ययौचंद्रमदेतिपाठेशसावितिसूत्राद्दकारस्यमकारः चंद्राबिंबविपथीकरो तीतिवा मामलोकप्रसिद्धं पर्णआच्छादनइतिधातोः ताम्रंरजस्तमश्चपर्णयत्याच्छादयतिपरिभवतीतिताम्रपर्णीवेदांतव्याख्या ततश्चामरश्चेतिताम्रंब्रह्मपृणातीतिप्रकाशलक्षणंदानंकरोतीतिवापृणदानइतिधा

तोःनदीवत्पदवर्णस्वरलक्षणप्रवाहात्श्रोतृणामुदकवदाह्लादजननाद्भावरोदका तस्याव्याख्याया प्रकाशितैः पुण्यैःशोधकैःसलिलैर्युक्तिलक्षणैरात्मनोंत करणस्य उभयत्रप्रविवादिनिमित्तबाह्यंदुर्युक्तिमलंसं शयाद्यंतरमलंमृजन्शोधयन् ३५ मूलप्रतिष्ठायामितिधातोः मूलंजगदाधारंब्रह्मफलंतिनिष्पादयंतीतिमूलफलानितैः कंसुखददातीतिकर्दमिताशनतदादियेषांगतस्वापादीनांतानिकंदादीनियोगसाधनानितैः नात्यश्नतस्तुयोगोस्तिनचैकांतमनश्नतइतिस्मृतेः पुष्पवन्मृदुलैःपर्णैराच्छादनैरुद्गतमकंदुःखंयेभ्यस्तान्युदकानितृणानिआस्तरणानितैस्तैश्चवर्तमानःशरीरयात्रांकुर्वाण गंज्ञानंगमयतीतिगात्रमज्ञानम् कर्शयत्यल्पीकरोतीतिगात्रकर्शनम् तपआलोचनइतिधातोरालोचनंमननमनुतिष्ठन् ३६ शीतोष्णादीनिद्वंद्वान्यजयत्सहमानोवर्ततइत्यन्वयः शीतोष्णादिशब्दैःकामादयो लक्ष्यंतेइतिज्ञातव्यं उभयेषांशरीराधिकरणत्वात् ३७ तपसामननलक्षणेनजातयाविद्ययाज्ञानेननियमादिभिश्चपक्वकषायः शिथिलीकृतपापआत्मानमंतःकरणंब्रह्मणायुयुजेविषयेभ्यआनीयश्रीनारायणेनसहवर्तमानमकरोत् तदेकनिष्ठमकुरुतेत्यर्थः यद्वात्मानमंतर्यामिरूपंब्रह्मणाव्याप्तरूपेणयुयुजे एकत्वेनदध्यावित्यर्थः। विजिताक्षानिलाशयः वशीकृतेंद्रियप्राणांतःकरणः आशयोऽभिलाषोवा ३८ स्थाणुरिवस्थितएकत्रगुरुकुलेश्रुतमतशास्त्रेबुद्धिप्रसादजनकेविविक्तस्थानेवा दिव्यंवर्षशतंबहुकालमुपासीनआस्तइत्यन्वयः मुक्तिसाधनभक्तिरेवनान्यादितितस्याअतिशयफलमाह वासुदेवइति उपासकोवासुदेवेभगवति वेदांतविचारनिर्णीतगुणरत्नाकरेहरावुपासनालक्षणांरतिमुद्वहन्कुर्वन्नन्यत्स्वतंत्रवस्तुनवेद किंतुसर्वंतदधीनमेवज्ञातवानित्यर्थः ३९ मनुब्रह्म

**कंदादिभिर्मूलफलैःपुष्पपर्णैस्तृणोदकैः॥ वर्तमानःशनैर्गात्रकर्षणंतपआस्थितः ३६ शीतोष्णवातवर्षाणिक्षुत्पिपासेप्रियाप्रिये॥ सुखदुःखेइतिद्वंद्वान्यजयत्समदर्शनः ३७ तपसाविद्ययापक्वकषायोनियमैर्यमैः॥ युयुजेब्रह्मणात्मानंविजिताक्षानिलाशयः ३८ आस्तेस्थाणुरिवैकत्रदिव्यंवर्षशतंस्थितः॥वासुदेवेभगवतिनान्यद्वेदोद्वहन्रतिम् ३९ सव्यापकतयात्मानंव्यतिरिक्ततयात्मनि॥ विद्वान्स्वप्नइवामृश्यसाक्षिणंविरराम[1]ह ४० साक्षाद्भगवतोक्तेनगुरुणाहरिणानृपः॥ विशुद्धज्ञानदीपेनस्फुरताविश्वतोमुखम् ४१ परेब्रह्मणिचात्मानंपरंब्रह्मतथात्मनि॥ वीक्षमाणोविहायेक्षामस्मादुपरराम ह ४२ पतिंपरमधर्मज्ञंवैदर्भीमलयध्वजम्॥ प्रेम्णापर्यचरद्धित्वाभोगान्सापतिदेवता ४३**

व्यतिरिक्तस्यवस्तुनोऽभावादेकमेवाद्वितीयमितिश्रुतेरेतदेवनान्यद्वेदेतिप्रतीतएवार्थःकिंनस्यादितितत्राह सव्यापकतयेति सआमृश्यविचार्यात्मनिजीवेस्थितंसाक्षिणं स्वप्नेनशारीरमभिप्रहत्यासुप्तःसुप्तानभिचाकशीतिश्रुतेः साक्षात्द्रष्टृत्वेनवर्तमानं स्वप्नेयथापरतंत्रतयाजीवंपश्यतितथा अन्यदापीतिविद्वांस्तथात्मानपरमात्मानंव्यापकतयासर्वव्यापित्वेनचेतनाचेतनात्मकजगद्व्यतिरिक्ततयाचविद्वान्विरराम संसाराद्विरक्तोजीवन्मुक्त्यवस्थामापेत्यन्वयः यद्वात्मानव्यापकतयात्मनिजीवेव्यतिरिक्ततयाचविद्वान्स्वप्नइवस्वतंत्रंसाक्षिणंजीवंपरतंत्रमामृश्यनिश्चित्यविररामेति हेत्यनेनजीवस्यास्वातंत्र्येहरेस्तदन्यत्वे यतःस्वप्नोनस्वतंत्रस्ततस्तद्दर्शकःपरः । जीवादन्यस्तुविज्ञेयःसविष्णुरवधार्यतामितिप्रसिद्धिःसूच्यते ४० तर्ह्यभेदश्रुतेःकोभिप्रायइत्याशंक्यजीवांतर्यामिणोहरेः ब्रह्मविदाप्नोतिपरमितिश्रुतिप्रतिपाद्यस्यव्याप्तस्यापिनकश्चिद्भेदोस्तीत्यर्थइत्याभिप्रेत्याह साक्षादिति ४१ आत्मानंजीवांतर्यामिण ईक्षां तयोर्भेददर्शनं अस्माच्छरीरात् हेत्यनेनअस्यप्रामाणिकत्वद्योतयति ४२ पतिंस्वाश्रयं इंद्रियद्वारेणभोगान्विहायपरिचरणनामतस्यहितप्रेरकत्वम् ४३

---

[1] स्वप्नेइवेतिदृष्टांतत्वेनोच्यते स्वप्नेहि जीवस्यास्वातंत्र्यं सिद्धम् अतस्तत्रपरमेश्वराधीनत्वंप्रसिद्धमेव । ता०

चीरवासाःसत्त्वगुणलक्षणंवेणीचक्षुषिशिरोरुहलक्षणावृत्तयोयस्याःसातथा उपपतिंपत्युःस्वमनसःसमीपे शांतमित्यनेनधूमराहित्यंनतुनिर्वाणत्वं नहिनष्टस्याग्नेःशिखा कथापक्षेयथास्थितएवार्थः
अभूतदृष्टांतस्यसंभवात् तस्मिन्निर्धूमतयाज्वलतोग्नेः शिखेवनिर्मलतयाश्रेयसोंतरंगमित्यर्थः ४४ इदानींबुद्धेर्वृत्तिविशेषान्लक्षयतिअजानतीति अंगनाभगवज्ज्ञानसाधना उपरतंजीवन्मुक्त्यवस्था
मासं प्रियतमंस्वस्याआत्यंतिकंप्रियंतमजानतींबाह्यवृत्तिविशिष्टासुस्थिरासनंतदेकवृत्तिनिष्ठालक्षणंपीठमाप्यपूर्वसंस्कारवशात् यथापूर्वमुपाचरत् शुभकर्मणिप्रेरयामास ४५ यदैवंप्रेरयतिचयदाप
त्युरंघ्र्यवयवैकदेशेऊष्माणमौष्ण्यंनोपलभेत् शुष्कजलनारिकेलफलवत्देहाभिमानंविहायस्थितत्वादौष्ण्यानुपलंभस्तस्याइति ततोपिवृत्त्यंतरवैशिष्ट्यमाह आसीदिति तदासंविग्नहृदयावृत्त्यंतर
विशिष्टासीत् मिश्रबुद्धिमपहायस्वरूपबुद्ध्याऽवतिष्ठते तदेवमवस्थाविशेषइतितात्पर्यंज्ञातव्यम् ४६ बधु स्वामीतदनुमानराहित्यादबधुः शोचंतीप्रकाशयंती विक्लवेत्यादिनाप्रतिक्षणमनतबुद्धिवृ
त्तयोलक्ष्यंते विपिनेदेहलक्षणेस्थितासुस्वरंप्ररुरोदेतीदंबुद्धेर्लक्षणं अस्यामुक्तिकालेनाशात्चिदचिद्बुद्ध्यायापारविशेषाल्लक्षणवैलक्षण्यप्रतिक्षणंज्ञातव्यं ४७ उदधिःकर्मतदेवमेखलास्थानीययस्याः
सातथातां दस्युभ्योऽहंकारादिभ्यःक्षत्रबंधुभ्योमिथ्याज्ञानादिभ्योबिभ्यतींमांरक्षितुमर्हसित्वदनुगृहीतयाबुद्ध्याऽज्ञानादयोनिवर्ततइत्यर्थः ४८ विपिनेवासनावनेविलपतीवधावतीवदर्शयतीभर्तुः पाद
योःपतितास्वामिनंविहायस्थिता अश्रूण्यवर्तयन्मुग्धेवाभवत् ४९ दारुमयींभेदविषयांचितिंसाविदंकृत्वाप्रकाश्यतस्यासाविदिपत्युःकलेवरंसंसारकारणमादीप्यदग्ध्वाअनुमरणेअनुस्यूतदोषनाशेमनोद

**चीरवासाव्रतक्षामावेणीभूतशिरोरुहा ॥ बभावुपपतिंशांताशिखाशांतमिवानलम् ४४ अजानतीप्रियतमंयदोपरतमंगना ॥ सुस्थिरासनमासाद्ययथा पूर्वमुपाचरत् ४५ यदानोपलभेतांघ्रावूष्माणंपत्युरर्चती ॥ आसीत्संविग्नहृदयायूथभ्रष्टामृगीयथा ४६ आत्मानंशोचतीदीनमबंधुर्विक्लवाश्रुभिः ॥ स्तनावासिच्यविपिनेसुस्वरंप्ररुरोदसा ४७ उत्तिष्ठोत्तिष्ठराजर्षेइमामुदधिमेखलाम् ॥ दस्युभ्यःक्षत्रबंधुभ्योबिभ्यतींपातुमर्हसि ४८ एवंविलपतीबाला विपिनेऽनुगतापतिम् ॥ पतितापादयोर्भर्तूरुदंत्यश्रूण्यवर्तयत् ४९ चितिंदारुमयींकृत्वातस्यापत्युःकलेवरम् ॥ संदीप्यचानुमरणेविलपंतीमनोदधे ५० तत्रपूर्वतरःकश्चित्सखाब्राह्मणआत्मवान् ॥ सांत्वयन्वल्गुनासाम्नातामाहरुदतींप्रभो ५१ कात्वंकस्यासिकोवायंशयानोयस्यशोचसि ॥ जानासिकिं सखायंमांयेनाग्रेविचचर्थह ५२ अपिस्मरसिचात्मानमविज्ञातसखंसखे ॥ हित्वामांपदमन्विच्छन्भौमभोगरतोगतः ५३**

धेतादृशींवृत्तिंप्राकाशयत् ५० तत्रतस्यामवस्थायांकश्चिद्वेदांतवाक्यार्थो हितोपदेष्टृत्वेनसखिधर्मैवर्तमानोब्राह्मणोब्रह्मसंबधीनिर्दोषशब्दलक्षणागमसंबंधीवात्मवान् परमात्मगुणप्रतिपादनपरःसा
म्नाअखिलार्थप्रकाशनेन सांत्वयन्प्रतिपदंदर्शितान्वयःबुद्धिमाह अबोधयदिति कथापक्षेप्रतीतएवार्थः ५१ तदनुकरणतयाबोध्यतइत्याह केति काकिजातिविशिष्टानकापि किंचकस्यासिक
पुरुषमाश्रित्यातिष्ठासि नकमपि सर्वचेतनानुस्यूतत्वान्नविशिष्टुंशक्यत यस्यशोचसियदीत्याहोमितप्रकाश्यवर्तसेअयंशयानःशरीरलक्षणःपदार्थःकःपांचभौतिकत्वात्तवचास्यनकोपिसंबंधःकिंतुचेतन
स्यैवेत्यर्थः त्वंका नामतोगोत्रतोलिंगतश्च नतवत्रयमप्यस्ति कस्यासिपुत्रीभार्यावानकस्यापीत्यर्थः कोवाऽयंशयानस्तवनिरूपितसत्यनेनसंबंधः यस्यमरणंशोचसिसइतिवा अग्रेपूर्वकालेयेनम
याविचचर्थविचारितवानसिवेदांतवाक्यमितिशेषःविचार्यमाज्ञातवानसितंसखायंत्वयासहवर्तमानमांजानासिकिंसखित्वात् ज्ञातुंप्राप्तिरस्तीत्येतद्धशब्देनाह ५२ किंचहेसखेअविज्ञातःपरमात्मासखायस्यस
तथातमात्मानंत्वंस्मरस्यपिनस्मरासिचेत्तंस्मरेतिचार्थः चिद्बुद्ध्यात्मनोरभेदादिदमुभयविषयं इदानींज्ञानात्मानचेतनमविभज्येवाह हित्वेति विषयभोगरतस्तदर्थभोगस्थानमन्विच्छन्मृगयन्मा
हित्वागतःपृथग्गतइव अग्रतइतिपाठेपदमन्विच्छन्नभूदित्यन्वयः ५३

वाक्यार्थाभिमानीकश्चिचेतनःस्वात्मनोरूपंबोध्यस्वरूपंचतत्त्वतउपदिशति हंसाविति आर्यप्राज्ञ अहंचत्वंचहंसौस्वतोनिर्लेपौमानसज्ञानमयनययोस्तौतथा सहस्रपरिवत्सरान्बहुकालंरमणौरममाणौ अवात्स्व अन्यत्रमानससरोवराश्रयौहंसौप्रसिद्धौ प्राक्चीर्णपुण्यनिचयादवाप्तजातिस्मृती ५४ पुनःप्रारब्धकर्मवशात्ग्राम्यमतिर्मांविहायकर्मभूमिंगतोविचरन्पर्यटन्किंचित्पदंभोगस्थान मद्राक्षीःस्त्रियाविषयबुद्ध्यारचितं ५५ एकःपालःप्राणोयस्मिंस्तत्तथातत्स्त्रीधव.पतिःस्वामीयस्मिन्तत्स्त्रीधव ५६ पंचारामार्थमाह पंचेति इंद्रियार्थाःशब्दादयः नवद्वारमित्यस्यार्थमाह द्वारइति घ्राणादयोद्वारइत्युच्यंते त्रिकोष्ठमाह तेजइति षट्कूलमाह गोलकेति गोलकेष्विंद्रियाणिगृह्यंतइतिगोलकेंद्रियसंग्रहः ५७ विपणोव्यवहारः क्रियाशक्तिःकर्मेंद्रियशक्तिःपंचप्रकृती स्येतदाह भूतेति पंचभूतानांयाप्रकृतिर्मूलकारणंसापंचप्रकृतिरित्युच्यते अव्ययानित्या स्त्रीधवमाह शक्तीति शक्तिर्बुद्धिःसैवाधीशापुरोपभोगेकारणंयस्यसशक्त्यधीशः अन्यन्कोष्ठानिभांडा गारस्थानानिकूलानिबाहिःस्थपदार्थदर्शनायनिर्मितस्थानानि ५८ रामयाविषयबुद्ध्यास्पृष्टोवशीकृतः हतस्मृतिःशास्त्रज्ञानरहितः विषयबुद्धिसंगफलंनरकादिभवतीत्यर्थः ५९ नत्वमित्या दिविषयवैराग्यमुच्यते ६० प्रारब्धकर्मणैवंविधफलानुभवार्थमयामदंतर्यामिणाहरिणासृष्टासंक्लेशामायाबंधकशक्तिरिच्छावा साचाचिंत्यमहिमेत्याह यदिति तर्हिकितत्त्वज्ञानमितितद्विविच्याह हंसमिति तत्त्वतोनामगोत्रादिराहित्येनचेतनंहंसानिर्मलंपश्य आत्मनोहरेर्गतितत्तत्सत्ताप्रदत्वेनस्थितांपश्य आत्मनोममगतिं त्वांप्रबोध्यगच्छतोसमयात्रांपश्येतिवा अनेनबोध्यबोधकयो

हंसावहंचत्वंचार्यसखायौमानसायनौ ॥ अवात्स्वरमणौचोभौस हस्रपरिवत्सरान् ५४सत्वंविहायमांबंधोगतोग्राम्यमतिर्महीम् ॥ विचरन्पदमद्राक्षीःकया चिन्निर्मितंस्त्रिया ५५ पंचाराममंनवद्वारमेकपालंत्रिकोष्ठकम् ॥ षट्कूलंपंचविपणंपंचप्रकृतिस्त्रीधवम् ५६ पंचेंद्रियार्थाआरामाद्वारःप्राणादयःप्रभो ॥ तेजोबन्नानिकोष्ठानिगोलकेंद्रियसंग्रहः ५७ विपणस्तुक्रियाशक्तिर्भूतप्रकृतिरव्यया ॥ शक्त्यधीशःपुमानत्रप्रविष्टोनावबुध्यते ५८ तस्मिंस्त्वंरामया स्पृष्टोरममाणोहतस्मृतिः ॥ तत्संगादीदृशींप्राप्तोदशांपापीयसींविभो ५९ नत्वंविदर्भदुहितानायंवीरःसुहृत्तव ॥ नपतिस्त्वंपुरंजन्यारुद्धोनवमुखेयया ६० मायाह्येषामयासृष्टायत्पुमांसंस्त्रियंपतिम् ॥ मन्यसेनोभयंयद्वैहंसंपश्यात्मनोगतिम् ६१ अहंभवान्नचान्यस्त्वंत्वमेवाहंविचक्ष्वभो ॥ ननौ पश्यंतिकवयश्छिद्रंजातुमनागपि ६२

रनुभवसिद्धत्वादबाधितोभेदइतिज्ञातव्यं ६१ ननुकर्माणिविज्ञानमयश्चात्मापरेव्ययेसर्वएकीभवंति तत्त्वमस्यहंब्रह्मास्मीत्यादिश्रुतिभिरैक्यस्यप्रतिपाद्यत्वात्कथंभेदोऽबाधितइतिज्ञायते नचेदमौपचारि कं गुरुशिष्योपदेशत्वाद्विप्रलंभानुपपत्तेरित्याशंक्यजीवसत्ताप्रदत्वाच्चेतनत्वेनतत्सदृशत्वाच्चाभेदव्यपदेशः तद्गुणसारत्वात्तुतद्व्यपदेशःप्राज्ञवदितिसूत्रात् जीवसत्ताप्रदत्वात्तुसदृशत्वाच्चकेशवः कथ्यते बदभेदेननतुजीवस्वरूपतः इतिप्रमाणविरोधबाहुल्याद्यत्रत्वस्यसर्वमात्मैवाभूत्तत्केनकंपश्येदितिदूषितत्वाच्चाभेदस्येत्याभिप्रेत्याह अहमिति भवानहंत्वमत्तोन्योनच त्वतुअहमेवेतिविचक्ष्वपश्य अन्यप्रया णमाह नेति कवयस्तत्त्वदर्शिनः क्वचिन्मनागल्पमपिनावयोश्छिद्रमंतरंपश्यंति द्रव्यंकर्मचकालश्चेतिवाक्यार्थंपश्यतोऽस्मदंतर्यामिणमंतरेणावयोःसत्तापिनास्ति किमुतइष्टानिष्टप्राप्तिपरिहारलक्षण प्रवृत्तौशक्तिरित्यतःशून्यदेशीययोरंतर्यामिणस्तप्तस्वर्णराग्न्योरिवभेदंपश्यंतोपिनपश्यंतीत्यभिप्रायः भवदंतर्यामिमदंतर्यामीचान्योनभवति किंतुत्वमेवाहमेकएवेतिजानीहित्वयिस्थितस्त्वामित्यसादेति प्रमाणयतांकवीनांदर्शनादितिवाहंभवान्नकिंतुत्वमन्यःअतस्त्वंत्वमेवाहमहमेवेतिविचक्ष्व अन्यथानपश्य कुतः नौमनाक्छिद्रंकिंयानेवाविशेषइतिनपश्यंति किंतुमहांतंभेदंपश्यंतीतिवा ६२

जीवसत्ताप्रदत्वाज्जीवेनाभेदः परस्येत्यत्र दृष्टांतमाह यथेति आदर्शचक्षुषोः प्रतीयमानस्य प्रतिबिंबस्य सत्तादेर्द्रष्टृबिंबाधीनत्वात्तद्वेदमितिवदावयोरंतरं मत्सत्तायाअप्यस्यत्स्वाभ्यधीनत्वादावां अद्भिन्नाविति व्यवहारः यथादर्पणाद्युपाधिष्वेकमात्मानं बहुधापश्यंतितथावयोरंतर्यामिणोरंतरामितिवा ६३ उपसंहरति एवमिति तद्व्यभिचारेणविषयबुद्धिप्रसंगातिशयेननष्टांतिरोहितांस्मृतिंशास्त्र विषयामापेत्यन्वयः ६४ कथाबाह्याध्यात्मपक्षभेदेनानिरूप्यते इत्येतत्कथमवगतामितितत्राह बर्हिष्मन्निति परोक्षेणान्यापदेशेन एवंकथनेकिंकारणंतत्राह यत्परोक्षेति परोक्षप्रियाइवहिदेवाइत्यादिश्रुतेः अनेनाहंभवानित्यादेरप्यस्मदुक्तएवार्थोनप्रातीतिकइत्येतत्सुतरामबोधि ६५ ॥ इतिश्रीभागवतेचतुर्थस्कंधेविज० कृतटीकायामष्टाविंशः ॥ २८ ॥ ७ ॥ ॥ भक्तिजनितज्ञानमेवहरेः प्रसादजनकंनकर्मादिकंतत्रसाधनमित्येतदस्मिन्नध्यायेनिरूप्यते तत्रादौप्राचीनबर्हिःस्वयंविद्वानपिलोकोपकारायसम्यक्पृच्छति भगवन्निति नारदस्यहर्षार्थंभगवन्नितिसंबोधनं अस्माभिरस्माद्दृशैःप्रवक्तृबोधकशक्त्यभावपरिहारार्थंसम्यगिति तत्रकिंकारणंतत्राह नवयमिति कवीनांकर्माभावेनविविदिषंति यज्ञेनदानेनेत्यादिविधानंव्यर्थमितीमांशंकांकवयइत्यनेनपर्यहारि कर्मणाशुद्धात्करणस्यहर्युपासनासाध्यप्रकारेणातिक्रांतदर्शनस्यकवित्वात् ॥ १ ॥ व्यनक्तीत्यनेनपुरंजनपदंनिरुक्तं पुरस्यदेहस्यांजनंयस्मात्सपुरंजनइत्यर्थः अंजूव्यक्तिकरणइतिधातुः पुरजनयतिप्रकाशयतीतिवापुरंज

यथापुरुषआत्मानमेकमादर्शचक्षुषोः ॥ द्विधाभूतमिवेक्षेततथैवांतरमावयोः ६३ एवंसमानसोहंसोहंसेनप्रतिबोधितः ॥ स्वस्थस्तद्व्यभिचारेणनष्टामापपुनःस्मृतिम् ६४ बर्हिष्मन्नेतदध्यात्मंपारोक्ष्येणप्रदर्शितम् ॥ यत्परोक्षप्रियोदेवोभगवान्विश्वभावनः ६५ इतिश्रीभागवतेचतुर्थस्कंधेअष्टाविंशोऽध्यायः २८ ॥ ७ ॥ प्राचीनबर्हिरुवाच ॥ भगवंस्तेवचोस्माभिर्नसम्यगवगम्यते ॥ कवयस्तद्विजानंतिनवयंकर्ममोहिताः १ ॥ नारदउवाच ॥ पुरुषंपुरंजनंविद्याद्यद्व्यनक्त्यात्मनःपुरम् ॥ एकद्वित्रिचतुष्पादंबहुपादमपादकम् २ योऽविज्ञाताहृयस्तस्यपुरुषस्यसखेश्वरः ॥ यन्नविज्ञायतेरूपैर्नामभिर्वाक्रियागुणैः ३ यदाजिघृक्षन्पुरुषःकार्त्स्न्येनप्रकृतेर्गुणान् ॥ नवद्वारंद्विहस्तांघ्रिपुरंमनुतसाध्विति ४ बुद्धिंतुप्रमदांविद्यान्ममाहमितियत्कृतम् ॥ यामधिष्ठायदेहेऽस्मिन्पुमान्भुंक्तेक्षिभिर्गुणान् ५ सखायइंद्रियगणोज्ञानंकर्मचयत्कृतम् ॥ सख्यस्तद्वृत्तयःप्राणःपंचवृत्तिर्यथोरगः ६ बृहद्बलंमनोविद्यादुभयेंद्रियनायकम् ॥ पंचालाःपंचविषयायन्मध्येनवखंपुरम् ७

नः जनीप्रादुर्भावइतिधातुः पुरमपिनैकविधमित्याह एकेति एकपादादिजातिजंतुशरीरापेक्षयापिशाचशरीरमपेक्ष्यवा द्वौपादौमनुष्यादेस्त्रयःपादाज्वरादेः चत्वारःपादाःपश्वादेः बहवःपादाःसहस्रपादादेः अपादकंसर्पादि २ ननु परमाणोरप्यविज्ञातत्वात्किंविशिष्योच्यतइतितत्राह यत्रेति अनेनभक्तानुग्रहार्थंनामरूपादिग्रहणंनस्वतोस्तिनतथापरमाणोःशुक्लभासुरमपाकजमित्यादिनिरूपितत्वादित्यादिप्रदर्शितम् ३ यदाप्रकृतेर्गुणान्जिघृक्षन्स्रक्चंदनादिविषयानादातुमिच्छतितदानवद्वारादिलक्षणंसाधुतत्साधनमितिन्यरूपयत् ४ अधिष्ठाय स्वमक्षमिंद्रियश्रोत्रमित्याभिधानादक्षिभिरिंद्रियैश्चक्षुषाद्रूपंदृष्ट्वानंतरमन्येंद्रियप्रवृत्तिरितिचक्षुषःप्राधान्यद्योतनायाक्षैरित्युक्तिंविहायाक्षिभिरिति गुणान्विषयान् ५ यद्येनेंद्रियगणेनतेषाइंद्रियाणांविषयेषुवृत्तयोव्यापाराः पुररक्षणेयथोरगोनिरूपितस्तथादेहरक्षणे उरस्तुवक्षसिश्रेष्ठइत्यभिधानात् उरःश्रेष्ठश्चगमकोब्रह्मप्रापकश्चेत्युरगोमुख्यप्राणः श्रेष्ठश्च सएनान्ब्रह्मगमयतीतिसूत्रश्रुत्योरयमर्थः अन्यत्रउरसावक्षसागच्छतीत्युरगःसर्पःपंचधावृत्तिर्यस्यसपंचवृत्तिःविस्तृतव्यापारोवा फणोत्क्षेपणंफणायाभूमावाक्षेपणमडलीकरणमाकुंचनं मंडलंमोक्षःप्रसारणंदीर्घीभूयगमनमितिपंचवृत्तिर्नागस्य ६ मनसावाअग्रेसंकल्पयत्यथवाचाव्याहरतीतिश्रुतेः ज्ञानकर्मेंद्रियाणांविषयंप्रतिनेतृत्वादुभयेंद्रियनायकमित्युक्तं एषांविषयाणामध्येनवखानिद्वारलक्षणानिछिद्राणियस्यतत्तथोक्तं तत्पुरंशरीरम् ७

तत्तदिंद्रियसंयुतः अक्षादिद्वारेणबाहिर्विषयन्नुभुक्षौसतिनेत्रादीद्रियेणविषयंभुंक्तइत्यर्थः ८ अक्षिणीइत्यादिनाद्वेद्वेद्वारइत्युक्तंतद्विवेचयति अक्षिणीइति ९ पश्चिमेद्वेइत्युक्तंतत्राह पश्चिमेइति खद्योतेत्याद्युक्तंविवृणोति खद्योतेति १० नलिन्याद्याह नलिनीति ११ अवधूतमाह घ्राणइति मुख्यानामपुरस्ताद्वाइत्यस्यार्थमाह मुख्येतिपामुख्यानामद्वाः आस्यंरसज्ञ विपणान्वि तइत्येतदाह विपणइति विपणोवागिंद्रिय रसवित्रसज्ञः रसोरसनेंद्रियं आपणंव्याचष्टे आपणइति चित्रमंधइत्यादौबहूदनमित्यस्यविविधौदनः १२ पांचालशब्दस्यार्थांतरमाह प्रवृत्तमिति १३ श्रुतधरेत्यस्यश्रोत्रमिति तेनोत्क्रांतःपितृयानादिमार्गंव्रजति आसुर्याःऋत्समाह मेहनार्थमिति मेहनंपुरीषोत्सर्जनं ग्रामिणांरतिर्मैथुनं १४ १५ १६ तद्गुणैर्मनोगुणैर्बुद्धिगुणै वाएतदेवमतिपादयति यथेति स्वप्रकालेकरितुरगादिदृष्टश्रुतवस्तुवासनावासितमनोबुद्धिर्वाविक्रियतेदेवेनेतिशेषः बहुसंस्काराधिवासितत्वादन्यप्रवाहमंतरेणैवस्वयंवाविकरोतीत्याह गुणेति

अक्षिणीनासिकेकर्णौमुखंशिश्नगुदाविति ॥ द्वेद्वेद्वारौबहिर्यातितत्तदिंद्रियसंयुतः ८ अक्षिणीनासिकेआस्यमितिपंचपुरस्कृताः ॥ दक्षिणादक्षिणःकर्ण उत्तराचोत्तरःस्मृतः ९ पश्चिमेइत्यधोद्वारौगुदशिश्नाविहोदिते ॥ खद्योताविर्मुखीचात्रनेत्रेएकत्रनिर्मिते १० रूपंविभ्राजितंताभ्यांविचष्टेचक्षुषेश्वरः ॥ नलिनीनालिनीनासेगंधःसौरभउच्यते ११ घ्राणोवधूतोमुख्यास्यंविपणोरसविद्रसः ॥ आपणोव्यवहारोत्रचित्रमंधोबहूदनम् १२ पितृभूर्दक्षिणःक र्णउत्तरोदेवभूःस्मृतः ॥ प्रवृत्तंचनिवृत्तंचशास्त्रंपांचालसंज्ञितम् १३ पितृयानंदेवयानंश्रोत्रंश्रुतधरोव्रजेत् ॥ आसुरीमेहनार्थद्वाव्यवायोग्रामिणांरतिः १४ उपस्थोदुर्मदःप्रोक्तोनिर्ऋतिर्गुदउच्यते ॥ वैशसंनरकंपायुर्लुब्धकोंधौतुमेशृणु १५ हस्तपादौपुमांस्ताभ्यांयुक्तोयातिकरोतिच ॥ अंतःपुरंचहृदयं विषूचिर्मनउच्यते १६ तत्रमोहंप्रसादंवाहर्षंप्राप्नोतितद्गुणैः ॥ यथायथाविक्रियतेगुणाक्तोविकरोतिवा १७ तथातथोपद्रष्टात्मातद्वृत्तीरितिकीर्त्यते ॥ देहोरथस्त्विंद्रियाश्वःसंवत्सरवयोगतिः १८ द्विकर्मचक्रस्त्रिगुणध्वजःपंचासुबंधुरः ॥ मनोरश्मिर्बुद्धिसूतोहृन्नीडोद्वंद्वकूबरः १९ पंचेंद्रियार्थप्रक्षेपःसप्त धातुवरूथकः ॥ आकूतिर्विक्रमोबाह्योमृगतृष्णांप्रधावति २० एकादशेंद्रियचमूःपंचसूनाविनोदकृत् ॥ संवत्सरश्चंडवेगःकालोयेनोपलक्षितः २१ तस्याहानीहगंधर्वागंधर्व्योरात्रयःस्मृताः ॥ हरंत्यायुःपरिक्रांत्याषष्ठ्युत्तरशतत्रयम् २२ कालकन्याजरासाक्षाल्लोकस्तांनाभिनंदति ॥ स्वसारंजगृहेमृत्युः क्षयाययवनेश्वरः २३ आधयोव्याधयस्तस्यसैनिकायवनाःखलाः ॥ भूतोपसर्गाशरयःप्रज्वारोद्विविधोज्वरः ॥ २४

१७ यथायथाविषयविकारेणपरिणमतेतथातथास्वप्नादेरुपद्रष्टात्माजीवस्तद्वृत्तिर्बुद्धिमनोवृत्तेरनुकूलवृत्तिरितिकीर्त्यते यथायथामनोविक्रियतेगुणान्कामात्मनागुणरूपिताबुद्धिस्तथाविकरोतिबु द्धिर्यथाविकरोतितथात्मापीतिवा । उभयेंद्रियनायकइत्युक्तेर्मनोविकारानुकारिबुद्ध्यनुकारिप्रवृत्तिमत्त्वमात्मनोयुज्यते इंद्रियाण्येवाश्वायस्यसतथा संवत्सरेत्युपलक्षणं दिनरात्रिपक्षमाससंवत्सर लक्षणैर्वयोभिर्गतिर्यस्यसतथा १८ द्विकर्मेत्यादिषुबहुव्रीहिः पंचासुबंधुरःपचासवःप्राणाएवबंधुरोयस्यसतथा एकरश्म्येकदमनामित्यस्यार्थमाह मनइति १९ पंचप्रहरणमित्यस्यार्थमाहपं चेति प्रतीतितेःसुखमनुभवेयत्दुःखंसामृगतृष्णिकाता तदुक्तं सुखवद्दूरतोदृश्यंतत्कालेदुःखमेवयत् । मृगतृष्णेत्यतःप्राहुर्भोगंवैषयिकंबुधाइति २० पंचेंद्रियद्वारेणविषयसेवान्क्षणाहिंसाकला विनोदंकरोतीतिपंचसूनाविनोदकृत् येनसंवत्सरेणद्विपरार्धायुर्लक्षणःकालः २१ परिक्रांत्यापरिवृत्त्यापुनःपुनरावर्तनेनेत्यर्थः २२ क्षयायजगतइतिशेषः २३ भूतोपसर्गाग्रहोपद्रवाः २४

१ मृगतृष्णांप्रधावतीत्यनेनवैषयिकभोगस्यमृगतृष्णात्वोक्त्यामिथ्यात्वमुच्यतइतिभातिअतस्तदुक्तेरभिप्रायप्रमाणेनाहप्रतीतितइति ।

अधुनालक्षणपावृत्त्या उक्तमर्थंविवृत्त्यर्थंमत्यक्षमाह एवमिति दैवभूतात्मसंभवैराधिदैवाधिभूताध्यात्मविषयतयाजातैरेवंबहुविधैर्दुःखैःक्लिश्यमानस्तमोवृतस्तत्परिहारोपायमजानन्देहीशेतेइति श्लोकद्वयेमान्वयः कियंतंकालंशतवर्षंक्षतत्वात् शतायुर्वैपुरुषइतिन्यूनातिरेकसंभवेप्येवमुक्तं दुःखोत्पत्तौकारणमाह कामेति प्राणधर्मानशनपिपासादीनिंद्रियधर्मानंधत्वादीन्मनोधर्मान्शोकमोहादीनात्मनिस्वस्मिन्नध्यस्यारोप्यबुभुक्षितःपिपासितोहमंधःकाणोहंशुष्कोहंमुग्धोहमिति निर्गुणश्चेतनत्वेनस्वतोगुणरहितः ननुशरीरकारणक्षयेमोक्षसंभवात्क्लेशानुभवोप्युपकारायस्यादेहिनइत्यत्राह कर्मकृदिति आचतुर्दशमाद्वर्षात्कर्माणिनियमेनतु । दशावराणांदेहानांकारणानिकरोत्ययमित्यादेर्नकर्मक्षयान्मुक्तिः । नन्वस्तुकर्मकर्तृत्वंहर्पर्पणेनाक्रियमाणानांनदुःखदातृत्वमित्यत्राह ममेति २५ ॥ २६ ॥ कर्मकृदित्यत्रकीदृशंकर्मकरोतीतितत्राह यदेति यदाअहगज्ञानीपुरुषःसंसारेइष्टानिष्टफलदमात्मानंस्वांतर्यामिणमविज्ञायप्राकृतेषुगुणेषुविषज्जते तदास्वगुणाभिमानीदेहीशुक्लादीनिसात्विकादीनिकर्माणियथाकुरुतेतथासात्विकादिशरीरतयाजायते अवशःविष्णुवशःसइत्यनेनकर्मणःस्वातंत्र्यंनिराह आत्मशब्दस्यसाधारणत्वेनकथंनिर्णयइत्यतोभगवंतमित्यादिविशेषणत्रयम् २७

**एवंबहुविधैर्दुःखैर्दैवभूतात्मसंभवैः ॥ क्लिश्यमानःशतंवर्षंदेहेदेहीतमोवृतः २५ प्राणेंद्रियमनोधर्मानात्मन्यध्यस्यनिर्गुणः ॥ शेतेकामलवंध्यायन्ममाहमितिकर्मकृत् २६ यदात्मानमविज्ञायभगवंतंपरंगुरुम् ॥ पुरुषस्तुविषज्जेतगुणेषुप्राकृतेष्वदृक् २७ गुणाभिमानीसतदाकर्माणिकुरुतेऽवशः ॥ शुक्लंकृष्णंलोहितंवायथाकर्माभिजायते २८ शुक्लात्प्रकाशभूयिष्ठाँल्लोकानाप्नोतिकर्हिचित् ॥ दुःखोदर्कान्क्रियायासान्तमःशोकोत्कटान्क्वचित् २९ क्वचित्पुमान्क्वचिच्चस्त्रीक्वचिन्नोभयमंदधीः॥ देवोमनुष्यस्तिर्यग्वायथाकर्मगुणंभवः ३० क्षुत्परीतोयथादीनःसारमेयोगृहंगृहम् ॥ चरन्विंदतियद्दिष्टंदंडमोदनमेववा ३१ तथाकामाशयोजीवउच्चावचपथाभ्रमन् ॥ उपर्यधोवामध्येवायातिदिष्टंप्रियाप्रियम् ३२ दुःखेष्वेकतरेणापिदैवभूतात्महेतुषु ॥ जीवस्यनव्यवच्छेदःस्याच्चेत्तत्तत्प्रतिक्रिया ३३ यथाहिपुरुषोभारंशिरसागुरुमुद्वहन् ॥ तंस्कंधेनसआधत्तेतथासर्वाःप्रतिक्रियाः ३४ नैकांततःप्रतीकारःकर्मणांकर्मकेवलम् ॥ द्वयंह्यविद्योपसृतंस्वप्नेस्वप्नइवानघ ३५**

॥ २८ ॥ त्रिविधानांकर्मणांफलमाह शुक्लादिति प्रकाशभूयिष्ठांस्तेजोमयान्देवादीन्क्रियायासान्क्लेशकर्मसाध्यान्राजसान्दुःखोदर्कान्दुःखमचुरान्मनुष्यादीन्तमःशोकोत्कटान्तामसान्स्वकर्मणःशोकभूयिष्ठान्तिर्यगादीनाप्नोतीत्यन्वयः २९ क्वचित्क्वचिदितिबहुजन्मापेक्षया नोभयंनपुंसकत्वं एतदेवविशिनष्टि देवइति यथाकर्मगुणंयथायथाकर्मणांगुणानामानुगुण्यंतथाभवउत्पत्तिर्दैवादिविषया ३० तत्रदृष्टांतमाह क्षुदिति दंडंप्रहारं दिष्टंदैवतःप्राप्तं ३१ कामेविषयेआशयोयस्यसतथा ३२ एवंभ्रमतःसुखंक्वापिनस्यात्किंतत्राह । दुःखेष्विति दैवादिहेतुषुदुःखेषुमध्येएकतरेणदुःखेनापिजीवस्यव्यवच्छेदोवियोगोनास्तीत्यन्वयः प्रतिक्रिययासुखंस्यादत्राह स्याच्चेदिति तस्यतस्यदुःखस्यप्रतिक्रियापरिहारःसोपिदुःखमेव ३३ स्कंधस्ययथाभवति तथासर्वाःप्रतिक्रियादुःखरूपाइत्यन्वयः ३४ अग्निष्टोमादिकर्मणाऽन्यकर्मनिवृत्तौप्रबोधकाभावात्सर्वदुःखव्यवच्छेदोघटतइतिचेत्तत्राह नैकांततइति केवलंश्रीनारायणार्पणबुद्धिरहितकर्मकर्मणामेकांततोनियमेनप्रतीकारोनभवति कुतइतितत्राह द्वयमिति निवार्यंनिवर्तकंचेतिकर्मद्वयमविद्योपसृतं ईश्वराज्ञानानुविद्धंहियस्मात्तस्मादितिशेषः तत्रदृष्टांतः स्वप्नेवर्तमानःस्वप्नोपघातस्यनिवर्तकोनभवति किंतु अतःप्रबोधोस्मादेवितित्रप्रबोधादावीश्वरएव स्वप्नसंसृत्योःकियानेवविशेषइति ३५

स्वप्नवद्धरेःसंसारोनिवर्ततामितितत्राह अर्थेइति हरेरपरोक्षज्ञानलक्षणपदार्थेअविद्यमानेसंसृतिर्ननिवर्तते कथमिव लीनानांवासनानांगमकेनोद्बोधकेनमनसास्वप्नेविचरतोविषयान्भुंजानस्यपुंसःसंसारो यथाननिवर्तते निद्रायाअनिवृत्तत्वात् तथात्र ननुस्वप्नसंसारयोःकथंसाम्यंस्वप्नदृष्टानांतत्क्षणंनष्टत्वात्संसारदृष्टानांकिंचित्स्थायित्वदर्शनादित्यस्यापीदमेवोत्तरमित्यभिप्रायेणोक्तमर्थइतिअयभावः यथा र्थज्ञानाभावादुभयोःसाम्यंनतुस्थायित्वास्थायित्वात् नहिदृष्टांतदार्ष्टांतिकयोःसर्वसाम्यंक्वापिदृष्टं संसृते:स्वप्नसाम्यंतुयथार्थज्ञानवर्जनमितिवचनात् जाग्रत्यविद्यमानंतुदेहात्मत्वंतुकेवलं । अविद्य मानंस्वप्नेतुजाग्रत्त्वज्ञानमेवचेतिवचनात् उभयत्रयथार्थज्ञानाभावोपिज्ञायते संसारेलब्धजन्मायादिभगवज्ज्ञानंनापादयेत्तर्ह्ययंसंसारोनिष्प्रयोजनःस्यादित्यतोह्यर्थेह्यविद्यमानेपीतिनतुमिथ्यात्वादितीमम र्थंहिशब्देनसूचयति ३६ एवंविधज्ञानोत्पत्तौकिंमुख्यसाधनमत्राह अथेति यस्मात्केनलकर्मणोदुःखहेतुःसंसारःसतिभगवज्ज्ञानेचनिवर्तते अथतस्मात्ससारनिवृत्त्यर्थेऽर्थभूतस्यपुरुषार्थयो ग्यस्यात्मनोजीवस्ययतोयस्यहरेरज्ञानादनर्थपरंपराश्वयोनेःकृकलासयोनिरित्यादिलक्षणासंसृतिर्यातद्व्यवच्छेदस्तस्यसंसारस्यनिवृत्तिर्यथाहरिभक्त्यास्यादितिय तस्तस्मात्तस्यहरेः ज्ञानजननीभक्तिमेव कुर्यादित्यन्वयः ३७ ज्ञानद्वाराभक्तेःसंसारोच्छेदकत्वामितिभावेनाह वासुदेवइति सध्रीचीनेनप्राणायामादिवह्निनानिर्दग्धमलेनांतःकरणेनसमाहितःसम्यक्स्थापितः सध्रीचीनेननिष्कामेनपुरुषे

**अर्थेह्यविद्यमानेपिसंसृतिर्ननिवर्तते ॥ मनसालिंगरूपेणस्वप्नेविचरतोयथा ३६ अथात्मनोर्थभूतस्ययतोनर्थपरंपरा ॥ संसृतिस्तद्व्यवच्छेदोभक्त्यापरम याहरौ ३७ वासुदेवेभगवतिभक्तियोगःसमाहितः ॥ सध्रीचीनेनवैराग्यंज्ञानंचजनयिष्यति ३८ सोचिरादेवराजर्षेस्यादच्युतकथाश्रयः ॥ शृण्वतःश्र द्दधानस्यनित्यदास्यादधीयतः ३९ यत्रभागवताराजन्साधवोविशदाशयाः ॥ भगवद्गुणानुकथनश्रवणाव्यग्रचेतसः ४० तस्मिन्महन्मुखरितामधुभिच्च रित्रपीयूषतोयसरितःपरितःस्रवंति ॥ तायेपिबंत्यनुसवंनृपगाढकर्णैस्तान्नस्पृशंत्यशनतृड्भयशोकमोहाः ४१ एतैरुपद्रुतोनित्यंजीवलोकःस्वभावजैः ॥ नकरोतिहरेर्नूनंकथामृतनिधौरतिम् ४२ प्रजापतिपतिःसाक्षाद्भगवान्गिरिशोमनुः ॥ दक्षादयःप्रजाध्यक्षानैष्ठिकाःसनकादयः ४३ मरीचिरत्र्यंगिरसौपुल स्त्यःपुलहःक्रतुः ॥ भृगुर्वसिष्ठइत्येतेमदंताब्रह्मवादिनः ४४ अद्यापिवाचस्पतयस्तपोविद्यासमाधिभिः ॥ पश्यंतोपिनपश्यंतिताद्विष्णोःपरमंपदम् ४५ शब्दब्रह्मणिदुष्पारेचरंतउरुविस्तरे ॥ मंत्रलिंगैर्व्यवच्छिन्नंभजंतोनविदुःपरम् ४६**

णेतिवा यद्यपिभक्तेःपूर्वभाविवैराग्यंतथापिपश्चात्दृढंकृतवतीत्यतोवैराग्यंजनयिष्यतीतिज्ञानंद्विविधं ॥ ३८ ॥ भक्तियोगस्यसाधनमाह सोचिरादिति अच्युतकथाआश्रयोयस्यसतथा अनेनह रिकथाभक्तियोगस्यसाधनमच्युतकथाधिकारप्रकारमाह शृण्वतइति श्रद्धादिगुणसंपत्तिरधिकारलक्षणम् ३९ कुत्रेयसंभूयतइतितत्राह यत्रेति अव्यग्रचेतसस्तदेकचित्ताः ॥ ४० ॥ तस्मिन्सतां समाजेमहद्भिर्मुखरिताःशब्दात्मनानिर्गमितायास्ताःसरितस्तान्पुरुषान् ४१ अशनादिस्पर्शफलमाह एतैरिति एतैरशनादिभिःस्वभावजैःसहजैर्हरिकथामृतानिधिरातिविघ्नफलैः ४२ अधुनाश नाद्युपद्रवविधुरेणापिसाकल्येनश्रीहरिज्ञानंदुर्लभमित्याह प्रजापतिरित्यादिना प्रजापतिपतिर्ब्रह्माविरिंचश्चेतिकथ्यतइतिवचनात्प्रजापतिपतिर्ब्रह्मा ४३ अहमेवांतोयेषांतेमदंताः ४४ ब्रह्मवा दित्वेपिवाक्पटुत्वाभावान्नपश्यंतीत्यतोवाचस्पतयइति यत्पश्यंतोपिनपश्यंतिताद्विष्णोःपरमंपदमित्यन्वयः ॥ ४५ ॥ तत्साधनमानबाहुल्याभावात्तद्विषयज्ञानानुदयान्नपश्यंतिचेदत्राह शब्देति निर्दोषःशब्दआगमइतिनिर्दोषशब्दराशौदुष्पारेऽनंते कुतइत्यतउक्तं उरुविस्तरइति चरंतोजिज्ञासयावर्तमानाअपिमंत्रलिंगैर्वेदोक्तलक्षणैर्व्यवच्छिन्नमुक्तमात्रंनतुसम्यगुक्तं एवंविधपरंपरमात्मा नंभजंतउपासमानाअपितत्रविदुरित्यन्वयः बिभ्रद्द्रापिंहिरण्मयंवरुणोवस्तनिर्णिजमित्यादिवेदोवदन्नप्यनुभवानारोहयितृत्वेनवक्तिअतोऽप्रसिद्धस्वरूपत्वेनसम्यक्नजानाति तस्यसेवापिनव्यर्थातत्प्रसादे

नानुभवारोहोपिक्रमेणस्यादिति तदुक्तं वेदोवदन्नपिहारेंनसम्यग्वक्तिकुत्रचित् । नारोहयत्यनुभवमप्रसिद्धस्वरूपतः । तथाप्यनुभवारोहःप्रसन्नेकेशवेभवेत् । किंचिदेवसम्यक्स्वयंचानुभवत्य मुमिति यद्वा मंत्राख्यैर्लिंगैर्हेतुभिर्व्यवच्छिन्नंक्रोडीकृतंकृष्णरामादिलक्षणंपरमंभजंतोपितत्प्रसादमंतरेणपरंव्याप्तंसाकल्येननविदुरिति । शबलंभजंतःपरंशुद्धंनविदुरित्यर्थोनुपपन्नः परमार्थभेदाभावेनै कस्मिञ्ज्ञातेऽन्यज्ञानस्यनांतरीयकत्वात् येनाश्रुतंश्रुतंभवतीतिश्रुतेश्चयथारामस्मरणेनकृष्णस्वरूपज्ञानंजांबवतस्तयोरेकत्वादित्याहुः ४६ नन्विदानींमायपाक्षिप्तमपिचेतनसमवेतंज्ञानमदृष्टवशात्क स्मिंश्चित्कालेनुसंधानलक्षणंकिंचिद्विशेषमापादयेत् अतोनुसंधानाननुसंधानेयुक्तेइतितत्राह सर्वेषामिति इहकर्मभुविसर्वेषांजंतूनांसततंदेहपोषणेप्रज्ञाबुद्धिःसमायत्तासततास्ति नृणांतयाप्रज्ञयाकोवि शेषः स्वरूपानुसंधानलक्षणःसमापन्नो नकोपीत्यन्वयः त्वत्पक्षेत्वदृष्टादीनांमिथ्यात्वेनार्थक्रियायामसामर्थ्यादेवनकस्यचिदैक्येनसंधानमवश्यंभावीति ४७ जीवन्मुक्तयवस्थायामपिजीवात्मत्वा हानेर्हर्ह्यैभेदःसत्यइतिभावेनस्वरूपत्वासिद्धयेसाधनमाह लब्ध्वेति इहबहुजन्मनामंतेभगवद्बुद्धोधितपूर्वादृष्टविशेषान्मनुष्यत्वंलब्ध्वा ममाहमितिदेहाद्यसद्ग्रहंसंसारेदेहीहित्वात्मसत्यात्मज्ञानेनेदंकलेवरं विहायसंसारीजीवात्माविशिष्यते नतुब्रह्मेत्यन्वयः ४८ हरिप्रसादंविनातज्ज्ञानंनस्यात्तस्मिन्सत्युत्पद्यमानस्यज्ञानस्यफलमाह यदेति यदात्मेतितूपगच्छतिग्राहयतिचातिसूत्रोक्तप्रकारेणात्मभावितः ममस्वामीहहरिर्नित्यमितिभावेनोपासितोभगवान्यस्योपासकस्यानुगृह्णात्यात्मानंप्रकाशयानुभवमुत्पादयति सपुमाँल्लोकेवेदेचपरिनिष्ठितांमतिंजहाति बाह्यपदार्थविषयांसंविदमपहायपरमात्मानमेवस वैरिंद्रियैरनुभवन्नास्तइत्यन्वयः अनेनोपासकस्यमुक्तिकल्पनेकथाध्वनयति तदुक्तं यदात्वनुभवीभूयाच्छब्दमात्रानुरोधनम् । त्यक्त्वाथतंविदुःप्राज्ञास्त्यक्तवेदइतिस्मह । यदैवत्यक्तवेदःस्या

**सर्वेषामपिजंतूनांसततंदेहपोषणे ॥ अस्तिप्रज्ञासमायत्ताकोविशेषस्तयानृणाम् ४७ लब्ध्वेहांतेमनुष्यत्वंहित्वादेहाद्यसद्ग्रहम् ॥ आत्मसत्याविहाये दंजीवात्मासाविशिष्यते ४८ यदायस्यानुगृह्णातिभगवानात्मभावितः ॥ सजहातिमतिंलोकेवेदेचपरिनिष्ठिताम् ४९ तस्मात्कर्मसुबर्हिष्मन्नज्ञानादर्थ काशिषु ॥ मार्थदृष्टिंकृथाःश्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु ५० स्वलोकंनविदुस्तेवैयत्रदेवोजनार्दनः ॥ आहुर्धूम्रधियोवेदंसकर्मकमतद्विदः ५१**

दथास्मान्मुच्यतेभयादिति । निर्दोषशब्दलक्षणवेदप्रहाणेबौद्धराद्धांतानुप्रवेशःस्यादित्यतउक्तं प्रायस्तुवैदिकाएवरुद्राद्याअपिवैपुरेति आदिशब्देनमुक्तियोग्यमात्रंगृहीतं पुरेत्यनेनेजन्मप्रभृतिवै दिकत्वमस्तीतिज्ञापयति प्रायइत्यनेनत्यक्तवेदत्वंपश्चादिति तदप्येतत्द्वयंकस्यमुख्यमित्यतउक्तं वैदिकस्त्यक्तवेदश्चब्रह्मैवैकःप्रजापतिरिति । रुद्रादीनांकथंकारंपश्चादपित्यक्तवेदत्वंप्राप्तमित्यत उक्तं ततस्तुकेशवंभक्त्यासंपूज्यबहुजन्मसु त्यक्तवेदत्वमापन्नाःप्रसादात्परमेष्ठिनइतिकेवलंवेदशब्देनजानन्वैदिकउच्यते वेदंविनाप्यनुभवाज्जानंस्तुत्यक्तवैदिकइत्यनेनामिथोविरुद्धयोर्वैदिकत्यक्तवेद शब्दयोरेकाधिकारणत्वंकथंयुज्यतइतीदंचोद्यमपनोदितं तत्त्वंवेदानुसारेणचिंतयन्वैदिकोभवेत् । वेदऊहामनुसरेद्यस्यसत्यक्तवैदिकइत्यनेनवेदशब्देनज्ञातृत्वंतमंतरेणानुभवितृत्वंचकथंविविच्यतइति चोद्यंपरिहृतं त्यक्तवैदिकस्त्यक्तवेदराशिरित्यर्थः ४९ उपसंहरति तस्मादिति यस्माज्ज्ञानेनैवमोक्षस्तस्मादज्ञानाद्भगवत्तत्त्वापरिज्ञानादर्थकाशिषु प्रयोजनत्वेनप्रकाशमानेष्वग्निष्टोमादिलक्षणे षुकर्मस्वर्थदृष्टिंमाकृथानकुरुइत्यन्वयः तत्प्रवृत्तौनिमित्तमाह श्रोत्रस्पर्शिष्विति अपामसोमममिितिश्रवणेश्रोत्रसुखंस्पृशंतीति श्रोत्रस्पर्शीनितेषु । हेयत्वेकारणवक्ति अस्पृष्टवस्तुष्विति परमा त्माख्यवस्तुसंबंधगंधरहितेषु ५० अज्ञानादित्युक्तंविवृणोति स्वलोकमिति येकर्मनिष्ठास्तेयत्रलोकेजनार्दनोदेवोस्तितंस्वलोकस्वेनप्राप्यंवैकुंठादिस्थानंनविदुरित्यन्वयः अनेनवैकुंठादिस्थानमीह शमितिनजानंति किमुतहरिमित्यर्थात्ध्वनितमभिविज्ञापते अन्यथाविदुश्चेत्याह आहुरिति धूम्रेधूमरतेधूममार्गेधीर्येषांतेधूम्रधियःतत्रनिमित्तमाह अतद्विदइति तत्स्यवेदस्यतत्त्वंब्रह्मलक्षणंनविदं तीति कर्मणासहवर्ततइतिसकर्मकस्तम् ५१

कर्मैविनान्यन्नवक्तीतिसकर्मकत्वमित्ययमविवेकइत्याह आस्तीर्यैति बृहतांबहूनांवधात्संज्ञपनलक्षणात् यष्टाहमितिमानीत्वंकर्मनावैषिप्राचीनाग्रदर्भास्तरणंकृत्वापशुसंज्ञपनमेवजानासिनतुकर्मस्व रूपमित्यर्थः कुरुकर्मैवतस्माच्चंपूर्वैःपूर्वतरंकृतमित्यादिनाविधीयमानंयत्परंकर्मतन्नजानासीत्युच्यते नतुकर्ममात्रं ५२ कल्पोक्तद्रव्यसामग्र्याक्रियमाणस्यकर्मणःकथपरत्वाभावइनितत्राह तत्कर्मेति हरेस्तोषोनुग्रहलक्षणोयस्मात्तत्कर्म । तस्मात्ब्रह्मार्पणबुद्ध्याक्रियमाणस्यकर्मणःपरत्वं नद्रव्यसामग्र्या तस्यावरत्वेनदारिद्र्यहेतुत्वात् ननुममापिवेदाविद्याधिकारित्वेनकर्मानुष्ठानस्यतत्पूर्वकत्व मस्तीतितत्राह साविद्येति ययाविद्ययातस्यहरेर्मतिर्ज्ञानमुत्पद्यते साविद्यावेदार्थज्ञानलक्षणानान्याअन्यात्वविद्याकर्मविषयाहेयपक्षइति कोसौहरिर्यैनतज्ज्ञानपूर्वकमनुष्ठितकर्मसफलंस्यादत्राह हरिरिति दुरितहरणशीलत्वाद्धरिर्देहभृतांजीवानामात्मास्वामीस्वयंसर्वव्यावृत्तःप्रकृतिर्मूलकारणमीश्वरोणिमाद्यैश्वर्यरूपषडांगुणानामधिकरणभूतोयःसहरिरितिज्ञातव्यम् ५३ हरिरेवंविधश्चेत्ततः किमत्राह तत्पादेति यतोयस्मात्क्षेमोभवेन्नृणांतस्यहरेःपादमूलंशरणंरक्षकं शरणंगृहरक्षित्रोरित्यभिधान ननुपित्रादीनांवयसिगतेपुत्रादीनामपिशरणत्वदर्शनात्किंविशिष्योच्यतइतितत्राह सवाइति भगवत्संपर्कात्पुत्रादीनांप्रियत्वात् हरेःप्रियतमत्वं । कुतइतितत्राह यतइति श्रीनारायणचरणारविंदशरणंगतस्यास्यसंसारिणोऽण्वपिभयंनास्तियतोऽथतस्माद्धरिः पुत्रादेःप्रेष्ठइतिकृत्वापुंस

आस्तीर्यदर्भैःप्रागग्रैःकार्त्स्न्येनक्षितिमंडलम् ॥ ततोबृहद्वधान्मानीकर्मनावैषियत्परम् ५२ तत्कर्महरितोषंयत्साविद्या तन्मतिर्यया ॥ हरिर्देहभृतामात्मास्वयंप्रकृतिरीश्वरः ५३ तत्पादमूलंशरणंयतःक्षेमोनृणामिह ॥ सवैप्रियतमोह्यस्य यतोनभयमण्वपि ॥ इतिवेदसवैविद्वान्योविद्वान्सगुरुर्हरिः ५४ ॥ नारदउवाच ॥ प्रश्नएवंहिसंछिन्नोभवतःपुरुषर्षभ अत्रमेवदतोगुह्यंनिशामयसुनिश्चितम् ५५ क्षुद्रंचरंसुमनसांशरणेमिथित्वारक्तंषडंघ्रिगणसामसुलुब्धकर्णम् ॥ अग्रेवृ कानसुहृदोविगणय्ययांतंपृष्ठेमृगंमृगयुलुब्धकबाणभिन्नम् ५६

स्तत्पादमूलंशरणमित्यन्वयः एवंवेत्तुरेवविद्वत्तानान्येविदइत्याह इतीति इतिशब्दोहेत्वर्थः यस्माद्धरिश्चरणशरणरयमोक्षादिसर्वपुरुषार्थावाप्तिस्तस्माद्यएवंवेदसवाएवविद्वान्नान्यः कुतः स्वगुरुःस्वापेक्षिताशेषज्ञानोपदेष्टा तत्रहरेःसन्निधानविशेषात्तत्सामर्थ्यमस्येतिभावेनाह हरिरिति अनेनगुर्वादिशब्दप्रयोगेणदेवादीनांमुख्यविद्वत्तेत्याह ५४ अत्रेति निशामयशृणु ५५ स्वा भीष्टप्रकाशनायस्वयमेवव्याचष्टे सुमनसामिति सुमनसांसमानधर्माणांपुष्पवत्कोमलशरीराणांशरणआश्रमे अन्यत्रपुष्पाश्रयेवने क्षुद्रंपुष्पमधुगधवदल्पं किंतत्काम्यकर्मविपाकजंप्रवृत्तकर्मफलंत्रि षयसुखलेशंजैह्वचोपस्थादिविषयं चरंचरत भुंजानमितस्ततोगत्वाविचिन्वंतमन्विच्छंतंतदर्थित्वामिथुनीभूयतदामिनिविष्टचेतनंषडंघ्रिगणसामगानवत्भ्रमरनिकरसुंदरगानवदतिमनोहरस्त्रीजनसंला पेषुअतितरामत्यंतंप्रलोभितौकर्णौयस्यसतथातं तदेकमग्नश्रोत्रमित्यर्थः कुतोऽग्रेवृकान्वृकसधर्मानसुहृदः असुलक्षणमायुर्हरतोहोरात्रादिकालविशेषानविगणय्यागणयित्वायांतंक्रीडागृहेविहरंत मित्यर्थः पृष्ठेपरोक्षमवस्थितःउपशयेस्थितोलुब्धकसमानःकृतांतःशरसमेनादृष्टेनयमात्मानपराविध्यति तमिममात्मानजीवंभिन्नहृदयंमृगपर्यालोचनयालोच्यचद्रष्टुमर्हसीत्यर्थः कथमिवमृगयुहतं मृगंहरिणमिवेति ५६

मद्वाक्येश्रद्धाचेद्वितमुपदिशामीत्याह सत्वमिति यःपूर्वंकमठःसत्वंमृगवच्चेष्टितंचेष्टायस्यसतथातं मृगस्येवविषयानन्विच्छतोजीवस्यचेष्टितमितिवा विचक्ष्वपश्य आत्मनस्तवचित्तंपूर्वंकृतःकरणस
मथमंतःकरणविशेषमतःस्थितेहृदिसर्वपापहरेहृत्वाग्निहरौनियच्छतत्रैवस्थापय कर्णधुनींकर्णधारामिवस्थितां चिचिंत्तुद्धिचहरौस्थापय कर्णादीद्रियप्रवृत्तिहेतुभूतांवा कर्णाख्यधुनींवा तत्कथाश्रवणे
बुद्धिंचतद्गुणनिर्णयेवा असत्तमानांविषयिणापूथस्यगाथाविषयवार्ताविदाकारोयस्मिन् तमंगनाश्रमंजाहि हंसोनिर्दोषःपरमात्माममशरणमितिकृत्वाप्रीणीहितृप्तोभव यद्वा हंसानांसंन्यासिनांशरणंप्रीणी
हीति क्रमेणसाधनसामग्र्यनुसारेणविरमसंसाराद्विरताभूयाइत्यन्वयः ५७ राजातावदिदयंतंकालंमयाभाषितं तदस्यहृद्गतंनाभून्मतिवाक्याश्रवणादितिसंशयनिरासायाह श्रुतमिति श्रुतश्रुति
प्रसिद्धमन्वीक्षितंविचारितमात्मयोग्यज्ञानंयद्भगवानभाषतनैतन्ममोपाध्यायाजानंति तत्रहेतुमाह किंनेति प्रथमंत्वन्मुखाच्छ्रुतंपश्चादन्वीक्षितमाम्रेडितमितिवा ५८ अथकितत्राह संशयइति अत्रास्मि
न्नर्थेमेसंशयोनच्छिन्नःअल्पत्वान्मयानच्छेदितइति नेत्याहतत्कृतइति तत्कृतेतदर्थविषयेमहान्संशयइत्यर्थः। सूक्ष्मत्वेनाज्ञातविषयत्वात् महत्त्वं नतुस्थूलपरिमाणत्वादितिभावेनाह ऋषयइति
कुत्रमुह्यंतीत्यत्राह यत्रेति यत्रसंशयार्थेचक्षुरादींद्रियव्यापारागोचरत्वादित्यर्थः अतस्त्वांपृच्छामीतिशेषः ५९ कोसौसंशयइत्यत्राह कर्माणीति इहपुमान्येनदेहेनकर्माण्यारभतेतस्यप्रारब्धकर्मक्षयेतं

अस्यार्थःसुमनसांसमानधर्मोणांस्त्रीणांशरणेआश्रमेपुष्पमधुगंधवत्क्षुद्रंकाम्यकर्मविपाकजंकामसुखलवंजैह्व्योपस्थादिविचिन्वंतंमिथुनीभूयतदभिनि
वेशितमनसंषडंघ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितरामतिप्रलोभितकर्णमग्रेवृकयूथवदात्मनआयुर्हरतोऽहोरात्रांतान्कालविशेषान
विगणय्यगृहेषुविहरंतंपृष्ठतःपरोक्षमनुप्रवृत्तोलुब्धकःकृतांतःशरेणयमिहपराविध्यतितमिममात्मानमहोराजन्भिन्नहृदयंद्रष्टुमर्हसीतियथामृगयुहतंमृगमि
ति॥सत्वंविचक्ष्वमृगचेष्टितमात्मनोंतश्चित्तंनियच्छहृदिकर्णधुनींचचित्तिम्॥जह्यंगनाश्रममसत्तमयूथगाथंप्रीणीहिहंसशरणंविरमक्रमेण५७॥ राजोवाच॥
श्रुतमन्वीक्षितंब्रह्मन्भगवान्यदभाषत ॥ नैतज्जानंत्युपाध्यायाःकिंनब्रूयुर्विदुर्यदि ५८ संशयोत्रनमेविप्रसंछिन्नस्तत्कृतेमहान् ॥ ऋषयोपिहिमुह्यं
तियत्रनेंद्रियवृत्तयः ५९ कर्माण्यारभतेयेनपुमानिहविहायतम्॥ अमुत्रान्येनदेहेनजुष्टान्यसकृदश्नुते ६० इतिवेदविदांवाचःश्रूयंतेतत्रतत्रह ॥ कर्मचक्रि
यतेप्रोक्तंपरोक्षंनप्रकाशते ६१ ॥ नारदउवाच ॥ येनैवारभतेकर्मतेनैवामुत्रतत्पुमान् ॥ भुंक्तेह्यव्यवधानेनलिंगेनमनसास्वकम् ६२

देहंविहायामुत्रपरलोकेसपुमान्येनप्रेताख्येनजुष्टानिकर्मफलानिअश्नतइतियत्कथमन्यःकर्तान्योभोक्तेत्यकृताभ्यागमादिदोषापत्ते· ६० तदप्रामाणिकमितिचवक्तुंनशक्यमित्याह इतीतिश्रूय
तइत्यनेनश्रुतयःस्मृतयोपिगृह्यंते तेनाबालवृद्धप्रसिद्धिर्द्योत्यते अतोमहान्संशयइत्यर्थः अनेनदेहव्यतिरिक्तात्मसद्भावेकथमितिसंशयोयुज्यते सएवनास्ति देहभस्मीभावेनतस्यापिभस्मीभूत
त्वादितिमतमपिप्रत्युक्तं आगमस्याप्रामाण्ये तद्गुरुवाक्यस्यापिसमन्यायःस्यादिति किंच स्वर्गादिकामैर्जनैःकर्मक्रियते तत्परोक्षपश्चान्नप्रकाशतेनष्टत्वादतस्तादृशंकर्माऽर्थफलंनददाति नहिमृतः
पितापुत्रायानीयकदलीफलंराति।तियुज्यतइत्ययमन्योपिसंशयः ६१ प्रथमप्रश्नप्रत्याह येनेति लिंगशरीरंतस्यमनःप्रधानत्वाल्लिंगेनमनसेतिसामानाधिकरण्य मनसाप्रेरितेनयेनलिंगेनदेहेन
पुमान्कर्मारभतेतेनैवामुत्रस्वर्गादावव्यवधानेनप्रत्यक्षेणकालेनस्वकंकर्मभुंक्तेतत्फलंसुखदुःखलक्षणमनुभवतीत्यन्वयः स्थूलशरीरस्यलिंगनिमित्तत्वात्तन्नाशेपिकर्तुर्लिंगस्याविनष्टत्वान्नाकृताभ्यागमा
दिदोषप्रसक्तिःसूक्ष्मरूपेणसत्त्वात् । लिंगेनलीनकर्मफलज्ञापकेनमनसातत्फलानुभवोपपत्तेरितिवा ६२

कथमिवस्वप्रकालेश्वसंतंप्राणवृत्तिमंतंपर्यंकेशयानंदृष्टिविषयंदेहमुत्सृज्यपुरुषोभोक्तातादृशेनशयनेशयानशरीरसदृशेनइतरेण पतितदेहाविलक्षणदेहेनवात्मानिमनस्याहितंसंनिहितंकर्मभुंक्तेएतदुक्तंभवति स्थूलदेहस्यशय्यायांशयनस्वात्स्वप्नभोगनिमित्तकर्मोपार्जितेनदेहेनलिंगिनएवयथाभोक्तृत्वमत्राप्येवमिति आत्मन्याहितमित्यनेनद्वितीयप्रश्नोपिपरयुक्तइतिज्ञायते ६३ ननुसाक्षात्कर्तृत्वंभोक्तृत्वंमनसोलिंगस्योतोभयोस्तद्वतोवेतिसंशयनिरासार्थमाह ममेति यःपुमान्ममेदंसुखसाधनमितिमनसासंकल्प्यकृष्णामित्रस्याहिताग्नेःपुत्रोसावहंनारायणमित्रोयाज्ञिक कथंस्यामितिवाचावदन्यद्यत्कर्मकर्तुंगृह्णीयादुपादत्तेसएवपुमांस्तद्राद्धंसिद्धंकर्मभुंक्ते येनभुक्तशेषेणकर्मणापुनर्भवःपुनरुत्पत्तिर्मर्त्यलोकइतिशेषः तस्मात्साक्षात्कर्ताभोक्ताचपुरुषएवतत्रमनसोंतरंगत्वमितिभावः अनेनजन्मांतरेपिकर्मणःफलदातृत्वप्रतीते किंपुनःपरलोकइतिदर्शितं ६४ ननुकर्मणोदेहाद्यारंभकत्वंकथंसंजाघटीति आचरणानंतरक्षणएवनष्टत्वादतएवमनसोप्यंतरंगत्वमितिनशक्यं कृष्णचापमुक्तशरवेगसंस्कारवत्कर्मणोपिकार्यकारणक्षमत्वोपपत्तिरंतरंगत्वंमनसोन्वयव्यतिरेकसिद्धमित्यभिप्रेत्याह यथेति उभयेषांज्ञानकर्मेंद्रियाणामुभयविधैरीहितैश्चित्तमंतःकरणापरपर्यायमस्तीत्यनुमीयते तस्मिन्सतिज्ञानकर्मचोत्पद्यते असति आलोकादिसाधनसामग्र्यांसत्यामपि । तस्मात्तन्नियामकमंतःकरणंकिंचिदस्तीतिज्ञायतेयथा तथांतःकरणवृत्तिविषयेषुमनोव्यापारे प्राग्देहजातंकर्मेदृशंशुक्लरक्तकृष्णान्यतममितिलक्ष्यतेऽनुमीयतंदेहवृत्तएवेदृशज्ञानसंभवात्कर्मणोदेहाद्यारंभकत्वंचयुक्तमितिबोद्धव्यं ६५ किंचप्राणिनांप्रवृत्तिवैचित्र्यदृश्यसेतदपिवासनावैचित्र्यविनानचघटतइतिभावेनाह नानुभूतमिति यद्रूपंयस्यशुक्लादिरूपंतद्यद्रूपं

शयानमिममुत्सृज्य श्वसंतंपुरुषोयथा ॥ कर्मात्मन्याहितंभुंक्तेतादृशेनेतरेणवा ६३ ममेतिमनसायद्यदसावहमितिब्रुवन् ॥ गृह्णीयात्तत्पुमान्राद्धंकर्मयेनपुनर्भवः ६४ यथानुमीयतेचित्तमुभयैरिंद्रियेहितैः ॥ एवंप्राग्देहजंकर्मलक्ष्यतेचित्तवृत्तिभिः ६५ नानुभूतंक्वचानेनदेहेनादृष्टमश्रुतम् ॥ कदाचिदुपलभ्येतयद्रूपंयादृगात्मनि ६६ तेनास्यतादृशोराजन्लिंगिनोदेहसंभवः ॥ श्रद्धस्वाननुभूतार्थंनमनःस्प्रष्टुमर्हति ६७ मनएवमनुष्यस्यपूर्वरूपाणिशंसति ॥ भविष्यतश्चभद्रंतेतथैवनभविष्यतः ६८

यादृग्यज्जातिलक्षणंयस्यतद्यादृक् यद्वस्तु स्वात्मनिकचित्कस्मिंश्चिद्देशेकदाचित्कालेऽनेनेदृग्देहेनादृष्टमश्रुतंवानुभूतमननुभूतंवास्मानिमनस्युपलभ्येततेनोपलंभेनपूर्वस्मिन्जन्मनिदृष्टंश्रुतमनुभूतमित्युपलभ्येतबुध्येतनत्वन्यथा । अनेनदेहेनजाग्रदवस्थायामदृष्टमश्रुतमननुभूतंनोपलभ्येतस्वप्नेकिंतुस्वप्नेदृष्टादिकमेवयथातथापूर्वस्मिन्जन्मनिदृष्टादिकमनेनदेहेनपश्यतीतिवा ६६ ननुकर्मणोदेहाद्यारंभकत्वंकथमित्यस्यचोद्यस्यपरिहारःकथस्फुटितइतितत्राह तेनेति यतःपूर्वकर्मानुसारेणदर्शनादिकंतेनतदनुसारेणास्यलिंगिनोदेहसंभवः तादृशःपूर्वानुसृतइतिश्रद्धस्वाभिप्रकुरु कुतइत्यतउक्तमेवार्थंस्मारयति अननुभूतार्थमिति यतःपूर्वस्मिन्जन्मन्यननुभूतोयोर्थस्तंमनःस्प्रष्टुंनार्हतीतिइत्यन्वयः ६७ ननुदेहवन्मनसोप्यनेकत्वेकथमेतदुक्तघटतइत्याशंक्यामोक्षांलिंगशरीरवद्वाह्यांतःकरणमेकमेवेत्यभिप्रेत्याह मनइति मनसोनेकत्वेपूर्वानुभूतहितादिज्ञापनमनुपपन्नंस्यादित्यर्थः रूपशब्देपशौश्लोकेग्रंथावृत्तौहितादिष्विवितियादवः स्वानुभवसिद्ध सर्वानुभूतार्थोपि । कर्मणोदेहाद्यारंभकत्वमुक्तंमनसासंयुक्तत्वादित्यतोवाह मनइति यथोततवमनोभविष्यतस्तथानभविष्यतःस्ववस्तुनोविषयंभद्रंशंसतिज्ञापयति तथामनुष्यस्यमनःपूर्वरूपाणिसात्त्विकानिकर्माणिशंसति यथानभविष्यतोवर्तमानस्यतवमनःपूर्वरूपाणिशंसत्येवंभविष्यतोपितावद्भद्रंज्ञापयतीतिवा ६८



१ कथंसंजाघटीतिपूर्वेणान्वयः २ यथामनएवपूर्वरूपाणिशरीराणिशंसतिज्ञापयति तथैव भविष्यतःस्वर्गादिकंगच्छतः नभविष्यतःवर्तमानस्यचतेतवभद्रंपूर्वोत्तरकालगतंपुण्यरूपमदृष्टमनएवशंसतिअस्तीतिज्ञापयति कथमन्यथा तवेदानींसाम्राज्याविपत्यमुत्तरजन्मस्वर्गप्राप्तिःस्यादित्याशयः

ननुयदवादिपूर्वानुभूतमेवमनःस्वप्नमर्हतिनाननुभूतमितितदयुक्तं यतःस्वप्नादौस्वशिरश्छेदनादिकमत्यंतादृष्टचरंदृश्यतेतत्राह अदृष्टमिति इहजन्मन्यदृष्टमश्रुतंवाक्वचिन्मनसिदृश्यतेतत्तथाघटतेतथा नुमंतव्यंघटनीयं कथमत्राह देशेति देशकालक्रियाआश्रयोयस्यदर्शनस्यतत्तथादेशांतरेशिरःकालांतरेछेदनक्रियांदृष्ट्वास्वप्रेतयोःसामानाधिकरण्यंभ्रांत्यापश्यतीति अथवानानुभूतमित्यनेनयदवा दितदनेनानुमीयते अत्रजन्मनियदृष्टादिकदृश्यतेमनासितत्तथापूर्वजन्मनिदृष्टंश्रुतमनुभूततथानुमानकर्तव्यं जाग्रतिबाह्यालीप्रदेशेपूर्वाह्णेचरंतमश्वंदृष्ट्वास्वप्नेपथातदवस्थंपश्यतितथाकर्माण्यपित थार्यावर्तेद्वापरेसंभूतोर्जुनःपंचतामुपेत्यकेरलदेशेकलिकालेजातोयदत्राहष्टादिकपश्यतिकरोतिवातदार्यावर्तेद्वापरेनुष्ठितमितिज्ञातव्यं दृष्टश्रुतदर्शनादिमात्रएवदृष्टांतइतिनविरोधः ६९ ननुयदि पूर्वदृष्टादिकमेवेदानींदृश्यतेश्रूयतेइतिमतंतर्हिजन्मनामनंतत्वादहमहमिकयायुगपदर्शनादिकंप्रसज्येततदयुक्तंविरोधादत्राह सर्वइति येसर्वेशब्दादयोविषयाबहुजन्मस्विंद्रियद्वारेणमनसिप्रविष्टावासनारू पेणस्थितास्तेसर्वेंद्रियगोचराविषयाः सुमनसोदेवस्यहरेरिच्छयाक्रमानुरोधेनक्रममनुसृत्यमनसिजीवेवर्गशआयांति जवाद्वेगात्यांतिचनदीप्रवाहवदित्यन्वयः इंद्रियद्वारेणमनसिप्रविष्टाइंद्रियगो चराःशब्दादयः क्रमशोजीवेवर्गशः आयांतिपुनःसुष्ठुमनसोवेगाद्यांतिच सर्वपदार्थानामिहजन्मनिजन्मांतरेवामनसींद्रियद्वारेणप्रवेशात्संस्काररूपेअस्थिरत्वादिहादृष्टस्यवाश्रुतस्यानुभवोयुज्यते इत्यतोवाह सर्वइति दवीयसिदेशेकालेचानुभूतानामधुनानुभवःकथंघटतइत्यतोवाह सर्वइति अचिंत्यानंतेश्वरशक्तिःप्रयोजकेतिसंतोष्टव्यम् ७० जीवस्यमनआदेःस्वरूपत्वेऽनेकजन्मानुभूतपदार्थ संस्काराणामनेकत्वेनतदनुभवेनैवकालगमनात्कदाचिन्मुक्त्यनुदयेनयावज्जीवंसंसारएवस्यात् अस्वरूपत्वेलिंगशरीरादेः स्थूलदेहनाशएवनाशसंभवेनपूर्वदृष्टादिपदार्थदर्शनाद्यनुपपत्तिरितितत्राह

**अदृष्टमश्रुतंचेहक्वाचिन्मनसिदृश्यते ॥ यथातथानुमंतव्यंदेशकालक्रियाश्रयम् ६९ सर्वेक्रमानुरोधेनमनसींद्रियगोचराः ॥ आयांतिवर्गशोयांतिसर्वेसु मनसोजवात् ७० सत्त्वैकनिष्ठेमनसिभगवत्पार्श्ववर्तिनि ॥ तमश्चंद्रमसीवेदमुपरज्यावभासते ७१ नाहंममेतिभावोयंपुरुषेव्यवधीयते ॥ तावद्बुद्धि मनोक्षार्थगुणव्यूहोह्यनादिमान् ७२ सुप्तिमूर्च्छोपतापेषुप्राणायनविघाततः ॥ नेहतेहमितिज्ञानंमृत्युप्रज्वारयोरपि ७३**

सत्त्वैकनिष्ठइति सत्त्वोजीवस्तदेकनिष्ठेतद्रूपेभगवत्पार्श्ववर्तिनिभगवद्विषयेमनसिइदंलिंगशरीरादिकमुपरज्यस्वेच्छयासंगमप्यावभासते भिन्नतयेतिशेषः कथमिवचंद्रमसितमोराहुरिवमेघांधकारो वा लिंगशरीरादेरस्वरूपत्वेपिभगवदपरोक्षज्ञानंविनास्थूलदेहनाशएवनाशाभावाच्चिरायुष्ट्वेनास्थितिसंभवात्पूर्वकर्मनिमित्तसुखदुःखानुभवोघटतइतिभावः यद्वा सत्त्वगुणस्यैकत्वनिष्ठोत्कर्षोयस्मिंस्त त्सत्त्वैकनिष्ठंतस्मिन्भगवत्पार्श्ववर्तिनीत्यनेनसत्त्वगुणोत्कर्षंलक्षयति अन्यथातत्रस्यादेवंविधमनसिइदंदुःखादिकमुपरज्यावभासतेप्रतीयतेतिनिदर्शनंव्याख्यातार्थम् ७१ नन्वेवंतर्हिकियंतंकालमिदंदुः खादिकमवभासतेइतितत्राह नाहमिति यावत्पुरुषेऽनादिमानयमहंममेतिभावोनव्यवधीयतेतिरोहितोनष्टोनभवति तावद्बुद्धिमनोक्षार्थगुणव्यूहःसंसारोपिनतिरोहितोभवतीत्यर्थः अनादिमानिति व्यूहविशेषणवाअनेनसंसारस्यामिथ्यात्वंनिराचष्टे अक्षमिंद्रियंश्रोत्रइत्यभिधानम् ७२ ननुयद्यहंममेतिभावतिरोभावःपुरुषार्थस्तर्हि सुप्त्यादौतत्सद्भावात्तदनुदयः कथमत्राह सुप्तीति सुप्त्यादौ प्राणानामिंद्रियाणामयनस्यप्रवृत्तिलक्षणस्यविघाततोनिरोधादभावादहमितिज्ञानंनेहतेनाभिव्यज्यते तथापिस्वरूपेंद्रियेणास्त्येवसुखमहमस्वाप्समित्युत्तरकालीनानुभवदर्शनात्तदातदभावेपरामर्शा नुपपत्तेः उपतापः पुत्रादिवियोगदुःखानलज्वालाप्रवेशनं मृत्युरपमृत्युरत्रदेवदूतैर्नीतस्यकिमर्थमानीतोयंनयतस्वस्थानमितिवचनात् मत्यानयनदर्शनानुभवात् साक्षाद्देहवियोगलक्षणमरणंह मितिज्ञानसंदेहात् प्रज्वारोतिरोगावस्था ७३

ननुहंतैवंतर्हिगर्भादेरुत्क्रांतस्यतत्कालीनसुखदुःखपरामर्शादर्शनादत्राह गर्भइति गर्भेवर्तमानस्यबाल्येवयसिस्थितस्यायूनःबालस्यपुंसोऽपौष्कल्यादनुपचितावयवत्वात् पंचपंचज्ञानकर्मभेदेनसंख्या तानींद्रियाणिमनश्चेत्येकादशविधमेकादशभ्योविधीयतेउत्पाद्यतेऽहंममेतिज्ञानारूपंलिंगंलक्षणंनदृश्यते नज्ञायतेउक्तहेतोरित्यन्वयः यावान्यावाञ्छरीरस्योपचयस्तावादींद्रियाणांपौष्कल्यंतस्मिन्नुपचिते तेषामितिनियमात्तन्निमित्तमहंममेतिज्ञानंतदभावेतदभावइति गर्भादौतदभावइत्यर्थः अत्रास्पष्टमात्रेदृष्टांतमाह चंद्रमसइति यथाऽमावास्यायांचंद्रमसोलिंगंशरीरंनदृश्यतेतथेति ७४ ननुचंद्रबिं बावरणनिवृत्तिवदयंगर्भवासादिलक्षणःसंसारोपिकालेनस्वतोनिवर्ततइतितत्राह अर्थइति अपिसंभावितेज्ञानलक्षणेर्थेऽविद्यमानेसत्यस्यजीवस्यसंसृतिर्ननिवर्ततेहियस्मात्तस्मान्निवर्तकमपेक्षितमित्य न्वयः निवर्तकानुदयेनिमित्तमाह ध्यायतइति शब्दादिविषयध्यानंप्रतिबंधकमित्यर्थः स्वप्नेप्रवर्तमानस्यपुंसःप्रबोधाद्यभावेऽनर्थागमोयथानमिवर्तते तथेति विषयध्यानेनसंसारपरंपरास्यादित्य भिप्रायेणानर्थागमइत्युक्तं चंद्रबिंबावरणानांमेघादीनांवाय्वादिसद्भावएवकारणंप्रत्यक्षसिद्धमितिज्ञातव्यं ७५ देहात्मबुद्धेःसंसारस्यतत्त्वेनप्रतीतिःकथमित्याशंक्यपरस्परयोरिवाचिदचितोःसंयो गलक्षणसंपर्कादौपचारिकीयंप्रतीतिरित्यभिमेत्यतत्स्वरूपंनिरूपयति एकमिति एकंलिंगंलिंगशरीरंषोडशविस्तरं कथं त्रिवृत्प्राणेंद्रियांतःकरणभेदेनत्रिविधं अनेनषोडशविस्तरत्वमवगतं कथं पंच विधंत्रिधाभिन्नयापंचविधयापंचप्राणाःपंचज्ञानेंद्रियाणिपंचकर्मेंद्रियाणीतिपंचदशविधंमनसाषोडशविध तदुक्तं प्राणेंद्रियांतःकरणभेदेनत्रिविधमतं । पंचपचैवतेसर्वेप्राणाबुद्धींद्रियाणिच । कर्मेंद्रिया

**गर्भेबाल्येप्यपौष्कल्यादेकादशविधंतदा ॥ लिंगंनदृश्यतेऽयूनःकुह्वांचंद्रमसोयथा ७४ अर्थेह्यविद्यमानेपिसंसृतिर्ननिवर्तते ॥ ध्यायतोविषयानस्यस्वप्ने नर्थागमोयथा ७५ एकंपंचविधंलिंगंत्रिवृत्षोडशविस्तरम् ॥ एषचेतनयायुक्तोजीवइत्यभिधीयते ७६ अनेनपुरुषोदेहानुपादत्तेविमुंचति ॥ हर्षंशोकं भयंदुःखंसुखंचानेनविंदति ७७ यथातृणजलूकाचनोपयात्यपयातिच ॥ नत्यजेन्म्रियमाणोपिप्राग्देहाभिमतिंजनः ॥ यावदन्यंनविंदेतव्यवधानेनक र्मणाम् ७८ मनएवमनुष्येंद्रभूतानांभवभावनम् ॥ यदक्षैश्चरितंध्यायन्कर्माण्याचिनुतेऽसकृत् ७९ सतिकर्मण्यविद्यायांबंधःकर्मण्यनात्मनः ॥ अतस्तद पबाधार्थंभजसर्वात्मनाहरिम् ८०**

णिचतथातस्मात्पंचविधंस्मृतं । लिंगंषोडशकंप्राहुर्मनसासहतत्पुनरिति एषषोडशविस्तारोदेहश्चेतनयायुक्तोजीवःप्राणीत्युच्यते इतिशब्दोत्रसमाप्तिवचनः ॥ ७६ ॥ अनेनलिंगशरीरेणस्थूलदे हानुपादत्ते अनेनस्थूलदेहंनहर्षादिकमाप्नोति ७७ ननुयदानेनसंसारीस्थूलदेहानुपादत्तेतदाहर्षादिकंविंदते यदातान्मुंचतितदानिवृत्तहर्षादित्वेनमुक्तिःस्यादित्यत्राह यथेति तृणजलूकाकीट विशेषः यावदन्यतृणंनविंदेततावन्नोपयाति यावद्विंदेततावदेवापयातिपूर्वगृहीतंविसृज्यपश्चात्तृणांतरंयथायातितथाऽयंजनोम्रियमाणोपिपूर्वदेहाभिमतिनत्यजेदेहांतरप्राप्यपूर्वंत्यजतीत्यर्थः किमिति झटितिनत्यजतीतितत्राह व्यवधानेनेति कर्मणांप्राचीनानांव्यवधानेनविलंबफलदातृत्वेनहेतुनाअनेकेषांपूर्वेषांकर्मणासत्त्वेनभगवत्प्रसादमंतरेणविनाशानुपपत्तेः सर्वदेहवियोगासंभवेनमुक्त्यनुदयइति भावः ७८ अनर्थदर्शनेनजातयाविरक्त्याकर्माकरणेनतत्समाप्तेर्देहारंभककर्माभावेनदेहाभावान्निर्वाणोपपत्तिरितितत्राह मनएवेति मनःसंप्रयुक्तैरक्षैश्चरितंकर्मध्यायंस्तदनुसारेणासकृत् कर्माण्या चिनुतेकरोतीतियतस्मान्मनएवभूतानांभवंसंसारंजन्मवाभावयतिउत्पादयतीतिभवभावनमनःप्रधानत्वद्योतनार्थएवशब्दः नाहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृदितिस्मृतेः ॥ ७९ ॥ अविद्यायां विषयेच्छायांसत्यांकर्मभवतितास्मिन्सत्यात्मनोजीवस्यबंधःकर्मण्यःकर्महेतुकइतियदतस्तदपबाधार्थंकर्मनिवृत्त्यर्थंसर्वात्मनापुत्रादिस्नेहत्यागेनहरिंभजेत्यन्वयः एनंजीवंबंधयामीतीश्वरेच्छायावा तस्ये च्छायाअपसरणार्थंनबंधयामीति ॥ ८० ॥

भजनंनामगुणोपसंहारस्तदर्थंतद्गुणानाह पश्यन्निति यतोहरेर्विश्वस्यस्थित्यादयःस्युस्तद्विश्वंतदात्मकंतद्व्याप्तंतदधीनसत्ताकंपश्यंश्चितयन्निविपूर्वेणान्वयः बत्तदधिकार्युपास्तियोग्यानांगुणानां स्थित्यादावंतर्भावाचदर्थंस्थित्यादिग्रहणम् ८१ नन्वेवमुपासीनस्यकदासाधनसामग्र्यामुक्तिःस्यादित्यत्राह भक्तिरिति । कृष्णेपूर्णानंदेहरावपरोक्षज्ञानजननीभक्तिः उपलक्षणमेतत् स्वगुरुमार भ्यब्रह्मांतेषुस्वोत्तमेषुतत्तद्योग्यतानुसारेणानिष्कपटाभक्तिश्च जीवेषुस्वावरेषुयाचितस्यद्रवीभावतादया दयदानगतिशोषणेष्वितिधातोःतत्त्वविरोधिषुशोषणहेतुर्द्वेषश्चात्मनिस्वस्वरूपेऽकुंठज्ञानंहारिद र्शनानंतरंदेहादिव्यतिरेकेणज्ञानानंदरूपोहमित्यव्यवधानेननिरंतरानुभवलक्षणमितीयंसाधनसामग्रीयादियदास्यात्तदाकालव्यवधानमंतरेणात्मनस्तवसंसारादपवर्गःक्रियासाध्यफलावाप्तिःस्यादित्यन्व यः देहादिव्यतिरेकेणचिद्रूपोहमितिस्फुटम् । सदैवानुभवोभक्तिर्विष्णौतद्दर्शनादनु । यस्यासौमुच्यतेक्षिप्रंसंसारान्नात्रसंशयइत्यनेनहेतुवाचितुशब्दसूचितेनोक्तएवार्थोनाद्वैतार्थः ८२ ननुप्रथमभाविवैरा ग्याख्यसाधनमंतरेणभक्त्यादिनाकथंमुक्त्युदयइत्यतःसिंहावलोकनन्यायेनतदाह अदृष्टमिति अदृष्टंस्वर्गादिफलंसस्यादिदृष्टफलवन्नंक्ष्येन्नश्यति भूतमुत्पन्नमिदंसर्वंजगदन्यथाऽनित्यंकथमिवस्वप्न दृष्टपदार्थसमंनश्वरत्वात्स्वप्नसमंनतुबोधनिवर्त्यत्वात् संसारस्थमिदंसर्वमनित्यत्वाद्वृथायतः । अतःप्राहुःस्वप्नसममप्राज्ञाजगदिदंमृषेतिवचनान्नमिथ्यात्वप्रपंचस्योतिअस्तुभूतमनित्यत्वात्स्वप्नसमंभविष्य च्चस्वप्नसमंनस्यादित्याशक्ययथाभूतमनित्यत्वात्स्वप्नसमंतथाभविष्यच्चसर्वमनित्यत्वेनस्वप्नसममित्याह भूतमिति सुप्तशब्दस्यकथंस्वप्नार्थत्वमपर्यायित्वादितीयमाशंका सुषुप्तिस्वप्नयोश्चैवस्वर्गव्योम्नो स्तथैवच । अन्योन्यनामताज्ञेयामनोबुद्ध्योस्तथैवचेत्यनेनपरिहर्तव्येति सर्वमनित्यंचेन्नित्यंवस्तुकिंतदाह सर्वरहोरहइति सर्वरहःसर्वशास्त्रप्रतिपाद्येषुरहस्यगुरूपदेशत्वाद्रहइतिस्वभक्तदोषात्स्वयंच

पश्यंस्तदात्मकंविश्वंस्थित्युत्पत्त्यप्ययायतः ८१ भक्तिःकृष्णेदयाजीवेष्वकुंठज्ञानमात्मनि ॥ यदिस्यादात्मनोभूयादपवर्गस्तुसंसृतेः ८२ अदृष्टंदृष्टव न्नंक्ष्येद्भूतंस्वप्नवदन्यथा ॥ भूतंभवद्भविष्यच्चसुप्तंसर्वरहोरहः ८३ ॥ मैत्रेयउवाच ॥ भागवतमुख्योभगवान्नारदोहंसयोर्गतिम् ॥ प्रदर्श्यह्यमुमामंत्र्यसि द्धलोकंततोगमत् ८४ प्राचीनबर्हीराजर्षिःप्रजासर्गाभिरक्षणे ॥ आदिश्यपुत्रानगमत्तपसेकपिलाश्रमम् ८५ तत्रैकाग्रमनावीरोगोविंदचरणांबुजम् ॥ विमुक्तसंगोनुभजन्भक्त्यातत्साम्यतामगात् ८६ एतदध्यात्मपारोक्ष्यंगीतंदेवर्षिणानघ ॥ यःश्रावयेद्यःशृणुयात्सलिंगेनविमुच्यते ८७

निर्दोषतयासदास्थितंरहोब्रह्म तदुक्तं रहोब्रह्मतथापज्ञःस्वःसत्यमितिगीयतइति नित्यनिर्दोषंब्रह्मेतरत्सर्वमनित्यमसारंचेति विज्ञानंवैराग्यमितिभावः विरक्तयाभक्तिस्तयागुणोपसंहारलक्षणमुपास नंतेनापरोक्षज्ञानंतेनश्रीनारायणप्रसादस्तेनस्वयोग्यमुक्तिरितिक्रममुल्लंघ्य वैराग्यस्यसर्वत्रानुसंधानार्थंपश्चादप्युक्तमितिज्ञातव्यम् ८३ उपसंहरति भागवतमुख्यइति हंसयोर्जीवपरमात्मनोर्गतिंस च्चिदानंदलक्षणांहरेर्जगदुत्पत्त्यादिलक्षणांजीवस्यतदधीनत्वादिलक्षणांवा सिद्धजातिषुनारदस्यप्राधान्यद्योतनायप्रथमपादस्याक्षराधिक्यम् ८४ सर्गःस्वभावनिर्मोकनिश्चयाध्यायसृष्टिष्वित्यभिधानात् प्रजानांस्वभावविद्याधर्मादिपुरुषार्थरक्षणे तत्परिपंथिनिरासेनेतिशेषः ८५ विमुक्तसंगोनिष्कामस्तस्यहरेःसाम्यतानिर्दोषत्वलक्षणाम् ८६ एतस्येतिहासस्याभ्यासेनकिंफलमुदीतियेनायमवश्यं ज्ञातव्यःस्यादन्यथानारदेनबाललीलाकथावद्विनोदार्थमुक्तंफलानुक्तेरितिपरीक्षितोहार्दंचोद्यंशुकःपरिहरतीत्याह एतदिति अधिकात्मनःपरमात्मनोधिगतात्मनःप्रत्यक्षसिद्धस्यजीवात्मनोवास्वरूपंपा रोक्ष्यंपरोक्षतयाशब्दलक्षणतयागीतं शब्दितंनसाक्षादुक्तंदेवप्रियत्वात् परोक्षप्रियाइवहिदेवाइतिश्रुतेरित्यर्थः देवर्षिणेत्यनेननारदस्यविनोदकथाकथनस्वभावोन [illegible]ध्वनयति लिंगेनशरीरेणमु च्यतेरहितोभवतीत्यनेनतृतीयावचनेनपूर्वमपिस्वरूपाद्भिन्नमितिध्वनयति स्वरूपभूतदेहेनसहसैवगच्छतीतिच सोनानंदाद्विमुकआनंदीभवतीतिश्रुतेः ८७

१ वृथायतइत्येतन्मृषेत्यस्यव्याख्यानम् मृषाश्रुर्नंदूनितिवत्

नकेवलमिदंप्राचीनबर्हिषःप्रयोजनंकिंतुसर्वेषामपीतिभावेनपुनरुक्तंविशिनष्टि । एतदिति मुकुंदस्ययशसासहितमेतत्पुरंजनोपाख्यानमात्मशौचमात्मनोमनसःशुचितापम्मात्त्तथा पारमेष्ठ्यं मेष्ठिनःसर्वोत्तमस्यहरेर्ब्रह्मणोपरमसाधनमधिगच्छतिगुरोःसकाशाज्जानाति भवेसंसारेयस्मिन्जन्मानिजानातिअस्मिन्निति वा । अनेनसंसारभ्रमएवनिवार्यते नतुतद्धंधइतिमंदशंकांनिवारयति श्रु ति ८८ शिष्टजनेष्वेकेनमैत्रेयेणाधिगतत्वादेतच्चावश्यमधिगंतव्यमितिभावेनाह अध्यात्मेति मयामैत्रेयनाम्ना गहनत्वादद्भुतमिदंनारदेनप्राचीनबर्हिषेउपदिष्टमध्यात्मपारोक्ष्यमाश्रितात्गुरुमुखादधीतमेवतवोपदिष्टमतएवत्वयाप्यतिश्रद्धयाधीत्याभ्यसनीयमितिशेषः नन्वेतदधिगमेनयदिवेदविषयोपिसंशयश्छिन्नःस्यात्तर्ह्यधिगंतव्यांतराभावेनधन्यःस्यामतःकथंनिर्णयःस्यादत्राह एवंत्रयीयःपुंसोजिज्ञासोत्त्वय्यआश्रयस्त्रिवेदीविषयःसंशयोध्यात्मस्वरूपेछिन्नएवामुत्राधिदैवादिस्वरूपेचसंशयोमयाछिन्नोतएवतवापिछिन्नःस्यादितिशेषः अनेनपुरंजनोपाख्यानस्यवेदार्थपरत्वप्रतीतिरस्तत श्रद्धयाऽध्येयमितिसिद्धं यद्वा । एतदध्यात्मपारोक्ष्यमधिगतंयथा एवंत्रयीचाधिगताएकविषयात् ततःकिंफलमत्राह आश्रयइति पुंसआश्रयइहामुत्रचसंशयश्छिन्नोभवतीत्येतत्फलंभवतीत्य अतिगहनंजलनिधिवत्क्षुराग्रमिवदुर्ग्रहंनिशितं तीक्ष्णंपुरंजनोपाख्यानंव्याख्याछलेनमयातारीतरणिरिवव्यामेतत् पवनात्मजइवपयोराशिंक्षुरधारामिवनिगदनो (?) तारिषमध्यात्मपारोक्ष्यम् ८९ तिश्रीभागवतेमहापुराणेच०विज०टी०एकोनत्रिंशोऽध्यायः ॥ २९ ॥ ७ ॥ अव्यक्तस्वभावोहरिस्तपआदिसाधनसामर्थ्येनप्रसन्नोव्यक्तोभवतीत्येतद्रुद्रगीतस्तवनिरूप्यतेस्मिन्नध्याये तत्रपूर्वं कृतप्रश्नंविस्तरतःश्रोतुकामोविदुरोमैत्रेयंपृच्छति ।येत्वयेति रुद्रगीतेनसदाशिवोपदिष्टेनस्तोत्रेणहरिंप्रतोष्यकांसिद्धिंपुरुषार्थरूपांप्रापुरित्यन्वयः १ विष्णुतद्भक्तभक्तानांसिद्धिरन्येषामातुकी

एतन्मुकुंदयशसाभुवनंपुनानंदेवर्षिवर्यमुखनिःसृतमात्मशौचम् ॥ यःकीर्त्यमानमधिगच्छतिपारमेष्ठ्यंनास्मिन्भवेभ्रमतिमुक्तसमस्तबंधः ८८ अध्यात्म पारोक्ष्यमिदंमयाधिगतमद्भुतम् ॥ एवंत्रय्याश्रयःपुंसश्छिन्नोमुत्रचसंशयः ८९ ॥ ॥ इतिश्रीभागवतेचतुर्थस्कंधेएकोनत्रिंशोऽध्यायः ॥ २९ ॥ वि दुरउवाच ॥ येत्वयाभिहिताब्रह्मन्सुताःप्राचीनबर्हिषः ॥ तेरुद्रगीतेनहरिंसिद्धिमापुःप्रतोष्यकाम् १ किंचहनार्हत्यपरत्रवासुखंकैवल्यनाथप्रियपार्श्ववर्तिनः ॥ आसाद्यदेवंगिरिशंयदृच्छयाप्रापुःपरंनूनमथप्रचेतसः २॥ मैत्रेयउवाच॥ प्रचेतसोंतरुदधौपितुरादेशकारिणः॥जपयज्ञेनतपसापुरंजनमतोषयन्

तिभावेनपृच्छतीत्याह किंचेति तदेतत्प्रमेयइतिश्रुतेः कैवल्यनाथश्चासौप्रियश्चकैवल्यनाथप्रियस्तस्यकैवल्यनाथप्रियस्यविष्णोः कैवल्यस्यनाथःकैवल्यनाथस्तस्यकैवल्यनाथस्यप्रियोरुद्रस्तस्यवापा र्श्ववर्तिनः समीपेवर्तमानाःपुरुषाइहलोकेथवामुष्मिँल्लोकेकिंपुरुषार्थलक्षणंसुखंनार्हंतीति सर्वमर्हंति तत्रप्रचेतसोयदृच्छयादेवेच्छयागिरिशमासाद्यपरमुत्कृष्टंसुखंनूनंकिंप्रापुरित्यन्वयः गिरेर्ब्रह्मणःप्रसादेन शंयस्यसगिरिशः तंत्रह्मागिरिरित्याचक्षतइतिश्रुतेः गिरिवाचिशेतइतिवागिरौकैलासेशेतइतिगिरिशः पूर्वत्रालुक्समासः शीङोडप्रत्ययश्च पृपालनपूरणयोरितिधातोः परंजगत्पालनमुक्ति णपूर्णानंदमुक्तेति अनेनप्रचेतसोपानियोग्यानिकल्याणान्यर्हंतीति तेषुकिंमुख्यमापुरितिप्रश्नतात्पर्यार्थः २ जगत्पालनादिसर्वाःसिद्धीरापुरितिपरिहारंवक्तुमुपक्रमतेइत्याह मैत्रेयइति ज नरुद्रगीताख्यस्तोत्रयज्ञेन पुराणांशरीराणांजननाज्जन्मनाव्यंजयितृत्वात्पुरंजनोविष्णुःपुरेअंजनात्व्यंजनात्पुरंजनोजीवः । यतस्तपसापुरंजनजीवनामानमशोषयस्तेनपुरंजनोविष्णुमतं प्रसादाभिमुखंचक्रुरित्यर्थद्वयद्योतनायपुरंजनपदंप्रायोजीत्यतःपूर्वोक्तःपुरंजनोनात्रोच्यते पुरेषुव्यंजनाज्जीवःपुरंजनइतीरितः । पुराणांजननाद्विष्णुर्व्यंजनत्वंद्वयोरपीतिवचनात्सिद्धमिद यमितिवत् लतुलसानांदंताः इचुयशानांतालुस्थानतस्तकारशकारयोः स्थानसामीप्यात् उपूपध्मानीयानामोष्ठावित्यनुबंधोकारस्यैकरस्थानत्वाच्चवाशोपयन्नतोषयन्नितियुज्यते ३

मणिग्रीवःकंठामुक्तकौस्तुभः वितिमिरानिरस्तांधकराः ९ कासृदीप्तौ भ्राजद्भ्यांराजद्भ्यांकपोलाभ्यांयुक्तं
प्रचेतसांशांतेनभगवन्निष्ठयाजातयानुग्रहलक्षणयारुचातेषांकृच्छ्रंदुःखंशमयन् ४ मणिग्रीवःकंठामुक्तकौस्तुभः वितिमिरानिरस्तांधकराः ९ कासृदीप्तौ भ्राजद्भ्यांराजद्भ्यांकपोलाभ्यांयुक्तं
वदनंयस्यसतथा भ्राजदित्युक्त्यात्मनेपदेपरस्मैपदित्वंकाल्पनिकमितिध्वनयति ६ पीनानामायतानामष्टानांभुजानांमंडलस्यमध्येवक्षसिस्थितयालक्ष्म्यासहस्पर्धमानावर्द्धमाना श्रीर्विकासलक्षणाय
स्याःसातथा अश्ववदाचरतीत्यश्वान्नित्यादौदर्शनादौपचारिकोयंप्रयोगः नहिहरेरपिवक्षसिस्थितयोर्लक्ष्मीवनमालयोरौत्सर्गिकीस्पर्धासंजाघटीति पर्जन्योमेघस्तन्नादवद्रुतंध्वनिर्यरयाःसातथा
माचोतिशेषः घृणयादययासहवर्ततइतिसघृणस्तादृशोवलोकोयस्यसतथा ७ सौहार्देनहेतुनाऽपृथग्धर्माएकविषयधर्मचारिणः तेनकिंतवतत्राह तुष्टइति अतोवरवृणीध्वमित्यर्थः ८ नकेवलं
मत्तोयुष्माकमेवफलमन्येषांभवदनुस्मर्तॄणामपिफलविशेषोभवतीत्याह यइति यथामत्प्रीतिहेतुर्मत्तोषकरंयुष्मदपृथग्धर्मत्वस्मरणमितरेषामपिभ्रातृष्वात्मसाम्यफलंस्यात्तथा ९ रुद्रगीतेनमांस्तु
वद्भ्योपिकामवरान्दास्यामीत्याह येतुमामिति १० अन्यंचवरदास्यामीत्याह यद्यूयमिति अनेनविमलकीर्तिकामैःपुरुषैर्गुर्वादेशःसर्वथानुष्ठेयइतिशिक्षादर्शिता ११ सत्पुत्राभावेकिंप्रयोज

दिव्यवर्षसहस्रांतेपुरुषस्तुसनातनः ॥ तेषामाविरभूत्कृच्छ्रंशांतेनशमयन्रुचा ४ सुपर्णस्कंधमारूढोमेरुशृंगमिवांबुदः ॥ पीतवासामणिग्रीवःकुर्व
न्वितिमिरादिशः ५ काशिष्णुनाकनकवर्णविभूषणेनभ्राजत्कपोलवदनोविलसत्किरीटः ॥ अष्टायुधैःकरवरैर्मुनिभिःसुरेंद्रैरासेवितोगरुडकिन्नरगीतकी
र्तिः ६ पीनायताष्टभुजमंडलमध्यलक्ष्म्यास्पर्धच्छ्रियापरिवृतोवनमालयायः ॥ बर्हिष्मतःपुरुषआहसुतान्प्रपन्नान्पर्जन्यनादरुतयासघृणावलोकः ७
श्रीभगवानुवाच ॥ वरंवृणीध्वंभद्रंवोयूयंमेनृपनंदनाः ॥ सौहार्देनापृथग्धर्मास्तुष्टोहंसौहृदेनवः ८ योनुस्मरतिसंध्यायांयुष्माननुदिनंनरः ॥ तस्य
भ्रातृष्वात्मसाम्यंतथाभूतेषुसौहृदम् ९ येतुमांरुद्रगीतेनसायंप्रातःसमाहिताः ॥ स्तुवंत्यहंकामवरान्दास्येप्रज्ञांचशोभनाम् १० यद्यूयंपितुरादेशम
ग्रहीष्टमुदान्विताः ॥ अतोवउशतीकीर्तिर्लोकाननुभविष्यति ११ भविताविश्रुतःपुत्रोऽनवमोब्रह्मणोगुणैः ॥ यएतामात्मवीर्येणत्रिलोकींपूरयिष्यति
१२ कंडोःप्रम्लोचयालब्धाकन्याकमललोचना ॥ तांचापविद्धांजगृहुर्भूरुहानृपनंदनाः १३ क्षुत्क्षामायामुखेराजासोमःपीयूषवर्षिणीम् ॥ देशिनींरो
दमानायानिदधेसदयान्वितः १४ प्रजाविसर्गआदिष्टाःपित्रामामनुवर्तता ॥ तत्रकन्यांवरारोहांतामुद्वहतमाचिरम् १५ अपृथग्धर्मशीलानांसर्वेषांवः
सुमध्यमा ॥ अपृथग्धर्मशीलेयंभूयात्पत्न्यर्पितामया १६ दिव्यवर्षसहस्राणांसहस्रमहतौजसः ॥ भौमान्भोक्ष्यथभोगान्वैदिव्यांश्चानुग्रहान्मम
१७ अथमय्यनपायिन्याभक्त्यापक्वगुणाशयाः ॥ उपयास्यथमद्धामनिर्विद्यनिरयादतः १८

नं जन्मनासोयंमनुष्यलोकःपुत्रेणजय्यइतिश्रुतेस्तत्राह भवितेति पुत्रशब्दार्थंध्वनयति यएतामिति १२ अनुकूलभार्याभावेकथमौरसपुत्रसंपादित्यतस्तत्प्राप्तिंवक्तुमुपक्रमते कंडोरिति प्रम्लोच
याऽप्सरसा मातृपितृमरणकारणयोगेतज्जातत्वात्तत्परिहारार्थमपविद्धांत्यक्तांभूरुहावृक्षाजगृहुरित्यन्वयः १३ क्षुत्क्षामायाःश्रांतायाः ससोमः १४ प्रजाविसर्गेप्रजानांविविधसृष्टौ ततःकिं
मत्राह तत्रेति तत्रतस्मिन्कार्येकर्तव्येसति १५ बहूनामस्माकमियमेकाऽनुकूलाकथंस्यादत्रापितादृशंवरंदास्यामीत्याह अपृथग्धर्मशीलानामिति १६ दिव्यवर्षसहस्राणामित्यत्रसहस्रशब्दोबहु
लवाची प्रतीतार्थस्यप्रमाणविरुद्धत्वादनुपपन्नत्वं तदुक्तं मनुष्याणांवत्सराणांलक्षद्वादशकंपुरा । प्रचेतोभिरियंपृथ्वीपालिताऽव्याहतेंद्रियैरिति १७ एतैर्मेहिकंवरंदत्त्वापारत्रिकंवरंददाति अथे
ति पक्वःपरिपाकंप्राप्तोगुणाशयःप्राकृतांतःकरणंयेषांतेतथा अतोनिरयादस्मात्संसारात् अतोनिंदाहेतुविचित्रेष्वित्यभिधानात्चित्रात्पुण्यपापमिश्रितात् चित्रमालेख्यमिश्रयोरित्यभिधानात् १८

गृहाविष्टचेतस्त्वेनपुत्रमित्रादिस्नेहबद्धानांकथंधाममवेशोघटतइतितत्राह गृहेष्विति मद्वार्तायातायामागतोयामःकालविशेषोयेषांतेतथा गृहाःपुंसिचभूम्न्येवेत्यमरः । आसितुर्मात्म १९ नुग्यह्या. संसारच्छेदिनीयादितीहिसर्वेपिकिंनमुक्तास्तस्याः सुलभत्वादितितत्राह नव्यवह्रियतइति यतोयस्यहरेः प्रसादाद्गताःसूक्ष्मेणमनसावगच्छंतोजानंतोयेविपादिनगुणांतिनशोचंतिनप्रहृष्यंति ब्रह्मवादिभिरप्येतयज्ञोब्रह्माविष्णवाख्यंब्रह्मयथानुभवंनव्यवह्रियतइत्यन्वयः अतोमद्वार्तायाअसुलभत्वान्नसर्वेषांमुक्तिरित्यर्थः ब्रह्मवादिभिर्भवद्भिर्गृहेऽपियज्ञोनिजकर्मनव्यवच्छिद्यतेयतोभवंतोमदाज्ञयागृहगता नमोहादिकंकुर्वंतीत्येवमादिमयोपदिष्टमेतद्रहस्यंतस्मान्माशोचतेत्यपव्याख्यानं सूक्ष्मेणमनसाविप्रोवाचावक्तुनशक्नुयइतिवचनेननिरस्तमितिज्ञायते यज्ञपदस्यनिजकर्मार्थत्वंब्रह्मपदस्यपरब्रह्मार्थत्वंच न व्यवच्छिद्यतइतिग्रंथव्यत्यासश्चसंप्रदायापरिज्ञानविजृंभितंवेति यज्ञोविष्णुर्देवता ब्रह्मविदाप्नोतिपरमितिसूचनायब्रह्मवादिभिरिति प्रसिद्धयज्ञपरिहारायब्रह्मेति विप्रादिव्यावृत्त्येयज्ञइति २० प्रचेतोभिरेवंभगवतोमतमवाप्यस्वपरहितंकिमकारीतितत्राह एवमिति २१ स्तुतिःप्रेक्षावच्चित्तहर्षणीचेदुपादेयास्यादन्यथेत्थंबधिरवदप्रयोजिकीत्यतोपिप्राह्यगुणविशिष्टमाहुरित्याह नमोनमइति निरूपितोदारगुणाह्वयायनिरूपिताउदारगुणायेषांतेतथामहागुणाआह्वयानामानियस्यसतथातस्मै मनोवचोवेगपुरोजवायवाङ्मनसयोर्वेगादपिपुरःस्थितवेगाय यद्वा वाङ्मनसगम्यतीत्यरर्थस्य नवेगाय यद्वावतोन्यानत्येतीतिश्रुतेः सर्वाक्षाणांसर्वेंद्रियाणांमार्गैर्निर्मार्गणैरगताध्वनेऽज्ञातमार्गाय २२ शुद्धायेत्येतदशुद्धाक्षाज्ञेयत्वेलिंगं शांतायपूर्णानंदस्वभावाय अपगतोऽपांक्षतोर्थोयस्य तद्गुणार्थं

गृहेष्वाविशतांचापिपुंसांकुशलकर्मणाम् ॥ मद्वार्तायातयामानांनबंधायगृहामताः १९ नव्यवह्रियतेयज्ञोब्रह्मैतद्ब्रह्मवादिभिः ॥ नमुह्यंतिनशोचंतिनहृष्यं तियतोगताः २० ॥ मैत्रेयउवाच ॥ एवंब्रुवाणंपुरुषार्थभाजनंजनार्दनंप्रांजलयःप्रचेतसः ॥ तद्दर्शनध्वस्ततमोरजोमलागिरागृणन्गद्गदयासुहृत्तमम् २१ प्रचेतसऊचुः ॥ नमोनमःक्लेशविनाशनायनिरूपितोदारगुणाह्वयाय ॥ मनोवचोवेगपुरोजवायसर्वाक्षमार्गैरगताध्वनेनमः २२ शुद्धायशांतायनमःस्व निष्ठमनस्यपार्थेविलसद्द्वयाय ॥ नमोजगत्स्थानलयोदयेषुगृहीतमायागुणविग्रहाय २३ नमोविशुद्धसत्त्वायहरयेहरिमेधसे ॥ वासुदेवायकृष्णायप्रभवे सर्वसात्वताम् २४ नमःकमलनाभायनमःकमलमालिने ॥ नमःकमलपादायनमस्तेकमलेक्षण २५

तस्मिन्सुष्ठुनिष्ठाव्यवस्थायस्यनास्तितत्स्वनिष्ठंसंशयात्मकमित्यर्थः तच्चमनःस्वनिष्ठमनस्तस्मिन्समाधानरहितेमनसिविलसद्द्वयायप्रकटितस्वतंत्रवस्तुद्वयाय अनवस्थितबुद्धीनांद्वितीयेऽप्यसहरेः ।सत्य कुसुस्थितबुद्धीनामिदंसर्वंहरेर्वशइतिवचनादुक्तएवार्थोनतुप्रकटितप्रपंचरूपायेति नित्यंगृहीताःमायायागुणाःप्रकृतेःसत्त्वादिगुणाःसत्त्वादिगुणप्रवर्तनानुगुणाःसत्त्वादिगुणरहिताज्ञानानंदात्मकाविग्रहाब्र ह्मादिशब्दावाच्याश्रयेनसतथातस्मै नित्यंगृहीताःसत्त्वाद्याविग्रहाश्चत्रयःसदा। ज्ञानानंदात्मकास्तेतुविग्रहानिर्गुणास्तथा। द्वौतत्रब्रह्मरुद्रस्थावेकोवैकुंठधामगइतिवचनात्प्रकृतिगुणविरचितदेहत्वंहरेरंगी कर्तुंयुक्तं २३ विशुद्धश्चायंसत्वःसर्वगुणात्मकश्चविशुद्धसत्त्वस्तस्मै हरिःसर्वगुणात्मत्वात्सत्त्वइत्यभिधीयतइतिवचनात् रजआदिमिश्ररहितसत्त्वगुणायेत्यर्थोनोचितःहरणात्ज्ञानरूपत्वाद्धरिमेधाविभु स्मृतइत्यतःपापहरणात्ज्ञानरूपत्वाद्धरिमेधाः सृष्टौरजःसंपर्कात्कपिलवर्णज्ञानइत्यर्थोनग्राह्यः हरिर्नाकपिलेत्रिष्वित्यभिधानात् अतोगदितएवार्थस्तस्मै २४ २५

१ विलसद्द्वयायेत्यनेनेश्वरस्यभ्रान्तिरुच्यत इति भाति अतस्पष्टार्थमाह प्रकटितेति ।

अपुंक्ष्महिनमस्काराख्यंयोगमकार्ष्म २६ अनुकंपयाभवताप्येतद्रूपमाविष्कृतमन्यत्किं अस्मदनुकंपांविनानाकिमपीत्यर्थः २७ अभद्रंबंधनपापदहन २८ यदुक्तंहरिणावरंवृणीध्वमितितत्राहुरे त्याह येनेति क्षुल्लकानामल्पकानामपिभूतानामंतर्हृदयेअंतर्हितस्त्वंतेषामीहितंचेष्टितंचावैषि तस्मान्नआशिषः कस्मान्नवेदापितुवेदेत्यन्वयः २९ त्वत्प्रसादादन्योवरोनप्रार्थनीयइत्याहुरित्याह असा विति एषामस्माकंभगवान्प्रसन्नः असौभगवत्प्रसादएवेप्सितोवरोनान्यइत्यन्वयः ३० यद्यपिभगवत्प्रसादएवेप्सितोवरस्तथापिपरतःपरात्त्वत्संगतिलक्षणंवरंवृणीमहइत्यन्वयः परतःपरत्वमुपपा दयति नहीति नांतोस्तिममदिव्यानांविभूतीनांपरंतप । अतोनंतेन तथाहिलिंगं परोमात्रयेत्यादिप्रमाणात् ३१ यतस्त्वमेवानंतोनान्यस्मान्मनसावराभिलाषोनास्त्येवेतिभावेनाह पारिजातइति कुसुमोपममेतत् यथापारिजातेपुष्पेंजसात्वेनलभ्येलब्धुंयोग्येसारंगोभृंगोन्यचंपकादिपुष्पंनसेवतेतथा साक्षात्त्वदंघ्रिमूलमवाप्यान्यदभीष्टंकिंकिंवृणीमहे नाकिमपीत्यन्वयः ३२ मायूदन्यतोवरा

नमःकमलकिंजल्कपिशंगामलवाससे ॥ सर्वभूतनिवासायनमोऽयुंक्ष्महिसाक्षिणे २६ रूपंभगवतात्वेतदशेषक्लेशसंक्षयम् ॥ आविष्कृतंनःक्लिष्टानांकि मन्यदनुकंपया २७ ऐतावत्त्वंहिविभुभिर्भाव्यंदीनेषुवत्सलैः ॥ यदनुस्मर्यतेकालेस्वबुद्ध्याऽभद्ररंधन २८ येनोपशांतिर्भूतानांक्षुल्लकानामपीहितम् ॥ अंतर्हितोंतर्हृदयेकस्मान्नोवेदनाशिषः २९ असावेववरोस्माकमीप्सितोजगतांपते ॥ प्रसन्नोभगवानेषामपवर्गगुरुर्गतिः ३० वरंवृणीमहेथापिनाथत्वत्पर तःपरात् ॥ नह्यंतस्त्वद्विभूतीनांयोऽनंतइतिगीयते ३१ पारिजातेंजसालभ्येसारंगोन्यन्नसेवते ॥ त्वदंघ्रिमूलमासाद्यसाक्षात्किंकिंवृणीमहे ३२ याव त्तेमाययास्पृष्टाभ्रमामइहकर्मभिः ॥ तावद्भवत्प्रसंगानांसंगःस्यान्नोभवेभवे ३३ तुलयामलवेनापिनस्वर्गंनापुनर्भवम् ॥ भगवत्संगिसंगस्यमर्त्यानांकि मुताशिषः ३४ यत्रेड्यंतेकथामृष्टास्तृष्णायाःप्रशमोयतः ॥ निर्वैरंयत्रभूतेषुनोद्वेगोयत्रकश्चन ३५ यत्रनारायणःसाक्षाद्भगवान्न्यासिनांगतिः ॥ प्रस्तू यतेसत्कथासुमुक्तसंगैःपुनःपुनः ३६ तेषांविचरतांपद्भ्यांतीर्थानांपावनेच्छया ॥ भीतस्यकिंनरोचेतताबकानांसमागमः ३७ वयंतुसाक्षाद्भगवन्भव यस्यशिवस्यसख्युःक्षणसंगमेन ॥ सुदुश्चिकित्सस्यभवस्यमृत्योर्भिषक्तमंत्वाद्यगतिंगताःस्मः ३८ यन्नःस्वधीतंगुरवःप्रसादिताविप्राश्चवृद्धाश्चसदानुवृत्त्या आर्याह्यनाथाःसुहृदोभ्रातरश्चसर्वाणिभूतान्यनुसूययैव ३९

भिलाषोऽस्मत्तःकोसौवरइतितत्राह यावदिति भवतःप्रसंगोयेषांतेभवत्प्रसंगास्तेषाम् ३३ सत्संगोवांछनीयइतिभावेनाह तुलयामइति ३४ सत्संगतावेतेगुणालभ्यंतइत्याह यत्रेति ३५ ३६ त्वत्प्रभा वेकथंघटतइतितत्राह तेषामिति तीर्थानांपावनेच्छयापद्भ्यांतीर्थानिविचरतांतावकानांसमागमः संसाराद्भीतस्यपुंसोनरोचतेकिंरोचतएवेत्यन्वयः संसाररोगपरिहारौषधपानसमवादनरोचेत्का पतइत्यर्थः ३७ सत्संगफलमनुभवसिद्धंचेत्याहुरित्याह वयंत्विति भगवान्प्रियोयस्यसतथातस्यतवप्रियस्यसख्युःसंसारादौसहकारिणःशिवस्य मृत्योर्मारकस्यभिषक्तमंवैद्यश्रेष्ठम् ३८ वेदाध्ययनादिपुण्यंयत्तत्सर्वंभवत्प्रसादजनकमस्त्वितिनिवेदयंतीत्याह यन्नइति सुष्ठुअधीतंवेदाध्ययनं अनाथामृतभर्तृकाः ३९

१ भक्तानांक्लेशकालेप्राप्तेऽयरक्षणीयइतिस्वबुद्ध्याप्रार्थनाभावेपिविभुभिर्भक्तोनक्षीयेतेतियत् एतावत्त्वमेतादृशधर्मवत्त्वंभाव्यम् ॥

निरंधसांत्पक्कपितृदत्ताज्ञानांस्यक्तसर्वथाज्ञानांवा अदभ्रमनल्पं ४० ननुब्रह्मादिवत्परिच्छिन्नत्वेपूर्वोक्तानंतत्वंनयुज्यते अपरिच्छिन्नत्वेस्तुतिर्नघटतइतितत्राह यन्महिम्न इति तन्माहात्म्यपारमद्यापितो ब्रह्मादयोवेदानुक्तानुसारेणयथायथात्वांस्तुवंति अथोतथावयमप्यात्मबुद्धिसमंगृणीमहइत्यन्वयः ४१ आत्मसममित्युक्त्याप्रचेतसांबुद्धेर्नामरमबुद्धितोमहागुणित्वात् जद्कं स्तुतिपदानामनेका र्थत्वेनारमद्बुद्ध्याविषयत्वेननास्माभिस्तदर्थकथनायप्रयत्नःक्रियते किंतुव्याख्यानप्रतिज्ञाभंगपरिहारायप्रतीतोर्थःकथ्यते तथाहि समायवैषम्यनैर्घृण्यरहिताय सहितायालक्ष्मीयं नसममस्यभ्यादि वा शुद्धायनिरंजनायपदर्यपाप्मनउत्सस्तस्मात्पुरुषोनामेतिश्रुतेः समस्तपापविनाशनाय परायोत्कृष्टाय वासुदेवायबलज्ञानात्मकमुख्यप्राणप्रवर्तकाय सर्वेषाम्... दीव्यतीति वास्तु देवस्तस्मै सत्त्वायपराक्रमरूपाय भगवतेसौभाग्यरूपाय ऐश्वर्यादिगुणवतेवा ४२ हरेःस्वधामप्रयाणमाह इतीति यानंगमनं अनपवर्गविक्रमोऽविनष्टपराक्रम। ... मसूचीतिज्ञायते ४३ इदानींप्रचेतसांविक्रमविशेषंवक्तुमुपक्रमते अथेति गांभूमिं ४४ अप्ययेप्रलये सावर्तकः प्रलयकालीनोग्निरिव ४५ ...

यन्नःस्वधीतंतपएतदीशनिरंधसांकालमदभ्रमप्सु ॥ सर्वंतदेतत्पुरुषस्यभूम्नोवृणीमहेतेपरितोषणाय ४० मनुःस्वयंभूर्भगवान्भवश्चयेन्येतपोज्ञानविशुद्धस त्वाः ॥ अदृष्टपाराअपियन्महिम्नस्तुवंत्यथोत्वात्मसमंगृणीमः ४१ नमःसमायशुद्धायपुरुषायपराय च ॥ वासुदेवायसत्त्वायतुभ्यंभगवतेनमः ४२ ॥ मैत्रेयउवाच ॥ इतिप्रचेतोभिरभिष्टुतोहरिःप्रीतस्तथेत्याहशरण्यवत्सलः ॥ अनिच्छतांयानमतृप्तचक्षुषांययौस्वधामानपवर्गविक्रमः ४३ अथनिर्या यसलिलात्प्रचेतसउदन्वतः ॥ वीक्ष्याकुप्यन्द्रुमैश्छन्नांगामारोद्धुमिवोत्थितैः ४४ ततोग्निमारुतौराजन्नमुंचन्मुखतोरुषा ॥ महींनिर्वीरुधंकर्तुंसंवर्तकइवा प्यये ४५ भस्मसात्क्रियमाणांस्तान्द्रुमान्वीक्ष्यपितामहः ॥ आगतःशमयामासपुत्रान्बर्हिष्मतोनयैः ४६ तत्रावशिष्टायेवृक्षाभीतादुहितरंतदा ॥ उज्जह्रुस्तेप्रचेतोभ्यउपदिष्टाःस्वयंभुवा ४७ तेचब्रह्मणआदेशान्मारिषामुपयेमिरे ॥ यस्यांमहदवज्ञानादजन्यजनयोनिजः ४८ चाक्षुषेत्वंतरेप्राप्तेप्राक्सर्गेकालविद्रुते ॥ यःससर्जप्रजाइष्टाःसदक्षोदैवचोदितः ४९ योन्यक्कृत्यकारसर्वेषांतेजस्तेजस्विनांरुचा ॥ स्वयोग्योपात्तदाक्ष्याच्चकर्मणांदक्षमब्रुवन् ५० तंप्रजासर्गरक्षायामनादिरभ्यषेचयत् ॥ युयोजयुयुजुस्तंवैसर्वेन्येचप्रजेश्वराः ५१ इतिश्रीभागवतेचतुर्थस्कंधेत्रिंशोऽध्यायः ॥ ३० ॥

स्मसादिति नयैर्युक्तिभि. ४६ प्रीतिकरणंविनाकेवलंनयैरेवकोपशांतिःकथमभूदितितत्राह तत्रेति ४७ प्रतिपक्षभूतैर्वृक्षैर्दीयमानंकन्यादानंनिःशंकंकथंसगच्छतइतितत्राह तेचेति आप्तत्वेनब्रह्म णोवचनकारणमित्यर्थः वंध्याचेत्किमित्युपयमनमकार्षुरितितत्राह यस्यामिति नजायतइत्यजनोविष्णु.सएवयोनिरुत्पत्तौकारणंयस्यसोऽजनयोनिर्ब्रह्मातस्माज्जातोऽजनयोनिजोदक्षःअज्ञानजंज्ञा नामुपयेमिरेइत्यन्वयः महतोरुद्रस्यावज्ञानान्निंदनात् ४८ तज्जन्मप्रयोजनमाह चाक्षुषइति प्राक्सर्गेपूर्वसृष्टौ कालेनविद्रुतेनष्टायां दैवेनविष्णुनाब्रह्मणावचोदितः द्रुदप्रेरणइतिधातु. ४९ ... जातइतिनिरुक्तिपूर्वकंतन्नामाह यइति स्वयोग्योपात्तदाक्ष्यात्स्वयोगसामर्थ्येनप्राप्तपदत्वात् ५० इदंचतन्नामकरणेलिंगमितिभावेनाह तंप्रजेति अनादिर्ब्रह्मा प्रजेश्वरामरीच्यादयः युयुजुरन्वा धानलक्षणंयोगमकुर्वन्निति ५१ इतिश्रीभागवतेचतुर्थस्कंधेविज०टीकायांत्रिंशोऽध्यायः ३०

शास्त्रांतरेषुबहूनामितरेषांसाधनानांमुक्तिसाधनत्वेनकथनस्यसावकाशत्वप्रकाशनायास्मिन्नध्यायेपुनरपिमुक्तिसाधनंब्रह्मज्ञानमेवेतिनिर्धीयते तत्रतत्साधनमपिमुख्यंचतुर्थाश्रमएवसर्वेरसातस्यश्रैष्ठ्या
दित्यभिप्रेत्यप्रचेतसांराज्यपालनानंतरं तमाचष्टे ततइति आश्वाविर्भूताधोक्षजभाषितं ततोमानुषगणितद्वादशलक्षकालात्परमुत्पन्नविज्ञानाःवेदांतविज्ञानसुनिश्चितार्थाः अनेनसंन्यासाधिकारे
योग्यतांलक्षयति १ एतदेवविशिनष्टि दीक्षिताइति सर्वभूतात्मनिसर्वभूतस्वामिनिसर्वभूतांतर्यामिणिवाहरौमेधाज्ञानंयत्रतद्ब्रह्मसत्रंसर्वभूतात्ममेधः तेनब्रह्मसत्रेणदीक्षिताः गृहीतसंन्यासाश्रमाइत्यर्थः
पारिव्राज्यंब्रह्मसत्रंन्यासइत्यभिधीयतइत्यभिधानात् ब्रह्मविषयेणयागविशेषेणेतिनार्थोत्रग्राह्यः माव्रजन्निति विरोधाच्च हरिर्मेधस्तुसन्यासोहरौमेधायतोभवेदितिवचनेनसंन्यासस्यविशेषितत्वाच्च
नसर्वभूतानांस्वस्वरूपत्वज्ञानेनेत्यर्थः उत्तरत्रापितत्त्वंनापुः किंतुतद्गतामितिवक्ष्यमाणत्वात् यत्रजाजलस्तस्यापत्यंजाजलि मुनिःसिद्धोमुक्तोभूत्तस्यांप्रतीच्यांदिशिसमुद्रवेलायांहरिमुपासीनाःस्युरित्य
न्वयः २ तत्रापिनारदसंगमंतेषामाह तान्निर्जितेति शांतश्चसमानश्चविग्रहोदेहोयेषांतेतथातान् योजितमेकाग्रतयास्थापितंमनोयैस्तेतथातान् ३ यथादेशंयथोपदेशंदेशानुसारेणवा ॥ ४ ॥
चंक्रमणंपुनःपुनरागमनं रवेरुदयाख्यागमनं ५ सदाशिवाधोक्षजाभ्यांज्ञानस्योपदिष्टत्वात् नमयापृथगुपदेशायप्रयतनीयमितितत्राह यदादिष्टमिति क्षपितंनष्टमितियावत् ॥ ६ ॥ येना

॥ मैत्रेयउवाच ॥ ततउत्पन्नविज्ञानाआश्वधोक्षजभाषितम् ॥ स्मरंतआत्मजेभार्यांविसृज्यप्राव्रजन्गृहात् १ दीक्षिताब्रह्मसत्रेणसर्वभूतात्ममेधसा ॥ प्रती
च्यांदिशिवेलायांसिद्धोभूद्यत्रजाजलिः २ तान्निर्जितप्राणमनोवचोदृशोजितासनाञ्छांतसमानविग्रहान् ॥ परेमलेब्रह्मणियोजितात्मनःसुरासुरेड्योददृशे
स्मनारदः ३ तमागतंतउत्थायप्रणिपत्याभिनंद्यच ॥ पूजयित्वायथादेशंसुखासीनमथाब्रुवन् ४ स्वागतंतेसुरर्षेद्यदिष्ट्यानोदर्शनंगतः ॥ तवचंक्रमणं
ब्रह्मन्नभयाययथारवेः ५ यदादिष्टंभगवताशिवेनाधोक्षजेनच ॥ तद्गृहेषुप्रसक्तानांप्रायशःक्षपितंप्रभो ६ तन्नःप्रद्योतयाध्यात्मज्ञानंतत्त्वार्थदर्शनम् ॥ येनां
जसातरिष्यामोदुस्तरंभवसागरम् ७ ॥ मैत्रेयउवाच ॥ इतिप्रचेतसापृष्टोभगवान्नारदोमुनिः ॥ भगवत्युत्तमश्लोकआविष्टात्माऽब्रवीन्नृपान् ८ ॥ नारद
उवाच ॥ तज्जन्मतानिकर्माणितदायुस्तन्मनोवचः ॥ नृणांयेनहिविश्वात्मासेव्यतेहरिरीश्वरः ९ किंजन्मभिस्त्रिभिर्वेहशौक्लसावित्रयाज्ञिकैः ॥ कर्मभिर्वा
त्रयीप्रोक्तैःपुंसोपिविबुधायुषः १० श्रुतेनतपसावाकिंवचोभिश्चित्तवृत्तिभिः ॥ बुद्ध्यावाकिंनिपुणयाबलेनेंद्रियराधसा ११ किंवायोगेनसांख्येनन्यास
स्वाध्याययोरपि ॥ किंवाश्रेयोभिरन्यैश्चनयत्रात्मप्रदोहरिः १२ श्रेयसामपिसर्वेषामात्माह्यवधिरर्थतः ॥ सर्वेषामपिभूतानांहरिरात्मात्मदःप्रियः १३

त्मज्ञानेन ७ ८ यद्धरिसेवासाधनंजन्मादितदेवसफलंनतुसत्कुलजन्मादीत्याह तज्जन्मेत्यादिना येनजन्मादिना ९ किमित्येवंत्रिशेष्यस्तौषीतितत्राह किंजन्मभिरिति यत्रजन्मादौहरिरात्मप्रदो
नस्यात्तज्जन्मादिनाकिंफलमित्यन्वयः शुक्लंजन्मोभयकुलशुद्धं सावित्रंजन्मउपनयनादि याज्ञीयमग्न्याधानलक्षणंजन्म ॥ १० ॥ इंद्रियराधसाबहुग्रहणसामर्थ्येन ॥ ११ ॥ सांख्ये
नयथार्थज्ञानेन न्यासस्वाध्याययोःक्रिययापि अन्यैस्तीर्थसेवादिभिः १२ इतोपिविहितानांपुण्यानांहरेरनुग्रहपर्यंतमेवफलमित्याह श्रेयसामिति यावत्प्रसीदतितावत्पर्यंतंपुण्यफलमित्यवधेरर्थः
ननुसेवितःकिंफलंददातियेनश्रेयसामवधिःस्यादित्याशंक्यान्येसेवितायावत्प्रसीदंतितावत्पर्यंतंपुंसांस्वव्यतिरिक्तमेवपुण्यफलंप्रयच्छंति अयंतुस्वात्मानमेवददातीत्येताहशःकृपासमुद्रःकोस्तीत्यभिसंधा
याह सर्वेषामिति आत्मानंदरूपः १३

भा॰१च॰ किंवाश्रेयोभिरन्यैरित्यत्रदेवादिसेवालक्षणश्रेयांसिकथंनिषिध्यंते तत्सेवायाअपितत्फलावाप्त्येकर्तव्यत्वादितितत्राह यथेति प्राणोपहारोभोजनलक्षणपूजा इंद्रियाणांपूजेति [illegible] अ च्युतेज्यासर्वदेवाद्यर्हणफलंददाति अत्रैवकारेणप्रधान्यपूजानिषिध्यतेनत्ववांतरपूजा तस्याविहितत्वेनअच्युतस्यपूजात्वादित्यभिप्रायः परिदानतया [illegible] १४ [illegible] जयादेवादिपूजाफलंकथंस्यात्तर्हिदेवदत्तभोजनतृप्त्यायज्ञदत्तस्तृप्यतीतितत्राह यथेति उदयकालेआषाढादिकालेवागावोरश्मयोजलानिचसूर्यात्तथाप्रभवंतिनिर्गच्छंति [illegible]

७५ तादिकालेवातस्मिन्सूर्येप्रविशंति गवांमंडलप्रवेशोवारिणांमरीचिपीतत्वमित्येषविशेषः यथावास्थिरजंगमानिभूतानिभूमेरुत्पद्यंतेभूमावेवप्रविशंति तथावगुण[illegible] प्यतेहर्याधारतयातिष्ठतीत्यन्वयः अनेनहरेःसर्वकर्तृत्वेनस्वतृप्त्यादेवादीनांस्वाश्रितत्वेनतृप्तिर्युज्यतइत्येतत्सूचितमिति १५ अस्तुसर्वश्रेयस्साधनत्वाद्वि[illegible] पूर्वसंचीर्णश्रेयस्सुसत्सुयदासुप्तवृत्तयोविलीनश्वासादिवृत्तयोऽसुप्तप्रवृत्तयःप्रबुद्धवृत्तयोऽसवइंद्रियाणिजाग्रतिपुरुषंबोधयंति उद्योगेस्थितावा यदाचद्रव्यक्रियाकारकविभ्रमात्ययः [illegible] यंतदेतज्जगदात्मनःप्रपंचस्वामिनोहरेःपरंपदं यथासवितुःप्रभासकलपदार्थप्रकाशिकासूक्ष्मापि तथासकृद्विभातंभवति यथानारदस्य पुनः [illegible] क्रियाभ्रमः मदीयानीमानींद्रियाणीतिकारकभ्रमः मुख्यप्राणप्रसादेनप्राणशब्दवाच्येष्विंद्रियेषुज्ञानार्थंपुरुषोद्बोधनोद्योगवत्सुजाग्रतोयोगिनोज्ञानोत्पत्त्याद्रव्यादिविभ्रमात्ययः [illegible] इतिभावः । हरावेवगुणप्रवाहइत्युक्तेगुणप्रवाहाधारत्वेनसोपाधिकत्वंहरेःस्यादित्यतआह एतदिति एतदेवविष्णोःपदंतदुत्पन्नंजगदात्मनउपाधेःपरं [illegible]

यथातरोर्मूलनिषेचनेनतृप्यंतितत्स्कंधभुजोपशाखाः ॥ प्राणोपहाराच्चयथेंद्रियाणांतथैवसर्वार्हणमच्युतेज्या १४ यथैवसूर्यात्प्रभवंतिवारःपुनश्च तस्मिन्प्रविशंतिकाले॥भूतानिभूमौस्थिरजंगमानितथाहरावेवगुणप्रवाहः १५ एतत्परंतज्जगदात्मनःपदंसकृद्विभातंसवितुर्यथाप्रभा॥यथासवोजाग्रतिसुप्तशक्तयो द्रव्यक्रियाकारकविभ्रमात्ययः १६ यथानभस्यभ्रतमःप्रकाशाभवंतिभूपानभवंत्यनुक्रमात्॥एवंपरेब्रह्मणिशक्तयस्त्वमूरजस्तमःसत्त्वमितिप्रवाहः १७

तव्यः तर्हिशून्यंतत्राह सकृद्विभातमिति प्रज्ञानघनंयथासवितृप्रभाप्रभातातद्वत्स्थितंयज्ज्ञानात्द्रव्यक्रियाज्ञानभिदाभ्रमोजगद्भेदभ्रमस्तस्यनिवृत्तिर्भवति [illegible] ननुप्रज्ञानघनाज्जडस्यजगतःकथमुत्पत्तिरित्याशंक्यदृष्टांतेनोपपादयतियथेतियथाऽसवइंद्रियाणिअजाग्रतिसुप्तिकालेसुप्तवृत्तयोपहृतव्यापाराआत्मनिलीनास्तत [illegible] वद्ब्रह्मणोजगदित्येतदपव्याख्यानं आत्मभावःशरीरेषुद्रव्यभ्रमउदाहृतः । क्रियाभ्रमस्त्वहंकर्तामदीयानींद्रियाणितु । कारकभ्रमइत्युक्तस्तएतेविभ्रमायदा । [illegible] दा । विलीयंतेप्राणभक्त्यानित्यंस्वापवतास्फुटम् । उद्योगएवज्ञाग्रत्स्याद्योगिनांमुक्तिसिद्धयइत्यनेनैतद्व्याख्यानरूपेणसंप्रदायविभ्रमप्रकाशकेननिरस्तमितिज्ञायते एकोदेव सर्वभूतेषुगूढः यस्मिन्सर्वा णिभूतानीत्यादिष्वेकस्यहरेराधाराधेयभावस्यसत्यत्वावगमात् नहिसुषुप्तावींद्रियाणामात्मनिलयःप्रज्ञानघनादुत्पादोपिस्वकपोलकल्पितत्वमंतरेणप्रामाणिकइति १६ [illegible] दत्तवत्सृष्ट्याद्योगुणपंकेप्रवृत्तस्यतत्कृतलेपःस्यात् सचानुपपन्नोऽसंगोह्ययंपुरुषइतिश्रुतेरितितत्राह यथेति यथानभस्यभ्रतमःप्रकाशाआगमापायिनःअनुक्रमेणभवंति [illegible] पोस्ति एवंपरेऽसंगेब्रह्मणिरजस्तमःसत्त्वमित्यमूःशक्तयोभवंतितदेकाधीनत्वात् शक्तिशब्दवाच्याः इत्ययंगुणप्रवाहोनतस्मिन्विशेषमापादयतीत्येतत्तुशब्दादवगंतव्यं [illegible] क्तिप्रकाशपितुर्नैपुण्याभावात्ब्रह्मणिलेपाभावइत्यतोवाह इतीति अयंसत्यइतिशेषः एतदभिप्रायेणप्रवाहइत्युक्तं यथाप्रियतिष्ठमनसमर्थस्यापितत्प्रयुक्तदाहदुःखाभावस्तथा [illegible] लेपकत्वशक्तिरपिद्रव्याणांभगवदधीनेतिविशेषंतुशब्दोवक्तीतिवा १७

मथितार्थमाह तेनेति यतएवंप्रवृत्तिमत्त्वेपितत्कृतदोषलेपाभावस्तेनविष्णुरेकएवपूर्णोनत्वन्यइतिलक्षणात्मैकइतिभावेनएसामितःमत्योभिसंभावितास्मीतिबुद्ध्यापरमात्मानंभजध्वमित्यन्वयः पूर्णोविष्णुः स
एवैकइतिभावोयईरितः । आत्मैकभावइतितंविदुर्ब्रह्मात्मदर्शिनइतिवचनादात्मैकभावेनेतिनैक्यमुच्यते एकमेवाद्वितीयमात्मानमेवलोकमुपासीत प्रधानादिदमुत्पन्नमित्यादिश्रुतिः सप्रमाणादि
तुमेकमित्यादीनिविशेषणानिबोद्धव्यानि १८ इत्थंभावांतरमाह निरस्तेति भक्तानांनिरस्तौसंकल्पविकल्पौयेनसतथा हरिप्रसादमंतरेणतौनिरस्तौनस्यातांपुंसामित्यर्थः तमद्वयंद्वितीयरहि
हितं संकल्पश्चविकल्पश्चऋतेविष्णुप्रसादतः । नैवसंभवतोविष्णोःसमाभावात्तुसोद्वयइतिवचनंचात्रमानं द्वयस्यपंचविधस्यभेदस्यापवादः कुतर्कैर्निरासस्तमुपरमंतिनकुर्वतीतितेद्वयापवादोपरमा
स्तेषूपलंभनंदर्शनंयस्यसतथातच नआदिमध्यांतायस्यसतथातमजस्रनिर्वृतिंनित्यानंदंसंज्ञप्तिमात्रंविज्ञानघनइत्युक्तेःयादृशेनदर्शनेननिरस्तसंकल्पादिगुणविशेषाः तादृशेनतानुपसंहृत्यभजतेत्यन्वयः
१९ साधनांतरंचाह दययेति येनकेनचिच्छास्त्रविहितेनलब्धेनान्नपानादिनासंतुष्ट्यालंबुद्ध्या २० ननुबहुजन्मचीर्णसुकृतानंत्येनप्रसाद्यसकृद्विभातपदिपश्चान्नेतिपक्षेबहुक्लेशेनसाधनानुष्ठानं
व्यर्थपारदसाधनवदितितत्राह अपगतेति अपगतादूरतोनिरस्ताःसमस्ताःसकलाईषणाःपुत्रवित्तादिकामायस्मात्सतथा अतएवामलश्चात्माअपगतसकलेषणामलात्मातस्मिन्नेवविशुद्धांतःक
रणेनिरंतरमेधितयाभावनयाभक्त्याआहूतइवागत्यात्मानंप्रकाश्यसन्निहितोहरिःश्रीनारायणः सतांहृदयान्नसरतिनगच्छतिनतिरोभवति तत्रहेतुमाह निजेति स्वभक्तवशगतत्वंप्राप्तवानितिपर

तेनैकमात्मानमशेषदेहिनांकालंप्रधानंपुरुषंपरेशम् ॥ स्वतेजसाध्वस्तगुणप्रवाहमात्मैकभावेनभजध्वमद्धा १८ निरस्तसंकल्पविकल्पमद्वयंद्वयाप
वादोपरमोपलंभनम् ॥ अनादिमध्यांतमजस्रनिर्वृतिंसंज्ञप्तिमात्रंभजतामुयादृशा १९ दययासर्वभूतेषुसंतुष्ट्यायेनकेनवा ॥ सर्वेंद्रियोपशांत्याचतुष्य
त्याशुजनार्दनः २० अपगतसकलेषणामलात्मन्यविरतमेधितभावनोपहूतः ॥ निजजनवशगत्वमात्मनोऽयन्नसरतिछिद्रवदक्षरःसतांहि २१ नभजतिकु
मनीषिणांसइज्यांहरिरधनात्मधनप्रियोरसज्ञः ॥ श्रुतधनकुलकर्मणांमदैर्येविदधतिपापमकिंचनेषुसत्सु २२ श्रियमनुचरतींतदर्थिनश्चद्विपदपतींविबु
धांश्चयःस्वपूर्णः ॥ नभजतिनिजभृत्यवर्गतंत्रःकथममुमुद्विसृजेत्पुमान्रसज्ञः २३

स्माच्छिद्रवदाकाशवदेतन्निदर्शनकथनेनव्याप्तस्याभिव्यक्तिरेवविवक्षितेतिध्वनयति । पूर्वदेशवियोगलक्षणक्रिययोत्तरदेशसंयोगसंभवात् व्याप्तिभंगापत्तेरिति नक्षरतिनश्चवतीत्यक्षरशब्दनिरुक्तिः
चभक्तजनहृदयान्नापगच्छतीतिभावेनोक्तमक्षरइति हिशब्देनहरेर्ज्ञानिप्रियत्वंमानसिद्धमितिस्मारयति ज्ञानीत्वात्मैवमेमतइति २१ व्यतिरेकमाह नभजतीति आकिंचनेषुमदहेतुधनरहितेषुसत्सुश्रुत
धनकुलकर्मणांमदैश्चयेपापमपराधंविदधति सहरिस्तेषांकुमनीषिणांपुंसामिज्यांयागादिपूजांनभजतिस्वीकृत्यफलंनददातीत्यन्वयः कीदृशोहरिरधनाहिरण्यादिधनरहिताश्चातएवात्मधनाश्चाधनात्मध
नास्तएवप्रियायस्यसतथा तेषांप्रियोवा अस्मिन्नर्थेइदंप्रमाणं प्रियोहिज्ञानिनोत्यर्थमहंसचममप्रियइतिच प्रियत्वेनिमित्तमाह रसज्ञइति भक्तैःक्रियमाणरसमनुरागंभक्तिंजानातीतिरसज्ञः रसो
रागेविषेवीर्येइतियादवः रागोनुरागेलाक्षादाविति च श्रुतंचधनंचकुलंचकर्माणिचतानितथातेषांमदैर्बुद्धिभ्रंशहेतुवृत्तिविशेषैः २२ अस्मिन्नर्थेर्थवादंप्रमाणयति श्रियमिति द्विपदपतीन्मनुष्य
प्रधानान्तदर्थिनःश्रीप्रसादप्रार्थनाशीलान् स्वपूर्णइत्ययंतदपेक्षामंतरेणस्वापेक्षाभावेहेतुः निजभृत्यवर्गतंत्रइतिजयस्तंभप्रकटनार्थः अन्यथालक्ष्म्यादीनामभक्तत्वेनपृथक्करणप्रसङ्गेत नचतद्युक्तं
निजवनेतुलसीभिरीशमभ्यर्चतीतिलक्ष्म्याअपिमायापटलांतरभावेपिशुद्धात्मकभक्त्यातत्पूजाविधानात् उद्विसृजेत् उद्विग्नोभूत्वात्यजतीत्यर्थः २३

भवत्पूर्वजाःसर्वेपिभगवद्भक्तास्तत्रध्रुवोविशेषमकइति तद्भक्तिफलंकिंचिद्विशिनष्टि भवतामिति चित्ररथइतिध्रुवरथनामांतरं भगवत्प्रसादपात्रत्वेकोपिचिन्हरथानुग । नमपिदत्तवानितिविष्णुपुराणोक्तेः रथगताविति धातोः चित्राआश्चर्यभूतागतिर्यस्यसइतिवा चित्रवन्नानावर्णोरथोयस्यसइतिवा स्वमात्मानराजयतीतिस्वराट् राजा रोःपितुर्दाराभार्याशब्दवाच्याः २४ स्त्रैणस्त्रीजितंपितरंपूजास्पदं २५ सर्वेषांवैमानिकानांधिष्ण्येभ्यःस्थानेभ्यःपरमुत्तमं उत्तमत्वेकारणमाह मायेति मायेनसर्वोत्तमनविष्णुनाऽधिष्ठितस्थ स्थितं अनिर्वाच्यमायाकल्पितमित्यंगीकारे सर्वोत्तमत्वाद्विष्णुर्हिमायइत्येवशब्दितइतिस्मृतिविरोधःस्यात् तस्मिन्पक्षेमायाकल्पितमित्येवस्यान्नत्वधिष्ठितमिति मुनयोनृपाश्चावांछितस्थानं ध्रुवेतपरंनापुरित्यत्रदेवानुत्तममुनीन्विनानुसंधेयं देवानत्युत्तममुनीन्विनाकेशैंशुमारकं । हरेर्हंमविष्टास्तुध्रुवोदेवाश्चतद्गताइतिवचनात् अनेनापिमायाधिष्ठितमित्यत्रपुल्लिंगएवमायाशब्दोनतुस्त्री नतुमायेत्यावंतः २६ उपसंहरति तमिति यस्यानुग्रहात् ध्रुवोत्युच्चस्थानमाप तमीश्वरं २७ प्रचेतसामुक्तैवकथाकथितानारदेनकिमन्याश्चकथाउक्ताःसंतीतितत्राह इतीति २८

भवतांवंशधुर्योभूद्ध्रुवीश्चरथःस्वराट् ॥ गुरुदारवचोबाणैर्निभिन्नहृदयोर्भकः २४ त्यक्त्वास्त्रैणंचतंगच्छन्नदृष्टोमेपथ्युदारधीः ॥ पंचवर्षोमदादेशैःसंराध्य रुषेश्वरम् २५ तत्परंसर्वधिष्ण्येभ्योमायाधिष्ठितमारुहत् ॥ मुनयोयाप्युदीक्षंतेपरंनापुरवाङ्मुखाः २६ तंयूयंसर्वभूतानामंतर्यामिणमीश्वरम् ॥ रुद्रादिष्टोपदेशेनभजध्वंभवनुत्तये २७ ॥ मैत्रेयउवाच ॥ इतिप्रचेतसांराजन्नन्याश्चभगवत्कथाः ॥ श्रावयित्वाब्रह्मलोकंययौस्वायंभुवोमुनिः २८ तेपि तन्मुखनिर्यातंयशोलोकमलापहम् ॥ हरेर्निशम्यतत्पादंध्यायंतस्तद्गतिंययुः २९ एतत्तेभिहितंक्षत्तर्यन्मांत्वंपरिपृष्टवान् ॥ प्रचेतसांनारदस्यसंवादं हरिकीर्तनम् ३० यएषउत्तानपदोमानवस्यानुवर्णितः ॥ वंशंप्रियव्रतस्यापिनिबोधनृपसत्तम ३१ योनारदात्मविद्यामधिगम्यपुनर्महीम् ॥ भुक्त्वाविभज्यपु त्रेभ्यऐश्वरंसमगात्पदम् ३२ इत्थंतुकौषारविणोपवर्णितांक्षत्तानिशम्याजितपादसत्कथाम् ॥ प्रवृद्धभावाश्रुकलाकुलोमुनेर्दधारमूर्ध्नाचरणंहृदाहरेः ३३ ॥ विदुरउवाच ॥ सोयंममहायोगिन्भवताकरुणात्मना ॥ दर्शितस्तमसःपारोयत्राकिंचनगोहरिः ३४ ॥ श्रीशुकउवाच ॥ इत्यानम्यतमामंत्र्यवि दुरोगजसाह्वयम् ॥ स्वानांदिदृक्षुःप्रययौज्ञातीनांनिर्वृताशयः ३५ एतद्यःशृणुयाद्राजन्राज्ञांहर्यर्पितात्मनाम् ॥ आयुर्धनंयशःस्वस्तिगतिमैश्वर्यमा प्नुयात् ३६ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेपारमहंस्यांसंहितायामेकत्रिंशोऽध्यायः ॥ ३१ ॥

॥ चितंप्रचेतसांमुक्तिप्रापकंस्यात्तत्रैतदुपादेयंस्थात्तत्कथंप्रत्या शंक्यानेनैवापेक्षितगतिरभूत्तेषामित्याह तेपीति २९ हरेःकीर्तनंयत्रसतथा ३० अत्रशुकोवृत्तानुवर्णनपूर्वकमुत्तरकथांप्रतिजानीते यएषइति अनेनशुकेनोक्तमेवविदुरायोक्तंमैत्रेयेणेतिज्ञातव्यं ३१ श्रोतृजनतृप्त्यर्थंप्रियव्रतचरितंप्रस्तौति योनारदादिति ३२ मैत्रेयोक्तहरिकथाश्रवणेनविदुरेकोविशेषोभूदत्राह इत्थमिति नारायणोऽजितपदोवामनोमधुसूदनः श्रीधरःशंकराध्यक्षोब्रह्माध्यक्षो ज्ञानदइत्यभिधानं अजितस्यहरेःपादसत्कथांचरणविषयांकथांवाअजितपादानांहरेरंशभूतानांविशेषावेशवतांराज्ञांवामुनेःचरणंमूर्ध्निदधार हरेश्चरणंहृदा ३३ नतेरष्टागत्वंचोतापितुमुनिंस्तौति सोयमि ति यत्रतमसःपारेस्थितः ३४ स्तुत्वानत्वापुनः किमकार्षीदत्राह इतीति स्वानांज्ञातीनामितिकर्मणिषष्ठी निर्वृताशयइत्यनेनज्ञातव्याशास्यपूर्तिंदर्शयति ३५ शुकएतस्यश्रोतुरैहिकामुष्मिकफलमाह एतद्यइति ३६ चतुर्थस्कंधोयंहरिचरितरत्नावलिनिधिःकथंचिद्व्याख्यातोहरिगुरुमहानुग्रहबलात् । महांतःप्रीयंतामनुगुणसुलुब्धाःशुभधियःसहतांचावद्यंमयिविवृतिमार्गेस्खलनतः १ भुवनःमनोमौ लौलसंतीपुराभिद्गले । पदरत्नावलिर्नामवनमालेवरोचतां २ इतिश्रीमन्महेंद्रतीर्थपूज्यपादशिष्यविजयध्वजभट्टारककृतौश्रीमद्भागवतटीकापापदरत्नावल्यांचतुर्थस्कंधेएकत्रिंशोऽध्यायः ३१

॥ इति श्रीमद्भागवते चतुर्थस्कंधः समाप्तः ॥

॥ अथ श्रीमद्भागवते पंचमः स्कंधः प्रारभ्यते

दारादिषुसक्तस्यप्रियव्रतस्यकृष्णविषयाच्युतमत्यासिद्धिःकथमभूदितिप्रश्नपरिहारः कथमागतइति तद्वक्तुमुपक्रमते यर्हीति प्रियव्रतोप्येष्वेकइतिकृत्वातच्चरितंवक्तुमुपक्रमतेइत्यतोदाह यर्हीति यर्हि प
दास्वराजपुत्रःप्रियव्रतोभुवनरक्षणाय स्वपित्रास्वायंभुवेनोपामंत्रितोनियोजितोपिराज्यरक्षणलक्षणंपितृवचनंनैवाभ्यनंदन्नांगीकृतवान् तावकिल अथतदात्मयोनिर्ब्रह्मास्वभवनादवततारेत्यन्वयः इन्द
भिनंदनेकिंकारणमित्यतउक्तं ब्रह्मेतिब्रह्मसत्रेणसंन्यासेनदीक्षिष्यमाणः संन्यासदीक्षांप्राप्स्यामितिमन्वानः ननुअज्ञाततत्त्वस्यसंन्यासाधिकारःकथमस्यसंभवतीत्यतउक्तमवगतेति अवगतंपर
मार्थसत्तत्त्वंयेनसोऽवगतपरमार्थसत्तत्त्वःकालत्रयेप्यबाधितब्रह्माख्यतत्त्वज्ञानीत्यर्थः अलौकिकस्यवस्तुनोविशेषज्ञानंगुरुकटाक्षंविनानघटतइत्यतउक्तं चरणेति गुरोरितिशेषः एवंविधस्यसम्यग
नुग्रहकर्तागुरुःकःयेनतत्त्वज्ञानंस्यादित्यतउक्तं नारदस्येति नन्वयोग्यश्चेत्तत्त्वज्ञानग्रहणंकथंसंभाव्यतइत्यतउक्तंपरमभागवतइति इदंचानभिनंदनेकारणमित्याह भगवतीति अव्यवधानोव्यवध
नरहितोप्रतिबद्धोयःसमाधियोगश्चित्तैकाग्रतालक्षणस्तेनवासुदेवेभगवत्येवसम्यगावेशितःसमर्पितःसकलानांकारकाणांचक्षुरादीन्द्रियाणांक्रियाकलापोव्यापारसमूहोयेनसतथा जीवस्यब्रह्माभिनत्व
निरीक्षणलक्षणसमाधियोगेन सन्यस्ताहंकर्तृत्वादिसमुदायोवा नन्वज्ञवत्पित्रादेशंउदलंघयत्कथमयमितितत्राह यदपीति राज्यंकुर्वितियत्पित्रोक्तंतद्वचनंअमत्याज्ञातव्यंनकरोमीतिनिराकर्तुं अयुक्तं
यदपियद्यपिइतिजानाति तथापितदधिकरणेराज्यरक्षणाधिकारेअसतोप्रशस्तादन्यस्माच्छब्दादेर्विषयादात्मनोमनआदेःपराभवपुनःपुनःसंसारप्राप्तिलक्षणंपराजयमन्वीक्षमाणःसम्यक्पश्यन्गुरुवचन

यर्हिवावसराजपुत्रःप्रियव्रतःपरमभागवतोनारदस्यचरणोपसेवयांजसावगतपरमार्थसत्तत्त्वोब्रह्मसत्रेणदीक्षिष्यमाणोवानितलपरिपालनायाम्नातप्रवरगुण
गणैकांतभाजनतयास्वपित्रोपामंत्रितोभगवतिवासुदेवएवाव्यवधानसमाधियोगेनसमावेशितसकलकारकक्रियाकलापोनैवाभ्यनंदत् ॥ यदपितदप्रत्या
म्नातव्यंतदधिकरणआत्मनोन्यस्मादसतोपराभवमन्वीक्षमाणः ६ अथहभगवानादिदेवएतस्यगुणविसर्गस्यपरिबृंहणानुध्यानेनव्यवसितसकलज
गदभिप्रायआत्मयोनिरखिलनिगमनिजजनपरिवेष्टितःस्वभवनादवततार ७ तत्रतत्रगगनतलउडुपतिरिवविमानावलिभिरनुपथममरपरिवृढैरभिपूज्यमा
नःपथिपथिचवरूथशःसिद्धगंधर्वसाध्यचारणमुनिगणैरुपगीयमानोगंधमादनद्रोणीमवभासयन्नुपससर्प ८

चात्मस्नेहानिमित्तमितिसंपश्यमानः अनेनगुर्वादेशोल्लंघनदोषोपिपर्यहारीतिद्रष्टव्यं नन्वेवंविधश्चेत्किमितिपित्रोपामंत्रितइतितत्राह आम्नातेति आम्नातानीति शास्त्रेणपरिपठितानिप्रवराःउत्तमा
राज्ञांगुणाअभिगम्यादयोयेतेषामेकांतभाजनतयानियतपात्रत्वात् ६ नन्वतर्किताभ्यागमनेकिंकारणमितितत्राह एतस्येति सत्त्वादिगुणैर्विविधःसर्गोयस्यतत्तथा तस्यैतस्यजगतःपरिबृंहणार्थ
स्तस्यानुध्यानंसदासंचिंतनं तेनव्यवसितोनिश्चितोखिलजगदभिप्रायोयेनसतथा परिबृंहणंसृष्टिः तदनंतरकालीनानुध्यानेनापरोक्षीकृतइष्टानिष्टप्राप्तिपरिहारोपायलक्षणोजगदभिप्रायोयेनेतिवा अ
खिलैर्मूर्तिमद्भिर्निगमैर्वेदादिशास्त्रैर्मरीच्यादिनिजगणैश्चपरिवृतइत्यनेनश्रुतशास्त्रस्यप्रियव्रतस्यात्मयोनिवचनेऽतिविश्वासजननायोक्तमितिदर्शितम् ७ तद्वचनस्याग्राह्यत्वेतन्माहात्म्यमाह तत्रतत्रे
ति उडुपतिश्चंद्रइवेतिदृष्टांतःसौम्यत्वे अमरपरिवृढैर्देवश्रेष्ठैरनुपथमितिवीप्सायां गंधमादनस्यपर्वतस्यद्रोणींनिम्नानितबप्रदेशंप्रियव्रततपःस्थानंप्रकाशयन्नुपससर्पप्राप बाढमित्याद्येकवाक्यतामे
हान्संशयोमइतियदुक्तं तद्बाढंसत्यंइत्यर्द्धांगीकारः कथंमंदानांसंदेहावकाशोनविदुषां तथाहि प्रियव्रतस्यप्रथमशरीरग्रहणमारभ्यहरिचरणारविंदमकरंदरसास्वादनैकचित्तत्वात् कुटुंबासक्तिर्मुक्तिप
रिपंथिनीनस्यात् त्रिजगद्गुरुवरचतुर्मुखाज्ञाकारित्वेनगुणकरीचएतत्कुतइतितत्राह भागवतेति शेषंपूर्ववत् ८

 

हवाइत्येतौनिपातौ गद्यवाक्यालंकारार्थौ इतिहासश्रद्धातिशयजननार्थौवा तत्रतस्यामवस्थायांहंसयानेनलक्षणेनस्वापितरंचतुर्मुखंउपलंभमानः [illegible] पित्रापुत्राभ्यांनाज्ञास्वायंभुवप्रियव्रताभ्यांसहबद्धांजलिःउपतस्थेउत्थानसेवामकरोत् ९ तेनप्रियव्रतेनमनुनाचोपनीतमर्हितमर्हणंअर्घ्यपाद्यादिपूजं [illegible] नस्वागतमुपविश्यासनमित्यादिप्रियवाक्येनवा नितरामतिशयेनोदितौप्रकाशितौगुणावतारोगुणविस्तारश्चशोभनोविजयश्चयस्यसतया [illegible] आदिपुरुषश्चतुर्मुखस्तंप्रियव्रतमितिवक्ष्यमाणप्रकारेणोवाच हकिल प्रत्यारंभेप्रसिद्धौहवार्तासंभावयोःकिलेतियादवः सूक्तवाक्यंनहितोपदेशसहितवाक्यंनवा १० [illegible] दाह मासूयितुमिति देवेनश्रीहरिणा स्वधर्मोदुष्टदमनंधर्मज्ञानानुपालनमित्यादिस्वोक्तिलक्षणाज्ञाराज्ञांविहिता सदाज्ञामुल्लंघ्यनिवृत्तिमार्गांगीकारे [illegible] महादोषित्वेनाधःपातोदुष्परिहारःस्यादितिदेवमसूयितुंमार्हसीत्यन्वयः स्वामेयत्त्वंवत्तद्वाक्याभिप्रायस्यायमेयत्त्वंसूचितुममेयमितितेनतद्वाक्याभिप्रायापरिज्ञानेन [illegible] डैवनतुप्राप्तव्यप्रयोजनार्थितयेतिसूचनायदेवमिति तेतवततस्तातोमनुःवेविर्ष्णोर्विशाः विःपक्षिपरमात्मनोरितियादवः दिष्टमाज्ञा ११ ननुतपआदिसामर्थ्योपेतैस्त्वदाज्ञोल्लंघनंमुशकंस्यादआह नतस्य

तत्रहवाएनंदेवर्षिर्हंसयानेनापितरंभगवंतंहिरण्यगर्भमुपलंभमानः ॥ सहसैवसहपितापुत्राभ्यांअवहितांजलिरुपतस्थे ९ भगवानपिभारततदुपनीता र्हणःसूक्तवाक्येननितरामुदितगुणगणावतारसुविजयःप्रियव्रतमादिपुरुषस्तंसदयहासावलोकइतिहोवाच १० श्रीभगवानुवाच ॥ निबोधतातेदमृतंब्रवीमिमासूयितुंदेवमर्हस्यमेयम् ॥ वयंभवस्तेततएषमहर्षिर्वहामसर्वेविवशायस्यदिष्टम् ११ नतस्यकश्चित्तपसाविद्ययावानयोगवीर्येणमनीषयावा ॥ नैवार्थधर्मैःपरतःस्वतोवाकृतंविहंतुंतनुभृद्विभूयात् १२ भवायनाशायचकर्मकर्तुंशोकायमोहायसदाभयाय ॥ सुखायदुःखायचदेहयोगमव्यक्तदिष्टंज नतांगधत्ते १३ यद्वाचितंत्यांगुणकर्मनामभिःस्वधामभिर्वत्सवयंसुयोजिताः ॥ सर्वेवहामोबलिमीश्वरायप्रोतानसीवद्विपदेचतुष्पदः १४ ईशाभिसृष्टं ह्यवरुंध्महेंगदुःखंसुखंवागुणकर्मसंगात् ॥ आस्थायतत्तद्यदयुंक्तनाथश्चक्षुष्मतांधाइवनीयमानाः १५

ति तस्यहरेराज्ञालक्षणंकृतं शास्त्रात्मनाविहितंस्वधर्मंविहंतुंउल्लंघ्यस्वाविहितंकर्तुंनविभूयात्समर्थोनभवेदित्यन्वयः परतःसहायैःस्वतःसहायमंतरेण १२ [illegible] नता भवायचर्थमव्यक्तेनहरिणा हरिप्रेरितजडप्रकृत्यावा दिष्टंदत्तंस्वकर्मफलभोगायकल्पितंनिर्मितंवा देहयोगंधत्तेपुष्णातिकर्मभिरितिशेषः भवोभद्रेहरेप्राप्तौसत्तासंसारजन्मपरिस्थितियादवः १३ [illegible] लंघनेविध्यतिक्रमदोषेणप्रत्यवायोपिस्यादित्याशयेनाह यद्वाचीति यस्यहरेर्वाचिवेदाख्यायांतंत्यांगोवृषबंधनदीर्घरज्ज्वांतत्तद्योग्यगुणैर्ब्राह्मणादियोग्यकर्मभिर्ब्राह्मणक्षत्रियादिनामभिश्च [illegible] मित्तनामभिर्वा स्वदामभिर्हि स्वपाशैःसुष्ठुयोजिताबद्धाः वयमीश्वरायबलिंवहामःब्रह्मार्पणत्वेनतच्चहेदवाक्यविहितंकर्मकुर्मइत्यर्थं कथमिव नामिनासिकायांप्रोताः [illegible] मिनेगोण्यादिकंवहंतियथातथेति पारतंत्र्यमात्रेदृष्टांतोयंनतुबुद्धिपूर्वकर्तृत्वे १४ यथाकारणमीश्वराधीनंतथाफलंचतदधीनमित्याह ईशेति ईशाभिसृष्टं श्रीहरिणादत्तं [illegible] रमास्थायावरुंध्महे अंगीकृत्यभुंज्महे कथमिव चक्षुष्मतानीयमानाअंधाइव चक्षुष्मद्दर्शितमार्गमभ्युपेत्यतद्दत्तमेवभुंजतेयथातद्वदिति १५

उत्पन्नज्ञानस्यापिचरमदेहिनोदेहपातपर्यंतंस्वविहितकर्मकर्तव्यमित्याह मुक्तोपीति यथोपपातंदैवतःआप्तं तदपिप्रारब्धंफलदानायोपक्रांतं कर्मफलमश्नन्नभिमानशून्योदेहाभिमानरहितःप्रतिभातान्द्व
निवृत्ताज्ञानान्यथाज्ञानी जीवन्मुक्तोपियावत्प्रारब्धकर्मनाशःतावत्स्वदेहंबिभृयात्तत्रविहितंराज्यादिपालनकर्मचकर्तव्यमित्यर्थः तर्हिविद्वदविदुषोःकोविशेषइतितत्राह किंत्विति अन्यज्ञानितदन्यो
ज्ञायशरीरांतरारंभकान्रागादिलक्षणान्नवृंक्ते नस्वीकरोति तादृशकर्माणिनकरोतीत्यर्थः १६ ननुकर्दमाक्रांतस्यकर्दमलेपवत्गृहाश्रमरतस्यतन्निमित्तभवभयमापद्यतएवातोवनाश्रमएवश्रेयानिति
द भयमिति प्रमत्तस्यविस्मृतस्वकार्यस्यवनेषुनिर्जनप्रदेशेषुस्थितस्यापिपापाद्भयस्यात् कुतइतितत्राह यतइति षट्सपत्नाःषडिंद्रियाख्याःशत्रवःसहवसंतइतियतोलइतिशेषः। तर्हिदथंकारं...
स्यादितितत्राह जितेंद्रियस्येति अवद्यंदोषंबुधस्यकर्तव्यंजानतः। वशीकृतेंद्रियग्रामस्यैंद्रियजयःकथंज्ञायतइतितत्राह आत्मेति आत्मनिहरौरतिरुपासनालक्षणायस्यसदथातस्य १७ तर्हीं
द्रियजयोपायःकथमत्राह यइति इंद्रियाख्यषट्शत्रूनजेतुकामोयःसःपूर्वंगृहस्थाश्रमेषुस्थित्वातदुपभोगेनानिर्विंधालंबुद्धिंमाप्यपतेतश्रेयसइतिशेषः यतनप्रकारंवक्ति युध्येतेतिभगवन्निष्ठालक्षणदुर्गाश्रित उ
जितारीन्विषयभोगेषुसन्नद्धेंद्रियाख्यशत्रून् युध्येतविषयगमनंनिरुध्यात्माधीनान्कुर्यात् पुनःक्षीणेषूपरतविषयप्रचारेष्विंद्रियेषुसत्सु विपश्चित्कामंनिर्भयोविचरेदित्यन्वयः विपश्चिदित्यनेन नजातुकामः

मुक्तोपितावद्बिभृयात्स्वदेहमारब्धमश्नन्नभिमानशून्यः ॥ यथोपयातंप्रतियातनिद्रःकिंत्वन्यदेहायगुणान्नवृंक्ते १६ भयंप्रमत्तस्यवनेष्वपिस्याद्यतोवसंते
सहषट्सपत्नाः ॥ जितेंद्रियस्यात्मरतेर्बुधस्यगृहाश्रमःकिन्नुकरोत्यवद्यम् १७ यःषट्सपत्नान्विजिगीषमाणोगृहेषुनिर्विश्ययतेतपूर्वम् ॥ युध्येतदुर्गाश्रितऊ
र्जितारीन्क्षीणेषुकामंविचरेद्विपश्चित् १८ त्वंत्वब्जनाभांघ्रिसरोजकोशदुर्गाश्रितोनिर्जितषट्सपत्नः ॥ भुंक्ष्वेहभोगान्पुरुषातिसृष्टान्विमुक्तसंगःप्रकृतिं
भजस्व १९ ॥ श्रीशुकउवाच ॥ इतिसमभिहितोमहाभागवतोभगवतस्त्रिभुवनगुरोरनुशासनमात्मनोलघुतयावनतशिरोधरोबाढमितिसबहुमानमुवा
ह २० भगवानपिमनुनायथावदुपकल्पितापचितिःप्रियव्रतनारदयोरनिमिषमभिसमीक्षमाणयोरात्मसमवस्थानंवाङ्मनसोःक्षयमव्यवहितंप्रवर्तयन् २१
मनुरपिपरेणैवेत्थंसमभिसंधितमनोरथः ॥ सुरर्षिवरानुमतेनात्मजमखिलधरामंडलस्थितिगुप्तयआस्थायातिविषयविषमविषजलाशयाद्विरराम २२

कामानामुपभोगेनशाम्यति। हविषाकृष्णवर्त्मेवभूयएवाभिवर्धतइत्येतान्विरक्तं १८ बह्वालापैरलंकिमधुनाकर्तव्यमत्राह त्वमिति तुनाप्रियव्रतस्यान्यस्माद्विशेषंसूचयति इत्येवाह भुंक्ष्वेति पुरुषा
तिसृष्टान्श्रीनारायणप्रसादोपनतान् विमुक्तसंगः पुत्रादिस्नेहलक्षणसंगरहितः सत्वंप्रकृतिंसच्चिदानंदलक्षणस्वभावं संन्यासाश्रमेणमोक्षोनान्याश्रमेणेत्ययंबुद्धिव्यामोहएव विहितोयस्यगोधर्मोविष्णुना
प्रभविष्णुना। तेनमुक्तिर्भवेच्चस्यतंगुरुर्वेदसर्वविदिति स्मृतेस्तवविहितेनप्रजापालनलक्षणधर्मेणस्वयोग्यमुक्तिरितिविदित्वातत्रविमुखत्वामुद्धोप्यतत्करणायायासिषमित्यतस्तत्कुर्वित्येतद्ब्रह्मानुनाह १९
अथप्रियव्रतस्यशिष्टजनशिक्षणायविरिंचस्याज्ञाग्रहणप्रकारमाह इतीति विरिंचादात्मनःस्वस्यलघुतयाप्रितमहिमत्वादवनतशिरोधरःप्रणतकंठः २० स्वाज्ञाग्रहणात्प्रियव्रतायप्रपत्त्यान्विरिंचःसत्यलो
कमपेत्याह भगवानपीति मनुनायथावदुपकल्पिताअपचितिःपूजायस्मैसः अनिमिषमितिक्रियाविशेषणंपक्ष्मविवृत्यआत्मसमवस्थानंस्वस्थानंसत्यलोकंवाङ्मनसोःवाचोमनसश्चक्षयंविषयीकर्तुमशक्यं
व्यवहितंसतामितिशेषः रागादिदोषरहितत्वात् २१ स्वायंभुवमनोरपिसंसारत्यागप्रकारमाह मनुरपीति परेणविरिंचेन सुरर्षिवरानुमतेनदेवर्षीणांमध्येवरःश्रेष्ठःनारदःतस्यानुमतेनगृहीताज्ञ
तिविषमविषयएवविषंतदेवजलाशयोह्रदस्तस्मात् २२

१ पुरुषातिसृष्टानित्यत्रनाहिलौकिकःपुरुषोगृह्यते इत्यत्रप्रमाणमाह

मियव्रतस्ययथाविरिंचोपदेशोंक्षितिरक्षणप्रकारंब्रवीति इतिहेति इतिशब्दोहेत्वर्थः यस्माद्गुरूणामनुशासनमनुष्ठेयनीयमतहति बंधध्वंसनपरोनुभाव प्रभावःसामर्थ्यंयस्यसतथा तस्य...अनुभा...त्था नसामर्थ्येनध्यानादुत्पन्नज्ञानेनवा कषायःपापं रंधिदाहेरंधितंदग्धं अपिसंभावितामिति २३ वानप्रस्थाश्रमस्थएवायराज्यमपालयाद्विरक्तत्वान्नतुगृहाश्रमस्थइतिशंकापरिहर्तुमाह अथेति आप्युभ यकुलशुद्धिकरीत्याशयेनाह तस्यामिति उहवाइतिनिपाताःप्राक्पुत्रानुत्पत्तौसंतापंपश्चात्संतोषंतत्रप्रसिद्धिंसूचयंति भावयांबभूवोत्पादयामास २४ तेषांनामान्याह आग्नीध्रेति यज्ञबाहोरनुजोमहावीर घृतपृष्ठानुजःसवनःवीतिहोत्रानुजःकविः २५ ऊर्ध्वरेतसोब्रह्मचर्याख्यव्रतधारिणःअर्भकभावाद्बाल्यात्प्रभृति आत्मविद्यायांपरविद्यायां कृतपरिचयाःपूर्णाभ्यासा एवशब्देनगानसपरमहंसाश्रमं...तर्व्यंति २६तस्मिन्नाश्रमेवर्तमानाः। स्वयोग्यगुणोपसंहारेणमुक्तिःस्यादितिदर्शयितुंसकलजीवेत्यादिगुणविशिष्टत्वहरेरुक्तं नतुगुणानामियत्तया अविरतस्मृत्याविगलितस्यतैलधारा...

इतिहवावसजगतीपतिरीश्वरेच्छयाधिनिवेशितकर्माधिकारोऽखिलजगद्बंधध्वंसनपरानुभावस्यभगवतःआदिपुरुषस्यांघ्रियुगलानवरतध्यानानुभावेनप रिरंधितकषायाशयावदातोपिमानवर्द्धनोमहतांमहीतलमनुशशास २३ अथचदुहितरंप्रजापतेर्विश्वकर्मणउपयेमेबर्हिष्मतींनाम ॥ तस्यामुहवाआत्म जानात्मसमानशीलगुणकर्मरूपवीर्योदारान्दशभावयांबभूव ॥ कन्यांचयवीयसीमूर्जस्वतींनाम २४ आग्नीध्रेध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतोघृतपृष्ठस वनमेधातिथिवीतिहोत्रकवयइतिसर्वएवाग्निनामानः २५ एतेषांकविर्महावीरःसवनइतित्रयआसन्नूर्ध्वरेतसः ॥ तआत्मविद्यायामर्भकभावादारभ्यकृतपरि चयाःपारमहंस्यमेवाश्रममभजन् २६ तस्मिन्नुहवाउपशमशीलाःपरमर्षयःसकलजीवनिकायावासस्यभगवतोवासुदेवस्यभीतानांशरणभूतस्य श्रीमच्चरणारविंदाविरतस्मृतिविगलितपरमभक्तियोगानुभावेनपरिभावितांतर्हृदयाधिगतेभगवतिसर्वेषांभूतानामात्मभूतेप्रत्यगात्मन्येवतादात्म्यमविशे षेणसमापुः २७ अन्यस्यामपिभार्यायांत्रयःपुत्राआसन् ॥ उत्तमस्तामसोरैवतइतिमन्वंतराधिपतयः २८ एवमुपशमायनेषुस्वतनयेष्वथजगतीपति र्जगतीमर्बुदान्येकादशपरिवत्सराणामव्याहताखिलपुरुषकारसारभूतदोर्दंडयुगलापीडितकोदंडमौर्वीगुणस्तनितविरमितधर्मप्रतिपक्षोबर्हिष्मत्याश्चानुदि नमेधमानप्रमोदप्रसरणयौषिण्यव्रीडाप्रमुषितहासावलोकरुचिरक्ष्वेल्यादिभिःपराभूयमानविवेकइवानवबुध्यमानइवमहामनाबुभुजे २९

भावेनपरिभाविते...कृतेतर्हृदयेधिगतेज्ञाते आत्मभूतेअतिप्रियेप्रत्यगात्मनिस्वाबिंबेतर्यामिणि अविशेषेणपार्थिवदेहत्यागेन तादात्म्यंतद्रूपसाम्यमेवापुः सर्वेचतुर्बाहवइत्यादेः भगवतीतिसप्तमीनिर्देशा... कथमत्रोच्यते,तदधीनत्वंतत्स्वामित्वंवातदेकचित्तत्वंवातत्कामितकामित्वंवाविशेषेणस्वातंत्र्यमंतरेणोतिच २७ नकेवलमस्यैकैवपत्नीकिंतुद्वितीयाप्यस्तिसापिप्रयोजकपुत्रप्रसूरित्याह अन्यस्यामपीति न स्कृत्यमुक्तंमन्वंतराधिपतयइति २८ सप्रियव्रतोराजाकियंतंकालंराज्यमभुंक्तेतितत्कालावधिमाह एवमिति उपशमायनेषुसंन्यस्तेषु भगवतोधिकनिष्ठैवायनमाश्रयोयेषांतेतथातेष्वितिवा परितस्त...कादशार्बुदानि मौर्वीगुणोज्याख्यरज्जुः स्तनितेनविस्फूर्जितेन प्रमोदप्रसरणमानंदप्रवाहस्तस्यपोषणंप्रवर्धनंतेनचव्रीडयाचविशिष्टचेष्टालक्षणयाचप्रमुषितहासईषच्चिरस्कृतहासनंतेनयुक्तोवलोकोरुचिरं नरुचिराक्ष्वेल्ना नर्मवागेवंपूर्वैःपराभूयमानविवेकोऽनाविर्भूतविवेकज्ञानत्वादनवबुध्यमानइवाज्ञतुल्यःनत्वज्ञइत्यर्थःमहामनाइत्युक्तेः २९

नन्वत्रास्यविषमविषयभोगविशेषएवोक्तोनतुमाहात्म्यविशेषइत्यतस्तमाह यावदिति अयमादित्योभगवान्सुरगिरिमनुक्रामन्यावदवभासयतीत्युक्तमेवाविवृणोतिवसुधातलमिति पतपतिमध.छा.न्याल
पुरुषमानमतिक्रम्यवर्तमानः प्रभावोयस्यसतथा तदादित्यप्रवर्तनमात्मराज्यांधकारकरणं समजवेनसूर्यरथसदृशवेगेन रजनींरात्रिमपिदिनंप्रकाशवत्व्यवहारयोग्यंकरिष्यामीतिमत्वा तरणिमन्वादि
त्यस्यपृष्ठतःसप्तवारंपर्याक्रामत्मेरोःपरिसरभूमिमितिशेषः पतंगःसूर्यः ३० अद्यदृश्यमानंतल्लक्षणांकितदितितत्राह यावाइहेति अत्रवाइत्यादिनिपाता अस्यग्रंथस्यवेदतुल्यत्वद्योतनाय अतएव.इहितया
मिति प्रत्यध्यायमुक्तिरिति। इहभूतले तस्यप्रियव्रतस्यरथचरणस्यरथचक्रस्यनेमयोः प्रांतधारास्ताभिःकृताःपरिखादीर्घिकास्ताःसप्तपरिखा सप्तसिंधवआसन्नित्यन्वयः वाइत्यनेनसमुद्राणापूर्वसद्भावप
सिद्धिंध्वनयतिअयंतुतेषांस्थौल्यंकृतवानिति तदुक्तं पूर्वसृष्टान्रथावृत्त्यास्थूलांश्चक्रेप्रियव्रतः । समुद्रांस्तेनतत्कर्तॄन्त्याहुरेनंप्रियव्रतमिति यतोयेभ्यःसमुद्रेभ्यःसीमाभूतेभ्यएवभुवःसप्तद्वीपाःकृताःपद्वाएवद
ल्दःप्रधानभूतःसप्तैवान्येवांतरद्वीपाबहवःसंतीतिविशेषद्योतनार्थःतेसिंधवःसप्तेतिशेषः ३१ तेषांनामान्याह जंब्वित्यादिना तेषांद्वीपानांपरिमाणंशृण्वितिशेषः किमित्यनउक्तं पूर्वस्मादिति पूर्वस्मात्पूर्व

यावदवभासयतिसुरगिरिमनुपर्याक्रामन्भगवानादित्योवसुधातलमर्धेनैवप्रतपतिअर्धेनैवाच्छादयतितदाहिभगवदुपासनोपचितातिपुरुषप्रभावस्तदन
भिनंदन्समजवेनरथेनज्योतिर्मयेनरजनीमपिदिनंकरिष्यामीतिसप्तकृत्वस्तरणिमनुपर्याक्रामत्सद्वितीयइवपतंगः ३० यावाइहतद्रथचरणनेमिकृतपरिखा
स्ताःसप्तसिंधवआसन्यतएवकृताःसप्तभुवोद्वीपाः ३१ जंबूप्लक्षशाल्मलिकुशक्रौंचशाकपुष्करसंज्ञास्तेषांपरिमाणंपूर्वस्मात्पूर्वस्मादुत्तरोत्तरेयथासंख्यंद्विगु
णेनवहिःसमंततउपकॢप्ताः ३२ लवणोदेक्षुरसोदसुरोदघृतोदक्षीरोददधिमंडोदशुद्धोदाःसप्तजलधयःसप्तद्वीपपरिखाःअभ्यंतरद्वीपसमानाःएकैकशोयथानुपू
र्वंसप्तस्वपिवहिर्द्वीपेषुपृथक्पृथक्परितउपकल्पिताः ॥ तेषुजंब्वादिषुवर्हिष्मतीपतिरनुव्रतानात्मजानाग्नीध्रेध्मजिह्वयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथि
वीतिहोत्रसंज्ञान्यथासंख्यमेकैकस्मिन्नेकमेकमेवाधिपतिंविदधे ३३ दुहितरमूर्जस्वतींनामोशनसेप्रायच्छद्यस्यामासीद्देवयानीनामकाव्यसुता ३४ नैवं
विधःपुरुषकारउरुक्रमस्य पुंसांतदंघ्रिरजसाजितषड्गुणानाम् ॥ चित्रंविदूरविगतःसकृदाददीतयन्नामधेयमधुनासजहातिबंधम् ३५

स्मादुत्तरोत्तरइत्यांतरादांतरात्बाह्योबाह्यइत्यंतर्बहिर्भावेनवर्तमानाद्वीपायथासंख्यंद्विगुणेनबहिःसमंततउपकॢप्ताः ३२ सिंधुनामान्याह लवणोति अभ्यंतरद्वीपसमानाइति जंबुद्वीपस्यमानोलवणोदः
प्लक्षद्वीपसमानइक्षुरसोदधिरित्येवसंख्येयं तत्राराजकत्वेतत्रत्यानांजनानांमिथोविवादेनविनाशःस्यादितिकृत्वाग्नीध्रादिसप्तपुत्रास्तत्पतीश्चक्रइत्याह तेष्विति ३३ पारिबर्हदानेसुतानांमिथोविवादः
स्यादितिकृत्वाकन्यादानमपिस्वयमेवचक्रइत्याह दुहितरमिति उशनाशुक्रःकाव्यइतिहलायुधः तत्पुन्यपिराजकुलवृद्धिकरीतिभावेनतत्सुतामाह यस्यामिति ३४ एषाविक्रमस्योरुक्रमविक्रमस्यापि
त्वान्मुमुक्षुणाश्रवणादिनावश्यमभ्यसनीयइतिभावेनाभिष्टौति नैवंविधइति हरेःपुंसांभक्तानामेवंविधःपुरुषकारोमाहात्म्यविशेषश्चित्रंनभवतीति कुतइतितत्राह तदंघ्रिरजसेतिनिषेधितेनेतिशेषःषड्गुणाः
कामादयोआरामादयोवाअशनादयोवामनसासहशब्दादयोवायैस्तेजितास्तेतथोक्ताः इवोपि।चित्रंनेत्याह विदूरेति विप्रविलक्षयाविदूर श्वपचस्तस्मादपिविगतश्चंडालः यस्यहरेर्नामकृष्णाद्येनामधेयं सकृदाद
दीत सोऽधुनासद्यएवसंसारलक्षणंबंधंजहातित्यजतीत्यन्वयः तस्योरुक्रमस्येति यद्वाविदूरविगतः दूराद्दूरंगतोदोषानिमित्ताद्बहिष्कृतोपिबंधदोषलक्षणमिति ३५

इदानींपूर्वानुवादपूर्वकंवैराग्येणतस्यसंसारनिंदाप्रकारंकथयति सएवमिति अनुपतितोयदृच्छयाप्राप्तोगुणविसर्गः संधिंचविग्रहंचैवयानमासन [illegible] गुणप्रयोगो गुणकार्यविषयप्रपंचोवा तस्यसंसर्गेणसंबंधेन आत्तनिर्वेदःप्राप्तवैराग्यः ३६ किमाहेत्यत्राह अहोइतिविनोदमृगंक्रीडामृगम् ॥ ३७ ॥ [illegible] वक्ति परदेवतेति परदेवतानारायणःतस्यप्रसादेनाधिगतंप्राप्तमात्मप्रत्यवमर्शनंप्रासपरमात्मज्ञानंतेनपरिनिर्वृतोनष्टलब्धचिंतामणिरिवपरमानंदप्राप्तः यथादायंभोग्येभ्यःपितृधन [illegible] वामिव महतीविभूतिर्यस्याःसा तथातानारदस्यपदवीनिवृत्तिमार्गःसंन्यासलक्षणःतां ३८ प्रियव्रतचरितश्रवणस्मरणादेरनायासेनमुक्तिसाधनत्वादिन्यजयाग [illegible] तस्योति रथचक्रनेमिकृतनिम्नैः छायांरात्रिकृत्वां ३९ भूसस्थानंभुवोवयवविशेषनामभूतं निर्वृत्यैप्राणिनांसुखाय ४० महित्वंमाहात्म्यं योगकर्मजं [illegible]

सएवमपरिमितबलपराक्रमएकदातुदेवर्षिचरणानुसेवयानुपतितगुणविसर्गसंसर्गेणानिर्वृत्तमिवात्मानंमन्यमानःआत्तनिर्वेदइदमाह ३६ अहोअसाध्वनुष्ठितंयदभिनिवेशितोहमिंद्रियैरविद्याविरचितविषमविषयांधकूपेतदलमलंमनुष्यवनिताविनोदमृगंमांधिग्धिगितिगर्हयांचकार ३७ परदेवताप्रसादाधिगतात्मप्रत्यवमर्शनपरिनिर्वृतः ॥ स्वपुत्रेभ्यइमांगांयथादायंविभज्यभुक्तभोगांचमहिषीमृतकामिवसहमहाविभूतिमपहायस्वयंनिहितनिर्वेदोहृदिगृहीतहरिविहारानुभावोभगवतोनारदस्यपदवीमनुससार ३८ तस्यहवाएतेश्लोकाः ॥ प्रियव्रतकृतंकर्मकोनुकुर्याद्विनेश्वरम् ॥ योनेमिनिम्नैरकरोच्छायांघ्नन्सप्तवारिधीन् ३९ भूसंस्थानंकृतंयेनसरिद्गिरिवनादिभिः ॥ सीमाचभूतनिर्वृत्यैद्वीपेद्वीपेविभागशः ४० भौमंदिव्यंमानुषंचमहित्वंयोगकर्मजम् ॥ यश्चक्रेनिरयौपम्यंपौरुषंतुजनप्रियम् ४१ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेभुवनकोशेप्रियव्रतविजयेप्रथमोध्यायः १ ॥ श्रीशुकउवाच ॥ एवंपितरिसंनिवृत्तेतदनुशासनेवर्तमानआग्नीध्रोजंबूद्वीपौकसःप्रजाऔरसवद्धर्मानवेक्षमाणःपर्यगोपायत् १ सतुकदाचित्पितृलोककामःसुरवरवनिताक्रीडाचलद्रोण्यांभगवंतंविश्वसृजांपतिमाहृतपरिचर्योपकरणआत्मैकाग्र्येणतपसाराधयांबभूव २ एतदुपलभ्यभगवानादिपुरुषःसदसिगायंतींपूर्वचित्तिंनामाप्सरसमभियापयामास ३ साचतदाश्रमोपवनमतिरमणीयविविधनिबिडविटपिविटपनिकटपुटलताकुटिल [illegible] तिबोध्यमानसलिलकुक्कुटकारंडवकलहंसादिभिर्विचित्रमुपकूजितामलजलाशयकमलाकरमुपबभ्राम ४

४१ इतिश्रीभागवतेवि॰टीका॰पंचमस्कंधेप्रथमोध्यायः १ स्त्रीसंगंपरिहरतःपुंसःकरतलस्थैवमुक्तिरित्यभिप्रेत्यतस्यापरिहारार्थत्वंप्रतिपाद्यतेस्मिन्नध्याये [illegible] मिति औरसवदात्मपुत्रवत्पर्यगोपायदरक्षत् गुपूरक्षणे १ विश्वसृजांपतिंब्रह्माणंपितृलोककामइत्यनेनसंतानार्थित्वंलक्षयति सोयंमनुष्यलोकः पुत्रेणजेयइतिश्रुतेः सुपुत्रेणापितुः पितृलोकप्राप्ति [illegible] आक्रीडःक्रीडास्थानंआत्मनोंतःकरणस्यैकाग्र्यंयस्मिंस्तत्तथातेनात्मैकविषयेणवा २ अभियापयामासप्रेषयामास ३ अतिरमणीयाविविधाश्चनिबिडाश्चसंघट्टिताश्चविटपिनोवृक्षास्तेषांविटपाः शाखास्तेषां निकटपुटेषुसमीपभागेषुयालतास्तासांकुटिलेषुवक्रभागेषुरूढाआरूढाश्चस्थलविहंगमाःमयूरकोकिलादयस्तेषांमिथुनैःप्लाव्यमानाश्रुतिःधनुर्मंडलमात्रप्रदेशव्यापिनीध्वनिसंततिर्येषांतानितथातैःप्रबोध्यमानैःप्रतिनादोन्मुखीकरणायेतिशेषः जलकुक्कुटादिभिर्विचित्रंयथातथोपकूजितेनिर्मलजलाशयेरूढःकमलाकरोयस्मिन्तत्तथा ४

सुहितोललितपदविन्यासः कोमलपदविक्षेपोययासाललितपदाविन्यासाचगतिर्गमनंतस्याविलासेनशृंगारलक्षणशोभयानुपदंप्रतिचरणविक्षेपंस्खणखणायमानेसिंजितध्वनिविशेषंकुर्वाणेरुचिरेशोभनेचर णाभरणेनूपुरेयेतयोर्ध्वनिमाकर्ण्यसराजकुमारःसमाधियोगेनामीलितेनामीलितौनयननलिनमुकुलौयौतयोर्युगलमीषदल्पंविकचय्यविकासंकृत्वाआचष्टअद्राक्षीत् ५ ततःकिंतनाह तामिति एवशब्दे॥ न्यदर्शनंनिवारयति अन्यदर्शनाभावेनिमित्तमाह अविदूरइति सुमनसःपुष्पाणि दिविजादीनामनोनयनानामाह्लादंदुहंतीतिमनोनयनाह्लाददुघास्तैर्गतिश्च विहारश्चविनयश्चविलोकनं... राणिचावयवाश्चतेतथातैःकुसुमायुधस्यकामस्यविवरमवकाशं ६ निजमुखाद्विगलितःस्नुतःमदजनकासवः तस्यामोदाज्जातेनमदेनांधामधुकरनिकरायेतैरुत्पन्नेनउपरोधेननिवारणक्लेशेनद्रुतपद विन्यासेनवल्गुशोभनस्पंदनमीषच्चलनंयेषांस्तनकलशादीनांतेतथा वल्गुस्पंदनाःस्तनकलशादयोयस्याःसातथातां । पूर्वचित्तेरवलोकनेनबुद्धिभ्रंशविशेषोनेनमानइत्याह तदिति भगवतःयोनिलक्षण प्रशस्तस्थानगतस्य सर्वजनसंभाव्यस्यवा मकरध्वजस्यकामस्य जडवद्वस्तुविचारपरिज्ञानशून्यइव इतिवक्ष्यमाणप्रकारेण हशब्देन प्रभवतिमनसिविवेकोविदुषामपिशास्त्रसंभवस्तावत् । एवत

तस्याःसुललितपदविन्यासगतिविलासेनानुपदंखणखणायमानरुचिरचरणाभरणस्वनमुपाकर्ण्यनरदेवकुमारःसमाधियोगेनामीलितनयननलिनमुकुलमी षद्विकचय्याचष्ट ५ तामेवाविदूरेविलोक्यमधुकरीमिवसुमनसउपजिघ्रंतींदिविजमनुजमनोनयनाह्लाददुघैर्गतिविहारविनयविलोकनसुस्वराक्षरावय वैर्मनसिनृणांकुसुमायुधस्यविदधतींविवरम् ६ निजमुखविगलितमदासवामोदमदांधमधुकरनिकरोपरोधेनद्रुतपदविन्यासवल्गुस्पंदनस्तनकलशकबरहा ररशनांदेवींतदवलोकनेनविधृतावसरस्यभगवतोमकरध्वजस्यवशमुपनीतोजडवदितिहोवाच ७ कात्वंचिकीर्षसिचकिंमुनिवर्यशैलेमायासिकापिभगव त्परदेवतायाः॥ विज्येबिभर्षिधनुषीसुहृदात्मनोर्थेकिंवामृगान्मृगयसेविपिनेप्रमत्तान् ८ बाणाविमौभगवतःशतपत्रपत्रौशांतावपुंखरुचिरावतितिग्म दंतौ॥ कस्मैयुयुंक्षसिवनेविचरन्नविद्मःक्षेमायनोजडधियांतवविक्रमोस्तु ९ शिष्याइमेभगवतःपरितःपठंतिगायंतिसामसरहस्यमजस्रमीश ॥ युष्मच्छिखाविलुलिताःसुमनोभिवृष्टीःसर्वेभजंत्यृषिगणाइववेदशाखाः १० वाचंपरंचरणपंजरतित्तिरीणांब्रह्मन्नरूपमुखरींशृणुमोद्यतुभ्यम् ॥ कुतस्त्वा कदंबरुचिरांकविटंकबिंबेयस्यामलातपरिधिःक्वचवल्कलाते ११

विद्दष्टिविशिखावावनेंदीवराक्षीणामित्यादिप्रसिद्धिंदर्शयति ७ जडत्वमेवदर्शयति कात्वमिति मुनिवर्येतिपुंल्लिंगेनसंबोध्यकात्वयितिस्त्रीलिंगेनप्रश्नइत्यादिविवेकाभावोलिंगं शैलेगिरौकिंकर्तुमिच्छ सि परदेवतायाःमायासि किं तत्रापिकामायासिनारीदैवीगांधर्वीत्यादिषु विज्येमौर्वीरहितेधनुषीभ्रूलक्षणेसुहृदात्मनोर्थेसुहृदात्मनोवशीकरणाय कस्यचित्सुहृद्आत्मनोवापालनप्रयोजनविषये वाबिभर्षि अर्थांतरमाह किंवेति भ्रूयुगलधनुर्धृत्वामृगान्मृगयसेकिंवेत्यन्वयः ८ बाणौनयनलक्षणौशतपत्रपत्रौपद्मदलसदृशपक्ष्मयुतौशांतौस्निग्धौअपुंखरुचिरौपुंखविनाशोभमानौ...तिग्म दंतौ अतितीक्ष्णकटाक्षलक्षणौएवंविधौकस्मैपुंसेयुयुंक्षसिप्रयोक्तुमिच्छसि ९ हस्तवारणलक्षणशिक्षायोग्यत्वाच्छिष्याइतिभृंगा युष्मच्छिखाविलुलिताःयुष्माकंकेशपाशच्युताःसुमनोभिवृष्टीःपुष्पवृष्टीः १० हेब्रह्मन्तुभ्यंतवचरणपंकजतित्तिरीणांचरणपद्मनूपुरांतर्गतरत्नरूपोपलानांवाचंशब्दमात्रंपरंनतुव्यक्तार्थं कथंभूतामरूपंविनापिमुखरींशब्दवादनशीलामित्यरूपमुखरीं तित्तिरिर्नूपुरान्तस्थरत्नपक्षि विशेषयोः चक्रपार्श्वेयजुर्वेदेसिल्यामपिचकथ्यतेइत्यभिधानं कदंबपुष्पवद्रुचिरस्यसुंदरस्याकारस्यसामीप्यात् कटिप्रदेशस्याविटंकनिबिडंउन्नतमंडलंशृंगारविशेषयुक्तमंडलेशा...

क्लव्धायस्यांवल्कलायांअलातपरिधिःअलातमेवालातःतद्वत्स्थितापरिधिःपरिवेषःकांचीलक्षणाच वल्कंवल्कलमस्त्रियामित्यभिधानाज्जडत्वाल्लिंगव्यत्यासः तथाच पस्यवल्कलस्यपंक्तपरिणे रस्तीत्यन्वेतव्यम् ११ मध्येकृशइत्यलुक् कृशमध्यस्त्वंयौवहासितेतवतयोरुचिरयोःशृंगयोःशृंगवदुन्नतयोःस्तनयोःसंभृतंकिंचूचुकलक्षणनीलरत्नामितिशेष यत्रयपो द्विजेतिसंबोधनंजलस्नात् कुंकुमाद्य गरागाभिप्रायेणाह पंकइति आत्मविषाणेतवस्तनद्वयेऽरुणःपक कुंकुमाद्यंगराग ईदृगीदृशगुणोपेतःकथपत्राह येनेति १२ यत्रत्यःयस्मिन्देशेयूतस्त्वमुरसाअपूर्वान्तनौभवपवाञ्तन ... षिं किंविशिष्टावस्माद्विधस्यमनउन्नयनौमनसउत्कर्षप्रदौ सत्वं तावकंलोकंप्रदर्शयेत्यन्वयः अन्यदपीत्याह बह्विति किंतदत्राह सरसेति वक्ररसेनसहवर्तमानःसरसोहासःअट्टहासःतत्पुष्पात् धांअधरामृतंचबिभर्षि पानेनसरसहासक्रीडाकरींसुधामितिवा १३ अग तवात्मवृत्तिर्देहयात्रा का अन्नमितिचेत्तत्राह अदनादीति अदनाद्याहिर्भोजनंविनेतिमेभाति अन्नभक्षणेनैवलोपाल्लिङ्गसोर्दि ध्यादिकं स्यात्तत्तवनास्तीतिभावनाकल्प्यतइतिभावः किंचत्वंविष्णोःकलासीतिमन्ये अशनाद्यभावात् लक्षणांतरंचास्तीत्याह अनिमिषन्मकरावेति अनिमिषदावुन्मीलितौमकरौमकरमस्य लक्षणौ कर्णौकुंडलाख्याकल्पौविष्णुत्वेलक्षणमितिशेषः इदंचास्मन्मनोहरमित्याह उद्भ्रमीनेति तेतवमुखंसरःमुखाख्यंसरः उद्भुत्कृष्टेत्यन्वयः कथमुद्भ्रिमंसंचलितंमीनयोर्नेत्रयोर्युगलमस्य स्तत्तथा अनवस्थितिलक्षणाव्यभिचारान्नेत्रस्थानेमीनग्रहणं सरःपदोपादानाच्च द्विजानांदंतवल्लिविडतयास्थितानांपक्ष्मणापंक्तिभिःशोभास्येतिद्विजपंक्तिशोभिअन्यत्रपक्षिगणपंक्तिभि शोभि अलिन्या

किंसंभृतंरुचिरयोर्द्विजशृंगयोस्तेमध्येकृशोवहसियत्रदृशोश्रितेमे ॥ पंकोरुणःसुरभिरात्मविषाणईदृग्येनाश्रमंसुभगमेसुरभीकरोषि १२ लोकंप्र... यसुहृत्तमतावकंमेयत्रत्यइत्थमुरसावयववावपूर्वौ ॥ अस्मद्विधस्यमनउन्नयनौबिभर्षिवह्वद्भुतंसरसहाससुधांस्ववक्त्रे १३ कावात्मवृत्तिरदनाद्धविरंगभा तिविष्णोःकलास्यनिमिषन्मकरौचकर्णौ ॥ उद्भ्रिमीनयुगलंद्विजपंक्तिशोभिचासन्नभृंगनिकरंसरउन्मुखंते १४ योसौत्वयाकरसरोजहतःपतंगोदिक्षु भ्रमन्भ्रमतएजयतेक्षिणीते ॥ युक्तंनतेस्मवरवक्रजटावरूथःकृष्णोनिलोहरतिलंपटएषनीविम् १५ रूपंतपोधनतपश्चरतांतपोघ्नंह्येतत्त्वकेनतपसाप्त तेहलब्ध्यम् ॥ चर्तुंतपोर्हसिमयासहमित्रमह्यंकिंवाप्रसीदसिसवैभवभावनोमे १६ नत्वांत्यजामिदयितंद्विजदेवदत्तंयस्मिन्मनोदृगपिनो... ग्रम् ॥ मांचारुशृंगार्हसिनेतुमनुव्रतंतेचित्तंयतःप्रतिसरंतुशिवाःसचिव्यः १७

भृंगाणांनिकरोयस्मिन्तत्तथा उभयत्रसमं द्विजपंक्तिशोभिरितिकेचित्पठति १४ त्वयाकरसरोजेनहतोयोसौपतंगः कंदुकःदिक्षुभ्रमन्भ्रमतः तवाक्षिणीएजयतेचालयतीत्यन्वय ... अतएवकृष्णएषः अनिलोवायुःवरोवरणीयश्चवक्रःकुटिलश्चजटानांवरूथः समूहस्तेतवत्तंहरति नीवींवस्त्रबंधंचहरतीत्येतन्नयुक्तमित्यन्वयः १५ हेतपोधन तवयद्रूपंतप कुर्वाणानांपुरात्तपोघ्नं पोविघ्नकरं एतद्रूपमिहतपोराशौ केनतपसात्वयालब्धमित्यन्वयः हेमित्र मयासहतपःकर्तुमर्हसीत्यन्वयः तपऐश्वर्यइतिधातोरैश्वर्यनिमित्तविषयभोगलक्षणमानदगमयितुमितिदा ... त्वात् मह्यंमे त्वंप्रसीदसिकिंवातर्हीतिशेषः कुतइतितत्राह सइति सभवान्मे भवभावनः संपत्करोवाइत्यन्वयः १६ हेद्विज देवेनविधिनादत्तं यस्मिंस्त्वयिलग्नंमनोलग्नाह्दृगपिहातिर्जनविशात्य न्यत्रनगच्छति हेचारुशृंगसुंदरस्तन त्वंमांनेतुमर्हसि कुतःममचित्तंतेतवानुव्रतमनुगतमितियतः मुग्धोग्राम्यकामइवाह प्रतिसरंत्विति इमाःशिवाःशुभाःसचिव्योदासीवद्वर्तमानामधुक ... पसरंतुदूरंगच्छंतु अधुनाहंत्वासंभोक्तुकामइतिशेषः यद्वा सचिवीवद्वर्तमानाः शिवाःसृगालस्त्रियः प्रतिसरंतुप्रदक्षिणंगच्छंत्विति स्वकार्यसिद्धयेशकुनंप्रार्थयतइति ननुब्रह्मकथंविज्ञस्यासादावनर्थाभि धीसंगच्छतइतिचेदुच्यते परिहासादिषुदर्शनाच्चदुक्तं परिहासप्रलापादिष्वनर्थावाग्भवेत्क्वचिदिति तस्मादाग्नीध्रःकामार्तत्वादेवंविधानिवाक्यानिप्रालपदितियुक्तम् १७

विरागिणांश्रोतॄणांकर्णदुःसहायाः इहशाब्दिकानामपहासहेतोरविस्थितायाग्राम्यकथायाअथापिसमाप्तिर्नास्तीतिमन्वानइवोत्तरकथामसंगमाह इतीति इतिशब्दआदिवचनःसमाप्तिवचनो ग्राम्येविषयभोगकथायांवैदग्ध्यंपाटव्यंयस्याःसातथातयापरिभाषयासंज्ञालक्षणवाण्या १८ यद्यनयापरिभाषयावशीकृतास्यात्तर्हि अस्यतत्रवैदग्ध्यमस्तीतिवक्तुंयुक्तं तत्कथमत्राह साचेति अन्यथावि षयभोगात्सिद्धंवशीकरणम् १९ नकेवलमियभोगस्त्रीकिंतुसंतानकरीतिभावेनाह तस्यामिति पुत्रोत्पत्त्यनंतरंपूर्वचित्त्याकिमकारीतितत्राह सासूत्वेति अजदेवंब्रह्माणम् २० संहननंदेहपु ष्टिः आत्मतुल्यनामानिआत्मनामाक्षरतुल्यनामाक्षराणिजंबूद्वीपेविद्यमानानिवर्षाणिखंडानि खंडोस्त्रीखंडितेत्रिष्वितियादवः २१ आग्नीध्रेणपुनःकिमकारीत्यत्राह आग्नीध्रइति ताम्अभिमन्य मानइतितयासहसुरतोत्सवसुखंचिंतयन्नित्यर्थः समानलोकतामवरुंधन्नामुकामःश्रुतिभिःश्रुतिविहितैःसाधनैरीजे श्रीहरिमितिशेषः यद्वा एवंविधसाधनेनैवजयन्नप्सरःसमानलोकताश्रुतिभिःकर्णैरव

श्रीशुकउवाच ॥ इतिललनानुयातिविशारदोग्राम्यवैदग्ध्यया परिभाषयातांविबुधवधूमितिसभाजयामास १८ साचततस्तस्यवीरयूथपतेर्बुद्धिशीलरू पवयोवयःश्रियौदार्यैःपराक्षिप्तमनास्तेनसहायुतायुतपरिवत्सरोपलक्षणंकालंजंबूद्वीपपतिनाभौमान्भोगान्बुभुजे १९ तस्यामुहवाआत्मजान्सराजवरआ ग्नीध्रोनाभिकिंपुरुषहरिवर्षेलावृतरम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान्नवपुत्रानजनयत्सासूत्वातुपुत्रान्नवानुवत्सरंगृहएवापहायपूर्वचित्तिर्भूयएवाजदेवमु पतस्थे २० आग्नीध्रसुतास्तेमातुरनुग्रहादौत्पत्तिकेनैवसंहननबलोपेताःपित्राविभक्ताआत्मतुल्यनामानियथाभागंजंबूद्वीपवर्षाणिबुभुजुः २१ आग्नी ध्रोराजपुत्रस्तामप्सरसमेवानुदिनमभिमन्यमानस्तस्याःसलोकतांश्रुतिभिरवरुंधन्यत्रपितरोमादयंते २२ संपरेतेपितरिनवभ्रातरोमेरुदुहितॄर्मेरुदे वींप्रतिरूपामुग्रदंष्ट्रींलतांरामांश्यामांनारींभद्रांदेवींमितिसंज्ञानवोदवहन् २३ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेद्वितीयोऽध्यायः ॥ २ ॥ ॥ श्री शुकउवाच ॥ नाभिरपत्यकामोऽप्रजयामेरुदेव्याभगवंतंयज्ञपुरुषमवहितात्मायजत १ तस्यहवावश्रद्धयाविशुद्धभावेनयजतःप्रवर्ग्येषुप्रचरत्सुद्रव्य देशकालमंत्रर्त्विग्दक्षिणाविधानयोगोपपत्त्यादुरधिगमोपिभगवान्भागवतवत्सलतयासुप्रीतआत्मानमपराजितंनिजजनाभिप्रायार्थविधित्सयागृहीतहृद योहृदयंगमंमनोनयननंदनाभिरामावयवमाविश्चकार २

रुंधन् लोकंविशिनष्टि यत्रेति मादयंतेहृष्यंतिअनेनपितृलोकएवाप्सरसोलोकइतिध्वनितम् २२ संपरेतेमृते मेरोर्दुहितॄःपुत्रीः २३ इतिश्रीभागवतेमहापुराणेविजयध्वजटीकायांपंचमस्कंधे द्वितीयोध्यायः ॥ २ ॥ स्वभावतोऽव्यक्तोपिभगवान्भक्तवत्सलतयाप्रत्यक्षोपिभवतीत्यतोहरौभक्तिरेवकर्तव्येतिविधीयतेस्मिन्नध्याये तत्रनाभिनाम्नोराज्ञोऽपत्यार्थंहरियजनप्रकारमाह नाभिरिति अप्रजाअपत्यंयस्याःसातथातयाराह १ शुद्धभावेन शुद्धांतःकरणेन शुद्धकर्मणावा प्रवर्ग्येषुकर्मविशेषेषुप्रचरत्सुप्रवर्तमानेषुसत्सु दुरधिगमोदुर्ज्ञेयोपिद्रव्यदेशादीनामुपपत्त्यासंपत्त्या आत्मने पुत्रस्नेहातिशयेनचसुप्रीतोभगवान्गर्भवासादिदुःखैरपराजितंहृदयंगमंमनोहरंमनोनयनसुखकरत्वाद्यतरकरचरणाद्यवयवोपेतमात्मानमाविश्चकारप्रत्यक्षीचकारेत्यन्वयः किंकार्यंभगवानित्यत्राह नि जेति योगोध्यानम् २

निराकारंचेत्कथंध्यानास्पदंस्यादित्यतआह अथेति आविष्कृतभुजयुगलद्वयंस्पष्टीकृतचतुर्भुजं हिरण्मयंसुवर्णवर्णं कौशेयंकृमिकोशोत्थमित्यभिधानं विलसन् श्रीवत्सएवललामंचिह्नंयस्यसतथातं स्फूर्जामृतमणिगणप्रवराःस्फूर्जाःशाणोल्लीढाअमृतवद्धवलाश्चमणिगणश्रेष्ठाः एतएवादिर्येषांतेतथातैः दरवरादिभिः शाणतेजितधवलमणिगणश्रेष्ठादिभिश्चोपलक्षितंविशिष्टं ३ मुकुटंशिरस्त्राणं किरीटंमौलिः स्फुटकिरणानिफुल्लरश्मीनिप्रवराणिमणिमयानिमुकुटकिरीटादीनिस्फुटकिरणप्रवरमणिमयमुकुटकिरीटादीनिएतैरंगभूषणैर्भूषितमलंकृतं अधनादरिद्रात्उत्तमंधनंत्वमुपलभ्य स बहुमानंअर्हणेनपूजासाधनेन ४ अर्हसिमुहुरित्यारभ्येतिनिगदेनेत्यतःपूर्वतनोग्रंथउपस्थानमंत्रः हेअर्हत्तमअनुपथानांभृत्यानांनोर्हणंत्वमर्हसि ग्रहीतुमितिशेषः मुहुरित्यनेनार्हणस्यभूयस्त्वंसूचयति किंतदर्हणंतदाह नमइति तत्रदोषलेशोनास्तीत्याह सदिति सद्भ्यःपुरुषेभ्यःउपशिक्षितत्वात्सत्प्रशस्तं नमोनमइत्येतद्व्यतिरिक्तनामादिकीर्तनस्मरणाद्यर्हणंकस्मात्क्रियतइतितत्राह कोर्हतीति नामरूपादिवेदनस्यश्रुत्यादिसिद्धत्वात्तत्कथमाक्षिप्यतइतितत्राह प्रकृतीति प्रकृतिगुणैःशब्दादिभिःव्यतिरेकःभ्रंशोयस्याःसा तथाताद्दशीमतिर्यस्यसतथाअतएवार्वाक्तनमतिःबहिर्बुद्धिःतत्रकारणमनीशइति सर्वेश्वरस्यतवसंवित्तौसामर्थ्याभावात्त्वदीश्वरत्वमनुपहतमितिभावेनाह प्रकृतीति ५ तर्हिकिमपिनार्हतीत्यतउक्त सकलेति सकलजनानांनिकायस्यवृजिनंदुःखानिरस्यंतीतिवृजिन

अथहतमाविष्कृतभुजयुगलद्वयंहिरण्मयंपुरुषविशेषंकापिशकौशेयांबरधरमुरसिविलसच्छ्रीवत्सललामंदरवरवनरुहवनमालास्फूर्जामृतमणिगणप्रवरादिभिरुपलक्षितम् ३ स्फुटकिरणप्रवरमणिमयमुकुटकिरीटकुंडलकटककटिसूत्रहारकेयूरनूपुराद्यंगभूषणविभूषितंऋत्विक्सदस्यगृहपतयोऽधनाइवोत्तमंधनमुपलभ्यसबहुमानमर्हणेनावनतशीर्षाणउपतस्थुः ४ अर्हसिमुहुरर्हत्तमार्हणमस्माकंअनुपथानांनमोनमइत्येतावत्सदुपशिक्षितंकोर्हतिपुमान्प्रकृतिगुणव्यतिरेकमतिरनीशईश्वरस्यप्रकृतिपुरुषयोःपरस्यार्वाक्तनमतिर्नामरूपाकृतिभिर्निरूपणम्५ सकलजननिकायवृजिननिरसनशिवतमप्रवरगुणगणैकदेशकथनादृते ६ परिजनानुरागविरचितरतवलवसंशब्दसलिलकिसलयतुलसीदूर्वांकुरैरपिसंभृतयासपर्ययाकिलपरमपरितुष्यसि ७ अथानयापिनभवतइज्ययोरुसंभारभरयासमुचितमर्थमिहोपलभामहे ८ आत्मनएवानुसवनमंजसाव्यतिरेकेणानुबोभूयमानाशेषपुरुषार्थस्वरूपस्यकिंतुनाथाशिषआशासानानामेतदभिसंराधनमात्रंभवितुमर्हति ९

निरसनाश्चशिवतमामंगलतमाश्चप्रवराश्रयेगुणगणास्तेषामेकदेशकथनमंतरेणान्यत्किमपिनार्हतीत्यर्थः ६ गुणगणकथनाशक्तस्यहरिपरितोषःकथंविषयास्यादत्राह पारिजनेति हेपरम परिजनैर्भृत्यजनैरनुरागेणविरचितःस्तवःस्तोत्रं तस्यलवःलेशस्तस्यसंशब्दःकथनं सलिलंजलं किसलयः पल्लवस्तुलसीचदूर्वांकुरश्चतेस्तवलवादयस्तैः संभृतयासंपादितयापूजयापरितोषंप्राप्स्यसि किलेत्यन्वयः ७ नित्यतुष्टस्यकदाचित्परितोषोभक्तानुकंपोन्मुखत्वंनत्वप्राप्तप्राप्तिलक्षणइत्याह अथेति उरुसंभारलक्षणोभारोयस्याःसातथातया संभारःसाधनं भरःसमूहः ८ कुतोमुप्यनर्थइतितत्राह आत्मनइति स्वतएवानुसवनंसर्वदांजसामुख्यतोव्यतिरेकेणाभेदेनानुबोभूयमानोत्यंतमनुभूयमानोऽशेषःपूर्णःपुरुषार्थःसुखमनुबोभूयमानपुरुषार्थःसएवस्वरूपंयस्यसतथातस्य तर्हिकिमर्थमाराधनंक्रियतइतितत्राहकिंत्विति किंतुतवार्थोनास्त्येवतथापिहेनाथआशिषःआशासानांकामयमानानामेतत्कर्मलक्षणंयजनंतवाभिसंराधनमात्रंकेवलमनुग्रहलक्षणसिद्धिसाधनंभवितुमर्हति ९

तत्क्रममाह तदिति हेपरमपुरुष यत्त्वमेवंयथातथाप्रतिपादयामस्तथाहि परंपरमंश्रेयोऽविदुषामजानतामतएवबालिशानांशिशुवत्स्थितानां नःसंबंधिन्याप्रकृष्टयाकृपया चशब्दएवार्थे अपवर्गाख्यंसंसारमोक्षलक्षणंमहिमानमुपकल्पयिष्यन्समर्थयमानः स्वयत्नोपचितःस्वानुग्रहलक्षणयत्नायत्तएव इतरवत्परप्रयत्नोपचितवदुपलक्षितःप्रकाशितइतियस्मात् १० अथतस्माद्धेअर्हत्तम परफलप्राप्त्यनंतरमपित्वामर्हयामः त्वद्विषयामर्हणक्रियांप्रार्थयामहे कस्मादेतत्प्रार्थनमित्याशंक्यफलदर्शनादित्याह यर्हीति स्वभक्तानांदृष्टिविषयआसीर्दीतियर्हियस्मात्तस्मादितिशेषः । बर्हिषिपज्ञे ११ मुनीनामितिषष्ठीतृतीयार्थे मुनिभिर्नित्यंपरिगणितानागुणगणानांपरममंगलायतनंस्वरूपसुखविषयंकथनंकीर्तनंयस्यसतथा असंगेननिशितंतेजितयज्ज्ञानंतदेवानलोऽग्निस्तेनविधूतानिनिर्मूलितानि समस्तरागादिमलानियेषांतेतथातेषां भगवत्स्वभावानांसात्त्विकानां १२ किमतइतितत्राह अथेति यतएवममितमाहात्म्यसमुद्रोऽथतस्मादस्माकंतवगुणकृतनामधेयानिश्रीमच्चरणारविंदस्मरणायवचनगोचराणिभवंत्वित्यन्वयः ज्ञानानंदादिगुणाःकंसहननादिकृतानिनारायणादिनामानिच सदाअसंभवेप्येषुसर्वथेतिभावेनाह स्खलनेति नकेवलंतात्कालिकफलदानिकिंतुपारत्रिकफलदानीत्याशयेनोक्तं ज्वरेति दुरितसद्भावेकथंपारत्रिकफलदानिस्युरितसतउक्तं सकलेति दुःस्थस्थानंप्रवासादिकं १३ अन्यच्चप्रयोजनमस्तीतिविज्ञापयंति किंचेति ऐहिकीनामाशिषामीश्वरंनकेवलमासामीश्वरंकिंतुस्वर्गा

**तद्यथाबालिशानांस्वयमात्मनःश्रेयःपरमविदुषांपरमपुरुषप्रकृष्टकरुणयास्वमहिमानंचापवर्गाख्यमुपकल्पयिष्यन्स्वयत्नोपचितएवेतरवदिहोपलक्षितः १० अथार्हयामःपरंह्यर्हत्तमयर्हिबर्हिषिराजर्षेर्वरदर्षभोभगवान्निजपुरुषेक्षणविषयआसीत् ११ असंगनिशितज्ञानानलविधूताशेषमलानांभगवत्स्वभावानामात्मारामाणांमुनीनामनवरतपरिगणितगुणगणपरममंगलायतनकथनोसि १२ अथकथंचित्स्खलनक्षुत्पतनजृंभणदुरवस्थानादिषुविवशानांनःश्रीमच्चरणारविंदस्मरणाय ज्वरमरणदशायामपिसकलकश्मलनिरसनानितवगुणकृतनामधेयानिवचनगोचराणिभवंतु १३ किंचायंराजर्षिरपत्यकामःप्रजांभवादृशीमाशासानईश्वरमाशिषांस्वर्गापवर्गयोरपिभगवंतमुपधावतिप्रजायामर्थप्रत्ययोधनदमिवाधनःफलीकरणंकोवाइहते १४ अपराजितापराजितयामाययानवसितपदव्यानव्यावृत्तमतिर्विषमविषयव्यापृतप्रकृतिरनुपासितमहच्चरणः १५ यदुहवावपुनरदभ्रकर्तरिहसमाहूतःतदर्थधियांमंदानांनस्तद्देवहेलनंदेवार्हसिसाम्येनसर्वात्मन्प्रतिवोढुमविदुषाम् १६**

पवर्गयोरपीतिउपधावतिशरणमाप्नोति पुरुषार्थप्रदंत्वांप्राप्यप्रजालक्षणंतुच्छफलमाकांक्षितंकथमितितत्राह प्रजायामिति अर्थप्रत्ययःपुरुषार्थबुद्धिः अत्रदृष्टांतमाह धनदमिति फलीकरणंक्षुद्रकणंपललंवानकोपियाचतइत्यर्थः १४ तर्हिकीदृशईहतइतितत्राह अपराजितेति हेअपराजित हरेःप्रसादंविनात्वपराजितयामाययामोहकशक्त्यानवसितमनिश्चितंयत्पदंस्वरूपंतच्चलक्षणंतस्यध्यानेऽव्यावृत्ताप्रतिर्यस्यसतथाकुतस्तत्राह अनुपासितेति तत्रापिकारणमाह विषमेति प्रकृतिःस्वभावः एवंविधईहतइत्यर्थः अधनोदरिद्रः धनमपेक्षिताशेषपुष्टिंददातीतिधनदः १५ तंमुनयःस्वोक्तमधिकमितिमन्वानाभगवत्क्षमांप्रार्थयंते यदुहेति हेअदभ्रकर्तरनल्पकर्तः दूर्वांकुरार्चितस्यहरेरनाद्यनंतकालीननिर्दोषानंदरूपमुक्तिदत्वादेवदत्तदत्तमेरुस्वर्णस्यविष्णुमित्रस्यकाकिणिकाधनदत्वदर्शनाच्चेतिराज्ञःपुत्रार्थमेवेहसमाहूतइतियत्तदर्थधियांतत्प्रयोजनबुद्धीनांमंदानांस्तुत्यादावपटूनांराज्ञोऽर्थेयच्चवाह्वानंविष्णवायाहीतितद्धेलनमवज्ञानंसाम्येनतत्तद्वस्तुयोग्यतादर्शनेनप्रतिवोढुंक्षंतुमर्हसीत्यन्वयः ज्ञानपूर्वाह्वानंचेत्कथंक्षांतिवचनमित्यतउक्तमविदुषामिति १६

१ भगवविस्त्वयोग्योभावोभक्तियेंषावेतथा । २ फललंतिलचूर्णेचेतिमेदिनी ।

निगदेनमहिमाविष्कर्तॄणांस्तुतिवचनेनअनिमिषाणामृषभोदेवानांश्रेष्ठःवर्षधराभिवंदितचरणःनाभिवंदितश्रीपादः १७ किमाहेतितत्राह अहोइति अहोविस्मयोयं बततुष्टोहं अहोहिविस्मयइतिया दवः बताभिमंत्रणेभूते। तोषोखेदकृपायांचेतिच। हेऋषयोवितथगीर्भिःसत्यवचनैःभवद्भिः मयासदृशआत्मजोभूयादितियंवरमभियाचितइतियदेतदसुलभं तत्कुतोतउक्तंममेति अभिरूप.अतिरूप एतदपि कुतइत्यतउक्तं कैवल्यादिति अद्वितीयत्वात् नन्वेषामृषित्वंमुनित्वंचगतमेतदद्वितीयत्वज्ञानाभावादितिचेन्न भगवदुक्त्यालोकज्ञापनपरत्वादर्थनायाःनत्वद्वितीयत्वाज्ञानात्तदुक्तं नास्तिविष्णोःसमम् इतिजानंतोप्यृषयःसदा। तज्ज्ञापनायलोकानामन्येचप्रार्थयन्समामिति अन्येकश्यपादयोपिहरिणासमंपुत्रमर्थयंतइत्यर्थः एवंचेद्भगवदुक्तमपिविद्धदंगीकृतमपहासकमितितत्राह अथापीति कर्तव्यत्वेहे तुमाह ममैवोवि द्विजदेवानांब्राह्मणश्रेष्ठानाम् १८ निशामयंत्याःपश्यंत्याः १९ २० बर्हिषियज्ञेहेविष्णुरातहेविष्णुदत्तपरीक्षितस्यनाभेरवरोधजनेभार्याजने वातरशनानांवायुवस्त्राणांदिगंबराणामि त्यर्थः श्रमणानांपरमहंसानांपरमहंसाश्रमानुष्ठानवतां उर्ध्वमंथिनामूर्ध्वरेतसांऋषीणां धर्मान्दर्शयितुकामोहरिः शुक्लयाशुचंक्लापयतिनाशयति शुकंज्ञानंलातिरातीतिवा शुकगतावितिधातुः

इतिनिगदेनाभिष्टूयमानोभगवाननिमिषर्षभोवर्षधराभिवंदितचरणःसदयमिदमाह १७ ॥ श्रीभगवानुवाच ॥ अहोबताहमृषयोभवद्भिरवितथगीर्भिर्वर मसुलभमभियाचितोयदमुष्यआत्मजोमयासदृशोभूयादितिममाहमेवाभिरूपःकैवल्यादथापिब्रह्मवादोनमृषाभवितुमर्हतिममैवाहिमुखंयद्द्विजदेवकुलम् १८ ततआग्नीध्रीयेंशकलयावतरिष्याम्यात्मतुल्यमनुपलभ्यमानः १९ इतिनिशामयंत्यामेरुदेव्याःपतिंसमभिधायांतर्दधेभगवान् २० बर्हि षितस्मिन्नेवविष्णुदत्तभगवान्परमर्षिभिःप्रसादितोनाभेःप्रियचिकीर्षयातदवरोधजनेमेरुदेव्यांचधर्मान्दर्शयितुकामोवातरशनानांश्रमणानामृषीणामू र्ध्वमंथिनांशुक्लयातनुवावततार २१ ॥ ॥ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेतृतीयोध्यायः ॥ ३ ॥ ॥ ५ ॥ ॥ श्रीशुकउवाच ॥ ॥ अथत मुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणंसाम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावंप्रकृतयःप्रजाब्राह्मणादेवताश्चावनितलसमवनायातितरां जगृधुः १ तस्यहवाइत्थंवर्ष्मणावरीयसाबृहच्छ्लोकेनचौजसाबलेनश्रियायशसावीर्यशौर्याभ्यांचपिताऋषभइतीदंनामचकार २ यस्यहींद्रः स्पर्द्धमानोभगवान्वर्षेनववर्षतदवधार्यभगवानृषभदेवोयोगेश्वरःप्रहस्यात्मयोगमाययास्ववर्षमजनाभंनामाभ्यवर्षत् ३

गतिर्ज्ञानमतिशयितसुखज्ञानत्वाद्वाशुक्लातयातनुवादेहेन २१ ॥ ॥ इतिश्रीभागवतेपंचमस्कंधेवि०कृ०टी०तृतीयोध्यायः ॥ ३ ॥ ॥ ७ ॥ ॥ ऋषभनाम्नोहरेर्गार्हस्थ्यधर्मप्रदर्शनव्याजेनदेवादी नामवन्यवतारेतत्प्रवर्तकप्रकारोदरीदृश्यतेस्मिन्नध्याये तत्रादौतस्मिंल्लोकानुरागप्रकारंकथयति अथेति १ अथपितातद्गुणानुविशिष्टंनामचकारेत्याह तस्येति इत्थंविचिंत्य कथं ऋषज्ञानेभादीप्ताविति धा तुद्वयार्थत्वेनवरीयसाश्रेष्ठेनवर्ष्मणादेहेनज्ञानप्रकाशदेहत्वादृषभइति ऋटुरषाणांमूर्धेतिस्थानसाम्याद्दकारेणणकारोलक्ष्यते तेनणकारषकाराभ्यामोजोबलेगृह्येतेणकारोबलंषकारःप्राणआत्मेतिश्रुतेः बृहताश्लोकेनग्रंथनिबद्धेनयशसाकिंवदंतीलक्षणेनसामान्यविशेषात्मनावाश्रौतस्मार्तकर्मानुष्ठाननिमित्तप्रसिद्धलक्षणदीप्त्यावाश्लोकेनयशसाश्रियाकात्यासर्वमेतद्भकारेणगृह्यते ऋषभइतिसमस्तेनवीर्य शौर्येगृह्येते ऐश्वर्यस्यसमग्रस्येतिवचनात् शश्वत्षड्गुणवत्त्वाद्वा ऋषभइति वलिभइतिवन्मत्वर्थेभःईदृक्नामईदृक्गुणविशिष्टंनाम २ अस्माद्धेतोश्चैवेदंनामास्येतिभावेनाह यस्येति योगमाययास्वरूपसा मर्थ्येनअभ्यवर्षीद्वृष्टियुक्तमकार्षीत् अत्रइंद्रशब्देनेंद्रपदेस्थितः यज्ञनामाहरिर्गृह्यते तदुक्तं दुष्टानामोहनार्थायज्ञइंद्रपदेस्थित.। पस्पर्धंऋषभेणैवस्वरूपेणहरिःस्वयमिति ३

१ स्वायंभुवमन्वंतरेऋषभावतारः। तदेंद्रोपियज्ञनामाभगवानेव। अतःकथस्वेनैवस्वस्यस्पर्धेत्याशंक्यप्रमागेनैवतदुक्तेरभिप्रायमाह। ता०।

सुप्रजस्त्वंसत्पुत्रत्वं सुप्रजस्त्वमंगिरसोवोअस्तुप्रतिगृभ्णीतमानवंसुमेधसइतिश्रुतेः स्वैरंस्वेच्छयागृहीतोनरलोकधर्मोमेहनादिःकाकपक्षादिर्वाचौलादिर्वावक्ष्यमाणगुरुकुलवासादिर्वायेनसतथा आत्मप्रकृत्याविलसितावशीकृतामतिर्यस्यसतथा मायाविलासमेववक्ति वत्सेति , पौरादीनांपुत्रेयोनुरागःसविदितोयेनसतथा समयसेतुरक्षायां समयस्तुक्रियाकारेसंकेतेचारेतेसताम् । सिद्धांतेशपथेकालेइत्यभिधानोक्तार्थरक्षणे विशालायांबदरिकाश्रमेनगरीग्रहणंनरनारायणाख्यमित्युक्तिविरुणद्धि कालेनज्ञानादिसामग्रीलक्षितेन तस्यहरेर्महिमानंजरामरणादिराहित्यलक्षणं ननु स्रष्टृत्वादिलक्षणम् ॥ ४ ॥ हेपांडवेय ओजसातपोजनितेन ॥ ५ ॥ ६ ॥ उपलब्धदक्षिणाख्यवरैः उभयलक्षणंप्रवृत्तिनिवृत्तिलक्षणंसमाम्नायाम्नातंसमीचीनेषुनिर्दोषेषुआम्नायेषुदेवेष्वाम्नातमभ्यस्तंअभियुंजन्प्रयुं

नाभिस्तुयथाभिलषितंसुप्रजस्त्वमवबुध्यप्रमोदभरविह्वलोगद्गदाक्षरयागिरास्वैरंगृहीतनरलोकसमानधर्मंभगवंतंपुराणपुरुषंमायाविलसितमतिर्वत्सता तेतिसानुरागमुपलालयन्परांनिर्वृतिमुपगतोविदितानुरागःपौरप्रकृतिजनपदानांराजानाभिरात्मजंसमयसेतुरक्षायामभिषिच्यब्राह्मणेषूपनिधायसहमेरुदेव्याविशालायांप्रसन्ननिपुणेनतपसासमाधियोगेननरनारायणाख्यंभगवंतंवासुदेवमुपासीनःकालेनतन्महिमानमवाप ४ यत्रहपांडवेयश्लोकावुदाहरंति ॥ कोनुतत्कर्मराजर्षेर्नाभेरन्वाचरेत्पुमान् ॥ अपत्यतामगाद्यस्यहरिःशुद्धेनकर्मणा ५ ब्रह्मण्योन्यःकुतोनाभेर्विप्रामंगलपूजिताः ॥ यस्यबर्हिषियज्ञेशंदर्शयामासुरोजसा ६ अथसभगवान्ऋषभःस्ववर्षंकर्मक्षेत्रमनुमन्यमानःप्रदर्शितगुरुकुलवासउपलब्धवरैर्गुरुभिरनुज्ञातोगृहमेधिनांधर्माननुशिक्षमाणोजयंत्यामिंद्रदत्तायामुभयलक्षणंधर्मंसमाम्नायाम्नातमभियुंजन्नात्मजानामात्मसमानानांशतंजनयामास ७ येषांखलुमहायोगीभरतोज्येष्ठःश्रेष्ठगुणआसीद्येनेदंवर्षंभारतमितिव्यपदिशंति ८ तमनुकुशावर्तइलावर्तोब्रह्मावर्तआर्यावर्तोमलयकेतुर्भद्रसेनइंद्रस्पृग्विदर्भःकीकटइतिनवनवतिप्रधानाः ९ कविर्हरिरंतरिक्षःप्रबुद्धःपिप्पलायनः ॥ आविर्होत्रोथद्रुमिलश्चमसःकरभाजनःइतिभागवतधर्मदर्शनानवमहाभागवतास्तेषांसुचरितंभगवन्महिमोपबृंहितंवसुदेवनारदसंवादरूपंउपशमायनमुपरिष्टाद्वर्णयिष्यामः १० यवीयांसएकाशीतिर्जायंतेयाःपितुरादेशकरामहाशालीनामहाश्रोत्रियायज्ञशीलाःकर्मशुद्धाःब्राह्मणाबभूवुः ११ भगवान्ऋषभसंज्ञआत्मतंत्रःस्वयंनित्यनिवृत्तानर्थपरंपरःकेवलानंदानुभवईश्वरएवविपरीतवत्कर्माण्यारभमाणःकालेनानुगतंधर्ममाचारेणोपशिक्षयन्अतद्विदांसमुपशांतोमैत्रःकारुणिकोधर्मार्थयशःप्रजानंदामृतावरोधेनगृहेषुलोकान्नियमयत् १२

जानःकुर्वाणइत्यर्थः आत्मसमानानांलक्षणैरितिशेषः ॥ ७ ॥ येनभरतेनाधिकृतत्वाद्भारतमितिनाम्नाकथयंति ॥ ८ ॥ तंभरतमन्वनंतरं नवतिभ्यःप्रधानाः ॥ ९ ॥ भागवतधर्मान्दर्शयंतीतिभगवतोमहिम्नोपबृंहितपूरितं उपरिष्टादेकादशस्कंधे उपशमायनंभगवन्निष्ठाप्रकारदर्शकम् ॥ १० ॥ जायंतेया जयंतीपुत्राः महाशालीनाःमहाशालाः कलमान्नभोजिनोवा गार्हस्थ्यधर्मप्रदर्शकावाब्राह्मणाः यजनयाजनाध्ययनादिविप्रकर्मनिष्ठितत्वेनतच्छब्दवाच्याः ॥ ११ ॥ विपरीतवत् प्राकृतजनवत्आचारेणस्वयमनुष्ठानेनअतद्विदांसंबलाज्ञानिनं लोकमितिशेषः धर्मार्थादीनामविरोधेनानुकल्पेन ॥ १२ ॥

शीर्षण्येनश्रेष्ठेन यद्यदाचरतिश्रेष्ठइतिस्मृतेः १३ यदपियद्यपिस्वेनविदितं तथापिब्राह्मणैर्दर्शितमार्गेणप्रकारेणसकलधर्मंजनतामनुशशासेत्यन्वयः १४ १५ अविद्यमानमिवनशंछति आत्मनोन्यस्मात्पुमः किमपिनापेक्षतइत्यन्वयः तर्ह्यपेक्षमाणांकितत्राह भर्तरीति १६ अटमानइतिशानचूताच्छीलिकार्थःअटितुकामःप्रव्रजन्नित्यर्थः निशामयतीनांशृण्वतीनां अवहितात्मनःउक्तग्रहणनिरतमनस प्रश्रयादि गुणैःसुयंत्रितान्सुष्ठुबद्धान्इतिवक्ष्यमाणप्रकारेण १७ इतिश्रीभागवतेपंचमस्कंधेवि०क्र०टीकायांचतुर्थोध्यायः ॥ ४ ॥ ॥ ७ ॥ पुत्राणांतत्त्वोपदेशव्याजेनलोकहितायसकलशास्त्रसारभूतंतत्त्वंनिरूपय त्यस्मिन्नध्याये तत्रादौविषयसेवामुमुक्षुणाअवश्यंवर्जनीयेतिभावेनाह नायमिति नृलोकेदेहभाजांशरीरिणामयंदेहःस्रक्चंदनादिभोगायनभवतिकिंतुतपश्चरणायेतिशेषः सोपिपुरुषार्थेष्वेकत्वेनाविहितत्वा त्कर्तव्यइतितत्राहकइति येकामाविड्भुजांश्वसूकरादीनामपिसंति कोविवेकीतत्कामान्काम्यंतइतिकामाःविषयास्तान्विषयानर्हतिनकोपीतिशेषः तर्हिअनेनकिंविधेयमत्राह तपइति तपोर्हथ कर्तुमितिशे षःइदमेवप्रयोजनंनान्यत् पूर्वतनैःसाधितत्वादितीममर्थंहिशब्देनवक्ति येनतपसा सत्त्वमंतःकरणं ततःकितत्राह यस्मादिति यस्माच्छुद्धांतःकरणादनंतमंतत्रयविधुरंसुखंसुष्ठुनिर्दोषंसंज्ञानात्मकमिंद्रि यंयस्यतत्तथातद्ब्रह्मसिध्यतीतिशेषः हियस्मात्तस्मात्तपश्चरणमेवदेहधृतिप्रयोजनमित्यर्थः हिनामप्यनंतगुणइतिवाक्यंस्मारयतीतिवा १ अन्वयव्यतिरेकमुखेनममर्थंद्रढयति महत्सेवामिति

यच्छीर्षण्याचरितंतदनुवर्ततेलोकः १३ यदपिस्वविदितंसकलंधर्मंब्राह्मंगुह्यंब्राह्मणैर्दर्शितमार्गेणसामादिभिरुपायैर्जनतामनुशशास १४ द्रव्यदेशकालवयःश्रद्धर्त्विग्विविधोद्देशोपचितैःसर्वैरपिक्रतुभिर्यथोपदेशंशतकृत्वइयाज १५ भगवताऋषभेणपरिरक्ष्यमाणएतस्मिन्वर्षेनकश्चनपुरुषोवांछत्यविद्यमानमिवात्मनोन्यस्मात्कथंचनकिमपिकर्हिचिदपेक्षतेभर्तर्यनुसवनंविजृंभितस्नेहातिशयमंतरेण १६ सकदाचिदटमानोभगवानृषभोब्रह्मावर्तंगतोब्रह्मर्षिप्रवरसभायांप्रजानांनिशामयंतीनामात्मजानवहितात्मनःप्रश्रयप्रणयभरसुयंत्रितानप्युपशिक्षयन्नितिहोवाच १७ ॥ ॥ इतिश्रीभागवतेपंचमस्कंधेचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ ऋषभउवाच ॥ नायंदेहोदेहभाजांनृलोकेकष्टान्कामानर्हतेविड्भुजांये ॥ तपोदिव्यंपुत्रकायेनसत्त्वंशुध्येद्यस्माद्ब्रह्मसौख्यंत्वनंतम् १ महत्सेवांद्वारमाहुर्विमुक्तेस्तमोद्वारंयोषितांसंगिसंगम् ॥ महांतस्तेसमचित्ताःप्रशांताविमन्यवःसुहृदःसाधवोये २ येवामयीशेकृतसौहृदार्थाजनेषुदेहंभरवार्तिकेषु ॥ गृहेषुजायात्मजरातिरासुनप्रीतियुक्तायावदर्थाश्चलोके ३ नूनंप्रमत्तःकुरुतेविकर्मयदिंद्रियप्रीतयआपृणोति ॥ नसाधुमन्येयतआत्मनोयमसन्नपिक्लेशदआसदेहः ४

योषितांसंगिभिःसहसंगमित्यनेनकैमुत्यन्यायोदर्शितइतिज्ञातव्यं निषिद्धेत्युपपदंयोज्यमन्यथायोषिन्मात्रस्यापिहेयत्वंप्रसज्येत तच्चानुपपन्नं नकांचनाश्रयंपरिहरेदितिश्रुतेरितिभावः द्वेनित्यमु क्ती तत्रानंतसुखलक्षणैका नित्यदुःखलक्षणान्येतिबोद्धव्यं महल्लक्षणेज्ञातेतत्सेवायांश्रद्धातिशयःस्यादितितल्लक्षणमाह महांतइति येसमचित्तत्वादिगुणवंतस्तेमहांतइत्यन्वयः मनज्ञानइतिधा तुर्विशेषेणज्ञानशीलाः मनव्यवहारेपणेचेतिधातोर्विशिष्टव्यवहारशीलाइतिवा समेब्रह्मणिचित्तंयेषांतेतथा समंतत्तद्योग्यतानुसृतंचित्तंयेषांतेतथेतिवा साधवःरागादिदोषविधुराः २ चार्थेवा शब्दः येचईशेमयिकृतंसौहृदमेवार्थःप्रयोजनंयैस्तेतथा देहंभराणांदेहपोषणएवरतानामुक्तानुक्तदुरुक्तचिंतालक्षणंवार्तिकंवार्तासमुदायोवायेषांतेतथातेषु जायाचात्मजाश्चरातिर्मित्रंराअर्थश्चयेषांते तथातेषुनप्रीतियुक्तास्तेमहांतः किंचलोकेजनेयावाञ्छरीरयात्रादिलक्षणोर्थोयेषांतेतथा ३ इदानींदेहंभरवृत्तिंकथयति नूनमिति जनइंद्रियाणांशब्दाद्यनुभवलक्षणप्रीतयेयत्कर्मकुरुतेनूनंनिश्चयेन दीनःक्षीणःप्रमत्तोज्ञःतत्कर्माप्यृणोतिस्वीकरोति कुतइत्यतउक्तं यतइतिअसन्नश्वरत्वादमंगलोपिविण्मूत्रादिपात्रत्वेनजुगुप्सितोयंदेहोयतःकर्मणआत्मनः कर्तुःक्लेशदःसंसारात्यक्लेशदआसतेया

तस्मात्कर्मसाधु श्रेयःसाधनमितिनमन्ये नूनमिदानींप्रमत्त कर्तव्यतामूढोतएवदीनोयंजनः इंद्रियप्रीतयेतत्कर्मकुरुते यत्कर्मात्मानमेवावृणोत्याच्छादयति कथमावृणोतीतितत्राह यतइति यतो य स्मात्कर्मणउत्पन्नोसन्नपिअसाधुरेवायंदेहः आत्मनःक्लेशदआस तस्मादेतत्कर्मकरणंसाधुनमन्यइतिवा नूनंप्रायःकर्मकुरुतेअतएवदीनः कथंइंद्रियप्रीतयेआवृणोतीति यत्तदपिकुतइत्यत्राह यतइति आत्मनःक्लेशदआसेतियतस्तस्मान्नसाधुमन्यइतिवा ४ तस्माज्ज्ञानमेवसंसारनिवृत्तिसाधनमित्यभिप्रेत्यतन्निवृत्त्यवधिमाह पराभवइति यावदात्मतत्त्वंनजिज्ञासतेतावत्पराभवःक्लेशः किं विशिष्टोऽबोधजातःआत्मानात्मतत्वाज्ञानोत्पन्नः क्रियाः क्रियाफलंच तावदेनकर्मात्मकेनमनसाशरीरबंधःस्यात्तत्कर्मवशंबाह्यांतःकरणलक्षणंमनश्चतावदित्यन्वयः ५ शरीरबंधात्किंकरोती त्यत्राह एवमिति अत्रात्मपदेनजीवपरावुभावपिगृह्येते एवमात्मानात्मतत्त्वाज्ञानिनः अविद्ययाजीवपरयोःस्वरूपाच्छादिकयामायया आत्मनिजीवपरयोः स्वरूपेऽन्वधीयमानेआच्छाद्यमानेसति कर्मवशंमनोजीवंविषयेषुप्रयुंक्तइत्यन्वयः एवंसंसरणंकियंतंकालमत्राह प्रीतिरिति प्रीतिःस्नेहलक्षणाभक्तिः ६ कालतोवाप्रारब्धकर्मनाशतोवादेहवियोगेनानंदानुभवलक्षणामुक्तिःस्यात्किमत्तये त्याशंक्यबंधध्वंसिभगवत्प्रसादांतरंगभक्तिंविनानकदाप्यभिमतमुक्तिःस्यात्प्रत्युतानादिकर्मपरंपरयाविषयानुध्यानहेतुभूतयातृणजलूकवत्प्रवर्तमानस्यसंतापएवस्यादित्याह यदेति स्वतोविपाश्चि ज्ज्ञानात्मा यदाऽयथागुणेहांस्वाभिमतविपरीतेंद्रियप्रवृत्तिमनुकूलांपश्यति मत्वेदंहितमित्यंगीकरोति तदासहसागतस्मृतिर्नष्टशास्त्रानुसंधानः स्मरणरहितोवा अतएवस्वार्थेप्रमत्तोतएवाज्ञःपुरुषो

पराभवस्तावदबोधजातोयावन्नजिज्ञासतआत्मतत्त्वम् ॥ तावत्क्रियास्तावदिदंमनोवैकर्मात्मकंयेनशरीरबंधः ५ एवंमनःकर्मवशंप्रयुंक्तअविद्ययात्मन्यव धीयमाने ॥ प्रीतिर्नयावन्मयिवासुदेवेनमुच्यतेदेहयोगेनतावत् ६ यदानुपश्यत्ययथागुणेहांस्वार्थेप्रमत्तःसहसाविपश्चित् ॥ गतस्मृतिर्विंदतितत्रतापाना साद्यमैथुन्यमगारमज्ञः ७ पुंसःस्त्रियामिथुनीभावएषतयोर्मिथोहृदयग्रंथिमाहुः ॥ यतोगृहक्षेत्रसुताप्तवित्तैर्जनस्यमोहोयमहंममेति ८ यदात्मनोहृदयग्रंथिर स्यकर्मानुबंधोदृढमाश्लथेत ॥ तदाजनःसंपरिवर्तमानोमुक्तःपरंयात्यतिहायहेतुम् ९ हरौगुरौमयिभक्त्यानुवृत्त्यावितृष्णयाद्वंद्वतितिक्षयाच ॥ सर्वत्रजं तोर्व्यसनावगत्याजिज्ञासयातपसेहानिवृत्त्या ॥ मत्कर्मभिर्मत्कथयाचनित्यंमत्पादसंगाद्गुणकीर्तनान्मे १०

मैथुन्यंस्त्रीपुंसंबंधयोग्यमगारंगृहंआसाद्यतत्रगृहेतापान्विंदतीत्यन्वयः ७ केचिदेवंविधसंसारोमिथ्येतिसंगिरंतेतत्राह पुंसइति पुंसःस्त्रियासहैषःमिथुनीभावःतयोःस्त्रीपुंसयोर्हृदयग्रंथिंमनोबंधमा श्रयमाहुरित्यर्थः अर्थक्रियाक्षमत्वान्नमिथ्येतिशेषः सकलतापानामेतदेवमूलमित्यतोवाह पुंसइति सुखसाधनान्वेषणायासेनतापाएवस्युरित्यर्थः हृदयग्रंथिविकारप्रकारमाह यतइति अतएवदुः खंस्यादित्यर्थः मिथुनीभावस्यतापहेतुत्वेकुटुंबोशुचौदेशइत्याद्युक्त्यानचपुनरावर्ततइतिकुटुंबिनोऽपुनरावृत्तिलक्षणमुक्तिवचनात् कथमनिंदामर्हतीतितिचेन्न प्रायिकत्वात्तस्य ब्रह्मात्यायाज्ञवल्क्याद्यामु च्यंतेस्त्रीसहायिनः बध्यंतेकेवलैनैतेषांविशेषंवाविदोविदुरितिवचनात् ८ सर्वदुःखनिवृत्तौकिंकारणमित्यतोहृदयग्रंथिविनाशएवेत्याह यदेति कर्मणामनुबंधःपरंपरायस्यसकर्मानुबंधःसंसारहेतुहृदयग्रं थिमतिहायपरंब्रह्मयातीत्यन्वयः ९ भक्त्यादिसाधनसंपत्त्यासत्यस्यापिबंधस्यनिवृत्तिःसुघटा गरुडध्यानेनविषनिवृत्तिवदित्यभिप्रेत्यतत्साधनमाह हराविति हरौमयिगुरौस्थितेहरौमयिइतिवाअनुवृ त्त्यानिरंतरसेवया सर्वत्रयोनिषुव्यसनावगत्याविविधक्लेशोस्तीतिज्ञानपूर्वकविचारेणजिज्ञासयावेदांतवाक्यविचारेणपंचाग्निपञ्चग्रासैरवादितपसा ईहानिवृत्त्या आत्मविहितकर्मव्यतिरिक्तकर्मपरि त्यागेन तदुक्तं आत्मनोविहितंकर्मवर्जयित्वान्यकर्मणः कामस्यचापरित्यागोनिरीहेत्याहुरुत्तमाइति मत्कर्मभिर्मदाराधनलक्षणैः मम्पादःस्वरूपंयेषुतेमत्पादास्तेषांमहतांसंगात् ममप्रतिमासेवाल क्षणसंगाद्वा देवकीनंदननंदकुमारेत्यादिगुणनामसंकीर्तनात् १०

मूत्रेषुनिर्वैरेण साम्येनोपशमेनचदेहात्मगेहात्मबुद्धेर्जिहासयाहानेच्छया अध्यात्मयोगेननाडीशोधनादिलक्षणेन प्राणस्येंद्रियाणामात्मनोमनसश्चाभिजयेनवशीकरणेन ११ सत्पाप्रशस्तयाश्रद्धया असंप्रमादेनइतिकर्तव्यतायाअविस्मृत्या वाचामितिपुनर्वागिंद्रियग्रहणंदुःशास्त्राभ्यासनिवृत्त्यर्थं सर्वदामौनकरणार्थंवा मद्भावविचक्षणेनसर्वत्रममसत्तालक्षणव्याप्तिदर्शनेन येनमुक्तिःस्यात्तद्विज्ञानं तेनविराजितेनतेजितेन प्रतिजीवंविष्णुःसर्वस्मादुत्तमइतियत्तेनज्ञानेन तदुक्तं सर्वस्मादुत्तमोविष्णुरितिज्ञानमुदाहृतं प्रतिजीवंयेनमुक्तिस्तद्विज्ञानंविदांमतमिति यद्वा यद्विष्णोरुत्तमत्वज्ञानंतदेवगाति पुरुषंविशेषविषयंतद्विज्ञानंतेनाविराजितेनविशोषितेनज्ञानेन अनयोर्विशेषंचसर्वज्ञोगुरुर्जानाति तदुक्तं ज्ञानंविष्णोरुत्तमत्वेतदेवप्रतिपूरुषं विशेषेणतुविज्ञानंतच्चजानातिसर्ववित्तिच म्न स्वयोग्यतानुसारेणसर्वेषामपिसर्वज्ञत्वेनतज्ज्ञानमपिविज्ञानस्यादित्यतोव्यावृत्तलक्षणवक्तव्यं तत्किमितिवेदुच्यते द्वात्रिंशल्लक्षणाद्युपेतएवसर्वज्ञइत्युच्यते नतुस्वयोग्यतानुसारणविद्वांस्तदुक्तं द्वात्रिंशल्लक्षणैर्युक्तस्तीक्ष्णदंष्ट्रश्चसौम्यदृक् घोररुक्चेतिपुरुषःसर्वज्ञःसउदाहृतइति सर्वज्ञस्यगुरोःप्रत्यक्षलक्षणान्यपिशास्त्रैर्निरूप्यंते षण्णवत्यंगुलोयस्तुन्यग्रोधपरिमंडलः सप्तपादश्चतुर्हस्तःसदेवै रपिपूज्यते इत्यादौन्यग्रोधपरिमंडलोबाहुद्वयमंडलमंडितः न्यग्रोधमंडलोव्यामोबाहुन्यग्रोधउच्यतेइतिवचनात् ॥ १२ ॥ योगेनध्यानेन जिह्वोपस्थेंद्रियजयोधृतिः वैष्णवसिद्धांतादचञ्चलंवा

निर्वैरसाम्योपशमेनपुत्राजिहासयादेहगेहात्मबुद्धेः ॥ अध्यात्मयोगेनविविक्तसेवयाप्राणेंद्रियात्माभिजयेनसम्यक् ११ सच्छ्रद्धयाब्रह्मचर्येणशश्वदसंप्रमादेनजयेनवाचाम् ॥ सर्वत्रमद्भावविचक्षणेनज्ञानेनविज्ञानविराजितेन १२ योगेनधृत्युद्यमसत्वयुक्तोलिंगंव्यपोहेत्कुशलोहमाख्यम् ॥ कर्माशयंहृदयग्रंथिबंधमविद्ययासादितमप्रमत्तः १३ अनेनयोगेनयथोपदेशंसम्यग्व्यपोह्योपरमेतयोगात् ॥ पुत्रांश्चशिष्यांश्चपितागुरुर्वामल्लोककामोमदनुग्रहार्थः १४ इत्थंविमन्युरनुशिष्यादतज्ज्ञान्नयोजयेत्कर्मसुकर्ममूढान् ॥ कंयोजयन्मनुजोर्थंलभेतनिपातयन्नष्टदृशंहिगर्ते १५ लोकःस्वयंश्रेयसिनष्टदृष्टिर्योर्थान्समीहेतनिकामकामः ॥ अन्योन्यवैरंसुखलेशहेतोरनंतदुःखंचनवेदमूढः १६ कस्तंस्वयंतदभिज्ञोविपश्चिदविद्यायामंतरेवर्तमानम् ॥ दृष्ट्वापुनस्तंसघृणःकुबुद्धिंप्रयोजयेदुत्पथगंयथांधम् १७

उद्भवसत्वंस्पष्टीकृतसत्वगुणःताभ्यांयुक्तःधृत्याउद्भवेनउत्कृष्टजन्मना सत्वेनब्रह्मकल्पावध्यनशनेप्यम्लानेनयुक्तइतिवा अहमाख्यंअहंकारशब्दवाच्यंलिंगंशरीरंव्यपोहेत्त्यजेत् किंविशिष्टंलिंगं कर्माण्याशेरतेस्मिन्नितिकर्माशयंहृदयग्रंथिंमिथुनीभावलक्षणंबध्नातीतिहृदयग्रंथिबंधमविद्ययाऽज्ञानेनप्राप्तम् ॥ १३ ॥ अनेनोक्तेनयोगेनव्यपोह्यनिरस्यपश्चाद्योगादुपरमेत प्रासादात्प्रेक्षतइतिवत्पश्चाद्योगमुपगम्यक्रीडतइत्यर्थः उक्तमतिदिशति पुत्रानिति शिक्षाफलमाह मदनुग्रहार्थइति ममानुग्रहएवार्थःप्रयोजनंयस्यसतथा मत्प्रसादलभ्योमोक्षोयस्येतिवा ॥ १४ ॥ विमन्युर्ज्ञानशीलःगितपापोवानिरस्तक्रोधोवा अतज्ज्ञानब्रह्मज्ञान् ननुकर्मकरणप्रेरणायांगुरुत्वेपूजादिलाभात्किमितिनयोजयेदित्युच्यतइतितत्राह कंयोजयन्निति प्रवृत्तिकर्मणिप्रेरयन्कमर्थंलभते नकमपि प्रत्युतज्ञानचक्षुरहितस्याधःपातहेतुत्वेनस्वस्यापिनरकपातःस्यादित्यभिप्रेत्याह निपातयन्निति ॥ १५ ॥ माभूत्परोपदेशस्तथापिस्वयमेवप्रवर्तमानोजनोर्थान्लभतामत्राह लोकइतिनितरांकामकामोविषयभोगेच्छायस्यसतथा अतएवश्रेयसिनष्टशास्त्रदृष्टिःस्वयमुपदेशंविना योलोकोजनोर्थानापादयितुंसमीहेतइच्छेत्सजनस्तेषामर्थानांमध्ये कंपुरुषार्थंलभते नकमपीतिपूर्वेणान्वयः नकेवलंपुरुषार्थानवाप्तिरपितुबहुदुःखावाप्तिश्चस्यादित्याह अन्योन्येति सुखलेशहेतोरन्योन्यवैरमनंतदुःखंचमूढोनवेद १६ तर्हिमूढोवेत्तीत्यायातंतदस्तुततःकिंतत्राह कस्तमिति स्वयंतदभिज्ञः प्रवृत्तिधर्मादनंतदुःखावाप्तिमभिजानन्कोविपश्चित्ज्ञानीपुरुषःअविद्यायामंतरेअज्ञाननिमित्तसंसाराबिलेवर्तमानंकुबुद्धिंतंदृष्ट्वासघृणोदयालुः पुनरपितंपुरुषंप्रवृत्तिधर्मेप्रयोजयेत्नप्रयोजयतीत्यर्थः कथमिव उत्पथगंमार्गाग्नि

[illegible]तमंधंयथाकुमार्गे नयोजयतितथेत्यर्थः १७ ईतोपिप्रवृत्तिधर्मस्योपदेष्टॄणांगुरुत्वादिकमपिनस्यादित्याह गुरुरिति समुपेतमृत्युमज्ञानादवाप्तसंसारं प्रवृत्तिधर्मस्योपदेष्टारैशिष्येण [illegible]बुद्धिरपिनकर्तव्येत्यतोवाह गुरुरिति गुरुरितिपूज्योनस्यादित्याद्युक्तम् १८ अतोगुर्वादिनाहरेःस्वरूपमुपदेष्टव्यामित्याशयवानाह इदंशरीरमिति दुर्विभाव्यंदुर्निरूप्यंअपरिच्छिन्नत्वादमौ [illegible]त्वात् ज्ञानात्मकत्वाच्च कुतइत्यत्राह सत्वमिति मेसत्वंबलंज्ञानसमाहारलक्षणंवस्तुहृदयंहियस्मात्तस्मात् ज्ञानपूर्वमनुष्ठितएवधर्मःनत्वन्यइत्याभिप्रेत्याह यत्रेति यत्रयस्मिन्ज्ञानात्मकेहृदये [illegible]स्थितःअनेनज्ञानपूर्वानुष्ठितोधर्मःनित्यफलप्रदइत्युक्तंभवति प्रसंगादधर्मस्थानमाह पृष्ठइति मेपृष्ठेभूत्वाअधर्मआरात्कृतोदूरीकृतःइतियद्यस्मात्तस्माज्ज्ञानरूपत्वाद्धर्मादिस्थितिहेतुत्वाच्च[illegible] [illegible]माहुः ज्ञानपूर्वकमनुष्ठितंधर्मंहृदयेबिभर्तीति केआर्याःशब्दतत्त्वार्थवेदिनइति १९ उक्तार्थमुपसंहरन्नेषांयोग्यगुणविशिष्टंहरिमुपदिशति तस्मादिति भवंतः सर्वेममहृदयेनजाताइतियस्माच्च [illegible]यूयंमहीयांसंमहतोपिमहांतंभरतं प्रजाभरणरतंसुनाभंसर्वाधारंहरिंअक्लिष्टबुद्ध्याभजध्वं नाभिरित्यथनामस्याद्धरेःसर्वाश्रयोयतइतिवचनाद्धरेरिदंयौगिकंनाम अनेनभरतोयेषांपूज्यइतिध्वनयति भ [illegible]शुश्रूषणेनभवत्प्रीत्यामुक्तिःकरतलगतास्यात् ज्येष्ठानुवर्तनशुश्रूषणलक्षणेनाकिमित्याशंक्यभवद्भिरनुवर्तितेनभरतेनयत्प्रजानांभरणंतत्रस्थस्यममशुश्रूषणंभवतीत्याह शुश्रूषणमिति ज्येष्ठानुवृ [illegible]त्याराष्ट्रे[illegible]भावेनभवद्भिरपिप्रजाभरणमनुष्ठितमिति अतोभरतंशुश्रूषद्भिर्भवद्भिरपिममशुश्रूषणंकृतमितिज्ञातव्यम् २० तारतम्यज्ञानमेवमुक्तिसाधनंनान्यादितिभावेनतदाह भूतेष्विति भूतेषूत्पन्ने

**गुरुर्नसःस्यात्स्वजनोनसःस्यात्पितानसःस्याज्जननीनसास्यात् ॥ दैवंनतत्स्यान्नपतिश्चसःस्यान्नमोचयेद्यःसमुपेतमृत्युम् १८ इदंशरीरंममदुर्विभाव्यं सत्वंहिमेहृदयंयत्रधर्मः ॥ पृष्ठेकृतोमेयदधर्मआरादतोहिमामृषभंप्राहुरार्याः १९ तस्माद्भवंतोहृदयेनजाताःसर्वेमहीयांसममुंसुनाभम् ॥ अक्लिष्टबुद्ध्या भरतंभजध्वंशुश्रूषणंतद्भरणंप्रजानाम् २० भूतेषुवीरुद्भ्यउदुत्तमायेसरीसृपास्तेषुसुबोधनिष्ठाः ॥ ततोमनुष्याःप्रवरास्ततोपिगंधर्वसिद्धाविबुधानुगाये २१ देवासुरेभ्योमघवान्प्रधानोदक्षादयोब्रह्मसुताश्चतेषाम् ॥ भवःपरःसोथविरिंचवीर्यःसमत्परोहंद्विजदेवदेवः २२ नब्राह्मणैस्तुलयेभूतमन्यत्पश्यामिविप्राःकिमतःपरंतु ॥ यस्मिन्नृभिःप्रहुतंश्रद्धयाहमश्नामिकामंनतथाग्निहोत्रे २३ धृतास्तनूरुशतीर्मेपुराणीयेनेहसत्वंपरमंपवित्रम् ॥ शमोदमःसत्य मनुग्रहश्चतपस्तितिक्षानुभवश्चयत्र २४**

पुमानिषुमध्येवीरुद्भ्यःस्तंबेभ्योयेसरीसृपाजंगमास्तदुत्तमाउत्कृष्टतमाइतिज्ञेयाः तेषुसरीसृपेषुयेसुबोधनिष्ठाः ज्ञानयुक्तास्तेपश्वादयउत्तमाइतिसर्वत्रयोज्यम् २१ येदक्षादयोब्रह्मसुताःसनका [illegible]स्यश्चतेषांसकाशादिंद्रःप्रधानइत्यर्थः अथइंद्रानंतरंवीरिंचवीर्यौविरिंचपुत्रोयोभवःसरुद्रउत्तमःसाविरिंचस्तस्माद्रुद्रात्परःतस्मादहमेवपरोनान्यइत्यतउक्तं मत्परइति अहमेवपरोयस्यसतथा अने [illegible]स्यमानस्याविरिंचसमत्वंसूचयति राजभिर्ब्राह्मणभक्तिर्विशेषतोनुष्ठेयेतिवेदयितुमाह अहंद्विजेति द्विजदेवानांदेवः २२ क्षत्रादीनामैश्वर्यमदेनब्राह्मणतिरस्कारसंभवेनकुलनाशःस्यात्सचानुप [illegible]तिषुश्रद्धातिशयजननार्थमाह नब्राह्मणैरिति ज्ञानपात्रत्वादतःविप्रात्परमुत्तमंममसन्निधानपात्रंकिन्तुनकिमपीत्यर्थःकुतएतदत्राह यस्मिन्निति ममतृप्तिहेतुत्वादित्यर्थः नन्वग्न्यादेःसभवा [illegible]स्किविशेष्योच्यतइतितत्राह नतथेति २३ अग्न्यादेर्गुणवैशिष्ट्यादित्याह धृतास्तनूरिति पवित्रसत्वंशमादिगुणाअनुभावोज्ञानंचयत्रयेषुब्राह्मणेषुसंतितेब्राह्मणा मेपुराणीरुशतीःशुद्धास्तनुर्मत्स्या विलक्षणा वेदाख्यावाधृताधारयंतीतियेन तस्मात्ब्राह्मणेभ्यःपरंनकिमपीतिभावः यद्वा येनब्राह्मणकुलेनापौरुषेयत्वेननिर्मलाःपुराणीःअनादिनिधनाःमेतनूस्तनवोवेदलक्षणाधृताश्चनब्रह्मकुलेस [illegible]दिगुणाःसंतितस्मात्परमुत्तमंनकिमपीति २४

ब्राह्मणेष्वपि विशेषोस्तीत्याह मत्तइति येषांमत्तोपिनाकिंचित्प्रयोजनमस्तितेषामितरेणस्वर्गाद्याशीर्लक्षणेनपुरुषार्थेनाकिमुस्यात्रकिमपीत्यन्वयः स्ववचोविश्वासार्थमनंतादित्यादिविशेषणं भक्तिमंतरेणान्यत्किमप्यपेक्षणीयमितिप्रकटनायाकिंचनानांभक्तिभाजामितिविशेषणद्वयं २५ इदानींचराचरभूतानिस्वनिवासहेतुत्वेनसंभाव्यानीत्याह सर्वाणीति हेसुताभवद्भिः सर्वाणिभूतानिमद्धिष्ण्यतयाममनिवासस्थानत्वेनध्रुवाणि निश्चितानिसंभावितव्यानीत्यन्वयः ननुममधिष्ण्यतयाममविग्रहत्वेनस्वरूपत्वेनसंभावितव्यानीत्यर्थःकिंनस्यादित्याशंक्यतस्यतदपूजनत्वादित्याह पदेपदइति पापदेपदे अनुक्षणंविविक्तदृष्टिःजीवानांधिष्ण्यतयापरमेश्वरस्यभेददृष्टिःभेददर्शनंतद्युततदेवमेअर्हणंभवति प्रीतिजनकनान्यादित्यर्थइति यद्वा भेददर्शनमेवनार्हणमपितुभेदप्रतिपादनमप्युक्तार्थइति तदुक्तं उपपादयेत्परात्मानंजीवेभ्योयःपदेपदे भेदेनैवनचैतस्मात्प्रियोविष्णोस्तुकश्चनेति यांहरेश्चैवजीवानांभेदवक्ताहरेःप्रियइतिच अनेनभेददर्शनात्तत्प्रतिपादनस्यफलाधिक्यंभवतीति गनितमिति ॥ २६ ॥ भेददर्शनस्यमोक्षसाधनत्वात्त्राप्यमर्थइतितत्राह मनोवचइति करणैःकर्मभिःयन्मनआदिनाजीवपरयोर्भेददर्शनादिकंयस्यतस्यसाक्षात्कृतंमुख्यतःपूर्णतस्यतद्धितदेवमेपरिबर्हणं

मत्तोप्यनंतात्परतःपरस्मात्स्वर्गापवर्गाधिपतेर्नकिंचित् ॥ येषांकिमुस्यादितरेणतेषामकिंचनानामपिभक्तिभाजाम् २५ सर्वाणिमद्धिष्ण्यतयाभवद्भिश्चराणिभूतानिसुताध्रुवाणि ॥ संभावितव्यानिपदेपदेवोविविक्तदृष्टिस्तदुताहर्णंमे २६ मनोवचोदृक्करणैर्हितस्यसाक्षात्कृतंमेपरिबर्हणंतत् ॥ विनापुमान्येनमहाविमोहकृतांतपाशान्नविमोक्तुमीशः २७ श्रीशुकउवाच ॥ सएवमनुशास्यात्मजान्स्वयमनुशिष्टानपिलोकानुशासनार्थंमहानुभावःपरमसुहृद्भगवानृषभापदेशउपशमशीलानामुपरतकर्मणांमहामुनीनांभक्तिज्ञानवैराग्यलक्षणंपारमहंस्यधर्ममुपशिक्षमाणःस्वतनयशतज्येष्ठंपरमभागवतंभगवज्जनपरायणंभरतंधरणीतलपरिपालनायाभिषिच्यस्वयंभवनएवोर्वरितशरीरमात्रपरिग्रहउन्मत्तइवगगनपरिधानःप्रकीर्णकेशआत्मन्यारोपिताहवनीयोब्रह्मावर्तात्प्रवव्राज २८ जडांधमूकबधिरपिशाचोन्मादकवदवधूतवेषोभिभाष्यमाणोपिजनानांगृहीतमौनव्रतस्तूष्णींबभूव २९ तत्रतत्रपुरग्रामदुर्गाकरखेटखर्वटशिबिरव्रजघोषसार्थगिरिवनाश्रमादिष्वनुपदमवनिचरापसदैःपरिभूयमानोमक्षिकाभिरिववनगजस्तर्जनताडनावमेहननिष्ठीवनग्रावशकृद्रजःप्रक्षेपणपूतिवातदुरुक्तैस्तदविगणयन्नेवासत्संस्थानएतस्मिन्देहोपलक्षणेऽसदपदेशउभयानुभवस्वरूपेणस्वमहिमावस्थानेनासमवरोपिताहंममाभिमानत्वादखंडितःपृथिवीमेकचरःपरिबभ्राम ३०

पूजनंभवति भवदर्हणेनकिंफलमित्यतोवाह मनोवचइति मनआदिसाधनैर्यन्मदर्हणंतत्साक्षात्कृतंसाक्षात्कारफलंभवति येनार्हणेनविनापुमान्महाविमोहकृतांतपाशादज्ञानलक्षणसंसाराद्विमोक्तुमीशःसमर्थोनस्यादित्यन्वयः २७ यावत्प्रयोजनमनुशासनंचेत्समाप्तं अतःपरंहरिणाकिमकार्यथापि हरिकथयाश्रुतयालंबुद्धिर्नजायतऽतःसावक्तव्येत्यस्यशारीरलक्षणज्ञामुनिस्वचरितशेषमुक्तमाहत्यवक्ति सएवमनुशास्येति ऋषभापदेशऋषभनामा भवनएवसर्वंपरित्यज्योर्वरितशेषःउर्वरितशरीरमात्रपरिग्रहः अवशिष्टशरीरमात्रपरिकरः गगनमेवपरिधानवस्त्रंयस्यसतथादिगंबरइत्यर्थः २८ २९ गृहात्संन्यस्तस्यउत्तरस्थितिमकारंकथयति तत्रतत्रेति खर्वटवस्त्रोत्पादनस्थलंकुविंदाश्रयः व्रजोगोकुलंघोषआभीरपल्ली सार्थःपरिषज्जनः अवनिचरापसदैर्भूमिचरेषुदुर्वृत्तैर्नीचैरित्यर्थः निष्ठीवनंथूत्कारः पूतिवातोऽधोवायुः तत्तर्जनादिकर्मोविगणयंस्तृणमतिपत्तिमपिअकुर्वन्नेवस्थितः कुतइतितत्राह असदिति असताममंगलानांक्लेशानांसस्थानंयस्मिंस्तस्मिन्नेतस्मिन्देहोपलक्षणेअसन्नस्वतंत्रइत्यपदेशःशब्दोयस्यसतथातस्मिन् जडशब्दवाच्येदेहे उभयानुभवस्वरूपेणसर्वभवशून्यज्ञानस्वरूपेणस्वमहिमावस्थानंयस्मिंस्तेनासमवरोपिताहंममाभिमानत्वान्त्यक्ताहंममाभि

मानत्वात्खंडितःअपरिच्छिन्नइतियस्मादितिशेषः यद्वा असतोब्रह्मणःसंस्थानंयस्मिंस्तथातस्मिन् तर्हिदेहदेहिनोर्भेदापत्त्या नेहनानास्तिकिंचनेतिश्रुतिव्याकोपःस्यादत्राह असादिति असद्ब्रह्मेत्यपदेशो यस्यदेहस्यसतथादेहोपिब्रह्मएवेत्यर्थःविज्ञानमानंदंब्रह्मेतिश्रुतिः अस्मिन्अत्रैवतदभेदःसूच्यतइत्याह समवरोपितेति समवरोपितःसम्यक्ज्ञातःअहंममाभिमानस्तस्यभावःसमवरोपिताहंममाभिमान त्वंतस्मात् तद्ब्रह्मवेदाहब्रह्मास्मीतिश्रुतिश्च तर्हिस्वपरिच्छेद्यत्वेनखंडितत्वमत्राह अखंडितइति अखंडितस्यखंडितत्वेनज्ञानान्नतत्रतर्कावसरइत्यर्थःएकचरइत्यनेनादावतेचाप्येकएवचरतीत्यर्थो पिग्रह्यतेइत्यभिप्रायेणोक्तमितिज्ञायते ३० अतिसुकुमारेत्येतद्विशेषणंसर्वत्रानुगमयितव्यं सदृशेत्येतत्ननयनयोःसादृश्यंकपोलादीनामुक्तं किंतुकपोलकर्णयोस्तथाचान्योन्यसदृशौकपोलौकर्णौचे त्यर्थःसंपद्येत सुभगत्वंकर्णादीनामपिग्राह्यं विगूढमीषत्स्पष्टंस्मितंयस्यतत्तथा कुसुमशरंकामं परागधः ३१ यर्हिवावसभगवानृषभदेवइतिमत्वाअजगरस्यविद्यमानंव्रतमास्थितस्तदाशयानएवाश्नात्य शनादिकंकरोतीत्यन्वयःइमंलोकं योग्यस्यध्यानापरपर्यायस्योपासनस्याप्रतीपमप्रतिकूलमिवाचक्षाणःपश्यन्निवशब्दात्प्रतिकूलमतिकूललक्षणस्योभयस्यसाधनंपश्यन्नित्यर्थः तस्यावमेहनादेःप्रतिक्रि

अतिसुकुमारकरचरणोरःस्थलविपुलबाह्वंसगलवदनाद्यवयवविन्यासःप्रकृतिसुंदरःस्वभावहासमुखोनवनलिनदलायमानशिशिरतरचार्वरुणायतनयन सदृशसुभगकपोलकर्णकंठनासोविगूढस्मितवदनमहोत्सवेनपुरवनितानांमनसिकुसुमशरमुपदधानः ॥ परागवलंबमानकुटिलजटिलकपिशकेशभूरिभारोवधूतमलिननिजशरीरेणग्रहगृहीतइवादृश्यत ३१ यर्हिवावसभगवान्लोकमिमंयोगस्याद्धाप्रतीपमिवाचक्षाणस्तत्प्रतिक्रियाकर्मबीभत्सितमितिव्रतमाजगरमास्थितःशयानएवाश्नातिपिबतिखादत्यवमेहतिहदतिसचेष्टमानउच्चरितादिग्धोद्देशस्तस्यहयःपुरीषसुरभिसौगंध्योवायुस्तंदेशंदशयोजनंसमंतात्सुरभीचकार ॥ एवंगोमृगकाकचर्यया व्रजंस्तिष्ठन्नासीनःशयानःकाकमृगगोवच्चरतिपिबतिखादत्यवमेहतिस्म ३२ इतिनानायोगचर्याचरणोभगवान्कैवल्यपतिरृषभोविगतपरममहानंदानुभवआत्मनिसर्वेषांभूतानामात्मभूतेभगवतिवासुदेवेआत्मनोऽव्यवधानेनानंतरोदरभावेनसिद्धसमस्तार्थैःपरिपूर्णोयोगैश्वर्याणिवैहायसमनोजवांतर्धानपरकायप्रवेशदूरग्रहणादीनियदृच्छयोपगतानिनांजसाहृदयेनाभ्यनंदत् ३३ इतिश्रीभागवतेपंचमस्कंधेपंचमोऽध्यायः ॥ ५ ॥ ६ ॥ ॥ राजोवाच ॥ ननूनंभगवन्नात्मारामाणांयोगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणिपुनःक्लेशदानिभवितुमर्हंतियदृच्छयोपगतानि १

बीभत्सक्षालनादिकंकर्मबीभत्सितंयोगशास्त्रनिषिद्धमितिउच्चरितेनपुरीषेणादिग्धःउपलिप्तःउद्देशःदेहप्रदेशोयस्यसः पुरीषसुरभिगंधेनसौगंध्यंयस्यसतथा ३२ लोकशिक्षार्थंयोगचर्यांतरमाह एवमिति आत्मभूतेआधारभूतेआत्मनिस्वामिनिअव्यवधानेनानंतरोदरभावेननिर्भेदब्रह्मभावेननित्यसिद्धैःसमस्तैरर्थैःपुरुषार्थैःपरिपूर्णःवैहायसमनोजवादीनियोगैश्वर्याण्यंजसादर्शयितुंनैवाभ्यनंददित्यन्वयः वैहायसमाकाशगमनं दूरग्रहणंदूरस्थितग्रहणंज्ञानंयदृच्छयास्वेच्छयासहसावा ३३ इतिश्रीभागवतेपंचस्कंधेविज०टीकायांपंचमोध्यायः ॥ ५ ॥ शुभयोगिजनशिक्षार्थमशुभयोगिजनमोहनार्थंतत्प्रभृतिभिदाभेदशास्त्रप्रवृत्तिप्रकाशइत्येतदृषभदेवचरितापदेशेननिरूप्यतेस्मिन्नध्याये तत्रादौयद्यपिदेवादीनांमैश्वर्यभोगेनमनःसक्त्यामुक्तिसंगानदृष्टासोनास्तितथाप्यल्पाधिकारिणांसस्यादित्यादितात्पर्यंज्ञाप्यते अत्रानंतरातीताध्यायांतेयोगैश्वर्याणिनाभ्यनंददित्युक्तंतत्रराजाशंकते ननूनमिति योगेनहरेरुपास्तिलक्षणेनसमीरितमुत्पन्नंयत्ज्ञानंतेनावभर्जितंदग्धंकर्मबीजंरागादिलक्षणंयेषांतेतथातेषांपरमात्मनिरतानांयदृच्छयानिच्छयोपगतानियोगैश्वर्याणि पुनःपश्चात्क्लेशदानिभवितुंनार्हंतिनूनं कथंतानिनाभ्यनंददित्यन्वयः १

अर्द्धांगीकारेणपरिहरति सत्यमिति अनंगीकारपक्षमाह किंत्विति एकेमहात्मानः घटकिराटे नूतनघटे स्थितस्यजलस्येवानवस्थानस्यविस्रंभंविश्वासं वाइत्यनेन महैश्वर्यस्वरूपोपिभगवानृषभो विराट् नैश्वर्याणिस्वकीयानिख्यापयामाससर्ववित् उत्तमानांज्ञापनार्थंधर्मतत्वस्यकेशवः तेषामैश्वर्यंभोगेहिमनःसांक्तंव्रजेद्यदि । आनंदोमुक्तिगोह्रासंविकर्मकरणाद्व्रजेत् । धर्माधर्मविहीनोपिभगवा नृषभस्ततः तेषांधर्मज्ञापनार्थंनाविश्वक्षेपरांस्थितिं देवानांनाशुभाद्धासःशुभात्किंचित्सुखोन्नतिः आधिकारिकजीवानामेवमन्येषुतद्द्वयं अल्पाधिकारिणांतत्रह्रासोपिभवतिध्रुवं अशुभाभावजोत्राहोम हाधिकारिणामपि अशुभेकृतेनभवतितारतम्याच्चसस्मृतः प्रजायाश्चतथादेवामहाधिकारिणःस्मृताः ऋष्यशीतिस्तथासप्तपितरोप्सरसांशतं गंधर्वाणांतथाराज्ञांविंशदन्यासुजातिषु अल्पाधिकारिण. प्रोक्ताअनधिकारिणःपरइतिशास्त्रांतरप्रसिद्धंतात्पर्यंज्ञापयति मठकिराटइतिपठित्वावागुरेतिकेचिद्व्याचक्षते तेप्रेक्षकाणांपरिपंथसप्रदायज्ञाइतिपरिहसनीयाइति ॥ २ ॥ त्रैलोक्यशिक्षार्थंश्लोकस ग्रहणमुक्तमित्याह तथाचोक्तमिति यथामनोविश्वासितपआदेर्विस्रंसनंभवतितथाचोक्तमित्यर्थःऐश्वरमीश्वरविषयंअनेनसौभर्यादीश्वराणामपियथातपःस्कंदितंतथेतिध्वनयति ॥ ३ ॥ छिद्रमवकाशं तमनुकामानंतरंअरयःक्रोधादयः तेषांचछिद्रंददातीत्यर्थःकृतमैत्रस्यमनसासहेतिशेषः पुंश्चलीपुरुषमात्राभिगामिनीजाया पत्युररीणामुपपतीनांप्रवेशमिव ४ पात्रेप्राप्तेद्रव्यात्यागेच्छालोभः अतीतदुःखस्मरणनिमित्तचित्तविक्षेपःशोकःवैचित्त्यंविपरीतज्ञानंमोहः पूर्वस्थितात्सचलनभयं कर्मणासंसारबंधोयन्मनोमूलंयस्यसतथा कोनुबुधस्तन्मनोममेष्टमितिस्वीकुर्यादित्यर्थः ५ अ

**ऋषिरुवाच ॥ सत्यमुक्तंकिंत्विहवाएकेमनसोविस्रंभमनवस्थानस्यघटकिराटइवनसंगच्छंति २ तथाचोक्तम् ॥ नकुर्यात्कर्हिचित्सख्यंमनसिह्यनवस्थि ते ॥ यद्विस्रंभाच्चिराच्चीर्णंचस्कंदतपऐश्वरम् ३ नित्यंददातिकामस्यछिद्रंतमनुयेऽरयः ॥ योगिनःकृतमैत्रस्यपत्युर्जायेवपुंश्चली ४ कामोमन्युर्मदोलोभः शोकमोहभयादयः ॥ कर्मबंधश्चयन्मूलःस्वीकुर्यात्कोनुतद्बुधः ५ अथैवमखिललोकपाललामोविलक्षणोजडवदवधूतवेषभाषाचरितैरविलक्षितभगव त्प्रभावोयोगिनांसांपरायविधिमनुशिक्षयन्स्वकलेवरंजिहासुरात्मन्यात्मानमसंव्यवहितमनर्थांतरभावेनान्वीक्षमाणउपरतानुवृत्तिरुपरराम ६ तस्यहवा एवंमुक्तलिंगस्यभगवतऋषभस्ययोगमायावासनादेहइमांजगतीमभिमानाभासेनचंक्रममाणः ७**

धुनाप्रासंगिकंमोहंपरिहृत्यप्रकृतमनुसरति अथेति विष्णोःकलेवरत्यागोभूत्यागोन्योनविद्यते कलेवरत्यागोऽन्येषांपंचत्वंसमुदीरितमितिवचनात्सभगवान्स्वकलेवरंस्वाधीनांपृथिवींजिहासुःत्यक्तुमि च्छन्नुपरराम‌विरतव्यापारोबभूवेत्यन्वयः कलेवरशब्दस्यप्रतीतएवार्थःकिनस्यादित्याशंक्य वक्ष्यमाणानांविशेषणानांप्राकृतपुरुषेऽसंभवादुक्तएवार्थउचितइतिभावेनाह अखिलेति अखिललोकपालानां ललामश्चूडामणिःअनेनाप्राकृतत्वंकथमवगतमित्यतउक्तं विलक्षणइति लोकविपरीतलक्षणःअस्थूलमनण्वह्रस्वमित्यादेः कथंतर्हितस्यप्रभावोनलक्ष्यतइत्यतउक्तं जडवदवधूतेति किमतःप्रयोजनमतउ क्तं योगिनामिति सांपरायविधिंमोक्षसाधनप्रकारं उपहितस्यास्यशिक्षाकथंमोक्षोपयोगिनीस्यादित्यतउक्तमात्मनीति आत्मानंस्वस्वरूपमात्मनिब्रह्मणिअनर्थांतरभावेनभिन्नोनास्मीतिमनसाअसव्यवहितं व्यवधानरहितमन्वीक्षमाणोऽनुभवन्नुपरतानुवृत्तिः निवृत्तविषयानुवृत्तिःनिवृत्तमुक्त्यन्यवस्थोवा नित्यमुक्त्यवस्थत्वादिति ६ इदानींहरेर्देहःसच्चिदानंदत्वेनतदभिन्नइतिदर्शयितुंतस्यसंचरणप्रकारंवक्ति तस्यहवेति एकदर्षभस्यदेहइमांजगतींविचचारेत्यन्वयः मुक्तलिंगस्यवर्णाश्रमादिलक्षणरहितस्य भौतिकशरीररहितस्यवा योगमायायोगसामर्थ्यं तस्यावसानंकाष्ठोत्कर्षोयस्यसतथा देहस्यजडस्यसं चरणंकथंघटतइत्यतउक्तमभिमानाभासेनेति अभितोज्ञानप्रकाशेनचंक्रममाणःपुनःपुनःपादक्षेपंकुर्वाणःज्ञानात्मकत्वात्गमनादिक्रियांकुर्वाणइत्यर्थः अनेनदेहदेहिनोरभेदोपिसूचितइति ७

कस्मात्कान्देशानुद्दिश्यगमनमित्यतउक्तं कांकटकर्णाटकादिति कांकटकर्णाटकाद्भीमरथ्युपपदनदीमातृकदेशाद्दक्षिणकर्णाटकान्सौराष्ट्रादिदेशान्स्वेच्छयोपगतः तत्रनागपुरग्रामात्पूर्वतउत्तरन
दीनामास्ति तस्यानिकटेकुटचाचलस्यकुटचपर्वतस्यप्राचीनसानौविद्यमाने उपवनेस्थितआस्यकृताश्मकवलः मुखांतर्गतपाषाणग्रासः असंवीतोवस्त्राद्यावरणरहितः उन्मादेसतिपुमान्यथाचेष्टतेतथेत्यर्थः ८
इदानींतस्यदेहत्यागव्याजेनदावाग्निनिविष्टस्यजगत्संहारप्रकारमाह अथेति समीरवेगेनविधुताअन्योन्यमाकंपितायेवेणवः वंशास्तेषांनिकर्षान्निष्पेषणाज्जातोयोदवानलोज्वलज्जिह्वयादिवमालेलि
हानस्तेनाग्निनासाधनेनसहभगवांस्तदुपवनंददाहेत्यन्वयः वनमित्युपलक्षणंजगदपीतिशेषः अत्रप्रतीतमनंगीकृत्यान्यार्थांगीकारेकिंप्रमाणमत्रोच्यते ज्ञानानंदात्मकोदेहऋषभस्यमहात्मनः ताद
शेनैवमनसाक्रमश्चकुटचाचले दावाग्निमनुविश्याथतत्रस्थःप्रादहज्जगदिति कालांतरभाविनोविश्वसंहारस्येदानींभयंकर्तेतिकथंयुज्यतइतिचेन्न तद्देहित्वेनाग्नेरभिव्यज्यतत्रस्थितस्यतस्ययोगात् तदु
क्तं एवमग्नेरभिव्यक्तस्तस्थौविष्णुःसनातनइति नकेवलंविश्वक्षयपर्यंतमेवस्थितंकिंतुपश्चादपिमतं तर्हिस्वमाहात्म्यंकिंनप्रकटितमितिचेन्न भूमाववतारस्यदेवशिक्षणार्थत्वेनधर्माणामप्राकट्यस्यस्वधर्मत्वात्
ऋषभत्वेनसंगोथधर्मोनचापितत्रगः आस्तेसवासुदेवात्मावासुदेवोहमित्यजः सदास्थितइत्यनेनस्वरूपज्ञानस्यकदापितिरोभावोनास्तीतिसूचितं निर्लेपेनसर्वज्ञेनसर्वोत्तमेनहरिणाकिंप्रयोजनमकारीतिचे
न्न असुरजनमोहनार्थत्वात् ९ किमनेनतदभूदितितत्राह यस्येति जनानुपशिक्ष्यउत्कृष्यमाणेवर्धमानेभवितव्येनाविधिनानिजमनीषयेत्यनेनार्हस्यासुरत्वमसूचि मंदोनिर्भाग्यइत्यनेनआनदा

## एकदातुकांकटकर्णाटकाद्दक्षिणकर्णाटकान्देशान्यदृच्छयोपगतःकुटचाचलोपवनेआस्यकृताश्मकवलउन्मादइवमुक्तमूर्द्धजोऽसंवीतएवविचचार ८ अ थसमीरवेगविधुतवेणुनिकर्षोपजातोदावानलस्तद्वनमालेलिहानःसहतेनददाह ९ यस्यकिलानुचरितमुपाकर्ण्यकांकटकर्णाटकानांदक्षिणकर्णाटकानां राजार्हन्नामोपशिक्ष्य कलावधर्मउत्कृष्यमाणेभवितव्येनाविमोहितःस्वधर्मपथमकुतोभयमपहायकुपथंपाषंडमसमंजसंनिजमनीषयामंदःसंप्रवर्तयिष्यते १० येनहवाकलौमनुजापसदादेवमायाविमोहिताःस्वविधिनियोगशौचाचारविहीनादेवहेलनादीन्यपव्रतानिनिजेच्छयागृह्णानाअस्नानानाचमनाशौच केशोल्लुंचनादीनिकलिनाऽधर्मबहुलेनोपहतधियोब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाःप्रायेणभविष्यंति ११

त्मपुरुषार्थशून्यइतिध्वनयति भगवन्मततात्पर्यंनजानातीतिवाउपाकर्ण्येत्यनेनस्थितंतांतुशुश्रावार्हौदुरात्मवानितिवाक्यंस्मारयति पाखंडमद्वैतमसमंजसंजैनमतमित्यनेनशास्त्रद्वयमनेनाकारीति
सूचितं तदुक्तं पूर्वंतुपौंड्रकोनामावासुदेवःसुदुर्मतिः जातिस्मरोद्विधाशास्त्रंपाखंडंनिर्ममेनृपः एकंतुवासुदेवाख्यंवासुदेवोहमित्यपि कुत्सितंवासुदेवत्वप्रतिपादकमात्मनः लोकार्थंचापरमितिच
कारार्हतनामकमिति अनेनार्हस्यपूर्वजन्मनिपौंड्रकाख्यासुरत्वंस्पष्टीकृतं वासुदेवोहमित्यात्मनोजीवस्यवासुदेवत्वप्रतिपादकवासुदेवाख्यंकुत्सितमेकंशास्त्रं परमार्हतनामकंलोकार्थमहिंसाधर्मप्रतिपा
दकमपरंचकारेत्यन्वयः १० शास्त्रस्यप्रचयगमनमाह येनेति येनशास्त्रद्वयेन हवाइतिनिपातद्वयेनतत्प्रशिष्येणक्रमुणाविरचितेनशास्त्रेणेतिस्मारितं तदुक्तं तत्प्रशिष्यःक्रमुर्नामनजानंस्तन्मतंपरं
वासुदेवात्मतांसर्वजीवानामवदत्कुधीः कण्वाख्यंशास्त्रमकरोदभेदप्रतिपादकं कुशास्त्रंसर्ववेदानांविरुद्धंतामसालयं तद्दृष्ट्वाद्यापिवर्तंतेवर्तिष्यंतितथाकलौ । अशौचाअव्रताचारावासुदेवोहमित्य
पीति एतदभिप्रायेणास्नानेत्याद्युक्तं मनुजापसदामनुष्याभासाः स्वविधिःस्वकीयोवेदः तस्यनियोगंलिडाद्यर्थोमलवद्वाससानसंवदेतेत्यादिकः तेनविहितःशौचाद्याचारः विष्ण्वादिदेवानाहेलनादीन्यभदद
र्शनावज्ञानादीन्यपव्रतानिवेदविरुद्धव्रतानि स्वेच्छयाप्रमाणंविना किंचास्नानादीनिशब्दंतः निमित्तमाह कलिनेति देवहेलनादिविशिनष्टि ब्रह्मेति ११

तत्फलमाह तैरपीति तैर्हेलनादिभिःक्रियमाणयाऽर्वाक्तनयानीचयांधपरंपरयानिजलोकयात्रयास्वप्रमनोरथकल्पितव्यवहारेण स्वशरीरजीविनेनवा तएवानास्थाःएकदापिव्यापारमंतरेणनस्थिताः हिशब्देनांधेनैवनीयमानायथांधाइतिश्रुतिंप्रमाणयति १२ नकेवलमसुरमोहनार्थः किंतुस्वपादमूलशरणजनस्यमुक्तिसाधनार्थोपीत्याह अयमिति रजसागुणेनोपप्लुतस्यउपद्रुतस्यसाधु जनस्यकैवल्यशिक्षणार्थोमुक्तिसाधनशिक्षणाभिप्रायइत्यन्वयः कुतइतितत्राह तस्येति तस्यकैवल्यसाधनोपदेशस्यानुगुणाननुरूपानित्यर्थः १३ सप्तद्वीपेषुनवसुवर्षेषुएतद्भारताख्यंखंडमधिपुण्य माधिकपुण्यसाधनं उपलक्षणमेतत् पापसाधनंचेति तदुक्तं विशेषाद्भारतेपुण्यंचरेयुःपापमन्यथा तथैवभगवद्भक्तिःपृथिव्यांनान्यवर्षगाइति अनेनादृष्टसाधनमेतदन्यानिभोगसाधनानीतिविशेषउ क्तइतिज्ञायते अवतारवंतिप्रकाशवंति १४ प्रैयव्रतः प्रियव्रतसंबंधी पुराणपुरुषेणावतीर्णेनकिंप्रयोजनमभूदत्राह पुरुषइति अकर्महेतुंमोक्षहेतुंमोक्षकारणंधर्मलोकशिक्षार्थंचचारेतियद्यस्मात्तस्मादि तिशेषः पूर्णपुरुतत्सनोतिददातीतिपूर्णफलंमोक्षंददातीत्यर्थः इतिकर्तरिडः ड्मत्ययेनटिलोपः १५ ऋषभोनामकश्चिद्योगीनहरिरितितत्राह कोन्विति अभवायमुक्तये लोकशिक्षणार्थमे वधर्माचरणं नतुतत्फलापेक्षयेत्याह यद्योगमायामिति श्रीहरिप्रेरणयाकृतप्रयत्नाः महापुरुषाः येनोदस्तानित्यनिरस्तांयोगमायां अणिमादिबाह्ययोगफलंस्पृहयंतीतियद्यस्मात्तस्माल्लोकशि क्षणार्थंधर्ममाचरतोस्यकाष्ठांस्वरूपभूतांयोगशक्तिं हरिमंतरेणापरःकोनुयोगीगच्छेन्नकोपीत्यन्वयः नित्योदस्तायोगशक्तिरनपेक्ष्यंफलंयतः नित्यस्वरूपभूतापिबहिःफलविवर्जनात् अकर्मेत्युच्य

तैरपिह्यर्वाक्तनयानिजलोकयात्रयांधपरंपरयातएवानास्थास्तमस्यंधेस्वयमेवप्रपतिष्यंति १२ अयमवतारोरजसोपप्लुतकैवल्यशिक्षणार्थःतस्यानुगुणा नूश्लोकान्गायंति १३ अहोभुवःसप्तसमुद्रवत्याद्वीपेषुवर्षेष्वधिपुण्यमेतत् ॥ गायंतियत्रत्यजनामुरारेःकर्माणिभद्राण्यवतारवंति १४ अहोनुवंशो यशसावदातःप्रैयव्रतोयत्रपुमान्पुराणः ॥ कृतावतारःपुरुषःसआद्यश्चचारधर्मंयदकर्महेतुम् १५ कोन्वस्यकाष्ठामपरोनुगच्छेन्मनोरथेनाप्यभवाययो गी ॥ यद्योगमायाःस्पृहयंत्युदस्तांमहत्तमायेनकृतप्रयत्नाः १६ इतिहस्मसकलवेदलोकब्राह्मणगवांपरमगुरोर्भगवतऋषभाख्यस्यविशुद्धाचरितंपुं सांसमस्तदुश्चरिताभिहरणंपरममहामंगलायनमिदमनुश्रद्धयोपचितयानुशृणोत्याश्रावयतिवावहितोभगवतितस्मिन्वासुदेवएकांततोभक्तिरनयोरपिसम नुवर्तते १७

तेयद्धन्मोक्षःफलविवर्जनादितिवचनात् उदस्तामितिविशेषणाद्योगमायामिंद्रजालमुच्यतइत्येतन्निरस्तं तस्मादणिमादियोगशक्तिर्नित्योदस्ता कुतःफलमनपेक्ष्यमितिपक्षः । तर्हिहरेःस्वरूप भूताणिमादिशक्तिर्नास्तिकिमित्यतउक्तं नित्येति यद्यपिस्वरूपभूताणिमादिशक्तिरस्तितथाप्यन्येच्छाविषयाणिमादियोगमायाबहिर्नित्यस्वरूपशक्तेःपृथक्फलविवर्जनात्क्रियासाध्यफलानिच्छ त्वात् तत्रदृष्टांतः अकर्मेति यथामोक्षस्त्वकर्मेतिवदंतितत्फलानिच्छत्वात् तथात्रेति १६ ननुकृष्णादिचरितवदस्यचरितमापयदिसंसारनाशनंस्यात्तदायमपिश्रीनारायणांशइतिनिश्चयेनानिरु पचरितभक्तिःस्यात्तत्कथमितिशंकांपरिहरन्नुपसंहरति इतीति इतिशब्दःप्रश्नप्रतिवचनःहस्मेतिनिपातौश्रद्धातिशयजननार्थौ । नकेवलंरामाद्यवतारवद्दुष्टभंजनःकिंतुव्यासाद्यवतारवज्ज्ञानस्योपदेष्टे तिज्ञापनायपरमगुरोरिति । विशुद्धाचारिरितंकथितमितिशेषः इदमाचरितंविशेषतःशुद्धमेवनतुदुष्टमहीदयस्तुतात्पर्यापरिज्ञानादन्यथागृहीतवंतइतिनतेनाशुद्धश्रद्धाकर्तव्येतिविज्ञापयितुंविशुद्धे ति कुतएतदितितत्राह पुंसामिति दुश्चरिताभिहरणंपापकर्मनाशनं नकेवलमेतदेवफलमन्यच्चास्तीत्याह परमेति ननुफलोपयोगित्वेयुक्तमखिलं तत्कथमत्राह इदामिति उपचितयानुदिनमेध मानयाइदमेवश्रेयइत्यंतःकरणधर्मःविशेष श्रद्धा अनयोःश्रोतृप्रवक्त्रो.अपिशब्दात्पठतः वासुदेवेनिर्द्वंद्वाभक्तिःसमनुवर्ततइत्यन्वयः १७

नन्विवृत्तेरेषुसाधनेषुसत्स्विवयमेवाकिंविशेष्योच्यतइत्याशंक्यसामान्यमुक्तेरस्याःपरमानंदहेतुत्वादित्याह यस्यामिति कवयोयस्यांभक्त्यांस्वात्मानंमनस्तापयंतस्तयैवभक्त्याजातया परयोत्कृष्टयानिर्वृत्याऽऽत्यंतिकमापवर्गिकमपवर्गसंबंधिनंपुरुषार्थंस्वयंस्वतएवप्राप्तमपिनैवाद्रियंते कुतोनाद्रियंतेतत्राह भागवतत्वेनेति भक्त्याभागवताभगवतोहरेर्विशेषप्रियाइतिभावेनैवपरिसमाप्ताःपूर्णाःसर्वार्थायेषांतेतथा तापनेनिमित्तमाह अविरतेति अविरतानिनिरंतराणिविविधानिवृजिनानिदुःखानियानितैर्युक्तोय संसारःजननमरणलक्षणः तन्निमित्तसंतापेनोपतप्यमानंदंदह्यमानं अनुसवनंसर्वदामुक्तेःपूर्वंतस्यामना दरंकुर्वतांपश्चादानंदोत्कर्षःस्यादित्येतमर्थंहिशब्देनाह। ब्रह्मणोन्यस्यनोपूर्णांदद्याद्भक्तिंजनार्दनः मुक्तिंददातिसर्वेषामुच्चानांकोह्यधीशितेत्यनेन नाद्रियंतेतुयेमोक्षंपूर्वंतेषापरंसुखम् स्वयोग्यंव्यज्यते मुक्तौचोक्तंतारतम्यमुगित्यनेनचात्रतात्पर्यमवगंतव्यं १८ भगवतिक्रियमाणायाभक्तेर्निर्वृतिजनकत्वेनपुरुषार्थत्वं यतोतस्तस्यामुक्तेरप्यातिदौर्लभ्यमाह राजन्निति एवंगुरुत्वादिकमस्तुतथाप्यविगानेनमुक्तिंप्रयच्छतिकर्हिचित्स्मकदापिब्रह्माणंविनानकस्मैचित्पूर्णभक्तियोगंप्रयच्छतीत्यन्वयः ब्रह्मणोन्यस्यनोपूर्णांदद्याद्भक्तिंजनार्दनइत्यादेः अर्जुनादीनांज्ञानोपदेष्टृत्वेनगुरुत्वम् १९ सिंहावलोकन्यायेनाव

यस्यामेवकवयआत्मानमविरतंविविधवृजिनसंसारपरितापोपतप्यमानमनुसवनंस्नापयंतस्तयैवपरयानिर्वृत्याह्यापवर्गिकमात्यंतिकंपरमपुरुषार्थमपिस्वयमासादितंनैवाद्रियंतेभागवतत्वेनैवपरिसमाप्तसर्वार्थाः १८ राजन्पतिर्गुरुरलंभवतांयदूनांदैवंप्रियःकुलपतिःक्वचकिंकरोवः ॥ अस्त्वेवमंगभगवान्भजतांमुकुंदोमुक्तिंददातिकर्हिचित्स्मनभक्तियोगम् १९ नित्यानुभूतनिजलाभनिवृत्ततृष्णःश्रेयस्यतद्रचनयाचिरसुप्तबुद्धेः ॥ लोकस्ययःकरुणयाभयमात्मलोकमाख्यान्नमोभगवतेऋषभायतस्मै २० इतिश्रीभागवतेपंचमस्कंधेषष्ठोऽध्यायः ६ श्रीशुकउवाच ॥ भरतस्तुमहाभागवतोयदाभगवतावनितलपरिपालनायसंचिंतितस्तदनुशासनपरःपंचजनींविश्वरूपदुहितरमुपयेमे १ तस्यामुहवाआत्मजान्कार्त्स्न्येनानुरूपानात्मनःपंचजनयामासभूतादिरिवभूतसूक्ष्माणि २ सुमतिंराष्ट्रभृतंसुदर्शनमावरणंधूम्रकेतुमितिअजनाभंनामैतद्वर्षंभारतमितियतआरभ्यव्यपदिशंति ३ सबहुविन्महीपतिःपितृपितामहवदुरुवत्सलतयास्वेस्वेकर्मणिवर्तमानाःप्रजाःपर्यपालयत् ४

तत्प्रयोजनमाह नित्येति अतद्रचनयाश्रेयोविरुद्धकर्मणा श्रेयसि चिरसुप्तबुद्धेःनष्टज्ञानस्यलोकस्यज्ञानग्रहणयोग्यजनस्य योभगवानात्मालोक्यतेदृश्यतेइत्यात्मज्ञानंमुक्तिसाधनंआख्यादाचख्यौतस्मा ऋषभायनमइत्यन्वयः ऋषभोक्तार्थेविस्रंभायऋषभंविशिनष्टि नित्येति नित्यमनुभूतःपरोक्षीकृतोनिजलाभः स्वरूपानंदोयस्तेननिवृत्तातृष्णायस्यसतथोक्तः अनेननित्यानंदज्ञानपूर्णत्वेननित्यसिद्धाखिलपुरुषार्थविशेषत्वात्तदुक्तावाप्तिःसुतरांसंभवतीतिज्ञायते २० इतिश्रीभागवतेपंचमस्कंधेविजयध्वजकृ०टीकायांषष्ठोध्यायः ६ श्रीनारायणप्रसादजनकज्ञानसाधनकर्मकरणप्रकारोनिरूप्यतेस्मिन्नध्याये तत्रादावृषभेसाक्षान्नारायणावतारेराज्यरक्षणकर्मणोनिवृत्तेतत्पुत्रोभरतःकिमकार्षीदित्याशंक्यभगवद्भक्तकथायाअपिश्रीहरिकथांतरभूतत्वात्तत्कथाप्रसंगःक्रियते भरतास्त्विति तुशब्दइतरराजकथायाअस्यकथायाविशेषंवक्ति संचिंतितःसंमंत्र्याभिषिक्तःसंमंत्रणेतुसंचिंतावचर्यामभिषेचनइत्युत्पलमालाया तस्यऋषभस्यानुशासनमाज्ञा १ पंचसंख्यामात्रत्वेदृष्टांतमाह भूतादिरिवेति भूतादिस्तामसाहंकारः भूतसूक्ष्माणिशब्दादीनिचेतनस्यचेतनदृष्टांतापेक्षायांभूतादिःपरमात्मा भूतसूक्ष्मशब्दवाच्यान्शब्दाद्यभिमानिदेवानिव २ यतोभरतात् ३ ४

आहितःप्रतिष्ठितोऽग्निर्येनसआहिताग्निःअग्निहोत्रादयःप्रकृतयःपशुसोमादयोविकृतयःसमग्रांगयुक्तानिकर्माणिप्रकृतयःएकदेशांगयुक्तानिविकृतयःपशुभिर्वाक्रयमाणाअश्वमेधादयः सांगेरसरनीप्रत्यभ पाःसोमयागाः चत्वारोहोतारोयत्रतच्चातुर्होत्रं तल्लक्षणविधानेन ५ प्रचरत्सुकुर्वाणेषुअध्वर्युषु अतएवनानायोगेषुदेवताध्यानलक्षणेषुपजनाद्युपायेषुवा क्रियमाणेषुसत्सु यदपूर्वक्रियाफलंधर्मसंज्ञं तद्वासुदेवेभावयानः हर्यधीनत्वेनसमर्पयन्सयजमानोयेहरेश्चक्षुराद्यवयवेभ्यउत्पन्नास्तान्यज्ञभाजोयज्ञभागाधिकारिणोदेवान्सूर्यादीन्पुरुषस्यपूर्णज्ञानस्यहरेश्चक्षुराद्यवयवेषुतदुत्पन्नास्तदाश्रिताइत्यध्य भावयदचिंतयदित्यन्वयः कदा अध्वर्युभिर्हविःषुगृह्यमाणेषुसत्सु कर्मांगत्वेनवासुदेवेसमर्पणंनत्विष्टत्वेनेत्यतउक्तं परेति सर्वदेवतानांलिंगभूताःप्रकाशकायेमंत्रास्तेषावज्रधरत्वादीनातत्रान्नांवाअर्थं नियामकतयाऐश्वर्याद्यर्थप्रेरकत्वेन मुख्यकर्तरिअभ्यर्हितत्वाच्चेत्युक्तंयज्ञपुरुषइति नचेदंसगुणफलप्रापयइत्याह परेति कषाय पापं ६ अधुनाकर्मणासाध्यफलमाह एवमिति भगवदर्पणे

ईजेचभगवंतंयज्ञपुरुषंक्रतुभिरुच्चावचैःश्रद्धयाहिताग्निरग्निहोत्रदर्शपूर्णमासचातुर्मास्य पशुसोमानांप्रकृतिविकृतिभिरनुसवनंचातुर्होत्रविधिना ५ संप्रच रत्सुनानायोगेषुविरचितांगक्रियेषुअपूर्वंयत्तत्क्रियाफलंधर्माख्यंपरब्रह्मणियज्ञपुरुषेसर्वदेवतालिंगानांमंत्राणामर्थनियामकतयासाक्षात्कर्तरि परदेवतायां भगवतिवासुदेवएवभावयानःआत्मनःपुण्यमृदितकषायोहविःष्वध्वर्युभिर्गृह्यमाणेषुसयजमानोयज्ञभाजोदेवास्तान्पुरुषावयवेष्वध्यभावयत् ६ एवंकर्म विशुद्धिविशुद्धसत्वस्यांतर्हृदयआकाशशरीरेब्रह्मणिभगवतिवासुदेवेमहापुरुषोपलक्षणैःश्रीवत्सकौस्तुभवनमालारिदरगदादिभिरुपलक्षितेनिजपुरुषहृदु ल्लिखितेनात्मनात्मनिपुरुषरूपेणविरोचमानेउच्चैस्तरांभक्तिरनुदिनमेधमानरयाजायत ७ एवंवर्षायुतसहस्रपर्यंतावसानावसितकर्मनिर्वाणावसरोधिभु ज्यमानंस्वतनयेभ्योरिक्थंपितृपैतामहंयथादायंविभज्यस्वयंसकलसंपन्निकेतात्स्वनिकेतनात्पुलहाश्रमंप्रवव्राज ॥ यत्रहवाभगवान्हरिरद्यापितत्रत्यानां निजजनानांवात्सल्येनसन्निधाप्यतेइच्छारूपेण ८ यत्राश्रमपदान्युभयतोनाभिभिर्दृषच्चक्रैश्चक्रनदीनामसरित्प्रवरासर्वतःपवित्रीकरोति ९ तस्मिन्वावकि लसएकःपुलहाश्रमोपवनेविविधकुसुमकिसलयतुलसिकांबुभिः ॥ कंदमूलफलोपहारैश्चसमीहमानोभगवतआराधनंविविक्तउपरतविषयाभिलाषउप हृतोपशमःपरांनिर्वृतिमवाप १०

नकर्मणःशुद्धिस्तयाशुद्धंसत्वमंतःकरणंयस्यसतथा तस्यांतर्हृदयेआकाशशरीरेसूक्ष्मरूपेब्रह्मण्यपरिच्छिन्नेमहापुरुषस्यहरेरुपलक्षणैःचिह्नैर्महापुरुषंश्रीनारायणोयमितिउपलक्षयति ज्ञापयति महापु रुषोपलक्षणैर्वा स्वभक्तानांहृद्युल्लिखितेनस्फुरितेनात्माकारेण कीदृशःसइत्यतआह पुरुषरूपेणेति आत्मनिस्वस्मिन्नेधमानरयावर्द्धमानवेगा ७ भरतस्यवैराग्योपजृंभणप्रकारमाह एवमिति व र्षायुतसहस्रावसानेअवसितस्यप्रारब्धकर्मणोनिर्वाणावसरःनाशलक्षणोयस्यसतथा रिक्थंराज्याख्यवित्तं सकलसंपन्निकेतात्सर्वसमृद्ध्याश्रयान्निकेतनाद्गृहात् पुलहाश्रमंशालग्रामक्षेत्रं नतत्रान्या धीनत्वेनसन्निधानमित्यभिप्रायेणोक्तमिच्छेति ८ कीदृशमिच्छारूपमित्यतस्तद्विवृणोति यत्रेति यत्रचक्रनदीनामसरित्प्रवरा उभयतोनाभिभिरूर्ध्वाधश्चक्राकितैर्दृषच्चक्रैःशिलासमूहैःसर्वतःपवित्री करोतीत्यन्वयः ९ सएकस्तस्मिन्पुलहाश्रमोपवनेपरांनिर्वृतिमवापेत्यन्वयः उपहृतःसंहृतःपूर्णःउपशमोभगवन्निष्ठायस्यसतथा १०

प्रवर्द्धमानअनुरागभारेणहृतंगतंहृदयशैथिल्यंसंशयलक्षणंयस्यसतथा आत्मनिदेहेरोमपुलककुलकःरोमांकुरसमूह औत्कंठ्यमंतःकरणधर्मविशेषःतेनप्रवृत्तमुत्पन्नंप्रणयबाष्पमानंदाश्रुतेननिरुद्धावलोकन
युतंयस्यसतथा निजरमणारुणचरणारविंदयोरनुध्यानेनोपचितेनप्रवृद्धेनभक्तियोगेनपरिप्लुतपरमाह्लादश्चायंगभीरहृदयावगाढधिषणश्चेतिसतथोक्तः गभीरहृदयेविष्णाववगाढामग्नाधिषणाबुद्धि
र्यस्यसतथा यद्वा परिप्लुतंपरमाह्लादंगभीरहृदयंयस्यसतथा अतएवहरावगाढाधिषणायस्यसतथा ११ ऐणाजिनवाससाकृष्णाजिनाख्यवस्त्रेणानुसवनाभिषेकार्द्रकपिशकुटिलजटाकलाप
नचसूर्यइवविरोचमानः १२ एतन्मंत्रार्थवाचकंपद्यमाह परोइतिअथोशब्दवत्परोशब्दोऽव्ययनाम रजसःप्रकृतेः परोपरःउत्तमः निरस्तरजोगुणोवा सवितःजगतःकर्तःजातसर्ववेत्तीतिजातवेदा वे
दस्तस्यसंबुद्धिर्जातवेदः वेदप्रतिपाद्यत्वाद्वेदस्यगर्भः वेदस्यतनयइत्यर्थः भगवानिदंजगज्जजानजनयामास किमुपकरणमत्राह मनसेति अनेनसवितृशब्दार्थोलक्षितः नियंतृत्वमप्यस्यैवेत्याह स्वरेतसेति
स्वरेतसावीर्येणादः ब्रह्मादिजगत्प्रविश्यस्थितःदुःखिजगत्संबंधेनदुःखलेशोपिनास्तीत्याह हंसमिति सर्वस्यदुःखहंतृत्वाद्धंसः तंस्वंस्वतंत्रं गृध्राणांजीवानामृषभंस्वामिनं गृधुअभिकांक्षायामितिधातुः

तयैवमविरतपुरुषपरिचर्यया भगवतिप्रवर्द्धमानानुरागभारद्रुतहृदयशैथिल्यःप्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलकःऔत्कंठ्यप्रवृत्तप्रणयबाष्पनि
रुद्धावलोकनयनोभिरेमे ॥ एवंनिजरमणारुणचरणारविंदानुध्यानेनोपचितभक्तियोगपरिप्लुतपरमाह्लादगभीरहृदयावगाढधिषणस्तामपिक्रियमाणांभगव
त्सपर्यांनसस्मार ११ इत्थंधृतभगवद्व्रतऐणाजिनवाससानुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेनचविरोचमानःसूर्यइवभगवंतंहिरण्मयंपुरुषंददर्श
सूर्यमंडलेऽभ्युपतिष्ठन्नेतदुहोवाच १२ परोरजःसवितर्जातवेदोदेवस्यभर्गोमनसेदंजजान ॥ स्वरेतसादःपुनराविश्यचष्टेहंसंगृध्राणामृषभंसंगृणीमः १३
॥ इतिश्रीभागवतेपंचमस्कंधेसप्तमोऽध्ययः ॥ ७ ॥ ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ एकदातुमहानद्यांकृताभिषेकनैगमिकावश्यकोब्रह्माक्षरम
भिगृणानोमुहूर्तत्रयमुदकांतउपविवेश ॥ तत्रतदाराजन्हरिणीपिपासयाजलाशयाभ्याशमेकैवोपजगाम ॥ तयापेपीयमानेउदकेतावदेवाविदूरेणनदतो
मृगपतेरुन्नादोलोकभयंकरउदपतत् १ तमुपश्रुत्यसामृगवधूःप्रकृतिविक्लवाचकितनिरीक्षणासुतरामपिहरिभयाभिनिवेशव्यग्रहृदयापारिप्लवदृष्टिरगत
तृषाभियात्सहसोच्चक्राम २

जीवानांसर्वाकांक्षादि एवंविधंत्वांसंगृणीमः स्तुमइत्यन्वयः परोरजारजस्कत्वात्रयीरूपत्वात्रयीसुतः गुणात्ययाचुरीयश्चजातवेदाश्चसर्ववित् हंसोदुःखादिहानेनजीवेशत्वाच्चऋषभराट् कालःसर्वनियंतृत्वा
त्परमात्माप्रकीर्तितइतिवचनात्उक्तएवार्थः परोरजाइत्यनेनशताक्षरगायत्रीप्रतिपाद्योनारायणोमेष्टदेवतेत्युक्तं परोरजारजस्कत्वादित्यत्ररजस्कत्वादितिपदच्छेदश्छांदसत्वाद्युक्तइतिसतोष्ट
व्यम् १३ इतिपंचमस्कंधेविजयध्वजकृतटीकायांसप्तमोऽध्यायः ॥ ७ ॥ ॥ ७ ॥ सत्संगातिमंतरेणेतरसंगतिःसंसारहेतुरितिएतन्निरूप्यतेस्मिन्नध्याये तत्रभरतस्यैणशावसंगत्यानर्थप्रकारंकथयितुमु
पक्रमते एकदेति अभिषेकःस्नानमावश्यकंमूत्रपुरीषोत्सर्जनादिनैगमिकंनित्यकर्म अत्रक्रमस्त्वविवक्षितःएतावत्करोतीतिक्रियमाणमनुष्ठानंनैगमिकसंध्यानुष्ठानमावश्यकमितिवा ब्रह्माक्षरंप्रणवः गाय
त्रीवाअघमर्षणसूक्तंवा जलाशयाभ्याशंनदीसमीपं तावत्तदानीमृगपतिः व्याघ्रः १ प्रकृत्यास्वभावेनविक्लवापारवश्ययोपेता ॥ अतएवचकितनिरीक्षणाचंचलावलोकना हरेर्भयाद्भयाभिनिवेशः भयोद्वे
गःतेनव्यग्रंभ्रांतंहृदयंयस्याःसातथा हरिर्व्याघ्रेपंचमुखेभेकेसूर्यसमीरयोरिति अतएवपारिप्लवदृष्टिः चंचलदृष्टिःतृषेतिटावंतः उच्चक्रामोत्पपात २

अंतर्वत्न्यागर्भिण्याःउरुणाभयेनावगलितोनिर्गतःस्रोतसिप्रवाहे प्रस्रवणंप्रसारउत्सर्पणमुत्पतनंहरिभयंचखेदश्चएतैरातुरादर्यामहागर्ते कृष्णसारसतीकृष्णमृगप्रिया ३ एणकुणकंमृगबालकं अ
पविद्धबंधुंत्यक्तबंधुजनं मृतामातायस्यसतथातम् ४ पोषणंतृणादिदानेन लालनमुत्संगारोपणादिना अनुध्यानंक्षेमचिंतनंपोषणाद्यनुचिंतनंवायमाअहिंसादयः पुरुषपरिचर्यादयोविष्णुपूजादयः
उदवसन्उत्सन्नाबभूवुः ५ ईश्वररथचरणस्यकालचक्रस्यपरिभ्रमणरयेणगमनागमनवेगेनमामांगोपायनंगोप्तारराक्षितार शरणंप्राप्तस्योपेक्षयामहान्दोषोभवतीतिदोषविदुषा ६ मृगपोषणादिनाभग

तस्याउत्पतंत्या अंतर्वत्न्याउरुभयावगलितोयोनिगतोगर्भःस्रोतसिनिपपात ॥ तत्प्रस्रवणोत्सर्पणभयखेदातुरास्वगणैर्वियुज्यमानाकस्यांचिद्दर्यांकृष्णसा
रसतीनिपपातचाथममार ३ तंत्वेणकुणकंकृपणंस्रोतसाचोह्यमानमभिवीक्ष्यापविद्धबंधुंबंधुरिवानुकंपयाराजर्षिर्भरतआदायमृतमातरमेणमाश्रमपदमा
नयत् ४ तस्यहवाकुणकउच्चैस्तरांतस्मिन्कृतनिजाभिमानस्याहरहस्तत्पोषणपालनप्रीणनलालनानुध्यानेनात्मनियमाःसहयमाःपुरुषपरिचर्यादयए
कैकशःकतिपयाहर्गणेनवियुज्यमानाःकिलसर्वएवोदवसन् ५ अथेदमाह अहोबतायंहरिणकुणकःकृपणईश्वररथचरण परिभ्रमणरयेणस्वगणसुहृद्बंधुभ्यः
परिवर्जितःशरणंचमोपसादितोमामेवमातृपितृभ्रातृज्ञातिभ्योधिकंगोपायनंनान्यंकंचनवेदमय्येवातिविस्रब्धश्चातएवमयामत्परायणस्यपोषणपाल
नप्रीणनलालनमप्यनसूयुनानुष्ठेयंशरण्योपेक्षादोषविदुषा ६ नूनंह्यार्याःसाधवउपशमशीलाःकृपणसुहृदएवंविधार्थेस्वार्थानपिगुरुतरानुपेक्षंते ७ इ
तिकृतानुषंगआसनस्नानाशनशयनाटनस्थानादिषुसहमृगजहुनास्नेहानुबद्धहृदयआसीत् ८ कुसुमकुशसमित्पलाशफलमूलोदकादीन्याहरिष्यमा
णोवृकसालावृकादिभ्योभयमाशंकमानःसहहरिणकुणकेनवनमाविशति ९ पथिपथिचमुग्धभावेनतत्रतत्रविषक्तमतिप्रणयसारहृदयः ॥ कार्प
ण्यात्स्कंधेनोद्वहतिएवमुत्संगेउरसिचाधायोपलालयन्परमामवापमुदम् १० क्रियायांनिर्वर्त्यमानायामंतरालउत्थायोत्थाययदैनमभिचक्षीततर्हि
वावसवर्षपतिःप्रकृतिस्थेनमनसातस्मैहाशिषआशास्तेस्वस्तिस्याद्वत्सतेसर्वतइति ११ अन्यदातुभृशमुद्विग्नमना नष्टद्रविणइवकृपणःसकरुणमतितर्षेणह
रिणकुणकविरहविह्वलहृदयसंतापस्तमनुशोचन्किलकश्मलंमहदभिरंभितइतिहोवाच १२ अपिबतसवैकृपणैणबालकोमृतहरिणीसुतोममानार्यस्यश
ठकितवमतेरकृतसुकृतस्यकृतविस्रंभआत्मप्रत्ययेनतदविगणयन्स्वजनइवागमिष्यति १३ अपिक्षेमेणास्मिन्नाश्रमोपवनेशष्पाणिचरंतंदेवगुप्तंद्रक्ष्यामि १४

वदुपासनाभंगइतितत्राह नूनमिति ७ इत्युक्तप्रकारेणकृतानुषंगःकृतस्नेहाभिनिवेशः मृगजहुनामृगबालकेन ८ आहारिष्यमाणआनायिष्यन् ९ १० वर्षपतिःभरतखंडनाथः प्रकृतिस्थे
नस्वस्थेन ११ अन्यदाअदर्शने अतितर्षेणअत्युत्कटयाकश्मलंविषादं अभिरंभितआश्रितः १२ आत्मप्रत्ययेनस्वमनःशुद्ध्या तन्ममौदासीन्यं अविगणयन्अविचिंतयन्स्वजनःपुत्रइव
१३ क्षेमेणसुखेन १४

नैकचरः अष्टपान्मृगविशेषः १५ निम्लोचत्यस्तंगच्छति मृगवधून्यासःमृगीनिक्षेपलक्षणोर्थः १६ विविधाश्चरुचिराश्चदर्शनीयाश्चनिजाः स्वजातिप्रयुक्ताश्चमृगदारकाणांमृगबालकानांयेविनो दालीलाविशेषास्तैः १७ क्ष्वेलिकयामृगजातिक्रिययानादविशेषक्रिययावाप्रेमसंरंभेणस्नेहोद्रेकेण प्रणयकोपेनवा सचकितंसभयं पृषतःकृष्णमृगःअपरुषविषाणाग्रेणकोमलशृंगमुखेनलुठतिप रिवर्तयतिअभिमुखीकरोतीत्यर्थः उपहंतीतिवा लुठउपघातइतिधातु' लुंठतीतिपाठेअनुष्ठानालस्यंकरोतिलुठिआलस्ये १८ आसादितअत्ररोपितंहविर्यस्मिंस्तत्तथातस्मिन्बर्हिषिभक्षणादिनादूषितेसति उपलब्धोभर्त्सितउपरतरभसःशांताभिनिवेशः अतएवावहितकरणकलापःसंवृतसर्वेंद्रियव्यापारसमूहः १९ अनयाभूम्यातपआचरित ततांकिमितिशेषः सविनयस्यकृष्णसारतनयस्य तनुतराअति शयेनाणवश्चसुभगाःसुंदराश्चशिवतमाःसुखतमाश्च खराःपरुषाश्च खुरायेतेषांपदानां निक्षेपचिह्नानांपंक्तिभिर्द्रविणविधुरवद्दरिद्रवदातुरस्य नकेवलंममोपकरोति किंतुद्विजानामपीत्याह आत्मानामि

अपिनवृकःसालावृकोन्यतमोवानैकचरोजक्षयति १५ निम्लोचतिभगवान्सकलजगत्क्षेमोदयःसूर्यात्माद्यापिनममृगवधून्यासआगच्छति १६ अपिस्विदक्षतसुकृतंमामागत्यसुखायिष्यति ॥ हरिणराजकुमारोविविधरुचिरदर्शनीयनिजमृगदारकविनोदैरसंतोषंस्वानामपनुदन् १७ क्ष्वेलिकया मांमुधासमाधिनामीलितदृशंप्रेमसंरंभेणसचकितमागत्यपृषतअपरुषविषाणाग्रेणलुठति १८ आसादितहविषिबर्हिषि दूषितेमयोपालब्धोभीतभीतःसप द्युपरतरभसऋषिकुमारवदवहितकरणकलापआस्ते १९ किंवाअरेआचरितंतपस्तपस्विन्यानयायदियमवनिःसविनयकृष्णसारतनयतनुतरसुभग शिवतमखरखुरपदपंक्तिभिर्द्रविणविधुरातुरस्यकृपणस्यममद्रविणपदवींसूचयंत्यात्मानंसर्वतःकृतकौतुकंद्विजानांस्वर्गापवर्गकामानांदेवयजनंकरोति २० अपिस्विदसौभगवानुडुपएनंमृगपतिभयान्मृतमातरंममृगबालकंस्वाश्रमपरिभ्रष्टमनुकंपयाकृपणजनवत्सलःपरिपालयति २१ एषतेहरिणकुलोप निधिर्मयाग्रुसइति ॥ किंवाआत्मजविश्लेषज्वरदवदहनशिखाभिरुपतप्यमानहृदयस्थलनलिनंमामुपसृत्योपसृतमृगीतनयः शिशिरशातानुरागगुणि तनिजवदनसलिलामृतमयगभस्तिभिःस्वधयति २२

ति कृष्णसारतनयस्यपदपंक्तिभिःकृतकौतुकंकृतमंगलमात्मानं द्विजानांदेवयजनंचकरोति इदंप्रलप्योत्थायबहिर्गत्यापश्यतोहिवचनम् यस्मिन्देशेकृष्णमृगस्तस्मिन्धर्मान्निबोधेतेतिस्मृतिः २० अधुनैनंदूरेप्यनागतंदृष्ट्वातत्प्रलापप्रकारमाह अपिस्विदिति उडुपश्चंद्रएनंमृगबालकंपरिपालयत्यपिस्विदित्यन्वयः २१ किंचरक्षित्वाचाटुकुर्वन्मह्यंप्रयच्छत्यपिस्विदित्याह एषइति उपसृतश्चासौमृ गीतनयश्चेत्युपसृतमृगीतनयःउपसृत्यगभस्तिभिर्मांस्वधयतिलेढ्यपिस्विदित्यन्वयः शिशिराणिशीतलानिचतानि अनुरागेणगुणितानिबहुलीकृतानिचतानि निजवदननिर्गतसलिलानि तान्येवामृतगभस्तयश्चंद्ररश्मयस्तैः किंविशिष्टंमा आत्मजइवात्मजोमृगीतनयस्तस्य विश्लेषनिमित्तोयोज्वरःसंतापःसएवदवदहनःवनाग्निस्तस्यशिखाभिरुपतप्यमानंदह्यमानंहृदयस्थलनलिनं यस्यसतथातम् ॥ २२ ॥

संगफलमाह इतीति इत्यादिमलपन्सः योगतापसोभरतोयोगारंभणतोभगवदाराधनलक्षणात्कर्मणश्चाविभ्रंशित: परिमोचितइत्यन्वयः केन मृगदारकरूपेणासमंताद्भासतइतितेनस्वारब्धकर्मणामनुष्य स्यैवमघटमानोमृगेमनोरथः स्नेहविशेषस्तेनाकुलंहृदयंयस्यसतथा इतरथाप्रारब्धकर्माभावे जात्यंतरेऽस्मज्जातिविलक्षणमृगजातावासंगःस्नेह कथंस्यात् योगोध्यानं तस्यभरतस्य कथंभूतस्यसाक्षान्निःश्रेयसस्यप्रतिपक्षतयाविघ्नत्वे नहेतुनापूर्वंपरित्यक्तास्त्यक्तुमशक्यहृदयाभिजाताऔरसाःपुत्राःयेनसतथातस्य एवंमृगपोतलालनाद्याकुलचेतसोभरतस्य मरणसमयासत्तिमाह तस्येति अंतरायेणाविघ्नेनविहतंयोगारंभणंध्यानोपक्रमोयस्यसतथातस्य पोषणादिषुसतानुषंगेणानिरंतरस्नेहाभिनिवेशेनात्मानं श्रीहरिंस्वंवाऽविगणयतोचिंतयतः करालोरभसोवेगोयस्यसतथा २३ इमलोकंभरतोपाध्युपलक्षितशरीरंमृगेणसहवर्तमानंविसृज्यइतरमृगवन्मृगशरीरमवाप पूर्वकलेवरमनुतस्यानुकूलत्वेनस्मृताजन्मानुस्मृतिर्जातिस्मृतिर्येनसतथा पूर्वदेहतत्कृतकर्मस्मृतिरित्यर्थः २४ भगवदाराधनस्यसमीहानुष्ठानंतस्यसामर्थ्येन २५ किमाह अहोइति किंकष्टंतदाह भ्रष्टइति आत्मवत्तानुपथात् आत्मास्वामीममास्तीतिभाववंतआत्मवंतः परमात्मज्ञानिनइत्यर्थः तेषांसमूहःआत्मवत्ता जनताशब्दवत्त

इतिचैवमघटमानमनोरथाकुलहृदयोमृगदारकाभासेनस्वारब्धकर्मणायोगारंभणतोविभ्रंशितः सयोगतापसोभगवदाराधनलक्षणाच्चकथमितरथाजात्यंतरएणकुणकेआसंगः साक्षान्निःश्रेयसप्रतिपक्षतयाप्राक्परित्यक्तदुस्त्यजहृदयाभिजातस्यतस्यैवमंतरायविहतयोगारंभणस्यराजर्षेर्भरतस्य तावन्मृगार्भकपोषणपालनप्रीणनलालनानुषंगेणाविगणयतआत्मानमहिरिवाखुबिलंदुरतिक्रमःकालःकरालरभसआपद्यत २३ तदानीमपिपार्श्ववर्तिनमात्मजंबंधुमिवानुशोचंतमभिवीक्षमाणोमृगएवाभिवेशितमनाविसृज्यलोकमिमं सहमृगेणकलेवरमनुस्मृतजन्मानुस्मृतिरितरमृगवन्मृगशरीरमवाप २४ तत्रापिहवाआत्मनोमृगत्वकारणंभगवदाराधनसमीहानुभावेनानुस्मृत्यभृशमनुतप्यमानआह २५ अहोकष्टंभ्रष्टोहमात्मवत्तानुपथाद्विमुक्तसमस्तसंगस्यविविक्तपुण्यारण्यशरणस्यात्मवतः आत्मनिसर्वेषामात्मनांभगवतिवासुदेवेतदनुश्रवणमननसंकीर्तनाराधनानुस्मरणाभियोगेनाशून्यसकलयामेनकालेनसमावेशितंसमाहितंकार्त्स्न्येनमनस्तत्तुपुनर्ममाबुधस्यरागान्मृगसुतमनुपरिसुस्राव २६ एवंनिगूढनिर्वेदोविसृज्यमृगीमातरंपुनर्भगवत्क्षेत्रमुपशमशीलमुनिगणदयितंशालग्रामंपुलस्त्यपुलहाश्रमंकालंजरात्प्रत्याजगाम २७ तस्मिन्नपिकालंप्रतीक्षमाणःसंगाच्चभृशमुद्विग्नआत्मसहचरःशुष्कपर्णतृणवीरुधावर्तमानोमृगत्वनिमित्तावसानमेवगणयन्मृगशरीरंतीर्थोदकक्लिन्नमुत्ससर्ज २८ इतिश्रीभागवतेपंचमस्कंधेआदिभरतचरितेऽष्टमोऽध्यायः ॥ ८ ॥

स्यानुपथादनुगमनलक्षणमार्गात् आत्मास्यास्तीत्यात्मवान्तस्यभावःआत्मवत्तातस्यानुपथादनुसरणात् पथगतावितिधातोः भ्रष्टः आलंब्यंमुक्त्वाधःपतितःकुतएतदितितत्राह यदिति सर्वेषामात्मनांचेतनानामात्मनिअंतर्यामिणिवासुदेवेभगवति कार्त्स्न्येनकालेनसमावेशितंसमाहितं सन्निधायस्थिरीकृतंयन्ममनः पुनस्तदेवममनःरागान्मृगसुतमनुसुस्रावानुस्रुतमभूदित्यन्वय. तस्मादितिशेषः विविक्तंचतत्पुण्यसाधनंचतत्अरण्यंविविक्तपुण्यारण्यंतदेवशरणंयस्यसतथातस्यात्मवतोबुद्धिमतः । कथंकार्त्स्न्येनेतिविशेषणंसंगच्छते क्षणार्धमन्यप्रसंगसंभवादितितत्राह तदिति तस्यवासुदेवस्यानुश्रवणादिषुयोभियोगआग्रहलक्षणःप्रयत्नस्तेनाशून्याअविनाभूताः सफलाः सकलायामाःयस्मिन्सतथातेन २६ निगूढनिर्वेदोंतर्गतवैराग्यः दयितंप्रियंकालंजराद्गिरेः २७ आत्मसहचरएकाकी मृगत्वनिमित्तस्यदुष्कर्मणः प्रारब्धस्यावसानंनाशमेवगणयन्प्रतीक्षमाणः संख्यांकुर्वन्निवक्लिन्नमार्द्रमिति २८ इतिपंचमस्कंधेवि०टी०अष्टमोऽध्यायः ॥ ८ ॥

प्रायोवैराग्यसाधनसामग्रीसंपन्नस्यापिब्राह्मणशरीरस्यसतः पुरुषस्यज्ञानान्मुक्तिरित्यभिप्रेत्यास्मिन्नध्यायेनिरूप्यते तदर्थंमुत्पन्नज्ञानस्यापिभरतस्यविप्रतनुत्वप्राप्तिमाह अथेति अथमृगशरीरोत्सर्जनानंतरं । कल्याणकरभरतकथोच्यतइतिवा त्यागोदानं देवतामुद्दिश्यद्रव्यत्यागलक्षणोयज्ञोवा संतोषोयदृच्छालाभेनालंबुद्धिः शमाद्यात्मज्ञानांतं तैर्यआनंदस्तेनयुक्तस्य शमादीनामानंदेनसमृद्ध्या युतस्येतिवाआत्मनःपितुर्गुणसदृशश्रुतादिगुणायेषांतेतथा सोदर्यांगजाः एकस्यामातुःउदरजातत्वात् सोदर्याः अंगजाः पुत्राः १ उत्सृष्टंमृगशरीरंयेनसतथा चरमशरीरेणांत्यदेहेन २ तत्रविप्रजन्मन्यपि लोकस्यात्मानमुन्मत्तादिरूपेणदर्शयामासेत्यन्वयः उद्विजमानः स्वस्थानप्रच्युतिरितिबिभ्यत् गुणविवरणंव्याख्यानं विशेषेणदधतः आत्मनःस्वस्यश्रवणादेःप्रतिघातंविघ्नमाशंसमानः निरूपयन् अनुस्मृतास्वस्यपूर्वजन्मनामावलिः परंपरायेनसतथा ३ सविप्रःपितातस्यात्मजस्यापिलोकविद्विष्टस्यापिसमावर्तनपर्यंतं सनःसंस्कारान्विप्रजातिविहितान्जातकर्मादीन्यथोपदेशंविदधानः कुर्वाणःपुनरुपनीतस्यशौचाचमनादीन्कर्मनियमाननभीष्टानपिसमशिक्षयदित्यन्वयः अनभिप्रेताश्चेत्किमित्यशिक्षयदितितत्राह अनुशिष्टेनेति हवाइत्यनेनभरतस्यापरोक्षज्ञानित्वेनकामचारोनदोषायेतिसूचयतः अतएवासदाग्रहइत्युक्तं ४ पत्युःपित्राशिक्षितंतदेवसध्रीचीनंसमीचीनंरमणीयमिवकिंचिदन्यथा हेत्यनेन अतीतानागतज्ञानीत्रैलोक्योद्धरणक्षमः इत्यादिस्मार्तन्यायमनुसंदधानइवेतिदर्शयति सहप्रणवेनाशिरसात्रिपदीसप्रणवाशिरस्त्रिपदीतां असमवेतरूपंअसमंजसरूपंयथातथा छंदांसिवेदान् ५ आत्मावैपुत्रनामेतिश्रुतेरात्मनीतिव्यपदेशः औपकुर्वाणकानिउपकुर्वाणयोग्यानि उपकुर्वाणोविवाहःभिक्षाटनंवा अतदभियुक्तानितस्यानपेक्षितानि एवमादीन्यपिकर्माणिग्राहयन्पुत्रमशिक्षयदित्यन्वयः अनागतमनोरथः अप्राप्तनिजाभिप्रायः उपसंहृतोमृतोभूत् ६ अनुसंस्थयाअनुमरणेनअग्निप्रवेशलक्षणेन त्रय्यांअग्निष्टोमेनस्वर्गकामोयजेतेत्याद्यायाकर्मप्रतिपादिकायांपर्यवसितमतयः पुरुषार्थबुद्धयः ब्रह्मविदाप्नोतिपरंतमेवंविद्वानमृतइहभवतीत्याद्यायामनिष्णातमतयः अनुशासननिर्बंधाच्छिक्षालक्षणाग्रहात्न्यवृत्संतानिवर्तितुमैच्छन् ७

श्रीशुकउवाच ॥ अथकस्यचिद्द्विजवरस्यांगिरसप्रवरस्यशमदमतपःस्वाध्यायाध्ययनत्यागसंतोषतितिक्षाप्रश्रयविद्यानसूयात्मज्ञानानंदयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणानवसोदर्यांगजाबभूवुःमिथुनंचयवीयस्यांभार्यायाम् १ यस्तुतत्रपुमांस्तंपरमभागवतंराजर्षिप्रवरंभरतमुत्सृष्टमृगशरीरंचरमशरीरेणविप्रत्वंगतमाहुः ॥ २ ॥ तत्रापिस्वजनसंगाच्चभृशमुद्विजमानोभगवतःकर्मबंधविध्वंसनश्रवणस्मरणगुणविवरणेनचरणारविंदयुगुलम् मनसाविदधतःआत्मनःप्रतिघातमाशंसमानोभगवदनुग्रहेणानुस्मृतस्वपूर्वजन्मावलिरात्मानमुन्मत्तजडबधिररूपेणदर्शयामासलोकस्य ३ तस्यापिहवात्मजस्यसविप्रःपुत्रस्नेहानुबद्धमनाआसमावर्तनात्संस्कारान्यथोपदेशंविदधानउपनीतस्यचपुनःशौचाचमनादीन्कर्मनियमाननभिप्रेतानपिसमशिक्षयत्अनुशिष्टेनहिभाव्यंपितुःपुत्रेणेत्यसदाग्रहः ४ सचापितदुहपितृसन्निधावेवसध्रीचीनमिवकरोति ॥ छंदांस्यध्यापयिष्यन्सहव्याहृतिभिःसप्रणवशिरस्त्रिपदींसावित्रींग्रैष्मवासंतिकान्मासानधीयमानमप्यसमवेतरूपंग्राहयामास ५ एवंस्वतनुजेआत्मन्यनुरागावेशितचित्तःशौचाध्ययनव्रतनियमगुर्वनलशुश्रूषणाद्यौपकुर्वाणकानिकर्माण्यतदभियुक्तान्यपिसमनुशिष्टेनभाव्यमित्यसदाग्रहःपुत्रमनुशशास ॥ पितास्वयंतावदनधिगतमनोरथःकालेनाप्रमत्तेनस्वयंगृहेप्रमत्तउपसंहृतः ६ अथयवीयसीद्विजसतीस्वगर्भजातंमिथुनंसपत्न्यामुपन्यस्यस्वयमनुसंस्थयापतिलोकमगात् ॥ पितर्युपरतेभ्रातरएनमतत्प्रभावविदस्त्रय्यांविद्यायामेवपर्यवसितमतयोनपरविद्यायांजडमतिरितिभ्रातरमनुशासननिर्बंधान्न्यवृत्संत ७

अतःपरमसौभरतःकिमकरोदत्राह सचेति सचैवंविचचारेत्यन्वयः कथंप्राकृतैरित्यस्यविवरणंद्विपदेति चतुष्पदःपशोर्द्विपदत्वमेवविशेषःनतुज्ञानेनताहशैर्मनुष्यैर्यदाहउन्मत्तेत्यादिनामभिरभिभाष्यमाणोभवति तदातदनुरूपाण्युन्मत्तादिवचनानुकूलवचनानिभाषतेविष्टितः कर्तुःकर्मानुकूलद्रव्यक्षिप्तिमंतरेणकर्मणावेतनतोमौल्येनकर्मानुकूलद्रव्यक्रय्येत्यर्थः कदन्नंकुत्सितान्नं अभ्यवहरतिभुक्तेपरंकेवलंनेंद्रियप्रीतिनिमित्तं नजिह्वादींद्रियतृप्तिकारणं ८ अत्रहेतुगर्भविशेषणमाह नित्येति नित्यनिवृत्तदुःखस्वसिद्धविशुद्धानुभवानंदोहामितियःस्वात्मलाभस्तमधिगच्छतीतिसतथोक्तः यद्वा नित्यनिवृत्तदुःखत्वादिविशिष्टस्वात्मापरमात्मासएवलाभः फलंजानातीतिसतथोक्तः अतएवासंभावितोनुत्पादितोदेहाभिमानोयेनसतथा शुष्कजलनारिकेलफलसमइत्यर्थः ९ उपलिप्तभूमौशयित्वानिद्राकरणंस्थंडिलसंवेशनंअनुन्मर्दनदेहमलत्यागः अनुन्मज्जनंअस्नानं कर्पटेनपटच्चीरेणजीर्णवस्त्रेणेत्यर्थः आवृताच्छादिताकटिर्यस्यसतथाउरुमषिणातिमलिष्ठेन १० यदापरतःआहारंप्रतिवेतनतः कर्मेहमान

सचप्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरेत्यभिभाष्यमाणोयदातदनुरूपाणिप्रभाषतेकर्माणिचसकार्यमाणःपरेच्छयाकरोति ॥ विष्टितोवेतनतोवायाञ्च्यायदृच्छयाचोपसादितमल्पंबहुमृष्टंकदन्नंवाभ्यवहरतिपरंनेंद्रियप्रीतिनिमित्तम् ८ नित्यनिवृत्तदुःखस्वसिद्धविशुद्धानुभवानंदस्वात्मलाभाधिगतःसुखदुःखयोर्द्वंद्वनिमित्तयोरसंभावितदेहाभिमानः ९ शीतोष्णवातवर्षेषुवृषइवानावृतांगःपीनःसंहननांगःस्थंडिलसंवेशनानुन्मर्दनानुन्मज्जनेनरजसामहामणिरिवानभिव्यक्तब्रह्मवर्चाःकर्पटावृतकटिरुपवीतेनोरुमषिणाद्विजाति रितिब्रह्मबंधुरितिसंज्ञयाज्ञजनावगतोविचचार १० यदानुपरतआहारंकर्मवेतनतईहमानःस्वभ्रातृभिरपिकेदारकर्मणिनिरूपितस्तदपिकरोति ॥ किंतुनसमंविषमंन्यूनमधिकमितिवेद ॥ कणपिण्याकफलीकरणकुल्माषस्थालीपुरीषादीन्यप्यमृतवदारोचयति ११ अथकदाचित्कश्चिद्वृषलीपतिर्भद्रकाल्यैपुरुषपशुमालभतापत्यकामः १२ तस्यहदैवविमुक्तस्यपशोःपदवींतदनुचराःपरिधावंतोनिशिनिशीथसमयेतमसावृतायामनधिगतपशवआकस्मिकेनविधिनाकेदारान्वीरासनेनमृगवराहादिभ्यःसंरक्ष्यमाणमांगिरसप्रवरसुतमपश्यन् १३ अथतएनमनवद्यलक्षणमवमृश्यतेनभर्तुःकर्मनिष्पत्तिंमन्यमानाबद्ध्वारशनयाचंडिकागृहमुपनिन्युर्मुदाविकासितवदनाः १४ अथपणयस्तंस्वविधिनाभिषिच्याहतेनवाससाच्छाद्य भूषणानुलेपस्रक्तिलकादिभिरुपस्कृतंभुक्तवंतंधूपदीपमाल्यलाजकिसलयांकुरफलोपहारोपेतयावैशससंस्थयामहतागीतस्तुतिमृदंगपणवघोषेणचतंपुरुषपशुंभद्रकाल्याःपुरतउपवेशयामासुः १५

श्रेष्टमानस्तदास्वभ्रातृभिरपिकेदारकर्मणिनिरूपितस्तत्कर्मापि करोति अस्यकर्मणइदंमूल्यंसममिदंविषममिदंअधिकमिदंन्यूनमितिनवेद कणंपाषाणोपेताणुतरतंडुलं पिण्याकंनीरसतिलपिष्टंफलीकरणमवहततंडुलतुषं कुल्माषः कीटादिविद्धमाषः वनमाषोवा स्थालीपुरीषंस्थालीतंदुलप्रदग्धान्न यावनालश्यामाककोद्रवादन्यादिशब्दगृहीतानिआरोचयतिमधुरीकरोति ११ भक्षितकणादिजीर्णीकरणंनातिशयितमाहात्म्यंऔषधादिनापितत्संभवादित्याशक्यविष्णुमाहात्म्यगर्भितंमाहात्म्यांतरमाह अथेति अथान्यमाहात्म्यंवक्ष्यामीतिशेषः १२ दैवविमुक्तस्यअदृष्टोद्बोधकपरमात्मोपेक्षयाक्षीणायुषःनिशीथसमयेमध्यरात्रिकाले अनधिगतपशवःअप्राप्तपुरुषाख्यपशवः केदारान्शालिक्षेत्राणि वीरासनेनमचेस्थित्वासंरक्ष्यमाणंपालयंतं यत्प्रत्ययस्तुस्वयंहरिणापाल्यतइतिद्योतनपरः १३ रशनयारज्ज्वा १४ पणयोवृषलाश्चोरावा स्वविधिनास्वागमोक्तमार्गेणअहतेनाच्छिन्नेनधौतेनवा किसलयःपल्लवः अंकुरोनवांकुरःवैशससंस्थयाहिंसाविधानेन १५

वृषोधर्मोलीयतएभिरितिवृषलास्तेषांराजावृषलराजः अतएवपणिश्चोरःवृषलगजेषुचोरइत्यर्थः असृगासवेनरक्ताख्यमद्येन तस्याःभद्रकाल्यामंत्रेण गृध्रकर्णिविरूपाक्षिलंबस्तनिमहोदरि हनश त्रुंत्रिशूलेनक्रुद्धस्यापिबशोणितमित्यादिनाभिमंत्रितंजप्तमासिंखड्गम् १६ उत्सिक्तमुच्छृंखलंमनोयेषांतेतथातेषां भगवत्कलासन्निहितांगिरसकुलकदर्थीकृत्यवृषलानांब्रह्मर्षिसुतस्य भरतस्यालंभन हिंसनमतिदारुणं यत्कर्मतदुपलभ्यदृष्ट्वाब्रह्मतेजसाशत्रुदहनलक्षणभरतस्यश्रीहरिसामर्थ्येन भृशंदंदह्यमानेनदेहेनयुक्तासाभद्रकालीसहसोच्चचाल सद्योर्थःसहसाश्रुतइतियादवः १७ यायष्टुमा कांक्षितासैवेत्येवशब्दार्थः किंविशिष्टस्य सूनायांहिंसायामनभिमतस्यायोग्यस्यसर्वप्राणिहिंसकाअपिब्राह्मणहिंसांनानुमन्यंतइतिअमर्षरोषयोर्यआवेशः तस्यरभसेनकोलाहलेनविलसित प्रका शितःभ्रूकुटिलक्षणोविटपःशाखा तथाकुटिलाभ्यांदंष्ट्राभ्यांचारुणानामीक्षणानामाटोपेनचातिभयंकरंवदनंयस्याःसातथा इदंजगद्धंतुकामेवाट्टहासंकुर्वतीततः पूर्वस्थानादुत्पत्त्योत्थायागत्यवृक्णा निछिन्नानिशीर्षाणियेषांतेतथातेषाम् १८ महत्स्वभिचारेणयोतिक्रमः अनिष्टकरणंतदात्मनेकर्त्रेकात्स्न्यैनैकदेशमंतरेणफलति परिपाकंप्राप्नोति १९ आश्चर्यमेतद्यदंतकांतिकानीतोपिब्राह्मण

अथवृषलराजपणिःपुरुषपशोरसृगासवेनदेवींभद्रकालींयक्ष्यमाणस्तदभिमंत्रितमासिमातिकरालंनिशितमुपाददे १६ इतितेषांवृषलराज्ञांरजस्तमःप्रकृतीनांधनमदरजसोत्सिक्तमनसांभगवत्कलांगिरसकुलंकदर्थीकृत्योत्पथेनस्वैरंविहरतांहिंसाविहाराणांकर्मातिदारुणंवृषलानांयद्ब्रह्मभूतस्यसाक्षाद्ब्रह्मर्षिसुतस्यनिर्वैरस्यसर्वभूतसुहृदःसूनायामप्यननुमतमालंभनंतदुपलभ्यब्रह्मतेजसातिदुर्विषहेणदंदह्यमानेनवपुषासहसोच्चचालसैवदेवीभद्रकाली १७ भृशममर्षरोषावेशरभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणाटोपातिभयानकवदनाहंतुकामेवेदंमहदाट्टहासमतिसंरंभेणविमुंचतीततउत्पत्त्यपापीयसांदुष्टानांतेनैवासिनावृक्णशीर्ष्णांगलात्स्रवंतमसृगासवमत्युष्णंसहगणैर्निपीयातिपानमदविह्वलोच्चैस्तरांस्वपार्षदैःसहजगौननर्तविजहारचशिरःकंदुकलीलया १८ एवमेवखलुमहदभिचारातिक्रमःकार्त्स्न्येनात्मनेफलति १९ नवाएतद्विष्णुरातमद्भुतंयदसंभ्रमःस्वशिरश्छेदनआपतितेपिविमुक्तदेहाद्यात्मभावसुदृढहृदयग्रंथीनांसर्वसत्वसुहृदात्मनांनिर्वैराणांसाक्षाद्भगवताअनिमिषारिवरायुधेनाप्रमत्तेनतैस्तैर्भावैःपरिरक्ष्यमाणानांतत्पादमूलमकुतोभयमाश्रितानांभागवतपरमहंसानाम् २० इतिश्रीभागवतेपंचमस्कंधेनवमोऽध्यायः ९ श्रीशुकउवाच ॥ अथसिंधुसौवीरपतेरहूगणस्यव्रजतइक्षुमत्यास्तटेतत्कुलपतिनाशिबिकावाहकपुरुषान्वेषणसमयेदैवेनोपसादितःसद्विजवरउपलब्धःएषपीवायुवासंहननांगःखरवद्धुरंवोढुमलमितिपूर्वविष्टिगृहीतैःसहगृहीतःप्रसभमतदर्हउवाहशिबिकांसहिमहानुभावः १

स्तूष्णीमासेतिराजाभिप्रायज्ञोबादरायणिराह नवाइतीति हेविष्णुरात परीक्षित्स्वशिरश्छेदनआपातितेप्यसंभ्रमइतियदेतद्भागवतपरमहंसानामद्भुतंनवैनैवेत्यन्वयः विमुक्तोदेहादावात्मभावलक्षणः सुदृढहृदयग्रंथिर्यैस्तेतथातेषांसर्वसत्वानांसुहृदश्चात्मभूताश्चसर्वसत्वसुहृदात्मानःस्तेषां सुहृदात्माप्मनोयेषांतेतथातेषामितिवा साक्षात्प्रत्यक्षतुर्ययोरित्यभिधानात् साक्षाद्भगवतस्तुर्यमूर्तेर्हरेरनिमिषारिवरायुधेनकालरूपचक्राख्यश्रेष्ठायुधेनतैस्तैर्भावैर्भद्रकाल्यादिसंज्ञैः परितोरक्षमाणानामप्रमत्तेनेत्यनेनचक्रस्यचैतन्यमुपलक्षयति अतएववैलक्षण्यसूचनायभगवतअनिमिषेत्यपसंधिःकृतः २० इतिपंचमस्कंधेवि०कृतटी०नवमोध्यायः ॥ ९ ॥ अत्रपुरुषांतरसंवादबाहुल्येनश्रद्धातिशयोभवतीतिपुनरपिपंचस्वध्यायेषुहरेस्तत्त्वंनिरूपयति तदर्थंब्राह्मणरहूगणयोःसंलापंघटयितुमाह अथेति इक्षुमत्यान

स्तदैकस्मिन्नाश्रमे स्थितं कपिलं मुनिं द्रष्टुं व्रजतो रहूगणस्य दोलिकावाहकपुरुषान्वेषणवेलायां तस्य राज्ञः कुलपतिना प्रधानपुरुषेण दैवेनादृष्टप्रेरकेण हरिणोपसादितः प्रापितः एषपीवायुवा खरवत् शिबिकां वोढुमलं समर्थ इति निश्चित्य प्रसभं पूर्वविष्टिगृहीतैर्वाहकैः सह गृहीतोऽतदर्हः वहनायोग्यः स ब्राह्मणः शिबिकामुवाहेत्यन्वयः किं चित्रमिदमिति तत्राह सहीति स ब्राह्मणो महानुभावो हि यस्मात्तस्मा द्ब्राह्मणेन वाहयितृत्वमनुपपन्नमिदमस्यात्यंतायोग्यं महासामर्थ्योपेतत्वादित्यर्थः १ युगमात्रप्रदेशस्यावलोको दर्शनं युगमात्रावलोकः तदनुकूला गतिर्गमनं यस्य स तथा तस्य गत्या अन्येषां वाहकानां पुरुषाणां गतिर्न समा युक्ता न भवति यदा तदा रहूगणः अधिवहतो वोढृनाहेत्यन्वयः अतिक्रमत पदं निक्षिपत २ सोपालंभं सतर्जनं ईश्वरस्य राज्ञः वचः तुर्यात्सामाद्युपायानां मध्ये चतुर्थाद्दंडात् ३ भवतो यमो नुशासनं तस्यानुपथा अनुगुणमार्गाः द्रुतमस्मद्गमनानुगुणं न व्रजति पारयामः पारं गच्छाम. ४ नूनमिदानीमेकस्य सांसर्गिकः संबंधात्संभूतः संभावनामात्रं न तु तात्त्विकं विचारासहत्वादितीममर्थं पंना सूचयति अयं दुष्ट इति निसर्गेण निश्चयेन सिंधुविषयस्याधिपतिरहमित्यभिमानबलात्कृतः पूर्णः स्वभावांतरं राजसं प्राप्त इति वा अतएवोत्थितकोपः ५ अहो कष्टमित्याद्याक्षेपाः विपरीतार्थावेदि

यदा हि द्विजवरस्य युगमात्रावलोकानुगतेर्न समा पुरुषगतिस्तदा विषमगतां स्वशिबिकायां रहूगण उपधार्य पुरुषानधिवहत आह ॥ हे वोढारः साध्वतिक्रमत किमिति विषममूह्यते यानमिति २ अथ त ईश्वरवचः सोपालंभमुपाकर्ण्य तुर्याच्छंकितमनसस्तं विज्ञापयांबभूवुः ३ न वयं नरदेव प्रमत्ता भवन्नियमानुपथाः साध्वेव वहामः अयमधुनैव नियुक्तोपि न द्रुतं व्रजति नानेन सह वोढुमिह वयं पारयाम इति ४ सांसर्गिको दोष एव नूनमेकस्यापि सर्वेषां सांसर्गिणां भवितुमर्हतीति निशम्य कृपणवचो राजा रहूगण उपासितवृद्धोपि निसर्गेण बलात्कृत ईषदुत्थितमन्युरविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसा तमसा वृत्तमतिराह ५ अहो कष्टं भ्रातर्व्यक्तमुरुपरिश्रांतो दीर्घमध्वानमेक एव ऊहिवान्सुचिरं नातिपीवा नातिसंहननांगो जरसा चोपद्रुतो भवान्सखे नो एवापर एते संघट्टिनः ६ इति बहुविप्रलब्धोप्यविद्यया विरचितद्रव्यगुणकर्माशयस्वचरमकलेवरेऽवस्तुनि संस्थानविशेषेऽहंममेत्यनध्यारोपितमिथ्याप्रत्ययो ब्रह्मभूतस्तूष्णीं शिबिकां पुनरुवाह ७ अथ पुनः स्वशिबिकायां विषमगतायां प्रकुपित उवाच रहूगणः किमिदमरे त्वं जीवन्मृतो मां कदर्थीकृत्य भर्तृशासनमतिचरसि ॥ प्रमत्तस्य ते करोमि चिकित्सां दंडपाणिरिव जनताया यथा प्रकृतिं स्वां भजिष्यसीति ८

तव्याः भ्रातः सखे इत्याक्षेपे संबोधनं ज्ञातव्यं लोके भ्रात्रादिभिः सह विरोधो नान्यैरित्यत एतादृशैः शब्दैः संबोधनं कृतमित्यर्थः. संघट्टिनः सहवाहकाः ६ इत्येवं विप्रलब्धोपि भर्त्सितोपि तूष्णीं भूत्वा शिबिकामुवाहेत्यन्वयः तूष्णींभावे कारणमाह ब्रह्मेति ब्रह्मभूतः ब्रह्मनिविष्टमना इत्यर्थः अत्रापि कारणमाह चरमेति इतः परं भौतिकं शरीरं अस्य नास्तीति द्योतनाय चरमेति स्वत्वेनाभिमतेऽत्य देहे न अध्यारोपितो मिथ्याप्रत्ययो येन स तथा अनात्मनि कर्तृत्वाभिमानो मिथ्याप्रत्ययः न त्वनिर्वाच्यलक्षणः कस्माच्छरीरस्य हेयत्वमिति तत्राह अवस्तुनीति अवस्तुत्वादनित्यत्वादित्यर्थः तदपि कुत इत्यत्राह संस्थानेति अवयवविन्यासविशेषत्वाद्घटवदित्यर्थः केन विन्यासविशेष इत्यत्राह अविद्ययेति हरीच्छया प्रेरितया प्रकृत्या विहितानां द्रव्याणां पंचभूतानां गुणानां सत्त्वादीनां कर्मणां पुण्यपापलक्षणानामाशयः समूहो यस्मिंस्तत्तथा द्रव्यादीन्याशेरते यस्मिन्निति वा विहितद्रव्यगुणकर्माशयं च स्वचरमकलेवरं चेति विग्रहस्तस्मिन् ७ विचिकित्सया किं फलमत्राह यथेति प्रकृतिं समस्वभावम् ८

एवंराज्ञोपालब्धोब्राह्मणःकिमकरोदत्राह एवमिति अबद्धाभिभाषणेकारणमाह रजसेति फलांतरंचाह तिरस्कृतेति अशेषायेभगवत्प्रियाभागवतास्तत्कालभवमनुष्यास्तेषांनिकेतआश्रयो विप्रजन्मायः सभरतोऽशेषभगवत्प्रियनिकेतःतिरस्कृतोधिकृतोऽशेषभगवत्प्रियनिकेतोयेनसतथातं मनुष्यपदंप्रक्षिप्यकिमितिसमस्यतइतीयंशंका तत्कालस्थितभक्तेषुमानुषेष्वृषभात्मजः वरोपि धिकृतोराज्ञा सुहृदावैष्णवेष्वपीत्यनेनपरिहर्तव्येति सर्वभूतसुहृदोवैष्णवास्तेष्वात्मायस्यसतथा अतएवसुहृदावैष्णवेष्विति तर्हिकिमितिधिकारइत्यतउक्तं योगेश्वरेति योगेश्वराणाचर्यायांशुश्रूषायांव्यवहारे वा नातिव्युत्पन्नमतिनाम्यस्तबुद्धिस्मयमानइवेतीवशब्देोमंदहासस्यस्वरूपभूतत्वंदर्शयति स्मयोनामकश्चनदोषःसविगतोयस्मात्सतथा इदंराजआक्षेपवचनानामुत्तरम् ९ उरुपरिश्रांतोदीर्घम ध्वानमेकऊढिहतवानुसुचिरमितिपदभ्यधायिराज्ञातत्रोत्तरमाह त्वयेति भोवीरानिरूप्यमाणेसतियद्यहंभर्ता यदिचभर्तुर्मेममसभारःस्याद्यदिवाहगंता यादिवागतुर्ममाधिगम्यंविषयाख्यंकिंचित्स्या द्यदिवाध्वामार्गःकश्चित्स्याचर्हि त्वयोदितमिदंसर्वव्यक्तंस्पष्टमविप्रलब्धंसत्यंभवेत् किंतुनाहंभर्तानतरांभारः नाहगतानतरांगंतव्यं नतमामार्गइत्यर्थः स्वस्कंधेशिबिकादंडस्यप्रत्यक्षसिद्धत्वात्कथ मेतद्वचनमित्यतउक्तं व्यक्तमिति भर्तासन्भ्रियमाणोबिभर्ति यउत्रिधातुपृथिवीमुतद्यामित्यादिश्रुतौभरणादेहीरीनियतत्वस्यव्यक्तमुक्तत्वात्तदभिप्रायेणभरतेनोच्यतइत्येतदपिभरणादिकद्वारिरितिचिं तयन्नृपमब्रवीदितिस्मृतिसिद्धं यदुक्तंनातिपीवेतितत्राह पीवेति पंचभूतात्मकेशरीरेपीवेतियःप्रवादःअसौविदांज्ञानिनांपक्षेनशोभते देहस्यपरिणामित्वेनचेतनस्यापरिणामित्वेनसिद्धत्वात् १० नाविल

एवंबह्वबद्धमभिभाषमाणंनरदेवाभिमानिनंरजसातमसानुविद्धेनमदेनातिरस्कृताशेषभगवत्प्रियनिकेतंपंडितमानिनंसभगवान्ब्राह्मणोब्रह्मभूतःसर्वभूतसुहृदात्मायोगेश्वरचर्यायांनातिव्युत्पन्नमतिंस्मयमानइवविगतस्मयइदमाह ९ ॥ ब्राह्मणउवाच ॥ त्वयोदितंव्यक्तमविप्रलब्धंभर्तुःसमेस्याद्यदिवीरभारः॥ गंतुर्यदिस्यादधिगम्यमध्वापीवेतिचासौनविदांप्रवादः १० स्थौल्यंकार्श्यंव्याधयआधयश्चक्षुत्तृड्भयंकलिरिच्छाजराच ॥ निद्राऽरतिर्मन्युरहंमदश्चदेहेन जातस्यहिमेनसंति ११ जीवन्मृतत्वंनियमेनराजन्नाद्यंतवद्यद्विकृतस्यदृष्टम् ॥ स्वस्वामिभावोध्रुवएषयत्रतर्ह्यच्युतेसावितिकत्ययोगः १२ विशेषबुद्धेर्विवरंमनाक्चपश्यामियन्नव्यवहारतोन्यत् ॥ कईश्वरस्तत्रकिमीशितव्यमथापिराजन्करवामकिंते १३

हननांगइत्यादियदुक्तंतत्राह स्थौल्यमिति अत्रहिशब्दएवार्थे स्थौल्यादयोदेहेनजातस्यदेहाभिमानिनोह्येवसंतिनमेसंतिदेहाभिमानाभावात् देहमानीदेहजातोविदेहोवर्जितइतिवचनात् देहाभिमानिन एवस्थौल्यादिकानि नान्यस्येतिबोद्धव्यं अरतिस्तंद्री अहमहंकारः ११ जीवन्मृतोसीत्यस्योत्तरमाह जीवन्मृतत्वमिति आद्यंतवदुत्पत्तिविनाशवद्यत्तस्यविकृतस्यजडस्यानियमेनजीवन्मृतत्वदृष्टंतथा हि जीवनंप्राणयोगेनचेष्टावत्त्वं मृतत्वंप्राणत्यागेनरीतलक्षणसुखराहित्यमेतच्छरीरस्याविनाभूतं प्राणयुक्तेरत्याचजडंजीवन्मृतंस्मृतमितिस्मृतेः नचैवं ममचेतनस्यदेहयोगवियोगलक्षणजन्ममरणे अंतरेणस्वतोविकाराभावेनाद्यंतवत्त्वायोगात् नित्योनित्यानांचेतनश्चेतनानामितिश्रुतेः देहस्यसर्वथानाशादनाशाच्चेतनस्यचेत्यादेश्च अतएवदेहेनजातस्येत्युक्तं ॥ यच्चमांकदर्थीकृत्यभर्तुःशासनमतिच रसीत्युक्तंतत्राकर्णयेतिभावेनाह स्वस्वामीति यत्रयदेषस्वस्वामिभावोध्रुवःसत्यइतित्वयोच्यते तर्ह्यसावच्युतेहरौमुख्यइत्युच्यतां एषसर्वेश्वरइतिश्रुतेः नतुत्वयि तवास्माखेवकत्वात्भृत्यत्वमेवमु ख्यं यदुक्तं स्वामित्वंतुहरेरेवमुख्यमन्यत्रभृत्यतेति ॥ एषराजादंडनाथइतिवचनात् अच्युतेमुख्यत्वंकथमत्राहेतीति ममस्वामीहरिर्नित्यस्सर्वस्यपतिरेवचेतिस्मृतेः संध्योपासनवन्ममस्वामीह रिरितीतिकर्तव्यतालक्षणोयोगउपासनंहरावेवविहितमितियस्मात्तस्मादितिशेषः ध्रुवइतिविशेषणादन्यत्राध्रुवस्यन्यायप्राप्तत्वाच्च १२ एकोरुद्रोनद्वितीयोवतस्थइतिश्रुतेः रुद्रादीनामपिस्वामित्वप्रती तेरितितत्राह विशेषबुद्धेरिति मनागीषदपि विशेषबुद्धेरुद्रादौमुख्यबुद्धेर्विवरमवकाशंस्वामिशब्दप्रवृत्तिनिमित्तंनपश्यामि भरतस्यापरोक्षज्ञानित्वेनकरतलामलकवदशेषशब्दप्रवृत्तिनिमित्तस्यापरो

क्षत्वात् पश्यामीत्युक्तं । तस्मादेतद्दर्शनेनमहानितिसूचितं चशब्देनकर्णताडितवच्छ्रूयमाणस्यकथंनोदनामितितत्राह यद्वाच्यवहारतोन्यदिति व्यवहारतोज्ञरूढिलक्षणाद्यदन्यन्मुख्यंतदितिशेषः अतो देवेषुप्रतीयमानंयत्स्वामित्वंतद्धरिनियतमितिबोद्धव्यं तदुक्तं देवेषुतान्नियत्याचेति अनेनहरिमंतरेणदेवेषुयथातारतम्यंस्वामित्वंमुख्यमितिचज्ञातव्यं तर्हिसिंधुपतिरितिव्यपदेशोममकथमित्यतोवाह विशेषेति सैंधवैरज्ञै स्त्वामुद्दिश्यव्यवहारोनतुमुख्यइत्यर्थः एतदप्युक्तं त्वदादेर्व्यावहारिकमिति । आदिशब्देनभवंतोदेशाधिपतयइतिगृह्यते अस्तुव्यावहारिकमतःकिंतत्राह कईश्वरइति हरौदेवेषु चस्वामित्वमृतेन्यत्रमानुषेषुतस्यव्यत्यासात्कोविशेषः व्यवहारमात्रान्निर्मूलमिति तत्रतस्मिन्पक्षेस्थितेमनुष्येषुकईश्वरः स्वामी ईशितव्यंसमर्थनीयंचकिंनाकिमपीत्यर्थः तदुक्तं मानुषेषुविशेषःकोव्य वहारमृतेवद । व्यत्यासादिति तत्रहरौदेवेषुस्वामित्वेमुख्यतोयथाक्रमंस्थितेन्यत्रकईश्वरइतिवा यथामानुषेषुस्वस्वामिभावस्यव्यत्यासोनतथादेवेष्विति द्योतनायतत्रेति तदुक्त नहिदेवेषुव्यत्यासःस्वा मितांगतइति । एवंविचार्यमाणेन्येभ्योजीवेभ्यस्तवविशेषाभावेपिसंभावनार्थंतवस्वामित्वमंगीकृत्याप्यस्माभिःकिंकर्तव्यंतद्वदेत्यभिप्रेत्याह अथापीति विशेषबुद्धेर्यद्विवरंपश्यामितद्व्यवहारतोन्यत्र कुतः मनागल्पमज्ञविषयत्वादितिवान्वयविशेषः अवशिष्टंपूर्ववत् १३ प्रमत्तस्यतेकरोमिचिकित्सामितियदुक्तंतत्रशृण्वित्याह उन्मत्तेति उन्मत्तादिस्वरूपरिथतिंस्वतंत्रेहरौस्थितवाप्राप्तस्यमेचिकित्सिते नदंडलक्षणेनभवताशिक्षितेनविधितेनतवार्थःकियान्नकोपि तवरोदनादिदर्शनेनममनस्तृप्तिर्भवतीतितत्राह स्तब्धेति स्तब्धश्चासौप्रमत्तश्चेतिस्तब्धप्रमत्तःतस्य पिष्टपेषणवन्निष्फलंचिकित्सितं शिक्षा

उन्मत्तमत्तजडवत्स्वसंस्थांगतस्यमेवीरचिकित्सितेन ॥ अर्थःकियान्भवताशिक्षितेनस्तब्धप्रमत्तस्यचपिष्टपेषः १४ श्रीशुकउवाच ॥ एतावदनुवादपरिभाषयाप्रत्युदीर्यमुनिवरउपशमशीलउपरतानात्म्यनिमित्तमुपभोगेनकर्मारब्धंव्यपनयन्राजयानमपितथोवाह १५ सचापिपांडवेयसिंधुसौवीरपतिस्तत्त्वजिज्ञासायांसम्यक्श्रद्धयाधिकृताधिकारः तद्धृदयग्रंथिविमोचनंद्विजवचआश्रुत्यबहुयोगग्रंथमतंत्वरयावरुह्यशिरसापादमूलमुपगतःक्षमापयन्विगतनरदेवस्मयउवाचरहूगणः १६ कस्त्वंनिगूढश्चरसिद्विजानांबिभर्षिसूत्रंकतमोवधूतः ॥ कस्यासिकुत्रत्यइहापिकस्मात्क्षेमायनश्चेदसिनोतशुक्लः १७ नाहंविशंकेसुरराजवज्रान्नत्र्यक्षशूलान्नयमस्यदंडात् ॥ नाग्न्यर्कसोमानिलवित्तपास्त्राच्छंकेभृशंब्रह्मकुलावमानात् १८

सहस्रेणापिनिर्मुक्तदेहाभिमानस्यममव्यथानुभवाभावेनरोदनाद्यनुदयादिति द्विगुणितकोपवह्निनादग्धदेहसंतापमंतरेणान्यत्प्रयोजनंनास्तीतिभावः १४ ब्राह्मणःपुनःकिमकार्षीदित्राह एतावदिति तथा पूर्ववदुवाहेति अनुवादपरिभाषया उक्तस्यपुनर्वचनमनुवादपरिभाषातया अनूद्यानूद्येत्यर्थः अनात्मादेहस्तत्संबंध्यनात्म्यदेहांतरग्रहणंतस्यनिमित्तंकारणंतदुपरतंनिवृत्तंयस्यतत्तथा तादृशमारब्धंफलदानायोन्मुखंकर्मोपभोगेनव्यपनयन्क्षपयन्यथादेहांतरोत्पत्तयेनस्यात्तथाभुंजानइत्यर्थः १५ सरहूगणस्तंपरित्यज्यान्येनवाहयित्वाविवक्षितगम्यगतःकिंनेत्याह सचेति अपिपदेनस्वोक्तस्यगर्हितत्वं सूचयति अधिकृताधिकारः उपदिष्टज्ञानग्रहणयोग्यतावान् बहुयोगग्रंथमतं अनेकयोगशास्त्रसिद्धं हृदयग्रंथिरहंकारबंधस्तंमोचयतीतिहृदयग्रंथिमोचनंतत् १६ क किंजातिविशिष्टः नदृश्यतेकिं सत्यमित्याह द्विजानामिति सूत्रंलक्षणंयज्ञोपवीतमात्रंमलिनंबहुग्रंथिवरंनदृश्यते अतःसंशयः किंचैवंविधाबहवोयोगींद्राभवंतितेषामध्येत्वंकतमोवधूतः योगींद्रः कस्ययोगींद्रस्यवशेजातोसि कुत्रत्यःकस्मिन्देशेविद्यमानः इहास्मिन्देशेकस्मात्कारणादभूः चेद्यदिनोस्माकंक्षेमायासितर्हिशुक्लःकपिलःवासुदेवःउतकिं सनभवति तल्लक्षणसामर्थ्याभावादित्यर्थः १७ ननुयोवाकोवास्तु तवतावच्छिबिकावहनमलमितिचेत्तत्राह नाहमिति ब्रह्मकुलस्यब्राह्मणकुलस्यावमानादपराधात्शंकेतस्माद्ब्राह्मणश्चेत्क्षमापयितुमिच्छयापृच्छामीत्यर्थः १८

यतएवंशंकितत्तस्माद्यथाजडस्यसंगबुद्धिर्नास्तितथातवापीत्यसंगः निगूढमप्रकाशितंविशिष्टंज्ञानवीर्यंयस्यसतथा अनएवापारः अगाधः मादृशानामितिशेषः योगेअध्यात्मविषयेग्रथितानिसंबद्धा निवचनानिमनसाविभेत्तुंविवेक्तुंनोस्माकंनक्षमंतेनशक्यानीत्यन्वयः मनसाविभेत्तुंनशक्नुमः किंपुनर्वचनेनेत्यतोमनसेति १९ अहमपिकार्यांतरमुद्दिश्यजनपदांतरंगमिष्यामीतिशंकामाभूत्किंतुज्ञाना र्थित्वेनकपिलवासुदेवं अतोज्ञानाधिकारित्वेनममतत्त्वमुपदेष्टुंयोग्यतास्तीत्यभिप्रेत्यविज्ञापयति अहंचेति अहमपीहसतारोक्षिश्यमानानांजनानांयदार्तिमवगच्छतिजानात्यनेनतत्त्वमितिज्ञानलक्षणमरणं शरणंतत्किंप्रष्टुंप्रवृत्तइत्यन्वयः कपिलःकिमयंश्रोत्रियउतप्रवक्तेतितत्राह गुरुमिति श्रोतुरपेक्षिताशेषश्रोतव्यस्योपदेष्टारं केषांमुनीनां । किमेतेपाषाणवन्मौनशीलाश्चेन्नप्रवचनेनप्रयोजनमेतादृशाशिष्याण्‌ संप्रश्नव्याख्यासर्वस्यसुशकाचेतितत्राह तत्त्वेति तत्तत्पदार्थतत्त्वविच्चमाटविकानामप्यस्तीत्यतआत्मेति नचायंकपिलःसांख्यशास्त्रप्रणेतेत्याह हरिमिति नचायंशब्दःसावकाशइत्याह साक्षादिति नचा स्यान्यत्रव्यापृतत्वेज्ञानोपदेशानवसरइत्याह ज्ञानेति ज्ञानकामधेनुप्रवृत्तयेवतीर्णं कलकामधेनावितिधातुःकलविस्तारइतिवा ज्ञानव्याप्यइतिवा वाइत्यनेनममकार्यांतरेव्यापारोनास्तीतिदर्शयति २० त तःकिमक्तइतितत्राह सवाइति भवान्सवैकपिलोभगवानेव लोकनिरीक्षणार्थंसाध्वसाधुजनपरीक्षणार्थंअव्यक्तलिंगोभूत्वाविचरत्यपिस्वित्किमित्यन्वयः मादृशानांसंशयःश्लाघ्यइत्याशयेनाह योगेश्वराणा मिति विचक्षीतजानीयात् अंधबुद्धित्वेकारणंगृहानुबद्धइति २१ अधुनायत्त्वयोक्तंभर्तुर्मम्भारोनास्तिगंतुःकर्मतःश्रमोनास्तिइतितत्राह दृष्टइति यथात्मनोममभर्तुःकंठमुग्नताहेतुर्भारो गंतुर्गमनलक्षणात्कर्मतः

तद्ब्रूह्यसंगोजडवन्निगूढविज्ञानवीर्योविचरस्यपारः ॥ वचांसियोगग्रथितानिसाधोननःक्षमंतेमनसाविभेत्तुम् १९ अहंचयोगेश्वरमात्मतत्त्वविदांमुनीनां कपिलंगुरुंवै ॥ प्रष्टुंप्रवृत्तःकिमिहारणंयत्साक्षाद्धरिंज्ञानकलावतीर्णम् २० सवैभवाँल्लोकनिरीक्षणार्थमव्यक्तलिंगोविचरत्यपिस्वित् ॥ योगेश्वराणांगतिमं धबुद्धिःकथंविचक्षीतगृहानुबद्धः २१ दृष्टःश्रमःकर्मतआत्मनोवैभर्तुर्गंतुर्भवतश्चाप्यमन्ये ॥ यथाश्रुतोदानयनादिभावाःसमूलदृष्टोव्यवहारमार्गः २२ स्था ल्यग्नितापात्पयसोहितापस्तत्तापतस्तंडुलगर्भरंधिः ॥ देहेंद्रियास्वाशयसन्निकर्षात्तत्संसृतिःपुरुषस्यानुरोधात् २३

श्रमःपादवेदनालक्षणोदृष्टस्तथाभर्तुर्गंतुर्भवतोप्यवहनगमनादिक्रियादर्शनाच्छ्रमोयुक्तइतिमन्ये वैसर्वानुभवसिद्धइति नकेवलंदृष्टिःश्रुतिरप्यस्तीत्याह श्रुतेति श्रुताउदानयनादिभावाइतिप्रयोगश्चुत्सृज्यएक वचनेनप्रयोगस्तुछांदसः उदानयनादिभावाजलाहरणसाधनघटादिपदार्थाःवोढ्णांश्रमजनकाःश्रुताः इतीदमपिश्रमसद्भावेप्रमाणमित्यर्थः भावोलीलाक्रियाचेष्टाइत्यभिधानाज्जलानयनादिक्रियाःश्रमहे तवइतिवा किमतइतितत्राह समूलइति यतोवहनगमनादिक्रियाःश्रमजनकत्वेनसत्याःतस्माद्धानोपादानादिव्यवहारमार्गःसमूलःसप्रमाणः दृष्टःसाक्षिसिद्धइत्यर्थः केचिदुदानयनादिभावेनिपठंति तत्रश्रुतेतिपदच्छेदः क्रियावाचिनोभावशब्दस्यटापिकृतेस्त्रीलिंगत्वंसाधु अनेनजीवन्मृतत्वंनियमेनराजन्नित्यत्रपदेहस्येतिउक्तंतत्प्रत्युक्तं शतंकुंभंअसिंचंतसुरायाइतिश्रुतेःक्रियायाश्चेतननियतत्वात् २२ स्थौल्यादयोनमेसंतीतियदवादितत्रोच्यते स्थालीति स्थाल्याःभांडस्याग्निनातापात्भांडस्थपयसांजलस्यतापःस्याचस्यपयसस्तापात्तंडुलगर्भस्यतंडुलांतःसारस्यरंधिःपाकःसंयोगलक्षणसंबंधप रंपरयाऽन्यारुयकार्योत्पत्तिर्यथातथा देहश्चेंद्रियाणिचासवश्चाशयोंतःकरणंतेतथातेषांसन्निकर्षात्संयोगलक्षणसंबंधात्यास्थौल्यादिलक्षणासंसृतिःसापुरुषस्यभवतीत्यन्वयः कुतः अनुरोधादभिमानात् नचाभिमानोनास्तीतिवाच्यं देहसद्भावेभिमानस्यावश्यंभावित्वादग्निसंतप्तायोवत् ननुहेयाहेययोःस्वरूपेसामान्यतोज्ञातेऽत्रप्रश्नपूर्वकविशेषतोजिज्ञासासंजायटीतीतितदभावेरतंभसंबोधनवद्व्यर्थःस्या दित्यतोवा हेयस्वरूपंनिरूपयति स्थालीति अर्थस्तूक्तएव आत्मासंसारी संसारातःपातित्वादंतःकरणवत्सचसत्योर्थक्रियाकारित्वादात्मवदित्याद्यूहनीयम् २३

स्तब्धप्रमत्तस्यचपिष्टपेषइतियदुक्तं तत्राह शास्तेति योन्नृपतिर्दुष्टप्रजानांशास्ताशिष्टप्रजानां गोप्ता देवब्राह्मणमुनीनांकिंकरश्चस्वविहितंनित्यनैमित्तिकंकर्माच्युतस्याराधनंस्वधर्मंपदीहमानःकुर्वाणश्चभ
वति तर्हिसराजापिष्टंनापिनष्टिनिष्फलव्यापारवान्नभवति किंतुसफलव्यापारवानेव एतत्कुतोवगम्यतइतितत्राह विजहातीति ज्ञानमंतरेणान्येननहन्यंतइत्यघानिदुःखान्याधिव्याधिनिमित्तानितेषामो
घोयस्मिन्ससंसारस्तथातंविजहाति मुंचति मुक्तोभवतीत्यर्थः एवंसंसारस्वरूपंनिरूप्य राज्ञःस्वधर्मंनिरूपयतीत्यतोवाह शास्तेति २४ यतएवममज्ञानशबलनशुद्धंफलादर्शनादतः संसारनिर्मूलन
करंज्ञानमुपदिशेत्याह तन्मइति नराणांदेवोहमित्यभिमानानिमित्तमदेनतुच्छीकृतसत्तमस्याधिकृतसज्जनोत्तमस्यमेयथाहशासदवध्यानंसज्जनावज्ञाननिमित्तमंहःपापंतरेयंतीर्णोभवामि तामैत्रीमित्रंस
र्वेस्मादिष्टतमोहरिस्तद्विषयांदृशंकृषीष्ट अत्रकरणंनामप्रकाशनंविवक्षितंनत्वविद्यमानस्यनिर्माणं प्रकाशयेत्यर्थः मुक्तौमुख्यंसाधनंब्रह्मज्ञानमेवान्यत्सर्वंतत्साधनमितिद्योतनायवाकृषीष्टेत्युक्तं आर्त
बंधोइत्यनेनसंसारांधकूपेपतितानांजनानांदीपिकालक्षणदृष्टिप्रदानेनसमुद्धरणबंधुभूतस्त्वमेवत्वादृशोन्योनास्तीतिस्वाभिप्रायसिद्ध्येप्रयुक्तमितिज्ञातव्यं हिगताविति धातोर्गतेर्ज्ञानस्यप्रतिबंधकत्वेनपा
पार्थेंऽहइतिनिपातनात्साधुः २५ शिबिकावाहनलक्षणयास्मदवज्ञयातवकोपादिविकारोनास्तीत्याह नविक्रियेति विश्वसुहृत्त्वविश्वस्यविश्वात्मनासर्वप्रकारेणवासुहृत् श्रीनारायणः सएवसखायस्य
सतथा तस्यतेतवविक्रियासंतापलक्षणोमनसिविकारःकोपोवानास्ति केनहेतुनेत्यतउक्तं साम्येनेति मानावमानयोः समत्वकारणेन मानाऽपमानयोस्तुल्यइतिस्मृतेः तत्रापिकिंकारणमत्राह वी

शास्ताधिगोप्तानृपतिःप्रजानांयःकिंकरोवैनपिनष्टिपिष्टम् ॥ स्वधर्ममाराधनमच्युतस्ययदीहमानोविजहात्यघौघम् २४ तन्मेभवान्नरदेवाभिमानमदेन तुच्छीकृतसत्तमस्य ॥ कृषीष्टमैत्रीदृशमार्तबंधोयथातरेयंसदवध्यानमंहः २५ नविक्रियाविश्वसुहृत्सखस्यसाम्येनवीताभिमतेस्तवापि ॥ महद्विमानात्स्वकृताद्धिमादृङ्नक्ष्यत्यदूरादपिशूलपाणिः २६ इतिश्रीभागवतेपंचमस्कंधेदशमोध्यायः १० ॥ ब्राह्मणउवाच ॥ अकोविदःकोविदवादवादान्वदस्यथो नातिविदांवरिष्ठः ॥ नसूरयोहिव्यवहारमेनंतत्वावमर्शेनसहामनंति १

ताभिमतेरितिवीताविगताभिमतिरभिमानोयस्यसतथातस्य सामान्यज्ञानिनोपिमनसिविकारोनस्या
द्विशिष्टज्ञानिनस्तस्यतवकिंवक्तव्यमित्यपिशब्दार्थः वीताभिमानत्वेनतवमनसिविकाराभावोपिसंभावितइतिवा ममतुदेहाभिमानोदुस्त्यजोपततोमहदवज्ञानेपापेशात्वतःकर्तव्यआत्मदाहोनकृतइत्याशये
नाह महद्विमानादिति मादृक्पुरुषःस्वकृतान्महतोभवादृशस्यविमानादवज्ञानाददूरात्तदानीमेवात्मानंधक्ष्यतिदहति नकेवलंमादृगेवात्मानंदहति किंतुमत्तोभ्यधिकःशूलपाणिःसदाशिवोपिस्वतोमहद
वज्ञानादात्मानंदहति ब्रह्महत्यासहस्रस्यपापंशाम्येत्कथंचन नपुनस्त्वदवज्ञानेकल्पकोटिशतैरपि स्वतोमहदवज्ञानाद्रुद्रोप्यात्मानमादहेदितिवाक्यद्वयंहिशब्देनोपात्तमितिज्ञातव्यं अतोभवतंप्रार्थयइत्यपि
शब्दार्थइति २६ इतिश्रीभागवतेविजयध्वजकृतटीकायांपंचमस्कंधेदशमोऽध्यायः १० अस्मिन्नध्यायेहेयत्वेनप्रथमतोवक्तव्यत्वेनससारस्वरूपंनिरूप्यतन्निवर्तकसाधनानिरूपयाति प्रथमतस्तदुक्तमाक्षि
पन्निवाह अकोविदइति राजंस्त्वमकोविदोऽपंडितःकथं कोविदवादान्वदसि यत्कोविदानांपंडितानांवादवद्वचनवदवभासमानान्वादान्वचनविशेषान्ब्रूषइतियस्माच्चस्मात्स्वधर्ममाराधनमच्युतस्ये
त्यादिवदतोममापांडित्यंकथमत्राह नातिविदामिति भिक्षुकश्रुतगलोपरिवक्तृत्ववद्वक्तृत्वान्नातिविदांदृष्टकरतलामलकवत्तत्त्वज्ञानामध्येगणनीयत्वेनवरिष्ठःनहिहेतुवद्भासमानान्प्रपंचमिथ्यात्वेप्रयुक्ता
न्दृश्यत्वादिहेतून्प्रयुंजानआनुमानिकेषुकोविदोभवतिकुतस्तरांवरिष्ठः । कुतोवचसामाभासत्वमत्राह नसूरयइति सूरयःसर्वज्ञाःशब्दतत्वज्ञाःएनंव्यवहारंभर्तुर्गंतुर्भवतश्चानुमन्येशास्ताधिगोप्तानृपतिः

प्रज्ञानां स्थाल्यग्निता पात्पयसोभितापस्तत्तापतस्तंडुलगर्भगंधिरित्यादिलक्षणतत्त्वावमर्शनयथास्थितवस्तुस्वरूपविचारेण सहनामनंति देहेनजातस्याहिमेनसंति विशेषत्रुद्धेविवरंमनाक्पश्यामीत्यादिग्रं
थस्यार्थापरिज्ञानाद्विजृंभितमिति एतद्धिशब्देनाह अतःप्रेक्षावद्भिःकटाक्षेणाप्यनभिवीक्षितत्वादुपेक्षणीयस्त्वयंपक्षइति १ ननुमाभूत्सूरिभिरामननवेदैःकिंनस्यादितितत्राह तथेति यथा सूरिसिद्धांतेत्वद्व्य
वहारोनचकास्ति सदोषत्वाज्जलदच्छन्नद्युमणिवदल्पबुद्धीनावेदानांवादेषुमुखतःप्रतीयमानार्थप्रतिपादकलक्षणेषुवाक्येषुतत्त्ववादः परब्रह्मस्वरूपविषयज्ञानसिद्धांतोनानुचकास्तिन प्रकाशतेकथंनचका
स्तीत्यतउक्तं शुद्धइति स्वर्गकामोयजेतेत्यादिकर्मप्रतिपादकानांब्रह्मविदाप्नोतिपरमितिब्रह्मज्ञानप्रतिपादकानांचवाक्यानांयथैकवाक्यत्वंतथानप्रकाशतइत्यर्थः कस्मात्तथानप्रकाशनमत्राह उरुगार्हमेधेति
उरुविस्तीर्णगार्हमेधंगृहस्थसंबंधिवितानंयज्ञकर्मतत्प्रतिपादकयाविचयाउरुधाविजृंभितेषुसम्यगुद्बोधकेषुयतोल्पबुद्धीनांनप्रतीयतेततोमहाबुद्धीनांप्रकाशतइत्यतोहीति नवेदेष्वल्पबुद्धीनांब्रह्मतत्त्वंस
मीक्ष्यते महाबुद्धिस्तुवेदेषुपश्येद्ब्रह्मैवकेवलमितिवचनात् अल्पबुद्धीनांबाहुल्याभिप्रायेण प्रायेणेति अयोग्यानामयमेवार्थइत्यस्मिन्नर्थेएवशब्दः वादोविषयवक्तृत्वंमुखतोवचनस्मृतंइत्यभिधानं कर्मपरा
णांकर्मैवनतत्रविभागइतरेषामितरएवशुद्धःकिंनस्यादितितेनेत्याह साध्विति एकवाक्यत्वकरणमेवसाधुनान्यदित्यर्थः २ पुरुषार्थबोधकत्वेनप्रवृत्तस्यवेदस्यसर्वस्यपुरुषार्थित्वेनसर्वसाधारणस्यकेषांचित्त
त्वप्रकाशत्वंकेषांचिन्नेतिविशेषेणघटतेवैषम्यादिदोषापत्तेरित्याशंक्यपुरुषदोषादिदमित्याह नतस्येति वरीयसीःवरीयस्योपौरुषेयत्वेनप्रशस्तावेदांतगताअपिवाचःतस्यपुरुषस्य साक्षात्तत्त्वग्रहणाय

**तथैवराजन्नुरुगार्हमेधवितानविद्योरुविजृंभितेषु ॥ नवेदवादेषुहितत्त्ववादःप्रायेणशुद्धोनुचकास्तिसाधु २ नतस्यतत्त्वग्रहणायसाक्षाद्वरीयसीरपिवाचः समासन् ॥ स्वप्नेनिरुक्त्यागृहमेधसौख्यंनयस्यहेयानुमितंस्वयंस्यात् ३ यावन्मनोरजसापूरुषस्यसत्त्वेनवातमसावानुरुद्धम् ॥ चेतोभिराकूतिभिरातनोति निरंकुशंकुशलंचेतरंवा ४ सवासनात्माविषयोपरक्तोगुणप्रवाहोविकृतःषोडशात्मा ॥ चित्रंपृथङ्नामभीरूपभेदमंतर्बहिष्ठंस्वपुरैस्तनोति ५ दुःखंसुखंव्यतिमिश्रंचतीव्रंकालोपपन्नंफलमाव्यनक्ति ॥ आलिंग्यमायारचितांतरात्मास्वदेहिनंसंसृतिचक्रकूटम् ६**

पुरुषार्थोपयोगिब्रह्मज्ञानाय नसमासन्नसम्यगभवन्नित्यन्वयः तच्छब्देनोक्तंयच्छब्देनाविशिनष्टि स्वप्नइति यस्यपुरुषस्यगृहमेधसौख्यंस्वप्नेनिरुक्त्यारवप्नदृष्टांतेनस्वयमेवस्वतएवहेयत्वेनानुमितंनस्यादि
त्यन्वयः स्वप्नसुखवज्जाग्रत्सुखंहेयमितिलिंगज्ञानंनस्यादित्यर्थः अनेनविषयरागएववेदांतवाक्योक्ततत्त्वज्ञानानुदयेकारणंनान्यदित्युक्तभवति ३ ननु हेयाननुमितत्वेकिंकारणमित्यतोरहूगणस्याकोविदत्व
ख्यापनायतान्निरूपितादन्यथासंसारस्वरूपंनिरूपयति यावदिति यावत्पुरुषस्यमनोरजआदिगुणैरनुरुद्धंगुणवशत्वेनस्थितंतावत्पर्यंतंचेतोभिर्बुद्धिवृत्तिभिरतएवाकूतिभिर्विषयसुखेच्छाभिः पूर्वानुभवसंस्का
रैर्वा निरंकुशःशास्त्रविधिमुत्सृज्यवर्तमानोयःपुरुषःकुशलाकुशलयोरेकतरमातनोतीत्यन्वयः ४ कुशलाकुशलकर्मभ्यांकिंफलमापादयतीतितत्राह सवासनात्मेत्यादिश्लोकद्वयेन समायारचितांतरात्माप्रकृ
तिनिमित्तंमनः पृथङ्नामभिःस्वपुरैःस्वस्यजीवस्यसुरनरतिर्यगादिदेहैरूपभेदंसुरनरतिर्यगादिदेहभेदं चित्रंबहुविधंतनोति अंतरात्मानंविशिनष्टि वासनात्मेति नानाकर्मवासनामयः गुणानांप्रवाहोय
स्मिन्सतथा षोडशात्मादशेंद्रियाणिपंचप्राणाःस्वयमेकंमनएवंषोडशभेदेनविकृतः अंतर्बहिष्ठःवासनारूपेणांतःस्थितंविषयरूपेणबहिःस्थितं संसृतिचक्रस्यकूटंराशिर्यस्मिन्सतथातं स्वदेहिनमालिंग्यव
शीकृत्यसुखंदुःखंवाव्यतिमिश्रंसुखमिश्रंदुःखं दुःखमिश्रंसुखंफलंचव्यनक्ति व्यंजयतीत्यन्वयः ५ ६

यावानहंममेत्यभिमानस्ताव।नयंव्यवहारःसंसारःसुखदुःखलक्षणःअभिज्ञाभिवदनादिलक्षणोवाभवति ननुमनसःप्रवर्तकत्वांगीकारेप्रवृत्तेर्भगवत्कर्तृकत्वगतंस्यादितितत्राह क्षेत्रज्ञेति क्षेत्रज्ञःश्रीनारायणः साक्षीप्राणःताभ्यांप्रेरितेनमनसाजीवःसंसारमनुभवतीत्यर्थः क्षेत्रवित्तुहरिःप्राणःसाक्षीताभ्यांपुमान्सरेदितिवचनादुक्तएवार्थः स्थूलसूक्ष्मदेहविषयः । मनएवमनुष्याणांकारणंबंधमोक्षयोरित्यभिप्रेत्योपसंहरति तस्मान्मनइति यतएवंश्रीहरिकटाक्षक्षितमनसासंसारस्तस्माददोमनः परावरस्यपूर्वोत्तरकालेवर्तमानस्य गुणागुणस्यमुख्यकर्तृहरेः प्रवृत्तौगुणभूतस्य स्वत.सत्वादिगुणमुक्तस्यारयजीवस्यसंसृतौ लिंगंहेतुंवदति अयंव्यलीकोनेत्याह सदेति वाइत्यनेनहेतुभूतंप्रमाणंसूचयति ७ एकस्योभयहेतुत्वंकथमत्राह गुणेति गुणानुरक्तंविषयाभिनिविष्टं गुणानांविषयाणासमुदायागुण्यंनिर्गत विषयजाताद्यत्तन्निर्गुण्यंब्रह्मतत्संबंधिनैर्गुण्य केवलोनिर्गुणश्चेतिश्रुतेः सत्वादिगुणरहिततत्संबंधिज्ञानैर्गुण्यंक्षेमायमोक्षायमनोनिमित्तंभवतीत्यर्थः उभयत्रापिदृष्टांतमाह यथेति घृतेनसहवर्तमानांवर्तिमास्थितोग्रसमानःप्रदीपोयथासधूमांस्थितिंशिखालक्षणांभजति धूमसाहित्येनसम्यक्ज्वलतीत्यर्थः अन्यदाघृतवर्त्यभावे स्वरूपंतेजोमात्रलक्षणं निजस्वरूपलाभेनसम्यक्प्रकाशितोभवति घृतवर्तिग्रासाभावेनिर्मषीकस्वप्रकाशलक्षणंस्वरूपंव्रजतीतिवा हिशब्देनलोकदृष्टंप्रमाणयति ८ तथासत्वादिगुणैःपूर्वसंचितैःकर्मभिश्चानुबद्धपृष्टबधनप्राप्तचोरवन्मनोबाहिःपदंविषयंशब्दादिलक्षणंश्रयतेसेवते पुनःपुनरुत्पन्नप्रवृद्धरागादिदोषांधीकृतमिदमेवश्रेयोनान्यदितिनिर्धार्यवर्ततइत्यर्थः अन्यत्रतुच्छीकृतविषयसंपर्कत्वे तत्त्वमनारोपितंब्रह्मस्वरूपंश्रयते निरस्तरागादिदोषत्वेननिर्मलं

**तावानयंव्यवहारःसदाविःक्षेत्रज्ञसाक्ष्योर्भवतिस्थूलसूक्ष्मः ॥ तस्मान्मनोलिंगमदोवदंतिगुणागुणस्यास्यपरावरस्य ७ गुणानुरक्तंव्यसनायजंतोःक्षेमायनैर्गुण्यमथोमनःस्यात् ॥ यथाप्रदीपोघृतवर्तिमाश्नंस्थितोस्थितिंसधूमांभजतिह्यन्यदास्वम् ८ पदंतथागुणकर्मानुबद्धंबहिर्मनःश्रयतेन्यत्रतत्त्वम् ॥ एकादशासन्मनसोऽस्यवृत्तीराकूतयःपंचधियोभिमानाः ९ मात्राणिकर्माणिपुरंचतासांवदंतिहैकादशवीरभूमिम् ॥ गंधाकृतिस्पर्शरसश्रवांसिविसर्गरत्यर्त्यभिजल्पशिल्पाः १०**

नोऽनादिमत्परंब्रह्मेतिस्मृतिबलादिदमेवानावृत्त्यनश्वरंश्रेयोन्यन्नश्वरंदुःखाकरमितिनिश्चित्य तदेकनिष्ठंभूत्वावर्ततइतिभावः अतोविरुद्धधर्माक्रांत्यात्वेकस्यमनसः उभयत्रप्रवृत्तिर्नघटतइतिदोषोनिरस्तोभवत्यनेनेतिसिद्धं श्रोत्रादीद्रियेषुसत्सुमनसएवप्राधान्यंकथमित्याशंक्यतत्तदिंद्रियद्वारातत्तद्विषयेषुमनसःप्रवृत्तेरित्याह एकादशेति अस्यमनसएकादशवृत्तीर्वृत्तयआसन्नित्यन्वयः अयमर्थः श्रोत्रादीनिदशएकंमनःस्वयमित्येकादशेंद्रियाणिइंद्रियद्वारेणबहीरूपादिषुप्रवर्तमानस्यमनसएकादशवृत्तयइत्युच्यते तदुक्तं एकादशेंद्रियद्वारास्युरेकादशवृत्तयइति अत्रकश्चिद्विभागोप्यस्ति एकादशधाविभक्तस्यमनसआकूतयः अहंशब्दंशृणवानीत्यादिविषयानुभवेच्छा पचशब्दादीनांचतावत्त्वान्निश्चयलक्षणरूपातरमास्थितस्यधियोबुद्धयपरपर्यायस्यमनसोभिमानाअहमधुरंशृणोमीत्यादिरूपाश्चपंच तदुक्तं शब्दाद्यास्तदभीमानास्तदिच्छाश्चैवपंचशइति कर्मेंद्रियाणांस्पर्शांतर्भावेनएकत्वेनपृथग्विषयाभावेनपंचपंचसंख्यात्वोपपत्त्याएकादशधापिविभक्तस्यमनसएकादशाकूतयोप्यपेक्षिताइतिदुराग्रहोनिरस्तः स्पर्शांतर्भावतःकर्मस्वानांनैवपृथग्गतिरितिवचनात् ९ तहींद्रियचेष्टानामपिपंचत्वंस्यादित्याशंक्यविषयबाहुल्येनतावत्त्वंनघटतइत्यभिप्रेत्याह मात्राणीति मात्राणिश्रोत्रादिज्ञानेंद्रियविषयाः शब्दादयःकर्माणिवागादिकर्मेंद्रियविषयागमनादिव्यापाराः पुरंशरीरंचेत्यतस्तासामिंद्रियवृत्तीनांभूमिमधिष्ठानमेकादशवदंति हेत्यनेनेंद्रियगणंचभूमिंवदति तदुक्तं एकादशैवचेष्टाःस्युरिंद्रियाणांपृथक्पृथक् गोलकास्तदधिष्ठानंचैकादशनिगद्यतइति हेवीरज्ञानग्रहणेच्छालक्षणाध्यवसायांतगामिन् मात्राणीत्यादिनोक्ताभूमीःपृथक्पृथक्निदर्शयति गंधेति आकृतीरूपआर्तिरुपस्थविषयः शिल्पोहस्तविषयः ॥ १० ॥

एकादशमधिष्ठानंममेतिस्वीकरणंसंकल्पविकल्पलक्षणंस्वीकारयोग्यमिंद्रियगणंचाहुः । पुरितनौशेतइतिश्रुतेः हृदयलक्षणनाड्यधिष्ठानसंभवात्कथमेकादशत्वमित्याशंक्यसंख्यांतरमाह माया मिति मायांनानाधिष्ठानभूतांनाडीमहमित्यभिमंतव्यं मायांनिश्चयज्ञानविषयींवा तदुक्तं एषसंसृतिसंभारोद्वादशैवाथदाभवेदिति एकादशत्वचप्रसंगाद्वक्ति दशकंविषयाणांचममांहमितिचद्वयमितिस वांतर्भावेनद्वयमेववक्ति द्वयमेवममाहचेति मायामहमित्यनेनायमर्थोध्वनितः तथाहि विषयाणादशकं मायामित्येकमहमित्येकमिति द्वादशमित्यर्थः ममेति वृत्तिविशिष्टमतःकरणंमायामितिज्ञातव्यं यद्वा द्वादशसख्याविशिष्टत्वेनोक्तमहमितिवृत्तिविशिष्टमंतःकरणमेकमेवसंसृतिकारणमितिशेषः तदुक्तं संसृतिस्त्वहमेव चेति ११ शृंगग्राहिकयैवाभिव्यक्तिनिमित्तमाह द्रव्येति द्रव्यंदेहादि. स्वभावोजीवस्यानादियोग्यता आशयःपूर्वानुभवसंस्कारः कर्मजन्मांतरकृतंपुण्यपापलक्षणमदृष्टं कालःफलपाचकः एतैरुद्बोधिताः अमीमनसःएकादशविकाराजायतइतिशेष. नकेवलंमनसएका दशैवविकाराःकिंतुमदमध्यमोत्तमविक्षेपभेदेनशतशआदिविकाराःसंतीत्याह सहस्रशइति क्रमभंगस्तुनियमभंगाय ननु देहाद्येवैषांपदिनिमित्तंतर्हिजन्मादिसूत्रोक्तमसकोचेनब्रह्मकारणत्वमनर्थकंस्या दपिचब्रह्मवाएतैःकारणैःकारयतीतिश्रुतिश्चापहस्तितास्यादितितत्राह क्षेत्रज्ञतइति क्षेत्रज्ञतोब्रह्मणोजीवांतर्यामिणोहरेरेतेविकाराःस्युः जीवस्येतिशेषः देहाद्यधिष्ठायजीवांतर्यामीहरिःजीवादृष्ट मपेक्ष्यतद्भोगार्थमुत्पादयत्यतोदेहादे कर्तृत्वोपचारोतोनश्रुतिसूत्रेव्यर्थइतिभावः नन्वन्योन्यापेक्षयामदिराद्रव्यवत्स्वतोवैषामुत्पत्तिःकिनस्यात् किमध्येब्रह्मकल्पनयेति तत्राह नमिथइति १२ नन्वेषांसत्यत्वेकिमानमितितत्राह क्षेत्रज्ञइति भोगयोग्यःकइत्यतउक्तं जीवस्येति उपादानाभावेनेंद्रजालसृष्टिवत्मिथ्याभूताइतिनेत्याह मायारचिताइति माययाप्रकृत्यारचिताः मायातुप्रकृतिं

**एकादशंस्वीकरणंममेतिमायामहंद्वादशमेकमाहुः ११ द्रव्यस्वभावाशयकर्मकालैरेकादशामीमनसोविकाराः॥ सहस्रशःशतशःकोटिशश्चक्षेत्रज्ञतोनामि थोनस्वतःस्युः १२ क्षेत्रज्ञएतामनसोविभूतीर्जीवस्यमायारचिताअनित्याः॥ आविर्हिताःक्वापितिरोहिताश्चशुद्धोविचष्टेह्यविशुद्धकर्तुः १३ क्षेत्रज्ञआत्मा पुरुषःपुराणःसाक्षात्स्वयंज्योतिरजःपरेशः॥ नारायणोभगवान्वासुदेवःस्वमाययात्मन्यवधीयमानः १४**

विद्यादितिवचनात् नित्यत्वेकथंरचितत्वमित्यतउक्तमनित्याइति ,नित्यस्यजीवस्यानित्यानामनुभवःकथमित्यतउक्तमाविर्हिताइति जाग्रत्स्वप्नयोराविर्हिताःक्वापिसुषुप्तौतिरोहिताःविचष्टेपश्यति दर्शनंसाक्षित्वेननत्वनुभवनं अनश्नन्नन्योअभिचाकशीतीतिश्रुतेः अविशुद्धकर्तुरित्यनेनसाक्षिणोहरेर्जीवंव्यावर्तयति १३ शुद्धाशुद्धत्वविशेषणाभ्यांवैलक्षण्येज्ञातेमंदस्यैकमेववस्तुशबलनिर्गु णभेदेनोच्यतइतिशंकास्यादितितत्परिहारायक्षेत्रज्ञंविशिनष्टि क्षेत्रज्ञइति आत्माव्यापी यच्चाप्नोतियदादत्ते महांतंविभुमात्मानमित्यादिश्रुतेः व्याप्तस्यनीरूपत्वेनाकाशवत्प्रतिपत्त्यनुपपत्तिरित्यतः पुरुषइति सहस्रशीर्षापुरुषइतिश्रुतेः पुरिशरीरेनिषण्णोभवतीतिनिरुक्त्यापुरुषश्चेत्तत्परिणामेतत्स्थस्यापिपरिणामप्रसंगइत्यत पुराणइति शाश्वतोयंपुराणइतिश्रुतेः कतिपयदिनस्थायित्वेनापि पुराणशब्दार्थोपपत्तेरित्यतः साक्षादिति जडप्रकृतेरपिसाक्षात्पुराणत्वोपपत्तेरनादित्वादित्यतःस्वयंज्योतिरिति अत्रायंपुरुष.स्वयंज्योतिर्भवतीतिश्रुतेः स्वयंज्योतिषोपिजीववत्जननंकिंनस्यादित्य तोऽजइति अजोनित्यइतिश्रुतेः नन्वयंहिरण्यगर्भःकिंनस्यादित्यतःपरेशइति परोहिरण्यगर्भस्तस्येश. योब्रह्माणंविदधातिपूर्वमितिश्रुते ब्रह्मणोधिपतिरितिश्रुते हिरण्यगर्भेशोपिपशुपतिःकिन स्यादित्यतोनारायणइति नरसमुदायोनारःतस्याश्रयइति कस्यचिद्ग्रामाधिपतेरपिनारायणत्वंस्यादित्यतोभगवानिति उत्पत्तिंप्रलयंचैवभूतानामागतिंगतिं वेत्तिविद्यामविद्यांचसवाच्योभगवानिति स्मृतेः ऋषिस्त्रिकालदर्शीस्याच्चस्माद्वेषेरपिभगवच्छब्दवाच्यत्वोपपत्तेरित्यतोवासुदेवइति अत्रव्यावृत्तिःपौराणिकरीत्योक्ता नतुन्यायशास्त्रोक्तिमवलंब्येतिनोपहासविषयोयमितिज्ञातव्यं नन्वेवलक्षणकः

१ ममैतेअहंकर्तेत्यभिमानद्वयं ।

क्षेत्रज्ञश्चेत्किमितिजनैर्नदृश्यतइत्यतःस्वमाययेति स्वमाययास्वेच्छयात्मन्नात्मनिस्वस्मिन्नेवव्यवधीयमानःतिरोहितत्वेनस्थितःस्वात्माधारःस्वेच्छयैवजीवदृष्टेस्तिरोहितः क्षेत्रज्ञेत्युच्यतेविष्णुर्जीवस्थः पुरुषोत्तमइति चअतोनिर्वाच्याविद्ययाच्छाद्यमानोनस्यादित्यर्थः तंदुर्दर्शंगूढमनुप्रविष्टंगुहाहितंगह्वरेष्ठंपुराणमितिश्रुतेश्च १४ ननु क्षेत्रज्ञोमनसोविभूतीःपश्यतीत्युक्तंतत्रदर्शनंबहिःस्थित्वोतांतःस्थित्वा नाद्यः बहिःस्थस्यांतर्दर्शनायोगात् नद्वितीयः असंगोह्ययंपुरुषइतिश्रुतेरसंगस्यदेहांतःप्रवेशायोगात्तद्योग्यसुखदुःखभोगप्राप्तेश्चेत्याशंक्याह यथानिलइति यथाऽनिलआत्मस्वरूपेणप्राणस्वरूपेणस्थावरजंगमानामंतर्निविष्टः स्थावरजंगमानामीष्टेचेष्टालक्षणमीशनंकरोति अधीगर्थदयेशांकर्मणीतिद्वितीयार्थेषष्ठी नह्येतावतावायोःसुखादिभोग.श्रुतचरः एवंक्षेत्रज्ञनामावासुदेवोभगवानिदंजगदात्मस्वरूपेणांतर्यामिरूपेणांतःप्रविष्टःएतामनोविभूतीःपश्यतीतिपूर्वेणान्वयः सर्वत्रोषित्वाक्रीडतइतिवासुदेवइतिवासुदेवपदप्रयोगेनदुर्भगशरीरयोग्यदुःखभोगाभावोजीवांतस्थत्वेनक्षेत्रज्ञशब्दार्थोपिदर्शितइतिज्ञायते ननिलःसंगोयस्यासावनिलइत्यतोऽसंगस्याप्यंतःप्रवेशोयुज्यतइति १५ एवंसंसारबंधस्यश्रीनारायणसाक्षिसिद्धत्वेनसत्यत्वंप्रसाध्याधुनाश्रीहरिकटाक्षानुगृहीतरवापरोक्षज्ञानमंतरेणतन्निवृत्त्यनुपपत्तेस्तन्निवर्तकसाधनमाह नयावदिति तनुभृज्जीवोयावद्यावतंकालमहंममेतिमनोनिगूढामेतासर्वसाक्षिसिद्धामायांभ्रांतिवयुनोदयेनशास्त्रश्रवणजनितज्ञानोदयेनविधूयभ्रांतिरेषेतिनिश्चित्यार्थतत्त्वंसकलवेदांतविषयीभूतभगवत्स्वरूपंनवेद तावत्पर्यंतमिहसंसारेपूर्वोक्तप्रकारेणभ्रमतिपुनःपुनःजननमरणवृत्त्यावर्ततेइत्यन्वयः कीदृशस्येदंघटतइत्यतउक्तं विमुक्तेति फलसंकल्परहितः अत्रापिकिंकारणमित्यतउक्तं जितेति जिताःषडिंद्रियशत्रवोयेनसतथा पुरुषार्थविरुद्धचेष्टाहेतुत्वादिंद्रियाणांसपत्नत्वमन्यथासुहृत्त्वमितिभावः १६ ननुभ्रांतीनामनेकत्वे

**यथानिलःस्थावरजंगमानामात्मस्वरूपेणनिविष्टईष्टे ॥ एवंपरोभगवान्वासुदेवःक्षेत्रज्ञआत्मेदमनुप्रविष्टः १५ नयावदेतांतनुभृन्नरेंद्रविधूयमायांवयुनोदयेन ॥ विमुक्तसंगोजितषट्सपत्नोवेदार्थतत्त्वंभ्रमतीहतावत् १६ नयावदेतन्मनआत्मलिंगंसंसारतापावपनंजनस्य ॥ यच्छोकमोहामयरागलोभवैरानुबंधंममतांविधत्ते १७ भ्रातृव्यमेनंत्वमदभ्रवीर्यमुपेक्षयाप्येधितमप्रमत्तः ॥ गुरोर्हरेश्चरणोपासनास्त्रोजहिव्यलीकंस्वयमात्ममोहम् १८**

नमस्त्वेकंतन्निवर्तनानुपपत्तेरतःकउपायइतिसुहृद्भावेनपृच्छंतमाह नयावदित्यादिश्लोकद्वयेन यावंतंकालंजनस्ययदेतन्मनोममतांविधत्ते ममेदमहमित्यभिमानमुत्पाद्यस्वामिनंसंसारयतीत्यर्थः तावंतंकालंननिवर्ततइतिशेषः कीदृशमात्मालिंगमात्मनोयोग्यताज्ञापकं संसारतापउप्यतेनेनेतिसंसारतापावपनं कीदृशंतापवपतीत्यतउक्तं शोकेति शोकादीनामनुबंधोयेनतत्तथा शोकादिजनकत्वेनतापावपनमित्यर्थः १७ हेराजंस्त्वमेनमात्मनोमनसःउत्पन्नंमोहंविपरीतज्ञानमतएवभ्रातृव्यंशत्रुंजहिनाशयेत्यन्वयः अल्पत्वेनस्वयमेवविरमतीत्यतउक्तमदभ्रेति अदभ्रंमहद्वीर्यंयस्यतत्तथा अदभ्रवीर्यत्वेहेतुमाह उपेक्षयेति अपिगर्हितेनपापेनैधितंवर्द्धितं शत्रुहननमस्त्रेणभाव्यंकिमत्रास्त्रमित्यतउक्तं गुरोरित्यादि उपासनमेवास्त्रंयस्यसतथा प्रमादादवाप्तस्यहननेअप्रमादएवप्रथमसाधनमित्यभिप्रायेणोक्तं अप्रमत्तइति गुर्वादिचरणसेवादावंतरंगसाधनमनलीकत्वमित्यतउक्तं व्यलीकमिति क्रियाविशेषणमेतत् आत्मनोमोहविशेषणंवा विविधवस्तुविषयं अनेनानेकाऽन्यथाज्ञानानीतिसूचितपरकीयंचेद्धु स्वसाधनंहनननमतउक्तंस्वयमिति स्वकीयमित्यर्थः अत्रेदमाकूतं द्विविधंमन.चिदचिद्भेदेन तत्रचिन्मनस्तुस्वरूपमभिन्नंमुक्तावानंदानुभवसाधनंतन्नाशेस्वरूपनाशएवस्यात्तथाचाविनाशीवाअरेयमात्मानुच्छित्तिधर्मेतिव्याकोप स्यादितरन्मनआदिमंप्रलयेलिंगशरीरवत्सूक्ष्मंयावन्मुक्तिः तदीयतयास्थितंसत्सृष्टावुपचितंस्थूलशरीरवर्तिनश्चेतनस्यममेदमहमित्यभिमानमुत्पाद्यसंसारापादनपटुस्वामिनाश्चिदानंदलक्षणस्यदुःखापादकत्वेनवैरिमनोजहिहन तस्यहनेनेनतन्निमित्ताभिमानलक्षणमोहनाशेनव्यलीकंविगताचिन्मनःसंसर्गं स्वयंस्वरूपभूतंसाचिन्मनःस्वयमितिद्विरावर्तनीय सुपूजितामिष्टमदैवंश्रीनारायणाख्यंजहिगमयतद्विषयंकुरु अत्रार्थद्वयाभिप्रायेणहनहिंसागत्योरितिधातुःप्रयुक्तइतिज्ञायते अनेनाहमित्यभिमानःसंसारहेतुः तन्मूलाचिन्मनोनाशेनतदभावेनतदभावइतिपरिहारःसूचितइति तदुक्तं अभिमानादेवसंसारोन्यथानेतिपरिहारइति १८

इतिश्रीभागवतेविजयध्वजकृतटीकायांपंचमेएकादशोध्यायः ॥ ११ ॥ ७ ॥ ॥ जन्माद्यस्ययतोन्वयादित्यत्रकारणत्वंहरेरुक्तंतदधुनाहरेरेवनान्यस्येतिसयुक्तिकमस्मिन्नध्यायेनिरूप्यते तत्रादौब्रा ह्मणस्तुतिव्याजेनतदंतर्यामिणंस्तौति नमइति लोकानुग्रहलक्षणकारणाद्विग्रहोयस्यसतथातस्मै अज्ञानांधस्यलोकस्यज्ञानांजनदानायदेहंधृतवतइत्यर्थः स्वरूपापरोक्षज्ञानदीपेनतुच्छीकृतोधि कृतोविग्रहःपांचभौतिकोदेहोयस्यसतथातस्मै किमर्थंतर्हिस्वसामर्थ्यंनप्रकाश्यतइतितत्राह अवधूतेति अवधूतश्चासौद्विजबंधुर्ब्राह्मणाभासः तस्यलक्षणेननिगूढःसंवृतोनित्यानुभवः स्वरूपसा मर्थ्यंयस्यसतथातस्मै अवधूतद्विजाएवबंधवोयेषांतितथातेषांलिंगेनेतिवा अवधूततुभ्यंनमइतिवा तुभ्यंतवांतर्यामिणेनमः किंविशिष्टाय कस्यानंदस्यारणंशरणंविग्रहोयस्य कमेवारणंविग्रहोयस्येति वासस्तयातस्मादानंदमूर्तयइत्यर्थः क्षितिभारासुरनिरसनलक्षणकारणमुद्दिश्यविग्रहोयस्यसतथा असुरनिरासायस्वीकृतदेहायेत्यर्थः यदायदाहिधर्मस्यग्लानिर्भवतिभारतेत्यादेः माययाकष्टोरणोयेषां तेकारणाअसुराःतैर्विग्रहोविरोधोयस्यसतथातस्मै मायाभिरुत्तिसृक्षतइंद्राद्यामारुरुक्षतः अवदस्युंरधूनुथाइतिश्रुतेः स्वरूपेणचिदानंदलक्षणाकारेणदूरीकृतप्राकृतदेहाय द्विजबंधुरितिभावप्रधानोनि र्देशः द्विजानांबंधुः तस्यभावोद्विजबंधुत्वंतदेवलिंगंयस्यसतथा नितरांगूढश्छन्नोलोकापेक्षयाप्रकल्यापिहितोनित्यानुभवोयस्यसतथा द्विजबंधुलिंगश्चासौनिगूढनित्यानुभवश्चतस्मै १ किंफ लरत्नमुपलभ्यस्तौषीतितत्राह ज्वरेति निदाघेनऔष्ण्येनदग्धस्यतप्तस्य कुदेहमानाहिसुनष्टदृष्टेरितिपाठः दुष्टदेहाभिमानाख्यसर्पेणसम्यङ्नष्टज्ञानचक्षुषोमे अमृतममृतकल्पं सम्यग्उषोदाहोयेषां

**इतिश्रीभागवतेपंचमस्कंधेजडभरतचरितेरहूगणसंवादेएकादशोऽध्यायः ११ रहूगणउवाच ॥ नमोनमःकारणविग्रहायस्वरूपतुच्छीकृतविग्रहाय ॥ नमो वधूतद्विजबंधुलिंगनिगूढनित्यानुभवायतुभ्यम् १ ज्वरामयार्तस्ययथागदंसन्निदाघदग्धस्यथाहिमांभः ॥ कुदेहमानाहिसुनष्टदृष्टेर्ब्रह्मन्वचस्तेमृतमौषधं मे २ तस्माद्भवंतंममसंशयार्थंप्रच्छामिपश्चादधुनासुबोधम् ॥ अध्यात्मयोगग्रथितंपुरोक्तमाख्याहिकौतूहलचेतसोमे ३ यदाहयोगेश्वरदृश्यमानंक्रियाफलं सद्व्यवहारमूलम् ॥ नह्यंजसातत्त्वविमर्शनायभवानमुष्मिन्भ्रमतेमनोमे ४ ब्राह्मणउवाच ॥ अयंजनोनामचलन्पृथिव्यांयःपार्थिवःपार्थिवकस्यहेतोः ॥ तस्यापिचांघ्र्योरधिगुल्फजंघाजानूरुमध्योरःशिरोधरांसाः ५**

तेऔषास्तान्दधातिपुष्णातीत्यौषधं २ किमतइतितत्राह तस्मादिति यस्माद्भवद्वचनामृतंसंसाराख्यरोगोन्मूलनकरंतस्मात्संशयार्थंकोटिद्वयारूढमर्थं यद्वा संशयनिवृत्त्यर्थं मशकार्थोधूमइतिवत् वक्तव्यत्वेनिमित्तमाह पश्चादिति अधुनात्वसन्निधौसुबोधं पश्चात्त्वत्सन्निधिमंतरेणासुबोधंज्ञातुमशक्यंयस्मात्तस्मादितिशेषः किमुक्तार्थेप्रश्नउतार्थांतरइतिविकल्पोमाभूदित्याह अध्यात्मेति अध्या त्मयोगेनपरमात्मज्ञानेनग्रथितंबद्धंयत्पुरात्वोक्तंवचनंतस्याभिप्रायंममाख्याहि विस्मृत्यवदेत्यन्वयः ३ किंतदुक्तंतदाह यदाहेति हेयोगेश्वरदृश्यमानंप्रत्यक्षादिप्रमाणैर्ज्ञायमानंक्रियाफलंभरणगमन क्रियाजनितंभर्तृत्वगंतृत्वलक्षणंफलंलौकिकं अपामसोममित्यादिनानिरूप्यमाणंसोमपानादिक्रियाजातममृतत्वादिकंफलंवैदिकंचसद्व्यवहारमूलमबाधिताभिज्ञादिव्यवहारकारणं अंजसामुख्ययावृत्त्या तत्त्वविमर्शनायतत्त्वनिर्णयायनभवति स्थायित्वेनैकनिष्ठंनभवतीति यद्वचनंभर्तुःसमेस्याद्यदिवीरभारः व्यवहारमेनंतत्त्वामर्शेनसहामनंतीति उरुगार्हमेधवितानविद्येत्यादिरूपंभवानाह अमु ष्मिन्वचसिमेमनोभ्रमते अस्यवचनस्यार्थोयमेवनान्यइतिस्थिरस्थितिंनलभतेसायथास्यात्तथाख्याहीतिभावः भ्रमतइत्यात्मनेपदप्रयोगेणसक्तंनिगढितनिगदाभिप्रायापरिज्ञानेनात्मनोनुत्तमाविका रित्वं तत्त्वोपदेष्टृज्ञानिसद्भावेतस्मात्त्वयोग्यंसविशेषंज्ञातव्यमन्यथानर्थःस्यादिति श्रोतृजनशिक्षार्थंचेतिसूचयति ४ भर्तुःसमेरयाद्यदिवीरभारइत्यादिनोच्यमानभरणादिकमंतर्यामिहरिनियत मित्येवमुमुक्षुणास्मर्तव्यं एवंपरोभगवानित्युक्तः यतोक्षरमंबरांतधृतेः यउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानिविश्वा आत्मावाइदमेकएवाग्रआसीन्नान्यत्किंचनमिषत्सइमांल्लोकानसृजतेत्यादिनो

च्यमानमूलकारणत्वंहरेरेव नहिमूलंविसृज्यान्यग्रहणंयुक्तिमत् अनवस्थानापातात्कथंतदितिशंकित्वाविपक्षेबाधकमाह अयंजनइति हेपार्थिवयदिमूलकारणविवक्षानस्यात्तर्हिंयःपृथिव्यामुत्पन्न त्वादत्रविद्यमानत्वाद्वापार्थिवोनामसोयंजन्यतइतिजनोदेहोदेहीवापृथिव्यामेवचलन्चलतीतिव्यवहारः कस्यहेतोःकुतोवर्तते प्रत्यक्षसिद्धंकथमपलपितुंशक्यतइतिचेत्तत्राह तस्यापीति तस्यजनस्या पिपादाद्यवांतराधाराःसंतीतियस्मात्तस्मादस्यापिप्रामाणिकत्वात्पृथिव्यामिवपादादिष्वपिचलतीतिकस्मान्नभवेन्नचासावस्ति तस्मान्मूलकारणमेकमंगीकर्तव्यंतदनंगीकारेसर्वस्यापलापःप्रसज्यते अ त्राधिशब्दउपर्युपर्यर्थवाचकःतथाह्यंघ्र्योरंघ्र्युपरिगुल्फौतयोरुपरिजंघेइत्येवंयोजना गुल्फौचजंघेचजानुनीचऊरूचमध्यंचउरश्चशिरोधराचअंसौचतेतथा ५ दार्वीदारुमयीयस्यांशिबिकायांसौवीरराजेत्यपदेशःशब्दमात्रं नतुरंजनाद्राजेत्यर्थोयस्यसतथापिंडआस्ते यस्मिन्पंचभूतरचितेदेहलक्षणे पिंडेभवान्वर्ततेकथंभूतोभवान् रूढोबद्धमूलोनिजत्वेनाभिमानोदेहेयस्यसतथा अतएवसिंधुपुराजास्मीतिदुष्टोमदोस्तितेनांधश्चक्षूरहितः ६ एतत्फलमाह शोच्यानिति तानिमान्वाहकान्विष्ट्याविनिगृह्णन्यस्त्वंनिरनुग्रहोसि मधुरवचनाद्यनुग्रहरहितोसीति यस्मात्तस्मादिहामुत्रचतवाधिराधिकःस्यादित्यन्वयः यथाशिबिकाभर्तृत्वंमदंतर्यामिमूलकारणनिष्ठंएवंजनस्यगोप्तास्मीतित्वयिकल्प्यमानंमूलगोप्तृत्वंचत्वदंतर्यामिहरिनिष्ठमित्यभिप्रेत्याह जनस्येति वृद्धसभासुविद्वत्सामितिषु जनस्यगोप्तास्मीतिविकत्थमानोबहुभाषमाणोदुष्टोयंतत्त्वंनजानातीतिश्लाघ्योनभवतीत्यर्थः ७ नन्वेवंतर्हिपृथिव्यामूलाश्रयत्वमापन्नं तथाहि यदिमूलाश्रयविवक्षानस्यात्तर्हिपृथिव्यांचलतीतिव्यवहारोनस्यान्नच तथा तस्मात्पृथिव्यामूलाश्रयत्वंविष्णुविवक्षायामसंगतंचेत्याशंकांशाखाचंद्रन्यायेनोक्तामितिपरिहरति यदीति उत्पत्तिस्थित्योःपृथिव्यांदर्शनात्तस्याःमूलकारणत्वमित्यतोवाह यदीति यदिचरा

**अंसेधिदार्वीशिबिकाचयस्यांसौवीरराजेत्यपदेशआस्ते ॥ यस्मिन्भवान्रूढनिजाभिमानोराजास्मिसिंधुष्वितिदुर्मदांधः ६ शोच्यानिमांस्त्वमधिकष्टमापन्निगृह्णन्निरनुग्रहोसि ॥ जनस्यगोप्तेतिविकत्थमानोनशोभसेवृद्धसभासुदुष्टः ७ यदिक्षितावेवचराचरस्यविदामनिष्ठांप्रभवंचनित्यम् ॥ तन्नामतोन्यद्व्यवहारमात्रंनिरूप्यतांसत्क्रिययानुमेयम् ८ एवंनिरुक्तंक्षितिशब्दवृत्तमसन्निधानंपरमाणवोये ॥ अविद्ययामनसाकल्पितास्तेयेषांसमूहेनकृतोविशेषः ॥ ९॥**

चरस्यंक्षितावेवनिष्ठांस्थितिंततएवप्रभवमुत्पत्तिंचविदामविद्मःअविद्वद्रूढ्येतिशेषः तथाप्यालोचने तन्नामतः प्रसिद्धक्षितिनाम्नोन्यद्व्यवहारमात्रंक्षितिशब्दव्यवहारयोग्यं सत्क्रिययाअबाधितार्थक्रियया क्षिनिवासगत्योरितिधातोः निवसत्यस्यामितिगच्छत्यस्यामितिनिवासगत्योरप्रतिहताश्रयभूतंयत्तदनुमेयंक्षितिशब्दमुख्यार्थमितिनिरूप्यतामित्यन्वयः यःपृथिव्यांतिष्ठन्पृथिव्यांअतरइतिश्रुतेः क्षितिशब्दमुख्यार्थोहरिरन्यस्याःपृथिव्यास्तन्नियतत्वेनतच्छब्दवाच्यत्वंतदधीनत्वादर्थवदितिसूत्रादिविसंचिंतनीयमित्यर्थः प्रथितत्वात्पृथुत्वाद्वापृथिवीतिपृथिवीशब्दवाच्यत्वंमुख्यहरेरेवेति पृथिव्यांचलतीत्युक्तं नतुपृथिव्यामुख्याश्रयत्वविवक्षया अंघ्र्याद्याश्रयत्वनिरासायचेत्यतोनासंगतदोषोपीति उत्पत्तिस्थितीइंद्रजालवन्नयाहच्छिक्यौ किंतु प्रवाहरूपेणसदातनेइत्यतोनित्यामिति ८ फलितमाह एवमिति यथाप्रथितत्वयोगेनपृथिवीशब्दवाच्यत्वंहरौनिर्णीयते एवमाश्रयत्वात्क्षितिशब्दवृत्तंक्षितिशब्दप्रवृत्तिनिमित्तमपिनिरुक्तंनिर्णीतं हराविंतिशेषः क्षितिशब्दरूपंनिर्वचनेनमुख्यंहरावेवदर्शितमितिवा प्रत्यक्षस्यक्षितेराश्रयत्वापलापेबाधकंकिमित्याशंक्य परमाणुमात्रायाःपृथिव्याआधारत्वानुपपत्तिरेवबाधिकेत्यभिप्रेत्याह असन्निधानमिति येपरमाणवः पार्थिवाइतिशेषः। येषांपार्थिवानांपरमाणूनांसमूहेनपुंजेनविशेषःपृथिवीलक्षणःपदार्थश्चकृतःतेपरमाणवश्चराचरस्याश्रयाइत्यसन्निधानदूरे ननूक्तस्यचोद्यस्यपरिहारःकथमागतइतितत्राह अविद्ययेति अविद्ययाऽज्ञानेनमनसामनोरथेनाधारत्वेनकल्पिताः नतुमुख्याधाराइतिशेषः किमेकैकेपरमाणवश्चराचरस्याधाराउतमिलिताइत्युभयोरपीदमेवोत्तरमसन्निधानमिति येपार्थिवाःपरमाणवः तेषांनिधानंनिरतांस्वातंत्र्येणधानंधारणमसदनुपपन्नं येषांसमूहेनविशेषःकृतस्तेषांचासन्निधानंसामर्थ्यंनास्ति ईश्वरनियतप्रकृतिमंतरेणेतिशेषः तत्कुतइत्यतउक्तंअविद्ययेति मनसेश्वरेच्छाविशिष्टेनतदतःकरणेननियतयाअविद्यया

प्रकृत्यातेपरमाणवआधारत्वेनकल्पिता: नतुस्वतंत्राइतिवा येषांपरमाणूनां द्व्यणुकादिसमूहेनेतिकाणादा॰ पुंजेनेतिबौद्धा: आविद्ययाकल्पितापेपरमाणवस्तेषांसमूहेनेतिमायावादिनः तेषांसर्वेषांपक्षेपितेषांपरमाणूनांचराचरधारणमसंनिधानेदूरीभूतमितिभावइतिवा ९ ननुक्षित्यादिशब्दानांमुख्यार्थाद्धरेश्चराचरस्योत्पत्त्यवस्थानेयदिस्यातां तर्हिजगत्यांजगत्पृथिवीवाइदंसर्वमित्या दिश्रुते: प्रकृत्यादिवाच्याभावेनाप्रामाण्यमापन्नमितितत्राह एवमिति असत्कारणंसत्कार्यं वाय्वाकाशौवा पृथिव्यपतेजांसिवा जीवंचैतन्यविशिष्टवस्तु अजीवमन्यदस्वतंत्रंजडमितियावत् अन्यन्मि थोविष्णोश्चाभिन्नमेवाविधंजगद्यथाहारिणाकृतंधृतंचैवमजयाभगवन्निपतया प्रकृत्याद्वितीयकारणंधारणंचकृतमवेहीत्यन्वय: अत्रायमाशय: राजादीनांगोप्तृत्वेपरमाणुमात्रायाभूमेराश्रयकारणत्वेचयोव्यव हार: सउपचारोयतो राजादीनांआश्रयोजानिकर्ताचब्रह्मातस्यप्रकृतिस्तस्या: श्रीनारायणोनान्याधारोत:सर्वाधारत्वादिकंमुख्यत.सर्वशब्दवाच्यत्वंचतस्यैव तदनुग्रहलेशेनप्रकृत्यादीनांसत्तत्कार्यकरत्वं तत्तच्छब्दवाच्यत्व शिरआद्यवयवाधारत्ववदाधारत्वंचामुख्यमिति एतदभिप्रायेणद्रव्यादिनान्येत्युक्तंचित्प्रकृतेर्द्रव्याद्यभिमानित्वेनान्यस्या:तदात्मत्वेनेतिशेष॰ राजागोप्ताश्रयोभूमि.काणचेतिलौकिकः व्यवहारोनतत्सत्यंतयोर्ब्रह्माश्रयोविभु: गोप्ताचतस्यप्रकृतिस्तस्याविष्णु:स्वयंप्रभु: तवगोप्त्रीतुपृथिवीनत्वंगोप्ताक्षिते॰स्मृत: अत॰सर्वाश्रयश्चैवगोप्ताचहरिरीश्वर॰ सर्वशब्दाभिधेयश्चशब्दवृत्तेश्चकारण सर्वांतर:सर्वबाहिरेकएवजनार्दनः शिरसोधारतायद्वद्ग्रीवायास्तद्वदेवतु आश्रयत्वंचगोप्तृत्वमन्येषामुपचारतइत्येतद्वाक्यमस्मिन्नुक्तार्थेजागर्ति अतइदमेवश्रद्धेयंनान्यत्स्वकपोलकल्पितमितिज्ञायते १० ननुहंतप्रकृत्यादिसर्वंजगत्प्रवर्तकस्यहरे:स्वरूपंकीदृशं येनतदंत॰पातिनस्यापिनतन्मलालेपइतितत्राह ज्ञानमिति ज्ञानमनंतंब्रह्मेतिश्रुतेर्गुणगुणिनोरभेदाभिप्रायेणगुणव्यपदेशः वृत्तिज्ञानवद्विषयोपर क्तंनेत्याह विशुद्धमिति विशुद्धंविषयसंसर्गेपितत्कृतदोषलेशस्पर्शोनास्तीत्यर्थः असंगोह्ययंपुरुषइतिश्रुतेः विशुद्धस्यापिकेनचित्पारदद्रववद्बाध:किंनस्यादितिनेत्याह परमार्थमिति परमार्थंउत्तमार्थंअबा

**एवंकृशंस्थूलमणुर्बृहद्यदसच्चसज्जीवमजीवमन्यत् ॥ द्रव्यस्वभावाशयकालकर्मनाम्नाजयावैहिकृतंद्वितीयम् १० ज्ञानंविशुद्धंपरमार्थमेकमनंतरंनबाहिर्ब्रह्मसत्यम् ॥ प्रत्यक्प्रशांतंभगवच्छब्दवाच्यंयद्वासुदेवंकवयोवदंति ११ ॥**

धितंवस्त्वित्यर्थः वस्तुहेतुनिवृत्तिष्वित्यभिधानात् तादृशमन्यदस्तीतिनेत्याह एकमिति एकं आत्मा वाइदमेकएवाग्रआसीदितिश्रुतेः लोकेसाम्याधिक्यदर्शनात्कथमस्यतदभावइति नेत्याह अनंतरमिति अंत:स्थित्वापरेकोनास्तीत्यनंतरं अंतरभावे बहि:किंनस्यादितिनेत्याह नबहिरिति बाहिर पिपरेकोनेति घटादिवत्परिच्छिन्नंनेत्यतोवाह अनंतरंनबाहिरितियस्मादंतर्बहिश्चनास्तीति अंतर्बहिश्चतत्सर्वंव्याप्यनारायण:स्थितइतिश्रुतेः अणोरणीयान्महतोमहीयानितिच किमस्यसंज्ञेत्यतउक्तं ब्रह्मेति कस्माचस्यांतर्बहिर्नास्तीत्यतोवाह ब्रह्मेति ब्रह्मपूर्णंनिरुपमचरितमितिशेषः किमेकएवगुणइति नेत्याह सत्यमिति सत्यंसाधुसुखादिगुणयुक्तं किमिदंचतुर्मुखाख्यमितिनेत्यतोवाह सत्यमिति सत्यंज्ञानमनंतंब्रह्मेतिश्रुतेः मुख्यंब्रह्मेत्यर्थः गुणानांसाम्येपिज्ञानानंदयोर्लोकापेक्षयाप्राधान्यज्ञापनायावताराणांरामकृष्णयोरिवेत्यतोवाह सत्यमिति उत्कृष्टानंदज्ञानं सच्छब्दउत्तमं ब्रूयादतिवैवदेत् यतिज्ञानंसमुद्दिष्टंपूर्णानंदस्तथैवचइतिवचनात् एतद्वस्तुकुत्रसादितितत्राह प्रत्यगिति जीवस्यहृद्यभिमुखंबिंबरूपमितियावत् रूपंरूपंप्रतिरूपोबभूवेतिश्रुतेः क्रुद्धस्वभावंनेत्याहप्र शांतमिति प्रशांतनिस्तरंगस्तिमितसमुद्रकल्पं निष्कलंनिष्क्रियंशांतमितिश्रुतेः किमस्माकंकार्यमित्यत्राह भगवच्छब्दवाच्यमिति अस्माकंपूज्यइतिशब्देनोच्यते अत्रभवान् भगवानितिशब्दोवृद्धै.प्रयुज्यते अत्रभवान्पूज्यइतिहलायुध नन्वस्यशब्दस्यतापसमात्रेपिप्रयोगदर्शनात्कथंनिर्णयइतितत्राह यदिति कवयोयद्भगवच्छब्दवाच्यंवस्तुक्रीडित्वासर्वत्रवसनाद्वासुदेवनामगृणंतितज्ज्ञानादिगुणपूर्णंब्रह्मप्रकृ त्यादिभ्योपरंजानीहीतिवाक्यशेषः उक्तानामनुक्तानांसर्वेषांगुणानांकवलीकरणेनेतिवाभगवच्छब्दवाच्यंतत्प्रतिपादनार्थंवासुदेवपदंवेतिबलज्ञानानंदादयोगृह्यंते अस्वितिशत्रुनिरासपटीयोवीर्यंशौर्योदार्यादयो

देवेविक्रीडाविजिगीषाकांत्यादयः एतेयत्रप्रत्येकंपूर्णतयान्योन्याविरुद्धतयाचविद्दत्यवसंति तद्वासुदेवसंज्ञंत्वदंतीतिसमुदायार्थइतिवा अज्ञानामपिबुद्ध्यवतारार्थंवसुदेवपुत्रत्वाद्वासुदेवमित्युक्तमितित्रा
११ एतादृशवस्तुज्ञानप्रापकःकोंतरंगोपायइत्याशंक्यवैराग्यरसायनसेवयाप्रवृद्धबलाभक्तिरेव साचसुहृढातिविशदामहत्सेवामंतरेणनस्यात्तपआदयस्तदुपादिष्टाएवतस्यानिदानभूतास्तदर्थंतत्सेवैवा
वश्यंभाविनीत्यभिप्रेत्याह रहूगणेति यातिरत्रज्ञानंगतिंचवक्ति विद्यया शास्त्रविषययाकेवलया निर्वसनंसन्यासः छंदसाब्रह्मयज्ञेनजलाग्निसूर्यैःसेवितैरितिशेषः नायमात्माप्रवचनेनलभ्योनमे
धयानबहुनाश्रुतेनेत्यादिश्रुतेः १२ यत्रेयषांमहतांसकाशेप्रस्तूयतेप्रसज्जते प्रकर्षेणस्तूयतेवा ग्राम्यकथाविघातः विषयवार्ताप्रसंगनाशनः सेवाफलमाह निषेव्यमाणइति भक्तिशाणोल्लीढा
सतीमतिरुच्यतेयच्छतिरत्रभक्तिनिशितज्ञानंदत्त्वासंसारोपरमंकरोतीत्युभयार्थः ॥ १३ ॥ इदानींभरतःस्वोक्तार्थाभिज्ञजननायकुत्रत्यइतिचोद्यपरिहारायचस्वरूपंस्वचरितंचवक्ति अहंपुरेति दृष्टेषुरा
ज्यादिविभवेषु श्रुतेषुस्वर्गादिविषयेषु सगबंधःस्नेहबंधःदृष्टश्रुतसंगबंधः सविमुक्तोयेनसतथा हतार्थः नष्टपुरुषार्थलक्षणप्रयोजनः १४ यापूर्वजन्मनिकृष्णार्चनजातासामानोजहातिनत्यजति अधुना
पिवर्ततइत्यर्थः अवधूतोज्ञातलिंगःदुःसंगात्संसारोभवतीतिशंकयाभियावधूतःकंपितःहृदयसाररहितइत्यर्थइतिवा १५ उपसंहरति तस्मादिति तस्माद्भगवतःपूजैतादृशफलात्तस्मान्नरःपुरुषः

रहूगणैतत्तपसानयातिनविद्ययानिर्वसनाद्गृहाद्वा ॥ नछंदसानैतजलाग्निसूर्यैर्विनामहत्पादरजोभिषेकम् १२ यत्रोत्तमश्लोकगुणानुवादःप्रस्तूयतेग्राम्यक
थाविघातः ॥ निषेव्यमाणोनुदिनंमुमुक्षोर्मतिंसतींयच्छतिवासुदेवे १३ अहंपुराभरतोनामराजाविमुक्तदृष्टश्रुतसंगबंधः ॥ आराधनंभगवतईहमानोमृगो
ऽभवंमृगसंगाद्धतार्थः १४ सामांस्मृतिर्मृगदेहेपिवीरकृष्णार्चनप्रभवानोजहाति ॥ अथोअहंजनसंगादसंगोविशंकमानोविवृतश्चरामि १५ तस्मान्नरोऽसंगसु
संगजातज्ञानासिनेहैवविवृक्णमोहः ॥ हरिंतदीहाकथनश्रुतिभ्यांलब्धस्मृतिर्यात्यतिपारमध्वनः १६ इतिश्रीभागवतेपंचमस्कंधेद्वादशोऽध्यायः १२ ब्रा
ह्मणउवाच ॥ दुरत्ययेध्वन्यजयानिवेशितोरजस्तमःसत्वविभक्तकर्मदृक् ॥ सएषसार्थोर्थपरःपरिभ्रमन्भवाटवींयातिनशर्मविंदति १ यस्यामिमेषण्नरदे
वदस्यवःस्वार्थंविलुंपंतिकुनायकंबलात् ॥ गोमायवोयत्रहरंतिसार्थिकंप्रमत्तमाविश्ययथोरणंवृकाः २



संसारमतीत्याध्वनः संसारमार्गस्यअतिपारंतीरांतरभूतंहरिंयातीत्यन्वयः केनसाधनेनअसंगानांदुष्टसंगरहितानांसतांसुष्ठुसंगेनसेवालक्षणेनज्ञानेनज्ञानाख्यासिपत्रिकयाविवृक्णश्छिन्नःसंगः
स्वर्गादिफलस्नेहोयस्यसतथा । तस्यहरेरीहानांचरितानांकथनेनश्रवणेनचलब्धास्मृतिर्यस्यसतथा ससाराध्वनःपारंविष्णोर्लोकमतियातिअतिक्रम्ययातीत्यर्थोनुपपन्नःहरिमित्यस्यान्वयानुपपत्तेःअतोऽ
संगतोऽयमर्थइति १६ इतिश्रीभागवतेपंचमस्कंधेविजय०द्वादशोध्यायः ११ अस्मिन्नध्यायेसंसारविरक्तस्यहरौसुहृढाभक्तिःस्यात्तयातदपरोक्षज्ञानंजायते तेनस्वयोग्यामुक्तिःस्यादित्यतःसंसारस्यहेय
त्वज्ञानेनतत्रविरक्तिस्तदर्थंतत्स्वरूपंनिरूपयति दुरत्ययइत्यादिना दुरत्ययेहरिकटाक्षमंतरेणात्येतुमशक्येअजयाप्रकृत्यारजस्तमःसत्वगुणैःविभक्तानियानिकर्माणितानिपश्यतिममाहमित्यभिमन्यतेइति
रजस्तमःसत्वविभक्तकर्मदृक्सार्थः परिषज्जनःवणिक्सार्थवदर्थपरःस्वप्रयोजनाभिनिविष्टबुद्धिःभवाटवींब्रह्मादिस्तंबपर्यंतं संसारवनंयाति तत्रशर्मस्वाभिप्रेतसुखंनलभतइत्यन्वयः १ स्वार्थालाभेनि
मित्तमाह यस्यामिति षड्दस्यवः श्रोत्रादिज्ञानेंद्रियाणिमनश्चेति स्वार्थंपुण्यलक्षणंविलुंपंति विषयोपभोगद्वारेणापहरंति कुत्सितःकामादिनायकोयस्मिन्सतथा अंतःशत्रूनुक्त्वाबाह्यानाह गोमायवइ
ति गोमायवइतिलुप्तोपमा सृगालसदृशाःपुत्रकलत्रादयः सार्थिकंसंपद्युक्तंकलभाषणादिनामनआविश्य उरणमजां २

वारुधामहत्या गुल्मान्यणूनिअंकुरादीनि समृद्धवीरुत्तृणगुल्मवदपरिपक्वकामबीजःश्रौतस्मार्तकर्मभिर्गह्वरेगृहस्थाश्रमेवर्तमानः कठोरमशकदंशकल्पैराजभटतस्करादिभिरुपद्रुतोबाधितः अपहृताहिर ण्यशाल्यादिकः क्वचित्संसारस्थानेगंधर्वैःकर्मभिर्निर्मितपुरंमनुष्याद्यन्यतमंशरीरंदृष्ट्वाऽऽविश्यचकर्मभुंक्तेइत्यर्थः अस्थिरत्वात्प्रसिद्धगंधर्वपुरसाम्यं असुहरःप्राणहरः उल्मुकग्रहःउल्मुकपिशाचःतत्स दृशशब्दादिर्विषयंपश्यतीतिशेषः ३ निवासतोन्यत्रयत्यस्मिन्द्रविणेआत्मबुद्धिर्यस्यसतथाततस्ततस्तत्रतत्रधावतिधावनमेवावशिष्यते नतुकाचित्कार्यसिद्धिरित्यर्थः अत्रक्वचिच्छब्दाअनवस्थान वाचकाइति । वात्योत्थितपांसुधूम्राःमंडलवायुसदृशस्त्रीनिमित्तरागादिलक्षणपांसुभिश्छन्नाः दिशंतिस्वाभिमतंप्रयच्छंतीतिदिशःसूर्यादिदेवताः रजस्वलाक्षः अविवेकविज्ञानः ४ अतिगहनवनवासि न्योझिल्ल्यःकीटविशेषाः तेषांशब्दाएवदृश्यंतेनस्वरूपंदृश्यतइत्यदृश्यानाझिल्लीनांस्वनबहुःसहराजचोरादिनिष्ठुरशब्दैःपूरितकर्णमूलः उलूकिवाग्भिःदुर्जनतर्जनैःव्यथितातरात्मापरिखिन्नहृदयः कदा चित्क्षुधार्दितःविषयतृष्णयाक्लिष्टःअपुण्यवृक्षान्कारस्करादिवृक्षवद्दृष्टादृष्टफलशून्यपाखंडाश्रमान्मरीचितोयानि मरीच्युदकसदृशशब्दादीन् ५ वितोयाअधरामृतशून्याःसरितःपुंश्चलीः परस्परं खादयतेस्वीकरोति पितुर्धनंपुत्रोलभतेपुत्रधनंपिताच श्ववत्भ्रात्रादिजनोन्योन्यंशाब्दंकुरुतेधनविषयइतिवा निरन्नोशनवसनादिपरिकरशून्यः दुनोतीतिदावंप्रयोजकशून्यंवनसमंगृहं शोकाग्निना

प्रभूतवीरुत्तृणगुल्मगह्वरेकठोरदंशैर्मशकैरुपद्रुतः ॥ क्वचिच्चगंधर्वपुरंप्रविश्यक्वचित्क्वचिच्चासुहरोल्मुकंग्रहम् ३ निवासतोयद्रविणात्मबुद्धिस्ततस्ततो धावतिभोअटव्याम् ॥ क्वचिच्चवात्योत्थितपांसुधूम्रादिशोनजानातिरजस्वलाक्षः ४ अदृश्यझिल्लीस्वनकर्णमूलउलूकवाग्भिर्व्यथितांतरात्मा ॥ अपु ण्यवृक्षाञ्छ्रयतेक्षुधार्दितोमरीचितोयान्यभिधावतिक्वचित् ५ क्वचिद्वितोयाःसरितोभियातिपरस्परंखादयतेनिरन्नः ॥ आसाद्यदावंक्वचिदग्नितप्तोनिर्वि द्यतेक्वचयक्षैर्हृतासुः ६ परैर्हृतस्वःक्वचनिर्विण्णचित्तःशोचन्विमुह्यन्नुपयातिकश्मलम् ॥ क्वचिच्चगंधर्वपुरंप्रविष्टःप्रमोदतेनिर्वृतवन्मुहूर्तम् ७ चलन्क्वचित्कं टकशर्कराङ्घ्रिर्नगारुरुक्षुर्विमनाइवास्ते ॥ पदेपदेभ्यंतरवह्निनार्दितःकौटुंबिकःक्रुध्यतिवैजनाय ८ क्वचिन्निगीर्णोऽजगराहिनाजनोनावैतिकिंचिद्विपिनेऽ पविद्धः ॥ दष्टःस्मशेतेक्वचदंदशूकैरंधोंधकूपेपतितस्तमिस्रे ९

संतप्तःयक्षग्रहवत्प्रबलराजामात्यादिभिर्हृतासुःअपहृतबहिःप्राणाख्यहिरण्यः तदुक्तंकौर्मे हिरण्यंहिमनुष्यस्यप्राणाह्येतेबहिश्चराइति ६ क्वचसंसारेपरस्वापहारपटुभिर्ग्रामाधिपतिभिःहृतस्वःअपहृतद्र व्यः तेनविरक्तबुद्धिः देशत्यागकृतमनाःशोकमोहाभ्यांकश्मलंकष्टावस्थांयाति क्वापिकर्मविशेषात्गंधर्वपुरंस्वर्गादिलक्षणलोकमाप्तोयावत्प्रारब्धसमाप्तिःसुखमनुभवति पतनभयान्निर्वृतवदित्यु क्तं आकस्मिकापितृपितामहादिसंयोगंवा ७ कंटकशर्कराङ्घ्रिःकंटकादिलग्नपादइवाशक्यगंतव्यकर्ममार्गः कंटकादियुक्तमार्गगतिशीलइवदुःसहकर्ममार्गोवा अंघ्रिरत्रगत्यर्थः क्वचिन्नगवत्दुर्गान वृत्तिमार्गानारुरुक्षुरशक्तःसन्नष्टमनाइवविष्ठति अत्युच्छ्रितारोहाशक्यपर्वतसदृशवेदविहितानेककर्मसंपादनेच्छुस्तदशक्तइववा अभ्यंतरवह्निनाजाठराग्निना ८ अजगराहिना अजगरःशयुरित्य भिधानान्निद्राशीलोमहासर्पः तद्वन्निद्रयाकाललक्षणेनवा पिनोतेर्गतिकर्मणोऽप्युपपदायाविपरीतार्थायाः ज्ञानोपरतिलक्षणारात्रिरित्यर्थः तत्रापविद्धः तिरश्चीनागतशरविद्धइवदुःखितोदंदशूकैः पुनःपुनरुपद्रवशीलैरसज्जनैर्दंष्ट्रोधिक्षिप्तोंधोविवेकशून्योंधकूपसमानयोनिविशेषेतामिस्रेनरकवत्दुःखरूपे ९

परवनितासंगेनक्षुद्ररसानल्पानंदान्विचिन्वन्नन्वेषणंकुर्वंस्तन्माक्षिकाभिस्तासांवनितानांसमानशीलैरन्योन्यवनितालोलैःस्वामिभिर्व्यथितस्ताडितोविमानोविगताभिमानस्तत्रापि परस्त्रीविषयेपिक्र
त्स्वामिवंचनायासेनप्रतिलब्धंस्त्रीधनादिअन्येराजानोबलात्विलुंपंतिअपहरंति अथततःतेभ्यः अन्येउपपतयस्तंस्त्रीजनंअपहरंतीत्येवमनवस्थाविषयसुखस्य क्षुधंरांतीतिक्षुद्राः अल्पत्वेनेति
तान्क्षुद्ररसानन्नलक्षणान्विचिन्वंस्तन्माक्षिकाभिस्तदन्नदातृभिरदानेनदुःखितोविमानोऽनाश्रयोभवति तत्रकचित्कालांतरेअत्यायासेनप्रतिनिधिनारवाम्युक्तकर्मकरणलक्षणेनलब्धान्निष्पन्नमन्येऽन्नव
णोयाचकाविद्याबलादपहरंति तेभ्योयाचकेभ्योन्येततोप्यधिकविद्याबलेनमहाभागैर्ह्नतविप्रभोजनमपहृत्यभुंजतइतिधर्मभोजनस्यासिद्धिः अथशब्दः आश्चर्यार्थेइतिवा १० प्रतिक्रियांपरिहारं
रणाद्यभावेनेतिशेषः विपणन्क्रयविक्रयलक्षणंव्यवहारंकुर्वन्यत्किंचिदपिविक्रेयंरसलक्षणादिकमपि ऋच्छतिप्राप्नोति ११ तस्मिन्व्यवहारेक्षीणधनःनष्टमौल्य यावद्यदादरिद्रःपरमार्थयते तदापरा
स्मादप्रतिलब्धकामः प्रतिग्रहादिधर्मेणाप्राप्ताभीष्टधनः पारक्यदृष्टिःपरकीयद्रव्यस्वीकारेच्छुश्चौर्येणेतिशेषः अवमानंबंधनताडनादिकं १२ लतावत्कोमलभुजाश्रय अव्यक्तपदश्चाव्यक्तस्यप्रकातिसं
स्त्रीजनस्यपदंस्थानंप्रसज्जातिप्रकर्षेणसक्तोभवति द्विजस्यकुलेजातोपीतिशेषः तदाश्रयइतिहेतुगर्भविशेषणं स्त्रीजनाश्रयत्वादिति प्रभवतिमनसिविवेकोविदुषामपिशालसंभवस्तावत् निपततिह

कर्हिस्मचित्क्षुद्ररसान्विचिन्वंस्तन्मक्षिकाभिर्व्यथितोविमानः ॥ तत्रापिकृच्छ्रात्प्रतिलब्धमन्येबलाद्विलुंपंत्यथततोऽन्ये १० क्वचिच्चशीतातपवातवर्षप्र
क्रियांकर्तुमनीशआस्ते ॥ क्वचिन्मिथोविपणन्यच्चकिंचिद्विक्रेयमृच्छत्युतवित्तशाठ्यात् ११ क्वचित्क्वचित्क्षीणधनस्तुतस्मिन्शय्यासनस्थानविहारहीनः
यावत्परादप्रतिलब्धकामःपारक्यदृष्टिर्लभतेऽवमानम् १२ प्रसज्जतिक्वापिलताभुजाश्रयस्तदाश्रयाव्यक्तपदद्विजस्पृह ॥ क्वचित्कदाचिद्धरिचक्रतस्त्रसन्
सख्यंविधत्तेबककंकगृध्रैः १३ तैर्वंचितोहंसकुलंसमाविशन्नरोचयन्शीलमुपैतिवानरम् ॥ तज्जातिरासेनसुनिर्वृतेंद्रियःपरस्परान्वीक्षणविस्मृतावधिः १
द्रुमेषुरंस्यन्सुतदारवत्सलोव्यवायदीनोविवशश्चरन्वने ॥ क्वचित्प्रमादाद्गिरिकंदरेपतन्वल्लींगृहीत्वागजभीतआस्थितः १५

शिखायावन्नेंदीवराक्षाणांइतिप्रसिद्धिंहशब्देनाह हरिचक्रतःकालचक्रात् त्रसन्बिभ्यत् बकभक्षणेकाकिलौल्येगृध्रुअभिकांक्षायांबकवदिक्षुदंडादिभक्षणशीलविघ्नेश्वरदेवतया ककवन्मैथुनलोलचित्त
देवतयारुधिरासवाकांक्षारतभद्रकालीदेवतयाचसेवालक्षणंसख्यं १३ वंचितोविपुलदंडःअभीष्टफलाभावादितिशेषः हंसकुलंब्राह्मणकुलंसंन्यासाश्रमंवा हंसानांशीलमुपनयनादिसंस्कारंत्रिषवणस्नाना
न्यादिकंवानरोचयन्पथ्यंनेदामितिमन्वानोवानरः वानेनरीहसपारमतइतिशूद्रस्वभावंहिंसालक्षणंवाने नरमतइतिगमनागमनलक्षणंसेवांवाशूद्रवत्सेवावृत्तिमुपजीव्यवर्ततइत्यर्थः तज्जातिरासनशूद्रजा
डारसेनसुष्ठुनिर्वृतानिप्रीतानींद्रियाणि यस्यसतथापरस्परान्वीक्षणविस्मृतावधिःस्त्रीपुरुषयोरन्योन्यमुखनिरीक्षणेनविस्मृतविहितकालमर्यादः १४ द्रुमेष्वैहिकफलभोगयोग्यलक्षणेषुगृहेषुरंस्यन्र
न्सुतदारेषुस्निग्धोव्यवायेनमैथुनक्रियपयादीनः शोच्यादशामापन्नोतएवविवशोवनेसंसाराख्येचरन्भवति ततःकदाचित्प्रमादाद्भगवत्तत्त्वापरिज्ञानाद्गिरिकंदरवद्भयंकरनरकेपतन्वल्लींजन्मांतरो
तपुण्यकर्मलक्षणंपाशमवलंब्य गजभीतोभयंकरमृत्युभीतोपि १५

१ लताभुजाः लतानांशाखाः तदाश्रयः । द्विजस्यपक्षिसमूहस्ययत् अव्यक्तपदंकलभाषितं । तदाश्रयः तत्रैवासक्तचित्तः । प्रसज्जतिप्रकर्षेणासक्तोभवतीतिवणिक्पक्षेयोज्यं ॥ दार्ष्टांतिकेतु लतावत्कोम
स्त्रियोयौभुजौतदाश्रयः ताभ्यामालिंगितः द्विजस्यलताश्रितपक्षितुल्यस्यस्त्र्याश्रितापत्यादेः यदव्यक्तंपदंकलभाषितंतदाश्रयः प्रकर्षेणसज्जतिइति ॥

ततःआपदःकथंचिन्मुक्तोभूत्वाश्रद्दधानःसार्थंसदाचारोपेतवर्णाश्रमंस्थानंप्रविशति संसाराध्वनिप्रवेशस्यप्रधानकारणमिदमेवेत्याह अध्वनीति १६ अजा कथंकारमज्ञानमुत्पादयतीतितत्राह अ न्योन्येति अन्योन्यवित्तव्यतिषंगःपरस्परद्रव्यदानादानसंबंधस्तेनवृद्धोवैरानुबंधःवैरपरंपरायस्यसतथा मिथोधिवहन्कुटुंबपोषणंकुर्वन् अध्वनिविहरन्क्रीडन्नुरुणाकृच्छ्रेणाल्पाद्वित्तं तस्यबाधोपस गैर्नाशलक्षणोपद्रवैर्विपन्नोविपत्तिंगतः १७ सएवंविधस्तत्रतत्रमनुष्यादिजन्मनि तांस्तान्विपन्नान्मृतानापदंगतान्वा पित्रादीन्स्वदेहान्वा विहायजातजातमभिनवंपरिगृह्यापावर्ततइत्यन्वयः फलितमाह नकश्चिदिति हेवीर संसाराध्वनःपारं युज्यतेनेनेतियोगोहरिस्तंनोपैतीत्यन्वयः अत्रकरतलामलकवदपरोक्षीकृतश्रीनारायणस्वरूपत्वाद्भरतस्येहशंज्ञानंयुक्तं तदुक्तं ऋतेहैहयदेवर्षार्दः नार्षभस्येहकःसमः यस्योपदेशात्संसिध्वीशोददर्शकपिलंप्रभुमित्यतोनात्रशंकाकार्येति १८ सोध्वनःपरमाप्नोति योगीपरंस्थानमुपैतिचाद्यमित्यादेः कश्चिदध्वनःपारंनोपैतिइतिसर्वनिषेधःकथंयुक्ति मानित्याशंक्यभक्तिहीनपुरुषविषयंमयोक्तमतोन्यत्तद्विषयं । नायंदिग्जयवत्साध्यइतिभावेनाह मनस्विनइति मनस्विनोनलंबुद्धयोराजानः निर्जितदिग्गजेंद्राइत्यनेनानलंबुद्धित्वंस्पष्टयति किम नेनेतितत्राह ममेति भुविभूमिविषयेममेयंमहीतिदुराग्रहग्राहग्रस्तबुद्धित्वेनमिथोबद्धवैराअतएवमृधेशयीरन्शत्रुशरशीर्णशरीराः पंचत्वमेवांचंतिनतुमहीमुंचंतीत्यर्थः एतेतन्नव्रजंतिचेत्कोव्रजतीतित

ततःकथंचिद्विमुक्तआपदःपुनश्चसार्थंप्रविशत्यरिंदम ॥ अध्वन्यमुष्मिन्नजयानिवेशितोभ्रमञ्जनोद्यापिनवेदकश्चन १६ अन्योन्यवित्तव्यतिषंगवृद्धवै रानुबंधोविवहन्मिथश्च ॥ अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैर्विहरन्विपन्नः १७ तांस्तान्विपन्नान्सहितत्रतत्रविहायजातंपरिगृह्यसार्थः ॥ आवर्त तेद्यापिनकश्चिदत्रवीराध्वनःपारमुपैतियोगम् १८ मनस्विनोनिर्जितदिग्गजेंद्राममेतिसर्वेभुविबद्धवैराः ॥ मृधेशयीरन्नतुतद्व्रजंतियन्न्यस्तदंडोगतवैरोभि याति १९ रहूगणत्वमपिह्यध्वनोस्यसंन्यस्तदंडःकृतभूतमैत्रः ॥ असज्जितात्माहरिसेवयाशितज्ञानासिमादायतरातिपारम् २० ॥ राजोवाच ॥ अ होनृजन्माखिलजन्मशोभनंकिंजन्मभिस्त्वपरैरप्यमुष्मिन् ॥ नयद्धृषीकेशयशःकृतात्मनांमहात्मनांवःप्रचुरःसमागमः २१ नह्यद्भुतंत्वच्चरणाब्जरेणुभि र्हतांहसोभक्तिरधोक्षजेमला ॥ मौहूर्तिकाद्यस्यसमागमाच्चमेदुस्तर्कमूलोपहतोऽविवेकः २२

त्राह यन्न्यस्तदंडइति न्यस्तदंडोवागादिनिमित्तहिंसारहितोगतवैरःयोग्यतानुसारेणानिरस्तभूतवैरः पुरुषोहरेर्यत्पदमभियातितदित्यन्वयः १९ एवमुपवर्णितसंसारतरून्मूलनप्रभुकरीमतिंनयंतव्यं यतोभगवत्सेवानिशितज्ञानासिमाददानस्यतवसुशकमित्याह रहूगणेति रहत्यागेगणसंख्यानइति ससाररहयन्गणोज्ञानंयस्यसतथातस्यसंबुद्धिःहेरहूगणेति वहप्रापणइत्यस्मादुत्पन्नवाहिशब्दव द्यंशब्दः संसारातिक्रांतपारंहारिमुद्दिश्यसंसारनदींतरेत्यन्वयः लेड्डापतातिकुंडृणाच्चेतिवदुपपत्तेःपूर्वोक्तैवयोजना २० सर्वेष्वपिजन्मसुनृजन्मैवश्रेयःसाधनमन्यानिभोगनिमित्तानीत्यभिप्रेत्याह अ होइति ननुसर्वस्मात्स्वर्गेजननंशोभनंनकिंतत्राह किंजन्मभिरिति कंगुणंनिरीक्ष्याक्षिप्यतइतितत्राह अमुष्मिन्निति अमुष्मिन्स्वर्गेहृषीकेशस्ययशसाकृत·शिक्षितःआत्मांतःकरणंयेषांतेतथा तेषांमहात्मनांवोयुष्माकंसंगमोनप्रचुरइतियस्मात्तस्मात् २१ नन्वस्मत्समागमेनतवकिंफलमभूदितितत्राह नहीति मेअधोक्षजेऽमलाभक्तिरभूदित्येतदद्भुतंनहीत्यन्वयः हिशब्देनानुभविकार्थमाह कु तएतदितितत्राह मौहूर्तिकादिति यस्यतवमौहूर्तिकान्मुहूर्तकालभावात् समागमान्मेअविवेकोऽपहतोनष्टइत्ययमर्थोममानुभविकइत्यर्थः अस्मद्दत्तधनोपजीवनेनास्मच्छिक्षायोग्याएतइतिदुस्तर्कःदु ष्टायुक्तिर्मूलंयस्यसतथादुस्तर्कमूलयतिप्रतिष्ठापयतीतिवा मूलप्रतिष्ठायामितिधातुः २२

अतिमर्शंसयास्मानपहसासि त्वमित्याशंक्यापराधंक्षमापयन्निवनमस्करोति नमइति आबटुभ्यःबटुपर्यंतं गांभूंमराजभ्यइतिचतुर्थीमप्रयुज्यराज्ञामित्यनयापष्ठ्यात्मनएवाशिषमाकांक्षतइति २३ रहूग णस्यसमग्रानुग्रहंकृत्वाब्रह्मर्षिसुतनपरंकिमकारीतितत्राह इतीति इतिसमाप्यपरमात्मसुतत्वंपरमात्मनोनिर्दोषस्वरूपं अविगणितोसंख्यातःपरमानुभावोयस्यशतथा निभृतकरणोर्म्याशयःरिताभिर्नेद्रि याख्याभिप्राय: यद्वा निश्चलेंद्रियाख्यतरंगस्थानःस्ववशीभूतेंद्रियतरंगइत्यर्थः स्थानेभिप्रायआशयाति २४ सुजनाज्ज्ञानिजनपूजितजन्मनोब्राह्मणात्समवगतपरमात्मसुतत्व सम्यक्ज्ञातपरमात्मस्वरूपः आत्मनि स्वस्मिन्परमात्मविषयेवाऽविद्ययाअज्ञानेन भगवद्भक्तानामपीदृशमाहात्म्यंकिंपुनःश्रीनारायणस्येत्युपसहारमुखेननृपमभिमुखीकरोति एवमिति २५ माहात्म्योपलक्षणकीर्तिश्रवितान्श्लोका नित्यर्थः आर्षभस्यऋषभपुत्रस्यभरतस्यानुवर्त्मलोकशास्त्रयोरनुकूलमार्गं २६ हृदिस्पृशंहृदयंगमं मलवत्विष्ठावत् २७ हरिमाहात्म्यप्रकटनायपुनरुक्तंकरोति योदुस्त्यजानीति एतत्सर्वंनेच्छदितियन्

नमोमहद्भ्योस्तुनमःशिशुभ्योनमोयुवभ्योनमआबटुभ्यः ॥ येब्राह्मणागामवधूतलिंगाश्चरंतितेभ्यःशिवमस्तुराज्ञाम् २३ श्रीशुकउवाच ॥ इत्येवमुत्तरा मातःसवैब्रह्मर्षिसुतःसिंधुपतेःपरमात्मसुतत्त्वमविगणितपरमानुभावः ॥ परमकारुणिकतयोपदिश्यरहूगणेनसकरुणमभिवंदितचरणकमलःपूर्णार्णवइ वनिभृतकरणोर्म्याशयोधरणीमिमांविचचार २४ सौवीरपतिरपिसुजनसमवगतपरमात्मसुतत्त्वःआत्मन्यविद्याध्यारोपितांचदेहात्ममतिंविससर्जएवं हिनृपभगवदाश्रितानुभावः २५ तस्येमान्श्लोकान्गायंति ॥ आर्षभस्येहराजर्षेर्मनसापिमहात्मनः ॥ नानुवर्त्माहतिनृपोमक्षिकेवगरुत्मतः २६ योदुस्त्यजान्दारसुतान्सुहृद्राज्यंहृदिस्पृशम् ॥ जहौयुवैवमलवदुत्तमश्लोकलालसः २७ योदुस्त्यजान्क्षितिसुतस्वजनार्थदारान्प्रार्थ्यांश्रियंसुरवरैः सदयावलोकैः ॥ नैच्छन्नृपस्तदुचितंमहतांमधुद्विट्सेवानुरक्तमनसामभवोपिफल्गुः २८ यज्ञायधर्मपतयेविधिनैपुणाययोगायसांख्यशिरसेप्रकृतीश्वरा य ॥ नारायणायहरयेनमइत्युदारंगायन्मृगत्वमपियःसमुदाजहार २९ इदंभागवतसभाजितावदातगुणकर्मणोराजर्षेर्भरतस्यानुचरितंस्वस्त्ययनमायु ष्यंधन्यंयशस्यंस्वर्ग्यमापवर्ग्यंचानुशृणोत्याख्यास्यत्यभिनंदतिचसर्वाह्येवाशिषआत्मनआशास्तेनकाश्चनपरतइति ॥ ३० ॥ ॥ इतिश्रीभागवतेपंच मस्कंधेरहूगणसंवादोनामत्रयोदशोध्यायः ॥ १३ ॥ ॥ ॥ ॥ ७ ॥ ॥ ॥ ७ ॥ ॥

दुचितं तथाहि मधुद्विषोहरेःसेवायामनुरक्तधियां महतामभावोमोक्षोपिफल्गुरल्पः आदरणीयोनभवतीत्यर्थः सेवायाअलंबुद्ध्यगोचरत्वात् अत्रतात्पर्यार्थस्तु ऋतेहैहयवैन्यादीनित्यादिप्रमाणेनपूर्वा क्तइति ॥ २८ ॥ यज्ञायइज्यायधर्मपतयेसकलैरनुष्ठीयमानपुण्यस्वामिने विधौकर्मणिनैपुणायकुशलबुद्ध्युपेताय योगायकर्मकरणोपायज्ञायसांख्यशिरसेउत्तमज्ञानस्वरूपाय शिरःपूर्वनि पातंकृत्वासांख्यपदस्यज्ञानार्थत्वेनायमर्थःसिद्ध्यति अस्येश्वरत्वंस्वतएवनतुकृत्रिमंरुद्रादेरिवेत्यतःप्रकृतीश्वरायलक्ष्मीपतयइतिवा नारायणायहरयेनमइतिमन्त्रद्वयसूचनायप्रसिद्धनामोपादानंकृतं अपरोक्षज्ञानिनोभरतस्यमृगत्वंघटितवानित्यतोवायोगाय समुदाजहारउत्ससर्ज २९ आत्मनएवसर्वाआशिषआशास्तेप्राप्तुमिच्छति प्राप्नोतिचेति हिशब्दश्चार्थेइति शब्दोभरताख्यानसमाप्त्यर्थइति ३० इतिश्रीभागवतेपंचमस्कंधेविजय० त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ ॥ ७ ॥ ॥ ॥ ७ ॥

अत्रपूर्वाध्यायोक्तमेवमश्नपूर्वकंकथयति योहवाइत्यादिना बहुपूर्णतायामितिहरेःपूर्णतांवेत्तीतिबहुवित्तेनसार्वज्ञ्यंवेदमेव पारोक्ष्येणपरोक्षविषयेणवाचोऽर्थव्यंग्यभंग्या जीवलोकस्यजीवराशेः भवाध्वासंसार मार्गः आर्यमनीषयापंडितबुद्ध्याकल्पितविषयःनिर्णीतार्थःअव्युत्पन्नेनशब्दव्यंग्यार्थपरिज्ञानशून्येनलोकेनजनेनमुख्यतःसमधिगतोनभवतीतिनाजसाव्युत्पन्नलोकसमधिगतः परोक्षप्रियाइवहिदेवा. मत्यक्षद्विषइतिश्रुत्यर्थंहवाइत्यनेनाह एतदेवाह अथेति अथतस्मात्समवेतानुकूल्येनउक्तशब्दार्थवाच्यवाचकरूपेण समवेतंयथाज्ञातुंयोग्यंतथानुकूल्येन पुनःकथनेनतिवा १ एवंपरीक्षितापृष्टःश्रीशुकम् निःकिमुवाचेतिशौनकप्रश्नंहृदिकृत्वाउवाच सूतइति सूतःकिमुवाचेतितत्राह सहोवाचेति सश्रीशुकःराजप्रश्नपरिहारायपदुवाच अहमपित्वत्प्रश्नपरिहारार्थंवच्मीत्येतमर्थंहेत्यनेनसूचयति दुरत्यये ध्वनीत्यस्याभिप्रायंकथयति यइति यएषप्रसिद्धोर्जीवोऽसुगमेदुर्गमेध्वन्यापातितइत्यन्वयः अजयेत्यस्यविवरणंमाययेति कस्येयमित्याशंकानिवृत्तये ईश्वरस्येति आच्छाद्यविक्षिपतिस्फुरदात्मत त्वमित्यद्वैतमतनिरासायोक्तंवशवर्तिन्येति मायाकथंकारंपातयतीत्यत्रोपपत्तिंदर्शयति देहेति देहात्ममानिनादेहएवात्मेतिमन्यमानानांसंबंधिभिःसत्वादिगुणविशेषैर्विकल्पितानिविभक्तानियानिकुश

राजोवाच ॥ योहवाइहबहुविदामहाभागवतत्वयाभिहितःपारोक्ष्येणवचसाजीवलोकस्यभवाध्वासद्यार्थमनीषयाकल्पितविषयोनांजसाऽव्युत्पन्नलोकस माधिगतः अथतदेवदुरवगमंसमवेतानुकूल्येननिर्दिश्यताम् १ ॥ सूतउवाच ॥ सहोवाच यएषदेहात्ममानिनासत्वादिगुणविशेषविकल्पितकुशलाकुश लसमवहारविनिर्मितविविधदेहावलिभिर्वियोगसंयोगाद्यनादिसंसारानुभवस्यद्वारभूतेनषडिंद्रियवर्गेणतस्मिन्दुर्गाध्ववदसुगमेऽध्वन्यापातितईश्वरस्यभ गवतोविष्णोर्वशवर्तिन्यामाययाजीवलोकोयंयथावणिक्सार्थोर्थपरःस्वदेहनिष्पादितकर्मानुभवन्श्मशानवदशिवतमायांसंसाराटव्यांगतोनाद्यापिवि फलबहुयोगसहस्रहृत्तापोपशमनींहरिगुरुचरणारविंदमधुकरानुपदवीमवरुंधे २ यस्यामुहवाएतेषडिंद्रियनामानःकर्मणादस्यवइवतद्यथा ॥ पुरुषस्यध नंकिंचित्साक्षाद्धर्मौपयिकंबहुकृच्छ्राधिगतंयत्परमपुरुषाराधनलक्षणंसांपरायिकमुदाहरंति ॥ तद्धर्म्यंधनंदर्शनस्पर्शनश्रवणास्वादनावघ्राणसंकल्पसम वायेनगृहेग्राम्योपभोगेनकुनाथस्याजितात्मनोविलुंपंति ३ अथचयत्रकौटुंबिकस्यदारापत्यादयोनाम्नाकर्मणावृकसृगालाइवानिच्छतोपिकदर्यस्यकुटुं बिनउरणकवत्संरक्ष्यमाणंमिषतोपहरंति ४

लाकुशलमिश्राणिकर्माणितैर्निर्मिताभिर्विविधाभिर्देहावलिभिरुपलक्षितस्तासांसंयोगादिलक्षणोनादिसंसारोयस्तदनुभवस्यद्वारभूतेनश्रोत्रादिपडिंद्रियवर्गेणद्वारेणमाययाध्वन्यापातितइत्यर्थः समवहारो मिश्रं स्वदेहनिष्पादितकर्मेत्यनेनरजस्तमःसत्वेतिव्याख्यात नशर्मविदतीत्यस्यार्थमाह नाद्यापीति हरिगुरुचरणारविंदयोर्मधुकरइव निरंतरसेवकायेतेषामनुपदवीमनुगमनयोग्यमार्गंसेवालक्षणना प्याप्यवरुंधइत्यन्वयः विफलाश्चबहवश्चयोगाउद्योगायेतन्निमित्तःसहस्रशोहृत्तापास्तेषामुपशमनींनाशकरीं २ यस्यामिमेषडित्यस्यार्थंदर्शयति यस्यामुहवेति कुनाथस्यतद्धर्म्यंधर्मसाधनंविलुंपंती त्यन्वयः धर्मौपयिकंधर्मसाधनयोग्यं सांपरायिकंमोक्षोपयोगि एतदेवाह यत्परमेति कथंविलुंपंति दर्शनेनि संकल्पोमनोरथःदर्शनादीनासमवायेननित्यसंबंधेनगृहेग्राम्योपभोगोयस्तेन ३ गोमायवोपत्रेत्यस्यार्थमाह अथेति ४

प्रभृतवीरुत्तृणेत्यस्यार्थमाह यथाह्यनुवत्सरमिति आवपनकालेबीजप्रक्षेपसमये ५ ६ यएषआवसथोऽपक्वानाकामानांकरंडः करिदंतनिर्मितपात्रविशेषः तत्रावसथे क्वचिच्चगंधर्वपुरमित्यस्यार्थमाह क्वचित्परिवर्तमानइति क्वचित्क्वचिच्चासुहरोल्मुकग्रहमित्यस्यार्थमाह क्वचिच्चेति अशेषदोषाणांनिषदनस्थानंपुरुषविशेषदेहलक्षण पुरुषाकारविशिष्टरपतरपदेहस्यवर्णगुण कांतिगुणस्तेनउल्मुकपिशाचमुपादित्सति सुवर्णमिव पुरुषविशेषंउल्मुकपिशाचमुपादित्सतीतिवा अग्निकामवत्कातरः अशेषदोषाणापात्रीभूतंपुरुषविशेषाकारंउल्मुकपिशाचमग्निवज्जाज्वल्यमानंदृष्ट्वांतिकमुपागम्यसुवर्णबुद्ध्या दातुमिच्छति शीतार्तोऽग्निमिव दृष्टदुःसहंशीतंस्यात्तदैवमुक्तिरितिभावः पुरुषविशेषंरूपारूपंप्राप्यभोगार्थंसुवर्णस्वीकरोतिअग्निसेवाकामउल्मुकपिशाचमिवेतिवा ८ निवासतोयादित्यस्यार्थमाह अथेति

यथाह्यनुवत्सरंकृष्यमाणमप्यदग्धबीजक्षेत्रंपुनरेवावपनकालेगुल्मतृणवीरुद्भिर्गह्वरमेवभवति ५ एवमेवगृहाश्रमःकर्मक्षेत्रंयस्मिन्नहिकर्माण्युत्सीदंति ६ यदपक्वकामकरंडएषआवसथस्तत्ररतोदंशमशकसमापसदैर्मनुजैःशलभशकुंततस्करमूषकादिभिरुपरुध्यमानबहिःप्राणःक्वचित्परिवर्तमानोऽस्मिन्नध्वन्यविद्याकामकर्मभिरुपरक्तमनसानुपपन्नार्थनरलोकंगंधर्वनगरमुपपन्नमितिमिथ्यादृष्टिरनुपश्यति ७ क्वचिच्चाशेषदोषनिषदनंपुरुषविशेषमुपेत्यतद्वर्गगुणानिहितमतिःसुवर्णमुपादित्सत्यग्निकामकातरइवोल्मुकपिशाचम् ८ अथकदाचिद्गृहपानीयद्रविणाद्यनेकात्मोपजीवनाभिनिवेशएतस्यांसंसाराटव्यामितस्ततःपरिधावति ९ क्वचिच्चवात्यौपम्यया प्रमदयारोहमारोपितस्तत्कालरजसारजनीभूतंकुजनइवासाधुमर्यादोदिग्देवताअतिरजस्वलमतिर्नविजानाति १० क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपंप्रत्यक्षंपरोक्षंवारिपुराजकुलनिर्भर्त्सितेनातिव्यथितकर्णमूलहृदयः ११ सयदादृग्धपूर्वसुकृतस्तदाकारस्करकाकतुंडाद्यपुण्यद्रुमलताविषोदपानवदुभयार्थद्रविणशून्यान्जीवन्मृतान्स्वयंजीवन्म्रियमाणउपधावति १२ क्वचित्सकृदवगतविषयवैतथ्यःस्वयंविषयामिथ्यानेनभ्रंशितमतिस्तएवमरीचितोयप्रायांस्तानेवाभिधावति १३ एकदातुप्रसंगान्निकृतमतिर्व्युदस्रोतस्खलनवदुभयतोपिदुःखदंपाषंडमुपधावति १४ यदातुपरबाधयार्थआत्मनोनोपनमतितदापितृपुत्रान्बालान्खलुभक्षयति १५ क्वचिदासाद्यगृहंदावववत्प्रियार्थविधुरमसुखोदर्कंशोकाग्निनादह्यमानोभृशंनिर्वेदमुपगच्छति १६ क्वचित्कालविषमितराजकुलयक्षापहृतप्रियतमधनासुर्मृतकइवविगतजीवलक्षणआस्ते १७ कदाचिन्मनोरथावगतपितृपितामहाद्यसत्सदितिस्वप्ननिर्वृतिलक्षणमनुभवति १८

गृहाद्यनेकस्वरूपेष्वेकमंतरेणापिजीवनंनास्तीतिदुराग्रहवान् ९ क्वचिच्चवात्योत्थितेत्यस्यार्थमाह क्वचिच्चवात्येति। आरोहमंकं तत्कालरजसाविषयसेवासमयरागेण १० अहृदयझिल्लीत्यस्यार्थमाह क्वचिदुलूकेति आटोपःसंभ्रमः ११ अपुण्यवृक्षानित्यस्यार्थमाह सयदेति १२ मरीचितोयान्यभिधावतीत्यस्यार्थमाह क्वचित्सकृदिति १३ क्वचिद्वितोयाःसरितइत्येतद्विवृणोति एकदेति उभयतइहपरत्रापि व्युदस्रोतसखलनवत्मृगतृष्णिकाजलप्रवाहवत् १४ परस्परंस्वादयतइत्येतत्प्रतिवक्ति यदात्विति भक्षयतिपीडयति १५ आसाद्यदावमित्यस्यार्थमाह क्वचिदासाद्येति १६ क्वचित्कालेत्यादिनाक्वचयक्षैरितिविवृतं परैर्हृतस्वइत्येतदप्यनेनव्याख्यातं १७ क्वचिच्चगंधर्वपुरमित्येतद्व्याख्याति कदाचिन्मनोरथेत्यादिना १८

क्वचिद्गृहाश्रमेत्यादिनाचलन्क्वचिदित्येतद्विव्रियते गृहाश्रमचोदितकर्माण्येवातिभारागिरयस्तानारुरुक्षन् १९ पदेपदेभ्यंतरवह्निनेत्येतद्व्याख्याति क्वचिद्दुःसहेनेत्यादिना गृहीतसारःगतधैर्यः २० क्वचिन्निगीर्णइत्येतद्व्याचष्टे सएवेत्यादिना दष्टस्मशेतेइत्येतद्व्याख्याति क्वचिद्भग्नमनाइत्यादिना निद्राक्षणःनिद्रालक्षणावसरः २१ कर्हिस्मचिदित्यस्यार्थंदर्शयति कर्हिस्मचित्कामेत्यादिना काममधुलवानितिपाठेकाम्यंतइतिकामाविषयास्तएवमधुलवामकरंदलेशास्तानित्यर्थः २२ तत्रापिकच्छ्रादित्यस्याभिप्रायमाह अथचेति २३ २४ क्वचिच्चशीतातपेत्येतद्विवृणोति क्वचिच्चशीतातपेत्यादिना १५ क्वचिन्मिथोविपणमित्येतद्विवृणोति क्वचिन्मिथइत्यादिना विपाणिकःवणिक् १६ क्वचित्क्षीणधनइत्यस्यार्थमाह क्वचिच्चेत्यादिना २७ अन्योन्यवित्तेत्यस्यार्थमाह एवंवित्तेति २८ यतआरब्धोनरलोकसार्थस्तमीश्वरमध्वनःपारमुपदिशंति विद्वांसः २९ केतंगच्छंतीतितत्राह यदिदमिति योगमनुशास्तीतियोगानुशासनंएतद्ब्रह्मशंतमंसुखतमं उपशमशीलामुनयः

क्वचिद्गृहाश्रमचोदितकर्मातिभारागिरीनारुरुक्षमाणोलौकिकव्यसनकर्षितमनाःकंटकशर्कराक्षेत्रंप्रविशन्निवसीदति १९ क्वचिन्नदुःसहेनकायाभ्यंतरवह्निनागृहीतसारःस्वकुटुंबायक्रुध्यति २० सएवपुनर्निद्राजगरगृहीतोऽधंतमसिमग्नःशून्यारण्यइवशेतेनान्यत्किंचनवेदशवइवापविद्धः ॥ क्वचिद्भग्नमनादष्टोदुर्जनदंदशूकैरलब्धनिद्राक्षणोऽव्यथितहृदयेनक्षीयमाणविज्ञानोंऽधकूपेंधवत्पतति २१ कर्हिस्मचित्काममधुलवान्विचिन्वन्यदापरदारपरद्रव्याण्यवरुंधानोराज्ञास्वामिभिर्निहतःपतत्यपारेनिरये २२ अथचतस्याशुभप्रक्षालनकर्मसंसारावपनमुदाहरंति २३ यदिचमुक्तस्ततोबंधाद्देवदत्तउपाच्छिनत्तितस्मादपिविष्णुमित्रइत्यनवस्थितिः २४ क्वचिच्चशीतातपवातवर्षाद्यनेकाधिदैविकभौतिकात्मीयानांदुःखानांवारणायाकल्पोदुरंतचिंतयाविषण्णआस्ते २५ क्वचिन्मिथोभ्येत्यविपणिकःकाकणिकामात्रमप्यपहरतिकिंचिद्विविद्वेषमुपयातिवित्तशाठ्येन २६ क्वचिच्चक्षीणधनःशय्यासनाद्युपभोगहीनोयावदप्रतिलब्धमनोरथःपरस्वाप्तयेव्यवसितमतिस्ततोवमानादीनिलभते २७ एवंवित्तव्यतिषंगविवृद्धवैरानुबंधोपिपूर्ववासनयामिथउद्वहतःसएवोद्वहति २८ यतआरब्धएषनरलोकसार्थस्तमध्वनःपारमुपदिशंति २९ यदिदंयोगानुशासनमेतदेवशंतमंतेउपशमशीलाउपरतात्मानउपतिष्ठंति ३० क्वापिदेवमाययास्त्रियाभुजलतोपगूढःप्रस्कन्नविवेकविज्ञानस्तद्विहारगृहारंभानकुर्वंस्तदाश्रमासक्तःसुतदुहितृकलत्रभाषितावलोकविचेष्टितापहृतहृदयआत्मानमजितात्मापारेंधतमसिप्रहिणोति ३१ कदाचिदीश्वरस्यभगवतोविष्णोश्चक्रात्परमाण्वादिद्विपरार्धापवर्गकालोपलक्षणपरिवर्तनेनवयोहरतआब्रह्मस्तंबादीनांमिषतांवित्रस्तहृदयस्तमेवेश्वरंकालचक्रनिजायुधंसाक्षाद्भगवंतंयज्ञपुरुषमनादृत्यपाखंडदेवताःकंकगृध्रबकप्रायाआर्यहंसमसमयपरिभूताःसाकल्येनाभिधत्ते ३२

उपतिष्ठंतिप्राप्नुवंतीत्यन्वयः ३० प्रसज्जतीत्यस्यार्थमाह क्वापिदेवमाययेति प्रस्कन्नविवेकविज्ञानःनष्टविवेकविज्ञानःतस्याःस्त्रियाः विहारार्थंगृहोपक्रमान् सुतादीनांकलभाषितैरवलोकैर्वि[illegible]नैश्चापहृतंहृदयंयस्यसतथाआत्मानमंधेतमसिप्रहिणोतिगमयति हिगतावितिधातुः ३१ क्वचित्कदाचिद्धरिचक्रतइत्येतद्व्याख्याति कदाचिदिति कदाचित्कस्यांचिदवस्थायांईश्वरस्यचक्राद्वित्रस्तहृदयस्तमीश्वरमनादृत्यपाखंडदेवताःसाकल्येनाभिधेवभजतीत्यन्वयः परमाणुद्विपरार्धापवर्गकालउपलक्ष्यतेतेनेतितथोक्तं तेनपरिवर्तनेनपरिभ्रमणनामिषतांजीवानांवयःआयुर्लक्षणंहरतश्चक्रादाब्रह्मावसानपरमाणुकालआदिर्यस्यसतथाद्विपरार्धस्यापवर्गोवसानंयस्यसतथा केषांमिषतामाब्रह्मस्तंबादीनाब्रह्माणमवधीकृत्यस्तंबमुपक्रम्यवर्तमानानांकालचक्रंनिजायुधंयस्यसतथातम् ३२

तैर्वंचितइत्येतद्व्याचष्टे यदातुताभिरिति यज्ञपुरुषाराधनंतेषांशीलंयत्तदरोचयन् अपथ्यंमन्वानः अनिगमपरिशुद्धंवेदशुद्धिरहितं यस्यशूद्रकुलस्यमिथुनीभावःकुटुंबभरणंनान्यदितिशेष. निरवरोधः भार्यारहित अनिवारणइतिवा ३३ द्रुमेपुरंस्यन्नित्यस्यार्थदर्शयतिक्वचिद्द्रुमवदिति व्यवायोग्राम्यरतिःतदर्थमेवलक्षणःकालोयस्यसतथा ३४ क्वचित्प्रमादादित्येतद्व्याकरोति एवमध्वन्यवरुधानइति ततःकथंचिदितिइदंविवृणोति कर्मवल्लीमिति ॥ ३५ ॥ बिभ्यन्भयमापन्नः मनस्विनइत्येतद्व्याचष्टे यदपीति ॥ ३६ ॥ बाधोपसर्गैरित्यत्रोक्तानुपसर्गानाह यस्यामिति ॥ ३७

यदातुताभिःपाखंडदेवताभिरात्मवंचकैरुरुवंचितोब्रह्मकुलंसमावि शंस्तेषांशीलमुपनयनादिकर्मानुष्ठानेनभगवतोयज्ञपुरुषस्याराधनमेवपुनस्तदरोचयं श्छूद्रकुलंभजत्यनिगमपरिशुद्धम् यस्याहिमिथुनीभावःकुटुंबभरणंयथावानरजातेस्तत्रापिनिरवरोधःस्वैरेणविहरन्नतिकृपणबुद्धिरन्योन्यमुखनिरीक्षणा दिग्राम्यकर्मणैवविस्मृतकालावधिः ३३ क्वचिद्द्रुमवदैहिकार्थेषुगृहेषुरंस्यन्यथावानरःसुतदारवत्सलोव्यवायक्षणः ३४ एवमध्वन्यवरुधानोमृत्युगजभ यात्तमसिगिरिकंदरप्रायेपतन्कर्मवल्लीमवलंब्यततआपदःकथंचिन्नरकाद्विमुक्तःपुनरप्येवंसंसाराध्वनिवर्तमानोनरलोकसार्थमुपयाति ३५ एतस्मिन्सं साराध्वनिनानाक्लेशोपसर्गविततेआपन्नांस्तत्रवियुज्यजातंजातमुपादायशोचन्मुह्यन्बिभ्यन्हृष्यन्रुदन्गायन्साधुवर्जितोनैवावर्ततेद्यापिजमा ध्रुवनएव यदपिदिगिभजयिनोराजर्षयोनैवैतद्ध्वजंतिकिंतुमृधेशयीरन्मयैवेयंमहीतिकृतवैरानुबंधाःयांविसृज्यस्वयमुपसंहृताः ३६ यस्यामिमउपसर्गाः सुखदुःखरागद्वेषभयाभिमानप्रमादमदशोकमोहमात्सर्येर्ष्यावमानक्षुत्पिपासाधिव्याधिजराजन्ममरणादयः ३७ ॥ इतिश्रीभागवतेपंचमेचतुर्दशोध्या यः॥१४॥ श्रीशुकउवाच ॥ भरतस्यात्मजःसुमतिर्नामाभिहितोयमुहवावकेचित्पाखंडिनोविलोक्य ऋषभपदवीमनुवर्तमानमनार्याअवेदसमाम्नातांदेव तांस्वमनीषयापापीयसिकलौकल्पयिष्यंति १ तस्यांगृध्रश्येनायांदेवपादिर्नामपुत्रोभवत् २ अथासुयांतत्तनयोदेवद्युम्नस्ततोधेनुमत्याःसुतःपरमेष्ठीत स्यसुवर्चायांप्रतीहउपजातःयआत्मविद्यायांस्वयंसिद्धोमहापुरुषमनुसस्मार ३ प्रतीहात्सुवालायांप्रतिहर्त्रादयस्त्रयआसन्निज्याकोविदाःसूनवःप्रतिह र्तुःस्तुत्यांव्योमभूमानावजनिषाताम् ४ व्योम्नऋषिकुल्यायामुद्गीथःततःप्रस्तोतादेवकुल्यायांप्रस्तोतुर्विंरुरुत्सायांहृदयजआसीद्विभुःविभोःरथ्यांचपृ थुषेणस्तस्मान्नक्तआकूत्यांजज्ञेनक्ताद्द्रतिपुत्रोगयोराजर्षिप्रवरउदारश्रवाअजायतसाक्षाद्भगवतोविष्णोर्जगद्भिरक्षया गृहीतसत्वस्यकलात्मवत्ताभिलक्षणे नमहापुरुषतांप्राप्तः ५



इतिश्रीभागवतेविजयध्वजटीकायांपंचमस्कंधेचतुर्दशोध्यायः ॥ १४ ॥ राजसंततौविशिष्टराजज्ञानंभगवन्माहात्म्यज्ञानोपयोगीत्यतस्तज्ज्ञानायावशिष्टवंश्यानानुक्रामत्यस्मिन्नध्याये यमुहवावेति उह वावेतिचतुर्भिर्निपातैरवैदिकमतस्य वैभाषिकादिचतुर्द्धाभेदःसूच्यते अवेदोवेदविरुद्धःआगमस्तत्रप्रतिपादितांपद्मावतीत्यादिनामवर्ती १ २ तस्यदेवपादेस्तनयः ३ ४ हृदयजऔरसपुत्र. अभिरक्षयाज गद्रक्षाकारणेनगृहीतसत्वगुणस्यकलाया. अंशस्यआत्मवत्तामूर्तदेहवत्त्वेनप्रकाशमानं तस्याभिलक्षणेन विग्रहवत्कलांशेनकरचरणादिचक्रचिह्नेन सर्वैर्गीयमानत्वाद्गयः ५

स्वधर्मेणावनिंअजुगुप्द्वैइत्यन्वयः स्वधर्मेणेत्येतत्स्पष्टयति प्रजापालनेति सर्वात्मनेत्यादिचस्वधर्मेणेत्यस्यविशेषणं निर्व्याजेनसर्वसमर्पणाख्यचिह्नेनब्रह्मविदांचरणानिरंतरनिषेवयाभक्तिसाधनमेतत्प
रिभावितंवशीकृतं अतएवविशुद्धंसत्वमंतःकरणंयस्यसतथा उपरतंनिवृत्तमनात्म्यंदेहधर्मोयस्मिंस्तथातस्मिन्स्वात्मनिस्वहृदयेउपलभ्यमानः अपरोक्षीक्रियमाणोब्रह्मानुभावोयस्यसतथा अपीत्यनेनरा
ज्यपालनंसंभावितंनभवतितथापीत्यर्थंद्योतयति निरभिमानइत्यनेनानुपपत्तिपरिहरति तस्येमांगाथामित्यनेनगीयमानत्वाद्गयेतिशब्दार्थंसूचयति ६ पुराविदःपुराणज्ञाः गाथांविषमाक्षरगुरुपादोपेतां
तथोदाहरंति गयमित्यादिना अन्यःकःकर्मभिः गयनृपं प्रतियाति प्रतिनिधिर्भवति कीदृशःयज्वेत्यादिगुणकर्मवान्सतासदसस्पतिः कोपिवास्तीति नेत्याह भगवत्कलामिति भगवतांज्ञानभक्त्याभा
व्यवतांकर्मदेवानांकलामंगमेकमंतरेण तदुक्तं प्रियव्रतोगयश्चैवकर्मदेवसमौगुणैरिति ७ सतीःसत्यः दक्षकन्याः कीर्तिःश्रीर्वाक्स्मृतिर्मेधाधृतिःक्षमेत्याद्याः स्वयंगुणवत्वेनस्नुतमूधोयस्याःसातथा सा ध

सर्वैस्वधर्मेणप्रजापालनपोषणप्रीणनोपलालनानुशासनलक्षणेनेज्यादिनाचभगवतिमहापुरुषेपरब्रह्मणिसर्वात्मनार्पितपरमार्थलक्षणेनब्रह्मविच्चरणानुसेव
यापादितभगवद्भक्तियोगेनचाभीक्ष्णशःपरिभावितविशुद्धसत्वउपरतानात्म्येस्वात्मनिस्वयमुपलभ्यमानब्रह्मानुभावोपिनिरभिमानएवावनिमजुगुपत्
६ तस्येमांगाथांपांडवेयपुराविदउपगायंति ॥ गयंनृपंकःप्रतियातिकर्मभिर्यज्वाभिमानीबहुविद्धर्मगोप्ता ॥ समागतश्रीःसदसस्पतिःसतांसत्सेवकोन्योभग
वत्कलामृते ७ यमभ्यषिंचन्परयामुदासतीःसत्याशिषोदक्षकन्याःसरिद्भिः ॥ यस्यप्रजानांदुदुहेधराशिषोयथेप्सितःवैगुणवत्स्नुतोधाः ८ छंदांस्यकामस्य
चयस्यकामान्दुदूहुराजह्नुरथोबलिंनृपाः ॥ प्रत्याहृतायुधिधर्मेचविप्रायस्याशिषःषष्ठमंशंप्रजाश्च ९ यस्याध्वरेभगवानध्वरात्मामघोनिमाद्यत्युरुसोमपी
थे ॥ श्रद्धाविशुद्धाचलभक्तियोगसमर्पितेज्याफलमाजहार १० यत्प्रीणनाद्बर्हिषिदेवतिर्यङ्मनुष्यवीरुत्तृणमाविरिंचात् ॥ प्रीयेतसद्यःसहिविश्वजीवःप्री
तःस्वयंप्रीतिमगाद्गयस्य ११ गयाज्जयंत्यांचित्ररथःस्वातिरवरोधइतित्रयःपुत्राबभूवुश्चित्ररथादूर्जायांसम्राडजनिष्ट १२ ततउत्कलायांमरीचिर्मरीचेर्बिंदुम
त्यांबिंदुमानुदपद्यततस्मात्सुषेणायांमधुर्नामाभवत्मधोःसुमनस्यांवीरव्रतस्ततोभ्रजायांमन्युप्रमन्यूजज्ञातेमन्योःसत्यायांभुवनस्ततोदोषायांत्वष्टाजनि
ष्टत्वष्टुर्विरजोविरोचनायांविरजस्यशतजित्प्रवरंपुत्रशतंकन्याचविषूच्यांकिलजाता १३

रा गयस्यराज्ञः सतीनांप्रजानांयथेप्सिताःआशिषोदुदुहे वाइत्यनेनसकलजगद्वशीकरणशक्तिसमुद्रश्रीपुरुषोत्तममंत्रसिद्धोगयइतिसूच्यते ८ वेदाअपितदुक्तफलानिच्छत्वोपिसर्वाभीष्टान्दुदुहुरित्याह
छंदांसीति नृपान्विशिनष्टि प्रत्याहृताइति युद्धेपराजिताइत्यर्थः विप्राधर्मेप्रत्याहृताधर्माभिमुखीकृताः प्रजाश्चयस्याशिषोधनलक्षणाः षष्ठमंशमाजह्नुरित्यन्वयः अनुष्ठितपुण्यलक्षणाशिषोवा ९ उरुसो
मपीथेबहुसोमपाने अध्वरस्यसारमादत्ते कर्तृभ्यःफलंददातिचेत्यध्वरात्मामघोनिदेवेंद्रेमाद्यतिमदंगच्छतिसति श्रद्धयाविशुद्धोयोचलभक्तियोगःतेनसमर्पितमिज्याफलयागादिपूजालक्षणंकर्मफलं भाज
हारदत्तौ १० यस्यहरेःप्रीणनाज्जगत्प्रीयेतप्रीतंस्यात् स्वयंस्वतः प्रीतः ११ १२ शतजिन्नामपुत्रःप्रवरोज्येष्ठोयस्यात्तच्छतजित्प्रवरं १३

अत्यलमतीवालमकरोत् १४ इतिश्रीभागवतेपंचमस्कंधेवि०पंचदशोध्यायः ॥१५॥ भूवलयतद्विशेषज्ञानंश्रीनारायणमहिमोपलक्षणत्वात्तदावश्यकंमोक्षोपयोगीत्यतस्तत्परिमाणादिवर्णयति पंचदश्या
येषुतत्रपरीक्षिद्विशेषतोपिज्ञातुमुक्तानुवादपूर्वकंश्रीशुकंपृच्छति इत्युक्तइति आदित्योयावत्पर्यंतंतपत्यसौचंद्रमाश्चयत्रज्योतिषांनक्षत्राणांगणै सहदृश्यते तावद्भूमंडलायामविशेषस्तावानित्युक्तः १ तत्रापि
इत्येपि प्रियव्रतेत्यनेनयोवाइहेत्येतदनुवदति यतएतस्याइत्यनेनयतएवंकृताइत्येतदनुवदति अयमाशयः प्रियव्रतस्यरथचरणनेमिनैशित्यपरिखाताः सप्तसिंधवआसन्यास्तस्यरथचरणानिशितपर्यं
तोत्थितपर्यस्तमृत्तिकाघनपंक्तय स्तत्तत्परिखापर्यंतरप्रदेशवर्तिन्यस्ताःसप्तद्वीपाआसन् तेषानामानिकथितानीति सूचितइत्यनेनविशेषोनोक्तइति ततःकितत्राह एतादिति निखिलमुर्वरितयथानभव
तितथानिखिलं अंतरालेएतदुपयोग्येवनान्यदित्यर्थेएवशब्दः मानंपरिमाणं लक्षणंवर्तुलचतुरस्राकारादि नकेवलमिदमेव किंतु यत्सप्तसागरादिभ्यःपरस्तात्कांचनभूम्यादिकंतदपि नकेवलंतावतालमपित
त्रापिविद्यमानंसर्वमनुर्वरीकृत्यैतदभिप्रायेणपुनश्चसर्वशब्दप्रयोगइत्यर्थः जिज्ञास्यामीत्यनेनज्ञानेच्छैव नतुविचारइत्यतःपरस्मैपदप्रयोगः अहमित्यनेनान्येषामप्रयोजनसद्भावेपिममातीवप्रयोजनमिति
सूचयति अन्यथाजिज्ञास्यामीतिसामान्योक्तिसंभवात् २ किंतदतीवप्रयोजनमितिविवृत्त्यदर्शयति भगवतइति इतःपूर्वंगुणमयेसत्वादिगुणविरचितेस्थूलरूपेपातालाद्यचेतनावयवविशिष्टे आवेशितं

तत्रायंश्लोकः प्रैयव्रतंवंशमिमंविरजश्चरमोद्भवः॥अकरोदत्यलंकीर्त्याविष्णुःसुरगणंयथा १४ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेप्रियव्रतवंशवर्णनंनामपं
चदशोध्यायः १५ राजोवाच ॥ इत्युक्तस्त्वयाभूमंडलायामविशेषोयावदादित्यस्तपतियत्रचासौज्योतिषांगणैश्चंद्रमाःसहदृश्यते १ तत्रापिप्रियव्रतरथचरण
परिखातैःसप्तभिःसप्तसिंधवउपक्लृप्ताःयतएतस्याःसप्तद्वीपविशेषकल्पस्त्वयाभगवन्खलुसूचितःएतदेवनिखिलमहंमानतोलक्षणतश्चसर्वंविजिज्ञास्यामि २ भग
वतोगुणमयेस्थूलरूपआवेशितंमनोह्यगुणेपिसूक्ष्मआत्मज्योतिषिपरेब्रह्मणिभगवतिवासुदेवाख्येक्षममावेशितुंतदुहैतद्गुरोऽर्हस्यनुवर्णयितुमिति ३
ऋषिरुवाच ॥ नवैमहाराजभगवतोमायागुणविभूतेःस्थानविशेषाणांनामरूपतःकाष्ठांमनसाधिगंतुमलंविबुधायुषेणापिपुरुषस्तस्मात्प्राधान्येनैवभूगो
लकविशेषंनामरूपमानलक्षणतोव्याख्यास्यामः ४ योवाअयंद्वीपःकुवलयकमलकोशाभ्यंतरकोशोनियुतयोजनविशालःसमवर्तुलोयथापुष्करपत्रम् ५

निधातुमभ्यस्तं विशेषस्मरणसमर्थंहियत्तन्मनोऽगुणेपिसत्वादिगुणप्रवृत्तिशून्येपिसच्चिदानंदाकारे अतएवसूक्ष्मेअनुग्रहमंतरेणादृश्ये तर्हिकिंतमोरूपंनेत्याह आत्मज्योतिषिस्वयंप्रकाशे । किंनाम्नि परे
ब्रह्मणिपरब्रह्मसंज्ञे भगवतिऐश्वर्यादिगुणपूर्णे । वैदिकमंत्रेणलौकिकंनामकितत्राह वासुदेवाख्ये अनेनात्रकिंवदंतीप्रमाणमितिसूचितं आवेशितुंक्षमंसमर्थंतदेतदेव हेत्यनेनान्यत्र नापृष्टःकस्यचिद्ब्रूया
दित्यनपेक्षामाह ३ मायागुणविभूतेःप्रकृतिगुणप्रवृत्तयेयाद्विविधंभवनंबहुरूपग्रहणंयस्यसतथातस्य महिमागुणविभूतेर्वा काष्ठामवसानंपूर्तिंलक्षणांविबुधायुषेणद्विपरार्द्धलक्षणेन ४ योजनंव्याख्यः पूर्व
पश्चिमाभ्यांदक्षिणोत्तराभ्यांपार्श्वाभ्यांसमुद्रंजलंपिबतीतिद्वीपःतदभावेतरणिकिरणसंतापेनघनीभावंमुक्त्वापरमाण्वशेषेणद्वीपस्थितजनस्याधाराभावेनजलमज्जनेनसर्वनाशप्रसंगःस्यादीर्घनिपातनात्सा
धुरिति सोयंनियुतयोजनविशालएकादशस्थानादिसंख्याक्रमेणनियुतसंख्यायाःलक्षसंख्यात्वज्ञापतेतेनलक्षयोजनेनविस्तारइतिपरिमाणमुक्तंभवति शृंगग्राहिकयैवतत्प्रकारंज्ञापयति कुवलयंभूमंड
लंतदेवकमलंतस्यकोशस्येतरद्वीपलक्षणस्याभ्यंतरकोशोंतःस्थितकोशवद्वर्त्तमानःलक्षणमाह समवर्तुलःअत्रदृष्टांतमाह यथापुष्करपत्रं अंतरकोशदलान्यंतरालेविरलानिभवंति नतथा पुष्करपत्रमेकत्वेन
विच्छेदाभावादित्यरुच्यपद्मपत्रोदाहरणं वाइत्यनेनेदमेवमानादिकं नान्यत्रोक्तमितिविशदयति ५

यस्मिन्द्वीपे ६ येषांवर्षाणांयस्येलावृतस्यनाभिस्थानेमध्यइत्यर्थः जंबूद्वीपस्ययावान्लक्षयोजनपरिमितआयामस्तावान्समुन्नाहउच्छ्रायोयस्यसतथालक्षयोजनउच्छ्रितइत्यर्थःमानमुक्त्वालक्षण
माह कर्णिकाभूतइति भूमंडलरूक्षणपद्मस्यकर्णिकास्थानीयःननु नियुतयोजनविशालोद्वीपोद्वीपायामसमुन्नाहइत्येतत्कथविशदंस्याच्चतुराशीतिसाहस्रयोजनानांसमुच्छ्रयइतिपराशरवचनंजागर्तीति
चेन्न नतदीहागीतिज्ञेयंनवाच्यंनचतर्क्यते पश्यंतोपिनजानंतिमेरोरूपंविपश्चितइतिवचनात् पराशरस्यान्यथाज्ञानसंभवादिंद्रस्तुवर्तुलाकारंपंचकोणबृहस्पतिरितींद्रादीनामप्यज्ञानकथनाच्चत्रिशंत्रि
कालदर्शीस्यादितिवचनाद्भगवत्प्रसादापन्नज्ञानपराशरवचनस्यान्यथाज्ञानमूलत्ववचनमितिसाहसमितिचेन्नप्रामाणिकत्वात्परमात्मानमंतरेणान्येषांतत्रतत्राज्ञानदर्शनाच्च नन्वेवंनिरासलक्षणवै
रमतरेणैकवाक्यत्वांगीकारेमहान्महर्षेःस्यादितिचेद्धंतैवं तर्हिशृणु प्रविष्टःषोडशाधस्तादितियोजनावगमात् ननु तावतांतर्भूम्यांप्रविष्टइतिमेरोर्लक्षयोजनोच्छ्रायादाधिकपरिमाणोक्तेरितिचेन्नभूमिप्रवि
ष्टरूपेणसहलक्षयोजनोच्छ्रायोपपत्तेःवचनलाघवायमूलेषोडशसहस्रइतिप्रस्तावेतावतेत्युक्तत्वात् दूरस्थग्रहणानुपपत्तिपरिहारोपपत्तेः किंच चतुराशीतीत्यत्रचतुरशीतीतिवक्तव्येआकारग्रहणात्कश्चिद्वि
शेषोस्तीतिज्ञायते सभगवतोक्तएवग्राह्यःनज्ञानापारवारिधेर्व्यासस्यवचनस्यान्यथात्वंशक्यपाशंकं तथाचभागवतोक्तप्रकारेणभुवनकोशादिकंग्राह्यं तथाचोक्त यथाभागवतेतूक्तंभौवनंकोशलक्षणं त

## यस्मिन्नववर्षाणिनवयोजनसहस्रायामान्यष्टभिर्मर्यादागिरिभिःसुविभक्तानिभवंति ६ येषांमध्येइलावृतंनामाभ्यंतरवर्षंयस्यनाभ्यामवस्थितःसौवर्णः कुलगिरिराजोमेरुर्द्वीपायामसमुन्नाहःकर्णिकाभूतःकुवलयकमलस्यमूर्द्धनिद्वात्रिंशत्सहस्रयोजनविततोमूलेषोडशसहस्रस्तावतांतर्भूम्यांप्रविष्टः ७ उत्तरोत्तरेणेलावृतान्नीलःश्वेतःशृंगवानितित्रयोरम्यकहिरण्मयकुरूणांत्रयाणांमर्यादागिरयःप्रागायताउभयतःक्षारोदावधयोद्विसाहस्रंपृथवःएकैकशःपूर्वस्मादुत्तरोत्तरादशांशेनदैर्घ्यएवन्हसंति ८ एवंदक्षिणेनेलावृतान्निषधोहेमकूटोहिमालयइतिप्रागायतायथानीलादयःअयुतयोजनोत्सेधाःहरिवर्षकिंपुरुषभारतानां यथासंख्यम् ९ तथैवेलावृतमपरेणपूर्वेणचमाल्यवद्गंधमादनावानीलनिषधायतौद्विसहस्रपृथुलौकेतुमालभद्राश्वयोःसीमानंविदधाते १० मंदरोमेरुमंदरः सुपार्श्वःकुमुदइत्ययुतयोजनविस्तारोन्नाहाः मेरोश्चतुर्दिशमवष्टंभगिरयउपक्लृप्ताः ११ चतुर्ष्वेषुचूतजंबूकदंबन्यग्रोधाश्चत्वारःपादपप्रवराःपर्वतकेतवइव अधिसहस्रयोजनोन्नाहास्तावद्विटपविततयःशतयोजनपरिणाहाः १२

स्याविरोधतोयोज्यंसर्वंग्रंथांतरास्थितं मंडोदेपूरणंचैवव्यत्यासंक्षीरसागरे राहुसोमरवीणांचमंडलाद्विगुणोक्तितां विनैवसर्वंसुज्ञेयंयोजनाभेदतोत्रस्विति ७ इलावृतात्खंडादुत्तरोत्तरेणशृंगैः पूर्वस्यां दिशिमुख्यवत्स्थिताः प्रागायताःद्विसहस्रपृथवः द्विसहस्रयोजनविस्ताराः दैर्घ्यएवन्हसंति नोर्ध्वपृथुत्वे ८ एवमिलावृताद्दक्षिणेनानिषधादयः यथानीलादयोदैर्घ्येणन्हसंति तथानिषधादयोपि अत्रायंविशेषः नीलनिषधौलक्षप्रमाणावन्येदशांशहीनाः तदुक्तं लक्षप्रमाणौद्वौमध्येदशहीनास्तथापरइतिवैष्णवे जंबूद्वीपप्रमाणेननिषधःपरिकीर्तितः तस्माच्चदशभागेनहेमकूटःप्रतीयतइतिवाराहे य थासंख्यंमर्यादागिरयइतिशेषः ९ तथैवेलावृतमिति यथेलावृतादुत्तरदक्षिणतोनीलनिषधादयस्तथेलावृतस्यापरेणपश्चिमेनपूर्वेणचमाल्यवद्गंधमादनौयथासंख्यंस्तइतिशेषःआनीलनिषधायतौनी लनिषधपर्यंतविस्तारोतत्संबद्धावित्यर्थःसीमानमवधिम् १० अवष्टंभगिरयःपीठस्थानीयपर्वताः ११ एतेषुमंदरादिषुपर्वतकेतवःमंदरादिपर्वतानांध्वजाइवस्थिताः अधिसहस्रयोजनोन्नाहाःसह स्रादधिकैकशतयोजनोच्छ्रायाः तदुक्तं एकादशशतायामाःपादपागिरिकेतवइति अत्रायामशब्देनोच्छ्रायउच्यते तावद्विटपविततयःयावदुच्छ्राययोजनसंख्यानंतावत्संख्याकशाखाविस्ताराः श तयोजनपरिणाहाः परितःशतयोजनस्थूलाः १२

१३ देवोद्यानानिदेवानांक्रीडायोग्यस्थानानि अमरललनानांसुरस्त्रीणांमध्येयाललामभूताःश्रेष्ठास्तासांयूथस्यपतयोयाःस्त्रियस्ताभिः सहिताःसहामरललनाललामयूथपतयः अमरपरिवृढादेवश्रे
ष्ठाः १४ १५ मंदरोत्संगेमंदरपर्वतस्यांकस्थानीयेतटे देवोपभोगयोग्यत्वाद्देवचूतस्तस्यशिरसोग्रदेशात् १६ तेषांफलानांअतिमधुरादिलक्षणेनरसोदेनरसाख्यजलेन पूर्वेणइलावृतमिलावृतवर्षस्यपूर्व
प्रदेशं ॥ उपधावतीतिकेचित्तत्र धावुगतिशुद्ध्योरितिधातोः शुद्धंकरोतीत्यर्थः स्वजलप्रवाहेणेतिशेषः १७ उपजोषान्निषेवणात् अनुचरीणांदासीनां अनुवासयति सौरभ्ययुक्तंकरोति १८ अन
स्थिप्रायाणांबहुलमनंतर्बीजानामिभकायनिभानामितिबुद्ध्यारोहार्थमुक्तं नतुतावत्परिमाणनिश्चयेन अरत्नीनांशतान्यष्टावेकषष्ट्यधिकानिच फलप्रमाणमाख्यातमृषिभिस्तत्त्वदर्शीभिरितिवायुपुराण

ह्रदाश्चत्वारःपयोमध्विक्षुरसमृष्टजलाःयदुपस्पर्शिनउपदेवगणायोगैश्वर्याणिस्वाभाविकानिभरतर्षभधारयंति १३ देवोद्यानानिचभवंतिचत्वारिनंदनंचै
त्ररथंवैभ्राजकंसर्वतोभद्रमिति १४ येष्वमरपरिवृढाःसहामरललनाललामयूथपतयःउपदेवगणैरुपगीयमानमहिमानःकिलविहरंति १५ मंदरोत्संगएकाद
शशतयोजनोत्तुंगदेवचूतशिरसोगिरिशिखरस्थूलानिफलान्यमृतकल्पानिनिपतंति १६ तेषांविशीर्यमाणानामतिमधुरसुरभिबहलारुणरसोदेनारुणोदाना
मनदीमंदरगिरिशिखरान्निपतंतीपूर्वेणेलावृतमुपप्लावयति १७ यदुपजोषाद्भवान्याअनुचरीणांपुण्यजनवधूनामवयवस्पर्शसुगंधवातोदशयोजनंसमंतादनु
वासयति १८ एवंजंबूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानांरसेनजंबूनदीमेरुमंदरशिखरादयुतयोजनादवनितलेनिपतंती
दक्षिणेनात्मानंयावदिलावृतमुपस्यंदयति १९ तावदुभयोरपिरोधसोर्यामृत्तिकातत्रफलरसेनानुविध्यमानावाय्वर्कसंयोगविपाकेनसदामरलोकाभरणं
जांबूनदंनामसुवर्णंभवति २० यदुहवावविबुधादयःसहयुवतिभिःकटकमुकुटकटिसूत्राद्याभरणरूपेणखलुधारयंति २१ यस्तुमहाकदंबःसुपार्श्वनि
रूढस्तस्यकोटरेभ्योनिःसृताःपंचव्यामपरिणाहाःपंचमधुधाराःसुपार्श्वशिखरात्पतंत्योपरेणात्मानंइलावृतमनुमोदयंति २२ यात्पुपभुंजानानांमुख
निर्वासितोवायुःसमंताच्छतयोजनमनुवासयति २३ एवंकुमुदनिरूढोयःशतवल्शोनामवटस्तस्यस्कंधेभ्योर्वाचीनाःपयोदधिघृतमधुगुडान्नाद्यंबरश
य्यासनाभरणादयःसर्वकामदुघानदाःकुमुदाग्रात्पतंतउत्तरेणेलावृतमुपभोजयंति २४ यानुपजुषाणानांनकदाचित्क्वचिदपिप्रजानांवलीपलितक्लमस्वेददौ
र्गंध्यजरामरणमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषाभवंति ॥ यावज्जीवंसुखंनिरतिशयमेव २५ कुरंगकुररकुसुंभवकंकतात्रिकूटशिशिरपतंगरुच
कनिषधशितिवासकपिलशंखवैदूर्यजारुधिहंसर्षभनीरनागकालंजरनारदादयोगिरयोमेरोःकर्णिकायाइवकेसरभूतामूलदेशेपरितउपक्लृप्ताः २६

वचनात्तत्प्रमाणमवगंतव्यं अयुतयोजनादितिशिखरस्यैवतावत्त्वंन किंतु शिखरादवनितलांतरालप्रदेशस्यतावत्त्वमित्यवगंतव्यं इलावृतमात्मानंदक्षिणेनदिग्भागेनयावदुपस्यंदयतितावत्तस्यउभयो
रोधसोस्तीरयोर्जंबूफलरसेनानुविध्यमानाप्रतिहन्यमाना यामृत्तिका साजांबूनदंनामसुवर्णंभवतीत्यन्वयः तत्रहेतुर्वाय्वर्केति १९ २० २१ कोटरेभ्यःवृक्षविवरेभ्यः व्यामोहस्तावधिःस्मृतइतिहला
युधःअपरेणपश्चिमेन २२ मुखनिर्वासितः मुखनिर्गतः २३ इलावृतस्थजनानुपभोजयंति २४ उपसर्गोभूताद्युपद्रवः २५ कुरंगकुररादिपर्वताः मेरोर्मूलदेशेपरितउपक्लृप्ताः मेर्वाख्यपद्मकर्णिकायाःके
सराइवस्थिताः २६

अष्टादशयोजनसहस्रेदूरप्रदेशेमंदरगिरिपूर्वभागेजठरदेवकूटौस्थितौभवतः उदगायतौउत्तरदीर्घौ मेरुपूर्वतःइलावृतमेवोर्मध्येअष्टादशयोजनसहस्रेइतिसएवार्थोयोजनाभेदइतिवा एवमपरेण एवंमेरो पश्चि मभागस्थितसुपार्श्वगिरेःपश्चिमभागे इलावृतमेवोर्मध्येअष्टादशयोजनसहस्रेदूरेपवनपारियात्रौगिरीतिष्ठतः तावप्युदगायतौ एवंमेरोर्दक्षिणतः कैलासकरवीरौमेरुमंदरगिरेरपिबहिर्भागेस्थितौपूर्वपश्चिमा यतौएवंमेरोरुत्तरभागेकुमुदपर्वतादपिबहिर्भागेशृंगमकरौनामगिरीआस्तां अष्टादशयोजनानांसहस्रइतिसर्वत्रयोज्यं तावपिप्रागायतौ द्विसहस्रपृथूच्चुगतवचसर्वत्रसमयथादर्भैःपरिस्तृतोग्निस्तथैवैतैरष्टभि १ र्वैतैःपरितःपरिस्तृतोलंकृतश्चकास्तिकांचनगिरिरित्यर्थः एवमुक्तगिरिषुप्रागायतत्वादिकंलक्षणंद्विसहस्रपृथूच्चुगमानमवगंतव्यं २७ मेरोर्मूर्द्धनिद्वात्रिंशत्सहस्रयोजनविततेतस्यमेरोर्मूर्ध्नोमध्येआत्मयोने र्विरिंचस्यशतकोटिनामपुरींवदंति शातकौंभींसुवर्णमयी २८ तुरीयभागेनविरंचिपुर्याश्चतुर्थांशप्रमाणेनसार्धद्विसहस्रयोजनप्रमाणेनेत्यर्थः पुरःपुर्यः तामनुपरितइत्यस्यविवरणयथादिशमिति २९ इतिश्रीभागवतेपंचमस्कंधेविजयध्वजटीकायां षोडशोध्यायः १६ अयत्नेनभागीरथीजलानिषेवयानिर्मलांतःकरणस्यपुंसोहरौनिरतिशयभक्तिःस्यादितितन्माहिमगर्भ.तदवतारोनिरूप्यतेस्मिन्न

जठरदेवकूटौमेरुपूर्वतोष्टादशयोजनसहस्रेउदगायतौद्विसहस्रंपृथूत्तुंगौभवतः ॥ एवमपरेणपवनपारियात्रौदक्षिणेनकैलासकरवीरौप्रागायतौएवमुत्तरतः शृंगमकरौइत्यष्टभिरेतैःपरिस्तृतोग्निरिवपरितोमेरुश्चकास्तिकांचनगिरिः २७ मेरोर्मूर्धनितन्मध्यतोभगवतआत्मयोनेरुपक्लृप्तांपुरींअयुतयोजनसाहस्रींसम चतुरस्रांशातकौंभींशतकोटिंवदंति २८ तामनुपरितोलोकपालानामष्टानांयथादिशंयथारूपंतुरीयभागेनपुरोष्टावुपक्लृप्ताः ॥ २९ ॥ ॥ इतिश्रीभाग वतेपंचमस्कंधेभुवनकोशपरिवर्णनंनामषोडशोध्यायः १६ ॥ श्रीशुकउवाच ॥ तत्रभगवतःसाक्षाद्यज्ञलिंगस्यविष्णोर्विक्रमतोवामपादांगुष्ठनखनिर्भि न्नोर्ध्वांडकटाहविवरेणांतःप्रविष्टायाबाह्यजलधारातच्चरणपंकजावनेजनारुणकिंजल्कोपरंजिताखिलजगदघमलापहोपस्पर्शनामला साक्षाद्भगवत्पदीत्यनु पलक्षितवचोभिरभिधीयमानातिमहताकालेनयुगसहस्रोपलक्षणेनादिवोमूर्धन्यवततार १ यत्तद्विष्णुपदमाहुःयत्रहवाववीरव्रतऔत्तानपादिःपरमभागव तोस्मत्कुलदेवताचरणारविंदोदकमितियामनुसवनमुत्कृष्यमाणभगवद्भक्तियोगेनदृढंक्लिद्यमानांतर्हृदयऔत्कंठ्याद्विवशामीलितलोचनयुगलकुड्मलवि गलितामलबाष्पकलयाभिव्यज्यमानरोमपुलककुलकअधुनापिपरमादरेणशिरसाबिभर्ति २

ध्याये तत्रेत्यादिना यावाह्यजलधाराअंडकटाहाद्बहिःस्थिताजलस्यनिरंतरसंतापरूपासा यत्तद्विष्णुपदंशिशुमारात्मनोहरेःस्थानमाहुः तत्रदिवेंतरिक्षस्यमूर्धनिध्रुवलोकेअवततारप्रकाशितस्वरूपाभूदि त्यन्वयःस्वतोऽमलाधवलातथाप्यरुणैवेत्याह तच्चरणेति यस्यहरेश्चरणरक्तपद्मयोरवनेजनेनप्रक्षालनेनचरणतललग्नरजोमिश्रितत्वादरुणकिंजल्करजसोपरंजितारागीकृतेव तर्हितन्निषेविणारागजन कत्वेनपापजननीस्यादित्यतउक्तं अखिलेति अखिलजगतः पापमलापहमुपस्पर्शनंयस्याः सातथा आचमनमात्रेणसर्वपापक्षयकरा किमुतस्नानादिनेत्यर्थः नामकीर्तनादपिदुरितहराकिमुतस्पर्शनादिने तिभावेनाह साक्षादिति अनुपलक्षितवचोभिरुपलक्षणरहितवचोभिर्वेदपुराणगतैः शालग्रामशिलाभिषेकजलस्यपादोदकत्वमिवोपचारिकंनभवतीत्यतःसाक्षादनुपलक्षितेतिपदद्वयं ॥ कल्पभेदाद्वामपादे तिव्यत्ययस्योक्तं नत्वेकस्मिन्कल्पयति तदुक्तं वाराहेवामपादंचतदन्येषुचदक्षिणं पादकल्पेषुभगवानुज्जहारत्रिविक्रमइति १ यत्रध्रुवलोके २

ततोध्रुवलोकात् उपेक्षिताअन्यार्था अन्यविषयाआत्मगतिर्यैस्तैस्तथा ३ ततःसप्तर्षिलोकात्देवयानेनमार्गेणइंद्रादिपुरसंबंधेनब्रह्मसदनेमेरुमध्यस्थितेशतकोटिनाम्निपुरे ४ तत्रब्रह्मसदनाङ्गणे नंदनदीपितिसमुद्रम् ५ चतुर्धाभिन्नायागंगायागतिभेदमाह सीतेति क्षाररससमुद्र लवणसमुद्रं ६ ७ मेरुशिरसोव्योम्नानिपतंती नीलगिरिशिखरेपतित्वा ततोनीलगिरिशिखरादाकाशेनश्वेतगिरिशिखरमवस्यंदमानापुनस्तदप्यतिहायअतिक्रम्याकाशेनशृंगवतःशृंगंप्राप्ता ततोपिस्यंदमानोत्तरकुरूनतिक्रम्य निषधस्यगिरेःबहूनिकूटानिशृंगाण्यतिक्रम्याकाशेनहेमकूटहिमाचलयोर्गिर्योर्मध्येव्योम्नापतंतीकूटान्यतिक्रम्य ८ रभसतरःसंभ्रमातिशयस्तस्यवेगेनोपर्यधः पाषाणशिखरेपुलुठंतीस्खलित्वापरिवर्तमाना ९ नवानांवर्षाणांविशेषमाह अत्रापीति कर्मक्षेत्रपुण्यपापलक्षणकर्माचरणस्थानंव्यपदिशति अन्यान्यष्टवर्षाणिस्वर्गिणापुण्यकर्मणांस्वर्गप्राप्तानांतत्रस्थित्वापुण्यफलभोगयोग्यानांस्वर्गमास्यवशिष्टपुण्यानुभवस्थानानिव्यपदिशतीत्यन्वयः किंनामानीत्यत्राह भौ

ततऋषयस्तत्प्रभावज्ञाऋषिलोकेइयननुतपसआत्यंतिकीसिद्धिरेतावतीतिभगवतिसर्वात्मनिवासुदेवेऽनवरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयोमुक्तिमिवागतांमुमुक्षवःसबुहुमानमेवाद्यापिजटाजूटैरुद्वहंति ३ ततोनेकसहस्रकोटिविमानानीकसंकुलदेवयानेनावतरंतींदुमंडलमाप्लाव्यब्रह्मसदनेनिपतति ४ तत्रचतुर्धाभिद्यमानाचतुर्भिर्नामभिश्चतुर्दिशमभिस्यंदतीनदनदीपतिमेवाभिनिविशति ५ सीतालकनंदाचक्षुर्भद्रेति सीतातुब्रह्मसदनात्केसराद्रिशिखरेभ्योधोधःपतंतीगंधमादनमूर्ध्निपतित्वांतरेणभद्राश्वंवर्षं प्राच्यांदिशिक्षाररससमुद्रंप्रविशति ६ एवंमाल्यवच्छिखरान्निष्पतंत्यनुपरतवेगाकेतुमालमभिचक्षुःप्रतीच्यांदिशिसरित्पतिंप्रविशति ७ भद्राचोत्तरतोमेरुशिरसोनिपतंतीगिरिशिखराद्गिरिशिखरमतिहायशृंगवतःशृंगादभिस्यंदमानाउत्तरांस्तुकुरूनतिक्रम्योदीच्यांदिशिलवणार्णवंप्रविशति ८ तथैवालकनंदादक्षिणेनतुब्रह्मसदनाद्बहूनिगिरिकूटान्यतिक्रम्यहेमकूटहिमकूटान्यतिरभसतररंहसालुठंतीभारतमेववर्षंदक्षिणस्यांदिशिजलनिधिंप्रविशति ९ अन्येनदानद्यश्चवर्षेस्मिन्संतिबहुशोमेर्वादिगिरिदुहितरः अत्रापिजंबूद्वीपेभारतमेववर्षंकर्मक्षेत्रंअथान्यान्यष्टवर्षाणिस्वर्गिणांपुण्यशेषोपभोगस्थानानिभौमानिस्वर्गपदानिव्यपदिशंति १० येषुपुरुषाणामयुतवर्षायुषादेवकल्पानांनागायुतप्राणानांवज्रसंहननबलवयोमोदप्रमुदितमहासौरतनिरतनरवरावरोधमिथुनव्यवायापवर्गधृतैकगर्भकलत्राणांत्रेतायुगसमःकालोवर्तते ११

मानीति भूमिसंबंधदुःखादिसंभिन्नस्थानानि १० येषुवर्षेषुवसतांत्रेतायुगसमःकालोवर्ततइत्यन्वयः नरवरावरोधेराजयोग्यगृहे मिथुनानांयोव्यवायःग्राम्यधर्मलक्षणारतिस्तस्यापवर्गेअवसाने धृतएकोगर्भोयैस्तानिधृतैकगर्भाणितानिचकलत्राणियेषांतेधृतैकगर्भकलत्रास्तेषांवज्रवद्दृढंसंहननंशरीरंबलंवयश्चमोदश्चसाधारणंसुखंप्रमुदितंप्रमोदः विशिष्टसुखंचयेषांते तथामहत्सौरतनिरंतरसुरतक्रियातस्यांनिरताश्चवज्रसंहननबलवयोमोदप्रमुदिताश्चमहासौरतनिरताश्चनरवरावरोधमिथुनव्यवायापवर्गधृतैकगर्भकलत्राश्चते तथा तेषांबहुगर्भधारणेदेहशैथिल्यात्कलत्रतारुण्यनाशात्संभोगानुपपत्तिभयाच्चदवसानेसंतत्यर्थमेकमेवगर्भंधारयंतीतिकिंवदंती ११

यत्रयेषुदेवपतयः स्वैरंविहरंतिकिलेत्यन्वयः केषुस्थानेष्वितितत्राह उपशोभमानेत्यादिना सर्वर्तुसमुद्भूतानांपुष्पस्तबकानांफलानांकिसलयानांचश्रियासंपदानानम्यमानाभृशंनमंत्योविटपलतायेषांतेतथा तेचआविटपिनःभारतखंडवृक्षविलक्षणावृक्षायेतैरुपशोभमानेषुरुचिरेषुकाननलक्षणाश्रमेष्वायतनेषुवर्षभवगिरीणांद्रोणीषुपार्श्वद्वयोन्नतमध्यान्निम्नलक्षणप्रस्थेषुअमलजलाशयेषु निर्मलसरस्सु विकचानां विविधानांवनरुहाणांपद्मानामामोदजन्यमदेनमुदितैःराजहंसादिभिःभृंगाणामारुतिभिः शब्दैरुपकूजितेषुशब्दितेषु सरोविशेषणमेतत् सुष्ठुशृंगारयुतसुरस्त्रीणांकामेनकालिलैर्विलासादिभिराकृष्टमनोदृष्टयो येषांतेतथा मनांसिचदृष्टयश्चमनोदृष्टयः १२ नकेवलनववर्षस्थानांव्यवायादिक्रियया कालयापनमपितु श्रीनारायणसपर्ययेतिभावेनाह नवस्विति आत्मनःस्वस्यतत्त्वानामनारोपितरूपाणांव्यूहे ननवसंख्याविशिष्टेनसमूहेनावाह्य सन्निधाप्यपूज्यतइत्यर्थः वर्षस्थैःपुरुषैरितिशेषः १३ इलावृतेतुविशेषोस्तीत्याह इलावृतइति तत्रेलावृतमारभ्यनववर्षसन्निहितरूपाणितदुपासकांश्चक्रमेणे स्यतोवाह इलावृतइति १४ भवानीपार्वती नाथायेषांतानितथातैः अवरुध्यमानः परिव्रियमाणःवासुदेवादिचतुर्मूर्तेःतुरीयांचतुर्थांशभूतांतामसींसंहारकारणतमोगुणप्रवर्तनीमात्मनःस्वस्य भवस्य प्रकृतिंप्रकृष्टकारणभूतामात्मसमाधिरूपेणमनसएकाग्रताकारणेनउपधावत्युपास्ते १५ ज्ञानादिसर्वगुणैःसमभेदेनख्याताय विज्ञानमानंदंब्रह्मेतिश्रुत्यादिषुप्रख्याताय अनंतायेत्यने

**यत्रहदेवपतयःस्वैःस्वैर्गणनायकैर्विहितमहार्हणाःसर्वर्तुकुसुमस्तबकफलकिसलयश्रियानानम्यमानविटपलताविटपिभिरुपशोभमानरुचिरकाननाश्रमायतनवर्षगिरिद्रोणीषुतथाचामलजलाशयेषु विकचविविधवनरुहामोदमदमुदितराजहंसकलहंसजलकुक्कुटकारंडवसारसचक्रवाकादिभिर्मधुकरनिकराकृतिभिरुपकूजितेषुजलक्रीडादिभिर्विविधविनोदैःसुललितसुरसुंदरीणांकामकलिलविलासहासलीलावलोकाकृष्टमनोदृष्टयःस्वैरंकिलविहरंति १२ नवस्वपिवर्षेषुभगवान्नारायणोमहापुरुषःपुरुषाणामनुग्रहायात्मतत्त्वव्यूहेनावाह्याद्यापिसन्निधीयते १३ इलावृतेतुभगवान्भवएकएवपुमान्नह्यन्यस्तत्रनिविशति भवान्याःशापनिमित्तज्ञःयत्प्रविशयस्त्रीस्वभावस्तत्पश्चाद्वक्ष्यामः १४ भवानीनाथैःस्त्रीगणार्बुदसहस्रैरवरुध्यमानोभगवतश्चतुर्मूर्तेर्महापुरुषस्यतुरीयांतामसींमूर्तिंप्रकृतिमात्मनःसंकर्षणसंज्ञांआत्मसमाधिरूपेणसन्निधायैतदभिगृणन्भवउपधावति १५ भवउवाच ॥ ॐनमोभगवतेमहापुरुषायसर्वगुणसंख्यातायानंतायाव्यक्तायनमइति १६ भजेभजन्यारुणपादपंकजंभगस्यकृत्स्नस्यपरंपरायणम् ॥ भक्तेष्वलंभावितभूतभावनंभवापहंत्वांभवभावमीश्वरम् १७**

नशेषांतःस्थितस्तन्नामाविष्णुस्तेनसहाशिवेनोपास्यतइतिध्वनयति तदुक्तं अनंतांतःस्थितोविष्णुरनंतश्चसहामुना इज्यतेगिरिशेनेशइलावृतगतेनत्विति ननु यदिविष्णुनासहशेषोप्युपास्यतेशिवेन तर्हिकथंभवापहमित्यादिगुणाःशेषेयुज्यंतइतीयमाशंका जीवव्यपेक्षयाचैवतथांतर्याम्यपेक्षया मिश्रास्तुस्तुतयोज्ञेयाविष्णोरन्यत्रकेवलमित्यनेनपरिहर्तव्येति १६ भजन्यंभजनीयंचारुणंचपादपंकजंयस्यसतथातं हेभक्तेष्वलंभावितअत्यर्थंध्यात वशीकृतेतिवा नित्यतृप्ततयास्थितेतिवा भवंसंसारमपजहातित्यजतीतिभवापहःनित्यमुक्तइत्यर्थः भक्तसंसारंनाशयतीतिवातं भवस्यपुण्यलक्षणस्यभद्रस्यभवउत्पत्तिःयस्मात्सतथातं कृत्स्नस्यभगस्यऐश्वर्यादिगुणसामग्र्याःपरंपरायणंअत्युत्तमाश्रयंसर्वस्योपपादकमीश्वरमिति सर्वसमर्थनशीलं स्थेशभासपिसकसोवरजिदितिताच्छील्यसूत्रात् अनेनशेषांतर्यामिणोहरेःस्तुतिंध्वनयति तथाहि भक्तेषुत्वत्सेवकेषुअलंभावितसंपूर्णानुग्रहलक्षणवित्तत्वदुत्तमत्वात्त्वदंतर्यामिणंभजनिषेवस्व ईभजन्यारुणपादपंकजंईर्लक्ष्मीस्तयाभजनीयरक्ततलाभिपद्मंकृत्स्नस्यभगस्यसौभाग्यस्यपरपरायाआश्रयं अनेनब्रह्मादिसकलचेतनराशिसमवेतसौभाग्यस्यपरंपरायास्तारतम्योपेतायाःअयनमित्युक्तंभवति भूतभावनंअतीतानागतवर्तमानजगज्जनकं भवतिप्रभवत्युत्पद्यतइतिभवोजगत्तस्यापहर्तारंसंहर्तारंनकेवलमुत्पादकंसंहर्तारमपीत्यर्थः हरतेःष्टिलोपेनापहेतिरूपंसाधु शिष्टंसमं इःस्मरःभोप्यतेमाब्रीरीर्लक्ष्मीरुद्रःउःस्मृतइत्यभिधानम् १७

नतु जगदुत्पत्तौवर्तमानस्यहरेःसकलभगाश्रयत्वंकथंघटते मायागुणसंपर्केणानीशत्वापत्तेरस्मदादिवदितित्राह नेति प्रकृतिगुणनिर्मितशब्दादिषुगताचित्तवृत्तिभिःसर्वनिरीक्षतोपश्यतोऽस्यदृष्टिःस्वरूपज्ञानं मायागुणचित्तवृत्तिभिःप्रकृतिगुणलवद्धचित्तव्यापारैरण्वपीषदपिनाज्यतेनलिप्यते दृष्टेर्गुणसंबंधाभिभवोनास्तीत्यर्थः हिशब्दएवार्थे तत्रहेतुमाह ईशइति ईशऐश्वर्यइतिधातोर्निरुपपदादपिक्षिपमत्य येनईडितिशब्दरूपंसिध्यति तेनशइतिषष्ठी ईड्यादोषलेपनिवारणेनिरतिशयेनसमर्थत्वादित्यर्थःअत्रव्यतिरेकदृष्टांतमाह यथेति अजितमन्युरंहःक्रोधनेर्गोयेरेततथानयानोऽस्माकंज्ञानंयथाअ भिभूयते तथानाज्यतइत्यर्थः आत्मनईतक्र्वेगेषष्ठीतिवचनादात्मानमनेजिगीषुः पुरुषः तंत्वानमन्येतश्रोत्रादींद्रियेषुसंविधायशब्दादिषुप्रयोज्य तज्ज्ञानमुत्पाद्यसुखसंपादनेनात्यंतोपकारकंत्वां तद्यमंतरेणरसज्ञःकोनसेवेतसेवेतैवेत्यर्थः आत्मनःस्वरूपमितिवा १८ सर्वांतर्यामित्वेनातिनिकटवर्तिनोहरेःस्वरूपज्ञानसम्यक्ज्ञानिनएवनान्यस्येत्याशयवानाह असंदृशइति योमायया ऽऽच्छा दकशक्त्याऽसंदृशः सम्यक्ज्ञानरहितस्यपुंसः वृक्षकोटरजन्यमधुनारिकेरादिपुष्पजन्यआसवस्तयोरेकतरपानेनताम्रेलोचनेयस्यसतथा दुःशास्त्रश्रवणजनितान्यथाज्ञानलक्षणपरिणामविपाकमा णमधुरसुरासेवानष्टज्ञानस्यस्वयमपितादृशःक्षीबेवमत्तइतिप्रतिभाति अत्रविभक्तिविपरिणामेनार्थकथनंद्रष्टव्यं मध्वासवताम्रविलोचनस्यमत्तस्यासंदृशःपुंसोमध्वासवताम्रविलोचनोमत्तइवप्रति भाति दुष्टेंद्रियस्यपुंसःस्थाणुःपुरुषइवयथाभातितथेति क्षीबेतिप्रयोगस्तुछंदोभंगभयादैदिकत्वाद्वादर्शितइतिज्ञातव्यं नसदृशेतिष्ठतिरूपमस्येतिश्रुतेः विद्धन्मुग्धवच्चकेशनोदेःनात्नादितिस्मृते

नयस्यमायागुणचित्तवृत्तिभिर्निरीक्षतोह्यण्वपिदृष्टिरज्यते ॥ ईशोयथानोऽजितमन्युरंहसांकस्तंनमन्येतजिगीषुरात्मनः ॥ १८ ॥ असंदृशोयःप्रतिभाति माययाक्षीबेवमध्वासवताम्रलोचनः ॥ ननागवध्वोर्हणमीशिरेहियायत्पादयोस्पर्शनधर्षितेंद्रियाः १९ यमाहुरस्यस्थितिजन्मसंयमंत्रिभिर्विहीनंयमनंत मीश्वरम् ॥ नवेदसिद्धार्थमिवक्वचित्स्थितंभूमंडलंमूर्धसहस्रधामसु २० यस्याद्यआसीद्गुणविग्रहोमहान्विज्ञानधिष्ण्योभगवानजःकिल ॥ यत्संभ वोहंत्रिवृतास्वतेजसावैकारिकंतामसमैंद्रियंसृजे २१

थ इदानींहेतुकथनव्याजेनमिश्रस्तुतिमाह ननागेति इंद्रियधर्षणप्रवृत्तिमत्त्वान्मत्तत्वमिति अर्हणंपूजाकर्तुंनेशिरेइत्यन्वयः १९ इदानींभगवद्विज्ञानायतल्लक्षणान्याह यमाहुरिति अस्यजगतः स्थि तिजन्मसंयमकारणं यतस्तज्ज्ञानेस्थित्यादीनिलक्षणानिइतिज्ञातव्यं स्वयमेतद्वर्जितश्चेत्कथमेतल्लक्षणैर्ज्ञेयइत्यतउक्तं त्रिभिरिति त्रिभिःस्थित्यादिभिर्विहीनंविरहितं जाग्रदादावस्थाविशेषैर्वा क्व लत्रयेअपरिच्छिन्नमहिमत्वादुक्तमितिभावेनाह अनंतमिति तदपिकथमतउक्तमीश्वरमिति ईश्वरत्वंविशदयति नवेदेति यइत्यध्याहृत्यान्वेतव्यं मूर्धसहस्रधामसुमध्येक्वचिदेकस्मिन्मूर्ध्निसिद्धार्थसर्षप मिवस्थितंभूमंडलं नवेद गुरुत्वाभावादित्यन्वयः लाघवाच्चद्धारिमाणंनजानातीत्यनेनानंतःस्थितानंतनामहरिमहिम्नाशेषस्यापिभूमंडलधृतिसामर्थ्यमितिबोद्धव्यं २० पूर्वोक्तस्रष्टेक्रममाह यस्येति यस्यतवसकाशात्अजोब्रह्माद्यःसृज्यपदार्थानामादिभूतआसीत् प्रकृतिसृज्यवस्तुषुमहत्तत्त्वस्यादित्वाच्चदभिमानित्वेनब्रह्मणआदित्वयुक्तमितिभावेनोक्तं महानिति निर्देहस्याभिमानित्वकथमित्य तउक्तं गुणविग्रहइति रजोगुणेननिर्मितोविग्रहोयस्यसतथा देहित्वेपि ज्ञानलोपोन्यदेहिवदस्यनास्तीत्यभिप्रेत्याह विज्ञानेति विज्ञानस्यधिष्ण्यंनिधानस्थानं धिष्ण्यइतिपाठेविज्ञानमेवस्वरूपंयस्यस तथेत्यर्थः महत्तत्त्वस्यस्रष्टृत्वासृष्टिक्रमःकथंज्ञाप्यतइत्यतउक्तं यत्संभवइति यस्मान्महत्त्वात्संभवोयस्यसतथा अहंत्रिवृतावैकारिकादिभेदेनत्रिधावर्तमानेनस्वतेजसास्वरूपमहिम्नावैकारिकादि कंतदभिमानिदेवादिकंचसृजइत्यन्वयः २१

अस्मत्सर्जनंचश्रीनारायणानुग्रहेण नस्वातंत्र्येणेत्याह एतइति वयमितिकेइतितत्राह महानिति ब्रह्मप्रभृतयइत्यर्थः सूत्रयंत्रिताः सूत्रबद्धाः शकुंताःपक्षिणः वैकृतावैकारिकदेवाः तामसाःपंचभूतदेवाः ऐंद्रियाइंद्रियाभिमानिनोदेवाःशब्दाद्यभिमानिदेवताश्च २२ व्यतिरेकमुखेनसंसारतरणोपायमाह यन्निर्मितामिति अयंजनोयेनभवताजनंमोहयत्वितिनिर्मिताकल्पितांकर्मपर्वणां विहितनिषिद्धलक्षणानिकर्माणिपर्वाणियस्याःसातथातांमायांबंधकशक्तिमासाद्यकर्ह्यपिकदापि मायायानिस्तारणोपायमंजसानवेद तत्रकिंकारणमितितत्राह गुणेति गुणानसर्गोयेषांतेगुणसर्गाःशब्दादिविषयास्तैर्मोहितःशब्दादिनिमित्तान्यथाज्ञानकारणमित्यर्थः अनेनतत्कर्तृज्ञानपूर्वकंतज्ज्ञानंसंसारतरणोपायइतिध्वनितमितिइदमेवभगवत्प्रीतिकरंसर्वसाधारणमयत्नसाध्यंसाधनमितिभावेनोपसंहरति तस्माइति तद्विलयोदयात्मने तस्यामायायानिवर्तकज्ञानस्वरूपाय अनेनप्रणतिप्रसन्नश्रीनारायणस्वरूपज्ञानंमायानिवर्तकमितिसूचितमतोमुमुक्षुणातज्ज्ञानमापाद्यमितिभावः २३ इतिश्रीभागवतेपंचमस्कंधेवि०टी०सप्तदशोध्यायः ॥ १७ ॥ अनंतजीवराशेःस्वयोग्यतानुसारेणपूज्याहरेरनंताःप्रादुर्भावविशेषाःसंतीतिदर्शयितुमिलावृतवर्षभवैःपूज्यांदेवतानिगद्यावशिष्टवर्षभवैःपूज्यादेवताःक्रमेणाभ्यामध्यायाभ्यांनिरूपयति तथाचेत्यादिना तस्यभद्रश्रवसः कुलपतयःधर्ममपीज्ञानोपदेशेनसर्वंजगद्धारणप्रधानभूता हयगतावितिधातोःहयंतिअवगच्छंतिबुद्ध्यतेसर्वमितिहयाः

एतेवयंयस्यवशेमहात्मनःस्थिताःशकुंताइवसूत्रयंत्रिताः ॥ महानहंवैकृततामसेंद्रियाःसृजामसर्वंयदनुग्रहादिदम् २२ यन्निर्मितांकर्ह्यपिकर्मपर्वणींमायांजनोयंगुणसर्गमोहितः ॥ नवेदनिस्तारणयोगमंजसातस्मैनमस्तद्विलयोदयात्मने २३ इतिश्रीभागवतेपंचमस्कंधेसप्तदशोध्यायः १७ श्रीशुकउवाच ॥ तथाचभद्रश्रवानामधर्मसुतस्तत्कुलपतयः पुरुषाभद्राश्ववर्षेसाक्षाद्भगवतोवासुदेवस्यप्रियांतनुंधर्ममयींहयशीर्षाभिधानांपरमेणसमाधिनासन्निधाप्येदमभिगृणंतउपधावंति १ भद्रश्रवस ऊचुः ॥ ॐनमोभगवतेधर्मायात्मशोधनायनमइति २ अहोविचित्रंभगवद्विचेष्टितंघ्नंतंजनोयंहिमिषन्नपश्यति ॥ ध्यायन्नसद्यर्हिविकर्मसेवतेनिर्हृत्यपुत्रंपितरंजिजीविषुः ३ वदंतिविश्वंकवयश्चनश्वरंपश्यंतिचाध्यात्मविदोविपश्चितः ॥ तथापिमुह्यंतितवाजमाययासुविस्मयंकृत्यविदंनताःस्मतम् ४

सर्वज्ञाब्रह्मादयस्तेषांशीर्षःप्रधानइतिहयशीर्षः १ ज्ञानंदत्वात्मानंशोधयतीत्यात्मशोधनस्तस्मै २ आत्मशोधनपदार्थमाह अहोइति अयंजनोघ्नंतंस्वमृत्युंमिषन्पश्यन्नपिनपश्यतिहि यस्मात्तस्माद्विचित्रंभगवद्विचेष्टितमहो कालात्मनोमृत्योश्चरितंनिद्रालोरिवपश्यतोप्यदर्शनेकिंकारणमितितत्राह ध्यायन्निति शास्त्रतोऽसदमंगलंशब्दादिविषयजातंध्यायन्विकर्मसेवतेयर्हियस्मात्तस्मात्पापलक्षणांजनमतिबद्धचक्षुर्नपश्यतीत्यर्थः अत्रलुप्तोपमामाह निर्हृत्येति पुत्रोमृतंपितरंनिर्हृत्यदहनादिपितृमेधक्रियांकृत्वाजिजीविषुः स्वजीवनमिच्छन्मातृपितृमरणजन्ममपिमरणंभवादितियुक्तिबलाच्चिंतयन्नपिस्वात्मनोमृत्युनचिंतयति यथा तथायंजनइति अतस्तवप्रसादेनशुद्धांतःकरणस्यगुरूपस्यकरतलामलकवद्विश्वंप्रकाशतइतिभावः ३ नकेवलप्राकृतजनमोहकस्त्वं किंतु कवीनामप्यतोनिरतिशयमहिम्नस्तवचरितंचित्रंइत्यतस्त्वद्व्यतिरेकत्वत्प्रसत्तौप्रधानंसाधनमित्याशयवानाह वदंतीति अनेनकवीनापरोक्षज्ञानिनांवचनप्रध्यात्मविदामपरोक्षज्ञानिनांदर्शनंचजगत्प्रमाहनित्यत्वेप्रमाणमुक्तंभवतितथापिज्ञानसामग्रीमंतोपित्वदनुग्रहमंतरेणतवाविषयेमुह्यंति अनेनमुह्यंतियंमूरयइत्येतद्विवृतंभवति सुष्ठुविगतःस्मयाख्योदोषोयस्मात्सतथातंसुविस्मयंयथाभवतितथेति क्रियाविशेषणंवा यतएवंज्ञानिनोपिकर्तव्यं त्वन्मायया नजानंति अतोभवानेकएवतज्ज्ञइत्याह कृत्यविदामिति ४

इदंचास्माकंतवचारित्रंचित्रमित्याह विश्वेति जगत्सर्जनादिलक्षणंकर्तव्यंत्वयैवकर्तव्यंनान्येनेतियदतस्त्वमेवतदभिज्ञइत्यतोवैतत्प्रतिपादयंति विश्वेति नतस्यकार्यंकरणंचविद्यतेइतिश्रुतेःकार्यकार णादिरहितस्यहरेः प्रपंचनिर्माणादिककथंघटतइत्याशंक्यमह शक्तित्वादित्यतोवाह विश्वेति अपिशब्दएवार्थे हिशब्दःअकर्तुःकर्तृत्वघटकद्योतकः हेहरेअकर्तुस्तवजगत्सर्जनादिकर्मांगीकृतमवने तद्गुप्तमपावृतवेदादिषुप्रकाशितं मृदब्रवीदित्यादिवेदसिद्धंमृदादिवक्तृत्वंयुक्तिविरुद्धत्वाद्यथानांगीक्रियते तथात्रापीतितत्राह युक्तमिति नहरेःकर्तृत्वमात्रंनिषिध्यतेकिंत्वायासेन अप्रयासेनकर्तृत्वमकर्तृ त्वमिहोच्यतेमहाशक्तित्वतस्तच्चयुज्यतेपरमस्यात्विति मृदादीनांवक्तृत्वस्यप्रत्यक्षतोऽदर्शनाद्युक्त्याप्रिग्राहकप्रमाणाभावादनुपपन्नत्वात्नांगीक्रियते अत्रतुज्ञानिप्रत्यक्षसिद्धत्वाद्विदिकत्वाच्चयुक्तंही त्यभिप्रायः तथापिनिर्विकारस्यहरेर्मायाकर्तृत्वमंतरेणतात्त्विककर्तृत्वांगीकरणंचित्रमितितत्राह नचित्रमिति ज्ञानदौर्बल्यादस्माकमेवाचित्रत्वापिनचित्रंकुतोनाचित्रं कार्यकारणे'पाश्चर्य लक्षणकार्यस्यापिकारणत्वात् इतोपिनेत्याह सर्वात्मनिसर्वस्वामिनि ननुकार्यकारणत्वेमृदादिवत्तदभिन्नत्वआपन्नमितितत्राह व्यतिरिक्तइति निमित्तकारणत्वेनतद्भिन्न वयुक्तमितिचशब्देनध्वनयति तर्हिलोकविलक्षणश्चेच्छून्यकल्पइतितत्राह वस्तुनीति ५ धर्मायेतिपदस्याभिप्रायमाह वेदानिति तमसामधुनाम्नादैत्येनातिरस्कृतानपहृतान्प्रत्यादेसृष्टौदत्तान्पुनश्चनानेवदैत्यापहृतान्दत्तवानित्यर्थः

विश्वोद्भवस्थाननिरोधकर्मतेह्यकर्तुरंगीकृतमप्यपावृतम् ॥ युक्तंनचित्रंत्वयिकार्यकारणेसर्वात्मनिव्यतिरिक्तेचवस्तुनि ५ वेदान्युगांतेतमसातिरस्कृतान्र सातलाद्योनृतुरंगविग्रहः ॥ प्रत्याददेवैकवयेऽभियाचतेतस्मैनमस्तेऽवितथेहितायते ६ हरिवर्षेचापिभगवान्नरहरिरूपेणास्तेतद्रूपग्रहणनिमित्तमुत्तरत्राभिधा स्यामःतद्दयितंरूपंमहापुरुषगुणभाजनोमहाभागवतोदैत्यदानवकुलतीर्थीकरणशीलाचरितःप्रह्लादोऽव्यवधानानन्यभक्तियोगेनसहतद्वर्षपुरुषैरुपा स्तेइदंचोदाहरति ७ ॐनमोनृसिंहायतेजस्तेजसेआविराविर्भववज्रनखवज्रदंष्ट्रकर्माशयान्रंधयरंधयतमोग्रसग्रसस्वाहा अभयमभयमात्मनिभूयिष्ठाःॐह्रौं ८ स्वस्त्यस्तुविश्वस्यखलःप्रसीदतांध्यायंतुभद्राणिशिवंमनोधिया ॥ मनश्चभद्रंभजतादधोक्षजेआवेश्यतांनोमतिरप्यहैतुकी ९ मागारदारात्मजदेहबंधु षुसंगोयदिस्याद्भगवत्प्रियेषुनः ॥ यःप्राणवृत्त्यापरितुष्टआत्मवान्सिद्ध्यत्यदूरान्नतथेंद्रियप्रियः १०

कवयेब्रह्मणे अवितथेहितायेत्यनेनभगवतइत्यस्यार्थउक्तःऐश्वर्यादिगुणसामग्रीमतएवसत्यकर्मत्वोपपत्तेः अशक्ताःसत्यसृष्टौहिमायासृष्टिंवितन्वतइत्यादेः ॥ ६ ॥ वीर्यशौर्यादयोभक्तिज्ञानादयो वामहापुरुषगुणास्तेषांभाजनंपात्रं महापुरुषगुणभाजनः पुल्लिंगस्तुछांदसःतान्भजतीतिवा प्रकृष्टह्लादःशांत्यादिगुणोयस्यसतथा दैत्यदानवकुलस्यतीर्थीकरणंशीलंबालचरितंचयस्यसतथा फलकामलक्षणव्यवधानरहितश्चानन्यअसदृशभक्तियोगस्तेन ७ सूर्यादितेजोभ्योधिकतेजोरूपाय तमोदत्यमज्ञानंवा ग्रससंहर भूयिष्ठादित्यव्ययं भावय ८ विश्वस्यार्थेस्वस्त्यस्तु नृसिंह प्रसीदतां हेहरिवर्षजनाःभद्राण्युद्दिश्यनृहरिंध्यायंतु शिवंनित्यशुद्धंमनोधियाशास्त्रमननेनउपासनालक्षणध्यानेनचमनश्चभद्रसकलमंगलरूपंहरिंभजतात् नोस्माकमतिरप्यधोक्षजेआविश्यतां अहैतुकीफलाभिस धिरहिता ९ मनआदेरैर्यैकविषयत्वेइत्थभावलक्षणसाधनमाह मागारेति गृहादिषुसंगोमाभूत् यदिसंगआवश्यकस्तर्ह्यस्माकभगवत्प्रियेषुस्यात् ननु गृहादिसंगाभावेजीवनाभावेनदेहपातलक्षणानर्थःस्या दितितत्राह यइति यःप्राणवृत्त्याप्राणधारणलक्षणजीवनस्थितिमात्रेणपरितुष्टःसआत्मवान्वशीकृतमनाअदूराच्छीघ्रंसिद्ध्यतिसंसारमुक्तोभवति यथामुक्तसंगस्तथेंद्रियाद्रियोमुक्तोनक्याद्रित्यर्थः १०

महात्म्यमाँसंगात्किंफलंस्यादत्राह यत्संगेति येषांभगवत्प्रियाणांसेवालक्षणसंगाद्धरोर्निजमौत्पत्तिकंवीर्यंमाहात्म्यंवैभवंविभुत्वंव्याप्तलक्षणंचयस्मिन्तीर्थेतत्तथाताद्दशंतीर्थंवेदांतशास्त्रंमुहुर्निरंतरंसंस्पृशतांश्र वणादिनाभ्यस्यतां पुंसामानसविषयसंसर्गगतंमनोगतमंहोहरतिअजः कथंश्रुतिभिः श्रवणेंद्रियद्वारेणांतर्गतःहृदयंप्रविष्टः ततःकिं यतएवंविधफलमतः कोवैमुकुंदविक्रमनसेवेत रसज्ञइतिशेषः यद्वा य स्यहरेः श्रीपादसंगाल्लब्धं यस्यतीर्थस्यनिजवीर्यवैभवताद्दशंगंगादितीर्थंमुहुःसंस्पृशतांदर्शनस्पर्शनादिनासेवमानानांपुंसांमानसमंहःसोऽजोहरति हियस्मात्तस्मान्मुकुंदस्यगृहीतवामनाद्यवतारस्यविक्र मंत्रैलोक्यविक्रमलक्षणंचरितंकःपुरुषोनसेवेत यद्यपिवः स्नानादिनाहरत्यांतरमंहःकथमित्यतउक्तं अंतारीति बहुवारश्रोतव्यमित्यभिप्रायेणश्रुतिभिरित्युक्तमिति ११ भक्तेरिंद्रियाधीनत्वेनेंद्रियाणां चस्वाभिमानिदेवताधीनत्वेनतत्प्रसादमंतरेणइंद्रियाणामात्मावशत्वेनभक्तिकरणानुपपत्तिरित्याशंक्यभगवद्भक्त्यादेवप्रीतिरपितदविनाभूतेतिभावेनाह यस्येति व्यतिरेकेणापिहरौभक्तिःकर्तव्येत्याह हराविति महतांगुणाः असत्यमंगलेबाहिः शब्दादिविषयेधावनमेवावशिष्यते नत्वात्मसुखमित्यतोधावतइति १२ भगवद्भक्त्याभिमानिदेवप्रीतिमुपपादयति हरिर्हीति आत्मा जीवनः अत्रा

यत्संगलब्धंनिजवीर्यवैभवंतीर्थंमुहुःसंस्पृशतांहिमानसम् ॥ हरत्यजोंहःश्रुतिभिर्गतोंतःकोवैनसेवेतमुकुंदविक्रमम् ११ यस्यास्तिभक्तिर्भगवत्यकिंचना सर्वैर्गुणैस्तत्रसमासतेसुराः ॥ हरावभक्तस्यकुतोमहद्गुणामनोरथेनासतिधावतोबहिः १२ हरिर्हिसाक्षाद्भगवांञ्छरीरिणामात्माझषाणामिवतोयमीप्सितः ॥ हित्वामहांतंयदिसज्जतेगृहेतदामहत्त्वंवयसादंपतीनाम् १३ तस्माद्रजोरागविषादमन्युमानस्पृहाभयदैन्याधिमूलम् ॥ हित्वागृहंसंसृतिचक्रवालंनृसिंह पादंभजताकुतोभयमिति १४ केतुमालेभगवान्कामदेवस्वरूपेणास्तेलक्ष्म्याःप्रियचिकीर्षयाप्रजापतेर्दुहितॄणांचतद्वर्षपतीनांपुरुषायुषाहोरात्रपरिसंख्या नानांयासांगर्भामहापुरुषमहास्त्रतेजसोद्वेजितमनसांविध्वस्ताव्यसवःसंवत्सरान्तेनिपतंति १५ अतीवसुललितगतिविलासविलसितरुचिरहासलेशा वलोकलीलया किंचिदुत्तंभितसुंदरभ्रूमंडलसुभगवदनारविंदश्रियारमांरमयन्निंद्रियाणिरमयते १६ तद्भगवतोमायामयंरूपंपरमसमाधियोगेनरमादेवी संवत्सरस्यरात्रिषुप्रजापतेर्दुहितृभिरुपेताहस्सुतद्भर्तृभिरुपेतोपास्ते ॥ इदंचोदाहरति १७

पिव्यतिरेकमाह हित्वेति महांतमनाद्यनंतकालीनंहरिंहित्वायदिगृहेसज्जतेबहुकालंजीवतितदावयसाआयुषादंपतीनांमहत्त्वंनगुणतःगुणतोमहत्त्वंहरिभक्त्यैवेत्यर्थः १३ उपसंहरति तस्मादिति य स्माद्गृहंरजोरागादिमूलंतस्मान्नृसिंहपादंभजतेत्यन्वयः संसृतिचक्रवालंससारावृत्तिहेतुभूतम् १४ कामदेवस्वरूपेणकामदेवसन्निहितप्रद्युम्नाख्यात्मरूपेण प्रजापतेर्दुहितॄणांकेतुमालवर्षपतीनांल क्ष्म्याश्चप्रियचिकीर्षयेत्यनेनहरेर्भक्तवत्सलत्वमेवप्रयोजनंनान्यदितिदर्शितं पुरुषायुषाशतवर्षसंख्यानेनयान्यहोरात्राणितैःषट्त्रिंशत्सहस्रैःपरिसंख्यानंगणनंयासांतास्तथा तासांमहापुरुषोहरिस्तस्यम हास्त्रंतेजसासुदर्शनचक्रतेजसा व्यसवःगतप्राणाः १५ उत्तंभितं ऊर्ध्वंनीतंसुभगंसुंदरमिंद्रियाणि रमयतेद्रष्टॄणामितिशेषः १६ मायामयइच्छामयंपरमोदेवीभगवतोरूपमुपास्तइत्यस्येदंतात्पर्यंभवगतस्य रतिसन्निहितारमादेवीकामांतःस्थितंहरेरूपंउपास्ते रतिस्तुविष्णोःप्रतिमास्थानीयंकामदेवं कामदेवस्थितंविष्णुमुपास्तेश्रीरतिस्थिता कामदेवंरतिश्चापिविष्णोस्तुप्राकृतातनुःभितिस्मृतेः अनेन मायामयमित्यस्यप्राकृतमित्यर्थःसूच्यते संवत्सरस्यरात्रिषुप्रजापतेर्दुहितृभिरहस्सुतासांभर्तृभिरुपेता १७

ये धर्मैर्विशेषाव्यावर्तकधर्मास्तांस्तान्वदंतीतिसर्वविशेषविदोत्रह्मादयस्तेषांक्षेत्रमावासस्थानमात्मा देहोयस्यसतथातस्मै आकूतीनामभिप्रायाणांपूर्वानुभवसंस्काराणांवा चित्तानांस्मरणकारणानां अंतःकरणविशेषाणांचेतसांबुद्धिवृत्तीनांवृत्तिविशेषाणांचाधिपतये सर्वमयायसर्वोत्तमाय उभयत्रातर्बहिश्चश्र्याद्रक्षायादितिशेषः १८ लोकेविद्यमाना स्त्रियोनानाव्रतैरिंद्रियस्वामिनंत्वामाराध्यततस्त्वो न्यंपतिमाशासतेगविशंतिप्राप्नुवंतीत्यर्थः त्वमनेनव्रतलक्षणाराधनेनहेतुनातासामन्यंप्रियंभर्तारमुपभोगसाधनं धनान्यायूंष्यहोरात्रगमागमलक्षणानिरक्षसि कुतस्ताःस्त्रियःपतित्वेनवृता पुरुषाश्चा तत्रास्तत्कालेनेशक्तिहीनायतोवस्तुतःपतिरन्यथावहारिकामित्यर्थः १९ तर्हिमुख्यपतिः कइतितत्राह सवाइति यःस्वयमकुतोभयःसन्भयातुरंजनंसमंततःपातिसएवपतिःस्यात् नन्वेवतर्हिबहवः किंनस्युरितितत्राह एकइति भवानितिशेषः इतरथाबहूनांपतित्वेमिथोन्योन्यंभयंस्यान्मंडलेश्वराणामिवेतिशेषः अतस्त्वमेकएवपतिरित्यर्थः इतोपिस्वत्तोभवपुरुषार्थइत्याह भजन्निति त्वां भजन्पुरुषआत्मलाभात्त्वल्लाभात्परमन्यमप्यधिकंनैवमन्यतेअभावादितिशेषः एकमेवाद्वितीयमितिश्रुतेः २० अतोप्यस्यैवपुरुषार्थप्राप्तिहेतुत्वादित्याह यइति निरुपमचरितपतिर्यस्तस्यतेतवय पादसरोरुहयोरर्हणंपूजनंनितरांकामयेत्सोखिलकामलंपटःअपेक्षिताशेषपुरुषार्थप्राप्तिपटुतरः हेईप्सितप्रेष्ठ अतस्त्वदर्चितमेवाभीप्सितंनान्यदवेनंविशिष्टफलहेतुत्वात् स्पतिरर्कपुत्रनाभिधारयति य

ॐह्रांह्रींह्रूंॐनमोभगवतेहृषीकेशायसर्वविशेषविवक्षेत्रात्मनेआकूतीनांचित्तानांचेतसांविशेषाणांचाधिपतयेषोडशकलायछंदोमयायान्नमयायामृतमयायसर्वमयायसहसेओजसेबलायकांतायकामायनमस्तेउभयत्रभूयात् १८ स्त्रियोव्रतैस्त्वांहृषीकेशमीश्वरमाराध्यलोकेपतिमाशासतेन्यम् ॥ अनेन तासांपरिपास्यपत्यंप्रियंधनायूंषियतोऽस्वतंत्राः १९ सवैपतिःस्यादकुतोभयःस्वयंसमंततःपातिभयातुरंजनम् ॥ सएकएवेतरथामिथोभयंनैवात्मलाभादधिमन्यतेपरम् २० यस्तस्यतेपादसरोरुहार्हणंनिकामयेत्सोखिलकामलंपटः ॥ तदेवचाभीप्सितमीप्सिताचितंयद्भग्नयाच्ञाभगवन्प्रतप्यते २१ मत्प्राप्तयेये ससुरासुरादयस्तप्यंतउग्रंतपऐंद्रियेधियः ॥ ऋतेभवत्पादपरायणंनमांविंदंत्यहंत्वद्धृदयायतोजित २२ सत्वंममाप्यच्युतशीर्ष्णिवंदितंकरांबुजंयत्त्वदधायि सात्वताम् ॥ बिभर्षिमांलक्ष्मवरेण्यमाययाकईश्वरस्येहितमूहितुंविभुः २३ रम्यकेचभगवतःप्रियतमंमात्स्यमवताररूपंतद्वर्षपुरुषस्यमनोःप्राक्प्रदर्शितं सइदानीमपिमहताभक्तियोगेनाराधयन्निदंचोदाहरति २४ ॐनमोभगवतेमुख्यतमायनमःसत्त्वायप्राणायौजसेबलायमहामत्स्यायनमइति २५

स्त्रियेति अयंभावः यत्कामोन्यपादार्चनंकरोतितस्मात्फलानुदयात्प्रतप्यतइति यद्यस्मात्तस्मादिति चशब्देनपूर्वमर्चितमिदानीमर्च्यतेउत्तरत्रार्चिष्यतइतिसूचयति २१ अन्यपादार्चकस्यभग्न याच्ञत्वमत्रद्रष्टव्यमित्याह मत्प्राप्तयइति येऐंद्रियेधियःइंद्रियविषयेधीर्येषांतेतथाशब्दादिविषयरागांधीभूतबुद्धयः ससुरासुरादयउग्रंतपस्तप्यंतेतेमांनविंदंति यत्तोभीष्टफलंनविंदंतीत्यत्रकारण माह ऋतइति भवत्पादपरायणमर्चनमृते त्वच्चरणार्चनाभावःकारणं इत्युत्तरमाह अहमिति अजितअहंत्वद्धृदया यतस्तस्मादितिशेषः त्वयिहृदयंयस्याःसातथायस्त्वत्पादार्चकस्तस्यमप्रसादः योनतस्यनास्तीति अयंभावोऽसप्रज्ञातस्यमयाप्राज्ञायतइति २२ स्वशिरसिनित्यधृतकरांबुजत्वेपिभगवत्पूजकैरेवंप्रार्थनीयमित्याशयवत्याह सत्वमिति यत्करांबुजंसात्वतांशीर्ष्णिअधायि शि रस्त्वधायियेनत्वयासत्वंममामूर्ध्न्यपितत्कुर्वित्यन्वयः किंच सर्वस्मान्मयितवप्रसादाधिक्यमस्तीतिद्योतयति बिभर्षीति हेवरेण्यत्वद्वक्षसिमामांलक्ष्मीत्वंहिबिभर्षियदतोमाययेश्वरस्यईहितमूहितुंकोवि भुर्नकोपिसमर्थः २३ मनोर्वैवस्वतस्य २४ २५

उरुगुरुःयोनःपरमपुरुषःइदंजगद्वशेअनयन्नीतवान् सत्वमीश्वर साक्षान्नारायणःआत्मास्वामी यद्वा यआत्माआदानसमर्थः इदंजगद्वशे नयन्वर्ततेसत्वमीश्वरऐश्वर्यादिगुणराशुद्रइति २६ लोक पालादिविश्वस्येश्वरवशत्वेतदहष्टरूपत्वंकथमस्येत्याशंक्यस्पर्द्धाहेतोरितिभावेनाह यमिति चशब्दोविकल्पार्थे यंत्वांहित्वालोकपालाःपृथग्वा समेत्यवा यतंतोपिद्विपदश्चतुष्पदइत्यादिपरसरीसृपरशा स्नुचराचरमत्रदृश्यतेश्रुतिदृष्टिविषयंतत्पातुंनशेकुरित्यन्वयः अशक्तत्वेनिमित्तमाह मत्सरेइति मात्सर्याख्यज्वरग्रस्तत्वादित्यर्थः वार्तासभावपोःकिलेतिवचनादिदंस्पर्द्धालक्षणंमात्सर्यसंभावनामात्रं ननुमुख्ययाज्ञानिमित्तंदैत्यावेशनिमित्तंवेतिगमयितव्यं तदुक्तं स्पर्द्धतइवदेवास्तुहरिणायत्रकुत्रचित् हररेवाज्ञयाक्वापिदैत्यावेशादथापिवेति अनेनस्पर्द्धायाअन्यनिमित्तत्वेनपालनाशक्तिःस्वरूपकृतेतिज्ञा तव्या २७ यद्यप्यस्तुमूलरूपस्यहरेर्जगत्पालनशक्तिःस्वरूपभूता तथाप्यवताराणांसानसमास्तीत्याशंक्यद्वयोरपिकोपिमाहात्म्येविशेषोनास्तीतिभावेनाह भवानिति भवान्युगांतार्णवइमांक्षोणीमूहेइ त्याहेत्यन्वयःतस्मैजगत्प्राणगुणात्मनेजगद्वक्षकगुणस्वरूपायमत्स्यायहरयेनमइत्यन्वयः २८ २९ नकूपेआरोगमनयस्यसतथातस्मैमहासमुद्रनिवासायेत्यर्थः सर्वसत्वगुणाःपराक्रमगुणाएवविशेषणा स्यसतथातस्मै सर्वसत्वगुणा ज्ञानानंदादिगुणाइतिवा नोपलक्षितस्थानाय अज्ञातस्वरूपाय वर्ष्मगेभक्ताभीष्टवर्षणशीलाय प्रमाणायसम्यग्ज्ञेत्रे वा प्रमाणबोधनेयत्तामर्यादाशास्त्रहेतुषु सम्यग्ज्ञकारिणि स्यात्प्रयाणंमरणेगतावितियादवः वर्ष्मदेहप्रमाणयोरितिच अनेनदिव्यातिर्यग्योनेरपिसम्यग्वक्तृत्वमाहात्म्यसूचितं भूयसेमहते महतोमहीयानितिश्रुतिः अवस्थानायजगत्स्थितिहेतवे ३० मंत्रस्

अंतर्बहिश्चाखिललोकपालैरदृष्टरूपोविचरस्युरुस्वनः ॥ सईश्वरस्त्वंयइदंवशेऽनयन्नात्मायथादारुमयींनरःस्त्रियम् २६ यंलोकपालाःकिलमत्सरज्वराहित्वा यतंतोपिपृथक्समेत्यच ॥ पातुंनशेकुर्द्विपदश्चतुष्पदःसरीसृपस्थास्नुयदत्रदृश्यते २७ भवान्युगांतार्णवऊर्मिमालिनिक्षोणीमिमामोषधिवीरुधांनिधिम् ॥ मयासहोरुक्रमऊहओजसातस्मैजगत्प्राणगुणात्मनेनमइति २८ हिरण्मयेपिभगवान्निवसतिकूर्मतनुंबिभ्राणस्तस्यप्रियतमांतनुमर्यमासहतद्वर्षपुरुषैःपितृ गणाधिपतिरुपधावति मंत्रमिमंचानुजपति २९ ॐनमोभगवतेअकूपारायसर्वसत्वगुणविशेषणायनोपलक्षितस्थानायप्रमाणायनमोभूयसेनमोवस्थानाय नमस्ते ३० यद्रूपमेतन्निजमाययार्पितमर्थस्वरूपंबहुरूपरूपितम् ॥ संख्यानयस्यास्त्ययथोपलंभनात्तस्मैनमस्तेऽव्यपदेशरूपिणे ३१ जरायुजंस्वेदज मंडजोद्भिज्जंचराचरंदेवर्षिपितृभूतमैंद्रियम् ॥ द्यौःखंक्षितिःशैलसरित्समुद्रद्वीपग्रहर्क्षेत्यभिधेयएकः ३२

चितगुणविशिष्टत्वेनश्रीहरिंस्तौति यद्रूपमिति यद्रूपमेतद्विश्वंनिजमाययातवस्वरूपेऽध्यार्पितं मदाधारतयातिष्ठत्विति माययेत्युक्त्यानिर्गच्याविद्याकल्पितंकिंनस्यादित्यतोर्थेति अत्राधितरूपंजरा युजादिबहुरूपेणरूपितंशब्दितं यस्येयत्तेतिसंख्याचनास्ति परमाणुप्रदेशेपिह्यनंताःप्राणिराशयइतिवचनात् यच्चोपलंभनादयथाअयथाहश्यतेश्वस्तथानतिष्ठतिविकारित्वात् उर्वारुकफलादेरन्यथा दर्शनाच्चतावतावैतथ्यं विश्वंसत्यमित्यादिश्रुतेः अतःप्रवाहरूपेणनित्यमित्येष्टव्यमित्यर्थः रूपंतत्रिधानयोग्यप्रतिमास्थानीयमित्यर्थ तस्मैतुभ्यंनमइत्यन्वयः नव्यपदेशोपस्यतदव्यपदेश तादृशंरूपम स्यास्तीतिअव्यपदेशरूपीतस्मै वाङ्मनसागोचररूपत्वादित्यर्थः अनेनसर्वसत्वविशेषणायनोपलक्षितस्थानायेतिपदद्वयंविवृतं ३१ सन्घट सन्पट इतिसदनुविद्धत्वेनप्रतीयमानत्वात्सर्वंखल्विदंब्रह्मेति श्रुतेश्चविश्वस्यब्रह्मात्मकत्वमुक्तंकिंनस्यादित्याशंक्यतत्सृष्ट्वातदेवानुप्राविशदित्यादेः सर्वांतर्यामिकत्वात्तुसर्वनामाहारि स्वयं नतुसर्वस्वरूपत्वाद्रूपत्वंतूपचारात् इतिस्मृतेश्च सर्वांतर्यामित्वेनतत्तत्राम दत्वेनसच्छब्दप्रवृत्तिनिमित्तस्यतदधीनत्वेनतत्तन्नामत्वंहरेरित्यभिप्रेत्याह जरायुजमिति देवादीनांभेदोपास्मिस्तत्तथा इतिशब्दआदिवचनःऋत्वादिनायव नेक्रपवेत्यनेनयोदेवानांनामधाएकएवेतिश्रुति सूचयति नयोवर्ष्मणेनमोभूयसेइतिमंत्रादयस्याभिप्रायःसूचितइति ३२

असंख्येयाविशेषाः व्यावर्तकधर्मा असंख्येयानि नामानि नारायणादीनि शुक्लादीनि रूपाणि यस्याः सा तथा तादृशी आकृतिर्विग्रहो यस्य स तथा तस्मिन्नेवंविधे यस्मिन् त्वयि दशावताराइत्यादिके यं संख्याक विभिः कल्पिता जगत्स्थितिलक्षणरक्षणायेति शेषः नेयं संख्या तात्त्विकीत्याह ययेति ययादशावताराइत्यादिकया संख्यया भेदास्तत्त्वदृशा वस्तुयाथात्म्यं पश्यता जातावेकवचन विनीयते विशेषेण नीय तेशिष्यप्रशिष्यादिषूपदिश्य प्रवर्त्यंतइति अनेन यथोपदेशकवयंतः कवयो न भवंति किंतु अपरोक्षं पश्यंतः इत्युक्तं नचेदं वृत्तिज्ञानं संख्याप्रणयनस्य विशेषग्रहणस्य व्यर्थत्वापातादतः स्वरूपज्ञानमेवांगीकर्तव्यं आचार्यैरप्येतदभिप्रायेणोक्तं तज्ज्ञानं तद्रूपमेव हीति जीवस्य तिरोहितं स्वरूपज्ञानं च श्रीनारायणप्रसादेनाविर्भवतीत्यभिप्रायेण तं श्रीहरिं विशिनष्टि सांख्यनिदर्शनाय सांख्यं यथार्थज्ञानं स्वरूपविपर्यानिद र्शयति सम्यग्ज्ञापयति प्रदीपप्राहिवत् इति सांख्यनिदर्शनः तस्मै बलमानंद ओजश्च सहो ज्ञानमनाकुल स्वरूपाण्येव जीवस्य व्यज्यंते परमाद्विभोरिति वचनात् स्वरूपज्ञानमस्तीत्यत्र किं निदर्शनमित्यतो वा तत्स्थलमाह सांख्येति हरेर्ज्ञानं यथा तद्रूपमेवं जीवज्ञानमित्यर्थः सत्यं ज्ञानमनंतं ब्रह्मेति श्रुतेः इदं च भगवत्पादाभिप्रेतं इति ज्ञायते तज्ज्ञानं तद्रूपमेव हीति अनेन यथा ब्रह्मज्ञानं ब्रह्मस्वरूपं तथा जीवज्ञानं जीवस्वरूपमेव तत्र ब्रह्मज्ञानं नित्यं प्रकाशितं जीवज्ञानं स्वादृष्टेन तिरोहितं श्रीहरिप्रसादेन प्रकाशितं भवतीति विशेषं हिशब्देन प्रथयति ३३ उपनिषदः षट्कर्णागोचरं मंत्रम् ३४ मंत्रतत्त्वलिंगाय मंत्रतत्त्व मूर्तये मंत्रार्थज्ञापनाय वा यज्ञक्रतवे यज्ञसंकल्पविषयाय कर्मणा क्रियया पराक्रमलक्षणया शुक्लाय शुद्धाय त्रिषु युगेषु अवतारो यस्यासौ त्रियुगस्तस्मै ३५ वनगोचरस्य वराहस्य मंत्रतत्त्वलिंगादिकं कथमु

यस्मिन्नसंख्येयविशेषनामरूपाकृतौ कविभिः कल्पितेयम् ॥ संख्या यया तत्त्वदृशा विनीयते तस्मै नमः सांख्यनिदर्शनाय हि ३३ उत्तरेषु कुरुषु भगवान्यज्ञ पुरुषः कृतवराहरूप आस्ते ॥ तं तु देवी हैषा भूः कुरुभिरस्खलितभक्तियोगेनोपधावति इमां च परमामुपनिषदमावर्तयति ३४ ॐ नमो भगवते मंत्रतत्त्वलिंगा य यज्ञक्रतवे महाध्वरायमहापुरुषाय नमः कर्मशुक्लाय त्रियुगाय नमस्ते इति ३५ यस्य स्वरूपं कवयो विपश्चितो गुणेषु दारुष्विव जातवेदसम् ॥ मथ्नंति मथ्ना म नसा दिदृक्षवो गूढं क्रियार्थैर्नम ईरितात्मने ३६ द्रव्यक्रियाहेत्वयनेशकर्तृभिर्मायागुणैर्वस्तुनिरीक्षितात्मने ॥ तथैव तत्रातिशयात्मबुद्धिभिर्निरस्तमायाकृत ये नमो नमः ३७

पपद्यत इत्याशंक्य प्रेक्षावद्भिर्विमृग्यरूपत्वेन पुरुषोत्तमत्वावगमात्तदवतारत्वेनोपपद्यत इत्याह यस्येति काव्यकर्तृत्वेन कवय इति न तु वेदांतवेद्यवस्तुज्ञत्वेनेत्यन्यथाप्रतीतिनिरासाय विपश्चित इति गुणेषु सत्वा दिकार्येषु शरीरेंद्रियादिषु नियामकत्वेन सन्निहितं यस्य तव स्वरूपं विपश्चितः कवयो मनसा मथ्नायोनिषु काष्ठेषु जातवेदसमग्निमिव मथ्नंति आम्रेडयंति विचार्य जानतीत्यन्वयः शरीरादौ सन्निहितश्चेत्कुतो न प्रकाशत इति तत्राह गूढमिति एको देवः सर्वभूतेषु गूढ विदं ज्योतिर्हृदय आहितं यदित्यादिश्रुतिः क्रियार्थैर्यज्ञविषयैरिंद्राग्न्यादिनामभिरीरितात्मने प्रतिपादितस्वरूपाय ३६ शरीरादिगूढेश्वरसद्भावे ब्रह्मादिप्रत्यक्षं च प्रमाणमित्याह द्रव्येति द्रव्यक्रियाहेत्वयनेशाश्च कर्तारश्चेति तथा ईशशब्दः प्रत्येकमभिसंबध्यते हेतुः कारणमयनमाधारः द्रव्यादीनामीशैः शंकरगरुडब्रह्मवायुभिर्जगत्कर्तृभूतैर्मायागुणैर्ह रीच्छानुसारिभिर्वस्तु यथा तथा निरीक्षितात्मने साक्षात्कृतस्वरूपाय । त्वत्प्रसादबलात्त्वत्साक्षात्कारे बुद्धिप्रावण्यं चैषामस्तीत्याह तत्रेति तत्र तव स्वरूपे यथाशक्त्याखिलजीवदर्शनपटुतरबुद्धिभिः यदुच्यते ब्रह्मविवर्तवादिभिर्मायारूपमेव ब्रह्म तेन तात्त्विकमिति तत्राह निरस्तेति शंकरादीनां द्रव्यादीशत्व द्रव्येशः शंकरः प्रोक्तः क्रियेशो गरुडः स्मृतः कारणेशस्तथा ब्रह्मा वायुराधारवान् स्मृत इति वाक्यप्रसिद्धं यथैव वस्तुनिरीक्षणं शक्यते तथेति एवशब्देनान्येषामेतादृशशक्तिं निवारयति ३७

ब्रह्मादीनामपित्वत्कटाक्षलेशमंतरेणत्वज्ज्ञानादौपाटवंनास्तिअतोनिर्मातृत्वंचमुख्यंतवैवेत्यभिप्रेत्याह करोतीति योविश्वस्यस्थित्यादिकंकरोतिब्रह्मादयश्चयस्यतवेप्सितमीक्षितुंनेशतेसत्वादिगुणैर्मोहित
त्वादितिशेषः ब्रह्मादीनामपितदीप्सितज्ञानशक्त्यभावेपिलक्ष्म्याःशक्तिःस्यात्तुतदनुवर्तमानत्वादित्याशंक्याह मायेति यदाश्रयायस्त्वमाश्रयोयस्याःसातथामायालक्ष्मीर्भ्रमतिअनतत्वात्स्वरूपंनगोरेच्छि
नचि अनुवृत्तिरपिनस्वाधीनाकिंतुत्वदधीनेत्यत्रदृष्टांतमाह यथेति अयस्कांतरत्नसंनिधानाद्यथाऽयोभ्रमतेचेष्टतेतथेयमपित्वत्संनिधानात्त्वामनुवर्ततइत्यर्थः त्वत्सन्निधानाभावेजडप्रायेतिद्योतना
यायोनिदर्शनमितिभावः अनेनत्वत्सन्निहितलक्ष्मीसंनिधानाज्जडप्रकृतिःकार्येषुप्रवर्तते तत्रेदंनिदर्शनमितिचोक्तंभवति तथाचयोजना यस्यतवाश्रयामायाजडप्रकृतिर्भ्रमतीति अयस्कां
तस्यायश्चेष्टकत्वशक्तिरीश्वरनियतेतिज्ञापनाययदाश्रयेति अतएवग्रावणइति अयस्कांतसंनिधायद्रव्यांतरचेष्टाशक्तिप्रदत्वात्तद्वत्स्थिरत्वाद्ग्रावतच्छब्दवाच्याय एतदेवसूचितं गुणकर्मेति चेतनाचे
तनाश्रयगुणकर्मणोःसाक्षिणे कर्तृत्वेनेतिशेषः ३८ प्रतिवारणंप्रतिगजस्थानीयंनिरस्तनिवारणंवा अग्रदंष्ट्रेदंष्ट्राग्रे जगदादिःश्रीनारायणएवसूकरः जगदादिश्चायंसूकरश्चसुखुकरोतीतिसूकरःएवसूकर'
शुमित्यनुकारशब्दंकरोतीतिसूकरोवराहः ववोशसावितिभाष्याइतिसूत्रात्शसयोरभेदः ३९ इतिपंचम०विज०टी०अष्टादशोध्यायः ॥ १८ ॥ ॥ ७ ॥ सीतामभिरामयतीतिसीताभिरामस्तम् १

करोतिविश्वस्थितिसंयमोदयंयस्येप्सितंनेप्सितुमीशतेगुणैः ॥ मायायथाऽयोभ्रमतेयदाश्रयाग्राव्णेनमस्तेगुणकर्मसाक्षिणे ३८ प्रमथ्यदैत्यंप्रतिवारणंमृधे
योमांरसायाजगदादिसूकरः ॥ कृत्वाग्रदंष्ट्रेनिरगादुदन्वतःक्रीडन्निवेभःप्रणतास्मितंविभुम् ३९ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेअष्टादशोध्यायः १८॥
श्रीशुकउवाच ॥ किंपुरुषेतुवर्षेभगवंतमादिपुरुषंलक्ष्मणाग्रजंसीताभिरामंरामंतच्चरणसन्निकर्षाभिरतःपरमभागवतोहनूमान् सहकिंपुरुषैरविरतभक्तिरु
पास्ते १ आर्ष्टिषेणेनसहगंधर्वैरनुगीयमानांपरमकल्याणींभर्तृभगवत्कथांसमुपशृणोतिस्वयंचेदंगायति २ ॐनमोभगवतउत्तमश्लोकायनमःआर्य
लक्षणशीलव्रतायनमःउपाश्रितात्मनेनमःउपासितलोकायनमःसाधुवादनिकषणायनमोब्रह्मण्यदेवायमहापुरुषायमहाराजायनमइति ३ यत्तद्विशुद्धा
नुभवमात्रमेकंस्वतेजसाध्वस्तगुणव्यवस्थम् ॥ प्रत्यक्प्रशांतंसुधियोपलंभनमनामरूपंनिरहंप्रपद्ये ४ मर्त्यावतारस्त्विहमर्त्यशिक्षणंरक्षोवधायैवनकेवलं
विभोः ॥ कुतोन्यथास्यूरमतःस्वआत्मनःसीताकृतानिव्यसनानीश्वरस्य ५

भगवत्कथामित्युक्तेकस्यचित्पूज्यस्यकथामितितद्व्यावृत्त्यर्थंभर्त्रीति भर्तासन्भ्रियमाणोबिभर्तीतिश्रुतिरपिसंगृहीतानेनेतिज्ञातव्यम् २ आर्यस्यहरेर्लक्षणंशीलंनित्यानिर्दोषत्वंसत्यजगत्स्रष्टृत्वादि
व्रतंचयस्यसतथातस्मै विश्वंसत्यंमघवानायुवोरिदापश्चनप्रमिनंतिव्रतंवामितिश्रुतिः उपाश्रिताआत्मानोजीवायस्यसतथातस्मै लोकानुग्रहायांगीकृतविग्रहायेतिवा उपासितउपासनायुक्तोलोकोयगृहि
श्यसतथातस्मै साधुरर्यमिति वादस्यवचनस्यनिकषणायसम्यग्विचारकाय यद्वा साधूनांवादस्यविवादस्यविरोधस्यनिकर्षणायपरिहारकाय ३ अहंतंत्वांशरणंप्रपद्यइत्यन्वयः यत्तत्तवस्वरूपंविशु
द्धानुभवमात्रंप्रकृतिप्राकृतवैकृतसंबंधरहितज्ञानात्मकेंद्रियादिमत्स्वतेजसास्वरूपसामर्थ्येनध्वस्तानिरस्तागुणाःसत्वादयश्चातिस्रोजाग्रदाद्यवस्थाश्चयेनसतथातं ध्वस्तागुणनिमित्ताःतिस्रोवस्थायेनसत
थातंवा प्रत्यक्जीवाभिमुखावस्थितं प्रशांतंप्रकृष्टसुखपूर्णं प्रसन्नाकारंवा सुधियाशोभनबुद्ध्योपलभ्यंतइतिसुधियोपलंभनं प्रत्यक्षपदार्थवत्प्रत्यक्षप्रमाणेननोपलभ्यतेप्राकृतनामरूपरहितत्वादित्याह
अनामरूपमिति अतएवनिरहंअहंकारशून्यम् ४ ननुश्रीरामस्यविशुद्धानुभवादिविशेषणानिकथंसंगच्छंते सीतावियोगादिनादुःखाज्ञानादिप्रदर्शनादितितत्राह मर्त्येति विभोर्व्याप्तस्यहरे
र्मर्त्यावतारःमर्त्याकाररूपग्रहणंरक्षोवधायैवनकेवलं तावन्मात्रंनभवति किंतुमर्त्यशिक्षणं यमुद्दिश्यगुरोराज्ञाकरणंशरणागतपालनमभीष्टदानमित्यादिमर्त्यैःकर्तव्यमिति एतत्कृतानेनकृतमितिज्ञायते

इत्याशंक्य दशरथाज्ञाकरणवनाभियानसीतान्वेषणादेर्प्राप्तव्यसनशरणागतसुग्रीवाभीष्टकरणविभीषणराज्यदानादिभ्योवगम्यतइत्याह कुतइति स्वेआत्मनिस्वस्वरूपेरमतोरममाणस्यभगवतःकारिमंग्र विष्ठितइतिस्वेमहिम्नीतिश्रुतेः ५ ईश्वरश्चेन्नदुःखानुभवीतदनुभवीचेन्नेश्वरइतितत्राह नवाइति सआत्माइतिपदद्वयेन आत्मावाइदमेवाग्रआसीदितिश्रुतिंपरामृशति वाइत्यनेनोनरनिष्ठोनिरवद्यइतिश्रुतिंप्रमाणयति हिशब्दोहेत्वर्थः कश्मलंसुरतलक्षणं अपिपदेनसीतामपीत्याह अतोभक्तानुकंपयाकृतावतारस्यश्रीरामदेवस्यदुःखभोगाभावेनेश्वरत्वाविरोधात्भक्तिज्ञानेएवतत्प्रीतिजनके नजन्मादिक वानरासुरादिपापयोनिजातस्यापिभक्तिज्ञानसद्भावेमोक्षस्यसुनियतत्वात्तदुक्तं यस्यसम्यक्भगवतिज्ञानंभक्तिस्तथैवच निश्चितस्तस्यमोक्षःस्यात्सर्वपापकृतोपितु योममत्वादिनादोषपरस्त्वन्यविषयःस्मृत इत्यभिप्रेत्याह नजन्मेति अन्यविषयस्तदाश्रितदुष्टजीवविषयइत्यर्थः महतोमहात्मनोमुक्तियोग्यस्य अंगआर्ष्टिषेण कस्माज्जन्मादिस्तोषहेतुर्नभवतीतितत्राह तैर्यग्विसृष्टानिति तिर्यक्संबंधियोनौवि सृष्टान्जातान्वराहादियोनेर्वा नरयोनेर्निकृष्टत्वद्योतनायवनौकसइति एतदेवाहापिपदेनगर्हितत्ववाचिना चशब्देनकृपाशीलत्वमेवप्रयोजनमित्याह ६ ७ अतःपुरुषार्थीभक्तिज्ञानाभ्यांश्रीराममेवभज

नवैसआत्मात्मवतामधीश्वरोभुंक्तेहिदुःखंभगवान्वासुदेवः ॥ नस्त्रीकृतंकश्मलमश्नुवीतनलक्ष्मणंचापिजहातिकर्हिचित् ६ नजन्मनूनंमहतोनसौभगं नवाङ्नबुद्धिर्नाकृतिस्तोषहेतुः ॥ तैर्यग्विसृष्टानपिनोवनौकसश्चकारसख्येचसलक्ष्मणाग्रजः ७ सुरोऽसुरोवाथनरोथवानरःसर्वात्मनायःसुकृतज्ञमुत्तमम् ॥ भजेतरामंमनुजाकृतिंहरिंयउत्तराननयत्कोसलान्दिवमिति ८ भारतेपिवर्षेभगवान्नरनारायणाख्यःआकल्पांतमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलंभोनुग्रहायात्मवतामनुकंपयातपोऽव्यक्तगतिश्चरति ९ तंभगवान्नारदोवर्णाश्रमवतीभिर्भारतीभिःप्रजाभिर्भगवत्प्रोक्ताभ्यांसांख्ययोगाभ्यांभगवदनुभावोपवर्णनंसावर्णेरुपदेक्ष्यमाणःपरमभक्तिभावेनोपसरति इदंचोदाहरति १० ॐनमोभगवतउपशमशीलायोपरतानात्म्यायाकिंचनवित्तायऋषिऋषभायनरनारायणायपरमहंसायपरमगुरवेआत्मारामाधिपतयेनमोनमइति ११ गायतिचेदम् ॥ कर्तास्यसर्गादिषुयोनबध्यतेनहन्यतेदेहगतोपिदैहिकैः ॥ द्रष्टुर्नदृग्यस्यगुणैर्विदूष्यतेतस्मैनमोऽसक्तविविक्तसाक्षिणे १२

तेत्याह सुरोसुरोवेति योमुमुक्षुःसपुरुषःश्रीराममेवभजेतेत्यन्वयः असुरादिजातेर्ममत्वादिदोषसंभवेनरामभजनंकथंसंभाव्यतइतिचेन्न तस्यमुक्त्ययोग्यासुरजातिविषयत्वाद्योग्यस्यतज्जात्वेपितदभावाद्योममत्वादिनादोषःसत्वन्यविषयःस्मृतइतिस्मृतेश्च महदेवानामसुरत्वमेकमितिश्रुतेः मुक्तियोग्यानामसुरजातित्वमस्तीतिज्ञायतेइत्यभिप्रायेणासुरइति नतुतमोयोग्यजात्यभिप्रायेणेति नकेवलंमूलरूपस्यैवमोक्षदातृत्वशक्तिरपित्ववताररूपस्याप्यस्तीतिआशयेनाह यइति उत्तरान्कोसलानयोध्यावासिनोदिवंवैकुंठं ८ उपशमोधिकभगवन्निष्ठा उपरमोमनआदींद्रियनिग्रहस्तपश्चरतामेवमपोक्षितामि विदर्शयितुं नतुस्वस्य नित्यनिगृहीतेंद्रियत्वात् आत्मनःस्वरूपस्योपलंभोनित्यापरोक्षतायस्यसतथा ९ सांख्ययोगाभ्यांयथार्थज्ञानतत्साधनाभ्यां भगवतोहरेरनुभावस्यमाहात्म्यस्योपवर्णनंप्रतिपादनंयस्मिंस्तत्तथातत्पंचरात्रं सावर्णेर्मनोःउपसरत्युपास्ते १० उपरतानात्म्यायानिवृत्तदेहादिधर्माय आत्मारामाणामधिपतये ११ सर्गादिषुकर्तातथापिदेवदत्तवद्योनबद्ध्यतेदेहगतोपिदैहिकैर्देहसंबंधिभिर्दोषैः योनहन्यतेनपीड्यतेद्रष्टुर्यस्यदृग्गुणैर्दर्शनायोग्यरूपादिभिः नदूष्यतेदर्शननिमित्तंपापंनसंबद्ध्यतेतस्मैनमः अत्रहेतुगर्भविशेषणमाह असक्तेति असंगत्वात्विलक्षणत्वात्साक्षित्वात्तुबंधनादिदोषाभावइत्यर्थः १२

बहुजन्मार्जितधर्मोद्युपायपाटवमिदमित्याह इदंहीति हिरण्यगर्भोयोगनैपुणंयोगपाटवमिदमेवजगाद इदंकिंतत्राह यदिति निर्गुणेत्वयि भक्त्यांतकालेमनोनिधायदुष्कलेवरमुज्झतीतियत्तदिद मितिभावः यस्यसम्यक्भगवतिज्ञानंभक्तिस्तथैवचेत्यादिवाक्यमत्रापिप्रमाणमितिबोद्धव्यं १३ यतएवंसर्वमनित्यंतस्माद्विदुपाऽज्ञवद्देहत्यागादौशंकाभयंनकार्यमित्याह यथेति यथैहिकामुष्मिककामे पुलंपटोरागीसुतादौनाशंचिंतयन् शंकेतमयिमृतेसुतादयोनाशंगमिष्यंतीति तथाविद्वानपियदिकुशरीरत्यागाच्छंकेततर्हितस्ययःशास्त्रश्रवणादौप्रयत्न सकेवलंश्रमएव नकिंचित्फलमित्यर्थः अतोनशंकितव्यमित्यर्थः १४ यतस्त्वदनुगृहीतमेवसफलंअतइमंत्वदनुग्रहजनकंउपायमस्मभ्यंदेहीत्याह तन्नइति योगंज्ञानंध्यानउपायंवा येनयोगेन अहंममतासंभूतदोषस्यमुक्तिपारिपंथित्वा न्नाशःप्रार्थ्यते तदुक्तं योममत्वादिनादोषःसत्वन्यविषयःस्मृतइति १५ इदानीमस्मिन्भारतवर्षेपर्वततत्तटजानदीःप्राधान्येनवक्ति भारतइति १६ आत्मनाकायेनांतरेणउपस्पृशंति आ

इदंहियोगेश्वरयोगनैपुणंहिरण्यगर्भोभगवान्जगादयत् ॥ यदंतकालेत्वयिनिर्गुणेमनोभक्त्याविधायोज्झतिदुष्कलेवरम् १३ यथैहिकामुष्मिककामलंपटःसुतेषुदारेषुधनेषुचिंतयन् ॥ शंकेतविद्वान्कुकलेवरात्ययाद्यस्तस्ययत्नःश्रमएवकेवलम् १४ तन्नःप्रभोत्वंकुकलेवरार्पितांत्वन्माययाहंममतामधोक्षज ॥ भिंद्यामयेनाशुवयंसुदुर्भिदांविधेहियोगंत्वयिनःसुभावितमिति १५ भारतेप्यस्मिन्वर्षेसरिच्छैलाःसंतिबहवःमलयोमंगलप्रस्थोमैनाकस्त्रिकूटऋषभःकनकःकोल्लःसह्योवेदगिरिःऋष्यमूकःश्रीशैलोवेंकटोमहेंद्रोवारिधारोविंध्यःशुक्तिमान्दक्षागिरिःपारियात्रोद्रोणश्चित्रकूटोगोवर्धनोरैवतकःककुभोनीलःकोकामुखइंद्रकीलःकामगिरिरितिचान्येचशतशःसहस्रशःशैलास्तेषांनितंबप्रभवानदानद्यश्चसंत्यसंख्याताः १६एतासामपोभारत्यःप्रजानामभिरेवपुनंतीनामात्मनाचोपस्पृशंति १७ चंद्रवटाताम्रपर्णीअवटोदकाकृतमालावैहायसीकावेरीवेणीपयोदाशर्करावर्तातुंगभद्राकृष्णाभीमरथीगोदावरीनिर्विंध्यापयोष्णीतापीसुरसानर्मदाचर्मण्वतीसिंधुःअंधःशोणश्चनदौ वेदस्मृतिःऋषिकुल्यात्रिसामाकौशिकीमंदाकिनीयमुनासरस्वतीदृषद्वतीगोमतीसरयूरोघवतीसप्तवतीघोषणासुषोमाशतमालाचंद्रभागाशुतुद्रीमरुद्वृधावितस्ताअसिक्नीविश्वेतिमहानद्यः १८ अस्मिन्नेववर्षेपुरुषैर्लब्धजन्मभिःशुक्ललोहितकृष्णवर्णेनस्वारब्धेनकर्मणादिव्यमानुषनारकगतयोबह्व्यआत्मनआनुपूर्व्येण सर्वाह्येवसर्वेषांविधीयंतेयथावर्णविधानमपवर्गश्चापिभवति १९ योसौभगवतिसर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयनेपरमात्मनिवासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणोनानागतिनिमित्ताविद्याग्रंथिरंधनद्वारेण यदाहिमहापुरुषसंगतिः एतदेवहिदेवागायंति २०

चमनस्नानाभ्यामितिशेषः १७ १८ पुण्यपापार्जनंचसत्वादिगुणैःक्रियते तत्फलभूताःस्वर्गादिगतयोपीत्याह अस्मिन्नेवेति शुक्ललोहितकृष्णवर्णेनसात्विकराजसतामसभेदभिन्नेनस्वारब्धेन स्वफलदानायोपक्रांतेनस्वर्गादिगतयआनुपूर्व्येणपर्यायेणात्मनःपरमात्मनःप्रेरणयासर्वेषांविधीयंते यथावर्णविधानंवर्णाश्रमविहितानुसारेण ननु भारतीनांप्रजानांयदितिसोगतयस्तर्हिनिजानंदाविर्भावलक्षणोमोक्षोदुरवस्थःकिमितितत्राह अपवर्गश्चेति नकेवलंस्वर्गादिगतयोपितुसंसारदुःखनिवारणसमर्थोमोक्षश्चेतिचशब्दार्थः १९ अपिशब्दाद्यदामहतापुरुषाणांश्रीनारायणपरायणानांसंगतिस्तदायोसौभगवत्यनन्यनिमित्तभक्तियोगलक्षणउपायोभवतीत्यन्वयः नअन्यत्ऐश्वर्यादिमपिनिमित्तंयस्यसोनन्यनिमित्तःतादृशोभक्तियोगलक्षणस्तस्मात्स्वरूपानंदाविर्भावलक्षणोमोक्षोभवतीतिज्ञातव्य क्केतप्रकारेण तदुच्यतेनानागतीति पूर्वोक्तानांनानागतीनांनिमित्तहेतुभूता याअविद्याग्रंथिस्तस्यारंधनद्वारेण दहनप्रकारेणभक्तियोगोप्येवंप्रकारेणोत्पादनीयइतिदर्शयतिसर्वभूतात्मनिभूतभवद्भविष्य

त्सर्वजगदंतर्यामिणि अनात्म्येजीवधर्मरहिते अनिरुक्तेवेदैरपिसर्वात्मनानिर्वक्तुमशक्ये अनिलयने अनन्याधारेपराप्रकृष्टामाश्रीर्येषांतेपरमामुक्तास्तेषामप्यानंददानादिकर्तरि संज्ञामाह वासुदेवइ ति अवतारकृपाणामपिमुक्तिदानसामर्थ्यमस्तीतिद्योतयितुंवावासुदेवइति हिशब्दोभक्त्युत्पत्तौसत्संगतिःप्रयोजिकेतिदर्शयति भक्त्यामुक्तिर्भवतीत्येतदेवगायंतिविद्वांसः २० एषामितिषष्ठीतृ तीयार्थे किंशोभनंकर्मउतस्विर्त्किंभारतेऽजिरेभारताख्यप्रांगणेमुकुंदसेवायाःऔपयिकंजन्मलक्षणोपायस्तत्ररपृहात्मभिरिच्छामनस्कैः २१ द्युजयेनस्वर्गजयेन यत्रस्वर्गेश्रीनारायणपादपद्मस्मृतिः प्रमुष्टा कुतः अतिशयेंद्रियोत्सवाद्विषयभोगातिरेकात् स्वर्गस्थानकर्मणिउद्दिश्येदंवचननदेवान्तेषांसंततहरिस्मरणस्यप्रमाणासिद्धत्वात् २२ भारतलब्धजन्मनामपिपुनर्जन्मसंभवात्कथंभार तभूजयोवरइतिप्रशस्यतइतितत्राह क्षणेनेति मनस्विनःक्षणकालेनमर्त्येननश्वरेणदेहेनकृतंकर्मर्हरौसंन्यस्यहरेरभयंपुनर्जन्मभयरहितंपदंसंयांतीतियस्मात्तस्मादितिशेषः कल्पायुषामित्यनेनमहरा दिलोकस्थालक्ष्यते कल्पायुषोयद्विबुधास्मतइतिस्वोक्तेः २३ महरादिलोकेविशिष्टभोगसंभवात्कथंनीचीक्रियतेभारतखंडादितितत्राह नयत्रेति यत्रमहर्लोकादिषु तदाश्रयाः श्रीनारायणचर णसरसिजस्मरणजनकाः साधवोरागद्वेषादिदोषलेशशून्याभागवतानसुलभाः यथेहातएववैकुंठकथामृतापगाअपिन अतएवविष्णुविषययज्ञाश्चनसंतितैःप्राप्यफलाभावात्पूर्वचीर्णकर्मफलभोगो त्सवेनगच्छत्कालत्वेनावसराभावान्मिथस्तूष्णीभावाच्च ध्यायंतीवदेवमनुष्याइतिश्रुतेः सुरेशस्वामिलोकोमहरादिःसेव्यतांनयातिप्राप्यफलांतरत्वेनेतिशेषः २४ इतोपिभारतपुण्यक्षेत्रमाहुरि

अहोबतैषांकिमकारिशोभनंप्रसन्नएषांस्विदुतस्वयंहरिः ॥ यैर्जन्मलब्धंनृषुभारताजिरेमुकुंदसेवौपयिकंस्पृहात्मभिः २१ किंदुष्करैर्नःक्रतुभिस्तपोव्रतैर्दा नादिभिर्वाद्युजयेनफल्गुना ॥ नयत्रनारायणपादपंकजस्मृतिःप्रमुष्टातिशयेंद्रियोत्सवात् २२ कल्पायुषांस्थानजयात्पुनर्भवात्क्षणायुषांभारतभूजयो वरः ॥ क्षणेनमर्त्येनकृतंमनस्विनःसंन्यस्यसंयांत्यभयंपदंहरेः २३ नयत्रवैकुंठकथासुधापगानसाधवोभागवतास्तदाश्रयाः ॥ नयत्रयज्ञेशमखामहोत्सवाः सुरेशलोकोपिनयातिसेव्यताम् २४ प्राप्तानृजातिंत्विहयेचजंतवोज्ञानक्रियाद्रव्यकलापसंभृताः ॥ नचेद्यतेरन्नपुनर्भवायतेभूयोवनौकाइवयांतिबंधनम् २५ यैःश्रद्धयाबर्हिषिभागशोहविर्निरुप्तमिष्टंविधिमंत्रवस्तुतः ॥ एकःपृथङ्नामभिराहुतोमुदागृह्णातिपूर्णःस्वयमाशिषांप्रभुः २६

त्याह प्राप्ताइति इहभारतेयेजंतवःप्राणिमात्रनामानोऽपुनर्भवायमोक्षाय नयतेरंश्चेत्तेभूयोवनौकाइवनिरयवासिनएव नचैषापुनरुत्थितिरित्याह यातीति वनतुनरकंविद्याद्वजनंवारिकाननेइत्य भिधानं येचनृजातिंपुरुषत्वेनजननंप्राप्ताः जातिःसामान्यजन्मनोरित्यभिधानं मुक्तयेनयतेरंश्चेत्तेसुतराभूयोवनौकामहातमस्थानयोग्याः एधशब्दवदोकशब्दोकारांतःनानार्थेषुशब्दानामनेकांत त्वेनपाठात् बर्हिर्नाग्नौनपुंसकइत्यादिषुयेचनृनयइतिधातोर्ज्ञानकर्मयोग्यविप्रजातिंप्राप्तास्तेततोपिभूयोवनौकाः २५ अशेषसाधनत्वेनभारतस्योत्तमत्वांतरखंडेभ्योयतोत्रक्रियमाणंकर्मयज्ञादिलक्षण श्रीहरिप्रीतिजनकमतःस्तुवंतीत्याह यैरिति भारतवासिभिर्यैः श्रद्धयाबर्हिषियज्ञेनिरुप्तहविराशिषांप्रभुरेक स्वयंमुदागृह्णाति । कथंनिरुप्तविधिमंत्रवस्तुतोभागशइष्टं इंद्रायनिर्वपामिप्रजापतये निर्वपामीतिपृथङ्क्रम इंद्रयजाग्निंयजेतिपृथगिष्टविधिमंत्राणांइंद्रादिविषयत्वेनासिद्धत्वात्कथमेकोहरिर्गृह्णातीत्युच्यतेइतितत्राह नामभिरिति इंद्रादिनामभिरत्राहुतः चिंतेचरादिवत्प्राप्तान्यफलापेक्षी नेत्याह पूर्णइति कुतः आशिषांप्रभुत्वात् २६

नकेवलंइहविरादायतूंष्णीमास्तेहरिः फलंचभयच्छंतीत्याहुरित्याह सत्यमिति अर्थितोहरिस्तेषांयज्वनांनृणांआर्थितंस्वर्गादिकंदिशतीति सत्यंशपथेनप्रतिजानीते प्राप्तस्वर्गैरर्थितोपिपुनःफलंनैवादिश तीतिइदंचसत्यं अर्थिनोमदोभवतीतियचस्मात्अपामसोममित्यादेःतस्मात्पुनरर्थितंप्राप्यपुनःप्रार्थयमानस्यप्रार्थितोनादिशतीति अमदइति यदितिवा तर्ह्यत्रत्यानांस्वर्गादिकमेवदिशतिनमोक्षमित्या शंकायामूदित्याहुरित्याह स्वयमिति इच्छायाविधानंयस्मात्तदिच्छाविधानंअभीष्टदंनिजपादपल्लवंभजतांफलमनिच्छतांभक्तिमतरेणतेषांस्वयंआत्मानंविधत्तेददाति २७ स्वाभिप्रेतमाहुरित्याह यद्यत्रेति यत्रयस्मिन्भारतेवर्षेहरिर्निजपादपद्मंभजतांशंसुखंतनोतीतियद्यस्मात्तस्मान्नःस्विष्टादेःस्वर्गसुखावशेषितंस्वर्गसुखमनुभूयावशिष्टंयच्छोभनतेनपुण्येननोस्माकमञ्जनाभस्मृतिनिमित्तंजन्मरया दितिप्रार्थयामहे तदुक्तं अनाधिकारिणोदेवाःस्वर्गस्थाभारतोद्भवं वांछंत्यात्मविमोक्षार्थमुद्रेकार्थेधिकारिणइतिवेदैर्गीतामितिज्ञायते अनेनशास्त्रतात्पर्यार्थोपिनिस्संदिग्धइतिबोद्धव्यं २८ एकइतिविशेषणा

सत्यंदिशत्यर्थितमर्थितोनृणांनैवार्थितोयत्पुनरर्थिनोमदः ॥ स्वयंविधत्तेभजतामनिच्छतामिच्छाविधानंनिजपादपल्लवम् २७ यद्यत्रनःस्वर्गसुखावशेषितं स्विष्टस्यदत्तस्यकृतस्यशोभनम् ॥ तेनाजनाभस्मृतिजन्मनःस्याद्वर्षेहरिर्यद्भजतांशंतनोति २८ श्रीशुकउवाच ॥ जंबूद्वीपस्यचराजन्नुपद्वीपानष्टौह्ये कउपादिशंतिसगरात्मजैरश्वान्वेषणइमांमहींपरितोनिखनद्भिरुपकल्पिताः २९ तद्यथा स्वर्णप्रस्थश्चंद्रशुक्लआवर्तनोरमणकोमुदाहरणःपांचजन्यःसिंहलो लंकेति ३० एवंतवभारतोत्तमजंबूद्वीपवर्षविभागोयथोपदेशमुपवर्णितः ३१ इतिश्रीभागवतेपंचमस्कंधेभुवनकोशेजंबूद्वीपवर्णनंनामएकोनविंशोऽध्या यः ॥ १९ ॥ ऋषिरुवाच ॥ अतःपरंप्लक्षादिद्वीपानांप्रमाणलक्षणसंस्थानतोवर्षविभागउपवर्ण्यते १ जंबूद्वीपोयंयावान्प्रमाणविस्तारतस्तावताक्षारो दधिनापरिवेष्टितोयथामेरुर्जंब्वाख्येनलवणोदधिरपिततोद्विगुणविशालेनप्लक्षाख्येनपरिक्षिप्तोयथापरिखाबाह्योपवनेनप्लक्षोजंबूप्रमाणोद्वीपाख्यातिकरो हिरण्मयःप्लक्षउत्थितोयत्राग्निरुपास्तेसप्तजिह्वस्तस्याधिपतिःप्रियव्रतात्मजइध्मजिह्वःस्वंद्वीपंसप्तवर्षाणिविभज्य सप्तवर्षनामभ्यआत्मजेभ्यआक लय्यस्वयमात्मयोगेनोपरराम २ शिवंयशस्यंसुभद्रंशांतंक्षेममममृतमभयमितिवर्षाणितेषुगिरयोनद्यश्चसप्तसप्तैवासन्नभिज्ञाताः ३ मणिकूटोवज्रकूटइंद्रसेनोज्यो तिष्मान्धूम्रवर्णोहिरण्यग्रीवोमेघमालइतिसेतुशैलाः अरुणानृम्णाआंगिरसीसावित्रीसुप्रभाताऋतंभरासत्यंभरेतिमहानद्यःयासांजलोपस्पर्शनविधूत रजस्तमसोहंसपतंगऊर्ध्वायनसत्यांगसंज्ञाश्चत्वारोवर्णाःसहस्रायुषोविबुधोपमसंदर्शनप्रजननाःस्वर्गद्वारंत्रय्याविद्ययाभगवंतंत्रयीमयंसूर्यात्मानंयजंते ४

द्विशेषविवक्षयोष्टावुपद्वीपानुपादिशंति ॥ सामान्यविवक्षयस्तान्समुद्रैकदेशानिति २९ ३० ३१ इतिश्रीभागवतेपंचमस्कंधेविज०कृतटी०एकोनविंशोऽध्यायः १९ प्लक्षादिद्वीपप्रमाणादिज्ञानेन श्रीनारायमाहात्म्यमेवज्ञाप्यतेस्मिन्नध्याये प्रमाणमियत्ता प्रमाणंबोधनेयत्तामर्यादाशास्त्रहेतुष्वितियादवः लक्षणमेतावद्गिरिसरिद्व्याप्तं संस्थानंवर्तुलचतुरस्रत्वादिस्वरूपप्रकारः १ तावताविस्तारेणलक्षयोजनप्रमाणेनततोजंबूद्वीपात्प्लक्षाख्येनबहिःस्थितेन तत्रदृष्टांतोयथेति यत्रद्वीपेप्लक्षउत्थितःअसौप्लक्ष.जंबूप्रमाणःद्वीपाख्यातिकरस्त्वेजंबूप्रमाणीकरोति अधिसहस्रयो जनोन्नाहइतिवा यत्रेत्युत्तरत्रापिसंबद्ध्यतेश्रीहरिमितिशेषः आकलय्यदत्वा २ अभिज्ञाताःप्रसिद्धाःप्रधानावा ३ सेतुशैलाःमर्यादागिरयः विबुधोपमसंदर्शनंप्रजननंसुरतवलंचयं षांतेतथासूर्यात्मानंसूर्यस्वरूपं ४

प्रत्नस्यपुरातनस्यविष्णोर्व्याप्तस्यहरेर्यद्रूपंप्रतिमास्थानीयंयच्चसत्यंतस्यवाचिककायिकसुकृतप्रेरकस्यब्रह्मणोविरिंचस्यरूपंसन्निधाननिमित्तं यच्चामृतस्यामरस्यमृहस्यमृत्योर्मारकस्यमहेश्वरस्यरूपं एवं त्रिमूर्तिनिवासयोग्यंतंसूर्यमात्मानमीमहिशरणंप्राप्नुमइतिमंत्रार्थः ननुसूर्यांतःस्थितंहरिंशरणंप्रपद्यामहइतिव्याख्यानेकिंप्रमाणंकंप्रतीतार्थंपरित्यज्यान्यार्थांगीकारस्यप्रमाणसापेक्षत्वादितीयमाशंका सूर्यसोमाग्निवारीशविधातृषुयथाक्रमं प्लक्षादिद्वीपसंस्थासुस्थितंहरिमुपासतइत्येतेनपरिहर्तव्येति ५ ६ परिवृत्तेनवर्तुलेनेत्येतत्सर्वद्वीपसमुद्रेष्वनुमंधेयम् ७ यत्रशाल्मलीसगुल्मत्वात्सद्वीपःशाल्मलः प्लक्षायामेत्यनेनशाल्मल्याःपरिमाणसम्यक्नज्ञातंस्यादित्यतःसाध्यर्थेति सुपर्णोसिगरुत्मानित्यादिछंदोभिर्वेदैःस्तूयतइतिछंदःस्तुतः ८ ९ १० ११ शुक्लकृष्णयोरुभयोःपक्षयोरपिस्वगोभिःसुधालक्षणैः

प्रत्नस्यविष्णोर्यद्रूपंयत्सत्यंतस्यब्रह्मणः ॥ अमृतस्यचमृत्योश्चसूर्यमात्मानमीमहीति ५ प्लक्षादिषुपंचसुपुरुषाणामायुरिंद्रियमोजःसहोबलंबुद्धिर्विक्रम इतिचसर्वेषामौत्पत्तिकीसिद्धिरविशेषेणवर्तते ६ प्लक्षस्तुसमानेनेक्षुरसोदेनावृतोयथाद्वीपोपिशाल्मलोद्विगुणविशालःसमानेनसुरोदेनावृतःपरिवृत्तेन ७ यत्रहवैशाल्मलीप्लक्षायामायस्यांवावकिलनिलयमाहुर्भगवतश्छंदःस्तुतःपतत्रिराजस्यसाध्यर्धाजंबूतउपलक्ष्यते ८ तद्द्वीपाधिपतिःप्रियव्रतात्मजो यज्ञबाहुःस्वसुतेभ्यस्तन्नामानिसप्तवर्षाणिव्यभजत्सुरोचनंसौमनस्यंरमणकंदेववर्हंपारिभद्रमाप्यायनमभिज्ञातमिति ९ तेष्ववर्षगिरयोनद्यश्चसप्तैवाभिज्ञाताः सुरसःशतशृंगोवामदेवःकुंदोमुकुंदःपुष्पवर्षःसहस्रश्रुतिरिति अनुमतिःसिनीवालीसरस्वतीकुहूरजनीनंदाराकेति १० तद्वर्षपुरुषाःश्रुतधरवीर्यधरवसुंधरेषुंधरसंज्ञाभगवंतंवेदमयंसोममात्मानंवेदेनयजंते ११ स्वगोभिःपितृदेवेभ्योविभजन्कृष्णशुक्लयोः ॥ प्रजानांसर्वासांराजान्धःसोम नस्त्विति १२ एवंसुरोदाद्बहिस्तद्द्विगुणःसमानेनावृतोघृतोदेनयथापूर्वः कुशद्वीपोयस्मिन्कुशस्तंबोदेवकृतस्तद्द्वीपाख्यापनोज्वलनइवापरःशश्वत्स्वशष्परोचिषादिशोविराजयति १३ तद्द्वीपपतिःप्रैयव्रतोराजन्हिरण्यरेतानामस्वंद्वीपंसप्तभ्यःपुत्रेभ्योयथाभागंविभज्यस्वयंतुतपआतिष्ठत् १४ वसुदानदृढरुचिनाभिगुप्तसत्यव्रतविप्रवामदेवनामभ्यस्तेषांवर्षेषुसीमागिरयोनद्यश्चाभिज्ञाताःसप्तैवतुबभूतुः ॥ चक्रश्चतुःशृंगःकपिलश्चित्रकूटोदेवानीकऊर्ध्वरोमाद्रविणइति १५ रसकुल्यामधुकुल्याश्रुतविंदामित्रविंदादेवगर्भाघृतच्युतामंत्रमालेतिनद्यः यासांपयोभिःकुशद्वीपौकसःकुशलकोविदाभियुक्तकुलकसंज्ञाभगवंतंजातवेदःस्वरूपिणंकर्मकौशलेनयजंते १६ परस्यब्रह्मणःसाक्षाज्जातवेदोसिहव्यवाट् ॥ देवानांपुरुषांगानांयज्ञेनपुरुषंयजेति १७ तथा बहिःक्रौंचद्वीपःकुशद्वीपाद्द्विगुणसमानेनक्षीरोदेनपरितउपक्लृप्तोवृतोयथाकुशद्वीपोघृतोदेनयस्मिन्क्रौंचोनामपर्वतराजोद्वीपनामानिवर्तकआस्ते १८

पितृदेवानुद्दिश्यसोमलक्षणमंधोन्नंविभजन्राजाचंद्रांतर्यामीसर्वासांप्रजानांनोस्माकंचराजारंजकोस्त्विति प्रजानामंधोविभजन्पित्रादिभ्यः सोमंविभजन्राजानःसोमंसुखमस्त्वितिवा १२ संख्ययाकुशद्वीपसमानेनयथापूर्वःशाल्मलःसुरोदेनावृतस्तथा स्वशष्पाणामनिजबालतृणानातेजसा १३ १४ १५ १६ हेजातवेदःसर्वज्ञ त्वंसाक्षात्परस्यब्रह्मणःश्रीनारायणस्यार्थेहव्यवाडसिहव्यलक्षणहविषोनेतासि तथापुरुषशब्दवाच्यस्यहरेरंगभूतानांदेवानांचहव्यवाडसि सत्वमस्मत्सन्निहितोभूत्वायज्ञलक्षणेनकर्मणापुरुषंयज्ञनामानंश्रीहरिंयजयाजयास्माभिरितिशेषः १७ क्षीरोदेनमंडोदेन मंडोदपूरणंचैवव्यत्यासंक्षीरसागरे राहुसोमरवीणांचमंडलाद्द्विगुणोक्तितां विनैवसर्वमुन्नेयंयोजनाभेदतोत्रत्विति वचनाद्व्यत्यासोज्ञातव्यः १८

गुहस्यषण्मुखस्यप्रहरणेनशक्त्याख्येनोन्मथिताःपीडितानितंबाश्चकुंजलतादिपिहितोदशअणुतरागीरिविशेषामिथुनानांक्रीडायोग्याश्रयस्यसतथा क्षीरोदेनमंडोदेनाभिषिच्यमानः १९ रिक्थादान्दायादान्पुत्रानित्यर्थः २० २१ अम्मयंजलाधिदेवतंदेवक्रीडादिगुणसंपन्नं २२ याआपःपुरुषवीर्याःश्रीनाराणस्यरेतोभूताःआपोनाराइतिप्रोक्ताआपोवैनरसूनवइतिस्मृतेः भूर्भुवःसुवःपदं त्रैलोक्यमपिपुनंतीःपुनंत्यःयाश्चाघघ्नीःपापहराःभवेभवार्थंशुद्धिलक्षणसुखार्थमात्मनादेहेनचांतरेणचसंस्पृशेतताआपःपुनीयुःपुनंत्वित्यन्वयः २३ दधिमंडोदेन अनाम्लंतुदधिक्षीरंक्षीरसांद्रंतथादधिइ

योसौगुहप्रहरणोन्माथितानितंबकुंजोपिक्षीरोदेनासिच्यमानोभगवतावरुणेनाभिगुप्तोविभयोबभूव १९ तस्मिन्नपिप्रैयव्रतोघृतपृष्ठोनामाधिपतिः सप्तद्वीपवर्षाणिसप्तधाविभज्यतेषुपुत्रनामसुसप्तरिक्थादान्वर्षपान्निवेश्यस्वयंभगवतःपरमकल्याणस्यात्मभूतस्यहरेश्चरणारविंदमुपजगाम २० आमोमधुरुहोमेघपृष्ठःसुधामाभ्राजिष्ठोलोहितार्णोवनस्पतिरितिघृतपृष्ठसुतास्तेषांवर्षगिरयःसप्तसप्तैवनद्यश्चाभिख्याताःशुक्लोवर्धमानउपबर्हणउपओजनोनंदोनंदनःसर्वभद्रइति २१अभयाअमृतौघाआर्यकातीर्थवतीरूपवतीपवित्राशुक्लेतियासामंभःपवित्रमुपयुंजानाःपुरुषऋषभद्रविणदेवसंज्ञावर्षपुरुषाअम्मयंदेवमपांपूर्णेनांजलिनायजंते २२ आपःपुरुषवीर्याःस्थपुनंतीर्भूर्भुवःसुवः ॥ तानःपुनीयुरघघ्नीःसंस्पृशेतात्मनाभवइति २३ एवंपरस्तात्क्षीरोदात्परितउपवेशितःशाकद्वीपोद्वात्रिंशल्लक्षयोजनायामःसमानेनचदधिमंडोदेनपरितउपक्लृप्तःयस्मिन्नहिशाकोनाममहीरुहःस्वक्षेत्रव्यपदेशकोयस्यहिमहासुरभिगंधस्तंद्वीपमनुवासयति २४ तस्यापिप्रैयव्रतएवाधिपतिर्नाम्नामेधातिथिःसोपिविभज्यसप्तवर्षाणिपुत्रनामानितेषुस्वात्मजान्पुरोजवमनोजववेपमानधूम्रानीकचित्ररेफबहुरूपविश्वाधारसंज्ञान्निधायाधिपतीन्स्वयंभगवत्यनंतआवेशितमतिस्तपोवनंप्रविवेश २५ तेषुवर्षमर्यादागिरयोनद्यश्चसप्तसप्तएवईशानउरुशृंगोबलभद्रःशतकेसरःसहस्रस्रोतोदेवपालोमहानसइति २६ अनघाआयुर्दाउभयस्पृष्टिरपराजितापंचपदीसहस्रश्रुतिर्निजधृतिरिति २७ तद्वर्षपुरुषाधृतव्रतसत्यव्रतदानव्रतानुव्रतनामानोभगवंतंवाय्वात्मकंप्राणायामविधूतरजस्तमसःपरमसमाधिनायजंते २८ अंतःप्रविश्यभूतानियोबिभर्त्यात्मकेतुभिः ॥ अंतर्यामीश्वरःसाक्षात्पातुनोयद्वशेइदमिति २९ एवमेवदधिमंडोदात्परतःपुष्करद्वीपस्ततोद्विगुणायामःसमंततउपकल्पितःसमानेनस्वादूदकसमुद्रेणबाहिरात्तःयस्मिन्बृहत्पुष्करंज्वलनशिखामलकनकपत्रायुतंभगवतःकमलासनस्याध्यासनंपरिकल्पितंतद्द्वीपमध्येमानसोत्तरनामैकएवार्वाचीनपराचीनयोर्वर्षयोर्मर्यादाचलोयुतयोजनोच्छ्रायायामोयत्रतुचतसृषुदिक्षुचत्वारिपुराणिलोकपालानामिंद्रादीनांयदुपरिष्टात्सूर्यरथस्यमेरुंपरिचंक्रमतःसंवत्सरात्मकंचक्रमहोरात्राभ्यांपरिभ्रमति ३०

त्यभिधानात् क्षीरोदार्थेदधिमंडोदशब्दः २४ २५ २६ २७ २८ आत्मकेतुभिःआत्मस्वरूपैःप्राणादिभिर्वृत्तिभेदैर्वा २९ दधिमंडोदात्क्षीरोदात्ज्वलनशिखावदमलानांकनकपत्राणामयुतंयस्यतत्तथा अर्वाचीनपराचीनयोर्बाह्याभ्यंतरप्रदेशस्थितयोर्यस्यमानसोत्तरपर्वतस्य अहस्त्रिनाभिःसूर्यस्यएकचक्रस्यवैस्मृतं अराःसंवत्सराःपंचतेभ्यःषडृतवःस्मृताइतिमत्स्यपुराणे चक्रस्यसंवत्सरात्मकत्वमुक्तं त्रिनाभिचक्रमजरमनर्वं पंचारेचक्रइत्यादिच ३०

३१ अकर्मकेणध्यानलक्षणेन कर्मणाध्यानस्यचित्तनिरोधलक्षणकर्मसाध्यत्वात्फलाभिसंधिरहितेनवा ३२ हेभगवन्यत्तवलिंगं सर्वलक्षणसंपन्नंरवरूपंकर्मणा।५झलक्षणेनमीयतेज्ञाप्यतइतिकर्ममयं वे दप्रतिपाद्येषुप्रधानंवा ब्रह्माचतुर्मुखोलिंगंप्रतिमायस्यतत्तथा जनोर्चति कथंभेदेनविरिंचात्सर्वजगतश्चवैलक्षण्येन एकांतनियमेनअद्वैत स्वगतभेदवर्जितंयत्तस्मैभगवतेतुभ्यनमइतिमंत्रार्थः विरिंचस्ययत् तल्लिंगशरीरंपुण्यकर्मनिर्मितंब्रह्मणोहरेर्लिंगविशेषसन्निधानयोग्यं एकांतमवसानेप्रलयेकेवलंनिर्व्यापारं एकेमुख्यान्यकेवलाइत्यभिधानं अद्वैतंमुक्तौसंसारेचश्रीनारायणमत्यन्तभेदेनप्रवर्तमानं गच्छामि विष्णुपादाभ्यामित्याद्यनुसंधानवचनात्मुख्याद्वैतोक्तिनस्यादत्राह भेदेनेति विरिंचपरमात्मनोर्भेदेनजनःपूजयतितस्मैभगवतेपूज्यायविरिंचायनमइतिवा ३३ ततःपरस्ताद्बहिः ३४ मानसोत्तरमेर्वो पर्वतयोरंतरमतरालंस्थलंयावद्योजनंषोडशलक्षाधिकदशकोटिप्रमितमस्तितावतीभूमिःकांचनीततोहिरण्मयीभूमिरित्यन्यत्रप्रसिद्धिः ततोहेममयीभूमिर्दशकोट्योवराननेदेवानांक्रीडनार्थायलो कालोकस्ततःपरइति षण्णवतिलक्षमितिकेचित् आदर्शतलोपमादर्पणतलसदृशीदेवतदनुगव्यतिरिक्तसर्वसत्वपरिहृता द्विगुणाकांचनीभूमिःसर्वसत्वविवर्जितेत्यत्रपूर्वभूमेःसकाशात्काचन्याभूमेर्द्वि गुणत्वहेतुत्वंदेवान्प्रत्युच्यते नपुनः संख्यायाद्विगुणत्वंग्रंथांतरविरोधात् ॥ ३५ ॥ लोकालोकइतिसमाख्यासम्यगाख्याअन्वर्थसंज्ञा तत्कथमितितदाह यदिति अनेनाचलेनलो

तद्वीपस्याधिपतिःप्रैय्यव्रतोवीतिहोत्रोनामास्वस्यात्मजौरमणधातकिनामानौवर्षपतीनियुज्यस्वयंपूर्वजवद्भगवत्कर्मशीलएवास्ते ३१ तद्वर्षपुरुषाभगवंतं ब्रह्मरूपिणमकर्मकेणकर्मणाचाराधयंतीदंचोदाहरंति ३२ यत्तत्कर्ममयंलिंगंब्रह्मलिंगंजनोर्चति ॥ भेदेनैकांतमद्वैतंतस्मैभगवतेनमइति ३३ ततःपरस्ता ल्लोकालोकनामाचलःलोकालोकयोरंतरालेपरितउपक्षप्तः ३४ यावन्मानसोत्तरमेर्वोरंतरंतावतीभूमिःकांचन्यादर्शतलोपमायस्यांप्रहितःपदार्थोन कथंचित्पुनःप्रत्युपलभ्यतेतस्मात्सर्वसत्वपरिहृतासीत् ३५ लोकालोकइतिसमाख्यायदनेनाचलेन लोका लोकावंतरवर्तिनास्थाप्यतेइति ३६ सलो कत्रयांतेपरितईश्वरेणविहितःयस्मात्सूर्यादीनांध्रुवापवर्गाणांज्योतिर्गणानांगभस्तयोर्वाचीनास्त्रिलोकान्वितन्वानानकदाचित्पराचीनाभवितुमुत्सहंतेताव दुन्नहनायामः ३७ एतावाँल्लोकविन्यासोमानलक्षणसंस्थाभिर्विचिंततःकविभिःसतुपंचाशत्कोटिगुणितभूगोलकस्यतुरीयभागेनयाँल्लोकोलोकाचलः ३८

कश्चालोकश्चस्थाप्येतेविविच्यज्ञाप्येतेअंतर्वर्तिनालोकालोकयोर्मध्यवर्तिनेतियद्यस्मात्तस्मादितिशेषः असौलोकालोकाचलइति ३६ सलोकालोकाचलो लोकत्रयांतेलोकत्रयस्यद्वयनंतरंमर्यादासि द्ध्यर्थंपरितउपक्षप्तः केनपरमेश्वरेण अथवालोकत्रयांतेलोकत्रयावसाने किंच लोकत्रयंयोजनतएकपंचाशल्लक्षतयायावदुच्चंतावानयंचोचविस्तृतस्तेसार्द्धपंचाशल्लक्षइतिशेषः तावदुन्नहनायामइति वचनंचआयामेकथंचिदेवतावानितिज्ञातव्यं सपंचाशत्सहस्रश्चेतिवचनात्ध्रुवोपवर्गअंतेयेषांतेध्रुवापवर्गास्तेषापराचीनाउपरिवर्तमानाः ३७ एतावान्लोकविन्यासःदेवमनुष्यादिव्यवहारयोग्यलोक इत्युच्यमानप्रदेशस्यस्वरूपस्थितिपरिमाणमेतावत्सार्द्धत्रिकोटियोजनात्मकंसलोकविन्यासःपंचाशत्कोटिगुणितस्यपंचाशत्कोटिविस्तारयोजनात्मकस्यभूगोलस्यब्रह्मांडलक्षणस्यतुरीयभागेनचतुर्थां शत्वेनतिष्ठतिब्रह्मांडप्रदेशेचतुर्द्धाविभक्तएकांशःसर्वस्मात्प्रतिविद्यमानोघनोदकाख्यः द्वितीयस्ततआभ्यंतरोंधतमआख्यः तृतीयोलोकालोकाचलाख्यः चतुर्थस्तुकांचनीभूमिमारभ्यमेरुपर्यंतप्रदे शः अयंचतुर्थभागोलोकशब्दितः अयंचयावल्लोकालोकःयत्रलोकालोकाचलस्तिष्ठतितावत्पर्यंतस्तेनविद्यतेयोंतर्विस्तारः लोकालोकाचलाचल्लोकपरिमाणंसार्द्धत्रिकोटियोजनात्मकं एतेनपरि माणेनालोकपरिमाणंव्याख्यातंभवति ३८

३९ ॥ ४० ॥ लोकालोकाचलाद्बहिःस्थलंतस्यालोकशब्दवाच्यस्यलोकपरिमाणेनव्याख्यातमित्यर्थः ॥ ४१ ॥ योगेश्वराणामष्टाणिमादिसिद्धीनांगतिमुदाहरंति ॥ ४२ ॥ पंचाशत्को
टिगुणितोब्रह्मांडकटाहइत्युक्तं तस्यदशदिगपेक्षयामध्यप्रदेशःकियानितितत्राह अंडेति द्यावापृथिव्योर्यदंतरंअंतरिक्षंतस्मिन्यत्रस्थितःसूर्यः अंडमध्यगतः अंतरिक्षप्रदेशेयत्रसूर्यमंडलसंचारःसों
डमध्यप्रदेशः सर्वदिगपेक्षयासूर्यांडगोलयोर्मध्येसर्वदिक्ष्वपिसंशयपंचविंशतिकोटियोजनानिस्युरित्यर्थः ४३ एषसूर्यं एतस्मिन्मृतेजीवरहितेअचेतनइतियावदंडेअभूदचेतनब्रह्मांडमध्येवर्ततइतिय
स्मात्तस्मान्मार्तंडइतिव्यपदेशः यद्यथाहिरण्यांडसंभवोविरिंचोहिरण्यगर्भइत्युच्यतेतथेति ४४ सूरिमाप्यत्वात्तदंतर्यामित्वाच्चसूर्यस्तेनहीरणादिगादयोविभज्यंतेयदत.सूर्यःआत्माश्रीनाराय
णःसर्वेषांदृग्दृष्टिरितिकथितः ॥ ४५ ॥ ४६ ॥ इतिश्रीभागवतेपंचमस्कंधेविजयध्वजटीकायांविंशोऽध्यायः ॥ २० ॥ ॥ ७ ॥ ॥ चतुर्भिःसार्कनवतिंचनामभिश्चक्रनवृत्तंव्यर्तार

तदुपरिष्टाच्चतस्रष्वाशास्वात्मयोनिनाखिलजगद्गुरुणाभिनिवेशितायेद्विरदपतयःऋषभःपुष्करचूडोवामनोपराजितइतिसकललोकस्थितिहेतवः ३९ ते
षांस्वविभूतीनांमहेंद्रादीनांलोकपालानांविविधवीर्योपबृंहणायभगवान्परमपुरुषोमहाविभूतिरंतर्याम्यात्मविशुद्धसत्वधर्मवैराग्यैश्वर्याद्यष्टमहासिद्ध्युप
लक्षणाविष्वक्सेनादिभिःपार्षदप्रवरैःपरितोनिजवरायुधोपशोभितैर्भुजदंडैःसंधारयमाणस्तस्मिन्गिरिवरेसमंतात्सकललोकस्वस्तयआस्ते ४० आकल्पमे
वंभगवानात्मयोगमाययाविरचितविविधलोकयात्रागोपीथायाथयोंतर्विस्तारएतेनह्यलोकपरिमाणंव्याख्यातम् ४१ यद्बहिर्लोकालोकाचलात्ततःपरस्ता
द्योगेश्वरगतिंविशुद्धामुदाहरंति ४२ अंडमध्यगतःसूर्योद्यावाभूम्योर्यदंतरम् ॥ सूर्यांडगोलयोर्मध्येकोट्यःस्युःपंचविंशतिः ४३ मृतेंडएषएतस्मिन्यदभूत्त
तोमार्तंडइतिव्यपदेशः ॥ हिरण्यगर्भइतियद्धिरण्यांडसमुद्भवः ४४ सूर्येणहिविभज्यंतेदिशःखंद्यौर्महीतथा ॥ स्वर्गापवर्गनरकरसौकांसिचसर्वशः ४५दे
वतिर्यङ्मनुष्याणांसरीसृपनगवीरुधाम् ॥ सर्वजीवनिकायानांसूर्यआत्मादृगीश्वरः ४६ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेद्वीपसमुद्रवर्षपरिमाणलक्ष
णंनामविंशोध्यायः २० श्रीशुकउवाच॥ एतावानेवभूवलयस्यसन्निवेशःप्रमाणलक्षणतश्चव्याख्यातःएतेनैवहिदिवोमंडलमानंतद्विदउपदिशंति१ यथाद्विद
लनिष्पावादीनांतदंतरेणांतरिक्षमुपसंधितम्२ यन्मध्यगतोभगवांस्तपतांपतिस्तपनआतपेनत्रिलोकींप्रतपत्यवभासयत्यात्मभासाएषउदगयनदक्षिणा
यनवैषुवसंज्ञाभिर्दीर्घह्रस्वसमानाभिर्गतिभिरारोहणावरोहणसमस्थानेषुयथासवनमभिपद्यमानोमकरादिषुराशिष्वहोरात्राणिदीर्घह्रस्वसमानानिविधत्ते ३

वीविपत् . भीषास्माद्वातःपवतेभीषोदेतिसूर्यइत्यादिश्रुतेरखंडस्वामिनोहरेराज्ञयास्वाधिकारेषुप्रवर्तमानानामिष्टदेवतात्वेनलोकैर्निषेव्यमाणानांतस्यैवविशेषनिवासस्थानानांसूर्यादीनांस्वरूपज्ञानमपिभगव
ज्ज्ञानोपयोगीत्यभिप्रायेणतन्निरूपयत्यस्मिन्नध्याये तत्रातीताध्यायार्थानुवादमुखेनैतमध्यायमवतारयति एतावानिति भूवलयस्यलोकाव्यकस्यसन्निवेशःविस्तारविशेषः१ द्विदलनिष्पावादीनां निष्पावरा
जमाषद्विदलानांसर्वप्रकारेणपरिमाणतःसमत्वमेवंभूवलयस्यसर्वस्यपरिमाणतःसमत्वमेव यस्यांतरिक्षस्यमध्यगतस्तदंतरिक्षंतयोर्द्यावापृथिव्योरंतरेणमध्यउपसाधितंस्थापितम् २ आत्मनःपरमात्मनोभा
सा यद्वादित्यगतंतेजइत्यादेः एषसूर्यउदगयनमुत्तरायणंतत्संज्ञयागत्याआरोहणसंज्ञेषुमकरादिमिथुनांतेषुराशिषु यथासवनंतत्तन्मकरादिमासकालमनतिक्रम्यतत्तन्नक्षत्रेश्चोदयमभिपद्यमानोदक्षिणा

यनसंज्ञयागत्याऽवरोहणसंज्ञकेषुकर्कटादिधनुःपर्यंतेषुराशिषु तत्तत्कर्कटादिमासकालमनतिक्रम्यतत्तन्नक्षत्रैश्चोदयमभिपद्यमानस्तथा वैषुवसंज्ञयागत्यासमस्थानसंज्ञयोर्मेषतुलयोराश्योस्तन्नक्षत्राभ्या मुदयंमासुवन्नहोरात्राणिदीर्घन्हस्वसमानानिकरोति ३ ४ एतदेवविविच्यदर्शयति यदेति वृषभादिकन्यांतेषुवृद्धिश्चह्रासश्चभवतः सौकियंतावितितत्राह मासीति वर्द्धते न्हसतिचेतिशेषः अत्रवृद्धि न्हासयोरेकैकाघटिकेतिनियमोनास्ति त्रिचतुरादिवृद्धिदर्शनात् तर्हिमुहूर्तानामपिवृद्धिन्हासौस्यातामिति नेत्याह तुल्यंदिवसमितित्रिंशन्मुहूर्तमेवदिवसमाहुरित्यर्थः कथतुल्यतेतितत्राह वर्द्धमानानीति वर्द्धमानान्यहानिभवंतितावतीस्तावत्योवर्द्धमानारात्रयश्चसंक्षीयमाणाः न्हसंत्यश्चयास्ताःसमुद्धृत्यघटिकाभिरेकीकृत्यात्रिंशन्मुहूर्तान्यहोरात्राणिसमानानिभवंति वृश्चिकादिपुमीनांतेषुअहोरात्राणिविपरीतानिअहानिह्रसंतिरात्रयोवर्द्धंते ५ मकरादिषुवृश्चिकादिषुमेषतुलयोरित्येतेषुकथितसंग्रहमाह यावदिति अथवाआवहप्रवहोद्वहसंवहविवहपरावहपरिवहनामानःसप्तवायवोज्योतिश्चक्रस्य प्रवर्तकास्तत्रज्योतिश्चक्राधिपत्यादित्यगमनस्यातिस्रोवीथ्योमध्यमोत्तरादक्षिणाच तदुक्तं सर्वग्रहाणांत्रीण्येवस्थानानिद्विजसत्तमाः स्थानंजारद्गवमध्यंतथैरावतमुत्तरं वैश्वानरदक्षिणतोनिर्दिष्टमिह तत्त्वतइति तच्चवीथीत्रयमेकैकंत्रिधाभिपद्यते अश्विन्यादिनक्षत्राणांत्रिभिस्त्रिभिर्नक्षत्रैर्नागवीथिगजवीथ्यैरावतवीथिरित्युत्तरमार्गेवीथीत्रयं आर्षभगोवीथिजारद्गवीचेति वैपुवेमध्यमार्गेवीथीत्रय अजवीथीमृगवीथीवैश्वानरीचेतिदक्षिणमार्गेवीथीत्रयं एतद्वायुपुराणेकथितं अश्विनीकृत्तिकायाम्यानागवीथीतुशब्दिता रोहिण्यार्द्रामृगशिरोगजवीथ्यभिधीयते । पुष्याश्लेषातथादित्यावीथीचैरा

यदामेषतुलयोर्वर्ततेतदाहोरात्राणिसमानानिभवंति ४ यदावृषभादिषुपंचसुराशिषुचरतितदाहान्येववर्द्धंतेह्रसंतिचरात्रयः मासिमास्येकैकाघटिकातुल्यंदिवसंवर्द्धमानान्यहानितावतीरनुसंक्षीयमाणारात्रयःसमुद्धृत्यसमान्यहोरात्राणित्रिंशन्मुहूर्तान्येवभवंति यदावृश्चिकादिषुपंचसुवर्ततेतदाहोरात्राणिविपरितानिभवंति ५ यावद्दक्षिणायनमहानिवर्द्धंतेन्हसंतिचरात्रयःयावदुदगयनमहानिन्हसंतिरात्रयोविवर्द्धंते ६ एवंनवकोटयएकपंचाशल्लक्षाणिच योजनानांमानसोत्तरगिरिवर्तमानस्योपदिशंति तस्मिन्नैंद्रीपुरीमेरोःपूर्वस्माद्देवधानीनामदक्षिणतोयाम्यासंयमिनीनामपश्चाद्वारुणीनिम्लोचनीनामोत्तरतःसौम्याविभावरीनामतासूदयमध्याह्नास्तमयनिशीथानीतिभूतानांप्रवृत्तिनिवृत्तिनिमित्तानिसमयविशेषेणमेरोश्चतुर्दिशम् ७

वतीमता एतास्तुवीथयस्तिस्रउत्तरोमार्गउच्यते तथाद्वेचापिफाल्गुन्यौमघाचैवार्षभीमता। हस्तश्चित्रातथास्वातीगोवीथीतितुशब्दिता । ज्येष्ठाविशाखानुराधावीथीजारद्गवीमता । एतास्तुवीथयस्तिस्रोमध्यमोमार्गउच्यते याम्याभरणी आदित्याअदितिदेवताकापुनर्वसुः मार्गीमृगवीथी तत्रचयुगाक्षकोटिसंबद्धवायुपाशद्वयस्यध्रुवेणाकर्षणंयदातदाभ्यंतरमंडलगमनायरथनीडस्यारोहण वायुपाशशैथिल्येचबहिर्मंडलगमनार्थमवरोहणं आकृष्येतेयदातौतुध्रुवेणसमधिष्ठितौ । तदाभ्यंतरतःसूर्योभ्रमतेमंडलानितु ध्रुवेणमुच्यमानेनपुनारश्मियुगेनतु तथैवबाह्यतःसूर्योभ्रमतेमंडलानिचेति तत्रबाह्यवीथ्यांगतस्यशीघ्रगतित्वाद्दिनह्रासोरात्रिवृद्धिश्च अभ्यंतरवीथ्यांगतस्यमंदगतित्वाद्रात्रिक्षयोदिनवृद्धिश्च मध्यवीथ्यांगतस्यसमानगतित्वादहोरात्रसाम्यमित्यादिविशेषस्तुकालविशेषवेदिभिरवगम्यतइति तदधिकारित्वादस्माभिरत्रयत्नोनक्रियतइति ६ इदानीमेकाहोरात्रगंतव्यमार्गसंख्यामाह एवमिति एवंत्रिविधगतिभिःत्रिविधराशिषुवर्तमानस्यादित्यस्यरथचक्रस्यैकस्मिन्नहोरात्रेमानसोत्तरशिखरेपरिवर्तमानं परितोगमनं तस्यमार्गमेकपंचाशल्लक्षाधिकनवकोटयइत्युपदिशंतितन्मार्गज्ञाइतिशेषः तस्मिन्मानसोत्तरपर्वतेपूर्वस्मान्मेरोःपूर्वदिक्सूत्रनिपातेदक्षिणतःआदिष्वेवं सौम्यासोदस्याविद्यमाना तासुपुरीपुतत्पुरद्वारेष्वादित्यस्ययानिगमनान्युदयादिसंज्ञानिस्युः समयविशेषेण संकेतविशेषेण नहिसर्वदासंचरतःउदयादिकमस्ति मेरोश्चतुर्दिशंस्थितानांभूतानांप्रवृत्तिनिवृत्तिनिमित्तानि तत्रोदयमध्याह्नेप्रवृत्तिनिमित्ते अस्तंगमनमीषन्निवृत्तिनिमित्तं । निशीथगाविरह्यसंचरमाणानांसम्यङ्निवृत्तिनिमित्तभूता निशीथमर्द्धरात्रम् ७

तत्रत्यानामिलावृतखंडनिवासिनांसव्येनाचलमचलस्यमेरुनाम्नोवामपार्श्वतोगच्छन्नचलंदक्षिणेनस्वस्यदक्षिणतःसर्वदाकरोति सर्वेषांद्वीपवर्षाणांमेरुरुत्तरतःस्थितइतिन्यायेनसर्वदिङ्मुखस्यापिमेरोःपू र्वाभिमुखत्वात्सर्वत्रगच्छन्सव्येनैवगच्छत्यादित्यइत्यर्थः गतिघटनोपरिवक्ष्यतेच ८ यत्रोदेतितत्समानसूत्रनिपातेपश्चिमभागेनिम्लोचति दक्षिणायनेकिंचित्किंचिद्दक्षिणभागोदयेसति किंचित्किंचिद्द क्षिणभागेपश्चिमेनिम्लोचतिएवमुत्तरायणेकिंचित्किंचिदुत्तरतःउदयनिम्लोचौयाति एवमुद्यन्नादित्यउदयप्रदेशसूत्रनिपातंविहाययत्रक्वापिनस्पंदतेनचलति तस्योदयस्थस्यसमानसूत्रनिपातेविभावरी पुरिद्वारिस्थितोन्यजनान्प्रस्वापयतिनिद्रितान्करोति उद्धतशृंगच्छायापिहिततत्रविभावर्यांगतंनपश्यंतिजनाइतिशेषः ९ सार्धद्वादशलक्षाणिसाधिकानीति पंचविंशतिसहस्राधिकानिसार्धद्वादशलक्षा णीत्यर्थः १० ११ देवधान्यानिर्गत्य संयमनींप्रवेक्ष्यन्पंचदशघटिकाभिः कालावयवैःपादोनाष्टत्रिंशल्लक्षोत्तरकोटिद्वयमतिक्रम्यप्रविशतितपनःएवंचतुर्गुणितान्येतानियोजनानिसैकपंचाशल्लक्षणनव कोटिसंख्यानीतिसर्वात्मनाज्ञातव्यं १२ यस्यरविरथस्यैकमेवचक्रंद्वादशमासाभिमानिदेवताभिमन्यमानाद्वादशाराःयस्यतत्तथा षड्ऋत्वभिमानिदेवताभिमन्यमानाःषण्नेमयोयस्यतत्तथा चातुर्मास्या भिमानिदेवताभिमन्यमानास्त्रिनाभयोयस्यतत्तथा स्वयंसंवत्सराभिमानिदेवताभिमन्यमानंतस्यरथस्याक्षप्रमाणं सार्धकोटिद्वयंसप्तलक्षाधिकं सार्धकोटिद्वयंप्रोक्तंसप्तलक्षाधिकंतथा रथाक्षस्यरवेर्मेरो

तत्रत्यानांदिवसमध्यगतएवादित्यस्तपतिसव्येनाचलंदक्षिणेनकरोति ८ यत्रोदेतितस्यसमानसूत्रनिपातेनिम्लोचतियत्रक्वचनस्पंदतेअभितपतितत्रहैषस मानसूत्रनिपातेप्रस्वापयतितत्रगतंनपश्यंतियेतमनुपश्येरन् ९ यदाचैंद्र्याःपुर्याःप्रतिचलतिपंचदशभिर्घटिकाभिर्याम्यांसपादकोटिद्वयंयोजनानांसा र्धद्वादशलक्षाणिसाधिकानिचोपयाति १० एवंततोवारुणींसौम्यामैंद्रींचपुनःपुनस्तथान्येचग्रहाःसोमादयोनक्षत्रैःसहज्योतिश्चक्रेणसमभ्युद्यंतिसहचा भिनिम्लोचंति ११ एवंमुहूर्तेनचतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानिसौरोरथस्त्रयीमयोसौचतसृषुपरिवर्ततेपुरीषु १२ यस्यैकंचक्रंद्वादशारंषण्ने मित्रिनाभिस्वयंसंवत्सरात्मकंसमामनंतितस्याक्षोमेरोर्मूर्धनिकृतोमानसोत्तरेकृतेतरभागोयत्रप्रोतंरविरथचक्रंतैलयंत्रवन्मानसोत्तरगिरौपरिभ्रमति १३ तस्मिन्नक्षेकृतमूलोद्वितीयोक्षस्तुरीयमानेनसंमितः १४ तैलयंत्राक्षवद्ध्रुवेकृतोपरिभागोरथनीडस्तुषट्त्रिंशल्लक्षयोजनायतस्तुरीयभागविशालस्तावान् रविरथयुगोयत्रहयाश्छंदोनामानःसप्तारुणयोजितावहंतिदेवमादित्यम् १५ पुरस्तात्सवितुररुणःपश्चान्नियुक्तःसौत्येकर्मणिकिलास्ते १६

र्मानसोत्तरवर्तिनइति यत्रेतरभागेरविरथचक्रंप्रोतंयःसूर्यरथाक्षश्चक्रप्रोतैकभागोमेरुमूर्ध्निप्रोतैकभागः १३ तस्मिन्दीर्घाक्षेचक्रप्रोतैकभागस्तस्मिन्दीर्घाक्षेचक्रप्रोतदेशेकृतमूलःकीलितपृष्ठभागस्तुरीयमाने नसंमितःदीर्घाक्षचतुर्भागसमानः द्वितीयाक्षोस्ति १४ सतुध्रुवलोकेकृतोपरिभागः रथनीडःसूर्यस्यपीठस्थानीयःतुरीयभागविशालोनवलक्षविस्तारस्तावान्रविरथयुगइतिपूर्वप्रस्तुतदीर्घाक्षसमानः प्रकृते संबंधाभावाद्दूरस्थपरामर्शःप्रमाणांतरासिद्धत्वाच्च अक्षप्रमाणमुभयोःप्रमाणंतद्युगार्धयोःह्रस्वाक्षस्तद्युगार्धेनध्रुवाधारोरथस्यवाइति अक्षप्रमाणंअक्षयोःदीर्घाक्षह्रस्वाक्षयोःपरिमाणमुभयोर्युगार्धयोर्युगंच तदर्धंचयुगार्धंतयोर्युगार्धयोर्यथाक्रमंप्रमाणंयुगस्योत्तरभागोश्वस्कंधेनिवेशितःदक्षिणभागस्तुध्रुवस्थानादवलंबमानोवायुपाशेनबद्धः युगार्धस्त्वश्वस्कंधान्निर्गतयुगाग्रेकीलितःचक्रप्रोतदीर्घाक्षाग्रेकीलिता परभागःतत्ररथस्ययोह्रस्वाक्षस्तत्रैवकीलितस्तेनयुगार्धेनसहह्रस्वाक्षःध्रुवाधारोभवति उत्तानपादपुत्रलोकेवायुपाशेनबद्धइत्यर्थः अश्वस्थित्याचायमर्थोवगम्यते सप्ताश्वरूपच्छंदांसिवहतोवामतोधुरं चक्रपक्षनिबद्धानिचक्रेचाक्षःसमाहितइति रविरथनीडविशालसमानइतिकेचित् तत्त्वमरुणोविजानाति ईषादंडपरिमाणमपितदनुसारेणोत्प्रेक्षणीयं युगमध्येनिर्गताग्रईषादंडः ॥ १५ ॥ स वितुःपुरस्तात् अश्वानांपश्चात्पृष्ठे १६

१७ ग्रामण्यस्तल्लक्षणः ग्रामाधिपेतक्षणिचग्रामणीःपरिकीर्तितइतियादवः १८ १९ इतिश्रीभागवतेमहापुराणेविजयध्वजकृतटीकायांपंचमस्कंधेएकविंशोऽध्यायः ॥ २१ ॥ उक्तैवाध्यायसंगतिः राशीनाप्रचलनमपिप्रदक्षिणतइतियस्माच्चस्मादेतस्यादित्यस्यराशीनामभिमुखप्रचलनमप्रदक्षिणगमनंघटतेतदनुपपन्नं भगवतातदभिमुखप्रचलनमुपवर्णितं यस्मात्तस्मादमुष्यादित्यस्याभिमुखतयागमनस्यराशीनांप्रचलनस्याभिप्रायंकथमनुमीमहि युक्तिपूर्वकंबुद्ध्यामहइति १ प्रदक्षिणतोऽभ्रमताकुलालचक्रेणसहप्रदक्षिणीक्रियमाणाअपितद्गताःपिपीलिकादयोयथास्वप्रयत्नसाध्यगत्याविपरीतंगच्छंत्येवंप्रदक्षिणेनभ्रमताज्योतिश्चक्रेणसहप्रदक्षिणीक्रियमाणोपिसविता स्वगत्यापूर्वापरीभावतया शीघ्रमंदमध्यभेदेनराशीनामभिमुखंचलतीत्यभिप्रायः राश्यादय‍इत्यादित्यंपृष्ठतोगच्छंतीत्येके बिंबप्रतिबिंबवत् २ वसंतादिष्वृतुषुक्रियमाणानांकर्मणांविशुद्धेर्निमित्तं तदर्पणत्वेनेतिशेषःकविभिःभूतभाविष्यद्वर्तमानज्ञैःब्रह्मविद्भिःयथोपजोषंयथाक्रमं ३ द्वादशधाविभक्तेःकारणमाह तमेतामिति वर्णाश्रमा

तथावालखिल्याऋषयोंगुष्ठपर्वमात्राःषष्टिसहस्राणिपुरतःसूर्यंसूक्तवाकायनियुक्ताःसंस्तुवंति १७ तथान्येचऋषयोगंधर्वाप्सरसोनागाग्रामण्योयातुधानादेवाइत्येकैकशोगणाःसप्तचैकैकशोरथस्थामासिमासिभगवंतंसूर्यमात्मानंनानानामानंपृथङ्नामानःपृथक्कर्मभिर्द्वंद्वशउपासते १८ लक्षोत्तरसार्धनवकोटियोजनपरिमंडलंभूवलयस्यक्षणेनगव्यूत्युत्तरद्विसहस्रयोजनानिसभुंक्ते १९ इतिश्रीभागवतेपंचमस्कंधेज्योतिश्चक्रानुवर्णनंनामएकविंशोऽध्यायः ॥२१॥ राजोवाच ॥ यदेतस्यभवगतआदित्यस्यमेरुंध्रुवंचप्रदक्षिणेनपरिभ्रमतोराशीनामभिमुखंचप्रचलनंभगवतोपवर्णितंअमुष्यवयंकथमनुमीमहीति १ सहोवाचशुकःयथाकुलालचक्रेणभ्रमतासहभ्रमतांतदाश्रयाणांपिपीलिकादीनांगतिरन्यैवप्रदेशांतरेष्वप्युपलभ्यमानत्वात्एवंनक्षत्रराशिभिरुपलक्षितेनकालचक्रेणध्रुवंमेरुंप्रदक्षिणतःपरिधावतासहधावमानानांतदाश्रयाणांसूर्यादीनांग्रहाणांगतिरन्यैवनक्षत्रांतरेराश्यंतरेचोपलभ्यमानत्वात् २ सएषभगवानादिपुरुषःसाक्षान्नारायणोलोकानांस्वस्तयआत्मानंत्रयीमयंकर्मविशुद्धिनिमित्तंकविभिरपिवेदेनविज्ञास्यमानोद्वादशधाविभज्यषट्सुवसंतादिषुऋतुषुयथोपजोषमृतुगुणान्विदधाति ३ तमेतमिहपुरुषास्त्रय्यांविद्यायांवर्णाश्रमाचारानुपथाउच्चावचैःकर्मभिराम्नातैर्योगवितानैश्चश्रद्धयायजंतोंजसाश्रेयःसमधिगच्छंति ४ अथसएषआत्मालोकानांद्यावापृथिव्योरंतरेणनभोवलयस्यकालचक्रगतोद्वादशमासान्भुंक्तेराशिसंज्ञान्संवत्सरावयवान्मासान्पक्षद्वयंसपादर्क्षद्वयमुपदिशंतियावताषष्ठमंशंभुंजीतसवैऋतुरित्युपादिश्यतेसंवत्सरावयवः ५

चारमनुपथंविअनुगच्छंतीतिवर्णाश्रमाचारानुपथाः पथगताविति धातोः योगवितानैरीश्वरार्पणबुद्धिलक्षणोपायविस्तारैः आम्नातैःप्रतिपादितैः ४ अथसइतितच्छब्देनसूर्यांतर्यामीनारायणःपरामृश्यते प्रस्तुतत्वात् लोकानामात्मेत्युक्तेश्च अथशब्दान्नारयणाधिष्ठानभूतःसूर्योवा द्यावापृथिव्योरंतरेणमध्येस्थितस्यनभोवलयस्यमध्यवर्तीकालचक्रगतःभुंक्तेवर्तयति राशीनासंज्ञायेषांमासानांतेतथातान्मेषवृषादीनित्यर्थः संवत्सरस्यद्वादशांशोमासइतिज्ञापनायसंवत्सरावयवानितिविशेषणं पक्षद्वयमित्यनेनमासपरिमाणं सपादर्क्षद्वयमित्यनेननक्षत्रनिमित्तमासपरिमाणतिथ्यात्मकालाशभोक्तृत्वंचेत्यनतोक्तं कृत्तिकापादयुक्ताश्विनीभरण्यौमेषइत्यादिक्रमेणबोद्धव्यं पक्षद्वयात्मकालभोगेनसहसपादर्क्षद्वयात्मकालस्यभुज्यमानत्वादुभयंचयुज्यतइत्यर्थःसंवत्सरस्यषष्ठमंशंमासद्वयंयावताकालेननभोवीथ्याअर्द्धेनप्रचरतितंकालमयनमाहुः दक्षिणायनमुत्तरायणं उत्तरायणेमंदगतिर्दक्षिणायनेत्वरितागतिर्वैषुवेसमानागतिरिति ५

६ द्यावापृथिव्योर्मंडलाभ्यांसह नभोमंडलंप्रचलति तंकालंसंवत्सरादिपंचभेदेनसूर्यस्यमंदादिगतिभेदाद्वदंति तज्ज्ञाइतिशेषः ७ अर्कस्यसंवत्सरभुक्तिर्द्वादशराशिप्राप्तिः पक्षाभ्यांशुक्लकृष्णसंज्ञाभ्यांभुंक्ते मासभुक्तिंसपादर्क्षाभ्यांसक्रांतिकाश्विनीभरणीभ्यांइत्यादिक्रमेणप्राप्नोतिपक्षभुक्तिमेकनक्षत्रसंमितांदिनेनैवभुंक्तेचंद्रइत्यर्थः अत्रहेतुमाह अग्रचारीति नक्षत्राणामग्रणीत्वमग्रचारित्वं ८ सर्वजीवराशेश्चेष्टकः जीवश्चप्राणधारकश्च दिनेनपक्षभुक्तिंस्पष्टयति एकमिति त्रिंशन्मुहूर्तैस्त्रिंशद्भिर्मुहूर्तैः ९ सर्वजीवनिवहप्राणइत्युक्तंस्पष्टयति देवेति उपजीव्यप्रधानत्वात्सर्वमयइत्यर्थः १० कालानयनेतादर्थ्येसप्तमी

अथचयावतार्द्धेननभोवीथ्याःप्रचरतितंकालमयनमाचक्षते ६ अथचयन्नभोमंडलंसहद्यावापृथिव्योर्मंडलाभ्यांकार्त्स्न्येनभुंजीततंकालंसंवत्सरंपरिवत्सरमिडावत्सरमनुवत्सरंवत्सरमितिभानोर्मांद्यशैघ्र्यसमानगतिभिःसमामनंति ७ एवंचंद्रमाअर्कगभस्तिभ्यउपरिष्टाल्लक्षयोजनतउपलभ्यमानोर्कस्यसंवत्सरभुक्तिंपक्षाभ्यांमासभुक्तिंसपादर्क्षाभ्यांदिनेनैवपक्षभुक्तिमग्रचारीद्रुततरगमनोभुंक्ते ८ अथचापूर्यमाणाभिरुपक्षीयमाणाभिश्चकलाभिःपितॄणामहोरात्राणिपूर्वपक्षापरपक्षाभ्यांवितन्वानः॥सर्वजीवनिवहप्राणोजीवश्चैकमेकंनक्षत्रंत्रिंशन्मुहूर्तैर्भुंक्ते९यएषषोडशकलःपुरुषोभगवान्मनोमयोन्नमयोमृतमयोदेवपितृमनुष्यभूतपशुपक्षिसरीसृपवीरुधांप्राणाप्यायनशीलत्वात्सर्वमयइतिवर्णयंति १० ततउपरिष्टाल्लक्षयोजनतोनक्षत्राणिमेरुंदक्षिणेनैवकालायनईश्वरयोजितानिसहाभिजिताष्टाविंशतिः ११ ततउपरिष्टादुशनाद्विलक्षयोजनादुपलभ्यतेपुरतःपश्चात्सहैववार्कस्यशैघ्र्यमांद्यसाम्यादिभिर्गतिभिरर्कवच्चरतिलोकानांनित्यदानुकूलएवप्रायेणवर्षयंस्त्स्थितिद्वारेणानुमीयतेसवृष्टिविष्टंभग्रहोपशमनः १२ उशनसाबुधोपिव्याख्यातः ततउपरिष्टाद्विलक्षयोजनतोबुधःसोमसुतउपलभ्यमानःप्रायेणशुभकृद्यदार्कमतिरिच्येततदातिवाताभ्रप्रायाऽनावृष्ट्यादिभयमाशंसते १३ ततऊर्ध्वमंगारकोपियोजनलक्षद्वितयउपलभ्यमानस्त्रिभिःपक्षैरेकैकशोराशीन्द्वादशानुभुंक्ते यदिनवक्रोतिवर्ततेप्रायेणाशुभग्रहोघशंसः १४ ततउपरिष्टाद्विलक्षयोजनांतरगतोभगवान्बृहस्पतिरेकैकस्मिन्राशौपरिवत्सरंपरिवत्सरंप्रचरतियदिनवक्रःस्यात्प्रायशोनुकूलोब्राह्मणकुलस्य १५ ततउपरिष्टाद्योजनलक्षद्वयात्प्रतीयमानःशनैश्चरएकैकस्मिन्राशौत्रिंशन्मासान्विलंबमानः सर्वानेवानुपर्येतितावद्भिरनुवत्सरैःप्रायेणहिसर्वेषामशांतिकरः १६ ततउत्तरस्मादृषयएकादशलक्षयोजनांतरउपलभ्यंते यएवंलोकानांशमनुभावयंतोभगवतोविष्णोर्यत्परमंपदंप्रदक्षिणंप्रक्रमंति १७ अथतस्मात्परतस्त्रयोदशलक्षयोजनांतरतोयत्तद्विष्णोःपरमंपदमभिवदंतियत्रमहाभागवतोध्रुवऔत्तानपादिरग्निनेंद्रेणप्रजापतिनाकश्यपेनधर्मेणच ॥ समकालयुग्भिःसबहुमानंदक्षिणतःक्रियमाणइदानीमपिकल्पजीविनामाजीव्यउपास्तेतस्येहानुभावउपवर्णितः १८

कालज्ञापनार्थमीश्वरनियुक्तानिकालचक्रइतिवा अभिजित्उत्तराषाढाश्रवणयोःसंयोगः अश्विनीरेवत्योःसंधिरितिकेचित् ११ यस्योशनसःस्थितिद्वारेण वृष्टिविष्टंभग्रहोंगारकः १२ तस्योपशांतिकृत् शुभग्रहसंयोगेशुभसूचकोऽन्यथाघशंसोदुःखसूचकइत्यतःप्रायेणाशुभग्रहइति १३ १४ १५ तावद्भिस्त्रिंशद्भिरनुवत्सरैः सर्वराशीननुपर्येति राशिषुविलंब्यसंचरणाच्छनैश्चरइतिनाम प्रायेणैकादशेशुभकरत्वात् १६ १७ ध्रुवेणसमकालंसायुज्यमार्गिभिः उपास्तेश्रीहरिमितिशेषः १८

अनिमिषेणोन्मीलितलोचनेनाक्रमणपशवः परिवर्तमानाबलीवर्दामेढीस्तंभबद्धास्तामभितोभ्रमंतइत्यर्थः त्रिभिःसवनैःशैघ्र्यमांद्यसमसंचारैर्यथास्थानंविहितादन्यथानकचिच्चरंतिभूमंडलानिमेढी स्तंभंपरितःस्थानानि ॥ १९ ॥ आदिशब्दगृहीतास्तारकाःकेचिद्ध्रुवस्यांतर्योगेनकेचिद्बहिर्योगेनसंचरंतीत्यर्थः आवहादिशब्दवाच्येनवायुनोदीर्यमाणाःप्रेर्यमाणाः ॥ २० ॥ नन्वेतेनिरालंबाः कथन पतंतीतितत्राह यथेति अयनादिलक्षणंकर्मैवसारथिर्येषांतेतथाऔत्पत्तिकवेगाख्यसंस्कारोवाअदृष्टवान्प्रीपुरुषसंयोगेनानुगृहीतैरापादितैर्नभःसंचरणहेतुभूतैःकर्मभिर्निर्मितगतित्वात् ॥ २१ ॥ २२ शिंशुमारसंस्थानस्यशिंशुमाराख्यवपुषोपेतस्य योगबलेनधारणक्रियायांस्थितिमनुवर्तयंति ॥ २३ ॥ कुंडलीभूतदेहस्यवक्रीकृतशरीरस्य पुच्छाग्रउपकल्पितोध्रुवः पुच्छाग्रव्यतिरिक्तेरथले

सहिसर्वेषांज्योतिर्गणानांग्रहनक्षत्रादीनामनिमिषेणाव्यक्तरंहसाभगवताकालेनभ्राम्यमाणानांस्थाणुरिवावष्टंभईश्वरेणविहितःशश्वदवभासतेयथामेढी स्तंभआक्रमणपशवःसंयोजितास्त्रिभिःसवनैर्यथास्थानंमंडलानिचरंति १९ एवंभगणाग्रहादयएतस्मिन्नंतर्बहिर्योगेनकालचक्रआयोजिताध्रुवमेवाव लंब्यवायुनोदीर्यमाणाआकल्पांतंपरितश्चंक्रमंति २० नभसियथामेघाःश्येनादयोवायुवशाःकर्मसारथयःपरिवर्तंते २१ एवंज्योतिर्गणाःप्रकृतिपु रुषसंयोगानुगृहीतकर्मनिर्मितगतयोभुविनपतंति २२ केचनैतज्ज्योतिरनीकंशिंशुमारसंस्थानस्यभगवतोवासुदेवस्ययोगधारणायामनुवर्णयंति २३ यस्यपुच्छाग्रेऽवाक्शिरसःकुंडलीभूतदेहस्यध्रुवउपकल्पितस्तस्यलांगूलेप्रजापतिरग्निरिंद्रोधर्मइति ॥ २४ ॥ पुच्छमूलेधाताविधाताचकट्यांसप्तर्षयः तस्यदक्षिणावर्तकुंडलीभूतशरीरस्ययान्युदगयनानिदक्षिणपार्श्वेतुनक्षत्राण्युपकल्पयंति ॥ २५ ॥ दक्षिणायनानितुसव्येयथाशिंशुमारस्यकुंडलीभो गसन्निवेशस्यपार्श्वयोरुभयोरप्यवयवाःसमसंख्याभवंति २६ पृष्ठेत्वजवीथीआकाशगंगाचोदरतःपुनर्वसुपुष्यौदक्षिणवामयोःश्रोण्योरार्द्राश्लेषाचद क्षिणवामयोःपादयोरभिजिदुत्तराषाढेचदक्षिणवामयोर्नासिकयोर्यथासंख्यंचश्रवणपूर्वाषाढेचदक्षिणवामयोर्लोचनयोर्धनिष्ठामूलंच दक्षिणवामयोःकर्ण योर्मघादीन्यष्टनक्षत्राणिदक्षिणायनानिवामपार्श्वपंक्तिषुयुंजीत २७ तथैवमृगशीर्षादीन्युदगयनानिदक्षिणपार्श्वेषुप्रातिलोम्येनप्रतियुंजीत २८ शत भिषक्ज्येष्ठेद्वेस्कंधयोर्दक्षिणवामयोर्न्यसेत् ॥ २९ ॥ उत्तरहनावगस्त्यःअधरहनौयमोमुखेचांगारकःशनैश्चरउपस्थेबृहस्पतिःककुदिवक्षस्यादित्यो हृदयेनारायणोमनसिचंद्रोनाभ्यामुशनास्तनयोरश्विनौबुधःप्राणापानयोराहुर्गलेकेतवःसर्वांगेषुरोमसुसर्वेतारागणाः ३० एतदुहैवभगवतोविष्णोःसर्व देवतामयरूपमहरहःसंध्यायांप्रयतोवाग्यतोनिरीक्षमाणउपतिष्ठेतनमोनमोज्योतिर्लोकायकालायनायानिमिषांपतयेमहापुरुषायधीमहीति ३१ ग्रहर्क्ष तारामयमाधिदैविकंरूपंहरेर्मंत्रकृतंत्रिकालम् ॥ नमस्यतस्तुवतोनश्यतेवैस्वयंत्रिकालंकृतमाशुपापम् ३२ इतिश्रीभा० म०पंच०द्वाविंशोध्यायः ॥ २२ ॥

लांगूलेपुच्छमध्यइत्यर्थः २४ २५ २६ यान्युदगयनानीत्यादौविस्तारोमघादीनीत्यादिः २७ प्रातिलोम्येनपूर्वाभाद्रपदामारभ्यमृगशीर्षांतानीति २८ २९ ३० अनिमिषादेवास्तेषांना थाय क्विप्प्रत्ययांतत्वेनानिमिरितिरूपंसिद्ध्यति ३१ शिंशुमाररूपग्रहणप्रयोजनमाह ग्रहेति मंत्रकृतोजपतोनमस्यतोनमस्कारंकुर्वतःपुंसइतिशेषः प्रातरादित्रिकालंकृतपापंस्वयंसर्वात्मना नश्यतेइत्यन्वयः आहत्यनेन नारायणोनामनरोनराणामित्यादिवाक्यंप्रमाणयति ३२ इतिश्रीभागवतेमहापुराणेविजयध्वजकृतटीकायांपंचमस्कंधेद्वाविंशोध्यायः ॥ २२ ॥

अथावशिष्टातलादिलोकनिवासिनामैश्वर्यंश्रीनारायणमाहात्म्यव्यंजकमिति तदिहनिरूपयति तत्रादौशनैश्चरपर्यंतानांग्रहाणांस्थितिंनिरूप्यराहोःस्थितिःकिमितिननिरूपितेतित्वरितमतेर्मंदस्याशंकांप
रिहरंस्तांनिरूप्यसूर्यादीनांमंडलपरिमाणंनिरूपयति अधस्तादिति एकेपौराणिकाःस्वर्भानुर्नक्षत्रवन्नभोमध्यमंडलेमेरुपरितःप्रादक्षिण्येनचरतीतिवदंतिकेचिन्मौहूर्तिकाःमानसोत्तरवहिर्भूतप्रांतभूम
रागत्यसमुदेत्यपुनःपश्चिमभागेभूमावेवास्तमित्वापातालविवरमध्यएवपूर्वदिशंगत्वामानसोत्तरेवाहिःप्रांतभूमेरेवपूर्वस्यांदिशिउदेत्यपश्चिमस्यांदिशि भूभावेवास्तमेतीत्येवंसंगिरंतेअतएवकदाचित्पातालग्रह
णमभूदितिचभाषंते अपरेमेरोरप्रादक्षिण्येननभोवलयेचरन्पश्चिमतउदेत्यपूर्वस्यांदिश्यस्तंगच्छतीत्याचक्षते अतदर्हः अमरत्वायोग्यः ॥ १ ॥ तरणिमंडलंदशसहस्रयोजनविस्तृतंततोद्वि
गुणंसोममंडलंविंशत्सहस्रयोजनविस्तृतंद्वादशसहस्रंद्विदशसहस्रमित्यर्थः सोममंडलात्द्विगुणंचत्वारिंशत्सहस्रयोजनेनविस्तृतराहुमंडलं त्रयोदशसहस्रमित्यनेनात्रिदशेतियुक्त्यात्रिंशत्संख्या
लभ्यते पुनश्चदशसंख्या सोममंडलाद्विगुणोक्त्या । कुतएवंकल्पनायथास्थितव्याख्यानमंतरेणेतिचेन्न राहुसोमरवीणांतुमडलाद्विगुणोक्तितो विनैवसर्वमुन्नेयमितिवचनात् २ भागवत

श्रीशुकउवाच ॥ अधस्तात्सवितुर्योजनायुतेस्वर्भानुर्नक्षत्रवच्चरतीत्येकेयोसावमरत्वंग्रहत्वंचालभतभगवदनुकंपयास्वयमसुरापसदःसैंहिकेयोह्यतदर्ह
स्तस्यताततजन्मकर्मणीचोपरिष्टाद्वक्ष्यामः १ यददस्तरणेर्मंडलंप्रतपतितद्विस्तारतोयोजनायुतमाचक्षतेद्वादशसहस्रंसोमस्यत्रयोदशसहस्रंराहोर्यःपर्वणि
तद्व्यवधानकृद्वैरानुबंधात्सूर्याचंद्रमसावभिधावति २ तन्निशाम्योभयत्रापिभगवतारक्षणायप्रयुक्तंसुदर्शननामभागवतंचक्रं दुर्विषहपरिवर्तमानमभ्य
वस्थितोमुहूर्तमुद्विजमानश्चकितहृदयआरादेवनिवर्ततेतदुपरागइतिवदंतिलोकाः ३ ततोधस्तात्सिद्धचारणविद्याधराणांसदनानितावन्मात्रएव ४ ततो
धस्ताद्यक्षरक्षःपिशाचभूतप्रेतगणानांविहाराजिरमंतरिक्षंयावद्वायुर्वातियावन्मेघाउपलभ्यंते ५ ततोधस्ताच्छतयोजनांतरेचेयंपृथिवीयावद्धंसभासश्ये
नसुपर्णादयःपतत्रिप्रवराउत्पतंतीत्युपवर्णितंभूमेर्यथासंनिवेशमवस्थानम् ६ अवनेरप्यधस्तात्सप्तभूविवराएकैकशोयोजनायुतायामविस्तारास्तारतम्ये
नोपक्लृप्ताःअतलंवितलंसुतलंतलातलंमहातलंरसातलंपातालमिति ७ एतेषुहिबिलस्वर्गेषुस्वर्गादप्यधिकाःसकलसंपत्समृद्धयःकामभोगैश्वर्यानं
दविभूतिभिःसुसमृद्धभवनोद्यानाक्रीडाविहारेषुदैत्यदानवकाद्रवेयानित्यप्रमुदितानुरक्तकलत्रापत्यसकलसंपत्समृद्धयःबंधुसुहृदनुचरागृहपतयईश्वरादप्य
प्रतिहतकामविनोदानिवसंति ८ येषुमहाराजमयेनमाययानिर्मिताःपुरोनानामणिप्रवेकविरचितविचित्रभवनप्राकारगोपुरसभाचैत्यचत्वरायतनादिभि
र्नानास्वनमिथुनपारावतशुकसारिकाकीर्णकृत्रिमभूमिभिर्विवरेश्वरगृहोत्तमैःसमलंकृताश्चकासंति ९

भगवतःप्रियं तदस्यप्रियमित्यस्मिन्नर्थेअण्प्रत्ययःपरिवर्तमानंमडलमितिशेष चक्राभिमुखमवस्थितःउद्विजमानः वेगेनचलन्आरात्दूरात् ३ तावन्मात्रेअयुतमात्रे ४ ५ ६ भूवि
वराःपातालादयःतारतम्येनोपक्लृप्ताःसुखादिसामान्यविहारविशेषाभ्यामूर्ध्वाधःक्रमेणेतिवा ७ समृद्धिरुद्रेकःविभूतिःसंततिपरंपरासमृद्धभवनोद्यानाक्रीडेषु आविहारोयत्रतेतथातेष्वाक्रीडः मिथुनक्रीडायो
ग्यपर्वतःआविहारोभूलोकविलक्षणत्वात्ईश्वरात्शिवात्तथात्वंवराद्वा ८ येषुविवरेषुपुरःपुराणिचकासंतिविलसंतीत्यन्वयः माययार्थक्रियाकरणशक्तिलक्षणोपादानभूतयानिर्मिताःनानामणी
नांप्रवेकैःश्रेष्ठैर्विरचितविचित्रभवनादिभिरुपलक्षिताः चैत्यंदेवालयं आयतनं पाषाणबद्धवृक्षमूलस्थानं नानास्वनैःमिथुनतोवर्तमानैःपारावतादिभिराकीर्णाः कृत्रिमभूमयोयेषुतेतथातैर्विवरेश्वरा
णांगृहोत्तमैरंतःपुरश्रेष्ठैः ९

येषुविवरेषूद्यानानिचकासति विटपिनांवृक्षाणांमनआदींद्रियानंदहेतुभिर्विटपैःशाखाभिःकृताभिःश्रीभिःसमृद्धिभिः कनकेतिवृक्षविशेषणं अमृतजलपूर्णानांसमिथुनानांविहंगकुलानांकोलाहलशब्दयुक्तानांजलाशयानांसरसांसबंधिनामत्स्यकुलानामुल्लंघनेनोत्पत्यपतनेनक्षुभितनीरचचलनीरजादिसमुदायेषुकृतनिवासाना अनेकविहाराकुलानामधुकराणामिंद्रियोत्सवैर्मधुकरस्वनादिभिःस्वर्गश्रियमतिशयितानिअतिशयोपेतान्युद्यानानीतिसबंधः नीरजंसामान्येनकमलं कह्लारंसौगंधिकं शतपत्रंरक्तकमलं आदिशब्देनपुंडरीकादयोगृह्यंते पुंडरीकंसितांबुजमित्यभिधानं १० ११ शार्वरंशर्वरीजन्यमिवास्थिततमः १२ पानसहितस्नानात् आधयोमनोदुःखानि ग्लानिर्मनोबलक्षयः क्लमःशारीरबलक्षयःवयोवस्थाःशैशवादिवयोलक्षणाः १३ १४ यस्मिंश्चक्रे पुंसवनानिगर्भाः

उद्यानानिचातितरांमनइंद्रियानंदिभिःकुसुमफलस्तबककिसलयावनतरुचिरविटपैर्विटपिनांकनकलतालिंगितानांश्रीभिःसमिथुनविहंगकुलकोलाहलजलाशयानाममलजलपूर्णानांझषकुलोल्लंघनक्षुभितनीरनीरजकुमुदकुवलयकह्लारनीलोत्पलशतपत्रादिवनेषुकृतनिकेतानामनेकविहाराकुलमधुकराणांमधुकरविविधस्वनादिभिरिंद्रियोत्सवैरमरलोकश्रियमतिशयितानि १० यत्रहवानभयमहोरात्रादिभिःकालविभागैरुपलक्ष्यते ११ यत्रहिमहाहिप्रवरशिरोमणयःशार्वरंतमःप्रबाधंते १२ नवाएतेषुवसतांदिव्यौषधरसपानस्नानादाधयोव्याधयोवलीपलितजरादयश्चदेहवैवर्ण्यदौर्गंध्यस्वेदश्रमग्लानिक्लमाइतिवयोवस्थाश्चभवंति १३ नहितेषांकल्याणानांप्रभवतिकुतश्चनमृत्युर्विनाभगवत्तेजसश्चक्रापदेशात् १४ यस्मिन्प्रविष्टेऽसुरवधूनांप्रायःपुंसवनानिभयादास्रवंतिपतंतिच १५ अथातलेमयपुत्रोऽसुरोबलोनिवसतियेनहवाइहसृष्टाःषण्णवतिर्मायायाःकाश्चनाद्यापिमायाविनोधारयंतियस्यचविजृंभमाणस्यमुखतस्त्रयःस्त्रीगणाउदपद्यंतस्वैरिण्यःकामिन्यःपुंश्चल्यः १६ यावैबिलायनप्रविष्टंपुरुषंरसेनहाटकाख्येनपाययित्वास्वविलासावलोकनानुरागस्मितसल्लापोपगूहनादिभिःस्वैरंकिलरमयंतीति १७ यस्मिन्नुपभुक्तेपुरुषाईश्वरोहंसिद्धोहमित्ययुतमहागजबलात्मानःकत्थंतेमदांधाइव १८ ततोवितलेहरोभगवान्हाटकेश्वरःस्वपार्षदभूतगणावृतःप्रजापतिसर्गोपबृंहणायभवोभवान्यासहमिथुनीभूयास्तेयतःप्रवृत्तासरित्प्रवराहाटकीनामभवयोर्वीर्येणयत्रचित्रभानुर्मातरिश्वनेध्यमानओजसापिबति ॥ तन्निष्पन्नंहाटकाख्यंसुवर्णंभूषणेनासुरेंद्रावरोधेषुपुरुषाःसहपुरुषीभिर्धारयंति १९ ततोधस्तात्सुतलेउरुश्रवाःपुण्यश्लोकोविरोचनात्मजोबलिर्भगवतामहेंद्रस्यप्रियंचिकीर्षमाणेनादितेर्लब्धकायोभूत्वावटुवामनरूपेणपराक्षिप्तलोकत्रयो भगवदनुकंपयैवपुनःप्रवेशितइंद्रादिष्वविद्यमानयासुसंवृद्धयाश्रियाभिजुष्टः स्वधर्मेणाराधयंस्तमेवभगवंतमपगतसाध्वसआस्ते २०

१५ एवंसामान्येनविवरलक्षणमुक्त्वाविशेषेणाह अथेति नानावलसासुकाश्चनमायाः त्रयोजातिभेदेन स्वैरिण्यःस्वेच्छानुवृत्तयः कामिन्योंतर्गतकामोद्रेकाः पुंश्चल्यःपुरुषमात्रेणसुरतमाकांक्षमाणाः पुरुषदर्शनमात्रेणपरिक्षुब्धेंद्रियावा १६ सर्वाअपिनियतपुरुषानभवंतीत्याह याइति बिलायनंबिलस्थानं सल्लापोमिथोभाषणमुपगूहनमालिंगनंचुंबनादिकमादिपदग्राह्यं १७ १८ यस्मिन्रसेभवयोःपार्वतीपरमेश्वरयोर्यद्वीर्यंचित्रभानुरेध्यमानोवर्द्धमानः अवरोधाअंतःपुराणितेषुपुरुषीभिःपुरुषवद्बलोपेताभिःस्त्रीभिः १९ उरुण.बहुनःशास्त्रस्यश्रवःश्रवणयस्यसतथा पराक्षिप्तमाकृष्टंस्वाधीनंलोकत्रयंयस्यसतथा प्रवेशितं.लोकत्रयेणप्रतिवत्सरंक्रियमाणपूजायामितिशेषः २०

सर्वस्यजीवराशेरधिकंबलेरैश्वर्यंहरयेभूमिदानफलंनतस्यफलंमुक्तिरेवाकिंतुपूर्वजन्मार्जितंकिंचित्पुण्यफलंभवितुमर्हतीत्याह अधुनापीति अधुनापिबलेर्बिलनिलयेसुतलत्लोकेपदैश्वर्यंएतद्भूमिदानस्य साक्षाद्वरोनोएवमुख्यफलंनैव कुतोनेतितत्राह भगवतीति परमात्मनि सम्यक्प्रतिपादितस्यसपात्रंचेत्कथंतदितितत्राह पात्रइति पात्रगुणमाह तीर्थतमइति अतिशयेनशुद्धे अनोयुक्तमित्याह उपपन्नइति अन्येषुमहात्मसुसत्स्वस्यैवोपपत्तिःकथमितितत्राह जीवेति केषामत्राह अशेषेति जीवभूतत्वेदुःखित्वेनाशुद्धिरापन्नेतितत्राह आत्मभूतइति सदास्वामिनिइदंस्वामित्वंनलोकवत्किंतुसदातनमित्यतोभूतइतिस्वतंत्रत्वाद्दुःखनिवारणसमर्थइत्यर्थःआत्मवत्सर्वभूतप्रेष्ठइतिवा तर्हिकितस्यफलमत्राह साक्षादिति नन्वश्रद्धयाहुतंदत्तमित्यादेःश्रद्धयासहितेनदत्तस्यासकलप्रत्वादस्यापितथात्वेनकथंमुक्तिद्वारत्वमितितत्राह परयेति मत्यक्षफलदर्शनाचायमवपोत्रभूतइत्याह यस्येति निर्भयंविष्णुनाम्नैवपथ्येष्टंपदमागतं इत्येतदस्मिन्नर्थेप्रमाणमित्याह हेति यथानामसंकीर्तनात्कर्मबंधविध्वंसोभवत्येवबलेरपीत्यास्मिन्नर्थैवेति वाविकल्पोपमानयोरित्यमरः आदिशब्दात्स्वप्नादिभयदर्शनइतिगृह्यते २१ तमेवंविद्वानमृतइहभवतीतिश्रुतेर्ज्ञानमंतरेणनाम्नाकर्मबंधहानिः कथमत्राह यस्येति प्रतिबोधनंज्ञानंनामसंकीर्तनलक्षणकर्मद्वाराज्ञानंभवति कर्मणाज्ञानमातनोतीतिश्रुतेरित्येतद्धेत्यनेनाह आविगानेनसर्वेषांचेतनानामात्मदज्ञानजननद्वारासायुज्यफलप्रदंच

**अधुनापिनोएवैतत्साक्षाद्वरोभूमिदानस्ययद्भगवत्यशेषजीवनिकायानांजीवभूतात्मभूतेपरमात्मनिवासुदेवेतीर्थतमेपात्रउपपन्नेपरयाश्रद्धयापरमादरसमाहितमनसासंप्रतिपादितस्यसाक्षादपवर्गद्वारस्ययद्बिलनिलयैश्वर्यम् यस्यहवाक्षुत्पतनप्रस्खलनादिषुविवशःसकृन्नामाभिगृणन्पुरुषःकर्मबंधमंजसाविधुनोति २१ यस्यहैवप्रतिबोधनंतुमुमुक्षवोंजसाहोपलभंतेयत्तद्भगवान्नामसर्वेषामात्मनामात्मदमेव २२ नवैभगवान्नूनंमनुष्याननुजग्राहयदुतपुनरात्मानुस्मृतिमोक्षणंमायामयभोगैश्वर्यमेवातनुते २३ यत्तद्भगवतानधिगतान्योपायेनचयाच्ञाछलेनापहृतस्वशरीरावशेषितलोकत्रयोवरुणपाशैश्चबद्धोगिरिदर्यांचापविद्धइतिहोवाच २४**

यस्मात्तद्भगवन्नाममुमुक्षुभिरभ्यसनीयमेवेत्याह यत्तदिति तस्मिन्वासुदेवइतिपूर्वेणान्वयः २२ भगवन्नामात्मदंचेत्तन्नामजापिनोमनुष्यान्किमितिनानुजग्राहभगवानित्याशंक्यभक्तिज्ञानाद्यतिशयाभावादित्यभिप्रेत्याह नवाइति नूनशब्दसामर्थ्यादत्रमनुष्यशब्देनसंसृतियोग्याग्राह्यंते मनुष्याननुदिश्यनानुजग्राह मस्तुतत्वादेताहशमैश्वर्यमितिशेषः तर्ह्यात्मदानलक्षणमोक्षमनुजग्राहकिंनेत्याह यदिति पूर्ववाक्यस्थितनञोऽध्याहारःकर्तव्यःयत्पुनरात्मानुसंस्मृतिमोक्षणंतत् यथाग्वाआपिसंदेहेकोकुहस्यतुकाकथेतिवन्नानुजग्राहेतिकिमुत तर्हितन्नामापासनंव्यर्थंकिमितिनेत्याह मायामयेति मायामयंप्रकृतिनिर्मितंनश्वरंनत्वनश्वरमित्येवार्थः २३ इतोभक्त्याद्यतिशयएवैश्वर्येनिमित्तं यतोराज्यापहरणादिलक्षणापकारकारिणिहरौभक्त्यतिशयोदरीदृश्यते बलेर्दरीलक्षणकारागेनिवसतस्तेनबद्धममुक्तस्यनहिमनुष्याणामेताहश्यामापचेताहशीयाभक्तिःसमस्तगुणेष्वसूयिनामित्याशयवानाह यत्तदिति नअधिगतोभिक्षाव्यतिकरेणान्यःसुखसाध्यउपायोयेनसतथा तेनभगवतायाच्ञाव्याजेनापहृतंस्वशरीरावशेषितंलोकत्रयंयस्यसतथा भगवदाज्ञयागरुडेनप्रथमंवरुणपाशैर्बद्धश्चशब्दाद्ब्रह्मादीनायाच्ञयापपश्चान्मुक्तः पुनश्चत्वयाप्रतिश्रुतदत्त्वैवगंतव्यमिति तेनकाराग्रहइतिगिरिदर्यामपविद्धइवनिरुद्धोबलिरितिवक्ष्यमाणप्रकारेण जगाद हेत्यनेनप्राणात्ययेपि भगवद्भक्तिंनमुंचामीत्यभिसंधिदर्शयतीति यद्यस्मात्तस्मान्मनुष्याननुजग्राहेत्युच्यते २४

१ सदास्वामिमहात्मसु इ० पाठान्तरम् ।

इंद्रस्यसचिवोबुद्धिसहायभूतोयदायोसौबृहस्पतिरस्मत्संधानार्थमिंद्रेणप्रेषितएकांततोमंत्रायधृतस्तंनंद्रस्तदातमप्यतिहायसंधानात्पूर्वमेवसमागत्यममार्थेपुस्वपादसेवनाद्यभिप्रायेणुनिष्णातस्तत्सेवनादि कृमेवदातुमुद्युक्तोऽयंभगवान्स्वयमुपेंद्रेणबटुवामनरूपेणात्मनेस्वस्मैत्रीणिपदान्यतदर्हंपावनायोग्यमामयाचतनोएवाशिषइतियत्तस्यायमभिप्रायः इदंलोकत्रयचतुर्दशभुवनापेक्षयाकियदल्पंह्रितदपिका लग्राहग्रस्तमित्याह गंभीरवेगस्यमहतःकालस्यमन्वंतरलक्षणावयवमितमतएवानित्यंतस्मादैश्वर्यनिमित्तमदोनस्यादित्यस्मैबलयेराज्यंनदास्यामीतित्रिपदच्छलेनापहृतं नूनंनिश्चितं बतभक्तेम य्यनुकंपया यस्यानुग्रहामिच्छामिहरिष्येतद्धनंशनैरित्यादिस्ववचनात् २५ हरेरिममभिप्रायमस्मत्पितामहएववेत्तिनमादृशइत्याह यस्येति स्वपितारिहिरण्यकशिपुनाम्निविरमितेमृतेभगवता दीयमानंस्वपित्र्यंपितृधनत्वाद्योग्यमपियदकुतोभयंनिहतकंटकत्वात्पदंराज्यलक्षणंतन्नवव्रे किंतुपस्यहरेरनुदास्यंसेवाख्यमेववव्रे कोसावित्यस्मत्पितामहःप्रह्लादः तस्यचास्माकमहदंतरमस्तीत्या ह तस्येति तस्यप्रह्लादस्यानुगमनमनुवर्तितुमस्मादृशःपुरुषःकोवाअलंनकोपीत्यर्थः कीदृशःपरिहीनःभगवदनुग्रहोयस्यसतथा अमृदितकषायोऽनिरस्तपापोनालमितिकिंवक्तव्यमित्यर्थः इति

नूनंबतायंभगवानर्थेषुनिष्णातोयोसाविंद्रस्यसचिवोमंत्रायधृतएकांततोबृहस्पतिस्तमतिहाय यदास्वयमुपेंद्रेणातदर्हंमामयाचत पदान्यात्मनआशिषो नोएवनदास्थामिगंभीररयस्यकालस्यमन्वंतरपरिमितंकियल्लोकत्रयमिदम् २५ यस्यानुदास्यमेवास्मत्पितामहःकिलवव्रे नतुस्वपित्र्यंराज्यंयदकुतोभयंप दंदीयमानंभगवताविरमितेस्वपितरितस्यमहानुभावस्यानुपथमनुवर्तितुमलमप्रमृदितकषायःकोवास्मद्विधःपरिहीनभगवदनुग्रहउपगामिष्यतीति २६ तस्यानुचरितमुत्तरस्माद्विरस्तोरिष्यतेयस्यभगवान्स्वयमखिलजगद्गुरुर्नारायणोद्वारिगदापाणिरवतिष्ठते निजजनानुकंपितहृदयोयेनपदांगुष्ठेनदशकंधरोयो जनायुतंदिग्विजयेउच्चाटितः २७ ततोधस्तात्तलातलेमयोनामदानवेंद्रस्त्रिपुराधिपतिर्भगवतापुरारिणात्रिलोक्याःशंचिकीर्षुणानिर्दग्धस्वपुरत्रयस्तत्प्रसा दाल्लब्धपदोमायाविनामाचार्योमहादेवेनपरिरक्षितोविगतसुदर्शनभयोमहीयते २८ ततोधस्तान्महातलेकाद्रवेयाणांनैकशिरसांक्रोधवशोनामगणः कु हकतक्षककालियसुषेणादिप्रधानामहाभोगवंतःपतत्रिराजाधिपतेःपुरुषोत्तमवाहादनवरतमुद्विजमानाःस्वकलत्रापत्यसुहृत्कुटुंबसंगेनक्वचित्प्रमत्ताविचरं ति २९ ततोधस्ताद्रसातलेदैतेयादानवाःपणयोनामनिवातकवचाःकालकेयाहिरण्यपुरवासिनइतिविबुधप्रत्यनीका उत्पत्त्यामहौजसोमहासाहसिनोभ गवतःसकललोकमहानुभावस्यहरेरेवतेजसाप्रतिहतावलेपाबिलेशयाएवनिवसंतियेवैसरमयेंद्रदूत्यावाग्भिर्मंत्रवर्णाभिरिंद्राद्बिभ्यति ३०

शब्दोवाक्यसमाप्तौवर्तते २६ तस्यप्रह्लादस्यउत्तरस्मात्सप्तमेइदंश्रीशुकवाक्यं पुनरपिहरेर्भक्तानुकंपितत्वमाह यस्येति वामनाख्योनारायणःस्वदत्तवरात्तथावस्थानमितिद्योतयितुमवतिष्ठतेइतिआत्मने पदप्रयोगः अखिलजगद्गुरुत्वमुपपन्नंतस्यापदिस्वपादप्रणतजनरक्षकत्वेनेत्यभिप्रेत्याह येनेति रावणस्यदिग्विजयेउच्चाटितःप्रक्षिप्तःदूरीकृतइत्यर्थः एवंविधस्यहरेर्भक्तजनप्रयोजनार्थितयाना पींद्रस्यराज्यदानेच्छयास्मद्राज्यापहरणलक्षणंकार्यंनान्यादितिवाक्यशेषः २७ शंसुखंमहीयतेस्वभृत्यैरितिशेषः २८ महाभोगवंतः स्थूलशरीरवंतः पुरुषोत्तमस्यवाहोवाहनतस्मात् २९ प णयोदैत्यादानवानिवातकवचाः कालकन्यापुत्राःकालकेयाःविबुधप्रत्यनीकादेवशत्रवःप्रतिहतावलेपाविनाशितगर्वाः योगबलाद्बिलेशयाः सर्पाकारायेपणयइंद्रदूत्यासरमयाशुन्योक्ताभिर्मंत्रव र्णाभिर्वाग्भिः इंद्रस्यदूतीरिषिताचरामिमहइच्छंतीपणयोनिधीन्वइत्यादिमंत्रवर्णात्मकगीर्भिःश्रुताभिरिंद्राद्बिभ्यतिभीतास्तिष्ठंतीतियस्मात्तस्माद्बिलेशयाकारानिवसंतीत्यर्थः सरमात्वंदूरादध्वनोव ह्निर्गताभिर्जिह्वाभिर्जगुरिः किमपिनिगरंतीकिमिच्छंत्यत्रप्रानड्आयासीः ह्निगतावितिधातोः अस्यास्तवअस्मेअस्मासुप्रहितिर्गतिःकांकिंकार्यमुदिश्यात्रागमनंतेतवकापारितक्म्यातस्यार्थेदूतस्यार्थे

दूतंक्रिपासीत् स्वंरसायाः पयांसिकथमतरइतिपणिभिः पृष्टासरमाब्रूते अहमिंद्रस्यदूतीतेनप्रेषिताचराम्यागतास्मि व्यत्ययोबहुलमितिसूत्रात् किमिच्छंतीत्यस्यपरिहारमाह हेपणयोऽमहोलक्षणानि धीनिच्छंती अपहर्तुमितिशेषः नोस्माकमतिस्कंदोभिपसास्वामिनोभयेनतत्तदावत् आवामागमंनयातस्माद्रसायाः पयांस्यतरमितिसरमायाःपणीन्प्रतिपरिहारवचनमितिमंत्रवर्णार्थः ३० महाभोगि नःस्थूलशरीराबहुभोगयुक्तावा शीर्ष्णामितिवक्तव्येशीर्षाणामितीतरपुरुषशिरोवैलक्षण्यद्योतनाय विगतंरचितंरचनयेषांतेतथा औत्पत्तिकाइत्यर्थः विधमंतिनिरस्यंति ३१ तस्यपातालस्यतामसतिमो गुणप्रवर्तनीअनंतस्ययत्स्वरूपंद्रष्टुश्चेतनस्यहश्यस्यशरीरस्यसंनिकर्षणंसामीप्यापादकमभेदग्राहकंकथंदेहोहमितितर्हिइदंसत्यंकिंनेत्याह अभिमानलक्षणंभ्रांतिमत्यापादकमित्यर्थः तत्स्वरूपंसंकर्षण

ततोधस्तात्पातालेनागपतयोवासुकिप्रमुखाःशंखकुलिकमहाशंखश्वेतधनंजयधृतराष्ट्रशंखचूडकंबलाश्वतरदेवदत्तादयोमहाभोगिनोमहामर्षानिवसंति येषामुहवैपंचसप्तदशशतसहस्रशीर्षाणांफणासुविरचितामहामणयोरोचिष्णवःपातालविवरतिमिरनिकरंस्वरोचिषाविधमंति ३१ तस्यमूलदेशेत्रिंशद्योजन सहस्रांतरआस्तेयावैकलाभगवतस्तामसीसमाख्यातानंतइति सात्वतीयद्रष्टृदृश्ययोःसन्निकर्षणमहमित्यभिमानलक्षणंसंकर्षणमित्याचक्षते ३२ त स्येदंक्षितिमंडलंभगवतोनंतमूर्तेःसहस्रशिरसएकस्मिन्नेवशीर्षणिध्रियमाणंसिद्धार्थइवलक्ष्यते ३३ यस्यहवाइदंकालेनोपसंजिहीर्षतोमर्षविरचितरु चिरभ्रमद्भ्रुवोरंतरेणसांकर्षणोनामरुद्रएकादशव्यूहस्त्र्यक्षस्त्रिशिखंशूलमुत्तंभयन्नुदतिष्ठत् ३४ यस्यांघ्रिकमलयुगलारुणविशदनखमणिखंडमंडलेष्वहि पतयःसहसात्वतर्षभैरेकांतभक्तियोगेनावनमंतःस्ववदनानिपरिस्फुरत्कुंडलप्रभामंडलमंडितगंडस्थलान्यतिमनोहराणिप्रमुदितमनसःकिलाविलोकयंति॥ ३५यस्यैवहिनागराजकुमार्यआशिषआशासानाश्चार्वंगवलयविलसितविशदविपुलधवलसुभगरुचिरभुजरजतस्तंभेष्वगुरुचंदनकुंकुमपंकानुलेपेनावलिं पमानास्तदभिमर्शनोन्मथितहृदयमकरध्वजावेशरुचिरललितस्मितास्तदनुरागसमुदितामदाघूर्णितारुणावलोकनयनवदनारविंदंसव्रीडंकिलविलोकयं ति ३६ सएषभगवाननंतोनंतगुणार्णवआदिदेवउपसंहृतामर्षरोषवेगोलोकानांस्वस्तयआस्ते ३७ ध्यायमानःसुरासुरोरगसिद्धगंधर्वविद्याधरमुनिगणैरन वरतमदमुदितविकृतविह्वललोचनःसुललितमुखरितामृतेनाप्यायमानःस्वपार्षदविबुधयूथपतीनपरिम्लानरागनवतुलसिकामोदमध्वासवेनमाद्यन्मधु करव्रातमधुरगीतश्रियंवैजयंतींस्वांवनमालांनीलवासाएककुंडलोहलककुदिकृतसुभगसुंदरभुजोभगवान्माहेंद्रोवारणेंद्रइवकांचनींकक्ष्यामुदारलीलोबि भर्ति ३८ यएषएवमनुश्रुतोभिध्यायमानोमुमुक्षूणामनादिकालकर्मवासनाग्रथितमविद्यामयंहृदयग्रंथिंसत्त्वरजस्तमोमयमंतर्हृदयंगतआशुनिर्भिनत्ति ३९ तस्यानुभावमिमंभगवान्स्वायंभुवोनारदःसहतुंबुरुणासभायांब्रह्मणःसंश्लोकयामास ४०

मित्याचक्षते ३२ सात्वतःगुरुतरक्षितिमंडलंसर्षपलाघववद्धारयतोपरिमितबलत्वेनानंतत्वयुक्तमित्यभिप्रेत्याह तस्येति सिद्धार्थः सर्षपः ३३ एकादशव्यूहः एकादशधाविभक्तरूपविशेषः उत्तंभयन्नु त्कंपयन् ३४ ३५ तदभिमर्शनेनभुजस्पर्शनेन सव्रीडमितिक्रियाविशेषणं ३६ भृगाराद्यनंतगुणार्णवः ३७ अपरिम्लानोरागःकांतिर्यस्याःसातथा आमोदमध्वासवेनसौरभरूपमधुरसेन हलस्यनिजा युधस्यककुद्यग्रे कक्ष्यामुदरबंधं ३८ ३९ संश्लोकयामासपद्यलक्षणवाक्यैःकथयामास ४०

हरेश्चतसृषुमूर्तिषुद्वितीयमूर्तेःशेषेविशेषसन्निधानात्तस्योपपन्नान्गुणाञ्छेषस्यैवकीर्तयति उत्पत्तीति अस्यजगतः उत्पत्त्यादिहेतवः सत्वाद्याःप्रकृतिगुणायदीक्षयाकल्पाःसमर्थाआसन्नुत्पत्त्यादाविति शेषः नन्वचेतनस्यस्वतःप्रवृत्त्यनुपपत्तेस्तत्संबंधेनप्रवृत्तौतस्यापितद्विकारापत्तिरितितत्राह यद्रूपमिति ध्रुवंशश्वदेकप्रकारं कुतः अकृतमकृत्रिमत्वान्नित्यस्यापिजीवस्यशरीरसंबंधेनविकारादकृतस्यापिप्रधानस्यकार्यरूपेणतुतत्त्वदर्शनादस्याकृतत्वमौपचारिकंकिंनस्यादितितत्राह यदेकमिति यदेकंकेवलंकार्यात्मनातत्संगेनवाविकारिनभवति सच्चत्यच्चाभवदितिश्रुतेःकार्यत्वश्रुतेःकथनतन्पुरुषंस्यादित्यत्राह आत्मन्निति आत्मन्नात्मनिस्वाधारतयानानाविधंजगदधात्धृतवान् नतुतद्रूपत्वेन यउत्रिधातुपृथिवीमुतद्यामितिश्रुतेः किंचाचिंत्यमहिमत्वात्तत्स्वरूपंदुर्ज्ञेयमित्यभिप्रेत्ययत्तदौसवधाति कथमिति तस्यशेषांतर्यामिणःसंकर्षणनामधेयस्यहरेर्वर्त्मवर्तनंकथमुहवेद नकथमपीत्यर्थः मुह्यंतियंसूरयइतिस्वोक्तिंहेत्यनेनस्मारयति ४१ आत्मन्नानाधादित्येतत्संक्षिप्याह मूर्तामिति सत्वंबलज्ञानसमाहारलक्षणमतएवसंशुद्धंलोकहष्ट्यामूर्त्तीपरिमितं यत्ररूपेइदंसदसत्कार्यकारणात्मकंअधिकरणाधेययोर्नामभेदःशंकनीयः मृगपतिःसिंहोयस्यलीलांशौर्यादिलक्षणामाददेअशिक्षत लीलाकरणप्रयोजनमाह आदातुमिति अनेनात्मन्नानाधादित्यत्रस्वाभिन्नामत्स्यादिनानावताराअप्यकृताइतिज्ञायते ४२ यन्नामस्मरणमात्रेणाशेषजन्मार्जितपापक्षयश्रवणात्तन्नामकीर्तनेनाघक्षयोभवतीतिंकिंवक्तव्यमित्यभिप्रेत्यस्तुवताशेषांतर्यामीश्रीनारायणएवस्तूयते अजामिलादौदर्शनाच्चान्यनामकीर्तनेनताहक्फलादर्शनाच्चेतिभावेनाह यन्नामेति शेषाच्छेषांतर्यामिणोहरेरन्यंकपुरुषंमुमुक्षुरित्य

उत्पत्तिस्थितिलयहेतवोस्यकल्पाःसत्वाद्याःप्रकृतिगुणायदीक्षयासन् ॥ यद्रूपंध्रुवमकृतंयदेकमात्मन्नानाधात्कथमुहवेदतस्यवर्त्म ४१ मूर्तिंयःपुरुकृपयाबभारसत्वंसंशुद्धंसदसदिदंविभातियत्र ॥ यल्लीलांमृगपतिराददेनवद्यामादातुंस्वजनमनांस्युदारवीर्यः ४२ यन्नामश्रुतमनुकीर्तयेदकस्मादार्तोवायदिपतितःप्रलोभनाद्वा ॥ हंत्यंहःसपदिनृणामशेषमन्यंकंशेषाद्भगवतआश्रयेन्मुमुक्षुः ४३ मूर्द्धन्यर्पितमणुवत्सहस्रमूर्ध्नोभूगोलंसगिरिसरित्समुद्रसत्वम् ॥ आनंत्यादविदितविक्रमस्यभूम्नःकोवीर्याण्यपिगणयेत्सहस्रजिह्वः ४४ एवंप्रभावोभगवाननंतोदुरंतवीर्यःस्वगुणानुभावः ॥ मूलेरसायाःस्थितआत्मतंत्रोयोलीलयाक्ष्मांस्थितयेबिभर्ति ४५ एताह्येवेहनृभिरुपगंतव्यागतयोयथाकर्मविनिर्मितायथोपदेशमनुवर्णिताः ४६ कामान्कामयमानस्यैतावत्योहि राजन्पुंसःप्रवृत्तिलक्षणस्यधर्मस्यविपाकगतयउच्चावचाविसदृशायथाप्रश्नंव्याख्याताःकिमन्यत्कथयामइति ४७ इ०भा०पं०वि०त्रयोविंशोध्यायः २३

नेन अहंभोगप्रदोवत्समोक्षदस्तुजनार्दनइत्युक्तिंस्मारयति ४३ गुरुगिर्यादिधरधरागोलधृतिरपिशेषस्यहरिसन्निधानादेवान्यकृतानेतिभावेनाह मूर्द्धनीति विक्रमाणामानंत्यात्साकल्येनाज्ञातपराक्रमस्यसहस्रजिह्वःशेषइत्यनेनस्पष्टयते ४४ शेषेत्वसंभावितगुणकर्मकथनपूर्वकंस्तवनमुपसंहरति एवमिति दुरंतवीर्यइत्यनेनानंतनामहरेरेवमुख्यंनान्यस्यअतोनतेनालिंगमप्यनंतइत्यादिसूत्रस्मृतीप्रमाणामितिदर्शयति स्वगुणानेवानुभवतिभुंक्तइति कर्मण्यण्प्रत्ययः देहिदेहस्थितत्वेनदुःखानुभवस्यापिसंभवात्कथंस्वगुणभोगइत्यतउक्तं आत्मतंत्रइति भारस्यभर्तुःश्रमदर्शनादौपचारिकमिदंस्वातंत्र्यंकिंनस्यादित्यतउक्तं योलीलयेति ४५ परीक्षित्प्रश्नपरिहारार्थंउपसंहरति एताहीति गम्यंतइतिगतयोलोकाउपगंतव्याधर्मफलत्वेनयथाकर्मनिर्मितास्तारतम्येनेतिशेष.एवशब्देननिषिद्धकर्मप्राप्यस्थानमंतरेणान्यव्यवच्छेदःक्रियते हिशब्दःप्रमाणप्रसिद्धिवाक्ते ४६ मुक्तिगतेरन्यस्याःविद्यमानत्वात्कथमेतावत्यइतीयत्तेतितत्राह कामानिति मुक्तेरपीच्छाविषयत्वादित्यत.सामान्येनोक्तंविशिनष्टि प्रवृत्तिलक्षणस्येति उच्चावचानांसालक्षण्यंनास्तीत्याशयेनोक्तं विसदृशाइति यथाप्रश्नंव्याख्याताइत्यनेनान्योपिवक्तव्यांशोस्तीतिज्ञायते तत्रवक्तव्याशाबहव.संतितेषुकिंवक्तव्यंतदाख्याहि तस्यापिपरिहारंकथयामइत्याशयेनाह किमन्यदिति ४७ इतिश्रीभागवतेमहापुराणेविजयध्वजटीकायांपंचमस्कंधेत्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ ७ ॥ ॥

अतिबहुलदुःखभोगस्थानत्वेननरकलोकस्य हेयत्ववर्णनेनसंसारस्यातिहेयत्वेनवैराग्यस्यदार्ढ्यातिशयोजायतइति तन्निरूपयत्यस्मिन्नध्याये तत्रादौपूर्वोक्तार्थप्रश्नमुद्राव्यपरिहृत्यवक्तव्यार्थंप्रतिजा नीते महर्षइति अयमर्थः लोकस्यस्वर्गादिपातालांतस्यस्थानस्यविशेषात्तत्स्थस्यजनस्यैतत्प्रत्यक्षेणत्वद्वचनादागमेनचासिद्धत्वात् प्रत्यक्षवदेतादित्युच्यते वैचित्र्यंकस्यचित्सुखित्वंकस्यचिदुःखित्वं कस्यचिदुभयरूपत्वंकथंघटते सुखादिसामान्यविशेषहेतुत्वंचसुखदुःखचाल्पमहत्त्वभेदेनतारतम्यंचकथमितिकिंचैतागतयः सर्वाःसर्वेषांभवंति किंचैकैकस्यैकैकागतिरुतैकस्यानेकागतिरित्येतत्सर्वं परिहरति बहुगुणत्वादिति अयमर्थः कर्तुःश्रद्धायाएवमितः प्रेत्याभिसंभावितास्मीतिबुद्धिलक्षणायाबहुगुणत्वाद्बहुविधत्वात्तुक्रमत्वादिगुणवैचित्र्येणनिर्मितत्वाल्लोकवैचित्र्ययस्मात्सर्वाः कर्मगतयः सर्वस्यभवंति १ २ अथतस्माच्छास्त्रनिषिद्धस्याधर्मस्यतथैवकर्तुःश्रद्धायावैसादृश्याद्विरुद्धस्वरूपत्वात्कर्मफलमपिविरुद्धं ३ ततःकिंतत्राह याहीति अनाद्यविद्याविलसितकामानांप्राणिनांत

राजोवाच ॥ महर्षैयदेतद्वैचित्र्यंलोकस्यकथमिति १ ॥ श्रीशुकउवाच ॥ बहुगुणत्वात्कर्तुःश्रद्धायाःकर्मगतयःपृथग्विधाःसर्वाएवसर्वस्यतारतम्येनभ वंति २ अथेदानींप्रतिषिद्धलक्षणस्याधर्मस्यतथैवकर्तुःश्रद्धायावैसादृश्यात्कर्मफलंविसदृशंभवति ३ याह्यनाद्यविद्याकामानांतत्परिणामलक्षणाःसृतयः सहस्रशःप्रवृत्तास्ताःप्राचुर्येणानुवर्णयिष्यामः ४ राजोवाच ॥ नरकानामभगवन्किंदेशविशेषाःअथवाबहिस्त्रिलोक्याआहोस्विदंतरालइति ५ ॥ ऋ षिरुवाच ॥ अंतरालएवत्रिजगत्यास्तुदिशिदक्षिणस्यामधस्ताद्भूमेरुपरिष्टाद्दंडजलाशयस्याग्निष्वात्तादयःपितृगणायस्यांदिशिस्वानांगोत्राणांपरमेणस माधिनासत्याएवाशिषआशासानानिवसंति ६ यत्रहवावभगवान्पितृराजोवैवस्वतःस्वविषयंप्रापितेषुस्वपुरुषैर्जंतुषुसंपरेतेषुयथाकर्मावद्यमेवानुल्लंघि तभगवच्छासनःसगणोदमंधारयति ७ तत्रहैकेनरकानेकविंशतिंगणयंतिअथतांस्तेराजन्नामरूपलक्षणतोनुक्रमिष्यामः तामिस्रोंधतामिस्रोरौरवोमहारौरवः कुंभीपाकःकालसूत्रअसिपत्रवनंसूकरमुखोंधकूपःकृमिभोजनःसंदंशस्तप्तसूर्मिर्वज्रकंटकशाल्मलीवैतरणीपूयोदःप्राणरोधोविशसनंलालाभक्षःसारमेयाद नमवीचीपूरंरेतःपानमिति ८ किंचान्येपिक्षारकर्दमोरक्षोगणभोजनःशूलप्रोतोदंदशूकोऽवटनिरोधःपर्यावर्तनःसूचीमुखइत्यष्टाविंशतिनरकाविविधया तनाभूमयः ९

त्परिणामलक्षणास्तेषामनाद्यविद्याकामानांपरिपाकनिमित्तपापकर्मविकारलक्षणायाःसृतयोगतयःसहस्रशः प्रवृत्तास्ताःप्राधान्येनानुवर्णयिष्यामइत्यन्वयः ४ पृष्टेनैवोत्तरंवाच्यंइत्यत परी क्षित्पृच्छति नरकाइति किंकेचनदेशविशेषाः उतमहादुःखानुभवलक्षणशब्दवाच्याः प्रथमेत्रैलोक्याद्बहिरंतर्वाद्वितीयेकस्यादिशिकियदधस्तात्कियदुपरीति ५ परिहरति अंतरालइति दुः खानुभवसद्भावेपिनतच्छब्दवाच्याः किंतु तदधिकरणदेशविशेषात्रैलोक्यांतराले तत्रापिभारतखंडाद्दक्षिणसूत्रपातेभूमेरधस्ताद्डजलाशयस्यगर्भोदकराशेरुपरिष्टात् दक्षिणस्यादिशि निर्द्धारणार्थं मेतद्वचनं ६ यथाकर्मनिर्मितपापमनुल्लंघितमनतिक्रांतंभगवतोहरेःशासनमाज्ञायेनसतथा ७ तस्यादिशिविद्यमानान्नरकानेकविंशतिसंख्यातित तत्रेहेति तत्रहेत्यनेनसप्तप्रधानाःसंतीतिस्मृतिप्र सिद्धिंद्योतयति ८ नैतावतासमाप्तिः कितथापिसंतीत्याह किंचेति तान्वेशान्विशिनष्टि विविधयातनाभूमयःनानाविधदंडस्थानविशिष्टाः यातनातीव्रवेदनेतिवचमात् दुःखासंभिन्नप्रदेशाइत्यर्थः ९

तत्तन्नरकेषु तत्तदुष्कर्मनिमित्तदुःखविशेषानाह तत्रेति यात्यमानोदुःखानुभवीक्रियमाणः कश्मलं बहुदुःखं एकदेतिविशेषणात्कदाचिन्मूर्छां न यातीति विशेषो ज्ञायते यातनाभिः पर्यायेण पीड्यमानत्वादि त्यर्थः १० वृश्च्यमानमूलः छिद्यमानशिफः यस्मान्नष्टदृष्टिस्तस्मादंधतामिस्रमंधत्वापादकाधकारयुतमित्यर्थत्वादुपदिशंति मूर्छया बुद्धिनाशात्तामिस्रे अंधतामिस्रे तु पाश्वुपज्ञानस्य सर्वात्मना नाशा दुभयोः सामान्यविशेषसद्भावाद्विशेषः ११ एतच्छरीरमहं इदं क्षितिमंडलं ममेति भ्रात्या तु वै महातारतम्यद्योतकौ इतिशब्दौ प्रत्येकं रौरवप्राप्तिनिमित्तभवत इति द्योतयतः १२ प्रकारांतरं पारौरवं निर्वक्ति येत्वेति एवंरूपं कत्रैतरव्यावर्तकं रुरवः मृगाः किंनेत्याह रुरुरिति रुरुरित्यपदेशोऽव्यपदेशः मृगानानाविषमुखा रुरवः परिकीर्तिता इत्यभिधानं १३ रौरवाद्विशेषमाह यत्रेति देहभरस्था

तत्र यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे नरके बलान्निपात्यते ॥ अनशनानिपानदंडसंताडनसंतर्जनादिभि र्यात्यमानो जंतुर्यत्र कश्मलमासादित एकदैव मूर्छामुपयाति तामिस्रप्राये १० एवमेवांधतामिस्रे यस्तु वंचयित्वा पुरुषं धनदारादीनुपभुंक्ते यत्र शरीरी निपात्य मानो यातनास्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति ॥ यथा हि वनस्पतिर्वृश्च्यमानमूलस्तस्मादंधतामिस्रं तमुपदिशंति ११ यस्त्विह वा एतदहमिति म मेदमिति भूतद्रोहेण केवलं कुटुंबमेवानुदिनं पुष्णाति ॥ स तदिह विहाय स्वयमेव तदशुभेन रौरवे निपतति १२ ये त्विह यथैवामुना विहिंसिता जंतवः परत्र यम यातनामुपगतं त एव रुरवो भूत्वा तथा तमेव विहिंसंति तस्माद्रौरवमित्याहुः ॥ रुरुरिति सर्पादतिक्रूरसत्वापदेशः १३ एवमेव महारौरवो यत्र निपतितं पुरुषं क्र व्यादा रुरवस्तं क्रव्येण खादयंति यः केवलं हि देहंभरः १४ यस्त्विह वा उग्रः पशून्पक्षिणो वा प्राणिन उपरुंधयति तमपकरुणं पुरुषादैरपि विगर्हितममुत्र यमा नुचराः कुंभीपाके तप्ततैल उपरुंधयंति १५ यस्त्विह पितृभ्रातृब्रह्मध्रुक्स कालसूत्रसंज्ञे नरके युतयोजनपरिमंडले ताम्रमये खले तप्ततल उपर्यधस्तादग्न्यर्का भ्यां तप्यमाने ऽभिनिवेशितः क्षुत्पिपासाभ्यां च दह्यमानांतर्बहिःशरीर आस्ते शेते तिष्ठति परिधावति याचति च यावंति पशुरोमाणि तावद्वर्षसहस्राणि कालसूत्र संज्ञके नरके निवसति १६ यस्त्विह वै निजवेदपथादनापद्यपगतः कुपथं पाखंडं चोपगतस्तमसिपत्रवनं प्रवेश्य कशया प्रहरंति ॥ तत्र हासादितइतस्ततो धा वमान उभयतो धारैस्तालवनासिपत्रैश्छिद्यमानसर्वांगो हाहतोस्मीति परमया वेदनया मूर्छितः पदे पदे निपतति ॥ स्वधर्महा पाषंडानुगतः फलं भुं क्ते १७ यस्त्विह राजा राजपुरुषो वा अदंड्ये दंडं प्रणयति ब्राह्मणे वा शरीरदंडं स पापीयान्नरकेऽमुत्र सूकरमुखे निपतति तत्रातिबलैर्विनिष्पिष्यमाणावयवो यथै वेक्षुदंड आर्तस्वरेण स्तनयन्क्वचिन्मूर्छितः कश्मलमुपगतो यथैवेह दृष्टदोषा उपरुद्धः १८

पततीति शेषः १४ उपरुंधयंति अशक्यश्वासमोक्षो यथा भवति तथोपरोधं कारयंतीत्यर्थः १५ अधस्तादग्निरुपर्यर्कः खले धान्यादिशोपणस्थलस्थानीये नकेवलं पित्रादिद्रुक् चतुर्णां द्विसको ष्येवमित्याह यावंतीति १६ अनापदीति विशेषणादापदि किंचनानुग्रहं सूचयति धाराश्चाग्रे तु संतत्यां सैन्याग्रेश्वगतिष्वपीत्यभिधानात् धाराशब्देन निशितप्रांतभाग उच्यते तालवनस्य तालसमूहस्यासिव न्निशितधारपत्रैः स्वधर्मः स्ववर्णादिविहितः १७ अदंड्ये दंडनायोग्ये शरीरदंडस्ताडनादिः उपरुद्धः कारागृहे शृंखलायां वा निवेशितः दृष्टो दोषश्चौर्यादिलक्ष

अविदितपरव्यथानामज्ञातपरक्लेशानामीश्वरेणविधात्राकल्पितासहजत्वेनवृत्तिःमनुष्यादिशरीरभक्षणलक्षणायेषांमत्कुणादीनांतानितथातेषामपकल्पितवृत्तिःतद्वृत्तिकल्पनासमर्थः पुरुषेणश्रीहरिणो पकल्पितामावर्णादिलक्षणावृत्तिर्यस्यसतथापीतिवा यूकाः शूरमुखाः आदिशब्दात्स्वेदजादयःप्राणिविशेषाःशिरआदिनिलयागृह्यंते कुशरीरेकुष्ठादिदूषितदेहे १९ यस्तुयत्किंचनप्राप्तमन्नफ लादिकमसंविभज्यातिथिभृत्यबालवृद्धादीनभोजयित्वास्वयंभुंक्तेसच यश्चानिर्वृतयज्ञोपायमकृतदेवतापूजालक्षणयागादिश्रेयःसाधनंतदन्नमश्नातिसच यश्चासंस्कृतयाज्यादुपस्कारेणशून्यंतदन्न मश्नातिसोपि कृमिभोजननाम्निनिकृष्टनरकेपतति कृमयएवभोजनंयस्यसतथा यावत्यावान्अप्रमत्तस्यातिथिदेवतादिभ्योऽप्रदत्तस्याकृतस्यासंस्कृतस्यप्रारब्धापरिसमाप्तस्यकर्मणोवानिर्वेशःप्रायश्चि

यस्त्विहवैभूतानामीश्वरकल्पितवृत्तीनामविदितपरव्यथानांस्वयंपुरुषोपकल्पितवृत्तिर्विदितपरव्यथोऽव्यथामाचरतिसपरत्रांधकूपेतदभिद्रोहेणनिपततितत्रहासौतैर्जंतुभिःपशुमृगपक्षिसरीसृपैर्मशकयूकमत्कुणमक्षिकादिभिर्येकेचनेहाभिद्रोग्धारस्तैःसर्वतोभिद्रुह्यमाणस्तमसिविहतनिद्रावृत्तिरलब्धावस्थानःपरिक्रामतियथाकुशरीरेजीवः १९ यस्त्विहवाऽसंविभज्याश्नातियत्किंचनोपनतमनिर्वृतयज्ञोपायमसंस्कृतंसपरत्रकृमिभोजनेनरकाधमेनिपततितत्रशतसहस्रयोजनेकृमिकुंडेकृमिभूतःस्वयंकृमिभिरेवभक्ष्यमाणःकृमिभोजनोयावत्तदप्रत्ताकृतानिर्वेशेनात्मानंयातयति २० यस्त्विहवैस्तेयेनबलाद्वाहिरण्यरत्नादीनिब्राह्मणस्यचापहरत्यन्यस्यवानापदिपुरुषस्तममुत्रराजन्यमपुरुषाअयस्मयैरग्निवर्णैःसंदंशैस्त्वचिनिष्कालयंति २१ यस्त्विहवागम्यांस्त्रियंपुरुषंवायोषिदपिगच्छतितावमुत्रकशयाताडयंतस्तजैयंतस्तप्तयासूर्म्यालोहमय्यापुरुषमालिंगयंतिस्त्रियंचपुरुषरूपयासूर्म्या २२ यस्त्विहवैसर्वाभिगमस्तममुत्रनिरयेवर्तमानंवज्रकंटकशाल्मलीमारोप्यनिष्कर्षयंति २३ येत्विहवाराजन्याराजपुरुषावापाषंडाधर्मसेतून्भिंदंतितेसंपरेत्यवैतरण्यांनिपततिभिन्नमर्यादास्तस्यांनिरयपरिखाभूतायांनद्यांयादोगणैरितस्ततोभक्ष्यमाणाआत्मनानवियुज्यमानास्तेस्वासुभिरुह्यमानाश्चौघेनकर्मपाकमनुस्मरंतोविण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवासवाहिन्यामुपतप्यंते २४ येत्विहवैवृषलीपतयोनष्टशौचाचारनियमास्त्यक्तलज्जाःपशुचर्यांचरंतितेचापिप्रेत्यपूयविण्मूत्रश्लेष्ममलपूर्णार्णवेनिपतंतितदेवातिबीभत्सितमश्नंति २५ येत्विहवैश्वगर्दभपतयोब्राह्मणादयोमृगयाविहाराअतीर्थेचमृगान्निघ्नंतितानपिसंपरेताँल्लक्ष्यभूतान्यमपुरुषाइषुभिर्विध्यंति २६

त्तलक्षणाप्रतिक्रिया तत्तावतात्मानंनरकाद्यातयतिउद्धारयति अप्रमत्तेतिपाठेयावदप्रमत्तंबुद्धिपूर्वंमकृतोनिर्वेशोयेनसतथा तावत्तमात्मानंनरकयातयतिप्रापयतीति वेत्येतत्सर्वत्रानुकर्षणीयम् २० संदंशैः सूचीविशेषैस्त्वचिनिष्कालयत्युद्धाटयंति २१ सूर्म्यालोहादिमयपुत्तल्या २२ सर्वाभिगमःसर्वाभिःस्त्रीभिः कृतसौरतःसंवादाभावेपिबलाद्गमनमभिगमः शाल्मलीकंटकतरुः २३ आत्मनादेहेन स्वासुभिः स्वप्राणैश्च ओघेननिरयप्रवाहेण उह्यमानाअपिवियुज्यमानाअपितेयोगंप्राप्यमाणाआम्रियमाणाइत्यर्थः विण्मूत्राद्यात्मनास्यदमानायाम् २४ २५ अतीर्थेअपात्रउद्दिश्याविहितकालेवा २६

दांभिकाधर्मध्वजिनः विशसंतिखंडशःखंडयंति २७ सवर्णांस्ववर्णसमानवर्णा २८ सार्थान्पांथान्जनान् २९ द्रव्यविनिमयेवाणिज्यव्यवहारे साक्ष्येसाक्षिणावक्तव्ये अवीचिमज्जलंयस्तदरमपृष्ठस्थलंदूरादर्शनेजलमिवदृश्यतेतस्मिन्नवीचिमतिजलशून्येपाषाणपृष्ठेनिरवकाशेनिरालंबने ३० सोमपीथाः कृतसोमपानाःविप्राणांनित्यनिषिद्धंराजन्यतद्वार्याणांसोमपानानंतरंपूर्ववीर्यपानलक्षणंवारुणीपानसमवाचद्वार्याणांसुरतेमधुपानात् वैश्यानांचपूर्वोक्तवत्पित्रादिमृतिनिमित्तदीक्षालक्षणव्रतस्थानांवेत्यादिविशेषोवगंतव्यः ३१ बरीयसःबहुमानयोग्यान्पुरुषान्मृतकःजीवन्मृतःक्षारकर्दमेलवणा

येत्विहवैदांभिकादंभयज्ञेषुपशून्विशसंतितानमुष्मिँल्लोकेवैशसनेनरकेपतितान्निरयपतयःपातयित्वाविशसंति २७ यस्त्विहवैसवर्णांभार्यांद्विजोरेतःप्रापयतिकाममोहितस्तंपापकृतममुत्ररेतःकुल्यायांपातयित्वारेतःपाययंति २८ येत्विहवैदस्यवोग्निदागरदाग्रामान्सार्थान्वाविलुंपयंतिराजराजभटावातांश्चापिहिपरेतान्यमदूतावज्रदंष्ट्राःश्वानःसप्तशतानिविंशतिश्चतैःसरभसंखादयंति २९ यस्त्विहवाअनृतंवदतिसाक्ष्येद्रव्यविनिमयेदानेवाकथंचित्सवैप्रेत्यनरकेअवीचिमत्यधःशिरानिरवकाशेयोजनशतोच्छ्रयाद्गिरिशृंगान्निपात्यते ॥ यत्तज्जलमिवस्थलमश्मपृष्ठमवभासतेतदवीचिमतितिलशोविशीर्यमाणशरीरोनम्रियमाणःपुनरारोपितोनिपतति ३० येत्विहवैविप्रोराजन्योवैश्योवासोमपीथास्तत्कलत्रंवासुरांव्रतस्थितोवापिबतितेषांनिरयनीतानामुरसिपदाक्रम्यास्येवह्निनाद्रवमाणंकार्ष्णायसंनिषिंचंति ३१ अथयस्त्विहवाआत्मसंभावनेनस्वयमधमोजन्मतपोविद्याचारवर्णाश्रमवतोवरीयसोनबहुमन्येतसमृतकएवमृत्वाक्षारकर्दमेनिरयेऽवाक्शिरानिपातितोदुरंतायातनाह्यश्नुते ३२ येत्विहवैपुरुषाःपुरुषमेधेनयजेरन्नराशास्त्रीयान् वापशून्खादंतियाश्चस्त्रियोथपशूंश्चखादंति तांश्चताश्चवैपशवइहनिहतास्तेयमसादनेयातयंतोरक्षोगणाःसौनिकाइवस्वधितिनाऽवदायास्रक्पिबंतिनृत्यंतिगायंतिहसंतिचहृष्यमाणायथेहपुरुषादाः ३३ येत्विहवाअनागसोरण्येग्रामेवावैस्रंभकैरुपविस्रंभय्य जिजीविषून्शूलसूत्रादिषूपप्रोतान्क्रीडनतयापातयंतितेपिचप्रेत्ययमयातनासुशूलसूत्रादिषुचप्रोतात्मानःक्षुत्तृड्भ्यांचाभिहताःकंकबलायादिभिश्चेतस्ततस्तिग्मतुंडैराहन्यमानाआत्मशमलंस्मरंति ३४ येत्विहवैभूतान्युद्वेजयंतिनराअत्युल्बणस्वभावायथादंदशूकास्तेपिप्रेत्यनरकेदंदशूकाख्येनिपतंतियत्रनृपदंदशूकाःपंचमुखाःसप्तमुखाउपसृत्यग्रसंतियथाबिलेशयाः ३५

स्मकपंके दुरंतयातनाअनवसानदुःखानि ३२ पुरुषमेधेनपुरुषहत्यालक्षणयज्ञेन यमसादनेनरकेस्वधितिनाविशसनखड्गेनावदायखंडयित्वासौनिकाहिंसकाःपशुमाराइत्यर्थः ३३ वैस्रंभकैःविश्वासोपायैः उपविस्रंभय्यविश्वास्य आदिशब्दाद्भृगुपातनंक्रीडनतयालीलाकरणभावेनयमयातनासुयमेनाधिकृतनरकेषु बलाकादीर्घतुंडाःश्येनविशेषाः दंदशूकाःसदादंशनशीलाः सर्पाःउद्वेजयंति भयमुत्पादयंति उपसृत्यप्राप्यइहलोकेयथाबिलेशयाअजगराः बिलेशयस्त्वजगरःशयुरुक्तोमनीषिभिरिति ३४ ३५

१ अन्यदीयामित्यर्थः

अवटंनिरुच्छ्वासविलं कुसूलंव्रीहिगर्तंगृहंकारागृहंआदिशब्दात्तज्जलमज्जनंदारुपात्रंवा सगरेणविषसहितेनाग्निनाक्रंतनं ३६ अपचक्षुषातिरश्चीनेननेत्रेण ३७ अर्थेषुअभिमातिराभिमानोयस्यसतथा अहंकृतिरहंकारस्वरूपः व्ययविनाशयोश्चिंतयाग्रहः ब्रह्मराक्षसादिलक्षणोयथानिधिमन्येभ्योभिरक्षति तथेतिशेषः तस्यार्थस्यसंपादनेअर्जनेउत्कर्षणेवृद्धीकरणेसंरक्षणेचयच्छमलंतद्गृह्णातीति तत्संपादनोत्कर्षणसंरक्षणशमलग्रहः वित्तग्रहंअर्थलुब्धपिशाचं वायकाःपटच्चराःकंथानिर्माणनिपुणाः क्षुरधारानिशितैःसूत्रैःपरिवयतिओतप्रोतक्रिययाविद्धयंति ३८ नइयंतएवनरकाःकिंत्वेतादृशा अन्येनरकाअसंख्याताःसंतीत्याह एवंविधाइति ३९ उत्तरत्रस्वर्गादौ इहमनुष्यलोके पुनर्भवेपुनरुत्पत्तौ उभयशेषाभ्यांधर्माधर्मशेषाभ्याम् ॥ ४० ॥ चतुर्दशधालोकप्रकारेण ॥ ४१ ॥ स्थविष्ठंस्थूलतममणिष्ठंसूक्ष्मतमं ४२ उभयोरूपयोः कस्मिन्रूपेप्रथमप्रतिपत्तिरितिक्रममाह श्रुत्वेति आत्मानंमनः सूक्ष्मधिया सूक्ष्मरूपोपासनया ४३ उक्तार्थमुपसंहरन्प्रतिपत्त्यर्थंसंकलय्याह

येत्विहवाअवटकुसूलगृहादिषुभूतानिरुंधंतितथामुत्रतेष्वेवोपवेश्यसगरेणवह्निनाधूमेननिरुंधंति ३६ यस्त्विहवाअतिथीनभ्यागतान्वागृहपतिरसकृदुपगतमन्युर्दिधक्षुरिवापचक्षुषानिरीक्षते तस्यचापिनिरयेपापदृष्टेरक्षिणीवज्रतुंडागृध्रकंककाकबलाकादयःप्रसह्योरुबलादुत्पाटयंति ३७ यस्त्विहवार्थाभिमतिरहंकृतिस्तिर्यक्प्रेक्षणःसर्वतःशंकीव्ययविनाशचिंतयापरिशुष्यमाणहृदयवदनोनिर्वृतिमनुपगतोग्रहइवार्थमभिरक्षति ॥ सचप्रेत्यतत्संपादनोत्कर्षणसंरक्षणशमलग्रहःसूचीमुखेनरकेनिपततियत्रहवित्तग्रहंपापपुरुषंधर्मराजपुरुषावायकाइवसर्वतोंगेषुसूत्रैःपरिवयंति ३८ एवंविधानरकायमलोकेसंतिशतशःसहस्रशस्तेषुसर्वेषुसर्वेएवाधर्मवर्तिनोयेकेचिदिहोदिताअनुदिताश्चावनिपतेपर्यायेणविशंति ३९ तथैवधर्मानुवर्तिनउत्तरत्रइहतुपुनर्भवेउभयशेषाभ्यांनिविशंति ४० निवृत्तिलक्षणमार्गआदावेवव्याख्यातःएतावानेवांडकोशोयश्चतुर्दशधापुराणेषुविकल्पितउद्गीयते ४१ यत्तद्भगवतोनारायणस्यसाक्षान्महापुरुषस्यस्थविष्ठंरूपमात्ममायागुणमयमनुवर्णितमादृतःपठतिशृणोतिश्रावयतिसएवायंभगवतःपरमात्मनोग्राह्यणिष्ठमतिश्रद्दधानोभक्तिविशुद्धबुद्धिर्वेद ४२ श्रुत्वास्थूलंतथासूक्ष्मंरूपंभगवतोयतिः ॥ स्थूलेनिर्जितमात्मानंशनैःसूक्ष्मंधियानयेदितिक्रमः ४३ भूद्वीपवर्षसरिदद्रिनभःसमुद्रपातालदिङ्नरकभागणलोकसंस्थम् ॥ गीतंमयातवनृपाद्भुतमीश्वरस्यस्थूलंवपुःसकलजीवनिकायधाम्नः ४४ इतिश्रीभागवतेमहापुराणेपंचमस्कंधेनरकानुवर्णनंनामचतुर्विंशोध्यायः २४ समाप्तोयंपंचमस्कंधः ॥ ॥ ७ ॥ ॥ ॥ ॥ ॥ ७ ॥ ॥ ॥

भूद्वीपेति सकलजीवानांनिकायस्यधामयआश्रयस्तस्य सकलजीवनिकायोधामयस्यसतथावा तस्येश्वरस्याद्भुतंस्थूलंवपुर्मयातवगीतमित्यन्वयः कीदृशं भूद्वीपादिलोकाएवसंस्थाअवयवायस्यतत्तथातत् ४४ वारिजवासावारिजयोनित्रिनयनप्रमुखसुरमुकुटश्रेणिनिषण्णश्रीपदपीठं ससलिलसलीलदृगतिरुचिरुचिरं ॥ मृदुहासेंद्वानंदितलोकं दारितादितिसुततति गिरिशिखरं ॥ कृष्णमकृष्णं वितयनेतःशुचितरमतिगुणयदुकुलतिलकं १ विजयध्वजतीर्थैर्विरचितामीतयेहरेः ॥ पदरत्नावलीनामपंचमस्कंधसंगता ॥ इतिश्रीमन्महेंद्रतीर्थपूज्यपादशिष्यविजयध्वजभट्टारकस्यकृतौश्रीमद्भागवतटीकायांपदरत्नावल्यांपंचमस्कंधेचतुर्विंशोध्यायः २४

श्रीलक्ष्मीनारायणाभ्यांनमः ॥ भवभयजटाघोरांयस्याभिधानमघच्छिदोदलयतिनृणांसद्यःसंकीर्तितंस्वस्वनादिषु । अहिरिपुरहेहंत्याचंहोजहौहियदर्चयाशरणमनिशंशांतंकांतंनमामिसुरद्विषम् १ अ वाख्दःपंचमस्कंधशैलादहंषष्ठस्कंधसिंधावगाधे । अनुज्ञांवःप्रार्थयेस्नातुकामोभवंतःसंतोगुणार्थैकलुब्धाः २ अस्मिन्स्कंधेऽतीतस्कंधार्थमध्येतृप्रवक्तृश्रोतॄणांफलाधिक्यप्रकटनायसक्षिप्यनिरूप्यते तत्रप्रारिप्सितेध्यायेसर्वाधिकारिकंसुखसाध्यंश्रीहरिप्रसादजनकज्ञानसाधनमपिभक्त्याहेरेर्नामसंकीर्तनंपापपरिहारद्वारावश्यकंमुक्तिसाधनमितिनिरूप्यते तदर्थंज्ञानदरिद्रजनदयालुर्विद्वानपिपरीक्षिद्ये नविनापापविनाशेनस्याच्चदभावेज्ञानानुदयः तस्मिन्सतिमोक्षमात्रमपिनस्यात् अतस्त्वयातदवश्यंवक्तव्यमितीममेवार्थंवादयितुंद्वितीयस्कंधोक्तार्थमनुवदति निवृत्तिमार्गइति आदौद्वितीयस्कंधा रंभेवरीयानेषतेप्रश्नइत्यादिनानिवृत्तिमार्गःस्वस्वरूपानदाविर्भावलक्षणमोक्षसाधनविशेषः ननु साधनविशेषप्रपंचनमंतरेणसृष्ट्यादिकथनंकुत्रोपयोगितयासंगच्छतइतितत्राह यथेति यथावत्सृष्ट्यादिल क्षणेनदोषत्रयरहितेनलक्षितंश्रीनारायणस्वरूपंमुख्यपुरुषार्थोपयोगीत्यभिप्रायेणतत्प्रपंचितमितिभावः तस्यफलमाह क्रमयोगेति यद्यस्मान्निवृत्तिमार्गादनुष्ठिताज्ज्ञातेनब्रह्मणासर्वगुणपूर्णेनश्रीनाराय णेनासंसृतिःसंसाराभावलक्षणंफलंभवति जीवस्येतिशेषः कर्तृकरणयोस्तृतीयेति अतउभयथापिमुख्यत्वंश्रीहरेरेवेतिप्रकटनायब्रह्मणेतितृतीया अथकस्माद्युच्यतेब्रह्मेतिबृहंतोह्यस्मिन्गुणाइतिश्रुतेः गुणपरिपूर्णतयाह्यतएवपुरुषार्थप्रदःननिर्गुणत्वेनइत्यतोब्रह्मेतिपदंप्रायोजि । कथंज्ञातेनेतितत्राह क्रमेति क्रमेणानुष्ठितेनयोगेनवैराग्यभक्तिनिरंतरध्यानज्ञानलक्षणोपायेनोपलब्धेनदृष्टेनप्रथमंस्मरण पश्चादेकैकावयवध्यानंतदनंतरंसमग्रांगध्यानमितिवा क्रमयोगः १ ब्रह्मवर्चसकामस्तुयजेतब्रह्मणस्पतिमितिप्रवृत्तिलक्षणश्चशब्दात्कथितः सकिंफलइतितत्राह त्रैगुण्येति त्रिगुणात्मकपुरंदरादिदे

राजोवाच ॥ निवृत्तिमार्गःकथितआदौभगवतायथा ॥ क्रमयोगोपलब्धेनब्रह्मणायदसंसृतिः १ प्रवृत्तिलक्षणश्चैवत्रैगुण्यविषयोमुने ॥ योसावलीनप्र कृतेर्गुणसर्गःपुनःपुनः २ अधर्मलक्षणानानानरकाश्चोपवर्णिताः ॥ मन्वंतरश्चव्याख्यातःआद्यःस्वायंभुवोयतः ३ प्रियव्रतोत्तानपदोर्वंशस्तच्चरितानिच ॥ द्वीपवर्षसमुद्राद्रिनदीनदवनानिच ४ धरामंडलसंस्थानंभागलक्षणमानतः ॥ ज्योतिषांविवराणांचयथेदमसृजद्विभुः ५

वतास्थानप्राप्तिफलइत्यर्थः तत्फलंकिंनित्यंनेत्याह यइति योसौप्रवृत्तिमार्गःकामकर्मविदूषितांतःकरणदोषभर्जनासमर्थत्वादलीनप्रकृतेराविनष्टप्रकृतिशक्तेः पुरुषस्य पुनःपुनर्गुणभूतस्यदेहस्यसर्गो यस्मात्सतथा सत्वादिगुणैःसर्गोयस्मादितिवा भूयोजननमरणप्राप्यचक्रवत्परिभ्रमणफलंददातीत्यर्थः अलीनप्रकृतेर्योगुणसर्गःसत्वादिगुणनिमित्तोत्पत्तिःअसावपितृतीयस्कंधादौकथितइतिवा योग विभागः २ अधर्मेणलक्ष्यंतेदृश्यंतेअनुभूयंतेपृथक्संज्ञावत्त्वेनाक्रियंतइतिवाऽधर्मलक्षणाः अधर्मंलक्षयंतीतिवा नास्तिरतिःकंचनयेषुतेनरकाउपवर्णिताः पंचमांतइतिशेषः मन्वंतरोमन्वंतरविषयोवि चारश्चतुर्थारंभेव्याख्यातः कोसावितितत्राह आद्यइति आद्यःप्राथमिकः केनसृष्टइत्यतउक्तं स्वायंभुवइति स्वयंभुवाकल्पितः यतःयस्मिन्मन्वंतरेस्वयंभुवोजातोमनुराद्यः सर्वमनूनामाद्यभूत इति वा ३ ननु स्वायंभुवइतिसामान्योक्तौमनुविशेषःकुतोनिश्चीयते नचतच्छब्दादितिवाच्यंपंथश्रवणात् नचतेनैव स्वयंभूजातानांसर्वेषामपितत्संबंधितयातच्छब्दवाच्यत्वोपपत्तेः नचरूढ्यातदंगीकारः किंनस्यादितिवाच्यं विशेषमंतरेणकेवलयानिश्चेतुमशक्यत्वात्स्वायंभुवकयावृत्त्यावर्तितंतेपरंवयइति अत्रनारदपरत्वेनरूढेरपहाराच्चेतीयमाशंकायतःशब्दमुत्तरत्रसंबद्धच्यपरिहियते यतइति यतो यस्मात्स्वायंभुवान्मनोर्जातयोःप्रियव्रतोत्तानपदोर्वंशः तयोश्चरितानि चतुर्थेपंचमेचव्याख्यातानीत्यनेनस्वायंभुवोमनुरेवोच्यतइतिनिश्चीयतइति द्वीपादयश्चपंचमेव्याख्याताइतिशेषः ४ भागतो विभागतोलक्षणतोमानतश्च ज्योतिषांस्वरूपमितिशेषः विवराणामधोभुवनानांसंस्थानमितिशेषः विभुरिदंजगद्यथायेनप्रकारेणासृजत्सोपिद्वितीयतृतीयादौकथितइतिशेषः ५

प्रवक्तुर्व्याख्यानेहर्षोद्रेककारणायस्वस्योक्तार्थग्रहणसामर्थ्यंप्रदर्शयन्विवक्षितार्थंपृच्छति अधुनेति अधुनेममर्थमेवंपृच्छामीतिशेषः । इह जीवलोकेदुष्कर्मापि नरो यथायेनसाधनेन नानोग्रयातनान्नरका न्नेयान्नगच्छेदधुनादुष्कर्मपरिहारपटीयःसाधनं व्याख्यातुमर्हसीत्यन्वयः यातनातीव्रवेदनेत्यभिधानात् नानाविधायातनास्तीव्रवेदनायेषुनरकेषुतथातानिति नरकविशेषणमेतत् ६ नचेदिहावेदी न्महतीविनष्टिरितिश्रुत्यर्थंपश्यन्प्रवक्ति नचेदिति यःपुरुषःमनउक्तिपाणिभिर्मनोवाक्कायैःकृतस्यांहसः अपचितिंप्रायश्चित्तोपलक्षणंनाशमिहैवनकुर्याच्चेत्तर्हिसपापीप्रेत्यनरकानुपैतीत्यन्वयः कीदृ शानत्राह येकीर्तिताइति वाइत्यनेनपारंपर्येणेतीममर्थमाह कथंकारमपचितिःस्यादित्यतउक्तं यथेति अंहसोगुरुलाघवंयथातथा प्रायश्चित्तकरणमित्यर्थः नचेदमौपचारिकं ध्रुवंनिश्चित मिति यस्मिन्जन्मन्याचरितंतस्मिन्प्रायश्चित्तंचेद्धव्यपिक्षिप्रंगुरुदोषनिवृत्तिक्षिप्रफलदमित्यनेनदर्शयति ७ यस्मादेवमनर्थप्राप्तिस्तस्माद्देहवियोगात्पूर्वमेवकालक्षेपमंतरेणपापनिष्कृतौपापपरिहारे यतेत यतनमपिमध्यमेवयस्येवेत्यभिप्रायेणोक्तमविपदीति । बाल्येवार्धकेवादौर्बल्यलक्षणविपत्तिसंभवात्तारुण्येतदयोगात्समर्थइत्यर्थः अनेनद्रव्यादिसंपत्तावेवप्रयतनीयमितिध्वनितं यथेत्युक्तंवि वृणोति यदात्मनइति आत्मनोदोषस्ययद्गुरुत्वंलघुत्वंचतदृष्ट्वातदनुसारेणेत्यर्थः अत्रैवदृष्टांतमाह यथेति रुजारोगाणां निदानंत्वादिकारणमित्यभिधानान्मूलनिमित्तज्ञानीभिषग्वैद्योयथाचि

अधुनेहमहाभागयथैवनरकान्नरः ॥ नानोग्रयातनान्नेयात्तन्मेव्याख्यातुमर्हसि ६ श्रीशुकउवाच ॥ नचेदिहैवापचितिंयथांहसःकृतस्यकुर्यान्मनउक्तिपाणिभिः ॥ ध्रुवंसवैप्रेत्यनरकानुपैतियेकीर्तितामेभवतस्तिग्मयातनाः ७ तस्मात्पुरैवाश्विहपापनिष्कृतौयतेतमृत्योरविपद्यतात्मना ॥ दोषस्य दृष्ट्वागुरुलाघवंयथाभिषक्चिकित्सेतरुजांनिदानवित् ८ राजोवाच ॥ दृष्टश्रुताभ्यांयत्पापंजानन्नप्यात्मनोहितम् ॥ करोतिभूयोविवशःप्रायश्चित्तमथो कथम् ९ क्वचिन्निवर्ततेऽभद्रात्क्वचिच्चरतितत्पुनः ॥ प्रायश्चित्तमथोऽपार्थंमन्येकुंजरशौचवत् १० श्रीशुकउवाच ॥ कर्मणाकर्मनिर्हारोनह्यात्यंतिकइष्य ते ॥ अविद्वदधिकारित्वात्प्रायश्चित्तंविमर्शनम् ११

कित्सेतचिकित्सते आत्मनोदोषस्यगुरुलाघवज्ञानाभावेतद्गुरुमुखादपिज्ञात्वाकर्तव्यमितिसूचितमनेनदृष्टांतेन । यद्वा यत्यावदात्मनोदेहस्यमृत्योःसकाशात् यन्मरणलक्षणविपन्नभवतितस्मात्ता वत्पुरैवपापस्यगुरुलाघवज्ञानपूर्वकंनिष्कृतौयतेत इममर्थंसदृष्टांतमाह दोषस्येति ८ राजानिष्कृतेर्वैयर्थ्यंशंकते दृष्टेति चौर्यादिकारिणोराजदंडादिदर्शनेन मृतोनरकमभ्येतीतिशास्त्रगम्यागमनान्नरइतिश्रु तेः सत्यात्मनःपापमहितंदुःखसाधनंजानन्नपिविवशः स्वकर्माधीनःभूयःपश्चादपिपापंकरोतीतियद्यस्मादथोतस्मात्प्रायश्चित्तंकथंभवतीत्यन्वयः ९ असंभवंविवृणोति क्वचिदिति क्वचिदभद्रात्प्रायश्चि त्तेननिवर्तते क्वचित्तत्सदृशमभद्रमाचरतीतियदथोतस्मात्प्रायश्चित्तंअपार्थंमन्ये निष्प्रयोजनत्वेकुंजरशौचवदितिदृष्टांतः शौचेनस्नानलक्षयति १० प्रायश्चित्तलक्षणंकर्मापार्थमितिवदन् किंकेवलंव्यर्थ मुतविद्वद्भिर्विमृश्यविहितमाहोस्विज्ज्ञानपूर्वकमपिक्रियमाणंतदिति तत्राद्यः संमतइत्याह कर्मणेति प्रायश्चित्तलक्षणेनकर्मणाकर्मनिर्हारःपाप कर्मविनाशःआत्यंतिकःछिन्नमूलत्वेननेष्यते उभयोरप्यज्ञानमू लत्वेनाधिकृतत्वात् द्वितीयंनव्यर्थमित्याह प्रायश्चित्तेति विद्वद्भिरविदुषोधिकृत्यप्रायश्चित्तंकर्मविमर्शनंकृत्वाविहितंकर्मव्यर्थंनेष्यतइतिपूर्वेणान्वयः ११

१ इहैवपापप्रायश्चित्तंनावेदीचेन्महतीहानिरितिश्रुत्यर्थः । १ पाणिर्हस्तइतिस्यात्कदाचिद्देहउच्यतइत्यभिधानम् ।

तृतीयेइदंपापमितिजानतातदकुर्वाणेनस्वविहितंक्रियमाणमुतमयाकृतंपापमिति ज्ञात्वा तस्येदंप्रायश्चित्तमितिजानतेतिपक्षद्वयेपिक्रियमाणंकर्मव्यर्थंकिंनुसार्थकमितिभावेनाह नाश्नतइति एवमितिव चनाद्यथेत्यध्याहर्तव्यं पथ्यमेवान्नमश्नत पुंसोव्याधयोनाभिभवंति यथाऽहमितिशेषः । अत्यंबुपानाच्चनजीर्यतेन्नमनंबुपानाच्चसएवदोषः तस्मान्नरोवह्निविवर्धनायमुहुर्मुहुर्वारिपिबेदभूरीत्या दिविधानंहिशब्देनाक्षिप्तंस्पष्टयति एवमिति नियमकृत्पापकर्माकुर्वन्स्वविहितंकुर्वन् शनैर्बहुजन्मात्ययेपुण्यप्रचयेनज्ञानोत्पत्तौक्षेमायकल्पतेमोक्षायसमर्थोभवति १२ ज्ञातेनतपआदिप्रा यश्चित्तकर्मणामहदघंक्षपंतीत्यन्वयः १३ १४ दुर्बलकायादिमतांतपआद्याचरणाशक्तानांकेनपापक्षयःस्यादितितत्राह केचिदिति १५ इदमशक्ताधिकारिकंचेन्निकृष्टार्कं न किंतुततो प्युत्तममितिभावेनाह नतथेति कृष्णेअर्पिताःप्राणाःश्रोत्रादयोयस्यसतथा कृष्णार्पितप्राणत्वंकेनस्यादत्राह तत्पूरुषेति तस्यकृष्णस्यपूरुषाःतेषांनिषेवयाभक्त्यात्वनन्ययाशक्यइत्यादिप्रसि द्धिहिशब्देनदर्शयति १६ अत्रत्रिषुदुष्कृतपरिहारमार्गेषुभक्तिमार्गस्यैवप्राधान्यमित्याह सध्रीचीनइति लोकेप्रायश्चित्तलक्षणसाधनसमूहे आनंदरूपत्वात्क्षेमइत्युच्यते । तत्राधिकारिणआह

नाश्नतःपथ्यमेवान्नंव्याधयोऽभिभवंतिहि ॥ एवंनियमकृद्राजञ्छनैःक्षेमायकल्पते १२ तपसाब्रह्मचर्येणशमेनचदमेनच ॥ त्यागेनसत्यशौचाभ्यां नियमेनयमेनच १३ देहवाग्बुद्धिजंधीराधर्मज्ञाःश्रद्धयान्विताः ॥ क्षपंत्यघंमहदपिवेणुगुल्ममिवानलः १४ केचित्केवलयाभक्त्यावासुदेवपरायणाः ॥ अ घंधुन्वंतिकार्त्स्न्येननीहारमिवभास्करः १५ नतथाह्यघवान्राजन्पूयेततपआदिभिः ॥ यथाकृष्णार्पितप्राणस्तत्पूरुषनिषेवया १६ सध्रीचीनोह्ययंलोके पंथाःक्षेमोऽकुतोभयः ॥ सुशीलाःसाधवोयत्रनारायणपरायणाः १७ प्रायश्चित्तानिचीर्णानिनारायणपराङ्मुखैः ॥ नवैपुनंतिराजेंद्रसुराकुंभमिवा पगाः १८ सकृन्मनःकृष्णपदारविंदयोर्निवेशितंतद्गुणरागियैरिह ॥ नतेयमंपाशभृतश्चतद्भटान्स्वप्नेपिपश्यंतिहिचीर्णनिष्कृताः १९ अत्रैवोदाहरंती ममितिहासंपुरातनम् ॥ दूतानांविष्णुयमयोःसंवादंतंनिबोधमे २० कान्यकुब्जेद्विजःकश्चिद्दासीपतिरजामिलः ॥ नाम्नानष्टसदाचारोदास्याःसंसर्गदूषितः २१

सुशीलाइति १७ तपआदीनामपिभक्त्योपचितबलानांपापनिर्हरणहेतुत्वं नकेवलानामित्यतोपिभक्तेरेवप्राधान्यमित्याह प्रायश्चित्तानीति १८ ननु केवलभक्त्यापापनिर्हरणप्रकारःकथमत्राह सकृदिति । पापनिर्हरणंतपआदाविवचिरसाध्यंनभवति किंतुक्षिप्रसाध्यमित्यतोवाभक्तेःप्राधान्यमित्याह सकृदिति कृतपापानुतापपूर्वकंश्रीकृष्णांघ्रिपद्मेसकृन्मनोनिवेशनेमचीर्णनिष्कृताः कृतप्रायश्चित्ताः १९ नन्वेवंवैदिकानामस्तु अवैदिकानांस्त्रीशूद्रादीनांपापप्रायश्चित्तकथंस्यादित्याशंक्य भक्त्यातेषांनामसंकीर्तनेनदुष्कृतानिष्कृतिःस्यादितीममर्थमितिहासेनदर्शयति । अत्रेति । भक्त्याभगवन्नामसंकीर्तनादपिदुष्कर्मनाशःस्यात्किमुवक्तव्यंनिरंतरमेकमनस्कत्वेनश्रीहरिचरणस्मरणादिनेत्यतोवेममर्थमाख्यायिकयादर्शयति अत्रेति । अत्रवैदिकानामवैदिकानामपिभक्त्यानामसंकी र्तनादघक्षये एवकारेणायोगंव्यवच्छिनत्ति । नत्वन्ययोगंतथात्वेपूर्वोक्ताव्यर्थाःस्युरित्यर्थः २० अजयाप्रकृत्याज्ञानस्यमलिमलिनांतिरोभावोयस्यसतथा पश्चादजाद्धरेःपूर्वपुण्येसपन्नज्ञानस्यामील उन्मीलनंयस्यसतथेत्युभयथावाजामिलत्वयुक्तं ह्रस्वत्वंछांदसं सन्समीचीनआचारःसदाचारः २१

१ यत्रचब्राह्मणाभासामानवामत्स्यहारिणः । तमध्येनिकटदेशंकान्यकुब्जंवदतिहि

बंदीग्रहणैरक्षैर्देवनैः कितवः स्यादनृतवादी कैतवंतस्यभाषणमित्यभिधानात् असत्यव्यवहारैश्चौर्यैः परस्वापहरणलक्षणव्यापारैः वृत्तिंवर्तनंजीवनोपायं देहिनंयातयामास नरकगमनाभिमुखमकरोत् शरीरयात्रायुक्तमकरोतेतिवा २२ अष्टाशीत्यायुषोया समाः येसंवत्सराः तत्परिमाणलक्षणःकालः २३ अवमःकनिष्ठः २४ २५ अंतकंमृत्युम् २६ मृत्युकालेदेहावियोगलक्षणकाले मृत्यो. सर्वदोषापहरस्यहरेरनुग्रहात्कालेदचज्ञानलक्षणे उपस्थितेतद्दिमकाशितेतनयेपूर्णज्ञाने बालेपंचवर्षकल्पेप्रादेशमात्रे नारायणाह्वयेमूर्तिविशेषे मतिंस्मरणसमर्थचित्तंचकार भक्त्याऽस्मरादित्यर्थः अज्ञानेऽपिस्मरणाद्भक्त्यामृत्योरमुच्यतेत्येतद्वाक्यमशेषाघहरविदुरित्यत्रप्रमाणत्वेनवक्ष्यमाणमत्राप्यनुसंधेयमितिज्ञातव्यम् २७ २८ दूरेअंडाद्बहिःस्थितं जगत्सर्जनादिलीलाविलासोपेतं पुत्रान्नोनरकात्त्रातारं । नारायणनामानं उच्चैःप्लावितेनचतुरादिमात्रात्मनास्वरेण पूर्वाचरितपुण्यप्रचयेनोत्पन्नयाभक्त्याकुलेंद्रियः २९ हरेःकीर्तनंकिंगुणरूपंनेत्याह भर्तुरिति भर्तुःस्वामिनोना

बंद्यक्षैःकैतवैश्चौर्यैर्गर्हितांवृत्तिमाश्रितः ॥ बिभ्रत्कुटुंबमशुचिर्यातयामासदेहिनम् २२ एवंनिवसतस्तस्यलालयानस्यतत्सुतान् ॥ कालोऽत्यगान्महान्राजन्नष्टाशीत्यायुषःसमाः २३ तस्यप्रवयसःपुत्रादशतेषांतुयोऽवमः ॥ बालोनारायणोनाम्नापित्रोश्चदयितोभृशम् २४ सबद्धहृदयस्तस्मिन्नर्भकेकलभाषिणि ॥ निरीक्षमाणस्तल्लीलांमुमुदेजरठोभृशम् २५भुंजानःप्रपिबन्खादन्बालकस्नेहयंत्रितः ॥ भोजयन्पाययन्मूढोनवेदागतमंतकम् २६सएवंवर्तमानोऽज्ञोमृत्युकालउपस्थिते ॥ मतिंचकारतनयेबालेनारायणाह्वये २७ सपाशहस्तांस्त्रीन्दृष्ट्वापुरुषान्भृशदारुणान् ॥ वक्रतुंडानूर्ध्वरोम्णआत्मानंनेतुमागतान् २८ दूरेक्रीडनकासक्तंपुत्रंनारायणाह्वयम् ॥ प्लावितेनस्वरेणोच्चैराजुहावाकुलेंद्रियः २९ निशम्यम्रियमाणस्यमुखतोहरिकीर्तनम् ॥ भर्तुर्नाममहाराजपार्षदाःसहसापतन् ३० विकर्षतोंतर्हृदयाद्दासीपतिमजामिलम् ॥ यमप्रेष्यान्विष्णुदूतावारयामासुरोजसा ३१ ऊचुर्निषेधितास्तांस्तेवैवस्वतपुरःसराः ॥ केयूयंप्रतिषेद्धारोधर्मराजस्यशासनम् ३२ कस्यवाकुतआयाताःकस्मादस्यनिषेधथ ॥ किंदेवाउपदेवावायूयंकिंसिद्धसत्तमाः ३३ सर्वेपद्मपलाशाक्षाःपीतकौशेयवाससः ॥ किरीटिनःकुंडलिनोलसत्पुष्करमालिनः ३४ सर्वेचनूत्नवयसःसर्वेचारुचतुर्भुजाः ॥ धनुर्निषंगासिगदाशंखचक्रांबुजश्रियः ३५ दिशोवितिमिरालोकाःकुर्वंतःस्वेनरोचिषा ॥ किमर्थंधर्मपालस्यकिंकरान्नोनिषेधथ ३६ श्रीशुकउवाच ॥ इत्युक्तेयमदूतैस्तेवासुदेवोक्तकारिणः ॥ तान्प्रत्यूचुःप्रहस्येदंमेघनिर्ह्रादयागिरा ३७ विष्णुदूताऊचुः ॥ यूयंवैधर्मराजस्ययदिनिर्देशकारिणः ॥ ब्रूतधर्मस्यनस्तत्त्वंयच्चाधर्मस्यलक्षणम् ३८

रायणेतिनामरूपं दोषहरणशीलंकीर्तनंयस्यनाम्नस्तद्धरिकीर्तनं भर्तुर्नामनिशम्येतिवा । हरिरित्यक्षरद्वयं नारायणेत्यक्षरचतुष्टयं अनेनोक्तमितिज्ञापनायानन्वितत्वेनोक्तमितिवा अनेनपुनस्नेहमंतरेणमार्थनाहष्टबलादुद्भूतयाभक्त्याभगवन्नामसंकीर्तनंकृतमितिज्ञायते ३० ओजसाऽवष्टंभेनबलेनवा ओजोवष्टंभबलयोरितियादवः ३१ ३२ निषेधथ अस्य नयनमितिशेषः ३३ नूत्नवयसः षोडशवर्षवयसः धनुरादिभिःश्रीर्येषांतेतथा ३४ ३५ वितिमिरालोकाइत्यत्रवीत्युपसर्गःप्रत्येकमभिसंबध्यते विगतानितिमिराणिविगताःआलोकाःअन्यप्रकाशाश्रयासुदिक्षुतास्तथानिरस्तांधकारान्यप्रकाशाइत्यर्थः ३६ ३७ तत्त्वमनारोपितंरूपं लक्षणंव्यावर्तकधर्मं ३८

कथंस्वित्केनप्रकारेण स्थानंदेशःविषयोवा नृणांमध्येकारिगःकर्मकारिणःसर्वेपिदंड्याःकिमाहोस्वित्कतिचिदेवदंड्याःतत्रापिकिंकारिणोवाकिमकारिणोवाइतिब्रूत ३९ यच्चाधर्मस्यलक्षणमित्यत्राहुरित्याह वेदेति वेदएवधर्माधर्मौमिथोव्यावर्त्यवक्तीत्यनेनप्रमाणंचोक्तं। धर्मस्यतत्त्वब्रूतेत्यत्रोत्तरमाहुरित्याह वेदइति वेदोनारायणवक्तृकःतपःशक्त्याहश्रवेदवक्तृमुनेर्व्यावर्त्यर्थंसाक्षादिति। तदुक्तं। वेदानांप्रथमोवक्ताहरिरेवयतोविभुः अतोविष्ण्वात्मकावेदाइत्याहुर्वेदवादिनइति। देवदत्तवन्नारायणोपिकिमन्यस्माद्वाप्तदेहइतिनेत्याह। स्वयंभूरिति अनेननारायणवक्तृत्वेऽपौरुषेयत्वेनानारोपितरूपत्वाभावेनतदुक्तधर्माधर्मनिश्चयायोगइत्याशंकापरिहृता। तेषांस्वयंभूत्वेनाभिव्यक्तिरेवहरेर्नतुपुराणादिवदन्यथारचितत्वं। यावद्ब्रह्मविष्ठितंतावतीवागितिश्रुतेः ४० नन्वेतावतानारायणइतरस्मात्कथंव्यावृत्ततयाज्ञायतइतितल्लक्षणमाह येनेति स्वधाम्निस्वाधारतया गुणाःशुक्लादयः। नामान्यश्वमहिषदेवदत्तादीनि। क्रियाःपचतिपठतीत्यादयः रूपाणिद्विपाच्चतुष्पादित्यादीनि क्रियापंचविधंकर्मेतिवा गुणाःशमदमादयःरूपाणिशुक्लादीनि। यथातथमसांकर्येणविभाव्यंतेउत्पाद्यंते ४१ किंवास्यस्थानमीप्सितमित्यत्राहुरित्याह सूर्योग्निरिति गावआपःगौर्भूमिरापइतिवचनात् संध्याचाहश्चसंध्याहनी। कालाभिमानीदेवः स्वयंपापपुण्ययोःकर्ता देवशब्दवाच्यःश्रीहरिर्वाकालः हृदयंमनइतिद्वेस्वयमित्यनेनव्याख्याते धर्मस्येत्युपलक्षणंअधर्मस्यापि साक्षादीक्षंतइतिसाक्षिणः ४२ धर्माधर्मलक्षणपुण्यपापदर्शिभिरेतैःसूर्यादिभिः नधर्मोयस्यसोधर्मः अधर्मइतिविज्ञातोयःपुरुषःसएवदंडस्यस्थानंदंड्यइतियुज्यते यमस्तुदंडएवाधिकृतः कथंस्वित्प्रियतेदंडइत्यस्योत्त

**कथंस्विद्ध्रियतेदंडःकिंवास्यस्थानमीप्सितम् ॥ दंड्याःकिंकारिणःसर्वेआहोस्वित्कतिचिन्नृणाम् ३९ यमदूताऊचुः ॥ वेदप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययः ॥ वेदोनारायणःसाक्षात्स्वयंभूरितिशुश्रुम ४० येनस्वधाम्न्यमीभावारजःसत्वतमोमयाः ॥ गुणनामक्रियारूपैर्विभाव्यंतेयथातथम् ४१ सूर्योग्निःखंमरुद्गावःसोमःसंध्याहनीदिशः ॥ कालःस्वयंधर्मइतिएतेधर्मस्यसाक्षिणः ४२ एतैरधर्मोविज्ञातःस्थानंदंडस्ययुज्यते ॥ सर्वेकर्मानुरोधेनदंडमर्हंतिकारिणः ४३ संभवंतिह्यभद्राणिविपरीतानिचानघाः ॥ कारणंगुणसंगोस्तिदेहवान्ह्यकर्मकृत् ४४ येनयावान्यथाधर्मोह्यधर्मोवासमीहितः ॥ सएवतत्फलंभुंक्तेतथातावदमुत्रवै ४५ यथेहदेवप्रवरास्त्रैविध्यमुपलभ्यते ॥ भूतेषुगुणवैचित्र्यात्तथान्यत्रानुमीयते ४६**

रमाहुरित्याह सर्वइति कारिणःपापकारिणःसर्वेकर्मानुरोधेनपापकर्मतारतम्यानुकूल्येन। दंड्याःकिंकारिणःसर्वइत्यत्राहुरित्यतोवाआह सर्वइति पापकारिणःसर्वेदंडंअर्हंतीत्यनेनपापकारिणएवयमेनदंड्याःनपुण्यकारिणइतिचग्राह्यम् ४३ ननूभयेषामपिदृष्टश्रुताभ्यामैहिकेसुखदुःखफलेजानताउभयविधकर्मसंभवःकथमत्राह संभवंतीति विपरीतानिपापविरुद्धपुण्यानिराज्याद्यवाप्तिनिमित्तसुखफलप्रदानि आचतुर्दशमाद्वर्षात्कर्माणिनियमेनतु दशावराणामित्येतद्धिशब्दगृहीतं संभवेपिकिंकारणमत्राह कारणमिति त्रिगुणसंबंधएवकारणमितिभावः नन्वेतल्लिंगशरीरिण्यनैकांत्यं तस्यकर्मीकरणादित्याशंक्यस्थूलदेहविवक्षयोक्तमितिभावेनाह देहवानिति योगुणसंगोपिपुण्यवान्नकर्मकरोतिज्ञानादिसिचेत्तत्राह देहवानितिवा देहीचेदकर्मकृन्नास्त्येव गुणानांतादृशशक्तिमत्त्वात् कार्यतेह्यवशइत्युक्तेः ४४ किमतइत्यतःफलितमाह येनेति अमुत्रपरलोके ४५ ननु यावज्जीवंसुखंजीवेदृणंकृत्वाघृतंपिबेत् भस्मीभूतस्यदेहस्यपुनरागमनंकुतइतिवचनात्सएवामुत्रस्वकृतंभुंक्तेइतिनघटतइत्यत्राह यथेहेति स्वकृतफलदातारोहदृश्यंतेप्रमाणतइतिशेषः वाक्यप्रामाण्यानंगीकारेपिप्रत्यक्षगृहीतव्याप्तिकानुमानात्सिद्धमित्याह त्रैविध्यमिति सत्वादिगुणानांवैचित्र्याद्भूतेषुउत्तमाधममध्यमत्वभेदेनत्रैविध्यमुपलभ्यते यथाप्रत्यक्षेणेतिशेषः अन्यत्रजन्मांतरे परलोकेवा ४६

अनुमानस्यप्रामाण्यंग्राहयितुंएतदर्थंसदृष्टांतमुपपादयंतीत्याह वर्तमानइति वर्तमानःप्रतीयमानःवसंतादिकालःअन्ययोः अतीतैष्यद्वसंतयोः गुणानांफलपुष्पादिकार्याणांअभिज्ञापकोयथा एवमेतद्वर्त
मानंजन्मधर्माधर्मज्ञापकमनयोरतीतानागतजन्मनोः यौधर्माधर्मौतौनितरांदर्शयतिज्ञापयतीतिधर्माधर्मनिदर्शनम् ४७ इतोप्यनुमानप्रमाणमितिज्ञापयितुं जीवसमवेतधर्माधर्मसद्भावेहरेःप्रत्यक्षंप्रमाणयंती
त्याह मनसेति पुरेजीवशरीरेस्थितोदेवःश्रीनारायणःजीवस्यपूर्वरूपमपूर्वमनागतरूपंचतत्समवेतधर्माधर्मौचस्वमनसैवविपश्यतिअपरोक्षीकृत्यवर्तते दर्शनस्यक्वापिबाधोनास्तीतिलट्प्रयोगः अन्येषाम
दर्शनमेवकिंनेत्याहुरित्याह अनुमीमांसतइति अजःपरमेष्ठीभगवान्मनसाऽनुमीमांसतेतदनुग्रहेणालोच्यविचार्यपश्यतीत्यर्थः सर्वजीवसाधारणाजशब्दप्रयोगादन्येदेवाअपियथायोग्यंजानंतीतिग्राह्यं।
किंचजीवात्मनोपिधर्माधर्मसमवेतपूर्वापररूपेवर्तमानासिद्धेइत्याहुरित्यतोवाह मनसेति सुरनरतिर्यगादिपुरे देवःक्रीडन् भगवान्भाग्यगुणोपेतः जीवःपूर्वानुभवसंस्कारसंस्कृतेनमनसैवपूर्वरूपंधर्माध
र्मसमवायात्मकंरूपंविपश्यतिविजानाति अपूर्वमनागतंमनसानुमीमांसतेविचार्यानुमिनोति अजोह्येकोजुषमाणोनुशेतेइतिश्रुतेः ४८ पूर्वापररूपेजानातिचेत्तर्हिकथमन्यत्रमृतोन्यत्रजातोहमितिनजा
नातीत्याशंक्यश्रीनारायणानुग्रहमंतरेणतादृशज्ञानंनसुलभंसर्वेषामित्यभिप्रेत्याह यथेति अज्ञोऽविवेकीअव्यक्तप्रकृतिनिर्मितदेहमेवोपास्ते देहात्मनोरभेदंकल्पयति । व्यक्तमेवपुरःस्थितमेवजाना
ति नतुपूर्वापरेइतिवा। तत्रकारणमाहुरित्याह तमसेति विपरीतप्रत्ययापादकतमोगुणयुक्तत्वात् अतएवपूर्वमपरंचनवेदयथातथानष्टजन्माविषयस्मृतिः पुरुषोन्यत्रजातइत्यादिकंनजानातीत्यर्थःअ

वर्तमानोन्ययोःकालोगुणाभिज्ञापकोयथा ॥ एवंजन्मानयोरेतद्धर्माधर्मनिदर्शनम् ४७ मनसैवपुरेदेवःपूर्वरूपंविपश्यति ॥ अनुमीमांसतेपूर्वंमनसाभ
गवानजः ४८ यथाज्ञस्तमसायुक्तउपास्तेव्यक्तमेवहि ॥ नवेदपूर्वमपरंनष्टजन्मस्मृतिस्तथा ४९ पंचभिःकुरुतेस्वार्थान्पंचवेदाथपंचभिः॥ एकस्तुषो
डशेनत्रीन्स्वयंसप्तदशोऽश्नुते ५० तदेतत्षोडशकलंलिंगंशक्तित्रयंमहत् ॥ धत्तेऽनुसंसृतिंपुंसिहर्षशोकभयार्तिदम् ५१ देह्यज्ञोऽजितषड्वर्गोऽनिच्छन्क
र्माणिकार्यते ॥ कोशकारइवात्मानंकर्मणाच्छाद्यमुह्यति ५२

नेनयावज्जीवंसुखंजीवेदितिचार्वाकमतमज्ञप्रलपितमितिज्ञायतइतिभावः ४९ देहीचेत्कर्मकरोत्येवेत्युक्तंतत्रकर्मकरणप्रकारंदर्शयति पंचभिरिति पंचभिर्वागादिकर्मेंद्रियैः स्वार्थान्स्वविषयानभिवदन
शिल्पगतिविसर्गानंदाख्यान् पंचभिःश्रोत्रादिज्ञानेंद्रियैःपंचशब्दादीन्सप्तदशस्वयमेकआत्मा षोडशेनषोडशभेदयुक्तेनलिंगशरीरेण त्रीन्सत्वादिगुणैस्त्रिधाविभक्तंसुखंदुःखंमिश्रंचभुंक्ते सत्वसुखेसंयोज
यतीत्यादेःदेहात्मनोर्भेदप्रकाशनायसप्तदशइत्युक्तम् ५० तर्हिकस्मात्संसारोऽस्येतितत्राह तदेतदिति षोडशकलाःश्रोत्रादीद्रियाणिमनश्चपंचभूतानियस्मिंस्तत्तथा शक्तीनाप्रकाशक्रियावरणलक्षणा
नांत्रयंयस्मिंस्तत्तथा सत्वादिगुणशक्तियुक्तमित्यर्थः अतएवमहापुरुषार्थाभिभवसमर्थंत्रिशक्तियुक्तत्वाद्धर्षादिप्रदं लिंगंलिंगशरीरं पुंस्यनुरवकर्मानुकूल्येनसंसृतिधत्तइत्यन्वय.। अधिकरणत्वमा
त्रप्रदर्शनायपुंसीतिसप्तमी तस्मादभिमानानिमित्तमिदंसर्वमित्यर्थः ५१ आत्मनः संसारप्रकारानिरूपयति देहीति अवशीकृतषडिंद्रियवर्गोऽनिच्छन्नपिकर्माणिकार्यते गुणाधीनषडिंद्रियैरितिशेषः । वि
ष्टिगृहीतवद्बलात्कार्यमाणश्चेत्स्वसंपाद्यिपदोवेत्तिकिंनेत्याह कोशकारइति । यथाकोशकारःकृमिःस्वकर्मणानिर्मितकोशेनात्मानमाच्छाद्यकोशएववसन्मुह्यति कोशनाशानाशौनजानाति तथात्मा
ज्ञापिकर्मणात्मानमाच्छाद्यमुह्यतीत्यर्थः ५२

मोहोस्यास्तीतिकुतोज्ञायतइत्याशंक्यपुनःपुनःकर्मकरणादित्यभिसंधिमंतःस्वोक्तार्थेप्रमाणंदर्शयंतीत्याह नहीति ५३ जननमरणेअपिदेहस्यैवआत्मनस्तदभिमानादुपचर्यंतेइत्याहुरित्याह लब्ध्वेति संसारनिमित्तमव्यक्तंप्रकृतिकार्यंशरीरंलब्ध्वाव्यक्ताव्यक्तमुत जन्ममरणमपिभवति जीवस्योपचारइतिशेषः । देहस्यसर्वथानाशादनाशाच्चेतनस्यचेत्यादेः । निमित्तंकारणमव्यक्तप्रकृतिलब्ध्वाप्राप्यव्यक्ताव्यक्तंजन्ममरणात्मकंशरीरंभवति जीवस्येतिशेषइतिवा कथं यथायोनि पश्वादियोनिमनतिलंघ्य । यथाबीजंकर्मराशिमनतिक्रम्य सत्वादिनिमित्तस्वभावेन ५४ एवंसंसारप्रसंगमुक्त्वानिवृत्त्युपायमाहुरित्याह एषइति यएषःपुरुषस्याविपर्ययःसंसारः प्रकृतिसंगेनासीत् सएषईश्वरसंगादीश्वरसेवालक्षणाच्चिरात्क्षिप्रंविलीयतेसमूलंविच्छिद्यते ५५ विद्वत्तादिगुणसंपन्नत्वेनबुद्धिपूर्वकमेवपापकारित्वेनप्रायश्चित्तानधिकारित्वेन नाममात्रोच्चारणस्यप्रायश्चित्तत्वेसर्वेषामपिमुक्तिप्रसंगेनदंड्यजनाभावेनयुष्मत्स्वाम्याज्ञाकारिणोयमस्याज्ञालंघनदोषप्रसक्त्याऽधिकारहानिलक्षणानर्थःस्यादित्यतोयम

नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृत् ॥ कार्यतेह्यवशःकर्मसर्वःप्रकृतिजैर्गुणैः ५३ लब्ध्वानिमित्तमव्यक्तंव्यक्ताव्यक्तंभवत्युत ॥ यथायोनियथाबीजंस्वभावेनबलीयसा ५४ एषप्रकृतिसंगेनपुरुषस्यविपर्ययः ॥ आसीत्सएवनचिरादीशसंगाद्विलीयते ५५ अयंचश्रुतसंपन्नःशीलवृत्तगुणालयः ॥ धृतव्रतोमृदुर्दांतःसत्यवान्मंत्रविच्छुचिः ५६ गुर्वग्न्यतिथिवृद्धानांशुश्रूषुर्निरहंकृतिः ॥ सर्वभूतसुहृत्साधुर्मितवागनसूयकः ५७ एकदाऽसौवनंयातःपितृसंदेशकृद्द्विजः ॥ आदायततआवृत्तःफलपुष्पसमित्कुशान् ५८ ददर्शकामिनंकंचिच्छूद्रंसहभुजिष्यया ॥ पीत्वाचमधुमैरेयंमदाघूर्णितनेत्रया ५९ मत्तयाविश्लथन्नीव्याव्यपेतंनिरपत्रपम् ॥ क्रीडंतमनुगायंतंहसंतमनयांतिके ६० दृष्ट्वातांकामलिप्तेनबाहुनापरिरंभिताम् ॥ जगाममहृच्छयवशंसहसैवविमोहितः ६१ स्तंभयन्नात्मनात्मानंयावत्सत्वंयथाश्रुतम् ॥ नशशाकसमाधातुंमनोमदनवेपितम् ६२ तन्निमित्तस्मरव्याजग्रहग्रस्तोविचेतनः ॥ तामेवमनसाध्यायन्स्वधर्माद्विरराम ह ६३ तामेवतोषयामासपैत्र्येणार्थेनयावता ॥ ग्राम्यैर्मनोरमैःकामैःप्रसीदेतयथातथा ६४ विप्रांस्वभार्यामप्रौढांकुलेमहतिलंभिताम्[1] ॥ विससर्जाचिरात्पापःस्वैरिण्यापांगविद्धधीः ६५ इतस्ततश्चोपनिन्येन्यायतोऽन्यायतोधनम् ॥ बभारास्याःकुटुंबिन्याःकुटुंबमंदधीरयम् ६६ यदसौशास्त्रमुल्लंघ्यस्वैरचार्यार्थगर्हितः ॥ आवर्ततचिरंकालमघायुरशुचिर्मलात् ६७ ततएनंदंडपाणेःसकाशंकृतकिल्बिषम् ॥ नेष्यामोऽकृतनिर्वेशंयत्रदंडेनशुद्ध्यति ६८ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेप्रथमोध्यायः ॥ १ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

सकाशंगत्वाऽयंतत्रदंडेन शुद्धोभवत्वित्याहुरित्याह अयंचेति मंत्रविद्वेदज्ञः ५६ ५७ आवृत्तोनिवृत्तः ५८ भुजिष्ययादास्या मैरेयाख्यंमधुविशेषणं ५९ विश्लथंतीनीवीवस्त्रग्रथिर्यस्याःसातया ६० स्वेदकंपादिलक्षणजनकेनकामेनलिप्तेनवशीकृतेन हृच्छयः कामःतस्यवशं ६१ यावत्सत्वंयथाशक्ति यथाश्रुतं शूद्रचांयोनौपतेद्रेतइत्यादिशास्त्रश्रवणमनुसृत्यमदनवेपितंकामबीजावपनस्यक्षेत्रीभूतंवा ६२ स्मरइतिव्याजग्रहेणग्रस्तः विचेतनः शास्त्रविरुद्धज्ञानः ६३ ग्राम्यैःकामभोगसाधनैः काम्यंतइतिकामाः विषयास्तैः ६४ अप्रौढामनवाप्तयौवना ६५ ६६ स्वैरचारीनिरंकुशत्वेनवर्तमानः अघायुःपापजीवनः मलाद्रागादिदोषात् ६७ अकृतनिर्वेशंयावतानिर्वेशेनपापशुद्धिःस्यात्तावत्पापप्रायश्चित्तंनकृतवांस्तं यत्रनीतोयमभटकृतदंडेनशुद्धोभवति ६८ ॥ इतिश्रीभागवतेमहापुराणेविजयध्वजकृतटीकायांषष्ठस्कंधेप्रथमोध्यायः ॥ १ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

[1] अनाप्तयौवनाऽप्रौढाविप्राचाव्यभिचारिणीतिप्रमाणं ।

श्रीहरिनामसंकीर्तनमाहात्म्यमस्मिन्नध्यायेवक्ति तदर्थंश्रीविष्णुदूतायमदूतान्प्रत्युपोद्घातंरचयंतीत्याह बादरायणिरिति नयकोविदा·प्रायश्चित्तशास्त्रोक्तन्यायसूक्ष्मपंडिताः १ २ ३ यद्वाक्यंप्रमाणत्वेनकरोति तद्वाक्यमनुसृत्यवर्तते लोकोजनः ४ स्वयंपरबोधमंतरेण पशुःपूर्वापरादिदिगनभिज्ञः ५ सःप्रमाणभूतःपुरुषः आत्मन्यर्पितआत्मासर्वस्वलक्षणोयेनसतथातं अचेतनमज्ञानिनं विस्रंभणीयोविश्वसनीयः घृणद्रवीभावइतिधातोः परक्लेशदर्शनेयस्यचित्तंद्रवीभवतिसघृणः ६ अकृतनिर्वेशमित्यत्राहुरित्याह अयमिति यमदूतान्दृष्ट्वापुत्रेसाकेतितमपिनारायणनामस्मृत्वास्यनाम्नोहरिरेवमुख्यार्थइतिप्राचीनपुण्यनिचयाज्झटितिज्ञानोदयादुत्पन्नभक्त्याविवशइतीममर्थंहिशब्दोवक्ति ७ विश्वासजननार्थंपुनरुक्तार्थंद्रढयति एतेनेति ८ नकेवलंदासीसंगप्राप्तपापहरंहरिनामकीर्तनं स्तैन्यादिप्राप्तसर्वपापक्षयकरमित्याहुरित्याह स्तेनइति ९ यतस्तद्विषयेत्यनेनभक्तिपूर्वकत्वमाह १० ब्रह्मादिभिर्वेदवादिभिः तन्नाम्नउदाहरणं उत्तमश्लोकस्यहरेःगुणानानंदादीनुप

श्रीबादरायणिरुवाच ॥ एतत्तेभगवद्दूतायमदूताभिभाषितम् ॥ उपधार्याथतान्राजन्प्रत्याहुर्नयकोविदाः १ ॥ विष्णुदूताऊचुः ॥ अहोकष्टंधर्मदृशामधर्मःस्पृशतेसताम् ॥ यत्रादंड्येष्वपापेषुदंडोयैर्ध्रियतेवृथा २ प्रजानांपितरोयेचशास्तारःसाधवःसमाः ॥ यदिस्यात्तेषुवैषम्यंकंयांतिशरणंप्रजाः ३ यद्यदाचरतिश्रेयानितरस्तत्तदीहते ॥ सयत्प्रमाणंकुरुतेलोकस्तदनुवर्तते ४ यस्यांकेशिरआधायलोकःस्वपितिनिर्वृतः ॥ स्वयंधर्ममधर्मंवानहिवेदयथापशुः ५ सकथंन्यर्पितात्मानंकृतमैत्रमचेतनम् ॥ विस्रंभणीयोभूतानांसघृणोद्रोग्धुमर्हति ६ अयंहिकृतनिर्वेशोजन्मकोट्यंहसामपि ॥ यद्व्याजहारविवशोनामस्वस्त्ययनंहरेः ७ एतेनैवह्यघोनोऽस्यकृतंस्यादघनिष्कृतम् ॥ यदानारायणायेतिजगादचतुरक्षरम् ८ स्तेनःसुरापोमित्रध्रुग्ब्रह्महागुरुतल्पगः ॥ स्त्रीराजपितृगोहंतायेचपातकिनोऽपरे ९ सर्वेषामप्यघवतामिदमेवसुनिष्कृतम् ॥ नामव्याहरणंविष्णोर्यतस्तद्विषयामतिः १० ननिष्कृतैरुदितैर्ब्रह्मवादिभिस्तथाविशुद्ध्यत्यघवान्व्रतादिभिः ॥ यथाहरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलंभकम् ११ नैकांतिकंतद्धिकृतेपिनिष्कृतेमनःपुनर्धावतिचेदसत्पथे ॥ तत्कर्मनिर्हारमभीप्सतांहरेर्गुणानुवादःखलुसत्त्वभावनः १२ अथैनंमापनयतकृताशेषाघनिष्कृतम् ॥ यदसौभगवन्नामम्रियमाणःसमग्रहीत् १३ सांकेत्यंपारिहास्यंवास्तोभंहेलनमेववा ॥ वैकुंठनामग्रहणमशेषाघहरंविदुः १४

लंभयतितत्प्रतिबिंबभूतान्प्रापयतीतितदुत्तमश्लोकगुणोपलंभकम् ११ हरेर्नामसंकीर्तनेनैवपापनिर्मूलनंनतपआदिभिरित्येतदुपपादयति नेति निष्कृतेपापप्रायश्चित्तेकृतेपि अघवतःमनःपुनरसत्पथेशास्त्रनिषिद्धमार्गेधावतिचेत्तत्प्रायश्चित्तमैकांतिकंनियतंअव्यभिचारिनभवतीतियस्मात्तस्मात्कर्मनिर्हारमाकांक्षमाणानांहरेर्गुणानामनुवादएकांतिकएवेत्यन्वयः नन्वनेनापिमनोदोषानाशेपूर्ववद्गादविशेषःस्यादितितत्राह खल्विति सत्त्वभावनोंतःकरणशुद्धिहेतुःखलु १२ अथतस्मात् १३ नन्वनेननहरेर्नामग्राहि किंतु पुत्रनामैवेतितत्राह सांकेत्यमिति पुत्रादिसंकेतादिविषयत्वेन नारायणेत्यादिभगवन्नामसंकीर्तनमशेषाघहरं तदुक्तमाचार्यैः नारायणोपीमित्यन्यहेलनविषयत्वेनोक्तमघहरमिति भक्तिपूर्वकमेवोदाहृतंहरिनामाशेषाघहरमितितात्पर्यमत्रबोद्धव्यमेतदप्युक्तं सर्वथाप्यघहरंविष्णोर्नाम ... वैकं अभक्त्योदाहृतंनैवफलदातृभविष्यति नामस्वामितयायस्यस्मरणंजायतेयतः भक्तस्यातोनामकीर्तिःसंकेतादावपीरिता अजामिलोपिस्मरणाद्भक्त्याप्रमृत्योरमुच्यतेतिस्मरणप्राचुर्यप्रदर्शनायसांकेत्यादिस्थलबाहुल्यकथनं संकेतकादिमात्रेणव्यवहारनिर्वाहात्स्मरणासंभवेनपरिहासेतस्मात्स्मरणसंभवाति चित्तविकासोद्रेकव्यवहारात् ततोपिस्तोभेस्मरणं कोपजननायनर्मवचनंस्तोभः मधुमांस

कासूदनासमर्थस्त्वांकिमर्थंसूदितवान् असौहरिश्चेन्मधोर्वधान्मधुसूदनइत्युपपन्नमिति ततोपिहेलनेनामस्वामिस्मरणंहरेरन्यंनारायणादिनाम्नापित्रादिभिर्दत्तेनोपचारितंकंचनपुरुषंदृष्ट्वानिंदये त्साक्षात्पयोधिशयोनारायणःकिलेति हरिद्वेषेणहरिनामकीर्तनमघहरंनस्यात् अभक्त्योदाहृतनैवफलदातृभविष्यतीत्यादेश्च नामस्वामिस्मरणाभावेदेवदत्ते नामपीडितार्थभवति मधोः सूदनान्म धुसूदनइत्यर्थस्याभावात् हरौतद्भावात् अतोऽजामिलेनभक्त्यानामस्वामिनैस्मृत्वानामकीर्तनंकृतमितिज्ञातव्यं तदुक्तंच नामस्वामितयातस्यस्मरणंजायतेयतइत्यादि यानियानिश्रीहरेर्नामानितानि सर्वाणिपापहरणसामर्थ्योपेतानिभवंतीतिज्ञापनायवैकुंठनामेतिअत्रैव हरिरित्यवशेनाह यःपुमानितिवक्ष्यति स्मरणंचज्ञानपूर्वकमपेक्षितमित्यतोविदुरिति १४ संदष्टःसर्पादिनाआहतोलकुटेनयातनादुः खं १५ ननु नामसंकीर्तनेनपापपरिहारोगुरुलघुपापपरिहारार्थंगुरुलघुप्रायश्चित्तविधानंव्यर्थमित्याशंक्यप्रायश्चित्तेनतत्तत्पापपरिहारोपिसंसारहेतुभूतंपापसंस्कारव्यंजकंप्राकृतंलिंगमनोभगवदनुग्रहेण लीयते नान्येनेत्याह गुरूणामिति १६ हृदयंलिंगंमनः १७ अजामिलस्यापिसकृन्नामकीर्तनेनवृषलीसंगावाप्तपापहारेणदेहवियोगलक्षणमृत्योर्मुक्तिः नतुसंसारात्तदर्थंतन्नामोच्चारणादिसेवाहरहः कर्तव्येतिविधीयते धर्मइति धर्मोनामसंकीर्तनलक्षणः आत्मनःशुद्धिःअचिन्मनोनाशेनचिन्मनसःकैवल्यलक्षणाशुद्धिर्भवति वाससोनिर्णेजनेनेतिशेषः १८ नन्वीश्वरसेवयायथामनःशुद्धिस्तथानिरं

पतितस्स्खलितोभग्नःसंदष्टस्तप्तआहतः ॥ हरिरित्यवशेनाहपुमान्नार्हतियातनाम् १५ गुरूणांचलघूनांचगुरूणिचलघूनिच ॥ प्रायश्चित्तानिपापानां ज्ञात्वोक्तानिमहर्षिभिः १६ तैस्तान्यघानिपूयंतेतपोदानव्रतादिभिः ॥ नाधर्मजंतद्धृदयंतदपीशांघ्रिसेवया १७ धर्मोयोयमुपन्यस्तःपरमस्तुसनातनः ॥ क्रियतेऽहरहःशुद्धिरात्मनोवाससोयथा १८ नैकांतशुद्धिःस्यात्कर्तुःक्रिययाऽकर्तृतायतः ॥ अकर्तुरात्मनस्तस्माद्भजेतानीहयाहरिम् १९ अज्ञानादथवा ज्ञानादुत्तमश्लोकनामयत् ॥ संकीर्तितमघंपुंसोदहत्येधोयथानलः २० यथाऽगदंवीर्यवत्तमंसूपयुक्तंयदृच्छया ॥ अजानतोप्यात्मगुणंकुर्यान्मंत्रोप्युदाहृतः २१ पतिवःपृच्छतभद्राधर्मेऽस्मिन्यदिसंशयः ॥ सवेदपरमंगुह्यंधर्मस्यभगवान्यमः २२

तरप्रायश्चित्तक्रिययापिसार्किनस्यादितितत्राह नैकांतशुद्धिरिति अकर्तुःस्वकर्तृतारहितस्यात्मनःजीवस्यप्रायश्चित्तकर्मकर्तुः प्रायश्चित्तक्रियया एकांतशुद्धिर्मनःशुद्धिपूर्विकाशुद्धिर्नस्यात् अकर्तृता स्वतंत्रकर्तृत्वंनास्तीतियतः तस्मादनीहयानिषिद्धकर्माकरणेननिरंतरहरिनामकीर्तनलक्षणक्रिययाहरिंभजेतेत्यन्वयः १९ नामसंकीर्तनस्यकर्तव्यतामर्थवादरूपेणोपसंहरति अज्ञानादिति अ ज्ञानादित्यनेनसर्वात्मनाज्ञानाभावोपिनविवक्ष्यते किंतु अरविरुद्धत्वान्नाराःगुणाःतेषामाश्रयोनारायणःइत्याद्यर्थविषयवेदनाभावः अन्यथाहरेःसर्वशब्दवाच्यत्वेनघटपटादीनांतन्नामत्वोपितान्वि हायनारायणादिनामकीर्तनानुपपत्तेः अतउपचारमात्रमिदमितिज्ञातव्यं २० सर्वशब्दानांभगवन्नामत्वेपितदावृत्त्यापिफलानुदयात् नारायणादिनाम्नातदुदयोपलंभादुभयेषाविशेषःकस्मादित्या शंक्य मंत्रोऽगदवदित्याहुरित्याह यथेति अजानतइत्यत्रापिउपदेशादिनासामान्यज्ञानमस्त्येव सूपयुक्तमित्यस्योपदेशापेक्षितत्वाद्यथेतरस्तंबमूलशब्दमात्रेभ्यःमंत्रौषधयोः वैशिष्ट्यफलत्वचेश्वरकृतदेव तासन्निधानात्तथात्रापीतिभावः २१ भवद्भिरस्मदुक्तार्थोविस्रंभणीयः युष्मत्पृष्टस्वाम्युक्तार्थस्यैकत्वोपपत्तेरित्याशयेनाहुरित्याह पतिवइति २२

१ तच्छब्दावृत्त्या।

मृत्योर्देहवियोगलक्षणात् २३ विष्णुदूतैःसदुत्तरीकृताः याम्या पुनःकिमकुर्वन्नितितत्राह इतीति २४ अजामिलेनमुक्तमृत्युनापुनःकिमकारीतितत्राह द्विजइति प्रकृतिंगतःसात्विकावस्थांप्राप्तः २५ मर्त्यदेहस्थेनतेनाद्विजेनसल्लापायोगाद्विष्णुदूतैः किंकृतमत्राह तंविवक्षुमिति २६ प्रकृतिंगतइत्युक्तंविवृणोति अथेति त्रैविद्यंत्रिवेदविहितंधर्मं एतदेवस्पष्टयति गुणाश्रयमिति २७ स्वर्गादिविषय श्रुत्वापथिकवदुदासीनोभूत्किमत्राह भक्तिमानिति अभूदितिशेषः कृतदोषप्रायश्चित्ताभावेहरौभक्तिःसुदृढानस्यादित्यतस्तत्प्रायश्चित्तक्रियाप्रकारमाह अनुतापइति २८ ब्रह्मब्राह्मण्यं विप्लावितंवि नाशितं जायतारेतोरूपेणजायमानेन २९ कुलकज्जलंब्राह्मणकुलमषीभूतम् ३० ३१ ३२ ३३ भुवोधःनरकम् ३४ यत्किंचित्पुण्यमस्तिचेद्विष्णुदूतसंदर्शनसाधनंतत्स्यादितिप्रार्थयते अथापीति ये

श्रीशुकउवाच ॥ एवंतेसुविनिर्णीयधर्मंभागवतंनृप ॥ तंयाम्यपाशान्निर्मुच्यविप्रंमृत्योरमूमुचन् २३ इतिप्रत्युदितायाम्यादूतायातायमांतिकम् ॥ यमराज्ञेयथासर्वमाचचख्युररिंदम २४ द्विजःपाशाद्विनिर्मुक्तोगतभीःप्रकृतिंगतः ॥ ववंदेशिरसाविष्णोःकिंकरान्दर्शनोत्सुकः २५ तंविवक्षुमभिप्रेत्यमहापुरुषकिंकराः ॥ सहसापश्यतस्तस्यतत्रांतर्दधिरेऽनघ २६ अथाजामिलआकर्ण्यदूतानांयमकृष्णयोः ॥ धर्मंभागवतंशुद्धंत्रैविद्यंचगुणाश्रयम् २७ भक्तिमान्भगवत्याशुमाहात्म्यश्रवणाद्धरेः ॥ अनुतापोमहानासीत्स्मरतोऽशुभमात्मनः २८ अहोमेपरमंकष्टमभूदविजितात्मनः ॥ येनविप्लावितंब्रह्मवृषल्यांजायतात्मना २९ धिङ्मांविगर्हितंसद्भिर्दुष्कृतंकुलकज्जलम् ॥ हित्वाबालांसतींयोहंसुरापामसतीमगाम् ३० वृद्धावनाथौपितरौनान्यबंधूतपस्विनौ ॥ अहोमयाऽधुनात्यक्तावकृतज्ञेननीचवत् ३१ सोऽहंव्यक्तंपतिष्यामिनरकेभृशदारुणे ॥ धर्मघ्नाःकामिनोयत्रविंदंतियमयातनाः ३२ किमिदंस्वप्नआहोस्वित्साक्षाद्दृष्टमिहाद्भुतम् ॥ क्वयाताअद्यतेयेमांव्यकर्षन्पाशपाणयः ३३ अथतेक्वगताःसिद्धाश्चत्वारश्चारुदर्शनाः ॥ व्यमोचयन्नीयमानंबध्वापाशैरधोभुवः ३४ अथापिमेदुर्भगस्यविबुधोत्तमदर्शने ॥ भवितव्यंमंगलेनयेनात्मामेप्रसीदति ३५ अन्यथाम्रियमाणस्यनाशुचेर्वृषलीपतेः ॥ वैकुंठनामग्रहणंजिह्वावक्तुमिहार्हति ३६ क्वचाहंकितवःपापोब्रह्मघ्नोनिरपत्रपः ॥ क्वचनारायणेत्येतद्भगवन्नाममंगलम् ३७ सोहंतथायतिष्यामियतचित्तेंद्रियानिलः ॥ यथानभूयआत्मानमंधेतमसिमज्जये ३८ विमुच्यतमिमंबंधमविद्याकामकर्मजम् ॥ सर्वभूतसुहृच्छांतोमैत्रःकरुणआत्मवान् ३९ मोचयेग्रस्तमात्मानंयोषिन्मय्यात्ममायया ॥ विक्रीडितोयथैवाहंक्रीडामृगइवाधमः ४० ममाहमितिदेहादौहित्वामिथ्यार्थधीर्मतिम् ॥ धास्येमनोभगवतिशुद्धंतत्कीर्तनादिभिः ४१ इतिजातसुनिर्वेदःक्षणसंगेनसाधुषु ॥ गंगाद्वारमुपेयायमुक्तसर्वानुबंधनः ४२ सतस्मिन्देवसदनआसीनोयोगमास्थितः ॥ प्रत्याहृतेंद्रियग्रामोयुयोजमनआत्मनि ४३ ततोगुणेभ्यआत्मानंवियुज्यात्मसमाधिना ॥ युयोजभगवद्धाम्निब्रह्मण्यनुभवात्मनि ४४ यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत्पुरुषान्पुरः ॥ उपलभ्योपलब्धान्प्राग्ववंदेशिरसाद्विजः ४५

नपुण्येनात्मायनः ३५ अन्यथापूर्वचीर्णपुण्याभावे ३६ ब्रह्मोज्झःत्यक्तब्राह्मण्यः३७ ३८ ३९ आत्ममाययाहरेराधीनयालोकमोहनशक्तया यथा यथावत् ४० ४१ गंगाद्वारंनामतीर्थविशेषं ४२ प्रत्याहृतोवशीकृतइंद्रियग्रामोयेनसतथा तस्योपास्तिप्रकारंवक्ति युयोजेति आत्मनिहरौ ४३ गुणेभ्यःशरीरेंद्रियादिभ्यःआत्मानंस्वस्वरूपं भगवद्धाम्निभगवत्स्वरूपेब्रह्मणिव्यापे अनुभवात्मनिज्ञानात्मनि ४४ यर्हियस्मिन्काले उपारतधीःबाह्यविषयान्निवृत्त्यहरावेवनिरतबुद्धिरभूत्तर्हिमन्काले पुरःस्वस्याग्रभूमौप्रागुपलब्धान्दृष्टान् ४५

भगवत्पार्श्ववर्तिनांमुक्तानां स्वरूपंनिर्दोषत्वादिलक्षण ४६ ४७ नामसंकीर्तने श्रद्धातिशयंजनयन्उपसंहरति एवमिति दास्याःपतिरित्याक्रोशेषष्ठी अजामिलनाममुक्त्वादास्याःपतिरित्याह्वय तिलोकइत्यर्थः ४८ अन्यथातीर्थपदानुकीर्तनंविना ४९ ५० अमंगलोयद्यपि तथापि ५१ दासीसंगादवाप्तपापमुक्तिकरी अंतेनारायणस्मृतिरितिजानन्नजामिलोपिमुक्तकर्मतपोपळंनयानित्याभ्यासे नमरणसमयेपिनामस्मरणार्थंपुत्रोपचारितंकृत्वाश्रद्धयापुत्राह्वानव्याजेनकीर्तयन्मुक्तिमगात् नतु पुत्रस्नेहेन । भगवतिश्रद्धयाभक्तियोगोभवति तन्नामग्रहणादिभिरित्युत्तरत्रवक्ष्यमाणत्वात् पुत्रादि सांकेतिकंनामउक्त्वामुक्तकर्मत्वेनश्रीहरिनामकीर्तयन्किमुतश्रद्धयेत्युच्यते अस्यफलाधिक्यंचदर्शयितुंपृथगेवोक्तिरितिज्ञातव्य ५२ इतिश्रीभागवतेमहापुराणेविजयध्वजकृतटीकायांषष्ठस्कंधेद्वितीयो ऽध्यायः ॥ २ ॥ भक्तिपूर्वकंनामसंकीर्तनंमुक्तिसाधनमित्येतास्मिन्नध्यायेभिधीयते। तत्रराजापृच्छति निशम्येति हताआज्ञायस्यसहताज्ञः। मुरारेर्नैदेशिकैःआज्ञाकारिभिःकिंकरैरित्यर्थः विहतान्प्रतिहता

हित्वाकलेवरंतीर्थेगंगायांदर्शनादनु ॥ सद्यःस्वरूपंजगृहेभगवत्पार्श्ववर्तिनाम् ४६ साकंविहायसाविप्रोमहापुरुषकिंकरैः ॥ हैमंविमानमारुह्ययर्योयत्र श्रियःपतिः ४७ एवंसविप्लावितसर्वधर्मोदास्याःपतिःपतितोगर्ह्यकर्मा ॥ निपात्यमानोनिरयेहतव्रतःसद्योविमुक्तोभगवन्नामगृह्णन् ४८ नातःपरंकर्म निबंधकृंतनंमुमुक्षतांतीर्थपदानुकीर्तनात् ॥ नयत्पुनःकर्मसुसज्जतेमनोरजस्तमोभ्यांकलिलंनचान्यथा ४९ यएवंपरमंगुह्यमितिहासमघापहम् । शृणु याच्छ्रद्धयायुक्तोयश्चभक्त्यानुकीर्तयेत् ५० नवैसनरकंगच्छेन्नेक्षितोयमकिंकरैः ॥ यद्यप्यमंगलोमर्त्योविष्णुलोकेमहीयते ५१ म्रियमाणोहरेर्नामगृह्णन्पुत्रो पचारितम् ॥ अजामिलोप्यगाद्धामकिमुतश्रद्धयागृणन् ५२ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेद्वितीयोध्यायः २ ॥ राजोवाच ॥ निशम्यदेवःस्वभटोपव र्णितंप्रत्याहकिंतानपियमराजः ॥ एवंहताज्ञोविहतान्मुरारेर्नैदेशिकैर्यस्यवशेजनोऽयम् १ यमस्यदेवस्यनदंडभंगःकुतश्चनर्षेश्रुतपूर्वआसीत् ॥ एवंमुनेवृश्च तिलोकसंशयंनहित्वदन्यइतिमेविनिश्चितम् २ श्रीबादरायणिरुवाच ॥ भगवत्पुरुषैराजन्याम्याःप्रतिहतोद्यमाः ॥ पतिंविज्ञापयामासुर्यमंसंयमनीपतिम् ३ यमदूताऊचुः ॥ कतिसंतीहशास्तारोजीवलोकस्यवैप्रभो ॥ त्रैविध्यंकुर्वतःकर्मफलाभिव्यक्तिहेतवः ४ यदिस्युर्बहवोलोकेशास्तारोदंडधारिणः ॥ कस्यस्यातां नवाकस्यमृत्युश्चामृतमेवच ५ किंतुशास्तृबहुत्वेस्याद्बहूनामिहकर्मिणाम् ॥ शास्तृत्वमुपचारोहियथामंडलवर्तिनाम् ६

न् स्वामिनिर्देशकारणाशक्त्यापीडितानित्यर्थः अयंजनोयस्यवशेवर्तते १ दंडभंगःआज्ञाभंगःवृश्चतिछिनत्ति २ वाचंयमेप्रेतपतौयमनेचयमःस्मृतइत्यभिधानात् संशयनिराकरणायसंयमनीपति मिति ३ फलाभिव्यक्तिहेतवःफलदातारः कतिसंतीत्यस्यायमर्थः। किमेक शास्ताऽथवाबहवः। तत्रापीयंतइतिनियमोस्ति किंवानेति ४ द्वितीयपक्षमत्य.हुरित्य.ह यदिस्युरिति इयंतइतिसंख्यातावहवः मृत्यमृतयोःदानसमर्थाउतन । नद्वितीयइत्याहुरित्याह कस्येति मृत्युलक्षणोबंधःअमृतलक्षणोमोक्षश्चकस्यस्यातामितिवक्तव्यं नकस्यापिस्यातांदातृत्वेसामर्थ्याभावात् । प्रथमंपरिहरतीत्याह नवेति लोकस्यनस्यातां सर्वेषामपिस्यातां सामर्थ्यात् ५ नचैतद्युक्तमसंभवात्मिथोविरोधापातादित्याहुरित्याह किंत्विति मंडलवर्तिनांमंडलेश्वराणां ६

यतएवंबहुस्वेदोष 'अतएकःशास्ता सचैकस्त्वमेवेतिप्रथमपक्षोऽभिमतइत्याह अतइति शुभाशुभविवेचनःशुभाशुभविवेककर्ता ७ ८ ९ १० यमःस्वदूतान्प्रतिवक्तीत्याह इतीति ११ यदुक्तंभवाद्भि
स्त्वमेकएवशास्तेतितदनालोच्यकथितं मदन्यस्यात्युत्तमस्यसत्त्वादित्याह परइति मदन्योजगतोजंगमस्यतस्थुषःस्थावरस्यचशास्ताऽस्ति सकइत्यतउक्तं परइति परोरिपरमात्मनोरित्यभिधा
नात् सशास्तापरःपरमात्मातस्यलक्षणमाह ओतमिति अयमर्थः पटवत्यथाकंथापटःसूत्रेतंतौदीर्घतयाओतःतिरश्चीनतयाप्रोतःतंत्वाधारत्वेनस्थितः तथेदंविश्वंयत्रपरमात्मनिओतप्रोतधर्मेणतदाधार
त्वेनस्थितं यस्मिन्निदं संविच्चेतिसर्वं यथाकंथापटाःसूत्रओताःप्रोताश्चसंस्थिताः एवंविष्णाविदंविश्वमोतंप्रोतंचसंस्थितमित्यादिश्रुतिस्मृतिबलादेतल्लक्षणमव्याप्त्यतिव्याप्त्यादिदोषरहितं यद्यस्यधारको
नस्यात्तर्हिंपतिष्यति वेगाख्यसंस्काररहितशरवदित्यादितर्काच्च लक्षणांतरंचाह यदंशतइति यस्यांशतोवासुदेवादिस्वरूपांशैर्भिन्नांशैर्ब्रह्मादिभिरस्यजगतः स्थितिजन्मसंहाराः भवंतीतिशेषः यतोवाइमा

अतस्त्वमेकोभूतानांसेश्वराणामधीश्वरः। शास्तादंडधरोनृणांशुभाशुभविवेचनः ७ तस्यतेविहतोदंडोनृलोकेवर्ततेऽधुना ॥ चतुर्भिरद्भुतैःसिद्धैराज्ञातेवि
प्रलंभिता ८ नीयमानंतवादेशादस्माभिर्यातनागृहम् ॥ व्यमोचयन्पातकिनंछित्वापाशान्प्रसह्यते ९ तांस्तेवेदितुमिच्छामोयदिनोमन्यसे
क्षमम् ॥ नारायणेत्यभिहितेमाभैरित्यायुर्द्रुतम् १० श्रीशुकउवाच ॥ इतिदेवःसआपृष्टःप्रजासंयमनोयमः ॥ प्रीतःस्वदूतान्प्रत्याहस्मरन्पादां
बुजंहरेः ११ यमउवाच ॥ परोमदन्योजगतस्तस्थुषश्चओतंप्रोतंपटवद्यत्रविश्वम् ॥ यदंशतोऽस्यस्थितिजन्मनाशानस्योतवद्यस्यवशेचलोकः १२
योनामभिर्वाचिजनंनिजायांबध्नातितंत्यामिवदामभिर्गाः ॥ यस्मैबलिंतइमेनामकर्मभिर्निबंधबद्धाश्चकितावहंति १३ अहंमहेंद्रोनिर्ऋतिःप्रचेताःसोमो
ग्निरीशःपवनोविरिंचिः ॥ आदित्यविश्वेवसवोऽथसाध्यामरुद्गणारुद्रगणाःससिद्धाः १४ अन्येचयेविश्वसृजोऽमरेशाभृग्वादयोऽस्पृष्टरजस्तमस्काः ॥
यस्येहितंनविदुःस्पृष्टमायाःसत्वप्रधानाअपिकिंततोऽन्ये १५

निभूतानिजायंतइत्यादिश्रुतेः यदायदाहिधर्मस्यग्लानिर्भवतिभारत अभ्युत्थानमधर्मस्यतदात्मानंसृजाम्यहंइत्यादेर्व्यासरूपेणापिधारकत्वंतस्यैवेतिनिश्चयायचशब्देनपुनर्ग्रहणं जन्मनाशावेवलक्षणात
रेइतिजालपक्षपक्षिवत्पुनरस्याधीनंनस्यादितिनेत्याह नसीति नासिनासिकायांओतागावइतिच १२ हरेःशास्तृत्वंनामदंडधरस्यदंडेनवनाकिंतुवेदलक्षणयावाचेत्याह यइति यईशः निजायांस्वरमादाभि
व्यक्तायां वाचिवेदलक्षणायां नामभिर्ब्रह्मादिलक्षणैर्बध्नाति निजमात्मीयानित्ययोरित्यभिधानं बंधनेनकिंप्रयोजनमत्राह यस्माइति नामकर्मणामानंत्यप्रकटनायबहुवचनं अन्यथा नामकर्मभ्याभित्य
लं इदंबंधोनिर्बंधस्तेनबद्धाः १३ लोकतःसर्वज्ञानामस्माकंस्वविषयज्ञानजनकत्वमाहात्म्यंचश्रीहरिलक्षणमित्याह अहमित्यादिना १४ नस्पृष्टारजस्तमोभ्यामस्पृष्टरजस्तमस्काः शुद्धसात्वि
काइत्यर्थः ततोभृग्वादिभ्योन्येमन्वादयः सत्वप्रधानाइत्यनेनसत्वंप्रचुरंअन्येरजस्तमसीच किंचित्स्तइतिज्ञायते कुतइत्यतउक्तं स्पृष्टेति ईहितमिच्छाविषयमभिप्रायम् १५

१ कंथानिर्माणायछिन्नाःपटाः यथात्रिगुणीकृतसूत्रेओताः प्रोताश्चतथाब्रह्माणीविश्वओतंनांतं। तथाचमूलेपटशब्देनकथापटस्यसूत्रशब्देनत्रिगुणकृतसूत्रत्याविवक्षितत्वेनभेदाभेदशंकानास्ति। २ व्यासरूपमन्तरे
णरूपान्तरेणापि इ० पा०

तत्प्रमादमंतरेणाहष्टलक्ष्यवेधवच्चक्षुरादींद्रियाविषयत्वेनतद्विषयंज्ञानंदुष्करमित्याह यंवाइति गोभिश्चक्षुरादींद्रियैः असुभृतोजीवाः आत्मनांजीवानामात्मानमंतर्यामिणं स्वरूपांतरंचाह अंतर्हृदिसंतं अथवात्मनामंतर्हृदिसंतं आकृतयोरूपाणिस्वप्रकाशंचक्षुरिंद्रियं अनेननिकटवर्तिनांचक्षुरादींद्रियाभिमानिनांदेवानामपितद्विषयज्ञानाभावउक्तइतिज्ञातव्यं स्वरूपत्वेननाकृतयःपश्यंतीतिचेत्तत्राह ततइति ततःआकृतिभ्यःपरंविलक्षणंभिन्नमित्यर्थः इदमपिहरिलक्षणं सपरइतिपूर्वेणान्वयः १६ तांस्तुवेदितुमिच्छामइत्यस्योत्तरमाह तस्येति मायाधिपतेःलक्ष्मीपतेः आत्मतंत्रस्वलक्ष्मीपातित्वेपि वोक्तलक्षणसाधकेइतिज्ञातव्यं प्रायेणेति कथितार्थनिर्धारणाय तस्यहरेःरूपंश्यामवर्णं गुणाःविप्रमियत्वादयः स्वभावोनित्यनिर्दोषत्वंयेषांतेतथा १७ तेषांकिंकृत्यमिहेतितत्राह भूतानीति विष्णोर्भूतानि पार्षदाःदुर्दर्शलिंगानिदर्शनायोग्यलक्षणानि तद्भक्तिमतःविष्णुभक्तिमतः १८ विष्णुदूताश्चेत्तर्हिपातकिनंकिमित्युदमूमुचन्नितितत्राह धर्मंत्विति तुशब्दात्सूक्ष्मज्ञानयुष्माकंनास्तीत्याह १९ तर्हिके

यंवैनगोभिर्मनसासुभिर्वाहृदागिरावासुभृतोविचक्षते ॥ आत्मानमंतर्हृदिसंतमात्मनांचक्षुर्यथैवाकृतयस्ततःपरम् १६ तस्यात्मतंत्रस्यहरेरधीशितुःपरस्य मायाधिपतेर्महात्मनः ॥ प्रायेणदूताइहवैमनोहराश्चरंतितद्रूपगुणस्वभावाः १७ भूतानिविष्णोःसुरपूजितानिदुर्दर्शलिंगानिमहाद्भुतानि ॥ रक्षंतितद्भक्तिमतःपरेभ्योमत्तश्चमर्त्यानथसर्वतश्च १८ धर्मंतुसाक्षाद्भगवत्प्रणीतंनवैविदुरृषयोनापिदेवाः ॥ नसिद्धमुख्याअसुरामनुष्याःकुतोनुविद्याधरचारणादयः १९ स्वयंभूर्नारदःशंभुःकुमारःकपिलोमनुः ॥ प्रह्लादोजनकोभीष्मोबलिर्वैयासकिर्वयम् २० द्वादशैतेविजानीमोधर्मंभागवतंभटाः ॥ गुह्यंविशुद्धंदुर्बोधंयंज्ञात्वाऽमृतमश्नुते २१ एतावानेवलोकेस्मिन्पुंसांधर्मःपरःस्मृतः ॥ भक्तियोगोभगवतितन्नामग्रहणादिभिः २२ नामोच्चारणमाहात्म्यंहरेःपश्यतपुत्रकाः ॥ अजामिलोऽपियेनैवमृत्युपाशादमुच्यत २३ एतावतालमघनिर्हरणायपुंसांसंकीर्तनंभगवतोगुणकर्मनाम्नाम् ॥ विक्रुश्यपुत्रमघवान्यदजामिलोऽपिनारायणेतिम्रियमाणइयायमुक्तिम् २४ प्रायेणवेदतदिदंनमहाजनोऽयंदेव्याविमोहितमतिर्बतमाययाऽलम् ॥ त्रय्यांजडीकृतमतिर्मधुपुष्पितायांवैतानिकेमहतिकर्मणियुज्यमानः २५ एवंविमृश्यसुधियोभगवत्यनंतेसर्वात्मनाविदधतेखलुभावयोगम् ॥ तेमेनदंडमर्हंत्यथयद्यमीषांस्यात्पातकंतदपिहंत्युरुगायवादः २६ तेदेवसिद्धपरिगीतपवित्रगाथायेसाधवःसमदृशोभगवत्प्रपन्नाः ॥ तान्नोपसीदतहरेर्गदयाऽभिगुप्तान्नैषांवयंनचवयःप्रभवामदंडे २७ तानानयध्वमसतोविमुखान्मुकुंदपादारविंदमकरंदरसादजस्रम् ॥ निष्किंचनैःपरमहंसकुलैरसंगैर्जुष्टाद्गृहेनिरयवर्त्मनिबद्धतृष्णान् २८

विदुरितितत्राह स्वयंभूरिति २० २१ किंच धर्मस्वरूपंनिवेदयतुभवानित्याशंक्य उत्तमंधर्मंवदामीत्यभिप्रायेणाह एतावानिति तस्यहरेर्नामग्रहणादिभिर्भगवतियोभक्तियोगःएतावानुत्तमःपरोधर्मःस्मृतइत्यन्वयः एषमेसर्वधर्माणांधर्मोधिकतमोमतइतिस्मृत्युक्तः २२ २३ नारायणेत्यादिगुणनाम्नांमधुसूदनेत्यादिकर्मनाम्नां गुणानांकर्मणांनाम्नांवायत्संकीर्तनंएतावतापापनिर्हरणायालंसाधनांतरंनापेक्षितमित्यन्वयः विक्रुश्यआहूय २४ देव्याबहुविधविलासोपेतया मधुपुष्पितायांस्वर्गादिपुष्पप्रकाशिकायांवैतानिकेवेदविहिते यज्ञसंबंधिनियुज्यमानःप्रेर्यमाणः २५ भावयोगभक्तियोग उरुगायवादः भगवन्नामकीर्तनम् २६ गाथाःसंकीर्तनानि वेदादिभिर्निरयगीतसंकीर्तनाः गदयाकौमोदक्या २७ असतःलोकानिंदितकर्मनिरतान् निरयवर्त्मनिनरकद्वारे गृहेभार्यादौ २८

अकृतविष्णुकृत्यान्‌अननुष्ठितविष्णुपादार्चनादिकर्मणः २९ कृष्णांघ्रिपद्ममधुलिट्‌कृष्णपादारविंदमकरंदंसंसेवमानःपुमान् स्वकर्मनिर्मितेषुमायागुणेषुविषयेषुनरमते पुरुशर्थंबुद्धिंनकरोति यतः कर्मणःपुनःरजःरागःस्यात्ताहृशंकर्म तुशब्देनकर्दमजलेनकर्दमप्रक्षालनमिवेतिदर्शयति ३० यत्स्वपुरुषैरसत्कृतंनोऽस्माकंतत्क्षम्यतामित्यन्वयः नविदुषांहरेर्माहात्म्यमजानता ननु क्षांत्यर्थंकोदंडइतितत्राह रचितेति किमनेनानायासेनेतितत्राह नमइति द्रव्यादिलक्षणदंडमंतरेणकथंक्षांतिरितितत्राह क्षांतिरिति वरीयसिवरतरेपरतमे पुरुषायनमः इत्येतावता द्रव्यादिदानाधिकेनक्षांतिर्भवतीतिशेषः भूयिष्ठातेनमउक्तिंविधेमेतिश्रुतेः सर्वदासन्निहितासातिष्ठतेमहतिक्षमेतिसप्तमी ३१ ३२ अंहसांपापानांएकांतविनिष्कृतंनियतंप्रायश्चित्तं नकेवलंस्त्रीशूद्रादीनांनामसंकीर्तनंविधायते अन्येषामपीतिभावेनाह महतामिति ३३ सर्वाणिसाधनान्यनुष्ठियमानान्यपिभक्तिसहितानिबलवंतीत्यभिप्रेत्याह शृण्वतइति ३४ कुंभसंभवोऽगस्त्यः मलयेपर्वते३५ इतिश्रीभागवतेषष्ठस्कंधेवि०टीकायातृतीयोध्यायः॥३॥सुर्यांतिर्यंसूरयइत्यत्रयदुक्तंब्रह्माद्यज्ञेयमाहात्म्यंहरेस्तज्जन्माद्यस्ययतइत्यत्रचयःसर्गविशेषःप्रतिज्ञातःसोपिभगवदेकनिष्ठइतिप्रतिपाद्यतेस्मिन्नध्याये तत्रतृतीयादौकथितःसर्गोभगवदेकनिष्ठ

जिह्वानवक्तिभगवद्गुणनामधेयंचेतश्चनस्मरतितच्चरणारविंदम् ॥ कृष्णायनोनमतियच्छिरएकदापितानानयध्वमसतोऽकृतविष्णुकृत्यान् २९ कृष्णांघ्रिपद्ममधुलिट्‌नपुनर्विसृष्टमायागुणेषुरमतेवृजिनावहेषु ॥ अन्यस्तुकामहतआत्मरजःप्रमार्ष्टुमीहेतकर्मयतएवरजःपुनःस्यात् ३० तत्क्षम्यतांसभगवान्पुरुषःपुराणोनारायणःस्वपुरुषैर्यदसत्कृतंनः ॥ स्वानामहोनविदुषांरचितांजलीनांक्षांतिर्गरीयसिनमःपुरुषायभूम्ने ३१ श्रीशुकउवाच ॥ इत्थंस्वभर्तृगदितंभगवन्महित्वंसंस्मृत्यविस्मितधियोयमकिंकरास्ते ॥ तेनाच्युताश्रयजनंप्रतिशंकमानाद्रष्टुंचबिभ्यतिततःप्रभृतिस्मराजन् ३२ तस्मात्संकीर्तनंविष्णोर्जगन्मंगलमंहसाम् ॥ महतामपिकौरव्यविद्ध्येकांतविनिष्कृतम् ३३ शृण्वतांगृणतांवीर्याण्युद्दामानिहरेर्मुहुः ॥ यथासुजातयाभक्त्याशुद्ध्येन्नात्माव्रतादिभिः ३४ इतिहासमिमंगुह्यंभगवान्कुंभसंभवः ॥ कथयामासमलयआसीनोहरिमर्चयन् ३५ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेतृतीयोध्यायः ॥३॥

॥ राजोवाच ॥ देवासुरनृणांसर्गोनागानांमृगपक्षिणाम् ॥ सामासिकस्त्वयाप्रोक्तोयस्तुस्वायंभुवेंतरे १ तस्यैवव्यासमिच्छामिश्रोतुंतेभगवन्यथा ॥ अनुसर्गंयथाशक्त्याससर्जभगवान्परः २ ॥ सूतउवाच ॥ इतिसंप्रश्नमाकर्ण्यराजर्षेर्बादरायणिः ॥ प्रतिनंद्यमहायोगीजगादमुनिसत्तमः ३ ॥ ऋषिरुवाच ॥ यदाप्रचेतसःपुत्रादशप्राचीनबर्हिषः ॥ अंतःसमुद्रादुन्मग्नाददृशुर्गांद्रुमैर्वृताम् ४ द्रुमेभ्यःक्रुध्यमानास्तेतपोदीपितमन्यवः ॥ मुखतोवायुमग्निंचसमसृजुस्तद्दिधक्षया ५ ताभ्यांनिर्दह्यमानांस्तानुपलभ्यकुरूद्वह ॥ राजोवाचमहान्सोमोमन्युंप्रशमयन्निव ६

उतान्यनिष्ठः आहोस्विदन्यनिष्ठोपिभगवत्प्रसादायत्तइत्यभिप्रेत्यराजोक्तार्थमनूद्यतद्विस्तरंब्रूहीत्याह देवेति सामासिकःसंक्षिप्तः १ व्यासंप्रपंचंतेतवसकाशादनुसर्गंअवांतरसर्गं २ शुकेनराजप्रश्नगाढत्यपरिहारउक्तउतानाहत्यान्यकथांतरमवादि श्रुत्वास्मित्वातूष्णींस्थितंकिमितिशौनकादीनांहार्दंप्रश्नंपरिहरतिसूतइत्याह सूतइति अनेनसूतशौनकसंवादोनसमाप्तः किंचशौनकादिप्रश्नोप्ययमेवअयमेवपरिहारोपीतिध्वनितं ३ भगवत्प्रसादायत्तत्वात्मंदहृष्ट्यान्यनिष्ठवत्प्रतीयमानोपितदेकनिष्ठइतिलक्षणस्यनातिव्याप्तिरितिदर्शयितुंप्रकृतार्थानुवादपूर्वकमुपक्रमते यदेति प्रचेतसइतितुल्यनामानःप्राचीनबर्हिषः दशपुत्राःयदांतःसमुद्रादुत्थिताःद्रुमैर्वृतांगांभूमिमदृशुः ४ तदामुखतोवायुमग्निंचसमसृजुरित्यन्वयः तेषांवृक्षाणांदिधक्षयादहनेच्छया ॥ ५ ॥ तत्रचंद्रेणतत्कोपशांतिप्रकारंकथयति ताभ्यामिति ताभ्यांअग्निवायुभ्यां ६

किमाहेतितत्राह माद्रुमेभ्यइति कुधद्रुहेत्यादेश्चतुर्थी तत्रहेतुमाह विवर्धयिषवइति विवर्धयिषवः प्रजावृद्धिकारिणवः यूयंपतयः पातारःस्मृताइतियदतोद्रुमेभ्योद्रोग्धुंनार्हथेत्यन्वयः ७ दा हेनारायणानुग्रहदूरत्वंभवतांस्यादित्यभिप्रेत्याह आदाविति उर्जाॅपित्रत्वं इयदेवास्म् ८ वनस्पत्योषधीनांऊर्जाख्यान्नत्वंकथमत्राह अन्नमिति अचराश्चराणामन्नइत्याद्यन्वेतव्यम् ९ १० मा र्गविशिनष्टि पित्रेति ११ अनन्यशरणानांवृक्षाणांदाहेशरणागतवधदोषोपियुष्माकंस्यादित्याशयवानाह तोकानामिति तोकानांबालानांपितरौमातापितरौबंधूइत्येतत्सर्वत्रान्वेतव्यं गृहीगृहस्थः भिक्षूणांश्चाज्ञानांज्ञानदानाख्यजीवनेन १२ किंचानेनेश्वरद्रोहोपिस्यादित्याशयवानाह अंतारिति भूतानामितिविशेषणाद्वृक्षदाहेनेश्वरदाहःकथंस्याद्भूतदाहाकरणादितितत्राह सर्वमिति तस्यहरेर्धि ष्ण्यंनिवासस्थानं अनेनदर्शनेनकिंफलंस्यादत्राह एवमिति असौहरिः १३ इतोपिकोपोनकार्यइत्याह यःसमुत्पतितमिति देहेआकाशात्दहदयाकाशादुत्पतितमुज्ज्वलितंमन्युंयोपच्छेत् क

माद्रुमेभ्योमहाभागादीनेभ्योद्रोग्धुमर्हथ ॥ विवर्धयिषवोयूयंप्रजानांपतयःस्मृताः ७ आदौप्रजापतिपतिर्भगवान्हरिरव्ययः ॥ वनस्पतीनोषधीश्च ससर्जोर्जमिषंविभुः ८ अन्नंचराणामचराह्यपदःपादचारिणाम् ॥ अहस्ताहस्तयुक्तानांद्विपदांचचतुष्पदः ९ यूयंचपित्रात्वादिष्टादेवदेवेनचानघाः ॥ प्रजासर्गायहिकथंवृक्षान्निर्दग्धुमर्हथ १० आतिष्ठतसतांमार्गंकोपंयच्छतदीपितम् ॥ पित्रापितामहेनापिजुष्टंवःप्रपितामहैः ११ तोकानांपितरौबंधू दृशःपक्ष्मस्त्रियःपतिः ॥ नृपःप्रजानांभिक्षूणांगृह्यज्ञानांबुधःसुहृत् १२ अंतर्देहेषुभूतानामात्मास्तेहरिरीश्वरः ॥ सर्वंतद्धिष्ण्यमीक्षध्वमेवंवस्तोषितोह्यसौ १३ यःसमुत्पतितंदेहआकाशान्मन्युमुल्बणम् ॥ आत्मजिज्ञासयायच्छेत्सगुणानतिवर्तते १४ अलंदग्धैर्द्रुमैर्दीनैःखिलानांशिवमस्तुवः ॥ वार्क्षी ह्येषावराकन्यापत्नीत्वेप्रतिगृह्यताम् १५ इत्यामंत्र्यवरारोहांकन्यामाप्सरसींनृप ॥ सोमोराजाययौदत्त्वातेधर्मेणोपयेमिरे १६ तेभ्यस्तस्यामभूद्राजन् दक्षःप्राचेतसःकिल ॥ यस्यप्रजाविसर्गेणलोकाआपूरितास्त्रयः १७ यथाससर्जभूतानिदक्षोदुहितृवत्सलः ॥ रेतसामनसाचैवतन्ममावहितःशृणु १८ मनसैवासृजत्पूर्वंप्रजापतिरिमाःप्रजाः ॥ देवासुरमनुष्यादीन्नभस्थलजलौकसः १९ तमबृंहितमालोक्यप्रजासर्गंप्रजापतिः ॥ विंध्यपादानुपव्रज्य सोऽचरद्दुश्चरंतपः २० तत्राघमर्षणंनामतीर्थंपापहरंपरम् ॥ उपस्पृश्यानुसवनंतपसाऽतोषयद्धरिम् २१ अस्तौषीद्धंसगुह्येनभगवंतमधोक्षजम् ॥ तुभ्यंतदभिधास्यामिकस्यातुष्यद्यतोहरिः २२

थमात्मनःपरमात्मनःजिज्ञासयाविचारेण अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितइतिश्रुत्यर्थपर्यालोचनयाभूतद्रोहेणश्रीनारायणद्रोहएवस्यादितिचिंतयथा सगुमान्गुणान्संसारहेतुभूतास्तरतीत्यन्वयः १४ वार्क्षीवृक्षदुहिता वरावरणीया १५ वरःश्रेष्ठःआरोहोनितंबप्रदेशोयस्याःसातयातां आप्सरसींअप्सरोजातिमतीं १६ यस्यदक्षस्य १७ १८ पूर्वमादिसृष्टौइमाःप्रजाःमनसैवासृजत्प्रजापतिर्ब्रह्मा १९ योब्रह्मणाकृतःप्रजासर्गःतमबृंहितमपूर्णंदृष्ट्वाब्रह्मानुज्ञयाविंध्यगिरेःपादान्प्रत्यंतपर्वतानुपगम्यतपोऽचरत् समाचेतसोदक्ष योमनसाऽसृजत्सतपोऽचरदित्येकवाक्यंवा २० २१ नाम्नाहंसगुह्येनस्तोत्रेण कस्यदक्षस्ययतोयेन २२

सर्वनामसंज्ञाभावाल्लोकवैलक्षण्यप्रदर्शनायपरायनमइत्यन्वयः परत्वमुपपादयति अवितथेत्यादिना अवितथा यथार्था क्काप्यप्रतिहतानुभूतिर्यस्यसतथातस्मैसत्यज्ञानाय सत्यंज्ञानमितिश्रुतेः गुणत्रयेणाभासःसृष्टिस्तन्निमित्तयोःप्रकृतिपुरुषयोर्बंधुभूताय तत्रस्थित्वाताभ्यांसृष्टौप्रवर्तमानाय गुणत्रयप्रतीतिनिमित्ताव्यक्ताश्रयायवा सतोबंधुमसतिनिरविंदन्निति श्रुतेः गुणेषुशब्दादिविषयेषुयथार्थबुद्धिर्येषांतेतथातैर्बहिर्मुखैरदृष्टधाम्नेऽज्ञातस्वरूपाय नचक्षुषापश्यतिकश्चिदेनामितिश्रुतेः । निवृत्तोमानावधिःपरिमाणलक्षणेयत्तायस्मात्सतथातस्मै अनंतंब्रह्मेतिश्रुतेः । जन्मादिमतःकथमनंतत्वमितितत्राह स्वयंभुवइति स्वयंभुवेस्वतःसिद्धाय सभगवान्कस्मिन्प्रतिष्ठितइतिस्वेमहिम्नीतिश्रुतेः २३ गुणतत्त्वबुद्धिभिरदृष्टधाम्नइत्येतदुपपादयति नयस्येति अयंपुरुषोयस्यसख्यंनवेत्तितस्मै महेशायशिवादत्युत्तमायनमस्करोमीत्यन्वयः कीदृशस्य अस्मिन्पुरेशरीरेसंवसतः स्वयंचसहैववसन् तद्दूरेतदंतिकइतिश्रुतेः । सख्युःसखेत्येतदेकस्मिन्पुरेवर्तमानत्वादुभयोःसम । द्वासुपर्णासयुजासखायासमानंवृक्षमितिश्रुतेः । अत्रदृष्टांतमाह गुणइति यथाकश्चित्पुरतःस्थितोपिगुणभूतोभृत्यःगुणिनःप्रधानभूतस्यराज्ञो ममासौसखेतिगंभीरेणराज्ञोचिततंसख्यंनवेत्ति । कुतोत्राह अव्यक्तेति अस्पष्टदृष्टिः भृत्यस्यस्थूलज्ञानत्वात्राज्ञःसूक्ष्मदृष्टित्वादित्यर्थः गुणोरूपादिर्गुणिनोद्रव्यस्यसंबंधं यथानवेत्ति । कुतः अव्यक्तदृष्टिःदृष्टिरहितत्वाज्जडत्वादित्येतदपव्याख्यानं यथाराज्ञ प्रियत्वंतुभृत्योवेद नचात्मनः तथाजीवोनयत्सख्यंवेत्तितस्मैनमोस्तुतइत्यनेनापहस्तितमितिज्ञातव्यं २४ सुह्यंतियंसूरयइतियदुक्तंतदधुनास्पष्टयति देहइति ताआपएक्षंतेत्यादिवद्देहादीनांजडानांज्ञातृत्वादिधर्मानुपपत्त्यावद्व्यतिरिक्तःकश्चित्ज्ञानाश्रयोंगीकर्तव्यः जीवस्यज्ञानाश्रयस्येपिसम्यक्स्वपरवेदनासामर्थ्यस्यप्रत्यक्षत्वेनपरस्यहरेस्तज्ज्ञानाविषयत्ववर्णनेममाहात्म्यमाविर्भूतंनस्यादितिकश्चिद्विशिष्टसर्वज्ञोपे

प्रजापतिरुवाच ॥ नमःपरायावितथानुभूतयेगुणत्रयाभासनिमित्तबंधवे ॥ अदृष्टधाम्नेगुणतत्त्वबुद्धिभिर्निवृत्तमानावधयेस्वयंभुवे २३ नयस्यसख्यंपुरुषोवेत्तिसख्युःसखावसन्संवसतःपुरेऽस्मिन् ॥ गुणोयथागुणिनोऽव्यक्तदृष्टिस्तस्मैमहेशायनमस्करोमि २४ देहोऽसवोऽक्षामनवोभूतमात्रानात्मानमन्यंचविदुःपरंयत् ॥ सर्वंपुमान्वेदगुणांश्चतज्ज्ञोनवेदसर्वज्ञमनंतमीडे २५

क्षितस्यसर्वज्ञत्वविशिष्टान्यसद्भावेघटते तेनान्यैश्चसंभूयाप्यवेद्यमहिमाहरिरितनेनहरेर्निरतिशयमाहात्म्यंविज्ञातंस्यादिति तदर्थं देहादिशब्देनतदभिमानित्वेनतेलक्ष्यंतेसंबंधात् तथाहि प्रधानाभिमानित्वाद्वैश्रवणादयोदेहादयइतिसामानाधिकरण्येनोच्यंते नतुतादात्म्यात् देहःअभिमानीवैश्रवणः असवःप्राणाभिमानिनोमरुतः अक्षाइंद्रियाणितदभिमानिनः इंद्राग्निवरुणादयः मनवइतिमनसोंतःकरणस्यवृत्तिबाहुल्याद्बहुवचनं तस्याभिमानीरुद्रः भूतानामभिमानिनःपृथिव्याद्याः सुपर्णाद्यावा मात्राःशब्दादयःतद्देवताःरुद्रसूनवःसौपर्णाद्यावा इत्येतेदेवाःवैश्रवणाद्याः आत्मानंस्वस्वरूपमन्यंस्वव्यतिरिक्तंप्रपंचंनविदुः यदुभयस्मात्परमुत्तमंब्रह्मतन्नविदुरितिकिमुततत्प्रसादमंतरेणेतिशेषः पुमान्जीवाभिमानीब्रह्मास्वात्मानंप्रपंचंचेतिसर्वंवेद नकेवलतावदेवाकिंतुतत्तद्वस्तुगतगुणांश्चशब्दांस्तद्विशेषांश्चक्रियादींश्चवेद तर्हिपरमात्मानंवेदकिं नेत्याह तज्ज्ञइति तानिसर्वाणिजानातीतितज्ज्ञोपिब्रह्मा तंसर्वज्ञंहरिंनवेद यथासौहरिःस्वात्मानंस्वव्यतिरिक्तंसर्वंवेत्तितथेतिशेषः तत्रासौस्वपरिच्छेद्यत्वेनपरिमितःकिंनेत्याह अनंतमिति अनंतमात्मानमपरिच्छेद्यत्वेनज्ञातारं तस्यज्ञानस्ययथार्थत्वात् अतःसएवसर्वमुख्यः सर्वज्ञो नब्रह्मेति तद्ब्रह्मावेत्अहंब्रह्मास्मीतिश्रुतिः विष्णोर्नुकंवीर्याणीतिश्रुतिश्च एवंविधंपरमात्मानंईडइत्यन्वयः एतत्सर्वंदेहाभिमानीवैश्रवणोमरुतः प्राणमानिनः इंद्राद्याइंद्रियात्मानोरुद्रोंतःकरणात्मकः नैतेविदंतिस्वात्मानंपरंचापिविमोहिताः जीवाभिमानीब्रह्मातुसर्वंवेदप्रजापतिः सोपिवेदहरिंनैवसम्यक्सैवहिसर्वविदित्यनेनसिद्धं २५

१ देहादयोनविदुरित्यत्रदेहादीनांजडत्वेनतत्रज्ञानप्रसक्तेरभावान्नविदुरिति असंगतमित्यताऽत्रदेहादिशब्दविवक्षितार्थप्रमाणेनाह । देहमानीत्यादिना । भा०त्ता०

अनुमानतोपितज्ज्ञानंसुकरमित्याह यदेति यदास्वप्नसुषुप्त्यादौनामरूपरूपस्यनामरूपात्मकप्रपंचापादकस्यमनसोदृष्टिस्मृतिसंप्रमोषात् चाक्षुषस्मरणलक्षणज्ञानेप्रमुष्यापहृत्योपरामःनिव्यापाराव स्था तदायःकेवल्यास्वसंस्थयाईयते जीवस्यास्वातंत्र्यात् स्वप्नावबोधादिदर्शनाच्चजीवेच्छाराहित्येनशुद्धयास्वरूपसत्तयास्वप्नादिनियामकत्वेनजीवादन्यईश्वरोस्तीतिज्ञायतइत्यन्वयः तस्मैहंसायानि त्यशुद्धायस्वासरूपायवानमः उपास्तिविशेषाधिष्ठानेनचभाव्योति अतस्तद्भावमाह शुचिसद्मनइति शुचिर्वापुरेवसद्मनिवासस्थानंयस्यसतथातस्मै नामरूपात्मकप्रपंचविषयेजीवस्यचाक्षुषमानसा ज्ञानापहाराद्वा । यदोपरामोमनसःस्वप्नसुषुप्तिलयादिषु तदावस्थाप्रबोधादिकारणत्वेनकेशवः अस्वातंत्र्यात्तुजीवस्यविद्यतेन्योनियामकः जीवप्रवृत्त्यानुकूल्याज्ज्ञायतेऽसौसदाविभुरित्येतत्प्र माणानुगृहीतव्याप्तिकत्वाल्लिंगमव्यभिचारीतिभावः २६ विद्वत्प्रत्यक्षानुगृहीतत्वाच्चलिंगंबलिष्ठमित्याशयेनाह मनीषिणइति मनोनियमनसमर्थाःमनीषिणः मनीषयातर्हृदिसन्निवेशितभग वंतंनिष्कर्षंतिनिष्कृष्यजानंतीत्यन्वयः कथमिव अग्निविदोदारुणिगूढंवह्निंनिर्मथ्यजानंतियथातथाइहजीवराशिशरीरेंतर्हितमितिशेषः त्रिवृद्भिः इच्छाज्ञानक्रियात्मनात्रिधावर्तमानाभिने वभिर्विमलोत्कर्षणीज्ञानक्रियेत्यादिनवत्वसंख्याविशिष्टाभिः स्वरूपभूताभिःशक्तिभिर्लक्षितमितिशेषः । दशेंद्रियमनोबुद्धिप्राणप्रधनाख्यानिचतुर्दशतत्त्वानि तेभ्यउत्तमत्वेनपंचदशाश्रयत्वात्पां चदश्यं मनोबुद्ध्यहंकारचित्तचेतनाभेदेनतत्प्रेरकतयास्थितत्वाद्वा तदुक्तं इच्छादित्वेनत्रिविधाविमलाद्यास्तुशक्तयइति चशब्दाच्चाद्भिन्नास्तज्जाताश्चान्याःसंतीतिग्राह्यं तदप्युक्तंविष्णोःस्वरूपभूता यास्ताभ्यस्तन्नामिकाःपराः ज्ञापयेत्तत्प्रसादेनताश्चपीठेऽभिपूजयेत् तद्भिन्नजीवास्तस्यैवप्रसादात्तत्समीपगाइति अनेननवभिःनवद्वाराभिव्यक्ताभिःत्रिवृद्भिः गुणत्रयात्मभिरित्येतन्निरस्तम् । दशेंद्रि

**यदोपरामोमनसोनामरूपरूपस्यदृष्टिस्मृतिसंप्रमोषात् ॥ यईयतेकेवलयास्वसंस्थयाहंसायतस्मैशुचिसद्मनेनमः २६ मनीषिणोंतर्हृदिसन्निवेशितंस्व शक्तिभिर्नवभिश्चत्रिवृद्भिः ॥ वह्निंयथादारुणिपांचदश्यंमनीषयानिष्कर्षंतीहगूढम् २७ सवैममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः ॥ सस र्वनामासचविश्वरूपःप्रसीदतामनिरुक्तात्मशक्तिः २८**

याद्याश्रयत्वेनपांचदश्यइतिव्याख्यातं तत्र किंमानमितीपमाशंक्य दशेंद्रियाणिचमनोबुद्धिप्राणप्रधानकाः चतुर्दशैषांपरमःपांचदश्योहरिःस्मृतः बुद्धिभेदेनचैतेषुपांचदश्योथसंस्थित इत्यनेनपरिहर्तव्य। अनेनपंचदशीतिसंख्यातिथौवर्तमानत्वात्पांचदश्यमित्येतदपव्याख्यानंनिरस्तमितिज्ञातव्यम् २७ योमनीषिभिर्निर्मथ्यज्ञातः सहरिर्ममप्रसीदतामित्यन्वयः किमन्येभ्योविशिष्यअस्यप्रसादःप्रा र्थ्यते प्रजापतेनत्वदेतान्यन्यइत्यादिश्रुतेः अन्येषामप्यातिशयितमाहात्म्यप्रतीतेरित्याशंक्य एषह्येवशतानंदइत्यादिश्रुतेः इतरेषामानंदादेरियत्ताविशिष्टत्वात् एतस्यानंदस्यान्यानिभूतानिमात्रामुप जीवंति नतेविष्णोजायमानइत्यादिश्रुतेः अस्यापारिच्छिन्नानंदानुभवरूपत्वादित्याह अशेषेति अशेषोविशेषःइयत्ताख्यःअशेषविशेषःसचमायाप्रकृतिश्चतेअशेषविशेषमाये तयोर्निषेधोयस्यतत्तथा तच्चनिर्वाणमशरीरभोग्यंचयत्सुखंतस्याशेषविशेषमायानिषेधनिर्वाणसुखस्यानुभूतिः एतादृशानंदोहमितिसतथा अपरिमितामाकृतशरीरभोग्यानंदानुभवरूपइत्यर्थः इयत्तातुविशेषःस्यादानदादौ तदुज्झितः सर्वैर्विशेषैराहितउच्यतेहारिरव्ययः अप्राकृतस्वरूपत्वान्निर्मायश्चेतिकथ्यतइति अतोयमेवार्थइतिज्ञायते प्रजापत्यादिशब्दमुख्यार्थोपिअयमेवेतिभावेनाह ससर्वनामेति अनेनोपन्यस्ता श्रुतिःसावकाशेविज्ञातव्यं योदेवानामितिश्रुतेश्च नीरूपस्यसर्वनामत्वंकथमित्यतउक्त सचेति विश्वानिरूपाणियस्यसतथा विश्वस्यरूपमिवरूपयस्येत्यत्रविश्वरूपसदृशोविश्वरूपइतिअन्यथायोज्यं ननुप्रतीतार्थंपरित्यज्यअप्रसिद्धार्थकल्पनेकिंकारणमित्यतश्चशब्दसूचितायाःतद्रूपसदृशंरूपंयतःसर्वस्यसर्वदा सर्वरूपोयतः शब्दमुख्यार्थःसर्वनामकइतिस्मृतेः समाख्यानंकारणं ससइतितच्छब्द द्वयेनतच्छ्रुत्युक्तसर्वनामत्वसर्वरूपत्वेपरामृशति नन्वदृष्टत्वादेकस्यसर्वनामत्वादिकथंयुज्यते नचश्रौतत्वाद्युक्तिमत् । श्रुतीनांअमंतत्वेनैकत्रान्यथोक्तिसंभवादितितत्राह अनिरुक्तेति विचित्रशक्तिःपुरुषः

पुराणदतिश्रुतेः गतिसामान्यादितिसूत्रेण श्रुतीनामेकविषयत्वेनज्ञानोत्पादनधर्मत्वस्यनिर्णीतत्वात् ननु हरेःसर्वनामत्वेअवचनेनैवप्रोवाचेत्यादिश्रुते'कागतिरित्यतोवाह अनिरुक्तेति सर्वात्मनेतिशेष' अनिर्वाच्याःस्वकीयाज्ञानशक्तिरित्येच्छुतेर्गुणाविर्भावलक्षणायाःदोषाविष्कारोक्त्यसंभवेनासंगतंस्यादिति अलौकिकत्वान्नोविष्णुरनिरुक्तोनिरूपितः तथापिवेदेपूक्तत्वादुक्तोरूपीसएवचेतिवाक्यविरुद्ध त्वान्नोक्तएवार्थः २८ सचविश्वरूपइतिविश्वरूपोक्तिविशदयति यद्यदिति वचसाघटतइतिनिरुक्तं धियाऽक्षभिर्मनसानिरूपितंयद्यत्तत्तदस्यहरेःस्वरूप माभून्नभवति कुतःसत्त्वादिगुणसमूहेन वोधितत्वाच्चहिंसकीदृशइत्यतआह सवाइति सत्त्वादिगुणानामपायःराहित्यमेवनिसर्गलक्षणंस्वाभाविकलक्षणंयस्यसतथा वाइत्यनेनकेवलोनिर्गुणश्चेतिश्रुतिंप्रमाणयति अनेनजगद्रूपंत्रिगुणात्मकं भग वद्रूपमप्राकृतमितिनिरणायि माभूदित्यनेनजगत्साक्षाद्भगवद्रूपंनजानीहीत्यर्थोपिसूचितइतिज्ञातव्यं २९ कालकारणत्वंचब्रह्मणःस्वरूपलक्षणमित्याह यस्मिन्निति यास्मिन्नधिकरणभूते कालइदंवर्तते यतोयस्मादपादानभूतात्कालादभूत् येनकारणभूतेनकालेनजायते यस्यसंबंधभूतस्यकालस्याधीनमिदं यस्मैसंप्रदानभूतायकालायकल्पते यंकर्मभूतकालंप्रतीक्षते यःकर्तृभूतः

यद्यन्निरुक्तंवचसानिरूपितंधियाऽक्षभिर्वामनसोतयस्य ॥ माभूत्स्वरूपंगुणरूपबृंहितंसवैगुणापायविसर्गलक्षणः २९ यस्मिन्यतोयेनचयस्ययस्मै यंयोयथाकुरुतेकार्यतेवा ॥ परावरेषांपरमंप्राक्स्वसिद्धंतद्ब्रह्मतद्धेतुरनन्यदेकम् ३० यच्छक्तयोवदतांवादिनांवैविवादसंवादभुवोभवंति ॥ कुर्वंतिते षांमुहुरात्ममोहंतस्मैनमोनंतगुणायभूम्ने ३१ अस्तीतिनास्तीतिचवस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः ॥ अपेक्षितंकिंचनसांख्ययोगयोःसमंप रंह्यनुकूलंबृहत्तत् ३२

कालःप्रेरयति यथायेनप्रकारेणपुरुषःकर्मकुरुतेस्वयंचापरेणकार्यते तत्तस्यसप्तविभक्त्यर्थस्यकालस्यप्रकाराणांप्रेरकस्यच यत्परावरेषांब्रह्मादीनांसकाशात् प्राक्पूर्वंस्वसिद्धंकार्यकारणात्मकप्रपंच व्यतिरिक्तत्वेनस्वतएवसिद्धं । अतएवपरमंमत्युत्तमं । अनन्यदन्यसादृश्यरहितं । एकंअवतारादिरूपाभिन्नं । तद्ब्रह्महेतुःकारणमित्यन्वयः । तत्तत्कालस्यसदातनसत्ताप्रदत्वमस्यैवनान्यस्येतिद्योतना यसप्तविभक्त्यर्थत्वेनकालोविशेषितः । अन्यथाकालस्यकारणंब्रह्मेतिकृतंस्यादिति तदुक्तं सर्वसत्ताप्रदत्वतइति तत्तत्कालीनसर्ववस्तुसत्ताप्रदत्वाद्वा कुतस्ततत्कल्पतइतिचेत् विभक्त्यर्थस्यकालस्य प्रकाराणांचकारणं एकएवपरोविष्णुरितिस्मृतेः अयमेवार्थोनतुर्यास्मन्नित्यादिनाक्रियमाणकारकफलरूपेणब्रह्मैवावस्थितमिति । अनन्यःसदृशाभावादेकोरूपाद्यभेदतइतिवचनादनन्यदेकशब्दयो रुक्तएवार्थः ३० अनिरुक्तात्मशक्तिरित्येतद्विवृणोति यच्छक्तयइति विवादसंवादभुवः विप्रतिपत्तिसंप्रतिपत्त्योर्भुवोविषयाः वदतांवादंकुर्वतां । वादिनांमतमज्ञाननिमित्तमित्याह कुर्वंतीति ३१ विवादसंवादौचकथंकारंस्यातामितितत्राह अस्तीतियाद्भिन्नयोर्विरुद्धयोरपेक्षितंविषयः किमाकारयोर्मदन्यईश्वरोस्तिनास्तीतिवादिभिःप्रतिपाद्यमानयोःभिन्नत्वनिरुद्धत्वेकथमत्राह वस्त्विति मे

---

१ अस्तीतिनास्तीतिश्लोकस्यायमर्थः । भिन्नविरुद्धधर्मयोः । भिन्नविरुद्धधर्मप्रतिपादकयोः । एकस्थयोः एकवस्तुविषयकयोः । अस्तीतिनास्तीतिचवस्तुनिष्ठयोः । मदन्यदितिशेषः । मदन्यदीश्वराख्यवस्तुअ स्तीतिदैवंमतं । तादृशंवस्तुनास्तीतिआसुरमततयोर्मतयोरित्यर्थः । अपेक्षितंतन्मतंविषयः । किंचन लोकविलक्षणं । समउच्चनीचस्थानयोर्यथायोग्यफलप्रदं । अनुकूलतादृशमतभेदेनाद्विविधबुद्धिजनकं । सांख्ययो गयोर्ज्ञानयोगकर्मयोगयोः । परंमुख्यतात्पर्यविषयं । यत्तत्बृहत्ब्रह्मेति ॥

त्ववस्तुनिष्ठत्वात् एकस्मिन्वस्तुनिस्थितयोरित्यंगीकारोविरुद्धयोःयद्यप्येकस्यस्वरूपेणसत्त्वंपरस्वरूपेणासत्त्वंइतिद्वौधर्मौस्तः तथापिनैतादृशीएतेसत्त्वासत्त्वेस्वरूपस्यैवेति यतइतिद्योतनायोतपद द्वयं यत्किंचनालौकिकं यत्सांख्ययोगयोःसमं कर्मानुष्ठानलक्षणयोगप्रतिपादककर्मकांडतत्फलदातृत्वेनप्रतिपाद्य सांख्येचयथार्थज्ञानसाधनवेदांतविचारितं यच्चानुकूलसर्वेषांप्रियतमं तत्तद्वादि नांतत्तद्बुद्धिजनकत्वेनतत्तदनुरूपफलदातृत्वेनवर्तमानवा तत्परंबृहत्परब्रह्मप्रपद्यइतिवाक्यशेषः सर्वदावर्धमान नकदाप्यन्यथाभूतमित्यतोबृहदिति अस्तित्वपक्षएवश्रेयानान्यितरः। तस्यदुष्ट त्वादिति विशदीकरणायसांख्ययोगयोरितिविशेषणं सर्वेवेदायत्पदमामनंतीतिश्रुतिंहिशब्देनसूचयति अस्तिद्वैतंवास्त्विति निष्ठासांख्ययोगयोः । नास्तितद्द्वैतंवस्त्वद्वैतमेवेतिनिष्ठाऽऽसुरीत्यतो वादीति तदुक्तं मदन्योनास्तिसर्वेशइतिविद्धयासुरंमतं अस्तीतिदैवमुभयोर्हरिरेवब्रह्मपोक्षितः निषेधविध्योर्विषयःफलदाताचकेशवः तादृगुद्रेःकारणंचस्थानयोश्चोच्चनीचयोरिति ३२ इतोपिमद न्यईश्वरोस्तीतिपक्षएवश्रेयानित्यभिप्रेत्याह योनुग्रहार्थमिति योऽनंतोभगवान्पादमूलंभजतामनुग्रहार्थंजन्मकर्मभिर्नामानिरूपाणिचभेजे सपरमोमह्यंप्रसीदतामित्यन्वयः अलौकिकत्वनतंविशि नष्टि अनामरूपइति देवदत्तकर्मवदीशकर्मणामप्रत्यक्षत्वाद्विष्णुमित्ररूपवदीशरूपाणामदर्शनादनामरूपः नतुस्वरूपकर्मोज्झितत्वात् यदापश्यःपश्यतेरुक्मवर्णंकर्तारमीशं अथैनमाहुःसत्यकर्मे ति सर्वकर्मासर्वनामासर्वरूपइत्यादिश्रुतेः अवतारैर्नामकर्मणांदर्शनाच्च तदुक्तं तत्कर्मणामदृष्टत्वादनामाचाप्यदर्शनात् अरूपस्त्ववतारेणरूपकर्माणिदर्शयन् नित्यरूपांनित्यकर्माप्यव्यक्तत्व मवेक्ष्यतत् अरूपकर्मेत्युदितोरूपकर्मोज्झितेनैत्विति किंचभगवद्व्यतिरिक्तपुरुषानुपपन्नार्थवाचिनामपस्यसोऽनामा यथामुक्तानांपरमागतिःकमलाकांतइतिकंसादिनिग्रहादवाप्तकंसारिःमुरारिरे

**योनुग्रहार्थंभजतांपादमूलमनामरूपोभगवाननंतः ॥ नामानिरूपाणिचजन्मकर्मभिर्भेजेसमह्यंपरमःप्रसीदतु ३३ यःप्राकृतैर्ज्ञानपथैर्जनानांयथाशयंदे हगतोविभाति ॥ यथाऽनिलःपार्थिवमाश्रितोगुणंसईश्वरोमेकुरुतान्मनोरथम् ३४**

त्यादिवाच्यार्थसमत्वात्सनामा मूलरूपस्यात्यंतमव्यक्तत्वादरूपः अनामासोधिकार्थत्वादव्यक्तत्वादरूपकः कंसारिस्त्वादिसाम्यार्थोऽव्यक्तरूपोवतारगइति लोकदृष्टयाधिकार्थानिमूलनामानिकेशवे अथदामोदरादीनिलोकदृष्टयासमानितु आनंदोऽव्यक्तरूपस्तुमूलरूपमुदाहृत सएवव्यक्तिमापन्नःप्रादुर्भावउदाहृतइति अनेनउक्तस्मृत्यर्थोपिस्पष्टीकृतइतिज्ञातव्यम् ३३ यथाधिकारस्वविषयज्ञान स्यतारतम्यजनकत्वेनप्रमाणसिद्धत्वान्मदन्योनास्तीश्वरइतिमतमासुरमित्याशयेनाह यःप्राकृतैरिति योभगवान्प्राकृतैर्ज्ञानपथैर्जनानांस्वबुद्ध्यनुसृतासद्धातेनविभाति सईश्वरोमेमनोरथंकुर्यादित्य न्वयः क्वस्थितइत्यतउक्तं देहेति अयंभावः अधमानांजनानांजीवदेहगतोजीवः तदभिन्नइतिप्रतीयेत अहंब्रह्मास्मीतिमध्यमानांजनानादेहगतःसंदेहगतोऽनिर्णीतइतियावज्जीवस्तदन्योवाहरि रिति उत्तमानांजीवानांप्रकर्षेणाप्राकृतेनौत्पत्तिकेनज्ञानेनदेहगतोदेहगाज्जीवाद्भिन्नइतिशेषः ईश्वरः पूर्णानंदादिगुणइतिप्रकाशते तत्रोदाहरण यथेति यथाऽनिलोवायुःपार्थिवंपृथिवीकार्यंगु णंसुखदुःखभोगसाधनंशरीरमाश्रितःप्रकृतिविकृतैर्ज्ञानसाधनैरिंद्रियैःप्राकृतानांश्वासइति मध्यमानांशारीरःप्राणइति अप्राकृतानामुत्तमानांसर्वदेवोत्तम सूत्रात्मेतिप्रतिभाति तथेति स्वदेहस्थंह रिमाहुरधमाजीवमेवतु मध्यमाश्चाप्यनिर्णीतंजीवाद्भिन्नंजनार्दनं पूर्णानंदादिगुणकंसर्वजीवविलक्षणं उत्तमास्तुहरिमाहुस्तारतम्येनतेषुच बुद्धिशुद्ध्यनुसारेणयथाप्राणंशरीरिणां श्वासमात्रंजनाः प्राहुरनिर्णीतंचमध्यमाः देवदेवेश्वरंसूत्रमानंदंप्राणवेदिनइतिस्मृतिसमाख्यासिद्धत्वाच्चैविध्येनार्थकथनंयुक्तमितिभावः ३४

नेयंस्तुतिर्जिह्वाग्रगुडवत्स्तुत्यचित्तद्रवविकारहेतुरितिभावेनाह इतीति ३५ ३६ ३७ ३८ ३९ नेदंरूपंमायाकल्पितंकिंतुनिजमेवअथंक्रियाकारिरजादित्याशयेनाह गामिति ४० न्हदिन्यः न्हादिनीभवोजलनिर्गमः ४१ इदमपिनिजरूपत्वसाधकमित्याशयेनाह संतथेति ४२ भावंभक्तिं ४३ बृंहणंप्रजापूरणयोजनं कामोऽभिप्रायः ४४ विभूतयःममविशेषेणसन्निधानस्थानभूताः । विशेषव्यक्तिपात्रस्वाद्ब्रह्माद्यास्तुविभूतयः तदंतर्यामिणश्चैवमत्स्याद्याविभवाइतीतिवचनात् ४५ ब्रह्मपूर्णंतपोमेहृदयंप्रियं कुतस्तपोभिमानीरुद्रःममहृदयाज्जातःतदाश्रितश्चेत्येवंव्याख्येयं । विद्याममतनुःस्वरूपं विद्याभिमानिन्युमातनोर्जातातदाश्रिता क्रियाभिमानीत्विंद्रोहरेराकृतिःशृंगाराद्याकाराज्जातस्तदाश्रितश्च क्रतवोयज्ञाःसंकल्पाद्वातदाश्रिताश्चअभिमानी चपूर्वोक्तएव धर्मोधर्मराज हरेरात्मामध्यदेहाज्जातःतदाश्रितश्च । सुराःसुशोभमानमंव रोःकुल्याऽन्नंयस्यसःसुराःवायुश्चित्तगतःहरेरातिप्रिय.असत्रोहरेःप्राणाज्जातस्तदाश्रितश्च । असवइतिबहुवचनमंप्शब्दवत् । ब्रह्माद्याःसुराश्चहरेरसुशब्दवाच्येभ्यःश्रोत्रादींद्रियेभ्यउत्पन्नाःतदाश्रिताश्चेतिद्विरावृत्त्याव्याख्येयं । तपोभिमानीरुद्रश्चविष्णोर्हृदयमाश्रितः विद्यारूपालयाचोमाविष्णोस्तनुमुपा

श्रीशुकउवाच ॥ इतिस्तवैःसंस्तुवतःसतस्मिन्नघमर्षणे ॥ प्रादुरासीत्कुरुश्रेष्ठभगवान्भक्तवत्सलः ३५ कृतपादःसुपर्णांसेप्रलंबाष्टमहाभुजः ॥ शंखचक्रासिचर्मेषुधनुःपाशगदाधरः ३६ पीतवासाघनश्यामःप्रसन्नवदनेक्षणः ॥ वनमालानिवीतांगोलसच्छ्रीवत्सकौस्तुभः ३७ महाकिरीटकटकस्फुरन्मकरकुंडलः ॥ कांच्यंगुलीयवलयनूपुरांगदभूषितः ३८ त्रैलोक्यमोहनंरूपंबिभ्रत्त्रिभुवनेश्वरः ॥ वृतोनारदनंदाद्यैःपार्षदैःसुरयूथपैः ॥ स्तूयमानोनुगायद्भिःसिद्धगंधर्वचारणैः ३९ रूपंतन्महदाश्चर्यंविलक्ष्यागतसाध्वसः ॥ ननामदंडवद्भूमौप्रहृष्टात्माप्रजापतिः ४० नकिंचनोदीरयितुमशकत्तीव्रयामुदा ॥ आपूरितमनोद्वारोन्हदिन्यइवनिर्झरैः ४१ तंतथावनतंभक्तंप्रजाकामंप्रजापतिम् ॥ चित्तज्ञःसर्वभूतानामिदमाहजनार्दनः ४२ ॥ श्रीभगवानुवाच ॥ प्राचेतसमहाभागसंसिद्धस्तपसाभवान् ॥ यच्छ्रद्धयामत्परयामयिभावंपरंगतः ४३ प्रीतोऽहंतेप्रजानाथयत्तेस्याबृंहणंतपः ॥ ममैषकामोभूतानांयद्भूयासुर्विभूतयः ४४ ब्रह्माभवोभवंतश्चमनवोविबुधेश्वराः ॥ विभूतयोममह्येताभूतानांभूतिहेतवः ४५ तपोमेहृदयंब्रह्मतनुर्विद्याक्रियाकृतिः ॥ अंगानिक्रतवोजाताधर्मआत्माऽसवःसुराः ४६ अहमेवेदमासाग्रेनान्यत्किंचांतरंबहिः ॥ संज्ञानमात्रमव्यक्तंप्रसुप्तमिवविश्वतः ४७

श्रिता शृंगाराद्याकृतिगतःक्रियात्मापाकशासनः । अंगेषुक्रतवःसर्वेमध्यदेहेचधर्मराट् । प्राणोवायुश्चित्तगतोब्रह्माद्याःस्वेषुदेवताइतिवचनादुक्तएवार्थोग्राह्यः रुद्रादीनांहरेस्तदंगशब्दवाच्यत्वं पदाश्रयंयद्भवतितत्तन्नामकमीरितमित्यभिधानात्सिद्धं ४६ अत्राद्वैतवादिनोनिर्गुणवाङ्मनसागोचरंजगत्कारणंसगुणमितिद्विविधंकल्पयंति तन्मतनिराकरणायाह अहमेवेत्यादिना सप्तसु प्रथमेति सूत्रात् अहंममपदिदंस्वरूपंत्वयातपसादृष्टंसदेवाग्रेसृष्टेःप्राक्स्थितआस अन्यद्वाङ्मनसगोचरंनास सतोबंधुमसतिनिरविंदन्हृदिप्रतीष्याकवयोमनीषेतिश्रुतेः असतिप्रलये । कीदृश असर्बहिः सर्वांतःस्थितंसर्वस्माद्बहिरपिस्थितं अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितइतिश्रुतेः तपसादृष्टंप्राकृतंचेदुक्तार्थानुपपत्तिःइत्यतउक्तं संज्ञानमात्रमिति समित्यनेनज्ञानस्यस्वरूपाभेदंध्वनयति मा

१ राशब्दस्यकुल्यान्नवाचित्वात्कुल्यान्नामित्युक्तं । कुल्यान्नलातव्य कुल्योग्यान्न । अपशब्दवदित्यनेनअप्शब्दोनित्यबहुवचनातइतिसूच्यते । पुंसिभूम्न्यसव प्राणइत्यभिधानं । सुराःसुरायाःसुरायइतिरूपं ।

श्रशब्देनप्रकृतिपाकृतरूपराहित्यं अवताररूपाणांचतदात्मत्वंसूचयति सत्यंज्ञानमितिश्रुतेः अतएवाऽव्यक्तंअतिसूक्ष्मं । तदव्यक्तमाहहीतिसूत्रात् । हरेःस्वापवचनमपिलोकंऽथामोहनायेतिभावेनाह प्रसुप्तमिवेति कृतचक्षुर्निमीलनमात्रं नतवज्ञानात्मकनिद्रयायुतं श्रियंविनावस्थितं स्वापावस्थाभागित्यर्थः सर्वेहरौलीनंचेन्मुख्यतस्तदविशेषएवकिंनस्यादित्यतउक्तं विश्वलइति विश्वस्माद्भिन्नमितिशेषः अनेनहरेर्नानावर्णत्वंतथाकरचरणाद्यवयवत्वंश्रियमंतरेणावस्थानंध्वनितंतत्कथंयुज्यतइतीयमाशंका नानावर्णोहरिस्त्वेकोबहुशीर्षभुजोरुपात् आसीद्धयेतदन्यत्सुसूक्ष्मरूपंश्रियंविना असुप्त सुप्तइवन्यगी लिताक्षोभवेद्धरिःअन्यत्रानादराच्छ्रीश्वविष्णौलीनेवकथ्यते सूक्ष्मत्वेनहरौस्थानाल्लीनमन्यदपीष्यतेइत्यनेनपरिहर्तव्येति सृष्टौस्वीकृतनानावर्णज्ञानात्मकावयवंयद्रूपंदृष्टंतदेवमलयेस्वोदरलीनप्रपंचंनित्यप्रबुद्धमपिस्वलीनवत्स्थितश्रीतत्त्वेनमीलिताक्षंअपरिच्छिन्नंश्रीहरिरूपमितिभावः ४७ लयमुक्त्वासृष्टिमाह मयीति मयिमत्संबंधिनाभेःयत्पद्ममासीत्ततःपद्माद्देवस्स्वयंभूःसमभूदित्यन्वयः कोसौरत्रयं भूरित्यतउक्तं अजइति अजाविष्णुहरच्छागाइत्यतःकथंनिर्णयइत्यतउक्तं आद्यइति जगदादौभूतश्चतुर्मुखएवेत्यर्थः अजःपितामहोब्रह्मेत्याभिधानाच्च कीदृशेमयि अनंतगुणेअसंख्यातज्ञानादिगुणे गुणतोनं

मय्यनंतगुणेऽनंतेगुणतोऽनंतविग्रहे ॥ यदासीत्ततएवाद्यःस्वयंभूःसमभूदजः ४८ सवैयदामहादेवोममवीर्योपबृंहितः ॥ मेनेकल्पमिवात्मानमुद्यतःसर्गकर्मणि ४९ अथमेऽभिहितोदेवस्तपोतप्यतदारुणम् ॥ नवविश्वसृजोयुष्मान्येनादावसृजद्विभुः ५० एषापंचजनस्यांगदुहितावैप्रजापतेः ॥ असिक्नीनामपत्नीत्वेप्रजेशप्रतिगृह्यताम् ५१ मिथुनव्यवायधर्मस्त्वंप्रजासर्गमिमंपुनः ॥ मिथुनव्यवायधर्मिण्यांभूरिशोभावयिष्यसि ५२ त्वत्तोऽधस्तात्प्रजाःसर्वामिथुनीभूयमायया ॥ मदीययाभविष्यंतिहरिष्यंतिचमेबलिम् ५३ इत्युक्त्वामिषतस्तस्यभगवान्विश्वभावनः ॥ स्वप्नोपलब्धार्थइवतत्रैवांतर्दधेहरिः ५४ ॥ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेचतुर्थोध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ श्रीबादरायणिरुवाच ॥ तस्यांसपांचजन्यांवैविष्णुमायोपबृंहितः ॥ हर्यश्वसंज्ञानयुतंपुत्रानजनयद्विभुः १ अपृथग्धर्मशीलास्तेसर्वेदाक्षायणानृप ॥ पित्राप्रोक्ताःप्रजासर्गेप्रतीचींप्रययुर्दिशम् २ तत्रनारायणसरस्तीर्थंसिंधुसमुद्रयोः ॥ संगमोयत्रसुमहन्मुनिसिद्धनिषेवितम् ३ तदुपस्पर्शनादेवविनिर्धूतमलाशयाः ॥ धर्मेपारमहंस्येचप्रोत्पन्नमतयोप्युत ४ तेपुस्तेतपएवोग्रंपित्रादेशेनयंत्रिताः ॥ प्रजाविवृद्धयेयत्तान्देवर्षिस्तान्ददर्शह ५

ते प्रत्येकशोप्यसंख्याते अनंतविग्रहेअसंख्यातरूपे प्रत्येकशोगुणानांतुनिःसीमत्वमुदीर्यते अनंतत्वंतुगुणतस्तेचानंताहिसंख्यया अतोऽनंतगुणोविष्णुर्गुणतोनंतएवचेतिवचनंचात्रमानं ४८ महादेवःदेवेभ्योमहानुत्तमः सब्रह्मा अकल्पमशक्तं स्रष्टुमितिशेषः ४९ अथतदा मेमयायेनतपसा ५० ५१ ५२ मदीययामत्सृष्टयामाययास्त्रीरूपिण्याअधस्तादर्वाचीना बलिंमेमह्यंहरिष्यंतिदास्यंति ५३ मिषतःपश्यतः५४ इतिश्रीभागवतेषष्ठस्कंधेवि०टीकायांचतुर्थोध्यायः ४ ज्ञानमंतरेणकेवलकर्मणापरमश्रेयःसाधनत्वंनिषिध्यतेऽस्मिन्नध्याये तत्रोपोद्घातंरचयति तस्यामिति पांचजन्यांपंचजननाम्नःप्रजापतेःपुत्र्यां विष्णुमाययाविष्णुमहिम्ना १ २ तत्रप्रतीच्यांसिंधुसमुद्रयोःसंगमोस्तियत्रसंगमेनारायणसरोनामतीर्थंचास्ति सुमहांतोमुनयश्चसिद्धाश्चसुमहन्मुनिसिद्धाः तैर्निषेवितं ३ तस्यतीर्थजलस्यज्ञानाचमनादिनाविनिर्धूतमलः आशयोयेषांतेतथोक्ताः ४ यत्तान्सन्नद्धान् ५

हेहर्यश्वाः सर्जनलक्षणंकर्मप्रयोजनेनभवितव्यं तत्कथंसेत्स्यति नकथमपि ज्ञानाभावात्तत्त्वात्मानात्मविवेकलक्षणंवाइत्यनेनसूचयति । परोक्षप्रियाइवहिदेवाःप्रत्यक्षद्विषइतिश्रुतेः इतरेषांदुर्बोधा बहर्यश्वानामौत्सर्गिकज्ञानसद्भावप्रकटनायचपरोक्षवचनेनज्ञानाभावंदर्शयति अदृष्टेति यस्माद्बालकाः अतएवचबालिशाइत्युपचारमात्रवचनम् ६ ७ ८ अनुरूपमात्मानात्मविवेकलक्षणम् ९ औत्पत्तिकमनीषयास्वाभाविकज्ञानसंपन्नयाधियाविचारविशुद्धयाबुद्ध्या वाचःकूटंवचनसमूहं गुह्यभाषात्मकत्वेनकूटमिवप्रतीयमानंवाअल्पबुद्धिभिर्दुर्बोधंवा स्वयपरोपदेशविनाविमृशुः विचार्यालोच्यनिश्चितवंतइत्यर्थः मननेच्छामनीषास्याज्ज्ञानंबुद्धिर्मतिस्तथेत्यभिधानं कूटंतुकैतवंज्ञेयंसमूहोमेलनंतथेतिच औत्पत्तिकमनीषयानिरूप्योक्तं धियाविमृशुरितिवा १० कथनिश्चिक्युरितित आह भूःक्षेत्रमिति भुवोंतमित्यत्रभूशब्देनक्षेत्रंसूक्ष्मशरीरंलिंगशब्दवाच्यमुच्यते कस्यविद्यमानमत्राह बीजेति बीजसंज्ञस्यजीवस्ययच्छरीरमनादिकालमारभ्यजीवनितरांबध्नातीतिअनादिनिबंधनं अस्मिन्कालेमारब्धमित्यनियमादनादि अनेनलिंगशरीरस्यभूशब्दवाच्यत्वंयुक्तं भूसत्तायामितिधातोः सत्तायारतथात्वात् तस्यशरीरस्यांतंनिर्वाणंसर्वात्मनानाशमदृष्ट्वाऽनेनोपायेननाशोभवतीत्यज्ञात्वाऽसत्कर्मभिरात्मानात्मविवेकाजनकैःसर्जनलक्षणैःकर्मभिःकिंफलंनकिमपीत्यर्थः ११ तथैकपुरुषंराज्यमित्यस्यविमृष्टार्थमाह एकएवेति तुर्योऽवस्थात्रयातीतः अभवंनभवःसंसार.

उवाचचाथहर्यश्वाःकथंस्रक्ष्यथवैप्रजाः॥ अदृष्ट्वांतंभुवोयूयंबालिशाबतबालकाः ६ तथैकपुरुषंराज्यंबिलंचादृष्टनिर्गमम्॥ बहुरूपांस्त्रियंचापिपुमांसंपुंश्चलीपतिम् ७ नदीमुभयतोवाहांपंचपंचाद्भुतंगृहम् ॥ क्वचिद्धंसंचित्रकथंक्षुरांतंचस्वयंभ्रमिम् ८ कथंस्वपितुरादेशमविद्वांसोविपश्चितः ॥ अनुरूपमविज्ञायअहोसर्गंकरिष्यथ ९ श्रीशुकउवाच ॥ तन्निशम्याथहर्यश्वाऔत्पत्तिकमनीषया ॥ वाचःकूटंचदेवर्षेःस्वयंविमृशुर्धिया १० भूःक्षेत्रंबीजसंज्ञस्ययदनादिनिबंधनम् ॥ अदृष्ट्वातस्यनिर्वाणंकिमसत्कर्मभिर्भवेत् ११ एकएवेश्वरस्तुर्योभगवान्स्वाश्रयःपरः ॥ तमदृष्ट्वाऽभवंपुंसःकिमसत्कर्मभिर्भवेत् १२ पुमान्नैवैतियद्गत्वाबिलंस्वर्गगतोयथा ॥ प्रत्यगात्माविदइहकिमसत्कर्मभिर्भवेत् १३ नानारूपात्मनोबुद्धिःस्वैरिणीवगुणान्विता ॥ तन्निष्ठामगतस्येहकिमसत्कर्मभिर्भवेत् १४ तत्संगभ्रंशितैश्वर्यंसंसरंतंकुभार्यवत् ॥ तद्गतीरबुधस्येहकिमसत्कर्मभिर्भवेत् १५

उत्पत्तिर्वायस्यसतथातंनित्यमुक्तमित्यर्थः अदृष्ट्वाऽविज्ञाय पुरुषस्यपशुहिंसालक्षणैः भगवदर्पणबुद्धिशून्यैःयागादिकर्मभिःकिंनित्यंफलंभवेन्नस्यादित्यर्थः पुंसोऽभवंमुक्तिप्रदंवा १२ बिलंचादृष्टनिर्गममित्यस्यालोचितार्थमाह पुमानिति पुमान्प्रत्यगात्मनासर्वात्मनाऽनुगतंब्रह्मस्वरूपंगत्वानापैति तदतिशयितबलात्मकत्वाद्बिलशब्दवाच्यंब्रह्माविदोऽजानतःपुंसइहजीवल्लोकेनित्यनैमित्तिकासत्कर्मभिःइतरविपर्ययैः बिलंस्वर्गेतिव्यतिरेकदृष्टांतः अनेनअदृष्टनिर्गममित्यस्यपुनरावृत्तिशून्योर्थःइतरत्रानिष्क्रमणार्थइतिसूचितं १३ बहुरूपामित्यस्ययुक्तार्थमाह नानारूपेति आत्मनोजीवस्ययाबुद्धिः चिदचिदात्मिकासत्वादिगुणैरुपरक्ताविकृतावाअतएवनानारूपा अजामेकांलोहितशुक्लकृष्णामितिश्रुतेः नानाविधसंस्काराधिवासितत्वात्स्वैरिणीस्वच्छंदवर्तिनीस्त्रीव तन्निष्ठांतस्याःबुद्धेश्चेतनायाः निष्ठांभगवत्परतामचिदात्मिकायाः नाशमगतस्यभगवद्भक्त्यादिसामग्रीमकुर्वतः पुरुषस्य बुद्धिदोषनाशासमर्थैः दानादिलक्षणैःकर्मभिः १४ पुमांसंपुंश्चलीपतिमित्यस्यविवक्षितार्थमाह तत्संगेति तस्याःरजस्तमःप्रकृतेर्बुद्धेःसंगेनवशवर्तित्वलक्षणेनभ्रंशितंविस्रस्तंनष्टमैश्वर्यंभगवज्ज्ञानलक्षणंशमदमादिलक्षणंवायस्यसतथातं अतएवसंसरंतंसुखदुःखेभुंजानंजीवं तद्गतीःतस्यजविस्वर्गनरकादिलक्षणाअबुधस्याजानतःपुंसः असद्भिःभगवदनुद्देशेनग्रसक्तैःकर्मभिःतीर्थस्नानादिलक्षणैःदुःखनिवृत्तिःफलंभवेत्किं कुत्सिताशास्त्रलोकनिंदिताभार्यापुंश्चलीयस्यसतथा तस्ययानरकादिगतिस्तद्वत्अनेनपुंश्चलीपतिशब्दार्थउक्तः १५

नदीमुभयतोवामित्यस्याहाभिमतार्थमाह सृष्टीति वेलाकूलशब्दाभ्यांसृष्टिसंहारौलक्ष्येते तयोरंतयोर्वाहशब्दोपलक्षितवेगयुक्तांस्थितौशनैःप्रवर्तमानांतयोक्तां क्रमव्युत्क्रमत उभयतोवाहत्वं एवंवि धामीश्वरमायां मत्तस्यविषयरागेणविस्मृतस्य अतएवतदविज्ञानात्तद्विपयज्ञानाभावादसाङ्केकर्मभि अश्रद्धयाकृततपआदिलक्षणैः मायाविनिवर्तकफलं प्रसिद्धनद्याश्चवृद्धिह्रासाभ्याउभय तोवाहत्वंसिंधुसंगमेदृष्टं नदीमातृकेदेशेसस्यादिसंहारेच १६ पंचपंचत्यस्यविमर्शप्रकारमाह पंचेति पंचविंशतितत्त्वानामद्भुतत्वेनदश्यतइत्यद्भुतदर्शनः गृहस्थानीयोय पुरुषरतमध्यात्ममात्मानम धिकृत्यवर्तमानमिंद्रियं वाबुधस्याजानतः पुरुषस्यासत्कर्मभि ओमित्येकाक्षरंब्रह्मव्याहरन्मामनुस्मरन्नितिस्मृतिविहिताविषयैर्योगाभ्यासादिलक्षणैः वायुप्रसादादिफलं अनेनपंचपंचेत्यत्रपचकत्रयग्र हमिति सूचितं १७कचिद्धंसंचित्रकथमित्यस्यार्थंदर्शयति ऐश्वरमिति ईश्वरप्रतिपादकंसमाख्यादिभाषात्रयेणचित्राःकथायस्मिंस्तत् बधमोक्षावनुदर्शयतीतिबंधमोक्षानुदर्शनं अतएवहसं विविक्तपदंविवि क्तंसर्वतःसारभूतंपदतेप्राप्नोतिअनेनपुरुषइति हसोयथासारंक्षीरमेवगृह्णातितथेदमितिलुप्तोपमं एवंविधंभारतादिशास्त्रमुत्सृज्याज्ञात्वाऽसत्कर्मभिर्बौद्धादिशास्त्रश्रवणलक्षणैः ज्ञानलक्षणंफलं १८ क्षुरां तंस्वयंभ्रमिमित्यस्यानुरूपार्थमाह कालचक्रमिति भ्रमिमित्यनूद्यसर्वंजगन्निष्कर्षयेदितिव्याख्याति भ्रामयन्सर्वभूतानीतिस्मृते क्षुरांतमित्यस्यार्थस्तीक्ष्णमिति क्षुरांतःक्षुरधारातद्वत्तीक्ष्णमित्यर्थः

सृष्ट्यप्ययकरींमायांवेलाकूलांतवेगिताम् ॥ मत्तस्यतदविज्ञानात्किमसत्कर्मभिर्भवेत् १६ पंचविंशतितत्त्वानांपुरुषोद्भुतदर्शनः ॥ अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् १७ ऐश्वरंशास्त्रमुत्सृज्यबंधमोक्षानुदर्शनम् ॥ विविक्तपदमज्ञात्वाकिमसत्कर्मभिर्भवेत् १८ कालचक्रंभ्रमितीक्ष्णसर्वंनिष्कर्षयेज्ज गत् ॥ स्वतंत्रमबुधस्येहकिमसत्कर्मभिर्भवेत् १९ शास्त्रस्यपितुरादेशंयोनवेदनिवर्तकम् ॥ कथंतदनुरूपायगुणविश्रंभ्युपक्रमेत् २० इतिव्यवसितारा जन्हर्यश्वाएकमेधसः ॥ प्रययुस्तंपरिक्रम्यपंथानमनिवर्तकम् २१ स्वरब्रह्मणिनिर्भातेहृषीकेशपदांबुजे ॥ अखंडंचित्तमावेश्यलोकाननुचरन्मुनिः २२ नाशंनिशम्यपुत्राणांनारदाच्छीलशालिनाम् ॥ अन्वतप्यतकःशोचन्सुप्रजास्त्वंशुचांपदम् २३ सभूयःपांचजन्यायामजेनपरिसांत्वितः ॥ पुत्रानज नयद्दक्षःशबलाश्वान्सहस्रिणः २४ तेपिपित्रासमादिष्टाःप्रजासर्गेधृतव्रताः ॥ नारायणसरोजग्मुर्यत्रसिद्धास्तुपूर्वजाः २५ तदुपस्पर्शनादेवविनिर्धूतम लाशयाः ॥ जपंतोब्रह्मपरमंतेपुस्तत्रमहत्तपः २६अब्भक्षाःकतिचिन्मासान्कतिचिद्वायुभोजनाः ॥ आराधयन्मंत्रमिममभ्यसंतइडस्पतिम् २७ओंनमोना रायणायपुरुषायमहात्मने ॥ विशुद्धसत्त्वधिष्ण्यायमहाहंसायधीमहि २८इतितानपिराजेंद्रप्रजासर्गधियोमुनिः ॥ उपेत्यनारदःप्राहवाचःकूटानिपूर्ववत् २९

स्वपमित्यस्यार्थः स्वतंत्रमिति एतैरर्थैःकिंलक्ष्यतइतितदाह कालचक्रमिति द्वादशमासादिदलाद्यन्वितत्वाच्चक्रव्यपदेशः तत्स्वरूपमप्यजानत पुंसस्तत्तत्कालविहिताविषयैःकालजयलक्षणंफलम् १९ क थंस्वपितुरादेशमित्यस्यानुगुणार्थमाह शास्त्रस्येति मातेवरक्षतिपितेवहितेनियुंक्तेइतिवचनात् पितेवहितोपदेष्टृत्वात्पितृशब्देनशास्त्रमुपलक्ष्यते प्रातरुत्थाययथासंध्यामुपासीतेत्यादेः अनुरूपंसंसारनिव र्तकंशास्त्रलक्षणंपितुरादेशंयोनवेद सगुणविश्रंभी गुणविश्वासीपुरुषस्तदनुरूपायशास्त्रविधानानुगुणायकथंसत्कर्मउपक्रमेदज्ञानादितिशेषः २० इतिऋषेरभिप्रायंव्यवसिताःनिश्चितवंतःएकमेधसः एकबु द्धयःअनिवर्तकंपंथानंसंन्यासलक्षणंमार्गं संन्यासानंतरंपुनराश्रमांतराभावादनिवर्तकंवा नानिवर्तकंयस्यसतथातम् २१ स्वरब्रह्मणिषड्जादिस्वरलक्षणब्रह्मणिगांधर्वे नितरांभातेप्रकाशिते यथाअखंड निरंतरंभवतितथा । निर्भातेतितिपाठेचित्तविशेषणं निष्णातमित्यर्थः २२ कोदक्षः सुप्रजास्त्वंशोभनसंततिमत्त्वं शुचांशोकानापदंस्थानमितिसंचित्य । सुप्रजास्त्वमंगिरसोवोअस्त्वितिछंदोनुकारिप्रयो [illegible] २४।२५।२६अभ्यसंतःअभ्यस्यंत इडस्पतिंइळापतिं २७विशुद्धसत्त्वधिष्ण्यायविशुद्धसत्त्वगुणाश्रयायनिर्दोषबलज्ञानस्वरूपायवा महाहंसायसारग्राहिश्रेष्ठाय२८ २९

३० [illegible]आश्रमप्राप्तिलक्षणं पुण्यमेवबंधुर्यस्यसतथा मरुद्भिर्देवैः ३१ ३२ सध्रीचीनंशोभनं प्रतीचीनमाभिमुख्येनवर्तमानं परस्यपरमात्मनःअनुपथमनुगुणंपंथानं । पश्चिमाःयामिनीयामिन्यः
[illegible]इव ३३ प्रजापतिर्दक्षः ३४ ३५ साधोरिवलिंगंजटायज्ञोपवीतशमदमादिलक्षणंयस्यसतथातेनत्वया नःसाधूनामर्भकाणांभिक्षोःसंन्यासिनःमार्गःप्रदर्शितइतियदतोऽसाध्वमंगलमकारी
त्यक्तः ३६ ननुभिक्षुमार्गस्यसंन्यासेनतनुंत्यजेदित्यादिनाविहितत्वात्कथममंगलकृतामित्युच्यतइतितत्राह ऋणैरिति ब्रह्मचर्येणऋषिभ्योयज्ञेनदेवेभ्यःप्रजयापितृभ्यइतिश्रुतेः त्रिभिःऋणैरमुक्तानां
अननुष्ठानादितिशेषः अमीमांसितानि अविचारितानिकर्माणियैस्तथातेषांपुत्राणामुभयोर्लोकयोरवाप्तिहेतोःश्रेयसोविघातोविघ्नःकृतइत्यन्वयः रोषानिमित्तंहेपापेतिसंबोधनम् ननुतदर्थयुक्त्वा
त् ३७ एवंविचार्यमाणेसति बालानांकृत्याकृत्यविवेकज्ञानशून्यानां मतिभिद्बुद्धिभेदकृत् यशसोहानिर्यस्मात्सतथायशोनाशंकृतवान्वा निरनुक्रोशःनिर्गताअनुकंपायस्मात्सतथा ३८ एतदेवाह
नन्विति सौहृदघ्नमित्यस्याविवरणंवैरंकरमिति लशप्रत्ययेनदक्षस्यकोपोद्रेकंदर्शयति एतदेवविस्फुरिताधरइत्यनेनाप्यसूचि ३९ विषयप्रसक्त्यारागोद्रेकसंभवेनसंसारानिवृत्तिःस्यादतोवैराग्या

दाक्षायणाःसंशृणुतगदतोनिगमंमम ॥ अन्विच्छतानुपदवींभ्रातॄणांभ्रातृवत्सलाः ३० भ्रातॄणांप्रायणंभ्रातायोऽनुतिष्ठतिधर्मवित् ॥ सपुण्यबंधुःपुरुषो
मरुद्भिःसहमोदते ३१ एतावदुक्त्वाप्रययौनारदोमोघदर्शनः ॥ तेपिचान्वगमन्मार्गंभ्रातॄणामेवमारिष ३२ सध्रीचीनंप्रतीचीनंपरस्यानुपथंगताः ॥ नाद्या
पितेनिवर्ततेपश्चिमायामिनीरिव ३३ एतस्मिन्कालउत्पातान्बहून्पश्यन्प्रजापतिः ॥ पूर्ववन्नारदकृतंपुत्रनाशमुपाशृणोत् ३४ चुक्रोधनारदायासौपुत्रशो
कविमूर्छितः ॥ देवर्षिमुपलक्ष्याहरुषाप्रस्फुरिताधरः ३५ दक्षउवाच ॥ अहोअसाधोसाधूनांसाधुलिंगेननस्त्वया ॥ असाध्वकार्यर्भकाणांभिक्षोर्मार्गःप्रद
र्शितः ३६ ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम् ॥ विघातःश्रेयसःपापलोकयोरुभयोःकृतः ३७ एवंत्वंनिरनुक्रोशोबालानांमतिभिद्धरेः ॥ पार्ष
दमध्येचरसियशोहानिरपत्रपः ३८ ननुभागवतानित्यंभूतानुग्रहकातराः ॥ ऋतेत्वांसौहृदघ्नंवैवैरंकरमवैरिणाम् ३९ नेत्थंपुंसोविरागःस्यात्त्वयाकेवलि
नाविना ॥ मन्यसेयद्युपशमंस्नेहपाशनिवर्तनम् ४० नानुभूयनजानातिपुमान्विषयतीक्ष्णताम् ॥ निर्विद्यतेस्वयंतस्मान्नतथाभिन्नधीःपरैः ४१ यन्नस्त्वं
कर्मबंधानांसाधूनांगृहमेधिनाम् ॥ कृतवानसिदुर्मर्षंविप्रियंतवमर्षितम् ४२ तंतुकृंतनयानांत्वमभद्रमचरःपुनः ॥ तस्माल्लोकेषुतेमूढनभवेद्भ्रमतःपदम् ४३
श्रीशुकउवाच ॥ प्रतिजग्राहतद्बाढंनारदःसाधुसंमतः ॥ एतावान्साधुवादोहितितिक्षेतेश्वरःस्वयम् ४४ इतिश्रीभागवतेषष्ठस्कंधेपंचमोध्यायः ॥ ५ ॥

पमप्राहितमुपादेशीतितत्राह नेत्थमिति केवलिनासंध्योपासनादिकर्मशून्येनभागवताभिमानिनात्वयाविनाइत्थंबोधनेनपुंसोविरागोनस्यादित्यन्वयः ननु विषयस्नेहाद्रागःउपशमात्स्नेहनिवृत्त्यारा
गनिवृत्तिरितिचेत्तत्राह मन्यसइति यद्युपशमंस्नेहनिवर्तकमन्यसेतथापिसव्यर्थइतिमन्यइतिशेषः ४० कुतोव्यर्थइतितत्राह नेति नानुभूयाननुभूयविषयसेवामकृत्वेत्यर्थः विषयतीक्ष्णतांससारापा
त्तमधुरतांतज्ज्ञानाद्वैराग्यंस्यात्किमितितत्राह निर्विद्यतइति यथाविषयभोगेनतत्तैक्ष्ण्यंज्ञात्वास्वयंपरोपदेशमंतरेणतस्माद्विषयग्रामान्निर्विद्यतेविरक्तोभवतितथापरैर्भिन्नधीःप्रबोधितबुद्धिः नविरक्तो
भवति अज्ञातविषयतीक्ष्णत्वादितिशेषः ४१ गालीवचनमंतरेणक्रोधफलमाह यदिति त्वंदुर्मर्षंदुःसहंविरोधंकृतवानसीतियत्तन्म[illegible]तंसोढव्यमेवेत्यन्वयः ४२ तर्हिकिनमर्षितइतितत्राह तंत्विति
हेमूढअस्मदभिमतविरुद्धबोधक तंतुकृंतांसंततिकराणांनःतनयानां अभद्रमैहिकसुखानुभवविरोधिरूपमचरःपुनःयस्मात्तस्माल्लोकेषुभ्रमतस्तेपदमेकत्रनिवासलक्षणंस्थानं नभवेदित्यन्वयः ४३
स्वयंक्षोभनवैबोनारदईश्वरःप्रतिशप्तुंसमर्थोपिनशशाप दक्षशापंतितिक्षेतसहेत हियदेतावान्साधूनांवादःस्वभावलक्षणः ४४ इति श्रीभागवतेम०षष्ठ०विजय०टीकायांपंचमोध्याय. ॥ ५ ॥

संदसज्जनतारतम्यज्ञानंचभगवन्माहात्म्यज्ञानोपयोगीत्यभिप्रेत्यदक्षपत्न्यसिक्निप्रसूतिप्रसरंप्रपंचयत्यस्मिन्नध्याये ततःप्राचेतसइत्यादिना १ कालस्यनयनेज्ञापने युक्ताःयोग्याःसप्तविंशतिंददाविविशेषः अपराःषट्पंचाशत्संख्याताभ्यःशिष्टाश्चतस्रःकन्यास्ताक्ष्यायददाविविशेषः २ सापत्यानांअपत्यतदपत्यादिभिःसहितानां प्रसूतिप्रभवैःपुत्रपौत्रादिभिः भान्वादीनांसपुत्राणांनामधेयंमेममसकाशादितिशेषः ३ ४ ततोवेदर्षभात् ततइंद्रसेनात्५ यतःसंकटात्जामीपुत्राःजामेयाः दुर्गाण्यगम्यस्थानाभिमानिनः ६ अप्रजान्पुत्ररहितान् तत्सुतःसाध्यगणसुतः ७ ८ माहूर्तिकाःमुहूर्ताभिमानिनः यथाफलंयथोचितंफलंस्वस्वमुहूर्तजं ९ १० आभेमतिः अभिमानदेवता । हर्षादय. हर्षाद्यंतःकरणदेवताः ११ सहआयुःप्रभृतयःपुत्राः । पुरः पुराभिमानिदेवताः १२

श्रीशुकउवाच ॥ ततःप्राचेतसोऽसिक्न्यामनुनीतःस्वयंभुवा ॥ षष्टिंसंजनयामासदुहितॄःपितृवत्सलाः १ ददौसदशधर्मायकश्यपायत्रयोदश ॥ कालस्यनयनेयुक्ताःसप्तविंशतिमिंदवे ॥ भूतांगिरःकृशाश्वेभ्योद्वेद्वेताक्ष्यायचापराः २ नामधेयान्यमूषांत्वंसापत्यानांचमेशृणु ॥ यासांप्रसूतिप्रभवैर्लोकाआपूरितास्त्रयः ३ भानुर्लंबाककुब्जामिर्विश्वासाध्यामरुत्वती ॥ वसुर्मुहूर्तासंकल्पाधर्मपत्न्यःसुताञ्छृणु ४ भनोस्तुवेदऋषभइंद्रसेनस्ततोनृपः ॥ विद्योतआसील्लंबायास्ततश्चस्तनयित्नवः ५ ककुभःसंकटश्चासीत्कीकटस्तनयोयतः ॥ भुवोदुर्गाणिजामेयाःस्वर्गोनंदिस्ततोऽभवत् ६ विश्वेदेवास्तुविश्वायामप्रजांस्तान्प्रचक्षते ॥ साध्यगणस्तुसाध्यायामर्थसिद्धिस्तुतत्सुतः ७ मरुत्वांश्चजयंतश्चमरुत्वत्यांबभूवतुः ॥ जयंतोवासुदेवांशउपेंद्रइतियंविदुः ८ मौहूर्तिकादेवगणामुहूर्तायाश्चजज्ञिरे ॥ यथाफलंप्रयच्छंतिभूतानांस्वस्वकालजम् ९ संकल्पायाश्चसंकल्पःकामःसंकल्पजःस्मृतः ॥ वसवोष्टौवसोःपुत्रास्तेषांनामानिमेशृणु १० द्रोणःप्राणोध्रुवोऽर्कोऽग्निर्दोषोवस्तुर्विभावसुः ॥ द्रोणस्याभिमतेःपत्न्याहर्षशोकभयादयः ११ प्राणस्योर्जस्वतीभार्यासहआयुःपरोजवः ॥ ध्रुवस्यभार्याधरणीत्वसूतविविधाःपुरः १२ अर्कस्यवासनाभार्यापुत्रास्तर्षादयःस्मृताः ॥ अग्नेर्भार्यावसोर्धारापुत्राद्रविणकादयः १३ स्कंदश्चकृत्तिकापुत्रोयेविशाखादयस्ततः ॥ दोषस्यशर्वरीपुत्रःशिंशुमारोहरेःकला १४ वस्तोरांगिरसीपुत्रोविश्वकर्माकृतीपतिः ॥ ततोमनुश्चाक्षुषोऽभूद्विश्वेसाध्यामनोःसुताः १५ विभावसोरसूतोषाव्युष्टंरोचिषमातपम् ॥ पंचयामोथभूतानियेनजाग्रतिकर्मसु १६ भूतस्यभार्याभूतायारुद्राएकादशस्मृताः ॥ सुरूपासूतभूतस्यभार्यारुद्रांश्चकोटिशः १७

वसोःपुत्रस्याग्नेर्भार्या धारास्वाहापरपर्याया द्रविणकादयस्तत्पुत्राः १३ स्कंदश्चाग्निपुत्रःधात्रीत्वेनकृत्तिकापुत्रःउपचारमात्रमेतन्मुख्यतस्तुसदाशिवपुत्रः येविशाखादयः तेतत स्कंदाज्जाता। दोषभार्याशार्वरीतत्पुत्रःशिंशुमारः । कोसावितितत्राह हरेरिति १४ वस्तोर्भार्यांगिरसी तत्पुत्रःविश्वकर्माकृतिपतिः कृतीनांशिल्पानांईरच्छातस्याःपति, शिल्पिनांकुलाचार्यइत्यर्थः कृत्याःदेव्याःपतिरितिवा ततोविश्वकर्मणः १५ अथपंचयामोदिवसाभिमानी आतपाज्जातइतिशेषः येनपंचयामेन १६ भूतस्यसततिमाह भूतस्यभार्यानाम्नाभूताभार्याएकादशरुद्रानसूत। तस्यान्या. सुरूपा भार्याकोटिशोरुद्रानसूत तथारुद्राणांपार्षदानसूत तथाप्रेतविनायकांश्च प्रधानरुद्ररूपाणांनामान्याह १७

रैवतइति १८ अंगिरसःप्रजापतेः नाम्नास्वधापत्नीपितॄनसूत अथतस्यैवान्याभार्या अथर्वांगिरसंवेदंपुत्रत्वेऽकरोत् १९ वेदशिराइतिकृशाश्वस्यनामांतरम् २० पुत्रणांजातिभेदसूचना गृयपामिनीइतिसंधिकार्याभावः ॥ २१ ॥ अहंऊरुरहितमरुणमित्यर्थः ॥ २२ ॥ यक्ष्मग्रहार्दितःक्षयरोगार्तः कीदृश्यःकलाः कृष्णपक्षेक्षयाःक्षीणाः शुक्लपक्षेएधिताः वर्धिताः वृद्ध्यभाव श्छांदसः एधवृद्धावितिधातोः अथवाइधिदीप्तावितिधातुः निष्ठायांनुमोलोपेइधिताइतिरूपंसिद्ध्यति बस्यगुणः २३ शकराणिसुखकराणि ॥ २४ ॥ अत्रापिमिथोवैलक्षण्यद्योतनायसंधि

रैवतोऽजोभवोभीमोवामउग्रोवृषाकपिः ॥ अजैकपादहिर्बुध्न्योबहुरूपोमहानिति ॥ रुद्रांश्चपार्षदांश्चान्यान्घोरान्प्रेतविनायकान् १८ प्रजापतेरांगिरसः स्वधापत्नीपितॄनथ ॥ अथर्वांगिरसंवेदंपुत्रत्वेचाकरोत्सती १९ कृशाश्वोऽर्चिषिभार्यायांधूमकेतुमजीजनत् ॥ धिषणायांवेदशिरादेवलंचसुतं मनुम् २० तार्क्ष्यस्यविनताकद्रूःपतंगीयामिनीइति ॥ पतंग्यसूतपतगान्यामिनीशलभानथ २१ विनतासूतगरुडंसाक्षाद्यज्ञेशवाहनम् ॥ सूर्य सूतमनूरुंचकद्रूर्नागाननेकशः २२ कृत्तिकादीनिनक्षत्राणींदोःपत्न्यस्तुभारत ॥ दक्षशापात्सोऽनपत्यस्तासुयक्ष्मग्रहार्दितः ॥ पुनःप्रसाद्यतंसोमःक लालेभेक्षयेधिताः २३ शृणुनामानिलोकानांमातॄणांशंकराणिच ॥ अथकश्यपपत्नीनांयत्प्रसूतमिदंजगत् २४ अदितिर्दितिर्दनुःकाष्ठाअरिष्टासु रसाइला ॥ मुनिःक्रोधवशाताम्रासुरभिःसरमातिमिः २५ तिमेर्यादोगणाआसन्श्वापदाःसरमासुताः ॥ सुरभेर्महिषागावोयेचान्येद्विशफानृप ॥ ताम्रा याःश्येनगृध्राद्यामुनेरप्सरसांगणाः २६ दंदशूकादयःसर्पाराजन्क्रोधवशात्मजाः ॥ इलायाभूरुहाःसर्वेयातुधानाश्चसौरसाः २७ अरिष्टायाश्चगंधर्वाःका ष्ठायाद्विशफेतराः ॥ सुतादनोरेकषष्टिस्तेषांप्राधानिकाञ्शृणु २८ द्विमूर्धाशंबरोऽरिष्टोहयग्रीवोविभावसुः ॥ अयोमुखःशंकुशिराःस्वर्भानुःकपिलोऽरुणः २९ पुलोमावृषपर्वाचएकचक्रोऽनुतापनः ॥ धूम्रकेशोविरूपाक्षोविप्रचित्तिस्तुदुर्जयः ३० स्वर्भानोःसुप्रभांकन्यामुवाहनमुचिःकिल ॥ वृषपर्वणस्तु शर्मिष्ठांययातिर्नाहुषोबली३१वैश्वानरसुतायाश्चचतस्रश्चारुदर्शनाः ॥ उपदानवीहयशिराःपुलोमाकालिकातथा ३२ उपदानवींहिरण्याक्षःक्रतुर्हयशिरां नृप ॥ पुलोमांकालिकांचद्वेवैश्वानरसुतेनृप ३३ उपयेमेचभगवान्कश्यपोब्रह्मचोदितः ॥ पौलोमाःकालिकेयाश्चदानवायुद्धशालिनः ३४ तयोःषष्टि सहस्राणियज्ञघ्नांस्तेपितुःपिता ॥ जघानस्वर्गतोराजन्नेकइंद्रप्रियंकरः ३५ विप्रचित्तिःसिंहिकायांशतंचैकमजीजनत् ॥ राहुज्येष्ठंकेतुशतंग्रहत्वंयउपाग तः ३६ अथातःश्रूयतांवंशोयोऽदितेरनुपूर्वशः ॥ यत्रनारायणोदेवःस्वांशेनावतरद्विभुः ३७ विवस्वानर्यमापूषात्वष्टाऽथसविताभगः ॥ धातावि धातावरुणोमित्रश्शक्रउरुक्रमः ३८

कार्याभावः २५ सूचीकटाहन्यायेनप्रातिलोम्येनसंततिमाह तिमेरिति २६ भूरुहाःवृक्षाःसुरसायाःपुत्राःसौरसाः २७ द्विशफेतराः एकशफाः प्राधानिकंप्रधानविषयसंख्यानं २८ २९ ३० ३१ ३२ ३३ ३४ तेसवपितुरभिमन्योःपिताऽर्जुनः ३५ ३६ ३७ ३८

३९ भुविवर्तमानेतिशेषः नाम्नावडवा ४० ४१ विवृतद्विजःप्रकाशितदंतः दक्षायकुपितंहरमितिशेषः ४२ तयारोचनयात्वष्टु सन्निवेशोनामसुतोजज्ञेविश्वरूपरयाभूदितिशेषः ४३ तंविश्वरूपंरोचनादे वानामपिस्वस्राउभयेषांकश्यपपुत्रत्वेनमिथोभ्रातृत्वाद्देवानांस्वस्रीयंस्वसुःपुत्रंद्विषतामसुराणामपिस्वस्रीयमित्यर्थः देवै सहेंद्रेणविमतेनावज्ञातेनांगिरसेनगुरुणाबृहस्पतिनापरित्यक्ताअभूवन्नितिपदतोऽसु रजयार्थंविश्वरूपंवव्रिरेइत्यर्थः४४इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेविज०षष्ठोऽध्यायः६गुरुद्वाराप्रसादकृदहात्वितिवचनाद्गुरुप्रसादएवबलीयान्भक्तिज्ञानादिसमुद्रेकसिद्धये तदभाव सद्यो ऽनर्थपरंपराहे तुरतोज्ञानार्थिनापुरुषेणस्वप्नेपिगुरुर्नावमंतव्यःकिंतुनिरंतरंसबहुमानंप्रसादसमृद्ध्येनिषेवणीयइतिएतस्मिन्नध्यायेनिरूप्यते तत्रराजापृच्छति यस्येति यस्यकस्य आत्मनःआचार्येणशिष्याणापुत्राणा

विवस्वतःश्राद्धदेवंसंज्ञाऽसूयतवैमनुम् ॥ मिथुनंचमहाभागायमंदेवंयमींतथा ३९ सैवभूत्वाऽथवडवानासत्यौसुषुवेभुवि ॥ छायाशनैश्चरंलेभेसावर्णिं चमनुंततः ॥ कन्यांचतपतींयावैवव्रेसंवरणंपतिम् ४० अर्यम्णोमातृकापत्नीतयोश्चर्षणयःसुताः ॥ यत्रवैमानुषीजातिर्ब्रह्मणाचोपकल्पिता ४१ पूषाऽनपत्यःपिष्टादोभग्नदंतोऽभवत्पुरा ॥ योऽसौदक्षायकुपितंजहासविवृतद्विजः ४२ त्वष्टुर्दैत्यानुजाभार्यारोचनानामकन्यका ॥ सन्निवेशस्तयाजज्ञेवि श्वरूपश्चवीर्यवान् ४३ तंवव्रिरेसुरगणाःस्वस्रीयंद्विषतामपि ॥ विमतेनपरित्यक्तागुरुणांगिरसेनयत् ४४ इतिश्रीभागवतेषष्ठस्कंधेषष्ठोऽध्यायः ६ ॥

राजोवाच ॥ यस्यहेतोःपरित्यक्ताआचार्येणात्मनःसुराः ॥ एतदाचक्ष्वभगवन्शिष्याणामक्रमंगुरौ १ ॥ श्रीशुकउवाच ॥ इंद्रस्त्रिभुवनैश्वर्यमदोल्लंघित सत्पथः ॥ मरुद्भिर्वसुभीरुद्रैरादित्यैरृभुभिर्नृप २ विश्वेदेवैश्चसाध्यैश्चनासत्याभ्यांपरिश्रितः ॥ सिद्धचारणगंधर्वैर्मुनिभिर्ब्रह्मवादिभिः ३ विद्याधराप्सरो भिश्चकिन्नरैःपतगोरगैः ॥ निषेव्यमाणोभगवांस्तूयमानश्चभारत ४ उपगीयमानोललितमास्थानाध्यासनाश्रितः ॥ पांडुरेणातपत्रेणचंद्रमंडलचारु णा ५ युक्तश्चान्यैःपारमेष्ठ्यैश्चामरव्यजनादिभिः ॥ विराजमानःपौलोम्यासहार्धासनयाभृशम् ६ सयदापरमाचार्यंदेवानामात्मनश्चह ॥ नाभ्यनंदतसं प्राप्तंप्रत्युत्थानासनादिभिः ७ वाचस्पतिंमुनिवरंसुरासुरनमस्कृतम् ॥ नोच्चचालासनादिंद्रःपश्यन्नपिसमागतम् ८ ततोनिर्गत्यसहसाकविरांगिरसः प्रभुः ॥ आययौस्वगृहंतूष्णींविद्वाञ्छ्रीमदविक्रियाम् ९ तर्ह्येवप्रतिबुद्ध्येंद्रोगुरुहेलनमात्मनः ॥ गर्हयामाससदसिस्वयमात्मानमात्मना १० अहोब तमयाऽसाधुकृतंवैदभ्रबुद्धिना ॥ यन्मयैश्वर्यमत्तेनगुरुःसदसिकात्कृतः ११ कोगृध्येत्पंडितोलक्ष्मींत्रिविष्टपपतेरपि ॥ ययाहमासुरंभावंनीतोऽद्यविबु धेश्वरः १२ योपारमेष्ठ्यंधिषणमधितिष्ठन्नकंचन ॥ प्रत्युत्तिष्ठेदितिब्रूयुर्धर्मंतेनपरंविदुः १३

अक्रमम्अपराधं १ राजमश्रंपरिहर्तुमुपक्रमते इंद्रइति २ ३ ४ आस्थानंसभा तत्राध्यासनंसिंहासनंआश्रितः ५ पारमेष्ठ्यैःश्रेष्ठैः ६ नअभ्यनंदतसंतुष्ट्यानापूजयत् ७ प्रत्येकशःपूजाहेतव इतिद्योत नायवाचस्पत्यादिविशेषणबाहुल्यं ८ श्रीनिमित्तमदस्यविक्रियांविकारं ९ तर्ह्येवतदानीमेवगुरोर्हेलनंअवज्ञान १० सदसीत्यनेनावज्ञानस्योद्रेकतामाह दभ्रबुद्धिनाऽल्पबुद्धिना कात्कृतःधिकृतः ११ कोगृध्येदिति गृधुअभिकांक्षायां १२ राजयोग्यंसिंहासनमधिष्ठितोनप्रत्युत्तिष्ठेदितिशास्त्रकारवचनात्कथमासुरभावंनीतइतिचेत्तत्राह यइति पारमेष्ठ्यंधिषणं सिंहासनस्थानमधितिष्ठन्राजाकंचनन प्रत्युत्तिष्ठेदितिप्रत्युत्थानंनकुर्यादितियेपंडितमन्याब्रूयुस्तेपरमंधर्मंनविदुरित्यन्वयः १३

ताहशानांवाक्येविश्वासेनप्रवर्तमानस्यानर्थफलहेतुत्वाद्बुद्धिमतानकर्तव्यमित्यभिप्रेत्याह तेषामिति अश्मनाकृताःप्लवाःनावोऽश्मप्लवाः १४ यतएवमनर्थोऽथतस्मादगाधधिषणंगंभीरबुद्धिम् १५ अध्यात्ममायपायोगसामर्थ्येन अदृष्टांगतिमदृश्यलक्षणांस्थितिम् १६ संज्ञांस्वरूपविषयंज्ञानं स्वराडिंद्रः १७ १८ निर्भिन्नान्यंगानिशरीराणिउरवश्चबाहवश्चयेषांतेतथा १९ आत्मन.परमात्मनोभवतीत्यात्मभूः २० वइतिषष्ठीतृतीयार्थेयुष्माभिरित्यर्थः २१ तस्यानयस्यान्यायस्यपरिपाक कोसावितितत्राह परेभ्यइति २२ काव्यंशुक्रं २३ निलयनंयुष्मदधिकृतस्वर्गमितिशेषः भृगुरवदेवतायेषांतेभृगुदेवताःजनाःममापिअभेद्यनिलयनंआदद्रीरन्दारयंतीतिवा २४ अनुशिक्षित सम्यक्साधितोऽर्थोयैस्तेतथाभृगूणांमंत्राः त्रिविष्टपमभेद्यंगणयंतिकिंनैव ब्राह्मणशक्तिराचिंत्यविभवेत्याह नविप्रेति विप्राश्चगाविंदश्चगावश्चईश्वराः येषांतेतथातेषां विप्रभक्तिर्गोविंदगोभक्त्यविनाभूतेतिदर्शनायसहैवोक्तं सापितारतम्योपेताशुभदेत्यतोगवीति २५ तत्तस्मात्तपस्वित्वादिगु

तेषांकुपथद्रष्टृणांपततांतमसिह्यधः ॥ येश्रद्दधुर्वचस्तेवैमज्जंत्यश्मप्लवाइव १४ अथाहममराचार्यमगाधधिषणंद्विजम् ॥ प्रसादयिष्येविशठःशीर्ष्णातच्चरणंस्पृशन् १५ एवंचिंतयतस्तस्यमघोनोभगवान्गृहात् ॥ बृहस्पतिर्गतोऽदृष्टांगतिमध्यात्ममायया १६ गुरोर्नाधिगतःसंज्ञांपरीक्षन्भगवान्स्वराट् ॥ ध्यायन्धियासुरैर्युक्तःशर्मनालभतात्मनः १७ तच्छ्रुत्वैवासुराःसर्वेआश्रित्यौशनसंमतम् ॥ देवान्प्रत्युद्यमंचक्रुर्दुर्मदाआततायिनः १८ तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नांगोरुबाहवः ॥ ब्रह्माणंशरणंजग्मुःसहेंद्रानतकंधराः १९ तांस्तथाऽभ्यर्दितान्वीक्ष्यभगवानात्मभूरजः ॥ कृपयापरयादेवउवाचपरिसांत्वयन् २० ॥ ब्रह्मोवाच ॥ अहोबतसुरश्रेष्ठाह्यभद्रंवःकृतंमहत् ॥ ब्रह्मिष्ठंब्राह्मणंदांतमैश्वर्यान्नाभ्यनंदत २१ तस्यायमनयस्यासीत्परेभ्योवःपराभवः ॥ प्रक्षीणेभ्यःस्ववैरिभ्यःसमृद्धानांचयत्सुराः २२ मघवन्द्विषतःपश्यप्रक्षीणान्गुर्वतिक्रमात् ॥ संप्रत्युपचितान्भूयःकाव्यमाराध्यभक्तितः २३ आददीरन्निलयनंममापिभृगुदेवताः २४ त्रिविष्टपंकिंगणयंत्यभेद्यमंत्राभृगूणामनुशिक्षितार्थाः ॥ नविप्रगोविंदगवीश्वराणांभवंत्यभद्राणिनरेश्वराणाम् २५ तद्विश्वरूपंभजताशुविप्रंतपस्विनंत्वाष्ट्रमथात्मवंतम् ॥ सभाजितोऽर्थान्सविधास्यतेवोयदिक्षमिष्यध्वमुतास्यकर्म २६ श्रीशुकउवाच ॥ तएवमुदिताराजन्ब्रह्मणाविगतज्वराः ॥ ऋषिंत्वाष्ट्रमुपव्रज्यपरिष्वज्येदमब्रुवन् २७ देवाऊचुः ॥ वयंतेऽतिथयःप्राप्ताआश्रमंभद्रमस्तुते ॥ कामःसंपाद्यतांतातपितॄणांसमयोचितः २८ पुत्राणांहिपरोधर्मःपितृशुश्रूषणंसताम् ॥ अपिपुत्रवतांब्रह्मन्किमुतब्रह्मचारिणाम् २९ आचार्योब्रह्मणोमूर्तिःपितामूर्तिःप्रजापतेः ॥ भ्रातामरुत्पतेर्मूर्तिर्मातासाक्षात्क्षितेस्तनुः ३०

णाधिकोगुणोप्यस्तीत्याह अयेति आत्मवत्वादपरःकल्याणगुणोनास्तीत्यतोऽथेति नैकएवार्थोनेनकिंत्वपेक्षिताशेषार्थोप्यस्तीत्यतोऽर्थानिति नेदानीमुत्तरत्राप्ययमेवालमित्यतोविधास्यतइति तत्रेतिकर्तव्यतामाह यदीति उताप्यर्थः २६ तेदेवाः २७ पितॄणांनः समयोचितः एतत्कालयोग्यः । काम्यतइतिकामोर्थः २८ सतापुत्राणां ब्रह्मचारिणाअपुत्रवतां पुत्राः उभयेषामपि शुश्रूषणंकुर्वंतीत्यर्थः २९ पित्रादिशुश्रूषणेनरुद्रादिदेवताशुश्रूषणमपिकृतंस्यात्तेषांतेषुविशेषसन्निधानादित्याह आचार्यइति ब्रह्मणश्चतुर्मुखस्यमूर्तिः सन्निधानस्थानं प्रजापतेःरुद्रस्य प्रजापतिः शिवःस्थाणुरुमेशोवृषवाहनइत्यभिधानात् मरुत्पतेरिंद्रस्य अतिथिःस्वयंधर्मस्यात्मामूर्तिःअभ्यागतःप्राहुणिकःआत्मनःसर्वभूतानिमूर्तिः एकोदेवःसर्वभूतेषुगूढइतिश्रुतेः ३०

३१ स्वाक्तवाक्यस्यकतव्यत्वहतुमुक्तानगमयति तस्मादिति परेभ्यःशत्रुभ्य. प्राप्तपराभवलक्षणामार्तिअपनयन् ३२ त्वात्वां ३३ नन्वहंयुष्मदुपाध्यायश्चेत्कनिष्ठस्यममपादाभिवंदनांनिंदितंभवतामिति तत्राह नेति अर्थेषुप्रयोजनेषुप्रविष्टस्यकनिष्ठस्य आचार्यादेव विद्याविदितासाधिष्ठंप्रापयति सर्वादेवतावेदाविद्ब्राह्मणेनिवसंतीत्यादिश्रुतेः वेदाभिज्ञानमेवज्यैष्ठ्यस्यकारणंनवयइत्याह छंदोभ्यइति अत्रछंदोभ्यइत्यनेनतदभिज्ञानंलक्ष्यते वेदाभिज्ञानमंतरेणज्यैष्ठ्यकारणंवयोनभवति तज्ज्ञानमेतत्त्वय्यस्ति तस्मात्त्वदंघ्रिवंदनंनांनिंदितं धौम्यादौपांडवादीनांदृष्टत्वादित्यर्थः ॥ ३४ ॥ ३५ ॥ धर्मशीलै विगर्हितंपौरोहित्यमितिशेषः कस्मादितितत्राह ब्रह्मेति ब्रह्मवर्चसःउपव्ययोनाशोयस्मात्तत्तथा पौरोहित्येब्रह्मवर्च.उपगतव्ययंप्राप्तनाशंस्यादितियत्तस्माद्धर्मशीलैर्विगर्हितमितिवायोजना तर्हि तत्रशक्यमिस्युच्यतामितिचेत्तत्राह कथन्विति हेनाथाः लोकेशैःअभियाचितोमद्विधोविप्रःकथंनुमत्याख्यास्यति कथमपिनानिराकरोतीत्यर्थः गुर्वाज्ञालंघनेदोषापत्तेरित्यभिप्रेत्याह तच्छिष्यइति पर

दयायाभगिनीमूर्तिर्धर्मस्यात्माऽतिथिःस्वयम् ॥ अग्नेरभ्यागतोमूर्तिःसर्वभूतानिचात्मनः ३१ तस्मात्पितॄणामार्तानामार्तिंपरपराभवाम् ॥ तपसाऽपनयंस्तातसंदेशंकर्तुमर्हसि ३२ वृणीमहेत्वोपाध्यायंब्रह्मिष्ठंब्राह्मणंगुरुम् ॥ यथांजसाविजेष्यामःसपत्नांस्तवतेजसा ३३ नगर्हयंतिह्यर्थेषुयविष्ठांघ्र्यभिवादनम् ॥ छंदोभ्योऽन्यत्रनब्रह्मन्वयोज्यैष्ठ्यस्यकारणम् ३४ ॥ ऋषिरुवाच ॥ अभ्यर्थितःसुरगणैःपौरोहित्येमहातपाः ॥ सविश्वरूपस्तानाहप्रसन्नःश्लक्ष्णयागिरा ३५ विश्वरूपउवाच ॥ विगर्हितंधर्मशीलैर्ब्रह्मवर्चउपव्ययम् ॥ कथंनुमद्विधोनाथालोकेशैरभियाचितः ॥ प्रत्याख्यास्यतितच्छिष्यःसएवस्वार्थउच्यते ३६ अकिंचनानांहिधनंशिलोंछनंसतेननिर्वर्तितसाधुसत्क्रियः ॥ कथंविगर्ह्यंनुकरोम्यधीश्वराःपौरोधसंहृष्यतियेनदुर्मतिः ३७ तथापिनप्रतिब्रूयांगुरुभिःप्रार्थितंकियत् ॥ भवतांप्रार्थितंसर्वंप्राणैरर्थैश्चसाधये ३८ ॥ श्रीशुकउवाच ॥ तेभ्यएवंप्रतिश्रुत्यविश्वरूपोमहातपाः ॥ पौरोहित्यंततश्चक्रेपरमेणसमाधिना ३९ सुरद्विषांश्रियंगुप्तामौशनस्यापिविद्यया ॥ आच्छिद्यादान्महेंद्रायवैष्णव्याविद्ययाविभुः ४० ययागुप्तःसहस्राक्षोजिग्येसुरचमूर्विभुः ॥ तांप्राहसमहेंद्रायविश्वरूपउदारधीः ४१ यांप्रविश्यासुराञ्छक्रोव्यकक्ष्यांनारायणात्मिकाम् ॥ अजैषीद्वृषभस्तातसिंहःक्षुद्रमृगानिव ४२ इतिश्रीभागवतेषष्ठस्कंधेसप्तमोऽध्यायः ७ ॥ राजोवाच ॥ ययागुप्तःसहस्राक्षःसवाहान्रिपुसैनिकान् ॥ क्रीडन्निवविनिर्जित्यत्रिलोक्याबुभुजेश्रियम् १

कार्यत्वेनानिराकार्यमितितत्राह सएवेति ॥ ३६ ॥ एतदेवस्पष्टमाह अकिंचनानामिति लूनसस्येकेदारेस्वामिनाचपरित्यक्तेएकैकावशिष्टमंजरीग्रहणंशिलं तादृशेक्षेत्रेएकैकव्रीहिग्रहणउंछनं शिलंचोंछनंचतेनैवनप्रतिग्रहादिना निवर्तिताः साधूनासत्यःक्रियाअग्निहोत्रलक्षणायस्यसतथा एवंविधोविगर्हितंपौरोधसंकथंकरोमि । दुर्मतिःदुःखितमतिः विषयाकृष्टचित्तइत्यर्थ. येन पौरोहित्येनप्राप्तेनहृष्टो भवति तदितिशेषः ३७ गुरुभिःप्रार्थितंकियदितिधिक्कृत्यनकरोमीतिनवच्मीति कथंतर्हिनिर्णयइतितत्राह भवतामिति ३८ ३९ औशनस्याउशनसःशुक्रस्यविद्यमानाऔशनसीतयाआच्छिद्यस्वीकृत्यविष्णुदेवताअस्याइतिवैष्णवीतया ४० ४१ कक्ष्यांकवचलक्षणारक्षाम् ४२ इतिश्रीभागवतेमहापु०षष्ठस्कंधेविज०टीकायांसप्तमोऽध्यायः ॥ ७ ॥ अकामःसर्वकामोवामोक्षकामोयजेद्धरिमित्युक्तंप्रपंचयत्यनेनाध्यायेमतत्रराजातीताध्यायेसंक्षिप्यकथितंनारायणकवचंनामस्तोत्रं लोकोपकारायविस्तरतःश्रोतुंपृच्छति ययेति गुप्तोरक्षितः रिपुसैनिकान् शत्रुसेनानायकान् ॥ १ ॥

१ पौरोहित्यंचार्चकत्वंमाद्यापर्यंतथैवच ॥ यःकरोतिसदेवोपिश्वानयोनिंसमश्नुतइति ॥

तदित्युत्तरलिंगानुसारेण यथाततायिनःइतीत्थंभावेनश्रोतुंपुनर्वचनं यथायेनेत्थंभावेन तमित्थंभावंत्वमाख्याहीतिशेषः २ ३ धौतौप्रक्षालितावंघ्रीपाणीचयस्यसतथा धौतेत्यारभ्यओंवि ष्णवेनमइत्यंतेनग्रंथेनतद्धर्मधारणेइत्थंभावंवक्ति कृतःस्वांगेकरयोश्चन्यासोयेनसतथा ४ सन्नह्येत् बभीयात् दैवाद्भयेअनावृष्टिलक्षणे भूतेभ्यउन्मादादिलक्षणे आत्मकर्मणः कुष्ठभगंदरादिलक्षणे ५ आनुपूर्व्यात्संप्रदायक्रमात् ६ विपर्ययंशिरआदिर्वा करन्यासंसंक्षिप्योक्तंविस्तारार्थमाह करन्यासमिति ओंनमोभगवतेवासुदेवायेतीयंद्वादशाक्षरविद्या ७ न्यसेद्धृदयइत्यादिनाषडंगान्याह न्यसेदिति अनुओंकारन्यासानंतरंप्रत्येकमोंकारमनुगतंकृत्वेतिवा ललाटोपरिवा ८ तुनावर्णदेवतास्मरणसूचयति शिखयाशिखायांमुकुटप्रदेशे ९ अस्त्रमसुरनिरासमुद्दिश्यकुर्यादितिशेषः मंत्रमू र्तिःमंत्रदेवतासन्निधानयुक्तदेहइति विसर्गेणसहितंफडित्यक्षरावसानमंत्रं अंतरक्षसांनाशकरंफडक्षरंवा तंमकारंस्वाहाविसर्जनीयसहितफडक्षरंचेतिवा १० व्यत्ययस्योक्त्याविषणवेनमइत्यन्यथाप्रतीति निरासाय प्रतीकंपठति ओंविष्णवेनमइतीति अनंतरध्येयदेवताप्रकारंनिरूपयति आत्मानमिति परमात्मानं विप्रतिपत्तिनिरासायोक्तंध्येयमिति ऐश्वर्यादिषट्शक्तिभिः उत्साहप्रभुमंत्रज्ञानक्रियेच्छा

भगवंस्तन्ममाख्याहिवर्मनारायणात्मकम् ॥ यथाततायिनःशत्रून्येनगुप्तोऽजयन्मृधे २ ॥श्रीशुकउवाच॥ वृतःपुरोहितस्त्वाष्ट्रोमहेंद्रायानुपृच्छते ॥ नारा यणाख्यंवर्माहतदिहैकमनाःशृणु ३ ॥ विश्वरूपउवाच ॥ धौतांघ्रिपाणिराचम्यसपवित्रउदङ्मुखः ॥ कृतःस्वांगकरन्यासोमंत्राभ्यांवाग्यतःशुचिः ४ नारायणमयंवर्मसन्नह्येद्भयआगते ॥ दैवभूतात्मकर्मभ्योनारायणमयःपुमान् ५ पादयोर्जानुनोरूर्वोरुदरेहृद्यथोरसि ॥ मुखेशिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत् ६ ओंनमोनारायणायेतिविपर्ययमथापिवा ॥ करन्यासंततःकुर्याद्द्वादशाक्षरविद्यया ७ प्रणवादियकारांतमंगुल्यंगुष्ठपर्वसु ॥ न्यसेद्धृदय ओंकारंविकारमनुमूर्धनि ८ षकारंतुभ्रुवोर्मध्येणकारंशिखयादिशेत् ॥ वेकारंनेत्रयोर्युंज्यान्नकारंसर्वसंधिषु ९ मकारमस्त्रमुद्दिश्यमंत्रमूर्तिर्भवेद्बुधः ॥ स विसर्गंफडंतंतुसर्वदिक्षुविनिर्दिशेत् १० ओंविष्णवेनमःइत्यात्मानंपरंध्यायेद्ध्येयंषट्शक्तिभिर्युतम् ॥ विद्यातेजस्तपोमूर्तिरिमंमंत्रमुदाहरेत् ११ ओंहरिर्वि दध्यान्ममसर्वरक्षांन्यस्तांघ्रिपद्मःपतगेंद्रपृष्ठे ॥ दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः १२ जलेषुमांरक्षतुमत्स्यमूर्तिर्यादोगणेभ्योवरुणस्य पाशात् ॥ स्थलेचमायावटुवामनोऽव्यात्त्रिविक्रमःखेऽवतुविश्वरूपः १३ दुर्गेष्वटव्याजिमुखादिषुप्रभुःपायान्नृसिंहोऽसुरयूथपारिः ॥ विमुंचतोयस्यमहाट्ट हासंदिशोविनेदुर्न्यपतंश्चगर्भाः १४ रक्षत्वसौमाऽध्वनियज्ञकल्पःस्वदंष्ट्रयोन्नीतधरोवराहः ॥ रामोऽद्रिकूटेष्वथविप्रवासेसलक्ष्मणोऽव्याद्भरताग्रजोमाम् १५

शक्तिभिर्वा तपोनामशत्रुसंतापनशक्तिर्ज्ञानंवा इमंमंत्रमितिवक्ष्यमाणमोमिति ११ हरिर्विदध्यादित्यादिनानारायणाख्यंकवचमुच्यते अणिमाद्यष्टगुणः सृष्ट्याद्यष्टगुणोवा व्याप्तगुणोवा अशूङ्व्या प्तावितिधातुः शुभलक्षणंगुणमेवमुक्तं नत्वशुभलक्षणंदुःखमितिवाष्टगुण अश्भोजनइतिधातुः शुभंपिबत्यसौनित्यनाशुभसहारिःपिबेदित्यादेः १२ यादासिजलजतवइत्यतोवरुणपाशस्ययादोगणा नमूर्तत्वेपिसद्ग्रहणस्यमरणाविनाभूतत्वेनतत्परिहारार्थंपृथग्ग्रहणं मथ्नातिहिंसतीतिमत्असुरस्तंस्यतीतिमत्स्यः माथिहिंसायां शिरोममंथतरसेतिप्रयोगाच्च इतरस्तुमथित्वाविलोड्यसरतीतिमत्स्यः म थविलोडनइतिधातुःसृगतावित्यस्मात्डप्रत्ययःमायेच्छयागृहीतवटुवामननाममूर्तिःविश्वरूपःस्थूलरूपः १३ अटवीचआजिश्चमखश्चादिर्येषांतानितथातेषु गर्भाअसुरस्त्रीणामितिशेषः १४ अ ध्वनिमार्गेस्वदेहेनयज्ञंकल्पयतीतियज्ञकल्पःयज्ञोविष्णुस्तत्समःसएवेत्यतोवा रामःपरशुरामः विविधप्रवासेभरताग्रजःदाशरथीरामः १५

छंदःसाम्यद्योतनायउग्रधन्वा अखिलप्रमादादित्युक्तं नरनामाविष्णुः हासादुन्मादकृतहासात् अयोगान्नारायणस्मरणाद्युपायवैकल्यात् १६ सनत्कुमारोब्रह्मचारिवपुःब्रह्मपुत्रसनत्कुमाराविष्टः सनत्कुमारनामातुब्रह्मचर्यंनपुहरिः सनत्कुमारमपरंब्रह्मपुत्रंविवेशयः समांयोग्येतरात्कामात्पातुविश्वेश्वरःप्रभुरितिवाक्यमत्रमानं कामानयोग्यान्मद्यादिविषयान् देवयतिगमयतिआत्मनीतिदेवः तस्माद्देवर्षिवर्यःमहिदासःपुरुषांतरार्चनात्विष्णोःपरिवारत्वमंतरेणप्राधान्येनान्यदेवतार्चनादोषात् महिदासस्तुदेवर्षिःपातुमांविष्णुरव्ययः तदनर्पितकर्मभ्यस्तदस्मरणतस्तथेतिअनेनहर्यनर्पितार्च नालक्षणकर्मणःस्तथातस्यास्मरणपूर्वकानर्चनाच्च महिदासस्तुदेवर्षिःपातुमांविष्णुरव्ययः तदनर्पितकर्मभ्यस्तदस्मरणतस्तथेतिवाक्यद्योतनायमहिदासेतिप्रसिद्धनामप्रमुक्तादेवर्षिवर्यइत्यबाधि अ नेनवैष्णवानामेवात्राधिकारोनान्येषां तेषामेवविशेषस्मरणज्ञानपूर्तेरितिसूचितं केचित्पुरुषार्चनांतरादित्यनुद्यांतरायवाचित्वमंतरशब्दस्योक्तस्तच्चित्यं अंतरःपरिधानीयेबाह्येस्वीयेंतरात्मनी त्यादौएवंप्रयोगात् १७ शरीररोगजनकादपथ्यद्रव्यान्निर्जितात्मावशीकृतेंद्रियग्रामः । तत्कृताद्यज्ञरूर्मापादितादनित्यफलात्स्वर्गादेर्यज्ञनामायागप्रवर्तकोविष्णुः बलःबलभद्रःसएवाहींद्रः शेषनामा शेषदेवःसहस्राक्षःसहस्रांघ्रिशिरोभुजइत्यादेः बलंशक्तौबलोरामेबालिष्ठेचबलस्तथेत्यभिधानात् बलिष्ठोहींद्रइतिवा १८ धर्मावनायधर्मपरिपालनायउरुप्रपातु भूयोभूयोरक्षतिव

मामुग्रधन्वाअखिलप्रमादान्नारायणःपातुनरश्चहासात् ॥ दत्तस्त्वयोगादथयोगनाथःपायाद्गुणेशःकपिलःकर्मबंधात् १६सनत्कुमारोऽवतुकामदेवाद्धयशीर्षोमांपथिदेवहेलनात् ॥ देवर्षिवर्यःपुरुषांतरार्चनात्कूर्मोहरिर्मांनिरयादशेषात् १७ धन्वंतरिर्भगवान्पात्वपथ्याद्द्वंद्वाद्भयादृषभोनिर्जितात्मा ॥ यज्ञश्च लोकादुततत्कृतान्नोबलोगणात्क्रोधवशादहींद्रः १८ द्वैपायनोभगवानप्रबोधाद्बुद्धस्तुपाखंडगणात्प्रमादात् ॥ कल्कीकलेःकालमलात्प्रपातुधर्मावनायोरुकृतावतारः १९ मांकेशवोगदयाप्रातरव्याद्गोविंदआसंगवआत्तवेणुः ॥ नारायणःपातुसदात्तशक्तिर्मध्यंदिनेविष्णुररींद्रपाणिः २० देवोऽपराह्णेमधुहोग्रधन्वासायंत्रिधामाऽवतुमाधवोमाम् ॥ दोषेहृषीकेशउतार्धरात्रेनिशीथएकोऽवतुपद्मनाभः २१ श्रीवत्सलक्ष्माऽपररात्रईशःप्रत्यूषईशोऽसिधरोजनार्दनः ॥ दामोदरोऽव्यादनुसंध्यंप्रभातेविष्णुःश्रीमान्भगवान्कालमूर्तिः २२ चक्रंयुगांतानलतिग्मनेमिभ्रमत्समंताद्भगवत्प्रयुक्तम् ॥ दंदग्धिदंदग्ध्यरिसैन्यमाशुकक्षंयथावातसखोहुताशः २३ गदेशनिस्पर्शनविस्फुलिंगेनिष्पिंढिनिष्पिंढ्यजितप्रियासि ॥ कूष्मांडवैनायकयक्षरक्षोभूतग्रहांश्चूर्णयचूर्णयारीन् २४

स्यर्थः १९ प्रातरारभ्यपंचभिःपंचभिर्घटिकाभिःअहोरात्रविभागंकृत्वातेष्वेकैकांमूर्तिसंकल्प्याह मांकेशवइति गोष्ठेभ्योनिर्गत्ययदैकत्रगावःसंयुज्यंतेसकालआसंगवस्तस्मिन्काले २० दोषेरात्रिभोजनकाले रात्रिसामान्यविवक्षायांदोषशब्दोऽव्ययवाचीस्त्रीलिंगोवा रात्रिविशेषकालविवक्षायांपुल्लिंगः निशीथात्पूर्वयामोर्धरात्रउच्यते तस्मिन्कालेनिशीथेपंचदशघटिकातुलिते एकःपद्मनामएवावतु २१ प्रत्यूषेअरुणोदयप्रारंभे अनुसंध्यंसंध्यानिकटे प्रभातेसूर्योदयासन्नसमये २२ युगांतेऽग्निर्वात्तिग्मातीक्ष्णानेमिर्यस्यतत्तथा स्वरूपमुक्त्वासंबोधयति दंदग्धीति हेसुदर्शनअरिसैन्यमाशुदंदग्धिअतिशयेनदह अनेन सुदर्शनमहाज्वालकोटिसूर्यसमप्रभ अज्ञानांधस्यमेनित्यंविष्णोर्मार्गंप्रदर्शयेतिमंत्रोऽर्थतउद्धृतः २३ स्पृशउपतापइतिधातोःस्पर्शनतपनंअशनिवान्निर्घातवत्स्पर्शनास्तापकराविस्फुलिंगाअग्निकणायस्याःसातथा अशन्योर्वज्रयोःस्पर्शनेनसंघट्टनेनजातायेविस्फुलिंगास्तादृशाविस्फुलिंगायस्याःसातथाइतिवा संबंधेनअशनिशब्देनमेघवह्निर्लक्ष्यते तस्यस्पर्शनवद्दुःसहाविस्फुलिंगायस्याःसाइतिवा तस्याःसंबुद्धिःअशनिस्पर्शनविस्फुलिंगेहेगदेनिष्पिंढिनितरांपिष्टंकुरुनिष्पिंष्टीतिवापाठे पिष्टिपेषणइत्यस्यरूपम् २४

दरेंद्रशंखश्रेष्ठयातुधानादेहाष्टवत्‌धाराद्दाष्टर्यषातेतथातान्‌अरीन्द्रावयेत्यन्वयः अनेन पांचजन्यनिजध्वानध्वस्तपातकसंचय पाहिमापापिनंघोरंसंसारार्णवपातिनामित्ययंमंत्रःसूचित २५ मम छिंधीतितुगागमोविकल्पेनेतिवक्तव्यं द्विषांचक्षूंषिछादय नोऽस्माकमघंहरेत्यन्वयः शतचंद्रेतिचर्मणोनाम २६ केतुभ्यइत्यनेनउल्कापाताद्यहंते केतोर्ग्रहेभ्यइत्यनेनगतार्थत्वात्‌ अधेभ्योऽन्यस नेभ्यः २७ श्रेय प्रतीपकाः श्रेयोविरोधिनस्तेचअसुराः २८ स्तोत्राणांस्तोमःसमूहःस्तोत्रस्तोम तल्लक्षणश्छंदःसामवेदस्तन्मयस्तत्प्रधानइत्यर्थःभगवान्पूज्य. विष्वक्सर्वत्रसेनायस्यसतथा स्वस्यस्वामिनो नामभिः। विष्वक्सेनश्चहरेर्निवेदिताशन २९ यानंरथः पार्षदाश्चभूषणाश्चपार्षदभूषणाः भूषणानामपिज्ञानाश्रयत्वज्ञापनायपुल्लिंगप्रयोग तत्कठगंकौस्तुभमासयातेत्यादे. ३० सर्वंखल्विदंब्रह्मेतिश्रु तेः भगवानेवयत्सदसद्वस्तुवस्तुतस्तत्रिपामकतयातद्रूपउच्यतइतियथासत्यंतत्सृष्ट्वातदेवानुप्राविशत्तदनुप्रविश्यसच्चत्यच्चाभवदितिश्रुतिविहितत्वादव्यभिचारितेनसत्येन द्रव्यंकर्मचकालश्चस्वभावोजी वएवचेत्यादिवाक्यंचशब्दगृहीतं एवशब्देन सत्येनानेनमांदेवःपातुविष्णुश्चतुर्भुजइतिस्मार्यति ३१ भूषणादीनामचेतनत्वेनचेतनवत्प्रार्थंतदातृत्वकथमित्याशंक्यतेषुहरेस्तत्तत्कार्यक्षमशक्तिस्वरूपेणा

त्वंयातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन्‌ ॥ दरेंद्रविद्रावयकृष्णपूरितोभीमस्वनोऽरीन्हृदयानिकंपयन्‌ २५ त्वंतिग्मधारासिवरारिसैन्यमी शप्रयुक्तोममछिंधिछिंधि ॥ चक्षूंषिचर्मञ्छतचंद्रछादयद्विषामघंनोहरपापचक्षुषाम्‌ २६ यन्नोभयंग्रहेभ्योऽभूत्केतुभ्योनृभ्यएवच ॥ सरीसृपेभ्योदंष्ट्रि भ्योभूतेभ्योऽघेभ्यएवच २७ सर्वाण्येतानिभगवन्नामरूपास्त्रकीर्तनात्‌ ॥ प्रयांतुसंक्षयंसद्योयेऽन्येश्रेयःप्रतीपकाः २८ गरुडोभगवांस्तोत्रस्तोमश्छंदोम यःप्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्योविष्वक्सेनःस्वनामभिः २९ सर्वापद्भ्योहरेर्नामरूपयानायुधानिनः ॥ बुद्धींद्रियमनःप्राणान्पांतुपार्षदभूषणाः ३० यथा हिभगवानेववस्तुतःसदसच्चयत्‌ ॥ सत्येनानेननःसर्वेयांतुनाशमुपद्रवाः ३१ यथैकात्म्यानुभावेनविकल्परहितःस्वयम्‌ ॥ भूषणायुधलिंगाख्याधत्तेश क्तीःस्वमायया ३२ तेनैवसत्यमानेनसर्वज्ञोभगवान्हरिः ॥ पातुसर्वैःस्वरूपैर्नःसदासर्वत्रसर्वगः ३३ विदिक्षुदिक्षूर्ध्वमधःसमंतादंतर्बहिर्भगवान्नारसिंहः ॥ प्रहापयंल्लोकभयंस्वनेनस्वतेजसाग्रस्तसमस्ततेजाः ३४ मघवन्निदमाख्यातंवर्मनारायणात्मकम्‌ ॥ विजेष्यस्यंजसायेनदंशितोऽसुरयूथपान्‌ ३५ एतद्धारय माणस्तुयंयंपश्यतिचक्षुषा ॥ पदावासंस्पृशेत्सद्यःसाध्वसात्सविमुच्यते ३६ नकुतश्चिद्भयंतस्यविद्यांधारयतोभवेत्‌ ॥ राजदस्युग्रहादिभ्योव्याध्या दिभ्यश्चकर्हिचित्‌ ३७

वस्थानं यथासत्यंतेनसत्येनहरिःपात्वित्याह यथेति ऐकात्म्यानुभावेनतत्तद्वस्तुस्थितरूपाणामेकात्मत्वापरोक्षज्ञानेनविकल्परहितःस्वगतभेदवर्जितोपिस्वमाययास्वरूपसामर्थ्येनस्वयमेवभूषणादि संज्ञाःस्वाधीनत्वाच्छक्तिशब्दवाच्याधत्तइतियथायत्सत्यंतेनसत्येनअनेनसत्याख्यप्रमाणेनयथार्थेनसर्वज्ञत्वमपिसत्यत्वेप्रमाणमितिद्योतनायविशेषणीकृतं ३२ नकेवलमायुधादिष्वेवसान्निहितत्वं किंतु स र्वत्रापीतिभावेनाह सर्वैरिति एकएवपरोविष्णुर्भूषाहेतिध्वजेष्वजः तत्तच्छक्तिस्वरूपेण स्वयमेवव्यवस्थित सत्येनानेनमादेव.पातुसर्वेश्वरोहरिरितिअतोभूषणादिषुविशेषतःसन्निहितत्व.दुःरतदर्शितज्ञातव्यं ३३ मूलरूपस्यसर्वगतत्वेनावतारस्येतिशंकांपरिहरन्सर्वगतत्वंयथासत्यतेनसत्येनतथानारसिंहःपात्वितितात्पर्यंद्विश्लेष्याह विदिक्ष्विति प्रहापयन्नितिस्वार्थेणिच परिहरन्नित्यर्थ.स्वतेजसाग्रस्तानि अभिभूतानिसमस्तानितेजांसिसूर्यादीनियेनसतथा ३४ मघवन्धनवन्दंशितः ३५ साध्वसाद्भयात्‌ ३६ ३७

१ विष्वक्सेनः पार्षदोभविष्यपुराणोक्त ।

कौशिकःकुशिकगोत्रेविद्यमानः योगधारणयायोगाभ्यासेन मरुधन्वनिनिर्जलप्रदेशे ३८ द्विजक्षयःद्विजमरणं ३९ ४० प्रास्यनिरस्य ४१ ४२ एतद्धारयमाणइत्यादिनायत्फलमुक्तंतस्यकस्माद्दृ लक्षण्यदर्शनमितिचेदुच्यते गुरुशिष्ययोर्मिथोयोग्यतावैकल्याद्योग्यत्वेपिनासंवत्सरवासिनेप्रब्रूयादितिविधेर्गुरुकुलवासापूर्त्यागुरुप्रसादाभावेन लोकोपकारादिनावागुरोःप्राप्ताविद्या शिष्यस्ययथोक्तफल दानस्यात् गुरुशिष्ययोरयोग्यत्वाद्गुरुवृत्तेरपूर्तितः अप्रसादाद्गुरोर्विद्यानयथोक्ताफलप्रदेत्युक्तेः तर्हिगुरूपदेशमन्तरेणयथालिखितपाठादिनाप्राप्ताफलदास्यादितिचेन्न गुरोःप्राप्तायाःफलप्रदत्वात् विद्याकर्माणिचसदागुरोःप्राप्ताःफलप्रदाः अन्यथानैवफलदाइत्युक्तेः तस्मात्प्रसन्नगुरुदत्तायथोक्तफलदाइतिमंतव्यं प्रसन्नोक्ताःफलप्रदाइतिवचनात् अतउक्तफलसाकल्यादृष्ट्यानाश्रद्धेयमितिभावः ४३ इति श्री भागवतेमहापुराणेषष्ठ०विजयध्वजकृतटीकायामष्टमोध्यायः ८ ब्रह्माद्यन्यतमामरापरिहार्यंयत्तत्परिहर्तृत्वमहिमावर्णनेनहरावभिवृद्धनिशितभक्तिकुठारस्ययोग्याधिकारिकरगतस्यसंसारतरुनिर्मूलनपटु

इमांविद्यांपुराकश्चित्कौशिकोधारयन्द्विजः ॥ योगधारणयास्वांगंजहौसमरुधन्वनि ३८ तस्योपरिविमानेनगंधर्वपतिरेकदा ॥ ययौचित्ररथःस्त्रीभिर्वृतो यत्रद्विजक्षयः ३९ सांगनोन्यपतत्सद्यःसविमानोह्यवाक्शिराः ॥ विद्यामिमांधारयतोमृतस्यास्थिविलंघनात् ४० सवालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ प्रास्यप्राचीसरस्वत्यांस्नात्वाधामस्वमन्वगात् ४१ यइदंशृणुयात्कालेयोधारयतिचादृतः ॥ तंनमस्यंतिभूतानिमुच्यतेसर्वतोभयात् ४२ एतांविद्यामधिगतोविश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मींबुभुजेविनिर्जित्यमृधेऽसुरान् ॥ ४३ ॥ इतिश्रीभा०ष०अष्टमोध्यायः ८ ॥ श्रीशुकउवाच ॥ तस्यासन्विश्वरूपस्यशिरांसित्रीणिभारत ॥ सोमपीथंसुरापीथमन्नादमितिशुश्रुम १ सवैबर्हिषिदेवेभ्योभागंप्रत्यक्षमुच्चकैः॥ अददाद्यस्यपितरोदेवाःसंप्रश्रयंनृप २ सएवहिददौभागंपरोक्षमसुरान्प्रति ॥ यजमानोऽवहद्भागंमातृस्नेहवशानुगः ३ तद्देवहेलनंतस्यधर्मालीकंसुरेश्वरः ॥ आलक्ष्यतरसाभीतस्तच्छीर्षाण्यच्छिनद्रुषा ४ सोमपीथंतुयत्तस्यशिरआसीत्कापिंजलः॥ कलविंकःसुरापीथमन्नादंयत्सतित्तिरिः ५ ब्रह्महत्यामंजलिनाजग्राहयदपीश्वरः ॥ संवत्सरांतेतदघंभूतानांसविशुद्धये ॥ भूम्यंबुद्रुमयोषिद्भ्यश्चतुर्धाव्यभजद्धरिः ६ भूमिस्तुरीयंजग्राहखातपूरवरेणवै ॥ ईरणंब्रह्महत्यायारूपंभूमौप्रदृश्यते ७ तुर्यंछेदविरोहेणवरेणजगृहुर्द्रुमाः ॥ तेषांनिर्यासरूपेणब्रह्महत्याप्रदृश्यते ८ शश्वत्कामवरेणांहस्तुरीयंजगृहुःस्त्रियः ॥ रजोरूपेणतास्वंहोमासिमासिप्रदृश्यते ९ द्रव्यभूयोवरेणापस्तुरीयंजगृहुर्मलम् ॥ तासुबुद्बुदफेनाभ्यांदृष्टंतद्धरिकिल्बिषम् १०

ताभिप्रेयतेस्मिन्नध्याये तत्रादौबीजदोषस्वभावोदुःसहइतिप्रकटयितुंविश्वरूपस्यविप्रत्वेपिरचनाजनितत्वेनदोषित्वेनासुरपक्षपातंतावदाह तस्येति सोमंसुरांपिबतीतिसोमपीथंसुरापीथं १ भागंहविर्भागं यस्यविश्वरूपस्य २ परोक्षमज्ञातवत्मातुःरचनायाःस्नेहस्यपरः ३ धर्मालीकंधर्मदोषंधर्मैकपटंवा अयमात्मानमपिहंतीतिभीतः ४ ५ यदपियद्यपिइंद्रोब्रह्महत्यादोषनिवारणेईश्वरःसमर्थःतथाप्यं जलिनाब्रह्महत्याजग्राहेत्यन्वयः भूतानांसाविशुद्धयेलोकापवादपरिहाराय भूतहिंसापापशोधनायेतिवा हरिरिंद्रः तद्दत्तोविष्णुर्वा ६ खातस्यस्वतएवपूर्तिःस्यादितिखातपूरवरस्तेनहरिदत्तेन ईरणंउखरं लवणोपरक्तरसइत्यर्थः ७ छेदेरोहःपुनर्वर्धनं तेनवरेण ८ शश्वत्कामेननिरंतरविषयस्वेच्छाभिलाषलक्षणेनवरेण रजोरूपेणरागरूपेण ९ द्रव्याणांपंचानांभूतानामप्स्वेस्वभूयस्त्वलक्षणेनवरेण तापापनोदोभूयस्त्वमंभसोवृत्तयस्त्वमाइत्युक्तेः १०

इंद्रसत्रइत्यादिनात्वष्टाहतपुत्रोपींद्रंसोममाहरदित्यादिवेदवाक्यंसूचयतिइंद्रःशत्रुर्यस्यवृत्रस्यसइंद्रशत्रुःइंद्रएव तस्यसंबुद्धिरिंद्रशत्रोइति अनेनयजमानस्यानभिप्रेतार्थोपिसूच्यतइतिज्ञातव्यम्
११ अन्वाहार्यपचनाद्दक्षिणाग्नेःलोकानांक्षयाय १२ संध्याकालाभ्रमालावत्कपिशंवासोयस्यसतथातं तप्तताम्रवत्शिखाश्मश्रूणियस्यसतथातम् १३ तिस्रःशिखाःशिरांसियस्यतत्तथातस्मिन् १४
दरीगभीरवक्रेणगुहावदगाधमुखेन १५ रौद्ररूपेदंष्ट्रेयस्यतत्तथातेनमुखेन जृंभयंतंव्याददानम् १६ निरुक्तिपूर्वकंनामनिर्दिशति येनेति त्वाष्ट्रलक्षणामूर्तिर्यस्यतत्तथातेन तमसाआवृताइतियेनततः
सोऽसुरोवृत्रइतिख्यातः वृत्रंजघन्वाँअपतद्ववारेतिश्रुतेः दैत्यभेदेचांधकारेवृत्रशब्दःप्रयुज्यतइत्यभिधानाच्च पातीतियःपालःपरमात्माधर्मोवातस्मादपगतःपापःएतदेवसूचयति परमदा
रुणइति १७ १८ श्रीनारायणानुग्रहमंतरेणवृत्रजयोदुःसाधनइतिकृत्वादेवानांहरिशरणप्रकारंवक्ति ततइति प्रत्यंचंप्रत्यगात्मानं आदिपुरुषंसृष्टेरादौभक्तानुग्रहायगृहीतपुरुषरूपम् १९
वाय्वाद्यभिमानिनोब्रह्मादयोयेत्रिलोकाःतेवयंयस्मैबलिंहराम । त्रिलोकीबहिष्ठंलक्ष्मीतत्त्वंतदनियतंस्वतंत्रमस्तीतिशंकामाभूदित्याह अंतकइति असावंतकःमूलप्रकृतिर्दुर्गादिनामभिर्भिन्नायस्मान्महा
तकाद्धरेर्बिभ्यतिभीतेवतद्वशेवर्ततेयतस्ततः सहरिर्नअस्माकंअरणंशरणमस्त्वित्यन्वयः ननु ब्रह्मादयोवयंयस्मैबलिंहरामयस्माच्चअसावंतकोपिबिभेतिततस्तस्मात्परमेश्वरादरणंक्षेमोभवत्वितिप्रतीतार्थःक

हतपुत्रस्ततस्त्वष्टाजुहावेंद्रायशत्रवे ॥ इंद्रशत्रोविवर्धस्वमाचिरंजहिविद्विषम् ११ अथान्वाहार्यपचनादुत्थितोघोरदर्शनः ॥ कृतांतइवलोकानांयु
गांतसमयेयथा १२ विष्वग्विवर्धमानंतमिषुमात्रंदिनेदिने ॥ दग्धशैलप्रतीकाशंसंध्याभ्रानीकवाससम् ॥ तप्तताम्रशिखाश्मश्रुमध्याह्नार्कोग्रलोचनम्
१३ देदीप्यमानेत्रिशिखेशूलआरोप्यरोदसी ॥ नृत्यंतमुन्नदंतंचचालयंतंपदामहीम् १४ दरीगंभीरवक्त्रेणपिबंतंचनभस्तलम् ॥ लिहंतंजिह्वयार्क्षाणिग्र
संतंभुवनत्रयम् १५ महतारौद्रदंष्ट्रेणजृंभयंतंमुहुर्मुहुः ॥ वित्रस्तादुद्रुवुर्लोकावीक्ष्यसर्वेदिशोदश १६ येनावृताइमेलोकास्तमसात्वाष्ट्रमूर्तिना ॥ सवैवृत्रइ
तिप्रोक्तःपापःपरमदारुणः १७ तंनिजघ्नुरभिद्रुत्यसगणाविबुधर्षभाः ॥ स्वैःस्वैर्दिव्यास्त्रशस्त्रौघैःसोऽग्रसत्तानिकृत्स्नशः १८ ततस्तेविस्मिताःसर्वेविषण्णा
ग्रस्ततेजसः ॥ प्रत्यंचमादिपुरुषमुपतस्थुःसमाहिताः १९ देवाऊचुः ॥ वाय्वंबराग्न्यप्क्षितयस्त्रिलोकाब्रह्मादयोयेवयमुद्विजंतः ॥ हरामयस्मैबलिमंतको
सौबिभेतियस्मादरणंततोनः २० अविस्मितंतंपरिपूर्णकामंस्वेनैवलाभेनसमंप्रशांतम् ॥ विनोपसर्पत्यपरंहिबालिशःश्वलांगुलेनातितितर्तिसिंधुम् २१
यस्योरुशृंगेजगतींस्वनावंमनुर्यथाबद्ध्यततारदुर्गम् ॥ सएवनस्त्वाष्ट्रभयाद्दुरंतात्त्राताश्रितान्वारिचरोपिनूनम् २२

रमादरलक्ष्मतइतिचेन्न कालोंतकःप्रधानंचमृत्युरव्यक्तमित्यपि उच्यतेप्रकृतिःसूक्ष्माश्रीर्भूर्दुर्गेतिनामभिः सैवब्रह्मादिभयदाविष्णोस्तुवशवर्तिनी अभयापिबिभेतीवतद्वशत्वादुदीर्यतइतिस्मृतिविरोधात्
वायुश्चांबरंच अग्निश्चआपश्चक्षितिश्चेतिवाय्वंबराग्न्यप्क्षितयः २० एवंस्थितेशिवाद्यन्यतमस्यशरणमिच्छन्बालिशइत्याह अविस्मितमिति योब्रह्माद्युपास्यपूज्यस्तं स्वेनैवलाभेनस्वरूपानंदानुभवेनैव
परिपूर्णकाम अतएवाविस्मितंकुतूहलबुद्धिरहितं सममेकप्रकारं प्रशांतंसमुद्रवत्स्तिमितं विनायोऽपरंरुद्राद्यन्यतममुपसर्पतिश्वलांगूलेनतरीस्थानेन सिंधुंसमुद्रमतिपिपर्तिपारमतिक्रामति
तद्युचितमित्याह हीति बालिशोहियस्मात्तस्मादुचितमित्यर्थः २१ ननुयस्यकस्यचिद्धरिशरणमुपगतस्यापदर्णवसंतरणंदृष्टपूर्वंचेत्तमतरेणान्यंशरणंगच्छन्बालिशत्वेनश्वलांगूलेनापारमकूपारंतितीर्षतीति
तिर्पारहास्यःस्यात् तदेवकथमितितत्राह यस्येति मनुर्यस्यहरेरुरुणिशृंगे जगतीमहीमयीं स्वनावंस्वस्यमनोरथेनक्लृप्तांतरीं यथायथावद्दृढमाबध्य दुर्गमन्योपायेनतर्तुमशक्यं प्रलयार्णवंमत्स्यशृंगंतत
तार नूनंइदानीमपिसवारिचरोमत्स्यावतारोहरिरेवाश्रितान्नित्यसंसारतान्नो दुरंतात्त्वाष्ट्रभयात्त्राता अस्त्वित्यन्वयः यथाततारतथातरणायाश्रितानितिवा २२

इत्वोपिश्रीहरिप्रसादादत्तेएतद्भयतरणंदुःसाधनमितिभावेनस्तुवंतीत्याह पुरेति पुरादिसृष्टौ संयमांभसिप्रलयोदके स्थितादरविंदात्प्रकृत्यात्मनःपद्मात्पतितःस्वयंभूर्भयंततार सहरिर्नस्त्वाष्ट्रभयार्णवस्य पारः पारप्रदर्शकोस्त्वित्यन्वयः तत्रत्योवायुरपिप्रकृत्यात्मा अन्यथानेदृशबलमन्यस्यस्यादित्यतस्तद्वपजल्लंविशिनष्टि उदीर्णेति उदीर्णेनवातेनप्रकृत्यात्मनावायुनोन्नमितानामूर्मीणांरवैःकरालेभयंकरं पद्मादीनांप्रकृत्यात्मत्वंकस्माद्विशिष्योच्यतइतिशंकामाभूत् यत्रवायूदपद्मादिरूपेणप्रकृतिःस्थिता एकस्तत्राबिभेद्ब्रह्माविचार्यभयमत्यगात् अतर्गतोहरिस्तस्यध्यातोभयमपानुददित्युक्तेः भयनिमित्त माह एकइति एकाकित्वाद्वितीयवस्तुनोऽनुत्पन्नत्वात् सोबिभेत्सद्वितीयमैच्छदितिश्रुतेः ननुकिमर्थंब्रह्मणाभयमदर्शीत्यतउक्तमपीति स्वसृज्यजनानांभयादिस्वभावसंभावनार्थं जनिष्यतांजनानांतुस्व भावानांप्रसिद्ध्येइत्युक्तेः अपिसंभावनइतिच संभावनामंतरेणस्वाभाविकंकिंनस्यादित्यस्यापीदमुत्तरमपीति अज्ञानाद्धिभयमुत्पद्यते ब्रह्मणस्तुतन्नास्ति ज्ञानादिगुणपूर्णस्यब्रह्मणोपीत्युक्तेः तर्हिकियंतकाल मनुवर्ततइत्यस्यापीदमुत्तरं पूर्णज्ञानस्यचिरकालीनंभयादिकंगर्हितं क्षणार्धगाः भयादिकाभवंतीवकथंतास्मिन्स्थिरालयाइत्युक्तेः स्वसृज्यजनभयस्वभावप्रदर्शनमंतरेणान्यत्किंप्रयोजनमित्यस्यापीदमे वोत्तरमपीति भयप्रदर्शनेनभगवत्प्रीतिलक्षणमन्यदपिविद्यतइत्यर्थः भगवत्प्रीतयेनित्यंब्रह्मणोयेभयादयः नवृथातस्यभावःस्यात्काश्चित्तोपिक्षणार्धगाइत्युक्तेः भयादिकमपिकिमेकवारं बहुवारंवेत्यस्या पीदमुत्तरं नैकवारंकिंतुबहुवारमस्तीत्यर्थः अज्ञानंतुचतुर्वारंद्विवारंभयमेवच शोकोपितावान्नान्यत्रकदाचिद्ब्रह्मणोभवेदित्युक्तेः इदमपिहरेर्प्रीतिजनकत्वेनोन्नतिकारणं तत्रापिभगवत्प्रीत्याउन्नत्यैवास्यतद्भ वेदित्युक्तेः २३किंचास्माकंस्रष्टृत्वेनसंबंधत्वादपिनिजस्वरूपंनबुद्ध्यामहे किंतुलक्षणमेवपश्यामः अतोवयंतमेवशरणंयामइत्याहुः यएकइति एकःकेवलः ईशःऐश्वर्यादिगुणपूर्णः योनिजमाययास्वाधी

पुरास्वयंभूरपिसंयमांभस्युदीर्णवातोर्मिरवैःकराले ॥ एकोरविंदात्पतितस्ततारतस्माद्भयाद्येनसनोऽस्तुपारः २३ यएकईशोनिजमाययानःससर्जयेना नुसृजामविश्वम् ॥ वयंचयस्यापिपुरःसमेताःपश्यामलिंगंपृथगीशमानिनः २४ योनःसपत्नैर्भृशमर्द्यमानान्देवर्षितिर्यङ्नृषुनित्यएव ॥ कृतावतारस्तनु भिःस्वमाययाकृत्वात्मसात्पातियुगेयुगेच २५ तमेवदेवंवयमात्मदैवतंपरंप्रधानंपुरुषंविश्वमाद्यम् ॥ व्रजामसर्वेशरणंशरण्यंस्वानांसनोधास्यतिशंमहा त्मा २६ ॥ श्रीशुकउवाच ॥ इतितेषांमहाराजसुराणामुपतिष्ठताम् ॥ प्रतीच्यांदिश्यभूदाविःशंखचक्रगदाधरः २७

नयाप्रकृत्यानःससर्ज येनवयंप्रेरिताःविश्वमनुसृजाम यस्यपुरोऽग्रतःस्थिताः समेताःसंगताअपिवयंलिंगंलक्षणमेवपश्याम नतुस्वरूपं तत्स्रष्टृत्वेनतदनुगृहीतकर्तृत्वेनवाऽचिंत्यवैभवमेवलक्षणंबुद्ध्यामहे नतुसच्चिदानंदादिस्वरूपं अदर्शनेकारणमाह पृथगिति पृथक्पृथगीशाभिमानित्वात् अयंचकादाचित्कएवनतुसनातनः तदुक्तं कदाचिदभिमानस्तुदेवानामपिसन्निव प्रायःकालेषुनास्त्येवतारतम्येनसो पित्विति अनेनपृथगित्यनेनाभिमानस्यतारतम्यंध्वनयति हेईशअभिमानिनोवयं पृथक्तारतम्योपेता इतिवार्थःसंपद्यते २४ करचरणादिदेहवत्त्वोपिदेवदत्तवदनित्यदेहोनास्तिअतःस्वाभिमतसिद्ध्यै संप्रार्थनीयइतिभावेनाहुः योनइति तनुभिर्देवर्ष्यादिषुकृतावतारोपिनित्यएवनिर्विकारएव नतुयोनिकृतदुःखादिमान् नकेवलमनुयुगंरक्षतिहरिःकिंतुअन्यदापीत्यर्थेचशब्दः २५ यत्तच्छब्दैरेवोक्ताविशिष्ट गुणैर्विशेष्यतंशरणंप्रार्थयंते तमेवेति अन्ययोगव्यवच्छेदार्थएवशब्दः देवाइत्यनेनदेवानांशरणंहरिरेवनान्यइत्येवशब्दार्थोविवृतः वयमित्यनेनहरेःस्वेषांचमिथोभेदाभिमानध्वनयति नकेवलमिष्टदेवता त्वेनशरणंयामः अपितुसर्वोत्तमत्वादिगुणविशिष्टत्वाच्चेतिभावेनाह परंप्रधानमिति प्रकृतिःकिंनेत्याह पुरुषमिति तर्हिजीवःकिंनेत्याह विश्वमिति नप्रपंचइत्याह आद्यमिति प्रपंचस्यादिभूतं वासुदेवोवा इदमग्रआसीदितिश्रुतेः नृशंसस्वभावश्चेत्कथमयमिष्टःस्यादत्राह शरण्यमिति शरणप्राप्यत्वान्नृशंसोनभवतीत्यर्थः नास्मिन्नस्मासुविप्रतिपत्तिरित्याह सर्वइति शरणंप्राप्तावपिउदासीनोनभवति किंतु व शान्यवदभीष्टंददातीत्याहुःस्वानामिति २६ स्तुतिफलमाह इतीति २७

मत्यक्षीभूतंतंभगवंतंसंदृश्यदेवाःकिंचक्रुरितितत्राह आत्मतुल्यैरिति अनेनदर्शनावस्थायांकिंगुणविशिष्टइतिशंकापर्यंहारि आत्मतुल्यैः आत्मनोमूर्तैःअतएवआत्मतुल्यैःमूलभूतस्यहरेःसदृशैःसामर्थ्या
दिगुणैरनूनैःषोडशभिर्वासुदेवादिदामोदरांतैःपर्युपासितंतेषांमध्यस्थावृत्तिरूपेणास्थितं मूलरूपस्याप्राकृतत्वात्प्रादुर्भावानांशुक्रशोणितसंपर्केणजातत्वात्कथमन्योन्यतुल्यत्वमितितत्राह विनेति श्री
वत्सकौस्तुभौविनाप्रकृतिपुरुषाभ्यांविनाप्रकृतिपुरुषातीतत्वेनतदनिर्मितशरीरैरित्यर्थः अनेनसप्तदशरूपाण्यपिगुणक्रियादिनाविशेषरहितानीत्युक्तभवति श्रीवत्सकौस्तुभरहितैरात्मतुल्यैःषोडशभिः
पार्षदमुख्यैरुपासितमिसंगीकारस्तु श्रीवत्सःप्रकृतिर्ज्ञेयाब्रह्माख्यःकौस्तुभःपुमान् तदतीतैःषोडशभिःस्वरूपैरप्युपास्यतइतिप्रमाणविरोधादप्रामाणिकः तेषांतद्रूपत्वादन्यलक्षणतुल्यंचाप्रामा
णिकम् अतः प्रकृतिपुरुषानधीनत्वेनान्योन्यतुल्यत्वंवासुदेवादीनामेव तदुक्तं अपुंप्रकृत्यधीनत्वाद्वासुदेवादिकाहरेः तुल्याश्चकेशवाद्याश्चनचभिन्नाःकथंचनेति अनेनमूलरूपस्यावताराणांमिथोभेदरा
हित्यमुक्तमितिज्ञातव्यं हरेःप्रकृतिपुरुषराहित्यंचनकादाचित्कंकिंतुसनातनं श्रीवत्सकौस्तुभाभ्यांतुविनाभावंप्रदर्शयेत् पुंप्रकृत्यात्मकाभ्यांसधत्तेनित्यंजनार्दनइतिवाक्यात् । प्रकृतिपुरुषराहित्यं
चतदतीतत्वंतदवशत्वंच तदुक्तं यदस्याभ्यामतीतत्वंयद्वशोनानयोर्हरिरिति श्रीवत्सकौस्तुभाभ्यांतुविनाभावःसएवचइति इयंचोपासिकाभक्तानुकंपित्वेनहरेःपरंक्रीडैव आत्मैवसप्तदशधास्वयंभूत्वाजनार्द
नः मध्यस्थावृत्तिरूपेणक्रीडतेपुरुषोत्तमइत्युक्तेः संवीतश्चतुरात्मभिःस्वसदृशैःश्रीकेशवाद्यैरतश्चक्राद्यैरितैरर्धीश्वरमुख्यैर्वज्रादिभिस्तत्परं । संसेव्यंस्वयमंतराबुजमहापीठेविराजन्हरिर्भूत्यैश्रीपुरुषोत्तमो
भवतुवःश्रीवल्लभःसंततमितितंत्रांतरोक्तमंत्रानुसंधेयं २८ पूर्वहरेःप्रत्यक्षायाधुनास्याभिप्रेतार्थसिद्धयर्थंस्तुतिरितिविशेषः २९ स्तुतेःप्रतीकंगृह्णाति नमस्तइति यज्ञस्यवीर्यंरेतःस्रष्टेत्यर्थःतस्मै । यज्ञोवी

## आत्मतुल्यैःषोडशभिर्विनाश्रीवत्सकौस्तुभौ ॥ पर्युपासितमुन्निद्रशरदंबुरुहेक्षणम् २८ दृष्ट्वातममराःसर्वेईक्षणाल्हादविक्लवाः ॥ दंडवत्पतिताभूमौश नैरुत्थायतुष्टुवुः २९ देवाऊचुः ॥ नमस्तेयज्ञवीर्यायवयसेउततेनमः ॥ नमस्तेअस्तुचक्रायनमोऽस्तुपुरुहूतये ३० यत्तेगतीनांतिसृणामीशितुःपरमंप दम् ॥ नार्वाचीनोविसर्गस्यधातुर्वेदितुमर्हति ३१

र्यंयस्यसतथाभिव्यक्तयइतिशेषःतस्मै हेयज्ञ वीरेषुस्थित्वावीरत्वप्रदायेतिवा । उतकिंतुवयसेबंधकशक्त्याजीवानांसंसारेबंधकाय वयबंधनइतिधातोः । वयःसर्वस्यवयनाद्भगवान्पुरुषोत्तमइतिवचनान्व
यशब्दोत्रबंधवचनः मातंतुश्छेदिवयतोधियंमेमामात्राशार्यपसःपुरऋतोरितिश्रुतेश्च ॥ अतोवयोविहंगोविहगोविहंगमइत्यभिधानेपिप्रकृतानुपयुक्तत्वान्नपक्ष्यत्रग्राह्यःश्रुतेरयमर्थ देवेधियंवयतोबध्नतोमेतंतुः
संततिर्माच्छेदिउत्सन्नोमाभूत् । ऋतोःपुरः ज्ञानोत्पत्तेःपूर्वमपसःकर्मणःमात्रामानंपरिमाणंमाशारि.शॄहिंसायामितिधातोः फलदानेननष्टमाभूत् कर्मणाज्ञानमातनोतीतिश्रुतेः ज्ञानमनुत्पाद्यननश्य
त्वित्यर्थः स्वकृतंबंधनंस्वयमेवहंतुंशक्तोनान्यइतिज्ञापनायसंधिकार्याभाव. । चक्रायपुन.सृष्ट्यादिकर्त्रे करोतेर्यङ्लुगंतशब्दरूपंसर्वंहत्रेचरतंभक्षणायार्थरूपंवा सर्वविपत्परिहर्तृसुदर्शनाख्यावतारायवा
क्षनाप्यनन्यसाध्यकरणशक्त्यादिमत्त्वप्रदर्शनायसध्यभाव·पुरवोबहवोहूतयोनामानियस्यसतथातस्मै नामानिसर्वाणियमाविशंतीतिश्रुतेः । इंद्रायाहिचित्रभानोइत्यादिबहुवेदैर्हूतिराहूतिर्यस्यसतथातस्मैवा
शुचिःशुचिव्रतः शुद्धःपुरुहुःशुद्धिरुच्यतइत्यभिधानात् पुरुहुःशुद्धाऊतिर्यस्यसतथातस्मैवा ३० ईशितुस्तेतव यत्तिसृणांगतीनांदेवलोकपितृलोकनिरयसंज्ञाना सकाशात्परमंउत्कृष्टवैष्णवंपद वैकुंठादि
स्थानंतद्धातुर्ब्रह्मणोविसर्गस्यविविधसृष्टेरर्वाचीनोनंतरकालीनइदानींतनोमनुष्यो वेदितुंलब्धुंप्राप्तुं नार्हतिनयोग्यो विद्वानेवयोग्यइत्यन्वयः । देवलोकात्पितृलोकान्निरयाच्चापिपरं तितृभ्यःपरमं
स्थानंवैष्णवंविदुषांगतिरितिवचनात् विद्लृलाभइतिधातुः पदॢगतावितिच अनेनवैष्णवपदप्राप्तौज्ञानमेवप्रयोजकंनकर्मादिकमितिसूचयति ३१

हरेःप्रसन्नतायांगुणोत्कर्षप्रकाशिकास्तुतिरेवप्रयोजिकेतिपद्यैर्ग्रथिताःकतिपयगुणाएवप्रकाशंतइत्यतोऽपेक्षिताशेषगुणप्रकाशनार्थंगद्यैःस्तुवंति नमस्तइति भगवन्नादिशब्दैराविष्कृतगुणयेतेतुभ्यंनम इत्यन्वयः । परिव्राजकाश्चतुर्विधाःकुटीचकबहूदकहंसनिष्क्रियाइति तेषांमध्येपरमहंसाख्यपरिव्राजकैःपरमेणोत्तमेनआत्मयोगेनपरमात्मध्यानेनयःसमाधिश्चित्तैकाग्रता तेनपरिभावित.प्रबोधितःपरिस्फुटितश्चप्रकाशितो यःपारमहंस्यनामाधर्मः ज्ञानाख्यः तेनोद्घाटिततमःकपाटद्वारमज्ञानाख्यकपाटद्वारंयेन सतथातेनापावृतेप्रकाशितेआत्मलोकेवैकुंठादिनाम्निस्वयमुपलब्धप्रयत्नंविनादृष्टः योभगवान्स्वरूपसुखानुभवस्तस्यतवविहारयोगःजगज्जन्मलयादिहेतुभूतक्रीडोपायोदुरवबोधइव त्वदनुग्रहमंतरेणदुर्बोधएवेत्यर्थः कुतोदुर्ज्ञानइतितत्राह यदशरणइति अशरणोऽधिष्ठानरहितोऽशरीरो ज्ञानसाधनशरीररहितोऽप्राकृतत्वादनपेक्षितोस्मत्समवायःसाहाय्यलक्षणोयेनसतथा अगुणोनिर्गुणःस्वयंसत्त्वमाविक्रियमाणेनस्वतः परतोवाविकाररहितेनात्मनैवस्वभावेनैवभोगादिप्रयोजनमंतरेणेदं जगत्सृजसिरक्षसिसंहरसीति यद्यस्मात्तस्मात्कुलालादिविलक्षणत्वादितिभावः १२ भगवत्स्वरूपनिर्धारणार्थंपूर्वपक्षयंति अथेतिसृष्ट्यादिकर्मणिप्रवर्तमानोभगवान् अथेह गुणविसर्गपतितःसंसारांत.

ओंनमस्तेस्तुभगवन्नारायणवासुदेवादिपुरुषमहापुरुषमहानुभावपरममंगलपरमकल्याणपरमकारुणिकपरमहंसपरिव्राजकैः परमेणात्मयोगसमाधिनापरिभावितपरिस्फुटितपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारेणापावृतेआत्मलोकेस्वयमुपलब्धोनिजसुखानुभवोभवान्दुरवबोधइवतवविहारयोगोयदशरणोऽशरीरइदमनपेक्षितास्मत्समवायःसआत्मनैवाविक्रियमाणेनसगुणमगुणःसृजसिपासिहंसि १२ अथतत्रभवान्किंदेवदत्तवदिहगुणविसर्गपतितःपारतंत्र्येणस्वकृतकुशलाकुशलफलमुपाददाति॥अहोस्विदात्मारामउपशमशीलःसमंजसदर्शनउदास्तइतिहवावनविदामः॥ नहिविरोधउभयंभगवत्यपरिगणितगुणगणईश्वरेअनवगाह्यमाहात्म्येअर्वाचीनवितर्कविकल्पविचारप्रमाणाभासकुतर्कशास्त्रकलिलांतःकरणदुरवग्रहवादिनांचविवादानवसरेउपरतसमस्तमायामयेकेवलस्वात्ममायामंतर्धायकोनुदुर्घटइवभवतिस्वरूपद्वयाभावात्॥समविषममतीनांमतमनुचरसि ॥ यथारज्जुखंडःसर्पादिधियाम् ॥ सएवपुनःसर्ववस्तुषुवस्तुस्वरूपःसर्वेश्वरःसकलजगत्कारणकारणभूतःसर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षितएकएवपर्यवशेषितः ॥ अथहवावतवमहि

पातीदेवदत्तवत्परवशतयास्वकृतपुण्यापुण्यफलमुपादत्तेकिं अथवोदास्तेनोपादत्तेकिं । कुतःआत्मारामःस्वमहिम्निस्थितःउपशमशीलःपूर्णानंदानुभवः समजसदर्शनःशुद्धज्ञानः एतेप्रत्येकंहेतवोनुपादानेभवतीति नविदामोहवाव नबुध्यामहेहि वावेत्येताभ्यामज्ञानिनएवंवदंतीतिसूचयंति नज्ञानिनइति कस्मिन्सतिकिंस्यादितितत्राह नहीति कुशलाकुशलस्योपादानमनुपादानंचेत्युभयमितरत्रविरुद्धमत्रनहिविरोधःकथंतत्राह भगवतीति भगवतिकोनुदुर्घटइवभवति सर्वःसुघटएवेत्यन्वयःसौघट्यंबहुभिर्विशेषणैरुपपादयंतिअपरिगणितेति नपरिगणिता गुणानांगणाःयस्यसतथातस्मिन्कुतइत्यत्राह ईश्वरइति अघटितघटकत्वशक्तिमत्त्वाद्युक्तमित्यर्थः इतोपिगुणानांअगणितत्वंयुक्तमित्याह अनवगाह्येति अपरिच्छेद्यमहिमत्वात् । अयमीशःस्वस्वेतरवृत्तित्वानाक्रांतपरिच्छिन्ननिष्ठाधिकरणमेयत्वाद्घटवदित्यादिमहाविद्यालक्षणवितर्केण देवदत्तवदयंकुशलाकुशलभोक्तानवेतिविकल्पेन अत्रकर्मणःपुरुषार्थहेतुत्वसमर्थ गादस्तिशास्त्रादिसगतिरित्यादिलक्षणमीमांसया मयाऽस्मि

---

१ अत्रसाध्ये स्वपदद्वयं बुद्धिस्थात्मपरमेव । परिच्छिन्नेनिष्ठा आधेयतायस्येतिव्युत्पत्त्या परिच्छिन्नस्वसमानाधिकरणइत्यर्थः । अनाक्रांतेत्यंतमस्याविशेषण तथाचआत्मवृत्तित्वआत्मेतरवृत्तित्वैतदुभयाभाववान्यः परिच्छिन्नत्वसमानाधिकरणोधर्मः तदधिकरणत्वसाध्यमिति दृष्टांतेघटत्वादिधर्ममादायसाध्यसत्वनिर्वाहः । पक्षेआत्मत्वादिधर्ममादायसाध्यासिद्धावपितस्यपरिच्छिन्नत्वासिद्धेःतत्सामानाधिकरण्यस्यानिवेशः ।

न्मुलमेव्याशोदर्शीत्यादिविद्यमानेनप्रमाणवदवभासमानेन यदीशोदुर्भगशरीरेस्थितस्तर्हिदेवदत्तवत्तद्गतदुःखभोगःप्रसज्येतइत्यादिकुतर्केणचावगाह्यमाहात्म्यस्यादितितत्राह अर्वाचीनेति अर्वाचीनाभ्या
स्यादिरहिताःविकल्पादयोयेषुतानितथोक्तानितैः शास्त्रैःवैशेषिकादिभिःकलिलेनव्याकुलितेनांतःकरणेनमनसादुरवग्रहोयेपांतेतथा तेचवादिनस्तेषां विवादानवसरेविप्रतिपत्त्यगोचरेइतोपिविवादा
विषयइत्याह उपरतसमस्तेति केवलस्वात्ममायांअद्वंद्वरूपसामर्थ्यं अंतर्धायावष्टभ्योपरतसमस्तमायामयेप्राकृतस्वभाववर्जिते एवंविधेपिपुण्यापुण्यभोक्तृत्वंवपनविग्रहे येवदंतितेमूढाः
असुरप्रकृतयइत्याभिप्रेत्यस्वयमेवसमाधत्ते स्वरूपेति एकमेवाद्वितीयंनिरंजनोनिरवद्यइत्यादिश्रुतेः सुखीदुःखीत्यादिस्वरूपद्वयानुपपत्ते नचायंसंशयःसुराणां स्वतंत्रःपरतंत्रोवाज्ञोऽज्ञोदुःखीसुखीनुकि
इत्यादिसंशयःकस्याज्ज्ञानिनांपुरुषोत्तमइतिविरोधात्तर्हिज्ञानिनःकथंवदंतिचेदुच्यते अनंतगुणत्वात्पूर्णशक्तित्वाच्चस्वातंत्र्यादिकमेवजानंति तदुक्तं तस्यानंतगुणत्वाच्चपूर्णशक्तित्वतोहरेः स्वातंत्र्या
दिकमेवास्यविदोजानंतिनिश्चयादिति निरवयवस्यजीवस्यपुण्यापुण्यभोक्तृत्वंयुज्यते घटकत्वाद्दुर्घटस्यदुर्ज्ञेयत्वाच्चसर्वशः तच्छक्तेरविदोजीवंपरतंत्रवदंत्यमुं एवंदुर्घटयाशक्त्याज्ञोऽज्ञानोपर
मेश्वरइतिवचनात् यद्वा पारतंत्र्येणकुशलाकुशलादिकमनुभवतीतिकिं उतस्वातंत्र्येणोदास्तइतिसंशयंनाविदामः किंत्वनंतशक्तेरनंतगुणस्यहरेःपारतंत्र्यादिकंकुतोघटतइतिनिश्चिनुमः अस्मिन्नर्थेच
स्वतंत्रःपरतंत्रोवाज्ञोऽज्ञोदुःखीसुखीनुकिंइत्यादिमानमनुसंधेयं इतोपिनघटतइत्याह नहीति । विरोधो हियस्मात्तस्मादुभययेकस्यनयुक्तमित्यर्थः ननुनिर्गुणस्यहरेःगुणित्वआकिंचनस्येशित्व

मामहामृतरससमुद्रविप्रुषाऽसकृल्लीढयास्वमनसिनिष्यंदमाननिरवरतसुखेनविस्मारितदृष्टश्रुतविषयसुखलेशाभासाःपरमभागवताएकांतिनोभगवतिस
र्वभूतप्रियसुहृदिसर्वात्मनि निरंतरनिर्वृतमनसःकथमुहवाएतेमधुमथनपुनःस्वार्थकुशलाह्यात्मप्रियसुहृदःसाधवस्त्वच्चरणांबुजानुसेवांविसृजंति नयत्रपु
नरयंसंसारपरिवर्तः ॥ त्रिभुवनात्मभावनत्रिविक्रमत्रिनयनत्रिलोकमनोहरानुभावतवैवविभूतयोऽभूवन्दितिजदनुजादयश्चापितेषामनुपक्रमसमयोऽयमि
तिस्वात्ममाययासुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधंदंडमधधावतीर्थ ३३

स्वव्यतिरिक्तस्वरहितस्यमाहात्म्यंअवाङ्मनसगोचरस्याविचारविषयत्वंअकर्तुःकर्तृत्वंइत्यादिसर्वंदुर्घटमितितत्राह भगवतीति तर्हिउपाधिभेदाद्दौर्घट्यपरिहारोस्त्वितितत्राह स्वरूपेति ननुममानि
शितशरैर्विभिद्यमानत्वाचिविलसत्कवचेऽस्तुकृष्णआत्मेत्यादिकथंसंगच्छतइतिचेत्तत्राह समेति सममतीनामनंतसच्चिदानंदलक्षणब्रह्मेतियथार्थबुद्ध्यानुसरासितथात्वेनप्रकाशसइत्यर्थः विषमम
तीनामसुरप्रकृतीनांमत्तमभूतिरित्यसुराइतिमिथ्याबुद्ध्यादुःखीछिन्नोविद्धइत्याद्याकारेणदृश्यसइत्यर्थः अत्रदृष्टांतमाह यथेति यथारज्जुखंडःसर्पोयमितिमंदांधकारेमंदितेंद्रियस्यज्ञानं सएवपुनरा
लोकादिनालोकितेस्थलेनिर्दुष्टेंद्रियस्यरज्जुखंडएषइति तदुक्तं यथारज्जुःसर्पधियारज्जुबुद्ध्यावगम्यते तथायथार्थबुद्ध्याचामिथ्याबुद्ध्यावगम्यते स्वेच्छयैवमहाविष्णुःफलदश्चानुसारतइति तथा
सएवपुनर्भगवान्सर्ववस्तुषुवस्तुस्वरूपोप्रतिहतस्वरूपः वसनाद्वासयेद्वस्तुनित्याप्रतिहतत्वतइत्यादेः तादात्म्यंकिंनस्यादत्राह सर्वेश्वरइतिप्रत्यगात्मत्वेनसर्वेश्वरत्वंहरेरेवेत्याह सकलेति ननुकुलाला
दिवद्ब्रह्मकारणत्वअस्तु नांतः परिच्छिन्नत्वापत्तेः तथाचसकलकारणकारणत्वमयुक्तमत्राह सर्वप्रत्यगिति सर्वेषामपिप्रत्यगात्मत्वेनांतर्यामित्वेनतत्तद्वस्तुतत्तच्चेष्टादिकारणत्वेनअपरिच्छिन्नस्यापिआ
काशवदुपपत्तेः ततःस्थस्यतत्तददृष्टप्राप्यदौर्भाग्यप्राप्तिःस्यादत्राह सर्वेति सर्वगुणानामाभासेनसम्यक्प्रकाशेनोपलक्षितोज्ञानिभिःसम्यग्दृष्ट इतरैरनुमीयतइत्यर्थः नचस्थानभेदात्तस्यभेदइत्याह ए
कइति सवाएषआत्मानेतिनेतीत्यादिपरिशेषलक्षणप्रमाणात् एकएवेतिनिश्चितइत्यर्थः महतामनुभवापरपर्यायसाक्षित्वपक्षं हरेरेकत्वेनिर्दोषत्वेसंसारनिवर्तकमहामहिमत्वेप्रमाणमाह अथेति विरूपा

विदुषा असकृद्धीदयानिरंतरसेवितया नितरास्यंदमानेन निरवरतेननिरंतरेण स्वरूपसुखेन हेमधुमथन परमास्त्वंसर्वोत्तमःसर्वगुणपूर्णःसर्वान्मगानिर्दोष. सर्वांतर्यामी अथ तस्मादेकांतिनोऽर्पितशरीरेंद्रियप्राणसर्वस्वाःभागवताःये एतेकथंत्वच्चरणांबुजसेवांविसृजंतीत्येवेत्यन्वयः हवावइत्येतैर्निपातैःपरमःपरार्ध्यइतिश्रुतेः महिम्नःपरमपरार्ध्यत्वंसूच्यते सर्वभूतप्रियाःसंन्यासिनोऽजातशत्रवस्तेषांसुहृत् सर्वभूतानांपरेणाभीष्टकर्तृत्वात् प्रियश्वसुहृच्च परेयंप्रियनामेतिवचनात् निरंतरसंतुष्टमनसः अविसर्जनेकारणमाहुः स्वार्थेति यत्रत्वच्चरणाब्जसेवाया परितः परिश्रमभावाभिप्रायंविज्ञापयितुमुपोद्घातमाहुः त्रिभुवनेति त्रिभुवनमेवात्मभवनंयस्यसतथा त्रिभुवनस्ययउपद्रवःसोवश्यंपरिहर्तव्यइतिद्योतनायेदंविशेषणमितिज्ञातव्यं एवमेतत्सर्वविशेषणानिअभिप्रायगर्भाणि त्रीणिनयनानियस्यसतथा नृसिंहइत्यर्थः विष्णोर्नृसिंहनामानित्रिनेत्रोप्रादिकानितुइतिवचनात् नृसिंहसुदर्शनादयस्त्रिनेत्रादिनामानः त्रयोलोकाःत्रिलोकविषया ज्ञानलक्षणा. प्रकाशायस्यसतथा सर्वज्ञइत्यर्थः त्रिलोकस्यत्रिलोकनिवासिनोजनस्यमनोहरोनुभावोयस्यसतथेतिवा मायागुणव्यतिकराद्यदुरुविभासीतिवचनाद्विभूतयइत्युच्यंते देवादयो नतुस्वरूपत्वात् अपिशब्दान्मत्स्यादयएव साक्षाद्विभूतयएवगम्यंते विविधभावस्यपात्रत्वात्सर्वैविष्णोर्विभूतयइतिच येविभूतिशब्दवाच्यादितिजादयोऽभूवन् तेषामनुपक्रमसमयः क्षयप्रारंभकालःधमितिमत्वा स्वात्ममाययाप्रकरूपभ्रतम्ययास्वमहिम्नाशुक्रशोणितसंबंधमंतरेणवा सुराद्याकृतिभिरवतीर्ययथापरायंत्रैलोक्यापहरणादिलक्षणापराधमनुसृत्यबल्यादीनांधृतवानसीत्यन्वयः मिश्रिताकृतिभिर्नरसिंहादिभिःसुराद्याकृतिभिःवा यद्वे

एवमेनमपिभगवन्जहित्वाष्ट्रंवृत्रासुरंयदिमन्यसे ॥ अस्माकंतावकानांतवचरणनलिनयुगलध्यानानुबद्धहृदयनिगडानांस्वलिंगविवरणेनात्मसात्कृतानामनुकंपानुरंजितविशदरुचिरशिशिरस्मितावलोकनेनविगलितमधुरमुखरितवचसामृतकलयाचांतस्तापमनघार्हसिशमयितुम् ॥ अथभगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिकायानामंतर्हृदयेषुबहिरपिचब्रह्मप्रत्यगात्मस्वरूपेणप्रधानरूपेण यथादेशकालदेहावस्थानविशेषंतदुपादानोपलंभकतयानुभवतःसर्वप्रत्ययसाक्षिणआकाशशरीरस्यसाक्षात्परब्रह्मणःपरमात्मनःकियानिहवाअर्थविशेषो विज्ञापनीयःस्याद्विस्फुलिंगादिभिरिवहिरण्यरेतसः ॥ अतएवस्वयंतदुपकल्पयास्माकंभगवतःपरमगुरोस्तवचरणशतपलाशच्छायांविविधवृजिनसंसारपरिश्रमोपशमनीमुपसन्नानांवयंयत्कामेनोपसादिताः ॥ अथोईशजहित्वाष्ट्रंग्रसंतंभुवनत्रयम् ॥ ग्रस्तानियेननःकृष्णतेजांस्यस्त्रायुधानिच ३१

नविभूतित्वंविवृत्तमितिज्ञातव्यं ३३ किंबहूक्तेनापेक्षितंवक्तव्यमितितत्राह एवमिति यदिमन्यसेकर्तव्यंतर्हीतिशेषः किंवेदंकर्तव्यमितिप्रार्थयंते अस्माकमिति हृदयनिगडानाहृदयालयसंबलानां चक्रशंखादिलांछनानांस्पष्टतयाधारणेनात्मसात्कृतानांतद्वद्भूतानामनुकंपया रंजितस्निग्धंचविशदंनिर्मलंचरुचिरंचारुचशिशिरंशीतलंचयत्स्मितंतेनयुक्तेनावलोकनेननिरीक्षणेनविगलितनिर्गलंच मधुरंचमधुरितं मुखरितंमंद्रंचयद्वचस्तेनामृतकलपायुक्तेनेतिशेषः वचोलक्षणयामृतकलयेतिवा बुभुक्षितबालवत्सर्वज्ञस्यतवहृदयभावातिरेकादुत्कंठितामिवयद्विज्ञापनमस्मदीयंतदस्मदज्ञाननिमित्तमित्यभिप्रेत्याहुः अथेति दिव्यमाययास्वरूपेच्छयाविनोदोलीलायस्यसतथा निकायानांराशीनां ब्रह्मस्वरूपेणबहिः प्रत्यगात्मस्वरूपेणातः यथादेशादिक्रियाविशेषणं तेषांदेशकालादीनां उपादानोपलंभकतया कारणत्वप्रापकत्वेनोपादानत्वेनोपालंभकत्वेनेतिवा सर्वमनुभवतःआकाशशरीरस्याकाशवत्सूक्ष्मरूपस्य आकाशशरीरंब्रह्मेतिश्रुतेः लिंगशरीरस्यव्यावृत्त्यर्थंपरब्रह्मणइति मुक्तजीवस्यव्यावृत्त्यर्थंसाक्षादिति साक्षात्परब्रह्मत्वंचित्प्रकृतेरप्यस्तीत्यतःपरमात्मनइति हिरण्यरेतसोग्नेःमहाप्रकाशस्यविस्फुलिंगादिभिरल्पप्रकाशैरग्निकणैःखद्योतैश्च यतस्त्वमस्माकमवापदापरिहर्तासि अतोवयंयत्कामेनत्वाष्ट्रहननलक्षणवांछयातवपादकमलच्छायामुपगताःतदुपसन्नानां अधीहिभगवोब्रह्मेतिसमित्पाणिशिष्यवच्छरणंगतानामस्माकंतत्कार्यमुपकल्पयसमर्थंस्वेत्यन्वयःत्वंहुमार्थनैवस्वाभीष्टफलप्राप्तिःस्यादितिदर्शयितुमेवंगद्येनविज्ञापितमेवपद्यप्रबंधेनविज्ञापयति अथोइति तेजांसितामर्थ्यलक्षणानि ३४

हंसयस्सारग्राहिणे दभ्रानिलयायहृदयाकाशनिवासाय तस्यांतेसुषिरंसूक्ष्मंतस्मिन्सर्वंप्रतिष्ठितमितिश्रुतेः निरीक्षकायचेतनकर्मसाक्षिणे कृष्णाय कृषिर्भूवाचक शब्दोणश्चनिर्वृतिवाचकइत्यतःसंतत पूर्णानंदाय कृतौपूर्णौपणौवल्गमाणौयस्यसतथातस्मैनिरुपक्रमायश्रमजनकप्रयत्नमंतरेणजगत्कर्त्रे निरुपक्रमोहरिर्नित्यमप्रयत्नाद्युपक्रमेदित्यतः सतासंग्रहोयस्यसतथातस्मै भवपांथा संसारमार्गे वर्तमानाःतेषांनिजाश्रयाय निजमात्मीयानित्ययोरित्यभिधानं शश्वदेकप्रकारा वरिष्ठा धर्मादेरत्युत्तमागतिर्मुक्तिलक्षणायस्मात्सतथातस्मै हरयेआपत्परिहरणशीलाय ३५ स्वमुपस्थानंस्वविष यांस्तुतिं ३६ मदुपस्थानलक्षणयाविद्ययापुंसामात्मैश्वर्यस्मृतिर्माहात्म्यस्मृतिः मयिभक्तिश्चभवतीत्यन्वयः ३७ प्राप्तेप्रत्यक्षे तथापिफलप्राप्त्यनायासेपि भक्तिज्ञानप्रसादेभ्योन्यत् अत्रहेतुस्तत्त्ववि दिति अनेनायमधिकारिसुखाधिक्यप्राप्तियोग्यइतिज्ञायते ३८ तत्त्वविच्चथास्त्वभिलाषकस्याकिंफलंइतितत्राह नेति यःकृपण.कामानभिलषन्स्वस्यमोक्षणंश्रेयोनवेद कुतःगुणवस्तुदृक् स्वर्गादेर्गुणा नांशब्दादिविषयाणां वस्तुदृक् अप्रतिहतत्वदर्शी नित्यत्वज्ञानीत्यर्थः अहमिच्छतोभिलाषकस्यतस्यतान्कामान्यच्छेदद्यां त्वांभजमानस्यतथाविधफलदातृत्वंतवकथंयुक्तमितितत्राह यदीति य दिसमांभजमानोपितथाविधःनश्वरफलस्वीकारयोग्यःउत्तमाधिकारीनस्यात्तर्हितस्मैऐहिकान्कामान्दद्यां यश्चत्रैविद्योत्युत्तमोनस्यात् तस्मैस्वर्गादिकामान्दद्यामितिविशेषमभिप्रेत्याचार्यैरुत्तमोनभव तिचेदितिव्याख्यातं यच्छेदितिपाठेऽयमर्थः । त्वद्भक्तादन्यःकथमितितत्राह नेति गुणवस्तुदृक्त्रिगुणजन्यशरीरादेर्वस्तुत्वज्ञानीदीनोयंमुग्धःश्रेयोमोक्षाख्यंनवेद तद्विनान्यद्वांछेव तस्यसेवकस्यसे

हंसायदभ्रनिलयायनिरीक्षकायकृष्णायमृष्टयशसेनिरुपक्रमाय ॥ सत्संग्रहायभवपांथनिजाश्रयायशश्वद्वरिष्ठगतयेहरयेनमस्ते ३५ श्रीशुकउवाच ॥ अ थैवमीडितोराजन्सादरंत्रिदशैर्हरिः ॥ स्वमुपस्थानमाकर्ण्यप्राहतानभिनंदितः ३६ श्रीभगवानुवाच ॥ प्रीतोहंवःसुरश्रेष्ठामदुपस्थानविद्यया ॥ आ त्मैश्वर्यस्मृतिःपुंसांभक्तिश्चैवययामयि ३७ किंदुरापंमयिप्रीतेतथापिविबुधर्षभाः ॥ मय्येकांतमतिर्नान्यन्मत्तोवांछतितत्त्ववित् ३८ नवेदकृपणःश्रेयआ त्मनोगुणवस्तुदृक् ॥ तस्यतानिच्छतोयच्छेयदिसोऽपितथाविधः ३९ स्वयंनिःश्रेयसंविद्वान्नवक्त्यज्ञायकर्मभिः ॥ नरातिरोगिणोऽपथ्यंवांछतोपिभिष क्तमः ४० मघवन्यातभद्रंवोदध्यंचमृषिसत्तमम् ॥ विद्याव्रततपःसारंगात्रंयाचतमाचिरम् ४१

व्योपितथाविधोत्युत्तमोनभवतिचेत्तर्हिताहशान्कामान्यच्छेदद्यात्मत्प्रेरितइतिशेषः ३९ कथमत्युत्तमोनभवतीतितत्राह स्वयमिति विद्वांस्तत्तद्योग्यमुक्तिविशेषंजानन्नत्युत्तमःस्वयमज्ञायअज्ञानिनेपुंसे कर्मभिर्निःश्रेयसंनवक्ति नोपदिशति किंतुतमेवंविद्वानितिश्रुतेः ज्ञानेनैव यथापथ्यमेवअभिषिंचातिददातिनापथ्यमित्यत्रलोपेनभिषक्भिर्नानिरोगांसिंचतिआप्याययतिप्राणमितिरावैद्य. पानीयंत्राच्छा ज्वरादिरोगार्तस्यापथ्यंपानीयादिद्रव्यनरातिनददाति तस्मादनीदृशउत्तमोनभवतीत्यर्थः ननुकृपणःकर्मणासिद्धिकामित्वाद्धिनात्युत्तमइत्यभिप्रेतं तत्कथमुच्यते । लोकसंग्रहमेवापिसंपश्यन्क र्तुमर्हसि यदिह्यहंनवर्तेयंजातुकर्मण्यतंद्रितइत्यादौभगवतैवकर्मविधानादत्राह स्वयमिति मादृशोविद्वान्स्वयंकेवलैःकर्मभिरज्ञायअज्ञानिनेनिःश्रेयसंनवदाति किंतु ज्ञानद्वाराशुद्धांतःकरणाय यथाभिषग पिकेवलफलकामिनएवताहशफलंदीयते अतःसाकल्यफलस्वीकारयोग्यइतिनियम्यते तर्हिकिमर्थंतस्मैताहशमपिदीयतइतिचेन्न युष्मद्भक्तत्वेनफलदानस्ययुष्मदिष्टत्वात्तदेवममप्रियं युष्मत्कामाभा वेतत्फलंनदद्यां भवताचमत्प्रियकामित्वादेतदाचार्यैरुक्तं युष्मत्कामोमत्प्रियएवान्यथानदद्यामितिभावः विष्णोःप्रियकामयतिदेवानैवाप्रियंकचित् यद्यप्रियंकामयेतनरातीशोहितोयतइति ननु यदिपुरुषेणनिष्कामेनभवितव्यंतर्ह्यस्मत्कामोनिष्फलोभवतोऽनिष्टत्वादितिशंकायामाभूत्त्वाष्ट्रहननस्यममेष्टत्वान्मदिष्टमेवयुष्माभिःकामितमित्यतोवाचार्यैःयुष्मत्कामइत्याद्युक्तम् ४० एतत्कृतइत्य

र्शक्यत्वाच्छेदनेनोपायमाह मघवन्निति गानंद्धानंत्रायतइतिवागंगतिसाधनत्वाद्वा ॥ ४१ ॥ जगतोधारकत्वाद्दधिब्रह्म तदंचतिगच्छतीतिदध्यङ् सोऽधिगतोधिकज्ञानवान्वैयख्यातः दध्यङ् हयन्मध्वाथर्वणोवामश्वस्यशीर्ष्णाप्रयदीमुवाचेतिश्रुतिः एतदेवाह अश्विभ्यामिति यस्माद्दधीचोऽश्विनौदेवताभ्यां ब्रह्मविद्यालक्षणं नितरांकृतंआपादितंस्वीकृतामितियावत्सइति यद्वा निष्कृतंप्रव र्ग्याख्यंकर्मब्रह्मचाश्विभ्यामुक्तवानितिविशेषः यद्वा ब्रह्माश्विनौदेवताभ्यामुक्तवान् किमिति निष्कृतंसत्यप्रतिपालननिमित्तं दधीचाब्रह्मदास्यामीतिमतिज्ञातत्वात् तदनुपदेशेऽनृतवादित्वंस्यात् तत्रा माह अश्वशिरमिति यद्दधीचाश्विभ्यामुपदिष्टं यच्चतयोर्वैद्यावित्युक्त्वादेवैर्दुर्लभीकृतामृतयोरश्विनोरमरतामरणराहित्यंव्यधात्तद्ब्रह्माश्वशिरंनाम अत्रेतिहासमाचक्षते अथर्वणोदध्यङ्प्रवर्ग्यब्रह्मविद्ययो र्दक्षइतिवविज्ञायात्मनोरमरत्वंकामयमानावश्विनौदेवौदधीचमुपागम्य त्वंप्रवर्ग्यब्रह्मविद्याविशारदेत्याकर्ण्यागताभ्यांतदर्थिभ्यांआवाभ्यांतेवक्तव्येइतिविज्ञापयाचक्रतुः कर्मकाण्डोक्तकर्मणिप्रवृत्तेनमयात त्स्माच्च कालांतरेवक्ष्येतेइतितेनोदितौतौनिजगृहाण्याजग्मतुः एतस्मिन्नंतरेआत्मनोन्यस्यविद्यातिशयमसहमानःसुरपतिस्तमृषिमुपसृत्यत्वयाप्रवर्ग्यब्रह्मविद्येकस्मैचिन्नवक्तव्ये रागलोभादिनावदतस्त वशिरश्छेत्स्यामीतितमनुशशास एवंबहुतिथेकालेऽतिक्रांतेनासत्याभ्यामागत्यपूर्वोक्तविद्येवक्तव्येइत्युक्तोमुनिरहमिंद्रेणानिषिद्धोऽस्मीत्यजीगदत् तत्रोपायमाकलय्यनिजशिरश्छेदात्प्रागेवतवशिर श्छित्त्वान्यत्रनिधायकस्यचिदश्वस्यशिरःछित्त्वागलेसंधास्यतेनैतेविद्येब्रूहि यदींद्रस्तदश्वशिरःछिनत्तितर्हिस्वकीयंशिरःपूर्ववद्गलेसंयोज्यतुभ्यंदक्षिणाचदास्यावइतिताभ्यांदेवचिकित्सकाभ्यामुक्तो

सवैब्रह्यधिगतोदध्यङ्ङश्विभ्यांब्रह्मनिष्कृतम् ॥ तद्वाअश्वशिरंनामतयोरमरतांव्यधात् ४२ कृत्स्नंचाथर्वणंत्वाष्ट्रंवर्माभेद्यंमदात्मकम् ॥ विश्वरूपाययत्प्रादा त्त्वाष्ट्रायत्वमधास्ततः ४३ युष्मभ्यंयाचितोदध्यङ्धर्मज्ञोंगानिदास्यति ॥ ततस्तैरायुधश्रेष्ठोविश्वकर्मविनिर्मितः ॥ येनवृत्रशिरोहर्तामत्तेजउपबृंहितः ४४ तस्मिन्विनिहतेयूयंतेजोस्त्रायुधसंपदः ॥ भूयःप्राप्स्यथभद्रंवोनहिंसंतिचमत्परान् ४५॥ इतिश्रीभागवतेषष्ठस्कंधेनवमोध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ श्रीशुकउवाच ॥ इंद्रमेवंसमादिश्यभगवान्विश्वभावनः ॥ पश्यतामनिमेषाणांतत्रैवांतर्दधेहरिः १

दध्यङ्ङश्वशिरसातेविद्येतयोरुपदिदेशइत्यतोश्वशिरंनामेतिप्रख्यातमभूदिति आथर्वणायाश्विनोदधीचेश्व्यंशिरःप्रत्यैरयतं सवांमधुप्रवोचदृतायत्वाष्ट्रंयद्दस्रावपिकक्ष्यवामितिश्रुतिंचात्रोदाहरति हेऽश्वि नावाथर्वणायदधीचेऽश्वस्यशिरःप्रत्यैरयतंप्रतिसंहितमकुरुतं सदध्यङ्वांमधुब्रह्मविद्यालक्षणंप्रवोचत्प्रावोचत् हेदस्रौत्वष्टाविश्वरूपायमोक्तंत्वाष्ट्रंकक्ष्यंनारायणकवचंच वामुवाच कीदृशं ऋतायन् यथातथ्यंविद्यांजानन्विद्यांवक्ष्यामीतिवचनंसत्यंसंपादयामितिवा ४२ किंचनारायणकवचधारणाच्चदधीचोंगवीर्यवदित्यभिप्रेत्याह कृत्स्नंचेति मदात्मकंवर्मनारायणकवचंअथर्वणंआथर्वणेनद धीचाधीतत्वात् कृत्स्नंअंगोपांगसाहित्येनानूनंत्वाष्ट्रायविश्वरूपायप्रादात्पश्चात्त्वंविश्वरूपादधीः ततस्तस्मात्त्वाष्ट्रेत्वष्टुर्विद्यमानत्वात्तन्नामत्वाच्चतस्यविश्वरूपस्यविद्यमानत्वाच्चतथा ४३ युष्माकयाच्ञा भंगमर्यमाभूदित्याह युष्मभ्यमिति अंगानीत्यवयवसाहित्यविवक्षयाबहुवचनं किंचिदपिनावशेषयतीत्यर्थः याचितोऽश्विभ्यामितिपाठेअश्विभ्यांयाचितोयथाताभ्यांविद्यामादात्तथायुष्मभ्यमप्यंगानि ददातीत्यर्थः तैरंगैर्विश्वकर्मणानिर्मितआयुधश्रेष्ठोभवतीतिशेषःयेनायुधश्रेष्ठेनमत्तेजसोपबृंहितोभवान् ४४ तेजोस्त्रायुधसंपदःतेनग्रस्ताइतिशेषःमत्परान्नहिंसंतिकेपीतिशेषः अत्रहयाज्ञाकारित्वेनमुन्या दियाच्ञयानदेवानांसामर्थ्यन्यूनतेतिदोषः समर्थाअपियावंतिदेवामुन्यादिकान्कचित् आज्ञयैवहरेस्तेषांपशोर्थमपिनान्यथेतिवचनात् ४५ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधेविजयध्वजकृतटीका यांनवमोध्यायः ॥ ९ ॥ शत्रुनिग्रहोपिभगवत्प्रीतिजनकत्वेनमुक्तिसाधनस्यादित्यभिप्रेत्यकतिपयैरध्यायैर्वृत्रवासवयोर्युद्धंनिरूप्यते अत्रादौसतामभीष्टमवश्यंकर्तव्यंपुरुषेणेतिदेवेभ्योदधीचेःस्वांगदान प्रकारंवक्तुमाह इंद्रमिति सुरमत्स्यावनिमिषावित्यमरः १

२ संस्थायांचेतनापहोबुद्धिभ्रंशकरःयोद्रोहःदुःसलक्षणउपद्रवः तंवृंदारकादेवाअपियूयंनजानीथेत्यन्वयः सर्वप्राणिनांबुद्धिवृत्तिसाक्षित्वाद्भवतामित्यर्थः अभिद्रोहस्यसर्वविषयज्ञाननाशकत्वात् ३ आत्मादेहेसमीरेचसंसारिणिहरौतथेत्यभिधानात् इहप्रियेपुवस्तुपुदेहःप्रेष्ठःप्रियतमःईप्सिततमइतियस्मात् कःपुमान्भिक्षमाणायातिथिरूपेणयाचमानायविष्णवेपितदेहंदातुमुत्सहेतप्रयतेत ४ पुण्यश्लोकैःपुरुषैरीड्यानिस्तुत्यानिकर्माणिदेहदानादीनियेषांतेतथातेषां ५ नूनंप्रायः परसंकटंपरदुःखंदातुमशक्यंदातव्यंचेतिवा परसंकटवेदतर्हिनयाचेत सामान्यमुक्त्वाविशेषमाहः नेतीति अज्ञावयमपिदातुंयदीश्वरःसमर्थस्तर्हियाचितःसन्असौदास्यामीतिनेतिनाह नवक्तव्य तेजानंतोपीदृशोयाचनीयइतिजानंतोवयंदातुसमर्थभवंतंयाचामहेइत्यभिप्रायः नचात्रदेवानास्वात्मनोनीचाश्चावर्णयाचमानानामभिमानलक्षणतेजःक्षतिःशंकनीया कार्यगौरवविवक्षयातदभावस्यप्रामाणिकत्वाद्धर्माज्ञाकारित्वाच्च आज्ञयैवमहाविष्णोःकार्यार्थमपिचकचित् नीचानपितुयाचते

तथाभियाचितोदेवैर्ऋषिराथर्वणोमहान् ॥ मोदमानउवाचेदंप्रहसन्निवभारत २ अपिवृंदारकायूयंनजानीथशरीरिणाम् ॥ संस्थायांयस्त्वभिद्रोहोदुःसहश्चेतनापहः ३ जिजीविषूणांजीवानामात्माप्रेष्ठइहेप्सितः ॥ कउत्सहेततंदातुंभिक्षमाणायविष्णवे ४ ॥ देवाऊचुः ॥ किन्नुतद्दुस्त्यजंब्रह्मन्पुंसांभूतानुकंपिनाम् ॥ भवद्विधानांमहतांपुण्यश्लोकेड्यकर्मणाम् ५ नूनंस्वार्थपरोलोकोनवेदपरसंकटम् ॥ यदिवेदनयाचेतनेतिनाहयदीश्वरः ६ ॥ ऋषिरुवाच ॥ धर्मंवःश्रोतुकामेनयूयंमेप्रत्युदाहृताः ॥ एषवःप्रियमात्मानंत्यजंतंसंत्यजाम्यहम् ७ योऽध्रुवेणात्मनानाथानधर्मंनयशःपुमान् ॥ ईहेतभूतदययासशोच्यःस्थावरैरपि ८ एतावानव्ययोधर्मःपुण्यश्लोकैरुपासितः ॥ योभूतशोकहर्षाभ्यामात्माशोचतिहृष्यति ९ अहोदैन्यमहोकष्टंपारक्यैःक्षणभंगुरैः ॥ यन्नोपकुर्यादस्वार्थैर्मर्त्यःस्वज्ञातिविग्रहैः १० ॥ श्रीशुकउवाच ॥ एवंकृतव्यवसितोदध्यङ्ङाथर्वणस्तनुम् ॥ परेभगवतिब्रह्मण्यात्मानंसंनयन्जहौ ११ यताक्षासुमनोबुद्धिस्तत्त्वदृग्ध्वस्तबंधनः ॥ आस्थितःपरमंयोगंनदेहंबुबुधेगतम् १२ अथेंद्रोवज्रमुद्यम्यनिर्मितंविश्वकर्मणा ॥ मुनेस्त्वस्थिभिरुत्सिक्तोभगवत्तेजसान्वितः १३ युतोदेवगणैःसर्वैर्गजेंद्रोपर्यशोभत ॥ स्तूयमानोमुनिगणैस्त्रैलोक्यंहर्षयन्निव १४ वृत्रमभ्यद्रवच्छत्रुमसुरानीकयूथपैः ॥ पर्यस्तमोजसाराजन्क्रुद्धोरुद्रइवांतकम् १५ ततःसुराणामसुरैरणःपरमदारुणः ॥ त्रेतामुखेनर्मदायामासीत्प्रथमेंतरे १६

स्वात्मनोगुणवत्तराः नीचवाक्यंवदेयुश्चसुरानैतावताक्वचित् तेजःक्षतिर्भवेदेषांजनकस्ययथार्भकइतिवचनात् ६ प्रत्युदाहृताःनिराकृताइवोक्ताः । त्यजंतंत्यक्ष्यंतं ७ अध्रुवेणात्मनाअनित्येनदेहेन हेनाथाः स्थावरैःस्तब्धै (सत्वैः) र्विवेकशून्यैरित्यर्थः ८ ९ पारक्यैःपरेषांश्वसृगालादीनांभक्ष्यभूतैःअस्वार्थैःपरप्रयोजनैःस्वज्ञातिजनैःस्वविग्रहैःस्वदेहैश्च १० आत्मानंमनोब्रह्मणिसम्यक्नयन्आत्मानंदेहं ११ यत्ताइंद्रियप्राणमनोबुद्धयोयेनसतथा हरेस्तत्त्वंरूपंपश्यन् योगमूलाधारमारभ्यब्रह्मादशांतपर्यंतप्राणोन्नयनलक्षणं १२ उत्सिक्तःउन्नद्धः १३ १४ पर्यस्तंपरिवृतं १५ ननुकस्मिन्कालेकस्मिन्देशेवृत्रवासवयोर्युद्धमभूदितितत्राह त्रेतामुखइति अंतरेअस्मिन्वर्तमानेवैवस्वताख्यमन्वंतरे तत्रापिप्रथमेयुगेप्रथमचतुर्युगेतत्रापित्रेतामुखेत्रेतायुगस्यादौनर्मदायांनर्मदातीरे गंगायांघोषइतिवत् अत्रतत्रलक्षणोक्त्याप्रथमरणस्तुनर्मदातीरे द्वितीयरणस्तुप्रतिकालेसमुद्रतीरइतिविशेषोग्रंथांतरेणचज्ञातव्यः १६

१७ १८ १९ १० २१ कार्तस्वरपरिच्छदाः सुवर्णालंकाराः २२ २३ अवाकिरन् अवर्षन् २४ प्रावृषि वर्षाकाले २५ लघुहस्तैः शीघ्रवेधिभिः देवैः सिद्धपथे व्योम्नि स्वप्राप्तेः पूर्वमध्यमार्गे एव छिन्नाः २६ २७ वृत्रो नाथो येषां तैस्तथा हृषाद्रिः पाषाणैः २८ प्रयासाः प्रहारलक्षणाः प्रयत्नाः कृष्णोऽनुकूलो अनुग्रहाभिमुखो येषां तेषु तथा तेषु रुशतीः हिंसनाः रुश रिश हिंसायामिति धातुः महत्सु दुर्वासप्रभृतिषु यातिषु क्षुद्रैः हंसडिंभकादिजनकल्पैः २९ पतितवृत्रं अस्तसाराः निरस्तबलाः ३० मनस्वी प्रशस्तमनाः ३१ ३२ यस्य मृत्योः प्रतिक्रियापरिहारः अथ यदि परमाल्लोकोपशश्वस्याना ततस्तांहि

रुद्रैर्वसुभिरादित्यैरश्विभ्यां पितृवह्निभिः ॥ मरुद्भिरृभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिम् १७ दृष्ट्वा वज्रधरं शक्रं रोचमानं स्वया श्रिया ॥ नामृष्यन्नसुरा राजन् मृधे वृत्रपुरःसराः १८ नमुचिः शंबरोऽनर्वा द्विमूर्धा वृषभोंऽबरः ॥ हयग्रीवः शंकुशिरा विप्रचित्तिरयोमुखः १९ पुलोमा वृषपर्वा च प्रहेतिर्हेतिरुत्कलः ॥ व्योमकेशो विरूपाक्षः कपिलोऽथ विभावसुः २० इल्वलो बल्वलश्चैव दंदशूको वृषध्वजः ॥ कालनाभो महानाभो भूतसंतापनो वृकः २१ दैतेया दानवा यक्षा रक्षांसि च सहस्रशः ॥ सुमालिमालिप्रमुखाः कार्तस्वरपरिच्छदाः २२ प्रतिषिध्येंद्रसेनाग्रं मृत्योरपि दुरासदम् ॥ अभ्यद्रवन्नसंभीताः सिंहनादेन दुर्मदाः २३ गदासिपरिघैर्बाणैः प्राशमुद्गरतोमरैः ॥ शूलैः परश्वधैः खड्गैः शतघ्नीभिर्भुशुंडिभिः ॥ सर्वतोऽवाकिरन्नस्त्रैः शस्त्रैश्च विबुधर्षभान् २४ न तेऽदृश्यंत संच्छन्नाः शरजालैः समंततः ॥ पुंखानुपुंखैः पतितैः प्रावृषीव नभो घनैः २५ न ते शस्त्रास्त्रवर्षौघा ह्यासेदुः सुरसैनिकान् ॥ छिन्नाः सिद्धपथे देवैर्लघुहस्तैः सहस्रधा २६ अथ क्षीणास्त्रशस्त्रौघा गिरिशृंगद्रुमोपलैः ॥ अभ्यवर्षन्सुरबलं चिच्छिदुस्तांश्च पूर्ववत् २७ तानक्षतान्स्वस्तिमतो निशम्य शस्त्रास्त्रपूगैरथ वृत्रनाथाः ॥ द्रुमैर्दृषद्भिर्विविधाद्रिशृंगैरविक्षतांस्तत्रसुरेंद्रसैनिकान् २८ सर्वे प्रयासा अभवन्विमोघाः कृताः कृता देवगणेषु दैत्यैः ॥ कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः २९ ते स्वप्रयासं वितथं निरीक्ष्य हरावभक्ता हतयुद्धदर्पाः ॥ पलायनायाजिमुखे विसृज्य पतिं मनस्ते दधुरस्तसाराः ३० वृत्रोऽसुरांस्ताननुगान्मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत् ॥ पलायितं प्रेक्ष्य बलं च भग्नं भयेन तीव्रेण विहस्य वीरः ३१ कालोपपन्नां रुचिरां मनस्विनामुवाच वाचं पुरुषप्रवीरः ॥ हे विप्रचित्ते नमुचे पुलोमन्मयानर्वन्शंबर मे शृणुध्वम् ३२ जातस्य मृत्युर्ध्रुव एष सर्वतः प्रतिक्रिया यस्य न चेह क्लृप्ता ॥ लोको यशश्चाथ ततो यदि ह्यमुं को नाम मृत्युं न वृणीत युक्तम् ३३ द्वौ संमताविह मृत्यू दुरापौ यद्ब्रह्मसंधारणया जितासुः ॥ कलेवरं योगरतो विजह्याद्यदग्रणीर्वीरशयेऽनिवृत्तः ३४ इति श्रीभागवते महापुराणे षष्ठस्कंधे टीकायां दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ श्रीशुक उवाच ॥ ॥ त एवं शंसतो धर्म्यं वचः पत्युरचेतसः ॥ नैवागृह्णन्भयत्रस्ताः पलायनपरा नृप १

कः क्षत्रियादिकः पः युक्तं युद्धमूर्ध्नि प्राप्तं मृत्युं न वृणीत नाम इत्यन्वयः ३३ इतोपि युद्धमरणं प्रशस्तमित्याह द्वाविति योगरतो जितप्राणश्च यो ब्रह्मसंधारणया ब्रह्मध्यानेन कलेवरं विजह्यादिति यश्च युद्धादनिवृत्तोऽग्रणीः यो वीराणामग्रतो गत्वा वीरशये युद्धाङ्गणे शरीरं जहातीति यच्च मरणं तयोर्द्वावेतौ मृत्यू दुष्प्रापौ संमतौ शास्त्रविहिताविति अन्वयः ३४ ॥ ॥ इति श्रीभागवते महापुराणे षष्ठस्कंधे विज० टीकायां दशमोऽध्यायः ॥ १० ॥ अचेतसो बुद्धिमत्प्रवृत्तिस्मरणरहिताः १

काल्यमानांविद्राव्यमाणां २ ओजसा राजन्दीप्यन्सवृत्रःतांस्वपृतनांनिवार्यद्रावयतोदेवान्निर्भर्त्स्येदंवाक्यमब्रवीत् हकिल ३ हेदेवाःयूयंमातुरदितेरुच्चरिता अवमेहनवन्निर्गताः किं उभये षामपिदेहान्निष्क्रांतत्वाविशेषात् कुतोऽस्माकमत्राह धावद्भिरिति पृष्ठतोहतैर्धावद्भिःअसुरनायकैःव युष्माकंकिंप्रयोजनंअधर्मत्वात् अयमपिकुतोत्राह नहीति स्वर्ग्यःस्वर्गप्राप्तियोग्यः ४ हेक्षुल्लकाःअ ल्पाःदेवाःयुष्माकंहृदिसारंधैर्यंचास्ति मात्रंक्षणकाल ग्राम्यसुखेविषयभोगजनितानंदे ५ विचेतसोमूर्छिताः ६ एतदेवस्पष्टयति तेनेति विस्फोटनंप्रकांडताडनं ७ मालंनलसमुदायलक्षणंवन यूथपति गजः ८ अभिद्रवतेअभ्यागच्छते ९ महेंद्रवाहंऐरावतं १० वृत्रगदाभिमृष्टोऽभिहतोऽपासरत् तिर्यक्पृष्ठतोवागतः ११ सन्नवाहायविह्वलितवाहनाय पुनःगदांनप्रायुंक्त अमृतस्राविणाकरेणकृतेनअ

विशीर्यमाणांपृतनामासुरीमसुरर्षभः ॥ कालानुकूलैस्त्रिदशैःकाल्यमानामनाथवत् २ दृष्ट्वातप्यतसंक्रुद्धइंद्रशत्रुरमर्षितः ॥ तान्निवार्यौजसाराजन्निर्भ र्त्स्येदमुवाचह ३ ॥ वृत्रउवाच ॥ किंवउच्चरितामातुर्धावद्भिःपृष्ठतोहतैः ॥ नहिभीतवधःश्लाघ्योनस्वर्ग्यःशूरमानिनाम् ४ यदिवःप्रधनेश्रद्धासारंवाक्षुल्ल काहृदि ॥ अग्रेतिष्ठतमात्रंमेनचेद्ग्राम्यसुखेस्पृहा ५ एवंसुरगणान्क्रुद्धोभीषयन्वपुषारिपून् ॥ व्यनदत्सुमहाप्राणोयेनलोकाविचेतसः ६ तेनदेवगणाः सर्वेवृत्रविस्फोटनेनवै ॥ निपेतुर्मूर्छिताभूमौयथैवाशनिनाहताः ७ ममर्दपद्भ्यांसुरसैन्यमातुरंनिमीलिताक्षंरणरंगदुर्मदः ॥ गांकंपयन्नुद्यतशूलओजसाना लंवनंयूथपतिर्यथोन्मदः ८ विलोक्यतंवज्रधरोऽत्यमर्षितःस्वशत्रवेऽभिद्रवतेमहागदाम् ॥ चिक्षेपतामापततींसुदुःसहांजग्राहवामेनकरेणलीलया ९ सइंद्रशत्रुःकुपितोभृशंतयामहेंद्रवाहंगदयोरुविक्रमः ॥ जघानकुंभस्थलउन्नदन्मृधेतत्कर्मसर्वेसमपूजयन्नृप १० ऐरावतोवृत्रगदाभिमृष्टोविघूर्णितोऽद्रिः कुलिशाहतोयथा ॥ अपासरद्भिन्नमुखःसहेंद्रोमुंचन्नसृक्सप्तधनुर्भृशार्तः ११ नसन्नवाहायविषण्णचेतसेप्रायुंक्तभूयःसगदांमहात्मा ॥ इंद्रोऽमृतस्यंदिक राभिमर्शवीतव्यथःक्षतवाहोऽवतस्थे १२ सतंनृपेंद्राहवकाम्ययारिपुंवज्रायुधंभ्रातृहणंविलोक्य ॥ स्मरंश्चतत्कर्मनृशंसमंहःशोकेनमोहेनहसन्जगाद १३ ॥ वृत्रउवाच ॥ दिष्ट्याभवान्मेसमवस्थितोरिपुर्योब्रह्महागुरुहाभ्रातृहाच ॥ दिष्ट्याऽनृणोद्याहमसत्तमत्वयामच्छूलनिर्भिन्नदृषद्धृदाऽचिरात् १४ योनोग्रजस्यात्मविदोद्विजातेर्गुरोरपापस्यचदीक्षितस्य ॥ विस्रभ्यखड्गेनशिरांस्यवृश्चःपशोरिवाकरुणःस्वर्गकामः १५ ह्रीश्रीदयाकीर्तिभिरुज्झितंत्वां स्वकर्मणापुरुषादैश्चगर्ह्यम् ॥ कृच्छ्रेणमच्छूलविभिन्नदेहमस्पृष्टवह्निंसमदंतुगृध्राः १६ अन्येतुयेत्वाऽनुनृशंसमज्ञायद्युद्यतास्त्राःप्रहरंतिमह्यम् ॥ तैर्भूतनाथं सगणंनिशातत्रिशूलनिर्भिन्नगलैर्यजामि १७ अथोहरेमेकुलिशेनवीरहर्ताप्रमथ्येहशिरोयदीह ॥ तत्रानृणोभूतबलिंविधायमनस्विनांपादरजःप्रपत्स्ये १८

भिमर्शेनस्पर्शलक्षणेन वीतव्यथःवीतागताव्यथायस्यसः क्षतःवाहोयस्यसतथा १२ भ्रातृहणविश्वरूपस्यहंतारं अंहःपापरूपं मोहेनअज्ञानेन १३ ब्रह्महत्यादिकमेकंविश्वरूपमपेक्ष्योच्यते अनृणोभ्रा तृमरणमार्षणेनहीनः दृषद्वृदापाषाणवत्कठिनहृदयेन १४ स्वर्गकामोयजमानः विस्रभ्यविश्वस्य १५ ह्रीश्रीदयाकीर्तिभिरुज्झितरहित समदंतुभक्षयंतु अस्पृष्टवह्निमित्यनेनाग्निःशेषनाशंसूचयति १६ त्वानुत्वामनु १७ हरेइंद्र इहयुद्धे तत्रतर्हि इहास्मिन्जन्मन्येवमनस्विनांपूर्ववीरस्वर्गंगतानापादरजःप्रपत्स्ये तेषांलोकंगमिष्यामीत्यर्थः १९

हिनोषिमुंचसि मासंशयिष्ठाः संशयंमाकार्षीः भगवानांभाग्यानांसंपदादेवनाथदातवौ अहल्याजारेतिनिंदांवासूचयति प्रयुक्तंवज्रंनितरांफलतीतिनिष्फलंप्रयोजनवत्स्यात् किंतुकृपणार्थादरिद्रविप षयायाच्ञाव्यर्थाभवतियथातथानस्यादित्यर्थः १९ हेशक्र यएषतववज्रःहरेस्तेजसादधीचेस्तपसाचतेजितोनिशितःतेनैवशत्रुंमांजहीत्यन्वयः विष्णुयंत्रितोविष्णुवशो यतोयत्रहरिस्ततस्तत्रावि जयादिगुणाःस्युः २० वृत्रेसात्विकचेतनाशत्वभावंदर्शयितुमाह अहमिति संकर्षणोभगवांस्तन्मनःसमाधानं यथाह तथामनस्तस्यसंकर्षणस्यचरणारविंदेसमाधाय तववज्रवेगेनलुलितःछिन्नोग्रा म्यपाशोविषयभोगलक्षणःपाशोयस्यसतथा अपविद्धःपरित्यक्तोलोकोदेहोयेनसतथा अस्माल्लोकात्प्रेत्येतिश्रुतेः परिभ्रष्टैतल्लोकस्थितिरितिवा अहमुनेर्ज्ञानिनोगतिलोकंवैकुंठादिलक्षणंयामीत्यन्वयः संन्यासलक्षणांवा २१ ननुपरत्रसुखंवादुःखंवाननिश्चितं तवात्रचाखंडैश्वर्यदरीदृश्यते एतल्लोकत्यागेतदपित्यक्तंस्यात्तस्माच्चवशोकोनस्यात्किमित्याशंक्यसर्वस्येश्वराधीनत्वेनतद्दत्तमेवास्थिरतरना न्यत् किंचस्वभक्तेभ्यःस्वर्गादिकमपिनददाति किमुतैहिकं अतोनशोकोममेत्याशयेनाह पुंसामिति सलोकनाथःस्वर्गादौयासंपदःसंतिताः स्वकानांपुंसांनरातिकिल तासांसकाशाद्भयादिकमुत्पद्यतइ

सुरेशकस्मान्नहिनोषिवज्रंपुरःस्थितेवैरिणिमय्यमोघम् ॥ मासंशयिष्ठामगदेववज्रंस्यान्निष्फलंकृपणार्थेवयाच्ञा १९ नन्वेषवज्रस्तवशक्रतेजसाहरेर्दधीचे स्तपसाचतेजितः ॥ तेनैवशत्रुंजहिविष्णुयंत्रितोयतोहरिर्विजयःश्रीर्गुणास्ततः २० अहंसमाधायमनोयथाहसंकर्षणस्तच्चरणारविंदे ॥ त्वद्वज्ररंहोलुलित ग्राम्यपाशोगतिंमुनेर्याम्यपविद्धलोकः २१ पुंसांकिलैकांतधियांस्वकानांयाःसंपदोदिविभूमौरसायाम् ॥ नरातियस्माद्भयमुद्वेगआधिर्मदःकलिर्व्यसनंसं प्रयासः २२ त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्तेपुरुषस्यशक्र ॥ तेनानुमेयोभगवत्प्रसादोयोदुर्लभोऽकिंचनगोचरोऽन्यैः २३ अहंहरेतवपादैकमूलदा सानुदासोभवितास्मिभूयः ॥ मनःस्मरेतात्मपतेर्गुणान्नोगृणीतवाक्कर्मकरोतुकायः २४ ननाकपृष्ठंनचपारमेष्ठ्यंनसार्वभौमंनरसाधिपत्यम् ॥ नयोगसि द्धीरपुनर्भवंवासमंजसत्वाविरहय्यकांक्षे २५ अजातपक्षाइवमातरंखगाःस्तन्यंयथावत्सतराःक्षुधार्ताः ॥ प्रियंप्रियेवाव्युषितंविषण्णंमनोरविंदाक्षदिदृक्षते त्वाम् २६ ममोत्तमश्लोकजनेषुसख्यंसंसारचक्रेभ्रमतःस्वकर्मभिः ॥ त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्यननाथभूयात् २७ इतिश्रीभागवतेषष्ठस्कं धेएकादशोध्यायः ॥ ११ ॥ ऋषिरुवाच ॥ एवंजिहासुर्नृपदेहमाजौमृत्युंपरंविजयंमन्यमानः ॥ शूलंप्रगृह्याभ्यपतत्सुरेंद्रंयथामहापुरुषंकैटभोऽप्सु १

तियस्मात्तस्मादितिशेषः ॥ २२ ॥ इतोनहरेर्भक्तानुकंपित्वंपश्येत्याशयेनाह त्रैवर्गिकेति अस्मत्पतिर्भगवान् पुरुषस्यभक्तस्य तेनधर्मार्थकामपरिश्रमनाशेन यस्यानुग्रहमिच्छामिहरिर्ष्येतद्ध नैश्वानैरित्यादेः २३ अधुनाहंसमाधायमनइत्यत्रकथितमनःसमाधानप्रकारंनिरूपयति अहमिति मनःआत्मपतेःआत्मपतिंस्मरेत अधीगर्थदयेशांकर्मणीतिषष्ठी नोवाक्तद्गुणान्गृणीतकायः कर्ममयमार्याव करोतु २४ ममवीरस्वर्गोपिवैकुंठादिरित्याशयेनाह ननाकपृष्ठमिति सार्वभौममित्यनेनभूमौचक्रवर्तिपदमाहयोगसिद्धीःअणिमादिलक्षणाःअपुनर्भवंपुनरुत्पत्तिमात्रशून्यत्वेनसुख पूर्त्यभावलक्षणंमोक्षं समंजसंवैषम्यनैर्घृण्यबुद्धिशून्यंविरहय्यविहाय २५ स्तन्यंस्तनच्युतंपयः वत्सतराःअतिशयेनबालाःस्तनंधयाः प्रियानवोढाभार्या अव्युषितंप्रोषितमन्यतःस्थितमित्यर्थः २६ श्रीहरिदर्शनसाधनमाह ममोति नभूयात्सख्यमितिशेषः २७ इतिश्रीभागवतेषष्ठस्कंधेविज०टीकायामेकादशोध्यायः ॥ ११ ॥ वृत्रवासवसंवादच्छलेनहरेर्जीवेनाभेदज्ञानंतमःसाधनमित्येतन्निरूप्य तेऽस्मिन्नध्याये तत्रादौवृत्रवासवयोर्युद्धशेषंवक्ति एवंजिहासुरिति विजयंविजयात्मकं परमुत्कृष्टं मन्यमानः १

२ भोगवत्भोगःपुष्टिर्यस्यसतथातं भोगःसुखेरूयादिभृतौपीनसर्पशरीरयोरित्यभिधानात् भोगोविषयसेवायामहिवर्ष्मणिपालने वतुर्लेस्थूलतायांचजन्मन्यास्वादनेतथेतिवररुचिः ३ इनइंद्र परिवृढ पविरभ्यक्षवल्लभावित्यतःस्वामिमात्रेपींद्रशब्दप्रयोगात्त्वाविशिष्योक्तममरेशमिति ४ ५ हरेस्वशत्रुंमामितिशेषः ६ ननु हननेतवपराजयइत्याशंक्यपराजयापराजयौनानियतौकिंतुदैवकृताविन्याह युयुत्सतामिति युयुत्सतांयुद्धशीलानांमध्ये कुत्रचिद्युद्धेदेवमन्त्रेरेकस्यसदाजयः इतरस्यसदापराजयइतितत्राभिभविनस्तवास्थितावपिदेहावियोगलक्षणोलयःप्रतिक्षणमस्तीतिदर्शयितुंउत्तरस्यनंतरंलयपदोपादानम् ७ हरेरेवसदाजयइत्ययंनियमःकुतइतितत्राह लोकाइति यस्यवशेस्थिताःश्वसंति श्वसप्राणनइतिधातुः सत्तापितदधीनेतिविज्ञायते शिचाजाललक्षणतंत्या द्विजाः पक्षिणः । खगाइत्युक्तिंविनाविदुषामपिवाकूतंत्यानियतत्वमस्तीतिद्योतनायाद्विजाइत्युक्तं इहजीवराशौस्थितयोर्जयपराजययोःकारणम् ८ ओजआद्याधिक्यानाधिक्येउभयोर्हेतुत्वेनासिद्धे हरेरधीनत्वंकुतःसगच्छतइतितत्राह ओजइति जडोजनः ओजस्त्वादिगुणमूर्तिमंतभगवंतमज्ञात्वातयोर्हेतुमात्मानंस्वंमन्यतइत्यन्वयः सर्वैबलंबलिनांचापरेषामितिस्वोक्तेः ओजआदिषुस्थित्वौजस्त्वादिगुणप्रव

ततोयुगांताग्निकठोरजिह्वमाविध्यशूलंतरसाऽसुरेंद्रः ॥ क्षिप्त्वामहेंद्रायविनद्यवीरोहतोऽसिपापेतिरुषाजगाद २ खआपतंतंज्वलितंमहोल्कवन्निरीक्ष्यदुष्प्रेक्ष्यमजातविक्लवः ॥ वज्रेणवज्रीशतपर्वणाऽच्छिनद्भुजंचतस्योरगराजभोगम् ३ छिन्नैकबाहुःपरिघेणवृत्रःसंरब्धआसाद्यगृहीतवज्रम् ॥ हनौतताडेंद्रमथामरेशंवज्रश्चहस्तान्न्यपतन्मघोनः ४ वृत्रस्यकर्मातिमहाद्भुतंतत्सुरासुराश्चारणसिद्धसंघाः ॥ अपूजयंस्तत्पुरुहूतसंकटंनिरीक्ष्यहाहेतिविचुक्रुशुर्भृशम् ५ इंद्रोनवज्रंजगृहेविलज्जितश्च्युतंस्वहस्तादरिसन्निधौपुनः ॥ तमाहवृत्रोहरआत्तवज्रोजहिस्वशत्रुंनविषादकालः ६ युयुत्सतांकुत्रचिदाततायिनांजयःसदैकत्रनवैपराजयः ॥ विनैकमुत्पत्तिलयस्थितीश्वरंसर्वज्ञमाद्यंपुरुषंसनातनम् ७ लोकाःसपालायस्येमेश्वसंतिविवशावशे ॥ द्विजाइवशिचाबद्धाःसकालइहकारणम् ८ ओजःसहोबलंप्राणममृतंमृत्युमेवच ॥ तमज्ञायजनोहेतुमात्मानंमन्यतेजडः ९ यथादारुमयीनारीयथायंत्रमयोमृगः ॥ एवंभूतानिमघवन्ईशतंत्राणिविद्धिभो १० पुरुषःप्रकृतिर्व्यक्तमात्मभूतेंद्रियाशयाः ॥ शक्नुवंत्यस्यसर्गादौनविनायदनुग्रहम् ॥ अविद्वानेवमात्मानंमन्यतेऽनीशमीश्वरम् ॥ ११ भूतैःसृजतिभूतानिग्रसतेतानितैःस्वयम् १२ आयुःश्रीःकीर्तिरैश्वर्यमाशिषःपुरुषस्ययाः ॥ भवंत्येवहितेकालेयथाऽनिच्छोर्विपर्ययाः १३

र्तकोऽयमित्यजानन्जनोजडइत्युच्यते ओजस्त्वादिहेतुमितिवा ९ १० हिरण्यगर्भादीनामोजआदिगुणसृष्टिहेतुत्वेनसत्त्वाज्जयपराजययोरपितन्नियतत्वमपिकिमपराधमितितत्राह पुरुषइति हिरण्यगर्भःपुरुषआत्मावायुरुदाहृतशेषोव्यक्तस्तथैवेंद्रआशयःसमुदाहृतइत्यतःपुरुषादिशब्देननसंसार्यादिसामान्यानिवस्तूनिगृह्यंते किंतुविशिष्टएवचेतनइत्येवंशास्त्रनिर्णयेसतिहिरण्यगर्भादयोयदनुग्रहंविनाऽस्यजगतःसर्गादौनशक्नुवंति तमात्मानमंतःस्थित्वादानादिकर्तारंश्रीहरिमनीशंजीवमन्यते व्याहतमिदमित्याह ईश्वरमिति कोसावितितत्राह अविद्वानेवेति अज्ञानादेवंमन्वानस्यानिरयएवावस्थानंनान्यत्रेत्यस्मिन्नर्थेएवशब्दः अनीशंजीवरूपेणपरमात्मानमीश्वरं येमन्यंतेतान्समीक्ष्यस्नेहान्निरयभाग्भवेदितिवचनात् ११ ननु तत्स्रष्टृत्वेब्रह्मास्रष्टेत्यादिरूढिःकथमितितत्राह भूतैरिति १२ दैनंदिनसृष्टिसंहारावपितदधीनावित्याह आयुरिति पुरुषस्योत्पन्नस्ययाआयुराद्याशिषोभवंतितेभावाःकालेकालात्मनोहरेराराधनोपयोगायभवंति हियस्मात्तस्मादकीर्त्यादेःसमःस्यादित्यन्वयः यथादुःखाद्यनुभवेच्छारहितस्यापिविपर्ययाःदुःखादिलक्षणाह्व्यंतेतथेतिशेषः अनेनसर्वेभावाःनारायणाधीनाइतिनिरणायि १३

१४ दुःखाद्यागमेप्रकृतिपुरुषविवेकाज्ञानंकारणमित्याह सत्वमिति आत्मनोजीवस्यात्मानंपरमात्मानम् १५ श्रीहर्यधीनत्वेनजयादिकंतवापिप्रत्यक्षमित्याह पश्येति १६ प्राणएवग्लहः पणोयस्यसतथा इषवःशराएवअक्षायस्यसतथा हस्त्यादिवाहनान्यासनफलकलक्षणंयस्यसतथा द्यूतकल्पःसंग्रामः अत्रद्यूतलक्षणेसमरे १७ गतालीकंनिर्व्याजम् १८ सिद्धःजीवन्मुक्तः जीवन्मुक्ते जातिभेदेसिद्धःस्यात्साधितेपिचेति । आत्मानंश्रीहरिं भक्तःभजमानः १९ ग्रामंगतइतिवत् । महापुरुषतांप्रातिगतः । भक्तिज्ञानादिगुणसंपन्नत्वेनमहत्त्वम् २० २१ खातकोदकैःकूपतटाकादि जलैःतत्प्रायैःस्वर्गादिभिः २२ धर्मजिज्ञासयाधर्मविचारेणयुक्तौ युध्यंतीतियुधःयोधास्तेषांपती युधसंप्रहारइतिधातुःअनपुंसकाच्चुपपदेक्विप्प्रत्ययः पुमशब्दवत् २३ २४ कनिष्ठिकाधःकरभःकारिपोतेपि

तस्मादकीर्तियशसोर्जयापजययोरपि ॥ समःस्यात्सुखदुःखाभ्यांमृत्युजीवितयोस्तथा १४ सत्वंरजस्तमइतिप्रकृतेर्नात्मनोगुणाः ॥ तत्रसाक्षिणमात्मानंयोवेदनसबध्यते १५ पश्यमांनिर्जितंशक्रवृक्णायुधभुजंमृधे ॥ घटमानंयथाशक्तितवप्राणजिहीर्षया १६ प्राणग्लहोयंसमरइष्वक्षोवाहनासनः ॥ अत्रनज्ञायतेऽमुष्यजयोऽमुष्यपराजयः १७ ॥ ॥ श्रीशुकउवाच ॥ ॥ इंद्रोवृत्रवचःश्रुत्वागतालीकमपूजयत् ॥ गृहीतवज्रःप्रहसंस्तमाहगतविस्मयः १८ ॥ इंद्रउवाच ॥ अहोदानवसिद्धोऽसियस्यतेमतिरीदृशी ॥ भक्तःसर्वात्मनात्मानंसुहृदंजगदीश्वरम् १९ भवानतार्षीन्मायांवैवैष्णवींजनमोहिनीम् ॥ यद्विहायासुरंभावंमहापुरुषतांगतः २० खल्विदंमहदाश्चर्यंयद्रजःप्रकृतेस्तव ॥ वासुदेवेभगवतिसर्वात्मनिदृढामतिः २१ यस्यभक्तिर्भगवतिहरौनिःश्रेयसेश्वरे ॥ विक्रीडतोऽमृतांभोधौकिंक्षुद्रैःखातकोदकैः २२ श्रीशुकउवाच ॥ इतिब्रुवाणावन्योन्यंधर्मजिज्ञासयानृप ॥ युयुधातेमहावीर्याविंद्रवृत्रौयुधांपती २३ आविध्यपरिघंवृत्रःकार्ष्णायसमरिंदम ॥ इंद्रायप्राहिणोद्घोरंवामहस्तेनमारिष २४ सतुवृत्रस्यपरिघंकरंचकरभोपमम् ॥ चिच्छेदयुगपद्देवोवज्रेणशतपर्वणा २५ दोर्भ्यामुत्कृत्तमूलाभ्यांबभौरक्तस्रवोऽसुरः ॥ छिन्नपक्षोयथागोत्रःखाद्भ्रष्टोवज्रिणाहतः २६ कृत्वाधरांहनुंभूमौदैत्योदिव्युत्तरांहनुम् ॥ नभोगंभीरवक्त्रेणलिलेहोल्बणजिह्वया २७ दंष्ट्राभिःकालकल्पाभिर्ग्रसन्निवजगत्त्रयम् ॥ अतिमात्रमहाकायआक्षिपंस्तरसागिरीन् २८ गिरिराट्पादचारीवपद्भ्यांनिर्दारयन्महीम् ॥ जग्रासतंसमासाद्यवज्रिणंसहवाहनम् २९ महाप्राणोमहावीर्योमहासर्पइवद्विपम् ॥ वृत्रग्रस्तंतमालक्ष्यसप्रजापतयःसुराः ॥ हाकष्टमितिनिर्विण्णाश्चुक्रुशुःसमहर्षयः ३० निगीर्णोप्यसुरेंद्रेणनममारोदरंगतः ॥ महापुरुषसन्नद्धोयोगमायाबलेनच ३१ भित्त्वावज्रेणतत्कुक्षिंनिष्क्रम्यबलभिद्विभुः ॥ उच्चकर्तशिरःशत्रोर्गिरिशृंगमिवौजसा ३२ वज्रस्तुतत्कंधरमाशुवेगःकृंतन्समंतात्परिवर्तमानः ॥ न्यपातयत्तावदहर्गणेनयोज्योतिषामयनेवार्त्रहत्ये ३३

तस्करइत्यभिधानात् अत्रकरभशब्दस्ययुक्तोर्थोग्राह्यः २५ भ्रष्टोभ्रंशितः २६ लिलेहनभइतिशेषः २७ कालकल्पाभिःयमसदृशीभिः २८ २९ ३० महापुरुषेणभगवतासन्नद्धःसहितोरक्षित इतियावत् नारायणकवचाख्यविद्ययासमुद्धतोवायोगमायाबलेनअणिमादिमहिमबलेन उपायलक्षणमायाबलेनवा ३१ ३२ अकृत्रिमोवेगोयस्यसतथा योयमहर्गणआदित्यादिज्योतिषामयनेदक्षिणोत्तरायणसंज्ञेसंवत्सरेसंभवति तावताहर्गणेनषष्ठ्युत्तरशतत्रयलक्षणेन वार्त्रहत्ये वृत्रहननसंबंधिनिसमरे कालेवातावत्कालंसमंतात्कृंतन्परिवर्तमानोभ्रमन्वज्रस्तंन्यपातयदित्यन्वयः अत्रोविहा

संपठंति प्रथमंयुद्धंनर्मदातीरे द्वितीयंतुसमुद्रतीरे तत्रवृत्रेणकेनचित्संकेतेनसंधितइंद्रः सख्यंप्राप्तस्यतस्यास्निग्धतयाकरंप्रगृह्य फेनेनास्यवधंकर्तुंविचरन्फेनेनमांजहीतिविनोदवचनंवृत्रेणवादयित्वातेनपा दस्पर्शलक्षणंताडनंकृत्वायुद्धायसन्नद्धःएकसंवत्सरकालंयुद्धंकृत्वाविष्णुशक्तियुक्तंवज्रंफेनेनिवेश्यतस्मैविसृज्यश्रीनारायणंध्यायतरतस्याशिरःप्रजहार संधितःसमयेनेंद्रोवृत्रेणाथोकरग्रहः समुद्रतीरेविच रन्फेनेनवधमस्यतु नर्मणाजहिफेनेनवाचायित्वासुरेश्वरः पादस्पर्शविवादंचकृत्वायुद्धायदंशितः फेनवज्रंसमावेश्यविष्णुयुक्तंव्यसर्जयत् अपानुदच्छिरस्तस्यध्यायतोवत्सरेणसइतिवाक्य मन्त्रमानं करगृ ह्णातीतिकरग्रहः ३३ वृत्रघ्नस्यैंद्रस्यसंबंधीनिलिंगानिलक्षणानिस्तंभितजलनिर्गमनादीनितानियेषुमंत्रेषूच्यंतेतेवार्त्रघ्नलिंगास्तैर्मंत्रैः दासपत्नीरहिगोपाअतिष्ठन्निरुद्धाआपःपणिनेवगावःअपांबिलमपिहि तंयदासीद्वृत्रंजघन्वांअपतद्ववारेत्यादिलक्षणैः ३४ आत्मज्योतिर्जीवाख्यंतेजः स्वलोकंस्वेनाधिकृतंविद्याधरलोकं ३५ ॥ इतिश्रीभाग०षष्ठ०वि०टीकायांद्वादशोध्यायः ॥ १२ ॥ अश्वमेधादिकर्मज्ञा नमितिवंधदुष्कर्मपरिहारत्वेनतत्साधनमित्येतदस्मिन्नध्यायेप्रतिपाद्यते भूरिदबहुप्रद स्वर्णप्रदेतिवा स्वर्णभूरिहिरण्यंचपुरटंनिष्कहेमनीत्यभिधानाद्धिरण्यादिद्रव्यप्रद १ ततःसमुद्रतीरात् २ हरेरिंद्रस्य

तदाचखेदुंदुभयोविनेदुर्गंधर्वविद्याध्रमहर्षिसिद्धाः ॥ वार्त्रघ्नलिंगैस्तमभिष्टुवानामंत्रैर्मुदाकुसुमैरभ्यवर्षन् ३४ वृत्रस्यदेहान्निष्क्रांतमात्मज्योतिर रिंदम ॥ पश्यतांसर्वलोकानांस्वलोकंसमपद्यत ३५ इतिश्रीभागवतेषष्ठस्कंधेद्वादशोध्यायः ॥ १२ ॥ श्रीशुकउवाच ॥ वृत्रेहतेत्रयोलोकाविनाश क्रेणभूरिद ॥ सपालाह्यभवन्सद्योविज्वरानिर्वृतेंद्रियाः १ देवर्षिपितृभूतानिदैत्यादेवानुगाश्चये ॥ प्रतिजग्मुःस्वधिष्ण्यानिब्रह्मेशेंद्रादयस्ततः २ राजोवाच ॥ इंद्रस्यानिर्वृतेर्हेतुंश्रोतुमिच्छामिभोमुने ॥ येनासन्सुखिनोदेवाहरेर्दुःखंकुतोऽभवत् ३ श्रीशुकउवाच ॥ वृत्रविक्रमसंविग्नाःसर्वेदेवाः सहर्षिभिः ॥ तद्वधायार्थयन्निंद्रंनैच्छद्भीतोबृहद्वधात् ४ इंद्रउवाच ॥ भूस्त्रीजलद्रुमैरेनोविश्वरूपवधोद्भवम् ॥ विभक्तमनुगृह्णद्भिर्वृत्रहत्यांक्वमा र्ज्म्यहम् ५ श्रीशुकउवाच ॥ ऋषयस्तदुपाकर्ण्यमहेंद्रमिदमब्रुवन् ॥ याजयिष्यामभद्रंतेहयमेधेनमास्मभैः ६ हयमेधेनपुरुषंपरमात्मानमीश्वरम् ॥ इष्ट्वा नारायणंदेवंमोक्ष्यसेऽपिजगद्वधात् ७ ब्रह्महापितृहागोघ्नोमातृहाचार्यहाऽघवान् ॥ श्वादःपुल्कसकोवापिशुध्येरन्यस्यकीर्तनात् ८ तमश्वमेधे नमहामखेनश्रद्धान्वितोऽस्माभिरनुष्ठितेन ॥ हत्वाऽपिसब्रह्मचराचरंत्वंनलिप्यसेकिंखलनिग्रहेण ९ श्रीशुकउवाच ॥ एवंसंचोदितोविप्रैर्मरुत्वानहन द्रिपुम् ॥ ब्रह्महत्याहतेतस्मिन्नाससादवृषाकपिम् १० तयेंद्रःस्महसंतप्तोनिर्वृतिर्नामुमाविशत् ॥ ह्रीमंतंहत्ययातप्तंसुखयंत्यपिनोगुणाः ११

अर्कमर्कटमंडूकविष्णुवासववायवः तुरंगसिंहशीतांशुयमाश्वहरयोदशेतिअभिधानं ३ अर्थयान्नित्युभयपदी अर्थप्रातिपदिकात्कृदंतात्तत्करोतीतिणिचिकृतेरूपंसाधु बृहद्वधात् ब्राह्मणवधात् ४ एनोब्रह्मह त्यापापंमार्ज्मिसंशोध्यपरिहरामि मास्मभैःभयंमाकार्षीःस्म ६ ७ यन्नामसंकीर्तनादेतेशुद्धाभवंतिकिंवक्तव्यंतद्यजनेनेतिभावेनाह ब्रह्महेति ८ सब्रह्मेतिचराचरात्पृथग्ग्रहणंब्रह्महननदोषाधिक्यसूचनार्थं ९ वृषाकपिरिंद्रःवृषाकपिर्हरेशक्रेहरीतक्यांजनार्दनेइत्यभिधानं १०स्महेत्येतौ ब्रह्मवधस्यलोकेजुगुप्सितत्वेनस्मृतावपिनात्रतथाइतीममर्थंसूचयतः सर्वस्यसुखस्यहेतुत्वात् तर्हिकिमर्थमस्यनिर्वृतिर्नाभूत् सु खहेतूनांशौर्यादिगुणानामुन्मीलितत्वाच्छत्रुहननेमेतितत्राह ह्रीमंतमिति यद्यपिशत्रुवधसूचकशौर्यादिगुणाःसुखहेतवस्तथापि तेब्रह्महत्ययातप्तस्यनोसुखयंति कुतःलज्जाकरत्वात्इंद्रादिदेवानांतदानीं तनंकर्म प्रारब्धककर्मणाप्राप्तदुःखस्यसूचकं प्रारब्धकर्मणैवैपाक्षप्रदुःखस्यसूचकं।तदानींतनकर्मस्याक्रूणहेतुर्यथारणःदेवादीनांस्थितमज्ञभावाभैवान्यथाभवेत्।प्रारब्धमपितुकापिकिंचिद्विघटितभवेदिति११

असृक्पथांरक्तरंजितपटां रजस्वलामिव १२ मीनगंधिन क्षीणमीनधारिणश्चंडालादाशादयोयेतेषांयोदुर्गंधःताहशेनासुगंधेनासुरमिणा १३ ततःसहस्राक्षस्तांपरिहर्तुंसर्वादिशोगत्वाविहायसा न भोगतः समर्थयेक्षया प्रागुदीचींदिशंदृष्ट्वा तामविष्टोमानसंनामसरः प्रापेत्यन्वयः १४ तंतूनावसादित्युपान्वष्याङ्क्सइतिसप्तम्यर्थेद्वितीया अग्निर्दूतोपस्यसोग्निदूतः यावादिंद्रःसरसिपुष्करनालतंतुष्ववसत्तावन्नहुषस्त्रिणाकंस्वर्गभूम्यंतरिक्षस्वर्गस्थानंवाशशासेत्यन्वयः अतएवत्रैलोक्यपालनलब्धसर्वैश्वर्यभोगराहितः ब्रह्मवधादुत्पन्नदोषमोक्षं तावच्चनाकामितिकेचित्पठंतिअत्रचशब्दएवार्थे नहुषइत्यनेनसंबध्यते अन्ययोगव्यवच्छेदार्थः तिरश्चांगतिआजगरींस्थितिं १५ १६ उपहूतः ऋतंभरेतिब्रह्मागिरावागिरैंचवाक्येनोपहूतःबृहस्पतिवाक्येनवा अभ्याख्यदूतमुखेनेत्यर्थः ततःमानससरसः ऋतंभरस्यसत्यपालकस्यनृसिंहस्यध्यानेननिवारितमंहोयेनसतथा । सर्वगतःश्रीनारायणइतिप्रल्हादोक्तवचनंसत्यंकर्तुंस्तंभादाविरभूदिति यदतोहरिरूर्ततंभरइतिवेदवादिभिरुपहूतत्वाद्धरेस्तन्नाम नन्विदानीमृतंभरध्यानेनानिरस्तंगच्छेत् पूर्वंतनाभिभूतइदंद्रंकितत्राह पापश्चेति पापोब्रह्महत्यालक्षणोजोविश्व तमिंद्रंनाभ्यभूदभिभूतंनाकरोदित्यन्वयः अत्रहेतुगर्भविशेषणमाह

तांददर्शानुधावंतींचंडालीमिववरूपिणीम् ॥ जरयावेपमानांगींयक्ष्मग्रस्तामसृक्पटाम् १२ विकीर्यपलितान्केशांस्तिष्ठतिष्ठेतिभाषिणीम् ॥ मीनगंध्यसुगंधेनकुर्वतीमार्गदूषणम् १३ नभोगतोदिशःसर्वाःसहस्राक्षोविशांपते ॥ प्रागुदीचींदिशंदृष्ट्वाप्रविष्टोनृपमानसम् १४ सआवसत्पुष्करनालतंतूनलब्धभोगोयदिहाग्निदूतः ॥ वर्षाणिसाहस्रमलक्षितोंतःसंचिंतयन्ब्रह्मवधाद्विमोक्षम् १५ तावत्त्रिणाकंनहुषःशशासविद्यातपोयोगबलानुभावः ॥ ससंपदैश्वर्यमदांधबुद्धिर्नीतस्तिरश्चांगतिमिंद्रपत्न्या १६ ततोगतोब्रह्मगिरोपहूतऋतंभरध्याननिवारिताघः ॥ पापश्चदिग्देवतयाहतौजास्तंनाभ्यभूदवितंविष्णुपत्न्या १७ तंचब्रह्मर्षयोभ्येत्यहयमेधेनभारत ॥ यथावद्दीक्षयांचक्रुःपुरुषाराधनेनह १८ अथेज्यमानेपुरुषेसर्वभूतमयात्मनि ॥ अश्वमेधेमहेंद्रेणवितते ब्रह्मवादिभिः १९ सवैत्वाष्ट्रवधोभूयानपिपापःपरंतप ॥ नीतस्तेनैवशून्यायनीहारइवभानुना २० सवाजिमेधेनयथोदितेनवितायमानेनमरीचिमिश्रैः ॥ इष्ट्वापियज्ञंपुरुषंपुराणमिंद्रोमहानासविधूतपापः २१

दिग्देवतयेति इंद्रहितकारिण्यादिग्देवतयाहतमोजोबलंयस्यइंद्रमन्विष्यसर्वादिक्षुभ्रमतःसतथा कस्मात् गंगाजलपरिप्लुतमानससरसिप्रविष्टत्वेनाविष्णुपत्न्यावितंरक्षितंतस्माच्चेति १७ ऋतंभरध्यानादिनाभिभवाभावेतदभिभवःस्यात्स्वरूपतोनाशाभावादितितत्राह तमिति भगवदविषयेणाश्वमेधेनस्वरूपनाशश्चकथंस्यादित्यतउक्तं पुरुषेति अत्रपुरुषशब्देनविष्णुरुच्यते सहस्रशीर्षापुरुषइतिश्रुतेः हेत्यनेनश्रीहरिमाहात्म्यज्ञानपूर्वकंतत्करणाभावेनतत्फलंस्यादितिविपक्षेबाधकंसूचयति अहंहिसर्वयज्ञानांभोक्ताचेतिस्मृतेः १८ यतएवंसांगोयज्ञःअथतस्मान्महानपित्वाष्ट्रवधस्तेनयज्ञेनशून्यायनीतएव सर्वात्मनानष्टोभून्निक्रियायाविशिष्टत्वादित्यन्वयः कथंविशिष्टत्वमित्यतस्तात्पर्यार्थमुक्तमेवविशिनष्टि इज्यमानइति ब्रह्मादिभिर्वितते विस्तृतेअश्वमेधयज्ञेइंद्रेणसर्वभूतानांप्रधानश्चांतर्यामीचसर्वभूतमयात्मातस्मिन्यज्ञपुरुषेइज्यमाने । सर्वदेवमयात्मनीतिपाठेसएवार्थः वाइत्यनेनज्ञानाग्निःसर्वकर्माणीतिवचनाद्भगवतःज्ञानेनसर्वात्मनापापस्यनाशेप्यश्वमेधेनेंद्रस्यमहत्वातिशयोभवतीतिसूचयति १९ २० तत्कुतोवगम्यतइत्यत्राह सवाजीति मरीचिमिश्रैर्मरीचिमुख्यैः । ज्ञानाद्विधूतपापोपिइष्ट्वामहानासेत्यर्थः २१

नेदमिंद्रेण स्वार्थतयाऽनुष्ठितम् । किंतु लोकोपकारकत्वेन । यतोस्येंद्रस्य पापं नष्टं तच्चारितस्य श्रवणादिना सर्वोपि पापान्निःसिद्धयंतीति ततस्तौति इदमिति तीर्थपदस्य हरेरनुकीर्तनं यस्मिन्तत्तथा भक्तेरु च्छ्रयोयस्मात्तत्तथा । भक्तजनस्यानुवर्णनं यस्मिन्तत्तथा । महेंद्रस्य पापान्मोक्षो यत्र तत्तथा । मरुत्वतो विशिष्टजयो यस्मिंस्तत्तथा २२ इंद्रियमिंद्रियाणां शक्तिप्रदं किंविषयमाख्यानमित्यत आह इंद्रसंबंधिवेत्युक्तम् २३ ॥ इतिश्रीभा० ष० विज० टी० त्रयोदशोध्यायः ॥ १३ ॥ अत्र चित्रकेतुविषयेतिहासश्रवणादिना संसारविरक्तिभूयिष्ठतया श्रीनारायणचरणारविंदे भक्तिर्जायत इति तदर्थं परीक्षि त्प्रश्नपूर्वकपूर्वकथाशेषत्वेन निरूपयितुमाह रजइति दृढा रतिर्निरतिशयभक्तिरित्यर्थः १ देवादीनामपि श्रीकांतांघ्रिभक्तिर्दुर्लभा किमुतासुरप्रकृतेरिति भावेनवक्ति देवानामिति शुद्धसत्त्वगुणनिर्मितशरीर त्वेन शुद्धांतःकरणानां अमलात्मनाम् । तपोभिर्निर्धूतमनोमलानां नप्रायेणोपजायत इत्यस्यायमर्थः निरंतरभक्तिकरणयोग्यैः सुरावेशात्क्रियमाणस्य द्वेषस्य कादाचित्कत्वेनाल्पत्वेपि महत्त्वोपचारोऽन्य था शुद्धसत्त्वानामित्यादिविशेषणं विशिष्टानां देवानां गुणलिंगानामित्यादिनोच्यमानमात्यंतिकभक्तिलक्षणं चासंगतं स्यादतः प्रायशब्दस्य बाहुल्यार्थत्वेप्यत्राल्पएवार्थोंगीकर्तव्यः । प्रकृतप्रमाणानु रोधाद्भक्तिकरणं दुर्लभमित्यतो वा तथोक्तं नतु तेषां तदभावात् । भक्तबाहुल्यस्यादृष्टत्वात् भक्तेस्तारतम्यप्रदर्शनाय वा २ एतदेवाह रजोभिरिति इहकर्मभूमौ जंतवः पार्थिवैः रजोभिः समसंख्याता

इदंमहाख्यानमशेषपाप्मनांप्रक्षालनंतीर्थपदानुकीर्तनम् ॥ भक्त्युच्छ्रयंभक्तजनानुवर्णनंमहेंद्रमोक्षंविजयंमरुत्वतः २२ पठेयुराख्यानमिदंसदाबुधाः शृण्वंत्यथोपर्वणिपर्वणींद्रियम् ॥ धन्यंयशस्यंनिखिलाघमोचनंरिपुंजयंस्वस्त्ययनंतथायुषम् २३ ॥ ॥ इतिश्रीभागवतेषष्ठस्कंधेत्रयोदशोध्यायः ॥ १३ ॥ परीक्षिदुवाच ॥ रजस्तमःस्वभावस्यब्रह्मन्वृत्रस्यपाप्मनः ॥ नारायणेभगवतिकथमासीद्दृढारतिः १ देवानांशुद्धसत्त्वानामृषीणांचामलात्म नाम् ॥ भक्तिर्मुकुंदचरणेनप्रायेणोपजायते २ रजोभिःसमसंख्याताःपार्थिवैरिहजंतवः ॥ तेषांयेकेचनेहंतश्रेयोवैमनुजादयः ३ प्रायोमुमुक्षवस्तेषांके चनेहद्विजोत्तमाः ॥ मुमुक्षूणांसहस्रेषुकश्चिन्मुच्येतसिद्ध्यति ४ मुक्तानामपिसिद्धानांनारायणपरायणः ॥ सुदुर्लभःप्रशांतात्माकोटिष्वपिमहामुने ५ वृत्रस्तुसकथंपापःसर्वलोकोपतापनः ॥ इत्थंदृढमतिःकृष्णआसीत्संग्रामउल्बणे ६ अत्रनःसंशयोभूयान्श्रोतुंकौतूहलंप्रभो ॥ यःपौरुषेणसमरेसहस्रा क्षमतोषयत् ७ ॥ सूतउवाच ॥ परीक्षितोथसंप्रश्नंभगवान्बादरायणिः ॥ निशम्यश्रद्दधानस्यप्रतिनंद्यवचोऽब्रवीत् ८ ॥ श्रीशुकउवाच ॥ शृणुष्वावहितो राजन्नितिहासंपुरातनम् ॥ श्रुतंद्वैपायनमुखान्नारदाद्देवलादपि ९ आसीद्राजासार्वभौमःशूरसेनेषुवैनृपः ॥ चित्रकेतुरितिख्यातोयस्यासीत्कामधुङ्मही १०

यावंति भूमेः रजांसि संति तावंतः शरीरिणो जीवाः संति अन्येपि निःशरीरा अनंताः संति परमाणुप्रदेशेपि ह्यनंताः प्राणराशय इति श्रुतेः नतेषामिह मानं क्रियते किंतु गृहीतदेहानामेव तेषां मध्ये केचन मनुजाः यः श्रेयः स्वर्गादिलक्षणमुद्दिश्य प्रवर्तंते वा इत्यनेन मनुष्याणां सहस्रेष्वित्यादिवाक्यं सूचयति ईहमानेष्वपि विशेषं वा ३ स्वर्गादीनां लक्षणभंगुरसुखपरत्वसंदिश्य चेष्टमानानां मध्ये केचिदेव मुमुक्षवः मोक्षेच्छव तेषां मुमुक्षूणां मध्ये केचिदेव प्रयतंते तेषु प्रयतमानेषु सहस्रेषु कश्चिदधिकारिराशिपु मुच्यत संसारान्मुक्तो भवति तत्रापि संसारान्मुक्तेष्वपि संसाराद्यप्रासिद्ध... शून्यमक्त... शौकश्चिदवपृ... ति आनंदादिपूर्णो भवति ४ सिद्धानामानंदादिपूर्णानां मुक्तानां मध्ये नारायणायनो दुर्लभः तेषां नारायणायनानां कोटिष्वपि प्रशांतात्मा प्रकृष्ट... णः सुदुर्लभः ब्रह्माणमेकमंतरेणात्यंत दुर्लभ इत्यर्थः अधिकारिणां तारतम्यविवक्षयैतद्वचनम् ५ ततः किम्प्रकृतमिति तत्राह वृत्रस्त्विति तुशब्देनात्यंतानुपपत्तिं सूचयति ६ ... यस्नेहेन कथं दानवसिद्धोसीत्युक्तत्वात् ७ ८ ९ १०

सांतानिकःसंतानार्थी । कस्यामपीतिशेषः ११ १२ १३ १४ १५ क्षितावुपासीनं १६ तेतवानामयमपिदुःखंनास्तिहि तथात्मनस्तवप्रकृतीनांस्वस्तिकिमित्यन्वयःप्रकृतिविषयकुशलप्रश्नेनांकं
प्रयोजनमत्राह यथेति यथासप्तभिःप्रकृतिभिः महदहंकाराभ्यांपृथिव्यादिभिःपंचभिर्भूतर्गुप्त पुमान्जीवः १७ प्रकृतिषुदेहहेतुषुआत्मानमद्धानिधायश्रेयःप्राप्नोति तथाराजाचप्रकृतिशब्दवाच्यैराजजनै
रक्षितःतेषुराज्यभारंनिधायविहितंश्रेयआप्नुयादित्यन्वयः तथाप्रकृत्यादयोयस्यराज्ञोवशवर्तिनःस्युः आत्मामनश्चानुवशश्चेत्तर्हितेसर्वेलोकास्तस्यराज्ञोवशगाःतस्मैबलिंयच्छतीत्यन्वयः । आत्मारवप
प्रकृत्यादेर्वशवर्तीचेत्प्रकृत्यादेरात्मवशत्वाभावेनअनर्थस्यकारणभूताभवंतीत्याह अहितादयइति अतोवशीकर्तव्याइत्यर्थः आहितादयइतिवाआदितएवहिकर्तृत्वेननिहिताः अनेनप्रकृत्यादीनागुणोद
शितः । स्वाम्यमात्योजनपदोदुर्गंद्रविणसंचयः दंडोमंत्रीचसप्तैतास्तस्यप्रकृतयःस्मृताइति बुद्धिसहायोमंत्री कर्मसहायोऽमात्यः यथाप्रकृतिगुप्तोराजासुखमश्नुतेतथाराज्ञासंतोषिता‧प्रकृतयःराज्ञ‧संतो

तस्यभार्यासहस्राणांसहस्राणिदशाभवन् ॥ सांतानिकश्चापिनृपोनलेभेतासुसंततिम् ११ रूपौदार्यवयोजन्मविद्यैश्वर्यश्रियादिभिः ॥ संपन्नस्यगुणैः सर्वैश्चितावंध्यापतेरभूत् १२ नतस्यसंपदःसर्वामहिष्योवामलोचनाः ॥ सार्वभौमस्यभूश्चेयंनाभूवन्प्रीतिहेतवः १३ तस्यैकदातुभवनमंगिराभगवानृषिः ॥ लोकाननुचरन्नेतानुपागच्छद्यदृच्छया १४ तंपूजयित्वाविधिवत्प्रत्युत्थानार्हणादिभिः ॥ कृतातिथ्यमुपासीदत्सुखासीनंसमाहितः १५ महर्षिस्तमुपासीनंप्रश्रयावनतंक्षितौ ॥ प्रतिपूज्यमहाराजसमाभाष्येदमब्रवीत् १६ ॥ अंगिराउवाच ॥ अपितेऽनामयंस्वस्तिप्रकृतीनांतथात्मनः ॥ यथाप्रकृतिभिर्गुप्तःपुमान्राजाचसप्तभिः १७ आत्मानंप्रकृतिष्वद्धानिधायश्रेयआप्नुयात् ॥ राज्ञस्तथाप्रकृतयोनरदेवाहितादयः १८ अपिदाराःसुतामात्याभृत्याःश्रेण्योथमंत्रिणः ॥ पौराजानपदाभूपाआत्माचवशवर्तिनः १९ यस्यात्मानुवशश्चेत्स्यात्सर्वेतद्वशगाइमे ॥ लोकाःसपालायच्छंतिसर्वेबलिमतंद्रिताः २० आत्मनःप्रीतयेप्यात्मापरतःस्वतएववा ॥ लक्षयेऽलब्धकामंत्वांचिंतयाशबलंमुखम् २१ ॥ श्रीशुकउवाच ॥ एवंविकल्पितोराजन्विदुषामुनिनापिसः ॥ प्रश्रयावनतोभ्याहप्रजाकामनयामुनिम् २२ ॥ चित्रकेतुरुवाच ॥ भगवन्किंनविदितंतपोज्ञानसमाधिभिः ॥ योगिनांध्वस्तपापानांबहिरंतःशरीरिषु २३ तथापिपृच्छतोब्रूयांब्रह्मन्नात्मनिचिंतितम् ॥ भवतोविदुषश्चापिचोदितस्त्वदनुज्ञया २४ लोकपालैरपिप्राथ्याःसाम्राज्यैश्वर्यसंपदः ॥ ननंदयंत्यप्रजंमांक्षुत्तृट्कामिवापरे ॥ २५ ॥

षहेतवोभवंति अन्यथाऽहितादयःअहितस्यासंतोषस्यआदयःकारणभूताभवंतीतियोगविभागोवा १८ हेराजन् दारसुतादयश्चतववशवर्तिनोपिअनुकूलतयावर्ततेकिं आत्मामनश्चवशवर्तीकिं १९ मनसो
वशवर्तित्वेकिंफलमत्राह यस्येति मनसःस्ववशवर्तित्वेभृत्यादयोपिस्ववशाभवंति अन्यथाकोपलोभाद्यधीनस्यतवक्रोधादिनाविमनसीकृताभृत्यादयउक्तकारिणोनभवंति अतोमनसश्चवशवर्तित्वंक्रोधाद्य
भावफलं क्रोधाद्यकरणेभृत्यादिवशीकरणं २० किंचप्रपंचोपिभवदायत्तइत्याह आत्मनइति आत्माप्रपंचोपि आत्मनस्तवप्रीतयेस्यादित्यन्वयः अस्त्वेवमिदंसर्वंभवन्मनसिकिंप्रतीयतइतितत्राह परतइ
ति अहं स्वतःपरतोवाऽलब्धकाममप्राप्तकामं त्वांलक्षयेपश्यामि केनलिंगेनेत्यतउक्तं चिंतयेति शबलमलक्षणं २१ एवंविकल्पितः संततिनिमित्तंदुःखंविदुषा प्रश्रयलक्षणगुणेनावनतःप्रह्वः २२
२३ आत्मनिमनसि २४ अपरेरूक्चंदनवनितादयः ॥ २५ ॥

पालनप्रकारमाह पूर्वैरिति पूर्वैःपूर्वजैःसहगतंमाप्तंतमोनरकंयथायथाप्रजयावरेम तत्ताहशंप्रजालक्षणंवरतु यद्वा यथायेनोपायेनतरेम तन्नोऽस्माकंविधेहि सकउपायइतिचिंतामाभूदित्याह प्रजयेति २६ त्वाष्ट्रंत्वष्टृदैवतं २७ २८ २९ प्राशनात्स्वीकारात् ३० शूरसेनस्यचित्रकेतोः ३१ शूरसेनानांविषयाणाम् ३२ ३३ ३४कीदृशकर्माकरोदत्राह धन्यमिति धन्यस्वधनादिसंपत्करम् ३५ निःस्वस्यदरिद्रस्य३६

तन्नःपाहिमहाभागपूर्वैःसहगतंतमः ॥ यथातरेमदुस्तारंप्रजयातद्विधेहिनः २६ ॥ श्रीशुकउवाच ॥ इत्यर्थितःसभगवान्कृपालुर्ब्रह्मणःसुतः ॥ श्रप यित्वाचरुंत्वाष्ट्रंत्वष्टारमयजद्विभुः २७ ज्येष्ठाश्रेष्ठाचयाराज्ञोमहिषीणांचभारत ॥ नाम्नाकृतद्युतिस्तस्यैयज्ञोच्छिष्टमदाद्विभुः २८ अथाहनृपतिंराज न्भवितैकस्तवात्मजः ॥ हर्षशोकप्रदस्तुभ्यमितिब्रह्मसुतोययौ २९ सापितत्प्राशनादेवचित्रकेतोरधारयत् ॥ गर्भंकृतद्युतिर्देवीकृत्तिकाग्नेरिवात्मजम् ३० तस्याअनुदिनंगर्भःशुक्लपक्षइवोडुपः ॥ ववृधेशूरसेनस्यतेजसाशनकैर्नृप ३१ अथकालउपावृत्तेकुमारःसमजायत ॥ जनयन्शूरसेनानांशृण्वतांप रमांमुदम् ३२ सराजासुकुमारस्यस्नातःशुचिरलंकृतः ॥ वाचयित्वाशिषोविप्रैःकारयामासजातकम् ३३ तेभ्योहिरण्यंरजतंवासांस्याभरणानिच ॥ ग्रामान्हयान्गजान्प्रादाद्धेनूनामर्बुदानिषट् ३४ ववर्षकामानन्येषांपर्जन्यइवदेहिनाम् ॥ धन्यंयशस्यमायुष्यंकुमारस्यमहात्मनः ३५ कृच्छ्रलब्धेऽ स्यराजर्षेस्तनयेऽनुदिनंपितुः ॥ यथानिःस्वस्यकृच्छ्राप्तेधनेस्नेहोऽन्ववर्धत ३६ मातुस्त्वतितरांपुत्रेस्नेहोमोहसमुद्भवः ॥ कृतद्युतेःसपत्नीनांप्रजाकाम ज्वरोऽभवत् ३७ चित्रकेतोरतिप्रीतिर्यथादारेप्रजावति ॥ नतथान्येषुसंजज्ञेबालंलालयतोऽन्वहम् ३८ ताःपर्यतप्यन्नात्मानंगर्हयंत्योऽभ्यसूयया ॥ अनपत्येनदुःखेनराज्ञश्चानादरेणच ३९ धिगप्रजांस्त्रियंपापांपत्युश्चागृहसंमताम् ॥ सुप्रजाभिःसपत्नीभिर्दासीमिवतिरस्कृताम् ४० दासीनांकोनुसंता पःस्वामिनःपरिचर्यया ॥ अभीक्ष्णंलब्धमानानांदास्यादासीवदुर्भगा ४१ एवंसंदह्यमानानांसपत्न्याःपुत्रसंपदा ॥ राज्ञोऽसंमतवृत्तीनांविद्वेषोबलवान भूत् ४२ विद्वेषान्नष्टमतयःस्त्रियोदारुणचेतसः ॥ गरंददुःकुमारायविद्वेषान्नृपतिंप्रति ४३ कृतद्युतिरजानंतीसपत्नीनामघंमहत् ॥ सुप्तएवेतिसं चिंत्यनिरीक्ष्यव्यचरद्गृहे ४४ शयानंसुचिरंबालमुपधार्यमनीषिणी ॥ पुत्रमानयमेभद्रेइतिधात्रीमचोदयत् ४५ साशयानमुपव्रज्यदृष्ट्वाचोत्तारलोचनम् प्राणेंद्रियात्मभिस्त्यक्तंहतास्मीत्यपतद्भुवि ४६ तस्यास्तदाकर्ण्यभृशातुरस्वरंघ्नंत्याःकराभ्यामुरउच्चकैरपि ॥ प्रविश्यराज्ञीत्वरयात्मजांतिकंददर्शबालं सहसामृतंसुतम् ४७ पपातभूमौपरिवृद्धयाशुचामुमोहविभ्रष्टशिरोरुहांबरा ॥ ततोनृपांतःपुरवर्तिनोजनानराश्चनार्यश्चनिशम्यरोदनम् ॥ आगत्य तुल्यव्यसनाःसुदुःखितास्ताश्चव्यलीकंरुरुदुःकृतागसः ४८ श्रुत्वामृतंपुत्रमलक्षितांतकंविनष्टदृष्टिःप्रपतन्स्खलन्नपि ॥ स्नेहानुबंधैधितयाशुचाभृशंवि मूर्छितोऽनुप्रकृतिर्द्विजैर्वृतः ४९ पपातबालस्यसपादमूलेमृतस्यविस्रस्तशिरोरुहांबरः॥ दीर्घंश्वसन्बाष्पकलोपरोधतोनिरुद्धकंठोनशशाककमाषितुम् ५०

३७ प्रजावतिपुत्रवति ३८ ३९ ४० स्वामिनःस्नेहाभावेदासीत्वमप्रयोजकमित्याह दासीनामिति ४१ ४२ गरंविषम् ४३ ४४ धात्रीरतनदात्री ४५ उत्तारलोचनउन्नततारयुक्तनेत्रम् ४६ ४७ ४८ अनुप्रकृति समक्षप्रकृतिजनः ४९ ५०

५१ श्रोतॄणांचित्रवाचावदंती शुशोचेति ५२ शोकलक्षणंवाक्यंदर्शयति अहोइति अतीवबालिशःजडाज्जडः कथंममजाड्यमापाद्यतइतितत्राह यस्त्वमिति यस्त्वमात्मसृष्टेरप्रतिरूपंप्रतिकूलंविरुद्धमीहसेतुएव तुःस्याद्भेदेवधारणइत्यभिधानात् कथमियविरुद्धचेष्टाभूदत्राह परइति परेपूर्वतनेपितरिमातरिवा जीवत्यपरस्यपश्चादुत्पन्नस्यपुत्रस्ययामृतिःसात्वयापाद्यते यस्मात्तस्मादितिशेषः यद्यपिसंहारेऽयंक्रमस्तथापिस्थितावनुपपन्नोयमितिसूचयति तुनेतिवा कथंतर्हिजाड्यपरिहारइतितत्राह विपर्ययइति उक्ताद्विपर्ययोऽन्यथा पूर्वतनस्यपूर्वंमृतिःपश्चात्तनस्यपश्चान्मृतिः यादेतर्हि ध्रुवानिश्चितं त्वंपरोसि जडादन्यःप्राज्ञोसि स्वचेष्टानुसारिचेष्टत्वादित्यर्थः ५३ संतापक्रोधरागादिष्वनर्थज्ञवचःकचिदितिवचनात्संतापादनन्वितमित्याह नहीति शरीरिणांमृत्युजन्मनोःक्रमोनास्तिचस्तदातहिंआत्मकर्मभिःस्वकर्मानुकूल्येनास्तु तेत्वयास्वयंनिजसर्गवृद्धयेयःस्नेहमोहपाशोममपुत्रोयमितिस्नेहानुबंधःकृतस्तमिमंस्नेहपाशंविवृश्वसिभिनत्सीति नसम्यक्करोषि ५४ त्वमकरुणेनयमेनदूरंनयाहीत्यन्वयः इदंक्रोधकटाक्षीकृत्योक्तमितिज्ञातव्यं ५५ अशनयाऽशनेच्छयाभवानित्यनर्थज्ञवचः स्पष्टंप्रतीयते ६५ इदमपिरागनिमित्तमितिभावेनाह नाहमिति मुदितेप्रसन्नेवीक्षणेपस्यतत्तथोक्तं क्रोधंध्वन

पतिंनिरीक्ष्योरुशुचार्पितंतदामृतंचबालंसुतमेकसंततिम् ॥ जनस्यराज्ञीप्रकृतेश्चहृद्रुजंसतीदधानाविललापचित्रधा ५१ स्तनद्वयंकुंकुमपंकमंडितंनिर्षिंचतीसांजनबाष्पबिंदुभिः ॥ विकीर्यकेशान्विगलत्स्रजःसुतंशुशोचचित्रंकुररीवदुष्करम् ५२ अहोविधातस्त्वमतीवबालिशोयस्त्वात्मसृष्ट्यप्रतिरूपमीहसे ॥ परेतुजीवत्यपरस्ययामृतिर्विपर्ययश्चेत्त्वमसिध्रुवंपरः ५३ नहिक्रमश्चेदिहमृत्युजन्मनोःशरीरिणामस्तु तदात्मकर्मभिः ॥ यःस्नेहपाशोनिजसर्गवृद्धयेस्वयंकृतस्तेतमिमंविवृश्चसि ५४ त्वंतातनार्हसिचमांकृपणामनाथांत्यक्तुंविचक्ष्वपितरंतवशोकतप्तम् ॥ अंजस्तरेमभवताऽप्रजदुस्तरंयद्ध्वांतंनयाह्यकरुणेनयमेनदूरम् ५५ उत्तिष्ठतातत इमेशिशवोवयस्यास्त्वामाह्वयंतिनृपनंदनसंविहर्तुम् ॥ सुप्तश्चिरंह्यशनयाचभवान्परीतोभुंक्ष्वस्तनंपिबशुचोहरनःस्वकानाम् ५६ नाहंतनूजददृशेहतमंगलातेमुग्धस्मितंमुदितवीक्षणमाननाब्जम् ॥ किंवागतोस्यपुनरन्वयमन्यलोकंनीतोऽघृणेननशृणोमिकलागिरस्ते ५७ ॥ श्रीशुकउवाच ॥ विलपंत्यांमृतंपुत्रमितिचित्रविलापनैः ॥ चित्रकेतुर्भृशंतप्तोमुक्तकंठोरुरोदह ५८ तयोर्विलपतोःसर्वेदंपत्योस्तदनुव्रताः ॥ रुरुदुःस्मनरानार्यःसर्वमासीदचेतनम् ५९ एवंकश्मलमापन्नंनष्टसंज्ञमनायकम् ॥ ज्ञात्वांगिरानामऋषिराजगामसनारदः ६० ॥ इतिश्रीभागवतेषष्ठस्कंधेचतुर्दशोध्यायः १४ ॥ श्रीशुकउवाच ॥ ऊचतुर्मृतकोपांतेपतितंमृतकोपमम् ॥ शोकाभिभूतंराजानंबोधयंतौसदुक्तिभिः १ कोऽयंस्यात्तवराजेंद्रभवान्यमनुशोचति ॥ त्वंचास्यकतमःसृष्टौपुरेदानीमतःपरम् २

यंतीशोचति किंवेति अपुनरन्वयंपुनःसंबंधशून्यं अघृणेनयमेनेतिशेषः ५७ इयमेकैवविलपंत्यभूत्रान्यइत्यतःपूर्वोक्तविलापंस्पष्टयति विलपंत्यामिति ५८ अचेतनंबुद्धिशून्यंअश्मवत्प्रवृत्तिशून्यंपुरंवा ५९ अनायकंबोधकरहितं अस्मिन्नवसरेसुहृदोंगिरसआगत्यविवक्ति ज्ञात्वेति अनेनऋषित्रिकालदर्शीतिस्पष्टितं ६० ॥ इतिश्रीभागवतेम०षष्ठ०विज०टीकायांचतुर्दशोध्यायः १४ ॥ अत्रसंसारोनित्यस्तदुच्छेदोज्ञानेनैवतदपिनिरंतरोपासितश्रीनारायणानुग्रहादुत्पद्यतइतिएतत्सर्वंनिरूप्यतेऽस्मिन्नध्याये तत्रांगिरोनारदावागत्यकिंचक्रतुरित्याशंकायामाह श्रीशुकइति मृतकोपांतेशवसमीपे ॥ १ ॥ यमनुशोचति अयंतवकःस्यात्कीदृशोबंधुःस्यादिदानींपुत्रइतिभ्रांतिश्चेत्तर्हिविरिंचिसृष्टौपुराऽतीतकालेत्वमस्यबालस्यबंधूनामध्येकतमोबंधुः पितामातुलोवा सहोदरोवा अतःपरं एष्यतिकालेच कतमोबंधुरितिशेषः अयंचपूर्वापरकालयोस्तवकतमइतियोज्यं यथापूर्वोत्तरकालेषुवयानकोपिसंबंधस्तथेदानीमपिभ्रांतिमंतरेणेत्यतःशोकोनकार्यइतिभावः २

ननु तर्हीदंसर्वंमायाकल्पितमस्त्वितित्राह यथेति यथावालुकाःसिकताःस्रोतोवेगेननदीप्रवाहवेगेनप्रयांतिसंयांत्येकत्रसंयुज्यराशीभवंति तथा कलज्ञानइतिधातोःकालेनज्ञानमूर्तिनादेहिनः संयुज्यंतेसंबद्धयंते कलद्रावणइतिधातोः कालेनसंहारमूर्तिनावियुज्यंते ३ ननु त्यक्तदेहाःपुनर्देहांतरमाप्नुवंति उतशून्यतां आहोस्विदनिवृत्तिलक्षणामवस्थामितितत्राह यथेति धानासुबीजेषुअंकुरादिसमृद्ध्यापरिपक्वेषुसत्सुततोधानावराणिबीजानि कचिद्भवंति । कचित्प्रतिबंधान्नभवंति । यथा । तथा भूतेष्वपिईशमायया । नारायणेच्छया । चोदितानिप्रेरितानि । पुत्रादिव्यवहारयोग्यतयोत्पद्यंते । कचिद्दर्जनादिलक्षणकर्मप्रतिबंधानिबीजानिअंकुरादिकार्यंनजनयंतियथा तथा ज्ञानाग्निभर्जितसंसारबीजानिभूतानिपुनरावृत्तिशून्यावस्थामुक्तिलक्षणामाप्नानि नोत्पद्यंतइतीमंविशेषंवाइत्यनेनदर्शयति ४ इतोपिपुत्राद्यात्मनासंबंधःएवमित्याह । वयमिति । अस्मिन्क्षणएवतुल्यकालत्वं । अन्ययोःक्षणयोःयथानास्ति । देहनाशात् । तथाप्रकृतेपीतिभावः । ननुदेहनाशानाशाभ्यासदातुल्यकालत्वाभावश्चेत्तर्हिसर्वदातुल्यकालत्वंकस्येति तत्राह । जन्ममृत्योरिति । जन्ममृत्योःपूर्वापरकालयोर्यथासृष्ट्यादिकंकरोति । तथाऽधुनाप्येवमेवेति अनेनहरेरेवदेहेनसदातनत्वमुपवर्णितम् । अस्यचैतन्यस्यसदातनत्वेपिदेहस्यनास्तीतिविशेषइत्यभिप्रायः । देहस्यसर्वथानाशादनाशाच्चेतनस्यत्विंतिस्मृतेः ५ केनोद्भूतैर्भूतैरितितत्राह आत्मेति भूतानिस्वयमेवसृजंतीतिर्किनस्यादितितत्राह अस्वतंत्रैरिति नचार्थार्थीसृजत्ययमित्याह अनपेक्षइति अथास्यात्सर्जनात्प्रयोजनापेक्षानस्यात्कथंतर्हीदंसर्जनंप्रयोजनमंतरेणप्रवृत्त्यदर्शनादित्यत्राह बालवदिति यथा बाल क्रीडनक्रीडतितथा लोकवत्तुलीलाकैवल्यमितिसूत्रात् ६ भूतैरुपकरणैरीश्वरःकथंसृजतीत्यतस्तंप्रकारंदर्शयति देहेनेति पितुर्देहेनसंयुक्तान्मातुर्देहाद्देहिन उत्पत्स्यमानस्यपुत्रलक्षणजीवस्यदेहोऽभिजायते नतुचेतनस्तस्यनित्यत्वात् देहउपचयइतिधातोः देहशब्दोपलक्षितपूर्वकर्मणाफलदानायेश्वरप्रेरितेनदेहिनः पितृमातृशब्दवाच्यस्यदेहादुपादानभूताद्देहःपुत्रस्येतिशेषइतिवा अभीत्युपसर्गेणानेकमुख

**यथाप्रयांतिसयांतिस्रोतोवेगेनवालुकाः ॥ संयुज्यंतेवियुज्यंतेतथाकालेनदेहिनः ३ यथाधानासुवैधानाभवंतिनभवंतिच ॥ एवंभूतेषुभूतानिचोदितानीशमायया ४ वयंचत्वंचयेचेमेतुल्यकालाश्चराचराः ॥ जन्ममृत्योर्यथापश्चात्प्रागेवमधुनाविभो ५ भूतैर्भूतानिभूतेशःसृजत्यवतिहंत्यजः ॥ आत्मसृष्टैरस्वतंत्रैरनपेक्षोऽपिबालवत् ६ देहेनदेहिनोराजन्देहाद्देहोऽभिजायते ॥ बीजादेवयथाबीजंदेह्यर्थइवशाश्वतः ७**

परंपरासृष्टिमुपलक्षयति अत्रदृष्टांतमाह बीजादिति बीजात्पनसादिलक्षणाज्जलतेजआदिसाधनसामग्रीसंवृतादंकुराख्यंवृक्षजीवशरीरंतेनसहजायते तस्माद्युक्तजलाद्याप्तसारात्पनसादिबीजांतरमुत्पद्यते तस्माच्चेतियथाकार्यपरंपरा नचैवमनवस्था मूलकार्यस्यप्रकृत्यात्मकत्वात् तथापितृमातृविकारशुक्रशोणितसबंधात्कलिलादिलक्षणकार्यमभिमानिजीवेनसहजायते तस्मात्परिणतावयवात्स्त्रीपुरुषभूताद्रेतआदिक्रमेणकार्यांतरंजायतेइत्यनेनक्रमेणभगवान्भूतैः सृष्टिंकरोतीतिस्थितिसंहारयोरेवमूह्यं तदहृष्टेश्वरेच्छावशादितिग्राह्यं । अथातोरेतसःसृष्टिरितिश्रुतेः तस्मात्सर्वाणिकार्याणिकानिचिदाहत्यात्मनानारायणायनानिकानिचित्परंपरयातदधीनानि तत्रापिविशेषस्तुप्रमाणादवगंतव्यः तदुक्तंच नारायणायनादेवाऋण्याद्यास्तत्परायणाः ब्रह्माद्याःकेचनैवंस्युःसिद्धोयोग्यसुखंलभेत् अत्रापिकिंपंतइतीयमाशंकाच नवकोट्यस्तुदेवानामृषीणांशतकोटयः नारायणायनाःसर्वेयेकेचित्तत्परायणाइति एतद्वाक्यद्वयंसर्वस्यनारायणाश्रयेणवक्तव्यत्वात् मुक्तानामपिसिद्धानानारायणपरायणइत्यादौनोदाहृतं उभयत्रापीदमेवप्रमाणमितिसंतोष्टव्यं ननु देहनाशवद्देहिनाशेपुरुषार्थानुपपत्तिरत्राह देहीति देहदाहेनोर्मध्येदेहीशाश्वतः अभिमानमंतरेणजन्मनाशरहिततयाकालत्रयेप्येकप्रकारः कथमिव अर्थइव मोक्षलक्षणपुरुषार्थइव शब्दार्थइववा तर्हिब्रह्मसाम्यमायातमित्यस्याप्येतदेवोत्तरंदेह्यर्थः जीवाख्यःपदार्थशाश्वतइत्रनित्यइव । द्रव्यंकर्मचकालश्चेत्यादेः जीवानित्यत्वस्यश्रीनारायणाधीनत्वेनोपचारितत्वाद्धरेरेवनिरुपचरितनित्यत्वमतस्तयोर्नसाम्यमित्यर्थः केचिदेवंव्याचक्षते अर्थःनरत्वादिजातिमात्रमिव यथाजातेर्नित्यत्वंतथाजीवस्यापीत्यर्थःनित्यकुतोभयत्वमात्स्यनरत्वंपुनःरैष्यतइतिवचनात् तच्चनरत्वादेस्तत्राशेननाशसंभवान्नित्यत्वानुपपत्तेः ७

कृशोहंस्थूलोहमित्यभेदानुभवाद्देहिनोनित्यत्वंदेहस्यानित्यत्वमित्ययंविशेषःकथंघटतइतितत्राह देहेति अविवेककृतोऽज्ञाननिर्मितः नचायमाधुनिकःशुक्तिरजतवदित्यतउक्त पुरेति पुरापुरातनः अनादिमानित्यर्थः अनेनज्ञानेनाज्ञानेनष्टेउक्तविशेषोघटतइत्युक्तंभवति अत्रदृष्टांतमाह जातीति यथागवादिवस्तुनि गोत्वगवादिपिंडानांविभागोभेद कणादादीनामज्ञानेनकल्पित नतुवास्तवःअज्ञानकृतत्वमात्रेदृष्टांतोयं तस्माद्भेदाभेदत्वेअप्रयोजकेइति कणादादीनामपितमोयोग्यत्वप्रकटनायतन्मतोदाहरणं वस्तुनिहरौगोपालत्वादिजातिव्यक्तिविभागोयथाकल्पितः आरोपितस्तथातथा ८ देहदेह्यविभागप्रतीतेरनुभवात्कथंनानात्वादिप्रतीतिभ्रांतिरित्यतआह नानात्वमिति अतद्धर्मायोजीवस्तस्मादन्यस्यदेहस्यधर्माः सुरोनरोहमित्यादिनानात्वादयो द्रष्टुर्जीवस्याविद्यमानाऽपिभ्रांतिः क्रियाफलमिति हेतुगर्भविशेषणंकर्मफलत्वात् अग्निनादाह्यस्येंधनस्यविक्रियाःवृद्धिक्षयादिविकाराअग्नेरितिभ्रांतिःभ्रांत्येंधनसमृद्धौसमृद्धोग्निस्तद्ध्रासेक्षीणइत्यादयोद्रष्टुर्ज्ञानिनोहरेरतद्धर्माइत्येवभांति नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतइतिश्रुतेर्नैर्देदर्शनभ्रांतमनेनदेहिदेहभेदेप्रमाणमुक्तंभवतीतिवा ९ इदमेवविवृणोति तइमइति येयेप्रत्यक्षादिप्रमाणसिद्धाजन्मनाशादयस्तइम जीवस्य देहसंयोगात्पनिर्जीवे मनसिवा भांति कुतोऽसद्ग्रहादेहोहमित्यभिमानात् अत्रोदाहरणमाह स्वप्नइति जाग्रद्दृष्टसर्पव्याघ्रादिसंस्कारवशात्स्वप्नेपियथातद्दर्शनात्सर्वभयमित्याद्यनर्थजातंभवति तथाऽनादिकालीनमिथ्याभिमानादनर्थकरःसंसारःस्यादितियथस्मात्तस्माच्चन्निवृत्त्युपायमाह नान्यदिति अन्यदनर्थकरणंनध्यायेदित्यन्वयः । ननु शुक्तिकाधिष्ठानेरजतंयथाप्रतीयते तथाज

देहदेह्यविभागोऽयमविवेककृतःपुरा ॥ जातिव्यक्तिविभागोऽयंयथावस्तुनिकल्पितः ८ नानात्वंजन्मनाशश्चक्षयोवृद्धिःक्रियाफलम् ॥ द्रष्टुश्चभांत्य तद्धर्मायथाग्नेर्दाह्यविक्रियाः ९ तइमेदेहसंयोगादात्मन्याभांत्यसद्ग्रहात् ॥ स्वप्नेयथातथानान्यद्ध्यायेत्सर्वंभयंचयत् १० प्रसुप्तस्यानहंमानान्नघोराभातिसंसृतिः ॥ जीवतोपियथातद्वद्विमुक्तस्यानहंमते ११ तस्मादन्यन्मनोमात्रंजह्यहंममतातमः ॥ वासुदेवेभगवतिमनोधेह्यात्मनीश्वरे १२ ॥ श्रीशुकउवाच ॥ एवमाश्वासितोराजाचित्रकेतुर्द्विजोक्तिभिः ॥ विमृज्यपाणिनावक्त्रमाधिम्लानमभाषत १३ ॥ राजोवाच ॥ कौयुवांज्ञानसंपन्नौ महिष्ठौचमहीयसाम् ॥ अवधूतेनवेषेणगूढाविहसमागतौ १४

न्मादिकंकिमधिष्ठानमित्येतांमंदाशंकांवापरिहरति तइति आत्माधिष्ठानंशुक्तिरजतवज्जन्मादिकंमिथ्याभूतंभवेदित्यतःस्वप्नपदार्थानामर्थक्रियाकारित्वाद्यथासत्यत्वमंगीकर्तव्यंतथाजन्मादीनामित्यभिमित्याह स्वप्नइति अन्यद्देहात्मत्व १० अनन्यध्यानफलंसदृष्टांतमुपपादयति प्रसुप्तस्येति प्रकर्षेणसुप्तस्य प्रकर्षेणसुप्तेर्मरणापरपर्यायत्वात्तन्निवृत्त्यर्थं जीवतोपीतिधृतप्राणस्यापि ज्ञानपूर्वंबाह्यप्रवृत्तिशून्यस्यपुरुषस्यानहमानाद्देहात्मत्वादिभ्रांतिज्ञानराहित्याद्यथाघोरासंसृतिर्नभाति तद्वत्तथाविमुक्तस्यसानभाति कुतःविमुक्ताहंभावबुद्धित्वादनेनानन्यध्यानेनकैवल्यप्राप्तिःसूचिताभवतीति ११ फलितमाह तस्मादिति यतोऽनहंमानिनोघोरसंसारहानिरन्यस्यतद्भावश्च तस्मादन्यत्पुत्रादिकं मनोमात्रंमनोगतरागद्वेषजनितपुण्यपापनिमित्तं एतदुक्तंभवति अहंमानेनमनसोरागद्वेषौस्यातां तयोःपुण्यपापेभवतः ताभ्यांचपुत्रादिकमुत्पद्यते मनसोद्वेषरागाभ्यांपुण्यपापसमुद्भवः पुत्रादिपुण्यपापाभ्यांतस्मात्सर्वंमनोभवमितिवचनात् अनेनपुत्रादेर्दीर्घायुष्यादिकंपुण्यपापनिमित्तंभवतीतिसूचितमिति ननुतदस्तुततःकिमप्रकृतइतितत्राह जहीति तद्धननोपायमाह वासुदेवइति आत्मनिबिंबभूतेदेहस्थितत्वेपितद्देहगतदुःखाद्यस्पर्शेसमर्थइति द्योतनायेश्वरइति मनोधारणोत्पन्नतत्प्रसादोद्भूतज्ञानासिना तमोऽहंममताल्लक्षणंनिर्मूलयेत्यर्थः १२ आधिनाम्लानम् १३ अवधूतेनवेषेण धूलिधूसरिताकारेण १४

उन्मत्तस्यलिंगमेषामस्तीतितथा १९ मार्कंडेयगौतमयोर्मध्येऽन्योनास्तीतिद्योतनायाथशब्दः १६ दुर्वासयाज्ञवल्क्ययोर्विशेषद्योतकश्चशब्दः १७ योमहाभाष्यकर्तासपतंजलिनाम्नाबोध्य. १८ ज्ञानहे
तवोलोकानामितिशेषःब्राह्मणाभगवत्प्रियाः । सिद्धेशाज्ञानहेतवइत्येतैर्विशेषणैर्विशिष्टत्वस्यप्रतिपाद्यमानत्वान्नैतेषांसर्वेषां साम्यम् । नारायणपरादेवामनुष्यास्तत्परायणाइत्यादिस्मृत्याअज्ञानराशेर
स्यज्ञायमानत्वात् । नारायणपरादेवाइत्यादिवाक्यं मुक्तानामपिसिद्धानांनारायणपरायणइत्यत्र ब्राह्मणाभगवत्प्रियाइत्यत्रच प्रमाणार्थमस्मिन्नध्यायेउदाहृतं ॥ ब्रह्मअणंति अयंते आश्रयंतेब्रह्मणेवे
तिब्राह्मणाः इतिव्युत्पत्त्यादेवद्वारानारायणायनत्वंलब्धम् । योग्यसुखवस्त्वंचेत्युभयंसिद्धम् । तेचकियंतइत्याशंका नवकोट्यस्तुदेवानांऋषयःशतकोट्यइत्यादिकयापरिहर्तव्या १९ युवांयुवाभ्याम्
२० २१ महापुरुषगोचरंभक्तिस्मरणादिमत्वेनश्रीविष्णुविषयम् २२ नावसीदतुमर्हति पुत्रनिमित्तशोकेननष्टोमाभूदिति २३ तर्हितदानींपुत्रःकिमितिदत्तइतितत्राह तदेति तदापूर्वागमनकाले
ज्ञानमेवददामीतिगृहमागतोहम् तवान्याभिनिवेशंपुत्रविषयाग्रहम् ज्ञात्वा तेपुत्रंतुभ्यंपुत्रमेवददामीदानींज्ञानंददामीतिशेषः २४ इदानीदातुमवसरइत्याह अधुनेति नकेवलंपुत्रवतामेवताप

चरंतिह्यवनौकामंब्राह्मणाभगवत्प्रियाः ॥ मादृशांग्राम्यबुद्धीनांबोधायोन्मत्तलिंगिनः १५ कुमारोनारदऋभुरंगिरादेवलोसितः ॥ अपांतरतमो
व्यासोमार्कंडेयोथगौतमः १६ वसिष्ठोभगवान्रामःकपिलोबादरायणिः ॥ दुर्वासायाज्ञवल्क्यश्चजातूकर्ण्यस्तथारुणिः १७ रोमशश्च्यवनोदत्तआसुरिः
सपतंजलिः ॥ पराशरोथमैत्रेयोभारद्वाजश्चआरुणः ॥ ऋषिर्वेदशिराबोध्योमुनिःपंचशिखस्तथा १८ हिरण्यनाभःकौशल्यःश्रुतदेवःक्रतुध्वजः ॥ एते
परेचसिद्धेशाश्चरंतिज्ञानहेतवः १९ तस्माद्युवांग्राम्यपशोर्ममुग्धधियःप्रभू ॥ अंधेतमसिमग्नस्यज्ञानदीपउदीर्यताम् २० अंगिराउवाच ॥ अहंते
पुत्रकामस्यपुत्रदोस्म्यंगिरानृप ॥ एषब्रह्मसुतःसाक्षान्नारदोभगवानृषिः २१ इत्थंत्वांपुत्रशोकेनमग्नंतमसिदुस्तरे ॥ अतदर्हमनुस्मृत्यमहापुरुषगो
चरम् २२ अनुग्रहाद्भगवतःप्राप्तावावामिहप्रभो ॥ ब्रह्मण्योभगवद्भक्तोनावसीदतुमर्हति २३ तदैवतेपरंज्ञानंददामिगृहमागतः ॥ ज्ञात्वान्याभिनिवेशं
तेपुत्रमेवददावहम् २४ अधुनापुत्रिणांतापोभवतैवानुभूयते ॥ एवंदारागृहारायोविविधैश्वर्यसंपदः २५ शब्दादयश्चविषयाश्चलाराजन्विभूतयः ॥ रा
ज्यंमहीबलंकोशोभृत्यामात्यसुहृज्जनाः २६ सर्वेपिशूरसेनेमेशोकमोहभयार्तिदाः ॥ गंधर्वनगरप्रख्याःस्वप्नमायामनोरथाः २७ दृश्यमानाविनार्थेननदृ
श्यंतेमनोभवाः ॥ कर्माभिध्यायतोनानाकर्माणिमनसोभवन् २८ अयंहिदेहिनोदेहोद्रव्यज्ञानक्रियात्मकः ॥ देहिनोविविधक्लेशसंतापकृदुदाहृतः २९

किंतु दारादिमतामप्यविनाभूतोयमित्याह एवमिति २५ २६ स्वप्नमायामनोरथवदनित्यत्वेनदृश्यमानाःप्रतीयमानाः अर्थेनपुरुषार्थाख्यप्रयोजनेनविनादृश्यंतइतियोनियमःसनास्तीत्यभ्याहृत्यान्व
यव्यं तथाहि योग्यतानुसारेणकदाचित्पुरुषार्थहेतुत्वेनदृष्टत्वात्कदाचिन्नेतिनियमात्कुतो मनोभवाःमनसोभवउत्पत्तिर्येषांतेतथा तेनकल्पितत्वात् एतदेवविवृणोति कर्मेति निरंतरंकर्मचिंतयत.
पुंसो मनसोमनःक्षोभान्नानाकर्माणिध्यायतोस्यमानुषस्वर्गमुक्तियोग्यानिकर्माण्यभवन्भवंतीतियस्मात्तस्मात्तदनुसारेणदारादिसभवात्तदापुरुषार्थहेतुत्वादिनियमोनास्तीतिभावः २७ २८ देहान्तर्गर्भा
पाकारित्वान्मिथ्यात्वंवक्तुमुचितंगंधर्वनगरादिवदतोनश्वरत्वएवदृष्टांतइत्यभिप्रेत्याह अयंहीति देहिनोयदेहोदेहिनोजीवस्यविविधक्लेशसंतापकृदुदाहृतइत्यन्वयःहिशब्दोहेतौ अभिमानाच्चेतनस्यसुखा
दिभोगोनतुदेहस्येतिद्योतनायदेहिनइतिपुनर्वचनं अयमित्युक्त्यास्थूलदेहसिद्धावपिस्पष्टत्वायाह द्रव्येति द्रव्यात्मकःपंचभूतात्मकःस्थूलदेहः गंडशैलादीनांस्थूलत्वेपिभोगायतनत्वाभावात्कथमेत

दितितत्राह ज्ञानेति ज्ञानेत्यनेनश्रोत्रादिपंचकंएकंमनश्चगृह्यते क्रियापदेनापिवागादिपंचकंकर्मचलक्ष्यते ज्ञानेंद्रियकर्मेंद्रियमनआत्मकत्वेनवैलक्षण्याद्रोगायतनत्वमुपपद्यतेइंद्रियकार्यज्ञानक्रियाशब्दा भ्यांइंद्रियोक्तिः कार्यकारणयोरेकशब्दव्यवहृतिर्भवेदित्यत्तोयुज्यते असन्नपिक्लेशदआसदेह इत्यादौसिद्धत्वादुदाहृतइत्युक्तं अनेनासदुपासनंक्लेशकरंदेहवदित्ययमर्थोपिध्वनितइतिज्ञातव्य २९ यतएवंनानाक्लेशदोदेहस्तर्हिकथंकारंतंनिवर्ततइतितत्राह तस्मादिति तस्माद्देहस्यक्लेशकरत्वात्स्वंद्वैतेदेहे ध्रुवार्थविस्रंभत्यजेत्यन्वयः अन्यापेक्षारहितत्वाद्धारिरद्वैतं अदृष्टाद्यन्यापेक्षाप्राप्तत्वा त् द्वैतंदेहादि तत्रैतेपदार्थाध्रुवत्वान्नित्याइतिविश्वासंत्यज अनन्यापेक्षतस्त्वेकोहारिरन्यद्द्वयंस्मृतं अन्यापेक्षत्वतस्तेनप्राप्तत्वाद्द्वैतमुच्यतइतिवचनात् देहिनोयत्किंचित्साधनेद्वितीयत्वेनप्रा प्तत्वाद्द्वैतशब्दवाच्योदेहइत्यर्थः । नैतावतापूर्यतइत्याह उपशममिति अहंकर्तेत्यभिमानोपशममाविशेत्यन्वयः किंच हरौनिरंतरनिष्ठालक्षणमुपशमंउक्तार्थदार्ढ्यायाह विमृश्येति आत्मनोहरेर्गतिं स्वातंत्र्यादिलक्षणामात्मनोजीवस्यास्वातंत्र्यादिलक्षणांचेति । केनेत्यतउक्तं मनसेति । तस्यप्रागपिसद्भावात्कुतइदृशविचाराभावइतितत्राह स्वस्थेनेति ३० शास्त्रश्रवणमननशाणलीढेनभ क्त्यादिसाधनसामग्रीसंपादनेनगृहादिसंत्यागःप्रथमसाधनमित्यत्रेतिहासमाह भोजोनामेति शत्रुणाग्रस्तंकवलितंयदन्नंतदेवभोजनंयस्यसतथा शत्रूच्छिष्टान्नभक्षणइत्यर्थः ३१ पूर्वंपुरातनं वैरंयन्तीतिपूर्ववैरग्रहास्तैःकर्मभिः पूर्ववैराख्यग्रहैः ३२ दुरंतदुःखानामोघोयस्मिन्सतथा तस्मात्स्वप्राप्तत्स्वप्नानुभूतं तावत्तदानीमेव ३३ आत्मानंउन्मत्तादिवदर्शयन्नात्मनामनसा आत्मान दर्शयन्नालोचयन्नितिवा । निर्वाणंअशरीरेणाजन्यानंदपूर्णं ब्रह्मश्रीनारायणाख्यं प्रविष्टोमनसेतिशेषः यस्मिन्कुलायेदेहेस्थितः तंकुलायंनाविदन्नबुबुधे चशब्दोहेत्वर्थः असंप्रज्ञातसमाधिस्थ

तस्मात्स्वस्थेनमनसाविमृश्यगतिमात्मनः ॥ द्वैतेध्रुवार्थविस्रंभंत्यजोपशममाविश ३० भोजोनामनृपःस्वप्नेशत्रुग्रस्तान्नभोजनः ॥ दुःखंदुर्विषहंप्राप्तः शोकमोहभयार्तिदम् ३१ केचिद्विलुलुपुर्भोगानपरेऽवधिषुःश्रितान् ॥ पूर्ववैरग्रहैर्जाश्चान्यआत्माशिरोहरन् ३२ इत्थंदुरंतदुःखौघादुत्थितस्तद नुस्मरन् ॥ तावद्भ्रंशंमुनिर्विण्णोनिर्जगामततोगृहात् ३३ दर्शयन्नात्मनात्मानंनिःसंगःशांतविग्रहः ॥ प्रविष्टोब्रह्मनिर्वाणंकुलायंनाविदन्नतम् ३४ ॥ नारदउवाच ॥ इमांमंत्रोपनिषदंप्रतीच्छप्रयतोमम ॥ यांधारयन्सप्तरात्राद्द्रष्टासंकर्षणंविभुम् ३५ यत्पादमूलमुपसृत्यनरेंद्रपूर्वेशर्वादयोभ्रममिमंद्वित यंविसृज्य ॥ सद्यस्तदीयमतुलानधिकंमहित्वंप्रापुर्भवानपिपरंनचिरादुपैति ३६ ॥ इतिश्रीभागवतेषष्ठस्कंधेपंचदशोध्यायः ॥ १५ ॥ ॥ छ ॥

त्वाद्वा भुक्त्वाद्वा ३४ ममाप्येवंविधोपायावस्थामाप्तुंकउपायइतितत्राह इमामिति मंत्राख्योपनिषच्चिरकालेनसाध्यसाधिकाचेत्किमनयेत्यश्रद्धांमाकार्षीरित्याह यामिति रुद्राद्याःशेषदेहस्थंविष्णुंसंक र्षणाभिधम् शेषांतर्यामिणंज्ञात्वास्वपदंप्रापुरंजसेतिवचनात्शेषःसंकर्षणोत्रगृह्यते किंतुतदंतर्यामीद्वितीयमूर्तिरन्यस्यबंधनिर्मूलनादिसामर्थ्याभावात्इति ३५ संकर्षणंशेषस्यासंभावितोविशेषणैर्विशिन ष्टियत्पादेति पूर्वेशर्वादयोयत्पादमूलमुपसृत्योपास्यमहित्वंप्रापुरित्यन्वयः महित्वंनामकीदृशंयेनहरिप्रसादप्राप्यंस्यादित्यतउक्त अतुलेति अतुलंचतदनधिकंचेतितथोक्तं साम्याधिक्यवर्जितमित्यर्थः ननुतर्हिइदंभगवन्माहात्म्यविनाभूतंस्यादितितत्राह तदीयमिति तेषांरुद्रादीनांयोग्यं ननु स्वकीयप्राप्तौक्लेशसाध्यायाःकिमन्योपासनायाःप्रयोजनं स्वतःसिद्धत्वात्तस्येत्यस्याप्येतदेवोत्तरं तत्प्रसादल भ्यत्वात्तदीयमिति तदीयंतस्यहरेरधीनं तदुक्तं तेषांतेषांपदान्येववैष्णवानिपदानितु तेषांमहित्वंचतथाहरेस्तद्वशगंयतइति भगवन्महित्वादन्यमहित्वस्यसाम्याधिक्यस्यवर्जनंकथंघटतइत्यस्यापीद मुत्तरं तस्मादिंद्रादिपदाद्रुद्रादिप्राप्यशेषादिपदस्यसाम्याधिक्यवर्जनंयुक्तं किंच शेषादिप्राप्यशेषादिपदस्यमौक्तिकस्यसंसारेशेषादिपदमपेक्ष्यातुल्यानाधिक्यंचयुक्तिमत् अतुल्यानधिकंचैवतस्यतस्यै वमुक्तिगं तस्यैवपूर्वमाहात्म्यमपेक्ष्येतिवचनात् ननु परमंसाम्यमुपैतीतिश्रुतेर्हरेरेवातुल्यानधिकमहित्वंप्रापुरित्यर्थः किंनस्यादत्रापीदमेवप्रतिवचनं तस्यविद्यमानंपदमापुर्नहरेर्विद्यमानंनिजमहित्वं

तदुक्तं । नह्येरे कंचित् माहात्म्यमन्यप्राप्यंस्यान्नतेविष्णोरितिश्रुतेरिति । रुद्रादिप्राप्यंनचेत्ब्रह्मादिप्राप्यंकिंनस्यादितिचेन्न ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुंनैवशक्यते तद्यत्स्वभाव:कैवल्यंसभवान्केव लोहरिरितिप्रमाणविरोधात् । अत्रोपास्तावित्थंभावमाह भ्रममिति इमंदेहाद्यहंममाभिमानलक्षणंभ्रमंविहाय आचार्यैरप्येतदुक्तं देहादावहंममाभिमानोभ्रमइति बंधस्यत्यागमंतरेणतत्प्राप्तिःकथंयुक्ति मतीतितत्राह द्वितीयमिति कार्यकारणयोरेकशब्दव्यवहृतिर्भवेदितिन्यायात्कारणेनकार्यंलक्ष्यते द्वितीयेनान्यथाज्ञानेनानिमित्तंबधंपुत्रादिस्नेहलक्षणंविसृज्यसम्यक्त्यक्त्वा । तदुक्तं । द्वैतेनबंधसत्यागा द्वैतत्यागोभवत्सुतेतिद्वैतेनोत्पन्नबंधसंत्यागादित्यर्थः । अनेनमुक्तावपिशेषादिप्राप्यंपदमितिध्वनितमितिज्ञातव्यं साधनसामग्र्यांकाऽन्क्षेपोनास्तीत्याह सद्यइति तस्यतावदेवचिरंयावन्नविमोक्ष्येऽथसंप त्स्यतइतिश्रुतेः । अमेनाचित्रकेतोःकिमागतमत्राह भवानपीति भवानपि तममंत्रमुपास्यदृष्टात्तत्प्रसादेननचिरात्स्वकर्मनिर्मितचरमशरीरपातानंतरंतत्प्रसादलभ्यत्वात्तदीयमपि तेनपूर्वंमहिम्नातुल्यमन्य दिकंचपरमन्यद्रुद्रादिमहित्वविलक्षणं निर्दुःखानंदानुभवलक्षणंस्वयोग्यमाहात्म्यमुपैतीत्यन्वयः । यद्येषोपरस्तादेवीमायावैशारदीमतिः संपन्नएवेतिविदुर्महिम्निस्वेमहीयतइतिस्मृतिवचनात् ३६ ॥ इति श्रीभागवतेषष्ठस्कंधेविजयध्वजकृतटीकायांपंचदशोऽध्यायः ॥ १५ ॥ संसाररयपुत्रमित्रादिलक्षणनियतत्वंसंसारिचेतनस्यहरिनियतनित्यत्वं परमचेतनस्यपरमनित्यत्वं तज्ज्ञानमेवपुरुषार्थसाधनमि

श्रीशुकउवाच ॥ अथदेवऋषीराजन्संपरेतंनृपात्मजम् ॥ दर्शयित्वेतिहोवाचज्ञातीनामनुशोचताम् १ ॥ नारदउवाच ॥ जीवात्मन्पश्यभद्रंतेमातरं पितरंचते ॥ सुहृदोबांधवांस्तप्तान्शुचात्वत्कृतयाभृशम् २ कलेवरंस्वमाविश्यशेषमायुःसुहृद्वृतः ॥ भुंक्ष्वभोगान्पितृप्राप्तानधितिष्ठनृपासनम् ३ ॥ जीवउवाच ॥ कस्मिन्जन्मन्यमीब्रह्मन्पितरोमातरोऽभवन् ॥ कर्मभिर्भ्राम्यमाणस्यदेवतिर्यङ्नृयोनिषु ४ बंधुज्ञात्यरिमध्यस्थमित्रोदासीनविद्विषः सर्वएवहिसर्वेषांभवंतिक्रमशोमिथः ५ यथावस्तूनिपण्यानिहेमादीनिततस्ततः ॥ पर्यटंतिनरेष्वेवंजीवोयोनिषुकर्तृषु ६ नित्यस्यार्थस्यसंबंधोह्यनित्यो दृश्यतेनृषु ॥ यावद्यस्यहिसंबंधोममस्वंतावदेवहि ७ एवंयोनिगतोजीवःसनित्योनिरहंकृतः ॥ यावद्यत्रोपलभ्येततावत्स्वत्वंहितस्यतत् ८ एषनित्यो व्ययःसूक्ष्मएकःसर्वाश्रयःस्वदृक् ॥ आत्ममायागुणैर्विश्वमात्मानंसृजतेप्रभुः ९

स्यादिकमस्मिन्नध्यायेनिरूप्यते अत्रनारदोयोगमाहात्म्यंविद्योतयन्राजकुमारमुत्थाप्येदंवक्तीत्याह श्रीशुकइति १ २ ३ एवंजीवात्मनाकिमवादिइत्यत्राह कस्मिन्निति ४ ५ पण्यानिविक्रयाणिनरेषु विक्रेतृषुरेतःसेककर्तृषुपित्रादिषु योनिषुमातृषुकर्तृष्विवतिवा ६ ननु तर्हिहाटकादिवदनित्यत्वमापतितंजीवस्येत्याशंक्यसंबंधस्यैवानित्यत्वं नतुजीवात्मनइत्याह नित्यस्येति यथा संबंधस्यानित्यत्वं तथा ममपुत्रोयमितिममत्वमप्यनित्यमित्याह यावदिति हिशब्दाभ्यांप्रत्यक्षादिप्रमाणसिद्धत्वंदर्शयति एवशब्देनायोगव्यवच्छेदंकरोति ७ निरहंकृतइतिस्वभावाख्यानं यत्रयोनिषु स्वत्वस्वकीयत्वं ८ ननु तर्हिकेनसहास्यनित्यसंबंधइतितत्राह एषइति यआत्ममायागुणैःस्वाधीनप्रकृतिगुणैर्विश्वंपरावरंजगत्सृजति आत्मानंचावतारतरूपेणव्यनक्ति सएषसर्वाश्रयःसर्वोनित्यसबद्धइत्यन्वयः अनित्यत्व। स्यकथंघटतइत्यतउक्तं नित्यइति कोयमित्यतोव्ययइति अनेनानित्यशब्दोव्याख्यातः अनुपलब्धौहेतुमाह सूक्ष्मइति नचायंजीववद्बहुत्वसंख्योपेतइत्याह एकइति मुख्यतएकत्वसंख्याविशिष्टइत्यर्थः. सृष्टौप्रवर्तमानस्यराज्यसंबंधेनज्ञानलोपोनानीत्याह स्वदृगिति स्वरूपभूतज्ञानस्यापिप्रबलप्रतिबंधकत्वाभिभवःकुतःस्यादित्यतआह प्रभुरिति अनेनहरिणानित्यसंबंधःपित्रादिभिरानित्यइतिज्ञापित अनित्यसंबंधयुक्ताःपित्रादयानित्ययुक्तादिरितिवचनात् ९

एवंविधस्यहरेर्योग्यतातिरेकेणनकावापिप्रियाप्रियौरतइत्याह नहीति कुतोतिप्रियाद्यभावइतितत्राह सर्वेति गुणदोषयोःकर्तृणांपुरुषाणांस्त्रीणांचसर्वासांधियांकुशलाकुशलसाक्षित्वेनतदनुसारेणफलदातृत्वादतिप्रियाद्यभावइत्यर्थः द्वितीयसद्भावेतद्भयात्कस्मिंश्चिदतिप्रियत्वादिसंभवति नहिहरेस्तादृशोस्तीत्यभिप्रेत्याह एकइति ॥ १० ॥ साक्षित्वस्पष्टयति नेति आत्मापरमात्माकथंगुणानादानंहरेः षाड्गुण्यंकजिग्रतिषड्गुणेशइत्युक्तेस्तउक्तं हीति हिशब्दोहेतौ गुणोपभोगेनलोकवद्वृद्ध्यभावोगुणानादानस्यार्थोनतुसर्वात्मनाऽभोक्तृत्वं तथात्वे भोक्तासद्गुणभोक्तत्वान्नभोक्तातद्वृद्धितः अचिंत्यशक्तितस्तच्चयुज्यतेपरमेशितुरितिस्मृतिविरोधःस्फुटः उदासीनइवसर्वस्मादुत्तमत्वेनस्थितएव भोक्तृत्वाभोक्तृत्वेलोकविरुद्धेहरेःकथंघटेतेइत्यतउक्तमीश्वरइति परावरदृक्त्वमर्पणामप्यस्तीत्यतउक्तमासीनइति तत्तद्वस्तुषुबाह्याभ्यंतरवृत्त्यातिष्ठन्नेवपरावरदृगित्यर्थः ११ ज्ञातयस्तस्मिन्जन्मनिसपिंडाः आत्मनास्वेषांतस्मिन्पुत्रेस्नेहाख्यशृंखलांछित्त्वा १२ ज्ञातेःसपिंडस्यतस्यदेहंनिर्हृत्यदग्ध्वोचिताःक्रियाःश्राद्धादिलक्षणाः १३ १४ तत्राचित्रकेतुःकिंचकारेतितत्राह सइत्थमिति १५ कृताःपुण्यजलैःक्रियास्तर्पणादिलक्षणायेनसतथा १६ अथ तयोर्ब्रह्मपुत्र

नह्यस्यातिप्रियःकश्चिन्नाप्रियःस्वःपरोपिवा ॥ एकःसर्वधियांद्रष्टाकर्तृणांगुणदोषयोः १० नादत्तआत्माहिगुणंनदोषंनक्रियाफलम् ॥ उदासीनइवासीनःपरावरदृगीश्वरः ११ ॥ श्रीशुकउवाच ॥ इत्युदीर्यगतोजीवोज्ञातयस्तस्यतेतदा ॥ विस्मितामुमुचुःशोकंछित्त्वात्मस्नेहशृंखलाम् १२ निर्हृत्यज्ञातयोज्ञातेर्देहंकृत्वोचिताःक्रियाः ॥ तत्यजुर्दुस्त्यजंस्नेहंशोकमोहभयार्तिदम् १३ बालघ्न्योव्रीडितास्तत्रबालहत्याहतप्रभाः ॥ बालहत्याव्रतंचेरुर्ब्राह्मणैर्यन्निरूपितम् ॥ यमुनायांमहाराजस्मरंत्योद्विजभाषितम् १४ सइत्थंप्रतिबुद्धात्माचित्रकेतुर्द्विजोक्तिभिः ॥ गृहांधकूपान्निष्क्रांतःसरःपंकादिवद्विपः १५ कालिंद्यांविधिवत्स्नात्वाकृतपुण्यजलक्रियः ॥ मौनेनसंयतप्राणोब्रह्मपुत्राववंदत १६ अथतस्मैप्रपन्नायभक्तायप्रयतात्मने ॥ भगवान्नारदःप्रीतोविद्यामेतामुवाचह १७ ॥ नारदउवाच ॥ नमस्तुभ्यंभगवतेवासुदेवायधीमहि ॥ प्रद्युम्नायानिरुद्धायनमःसंकर्षणायच १८ नमोविज्ञानमात्रायपरमानंदरूपिणे ॥ आत्मारामायशांतायनिवृत्तद्वैतदृष्टये १९ आत्मानंदानुभूत्यैवसम्यक्त्यक्तोर्मयेनमः ॥ हृषीकेशायमहतेनमस्तेऽनंतमूर्तये २० वचस्युपरतेप्राप्योयएकोमनसासह ॥ अनामरूपश्चिन्मात्रःसोऽव्यान्नःसदसत्परः २१ यस्मिन्निदंयतश्चेदंतिष्ठत्यप्येतिजायते ॥ मृन्मयेष्विवमृज्जातिस्तस्मैतेब्रह्मणेनमः २२

योर्मध्येनारदः हेत्यनेनाधिकारगुणसंपन्नस्यविद्योक्तफलंसाकल्येनफलतीतिध्वनयति १७ चित्तसन्निहितंसंबोध्यतुभ्यंनमइतिवक्ति भगवतइत्यादिविशेषणानिगुणसामग्रीद्योतकानियथासंभवसूह्यानि १८ नित्यनिवृत्ताद्वैतदृष्टिःस्वावतारादौभेददर्शनंयेनसतथातस्मैनिवृत्तद्वैतवृत्तयेइतिपाठनिवृत्तेनद्वैतेनान्यथाज्ञानेनवृत्तिर्वर्तनंयस्यसतथातस्मै नित्यनिवृत्तदेहाद्यहंममाभिमानायेत्यर्थः १९ सम्यक्त्यक्ताःषडूर्मयोयस्येतितस्मै यद्वा अशनायादिषडूर्मिरहिताय योशनायापिपासेशोकंमोहंजरामृत्युमत्येतीतिश्रुतेः २० मंत्रमुपदिशन्ध्यानप्रकारमाह वचसीति वाङ्मनसासहवचस्युपरतेनष्टेचिन्मात्रमनसासह प्राप्यःसदसत्परःस्थूलसूक्ष्मप्रपंचविलक्षणः २१ अलौकिकवस्तुनोलक्षणमंतरेणतज्ज्ञानंदुःसाध्यमितितल्लक्षणमाह यस्मिन्निति इदंजगद्यस्मिंस्तिष्ठत्यप्येतिचयतश्चजायतेअत्रदृष्टांतमाह मृन्मयेष्विति जातिःसामान्यजन्मनोरित्यभिधानात् मृदोजातिर्जन्मयस्यवृक्षादेःसतथायथावृक्षादिराशिर्मृन्मयेषु मृद्विकारेषुपृथिवीपर्वतादिषुतिष्ठत्यप्येतितेभ्योजायतेचतथा । मृज्जातिर्मृत्त्वंमृन्मयेषुघटादिष्विवानुगतमित्यर्थोब्रह्मणोबहुत्वाभावात् एकमेवाद्वितीयमितिश्रुतेःपृथिवीपर्वताश्चैवमृन्मयाःसमुदीरिताः तथामृज्जातयःसर्वेजायंतेस्थावरादयइत्यनेनविरुद्धत्वाच्चानुपपन्नः २२

मनोबुद्धींद्रियासवः मनआदिशब्दवाच्याःरुद्रादयोदेवाः २३ भगवदनुग्रहभावाभावौतद्विषयकज्ञानाज्ञानकारणमित्युक्तंतस्पष्टमाह देहेति यस्यहरेरंशैर्विद्धाःप्रेरितादेहेंद्रियाद्यभिमानिनोदेवाज्ञानादि कर्मसुप्रचरंति प्रवर्तंते अन्यदा यदंशप्रेरणाभावे नैवप्रवर्तंतइत्यन्वयः कथमिव प्रतप्तमंतर्निहितवह्निसामर्थ्याल्लोहंदाहकारणंप्रवर्तते अप्रतप्तंनहि अहंतद्ब्रह्मशरणमेमि कीदृशं देहेंद्रियादिरथानेपु स्थितं द्रष्टृपदेशंसाक्षिनाम २४ २५ २६ २७ २८ ननु विष्णूपासनयाशेषसमीपगमनंकथंसंगच्छतेइतिचेदुच्यते तत्तदेवांतर्यामिविष्णुविषयोपासनयातत्तद्देवसमीपप्राप्त्युपपत्तेःअन्यातर्यामिणंविष्णु मुपास्यान्यसमीपगः भवेद्योग्यतयातस्यपदंवाचाप्नुयान्नरइत्युक्तेः अनेनतत्तत्पदप्राप्तियोग्यश्चेत्सुतरांतत्तद्देवसमीपंगतइत्युक्तंभवति तस्मादत्रचित्रकेतोरनेनप्रत्यक्षविधानेनमुहुर्मुहुःशेषस्यसकाशमभ्य यादितियुज्यते चित्रकेतुनाशेषांतर्यामिविष्णुरुपासितइतिकुतइतिचेत् शेषांतर्यामिणंविष्णुंचित्रकेतुरुपास्यतु शेषाविष्टहरेश्चापिवरान्प्राप्यापसद्गतिमितिवचनबलात् २९ शितिवाससंनीलवस्त्रंक

यन्नस्पृशंतिनविदुर्मनोबुद्धींद्रियासवः ॥ अंतर्बहिश्चविततंव्योमवत्तंनतोऽस्म्यहम् २३ देहेंद्रियप्राणमनोधियोऽमीयदंशविद्धाःप्रचरंतिकर्मसु ॥ नैवा न्यदालोहमिवप्रतप्तंस्थानेषुतद्द्रष्टृपदेशमेति २४ ॐनमोभगवतेमहापुरुषायमहानुभावायमहाविभूतयेसकलसात्वतपरिवृढनिकरकरकमलकुड्मलो पलालितचरणारविंदयुगलपरमपरमेष्ठिन्नमस्ते २५ ॥ श्रीशुकउवाच ॥ भक्तायैतांप्रपन्नायविद्यामादिश्यनारदः ॥ ययावंगिरसासाकंधामस्वायंभुवं विभो २६ चित्रकेतुस्तुविद्यांतांयथानारदभाषिताम् ॥ धारयामाससप्ताहमब्भक्षःसुसमाहितः २७ ततश्चसप्तरात्रांतेविद्ययाधार्यमाणया ॥ विद्या धराधिपत्यंसलेभेऽप्रतिहतंनृपः २८ ततःकतिपयाहोभिर्विद्ययेद्धमनोगतिः ॥ जगामदेवदेवस्यशेषस्यचरणांतिकम् २९ मृणालगौरंशितिवाससंस्फुर त्किरीटकेयूरकटित्रकंकणम् ॥ प्रसन्नवक्त्रारुणलोचनंवृतंददर्शसिद्धेश्वरमंडलैःप्रभुम् ३० तद्दर्शनध्वस्तसमस्तकिल्बिषःस्वस्थामलांतःकरणोऽभ्ययान्मुनिः प्रवृद्धभक्त्याप्रणयाश्रुलोचनःप्रहृष्टरोमानमदादिपूरुषम् ३१ सउत्तमश्लोकपदाब्जविष्टरंप्रेमाश्रुलेशैरुपमेहयन्मुहुः ॥ प्रेमोपरुद्धाखिलवर्णनिर्गमोनैवाशक त्तंप्रसमीडितुंचिरम् ३२ ततःसमाधायमनोमनीषयाबभाषएतत्प्रतिलब्धवाग्असः ॥ नियम्यसर्वेंद्रियबाह्यवर्तनंजगद्गुरुंसात्वतशास्त्रविग्रहम् ३३ ॥ चित्र केतुरुवाच ॥ अजितजितःसममतिभिःसाधुभिर्भवाञ्जितात्मभिर्भवता ॥ विजितास्तेपिचभजतामकामानांयआत्मदोऽतिकरुणः ३४ तवविभवःखलु भगवञ्जगदुत्पत्तिस्थितिलयादीनि ॥ विश्वसृजस्तेंऽशांशास्तत्रमृषास्पर्धंतिपृथगभिमत्या ३५

टित्रंकांचीगुणं कटिसूत्रंसारसनंकटित्रंकटिभूषणमित्यभिधानम् ३० अनस्यवायोरादिःकारणंपुरुषंपौरुषंयस्मिन्सतथातम् ३१ उत्तमश्लोकस्यशेषांतर्यामिणोहरेःपादाब्जयोर्विष्टरंपीठं उपरुद्धोऽखिला नांवर्णानांशब्दोपलक्षणानांनिर्गमोद्गारोयस्यसः ३२ मनीषयाधृतिरूपयाप्रज्ञयाप्रतिलब्धः सम्यक्प्राप्तोवाग्असोवचनवीर्ययेनसतथा सात्वतानांशास्त्रविग्रहस्तत्त्वोपदेशविशेषोयस्यसतथातंसर्वेंद्रिया णांबाह्येषुविषयेषुवर्तमानंव्यापारम् ३३ हेअजित अतिकरुणोयस्त्वमकामानांभजतांसाधूनामात्मदोयस्मादतस्तेसाधवोपिभवताविजिताः किंच जितमनस्कैःसमबुद्धिभिःसाधुभिर्भवानपिजितावशी कृतः चशब्दोनियतत्वंसूचयति ३४ तत्सत्त्वेप्रमाणमाह तवेति जगदुत्पत्त्यादीनितवविभवःस्वरूपलक्षणानिखलुयस्मात्ततस्तत्रतस्यामवस्थायांशास्त्रेणोरथवायां तेभिन्नांशाःविश्वसृजोहंजगदीश्वरो ऽयमस्मीतिपृथक्जगदीश्वरत्वाभिमानेन मृषानिष्प्रयोजनंस्पर्धंतीतिव्यत्यासेनहरेर्माहात्म्यस्यानंतत्वंदर्शयति ३५

तवैविभवइत्यादिनागुणानंत्यमुक्तमधुनाकालदेशानंत्यमाह परमाण्विति त्वंत्रयविधुरःअणुमहन्मध्यपरिमाणरहितोपिस्वतः प्राकृतपरिमाणाभावात् परमाणुपरममहतोरादावंतेंतरेचवर्तितुंशी लमस्यास्तीतिआद्यंतांतरवर्ती परमाणुलक्षणकालावयवस्यपरममहत्कालावयवस्यचमध्यकालावयवस्यचवर्ततेइति सत्त्वानामित्युपलक्षणं घटादीनामप्यादावुत्पत्तेःपूर्वमंतेप्रध्वंसादूर्ध्वंच यत्तेस्वरू पंध्रुवंअव्यभिचारितदेवांतरकालेमध्येकालेपिवर्ततइतिशेषः ३६ यत्रांडकोशोदशगुणोत्तरैःसप्तभिःक्षित्यादिभिरावृतःसएषोंडकोटिभिःसहयत्रभगवतिअणुभ्योणुकल्पःसूक्ष्मात्सूक्ष्मतरोवर्तते तद्धरेःस्वरू पमनंतमितिहेतुगर्भविशेषणं अपरिच्छिन्नत्वाद्युचितमितिभावः ३७ एवंस्वरूपमुक्त्वाऽन्वयव्यतिरेकाभ्यांतज्ज्ञानफलमाह विषयेति विषयतृषःशब्दादिविषयतृष्णावंतः अतएवनरपशवः विभूतीर्ब्र ह्मादिशब्दवाच्याः परंतेषांपातारंज्ञानादिपूर्तिप्रदातारंतेभ्योप्युत्तरं तदनुप्राप्तिसमनंतरं किंचित्कालंफलानुभवानंतरंवा तद्वास्यांततःक्षीयतएवेतिश्रुतेः अराजकुलंपालकेनराज्ञाशून्योजनसमुदा योधर्मविरुद्धानांराज्ञांकुलंवा ३८ कामधियःशब्दादिगुणविषयज्ञानाः अगुणमयेप्रकृतिगुणविकृतदेहादिशून्ये ज्ञानात्मनिरोचिताःत्वद्विषयेनार्पिताःपादिस्युस्तर्हिपुनर्नारोहंतिनोत्पद्यते करंभबीजानि भर्जितधानाः गुणगणतोविषयसमूहादस्यजगतोद्वंद्वजालानिसुखदुःखादीनिभवंतीतिशेषः ३९ दुःखात्मकसंसारानिवृत्तिःकेनस्यादित्याशंक्यभागवतधर्मानुष्ठानेनतन्निवृत्तिःस्यादित्याशयवानाह

परमाणुपरममहतोस्त्वमाद्यंतांतरवर्तीत्रयविधुरः ॥ आदावंतेचसत्वानांयद्ध्रुवंतदेवांतरकालेपि ३६ क्षित्यादिभिरेषकिलावृतःसप्तभिर्दशगुणोत्तरैरंडकोशः ॥ यत्रभगवत्यणुभ्योऽणुकल्पःसहांडकोटिभिस्तदनंतम् ३७ विषयतृषोनरपशवोयेउपासतेविभूतीर्नपरंत्वाम् ॥ तेषामाशिषईशतदनुविनश्यंतियथाऽराजकुलम् ३८ कामधियस्त्वयीशरचितानपुनरारोहंतियथाकरंभबीजानि ॥ ज्ञानात्मन्यगुणमयेगुणगणतोस्यद्वंद्वजालानि ३९ जितमजितवदाभगवतायदाहभागवतंधर्ममनवद्यम् ॥ निष्किंचनायेमुनयआत्मारामायमुपासतेऽपवर्गाय ४० विषममतिर्नयत्रनृणांत्वमहमितिममतवेतिचयोऽन्यत्र ॥ विषमधियारचितःसह्यशुद्धःक्षयिष्णुरधर्मबहुलः ४१ कःक्षेमोनिजपरयोःकियानर्थःस्वपरद्रुहाधर्मेण ॥ स्वद्रोहात्तवकोपःपरसंपीडयाचतथाऽधर्मः ४२ नव्यभिचरतितवेक्षायथाह्यभितोभगवतोधर्मः ॥ स्थिरचरसत्वकदंबेष्वपृथग्धियोयमुपासतेत्वार्याः ४३

जितमिति हेअजितभवान्यदापवर्गायमुनयोयंधर्ममुपासतेतंभागवतधर्ममाह तदाभवतासंसारस्वरूपंजितं भागवतधर्मकथनेनभक्तानांसंसारजयोपायोदर्शितइत्यर्थः ४८ तद्धर्मज्ञानेनाकिंफलमितितत्राह। विषमेति । यस्मिन्धर्मेज्ञातेनृणांत्वमहमित्यादिलक्षणाविषममतिःशास्त्रनिषिद्धबुद्धिर्नस्यात् । मकारादीश्वराधीनंसर्वं । तत्प्रेरितोहंकार्येषुप्रवृत्तोस्मीतिबुद्धिरित्यर्थः । येनधर्मेणयारिमन्त्वयि ज्ञातेवा । इतरेऽन्यत्रविषमधिया यथास्थितवस्तुविपरीतज्ञानेन रचितः अतःअहंममतादिमचुरइत्यर्थः ४१ तज्ज्ञानफलंतमएवेत्याह कइति ननुतर्हियागादिकर्मलक्षणधर्मेणपुरुषार्थःस्यादि तितत्राह निजेतिस्वस्यशरीरक्लेशस्यहेतुना परस्यसंज्ञपनलक्षणहिंसाहेतुना । कुतोनास्तीतितत्राह स्वद्रोहादिति स्वविहितशरीरक्लेशंविनात्महत्यादिद्रोहात्तवाज्ञालंघनलक्षणात् ४२ ननु शिवादिविहितवत्त्वद्विहितस्याप्यन्यथात्वेनत्वद्विहितलक्षणाज्ञाऽतिलंघनदोषानिमित्तकोपाभावोपपत्तेरतस्त्वत्प्रेक्षापिव्यभिचारिण्येवेतितत्राह नेति तत्रकोहेतुरितिपूर्वोक्तंस्मारयति यमिति पूर्वस्मा द्विशिनष्ट्यपृथगिति कुत्रेत्यतउक्तं स्थिरेति स्थावरजंगमप्राणिसमूहेषुयथास्थितदर्शिनः तदुक्तमित्याह आर्याइति तुनातारतम्यमन्ययोगव्यवच्छेदंचाह ४३

मरुधवशीद्रापीआपिउपारितकुर्वंति नफलोपलब्ध्या तस्मादिदमघटीयमानमर्चयंतीतितत्राह नहीति ४४ नेहसंसारतरणेसकृन्नामश्रवणमेवाऽलंकिंपुनर्भवद्दर्शनमितियस्मादथतस्मात्त्वद्दर्शनेनाधुना वयंपरिमृष्टाशयमलाअभूमेतिशेषः नारदवाक्यंचभगवदीक्षायाअव्यभिचरितत्वेलिंगमित्याह सुरऋषिणेति ४५ हेअनंत तावकेननारदेनसमस्तंविदितम् ज्ञातम् । भगवज्ज्ञानअव्यभिचारीतियदुदितं चतत्कथमन्यथाभवति । निगमयति तवेति जगदात्मनोजगदंतर्यामिणःपरमगुरोस्तवजनैश्चेष्टितंकियद्विज्ञाप्यंनकिमपीतिभावः विज्ञापनंहास्यहेतुरित्यत्रदृष्टांतमाह इहेतिइहज्योतिःषु प्रकृष्टप्रकाशस्य सवितुः खद्योतसदृशप्रदेशेएवद्योतःप्रकाशोयेषांतेतथातैः ४६ अस्माभिरिदमेवविज्ञाप्यमित्याह नमइति ४७ इदमपित्वदनुग्रहंविनानशक्यमित्याह यंवाइति श्वसप्राणइतिधातोःप्राणंतमनुप्राणंतीतिश्रुतिवै शब्देनसूचिता चेकितानंजानंतमनुवृत्तयःतत्तद्वस्त्वनुगतज्ञानवंतः उच्चकंतिसम्यक्जानंति सर्षपायतिसर्षपवद्वर्ततेश्रीहरिविवक्षायांसहस्रशीर्षापुरुषइत्युपपत्तेः ४८ अनंतनामप्रवृत्तिनिमित्तक्रियाव त्त्वादनंतः श्रीहरिः । हरिगुणांतकथनदर्शनासमर्थत्वादनंतइत्यर्थः ४९ नारदांगिरोभ्यांयन्ममशासनंतवव्याहृतंतत्करणेन याचममविद्याभ्यस्तातया यच्चममदर्शनंतस्माच्चसंसिद्धोसिप्राप्तापेक्षिता

नहिभगवन्नघटितमिदंत्वद्दर्शनान्नृणामखिलपापक्षयः ॥ यन्नामसकृच्छ्रवणात्पुल्कसकोपिविमुच्यतेसंसारात् ४४ अथभगवन्वयमधुनात्वदवलोकपरिमृष्टाशयमलाः ॥ सुरऋषिणायदुदितंतावकेनकथमन्यथाभवति ४५ विदितमनंतसमस्तंतवजगदात्मनोजनैरिहाचरितम् ॥ विज्ञाप्यंपरमगुरोःकियदिहसवितुरिवखद्योतैः ४६ नमस्तुभ्यंभगवतेसकलजगत्स्थितिलयोदयेशाय ॥ दुरवसितात्मगतयेकुयोगिनांनमःपरमहंसाय ४७ यंवैश्वसंतमनुविश्वसृजःश्वसंतिचेकितानमनुवृत्तयउच्चकंति ॥ भूमंडलंसर्षपायतियस्यमूर्ध्नितस्मैनमोभगवतेऽस्तुसहस्रमूर्ध्ने ४८ श्रीशुकउवाच ॥ संस्तुतोभगवानेवमनंतस्तमभाषत ॥ विद्याधरपतिंप्रीतश्चित्रकेतुंकुरूद्वह ४९ ॥ श्रीभगवानुवाच ॥ यन्नारदांगिरोभ्यांतेव्याहृतंममशासनम् ॥ संसिद्धोऽसितयाराजन्विद्ययादर्शनाच्चमे ॥ ५० ॥ अहंवैसर्वभूतानिभूतात्माभूतभावनः ॥ शब्दब्रह्मपरंब्रह्मममोभेशाश्वतीतनू ॥ ५१ ॥ लोकेविततमात्मानंलोकंचात्मनिसंततम् ॥ उभयंचमयाव्याप्तंमयिचैवोभयंकृतम् ५२

शेषपुरुषार्थोसीत्यर्थः ५० अधुनाऽहंपूर्वोक्तस्थिरीकरणार्थंकिंचिद्विशेषज्ञानायवाकिंचिदुपदिशामीत्यभिप्रेत्याह अहमिति सर्वभूतान्यहमित्यन्वयः वाइत्यनेनसर्वंखल्विदंब्रह्मेतिश्रुतिंसूचयति अभेदोपदेशस्यकोभिप्रायइतितत्राह भूतात्मेति भूतानामंतःस्थित्वादानादिकर्तृत्वात्तद्व्यपदेशः हरिस्तुसर्वभूतानितदंतर्याम्यपेक्षयेतिरमृतेः सत्ताप्रदत्वाच्चतद्व्यपदेशइतिभावेनाह भूतभावनइति भूतानिभावयतिसत्तागतानिकरोतीति अनेनाहमस्मीत्यादिश्रुतिगतानिपदान्यंतर्यामिणिमुख्यवृत्त्याप्रवर्तंतइत्युक्त तथाचोक्तं तिङ्पदानिचसर्वाणिसुप्पदानितथैवच तस्मिन्नेवप्रवर्तंतेमुख्यवृत्त्याविशेषतइति इदंचत्वयावश्यंज्ञातव्यमित्याह शब्देति वेदादिशब्दराशिलक्षणंशब्दब्रह्म सच्चिदानंदलक्षणंपरंब्रह्मेत्युभेद्वेअपिब्रह्मणी ममशाश्वती।तनूप्रतिमास्वरूपभेदेन यावद्ब्रह्मविष्ठितंतावतीवाक्इतिश्रुतेः एर्गानस्योव्ययःसूक्ष्मइतिपूर्वोक्तम् ५१ आत्मानंजीवंलोकेभुवनेअविततमव्याप्तजानीहि लोकंचात्मनिजीवेवासनारूपेणमनसिसंततंनिर्व्यूढंविद्धि विपुलस्यलोकस्यात्मप्रदेशमंतरेणबाह्यव्याप्तयोगात् लोकआत्मेत्युभयमयाब्रह्मरूपेणव्याप्तम् तर्हिजीवलोकयोराधारःकइतितत्राह मयीति उभयंचमयिसमाश्रितमेव कुतःअहमेवोभयाधारइतिसमाधत्स्व ५२

ननुव्याप्ताशात्मानश्चेतनानिर्गुणाश्चेतिश्रुतेःलोकोवितमात्मानामित्यस्यप्रतीतार्थएवाकिंनस्यादित्याशंक्यदृष्टांतानुगुण्यात्कथ्यतइत्यभिप्रेत्याह यथेति यथासुप्तःसन्स्वप्नमनुभवन्पुरुषः विश्वंवास नारूपेणात्मनिस्फुरितं चशब्दाद्भिन्नंपश्यति स्वप्नेआत्मानमेकदेशस्थंमन्यते ननुव्याप्तं स्वप्नादुत्थितःप्रबुद्धोपिस्वदृष्टादिशयनंस्वंमन्यते श्रुतिगतिस्तुपरमात्मविषयत्वेनजीवाच्चिद्गुणाविषयत्वेनवाक ल्प्यते ५३ यथास्वप्नावस्थायांभगवत्कर्तृकत्वात्प्रामाणिकंमायामात्रंतुकार्त्स्न्येनानभिव्यक्तस्वरूपत्वादितिसूत्रात्तथाजाग्रत्प्रभृत्यवस्थाश्च अतःप्रबोधोस्मादित्यभिप्रेत्याह एवमिति यथास्वप्ना वस्थाप्रकृतिशब्दवाच्येश्वरेच्छानिर्मिता तथाजीवस्यसुखोपभोगस्यस्थानानिजागरणादीनिमायामात्राणिभगवदिच्छालक्षणप्रकृतिनिर्मितानिविज्ञाय तासामवस्थानांमध्येनिषण्णस्यजीवस्यसुखोप भोगस्यद्रष्टारंसाक्षिणं परंततोभिन्नं स्मरेदित्यन्वयः अनश्नन्नन्योअभिचाकशीतीतिश्रुतेः ५४ तद्द्रष्टारमित्यत्राजीवात्मनःपरमात्मासम्यग्विविच्यनप्रतीतइतितद्विवक्षार्थमाह येनेति येनप्रसुप्तः प्रस्वापंप्रापितःसन्पुरुषोजीवात्मा तदासुप्त्यवस्थायामात्मनःस्वापंइयंतंकालंकिंचननावेदिषमितिस्वापशब्दोक्तमेवज्ञानंसुखमहमस्वाप्समित्यनुभूतंसुखंचसुखिनंस्वात्मानंचवेदनान्यात्किंचिद्वेद तमा त्मानंनिर्गुणं ब्रह्मज्ञानादिगुणपूर्णं मामवैहीत्यन्वयः ५५ इतोपिजाग्रदाद्यवस्थानुभाविनोजीवाद्भिन्नंब्रह्मेत्याह उभयमिति जाग्रत्सुप्तिश्चेत्युभयंस्मरतोनुभवतःपुंसःजीवस्य प्रस्वापप्रतिबोधयो स्तत्तद्वस्तुपरिज्ञानलक्षणेजाग्रति यदन्वेतिअनुवर्तते स्वप्नमपिप्रतिबुद्धः सुप्तावस्वपनात्तत्तद्वस्त्वपरिज्ञानलक्षणसुप्तौयद्व्यतिरिक्तंस्यात् सर्वज्ञानसंभवात्प्रस्वापःस्वपनंस्वप्नइत्यभिधानात् अन्यथ

**यथासुप्तःपुरुषोविश्वंपश्यतिचात्मनि ॥ आत्मानमेकदेशस्थंमन्यतेस्वप्नउत्थितः ५३ एवंजागरणादीनिजीवस्थानानिचात्मनः ॥ मायामात्राणिवि ज्ञायतद्द्रष्टारंपरंस्मरेत् ५४ येनप्रसुप्तःपुरुषःस्वापंवेदात्मनस्तदा ॥ सुखंचनिर्गुणंब्रह्मतमात्मानमवेहिमाम् ५५ उभयंस्मरतःपुंसःप्रस्वापप्रतिबोधयोः ॥ अन्वेतिव्यतिरिच्येततज्ज्ञानंब्रह्मतत्परम् ५६ यद्येषविस्मृतःपुंसोमद्भावोभिन्नआत्मनः ॥ ततःसंसारएकस्यदेहाद्देहोमृतेर्मृतिः ५७ लब्ध्वेहमानुषींयो निंज्ञानविज्ञानसंभवाम् ॥ आत्मानंयोनबुद्ध्येतनक्वचित्क्षेममाप्नुयात् ५८**

ज्ञानलक्षणप्रस्वापप्रदोक्तेस्वप्नेपियत्व्यतिरिक्तवर्ततेतत्परं ब्रह्मविदाप्नोतिपरंइतिश्रुतेः ततत्वात्तज्ज्ञानंसत्यंज्ञानमनंतंब्रह्मेतिश्रुतेः अनेनसुप्त्यवस्थानुभवीजीवोऽननुभूयसाहित्येनतिष्ठन्परमात्माततो भिन्नइतिज्ञातव्यं यद्वा जीवस्याज्ञानसंभवादस्यतदभावाज्जीवस्याल्पगुणत्वाज्जीवस्यपरिच्छिन्नत्वादस्यापरिच्छिन्नत्वात्तदेवज्ञानंतदेवब्रह्मतदेवपरं तदेवतत्तदुसत्यमाहुस्तदेवब्रह्मपरमंकवीनामिति श्रुतेः ५६ विपक्षेबाधकमाह यदीति यदिपुंसआत्मनोजीवात्भिन्न एषमद्भावः उक्तोममस्थितिप्रकारो विस्मृतस्तर्हि ततस्तयोःसयुजोःसख्यो.जीवात्मपरमात्मनोःएकस्यमर्वभिन्नपरमात्मानं विस्मरतोजीवस्यसंसारःस्यात् किंलक्षणकइतितत्राह देहादिति देहयोगवियोगलक्षणोदेहाद्देहः तदुक्तं सर्वभिन्नंपरात्मानंविस्मरन्संसरेदिहेति सर्वभिन्नइतिविशेषणंविस्मृतस्तर्हितस्यजीवस्यमृते र्मृतिःनित्यदुःखात्मकंतमएवप्राप्यते एतदप्युक्तं अभिन्नंसंस्मरन्यातितमोनास्त्यत्रसंशयइति ५७ मद्भावःमदैक्यलक्षणः स्वस्मादभिन्नइत्यर्थांगीकारो उत्तरश्लोकेनविरुध्यतइत्यभिप्रेत्याहल ब्ध्वेति ज्ञानविज्ञानयोःसंभवोयस्याःसातथाता इहजंबूद्वीपेतत्रापिभारतखंडे त्रिवर्णलक्षणांमानुषीं आत्मानंजीवात्मानंपरमात्मानंच निर्विशेषवादिनाज्ञानेसामान्यविशेषानंगीकारात् व्यावहा रिकस्यप्रामाणिकत्वाच्चेति ज्ञानंशास्त्रार्थविषयं विज्ञानंअनुभवजमित्ययंभेदोपिगतार्थइति ५८

ननुज्ञानेनमोक्षोमाभूद्यज्ञादिकर्मणास्यादिति तत्राह स्मृत्वेति ईहायांयज्ञादिकर्मकरणेपरितःक्लेशंस्मृत्वाततःकर्मण फलविपर्ययंनिरतिशयसुखप्राप्तिंदुःखापरिहारंचपश्यन्ननीहायांसर्वकर्माणिहरौसंन्य स्यज्ञानमार्गेप्रवृत्तौ पश्यन्निरतिशयसुखप्राप्तिंदुःखपरिहारंतयोरमिश्रत्वंवाज्ञात्वा तन्निर्विघ्नतत्ताहशंकर्मविरमेन्नकुर्यादित्यर्थः ५९ अग्निहोत्रादिक्रियाकरणयोग्यौदंपती ततःक्रियातःदुःखस्यअनिवृत्तिः सुखस्यचाप्राप्तिः ६० कर्मविषयविद्याभासे इयंविद्येत्यभिमानिनाम् आत्मनोजीवस्यपरमात्मनश्चवैकुंठादिस्थानतयाव्याप्तिभूताप्रतिमभूतिमत्तयाविलक्षणांजाग्रदादिस्थानत्रयातीतांच ६१ माना भिश्शब्दादिभिःस्वेनतेजसाविशुद्धबुद्धिसामर्थ्यातिशयेनैवज्ञात्वा पुरुषोभवेन्मुक्तइतिशेषः ६२ उक्तज्ञानमन्ययोगाद्यवच्छिनत्ति एतावानेवेति किंतदित्यतउक्तम् यदिति परात्मनएकत्वरयसाभ्या धिक्यराहित्यस्यदर्शनं ६३ तवयोग्यंचैतदेव नान्यदित्याह त्वमेतदिति ६४ चिरस्थितत्वेनपुनरपिप्रश्नःस्यादित्येतस्यहरेरंतर्धानमाह आश्वास्येति ६५ ॥ इतिश्रीभागवतेमहापुराणेषष्ठस्कंधे

स्मृत्वेहायांपरिक्लेशंततःफलविपर्ययम् ॥ नोभयंवाप्यनीहायांपश्यंस्तद्विरमेत्कविः ५९ सुखायदुःखमोक्षायकुर्वातेदंपतीक्रियाः ॥ ततोनिवृत्तिरप्राप्तिर्दुः खस्यचसुखस्यच ६० एवंविपर्ययंबुद्ध्वानृणांविद्याभिमानिनाम् ॥ आत्मनश्चगतिंसूक्ष्मांस्थानत्रयविलक्षणाम् ६१ दृष्टश्रुताभिर्मात्राभिर्विमुक्तःस्वे नतेजसा ॥ ज्ञानविज्ञानसंतृप्तोमद्भक्तःपुरुषोभवेत् ६२ एतावानेवमनुजैर्योगनैपुण्यबुद्धिभिः ॥ स्वार्थःसर्वात्मनाज्ञेयोयत्परात्मैकदर्शनम् ६३ त्वमेतच्छ्रद्ध याराजन्नप्रमत्तोवचोमम ॥ ज्ञानविज्ञानसंपन्नोधारयन्नाशुसिद्ध्यसि ६४ श्रीशुकउवाच ॥ आश्वास्यभगवानित्थंचित्रकेतुंजगद्गुरुः ॥ पश्यतस्तस्यवि श्वात्माततश्चांतर्दधेहरिः ६५ इतिश्रीभागवतेषष्ठस्कंधेषोडशोध्यायः ॥ १६ ॥ श्रीशुकउवाच ॥ यतश्चांतर्हितोऽनंतस्तस्यैकृत्वादिशेनमः ॥ विद्याधरश्चि त्रकेतुश्चचारगगनेचरः १ सलक्षंलक्षवर्षाणामव्याहतबलेंद्रियः ॥ स्तूयमानोमहायोगीमुनिभिःसिद्धचारणैः २ कुलाचलेंद्रद्रोणीषुनानासंकल्पसिद्धि षु ॥ रेमेविद्याधरस्त्रीभिर्गापयन्हरिमीश्वरम् ३ एकदासविमानेनविष्णुदत्तेनभास्वता ॥ गिरिशंददृशेगच्छन्परीतंसिद्धचारणैः ४ आलिंग्यांकेकृतां देवींबाहुनामुनिसंसदि ॥ उवाचदेव्याःशृण्वंत्याजहासोच्चैस्तदंतिके ५ चित्रकेतुरुवाच ॥ एषलोकगुरुःसाक्षाद्धर्मवक्ताशरीरिणाम् ॥ आस्तेमुख्यःस भायांवैमिथुनीभूयभार्यया ६ जटाधरस्तीव्रतपाब्रह्मवादीसतांपतिः ॥ अंकेकृत्यस्त्रियंचास्तेगतह्रीःप्राकृतोयथा ७ प्रायशःप्राकृताश्चापिस्त्रियंरहसि बिभ्रति ॥ अयंमहाव्रतधरोबिभर्तिसदसिस्त्रियम् ८ भगवानपितच्छ्रुत्वाप्रहस्यागाधधीर्नृप ॥ तूष्णींबभूवसदसिसभ्याश्चतदनुव्रताः ९

विजयध्वजकृतटीकायांषोडशोध्यायः ॥ १६ ॥ यथाशास्त्रार्थतत्त्वेनज्ञातःश्रीनारायणोमुक्तिंददाति नान्यथा यथाशास्त्रार्थतत्त्वंयोग्यानामेवज्ञातुंसुशकम् नायोग्यानाम् परोक्षप्रियाइवहिदेवाइतिश्रु तेः दुरवगाहंशास्त्रार्थतत्त्वंहरेःप्रीतिजनकं तथाप्रतिपादनमित्ययंप्रकारःकथ्यतेस्मिन्नध्याये तत्रचित्रकेतोः रुद्राणीशापप्राप्तिप्रकारवक्तुंतावदाह यतश्चेति १ २ कुलाचलेंद्रस्यद्रोणीपुनिम्नतर्गा ष्वतएवस्त्रीणांपुरुषाणांचनानासंकल्पसिद्धिषु ३ ततश्चांकप्रकृतंतत्राह एकदेति ४ दृष्ट्वापिकिमभूत्तत्राह उवाचेति ५ ६ ७ ८ इदंहीश्वरस्येश्वरत्वम् यदन्यैरसत्कारे निर्विकारत्वमि त्याशयेन गिरिशस्यक्षमाप्रकारंवक्ति भगवानपीति अगाधधीरन्यैरज्ञातयत्ताबुद्धिः ९

स्त्रीनिमित्ताऽसत्कारपरिहारःस्त्रियैवकार्यइतिपरमेश्वराभिसंधिंजानतीपार्वतीमतिवक्ति इतीति धृष्टायप्रगल्भाय निर्जितआत्माभिमानः आत्मदर्पोयेनसतथा आत्मविज्ञानंवायेनसतथातस्मै अभिमान स्तुविज्ञानेप्रणयेदर्पहिंसयोरितियादवः १० ११ अयंशापयोग्यापराधइतिज्ञापयितुमित्यभिप्रेत्याह नवेदेति आतिवर्तिनमसंप्रज्ञातसमाधित्वेनवर्तमानं १२ अनिषेधेकारणमाह एषामिति एषांब्रह्मादीनांपक्षेस्वावराणामिंद्रादीनामनुध्येयंपदाब्जयुग्मं कृद्योगेषष्ठीयंनित्यसंबंधद्योतनायवा तदवराणामित्याचार्यैर्व्याख्यातं अत्रकिमवलंब्योच्यतइतिचेत्र विष्णुब्रह्मप्राणवीद्रास्तद्वा रानप्यृतेहरः ध्येयोहरेःपार्षदाद्यैर्ध्यायन्हरिचतुर्मुखौ प्राणमेषांतथादारान्नस्वतंत्रतयाकचिदिति वचनबलाश्रयणात् नतुब्रह्मादीनामनुध्येयपदाब्जयुग्ममिति बहुप्रमाणविरोधात् अतएवास्माभिः शास्त्रार्थोसौ परोक्षत्वेनदेवप्रियत्वाद्दुरवगाहइत्यभिहित यस्मादयमपराधीतत्तस्माद्दंड्यः १३ किंदंडमर्हतीतितत्राह नायमिति अनर्हत्वेकारणमाह संभावितात्मेति १४ तदर्थकउपायइ तितत्राह अतइति इहअमुत्रस्थितानां १५ शप्तस्यसद्भक्तस्यतदुपसत्तिप्रकारमाह एवमिति १६ पूर्वदिष्टंपूर्वजन्मनियतपुण्यपापलक्षणकर्मदेवैर्मनुष्याययत्प्रोक्तंविहिततस्यमर्त्यस्यतत्कर्मैवसु

इत्येतद्वीर्यविदुषिब्रुवाणेबहुशोभनम् ॥ रुषाहदेवीधृष्टायनिर्जितात्माभिमानिने १० पार्वत्युवाच ॥ अयंकिमधुनालोकेशास्तादंडधरःप्रभुः ॥ अस्मद्वि धानांदुष्टानांनिर्लज्ज्ञानांनिषेधकृत् ११ नवेदधर्मंकिलपद्मयोनिर्नब्रह्मपुत्राभृगुनारदाद्याः ॥ नवैकुमारःकपिलोमनुश्चयेनोनिषेधंत्यतिवर्तिनंहरम् १२ एषामनुध्येयपदाब्जयुग्मंजगद्गुरुंमंगलमंगलंस्वयम् ॥ यःक्षत्रबंधुःपरिभूयसूरीन्प्रशास्तिधृष्टस्तदयंहिदंड्यः १३ नायमर्हतिवैकुंठपादमूलोपसर्पणम् ॥ संभावितात्मानिस्तब्धःसाधुभिःपर्युपासितम् १४ अतःपापीयसींयोनिमासुरींयाहिदुर्मते ॥ यथेहभूयोमहतांनकर्ताऽमुत्रकिल्बिषम् १५ श्रीशुकउवा च ॥ एवंशप्तश्चित्रकेतुर्विमानादवरुह्यसः ॥ प्रसादयामाससतींमूर्ध्नानम्रेणभारत १६ ॥ चित्रकेतुरुवाच ॥ प्रतिगृह्णामितेशापमात्मनोंजलिनांबिके ॥ देवैर्मर्त्याययत्प्रोक्तंपूर्वदिष्टंहितस्यतत् १७ संसारचक्रएतस्मिन्जंतुरज्ञानमोहितः ॥ भ्राम्यन्सुखंचदुःखंचभुंक्तेसर्वत्रसर्वदा १८ नैवात्मानपरश्चापिक र्तास्यात्सुखदुःखयोः ॥ कर्तारंमन्यतेऽप्राज्ञआत्मानंपरमेवच १९ गुणप्रवाहएतस्मिन्कःशापःकोन्वनुग्रहः ॥ कःस्वर्गोनरकःकोवाकिंदुःखंसुखमेवच २० एकःसृजतिभूतानिभगवानात्ममायया ॥ एषांबंधंचमोक्षंचसुखंदुःखंचनिष्कलः २१

खदुःखयोःकारणमितिशेषः १७ तदेवविशिनष्टि संसारइति सर्वत्रजन्मसु १८ ननु सुखदुःखोत्पत्तौ किंभोक्ता कारणमुतेतर इत्याशंक्यपद्भगवताक्षप्तंतदेवनियतंकर्मकारणंज्ञानीमन्यते तत्राज्ञानीस्व मन्यंवामन्यतइत्याह नैवेति आत्मास्वयं परःस्वस्मादितरः अंहरिंजानातीत्यज्ञःश्रीहरितत्त्वज्ञः परमात्मानमेवमन्यतइतिचयोजनाऽवगंतव्या यत्तद्भगवताक्षप्तंतदेवनियतंभवेदितिवचनात् १९ यतएवं श्रीहरिणाक्षप्तमायातीत्यतःशापादिप्राप्तौदुःखादिकंनकार्यमित्याह गुणेति गुणप्रवाहेसंसारेशापादेःश्रीहरीच्छाधीनप्राचीनदुष्कृतसुकृतयोःकारणत्वात्स्वर्गस्यचानित्याल्पसुखत्वान्नरकस्यकिंचिद्दुःखत्वाक्ष पणसंभवात् सुखादेश्चाल्पत्वादनित्यत्वाच्च तदुक्त अतोन्येषांवरःशापोगुणदोषःप्रकल्पिता स्वतःप्राप्ताभेदकृतिर्वासनारूपिणोयथा विद्यमानस्यमनसिपुनःस्वप्नेपिदर्शनं भगद्वशतायस्मात्सर्वेषांज्ञे यमेवतादिति स्वतःस्वतंत्राद्धरेःप्राप्ताकरणोभेदकृतिर्दृश्यतइतिशेषः अनेनैतदुक्तंभवति मनसिविद्यमानस्यवासनारूपिणोवस्तुनःस्वप्नेयथादर्शनं तथापरादनित्यसुखादिदर्शनं स्यात् नचैतत्स वैस्वाधीनंकिंतुहरीच्छाधीनमिति २० ननु हरीच्छादिनियतत्वंशापादेःकस्मात्कल्प्यतइतितत्राह एकइति कर्मादिसत्तापीशेच्छाधीनेतिसूचनायैकइति आत्ममाययेत्यनेनानन्यनियतइतिसूचितं २१

हरेःसमत्वंचस्वभक्तसेवानतिरेकेनफलदातृत्वंशत्रोरप्यपराधानतिरेकेण दंडकरणत्वं सेवायोग्यातिरेकेणस्वानामपिनदास्यति अपराधातिरेकेणनान्यस्यातःसमोहारिरितिवचनात् २२ यद्यपिविशेष तोनुरागादिकंनास्ति तथापि तस्यहरेःशक्तेर्विसर्गोविशिष्टस्यभावएषांजीवानांसुखाद्यर्थेकल्पतइत्यन्वयः यद्यपिभगवानेवमुख्यकर्तातथापितेषांपूर्वकर्मणांशक्तीनांविविधसर्ग.समूहोयेषांशरीरिणामिति वा २३ अथतस्मादीश्वराधीनत्वात् तर्हिकिमाकांक्षसीतितत्राह यदिति २४ २५ २६ हरेर्भृत्यभृत्यानामाहात्म्यंदेहावियोगलक्षणावस्थाप्राप्तावप्यत्रासलक्षणं २७ अस्यैवनैतादृश माहात्म्यं कित्वन्येषामस्तीत्यभिप्रेत्याह नारायणेति कुतोनबिभ्यतीतितत्राह स्वर्गेति २८ द्वंद्वानीत्युक्तविवरणं सुखमित्यादि ईश्वरलीलयादेहसयोगाद्द्वंद्वानिभवंतीतिशेषः २९ ननु देहसब धाद्द्वंद्वादीनिसंत्वस्य श्वशृगालाद्याकारेणभेदःकिंकृतइतितत्राह अविवेककृतइति इहात्मनिजीवे श्वायंशृगालोयमित्याद्याकारनिमित्तव्यवहारभेदःपुंसोऽविवेकेनहरेःस्वस्यचस्वरूपविषयज्ञानाभा

नचास्यकश्चिद्दयितःप्रतीपोनज्ञातिबंधुर्नपरोनचस्वः ॥ समस्यसर्वत्रनिरंजनस्यकुतोनुरागःकुतएवरोषः २२ तथापितच्छक्तिविसर्गएषांसुखायदुःखाय हिताहिताय ॥ बंधायमोक्षायचमृत्युजन्मनोःशरीरिणांसंसृतयेचकल्पते २३ अथप्रसादयेनत्वांशापमोक्षायभामिनि ॥ यन्मन्यसेह्यसाधूक्तंममतत्क्ष म्यतांसति २४ बादरायणिरुवाच ॥ इतिप्रसाद्यगिरिशौचित्रकेतुररिंदम ॥ जगामस्वविमानेनपश्यतोःस्मयतोस्तयोः २५ ततस्तुभगवान्रुद्रोरुद्रा णीमिदमब्रवीत् ॥ देवर्षिदैत्यसिद्धानांपार्षदानांचशृण्वताम् २६ ॥ देवदेवउवाच ॥ दृष्टवत्यसिसुश्रोणि हरेरद्भुतकर्मणः ॥ माहात्म्यंभृत्यभृत्यानांनि स्पृहाणांमहात्मनाम् २७ नारायणपराःसर्वेनकुतश्चनबिभ्यति ॥ स्वर्गापवर्गनरकेष्वपितुल्यार्थदर्शिनः २८ देहिनांदेहसंयोगाद्द्वंद्वानीश्वरलीलया ॥ सुखंदुःखंमृतिर्जन्मशापोनुग्रहएवच २९ अविवेककृतःपुंसोह्यर्थभेदइहात्मनि ॥ गुणदोषविकल्पश्चभिदेवस्वप्नकल्पिता ३० वासुदेवेभगवतिभक्तिमुद्व हतांनृणाम् ॥ ज्ञानविज्ञानवीर्याणांनहिकश्चिद्व्यपाश्रयः ३१ नाहंविरिंचोनकुमारनारदौनब्रह्मपुत्रामुनयःसुरेशाः ॥ विदामयस्येहितमंशकांशकानत त्स्वरूपंपृथगीशमानिनः ३२ नह्यस्यातिप्रियःकश्चिन्नाप्रियःस्वःपरोपिवा ॥ आत्मत्वात्सर्वभूतानांसर्वभूतप्रियोहरिः ३३ तस्यचायंमहाभागश्चित्रकेतुः प्रियोऽनुगः ॥ सर्वत्रसमदृक्शांतोह्यहंचैवाच्युतप्रियः ३४ तस्मान्नविस्मयःकार्यःपुरुषेषुमहत्सुच ॥ महापुरुषभक्तेषुशांतेषुसमदर्शिषु ३५ ॥ श्रीशुक उवाच ॥ इतिश्रुत्वाभगवतःशिवस्योमाभिभाषितम् ॥ बभूवशांतधीराजन्देवीविगतविस्मया ३६ इतिभागवतोदेव्याःप्रतिशप्तुमलंक्षमः ॥ मूर्ध्नासं जगृहेशापमेतावत्साधुलक्षणम् ३७

वेनकृतोयस्मात्तस्मादियमनर्थपरंपरा किंचात्मन्ययंगुणोस्त्ययंदोषोस्तीतिविकल्पश्चाविवेकेनकृतःकथमिवस्वप्नेकल्पितावासनोपादानकृतागजादिलक्षणाभिदेवअनित्यत्वादेवैतत्साम्यं नतुमि थ्यात्वात् अन्यथार्थक्रियायोगइति ३० तर्हिअस्यानर्थस्यानिवृत्तौकिंसाधनमितितत्राह वासुदेवइति अन्यःकश्चिद्विशिष्टाश्रयोनास्तिभक्तिज्ञानेएवेतिशेषः ३१ देवदत्तज्ञानवदस्यज्ञानंनसुसाधन मित्याह नाहमिति ३२ आत्मत्वात्स्वामित्वात् नहिसर्वभूतस्वामिनःस्वपरभेदकल्पनायुक्ता हेत्वंतरमाह सर्वभूतेति ३३ ३४ ३५ ३६ अथप्रसादयेनत्वाशापमोक्षायेत्यस्यार्थश्च तुर्धासंभाव्यते शापोभिमतइतिकृत्वातन्मोक्षायाप्रसादनंअनिष्टोप्यत्रकिंत्वेनशापोभियतइतिकृत्वावा तदाभिभवशक्तइतिकृत्वेति आहोस्वित् प्रतिशापदानसमर्थइतिकृत्वेतिकोयमर्थोनेनाशंकित

इतितत्राह प्रतिशप्तुमिति मूर्धासंजग्रहइत्यनेनाद्वितीयोभिमतइ तिज्ञायते प्रश्नपस्यसाधुलक्षणत्वात् अस्यचमा गुष्वेकत्वाच्चतुर्थपक्षस्योर्वरितत्वेनांगीकारो नभवति देवाएवतदन्येभ्यः शक्तानास्त्यत्रसश पइतिवचनात् अन्नयःकाश्चिद्विशेषोस्तीतिमतं अशक्ताअपिशक्तानांशक्ताःशापादिषुस्फुट तथाप्यशक्तैर्विहिताःशापाद्याःशक्तिमत्सुच अत्यल्पाअल्पकालाश्चनसम्यक्प्रभवतिच यत्नेनापोहितुंशक्त्पाउत्त मैस्तुनसंशय उत्तमेषुक्ताःशापाःकर्तॄणांज्ञानपुण्ययोःनिःशेषेणनिहतारइत्यादि ३७ कुत्रास्यजन्माभूदत्राह जज्ञइति ३८ परमप्रमेयमुपसंहरति एतदिति वृत्रस्य यच्चरितमापरिपृच्छसि किंच सर्वं एतत्सर्वं किंच तस्यासुरजातेरासुरवंशेजननस्ययत्कारणंचैतच्चकथितमितिशेषः ३९ फलमाह इतिहासमिति ४० शृंखलादिबंधमोक्षोपिबंधमोक्षःस्यात् नतुसंसारबंधमोक्षेणवैकुंठलोकप्राप्तिरस्मादव गंतव्येतिशंकित्वा कालविशेषेइतिकर्तव्येनसास्यादित्याह। यएतदिति ४१ इतिश्रीभा०षष्ठस्कंधेविज०टीकायांसप्तदशोऽध्यायः ॥१७॥ अस्मिन्नध्यायेपूर्वोक्तसृष्टिशेषंनिरूपयति पृश्निरिति तुशब्दात्पूर्वस्या

जज्ञेत्वष्टुर्दक्षिणाग्नौदानवींयोनिमाश्रितः ॥ वृत्रइत्यभिविख्यातोज्ञानविज्ञानसंयुतः ३८ एतत्तेसर्वमाख्यातंयन्मांत्वंपरिपृच्छसि ॥ वृत्रस्यासुरजातेश्च कारणंभगवन्मतेः ३९ इतिहासमिमंपुण्यंचित्रकेतोर्महात्मनः ॥ माहात्म्यंविष्णुभक्तानांश्रुत्वाबंधाद्विमुच्यते ४० यएतत्प्रातरुत्थायश्रद्धयावाग्यतः पठेत् ॥ इतिहासंहरिंस्मृत्वासयातिपरमांगतिम् ४१ ॥ इतिश्रीभागवतेषष्ठस्कंधेसप्तदशोऽध्यायः ॥ १७ ॥ श्रीशुकउवाच ॥ पृश्निश्चपत्नीसवितुःसा वित्रींव्याहृतींत्रयीम् ॥ अग्निहोत्रंपशुंसोमंचातुर्मास्यंमहामखान् १ सिद्धिर्भगस्यभार्यांगमहिमानंविभुंप्रभुम् ॥ आशिषंचवरारोहांकन्यांप्रासूतसुव्रताम् २ धातुःकुहूःसिनीवालीराकाचानुमतिस्तथा ॥ सायंदर्शमथप्रातःपूर्णमासमनुक्रमात् ३ अग्नीन्पुरीषानाधत्तक्रियायांसमनंतरः ॥ चर्षणीवरुणस्यासीद्य स्यांजातोभृगुःपुनः ४ वाल्मीकिश्चमहायोगीवल्मीकादभवत्किल ॥ अगस्त्यश्चवसिष्ठश्चमित्रावरुणयोर्ऋषी ५ रेतःसिषिचतुःकुंभेउर्वश्याःसन्निधौद्रुतम् रेवत्यांमित्रउत्सर्गमरिष्टंपिप्पलंव्यधात् ६ पौलोम्यामिंद्रआधत्तत्रीन्पुत्रानितिनःश्रुतम् ॥ जयंतमृषभंतातृतीयंमीढुषंप्रभुः ७ उरुक्रमस्यदेवस्यमाया वामनरूपिणः ॥ कीर्तौपत्न्यांबृहच्छ्लोकास्तस्यासन्सौभगादयः ८ तत्कर्मगुणवीर्याणिकश्यपस्यमहात्मनः ॥ पश्चाद्वक्ष्यामहेऽदित्यांयथैवावततारह ९ अथकश्यपदायादान्दैतेयान्कीर्तयामिते ॥ यत्रभागवतःश्रीमान्प्रह्लादोबलिरेवच ॥ १० ॥ दितेर्द्वावेवदायादौदैत्यदानववंदितौ ॥ हिरण्य कशिपुर्नामहिरण्याक्षश्चकीर्तितौ ११

त्फलविशेषमाह सावित्रीगायत्र्यभिमानिनीत्युत्तरत्राप्येवमनुसंधेयं १ २ चंद्रेदृष्टेसिनीवालीचंद्रेनष्टकलेकुहूः धातुःक्रियानामभार्याः याःकुहूसिनीवाल्याद्याः ताअधत्त ३ समनंतरोविधाताच क्रियायां भार्यायांपुरीषाख्यानग्नीनाधत्त वरुणनाम्नःसूर्यस्यवारुणीनामभार्या पूर्वंब्रह्मणोजातत्वात्पुनरित्युक्तं ४ वाल्मीकिश्चवरुणवीर्याद्वल्मीकादभूत् ब्रह्मजोवसिष्ठश्चपुलस्त्यजोऽगस्त्यश्चद्वौऋषीपुनर्मित्राव रुणयोर्जातौ ५ तयोर्जन्मप्रकारमाह रेतइति उर्वश्यादर्शनात्सत्सन्निधौद्रुतंस्कन्नरेतस्तदनंतरंमित्रावरुणौकुंभेसिषिचतुः तस्मादुभावपिकुंभसंभवावितिप्रसिद्धिः ६ ७ ८ महात्मन कश्यपस्यपत्न्याम दित्यांयथाऽसावुरुक्रमोवततार तत्कर्मादीनिपश्चादष्टमस्कंधेवक्ष्यामइत्यन्वयः ९ अथमंगलमस्तु ननुदैत्यवंशवर्णनंकिमर्थंक्रियतेतत्कथनस्यश्रेयःसाधनत्वानुपयोगित्वादितितत्राह यत्रेति यत्रादितिस तानेमहाद्बलिचरितकीर्तनश्रवणाभ्यांश्रेयःसाधनत्वसंभवादित्यर्थः १० ११

१२ विप्रचित विप्रचितेःसकाशाद्राहुंसुतम् १३ १४ १५ तस्यविरोचनस्य १६ ततोबलेस्तस्यानुभाव पश्चादष्टमस्कंधे अनुभावमितिपाठेभिधास्यतेतद्दिष्यति व्यासइतिशेषः अथंजनइति वा १७ यस्यबाणस्यपार्श्वे १८ सात्मतासमानजातितासोदरत्वम् १९ साधुपुण्यम् २० २१ तद्वचःतन्निभृतेनतस्मिन्स्निग्धेन सत्रायणःसत्रेप्रधानः सर्वदर्शनःसर्वज्ञः २२ पक्षपाततया कर्मकरःपार्ष्णिग्राहस्तेनशोकसमर्दीप्तेन २३ अक्लिन्नहृदयंअनार्द्रहृदयं स्वपेनिद्राकुर्या २४ वाशब्दोपिशब्दार्थः ईशाभिहितस्यईशोहंराजाहमित्यादिशब्दवाच्यस्यापियस्यदेहस्यातेमर णोत्तरकाले कृमिविड्भस्मसंज्ञामेवचिरकालावस्थानेकृमिरितिसंज्ञा श्वादिभिर्भक्षितेविड्संज्ञा वन्हिदाहेभस्मसंज्ञा तत्कृतेतस्यदेहस्यार्थेभूतध्रुक्सर्वप्राणिहिंसकःस्वार्थस्वप्रयोजनंकिंवेद नकिमपिवे

हिरण्यकशिपोर्भार्याकयाधुर्नामदानवी ॥ जंभस्यतनयादत्तासुषुवेचतुरःसुतान् १२संह्लादंप्रागनुह्लादंप्रह्लादंह्लादमेवच ॥ तत्स्वसासिंहिकानामराहुंविप्र चित्तोग्रहीत् १३ शिरोऽहरद्यस्यहरिश्चक्रेणपिबतोऽमृतम् ॥ संह्लादस्यमतिर्भार्यासूतपंचजनंततः १४ ह्लादस्यधमनिर्भार्यासूतवातापिमिल्वलम् ॥ योऽगस्त्यायात्यतिथयेपेचेवातापिमिल्वलः १५ अनुह्लादस्यसूर्म्यायांबाष्कलोमहिषस्तथा ॥ विरोचनस्तुप्राह्लादिर्बलिस्तस्याभवत्किल १६ बाणज्येष्ठंपुत्रशतमशनायांततोभवत् ॥ तस्यानुभावःसुश्लोक्यःपश्चादेवाभिधास्यते १७ बाणस्त्वाराध्यगिरिशंलेभेतद्गणमुख्यताम् ॥ यत्पार्श्वेभगवा नास्तेअद्यापिपुरपालकः १८ मरुतश्चदितेःपुत्राश्चत्वारिंशन्नवाधिकाः ॥ तआसन्नप्रजाःसर्वेनीताइंद्रेणसात्मताम् १९ ॥ राजोवाच ॥ कथंतआसुरं भावमपोह्योत्पत्तिकंगुरो ॥ इंद्रेणप्रापिताःसात्म्यंकिंनुसाधुकृतंहितैः २० इमेश्रद्दधतेविद्वन्नृषयोहिमयासह ॥ परिज्ञानायभगवंस्तन्नोव्याख्यातुमर्ह सि २१ ॥ सूतउवाच ॥ तद्विष्णुरातस्यसबादरायणिर्वचोनिशम्यादृतमर्थवन्मुनिः ॥ सभाजयंस्तन्निभृतेनचेतसाजगादसत्रायणसर्वदर्शनः २२ श्रीशुकउवाच ॥ हतपुत्रादितिःशक्रपार्ष्णिग्राहेणविष्णुना ॥ मन्युनाशोकदीप्तेनज्वलंतीपर्यचिंतयत् २३ कदानुभ्रातृहंतारमिंद्रियाराममुल्बणम् ॥ अक्लिन्नहृदयंपापंघातयित्वास्वपेसुखम् २४ कृमिविड्भस्मसंज्ञासीद्यस्येशाभिहितस्यवा ॥ भूतध्रुक्तत्कृतेस्वार्थंकिंवेदनिरयोयतः २५ आशासान स्यतस्येदंध्रुवमुन्नद्धचेतसः ॥ मदशोषणमिंद्रस्यभूयाद्येनसुतोहिमे २६ इतिभावेनसाभर्तुराचचारासकृत्प्रियम् ॥ शुश्रूषयानुरागेणप्रश्रयेणदमेनच २७ भक्त्यापरमयाराजन्मनोज्ञैर्वल्गुभाषितैः ॥ मनोजग्राहभावज्ञासुस्मितापांगवीक्षणैः २८ एवंस्त्रियाजडीभूतोविद्वानपिविदग्धया ॥ बाढमित्याहविवशो नतच्चित्रंहियोषिति २९ विलोक्यैकांतभूतानिभूतान्यादौप्रजापतिः ॥ स्त्रियंचक्रेस्वदेहार्धंययापुंसांमतिर्हृता ३० एवंशुश्रूषितस्तातभगवान्कश्यपः स्त्रिया ॥ प्रहस्यपरमप्रीतोदितिमाहाभिनंद्यच ३१

देत्यन्वयः यःस्वार्थंकुरुतेसवेदकिं ज्ञानवान्किं नभवतीत्यर्थइतिवा । कुतइतितत्राह निरयइति निर्गतंअयमिष्टप्रदंदैवंयस्मात्सतथातादृशोभवतीतियतस्तस्माद्यतःस्वरूपाज्ञानाद्वा भूतद्रोहाद्वा २५ इदंजगत्ध्रुवमित्याशासानस्यवांछतःउद्धतबुद्धेरिंद्रस्यमदशोषणंयेनसुतेनस्यत्ससुतोमेस्यात् २६ इतिभावेनाभिप्रायेण २७ २८ २९ जगदादौप्रजापतिर्ब्रह्मा भूतान्येकांतभूतानि परस्परस्नेहर हितानि केवलंमृत्युभूतानि विलोक्य मिथःस्नेहबंधार्थंस्वशरीरार्धात्स्त्रियंचक्रेससर्जेत्यन्वयः ३० ३१

मर्तरिस्त्रीणामर्थेसुप्रीतेसतिकिंकामः पुरुषार्थोऽगम्यःआशुमशक्यइत्यन्वयः ३२ ननु तदेतत्प्रेयइतिश्रुतेरविगानेनसर्वजनस्यपरमेष्टदेवताश्रीधरइतियतःकथंपतिरेवनारीणामिष्टदेवतेतिविशेष्योच्यतइातत
त्राह मानसइति वासुदेवः मानसःसर्वभूतानांमानसोमनसिस्थितःसन्मनसापूज्यः कोवासुदेवइतितत्राह श्रियइति ३३ एतदेवविशदयति सइति वासुदेवएवनामरूपाभ्यांविविधत्वेनकल्पितैर्देवतालिंगै
र्देवताविग्रहैःविशेषतः सन्निहितत्वेनस्त्रीभिः पुंभिश्चेज्यते तत्रस्त्रीभिः पतिसन्निहितत्वेनपूज्यतेतदर्थंपतिरूपधृगिति पुरुषैस्तुदेवतालिंगनामरूपत्वेनेति लिंगंलक्षणंविग्रहश्चोच्यते ३४ यस्मात्पतावा
हितईशस्तस्मात्पतिपूजनेनभगवानेवपूजितःस्यादित्युपसंहरति तस्मादिति पतिंपतिस्थम् ३५ इदम्भावेनपतिस्थितःपरमात्मामह्यंप्रसीदत्वितिबुद्ध्या ३६ अमृत्युमनश्वरम् ३७ ३८ ३९

कश्यपउवाच ॥ वरंवरयवामोरुप्रीतस्तेहमनिंदिते ॥ स्त्रीणांभर्तरिसुप्रीतेकःकामइहचागमः ३२ पतिरेवहिनारीणांदैवतंपरमंस्मृतम् ॥ मानसःसर्वभू
तानांवासुदेवःश्रियःपतिः ३३ सएवदेवतालिंगैर्नामरूपविकल्पितैः ॥ इज्यतेभगवान्पुंभिःस्त्रीभिश्चपतिरूपधृक् ३४ तस्मात्पतिव्रतानार्यःश्रेयस्कामाः
सुमध्यमे ॥ यजंतेऽनन्यभावेनपतिमात्मानमीश्वरम् ३५ सोहंत्वयार्चितोभद्रेईदृग्भावेनभक्तितः ॥ किंतेसंपादयेकाममसतीनांसुदुर्लभम् ३६ दितिरु
वाच ॥ वरदोसियदिब्रह्मन्पुत्रमिंद्रहणंवृणे ॥ अमृत्युंमृतपुत्राहंयेनमेघातितौसुतौ ३७ निशम्यतद्वचोविप्रोविमनाःपर्यतप्यत ॥ अहोअधर्मःसुमहान
द्यमेसमुपस्थितः ३८ अहोअर्थेंद्रियारामोयोषिन्मय्येशमायया ॥ गृहीतचेताःकृपणःपतिष्येनरकेध्रुवम् ३९ कोतिक्रमोनुवर्तंत्याःस्वभावमिहयो
षितः ॥ धिङ्मांबताबुधंस्वार्थेयदहंत्वजितेंद्रियः ४० शरच्चंद्रोपमंवक्त्रंवचश्चश्रवणामृतम् ॥ हृदयंक्षुरधाराभंस्त्रीणांकोवेदचेष्टितम् ४१ नहिकश्चित्प्रि
यःस्त्रीणामंजसास्वाशिषात्मनाम् ॥ पतिंपुत्रंभ्रातरंवाघ्नंत्यर्थेघातयंतिहि ४२ प्रतिश्रुतंददामीतिवचस्तन्नमृषाभवेत् ॥ वधंनार्हतिचेंद्रोपितत्रेदमुपकल्प
ये ४३ इतिसंचिंत्यभगवान्मारीचःकुरुनंदन ॥ उवाचकिंचित्कुपितआत्मानंचविगर्हयन् ४४ कश्यपउवाच ॥ पुत्रस्तेभवितामद्रेइंद्रहादेवबांधवः ॥
संवत्सरंव्रतमिदंयद्यंजोधारयिष्यसि ४५ दितिरुवाच ॥ धारयिष्येव्रतंब्रह्मन्ब्रूहिकार्याणियानिमे ॥ यानिचेहनिषिद्धानिनव्रतंघ्नंतियान्युत ४६ कश्य
पउवाच ॥ नहिंस्यात्सर्वभूतानिनशपेन्नानृतंवदेत् ॥ नच्छिंद्यान्नखरोमाणिनस्पृशेद्यदमंगलम् ४७ नाप्सुस्नायान्नकुप्येतनसंभाषेतदुर्जनैः ॥ नवसीताधौत
वासःस्रजंवाविधृतांक्वचित् ४८ नोच्छिष्टंचंडिकान्नंचसामिषंवृषलाहृतम् ॥ भुंजीतोदक्ययादृष्टंपिबेन्नांजलिनात्वपः ४९ नोच्छिष्टास्पृष्टसलिलासंध्य
योर्मुक्तमूर्धजा ॥ अनर्चितासंयतवाक्नासंवीताबहिश्चरेत् ५० नाधौतपादाप्रयतानार्द्रपान्नाप्युदक्शिराः ॥ शयीतनापराङ्नान्यैर्ननग्नानचसंध्ययोः ५१

स्वभावंगुप्तचौर्यभावमनुवर्तमानायाअतिक्रमोऽन्यायः स्वभावंसौशील्यमनुवर्तत्याइतिवा ४० ४१ स्वार्थेआशीःषुआत्मायासांतास्तथातासांस्वाशिषमिच्छंतीनामित्यर्थः ४२ ४३ ४४ देवानांबंधुभूतः
४५ ४६ ४७ अधौतवासःअनिर्णिक्तवस्त्रं नवसीत नाच्छादयेत् विधृतामन्योपभुक्ताम् ४८ चंडिकान्नंसप्तमातृभ्योर्पितमन्नं पिपीलिकामूषिकाभोज्यं उदक्ययारजस्वलया ४९ अनर्चितालंकाररहि
ताअसंवीतामावरणादिरहिता ५० अपराक्पश्चिमशिरानशयीत ५१

मातराशात्प्रातःकालभोजनात्पूर्वं ५२ वरवतीःभर्तृसहिताःपतिमभ्यर्च्योपतिष्ठेरस्तुतिंकुर्यात्पतिस्थितंपञ्चमात्मानंकोष्ठगतंहृदिगतंध्यायेत् स्वबाह्यांतरगतंवा नाम्नापुंसवनम् ५३ ५४ ५५ मातृष्वसुःमातुरदित्याःस्वसुर्दित्याः ५६ ५७ ५८ ५९ ६० योगमायायायोगसामर्थ्येन ६१ ६२ जिघांससि हंतुमिच्छसि ६३ माभैष्ट भयंमाकुरुध्वं कौशिकइंद्रः मरुतांगणानाह ६४ ६५ साम्यतांसमानरूपतांहरिःश्रीनारायणोदित्याकिंचिदूनंसंवत्सरमर्चितोयदतःसाम्यतांयातीतिकिमुकुतःपुरुषःसकृत्सपूज्यसाम्यतांयातितस्मात् ६६ इंद्रेणसजूःसह अश्विभ्यामुषसासजूरित्यादौदृष्ट

धौतवासाःशुचिर्नित्यंसर्वमंगलसंयुता ॥ पूजयेत्प्रातराशात्प्राक्गोविप्रान्श्रियमच्युतम् ५२ स्त्रियोवरवतीश्चार्चेत्स्रग्गंधबलिमंडलैः ॥ पतिंचार्च्योपतिष्ठेतध्यायेत्कोष्ठगतंचतम् ५३ संवत्सरंपुंसवनंव्रतमेतदविप्लुतम् ॥ धारयिष्यसिचेत्तुभ्यंशक्रहाभवितासुतः ५४ ॥ श्रीशुकउवाच ॥ बाढमित्यभ्युपेत्याथदितीराजन्महामनाः ॥ कश्यपाद्गर्भमाधत्तव्रतंचांजोदधारसा ५५ मातृष्वसुरभिप्रायमिंद्रआज्ञायमानद ॥ शुश्रूषणेनाश्रमस्थांदितिंपर्यचरत्कविः ५६ नित्यंवनात्सुमनसःफलमूलसमित्कुशान् ॥ पत्रांकुरमृदापश्चकालेकालउपाहरत् ५७ एवंतस्यांव्रतस्थायांव्रतच्छिद्रंहरिर्नृप ॥ प्रेप्सुःपर्यचरज्जिह्मोमृगहेवमृगाकृतिः ५८ नाध्यगच्छद्व्रतच्छिद्रंतत्परोथमहीपते ॥ चिंतांतीव्रांगतःशक्रःकेनमेस्याच्छिवंत्विह ५९ एकदासातुसंध्यायामुच्छिष्टाव्रतकर्शिता ॥ अस्पृष्टवार्यधौतांघ्रिःसुष्वापविधिमोहिता ६० लब्ध्वातदंतरंशक्रोनिद्रापहृतचेतसः ॥ दितेःप्रविष्टउदरंयोगेशोयोगमायया ६१ चकर्तसप्तधागर्भंवज्रेणकनकप्रभम् ॥ रुदंतंसप्तधैकैकंमारोदीरितितान्पुनः ६२ तेतमूचुःपाट्यमानाःसर्वेप्रांजलयोनृप ॥ नोजिघांससिकिंइंद्रभ्रातरोमरुतस्तव ६३ माभैष्टभ्रातरोमह्यंयूयमित्याहकौशिकः ॥ अनन्यभावान्पार्षदानात्मनोमरुतांगणान् ६४ नममारदितेर्गर्भःश्रीनिवासानुकंपया ॥ बहुधाकुलिशक्षुण्णोद्रौण्यस्त्रेणयथाभवान् ६५ सकृदिष्ट्वादिपुरुषंपुरुषोयातिसाम्यताम् ॥ संवत्सरंकिंचिदूनंदित्यायद्धरिरार्चितः ६६ सजूरिंद्रेणपंचाशद्देवास्तेमरुतोभवन् ॥ व्यपोह्यमातृदोषंतेहरिणासोमपाःकृताः ६७ दितिरुत्थायददृशेकुमाराननलप्रभान् ॥ इंद्रेणसहितान्देवीपर्यतुष्यदनिंदिता ॥ ६८ अथेंद्रमाहताताहमादित्यानांभयावहम् ॥ अपत्यमिच्छंत्यचरंव्रतमेतत्सुदुष्करम् ६९ एकःसंकल्पितःपुत्रःसप्तसप्ताभवन्कथम् ॥ यदितेविदितंपुत्रसत्यंकथयमामृषा ७० ॥ इंद्रउवाच ॥ अंबतेहंव्यवसितमुपधार्यागतोंतिकम् ॥ लब्धांतरोच्छिदंगर्भमर्थबुद्धिर्नधर्मवित् ७१ कृतोमेसप्तधागर्भआसन्सप्तकुमारकाः ॥ तेपिचैकैकशोवृक्णाःसप्तधानापिमम्रिरे ७२ ततस्तत्परमाश्चर्यंवीक्ष्याध्यवसितंमया ॥ महापुरुषपूजायाःसिद्धिःकार्यानुषंगिणी ७३ आराधनंभगवतईहमानानिराशिषः ॥ येतुनेच्छंत्यपिपरंतेस्वार्थकुशलाःस्मृताः ७४

त्वात् हरिणेंद्रेणसोमपाःसोमंपिबंतः ६७ पर्यतुष्यत्सचेतनत्वात् ६८ आदित्यानांअदितिपुत्राणाम् ६९ ७० ७१ ७२ कार्यानुषंगिणीकार्यानुकूल्यंसंगमयंतीति ७३ फलकामक्रियायोगभाविन्येवविधासिद्धिरभूत् किमु निराशीस्त्वेनेतिभावेनाह आराधनमिति ७४

गुणस्पर्शैविषयसुखम् ७५ ७६ ७७ ७८ ॥ इतिश्रीभागवतेषष्ठस्कंधेविजयध्वजकृतटीकायांअष्टादशोऽध्यायः ॥ १८ ॥ ७ ॥ अत्रनिष्कामत्वेनक्रियमाणंपुंसवननामव्रतश्रीनारायणानुग्रहजनकर्मं ज्ञानजनकत्वेनपुरुषार्थसाधनंभवतीत्यभिप्रायेणप्रश्नोत्तरपूर्वकमेतद्व्रतंनिरूप्यते पुंसवनस्य विधानम् १ मार्गशिरेधनुर्मासिशुक्लपक्षे सार्वकामिकंमोक्षादिसर्वपुरुषार्थसाधनम् आदितःशुक्लपक्ष मारभ्य आदितोमरुतांजन्मेतिवा २ शुक्लेअंबरेच ३ ४ ५ ६ ७ प्रभवौजनकौ ८ दशवारंदशसंख्यातदूर्ध्वंयथाशक्ति तावतीसर्वथापेक्षिता ९ १० सर्वयज्ञःसर्वांतर्यामी इयंलक्ष्मीःइज्यां

आराध्यात्मप्रदंदेवमात्मानंजगदीश्वरम् ॥ कोवृणीतगुणस्पर्शंबुधःस्यान्नरकेपियत् ७५ तदिदंममदौर्जन्यंबालिशस्यमहीयसि ॥ क्षंतुमर्हसिमातस्त्वंदि ष्ट्यागर्भोमृतोत्थितः ७६ श्रीशुकउवाच ॥ इंद्रस्तयाभ्यनुज्ञातःशुद्धभावेनतुष्टया ॥ मरुद्भिःसहतांनत्वाजगामत्रिदिवंप्रभुः ७७ एवंतेसर्वमाख्या तंयन्मांत्वंपरिपृच्छसि ॥ मंगलंमरुतांजन्मकिंभूयःश्रोतुमिच्छसि ७८ इतिश्रीभागवतेषष्ठस्कंधेअष्टादशोऽध्यायः ॥ १८ ॥ राजोवाच ॥ व्रतंपुंस वनंब्रह्मन्भवतायदुदीरितम् ॥ तस्यवेदितुमिच्छामियेनविष्णुःप्रसीदति १ श्रीशुकउवाच ॥ शुक्लेमार्गशिरेपक्षेयोषिद्भर्तुरनुज्ञया ॥ आरभेतव्रतमिदंसा र्वकामिकमादितः २ निशम्यमरुतांजन्मब्राह्मणाननुमंत्र्यच ॥ स्नात्वाशुक्लदतीशुक्लवसीतालंकृतांबरे ३ पूजयेत्प्रातराशात्प्राक्भगवंतंश्रि यासह ॥ नमस्तेनिरपेक्षायपूर्णकामनमोस्तुते ॥ महाविभूतिपतयेनमःसकलसिद्धये ४ यतस्त्वंकृपयाभूयातेजसामहतौजसा ॥ तुष्टईशगुणैःसर्वै स्ततोसिभगवान्विभुः ५ विष्णुपत्निमहामायेमहापुरुषलक्षणे ॥ प्रीयेथामेमहाभागेलोकमातर्नमोस्तुते ६ ओंनमोभगवतेमहापुरुषायमहानु भावायमहाविभूतिपतयेसहमहाविभूतिभिर्बलिमुपाहरानीति ॥ अनेनाहरहर्मंत्रेणविष्णोरासनार्घ्यपाद्योपस्पर्शनस्नानवासउपवीतविभूषणगंधपुष्पधू पदीपोपहाराद्युपचारांश्चसमाहितउपाहरेत् ७ हविःशेषंतुजुहुयादनलेद्वादशाहुतीः ॥ ओंनमोभगवतेमहापुरुषायमहाविभूतिपतयेस्वाहेति श्रियंवि ष्णुंचवरदावाशिषांप्रभवावुभौ ॥ भक्त्यासंपूजयेन्नित्यंयदीच्छेत्सर्वसंपदः ८ प्रणमेद्दंडवद्भूमौभक्तिप्रह्वेणचेतसा ॥ दशवारंजपेन्मंत्रंततःस्तोत्रमुदीरये त् ९ युवांतुविश्वस्यविभूजगतःकारणंपरम् ॥ इयंहिप्रकृतिःसूक्ष्मामायाशक्तिर्दुरत्यया १० तस्याअधीश्वरःसाक्षात्त्वमेकःपुरुषःपरः ॥ त्वंसर्वयज्ञइज्ये यंक्रियेयंफलभुग्भवान् ११ गुणव्यक्तिरियंदेवीव्यंजकोगुणभुग्भवान् ॥ त्वंहिसर्वशरीर्यात्माश्रीःशरीरेंद्रियाशया १२ नामरूपेभगवतीप्रत्ययस्त्व मपाश्रयः ॥ यथायुवांत्रिलोकस्यवरदौपरमेष्ठिनौ ॥ तथेमउत्तमश्लोकसंतुसत्यामहाशिषः १३ इत्यभिष्टूयवरदंश्रीनिवासंश्रियासह ॥ तन्निः सार्यापहरणंदत्त्वाचमनमर्चयेत् १४

तर्यामिणी क्रियांतर्यामिणीअंतर्यामीतुयज्ञादेर्विष्णुरिज्यादिनारमा तत्तच्छब्दैस्ततोवाच्यैर्नतुसर्वस्वरूपतः अंतर्यामीश्रियश्चापिविष्णुरेवनसंशयः नांतर्यामीकश्चिदस्तिविष्णोःक्वापिकुतश्चनेतिवचनात् फलभुक्यज्ञफलभोक्तरियजमानेस्थितत्वाततत्फलस्यभोजकः ११ सत्वादिगुणानांव्यक्तेःकारणंफलव्यंजकःगुणभोक्तरिजीवेस्थितत्वात्तद्भोजकः शरीरेंद्रियाणामभिमानिदेवता १२ नामरूपयोर्गुणहेतुत्वात् श्रियश्चगुणाभिमानित्वान्नामरूपेश्रीरित्युच्यते प्रत्ययोनिश्चयज्ञानम् त्वत्प्रसादजनकत्वम् १३ उपहरणंनैवेद्यम् निःसार्यमोचयित्वा १४

स्तुवानास्तुतिंकुर्वाणा यज्ञोच्छिष्टंपूजाशेषं महापुरुषोविष्णुरस्मिन्सन्निहितइतिबुद्धया १५ पतिःस्वयंयदिपत्न्यांप्रेमशीलस्तर्हिपत्न्यैपत्यर्थेउच्चावचानिसर्वकर्माणिपतिर्बिभृयात्तर्हितत्पत्नीकृतंन स्यादितिशंकामाभूत् उभयोर्दंपत्योरेकतरेणकृतमिदंपत्न्याकृतंभवति १६ रजोदर्शनादिनानर्हायांपत्न्यांकथमेतदनुष्ठानमंतरितंघटतइतितत्राह पत्न्यामिति १७ १८ १९ द्वादशमासान् तदात्मकंहायनं संवत्सरोवत्सरोब्दोहायनोस्त्रीशरत्समाइत्यभिधानात् वर्षंनीत्वा कार्तिकेमासिचरमेऽहनिअवसानदिवसे २० पूर्ववत्पूर्वोक्तार्चनविधिना २१ पयःशृतेनक्षीरपक्केनपाकयज्ञ विधानेनस्मार्तसूत्रोक्तविधिना होममंत्रस्तूक्तएव २२ द्वादशात्मवित्केशवादिद्वादशमूर्तिलक्षणवेत्ता ब्राह्मणान्द्वादशतत्प्रीतयेभोजयेदित्यर्थः सोदपात्रानुदपात्रसहितान् इडान्वितान्भूमिसहिता न्तिलान्भूमितिलसहितगुडशब्दवाच्यैःपायसाद्यधिकान्नैर्युक्तानितिवा २३ २४ शोभनंप्रजास्त्वयेनसतथा २५ जीवपतिंआयुष्मंतंपतिंगृहान्गृहाणि शोभनंसौभाग्यंयेनसतथातं एतच्च

ततःस्तुवानास्तोत्रेणभक्तिप्रह्वेणचेतसा ॥ यज्ञोच्छिष्टमवघ्रायपुनरभ्यर्चयेद्धरिम् ॥ पतिंचपरयाभक्त्यामहापुरुषचेतसा १५ प्रियैस्तैस्तैरुपनमेत्प्रेमशीलःस्वयंपतिः ॥ बिभृयात्सर्वकर्माणिपत्न्याउच्चावचानिच ॥ कृतमेकतरेणापिदंपत्योरुभयोरपि १६ पत्न्यांकुर्यादनर्हायांपतिरेवसमाहितः ॥ विष्णोर्व्रतमिदंबिभ्रन्नविहन्यात्कथंचन १७ विप्रान्स्त्रियोवरवतीःस्रग्गंधबलिमंडनैः ॥ अर्चेदहरहर्भक्त्यादेवंनियममास्थिता १८ उद्वास्यदेवंस्वेधाम्नितन्निवेदितमग्रतः ॥ अद्यादात्मविशुध्यर्थंसर्वकामार्द्धयेतथा १९ एतेनपूजाविधिनामासान्द्वादशहायनम् ॥ नीत्वाचोपरमेत्साध्वीकार्तिकेचरमेहनि २० श्वोभूतेपउपस्पृश्यकृष्णमभ्यर्च्यपूर्ववत् ॥ पयःशृतेनजुहुयाच्चरुणासहसर्पिषा २१ पाकयज्ञविधानेनद्वादशैवाहुतीःपतिः २२ ब्राह्मणान्भोजयेद्भक्त्यास्वन्नाद्यैर्द्वादशात्मवित् ॥ तेभ्योदद्यात्तिलान्राजन्सोदपात्रानिडान्वितान् २३ आशिषःशिरसादायद्विजैःप्रीतैःसमीरिताः ॥ प्रणम्यशिरसाभक्त्याभुंजीततदनुज्ञया २४ आचार्यमग्रतःकृत्वावाग्यतःसुसमाहितः ॥ दद्यात्पत्न्यैचरोःशेषंसुप्रजास्त्वंसुसौभगम् २५ एतच्चरित्वाविधिवद्व्रतंविभोरभीप्सितार्थंलभतेपुमानिह ॥ स्त्रीवैतदास्थायलभेतसौभगंश्रियंप्रजांजीवपतिंयशोगृहान् २६ कन्याविंदेतसमग्रलक्षणंपतिंत्ववीराहतकिल्बिषागतिम् ॥ मृतप्रजाजीवसुताधनेश्वरीसुदुर्भगासुभगारूपमग्र्यम् २७ विंदेद्विरूपाविरुजोविमुच्यतेयआमयावींद्रियदेहकल्पा ॥ एतत्पठन्नभ्युदयेचकर्मण्यनंततृप्तिःपितृदेवतानाम् २८ तुष्टाःप्रयच्छंतिसमस्तकामान्होमावसानेहुतभुक्श्रीहरिश्च ॥ राजन्महन्मरुतांजन्मपुण्यंदितेर्व्रतंचाभिहितंमहत्ते २९ ॥ इतिश्रीमद्भागवतेमहापुराणेअष्टादशसाहस्र्यांपारमहंस्यांसंहितायांषष्ठस्कंधेपुंसवनव्रतवर्णनंनामएकोनविंशोध्यायः ॥ १९ ॥ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥ ६ ॥

रुशेषविशेषणम् २६ कन्यासमग्रलक्षणंपतिंविंदेतअवीरापतिरहिता । मृतप्रजातुजीवत्सुतान्विंदेत २७ विरूपादृष्टिविरुद्धरूपा अग्र्यंरूपंविंदेत इंद्रियदेहशक्तिरहितायासाविरुजोविविधरोगान्मुच्यते अभ्युदयेकर्मणिमंगलकर्मणिपितृदेवतानांअनंततृप्तिमुपैतीतिशेषः २८ २९ भक्तिप्रह्वश्रीवासकगतिसमुक्षितःसुरराशिभिर्मक्षितश्रीब्रह्मप्राणेशप्रमुखविबुधमुकुटतटीघट्टितपदपीठकंवंदे । लक्ष्मीकांतघनरससंवित्साररुचसरोरुहलोचनंसत्पज्ञानानंदाकारंमुदितसुजनसमुदायंमर्दितासुरसंपदम् १ शब्दशक्त्यनुसारेणविजयध्वजभिक्षुणा पदरत्नावलीभातिषष्ठस्कंधगताकृता २ इतिश्रीमन्महेंद्रपूज्यस्यपादशिष्यस्यविजयध्वजतीर्थस्यकृतौपद०श्रीभागवतेवि०टीकायांषष्ठस्कंधेएकोनविंशोध्यायः ॥ १९ ॥ अनुकूलपदादिष्टमभून्नारायणस्यह प्रसादतोलब्धमिदंतदापुण्यदमस्तुमे ॥ १ ॥

॥ इति श्रीमद्भागवते षष्ठः स्कंधः समाप्तः ॥

॥ अथ श्रीमद्भागवते सप्तमः स्कंधः प्रारभ्यते ॥

श्रीवेदव्यासायनमः ॥ षष्ठस्कंधाभिधेतीर्थेस्नातःसप्तमनाम्न्यथ ॥ श्रीमद्भागवतेस्नातुंभयतेतत्त्वसंविदे १ सेवायेषामपवर्गगतिर्जगताममलारतेश्रीमद्विष्ण्वंघ्रिसरोरुहयुगलेभ्रमंतःसंतःकुर्वंतुदयांमयिवि
जयध्वजतीर्थेनित्यानित्याभ्यस्तादितिजाश्रितनुनखतीर्थसुतीर्थे संततवेदांतपरिनिष्ठितानामपिश्रीनारायणपरमप्रसादमंतरेणानापादितसमीचीनज्ञानामृतकलानां क्वचित्क्वचिदसुरजनमोहायप्रदर्शि
तशुक्रशोणितसंपर्कादिभिरिवभगवतःप्रादुर्भावैस्तत्त्वेसंशयालूनांसतांविसंशयार्थं श्रीनृसिंहावतारस्तत्प्रसक्तयेनानाविधवर्णाश्रमाचारभेदविचारस्तत्पूजाप्रकारश्चनिरूप्यतेस्मिन्स्कंधे तदर्थपरीक्षि
त्प्रश्नपूर्वकमुपोद्घातरचयति समइति योभगवान्भूतानांयोग्यतातिरेकेणपक्षपरिग्रहशून्यःआत्माप्रियश्च तदेतत्प्रेयइतिश्रुतेः सत्तादिप्रदत्वाच्चैरनुष्ठितसमर्चनादिसुकृतस्यसुखलक्षणफलदातृत्वे
नोपकर्तृत्वाच्चसुहृत् किमतइतितत्राह स्वयमिति सस्वयंविषमइवेंद्रस्यार्थेस्वप्रयोजनमंतरेणपरप्रयोजनार्थंकथंदैत्यानवधीदित्यन्वयः १ ननु सुरगणैःक्रियमाणस्यस्वप्रयोजनस्यसंभवादवधीदि
तिकिंनस्यादितितत्राह नहीति हिशब्दोहेत्वर्थः कुतोनास्तीत्यत्राह निःश्रेयसात्मनइति नित्यानिर्दुःखानंदस्वरूपस्यतादृशत्वंमुक्तस्याप्यस्तीतितत्राह साक्षादिति नित्यानिर्दुःखानंदानुभवस्वरूप
स्यपरप्राप्यप्रयोजनाभावान्मुक्तस्यतदभावात् नन्वसुरप्रद्वेषात्सुरहितंक्रियतइतितत्राह नैवेति विद्वेषस्यतत्तत्स्वरूपद्योतनायासुरेभ्यइतिपंचमी वृक्षात्पर्णंपततीतिवत्कादाचित्कत्वाभावान्नित्यंद्वेष
वधानुपपत्तिरन्यथावधस्यापिसंततानुवृत्तिःस्यादतोनोपपत्तिःस्यादितिभावः स्वाभिभवलक्षणभयात्तद्वधइति तत्राह नेति उद्वेगोभयलक्षणं कुतइत्यतउक्तं अगुणस्येति प्राकृतगुणसंबद्धस्यपुंसःतादृक्
स्वभावत्वाद्धरेस्तदभावान्निर्गुणश्चेतिश्रुतेः अनेननिःश्रेयसात्मनोपिगुणसंबंधेनजीववत्तथात्वंस्यादितिशंकापिनिरस्तेतिज्ञायते २ ३ प्रामाणिकत्वद्योतनाय प्रश्नस्तौति साध्विति तत्रहरिचरितेभाग

राजोवाच ॥ समःप्रियःसुहृद्ब्रह्मन्भूतानांभगवान्स्वयम् ॥ इंद्रस्यार्थेकथंदैत्यानवधीद्विषमोयथा १ नह्यस्यार्थःसुरगणैःसाक्षान्निःश्रेयसात्मनः ॥ नैवासुरेभ्योविद्वेषोनोद्वेगश्चागुणस्यहि २ इतिनःसुमहाभागनारायणगुणान्प्रति ॥ संशयःसुमहान्जातस्तंभवांश्छेतुमर्हति ३ ॥ श्रीशुकउवाच ॥ साधुपृष्टंमहाराजहरेश्चरितमद्भुतम् ॥ तद्भागवतमाहात्म्यंभगवद्भक्तिवर्धनम् ४गीयतेपरमंपुण्यमृषिभिर्नारदादिभिः ॥ नत्वाकृष्णायमुनयेकथयिष्येहरेःकथाम् ५ निर्गुणोपिह्यजोव्यक्तोभगवान्प्रकृतेःपरः ॥ स्वमायागुणमाविश्यबाध्यबाधकतांगतः ६ सत्वंरजस्तमइतिप्रकृतेर्नात्मनोगुणाः ॥ नतेषांयुगपद्राजन्ह्रासउल्लासएवच ७

वतानांमाहात्म्यंभगवद्भक्तिवर्द्धनीमत्वेननतन्माहात्म्यंभगवन्माहात्म्याविनाभूतमित्यवगंतव्यम् ४ प्रश्नप्रतिवचनंभगवदनुग्रहमंतरेणसुवचनस्यादितिप्रकटनायभगवंतंप्रसाद्यवक्तव्यार्थंप्रतिजानीते न
त्वेति ५ हरेर्हंतृत्वधर्मोनघटतइतिवदन्लोकेष्वेकत्वादुततद्विरुद्धगणत्वादितिवावदीषि समत्वादिधर्मोपन्यासानुपपत्तेर्नप्रथमः अघटितघटकशक्तिमत्त्वेनसर्वस्योपपत्तेर्द्वितीयोयुक्तएवंतिभावेनाह निर्गु
णइति अयभावः भगवान्स्वमायागुणंस्वेच्छागुणमनुसृत्यस्वाधीनप्रकृतिगुणनिर्मितदेवासुरदेहंचाविश्यतत्रस्थित्वाबहिश्चनृसिंहादिप्रादुर्भावरूपेणासुरादिबाधकतामसुरादि बाध्यवस्तुषुनियामकत्वेन
स्थित्वाबाध्यतांगतोभवति किमत्रमानमितीयंशंका बाध्यादिस्थोहरिर्नित्यंबाध्यतादिगतेत्यपि गीयतेननुबाध्यत्वाच्चददोषयुतत्वतइतिभविष्यत्पर्ववचनेनपरिहर्तव्येति हिशब्देनलोकवत्तुलीला
कैवल्यमितिसूत्राल्लीलांप्रयोजयति निर्गुणत्वादिकंवैलक्षण्येलिंगमितिज्ञापनायप्रयुक्तं पुरुषाणांगुणदोषानुसारेणरक्षाद्यभावेनसमत्वादिकमपिनयुज्यतइतिप्रदर्शनायापिशब्दः तर्हिकुतोविविच्यनज्ञाय
तइत्यतोव्यक्तइति दधिस्थघृतवत्काष्ठेग्निवच्चजनार्दनः देहेंद्रियासुजीवेभ्योविविच्यज्ञायतेनत्विति अतोविविच्यज्ञानंयुक्तम् ६ स्वमायागुणमाविश्येत्युक्तंविवृणोति सत्वमित्यादिना प्रकृतेः
स्वरूपभूताआत्मनःपरमात्मनोज्ञानादिवन्नस्वरूपभूताःकिंत्वधीनाः जीवस्याप्यभिमानादेवगुणानाभिन्नस्वभावत्वाद्युगपत्प्रवृत्त्यनुपपत्तेरित्यतःशक्तिप्रकटनप्रकारंदर्शयति नतेषामिति ह्रासोनुद्भूतत्व
मुल्लासउद्भूतत्वं क्षयवृद्धिक्रमेणेतिपरिहारः ७

तं कर्मविविनक्ति जयेति सत्त्वस्यजयकालेउत्साहविषयेदेवर्षीन्भजन्नाभातीत्यन्वयः रजसउत्साहविषयेअसुरान्वर्द्धयन्तमसउत्साहविषयेयक्षादीन्वर्द्धयन्नेवंगुणानांशक्तिंजृंभयतीत्यर्थः तत्रापी त्थंभावोस्तीत्याह तत्कालेति तत्तत्कालगुणमनुसृत्यवर्तमानः ८ इममर्थमनुभाविकंकरोति ज्योतिरादिरिति अयमर्थः ज्योतिरादीत्युत्तरायणादिकालादिगुणःकेषांचित्फलानामुत्साहंकेषांचिद्धा संकुर्वन्यथासत्त्वादिजयादिविषयेउत्साहादिकालमनुवर्तमानोभातितथेति कथमव्यक्तत्वंहरेरितितत्राह संघातादिति देहेंद्रियादिकार्यकारणसंघातान्नविविच्यतेपृथग्भूतोनज्ञायते अत्रापीदमेवोदाहरणं ज्योतिरादिघृतादिद्रव्यंदध्यादिभ्योमथनात्पूर्वंनविविच्यतेपृथग्भूतंनज्ञायतेनप्रतीयते तथात्मापीतिभावः तेजोसितंत्रेधाविधीयतेइतिश्रुतेः घृतस्यज्योतिःशब्दाभिधेयत्वंप्रामाणिकं दधिस्थघृतवत्काष्ठव ह्निवच्चजनार्दनइत्यादेश्च ननुयदिकेनचिद्देहादिव्यतिरिक्तत्वेनायंज्ञायतेतर्हिदधिस्थघृतवदित्यादिनिदर्शयितुंशक्यं तदेवकुतइत्याह विदंतीति कवयःब्रह्मादयःशास्त्रेणमथित्वाततोनिर्णीयात्मस्थंदेहादि स्थमात्मानंविंदंतिजानंतिकिंचांततश्चरमनाशेविंदंतिलभंते लभानिष्पत्ताविति धातोःनितरांप्राप्नुवंतीत्यर्थःअनेनकवीनांज्ञानमस्मिन्नर्थेप्रमाणमुक्तंभवति ९ देहादेर्विविक्तत्वेनज्ञानंकस्मान्नोत्पद्यतइतिआ शंक्यसृष्टशरीरेषुजीववत्प्रतिष्ठत्वाच्चतद्विषयंज्ञानमित्यभिप्रेत्याह यदासिसृक्षुरिति यदापरत्मात्मनोर्थेनिवासायपुरःशरीराणिसिसृक्षुःस्रष्टुमिच्छतितदागुणवैषम्यन्यायेनस्वेच्छयानि यतोरजोगुणमुपादा यमहदहंकारपंचमहाभूतानिसृष्ट्वातैः पृथक्त्वतद्योग्यतानुसारेणशरीराणिसृजति यदाचेश्वरस्तासुविचित्रासुसुरनरतिर्यक्संज्ञितासुपुरीषुरिरंसुः जीवगतस्वादृष्टयोग्यतामनुसृत्यसुखादिकमुत्पाद्यतत्सा क्षित्वेनक्रीडितुमिच्छति तदास्थितिहेतुत्वात्सत्त्वगुणमुपादत्ते यदाशयिष्यमाणोयोगनिद्रांचिकीर्षतितदासौतमोगुणमीरयति तच्छक्तिमुज्जृंभयति १० किंचचरंतमतीतानागतवर्तमानभेदेनवर्त

जयकालेतुसत्त्वस्यदेवर्षीन्रजसोऽसुरान् ॥ तमसोयक्षरक्षांसितत्कालानुगुणोभजन् ८ ज्योतिरादिरिवाभातिसंघातान्नविविच्यते ॥ विदंत्यात्मानमात्म स्थंमथित्वाकवयोंततः ९ यदासिसृक्षुःपुरआत्मनःपरोरजःसृजत्येषपृथक्स्वमायया ॥ सत्त्वंविचित्रासुरिरंसुरीश्वरःशयिष्यमाणस्तमईरयत्यसौ १० कालंचरंतंसृजतीशआश्रयःप्रधानपुंभ्यांनरदेवसत्यकृत् ॥ सतत्रतत्रोभयसिद्धिमाप्नुयाल्लिंगात्मनोलिंगगुणाश्चसंति ११

मानंकालंसृजतीत्यर्थः ईशआश्रयइत्येताभ्यांपदाभ्यांसर्जनसामर्थ्यंसूचयति अत्रप्रमाणमाह सत्यकृदिति सत्यंमीमांसाशास्त्रंतस्यकर्ता इदानींस्वसृष्टानामंतःशयनप्रकारमाह सतत्रेति तत्रतत्रदे हेषुस्थितं उभयसिद्धिंमहतिवस्तुनिमहत्परिमाणंमहासामर्थ्यप्रकटनमणुपरिमाणमणुसामर्थ्यंवाप्नुयात् अणोरणीयान्महतोमहीयानितिश्रुतेः अत्रेदंलिंगात्मनोलिंगगुणाश्चसंतीतिनिदर्शनं चशब्दए वार्थे यथा लिंगंशरीरस्थानीयंकाष्ठंव्याप्यातिष्ठन्नग्निर्लिंगात्मेत्युच्यतेतस्याग्नेर्लिंगस्यकाष्ठस्यगुणाः महत्त्वाणुत्वलक्षणाःसंति महतिकाष्ठेमहान् अणुनिकाष्ठेअणुरग्निरिति लिंगंशरीरेचिह्नेचसाधनेशेफ भस्मनीत्यभिधानं ननु सृष्टौप्रवर्तमानेश्वरस्यनिरपेक्षत्वात्स्वातंत्र्येणकिंचित्कारणापेक्षासंभवः तदनपेक्षत्वेमृद्दंडादेरिवशक्त्यभावेनकार्यसामग्र्यभावइतितत्राह लिंगात्मनइति लिंगात्मनःप्रधानादेः कारणस्य येलिंगगुणाःकार्यजनकशक्तिलक्षणाःसंतितेचाल्लिंगात्मनःशरीरस्वामिनोहरेःसंतिविद्यमानास्तदधीनत्वादितिद्विरावृत्त्यायोजनीयं द्रव्यंकर्मचकालश्चेत्यादेः यद्वा लिंगस्यप्रधानादेर्गुणाःका र्योपादनशक्तिलक्षणाःलिंगात्मनःपूर्णद्वात्रिंशल्लक्षणस्वरूपस्यहरेःसंतितेषांस्वरूपाभिन्नत्वद्योतनायचशब्दः ऊर्णनाभिस्तुरीवमादिविनास्वरूपभूतलीलयैवयथाजालंकरोति तथायमित्यर्थपरोवा प्रधा नस्यार्थेब्रह्मणोस्तु अवांतरसृष्टिरवांतरकारणात्स्यात् कुलालादेर्दृष्टत्वादित्यतोवाह सइति तत्रतत्रकार्यकारणेषुप्रातिस्विकेषुस्थितउभयसिद्धिंजगत्कारणस्यजनकत्वलक्षणंकार्यस्यजन्यत्वफलंप्रापयति उभयोःशक्त्योरेतदधीनत्वादित्याह लिंगात्मनइति लिंगात्मनोमृदादेर्लिंगगुणाःकार्यजननशक्तयःसंति तेचानेननियताइतिशेषः लिंगात्मनःकार्यस्ययेलिंगगुणाःपृथुबुध्नोदराकारादिलक्षणाः संतिते च तत्रतत्रान्वितोविष्णुस्तत्तच्छक्तिप्रबोधकइत्यादेः अनेनबाध्यबाधकतांगतइत्येवत्स्पष्टीकृतं तथाहि तत्रतत्रदेवासुरेषुउभयसिद्धिंजयपराजयलक्षणांकार्यसिद्धिंप्राप्नोति शिरस्त्राणवर्मादिलक्षणंवहतोभ

टस्यपरेलिंगगुणाः शौर्यादिलक्षणाजयापजयौवातेचहर्यधीनाः सत्रैवलंबलिनांचापरेषामित्यादेः अत्रसर्वस्यहर्यधीनत्वदर्शनायप्रधानपुंभ्यांकार्यकारणाभ्यांकालंसृजतीत्यंगीकारे प्रधानपुरुषावंतरे णकालस्रष्टत्वशक्तिर्हरेःप्रकटितास्यादित्यन्यथाप्रतीतिनिरासायाचार्यैस्ताभ्यासहेतिव्याख्यातम् ११ नन्वत्रसाम्यगुणाधिकरणस्यहरेर्वैषम्याधिकरणत्वंकथमित्यस्यप्रश्नस्यपरिहारःकथं स्फुटमायातइत्याशंक्य स्वतोदेवप्रियत्वमसुराप्रियत्वंमनुष्याणामुभयत्वमेवसमत्वंतत्तद्योग्यतावतांतेषामन्यथातद्दातिलंघनेत्वदभिमतवैषम्यप्राप्तिसाम्यहानीस्यातामित्याशयवानाह यएषइति यएषहरिः कालेकालविषयेपि ईशिताकालस्यापिप्रवर्तनसमर्थः प्रधानपुरुषयोरीशितृत्वंकिंवक्तव्यमित्यपिपदं सविष्णुः सुरानीकमिवास्थितंसत्वमेधयति सत्वस्यदेहादिकारणत्वात्सत्वगुणप्रधानान्देवान्स मेधयतीत्यर्थः रजस्तमस्कान्रजस्तमःस्वभावान् तत्प्रत्यनीकान्तेषांसुराणांशत्रुभूतान् असुरान्प्रमिणोतिनिहंति मिनाहिंसायामितिधातुः सुरप्रियइत्यनेनासुराणामप्रियोमनुष्याणामुभयात्मकः स्वभावतइतिध्वनितं तदुक्तं स्वभावतःप्रियत्वात्तुसदादेवप्रियोहरिः अप्रियश्चासुराणांसस्वभावात्तूभयनृणामिति सत्वमेधयतिइत्यनेनयासुखयोग्यता रजस्तमस्कानित्यनेनयावधयोग्यतायेचदेहे न्द्रियादेःकारणभूतास्त्रयोगुणाः यश्चगुणानामुत्साहकरःकालः यच्चतेषांत्रयाणांगुणानांपुण्यपापोभयलक्षणंकर्म. यच्चमूलकारणभूतंप्रकृतिपुरुषस्वरूपम् यच्चभक्त्यादिकमेतत्सर्वमवेक्ष्यदेवानांभक्त्या दिगुणानितरेषांद्वेषादिदोषान्मनुष्याणामुभयात्मकमुत्पाद्यसुखासुखजयापजयजननमरणादिफलदातृत्वेनसमइत्युक्तं तदुक्तं देशकालौगुणांश्चैवभक्त्यादीनप्यवेक्ष्यतु योग्यतांचतथाकर्मसमइत्यभिधी यते स्वतःप्रियोपिदेवानामुत्पाद्यैवगुणानिमान् इतरेषांतथादोषान्सुखदुःखददात्यजः उभयंतुमनुष्याणामतःसमइतीरितइति ननु सुरादिषुस्थितानांगुणदोषाणांतत्तत्कालीनत्वेनोत्तरकालेनाशसंभवे

**यएषराजन्नपिकालईशितासत्वंसुरानीकमिवेधयत्यजः॥ तत्प्रत्यनीकानसुरान्सुरप्रियोरजस्तमस्कान्प्रमिणोत्युरुश्रवाः १२सवा पुनःस्वसृष्टस्यस्थितिरक्षानु वृत्तये॥ सत्वंसुरगणान्विष्णुरुपबृंहयतेमुहुः १३ अत्रैवोदाहृतःपूर्वमितिहासःसुरर्षिणा ॥ प्रीत्यामहाक्रतौराजन्पृच्छतेऽजातशत्रवे १४ दृष्ट्वामहाद्भु तंराजाराजसूयेमहाक्रतौ ॥ वासुदेवेभगवतिसायुज्यंचेदिभूभुजः १५**

नानित्यत्वेनियमोनस्यादित्याशंक्य शास्त्रविहितत्वान्नियमोस्त्येवेत्याशयवानाह उरुश्रवाइति उरुबहुश्रूयतेइत्युरुश्रवाः शास्त्रंनियमप्रतिपादकं यस्यसतथा तदप्युक्तं अनादिनियताश्चैवगुणदोषाःसुरा दिषु यथाक्रमंपुनश्चैवनियमाद्वार्द्धितास्तथा विष्णुनैवततोनित्यंविषमश्चजनार्दन इतिनियमाद्वार्द्धितास्तथेत्येतत्कुत्रप्रमाणीक्रियतेइत्यस्यउरुश्रवाइत्यत्रेतिवक्तव्यं उरुवर्द्धनलक्षणंश्रवोयस्यसतथेत्यर्थः ननुवै षम्यंतदवस्थमेवाभूदितिचेन्न योग्यतानिमित्तत्वाच्चदुक्तं नविष्णोर्विषमत्वंतुयोग्यतापेक्षयाक्वचिदिति हरेर्योग्यतानियत्यायत्आगच्छद्वैषम्यलक्षणमुरुश्रवस्तदातदस्तुविहितत्वादतउक्तं उरुश्रवाइति तद प्युक्तं योग्यतायास्तन्नियत्याविषमत्वंभवेदिति नन्वेवंतर्हिक्वापिवैषम्यंनेत्यापन्नमितिचेदुच्यते शुभाशुभयोर्विपर्ययेशुभवतामशुभकर्मअशुभवतामसुराणांशुभकर्मानुसृतफलदानेसति विषमत्वंविष्णोर्दो षायस्यादितियदतस्तत्तद्योग्यताबलविहितशुभाशुभोभयकर्मानुसारेण तत्तत्फलस्यविकर्मेंद्रियार्थेअशुभकर्मदैत्यबलक्षणस्यदानेनेश्वरवैषम्यमित्यतउरुश्रवाइतिजयगतंभकल्पनामहरेर्युक्त इंद्रस्यार्थे कथंदैत्यानवधीद्विषमोयथेत्यादिप्रश्नपरिहारइतिसिद्ध विषमत्वंतुदोषायशुभाशुभविपर्यये अतस्तादृशवैषम्यंब्रह्मसूत्रेनिराकृतं शुभाशुभनियंतृत्वंनदोषोगुणएवसः अतस्तादृशंकृष्णस्यब्रह्मसूत्रकृतोविभो रितिवचनात् १२ सुरप्रियइत्येतद्विवृणोति सवाइति अयमर्थःसत्वंसत्वगुणसंपन्नान्मुहुरनुयुगमुपबृंहयतेसम्यक्वर्द्धयति किंकारणमत्राह पुनरिति स्वेनसृष्टस्यजगतःपुनःपुनःस्थितिरक्षानुवृत्तयेस्थि तिपालनयोःप्रवर्तनार्थं वाइत्यनेनसृष्ट्यादिष्वष्टकमपिहरेरेवेतिदर्शयति यदासिसृक्षुरित्यनेनयःप्रस्तुतस्ततसइतितच्छब्देनपरामृशति तत्रापीश्वरशब्देनरुद्रउपक्रांतइतिभ्रांतिनिवारणायविष्णुरिति यद्वा य त्क्वापिरुद्रादुत्सर्जनादिकंप्रतीयतेतदपितत्स्थहरिणेतिप्रकटनायविष्णुरिति १३ सुरप्रियइत्येतादितिहासेनदर्शयति अत्रेति सुरप्रियएवनासुरप्रियोहरिरिति अन्ययोगव्यवच्छेदार्थएवशब्दः १४ १५

१६ एकएवांतोनिर्णयएषामस्तीतिभाक्तिरेवपुरुषार्थसाधनंनान्यत्कर्मादिकमितिनिर्णयवतांविष्णुरेवमुमुक्षुभिर्निषेव्यइतिनिश्चयवतांवा १७ श्रीहरिनिंदनंसतांकर्णशूलायमानमप्येतच्छ्रोतुं त
च्चित्रमित्याशयवानाह भगवन्निंदयेति १८ १९ श्वित्र श्वेतकुष्ठः २० दुरवग्राह्यंदुर्ज्ञेयंधामस्वरूपंयस्यसतथातस्मिन् लयंसायुज्यलक्षण ननु अत्युत्कटैःपुण्यपापैरिहैवफलमश्नुत इतिव
चनात् श्वित्रोनजातइत्यादिवाक्यं कथंसंगच्छतेभगद्द्वेषिणोपिबहुविधाः तत्रकेचिन्मरणानंतरंपापफलंभुंजते केचिदत्रैव तत्कुतइतिचेन्न नियमाद्भुज्यतेपुंभिर्धर्माधर्मफलंमृतौ कश्चिदत्रापिभुज्येततस्मा
द्धर्मंसमाचरेदितिवचनात् अनेनधर्मिणोपिव्याख्याताः धर्मास्वर्गं विधर्मोनिरयमितिच अत्रकश्चिद्विशेषोप्यस्ति जयविजययोःसात्त्विकत्वेनभक्तत्वेनद्वारपालत्वेन हरेरतिप्रियत्वात्सनकादिशापादसु
रजन्मन्यपिकचिद्भक्त्यलोपात्द्वेषफलभोक्तुरन्यत्वाच्चद्वेषस्यपापिष्ठासुरत्वादनयोरुपचारितत्वाच्च अनेनस्वापराधनाशलक्षणानुग्रहपात्रत्वेनप्रतिज्ञातशपथत्वेनचहरेःसुरप्रियत्वंचाविशदमभूदितिरहस्यम्
२१ २२ २३ देहाद्यभिमानवतःस्तवनिंदनादिनामनःखेदहर्षादिसंभवेनक्रोधादिकंस्याद्धरेस्तदभावान्निंदनादिनाविशेषानुदयात्स्वतोनित्यतृप्तत्वेनपरप्राप्यप्रयोजनाभावात्तत्तद्योग्यतानुसा

तत्रासीनंसुरऋषिंराजापांडुसुतःक्रतौ ॥ पप्रच्छविस्मितमनामुनीनांशृण्वतामिदम् १६ युधिष्ठिरउवाच ॥ अहोअत्यद्भुतंह्येतद्दुर्लभैकांतिनामपि ॥ वासुदेवेपरेतत्त्वेप्राप्तिश्चैद्यस्यविद्विषः १७ एतद्वेदितुमिच्छामःसर्वएववयंमुने ॥ भगवन्निंदयावेनोद्विजैस्तमसिपातितः १८ दमघोषसुतःपापआरभ्यकलभाषणात् ॥ संप्रत्यमर्षीगोविंदेदंतवक्रश्चदुर्मतिः १९ शपतोरसकृद्विष्णुंयद्ब्रह्मपरमव्ययम् ॥ श्वित्रोनजातोजिह्वायांनांधंविविशतुस्तमः २० कथंतस्मिन्भगवतिदुरवग्राह्यधामनि ॥ पश्यतांसर्वलोकानांलयमीयतुरंजसा २१ एतद्भ्राम्यतिमेबुद्धिर्दीपार्चिरिववायुना ॥ ब्रूह्येतदद्भुततमंभगवन्नत्रकारणम् २२ श्रीशुकउवाच ॥ राज्ञस्तद्वचआकर्ण्यनारदोभगवानृषिः ॥ तुष्टःप्राहतमाभाष्यशृण्वत्याःसदसःकथाम् २३ ॥ नारदउवाच ॥ निंदनस्तवसत्कारन्यक्कारार्थंकलेवरम् ॥ प्रधानपरयोराजन्नविवेकेनकल्पितम् २४ हिंसातदभिमानेनदंडपारुष्ययोरपि ॥ वैषम्यमिहभूतानांममाहमितिपार्थिव २५ यन्निबंधोभिमानोयंतद्वधात्प्राणिनांवधः ॥ तथानयस्यकैवल्यादभिमानोखिलात्मनः २६

रेण तत्तत्फलदातृत्वंयुक्तमित्यादिकंवक्तुमुपक्रमते निंदनेति निंदनंदोषसंकीर्तनं स्तवःस्तुतिर्गुणलक्षणा सत्कारःकायिकपूजा न्यक्कारःकायिकावज्ञा तेषांनिंदनादीनां अर्थंविषयभूतंकलेवरंप्रधानप
रयोः प्रधानादेहेंद्रियाद्यात्मकात्परस्यजीवस्याविवेकेनाभेदेनकल्पितंस्वतश्चिदानंदस्यप्रकृतेरनात्मनोभेदाग्रहादिदंजडशरीरंक्लृप्तमित्यर्थः २४ ततःकिंफलतीतितत्राह हिंसेति तदभिमानेनदेहाभिमा
नेनभूतानामविवेकज्ञानिनांममाहमितीहदेहेहिंसाताडनादिलक्षणादंडपारुष्ययोर्निमित्तयोर्वैषम्यंविषमावस्थाफलतीत्यर्थः २५ ततश्चकितत्राह यन्निबंधइति ममाहमित्यभिमानोयन्निबंधः
यस्मिन्देहेनिबद्धः तद्वधात्तस्यदेहस्यवधाद्धिंसादिलक्षणात् प्राणिनांचेतनानांवधइत्युपचारःइतियत्तस्मान्निंदनादिकंदेहस्यैवफलतिनात्मनःतस्यनिष्फलमित्याशयःयथाजीवस्यममाहमितिदेहाभिमा
नादनर्थपरंपरा तथाहरेरपिदेहस्थत्वाविशेषात्साम्यात्किंनेत्याह तथेति अखिलात्मनोखंडस्वामिनोयस्यनतथाजीववद्देहाभिमानोनास्ति कुतःकैवल्यात्देहाद्यभावादेव ननुप्रकृत्यात्मकस्यदेहस्याभावो
हेतुःक्रियतेसच्चिदानंदात्मकदेहस्यवेत्येतयोरिदमेवोत्तरं प्रकृत्यात्मकदेहादेरभावात्प्रकृतिप्राकृतवैकृतमिश्रविरहितसच्चिदानंदात्मकदेहसद्भावात् सदेहःसुखगंधश्चेत्यादेः २६

परस्यपरमात्मनःइदमेषाहिंसाकेननिमित्तेनास्तीतिकल्प्यतेनिमित्ताभावान्नैमित्तिकाभावइत्यर्थः अन्यस्मिन्हिंसादिकर्तरिसतिहरेर्हिंसादिकमस्तीतिकल्पयितुंशक्यतेसचनास्तीत्याशयेनोक्तंअकर्तुरितित
स्यान्य कर्तानविद्यतइत्यकर्तातस्यहिशब्देनयद्यस्यायुधादिनाप्रहर्तादृश्यतेतत्फलंछेदादिकंनास्तीत्याह अच्छेद्योयमदाह्योयमित्यादेः तत्सर्वंकथमित्यतउक्तं परस्येति लोकविलक्षणस्य तद्वैपंशून्यकल्प
इत्यस्य.पीदमुत्तरम् परस्यब्रह्मणः ब्रह्मविदाप्नोतिपरमितिश्रुतेः इदंहिंसेतिलिंगव्यत्ययोहिंसायाःकुत्सितत्वद्योतनायव्यत्ययोतिशयकुत्सनभेदेपिशतिसूत्राज्ज्ञापते हरौहिंसाशंकाकुत्सितेत्यर्थः नास्यज
रयैतज्जीर्यतेनवधेनास्यहन्यते एतत्सत्यंब्रह्मपरं नहन्यतेहन्यमानेशरीरेइत्यादेश्च अत्रैवंहरिस्वरूपेस्थितेस्वयोग्यानंदाविर्भावलक्षणमोक्षसाधनभक्तिर्वद्वेषादिकमर्थवादलक्षणम् तत्तत्स्वभाव
ज्ञापनार्थमुच्यतइत्याशयेनाह तस्मादिति यस्माज्जडशरीरेंद्रियाद्यभावेनहरेरहंममाभिमाननिमित्तोपद्रवोदूरतोनिवारितः तस्माद्वैरानुबंधादिनापोहरौमनोयुंज्यात्सपुंकेसकथंचित्पृथङ्क्षतेमनसस्तत्राभि
निवेशेनहरेरन्यंनचिंतयतितमेवानुस्मरतीत्यन्वयः अनेनवैरादीनामेकतमेनापिहरौमनोयुंजानोवैरादिमानेवभवतीतिवत्तद्वस्तुस्वभावात्तथोच्यतइतिज्ञातव्यं तदुदितमाचार्यैः कथंचिन्नेक्षतेपृथक्तत्रैव
मनसोभिनिवेशेनतदन्यंनेक्षतेवैरादीनामेकतमेनापियोमनोयुंज्यात्सतदन्यंनेक्षतइतिस्वभावकथनम् नन्वत्रसंयुंज्यादित्यस्यप्रथममप्राप्तविध्यर्थपरित्यज्यान्यार्थकल्पनायामश्रुतकल्पनास्यादितिचेन्न भक्त्या
त्वनन्ययाशक्यअहमेवंविधोर्जुन यमेवैषवृणुतेतेनलभ्यः प्रियोहिज्ञानिनोत्यर्थमहंसचममप्रियः इत्यादिनाभक्तेरेवभगवत्प्रीतिजनकत्वोक्तेः अननुभूतिरवधुन्वानइत्याद्यनर्थश्रुतेश्च अतोनविध्यर्थोंगीका
रयोग्यः तदप्युक्तंनविधिरिति नकेवलंद्वेष्टुःस्वस्यैवानर्थोपितुतत्पितॄणामपि तदुक्तं कर्मणामनसावाचायोद्विष्याद्विष्णुमव्ययम् मज्जंतिपितरस्तस्यनरकेशाश्वतीःसमाइति नन्वेकदाकृतद्वेषप्राप्तनरकोपभो

परस्येदमकर्तुर्हिहिंसाकेनास्यकल्प्यते ॥ तस्माद्वैरानुबंधेननिर्वैरेणभयेनवा ॥ स्नेहात्कामेनवायुंज्यात्कथंचिन्नेक्षतेपृथक् २७ यथावैरानुबंधेनमर्त्य
स्तन्मयतामियात् ॥ नतथाभक्तियोगेनइतिमेनिश्चितामतिः २८

गेनक्षीणदोषस्य पुनःशुद्धांतःकरणतयाभक्तिकरणयोग्ययोनिप्राप्तिःस्यादितितत्राह तानहंद्विषतःक्रूरान्संसारेषुनराधमान् क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु आसुरीयोनिमापन्नामूढाजन्मनिजन्म
नि मामप्राप्यैवकौंतेयततोयांत्यधमांगतिमिति कीदृशोद्वेषइतितत्राह अवजानंतिमांमूढामानुषींतनुमाश्रितम् परंभावमजानंतोममभूतमहेश्वरमिति स्वर्गकामोयजेतेत्यादेःसत्कर्मणातेषांसद्गतिःस्या
त्किन्नेत्याह मोघाशामोघकर्माणोमोघज्ञानाविचेतसः राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताइति ननु तर्हिहिरण्यकशिप्वादेर्दुरंताद्यादुत्थितिःकथमभूदितितत्राह यदानंदहरितामेस्वामविद्वास्तेजए
श्वरम् तस्मात्पितामेपूयेतदुरंताद्दुस्तरादघात् हिरण्यकशिपुश्चापिभगवन्निंदयातमः विविक्षुरत्यगात्सूनोःप्रह्लादस्यानुभावतइति नन्वेवंतर्हिभक्तद्वेषिणोःशापवराभ्यांविपर्ययःस्यात्किन्नेत्याह वरतोपि
नमुच्यंतेद्वेषिणःशापतोपितु भक्तानैवनिपात्यंतेधर्माधर्मैस्तथेतरैरिति योग्यतायाबलवत्त्वादितिशेषःनन्वेवंचेत्पुनश्चानर्थआपन्नइतितत्राह अन्यावेशकृतंयत्तुतद्वराद्यैरपोह्यते तद्विरुद्धस्वभावानामन्य
थानकथंचनेत्यादिहिरण्यकशिप्वाद्याविष्टासुरकृतपापंप्रह्लादादिभिःपरिहृतंनतुस्वतोसुरस्येत्यर्थः ॥ २७ ॥ कुतःस्वतोसुरस्यपापंनपरिह्रियतइत्याशंक्यद्वेषाभिनिविष्टमनस्कत्वेनतद्योग्यत्वेनभगव
त्प्रेरितत्वेनाभीष्टनिवृत्तित्वेनतदात्मकत्वादित्याशयेनाह यथेति मर्त्यस्तमोयोग्योवैरानुबंधेननिरंतरवैरस्मरणेनतन्मयतांतद्द्वेषविषयवस्तुनिपथामनसोभिनिवेशंयात्प्राप्नोतितथाभक्तिलक्षणोपाये
नभक्तिविषयेवस्तुनिमनोभिनिवेशंनकरोति अत्रकिंप्रमाणमितितत्राह इतीति निश्चितामतिरित्यनेनसाक्षिलक्षणामतिर्गृह्यते भक्तियोगेनइतिइत्यत्रसंधिकार्याभावोद्वेषाभिनिवेशिनाम्
बाहुल्यंभक्त्यभिनिवेशिनांकनीयस्त्वंचदर्शयितुम् कुतएतदवगतमितिचेन्न यथावैराभिनिवेशिनइत्याद्याचार्योक्तेः वैरिणांबाहुल्यंअन्येषांअल्पसंख्यात्वंकथमितिचेन्न हरिणाभक्तानांबाहुल्याकरणात्

एतदप्युक्तंकथमन्यथेत्यादि ततःकनीयसएवदेवाः ज्यायांसः असुरास्ततइतिच भक्त्याभिनिवेशिष्वपिकश्चिद्विशेषोस्तीतिज्ञापनायवासंघ्यभावः ऋतेत्राह्मणमव्ययमित्युक्तेः असुराणांनित्यद्वेषाग्राहित्व
भकदनानुवंधनेति मागयाद्यापधानित्यंद्वेषादाग्राहिणोहरौ नतथाग्राहिणोभक्ताऋतेब्रह्माणमव्ययमित्युक्ते २८ ननु तन्मयतामित्यस्यतादात्म्यार्थःकिनस्यादितितत्राह कीटइति द्वेषेणनिंदतश्चैद्य
स्यकृष्णेनसायुज्यंकथमभूदितिप्रश्नस्यपरिहारःकथमागतइत्यतोवाह कीटइति यथापेशस्कृताभृंगेणकुड्येभित्तिसुषिरेरुद्ध कीटःश्यामनामाकृमिःतस्यभृंगस्यसरूपतांसमानाकारतांविंदते नतुतादात्म्यम्
ततोभिन्नत्वेनदृश्यमानत्वात् कीदृशःयातंउपर्यागत्यगभीरंनदंतभृंगंसंरंभभययोगेनईषत्कोपभययुक्तस्नेहेनानुसंदधातीतिस्नेहेनस्वात्मानमाकृष्याक्लिश्नातीतिकोपयुक्तभयेनचानुस्मरन् अत्रस्नेहस्यैवप्राधा
न्यंप्राणधारणपोषणयोःसंततमिष्टत्वात् कोपभययोरतात्कालिकत्वादप्राधान्यमित्यतोयोगस्यसंरंभभययोर्विशेषणतयोक्तिःयोगस्यस्नेहार्थत्वम् प्रीतिस्नेहस्तथायोगःप्रेमवधइतीर्यते इतिशब्दनिर्णये
सिद्धम् २९ कृष्णेभगवत्येवंवैरेणयुक्तयाअनुचिंतयाभक्तिपूर्वस्मृत्याधूतपाप्मानश्चैद्यादयःतंकृष्णमापुरित्यन्वयः अत्रसज्जीवानांशापादिनासुराविष्टानामेवमुक्तिःनकेवलानाम् तस्मात्तदाविष्टासुरावैरेण
प्राप्तपाप्मानः असुर्यानामतेलोकाइतिश्रुते तंलोकसमुदायंप्रापुः संतोजयादयोनुचिंतयातंकृष्णमवापुरित्ययंविशेषोवैरयुक्तयाअनुचिंतयेत्याचार्योक्तापिशब्देनगर्हाभिधायिनाज्ञात व्यअनुचिंतेतितांप्रा
हुर्भक्तिपूर्वातुयास्मृतिरितिवचनात् भक्तिपूर्वैवानुचिंतात्राभिप्रेतेतिज्ञातव्यम् अतोत्रचैद्यादीनांभक्तियुतत्वंप्रतिपाद्यतइत्युपगंतव्यम् अन्यथा कीटोदाहरणंनिरन्वितंस्यात् उदाहरणस्यापिभक्त्यर्थ
त्वंकुतइतिचेन्न स्नेहादनंददातीतिस्वाकर्षणभयेपिवा विद्यमानेप्यल्पकोपसंगतिस्नेहतस्तथा पेशस्कृद्रूपतांकीटोयथायातितथैवतत् चैद्यादयोसुरावेशाद्धरौद्वेषयुताअपि निजस्वभावयभाक्त्यानीताह

**कीटःपेशस्कृतारुद्धःकुड्यायांतमनुस्मरन् ॥ संरंभभययोगेनविंदतेतत्स्वरूपताम् २९ एवंकृष्णेभगवतिमायामनुजईश्वरे ॥ वैरेणधूतपाप्मानस्तमा पुरनुचिंतया ३० कामात्स्नेहाद्भयाद्द्वेषाद्यथाभक्त्येश्वरेमनः ॥ आवेश्यतदघंहित्वाबहवस्तद्गतिंगताः ३१ गोप्यःकामाद्भयात्कंसोद्वेषाच्चैद्यादयोनृपाः ॥ संबंधाद्वृष्णयःस्नेहाद्यूयंभक्त्यावयंविभो ३२**

रिसरूपताम् तथापिकरुणोविष्णुरन्यावेशाद्यदिद्विषन् हीयतेकिंममानेननित्यानंदस्वरूपिणः देहबंधयुतानांहिद्वेषिणाऽपकृतंभवेत् ममकोह्यपराध्येतानिर्दोषसुखरूपिणः अतोमय्यपराधस्तुस्वस्मि
न्नेवनमेभवेत् अतोपद्यसुरावेशात्कृतमेतेनदुष्कृतम् अनादिभक्तोयस्मान्मेमोचयिष्येततस्त्वहम् इतिमत्वामोचयतिचैद्यादीनपिकेशवइतिवचनात् किंच नवैरेणेत्याद्युक्तमत्रानुसंधेयं तेनस्नेहाद्याय
तनस्यदेहस्यनाशादिनाकीटस्योपद्रवाभावाद्धरेरप्युपद्रवाभावोनुमीयते तथापिकरुणोविष्णुरन्यावेशाद्यदिद्विषन् हीयतेकिंममानेननित्यानंदस्वरूपिणइत्यादिनाच ३० इतोपिभक्तिगर्भकामादिनै
वभगवत्प्राप्तिरित्याह कामादिति कामादितितृतीयार्थेपंचमीकामादिभिरपियथायथावत् भक्त्यासहैवकृष्णेमनआवेश्यद्वेषादिनायदघमापादितंतदघंहित्वातस्यकृष्णस्यगतिंतल्लोकंगताइत्यन्वयः प्रथमतः
कामादियुक्तयाभक्त्याहरौमनःआवेश्यपश्चात्तथाभूतयाभक्त्याघंहित्वेत्यर्थः ३१ बहवइत्युक्तस्यविषयविभागमाह गोप्यइति कामात्कामयुक्तयाभक्त्या कंसःकंसाविष्टोभृगुःभययुक्तयाभक्त्या चैद्यादयः
चैद्यादिस्थाजयादयःद्वेषयुक्तया वृष्णयःसंबंधोबंधुतातन्निमित्तया यूयंपाण्डवाः समतुलितबहुमानयुक्तया वयंशुकादिशब्दवाच्याःकेवलयाभक्त्याअत्रकश्चनविशेषः गोप्यःकामयुताभक्ताःकंसाविष्टः
स्वयंभृगुः ज्ञेयोभययुतोभक्तश्चैद्यादिस्थाजयादयः विद्वेषसयुताभक्तावृष्णयोबंधुमंयुताः बहुमानस्नेहसाम्याद्देवाभक्ताःप्रकीर्तिताः स्नेहोपसर्जनादेवबहुमानान्मुनीश्वराः बहुमानोपिदेवानांऋषिभ्यो
प्याधिकोमतः ब्रह्मवीद्रेंद्रकायादेरितरेषांयथाक्रममितिवचनादवगंतव्यः ३२

भक्त्यैवपुरुषार्थोनकेवलद्वेषेणेत्याशयवानाह कतमइति कामाद्युपसर्जनभक्तियोगानांपंचानांमध्येकतमोपिभक्तियोगोवेनस्यनास्ति असौकश्चनद्वेषात्मकएव यस्माद्भक्तियोगमंतरेणपुरुषार्थोनास्तित स्मात्केनापिप्रकारेणापादितेनोपायेनभक्तिलक्षणेनकृष्णेमनोनिवेशयेन्नद्वेषादिना उपायोभक्तिरुद्दिष्टोद्वेषाद्याअनुपायकाइत्यभिधानादतउपायोभक्तिरेव अतोभक्तिमंतरेणोपायोनास्तीत्यर्थः ३३ पेशस्कृ तारुद्धइत्यत्रचैद्यादयःस्वतोभक्ताअसुरावेशाद्द्वेषिणइत्युक्तं तत्रहेतुमाह मातृष्वस्रेयइति पार्षदप्रवरत्वंस्वतोभक्तत्वे विप्रशापादसुराविष्टत्वंद्वेषित्वेहेतुः ॥ ३४ ॥ हरिदासान्हरिभक्तान् अभि मृशतिस्पृशतीतिहरिदासाभिमर्शनः हरेरेकांतिनांनियतभक्तानांभवउत्पत्तिः शरीरयोगलक्षणःस्वपदभ्रंशलक्षणःशापः अश्रद्धेयइवाभाति सयुक्तिकंनिरूपयितुंनक्षमामितिप्रतीयते ३५ तत्रकारणमाह देहेति देहाद्यभावश्चकुतस्त्यानामितितत्राह वैकुंठेति तेषांप्राकृतदेहाद्यभावेनजन्मादिकंकथंघटतइतिशक्यतइत्यर्थः देहसंबंधःदेहयोगःतस्यसंबंधःनिमित्तभूतःशापएतच्छापनिमित्तं अनेनदेहयोगंत न्निमित्तशापं तन्निमित्तंच व्याख्यातुमर्हसीत्यर्थसमुदायोलक्ष्यतइत्यर्थः ३६ तदर्थजातंकुतोवगम्यतइति परिहारवचनादित्यतआदितोवक्ति एकदेति ३७ पंचषड्ढायनार्भाभाःपंचवर्षाःषड्वर्षाःअर्भाः अर्भकाःबालास्तद्वदाभादीप्तिर्येषांतेतथा तत्समानाइत्यर्थः शिशून्मत्वापुरप्रवेशकरणायवेषांतरमापन्नानित्याशंक्येत्यर्थः द्वाःस्थौद्वारिस्थौजयविजयौ तान्सनंदनादीन्प्रत्यषेधतां वेत्रविधाने

कतमोपिनवेनस्यपंचानांपूरुषंप्रति ॥ तस्मात्केनाप्युपायेनमनःकृष्णेनिवेशयेत् ३३ मातृष्वस्रेयोवश्चैद्योदंतवक्रश्चपार्थिव ॥ पार्षदप्रवरौविष्णोर्विप्र शापात्पदच्युतौ ३४ ॥ युधिष्ठिरउवाच ॥ कीदृशःकस्यवाशापोहरिदासाभिमर्शनः ॥ अश्रद्धेयइवाभातिहरेरेकांतिनांभवः ३५ देहेंद्रियासुहीनानां वैकुंठपुरवासिनाम् ॥ देहसंबंधसंबंधमेतदाख्यातुमर्हसि ३६ ॥ नारदउवाच ॥ एकदाब्रह्मणःपुत्राविष्णोर्लोकंयदृच्छया ॥ सनंदनादयोजग्मुश्चरंतोभु वनत्रयम् ३७ पंचषड्ढायनार्भाभाःपूर्वेषामपिपूर्वजाः ॥ दिग्वाससःशिशून्मत्वाद्वाःस्थौतान्प्रत्यषेधताम् ३८ अशपन्कुपिताएवंयुवांवासंनचार्हथः ॥ र जस्तमोभ्यांरहितेपादमूलेमधुद्विषः ३९ पापिष्ठामासुरींयोनिंबालिशौयातमाश्वतः ॥ एवंशप्तौस्वभुवनात्पतंतौतैःकृपालुभिः ४० प्रोक्तौपुनर्जन्मभिर्वां त्रिभिर्लोकायकल्पताम् ॥ जज्ञातेतौदितेःपुत्रौदैत्यदानववंदितौ ४१ हिरण्यकशिपुर्ज्येष्ठोहिरण्याक्षोनुजस्ततः ॥ हतोहिरण्यकशिपुर्हरिणासिंहरूपिणा ४२ हिरण्याक्षोधरोद्धारेबिभ्रतासौकरंवपुः ॥ हिरण्यकशिपुःपुत्रंप्रल्हादंभगवत्प्रियम् ॥ जिघांसुरकरोन्नानायातनामृत्युहेतवे ४३ तंसर्वभूतात्मभूतंप्रशां तंसमदर्शनम् ॥ भगवत्तेजसास्पृष्टंनाशक्नोद्धंतुमुद्यमैः ४४ ततस्तौराक्षसौजातौकेशिन्यांविश्रवःसुतौ ॥ रावणःकुंभकर्णश्चसर्वलोकप्रतापिनौ ४५

नन्ववारयतामित्यन्वयः द्वाःस्थावित्युक्त्याजयविजययोःअधिकारस्थत्वंसूचयतितेनवैकुंठेअधिकारस्थिताःमुक्ताश्चेतिद्विविधाजनाःसंति तत्राधिकारस्थादेहादियोगित्वाद्वरशापयोग्याः पश्चात्तयोग्या इतिज्ञायते तदुक्तं अधिकारस्थिताश्चैवविमुक्ताश्चद्विधाजनाःविष्णुलोकस्थितास्तेषांवरशापादियोगिनःअधिकारस्थितामुक्तिंनियतंप्राप्नुवंतिच विमुक्त्यनंतरंतेषांवरशापादयोनतु देहेंद्रियासुयुक्ताश्चपूर्वं पश्चात्तैर्युताः अप्यमीयानिभिस्तेषांदेवैःस्वात्मोत्तमैर्युताइति अनेनवैकुंठेमुक्तामुक्तस्थानद्वयमस्तीतिज्ञायते ३८ ३९ ४० ४१ ४२ नानायातनाः बहुविधतीव्रवेदनाकारणानि ४३ सर्वभूतात्मनिच राचरांतर्यामिणिहरावेवभूतंस्थितं ४४ नन्वासुरींयोनिंयातमित्यपंशापःआसुरयोनिप्राप्तिहेतुःतत्रजयविजययोःदैत्यांजन्मतदनुगुणंकेशिन्यादिजन्मकथंयुज्यते राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिता इतिभिन्नयोनित्वादितीमांमंदाशंकां हिरण्यकशिपुर्भूतममन्यतमृतौहरिं अतोभयानकोजातस्तत्रराजानमेवच मत्वाराजैवसंजातःकृष्णंचक्रादिलक्षणैःमृतिकालेहरिंचैवमत्वाभक्त्यैवकेवलं द्वास्थत्वंहरिमा विश्यप्रापैवमनुजोपितु इत्यनेनपरिहर्तव्यं यंयंवापिस्मरन्भावंत्यजत्यंतेकलेवरं तंतमेवैतिकौंतेयेत्यादेःसुरविरुद्धत्वमुभयोःसममित्यतोहरिद्वेषश्चसमइतिभावः ॥ ४५ ॥

४६ ४७ वैरानुबंधेनवैरयुक्तभक्त्यातीव्रेणात्युत्कटेनाच्युतसाम्यतांश्रीकृष्णस्वरूपप्रवेशलक्षणां हरेर्वैकुंठगमनानंतरंपार्षदौजयविजयाख्यमूलरूपेणैकीभूयहरेःपार्श्वेजग्मतुरित्यन्वयः अनुबंध स्तुभक्तिःस्याद्बंधःस्नेहउदाहृतइत्यभिधानादनुबंधशब्दस्यनैरंतर्यार्थोनुपपन्नइति ४८ दयितत्वं महात्मत्वंचप्रश्नस्यकारण येनकेननिमित्तेन अच्युतेआत्मामनोयस्यसतथातस्मिन् ४९ ॥ इतिश्री भागवतेमहापुराणेसप्तमस्कंधेविजय०चितायांटीकायांप्रथमोऽध्यायः ॥ १ ॥ ॥ ७ ॥ ॥ हिरण्यकशिपुःस्वतोविष्णुभक्तोसुरावेशात्तद्द्वेषीत्ययंविवेकःतद्वचनेनज्ञातुंशक्यइत्येतदर्थमस्याध्यायस्यप्रारंभः तत्रप्रह्लादनाम्निपुत्रेद्वेषःकथंपितुरभूदित्यस्यप्रश्नस्यपरिहारंवक्तुमारभते भ्रातरीति १ हरिविषयरुषाभ्रातृविषयशुचा दशनच्छदओष्ठःचक्षुषोरोचिषायथाधूम्रंभवतितथापश्यन् २ भृकुट्या नीलशिरयायुक्तमुखः ३ हेपाक ४ ५ क्षुद्रैरल्पैःकपटिभिर्वा पार्ष्णिग्राहेणपृष्ठावेक्षकेणबालकेन देवानांदानवानांचसामान्यमधिदैवतंइत्यतःसमेनाप्युपधावनैःस्वोदर्चनैःविषयेण ६ त्यक्तस्वभावस्यत्य

तत्रापिराघवोभूत्वान्यहनच्छापमुक्तये ॥ रामवीर्यंश्रोष्यसित्वंमार्कंडेयमुखात्प्रभो ४६ तावद्यक्षत्रियौजातौमातृष्वस्रात्मजौतव ॥ अधुनाशापनिर्मुक्तौकृष्णचक्रहतांहसौ ४७ वैरानुबंधतीव्रेणध्यानेनाच्युतसाम्यताम् ॥ नीतौपुनर्हरेःपार्श्वंजग्मतुर्विष्णुपार्षदौ ४८ युधिष्ठिरउवाच ॥ विद्वेषोदयितेपुत्रेकथमासीन्महात्मनि ॥ ब्रूहिमेभगवन्येनप्रह्लादेप्यच्युतात्मनि ॥ ४९ ॥ इतिश्रीभागवतेसप्तमस्कंधेप्रथमोऽध्यायः ॥ १ ॥ नारदउवाच ॥ भ्रातर्येवंविनिहतेहरिणाक्रोडमूर्तिना ॥ हिरण्यकशिपूराजन्पर्यतप्यद्रुषाशुचा १ आहचेदंरुषापूर्णःसंदष्टदशनच्छदः ॥ कोपोज्ज्वलाभ्यांचक्षुर्भ्यांनिरीक्षन्धूम्रमंबरम् २ करालदंष्ट्रोग्रदृष्ट्यादुष्प्रेक्ष्यभ्रुकुटीमुखः ॥ शूलमुद्यम्यसदसिदानवानिदमब्रवीत् ३ हिरण्यकशिपुरुवाच ॥ भोभोदानवदैतेयद्विमूर्द्धन्त्र्यक्ष शंबर ॥ शतबाहोहयग्रीवनमुचेपाकइल्वल ४ विप्रचित्तेममवचःपुलोमञ्छकुनादयः ॥ शृणुतानंतरंसर्वेक्रियतामाशुमाचिरम् ५ सपत्नैर्घातितःक्षुद्रैर्भ्राता मेदयितःसुहृत् ॥ पार्ष्णिग्राहेणहरिणासमेनाप्युपधावनैः ६ तस्यत्यक्तस्वभावस्यघृणेर्मायावनौकसः ॥ भजंतंभजमानस्यबालस्येवास्थिरात्मनः ७ मच्छूलभिन्नग्रीवस्यभूरिणारुधिरेणवै ॥ रुधिरप्रियंतर्पयिष्येभ्रातरंमेहतव्यथः ८ तस्मिन्कूटेहितेनष्टेकृत्तमूलेवनस्पतौ ॥ विटपाइवशुष्यंतिविष्णुप्राणादिवौकसः ९ तावद्यातभुवंयूयंब्रह्मक्षत्रसमेधिताम् ॥ सूदयध्वंतपोयज्ञस्वाध्यायव्रतदानकान् १० विष्णुर्द्विजक्रियामूलोयज्ञोधर्ममयःपुमान् ॥ देवर्षिपितृभूतानांधर्मस्यचपरायणम् ११

क्तसाम्यावस्थस्य ततएवास्माभिःघृणेःशोच्यस्य घृणिर्विभावसौसूर्येरश्मौशोच्येविषयेणइत्यभिधानं भजंतंस्वात्मानंसेवमानंभजमानस्यमत्युपकारंकुर्वतः ७ ८ अंतर्दुष्टंदृश्यमानरमणीयंकूटंअस्थिरात्मनःकूटत्वादिभाववचनंमोहनार्थमासुरमतमुदीरितमितिज्ञातव्यं तदुक्तं विष्णुभक्तेश्चतज्ज्ञानादन्यतोमुक्तिवाचकाः विष्णोर्गुणाभासवाचःश्रीब्रह्मादेस्तथाक्रमात् विष्ण्वादिद्वेषिणश्चैवसुखवाचस्तथाखिलाः मोहनार्थाःसमुद्दिष्टायथार्थद्योतकास्तथेति ९ १० द्विजक्रियामूलःद्विजाश्चयज्ञादिक्रियाश्चमूलंयस्यसतथाभक्तिज्ञानादिमंतरेणकेवलंयागादिक्रिययाप्रसन्नोभवतीतिएतदासुरंमतम् । विष्णुभक्तेश्चतज्ज्ञानादन्यतोमुक्तिवाचकाइत्येतदत्रापिप्रमाणम् । द्विजैःक्रियमाणं यागादिक्रियांमूलयतिप्रतिष्ठापयतिइतिद्विजक्रियामूलइत्येतद्देवमतं मूलप्रतिष्ठायामितिधातुः इज्यतइतियज्ञः धर्ममयः धर्मप्रधानः दानादिधर्मेणप्रसीदतीत्येतदप्यासुरमतं यथार्थद्योतकइतिवचनाद्धारकतमइत्यन्योर्थः परायणमुत्तमाश्रयमित्येतद्देवमतम् ११

संदीपयतदहत वृक्षतांछिंदत १२ कदन कदर्हिंसा।वाम् १३ गवामावासस्थानंव्रजः गोपालवसतिर्वा आश्रमोमुनिनिवासः आकरोरत्नाद्युत्पत्तिस्थानं खेटःनाट्यस्थानं खर्वटोवसनविक्रयस्थानं घोषआभीरपल्लिः वणिग्भिरधिष्ठितंपत्तनम् १४ आजीव्यान्वृक्षान्नारिकेलक्रमुकान्पनसादीन् १५ विप्रकृतेविपरीतमापादितेविनाशिते १६ १७ कटोदकंप्रेतमुद्दिश्यदीयमानमुदकम् १८ तन्मातरंतेषांमातरंनाम्नारुशद्भानुंदितिजननींच श्लक्ष्णयागिराइदमाहेत्यन्वयः १९ हेवधूःहेसहोदरभार्येहेपुत्राश्च परेणवधऐहिकामुष्मिकजनश्लाघ्योनभवतीतिकृत्वाशोकउतात्रैवकंचित्कालंजीवानीतिअभीष्टहान्याप्राप्तः आहोस्वित्पितृमातृपुत्रभावस्यक्षणिकतेति तत्रप्रथमद्वितीयौपक्षौत्याह रिपोरिति २० तृतीयंमातरंएकांकयाशीकृत्याह भूतानामिति इहकर्मभुवे दैवेनाविधिनान्यत्रहरिणावाएकत्रनीतानांसंमिलितानामुन्नीतानांपुत्रपौत्रादिसमृद्धिंप्रापितानांभूतानामेकत्र सवासःसहवासः प्रपायांपानीयशालायामिवयथाऽध्रुवस्तथाऽनित्योभवतीत्यन्वय' प्रपापानीयशालास्यान्मंत्रशालाप्रतिश्रयइत्यभिधानम् २१ भूतानांसहवासोऽनित्यश्चेत्तर्हिकेनसहवासोनित्यइत्याशंक्यसर्वगतत्वाज्जीवस्यमनआदींद्रियाधारत्वाद्धरिणासहवासोनित्यः सतासौम्यतदासंपन्नोभवति

यत्रयत्रद्विजागावोवेदावर्णाश्रमाःक्रियाः ॥ तंतंजनपदंयातसंदीपयतवृश्चत १२ इतितेभर्तृनिर्देशमादायशिरसादृताः ॥ तथाप्रजानांकदनंविदधुःकदनप्रियाः १३ पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ॥ खेटखर्वटघोषांश्चददहुःपत्तनानिच १४ केचित्खनित्रैर्बिभिदुःसेतुप्राकरगोपुरान् ॥ आजीव्यांश्चिच्छिदुर्वृक्षान्केचित्परशुपाणयः १५ प्रादहञ्छरणान्यन्येप्रजानांज्वलितोल्मुकैः ॥ एवंविप्रकृतेलोकेदैत्येंद्रानुचरैर्मुहुः १६ दिवंदेवाःपरित्यज्यभुविचेरुरलक्षिताः ॥ हिरण्यकशिपुर्भ्रातुःसंपरेतस्यदुःखितः १७ कृत्वाकटोदकादीनिभ्रातृपुत्रानसांत्वयत् ॥ शकुनिंशंबरंधृष्टंभूतसंतापनंवृकम् १८ कालनेमिंमहानाभंहरिश्मश्रुमथोत्कलम् ॥ तन्मातरंरुशद्भानुंदितिंचजननींगिरा ॥ श्लक्ष्णयादेशकालज्ञइदमाहजनेश्वर १९ हिरण्यकशिपुरुवाच ॥ अंबांबहेवधूःपुत्रावीरंमार्हथशोचितुम् ॥ रिपोरभिमुखेश्लाघ्यःशूराणांवधईप्सितः २० भूतानामिहसंवासःप्रपायामिवसुव्रते ॥ दैवेनैकत्रनीतानामुन्नीतानांतथाध्रुवः २१ नित्यआत्माऽव्ययःशुद्धःसर्वगःसर्ववित्परः ॥ धत्तेसावात्मनोलिंगंमायथाविसृजन्गुणान् २२ यथांभसाप्रचलतातरवोपिचलाइव ॥ चक्षुषाभ्राम्यमाणेनदृश्यतेभ्रमतीवभूः २३

श्रुतेनात्मनान्वारूढउत्सर्जयतीत्यादिनासुप्तिमरणावस्थयोरपिसहास्थित्युक्तेरन्यदाकिंवक्तव्यमित्याशयेनदैवंमतमाह नित्यइति असौ हरिरात्मनोजीवस्यमनआदींद्रियज्ञानंधत्ते तस्याधारभूतइत्यर्थः नित्यत्वादिकंस्वरूपत्वेनोच्यते । परइतिजीवव्यावर्तकं माययास्वेच्छयावा सनयावा गुणान्शब्दादीन्विसृजन्ददानः संसारिणइवचिदचित्देहेनमनआदीना नित्यसंबंधोयुज्यतइत्यतःसर्वगत इत्युक्तं प्रपायांप्राणिसहवासवत्परमात्मनोदेहसंबंधोनित्यइत्याशयेनासुरमतमप्यनेनोच्यते गुणान्विसृजन्बुभूषुरसावात्मापरमात्माआत्मनोभोगायतनंलिंगंकर्मज्ञानेंद्रियपंचवायुमनसासमुदितरूपंशरीरंधत्ते मायेत्युक्त्याऽनित्योदेहसंबंधइति २२ इतोपिअविद्यावशाद्ब्रह्मैवसंसरतीत्येतदासुरंमतमित्याशयेनाह यथेति एवगुणैर्भ्राम्यमाणेइतस्ततश्चंचलीक्रियमाणेमनस्यविकलःपुमान्पूर्णपुरुषःश्रीनारायणःतस्यजीवस्यसाम्यंदोषित्वंसंसारित्वंयातीतिप्रतीयते कथमिवलिंगवानिवजीवइव मनोदोषैराभासेब्रह्मप्रतिबिंबेजीवेदूषितेतद्विषयज्ञानहीनेसातितन्महाभासिनोबिंबभूतस्यब्रह्मणो

१ आसुरमतंदर्शयति २ लिंगवानिवेत्यत्रधत्तेसावात्मनोलिङ्गंपरब्रह्मणोलिङ्गाधारकत्वेनाधाराधेयभावत्वेनलिङ्गत्त्वात्तदुच्यतइतिभातिअतःसप्रमाणमाह जीवइति ।

पिदुष्टत्वंकल्पयतीत्यर्थः नचैतदुपपत्तिमदित्याह अलिंगइति नीरूपं तस्मादघटिताविद्याकल्पितामित्यर्थः अन्यत्रप्राकृतशरीररहितः कथमिव प्रचलितांभस्तातरवोपिप्रचलाइवदृश्यंते यथाजल संचलनाज्जलेप्रतिबिंबितवृक्षसंचलनात्तटस्थानिश्चलवृक्षसंचलनंकल्पयत्यज्ञस्तथेति नन्वत्रप्रतिबिंबितवृक्षचलनेनतटस्थवृक्षचलनकल्पनमुन्मत्तकल्पनमेव प्रदक्षिणान्यथादृश्यमानत्वादित्युक्त्वादृष्टां तांतरमाह चक्षुषेति यथापरिभ्रमतःपुरुषस्यभ्राम्यमाणेनचक्षुषाभूर्भ्रमतीवदृश्यते असमःसमतामेतिभ्रांतिदृष्टचैवकेवलं जीवेनब्रह्मनसमंतत्त्वदृष्ट्याकथंचन यथोदचालनाद्वृक्षप्रतिबिंबप्रचालनात् तटस्थवृक्षचलनकल्पयेदबुधोनरः तथामनसिजैर्दोषैराभासेदूषितेनरे आभासिनोब्रह्मणश्चदोषमज्ञःप्रकल्पयेत् आत्मनश्चक्षुषोभ्रांत्यायथापश्येद्भ्रमंभुवः तथैवस्वात्मनोदोषाद्दोषवद्ब्रह्मपश्यतीत्येतत्प्र माणसिद्धत्वादुक्तएवार्थोनत्वितरः विष्णुर्द्विजक्रियामूलइत्यारभ्योच्यमानंदैवमासुरंचेत्युभयमतज्ञापनाय विप्रयज्ञादिमूलंतुहरिरित्यासुरंमतं हरिरेवहिसर्वस्यमूलंसम्यङ्मतंनृपेत्येतद्वाक्यशब्दार्थैर प्रोदाहृतमुपर्यप्यनुसंधानायचेति २३ २४ परमात्मानमेवंजानतःकिंफलंतत्राह एषइति अलिंगेप्राकृतदेहेंद्रियादिरहिते अतएवपरतंत्रत्वादिसर्वदोषरहितेपरमात्मनियालिंगभावनाप्राकृतदेहेंद्रियात्म

एवंगुणैर्भ्राम्यमाणेमनस्यविकलःपुमान् ॥ यातितत्साम्यतांभद्रेह्यलिंगोलिंगवानिव २४ एषआत्मविपर्यासोह्यलिंगेलिंगभावना ॥ एवंप्रियाप्रियैर्योगोवि योगःकर्मसंसृतिः २५ संभवश्चविनाशश्चशोकश्चविविधःस्मृतः ॥ अविवेकश्चचिंताचविवेकस्मृतिरेवच २६ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ यमस्यप्रेतबंधूनांसंवादंतंनिबोधत २७ उशीनरेष्वभूद्राजासुयज्ञइतिविश्रुतः ॥ सपत्नैर्निहतोयुद्धेज्ञातयस्तमुपासत २८ विशीर्णरत्नकवचंविभ्रष्टाभरण स्रजम् ॥ शरनिर्भिन्नहृदयंशयानमसृगाविलम् २९ विकीर्णकेशंस्तब्धाक्षंसरंभाद्दष्टदच्छदम् ॥ रजःकुंठमुखांभोजंछिन्नायुधभुजंमृधे ३० उशीनरेंद्रंविधि नातथाकृतंपतिंमहिष्यःप्रसमीक्ष्यदुःखिताः ॥ हताःस्मनाथेतिकरैरुरोभृशंघ्नंत्योमुहुस्तत्पदयोरुपापतन् ३१ रुदंत्यउच्चैर्दयितांघ्रिपंकजंसिंचंत्यअस्रैःकुचकुं कुमारुणैः ॥ विस्रस्तकेशाभरणाशुचंनृणांसृजंत्यआक्रंदनयाविलेपिरे ३२ अहोविधात्राऽकरुणेनन‌ःप्रभुर्भवान्प्रणीतोदृगगोचरंदशाम् ॥ उशीनराणामसिवृ त्तिदःपुराकृतोधुनायेनशुचांविवर्धनः ३३ त्वयाकृतज्ञेनवयंमहीपतेकथंविनास्यामसुहृत्तमेन ॥ तत्रानुयानंतववीरपादयोःशुश्रूषतीनांदिशयत्रयास्य सि ३४ एवंविलपतीनांवैपरिगृह्यमृतंपतिम् ॥ अनिच्छतीनांनिर्हारमर्कोस्तंसंन्यवर्तत ३५

त्वादिचिंता एषआत्मनःस्वस्यैवायोग्यस्यजनस्यविपर्यासस्तमःप्राप्तिलक्षणोनर्थोभवति इहापियथापरत्रतमोलक्षणोनर्थएवंप्रियाप्रियादियोगवियोगलक्षणापूर्वकर्मानुसारेणसंसृतिर्भवति २५ कीदृ शीतिविशेष्याह संभवइति अज्ञानपूर्तिपर्यंतंपुनःपुनःसंभवस्तस्मिन्सतिस्वरूपविनाशः विवेकस्मृतिः अविवेकिनएवाविवेकभ्रांतिः ज्ञानित्वभ्रांतिः असुरसिद्धांतनिष्ठितस्यहिरण्यकशिपोरेवंदैवसिद्धा न्तोपन्यासेनकथंस्वबंधुबोधनमितीयमाशंका अंतर्हिरण्यकादीनांभक्तिरस्त्येवकेशवे असुरावेशतस्त्वन्यान्हरिस्तोतॄन्द्विषंतिचेत्यनेनपरिहरणीयेति २६ पुत्रमित्रकलत्रादिभिःसहनिवासोदैवाधीन इतिमत्वाशोकोनकार्यइत्यस्मिन्नर्थेइतिहासलक्षणकथास्तीत्याह अत्रेति प्रेतबंधूनांकस्यचिन्मृतस्यज्ञातीनां २७ २८ असृगाविलंरुधिरप्लावितम् २९ स्तब्धाक्षंनिश्चलनेत्रं रजःकुंठधूलिधूसरंमुखं भुजंयस्यसतथातं छिन्नायुधयुक्तौभुजौयस्यसतथातं ३० ३१ कुचकुंकुमधूलिभिररुणवर्णैराक्रंदनयाउच्चरोदनेननृणांशुचःशोकान्विसृजंत्यःकुर्वाणाविलेपिरे परिदेवनचक्रुः ३२ नोदृशाचक्षुषा मगोचरमविषयंनीतःयेनविधिना ३३ स्यामसत्तांप्राप्नुमःतर्हिकिंकर्तव्यमत्राह तत्रेति यत्रयास्यसि तत्रपादयोरनुयानंदिश ३४ निर्हारंदाहम् ३५

इत्यनेनकथांतरमसाक्तिंसूचयतियमः ३६ माकुरुध्वंपूयंशोकं युष्मभ्यंमुयज्ञोदत्तइत्यादेरीरिततत्राह अहोइति लोकविधिंजन्ममरणादिप्रकारांविपश्यतामप्यमीषांप्रेतबंधूनांविमोहअहोधिक् स्वयंसधर्माःज न्मादिसमानधर्माःअमीबंधवःपत्रयस्यमनुष्यदर्शनायोग्यात् स्वर्गनरकादन्यत्रोद्भवउत्पत्तिर्देहयोगलक्षणाभूत्तंतत्रतत् अस्मच्चक्षुरगोचरंस्वर्गादिकंगतमनुष्यमनुशोचंतीतियत्तदपार्थंव्यर्थं गतानु गतिकत्वात् अदर्शनादिहायातःपुनश्चादर्शनंगतइतिवचनात् यत्रस्वर्गादेरुद्भवोयस्यसयत्रोद्भवस्तत्रगतंस्वर्गादिगतमितिवा अपार्थमनुशोचंतीतिवा सर्वस्यदैवाधीनत्वंस्वानुभवसिद्धमितिज्ञापयत्यहोइ ति यद्वा यत्रउत्पन्नंतत्रपृथिव्यांगतमनुष्यशरीरंप्रतिव्यर्थंअनुशोचतीति ३७ तस्मात्सर्वंदैवाधीनमितिमत्वा नशोकःकार्यइत्याशयेनाह अहोवयमिति पितृभ्यां मातापितृभ्यां अबलादुर्बलाः कुतश्चताना स्तीतितत्राह सरक्षितेति योगर्भेऽस्मान्रक्षतिसभवानधुनाबहिर्गतान्रक्षिताहियस्मात्तस्मादितिशेषः ३८ नकेवलंरक्षिताऽपितुसृष्ट्यादिकर्ताप्यतोनसंशयःकार्यइतिभावेनाह यदृच्छयेति अत्रेच्छयेती च्छाग्रहणेनसर्वत्रसृष्टिप्रसंगेमायाशब्दस्येच्छार्थोज्ञायतेहेअबलाःसृष्ट्यादिकर्तायतोअतःमरणलक्षणस्यनिग्रहस्यसंग्रहेपरिहारलक्षणे प्रभोःसमर्थस्यतस्येशितुश्चराचरं क्रीडनंलीलासाधनम् ३९ दै वाधीनंजगत्सर्वमित्युक्तेःकथमीश्वराधीनंचराचरमित्याशंक्यदिष्टदैवादिशब्देनसंस्तुतोच्युतइत्याशयेनाह पथीति भक्तायाभीष्टंदिशतीति दिष्टशब्दवाच्योमुकुंद.तेनरक्षिततेनविहत अस्यानेनहतः

तत्रहप्रेतबंधूनामाश्रुत्यपरिदेवनम् ॥ आहतान्बालकोभूत्वायमःस्वयमुपागतः ३६ ॥ यमउवाच ॥ अहोअमीषांवयसाधिकानांविपश्यतांलोकविधिं विमोहः ॥ यत्रोद्भवस्तत्रगतंमनुष्यंस्वयंसधर्माअनुशोचंत्यपार्थम् ३७ अहोवयंधन्यतमायदत्रत्यक्ताःपितृभ्यांनविचिंतयामः ॥ अभक्ष्यमाणाअबलावृकादिभिःसरक्षितारक्षतियोहिगर्भे ३८ यइच्छयेशःसृजतीदमव्ययोयएवरक्षत्यवलुंपतेयः ॥ तस्याबलाःक्रीडनमाहुरीशितुश्चराचरंनिग्रहसंग्रहेप्रभोः ३९ पथिच्युतंतिष्ठतिदिष्टरक्षितंगृहेस्थितंतद्विहतंविनश्यति ॥ जीवत्यनाथोपितदीक्षितोवनेगृहेपिगुप्तोस्यहतोनजीवति ४० भूतानितैस्तैर्निजयोनिकर्मभिर्भवंतिकालेनभवंतिसर्वशः ॥ नतत्रहात्माप्रकृतावपिस्थितस्तस्यागुणैरन्यतमोनिबध्यते ४१ इदंशरीरंपुरुषस्यमोहजंयथापृथग्भौतिकमीयतेगृहम् ॥ तथोदकैःपार्थिवतैजसैर्जनःकालेनजातोविकृतोविनश्यति ४२

सकाशाद्वा ४० सृष्ट्यादिकंकुर्वन्नात्मातत्तत्प्राणिकर्माण्युल्लंघ्यकरोत्युततदनुसारेणेतितत्राह भूतानीति निजयोनिकर्मभिःस्वजानिविहितकर्मभिःभूतानिविहितकालेभवंतिनभवंतीत्यात्मप्रेरितैरि तिशेषः द्रव्यंकर्मचकालश्चेत्यादेः कालशब्दवाच्यपरयात्माधिकरणतयासृष्ट्यादिकमाप्नुवंतीतिवा ननु जीवात्मनोरुभयोरपिदेहास्थिते.कस्यसंसारबंधाभावइतिसुहृद्भावेनपृच्छंतमाह नतत्रेति त त्रतयोर्जीवपरयोरन्यतमआत्माप्रकृतौप्रकृतिनिर्मितशरीरेस्थितोपितस्याःप्रकृतेर्गुणैः सत्त्वादिभिर्ननिबध्यते हाकिल सत्त्वंसुखेसंजयतिरजःकर्मणिभारत ज्ञानमावृत्यतुतमःप्रमादेसंजयत्युतेत्यादि वाक्ये.कबंधोनास्तीत्यर्थः हेत्यनेन तुच्छ्येनाभ्वपिहितंयदासीत्तपसस्तन्महिनाजायतैकं इतिवाक्यंसूचयति सुविरुद्धस्वरूपत्वाज्जीवादन्यतमोहरिरित्यतोहरेरन्यतमत्वंप्रामाणिकमेव परमात्मानब ध्यतेऽन्यतमोबध्यतेइत्येतदुत्तरश्लोकेनगुनरुक्तंस्यादित्यन्यथाव्याख्यातमाचार्यैरन्यतमआत्मापरमात्मेति ४१ परमात्मनोबंधाभाववचनेनजीवात्मनोर्योभेदःअर्थाद्बंधःसकेनप्रकारेणेत्याशंक्याह इ दंशरीरमिति पुरुषस्यससारिणोमोहेनान्यथाज्ञानेन मुहवैचित्येइतिधातोः विपरीतज्ञानजंयस्मात्तस्मादात्मनोभिन्नमितिज्ञातव्यं तथाहि भौतिकभूतविकृतैर्वृक्षैर्विरचितंगृहं गृहस्थात्पृथग्भिन्नमीयतेयथा

१ तथाचकालइतिसप्तम्याअधिकरणत्वमितिसूचितम्

विनश्यतिचत्तथोदकैःपार्थिवतैजसैः परमाणुभिःकालनाम्नाहारिणाचोदितैर्विकृतोविकारंप्राप्तोजातोजन्यतइतिजनोदेहोविनश्यति स्वकारणावस्थितिमाप्नोतीतियस्मात्तस्माज्जीवाद्भिन्नइतिनिश्चीयत नित्योनित्यानामितिश्रुतेः जीवस्यनित्यत्वात् ४२ तदेवदृष्टांतांतरेणस्पष्टयति यथेति यद्वा ननुजीवस्यशरीराद्भेदोस्तु तस्यनश्वरत्वात्परमात्मनाजीवस्याभेदःकिनस्यादितिमंदाशंकांपरिहरति य थेति दारुषुस्थितोवह्निर्दारुभ्योभिन्नस्तद्गुणैस्तेषुनसज्जतेयथादेहिनांदेहगतोवायुर्देहान्पृथक्स्थितस्तद्गुणैश्चनलिप्यते यथासर्वगतंनभःसर्वस्माद्भिन्नंज्ञायतेसर्ववस्तुगुणैश्चनलिप्यतेयथा तथाज्ञानानं दादिसर्वगुणाश्रयःपरःपरमात्मासर्वेषांजंतूनांगुणभूतंभोगायतनंशरीरमाश्रयोयस्यसः सर्वगुणाश्रयःसर्वजीवदेहगतःपरोविलक्षणोभिन्नइतियावत् जीवादितिशेषः प्रकृतत्वाज्जीवगुणैर्नलिप्यतइति । देहाद्भेदस्यप्रकृतत्वात्सएवात्रोच्यतइति किंनस्यादितीयंशंका देहदारुगतौप्राणवह्नीसर्वगतंनभः देहादिभ्योयथाभिन्नानलिप्यंतेचतद्गुणैः तथाजीवगतोविष्णुर्जीवाद्भिन्नोनतद्गुणैरितिवाक्येनपरिहर्त व्या अत्रायंफलितार्थःभगवन्माहात्म्यकथनेनसर्वस्यतद्वशत्वात् सएवभजनीयोनशोकेनप्रयोजनमिति ४३ किंच भवच्छोकयोग्यस्यसुयज्ञस्यदृश्यमानत्वात्तंप्रतिशोकोनकार्यइतिगूढाक्षेपंकरोति सुयज्ञइति हेमूढाःयमनुशोचथायंसुयज्ञःशेतेनिद्रांकरोति ननुनमृतःननुचस्याद्विरोधादावित्यभिधानात् शेतएवलोकांतरंगतइतिवा प्रश्नावधारणानुज्ञानुनयामंत्रणेनान्वित्यभिधानात्अवधार णार्थोननुशब्दः श्रोत्रादींद्रियव्यापारादर्शनादिनामरणानुमानात्कथंनमृतइत्याक्षिप्यतइतितत्राह यःश्रोतेति इहसुयज्ञशरीरेयःश्रोतायश्चानुवक्तासपरमात्माकर्हिचित्कदाचिदपिनदृश्यतेतस्यसूक्ष्म स्वभावत्वात् तदव्यक्तमाहहीतिसूत्राच्च तस्यैवश्रोतृत्वादिकंकुतइतिचेन्न नान्योतोस्तिद्रष्टा नान्योतोस्तिश्रोतेत्यादेः ४४ ननु सुयज्ञशरीरस्थस्यमुख्यप्राणस्यश्रोतृत्वादिसंभवात् कथंतदन्यथा

**यथानलोदारुषुभिन्नईयतेयथानिलोदेहगतःपृथक्स्थितः ॥ यथानभःसर्वगतंनसज्जतेतथागुणैःसर्वगुणाश्रयःपरः४३ सुयज्ञोनन्वयंशेतेमूढायमनुशोचथ॥ यःश्रोतायोनुवक्तेहनसदृश्येतकर्हिचित् ४४ नश्रोतानानुवक्तायंमुख्योप्यत्रमहानसुः ॥ यस्त्विहेंद्रियवानात्मासचान्यःप्राणदेहयोः ४५ भूतेंद्रियमनोलिंगान्देहानुच्चावचान्विभुः ॥ भजत्युत्सृजतिह्यन्यस्तच्चापिस्वेनतेजसा ४६**

गन्यवच्छेदःक्रियतइतितत्राह नश्रोतेति अत्रसुयज्ञदेहेश्वासोच्छ्वासादिलक्षणेनमुखेव्यज्यमानत्वान्मुख्योयोमहानसुःमुख्यप्राणःसोपिस्वतोनश्रोतानानुवक्ताच तस्यवाङ्मनसिसंपद्यतेमनःप्राणेप्रा णस्तेजसितेजःपरस्यांदेवतायामितिश्रुतेरन्ययोगव्यवच्छेदोयुक्तइति ननुर्नहिसुयज्ञनाम्नोजीवस्यश्रोतृत्वादिकमासीत्प्राक्तदिदानीन तस्मान्मृतइतिप्राचीनशंकाशेषंकैमुत्यन्यायेनपरिहरति यस्त्विति तुशब्देननेत्यनुकृष्यते इहसुयज्ञेत्युपलक्षणम् जीवराशिदेहेयइंद्रियवान्यश्चप्राणदेहयोरन्यःसजीवात्माश्रोतुंवक्तुंचनशक्यइतिकिंवक्तव्यम् एतद्वाणमवष्टभ्यविधारयामीतिश्रुतेः सर्वशक्तिमतोपिप्राण स्यस्वतःश्रोतृत्वाद्ययुक्तेरुक्तत्वात्तस्मात्सुयज्ञंप्रतिशोकेनकिंप्रयोजनं तस्माज्जीवतामपिश्रोतृत्वाद्यनुपपत्तेःप्रामाणिकत्वेनमृतोपमित्यस्यलक्षणांतरंवक्ति अन्यइत्यनेनहरेर्माहात्म्यातिशयःप्रकटितइ तिसूचितम् नकेवलंप्राणदेहयोरन्यःकिंतुपूर्णश्रोतृत्वादिगुणयुक्ताद्धरेश्चान्यइतिचशब्दार्थः ४५ हरेर्देहस्थितिसद्भावेनतस्मादप्यन्यइतिवक्तुंयुक्तम् तत्कुतइतितत्राह भूतेंद्रियेति भूतेंद्रियमनांसिलिंगंच पंचेषांवेतथातानुच्चावचान्सुरनरतिर्यगात्मनउत्तममध्यमाधमान्देहान्भजति पश्चादुत्सृजतिहियस्मात्तस्मादन्यइतिवक्तुंयुक्तम् स्पष्टंचाह अन्यइति देहयोगवियोगभाजोजीवादितिशेषः लिंगंस्वरूप मुद्दिष्टंलिंगंज्ञापकमेवचेतिवचनाल्लिंगशब्दस्यस्वरूपार्थोयुक्तःयदिदेहभजनोत्सर्जनेहरेस्तर्हिजीवात्कोविशेषइतितत्राह तच्चेति परिच्छिन्नविषयंभजनोत्सर्जनंव्याप्तस्यविष्णोःकथंघटेतेत्यतोवाह तच्चेति तच्चशब्देनजीवस्यपारतंत्र्येणेतिविशेषमाह अपिशब्देनरूपांतरेणेत्युपपत्तिमाह अत्रजीवपरमात्मनोर्भेदस्यतयोरुभयोर्देहादेर्भेदस्यच हरेरेवमुख्यश्रोतृत्वादेश्चप्रकरणात्तात्पर्यस्यचज्ञापनायचाथैं

 

 

पूर्वापरभावेनेंद्रियवान्जीवइत्यादिव्याख्यातं ननु जीवस्यप्राणदेहयोरन्यत्वेमरणेदेहनाशान्मुक्तौतदभावाद्विषयभोगाभावइत्याशंकापरिहारायोक्तमाचार्यैः अन्योजीवोचितोदेहाचद्वशोदेहउच्यतेइति । जडदेहादन्यत्वेनस्वरूपभूतादुच्यतइत्यर्थःअचितोजडात् इंद्रियत्वंचामुख्यंतेषामवशत्वादाभिमानादेव तद्द्वयंपश्यामीत्यभिमानोस्येत्यादेः तर्हिचक्षुरादीनिकस्याधीनानिइत्यतःप्राणाधीनानीतियो तायितुं चक्षुराद्यामनोजीवइत्यादेःप्राणेपिपर्याप्तमित्युक्त तस्यापिज्ञातृगंतृत्वंनस्वतःशक्यतेकचिदिति यस्तस्यज्ञातृगतृत्वदातासभगवानित्याद्यापिसूचितं यःश्रोतेत्यत्रप्रमापंज्ञाताचमंताचेत्या दि ज्ञानादिददानतस्यान्यइत्येतदन्वितिसूचितं सर्वस्यज्ञानदोहरिरित्यतत्रसहदर्येतेत्यनेनसूचितं स्वविषयज्ञानदातेतिचेतिदहश्यइत्यर्थः भूतेंद्रियमनइत्यादिनाविष्णुरुच्यते नजीवइत्यत्रमानंसदे हान्भजतइत्यादिना ४६ नन्वयंजीवःकियंतंकालंदेहान्वितोभवतिइतिचोद्यंपरिहरति यावदिति यावंतंकालमन्नमयप्राणमयमनोमयलक्षणेषुलिंगेषुअन्वितोभवति आत्मापरमात्मातावत्तत्कालकर्मभिर्नि तरांबंधनंयस्यसतथाजीवः येषुदेहेषुअन्वितोभवति हिशब्दाद्धरिर्यदात्रिविधदेहानुत्सृजाति तदास्वयमप्युत्सृजतीतिग्राह्यं अत्रायंविशेषः यदापरमात्मादेहंसर्वात्मनोत्सृजति तदायमपिसर्वात्म ना तदनुग्रहेणोत्सृज्यसंसारान्मुक्तोभवतिनचेदनेनसहदेहांतरंभजतीति तस्माद्ध्यानेनरूपांतरेणकृतदेहोत्सर्जनत्वादनेनापिसुयज्ञेनतदाचरितमितिदेहोत्सर्जनलक्षणमरणस्यपराधीनत्वेनापरिहार्य त्वान्नशोकेनप्रयोजनमितिभावः यावद्देहान्वितोविष्णुस्तावज्जीवइत्येतदत्रमानं यदोत्सृजतिदेहंसहरिःसर्वात्मनाविभुरितिच ननु परमात्माजीवाभिन्नःसन् देहान्भजत्पुनःसृजतीत्युच्यतेइतिकिंन स्यात् कल्पनालाघवादेकमेवब्रह्माज्ञानात्संसरतिमुच्यतइत्यंगीकाराच्चेतितत्राह ततइति तस्माद्धरेर्जीवोविपर्ययोविरुद्धःपर्ययःनिश्चयोयस्यसतथा विरुद्धलक्षणइत्यर्थःअतिभिन्नस्वरूपौतौजीवेशा

**यावल्लिंगान्वितोह्यात्मातावत्कर्मनिबंधनः ॥ ततोविपर्ययःक्लेशोमायायोगोनुवर्तते ४७ वितथाभिनिवेशोयंयद्गुणेष्वर्थदृग्वचः ॥ यथामनोरथःस्व प्नःसर्वमैंद्रियकंमृषा ४८**

वेकदेहगौइत्यादेः अतोब्रह्मणोज्ञानकल्पनमप्रामाणिकमितिभावः देहाभिमानीत्वेकोत्रनमानीमानदःपरइत्येतद्भेदोपपादकं इतोपिभिन्नइत्याह क्लेशइति नानाक्लेशाधिकरणत्वादभिन्नइत्यर्थः त्रिपर्ये पस्तावत् क्लेशादयश्चास्येत्यादेःक्लेशफलमाह मायेति ४७ कोयंमायायोगोनामयेनासौक्लेशफलःस्यादितितत्राह वितथेति गुणेषुशब्दादिषुअर्थदृग्वचः प्रयोजनदर्शनंतद्वाचकंवचनचस्वर्गेलोके नभयंकिंचनास्तीत्यादिलक्षणंयत् अयंवितथाभिनिवेशः मिथ्याग्रहः भ्रांतिज्ञानमित्यर्थः क्लेशपरिजिहीर्षयाशब्दादिष्विंद्रियप्रवर्तनंतत्फलमित्युपचारः वचनाद्धिवितथाभिनिवेशोभवति गुणे ष्वर्थदर्शनस्यापितथाभिनिवेशित्वंसदृष्टांतमाह यथेति सप्तसुप्रथमेतिसूत्रात् मनोरथेकल्पितंराज्यंस्वप्नेदृष्टंरत्नंयथामृषावृथा तथासर्वमैंद्रियप्रवर्तनंमृषासदसद्विलक्षणमित्यर्थः वृथेंद्रियवृत्तयइत्येत द्विरुणद्धि इंद्रियाद्यभिमानेनतद्वान्जीवउदीर्यते अतन्यानाद्धरिःभोक्तस्त्वदेहोर्निद्रियस्तथा जीवानाभिमतेदेहेनविष्णुर्जीवतिस्थितः अतस्त्वदेहउद्दिष्टःपरमात्मासनातनइत्येतज्जीवपरयोर्भेदस्यजीव स्येंद्रियवत्त्वमौपचारिकमित्यस्यचोपपादनेप्रमाणं जीवस्येंद्रियवत्त्वमुपचरितंचेत्कस्यतन्मुख्यमित्याशंका लेपाभिमानीजीवस्तुस्वरूपानुभवीनच मुक्तेःप्राक्तेनमान्युक्तोनमानीविष्णुरुच्यते स वैममेतिपश्यन्नप्यलेपाभिमतिर्यतः सम्यक्स्वरूपानुभवात्स्वतंत्रत्वाददोषतः इत्यनेनपरिहर्तव्या स्वानधीनेवस्तुनिस्वाधीनताबुद्धिर्लेपाभिमानः सोस्यास्तीत्येतादृशदोषोवितथाभिनिवेशइत्युच्यते हरेर्जीवदेहेंद्रियादिषुस्वाधीनेषुस्वाधीनताबुद्धिर्लेपाभिमानः सगुणोयथार्थज्ञानलक्षणः तस्माद्धरेर्देहेंद्रियादौस्वामित्वेनतद्वत्त्वंमुख्यं तत्राविवेकग्रहणंकर्मनिबंधनं ततोविपर्ययइत्यादिलक्षणैर्जीवोऽन्यो हरेःश्रीनारायणइतिस्मर्तव्यम् ४८

यस्मात्सर्वस्येश्वराधीनत्वेनजंतूनांमरणादिकमपरिहार्यंतस्मात्सर्वथादेहेंद्रियादेरनित्यत्वं नित्यत्वंवास्तु तथापिशोकःकरणंनपंडितमतं गतासूनगतासूंश्चनानुशोचंतिपंडिताइत्यादेरित्याह अथेति
अतस्त्वनुसूर्वमतमितिसंतोष्टव्यंस्वभावत्वादित्याह नान्यथेति ४९ अस्मिन्नेवार्थेकंचनेतिहासमाह लुब्धकइति लुब्धको मृगयुर्निर्मितोविधिनेतिशेषः वितत्यविस्तृत्य प्रलोभनंदधत् ५० ५१ सिचा
जालेनसहयंत्रितयातंत्यासूत्रेण महिषीकुलिंगभार्या कालयंत्रिताकालाधीना अकल्पोऽसमर्थोमोचयितुमितिशेषः पर्यदेवयद्विलपितवान् ५२ ५३ दुःखंजीवितादीनेनक्षीणेनात्मनोर्द्धेनजेनग्रहादिप्रयो
जनं नकिमपि कुतोविधुरायुषाऽऽयूरहितेनात्मनोर्द्धस्यनष्टत्वात् ५४ मेप्रजाःपुत्राः ५५ शाकुनिकःपक्षिमारकः कालेनान्तकेनप्रहितःप्रेरितः निलीनोवृक्षमूलेच्छन्नः कुलिङ्गंदीर्घतुंडं दार्वाघाटोदारु
कुट्टः कुलिंगोदीर्घतुंडकइत्यभिधानं ५६ अनेनप्रकृतेकिमभूत्तत्राह एवमिति आत्मापायंपुत्रनाशंदेहनाशंवा ५७ किंज्ञातयोबालभाषितमित्युपेक्षांचक्रुरिति तत्राह । बालइति यदेहादिकंनत्सर्वमनित्यं
मेनिरे यदेहात्मत्वंयदयथोत्थितंस्वप्नजाग्रत्त्ववद्भ्रांतिंमेनिरे अहंममाभिमानादित्वयथोत्थमनित्यकामितिस्मृतेः नन्वेवंतर्हिमहदादिजगतश्चित्प्रकृतेश्चभ्रांतिकल्पितत्वमायातं तयोरपिसर्वांतर्गतत्वादित्या

अथानित्यमनित्यंवानेहशोचंतितद्विदः ॥ नान्यथाशक्यतेकर्तुंस्वभावःशोचतामिति ४९ लुब्धकोविपिनेकश्चित्पक्षिणांनिर्मितोंतकः ॥ वित
त्यजालंविदधेतत्रतत्रप्रलोभनम् ५० कुलिंगमिथुनंतत्रविचरन्समदृश्यत ॥ तयोःकुलिंगीसहसालुब्धकेनप्रलोभिता ५१ सासज्जतसिचातस्यामहिषी
कालयंत्रिता ॥ कुलिंगस्तांतथापन्नांनिरीक्ष्यभृशदुःखितः ॥ स्नेहादकल्पःकृपणांपर्यदेवयदातुरः ५२ अहोअकरुणोदेवःस्त्रियाकृपणयाविभुः ॥ कृपणं
मानुशोचंत्यादीनयाकिंकरिष्यति ५३ कामंनयतुमांदेवःकिमर्द्धेनात्मनोहिमे ॥ दीनेनजीवतादुःखंमंदेनविधुरायुषा ५४ कथंत्वजातपक्षास्तान्मातृहीं
नान्बिभर्म्यहम् ॥ मंदभाग्याःप्रतीक्षंतेनीडेमेमातरंप्रजाः ५५ एवंकुलिंगंविरुवंतमारात्प्रियावियोगातुरमश्रुकंठम् ॥ तदैवतंशाकुनिकःशरेणविव्याधका
लप्रहितोनिलीनः ५६ एवंयूयमपश्यंत्यआत्मापायमबुद्धयः ॥ नैनंप्राप्स्यथशोचंत्यःपतिंवर्षशतैरपि ५७ ॥ हिरण्यकशिपुरुवाच ॥ बालएवंप्रवद
तिसर्वेविस्मितचेतसः ॥ ज्ञातयोमेनिरेसर्वमनित्यमयथोत्थितम् ५८ यमएतदुपाख्यायतत्रैवांतरधीयत ॥ ज्ञातयोपिसुयज्ञस्यचक्रुर्यत्सांपरायिकम् ॥ ततः
शोचतमायूयंपरंचात्मानमेवच ५९ कआत्माकःपरोवात्रस्वीयःपारक्यएवच ॥ स्वपराभिनिवेशेनविनाज्ञानेनदेहिनः ६०

शंकावक्ष्यमाणवचनेनपरिहर्तव्या तथाहि यन्महदादितत्सर्वंजगदकारवाच्यस्यहरेरनुग्रहान्नित्यं आत्परयात्मनोयथार्थत्वेनसत्यत्वेनोत्थितंसृष्टं चित्प्रधानस्यापिनित्यत्वंभगवंतमंतरेणयथाऽस्वातन्त्र्येण
स्थितत्वंच तदुक्तंचमहदादियथोत्थंचनित्याचापियथोत्थिता अस्वतंत्रैवप्रकृतिःस्वतंत्रोनित्यएवच यथार्थभूतश्चपरएकएवजनार्दनइति अनेनमहदादेरप्यनित्यत्वादिकंनास्तीति किमुहरेरितिकैमुत्यन्यायोद
र्शितः ५८ सांपरायिकंमृतविषयं ५९ आत्मपरावुद्दिश्यकिमितिशोकोनकार्यइति तत्राह कआत्मेति देहादिकमप्यपेक्ष्यात्मपरावाक्षिप्येते तथाहि आत्मपरयोश्चेतनत्वेननित्यत्वाद्देहादेर्भौतिकत्वेननश्वरत्वा
त्किंशब्दस्याक्षेपत्वमेव नत्वनिर्वचनीयः तर्हिअहंपरइतिव्यवहारस्यकिंमूलमितितत्राह स्वपरेति स्वःपरइतिदुराग्रहलक्षणमज्ञानमंतरेणनकिमपिकारणं तस्मादात्मनोवृद्धिः श्रीवासुदेवेदृढामनोरातिरज्ञाननाम
शत्रुनाशश्चापादनीयोपुरुषेणेतिनिश्चेतव्यं नहिदेहादिरात्मास्यान्नचशत्रुरुदाहृतः अतोदैहिकवृद्धौवाक्षयेवाकिंप्रयोजनं यस्तुदेहगतोजीवःसहिनाशंनगच्छति अतः शत्रुविवृद्धौवाक्षनाशेशोचनंकुतः देहादि
व्यतिरिक्तौतुजीवेशौप्रतिजानतां अतआत्मविवृद्धिस्तुवासुदेवेरतिःस्थिरा शत्रुनाशस्तथाऽज्ञाननाशोनान्यःकथंचनेत्यनेनतात्पर्यमनगंतव्यमितिसिद्धं ६०

प्रकरणसमाप्ताविति शब्दः ६१ इतिश्रीभागवतेमहापुराणेविजयध्वजकृतटीकायांसप्तमेद्वितीयोऽध्यायः ॥ २ ॥७॥ बहुकोटिसंवत्सरकालेनानेकसंभारैरर्चितैरयोग्यंदुष्प्रापंयोग्यंचानेकविधसाधनैःसुसा
ध्यंतूष्णीभावेनत्यादिकंहिरण्यकशिपुतपश्चरणकथनव्याजेनाभिप्रेयतोऽस्मिन्नध्याये व्यधित्सत कर्तुमैच्छत् १ २ संवर्तार्कःप्रलयसूर्यःस्थानानिगमनवर्जनानीतस्ततोयात्रांमुक्त्वास्वस्थानानिभेजुः ३
४ ५ ६ उपशमंपरिहारम् ७ बलिहाराउपहारार्थकाः ८ किंतद्विज्ञापनमत्राह सृष्टेति ब्रह्मातपोज्ञानादिनेदंचराचरंसृष्ट्वासर्वधिष्ण्येभ्योरुद्रादिपदेभ्यःपरंयन्निजासनमध्यास्ते अधिशीङ्स्थासांकर्मेतिस
प्तम्यर्थेद्वितीया अहंतदात्मनःसाधयिष्यइत्यन्वयः ॥ ९ ॥ १० ॥ स्वनाशेदुर्घटमत्राह कालात्मनोरिति कालस्यात्मनश्चेतनस्यचानित्यत्वात् अविनाशात् अन्यस्यत्वसाध्यत्वेहिरण्यक
शिपोरीदृशंकर्मनाहुतं यतोब्रह्माणमेकमंतरेणात्मयोग्याज्ञानेनरागादिनावामोहिताजानतोपिस्वासदृशंकर्माचरंतोदृश्यंतेतदुदित जानतामपिकर्तव्यंकर्मात्मसदृशंसदा तत्रात्मसदृशाज्ञानाद्रागाद्यै
र्वाविमोहिताः जानंतोपिह्यसदृशंकर्मकुर्युरितेविभु चतुरास्यंसनायोग्यंकर्मकुर्यात्कथंचनेति नचैतत्तपआदिसाध्यं अयोग्यत्वात् तपसाविद्ययावापिज्ञानध्यानादिनाथवा व्यस्तैःसमस्तैरथवा

॥ नारदउवाच ॥ इतिदैत्यपतेर्वाक्यंदितिराकर्ण्यसस्नुषा ॥ पुत्रशोकंक्षणात्त्यक्त्वातत्त्वेचित्तमधारयत् ६१ इतिश्रीभागवतेसप्तमस्कंधेद्वितीयोऽध्यायः ॥२॥
॥ नारदउवाच ॥ हिरण्यकशिपूराजन्नजेयमजरामरम् ॥ आत्मानमप्रतिद्वंद्वमेकराजंव्यधित्सत १ सतेपेमंदरद्रोण्यांतपःपरमदारुणम् ॥ ऊर्ध्वबाहुर्नभो
दृष्टिःपादांगुष्ठाश्रितावनिः २ जटादीधितिभीरेजेसंवर्तार्कइवांशुभिः ॥ तस्मिंस्तपस्तप्यमानेदेवाःस्थानानिभेजिरे ३ तस्यमूर्ध्नःसमुद्भूतःसधूमोग्निस्त
पोमयः ॥ तिर्यगूर्ध्वमधोलोकानतपद्विष्वगीरितः ४ चुक्षुभुर्नद्युदन्वंतःसद्वीपाद्रिश्चचालभूः ॥ निपेतुःसग्रहास्ताराजज्वलुश्चदिशोदश ५ तेनतप्ता
दिवंत्यक्त्वाब्रह्मलोकंययुःसुराः ॥ धात्रेविज्ञापयामासुर्देवदेवजगत्पते ॥ ६ ॥ दैत्येंद्रतपसातप्तादिविस्थातुंनशक्नुमः ॥ तस्यचोपशमंभूमन्विधेहिय
दिमन्यसे ७ लोकानयावन्नंक्ष्यंतिबलिहारास्तवप्रभो ॥ तस्यायंकिलसंकल्पश्चरतोदुश्चरंतपः ८ श्रूयतांकिंनविदितंतवाथापिनिवेद्यते ॥ सृष्ट्वा
चराचरमिदंतपोयोगसमाधिना ९ अध्यास्तेसर्वधिष्ण्येभ्यःपरमेष्ठीनिजासनम् ॥ तदहंवर्धमानेनतपोयज्ञसमाधिना १० कालात्मनोश्चनित्यत्वा
त्साधयिष्येतथात्मनः ११ अन्यथेदंविधास्येऽहमयथापूर्वमोजसा ॥ किमन्यैःकालनिर्धूतैःकल्पांतेवैष्णवादिभिः १२ इतिशुश्रुमनिर्बंधंतपःपरममा
स्थितः ॥ विधत्स्वानंतरंयुक्तंस्वयंत्रिभुवनेश्वर १३ तवासनंहिजगतांपारमेष्ठ्यंजगत्पते ॥ भवायश्रेयसेभूत्यैक्षेमायविजयायच १४

कुर्वतापत्नमुत्तमं संभारविक्षेपशतैर्बहुकोटिभिरेवच नशक्यतेसमारोढुंस्वात्मायोग्यपदंत्विति तस्माद्योग्यमेवानुष्ठेयंनायोग्यमितिसिद्धं एवंतत्त्वंचेत्तर्हिकिमर्थंतपआदेर्विघ्नंकुर्वतोतिचेन्न तपआ
दीनांनिष्फलत्वपरिहारार्थत्वात् तथाप्याचरतांकुर्युर्दैत्यानांसुरनायकाः विघ्नंतुतपआदीनांवैयर्थ्यस्यापनुत्तयेइतिवचनात् ११ वैष्णवाब्रह्मादिःकर्तायेषांतेतथातैर्ब्रह्मनिर्मितैरित्यर्थः ब्र
ह्मास्वयंभूर्द्रुहिणोवैष्णवःशतधृकृतथेतिशब्दनिर्णये तथापिसाक्षाद्विष्णोःपदमत्रोच्यतेइतिकिंनस्यादत्राह कालनिर्धूतैरिति तर्हिकियंतंकालंस्थितैरितितत्राह कल्पांतैरिति मन्वंतरादिकल्पावसानिकैः
नपत्रमायानरजस्तमश्चेत्यादिनाविष्णोःपदस्यवैलक्षण्योक्तेः १२ निर्बंधमसदाग्रहं १३ ननु हिरण्यकशिपोरन्येषांपदानिविहायतवपदाकांक्षानांकोविशेषहेतुरत्राह तवेति तवासनंसकलदुःखानिनि
रस्यस्यानुयोग्यंपदंपारमेष्ठ्यंअत्यंतसुखकारणं, यस्माचस्माज्जगतांभवायज्ञानादिगुणसमृद्ध्यैभूत्यैसमृद्धस्यपुनर्ह्रासराहित्यायश्रेयसेसंसारान्मुक्तयेक्षेमायरक्षणायविजयायेंद्रियजयायचभवति तस्माद

स्तुतममदत्वाद्धिरण्यकशिपुरचीक्षपत् तदुक्तं भवापश्रेयतेचैवनकश्चित्तदपेक्षते मधुकैटभयोश्चैवहिरण्यादेस्तथैवच नान्योत्रब्रह्मपदंवांछत्पृजून्योग्यान्विनाकश्चित् सतःश्रेयासिवांछंतिनतुतत्पदमाप्तयेइ
ति भवोवृद्धिःसमुद्दिष्टाश्रेयोमोक्षउदाहृतः वृद्धस्यनपुनर्ह्रासोभूतिरित्येवकथ्यतइतिशब्दनिर्णये दिविस्थातुंनशक्नुमइत्यतोहिरण्यकशिपुनाब्रह्मपदावाप्त्यैसकामंतपसिस्थितमितिज्ञायते यःसकामं
तपआचरतितस्यतपसातस्मिंल्लोकेस्थितिर्नघटतेसंतप्तकटाहात्तःस्थितिनचवस्तुनिष्कामंतपःकरोतितेनसुखावाप्तिःस्यात् तदुक्तं सकामंतुतपःक्रूरंलोकानांक्षोभकृद्भवेत् इतरच्छांतयेसर्वलोकानांभवतिध्रुव
मिति ब्रह्माणमभजत्ब्रह्मपदार्थंसाहिरण्यकइतिच १४ १५ कीचकैरनिलोद्भूतत्वेनस्वनद्वेणुभिःपिपीलिकाभिर्व्याप्तत्वात्क्वचिच्छरीरावयवैर्मेदसाक्वचित्त्वचाक्वचिच्छोणितेनचयुक्तं १६ तपं
तमित्यनेनापितपसःक्रूरत्वमाह भासावितत्तं अहोदैत्यानामयोग्येवस्तुनिप्रयत्नातिशयइत्यालोच्यहसन्मंदस्मितंकुर्वन्हंसवाहनोब्रह्मा विष्णुपद्मासनावुक्तौपंडितैर्हंसवाहनाविन्याभिधानम् १७ ॥
॥ १८ हृदोहृदयस्यसारंदार्ढ्यं दंशाः सूचीमुखाःशूकाः तेतवअस्थिष्वेवशेरतेइतियस्मात्तस्मादद्भुतम् १९ इतोप्यद्भुतमित्याह नैतदिति निरंबुर्जलपानरहितः निर्निश्चयनिषेधयोरित्यमरः

इतिविज्ञापितोदेवैर्भगवानात्मभूर्नृप ॥ परीतोभृगुदक्षाद्यैर्ययौदैत्येश्वराश्रमम् १५ तंददर्शप्रतिच्छन्नंवल्मीकतृणकीचकैः ॥ पिपीलिकाभिराकीर्णंमेद
स्त्वङ्मांसशोणितम् १६ तपंतंतपसालोकान्यथाभ्रापिहितंरविम् ॥ विलक्ष्यविस्मितःप्राहहसंस्तंहंसवाहनः ॥ १७ ॥ ब्रह्मोवाच ॥ उत्तिष्ठोत्तिष्ठभद्रंते
तपःसिद्धोसिकाश्यप ॥ वरदोहमनुप्राप्तोव्रियतामीप्सितोवरः १८ अद्राक्षमहमेतत्तेहृत्सारंमहदद्भुतम् ॥ दंशभक्षितदेहस्यप्राणाह्यस्थिषुशेरते १९ नैतत्पू
र्वर्षयश्चक्रुर्नकरिष्यंतिचापरे ॥ निरंबुर्धारयेत्प्राणान्कोवैदिव्यसमाःशतम् २० व्यवसायेनतेनेनोदुष्करेणमनस्विभिः ॥ तपोनिष्ठेनभवताजितोऽहंदि
तिनंदन २१ ततस्तआशिषःसर्वाददाम्यसुरपुंगव ॥ मर्त्यस्यतेह्यमर्त्यस्यदर्शनंनचनिष्फलम् २२ ॥ नारदउवाच ॥ इत्युक्त्वादिभवोदेवोभक्षितांगं
पिपीलिकैः ॥ कमंडलुजलेनौक्षद्दिव्येनामोघराधसा २३ सतत्कीचकवल्मीकात्सहओजोबलान्वितः ॥ सर्वावयवसंपन्नोवज्रसंहननोयुवा ॥ उत्थित
स्तप्तहेमाभोविभावसुरिवैधसः २४ सनिरीक्ष्यांबरेदेवंहंसवाहनमास्थितम् ॥ ननामशिरसाभूमौतद्दर्शनमहोत्सवः २५ उत्थायप्रांजलिःप्रह्वईक्षमाणो
दृशाविभुम् ॥ हर्षाश्रुपुलकोद्भेदोगिरागद्गदयागृणत् २६ ॥ हिरण्यकशिपुरुवाच ॥ कल्पांतेकालसृष्टेनयोंधेनतमसावृतम् ॥ अभिव्यनक्जगदिदंस्व
यंज्योतिःस्वरोचिषा २७

स्युरेवंतुपुनर्वैवेत्यवधारणवाचकाइत्यभिधानाद्वाइत्यनेनदिव्यशतसमास्वेकापिकिंचिदूनानभवतीत्याह २० इनःसमर्थः तेनव्यवसायेन अमनस्विभिर्मनोबलरहितैः दुष्करेणदुःसाधनेनाजितावे
शीकृतः पराभूतवशस्थंचजितमित्युच्यतेबुधैरितिशब्दनिर्णये २१ ददामिदास्यामीतीच्छामि मर्त्यस्यमरणशीलमनुष्यशरीरंप्राप्तस्यतेतव अमर्त्यस्यजरामरणशून्यस्यदेवस्यममदर्शनमभूद्यि
स्मात्तस्मान्निष्फलंनैव २२ आदेर्हरेर्भवोजन्मयस्यसतथाविष्णुभूरित्यर्थः सर्वस्यादौभवतीतिवाऔक्षत्प्रोक्षितवान् दिव्यत्वमाह अमोघेति २३ एधसःइंधनात् २४ २५ प्रह्वः
प्रवणः २६ मिश्रामिश्रभेदेनद्विविधास्तुतिर्वर्तते तत्राहिरण्यकशिपुमिश्रयापरोक्षात्मगतयास्तुत्यादेवतातृप्तिर्भवतीतितादृश्यास्तौति कल्पांतइत्यादिना अत्रयेचतुर्मुखस्यासंभाविताःगुणास्तेतदंत
र्यामिण्येककार्यत्वेनैकस्थानस्थितेसर्वोंचमेहरौयोज्याः सद्योग्यास्तत्रयोज्याःनचैतावतास्तुतेभिन्नाधिकरणत्वमापन्नंतस्यतदधीनत्वेननित्योपसंह्रियमाणगुणांतर्भूतत्वेनतच्छ्रवणस्मरणाभ्यामतःकरण

स्योक्तासंभवात् तदुक्तं भायस्तुस्तुतिशब्देषुमिश्रावाचोहरिंविना केचिज्जीवगुणास्तत्रतान्नियंतुर्हरेःपरे एकस्यानैककार्यत्वाद्विष्णोःप्राधान्यतस्तथा जीवस्यतदधीनत्वान्नभिन्नाधिकृतंवचइति अल्प
पकालप्रवर्तकेनहरिणासृष्टेनांधेनतमसा दुर्गाभिमन्यमानेनावृतमिदंजगदभिव्यनक्अभिव्यक्तंकृतवान् स्वरोचिषास्वसामर्थ्येन १७ एतदेवाविवृणोति आत्मनेति आत्मनाक्षोभितयात्रिवृता त्रिगु
णात्मिकया तेजोबन्नात्मिकयावाप्रकृत्याचेदजगत्सर्जनादिक्रियाविशिष्टंकरोति तस्मैनमइत्यन्वयः रजःसत्त्वतमोधाम्नइत्यनेनसृष्ट्यादौरजआदिगुणानांप्राधान्यसूचयति परायमहतइत्यनेनअ
णोरणीयान्महतोमहीयानितिश्रुतिसिद्धोभयविधानंसंस्मारयति दृश्यविषययानयास्तुत्याकिंस्यादितिनाश्रद्धेयं तथाहि आत्मनापरमात्मनाप्रेरितोवाउपादानभूतयाप्रकृत्यारजःप्रधानयेदंसृजति स
त्त्वप्रधानयाजातैर्मन्वादिभिरिदमवति तमःप्रधानयाजातेनरुद्रेणसंहरति तस्मैमहतेमहत्तत्त्वाभिमानिने परायरुद्राच्छ्रेष्ठायभगवतेनमः २८ आद्याय पुरुषरूपणजगदादौव्यक्ताय अन्यत्रादिकर्ताश्रीना
नारायणस्तस्माज्जातायबीजायव्यंजकायफलरूपायेतित्रा जगदुत्पत्तौबीजशक्तियुक्तायवा ज्ञानविज्ञानेएवमूर्तिर्विग्रहोयस्यसतथा तस्मै अन्यत्रज्ञानविज्ञानयोरुपदेष्टृविग्रहाय प्राणेंद्रियमनोबुद्धिलक्षणै
र्विकारैःसप्तदशकैर्व्यक्तिमीयुषे ब्रह्मांडात्तविराट्पुरुषतयेतिशेषः उभयत्रसमम् २९ मुख्येनप्राणेनसहत्वंस्थावरजंगमात्मकस्येशिषेप्रवर्तकोसि चित्तस्यचित्तिःस्मरणशक्तिप्रदःसाक्षीवामहाभूतानां
गुणानांशब्दादीनामाशयस्यांतःकरणस्यप्रवर्तकः पुनर्वचनंदैनंदिनप्रवृत्त्यर्थं ३० त्रय्यातन्वा प्रतिमास्थानीयेनवेदत्रयेणचातुर्होत्राख्यमंत्रप्रकाश्येचतुर्होत्रंतद्विषयया विद्ययाचरूपतंतून्सप्ततंतून्वि

आत्मनात्रिवृताचेदंसृजत्यवतिलुंपति ॥ रजःसत्त्वतमोधाम्नेपरायमहतेनमः २८ नमआद्यायबीजायज्ञानविज्ञानमूर्तये ॥ प्राणेंद्रियमनोबुद्धिविकारै
र्व्यक्तिमीयुषे २९ त्वमीशिषेजगतस्तस्थुषश्चप्राणेनमुख्येनपतिःप्रजानाम् ॥ चित्तस्यचित्तिर्मनइंद्रियाणांपतिर्महाभूतगुणाशयेशः ३० त्वंसप्ततंतून्वि
तनोषितन्वात्रय्याचतुर्होत्रकविद्ययाच ॥ त्वमेकआत्मात्मवतामनादिरनंतपारःकविरव्ययात्मा ३१ त्वमेवकालोऽनिमिषोजनानामायुर्लवाद्यावयवैःक्षि
णोषि ॥ कूटस्थआत्मापरमेष्ठ्यजोमहान्त्वंजीवलोकस्यचजीवआत्मा ३२ त्वत्तःपरंनापरमप्यनेजदेजच्चकिंचिद्व्यतिरिक्तमस्ति ॥ विद्याकालास्तेतनव
श्चसर्वाहिरण्यगर्भोसिबृहत्त्रिपृष्ठः ३३

तनोषिविस्तृत्यकरोषिद्रव्यमंत्रक्रियादेवतास्थत्वेनबाहिरुपदेष्टृत्वेनकर्तृत्वेनकारयितृत्वेनशक्त्यास्तुतिप्रायश्चित्तादिरूपयाच अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजं होतारंरत्नधातममित्यादिश्रुतेः ३०
ज्ञःसर्वोध्वरोयागःसप्ततंतुर्मखःक्रतुरिति अत्मवतामात्मज्ञानिनांप्रेष्ठः आत्माप्रेष्ठस्वरूपंचजीवेज्ञातरिकेशवे वायौदेहेस्वयंस्वांतेनवसुप्रोच्यतेबुधैः अनादिःकारणशून्यः पुरातनोवा अनंतपारऽप्रमे
योऽव्ययेहरावात्मापनोयस्यसतथा नभारतीमेंगमृषोपलक्ष्यतइत्यादेरन्यत्र।व्ययानांमुक्तानामात्मास्वामी असंसार्यव्ययोमुक्तआचिरानंदउच्यते ३१ अनिमिषइत्यनेननित्यंजाग्रत्स्वभावउच्यते
कूटस्थोनिर्विकारः आत्माव्याप्तःपरमेष्ठीसर्वोत्तमः महानजब्रह्मणोप्यधिकइत्यनेनसर्वोत्तमत्वंनिर्णयति अन्यत्रआत्जातोतएवमहानव्यवधानेनतत्पुत्रत्वात् जीवलोकस्यजीवराशेर्जीवःप्राणध
रकः जीवप्राणइतिधातोः कथंधत्तइत्यतउक्तं आत्मेति इष्टादानादिकर्ता अवसतर्पणइतिधातोरवतिरूपोयंशब्दःसामान्यविशेषाभ्यांयोजनीयः ३२ इदानींभगवत्येवसंभाव्यमानैर्विशेष
णैर्विशिष्टंतदंतर्यामिणमभिष्टौति त्वत्तइति परमतीतमपरमेव्यदपिवर्तमानंयत्किंचिदनेजत्स्थावरमेजज्जगमचवस्तुतत्सर्वंत्वत्तोव्यतिरिक्तंनास्ति त्वय्येवांतर्बहिश्चव्याप्तत्वात् त्वामंतरेणस्वातंत्र्येणास्थिर
नास्तीत्यर्थः अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्वयमितिश्रुतेः सर्वंखल्विदंब्रह्मेति चपरावरेषुयस्मात्त्वंव्यप्तोविष्णुःसनातनः तस्मात्त्वव्यतिरिक्तत्वमित्याहुर्वेदवादिनइत्यतस्त्वत्तोभिन्नंनास्तिकिंतुत्व

मेवेत्यर्थोन्नघटतइत्यतउक्तएवार्थःज्ञानंवेदादिविषयैव तदवाप्तिरपितस्यास्त्वत्तनावाश्रितत्वात्त्वदनुग्रहमंतरेणसुशकानस्यादित्यभिप्रेत्याह विद्येति विद्याश्चकलाश्चविद्याकलाःपराविद्यापरविद्येतितेतनवः तववपुषिस्थितत्वात्तथोच्यंते कलाःचतुःषष्टिलक्षणाविद्याकलावेदांगानीत्यन्यथाप्रतीतिनिरासायाचार्यैर्विद्याश्चकलाश्चेतिविगृहीतं एतस्मिन्नर्थे महाविद्याःकलाश्चैवत्वत्तनावाश्रितायतः विद्यातनु रितिमहुरतस्त्वांतत्त्ववेदिनइतिमानंचोदाहरति तस्मादयमेवार्थइति इदंचमाहात्म्यंहरेरेवयुक्तमित्याह हिरण्यगर्भइति हिरण्मयंडंगर्भेउदरेयस्यप्रतथागर्भीकृतानंतब्रह्मांडत्वात्तन्नामतवैवयुक्तं हि रण्मयकोशांरजसापरीवृतमितिश्रुतेः हिरण्मयब्रह्मांडोदराभिव्यक्तत्वाद्वातन्नामासि निर्गुणस्यहरेरेतेगुणाःकथंसंभवेयुरत्राह बृहादिति गुणपूर्तित्वाद्बृहद्ब्रह्म अथकस्मादुच्यतेब्रह्मेति बृहंतोह्यस्मि न्गुणाइतिश्रुतेः ननुतर्हीदंशबलंकिंनस्यादत्राह त्रिपृष्ठइति जाग्रदाद्यवस्थाअतिक्रम्यस्थितत्वात्त्रिपृष्ठइत्युच्यते त्रयाणांलोकानांपृष्ठेवर्तमानइत्यपव्याख्याननिरासायतुरीयइत्याचख्युराचार्याइति चतुर्मुखादप्यधिकंविष्णुंजानताहिरण्यकशिपुना तदंतर्यामियोग्यगुणैरयंब्रह्मानस्तूयते किंत्वंतर्यामीस्तूयतइतिज्ञापनाय तदुक्तं ब्रह्मणोप्यधिकंविष्णुंजानन्नपिहिरण्यकः ब्रह्माणंतद्गुणैःस्तौतितद्ग विष्णुविवक्षयेति बृहच्चासिमहत्तत्त्वात्मकंचासीत्येकदेशीयैरितिव्याख्यातं तत्संप्रदायज्ञैर्हरेर्महत्तत्त्वात्मकमेवंगुणत्वेनसंगच्छतइतिनिरूप्य ब्रह्माणंतद्गुणैःस्तौति तद्गविष्णुविवक्षयेत्युक्तत्वात् नचतद्व्याप्तित्वेनतदात्मकत्वमुच्यतइतिवाच्यं तर्ह्ययंव्याख्याता चतुर्मुखस्यतदभिमानित्वेनघटतां तस्याप्युक्तदोषानिस्ताराादिति ३३ ज्ञानानंदादिलक्षणगुणमूर्तिंनिरूपयति व्यक्तमिति हिरण्य गर्भइत्यनेनब्रह्मांडस्यशरीरस्थानीयत्वंसूचितंतत्रतिष्ठन्गुणान्हरिःसुखलक्षणान्भुंक्तेनतुदेवदत्तवद्दुःखलक्षणानित्यतोवाह व्यक्तमिति पारमेष्ठ्येधामनिवैकुंठादिस्थानेसत्यलोकेवास्वरूपभूतेमहिम्निवास्थि

व्यक्तंविभोस्थूलमिदंशरीरंयेनेंद्रियप्राणमनोगुणांस्त्वम् ॥ भुंक्तेस्थितोधामनिपारमेष्ठ्येअव्यक्तआत्मापुरुषःपुराणः ३४ अनंताव्यक्तरूपेणयेनेदमखिलं ततम् ॥ चिदचिच्छक्तियुक्तायतस्मैभगवतेनमः ३५ यदिदास्यस्यभिमतान्वरान्मेवरदोत्तम ॥ भूतेभ्यस्त्वद्विसृष्टेभ्योमृत्युर्माभून्ममप्रभो ३६

तःपुराणःपुरुषस्त्वंयेनशरीरेणेंद्रियप्राणमनसांगुणान्विषयानेवभुंक्ते नतुदुःखलक्षणान् कुतएतदत्राहात्मेति एषह्यानदमादत्तेतआत्मेतीतिश्रुतेः आनंदस्वभावत्वात्तर्ह्येतद्विषयज्ञानंकथंनोत्पद्यतइति तत्राह अव्यक्तइति तदव्यक्तमाहहीतिसूत्रात्हेविभोतदिदंव्यक्तंब्रह्मांडलक्षणंतवस्थूलशरीरमाचक्षतइतिशेषः यद्वाऽनेनब्रह्माणमेवतद्योग्यैर्विशेषणैःस्तौति तथाहि पुरंशरीरमणतीतिपुराणः आ त्मेत्यभिधानादात्माचतुर्मुखः अवतारेणव्यक्तिर्नास्तीत्यव्यक्तःजगत्सृष्ट्याद्यैश्वर्यलक्षणान् गुणान् इतरत्स्पष्टम् ३४ स्थावरजंगमाख्यजगत्त्वद्व्यतिरिक्तंनास्तित्वयाव्याप्तत्वादित्यर्थतोव्याप्तिरुक्ता तदिदंकीदृशेनरूपेणव्याप्तमितिमंदाशंकापरिहारायस्पष्टमाह अनंतेति अनेनपरिच्छिन्नस्यसर्वस्यापरिच्छिन्नाद्धरेर्बहिष्ठ्वंयुक्तिविरुद्धमित्युक्तंभवति तमआसीत्तमसागूळ्हमग्रेइतिश्रुतेः प्रकृत्याव्याप्त त्वप्रतीतेःकथंहरेरेवेतिविशिष्योक्तिर्घटतइतितत्राह चिदचिदितिशक्तिपदस्याद्विरावृत्तिःकर्तव्या शक्यत्वाच्छक्तयोभार्याइतिवचनात् उभयविधायाशक्तिःप्रकृतिस्तस्याःयाकार्येषुशक्तिस्तस्याअपिभग वच्छक्त्याविनाभूतत्वात्तद्व्याप्तिस्तन्नियतेत्यतएवयुक्तायेत्युक्तं नचानेनगुणभूतत्वंहरेरितिवाच्यं शिष्येणोपाध्याय आगतइत्यत्रोपाध्यायप्राधान्यवदुपपत्तेः ननुलोकेप्रतिवस्त्वेकानियतत्वादर्शनात् चिदचिदात्मकप्रपंचेकस्यचित्तदनियतत्वसंभवेनस्वातंत्र्येणसर्वव्याप्तत्वंहरेःकथयुज्यतइत्यतोवाह चिदचिदिति द्रव्यंकर्मचकालश्चेत्यादेः परमाणुमात्रवस्तुनोपिभगवदनियतत्वासंभवात् एतादृशी शक्तिरस्यास्तीतिकुतइत्यतउक्तं भगवतइति उक्तार्थंपद भूपिष्ठांतेनप्रउक्तिविधेमेतिवाक्यार्थंस्मरताहिरण्यकेननमइत्युक्तं तदुक्तेःफलाभिकत्वात् ३५ किंबहुनोक्तेनत्वदुपीष्टंनदेत्याशंकितआह यदीति विविधत्वेनसृष्टेभ्यः ३६

अन्यस्मादपिकालात्अथवाभावादवयवविशिष्टात्भूतेभ्यइत्युक्तेभ्यन्येभ्यःकिमित्यतोविशिनष्टि नरैरिति ३७ व्यसुभिर्विगतप्राणैःपाषाणादिभिः असुमद्भिर्ग्राहादिभिःऐकपत्यंऐकाधिपत्यम् ३८ महिमानंवृणइतिशेषः आत्मनस्तवयोमहिमासयथानरिष्यतिननश्यतितथामममहिमास्तुयोमहिमायथाकर्हिचित्नरिष्यतितथात्मनोमममहिमाननश्यत्वितिचोक्ते ३९ इतिश्रीभागवतेमहापुराणेस प्तमस्कंधेविजयध्वजकृतटीकायांतृतीयोध्यायः ३ ॥ ७ ॥ वरदानादिनासंभूतंलवणाब्धिजलवृद्धिह्रासवत् क्षणिकंभगवदभक्तैश्वर्यंश्रीनारायणप्रसादाविर्भूतमनतकालीनंशाश्वतंस्यात्तदे वापाद्येबुभूषुभिरित्यादितात्पर्यंनिरूप्यतेकतिपयेष्वध्यायेषु तत्रहिरण्यकशिपवेब्रह्मवरप्रदानप्रकारंतेनास्यसर्वविजयप्रकारंचनिरूपयति एवंवृतइत्यादिना अथशब्देननकेवलंब्रह्मणोवरदानमेवोच्य तअपितुहिरण्यकशिपुविषयाकथासाकल्येनकथ्यतइतिसूचयति १ ममसकाशाद्यदपिदुर्लभान्अंततोदुःखप्रापकान् दुरशोभनदुःखयोरितियादवः २ भगवान्पूज्यःअत्रप्रतिक्षणंदृष्टश्रुतविस्म

नांतर्बहिर्दिवानक्तमन्यस्मादपिचायुधैः ॥ नभूमौनांबरेमृत्युर्ननरैर्नमृगैरपि ३७ व्यसुभिर्वाऽसुमद्भिर्वासुरासुरमहोरगैः ॥ अप्रतिद्वंद्वतांयुद्धेऐकपत्यंचदे हिनाम् ३८ सर्वेषांलोकपालानांमहिमानंतथात्मनः ॥ तपोयोगप्रभावेनयोनरिष्यतिकर्हिचित् ३९ इतिश्रीभागवतेसप्तमस्कंधेतृतीयोध्यायः ॥३॥ नारदउवाच ॥ एवंवृतःशतधृतिर्हिरण्यकशिपोरथ ॥ प्रादात्तत्तपसाप्रीतोवरांस्तस्यसुदुर्लभान् १ ब्रह्मोवाच ॥ तातेमेदुर्लभाःपुंसोयान्वृणीषेवरान्मम ॥ तथापिवितराम्यंगवरान्यद्यपिदुर्लभान् २ ततोजगामभगवानमोघानुग्रहोविभुः ॥ पूजितोऽसुरवर्येणस्तूयमानःप्रजेश्वरैः ३ एवंलब्धवरोदैत्योबिभ्रद्धे ममयंवपुः ॥ भगवत्यकरोद्द्वेषंभ्रातुर्वधमनुस्मरन् ४ सविजित्यदिशःसर्वालोकांश्चत्रीन्महासुरः ॥ देवासुरमनुष्येंद्रान्गंधर्वगरुडोरगान् ५ सिद्धचार णविद्याध्रानृषीन्पितृपतीन्मनून् ॥ यक्षरक्षःपिशाचेशान्प्रेतभूतपतीनपि ६ सर्वसत्त्वपतीञ्जित्वावशमानीयविश्वजित् ॥ जहारलोकपालानांस्था नानिसहतेजसा ७ देवोद्यानश्रियाजुष्टमध्यास्तेस्मत्रिविष्टपम् ॥ महेंद्रभवनंसाक्षान्निर्मितंविश्वकर्मणा ८ त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्द्धिमत् ॥ यत्रविद्रुमसोपानामहामारकताभुवः ९ यत्रस्फटिककुड्यानिवैदूर्यस्तंभपंक्तयः ॥ यत्रचित्रवितानानिपद्मरागासनानिच १० पयःफेननिभाःशय्यामु क्तादामपरिच्छदाः ॥ कूजद्भिर्नूपुरैर्देव्यःशब्दयंत्यइतस्ततः ॥ रत्नस्थलेषुपश्यंतिसुदतीःसुंदरंमुखम् ११ तस्मिन्महेंद्रभवनेमहासुरोमहाबलोनिर्जितलो कएकराट् ॥ रेमेभिवंद्याङ्घ्रियुगःसुरादिभिःप्रतापितैरूर्जितचंडशासनः १२

रणशीलानांमंदानांस्फुरणार्थंकृतव्याख्यानांपदानांपुनरपितथावचनंनदोषायतदर्थंहीदंप्रवृत्तमिति अमोघानुग्रहःयोग्यानामितिशेषः ॥ ३ ॥ समग्रैश्वर्यादिगुणरत्नाकरेपरेद्वेषमकरोदसुरावेशाज्ज यांशत्वेनस्वतोभक्तोपीतितात्पर्यं तदुक्तम् स्वतोभक्ताहिरण्याद्याःपरावेशाद्धरौद्विषइति परोरिपरमात्मनोरित्यभिधानादत्रपरःशत्रुरसुरः तदावेशादित्यर्थः ४ ५ ६ सर्वसत्त्वपतीन्सिंहादीन् बलश्रे ष्ठान्वार्किंबहुनाविश्वंचराचरंविजितवानिति तेजसाप्रभावेनसहजहार ७ त्रिविष्टपंस्वर्गं स्वर्गेत्रीणिस्थानानिसंतिततोपिश्रेष्ठंमहेंद्रभवनममरावतीनामतत्स्थानापेक्षयासाक्षात्तुरीयमित्युच्यते साक्षात्प्र त्यक्षतुर्ययोरित्यभिधानात् अतएवाखिलर्द्धिमदित्युक्तम् साक्षात्प्रत्यक्षमध्युवासेत्यनेनवासंगमयितव्यम् त्रीणिविष्टपानिस्थानानिसकलसमृद्धिमंत्यस्मिन्नितित्रिविष्टपशब्दार्थपर्यालोचनयायमर्थःसंप द्यते त्रिदिवपदस्याप्ययमेवार्थः अन्यथात्रिशब्दस्यगतिर्वक्तव्येति ८ सोपानमारोहावरोहलक्षणंकुट्टिमम् ९ वितानमुपरिपिधानवस्त्रम् १० सुदतीःप्रशस्तदंतपंक्तयःस्त्रियः ११ १२

त्रिभिरादित्यवसुरुद्रैर्मरुदादिदेवानामेष्वंतर्भावविवक्षयात्रिधाभिन्नैः तदुक्तं आदित्यावसवोरुद्रास्त्रिविधाहिसुरायतः मरुतश्चैवविश्वेचसाध्याश्चैवचतद्गताः अतस्त्रयइतिप्रोक्ताश्चत्वारोमानुषाःस्मृताःउपायनं ददुःसर्वेविनादेवान्हिरण्यकेइतिवचनात् नब्रह्मविष्णुमहेश्वरैरित्यर्थोग्राह्यः किंचात्रेदंतात्पर्यं तथाहि द्विविधादेवायज्ञभागभुजस्तदभुजइति तत्रप्रथमोत्रिधाभिन्नाजातिभिन्नत्वान्मंत्रेणाह्वानेसमूहेनागम नाच चरमेषुसुरशब्दमात्रंवर्ततेतदंतेवासिवद्वर्तमानाः अयज्ञभागेष्वपितुसुरशब्दःप्रयुज्यते यज्ञभागभुजस्त्वेवत्रयइत्यभिशब्दिताइतिवचनादयंविशेषःकल्प्यतइति इतोप्यत्रत्रित्वसंख्ययादित्याद यउच्यंतइत्यंगीकर्तव्यं दैत्यस्यदेवोपास्यत्वेदेवानांसदासद्यशोभाजामयशःस्यात्तदनुपपन्नं प्रमाणविरोधात्तदितरेषांउभयभाक्त्वमितीश्वरक्षमिदमिति यत्रक्वचयशःस्थानमन्येषामितिकेशवः सर्वत्रापितु

तमंगमत्तंमधुनोरुगंधिनाविवृत्तताम्राक्षमशेषधिष्ण्यपाः ॥ उपासतोपायनपाणिभिर्विनात्रिभिस्तपोयोगबलौजसांपदम् १३ जगुर्महेंद्रासनमोजसास्थि तंविश्वावसुस्तुंबुरुरस्मदादयः ॥ गंधर्वसिद्धाऋषयोऽस्तुवन्मुहुर्विद्याधराअप्सरसश्चपांडव १४ सएववर्णाश्रमिभिःक्रतुभिर्भूरिदक्षिणैः ॥ इज्यमानोह विर्भागानग्रहीत्स्वेनतेजसा १५ अकृष्टपच्यातस्यासीत्सप्तद्वीपवतीमही ॥ तथाकामदुघाद्यौश्चनानाश्चर्यपदंनभः १६ रत्नाकराश्चरत्नानितत्पत्न्यश्चोहु रूर्मिभिः ॥ क्षारसीधुघृतक्षौद्रदधिक्षीरामृतोदकाः १७ शैलाद्रोणीभिराक्रीडंसर्वर्तुषुगुणान्द्रुमाः ॥ दधारलोकपालानामेकएवपृथग्गुणान् १८ सइत्थंनि र्जितककुबेकराड्विषयान्प्रियान् ॥ यथोपजोषंभुंजानोनातृप्यदजितेंद्रियः १९ एवमैश्वर्यमत्तस्यदृप्तस्योच्छास्त्रवर्तिनः ॥ कालोमहान्व्यतीयायब्रह्मशा पमुपेयुषः२० तस्योग्रदंडसंविग्नाःसर्वेलोकाःसपालकाः ॥ अन्यत्राऽलब्धशरणाःशरणंययुरच्युतम् २१ तस्यैनमोस्तुकाष्ठायैयत्रात्माहरिरीश्वरः ॥ यद्गत्वान निवर्तंतेशांताःसंन्यासिनोमलाः २२ इतितेसंयतात्मानःसमाहितधियोमलाः ॥ उपतस्थुर्हृषीकेशंविनिद्रावायुभोजनाः २३ ओंनमोभगवतेमहापुरुषा यमहात्मने ॥ विशुद्धानुभवानंदसंदोहायतोऽभयम् २४ तेषामाविरभूद्वाणीअरूपामेघनिःस्वना ॥ संनादयंतीककुभःसाधूनामभयंकरी २५ माभै ष्टविबुधश्रेष्ठाःसर्वेषांभद्रमस्तुवः ॥ मद्दर्शनंहिभूतानांसर्वश्रेयोपपत्तये २६ ज्ञातमेतस्यदौरात्म्यंदैतेयापसदस्ययत् ॥ तस्यशांतिंकरिष्यामिकालस्ता वत्प्रतीक्षताम् २७ यदावेदेषुदेवेषुगोषुविप्रेषुसाधुषु ॥ धर्मेमयिचविद्वेषःसवाआशुविनश्यति २८ निर्वैरायप्रशांतायस्वसुतायमहात्मने ॥ प्रह्लादाययदाद्रु ह्येद्धनिष्येपिवरोर्जितम् २९ ॥ नारदउवाच ॥ इत्युक्तालोकगुरुणातंप्रणम्यदिवौकसः ॥ न्यवर्तंतगतोद्वेगामेनिरेचासुरंहतम् ३० तस्यदैत्यपतेःपुत्राश्च त्वारःपरमाद्भुताः ॥ प्रह्लादोभून्महांस्तेषांगुणैर्महदुपासकः ॥ ब्रह्मण्यःशीलसंपन्नःसत्यसंधोजितेंद्रियः ३१ आत्मवत्सर्वभूतानामेकःप्रियसुहृत्तमः ॥ दा सवत्सन्नतार्यांघ्रिःपितृवद्दीनवत्सलः ३२

देवानामित्यन्यान्पूजयेत्कचित्

इत्युक्तेश्चयोगःसन्नहनइत्यभिधानादभिमादिनानोपायस्थानीभूतः १३ १४ १५ अकृष्टपच्याउल्लेखनमंतरेणसस्यादिपरिपाकोपेता १६ तत्पत्न्यःतेषांसमुद्राणांपत्न्योनद्यः क्षारंलवणम् १७ १८ यथोपजोषंयथासुखम् १९ २० २१ २२ २३ दत्तोयस्माद्धरेरभयंभवातितस्माइति २४ अरूपाअशरीरिणी २५ मद्दर्शनंमद्विषयज्ञानम् २६ २७ यस्यवेदादिषुविद्वेषःसआशुसाधनसामग्र्याम् २८ २९ ३० ३१ आत्मवत्परमात्मवत् अन्येषांहरिसाम्यंतुकिंचित्साम्यमुदीरित सम्यक्साम्यंतुमत्स्यादेरितिशास्त्रयनिश्चयइतिवचनादत्रहरिसाम्यकथनंतात्पर्यादवगंतव्यम् ३२

मानस्तंभविवर्जितः अभिमाननिमित्तस्तंभदोषरहितः ३३ गुणेषुशब्दादिषु शरीरस्यदांतत्वमुपवासादिना रहितासुरःअसुरस्वभावकर्मरहितःजात्यासुरः ३४ यथाभगवतीश्वरइत्यत्राप्यन्ये षांहरिसाम्यंतुकिंचित्साम्यमुदीरितमित्यादिप्रमाणमित्यत्रापिज्ञातव्यमिति ३५ प्रतिमानंदृष्टांतं ३६ ३७ कृष्णाख्योग्रहस्तेनवशीकृतमनाः ३८ अनुसंदधेनस्मार ३९ ४० तद्भावनायुक्तः तस्यश्रीनारायणस्यध्यानोपेतःतन्मयस्ततप्रधानः ४१ स्पर्शेषुविषयेषुस्पहारहितः अस्पंदप्राणःप्राणचेष्टारहितः आनंदसलिलेनसंतोषाश्रुजलेननिमित्तेनकिंचिन्निमीलितनेत्रः ४२ अकिंचनानांमहतांसतांसेवालक्षणसंगेनमामया ४३ अधर्मंमरणलक्षणव्यसनम् ४४ विद्वेषोदपितेपुत्रेकथमासीन्महात्मनि इतिस्वपृष्टंकथांतरासक्त्यानारदेनापरिहृतजानन्राजायुधिष्ठिरःपुनर

भ्रातृवत्सदृशेस्निग्धोगुरुष्वीश्वरभावनः ॥ विद्यार्थरूपजन्माढ्यैर्मानस्तंभविवर्जितः ३३ नोद्विग्नचित्तोव्यसनेषुनिस्पृहःश्रुतेषुदृष्टेषुगुणेष्ववस्तुदृक् ॥ दांतेंद्रियप्राणशरीरधीःसदाप्रशांतकामोरहितासुरोसुरः ३४ यस्मिन्महागुणाराजन्गृह्यंतेकविभिर्मुहुः ॥ नतेधुनाभिधीयंतेयथाभगवतीश्वरे ३५ यंसाधुगाथासदसिरिपवोपिसुरानृप ॥ प्रतिमानंप्रकुर्वंतिकिमुतान्येभवादृशाः ३६ गुणैरलमसंख्येयैर्माहात्म्यंतस्यसूच्यते ॥ वासुदेवेभगवतियस्यनैसर्गिकीरतिः ३७ न्यस्तक्रीडनकोबालोजडवत्तन्मनाःसदा ॥ कृष्णग्रहगृहीतात्मानवेदजगदीदृशम् ३८ आसीनःपर्यटन्नश्नञ्छयानःप्रपिबन्ब्रुवन् ॥ नानुसंदधएतानिगोविंदपरिरंभितः ३९ क्वचिद्रोदितिगोविंदचिंताचंचलचेतनः ॥ क्वचिद्धसतितच्चिंताह्लादउद्गायतिक्वचित् ४० नदतिक्वचिदुत्कंठोविलज्जोनृत्यतिक्वचित् ॥ क्वचित्तद्भावनायुक्तस्तन्मयोनुचकारह ४१ क्वचिदुत्पुलकस्तूष्णीमशेषस्पर्शनिस्पृहः ॥ अस्पंदप्राणआनंदसलिलामीलितेक्षणः ४२ सउत्तमश्लोकपदारविंदयोर्निषेवयाकिंचनसंगलब्धया ॥ तन्वन्परांनिर्वृतिमात्मनोमुहुर्दुःसंगदीनस्यमनःशमंव्यधात् ४३ तस्मिन्महाभागवतेमहाभागेमहात्मनि ॥ हिरण्यकशिपूराजन्नकरोदघमात्मजे ४४ युधिष्ठिरउवाच ॥ देवर्षएतदिच्छामोवेदितुंतवसुव्रत ॥ यदात्मजायशुद्धायपिताधात्साधवेह्यघम् ४५ पुत्रान्विप्रतिकूलांश्चपितरःपुत्रवत्सलाः ॥ उपालभंतेशिक्षार्थंनैवाघमपरेयथा ॥ किमुतानुवशान्साधूंस्तादृशान्गुरुदेवतान् ४६ एतत्कौतूहलंब्रह्मन्नस्माकंविधमप्रभो ॥ पितुःपुत्राययद्द्वेषोमरणायप्रयोजितः ॥ ४७ ॥ ॥ इतिश्रीभागवतेसप्तमस्कंधेचतुर्थोध्यायः ४ ॥ ॥ छ ॥ ॥ नारदउवाच ॥ पौरोहित्यायभगवान्वृतःकाव्यःकिलासुरैः ॥ शंडामर्कौसुतौतस्यदैत्यराजगृहांतिके १ तौराज्ञाप्रापितंबालंप्रह्लादंनयकोविदम् ॥ पाठयामासतुःपाठ्यानन्यांश्चासुरबालकान् २

पिजानन्नकरोदघमात्मजइतिप्रसक्तंश्रुत्वातदेवपृच्छतिदेवर्षइति पुत्रस्यमरणकारणमासुरकर्म नतुशास्त्रीयमितिज्ञापनायसाधवेअघमितिसंहिताकाशनकृतम् ४५ अपरेशत्रवः ४६ विधम पारेहर पुत्रायप्रयोजितोविद्वेषः पितुर्मरणायाभूदितियत्तस्मात्कौतूहलमिति ॥ ४७ ॥ इति०भागवते०सप्तमस्कंधेवि०टी०चतुर्थोध्यायः ॥ ४ ॥ हिरण्यकशिपुप्रह्लादसंवादच्छलेनभक्तिस्वरूपंहरेर्निरतिशयस्वातंत्र्यंचनिरूपयत्यस्मिन्नध्याये काव्यःशुक्रःशंडश्चमर्कश्चशंडामर्कौतस्यशुक्रस्यदैत्यराजगृहांतिकेन्यवसतामितिशेषः १ राज्ञाहिरण्यकशिपुना २

अपाठस्यविशेषणभूतेनहेत्यनेनसूचितंहेतुमाह नेति असाधुत्वेकिंकारणमत्राह स्वरूपेति स्वातंत्र्यात्स्वइतिप्रोक्तइत्यतःस्वस्यस्वतंत्रस्यहरेरूपस्यासत्त्वंशून्यत्वंगृह्णातीतिनिराकारोहरिरितियःपक्षःसआ श्रयोयस्यतत्तथा निराकारपक्षविषयत्वादित्यर्थः प्रपंचस्वरूपस्यासद्ग्रहःशून्यत्वप्रतिपादकःशून्यवादः सआश्रयोयस्यतत्तथा अद्वैतविषयत्वादित्यर्थइतिवा जीवपरस्वरूपयोरसत्पृथग्भावं गृह्णातीति स्वरूपासद्ग्रहःजीवपरमात्मानावभिन्नावितियःसिद्धांतःसआश्रयोयस्यतत्तथा अद्वैतविषयत्वादित्यर्थइतिवास्वरूपासद्ग्रहः औत्पत्तिकदुराग्रहोऽवैष्णवपक्षपातःसआश्रयोयस्यतत्तथा वैष्णवसिद्धांतविरुद्ध त्वादित्यर्थइतिवा विन्यासभेदएवायंतात्पर्यंतस्त्वेकएवेति ॥ ३ ॥ ४ ॥ हेअसुरवर्यअसद्ग्रहाद्विषयाभिनिवेशात्समुद्विग्नधियांपरवशीकृतबुद्धीनां देहिनांतत्साधुसंसारनिर्मूलसाधनमन्यइत्यन्वयः किंतदितितत्राह हित्वेति आत्मपातंस्वस्यनिरयपातंअंधमज्ञानंयत्तस्यकूपंनिधानस्थानंगृहंहित्वावनंसज्जनसंगमलक्षणंगतः ५ सज्जनशिक्षार्थंप्रह्लादेनतत्त्वमुक्तंनतुतंग्राहयितु तस्यासुरावेशेनदुराग्रह गृहीतत्वाचत्फलमाह श्रुत्वेति परिहासःफलंपरबुद्धिभिःप्रतिपक्षबुद्धिभिः परपक्षसमीहिताःपूर्वपक्षविषयत्वेनप्रवृत्ताः ६ पुत्रस्नेहेनाभिमतोयंनहासःकिंत्वनभिमतएवेत्यभिप्रेत्याह सम्यगिति विधार्यतामव धार्यतांविष्णुपक्षःप्रतिच्छन्नोयेपांतेतथातैर्वैष्णुसिद्धांतमभिगृह्य स्थितैरित्यर्थः ७ अवशवशीकरणायचत्वारउपायाविहितास्तत्रद्विजातीनांसामोपायएवश्रेयानितिदर्शयितुंपरकृतबुद्धिभेदंचज्ञातुंतत्रापि योग्यानांभगवत्तत्त्वविषयज्ञाननिश्चयायचदैत्यभयाच्चदैत्ययाजकाःप्रह्लादमपृच्छन्नित्याह गृहमिति सामभिर्वचनैः८ तुभ्यंतवयोबुद्धिविपर्ययएव बालान्वयस्यान्अतिक्रम्य कुतोभूदितिशेषः बालानांबुद्धि

यत्तत्रगुरुणाप्रोक्तंशुश्रुवेनपपाठह ॥ नसाधुमेनेमनसास्वरूपासद्ग्रहाश्रयम् ३ एकदासुरराट्पुत्रमंकमारोप्यपांडव ॥ पप्रच्छकथ्यतांवत्समन्यतेसाधुय द्भवान् ४ ॥ प्रह्लादउवाच ॥ तत्साधुमन्येऽसुरवर्यदेहिनांसदासमुद्विग्नधियामसद्ग्रहात् ॥ हित्वात्मपातंगृहमंधकूपंवनंगतोयद्धरिमाश्रयेत ५ ॥ नार दउवाच ॥ श्रुत्वापुत्रगिरोदैत्यःपरपक्षसमीहिताः ॥ जहासबुद्धिर्बालानांभिद्यतेपरबुद्धिभिः ६ सम्यग्विधार्यतांबालोगुरुगेहेद्विजातिभिः ॥ विष्णुपक्षप्र तिच्छन्नैर्नभिद्येतास्यधीर्यथा ७ गृहमानीतमाहूयप्रह्लादंदैत्ययाजकाः ॥ प्रशस्यश्लक्ष्णयावाचासमपृच्छंतसामभिः ८ वत्सप्रह्लादभद्रंतेसत्यंकथयमामृषा ॥ बालानतिकुतस्तुभ्यमेषबुद्धिविपर्ययः ९ बुद्धिभेदःपरकृतउताहोतेस्वतोभवेत् ॥ भण्यतांश्रोतुकामानांगुरूणांकुलनंदन १० ॥ प्रह्लादउवाच ॥ परःस्वश्चे त्यसद्ग्राहःपुंसांयन्माययाकृतः ॥ विमोहितधियांदृष्टस्तस्मैभगवतेनमः ११ सयदानुगतःपुंसांपशुबुद्धिर्विभिद्यते ॥ अन्यएषतथान्योहमितिदेहगतासती १२

मतिक्रम्यैषबुद्धिभेदःकुतःकस्मात्तुभ्यंरोचितइतिवा ९ एतदेवविवृण्वंति बुद्धिभेदइति अस्माकंतत्त्वमेववक्तव्यंत्वयेत्यतोगुरूणामिति १० उत्तरंवक्ति परइति पुंसांयोयंपरस्वात्मेत्यसद्ग्राहः एकमेवाद्वितीय मितिश्रुतेः परमार्थवस्तुनएकत्वेप्रामाणिकेसिद्धेतत्रश्रीनारायणमंतरेणपरविषयकर्तृत्वंस्वविषयकर्तृत्वमितिभेदः स्वातंत्र्यकल्पनालक्षणमन्यथाज्ञानं एषयस्येश्वरस्येच्छयाकृतःकल्पितः सर्वकर्तृत्वात्तस्य तस्मैभगवतेमहामहिम्नेनमइत्यन्वयः तत्प्रत्यक्षमित्याह विमोहितधियामिति दृष्टःप्रत्यक्षस्तस्मात्तादृशीबुद्धिर्भवाद्दृशैर्नकार्येतिशेषः विमोहितेत्यनेनापीश्वरकर्तृत्वंज्ञायते ११ यन्मायेत्युक्तंस्पष्टंदर्शयति सयदेति सभगवान्यदापुंसांस्वात्मपरबुद्धिजनकत्वेनानुगतोऽनुकूलोभवति तदापशुबुद्धिरज्ञबुद्धिर्विभिद्यते तत्कथमित्यतउक्तं अन्यइति एषदेवदत्तोन्यःस्वतंत्रोऽहमन्यःस्वतंत्रइति किमस्याधिकरण मितितत्राह देहगतेति अतएवासती वृत्तिज्ञानत्वेनमोक्षानुपयोगित्वात् अन्योसावन्योहमस्मीतिनसवेद यथापशुरितिश्रुतिप्रतीकेनानेनश्लोकेनजीवपरयोर्भेदंनिषिध्यचिदैक्यंविधीयतइतीममर्थंविधाया र्थांतरंकल्पनायांकिंप्रमाणमितीयमाशंकास्वातंत्र्येणान्यसद्भावनिषेधाय श्रुतिस्त्वियं अन्योसावन्योहमितिपदद्वयज्ञइतिस्मृ आत्मानमंतर्यमयेदितिभेदंस्वरूपतः आहतद्ब्रह्मणोधीना भिन्नाजीवाःसदैवतु स्वरूपसंज्ञाकर्तृत्वंभोगोमोक्षस्तथैवच मुक्तस्यावस्थितिश्चैवसर्वंविष्णोर्वशेसदेत्यनेनपरिहृतेतिज्ञातव्यं १२

ननुयदिजीवपरौमिथोभिन्नौतर्हिकिमिति घटपटभेदज्ञानवत्तद्विषयज्ञानंनोत्पद्यतइत्याशंक्यप्रतियोगिज्ञानस्यदुःसाध्यत्वादित्यभिप्रेत्याह सएषइतियःस्वस्वकर्मानुसारेणस्वस्वयोग्यज्ञानमुत्पादयति सएषआत्मापरमात्मास्वपरेत्यबुद्धिभिःयथार्थज्ञानविरोधिज्ञानवद्भिःपुरुषैर्दुरन्वयानुक्रमणः दुरन्वयंदुर्ज्ञानमनुक्रमणंतत्तद्योग्यतानुसारेणप्रवर्तनंयस्यसतथादुर्ज्ञेयचेष्टइत्यर्थः निरुच्यतेनिश्चीयते ननुवेदाहमेतंपुरुषंमहांतमादित्यवर्णमितिश्रुतेः ब्रह्मादेस्तद्विषयज्ञानश्रवणात्कथंप्रतियोगिज्ञानस्यदुःसाध्यत्वमित्यतआह मुह्यंतीति ब्रह्मादीनांभगवद्विषयज्ञानंदुःसाध्यंकिंन्वितरेषामित्यतोवाह हिशब्दोप्यर्थेहेतौवा. वेदवादेकोविदाः ब्रह्मादयोपियद्वर्त्मनियत्रस्वरूपविषयेमुह्यंतियस्मात्तस्मात्सएषदुरन्वयानुक्रमणइतिनिरुच्यते अनेनहरेरनुग्रहमंतरेणतद्विषयज्ञानंनोत्पद्यते तस्मिन्प्रतितस्यात् यमेवैषवृणुतेतेनलभ्यइतिश्रुतेरन्वयव्यतिरेकौदर्शितावित्युक्तंभवति ननु त्वदुक्त्यैवत्वद्बुद्धिभेदजनकःकश्चित्स्यात्सकइतिविचार्यंत इतितत्राह एषइति मुह्यंतीत्येतदत्राप्यनुकूल्यतेयद्वर्त्मनिमुह्यत्येषहरिर्ममर्तिभिनत्तिविषयीकरोति सर्वस्यस्ववशत्वंस्वस्यानन्याधीनत्वंस्वप्रसादान्मोक्षादिसकलपुरुषार्थप्राप्तिरित्यादिबुद्धिंजनयतीतिभावः । तदुक्तं आहतद्ब्रह्मणोधीनाभिन्नाजीवाःसदैवत्वित्यादि ॥

सएषआत्मास्वपरेत्यबुद्धिभिर्दुरन्वयानुक्रमणोनिरुच्यते ॥ मुह्यंतियद्वर्त्मनिवेदवादिनोब्रह्मादयोह्येषभिनत्तिमेमतिम् १३ यथाभ्राम्यत्ययोब्रह्मन्स्वयमाकर्षसन्निधौ ॥ तथामेभिद्यतेचेतश्चक्रपाणेर्यदृच्छया ॥ १४ ॥ नारदउवाच ॥ एतावद्ब्राह्मणायोक्त्वाविरराममहामतिः ॥ तंनिर्भर्त्स्यार्थकुपितःसुदीनोराजसेवकः १५ आनीयतामरेवेत्रमस्माकमयशस्करः ॥ कुलांगारस्यदुर्बुद्धेश्चतुर्थोऽस्योदितोदमः १६ दैतेयचंदनवनेजातोयंकंटकद्रुमः ॥ तन्मूलोन्मूलपरशोर्विष्णोर्नालायितोर्भकः १७ इतितंविविधोपायैर्भीषयंस्तर्जनादिभिः ॥ प्राह्लादंग्राहयामासत्रिवर्गस्योपपादनम् १८ ततएनंगुरुर्ज्ञात्वाज्ञातज्ञेयचतुष्टयम् ॥ दैत्येंद्रंदर्शयामासमातृमृष्टमलंकृतम् १९ पादयोःपतितंबालंप्रतिनंद्याशिषासुरः ॥ परिष्वज्यचिरंदोर्भ्यांपरमामापनिर्वृतिम् २० आरोप्यांकमवघ्रायमूर्धन्यश्रुकलांबुभिः ॥ आसिंचन्विकसद्वक्त्रमिदमाहयुधिष्ठिर २१ प्रह्लादानूच्यतांतातस्वधीतंकिंचिदुत्तमम् ॥ कालेनैतावतायुष्मन्यदशिक्षद्गुरोर्भवान् २२

१३ एतदर्थंसदृष्टांतमाह यथेति यथाकर्षस्यायस्कांतस्यसन्निधौसत्ययःस्वयंभ्राम्यति स्वात्मानमुद्दिश्यगमनशक्तिंकरोति तदितिशेषः तथा मेचेतोयदृच्छयातदिच्छयाचक्रपाणौभिद्यतेतद्विषयीकरणशक्तिंक्रियते अयोगमनशक्तिवच्चेतनस्यापिनैसर्गिकीतिभावः एतेनसर्वंहर्यधीनमित्युक्तंभवतिएतेनहवावपयोमहभवति एतस्यवाक्षरस्यप्रशासनेगार्गिप्राच्योन्योनद्यःस्यंदतेयआत्मानमंतर्यमयोदीतिभेदस्वरूपआहेत्यादिश्रुतिस्मृतिभ्यांविशेषेणचराचरस्यसर्वस्यश्रीहर्यधीनप्रवृत्त्यवगमात्पश्यन्नज्ञइत्यनेनपशुबुद्धिरबुद्धिभिरित्येतत्पदद्वयाभिप्रायोदर्शितः १४ सुदीनःवाचाशिक्षायांक्षीणोऽशक्तइत्यर्थःराजसेवकइत्यनेनभेदज्ञानासामर्थ्यंचसूचितं उभयोरपिवित्तसाध्यत्वात् १५ अयशस्कृतोदुष्कीर्तिकरस्यास्यचतुर्थोदमोदंडसंज्ञइति उदितइत्यर्थः १६ उन्मूलयतीत्युन्मूलःसचासौपरशुश्चोन्मूलपरशुस्तत्स्वदैतेयचंदनवनस्यमूलंतन्मूलोन्मूलपरशुस्तस्यनालायितःमंडपवत्तन्वानः १७ त्रिवर्गस्योपपादनंशास्त्रम् १८ ज्ञातंज्ञेयानांधर्मादिपुरुषार्थानांचतुष्टयंयेनसततथातं ज्ञातंज्ञेयसाधनचतुष्टयंवा मातृमृष्टंशरीरमलत्यागेनस्नानंकारितम् १९ २० २१ सुष्ठुअधीतंपठितम् २२

नियंतृत्वेनात्मनिमयिस्थितोभगवानितिनिरंतरंवेदनंज्ञानमात्मनिवेदनं मुक्तस्यापिममांतस्थोनियंतैवहरिःसदा इतिज्ञानंसमुदिष्टंसम्यगात्मनिवेदनमितिएतदात्मसमर्पणंनार्थः।किंतूक्तएवार्थः इत्युक्तप्रकारे णश्रवणादिभिर्नवभिर्लक्ष्यते असंभवव्यभिचारपरिहारेणज्ञायतइति २३ नवलक्षणाविष्णौभक्तिर्यस्मिन्शास्त्रेर्पिताप्रतिपादितापुंसाभगवत्युत्तमश्लोकेअद्धानिर्व्याजेनक्रियतेचेद्यदिताहि तदधीतंशा स्त्रमुत्तममंन्यनोन्यदित्यन्वयः नवश्रवणादीनिलक्षणानिचिह्नानियस्यांसातथा २४ २५ तेत्वया २६ साधुत्वेनवृतस्यगुरोर्दुर्मतेइतिसंबोध्यानिंदनंकथंघटतइतितत्राह संतीति गुरोरप्यवलिप्त स्यकार्याकार्यमजानतः उत्पथंप्रतिपन्नस्यकार्यंभवतिशासनमितिवाक्यंहिशब्देनस्मारयति पातकिनांपापफलत्वेनरोगउदेतियथा तथातेषामधमपरायलक्षणंव्यसनप्रकाशतइत्यन्वयः २७ लोकेसं त्यसाधवःनाहंतादृशःयतस्त्वत्पुत्रोनमयाचारितंनापिपरेणपठत्यतइत्याह नमदिति तर्हिकस्मादियंमतिरभूदितितत्राह नैसर्गिकीति तदातास्मिन्पक्षेममात्मनःस्वरूपाभिमानोमयाग्राहितेयंमतिरितिक स्वस्मात्कोपंसंहरोति २८ पुत्रापकृष्यन्नाह गुरुणेति गुरुमुखीगुरुमुखादुत्पन्नेयंमतिः २९ सत्येवमन्मतिः स्वन्मतिरेवासतीतिपितरंकटाक्षीकृत्यपरिहरति मतिरिति परतोगुर्वादिबोधनप्रयत्नेनस्वतः स्वप्रयत्नेन तत्रानिमित्तमाह गृहेति वनादिनिवासमंतरेणगृहएवावस्थानलक्षणंव्रतंयेषांतेतथातषां ननु कुटुंबीशुचौदेशेस्वाध्यायमधीयानइतिश्रुतेर्गृहस्थानामपिश्रेयःप्राप्त्युपपत्तेरितितत्राहअदां

प्रह्लादउवाच ॥ श्रवणंकीर्तनंविष्णोःस्मरणंपादसेवनम् ॥ अर्चनंवंदनंदास्यंसख्यमात्मनिवेदनम् २३ इतिपुंसार्पिताविष्णौभक्तिश्चेन्नवलक्षणा ॥ क्रिय तेभगवत्यद्धातन्मन्येऽधीतमुत्तमम् २४ ॥ नारदउवाच ॥ निशम्यैतत्सुतवचोहिरण्यकशिपुस्तदा ॥ गुरुपुत्रमुवाचेदंरुषाप्रस्फुरिताधरः२५ ॥हिरण्य कशिपुरुवाच ॥ब्रह्मबंधोकिमेतत्तेविपक्षंश्रयतासता ॥ असारंग्राहितोबालोमामनादृत्यदुर्मते २६ संतिह्यसाधवोलोकेदुर्मैत्राश्छद्मवेषिणः ॥ तेषामुदेत्य घंकालेरोगःपातकिनामिव २७ ॥ गुरुपुत्रउवाच ॥ नमत्प्रणीतंनपरप्रणीतंसुतोवदत्येषतवेंद्रशत्रो ॥ नैसर्गिकीयंमतिरस्यराजन्नियच्छमन्युंकृतदात्म मानः २८ ॥ नारदउवाच ॥ गुरुणैवंप्रतिप्रोक्तोभूयआहासुरःसुतम् ॥ नचेद्गुरुमुखीयंतेकुतोभद्रासतीमतिः २९ प्रह्लादउवाच ॥ मतिर्नकृष्णेपरतःस्व तोवामिथोभिपद्येतगृहव्रतानाम् ॥ अदांतगोभिर्विशतांतमिस्रंपुनःपुनश्चर्वितचर्वणानाम् ३० नतेविदुःस्वार्थगतिंहिविष्णुंदुराशयायेबहिरर्थमानिनः ॥ अंधायथांधैरुपनीयमानावाचीशतंत्र्यामुरुदाम्निबद्धाः ३१

तेति अदांतानामिंद्रियनिग्रहरहितानांपुरुषाणांगोभिर्वाग्भिस्ताभिस्तंनरकसुखकल्पंविषयसुखंविशतांभुजानानां तत्रापिनूतना पूर्वभोगोनास्तीत्यभिप्रेत्याह पुनरिति पुनःपुनर्भुक्तविषयानेवभुंजानाना मित्यर्थःअदांतगोभिराशिक्षिताभिर्वाग्भिर्वेदगताभिस्तमिस्रमतत्त्वार्थविषयमज्ञानं अन्यथाज्ञानंचविशतांगाहमानानांनतत्रापियत्नोस्तीत्याह पुनरितिवा ३० एतदेवस्पष्टमाह नतइतिदुष्टेषुप्रतीति सुंदरेषुपरिणामविषयेष्वाशयोयेषांतेतथातत्रहेतुमाह बहिरिति बहिरर्थेषुमुखतःप्रतीयमानार्थेष्ववभावस्तात्पर्यार्थनिश्चयोयेषांतेतथा श्रुतितात्पर्यार्थानभिज्ञाइत्यर्थः एतेस्वार्थगतिंपुरुषार्थंस्वरू पंस्वभक्तप्रयोजनसाधकंवाकृष्णंनविदुरित्यन्वयः अत्रकारणमाहवाचीति ईशतंत्र्यामीशस्यवेदराग्लक्षणतंत्र्यांब्राह्मणादिबहुनामाख्यलक्षणनामदाम्निबद्धाः अत्रोदाहरणमाह अंधाइति अंधै रन्धैःउपनीयमानाःउपदिश्यमानकर्ममार्गांअंधाअज्ञाउपदिष्टान्यमार्गंयथानविदुस्तथेति अनेनांधैनैवनीयमानापथांधाइतिस्मृतिंस्मारयंति ३१

नन्वेवंतर्हिगृहव्रतानांमुक्त्युपायःकइत्याह नैषामिति यावदेषांगृहव्रतानांमतिर्महीयसोनिष्किंचनानांसंन्यासिनांपादरजोभिषेकंनवृणीत तावंतंकालमुरुक्रमस्यांघ्रिंनस्पृशतिनविषयीकरोति उरुक्रमस्यांघ्रिस्पर्शस्यकिंफलमत्राह अनर्थेति यस्यहरेरंघ्रिस्पर्शोऽस्यफलमनर्थापगमःसंसारनिवृत्तिः अथवानर्थापगमोयस्मात्पादरजोभिषेकादुत्थितः प्रकाशितोभवतितम् ३२ कषायीकृतलोचनःरक्तनेत्रः ३३ ३४ पितृव्यस्यहिरण्याक्षस्यहंतुः असावसमंजसःप्रल्हादः विष्णोःकिंवासाधुकरिष्यति ३५ कथमसमंजसोभूत्तत्राह सौहृदमिति ३६ परःशत्रुरप्यवश्यंद्वेषेणापिहितकृच्चेत्सएवबंधुः यथाऔषधंतिक्तत्वेनहरीतकीमनुष्याणांमातेवहितकारिणीतिवचनात् स्वदेहजोपिसुतोपि अहितोऽपकारीचेत्तंछिंद्यादामयवत् किंचात्मनःस्वस्यपदहितमंगंसर्पदष्टतच्छिंद्याच्चदेवविशिनष्टि यद्विवर्जनाद्दीत शेषमंगंसुखंजीवतीत्यन्वयः ३७ संभोगोभोजनम् ३८ ३९ भैरवंनादमुद्दिश्य ४० अनिर्देश्यत्वादिगुणशालिनिहरौयुक्तात्मनिप्रयोजितमनस्केप्रह्लादे अपुण्यस्येवपापिनइवतत्क्रियाः तेषांनै

नैषांमतिस्तावदुरुक्रमांघ्रिंस्पृशत्यनर्थापगमोयदर्थः ॥ महीयसांपादरजोभिषेकंनिष्किंचनानांनवृणीतयावत् ३२ नारदउवाच ॥ इत्युक्त्वोपरतंपुत्रंहिरण्यकशिपूरुषा ॥ अंधीकृतात्मास्वोत्संगान्निरस्यतमहीतले ॥ आहामर्षरुषाविष्टःकषायीकृतलोचनः ३३ ॥ हिरण्यकशिपुरुवाच ॥ वध्यतामाश्वयंवध्योनिःसारयतनैर्ऋताः ॥ अयंमेभ्रातृहाशोच्योहित्वास्वान्सुहृदोऽधमः ३४ पितृव्यहंतुःपादौयोविष्णोर्दासवदर्चति ॥ विष्णोर्वासाध्वसौकिंनुकरिष्यत्यसमंजसः ३५ सौहृदंदुस्त्यजंपित्रोरत्यजत्पंचहायनः ३६ परोप्यपत्यंहितकृद्यथौषधंस्वदेहजोप्यामयवत्सुतोऽहितः ॥ छिंद्यात्तदंगंयदुतात्मनोहितंशेषंसुखंजीवतियद्विसर्जनात् ३७ सर्वैरुपायैर्हंतव्यःसंभोगशयनासनैः ॥ सुहृल्लिंगधरःशत्रुर्मुनेर्दुष्टमिवेंद्रियम् ३८ नैर्ऋतास्तेसमादिष्टाभर्त्रात्रिशूलपाणयः ॥ तिग्मदंष्ट्राःकरालास्यास्ताम्रश्मश्रुशिरोरुहाः ३९ नदंतोभैरवंनादंछिंधिभिंधीतिवादिनः ॥ आसीनंचाहनञ्शूलैःप्रह्लादंसर्वमर्मसु ४० परेब्रह्मण्यनिर्देश्येभगवत्यखिलात्मनि ॥ युक्तात्मन्यफलाआसन्नपुण्यस्येवतक्रियाः ४१ प्रयासेऽपहतेतस्मिन्दैत्येंद्रःपरिशंकितः ॥ चकारतद्वधोपायान्निर्बंधेनयुधिष्ठिर ४२ दिग्गजैर्दंदशूकेंद्रैरभिचारावपातनैः ॥ मायाभिःसन्निरोधैश्चगरदानैरभोजनैः ४३ हिमवाय्वग्निसलिलैःपर्वताक्रमणैरपि नशशाकयदाहंतुमपापमसुरःसुतम् ४४ चिंतांदीर्घतमांप्राप्तस्तत्कर्तुंनाभ्यपद्यत ॥ एषमेबह्वसाधूक्तोवधोपायाश्चनिर्मिताः ४५ तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तःस्वेनैवतेजसा ॥ वर्तमानोऽविदूरेवैबालोप्यजडधीरयम् ॥ नविस्मरतिमेऽनार्यंशुनःशेपइवप्रभुः ४६ अप्रमेयानुभावोयमकुतश्चिद्भयोमरः ॥ नूनमेतद्विरोधेनमृत्युर्मेभवितानवा ४७ इतितच्चिंतयाकिंचिन्म्लानश्रियमधोमुखम् ॥ शंडामर्कावौशनसौविविक्तइतिहोचतुः ४८ जितंत्वयैकेनजगत्त्रयंभ्रुवोर्विजृंभणत्रस्तसमस्तधिष्ण्यपम् ॥ नतस्यचिंत्यंतवनाथचक्ष्महेनवैशिशूनांगुणदोषयोःपदम् ४९

ऋतानाताडनादिक्रियाः ४१ ४२ वधोपायमाह दिग्गजैरित्यादिना अवपातनंगिरिशृंगादधःपातनं सन्निरोधैरनिर्गमगर्तगृहेनिक्षिप्यपीडनैः पर्वताक्रमणैःपर्वतारोहणैः उपरिपर्वतपातनैर्वा ४३ ४४ तत्कर्तुंहननंकर्तुं ४५ असद्धर्मैरसतांयोग्यैः अविदूरेसमीपेविदूरेवावर्तमानोऽजडधीःपटुतरबुद्धिःअनार्यमूर्खकर्म अन्याय्यमितिपाठेनयशास्त्रविरुद्धंमह्यपमरंशतंदत्त्वाहमेनंविशसिष्यामीत्याद्यजीगर्तकृतकर्मशुनःशेपेनयथालोडुतथेति ४६ ४७ इतिवक्ष्यमाणप्रकारंहेत्युच्यमानेर्थेतात्पर्यातिशयंवाक्ये ४८ धिष्ण्यपाश्चंद्रादित्यादयः लोकपालावा चक्ष्महे पश्यामःशिशूनांप्रेंखायागयनशीलानांबुद्धिविकाशरहितानांवा तत्करणंगुणदोषयोःपदमास्पदंनवैहिगुणदोषग्रहणबुद्धिविकासाभावादित्यर्थः शिशूनांगुणदोषयोःपदंनास्तीतिवा ४९

तर्हिकापरबुद्धिरित्यत्रोच्यते इममिति तुनाधुनेयमेवबुद्धिरितिविशिनष्टि किपर्यंतंकालमेवमितितत्राह यावदितितावदितिशेषः ततश्चकिंतत्राह बुद्धिश्चेति पापजननीचवयसाकालविशेषविशिष्टेनापुंलक्षणेनार्याणांसेवयास्यादितिशेषः ५० ५१ ५२ यथाद्वंद्वारामोपवर्णितां रागद्वेषादिव्यापृतबुद्धिभिर्ग्राह्यतां ५३ यदाचार्योध्यापनात्परावृत्तउपरतः गृहमेधीयकर्मस्वग्निहोत्रादिलक्षणेषुव्यापृतोवा तत्रतदाकृतक्षणैःकृतावसरैःवयस्यैर्बालकैःसउपहूतःक्रीडार्थमितिशेषः सोक्षिन्नुभद्राक्षुमतासोचिन्नुसर्वा सैषदाशरथीरामइत्यादिपुद्रष्टव्योयंप्रयोगः ५४ अथागतःसन् तस्यांक्रियायांनिष्ठामिच्छांविद्वांस्तेषांवयस्यानांमिष्टांस्वस्मिन्स्नेहविशेषंवा ५५ द्वंद्वारामैरित्तैर्वचनैरीहितैःप्रवृत्तिभिश्चनदूषितधियः ५६ सएषोसुःसएवप्राणइतिश्रुतेः मुख्यप्राणेरमतइत्यसुरः ५७ ॥ इतिश्रीभागवतेमहापुराणेविजयध्वजकृतटीकायांपंचमोध्यायः ॥ ५ ॥ मुकुंदचरणारविंदनिरंतरसेवैवेहामुत्रानश्वरानंदनिदाननान्यदतःसैवबुभूषुभिरनुदिनकर्तव्येतिविधीयतेस्मिन्नध्याये तत्रप्रह्लादोबालकान्किमाहेत्याशंक्याहहंतेतिबालानुकंपायांवाक्यारंभेवा तद्वचःश्रवणात्किफलंस्यादितितत्राह वइति वःसर्वतःसर्वस्मात् शिवंसुखंस्यादितिशेषः कीदृशंवचइत्यतोवाह वइति शिवशुभंमंगलं ननुकस्मान्मंगलमितितत्राह वयस्यानिति संसारविरक्तिजनकत्वेनपुरुषार्थहेतुत्वान्मंगलमित्यर्थः अनेनाधुनास्माकंबाल्यमुत्तरत्रश्रेयःसंपादनायप्रयतामहइत्याशानिरस्तेतिज्ञायते यतोस्मदायुःकृतांतविलुलितंतस्मात्क्रीडासक्त

इमंतुपाशैर्वरुणस्यबद्ध्वानिधेहिभीतोनपलायतेयथा ॥ बुद्धिश्चपुंसोवयसार्यसेवयायावद्गुरुर्भार्गवआगमिष्यति ५० तथेतिगुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् ॥ धर्मोह्यस्योपदेष्टव्योराज्ञांयोगृहमेधिनाम् ५१ धर्ममर्थंचकामंचनितरांचानुपूर्वशः ॥ प्रह्लादायोचतूराजन्प्रश्रितावनतायच ५२ यथात्रिवर्गंगुरुभिरात्मने उपशिक्षितम् ॥नसाधुमेनेतच्छिक्षांद्वंद्वारामोपवर्णिताम् ५३यदाचार्यःपरावृत्तोगृहमेधीयकर्मसु ॥ वयस्यैर्बालकैस्तत्रसोपहूतःकृतक्षणैः५४अथतान्श्लक्ष्णयावाचाप्रत्याहूयमहाबुधः ॥ उवाचविद्वांस्तन्निष्ठांकृपयाप्रहसन्निव ५५ तेतुतद्गौरवात्सर्वेत्यक्तक्रीडापरिच्छदाः ॥ बालानदूषितधियोद्वंद्वारामेरितेहितैः ५६ पर्युपासतराजेंद्रतन्न्यस्तहृदयेक्षणाः ॥ तानाहकरुणोमैत्रोमहाभागवतोसुरः ५७ ॥ इतिश्रीभागवतेसप्तमस्कंधेपंचमोध्यायः ॥ ५ ॥ ॥ प्रह्लादउवाच ॥ हंतार्भकामेशृणुतवचोवःसर्वतःशिवम् ॥ वयस्यान्पश्यतमृतान्क्रीडांधामाप्रमादथ १ नपुराविवशंबालाआत्मनोर्थेप्रियैषिणः ॥ गुरुकम्पिनग्राह्यंयदनर्थेर्थकल्पनम् २ यदुक्त्यानप्रबुध्येतसुप्तस्त्वज्ञाननिद्रया ॥ नश्रद्दध्यात्मतंतस्ययथांधोह्यंधनायकः ३

स्वेनपुष्मद्धितविमर्शप्रमादोनकार्यइत्याह क्रीडांधाइति १ ननुबालानांक्रीडांधत्वंस्वभावइतितत्राहनेति इतःपुरातनाबालाअंतःकरणंक्रीडायांविवशंनकुर्वंतीतिशेषः तर्हिकिंकुर्वंतइतितत्राह आत्मनइति अर्थेजन्मप्रभृतिआत्मनोर्थे आत्मनःप्रियैषिणःपरमात्मनःज्ञानेच्छवःमोक्षलक्षणप्रियेच्छवोवा आत्मनःप्रियैषिण स्वप्रयोजनमाकाक्षमाणाआबाल्यात्प्रवर्ततइतिवा नन्वस्माभिरपिशंडामर्काभ्यांगुरुभ्यामुपदिष्टत्रिवर्गविषयशास्त्रश्रवणश्रेयसिप्रवर्त्यते तत्रगुर्वसरप्रतीक्षणायेयंक्रीडेतितत्राह गुरुकमिति कुतोनग्राह्यमितितत्राह यदनर्थइति संसारहेतुत्वादनर्थेत्रिवर्गलक्षणेश्रेयस्यर्थकल्पनंयत्तस्मादितिशेषः वैविद्यामासोमपाःपूतपापायज्ञैरिष्ट्वास्वर्गतिंप्रार्थयतइत्यादेः इष्टापूर्तंमन्यमानावरिष्ठंनान्यच्छ्रेयोवेदयंतेप्रमूढाइत्यादेश्च २ ननुगुरूक्तेर्यथार्थत्वेनज्ञानहेतुत्वोपपत्तेःकथंतदनर्थेर्थकल्पनमितितत्राह यदुक्त्येति अज्ञानलक्षणनिद्रयासुप्तस्त्रिवर्गविषयलक्षणमग्रहलक्षणेयथार्थज्ञानविरोधित्वादज्ञानंनामनतुज्ञानमात्राभावःसुप्तस्यापिगुरूक्त्याप्रबोधोहिप्रयोजनंसनोत्पद्यतेचेत्तदुपदेशेनकिंप्रयोजनंप्रत्युततत्तुज्ञानेनानर्थएवस्यादितिभावः अतःफलितमाह नेति अत्रोदाहरणमाह यथेति अंधोनायकोनेतायस्यसतथा हिशब्देनोभयोरप्यंधत्वान्मार्गज्ञाननोत्पद्यतेयथातथात्रापितस्माच्छ्रद्धानकार्या ॥ ३ ॥

कोशस्थःकोशकारीकीट एतदेवस्पष्टयति औपस्थ्यमिति १९ यदीतिक्षंनिजमात्मीयमायुर्पस्यसतथा शास्त्रविहितमर्थश्रेयोलक्षणंनबुध्यते स्वकुटुंबेभार्यादौरामःक्रीडायस्यसतथानानिर्विंद्यतेविर कोनभवति २० परविचहर्तुश्चोरादेरिहदेहात्प्रेत्ययत्पूर्वमर्जितमथाप्यनंतरमपितञ्चतदेवदुष्कर्महरते नयतीत्यन्वयःपरलोकेपिविषयेष्वलंबुद्धिर्नास्तीतिभावः २१ अनुक्तविशेषप्रदर्शनायकथितमे वार्थविशिनष्टि विद्वानिति स्वलोकायस्वक्षममोक्षायस्वयोग्यज्ञानायवा तत्रहेतुमाह यदिति नकेवलंमोक्षायकल्पतइतिप्रत्युतानर्थंचाप्नोति तमइति विमूढोविपरीतज्ञानीयथातमःप्रतिपद्यते तथायमि त्यन्वयः २२ श्रीनारायणानुग्रहमंतरेणविद्वत्त्वाप्यकिंचित्करीत्याह यतइति शास्त्रगुरूपदेशेनविद्वान्संसारस्यानित्यतामितिशेषः दीनंस्वात्मानंविमोचितुमलंसमर्थोनेतियतोतइतिशेषः यदिजीवराशौ कश्चिदस्तीत्यभिमानस्तर्हिकुत्रकस्मिन्देशेकुत्रकस्मिन्कालेनकस्माश्चिदित्यर्थः कुतोत्राह वामदृशामिति अयंपुरुषोवामदृशांविहारार्थेनिर्मितक्रीडामृगइतियत्कथमयंतथाभूदितितत्राह निगडइति आसाम क्षिसर्गःकटाक्षमोक्षोयस्यनिगडःशृंखलायितः तस्मात्सइतिशेषः २३ एतावंतंदैत्यान्कटाक्षीकृत्योक्तंप्रगटयन्नथितार्थमाह ततइति नन्वेवंतर्हिसंसारमोक्षस्यदौर्घट्यमापादितमितिशंकामाभूत्पद्यार्थिता

त्यजेतकोशस्थइवेहमानःकर्माणिलोभादवितृप्तकामः ॥ औपस्थ्यजैह्व्यंबहुमन्यमानःकथंविरज्येतदुरंतमोहः १९ कुटुंबपोषायचयन्निजायुर्नबुध्यतेर्थं विहितंप्रमत्तः ॥ सर्वत्रतापत्रयदुःखितात्मानिर्विद्यतेनस्वकुटुंबरामः २० वित्तेषुनित्याभिनिविष्टचेताविद्वांश्चदोषंपरवित्तहर्तुः ॥ प्रेत्येहवाथाप्यजितें द्रियस्तदशांतकामोहरतेकुटुंबी २१ विद्वानपीत्थंदनुजाःकुटुंबंपुष्णन्स्वलोकायनकल्पतेवै ॥ यत्स्वीयपारक्यविभिन्नभावस्तमःप्रपद्येतयथाविमूढः ॥ २२ यतोनकश्चित्क्वचकुत्रविद्वान्दीनंस्वमात्मानमलंसमर्थः ॥ विमोचितुंवामदृशांविहारक्रीडामृगोयंनिगडोक्षिसर्गः २३ ततोविदूरात्परिहृत्यदैत्यादै त्येषुसंगंविषयात्मकेषु ॥ उपेतनारायणमादिदेवंसमुक्तसंगैरिषितोपवर्गः २४ नह्यच्युतंप्रीणयतोबह्वायासोसुरात्मजाः ॥ आत्मत्वात्सर्वभूतानांसिद्ध त्वादिहसर्वतः २५ परावरेषुभूतेषुब्रह्मांतस्थावरादिषु ॥ भौतिकेषुविकारेषुभूतेष्वथमहत्सुच २६ गुणेषुगुणसाम्येचगुणव्यतिकरेतथा ॥ एकएवपरो ह्यात्माभगवानीश्वरोव्ययः २७ प्रत्यगात्मस्वरूपेणकालरूपेणचस्वयम् ॥ व्याप्यव्यापकनिर्देश्योह्यनिर्देश्योविकल्पितः २८ केवलानुभवानंदस्वरूपःप रमेश्वरः ॥ माययांतर्हितैश्वर्यईड्यतेगुणसर्गया २९ तस्मात्सर्वेषुभूतेषुदयांकुरुतसौहृदम् ॥ भावमासुरमुन्मुच्यतयातुष्यत्यधोक्षजः ३०

रित्तर्ह्युपायंवदामीत्यतोवाह ततइति यतोधर्मार्थकामैर्ब्रह्मार्पणबुद्धिचिकित्सारहितैःसंसारमोक्षोनसेत्स्यति ततोदैत्येषुसंगंदूरात्परिहृत्य नारायणंशरणमुपेतयातेत्यन्वयः सोपवर्गोमुक्तसंगैःपुरुषैरिषि तआप्तोभवति इषुगताविति धातोः २४ नेदंदुःसाध्यमित्याह नहीति सर्वभूतानामात्मत्वात्तत्प्रेष्ठत्वात्सर्वत्रव्याप्तत्वेनसुलभत्वाद्वा २५ नारायणस्यसेव्यत्वेहेतुगर्भविशेषणमाह परावरेष्विति २६ गु णसाम्येप्रलयेगुणव्यतिकरेसृष्टौ २७ व्याप्तिप्रकारमाह प्रत्यगात्मेति सर्वपदार्थानामंतःप्रत्यगात्मस्वरूपेणांतर्यामिरूपेणबहिःकालरूपेणव्याप्तेनब्रह्मापरपर्यायेण एवमेकएवव्याप्यव्यापकनिर्देश्यो विकल्पितोविविधक्लृप्तः अंतर्यामीप्रत्यगात्माव्याप्तःकालोहारिःस्मृतइतिवाक्यासिद्धोयमर्थः घटइवनिर्देश्योनेत्यनिर्देश्यरूपः २८ अचिंत्यमव्यपदेश्यमैकात्म्यप्रत्ययसारमितिश्रुतिनिरूपितदित्याह केवलेति सर्वत्रसिद्धश्चेत्किमितिनदृश्यतइतितत्राह माययेति माययाप्रकृत्या तमसागूळ्हमग्रेइतिश्रुतेःसत्त्वादिगुणैःसर्गःसृष्टिर्यस्याःसातथातया २९ यतःसर्वभूतानिभगवन्निवासस्थानानितस्मान् यामूतदयया आसुरंभावंद्वेषं विष्णोर्द्वेष्टत्वाद्भूतपुदयाकार्यविजानतेतिस्मृतेः प्रह्लिंपंतोभ्यसूयकाइति ३०

भगवत्तुष्ट्याकिंप्रयोजनमितिनत्राह तुष्टइति येअनुसिद्धाः जन्मप्रभृतिप्राप्तास्तेगुणव्यतिकरैर्विषयसुखैरीश्वरगयो मारंजुषः गुणलक्षणमकरंदमेव मानानांतद्गुणांश्चोपगायतांगायतां नानानांस्माकंकां क्षितेनागुणेनान्यैर्वांछितेनमोक्षेणापिकिं अपक्वभक्तिलभ्यमुक्तेर्भक्तिः परमानंदस्वरूपत्वात्तत्रापिसुखाधिक्यहेतुत्वात्पुनराधर्मादिभिः सुतमंगुणव्यतिकरे फलनास्तीतिकिमुवक्तव्यं मोक्षेपुष्कमनाकांक्षमा णस्यपयासुखाधिक्यंभवतिद्धामोक्षगतंसुखंकांक्षमाणस्यसुखंपूर्णंनलभ्यतइत्यभिप्रायेणकांक्षितेनेतिविशेषणं कांक्षितंमोक्षगमार्गंसुखमाकांक्षनोयथेतिवचनात् ३१ ननुशास्त्रविहितानांधर्मादीनांकथं कारसाफल्यंभवतीत्याशंकांपरिहरन्नाह धर्मेति धर्मार्थकामइतिनामभिस्त्रिवर्गः शास्त्रविहितस्तस्येज्ञानमनुष्ठानंचयात्रयीत्रयोवेदाम्तेयाशब्दतोऽर्थतश्च ज्ञानं योनयदमो नीतिदंडशास्त्रे तयोरीक्षा तात्पर्यज्ञानं यावविविधावार्ताकृषिवाणिज्यादिलक्षणातदीक्षाप्रयोगज्ञानंवाऋग्वेदोयजुर्वेदः सामवेदोऽथर्वणश्चतुर्धइत्यारभ्यमर्वदेवयजनविधेरित्यनेनयदुक्तं तन्यसर्वस्यानुकर्षणार्थश्चकारः यदेतदुक्तं तदेतदखिलंपरमपुरुषस्यस्वात्मपूर्वकसमर्पणमर्पितुसुहृदिष्टंभवतितर्हिनिगमस्यऋग्वेदादिसकलशास्त्रपठितस्यसत्यंयथार्थफलमितिमन्येइत्यन्वयः ३२ नेदंस्वमनीषोत्थंकिंतुसंप्रदायत आप्तत्वाच्छ्रद्धेय मित्याह ज्ञानमिति नरसखोनरसखः अनेनविशेषणेनसनकादिभ्यउपदिष्टमिदमितिज्ञापितं किलशब्देनपुरातनत्वेनग्राह्यत्वंदर्शयति ज्ञानाधिकारिणमाह एकांतिनामिति ३३ तवकुतःप्राप्तमेतदत्रा

तुष्टेचतत्रकिमलभ्यमनंतआद्येकिंतैर्गुणव्यतिकरैरिहयेऽनुसिद्धाः ॥ धर्मादिभिःकिमगुणेनचकांक्षितेनसारंजुषांचरणयोरुपगायतांनः ३१ धर्मार्थकामइ तियोविहितस्त्रिवर्गईक्षात्रयीनयदमौविविधाचवार्ता ॥ मन्येतदेतदखिलंनिगमस्यसत्यंस्वात्मार्पणंस्वसुहृदःपरमस्यपुंसः ३२ ज्ञानंतदेतदखिलंदुरवाप माहनारायणोनरसखःकिलनारदाय ॥ एकांतिनांभगवतस्तदकिंचनानांपादारविंदरजसाप्लुतदेहिनांस्यात् ३३ श्रुतमेतन्मयापूर्वंज्ञानंविज्ञानसंयुतम् ॥ धर्मंभागवतंशुद्धंनारदाद्देवदर्शनात् ३४ ॥ दैत्यपुत्राऊचुः ॥ प्रह्लादत्वंवयंचापिनर्तेऽन्यंविद्महेगुरुम् ॥ एताभ्यांगुरुपुत्राभ्यांबालानामपिहीश्वरः ३५ बा लस्यांतःपुरस्थस्यमहत्संगोदुरन्वयः ॥ छिंधिनःसंशयंसौम्यस्याच्चेद्विस्रंभकारणम् ३६ ॥ इतिश्रीभागवतेसप्तमस्कंधेषष्ठोऽध्यायः ॥ ६ ॥ नारदउवा च ॥ एवंदैत्यसुतैःपृष्टोमहाभागवतोऽसुरः ॥ उवाचस्मयमानस्तान्स्मरन्मदनुशासनम् १ ॥ प्रह्लादउवाच ॥ पितरिप्रस्थितेस्माकंतपसेमंदराचलम् ॥ युद्धोद्योगंपरंचक्रुर्विबुधादानवान्प्रति २ पिपीलिकैरहिरिवदिष्ट्यालोकोपतापनः ॥ पापेनपापोऽभक्षीतिवादिनोवासवादयः ३ तेषामतिबलोद्योगंनि शम्यासुरयूथपाः ॥ वध्यमानाःसुरैर्भीतादुद्रुवुःसर्वतोदिशम् ४

इ श्रुतमिति ३४ एतस्मिन्नवसरेदैत्यपुत्राःप्रह्लादकथितार्थशंकयातंपृच्छंतीत्याह प्रह्लादेति एताभ्यांगुरुपुत्राभ्यांशंडामर्काभ्यामृतेनान्यंगुरुंविद्महेयस्मात्किंचविज्ञानंचेश्वरविषयंविवक्षितंतदुपाधि नापिबालानामक्षराभ्यासनिरतानामस्माकमीश्वरोनकांक्षितइतियस्मात् अन्यगुरुभावेपीश्वरउपदेष्टास्यादतोवाह बालानामिति बालानामीश्वरोस्त्यपिकिंनास्तिप्रतिपत्त्यभावात् ३५ कस्मि न्नवसरेदेशांतरेन्यगुरुसंगतिःकिंनस्यादितितत्राह बालस्येति तस्मादुत्पन्नं संशयंजहीत्यन्वयः तत्रकृत्यमाहुरित्याह स्यादिति ३६ ॥ इतिसप्तमेविज०टी०षष्ठोऽध्यायः ॥ ६ ॥ श्रीनृपुमात्सुसाधना नामस्वेषयाधार्थहरसैन्यप्रमादजनकत्वाद्भक्तिरेवपुरुषेणापार्थेत्यादिकंनिरूप्यनेस्मिन्नध्याये भक्तिप्रतिपादनात्मकत्वादस्यशास्त्रस्य पुनःपुनस्तत्प्रतिपादनात्पुनरुक्तिशंकाकार्या तत्रदैत्यपुत्रैःपृष्टःप्रह्ला दःकिंचकारेतियुधिष्ठिरशंकांनिवर्तयस्तापीरहरन्नारदआह नारदइति नारदस्यममानुशासनम् १ २ अहिःसर्पःपिपीलिकैर्यथाभक्ष्यते तथालोकोपतापनः पापोहिरण्यकशिपुः स्वपापेनाभक्षिनष्टप्रायो ऽभूदिष्ट्यासुखमस्माकमिन्द्राद्यावादिनइतिशेषः दिष्ट्याइत्युपनोपंचेत्यमरः ३ ४

५ व्यलुंपन्जयकांक्षिणोजितयुद्धाः असुरजयेनप्रकाशमानावा ६ ७ तवोपभोक्तुंयोग्यानभवतीत्याह परपरिग्रहामीति ८ सुरद्विषोहिरण्यकशिपोर्वीर्यरेतोलक्षणम् अस्यायावत्प्रसवः ताव न्ममवशेआस्यताम् पश्चादहंमोक्ष्ये ततःपूर्वंकस्मान्नमुंचसीतितत्राह अर्थपदवीमिति ९ अनयाप्रसूतःपुत्रोहंतुंत्वयानशक्यतइत्याह नत्वयेति सस्थांमरणम् कुतोत्राह अनंतेति १० अनंतप्रियः श्रीनारायणो अस्यभक्त्याअनंतस्यहरेःप्रियाबहुमानलक्षणाभक्तिरनंतप्रियाभक्तिस्तयावा ११ तावदत्रोष्यता मित्याह यावदिति १२ अंत्यंतिके १३ अंतर्वत्नीगर्भिणी १४ गर्भक्षेमाभिच्छाप्रसवं चेत्युभयम् ईश्वरोवरप्रदानसमर्थःनारदाच्छ्रुतमित्यनेननारदस्ययद्गुरुत्वमाभिप्रेतमेवंविधमित्याह धर्मस्येति धर्मस्यहरेर्भागवतसंज्ञस्यवा तत्त्वंतदुभयविधज्ञानंचपद्गर्भस्थंमामुद्दिश्यमात्रेउपदिष्टम् १५ तदुभयंतयोःकालस्यातिक्रांतत्वात् स्त्रीत्वात्शब्दादिविषयलौल्याच्चमातुस्तिरोहितमभूदित्यन्वयः अणुरेषधर्मइतिश्रुतेः धर्मोहरिस्ततस्तवकिमभूदितितत्राह ऋषिणेति ॥ १६ ॥ नतोस्माकम्

कलत्रपुत्रवित्ताप्तान्गृहान्पशुपरिच्छदान् ॥ नावेक्षमाणास्त्वरिताःसर्वेप्राणपरीप्सवः ५ व्यलुंपन्राजशिबिरममराजयकांक्षिणः ॥ इंद्रस्तुराजमहिषीं मातरंममचाग्रहीत् ६ नीयमानांभयोद्विग्नांरुदतींकुररीमिव ॥ यदृच्छयागतस्तत्रदेवर्षिर्ददृशेपथि ७ प्राहमैनांसुरपतेनेतुमर्हस्यनागसीम् ॥ मुंचमुंचम हाभागसतींपरपरिग्रहम् ८ इंद्रउवाच ॥ आस्तेऽस्याजठरेवीर्यमविषह्यंसुरद्विषः ॥ आस्यतांयावत्प्रसवंमोक्ष्येऽर्थपदवींगतः ९ नारदउवाच ॥ अयं निष्किल्बिषःसाक्षान्महाभागवतोमहान् ॥ त्वयानप्राप्स्यतेसंस्थामनंतानुचरोबली १० इत्युक्तस्तांविहायेंद्रोदेवर्षेर्मानयन्वचः ॥ अनंतप्रियभक्त्यैनां परिक्रम्यदिवंययौ ११ ततोनोमातरमृषिःसमानीयनिजाश्रमम् ॥ आश्वास्याहोष्यतांवत्सेयावत्तेभर्तुरागमः १२ तथेत्यवात्सीद्देवर्षेरंतिसाप्यकुतोभया ॥ यावद्दैत्यपतिर्घोरात्तपसोनन्यवर्तत १३ ऋषिंपर्यचरत्तत्रभक्त्यापरमयासती ॥ अंतर्वत्नीस्वगर्भस्यक्षेमायेच्छाप्रसूतये १४ ऋषिःकारुणिकस्तस्याः प्रादादुभयमीश्वरः ॥ धर्मस्यतत्त्वंज्ञानंचमामप्युद्दिश्यनिर्मलम् १५ तत्तुकालस्यदीर्घत्वात्स्त्रीत्वान्मातुस्तिरोदधे ॥ ऋषिणानुग्रहीतंमांनाधुनाप्य जहात्स्मृतिः १६ भवतामपिभूयान्मेयदिश्रद्दधतेवचः ॥ वैशारदीधीःश्रद्धातःस्त्रीबालानांचमेयथा १७ जन्माद्याःषडिमेभावादृष्टादेहस्यनात्मनः ॥ फ लानामिववृक्षस्यकालेनेश्वरमूर्तिना १८

किंप्रयोजनमितितत्राह भवतामपीति यथामेवैशारदीधीःभगवद्विषयज्ञानमभूत्तत्तथातर्हिभवतामपिभूयादित्यन्वयः नकेवलंयुष्माकमेवस्त्रीणांबालानांचश्रद्धातस्तत्स्यादित्याह श्रद्धातइति यदिस्त्रीबा लानांश्रद्धास्यादतस्ताहितेषामिति १७ प्रह्लादस्तेषांस्ववचसिश्रद्धामुत्पाद्यनारदोक्तंज्ञानमुपदिशति जन्माद्याइति जातःकंसवधार्थायभूभारहरणायच जनितोतविष्णोरित्यादिषुहरेर्जन्मादि कंप्रतीयते तत्रजन्मादिमतोहरेरितरवद्दुर्भगशरीरस्थस्यतच्छरीरयोग्यभोगप्राप्त्याव्याकुलचित्तस्यसर्वसमर्पणानुगुणफलदानंकथंघटतइत्यादिशंकांदैत्यपुत्रचित्तस्थापरिहरन्नित्यतोवाह जन्माद्याइति इमेषड्वाजन्मास्तिवृद्धिपरिणामापक्षयविनाशाख्यविकारादेहस्यदृष्टाःप्रत्यक्षेणप्रमिताआत्मनःपरमात्मनोनसंतीत्यन्वयः षड्विकाराःशरीरस्यनविष्णोस्तद्गतस्यत्वित्यनेननिरस्तत्वात्दृष्टाइत्युक्तं स्पष्टयति फलानामिति वसंताद्यवयवविशेषेणकालेनवृक्षस्यचूतादिफलानांजन्मादिकंदृश्यते यथावृक्षस्यकालाधीनत्वंतथादेहस्येश्वराधीनत्वमितिज्ञापनायेश्वरमूर्तिनेत्युक्तम् देवदत्तस्यसर्वमिदंमदर्थानामि

१ यद्यपिपरिग्रहशब्दः परिवारेरूढः पुल्लिङ्गश्च स्त्रीवाचीनभवति । तथापिपरिवारे प्रथमगृहीत्वात्तच्छब्दवाच्यत्वसाधु । महिषीचसुतोभ्राताभातुलःश्यालकस्तथा ॥ मंत्रीदूताश्चसेनाचसर्वएतेपरिग्रहाइतिवररुचिः ॥

तिमिथ्याज्ञाननिरासायोक्तमिदंतात्पर्यमितिज्ञातव्यं तदुक्तं तदधीनंशरीरंचज्ञात्वातन्ममतांत्यजेदिति १८ क्षेत्रज्ञ पुरुषोह्यात्मासंसारीचेतनोमतइत्युक्तेरात्माजीवः किंनस्यादित्यतस्तन्निवर्तकलक्षणमाह आत्मेति परैरव्याप्त्यादिदोषरहितैरेतैर्द्वादशभिरात्मनोहरेर्लक्षणैःस्वरूपभूतैरुपेतइतिविद्वानहंममेत्यतद्भावमतत्त्वंमोहजमज्ञानजंदेहादौत्यजेदित्यन्वयः नित्यःस्वरूपतोविनाशरहितः अवयवादिव्ययोनास्तीत्यव्ययःप्रकृतिनिर्मितशरीराभावेन विचारागादिदोषविधुरत्वाच्छुद्धः एकोमुख्यःमुख्यत्वंहरेरेवस्वरूपज्ञानेनक्षेत्राख्यशरीरज्ञातृत्वात्सक्षेत्रज्ञः आश्रयउपजीव्यः अविक्रियःस्वतःपरतोवापरिणामरहितःस्वमात्मानंस्वयमेवद्रक्ष्यतिपश्यतीतिस्वदृक् तद्ब्रह्मवेदाहंब्रह्मास्मीतिश्रुतिवशःगोपराधीनःस्वतंत्रइतियावत्वशयापयतिसर्वमितिवा व्यापकोंतर्बहिरितिशेषः आकाशोनीलिम्नोदेतिश्रुतेः भूताकाशस्यपरिच्छिन्नत्वादव्याकृतस्यचित्प्रकृत्यात्मकत्वेनभगवदनुगृहीतत्वेनतस्याव्यापकत्वमुपचरितमनेनेतिभवत्येवव्यापकः अप्राकृतत्वादसंगी असंगोह्ययंपुरुषइतिश्रुतेः अनावृतोज्ञानाद्यावरणरहितः एवंविधलक्षणोपेतस्यविष्णोःसर्वहेतुत्वाच्छरीरस्यतदधीनत्वेनतस्मिन्देहेममतांत्यजेदित्यर्थः १९ २० हरेर्देहादिभ्योविविक्तत्वेनज्ञानोत्पत्तिप्रकारवक्ति हेमेमिति यथाहेमकारोग्रावसुक्षेत्रेषुनिकषाश्मसुस्थानेषुहेमकारःक्षेत्रेषुहेमवत्सुपाषाणेषुवा योगैर्हेमावाप्त्युपायैःकषणाध्मानादिपरीक्षालक्षणैर्हेमंप्राप्नुयादित्यन्वयः नसर्वस्यमुक्तकमित्यतउक्तं तदभिज्ञइति तथामुमुक्षुःपुरुषआत्मयोगैरौत्पत्तिकभक्त्याद्युपायैःदेहेषुक्षेत्रेषुसम्यगालोच्यविविच्यब्रह्मगतिंलभेत देहादिभ्योवैलक्षण्येनब्रह्मविषयज्ञानमाप्नोतीत्यन्वयः कोसावधिकारीत्यतउक्तं अध्यात्मविदिति तरतिशोकमात्मविदितिश्रुतेः आत्मानमधिकृत्य

**आत्मानित्योऽव्ययःशुद्धएकःक्षेत्रज्ञआश्रयः ॥ अविक्रियःस्वदृग्वशोव्यापकोऽसंगयनावृतः १९ एतैर्द्वादशभिर्विद्वानात्मनोलक्षणैःपरैः ॥ अहंममेत्यतद्भावंदेहादौमोहजंत्यजेत् २० हेमंयथाग्रावसुहेमकारःक्षेत्रेषुयोगैस्तदभिज्ञआप्नुयात् ॥ क्षेत्रेषुदेहेषुतथात्मयोगैरध्यात्मविद्ब्रह्मगतिंलभेत २१ अष्टौप्रकृतयःप्रोक्तास्त्रयएवहितद्गुणाः ॥ विकाराःषोडशाचार्यैःपुमानेकःसमन्वयात् २२ देहस्तुसर्वसंघातोजगत्तस्थुरितिद्विधा ॥ अत्रैवमृग्यःपुरुषोनेतिनेतीत्यतत्त्यजन् २३**

वर्तमानंवेदांगशास्त्रमध्यात्मंतद्वेत्तिसम्यग्जानातीतिसात्त्विकादिस्वभावोध्यात्मंतद्वेत्तीतिवा महाभूतादिर्वाध्यात्मंतद्वेत्तीतिअध्यात्मवित् २१ कानिमहाभूतादीनीतितत्राह अष्टाविति मूलप्रकृतिर्महदादयःसप्तैवमष्टौप्रकृतयः सत्त्वादिगुणानांप्रकृतावंतर्भावसंभवेनाष्टत्वंयुक्तमितिभावेनाह त्रयएवेति तस्याःप्रकृतेर्गुणास्तद्गुणाः प्रकृतिजत्वाद्विकाराश्चतद्ग्रहणेनगृहीताइतिनाष्टत्वासंभवइत्याशयेनाह विकाराइति मनसासहैकादशेंद्रियाणिशब्दादिविषयाश्चेतिविकाराःषोडशेतिपूर्वाचार्यैःसंख्याताइतिशेषःहरिरेव्यनुगतत्वेनविकारसंभवादेतैःसहकिंनपठितइतितत्राह पुमानिति समन्वयादितिल्यब्लोपेपंचमीसमन्वयमनुगतंप्राप्यैकःपुमान्नारायणएवकेवलशुद्धइत्यतोविकारेषुनपठितइत्यर्थःअत्रेदंतात्पर्यमवगंतव्यं तथाहि अभिमन्यमानजडापेक्षया पुमान्जीवःपंचविंशोभिमानचेतनविवक्षयाविष्णुःषड्विंशइतिसम्यगन्वयान्नियंतृत्वेन अनुगतिज्ञानाज्ज्ञेयइति तदुक्तं अभिमान्यपेक्षयाविष्णुःपंचविंशइतिस्मृतः जडव्यपेक्षयाजीवः सस्यगूज्ञेयोहरिःस्मृतइति यद्वाकाशादिपंचभूतानिसत्त्वादित्रयोगुणाइत्यष्टौप्रकृतयः तत्रमूलप्रकृतिमहदहंकाराणामाकाशादिष्वनुगतत्वेनपृथग्ग्रहणंनक्रियते गुणानातदात्मकत्वेनगुणग्रहणेनतद्ग्रहणोपपत्तेः शेषंपूर्ववत् २२ तत्त्वसंख्याकथनेनप्रकृतेःकिमायातमितितत्राह देहस्त्विति सर्वेषांप्रकृतितत्कार्याणांसंघातःसमूहःतन्निर्मितइत्यर्थः तत्त्वेभ्योथतदभिमानिभ्योविविच्यपरमात्माज्ञातव्यइत्यभिप्रायेणतत्त्वसंख्यानकृतमितीममर्थंदर्शयति तुशब्देनदेहशब्देनप्रपंचोविवक्षितइतिकृत्वातदेहंविभजति जगदिति जगच्छब्दोद्विरावृत्त्याव्याख्येयः तथाहि जगत्समस्तजगज्जंगमंतस्थुःस्थावरमितिद्विधाविभक्तं किंचातइत्यतआह अत्रेति तत्त्वाद्भ्रमभवतीत्यतत्प्रकृत्यादिकंत्यजन् हित्वास्वतः सर्वदाभिन्नइत्यर्थः पुरुषःपूर्णःषड्गुणोत्रैवदेहलक्षणेप्रपंचेमृग्योन्वेषणीयोविचार्यैज्ञातव्यइतियावत् शतृप्रत्ययेनसदाप्रकृत्यादित्यागोनकादाचित्कइतिच

---

१ शरीरेष्वितिमुद्रितपुस्तके ।

सूचयति तत्रकिंप्रमाणमितितत्राह नेति सएषनेतिनेतीत्यात्मेतिश्रुतिःप्रमाणमित्यर्थः योतत्त्यजंस्तद्वपुस्त्यजंस्तेनेतिवाअतत्त्यजतीत्यतत्त्यक्तेनातत्त्यजेतिवापाठः २३ कयायुक्त्यामृग्यतइतितत्राह अन्वयेति अन्वययुक्त्याव्यतिरेकेणयत्रयत्रजगत्तत्रतत्रब्रह्मेत्यन्वयः यत्रयत्रब्रह्मनतत्रतत्रजगत्परिच्छिन्नत्वादिव्यतिरेकलक्षणयुक्त्याऽऽकाशवत् जगदन्वितत्वेनयदेतदसगलक्षणपृथक्त्वेनवेतियुक्त्यानिश्चितेन विवेकेनागतेनयुक्तेनात्मनामनसा ननु व्याप्तिग्राहकप्रमाणाभावेनाभासत्वान्वयान्निर्णयोनस्यादितितत्राह सर्गेति अत्रसर्गस्थानाभ्यांसंहारादिकमुपलक्ष्यतेनसहितात्स्वरायैस्तेअसत्वरास्तैःसर्वेस्वराघोषवंतोबलवंतोवक्तव्याइंद्रेबलंददातीतिसर्वेऊष्माणोग्रस्ताअनिरस्ताविवृतावक्तव्याःप्रजापतेरात्मानंपरिददातीतिसर्वेस्पर्शालेशेनानभिनिहितावक्तव्या मृत्योरात्मानपरिहरणीयेतिश्रुतेः विमृशद्भिःविचारंकुर्वद्भिःकोनआत्माकिंब्रह्मेत्यादिश्रुतेः सर्गस्थानादिविषयैः समाम्नायैर्निर्दोषगुणोपेतैर्वेदैः यतोवाइमानिभूतानिजायंतेयेनजातानिजीवंतीत्यादिलक्षणैरंतर्बहिश्चतत्सर्वव्याप्यनारायणःस्थितइत्यादिकैश्चानुग्रहीतव्या २४ विमृश्यनिर्णयप्रकारंदर्शयति बुद्धेरिति सत्त्वबुद्ध्यादिशब्दैस्तुजीवोपिकचिदीर्यते इतिवचनाद्बुद्धेर्जीवस्यजागरणाद्यावृत्तयोऽवस्थास्तायेनपरमात्मनाप्रेरितेनजीवेनानुभूयंते जाग्रदाद्याःकर्मचैवसुखदुःखेचतस्यहीतिवचनात्सपरःपुरुषोध्यक्षोजाग्रदादेःपरोद्रष्टासुखनित्योहरिःस्मृतइतिवचनात्सोध्यक्षोजाग्रदादिनाधिगतेंद्रियसुखदुःखपरोजीवःपरोविश्वादिविग्रहाद्धरेरन्यइत्युत्तरार्द्धस्यार्थभेदोज्ञातव्यः एवशब्देनकालादिकंव्यावर्तयति २५ कार्यकारणबद्धौताविष्येतेविश्वतैजसौ प्राज्ञःकारणबद्धस्त्वितिवचनाद्विश्वादिविग्रहान्नारायणादन्यत्वंजीवस्य कथंजीवधर्माक्रांतत्वात्तस्येतितत्राह एभिरिति बुद्धीनांजीवानांभेदस्तारतम्यलक्षणोयैर्ज्ञाप्यतेतैर्जीवतारतम्यज्ञापकैरतएवपर्यस्तैरेकत्रसमस्तैरेभिस्त्रिवर्णैस्त्रिधावर्णैर्वर्णनंयेषांतेतथातैर्जाग्रदादि

## अन्वयव्यतिरेकेणविवेकेनागतात्मना ॥ सर्गस्थानसमाम्नायैर्विमृशद्भिरसत्वरैः २४ बुद्धेर्जागरणंस्वप्नःसुषुप्तिरितिवृत्तयः ॥ तायेनैवानुभूयंतेसोऽध्यक्षःपुरुषःपरः ॥ २५ एभिस्त्रिवर्णैःपर्यस्तैर्बुद्धिभेदैःक्रियोद्भवैः ॥ सरूपमात्मनोधत्तेगंधैर्वायुरिवान्वयात् २६ एतद्वारोहिसंसारोगुणकर्मनिबंधनः ॥ अज्ञानमूलोऽपार्थोपिपुंसःस्वप्नइवाप्यते २७

भिन्नयोवर्णाः शुक्लकृष्णपीतलक्षणायेषांतैः सत्त्वादिगुणैर्वा सपरमात्माऽज्ञजनदृष्ट्यात्मनोजीवस्यसरूपंरूपेणसमानरूपंकार्यादिबद्धंधत्तइतिदृश्यते नतुप्राज्ञजनदृष्ट्यातद्दृष्ट्याज्ञानानंदादिसमानंरूपंधृत्वातत्स्वरूपंधत्तइति सजीवेनसहस्थानात्तत्स्वरूपःप्रदृश्यतइतिस्मृतेः अन्वयाद्दक्षिणाक्ष्यादिष्वनुगतत्वात्कीदृशैः क्रियोद्भवैःक्रियायाउद्भवोयेषांतेतथातैःकर्मजानितैः यद्वा क्रियायाउद्भवोयेभ्योगुणेभ्यस्तेतथातैः शुक्लसत्त्वजन्यंजागरणं पीतरजोजन्यंस्वप्नं कृष्णतमोजन्यासुप्तिःकर्माण्येवंविधानि अजामेकांलोहितशुक्लकृष्णामितिश्रुतेः कुत्रायंव्यहारोदृष्टइति तत्राह गंधैरितियथागंधैरन्वयात्सौरभ्यादिगंधसंपर्कात् सुगंधोदुर्गंधोमिश्रगंधोवायुरितिव्यवह्रियतेनतावतातादात्म्यंवायोस्तथात्वेसर्वदातथास्यात् नचैवं तस्माद्भिन्नएववायुस्तथाहरिरपि यथागंधयुतोनिलइतिच तत्सृष्ट्वातदेवानुप्राविशत् तदनुप्रविश्यसच्चत्यच्चाभवदितिश्रुतेः देहाख्यप्रपंचसंपर्कोस्त्येवहरेरितिभावः ॥ २६ ॥ अभेददर्शनेबाधकमाह एतद्वारइति इदमभेददर्शनंद्वारंयस्यससारस्यसतथापुंसःसंसारःप्राप्यतेहियस्मात् अदृष्टेर्जीवपरयोर्भेदस्याप्नोतिसंसृतिमितिवचनात् अभेददर्शनेकारणमाह गुणेति अभेददर्शनजनकत्वेनगुणकर्मणोःसंसारनिमित्तत्वमाह तस्येति विशेषकर्मणःकारणमज्ञानंतद्वारासंसारइत्याशयेनाह अज्ञानेति अज्ञाननिमित्तकर्मपरंपरयामुग्धमनसःपुंसोऽभेदनिश्चयादंततस्तमएवशरणमित्याशयेनाह अपार्थइति अपगतनिवृत्तिस्तमसइतिशेषः अर्थःस्याद्विषयेमोक्षेशब्दवाच्येप्रयोजने व्यवहारेधनेशास्त्रेवस्तुहेतुनिवृत्तिष्वित्यभिधानात् मशकार्थंधूमइतिप्रयोगाच्च अभेदनिश्चयाद्यातितमोनात्यस्त्यत्रसंशयइतिस्मृतेः अपिशब्देननित्यदुःखभूयिष्ठतमःप्राप्तिंसूचयति दुःखरूपोपिसंसारोबुद्धिपूर्वमवाप्यतइतिसंसारस्तमः इंद्रियार्थसंनिकर्षादर्थोपलब्धिर्जाग्रन् जाग्रदनुभवसंस्कारोपस्थापितविषयाभासोपलब्धिः स्वप्नः उपरतस्वस्ववृत्तींद्रियविषयज्ञानं सुप्तिः अत्रजाग्रद्दृष्टश्रुतपदार्थसंस्कारकृतःस्वप्नःस्वशिरश्छेदनादिलक्षणोदुःखादिहेतुर्यथातथाजाग्रदपिराजाहवदतोनर्थपरंपराहार्द्दश्चज्जीवपरयोरभेदंजानतःपुंसइहामुत्रदुःखबाहुल्यहे

रित्यर्थः यथास्वप्नेशिरश्छेदंस्वयंकृत्वात्मनोवशः ततोदुःखमवाप्येततथाजागरितेपितु जानन्नप्यात्मनोदुःखमवशस्तुभजतेतइतिस्मृतौदर्शनात् २७ अर्थक्रियाकारित्वात्नस्वप्नादेर्मिथ्यात्वमि
त्याह मनोमयत्वादिति मनसानिर्मितकर्मनिमित्तत्वादनित्यत्वाभिप्रायेणस्वप्नजाग्रत्साम्यं अन्यथा शोकमोहभयप्रदाइत्येतदसंबद्धंस्यात् नचशुक्तिरजतादिकंवलयकरणादियोग्यम् २८ २९ विप
क्षेबाधकमुक्त्वा विपर्ययेपर्यवसानच्छलेनसंसारबीजानिर्हरणोपायमाह तस्मादिति यस्मात्पुंसोगुणकर्मनिर्मितभेददर्शनद्वारःसंसारस्तस्मादभेदनिमित्तत्रिगुणमयकर्मबीजभर्जनोपायोभवद्भिःकर्तव्य
इत्यन्वयः नन्वग्निष्टोमादिकमंतरेणकर्मणांबीजभूतस्यलिंगशरीरस्यहननोपायःकोसौयमनियमादिलक्षणश्चेत्तस्योभयत्रसाधारणत्वेनानंतरंगत्वात् अतआपाकनिक्षिप्तामघटदहनयोगइवाहत्यतत्साधन
वक्तव्यमितितत्राह प्रवाहइति धियःप्रवाहस्यसजातीयविजातीयप्रत्ययानंतरिततयाविषयीकरणनिपुणोपासनालक्षणस्य उंरुद्रंपातिरक्षतीत्युपः उपोधिकेचइतिसूत्रादुपः सर्वाधिकोवापरमेश्वरस्त
स्मिन्रमणांनिरंतरश्रीनारायणचरणसरसिजसंचिंतनलक्षणोपासनात् सएवेत्यभिप्रायः ३० धियःप्रवाहस्यांतरंगसाधनमाह तत्रेति भगवतेत्यनेनग्राह्यत्वेआप्तमूलत्वंदर्शयति अन्यथा

मनोमयत्वात्सर्वार्थाःस्वप्नजागरयोःसमाः ॥ दृष्टानर्थानपिध्यातुःशोकमोहभयप्रदाः २८ परस्यनिर्गुणस्यापिगुणसंगाजनिर्मृतिः ॥ व्यक्तंजन्माप्ययप्रो
क्तंशयानस्येवनस्वतः ॥ हरिसंचिंतयासर्वेप्रयांतिपरमंपदम् २९ तस्माद्भवद्भिःकर्तव्यःकर्मणांत्रिगुणात्मनाम् ॥ बीजनिर्हरणेयोगःप्रवाहोपरमोधियः
३० तत्रोपायसहस्राणामयंभगवतोदितः ॥ यदीश्वरेभगवतिभक्तिःस्यान्नान्यथारतिः ३१ गुरुशुश्रूषयाभक्त्यासर्वलाभार्पणेनच ॥ संगेनसाधुभक्ताना
मीश्वराराधनेनच ३२ श्रद्धयातत्कथायांचकीर्तनैर्गुणकर्मणाम् ॥ तत्पदांबुरुहध्यानात्तल्लिंगेक्षार्हणादिभिः ३३ हरिःसर्वेषुभूतेषुभगवानास्तईश्वरः ॥
इतिभूतानिमनसाकामैस्तैःसाधुमानयेत् ३४ एवंनिर्जितषड्वर्गैःक्रियतेभक्तिरीश्वरे ॥ वासुदेवेभगवतिययासंलभतेरतिम् ३५ निशम्यकर्माणिगुणान
तुल्यान्वीर्याणिलीलातनुभिःकृतानि ॥ यदातिहर्षोत्पुलकाश्रुगद्गदःप्रोत्कंठउद्गायतिरौतिनृत्यति ३६ यदाग्रहग्रस्तइवक्वचिद्धसत्याक्रंदतेध्यायतिवंद
तेजनम् ॥ मुहुःश्वसन्वक्तिहरेजगत्पतेनारायणेत्यात्मगतिर्गतत्रपः ३७ तदापुमान्मुक्तसमस्तबंधनस्तद्भावभावानुकृताशयाकृतिः ॥ निर्दग्धबीजानुश
योमहीयसाभक्तिप्रयोगेणसमेत्यधोक्षजम् ३८

बाधकमाह नेति ॥ ३१ ॥ भक्त्यागुरुशुश्रूषया यस्यदेवेपराभक्तिर्यथादेवेतथागुरावितिश्रुतेः सर्वलाभार्पणेनहरावितिशेषः ब्रह्मार्पणंब्रह्महविरित्यादेः साधुभक्तानां नावैष्णवायदातव्यंनोदाविद्वंन
तंडुलमित्यादेर्नियतभगवद्भक्तानांसेवालक्षणप्रसंगेन महत्सेवांद्वारमाहुर्विमुक्तेरित्यादेः ईश्वराराधनेनपंचरात्रोक्तेनपंचकालीनभगवत्पूजयापंचकालपरायणं पंचकालैकमनसामित्यादेः ३२ तत्कथायांश्रद्ध
या पानेनतेदेवकथासुधायामित्यादेः गुणकर्मणांसंकीर्तनैः कलौसंकीर्त्यकेशवमित्यादेः विभयविखंडध्यानविधानार्थं तत्पदांबुरुहध्यानादिति संचिंतयेद्भगवतश्चरणारविंदमित्यादेः तस्यहरेर्लिंगप्रति
मातस्येक्षादर्शनं अर्हणंपूजनं आदिशब्देनप्रदक्षिणादिगृह्यते बर्हायितेतेनयनेनराणामित्यादेः ३३ हरिःसर्वेषुभूतेष्वित्यादिनाहरिरेवपूज्योनतुभूतानियोग्यतातिरेकेणेतीदमेवकथ्यते ईश्वरोजीव
कलयाप्रविष्टइत्यादेर्वा ३४ ययाभक्त्याहरौरतिमुपासनालभतेतयास्वरूपानंदानुभवलक्षणांरतिंलभतइतिपरंपरयायोज्यम् ३५ सृष्ट्यादीनिकर्माणि कंसवधादीनिवीर्याणि उद्गानादिकनसर्वभक्तसा
धारणं तदुक्तं केचिद्भक्ताःप्रनृत्यंतिगायंतिचयथेप्सितं केचित्तूष्णींभजंत्येवकेचिच्चोभयकारिणइति ३६ ३७ एतदेवाह तद्भावेति तस्यभावेयथास्वरूपेभावोभक्तिस्तस्यानुकृतेनुकूलत्वेनप्रकटित
आशयाकृतीअंतःकरणाकारौयस्यसतथा कश्चिदुद्गानेनांतराभक्तिंप्रकटयति कश्चिद्रोदनाश्रुपातकरणेन कश्चिन्नर्तनेनकाश्चित्तूष्णींभजनेनेति तस्यब्रह्मणोभावोलीलातत्रयोभावोभक्तिस्तयारंधिताभिप्र
याकारइतिवास्याभिप्रायआशयइतिवा निर्दग्धंकर्मबीजंयस्यसतथा सचानुशयोंतःकरणंयस्यसतथा अनुशयःसंसारोवा ३८

भक्त्यनंतरं भगवत्कथानिर्वाणसुखजननीत्याह अधोक्षजेति अधोक्षजालापं संसृतिचक्रशातनं नाशनं तद्धरिविषयकथाकथनं ब्रह्मनिर्वाणसुखं ब्रह्मणोनुग्रहात्प्राप्य मुक्तिसुखं विदुरितियत्ततोदेहहृदये स्थितं जीवं हृदिस्थितमीश्वरं भजध्वामित्यन्वयः योयंवहिर्वापुरुषादाकाशोयोवैयंवावसयोयमंतः पुरुषआकाशोयोवैसोंत पुरुषआकाशोयंवावसयोयमंतर्हृदयआकाशइतिश्रुतेः हृदीश्वरं मनःप्रेरकत्वेनतत्स्वामिनं साहिसर्वमनोवृत्तिप्रेरकः समुदाहृतइतिवाक्याद्वा ३९ भगवदुपासनदवीयस्त्वेनबहुपाथेयसाध्यत्वेनभागीरथीयात्रावत् दुःसाधं किंनेत्याह कोतिप्रयासइति अस्यात्मनोजीवस्यस्वस्वामिनेहृदिछिद्रवदाकाशवत्सतः स्थितस्यहरेरुपासनेकोतिप्रयासः नकोपिसर्वगतत्वेनसमीपस्थत्वात् तद्दूरेतदंतिकइतिश्रुतेः अशेषदेहिनांसामान्यतः साधारणत्वेनहृदिस्थितत्वेनसख्युः तस्माद्विषयोपपादनैः किंशास्त्रैरितिशेषः ४० भक्तेरंतरंगसाधनवैराग्यमेवेत्याशयेनाह रायइति ४१ विहितयज्ञसाध्यत्वेनस्वर्गादेर्नित्यत्वंसंभाव्यमितिनत्याह एवमिति एवंमर्त्यलोकवन्नानिर्मलःप्राकृतत्वात् नदृष्टंश्रुतंदूषणंयस्यसतथातं सहचरीभूतवैराग्यैकयामुख्ययाआत्मलब्धयेस्वरूपानंदानुभवलक्षणमुक्तिप्राप्त्यथमात्मनोदेहादेर्विविच्यस्वरूपज्ञानलक्षणलाभायवा ४२ भगवदनर्पणबुद्ध्यानुष्ठितयज्ञादिकर्मानर्थानर्थहेतुरित्याशयेनाह यदर्थमिति यजेतेत्यादिविध्यंगानि विपर्यासंदुःखं अमोघंसदातनत्वेनावध्यं ४३ एतदेवाविवृणोति सुखायेति ब्रह्मार्पणलक्षणेनकरणमनीहा तदुक्तं अप्रयत्नेनकरणमनीहाप्रोच्यतेबुधैरिति

अधोक्षजालापमिहाशुभात्मनःशरीरिणःसंसृतिचक्रशातनम् ॥ तद्ब्रह्मनिर्वाणसुखंविदुर्बुधास्ततोभजध्वंहृदयेहृदीश्वरम् ३९ कोतिप्रयासोसुरबालकाहरेरुपासनेस्वेहृदिछिद्रवत्सतः ॥ अस्यात्मनःसख्युरशेषदेहिनांसामान्यतःकिंविषयोपपादनैः ४० रायःकलत्रंपशवःसुतादयोगृहामहीकुंजरकोशभूतयः ॥ सर्वार्थकामाःक्षणभंगुरायुषःकुर्वंतिमर्त्यस्यकियत्प्रियंचलाः ४१ एवंहिलोकाःक्रतुभिःकृताअमीक्षयिष्णवःसातिशयानिर्मलाः ॥ तस्माददृष्टश्रुतदूषणंपरंभक्त्यैकयेशंभजतात्मलब्धये ४२ यदर्थमिहकर्माणिविध्यंगान्यसकृन्नरः ॥ करोत्यतोविपर्यासममोघंविंदतेफलम् ४३ सुखायदुःखमोक्षायसंकल्पइहकर्मणः ॥ सदाप्नोतीहयादुःखमनीहायांसुखोन्नतिम् ४४ कामान्कामयतेकाम्यान्यदर्थमिहपूरुषः ॥ सवैदेहस्तुपारक्योभंगुरोयात्युपैतिच ४५ किमुव्यवहितापत्यदारागारधनादयः ॥ राज्यकोशगजामात्यभृत्याप्तामममतास्पदाः ४६ किमेतैरात्मनस्तुच्छैःसहदेहेननश्वरैः ॥ अनर्थैरर्थसंकाशैर्नित्यानंदमहोदधेः ४७ निरूप्यतामिहस्वार्थःकियान्देहभृतोऽसुराः ॥ निषेकादिष्ववस्थासुक्लिश्यमानस्यकर्मभिः ४८ कर्माण्यारभतेदेहीदेहेनात्मानुवर्तिना ॥ कर्मभिस्तनुतेदेहमुभयंत्वविवेकतः ४९ तस्मादर्थाश्चकामाश्चधर्माश्चयदपाश्रयाः ॥ भजतानीहयात्मानमनीहंहरिमीश्वरम् ५०

४४ शाश्वतसुखानुभवकामंविहायशरीरेतुच्छकामंप्रयतमानोविमूढत्वेनातिहास्योऽसुरैरित्याशयेनाह कामानिति काम्यान्कामान्विषयान्यदर्थंयस्यशरीरस्यार्थे पारक्यपरस्तुश्वसृगालादेर्विद्यमानोनस्वकीयः ४५ ४६ ननु विषयभोगार्थंश्रीनारायणोपिविग्रहंगृह्णातीतिकेचित्तत्राह किमेतैरिति आत्मनोहरेः तस्मात्स्वतःश्चिदानंदस्वरूपस्यजीवात्मनोभौतिकादिनाकिं नकिमपिव्यवहिताःशरीरमपेक्ष्यदूरस्थाः ४५ ४६ ननु विषयभोगार्थंश्रीनारायणोपिविग्रहंगृह्णातीतिकेचित्तत्राह किमेतैरिति आत्मनोहरेः तस्मात्स्वतःश्चिदानंदस्वरूपस्यजीवात्मनोभौतिकादिनाकिं नकिमपिकृत्यमित्यपतोवाह किमेतैरिति ४७ विचारासहत्वान्नदेहादिनाप्रयोजनमित्याह निरूप्यतामिति निषेकादिषुगर्भाधानादिष्ववस्थासु कर्मभिःक्लिश्यमानस्यदेहभृतः कियान्स्वार्थइतिनिरूप्यतामित्यन्वयः ४८ संसारस्यप्रवाहरूपेणनित्यत्वान्नहरेर्ज्ञानमंतरेणनिवृत्तिःस्यादित्याशयेनाह कर्माणीति आत्मानुवर्तिनापरमात्माधीनेन कर्मदेहश्चेत्युभयमविवेकतोज्ञानात् ४९ नन्वीश्वरसेवायाभक्तिरेवप्रयोजिकाचेन्नार्थादिनाप्रयोजनमित्याशंकापरिहरन्नुपसंहरति तस्मादिति अर्थादेर्हरिविषयत्वेसाफल्यंभवतीत्यर्थः ननु प्रतीतंचेष्टाराहित्यमनीहशब्दार्थंपरित्यज्यान्यार्थकल्पनेकिंप्रमाणं उक्तंहिप्रमाणमितिचेन्न तस्यबह्वर्थत्वाचित्वेनस्वाभिप्रेतार्थसंदेहात्करणंकारणेकार्येसाधनेनुव्रतादिष्वित्युक्तेरितितत्राह अनीहमिति श्रमसाध्याक्रियाराहित्यादनीहमित्यस्योक्तएवार्थः अप्रयत्नेनेतिविशेषणाच्च श्रमसाध्यक्रियाराहित्यमेवोच्यते स्पष्टाद्युच्चारणाभेदेध्यानपद्मासनादिषु व्रतबंधेनाट्यभेदेगीतकेकर्मणोद्विपदइत्युत्तरवाक्येकर्मण्यपिप्रयोगाच्च ५०

हरेरेवभजनेकारणमाह सर्वेषामिति व्यंजकत्वाद्बीजंनतइतिशेषः व्यंजनाज्जगतोविष्णुर्बीजंनपरिणामतइतिवचनान्नबीजशब्दस्याविकारोर्थं. अप्रयत्नेनेति अविक्रियःस्वहग्वश्यइतिस्वोक्तेः ५१ ५२ भूतानामुत्पत्त्यादिनाभक्त्यभावेजातिविशेषोवृत्तादिविशेषोप्यकिंचित्करइत्याह नालमिति वृत्तमाचारः वृत्तंस्वरूपेचरितइतियादवः ५३ ५४ आत्मौपम्येनात्मस्नेहवत्स्नेहेन ५५ वेदांतादिशास्त्रानधिकारित्वेनपापजीवत्वं नतुप्रकरणात् अच्युततांच्युतिवर्जनंमोक्षंगताःसंतिहियस्मात्तस्मान्मुकुंदभक्तिरेवसंपाद्या ५६ तात्पर्यात्पुनरेतदेवाहिकरणंश्रेयइत्याह एतावानिति तस्यहरेःसर्वसत्ताप्रदत्वेनावस्थितेरीक्षणंदर्शनंज्ञानमिति यदीयंभक्तिरिति ५७ इतिश्रीभागवतेमहापुराणेसप्तमेस्कंधेवि०टी०सप्तमोध्यायः ॥७॥ वैराग्याद्यंगोपांगरुचिरभक्तिसुंदरीसुंदरावयवसन्निवेशलक्षणपरमपुरुषार्थकरणंयदुश्चरचरितमित्येतन्निदर्शयितुंनरसिंहावतारोनिरूप्यतेस्मिन्नध्याये तत्रदैत्यसुतैः प्रह्लादवर्णितंश्रुत्वाकिंकृतमितियुधिष्ठिरस्यमानसींशंकांपरिहरति अथेति निरवद्यत्वान्निर्दोषत्वात् १ एकांतेहरौसम्यक्स्थितामैक्येस्थितामभिन्नविषयामितिवा यथायथावत्साकल्येन यथातैस्तेनोक्तंगृहीतंतथेतिवा २ तनयस्यानयंस्वसिद्धांतविरुद्धसिद्धांतं ३ पापेनपापसाधनेन ४ ५ यमक्षयंयमगृहं ६ कस्यबलेनस्य

सर्वेषामपिभूतानांहरिरात्मेश्वरःप्रियः ॥ भूतैर्महद्भिःस्वकृतैःकृतानांबीजसंज्ञितः ५१ देवोऽसुरोमनुष्योवायक्षोगंधर्वएवच ॥ भजन्मुकुंदचरणंस्वस्तिमान्स्याद्यथावयम् ५२ नालंद्विजत्वंदेवत्वमृषित्वंवासुरात्मजाः ॥ प्रीणनायमुकुंदस्यनवृत्तंनबहुज्ञता ५३ नदानंनतपोनेज्यानशौचंनव्रतानिच ॥ प्रीयतेऽमलयाभक्त्याहरिरन्यद्विडंबनम् ५४ ततोहरौभगवतिभक्तिंकुरुतदानवाः ॥ आत्मौपम्येनसर्वत्रसर्वभूतात्मनीश्वरे ५५ दैतेयायक्षरक्षांसिस्त्रियःशूद्राव्रजौकसः ॥ खगामृगाःपापजीवाःसंतिह्यच्युततांगताः ५६ एतावानेवलोकेस्मिन्पुंसांस्वार्थःपरःस्मृतः ॥ एकांतभक्तिर्गोविंदेयत्सर्वत्रतदीक्षणम् ॥ ५७ इतिश्रीभागवतेसप्तमस्कंधेसप्तमोध्यायः ७ ॥ नारदउवाच ॥ अथदैत्यसुताःसर्वेश्रुत्वातदनुवर्णितम् ॥ जगृहुर्निरवद्यत्वान्नैवगुर्वनुशिक्षितम् १ अथाचार्यसुतस्तेषांबुद्धिमेकांतसंस्थिताम् ॥ आलक्ष्यभीतस्त्वरितोराज्ञआवेदयद्यथा २ श्रुत्वातदप्रियंदैत्योदुःसहंतनयानयम् ॥ कोपावेशचलद्गात्रःपुत्रंहंतुंमनोदधे ३ क्षिप्त्वापरुषयावाचाप्रह्लादमतदर्हणम् ॥ आहेक्षमाणःपापेनतिरश्चीनेनचक्षुषा ४ प्रश्रयावनतंदांतंबद्धांजलिमवस्थितम् ॥ सर्पःपदाहतइवश्वसन्प्रकृतिदारुणः ५ हेदुर्विनीतमंदात्मन्कुलभेदकराधम ॥ स्तब्धंमच्छासनोद्धूतंनेष्येत्वाद्ययमक्षयम् ६ क्रुद्धस्ययस्यकंपंतेत्रयोलोकाःसहेश्वराः ॥ तस्यमेऽभिहितंमूढशासनंकिंबलोत्यगाः ७ ॥ प्रह्लादउवाच ॥ नकेवलंमेभवतश्चराजन्सवैबलंबलिनांचापरेषाम् ॥ परावरेऽमीस्थिरजंगमायेब्रह्मादयोयेनवशंप्रणीताः ८ सईश्वरःकालउरुक्रमोसावोजःसहःसत्त्वबलेंद्रियात्मा ॥ सएवविश्वंपरमःस्वशक्तिभिःसृजत्यवत्यत्तिगुणत्रयेशः ९ जह्यासुरंभावमिमंस्वभावतःसमंमनोधत्स्वनसंतिविद्विषः ॥ ऋतेजितादात्मनउत्पथस्थितात्तद्धिह्यनंतस्यमहत्समर्हणम् १० सकिंबलः मद्बलमनादृत्यतवबलभूतःकइत्यर्थः ७

किंबलमित्यस्योत्तरमाह नकेवलमिति वेत्यनेनबलमानंदओजश्चसहोज्ञानमनाकुलमितिश्रुतिंसूचयति पराश्चावराश्चपरावरे एतदेवविशदयति स्थिरजंगमाइत्यादिना ८ ननुस्थाणुमन्येप्रपद्यंतेशरीरत्वायदेहिनामितिश्रुतेः शिवंबलंवदंतिकेचित् कालाद्भवंतिभूतानिमन्यंतेकालचिंतकाइत्यतः कालमथकथमयंनिर्णयः परमात्मबलमितितत्राह सइति ९ कुतोनसंतिविद्विषइतितत्राह ऋतेइति उत्पथस्थितात्तत्त्वमार्गविरुद्धमार्गेनिरतादजितात् अवशीकृतादात्मनोमनआदींद्रियग्रामादृते शुद्धमनआदिनाविचार्यमाणेशत्रवोनसंतीत्यर्थः ननु तर्हीदं युद्धाद्यमपरंचक्रविंबुधादानवान्प्रतीत्यादिकथंसंगच्छतइत्याशंक्ययथायोग्यतादर्शनलक्षणंसमत्वंकर्तव्यं अन्यथा शास्त्रविरोधइतिध्वनेनोक्तसमत्वफलमाह तद्धिहीति तत्तद्योग्यतानुसारेणतन्मनोधारणंहरेःसमर्हणंविद्धीत्यन्वयः नैतद्बलंकिंतु महदित्याह महदिति १०

एतदेवाविशदयति दस्यूनिति एकेमवादशाःपुरंशरीरंलुंपतःषड्दस्यून्षडिंद्रियाख्यचोरानाविजित्य दशादिशःस्वेनजिताइतिमन्यंतइत्यन्वयः आंतरशत्रुजयंविना कुतोवाह्यशत्रुजयइतिभावेनाह जितेति परेबाह्यशत्रवः यद्वा एकेमादृशाः षडिंद्रियजयोनास्तिचेत् बाह्यशत्रुविषयादशादिशःसुष्ठुजिताइतिमन्यंते शेषंपूर्ववत् ११ असुरावेशोदधिमग्नत्वात्पुत्रोक्तंतत्त्वनतस्यश्रोत्रविवरगतमभूत्प्रत्युतार्चिष्मत्याज्यहोमवदभूदितिभावेनोत्तरमवतारयति व्यक्तमिति अतिमात्रंवक्तव्यांशादधिकंविकत्थसेऽबद्धंभाषसे विप्लुवामंडूकप्लुतिवदसंगताः १२ यदित्वदुक्तंयुक्तंस्यात्तर्हितथाप्रतीयेत तस्मादसंबद्धमितिभावेनाह यस्त्वयेति १३ अस्येदंफलितमित्याह सोहमिति गोपायेतरक्षेत १४ यदिंद्रियंजयस्वेतिवचःनहार्दमसंभावितत्वात्तत्राह एवमिति १५ स्तंभभंगेनाधेयपातेनसभ्यानांशरीरचूर्णनादिव्यथासंभावितेत्याशंक्यभगवत्सन्निधानबलाद्वज्रनिष्ठुरस्तंभोत्थनिर्ह्रादोभूदित्याह तदैवेतिअस्फुटत्अभिनत् स्वधिष्ण्योपगतंस्वकीयत्वेनाभिमतंसत्यलोकंप्राप्तंस्वधामाप्ययंस्वलोकनाशं १६ तदाहिरण्यकशिपुःकिंकृतवानितितदवस्थामाह अभिक्रमन्निति पुत्रमभिक्रमन् पदविक्षेपंकुर्वन्तस्यनिर्ह्रादस्यपदंविषयंकर्तृभूतंनददर्शेत्यन्वयः येननादेन अनेनाहिरण्यकशिपोर्हृदयसारातिशयोदर्शितइति

दस्यून्पुरंषण्णविजित्यलुंपतोमन्यंतएकेस्वजितादिशोदश ॥ जितात्मनोज्ञस्यसमस्यदेहिनांसाधोःस्वमोहप्रभवाःकुतोपरे ११ ॥ हिरण्यकशिपुरुवाच ॥ व्यक्तंत्वंमर्तुकामोसियोतिमात्रंविकत्थसे ॥ मुमूर्षूणांहिमंदात्मन्ननुस्युर्विप्लवागिरः १२ यस्त्वयामंदभाग्योक्तोमदन्योजगदीश्वरः ॥ क्वासौयदिससर्वत्र कस्मात्स्तंभेनदृश्यते १३ सोहंविकत्थमानस्यशिरःकायाद्धरामिते ॥ गोपायेतहरिस्त्वाद्ययस्तेशरणमीप्सितः १४ ॥ नारदउवाच ॥ एवंदुरुक्तैर्मुहुरर्दयन्रुषासुतंमहाभागवतंमहासुरः ॥ खड्गंप्रगृह्योत्पतितोवरासनात्स्तंभंतताडातिबलःस्वमुष्टिना १५ तदैवतस्मिन्निनदोतिभीषणोबभूवयेनांडकटाहमस्फुटत् ॥ यंवैस्वधिष्ण्योपगतंत्वजादयःश्रुत्वास्वधामाप्ययमंगमेनिरे १६ अभिक्रमन्पुत्रवधेप्सुरोजसानिशम्यनिर्ह्रादमपूर्वमद्भुतम् ॥ अंतःसभायांनददर्शतत्पदंवितत्रसुर्येनसुरारियूथपाः १७ सत्यंविधातुंनिजभृत्यभाषितंव्याप्तिंचभूतेष्वखिलेषुचात्मनः ॥ अदृश्यतात्यद्भुतरूपमुद्वहन्स्तंभेसभायांनमृगंनमानुषम् १८ ससत्त्वमेवंपरितोविपश्यन्स्तंभस्यमध्यादनुनिर्जिहानम् ॥ नायंमृगोनापिनरोविचित्रमहोकिमेतन्नृमृगेंद्ररूपम् १९ मीमांसमानस्यसमुत्थितोग्रतोनृसिंहरूपस्तदलंभयानकम् ॥ प्रतप्तचामीकरचंडलोचनंस्फुरत्सटाकेसरजृंभिताननम् २० करालदंष्ट्रंकरवालचंचलंक्षुरांतजिह्वंभ्रुकुटीमुखोल्बणम् ॥ स्तब्धोर्ध्वकर्णंगिरिकंदराद्भुतव्यात्तास्यनासंहनुभेदभीषणम् २१

ज्ञायते १७ आकाशविशेषगुणस्यशब्दस्यचेतनाश्रयत्वेनदर्शनात् किमिदमितिमीमांसमानेषुसत्सुतदाश्रयोप्यदर्शि इत्याह सत्यंविधातुमिति रूपंविशिनष्टि नमृगमितिनाभावान्यविरोधेप्यितिवचनात्न मृगंकेवलंमृगस्यविद्यमानंनभवति नमानुषंमानुषस्यविद्यमानन किंतुतयोःसमाहारलक्षणम् १८ एवंविधंसत्त्वंप्राणिविशिष्टंरूपमुद्वहंस्तस्याग्रतोग्रेसमुत्थितोऽदृश्यतेत्यन्वयः किंविशिष्टस्यस्तंभस्यमध्यान्निर्जिहानमुत्तिष्ठमानमेःनृमृगेंद्ररूपंकिमितिमीमांसमानस्यविचारंकुर्वतोहिरण्यकशिपोः तद्रूपंविशिनष्टि तदलमित्यादिना चामीकरंसुवर्णंसटाकेसरैःकर्णगतरोमविशेषलक्षणात्तदलैर्जृंभितंविकसितमाननंयस्यसतथा १९ २० करालाःक्रूरादंष्ट्रायस्यसतथाकरवालवत्चंद्रहासवच्चंचलंक्षुरांतःक्षुरधारातद्वात्स्थिताजिह्वायस्यतत्तथा भ्रुकुट्यामुखेनपूर्वभागेनोल्बणंक्रूरं स्तब्धौदृढौऊर्ध्वीकृतौचकर्णौयस्यतत्तथा तद्गिरिकंदरवत् अद्भुतंव्यात्तंचास्यंनासापुटंचयस्यतत्तथा तत्हनुभेदेनविदीर्णकपोलेनभीषणंभयजनकम् २१

ग्रीवाचोरुवक्षःस्थलंचतानितथा अदीर्घाणिपीवराणिग्रीवोरुवक्षःस्थलानियस्यतत्तथातत् चंद्रोहेमिहिमांशौनाचंद्रकंरोचिषेपिचेत्यभिधानात् चंद्रांशुवर्णवद्गौरैररुणैस्तनूरुहैः छुरितंव्याप्तम् पीतेरुणेसि तेगौरइत्याभिधानम् विष्वक्सर्वपार्श्वेभुजानीकशतैर्युक्तम् बहुत्वापेक्षयानीकेत्युक्तम् २२ निजमात्मीयनित्ययोरित्यमरः निजान्यात्मीयानिनखापेक्षयेतराणिचक्रादीनियानितैरायुधप्रवेकैरायुधमुख्यैर्वि द्राविताःदैत्यदानवायेनतत्तथोक्तंतत् यद्वा निजंसहजनखलक्षणमायुधम् इतराणिपृथक्स्थितानिचक्रादीनीतिमेऔरसारिणानिसर्गशत्रुणाहारिणाअनेनरूपेणप्रायेणममायंवधःस्मृतोनिरूपितःकिं स्मृतोव धोयंकिमितिवा कीदृशस्यमेपुत्रवधेसमुद्यतस्य पुत्रहनुर्योवधःशास्त्रेषुस्मृतोविहितः सोयमद्यमाप्तःकिंचेति २३ एवंविमृश्यबंधान्निवृत्तःकिंनेत्याह एवमिति कमभ्यपतदित्यतउक्तम् नृसिंहंप्रतीति दैत्य कुंजरोदैत्येंद्रः निदर्शनमाह अलक्षितइति अलक्षितःसाहसिकः पतंगमःशलभः २४ द्विसप्तलोकैकारेःकेवलंतुच्छीकरणभगवद्भक्तिवैशद्यात्रतत्त्वतइतिनेत्याह नतदिति सत्त्वधामानिबलज्ञानसमाहारमू र्तौपराक्रममूर्तौवाजगदादौतमःपानंपुरुषरूपेण अनेनजगदावरकतमःपानतोहरेरसुरभस्मीकरणंकिमितिदर्शितम् अथोलोकविडंबयतोहरेरसुरेणसहसमरप्रकारंवर्णयतिततइति २५ तस्यगदाशिक्षालाघ वंवक्ति सतस्येति हस्तोत्कलितःहस्ताद्गलितउत्प्लुतोवा २६ तस्यहरेर्विडंबनम् अजानतामभराणांनिरूपणप्रकारंवक्ति असाध्विति हतौजसः भ्रष्टावष्टंभाइवघनेनच्छदाच्छादनयेषातेतथा मेघच्छाया

**दिविस्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षःस्थलमल्पमध्यमम् ॥ चंद्रांशुगौरैश्छुरितंतनूरुहैर्विष्वग्भुजानीकशतैर्नखायुधम् २२ दुरासदंसर्वनिजेतरायुधप्र वेकविद्रावितदैत्यदानवम् ॥ प्रायेणमेऽयंहरिणोरुमायिनावधःस्मृतोऽनेनसमुद्यतस्यकिम् २३ एवंब्रुवंस्त्वभ्यपतद्गदायुधोनदन्नृसिंहंप्रतिदैत्यकुंजरः ॥ अल क्षितोऽग्नौपतितःपतंगमोयथानृसिंहौजसिसोऽसुरस्तदा २४ नतद्विचित्रंखलुसत्त्वधामनिस्वतेजसायोनुपुरापिबत्तमः ॥ ततोभिपद्याभ्यहनन्महासुरोरुषानृ सिंहंगदयोरुवेगया २५ तंविक्रमंतंसगदंगदाधरोमहोरगंतार्क्ष्यसुतोयथाग्रहीत् ॥ सतस्यहस्तोत्कलितस्तदासुरोविक्रीडितोयद्वदहिर्गरुत्मतः २६ असाध्व मन्यंतहतौजसोऽमराघनच्छदाभारतसर्वधिष्ण्यपाः ॥ तंमन्यमानोनिजवीर्यशंकितंयद्धस्तमुक्तोनृहरिंमहासुरः २७ पुनस्तमासज्जतखड्गचर्मणीप्रगृह्यवेगे नगतश्रमोमृधे ॥ तंश्येनवेगंशतचंद्रवर्त्मभिश्चरंतमच्छिद्रमुपर्यधोहरिः २८ कृत्वाट्टहासंखरमुत्स्वनोल्बणंनिमीलिताक्षंजगृहेमहाजवः ॥ विष्वक्स्फुरंतं ग्रहणातुरंहरिर्व्यालोयथाखुंकुलिशाक्षतत्वचम् २९ द्वार्यूरुआपात्यददारलीलयानखैर्यथाहिंगरुडोमहाविषम् ॥ संरंभदुष्प्रेक्ष्यकराललोचनोव्यात्ता ननांतंविलिहन्स्वजिह्वया ३०**

यांविलीनाइवलुप्तोपमेयम् सर्वधिष्ण्यपाःसर्वनक्षत्रपपतःचंद्रादयोमराःतदसाध्वमन्यंतेत्यन्वयः तत्रहेतुस्तंमन्यमानइति नृहरेर्हस्तमुक्तोसुरः तंनृहरिंनिजवीर्यआत्मपराक्रमेशंकितंमन्यमानाभूदीतियत्तादि ति २७ हरेर्हस्तमुक्तोसुरःपराद्रवत् उताभ्यपतदितिसंशयोमाभूदित्याह पुनस्तमिति आसज्जतसक्तोभूद्युद्धायसन्नद्धोभूदित्यर्थःशतचंद्रवर्त्मभिश्छतचंद्रवर्त्मभ्यांखड्गचर्मणीतिप्रकृतत्वात् भद्रंकर्णेभिःशृणु यामदेवाइत्यादिश्रुतेः ॥ छांदसाभिप्रायेणायंप्रयोगःसंभाव्यतेच परिभ्रमणोशिक्षाप्रकर्षद्रष्टृणांद्वेएवबहूनिवदृश्यतइत्यतोवाबहुवचनंयुज्यते अच्छिद्रंनिरवकाशमितिक्रियाविशेषणेनैतदेवसूचयति असुरवीर्यमाशंकमानोहरिःकिमकरोदितितत्राह हरिरिति २८ विष्वक्परितःस्फुरंतंभ्रमंतमित्यनेनापिशिक्षोत्कर्षध्वनयति हरिःपुनर्ग्रहणेनातुरमकरोदितिशेषः अनेनातुरस्वरंलक्षयति तत्रदृष्टां तमाह व्यालइति व्यालःसर्पःखननशीलत्वादाखुः २९ ब्रह्मवररक्षणार्थमाह द्वारीति द्वार्यधस्तिरश्चीनदारुणिस्थित्वाऊरावंके उत्तानतयापात्यअत्रापिह्रस्वत्वंछांदसम् संरंभेणद्वेषादात्यंतिककोपेन दुष्प्रेक्ष्येकरालेलोचनेयस्य व्यात्ताननांतंविवृतवदनस्याधरोष्ठम् ३०

असृक्वसया रुधिरबिंदुनाक्तेरूषिते अतएवारुणकेसराननेयस्यसतथोक्तःसहरिःसिंहः नकेवलमेनमेवहतवान्किंतुतदनुचरानासुरानित्याह नखांकुरेति ३१ अहन्हतवान्नखशस्त्रपाणिभिर्नखैःशस्त्रैः पाणिभिश्चहरेर्दोर्दंडानांयूथानुपथान् निकराकृष्टान् तदवसरविक्रमवक्ति सटावधूताइति ३२ दिग्गिभादिग्गजामदंजहुस्त्यक्तवंतःप्रोत्सर्पतप्रोदसर्पत उद्गतेत्यर्थः ३३ सभावस्थानंतस्यवक्ति ततइति संभृततेजसराशीकृततेजसम् अलक्षितंनकेनापिदृष्टम् ३४ नन्वयंजयःकेनापिनलक्षितःतदंकुरव्यक्त्यदर्शनादित्याशंक्य पुरुषकोपोपशमनंस्त्रीणामेव,सुशकमितिभावेनसुरस्त्रीपुष्पवर्षप्रकारमाह निशम्येति लोकत्रयस्यमस्तकज्वरंशिरोरोगायमाणम् प्रहर्षातिरेकेणोत्कलितंविकासितमाननंयासांतास्तथाताः ३५ सुरस्त्रीवृष्टपुष्पसौरभ्याघ्राणेनांकिंचिच्छातकोपत्वादस्माकमप्ययमवसरइतिमत्वानानादेवानांनभसिविमानावलिसांकुल्यप्रकारंवक्ति तदेति ३६ सुराणामानकादुंदुभयः ३७ चंडक्षुब्धानांचित्ताह्लादकरीस्तुतिरेवेतिभावेनब्रह्मादीनामुपक्रममाह तदुपव्रज्येति येपूर्वमुपगंतुंतत्रासतेभ्रह्माद

असृग्वसाक्तारुणकेसराननोयथांत्रमालीद्विपहत्ययाहरिः ॥ नखांकुरोत्पाटितहृत्सरोरुहंविसृज्यतस्यानुचरानुदायुधान् ३१ अहन्समंतान्नखशस्त्रपाणिभिर्दोर्दंडयूथानुपथान्सहस्रशः ॥ सटावधूताजलदाःपरापतन्ग्रहाश्चतद्दृष्टिविनष्टरोचिषः ३२ अंभोधयःश्वासहताविचुक्षुभुर्निर्ह्रादभीतादिगिभाजहुर्दिशः ॥ द्यौस्तत्सटोत्क्षिप्तविमानसंकुलाप्रोत्सर्पतक्ष्माचपदातिपीडिता ३३ शैलाःसमुत्पेतुरमुष्यरंहसातत्तेजसाखंककुभोनरेजिरे ॥ ततःसभायामुपविष्टमुत्तमेनृपासनेसंभृततेजसंविभुम् ॥ अलक्षितद्वैरथमत्यमर्षणंप्रचंडवक्त्रंनबभाजकश्चन ३४ निशम्यलोकत्रयमस्तकज्वरंतमादिदैत्यंहरिणाहतंमृधे ॥ प्रहर्षवेगोत्कलिताननामुहुःप्रसूनवर्षैर्ववृषुःसुरस्त्रियः ३५ तदाविमानावलिभिर्नभस्थलंदिदृक्षतांसंकुलमासनाकिनाम् ३६ सुरानकादुंदुभयोथहिजघ्निरेगंधर्वमुख्याननृतुर्जगुःस्त्रियः ३७ तदुपव्रज्यविबुधाब्रह्मेंद्रगिरिशादयः ॥ ऋषयःपितरःसिद्धाविद्याधरमहोरगाः ३८ मनवःप्रजानांपतयोगंधर्वाप्सरचारणाः ॥ यक्षाःकिंपुरुषास्तातवेतालाःसहकिन्नराः ३९ तेविष्णुपार्षदाःसर्वेसुनंदकुमुदादयः ॥ मूर्ध्निबद्धांजलिपुटाआसीनंतीव्रतेजसम् ॥ ईडिरेनरशार्दूलंनातिदूरचराःपृथक् ४० ॥ ब्रह्मोवाच ॥ नतोस्म्यनंतायदुरंतशक्तयेविचित्रवीर्यायपवित्रकर्मणे ॥ विश्वस्यसर्गस्थितिसंयमान्गुणैःस्वलीलयासंदधतेऽव्ययात्मने ४१ रुद्रउवाच ॥ कोपकालोयुगांतस्तेहतोयमसुरोल्पकः ॥ तत्सुतंपाह्युपसृतंभक्तंतेभक्तवत्सल ४२ इंद्रउवाच ॥ प्रत्यानीताःपरमभवतात्रायतानःस्वभागादैत्याक्रांतंहृदयकमलंत्वद्गृहंप्रत्यबोधि ॥ कालग्रस्तंकियदिदमहोनाथशुश्रूषतांतेमुक्तिस्तेषांनहिबहुमतानारसिंहापरैःकिम् ४३

यस्तंपृथगीडिरइत्यन्वयः ३८ नातिदूरचराःकिंचित्समीपवर्तिनः ३९ ४०, तत्रपृथक्हरिपृथक्लक्षणस्तुतिप्रकारंब्रूते नतोस्मीति गुणैःसत्त्वादिभिःस्वलीलयास्वरूपभूतलीलया अव्ययात्मनेनित्यदेहाय ४१ येनायमसुरोहतःसकोपकालोयुगांतोयुगावसानोचितो नेदानीमत्यल्पासुरहनने तस्मात्कोपंसंहृत्यानुसृतंशरणप्राप्तंतस्यसुतंप्रह्लादंरक्षेत्यन्वयः ४२ हेपरम नस्त्रायतानरक्षताभवतादैत्यहृतायज्ञेषुस्वभागाअस्मद्योग्यहविर्भागाःप्रत्यानीताइत्यन्वयः तपोबलेनदैत्येनाक्रांतंनिमीलितंचतवगृहंतववासयोग्यंहृदयकमलंप्रत्यबोधिविकसितमस्माकं भवतेतिशेषः विरक्तिभक्तिभ्यांशेष्यीकर्तुंयोग्योनान्येनेत्याशयेनाह कालेति नाथयदिदंस्वर्गादिस्थानंकालग्रस्तंकियत्सुखजनकंनकिमपीतिमत्वाभजंति तेशुश्रूषतांत्वासेवमानानांतेषांकरगतामुक्तिरपिबहुमतानहियस्मात्तस्माद्धेनारसिंहतेषांभक्तानांअपरैर्धर्मादिभिःप्राप्तैःकिमित्यन्वयः ४३

हेआदिपुरुषत्वंयदात्मतेजआत्मनोहरेर्ज्ञानलक्षणंतेजस्तपोनोस्माकंपरमश्रेयसेआत्थ येनतपसाआलोचनरूपेणमहिम्नेदंसमस्तमात्मगतंव्यधं हेशरण्यपाल अमुनादैत्येनविप्रलुप्तंनष्टंतत्तपोज
गद्रक्षार्थंगृहीतवपुषानरसिंहात्मना पुनरप्यस्मान्प्रतिकटाक्षमन्वमंस्थाउद्धरिष्यामीतिशेषः तपआलोचनइतिधातोः यस्यज्ञानमयंतपइतिश्रुतेश्च भगवज्ज्ञानसाहस्यादस्यात्मतेजइत्यभेदवचनंयु
ज्यते विप्रलोपस्तिरोधानंनस्वरूपनाशः ४४ योभवान्नखविदीर्णवपानखविदारितांत्रान्तस्यदैत्यस्योदरादाच्छंत् ऋच्छगतावितिधातोः श्राद्धान्यस्माकमगमयदित्यन्वयः ४५ योगासिद्धामणि
माद्यष्टैश्वर्यलक्षणांगतिंयोगःपवनविजयःतपःकायक्लेशलक्षणंतयोर्बलेन नानाविधोदर्पोयस्यसतथा ४६ पृथक्जगद्विलक्षणस्यहरेर्धारणयाऽखंडोपासनयानुरुद्धांलब्धांविद्यामंतर्धानलक्षणाम्
४७ आसांस्त्रीणामर्थेदत्तानंद ४८ निदेशकारिणआज्ञाकारिणः ४९ हेपरेशत्वयाभिसृष्टायेनदैत्येननिषिद्धावयंप्रजा.नसृजामोवैसदैत्यस्त्वयैवतुइदानींभिन्नवक्षाःशेते तथायमवतारोजगन्मंगलं

॥ ऋषयऊचुः ॥ त्वंनस्तपःपरममात्थयदात्मतेजोयेनेदमादिपुरुषात्मगतंससर्ज ॥ तद्विप्रलुप्तममुनाद्यशरण्यपालरक्षागृहीतवपुषापुनरन्वमंस्थाः ४४ ॥ पितरऊचुः ॥ श्राद्धानिनोधिबुभुजेप्रसभंतनूजैर्दत्तानितीर्थसमयेपिपितिलान्सहाद्भिः ॥ तस्योदरान्नखविदीर्णवपाद्यआर्च्छत्तस्मैनमोभगवतेऽखिलक मंगोप्त्रे ४५ ॥ सिद्धाऊचुः ॥ योनोगतिंयोगसिद्धामसाधुरहार्षीद्योगतपोबलेन ॥ नानादर्पंतंनखैर्निर्ददारतस्मैतुभ्यंप्रणताःस्मोनृसिंह ४६ ॥ विद्याधराऊचुः ॥ विद्यांपृथग्धारणयानुरुद्धांन्यषेधदज्ञोबलवीर्यदृप्तः ॥ सयेनसंख्येपशुवद्धतस्तंमहानृसिंहंप्रणताःस्मनित्यम् ४७ ॥ नागाऊचुः ॥ येनपापेनरत्नानिस्त्रीरत्नानिहृतानिनः ॥ तद्वक्षःपाटनेनासांदत्तानंदनमोस्तुते ४८ ॥ मनवऊचुः ॥ मनवोवयंतवनिदेशकारिणोदितिजेनदेवपरिभूतसेतवः ॥ भवताखलःसउपसंहृतःप्रभोकरवामतेकिमनुशाधिकिंकरान् ४९ ॥ प्रजापतयऊचुः ॥ प्रजेशावयंतेपरेशाभिसृष्टानयेनप्रजावैसृजामोनिषिद्धाः ॥ सएषत्वयाभिन्नवक्षाःस्तुशेतेजगन्मंगलंसत्त्वमूर्तेऽवतारः ५० गंधर्वाऊचुः ॥ वयंविभोतेनटनाट्यगायकायेनात्मसाद्वीर्यबलौजसाकृताः ॥ सएषनीतोभवतादशामिमांकिमुत्पथस्थःकुशलायकल्पते ५१ ॥ चारणाऊचुः ॥ हरेतवांघ्रिपंकजंभवापवर्गमाश्रिताः ॥ यएषसाधुहृच्छयस्त्वयासुरःसमापितः ५२ ॥ यक्षाऊचुः ॥ वयमनुचरमुख्याःकर्मभिस्तेमनोज्ञैस्तइहदितिसुतेनप्रापितावाहकत्वम् ॥ अनुजनपरितापंतत्कृतंजानतातेनरहरउपनीतःपंचतांपंचविंश ५३ किंपुरुषाऊचुः ॥ वयंकिंपुरुषास्त्वंतुमहापुरुषईश्वरः ॥ अयंकुपुरुषोनष्टोधिक्कृतःसाधुभिर्यतः ५४ ॥ वेतालाऊचुः ॥ सभासुसत्रेषुतवामलंयशोगीत्वासपर्यांमहतींलभामहे ॥ यस्तांव्यनैषीद्भृशमेषुदुर्जनोदिष्ट्याहतस्तेभगवन्यथामयः ५५ ॥ किन्नराऊचुः ॥ वयमीशकिन्नरगणास्तवानुगादितिजेनविष्टिममुनानुकारिताः ॥ भवताहरेसवृजिनोऽवसादितोनरसिंहनाथविभवायनोभव ५६

जगतिशुभसारभूतः जगतोमंगलमुद्दिश्यगृहीतोवा ५० नटोनटनंकथाबंधवचनं नाट्यशृंगारादिभावदर्शनं एतयोर्गायकाःएतदुक्तं नटनंतुकथाबंधंनाट्यकंभावदर्शनमिति वीर्यंबलौजसायेना
त्मसात् आत्माधीनाःकृताः कल्पतेसमर्थोभवति ५१ साधून्हरंतीतिसाधुहृतःसज्जनास्तेषांशयआश्रयःसाधूनांहृदयंश्रयतितापदत्वेनेतिवा समापितोविनाशंगमितः भवस्यापवर्गस्यत्यागो
यस्मात्तत्तथालब्धवात्संसारान्मोक्षोयस्मात्तत्तथेतिवा ५२ पंचताविनाशं हेपंचविंशचतुर्विंशानामध्यइतिशेषः ५३ किंपुरुषाःपुरुषाभासाः ५४ सत्रेषुसभासुसत्रकारिणः दिष्ट्यासुखंकर्तुं ५५ वेतनहीन
तयाक्रियमाणंकर्मविष्टिःवृजिनंदुःखंकरोतीतिवृजिनःकर्मार्थे.मत्ययः सअपसादितोऽपहत्यनाशितः विभवायसंसारान्मुक्तये ५६

हरिर्नरयोःसिंहनरयोरूपंविविकरोमृत्यःकिंविप्रशापादसुरयोनिमाप्तस्य ५७ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेवि०टी०अष्टमोऽध्यायः ॥८॥ अत्रापिभक्तमाहात्म्यमेवप्रकटयति ब्रह्मादिदेवतास्तुत्यनंतरं कथंकथाप्रसंगइतिश्रोतुरांतरांशंकांपरिहर्तुमाह एवमिति एवंस्तुवंतोपि उपेतुंसमीपंगंतुं मन्युसंरंभंकोपसारभूतं मनअवबोधनइतिधातुः ज्ञानसारंप्रत्ययसारमितिश्रुतेः ज्ञानिविवक्षयैतत् ननु तर्हिक थंसमीपंगंतुंनाशकन्नित्युच्यत इतिचेदज्ञेयत्वज्ञापनायेतितात्पर्यं नतत्रचक्षुर्गच्छतिनवाग्गच्छति तेभ्योहप्रादुर्बभूव तन्नव्यजानतेत्यादिश्रुतेरेतदेवदर्शयति सुदुरासदमिति सुखेनविषयीकर्तुमशक्यम् १ एतदेवविवृणोति साक्षादिति सरस्वत्यादिव्यावृत्त्यर्थंसाक्षादिति अदृष्टाश्रुतपूर्वत्वादन्यैःसाधारणैर्जनैरितिशेषः द्वावेतौनित्यमुक्तावित्यादेः तर्हिनोपेयायशंकितेत्येतत्कथंघटतीतिचेत्मयापीश्वरः प रिच्छेद्योनभवतिकिंस्वन्यैरितिज्ञापनायासुरजनमोहनायेतिवा अदृष्टाश्रुतपूर्वत्वादन्यैःसाधारणैर्जनैः नृसिंहशंकितेवश्रीर्लोकमोहायनोपययावितिवाक्यसिद्धम् २ ममेदानींप्रह्लादेवात्सल्यातिश योस्तिभक्तानांमत्सेवातिशयफलाधिकार्थमिति भगवन्मनोज्ञापनायब्रह्मणाप्रह्लादःप्रेषितइत्याशयेनाह प्रह्लादमितिअयमपिलक्ष्मीकांतसमीपागमनेहेतुरन्यथाप्रह्लादेवात्सल्यातिशयोनप्रकटितःस्यात्तदु क्तं प्रह्लादेचैववात्सल्यंदर्शनायहरेरपि ज्ञात्वामनस्तदाब्रह्माप्रह्लादंप्रेषयत्तदेति प्रकृष्टोह्लादोनिर्वृतिर्यस्यसतथाइत्यनेनप्रह्लादशब्दनिरुक्तिःसूचिता लक्ष्म्यादिवत्सलतांहित्वाप्रह्लादेतत्करणाद्धरेर्वैषम्यबु

॥ विष्णुपार्षदाऊचुः ॥ अद्यैतद्धरिनररूपमद्भुतंतेदृष्टंनःशरणदसर्वलोकशर्म ॥ सोयंतेविधिकरईशविप्रशापात्तस्येदंनिधनमनुग्रहायविद्मः ५७ इति श्रीभागवतेमहापुराणेसप्तमस्कंधेऽष्टमोऽध्यायः ॥ ८ ॥ छ ॥ नारदउवाच ॥ एवंसुरादयःसर्वेब्रह्मरुद्रपुरस्सराः ॥ नोपैतुमशकन्मन्युसंरंभंसुदुरास दम् १ साक्षाच्छ्रीःप्रेषितादेवैर्दृष्ट्वातन्महदद्भुतम् ॥ अदृष्टाश्रुतपूर्वत्वात्सानोपेयायशंकिता २ प्रह्लादंप्रेषयामासब्रह्मावस्थितमंतिके ॥ तातप्रशमयोपे हिस्वपित्रेकुपितंप्रभुम् ३ तथेतिशनकैराजन्महाभागवतोर्भकः ॥ उपेत्यभुविकायेननंनामविधृतांजलिः ४ स्वपादमूलेपतितंतमर्भकंविलोक्यदेवःकृ पयापरिप्लुतः ॥ उत्थाप्यतच्छीर्ष्ण्यदधात्कराम्बुजंकालाहिवित्रस्तधियांकृताभयम् ५ सतत्करस्पर्शधुताखिलाशुभःसपद्यभिव्यक्तपरात्मदर्शनः ॥ तत्पा दपद्मंहृदिनिर्वृतोदधौहृष्यत्तनुःक्लिन्नहृदश्रुलोचनः ६ अस्तौषीद्धरिमेकाग्रमनसासुसमाहितः ॥ प्रेमगद्गदयावाचातन्न्यस्तहृदयेक्षणः ७ ॥ प्रह्लादउवा च ॥ ब्रह्मादयःसुरगणामुनयोथसिद्धाःसत्त्वैकतानमतयोवचसांप्रवाहैः ॥ नाराधितुंपुरुगुणैरधुनापिपिप्रुःकिंतोष्टुमर्हतिसमेहरिरुग्रजातेः ८

द्धिर्नाशंकनीया असुरजनमोहनार्थोपपत्तेरुक्तंच एकत्रैकस्यवात्सल्यंविशेषाद्दर्शयेद्धरिः अवरस्यापिमोहायेतिभक्त्यादिदानंनैवकरोतीतिकिंतुवात्सल्यानुसारेणेत्यभिप्रायेणदर्शितं क्रमेणैवापिवत्सलइत्युक्तं उपेहिउपेत्य ३ ४ नृहरेःप्रह्लादेवात्सल्यातिशयंदर्शयति स्वपादमूलेइति ब्रह्मादिकरांबुजेभ्योहरेःकरांबुजंविशिनष्टि कालाहीति कालाख्याहिनानिर्दिष्टाग्रस्ताधीर्येषांतेतथातेषाम् ५ इतरकरस्पर्शवै शिष्ट्यदर्शनायेशकरस्पर्शफलाभिव्यक्तिंवक्ति सतत्करइति सभगवत्करस्पर्शविधूतसमस्तपापत्वात्तत्क्षणएवसम्यगंकुरितपरमात्मज्ञानः अभिव्यक्तंपरस्यहरेरात्मनः ससारिणश्चदर्शनं स्वरूपविषयज्ञानंय स्यसतथेतिवाक्लिन्नहृद्भक्तिलक्षणामृतजलेनार्द्रीकृतांतःकरणोऽश्रुणायुक्तेलोचनेयस्यसतथा ६ तत्त्वज्ञानमस्योत्पन्नमित्यस्यीकिचिद्भ्रमित्यतस्तत्स्तुत्याव्यज्यतइतिभावेनदर्शयति अस्तौषीदिति ७ सत्त्वेनित्याविर्भूतबलज्ञानसमाहारएकएवनान्यइतिवितानमतिर्विस्तृतबुद्धिर्येषांतेसत्त्वैकतानमतयः यद्वा सत्त्वेहरावेवनियतबुद्धयः अधुनापरतःपरस्ययस्यांतंनापिनैवयाति सहरिरुग्रजातेरसुरजाते र्मेतोष्टुंस्तोतुमर्हतिकिमित्यन्वयः नतेविष्णाविति श्रुतेः ८

भक्त्यानन्नुभक्त्यैव यूथपायगजेंद्राय सेनानेतरिनागेंद्रेयूथनाथःप्रकीर्तितइत्यभिधानं अनेनधनादिकमपिभक्त्युपबृंहितंसफलमित्युक्तंभवति ९ इतोपिभक्तिरेवहरेःप्रसादेप्रधानसाधनमित्याह विप्रादिति द्विषड्गुणाद्वादशगुणाएतैर्युक्तात् ज्ञानंचसत्यंचदमःशमश्चअमात्सर्यंन्हीस्तितिक्षानसूया दानंचयज्ञश्चतपःश्रुतंचमहाव्रतंद्वादशब्राह्मणस्य एतेभ्यःप्रवरोद्वादशेभ्यःसर्वामपीमांपृथिवींप्रशिष्या त् त्रिभिर्द्वाभ्यामेकतोवाविशिष्टोनास्यसमोस्तीतिवेदितव्यइत्येतेभक्तिमतएवसंभवंतिनान्यस्यकचित्संभवेप्यंततोनलेभ्योर्थःस्यात् अनेवंविन्महत्पुण्यकर्मकरोति बद्धास्यांततःक्षीयतएवेतिश्रुतेः तस्माद्भक्तिरेवप्रयोजिकेतितात्पर्यं सकलंमनआदिकंपुनातिविषयोपरक्तमलंनिरस्यदर्पणवत्स्वच्छकरोतिजगत्पुनातीतिवा यस्तुविज्ञानवान्भवतियुक्तेनमनसासदा तस्येंद्रियाणिवश्यानिसदश्वाइवसारथे रितिश्रुतेःअन्यत्रबाधकमाह नत्विति भूरिमानोहंकर्तेत्यभिमंतानैवपुनातीत्यन्वयः समर्थमन्यसेयच्चकुंतीपुत्रंवृकोदरं तन्मिथ्याहिनमेकस्त्वंप्रभाववेत्थभारत मत्समोहिगदायुद्धेपृथिव्यांनास्तिभारत ना सीत्कश्चिदतिक्रांतोभविताचानकश्चनेत्यादिभारतेदुर्योधनोक्ताहंकारप्रतीतेरेवंविधोभूरिमानइत्यर्थः नाविरतोदुश्चरितान्नाशांतोनासमाहितः नाशांतमानसोवापिप्रज्ञानेनैवमाप्नुयादितिश्रुतेः शमोदमस्तपः शौचंक्षांत्यार्जवंविरक्तता ज्ञानविज्ञानसंतोषाःसत्यास्येपिद्विषड्गुणाइतिकेचित् सत्यंदमस्तपःशौचंसंतोषोन्हीःक्षमार्जवं ज्ञानंशमोदयाध्यानंविप्रस्यैतेद्विषड्गुणाइतिकेचित् असंप्रदायज्ञैरुक्तत्वादत्रनग्राह्य मेतन्मतद्वयमिति १० ननुश्वपचंवरिष्ठमितीदमसंभावितंवर्णहीनत्वेनतत्कृतसपर्यास्वीकारानुपपत्तेर्नाहंतथाद्मियजमानहविर्वितानैरित्यादावन्यथाकथनाच्चेतितत्राह नैवेति अयंप्रभुरविदुषोज्ञानोपदेशान धिकारिणः पूर्वचीर्णपुण्यनिचयास्तज्ज्ञानेनयथार्थंतत्त्वज्ञानिनोवर्णहीनाज्जनान्मानंपूजावृणीतेस्वीकरोति इतियत्तदात्मनोर्थेअप्राप्तप्राप्त्येनैवेत्यन्वयः कुतइत्यतउक्तं निजेति निजलाभेननित्यानंदेन

**मन्येधनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ॥ नाराधनायहिभवंतिपरस्यपुंसोभक्त्यातुतोषभगवान्गजयूथपाय ९ विप्राद्विषड्गुणयुतादरविंदनाभपादारविंदविमुखाच्छ्वपचंवरिष्ठम् ॥ मन्येतदर्पितमनोवचनात्मगेहप्राणःपुनातिसकलंनतुभूरिमानः १० नैवात्मनःप्रभुरयंनिजलाभपूर्णोमानंजनादविदुषःकरुणोवृणीते ॥ यद्यज्जनोभगवतेविदधीतमानंतच्चात्मनेप्रतिमुखस्ययथामुखश्रीः ११**

पूर्णइति हेतुगर्भंविशेषणं कोह्येवान्यात्कःप्राण्यात्योवैभूमातत्सुखमित्यादिश्रुतेःननुस्वार्थाभावेसपर्यास्वीकारेकिंकारणमितितत्राह करुणइति करुणयतीतिकरुणः देवस्यैषस्वभावोयं यमेवैषवृणुतेइत्यादि श्रुतेःकर्मणःक्षणभंगुरत्वात् कृपयातत्फलप्रदानायतत्स्वीकारोपचारइतितात्पर्यं विद्वद्भिःक्रियमाणं मानंस्वार्थमपिकिंनस्यादित्याशंक्यविशेषमाह यद्यदिति विद्वदविद्वद्भेदमंतरेणसमानोजनःभगवतेय न्मानंविदधीततत्तदात्मनेचस्वप्रयोजनायैवेत्युपगंतव्यं अत्रदृष्टांतमाह प्रतिमुखस्येति तथालंकृतमुखश्रीर्दर्पणादौप्रतिफलितस्यप्रतिबिंबलक्षणमुखस्यस्वालंकारमंतरेणश्रीर्लभ्यतेतथास्वबिंबभूतपर मात्मनोनिर्दोषगुणराशिध्यानलक्षणमानेनतत्प्रतिबिंबत्वात्स्वस्यापिनिर्दोषसुखलक्षणश्रीर्लभ्यतइत्यर्थः अनेनब्रह्मादिजीवराशिरत्यंततुच्छीभूतइतिसूचितं श्वपचादपिकष्टत्वंब्रह्मेशानादयःसुराइत्यादेः अयंतुनरसिंहआत्मनएवनप्रभुःकिंतुसर्वस्याप्यतोखंडैश्वर्यत्वात् चक्रवर्तीकरमिवाविदुषोजनान्मानंवृणीते अनेनाविद्वज्जनमानांगीकारोव्याख्यातःस्वतःसिद्धत्वात्ननुजनपदादर्थादानादिनाराज्ञःस्वप्रयो जनोपलब्धिवदीश्वरस्यापितथास्यात्किंनेत्याह निजेति ननून्मत्तःकिमीश्वरइतितत्राह करुणइति कस्यार्थेमानकरणमितितत्राह यद्यदिति कथमिवयथामुखस्यमुख्यस्यस्वामिनोराज्ञोमानलक्षणा श्रीःप्रतिमुखस्यराजमुखमनुवर्तमानस्यजनपदस्यपरोपद्रवराहित्येनधनधान्यादिसमृद्धिलक्षणाश्रीर्भवति तथाहरिविषयाक्रियमाणामानश्रीरनुरक्तजनस्य संसारशृंखलान्मोक्षलक्षणाश्रीर्भवतीत्यर्थः। बल वानंदहनोजवेत्यादेः। ननु हरेर्जन्मादिमत्त्वेनविशेषमाहात्म्यायोगात्देवदत्तवदन्योपुरुकविमादितरजनपरिगृहीतत्वमितितत्राह नैवेति अयंनृसिंहआत्मनोदेहात्प्रभुःप्रभूतउत्पन्नोनैवकिंतुस्वभावात् दृष्टत्वा

दितिशेषः अदेहस्यजनमायोगात् जननवत्तएवविषयसुखानुभवोपपत्तेरतःकथंहरेर्विषयानुभूतिरितितत्राह निजेति सत्यंपरतश्चेत्प्राप्तिर्नायंतथा निजोत्थभोयस्यसतथा स्वतःसिद्धानुभवश्चपू र्णोव्याप्तश्च नहिव्याप्तस्यपरिच्छिन्नगर्भवासादिकंयुज्यते। प्रादेशमात्रंपुरुषमित्यादौपरिच्छेदप्रतीतेरितिचेत् तस्यांतेसुषिरंसूक्ष्ममितिश्रुतेराकाशवदुपपत्तेरुपाधिकल्पनायामनवस्थादिदोषापत्तेरतः स्वभृत्यभाषितंसत्यंकर्तुंस्वस्यसर्वत्रव्याप्तिंदर्शयितुमितरत्रजातवद्दर्शनमसुरजनमोहार्थमित्यादिज्ञातव्यं स्वभृत्यभाषितस्यसत्यकरणायेत्येतत्कथमवगतमितितत्राह मानमिति अविदुषःस्वरूपाज्ञा निनोस्माज्जनान्मानंवृणीतेनकेवलमस्मज्जनात्किंतुसर्वस्मादपियोग्यादित्याशयेनाह यद्यदिति शेषंपूर्ववत् श्वपचोपिभक्तएववरीयानभक्तस्तस्यद्वेषित्वेनदंभार्थत्वेनविहितपूजाया अस्वीकारादित्य तोवाह नेति अयंहरिरविदुषोनित्याज्ञानिनोसुरजनादात्मनः स्वस्यमानं लोकेदंभाभिप्रायेणकृतपूजांनैववृणीते प्रत्युतानर्थंचकरोतीत्याह करुणइति क्रुविक्षेपइतिधातोः असुरजननिरसनशीलत्वादं धंतमएवप्रापयतीत्यर्थः परापूर्वेषामितिश्रुतेः तस्मादसुरजनकृतसपर्यानर्थजननीत्याशयेनाह यद्यदिति आत्मनेअनर्थायेतिशेषः यथामुखश्रीःप्रधानभटयोग्यश्रीः प्रतिमुखस्याल्परूपप्रतिभटस्या नर्थायमरणलक्षणायस्यादितिशेषः ११ तस्माद्भक्तिरेवप्रयोजिकेत्याह तस्मादिति यस्मादचिंत्यमहिमत्वात्सर्वात्मनेश्वरस्यस्वरूपंस्तोतुंनशक्नोमितस्माद्विगतविक्लवोनिर्धूतचापल्योहंयथामनीषंभ स्त्याग्रृणामीत्यन्वयः स्तुतेःफलमाह नीचइति अजयाप्रकृत्यानीचगुणविसर्गंसंसारमनुप्रविष्टंपुमान्येनानुवर्णितेनगुणसंकीर्तनेनपूयेतशुद्धोभवतिहियस्मात्तेनसंसारमोक्षोभवतीत्यर्थः १२ यथामनी

**तस्मादहंविगतविक्लवईश्वरस्यसर्वात्मनानहिगृणामियथामनीषम् ॥ नीचोऽजयागुणविसर्गमनुप्रविष्टःपूयेतयेनहिपुमाननुवर्णितेन १२ सर्वेह्यमीवि धिकरास्तवसत्त्वधाम्नोब्रह्मादयोवयमिवेशनचोद्विजंतः ॥ क्षेमायभूतयउतात्मसुखायवास्यविक्रीडितंभगवतोरुचिरावतारैः १३ तद्यच्छमन्युमसुरश्चह तस्त्वयाद्यमोदेतसाधुरपिवृश्चिकसर्पहत्या ॥ लोकाश्चनिर्वृतिमिताःप्रतियांतुसर्वेरूपंनृसिंहविभवायजनाःस्मरंति १४**

षंगृणामीत्युक्तंविवृणोति सर्वइति अमीवयंब्रह्मादयश्चसर्वेसत्त्वधाम्नस्तवविधिकराहि विष्णोस्तिष्ठंति प्रदिशाविधर्मणीतिश्रुतेः तत्रविशेषोस्ति यथावयंउद्विजंतस्तथाब्रह्मादयोनैवोद्विजंतः प्रधानभक्तत्वा त्कुतएतद्वयंविज्ञापयतइतितत्राह क्षेमायेति अस्यहरेरुचिरावतारैःविक्रीडितं अस्यजगतःक्षेमाद्यनेकप्रयोजनायस्यादितिपदनेनास्मान्निघनेनास्माकमुद्वेगोब्रह्मादिरक्षणेनतेषामनुद्वेगश्चज्ञायतइत्य र्थः १३ अथैवंकर्तव्यमित्याह तद्यच्छेति अद्यत्वयासुरोहतश्चयस्मात्तस्मान्मथ्नातिकलुषीकरोतिज्ञानमिति मन्युःकोपः इतरेषामेवंविधो हरेस्तुस्वेदाधरस्फुरणादिविडंबनलक्षणादिस्तंयच्छसंह रप्रसन्नभावंदर्शयेत्यर्थः मन्युंचत्वद्विषयंज्ञानंचयच्छानुगृहाणेत्यर्थः मनुअवबोधनइतिधातोरितिवा त्वद्विषयंपूजालक्षणयज्ञमितिवा मन्युःकोपेक्रतौयुद्धे इत्यभिधानं सज्जनानंदाकांक्षापिभगवत्प्र सादकरीत्याशयेनाह मोदेतेति वृश्चिकसर्पलक्षणासुरहननेन साधुः सज्जनोपिमोदेतसाधुरपिमोदेतेतिवायोगविभागः वृश्चिकसर्पलक्षणासुरहत्यानिर्वृतिमानंदमिताः प्राप्ताः सर्वेलोकाः प्रतियांतु स्वगृहामितिशेषःगत्वाकिंकुर्वंतीतितत्राह रूपमिति हेनृसिंहजनाःतवनृसिंहाकारंरूपंदुरितनिवृत्तिलक्षणायविभवायस्मरंतीत्यन्वयः साधुरहिंसापरोपिवृश्चिकादिहत्यामोदेत किंपुनःसर्वलोकोपद्रव कृत्असुरहत्यातोवाह मोदेतेति हत्यामितिपाठेसाधुः शास्त्रतत्त्वज्ञोदुष्टवृश्चिकादिहत्यांयथामोदेततथाहमपिभगवद्द्वेषित्वेनदुष्टत्वात्पितुर्हत्यांमोदइत्यभिप्रेत्यतोवाह मोदेतेति नृसिंहेतिसंबोधनंना प्रकरणाभिप्रायेणेतिज्ञातव्यं १४

पूर्वमज्ञातनामत्वादितित्वत्कोपाकुलरूपदर्शनाद्भीत्याल्लोकस्यस्मरणेनसंभाव्यतइतितच्छमनंकर्तव्यमित्युक्तं तन्ममज्ञाततत्त्वस्यविषयोनभवति ममभयंसंसारचक्रादित्याह नाहमिति भयानकस्य तेतवरूपान्नबिभेमीत्यन्वयः कीदृशात् जिह्वेवर्केअग्नियुक्तेनेत्रेयस्यतत्तथा जिह्वयाभ्रुकुट्याचरभसौयस्यतत्तथाउग्रेदंष्ट्रेयस्यतत्तथा जिह्वाग्निनेत्रंचजिह्वाभ्रुकुटीरभसंचउग्रदंष्ट्रंचतत्तथा तस्मादांत्रमेवस्रक् मालायस्यतत्तथा तस्मात्क्षतजेनरुधिरेणसिक्ताः केसरायस्यतत्तथा शंकुवत्स्थूणवत्स्तब्धौकर्णौयस्यतत्तथा क्षतजकेसरंचशंकुकर्णंचतत्तथा तस्मात् निर्ह्रादेनभीतादिग्गिभादिग्गजायस्यतत्तथातस्मात् अरीन्भिंदिनखाग्राणियस्यतत्तथा तस्मात्अरीन्भिन्दंतीत्यरिभिंदिनखानामग्राणि दुःसहंचोग्रंचसंसारचक्रंचयत्तेनसहकदनात् हिंसालक्षणाद्युद्धादुरुत्तमसत्यकाम भीतानांअपवर्गभीतिजनकसंसारनाशनं शरणंशरणं समियांयामि १५ १६ देवादियोनौसुखसंभवात्तस्मात्संसारचक्रात्कथंबिभेषीतितत्राह यस्मादिति देवादिसकलयोनिषुप्रियस्यवियोगोऽप्रियस्यसंयोगः तयोर्जन्मयस्यसतथा सचशोकाग्नि स्तेनाप्रियादिवियोगादिनाजन्मनाच यःशोकाग्निस्तेनवा दह्यमानोहंयत्दुःखपरिहारलक्षणंऔषधकर्मतदपिदुःखरूपमितिमत्वा अतद्धिया नतद्धीरतद्धीस्तयादुःखपरिहारौषधाज्ञानेनभ्रमामि कुत्रगतेनकेनौ षधेनवामेसुखंस्यादित्यनवस्थितिंप्राप्तोस्मीति यस्माच्चस्मादिदमेवसंसारनाशनामितिमत्वाभवंतंप्रार्थये किंतत्राह वदेति तवदास्यलक्षणंयोगमौषधंवदानुग्रहाणेत्यन्वयः १७ मदुपासनाद्युपायमंतरेणदास्य

नाहंबिभेम्यजिततेतिभयानकस्यजिह्वाग्निनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् ॥ आंत्रस्रजःक्षतजकेसरशंकुकर्णान्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ १५ ॥ त्रस्तोस्म्यहंकृपणवत्सलदुःसहोग्रसंसारचक्रकदनाद्ग्रसतांप्रणीतः ॥ बद्धःस्वकर्मभिरुशत्तमतेंघ्रिमूलंप्रीतापवर्गमरणंसामियांकदानु १६ यस्मात्प्रिया प्रियवियोगसयोगजन्मशोकाग्निनासकलयोनिषुदह्यमानः ॥ दुःखौषधंतदपिदुःखमतद्धियाहंभूमन्भ्रमामिवदमेतवदास्ययोगम् १७ सोहंप्रियस्यसुहृदः परदेवतायालीलाकथास्तवनृसिंहविरिंचगीताः ॥ अंजस्तराम्यनुगृणन्गुणविप्रमुक्तोदुर्गाणितेपदयुगालयहंससंगः १८ बालस्यचेहशरणंपितरौनृसिंह आर्तस्यचागदमुदन्वतिमज्जतोनौः ॥ तप्तस्यतत्प्रतिविधिर्यदिहांजसेष्टस्तावद्विभोतनुभृतांत्वदुपेक्षितानाम् १९ यस्मिन्यतोयर्हियेनचयस्ययस्माद्यस्मैयथायदुत यस्त्वपरःपरोवा ॥ भावंकरोतिविकरोतिपृथक्स्वभावःसंचोदितस्तदखिलंभवतःस्वरूपम् २०

मन्त्रेणतवाकिंस्यादित्याशंक्य बहुप्रयत्नसाध्यामुपासनामंतरेणोपायोस्तीत्याह । सोहमिति गुणमयसंसाराद्विप्रमुक्तःपादयुगलमेवालयमाश्रयोयेपातेतथा तेचहंसानिःसंगाःपरमहंसास्तेषांसंग.सेवालक्ष णोयस्यसतथा । दुर्गाणिकलत्रादीनिनरकाणिवा १८ नृसिंहआर्तस्येत्यनेनसंध्यकरणेनदृष्टांतदार्ष्टांतिकयोर्महद्वैलक्षण्यमस्तीतिज्ञापनायाज्ञानजनबुद्ध्यवतारायचेतिज्ञातव्यं निदाघतप्तस्यजलादि नातर्पणविधिराप्यायनलक्षणपरिहारः ज्वराद्यभिभूतस्यज्वरादिपरिहारप्रकारोयत् इष्टः इष्टसाधनंच १९ ब्रह्माद्यन्यतमइष्ट.किंनस्यादित्याशक्यकर्तृत्वाद्यभिमतस्यब्रह्मादेःसत्तायाअपियदायदधीनत्व मप्रामाणिकं तदासर्वस्माद्धरेरीश्वरत्वेकिंवक्तव्यमितिभावेनाह यस्मिन्निति अपरःकुलालादिर्यःपरोब्रह्मादिर्वायस्मिन्नधिष्ठानेस्थित्वायतोमृदादेर्यर्हियस्मिन्कालेयेनचक्रसलिलादिना यस्यादृष्टादेःसहायेनयस्मैज लाहरणाद्यर्थं यथाविधिनायंभावंघटादिपदार्थं करोतिविकरोतिसामान्यतोविशेषतोवा कीदृशःपृथक्स्वभावःकार्याद्भिन्नलक्षणस्वरूपःसंचोदितस्त्वादृशेनपुरुषेणप्रेरितः तदखिलंकार्यकारणलक्षणंसर्वंभवतः स्वरूपंचत्वदधीनसत्तात्मकमित्यन्वयः कर्तृकर्मक्रियादीनांसत्तावृत्तिस्तथैवच विष्ण्वधीनंयत सर्वंतर्वरूपस्तदुच्यतइतिवचनान्नाभेदोत्रेतिबोद्धव्यम् २०

संसारचक्रमन्यथाजानित श्रीहरिप्रसादंविनादुस्तरंप्रसादश्चानिग्रहीतमनसांदुःसाध्योमनोमयत्वात्संसारचक्रस्या तःसएवसंपाद्यइत्याशयेनसंसारस्वरूपंनिरूपयाति मायेति चित्प्रकृत्याभिमतमायाप्रकृति रुदितगुणानुमतेनोद्भूतरजआदिगुणानुसारिणाकालेनप्रेरितेनादृष्टेनचसहकारिणापुंसोजीवस्य कर्ममयंनानाविकारकोशमतएवबलीयोनिगृहीतुमशक्यछंदोमयंसंकल्पविकल्पलक्षणेच्छात्मकंयन्मनः सृजति हेअज तन्मनोमूलंसंसारचक्रंत्वदन्यस्त्वदनुग्रहरहित पुरुषःकोतितरेत् नकोपीत्यन्वयः केवलात्परिकरोपेतस्यबलाधिक्यंस्यादित्यभिप्रायेणाह अजयेति अजयाप्रकृत्यार्पिताःकल्पिताभिन्नवर्ति नामनसासहषोडशेंद्रियाणिपंचप्राणाएवारादलस्थानीयायस्यतत्तथातत् २१ मनएवमनुष्याणांकारणंबंधमोक्षयोरितिश्रुतेः सम्यक्नियुक्तमुक्तिनिमित्तंचत्वदनुग्रहेणस्यादित्याशयेनाह सत्वमिति यस्त्वंस्वधाम्नानित्यंविजिताआत्मनोदेहस्यगुणाजननादिलक्षणाधर्माजीवस्यवादुःखादिलक्षणायेनसतथा यश्चकलयति जानातिसर्वमितिकालो वशीकृतास्वसमवेताविसृज्यस्यसुरनरादिनाना विधस्यजगतोविसर्गेशक्तिर्विविधसृष्टिर्यस्मिन्सतथा हेईश्वर सत्वंषोडशारेसंसारचक्रेलिंगशरीरेवा अजयाविसृष्टमुत्पन्नमतएवदुःखेननिष्पीड्यमान तत्परिहारायशरणंप्रपन्नंमांततोपकर्षउत्सर विभो समुद्धरणसमर्थ २२ त्वयाकस्मात्स्वर्गादैश्वर्यंनेष्यतइत्याशंक्यतस्यनश्वरत्वादित्याशयेनाह दृष्टाइति अखिलानांधिष्ण्यपानामिंद्रादीनांविभवोहिरण्यलक्षणोर्थः अस्मत्पितुर्हिरण्यकशिपोःकुपितहासो

मायामनःसृजतिकर्ममयंबलीयःकालेनचोदितगुणानुमतेनपुंसः ॥ छंदोमयंयदजयार्पितषोडशारंसंसारचक्रमजकोतितरेत्त्वदन्यः २१ सत्वंहिनित्यवि जितात्मगुणःस्वधाम्नाकालोवशीकृतविसृज्यविसर्गशक्तिः ॥ चक्रेविसृष्टमजयेश्वरषोडशारेनिष्पीड्यमानमुपकर्षविभोप्रपन्नम् २२ दृष्टामयादिविविभो खिलधिष्ण्यपानामायुःश्रियोविभवइच्छतियाञ्जनोयम् ॥ येस्मत्पितुःकुपितहासविजृंभितभ्रूविस्फूर्जितेनलुलिताःसतुतेनिरस्तः २३ तस्मादमूस्त नुभृतामहमाशिषोज्ञआयुःश्रियंविभवमैंद्रियमाविरिंचात् ॥ नेच्छामितेविलुलिताउरुविक्रमेणकालात्मनोपनयमांनिजभृत्यपार्श्वम् २४ कुत्राशिषःश्रु तिसुखामृगतृष्णरूपाःक्वेदंकलेवरमशेषरुजांविरोहम् ॥ निर्विद्यतेनतुजनोयदपीहविद्वान्कामानलंमधुलवैःशमयन्दुरापैः २५ क्वाहंरजःप्रभवईशतमोधि केस्मिन्जातःसुरेतरकुलेक्वतवानुकंपा ॥ नब्रह्मणोनतुभवस्यनवैरमायायन्मेर्पितःशिरसिपद्मकरप्रसादः २६

दुर्हासस्तेनविजृंभितयोःस्फुरितलक्षणयोर्भ्रुवोर्विस्फूर्जितेनविकासविशेषेणलुलिताविनाशिताःसतुहिरण्यकशिपुरपितेत्वया २३ यस्मात्क्षणभंगुरास्तस्मात्ज्ञआनि त्याइतिजानन्नैंद्रियंश्रोत्रादींद्रियभोग योग्यमिंद्रियस्यविद्यमानंवा आविरिंचात्विरिंचपर्यंतं । निजभृत्यानांमुक्तानांपार्श्वं २४ इतोपिसंसारसुखंहेयमित्याह कुत्रेति श्रुतिकर्णसुखयंतीतिश्रुतिसुखाः मृगतृष्णरूपाऊष्मोदकसदृशाः अशेषाणांरुजांरोगाणांविशेषेणरोहोयस्मात्तत्तथा दुरापैर्मधुलवैरुदबिंदुकल्पैः सुखलेशैः कामाग्निंशमयन्शांतिंकर्तुमिच्छन्यदपिपर्यायेणकलेवरंविषयसुखंचेत्युभयंनश्वरंविद्वानयंजनः इहोभयस्मि न्नपिनतुनिर्विद्यते निर्वेदंनैवप्राप्नोतीत्यन्वयः २५ हरेर्भक्तवात्सल्यंप्रकटयन् प्रह्लादस्तत्त्वज्ञानविधुरइवायोग्यजनमोहायाह क्वाहमिति हेईश्वरतमोगुणप्रचुररजोगुणोत्पत्तिहेतौअस्मिन्सुरेतरकुलेअसु रकुलेजातोहंक्व । भक्तानुग्रहलक्षणातवानुकंपाक्व । मिथोविरुद्धस्वभावत्वात् । किंचोद्यमत्रेतितत्राह । नब्रह्मणइति । निरंतरसेवामेदुरत्वेनेतरस्मादधिकोदयोपीदानींरमादीनांशिरसिनार्पितोममाशी रसितवपद्मकरःप्रसादरूपभावत्याणिनिधानलक्षणः प्रसादोर्पितइतियत्तस्माच्चित्रंतवचरितमित्यर्थः । श्रीर्ब्रह्मब्राह्मींवींद्राहित्रिकंतत्स्त्रीपुरुष्टुताः । तदन्येचक्रमात्सर्वेसदामुक्तौद्वतावपि । हरिभक्तौचत ज्ज्ञानेसुखेचनियमेनतु परतःस्वतःकर्मतोवानकथंचित्तदन्यथेतिवचनादुक्तएवार्थइति २६

सेवाधिक्यमेवफलाधिक्येकारणंनत्वभिजात्यादिकमित्यभिप्रेत्याह नैषेति यथाजंतोर्यापरावरमतिस्तथैषाभवतोनस्यान्नतुकुतआत्मसुहृदः तदेतत्प्रेयइतिश्रुतेः लोकेयद्यप्याभिजात्यादिकं परावरत्वे निमित्तंतथापिलोकविलक्षणमहिमत्वात्भवतःप्रसादः जगतःसंसेवयासेवानुगुणः फलाधिक्योदयःस्यात् यावत्सेवापरेतच्चेतावत्सुखविशेषतेनिम्भृतेः परावरत्वंनसेवानिमित्तं शुचीनांश्रीमतांगेहेयोग भ्रष्टोभिजायतेइतिवचनात् २७ नन्वेवंसेवानुरूपफलोदयेशाश्वीयेसिद्धेत्वंकिंकरोषीतितत्राह एवमिति फलोदयस्यसेवानुविधायित्वात्सोहंतवभृत्यसेवाकथंनुविसृजेमपहितस्यत्वादिस्यतस्तद स्यागेकारणमाह । एवंजनमिति । प्रभवाहिकूपेजन्मारूपसर्पविषकलिलसंसारगर्ते पतितं कामाःविषयास्तानाभिकामयतइतिकामाभिकामस्तजनमनुतस्यजनस्यप्रकर्षेणसगःजन्मसङ्गस्तस्मात्प्रप तन् आत्मसात्कृत्वात्मीयेष्वेकइतिबुद्धिंकृत्वासुरऋषिणागृहीतोनुगृहीतोथ सोहमितियस्मात्तस्मादितिशेषः २८ स्वभृत्यभाषितमृतंकर्तुं स्तंभादभूदितियत्सूचितंपूर्वत्र तदिदानींस्पष्टमाह मत्प्राणे ति मत्प्राणरक्षणंममपितुर्वधंचस्वभृत्यनारदऋषिवाक्यंचप्रसाद्दिधित्सुःखड्गंप्रगृह्यहिरण्यकशिपुर्यदिमदपरईश्वरोस्तिसत्वामवतुतस्यतवकंशिरोहरामीतियदवोचत्तवऋतंविधातुं अयमेवनान्यइतिमन्व इत्यन्वयः २९ भ्रूविजृंभणाविभ्रंशितेंद्राद्यैश्वर्यस्यममापितुर्हननमस्माकंचित्रंचेदपि नतवाचित्रंतस्यजगत्येकत्वात् जगच्चत्वत्सृष्टंत्वत्प्रविष्टंत्वदधीनसत्ताकमतःस्तंभादाविर्भावोपियुक्तइत्याह एकइति अयमर्थः भूतजगत्त्वमेवनान्यः कुतः एकःप्रधानः प्राधान्यंचकुतोवगम्यतइतितत्राह । अमुष्यइति । अमुष्यजगतआद्यंतयोःरुत्पत्तेःपूर्वंविनाशादूर्ध्वंचमध्यतास्थितिकालेचत्वमेवावस्थासिमाद्वि

नैषापरावरमतिर्भवतोननुस्याज्जंतोर्यथात्मसुहृदोजगतस्तथापि ॥ संसेवयासुरतरोरिवतेप्रसादःसेवानुरूपउदयोनपरावरत्वम् २७ एवंजनंनिपतितंप्रभवाहिकूपेकामाभिकाममनुयःप्रपतन्प्रसंगात् ॥ कृत्वात्मसात्सुरर्षिणाभगवन्गृहीतःसोहंकथंनुविसृजेतवभृत्यसेवाम् २८ मत्प्राणरक्षणमनंतपितुर्वधंचमन्येस्वभृत्यऋषिवाक्यमृतंविधातुम् ॥ खड्गंप्रगृह्ययदवोचदसद्विधित्सुस्त्वामीश्वरोमदपरोऽवतुकंहरामि २९ एकस्त्वमेवजगदेतदमुष्ययत्त्वमाद्यंतयोःपृथगवस्यसिमध्यतश्च ॥ सृष्ट्वागुणव्यतिकरंनिजमाययेदंनानेवतैरवसितस्तदनुप्रविष्टः ३० त्वंवाइदंसदसदीशभवांस्ततोन्योमायायदात्मपरबुद्धिरियंह्यपार्था ॥ यद्यस्यजन्मनिधनंस्थितिरीक्षणंचतद्वैतदेवखलुकालवदुष्टितर्वोः ३१

तिनिर्णीतोसिशास्त्रइतियस्मात् ननुजगतस्त्वद्विकारत्वेनतद्विवर्तत्वेनवात्वदवसानंयुक्तमत्राह । पृथगिति । भिन्नत्वेनेत्यर्थः पुनःसृष्टिकालेनिजमाययास्वसामर्थ्येनस्वाधीनयाचिदचिदात्मकत्वाच्चे दंगुणव्यतिकरंजगत्सृष्ट्वातदनुप्रविष्टस्त्वंतैर्भिन्नैःपदार्थैर्नानेवभिन्नैः नानेवभिन्नइवनतुभिन्नइत्यवसितोसीतियत्तस्माच्च । प्रतिदृशमिवनैकधार्कमेकमितिस्वोक्तेः इंद्रोमायाभिःपुरुरूपईयतइतिश्रुतेश्च नेहनानास्तिकिंचनेत्यादिश्रुत्यानानात्वस्यनिषिद्धत्वात्नानेवानुविधावतीत्यादिनानर्थहेतुत्वाच्चभेददृष्टेः ३० हरेर्जगदन्यत्वस्यस्पष्टमप्रतीतेःतदर्थंपूर्वपद्योक्तंविशदयति । त्वंवाइति । हेईश इदंसदसच्चराचरलक्षणंजगत्तत्वं । सत्तायाअपित्वदधीनत्वादयंव्यपदेशोनतादात्म्यात् । तत्त्वतस्तदात्मत्वंकिंनस्यादितितत्राह भवानिति ततोजगतोभवानन्योपिस्वतोभिन्नोपीत्यर्थः मत्स्वातंत्र्यवज्जगत्स्वातंत्र्यमपिकिंनस्यादुभयोर्भेदोपिदृढतरःस्यादितितत्राह मायेति आत्मेत्युपलक्षणं आत्मानात्मलक्षणस्यप्रपंचस्यपरत्वबुद्धिःस्वातंत्र्यज्ञानंयत्सेयमायाऽविद्यमाना कुतइतितत्राह अपार्थेति । श्रीनारायणस्यतवस्वातंत्र्यज्ञानंयथापुरुषार्थसाधनंतथान्यस्यस्वातंत्र्यज्ञानमनर्थहेतुरिति उभयंहिशब्देनसिद्धमितिदर्शयति स्वतंत्रजीवात्मकत्वात्स्वतंत्रंजगदित्यतोवाह मायेति आत्मनोजीवस्यपरत्वबुद्धिः जीवस्य परस्मैक्येपक्ष्यात्मनाप्यजन्मादिकंकिमतंतदभेनापिकर्तव्यम् । तदनुभवविरुद्धमतोयद्यदर्शनंजन्मादिकंतद्वस्तुतदेवेतिप्राधान्यविवक्षया अभेदव्यपदेशोपपत्तेरितिप्रकारांतरेणतद्भातिमाह यद्यस्येति

अयमर्थः यस्य जगतोजन्मादिकंयद्यदधीनंतज्जगत्तदेवेत्युच्यतेइतियत्तस्माज्जगत्त्वमेवेत्यर्थः । अस्मिन्नर्थेदृष्टांतमाह । खल्विति उष्टितर्वौः वृक्षदाहवृक्षयोःकालवत् कालाधीनत्ववत् एतदेवाचार्यैः सम्यग्विवृ
तंयथावृक्षश्चवृक्षदाहकश्चदैवकालाधीनत्वादैवंकालश्चेत्युच्यते एवंचत्वदधीनत्वात्सर्वस्यसर्वमित्युच्यतेस्वतस्तद्भिन्नोपीति । उपदाहइतिवातुः । अत्रखलुशब्दः साक्षादैक्यनिषेधेवर्तते अलंखल्वोःप्रतिषेधयोः
प्राचांक्त्वेतिसूत्रात् अलमैक्यकथानिष्टत्वमित्यर्थः यएषआदित्येपुरुषोदृश्यतेसोहमस्मि सएवाहमस्मि यएषचंद्रमसि पुरुषोदृश्यतेसोहमस्मीत्यादिश्रुतौ स्वस्यान्यस्यपरमात्मत्वोपदेशःप्रतीयते अतःक
थंभेदःकथ्यतेइत्यतोवाह मायेति आत्माहंचपरोन्यश्चपरश्चपरमेश्वरएवेतियाबुद्धिरियमपार्थामायाभ्रांतिस्तस्मात्तदधीनत्वात्तदंतर्यामित्वेनस्थितत्वाच्चसोहमस्मीत्युच्यतेनतुतद्रूपत्वादेतदप्याचार्यैरुक्तंअ
हंचान्यश्चपरमेश्वरएवेत्यपार्थभ्रांतिस्तदधीनत्वात्सइत्युच्यते नस्वरूपत्वादित्यर्थः इतिईक्षणंज्ञानम् ३१ सत्वमाद्यंतयोरित्यत्रांतेश्रीहरिरवाशिष्यतेइत्युक्तं तंप्रकारंदर्शयति न्यस्येति विलयांबुमध्येइ
दंजगदात्मनिस्वोदरेन्यस्यशेषासनोभूत्वातुर्येस्थितोजाग्रदाद्यवस्थाप्रवृत्तिशून्यमूर्तौस्थितस्त्वतमःप्रकृतिगुणान्सत्त्वादींश्चात्मनियुंक्तेननु प्रकृतिंपुरुषंचैवप्रविश्यपुरुषोत्तमः क्षोभयामासेत्यादौ प्रतीतप्र
वृत्तिशून्योऽभूदित्यन्वयः निजसुखेत्यादिनातुरीयस्वभावंदर्शयति वीतनीद्रोनिरस्ताज्ञानः ३२ सृष्टेःप्रागित्युक्तंदर्शयति तस्येति यस्यतुरीयस्यास्यजगत्कारणस्यचकश्चिद्विशेषोनास्तीतिद्योतना
यैवकारः आत्मानिदेहेजठरेगूढंनिलीनमिदंजगज्जगदात्मकंमहाब्जंयस्यतवनाभेरभूत्तदब्जंतस्यैवतेवपुःसन्निधानविषयत्वात् । प्रतिमास्थानीयम् । कीदृशंस्वरूपंभूतसृष्टिकालशक्त्यासंचोदितंसृष्टयेप्रे
रितं कटाक्षीकृतंकीदृशस्यास्यप्रकृतिधर्मिणः प्रकृतिप्रेरकधर्मवतः प्रलयोदकेऽनंताख्यशयनादुत्थाय विरमन्समाधिंकुर्वन् समाधिर्योगनिद्रालक्षणोयस्यसतथातस्य कथमिव वटवत् वटलक्षणोंकु

न्यस्येदमात्मनिजगद्विलयांबुमध्येशेषात्मनानिजसुखानुभवोनिरीहः ॥ योगेनमीलितदृगात्मनिवीतनिद्रस्तुर्येस्थितोननुतमोनुगुणांश्चयुंक्ते ३२ तस्यै
वतेवपुरिदंनिजकालशक्त्यासंचोदितंप्रकृतिधर्मिणआत्मगूढम् ॥ अंभस्यनंतशयनाद्विरमत्समाधेर्नाभेरभूत्स्वकणिकावटवन्महाब्जम् ३३ तत्संभवःक
विरतोन्यदपश्यमानस्त्वांबीजमात्मनिततंसबहिर्विचिन्वन् ॥ नाविंददब्दशतमप्सुनिमज्जमानोजातेंकुरेकथमिहोपलभेतबीजम् ३४

रोयथास्वकणिकात् उत्पत्स्यमानकणिकात् कणिकाख्यवटबीजादित्यर्थः नन्वयंविषमोदृष्टांतस्तथाहि कणिकानाम वटबीजविकारोहिवटाख्यांकुरः नचायंप्रकृतेसंभवति निर्विकारोक्षरःशुद्धइति
वचनादुच्यते स्वकणिकादितिलिंगव्यत्ययेनकश्चिद्विशेषोविज्ञायते कोयमितिचेदुच्यते कणिकानामादृश्यादेवतासर्वस्थावरबीजानामभिमानिन्यपिवटाश्वत्थबीजयोर्विशेषतः सन्निहितातस्तत्तद्बीजे
भ्यस्तदंकुरव्यंजनात्तत्प्रागपितत्रास्थित्वाजातेत्युच्यतेयथातथाश्रीहरेरपिप्रकृत्यादिस्वामित्वेनचतत्सन्निहितत्वेनचास्थितस्तत्कार्येष्वनुविष्टत्वेनजातइत्युच्यते आत्मनआकाशःसंभूतइत्यादौश्रुतत्वात्त
चापिवटबीजाद्वटांकुरस्यसाक्षादुत्पत्तिर्वटवृक्षिणश्चेतनस्यचेतनाभिमानादुत्पत्तिः उभयाभिमानिन्यादेवतायाअभिव्यंजकत्वेनाऽभिव्यक्तिस्तथायथायोग्यंसत्त्वतमोमिश्ररजोगुणान्जगदात्मनःपद्मस्य
साक्षादुद्भवः पद्मिनोहिरण्यगर्भस्याभिमानजननंहरेः पुरुषांतरेणाविर्भावइत्यादिकामिति स्थावराणांतुसर्वेषांदेवताभिमानिनी विशेषाद्वटबीजेचअश्वत्थेचव्यवस्थिता अदृश्याकणिकानाम
सावृक्षाद्व्यंजयत्यपि अतोबीजमितिप्रोक्तासाजातेप्यंकुरेस्थिता एवंहरिःकारणेषुस्थितःकार्यजनेरनु कार्याण्यनुप्रविष्टःसन्प्रथमतत्रदृश्यतइत्यनेनोक्तविशेषोविज्ञायतइतिनकापिशंकाकार्येति
तस्माद्दृष्टांतदार्ष्टांतिकयोरुपपत्तिरस्तीतियुक्तएवदृष्टांतः ३३ तत्रविरिंचस्यलोकपद्मलक्षणदेहाभिमानोत्पत्तिपूर्वंहरेर्वटबीजाभिमानिदेवतावददृश्यत्वप्रकटयंस्तस्यमीमांसामाह तत्संभवइतिपद्मस्य
प्रकृत्यात्मकत्वेनतस्मात्पद्मात्संभवोजननंयस्यसतथा लोकात्मकत्वेनतस्मिन्देहस्थानीयेऽभिमानसंभवोयस्यसतथा उभयोरप्यत्राविवक्षितत्वात् अतोज्ञादन्यद्वस्तुनपश्यन्नप्सुनिमज्जमानोनि

मज्यमूलंविचिन्वन्लोकेबीजादंकुरेजातेनष्टंबीजमिवपृथिव्यांकथमुपलभेत पुरुषइति तांचतांदर्शयन्नेवंविधःकविद्ब्रह्मात्मनिस्वस्मिन्नव्जांतस्तस्माद्बहिश्चविततंव्यंजकत्वाद्बीजदेवतावत् बीजसं
ज्ञत्वाभाविदन्नोपलब्धवानित्यन्वयः ३४ आत्मापरमात्मायोनिःकारणंयस्यसतथा तुशब्देनैकस्यहरेर्बहुधाजन्मास्तीतिविशेषंदर्शयति सएवब्रह्माअब्दशतसंज्ञितेनकालेनविचिंत्यविविधपृथिव्या
द्याधाराणामनुत्पन्नत्वादस्यकेनचिदाधारेणभवितव्यंलौकिकबीजनाशवत्नाशायोगात् सन्नापिनदृश्यतेकुतूहलमेतादिति अतिविस्मितोव्जमाश्रितस्तपेतिद्व्यक्षरंश्रुतवान् तपसाहंद्रष्टुंशक्तइत्य
नेनोक्तमभिजानन् तीव्रेणतपसापरिशुद्धांतःकरणोभूतेंद्रियाशयेजगतिविततंत्वामात्मनिस्वस्मिन् स्थितंददर्शेत्यन्वयः कथमिव भुविव्याप्तमतिसूक्ष्मंगधंगंधाख्यदेवतास्वरूपंयथापश्यतियोगीतथेत्यर्थः
गंधाख्यादेवतायद्वत्पृथिव्यांव्याप्यतिष्ठति एवंव्याप्तंजगद्विष्णुंब्रह्मात्मस्थंददर्शेहेतिवाक्यम् गंधशब्देनदेवताकथनंयुक्तमितिभावः ३५ यथासूक्ष्मरूपंदृष्ट्वामुमुदे तथाविराड्रूपमपि तयोरीषदपि
विशेषाभवादित्याह एवमिति अनेनब्रह्मांडशरीरीब्रह्मा पातालमेतस्यहिपादमूलमित्याद्युक्तम् यद्रूपमपश्यत्तदेवपद्मजोपीतिज्ञातव्यम् आत्मयोनिरितिविशेषणान्मायामयंज्ञानरूपम् अनिर्वाच्याविद्यामा
यानामेतिकिंनस्यादित्यत्राह सदिति आनंदादिलक्षणसमुदायरूपम् अथकस्मादुच्यतेसादितिसंतोह्यस्मिन्नानदओजोबलमितिस्पष्टश्रुतेः सन्निवेशश्चयःस्तोमःसमुदायोगणःस्मृतइत्यभिधानम् आनं

सत्वात्मयोनिरतिविस्मितआश्रितोऽब्जंकालेनतीव्रतपसापरिशुद्धभावः ॥ त्वामात्मनीशभुविगंधमिवातिसूक्ष्मंभूतेंद्रियाशयमयेविततंददर्श ३५ एवंस
हस्रवदनांघ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यम् ॥ मायामयंसदुपलक्षणसन्निवेशंदृष्ट्वामहापुरुषमापमुदंविरिंचः ३६ तस्मैभवान्हयशि
रस्तनुवंचबिभ्रद्वेदद्रुहावतिबलौमधुकैटभाख्यौ ॥ हत्वानयच्छ्रुतिगणांश्चरजस्तमश्चसत्त्वंतवप्रियतमांतनुमामनंति ३७ इत्थंनृतिर्यगृषिदेवझषावतारैर्लो
कान्विभावयसिहंसिजगत्प्रतीपान् ॥ धर्मंमहापुरुषपासियुगानुवृत्तंछन्नःकलौयदभवस्त्रियुगोथसत्वम् ३८ नैतन्मनस्तवकथासुविकुंठनाथसंप्रीयतेदुरि
तदुष्टमसाधुतीव्रम् ॥ कामातुरंहर्षशोकभयेषणार्तंतस्मिन्कथंतवगतिंविमृशामिदीनः ३९ जिह्वैकतोऽच्युतविकर्षतिमाऽवितृप्ताशिश्नोन्यतस्त्वगुदरंश्रव
णंकुतश्चित् ॥ घ्राणोन्यतश्चपलदृक्क्वचकर्मशक्तिर्बह्व्यःसपत्न्यइवगेहपतिंलुनंति ४० एवंस्वकर्मपतितंभववैतरण्यामन्योन्यजन्ममरणाशनभीतभीतम्
॥ पश्यञ्जनंस्वपरविग्रहवैरमैत्रंहंतेतिपारमतिपीपृहिमूढसत्त्वम् ४१

दादिलक्षणानांसन्निवेशोयस्मिन्सतथातम् गुणगुणिनोरभेदात्स्वरूपत्वंसिध्यति विज्ञानमानंदंब्रह्मेतिश्रुतेःलक्षणत्वज्ञापनायादिशब्देनज्ञानग्रहणम् ३६ रजस्तमःस्वभावावतिबलौवेदद्रुहौमधुकै
टभाख्यौहत्वाश्रुतिगणानानयत् आनीयास्मैविरिंचायावोचदितिशेषेणान्वयः अनेनैतत्सिद्धमभूदित्याह सत्वमिति ३७ चतुष्पदधर्मंपासि यस्त्वंकलौछन्नोऽभवइतियस्मात्तस्मात्सत्वंत्रियुगइतिख्यातः
३८ एवंहरेर्भक्तवात्सल्यंविज्ञाप्यस्वाशक्तिंविज्ञापयति नैतदिति यदेतन्मनस्तवकथासुनसंप्रीयतेतस्मिन्मनसितवगतिंकथंविमृशामीत्यन्वयः ईषणवित्तादीनामितिशेषः ३९ मनःसमाधानाभावा
दन्येंद्रियाण्यपिमत्पुरुषार्थविरुद्धानीत्याह जिह्वेति स्पर्द्धाभाषणशीलत्वाज्जिह्वा दुःसंगेनपुण्यश्लथनशीलत्वात्शिश्नः त्वचसंपर्कइतिधातोःदुःसंपर्कशीलत्वात्त्वक् उदात्ककुदंनमयतीत्युदरम् कर्म
शक्तिरित्यनेनकर्मेंद्रियाणिवागादीनिलक्षयति गेहपतिं देहस्वामिनम् अन्यत्रगृहपतिम् ४० स्वैःपरैश्चसहविग्रहलक्षणंवैरंविरुद्धाचरणं मैत्रंचपस्यतथातंजनपश्यन्नतस्तमसाभवस्यपारमतिपीपृ
हिअतिपारंगमयमूढसत्त्वंमूढभाणिनमसुरजातित्वात् तिर्यग्जातित्वात्तामसमिवस्थितंगजेंद्रपारंनीत्वायथाऽपालयस्तथापारंचप्रापय्यमांपालयेतिवा ४१

ममसंसारपारनेतृत्वंतवदुःशकंनेत्याह कइति हेअत्रअन्यमातुरहितभगवन् ममसंसारोत्तारणेतेतवकोनुप्रयासोनकोपि अत्रजीवराशौवा। कुतोनप्रयासइतितत्राह अस्येति अस्यजगतोभवोजन्म संभवःस्थापनेनसंभावनंलोपःसंहारोयेषांहेतोःकारणस्यास्यजगतउत्तारणेतवप्रयासोनास्तिममोत्तारणेकोन्विर्तिवा कुतइतितत्राह भवेति भवस्यसंसारस्यसंभवउत्पत्तिस्तस्यनाशहेतोस्तवकिंप्रकृतइ स्याशंक्यास्मद्धात्सल्यमंतरेणनकिमपिप्रयोजनंतवेत्याह मूढेष्विति गजेंद्रकल्पातिजनबंधोमूढेष्वस्मासुयोमहदनुग्रहस्तेनतवकिंप्रयोजनंनाकिमपीत्यर्थः ननुप्रयोजनाभावेकिमर्थंतथाकरणमित्याशंक्य स्वभावइत्याशयेनाह प्रियेति प्रियजनानुसेवमानस्त्वमितियत् सतवस्वभावइतिशेषः ४२ संसारभीरूणांससारवैतरण्युत्तरणोपायःकइत्याशंक्यनिरंतरवेदांतशास्त्रश्रवणमननादिर्येषामस्तितेषांतद्भ यंनास्ति अन्यथा नकदापितदुत्तरणमित्याशयेनाह नैवेति त्वचीर्थत्वद्विषयंवेदांतशास्त्रंतस्यगायनंश्रुत्वामत्वाव्याख्यानंव्याख्यापनचतदेवमहामृतंयत्तेनमत्तंहृष्टविवशंवाचित्तंयस्यसतथा एवं विधोहंसंसारवैतरण्यानैवोद्विजे । नबिभेमि एवशब्देनत्वत्तीर्थसेवाभावेसंसारकदनाद्बिभेमितत्संभवेनेत्ययोगव्यवच्छेदःक्रियते अनेनासंगतंप्रह्लादस्तवनमित्येतदपिपरिहृतं सत्स्वन्यत्रततोदयेतिव चनात् । इदंचभक्तिलक्षणमितिप्रकटयन्नाह शोचइति तेत्वत्तइंद्रियार्थेभ्योविषयेभ्योमायासुखंमाकृतमस्वरूपंसुखंयत्तदर्थंभरंकुटुंबभारम् ४३ स्वेतरेषुक्रियमाणाकृपास्वाश्रितेष्वेवक र्तव्या देवादिभिःक्रियमाणत्वादित्यभिप्रेत्याह प्रायेणेति देवामुनयश्चविजनेनैकांतस्थलेनसाधनेनसहिताःकाष्ठमौनादिव्रतंचरंति कीदृशाःस्वकीयानांजनानांविमुक्तिःस्यादितिस्वविमुक्ति

**कोन्वत्रतेऽखिलगुरोभगवन्प्रयासउत्तारणेस्यभवसंभवलोपहेतोः ॥ मूढेषुवैमहदनुग्रहआर्तबंधोकिंतेनतेप्रियजनाननुसेवमानः ४२ नैवोद्विजेभवदुरत्ययवैतरण्यास्त्वत्तीर्थगायनमहामृतमत्तचित्तः ॥ शोचेनुतंविमुखचेतसइंद्रियार्थमायासुखायभरमुद्वहतोविमूढान् ४३ प्रायेणदेवमुनयःस्वविमुक्तिकामामौनंचरंतिविजनेनपरार्थनिष्ठाः ॥ नैतान्विहायकृपणान्विमुमुक्षएकोनान्यंत्वदस्यशरणंभ्रमतोनुपश्ये ४४ यन्मैथुनादिगृहमेधिसुखंहितुच्छंकंडूयनेनकरयोरिवदुःखदुःखम् ॥ तृप्यंतिदेहकृपणाबहुदुःखभाजःकंडूतिवन्मनसिजंविषहेतधीरः ४५ मौनव्रतश्रुततपोध्ययनस्वधर्मव्याख्यारहोजपसमाधयआपवर्ग्याः ॥ प्रायःपरंपुरुषतेत्वजितेंद्रियाणांवार्ताभवंत्यपिनवात्रतुदांभिकानाम् ४६**

कामाः समहतांस्वभावइत्याह परेति परप्रयोजनतात्पर्योपेतादेवेषुतात्त्विकैर्विशेषतोमुनिषुकैश्चिदेवेतिविशेषप्रकाशनायप्रायेणेति तदुक्तं आश्रितेषुकृपाकार्याविशेषात्तात्त्विकैःसुरैः मुनिभिश्चतथाकै श्चित्कैश्चित्कार्याखिलेष्वपि तथापितात्त्विकसुराःकृपाविषयतांगताः एतएवविमुच्यंतेतदन्येनकथंचनेति यतोदेवादयोप्याश्रितेषुकृपांकुर्वंति अतोहमप्याश्रितानेतान्कृपणान्कृपाविषयान्विहायएको नविमुमुक्षेत्वमेकोमत्प्रसादेनमुक्तोभव अन्येन्येनवर्त्मनामुक्ताःसंत्वितितत्राह नान्यमिति स्वकर्मणानानायोनिषुभ्रमतोमामाश्रितजनस्यानुकूलंत्वदन्यंशरणंनानुपश्येइत्यन्वयः ४४ सुखानुभवार्थं हिमोक्षाकांक्षातच्छब्दादिविषयेभ्योपिस्यादतोऽजागलस्तनायितमोक्षसुखायकोवाप्रेक्षावान्महाप्रयत्नंकुर्यादुन्मत्तमंतरेणेतितत्राह यन्मैथुनादीति मैथुनादिगृहस्थसुखंयत्तल्लब्ध्वा देहकृपणादेह मात्रपोषणपरायणास्तृप्यंतिनान्येप्रेक्षावंतइतिशेषः । तदपिनसुलभमित्याह बहुदुःखेति तत्रबुद्धिमतैवंकार्यमित्याह कंडूतिवदिति मनसिजंकामम् ४५ मुमुक्षुभिःप्रथमतइंद्रियजयएवसमर्थनीयो न्यथामुक्तिसाधनानामपिमौनादीनांलोकेजीवनोपायमात्रत्वंभवतीत्याह मौनेति आपवर्ग्यामुक्तिहेतवःप्रायःसम्यग्भक्त्यानुष्ठिताइतिशेषः हेपुरुषपरंनचेत्तएवाजितेंद्रियाणांपुंसांवार्तास्तत्कालजीवन मात्रोपायाभवंत्युत अपिसंभावनायांत्रंनतुमुख्यतइत्यर्थः लोकमोहनार्थंमौनादिकमनुतिष्ठतांदांभिकानांतदपिनसेत्स्यतीत्याह अत्रजीवलोकेवा यथाअजितेंद्रियाणांजीवनमात्रोपायानतथादांभिका नांभवंतीति वाविकल्पोपमानयोरित्यभिधानं नवाभवंतीत्येकंवाक्यमितिवा ४६

१ जीवनमात्रोपायानां तथेति पाठान्तरम् ।

मौनादीनांक्रियासाध्यत्वेनासर्वाधिकारिकत्वात् सर्वाधिकारिकोपासनाविषयंनिरूपयति रूपेइति इमेसदसतीकार्यकारणेतवरूपे स्वद्वशत्वात्स्वसन्निधानयोग्ये अत्रप्रमाणमाह वेदेति द्वावेवब्रह्मणो
रूपेइत्यादौकार्यकारणत्वंकिंविकारभावेनानैमित्तनैमित्तिकभावेन वेत्याशंक्य यथायोग्यमित्यूहनीयमित्यत्रदृष्टांतमाह बीजेति व्याख्यातमेतत्विज्ञानमानंदंब्रह्मेतिवत् वेददृष्टेचेत्किंसाक्षाद्रूपेइतिने
त्याह नचेति अन्यद्विलक्षणंज्ञानानंदादिलक्षणंनैव । कुतोत्राह अरूपकस्येति प्राकृतरूपाभावादित्यर्थःमहतांप्रत्यक्षंचात्रप्रमाणमित्याह युक्ताइति भक्तियोगेनोभयत्ररूपद्वये युक्ताउपासनालक्षणध्या
नेनेतिशेषः युक्तायोगिनः उभयत्रसन्निहितंत्वांपश्यंतीतिवा दर्शनप्रकारमाह वह्निमिति योगेनमथनाद्युपायेन अन्ययोगंनिवारयति नान्यतइति भक्तियोगादन्यतोन्येनेति ॥ साक्षात्स्वरूपादन्यत्प्रा
कृतंरूपंनैव अरूपमक्षरंब्रह्मेतिश्रुतेः अतोनसाक्षाद्रूपेइतिवायोजना साक्षात्स्वरूपापेक्षयास्वरूपादन्यद्रूपंनेत्याचार्यविवरणमत्रप्रमाणं ४७ केतेकार्यकारणेइत्यतस्तन्नामनिर्देशः तत्सत्ताप्रदत्वेनतद्वश
त्वेतद्रूपत्वाभिप्रायइत्याशयेनाह त्वमिति चिदनुग्रहश्चेतनस्तन्मनसावचसानिरुक्तं नत्वदन्यत् त्वांविनाप्रवृत्तिमन्नास्ति सगुणःसंसारीशौक्ल्यादिगुणयुक्तोवा विगुणोमुक्तउत्पन्नानंतरक्षणविशिष्टपदा
र्थोवा ४८ पृथिव्यादिमहत्तत्त्वांतंपदार्थजातंकार्यकारणात्मनाद्विरवेनकोडीकृतं भगवद्रूपंततोभिन्नमित्युक्तं इदानींतदवस्थितपरमात्मानंतदभिमानिनोदेवाअपिसाकल्येन नजानंतीत्येवंविधानतमाहा
स्म्यांबुराशिरितिनिश्चित्य तमुपासतेसंतइत्याह नेति गुणाःसत्त्वादिगुणाभिमानिनः गुणिनोगुणविकाराः सहदेवमर्त्याइत्यत्रदेवशब्देनपृथग्विग्रहवंतइंद्रादयोगृह्यंते सुधियोनिश्चितशास्त्रार्थाः शब्दाद्व

रूपेइमेसदसतीतववेददृष्टेबीजांकुराविवनचान्यदरूपकस्य ॥ युक्ताःसमक्षमुभयत्रविचिन्वतेत्वांयोगेनवह्निमिवदारुषुनान्यतःस्यात् ४७ त्वंवायुरग्निरव
निर्वियदंबुमात्राःप्राणेंद्रियाणिहृदयंचिदनुग्रहश्च ॥ सर्वंत्वमेवसगुणोविगुणश्चभूमन्नान्यत्त्वदस्त्यपिमनोवचसानिरुक्तम् ४८ नैतेगुणानगुणिनोमहदादयो
येसर्वेमनःप्रभृतयःसहदेवमर्त्याः ॥ आद्यंतवंतउरुगायविदंतिहित्वाएवंविमृश्यसुधियोविरमंतिशब्दात् ४९ तत्त्वेमनोदर्शनेदृगपिस्तुतौचवाक्कर्मणिह्यपि
करौश्रवणंकथायाम् ॥ संसेवयात्वयिविनेतिषडंगयाकिंभक्तिंजनःपरमहंसगतौलभेत ५० ॥ नारदउवाच ॥ एतावद्वर्णितगुणोभक्त्याभक्तेननिर्गुणः ॥
प्रह्लादंप्रणतंप्रीतोगतमन्युरभाषत ५१ ॥ श्रीभगवानुवाच ॥ प्रह्लादभद्रभद्रंतेप्रीतोहंतेसुरोत्तम ॥ वरंवृणीष्वाभिमतंकामपूरोस्म्यहंनृणाम् ५२

दादिशब्दराशिप्रमाणादेतेआद्यंतवंतस्त्वांनविदंतीत्येवंविमृश्यविचार्योपास्यतत्प्रसादेनसहदश्यविरमंतिसंसारादितिशेषः यद्वाचानभ्युदितमित्यादिश्रुतेः शब्दाद्विरमंतीत्यत्रशब्दत्यागोनार्थः किंतु
वेदेनानिर्णीततत्त्वस्यतत्त्वेनिरंतरस्यंदमानबुद्धिजलराशेःपुंसोहरिगुणानुस्मरणायासोनास्तीतिवा ४९ श्रीनारायणप्रसादएवपुरुषार्थसाधनमित्युक्त तस्यभक्तिज्ञाने तयोश्चषडंगोपासनासाध्यंध्यानंवि
नानान्यदन्यथानस्यादित्याशयेनाह तत्त्वइति हिशब्देनान्यथाजीवञ्छववदित्याह ॥ अपिशब्दात् पादौतवक्षेत्रानुगमनेनियोज्यावितिग्राह्यं एवंषडंगयासेवयाविनाजनोमुमुक्षुःपरमहंसानांगतावाश्रयभू
तेत्वयिभक्तिंज्ञानंचलभेतकिं साधनांतराभावान्नाप्नोतीत्यन्वयः भक्तिज्ञानयोर्हेतुहेतुमद्भावादेकग्रहणेनद्वयोर्ग्रहणंयुज्यतइतिभावः परापूर्वेषांसख्यावृणक्तीतिश्रुतेः ५० हरेरसुरेषुप्रद्वेषाशयात्प्रह्लादस्या
पितज्जातित्वेनतस्तुत्याकोपोपशमःस्यात्किं । प्रत्युताक्षेपकरत्वेनाग्नौशुष्केंधनप्रक्षेपणवज्ज्वलनायस्यादितितत्राह एतावदिति योग्यतानुकूल्येनभक्त्याभक्तेनेतिविशेषणद्वयेनशंकानिरस्ते
तिज्ञातव्यं जातित्वमप्रयोजकंभक्तिरेवेतिसूचनेनदेवदत्तवदुन्मत्तोनभवतिभगवानितिसिद्धं ५१ मन्युशांतेःकिंगमकमितितत्राह प्रह्लादेति वरदानसामर्थ्येहेतुमाह कामपूरइति नृणा भक्तानामितिशेषः ५२

मत्प्रसादएवदर्शनेकारणमित्याह मामिति मामप्रीणतोऽप्रीणयतः मद्दर्शनफलंचपांथदर्शनवन्नेत्याह दृष्ट्वेति ५३ यतोनतप्रान्तैश्यात्स्माद्धीरामाधवंमांप्रीणंतिप्रीणयंति केनसर्वभावेनपूर्णभक्त्या माधवइत्यस्यार्थौ मंगलदेवतापतिरित्यभिप्रायेणाह सर्वेषामिति सर्वेषामविशेषेणयायाअभिलषिताआशिषस्तासांतासामाशिषांपतिंपातृत्वेनदातारमित्यर्थः ५४ प्रह्लादोपिसामान्यभक्तोनभवति किंतुभक्तोत्तमइतिप्रकटनायभगवताविप्रलुब्धोपितान्वरान्नैच्छदित्याह एवमिति एकांतित्वान्नैसर्गिकभक्तत्वात् ५५ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधे वि०टी०नवमोध्यायः ॥ ९ ॥ ७ ॥ अस्मिन्नध्यायेभक्त्यैवपुरुषार्थोनद्वेषेणेत्येतत्प्रतिपादनंपुनःपुनर्भक्तेःप्राधान्यज्ञापनायान्यदासुरमोहनायेतितात्पर्यं वरानानिच्छन्प्रह्लादोहरिंकिप्रत्युवाचेतिहार्दंयुधिष्ठिरप्रश्नंपरिहरन्नारदस्तत्रवक्तीत्याह नारद इति वयसार्भकोनतुज्ञानेनेत्येतद्विशेषप्रकाशनायहेतिविशेषणं हिहेतावित्यमरः १ ज्ञातसर्वेंद्रियवृत्तित्वाद्धृषीकेशेनत्वयामन्मनोगतंज्ञातमितियदतोमनःपरीक्षणार्थंएतैर्मेनःप्रलोभनंनकुर्विंतिप्रार्थ यतइत्याशयेनाह मामेति । गुरुवचनमज्ञातेष्टबोधकत्वेनप्रमाणंस्यादिदंस्वभावतएवाज्ञातेष्टबोधकत्वाद्व्यर्थमिवप्रतिभातीत्याशयवानाह उत्पत्त्येति आसक्तामितिलोकवृत्तांतप्रदर्शनपरम् । प्रह्लादस्यार्भकावस्थामारभ्यविष्णुधर्मैकनिष्ठत्वात् यतोविषयसंगिनामनर्थपरंपराहश्यतेततस्माद्विषण्णः । विषायिणोविषयासिद्धयातात्कालिकप्रसूतनिर्वेदवन्नायंनिर्वेदइत्याह मुमुक्षुरिति अनेनप्रह्लादस्याधिकारलक्षणसामग्रीविद्यतइतिदर्शितम् २ ननुभगवद्वाक्यंकापिविप्रलंभकंनभवतिअजस्यावक्रचेतसइतिश्रुतेः भवतातथैवप्रोच्यते तथाचभगवद्वाक्यस्याविश्वसनीयत्वंस्यादितितत्राह भृत्येति

मामप्रीणतआयुष्मन्दर्शनंदुर्लभंहिमे ॥ दृष्ट्वामांनपुनर्जंतुरात्मानंतप्तुमर्हति ५३ प्रीणंतिह्यथमांधीराःसर्वभावेनमाधवम् ॥ श्रेयस्कामामहाभागाःसर्वेषामाशिषांपतिम् ५४ ॥ नारदउवाच ॥ एवंप्रलोभ्यमानोपिवरैर्लोकप्रलोभनैः॥ एकांतित्वाद्भगवतिनैच्छत्तानसुरोत्तमः ५५ इतिश्रीभागवतेसप्तमस्कंधेप्रह्लादस्तुतिर्नामनवमोध्यायः ॥ ९ ॥ नारदउवाच ॥ भक्तियोगस्यतत्सर्वमंतरायतयार्भकः ॥ मन्यमानोहृषीकेशंस्मयमानउवाचह १ ॥ प्रह्लादउवाच ॥ मामाप्रलोभयोत्पत्त्यासक्तंकामेषुतैर्वरैः ॥ तत्संगभीतोनिर्विण्णोमुमुक्षुस्त्वामुपाश्रितः २ भृत्यलक्षणजिज्ञासुर्भक्तंकामेषुचोदयात् ॥ भवान्संसारबीजेषुहृदयग्रंथिषुप्रभो ३ नान्यथातेखिलगुरोर्घटतेकरुणात्मनः ॥ नष्टदृष्टस्तमस्यंधेत्वंपारःपारदर्शिनः ४ यस्तआशिषआशास्तेनसभृत्यःसवैवणिक् ॥ सवैस्वामीसवैभृत्योगुणलुब्धौनकामुकौ ५ आशासानोनवैभृत्यःस्वामिन्याशिषआत्मनः ॥ नस्वामीभृत्यतःस्वाम्यमिच्छन्योरातिचाशिषः ६

चोदयात् चोदयाति धियोयोनःप्रचोदयादितिश्रुतेः ३ वंचनार्थमेवतथोच्यतइतिकिंनस्यादत्राह नान्यथेति अखिलगुरुत्वान्यथानुपपत्त्यानवचनंयुक्तमित्यर्थः इतोपिभृत्यलक्षणजिज्ञासैवप्रयोजनंत्वद्वचनस्यान्यथातवेष्टजनघातकत्वदोषापत्तिःस्यात् सानिर्दोषत्वेननयुक्तेत्याशयवानाह नष्टेति नकेवलमितरगुरुवन्मार्गमात्रप्रदर्शकःकिंतुगम्यंचातोविप्रलोभनंनयुक्तमतोवाह नष्टेति पारदर्शिनःपारंचांतंद्रष्टुमिच्छतः ४ ननुमत्त्आशिषकामायाशीर्दानवचनमस्तुनामप्रलोभनं तत्कामुकस्याभीष्टदानावचनेऽनाकांक्षिताभिधानंस्यादितितत्राह यस्तइति तेतवसकाशात् आशिषःसंपदःसेवायाः तर्हिंसकइतितत्राह सइतिवनषणसंभक्ताविितिधातोः संभजनंविक्रेयंद्रव्यंप्रसार्यदानलक्षणं तत्कर्तावणिग्वै । हिअयंचाकिंचित्सुकृतकरणलक्षणदानेनभवादृशाज्जनात्पुण्यलक्षणफलादानंकरोतीति यस्मात्तस्माद्वणिगित्यर्थः आशास्तेइच्छति अनेनफलदस्यस्वामित्वंचविघटितंभवतीतिदर्शितंतर्हिकयोःस्वामिभृत्यभावइतितत्राह सवाइति लुभगार्ध्यइतिधातोः भक्त्यादिगुणोद्रेकाकांक्षिणौगुणलुब्धौमिथःफलानिनकामुकौ ५ ननूभयोःफलकामित्वेकोदोषइतितत्राह आशासानइति स्वामिनिसमवेताआशिषआत्मनःस्वस्याशासानोयःसभृत्योनवैनैव किंतुप्रतिभटएव वरदानादिनाभृत्यात्स्वस्यस्वामित्वमिच्छन्योभृत्यायाशिषोरातिददातिसस्वामीनच । कल्पितस्वामित्वेनतच्छब्दस्यमुख्यार्थालाभात् ६

भक्तेर्वेकिंमर्भूदितितत्राह अहंत्विति अनपाश्रयोभृत्यमाप्यफलानाश्रयः स्वामीअव्याहतस्वामीत्यर्थः एतदेवद्रढयति नान्यथेति निष्कामत्वेनभृत्यत्वंमम अनपाश्रयत्वेनस्वामित्वंतव एतस्मा
दन्यथाप्रकारांतरेणावयोरर्थोनास्ति किंतत्प्रकारांतरंतत्राह राजेति इहलोकेयथाराज्ञःसेवकस्यचस्वाज्ञानतिलंघनप्रीत्यादिलक्षणश्चेतनादिलक्षणस्वार्थोऽस्ति तथेति ७ ननुशास्त्रेषुप्रतिपाद्यमानसेव्यसे
वकभावोज्ञातृज्ञेयभावोदातृस्वीकर्तृभावइत्यादिसंबंधिसंबंधलक्षणार्थसंभवादावयोरर्थोनास्तीतिनिषेधःकथंक्रियतइत्याशंकांपरिहर्तुमाह यदीति नान्यथेश्वरभाषितमितिवचनात् भवदुक्त अन्यथा
माभूदितिमीत्याचतंवृणइत्यतोवाह यदीति रादानइतिधातुः काम्यंतइतिकामाः अभिमताएववरास्तान्कामानांविषयाणाअसंरोहंसम्यगनुत्पादंनामवरवृणइत्यन्वयः ८ केनदोषेणतेषामनुत्पा
दःप्रार्थ्यतइतितत्राह इंद्रियाणीति येषांकामानांविषयाणांजन्मनाइंद्रियादयोनश्यंतितेषामितिशेषः सर्वेंद्रियाणाजरयतितेजइतिश्रुतेः आत्माभाक्तिः ९ ननुकामासंरोहोनामकाममोक्षोविवक्षित
स्तस्मात्किंफलमितितत्राह विमुंचतीति भवायपुनर्जननाय १० भवन्नमनादिलक्षणाभक्तिश्चतत्फलमित्याह नमइति भगवतइत्यनेनकिंचित्पूज्यमात्रवस्तुसिध्यत्यतःपुरुषायेत्यनेनापिकाश्चिदेवे

अहंत्वकामस्त्वद्भक्तस्त्वंचस्वाम्यनपाश्रयः ॥ नान्यथेहावयोरर्थोराजसेवकयोरिव ७ यदिरासीशमेकामान्वरांस्त्वंवरदर्षभ ॥ कामानांहृद्यसंरोहंभवत
स्तुवृणेवरम् ८ इंद्रियाणिमनःप्राणाआत्माधर्मोधृतिर्मतिः ॥ ह्रीःश्रीस्तेजःस्मृतिःसत्यंयेषांनश्यंतिजन्मना ९ विमुंचतियदाकामान्मानवोमनसिस्थितान् ॥
तर्ह्येवपुंडरीकाक्षनभवायावकल्पते ॥ नारदेनोपदिष्टंमेतवमंत्रमिमंस्मरे १० ओंनमोभगवतेतुभ्यंपुरुषायमहात्मने ॥ हरयेऽद्भुतसिंहायब्रह्मणेपरमात्मा
ने ११ ॥ श्रीनृसिंहउवाच ॥ नैकांतिनोमेमयिजात्विहाशिषआशासतेऽमुत्रनताभवादृशाः ॥ तथापिमन्वंतरमेतदत्रदैत्येश्वराणामनुभुंक्ष्वभोगान्
१२ कथामदीयाजुषमाणःप्रियास्त्वमावेश्यमामात्मनिसंतमेकम् ॥ सर्वेषुभूतेष्वधियज्ञमीशंयजस्वयोगेनचकर्महिन्वन् १३ भोगेनपुण्यंकुशलेनपा
पंकलेवरंकालजवेनहित्वा ॥ कीर्तिंविशुद्धांसुरलोकगीतांवितायमामेष्यसिमुक्तबंधः १४ यएतत्कीर्तयेन्मह्यंत्वयागीतमिदंनरः ॥ त्वांचमांचस्मरन्का
लेकर्मबंधाद्विमुच्यते १५ ॥ प्रह्लादउवाच ॥ वरंवरयएतत्तेवरदेशान्महेश्वर ॥ यदनिंदत्पितामेत्वामविद्वांस्तेजऐश्वरम् १६ बद्धामर्षाशयःसाक्षात्स
र्वलोकगुरुंप्रभुम् ॥ भ्रातृहेतिमृषादृष्टिस्त्वद्भक्तेमयिचाघवान् १७

स्यतोमहात्मनइति क्वोसावित्यतोहरयइति हरिशब्दस्यानेकार्थत्वादत्रकइत्यतोऽद्भुतेति तिर्यक्प्राणिनात्वयाकिंस्यादित्यतोब्रह्मणेइति अस्याप्यनेकार्थत्वादत्रकइत्यतःपरमात्मनइति ११ अह
त्वकामइत्येकांतभक्तलक्षणंयत्त्वयोक्तंतत्सत्यंतथापिमदाज्ञाकारिणस्तवपुण्याभिवृद्धिःस्यादतएतत्कर्तव्यमित्याह नैकांतिनइति किंतदितितत्राह तथापीति १२ ननु कर्दमजलस्नानानिच्छयाहं
तावंतंकालंमयाकंठशोषणमकारि तदरण्यरोदनवद्व्यर्थमभूद्यतस्त्वंतत्रैवस्नाहीत्युपदिशस्यतस्त्वदाज्ञानुल्लंघ्यात्त्वमेवजानासीतिशंकारोगनिर्मूलनायसुखसाध्यमौषधंविधास्यामीत्याशयवानाह क
थाइति बहुवचनेनसर्वावतारादिकथाउपलक्षयति भूतेष्वित्युपलक्षणंचरुपुरोडाशादिष्वपियज्ञमूर्तिंसन्निहितइतियोगेनभक्तियुक्तध्यानेनहिन्वन्नाशयन् १३ नन्वेतावतामममिकं कालांतरभाविनीत्वत्मा
प्तिःस्यादेवेत्याह भोगेनेति युक्तावनभिमतंपुण्यंभोगेनक्षपयित्वाप्रायश्चित्तादिकुशलकर्मणापापंनिर्मूलयित्वा वितायविस्तृत्य १४ मयातवोक्तयोगकरणाशक्तस्यानायाससाध्यंयोगमुपदिशामी
त्युपसंहरति यइति मह्यंमामुद्दिश्य युक्तकाले १५ अभिमतमित्युक्तत्वादिमंत्वदभिमतंवरंवृणेइत्याह वरमिति तेसकाशात्अनेनदातृस्वीकर्तृभावसंबंधोस्तीतिज्ञायते १६ १७

शुद्ध्यर्थंसाधनांतरानुष्ठानंनापेक्षितमित्याह पूतइति १८ नकेवलमयमेवपितापूतःकिंतुजन्मांतरेपिविद्यमानाः पितरःपूताःस्युरित्याशयवानाह त्रिःसप्तभिरिति॥ सावित्रिशुद्धिर्मत्कटाक्षपात्रीभूतस्त्वज्जन्मनेत्याहयत्साधोस्यति १९ एतन्न्यायमन्यत्रातिदिशति यत्रेति कीकटाइतिपाठेआभीराइत्यर्थः २० ननुत्वद्भक्तानामेवंविधमाहात्म्यंकस्मादित्याशंक्यतपोवृद्धिक्षयहेतुहिंसाद्यभावादित्याह सर्वात्मनेति । सर्वात्मनायदपिकिंचनक्रकलासादिकमपि तस्मात्प्राणभूतःप्राणंनाविंच्छिद्यादपिकृकलासस्येतिश्रुतेः तत्रनिमित्तमाह मद्भावेनेतिईश्वरोजीवकलयाप्रविष्टइतिवचनात् सर्वत्रममभावःसत्तास्तीतिभावोभावनानिरंतरानुस्मरणंतेनगतस्पृहाः नष्टस्पर्द्धाः । हिंसायाःकारणंनिमित्ताभावान्नैमित्तिकाभावइत्यर्थः २१ इहलोकेयेमद्भक्ताःपुरुषाभवंतिविधंतेतेनहिंसंतीत्यन्वयः मद्भक्तेष्वपितववि शेषोस्तीत्याहभवानिति प्रतिरूपधृक्दृष्टांतस्थलभूतःखलुशब्देनकांश्चिन्निषिध्यावशिष्टानांसर्वेषामित्यर्थोप्रत्यक्षतेतेनयावत्तावादित्यर्थः । अतेतुतान्विकान्देवान्नारदादींस्तथैवच प्रह्लादादुत्तमःकोनुविष्णुभक्तजगत्रयइतिवचनात् निषेधवाक्यालंकारजिज्ञासानुनयेखल्वित्यभिधानम् २२ मत्पिताभगवद्द्वेषीतिमत्वातत्प्रेतकार्याणिनकरोमीतिमतिर्माभूत् श्रौतंस्मार्तंनलंघयेदितिवचनात् मदाज्ञयातान्यपि

तस्मात्पितामेपूयेतदुरंताद्दुस्तरादघात् ॥ पूतस्तेपांगसंदृष्टस्तदाकृपणवत्सल १८ श्रीभगवानुवाच ॥ त्रिःसप्तभिःपितापूतःपितृभिःसहतेनघ ॥ यस्साधोस्यकुलेजातोभवान्वैकुलपावनः १९ यत्रयत्रचमद्भक्ताःप्रशांताःसमदर्शिनः ॥ साधवःसमुदाचारास्तेपूयंत्यपिकीकटान् २० सर्वात्मनानहिंसंतिभूतग्रामेषुकिंचन ॥ उच्चावचेषुदैत्येंद्रमद्भावेनगतस्पृहाः २१ भवंतिपुरुषालोकेमद्भक्तास्त्वामनुव्रताः ॥ भवान्मेखलुभक्तानांसर्वेषांप्रतिरूपधृक् २२ कुरुत्वंप्रेतकार्याणिपितुःपूतस्यसर्वशः ॥ मदंगस्पर्शनेनांगलोकान्यास्यतिसुप्रजाः २३ पित्र्यंचस्थानमातिष्ठयथोक्तंब्रह्मवादिभिः ॥ मय्यावेश्यमनस्तातकुरुकर्माणिमत्परः २४॥ नारदउवाच ॥ प्रह्लादोपितथाचक्रेपितुर्यत्सांपरायिकम् ॥ यथाहभगवान्राजन्नभिषिक्तोद्विजोत्तमैः ॥ प्रह्लादस्तुतथाकार्षींद्राज्यंनिहतकंटकम् २५ प्रसादसुमुखंदृष्ट्वाब्रह्मानरहरिंहरिम् ॥ स्तुत्वावाग्भिःपवित्राभिःप्राहदेवादिभिर्वृतः २६ ॥ ब्रह्मोवाच ॥ देवदेवाखिलाध्यक्षभूतभावनपूर्वज ॥ दिष्ट्यातेनिहतःपापोलोकसंतापनोसुरः २७ योसौलब्धवरोमत्तोनवध्योममसृष्टिभिः॥ तपोयोगबलोन्नद्धःसमस्तनिगमानहन् २८ दिष्ट्यास्यतनयःसाधुर्महाभागवतोर्भकः ॥ त्वयाविमोचितोमृत्योर्दिष्ट्यात्रातस्त्वयाधुना २९

कर्तव्यानि नावैष्णवायदातव्यंनोदाबिंदुंनतंडुलमित्येतदसंबंधीविषयत्वेनसावकाशमित्याशयेनाह मदंगेति सुप्रजाःसुपुत्रः २३ पितृमेधंकृत्वाविरज्यवनंनव्रज किंतुराज्यंकुर्वित्याह पित्र्यमितिराज्यंकुर्वन्पितृवल्लोकोपद्रवंनकुरु किंतुब्रह्मवाद्युक्तधर्मेणेत्याह यथोक्तमिति नतावतापूर्यतेऽन्यच्चावश्यकमित्याह मयीति कर्माणिसामादिविषयाणिपूजादीनिवा २४ भगवदाज्ञानुल्लंघनेनभगवत्प्रीतिःस्यादितिकृत्वातदाज्ञाकरणप्रकारमाह ॥ नारदइति ॥ सांपरायिकंपारलौकिकम् २५ तत्रागतेषुदेवेष्वेकतमेनापिसह्लादोहरेरभूत्रवा आद्येकेन द्वितीयेदैत्येभ्यएषांकोविशेषः किंचसेव्यसेवकादिभावाभावेनब्रह्मविद्याविकारोप्युत्पादितःस्यादित्याशंकांपरिहरति प्रसादेति देवादिभिर्वृतइत्यनेनतैरपिस्वच्छंदवचनंकृतमितिज्ञातव्यम् २६ दिष्ट्यासुखमभूत् २७ ममसकाशात्सृष्टंसर्जनमेषामस्तितेसृष्टिनस्तैर्मयासृष्टैरित्यर्थः २८ दिष्ट्यासज्जनसुखहेतुतः अधुनातस्मैदिष्ट्यासुखलक्षणोवरोदत्तइतिशेषः २९

अनेनत्रपुत्रानकेवलंदैत्यहननमेवप्रयोजनंकिंत्वन्यच्चास्तीत्याह एतदिति ३० एवंस्तुतोभगवान्कमनुग्रहमकार्षीत्तेषामितितत्राह श्रीभगवानिति निसर्गतःक्रूराणां अमृतंपयः देवान्नेसलिलेक्षीरेत्वमृतंनं। विमुक्तिंगइति अत्रहिरण्यकशिपुमंतरेणान्येषांनदातव्यइत्याज्ञाक्रियते नत्वस्यहि। यथाहिरण्यकस्यादादंतःस्थितहरीरितइत्यादिनास्वप्रेरितत्वावगमादिति ३१ मद्गृत्यानामपियोग्यप्रत्यक्षत्वेहरेरूप पुर्पारिज्यवहारेणघ्यायंतिदेवमनुष्याइतिश्रुतेः देवस्वभावोयःसविहितः स्यादितिमत्वा तद्रक्षणार्थं तद्विग्रहेणादृष्टोभूदित्याह नारदइति सर्वभूतानामदृश्यइत्यनेनभक्तानुकंपित्वंप्रदर्शितम् ३२ अनंतरं प्रह्लादेनब्रह्मादयोदेवाःसत्कृताउतात्मनोभगवदनुग्रहपात्रत्वेनाहंभावेनधिक्कृताः आद्येवैष्णवाचारःप्रवर्तितःस्यात्द्वितीयेभगवच्छिक्षणंगजस्नानवत्स्यादितितत्राह ततइति भगवतःकलालेशायेषुतेतथा भगवतोभिन्नांशावा ३३ भगवच्चित्तज्ञेनब्रह्मणावेदमन्त्वग्राहीत्याह ततइति अनेनभक्तेनभगवद्भक्तेपुयथायोग्यंप्रेमकर्तव्यमितिशास्त्राचारोदर्शितः ३४ प्रह्लादवरदानानंतरंभगवतास्वाचारत्वेनयद्दर्शन मकारितदस्माभिरप्यनुष्ठेयमितिकृत्वा ब्रह्माद्याअपिस्वगृहान्ययुरित्याह प्रतिनंद्येति ३५ इदानींविशकलितोक्तमर्थंनिक्षिप्योपसहरति एवमिति हृदिस्थितेनवैरभावेनहेतुनाहरिणाहतौ ३६ ३७ प्राक्तन

एतद्वपुस्तेभगवन्ध्यायतःप्रयतात्मनः ॥ सर्वतोगोप्तृसंत्रासान्मृत्योरपिजिघांसतः ३० ॥ श्रीभगवानुवाच ॥ मैवंविधोसुराणांतेप्रदेयःपद्मसंभव ॥ वरः क्रूरनिसर्गाणामहीनाममृतंयथा ३१ ॥ नारदउवाच ॥ इत्युक्त्वाभगवान्राजन्ततश्चांतर्दधेहरिः ॥ अदृश्यःसर्वभूतानांपूजितःपरमेष्ठिना ३२ ततःसंपूज्यविधिवद्भवंदेपरमेष्ठिनम् ॥ भवंप्रजापतीन्देवान्प्रह्लादोभगवत्कलाः ३३ ततःकाव्यादिभिःसार्द्धंमुनिभिःकमलासनः ॥ दैत्यानांदानवानांचप्रह्लादमकरोत्पतिम् ३४ प्रतिनंद्यततोदेवाःप्रयुज्यपरमाशिषः ॥ स्वधामानिययूराजन्ब्रह्माद्याःप्रतिपूजिताः ३५ एवंतौपार्षदौविष्णोःपुत्रत्वंप्रापितौदितेः ॥ हृदिस्थितेनहरिणावैरभावेनतौहतौ ३६ पुनस्तौपूर्वंशापेनराक्षसौतौबभूवतुः ॥ कुंभकर्णदशग्रीवौहतौतौरामविक्रमैः ३७ शयानौयुधिनिर्भिन्नहृदयौरामसायकैः ॥ तच्चित्तौजहतुर्देहंयथाप्राक्तनजन्मनि ३८ ताविहाथपुनर्जातौशिशुपालकरूषजौ ॥ हरौवैरानुबंधेनपश्यतस्तेसमीयतुः ३९ एनःपूर्वकृतंयत्तद्राजानःकृष्णवैरिणः ॥ जहुस्तेतेतदात्मानःकीटाःपेशस्कृतोयथा ४०

जन्मनिजयविजयशब्दवाच्यौ पूर्वजन्मनियथातच्चित्तौतथात्रापीतिशेषः हिरण्यकशिपुर्हिरण्याक्षाख्यौपूर्वजन्मनियथातथेतिवा ३८ वैरानुबंधेनवैरोपसर्जनेनानुबंधेनस्नेहेनसमीयतुर्हरिमितिशेषः तत्रासुरौतमईयतुरित्यनुसंधेयं सम्यक् भक्त्यैवश्रीहरिप्राप्तिः तदभावेनतमएवेतिद्योतनायसमित्युपसर्गः मधुकैटभौभक्त्यभावादूरौभगवतोमृतौ तमएवक्रमादाप्तौभक्त्याचैद्योहरिंययौइतिवचनात् ३९ अन्येषामपिसद्भावादेतदुपलक्षणार्थंमुक्तमित्यभिप्रेत्याह एनइति अत्रापिवैरानुबंधेनेत्यनुवर्तते येराजानः पौंड्रकादिशब्दवाच्यास्तेष्वसुरदेहेष्वात्मारूपविशेषोयेषांतेतथा तत्रापितस्मिन्कृष्णेआत्माचित्तंयेषांतेतथा तदनुष्ठितपुण्यफलस्वीकारार्थंतत्राविष्टास्तद्भक्ताइत्यर्थः तेभक्त्यैवयत्पूर्वंकृततत्संबंधाप्राप्तमेनःपापंतज्जहुः तद्धित्वाहर्याज्ञाकरणप्राप्तपुण्यप्रचयेनतंहरिमीयु. तएवकृष्णवैरिणोनादिकालमारभ्यभगवद्द्वेषिणःकृष्णाश्च तामसाश्चवैरिणःवैरिरूपिणोराजानोराजसाः तमःप्रकृतयोदैत्याः तदात्मानोद्वेषरूपिण.तेजन्मप्रभृतिचैद्यपदेनः तेनपापेनवैरानुबंधेननिरंतरवैरिचिंतयापूर्वकृतंब्रह्मणापूर्वक्षमंतमोजहुर्जग्मुरित्यन्वयः ओहाङ्गतावितिधातुः इतिसखेकहास्त्वन्यस्यसमुकुलंतुरंप्रवेकेहास्ते(?)इतिप्रयोगश्च अंतेभक्त्यादिसाधनसाध्यनंतरं। इतरत्रद्वेषपूर्त्यनंतरमित्यन्नतस्यतावद्देवाचिरामितिश्रुतेः अने

चैविन्महत्पुण्यंकर्मकरोतितद्धास्यांततःक्षयितइत्याशंक्य। कीटःपेशस्कृतंचिंतनयापेशस्कृताकारमाप्नुवंति नतुतदात्मत्वं अत्रप्रमाणं पौंड्रकेनरकेचैवशाल्वेकंसेचरुक्मिणि आविष्टास्तेहरेर्भक्तास्तद्भक्त्याह रिमीयिरे असुरास्तुस्वयंतेतुमहातमसिपातिताइतिवाक्यम् ४० अत्रापितारनम्यमस्तीत्याह यथेति भिदांविशेषं भेदोविशेषेदलनइत्यभिधानं अभिदामसंप्रज्ञातसमाध्यवस्थांयपुरितिवा साम्यंनिर्दोषत्वा दिचतुर्भुजलक्षणं अन्यथाकीटःपेशस्कृतोध्यानेनकेचनपेशस्कृतोभवंति नतुसएवपृथग्दृश्यमानत्वादित्ययंदृष्टांतोनर्थःस्यादिति ४१ ग्रंथाधिकभयादुपसंहरति आख्यातमिति अतश्चैद्यादयो दमघोषसुतादीनामित्यादिबहुवारोक्तिर्भक्तेरनादिकालसंबंधित्वद्योतनार्था अन्यथावेनादीनामित्याद्युक्तिरपिस्यात् ४२ श्रद्धाजननायस्तौति एषेति ब्रह्मण्यदेवस्यरामस्य चशब्दान्नरसिंहस्य यत्र कथायाम् ४३ भक्त्यादिकमेवमुक्तिसाधनंनद्वेषादिकमित्येतदत्रप्रतिपाद्यतइत्युपसंहरति प्रह्लादस्येति भक्त्यादिलक्षणोधर्मश्चात्रकथितइत्यन्वयः ४४ येनभक्त्यादिलक्षणधर्मेणहारीमितरेभ्यो व्यावर्तयति सर्गेति अव्यस्ययोयथास्थितत्वम् ४५ आत्मानमधिकृत्यवर्तमानमिंद्रियादिस्वरूपचकथितमस्मिन्नाख्यानइत्याहुः तदुपाख्यानइति अत्रैवंपार्षदौविष्णोरित्यावृत्तानुकथनचभक्त्यादे

यथायथाभागवताभक्त्यापरमयाभिदाम् ॥ नृपाश्चैद्यादयःसाम्यंहरेस्तच्चिंतयाययुः ४१ आख्यातंसर्वमेतत्तेयन्मांत्वंपरिपृष्टवान् ॥ दमघोषसुतादीनां हरेःसाम्यमपिद्विषाम् ४२ एषाब्रह्मण्यदेवस्यकृष्णस्यचमहात्मनः ॥ अवतारकथापुण्यावधोयत्रादिदैत्ययोः ४३ प्रह्लादस्यानुचरितंमहाभागवतस्य च ॥ भक्तिर्ज्ञानंविरक्तिश्चयाथात्म्यंचास्यवैहरेः ४४ सर्गस्थित्यप्ययेशस्यगुणकर्मानुवर्णनम् ॥ परावरेषांस्थानानांकालेनाव्यत्ययोमहान् ४५ ध र्मोभागवतानाचभगवान्येनगम्यते ॥ आख्यानेस्मिन्समाख्यातमाध्यात्मिकमशेषतः ४६ यएतत्पुण्यमाख्यानंविष्णोर्वीर्योपबृंहितम् ॥ कीर्तयेच्छ्र द्धयाश्रुत्वाकर्मपाशैर्विमुच्यते ४७ एतद्यआद्यपुरुषस्यमृगेंद्रलीलांदैत्येंद्रयूथपवधंप्रयतःपठेत ॥ दैत्यात्मजस्यचसतांप्रवरस्यपुण्यंश्रुत्वानुभावमकुतोभ यमेतिलोकम् ४८ यूयंनृलोकेबतभूरिभागालोकंपुनानामुनयोभियांति ॥ एषांगृहानावसतीतिसाक्षाद्गूढंपरंब्रह्ममनुष्यलिंगम् ४९ सवाअयंब्रह्ममह द्विमृग्यकैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियःसुहृद्वःखलुमातुलेयआत्मार्हणीयोविधिकृद्गुरुश्च ५०

कंमुक्तिसाधनंनद्वेषादिकमितिज्ञापनाय येनभागवतधर्मेणैवभगवान्गम्यतेनद्वेषादिनेतिशेषः भक्तिर्ज्ञानविरक्तिश्चनवकंश्रवणादिकं धर्मोभागवतःप्रोक्तस्तद्भक्तेषुतथानवेतिवचनात् भागवतधर्मेणैवश्रीह रिर्गम्यतइति कथमुच्यते भक्त्यादिनाविनेतीयमाशंकापरिहृता भक्त्यादेर्धर्मशब्दवाच्यत्वात् श्रवणंकीर्तनंविष्णोरित्यादिश्रवणादिनवकम् ४६ अधुनाख्यानकीर्तनादिनायत्पुण्यंतदाह यइति ४७ सामान्यतउक्तंविवृणोति एतदिति ४८ ननुप्रह्लादानुभवस्यात्युत्तमत्ववर्णनेनयुधिष्ठिरादीनांततोऽवमत्वंप्रतीयतइतिमंदाशंकांपरिहरति यूयमिति मुनयएतानिति यथावीत्यवर्तयंति बत विस्मये खेदानुकंपासंतोषविस्मयामंत्रणेबतेति ४९ ननुपरब्रह्मणिमुक्तिगाइत्यतःपरब्रह्मशब्देनविष्णुत्वनिश्चयःकथमिति तत्राह सवाइति कैवल्येनानासक्तत्वेनयन्निर्वाणसुखमशरीरसुखं तस्यानुभूतिर नुभवोयस्यसतथा अनन्ययोग्यस्वरूपानंदमनुभवतीत्यर्थः अनेनविष्णुत्वंनिरणायि विधिकृदाज्ञाकारी गुरुर्हितोपदेष्टा ५०

ननुदुर्ज्ञेयरूपत्वं हि विष्णुर्लिंगं नहि सुज्ञेयमणुर्ह्येषआत्मा सइतिश्रुते स्वरूपानंदानुभवित्वं सायुज्यभाजोप्यस्त्यतः कथंनिर्णयइतितत्राह नयस्येति ५१ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेविज०कृतटीकायां दशमोध्यायः ॥ १० ॥ अस्मिन्नध्यायेहरौभक्तिविधानार्थंरुद्रमाहात्म्यकथनव्याजेनतन्माहात्म्यंप्रतिपाद्यते अधुनातत्रैकोरुद्रोनद्वितीयोवतस्थइत्यादिश्रुते. प्रतीयमानरुद्रस्याद्वितीयार्थत्वंप्रतिपाद्यमानैर्ज नैर्भहाद्रव्यव्ययेनपूज्यमानस्येशानःसर्वविद्यानामीश्वरः सर्वभूतानामित्यादिमंत्रैःस्तूयमानस्यसतः रुद्रस्यासुरावेशात्संशयोबभूव इदंसर्वंभगवदधीनंनवेति तत्रदयालुर्भक्तवत्सलःश्रीनारायणोरुद्रस्यतंस शयमपाचक्र कथंकेनेतितत्राह सएषइति सभगवान्नृसिंहात्मनाब्रह्मदत्तवरेणहप्तहिरण्यकशिपुपुरःसरासुरजातिंनिर्मूलयित्वाप्रह्लादादिभक्तसमुदायस्यानुग्रहीतासएषयुष्मद्बंधुभूतःश्रीकृष्णःपुराकल्पविशेषे देवस्य। हरेःस्तुतिध्यानादिकंकुर्वाणस्य। रुद्रस्यरोदनाद्यवगततल्लक्षणस्यातएवतत्रास्त्रःशिवस्यानंतमायिनानेकशतसहस्रमायावताऽतएवार्थादल्पेनमयेनवक्ष्यमाणप्रतीकारकृत्वातस्यरुद्रस्यभगवद्भक्त प्रधानइत्यादियशोवितत्तंत्रिपुरनाशनेनव्याप्तमकरोदात्मनोतिशयस्वामित्वेनतदनुग्राहकत्वेनचविमलमकृतेत्यन्वयः १ नापृष्टःकस्यचिद्ब्रूयादितिवचनात्प्रसक्तंप्रमेयंविवृत्यश्रोतुंराजापृच्छति कस्मिन्कर्म

नयस्यसाक्षाद्भवपद्मजादिभीरूपंधियावस्तुतयोपवर्णितम् ॥ मौनेनभक्त्योपशमेनपूजितःप्रसीदतामेषससात्वतांपतिः ५१ इतिश्रीभागवतेमहापुराणे सप्तमस्कंधेदशमोध्यायः ॥ १० ॥ नारदउवाच ॥ सएषभगवान्राजन्व्यतनोद्विततंयशः ॥ पुरारुद्रस्यदेवस्यमयेनानंतमायिना १ ॥ राजोवाच ॥ क स्मिन्कर्मणिदेवस्ययशोभूज्जगदीशितुः ॥ यथाचोपचिताकीर्तिःकृष्णेनानेनकथ्यताम् २ ॥ नारदउवाच ॥ निर्जिताअसुरादेवैर्युध्यनेनोपबृंहितैः ॥ मा यिनांपरमाचार्यंमयंशरणमाययुः ३ सनिर्मेमपुरस्तिस्रोहैमरौप्यायसीर्विभुः ॥ दुर्लक्ष्यापायसंयोगादुर्वितर्क्यपरिच्छदाः ४ ताभिस्तेऽसुरसेनान्योलो कांस्त्रीन्सेश्वरान्नृप ॥ स्मरंतोनाशयांचक्रुःपूर्ववैरमलक्षिताः ५ ततस्तेसेश्वरालोकाउपासाद्येश्वरंततः ॥ त्राहिनस्तावकान्देवविनष्टांस्त्रिपुरालयैः ६ अथा नुगृह्यभगवान्माभैष्टेतिसुरान्विभुः ॥ शरंधनुषिसंधायपुर्यामस्त्रंव्यमुंचत ७ ततोग्निवर्णाइषवउत्पेतुःसूर्यमंडलात् ॥ यथामयूखसंदोहानादृश्यंतपुरोयतः ८ तैःस्पृष्टाव्यसवःसर्वेनिपेतुस्त्रिपुरौकसः ॥ तानानीयमहायोगीमयःकूपरसेऽक्षिपत् ॥ ९ ॥ सिद्धामृतरसस्पृष्टावज्रसारामहौजसः ॥ उत्तस्थुर्मे घदलनाद्वैद्युताइववह्नयः ॥ १० ॥

णीति कस्मिन्कर्मणिमयोविपरीतं चकार येनेशितुर्देवस्ययशोभूत् साचकीर्तिःकृष्णेनयथायथमुपचिता प्रचिता सकथाविशेषोममकथ्यतामित्यन्वयः २ नारदः प्रश्नंपरिहरति निर्जिताइति अनेनहरिणोपबृंहितैःअन्यसहायेनासुराजि ताइत्येतदेवानानदोषायविष्णववेक्षणस्यस्वतःसिद्धत्वादेवानांसापेक्षंनतुदोषाय यत्रसिद्धमपेक्षितमितिवचनात् ३ मयेनत्रिपुरनिर्माणकर्मविपरीतंकृतमित्याह सनिर्ममइति सतिस्रः दुर्लक्ष्योदुर्ज्ञेयोऽपायसं योगोनाशसंबंधोंतःप्रवेशसंबंधोयासांतास्तथातएवादृश्यबहुवरायुधादिपरिकराः ४ असुरसेनान्यः असुरसेनानायकाः ५ सेश्वराःसहरय. अत्रापिविष्णुसहितदेवानांरुद्रापेक्षित्वंनदोषायत्रिपुरदहनंरुद्रे णकार्यमितिहरिणाक्षप्रत्ययात् इंद्रादिभिर्वा ६ विभुःशिवः माभैष्टेत्युक्त्वा पुर्यामित्येकवचनंजातिविवक्षया ७ ततोधनुषोमयूखसंदोहाःरश्मिराशयः पतोयैः शरैः पुरःपुराणि ८ स्पृष्टास्तप्राणाःगतप्रा णाः इदंचमयेनकृतंविपरीतमित्याशयवानाह तानिति ९ सिद्धामृतरसोमृतसंजीवनरसः तस्मिन्स्पृष्टाःस्नाताःवैद्युताःविद्युत्संबंधिनः चशब्देनजलादिना यथानाशोनास्ति तथैवापीतिमूचयति १०

कथंकृष्णेनोपचिताकीर्तिरितिमंप्रश्नंपरिहर्तुमाह विलोक्येति ११ कोसावितितत्राह वत्सइति हिशब्देनविष्णुर्ब्रह्माणमपेक्षतइतिनदोषायेतितत्संक्षेपकारित्वेनासिद्धत्वादेतिसूचयति कालेमध्यंदिने ग्रंथांतरसिद्धत्वाद्धिशब्देनभगवन्मायायास्तन्मायातोऽपरिमितमाहात्म्यमस्तीतिसूचयति ॥ १२ ॥ स्वकृतापराधप्रहाणायस्वस्यभगवद्भक्तिप्रकटनायचमयस्तद्विषयज्ञानंचममास्तीत्यभिप्रायेणाह तदिति तद्दैत्यवधोपायकरणं किंचित्कालमसुराणांजयदायिनीमिदानींदेवानामितिदैवगतिम् १३ किंजगादितितत्राह देवइति आत्मनःस्वस्यअन्यस्यदेवदत्तस्यचेतिद्वयोर्दैवेनविष्णुनादिष्टं क्षमंव्यपोहितुं अन्यथाकर्तुं इहजीवराशौदेवोसुरोन्योवाकश्चनेश्वरःसमर्थोनास्तीत्यतस्तूष्णींभावएववरीयानित्यर्थः १४ मनुसिद्धरसपानंव्यर्थमिवप्रतिभाति त्रिपुराणामनाशादित्याशंक्यतन्ना शसाधनमाह अथेति अथदैत्यजीवसाधनरसनाशानंतरंस्वाभिःशक्तिभिःभूम्यादिभिःशंभोःप्राधानिकयुद्धसाधनरथादिकंव्यधादित्यन्वयः । धर्मादिबलोपेतत्वात् अभेद्याभिः १५ ।कितत्प्राधानिकमिति

विलोक्यभग्नसंकल्पंविमनस्कंवृषध्वजम् ॥ तदायंभगवान्विष्णुस्तस्योपायमकल्पयत् ११ वत्सआसीत्तदाब्रह्मास्वयंविष्णुरयंहिगौः ॥ प्रविश्यत्रिपुरंका लेरसकूपामृतंपपौ ॥ तेऽसुराह्यपिपश्यंतोनन्यषेधन्विमोहिताः १२ तद्विज्ञायमहायोगीरसपालानिदंजगौ ॥ स्मरन्विशोकःशोकार्तान्स्मरन्दैवगतिंचताम् १३ देवोसुरोनरोन्योवानेश्वरोस्तीहकश्चन ॥ आत्मनोन्यस्यवादिष्टंदैवेनापोहितुंद्वयोः १४ अथासौशक्तिभिःस्वाभिःशंभोःप्राधानिकंव्यधात् ॥ धर्मज्ञानवि रक्त्यादितपोविद्याक्रियादिभिः १५ रथंसूतंध्वजंवाहंधनुर्वर्मशरादियत् ॥ सन्नद्धोरथमास्थायसशरंधनुरादद्दे १६ शरंधनुषिसंधायमुहूर्तेऽभिजितीश्वरः भगवत्तेजसागुप्तोददाहत्रिपुरंनृप १७ दिविदुंदुभयोनेदुर्विमानशतसंकुले ॥ देवर्षिपितृसिद्धेशाजयेतिकुसुमोत्करैः १८ अवाकिरञ्जगुर्हृष्टाननृतुश्चाप्स रोगणाः ॥ एवंदग्ध्वापुरस्तिस्रोभगवान्पुरहान्नृप १९ ब्रह्मादिभिःस्तूयमानःस्वधामप्रत्यपद्यत २० एवंविधान्यस्यहरेःस्वमाययाविडंबमानस्य नृलोकमात्मनः ॥ वीर्याणिगीतान्यृषिभिर्जगद्गुरोर्लोकान्पुनानान्यपरंवदामिकिम् २१ इतिश्रीभागवतेम०सप्तमस्कंधेएकादशोध्यायः ११ ॥ छ ॥ श्री शुकउवाच ॥ श्रुत्वेहितंसाधुसभासभाजितंमहत्तमाग्रण्यउरुक्रमात्मनः ॥ युधिष्ठिरोदैत्यपतेर्मुदान्वितःपप्रच्छभूयस्तनयंस्वयंभुवः १ युधिष्ठिरउवाच ॥ भगवञ्छ्रोतुमिच्छामिनृणांधर्मंसनातनम् ॥ वर्णाश्रमाचारयुतंयत्पुमान्विंदतेपरम् २ भवान्प्रजापतेःसाक्षादात्मजःपरमेष्ठिनः ॥ सुतानांसंमतोब्रह्मंस्त पोज्ञानसमाधिभिः ३ नारायणपराविप्राधर्मंगुह्यंयथाविदुः ॥ करुणाःसाधवःशांतास्त्वद्विधानतथापरे ४

तदाहरथमिति भगवतोहरेस्तेजसागुप्तोरक्षितः १६ १७ यशोवितातिप्रकारमाह दिवीति जयेत्युक्त्वाजगुरित्यनेनयशोवितातिर्ज्ञायते १८ १९ ब्रह्मादिभिर्ब्रह्मोत्पन्नैःसनकादिभिः कुमारुद्रायास्थि रधन्विनेगिरःक्षिप्रेषवइत्यादिवेदवाक्यैर्वा २० शंभोःपुरदहनमाहात्म्ययत्तत् श्रीनारायणैकनिष्ठमित्याशयेनोपसंहरति एवंविधानीति अपरंभगवच्चरितंतद्वदेतिशेषः अपरमन्यद्वस्त्वेवंविधमाहा त्म्योपेतंकिंवदामिनकिमपीतिवा २१ ॥ इतिश्रीभागवतेसप्तमस्कंधे.विज०कृ०टी०एकादशोध्यायः ११ ॥ भगवद्भक्त्याययावद्गीतवर्णाश्रमाचाराचरणेनसमुत्पन्नापरोक्षज्ञानेनप्रसन्नोहरिः स्वस्वयोग्यांभु क्तिंददातीत्येतदर्थमुत्तरेषामध्यायानामारंभः तत्रवर्णाश्रमधर्मान्कौतुकामोयुधिष्ठिरोनारदंपृच्छतीत्याह श्रुत्वेति महत्तमानामग्रण्यस्यश्रेष्ठस्यउरुक्रमेहरावात्मामनोयस्यसतथातस्य दैत्यपतेः प्रल्हाद स्य ईहितंचरितंसाधुसभासुसभाजितंसंभावितं महत्तमानांब्रह्मादीनां उत्तमस्यदैत्यानामपिपत्युरुरुक्रमात्मनोनरसिंहस्येतिवा १ धर्मंविशिनष्टि वर्णेति वर्णाश्रमाचारयुतं युमिश्रणइतिधातुः १ ३ ४

५ पुरुषार्थोपयोगित्वाद्वक्तुमिच्छामीत्याह योवतीर्येति दाक्षायण्यांनाम्नामूर्तौ धर्मतोधर्मप्रवर्तनार्थं स्यादच्यधिकईश्वरइत्यभिधानादीश्वरतपउद्दिश्यबदरिकाश्रमआस्तइत्यन्वयः बदरिकाश्रमेत पोष्यास्तइतिवा ६ तत्रानुष्ठानधर्मविषयेज्ञातेक्षिप्रप्रवृत्तिःस्यादधिकारिणामितितमाह धर्ममूलमिति धर्ममूलंधर्मविषयः सर्ववेदमयःसर्ववेदप्रतिपाद्येषुप्रधानः अनेनरुद्रादयोनिवृत्ताइतिज्ञातव्यं नकेवलंधर्मविषयएव तत्प्रतिष्ठापकश्चेत्यतोधर्ममूलमित्यत्रप्रमाणंसर्ववेदमयइतिप्रमाणांतरंचास्तीत्याह स्मृतिरिति प्रमाणमितिशेषः भगवत्प्रसादहेतुत्वात्प्रमाणमित्याह येनेति अनेनभगवत्त त्वज्ञैःस्मृतोधर्मोनकपिलादिभिरित्युक्तंभवति ७ विषयंनिरूप्यसर्वसाधारणंसर्वधर्मसाधनमाह सत्यमिति सत्यादिचतुष्टयमंतरंगातितिक्षादिकमुपांगमितिज्ञातव्यम् ८ ग्राम्येहोपरमःविषयभोगे च्छानिवृत्तिःविषयाविपर्ययेहेक्षाप्राणिनांस्वतएवनिषिद्धकर्मचेष्टाईहातस्याःपर्यालोचनंमोक्षविपरीतप्रवृत्तिदर्शनंवा मौनंमंत्रार्थचिंतनं प्रलापवर्जनंवा आत्मविमर्शनमात्मविचारः ९ तेषुनृषुआत्म देवताबुद्धिःपरमात्मास्थितइतिज्ञानं सुतरामित्यनेननृषुविशेषतःकर्तव्यमितिसूचयति अहिंसासत्यमस्तेयंशौचमिंद्रियसंयमः दमःक्षमार्जवंदानंसर्वेषांधर्मसाधनमितिस्मृतत्वादेषांधर्मांगत्वं नतुधर्म त्वमितिज्ञातव्यम् १० ननुतर्हिकोयंधर्मोनामेत्याशंक्यसर्वसाधारणंधर्ममाह श्रवणमिति महतांपागतिःस्थितिस्तस्याःसेवा संगतेःसेवेतिवा । दास्यात्मसमर्पणयोरेकार्थत्वात् कथंपृथग्ग्रह

नारदउवाच ॥ नत्वाभगवतेऽजायलोकानांधर्महेतवे ॥ वक्ष्येसनातनंधर्मंनारायणमुखाच्छ्रुतम् ५ योवतीर्यात्मनोंशेनदाक्षायण्यांतुधर्मतः ॥ लोका नांस्वस्तयेध्यास्तेतपोबदरिकाश्रमे ६ धर्ममूलंहिभगवान्सर्ववेदमयोहरिः ॥ स्मृतिश्चतद्विदांराजन्येनचात्माप्रसीदति ७ सत्यंदयातपःशौचंतितिक्षे क्षाशमोदमः ॥ अहिंसाब्रह्मचर्यंचत्यागःस्वाध्यायआर्जवम् ८ संतोषःसमदृक्सेवाग्राम्येहोपरमःशनैः ॥ नृणांविपर्ययेहेक्षामौनमात्मविमर्शनम् ९ अन्नाद्यादेःसंविभागोभूतेभ्यश्चयथार्हतः ॥ तेष्वात्मदेवताबुद्धिःसुतरांनृषुपांडव १० श्रवणंकीर्तनंचास्यस्मरणंमहतांगतेः ॥ सेवेज्यावनतिःसख्यंदास्य मात्मसमर्पणम् ११ नृणामयंपरोधर्मःसर्वेषांसमुदाहृतः ॥ त्रिंशल्लक्षणसंयुक्तःसर्वात्मायेनतुष्यति १२ संस्कारायत्राविच्छिन्नाःसद्विजोवैदिकादयः ॥ इज्याध्ययनदानानिविहितानिद्विजन्मनाम् १३

णंकृतमित्याशंक्य अनाद्यनंतकालेषुमुक्तौसंसारएवच मयिस्थश्चोदयत्येकोविष्णुर्मांसर्वदैवतु इतिसंप्रीतिकंज्ञानंविद्यादात्मसमर्पणं बहिश्चेश्वरदासत्वंदास्यमित्युच्यतेबुधैरित्यनेनपरिहरणीया अनाद्य नंतकालंमयिस्थित्वाविष्णुःसर्वत्रमांप्रेरयतीतिप्रीतिपूर्वकज्ञानमात्मसमर्पणं । प्रतिमादिसंनिहितभगवद्दासत्वज्ञानंदास्यम् ११ तारतम्यज्ञानार्थंब्रह्मादिविषयश्रवणादिरपिधर्मःस्यादतोविशिष्यो च्यतइत्यतउक्तं परइति एषमेसर्वधर्माणांधर्मोधिकतमोमतइतिवचनात्समुदाहृतइति समीचीनत्वंकुतोत्राह त्रिंशल्लक्षणेति अनंतलक्षणस्यहरेस्त्रिंशल्लक्षणयुक्तत्वं तथापिपुरुषाकारोभक्तानांत्वंप्र काशसइतिवचनात् भक्तप्रकाश्याकारविषयविवक्षया सप्तपादश्चतुर्हस्तइत्यादिशास्त्रेषुपुरुषलक्षणस्यनिरूपितत्वात् । इदंचभक्तिप्रचयायप्रोक्तमितिज्ञायते अनेनभगवत्तोषकरोधर्मोनान्यइत्युक्तंभव ति १२ एवंधर्मस्वरूपंनिरूप्यतदधिकारिणंनिरूपयति संस्काराइति निषेकादिश्मशानांतायेसंस्कारास्तेयस्याविच्छिन्नाअखंडिताःसद्विजःसएवाधिकार्यत्रेतिशेषः अविच्छेद्यत्वेनकर्तव्यत्वेको हेतुरितितत्राह वैदिकेति वेदप्रतिपाद्यत्वेनप्रामाणिकत्वेनकर्तव्याइत्यर्थः नन्विदंद्विजमात्रसामान्यांकिंनेत्याह आदयइति स्त्रीणांब्राह्मणजातित्वेपिमंत्रेणक्रियाएताइतियन्नतःशिष्टाचारत्वेनसंगृहीतत्वात् इदंवैदिकत्वेपिकर्तव्यत्वंनतुस्त्रीणांवैदिकसंस्काराभावेपागानधिकारित्वमित्यस्येदमेवोत्तरं वैदिकादयइतिवैदिकाअवैदिकाश्चसंतीत्यर्थः तदुक्तं निषेकाद्याःश्मशानांतास्तेषांवैमंत्रतःक्रियाः गर्भाधान

मृत्तौपुंसवनंचस्पंदनात्पुरा षष्ठेटमेवासीमंतोमासतोजातकर्मच अहन्येकादशेनामचतुर्थेमासिनिष्क्रमः षष्ठेन्नप्राशनंमासेचूडाकार्यायथाकुलं एवमेनःशमंयातिबीजगर्भसमुद्भवं तूष्णीमेता क्रिया स्त्री णांविवाहस्तुसमंत्रकइत्यादि तांपूषञ्छिवतमामेरयस्वयस्यांबीजंमनुष्यावपंति यानऊरूउशतीविश्रयातेयस्यामुशंतःप्रहरामशेपं उरोयमेगरामृश्यमामेदश्राणिमन्यथा सर्वाहमस्मिरो मशागंधारीणामिवांबिकाइत्यादिसंस्कारमंत्राः ब्राह्मणाःक्षत्रियावैश्याःशूद्राश्चत्वारोवर्णास्तेषां आद्यास्त्रयोद्विजाः तेषांसाधारणधर्ममाह इज्येति ब्रह्मक्षत्रियविट्शूद्रावर्णास्त्वाद्यास्त्रयोद्विजाइतिस्मृतेः इज्याध्यापनदानानिविप्रस्यक्षत्रियस्यचेत्यादेः १३ एतान्यपिद्विजमात्रस्यनकिंतुविशिष्टानामित्याशयेनाह जन्मेति जन्मनाकर्मणावावदातानांकारीर्यायजेतवृष्टिकामःमलवद्वाससासंवदेदित्यादिवे दोदिताःक्रियाश्चविहिताइत्याह क्रियाइति । विशेषधर्ममाह विप्रस्येति अध्यापनयाजनप्रतिग्रहाः ततोब्राह्मणादन्यस्यक्षत्रियादेरप्रतिग्रहः प्रतिग्रहाधिकोविप्रोयाजनाध्यापनेतथेतिवचनात् १४ प्रतिग्रहा दिनापिप्रवृत्तिमभिमेत्यराजादिवृत्तिमाह राज्ञइति आदिशब्देनन्यायप्राप्तदंडाद्यागतंधनंगृह्णतेप्रजागोप्तुरित्यनेनप्रजागुप्त्यैवततोधनमाहर्तव्यं अन्यथादुष्कृतमेवादत्तइतिसूचयति वाशब्देनदेवाग्रहांते देवविं

जन्मकर्मावदातानांक्रियाश्चनिगमोदिताः ॥ विप्रस्याध्यपनादीनिततोन्यस्याप्रतिग्रहः १४ राज्ञोवृत्तिःप्रजागोप्तुरविप्राद्वाकरादिभिः ॥ वैश्यस्तुवार्ता वृत्तिःस्यान्नित्यंब्रह्मकुलानुगः १५ शूद्रस्यद्विजशुश्रूषावृत्तिश्चस्वामिनोभवेत् ॥ वार्ताविचित्रशालीनयायावरशिलोंछनम् १६ विप्रवृत्तिश्चतुर्धेयंश्रेय सीचोत्तरोत्तरा ॥ जघन्योनोत्तमांवृत्तिमनापदिभजेन्नरः १७ ऋतेराजन्यमापत्सुसर्वेषामपिसर्वशः ॥ ऋतामृताभ्यांजीवेतमृतेनप्रमृतेनवा १८ सत्यानृताभ्यां जीवेतनश्ववृत्त्याकथंचन ॥ ऋतमुंछशिलंप्रोक्तममृतंयदयाचितम् १९ मृतंतुनित्यंयाच्ञास्यात्प्रमृतंकर्षणंस्मृतम् ॥ सत्यानृतंतुवाणिज्यंश्ववृत्तिर्नीच सेवनम् २० वर्जयेत्तांसदाविप्रोराजन्यश्चजुगुप्सिताम् ॥ सर्ववेदमयोविप्रःसर्वदेवमयोनृपः २१ शमोदमस्तपःशौचंसंतोषःक्षांतिरार्जवम् ॥ दानंदया च्युतात्मत्वंसत्यंचब्रह्मलक्षणम् २२ शौर्यंवीर्यंधृतिस्तेजस्त्यागआत्मजयःक्षमा ॥ ब्रह्मण्यताप्रसादश्चरक्षाचक्षत्रलक्षणम् २३ देवगुर्वर्च्यगोभक्तिस्त्रिवर्ग परितोषणम् ॥ आस्तिक्यमुद्यमोनित्यंनैपुण्यंवैश्यलक्षणम् २४

मौर्वेनेत्यर्थः दंडाद्वाहविप्रमंतरेणचेति वार्ताकृषिगोरक्षवाणिज्यलक्षणा १५ स्वामिनःसकाशाज्जीवनंचेतिशेषः भृत्यानांस्वामिनःऽशुश्रूषाचवृत्तिरितिवाविप्रवृत्तिंकंठोक्त्याह वार्तेति अत्रवार्तादिकमापदी तिग्राह्यं १६ विप्रानुज्ञयाक्षत्रियवैश्ययोस्तत्त्वविज्ञापनंधर्मइत्युच्यते तदभावेशूद्रस्यकथमितितत्राह जघन्यइति जघन्योनरःशूद्रोनापदितत्सद्भावेउत्तमांवृत्तिंतत्त्वज्ञानलक्षणांनभजेन्नकुर्यादित्यन्वयः आ पदितदभावेतदनुज्ञयाकुर्यादित्यतोनापदीतिविशेषणंपालनादिवृत्तिंवा ननुवर्णहीनस्यकथमित्यस्येदमेवोत्तरं जघन्योवर्णहीनोनापद्यप्युत्तमांवृत्तिनभजेत् वर्णेष्वज्ञेषुवर्णस्तुनज्ञानीस्यात्कथंचनेतिश्रुतिः १७ राजानंविनासर्वेषांविप्रादीनामापद्युक्तसर्ववृत्तिभिर्जीवनेदोषोनास्तीत्याह ऋतेराजन्यमिति १८ ऋतादीनामप्रतीतार्थत्वाद्व्याचष्टे ऋतमित्यादिना १९ कर्षणंकृषि. २० श्ववृत्तिवर्जनेहेतुमाह स र्वेति सर्वदेवतावेदविद्ब्राह्मणेवसतीतिश्रुतेः नाविष्णुःपृथिवीपतिरित्यादेश्च २१ विप्रादीनांत्रिविष्वपज्ञानेप्रथमंलक्षणमाह शमइत्यादिनाऽच्युतात्मत्वमच्युतमनस्कत्वम् २२ त्यागोदातव्येमुक्तहस्त ता आत्मजयोमनोजयः २३ त्रिवर्गैर्धर्मार्थकामैः ईश्वरपरितोषणं त्रयोवर्गायेषांतेत्रिवर्गाः तेषांद्रव्यादिनापरितोषणम् २४

शूद्रस्यांततःसकृत्स्पृष्टाभिरद्भिराचमनलक्षणंशौचम् हृत्कंठतालुगाभिस्तुयथासंख्यंद्विजातयः शुध्येरन्स्त्रीचशूद्रश्चसकृत्स्पृष्टाभिरंततइतिवचनात् । केशश्मश्रुनखाद्यधारणंमौढ्येन २५ स्त्रीणांसामान्य लक्षणमाह स्त्रीणामिति अनुकूलतोक्तकारित्वम् यत्रानुकूल्यंदंपत्योस्त्रिवर्गस्तत्रवर्धते स्त्रीभिर्भर्तृवचःकार्यमेषधर्मःपरःस्त्रियः इतिवचनात् तद्बंधुषुभर्तृबंधुषु भागिनेयादिषु तद्व्रतधारणंपातिव्रत्यम् यस्ययद्व्रतंतदेवाम्यान्नतामितिवा २६ गृहमंडनवर्तनैर्गृहालंकारकरणैः २७ कामैर्विषयैः २८ अलोलुपाअयोग्याभिलाषरहिता अपतितंब्रह्महत्यादिपानकरहितम् २९ अस्मिन्पत्यौहरिः सन्निहितइतियाबुद्धिः सहरिभावः हरिरस्मिन्स्थितइतिस्त्रीणांभर्तरिभावना शिष्याणांचगुरौनित्यंशूद्राणांब्राह्मणादिषु भृत्यानांस्वामिनितथाहरिभावइतीरितइतिवचनान्नतयोरैक्यार्थः हर्यात्म नाहरेर्विशेषसन्निधानवतापत्यासह ३० क्षत्रियाद्विप्रस्त्रीसूतानांविप्रात्क्षत्रियस्त्रीजातानांक्षत्रियाद्वैश्यस्त्रीसूतानांवैश्याच्छूद्रस्त्रीसूतानामित्येवंजातानांकावृत्तिरित्यतआह वृत्तिरिति येषांजाति विशेषाः अंबष्ठनिषादपारशरादिनाम्नाज्ञातव्याः । तदुक्तम् । विप्रान्मूर्द्धावसिक्तास्त्रीराज्ञोंबष्ठविशोंगनेत्यादि अध्ययनमंतरेणाबष्ठादीनांसंस्कारादिकंतत्कुलानुकूल्येन । तेषांगुणमाह अचौराणामिति यस्ययस्याविहितंतत्करणंचौर्यंतद्रहितम् शूद्राद्ब्राह्मण्यांजाताअंत्यजाःरजकादिसप्तकारवस्ततोजाताअंतेवसायिनःपुल्कसमतंगादयः येषांतत्कुलविहितएवधर्मः ब्राह्मण्यांक्षत्रियात्सूतोवैश्याद्वैदेहि

शूद्रस्यअंततःशौचंसेवास्वामिन्यमायया ॥ अमंत्रयज्ञोह्यस्तेयंसौत्यंगोविप्ररक्षणम् २५ स्त्रीणांतुपतिदेवानांतच्छुश्रूषानुकूलता ॥ तद्बंधुष्वनुवृत्तिश्च नित्यंतद्व्रतधारणम् २६ संमार्जनोपलेपाभ्यांगृहमंडनवर्तनैः ॥ स्वयंचमंडितानित्यंपरिमृष्टपरिच्छदा २७ कामैरुच्चावचैःसाध्वीप्रश्रयेणदमेनच ॥ वाक्यैःसत्यैःप्रियैःप्रेम्णाकालेकालेभजेत्पतिम् २८ संतुष्टालोलुपादक्षाधर्मज्ञाप्रियसत्यवाक् ॥ अप्रमत्ताशुचिःस्निग्धापतिंत्वपतितंभजेत् २९ यापतिं हरिभावेनभजेच्छ्रीरिवतत्परा ॥ हर्यात्मनाहरेर्लोकेपत्याश्रीरिवमोदते ३० वृत्तिःसंकरजातीनांतत्तत्कुलकृताभवेत् ॥ अचौराणामपापानामंत्यजांतेव सायिनाम् ३१ प्रायःस्वभावविहितोनृणांधर्मोयुगेयुगे ॥ वेददृग्भिःस्मृतोराजन्प्रेत्यचेहचशर्मकृत् ३२ वृत्त्यास्वभावकृतयावर्तमानःस्वकर्मकृत् ॥ हि त्वास्वभावजंकर्मशनैर्निर्गुणतामियात् ३३

कस्तथा शूद्राज्जातस्तुचांडालःसर्ववर्णविगर्हितइतिच ३१ तत्तद्वर्णैस्तत्तत्स्वभावेनानुष्ठितस्यधर्मस्यफलमाह प्रायइति सात्त्विकादिस्वभावानुसारेणब्राह्मणानांविहितः अत्रप्रमाणमाह वेदेति स्मृतो ग्रंथस्वरूपेणकृतः । प्रेत्यपरलोके नाश्रमःकारणंधर्मेक्रियमाणोभवेद्धिसः । अतोयदात्मनःपथ्यंपरस्यनतदाचरेत् । सर्वधर्मान्परित्यज्यमामेकंशरणंव्रजेत्यादिवचनात् । भक्त्युपबृंहितस्यधर्मस्यापेक्षिता शेषपुरुषार्थहेतुत्वं नकेवलस्येत्यभिप्रायेणप्रायइत्युक्तम् तत्रतत्तद्विशेषणवर्णनेग्रंथबाहुल्यंस्यादित्युपरम्यते ३२ नकेवलमनेनधर्मेणस्वर्गादिप्राप्तिरपितुभक्त्यादिसाधनपूर्णेनमुक्तिरपिस्यादित्याह वृ त्त्येति स्वभावेनस्वात्मनाकृतयाप्रेरितया सात्त्विकादिस्वभावपूर्णयाच । वृत्त्याजडलक्षणयाभक्त्यावा । योग्यतयास्वविहितकर्मणिवर्तमानःपुरुषः शनैःशनैर्बहूनांजन्मनामंते स्वभावजकर्मपुण्यपा पलक्षणंमुक्त्वानिर्गुणतामुक्तिम् । यदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीतिश्रुतेः ज्ञानपूर्वकमनुष्ठितोनित्यानंदाविर्भावलक्षणपुरुषार्थस्यहेतुः यदप्यनेवंविन्महत्पुण्यंकर्मकरोति तद्धा स्यांततःक्षीयतएवेतिश्रुतेःतत्रज्ञानपूर्वकंभगवद्भक्त्यद्वेषोपरक्तःप्रवृद्धोधर्मोनित्यदुःखाविर्भावलक्षणपुरुषार्थस्य त्रैविद्यामासोमपाःपूतपापायज्ञैरिष्ट्वास्वर्गतिंप्रार्थयंतइत्यादिनित्यंप्रार्थनादिगुणोपर क्तोनित्यसत्त्वगुणनिमित्तसुखलक्षणस्येत्यादि ३३

ननुसगुणोधर्मःसगुणपुरुषार्थहेतुर्भवत्वनुकूलत्वान्निर्गुणपुरुषार्थस्यकथंविरुद्धत्वादित्याशंक्यमनोहिपुरुषार्थकारणंतद्विषयोपरक्तं । दुःखोदर्कविषयसुखायस्यात्तेदेवविषयाणांक्षणभंगुराणांदुःखोदर्काणां दुःसाधनत्वाचिंतयावैराग्यानलभर्जितंपुनस्तदंकुरीभावासमर्थं । भगवच्चरणारविंदभक्तिसलिलसिक्तंचेत्तज्ज्ञानांकुरीकरणनिदानंभवतीत्येतमर्थंसदृष्टांतमाह ॥ उप्यमानमिति ॥ यथाबीजैरुप्यमानं पुनःभेदुरसाधनहीनंक्षेत्रंकेदारलक्षणंनिर्वीर्यंतांसस्यजननशक्तिराहित्यमेति तदेवस्फुटयति पुनरिति सूयैउत्पत्त्यै । नकेवलमुत्पादनासमर्थंकिंतुबीजनाशहेतुश्च ३४ एवं यथा कामाशयं कामाशाविश्रमं चित्तं । विषयसेवासमयेदुःखस्यतदभावेसुखस्यचस्मरणसमर्थंमनःकामानांविषयाणामतिसेवयाक्षयरोगादिहेतुभूतया । द्रव्यादिनाशकारणानित्यसुखायविरज्येत विरक्तंभवति असारत्वाबुद्धिमाप्नोतिइदंचयोग्यानामेव । नायोग्यानामिति ॥ किंचिद्विषयसेवयाकिंस्यादितितत्राह । यथेति । कामानांबिंदुभिःकिंचित्सेवितैः मनोयथावत्पुरुषार्थहेतुतया नविरज्यते विरक्तंनभवति । पुनःतृष्णातिशयःस्यात् । कथमिव । सुखकांतिहेतुत्वात्कामःआज्यंतद्विंदुभिर्यथाअग्निर्वर्धते । तथेतिभावः ॥ ३५ ॥ नन्वत्रवर्णादिज्ञानं । यथाबारतम्यतत्पूजापितद्योग्यरयनिःश्रेयसी । यस्यएतदभावे तद्धितकरणाधर्मोष्टासिद्धिःस्यादितितत्राह । यस्येति । यस्यब्राह्मणादेःब्राह्मणत्वादिव्यंजकम् शमदमादिलक्षणम् प्रोक्तंशास्त्रतइतिशेषः । तल्लक्षणम् यद्यन्यत्रव्यक्तंदृश्येत । अपिशब्देनाऽन्या

उप्यमानंमुहुःक्षेत्रंस्वयंनिर्वीर्यतामियात् ॥ नकल्पतेपुनःसूत्यैउप्तंबीजंचनश्यति ३४ एवंकामाशयंचित्तंकामानामतिसेवया ॥ विरज्येतयथाराजन्नाग्निवत्कामबिंदुभिः ३५ यस्ययल्लक्षणंप्रोक्तंपुंसोवर्णादिव्यंजकम् ॥ यद्यन्यत्रापिदृश्येततत्तेनैवविनिर्दिशेत् ३६ ॥ ॥ इतिश्रीभागवतेमहापुराणे सप्तमस्कंधेद्वादशोध्यायः ॥ १२ ॥ ७ ॥ ॥ नारदउवाच ॥ ब्रह्मचारीगुरुकुलेवसेद्दांतोगुरोर्हितम् ॥ आचरन्दासवन्नीचोगुरौसुदृढसौहृदः १ सायंप्रातरुपासीतगुर्वग्न्यर्कसुरोत्तमान् ॥ संध्येउभेचयतवाग्जपन्ब्रह्मसमाहितः २ छंदांस्यधीयेतगुरोराहूतश्चसुयंत्रितः ॥ उपक्रमेवसानेचचरणौशिरसा नमेत् ३ मेखलाजिनवासांसिजटादंडकमंडलून् ॥ बिभृयादुपवीतंचदर्भपाणिर्यथोदितम् ४ सायंप्रातश्चरेद्भैक्ष्यंगुरवेतन्निवेदयेत् ॥ भुंजीतयद्यनुज्ञातोनोचेदुपवसेत्क्वचित् ५ सुशीलोमितभुग्दक्षःश्रद्दधानोजितेंद्रियः ॥ यावदर्थंव्यवहरेत्स्त्रीषुस्त्रीनिर्जितेषुच ६ वर्जयेत्प्रमदागाथामगृहस्थोबृहद्व्रतः ॥ इंद्रियाणिप्रमाथीनिहरंत्यपियतेर्मनः ७ केशप्रसाधनोन्मर्दस्नपनाभ्यंजनादिकम् ॥ गुरुस्त्रीभिर्युवतिभिःकारयेन्नात्मनोयुवा ८

स्यादिदोषाभावंसूचयति ॥ तर्हीतरलक्षणेनैव तद्वस्तु ब्राह्मणादिकमितिनिर्दिशेत् उपदिशेत् गोःकिंलक्षणमितिपृष्टः सास्नादिमान्गौरितिउपदिशतियदातदापुच्छवत्त्वशृंगवत्त्वादिव्यभिचार्यविहाय यंगोपिंडंसास्नादिमंतंपश्यति । तदेयगौरितियथाप्रत्येति । तत्प्रयुक्तंव्यवहारंकरोति । आप्तायोपदिशतिच । तथात्रापि विरक्तिवल्भक्तिरेव ब्राह्मणादेःमुक्तिसाधनंलक्षणमितिसकलशास्त्रतात्पर्यार्थः । ततःसैवबुभूषुभिः संपादनीयेतिभावः ३६ ॥ ॥ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेविज०कृ०टी०द्वादशोध्यायः ॥ १२ ॥ ७ ॥ ॥ नीचःप्रश्रितःहितंहिताचरणं ॥ मनोवाक्कायकर्मभिरितिशेषः १ २ ३ ४ क्वचिदपराधेसति । एकान्नादनवर्जनार्थमुपवसेदित्युक्तम् ५ स्वार्थमात्रसिद्धिः तन्मात्रंयावदिति ६ बृहद्व्रतोब्रह्मचारी स्त्र्यादिव्यवहारवर्जननिमित्तमाह इंद्रियाणीति निर्जितेंद्रियग्रामोपतिः । येनिर्जितेंद्रियग्रामायतिनोपतयश्चतेइत्यभिधानात् ७ प्रसाधनंसंस्करणं मधुमांसोच्छुनोच्छिष्टंशुक्लस्त्रीप्राणिहिंसनं भास्करालोकनाशीलपरिवादांश्चवर्जयेत् इत्यपव्याख्यानेनकर्तव्यम् ८

कुतोनकार्यमत्राह नन्विति अन्यदा व्यवहारयोग्यसमये ९ ननु बंधनिवृत्त्यर्थंभगवदर्पणबुद्ध्याधर्मोनुष्ठेयइतिविधीयते तस्यामिथ्यात्वेनस्वतएवानिवृत्त्युपपत्तेर्नतद्विधानमत्रावश्यकमित्याशंक्येश्वर कल्पितस्यमिथ्यात्वासंभवेन यद्बुद्ध्यापस्यगृंखलावंधस्तस्यतत्प्रसादेनतन्निवृत्तिवदीश्वरप्रसादजनकधर्मग्रामोविधेयोन्यथाबंधानुत्थितिरित्याशयवांस्तस्येश्वरकल्पितत्वमाह कल्पयेदिति यावंतं कालमीश्वरआत्मनोजीवस्यज्ञानलक्षणरहितंज्ञानवदवभासमानमिदमाभासमज्ञानंकल्पयेत्तावंतंकालंद्वैतमयथार्थज्ञानंनाविरमेन्नापगच्छेत् ततोऽज्ञानादस्यविपर्ययोबंधोनुवर्ततेइतिशेषः तदुक्तं बहु त्वेनैववस्तूनांयथार्थज्ञानमुच्यते अद्वैतज्ञानमित्येवद्वैतज्ञानंतदन्यथा यथाज्ञानंतथावस्तुयथावस्तुतथामतिः । नैवज्ञानार्थयोर्भेदस्ततएकत्ववेदनमितिच । ननु वर्णादिविहितोधर्मग्रामःकियंतं कालमनुष्ठेयो बहुसमयसाध्यत्वेदुःखप्रयासत्वेनाशक्त्यविरक्त्यानधिकारिकःस्यादित्याशंक्याह कल्पयेदिति यावदीश्वरइदमाभासमिथ्याभूतंजगत्कल्पयेत् तावद्द्वैतवर्णाश्रमादिधर्मलक्षणंनविर मेत् नापगच्छेत् ततोधिष्ठानंज्ञानंस्यात्ततोविहितधर्मग्रामस्यविपर्ययोनिवृत्तिरित्ययमर्थो हिशब्दसूचितया सत्यसृष्टावशक्ताहिमायात्रष्टिवितन्वतइतिस्मृत्याविरुद्धत्वेना नुपपन्नः ईश्वरइत्यनेनसत्य सृष्टिसामर्थ्यसूचयति तात्पर्येणविधानंचानुपपन्नंपतउक्तएवार्थः १० नन्वयंधर्मोब्रह्मचारिणोभवेदुतान्यस्यापिसंभवति नाद्यः अतिव्याप्तेः नद्वितीयः । पृथग्विधानानुपपत्तिरित्यतोतिदेशन्या

नन्वग्निःप्रमदानामघृतकुंभःपुमान्यतः ॥ सुतामपिरहोजह्यादन्यदायावदर्थकृत् ९ कल्पयेदात्मनोयावदाभासमिदमीश्वरः ॥ द्वैतंतावन्नविरमेत्ततोह्य स्यविपर्ययः १० एतत्सर्वंगृहस्थस्यसमाम्नातंयतेरपि ॥ गुरुवृत्तिर्विकल्पेनगृहस्थस्यर्तुगामिनः ११ अंजनाभ्यंजनोन्मर्दस्त्र्यवलेखामिषंमधु ॥ स्रग्गंधलेपालंकारांस्त्यजेयुर्येधृतव्रताः १२ उषित्वैवंगुरुकुलेद्विजोधीत्यावबुध्यच ॥ त्रयींसांगोपनिषदंयावदर्थंयथाबलम् १३ दत्त्वावरमनुज्ञातोगु रोःकामंयदीश्वरः ॥ गृहंवनंवाप्रविशेत्प्रव्रजेत्तत्रवावसेत् १४ अग्नौगुरावात्मनिचसर्वभूतेष्वधोक्षजम् ॥ भूतैःस्वधामभिःपश्येदप्रविष्टंप्रविष्टवत् १५

येनयथासंभवमन्यस्यापीत्याह । एतदिति । अन्यद्वक्ष्यमाणं । नकेवलंगृहस्थस्यैवकिंतुयतेरपीत्याह यतेरपीति यथासंभवमित्युक्तंविवृणोति गुरुवृत्तिरिति गुरुवृत्तिर्गुरौवासः ब्रह्मचर्यंभिक्षा वृत्तिरित्येतत्सर्वंगृहस्थस्यानिवर्ततइत्यर्थः विकल्पेनव्यवस्थितविकल्पेनोदितानुदितहोमवदित्यर्थः कुतोनिवर्ततइतितत्राह ऋतुगामिनइति ११ पंचयज्ञाद्याचरणायासेनकालयापनंकुर्वतोगृहस्थ स्यापिव्रतधारणेब्रह्मचारिवदभ्यंजनादिकंवर्जनीयमित्याह अंजनेति अवलेपंदर्पं १२ अवबुध्य अर्थविचारंकृत्वा तत्त्वंज्ञात्वा १३ गार्हस्थ्यधर्मस्यवानप्रस्थधर्मस्ययतिधर्मस्यचानुष्ठानेनसमर्थश्चेदे वमीष्टंकुर्यादित्याह यदीति नैष्ठिकोब्रह्मचारीतुवसेदाचार्यसन्निधौ तदभावेस्यतनयेपत्न्यांवैश्वानरेपिचेतिवचनात् एतादृशस्यगुरौवासोनुज्ञायते अन्यस्यगुरोराज्ञयादूरंगत्वागृहाश्रमइति त दुक्तं गुरोराज्ञानुरोधेनदूरस्थोवागृहीभवेदितिचेति १४ भगवदर्पणबुद्ध्याग्न्यादौक्रियमाणंकर्मतस्यबुद्ध्याकर्तव्यंनतुतदैक्यबुद्ध्येत्याशयेनाह अग्नाविति सगुरुर्यःक्रियाःकृत्वावेदमस्मैददातिच उपनीयवदेद्वेदमाचार्यःसउदाहृतः एकदेशउपाध्यायऋत्विग्यज्ञकृदुच्यते एतेमान्यायथापूर्वमेभ्योमातागरीयसीतिवचनात् गुरुशब्देन सर्वएतेविवक्ष्यंतेस्वधामभिरावासस्थानभूतैरप्रविष्टंसर्वगतंप्र विष्टवत्स्थितं अनुरूपवंतं । अप्रविष्टःसर्वगतःप्रविष्टस्त्वनुरूपवान् एवंद्विरूपोभगवान्हरिरेकोजनार्दनइतिवचनात् १५

---

१ वस्तूनांबहुत्वेन । यथार्थज्ञानमेवाद्वैतज्ञानमित्युच्यते । वस्तूनामैक्येनायथार्थज्ञानम् नचैतद्विरुद्ध । अद्वैतज्ञानस्यैववस्त्वैक्यज्ञानत्वेनवक्तव्यत्वादित्याशंक्यतद्दूषयति । यथेति । ज्ञानार्थयो. साहश्यलक्षण मैक्यमादायाद्वैतज्ञानंभेदज्ञानमित्युच्यते । नतुवस्त्वैक्यविषयंज्ञानम् ।

एवमाकारेणाक्रियमाणस्यकर्मणःफलमाह एवंविधइति १६ ब्रह्मचारिवानप्रस्थनियमानांकृच्छ्रसाध्यत्वेनसाम्यात्प्रथमाश्रमधर्मकथनानंतरवानप्रस्थधर्मानाह वानप्रस्थस्येति ऋषे.सर्वज्ञस्य लोकंवैकुठं त्वमग्रेप्रथमोअंगिराऋषिरितिश्रुतेः ऋषिर्हरौतापसेवज्ञानवत्यपिकीर्तितइति १७ कृष्टपच्यंकर्षणादिनापक्वंव्रीह्यन्न अकालतोविहितकालमुल्लंघ्य आममग्न्यादिनानाप्तपाक आमलकादि १८ वन्यैर्देवव्रीह्यादिभिः कालचोदितान्तत्तत्कालविहितान् १९ अग्न्यर्थमग्निरक्षार्थं उटजंपर्णशालां शरणंगृहं अभ्यदाहिमादिकंश्रयेत आतपनमातपः २० अग्निपरिच्छदादर्भादयः २१ नविपद्येतक्लिष्टोनभवेत् ॥ २२ ॥ अकल्पोऽसमर्थः आन्वीक्षिक्यां आत्मविचारलक्षणायां अनशनमशनत्यागः तत्राशक्तौमासेगते२क्षेशादेवसेवाश्नीयादित्यादिकमादिपदेनगृहीतं यथाह याज्ञवल्क्यः । पक्षेगतेवाप्याश्नीयान्मासेवाहनिवागतइति २३ ध्रियमाणेनपुरुषेणाध्यात्मंकार्यकारणजातं यत्तत्रेदकार्यमेतस्मिन्कारणेविलीयतइतिध्यानंकर्तव्यमित्यभिप्रायेणाह कारणे ष्विति संघातंकार्यजातं न्यासोज्ञानपूर्वकंध्यानंकार्यस्यकारणरूपज्ञानमात्रंविलापनमितिवचनात् २४ यथार्हतइत्युक्तंविवृणोति खेखानीति खेआकाशेखानिशरीरावच्छिन्नाकाशानि श्वासंशरी

एवंविधोब्रह्मचारीवानप्रस्थोयतिर्गृही ॥ परंविंदतिविज्ञानंपरंब्रह्माधिगच्छति १६ वानप्रस्थस्यवक्ष्यामिनियमान्मुनिसंमतान् ॥ यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहांजसा १७ नकृष्टपच्यमश्नीयादकृष्टंचाप्यकालतः ॥ अग्निपक्वमथामंवाअर्कपक्वमुताहरेत् १८ वन्यैश्चरुपुरोडाशान्निर्वपेत्कालचोदितान् ॥ लब्धेनवेनचान्नेनपुराणंतुपरित्यजेत् १९ अग्र्यर्थमेवशरणमुटजंवाद्रिकंदरम् ॥ श्रयेतहिमवाय्वग्निवर्षार्कातपनान्स्वयम् २० केशरोमनखश्मश्रुमलानिजटिलोदधत् ॥ कमंडल्वजिनेदंडवल्कलाग्निपरिच्छदान् २१ चरेद्वनेद्वादशाद्वानष्टौवाचतुरोमुनिः ॥ द्वावेकंवायथाबुद्धिर्नविपद्येतकृच्छ्रतः २२ यदाऽकल्पःस्वक्रियायांव्याधिभिर्जरयाथवा ॥ आन्वीक्षिक्यांचविद्यायांकुर्यादनशनादिकम् २३ आत्मन्यग्नीन्समारोप्यसंन्यस्याहंममात्मताम् ॥ कारणेषुन्यसेत्सम्यक्संघातंतुयथार्हतः २४ खेखानिवायौनिःश्वासांस्तेजस्यूष्माणमात्मवान् ॥ अप्स्वसृक्श्लेष्मपूयानिक्षितौशेषंयथोद्भवम् २५ वाचमग्नौसवक्तव्यमिंद्रेशिल्पंकरावपि ॥ पदानिगतिभिर्विष्णौरत्योपस्थंप्रजापतौ ॥ मृत्यौपायुंविसर्गंचयथास्थानंविनिर्दिशेत् २६ दिक्षुश्रोत्रंसनादेनस्पर्शेनाध्यात्मनित्वचम् ॥ रूपाणिचक्षुषाराजन्ज्योतिष्यभिनिवेशयेत् २७ अप्सुप्रवेशयेजिह्वांघ्रेयैर्घ्राणंक्षितौन्यसेत् ॥ मनोमनोरथैश्चंद्रेबुद्धिंबोध्यैःकवौपरे २८ कर्माण्यध्यात्मनाकृद्रेयदहंसंमताःक्रियाः ॥ सत्त्वेनचित्तंक्षेत्रज्ञेगुणैर्वैकारिकंपरे २९

रवाश्चबाह्यवायौ शारीरमूष्माणंकारणतेजसि आत्मवान्परमात्मज्ञानवान् वशीकृतमनावा श्लेष्मपूयासृक्कार्याण्यप्सुलीयंतइतिचिंतयेत् शेषंगंधंक्षितौ । नन्वाकाशादेर्लाघवादीनामुत्पत्तेःकथमियता मेवरूपाश्रित्यतइतितत्राह यथोद्भवमिति आकाशाल्लाघवंसौक्ष्म्यंशब्दंश्रोत्रंतथाबलं वायोस्तुप्रेरणाचेष्टाव्यूहनंसौक्ष्म्यमेवच अग्नेस्तुदर्शनंशक्तिरौष्ण्यंरूपप्रकाशकं रसेभ्योरसनंशैत्यंस्नेहक्लेदनमार्दवं भूमेर्गंधस्तथाघ्राणंगौरवंमूर्तिरेवचेतिवचनात् उत्पत्त्यनुसारेणरूपाश्रितनीयइत्यर्थः २५ इदानींवागादींद्रियाणां अग्न्यादिदेवताधीनत्वमपिचिंतनीयमित्याह । वाचमिति । सवक्तव्यमितिक्रियाविशेषणं प्रजापतौदक्षे यथास्थानमित्यनेनाभिमानिनामभिमन्यमानानांतत्तदुत्पत्तिकारणमनुसृत्येत्युच्यते २६ सनादेनश्रोतव्येनसह त्वचंत्वगिंद्रियंस्पर्शेनसहवायाविति शेषः ज्योतिष्यादित्येनिवेशयेत् निविशत्वितिचिंतयेत् २७ जिह्वांरसनेनेतिशेषः परेकवौबृहस्पतौ उपासकोपिकविशब्दवाच्यत्वात्तद्रूपावृत्त्यर्थंपरइति २८ अध्यात्मनाहंकारेणसहकर्माणिरुद्रे तत्रहेतुर्यदहमितिक्रियायत्

अहंसंमतोऽहंकारादुत्पन्नत्वेनसंमताइतियत्तस्मादितिशेषः सत्वेनसाधुपुण्यकर्मणासहाचित्तंक्षेत्रज्ञेहिरण्यगर्भेनिवेश्य एतल्लक्षणंविलयंस्मृत्वावैकारिकनामानंहिरण्यगर्भंगुणैःसहक्षेत्रज्ञाख्येपरेपरमा त्मनिक्षेत्रज्ञीद्वाराख्यमार्गेचिंतयेत् चित्तंहिरण्यगर्भेतुविलाप्यपरमात्मनि क्षेत्रज्ञाख्येलापयेच्चततोनान्यत्स्मरेद्बुधइतिचात्रमानं २९ इदानीमवादीनांलयप्रकारंनिरूपयति अग्स्विति तच्चन्धःकूटस्थे वैकारिकतैजसतामसकूटरूपेऽहंकारतत्त्वे। तदहंकारतत्त्वं महति महत्तत्त्वे । तन्महत्तत्वमव्यक्ते । तदव्यक्तमक्षरेहरौविलयप्रकारंस्मरेत् । जडस्यस्वकारणैक्यमभिमानिनोजीवस्यप्रवेशलक्षणं वचस्कार्यस्यहिरण्यगर्भस्योत्तररूपेणैक्यंहिरण्यगर्भस्यहरेरप्युत्तरोत्तररूपैकीकरणमितिलयभेदंतुशब्दोज्ञापयति ३० इतिशब्दोलयसमाप्तिसूचकः कूटस्थोक्षरउच्यतइतिवचनात् अक्षरनाम्न्यां चित्सुकृतौस्थित्वाऽक्षरलक्षणनित्यत्वहेतुत्वादक्षरनामत्वेनास्थितमात्मानंपरमात्मानंचिन्मात्रमवशेषितंसृष्ट्यादिव्यापारोदासीनंज्ञात्वा द्वयोहारिव्यतिरिक्तवस्तुस्वातन्त्र्यस्मरणराहितोथकृत्याद्विरमेदित्य न्वयः । कृत्याद्विरमोक्तिरत्रकथमित्याह दग्धयोनिरिति दग्धायोनिरिंधनलक्षणायेनसतथा यथाग्नेरिंधनदहनात्परंकृत्यंनास्ति तथाश्रीनारायणोपासकस्यसविकासंतत्त्वज्ञानात्परंकृत्यंनेतिभावः । नष्टारिस्वरतःकृत्यंदग्धेंधनहुताशवदितिवचनात् ३१ ॥ ॥ इतिश्रीभागवतेम०वि०टी०त्रयोदशोऽध्यायः ॥ १३ ॥ ७ ॥ ॥ क्रमप्राप्तंयतिधर्मंनिरूपयति कल्पइति एवमुक्तंकृच्छ्रंसोढुंकल्पः अन्यथैस्तुशब्दस्तर्हिपरिव्रज्यसंन्यस्यमहींचरेदित्यन्वयः । देहमात्रावशेषितइत्यनेनप्रव्रजनंविशिनष्टि अधीतवेदोजपकृत्पुत्रवानंददोग्निमान् शक्त्याचयज्ञकृन्मोक्षेमनःकुर्यात्तुनान्यथेतिनियमंतुश ब्देनवारयति यदहरेवविरजेत्तदहरेवप्रव्रजेदितिविशेषविधानात् ब्रह्मचारिणोपि तुर्याश्रमग्रहणोपपत्तेरतएवकल्पइत्युक्तं कामक्रोधादिसहजशत्रुजयसमर्थइत्यर्थः उपनीयगुरुःशिष्यंमहाव्याहृतिपू

अप्सुक्षितिमपोज्योतिष्यदोवायौनभस्यमुम् ॥ कूटस्थेतच्चमहतितदव्यक्तेऽक्षरेतुतत् ३० इत्यक्षरतयात्मानंचिन्मात्रमवशेषितम् ॥ ज्ञात्वाद्वयोथविर मेद्दग्धयोनिरिवानलः ३१ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेत्रयोदशोऽध्यायः ॥ १३ ॥ नारदउवाच ॥ कल्पस्त्वेवंपरिव्रज्यदेहमात्रावशेषितः॥ ग्रामैकरात्रविधिनानिरपेक्षश्चरेन्महीम् १ बिभृयाद्यद्यसौवासःकौपीनाच्छादनंपरम् ॥ त्यक्तंनलिंगदंडाभ्यामन्यत्किंचिदनापदि २ एकएवचरेद्भिक्षुरा त्मारामोऽनपाश्रयः ॥ सर्वभूतसुहृच्छांतोनारायणपरायणः ३ पश्येदात्मन्यदोविश्वंपरेसदसतोऽव्यये ॥ आत्मानंचपरंब्रह्मसर्वत्रसदसन्मये ४

र्वकं वेदमध्यापयेत्पश्चाच्छौचाचारांश्चशिक्षयेदितिवचनात् ब्रह्मचारिणोऽध्ययनप्रारंभेगायीतवेदत्वंयुज्यतइतिवासंन्यासाश्रमश्चतुर्धाभिद्यते कुटीचकोबहूदकोहंसःपरमहंसइति तत्रपरमहंसधर्मः कथ्यतइत्यर्थद्योतकोवातुशब्दोनिरपेक्षः अलोलुपः १ देहमात्रावशेषितइत्यस्यापवादमाह बिभृयादिति यद्यसौभिक्षुरप्सुत्यक्तंवासःपरंपश्चात्पतितिनिधिलक्षणंबिभृयाद्धर्तुमिच्छेत्त र्हिकौपीनलक्षणमाच्छादनंबिभृयादथवाकौपीनंशीतातपनिवारकमेकमाच्छादनंचबिभृयात्परंनाबिभृयादित्यर्थः सीतातपनिवारार्थमेकमाच्छादनंयते. कौपीनात्परमित्याहुरेकेनान्याद्विनावपुरितिवचनात् कौपीनाच्छादनंचेत्येकवद्भावः नन्वयंयतिरितिकेनज्ञातुंशक्यतेतत्राह नालिंगेति लिंगदंडाभ्यांविनाकिंचित्नाबिभृयात् लिंगंचक्रशंखादिमुद्राधारणं कमंडल्वादिकंवा सर्वभूताहितःशांतास्त्रिदंडीसक मंडलुरितिवचनात् वाक्कायचेतसायमनंत्रिदंडित्वं लिंगदंडाभ्यामितिविशेषणादेकएवतुऊक्षणोदंडोन्यथापरमहंसत्वंनस्यात् दंडोवाग्देहचेतसामितिवक्ष्यति २ अनपाश्रयः ग्रामाद्यावासवि धुरः यथाहयाज्ञवल्क्यः एकारामःपरिव्रज्यभैक्षार्थंग्राममाश्रयेत् अप्रमत्तश्चरेद्भैक्ष्यंसायाह्नेनुपलक्षितइतिवचनात् ३ नारायणएवतत्त्वंदर्शयति पश्येदिति अदोविश्वमात्मनिपश्येत् तदाधारत्वे नास्थितमितिविशेषःआत्मनीतिजीवःकिंनस्यादितितत्राह परइति सदसतःपरेउत्कर्षवाचित्वेनविकल्पात्सर्वनामसंज्ञानास्ति जीवस्यसंसारित्वेनानुत्कृष्टत्वान्नताहशोन्योस्तीत्याह अव्ययइति नैतावता पूर्णत्वस्याह आत्मानंचेति सर्वत्रसदसन्मयेजगतिअवस्थितमात्मानंपरंब्रह्मपश्येदीदृशंनामचिंतनं ४

सुप्तप्रबोधयोः सुप्तिजाग्रतोः संधौ अरुणोदयकाले शयनप्रारंभकाले चात्मनः स्वस्य गतिं सतां सौम्यतया संपन्नो भवति अतः प्रबोधोऽस्मादित्यादिप्रमाणबलात्परमात्माधीनलक्षणां स्थितिं हरेश्च स्वातंत्र्यलक्षणं पश्यन् बंधं मोक्षं मायामात्रं मयं हरेरिच्छयानिर्मितं त्रातं पश्यन् वस्तुतः स्वातंत्र्येण नान्याधीनत्वेन पश्येत् ५ मृत्युं ध्रुवमिति नाभिनंदेत् । स्वजीवितं वाऽध्रुवमिति तर्हि कथं निश्चयइतितत्राह कालमिति भूतानां प्रभवाप्ययं कालाख्यभगवदधीनं प्रतीक्षेत किंबहुना सर्वं भगवदधीनमितिपश्येत् ६ जीविकाचेतनादिलक्षणां वेदवादमतीत्य तर्कान्वैशेषिकादिशास्त्रनिष्ठितान् अप्रयोजकपक्षसिद्धांतं नाप्रयोजनपक्षीस्यात् वृथाशिष्यबंधकृत् नचोदासीनशास्त्राणि नाविरुद्धानि वाभ्यसेत् ७ नव्याख्यया उपजीवेत न निषिद्धान्समाचरेत् एवंभूतो यतिर्यो तितदेकशरणो हारिमिति निर्णीतमानं बहून्ग्रंथान्वैष्णवाभासान् मोक्षविरुद्धान् वात्स्यायनादीन् ज्योतिःशास्त्रादीन् व्याख्यया उपजीवनं न कुर्यात् आरभान्निषिद्धान् कृष्यादीन् ८ कृष्यादिनोत्पन्नद्रव्येण दानादिधर्मसंपादनोपपत्तेः कथमारंभान्नारभेतत्युच्यत इति तत्राह नयतेरिति प्रायो यतेराश्रमो धर्महेतुर्न भवति किंतु निरंतरोपासनया ज्ञानहेतुः ज्ञानाधिकारे प्रवृत्तस्य कर्माधिकारप्रवृत्तिरधःपातहेतुःस्यात् ईश्वराज्ञोल्लंघनदोषापातात् समेब्रह्मणि चित्तं सततस्मरणसमर्थमंतःकरणं यस्य स तथा तस्यैवंविधस्य यतेः आश्रमलक्षणदंडादिसाधारणं नचावश्यकमित्याह बिभृयादिति यदाह याज्ञवल्क्यः नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः अतो यदात्मनः पथ्यं परस्य न तदाचरेत् ९ बाह्यलिंगाभावेप्यांतरं लिंगमस्तीत्याह अव्यक्तेति अव्यक्तं जनेनाज्ञातं मानसं ब्रह्म लिंगं यस्य स तथा विघातप आदिभिरप्रकटितस्वरूपो वा तर्ह्यस्य किं वक्तव्यमत्राह व्यक्तार्थ इति अपरोक्षीकृतभगवत्स्वरूपलक्षणपुरुषार्थः अनेन लिंगादिदंडधारणमेवंविधस्य नावश्यकमन्यस्येत्युक्तं भवति मनीषी निरंतरमननशीलः अव्यक्तस्वरूपं दर्शयति अदृश्यः प्राकृतजनाज्ञेयः कविरतिक्रांतदर्शी १० अत्रापरोक्षज्ञानायपरस्याचारे । इतिहासशब्दार्थमाह पुरातनमिति आजगरस्य अजगरव्रतधारिणः ११ सह्यसानुनि सह्याख्यपर्वततटे कावेर्यां कावेर्युत्पत्तिक्षेत्रे तनूदेशैः शरीरावयवैः १२ विवित्सया वेदितुमिच्छया १३ स एव देवदत्तोऽसौ नवेति नाविंदत न ज्ञातवान् १४ १५ भोगवान् संपन्नः ननु परिणममानस्य देहस्य पीनत्वविशेषः परिणामोपिकस्याचित्स्यान्मादिरापेक्ष्यस्यैवाकिमत्र चोद्यमत्राह वित्तमिति सत्यं कृष्याद्युद्योगवतो देहिनो ब्रीह्यादिवित्तं भवति इहलोके तद्वतां भोगः खलु भोगिनामयं देहः पीनो भवति हेत्वंतरं नास्तीत्याह नान्यथेति १६ १७

सुप्तप्रबोधयोः संधावात्मनो गतिमात्मदृक् ॥ पश्यन्बंधं च मोक्षं च मायामात्रं च वस्तुतः ५ नाभिनंदेद्ध्रुवं मृत्युमध्रुवं वा स्वजीवितम् ॥ कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम् ६ नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ॥ अतिवादांस्त्यजेत्तर्कान्पक्षं कंचिन्न संश्रयेत् ७ न शिष्याननुबध्नीत ग्रंथान्नैवाभ्यसेद्बहून् ॥ न व्याख्यामुपजीवेत नारंभानारभेत्क्वचित् ८ न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः ॥ शांतस्य समचित्तस्य बिभृयादुत वा त्यजेत् ९ अव्यक्तलिंगो व्यक्तार्थो मनीष्युन्मत्तबालवत् ॥ कविर्मूकवदात्मानं स दृश्यो दर्शयेन्नृणाम् १० अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ प्रह्लादस्य च संवादं मुनेराजगरस्य च ११ तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि ॥ रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् १२ ददर्श लोकान्विचरन्लोकतत्त्वविवित्सया ॥ वृतोमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः १३ कर्मणाकृतिभिर्वाचा लिंगैर्वर्णाश्रमादिभिः ॥ नाविंदत जनोयं वै सोसाविति न चेति च १४ तं नत्वाभ्यर्च्य विधिवत्पादयोः शिरसा स्पृशन् ॥ विवित्सुरिदमप्राक्षीन्महाभागवतोसुरः १५ ॥ प्रह्लाद उवाच ॥ बिभर्षि कायं पीवानं सोद्यमो भोगवान्यथा ॥ वित्तं चैवोद्यमवतो भोगो वित्तवतामिह १६ भोगिनां खलु देहोयं पीवा भवति नान्यथा १७

मक्तेपितथास्यादितितमाह नतइति अर्थोवित्तं यतोवित्तात्पीवोवि यत्तस्मात् बतविस्मयोजायते लोकेनिमित्तांतराभावेसतिपीनत्वंभोगित्वेनदृष्टं अत्रभोगित्वंनदृश्यतेपीनत्वंतुदृश्यते तस्मि
न्निमित्तांतरमस्ति तदस्माकंश्रोतुंक्षमंचेद्वदेत्यन्वयः १८ इतोपिनिमित्तांतरेणभाव्यमन्यथाकवित्वादयोभोगिगुणानस्युरित्याह कविरिति नवेत्ताहिं वेदाननुभवसि अन्नमयंहिसौम्यमनआपो
मयःप्राणस्तेजोमयीवागितिश्रुतेः यःकंटकैर्वितुदतिचंदनैर्यश्चलिंपति अक्रुष्टोपरिक्रुष्टश्चसमस्तस्यचतस्यचेतिश्रुतेः सर्वस्यसमः नद्वेक्षिनद्वेषंकरोषिनौषि स्तुतिंकरोषि अनेनसमत्वंविवृतं १९ इतर
शंविरक्तपाश्रीनारायणचरणारविंदस्मरणमकरंदपानमेवपीनत्वेनिमित्तमितिपरिहारमभिमेत्यप्रह्लादंप्रतिब्रूतेइत्याह नारदइति २० ज्ञानिष्वेकोभवानिदंवेदेत्यन्वयः इदमितिकिंकेनसाधनेनवेदअत्रा
ह वेदेति भवानध्यात्मचक्षुषापरमात्मानुग्रहोत्पन्नज्ञानेननृणामीहोपरमयोःप्रवृत्तिनिवृत्तिलक्षणयोर्मार्गयोःपदंनिश्चितंविषयस्थानंवेदेतिशेषः २१ देहिनामज्ञानसंभवात्त्वय्येकस्वात्मभापितद्विषयं
ज्ञानंनास्तीतिकिंनस्यादित्याशंक्यसत्यंविशेषोस्तितवेत्याह यस्येति हृद्गतत्वंसामान्यमितिमत्वाश्लिष्टइत्युक्तं केवलयाफलानामाकांक्षया ध्वांतमज्ञानलक्षणं अन्यत्रांधकारमज्ञानं तत्त्वाप्रतिप
त्तौकारणत्वेनदृष्टंयतस्तवनास्ति तस्माद्भवान्ज्ञानातीत्यर्थः २२ यद्यपिवक्तव्यांशोनास्त्यथापीदमप्राक्षीदित्येकविषयप्रश्नःकृतःपरिहारेप्रश्नानित्याद्यनेकविषयःकथमयंसंगच्छतइतिचेत् निरुद्य
मस्यवित्तंकथं निर्वित्तस्यभोगःकथमभोगिनःपीनत्वंकथमितिप्रश्नानामपिबहुत्वात् इदमित्यस्याव्ययत्वेनजातिविशेषत्वेनचोपपत्तेः । तवप्रश्नान्ब्रूमहत्यनेनतदनुवादःक्रियतेउत्तपरिहारः । ना

नतेशयानस्यनिरुद्यमस्यब्रह्मन्निहार्थोयतएवभोगाः ॥ अभोगिनोयंतवविप्रदेहःपीवायतस्तद्वदनःक्षमंचेत् १८ कविःकल्पोनिपुणदृक्चित्रप्रियक
थःसमः ॥ लोकस्यकुर्वतःकर्मशेषेनद्वेक्षिनौषिवा १९ ॥ नारदउवाच ॥ सइत्थंदैत्यपतिनापरिपृष्टोमहामुनिः ॥ स्मयमानस्तमभ्याहतद्वागमृतयंत्रितः
२० ॥ ब्राह्मणउवाच ॥ वेदेदमसुरश्रेष्ठभवानन्वार्यसंमतः ॥ ईहोपरमयोर्नॄणांपदमध्यात्मचक्षुषा २१ यस्यनारायणोदेवोभगवान्हृद्गतःसदा ॥ भक्त्या
केवलयाश्लिष्टोधुनोतिध्वांतमर्कवत् २२ अथापिब्रूमहेप्रश्नांस्तवराजन्यथाश्रुतम् ॥ संभाषणीयोहिभवानात्मनःशुद्धिमिच्छता २३ तृष्णयाभववाहि
न्याप्राम्यकामैरपूर्णया ॥ कर्माणिकार्यमाणोहंनानायोनिषुयोजितः २४ यदृच्छयालोकमिमंप्रापितःकर्मभिर्भ्रमन् ॥ स्वर्गापवर्गयोर्द्वारंतिरश्चांपुनरस्य
च २५ अत्रापिदंपतीनांचसुखायान्यापनुत्तये ॥ कर्माणिकुर्वतांदृष्ट्वानिवृत्तोस्मिविपर्ययम् २६

योऽदर्शनात् द्वितीयोपितद्वाचकपदप्रयोगाभावादनुपपन्नः तवप्रश्नानुद्दिश्यपरिहारान्ब्रूमहइतिपक्षोपिगौरवादयुक्तइतिचेदुच्यते ब्रूञ्व्यक्तायांवाचीतिधातोर्व्यक्तिर्नामस्पष्टीकरणंतस्यपरिहारार्थोप
पत्तेः यथाश्रुतमित्यनेनापिस्पष्टीकरणप्रतीतेरिति ननुयदज्ञातज्ञापकंतदेवोपादेयं नचेदंतथा । प्रह्लादस्यभगवदनुग्रहेणज्ञाताशेषार्थत्वादतःकस्मैस्पष्टीक्रियतइत्याशंक्यतदज्ञातमस्माभिर्नवोच्यते
किंतुमहत्संभाषणलक्षणार्थसेवयांतःकरणशुद्धिःस्यादितिमत्वास्पष्टीक्रियतइत्याह संभाषणीयइति अनेनब्रूमहइत्यात्मनेपदार्थोविवृतइतिज्ञापते २३ निवृत्तिमार्गएवसंसारोन्मूलनहेतुरितिवक्तुं प्रवृ
त्तिमार्गस्तुनानादुःखहेतुत्वेनहेयःप्रेक्षावतेत्येतत्स्वानुभवसिद्धमित्याह तृष्णयेति भववाहिन्यानदीवद्वर्तमानयासंसारापादिकयावा इतरनदीनामृतुभेदेनपूर्त्यपूर्त्तीस्यातां नास्याःकदापिपूर्तिरित्याह
प्राम्येति २४ यदृच्छयादैवेच्छया लोकंशरीरंयस्माल्लोकात्मेत्येतिश्रुतेः नकेवलंस्वर्गादेर्द्वारंकिंतुतिर्यगादिजन्मनोपिकारणमित्याह तिरश्चामिति अस्यमनुष्यशरीरस्यापिद्वारमितिशेषः २५ कृष्या
द्युद्योगवतोवित्तंस्यादित्यादिनायदुक्तंसुखंस्यादितितत्परिहरति अत्रापीति अत्रापिमनुष्यशरीरेपिदंपतीनांविपर्ययंदुःखंदृष्ट्वानिवृत्तिमार्गमाश्रितोस्मीत्यन्वयः अन्यापनुत्तयेसुखादन्यदपदुःखस्यानि
रासाय । सुखायकर्माणिकरोतिलोकोनतैःसुखंनान्यदुपारमंवेतिस्वोक्तेः २६

कर्मणोनिवृत्तस्यदुःखस्यनिरासायसुखावाप्तौकिंयतनेनगमित्याशंक्यपदि सुखंस्वरूपम्प्रिंबताहितत्प्राप्तीयत्नःकर्तव्योनचैवंस्वरूपत्वात् सुखस्यतद्वयकौस्वरूपाच्छादकसर्वानिषिद्धकर्मनिवृत्त्याविर्भूतंभगवत्प्रसादएवसुखोत्पत्तिनिमित्तमित्याह सुखमिति बलमानंदओजश्चसहोज्ञानमनाकुलम् स्वरूपाण्येवतुजीवस्यव्यज्यंतेपरमाद्विभोरित्यादिहिशब्देनदर्शयति अस्यात्मनोजीवस्यस्वरूपभूतंयत्सुखंतत्सर्वेहोपरतेःप्रसन्नात्सर्वापूर्णेहाचेष्टायस्यतस्येहः। कोह्येवान्यादितिश्रुतेः। उपाऽधिकाऽस्त्युद्रिक्तारतिरानंदोयस्यसउपरतिःयदेषआकाशआनंदोनस्यादितिश्रुतेःसर्वेहश्चउपरतिश्चसर्वेहोपरातिस्तस्माद्धरेराविर्भवतीतिशेषः उपोधिकइतिसूत्रात् ततःकिंतत्राह मनःसंस्पर्शजानिति मनोधिष्ठितेंद्रियाणांविषयैः संस्पर्शनात्संबंधात्। जाताश्चछस्तान्स्रगादिभोगानसंविशेत्नसेवेत। बुद्धिमानितिशेषः २७ एतदंगीकारविरुद्धस्यबाधकमाह इतीति। आत्मनइत्येतदुक्तमित्येवंतत्प्रसिद्धमितिशेषःइतिशब्दःप्रकारवचनः। तत्रपुमान्संतंसदातनंस्वार्थंपुरुषार्थंविस्मृत्याऽसतिभगवत्प्रसादेननिवर्तमाने द्वैतेऽन्यथाज्ञाने विषये। विचित्रांसुरनरादिनानायोनिविषयांघोरांसंसृतिमाप्नोतीत्यन्वयः २८ स्वतृष्णायाअनिवृत्तकत्वात्संसारस्यघोरत्वमितीममर्थंसदृष्टांतमाह जलमिति। तदुद्भवैर्जलोद्भवैः शैवलादिभिरज्ञोज्ञानरहितोऽविदितद्वियोमृगतृष्णांसूर्यमरीचिसंपृक्तसलिलंयथोपधावेत्तथा स्वतःस्वतंत्राद्धरेरन्यत्रदेवदत्तादावर्थदृक्पुरुषार्थदर्शी २९ ननुपुरुषार्थंसाधनत्वेनजातैर्देहादिभिरनुष्ठिताः क्रियाःसुखादिहेतवःस्युरि

सुखमस्यात्मनोरूपंसर्वेहोपरतेर्हियत् ॥ मनःसंस्पर्शजान्दृष्ट्वाभोगाञ्छस्तान्नसंविशेत् २७ इत्येतदात्मनःस्वार्थंसंतंविस्मृत्यवैपुमान् ॥ विचित्रामसति द्वैतेघोरामाप्नोतिसंसृतिम् २८ जलंतदुद्भवैश्छन्नंहित्वाज्ञोजलकाम्यया ॥ मृगतृष्णामुपाधावेत्तथान्यत्रार्थदृक्स्वतः २९ देहादिभिर्दैवतंत्रैरात्मनःसुखमीहतः ॥ दुःखात्ययंचानीशस्यक्रियामोघाःकृताकृताः ३० आध्यात्मिकादिभिर्दुःखैरविरक्तस्यकर्हिचित् ॥ मर्त्यस्यकृच्छ्रोपनतैरर्थैःकामैःक्रियेत किम् ३१ पश्यामिधनिनांक्लेशंलुब्धानामजितात्मनाम् ॥ भयादलब्धनिद्राणांसर्वतोपिविशंकिनाम् ३२ राजतश्चोरतःशत्रोःस्वजनात्पशुपक्षितः ॥ अर्थिभ्यःकालतःस्वस्मान्नित्यंप्राणार्थवद्भयम् ३३ शोकमोहभयक्रोधरागक्लैब्यश्रमादयः ॥ यन्मूलाःस्युर्नृणांजह्यात्स्पृहांप्राणार्थयोर्बुधः ३४ मधुकारमहासर्पौलोकेस्मिन्नोगुरूत्तमौ ॥ वैराग्यंपरितोषंचप्राप्तायच्छिक्षयावयम् ३५

त्याशंक्य भगवदर्पणबुद्धिचिकित्साराहिताव्यर्थाइत्याह देहादिभिरिति। यायाः कृताकृताः क्रियास्तास्ताः सर्वाअपिमोघाः तत्रहेतुगर्भविशेषणम् अनीशस्येशविरुद्धस्य ३० इतोपिवित्तापादनेनप्रयत्ननीयम् आध्यात्मिकादिक्लेशग्राहगृहीतत्वेनडुंडुभग्रस्तमंडूकवत्समृद्धशारीरबलाभावात् कृतांतपाशबद्धगलस्यपुरुषस्यपुरतोनिहितक्षीरासववद्व्यर्थंचित्तमित्याह आध्यात्मिकादिभिरिति कामैः शब्दादिविषयैः ३१ कस्यचिददृष्टबलादुपार्जितवित्तस्यसमृद्धशारीरबलस्यापिलोभाभिभूतमनस्कत्वेनापिभोगोदुर्घटइत्याह। पश्यामीति ३२ प्राणार्थवद्भयम् अर्थवतः प्राणभयंभवतिप्राणवतोर्थवतश्चेतिवा ३३ ननुसर्वानर्थशमनेकिंकारणमित्याशंक्य स्पृहासर्वापदोनिदानमतस्तत्त्यागएवप्रथमतःकारणमित्याह शोकेति। यास्पृहामूलंयेषांतेतथाप्राणेऽर्थेचस्पृहां। वैष्णवासिद्धांतेतद्विरोधिनोजनात् प्राणसंकटेप्राप्तेप्राणरक्षणेस्पृहापिनकार्याकिमुतार्थइतिप्रदर्शनायप्राणग्रहणम् ३४ वित्तवतःप्राणभयंवित्तस्पृहयाशोकादिकंस्यादित्युक्तमर्थंमधुकराजगरदृष्टांतेनबोधयति मधुकारेति। गुरूत्तमावाशिक्षाताऽऽभ्यामेवाप्तेतिगुरूत्तमावित्यूचे ३५

१ सर्वानर्थशमनेइतिपाठान्तरंतदास्पृहेत्यत्रान्वयः २ वैष्णवानाम् तत्सिद्धान्त विरोधिजनादित्यर्थः

यथाबलैर्मधुमर्वहत्वान्योमधुहरति तथा वित्तापादकंहत्वाकृच्छ्रादर्जितंराजाद्यन्यतमोहरेत्मधुव्रतस्थातैदृष्ट्वासर्वकामेभ्योविरागःशिक्षितः ३६ उदरपोषणप्रयत्नशून्योनीहः । नोचेद्यदृच्छयाऽप्रा प्तेचेन्महाहिरजगरः ३७ भूरिगुणोपेतंकस्मिंश्चिदिवाह्यचेवभुक्त्वानक्तंभुंजेकस्मिंश्चिदिनेनक्तंअभुक्त्वाह्निभुंजे ३८ ३९ क्षौमंदुकूलमित्यादिकमेकस्मिञ्जन्मनिबहुजन्मनिचेतियथायोग्यमगीकर्तव्यं दैवलब्धेनभुंजेइतिदिष्टभुक् । क्षौमाद्याच्छादनंगजादिभिश्चरणक्षत्रजन्मनि प्रासादादिशयनम् । भूपृष्ठशयनंचपश्वादिजन्मनि । भस्मादौशयनंश्वानादिजन्मनि बाल्येचअजिनादि अजिनाद्याच्छाद नमृग्यादिजन्मनि अस्मिन्जन्मनि जन्मांतरेवा । दिग्वासाःदिगंबरः ४० ४१ ४२ सत्त्वादिगुणस्वभावंनविषमसात्त्विकराजसतामसभेदभिन्नंसर्वेभ्योभयंमत्तइतिचतिधर्मत्वात्भूतानाभद्रमेवाशा सेतन्नापिभगवत्स्वामित्वंनविस्मरामीत्याह आशासइति उतेत्याशासइत्यनुवर्तते जगतएकएवस्वामीतिभावमैकात्म्यं उताशासेकस्मिन्विषयेमहात्मनिभगवद्विषयइत्यर्थः ४३ तुर्याश्रमस्थेनावि हितोपासनानंतरमिदंचकर्तव्यंब्रह्मप्राप्तिमार्गत्वादित्याह । विकल्पमिति । विकल्पंजगच्चित्तेमनोवृत्त्याभिमानिनिविन्यसेज्जुहुयात् । जगच्चित्ताख्याग्न्याधीनमितिचिंतयेत् । चित्तमग्निमर्थेषुभ्रममाणे

विरागःसर्वकामेभ्यःशिक्षितोमेमधुव्रतात् ॥ कृच्छ्राप्तंमधुवद्वित्तंहत्वाप्यन्योहरेत्पतिम् ३६ अनीहःपरितुष्टात्मायदृच्छोपनतादहम् ॥ नोचेच्छयेब हूहानिमहाहिरिवसत्त्ववान् ॥ ३७ ॥ क्वचिदल्पंक्वचिद्भूरिभुंजेऽन्नंस्वाद्वस्वादुवा ॥ क्वचिद्भूरिगुणोपेतंगुणहीनमुतक्वचित् ॥ ३८॥ श्रद्धयोपहृतंक्वापि क्वाचिन्मानवर्जितम् ॥ भुंजेभुक्त्वाथकस्मिंश्चिद्दिवानक्तंयदृच्छया ३९ क्षौमंदुकूलमजिनंचीरंवल्कलमेववा ॥ वसेऽन्यदपिसंप्राप्तंदिष्टभुक्तुष्टधीरहम् ४० क्वचिच्छयेधरोपस्थेतृणपर्णाश्मभस्मसु ॥ क्वचित्प्रासादपर्यंकेकशिपौवापरेच्छया ॥ ४१ ॥ क्वचित्स्नातोनुलिप्तांगःसुवासाःस्रग्व्यलंकृतः ॥ रथेभाश्वैश्चर न्क्वापिदिग्वासाग्रहवत्क्वचित् ॥ ४२ ॥ नाहंनिंदेनचस्तौमिस्वभावविषमंजनम् ॥ एतेषांश्रेयआशासेउतैकात्म्यंमहात्मनि ॥ ४३ विकल्पंजुहुयाच्चि त्तौतन्मनस्यर्थविभ्रमे ॥ मनोवैकारिकेहुत्वातन्मायायांजुहोत्यमुम् ॥ ४४ ॥ आत्मानुभूतौतांमायांजुहुयात्सत्यदृङ्मुनिः ॥ ततोनिरीहोविरमेत्स्वानु भूत्यात्मनिस्थितः ॥ ४५ ॥ स्वात्मवृत्तंमयेत्थंतेसुगुप्तमपिवर्णितम् ॥ व्यपेतंलोकशास्त्राभ्यांभवान्हिभगवत्प्रियः ४६

भगवत्सुपाधावमानेमनसिमनोनामेंद्राधीनतयातिष्ठतीतिचिंतयेत् । मनइंद्रंवैकारिकेरुद्रेहुत्वासंचिंत्यामुंरुद्रंमायायांप्रकृतौविकारेमहत्तत्त्वेवीरेचेसंचिंत्यतांमायांतंविरिंचवात्मानुभूतौचित्प्रकृतौजुहुया च्चिंतयेत् । चित्ताख्याग्नेरधीनंहिजगदेतद्धिचिंतयेत् । मनोनामेंद्रवशगमग्निंचप्रतिचिंतयेदितिवाक्यात्सर्वमवगंतव्यं अत्रजडकार्यस्यजडकारणात्मकत्व चेतनस्यचेतनाधीनत्वं चिंतनीयमि त्यर्थः । तामात्मानुभूतौस्वानुभूतेर्लक्ष्म्याआत्मनिस्वामिनिपत्यौनिरंतरंचिंतयेत् ततोमुनिरनंतरंकृतकृत्यः वेत्तावेद्यस्यसर्वस्यमुनिःसद्भिरुदाहृतः इत्युक्तमालावचनात् । किंचसत्यंसाधुगुणंपूर्ण विष्णुंपश्यतीतिसत्यदृक् स्वानंदानुभवात्मनिस्वमहिम्निस्थितः । महिम्निस्वेमहीयतइतिवचनात् । स्वरूपानंदज्ञानात्मनिब्रह्मणिस्थितइतिवा निरीहोनिषिद्धचेष्टारहितोविरमेत् कृत्यादितिशेषः ४४ ४५ प्रतिपादितमर्थंनिगमयति स्वात्मेति मयास्वात्मनोममवृत्तंतुभ्यमनुवर्णितमित्यन्वयः । स्वात्मनोजीवस्यवापरमात्मनोवा । कीदृशं मुखतोलोकशास्त्राभ्यांव्यपेतंरहितं । आतरतोविपरी तत्वेनप्राप्तंशास्त्रसिद्धत्वाच्छास्त्रीयमित्यर्थः । अशास्त्रीयत्वान्मुखतःशास्त्रापेतमिदंविदुः । शास्त्रनिर्णयगम्यत्वाच्छास्त्रीयमभिधीयतइतिवचनादुक्तएवार्थः । इदंसिद्धमित्यभिप्रेत्याह भवानिति ४६

१ तुर्यावस्थेनेति पाठान्तरम् २ मुखतः आपाततः अशास्त्रीयत्वात् शास्त्रेणाप्रतीतत्वात् शास्त्रव्यपेतम् । शास्त्रनिर्णयगम्यत्वाच्छास्त्रीयमेवेतिभावः । टी०

नांविद्यमानम् ४७ इति श्रीभागवते म० सप्तमस्कंधवि० टी० चतुर्दशोऽध्यायः ॥ १४ ॥ सर्ववर्णाश्रमाणां गृहाश्रमभू
त्र नापृष्टः कस्यचिद्ब्रूयादिति न्यायात् युधिष्ठिर पृच्छतीत्याह । युधिष्ठिर इति । एतां गृहवीमन्याश्रमविषयां विधि
प्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् बलिकर्म स्वधा होम स्वाध्यायातिथिसत्क्रियाः । भूतपित्रमरब्रह्ममनुष्याणां
नादृतं कामितम् ४ स्वप्नदृष्टोत्थित स्वप्नदृष्टपदार्थसंगं यथा जहाति तथा जायादिसंगं मुंचेदित्यन्वयः ५ यावद
र्थं त्वं न्यसेत्त्यजेत् । पतिर्भवेदित्यर्थः ६ ७ अंतरिक्षं द्यावापृथिव्योर्मध्यभवमच्युतेनानिर्मितं यद्वित्तमुपयुंजीरन्
। यावदिति जठरं यावदन्नं भ्रियेत गृह्णाति तावदन्नं स्वत्वस्वकीयमिति स्वीकुर्यात् । ततोऽधिकादाने दंडयोग्यमि

प्रीत आमंत्र्य प्रययौ गृहान् ॥ ४७ ॥ इति श्रीभागवते महापुराणे सप्तमस्कंधे चतुर्दशो
ऽध्यायः ॥ १४ ॥ युधिष्ठिर उवाच ॥ गृहस्थ एतां पदवीं विधिना येन चांजसा ॥ यायाद्देवऋषे ब्रूहि मादृशो गृहमूढधीः ॥ १ ॥ नारद उवाच ॥ साधु पृष्टं महा
भाग लोकानामनुगृह्णता ॥ तत्त्वेन तदहं वक्ष्ये नैष्कर्म्यं येन कर्मणाम् ॥ २ ॥ गृहेष्ववस्थितो राजन्क्रियाः कुर्वन् गृहोचिताः ॥ वासुदेवार्पणं साक्षादुपासीत म
हामुनीन् ॥ ३ ॥ शृण्वन्भगवतोऽभीक्ष्णमवतारकथामृतम् ॥ श्रद्दधानो यथाकालमुपशांतजनावृतम् ४ तत्संगाच्छनकैः संगमात्मजायात्मजादिषु ॥
विमुंचेन्मुंचमानेषु स्वयं स्वप्नवदुत्थितः ५ यावदर्थमुपासीनो देहे गेहे च पंडितः ॥ विरक्तो रक्तवत्तत्र नृलोके नरतां न्यसेत् ६ ज्ञातयः पितरौ पुत्रा भ्रा
तरः सुहृदोऽपरे ॥ यद्वदंति यदिच्छंति अनुमोदेत निर्ममः ७ दिव्यं भौमं चांतरिक्षं वित्तमच्युतनिर्मितम् ॥ तत्सर्वमुपयुंजीरन्स्वीकुर्यात्स्वतो बुधः ८ याव
द्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम् ॥ अधिकं योऽभिमन्येत स स्तेनो दंडमर्हति ९ मृगोष्ट्रखराश्वमर्काखुमरीसृपविमक्षिकान् ॥ आत्मनः पुत्रवत्पश्येत्तैरेषा
मंतरं कियत् १० त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि ॥ यथादेशं यथाकालं यावद्दैवोपपादितम् ११ आश्वभ्योंतेवसायिभ्यः कामान्संविभजेद्यथा ॥
अप्येतान्महतो दारान्नृणां सत्त्वग्रहे हि यतः १२ जह्याद्यदर्थे स्वान्प्राणान्हन्याद्वा पितरं गुरुम् ॥ तस्यां स्वत्वं स्त्रियां जह्याद्यस्तेन ह्यजितो जितः १३

त्याह अधिकमिति ९ आखुर्मूषकः वृषदंशश्च मार्जारो मर्कट उच्यते इत्यभिधानं । वयः पक्षिणः अंतरं भेदः कियान्न कोपि पराधीनत्वाविशेषात् १० अतिकृच्छ्रेण शास्त्राविहितमार्गेण शूद्रप्रतिग्रहादिलक्षणेन गृह
मेधी गृहस्थः । अपि सर्वोऽप्ययत्नेऽपि दैवोपपादितं यथा विद्रीहि जातमपाचितोपपन्नं वा ११ कर्मांगं चेदारग्रहणं प्रयोजनन ग्राम्यभोगः तथात्वे तदाशापूरणस्य दुःसाध्यत्वेन तत्प्रयत्ने महान्दोष आपद्येत त
दभिप्रायेणाह । आश्वेति । यदर्थे येषामर्थे कामपूरणार्थं स्वप्राणान् जह्यात् पितरं वा गुरुं वा हन्यात् तद्विरोधेऽमतीति शेषः किंच यतोऽयमेभ्यो नृणां सत्त्वग्रहो सत्त्वगुणग्राहो धैर्यनिग्रहो भवतीति शेषः तानेतान्म
हतो दारानाश्वाकामान्यथायोग्यं संविभज्य श्वपसेयटेनेतिषः १२ यद्यंगना प्राणाद्यपहारिणीति हितया श्रेयसे घटनं कथमित्याशंक्याह तस्यामिति सत्त्वग्रहइत्यादिकमु तरत्रापि संबध्यते अजितोऽपि
यस्याः सत्त्वग्रहस्तस्याः स्त्रियास्ते न सत्त्वेन जितो वशंगतः सपुमांस्तस्यां स्त्रियां स्वत्वं जह्यादित्यन्वयः यादिस्वात्मानमुद्दिश्यसावर्तते तेन हि तस्यास्त्यागएवत्रवर्गयानिति । इममर्थं हिशब्देन दर्शयति । हताधिकारां मद्भि

नांपिबमात्रोपजीविनीम् । परिभूतामधःशय्यां वासयेद्व्यभिचारिणीमितिच यत्रानुकूल्यंदंपत्योस्त्रिवर्गस्तस्यवर्धते मृतेजीवतिवापत्यौयानान्यमुपगच्छति । सेहकीर्तिमवाप्नोतिमोदतेचोमयासहइ स्त्रीभिर्भर्तृवचःकार्यमेषधर्मःपरःस्त्रियइतिच १३ ग्राम्यधर्मेणशरीरमेवानित्यंक्षणिकंभयग्रस्तंभयमुत्पादयते । ननुनिरयमतश्चनित्यदुःखंशरीरंच कृमिविड्भस्मावसायिनवरन्नेना काशशरीरब्रह्मज्ञानंदुरुत्पाद्यमेतत्कुतः पायंतरेणाप्यादुःखहेतुत्वाद्गृहस्थस्यस्त्रीत्यागएवश्रेयानित्याशयवानाह ॥ कृमीति । नदीयदेहेनक्रियमाणारतिर्यस्याःसानधा : आत्मायस्मात्मा । अत्राप्याजीवःशरीरान्नरगान्छरीरम्रसंगादित्यनउक्तम् नभश्छदिरिति । नभसश्छदिराच्छादनंयस्यसतथा नभोव्याप्यावस्थितइत्यर्थः । आकाशशरीरंब्रह्मेतिश्रुतेः । अणुर्ह्येषआत्मायंवाएतेसनीत पुण्यंचपापंचेतिश्रुतेर्जीवस्याणुपरिमाणत्वेनसिद्धत्वात् १४ यजदेवपूजासंगतिकरणदानेष्वितिधातोः यज्ञोनारायणाख्यदेवपूजातत्करणावशेषितैः सिद्धैर्ज्ञानसाधनयोग्यैरर्थैः स्ववृत्तिंदेहयात्रालक्षणांकल्पयेत् । तत्रापिशेषेऽवशिष्टवस्तुनिस्वत्वंस्वकीयत्वंत्यजेद्यःसप्राज्ञोमहतांसंन्यासिनांपदवीमाप्नोतीत्यन्वयः १५ देवादिषामेवुतदंतर्यामित्वेनततोभिन्नत्वेनभगवत्पूजंबुद्ध्येत्याशयेनाह । देवानिति १६ योह्ययदास्ययज्ञाधिकारोस्तियदावासर्वायज्ञसंपदः स्युस्तदावैतानिकविधिनाग्निहोत्रविधिनावायजेदित्यन्वयः १७ ननुमुख्यंहोमादिकरणंभगवत्प्रीतिजनकंकिंतत्राह नहीति १८ उपसंहारमुखेनोक्तार्थंनिर्धारयति । तस्मादिति ब्राह्मणआननंयस्यसतथातं

कृमिविड्भस्मनिष्ठांतंक्वेदंतुच्छंकलेवरम् ॥ क्वतदीयरतिर्भार्याक्वायमात्मानभश्छदिः १४ सिद्धैर्यज्ञावशिष्टार्थैःकल्पयेद्वृत्तिमात्मनः ॥ शेषेस्वत्वंत्यजेत्प्राज्ञः पदवींमहतामियात् १५ देवानृषीन्नृभूतानिपितॄनात्मानमन्वहम् ॥ स्ववृत्त्यागतवित्तेनयजेतपुरुषंपृथक् १६ यर्ह्यात्मनोधिकारोस्तिसर्वाःस्युर्यज्ञसंपदः ॥ वैतानिकेनविधिनाअग्निहोत्रादिनायजेत् १७ नह्यग्निमुखतोयंवैभगवान्सर्वयज्ञभुक् ॥ इज्येतहविषाराजन्यथाविप्रमुखेहुतैः १८ तस्माद्ब्राह्मणदेवेषुमर्त्यादिषुयथार्हतः ॥ तैस्तैःकामैर्यजस्वैनंक्षेत्रज्ञंब्राह्मणाननम् १९ कुर्यादपरपक्षीयंमासिप्रौष्ठपदेद्विजः ॥ श्राद्धंपित्रोर्यथावित्तंतद्बंधूनांचवित्तवान् २० अयनेविषुवेकुर्याद्व्यतीपातेदिनक्षये ॥ चंद्रादित्योपरागेचद्वादश्यांश्रवणेषुच २१ तृतीयायांशुक्लपक्षेनवम्यामथकार्तिके ॥ चतसृष्वप्यष्टकासुहेमंतेशिशिरेतथा २२ माघेचसितसप्तम्यांमघाराकासमागमे ॥ राकायाचानुमत्यावामासर्क्षाणियुतान्यपि २३ द्वादश्यामनुराधास्याच्छ्रवणास्तिस्रउत्तराः ॥ तिसृष्वेकादशीचासुजन्मर्क्षश्रोणयोगयुक् २४ तएतेश्रेयसःकालानृणांश्रेयोविवर्धनाः ॥ कुर्यात्सर्वात्मनैतेषुश्रेयोऽमोघंतदायुषः २५

१९ ननुयज्ञसंभारेसतिविशिष्टफलप्रदःकालःकइतितत्राह कुर्यादिति । प्रोष्ठपदेकन्याख्येसिंहमासामावास्यामारभ्यकन्यामावास्यापर्यंते । तत्राप्यपरपक्षीयकालेश्राद्धंकुर्यादित्युत्तरार्धंप्यन्वेतव्यम् तद्बंधूनांपितृमातृबंधूनांपितामहमातामहादीनाम् २० अयनेउत्तरदक्षिणसंज्ञे । विषुवेसंवत्सरातसंक्रमणे । कुह्वाममावास्यायांश्रवणेषुश्रवणादित्रिषु । चशब्दात्सप्तम्यादित्रिषुत्रयोदश्यांच । तदुक्तम्सप्तम्यादित्रयंचैवतथाचैवत्रयोदशी । चतस्रस्त्वष्टकाःप्रोक्ताःसर्वपक्षाद्विशेषतइति २१ वृश्चिकमासमावास्यामारभ्यमकरमासामावास्यापर्यंतःकालोहेमंतः तदुपरिकालःशिशिरः हेमंतेशिशिरेचैवनित्यश्राद्धेगुणोत्तरमितिवचनात् अयमपिविशिष्टकालः २२ राकापौर्णमासीमघापौर्णमास्योःसंगमे शशिनिसिनीवालीस्यात्नष्टेनष्टेकुहूरमावास्या अनुमतिर्हीनेराकासपूर्णेपौर्णमासीचेतिहलायुधःराकयानुमत्यायुतानिमासनक्षत्राणि २३ यास्तिस्रःश्रवणादितारासुतारासुयाएकादशीपुण्यकालोऽत्रश्राद्धकरणचविकल्पः । एकादश्याश्राद्धकरणस्यानिषिद्धत्वान्नवैष्णवसिद्धांतिनरतदाचरंतिनैवविचाश्चरंतिचवा यथैकादशीपुण्यदिनम् अत्रक्रियमाणंकर्मसफलंतथातिसृष्वपितारास्वितिवा जन्मनक्षत्रंश्राद्धकालइतिशेषः । श्रोणयोगयुक्मृगशिरसंबंधियुक्तंदिनच २४ २५

२६ २७ २८ सत्पात्रंविशिनष्टि विश्वमिति यस्मिन्देशेभागवतस्तस्मिंश्चराचरंसर्वंजगदस्तीतिज्ञातव्यं यतिर्यस्यगृहेभुंक्तेतत्रभुंक्तेहरिःस्वयं हरिर्यस्यगृहेभुंक्तेतत्रभुंक्तेजगत्त्रयमितिवचनात् २९ अर्चाशालग्रामादिप्रतिमा पुराणेषुभागवतादिषु विश्रुताः ३० कृष्णावेण्यादयश्चक्षेत्राणि पुरुषोत्तमादीनि अर्हैःपूज्यैरगस्त्यादिभिराश्रितान्यधिष्ठितानि ३१ फल्गुनस्थानंहरपुरंकन्यातीर्थंवा। कन्यापुरंफल्गुनंरयात्स्थानंहरपुरंचतदित्यभिधानं वाराणसीपुरीकाची ३२ ३३ हरेरर्चाश्रिताः हरिक्षेत्रादयः पुनर्वचनंसर्वस्मात्तेषांश्रैष्ठ्यद्योतनाय ३४ एतद्देशनिषेवणेनाकिंविशेषफलमि तितत्राह धर्मइति कृष्णातरंगसंभूतपवनस्पर्शमात्रतः निर्धूतपातकाःसर्वेजनाविष्णुपदंययुरित्यादिशास्त्रेषुसहस्राधिकफलोदयत्वेनोदितः पात्रेष्वपितारतम्यमस्तितत्रमुख्यपात्रंहरिरित्याह पात्र मिति पात्रतारतम्यवित्तमैःकविभिःपात्रंचनिरुक्तं वैमुख्यत्वेननिर्णीतइत्यन्वयः ३५ किंतदित्यतउक्तं हरिरिति चराचरंयन्मयंयत्स्वामिकंपद्मचासंसर्वंयस्मात्तस्माद्धरिरेवमुख्यंपात्रमित्यन्वयः इदंभवतोपिसिद्धमित्याह देवेति ब्रह्मात्मजादिषुसत्सुदेवाश्चऋषयश्चदेवर्षयस्तएवार्हतःपूजायोग्यायेष्वपिसत्सुतत्रतत्रयज्ञशालायामच्युतोगुणतोवयतःस्वरूपतश्चच्युतिरहि तत्वात्श्रीनारायणोग्रपूजाया

येषुस्नानंजपोहोमोव्रतंदेवद्विजार्चनम् ॥ पितृदेवनृभूतेभ्योयद्दत्तंतद्ध्यनश्वरम् २६ संस्कारकालोजायायाअपत्यस्यात्मनस्तथा ॥ प्रेतसंस्थामृताहःसुक र्मण्यभ्युदयेनृप २७ अथदेशान्प्रवक्ष्यामिधर्मादिश्रेयआवहान् ॥ सवैपुण्यतमोदेशःसत्पात्रंयत्रलभ्यते २८ विश्वंभागवतोयत्रजगदेतच्चराचरम् ॥ य त्रहब्राह्मणकुलंतपोविद्यादयान्वितम् २९ यत्रयत्रहरेरर्चासदेशःश्रेयसांपदम् ॥ यत्रगंगादयोनद्यःपुराणेषुचविश्रुताः ३० सरांसिपुष्करादीनिक्षेत्राण्य र्हाश्रितान्युत ॥ कुरुक्षेत्रंगयाशिरःप्रयागःपुलहाश्रमः ३१ नैमिषंफल्गुनंसेतुःप्रभासोथकुशस्थली ॥ वाराणसीमधुपुरीपंपाबिंदुसरस्तथा ३२ नाराय णाश्रमोनंदासीतारामाश्रमादयः ॥ सर्वेकुलाचलाराजन्महेंद्रमलयादयः ३३ एतेपुण्यतमादेशाहरेरर्चाश्रिताःपुनः ॥ एतान्देशान्निषेवेतश्रेयस्कामोह्य भीक्ष्णशः ३४ धर्मोह्यत्रोदितःपुंसांसहस्राधिफलोदयः ॥ पात्रंत्वत्रनिरुक्तंवैकविभिःपात्रवित्तमैः ३५ हरिरेवैकउर्वीशयन्मयंवैचराचरम् ॥ देवर्ष्यर्हत्सुवै सत्सुतत्रब्रह्मात्मजादिषु ॥ राजन्यदग्रपूजायांमतःपात्रतयाच्युतः ३६ जीवराशिभिराकीर्णआंडकोशांघ्रिपोमहान् ॥ तन्मूलत्वादच्युतेज्यासर्वजीवात्म तर्पणम् ३७ पुराण्यनेनसृष्टानिनृतिर्यगृषिदेवताः ॥ शेतेजीवेनरूपेणपुरेषुपुरुषोह्यसौ ३८ तेष्वीशोभगवान्राजंस्तारतम्येनवर्तते ॥ तस्मात्पात्रंहिपुरु षोयावानात्मायथेयते ३९

पात्रतयामतस्त्वयाज्ञातइतियदतोमुख्यपात्रंहरिरित्यवधारणायुक्ता ३६ किंचप्रत्येकंपूजापिनविधेयाभगवत्पूजयातत्तृप्तिसंभवात्तन्मूलत्वात्तेषां तरुमूलनिषेचनंशाखानामिवेतिमुख्यवैष्णवसि द्धांतमाह जीवराशिभिरिति ३७ ननुमुख्यपात्रालाभेविहितकर्मानुष्ठानविषयाभावेनतद्विधानंव्यर्थमित्याशंक्यतत्तद्योग्यपात्रंवक्तुंकंचनसृष्टिप्रकारमाह पुराणीति अनेनदयालुनाहरिणानृतिर्य गादिसंज्ञितानिपुराणिशरीराणिसृष्टानीत्यन्वयः ततःकिंतत्राह शेतइति श्रीहरिरेषु पुरेषुभोगायतनेषुजीवेनरूपेणस्वप्रतिबिंबेनसहशेतेइतियत्तस्मादसौपुरुषइत्युच्यते जीवोपितन्नामेतिशेषः पुरिशयनात्पुरुषइतिश्रुतिहिशब्देनसूचयति ३८ ईशोभगवांस्तेषुपुरेषुस्थितःपुरुषनामसुजीवेषुचतारतम्येनतत्तद्भक्त्यादिगुणतारतम्यानुसारेणसन्निधानतारतम्येनवर्ततइति यस्मात्तस्मात्तद्यो ग्यानुसारेणपुरुषोजीवराशिश्चपात्रं। तदंतर्यामिहरिस्मरणपूर्वकमितिशेषः अत्रसन्निधानतारतम्यमेवहरेर्नतुस्वरूपतारतम्यं तदुक्तं ब्रह्मादिस्थावरांतेषुनविशेषोहरेःक्वचित् । व्यक्तिमात्रविशेषेणतार तम्यंवदंतिचेतिअत्रापीत्थंभावमाह यावानिति पुरुषेतुस्थितआत्मायावान् महिम्नायथायेनप्रकारेणज्ञायते तदानुकूल्येनजीवराशिःपात्रमित्यर्थः ३९

हरिप्रतिमापूजायाः पुरुषस्थितपुरुषनाम्नोहरेः पूजासम्यक्फलवतीत्याशयेनाह दृष्ट्वेति कविभिस्तेषांनृणांमिथआत्मनोहरेरवज्ञांदृष्ट्वात्रेतायांसपर्या क्रियायैहरेरर्चाकृतायस्मात् ४० ततःकेचि त्संश्रद्धयासपर्ययाअर्चायांहरिमुपासतेयेतेषांपुरुषस्थितहरिद्विषां सोपासैहिकफलमंतरेणपरमपुरुषार्थप्रदानभवतीत्यन्वय ४१ मुख्यपात्रमाह पुरुषेष्विति । कीदृशोब्राह्मणोमुख्यंपात्रमित्य तस्ताद्विशिनष्टि तपसेति । तनुप्रतिमास्थानं अत्र शिलावत्प्रतिमाःसंतोविप्राद्याश्चहरेःस्मृताइतिवचनात् विप्रादिमात्रंहरेःशिलास्थानीयंनकिंतुतपआदिगुणविशिष्टब्राह्मणकुलं अन्यथाहरेरचैषासापु रुषार्थप्रदानस्यादितितदुपासांविनिंद्यसुपात्रंब्राह्मणविदुरितिकथनंव्यर्थंस्यादतएवब्रह्मणतीतिब्राह्मणइतितत्पदप्रायोजि ४२ ४३ इतिश्रीभागवतेमहापुराणेविजयध्वजटीकायांपंचदशोध्यायः ॥१५॥ कर्ममार्गोज्ञानमार्गश्चकार्याणांकारणेषुलयःप्रवेशलक्षणंचतत्साधनंचप्रपंचस्वरूपंचानिरूपयत्यस्मिन्नध्याये तत्रप्रथमतोब्राह्मणादपिज्ञाननिष्ठमुत्तमंपात्रं दैवोपलब्धेनद्रव्येणैवनित्यनैमित्तिकाक्रियाकरणं धर्माधर्मविवेकश्चकथ्यते । तत्रब्राह्मणान्विवेचयति कर्मेति । कर्मनिष्ठागृहस्थाः तपोनिष्ठावानप्रस्थाः स्वाध्यायनिष्ठाब्रह्मचारिणः प्रवचननिष्ठाः कुटीचकाः बहूदकाश्च योगनिष्ठा हंसाः ज्ञाननिष्ठाः परम हंसाः १ तत्रसंततेरानंत्यंमुक्तिंचेच्छताज्ञाननिष्ठायपरमहंसायकव्यानिपितृभ्योदीयमानान्यन्नानिदातव्यानीतिविधिरित्यन्वयः दैवेकर्मणिचतस्माइतिशेषः तदभावेपरमहंसाभावेइतरेभ्योहंसादिभ्यः

दृष्ट्वातेषांमिथोनृणामवज्ञानात्मनोनृप ॥ त्रेतादिषुहरेरर्चाक्रियायैकविभिःकृता ४० ततोर्चायांहरिंकेचित्संश्रद्धयाचसपर्यया ॥ उपासतउपासापिनार्थ दापुरुषद्विषाम् ४१ पुरुषेष्वपिराजेंद्रसुपात्रंब्राह्मणंविदुः ॥ तपसाविद्ययातुष्ट्याधत्तेवेदंहरेस्तनुम् ४२ नन्वस्यब्राह्मणाराजन्कृष्णस्यजगदात्मनः ॥ पुनंतःपादरजसात्रिलोकींदैवतंमहत् ४३ इतिश्रीभागवतेमहापुराणेसप्तमस्कंधेपंचदशोध्यायः ॥१५॥ ॥ नारदउवाच ॥ कर्मनिष्ठाद्विजाःकेचि त्तपोनिष्ठानृपापरे ॥ स्वाध्यायेन्येप्रवचनेअन्येचज्ञानयोगयोः १ ज्ञाननिष्ठायदेयानिकव्यान्यानंत्यमिच्छता ॥ दैवेचतदभावेस्यादितरेभ्योयथार्हतः २ द्वौदैवेपितृकार्येत्रीनेकैकमुभयत्रवा ॥ भोजयेत्सुसमृद्धोपिश्राद्धेकुर्यान्नविस्तरम् ३ देशकालोचितश्रद्धाद्रव्यपात्रार्हणानिच ॥ सम्यग्भवंतिनैतानि विस्तरात्स्वजनार्पणात् ४ देशेकालेचसंप्राप्तमुन्यन्नंहरिदैवतम् ॥ श्रद्धयाविधिवत्पात्रेन्यस्तंकामधुगक्षयम् ५ देवर्षिपितृभूतेभ्यआत्मनेस्वजना यच ॥ अन्नंसंविभजन्पश्येत्सर्वंतत्पुरुषात्मकम् ६ नदद्यादामिषंश्राद्धेनचाद्याद्धर्मतत्त्ववित् ॥ मुनीनांस्यात्पराप्रीतिर्यथानपशुहिंसया ७

श्राद्धादिदानंस्यात् तत्रापियथार्हतः यथायोग्यं २ अत्रभोक्तृःसंख्यानियमनाह द्वाविति ३ कुतोविस्तारोनकर्तव्यइतितत्राह देशेति स्वजनार्पणात्आत्मीयार्पणलक्षणात् विस्तारादेतानिदेशकालो चितश्राद्धादीनिसम्यग्नभवंतीतियस्मात्तस्माद्विस्तारंनकुर्यादितिपूर्वेणान्वयः ४ ५ ६ यतेःश्राद्धभोजनेमुख्याधिकारित्वेमांसविधानंकथमुपपद्यतइतितदपवादत्वेनाविधत्ते नदद्यादिति शास्त्रांतरविधिमोहि तेनकेनचित्कामपरिमोक्षणेनमस्कारिगानभोक्तव्यमितिनिषिद्धे । नचेति । नचश्राद्धभगइत्याह धर्मेति विनामांसेनमधुनाविनादक्षिणयाशिरा अक्षयंभवतिश्राद्धंयतिपुश्राद्धभोजिषु ग्रामेवानगरे रण्येज्ञातभिक्षुर्वसेद्यदि तमंतरेणयच्छ्राद्धंतदासुरमथोभवेदित्यादिस्मृतेः तद्विधायकशास्त्रमासुरजनमोहनार्थत्वेनदेशकालविशेषविषयत्वेनवायोजनीयं । आमिषाभावेभोक्तुः सौहित्याभावेनपितॄणा सौहित्यंनस्यादितितत्राह मुनीनामिति मुनीनांसंयमिनांयथामांसानदनेनपराप्रीतिःसौहित्यंस्यात्तथापशुहिंसयाजातमांसेननस्यात् । यथामुनीनांपितॄणामपितिभोजनेनपराप्रीतिस्तथापशुहिंसाजाता मिषभोजनेनस्यादितिविद्भिरावृत्यायोजनीयं । वाचांयमेवसर्वज्ञमुनिशब्दःपितृष्वपिइत्यभिधानं मुनीनांसर्वज्ञानादेवानांयथापरमाप्रीतिः तथापशुहिंसालक्षणेनयागेननेतिवा ७

श्राद्धेचतुर्थाश्रम्येवपूज्यइतिनियमः प्रायिकःतद्धर्मोयस्यास्तिसोपिमान्यइत्याशयेनाह नैतादृशइति सद्धर्ममिच्छतांनृणांभूतेषुमनोवाक्कायकर्मजस्यदंडस्यन्यासः संत्यागो यः एतादृशोधर्मः परोन्यो नास्ति अयमेवमुख्योधर्मः तस्मादेतादृशधर्मोपिश्राद्धेमान्यइत्याशयः । वेणुभिर्नैवबेचतिरितिवक्ष्यति नकेवलंपश्वालंभनलक्षणांहिंसाभावान्मुनीनांप्रीतिजनकोपितुमनआदिनाक्रियमाणदंडलक्षण हिंसाभावोपीत्यतोवाह नेति ८ श्राद्धादिकर्मप्राप्तोपत्यादिपात्रमुदिश्यकर्तव्यमित्यभिहितं अधुनापरमभागवतास्तदपिनकुर्वतीत्याशयेनाह एकइति सर्वधर्मान्परित्यज्यमामेकंशरणंव्रजेतिशि क्षिताः एकेभगवदेकार्पितदेहयात्राज्ञानिनः कर्ममयान्श्राद्धादियज्ञानात्मसंयमनेमनःसंयमनाग्नौजुह्वतिमानसयागंकुर्वतीत्यन्वयः आत्मसंयमनंविशिनष्टि ज्ञानेति ज्ञानेंधनदीपितेयज्ञवित्तमाः मानसयज्ञप्रयोगपटवः अनीहाइतिहेतुगर्भविशेषणं निवृत्तमार्गप्रवृत्तत्वादित्यर्थः ॥ ९ ॥ ननुद्रव्ययज्ञंत्यक्त्वाज्ञानयज्ञकरणेकिंकारणमित्याशंक्यभूतभयजनकहेतुत्वेननिरयहेतुरयमित्याशये नाह द्रव्येति एषद्रव्ययज्ञकारिसमुदायो मामयंहन्यादितिभूतानिबिभ्यतीत्यन्वयः । अग्नीषोमीयंपशुमालभेतेतिविहितत्वाच्चदुक्त कुर्वतोदृष्ट्वाकथंभयंस्यादित्यतउक्तमतज्ज्ञइति विध्यभिप्रायमजानन् ब्रह्मार्पणंब्रह्महविरित्यादिविहितविधेरभिप्रायः अतएवाकरुणइत्युक्तं एतादृशोसुरदेश्यइत्याशयेनोक्तमसुतृबिति नीहारेणप्रावृताजल्प्याचासुतृपउक्थशासश्चरंतीतिश्रुतिर्हीत्यनेनगृह्यते ध्रुवमित्ययंशब्दः श्रीहरिर्विपुलस्थानर्थंनिश्चाययंति असुन्वंतंसमंजहिदूणाशंयोनतेमयइतिश्रुतेः तेमयस्त्वत्प्रधानकः दूणाशंदुर्नाशंअसुन्वंतंसुन्वाद्विरोधिनं अन्यथासुन्वतंवा परा।चिच्छीर्षविवृजुस्तइंद्रायज्वानोयज्वभिः

नैतादृशःपरोधर्मोनृणांसद्धर्ममिच्छताम् ॥ न्यासोदंडस्यभूतेषुमनोवाक्कायजस्ययः ८ एकेकर्ममयान्यज्ञान्ज्ञानिनोयज्ञवित्तमाः ॥ आत्मसंयमनेऽनीहाजुह्वतिज्ञानदीपिते ९ द्रव्ययज्ञैर्यक्ष्यमाणंदृष्ट्वाभूतानिबिभ्यति ॥ एषमाकरुणोहन्यादतज्ज्ञोह्यसुतृप्ध्रुवम् १० तस्माद्दैवोपपन्नेनमुन्यन्नेनैवधर्मवित् ॥ संतुष्टोहरहःकुर्यान्नित्यनैमित्तिकाःक्रियाः ११ विधर्मःपरधर्मश्चआभासउपमाछलः ॥ अधर्मशाखाःपंचेमाधर्मज्ञोऽधर्मवत्त्यजेत् १२ धर्मबाधोविधर्मः स्यात्परधर्मोऽन्यचोदितः ॥ उपधर्मस्तुपाखंडोदंभोवाधर्ममिच्छलः १३ यस्त्विच्छयाकृतःपुंभिराभासोह्याश्रमात्पृथक् ॥ स्वभावविहितोधर्मःकस्यनस्यातउपशांतये १४ धर्मार्थमपिनेहेतयात्रार्थंवाऽधनोधनम् ॥ अनीहानीहमानस्यमहाहेरिववृत्तिदा १५

स्पर्द्धमानाइतिश्रुतेः १० ननुतर्हिनित्यनैमित्तिकेकुर्वीतप्रत्यवायजिहासयेतिविधानंव्यर्थमितितदुपायमाह तस्मादिति दैवोपपन्नेनअयाचितादिविधिनाप्राप्तेननीवारादिनातदभावेउत्पन्नेनफल शाकादिना ११ धर्मविच्चंनामतत्प्रतिपक्षधर्मभेदलक्षणेज्ञातेशुद्धंस्यादित्यतस्तच्छाखाआह विधर्मइति १२ अधर्मवद्विधर्मादीनांस्वरूपंदर्शयति धर्मेति अधर्मवद्धर्मपीडनंविधर्मः अन्य स्यक्षत्रियादेश्चोदितोविहितोधर्मोब्राह्मणेनानुष्ठीयमानःपरधर्मः दंभेनाक्रियमाणोधर्मोदंभः सचोपधर्मइत्युच्यते धर्मशब्दार्थमिच्छतांयारकोहिधर्मस्तमर्थभिनत्तीतिसछलधर्मइत्युच्यते १३ पुंभिः काम्यफलेच्छयाकृतोयोधर्मःसआभासइत्युच्यतेहिशब्दः इयानेषांभेदइत्याह धर्मप्रतिपक्षभेदस्वरूपमुक्त्वाधर्मप्रयोजनमाह आश्रमइति हिशब्दउत्तरत्रापिसंबध्यते तेनवर्णलक्षयति योब्राह्मणा दिवर्णोयश्चब्रह्मचर्याद्याश्रमः अत्रतत्तत्स्वभावानुसारेणभगवदर्पणबुद्ध्यापृथक्पृथग्विहितोयोधर्मःसजीवस्योपशांतयेससारनिर्मूलनायकल्प्यते समर्थ्यतेशास्त्रेष्विति शेषः स्वभावपदसामर्थ्या त्सात्विकोधर्मोमुक्तिहेतुर्नान्यः राजसतामसःस्वर्गनरकादिहेतुः धर्मोभवत्यधर्मोपिकृतोभक्तैस्तवाच्युत पापंभवतिधर्मोपियोनभक्तैःकृतोहरेरितिवचनात् अस्यजीवस्योपशांतये मोक्षायेतिवा १४ ननुनिष्कर्मणापुरुषेणधर्मकरणंदुःसाध्यं अर्थाभावात्तस्मादधनेनतदर्थंकृष्यादिकंकर्मकर्तव्यमितितत्राह धर्मार्थमिति तर्हिदेहादियात्रार्थंकर्मकर्तव्यं अन्यथातन्नाशेनपुरुषार्थानुदयइतितत्राह यात्रार्थमिति नन्वेवंचेत्कथंदेहयात्रासिद्धिरितितत्राह अनीहेति अत्रानीहास्तदेहपोषणायासनिवृत्तिः महाहेरजगरस्य १५

निरंतरंअसवद्दुपासनाप्रतपायिनोनीहापरमानंदकारणमित्याह संतुष्टस्येति यदृच्छयासंतुष्टस्ययत्सुखं । कामलोभेन कामभोगेच्छयार्थेहयाधनयाचनवृत्त्याचादिशोधावतः पुंसःकुतःकस्मात्कर्मण स्तत्सुखंलभ्यतइत्यन्वयः १६ दुस्त्यजेषुविषयेषुसर्वतोदिशंजाग्रत्सुनिष्कर्मणःकथंसुखमुपलभ्यतइतितत्राह सदेति यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवइत्यादेः एतमर्थंनिदर्शयति शर्करेति शि वंसुखमाप्नोतीतिशेषः शर्कराःपाषाणशकलानि १७ अनायासेनायासाभावेपिप्राणधारणार्थंपानीयादिप्रयत्नःस्यादेवआपोमयःप्राणइतिश्रुतेः इतितत्राह संतुष्टइति केनवायेनकेनापिप्रयत्न मंतरेणोपनतेनद्रव्येणलोकविलक्षणेनपरमात्मनावासंतुष्टः विषयालंबुद्धिमान् वारिणापिनवर्तेतेत्यन्वयः । ननु सर्वात्मनासर्वनिषेधस्यकोभिप्रायइत्याशंक्यकिंचिदभ्यनुज्ञातेमहान्दोषःस्याज्जलस्यं दनवत् विधिंविनास्वतंत्रवज्जनस्यकार्पण्यदर्शनाचेत्याह औपस्थ्येति । गृहंपालयतेसौगृहपालःसारमेयस्तद्वच्चरति । कृशःकाणःखंजःश्रवणरहितःपुच्छविकलोव्रणीपूयाक्लिन्नःक्रमिकुलशतैरावृततनुः क्षुधाक्रांतोजीर्णोह्यपिवरकपालार्पितगलःशुनीमन्वेतिश्वाहतमपिचहंत्येवमदनइत्यादेः १८ उक्तार्थानंगीकारेबाधकमाह असंतुष्टस्येति । तेजः शापानुग्रहशक्तिःरेतोलक्षणंवा । विद्याशास्त्रविषय ज्ञानंमनोत्थमलंकंशास्त्रातुपोक्षि दीपज्वालानिभमवकीर्यतेविक्षिप्यते शिलानिक्षिप्तपांसुपिंडवन्नश्यतीत्यर्थः । क्वचिक्षेपइविशातोः वृषभविषाणाहतसेतुवत् सुडागमाभावश्छांदसः अवकीर्णीक्षतव्र तः इत्यभिधानं असंतुष्टस्य विषयानलंबुद्धेः १९ अत्रानलंबुद्धिर्द्वेधाविषयाणामुपर्युपरिभोगतृष्णैकाद्वितीयाविश्रातविश्राणनेतत्पर्याप्तंभवतीत्यतोनव्ययामिकिंतुराशीकरोमीत्याकांक्षातत्रप्रथमा

संतुष्टस्यनिरीहस्यस्वात्मारामस्ययत्सुखम् ॥ कुतस्तत्कामलोभेनधावतोर्थेहयादिशः १६ सदासंतुष्टमनसःसर्वाःशिवमयादिशः ॥ शर्कराकंटकादिभ्यो यथोपानत्पदःशिवम् १७ संतुष्टःकेनवाराजन्नवर्तेतापिवारिणा ॥ औपस्थ्यजैह्व्यकार्पण्याद्गृहपालायतेजनः १८ असंतुष्टस्यविप्रस्यतेजोविद्यातपो यशः ॥ स्रवंतींद्रियलौल्येनज्ञानंचैवावकीर्यते १९ कामस्यांतंहिक्षुत्तृड्भ्यांक्रोधस्यैतत्फलोदयात् ॥ जनोयातिनलोभस्यजित्वाभुक्त्वादिशोभुवः २० पंडिताबहवोराजन्बहुज्ञाःसंशयच्छिदः ॥ सदसस्पतयोप्येकेअसंतोषात्पतंत्यधः २१

याअलाभेकामः क्रोधश्च तयोरुभयोःशांतिरनायाससाध्या द्वितीयायालोभापरपर्यायानाशोदुःसाध्यइत्याह कामस्येति जनोंकुरिताभ्यांक्षुत्तृड्भ्यांकामस्योपस्थादिविषयतृष्णापरपर्यायस्यांतंना शंयाति । कुतइत्यतउक्तंहीति । विषयाविनिवर्ततेनिराहारस्यदेहिनः इतिस्मृतेःप्रसिद्धेः । एतत्फलोदयात् एतयोः क्षुत्तृषोरशनपानलक्षणभोगाभ्यांतृप्तिलक्षणफलोत्पत्तेः तदलाभोत्पन्नस्यक्रो धस्यचशांतिंयाति दिशोजित्वाभुवोभुक्त्वापि लोभस्यांतंयागाद्युपाधिनाविक्तव्ययेच्छालक्षणं नयातीत्यन्वयः २० ननुबहुत्यागेनवित्तव्ययेनस्वयंनष्टःस्यात् । अल्पसारस्तुयोमोहाद्विस्तारंकर्तुमिच्छ ति सविनश्यतिदुर्मेधानारिकेलांबुकंयथेतिवचनात् तस्माल्लोभोमहान्गुणोदेहयात्राहेतुत्वादित्याह पंडिताइति पांडित्यनामसभाकंपादिदोषराहित्यं तत्पूर्वस्यापिकिंनस्यादित्यतउक्तंबहुज्ञाइति । सार्वज्ञ्यंघटदीपप्रभावन्नेत्याह संशयच्छिदइति । एवंविधधर्मवंतःकइतितत्राह सदसस्पतयइति । एतादृशाश्चकेचनेत्याह एकइति । एवंविधाअपि असंतोषाल्लोभादधःकीटादियोनौपतंतीतियस्मात्तस्मा दवैष्णवविषयएवलोभोगुणोनतुवैष्णवविषयइतिभावः । एकेअसंतोषादिति संधिकार्याभावोयाद्देतिहिंइतिपदद्वयाध्याहारसूचनार्थः । यद्येवंविधाअसंतोषाद्यथायोग्यंयथालब्धद्रव्यंयथापात्रंननियुंजते तदैवाधःपतंतीत्यभ्युपगमसिद्धांतोयं । नकेवलमसंतुष्टस्यविद्यादिनाशोपित्वधःपातःस्यादित्यतोवाह पंडिताइति २१

इदानींकामादिजयोपायमाह असंकल्पादिति अत्रसंकल्पोपिद्विविधः पुण्यपापविषयश्चेति अत्रासंकल्पात्पापविरुद्धपुण्यविषयादित्यर्थः कामान्निषिद्धान् क्रोधःकामितालाभकारणकः कारण नाशेनकार्यनाशइत्यर्थः अनर्थकार्यस्यलोभस्यनाशः केनेतितत्राह अर्थेति अर्थेषुराजादिनिमित्तानर्थदर्शनेनासद्व्ययेनश्वरफलहेतुरीतिनिरीक्षणेनचतत्त्वावमर्शनात्तत्त्वज्ञानाद्वयंवैष्णवसिद्धांतसंच लनं भीभयसंचलनयोरितिधातुः २२ शोकमोहौदेहगतांतःकरणस्यैवनान्यस्य स्वतश्चिदानंदस्वरूपस्यासंभवात् इत्यादिकया । आन्वीक्षिक्याअनुकूलतर्कोपेतव्याप्तिज्ञानेन । आत्मन्यविद्यमान महिमारोपोदंभः महतांप्रावण्यादिगुणाकाराणांआत्मस्तुतिलज्जितानांपुरुषाणां निरंतरनिषेवयासद्गुणाभ्यासलक्षणयायोगांतरायान् भगवदुपासनाविघ्नान्मौनेनसंभाषणवर्जनेनजयेदितिशेषः कामाद्य नीहयाकामादिनिषिद्धेच्छाराहित्येन विवादलक्षणांहिंसांजयतइत्यन्वयः २३ भूतजंभौतिकंदुःखमुन्मादादिकंवा कृपयामंत्रौषधसामर्थ्येन कृपूसामर्थ्यइतिधातुः । अनुक्रोशलक्षणगुणेनवा दैवमा धिदैविकंदुःखंसमाधिनेंद्रादिदेवताध्यानेन । यस्यैदेवतायैहविर्गृहीतस्यात्तांध्यायेद्वषट्करिष्यन् । कारीर्यायजेतवृष्टिकामइतिश्रुतेः । अनावृष्ट्यादिदुःखंजह्यात् क्षीरसागरतरंगसीकराप्लुतश्रीनाराय णध्यानेनवा । आत्मजमाध्यात्मिकंदुःखं । योगवीर्येणअष्टांगसामर्थ्येनपवनवशीकरणेनेत्यर्थः । सत्त्वनिषेवयासात्त्विकपुरुषनिषेवया । निद्रामज्ञानम् २४ सत्त्वगुणेनरजस्तमसी । उपशमेनभगवन्निष्ठ

असंकल्पाज्जयेत्कामंक्रोधंकामविवर्जनात् ॥ अर्थानर्थेक्षयालोभंभयंतत्त्वावमर्शनात् २२ आन्वीक्षिक्याशोकमोहौदंभंमहदुपाश्रयात् ॥ योगांतरा यान्मौनेनहिंसांकामाद्यनीहया २३ कृपयाभूतजंदुःखंदैवंजह्यात्समाधिना ॥ आत्मजंयोगवीर्येणनिद्रांसत्त्वनिषेवया २४ रजस्तमश्चसत्त्वेन सत्त्वंचोपशमेनच ॥ एतत्सर्वंगुरौभक्त्यापुरुषोमनसाजयेत् २५ यस्यसाक्षाद्भगवतिज्ञानदीपप्रदेगुरौ ॥ अभिसंधिःश्रुतस्तस्यसर्वंकुंजरशौचवत् २६ एषवैभगवान्साक्षात्प्रधानपुरुषेश्वरः ॥ योगेश्वरैर्विमृग्यांघ्रिर्लोकोयंमन्यतेनरम् २७ षड्वर्गसंयमैकांताःसर्वानिगमचोदनाः ॥ तदंतायदिनोयोगमावहेयुः श्रमावहाः २८ यथावार्तादयोविद्याःपुंसःस्वार्थंनबिभ्रति ॥ अनर्थायभवेयुश्चपूर्तमिष्टंतथाऽसतः २९

यासर्वत्रापिभगवद्भक्तिरेवमपोत्निकेत्याशयेनाह एतदिति २५ विपक्षेबाधकमाह यस्येति । अभिसंधिरतिक्रमणं भक्त्यनुसंधानराहित्यं अवज्ञेतियावत् २६ कथमवज्ञाप्रकारइतितत्राह एषइति । एषएवंविधमाहात्म्योपेतोलोकोयंनरंसुखदुःखभोक्तारंमन्यतइत्येवमवज्ञाप्रकारइत्यर्थः २७ ननुहरेःप्रकृतिनिर्लीनत्वेननरत्वंसंभाव्यते तुच्छ्येनाभ्वपिहितंयदासीत्प्रकृतौलीनःसंसार मेविसच्चत्यच्चाभवदितिश्रुतेः । इतितत्राह षड्वर्गेति सर्वानिगमचोदनाःसंध्यामुपासीतेत्यादिवेदविधयोपिहरौभक्तियागंनकुर्युः तर्हिश्रमावहाःक्लेशहेतवएवेत्यन्वयः आवहंतिचेत्कथकारमित्यत उक्तं षडिति । षडिंद्रियाणांसंयमोविषयादाहृत्यहपैकविषयीकरणलक्षणः तस्मिन्नेवैकांतोनिश्चयेनतात्पर्यंयासांताः । तथान्यत्तात्पर्यंकिंनस्यादितितत्राह तदंताइति । तस्यभक्तियोगस्यांतोनिर्णयो यासांतास्तथा । यथा । षड्वर्गसंयमैकांताःसर्वानिगमचोदनाः । तदंतानिगमायदियोगंनोआवहेयुरितिवा २८ इष्टापूर्तादिनापुरुषस्यपुरुषार्थंभवेनतद्विधायिवेदःपूर्णार्थोलभतइत्यतोवेदस्यश्रमावह त्वंकथमत्राह यथेति । यस्यपुंसोयावार्तादयोविद्यास्ताअर्थंनबिभ्रति प्रत्युतानर्थायभवेयुश्चतयाऽसतस्तस्यपूर्तमिष्टंचार्थंनविधचइत्यन्वयः । पूर्तादेरनित्यफलहेतुत्वेनानिंदितत्वात् । तदर्थविधायित्ववेद स्यजुगुप्सितम् । अतस्तद्विधानेश्रमावहत्वंप्रकटमित्यर्थः । इष्टापूर्तंमन्यमानावरिष्ठमित्यादिश्रुतेः २९

यदिनोयोगमित्यत्रयोगशब्देनध्यानंचोच्यतेतदातद्ध्यानम् । ध्येयेमनोनिधायोपासनापरपर्यायंभवेत्तत्रजलचरस्येवानवस्थानस्यमनसोजयेनसफलंस्यादतस्तदुपायमाह यश्चित्तेति यश्चित्तविजयेच्छुः स्यात्सओमितिमंत्रमुच्चार्यतस्मिन्नासीतेत्यन्वयःतद्विजयोपायमाह निःसंगइति । निःसंगत्वंकथमत्राह निष्परिग्रहइतितत्फलमेकइति । एकस्यापिस्वजनरहितस्यजनतामध्यस्थितस्य नानावार्ताश्रवणे नविक्षिप्तस्यपुंसोमनोजयःकथमुपद्यतइत्यतउक्तम् विविक्ते एतदपिगृहस्थस्यनघटइत्यतउक्तम् भिक्षुरिति तस्याप्यशनचिंतयाद्वितीयापेक्षयोक्तंनयुक्तमित्यतउक्तम् भैक्ष्येति भैक्ष्यमपिबहुसंपन्नंनयोगो पयोगिस्यादित्यतउक्तम् मितेति ३० ऋज्वंगःसमीकृतकायशिरोग्रीवः ३१ ३२ उपाहृत्यहृदिस्थितेहरौ ३३ इंधनरहितोवह्निर्यथानिर्वाणंनाशंयाति तथाचित्तंप्राकृतंनाशमेति अप्राकृतंस्वरूपभूतंशरी राभिमानरहितंब्रह्मयातीत्यन्वयः चापंशरीरंसंप्रोक्तंबाणोवाल्हितुतेशरइत्यभिधानम् निर्वाणममृतमक्षरंब्रह्मेत्यभिधानम् ३४ एवंविषयीकृतब्रह्मणोऽप्राकृतस्यचित्तस्यस्वभावफलमाह कामादिभि रितियच्चित्तंकामादिभिरनाविद्धत्वात् प्रशांताखिलवृत्तित्वाच्च ब्रह्मपूर्णसुखरूपंस्पृष्टंविषयीकुर्वत् तत्कर्हिचित्ततोनोत्तिष्ठतततोन्यत्रनगच्छतीत्यर्थः ३५ ननुकस्यचिच्चेतोन्यत्रगच्छतिचेत्किंदूषणमित्याशं क्यतस्यपापकरणत्वेनसर्वहास्यत्वंदूषणमित्याशयेनाह यःप्रव्रज्येति त्रिवर्गावपनाद्धर्मार्थकामबीजानामावपनक्षेत्रभूतात् तान्कामादीन् । यदासेवेततर्हीतिशेषः ३६ एवंविधाअसुरजात

यश्चित्तविजयेच्छुःस्यान्निःसंगोनिष्परिग्रहः ॥ एकोविविक्तशरणोभिक्षुर्भैक्ष्यमिताशनः ३० शुचौदेशेसमेराजन्नास्थाप्यासनमात्मनः ॥ स्थिरंसुखंस मंतस्मिन्नासीतर्ज्वंगओमिति ३१ प्राणापानौसन्निरुंध्यात्पूरकुंभकरेचकैः ॥ यावन्मनस्त्यजेत्कामान्स्वनासाग्रनिरीक्षणः ३२ यतोयतोनिःसरतिमनः कामहतंभ्रमत् ॥ ततस्ततउपाहृत्यहृदिरुंध्याच्छनैर्बुधः ३३ एवमभ्यसतश्चित्तंकालेनाल्पीयसामुनेः ॥ अविषण्णंचनिर्वाणंयात्यनिंधनवह्निवत् ३४ कामादिभिरनाविद्धंप्रशांताखिलवृत्तियत् ॥ चित्तंब्रह्मसुखस्पृष्टंनैवोत्तिष्ठेतकर्हिचित् ३५ यःप्रव्रज्यगृहात्पूर्वंत्रिवर्गावपनात्पुनः ॥ यदासेवेततान्भि क्षुःसपापोनिरपत्रपः ३६ यस्यदेहःस्मृतोनात्मामर्त्योविट्क्रिमिभस्मवत् ॥ तमेवस्वात्मसात्कृत्वाश्लाघयंतिह्यसत्तमाः ३७ गृहस्थस्यक्रियात्यागो व्रतत्यागोबटोरपि ॥ तपस्विनोग्रामसेवाभिक्षोरिंद्रियलौल्यता ३८ आश्रमापसदाह्येतेखल्वाश्रमविडंबिनः ॥ देवमायाविमूढांस्तानुपेक्षेतानुकं पया ३९ आत्मानंचेद्विजानीयादेवंज्ञानधृताशयः ॥ किमिच्छन्कस्यवाहेतोर्देहंपुष्णातिलंपटः ४०

यइत्याभिप्रायेणाह यस्येति यस्यदेहिनः । अनात्मादेहोविट्क्रिमिभस्मवत्स्मृतः तस्यतमेवदेहंतत्सदृशमेवभोगायतनंस्वात्मसात्कृत्वाहमेवात्मेतिकृत्वायेदेहंश्लाघयंतितेअसत्तमाअसुराइत्यन्वयः आत्मैवमहीयानृइतिश्रुतिर्हिशब्देनसूचयतियैःस्वदेहइतिपाठे यैर्मर्त्यैरनात्मास्वदेहोविट्क्रिमिभस्मवत्स्मृतः तेतमेवस्वात्मसात्कृत्वाश्लाघयंतितर्हिअसत्तमाइत्यन्वयः ३७ नकेवलंयतेराश्रमत्यागेदूषण मपितुगृहस्थानामपिस्वधर्मत्यागेदोषःस्यादित्याह गृहस्थस्येति यत्यादेःकस्यकस्यधर्मत्यागेदोषःस्यादित्यतोवाह गृहस्थस्येति बटोर्ब्रह्मचारिणःयदिगृहस्थादीनांक्रियात्यागादयःसंतितर्ह्येते आश्रमापसदाहीत्यन्वयः ३८ नन्वेतावतापिफलंस्यात्किन्नेत्याह खल्विति आश्रमान्विडंबयतिअनुकुर्वंतीत्याश्रमविडंबिनःखलु आश्रमफलाहेतुत्वादित्यर्थः निषेधवाक्यालंकारादौखलुशब्दप्रयोगात् नचैतेपुण्याशयामान्याइत्याह देवेति अतोभगवन्माहिमेति भगवद्विषयैवानुकंपाप्रेमविशेषः ३९ यतःस्वधर्मत्यागीनिंद्योतोविहितातिरेकेणदेहपोषोनयुक्तइत्याह आत्मानमिति विवेकज्ञानेनधृता शयःवशीकृतांतःकरणःपुरुषःआत्मानंस्वस्वरूपंपरमात्मानंचविजानीयात् चेत्तर्हिसाकिंसुखमिच्छन्कस्यहेतोःसुखस्यार्थेवालंपटोरागीइंद्रियलोलुपोभूत्वादेहंपुष्णातीत्यन्वयः सुखार्थीवात्यजेद्धि द्यांविद्यार्थीवासुखंत्यजेदितिवचनात् ४०

नन्वयंदेहो हेयश्चेत्किमनेनार्थइत्याशंक्यमहाप्रयोजनमस्त्येवंकृतंचेदित्याशयेनाह । आहुरिति । अभीषुंप्रग्रहं । इंद्रियेशंश्रोत्रादींद्रियनेतारम् । मात्राःविषयाः धिषणाबुद्धिः ईशस्यधामगृहस्थानीयं सत्त्वमंतःकरणविशेषम् ४१ दशप्राणंप्राणदशकम्अक्षमाहुरितिसर्वत्रयोज्यं । प्राणापानव्यानोदानसमाननागकूर्मकृकलदेवदत्तधनंजयनामानोदशप्राणाः । अधर्मधर्मौपापपुण्यलक्षणेचक्रेशकटपदस्थानीयेअभिमानमहंकारलक्षणंजीवंराथिनंपठंतीत्यन्वयः शरंतुजीवमित्यत्रतुशब्देनैतत्प्रवृत्तिविशेषभेदंसूचयति नतुस्वरूपभेदं प्रणवोधनुःशरोह्यात्मेतिश्रुतेः । अथदेवरथस्तस्यवाग्बुद्धिरितिचपरंब्रह्म ४२ अस्यराथिनोजेतव्यानाह रागइत्यादिना अपूज्येपूज्यबुद्धिस्तुमानःसद्भिरुदाहृतइति मानोभिमानोवज्ञेचपरिमाणेचपूजनइतिच अभिमानोर्थादिदर्पेज्ञानेप्रणयहिंसयोरितिच मायाकैतवंरागादयआंतरीयाःशत्रवः । बाह्याःशत्रवः सहोदरादयः । आदिशब्देनदुंदुभ्यादयः सुग्रीववाल्यादयः । तेसर्वेशत्रवोरागादयउपायेनपरिहर्तव्याइतिशेषः ४३ ४४ एवंवर्णनोपयोगमाह यावदिति नृकायरथंमनुष्यशरीराख्यरथंरथगतावितिधातोर्ज्ञानसाधनत्वाच्चछब्दशब्दितम् । यावदात्मवशोपकल्पंस्ववशत्वेनकल्पितंधत्ते । तावद्वरिष्ठचरणार्चनयामहापुरुषश्रीपादपूजनेननिशातंधौतं ज्ञानासिंदधदच्युतोबलंयस्यसतथा अक्षीरितंबलंयस्यसतथेतिवाअस्तशत्रुः निरस्तरागादिशत्रुः स्वाराज्येनेश्वरेणदृष्टेनतुष्टोविषयालंबुद्धियानुपशांतः पूर्वस्मादाधिक्येनोपात्तभगवन्निष्ठः पुरुषःइदंससाराख्यंदेहं

आहुःशरीरंरथमिंद्रियाणिहयानभीषुंमनइंद्रियेशम् ॥ वर्त्मानिमात्राधिषणांचसूतंसत्त्वंबृहद्बंधुरमीशधाम ४१ अक्षंदशप्राणमधर्मधर्मौचक्रेभिमानं रथिनंचजीवम् ॥ धनुर्हितस्यप्रणवंपठंतिशरंतुजीवंपरमेवलक्ष्यम् ४२ रागोद्वेषश्चलोभश्चशोकमोहौभयंमदः ॥ मानोभिमानोसूयाचमायाहिंसाचमत्सरः ४३ रजःप्रमादःक्षुन्निद्राशत्रवस्त्वेवमादयः ॥ रजस्तमःप्रकृतयःसत्त्वप्रकृतयःक्वचित् ४४ यावन्नृकायरथमात्मवशोपकल्पंधत्तेगरिष्ठचरणार्चनयानिशातम् ज्ञानासिमच्युतबलंदधदस्तशत्रुःस्वाराज्यतुष्टउपशांतइदंविजह्यात् ४५ नोचेत्प्रमत्तमसदिंद्रियवाजिसूतानीत्वोत्पथंविषयदस्युषुनिक्षिपंति ॥ तेदस्यवःसहयसूतममुंतमोंधेसंसारकूपउरुमृत्युभयेक्षिपंति ४६ प्रवृत्तंचनिवृत्तंचद्विविधंकर्मवैदिकम् ॥ आवर्ततेप्रवृत्तेननिवृत्तेनाश्नुतेमृतम् ४७ हिंस्रंद्रव्यमयंकाम्यमग्निहोत्राद्यशांतिदम् ॥ दर्शश्चपूर्णमासश्चचातुर्मास्यंपशुःसुतः ४८ एतदिष्टंप्रवृत्ताख्यंहुतंप्रहुतमेवच ॥ पूर्तंसुरालयारामकूपाजीव्यादिलक्षणम् ४९

यत्त्वेनसर्पनिर्मोकवत्क्षसंवस्तुजह्यादित्यन्वयः ४५ इतोन्यथास्यमुक्तिरेवनसेत्स्यतीत्याह । नोचेदिति नोचेदिंद्रियग्राममात्मवशंकृत्वाज्ञानासिनासंसारानुच्छेदः शब्दादिविषयाभिलाषश्चेद्यदितर्हि असंतोषिवाइंद्रियहयबुद्धिसूताः । प्रमत्तंरागांधीभूतचक्षुषममुंरथिनं उत्पथमशास्त्रमार्गंनीत्वा शब्दादिविषयलक्षणेषुदस्युषुदुःखाकारेषुचौरेषुनिक्षिपंति तेविषयचौराःसहयसूतं इंद्रियबुद्धिसूतमिमंरथमुरुमृत्युभयेतमोलक्षणाज्ञानांधेचक्षुरविषयेसंसारकूपेक्षिपंतीत्यन्वयः ४६ ननुस्वर्गकामोयजेतेत्यादिशक्यार्थश्रवणसमनंतरं तदुक्तकर्मणिप्रवर्तमानंदुष्पापापारसंसारकूपेपातयतीतिकथमुच्यते । तस्यापिवैदिकत्वेनांगीकार्यत्वादन्यस्यसर्वधर्मपरित्यागस्यावैदिकस्यापिसारोच्छेदकत्वंचकथंसर्वधर्मान्परित्यज्येतिरमृतेरितितत्राह प्रवृत्तंचेति चःसमुच्चये द्विविधमित्यनेनात्यंतभिन्नविषयत्वंदर्शयति यद्यप्यनेवंविन्महापुण्यंकर्मकरोति तद्धास्यांततःक्षीयते नारायणोसौपरमोविचिंत्यइत्यादिनावैदिकत्वाच्च ४७ कीदृशंतत्प्रवृत्तंयेनानुष्ठितेनपुनरावृत्तिःस्यादितितत्राह हिंस्रमित्यादिना अश्वत्थादिद्रव्यच्छेदनात्मकत्वाद्धिंस्रमशांतिदंमुक्तिविपरीतफलप्रदम् ४८ हुतंवैश्वदेव । प्रहुतंहुत्वाबलिहरणमेतद्द्वयमिष्टम् । सुरालयाःशिवविष्णवादिमंदिराणि आरामाःपुष्पवाटिकाः । कूपाःपरितोबद्धजलाशयाः । आजीव्याःसर्वसेव्याःकुट्टिममूलाविस्तृतशाखास्तरवः ४९

द्रव्यसूक्ष्मविपाकः पुरोडाशादिद्रव्यजनितापूर्वफलम् । धूमइत्यादिनाधूमादिशब्दवाच्यादेवताश्चात्रगृह्यंतेइतिज्ञातव्यम् । अपक्षयःकृष्णपक्षः । सोमश्चंद्रः । पर्वदर्शशब्देनतत्प्रयुक्तकर्मविशेषोत्रतुतदभि मानिदेवाउच्यंते । अनेनमार्गेणगतस्यगतिप्रकारमाह औषधीति । पितृयानगतः अंबुवृष्ट्यादिद्वारेणभुवंप्राप्तः ओषध्यादिर्भवति ५० अन्नरूपेणपितरंप्रविश्यरेतोरूपेणमातरंचेतिपुनःपुनर्भव तीतिपुनर्भवः स्यादितिशेषः । नकेवलमोषध्यादिभावोस्यकिंतुधूमादिभावोप्यस्तीतिभावेनोक्तंविशदयति एकैकस्येति अत्रानुपूर्व्यात्क्रमात् अथइमेग्रामइष्टापूर्तेदत्तमित्युपासतेतेधूममभिसंभवंतीत्युप क्रम्यपोषोक्षन्नमात्तियोरेतःसिंचतितद्भूयएवभवत्यंते अनेनायमर्थः प्रपंच्यते ५१ अत्रचतइहरमणीयचरणाभ्याशोहयत्तेरमणीयायोनिमापद्येरन् ब्राह्मणयोनिंवाइत्यादेरभिप्रायंदर्शयति निषेका दीति । निषेकोरेतःसेकः अनेनापिपुनर्भवइत्यस्यभावोविवृतइतिज्ञायते देवयानापरपर्यायार्चिरादिमार्गाभिमानिदेवचक्रवदिष्यंस्तन्मार्गगतानित्थंभूतसाधनमाह इंद्रियेष्विति । क्रियायज्ञान् क्रिया त्मकयज्ञाभिमानिदेवान् । ज्ञानंदीपयंतिजनयंतीतिज्ञानदीपानि ज्ञानमेवदीपोयेषांतानि । तथातेष्विंद्रियेष्विंद्रियाभिमानिदेवेषुजुहोति । हवनंनामतत्तद्वशत्वेनस्मरणं तदुक्तं यज्ञाभिमानिनोदेवान्स्म रेदिंद्रियमानिनं वशगांस्तान्मनोमानिसुरेंद्रस्यवशेस्थितान् वेदात्मिकायाःपार्वत्यास्तंतांरुद्रवशेस्थितां वर्णत्रयात्मकंरुद्रंशेषेतुप्रणवात्मके बिंदुरूपेसरस्वत्यांतंतांतस्यांपुनर्न्यसेत् मूलस्थनादरूपा यांतांवायौतंजनार्दने प्रकृत्यामथवाप्राणंतामेवपुरुषोत्तमइति ५२ इंद्रियाणितदभिमानिदेवान्मनसिमनोभिमानींद्रवशेतानेवंपूर्ववत्स्मरंतीतिशेषः । विशिष्टाकारपराक्रमलक्षणंकर्मास्यास्ती तिवैकारिकंमनोभिमानिनमिंद्रंवाचिवेदाभिमानिन्यांपार्वत्यांतामुमांवर्णसमाम्नायेपदवर्णस्वरक्रमाणांसम्यगाम्नायःसंप्रदायोनन्यथापाठलक्षणोयस्मिन्सतथा अकारोकारमकाराणांत्रयाणांवर्णानांस

## द्रव्यसूक्ष्मविपाकश्चधूमोरात्रिरपक्षयः ॥ अयनंदक्षिणंसोमोदर्शओषधिवीरुधः ५० अन्नंरेतइतिक्ष्मेशपितृयानंपुनर्भवः ॥ एकैकस्यानुपूर्व्यात्स्वभूत्वाभू त्वेहजायते ५१ निषेकादिश्मशानांतैःसंस्कारैःसंस्कृतोद्विजः ॥ इंद्रियेषुक्रियायज्ञान्ज्ञानदीपेषुजुह्वति ५२ इंद्रियाणिमनस्येवंवाचिवैकारिकंमनः ॥ तांतुवर्णसमाम्नायेतमोंकारेस्वरेन्यसेत् ५३ ओंकारंबिंदुनादेतुतंतुप्राणेमहत्यमुम् ॥ अग्निःसूर्योदिवावायुःशुक्लोराकोत्तरःस्वराट् ५४ विश्वोथतैजसःप्रा ज्ञस्तुर्यआत्मासमन्वयः ॥ देवयानमिदंप्राहुर्भूत्वाभूत्वानुपूर्वशः ५५

माम्नायोमेलनंयस्मिन् । ओंकारेसतथातस्मिन्तदभिमानिनिरुद्रेस्थितामितिशेषः तुशब्देनभार्याभर्तृभावंपूर्वस्माद्विशिनष्टि । तंरुद्रमोंकाराभिमानिनिस्वंपरमात्मानंरमयतीतिस्वरःशेषः तस्मिन्स्थितंन्य सेत्मनस्तद्विषयंकरोति ५३ तमोंकारंशेषंबिंदुनादेबिंदुनादरूपसरस्वत्यांतदाधारत्वेनास्थितं तुशब्देनपूर्वयोरेकत्रत्वमत्रस्वस्वामिभावंसूचयति तांबिंदुरूपांमूलाधारस्थनादरूपायांप्रकृतिनाम्न्यां सरस्वत्यामेकीभूय स्थितिशब्देनतयोरेकत्वंदर्शयति तंतांनादरूपां प्राणेप्रकृष्टानंदरूपेवायौस्थितां अत्रापितुनाभार्याभर्तृभावमाह अमुंवायुंमहतिजनार्दनेस्थितस्मरेत् अथवा प्राणनामानंवायुंमह तिप्रधानेप्रकृतिशब्दवाच्येस्थितं अमुमक्षरंप्रकृतिनामानंमहतिपुरुषोत्तमेस्थितमितिमहतिशब्दोद्विरावृत्त्याव्याख्येयः एतत्सर्वं बिंदुरूपसरस्वत्यातंतांतस्यांपुनर्न्यसेत् इत्यादिपूर्वोक्तेनमानेनसविस्तर मुक्तम् । इदानीमर्चिरादिमार्गेदेहादुत्क्रांतस्यज्ञानिनःआप्यान्देवानाह अग्निरिति । दिवादिवसाभिमानी शुक्लःशुक्लपक्षाभिमानी राकापूर्णमास्यभिमानिनी उत्तरमुत्तरायणाभिमानिनी स्वराडिंद्रः ५४ अत्रनकेवलमग्न्यादयएवप्राप्याअपितुविश्वाद्याअनिरुद्धाद्याभगवतोमूर्तिविशेषाश्चप्राप्याइत्याशयेनाह विश्वइति । अथशब्देनानिरुद्धादिग्रहणं तेषामुभयेषांविष्णुरूपत्वंसूचयति विश्वाद्याअनिरुद्धाद्या स्तेद्विधासंप्रकीर्तिताः विष्णुरूपास्तदन्येचतान्सर्वान्यातिमोक्षगइत्युक्तेःकिंचान्येचदिवस्पुत्रास्तन्निकटवर्तिनः संतितेप्यथशब्देनसूचिताः । तदन्येचदिवस्पुत्राःसर्वेचद्युसमीपगाः तेदिवंप्रापयंत्येनसवा युंसहरिंपृथक् विश्वादिरूपंतुर्यश्चवासुदेवश्चनापरइत्युक्तेः गतिक्रमोप्यनेनज्ञातव्यः । नपरंविश्वादिकमेवाप्तव्यंकिंतुतन्मूलरूपोहरिराप्तव्यइत्याह आत्मेति । आत्माविश्वादिरूपोहरिःसम्यगन्वीयतेऽनेन

ज्ञानेनेतिसमन्वयः तदुक्तं सहरिंपृथग्विश्वादिरूपामिति वासुदेवोतुर्यादन्योनेत्याह तुर्यइति । तुर्यआत्मावासुदेवः । अतसातत्यगमनइतिधातोः सततगमनंव्याप्तिः यश्चास्य सततोभावइतिश्रुतेः सर्वत्रवसनशीलत्वात् क्रीडारूपत्वात् जपाकुसुमाद्युपाध्यनाविद्धस्फटिकवन्निर्मलज्ञानरूपत्वाद्वासुदेवः शुद्धस्फटिकसंकाशंवासुदेवनिरंजनमितिस्मृतिः ऐकात्म्यप्रत्ययसारंप्रपंचोपशमंशिवं अद्वैतंतुर्यंमन्यंतेसआत्मासविज्ञेयइतिस्मृतेः तुर्यश्चवासुदेव श्चनापरइतिच । किंच मार्गस्थानांसर्वेषांदेवानामपिपरमात्मनिसमन्वयोस्तीतिज्ञापनायसमन्वयइत्युक्तं । एतस्यनामनिर्दिशति देवयानमिति संवत्सरोवैप्रजापतिस्तस्यायनेदक्षिणंचोत्तरंचेत्यारभ्यएतस्मान्नपुनरावर्ततइत्येषनिरोधइत्यंतंवेदांताःप्राहुरित्यन्वयः । अस्यफमाह भूत्वेति । अनुपूर्वशः क्रमेणोपर्युपरिसुखादिभिरधिकोभूत्वात्मस्थोमुक्तोन निवर्ततइत्यन्वयः ५५ कुतःआत्मयाजीपरमात्मपूजकत्वात् । पुनरावृत्तीच्छापितस्यनास्तीतिभावेनाह उपशांतात्मेति पूर्णानंदस्वरूपःधूमादिमार्गवदस्यापिपुनरावृत्तिभीरस्तिकिमित्यतोभूत्वेति। ननु किमेतज्ज्ञानेनप्रयोजनं येनावश्यंवक्तव्यतामियादितितत्राह यएतइति जनस्थोदेहस्थः तद्यइत्थंविदुर्येचेमेरण्येश्रद्धातपइत्युपासतेतेर्चिषमभिसंभवतीत्यादिनाशास्त्रेणनकेवलंमोहंप्राप्नोतिनीचांगतिमपिनयातीत्यतोपीत्युक्तं । भक्तिमान्मार्गविन्नैवनीचांगतिमवाप्नुयादितिस्मृतेः ५६ जाग्रदाद्यवस्थाप्रवर्तकविश्वादीन्कल्पितानतिक्रम्यप्रपंचोपशमंतुर्यात्माभूत्वानिर्द्वंद्वआस्तेइतिकेचिद्व्याचक्षतेतन्मतदूषणायाह आदाविति आदावुत्पत्तिकालेमुक्तिकालेचयज्जनानाशंजननंविनाशंच । जनीप्रादुर्भावइत्यस्मात्पचाद्यचिअजादित्वात्टापिकृतेजनेतिरूपंसिध्यति । वध्यघातकभावोमार्जारमूषकवत् । यच्चबहिरंतर्विद्यमानं । परावरमुत्तमाधमं भूतंभविष्यद्वा । यच्चज्ञानादिकं । सर्वस्यग्लपकत्वात्ग्लानिजनकत्वात्तमः । प्रकृतिर्ज्योतिस्तदवभासकः स्वप्रकाशश्चयस्तदेतत्सर्वस्व

## आत्मयाज्युपशांतात्माह्यात्मस्थोननिवर्तते ॥ यएतेपितृदेवानामयनेदेवनिर्मिते ॥ शास्त्रेणचक्षुषावेदजनस्थोपिनमुह्यति ५६ आदावंतेजनानाशंबाहिरंतःपरावरम् ॥ ज्ञानंज्ञेयंवचोवाच्यंतमोज्योतिश्चसत्स्वयम् ५७ अबाधितोपिह्याभासोयथावस्तुतयास्मृतः ॥ दुर्घटत्वादैंद्रियकंतद्वदर्थविकल्पितम् ५८

यंतुर्यात्माश्रीहरिस्तत्सत्तायाअपितदधीनत्वात्सइत्युच्यतेनतुतदात्मकत्वात् पुरुषएवेदंसर्वमितिश्रुतेः । आदौयथातदधीनत्वंतथांतेपिश्रीनारायणाधीनत्वमित्यतोवाह आदाविति उक्तार्थः श्लोकः । निरुपमचरितापराधीनत्वंहरेरेवनमुक्तस्यापीत्यतोवाह आदाविति आदावंतेउत्पत्तेःप्रागूर्ध्वं अयंपरमात्मावर्ततइतिशेषः । कथंकारमत्राह जनेति जनकत्वेननाशकत्वेनेत्यादिरूपेणसर्वकर्तृत्वस्वातंत्र्येणतच्छब्दवाच्यत्वंहरेरप्युक्तं तमःशब्दस्यग्लापकत्वादितिणिच्प्रत्ययांतत्वेनविवरणादयमर्थोज्ञायतइति ५७ ननुसत्तायास्तदधीनत्वंप्रामाणिकंचेत्ब्रह्मत्वेनोक्तिर्घटेत ततःकात्रयुक्तिरित्याशंक्योपपादयति अबाधितइति प्राकृतवैकृतलक्षणकार्येषुविशिष्टकांतिमत्तयाभासतेविद्योततइत्याभासोदेहः प्रतिबिंबलक्षणोयथावस्तुतया । वसनाद्वासयेद्वस्तुनित्यामतिहतत्वतइतिस्मृतेर्वस्तुपरमात्मातत्त्वेन स्मृतः । इदंहिविश्वंभगवानिवेतरः इंद्रोमायाभिरित्यादिना । ननुदेहस्यसत्त्वेतत्सत्तायाभगवदधीनत्वेनतद्वक्तुंयुक्तंतस्यदग्धपटाभासवदर्थक्रियानर्हत्वादितितत्राह अबाधितइति शुक्तिकायांप्रतिभासितंरजतंवलयकरणाद्यर्थक्रियानर्हत्वेननेदंरजतमितिबाधितंस्याद्यथानतथायंबाधितः । हानोपादानाद्यर्थक्रियायोग्यत्वात् । अपिशब्दोत्रस्वातंत्र्यशंकांसूचयति । हिशब्देनप्रत्यक्षसिद्धत्वेनदग्धपटाभासवैलक्षण्यंदर्शयति । तद्वच्चैंद्रियकमिंद्रियविषयंघटपटादिक । अर्थशब्दोभावप्रधानः अर्थत्वेनार्थक्रियाख्यंप्रयोजनतयाकल्पितंसमर्थितं । परमात्मनेतिशेषः । कर्तृकर्मक्रियादीनासत्तावृत्तिस्तथैवचविष्णवधीनंयतइतिवचनादर्थक्रियासामर्थ्यस्यभगवदधीनत्वेनसर्वंखल्विदंब्रह्मेतिसर्वस्यतत्त्वंयुक्तमितिभावः । एवमनंगीकारेबाधकमाह दुर्घटत्वादिति ईश्वरान्येनकर्तुमशक्यत्वात् ५८

दुर्घटत्वमेवदर्शयति क्षित्यादीनामिति क्षित्यादीनामर्थानांपदार्थानां कतमापिछाया कतमोपिप्रकारो विचार्यमाणेसतिनघटतइतिशेषः। छायारीति प्रकाशश्चभावश्चेत्यभिधीयतेइत्यभिधानंइहकार्यं प्रपंचे हिशब्दोहेत्वर्थः निर्द्धारणार्थवाचिनातमप्प्रत्ययेनकस्यापिप्रकारस्यासंभवोक्तेः परमेश्वरकल्पितत्वेनैतत्कार्यंसन् इतिवक्तुंपुक्तं । प्रकारभावमुपपादयति नसंघातइति । पर मेश्वरकल्पनामंतरेणकार्यंभवतीतिवदन्प्रष्टव्योभवति क्षितिलक्षणंकार्यंकेवलमपांपुंजः तद्विकारोवा तद्व्यतिरेकेणोत्पन्नंवा वृक्षद्वयसंयोगवदुभयोःसयोगमात्रंवा । नप्रथमइत्याह नेति अयंसं घातोन। असंभवात् । क्षितेःकठिनावयवारब्धत्वात्केवलमपांद्रवत्वेनतत्कार्यैपर्वतादीनामज्जनापत्त्याक्षितेःस्वरूपरूपप्राप्तेः आधाराभावेनसर्वप्राणिप्राणनाशप्रसंगात् । नद्वितीयइत्याह विका रइति अत्रनञोऽध्याहारःकर्तव्यःअपांविकारोपिनोपपद्यते। कालुष्यादिलक्षणविकारमात्रेणक्षितित्वानुपपत्तेः । नतृतीयइत्याह । नपृथगिति। अद्भ्यःक्षितेःपृथक्स्थित्यदर्शनात् नापिचतुर्थ इत्याह। नान्वितइति सहावस्थानमात्रेणकार्योत्पत्त्यदर्शनात्। क्षित्यादीनामर्थानांपदार्थानांमध्येकनमापिछायाकतमोपिभावः पदार्थःकार्यजननशक्तिमान्नघटते। विचारासहत्वात्। तथाहि अ द्भ्यःपृथिवीतिश्रूयते तत्रप्रस्तुतात्मशक्तिमंतरेणकेवलानामपांपृथिवीजनकत्वंकथमितिवा। शेषंपूर्ववत् ५९ ननुविश्लिष्टानांपदार्थानामन्योन्यंमहत्कार्योत्पत्तावसामर्थ्यमस्तु । साश्लिष्टानानेयमनुपप त्तिरित्याशंक्यश्रीनारायणकटाक्षवीजमंतरेणावयवावयविनोरप्यनुपपत्तिःस्यादेवेत्याह धातवइति धातवःक्षित्यादिपंचभूतादिपदार्थाः। तन्मात्रावयवैर्विना। गंधादिव्यतिरेकेण । सुरभिगंधवती पृथिवीशुक्लभास्वरंसलिलमित्यादिव्यावर्तकधर्माभावेस्वरूपाभावप्राप्तिरेवस्यादित्यर्थःअवयवित्वादिति । नह्यवयविनोऽवयवाभावेअवयविव्यवहारोयुक्तस्तस्मात् चशब्दएवार्थेसमुच्चयार्थेवा प्रत्यक्षासि द्धत्वादवयवित्वाच्चेति अयंनिर्णयःकुत्रदृष्टइतितत्राह असतीति इवयथा आसमंतात्सन्नावयवाःसर्वात्मनातंतुलक्षणाः अवयवानष्टायदितर्ह्यसदवयविनितंतुरहितेपटेपटव्यवहारोपिनष्टइतिशेषः तंतुव्य

## क्षित्यादीनामिहार्थानांछायानकतमापिहि ॥ नसंघातोविकारोपिनपृथङ्नान्वितोपिवा ५९ धातवोऽवयवित्वाच्चतन्मात्रावयवैर्विना ॥ नस्युर्ह्यस

## त्यवयविन्यासन्नावयवाइव ६० स्यात्सादृश्यभ्रमस्तावद्विकल्पेसतिवस्तुनः ॥ जाग्रत्स्वप्नौयथास्वप्नेतथाविधिनिषेधता ६१

तिरेकेणपटाभावात्। यथावयवाभावेऽवयवीनास्तितथा अवयविनिनिवृत्तेऽवयवाअपिनिवृत्ताःस्युरित्यतोवाह आसन्नावयवाअपि नष्टाःस्युरित्यर्थः यथाऽऽसन्नावयवा आतानवितानावयवत्वसंसर्ग प्राप्तास्तंतुलक्षणाअवयवाःप्रागसत्यवयविनिपटेपटव्यवहारंनजनयंति तथागंधाद्यवयवाः प्रागसत्सुक्षित्यादिषु पश्चात्क्षित्यादिव्यवहारंनजनयंतीत्यतस्तदभावेतदभावःस्पष्टइत्यन्वयव्यतिरेकौदर्शिता विति ज्ञातव्यमिति । एवंदुर्घटत्वेनाविद्याकल्पितप्रपंचस्याविद्याबाधानंतरमनुवृत्तस्यापिनवस्तुतत्वमितिकल्पनमनुपपन्नं विश्वंसत्यंमघवानायुवोरिदापश्चनप्रमिनंतिव्रतंवां यद्वियुक्त्याविरुध्येततदाशङ्क तमेवहीतिश्रुतिस्मृतिप्रसिद्धांयुक्तिंहिशब्देनदर्शयति । असत्यस्यावयविन्यासन्नाऽवयवानचेतिकेचित्पठंति । अयमर्थःगंधाद्यवयवव्यतिरेकेणपृथिव्याद्यवयविनोनस्युश्चेत्किंनश्छिन्नमितितत्राह असतीति क्षित्यामवयविन्यसतिगंधाद्यवयवाएवनासन्नित्यन्वयः अवयवाभावेऽवयव्यभावेनकारणाभावापत्त्यासर्वासत्त्वप्रसंगलक्षणोच्छेदइतिभावः ६० नन्ववयवावयविनोःसादृश्यमात्रेणतस्यायमवयवइति व्यवहारस्तस्माच्चद्व्यतिरेकेणसोपिनास्तीतिकथमापद्यतइतितत्राह स्यादिति सत्यंसादृश्यभ्रमःस्यात्तावत्कस्मिन्सतीतितत्राह विकल्पइतिवस्तुनोविकल्पेभेदेसतीत्यन्वयः यथापट्टणादिषुरूप्यमवलो क्यतत्संस्कारवतःसहस्रकिरणसंपर्केणचकाशमानंकापिशुक्तिकाशकलंसंदृश्यद्वयोःसादृश्यमात्रादिदंरजतमितिभ्रमोदृश्यतेतथाक्षित्यादेर्गंधादेर्भेदेवस्तुसादृश्यमात्रेणव्यवहारःस्यात् नचात्रभेदोयुज्यते स्वरूपहानेरतोवयवाभावेऽवयव्यभावआपद्यतेस्वरूपत्वादितिभावः। पटस्यप्रत्येकंतंतुनाभेदेपिसमुदायरूपेणाभेदादुक्तंयुक्तमिति । नन्ववयविपदार्थसद्भावेइयंचिंता । सएवनास्ति । परमाणवएवपुं जीभूय कार्यंजनयंतीत्यंगीकार्यत्वात्प्रतिक्षणंविनाशाच्च अभेदग्राहिप्रत्यभिज्ञापाश्चसंस्कारजनितसादृश्यमात्रविषयतयाभ्रांतित्वादित्यतोवाह । स्यादिति वस्तुनोभेदेसतितदुक्तंसत्यंस्यात्तदेवनास्ति

एकत्वस्यसाक्षिप्रत्यक्षेणानुभूयमानत्वात् साक्षिणोभ्रांतित्वेनसर्वस्यविनाशसाधकस्यापिव्याप्तिग्राहकप्रमाणप्रामाण्यस्यसाम्यात्परमाणुपुंजपक्षेपिनिगदितदोषानिस्तारात् परमाणुभिर्विनापुंजाभावेनरव
रूपंनस्यादतोदुर्घटघटकेनकेनचिद्भवितव्यं सचादृष्टकर्मणोश्चेतनाश्रयत्वेनपृथक्सामर्थ्याभावाच्चेतनएवभवेत् चेतनसामान्यस्यहिताकरणादिनापारतंत्र्यप्रतीतेर्निरवयवत्वेनप्रवृत्त्यनुपपत्तेश्चतत्प्रवर्तकत्वे
नाघटितघटकत्वेनमाहात्म्याकरपरमचेतनपरिकल्पनयैवशरीरपदार्थोपादानभूतपृथिव्यादियोगोदृश्यतइतिसिद्धं । कार्यकारणवस्तूनांविशेषोनानिरूपितः तथापीशेच्छयैवासौदृश्यतेनियतोपिचे
तिस्मृतेः एतादृशोविशेषः कुत्रदृष्टइतितत्राह जाग्रदिति यथास्वप्नेजाग्रदिदमयंस्वप्नइतिविशेषईश्वरेच्छयादृश्यते यएषस्वप्नान्दर्शयतीतिश्रुतेः नतत्ररथानरथयोगानपथानोभवंति । अथरथान्
रथयोगान्पथः सृजतइत्यादेःस्वप्नेप्रतीयमानंसर्वमीश्वरेच्छाकर्तृकमितिज्ञापते तथाविधिनिषेधविशेषोपीश्वरकल्पनयैवप्रवर्ततइत्याह तथेति अग्निष्टोमेनस्वर्गकामोयजेतेत्यादिग्रह विधित्वं अरुण
यापिंगाक्ष्यैकहायिन्यागवासोमंक्रीणातीत्याद्यवांतरविधित्वं । तथाब्राह्मणोनहंतव्यइत्यादिमहानिषेधत्वं । नमृषावदेदित्याद्यवांतरनिषेधत्वचेश्वरेच्छाक्लृप्तमित्यन्वयः सइदंसर्वमसृजतेत्यादेः संको
चेकारणाभावान्मुख्यार्थएवांगीकर्तव्यः । अत्रतत्तद्विशेषस्यपरमेश्वरक्लृप्तत्वनिश्चयायमिथ्याभूतजाग्रत्त्वग्रहणंनतुतद्वत्स्वप्नस्यापिमिथ्यात्वनिश्चयाय । तस्यार्थक्रियाकारित्वेनसत्यत्वनिश्चयात् । अनन
सर्वस्यमिथ्यात्वेरज्जुसर्पस्यमिथ्यात्वंरज्जुखंडसत्यमितीयंव्यवस्थाकुतइत्याशंक्यमिथ्याभूतस्वप्नेपिजाग्रत्स्वप्नव्यवहारवत् व्यवहारमात्रमत्रचेत्यादिश्रुत्योच्यतइति ६१ एवंसर्वस्मादात्मनउपका
रकत्वेनश्रेष्ठत्वाद्येनविनातत्प्रसादोनभवेद्यस्मिन्सतिसंजायतीतिभगवति तत्समर्पणसमयेतंभावनाप्रकारंदर्शयति । भावेति मुनिःशास्त्रतत्त्वज्ञानी आत्मनः भावाद्वैतंक्रियाद्वैतंतथाद्रव्याद्वैतंचैवर्वर्त

भावाद्वैतंक्रियाद्वैतंद्रव्याद्वैतंतथात्मनः ॥ वर्तयन्स्वानुभूत्येहत्रीन्स्वप्नान्धुनुतेमुनिः ६२ कार्यकारणवस्त्वैक्यदर्शनंपटतंतुवत् ॥ अवस्तुत्वाद्विकल्पस्य
भावाद्वैतंतदुच्यते ६३ यद्ब्रह्मणिपरेसाक्षात्सर्वकर्मसमर्पणम् ॥ मनोवाक्तनुभिःपार्थक्रियाद्वैतंतदुच्यते ६४ आत्मजायासुतादीनामन्येषांसर्वदेहिनाम् ॥
यत्स्वार्थकामयोरैक्यंद्रव्याद्वैतंतदुच्यते ६५ यद्यस्यवानिषिद्धंस्याद्येनयत्रयतोनृप ॥ सतेनेहेतकर्माणिनरोनान्यैरनापदि ६६

यन् स्मरणंकुर्वन्स्वानुभूत्याविर्भूतस्वरूपज्ञानेन । इहजगतिसतस्त्रीन्स्वप्नान् जाग्रदाद्यवस्थानुभवनिमित्ताज्ञानशब्दवाच्यानर्थान्धुनुतेनिरस्यतीत्यन्वयः ६२ किंतद्भावाद्वैतादिकंयेनतदवश्यमनु
ष्ठेयमितितदाह । कार्यकारणेति । महदादिकार्येषुप्रकृतितद्गुणाख्यकारणेषुचस्थितस्यवस्तुनोनित्याप्रतिहतस्यहरेरेकत्वदर्शनम् । तत्कथमिवपटतंतुवत् पटस्यतंतूनांचाभेदलक्षणैकत्वंयथाप्रामा
णिकंतथेत्यर्थः । प्रकृतिंपुरुषंचैवप्रविश्यपुरुषोत्तमइत्यादेः । मृद्घटइतिसामानाधिकरण्येनकार्यकारणयोरभेदोक्त्याश्रीहरिसंबंधाप्रतीतेःप्रकृतासंगतंस्यात्तद्दर्शनंचैकत्वप्रदर्शनपरमित्युक्तएवार्थः ।
प्रतीतार्थंपरित्यज्याप्रतीतार्थकथनेकिंकारणमत्राह अवस्तुत्वादिति घटादिप्रपंचस्यानित्यत्वेनप्रतिहतत्वात्स्वतएवकार्योत्पादनसामर्थ्याभावादवस्तुत्वादसामर्थ्यत्वाद्विशिष्टत्वान्मिलितत्वात्कार्यज
ननशक्त्यभावाद्वा इदंचभगवन्माहात्म्यप्रकटनं गणंयुगपदाविशदितिस्वोक्तेःकार्यकारणानुविष्टानांभगवद्रूपाणामत्यैक्यमेकत्वं तत्सृष्ट्वातदेवानुप्राविशत् समाधेगतास्मिविधूतभेदमोहइत्यादिश्रुति
स्मृतिभिरुच्यतइतिज्ञानपूर्वकमुपासनंकार्यमितिशेषः ६३ नकुर्वन्त्यत्रक्रियतेकिंचनारेमहामकर्मघवंचित्रमर्चेति क्रियाद्वैतम् ६४ आत्मजायादीनामन्येषांचदेवदत्तादीनांभगवदधीनत्वदर्शनंयद्यच्चा
र्थकामयोरैक्यंभगवद्विषयत्वदर्शनंतत्सर्वंद्रव्याद्वैतं मन्येतदर्पितमनोवचनात्मगेहमाणःपुनातीत्यादिनोच्यतइत्यन्वयः अनेनजीवस्यश्रीहरिणाद्वैतमुच्यते तत्रैवचाद्वैतशब्दार्थग्रहणं नतुस्वरूपैक्य
मितिशिक्षाग्राह्येतिज्ञापतइति ६५ उपासनाप्रकारंनिरूप्याधुनार्चनादिप्रकारंदर्शयति यद्यस्येति यस्यपुरुषस्ययेनद्रव्येणयत्रयस्मिन्देशेकालेवायतोयस्मादुपात्तमनिषिद्धंश्रुतिस्मृतिलोकाविहितं
सनरस्तेनतस्मिन्देशेकालेवातस्मात्पुरुषादात्तेनकर्माणिपूजालक्षणानीहेतकुर्यात् अन्यैर्निषिद्धैर्नकुर्यादित्यन्वयः नन्वेतंतर्ह्यापद्युपरमएवमाप्तइतितत्राह अनापदीति ६६

एतैरनापदिविहितैरन्यैरापदिविहितैः अस्यहरेर्गतिंज्ञानंस्थानंवायायादितिलब्धैलिङ्ग्आप्नोतीत्यर्थः ६७ उक्तमर्थमनुभवसिद्धंकरोति यथेति दिग्गजशब्देनदिक्पालानुपलक्षयाति तस्यसेवाकर्तव्ये विशेषः ६८ ममाप्यनुभवसिद्धंदर्शयितुंस्वचरितमाह अहमिति कश्चिदित्यात्मानंनिंदयत्यथनाम्नोपबर्हणोगंधर्वइति पूर्वं अतीतेमहाकल्पेअतीतब्रह्मकाले । ब्राह्मंकालःपरश्चेतिमहाकल्पश्चकीर्तित इति ६९ तत्पुरलंपटः तासांपुरेगृहेलंपटः स्यातुमुत्सुकमनाः ७० गंधर्वादिगणाअगायन् ७१ तद्विदित्वागतःस्त्रीभिःपरिवृतोऽगायं हेलनंविश्वसृजांपुरतःस्त्रीभिःसंभूयमदोपरक्तगानल क्षणं ७२ तावत्तदानीमेव अनुसंगेननिरंतरसेवालक्षणसंगेनभक्त्यावा तीव्रस्नेहोतुर्षगोथनैरंतर्यानुसेवनमित्यभिधानात् ७३ अतइत्येतदपास्तानिगमयति धर्मइति । न्यासिनापदवीनिवृत्तिमार्गं

एतैरन्यैश्चवेदोक्तैर्वर्तमानःस्वकर्मभिः ॥ गृहेप्यस्यगतिंयायाद्राजंस्तद्भक्तिभाङ्नरः ६७ यथाहियूयंनृपदेवदुस्त्यजादापद्गणादुत्तरितानुप्रभो ॥ यत्पा दपंकेरुहसेवयाभवानहार्षीन्निर्जितदिग्गजःक्रतुः ६८ अहंपुराभवंकश्चिद्गंधर्वउपबर्हणः ॥ नाम्नातीतेमहाकल्पेगंधर्वाणांसुसंमतः ६९ रूपपेशलमाधु र्यसौगंध्यप्रियदर्शनः ॥ स्त्रीणांप्रियतमोनित्यंमत्तस्तत्पुरलंपटः ७० एकदादेवसत्रेतुगंधर्वाप्सरसांगणाः ॥ उपहूताविश्वसृग्भिर्हरिगाथोपगायने ७१ अगायंस्तद्विदित्वाहंस्त्रीभिःपरिवृतोगतः ॥ ज्ञात्वाविश्वसृजस्तन्मेहेलनंशेपुरोजसा ७२ याहित्वंशूद्रतामाशुनष्टश्रीःकृतहेलनः ॥ तावद्दास्यामहंजज्ञे तत्रापिब्रह्मवादिनाम् ॥ शुश्रूषयानुसंगेनप्राप्तोहंब्रह्मपुत्रताम् ७३ धर्मस्तेगृहमेधीयोवर्णितःपापनाशनः ॥ गृहस्थोयेनपदवींमंजसान्यासिनामियात् ७४ यूयंनृलोकेबतभूरिभागालोकंपुनानामुनयोभियांति ॥ येषांगृहानावसतीतिसाक्षाद्गूढंपरंब्रह्ममनुष्यलिंगम् ७५ सवाअयंब्रह्ममहद्विमृग्यंकैवल्यनिर्वा णसुखानुभूतिः ॥ प्रियःसुहृद्वःखलुमातुलेयआत्मार्हणीयोविधिकृद्गुरुश्च ७६ नयस्यसाक्षाद्भवपद्मजादिभीरूपंधियावस्तुतयोपवर्णितम् ॥ मौनेनभ क्त्योपशमेनपूजितःप्रसीदतामेषससात्वतांपतिः ७७ ॥ श्रीशुकउवाच ॥ इतिदेवर्षिणाप्रोक्तंनिशम्यभरतर्षभः ॥ पूजयामाससुप्रीतःकृष्णंचप्रेमविह्वलः ७८ कृष्णपार्थावुपामंत्र्यपूजितःप्रययौमुनिः ॥ श्रुत्वाकृष्णंपरंब्रह्मपार्थःपरमविस्मितः ७९ इतिदाक्षायणीनांतेपृथग्वंशाःप्रकीर्तिताः ॥ देवासुरमनुष्याद्या लोकायत्रचराचराः ॥ ८० ॥ इतिश्रीभागवतेमहापुराणेपारमहंस्यांसंहितायांसप्तमस्कंधेषोडशोध्यायः ॥१६॥ समाप्तोयंस्कंधः ॥ श्रीकृष्णार्पणमस्तु ॥

अर्चिरादिमार्गेणवैकुंठंवा ७४ यूयमित्यादिपद्यमुक्तार्थम् ७५ कैवल्येनप्रकृतिप्राकृतमिश्रराहित्येनाप्यंयन्निर्वाणसुखंस्वरूपसुखंतस्यानुभूतिरनुभवोयस्यसतथा ७६ ७७ यत्रयस्यप्रेमरसस्तत्रसस्न तः ७८ ७९ परमप्रमेयमुपसंहरति इतीति दाक्षायणीवंशस्यशाखोपशाखाभेदेनवर्णितत्वादितिशब्दःसमाप्तिवचनः यत्रयेषुवंशेषु ज्ञानमात्रंविहायस्थावरसंग्रहणायचराचराइति ८० भुज विलसितशौर्यंभुजंगदमजितंविष्णुं । वंदेभुजगशयनंभुजयुगकल्पितग्रीवं । पदरत्नावलिरेषासप्तमस्कंधसंगता । तुलसीवद्धरेःप्रीत्यैभूयाद्धिभववारिधेः । इतिश्रीमन्महेंद्रतीर्थपूज्यपादशिष्यविज यध्वजतीर्थमुनींद्रकृतायांपदरत्नावल्यांश्रीमद्भागवतटीकायांसप्तमस्कंधेषोडशोध्यायः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥

१ ब्रह्मणश्चतुर्मुखस्य शतवर्षपरिमित.कालः परइत्युच्यते । कालंपर स्वमनुभूय परः स्वयभूरित्युक्तः । महाकल्पश्चोच्यते ।

॥ इति श्रीमद्भागवते सप्तमः स्कंधः समाप्तः ॥

श्रीवेदव्यासायनमः । अस्ताविश्रुतिमस्तकेनमनुनास्वायंभुवेनापियोयेनाराक्षिजगत्त्रयंचमुनिभिःस्वात्मानुविद्धात्मभिः ॥ यंनामोविगजाधिपःक्रकचवच्चक्रेणनक्रान्नात्क्षीरांभोधिरमंथियेनधृतभूःसोयंहरिःपातुनः ॥ १ ॥ येनाधारिगिरिःपपेचविबुधैर्येनामृतंप्रेरितैर्येनातापिसुरद्विषांचहृदयंशर्वोप्यमोहिस्त्रिया ॥ येनामायिजगत्त्रयंबंधिचबालिर्येनाप्यदायिश्रुतिर्धात्रेयेनानिहत्यमत्स्यवपुषादैत्यंतमीडेहरिम् ॥ २ ॥ सप्तमस्कंधवाराशौनिमज्योन्मज्यशुद्धधीः ॥ अष्टमस्कंधसद्व्याख्यामृतंपातुमुपक्रमे ॥ ३ ॥ अत्रापिहरिभक्तिरेवभगवन्मनःकर्षणनिपुणेतिविधातुमनंतोपनिषदर्थभूतस्यहरेर्जगद्रक्षणादिमाहात्म्यं निरूप्यते तत्रापिविमलतरगुरुमथनदुरितहरचरितामृतपानाप्यायितप्राणोविस्मृतानशनक्लेशःपरीक्षिच्छुकमच्युतकथानुवादपूर्वकमभिलषितात्यंतश्रोतव्यकथांप्रार्थयते । राजेति । अन्यान् स्वायंभुवव्यतिरिक्तान् १ तत्रापितत्प्रसंगविशेषकथापिवक्तव्येत्याह यत्रेति महीयसःमहत्तमस्यहरेः २ ३ अस्मिन्वैवस्वतांतरेस्वायंभुवप्रभृतिवैवस्वतांताःसप्तमनवोऽव्यतीतप्रायाउच्यते अत्रत्वमुक्त्वाद्यःकथितइत्यन्वयः ४ अत्रापिशतरूपापतिपालनादिविषयमनुदितंयज्ञमूर्तिचरितंवक्तुमाह आकूत्यामिति ५ कपिलस्यहरेःकृतंचरितं पुरातृतीयस्कंधे ६ ७ सुनंदायांत्रिधाभिन्नायांविष्णुपद्यांएतस्यांअन्वाहस्तुतिरूपामुपनिषदमाह ८ कीदृशीत्यतोर्थतस्तामुपलक्षयति येनेति अयमादित्योयेनहरिणाप्रेरितोविश्वंतपतेप्रकाशयति विश्वस्यवीर्यं

राजोवाच ॥ स्वायंभुवस्येहमनोर्वंशोयंविस्तराच्छ्रुतः ॥ यत्रविश्वसृजांसर्गोमनूनन्यान्वदस्वनः १ यत्रधर्माहिविविधाश्चतुर्वर्णाश्रिताःशुभाः ॥ मन्वंतरेहरेर्जन्मकर्माणिचमहीयसः २ गृणंतिकवयोब्रह्मन्तानिनोवदशृण्वताम् ॥ यद्यस्मिन्नंतरेब्रह्मन्भगवान्विश्वभावनः ॥ कृतवान्कुरुतेकर्ताह्यतीतेऽनागतेद्यवा ३ ऋषिरुवाच ॥ मनवोऽस्मिन्व्यतीताःषट्कल्पेस्वायंभुवादयः ॥ आद्यस्तेकथितोयत्रदेवादीनांचसंभवः ४ आकूत्यांदेवहूत्यांचदुहित्रोस्तस्यवैमनोः ॥ धर्मज्ञानोपदेशार्थंभगवान्पुत्रतांगतः ५ कृतंपुराभगवतःकपिलस्यानुवर्णितम् ॥ आख्यास्येभगवान्यज्ञोयच्चकारकुरूद्वह ६ विरक्तःकामभोगेषुशतरूपापतिःप्रभुः ॥ विसृज्यराज्यंतपसेसभार्योवनमाविशत् ७ सुनंदायांवर्षशतंपदैकेनभुवंस्पृशन् ॥ तप्यमानस्तपोघोरमिदमाहसभारत ८ मनुरुवाच ॥ येनायंतपतेविश्वंविश्ववीर्यंयतस्तपः ॥ योजागर्तिशयानेस्मिन्नायंतंवेदवेदसः ९ आत्मावास्यमिदंविश्वंयज्जगत्यांजगन्मनः ॥ तेनत्यक्तेनभुंजीथामागृधःकस्यचिद्धनम् १०

यस्मात्तपोयतोभवति अस्मिन्सूर्येशयानेनिद्रामाचरतिसतियोहरिर्जागर्तिअयंसूर्यस्तंहरिंनवेदस हरिस्तमादित्यंवेदेत्यन्वयः भयात्तपतिसूर्यःभीषोदेतिसूर्यइतिश्रुतेः योनवेदेतिवेदेतिच अनेन आमाद्या वापृथिवीअंतरिक्षंइत्यादिश्रुतिप्रतीतसर्वाधिपत्यादित्यस्यश्रीहर्यधीनत्ववर्णनेननिरतिशयमाहात्म्यंयुक्तंहरेरितिज्ञातव्यं अयंजीवोयेननियतोविश्वंसुखदुःखादिकंतपतेअनुभवति तपआलोचनइति धातुःआलोचनंज्ञानंतद्एवानुभवः स्वाद्वत्त्यनश्नन्न्योअभिचाकशीतीतिश्रुतेः । हरिर्नियतअनुभवतीतिकुतइतितत्राह विश्ववीर्यमिति विश्वस्यवीर्यभूतंतपोनुभवोयस्माद्भवति एषह्येवआनंदयतीति श्रुतेः आनंदयतिसुखयतिजीवमितिशेषः तस्मादित्यर्थः अस्मिन्जीवेशयानेसति सतासौम्येतिश्रुतेः योजागर्ति ननिद्रांनैवचस्वप्नंतुयेपश्यंतिनिश्चिताइतिश्रुतेः तस्मादेनंस्वपितीत्याचक्षतइतिच अयंजीवस्तंनवेदनतत्रचक्षुर्गच्छतिनवाक्गच्छतिनमनोनविद्मनविजानीमइतिश्रुतेः सहरिःसर्ववेद यःसर्वज्ञइतिश्रुतेः इतिवा ९ नराजादिवत्सूर्यप्रेरकत्वंहरेःकिंतु तदंतःस्थितत्वेनापीत्यभिप्रेत्याह आत्मेति इदंसूर्यादिविश्वंआत्मनईशस्यावास्यंआवासयोग्यंस्वसृष्टत्वात् इदामित्यनेनाकिंपरकवलीक्रियतइतितत्राह यज्जगत्यामिति जगत्यांप्रकृतौयज्जगत्स्थावरजंगमलक्षणं प्रकृताविदुक्त्याऽपञ्चमनु

त्यक्तं चयत्सर्वं स्वव्यतिरिक्तं कवलीक्रियते प्रकृतिरावासयोग्येति कैमुत्यन्यायेन सिद्धा प्रकृतिपुरुषं चेति वचनाच्च अस्त्वावासयोग्यत्वं ततः किं तत्राह मनइति हे मनः यत इदमीशस्य विद्यमानं तेन कारणेन तेनेशे नत्यक्तेन दत्तेन धनेन भुंजीथाः स्वीकुरु शरीरयात्रामिति शेषः यतस्त्वं तदधीनसत्ताक अत एवं कुर्वित्याह माग्रृध इति कस्य परमानंदरूपस्य हरेः चिदानंदस्वरूपज्ञानलक्षणं धनं माग्रृधः तेनैक्यमप्राप्य नीत्याकांक्षां नकुर्वतो नयैहेतुत्वादित्यर्थः भगवता दत्तं कस्यचिद्धनं मदीयमिति श्रद्धां नकुर्वीतवा ईशावास्यमिति श्रुतिः १० ननु किमस्य लक्षणं येन तत्सद्भावेनेदं तदावास्यं स्यादिति तत्राह यन्नेति स्वप्रमादमंतरेणाज्ञेयत्वं सर्वज्ञत्वं नित्यं विनष्टचक्षुष्ट्वं च नस्यैव लक्षणं मुख्यं अदृश्येनात्म्येनिरुक्तेनिलयनेभ्रष्टणीतष्ठांविंदते यच्चक्षुर्नपश्यति येन चक्षूंषि पश्यतीति श्रुतेः नारिष्यतिन नश्यति सुपर्णपूर्णानंदं उपधावत भजत ११ लक्षणांतरमाह यस्येति परइत्युपलक्षणं अपरोपि परोपि च अत्र परापरवस्तुनोः स्वातंत्र्यं निषिद्ध्यते नतु शून्यत्वं तदृतं महद्ब्रह्मेत्यर्थः । तदेवर्तं तदु सत्यमाहु इति श्रुतिः १२ इदं च ब्रह्मलक्षण मित्याह सविश्वेति आत्मशक्त्या आत्ममायया प्रकृत्यास्य जगतो जन्मादि धत्ते यश्चतां प्रकृतिं विधयोदस्य निरस्य निरीह स्रष्ट्यादिशून्य आस्ते स ब्रह्मनामा परमात्मेत्यन्वयः प्रलयेविश्वं काये यस्य विश्व कायः उदरांतर्गतप्रपंच इत्यर्थः सृष्टौ विश्वमेव कायः शरीरं यस्य स तथा प्रतिमास्थानीय प्रपंच इत्यर्थः अतः पुरुहूत पुरूणि बहूनि हुतानि नामानि यस्य स तथा सर्वनामा सर्वकर्मेति श्रुतिः सर्वनामवाच्यत्वे हेतुरी शइति तत्तच्छब्दप्रवृत्तिनिमित्तसामर्थ्योपेत इत्यर्थः नैवदौपचारिकमित्यभिप्रेत्याह सत्यमिति तत्तन्नामवाच्यतत्तत्साधुगुणसद्भावे सामर्थ्यमिदमस्तीति वक्तुमुचितं स एव कथमित्यतो वाह सत्यमिति साधु

यन्न पश्यंति पश्यंतं चक्षुर्यस्य न रिष्यति ॥ तं भूतनिलयं देवं सुपर्णमुपधावत ११ यस्याद्यंतौ न मध्यं च स्वः परो नांतरं बहिः ॥ विश्वस्यामूनि यद्यस्माद्विश्वं च तदृतं महत् १२ स विश्वकायः पुरुहूत ईशः सत्यं परंज्योतिरजः पुराणः ॥ धत्तेऽस्य जन्माद्यजयात्मशक्त्या तां विद्ययोदस्य निरीह आस्ते १३ अथाग्र ऋषयः कर्माणीहंते कर्महेतवे ॥ ईहमानो हि पुरुषः प्रायोनीहां प्रपद्यते १४ ईहते भगवानीशो न हि तत्र विषज्जते ॥ आत्मलाभेन पूर्णार्थो नावसीदंति येऽनु तम् १५ तमीहमानं निरहंकृतं बुधं निराशिषं पूर्णमनन्यचोदितम् ॥ तच्छिक्षयंतं निजवर्त्म मूढान्प्रभुं प्रपद्येऽखिलधर्मभावनम् १६ श्रीशुक उवाच ॥ इति मंत्रोपनिषदं व्याहरंतं समाहितम् ॥ दृष्ट्वासुरा यातुधाना जग्धुमभ्यद्रवन्क्षुधा १७ तांस्तथावसितान्वीक्ष्य यज्ञः सर्वगतो हरिः ॥ यामैः परिवृतो देवैर्हत्वा शासत्त्रिविष्टपम् १८ स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् ॥ द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः १९

गुणपूर्ण इदं च लक्षणांतरं परंज्योतिरिति । परंज्योतीरूपं संपद्यत इति श्रुत्या मुक्तप्राप्यत्वं मुच्यते तदेवानेनोच्यत इति परंज्योतिः सूर्याद्यन्यतमः किं न स्यादित्यतो जः पुराण इति १३ एवं सिद्धे वस्तुनि तत्साधनज्ञाने साधनमाह अथेति यतो ज्ञानप्रतिबंधके दुष्कर्मणि सति सर्वं दुःसाधनं स्यात् इत्यथ लोकसंग्रहार्थं ऋषयोऽग्रे कर्मेहंते वदुष्कर्मपरिहाराय यागादिकर्माणीहंते कुर्वंतीति विज्ञाय ज्ञानार्थी पुरुष ईह मानः कर्म कुर्वाणो विधूनदुष्कर्मा नीहां निवृत्तिपदवीं प्राप्य प्रायो बहुलं ज्ञानं प्रपद्यत इत्यन्वयः कश्चित्फलार्थी अन्यथा भवतीति प्राय इत्युक्तं अनेन कुर्वन्नेवेह कर्माणीति श्रुतिर्गृहीता आचार्यकुलाद्वेदमधीत्य यथावि धानं गुरोः कर्मातिरेकेति विशेषेण समावृत्य कुटुंबी शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेंद्रियाणि संप्रतिष्ठाप्याहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषमिति श्रुति ह्निशब्देन गृहीता ॥ १४ ॥ न केवलमृषय एव लोकसंग्रहार्थं कर्माण्याचरंति अपि तु श्रीहरिरपीति भावेनाह ईहत इति कर्मानभिषंगे कैमुत्यन्यायमाह नावसीदंतीति ये तमनुवर्तंते तेपि नावसीदंती तिकिमुत श्रीहरिरित्यन्वयः १५ पुरुषेण फलानिच्छता कर्म कर्तव्यमात्मा विंदतीति भावेन स्तौतीत्याह तमीहमानमिति बुधैरीहमानं निजवर्त्म मूढास्तत्कर्म शिक्षयंतं प्रभुं प्रपद्य इत्यन्वयः १६ मंत्रवर्णेनयु क्तोपनिषदम् १७ १८ तस्य स्वारोचिषस्य १९

श्रीवेदव्यासायनमः । अस्ताविश्रुतिमस्तकेनमनुनास्वायंभुवेनापियोयेनाराक्षिजगत्त्रयंचमुनिभिःस्वात्मानुविद्धात्मभिः ॥ येनामोचिगजाधिपःक्रकचवच्चक्रेणनक्रान्नतात्क्षीरांभोधिरमाथियेनधृतभूःसोयहरिःपातुनः ॥ १ ॥ येनाधारिगिरिःपपेचविबुधैर्येनामृतंप्रेरितैर्येनातापिसुरद्विषांचहृदयंशर्वोप्यमोहिद्विगा ॥ येनामायिजगत्त्रयंबंधचबलेर्येनाप्यदायिश्रुतिर्धात्रेयेनानिहत्यमत्स्यवपुषादैत्यंतमीडेहरिम् ॥ २ ॥ सप्तमस्कंधवागशौनिमज्योन्मज्यशुद्धधीः ॥ अष्टमस्कंधसद्व्याख्यामृतंपातुमुपक्रमे ॥ ३ ॥ अत्रापिहरिभक्तिरेवभगवन्मनःकर्षणनिपुणेतिविधातुमनंतोपनिषदर्थभूतस्यहरेर्जगद्रक्षणादिमाहात्म्यंनिरूप्यते तत्रापिविमलतरगुरुमथनदुरितहरचरितामृतपानाप्यायितप्राणोविस्मृतानशनक्लेशःपरीक्षिच्छुकमच्युतकथानुवादपूर्वकमभिलषितात्यंतश्रोतव्यकथांप्रार्थयते । राजेति । अन्यान्स्वायंभुवव्यतिरिक्तान् १ तत्रापितत्प्रसंगेविशेषकथापिवक्तव्येत्याह यत्रेति महीयसःमहत्तमस्यहरेः २ ३ अस्मिन्वैवस्वतांतरेस्वायंभुवप्रभृतिवैवस्वतांताःसप्तमनवोव्यतीतप्रायाउच्यंते अत्रसप्तसुआद्यःकथितइत्यन्वयः ४ अत्रापिशतरूपापतिपालनादिविषयमनुदितंयज्ञमूर्तिचरितंवक्तुमाह आकूत्यामिति ५ कपिलस्यहरेःकृतंचरितं पुरातृतीयस्कंधे ६ ७ सुनंदायांत्रिवाभिन्नायांविष्णुपद्यांएतस्यांअन्वाहस्तुतिरूपामुपनिषदमाह ८ कीदृशीत्यतोर्थतस्तामुपलक्षयति येनेति अयमादित्योयेनहरिणाप्रेरितोविश्वंतपतेप्रकाशयति विश्वस्यवीर्यंवी

राजोवाच ॥ स्वायंभुवस्येहमनोर्वंशोयंविस्तराच्छ्रुतः ॥ यत्रविश्वसृजांसर्गोमनूनन्यान्वदस्वनः १ यत्रधर्माहिविविधाश्चतुर्वर्णाश्रिताःशुभाः ॥ मन्वंतरेहरेर्जन्मकर्माणिचमहीयसः २ गृणंतिकवयोब्रह्मन्तानिनोवदशृण्वताम् ॥ यद्यस्मिन्नंतरेब्रह्मन्भगवान्विश्वभावनः ॥ कृतवान्कुरुतेकर्ताह्यतीतेऽनागतेद्यवा ३ ऋषिरुवाच ॥ मनवोऽस्मिन्व्यतीताःषट्कल्पेस्वायंभुवादयः ॥ आद्यस्तेकथितोयत्रदेवादीनांचसंभवः ४ आकूत्यांदेवहूत्यांचदुहित्रोस्तस्यवैमनोः ॥ धर्मज्ञानोपदेशार्थंभगवान्पुत्रतांगतः ५ कृतंपुराभगवतःकपिलस्यानुवर्णितम् ॥ आख्यास्येभगवान्यज्ञोयच्चकारकुरूद्वह ६ विरक्तःकामभोगेषुशतरूपापतिःप्रभुः ॥ विसृज्यराज्यंतपसेसभार्योवनमाविशत् ७ सुनंदायांवर्षशतंपदैकेनभुवंस्पृशन् ॥ तप्यमानस्तपोघोरमिदमन्वाहभारत ८ मनुरुवाच ॥ येनायंतपतेविश्वंविश्वर्वीर्यंयतस्तपः ॥ योजागर्तिशयानेस्मिन्नायंतंवेदवेदसः ९ आत्मावास्यमिदंविश्वंयत्किंचिज्जगत्यांजगन्मनः ॥ तेनत्यक्तेनभुंजीथामागृधःकस्यचिद्धनम् १०

र्यंप्रदंतपोयस्तोभवति अस्मिन्सूर्येशयानेनिद्रामाचरतिसतियोहरिर्जागर्तिअयंसूर्यस्तंहरिंनवेदस हरिस्तमादित्यंवेदेत्यन्वयः भयात्तपतिसूर्यःभीषोदेतिसूर्यइतिश्रुतेः योनवेदेतिवेदेतिच अनेन आप्याद्यापृथिवीअंतरिक्षंइत्यादिश्रुतिप्रतीतसर्वाधिपत्यादित्यस्यश्रीहर्यधीनत्ववर्णनेननिरतिशयमाहात्म्यंयुक्तंहरेरितिज्ञातव्यं अयंजीवोयेननियतोविश्वंसुखदुःखादिकंतपतेअनुभवति तपआलोचनइतिधातुःआलोचनंज्ञानंसएवानुभवः स्वाद्वत्त्यनश्नन्नन्योअभिचाकशीतीतिश्रुतेः । हरिर्नियतअनुभवतीतिकुतइतितत्राह विश्ववीर्यमिति विश्वस्यवीर्यभूतंतपोनुभवोयस्माद्भवति एषह्येवआनंदयातीतिश्रुतेः आनंदयतिसुखयतिजीवमितिशेषः तस्मादित्यर्थः अस्मिन्जीवेशयानेसति सतासौम्येतिश्रुतेः योजागर्ति नंनिद्रांनैवचस्वप्नंतुयेपश्यंतिनिश्चिताइतिश्रुतेः तस्मादेनंस्वपितीत्याचक्षतइतिच अयंजीवस्तंनवेदनतत्रचक्षुर्गच्छतिनवाक्वागच्छतिनमनोनविद्मनविजानीमइतिश्रुतेः सहरिःसर्ववेद यःसर्वज्ञइतिश्रुतेः इतिवा ९ नराजादिवत्सूर्यप्रेरकत्वंहरेःकिंतु तदंतःस्थितत्वेनापीत्यभिप्रेत्याह आत्मेति इदंसूर्यादिविश्वंआत्मनईशस्यावास्यंआवासयोग्यंस्वमूर्तत्वात् इदमित्यनेनाकियत्कवलीक्रियतइतितत्राह यत्जगत्यामिति जगत्यामकृतौयज्जगत्स्थावरजंगमलक्षणं प्रकृताविरुक्त्योपपन्नमनु

त्पदं चयत्सर्वं स्वव्यतिरिक्तं कवलीक्रियते प्रकृतिरावासयोग्येतिकैमुत्यन्यायेनसिद्धा प्रकृतिंपुरुषंचेतिवचनाच्च अस्त्वावासयोग्यत्वंततः किंतत्राह मनइति हेमनःयत्इदमीशस्यविद्यमानंतेनकारणेनतेनेशे नत्यक्तेनदत्तेनधनेनभुंजीथाःस्वीकुरुशरीरयात्रामितिशेषःयतस्त्वंतदधीनसत्ताकअतएवंनकुर्वित्याह माग्रधइति कस्यपरमानंदरूपस्यहरेश्चिदानंदस्वरूपज्ञानलक्षणंधनंमागृधः तेनैक्यमाप्तव।नीत्याकांक्षां नकुर्वितोनर्थहेतुत्वा।दित्यर्थःभगवतादत्तंकस्यचिद्धनंमदीयमितिश्रद्धांनकुर्वितिवा ईशावास्यमितिश्रुतिः १० ननुकिमस्यलक्षणंयेनतत्सद्भावेनेदंतदावास्यंस्यादितितत्राह यन्नेतिस्वप्रमादमंतरेणाज्ञे यत्वंसर्वज्ञत्वंनित्य।दिनष्टचक्षुष्ट्वंचनस्यैवलक्षणंमुख्यं अदृश्येनात्म्येनिरुक्तेनिलयनेभ्रष्टप्र।नष्टांविंदते यच्चक्षुर्नपश्यतियेनचक्षूंषिपश्यतीतिश्रुतेः नारिष्यतिननश्यति सुपर्णपूर्णानंदंउपधावतभजत ११ लक्षणांतरमाह यस्येति परइत्युपलक्षणं अपरोपिपरोपिचअत्रपरापरवस्तुनोःस्वातंत्र्यंनिषिद्ध्यते नतुशून्यत्वंतदेतंमहद्ब्रह्मेत्यर्थः । तदेवर्ततदुसत्यमाहुरितिश्रुतिः १२ इदंचब्रह्मलक्षण मित्याह सविश्वेति आत्मशक्त्याआत्मभार्ययाप्रकृत्यास्यजगतोजन्मादिधत्ते यश्चतांप्रकृतिंविधयोदस्यनिरस्यनिरीहःसृष्ट्यादिशून्यआस्तेसब्रह्मनामापरमात्मेत्यन्वयःप्रलयेविश्वंकायेयस्यविश्व कायःउदरांतर्गतप्रपंचइत्यर्थः सृष्टौविश्वमेवकायःशरीरंयस्यसतथाप्रतिमास्थानीयप्रपंचइत्यर्थः अतःपुरुहूतःपुरूणिबहूनिहुतानिनामानियस्यसतथासर्वनामासर्वकर्मेतिश्रुतिः सर्वनामवाच्यत्वेहेतुरी शइति तत्तच्छब्दप्रवृत्तिनिमित्तसामर्थ्योपेतइत्यर्थः नैवदौपचारिकमित्यभिप्रेत्याह सत्यमिति तत्तन्नामवाच्यतत्तत्साधुगुणसद्भावेसामर्थ्यमिदमस्तीतिवक्तुमुचितंसएवकथमित्यतोवाह सत्यमिति साधु

यन्नपश्यंतिपश्यंतंचक्षुर्यस्यनरिष्यति ॥ तंभूतनिलयंदेवंसुपर्णमुपधावत ११ यस्याद्यंतौनमध्यंचस्वःपरोनांतरंबहिः ॥ विश्वस्यामूनियद्यस्माद्विश्वं चतदृतंमहत् १२ सविश्वकायःपुरुहूतईशःसत्यंपरंज्योतिरजःपुराणः ॥ धत्तेऽस्यजन्माद्यजयात्मशक्त्यातांविद्ययोदस्यनिरीहआस्ते १३ अथाग्र ऋषयःकर्माणीहंतेकर्मेहंतवे ॥ ईहमानोहिपुरुषःप्रायोनीहांप्रपद्यते १४ ईहतेभगवानीशोनहितत्रविषज्जते ॥ आत्मलाभेनपूर्णार्थोनावसीदंतियेनुन म् १५ तमीहमानंनिरहंकृतंबुधैर्निराशिषंपूर्णमनन्यचोदितम् ॥ तच्छिक्षयंतंनिजवर्त्ममूढान्प्रभुंप्रपद्येखिलधर्मभावनम् १६ श्रीशुकउवाच ॥ इतिमं त्रोपनिषदंव्याहरंतंसमाहितम् ॥ दृष्ट्वासुरायातुधानाजग्धुमभ्यद्रवन्क्षुधा १७ तांस्तथावसितान्वीक्ष्ययज्ञःसर्वगतोहरिः ॥ यामैःपरिवृतोदेवैर्हत्वा शासत्त्रिविष्टपम् १८ स्वारोचिषोद्वितीयस्तुमनुरग्नेःसुतोभवत् ॥ द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्यचात्मजाः १९

गुणपूर्णइदंचलक्षणांतरंपरंज्योतिरिति । परंज्योतीरूपंसंपद्यतेइतिश्रुत्यामुक्तप्राप्यत्वंमुच्यतेतदेवानेनोच्यतेइति परंज्योतिः सूर्यादन्यत्तमःकिंनस्यादित्यतोजःपुराणइति १३ एवंसिद्धेवस्तुनि तत्साधनज्ञानेसाधनमाह अथेति यतोज्ञानप्रतिबंधकेदुष्कर्मणिसतिसर्वंदुःसाधनंस्यात् इत्यथलोकसंग्रहार्थंऋषयोग्रेकर्मेहंतवेदुष्कर्मपरिहारायपागादिकर्माणीहंतेकुर्वंतीतिविज्ञायज्ञानार्थीपुरुषईह मानः कर्मकुर्वाणोविधूतदुष्कर्मानीहांनिवृत्तिपदवींप्राप्यप्रायोबहुलंज्ञानंप्रपद्यतइत्यन्वयः कश्चित्फलार्थीअन्यथाभिवतीतिप्रायइत्युक्तंअनेनकुर्वन्नेवेहकर्माणीतिश्रुतिर्गृहीताआचार्यकुलाद्वेदमधीत्ययथावि धानंगुरोःकर्मातिशेषेणाभिसमावृत्य कुटुंबेशुचौदेशेस्वाध्यायमधीयानोधार्मिकान्विदधदात्मनिसर्वेंद्रियाणिसंप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्रतीर्थेभ्यःसखल्वेवंवर्तयन्यावदायुषमिति श्रुति र्हिशब्देनगृहीता ॥ १४ ॥ नकेवलमृषयएवलोकसंग्रहार्थंकर्माण्याचरंति अपितुश्रीहरिरपीतिभावेनआह ईहतेइति कर्मानभिपन्नकैमुत्यन्यायमाह नावसीदंतीति येतमनुवर्ततेतेपिनावसीदंती तिकिमुतश्रीहरिरित्यन्वयः १५ पुरुषेणफलानिच्छताकर्मकर्तव्यमात्मविदेतिभावेनस्तौतीत्याह तमीहमानमिति बुधैरीहमानंनिजवर्त्ममूढांस्तत्कर्मशिक्षयंतंप्रभुंप्रपद्यइत्यन्वयः १६ मंत्रवर्णैर्नयु क्तोपनिषदम् १७ १८ तस्यस्वारोचिषस्य १९

नाम्नारोचनः २० नाम्नाविभुः २१ तस्यविभोः २२ २३ २४ २५ सत्यजितैंद्रेणरतुतः २६ २७ २८ २९ आहुतः आहूतः ३० ३१ ३२ हेविप्राःइतिसूतःशौनकादीन्संबोधयति ३३ इतिश्रीमहाभागवतेअष्टमस्कंधेवि०कृ०टी०प्रथमोध्यायः ॥ १ ॥ ॥ अत्रश रण्येषुशश्वदप्रतिहतशरण्यःश्रीभगवानेवेतिदर्शनायगजेंद्रविषयइतिहासःकथ्यते । क्षीरोदन क्षीरसमुद्रेण पर्यक्परिवृतः १ रौप्यायसाहिरण्मयैःरजतायोहेममयैस्त्रिभिःशृंगैःपयोनिधिंदिशश्चरोचयन्विद्योतयन् २ अन्यैर्नानाधातुमयैःशृंगैश्चरोचयन्नितिशेषः ३ निर्णिज्यमानाघ्रिःप्रक्षाल्यमानप्रत्यंतपर्वतःशुभैरन्याश्मनाविद्धै



तत्रेंद्रोरोचनश्चासीद्देवाश्चतुषितादयः ॥ ओजस्तंभादयःसप्तऋषयोब्रह्मवादिनः २० ऋषेस्तुवेदशिरसस्तुषितानामपत्यमभूत् ॥ तस्यांजज्ञेततोदेवोविभुरित्यभिविश्रुतः २१ अष्टाशीतिसहस्राणिमुनयोयेधृतव्रताः ॥ अन्वशिक्षन्व्रतंतस्यकौमारब्रह्मचारिणः २२ तृतीयउत्तमोनामप्रियव्रतसुतोमनुः ॥ पवनःसृंजयोयज्ञहोत्राद्यास्तत्सुतान्नृप २३ वसिष्ठतनयाःसप्तऋषयःप्रमदादयः ॥ सत्यावेदश्रुताभद्रादेवाइंद्रस्तुसत्यजित् २४ धर्मस्यसूनृतायांतुभगवान्पुरुषोत्तमः ॥ सत्यसेनइतिख्यातोजातःसत्यव्रतैःसह २५ सोऽनृतव्रतदुःशीलानसतोयक्षराक्षसान् ॥ भूतद्रुहोभूतगणांस्त्ववधीत्सत्यजित्सखः २६ चतुर्थउत्तमभ्रातामनुर्नाम्नाचतापसः ॥ पृथुःख्यातिर्नरःकेतुरित्याद्यादशतत्सुताः २७ सत्यकाहरयोवीरादेवास्त्रिशिखईश्वरः ॥ ज्योतिर्धामादयःसप्तऋषयस्तापसेंतरे २८ देवावैधृतयोनामविधृतेस्तनयान्नृप ॥ नष्टाःकालेनयैर्वेदाविधृताःस्वेनतेजसा २९ तत्रापिजज्ञेभगवान्हरिण्यांहरिमेधसः ॥ हरिरित्याहृतोयेनगजेंद्रोमोचितोग्रहात् ३० ॥ राजोवाच ॥ बादरायणएतत्तेश्रोतुमिच्छामहेवयम् ॥ हरिर्यथागजपतिंग्राहग्रस्तममूमुचत् ३१ तत्कथाःसुमहापुण्याधन्याःस्वस्त्ययनःशुभाः ॥ यत्रयत्रोत्तमश्लोकोभगवान्गीयतेहरिः ३२ ॥ सूतउवाच ॥ परीक्षितैवंसतुबादरायणिःप्रायोपविष्टेनकथासुचोदितः ॥ उवाचविप्राःप्रतिनंद्यपार्थिवंमुदामुनीनांसदसिस्मशृण्वताम् ३३ इतिश्रीभागवतेअष्टमस्कंधेप्रथमोध्यायः ॥ १ ॥ श्रीशुकउवाच ॥ आसीद्गिरिवरोराजन्त्रिकूटइतिविश्रुतः ॥ क्षीरोदेनावृतःश्रीमान्योजनायुतमुच्छ्रितः १ तावतताविस्तृतःपर्यक्त्रिभिःशृंगैःपयोनिधिम् ॥ दिशश्चरोचयन्नास्तेरौप्यायसहिरण्मयैः २ अन्यैश्चककुभःसर्वारत्नधातुविचित्रितैः ॥ नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झरांभसाम् ३ सदानिर्णिज्यमानांघ्रिःसमंततःपयऊर्मिभिः ॥ करोतिश्यामलांभूमिंशुभैर्मरकताश्मभिः ४ सिद्धचारणगंधर्वविद्याधरमहोरगैः ॥ किन्नरैरप्सरोभिश्चक्रीडद्भिर्जुष्टकंदरः ५ यत्रसंगीतसन्नादैर्नदद्गुहममर्षया ॥ अभिगर्जंतिहरयःश्लाघिनःपरशंकया ६ नानारण्यपशुव्रातसंकुलद्रोण्यलंकृतः ॥ चित्रद्रुमसुरोद्यानकलकंठविहंगमः ७ सरित्सरोभिरच्छोदैःपुलिनैर्मणिवालुकैः ॥ देवस्त्रीमज्जनामोदसौरभाम्भोनिलैर्युतः ८



मरकताश्मभिरिंद्रनीलरत्नैर्भूमिंश्यामलांनीलांकरोतीति ४ यश्चसिद्धादिभिर्नित्यनिषेवितगुहः ५ किन्नरादिसंगीतसन्नादैःनदद्गुहंप्रतिध्वनितगुहंस्थलमभ्युद्दिश्यप्रतिगजशंकयामर्षयाअसह्यमानबुद्ध्याश्लाघिनःप्रशस्याहरयः सिंहाः गर्जंति ६ चित्राद्रुमायेषुतथातानिचसुराणामुद्यानानिचित्रद्रुमसुरोद्यानानितेषु कलकंठाख्याःविहंगमायत्रसतथा ७ अच्छोदैर्निर्मलजलैर्मणिलक्षणानिवालुकानियेषुतानितथातैः । देवस्त्रीणांमज्जनादुत्पन्नोयआमोदःतस्मादुद्भूतंयत्सौरभंपरिमललक्षणंतेनाक्ताभाविताअनिलायैस्ते । आमोदोत्यःपरिमलइत्यमरः ८

आक्रीडंक्रीडारंगम् ९ चूतोंगनाप्रियः । प्रियालःस्फुटोनामवृक्षः । द्रुमिलदेशभवःचूतोवाआम्रःपिकोदरोमाकंदनामामवूनः । आम्रातक आम्रवृक्षः ! सालःसर्जविशेष. । अरिष्टोबृहत्पत्रः पिचुमंदवि
शेषः । किंशुकःपलाशः १० ११ १२ पिचुमंदःह्रस्वपत्रःरोमशनामावा । सरलःजीर्णवृक्षःगुग्गुलुर्वा १३ १४ १५ १६ १७ अशोकःसितरक्तपुष्पभेदेनाद्विविधः । कुरबकःकुटजः । कुब्जकंभ्रम
रीपुष्पंस्वर्णःकृतमालः१८ कमलात्पृथक् शतपत्रं जालकंमुकुलिकालता अलंद्रुमःसविज्ञेयोनित्यपुष्पफलोद्रुमइत्यभिधानं। तस्मिन्नुद्यानेसरोवरोस्तीत्यन्वय तत्रोद्यानेतत्सरोवराभ्याशमाद्रवादित्यन्वयः

तस्यद्रोण्यांभगवतोवरुणस्यमहात्मनः ॥ उद्यानमृतुमन्नामआक्रीडंसुरयोषिताम् ९ सर्वतोलंकृतंदिव्यैर्नित्यपुष्पफलद्रुमैः ॥ मंदारैःपारिजातैश्चपाटला
शोकचंपकैः १० चूतैःप्रियालैःपनसैराम्रैराम्रातकैरपि ॥ क्रमुकैर्नारिकेलैश्चखर्जूरैर्बीजपूरकैः ११ मधुकैःसालतालैश्चतमालैरसनार्जुनैः ॥ अरिष्टोदुंबर
प्लक्षैर्वटैःकिंशुकचंदनैः १२ पिचुमंदैःकोविदारैःसरलैःसुरदारुभिः ॥ द्राक्षेक्षुरंभाजंबूभिर्बदर्यक्षाभयामलैः १३ बिल्वैःकपित्थैर्जंबीरैर्वृतोभल्लातकादिभिः॥
तस्मिन्सरःसुविपुलंलसत्कांचनपंकजम् १४ कुमुदोत्पलकल्हारशतपत्रश्रियोर्जितम् ॥ मत्तषट्पदनिर्जुष्टंशकुंतैःकलनिस्वनैः १५ हंसकारंडवाकीर्णंच
क्राह्वैःसारसैरपि ॥ जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम् १६ मत्स्यकच्छपसंचारचलत्पद्मरजःपयः ॥ कदंबवेतसरलनीपवंजुलकैर्वृतम् १७ कुंदैःकुर
बकाशोकैःशिरीषैःकुटजेंगुदैः ॥ कुब्जकैःस्वर्णयूथीभिर्नागपुन्नागजातिभिः १८ मल्लिकाशतपत्रैश्चमाधवीजालकादिभिः ॥ शोभितंतीरजैश्चान्यैर्नित्यर्तु
भिरलंद्रुमैः १९ तत्रैकदातद्गिरिकाननाश्रयःकरेणुभिर्वारणयूथपश्चरन् ॥ सकंटकंकीचकवेणुवेत्रवद्विशालगुल्मंप्ररुजन्वनस्पतीन् २० यद्गंधमा
त्राद्धरयोगजेंद्राव्याघ्रादयोव्यालमृगाःसखड्गाः॥ महोरगाश्चापिभयाद्द्रवंतिसगौरकृष्णाःशरभाश्चमर्यः २१ वृषावराहामाहिषर्क्षशल्यागोपुच्छशालावृकम
र्कटाश्च ॥ अन्येचक्षुद्राहरिणाःशशादयश्चरंत्यभीतायदनुग्रहेण २२ सघर्मतप्तःकरिभिःकरेणुभिर्वृतोमदच्युत्कलभैरनुद्रुतः ॥ गिरिंगरिम्णापरितःप्रकंपय
न्निषेव्यमाणोलिकुलैर्मदाशनैः २३ सरोनिलंपंकजरेणुरूषितंजिघ्रन्विदूरान्मदविह्वलेक्षणः ॥ वृतश्चयूथेनतृषार्दितेनतत्सरोवराभ्याशमथागमद्द्रुतम् २४
विगाह्यतस्मिन्नमृतांबुनिर्मलंहेमारविंदोत्पलरेणुवासितम् ॥ पपौनिकामंनिजपुष्करोद्धृतमात्मानमद्भिःस्नपयन्गतक्लमः २५ तंतत्रकश्चिन्नृपदैवचोदितो
ग्राहोबलीयांश्चरणेरुषाग्रहीत् ॥ यदृच्छयैवंव्यसनंगतोगजोयथाबलंसोतिबलोविचक्रमे २६ तथातुरंयूथपतिंकरेणवोविकृष्यमाणंतरसाबलीयसा ॥
विचुक्रुशुर्दीनधियोपरेगजाःपार्ष्णिग्रहास्तारयितुंनचाशकन् २७ नियुध्यतोरेवमिभेंद्रनक्रयोर्विकर्षतोरंतरतोबहिर्मिथः ॥ समाःसहस्रंव्यगमन्महीप
तेसप्राणयोश्चित्रममंसतामराः २८

१९ सकंटकंविशालगुल्मं वनस्पतींश्चप्ररुजन् २० हरिप्रभृतिमर्कटांताःयस्यगंधमात्रात्अद्भुतभयात्द्रवंतीत्यन्वयःखड्गोमृगविशेषःव्यालमृगःसर्पाकारोमृगः । उक्तेभ्योन्येह्रस्वक्षुद्राहरिणादयोमृ
गविशेषायदनुग्रहेणाभीताश्चरंतिसिंहादिभयराहित्यात् २१ २२ २३ सरःसंबंधिवायुं २४ २५ हेनृप पादाक्रांतिनिमित्तरुषायथाबलंयथाशक्ति विचक्रमेविक्रमकृतवान् २६ २७ २८

इंद्रियादीनामवसादनप्रासावुत्तमनशाक्तिःसहः प्राणशक्तिर्बलं शरीरसामर्थ्यमोजः २९ अपारयन्पारंगंतुमशक्तः ३० कर्मलक्षणपाशेनग्राहेणरुद्धः उपद्रवंप्राप्तःविधातुर्दैवान्मोक्षितुम् ३१कश्च नलोकविलक्षणः यईशः बलिनोंतकाख्यसर्पाद्भीतंप्रपन्नंप्रपाति यस्यभयान्मृत्युरंतकोदुर्गात्रप्रधावति । मृत्युर्धावतिपंचमइतिश्रुतेःतमीशमरणंशरणमीमहिप्राप्नुमइत्यन्वयः ३२ ॥ ॥ इतिश्री भागवतेमहापुराणेअष्टमस्कंधेवि०क्रृ०टी०द्वितीयोध्यायः ॥२॥ ध्यानपूर्वकस्तुत्याप्रपन्नाद्धरेर्गजेंद्रस्यग्राहापदोमोक्षोयथाभूत्तथासंसारग्राहादपिमोक्षोभगवत्प्रसादनस्यादितिप्रदर्शनायतन्मोक्षप्रकारो निरूप्यतेस्मिन्नध्याये । किंप्रकारोगजेंद्रःशरणमयासीदितितंप्रकारंदर्शयितुमाह एवमिति । जाप्यंमंत्रंतिर्यग्योनेरनधिकारिणएतदसंभावितमितितत्राह प्रागिति १ एतच्चिदानंदात्मकचेतनजातंयतो यस्मादेवाक्षाभीष्टंतस्माइति हिशब्देनपुरुषादिविशेषणानांपरात्परंपुरुशयंपुरुषमीक्षतइतिश्रुतिसिद्धंदर्शयति २ मंत्रोक्तविशेषणविवरणपूर्वकंध्यानमाह यस्मिन्निति ।इदंजगद्यस्मिन्हरौप्रतीयतेयत्प्रयंतीति श्रुतेः । इदंयतोयस्माच्चैवजायतेयतोवाइमानिभूतानीतिश्रुतेः । चशब्देनान्यस्मादुत्पादंनिवारयति । इदंयेनब्रह्मणाप्रवर्ततेयेनजातंजीवतीतिश्रुतेः ।इदंविश्वंयःस्वयंप्राप्तसत्तादिकः सर्वंखल्विदमितिश्रु तेःननुयःस्वयमित्यनेनतादात्म्यंकिंनस्यादितितत्राह अस्मादिति । अस्मात्प्रत्यक्षप्रपंचात्परस्मात्परोक्षान्मुक्तप्रपंचाच्चपरउत्तमोयस्तंस्वयंभुवंस्वतएवप्राप्तसत्ताकंशरणंप्रपद्यइत्यन्वयः । उत्पन्नस्या

ततोगजेंद्रस्यमहोबलौजसांकालेनदीर्घेणमहानभूद्व्ययः ॥ विकृष्यमाणस्यजलेऽवसीदतोविपर्ययोभूत्सकलंजलौकसाम् २९ इत्थंगजेंद्रःसयदापसंकटं प्राणस्यदेहीविवशोयदृच्छया ॥ अपारयन्नात्मविमोक्षणेचिरंदध्याविमांबुद्धिमथाभ्यपद्यत ३० नमामिमेज्ञातयआतुरंगजाःकुतःकरिण्यःप्रभवंतिमो चितुम् ॥ ग्राहेणपाशेनविधातुरावृतोप्यहंचतंयामिपरंपरायणम् ३१ यःकश्चनेशोबलिनोंतकोरगात्प्रचंडवेगादभिधावतोभृशम् ॥ भीतंप्रपन्नंपरिपा तियद्भयान्मृत्युःप्रधावत्यरणंतमीमहि ३२ इतिश्रीभागवतेअष्टमस्कंधेद्वितीयोध्यायः ॥ २ ॥ श्रीशुकउवाच ॥ एवंव्यवसितोबुद्ध्यासमाधायमनोहृ दि ॥ जजापपरमंजाप्यंप्राग्जन्मन्यनुशिक्षितम् १ ॥ गजेंद्रउवाच ॥ ॐनमोभगवतेतस्मैयतएतच्चिदात्मकम् ॥ पुरुषायादिबीजायपरेशायचधीमहि २ यस्मिन्निदंयतश्चेदंयेनेदंयइदंस्वयम् ॥ योस्मात्परस्माच्चपरस्तंप्रपद्येस्वयंभुवम् ३ यःस्वात्मनीदंनिजमाययार्पितंक्वचिद्विभातंक्वचतत्तिरोहितम् ॥ अवि द्धदृक्साक्ष्युभयंतदीक्षतेसआत्ममूलोऽवतुमांपरात्परः ४ कालेनपंचत्वमितेषुकृत्स्नशोलोकेषुलीनेषुचसर्वहेतुषु ॥ तमस्तदासीद्गहनंगभीरंयस्तस्यपारेऽ भिविराजतेविभुः ५

पियत्सच्चाहरेस्तत्सडतीर्यते । हरेर्विश्वंभिन्नमपिपरमोसौयतोविभुरितिवचनान्नतादात्म्यमत्रोच्यते । किमुततःप्राप्तसत्ताकंजगदिति ३ पूर्वोक्तार्थभेदस्पष्टीकरणायविवृणोति यःस्वात्मनीति । योभवा न्क्वचिज्जाग्रतिविभातंक्वचसुषुप्तौतिरोहितंअप्रकाशितंतदुभयंतादिदंजगत्निजमाययास्वेच्छयास्वात्मनिस्वोदरेअर्पितमीक्षतइत्यन्वयः । ननुशरीरेस्थित्वाईक्षतेचेज्जीववत्लुप्तज्ञानत्वेनेक्षणायोगःस्यादि तितत्राह अविद्धदृगिति । तर्हिकथमीक्षतइतितत्राह साक्षीति । समामवत्वित्यन्वयः । आत्मास्वयमेवमूलंकारणंप्रतिष्ठाचसत्तावांस्तथाअनेनस्वयंभूशब्दोविवृतः स्वेमहिम्नीतिश्रुतेःअक्षरात्परतःपरइति चक्वचित्तुसुषुप्त्यादौविभातंक्वचास्मदादौतिरोहितंइतिवा ४ परात्परत्वंस्पष्टयन्दुर्ज्ञेयत्वमाह कालेनेत्यादिश्लोकद्वयेन लोकेषुपृथिव्यादिभूतकार्येषुसाकल्येनपंचत्वंपृथिव्यादिपंचभूतात्मतामितेषुसर्वहे तुषुपृथिव्यादिसर्वकारणेषुचशब्दान्महदादिषुलीनेषुस्वस्वकारणतामापेषुसत्सुयत्तद्गहनदुर्ज्ञेयगंभीरअतएवागाधंतमआसीत्योविभुःतस्यतमसः पारेतमःसंपर्करहितदेशेऽभिविराजते स्वतोनेत्याह कालेनेति कालनाम्नाहारिणा ५

देवादयोपस्यपदंनविदुरितियदत पुनःकोजंतुःतत्पदंगंतुंईरितुंवक्तुमर्हतीत्यन्वयः । हनुमदाद्याकृतिभिः तत्तदाकारानुसारेणविचेष्टमानस्यनटस्यस्वरूपंयथानज्ञायतेतथेति सदुरत्ययानुक्रमणोदुर्ज्ञेयप रिक्रमणोहरिर्मामवत्वित्यन्वयः ६ हरेरेवंविधस्वरूपसद्भावेमानमाह दिदृक्षवइतिअव्रणमक्ष तंअलोकव्रतंलोकैःकर्तुमशक्यंमृष्टयादिव्रतंयस्यसनथातम् ७ देवदत्तवज्जन्माद्यभावाद्दुर्ज्ञेयत्वयुक्त मित्यभिप्रेत्याह नविद्यतइति । आमघटादिश्यामादिगुणवन्नश्वरगुणोनास्तिदोषःकुतएव । शब्देनानिरनिष्ठोनिरवद्यइतिश्रुतिंसूचयति । सत्वादिनिमित्तदोषश्चनास्तीतिवादोषोनास्त्येव गुणयुक्तदोषश्च नास्तीतिवा । यद्यपिदेवदत्तस्येवहरेर्जन्मादिकंनास्तितथापिस्वमाययास्वमहिम्नास्वेच्छयावालोकस्यतदाश्रयप्राणिनांचसंभवायसुखादिप्राप्तिलक्षणजननायतानिजन्मादीनिसर्जनादिकालमनुसृत्यऋ च्छतिप्राप्नोतीत्यन्वयः । लोकत्रयसंभवायेतिकेचित्पठंति ८ अनंतरातीतश्लोकोक्तार्थविवरणपूर्वकंयच्छब्दविशिष्टंतच्छब्दावच्छिन्नंचनमति तस्माइति ९ अरूपायेत्युक्तंविवृणोति नमआत्मेति आत्मप्रदीपायस्वतःप्रकाशाय आत्मनःजीवस्यस्वरूपज्ञापनप्रकाशायवा १० अरूपप्राप्तिसाधनज्ञानंतत्सद्भावेज्ञानिप्राप्यत्वलक्षणगंपानमित्यभिप्रायेणनमति सत्वेनेति । विपश्चितांसत्वेनज्ञाने

नयस्यदेवाऋषयःपदंविदुर्जंतुःपुनःकोर्हतिगंतुमीरितुम् ॥ यथानटस्याकृतिभिर्विचेष्टतोदुरत्ययानुक्रमणःसमावतु ६ दिदृक्षवोयस्यपदंसुमंगलंविमुक्त संगामुनयःसुसाधवः ॥ चरंत्यलोकव्रतमव्रणंवनेसर्वात्मभूतःसुहृदःसमेगतिः ७ नविद्यतेयस्यचजन्मकर्मवाननामरूपेगुणदोषएववा ॥ तथापिलोकस्यच संभवाययःस्वमाययातान्यनुकालमृच्छति ८ तस्मैनमःपरेशायब्रह्मणेनंतशक्तये ॥ अरूपायोरुरूपायनमआश्चर्यकर्मणे ९ नमआत्मप्रदीपायसाक्षिणेपर मात्मने ॥ नमोगिरांविदूरायमनसश्चेतसामपि १० सत्वेनप्रतिलभ्यायनैष्कर्म्येणविपश्चिताम् ॥ नमःकैवल्यनाथायनिर्वाणसुखसंविदे ११ नमःशांताय घोरायमूढायगुणकर्मणे ॥ निर्विशेषायसाम्यायनमोज्ञानघनायच १२ क्षेत्रज्ञायनमस्तुभ्यंसर्वाध्यक्षायसाक्षिणे ॥ पुरुषायात्ममूलायमूलप्रकृतयेनमः १३ सर्वेंद्रियगुणद्रष्ट्रेसर्वप्रत्ययहेतवे ॥ असत्याच्चविमुक्तायसदाभासायतेनमः १४ नमोनमस्तेखिलकारणायनारायणायार्तिविनाशनाय ॥ सर्वागमाम्ना यमहार्णवायनमोपवर्गायपरायणाय १५ गुणारणिच्छन्नचिदुष्मपायतत्क्षोभविस्फूर्जितमानसाय ॥ युक्तात्मभिःस्वहृदयेपरिभाविताययज्ञानात्म नेभगवतेनमईश्वराय १६ ॥

नमतिलभ्यायप्राप्याय बलज्ञानसमाहारः सत्वंकेवलमेवचेत्यभिधानम्नैष्कर्म्येणनिवृत्तिधर्मलक्षणेन ११ उरुरूपायेत्युक्तरूपविशिष्टंतात्पर्यादरूपविशिष्टं चनमति शांतायेत्यनेनसत्वप्रवर्तकवासुदेवादिरूपंलक्षयतिघोरायेत्यनेनरजःप्रवर्तकजामदग्न्यादिरूपम् । मूढायेत्यनेनतमःप्रवर्तकवराहादिरूपम् । गुणकर्मणइत्यनेनतत्तद्योनिविशिष्टगुणकर्मवते । ज्ञानघ नायेत्यनेनारूपस्यशून्यत्वंनिवारयति सत्वेनेत्याद्युक्तविशेषणसमुच्चयार्थश्चकारः ॥ १२ ॥ रूपारूपित्वेननिरूप्यमाणस्यहरेर्मिथोनकोपिविशेषोस्तीतिज्ञापयितुमुभययोग्यविशेषणविशिष्टत्वेननमति क्षेत्रज्ञायेति सर्वाध्यक्षायसर्वस्वामिने आत्मैवमूलंयस्यतथातस्मैआत्मनांमूलायवा १३ साक्षिशब्दविवरणपूर्वकमस्मदादिज्ञानेहेतुत्वेनास्मदादिप्रपंचाद्भिन्नंनमति सर्वेति । असत्यादस्वतंत्रात्प्रपं चाद्विमुक्तायसन्निर्दोषोआभासोदेहोयस्यसतथातस्मै । सत्देहःसुखगंधश्चेत्यादेःअतेनप्राकृतरूपनास्तीत्युक्तंभवति । सन्नाभासःप्रकाशोयस्यसतथातस्माइतिवा परंज्योतिरुपसंपद्यतेइतिश्रुतेः १४ अखिलकारणत्वादिविशिष्टत्वेनोक्तःकइत्याशंक्यश्रीनारायणएवनान्यइतितन्नामनिर्देशपूर्वकंपूर्वोक्तानुक्तविशेषणविशिष्टत्वेननमति नमोनमइति । सर्वागमैः पंचरात्रादिभिः आम्नायैर्ऋगादि भिर्वेदैश्चसमुद्राय १५ सर्वप्रत्ययहेतवइत्येतद्विशेषणंविवृण्वन्नाह गुणेति । गुणारणिच्छन्नंसत्वादिगुणलक्षणकाष्ठच्छन्नंचिदुष्मज्ञानाख्यंज्योतिर्यत्तस्यातिरक्षतीतिसःतस्मै । बलमानंदओजश्चेत्यादेः

अन्यथातद्रूपकथनंव्यर्थंस्यात् । शांतायइत्यादिनायद्गुणलुब्धत्वंतत्‌विडंबनमात्रमित्यभिप्रेत्याह तत्क्षोभेति । तत्क्षोभेगुणविक्षोभेपि विस्फूर्जितंसमुच्छ्वसितंमानसंयस्यसतथातस्मै । गुणशक्त्युदेकावस्थायामपिमनोविकाररहितायेत्यर्थः स्वतंत्रोपिभक्तवश्योभवतीत्याह युक्तात्मभिरिति । वशीकृतमनआदींद्रियैःपुरुषैः । ज्ञानघनायेत्यनेनज्ञानंकिंस्वरूपमुतभिन्नमुच्यतइतिविकल्पावकाशोनास्तीत्याह ज्ञानेति । नकेवलंज्ञानंगुणोस्यअन्येपिसंतीत्याशयेनाह भगवतइति । गुणानांगुणिनोभेदेविज्ञानमानंदंब्रह्मेतिव्यवहारानुपपत्तेरित्याशंक्योभयविधव्यवहारघटकत्वशक्तियोगोस्यास्तीत्याशयेनाह ईश्वरायेति १६ मोक्षादिसर्वपुरुषार्थवाप्तिरप्यस्मादेवस्यात्तदर्थमन्यसेवानकार्येत्याशयेनाह यमिति । यंभजतेतत्प्रसादादिष्टांगतिमाप्नुवंतीत्यन्वयः । नन्वज्ञांतरपुत्राद्याशाप्राप्तयेन्यसेवापेक्षितेतितत्राह किंचेति । पुत्राद्याशिषोपिप्राप्नुवंतीतिशेषः । मोक्षंददातीतिननिराकारलक्षणंकिंत्वनाद्यंतकालीनंसाकारंददातीत्याह रातीति । रातिददाति । मयोक्तस्वाशीष्विपमेवाशीःप्रार्थ्यतइत्याह करोत्विति १७ आशीःप्रार्थनंअल्पभक्तलक्षणंयतएकांतभक्तैस्तन्नक्रियतइत्याह एकांतिनइति । येएकांतिनस्तेयस्यसकाशात्कंचनपदार्थंनवांछंतितपरेशमीडइत्यन्वयः । एकांतिनइत्यस्यविवरणंभगवत्प्रधानाइति अनाकांक्षणेनिमित्तमाह यच्चरितमिति १८ अक्षरात्संभवतीहविश्वं एतस्यवाअक्षरस्यब्रह्मविदाप्नोति । परंपरात्परंपरमः पराद्धर्यः । अव्यक्तमचलंशांतम् । अध्यात्मयोगेनसुनिष्ठितेनमत्वादेवंशोकमोहौजहाति विमेकणांपतयतः । सूक्ष्मात् सूक्ष्मतरंमपश्येतद्दूरेतद्वदंतिकेइत्याद्युपनिषत्प्रतिपाद्यमपारस्तूयतइतिद्योतनायाक्षरादिशब्दप्रयोगइत्यनेननपुनरुक्तिःपदानामितिज्ञायते । नक्षरतीत्यक्षरंजीव

यंधर्मकामार्थविमुक्तिकामाभजंतइष्टांगतिमाप्नुवंति ॥ किंचाशिषोरात्यपिदेहमव्ययंकरोतुमेऽदभ्रदयोविमोक्षणम् १७ एकांतिनोयस्यनकिंचनार्थंवांछंति येवैभगवत्प्रधानाः ॥ अत्यद्भुतंयच्चरितंसुमंगलंगायंतआनंदसमुद्रमग्नाः १८ तमक्षरंब्रह्मपरंपरेशमव्यक्तमाध्यात्मिकयोगगम्यम् ॥ अतींद्रियंसूक्ष्ममिवातिदूरमनंतमाद्यंपरिपूर्णमीडे १९ यस्यब्रह्मादयोदेवावेदालोकाश्चराचराः ॥ नामरूपविभेदेनजल्प्याचकलयाकृताः २० यथार्चिषोग्नेःसवितुर्गभस्तयोनिर्यांतिसंयांत्यसकृत्स्वरोचिषः ॥ तथायतोयंगुणसंप्रवाहोबुद्धिर्मनःखानिशरीरसर्गाः २१ सवैनदेवासुरमर्त्यतिर्यङ्नस्त्रीनषंढोनपुमान्नजंतुः नायंगुणःकर्मनसन्नचासन्निषेधशेषोजयतादशेषः २२

ह्यावृत्त्यर्थंपरंब्रह्मेति । ब्रह्मणिमुक्तव्यावृत्त्यर्थंपरेशमिति आराधनेप्यनुग्रहमंतरेणनव्यज्यतइति । अव्यक्तंप्रसादेसतिज्ञायतइत्यध्यात्मयोगगम्यमितिवागादींद्रियमतीत्यवर्तमानत्वादतींद्रियम् । यतोवाचोनिवर्ततइतिश्रुतेः । यथासूक्ष्मंतथामहांतमितिसूचनायइवशब्दः । अणोरणीयानितिश्रुतेः । आनंत्यघटनायपरिपूर्णमिति १९ ब्रह्मादिस्थावरांतंजगद्यस्यभिन्नांशोनतुस्वरूपांशोइतिज्ञानमुक्तिसाधनंनान्यदित्याशयेनाह यस्येति । यस्यकलयाजल्प्यावचसावाचेतिपाठेप्ययमेवार्थः । गीर्वाग्वाणीभारतीचब्राह्मीलागौःसरस्वतीत्यभिधानम् २० गुणसंप्रवाहइत्यस्यविवरणंबुद्धिरित्यादि । अनेनजगत्प्रवाहस्यनित्यत्वंज्ञापितमितिज्ञातव्यम् २१ अधुनाश्रीनारायणसद्भावेप्रमाणदर्शनपूर्वकंस्तौति सइति । यस्माद्गुणसंप्रवाहःसःदेवासुरमर्त्यतिर्यक्जातिर्नैवयस्मादित्यन्वयः । यतोबहुव्यक्त्यभावात् विशेषतोनिषेधति नस्त्रीति । नियतक्रियाद्याकाराभावान्नजंतुःकृमिलक्षणः । अमूर्ताकारोपिनास्तीत्याह नायमिति । देवादिशरीरकारणपृथिव्याद्यन्यतमोपिनस्यादित्याह नसन्निति । इतिमूर्तामूर्तनिषेधेनशेषोयस्यसनिषेधशेषः ततोविलक्षत्वेनपरिशेषप्रमाणसिद्धः । सजयतान्ममानर्थभूतसंसारमभिभूयवर्ततामित्यन्वयःतत्स्वरूपमाह अशेषइति । परिपूर्णत्वेनसिद्धः । निषेधशिष्टश्चेदुच्छिष्टवत्त्यागयोग्यइत्यतोवाह अशेषइति । परिपूर्णत्वेनसिद्धःसएषआत्मानेतिनेतीत्यादिश्रुतेः २२

ज्ञानसाधनमंतरेणानेनशरीरेणचिरंरक्षितेनाकिंप्रयोजनमित्याशयेनाह जिजीविषइति । अहंशरीरंतर्बहिश्चावृतयामुयेभयोन्याप्रकृत्याकि नाकिमपि इतियस्मात्तस्मादिह तन्निर्मितेशरीरेचिरंनाजिजीविषेनजीवितुमिच्छामीत्यन्वयः । स्वारंभककर्मक्षयेस्वयंनाशात्किमर्थंनजिजीविषइत्यर्थतइन्यतोलिंगशरीरनाशएवप्रार्थ्यतइत्याह इच्छामीति । तस्यात्मलोकावरणस्यस्वज्ञानावरकस्यालिंगशरीरस्यमोक्षणंनाशमिच्छामीत्यन्वयः । अस्यापिकालेननाशःकिंनस्यादत्राह कालेनेति । विप्लुवेनाशःअनेनात्मज्ञानमंतरेणालिंगशरीरस्यनाशोनास्ति । सतितस्मिन्तस्यादित्युक्तंभवति तस्मिन्दृष्टेपरावरइतिश्रुतेः २२ ननुगुणोपसंहारलक्षणोपासनावेदांतज्ञानेनसंभवेत्तिर्यग्योनित्वेनतदनधिकारादात्मज्ञानासंभवाल्लिंगशरीरनाशेआशामात्रतवस्यादित्याशंक्यास्मज्जातिविहितप्रणामेनापिप्रसन्नेश्वरप्रसादादुत्पन्नज्ञानेनतत्स्यादित्यतस्तमाचरति सोहमिति । योहंलिंगशरीरमोक्षमाकांक्षेसोहंपरंपदंप्राप्यप्रणतोस्मीत्यन्वयःसर्वस्मादस्योत्तमत्वंकुतइत्यतस्तदुपपादकविशेषणैःसिद्धमित्याह विश्वसृजमित्यादिना । विश्वसृजत्वाद्विश्वं तर्हिमृद्घटवत्तदात्मकत्वमापन्नमितिनेत्याह । अविश्वमिति जगतोविलक्षणं स्वसृष्टपदार्थप्रविष्टत्वाद्विश्वंबहिष्ठत्वादविश्वमितिवा । दुर्भगशरीरस्थत्वेपिज्ञानलोपोनेत्याह विश्ववेदसमिति विश्वंवेत्तीतिसर्वज्ञमित्यर्थः । सर्वज्ञत्वंचास्यैवसुलभमित्याह विश्वेति । विश्वंव्याप्यवर्तमानंविश्वंआदत्तइतिवा विश्वस्यस्वामीतिवाविश्वात्मान जगत्स्रष्टुरस्यजगदाकारेणपरिणामःकिंनेत्याह अजमिति । अहंकारात्मारुद्रोप्युच्यतइतिनेत्याह ब्रह्मेति । वेदोनेत्याह परमिति मुक्तोनेत्याह । पदमिति २४ ज्ञानप्रत्यक्षमीश्वरसद्भावेप्रमाणमित्याशयेननमति योगेति । योगे

**जिजीविषेनाहमिहामुयाकिमंतर्बहिश्चावृतयेभयोन्या ॥ इच्छामिकालेननयस्यविप्लवस्तस्यात्मलोकावरणस्यमोक्षणम् २३ सोहंविश्वसृजंविश्वमविश्वंविश्ववेदसम् ॥ विश्वात्मानमजंब्रह्मप्रणतोस्मिपरंपदम् २४ योगरंधितकर्माणोहृदियोगविभाविते ॥ योगिनोयंप्रपश्यंतियोगेशंतंनतोस्म्यहम् २५ नमोनमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ॥ प्रपन्नपालायदुरंतशक्तयेकदिंद्रियाणामनवाप्यवर्त्मने २६ नायंवेदस्वमात्मानंयच्छक्त्याहंधियाहतः ॥ तंदुरत्ययमाहात्म्यंभगवंतंनतोस्म्यहम् २७ श्रीशुकउवाच ॥ एवंगजेंद्रमुपवर्णितनिर्विशेषंब्रह्मादयोविविधलिंगभिदाभिमानाः ॥ नैतेयदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरवरोहरिराविरासीत् २८ तंतद्वदार्तमुपलभ्यजगन्निवासःस्तोत्रंनिशम्यदिविजैःसहसंस्तुवद्भिः ॥ छंदोमयेनगरुडेनसमुह्यमानश्चक्रायुधोभ्यगमदाशुयतोगजेंद्रः २९**

नरंधितानिदग्धानिकर्माणियेषांतेतथा २५ ननुतत्तच्छक्तिमतस्तत्तत्कर्मदृष्टं हरेस्तुसृष्ट्यादिकर्मकथमित्याशंक्यतत्तच्छक्तिविशिष्टत्वेनतंनमति नमइति । असह्योवेगोयासांताः तथाताहशीनांशक्तीनांउत्पत्तिस्थितिसंहारविषयाणांउत्साहमंत्रप्रभुविषयाणांवात्रयंयस्यसतथा तस्मै उत्पत्त्यादिशक्तयश्चज्ञानवतएवयुक्ताइत्याह अखिलेति । नचैताःशक्तयोदेवदत्तशक्तिवत्परिमिताइत्याशयवानाह दुरंतेति । परिच्छिन्नत्वमनुमानेनसाध्यतइतिचेत्तत्राह बुद्धीति । हेतोराश्रयासिद्धत्वेनानुमानानुदयात् २६ हरेःस्तुतिफलंदर्शयति नायमिति । यःस्वमात्मानंनवेद नजानातिपूर्वमितिशेषः । २७ अनंतरंकिमभूदत्राह एवमिति उपवर्णितंनिर्विशेषंसम्यग्ब्रह्मयेनसतथातंपृथिव्यादिविलक्षणंब्रह्मयेनसतथातमितिवा अवतारमूलरूपयोर्विशेषोनास्तीतिवानिर्विशेषतदितिवा । पूर्णमदःपूर्णमिदमितिश्रुतेःविविधानिलिंगानिपद्मवज्रादीनिवाहंसवृषभादीनिवा । एवंभिदयाभेदेनजातोभिमानोहपद्मपाणिरहंवज्रपाणिरित्यादिलक्षणोयेषांतथास्रष्टृत्वसंहर्तृत्वादिलक्षणोवायेब्रह्मादयएतेयदागजेंद्रंनोपससृपुःतदासकलदेवनाथोहरिःयत्रगजेंद्रस्तत्राविरासीत्तत्स्थएवतत्रप्रत्यक्षीभूतोनतुदूरादागत्य कुतइतितत्राह निखिलेति सर्वव्यापकत्वात् निखिलगुरोःनहिपरिच्छिन्नस्यसर्वगुरुत्वंघटते इत्यादिहेतुगर्भविशेषणं नहिगुरोराज्ञामंतरेणगच्छंतिसंतः यद्वा ब्रह्मादीनामनागमेनिमित्तमाह निखिलेति हरेःसर्वस्वामित्वाद्धरेःपूर्वमागमनेप्रयोजनासिद्धेरित्यर्थः २८ तद्वद्यथादर्शनेरूपोदेतितथातम् २९

अखिलगुरो नहिपरिच्छिन्नस्य सर्वगुरुत्वंघटतइतिनारायणेत्यादिहेतुगर्भविशेषणम् ३० ततःफलितमाह तंवीक्ष्येति उस्रियाणांदेवानाम् उस्रिपाविजयादेवाश्चादैत्याअमराःसुराइत्यभिधानम् ३१ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेवि०कृ०टी०तृतीयोध्यायः ॥ ३ ॥ प्रनष्टदुरितस्यहरौनिरतिशयभक्तिःस्यादितितन्नाशसाधनादिनिरूप्यतेस्मिन्नध्याये तत्रप्रथमंदेवादीनांपुष्पवर्षादिकंभगवत्प्रीतिसाधनमाह तदेति यदागजेंद्रंअमूमुचत्सदा १ २ सपश्चात्पूर्वचीर्णपुण्योदयेनाविर्भूतज्ञानोहरिस्तुत्वात्तत्प्रसादेनदेवलशापेन तृतीयापंचम्यर्थे तस्माच्छापान्मुक्तःपरमाश्चर्यरूपधृक्हरिंशिरसाप्रणम्ययशोधामागायतेत्यन्वयः कीर्तनीयागुणरूपाःसत्यःकथायस्यसतथातंयद्वासमस्तथेतिवा अनेनहरिगुणकीर्तनरूपंगानंगापकशापादिमोक्षसमर्थमित्युक्तंभवति ॥ ३ ॥ ४ ॥ ५ ॥

सोंतःसरस्युरुबलेनगृहीतआर्तोदृष्ट्वागरुत्मतिहरिंखउपात्तचक्रम् ॥ उत्क्षिप्यसांबुजकरंगिरमाहकृच्छ्रान्नारायणाखिलगुरोभगवन्नमस्ते ३० तंवीक्ष्यपीडितमजःसहसावतीर्यसग्राहमाशुसरसःकृपयोज्जहार ॥ ग्राहाद्विपाटितमुखादरिणागजेंद्रंसंपश्यतांहरिरमूमुचदुस्रियानाम् ३१ ॥ इतिश्रीभा० अ० तृतीयोध्यायः ॥ ३ ॥ श्रीशुकउवाच ॥ तदादेवर्षिगंधर्वाब्रह्मेशानपुरोगमाः ॥ मुमुचुःकुसुमासारंशंसंतःकर्मतद्धरेः १ नेदुर्दुंदुभयोदिव्यागंधर्वानन्नृतुर्जगुः ऋषयश्चारणाःसिद्धास्तुष्टुवुःपुरुषोत्तमम् २ योसौग्राहःसवैसद्यःपरमाश्चर्यरूपधृक् ॥ मुक्तोदेवलशापेनहूहूर्गंधर्वसत्तमः ३ प्रणम्यशिरसाधीशमुत्तमश्लोकमव्ययम् ॥ अगायतयशोधामकीर्तन्यगुणसत्कथम् ४ सोनुकंपितईशेनपरिक्रम्यप्रणम्यतम् ॥ लोकस्यपश्यतोलोकंस्वमगान्मुक्तकिल्बिषः ५ गजेंद्रोभगवत्स्पर्शाद्विमुक्तोऽज्ञानबंधनात् ॥ प्राप्तोभगवतोरूपंपीतवासाश्चतुर्भुजः ६ सवैपूर्वमभूद्राजापांड्योद्रविडसत्तमः ॥ इंद्रद्युम्नइतिख्यातोविष्णुव्रतपरायणः ७ सएकदाराधनकालआत्मवान्गृहीतमौनव्रतईश्वरंहरिम् ॥ जटाधरस्तापसआप्लुतोच्युतंसमर्चयामासकुलाचलाश्रयः ८ यदृच्छयातत्रमहायशामुनिःसमागमच्छिष्यगणैःपरिश्रितः ॥ तंवीक्ष्यतुष्णीमकृतार्हणादिकंरहस्युपासीनमृषिश्चुकोपह ९ तस्माइमंशापमदादसाधुरयंदुरात्माऽकृतबुद्धिरद्य ॥ मद्धेलनात्प्राविशतांतमिस्रंयथागजःस्तब्धमतिःसदोषः १० ॥ श्रीशुकउवाच ॥ एवंशप्त्वागतोगस्त्योभगवान्नृपसानुगः ॥ इंद्रद्युम्नोपिराजर्षिर्दिष्टंतदुपधारयत् ११ आपन्नःकौंजरींयोनिमात्मस्मृतिविनाशिनीम् ॥ हर्यर्चनानुभावेनयद्गजत्वेप्यनुस्मृतिः १२ एवंविमोक्ष्यगजयूथपमब्जनाभस्तेनापिपार्षदगतिंगमितेनयुक्तः ॥ गंधर्वसिद्धविबुधैरुपगीयमानकर्माद्भुतंस्वभुवनंगरुडासनोगात् १३ एवंमहाराजतवेरितोमयाकृष्णानुभावोगजराजमोक्षणम् ॥ स्वर्ग्यंयशस्यंकलिकल्मषापहंदुःस्वप्ननाशंकुरुवर्यशृण्वताम् १४ अथानुकीर्तयंत्येतच्छ्रेयस्कामाद्विजातयः ॥ शुचयःप्रातरुत्थायदुःस्वप्नाद्युपशांतये १५ इदमाहहरिःप्रीतोगजेंद्रंकुरुसत्तम ॥ शृण्वतांसर्वभूतानांसर्वभूतमयोविभुः १६

ननु किमनेनान्यगुणकीर्तनेनेदानींगजेंद्रस्यभगवत्स्तुत्याकिमभूदित्याशंक्यस्तुत्याप्रसन्नस्यहरेर्दर्शनेनमुक्तकिल्बिषस्यतत्सारूप्यंफलमभूदित्याह गजेंद्रइति ६ हरेर्नाममात्रतोवाप्तविष्णुप्रसादःपूर्वंकइतितत्राह सवाइति ७ गजेंद्रयोनिप्राप्तिनिमित्तंवक्तुमुपोद्घातंरचयति सएकदेति ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ उपगीयमानानिकर्माणियस्यसतथा अगाल्लोकदृष्ट्यातु तत्रैवांतर्धेइत्यर्थः १३ दुःस्वप्नस्यनाशोयस्मात्गजेंद्रमोक्षणात्तथातम् ॥ १४ ॥ १५ १६ ॥

१७ १८ १९ २० २१ २२ २३ अपररात्रांतेअरुणोदयप्रारंभेउत्थायत्वांमांचेत्यादिकंस्मरंतितेसर्वस्मादंहसोमुच्यंतइत्यन्वयः २४ नन्वस्तुपापक्षयोस्मात्तद्विषयज्ञानंकस्मादित्यतस्तत्साधनमाह येषामिति प्राणात्ययेदेहोत्क्रमणे २५ जलजोत्तमंशंखोत्तमम् ॥ २६ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेवि० कृ० टीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ७ ॥ ॥ भक्त्यास्तुवतःपुरुषस्यापिप्रसन्नोभवतिहरिरित्ययमर्थः प्रतिपाद्यतेऽस्मिन्नध्याये तत्रादौक्रमप्राप्तमन्वंतराधिपकथांप्रसंजयति राजन्निति रेवतस्यविद्यमानंरैवतम् १ बलविंध्यावादीयेषांतेतथाअर्जुनपूर्वःप्रधानोयेषांतेतथा २ वि

श्रीभगवानुवाच ॥ येमांत्वांचसरश्चेदंगिरिकंदरकाननम्॥ वेत्रकीचकवेणूनांगुल्मानिसुरपादपान् १७ शृंगाणीमानिधिष्ण्यानिब्रह्मणोमेशिवस्यच ॥ क्षीरोदंमेप्रियंधामश्वेतद्वीपंचभास्वरम् १८ श्रीवत्संकौस्तुभंमालांगदांकौमोदकींमम ॥ सुदर्शनंपांचजन्यंसुपर्णंपतगेश्वरम् १९ शेषंचमत्कलांसूक्ष्मांश्रियंदेवींमदाश्रयाम् ॥ ब्रह्माणंनारदमृषिंभवंप्रह्लादमेवच २० मत्स्यकूर्मवराहाद्यैरवतारैःकृतानिमे ॥ कर्माण्यनंतपुण्यानिसूर्यंसोमंहुताशनान् २१ प्रणवंसत्यमव्यक्तंगोविप्रान्धर्ममक्षयम् ॥ दाक्षायणीर्धर्मपत्नीःसोमकश्यपयोरपि २२ गंगांसरस्वतींनंदांकालिंदींसितवारणम् ॥ ध्रुवंब्रह्मऋषीन्सप्तपुण्यश्लोकांश्चमानवान् २३ उत्थायापररात्रांतेप्रयताःसुसमाहिताः ॥ स्मरंतिममरूपाणिमुच्यंतेतेंऽहसोखिलात् २४ येमांस्तुवंत्यनेनांगप्रतिबुद्धयनिशात्यये ॥ तेषांप्राणात्ययेचाहंददामिविमलांगतिम् २५ ॥ श्रीशुकउवाच ॥ इत्यादिश्यहृषीकेशःप्राध्मायजलजोत्तमम्॥ हर्षयन्विबुधानीकमारुरोहखगाधिपम् ॥ २६ इतिश्रीभागवतेअष्टमस्कंधेगजेंद्रमोक्षणंनामचतुर्थोध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ श्रीशुकउवाच ॥ राजन्नुदितमेतत्तेहरेःकर्माघनाशनम् ॥ गजेंद्रमोक्षणंपुण्यंरैवतंत्वंतरंशृणु १ पंचमोरैवतोनाममनुस्तापससोदरः ॥ बलविंध्यादयस्तस्यसुता अर्जुनपूर्वकाः २ विभुरिंद्रःसुरगणाराजन्भूतरयादयः ॥ हिरण्यरोमावेदशिराऊर्ध्वबाह्वादयोद्विजाः ३ पत्नीविकुंठाशुभ्रस्यवैकुंठैःसुरसत्तमैः ॥ तयोःस्वकलयाजज्ञेवैकुंठोभगवान्स्वयम् ४ वैकुंठःकल्पितोयेनलोकोलोकनमस्कृतः ॥ रमयाप्रार्थ्यमानेनदेव्यातत्प्रियकाम्यया ५ तस्यानुभावःकथितोगुणाश्चपरमोदयाः ॥ भौमान्रेणून्सविममेयोविष्णोर्वर्णयेद्गुणान् ६ षष्ठश्चचक्षुषःपुत्रश्चाक्षुषोनामवैमनुः ॥ पुत्राःपुरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ७ इंद्रोमंत्रद्रुमस्तत्रदेवाआप्यादयोगणाः ॥ मुनयस्तत्रवैराजन्हविष्मद्वीरकादयः ८ तत्रापिदेवःसंभूत्यांवैराजस्याभवत्सुतः ॥ अजितोनामभगवानंशेनजगतःपतिः ९ पयोधिंयेननिर्मथ्यसुराणांसाधितासुधा ॥ भ्रममाणोंभसिधृतःकूर्मरूपेणमंदरः १० राजोवाच ॥ यथाभगवताब्रह्मन्मथितःक्षीरसागरः ॥ यदर्थंवायतश्चाद्रिंदधारांबुचरात्मना ११ यथामृतंसुरैःप्राप्तंकिमन्यदभवत्ततः ॥ एतद्भगवतःकर्मवदस्वपरमाद्भुतम् १२

भुर्विभुनामाहारिः । द्विजाःसप्तर्षयः ३ विकुंठायाःपुत्रोवैकुंठः तयोर्विकुंठाशुभ्रयोः कलयांशेन ४ ५ भौमान्रेणून्पृथ्वीरजांसिविममे मानसंख्याकरोति ६ पुत्राउच्यंतेइतिशेषः चाक्षुषात्मजाःपुरुषादयइत्यन्वयः ७ अत्राविशब्दार्थोग्रंथांतरादवगंतव्यः ८ ९ १० यथाकथं यतःकुतःअंबुचरात्मनाकूर्मरूपेण ११ १२

तापैराध्यात्मिकादिदुःखैस्तापितंक्लेशितम् १३ सूतःशौनकादिसंवादाविस्मरणार्थंराज्ञापृष्टः । श्रीशुकस्तस्यचोद्यंपरिहर्तुमुपक्रमतइत्याह सूतइति १४ कथमुपक्रांतवानितितत्राह यदेति गता
सवः प्राणबलरहिताः यदाचनोत्तिष्ठेरन्यदाचनिःश्रीकाअभवन्तत्रतदाइज्यादयःक्रियानेशुरित्यन्वयः १५ १६ यदादेवानिश्चयंनाध्यगच्छन्ततस्तदाब्रह्मसभांजग्मुरित्यन्वयः १७ १८
१९ परं पूरकंसृष्ट्येतिशेषः २० घर्मजातयःस्वेदजाः २१ यस्यवध्यादयोनसंति २२ तस्यहरेरयंकालःस्थितिपालनावसरःधास्यतिददाति शंसुखम् २३ अजितस्यहरेः २४
नित्यत्वेनाद्भुताभिः देवस्यहरेःविद्यमानाभिर्हरिगुणगणान्प्रतिपादिकाभिःनन्वादरणीयपक्षोनास्तीतिकथंसंगच्छते परापूर्वेषांइतिश्रुतेः देवानांभगवत्पक्षत्वावगमादत्रापिदेवार्थममृतमथनादितिचेन्न
भक्तिवशःपुरुषःयमेवैषवृणुतेतेनलभ्यइत्यादिश्रुतेः देवानामनुग्राह्यत्वात्तत्पक्षत्वंस्वार्थंनेतिविवेकात् अनुग्राह्यतयापक्षादेवानात्मार्थतोहरेरितिवचनात् २५ वेदशिरोविशारदानामस्मिस्तोत्रेधिका

त्वयेत्थंकथ्यमानेनमहिम्नासात्वतांपतेः ॥ नातितृप्यतिमेचित्तंसुचिरंतापतापितम् १३ सूतउवाच ॥ संपृष्टोभगवानेवंद्वैपायनसुतोद्विजाः ॥ अभिनंद्य
हरेर्वीर्यमभ्याचष्टुंप्रचक्रमे १४ श्रीशुकउवाच ॥ यदायुद्धेऽसुरैर्देवाबाध्यमानाःशितायुधैः ॥ गतासवोनिपतितानोत्तिष्ठेरन्स्मभूयशः १५ यदादुर्वास
शापेनसेंद्रालोकास्त्रयोनृप ॥ निःश्रीकाश्चाभवंस्तत्रनेशुरिज्यादयःक्रियाः १६ निशाम्यैतत्सुरगणामहेंद्रवरुणादयः ॥ नाध्यगच्छन्स्वयंमंत्रैर्मंत्रयंतोवि
निश्चयम् १७ ततोब्रह्मसभांजग्मुर्मेरोर्मूर्धनिसर्वशः ॥ सर्वंविज्ञापयांचक्रुःप्रणताःपरमेष्ठिने १८ सविलोक्येंद्रवाय्वादीन्निःसत्वान्विगतप्रभान् ॥ लो
कानमंगलप्रायान्सुरांश्चैवयथाविभुः १९ समाहितेनमनसासंस्मरन्पुरुषंपरम् ॥ उवाचोत्फुल्लवदनोदेवान्सभगवान्परः २० अहंभवयूयमथा
सुरादयोमनुष्यतिर्यग्द्रुमघर्मजातयः ॥ यस्यावतारांशकलाविसर्जिताव्रजामसर्वेशरणंतमव्ययम् २१ नयस्यवध्योनचरक्षणीयोनोपेक्षणीयादरणीयपक्षः ॥
अथापिसर्गस्थितिसंयमार्थंधत्तेरजःसत्वतमांसिकाले २२ अयंतुतस्यस्थितिपालनक्षणःसत्वंजुषाणस्यभवायदेहिनाम् ॥ तस्माद्व्रजामःशरणंजगद्गुरुंस्वा
नांसनोधास्यतिशंसुरप्रियः २३ श्रीशुकउवाच ॥ इत्याभाष्यसुरान्वेधाःसहदेवैररिंदम ॥ अजितस्यपदंसाक्षाज्जगामतमसःपरम् २४ तत्रादृष्टस्वरूपायश्रुत
पूर्वायचाभ्यधात् ॥ स्तुतिमद्भुतदैवीभिर्गीर्भिःस्त्ववहितेंद्रियः २५ ब्रह्मोवाच॥ अविक्रियंसत्यमनंतमाद्यंगुहाशयंनिष्कलमप्रतर्क्यम् ॥ मनोग्रयाणंवचसा
निरुक्तंनमामहेदेववरंवरेण्यम् २६ विपश्चितंप्राणमनोधियात्मनामर्थेंद्रियाभासमनिद्रमव्रणम् ॥ छायातपौयत्रनगृध्रपक्षौतमक्षरंखंत्रियुगंव्रजामहे २७

रइतिज्ञापयन् ब्रह्मावेदांतोक्तविशेषणविशिष्टत्वेनस्तौतीत्याह ब्रह्मेति निष्कलंनिष्क्रियंशांतंसत्यंज्ञानमनंतं आत्मावाइदमेकएवाग्रआसीत्हृदयआहितंयन्नैषातर्केणमतिरापनेयानाहिसुज्ञेयमणुरेषध
र्मः महद्भूतस्यनिःश्वसितमेतदृग्वेदः विद्यानांप्रथमोवक्तायद्वाचानभ्युदितंयोदेवानांनामधाएकएव तत्सवितुर्वरेण्यमित्यादिश्रुतयःप्रतीकतोग्राह्याः बहुश्रुतिसंग्रहरूपत्वात्पूर्वोत्तरसंबंधोत्रनान्वेषणीयः
२६ प्राणमनोधियात्मनाविपश्चितंवेदितारंयःप्राणेतिष्ठन्प्राणस्यप्राणमुतचक्षुषश्चक्षुरित्यादयआत्मनितिष्ठन्नित्यादिअर्थानींद्रियाणिचाभासयतिदीपयतीत्यर्थेंद्रियाभासःअर्थेंद्रियाणांसन्निकर्षंउत्पाद्यत
द्विषयंज्ञानंजनयतीत्यर्थः यस्यभासासर्वमिदंविभातियस्ततोभयाविच्छेदःएवमस्यामेतंदिवि अनिद्रंअस्वप्नमव्रणंअकायांलिंगशरीररहितंअक्षतंवा । यत्रयास्मिन्हरौगृध्रस्यसर्वकांक्षमाणस्यजीव
स्यपक्षौपतत्रवद्बद्धमानौपृथक्अधोर्ध्वमार्गहेतू छायातपौअविद्याशास्त्रजन्यविद्यालक्षणौनस्तः छायात्वविद्यासंप्रोक्ताजन्यविद्यातपःस्मृत जीवगृध्रस्यतौपक्षावधऊर्ध्वपथोःपृथक् तौविष्णोस्तुनविद्येते

नित्यविद्यास्वरूपिणइतिवचनादुक्तएवार्थइति तंत्रियुगंप्रजामहइत्यन्वयः त्रीणियुगानियस्यसतथातंतेष्ववतारादिति स्वयंभूस्त्रियुगःकृष्ण.शार्ङ्गीदामोदरस्तथेत्यभिधानं अक्षात्संभवतीहविश्वंए तद्व्येवाक्षरंब्रह्मसंसुखरूपंज्ञानरूपंवा कंब्रह्मखंब्रह्म २७ अजस्यविष्णोरधीनंचक्रंपुनःप्रवाहरूपेणपरिवर्तमानत्वाच्चक्रसंज्ञंजगत् यःकेशवोक्षमक्षस्थानीयोयस्यतत्यदक्षमाहुः तमृतंप्रपद्यइत्यन्वयः चक्रंनवृत्तंतदेवर्तमित्यादि । चक्रंचेत्केनचिदीर्यमाणंपरिवर्ततेअस्यकिंप्रेरकमित्यतउक्त अजयेति कार्यतेह्यवशःकर्मसर्वःप्रकृतिजैर्गुणैरिति अस्यवैलक्षण्यमाह मनोमयमिति कान्यस्याराणीत्य त्राह पंचदशारमिति श्रोत्रादीनिदश शब्दादय पंच पृथिव्यादीनिवा प्राणादयोवापंच एतएवाराणिदलानियस्यतत्तथातन् आशुशीघ्रभ्रमंत्यासंवात्रिणाभित्रयोगुणाःसत्वादयोनाभिर्यस्यतत्तथा य दक्षमित्यनेनोक्तंकेशवाधारत्वंस्पष्टयति विद्युद्बलमित्यादिना । विद्युद्विशेषेणद्योतमानत्वात् ब्रह्मबलमाधारोयस्यतत्तथा विद्युद्ब्रह्मेत्युपासीत जगच्चक्रस्याक्षभूतोबलरूपश्चकेशवइतिचदेवासु रमनुष्यादयोष्टौनेमिर्यस्यतत्तथातत् २८ इदानींतुरीयमूर्तिंनमति यदिति एकोवर्णोयस्यतदेकवर्णं स्वरव्यजनविभागविवक्षामंतरेणव्यक्तेरेकत्वं अन्यथाषोडशस्वराइतिसंख्यानुपपत्तेःओमित्ये तदक्षरमिदंसर्वं प्रणवंहीश्वरंविद्यात्सर्वस्यहृदयेस्थितं सर्वव्यापिनमोंकारं तमसोज्ञानात्परंतद्रहितमित्यर्थः तुरीयंतत्सर्वदृक् सदाप्रकृतेःपरवा अक्षरात्परतःपरःकूटस्थोक्षरउच्यतेउत्तमपुरुषः सत्स त्यंज्ञानंअवसादयतिनाशयत्यज्ञानं नानिद्रांनैवचस्वप्नंतुर्येपश्यंतिनिश्चिताः निर्दोषज्ञानंवाऐकात्म्यप्रत्ययसारं षद्लृगतावितिधातुः अलोकंलोकव्यवहाराविषयं अदृष्टमव्यवहार्यमलक्षणमचिंत्यमव्यपदे श्यंअतएवाव्यक्तंअनंतपारंअंतपारवर्जितं पारंपूर्णंसमुदायोमात्राणामितिशेषः अनंतमात्रमित्यर्थइतिवा अमात्रोनंतमात्रश्च धीरायोगरथेनभक्तिपूर्वकध्यानलक्षणरथेनयदुपासतेभजंति ओंकारं

**अजस्यचक्रंत्वजयेर्यमाणंमनोमयंपंचदशारमाशु ॥ त्रिणाभिविद्युद्बलमष्टनेमियदक्षमाहुस्तमृतंप्रपद्ये २८ यदेकवर्णंतमसःपरंसदलोकमव्यक्तमनं तपारम् ॥ आसांचकारोपसुपर्णपत्रमुपासतेयोगरथेनधीराः २९ नयस्यकश्चातितिपर्तिमायांययाजनोमुह्यतिवेदनार्थम् ॥ तंनिर्जितात्मात्मगुणंपरे शंनमामिभूतेषुसमंचरंतम् ३० इमेवयंयत्कृपयैवतन्वासत्वेनसृष्टाबहिरंतरंविभो ॥ गतिंनसूक्ष्मामृषयश्चविद्महेकुतोऽसुराद्याइतरप्रधानाः ३१ पादौमहीयंस्वकृतैवयस्यचतुर्विधोयत्रहिभूतसर्गः ॥ सवैमहापूरुषआत्मतंत्रःप्रसीदतांब्रह्ममहाविभूतिः ३२**

आत्मैवसंविशत्यात्मनात्मानंयएवंवेद यश्चोपसुपर्णपत्रंसुपर्णपक्षसमीपेजीवाख्यवाहनपृष्ठेआसांचकारउपाविवेश सर्वस्यहृदयास्थितः यआत्मनितिष्ठन्द्वासुपर्णासयुजा २९ जनोयया माययावेदनार्थंज्ञानविषयंहरिंप्रतिज्ञानाख्यपुरुषार्थंवामुह्यतिअनीशयाशोचतिमुह्यमानः कश्चनतामसप्रकृतिर्यस्यतांमायानातितिपर्तिनातिक्रमति अत्येतुंसमर्थोनभवति सात्विकश्चेदस्यप्रसादे नजानाति अनादिमाययासुप्तोयदाजीवःप्रबुद्ध्यते यमेवैषवृणुतेतेनलभ्यइत्यन्वयः नितरांजितआत्माआत्मगुणाश्चयेनसतथातं निवृत्तेःसर्वदुःखानामीशानःप्रभुरव्ययः एकोदेवःसर्वदेवेषुगू ढः सएषसर्वेश्वरः एषसर्वएषोंतर्याम्येषयोनिःसर्वस्य ३० सात्विकानामपिभगवत्कटाक्षवीक्षामंतरेणतज्ज्ञानंदुरापमित्यर्थादुक्तंतत्स्पष्टमाह इमइति विभोयत्कृपयैवयेनसत्वेनगुणे नसृष्टायेनबहिरंतरंचसृष्टाश्चेमेवयंयस्यतवसूक्ष्मांगतिंविश्वव्यापिनींसच्चिदानंदाकृतिंनविद्महेयदनुग्रहमंतरेणेतिशेषः नचज्ञानाभावात्तज्ज्ञानाभावइत्याह ऋषयश्चज्ञानिनोपि अन्यथाब्रह्मादीनांअ प्राधान्यंस्यात्कैमुत्यन्यायमाह कुतइति हेतुगर्भविशेषणमाह इतरेति इतरस्तमोगुणःप्रधानोयेषांतेतथा ३१ स्वकृतेयंमहीयस्यपादाविवनरवरूपपादौयत्रयस्यांमह्यांजरायुजादिचतुर्विधोभूतस र्गःसवैसएवप्रसीदतामित्यन्वयः महापुरुषःपुरुषोत्तमः महद्विविधभवनंयस्यसतथा विविधभवनमेकस्यकथमुपपद्यतइतितत्राह ब्रह्मअपरिच्छिन्नगुणपूर्णत्वात् अथकस्मादुच्यतेब्रह्मेतिबृंहतोह्यस्मिन् गुणाइतिश्रुतेः पादावित्यनेनपादोस्यविश्वाभूतानीतिश्रुत्युक्तार्थः पातालमेतस्यहिपादमूलमितिस्मृत्युक्तार्थश्चेत्युभयंवक्ष्यतइतिज्ञातव्यं ३२

इदंचैकंमहाविभूतिस्त्वंहरेर्युक्तमित्याह अंभइति त्रयोलोकाअथाखिललोकपालाश्चोदारवीर्यंउत्कृष्टबलंयदंभोपस्यरेतोभवतितेनवर्धमानः सिद्ध्यंतीतिसिद्धाअवाप्तफलाभवंति जीवंत्युतअंतरमपितूखिलक्षणंजीवनमायुर्वंत्यपिसोर्चेलपरंतस्यार्चंतआपोजायंत आपोनाराइतिप्रोक्ताआपोवैनरसूनवः यचत्प्रथममपृतंतद्ब्रह्मसवउपजीवंतीत्यादिसूर्यंसोमयमेंद्रादीन्वासोममहेंद्रादीन्विनान्येखिललोकपालाअद्भिर्जीवंति किंचापांसोमस्यचजीवनप्रदाइंद्राद्याइतीमंविशेषंतुशब्दोज्ञापयति इममेवविशेषंतुशब्दोज्ञापयतीतिकुतः अन्यत्किंनस्यादितीयंशंका सूर्यसोमयमेंद्रादीनृतेन्येलोकपाअपि अद्भिर्जीवंतिसोमाच्चमहेंद्रादीनृतेखिलाः अपांसोमस्यचेंद्राद्याःसर्वेवैजीवनप्रदाइत्यनयापरिःहृतेतिज्ञापतेमहतीविभूतिः सूर्यसोमविधिविशेषकल्पकैश्वर्यलक्षणायस्यसतथा एवंविधःकइतितत्राह ब्रह्मेति ३३ योदिवौकसां बलमंधआयुर्वैबलाद्यभिवृद्धिहेतुः यश्चनगानांवृक्षाणामंकुरजननसामर्थ्यप्रदत्वेनेशः यश्चप्रजानांप्रजनःसुरतानंदगर्भलक्षणहेतुस्तंसोमं यस्यमनःसमामनंतीत्यन्वयःतंदेवानामन्नामिंद्रादीन्नृतइति शेषःअथयच्चतुर्थममृतंतन्मरुतःउपजीवंतिसोमेनमुखेनइति सोमंयस्यमनःसमामनंतियोदेवानांबलादिहेतुः यश्चनगानामीशोयश्चप्रजानांप्रजनःसहरिःप्रसीदतांइतिवा सोमेनदेवादिबलप्रदत्वेनमहाविभूतिः सोमोददद्गंधर्वाय सोमःप्रथमः ब्रह्मादेवानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां श्येनोगृध्राणांस्वधितिर्वनानांसोमःपवित्रमत्येतिरेभन् अथवादेवादिबलप्रदमहाविभूतिः ३४ अग्निर्यस्यमुखंमुखाज्जातः सप्तमुप्रथमेतिपंचम्यर्थेप्रथमा मुखमाश्रित्यवर्ततेच अग्रणीत्वादग्निरित्यग्निशब्दस्यान्यत्रप्रवृत्तिसंभवात्कथंनिर्णयःस्यादितितत्राह जातवेदाइति अ

अंभस्तुयद्रेतउदारवीर्यंसिद्ध्यंतिजीवंत्युतवर्द्धमानाः ॥ लोकास्त्रयोथाखिललोकपालाःप्रसीदतांब्रह्ममहाविभूतिः ३३ सोमंमनोयस्यसमामनंतिदिवौकसांवैबलमंधआयुः ॥ ईशोनगानांप्रजनःप्रजानांप्रसीदतांनःसमहाविभूतिः ३४ अग्निर्मुखंयस्यतुजातवेदाजातःक्रियाकांडनिमित्तजन्मा ॥ अंतःसमुद्रेपचतःस्वधातूनप्रसीदतांनःसमहाविभूतिः ॥ ३५ ॥ यच्चक्षुरासीत्तरणिर्देवयानंत्रयीमयोब्रह्मणएषधिष्ण्यम् ॥ द्वारंचमुक्तेरमृतस्यमृत्योःप्रसीदतांनःसमहाविभूतिः ३६

ग्निर्वाअहमस्मीत्यब्रवीज्जातवेदावाअहमस्मीति जातंसर्वंवेत्तीतिजातवेदःशब्दस्यापिसावकाशत्वेनपूर्वोक्तसंशयानिस्तारःस्यादितितत्राह क्रियाकांडमेवनिमित्तंतत्तथातेनजन्मयस्यसतथा अग्निर्वैदेवानांमुखंहृदयतमइतिश्रुतेःअग्निमुखेनेंद्रादिदेवानां स्वहविर्भागप्राप्त्यर्थमग्निहोत्रादौमथनादिनाअग्नेःप्रसिद्धस्यजन्मोपपत्तिरितितद्ब्रह्मसवउपजीवंति अग्निनैवमुखेनेतिच अग्नेःपाचकत्वशक्तिरपिश्रीहरिनियतेत्यभिप्रायेणाह अंतःसमुद्रेउदरांतःस्थित्वास्वधातून्स्वाधीनानिचतुर्विधान्यन्नानिपचतःजरयतः अन्नमशितंत्रेधाविधीयतेतस्ययःस्थविष्ठोधातुः तत्पुरीषंभवतियोमध्यमस्तन्मांसंयोणुस्तन्मनइति पचाम्यन्नंचतुर्विधमितिसर्वोपकारकाग्निजनकत्वलक्षणमहाविभूतिः तुनावाचोपिहरेर्मुखक्षेत्रमितिसूचयति वाचोवह्निर्मुखंक्षेत्रमितिस्वोक्तेः ३५ तरणिःसूर्यःयस्यचक्षुषःआसीदित्यन्वयःचक्षोःसूर्योअजायत तरंत्यनेनसंसारंपुरुषाइतितरणिरितिनामसूचितमर्थंस्पष्टमाह देवेति देवानांसंसारंमुक्त्वागतानांयानंप्रमार्गंउत्तरायणमार्गदेवतेत्यर्थः अथोत्तरेणतपसाब्रह्मचर्येणश्रद्धयाविद्ययात्मानमन्विष्यादित्यमभिजायते । त्रय्यामीयतइतित्रयीमयःवेदप्रतिपाद्येषुप्रधानंवा त्रयीमयायत्रिगुणात्मधारिणेएषतरणिर्ब्रह्मणःपरमात्मनोधिष्ण्यमभिव्यक्तिस्थानंयश्चासावादित्येध्येयःसदासवितृमंडलमध्यवर्ती । मृत्योःसंसारान्मुक्तेर्द्वारं द्वयोः मुक्तयोःकस्याइतितत्राह अमृतस्येति विदुषांविषयस्येत्यर्थः सयावत्क्षिप्येन्मनस्तावदादित्यंगच्छत्येतद्वैखलुलोकद्वारंविदुषांप्रपदनंनिरोधोविदुषां आमृतस्यमुक्तेर्मृत्योश्चप्राप्तिहेतुरितिवा एवंविधमाहात्म्योपेतसूर्यजनकमहाविभूतिः ३६

चराचराणांसहोबलौजोहेतुःस्वयंचतादृग्गुणः आधिभौतिकंवायुरध्यात्मंप्राणोयस्यहरेः प्राणात्सहः आदिगुणवदात्मनोभूत् आत्मनएषप्राणोजायतेतान्वरिष्ठप्राणउवाचमामोहमापद्यथअहमेवैतत्पंच विधमात्मानंविभज्यैतद्बाणमवष्टभ्यविधारयामीतितेप्रीताः प्राणस्तुवंत्ययोऽग्निस्तपत्येषसूर्यःप्राणैकऋषिरत्रविश्वस्यसत्पतिः वयमासाद्यदातारःपितात्वंमातरिश्वनः वयंयंचसंम्राजमन्वास्मवयंप्राणनामानं चक्रवर्तिनमनुवर्तेमाहवइव प्राणचतुर्मुख्योरेकत्वादिवेत्यन्यत्रावधारणार्थंयथासम्राडेवाधिकृतान्विनियुंक्तएतान्ग्रामानधितिष्ठस्वैतान्ग्रामानधितिष्ठस्वेत्येवमेवैषप्राणइतरान्प्राणान्पृथगेवसंनिधत्ते । पायू पस्थेपानंचक्षुःश्रोत्रेमुखनासिकाभ्यांप्राणःस्वयंप्रतिष्ठितइतिशेषः संम्राजंयंभगवंतमन्वास्मैवेतिवा सर्वोत्तमप्राणजनकमहाविभूतिःप्राणस्यप्राणमुतचक्षुषश्चक्षुः ३७ यस्यश्रोत्रादिशोयस्यहृदयाच्च खानींद्रियाणियस्यपुरुषस्यनाभेश्चखमाकाशइत्येतेप्रजज्ञिरेइत्यन्वयः अत्रचंद्रमामनसोजातइत्यारभ्यादिशःश्रोत्रादित्यंतंवाक्यप्रमाणंदर्शयति तैजसाहंकारणगुणव्यंजकहृदयादींद्रियाणीत्यर्थः तै जसानींद्रियाणीत्युक्तेःसहस्रशीर्षापुरुषःप्रसन्नोभवत्वित्यन्वयः प्राणोंद्रियाणिव्याप्यतिष्ठतीतिप्राणेंद्रियात्माब्रह्मणोवाएतानिकरणानिएतत्सर्वंपरेआत्मनिसंप्रतिष्ठतेपृथिवीचेत्यारभ्यप्राणश्चविधारयित व्यंचेत्यनेनकाठकोपनिषद्गतेनवाक्येनसविस्तरउच्यतेस्वशरीरभूतायाःपृथिव्याबंधुः यस्यपृथिवीशरीरं दिङ्नामदेवतादिसर्जनप्रतीतमहाविभूतिः ३८ गुणगुणिनोरभेदाभिप्रायेणाह बलादिति ब

प्राणादभूद्यस्यचराचराणांप्राणःसहोवैबलमोजश्चवायुः ॥ अन्वास्मसम्राजमिवानुगावयंप्रसीदतांनःसमहाविभूतिः ३७ श्रोत्राद्दिशोयस्यहृदश्चखा निप्रजज्ञिरेखंपुरुषस्यनाभेः॥ प्राणेंद्रियात्मास्वशरीरबंधुःप्रसीदतांनःसमहाविभूतिः ३८ बलान्महेंद्रस्त्रिदशाःप्रसादान्मन्योर्गिरीशोऽशरणाद्विरिंचः॥ खे भ्यश्चछंदांस्यृषयोमेढ्रतस्तुप्रसीदतांनःसमहाविभूतिः ३९ श्रीर्वक्षसःपितरश्छाययासन्धर्मस्तनादितरःपृष्ठतोभूत् ॥ द्यौर्यस्यशीर्ष्णोऽप्सरसोविहारा त्प्रसीदतांनःसमहाविभूतिः ४० विप्रोमुखाद्ब्रह्मचयस्यगुह्यंराजन्यआसीद्भुजयोर्बलंच ॥ ऊर्वोर्विशोंघ्रेरभवंश्चशूद्राःप्रसीदतांनःसमहाविभूतिः ४१ लो भोधरात्प्रीतिरुपर्यभूद्द्युतिर्नस्तःपशव्यंस्पर्शेनकामः॥ भ्रुवोर्यमःपक्ष्मभवस्तुकालःप्रसीदतांनःसमहाविभूतिः ४२ द्रव्यंवयःकर्मगुणाश्चशेषंयद्योगमा याविहताःपतंति ॥ यद्दुर्विभाव्यंप्रबुधावबोधंप्रसीदतांनःसमहाविभूतिः ४३

लादिगुणेभ्यइंद्रादीनामुद्भवःनिर्दोषत्वेनमन्युरहितस्यनमन्युस्वभावस्तादृक्स्वभावरूपीतिसर्जनाभिप्रायाद्दर्शितः कारणगुणः कार्येषुसमवैतीतिन्यायरक्षणार्थंच । अशरणात्स्वाधिष्ठानाल्लयोदधौपृ थिव्याद्यधिष्ठानाभावात्स्वमहिम्नएवेत्यर्थः किंस्विदासीदधिष्ठानमारंभणंस्वेमहिम्नि धिषणादितिकेचित्पठंति सप्तेंद्रियैःसप्तछंदांसि ऋषयःप्रजापतयः कस्तस्यमेढ्रादित्युक्तेःविरिंचादिदेवजनकमहा विभूतिः ३९ ४० ४१ उपर्युत्तरोष्ठात्प्रीतिःद्युतिःकांतिश्चपशव्यंपशुजीवनं नस्तोनासिकायाःस्पर्शेनगुणेनजातःकामःस्त्रीविषयःकालोमृत्युः ४२ द्रव्यंभूतपंचकं वयआयुर्लक्षणंकर्मत्रिविधंगुणा भक्त्यादयःशुक्लादयोवाशेषंस्वभावजीवकालादयः यस्यहरेर्योगमायपास्वरूपभूतेच्छयाविहताउपेक्षिताःपतंतिप्रच्युताभवंतीत्यन्वयः द्रव्यंकर्मचकालश्चेति किंच यद्दुर्विभाव्यमेवंविधमितिभावयितु मशक्यं सवाएषआत्मानेति किंचप्रबुद्धज्ञानिनांअवबोधोज्ञानंयस्मात्तथाअनेनस्वानुग्रहेणस्वविषयज्ञानंसुशकमित्युक्तंभवति अज्ञानांज्ञानदोविष्णुर्यमेवैषवृणुतइत्यादि द्रव्यादिसत्ताप्रदत्वेनब्रह्माद्य चिंत्यमहिमत्वेनज्ञानदातृत्वेनपरिपूर्णैश्वर्यःप्रसीदतामित्यन्वयः नवत्वसंख्याविशिष्टंद्रव्यंवयगतावितिधातोःवयत्यवगच्छत्यनेननीलोत्पलमित्यादिव्यवहारंपुरुषइतिवयःसमवायः उत्क्षेपणादीनिपंचकर्मा णि शब्दस्पर्शरूपरसगंधादिचतुर्विंशतिगुणाः सामान्यविशेषौशेषमित्यनेनोच्यते एतेयद्योगमाययाविहताः अहिर्तीकृताःपतंतिपातयंत्यधःपुरुषमितिशेषःनरकहेतवइत्यर्थःविषकंठकणभक्षशंकरोक्ते

दशावल्कपंचशिखाक्षपादवादान्महदपिसुविचार्यलोकतंत्रंभगवदुपास्तिमृतेनासिद्धिरस्तीतिप्रमितेनायमुक्तार्थइतिसिद्धम् कणादाक्षपादमतज्ञानात्सिद्धिर्माभूदद्वैतज्ञानेनस्यादितितत्राह यदिति अद्वैतमवोक्तविधयाभावयितुमशक्यंअनेनान्येपिदुर्वादिवादाअपिनिरस्ताइतिज्ञातव्यंकर्मणापुरुषार्थसिद्धिःस्यात्तर्हीतिनेत्याह प्रबुधेतिअनेनभाट्टादिमतमपिप्रत्युक्तम् ४३ उपात्तसर्वाधिकाद्विष्णोः शांताआनंदमूर्तयोयासांताःतादृश्यः शक्तयोभार्यायस्यसतथातस्मैनिवृत्तस्पष्टशक्तयइतिच स्वाराज्यलाभःस्वयंप्रकाशमानानंदस्तेनपरिपूरितआत्मायस्यसतथातस्मैनित्याविर्भूतानंदस्वरूपायेत्यर्थः माययास्वाधीनप्रकृत्यारचितेषुनिर्मितेषुगुणेषुविषयेषुवाप्रवर्तमानायापितद्योग्याभिर्वृत्तिभिर्दुःखलक्षणाभिर्नसज्जमानायनिरवद्यत्वेनदुःखानुभूतिरहितायेत्यर्थःस्वभूतयेस्वयंभुवेस्वरूपपूर्णैश्वर्यायेतिवा ४४ अस्मत्करणगोचरोस्मदिंद्रियविषयोभूत्वा ॥ ४५ ॥ भक्तानुकंपामंतरेणतवान्यत्कृत्यंनविद्यतेइत्याशयेनाह तैस्तैरिति हेविभोयद्यदानोस्माकंदुर्विषहंसोढुमशक्यंकर्मदुःखलक्षणमसुरादेः स्यादितिशेषःतदाभगवान्स्वयमसुरादेर्दुर्विषहंकर्मपराक्रमलक्षणंकरोतिवाइत्यन्वयःकथंस्वेच्छाकृतैस्तैस्तैरूपैःयदायदाहिधर्मस्येतिस्मृतिर्हिशब्देनगृहीता ॥ ४६ ॥ ज्ञानमेवमुक्तिसाधनंनकर्म तन्मतदूषणादित्यभिप्रायोयदितर्हिकर्मकरणंव्यर्थमित्याशंक्यसत्यंभगवदर्पणाख्यचिकित्साभावेसास्तिचेत्फलवदित्याशयेनाह क्लेशेति विषयार्तानांदेहिनांकर्माणिविफलानिविरुद्धफलान्यनभीष्टफ

नमोस्तुतस्माउपशांतशक्तयेस्वाराज्यलाभपरिपूरितात्मने ॥ गुणेषुमायारचितेषुवृत्तिभिर्नसज्जमानायनमःस्वभूतये ४४ सत्वंनोदर्शयात्मानमस्मत्करणगोचरः ॥ प्रपन्नानांदिदृक्षूणांसस्मितंतेमुखांबुजम् ४५ तैस्तैःस्वेच्छाकृतैरूपैःकालेकालेस्वयंविभो ॥ कर्मदुर्विषहंयन्नोभगवान्स्तत्करोतिहि ४६ क्लेशभूर्यल्पसाराणिकर्माणिविफलानिच ॥ देहिनांविषयार्तानांनतथैवार्पितंत्वयि ४७ नावमःकर्मकल्पोपिविफलायेश्वरार्पितः ॥ कल्पतेपुरुषस्यैवसह्यात्मादयितोहितः ४८ यथाहिस्कंधशाखानांतरोर्मूलावसेचनम् ॥ एवमाराधनंविष्णोःसर्वेषामात्मनश्चहि ४९ नमस्तुभ्यमनंतायदुर्वितर्क्यात्मकर्मणे ॥ निर्गुणायगुणेशायसत्त्वस्थायचसांप्रतम् ५० इतिश्रीभागवतेअष्टमस्कंधेपंचमोऽध्यायः ॥ ५ ॥ ॥ ॥

लानीत्यन्वयःकथंभूरिक्लेशानिअल्पसाराणिच ईश्वरार्पितंकर्मतथाऽनर्पितवद्विफलंनस्यादित्यन्वयः ४७ सांगंकर्मईश्वरार्पितंसफलमस्तुअनंगंकथमितितत्राह नेति पुरुषस्यकर्मकल्पःकर्माभासअंगसाकल्येनरहितःअतएवाधमोपियदीश्वरार्पितःतर्हिविफलायनकल्पतेकिंतुफलवानेवस्यादित्यन्वयःतत्रकिंकारणमत्राह सइति यत्प्रीत्यैकर्मकरोतिसआत्मापरमात्माहितःप्रेक्ष्येष्टकारी दयितो निमित्तबंधुःहियस्मात्तस्मादितिशेषःनाधमइतिकेचित्पठंति स्मृत्याविहितःसर्वधर्मान्परित्यज्येत्युक्तेः ४८ ननुयजतेत्यादिविहितकर्मपरित्यज्यभगवदेकाराधनायामितरदेवतातृप्त्यभावेनापुरुषार्थस्यादितितत्राहयथेतिस्कंधानांशाखानांतृप्तिंजनयतीतिशेषःतेनांकुरफलपुष्पसमृद्धिलक्षणपुरुषार्थोयथाभवतितथासर्वेषामिंद्रादीनामात्मनःस्वस्यापितृप्त्यानंदानुभवलक्षणपुरुषार्थःस्यादितिभावः मुखादिंद्रश्चाग्निश्चेत्यादिवाक्यंहिशब्देनदर्शयतितेनेंद्रादीनांश्रीनारायणशाखाशाखात्वंदर्शितंभवति तथाहीतिवत्यथाहीत्येकंवाक्यं ४९ अनंतायेत्यनेनमुखांबुजमितिपरिच्छिन्नत्वशंकानिवारयति दुर्वितर्क्येत्यादिनानस्वरूपस्यानंत्यमपितुतत्कर्मणामप्युच्यतेनिर्गुणायेत्यनेनसावकत्वंनिवारयतिगुणेशायेत्यनेनगुणैःप्रवर्तमानस्यापिगुणसंपर्कप्राप्तंदोषंनिरुणद्धिसत्त्वस्थायेत्यनेनगुणैर्यौगपद्यमतीति निवारयति सांप्रतमित्यनेनसत्त्वगुणयुक्तत्वंस्थितिकालंचदर्शयति यतस्त्वंसत्त्वगुणप्रवर्तकोधुनातस्मादस्मानापदःपालयेतिचार्थः ५० इतिश्रीभागवतेअष्टमस्कंधेवि०कृ०टीकायांपंचमोऽध्यायः ॥ ५ ॥

ज्ञानवत्त्ज्ञानपूर्वकंयथातत्त्वस्तुतिरपिहरेःप्रीतिजननीत्येतमर्थंप्रपंचयत्यस्मिन्नध्याये तत्रादौहरेराविर्भावप्रकारंवक्ति एवमित्यादिना ब्रह्माणंपुरस्कृत्येतिशेषः १ आत्मानंस्वान् जातावेकवचनंअ
ग्रतःस्थितम् २ ३ अवदातेनपीतेनअवदातोरुणेपीतेश्वेतेश्यामेचकथ्यतइति वाससोपलक्षितम् ४ कपोलश्रियायुक्तमुखांबुजम् ५ कलापोभूषणंलक्ष्मलांछनंश्रीवत्सनाम ६ देवप्रवरोब्रह्मा ७
अजायविष्णवे अजाविष्णुहरच्छागाइत्यतोऽजशब्दस्योभयत्रवृत्तावप्यत्रविष्णुरेवोच्यते सर्वेतिसर्वकारत्वेननिर्देशात्ततोपरत्वप्रतीतेः जन्मस्थितिसंयमायजन्मादीनांत्वदेकाधीनत्वात्तथोक्ति
र्गुणायविज्ञानमानंदंब्रह्मेतिश्रुतेरभिप्रायाद्गुणत्वोक्तिःनिर्वाणसुखार्णवायशरीराभिमानानुत्थसुखसमुद्राय अपरिगण्यमहिम्ने ८ हेपुरुषर्षभ मोक्षादिपुरुषार्थाकांक्षिभिः वैदिकैस्तांत्रिकैश्चयदेतत्तव
रूपं ध्येयंतःअमुष्मिन्रूपेयोगेनसहत्रिलोकान्पश्यामि हेविश्वमूर्तेत्वंनःशरणंभवेत्यन्वयः भुवीतिपाठेआधारइत्यर्थः ९ इवयथाघटस्यादिरंतोमध्यंचमृत्स्नाप्रशस्तामृदेवोत्तमकारणं सलिलाद्यवां
तरं तथात्वमप्यस्यजगतःआद्यादिःपरस्मात्परउत्तमहेतुः अत्रमृद्वदुपादानकारणंनब्रह्मकिंतुतदधीनसत्ताकत्वाद्दृष्टांतोपादानमित्याशयेनाह त्वमेवेति चशब्देनब्रह्मोपादानकत्वेसर्वस्यचेतनत्वापत्ति

श्रीशुकउवाच ॥ एवंस्तुतःसुरगणैर्भगवान्हरिरीश्वरः ॥ तेषामाविरभूद्राजन्सहस्रार्कोदयद्युतिः १ तेनैवसहसासर्वेदेवाःप्रतिहतेक्षणाः ॥ नापश्यन्खं दिशःक्षोणीमात्मानंचाग्रतोविभुम् २ विरिंचोभगवान्दृष्ट्वासहशर्वेणभारत ॥ स्वच्छंमरकतश्यामंकंजगर्भारुणेक्षणम् ३ तप्तहेमावदातेनलसत्कौशेयवाससा ॥ प्रसन्नचारुसर्वांगंसुमुखंसुंदरभ्रुवम् ४ महामणिकिरीटेनकेयूराभ्यांचभूषितम् ॥ कर्णाभरणनिर्भातकपोलश्रीमुखांबुजम् ५ कांचीकलापवलयहारनूपुरशोभितम् ॥ कौस्तुभाभरणंलक्ष्मविभ्रतंवनमालिनम् ६ सुदर्शनादिभिश्चास्त्रैर्मूर्तिमद्भिरुपासितम् ॥ तुष्टावदेवप्रवरःसशर्वःपुरुषंपरम् ॥ सर्वामरगणैःसार्धंसर्वांगैरवनिंगतैः ७ ब्रह्मोवाच ॥ अजायजन्मस्थितिसंयमायगुणायनिर्वाणसुखार्णवाय ॥ अणोरणिम्नेपरिगण्यधाम्नेमहानुभावायनमोनमस्ते ८ रूपंतवैतत्पुरुषर्षभेज्यंश्रेयोर्थिभिर्वैदिकतांत्रिकैश्च ॥ योगेनधातःसहनस्त्रिलोकान्पश्याम्यमुष्मिन्नुभवविश्वमूर्ते ९ त्वय्यग्रआसीदिदमात्मतंत्रे त्वमादिरंतोजगतोस्यमध्यम् ॥ घटस्यमृत्स्नेवपरःपरस्मात्त्वमेवचाशेषमशेषनामा १० त्वंमाययात्माश्रययास्वयेदंनिर्मायविश्वंतदनुप्रविष्टः ॥ पश्यंतियुक्तामनसामनीषिणोगुणव्यवायेप्यगुणंविपश्चितः ११

प्रसंगंसूचयति अयमर्थोत्रविवक्षितइतिकुतोवगतमितितत्राह अशेषेति १० ननुसृष्टिसंहृतिकर्तृत्वात्तदाद्यंतत्वमस्तुमध्यत्वंकथमितितत्राह त्वामिति आत्मैवआश्रयोयस्याः सातथातयाऽतएवस्वया
स्वकीयत्वेनाभिमतयामाययाप्रकृत्याइदंविश्वंनिर्मायत्वंतदनुप्रविष्टइतियस्मात्त्वांमध्यवदंतीतिशेषः तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतिः अत्रकिंमानमितितत्राह पश्यंतीति मनीषिणोबुद्धिमंतोमनसा
मननलक्षणविचारेणयुक्ताएवंपश्यंतीतियत्तद्दर्शनंमानमित्यन्वयः नन्वेवंतर्हिगुणसंपर्किणोगुणदोषलेपःस्यात् नस्यादत्रापीदमेवमानमित्याह गुणेति विपश्चितोगुणव्यवायेगुणकार्यसमूहेस्थितमप्य
गुणंगुणनिमित्तदोषरहितंत्वांपश्यंतीतिशेषः इतोपिब्रह्मोपादानकारणंनकिंतुनिमित्तमेवेत्याशयेनाह त्वमिति माययेदंविश्वंनिर्मायतदनुप्रविष्टइतिमनसायुक्तामनीषिणोगुणकार्यजगतिविषयेअगुणंगुण
व्यतिरिक्तंकारणंनिमित्तमेवत्वांपश्यंतीत्यन्वयः विपश्चितःपंडिताःदर्शनपटवइत्यर्थःअनेनाविद्वद्दर्शनमत्रप्रमाणमितिदर्शितम् ११

गुणकार्यैस्थितंगुणदोषरहितंपश्यंतीत्युक्तंकथंतत्रपश्यंतीतितत्राह यथेति यथाएधआदिष्वग्न्यादीनिधियंतिअधिगच्छंति तथाकवयोबुद्ध्यागुणेषुत्वामवयंतिजानंतीत्यन्वयः उर्व्याउत्खननेसतिअंबुयथा तथाशब्दःसमुच्चयेअमृतंक्षीरंघृतंतत्रभेदस्यदोषलेशराहित्यस्यचज्ञापनायाग्निनिदर्शनं सर्वस्मात्सारःस्वभक्तमुक्तिदइतिज्ञापनायामृतदृष्टांतः उपजीव्यत्वज्ञापनायान्नयथेतिभूयस्त्वतापहरत्वदर्शनायां बुयथेति १२ यस्त्वंसर्वोत्तमस्त्वोपजीव्यत्वादिगुणसंपन्नोवयंतंत्वांदृष्ट्वाद्यनिर्वृतिंगताइत्यन्वयः अतिचिरेणकालेनवांछितार्थसमुज्जिहानंविचार्यमाणेसतिसर्वोत्तमंभगवतउन्नतीकुर्वाणंदवार्तावनवह्नि क्लिष्टाःगांगंगगासर्वंधि १३ योर्थोयेषातेयदर्थाःयत्प्रयोजनाअखिललोकपालावयंतवपादमूलंसमागताःसत्वंतमर्थमस्मभ्यंविधत्स्वेत्यन्वयः तर्हिसोर्थःकइतितत्राहतेबहिरिति हेआत्मन्स्वात्मन्बहिरंतः साक्षिणःतेतवाद्यविज्ञाप्यंकिंवास्तिनकिमपीत्यन्वयः अतोस्मदभीष्टंभवतःसिद्धमित्यर्थः १४ इतांप्यस्माभिर्विज्ञाप्यंनास्तियतोवयंतवकिंकराइतिभावेनाह अहमिति यथाकेतवःज्वालाःअग्नेरुत्पद्यंते तमेवाश्रिताः एवंमदादयः सर्वेत्वदुत्पन्नत्वात्त्वत्किंकराइत्यर्थः किंकरत्वंविशदयाति किंवेति ईशस्रष्ट्यादिकर्तृत्वेनपृथक्पृथग्विभाताःप्रख्यातावयंकिंवाविधेम कांतवाज्ञांकुर्मःहेद्विजदेवमित्रनोस्माकंत

यथाग्निमेधस्यमृतंचगोषुभुव्यन्नमंबूत्खननेतथोर्व्याः ॥ योगैर्मनुष्याअधियंतिहित्वागुणेषुबुद्ध्याकवयोवयंति १२ तंत्वावयंनाथसमुज्जिहानंसरोजनाभातिचिरेप्सितार्थम् ॥ दृष्ट्वागतानिर्वृतिमद्यसर्वेगजादवार्ताइवगांगमंभः १३ सत्वंविधत्स्वाखिललोकपालावयंयदर्थास्तवपादमूलम् ॥ समागतास्ते बहिरंतरात्मन्किंवान्यविज्ञाप्यमशेषसाक्षिणः १४ अहंगिरित्रश्चसुरादयोयेदक्षादयोग्नेरिवकेतवस्ते ॥ किंवाविधेमेशपृथग्विभाताविधत्स्वशंनोद्विज देवमित्र १५ ॥ श्रीशुकउवाच ॥ ॥ एवंविरिंच्यादिभिरीडितस्तद्विज्ञायतेषांहृदयंयथैव ॥ जगादजीमूतगभीरयागिराबद्धांजलीन्संवृतसर्वकामा न् १६ एकएवेश्वरस्तस्मिन्सुरकार्येसुरेश्वरः ॥ विहर्तुकामस्तानाहसमुद्रोन्मथनादिभिः १७॥ श्रीभगवानुवाच ॥ हंतब्रह्मन्नहोशंभोहेदेवाममभाषितम् शृणुतावहिताःसर्वेश्रेयोवःस्याद्यथापुरा १८ यातुधानैश्चदैतेयैस्तावत्संधिर्विधीयताम् ॥ कालेनानुगृहीतैस्तैर्यावद्वोभवआत्मनः १९ अरयोपिहिसं धेयाःसतिकार्यार्थगौरवे ॥ अहिमूषकवद्देवाह्यर्थस्यपदवींगतैः २० अमृतोत्पादनेयत्नःक्रियतामविलंबितम् ॥ यस्यपीतस्यवैजंतुर्मृत्युग्रस्तोमरोभवेत् २१

वाज्ञाकरणलक्षणंशंविधत्स्वइदंकुरुध्वमित्याज्ञापय गिरित्रः सदाशिवः १५ हृदयमभिप्रायंजीमूतोमेघःसंवृतसर्वकामानप्रकाशितस्वाभिप्रायान् १६ यतोब्रह्मादयःश्रीनारायणंशरणंप्रापुःतस्मादेकए वेश्वरः सुरकार्यविषयेईश्वरःसमर्थः १७ आरंभेपथायेनविधिनायुष्माकंश्रेयःस्यात्तंविधिं यातुधानैःराक्षसैःअनुगृहीतैःऐकमत्येनगृहीतैर्वैआत्मनोयुष्मदात्मनोभवःश्रेयःवृद्धिर्वा १८ १९ हेदेवाःकार्यार्थगौरवेकर्तव्यस्यप्रयोजनस्यगुरुत्वेसतिअर्थस्यप्रयोजनस्यपदवींगतैर्भवद्भिरसुराअरयोपिसंधेयाहीत्यन्वयः । कथमिवअहिमूषकयोरिव । यावन्मयूरसंत्रस्तःसर्पोमूषकवेश्मनि निली यनिर्भयःपश्चाद्भक्षित्वामूषकंगतइतितांत्रिकायां । संतिकार्यार्थगौरवादितिपाठेकार्यार्थगौरवादरयोपिसंधेयाइतिन्यायाःसंतीत्यन्वयः अहिमूषकसंधानमिवसर्पग्राहिणासर्पमूषकौगृहीत्वाफलको र्ध्वद्वारसर्वमंजूषायांनिहितौ । तत्रोपितःसर्पोमनुतएकमूषिकादनाद्दूरमनेनसंधिंकृत्वेतोनिर्याणमिति । मूषकमभाषतहेमूषकोन्नतीभूतमत्फणाग्रेस्थित्वात्वत्कृतफलकरंध्रेणावानिर्गच्छावततोस्वस्थौ स्यावेतितेनतौनिर्गत्यस्थितंमार्जारगीतंमूषकंभक्षयित्वासर्पोप्ययासीदितिकिंवदंती २० अविलंबितशीघ्रंयस्यशक्त्या । वैशब्देनयोग्यतांसूचयति २१

नेत्रंरज्जुं रज्जौचक्षुषिनेत्रंस्याज्जटायामपिनेतरादित्यभिधानम् २१ २३ इच्छंतिकार्यसिद्धिमितिशेषःसंधानंत्रा सरंभेणद्वेषेणकोपेनवा सांत्वयाक्रियया २४ वोपुष्माभिः २५ ते षांपश्यताम् २६ २७ क्ष्वेलोदर्पःसिंहनादोवा । स्वोनायकोयेषांतेतथा २८ २९ ३० तेसुराःदैत्यस्यभृत्याः ३१ संविदंसंधिलक्षणवार्तां ३२ दुर्मदाःदुःसहमदाः ३३ दूरदेशंप्रतिभारोभरणंयस्यसदूरभारोगिरिस्तस्योद्वहोवहनंतेनश्रांताः अपारयंतःपारंगंतुमशक्नुवंतः ३४ ३५ नाम्नागरुडध्वजइतिरूपधारीबभूव ३६ ३७ ३८ सुपर्णोग रुडःजलांतिजलमध्ये । अत्रसुपर्णइतिकथनेनेदंतात्पर्यमवबोद्धव्यं वैवस्वतरैवतमन्वोरंतरयोरमृतमथनमस्ति । तत्रवैवस्वतमन्वंतरेऽनंतनाम्नागरुडेनोढोगिरिः सुपर्णनाम्नोढो रैवतमन्वंतरे । अनंतो

क्षिप्त्वाक्षीरोदधौसर्वावीरुत्तृणलतौषधीः ॥ मंथानंमंदरंकृत्वानेत्रंकृत्वातुवासुकिम् २२ सहायेनमयादेवानिर्मंथध्वमतंद्रिताः ॥ क्लेशभाजोभविष्यंतिदैत्या यूयंफलग्रहाः २३ यूयंतदनुमोदध्वंयदिच्छंत्यसुराःसुराः ॥ नसंरंभेणसिद्ध्यंतिसर्वेऽर्थाःसांत्वयायथा २४ नभेतव्यंकालकूटाद्विषाज्जलधिसंभवात् ॥ लोभःकार्योनवोजातुरोषःकामस्तुवस्तुषु २५ ॥ श्रीशुकउवाच ॥ इतिदेवान्समादिश्यभगवान्पुरुषोत्तमः ॥ तेषामंतर्दधेराजन्स्वच्छंदगतिरीश्वरः २६ अथतस्मैभगवतेनमस्कृत्यपितामहः ॥ भवश्चजग्मतुःस्वंस्वंधामचेयुर्बलिंसुराः २७ दृष्ट्वारीनप्यसंयत्तान्जातक्षोभान्स्वनायकान् ॥ न्यषेधद्दैत्यराडु श्लोक्यःसंधिविग्रहकालवित् २८ तेवैरोचनिमासीनंगुप्तंचासुरयूथपैः ॥ श्रियापरमयाजुष्टंजिताशेषमुपागमन् २९ महेंद्रःश्लक्ष्णयावाचासांत्वयित्वामहाम तिः ॥ अभ्यभाषतत्सर्वंशिक्षितंपुरुषोत्तमात् ३० तत्त्वरोचतदैत्यस्यतत्रान्येयेसुराधिपाः ॥ शंबरोरिष्टनेमिश्चयेचत्रिपुरवासिनः ३१ ततोदेवासु राःकृत्वासंविदंकृतसौहृदाः ॥ उद्यमंपरमंचक्रुरमृतार्थेपरंतप ३२ ततस्तेमंदरगिरिमोजसोत्पाट्यदुर्मदाः ॥ नदंतउदधिंनिन्युःशक्ताःपरिघबाहवः ३३ दूरभारोद्वहश्रांताःशक्रवैरोचनादयः ॥ अपारयंतस्तंवोढुंविवशाविजहुःपथि ३४ निपतन्सगिरिस्तत्रबहूनमरदानवान् ॥ चूर्णयामासमहताभा रेणकनकाचलः ३५ तांस्तथाभग्नमनसोभग्नबाहूरुकंधरान् ॥ विज्ञायभगवांस्तत्रबभूवगरुडध्वजः ३६ गिरिपातविनिष्पिष्टान्विलोक्यामरदानवा न् ॥ ईक्षयाजीवयामासनिर्जरान्निर्व्रणान्यथा ३७ गिरिंचारोप्यगरुडेहस्तेनैकेनलीलया ॥ आरुह्यप्रययावब्धिंसुरासुरगणैर्वृतः ३८ अवरोप्यगिरिं स्कंधात्सुपर्णःपततांवरः ॥ ययौजलांतउत्सृज्यहरिणासविसर्जितः ३९ ॥ इतिश्रीभागवतेअष्टमस्कंधेमंदराचलनयनेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ श्रीशुकउवाच ॥ तेनागराजमामंत्र्यफलभागेनवासुकिम् ॥ परिवीयगिरौतस्मिन्नेत्रमब्धिंमुदान्विताः १ आरेभिरेसुरायत्ताअमृतार्थेकुरूद्वह ॥ ह रिःपुरस्ताज्जगृहेपूर्वंदेवास्ततोभवन् २ तन्नैच्छन्दैत्यपतयोमहापुरुषचेष्टितम् ॥ नगृह्णीमोवयंपुच्छमहेरंगममंगलम् ३

ढोमंदरस्तुपदावैवस्वतांतरं । अमृतार्थेसुपर्णोढोरैवतस्यांतरेमनोरित्यनेनेतिनिश्चयोक्तिरिति ३९ ॥ इतिश्रीभागवतेविजयध्वजकृतटीकायामष्टमस्कंधेषष्ठोऽध्यायः ॥ ६ ॥ ॥ ७ ॥ ॥ हाला हलंनामतमोगुणजन्यमन्यथाज्ञानलक्षणंसुरानामराजसाअज्ञानलक्षणाअमृतंनामसात्विकंज्ञानलक्षणंमुक्तिसाधनमित्यावृत्तिकथनेनमाहात्म्यंस्पष्टयतत्राध्यायद्वये तन्नादौमथनप्रकारंश्रवणलक्षणं कथयति । तेनागराजेति परिवीयपरिवेष्टयित्वा १ देवास्तत्रःपूर्वमभवन्नित्यन्वयः २ ३

अर्थवादेनामंगलत्वमुपपादयति स्वाध्यायेति ४ ५ अपोविशज्जलमध्यंप्रविष्टः ६ ७ विघ्नेशेनायोगतिर्यस्यसतथातंगिरिंकाच्छपंकच्छपस्यविद्यमानम् ८ ९ तस्यगिरेरावर्तनंपरिभ्रमणंकंडूयनंयेनेनइत्यन्वयः १० तमोगुणप्रवर्तकंरूपंयस्यसअबोधरूपःतिर्यग्रूपइतिवा ११ १२ आत्मन्यंतः १३ अहींद्रस्यसाहस्रसंख्यांगतानिकरालानिचादिशइवविस्तृतानिचमुखान्यहींद्रसाहस्रकरालदिङ्मुखानितेषांनिःश्वासाएवाग्नयःनिःश्वासाग्नयस्तेषांधूमैराहतंवर्चोयेषांतेतथा १४ अंबरंवस्त्रम् कंचुकःकूर्पासकम् १५ १६ कनकपरिधिःकनककांचीकः

स्वाध्यायश्रुतसंपन्नाःप्रख्याताजन्मकर्मभिः ॥ इतितूष्णींस्थितान्दैत्यान्विलोक्यपुरुषोत्तमः ४ स्मयमानोविसृज्याग्रंपुच्छंजग्राहसामरः ॥ कृतस्थानविभागास्तेएवंकश्यपनंदनाः ५ ममंथुःपरमायत्ताअमृतार्थंपयोनिधिम् ॥ मथ्यमानेऽर्णवेसोद्रिरनाधारोह्यपोविशत् ६ ध्रियमाणोपिबलिभिर्गौरवात्पांडुनंदन ॥ तेसुनिर्विण्णमनसःपरिम्लानमुखश्रियः ॥ आसन्स्वपौरुषेनष्टेदैवेनातिबलीयसा ७ विलोक्यविघ्नेशगतिंतदेश्वरोदुरंतवीर्योवितथाभिसंधिः ॥ कृत्वावपुःकाच्छपमद्भुतंमहत्प्रविश्यतोयंगिरिमुज्जहार ८ तमुत्थितंवीक्ष्यकुलाचलंपुनःसमुद्यतानिर्मथितुंसुरासुराः ॥ दधारपृष्ठेनसलक्षयोजनप्रस्तारिणाद्वीपइवापरोमहान् ९ सुरासुरेंद्रैर्भुजवीर्यवेपितंपरिभ्रमंतंगिरिमंगपृष्ठतः ॥ बिभ्रत्तदावर्तनमादिकच्छपोमेनेंगकंडूयनमप्रमेयः १० तथासुराणांविशदासुरेणरूपेणतेषांबलवीर्यमीरयन् ॥ तद्दीपयन्देवगणांश्चविष्णुर्दैवेननागेंद्रमबोधरूपः ११ उपर्यगेंद्रंगिरिराडिवान्यआक्रम्यहस्तेनसहस्रबाहुः ॥ तस्थौदिविब्रह्मभवेंद्रमुख्यैरभिष्टुवद्भिःसुमनोभिवृष्टचा १२ उपर्यधश्चात्मनिनेत्रगोत्रयोःपरेणतेप्राविशतासमेधिताः ॥ ममंथुरब्धिंतरसामदोत्कटामहाद्रिणाक्षोभितनक्रचक्रम् १३ अहींद्रसाहस्रकरालदिङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः ॥ पौलोमकालेयबलील्वलादयोदवाग्निदग्धाःशलभाइवापतन् १४ देवांश्चतच्छ्वासशिखाहतप्रभान्धूम्रांबरस्रग्वरकंचुकाननान् ॥ समभ्यवर्षन्भगवद्वशाघनावबुःसमुद्रोर्म्युपगूढवायवः १५ मथ्यमानात्तदासिंधोर्देवासुरवरूथपैः ॥ यदासुधानजायेतनिर्ममंथाजितःस्वयम् १६ मेघश्यामःकनकपरिधिःकर्णविद्योतविद्युन्मूर्ध्निभ्राजद्विलुलितकचस्रग्धरोरक्तनेत्रः ॥ जैत्रैर्दोर्भिर्जगदभयदैर्दंदशूकंगृहीत्वामथ्नन्मथ्नाप्रतिगिरिरिवाशोभताथोधृताद्रिः १७ निर्मथ्यमानादुदधेरभूद्विषंमहोल्बणंहालहलाह्वमग्रतः ॥ संभ्रांतमीनोन्मकराहिकच्छपात्तिमिद्विपग्राहतिमिंगिलाकुलात् १८ तदुग्रवेगंदिशिदिश्युपर्यधोविसर्पदुत्सर्पदसह्यमप्रतिम् ॥ भीताःप्रजादुद्रुवुरंगसेश्वराअरक्ष्यमाणाःशरणंसदाशिवम् १९ विलोक्यतंदेववरंत्रिलोक्याभवायदेव्याभिमतंमुनीनाम् ॥ आसीनमद्रावपवर्गहेतोस्तपोजुषाणःस्तुतिभिःप्रणेमुः २० प्रजाऊचुः ॥ देवदेवमहादेवभूतात्मन्भूतभावन ॥ त्राहिनःशरणापन्नान्त्रैलोक्यदहनाद्विषात् २१

कर्णविद्योतविद्युदितिलुप्तोपमेयमिति कर्णशब्दप्रयोगेनकुंडलद्वयमुपलक्ष्यते तेनैवंयोजनीयम् विशिष्टोद्योतोययोस्तेविद्योते कर्णयोर्विद्योतेविशिष्टदीप्तिनी विद्युद्रूपेइवकुंडलेयस्यसतथा विलुलिताविचलितावनस्रग्वनमालातांधारयतीतिमूर्ध्निशोभमानविलुलितवनस्रग्धरःदंदशूकंनागेंद्रम् मथ्नामदराख्येन १७ उन्मकराःउन्मुखमकराःउत्तिमयः । उत्पतिततिमिमत्स्याःसंभ्रांतैर्मीनादिभिःआकुलः दुग्धेः १८ दुद्रुवुःशीघ्रंजग्मुः १९ २० २१

२२ धवासर्गादीन्धत्सेतदाब्रह्माद्यभिधांधत्से २३ सदसद्भावादेवासुरतिर्यगादयस्तान्भावयत्युत्पादयतिवर्धयतिवशीकरोतिचेति । अतःसदसद्भावभावनंअनेनब्रह्माशिवयोरंतर्यामित्वेनास्थितमेव जगदु त्पत्त्यादिकरोतीतिनिरणायि नानाशक्तिभिःआभासःआसमंताद्भासोभासनयस्यसतथा २४ शब्दयोनिर्ज्ञप्तिकारणंयस्यसतथा प्राणादिसत्ताप्रदःतत्तत्स्वभावप्रवर्तकः । क्रतुःसत्यकामःसंक ल्पप्रवर्तकोवासत्यंसच्चिदानंदरूपऋतमेकप्रकारंधारकत्वाद्धर्मःयत्त्रिवृदकारादिवर्णत्रयात्मकंतदक्षरंप्रणवलक्षणंत्वयित्वद्वाचकत्वेनप्रवर्ततइत्यामनंति । ओमित्येकाक्षरमित्यादिवेदांताः २५ अखिलदे वतात्माअखिलदेवताभ्योहविर्भागदाता हेलोकभवजगत्कर्तः अखिलदेवतांतर्यामिणः २६ द्रुहिणस्तवात्मासत्वलक्षणं चित्तम् २७ २८ ईशानःसर्वविद्यानामित्यादिपंचमंत्राःयैर्मंत्रैस्त्रिंश दष्टोत्तरमंत्रवर्गःअष्टत्रिंशत्कलालक्षणोमंत्रसमूहउत्पन्नइतिशेषः यच्छिवाख्यंतद्ब्रस्तुतेवस्थितिरवस्थानंतदनुग्रहादितिशेषः २९ यैःसत्वादिभिः सर्गोभवतितानिसत्वादीनितवनेत्रत्रयं साक्षा न्मनुःशास्त्रकृतः तवेक्षा ततोजातः देवर्षिस्तवच्छंदोमयः इच्छातोजातः ३० यत्तवपरंज्योतिःरूपंतद्विरिंच्यादिभिरगम्यंनसर्वात्मनेतिशेषः निरस्तभेदं नेहनानास्तिकिंचनेतिश्रुतेः ३१ कामाद्यनेकभूत

त्वमेकःसर्वजगतईश्वरोबंधमोक्षयोः ॥ तंत्वामर्चंतिकुशलाःप्रपन्नार्तिहरंगुरुम् २२ गुणमय्यास्वशक्त्यास्यसर्गस्थित्यप्ययान्विभो ॥ धत्सेयदास्वदृक् भूमन्ब्रह्माविष्णुशिवाभिधाम् २३ त्वंब्रह्मपरमंगुह्यंसदसद्भावभावनम् ॥ नानाशक्तिभिराभासस्त्वमात्माजगदीश्वरः २४ त्वंशब्दयोनिर्जगदादिरात्माप्रा णेंद्रियद्रव्यगुणस्वभावः ॥ कालःक्रतुःसत्यमृतंचधर्मस्त्वय्यक्षरंयत्त्रिवृदामनंति २५ अग्निर्मुखंतेखिलदेवतात्माक्षितिंविदुर्लोकभवांघ्रिपंकजम् ॥ कालो गतिस्तेखिलदेवतात्मनोदिशश्चकर्णौरसनंजलेशः २६ नाभिर्नभस्तेश्वसनंनभस्वान्सूर्यश्चचक्षूंषिजलंस्मरेतः ॥ परावरात्माश्रयणंतवात्मासोमोम नोद्यौर्भगवन्शिरस्ते २७ कुक्षिःसमुद्रागिरयोस्थिसंघारोमाणिसर्वौषधिवीरुधस्ते ॥ छंदांसिसाक्षात्तवसप्तधातवस्त्रयीमयात्मन्हृदयंसधर्मः २८ मुखानिपंचोपनिषत्तवेशयैस्त्रिंशदष्टोत्तरमंत्रवर्गः ॥ यत्तच्छिवाख्यंपरमात्मतत्त्वंदेवस्वयंज्योतिरवस्थितिस्ते २९ छायात्वधर्मोर्मिषुयैर्विसर्गोनेत्रत्रयंसत्व रजस्तमांसि ॥ साक्षान्मनुःशास्त्रकृतस्तवेक्षाछंदोमयोदेवऋषिःपुराणः ३० नतेगिरित्राखिललोकपालविरिंचवैकुंठसुरेंद्रगम्यम् ॥ ज्योतिःपरंयत्ररज स्तमश्चसत्वंनयद्ब्रह्मनिरस्तभेदम् ३१ कामाध्वरत्रिपुरकालहराद्यनेकभूतद्रुहःक्षपयतःस्तुतयेनतत्ते ॥ यस्त्वंतकालइदमात्मकृतंस्वनेत्रवह्निस्फुलिंगशिख याभसितंनवेश ३२ येत्वात्मरामगुरुभिर्हृदिचिंतितांघ्रिद्वंद्वंचरंतमुमयातपसाभितप्तम् ॥ कत्थंतउग्रपरुषंनिरतंश्मशानेतेनूतमूतिमविदस्तवहीनलज्जाः ३३ तत्तस्यतेसदसतोःपरतःपरस्यनांतःस्वरूपगमनेप्रभवंतिभूम्नः ॥ ब्रह्मादयःकिमुतसंस्तवनेवयंतुतत्सर्गसर्गविषयाअपिभक्तिमात्रम् ३४

हिंसकस्यक्षपयतः संहरतस्तवस्तुतयेतज्जगन्नशक्तं कुतइतितत्राह यदिति । हेईशप्रलयकालेतवस्वस्यनेत्रस्यनेत्रवह्नेःस्फुलिंगशिखयाभसितंभक्षितमिदमात्मकृतजगदितियत्तस्मादित्यन्वयःअत्रहरे तिपदोपादानादियंस्तुतिःश्रीहरिविषयेतिज्ञायतेसर्वात्माप्रीयतेहरिरितिवक्ष्यमाणवाक्याच्च तत्रतत्रस्तुतिपदेहरिरेवतुतद्गतःस्तूयतेतोयुक्तमेवगुणाधिक्यवचोपितुहतिवचनाच्च ३२ येत्वामुमयोमायाअर्थे तपसेचरंतमतएवाभितप्तंश्मशानेनिरतमतएवोग्रवपुषंघोराकारंकत्थंतिभाषंतेतेतवभूतमूर्तिपूर्णैश्वर्यंअविदोनजानंतोऽतएवनिर्लज्जा ३३ यतस्तवचर्यादुर्बोधातस्मात्सदसतोःपरतःप्रकृतेःपरस्यतस्यभूम्नः तेस्वरूपगमनेब्रह्मादयोंतर्यामिविषयेविरिंचादयः अन्यत्रसनकादयोनांजःप्रभवंति वयंब्रह्मपुत्राःस्तवनेनप्रभवामइतिकिमुतवयनतन्निकटवर्तिनोपीत्याह तत्सर्गेति तत्पब्रह्मणःसृष्टिप्रवाहेनिपतिताः तर्हिक्रियमाणाकेयमितितत्राह भक्तिमात्रमिति अस्मत्स्तुतिर्भक्तिप्रकटनमात्रमित्यर्थः तुशब्दोचनाद्योतकः ३४

अव्यक्तकर्मणस्तेव्यक्तिर्लोकस्यमृडनायपालनायेत्येतत्परंकेवलंप्रपश्यामःपरमन्यत्तवप्रयोजनंनपश्यामइत्यन्वयः । हेमहेश्वरपरंतवैतद्रूपंपश्यामः तवांतर्यामिरूपंपरंहारिंनपश्यामः एतद्रूपप्रयोजनमाह मृडनायेति व्यक्तिस्त्रिनेत्रादिलक्षणाकृतिः ३५ ३६ वैशसंनाशलक्षणम् ३७ ३८ पांतिरक्षंति ३९ कृपयतःकृपांकुर्वतः ४० गरंविषम् ४१ भवान्यास्तदात्मार्थत्वाद्विषभोजनंकिंनानिवारितमितितत्राह तत्प्रभावज्ञेति ४२ गलेकंठेकल्मषयस्यसतथातस्याविषस्य । स्ववीर्यंस्वरूपभूतवीर्यम् ४३ किंतद्वीर्यमितितत्राह यदिति साधोर्देवस्यभूषणमभून्नदूषणमित्यर्थः ४४ लोकोपकारार्थमेवविषपानमित्याशयेनाह तप्यंतइति । अनेनकिमस्यप्रयोजनमितितत्राह परमेति ४५ शशंसिरेइत्यनेनरुद्रस्ययशोर्थंहरिणाविषंनपीतमितिज्ञायते । रुद्रस्ययशसोर्थायस्वयं

एतत्परंप्रपश्यामोनपरंतेमहेश्वर ॥ मृडनायहिलोकस्यव्यक्तिस्तेव्यक्तकर्मणः ३५ ॥ श्रीशुकउवाच ॥ तद्वीक्ष्यव्यसनंतासांकृपयाभृशपीडितः ॥ सर्वभूतसुहृद्देवइदमाहसतींप्रियाम् ३६ अहोबतभवान्येतत्प्रजानांपश्यवैशसम् ॥ क्षीरोदमथनोद्भूतात्कालकूटादुपस्थितम् ३७ आसांप्राणपरीप्सूनांविधेयमभयंहिमे ॥ एतावान्हिप्रभोरर्थोयद्दीनपरिपालनम् ३८ प्राणैःस्वैःप्राणिनःपांतिसाधवःक्षणभंगुरैः ॥ बद्धवैरेषुभूतेषुमोहितेष्वात्ममायया ३९ पुंसःकृपयतोभद्रेसर्वात्माप्रीयतेहरिः ॥ प्रीतेहरौभगवतिप्रीयेहंसचराचरः ४० तस्मादिदंगरंभुंजेप्रजानांस्वस्तिरस्तुमे ॥ श्रीशुकउवाच ॥ एवमामंत्र्यभगवान्भवानींविश्वभावनः ४१ तद्विषंजग्धुमारेभेप्रभावज्ञान्वमोदत ॥ ततःकरतलीकृत्यव्यापिहालाहलंविषम् ४२ अभक्षयन्महादेवःकृपयाभूतभावनः ॥ तस्यापिदर्शयामासस्ववीर्यंगलकल्मषः ४३ यच्चकारगलेनीलंतच्चसाधोर्विभूषणम् ४४ तप्यंतेलोकतापेनसाधवःप्रायशोजनाः ॥ परमाराधनंतद्धिपुरुषस्याखिलात्मनः ४५ निशम्यकर्मतच्छंभोर्देवदेवस्यमीढुषः ॥ प्रजादाक्षायणीब्रह्मावैकुंठश्चशशंसिरे ४६ प्रस्कन्नंपिबतःपाणेर्यत्किंचिज्जगृहुःस्मतत् ॥ वृश्चिकाहिविषौषध्योदंदशूकाश्चयेपरे ४७ इतिश्रीभागवतेअष्टमस्कंधेअमृतमंथनेसप्तमोध्यायः ॥ ७ ॥ श्रीशुकउवाच ॥ पीतेगरेवृषांकेणप्रीतास्तेमरदानवाः ॥ ममंथुस्तरसासिंधुंहविर्धानीततोभवत् १ तामग्निहोत्रीमृषयोजगृहुर्ब्रह्मवादिनः ॥ यज्ञस्यदेवयानस्यमेध्यायहविषेनृप २ ततउच्चैःश्रवानामहयोभूच्चंद्रपांडुरः ॥ तस्मिन्बलिःस्पृहांचक्रेनेंद्रईश्वरशिक्षया ३ ततऐरावतोनामवारणेंद्रोविनिर्गतः ॥ दंतैश्चतुर्भिःश्वेताद्रेर्हरिस्तंतुसमग्रहीत् ४ ततोभवत्पारिजातःसुरलोकविभूषणः ॥ पूरयत्यर्थिनोयोर्थैःशश्वद्भुवियथाभवान् ५ ततश्चाप्सरसोजाताःनिष्ककंठ्यःसुवाससः ॥ रमण्यःस्वर्गिणांवल्गुगतिलीलावलोकनैः ६ ततश्चाविरभूत्साक्षाच्छ्रीरमाभगवत्परा ॥ रंजयंतीदिशःकांत्याविद्युत्सौदामनीयथा ७ तस्यांचक्रुःस्पृहांसर्वेससुरासुरमानवाः ॥ रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ८

विष्णावेवंविभुः नसंजज्ञेसमर्थोपिवायुंचोचेप्रशांतयइतिवचनाच्च ४६ विषौषध्यःलांगलीप्रभृतयः ४७ ॥ इतिश्रीभागवतेअष्टमस्कंधेविजध्व०टीकायांसप्तमोध्यायः ॥ ७ ॥ १ किमर्थंजगृहुरितितत्राह यज्ञस्येति । हविषेयज्ञस्यदेवानांसोमपानस्यचमेध्याय देवानांसोमपानंयस्मिंस्तथातस्येति २ ३ ४ सुरलोकंविभूषयतीतिसुरलोकविभूषणः ५ निष्कमाभरणविशेषः रमण्योरमणीयाः ६ रुच्याविशिष्टंद्योतयतीतिविद्युत्साचसौदामनी ७ रूपादिमहिम्ना ८

९ अभिषेचनिकाः आभिषेकयोग्यसाधनानि पंचपवित्राणिगोमयादीनि माधवंस्वकालसंभवम् १० ११ शंखादीनातुमुल निःस्वनोयेपुतेतथा १२ १३ १४ १५ वक्रंसमंस्त
नद्वयंचदधती १६ १७ आत्मनःस्वस्यनिर्दोषंगंधर्वादिषुपदंस्थानंपतिलक्षणंस्थानंनान्वविंदतेत्यन्वयः १८ ननुपदमनुपलभ्यकिंपुंश्चलीजातेत्याशंकांश्लोकद्वयेनपरिहरति नूनमिति यस्य
तपोस्तितस्यमन्युनिर्जयोनास्तिनूनंनिश्चये नूनंतर्केर्थनिश्चयइत्यभिधानात्इतितर्कयामिवा विधिनोक्तेनमार्गेणकृच्छ्रचांद्रायणादिभिः शरीरशोषणंप्राहुस्तापसास्तपउत्तममिति अनेनऋषितयाना
रदादयःप्रतिषिद्धाःक्वचित्पुंसिज्ञानमस्तितस्यज्ञानंसंगवर्जितंफलस्नेहरहितंनस्यात्नूनमित्यत्राप्यनुकृष्यते अनेनबृहस्पत्यादयोनिषिद्धाः कश्चिद्ब्रह्मातत्रमहानस्तितस्यब्रह्मणःकामनिर्जयोनास्तिप्रजा
पतिःस्वांदुहितरंअभ्यध्यायदितिश्रुतेः कस्मैदेवायहविषाविधेमेतिचयःपरतोन्यपाश्रयःपरमन्यमाश्रयतइतिसईश्वरःकिंनैवअनेनरुद्रादिर्निवारितः १९ तर्हिदंडपाणिःस्यादितितत्राह धर्मइतिक्वचि
त्संयमिन्यांधर्मोस्तितस्यधर्मस्यभूतेषुदयानास्तिनिरनुक्रोशाधिकारप्रवृत्तत्वात् क्वचित्कस्मिंश्चित्पुंसिपुण्यलक्षणोधर्मोस्तितस्यप्राणिषुसौहृदंदुर्लभमितिसामान्यनिषेधोवा तच्चत्यजनंचअर्थिभ्योदेव

तस्याश्चासनमानिन्येमहेंद्रोमहदद्भुतम् ॥ मूर्तिमत्यःसरिच्छ्रेष्ठाहेमकुंभैर्जलंशुचि ९ अभिषेचनिकाभूमिराहरत्सकलौषधीः ॥ गावःपंचपवित्राणिवसं
तोमधुमाधवम् १० ऋषयःकल्पयांचक्रुरभिषेकंयथाविधि ॥ जगुर्भद्राणिगंधर्वानार्यश्चननृतुर्जगुः ११ मेघामृदंगपणवमुरुजानकगोमुखान् ॥ व्यना
दयन्शंखवेणुवीणातुमुलनिःस्वनान् १२ ततोभिषिषिचुर्देवींश्रियंपद्मकरांसतीम् ॥ दिगिभाःपूर्णकलशैःसूक्तवाक्यैर्द्विजेरितैः १३ समुद्रःपीतकौशे
यवाससीसमुपाहरत् ॥ वरुणःस्रजंवैजयंतींमधुनामत्तषट्पदाम् १४ भूषणानिविचित्राणिविश्वकर्माप्रजापतिः ॥ हारंसरस्वतीपद्ममजोनागश्चकुंडले
१५ ततःकृतस्वस्त्ययनोत्पलस्रजंनदद्द्विरेफांपरिगृह्यपाणिना ॥ चचालवक्त्रंसुकपोलकुंडलंसव्रीडहासंदधतीसुशोभनम् १६ स्तनद्वयंचातिकृशोदरी
समंनिरंतरंचंदनकुंकुमोक्षितम् ॥ ततस्ततोनूपुरवल्गुसिंजितैर्विसर्पतीहेमलतेवसाबभौ १७ विलोकयंतीनिरवद्यमात्मनःपदंध्रुवंचाव्यभिचारिसद्गुणम् ॥
गंधर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषुनान्वविंदत १८ नूनंतपोयस्यनमन्युनिर्जयोज्ञानंक्वचित्तच्चनसंगवर्जितम् ॥ कश्चिन्महांस्तस्यनकामनिर्जयः
सईश्वरःकिंपरतोव्यपाश्रयः १९ धर्मःक्वचित्तत्रनभूतसौहृदंत्यागःक्वचित्तत्रनमुक्तिकारणम् ॥ वीर्यंनपुंसोस्त्यजवेगनिष्कृतंनहिद्वितीयोगुणसंगवर्जि
तः २० क्वचिच्चिरायुर्नहिशीलमंगलंक्वचित्तदप्यस्तिनवेद्यमायुषः ॥ यत्रोभयंकुत्रचसोप्यमंगलःसुमंगलःकश्चनकांक्षतेहिमाम् २१ श्रीशुकउवाच
एवंविमृश्याव्यभिचारिसद्गुणंपदंनिजैकाश्रयिसद्गुणाश्रयम् ॥ वव्रेवरंसर्वगुणैरपेक्षितंरमामुकुंदंनिरपेक्षमीप्सितम् २२

तादिभ्योवान्यायार्जितधनादिदानंत्यागःतच्चमुक्तिकारणंनभवति भगवदर्पणबुद्ध्यानानुष्ठितत्वात्हानोपादानाद्विलक्षणत्यागाधिकारित्वाद्वायुरपिमुक्तिकारणंन मोक्षदस्तुजनार्दनइतिवचनाद्वा
अनेनवायुर्लक्ष्यतेक्वचित्पुंसोवीर्यंतापादिदुःखनिवारकमस्तितदजवेगनिष्कृतंनकालचक्रविजयिनभवति अनेनचंद्रोनिवारितः क्षीणःक्षीणःप्रविशतीतिवचनात् गुणसंगवर्जितोद्वितीयोनहिहरिविनेतिशे
षः २० क्वचिद्वस्तुनिचिरायुरस्तिचेत्तस्यशीलमंगलंनहिचिरजीविवत् क्वचिद्वस्तुनितच्छीलमप्यस्तितर्ह्यायुषोनवेद्यंआयुर्ज्ञानंदुःशकमित्यर्थः कुत्रचक्वापियत्रयस्मिन्पुंसिउभयमायुःशीलचसोपिपु
मानमंगलगर्वितः सुमंगलःकश्चनलोकविलक्षणोमुक्तजातीयोमांकांक्षतेयदिसोपिनभवतीतिशेषः २१ एवमिंद्रादीनपिविमृश्यदोषानुक्त्वारमामुकुंदंपरपदंवव्रेइत्यन्वयः अव्यभिचारिणोनाति
क्रमणःसंतःअव्यान्यसंभवाख्यदोषरहितागुणालक्षणानियस्यसतथातम् निजाश्चैकाश्रयिणश्चैकस्मिन्नेववर्तमानाश्चसंतश्चतपआदिगुणाअपितेतथातेषांपुंसामाश्रयनिजत्वादेकाश्रयित्वमूनिजत्वात्मीयाने

त्ययोरितितत्तत्सत्तामदत्वेनतदाश्रयत्वंयुक्तं । भक्त्यादिसर्वगुणैरपेक्षितत्वंनत्वन्यथा सौशील्यादिगुणैर्वा काचनकांक्षतइत्यस्यापवादमाह निरपेक्षमिति । तर्हिनकश्चनतस्मिन्नादरंकरोतीतितत्राह ईप्सितमिति एषब्रह्मातिवृद्धस्त्वपातिदिनपतिश्चंचलोमातरिश्वादिग्वासानीलकंठस्त्रिदशपतिरसौगर्वितःक्षीयतेब्जः । इत्थंदेव्याविविबभ्रमरकुलकलागीतशब्दप्रफुल्लादत्तामालामुरारेःसुरतरुकुसुमालंकृता पातुयुष्मानितिपुराणज्ञाव्याचक्षते २२ तस्यहरेरंसेमालांनिवीयनिधायतस्थावित्यन्वयः । उशतीमिष्टसाधनीभूताकांतांवा सव्रीडःसचासौहास' व्रीडयासहवर्तमानः सव्रीडहासः । तेनविकासितनयनेनस्वस्याःधामतस्यहरे उरःपश्यतीतिशेषः । भीताशरीरकंपोपेता अयंचशृंगारविशेषः । अनाद्यनंतकालंचविष्णुमेवाश्रितारमा अन्येषांज्ञापनार्थापदोषांनुक्केतरान्जहावितिवचनात् । अधुनाहरे

तस्यांसदेशउशतींनवकंजमालांमाद्यन्मधुव्रतवरूथगिरोपघुष्टाम् ॥ तस्थौनिवीयनिकटेतदुरःस्वधामसव्रीडहासविकसन्नयनेनभीता २३ स्वस्याःस्त्रियस्त्रिजगतोजनकोजनन्यावक्षोनिवासमकरोत्परमंविभूतेः ॥ श्रीःस्वप्रजाःसकरुणेननिरीक्षणेनयत्रस्थितैधयतसाधिपतींस्त्रिलोकान् २४ शंखतूर्यमृदंगानांवादित्राणांपृथक्स्वनः ॥ देवानुगानांसस्त्रीणांनृत्यतांगायतामभूत् २५ ब्रह्मरुद्रांगिरोमुख्याःसर्वेविश्वसृजोविभुम् ॥ ईडिरेवितथैर्मंत्रैस्तल्लिंगैःपुष्पवर्षिणः २६ श्रियाविलोकितादेवाःसप्रजापतयःप्रजाः ॥ शीलादिगुणसंपन्नालेभिरेनिर्वृतिंपराम् २७ निःसत्वालोलुपाराजन्निरुद्योगागतत्रपाः ॥ यदाचोपेक्षितालक्ष्म्याबभूवुर्दैत्यदानवाः २८ अथासीद्वारुणीदेवीकन्याकमललोचना ॥ असुराजगृहुस्तांवैहरेरनुमतेनते २९ अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः ॥ उदतिष्ठन्महाराजपुरुषःपरमाद्भुतः ३० दीर्घपीवरदोर्दंडःकंबुग्रीवोरुणेक्षणः ॥ श्यामलस्तरुणःस्रग्वीसर्वाभरणभूषितः ३१ पीतवासामहोरस्कःसुमृष्टमणिकुंडलः ॥ नीलकुंचितकेशांतःसुभगःसिंहविक्रमः ३२ अमृतस्यपूर्णकलशंबिभ्रद्वलयभूषितः ॥ सवैभगवतःसाक्षाद्विष्णोरंशांशसंभवः ३३ धन्वंतरिरितिख्यातोआयुर्वेदद्दगिज्यभाक् ॥ तमालोक्यासुराःसर्वेकलशंचामृताहृतम् ३४ लिप्संतःसर्ववस्तूनिकलशंतरसाहरन् ॥ नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने ३५ विषण्णमनसोदेवाहरिंशरणमाययुः ॥ इतितद्दैन्यमालोक्यभगवान्भृत्यकामकृत् ॥ माखिद्यतमिथोर्थंवःसाधयिष्येस्वमायया ३६ मिथःकलिरभूत्तेषांतदर्थेतर्षचेतसाम् ॥ अहंपूर्वमहंपूर्वंनत्वंनत्वमितिप्रभो ३७ देवाःस्वभागमर्हंतियेतुल्यायासहेतवः ॥ सत्रयागइवैतस्मिन्नेषधर्मःसनातनः ३८ इतिस्वान्प्रत्यषेधन्वैदैतेयाजातमत्सराः ॥ दुर्बलाःप्रबलान्राजन्गृहीतकलशान्मुहुः ३९

लक्ष्मीप्राप्तेर्नपूर्वमितिशंकापरिहर्तव्या स्वस्याःस्त्रियःइत्युत्तरश्लोकविशेषणसामर्थ्याच्च २३ ऐधयतअवर्धयन् २४ काहलेगोमुखेतूर्यंदुंदुभौचमचक्षतइतिच २५ तल्लिंगैःश्रीलक्षणोपेतैःश्रीसूक्तैरित्यर्थः २६ २७ २८ वारुणीसुराभिमानिनीदेवताच २९ काश्यपैर्देवासुरैःपरममुत्तममद्भुताश्चर्यमाहात्म्यंयस्यसतथा ३० कंबुग्रीवःरेखात्रयांकितगलः ३१ नीलकुंचितकेशांतःनीलकुंचितकेशस्वभावः । अंतस्त्ववसितेमृत्यौस्वभावेपरमात्मनीति ३२ अमृतस्येतिषष्ठीतृतीयार्थे अमृतेनपूर्णकलशमित्यर्थः ३३ इज्यभाक्अमृतलक्षणम.हृतमाहारोयस्मिन्सतथा तेषां सत्याचालनार्थंहारिर्धन्वंतरिर्विभुः समर्थोप्यसुराणांचस्वहस्तादमुचत्सुधामितिवचनात् दैत्यैर्हरिहस्तादमृतंहृतंनत्वशक्तत्वादितिदर्शनरहस्यम् ३४ ३५ ३६ तर्षंचेतसांतृष्णायुक्तमनसाम् ३७ यथासत्रयागेसर्वेषांसमानफलम् ३८ ३९

१ भगवदितरेषु दोषाःसन्ति इतिसर्वेषामन्येषाज्ञापनार्थं तेषुदोषोक्तिर्नतुस्वपतित्वेनप्रसक्तौतन्निराकरणार्थम् इतिभावः ।

...नतनासिकयायुक्तमाननंयस्यतत्तथा ४१ नवयौवनेननिष्पंदतोनिश्चलतोस्तनयोर्भारेणकृशंतनुतरंउदरंयस्यतत्तथा मुखपरिमलेनुरक्तानांनिरतानाअलीनांभृंगाणांहुंकारे ...तेलोचनेयस्यतत्तथा । सुष्ठुशोभनाग्रीवायस्यतत्तथा । शोभनंकंठाभरणंयस्यतत्तथा । शोभनैर्भुजांगदैर्विभूषितम् ४२ ४३ वधूनांविद्यमानावध्वीयातयाशोभयाचित्रं कांच्याचचि ...भमानंवा यथावल्गुकर्णरमणीयंतथास्फुटतीशब्दंकुर्वतीचरणनूपुरेयस्यतत्तथा ४४ सव्रीडस्मितेनविक्षिप्तैर्भ्रूविलासैर्युक्तैरवलोकनैःउद्दीपयन्ज्वलयन् ४५ ४६ ४७ ४८

...विष्णुःसर्वोपायविदीश्वरः ॥ योषिद्रूपमनिर्देश्यंदधारपरमाद्भुतम् ४० प्रेक्षणीयोत्पलश्यामंसर्वावयवसुंदरम् ॥ समानकर्णाभरणंसुकपोलो ...नम् ४१ नवयौवननिष्पंदस्तनभारकृशोदरम् ॥ मुखामोदानुरक्तालिझंकारोद्विग्नलोचनम् ४२ बिभ्रत्स्वकेशभारेणमालामुत्फुल्लमल्लिकाम् ॥ ...रणंसुभुजांगदभूषणम् ४३ विरजांबरसंवीतंचित्रंवध्वीयशोभया ॥ कांच्याप्रविलसद्वल्गुस्फुटच्चरणनूपुरम् ४४ सव्रीडस्मितविक्षिप्तभ्रूवि ...कनैः ॥ दैत्ययूथपचेतःसुकाममुद्दीपयन्मुहुः ४५ तेन्योन्यतःसुधापात्रंहरंतस्त्यक्तसौहृदाः ॥ क्षिपंतोदस्युधर्मेणआयांतींददृशुःस्त्रियम् ४६ ...महोधामअहोअस्थानवंवयः ॥ इतितेतामभिद्रुत्यपप्रच्छुर्जातहृच्छयाः ४७ कात्वंकंजपलाशाक्षिकुतोवाकिंचिकीर्षसि ॥ कस्या ...रुमथ्नतीवमनांसिनः ४८ नवयंत्वामरैर्दैत्यैःसिद्धगंधर्वचारणैः ॥ स्पृष्टपूर्वांतुजानीमोलोकेशैश्चकुतोनृभिः ४९ नूनंत्वंविधिनासुभ्रूप्रेषिता ...म् ॥ सर्वेंद्रियमनःप्रीतिंविधातुंसघृणेनकिम् ५० सात्वंनःस्पर्धमानानामेकवस्तुनिभामिनि ॥ ज्ञातीनांबद्धवैराणांशंविधत्स्वसुमध्यमे ५१ ...दायादाभ्रातरःकृतपौरुषाः ॥ विभजस्वयथान्यायंनैवभेदोयथाभवेत् ५२ इत्युपामंत्रितोदैत्यैर्मायायोषिद्वपुर्हरिः ॥ प्रहस्यरुचिरापांगैर्निरीक्ष ...ब्रवीत् ५३ श्रीभगवानुवाच ॥ कथंकश्यपदायादाःपुंश्चल्यांमयिसंगताः ॥ विश्वासंपंडिताजातुकामिनीषुनयांतिहि ५४ सालावृकाणांस्त्रीणांच ...मुरद्विषः ॥ सख्यान्याहुरनित्यानिनूत्नंनूत्नंविचिन्वताम् ५५ श्रीशुकउवाच ॥ इतितेक्ष्वेलितैस्तस्याआश्वस्तमनसोऽसुराः ॥ जहसुर्भावगंभी ...भाजनम् ५६ ततोगृहीत्वामृतभाजनंहरिर्बभाषईषत्स्मितशोभयागिरा ॥ यद्यभ्युपेतंक्वचसाध्वसाधुवाकृतंमयावोविभजेसुधामिमाम् ५७ ...ल्हतंतस्याआकर्ण्यासुरपुंगवाः ॥ अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत ५८ अथोपोष्यकृतस्नानाहुत्वाचहविषानलम् ॥ दत्त्वागोवि ...स्वस्त्ययनाद्विजैः ५९ यथोपजोषंवासांसिपरिधायाहतानिते ॥ कुशेषुप्राविशन्सर्वेप्रागग्रेष्वभिभूषिताः ६० प्राङ्मुखेषूपविष्टेषुसुरेषु ...च ॥ धूपामोदितशालायांजुष्टायांमाल्यधूपकैः ६१ तस्यांनरेंद्रकलभोरुलसद्दुकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी ॥ साकूजतीकनकनूपुर ...स्तनीकलशपाणिरथाविवेश ६२

त्वात्वाम् ४९ विधिनाविरिंचेन ५० शंविधत्स्वशंविधानंमनःसंतोषकुरु ५१ ५२ माययाइच्छयाअंगीकृतस्त्रीदेहः ५३ ...गुणवत्याम् ५४ नूत्नंनूतनम् ५५ क्ष्वेलितैःछलमिश्रवचनैः ५६ अभ्युपेतंअंगीकृतम् ५७ प्रमाणमियत्ता ५८ ५९ ६० ६१ कलभोगजपोतःतत्करवच्छोभयानयोरूर्वोर्लसताद्दुकूले ...या:सा कलभोवंशांकुरस्तद्वद्वर्तमानयोर्वा अलसगतिःअलसामंदागतिर्यस्याःसातथा सिंजितेनशब्दितेन सिंजिअव्यक्तेशब्देइतिधातुः ६२

कनककुंडलचारुकर्णाभ्यांनासाकपोलाभ्यांचयुक्तंवदनंयस्याःसातथाताम् ६३ सुधापयसिदेवाग्नेगुणपक्षपयोमृदीतिवचनात् सर्पाणांपयोदानमिवतानुद्दिश्य ६४ आलीश्रोणीस्त्रियांपंक्तिरुभयोस्ततिरुच्यतइति ६५ उपसंचरैः समीपगमनादिनर्मव्यवहारैः ६६ कृतस्नेहाःछिन्नस्नेहाः कृञ्छेदनइतिधातुः । पूर्वंसंपन्नस्नेहाअधुनानष्टस्नेहाइत्यर्थः ६७ प्रणयस्यापायउपशमनंसंभवतीतिकातराःभीताः ६८ ६९ ७० ७१ ७२ समादेशादयोयेषांते । तथापिविफलैर्विशिष्टफलै विकल्पाः । विकल्पयोग्याः अभूवन् । कथंतत्राह तत्रेति तत्रापिहेतुमाह यत्पादेति । फलवैकल्येविशेषणविशिष्टकल्पनार्हाइति ७३ नन्वसुरादीनामपिशिवादिदेवार्चनादिसद्भावात्कथंतैर्विशिष्टफलंनावाप्तमित्याशंक्यश्रीहरिचरणारविंदप्रणामाभावान्नाप्तमित्याशयेनाह यदीति नृभिःपुरुषैः । पुरस्तादुद्यतेषुफलदानाभिमुखेषुदेवात्मजादिषुयदर्चनादिकं वित्तादिभिःक्रियते यदितद्यपितदसत्कर्माविशिष्टफलंनभवति कुतइतितत्राह उद्यतेष्विति । उत्कृष्टफलमुद्दिश्ययत्तेषूपरतेषु

तांश्रीमुखींकनककुंडलचारुकर्णनासाकपोलवदनांपरदेवताख्याम् ॥ संवीक्ष्यसंमुमुहुरुत्स्मितवीक्षणेनदेवासुराविगलितस्तनपट्टिकांताम् ६३ असुराणांसुधापानंसर्पाणामिवदुर्नयम् ॥ मत्वाजातिनृशंसानांनतान्व्यभजदच्युतः ६४ कल्पयित्वापृथक्पंक्तीरुभयेषांजगत्पतिः ॥ तांश्चोपवेशयामासस्वासुस्वासुचपंक्तिषु ६५ दैत्यान्गृहीतकलशोवंचयन्नुपसंचरैः ॥ दूरस्थान्पाययामासजरामृत्युहरंसुरान् ६६ तेपालयंतःसमयमसुराःस्वकृतंनृप ॥ तूष्णीमासन्कृतस्नेहाःस्त्रीविवादजुगुप्सया ६७ तस्यांकृतातिप्रणयाःप्रणयापायकातराः ॥ बहुमानेनचाबद्धानोचुःकिंचनविप्रियम् ६८ देवलिंगप्रतिच्छन्नःस्वर्भानुर्देवसंसदि ॥ प्रविश्यसोममपिबच्चंद्रार्काभ्यांचसूचितः ६९ चक्रेणक्षुरधारेणजहारपिबतःशिरः ॥ हरिस्तस्यकबंधस्तुसुधयाप्लावितोपतत् ॥ ७० शिरस्त्वमरतांनीतमजोग्रहमचीक्लृपत् ॥ यस्तुपर्वणिचंद्रार्कावभिधावतिवैरधीः ७१ पीतप्रायेमृतेदेवैर्भगवाँल्लोकभावनः ॥ पश्यतामसुरेंद्राणांस्वरूपंजगृहेविभुः ७२ एवंसुरासुरगणाःसमदेशकालहेत्वर्थयोगगतयोपिफलेविकल्पाः ॥ तत्रामृतंसुरगणाःफलमंजसापुर्यत्पादपंकजरजःश्रयणान्नदैत्याः ७३ यद्युज्यतेषुचसुकर्ममनोवचोभिर्देवात्मजादिषुनृभिस्तदसत्पुरस्तात् ॥ तैरेवसद्भवतियत्क्रियतेचतस्मिन्सर्वस्यतद्भवतिमूलनिषेचनंयत् ७४ इति श्रीभागवतेमहापुराणेअष्टमस्कंधेऽष्टमोध्यायः ॥ ८ ॥ श्रीशुकउवाच ॥ इतिदानवदैतेयानाविंदन्नमृतंनृप ॥ युक्ताःकर्मणियत्ताश्चवासुदेवपराङ्मुखाः १ साधयित्वामृतंराजन्पाययित्वामृतंसुरान् ॥ पश्यतांसर्वभूतानांययौगरुडवाहनः २

विशिष्टशक्त्यभावादिद्विरावृत्त्यायोजनीयं । तर्हिकथंकारंतद्भवतीतितत्राह तैरिति । यदीत्यनुवर्तते यदितैःपूर्वोक्तैर्वित्तादिभिरेवचास्मिन्हरौयत्कर्मक्रियतेतर्हितत्पूर्णफलंभवतिहरिभक्तिमात्रेणदेवाद्युद्दिष्टद्रव्यैस्तदर्चनाभावेकथंतत्पूर्णफलंस्यादितितत्राह सर्वस्येति । यन्मूलभूतस्यहरेरर्चनलक्षणं निषेचनंतत्सर्वस्यदेवतादेस्तन्निषेचनफलंभवति । हरिभक्तिमंतरेणशिवाद्यर्चनेनासुराणांविशिष्टफलंनाभूत्तस्मात्तद्भक्त्याभाव्यमितीदंमुक्तितमसोर्निदर्शनायोक्तमितिज्ञातव्यम् । देहात्मजादिष्वेवमहादराद्धरौतदभावादात्माममहनीयइतिवचनादित्यतोवाह यदीति देहात्मजादिष्विति केचित्पठंति तत्रैवंयोजनिका । पुरस्ताद्देहांतरावाप्तेःपूर्वमेवासन्वित्तादिव्ययएवनान्यद्भवत्यर्थःइति शेषं सर्वं ७४ इतिश्रीभागवतेअष्टमस्कंधेवि०क्०टीकायामष्टमोऽध्यायः ॥८ ॥ भगवत्प्रसादजातेनज्ञानेनपापप्रणाशोभवत्येवनान्येनेत्येतन्निदर्शनायदेवासुरयुद्धंवर्णयत्यध्यायद्वयेन । तत्रादौहरेरदर्शनप्रकारमाह इतीति १ ययावदृश्योभूदिति २

३ पायितावर्धिताः ४ उदन्वतःसमुद्रस्य रोधसितीरे ५ ६ ७ ८ तेषामारोहसाधनान्याह उष्ट्रैरित्यादिना । द्विजैः पक्षिभिः ९ खड्गैर्मृगविशेषैः अरुणैर्वनसत्वविशेषैः १० ११ १२ बार्हचामरैः पिच्छविरचितचामरैः १३ १४ वीचिमालाभिःयादसांजलजंतूनांवत्क्षयिनीयथा १५ १६ सांग्रामिकंयुद्धसाधनम् १७ १८ १९ २० २१ २२ सोमस्यामृतस्य २३ उत्सिक्तान्ब

सपत्नानांपरामृद्धिंदृष्ट्वाचादितिनंदनाः ॥ अमृष्यमाणाउत्पेतुर्देवान्प्रत्युद्यतायुधाः ३ ततःसुरगणाःसर्वेसुधयापीतयैधिताः ॥ प्रतिसंयुयुधुःशस्त्रैर्नारायणपरायणाः ४ तत्रदेवासुरोनामरणःपरमदारुणः ॥ रोधस्युदन्वतोराजन्तुमुलोरोमहर्षणः ५ तत्रान्योन्यंसपत्नास्तेसंरब्धमनसोरणे ॥ समासाद्यासिभिर्बाणैर्विजघ्नुर्विविधायुधैः ६ शंखतूर्यमृदंगानांभेरीडमरिणांमहान् ॥ हस्त्यश्वरथपत्तीनांनदतांनिःस्वनोभवत् ७ रथिनोरथिभिस्तत्रपत्तिभिःसहपत्तयः ॥ हयाहयैरिभैश्चेभाःसमसज्जतसंयुगे ८ उष्ट्रैःकेचिद्द्विजैःकेचिदपरेभिययुःखरैः ॥ केचिद्गौरमृगैर्ऋक्षैर्द्वीपिभिर्हरिभिर्भटाः ९ गृध्रैःकंकैर्बकैरन्येश्येनभासैस्तिमिंगिलैः ॥ शरभैर्महिषैःखड्गैर्गोवृषैर्गवयारुणैः १० शिवाभिराखुभिःकेचित्कृकलासैःशशैर्नरैः ॥ बस्तैरेकेकृष्णसारैर्हंसैरन्येचसूकरैः ११ अन्येजलस्थलखगैःसत्वैर्विकृतविग्रहैः ॥ सेनयोरुभयोराजन्विविशुस्तेग्रतोग्रतः १२ चित्रध्वजपटैराजन्नातपत्रैःसितामलैः ॥ महाधनैर्वज्रदंडैर्व्यजनैर्बार्हचामरैः १३ वातोद्धूततमोष्णीषैःसत्कैर्वर्मभूषणैः ॥ स्फुरद्भिर्विशदैःशस्त्रैःसुतरांसूर्यरश्मिभिः १४ देवदानववीराणांध्वजिन्यौपांडुनंदन ॥ रेजतुर्वीचिमालाभिर्यादसामिवसागरे १५ वैरोचनिर्बलिःसंख्येसोसुराणांचमूपतिः ॥ यानंवैहायसंनामकामगंमयनिर्मितम् १६ सर्वसांग्रामिकोपेतंसर्वाश्चर्यमयंप्रभो ॥ अप्रतर्क्यमनिर्देश्यंदृश्यमानमदर्शनम् १७ आस्थितस्तद्विमानाग्र्यंसर्वानीकाधिपैर्वृतः ॥ वालव्यजनछत्राग्र्यैरेजेचंद्रइवोदये १८ तस्यासन्सर्वतोयानैर्यूथानांपतयोसुराः ॥ नमुचिःशंबरोबाणोविप्रचित्तिरयोमुखः १९ द्विमूर्धाकालनाभोथप्रहेतिर्हेतिरिल्वलः ॥ शकुनिर्भूतसंतापोवज्रदंष्ट्रोविरोचनः २० हयग्रीवःशंकुशिराःकपिलोमेघदुंदुभिः ॥ तारकश्चक्रदृक्शुंभोनिशुंभोजंभउत्कलः २१ अरिष्टोरिष्टनेमिश्चमयश्चत्रिपुराधिपः ॥ अन्येपौलोमकालेयानिवातकवचादयः २२ अलब्धभागाःसोमस्यकेवलंक्लेशभागिनः ॥ सर्वएतेरणमुखेबहुशोनिर्जितामराः २३ सिंहनादान्विमुंचंतःशंखान्दध्मुर्महारवान् ॥ दृष्ट्वासपत्नानुत्सिक्तान्बलभित्कुपितोभृशम् २४ ऐरावतंदिक्करिणमारूढोविप्यतिस्वराट् ॥ यथास्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः २५ तस्यासन्सर्वतोदेवानानावाहध्वजायुधाः ॥ लोकपालाःसहगणैर्वाय्वग्निवरुणादयः २६ तेन्योन्यमभिसंसृत्यक्षिपंतोनामभिर्मिथः ॥ आह्वयंतोविशंतोग्रेयुयुधुर्द्वंद्वयोधिनः २७ युयोधबलिरिंद्रेणतारकेणदिवस्पतिः ॥ वरुणोहेतिनायुध्यन्मित्रोराजन्प्रहेतिना २८ यमस्तुकालनाभेनविश्वकर्मामयेनवै ॥ शंबरोयुयुधेत्वष्ट्रासवित्रातुविरोचनः २९

लगार्वितान् २४ स्रवत्प्रस्रवणश्च्योतत्प्रस्रावणं च्योतन्मदजलं । अन्यत्रनिरंतरस्यंदमानानिर्झरं अहर्पतिःसूर्यः २५ २६ २७ २८ २९

३० ३१ ३२ ३३ ३४ ३५ ३६ ज्ययामौर्व्याथासंआसनंयत्तद्धनुःतनुत्रंकवचम् ३७ ३८ उद्धृत्तंविपर्यस्तंराहितंवा दच्छदैरोष्ठैःसंप्रास्तृतासच्छादिता ३९ कबंधाःशिरोरहितदेहाः ४० ४१ ४२

अपराजितेननमुचिरश्विनौवृषपर्वणा ॥ सूर्योबलिसुतैर्देवोबाणज्येष्ठशतेनसः ३० राहुणाचतथासोमःपुलोम्नायुयुधेनलः ॥ निशुंभशुंभयोर्देवीभद्रकालीनराशनी ३१ वृषाकपिस्तुजंभेनमहिषेणविभावसुः॥इल्वलःसहवातापिर्ब्रह्मपुत्रैररिंदमः ३२कामदेवेनदुर्मर्षउत्कलोमातृभिःसह ॥ बृहस्पतिस्तूशनसानरकेणशनैश्चरः ३३ मरुतोनिवातकवचैःकालेयैर्वसवोऽमराः ॥ विश्वेदेवास्तुपौलोमैरुद्राक्रोधवशैःसह ३४ तएवमाजावसुराःसुरेंद्राद्वंद्वेनसंहत्यचयुद्धयमानाः ॥ अन्योन्यमासाद्यनिजघ्नुरोजसाजिगीषवस्तीक्ष्णशरांश्चचिक्षिपुः ३५ भुशुंडिभिश्चक्रगदार्ष्टिपट्टिशैःशक्त्युल्मुकैःप्रासपरश्वधैरपि ॥ निस्त्रिंशभल्लैःपरिघैःसमुद्गरैःसभिंडिपालैश्चशिरांसिचिच्छिदुः ३६ गजास्तुरंगाःसरथाःपदातयःसारोहवाहाविविधाविखंडिताः ॥ निकृत्तबाहूरुशिरोधरांघ्रयश्छिन्नध्वजेष्वासतनुत्रभूषणाः ३७ तेषांपदाघातरथांगचूर्णितादायोधनादुल्बणउच्छ्रितस्तदा ॥ रेणुर्दिशःखंद्युमणिंचछादयन्न्यवर्ततासृक्स्रुतिभिःपरिप्लुतः ३८ शिरोभिरुद्धूतकिरीटकुंडलैःसंरंभदृग्भिःपरिदष्टदच्छदैः ॥ महाभुजैःसाभरणैःसहायुधैःसंप्रास्तृताभूःकरभोरुभिर्बभौ ३९ कबंधास्तत्रचोत्पेतुःपतितैश्चशिरोक्षिभिः ॥ उद्यतायुधदोर्दंडैराधावंतोभटान्मृधे ४० बलिर्महेंद्रंदशभिस्त्रिभिरैरावतंशरैः ॥ चतुर्भिश्चतुरोवाहानेकेनारोहमार्छयत् ४१ सतानापततःशक्रस्तावद्भिःशीघ्रविक्रमः ॥ चिच्छेदनिशितैर्भल्लैरसंप्राप्तान्हसन्निव ४२ तस्यकर्मोत्तमंवीक्ष्यदुर्मर्षःशक्तिमाददे ॥ तांज्वलंतींमहोल्काभांहस्तस्थामच्छिनद्धरिः ४३ ततःशूलंततःप्रासंततस्तोमरमृष्टयः ॥ यद्यच्छस्त्रंसमादद्यात्सर्वंतदच्छिनद्विभुः ४४ ससर्जाथासुरींमायामंतर्धानगतोसुरः ॥ ततःप्रादुरभूच्छैलःसुरानीकोपरिप्रभो ४५ ततोनिपेतुस्तरवोदह्यमानादवाग्निना ॥ शिलाःसटंकशिखराश्चूर्णयंतोद्विषद्बलम् ४६ महोरगाःसमुत्पेतुर्दंदशूकाःसवृश्चिकाः ॥ सिंहव्याघ्रवराहाश्चमर्दयंतोमहासुरान् ४७ यातुधान्यश्चशतशःशूलहस्ताविवाससः ॥ छिंधिभिंधीतिवादिन्यस्तथारक्षोगणाविभो ४८ ततोमहाघनाव्योम्निगंभीरपरुषस्वनाः ॥ अंगारान्मुमुचुर्वातैराहताःस्तनयित्नवः ॥ ४९ सृष्टोदैत्येनसुमहान्वह्निःश्वसनसारथिः ॥ सांवर्तकइवात्युग्रोविबुधध्वजिनीमधाक् ५० ततःसमुद्रउद्वेलःसर्वतःप्रत्यदृश्यत ॥ प्रचंडवातैरुद्धूततरंगावर्तभीषणः ५१ एवंदैत्यैर्महामायैरलक्ष्यगतिभीषणैः ॥ सृज्यमानासुमायासुविषेदुःसुरसैनिकाः ५२ नतत्प्रतिविधिंयत्रविदुरिंद्रादयोनृप ॥ ध्यातःप्रादुरभूत्तत्रभगवान्विश्वभावनः ५३ ततःसुपर्णांसकृतांघ्रिपल्लवःपिशंगवासानवकंजलोचनः ॥ अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुंडलः ५४

हरिरिंद्रः ४३ ऋष्टयःऋष्टीः ४४ ४५ विटंकशिखराःउन्नतशृंगाःविस्तृतग्रावाणः ४६ महोरगाअजगराःदंदशूकाःदंशनशीलाःसर्पाः ४७ ४८ स्तनयित्नवः सनिर्घातामेघाः ४९ सांवर्तकःप्रलयाग्निः अधाक्अदहत् ५० उद्वेलःतीरमतिक्रांतः ५१ ५२ यत्रयदातदाध्यातः ५३ ५४

असुरकूटकर्मजाः असुरकपटकर्मजाताः अत्रकैमुत्यन्यायमाह हारिस्मृतिरितिसर्वविपद्विनाशिनीकिमुतहरिरितीति ५५ अहिनोत्‌आहितान्‌अमुंचत्‌ अरीनसुरान्वहतीत्यरिवाहः कुंभकारशब्दवद्‌णप्रत्ययांतः । आरिःसिंहोवाहोयस्यसतथा इभारिवाहइतिपाठेस्पष्टोर्थः ५६ आहत्यभ्रामयित्वांडजेंद्रोगरुडः । आद्योहरिररिणाचक्रेणनदतोरेःकालनेमेःशिरोच्छिनदित्यन्वयः । अच्छिनदितिक्रियापदशक्तेर्द्विवारंकालनेम्यादीन्हतवान्हरिरित्येषोर्थोभिविज्ञायते छिदिद्वैधीभावइतिद्वैधीभावश्रवणात्‌उशनाजीवयामासेत्युत्तरवाक्याच्चद्विवारंहतिरस्तिकालनेम्यादयःसर्वेहरिणानिहताअपि ॥ शुक्रेणोज्जीविताःसंतःपुनस्तेवैनिपातिताइतिवचनाच्चनिश्चितोयमर्थइति ५७॥ इतिश्रीभागवतेअष्टमस्कंधेवि०क्रु०टी०नवमोध्यायः ॥९॥ देवासुरयुद्धमुपक्रम्यहरिणाचक्रेणकालनेमेःशिरोच्छिनदित्युपसंहृतंतत्रामराममृताउतपलायिताः विनष्टमरणधर्माणांतेषांविनाशायोगात्पलायनमेवग्राह्यं भगवतानुगृहीतबलानांतदप्ययुक्तंअतस्तैःकिमकारीतितत्राह अथोइति। अनेनहरेरनुग्रहेणैवजयोन्यथापराजयइत्यय

तस्मिन्प्रविष्टेसुरकूटकर्मजामायाविनेशुर्महतांमहीयसि ॥ स्वाप्नोयथाहिःप्रतिबोधआगतेहारिस्मृतिःसर्वविपद्विमोक्षणी ५५ दृष्ट्वामृधेगरुडवाहमिहारिवाहआविध्यशूलमहिनोदथकालनेमिः ॥ तल्लीलयागरुडमूर्ध्निपतद्गृहीत्वातेनाहनन्नृपसवाहमरिंत्र्यधीशः ५६ मालीसुमाल्यतिबलौयुधिपेततुर्यच्चक्रेणकृत्तशिरसावथमाल्यवांस्तम्‌ ॥ आहत्यतिग्मगदयाहनदंडजेंद्रंतावच्छिरोच्छिनदरेर्नदतोरिणाद्यः ५७॥ इतिश्रीभागवतेअष्टमस्कंधेनवमोध्यायः ॥ ९ ॥

॥ श्रीशुकउवाच ॥ अथोसुराःप्रत्युपलब्धचेतसःपरस्यपुंसःपरयानुकंपया ॥ जघ्नुर्भृशंशक्रसमीरणादयस्तांस्तान्रणेयैरभिसंहताःपुरा १ वैरोचनायसंरब्धोभगवान्पाकशासनः ॥ उदयच्छद्यदावज्रंप्रजाहाहेतिचुक्रुशुः २ वज्रपाणिस्तमाहेदंतिरस्कृत्यपुरःस्थितम्‌ ॥ मनस्विनंसुसंपन्नंविचरंतंमहामृधे ३ नटवन्मूढमायाभिर्मायेशान्नोजिगीषसि ॥ जित्वाबालान्निबद्धाक्षान्नटोहरतितद्धनम्‌ ४ आरुरुक्षंतिमायाभिरुत्सिसृक्षंतियेदिवम्‌ ॥ तान्दस्यून्विधुनोम्यज्ञान्पूर्वस्माच्चपदादधः ५ सोहंदुर्मायिनस्तेद्यवज्रेणशतपर्वणा ॥ शिरोहरिष्येमंदात्मन्घटस्वज्ञातिभिःसह ६ ॥ बलिरुवाच ॥ संग्रामेवर्तमानानांकालनोदितकर्मणाम्‌ ॥ कीर्तिर्जयोऽजयोमृत्युःसर्वेषांस्युरनुक्रमात्‌ ७ तमिमंकालरशनंजनाःपश्यंतिसूरयः ॥ नहृष्यंतिनशोचंतितत्रयूयमपंडिताः ८ नवयंमन्यमानानामात्मानंतत्रसाधनम्‌ ॥ गिरोवःसाधुशोच्यानांगृह्णीमोमर्मताडनाः ९ ॥ श्रीशुकउवाच ॥ इत्याक्षिप्यविभुंवीरोनाराचैर्वीरमर्दनः ॥ आकर्णपूर्णैरहनदाशुगैराहतंपुनः १० एवंनिराकृतोदेवोवैरिणातथ्यवादिना ॥ नामृष्यत्तदधिक्षेपंतोत्राहतइवद्विपः ११

अर्थःस्पष्टितइतिध्वनयति १ तत्रबलिवासवयोःप्रसक्तंयुद्धंकिमभूदत्राह वैरोचनायेति २ तत्रशत्रुंप्रहरिष्यतायोयेनस्वपौरुषंप्रकाश्यप्रहर्तव्यमितिन्यायमनुसंदधानोवज्रमुद्धृत्यवज्रपाणिस्तंवक्ति वज्रपाणिरिति ३ स्वपौरुषप्रकटनमपिप्रतिभटनिंदापूर्वकमित्यतस्तंनिंदति जित्वेति । कश्चित्खलइंद्रजालादिनानिबद्धाक्षान्‌बालान्जित्वानभआकाशंवाच्छाद्यतेषांधनंयथाहरति तथायेमायाभिःकपटैसिश्नन्तैः । दिवंपरलोकमारुरुक्षंति ततोप्युत्सिसृक्षंतिऊर्ध्वंगंतुमिच्छंतिअहंतान्दस्यून्पूर्वस्माच्चकवर्तिपदादधोविधुनोमि चशब्दात्ततस्ततोविधूयाधोनिक्षिपामिकदाप्यूर्ध्वदर्शनरहितान्करोमीत्यर्थः । यत्रनायंपच्यवमुपच्यवंचशिक्षतइत्यत्रपथोपमालुप्तातथात्रापि मायाभिस्तूत्सिसृप्संतमिंद्रद्यामारुरुक्षतः अवदस्यूनरधूनुथाः इत्यृचप्रमाणयति ४ ५ ६ ७ रशनंरज्जुं. ८ तत्रजयादौआत्मानंस्वंकारणंमन्यमानानांवोगिरः साध्वितिनगृह्णीमः । मर्मण्येवताडनंयासांतास्तथोक्ताः ९ १० ११

११ १३ १४ १५ १६ १७ १८ १९ २० २१ शताभ्यांशतद्वयेनसंधानयुक्तमोक्षेणमौर्व्यासंधानंततोमोक्षणंचसकृद्युगपदितितत्कर्मकरणमपश्यतामितिशेषः २२ २३ २४ भिन्ननवःभिन्ननावः २५ तुराषांडिद्रःआखंडलस्तुराषाडितिहलायुधः २६ २७ २८ २९ ३० ३१ हरिरिंद्रः आकाशतलेआपतन्महावेगंशूलमिषुभिःसहस्रधानिचिच्छेदेनितरामच्छिनत्कंधरेकंठे शिरेहरंछिदंस्तमहन

प्राहरत्कुलिशंतस्मा अमोघंपरमर्दनम् ॥ सयानोन्यपतद्भूमौछिन्नपक्षइवाचलः १२ सखायंपतितंदृष्ट्वाजंभोबलिसखःसुहृत् ॥ अभ्ययात्सौहृदंसख्युर्हतस्यापिस्वमाचरन् १३ ससिंहवाहआसाद्यगदामुद्यम्यरंहसा ॥ जत्रावताडयच्छक्रंगजंचसुमहाबलः १४ गदाप्रहारव्यथितोभृशंविह्वलितोगजः ॥ जानुभ्यांधरणींस्पृष्ट्वाकश्मलंपरमंययौ १५ ततोरथोमातलिनाहरिभिर्दशशतैर्वृतः ॥ आनीतोद्विपमुत्सृज्यरथमारुरुहेविभुः १६ तस्यतत्पूजयन्कर्मयन्तुर्दानवसत्तमः ॥ शूलेनज्वलतातंतुस्मयमानोहनन्मृधे १७ सेहेरुजंसुदुर्मर्षंसत्वमालंब्यमातलिः ॥ इंद्रोजंभस्यसंक्रुद्धोवज्रेणापाहरच्छिरः १८ जंभंश्रुत्वाहतंतस्यज्ञातयोनारदादृषेः ॥ नमुचिश्चबलःपाकस्तत्रापेतुस्त्वरान्विताः १९ वचोभिःपरुषैरिंद्रमर्दयंतोस्यमर्मसु ॥ शरैरवाकिरन्मेघाधाराभिरिवपर्वतम् २० हरीन्दशशतान्याजौहर्यश्वस्यबलःशरैः ॥ तावद्भिरर्दयामासयुगपल्लघुहस्तवान् २१ शताभ्यांमातलिंपाकोरथंसावयवंपृथक् ॥ सकृत्संधानमोक्षेणतदद्भुतमभूद्रणे २२ नमुचिःपंचदशभिःस्वर्णपुंखैर्महेषुभिः ॥ आहत्यव्यनदत्संख्येसतोयइवतोयदः २३ सर्वतःशरकूटेनशक्रंसरथसारथिम् ॥ छादयामासुरसुराःप्रावृट्सूर्यमिवांबुदाः २४ अलक्षयंतस्तमतीवविह्वलाविचुक्रुशुर्देवगणाःसहानुगाः ॥ अनायकाःशत्रुबलेननिर्जिताबणिक्पथाभिन्ननावोयथार्णवे २५ ततस्तुराषाडिषुबद्धपंजराद्विनिर्गतःसाश्वरथध्वजाग्रणीः ॥ बभौदिशःखंपृथिवींविरोचयन्स्वतेजसासूर्यइवक्षपात्यये २६ निरीक्ष्यपृतनांदेवःपरैरभ्यर्दितांरणे ॥ उदयच्छद्रिपुंहंतुंवज्रंवज्रधरोरुषा २७ सतेनैवाष्टधारेणशिरसीबलपाकयोः ॥ ज्ञातीनांपश्यतांराजन्जहारजनयन्भयम् २८ नमुचिस्तद्वधंदृष्ट्वाशोकामर्षरुषान्वितः ॥ जिघांसुरिंद्रंनृपतेचकारपरमोद्यमम् २९ अश्मसारमयंशूलंघंटावद्धेमभूषणम् ॥ प्रगृह्याभ्यद्रवत्क्रुद्धोनमुचिर्दानवोत्तमः ३० तदाविध्यमहावीर्योहतोसीतिविसर्जयन् ॥ प्राहिणोद्देवराजायनिनदन्मृगराडिव ३१ तदापतद्गगनतलेमहाजवंविचिच्छिदेहरिरिषुभिःसहस्रधा ॥ तमाहनन्नृपकुलिशेनकंधरेरुषान्वितस्त्रिदशपतिःशिरोहरन् ३२ ततोस्यनत्वचमपिवज्रऊर्जितोबिभेदयःसुरपतिनौजसेरितः ॥ तदद्भुतंपरमतिवीर्यवृत्रभित्तिरस्कृतोनमुचिशिरोधरत्वचा ३३ तस्मादिंद्रोबिभेच्छत्रोर्वज्रःप्रतिहतोयतः ॥ किमिदंदैवयोगेनभूतंलोकविमोहनम् ३४ येनमेपूर्वमद्रीणांपक्षच्छेदःप्रजात्यये ॥ कृतोनिविशतांभारैःपतत्रैःपततांभुवि ३५ तपःसारमयंत्वाष्ट्रंवृत्रोयेनविपाटितः ॥ अन्येचापिबलोपेताःसर्वास्त्रैरक्षतत्वचः ३६ सोयंप्रतिहतोवज्रोमयामुक्तोसुरेल्पके ॥ नाहंतदाददेदंडंब्रह्मतेजोप्यकारणम् ३७

दित्यन्वयः ३२ ततःकिमभूत्तत्राह ततइति तिरस्कृतोधिकृतः ३३ भूतंप्रहलक्षणम् ३४ पतत्रैःपततांभारैः भुविनिविशतामद्रीणाम् ३५ तपःसारंअयामितिपदच्छेदः ३६ ३७

३८ कुतोनार्हतिवधमत्राह मयेति कोयंवरइतितत्राह मृत्युरिति ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ तेचअनुचरैःसंगीयमानाइत्यर्थःसंरंभंद्वेषोद्रेकम् ४७ ४८ ४९ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेवि०क्र०टी०दशमोऽध्यायः ॥ १० ॥ भगवज्ज्ञानसाधनभक्तिविधानार्थंदेवोत्तमरुद्रादिसंभाव्यमहिमावर्ण्यतेऽस्मिन्नध्याये । तत्रविष्णुशिवयोःसंवादप्रकारंवक्तुमाह वृषध्वजइति हरिःसुरगणान्सोममपाययदितियदिदंनिशम्य १ २ सःउमया सोषामविंदत्सस्वासोअग्निसोअर्केणविबाधेनमांसिसेद्भवोपमवथयूयामिंद्रश्चमर्त्यइत्यादिवत् ३ हेतुर्निमित्तकारणंअदृष्टादिवन्नेत्याह आत्मेति नजीवइत्याह ईश्वरइति ४ ईश्वरश्चेच्छिवःकिंनतस्यस्वातंत्र्येणोपास्यमानत्वासंभवात् अस्यमोक्षार्थिभिस्तथात्वादित्याह तवेति ५ उपास्यमानमपिशबलंकिंनस्यादितितत्राह त्वंब्रह्मेति । ब्रह्मपदार्थमाह

इतिशक्रंविषीदंतमाहवागशरीरिणी ॥ नायंशुष्कैरथोनार्द्रैर्वधमर्हतिदानवः ३८ मयास्मैयद्वरोदत्तोमृत्युर्नैवार्द्रशुष्कयोः ॥ अतोन्यश्चिंतनीयस्तेउपायोमघवन्रिपोः ३९ तांदैवींगिरमाकर्ण्यमघवान्सुसमाहितः ॥ ध्यायन्फेनमथापश्यदुपायमुभयात्मकम् ४० नशुष्केणनचार्द्रेणजहारनमुचेःशिरः ॥ तंतुष्टुवुर्मुनिगणामाल्यैश्चावाकिरन्विभुम् ४१ गंधर्वमुख्यौजगतुर्विश्वावसुपरावसू ॥ देवदुंदुभयोनेदुर्नर्तक्योननृतुर्मुदा ४२ अन्येप्येवंप्रतिद्वंद्वान्वाय्वग्निवरुणादयः ॥ सूदयामासुरस्त्रौघैर्मृगान्केसरिणोयथा ४३ ब्रह्मणाप्रेषितोदेवान्देवर्षिर्नारदोनृप ॥ वारयामासविबुधान्दृष्ट्वादानवसंक्षयम् ४४ नारदउवाच ॥ भवद्भिरमृतंप्राप्तंनारायणभुजाश्रयैः ॥ श्रियासमेधिताःसर्वेउपारमतविग्रहात् ४५ श्रीशुकउवाच ॥ येऽवशिष्टारणेतस्मिन्नारदानुमतेनते ॥ बलिंविपन्नमादायअस्तंगिरिमुपागमन् ४६ संयम्यमन्युसंरंभंमानयंतोमुनेर्वचः ॥ गीयमानाअनुचरैर्ययुःसर्वेत्रिविष्टपम् ४७ तत्रापिनष्टवयवान्विद्यमानशिरोधरान् ॥ उशनाजीवयामाससंजीविन्यास्वविद्यया ४८ बलिश्चोशनसास्पृष्टःप्रत्यापन्नेंद्रियस्मृतिः ॥ पराजितोपिनाखिद्यल्लोकतत्त्वविचक्षणः ॥ ४९ इतिश्रीभागवतेअष्टमस्कंधेदशमोऽध्यायः ॥ १० ॥ श्रीशुकउवाच ॥ वृषध्वजोनिशम्येदंयोषिद्रूपेणदानवान् ॥ मोहयित्वासुरगणान्हरिःसोमममपाययत् १ वृषमारुह्यगिरिशःसर्वभूतगणैर्वृतः ॥ सहदेव्याययौद्रष्टुंयत्रास्तेमधुसूदनः २ सभाजितोभगवतासादरंसोमयामवः ॥ सूपविष्टउवाचेदंप्रतिपूज्यस्मयन्हरिम् ३ देवदेवजगद्व्यापिन्जगदीशजगन्मय ॥ सर्वेषामेवभावानांत्वमात्माहेतुरीश्वरः ४ तवैवचरणांभोजंश्रेयस्कामानिराशिषः ॥ विसृज्योभयतःसंगंमुनयःसमुपासते ५ त्वंब्रह्मपूर्णममृतंविगुणंविशोकमानंदमात्रमविकारमनन्यदन्यत् ॥ विश्वस्यहेतुरुदयस्थितिसंयमानामात्मेश्वरश्चतदुपेक्षतयानपेक्षः ६

पूर्णमिति । अविनाशिनःपूर्णत्वंयुक्तमित्याह अमृतमिति । अमृतत्वंकुतइतितत्राह विगुणमिति । अतएवविशोकंआनंदमात्रमतोपिशोकोनास्त्यरयषड्विकाररहितंएतादृशमन्यन्नास्तीत्याह अनन्यदिति स्वगतभेदविवर्जितंवाअन्यज्जगतइतिशेषःसर्वस्माद्भिन्नमित्यर्थः । जगत्कारणस्यतदुदासीनस्यचैकत्वप्रकटनायपुनरुक्तमाह विश्वस्येति । एवंविधब्रह्मप्रकृत्यादिकमपेक्ष्यापिकर्तुंसमर्थइत्याह तदुपेक्षतयेति ६

एतत्कथमितितत्राह एकइति । यथाकुंडलाद्यात्मनाकृतंप्रकृत्यात्मनात्वकृतंस्वर्णमेकमेवेहस्वर्णेवस्तुतोभेदोनास्ति तथासदादिवस्तुषुस्थित्वात्तत्तत्स्वभावप्रवर्तकत्वेनसदादिशब्दवाच्यस्त्वमप्येकएव इ दमपिसामर्थ्याभावे नयुक्तमथोनिरतिशयसामर्थ्यमस्यावगम्यतइतिभावः स्थानभेदादेकस्यपरमात्मनोभेदकल्पनमज्ञानमूलमित्याह अज्ञानतइति जनैरज्ञानतस्त्वयिविकल्पोभेदोविहितोयस्मात्तस्मा दवस्तुभूतइतिशेषः विहतइतिपाठेअज्ञानतस्त्वयिविकल्पइतियस्मात्तस्माद्विहतोनष्टइत्यर्थःभेदकल्पनायांकामाप्तिरितितत्राह गुणेति । गुणानांव्यतिकरोमिथःकार्यार्थसमवायविशेषोयस्मात्सतत्त त्कार्येषुतत्तत्प्रवर्तकत्वेनतत्स्थत्वात्तदाशंकेतिभावः। ननुस्वतोभेदाभावेप्युपाधिभेदात्सस्यादितितत्राह निरुपाधिकइति । उपाधिसद्भावेतद्भेदात्सोस्तीति शंकितुंशक्यते सएवनास्तिआनंदमात्रमितिनि र्धारितत्वात् । पुनर्वचनंमंदाशंकानिवारणार्थमिति ७ एकस्यनानामतविषयत्वंनभिन्नस्येत्याह त्वामिति । केचिद्वेदांतिनःत्वांब्रह्मेत्यवयंत्यवगच्छंतिएकेस्मार्ताःधारकत्वाद्धर्मं एकेपौराणिकाः परेशंत्वां सदसतोःपरंपुरुषं । अन्येपांचरात्रिकाःत्वांविमलोत्कर्षणीज्ञानेत्यादिनवशक्तियुतंपरंवदंति केचिदेकांतिनःत्वामव्ययमात्मतंत्रंमहापुरुषमभिवदंतीत्यन्वयः ८ तद्विषयज्ञानसामग्र्यभावान्नानात्वक

एकस्त्वमेवसदसद्द्वयमद्वयंचस्वर्णंकृताकृतमिवेहनवस्तुभेदः ॥ अज्ञानतस्त्वयिजनैर्विहितोविकल्पोयस्माद्गुणव्यतिकरोनिरुपाधिकश्च ७ त्वांब्रह्मकेचि दवयंत्युतधर्ममेकएकेपरंसदसतोःपुरुषंपरेशम् ॥ अन्येवदंतिनवशक्तियुतंपरंत्वांकेचिन्महापुरुषमव्ययमात्मतंत्रम् ८ नाहंपरायुर्ऋषयोनमरीचिमुख्या जानंतियद्विरचितंखलुसत्वसर्गाः ॥ यन्माययामुषितचेतसईशदैत्यमर्त्यादयःकिमुतशश्वदभद्रवृत्ताः ९ सत्वंसमीहसिततःस्थितिजन्मनाशान्भूतेहितं चजगतोभवबंधमोक्षौ ॥ वायुर्यथाविशतिखंचचराचराख्यंसर्वंत्वदात्मकतयावगमोनुतिस्ते १० अवतारामयाद्दष्टारममाणस्यतेगुणैः ॥ सोयंतद्द्रष्टु मिच्छामियत्तेयोषिद्वपुर्धृतम् ११ येनसंमोहितादैत्याःपायिताश्चामृतंसुराः ॥ तद्दिदृक्षवआयाताःपरंकौतूहलंहिनः १२ श्रीशुकउवाच ॥ एवमभ्यर्थि तोविष्णुर्भगवान्शूलपाणिना ॥ प्रहस्यभावगंभीरंगिरिशंप्रत्यभाषत १३ ॥ श्रीभगवानुवाच ॥ कौतूहलायदैत्यानांयोषिद्वेषोमयाकृतः ॥ पश्यता सुरकार्याणिहृतेपीयूषभाजने १४ तत्तेहंदर्शयिष्यामिदिदृक्षोःसुरसत्तम ॥ तत्कामिनांचमंतव्यंसंकल्पप्रभवोदयम् १५ श्रीशुकउवाच ॥ इतिब्रुवा णोभगवांस्तत्रैवांतरधीयत ॥ सर्वतश्चारयंश्चक्षुर्भवआस्तेसहोमया १६ ततोददर्शोपवनेवरस्त्रियंविचित्रपुष्पारुणपल्लवद्रुमे ॥ विक्रीडतींकंदुकली लयालसद्दुकूलपर्यस्तनितंबमेखलाम् १७

ल्पनाइत्याशयेनाह नाहमिति । सत्वसर्गाःसात्विकाःअत्रापिनिमित्तमाह यन्माययेति ९ जन्मस्थित्यादीनांभिन्नकर्तृत्वेननानात्वंकिंनस्यादितितत्राह सत्वमिति । योब्रह्माद्यविज्ञातस्वरूपः । सज गतः स्थितिजन्मनाशान्भूतैरीहितंचबंधमोक्षावपिसमीहसिकरोषिहियस्माच्चस्मात्नानात्मकत्वंभ्रांतिरितिभावः नन्वासुकल्पनास्त्वेकविषयाततोन्याकिंतवस्तुतिरितितत्राह वायुरिति । यथावायुःखंच राचराख्यंसर्वंप्रविशति ततोभिन्नश्चतथासर्वस्यत्वदात्मकतयात्वद्व्याप्तत्वेनावगमोज्ञानंतेतवनुतिःस्तुतिःस्यादित्यन्वयः । अनेनधर्मादिप्रवर्तकत्वेनतत्तच्छब्दवाच्यत्वावगमःस्तुतिरित्युक्तंभवति १० तवस्तुत्याकोभिप्रायइतितत्राह अवताराइति अस्तुदृष्टिस्ततः किमिदानीमपेक्षितमितितत्राह सोहमिति ११ १२ १३ १४ संकल्पप्रभवस्यकामस्योदयोयस्माद्वपुषस्तत्तथा तद्वपुःकामिनीनां चमंतव्यमितिप्रयोगोगंतव्यातेवसतिरलकेतिवत्कृद्योगेषष्ठी । चशब्दादकामिनामितिग्राह्यम् १५ १६ लसंतीनितंबेपर्यस्तापरिवृतादुकूलोपरिमेखलायस्याःसातथाताम् १७

आवर्तनमवाङ्ग्मनमुद्वर्तनमुन्नमनंताभ्यांकंपितयोरारव्यचंचलयोस्तनयोर्गुणतः प्रकृष्टहारस्यचोरुभरैः । पदेपदेमध्यप्रदेशेभज्यमानामिवस्थितांततस्ततस्ततस्तत्रतत्र चलत्पदपल्लवंनयंतींप्रचालयंतीं १८ भ्रमतः कंदुकस्यचापलैःचलभावैःप्रोद्विग्नेचंचलेतारेकनीनिकेययोस्तेप्रोद्विग्नतारेतेचायतेचलोलेचलोचनेयस्याःसातथातां स्वकर्णयोर्विभ्राजितेच लोलकुंडलेचस्वकर्णविभ्राजितलोलकुंडलेताभ्यांःउल्लसद्भ्यां कपोलाभ्यांमलकैश्चमंडितमाननंयस्याःसा तथाताम् १९ संनह्यतींबध्नतींआत्ममाययास्वरूपशोभावैचित्र्येण २० व्रीडासहितेन स्मितेनस्फुटेनप्रफुल्लेनविसृष्टेनदिक्षुमुक्तेनचकटाक्षेणमूढः स्त्रीप्रेक्षण समीक्षणाभ्यांनिवृतआह्लादितआत्माथस्यसतथासः २१ स्त्रीरुद्रंपश्यतिरुद्रःस्त्रियंपश्यतीतिभावेनतंकंदुकमनुव्रजंत्याःस्त्रियः २२ विलज्जंत्यांलज्जाभावंकुर्वत्याम् २३ २४ नान्वतिष्ठतना

आवर्त्तनोद्वर्तनकंपितस्तनप्रकृष्टहारोरुभरैःपदेपदे ॥ विभज्यमानामिवमध्यतश्चलत्पदप्रवालंनयतींततस्ततः १८ दिक्षुभ्रमत्कंदुकचापलैर्भृशंप्रोद्विग्नतारायतलोललोचनाम् ॥ स्वकर्णविभ्राजितलोलकुंडलोल्लसत्कपोलालकमंडिताननाम् १९ श्लथद्दुकूलांकबरींचविच्युतांसनह्यतींवामकरेणवल्गुना ॥ विनिघ्नतीमन्यकरेणकंदुकांविमोहयंतींजगदात्ममायया २० तांवीक्ष्यदेवइतिकंदुकलीलयेषद्व्रीडास्फुटस्मितविसृष्टकटाक्षमूढः ॥ स्त्रीप्रेक्षणप्रतिसमीक्षणविर्वृतात्मानात्मानमंतिकउमांस्वगणांश्चवेद २१ तस्याःकराग्रात्सतुकंदुकोयदागतोविदूरंतमनुव्रजंत्याः ॥ वासःससूक्ष्मंलघुमारुतोहरद्भवस्यदेवस्यकिलानुपश्यतः २२ एवंतांरुचिरापांगींदर्शनीयांमनोरमाम् ॥ दृष्ट्वातस्यांमनश्चक्रेविलज्जंत्यांभवःकिल २३ तयापहृतविज्ञानस्तत्कृतस्मरविह्वलः ॥ भवान्याअपिपश्यंत्यागतह्रीस्तत्पदंययौ २४ सातमायांतमालोक्यविवस्त्राव्रीडिताभृशम् ॥ निलीयमानावृक्षेषुहसंतीनान्वतिष्ठत २५ तामन्वगच्छद्भगवान्भवःप्रमथितेंद्रियः ॥ कामस्यचवशंनीतःकरेणुमिवयूथपः २६ सोनुव्रज्यातिवेगेनगृहीत्वानिच्छतींस्त्रियम् ॥ केशबंधउपानीयबाहुभ्यांपरिषस्वजे २७ सोपगूढाभगवताकरिणाकरिणीयथा ॥ इतस्ततःप्रसर्पंतीविप्रकीर्णशिरोरुहा २८ आत्मानंमोचयित्वांगसुरर्षभभुजांतरात् ॥ प्राद्रवत्साथुश्रोणीमायादेवविनिर्मिता २९ तस्यासौपदवींरुद्रोविष्णोरद्भुतकर्मणः ॥ प्रत्यपद्यतकामेनवैरिणाचविनिर्जितः ३० तस्यानुधावतोरेतश्चस्कंदामोघरेतसः ॥ शुष्मिणोयूथपस्येववासितामनुधावतः ३१ यत्रयत्रापतन्मह्यांरेतस्तस्यमहात्मनः ॥ तानिरुद्रस्यहेम्नश्चक्षेत्राण्यासन्महीपते ३२ सरित्सरःसुशैलेषुवनेषूपवनेषुच ॥ यत्रक्वचासन्नृषयस्तत्रसन्निहितोहरः ३३ स्कन्नेरेतसिसोपश्यदात्मानंदेवमायया ॥ जडीकृतंनृपश्रेष्ठसन्यवर्ततकश्मलात् ३४ अथावगतमाहात्म्यआत्मनोजगदात्मनः ॥ अपरिज्ञेयवीर्यस्यनमेनेतदुदाहृतम् ३५ तमविक्लवमव्रीडमालक्ष्यमधुसूदनः ॥ उवाचपरमप्रीतोबिभ्रत्स्वांपौरुषींतनुम् ३६ श्रीभगवानुवाच ॥ दिष्ट्यात्वंविबुधश्रेष्ठस्वांनिष्ठामात्मनास्थितः ॥ यतोदुस्तरयास्वैरंमोहितोस्यंगमायया ३७

नुकूलाभूत् २५ २६ २७ २८ २९ वैरिणापुरुषार्थविरोधिनाविरुद्धप्रेरणावतावा ३० शुष्मिणोवीर्यवतःवासितांमैथुनेच्छावतींकरेणीम् ३१ रुद्रस्यक्षेत्राणिहेम्नश्चक्षेत्राणिस्वर्णाकाराण्यासन् ३२ क्वचयत्रक्वचसरिदादिषुरेतःक्षेत्रेषुऋषयआसन् तत्रभवश्चसन्निहितोभवत् ३३ ३४ बुद्धिभ्रंशकरंकश्मलंनिवृत्तमितियस्मादथतस्मात्तदुदाहृततांगाम्योक्तिम् ३५ अविक्लवंस्वस्थंअव्रीडंकामजनकलज्जारहितं ३६ स्वनिष्ठांभक्तिलक्षणां आत्मनामनसा कुतइतितत्राह यतइति ३७

दुरंतेजीवराशौकश्चिन्मायांतरेत्वैचित्र्यादितितत्राहकस्तेत्वदिति । विषयेविषक्तः येयेविषयपाशबंधकास्तांस्तान्भावान्कश्चिद्धीरः प्रत्यगात्मानमैक्षतेतिश्रुतेःमायावरणपटूनांसद्भावात्कथंकोन्वि
त्याक्षिप्यतइतितत्राह दुस्तरामिति ३८ मदनुग्रहवतःसुतरेत्याह सेयमितिभागशःएकदेशेनापि ३९ ४० ४१ ४२ ४३ ४४ भागशएकदेशेनापिउत्तमश्लोकस्यहरेर्गुणानुवर्णनंस
मस्तसंसारपरिभ्रमविनाशनमितियद्यस्मात्तस्मान्निरंतरमेतदनुशृण्वतःकीर्तयतःपुरुषस्यसमुद्यमःसमीचीनःप्रयत्नोजातुनरिष्यतेननश्यति रीङ्क्षये ४५ निरंतरमनुस्मरणार्थंपूर्वोक्तगुणाविशिष्टत्वेन
तंश्रीनारायणंनमति असदविषयमिति योभावेनभक्त्यागम्यंप्राप्यंचासतामभक्तानामविषयमंघ्रिंप्रपन्नानमरवर्यान्सिंधोर्मथनोद्भूतममृतमाशयदपाययत्कीदृशःकपटयुवतिवेषः सुरारीन्असुरान्मोह

कोनुमेतितरेन्मायांविषक्तस्त्वदृतेपुमान् ॥ तांस्तान्विसृजतींभावान्दुस्तरामकृतात्मभिः ३८ सेयंगुणमयीमायानत्वामभिभविष्यति ॥ मयासमेताका
लेनकालरूपेणभागशः ३९ ॥ श्रीशुकउवाच ॥ एवंभगवताराजन्श्रीवत्सांकेनसत्कृतः ॥ आमंत्र्यतंपरिक्रम्यसगणःस्वालयंययौ ४० आत्मांशभूतां
तांमायांभवानींभगवान्भवः ॥ शंसतामृषिमुख्यानांप्रीत्याचष्टाथपार्वतीम् ४१ अपिव्यपश्यस्त्वमजस्यमायांपरस्यपुंसःपरदेवतायाः ॥ अहंकलाना
मृषभोविमुह्येययावशोन्येकिमुतास्वतंत्राः ४२ यंमामपृच्छस्त्वमुपेत्ययोगात्समाःसहस्रांतउपारतंवै ॥ सएषसाक्षात्पुरुषःपुराणोनयत्रकालोविशते
नवेदः ४३ ॥ श्रीशुकउवाच ॥ इतितेभिहितस्तातविक्रमःशार्ङ्गधन्वनः ॥ सिंधोर्निर्मथनेयेनधृतःपृष्ठेमहाचलः ४४ एतन्मुहुःकीर्तयतोनुशृण्वतोनरिष्य
तेजातुसमुद्यमःक्वचित् ॥ यदुत्तमश्लोकगुणानुवर्णनंसमस्तसंसारपरिश्रमापहम् ४५ असदविषयमंघ्रिंभावगम्यंप्रपन्नानमृतममरवर्यानाशयत्सिंधुमथ्य
म् ॥ कपटयुवतिवेषोमोहयन्यःसुरारीन्तमहमुपसृतानांकामपूरंनतोस्मि ४६ ॥इतिश्रीभागवतेअष्टमस्कंधेएकादशोध्यायः ॥११॥ श्रीशुकउवाच ॥
मनुर्विवस्वतःपुत्रःश्राद्धदेवइतिश्रुतः ॥ सप्तमोवर्तमानोयस्तदपत्यानिमेशृणु १ इक्ष्वाकुर्नभगश्चैवधृष्टःशर्यातिरेवच ॥ नरिष्यंतोथनाभागःसप्तमोदिष्ट
उच्यते २ करूषश्चपृषध्रश्चदशमोवसुमान्स्मृतः ॥ मनोर्वैवस्वतस्यैतेदशपुत्राःपरंतप ३ आदित्यावसवोरुद्राविश्वेदेवामरुद्गणाः ॥ अश्विनावृभवोरा
जन्निंद्रस्तेषांपुरंदरः ४ कश्यपोत्रिर्वसिष्ठश्चविश्वामित्रोथगौतमः ॥ जमदग्निर्भरद्वाजइतिसप्तर्षयःस्मृताः ५ अत्रापिभगवज्जन्मकश्यपाददितेरभूत् ॥ आ
दित्यानामवरजोविष्णुर्वामनरूपधृक् ६ संक्षेपतोमयोक्तानिसप्तमन्वंतराणिते ॥ भविष्याण्यथवक्ष्यामिविष्णोःशक्त्यन्वितानिच ७ विवस्वतश्चद्वेजा
येविश्वकर्मसुतेउभे ॥ संज्ञाछायाचराजेंद्रयेप्रागभिहितेतव ८ तृतीयावडवामतासांसंज्ञासुतास्त्रयः ॥ यमोयमीश्राद्धदेवश्छायायाश्चसुताञ्छृणु ९

यन्उपसृतानांशरणंगतानांपुंसांकामपूरंअभीष्टदंतमिमंश्रीनारायणंनतोस्मीत्यन्वयःअनेनैवंविधेभगवतिभक्तिःकर्तव्येतिसिद्धमित्युक्तंभवति ४६ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेवि०कृ०टीकायांए
कादशोध्यायः ॥ ११ ॥ प्रासंगिकंसमाप्यावशिष्टश्राद्धदेवादिमनुकथाकथनेनहरेर्माहात्म्यमेववर्णयतिकतिपयैरुत्तरैरध्यायैः तत्रश्राद्धदेवःकस्यपुत्रइतितत्राह मनुरिति १ श्राद्धदेवस्यापत्यानितत्र
देवनामानिसप्तऋषिनामानिहरेरवतारविशेषंचवक्ति इक्ष्वाकुरित्यादिना २ ३ ४ ५ ६ मंदानांप्रमेयविज्ञानार्थंउत्तरमन्वंतराणिप्रतिजानीते भविष्याणीति ७ ८ तासांसंज्ञाछायावडवानांमध्येसंज्ञा
सुताएतइत्याह यमइति ९

१० ११ १२ बलेरिंद्रपदानंतरंकासिद्धिरितितत्राह दत्त्वेमामिति पदत्रयंयाचमानायविष्णवेइमांपृथिवींदत्त्वाराद्धंसिद्धामिंद्रपदंहित्वायोबलिःसततःसिद्धिंमुक्तिमवाप्स्यतीत्यन्वयः १३ इदानींकुत्रास्तइत्यतआह यइति स्वराडिवइंद्रइव १४ १५ स्वयोगतःअच्युतनिष्ठालक्षणयोगात् इदानींकुत्रासतइतितत्राह इदानीमिति १६ स्थानंस्वर्गं १७ १८ १९ अंबुधारायांत्रियांये

सावर्णिस्तपतीकन्याभार्यासंवरणस्यया ॥ शनैश्चरस्तृतीयोभूदश्विनौवडवात्मजौ १० अष्टमेअंतरेयातेसावर्णिर्भविता मनुः ॥ निर्मोहविरजस्काद्याःसावर्णेस्तनयानृप ११ तत्रदेवाःसुतपसोविरजाअमितप्रजाः ॥ तेषाविरोचनसुतोबलिरिंद्रोभविष्यति १२ दत्त्वेमांयाचमानायविष्णवेयःपदत्रयम् ॥ राद्धमिंद्रपदंहित्वाततःसिद्धिमवाप्स्यसि १३ योसौभगवताबद्धःप्रीतेनसुतलेपुनः ॥ निवेशितोधिकेस्वर्गादधुनास्तेस्वराडिव १४ गालवोदीप्तिमान्रामोद्रोणपुत्रःकृपस्तथा ॥ ऋष्यशृंगःपितास्माकंभगवान्बादरायणः १५ इमेसप्तर्षयस्तत्रभविष्यंतिस्वयोगतः ॥ इदानीमासतेराजन्स्वेस्वेआश्रममंडले १६ देवगुह्यांसरस्वत्यांसार्वभौमपतिःप्रभुः ॥ स्थानंपुरंदराद्धृत्वाबलयेदास्यतीश्वरः १७ नवमोदक्षसावर्णिर्मनुर्वरुणसंभवः ॥ भूतकेतुर्दीप्तकेतुरित्याद्यास्तत्सुतानृप १८ परामरीचिगर्भाद्यादेवाइंद्रोद्भुतःस्मृतः ॥ द्युतिमत्प्रमुखास्तत्रभविष्यंत्यृषयस्ततः १९ आयुष्मतोंबुधारायामृषभोभगवान्किल ॥ भवितायेनसंत्रातोत्रिलोकींभोक्ष्यतेऽद्भुतः २० दशमोब्रह्मसावर्णिरुपश्लोकसुतोमहान् ॥ तत्सुताभूरिषेणाद्याहविष्मत्प्रमुखाद्विजाः २१ तत्रापिजन्मभविताहरेर्विश्वसृजांगृहे ॥ श्रीमूर्तिरितिविख्यातोयेनाप्यायेतवैजगत् २२ हविष्मान्सुकृतःसत्योजयोमूर्तिस्तदाद्विजाः ॥ सुवासनविरुद्धाद्यादेवाःशंभुःसुरेश्वरः २३ विष्वक्सेनोविषूच्यांतुशंभोःसख्यंकरिष्यति ॥ जातःशांतस्तुभगवान्गृहेविश्वसृजांविभुः २४ मनुर्वैधर्मसावर्णिरेकादशमआत्मवान् ॥ अनागतस्तत्सुताश्चसत्यधर्मादयोदश २५ विहंगमाःकामगमानिर्वाणरुचयःसुराः ॥ इंद्रश्चैववैधृतिस्तेषामृषयश्चारुणादयः २६ आर्यकस्यसुतस्तत्रधर्मसेतुरितिस्मृतः ॥ वैधृतायांहरेरंशस्त्रिलोकींधारयिष्यति २७ भवितामेरुसावर्णीराजन्द्वादशमोमनुः ॥ देववानुपदेवश्चदेवश्रेष्ठादयःसुताः २८ ऋतधामाचतत्रेंद्रोदेवाश्चहरितादयः ॥ ऋषयश्चतपोमूर्तिस्तपश्चाग्नीध्रकादयः २९ स्वधामाख्योहरेरंशःसाधयिष्यतितन्मनोः ॥ अंतरंसत्यसहसःसूनृतायाःसुतोविभुः ३० मनुस्त्रयोदशोभाव्योदेवसावर्णिरात्मवान् ॥ चित्रसेनविचित्राद्यादेवसावर्णिदेहजाः ३१ देवाःसुकर्मसुत्रामसंज्ञाइंद्रोदिवस्पतिः ॥ निर्मोकतत्त्वदर्शाद्याभविष्यंत्यृषयस्तदा ३२ देवहोत्रस्यतनयउपहर्तादिवस्पतेः ॥ योगेश्वरोहरेरंशोबृहत्यांसंभविष्यति ३३ मनुर्वाइंद्रसावर्णिश्चतुर्दशमएष्यते ॥ जंतुभीरववर्याद्याइंद्रसावर्णिवीर्यजाः ३४ विचित्राश्चाक्षुषादेवाःशुचिरिंद्रोभविष्यति ॥ अग्निबाहुःशुचिःशुद्धोमागधाद्यास्तपस्विनः ३५ नारायणस्यतनयोबृहद्भानुरतदाहरिः ॥ विनतायांमहाराजक्रियातंतून्वितायिता ३६

नऋषभेणसंत्रातोऽद्भुतोनामेंद्रः २० २१ २२ २३ शंभोरिंद्रस्यशांतःशांताख्यः २४ अनागतोभविष्यन् २५ २६ २७ २८ २९ ३० ३१ दिवस्पतिःनामा ३२ ३३ ३४ ३५ क्रियातंतून्क्रियासमुदायान्वितायिताविस्तारंकारयिता ३६

त्रिकालानुगतानिअतीतवर्तमानभविष्यत्संज्ञांस्त्रिकालानमुवर्त्तमानानीतित्रिलोकानुगतानीतिपाठेस्पष्टोर्थः तेतवामितःप्रमाणीकृतः ३७ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेविज०कृतटीकायांद्वादशोध्यायः ॥ १२ ॥ यथाकथंप्रवृत्तइतिशेषः येइमेमन्वादयोयेनपुरुषेणयस्मिन्कर्मणिनियुक्ताःप्रेरितावर्ततेतत्सर्वं १ २ कोयंपुरुषइतितत्राह यज्ञादयइति मन्वादिकालमारभ्यतेनयज्ञनाम्नाहरिणाप्रचोदितामन्वादयोजगद्यात्रांजगत्स्थितिंनयंतीत्यन्वयः यतः श्रुतिगणेभ्यःसनातनोधर्मःसिद्धः ऋषयस्तान्श्रुतिगणान्यथावत्तपसापश्यन् ४ ततस्तदुक्तविधिनाहरिणाचोक्तामनवस्तंचतुष्पादंधर्मंप्रद्धासंचारयंति ५ प्रजापालानृपाश्चस्वस्वकालेविभागशोयावदंतंकर्मक्षयपर्यंतंमहींपालयंतीत्यन्वयः ६ ७ सिद्धस्वरूपःज्ञानमुपदिशति ऋषिरूपधरोहरिः कर्मयोगेश्वररूपधृग्योगम् ८ प्रजापतिरूपेणसर्गकरोतिस्वराड्वपुःक्षत्रवपुःदस्यून्हंतिपृथग्गुणःअयथार्थज्ञानजनकतमोगुणप्रवर्तकः ९ एभिर्कृष्यादिभिःस्तूयमानोदृश्यतेनामरूपरहितयाअदृश्यत्वादिस्वभावविशिष्टयामाययाअव्यक्तशब्दवाच्ययामोहिता

राजन्चतुर्दशैतानित्रिकालानुगतानिते ॥ प्रोक्तान्येभिर्मितःकल्पोयुगसाहस्रपर्ययः ३७ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेद्वादशोध्यायः १२ ॥ राजोवाच ॥ मन्वंतरेषुभगवान्यथामन्वादयस्त्विमे ॥ यस्मिन्कर्मणियेयेननियुक्तास्तद्वदस्वमे १ ॥ ऋषिरुवाच ॥ मनवोमनुपुत्राश्चमुनयश्चमहीपते ॥ इंद्राःसुरगणाश्चैवसर्वेपुरुषशासनाः २ यज्ञादयोयाःकथिताःपौरुष्यस्तनवोनृप ॥ मन्वादयोजगद्यात्रांनयंत्याभिःप्रचोदिताः ३ चतुर्युगांतेकालेनग्रस्तान्श्रुतिगणान्यथा ॥ तपसाऋषयोपश्यन्यतोधर्मःसनातनः ४ ततोधर्मंचतुष्पादंमनवोहरिणोदिताः ॥ युक्ताःसंचारयंत्यद्धास्वेस्वेकालेमहींनृपाः ५ पालयंतिप्रजापालायावदंतंविभागशः ॥ यज्ञभागभुजोदेवायेचतत्रानुकीर्तिताः ६ इंद्रोभगवतादत्तांत्रैलोक्यश्रियमूर्जिताम् ॥ भुंजानःपातिलोकांस्त्रीन्कामंलोकेप्रवर्षति ७ ज्ञानंचानुयुगंब्रूतेहरिःसिद्धस्वरूपधृक् ॥ ऋषिरूपधरःकर्मयोगंयोगेशरूपधृक् ८ सर्गंप्रजेशरूपेणदस्यून्हंतिस्वराड्वपुः ॥ कालरूपेणसर्वेषामभवायपृथग्गुणः ९ स्तूयमानोजनैरेभिर्माययानामरूपया ॥ विमोहितात्मभिर्नानादर्शनैर्नचदृश्यते १० एतत्कल्पविकल्पस्यप्रमाणंपरिकीर्तितम् ॥ यत्रमन्वंतराण्याहुश्चतुर्दशपुराविदः ११ ॥ ॥ इतिश्रीभागवतेऽष्टमस्कंधेत्रयोदशोध्यायः ॥ १३ ॥ ॥ ७ ॥ ॥ राजोवाच ॥ बलेःपदत्रयंभूमेःकस्माद्धरिरयाचत ॥ भूतेश्वरःकृपणवल्लब्धार्थोपिबबंधतम् १ एतद्वेदितुमिच्छामोमहत्कौतूहलंहिनः ॥ याच्ञेश्वरस्यपूर्णस्यबंधनंवाप्यनागसः २ ॥ श्रीशुकउवाच ॥ पराजितश्रीरसुभिश्चहापितइंद्रेणराजन्भृगुभिःसजीवितः ॥ सर्वात्मनातानभजद्भृगून्बलिःशिष्योमहान्स्वार्थनिवेदनेन ३ तंब्राह्मणाभृगवःप्रीयमाणाअयाजयन्विश्वजितात्रिलोकम् ॥ जिगीषमाणंविधिनाभिषिच्यमहाभिषेकेणमहानुभावाः ४



त्माभिर्जनैःकल्पितैर्नानादर्शनैरद्वैतादिनानाविधशास्त्रैर्नदृश्यतेनज्ञायते चशब्दाद्वैतज्ञानेननदृश्यतइतिग्राह्यंअन्यमीशस्यमहिमानमितिवीतशोकइतिश्रुतेः १० उपसंहरति एतदिति पुराविदोयत्रयस्मिन्कल्पेचतुर्दशमन्वंतराण्याहुस्तस्यकल्पस्यैतत्प्रमाणमुक्त यस्मिन्नवांतरमन्वंतराण्याहुस्तस्यविकल्पस्यैतत्प्रमाणंपरिकीर्तितंशास्त्रांतरइतिशेषः इतिकल्पविकल्पस्यकल्पभेदस्येतिवा ११ ॥ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेवि०कृतटीकायांत्रयोदशोध्यायः ॥ १३ ॥ लब्धार्थःस्वीकृतत्रैलोक्यः १ पूर्णस्यईश्वरस्ययाच्ञाअनागसोबलेर्बंधनंयत्एतत् २ असुभिःप्राणैर्हापितोवियोजितःस्वार्थनिवेदनेनसर्वस्वसमर्पणेनअभीष्टार्थविज्ञापनेनवातान्भृगून्सर्वात्मनाअभजत् ३ विश्वजितासर्वस्वदक्षिणात्मनायागेन महाभिषेकेणमंत्रपूतस्नानविशेषेण ४

हर्यश्वस्यइंद्रस्यतुरंगाणांवर्णोयेषांतैस्तथाइंद्राश्ववर्णसदृशवर्णाइत्यर्थः इद्धाद्दीप्तात् ५ पुरटोपनद्धंसुवर्णबद्धं अरिक्तौबाणैरशून्यौअक्षयबाणकावित्यर्थः जलजंशंखम् ६ योधनार्थोयुद्धसाधनविप्राङ्गगोः ७ स्रग्धरोमालाधरः ८ धिष्ण्यस्थःआहवनीयादिस्थानेस्थितः हव्यवाडग्निः ९ १० ११ १२ १३ यत्रेंद्रपुर्यांयत्रनलिनीपुपरिखभूतयादीर्घिकावद्वर्तमानया १४ पट्टमुपरिबंधः १५ न्यर्बुदै

ततोरथःकांचनपट्टबद्धोहयाश्चहर्यश्वतुरंगवर्णाः ॥ ध्वजश्चसिंहेनविराजमानोहुताशनादासहविर्भिरिद्धात् ५ धनुश्चदिव्यंपुरटोपनद्धंतूणावरिक्तौकवचं चदिव्यम् ॥ पितामहस्तस्यददौचमालामम्लानपुष्पांजलजंचशुक्रः ६ एवंसविप्राजितयोधनार्थस्तैःकल्पितस्वस्त्ययनोथविप्रान् ॥ प्रदाक्षिणीकृत्यकृतप्रणामःप्रह्लादमामंत्र्यनमश्चकार ७ अथारुह्यरथंदिव्यंभृगुदत्तंमहारथः ॥ सुस्रग्धरोथसंनद्धधन्वीखड्गीधृतेषुधिः ८ हेमांगदलसद्बाहुःस्फुरन्मकरकुंडलः ॥ रराजरथमारूढोधिष्ण्यस्थइवहव्यवाट् ९ तुल्यैश्वर्यवयःश्रीभिःस्वयूथैर्दैत्ययूथपैः ॥ पिबद्भिरिवखंदृग्भिर्दहद्भिःपरिधीनिव १० वृतोविकर्षन्महतीमासुरींध्वजिनींविभुः ॥ ययाविंद्रपुरीमृद्धांकंपयन्निवरोदसीम् ११ रम्यामुपवनोद्यानैःश्रीमद्भिर्नंदनादिभिः ॥ कूजद्विहंगमिथुनैर्गायन्मत्तमधुव्रतैः १२ प्रवालफलपुष्पोरुभारशाखामरद्रुमैः ॥ हंससारसचक्राह्वकारंडवकुलाकुलाः १३ नलिन्योयत्रक्रीडंतिप्रमदाःसुरसेविताः ॥ आकाशगंगयादेव्यावृतां परिखभूतया १४ प्राकारेणाग्निवर्णेनसाट्टालेनोन्नतेनच ॥ रुक्मपट्टकपाटैश्चद्वारैःस्फाटिकगोपुरैः १५ जुष्टांविभक्तप्रपथांविश्वकर्मविनिर्मिताम् ॥ सभाचत्वररथ्याढ्यांविमानैर्न्यर्बुदैर्युताम् १६ शृंगाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः ॥ यत्रनित्यवयोरूपाःश्यामाविरजवाससः ॥ भ्राजंतेरूपवन्नार्योअर्चिर्भिरिववह्नयः १७ सुरस्त्रीकेशविभ्रष्टनवसौगंधिकस्रजाम् ॥ यत्रामोदमुपादायमार्गआवातिमारुतः १८ हेमजालाक्षनिर्गच्छद्धूमेनागुरुगंधिना ॥ पांडुरेणप्रतिच्छन्नमार्गेयांतिसुरप्रियः १९मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृताम् ॥ शिखंडिपारावतभृंगनादितांवैमानिकस्त्रीकलगीतमंगलाम् २० मृदंगशंखानकदुंदुभिस्वनैःसतालवीणामुरजर्ष्टिवेणुभिः ॥ नृत्यैःसवाद्यैरुपदेवगीतकैर्मनोरमांस्वप्रभयाजितग्रहाम् २१ यान्नव्रजंत्यधर्मिष्ठाःखलाभूतद्रुहःशठाः ॥ मानिनःकामिनोलुब्धाएभिर्हीनाव्रजंत्युत २२ तांदेवधानींसवरूथिनीपतिर्बहिःसमंताद्रुरुधेपृतन्यया ॥ आचार्यदत्तंजलजंमहास्वनंदध्मौप्रयुंजन्भयमिंद्रयोषिताम् २३ मघवांस्तदभिप्रेत्यबलेःपरममुद्यमम् ॥ सर्वदेवगणोपेतोगुरुमेतदुवाचह २४भगवन्नुद्यतोभूयान्बलेर्नःपूर्ववैरिणः ॥ अविषह्यमिदंमन्येकेनासीत्तेजसासमः २५ नैनंकश्चित्कुतोवापिप्रतिवोढुमधीश्वरः ॥ पिबन्निवमुखेनेदंलिहन्निवदिशोदश २६ दहन्निवदिशोदृग्भिःसंवर्ताग्निरिवोत्थितः ॥ ब्रूहिकारणमेतस्यदुर्धर्षत्वस्यमद्रिपोः ॥ ओजःसहोबलंतेजोयतएवसमुद्यमः २७

रित्युपलक्षणंअनेकैरित्यर्थः १६ शृंगाटकैश्चत्वरमंडपैःवज्ररत्नविद्रुमप्रवचितवेदिभिः श्यामाःषोडशवर्षाः १७ सौगंधिकैःस्थलचंपकैःरचिताःस्रजःतासामामोदंपरिमलमुपादाय १८ जालाक्षंगवाक्षं १९ २० जितसूर्यादिग्रहाम् २१ एभिरधर्मादिभिः २२ पृतन्ययापृतनया २३ २४ असौबलिस्तेजसाकेनब्रह्मणाममःकेनकेनापीतिवा २५ प्रतिवोढुंप्रतियोद्धुंवारयितुंवाइदंजगद्यतः २६ ओजआदयएवसमुद्यमश्चयतःमद्रिपोःएतस्यदुर्धर्षत्वस्यकारणंब्रूहीत्यन्वयः २७

गुरुभिर्भृगुभिर्यतः कारणात् २८ २९ त्रीणिविष्टपानिमहरादिस्थानानियस्मिन्तत्तथा ३० एषबलिविप्राणांबललक्षणमुत्तरफलंयस्यसतथाकुतइतितत्राह संप्रतीति ३१ ३२ ३३ ३४ ३५ द्विजाः भृगवस्तएवसमीष्टदातृत्वेनदेवाः उपलंभितांप्रापिताम् ३६ इतिश्रीभागवतेअष्टमस्कंधेवि०कृ०टीकायां चतुर्दशोऽध्यायः ॥१४॥ १ तस्याअदित्याः २ ३ आदित्यलोके विप्राणामभद्रंनागतमपिकिंधर्मस्याभद्रंनागतमपिकिंअर्थस्याभद्रंनागतमपि छंदानुवर्तिनोमृत्योःसकाशादभद्रंलोकस्यनागतंकिंअयोगिनांसंसारिणांयत्रयेषुधर्मादियोगोस्तितेषुकिंचिदप्यकुशलंनहीतितत्रानुकर्षःकर्तव्यः ४ ५ ६

गुरुरुवाच ॥ जानामिमघवञ्छत्रोरुन्नतेरस्यकारणम् ॥ शिष्यायोपभृतंतेजोगुरुभिर्ब्रह्मवादिभिः २८ भवद्विधोभवान्वापिवर्जयित्वेश्वरंहरिम् ॥ नास्यशक्तःपुरःस्थातुंकृतांतस्ययथाजनाः २९ तस्मान्निलयमुत्सृज्ययूयंसर्वेत्रिविष्टपम् ॥ यातकालंप्रतीक्षंतोयतःशत्रोर्विपर्ययः ३० एषविप्रबलोदर्कःसंप्रत्यूर्जितविक्रमः ॥ एषामेवावमानेनसानुबंधोविनंक्ष्यति ३१ एवंसुमंत्रितार्थास्तेगुरुणार्थानुदर्शिना ॥ हित्वात्रिविष्टपंजग्मुर्गीर्वाणाःकामरूपिणः ३२ देवेष्वतिविलीनेषुबलिर्वैरोचनःपुरीम् ॥ देवधानीमधिष्ठायवशंनिन्येजगत्त्रयम् ३३ तंविश्वजयिनंशिष्यंभृगवःशिष्यवत्सलाः ॥ शतेनहयमेधानामनुव्रतमयाजयन् ३४ ततस्तदनुभावेनभुवनत्रयविश्रुताम् ॥ कीर्तिंदिक्षुवितन्वानःसरेजउडुराडिव ३५ बुभुजेचश्रियंऋद्धांद्विजदेवोपलंभिताम् ॥ कृतकृत्यमिवात्मानंमन्यमानोमहामनाः ३६ इतिश्रीभागवतेअष्टमस्कंधेबलिविजयेचतुर्दशोऽध्यायः ॥१४॥ श्रीशुकउवाच ॥ एवंपुत्रेषुनष्टेषुदेवमातादितिस्तदा ॥ हृतेत्रिविष्टपेदैत्यैःपर्यतप्यदनाथवत् १ एकदाकश्यपस्तस्याआश्रमंभगवानगात् ॥ निरुत्सवंनिरानंदंसमाधेर्विरताश्चिरात् २ सपत्नींदीनवदनांकृतासनपरिग्रहः ॥ सभाजितोयथान्यायमिदमाहकुरूद्वह ३ अप्यभद्रंनविप्राणांभद्रेलोकेधुनागतम् ॥ नधर्मस्यनलोकस्यमृत्योश्छंदानुवर्तिनः ४ अपिवाकुशलंकिंवागृहेषुगृहमेधिनाम् ॥ धर्मस्यार्थस्यकामस्ययत्रयोगोह्ययोगिनाम् ५ अपिवातिथयोभ्येत्यकुटुंबासक्तयात्वया ॥ गृहादपूजितायाताःप्रत्युत्थानेनवाक्वचित् ६ गृहेषुयेष्वतिथयोनार्चिताःसलिलैरपि ॥ यदिनिर्यांतितेनूनंप्रेतराजगृहोपमाः ७ अप्यग्नयस्तुवेलायांनहुताहविषासति ॥ त्वयोद्विग्नधियाभद्रेप्रोषितेमयिकर्हिचित् ८ यत्पूजयाकामदुघान्यांतिलोकान्गृहान्विताः ॥ ब्राह्मणोग्निश्चवैविष्णोःसर्वदेवात्मनोमुखम् ९ अपिसर्वेकुशलिनस्तवपुत्रामनस्विनि ॥ लक्षयेऽस्वस्थमात्मानंभवत्यालक्षणैरहम् १० अदितिरुवाच ॥ भद्रंद्विजगवांब्रह्मन्धर्मस्यास्यजनस्यच ॥ त्रिवर्गस्यपरंक्षेत्रंगृहमेधिन्गृहाइमे ११ अग्नयोतिथयोभृत्याभिक्षवोयेचलिप्सवः ॥ सर्वंभगवतोब्रह्मन्ननुध्यानान्नरिष्यति १२ कोनुमेभगवन्कामोनसंपद्येतमानसः ॥ यस्याभवान्प्रजाध्यक्षएवंधर्मान्प्रभाषते १३

प्रेतराजगृहोपमाःश्मशानतुल्याः ७ वेलायामिति योग्यकालेप्रोषितेगृहादन्यत्रस्थिते ८ सर्वदेवात्मनोविष्णोर्मुखंब्राह्मणोग्निश्चेतिद्वयम् ९ हियस्मात् अस्वस्थम् १० ११ इमेगृहाअग्नयश्चेत्यादिसर्वंभगवतोनुध्यानान्नरिष्यतिनक्षिणोति १२ यस्याममप्रजानांकुशलाकुशलयोरध्यक्षः साक्षित्वेनद्रष्टाभगवानेवंविधान्धर्मान्प्रवक्तीतियत् १३

यथाविभागंसत्वादिगुणानुकूल्येनअचदैत्यानांमनोरथंसाधयतीत्यभिप्रायः १४ अंशंदेवताभागम् तवदेहावैव्यवहारार्थंवा हृतस्थानाः हृतस्वर्गस्थानाः १५ पुनरुक्तमेवविशिनष्टि परैरिति ममपुत्राणा मितिशेषः १६ १७ १८ अनात्माजडात्मकः मोहोऽज्ञानम् १९ २० इतराइतरदेवादिविषया २१ सत्यसकल्पोहरिः २२ तदुपधावनंतस्यहरेःसेवाविषयम् आशुतुष्यतियेनेतिशेषः २३ यदेतद्व्रतं तद्वक्ष्यामि २४ पयोव्रतइतिपुल्लिंगप्रयोगःसर्वसाधनत्वज्ञापनार्थःमृदोविशेषमाह क्रोडेति वराहखातया स्रोतःस्यंदमानंजलंतत्रस्नानंकुर्यादित्यर्थः २५ रसायाःरसातलात् स्थानमिच्छताम्

तवैवमारीचमनःशरीरजाःप्रजाइमाःसत्वरजस्तमोजुषः ॥ मनोरथंतासुसुरादिषुप्रभोयथाविभागंभजतेमहेश्वरः १४ तस्मादंशंभजंत्यामेश्रेयश्चिंतयसुव्रत हृतश्रियोहृतस्थानाःसपत्नैःपाहिनःप्रभो १५ परैर्विवासितासाहंमग्नाव्यसनसागरे ॥ ऐश्वर्यंश्रीर्यशःस्थानंहृतानिप्रबलैर्मम १६ यथातानिपुनःसाधोप्रपद्ये रन्ममात्मजाः ॥ तथाविधेहिकल्याणंधियाकल्याणकृत्तम १७ श्रीशुकउवाच ॥ एवमभ्यर्थितोदित्याकस्तामाहस्मयन्निव ॥ अहोमायाबलंविष्णोःस्नेहबद्ध मिदंजगत् १८ क्वदेहोभौतिकोनात्माक्वचात्माप्रकृतेःपरः ॥ कस्यकेपतिपुत्राद्यामोहएवहिकारणम् १९ उपतिष्ठस्वपुरुषंभगवंतंजनार्दनम् ॥ सर्वभूतगुहावा संवासुदेवंजगद्गुरुम् २० सविधास्यतितेकामान्हरिर्दीनानुकंपनः ॥ अमोघाभगवद्भक्तिर्नेतरेतिमतिर्मम २१ अदितिरुवाच ॥ केनाहंविधिनाब्रह्मन्नुपस्था स्येजगत्पतिम् ॥ यथामेसत्यसंकल्पोविदधातिमनोरथम् २२ आदिशत्वंद्विजश्रेष्ठविधिंतदुपधावनम् ॥ आशुतुष्यतिमेदेवःसीदंत्याःसहपुत्रकैः २३ कश्यप उवाच ॥ एतन्मेभगवान्पृष्टःप्रजाकामस्यपद्मजः ॥ यदहंतेप्रवक्ष्यामिव्रतंकेशवतोषणम् २४ फाल्गुनस्यामलेपक्षेद्वादशाहंपयोव्रतः ॥ अर्चयेदरविंदाक्षंभक्त्या परमयान्वितः ॥ सिनीवाल्यांमृदालिप्यस्नायात्क्रोडविदीर्णया २५ यदिलभ्येतवैस्रोतस्येतंमंत्रमुदीरयेत् ॥ त्वंदेव्यादिवराहेणरसायाःस्थानमिच्छता २६ उद्धृतासिनमस्तुभ्यंपाप्मानंमेप्रणाशय ॥ निर्वर्तितात्मनियमोदेवमर्चेत्समाहितः २७ अर्चायांस्थंडिलेसूर्येजलेवह्नौगुरावपि ॥ नमस्तुभ्यंभग वतेपुरुषायमहीयसे ॥ सर्वभूतनिवासायवासुदेवायसाक्षिणे २८ नमोऽव्यक्तायसूक्ष्मायप्रधानपुरुषायच ॥ चतुर्विंशद्गुणज्ञायगुणसंख्यानहेतवे २९ नमोद्वि शीर्षेत्रिपदेचतुःशृंगायतंतवे ॥ सप्तहस्ताययज्ञायत्रयीविद्यात्मनेनमः ३० नमःशिवायरुद्रायनमःशक्तिधरायच ॥ सर्वविद्याधिपतयेभूतानांपतये नमः ३१ नमोहिरण्यगर्भायप्राणायजगदात्मने ॥ योगैश्वर्यशरीरायनमस्तेयोगहेतवे ३२ नमस्तेआदिदेवायदेवदेवायतेनमः ॥ नारायणायऋषयेनराय हरयेनमः ३३ नमोमरकतश्यामवपुषेधिगतश्रिये ॥ केशवायनमस्तुभ्यंनमस्तेपीतवाससे ३४

तानामितिशेषः २६ निर्वर्तितात्मनियमःकृतसंध्योपासनादिकः २७ २८ गुणसंस्थानहेतवेकपिलात्मने २९ द्वेशीर्षेचरगारिचृंगंतिश्रुतेः चत्वारिशृंगावेदास्तुपादास्त्रिसवनानिच मापणीयंशिरस्त्वेकमन्यच्चोदयनधिकम् हस्तास्तुसप्तच्छंदांसितैर्बद्धातिफलान्यसौ मंत्रब्राह्मणकल्पैस्तुत्रिधाबद्धइतीर्यते शस्त्रोद्गात्रस्तुतिरवैरोरवीत्युत्विजोमुखात् वृषभोमहान्स्वधर्मत्वादेवस्तुफल भावनात् इति तंतवेव्याप्ताय संतानहेतवे वत्रयीविद्यानांसोमयागानांआत्मनेअंतर्यामिणे ३० ३१ हिनोतिदुःखंराति सुखमितिहिरण्यंरेतोलक्षणंगर्भेयस्यतस्मैतथातस्मै ३२ ३३ ३४

वतोवरदर्षभःअतः ३५ श्रियाविनिर्जितेपद्मपयोस्तौतथातयोः पादयोरामोदंस्पृहयंतांदेवायमन्ववर्ततसभगवान् ३६ उपस्पर्शनमाचमनम् ३७ १८ द्वादशाक्षरविद्ययाॐनमोभगवतेवासुदे वायेतिपयसिश्रुतंपायसाख्यम् ३९ ४० ४१ तच्छेषंपुष्पंद्रवमाणम् ४२ द्व्यवरानवरपक्षेपिद्वावपेक्षितौ मुख्यपक्षस्तुद्वादशेति ४३ ४४ ४५ ४६ ४७ ४८ स्नापकैःस्नानसाधनैः

त्वंसर्ववरदःपुंसांवरेण्यवरदर्षभ ॥ अतस्तेतपसाधीराःपादरेणुमुपासते ३५ अन्ववर्ततयंदेवाःश्रीर्विनिर्जितपद्मयोः ॥ स्पृहयंतइवामोदंभगवान्मेप्रसीद ताम् ३६ एतैर्मंत्रैर्हृषीकेशमावाहनपुरःसरम् ॥ अर्चयेच्छ्रद्धयायुक्तःपाद्योपस्पर्शनादिभिः ३७ अर्चितंगंधमाल्याद्यैःपयसास्नापयेद्विभुम् ॥ वस्त्रोपवीता भरणपाद्योपस्पर्शनैस्ततः ३८ गंधधूपादिभिश्चार्चेद्द्वादशाक्षरविद्यया ॥ शृतंपयसिनैवेद्यंशाल्यन्नंविभवेसति ३९ ससर्पिःसगुडंदत्वाजुहुयान्मूल विद्यया ॥ निवेदितंतद्भक्तायदद्याद्भुंजीतवास्वयम् ४० दत्त्वाचमनमर्चित्वाताम्बूलंचनिवेदयेत् ॥ जपेदष्टोत्तरशतंस्तुवीतस्तुतिभिःप्रभुम् ४१ कृत्वाप्रद क्षिणांभूमौप्रणमेद्दंडवन्मुदा ॥ कृत्वाशिरसितच्छेषंदेवमुद्वासयेत्ततः ४२ द्व्यवरान्भोजयेद्विप्रान्पायसेनयथोचितम् ॥ भुंजीततैरनुज्ञातोहुतशेषंसभाजितैः ४३ ब्रह्मचार्यथतद्रात्र्यांश्वोभूतेप्रथमेहनि ॥ प्रातःशुचिर्यथोक्तेनविधिनासुसमाहितः ४४ पयसास्नापयित्वार्चेद्यावद्व्रतसमापनम् ॥ पयोभक्षोव्रतमि दंचरेद्विष्ण्वर्चनादृतः ४५ पूर्ववज्जुहुयादग्निंब्राह्मणांश्चापिभोजयेत् ॥ एवंत्वहरहःकुर्याद्द्वादशाहंपयोव्रतम् ४६ हरेराराधनंहोममर्हणंद्विजतर्पणम् ॥ प्रतिपद्दिनमारभ्ययावच्छुक्लचतुर्दशी ४७ ब्रह्मचर्यमधःस्वापंस्नानंत्रिषवणंचरेत् ॥ वर्जयेदसदालापंभोगानुच्चावचांस्तथा ४८ अहिंस्रःसर्वभूतानांवा सुदेवपरायणः ॥ त्रयोदश्यामथोविष्णोःस्नापनंस्नापकैर्विभोः ४९ कारयेच्छास्त्रदृष्टेनविधिनाविधिकोविदैः ॥ पूजांचमहतींकुर्याद्वित्तशाठ्यविवर्जितः ५० चरुंनिरूप्यपयसिशिपिविष्टायविष्णवे ॥ शृतेनतेनपुरुषंयजेतसुसमाहितः ५१ नैवेद्यंचापिगुणवद्दद्यात्पुरुषतुष्टिदम् ॥ आचार्यंज्ञानसंपन्नंवस्त्राभरणधे नुभिः ५२ तोषयेदृत्विजश्चैवतद्विध्याराधनंहरेः ॥ भोजयेत्तान्गुणवतासदन्नेनशुचिस्मिते ५३ अन्यांश्चब्राह्मणान्शक्त्यायेचतत्रसमागताः ॥ दक्षि णांगुरवेदद्यादृत्विग्भ्यश्चयथार्हतः ५४ अन्नाद्येनाश्वपाकांश्चप्रीणयेत्समुपागतान् ॥ भुक्तवत्सुचविप्रेषुदीनांधकृपणादिषु ५५ विष्णोस्तत्प्रीणनंविद्वान्स हभुंजीतबंधुभिः ॥ नृत्यवादित्रगीतैश्चस्तुतिभिःस्वस्तिवाचनैः ५६ कारयेत्तत्कथाभिश्चपूजांभगवतोन्वहम् ॥ एतत्पयोव्रतंनामपुरुषाराधनंपरम् ५७ पितामहेनाभिहितंममतेसमुदाहृतम् ॥ त्वंचानेनमहाभागेसम्यक्चीर्णेनकेशवम् ५८ आत्मनाशुद्धभावेनभजनीयंभजाव्ययम् ॥ अयंवैसर्वयज्ञाख्यःसर्व व्रतमिदंश्रुतम् ५९ तपःसारमिदंभद्रेदानंचेश्वरतर्पणम् ॥ तएवनियमाःसाक्षात्तएवचयमोत्तमाः ६० तपोदानंव्रतंयज्ञोयेनतुष्यत्यधोक्षजः ॥ तस्मा देवंव्रतंभद्रेप्रयताश्रद्धयाचर ६१

४९ ५० शिपिषुरश्मिषुविष्टःशिपिविष्टःशिपौगरुडेस्थितःतस्मैवा ५१ मधुरादिगुणवत् ५२ ५३ ५४ ५५ ५६ ५७ ५८ ५९ तपःसंतोषआस्तिक्यंदानमीश्वरपूजनम् सिद्धांतश्रवणं चैवह्रीर्मतिश्चजपोव्रतम् एतेतुनियमाःप्रोक्तास्तांश्चसर्वान्पृथक्शृणु अहिंसासत्यमस्तेयंब्रह्मचर्यंदयार्जवम् क्षमाधृतिर्मिताहारःशौचंवैतेयमाःस्मृताइति ६० ६१

६२ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेवि०कृ०टीकायांपंचदशोध्यायः ॥ १५ ॥ अव्यक्तस्वभावोपिभक्त्याभजमानस्यपुंसःप्रत्यक्षोभवतिभगवानित्येतमर्थंदर्शयत्यध्यायद्वयेन । तनन्त्वित्याःभक्त्या
व्रताचरणप्रकारंवक्तिइत्युक्तेति १ २ ३ तद्व्रताचरणफलमाह तस्याइति ४ ५ तस्याःभक्तिलक्षणंदर्शयति । सेति पुलकेनरोमांचेनाकुलाव्याप्ताआकृतिस्तनुर्यस्याःसातथा पुनस्तस्याःकिंप्रकारीनिह
त्राह तद्दर्शनेति तद्दर्शनमेवात्युत्सवःतस्मिंश्चोगात्रवेपथुर्देहकंपोयस्याःसातथा ६ तस्याःमुग्धभावंदर्शयति उद्वीक्षतीति ७ स्वाभीष्टोदयकरगुणाविशिष्टत्वेनस्तौति यज्ञेशेति यज्ञपुरुषअ
च्युतइत्यनेनगुणांतराणिसमुच्चिनोति । तानिकानीतितत्राह तीर्थपादेत्यादितीर्थस्यशास्त्रस्यश्रवःश्रवणंयाभ्यांतेतीर्थश्रवसीतेचश्रवणेचेति । तीर्थश्रवःश्रवणेतमंगलयतीतितीर्थश्रवःश्रवणमंग
लं तच्चनामधेयंनामयस्यसतथा तस्यसंबुद्धिस्तीर्थश्रवःश्रवणमंगलनामधेय । आपन्नस्यलोकस्यवृजिनंदुःखंतस्योपशमनार्थंपरिहारार्थमुदयोऽवतारोयस्यसतथा । तस्यसंबुद्धिस्तथा कृधिकुरु अव

भगवान्परितुष्टस्तेवरानाशुविधास्यति ॥ ६२ ॥ इतिश्रीभागवतेअष्टमस्कंधेव्रतोपदेशोनामपंचदशोध्यायः ॥ १५ ॥ श्रीशुकउवाच ॥ इत्युक्ता
सादितीराजन्स्वभर्त्राकश्यपेनवै ॥ अन्वतिष्ठद्व्रतमिदंद्वादशाहमतंद्रिता १ चिंतयत्येकयाबुद्ध्याभगवंतमधोक्षजम् ॥ प्रगृह्येंद्रियदुष्टाश्वान्मनसाबु
द्धिसारथिः २ मनश्चैकाग्रयाबुद्ध्याभगवत्यखिलात्मनि ॥ वासुदेवेसमाधायचचारहपयोव्रतम् ३ तस्याःप्रादुरभूत्तातभगवानादिपूरुषः ॥ पीतवासा
श्चतुर्बाहुःशंखचक्रगदाधरः ४ तंनेत्रगोचरंवीक्ष्यसहसोत्थायसादरम् ॥ ननामभुविकायेनदंडवत्प्रीतिविह्वला ५ सोत्थायबद्धांजलिरीडितुंस्थि
तानोत्सेहआनंदजलाकुलेक्षणा ॥ बभूवतूष्णींपुलकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ६ प्रीत्याशनैर्गद्गदयागिराहरिंतुष्टावसादेव्यदितिःकु
रूद्वह ॥ उद्वीक्षतीसापिबतीवचक्षुषारमापतिंयज्ञपतिंजगत्पतिम् ७ अदितिरुवाच ॥ यज्ञेशयज्ञपुरुषाच्युततीर्थपादतीर्थश्रवःश्रवणमंगलनामधेय ॥
आपन्नलोकवृजिनोपशमोदयाद्यशंनःकृधीशभगवन्नसिदीननाथ ८ विश्वायविश्वभवनस्थितिसंयमायस्वैरंगृहीतपुरुशक्तिगुणायभूम्ने ॥ स्वस्थायश
श्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसेहरयेनमस्ते ९ आयुःपरंवपुरभीष्टमतुल्यलक्ष्मीर्द्यौर्भूरसाःसकलयोगगुणास्त्रिवर्गः ॥ ज्ञानंचकेवलमनंतभवंतितु
ष्टात्त्वत्तोनृणांकिमुसपत्नजयादिराशीः १० श्रीशुकउवाच ॥ अदित्यैवंस्तुतोराजन्भगवान्पुष्करेक्षणः ॥ क्षेत्रज्ञःसर्वभूतानामितिहोवाचभारत ११
श्रीभगवानुवाच ॥ देवमातर्भवत्यामेविज्ञातंचिरकांक्षितम् ॥ यत्सपत्नैर्हृतश्रीणांच्यावितानांस्वधामतः १२ तान्विनिर्जित्यसमरेदुर्मदानसुरर्षभान् ॥
प्रतिलब्धजयश्रीभिःपुत्रैरिच्छस्युपासितुम् १३ इंद्रज्येष्ठैःस्वतनयैर्हतानांयुधिविद्विषाम् ॥ स्त्रियोरुदंतीरासाद्यद्रष्टुमिच्छसिदुःखिताः १४

सन्ननाथक्षीणजनरक्षक ८ विश्वनाम्नेविश्वस्यभवनस्थितिसंहारायस्मात्सतथातस्मै स्वैरंस्वेच्छया गुणाःसत्वादयः व्यापादितात्मतमसेविनाशिताज्ञानाय ९ परमायुर्द्विपरार्द्धावसा
नलक्षणंवपुश्चतदादयोनृणांतुष्टात्त्वत्तोभवंतियत्तस्मादुपसन्नजनाधिनाशःकिम् । शरणागतजनमनोदुःखनाशंभवतीतिकिंवक्तव्य योगगुणोऽणिमादिः १० ११ भवत्याःसपत्नैःस्वर्गोद्धा
वितानांउच्चाटितानांहृतश्रीणांआकृष्टसंपदांपुत्राणामर्थेयच्चिरंकांक्षितंतन्मयाविज्ञातमित्यन्वयः १२ किंतदितितत्राह तान्विनिर्जित्येति उपासितुंमामितिशेषः १३ इदचाकांक्षितमित्या
ह इंद्रेति इंद्रःज्येष्ठोयेषांतेतथातैः १४

१५ नैतत्क्षिप्रसाध्यमित्याह प्रायइति कुतोत्राह यत्तइति अनुकूलैरीश्वरविप्रैर्गुप्तारक्षिताइतियत्तस्मात्तत्रतेषु १६ तर्हुपायाभावादुपरमएवश्रेयानितितत्राह अथेति ममसकाशान्ममव्रतचर्यया वा श्रद्धानुरूपमितिक्रियाविशेषणं ममार्चनमन्यथाफलराहित्येनगंतुंनार्हतियथाश्रद्धातथाफलहेतुकत्वात् पुरुषार्थलक्षणफलस्यनिमित्तत्वात्कप्रत्ययः स्वार्थमतिसाधयाति १७ १८ उपाधावउपास्व अपत्यंअपत्यत्वेन १९ परस्मैशत्रवे २० २१ २२ किमवबुद्धमितितत्राह प्रविष्टमिति २३ २४ २५ पृश्न्यांगर्भोयस्यसतथातस्मै वेदगर्भायसद्योजन्मशक्तये त्रीणिपृष्ठानिवैकुंठादीनियस्य

आत्मजान्सुसमृद्धान्स्वान्प्रत्याहृतयशःश्रियः ॥ नाकपृष्ठमधिष्ठायक्रीडतोद्रष्टुमिच्छसि १५ प्रायोधुनातेसुरयूथनाथाजवारणीयाइतिदेविमेमतिः ॥ यत्तेनुकूलेश्वरविप्रगुप्तानविक्रमस्तत्रसुखंददाति १६ अथाप्युपायोममदेविचिंत्यःसंतोषितस्यव्रतचर्ययाते ॥ ममार्चनंनार्हतिगंतुमन्यथाश्रद्धानुरूपंफलहेतुकत्वात् १७ त्वयार्चितश्चाहमपत्यगुप्तयेपयोव्रतेनानुगुणंसमीडितः ॥ स्वांशेनपुत्रत्वमुपेत्यतेसुतान्पातास्मिमारीचतपस्यधिष्ठितः १८ उपाधावपतिंभद्रेप्रजापतिमकल्मषम् ॥ मांचभावयतेपत्यमेवंरूपमवस्थितम् १९ नैतत्परस्माआख्येयंदेवगुह्यंकथंचन ॥ सर्वंसंपद्यतेदेविदेवगुह्यंसुसंवृतात् २० ॥ श्रीशुकउवाच ॥ एतावदुक्त्वाभगवांस्तत्रैवांतरधीयत ॥ अदितिर्दुर्लभंलब्ध्वाहरेर्जन्मात्मनिप्रभोः २१ उपाधावत्पतिंभक्त्यापरयाकृतकृत्यवत् ॥ सवैसमाधियोगेनकश्यपस्तदबुध्यत २२ प्रविष्टमात्मनिहरेरंशंह्यवितथेक्षणः ॥ सोदित्यांवीर्यमाधत्ततपसाचिरसंभृतम् २३ समाहितमनाराजन्दारुण्यग्निंयथानिलः ॥ अदित्यांनिहितंगर्भंभगवंतंसनातनम् २४ हिरण्यगर्भोविज्ञायसमीडेगुह्यनामभिः ॥ ब्रह्मोवाच ॥ जयोरुगायभगवन्नुरुक्रमनमोस्तुते ॥ नमोब्रह्मण्यदेवायत्रिगुणायनमोस्तुते २५ पृश्निगर्भायदेवायवेदगर्भायवेधसे ॥ त्रिगुणायत्रिपृष्ठायशिपिविष्टायविष्णवे २६ त्वमादिरंतोभुवनस्यमध्यमनंतशक्तिंपुरुषंयमाहुः ॥ कालोभवानाक्षिपतीशविश्वंस्रोतोयथांभःपतितंगभीरम् २७ त्वंवैप्रजानांस्थिरजंगमानांप्रजापतीनामसिसंभविष्णुः ॥ दिवौकसांदेवदिवश्च्युतानांपरायणंनौरिवमज्जतोप्सु २८ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेअदितिवरदानंनामषोडशोध्यायः ॥ १६ ॥

श्रीशुकउवाच ॥ इत्थंविरिंचिस्तुतकर्मवीर्यःप्रादुर्बभूवामृतभूरदित्याम् ॥ चतुर्भुजःशंखगदाब्जचक्रःपिशंगवासानलिनायतेक्षणः १ श्यामावदातोझषराजकुंडलत्विषोल्लसच्छ्रीवदनांबुजःपुमान् ॥ श्रीवत्सवक्षावलयांगदोल्लसत्किरीटकांचीगुणचारुनूपुरः २ मधुव्रतव्रातविघुष्टयास्वयाविराजितश्रीवनमालयाहरिः ॥ प्रजापतेर्वेश्मतमःस्वरोचिषाविनाशयन्कंठनिविष्टकौस्तुभः ३ दिशःप्रसेदुःसलिलाशयास्तदाप्रजाःप्रहृष्टाऋतवोगुणान्विताः ॥ द्यौरंतरिक्षंक्षितिरग्निजिह्वागावोद्विजाःसंजहृषुर्नगाश्च ४ श्रोणायांश्रवणद्वादश्यांमुहूर्तेऽभिजितिप्रभुः ॥ सर्वेनक्षत्रताराद्याश्चक्रुस्तज्जन्मदक्षिणम् ५ द्वादश्यांसवितातिष्ठन्मध्यंदिनगतोनृप ॥ विजयानामसाप्रोक्तायस्यांजन्मविदुर्हरेः ६

सतथातस्मै २६ गभीरंस्रोतोनदी आक्षिपतितीरंप्रतिनयाति २७ २८ इतिश्रीभा०अष्टमस्कंधवि०टी०षोडशोध्यायः ॥१६॥ अमृतभूःमुक्ताश्रयोविष्णुः १ झषराजोमत्स्यश्रेष्ठ मकरस्तदाकारकुंडलत्विषा २ वेश्मतमःगृहांधकारः ३ सलिलाशयाःह्रदाःअग्निजिह्वादेवाः ४ श्रोणायांश्रावणेमासि अभिजितिमध्यंदिने ५ श्रवणद्वादश्यामतिष्ठत्तदासाद्वादशीविजयानाम अनेनसंज्ञांतरंविधीयते ६

शस्वादपोनेदुरंतिशेषः ७ ८ सुपर्णःभुजगोत्तमाश्च ९ १० ११ यत्स्वभावतोऽव्यक्तवदव्यक्तमेवतद्वपुरनुकंपया विभूषणायुधैर्व्यक्तंभाति हरिस्तादृशंवपुरधारयत् यद्वपुरव्यक्तवद्भातिहरिस्तद्वपुर्विभूषणायुधैर्व्यक्तमधारयदितिवा । सएवदिव्यगतिरनाभिभूतज्ञानोहरिस्तेनाविभूषणायुधविशिष्टेनरूपेणपित्रोःसंपश्यतोसतोर्वामनोबटुर्बभूवेत्यन्वयः । मूलरूपावताररूपयोरभेदज्ञापनायैवमुच्यतेयथानट इति

शंखदुंदुभयोभेर्योमृदंगपणवानकाः ॥ चित्रवादित्रतूर्याणांनिर्घोषस्तुमुलोऽभवत् ७ प्रीताश्चाप्सरसोनृत्यन्गंधर्वपतयोजगुः ॥ तुष्टुवुर्मुनयोदेवामनवःपितरोग्नयः ८ सिद्धविद्याधरगणाःसकिंपुरुषकिन्नराः ॥ चारणायक्षरक्षांसिसुपर्णभुजगोत्तमाः ९ गायंतोऽभिप्रशंसंतोनृत्यंतोविबुधानराः ॥ अदित्याआश्रमपदंकुसुमैःसमवाकिरन् १० दृष्ट्वादितिस्तंनिजगर्भसंभवंपरंपुमांसंमुदमापविस्मिता ॥ गृहीतदेहंनिजयोगमाययाप्रजापतिश्चाहजयेतिविस्मितः ११ यत्तद्वपुर्भातिविभूषणायुधैरव्यक्तवद्व्यक्तमधारयद्धरिः ॥ बभूवतेनैवसवामनोबटुःसंपश्यतोर्दिव्यगतिर्यथानटः १२ तंबटुंवामनंदृष्ट्वामोदमानामहर्षयः कर्माणिकारयामासुःपुरस्कृत्यप्रजापतिम् १३ तस्योपनीयमानस्यसावित्रींसवितात्रवीत् ॥ बृहस्पतिर्ब्रह्मसूत्रंमेखलांकश्यपोददौ १४ ददौकृष्णाजिनंभूमिर्दंडंसोमोवनस्पतिः ॥ कौपीनाच्छादनंमाताद्यौश्छत्रंजगतःपतेः १५ कमंडलुंवेदगर्भःकुशान्सप्तर्षयोददुः ॥ अक्षमालांमहाराजसरस्वत्यक्षयात्मनः १५ तस्माइत्युपनीतायशक्षराट्पात्रिकामदात् ॥ भिक्षांभगवतीसाक्षादुमादादंबिकासती १७ सब्रह्मवर्चसेनैवसभांसंभावितोबटुः ॥ ब्रह्मर्षिगणसंजुष्टामत्यरोचतमारिषः ॥ समिद्धमाहितंवह्निंकृत्वापरिसमूहनम् ॥ परिस्तीर्यसमभ्यर्च्यसमिद्भिरजुहोद्द्विजः १९ श्रुत्वाश्वमेधैर्यजमानमूर्जितंबलिंभृगूणामुपकल्पितैस्ततः ॥ जगामतत्राखिलसारसंभृतोभारेणगांसन्नमयन्पदेपदे २० तंनर्मदायास्तटउत्तरेबलेर्यऋत्विजस्तेभृगुकच्छसंज्ञिके ॥ प्रवर्तयंतोभृगवःक्रतूत्तमंव्यचक्षतारादुदितंयथारविम् २१ तऋत्विजोयजमानःसदस्याहततत्विषोवामनतेजसानृप ॥ सूर्यःकिमायात्युतवाविभावसुःसनत्कुमारोथदिदृक्षयाक्रतोः २२ इत्थंसशिष्येषुभृगुष्वनेकधावितर्क्यमाणोभगवान्सवामनः ॥ सदंडछत्रंसजलंकमंडलुंविवेशबिभ्रद्धयमेधवाटम् २३ मौंज्यामेखलयावीतमुपवीताजिनोत्तरम् । जटिलंवामनंविप्रंमायामाणवकंहरिम् २४ प्रविष्टंवीक्ष्यभृगवःसशिष्यास्तेसहाग्निभिः ॥ प्रत्यगृह्णन्समुत्थायसंक्षिप्तास्तस्यतेजसा २५ यजमानःप्रमुदितोदर्शनीयंमनोरमम् ॥ रूपानुरूपावयवंतस्माआसनमाहरत् २६ स्वागतेनाभिनंद्याथपादौभगवतोबलिः ॥ अवनिज्यार्चयामासमुक्तसंगंमनोरमम् २७ तत्पादशौचंकलिकल्मषापहंसधर्मविन्मूर्ध्न्यदधात्सुमंगलम् ॥ यद्देवदेवोगिरिशश्चंद्रमौलिर्दधारमूर्ध्नापरयाचभक्त्या २८ बलिरुवाच ॥ स्वागतंतेनमस्तुभ्यंब्रह्मन्किंकरवामते ॥ ब्रह्मर्षीणांतपःसाक्षान्मन्येत्वार्यवपुर्धरम् २९

तदभिप्रायेण १२ १३ १४ १५ १६ पात्रिकांभिक्षापात्रंउमा उमेतिसस्यविशेषव्यावृत्त्यर्थंअंबिकेति १७ सभांप्राप्यात्यरोचतसभामरोचयदितिवा मारिषःपूज्यः १८ १९ भृगूणामुपकल्पितैःअश्वमेधैःयजमानंयष्टारंबलिंश्रुत्वातत्रजगाम अखिलसारैर्गुणैःसंभृतःपूर्णः भारेणगरिम्णा २० भृगुकच्छेतिसंज्ञायस्यसतथातस्मिन् २१ २२वाटंशालां २३ आवीतंपरिवृतं २४ २५ २६ २७ २८ २९

३० तनुभिःरेणुभिःकोमलैर्वा ३१ प्रतीच्छगृहाण ३२ ३३ इतिश्रीभागवते अष्टमस्कंधेवि०टी०सप्तदशोध्यायः ॥१७॥ अनेनाध्यायद्वयेनबलेर्भक्तिविशेषंदर्शयाति इतीति इतिशब्देनहरेर्माहात्म्यसूचकंवाक्यमुक्तमितिसूचयति १ जनदेवनृप सांपरायेपितामहःप्रमाणम् २ सर्वैस्तुतिप्रसन्नाएवाभीष्टंकुर्वंतीत्यतस्तत्सिद्धिप्रकारंवचनंवाक्ति नहीति यःपुमानितिप्रत्येकमभिसंबद्ध्यते प्रत्याख्यातानास्तीतिवक्ता अदाता ३ तीर्थेपात्रेअर्थिनाधनंपुद्धंचार्थ्यमानेनपराङ्मुखाअमनस्विनइत्येतद्विशेषणद्वयंयथायोग्यंसंबंधितव्यं अमनस्विनोहीनमनस्काःयस्मात्उद्भातिउत्कृष्टतयाद्योतते उडुपश्चंद्रः ४ ५ कृच्छ्रेणेतियोहवचनं कृतःकृतिनस्तान्श्रयतेयत्तेनपराक्रमेणेत्यर्थइतिवा । क्ष्मायाःभूमेःउद्धारेउद्धरणकालेकृच्छ्रेणागतेप्राप्तेसतिभूरितस्यवीर्यपराक्रममनुस्मरन्नपि आत्मानंजयिनतदानीमेवात्मज

अद्यनःपितरस्तृप्ताअद्यनःपावितंकुलम् ॥ अद्यास्विष्टःक्रतुरयंयद्भवानागतोगृहान् ३० अद्याग्नयोमेसुहुतायथाविधिद्विजात्मजत्वच्चरणावनेजनैः ॥ हतांहसोवार्भिरियंचभूमिरहापुनीतातनुभिःपदैस्तव ३१ यद्यद्वटोवांच्छसितत्प्रतीच्छमेत्वामर्थिनंविप्रसुतानुतर्कये ॥ गांकांचनंगुणवद्धामथधाममृष्टंतथान्नमुतवाविप्रकन्याम् ३२ ग्रामान्समृद्धांस्तुरगान्गजान्वारथांस्तथार्हत्तमसंप्रतीच्छ ३३ इतिश्रीभागवतेअष्टमस्कंधेसप्तदशोध्यायः ॥ १७ ॥ ॥७॥ श्रीशुकउवाच ॥ इतिवैरोचनेर्वाक्यंधर्मयुक्तंससूनृतम् ॥ निशम्यभगवान्प्रीतःप्रतिनंद्येदमब्रवीत् १ ॥ श्रीभगवानुवाच ॥ वचस्तवैतज्जनदेवसूनृतंकुलोचितंधर्मयुतंयशस्करम् ॥ यस्यप्रमाणंभृगवःसांपरायेपितामहःकुलवृद्धःप्रशांतः २ नह्येतस्मिन्कुलेकश्चिन्निःसत्वःकृपणःपुमान् ॥ प्रत्याख्यातापतिश्रुत्यथोवाऽदाताद्विजातये ३ नसंतितीर्थेयुधिवार्थिनार्थिताःपराङ्मुखायेत्वमनस्विनोनृप ॥ युष्मत्कुलेयद्यशसामलेनप्रह्लादउद्भातियथोडुपःखे ४ यतोजातोहिरण्याक्षश्चरन्नेकइमांमहीम् ॥ प्रतिवीरंदिग्विजयेनाविंदतगदायुधः ५ यंविनिर्जित्यकृच्छ्रेणविष्णुःक्ष्मोद्धारआगते ॥ नात्मानंजयिनंमेनेतद्वीर्यंभूर्यनुस्मरन् ६ निशम्यतद्वधंभ्राताहिरण्यकशिपुःपुरा ॥ हंतुंभ्रातृहणंक्रुद्धोजगामनिलयंहरेः ७ तमायांतंसमालोक्यशूलपाणिंकृतांतवत् ॥ चिंतयामासकालज्ञोविष्णुर्मायाविनांवरः ८ यतोयतोहंतत्रासौमृत्युःप्राणभृतामिव ॥ अतोहमस्यहृदयंप्रवेक्ष्यामिपराग्दृशः ९ एवंसनिश्चित्यरिपोःशरीरंमायावतोनिर्विविशेसुरेंद्र ॥ श्वासानिलांतर्हितसूक्ष्मदेहस्तत्प्राणरंध्रेणविविग्नचेताः १० सतन्निकेतंपरिमृश्यशून्यमपश्यमानःकुपितोननाद ॥ क्ष्मांद्यांदिशःखंविवरान्समुद्रान्विष्णुंविचिन्वन्नददर्शवीरः ११ अपश्यन्नितिहोवाचमयान्विष्टमिदंजगत् ॥ भ्रातृहामेगतोनूनंयतोनावर्ततेपुमान् १२ वैरानुबंधएतावानामृत्योरिहदेहिनाम् ॥ अज्ञानप्रभवोमन्युरहंमानोपबृंहितः १३ पिताप्रह्लादपुत्रस्तेताद्विद्वान्द्विजवत्सलः ॥ स्वमायुर्द्विजलिंगेभ्योदेवेभ्योदात्सयाचितः १४

यंनयेनेकिंतुनित्यजयिनंमेनइत्यर्थः यद्वा क्ष्मायाउद्धारोयेनसतथासाविष्णुनापरमपुरुषोयंविनिर्जित्यतत्स्वकीयंवीर्यंतद्भूयनंतमनुस्मरन्नात्मानंजयिनंजयशीलोपेतंमेनइति ६ ७ मायाविनाज्ञानिनांवरः मोक्षादिवरदाता ८ पराग्दृशःबाह्यदृष्टेःपरांचिखानिव्यतृणोदितिश्रुतेः परंदूरमंचतीतिपराग्दूरस्थंवस्तु पश्यतिइतिपराग्दृक्तस्यदूरस्थवस्तुदर्शिनइत्यर्थइतिवा ९ तद्घ्राणरंध्रेणतस्यप्राणद्वारेण १० निकेतंजगतामितिशेषः तस्यहरेर्वैकुंठंपरिमृश्येतिवा ११ यतोगतस्ततः १२ क्रोधहेतुकोवैरानुबंधइत्याह अज्ञानेति १३ प्रह्लादस्ययःपुत्रःसतवपिताविरोचनः तान्द्विजरूपिणोदेवान्विद्वान्द्विजानांलिंगंवेषोयेषांतेतथा तेभ्योदेवेभ्यःस्वमायुरदादित्यन्वयः १४

किंच यद्ब्राह्मणैरनुष्ठितंतन्ममाभीष्टमितिप्रकटनायभवानप्याचरतीत्याह भवानिति आचरितानुष्ठाता अन्यैराजादिभिः १५ यस्मात्त्वंपुण्यवतांकुलेजातोधर्मकर्त्तातस्मात् पदानीतिबहुवचनोक्त्याभी तिर्माभूदित्याह त्रीणीति तषांचमहत्त्वेनभयशंकातदवस्थेतितत्राह संमितानीति १६ इतोपिमहत्तरंकामवदस्वदास्यामीतितत्राह नेति वदान्यादानशीलात् । राजप्रतिग्रहाच्चदोषोनस्यात्किंने त्याह नेति यावताप्रतिग्रहेणस्वप्रयोजनंसिद्ध्यतितावतःप्रतिग्रहात्आदानात् अजीविष्याभिमाक्षसादाविति श्रुतेः विद्वान्प्रतिग्रहदोषदहनपटुज्ञानवान् १७ अवृद्धसंमता कुतोत्राह त्वमिति बुद्धिवे शद्येबालत्वमप्रयोजकमत्राह बालिशेति जडमतिःस्वप्रयोजनंज्ञातुंनशक्यतइत्यर्थः १८ कथमेतदवगतमत्राह मांवचोभिरिति अबुद्धिमान्दाशुषंदानशीलंबुद्धिमानितिव्यतिरेकोवा १९ कुतो मामपहससीतितत्राह नपुमानिति २० यदुक्तंवृत्तकरींभूमिंप्रतिगृहाणेतितदजितेंद्रियंप्रतिव्यर्थमित्याशयेनाह श्रीभगवानिति अजितेंद्रियमलंबुद्धिरहितंपुरुषमितिशेषः २१ एतदेवोपपादय

भवानाचरिताधर्मानास्थितान्गृहमेधिभिः ॥ ब्राह्मणैःपूर्वजैःशूरैरन्यैश्चोद्दामकीर्तिभिः १५ तस्मात्त्वत्तोमहीमीषद्वृणेहंवरदर्षभ ॥ पदानित्रीणिदैत्येंद्र संमितानिपदामम १६ नान्यंतेकामयेराजन्वदान्याज्जगदीश्वरात् ॥ नैनःप्राप्नोतिवैविद्वान्यावदर्थप्रतिग्रहात् १७ बलिरुवाच ॥ अहोब्राह्मणदाया दवाचस्तेऽवृद्धसंमताः ॥ त्वंबालोबालिशमतिःस्वार्थंप्रत्यबुधोयथा १८ मांवचोभिःसमाराध्यलोकानामेकमीश्वरम् ॥ पदत्रयंवृणीतेयोबुद्धिमानिद्वा शुषम् १९ नपुमान्मामनुव्रज्यभूयोयाचितुमर्हति ॥ तस्माद्वृत्तिकरींभूमिंबटोकामंप्रतीच्छमे २० श्रीभगवानुवाच ॥ यावंतोविषयाःप्रेष्ठास्त्रिलोक्या मजितेंद्रियम् ॥ नशक्नुवंतितेसर्वेप्रतिपूरयितुंनृप २१ त्रिभिःक्रमैरसंतुष्टोद्वीपेनापिनपूर्यते ॥ नववर्षसमेतेनसप्तद्वीपवरेच्छया २२ सप्तद्वीपाधिपतयोनृपावै न्यगदादयः ॥ अर्थैःकामैर्गतानांतंतृष्णायाइतिनःश्रुतम् २३ यदृच्छयोपपन्नेनसंतुष्टोवर्ततेसुखम् ॥ नासंतुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः २४ पुंसोयं संसृतेर्हेतुरसंतोषोर्थकामयोः ॥ यदृच्छयोपपन्नेनसंतोषोमुक्तयेस्मृतः २५ यदृच्छालाभतुष्टस्यतेजोविप्रस्यवर्धते ॥ तत्प्रशाम्यत्यसंतोषादंभसेवाशुशुक्ष णिः २६ तस्मात्त्रीणिपदान्येववृणेत्वद्वरदर्षभात् ॥ एतावतैवसिद्धोहंवित्तंयावत्प्रयोजनम् २७ श्रीशुकउवाच ॥ इत्युक्तःसहसन्नाहवांछितंप्रतिगृह्यता म् ॥ वामनायमहींदातुंजग्राहजलभाजनम् २८ विष्णवेक्ष्मांप्रदास्यंतमुशनाअसुरेश्वरम् ॥ जानंश्चिकीर्षितंविष्णोःशिष्यंप्राहविदांवरः २९ उशनाउ वाच ॥ एषवैरोचनेसाक्षाद्भगवान्विष्णुरव्ययः ॥ कश्यपाददितेर्जातोदेवानांकार्यसाधकः ३० प्रतिश्रुतंत्वयैतस्मैयदनर्थमजानता ॥ नसाधुमन्येदैत्या नांमहानुपगतोनयः ३१

ति त्रिभिरिति ननदीद्वीपोत्रकथ्यतइत्याह नवेति कुतोत्राह सप्तेति २२ नैतावतापिपूर्तिरित्याह सप्तेति अंतमवसानम् अर्थैःकामैःअर्थसंपादितकामैर्वा २३ संतोषशब्दाभिप्रायंवदन्नलंबुद्धिरेवसुखसाधनमित्याह यदृच्छयेति व्यतिरेकमा ह नासंतुष्टइति उपसादितैरवाप्तैःसुखंनवर्त्ततइतिपूर्वेणान्वयः २४ इतोपिसंतोषएवापाद्यः सुखहेतुत्वादन्यस्यानर्थहेतुत्वाच्चेत्याह पुंसइति अर्थकामयोरसंतोषः २५ तेजोबलादिकं तेजोबले प्रभावेचज्योतिष्यर्चिषिरेतसि नवनीतेनलेधर्मेदानेहरितमदेपिचेति तत्तेजः आशुशुक्षणिःअग्निः आशुशुक्षणिरेकंश्चैापजनेथाश्रुतीबलेइति २६ यतःसंतुष्टोहंतस्माद्यावत्प्रयोजनंवित्तंस्वीकुर्यामितिशे षः २७ २८ उशनाविदुषागुरुणाशिष्यायहितोपदेशःकर्तव्यइतिशिक्षयन्नाह । विष्णवइति २९ ३० बंधनाद्यनर्थमजानतात्वयाएतस्मैवामनायप्रतिज्ञातंयत्तत्साधुनमन्यइत्यन्वयः कुतो त्राह दैत्यानामितिअनयोदुःखहेतुरनीतिः ३१

तदुपपादयति एषइति विश्वकायः३२ ३३ त्रिपदक्रमणप्रकारंस्पष्टयति क्रमतइति तार्तीयस्यतृतीयपदस्य ३४ प्रतिश्रुतमदातुः निष्ठांतंप्रतिश्रुतदानपर्यंतंनरकदुःखंमन्ये नरकमेवोपपादयति प्रतिश्रुतस्येति ३५ तस्यतवदानं कुतोनप्रशंसंतीतितत्राह येनेति वृत्तिर्जीवनंविपद्यतेनश्यतीतियेनतस्मादितिशेषः । संभावितस्यचाकीर्तिर्मरणादतिरिच्यतइतिस्मृतेर्वृत्तिर्जीवनसाधनंवानष्टंस्यात्तन्नाशोकिंछिन्नमत्राह दानमिति ३६ अर्थायकोशवृद्ध्येक्रियादिव्यवहारायवा ३७ किमन्यत्त्वदुक्तेःप्रमाणमित्याशंक्यबहूवांवाक्यंप्रमाणमित्याह अत्रापीति बहूचैःऋग्वेदिभिःकिंतद्गीतमित्यर्थतःप्रतीकयति सत्यमिति ओमितियत्प्रोक्तंअर्थिनंप्रतितत्सत्यंतथेतिसवेदनीयामित्यर्थः नेतियदाहअर्थिनंप्रतितदनृतं हिशब्दउभयोर्विरोधमाह ३८ कुतोत्राह सत्यमिति पुष्पमेवफलंयस्यतत्पुष्पफलं जीवतःप्राणधारकस्यात्माख्यवृक्षस्यसत्यंपुष्पफलंविद्यात् पुष्पंचफलंचपुष्पफलमितिवा यथाऽशुष्कस्यवृक्षस्यपुष्पफलेस्यातांतथात्मनः सत्यलक्षणेपुष्पफलेविद्यादित्यर्थः तदुक्तं पुष्पंहिफलंवाचःसत्यंवदतीतिआत्मवृक्षेऽजीवतिशुष्कलक्षणमरणेसतितत्सत्यलक्षणंपुष्पफलंनस्यात् आत्मनःआत्मवृक्षस्यअनृतंसर्वस्वादानलक्षणंमूलंस्थितिकारणं अथैतन्मूलंवा

एषतेस्थानमैश्वर्यंश्रियंतेजोयशःश्रुतम् ॥ दास्यत्याच्छिद्यशक्रायमायामाणवकोहरिः ३२ त्रिभिःक्रमैरिमाँल्लोकान्विश्वकायःक्रमिष्यति ॥ सर्वस्वंविष्णवेदत्वामूढवर्तिष्यसेकथम् ३३ क्रमतोगांपदैकेनद्वितीयेनादिवंविभो ॥ खंचकायेनमहतातार्तीयस्यकुतोगतिः ३४ निष्ठांतेनरकंमन्येह्यप्रदातुःप्रतिश्रुतम् ॥ प्रतिश्रुतस्ययोनीशःप्रतिपादयितुंभवान् ३५ नतद्दानंप्रशंसंतियेनवृत्तिर्विपद्यते ॥ दानंयज्ञस्तपःकर्मलोकेवृत्तिमतोयतः ३६ धर्माययशसेऽर्थायकामायस्वजनायच ॥ पंचधाविभजन्वित्तमिहामुत्रचमोदते ३७ अत्रापिबह्वृचैर्गीतंशृणुष्वासुरसत्तम ॥ सत्यमोमितियत्प्रोक्तंयन्नेत्याहानृतंहितत् ३८ सत्यंपुष्पफलंविद्यादात्मवृक्षस्यजीवतः ॥ वृक्षेजीवतितन्नस्यादनृतंमूलमात्मनः ३९ तद्यथावृक्षउन्मूलःशुष्यत्युद्वर्ततेचिरात् ॥ एवंनष्टानृतःसद्यआत्माशुष्येन्नसंशयः ४० पराग्रिक्तमपूर्णंवाअक्षरंयत्तदोमिति ॥ यत्किंचोमितिब्रूयात्तेनरिष्येतवैपुमान् ४१ भिक्षवेसर्वमोंकुर्वन्नालंकामेभ्यआत्मने ॥ अथैतत्पूर्णमभ्यात्मंयच्चनेत्यनृतंवचः ४२

चायदनृतमितिच ३९ विपक्षेबाधकमाह तद्यथेति तद्यथातथोदाहरिष्यामः उन्मूलःउत्खातशिफःवृक्षःशुष्यति अचिरादुद्वर्ततेनश्यतिच एवंनष्टानृतःनष्टमूलः सद्यस्तत्क्षणमेवशुष्येत्शुष्यतिनश्यति तद्यथावृक्षआविर्मूलःशुष्यतिसउद्वर्ततएवमेवानृतंवदन्नाविर्मूलमात्मानंकरोतिसशुष्यतिसउद्वर्तते तस्मादनृतंनवदेदितिच ४० यत्तदोमित्यक्षरमेतदपूर्णंसर्वस्वंपराकपराविषयंरिक्तंपृथक्कृतअर्थिनंसर्वस्वंदत्तमित्यर्थस्यवाचकंवदेदित्यर्थःपराग्वाएतद्रिक्तमक्षरंयदेतदोमितिच फलितमाह तदिति तत्तस्मात्पुमान्यत्किंचस्वजीवनातिरिक्तंधनंओंदास्यामीतिब्रूयात्ब्रवीतिसनरिष्येतवैननश्यतीत्यन्वयः तद्यत्किंचोमित्याहात्रैवास्मैतद्रिच्यतइतिरिच्यतेसंपन्नोभवतीत्यर्थः ४१ तात्पर्यादुक्तंबाधकांतरेणद्रढयति भिक्षवइति भिक्षवेयाचमानायसर्वमोंकुर्वन्सर्वस्वददन्कामेभ्योविषयाणांदत्तस्वादात्मनेनालंआत्मनोभोज्याभावेनपर्याप्तोनभवतिनष्टोभवतीत्यर्थःअथतस्मान्नेत्यनृतंयद्वचएतदभ्यात्मंआत्मानंप्रतिपूर्णंसर्वस्वादानेस्वजीवनंसंपन्नंभवतीत्यर्थः अतिथिप्राप्तिसर्वंनदास्यामीतिब्रूयात्तर्हिआत्मानंपूर्णंसर्वस्वंजीवनंसमृद्धंभवतीतिपूर्वेणसंबंधःपूर्णस्यपचम् ४२

किंच नेत्यतिर्थिमतिब्रूयादितियोगाविभागःकर्तव्यः तथाहि अतिर्थिमतिकिंचननदास्यामीतिब्रूयात्तर्हिसदुष्कीर्तिश्वसन्मृतोजीवन्मृतश्च भवा तिएतदुक्तंभवति याचकायसर्वस्वदानेस्वजीविनाशःकिंचिद्प्यदानेचथहष्टविरोधेनदुष्कीर्त्याजीवन्मृतत्वंस्याचस्माद्यावद्विहितंकर्तव्यमिति सयत्सर्वमोंकुर्यादित्यादात्मानंसकामेभ्योनालंस्यादथैतत्पूर्णमभ्यात्मेयमेतिब्रूयात्पापिकास्यकीर्तिर्जायेत सैनत्तत्रैव हन्यात्तस्मात्कालववद्यात्कालेनदद्यात्तस्सत्यानृतेमिथुनीकरोति तयोर्मिथुनात्मजायतेभूयान्भवतियोवैतांवाचंवेदेति । आत्मानंरिच्यात्शून्यंकुर्यात् ननुप्रतिश्रुताप्रदानेमहान्दोषःस्यादित्याशंक्यपेन स्यादित्याह स्त्रीष्विति नर्मनर्मणिहिंसायांत्रैवर्णिकविषयायां नस्त्रीषुराजविवाहकालेप्राणात्ययेसर्वधनापहारइत्यादिसिद्धमेतत् ४३ इतिश्रीभागवतेअष्टमस्कंधेवि०क्रु०टी०अष्टादशोऽध्यायः ॥१८॥ प्रक्तिविधानार्थंत्रिविक्रमावतारमाहात्म्यंवक्ष्यस्मिन्नध्याये तत्रादौबलेःसत्यसंधनिश्चयमाह बलिरिति १ योदानादिधर्मोर्थादिकंस्वजीवनसाधनंनबाधेतननश्यतिसोपंगृहस्थानांधर्मःइतियदुक्तंतत्स त्यंअबाधितमित्यन्वयः २ तथैवानुष्ठेयोधर्मइतिनेत्याहसइति योददामीतिमतिज्ञायस्थितःसोहंप्रत्याचक्षेनदास्यामीतिनिषेधंकरोमीति कुतःप्राह्लादिःकितवोधूर्तः ३ ४ ५ ननुवित्तलोभाभा

सर्वेनेत्यर्थिनंब्रूयात्सदुष्कीर्तिश्वसन्मृतः ॥ स्त्रीषुनर्मविवाहेचवृत्त्यर्थेप्राणसंकटे ॥ गोब्राह्मणार्थेहिंसायां नानृतंस्याज्जुगुप्सितम् ४३ इतिश्रीभागवतेअ ष्टमस्कंधेअष्टादशोध्यायः ॥ १८ ॥ छ ॥ श्रीशुकउवाच ॥ बलिरेवंगृहपतिःकुलाचार्येणभाषितः ॥ तूष्णींभूत्वाक्षणंराजन्नुवाचावहितोगुरुम् १ ब लिरुवाच ॥ सत्यंभगवताप्रोक्तंधर्मोयंगृहमेधिनां ॥ अर्थंकामंयशोवृत्तंयोनबाधेतकर्हिचित् २ सचाहंवित्तलोभेनप्रत्याचक्षेकथंद्विजम् ॥ प्रतिश्रुत्यद दामीतिप्राह्लादिःकितवोयथा ३ नह्यसत्यात्परोधर्मइतिहोवाचभूरियम् ॥ सर्वंवोढुमलंमन्येऋतेऽलीकपरंनरम् ४ नाहंबिभेमिनिरयान्नाधन्यर्यादसु स्वार्णवात् ॥ नस्थानच्यवनान्मृत्योर्यथाविप्रप्रलोभनात् ५ यद्यद्धास्यतिलोकेस्मिन्संपरेतोधरादिकम् ॥ तस्यात्यागेनिमित्तंकिंविप्रस्तुष्येततेनचेत् ६ श्रेयःकुर्वंतिभूतानांसाधवोदुस्त्यजासुभिः ॥ दध्यङ्शिबिप्रभृतयःकोविकल्पोधरादिषु ७ यैरियंबुभुजेब्रह्मन्दैत्येंद्रैरनिवर्तिभिः ॥ तेषांकालोग्रसी ल्लोकान्नयशोधिगतंभुवि ८ सुलभायुधिविप्रर्षेह्यनिवृत्तास्तनुत्यजः ॥ नतथातीर्थआयातेश्रद्धयायेधनत्यजः ९

वेस्वजीवनहानिःस्यादित्याशंक्यदानेनविमालंबुद्धिरेवप्रयोजिकानान्येत्याशयेनाह तस्येति यत्प्रतिश्रुतंतेनवित्तेनविप्रोयदितुष्येत्तर्हितस्यवित्तस्यात्यागेअदानेनिमित्तंकारणंकिंनकिमपि ६ स्व जीवनंकारणंचेन्नेत्याह श्रेयइति केतेसाधवइतितत्राह दध्यङिति दध्यङाथर्वणोदेवेभ्यःस्वदेहंशिबिःकपोताय ततःप्रकृतेकिंतत्राह कोविकल्पइति दित्सितेषुधरादिषु विकल्पःदास्यामिनवेति संशयःकःनकोपीत्यर्थः ७ सतिविभवेर्थिनिचप्राप्तेलोभाददातॄणामैहिकामुष्मिकसुखनसेत्स्यतीत्याशयेनाह यैरियमिति अनिवर्तिभिःयुद्धइतिशेषः कालोयमःस्वर्गादिलोकानग्रसीत्ग्रस्तवान् येलोकदानशीलानांसतानाप्नोतिपुष्कलानितिस्मृतिसिद्धलोकानसंतीत्यर्थः ८ पात्राभावान्नदास्यामितितस्मिन्सतिदातारःसुलभाइतितत्राह यथायुधियुद्धादानिवृत्तास्तनुत्यजःशरीरत्यागिनःसुलभा स्तथातीर्थेपात्रेप्राप्तेश्रद्धयाधनत्यजः धनदातारोनसुलभाइत्यन्वयः तीर्थंमंत्राद्युपाध्यायेशास्त्रेष्वंभसिपावने पात्रोपायावतारेषुस्त्रीपुण्येयोनिपद्मयोरितियादवः पराचिच्छीर्षावनूजुरतइंद्रायज्वा नोयज्वाभिःस्पर्धमानाइति ९

नतुसर्वस्वदानेस्वजीवनहानिलक्षणक्लेशःस्यादितियदुक्तंतत्राह मनस्विनइति अर्थकामाययाचमानायकामितार्थदानेनोपनयोगृहंप्रतिप्रस्थापनंयत्तेनदुर्गतिर्दारिद्र्यलक्षणनाशोभवतीतियत्तत्कारुणिक स्यमनस्विनउदारस्यशोभनमिहामुत्रसुखसाधनंस्यात् भवादृशांब्रह्मविदांसर्वस्वदानात्क्लेशःसुखहेतुरिति किंपुनःकिमुवक्तव्यं फलितमाह ततइति १० अयंबटुरपियःकश्चननभवतीतिदर्शयन्स्वस्यह रिविषयंज्ञानंसूचयन्नाह यजंतीतिक्रतुभिःसंकल्पैःसप्ततंतुसंज्ञैर्वा ११ ब्रह्मतनुंब्राह्मणंबटुं १२ जिहासतित्यक्तुमिच्छति मामा एनांगां १३ अश्राद्धितंअश्रद्धयोपेतमहितःप्रेरितः सत्यसंधसत्यप्रतिज्ञ १४ १५ १६ जालकैःकुड्मलैःकृतामालास्याअस्तीतिजालकमालिनीजालककोरकंकलिकाकुड्मलमुकुलानितुल्यानीतिहलायुधः अपाभृतपूर्णजलअवनेजनीप्रक्षालनमिच्छती १७ १८ आर्यज्ञानि

मनस्विनःकारुणिकस्यशोभनंयदर्थकामोपनयेनदुर्गतिः ॥ कुतःपुनर्ब्रह्मविदांभवादृशांततोबटोरस्यददामिवांछितम् १० यजंतियज्ञक्रतुभिर्यमादृता भवंतआम्नायविधानकोविदाः ॥ सएषविष्णुर्वरदोस्तुवापरोदास्याम्यमुष्मैक्षितिमीप्सितांमुने ११ यद्यप्यसावधर्मेणमांबध्नीयादनागसम् ॥ तथाप्ये नंनहिंसिष्येभीतंब्रह्मतनुंरिपुम् १२ एषवाउत्तमश्लोकोनजिहासतियद्यशः ॥ हत्वामैनांहरेद्युद्धेशयीतानिहतोमया १३ ॥ श्रीशुकउवाच ॥ एवमश्राद्धि तंशिष्यमनादेशकरंगुरुः ॥ शशापदैवप्रहितःसत्यसंधंमनस्विनम् १४ दृढंपंडितमान्यज्ञस्तब्धोस्यस्मदुपेक्षया ॥ मच्छासनातिगोयस्त्वमचिराद्भ्रश्यसे श्रियः १५ एवंशप्तःस्वगुरुणासत्यान्नचलितोमहान् ॥ वामनायददावेतामर्चित्वोदकपूर्वकम् १६ विंध्यावलिस्तदागत्यपत्नीजालकमालिनी ॥ आनि न्येकलशंहैममवनेजन्यपांभृतम् १७ यजमानःस्वयंतस्यश्रीमत्पादयुगंमुदा ॥ अवनिज्यावहन्मूर्ध्नितदपोविश्वपावनीः १८ तदासुरेंद्रंदिविदेवतागणा गंधर्वविद्याधरसिद्धचारणाः ॥ तत्कर्मसर्वेभिगृणंतआर्यंप्रसूनवर्षैर्ववृषुर्मुदान्विताः १९ नेदुर्मुहुर्दुंदुभयःसहस्रशोगंधर्वकिंपूरुषकिन्नराजगुः ॥ मनस्विना नेनकृतंसुदुष्करंविद्वानदाद्यद्रिपवेजगत्त्रयम् २० तद्वामनंरूपमवर्धताद्भुतंहरेरनंतस्यगुणत्रयात्मकम् ॥ भूःखंदिशोद्यौर्विवराःपयोधयस्तिर्यङ्नृदेवाऋष योयदासन् २१ कायेबलिस्तस्यमहाविभूतेःसहर्त्विगाचार्यसदस्यएतत् ॥ ददर्शविश्वंत्रिगुणंगुणात्मकेभूतेंद्रियार्थाशयजीवयुक्तम् २२ रसामचष्टांघ्रि तलेथपादयोर्महींमहीध्रान्पुरुषस्यजंघयोः ॥ पतत्त्रिणोजानुनिविश्वमूर्तेरूर्वोर्गणंमारुतमिंद्रसेनः २३ संध्यांविभोर्वाससिगुह्यऐक्षत्प्रजापतीन्जघनेस्वा त्ममुख्यम् ॥ नाभ्यांनभःकुक्षिषुसप्तसिंधूनुरुक्रमस्योरसिऋक्षमालाम् २४ हृद्यंगधर्मंस्तनयोर्मुरारेरृतंचसत्यंचमनस्यथेंदुम् ॥ श्रियंचवक्षस्यरविंदह स्तांकंठेचसामानिसमस्तरेफान् २५ इंद्रप्रधानानमरान्भुजेषुतत्कर्णयोःककुभोद्यौश्चमूर्ध्नि ॥ केशेषुमेघाञ्छ्वसनंनासिकायामक्ष्णोश्चसूर्यंवदनेचवह्निम् २६

नंअसुरेंद्रम् १९ विद्वान्दानफलंशत्रुरितिवा स्वजातिरिपवेवामनायजगत्त्रयमदादितियत्तस्मादनेनमनस्विनाबलिनासुदुष्करंकृतमित्युक्ताजगुः २० भूरादयोयस्मिन्रूपेआसन्सावकाशास्थितास्त द्वामनमणुनरंरूपमवर्धतेत्यन्वयः गुणत्रयस्यात्माकृतिर्येनतत्तथातत् आत्माजीवेकृतौदेहेस्वभावेपरमात्मनि यत्नेर्केऽग्नौमतौवातेप्याखुःसूकरमूत्रकाविति यादवः २१ अर्थाःशब्दादयःआशयोमनोबुद्धि र्वा २२ महीध्रान्पर्वतान् इंद्रसेनोबलिः २३ स्वात्ममुख्यंभृत्येषुमुख्यं ऋक्षमालांनक्षत्रपंक्तिम् २४ समस्तरेफान्सर्वशब्दान् २५ २६

रसेरसनायांमन्युक्रोधाभिमानिनंदेवं २७ रेतसउद्भूतं २८ २९ ३० वैद्याधरोविद्याधरसंबंधी ३१ ३२ कियत्पर्यंतमवर्धतेतितत्राह क्षितिमिति ३३ ३४ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेवि०टी० एकोनविंशोध्यायः ॥ १९ ॥ सर्वस्वापहरणेपिभगवद्भक्तस्याण्वपिमनोदुःखंनस्यादितिदर्शयितुमुत्तराध्यायारंभः तत्रादौब्रह्मणोतिथेरागमनेपादार्चनादिगार्हस्थ्यधर्मप्रदर्शनप्रकारंवक्ति सतमिति इतास्वधाम्न.सत्यनाम्नोद्युतिर्यस्यसतथा नखेदुभिर्हरेरीरितिशेषः आवृतःपरिवारैरितिशेषः अभ्यगात्पाददेशमितिशेषः १ २ यस्यहरेःस्मरणानुभावःनिरंतरोपास्तिप्रभावस्तस्मात् । अनुभावःप्रभावेस्या

वाण्यांचछंदांसिरसेजलेशंभ्रुवोर्निषेधंचविधिंचपक्ष्मसु ॥ अहश्चरात्रिंचपरस्यपुंसोमन्युंललाटेधरएवलोभम् २७ स्पर्शेचकामंनृपरेतसांभःपृष्ठेत्वधर्मं क्रमणेषुयज्ञम् ॥ छायासुमृत्युंहसितेचमायांतनूरुहेष्वौषधिवीरुधश्च २८ नदाश्चनाडीषुशिलानखेषुबुद्धावजंदेवगणान्नृषींश्च ॥ प्राणेषुगात्रेस्थिरजंगमा निसत्त्वानि... निक्षणार्धमात्रेणविष्टब्धमूर्तेः २९ सर्वात्मनीदंभुवनंनिरीक्ष्यसर्वेऽसुराःकश्मलमापुरंग ॥ सुदर्शनंचक्रमसह्यतेजोधनुश्चशार्ङ्गंस्तनयित्नुघोषम् ३० पर्ज न्यघोषोजलजःपांचजन्यःकौमोदकीविष्णुगदातरस्विनी ॥ वैद्याधरोसिःशतचंद्रयुक्तस्तूणोत्तमावक्षयसायकौच ३१ सुनंदमुख्याउपतस्थुरीशंपार्ष दमुख्याःसहलोकपालाः ॥ स्फुरत्किरीटांगदमीनकुंडलश्रीवत्सरत्नोत्तममेखलांबरैः ३२ मधुव्रतस्रग्वनमालयावृतोरराजराजन्भगवानुरुक्रमः ॥ क्षि तिंपदैकेनबलेर्विचक्रमेनभःशरीरेणदिशश्चबाहुभिः ३३ पदंद्वितीयंक्रमतस्त्रिविष्टपंनवैतृतीयस्यतदीयमण्वपि ॥ उरुक्रमस्यांघ्रिरुपर्युपर्यथोदिवोमहर्जना भ्यांतपसःपरंगतः ३४ ॥ इतिश्रीभागवतेअष्टमस्कंधेएकोनविंशोध्यायः ॥ १९ ॥ श्रीशुकउवाच ॥ सतंसमीक्ष्याब्जभवोनखेंदुभिर्हतस्वधामद्युतिरावृतो भ्यगात् ॥ मरीचिमिश्राऋषयोबृहद्व्रताःसनंदनाद्यानरदेवयोगिनः १ वेदोपवेदानियमायमान्वितास्तर्केतिहासांगपुराणसंहिताः ॥ येचापरेयोगसमीरदीपि तज्ञानाग्निनारंधितकर्मकल्मषाः २ ववंदिरेयत्स्मरणानुभावतःस्वायंभुवंधामगताअकर्मकम् ॥ अथांघ्रयेप्रोन्नमितायविष्णोरुपाहरत्पद्मभवोर्हणादिकम् ३ समर्च्यभक्त्याभ्यगृणाच्छुचिश्रवायन्नाभिपंकेरुहसंभवःस्वयम् ४ धातुःकमंडलुजलंतदुरुक्रमस्यपादावनेजनपवित्रतयानरेंद्र ॥ स्वर्धुन्यभून्नभसिसापत तीनिमार्ष्टिलोकत्रयंभगवतोविशदेवकीर्तिः ५ ब्रह्मादयोलोकनाथाःस्वनाथायसमादृताः ॥ सानुगाबलिमाजहुःसंक्षिप्तात्मविभूतये ६ तोयैःसमर्हणैः स्रग्भिर्दिव्यगंधानुलेपनैः ॥ धूपैर्दीपैःसुरभिभिर्लाजाक्षतफलांकुरैः ७ स्तवनैर्जयशब्दैश्चकीर्तिभिर्नियमांकितैः ॥ नृत्तवादित्रगीतैश्चशंखदुंदुभिनिः स्वनैः ८ जांबवानृक्षराजस्तुभेरीशब्दैर्मनोजवः ॥ विजयंदिक्षुसर्वासुमहोत्सवमघोषयत् ९ महींसर्वांहृतांदृष्ट्वात्रिपदव्याजयाच्ञया ॥ ऊचुःस्वभर्तुर सुरादीक्षितस्यात्यमर्षिताः १० नवाअयंब्रह्मबंधुर्विष्णुर्मायाविनांवरः ॥ द्विजरूपप्रतिच्छन्नोदेवकार्यंचिकीर्षति ११ निश्चयेभावसूचकइतियादवः ।

स्वायंभुवंस्वयंभुवोब्रह्मणोविद्यमानंधामगृहंसत्यलोकंगताःमरीचिप्रधानास्तस्यअकर्मणाज्ञानेनाप्राप्यंयत्तत्पदंववंदिरइत्यन्वयः ३ यस्यहरेस्तस्यविष्णोस्तत्कमंडलुजलंस्वर्धुनीस्वर्गगानदीअभूत् निमार्ष्टिशुद्धंकरोति ४ ५ असंक्षिप्तासंकोचरहिता अपरिमितात्मभूतिःस्वरूपश्रीर्येनसतथातस्मैभूतिःश्रीर्जन्मभस्मनिइतिच ६ ७ ८ ९ १० अयंब्रह्मबंधुर्नवैकिंस्विद्विष्णुः ११

१२ १३ १४ १५ १६ १७ स्वांस्वांस्वस्यभागांअसुरसेनां १८ १९ २० पौरुषैःपुरुषकारैः २१ २२ २३ २४ २५ रसारसातलं २६ विराट्पक्षिराट्कतोःसौत्येहानिकतोःसोमपानदिवसे २७ २८ २९ ३० पदत्रयमितंभूरमिताऽतःकथंतृतीयमुपकल्पयेत्युच्यतइतितत्राह यावदिति ३१ अस्तुभूमेरियत्तातथापिलक्षणशास्त्रलक्षितपदस्याणुत्वेनतन्मितत्वेनाकिमनुपपन्नमित्याशंक्येदंपदमलौ किकमित्याशयेनापूर्तिमाह पदेति ३२ आत्मनाप्रतिश्रुतंस्ववित्तमदातुस्तवयतोनष्टप्रातिज्ञस्तस्मात् ३३ किंच यःप्रतिश्रुतंनपूरयतितस्यस्वर्गमाप्नवानीतिमनोरथोमृषाभवति प्रतिश्रुतैकदेशदाने



अनेनयाचमानेनशत्रुणाबटुरूपिणा ॥ सर्वस्वंनोहृतंभर्तुर्न्यस्तदंडस्यबार्हिषि १२ सत्यव्रतस्यसततंदीक्षितस्यविशेषतः ॥ नानृतंभाषितुंशक्यंब्रह्मण्य स्यदयावतः १३ तस्मादस्यवधोधर्मोभर्तुःशुश्रूषणंचनः ॥ इत्यायुधानिजगृहुर्बलेरनुचरासुराः १४ तेसर्वेवामनंहंतुंशूलपट्टिशपाणयः ॥ अनिच्छतो बलेराजन्प्राद्रवन्जातमन्यवः १५ तानभिद्रवतोदृष्ट्वादितिजानीकपान्नृप ॥ प्रहस्यानुचराविष्णोःप्रत्यषेधन्नुदायुधाः १६ नंदःसुनंदोथजयोविजयःप्रब लोबलः ॥ कुमुदःकुमुदाक्षश्चविष्वक्सेनःपतत्रिराट् १७ जयंतःश्रुतदेवश्चपुष्पदंतोथसात्वतः ॥ सर्वेनागायुतप्राणाःस्वांस्वांतेजघ्नुरासुरीम् १८ हन्यमा नान्स्वकान्दृष्ट्वापुरुषानुचरैर्बलिः ॥ वारयामाससंरब्धान्काव्यशापमनुस्मरन् १९ हेविप्रचित्तेहेराहोहेहेतेश्रूयतांवचः ॥ मायुध्यतानिवर्तध्वंननःकालोय मर्थकृत् २० यःप्रभुःसर्वभूतानांसुखदुःखोपपत्तये ॥ तंनातिवर्तितुंदैत्याःपौरुषैरीश्वरःपुमान् २१ योनोभवायप्रागासीदभवायदिवौकसाम् ॥ सएवभ गवानद्यवर्ततेतद्विपर्ययः २२ बलेनसचिवैर्बुद्ध्यादुर्गमंत्रौषधादिभिः ॥ सामादिभिरुपायैश्चकालंनात्येतिवैजनः २३ भवद्भिर्निर्जिताह्येतेबहुशोनुचराह रेः ॥ दैवरुद्धास्तएवाद्ययुधिजित्वानदंतिनः २४ एतान्वयंविजेष्यामोयदिदैवंप्रसीदति ॥ तस्मात्कालंप्रतीक्षध्वंयोनोर्थत्वायकल्पते २५ ॥ श्रीशुकउ वाच ॥ पत्युर्निगदितंश्रुत्वादैत्यदानवयूथपाः ॥ रसांनिर्विविशूराजन्विष्णुपार्षदताडिताः २६ अथतार्क्ष्यसुतोज्ञात्वाविराड्प्रभुचिकीर्षितम् ॥ बबंध वारुणैःपाशैर्बलिंसौत्येहनिक्रतोः २७ हाहाकारोमहानासीद्रोदस्योःसर्वतोदिशम् ॥ गृह्यमाणेसुरपतौविष्णुनाप्रभविष्णुना २८ तंबद्धंवारुणैःपाशैर्भ गवानाहवामनः ॥ नष्टश्रियंस्थिरप्रज्ञमुदारयशसंनृप २९ पदानित्रीणिदत्तानिभूमेर्मह्यंत्वयासुर ॥ द्वाभ्यांक्रांतामहीसर्वातृतीयमुपकल्पय ३० यावत्तपत्यसौगोभिर्यावदिंदुःसहोडुभिः ॥ यावद्वर्षतिपर्जन्यस्तावतीभूरियंतव ३१ पदैकेनमयाक्रांतोभूर्लोकोविवरैःसह ॥ स्वर्लोकस्तुद्वितीयेनपश्य तस्तेमयात्मना ३२ प्रतिश्रुतमदातुस्तेनिरयेवासइष्यते ॥ विशत्वंनिरयंतस्माद्गुरुणाचानुमोदितः ३३ विप्रायप्रतियोश्रुत्यनतदर्पयतेकचित् ॥ वृथा मनोरथस्तस्यदूरंस्वर्गात्पतत्यधः ३४ विप्रलब्धोददामीतित्वयाहंचाढ्यमानिना ॥ तद्व्यलीकफलंभुंक्ष्वनिरयंकतिचित्समाः ३५ ॥ ॥ इतिश्री भागवतेमहापुराणेअष्टमस्कंधेविंशोध्यायः ॥ २० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

नापिमनोरथःस्यादितिचेत्सत्यंतत्फलंस्वर्गंप्राप्नोति पुनस्ततोऽदानदोषेणनिकृष्टांतिरश्चांयोनिमाप्नोतीत्याह दूरमिति अधःपतित्वादूरंयातीत्यर्थः ३४ प्रतिश्रुतैकदेशदानात्फलप्राप्तिःस्यादित्यभ्युपगम्य चेदमुक्तं तच्चतदपिनस्यात्किंतुनिरयनिवासएवविप्रलंभदोषादित्याह विप्रलब्धइतितत्तस्माद्व्यलीकफलमनृतफलं ३५ ॥ ॥ इतिश्रीभागवतेअष्टमस्कंधेवि०कृ०टी०विंशोध्यायः ॥ २० ॥

बलिःस्वात्मनोलीकंप्रकारांतरेणपरिहर्तुमाह एवमिति १ प्रलंभनंवंचकफलम् । विप्रलंभनंकथंनभवेदितितत्राह पदमिति २ स्वात्मनोऽन्हीलक्षणसामग्रीमाह बिभेमीति ३ अभिज्ञारमत्वंदर्शयति पुंसा मिति ४ पारोक्ष्यंसाक्षात्कारमंतरेणतस्यमदस्यभ्रंशायेनतत्तथा ५ ततोवैरानुबंधेनवैरयुनस्नेहेन ६ ७ ननुकुतोऽन्यथात्वभावइत्याशंक्यश्रुतप्रह्लादमाहात्म्यानुस्मरणादित्याशयेनाह पितामहइति साधुरि तिवादःसाधुवादःस्तुतिलक्षणःविचित्रवैशसंनानाहिंसनंत्वमेवपरमोपस्यसतथा ८ श्रीप्रह्लादःकृपाचर्ययाअतिप्रियदेहादिकमुत्सृज्यश्रीहरिचरणैकशरणमापेतितत्राह किमिति योयेनात्मनादेहेनमुद जहातितद्वियोगलक्षणमरणेनेतिशेषःतस्यपुंसःतेनदेहेनाकिंनाकिमपिप्रयोजनमित्यर्थःरिक्थहारैःपितृधनस्वीकारयोग्यैरेभिरायुषोऽव्ययोनाशइतियत्तस्माद्दुर्जनसगाद्भीतःस्वपक्षोऽसुरजनः तस्यनाशकस्य

श्रीशुकउवाच ॥ एवंविप्रकृतोराजन्बलिर्भगवतासुरः ॥ भिद्यमानोप्यभिन्नात्माप्रत्याहाविक्लवंवचः १ बलिरुवाच ॥ यद्युत्तमश्लोकभवान्ममेरितंव चोव्यलीकंसुरर्षभमन्यसे ॥ करोम्यृतंतन्नभवेत्प्रलंभनंपदंतृतीयंकुरुशीर्ष्णिमेनिजम् २ बिभेमिनाहंनिरयात्पदच्युतोनपाशबंधाद्व्यसनाद्दुरत्ययात् ॥ नैवार्थकृच्छ्राद्भवतोविनिग्रहादसाधुवादाद्भृशमुद्विजेयथा ३ पुंसांश्लाघ्यतमंमन्येदंडमर्हत्तमार्पितम् ॥ यंनमातापिताभ्रातासुहृदश्चादिशंतिहि ४ त्वंनूनमसुराणांनःपारोक्ष्यंपरमोगुरुः ॥ योनोनेकमदांधानांविभ्रंशंचक्षुरादिशः ५ यस्मिन्वैरानुबंधेनरूढेनविबुधेतराः ॥ बहवोलेभिरेसिद्धिंयामिहै कांतयोगिनः ६ तेनाहंनिगृहीतोस्मिभवताभूरिकर्मणा ॥ बद्धश्चवारुणैःपाशैर्नव्रीडेनचविव्यथे ७ पितामहोमेभवदीयसंमतःप्रह्लादआविष्कृत साधुवादः ॥ भवद्विपक्षेणविचित्रवैशसंसंप्रापितस्त्वत्परमःस्वपित्रा ८ किमात्मनानेनजहातियोसुदंःकिरिक्थहारैःस्वजनाख्यदस्युभिः ॥ किंजाय यासंसृतिहेतुभूतयामर्त्यस्यगेहैःकिमिहायुषोव्ययः ९ इत्थंसनिश्चित्यपितामहोमहानगाधबोधोभवतःपादपद्मम् ॥ ध्रुवंप्रपेदेह्यकुतोभयंजनाद्भीतः स्वपक्षक्षपणस्यसत्तमः १० अथाहमप्यात्मरिपोरतवांतिकंदैवेननीतःप्रसभंत्याजितश्रीः ॥ इदंकृतांतांतिकवर्तिजीवितंययाध्रुवंस्तब्धमतिर्नबुध्यते ११ श्रीशुकउवाच ॥ तस्येत्थंभाषमाणस्यप्रह्लादोभगवत्प्रियः ॥ आजगामकुरुश्रेष्ठराकापतिरिवोत्थितः १२ तमिंद्रसेनःस्वपितामहंश्रियाविराजमानंनलि नायतेक्षणम् ॥ प्रांशुंपिशंगांबरमंजनत्विषंप्रलंबबाहुंसुभगंसमैक्षत १३ तस्मैबलिर्वारुणपाशयंत्रितःसमर्हणंनोपजहारपूर्ववत् ॥ ननाममूर्ध्नाश्रुविलोल लोचनःसव्रीडनीचीनमुखोबभूवह १४ सतत्रहासीनमुदीक्ष्यसत्पतिंसुनंदनंदाद्यनुगैरुपासितम् ॥ उपेत्यभूमौशिरसामहामनानाममूर्ध्नापुलकाश्रुविक्ल वः १५ ॥ प्रह्लादउवाच ॥ त्वयैवदत्तंपदमैंद्रमूर्जितंहृतंत्वयैवाद्यतथैवशोभनम् ॥ मन्येमहानस्यकृतोह्यनुग्रहोविभ्रंशितोयच्छ्रिय आत्ममोहनात् १६

९ १० मगाप्ययमेवनिश्चयइतिभावेनाह अथेति असुरजातित्वान्ममशत्रुभूतस्य । त्वयात्याजितराज्यश्रीः बुभुपुणेयंश्रीर्बलादपित्याज्याअन्यथानर्थयोगएवेतिभावेनाह इदमिति ययाश्रियास्तब्ध मतिःकृतांतांतिकवर्तींदंजीवितंनजानातीत्यन्वयः ११ शुकःप्रह्लादस्यभक्त्यातिशयंदर्शयितुंबलेःस्तवनेनभगवद्भक्तिविशेषमाज्ञायागमनमितितदागमनमाह शुकइति १२ प्रांशुमुन्नतम् १३ सव्री डत्वेननीचीनमवाचीनंमुखंयस्यसतथा १४ १५ आत्मनोमोहहेतुभूतयाश्रियाविभ्रंशितोविगलितइतियदयंमहाननुग्रहोस्यकृतइतिमन्ये तत्तस्मात्कःपुमानात्मनोगतिंयथावदभिचष्टेनकोऽपि यथात्मनः स्वस्यगतिंसर्वत्रस्वातंत्र्यलक्षणामभिचष्टेतथाकःपरमात्मनोगतिंस्थितिस्वातंत्र्यलक्षणांपश्यति श्रीमदांधत्वान्नपश्यतीतिवा १६

१७ १८ स्वभर्तृगर्वोद्रेकं कटाक्षीकृत्य भगवंतं समीडे क्रीडार्थमिति वेत्त्वयेदं त्रिजगदात्मनः क्रीडार्थं कृतामितिसांगिरंतं केचित् क्रीडार्थं सृष्टिरित्येकइतिश्रुतेः हेईशतत्रापरे कुधियोऽसुरप्रकृतयः आत्मनः स्वाम्यं कुर्युः वयमस्य स्वामिनइतिजल्पंतिजल्पं कुर्वंति तत्रापितुशब्दो महाविशेषं प्रकाशयति तेनतवस्वाम्यस्यनकामपिहानिमापादयंतिइत्याह कर्तुरिति त्वयाऽवरोपितोविचालितोहंकर्तेतिविवादोयेषांतेतथा अतएवत्यक्तलज्जास्तेकुधियोस्यजगतः कर्तुः प्रभोरधिपतेस्तवकिमावहंति नाकिमपिहानिंकुर्वंतीत्यर्थः समर्थोधिपतौप्रभुरितिच १९ २० २१ २२ बंधनादिकमासुरजन्मदोषापहरणायत्वयाकृतंनतुद्वेषादन्यथातववैषम्यनैर्घृण्येस्यातांनतद्युक्तमित्याशयेनाह यत्पादयोरिति नविक्लवमनाः सर्वस्वदानादप्यहीनमनाः २३ यद्यपिब्रह्माभगवदभिप्रायंवेत्तितथापीतरेषांतज्ज्ञापनायस्वाभिप्रायंवक्ति ब्रह्मन्निति ब्रह्मन्प्रजापतेयन्मदः यद्विचनिमित्तमदः २४ नानायोनिभ्यउत्तमत्वेनमदोद्रेकहेतोरपिपुरुषयोनेर्यदृच्छयाप्राप्तौमदनुगृहीतस्यपुंसोमदोनैवोत्पद्यतइत्याह यदा

यथाहिविद्वानपिमुह्यतेजनस्तत्कोभिचष्टेगतिमात्मनोयथा ॥ तस्मैनमस्तेजगदीश्वरायवैनारायणायाखिललोकसाक्षिणे १७ ॥ श्रीशुकउवाच ॥ बद्धं वीक्ष्यपतिंसाध्वीतत्पत्नीभयविह्वला ॥ प्रांजलिःप्रणतोपेंद्रंबभाषेवाङ्मुखीनृप १८ ॥ विंध्यावलिरुवाच ॥ क्रीडार्थमात्मनइदंत्रिजगत्कृतंतेस्वाम्यंतु तत्रकुधियोपरईशकुर्युः ॥ कर्तुःप्रभोस्तवकिमस्यतआवहंतित्यक्तह्रियस्त्वदवरोपितकर्तृवादाः १९ ॥ श्रीशुकउवाच ॥ तस्यानुशृण्वतोराजन्प्रह्लादस्य कृतांजलेः ॥ हिरण्यगर्भोभगवानुवाचमधुसूदनम् २० ॥ ब्रह्मोवाच ॥ भूतभावनभूतेशदेवदेवजगन्मय ॥ मुंचैनंहृतसर्वस्वंनायमर्हतिनिग्रहम् २१ कृत्स्नातेऽनेनदत्तांलोकाःकर्मार्जिताश्चये ॥ निवेदितंचसर्वस्वमात्माविक्लवयाधिया २२ यत्पादयोरशठधीःसलिलंप्रदायदूर्वांकुरैरपिविधायसतींसपर्याम् ॥ अप्युत्तमांगतिमसौभजतेत्रिलोकींदत्वानविक्लवमनाःकथमार्तिमृच्छेत् २३ ॥ श्रीभगवानुवाच ॥ ब्रह्मन्यमनुगृह्णामितद्विशोविधुनोम्यहम् ॥ यन्मदःपुरुषस्तब्धोलोकंमांचावमन्यते २४ यदाकदाचिज्जीवात्मासंसरन्निजकर्मभिः ॥ नानायोनिष्वनीशोयंपौरुषींगतिमाव्रजेत् २५ जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ॥ यद्यस्यनभवेत्स्तंभस्तत्रायंमदनुग्रहः २६ मानस्तंभनिमित्तानांजन्मादीनांसमंततः ॥ सर्वश्रेयःप्रतीपानांहंतमुह्येन्नमत्परः २७ एषदानवदैत्यानामग्रणीःकीर्तिवर्धनः ॥ अजैषीदजयांमायांसीदन्नपिनमुह्यति २८ क्षणाद्विभ्रंशितःस्थानाक्षिप्तोबद्धश्चशत्रुभिः ॥ ज्ञातिभिश्चपरित्यक्तोयातनामनुयापितः २९ गुरुणाभर्त्सितःशप्तोजहौसत्यंनसुव्रतः ॥ छलैरुक्तोमयाधर्मोनायंत्यजतिसत्यवाक् ३० एवंमेप्रापितःस्थानंदुष्प्रापममरैरपि ॥ सावर्णेरंतरस्यायंभवितेंद्रोमदाश्रयः ३१

कदाचिदिति अयंजीवात्मानिजकर्मभिर्नानायोनिषुसंसरन्कदाचिद्दैववशात्पौरुषींगतिमाव्रजेत् २५ तत्रपौरुषगतौयद्यस्यजीवात्मनोमदर्चनादौस्तंभस्तंद्रीलक्षणानभवेत्तर्ह्ययंमदनुग्रहः मत्कटाक्षरातल्लक्षणइतिज्ञातव्यम् २६ स्वभक्तलक्षणमाह मानस्तंभेति पंचम्यर्थेजन्मादीनामितिषष्ठी २७ एतल्लक्षणदर्शनायदैवीमायामार्गोनगंतव्यः किंत्वत्रैवेतिभावेनाह एषदानवेति अजया अजेयां नजयोयस्याःसाजयेति २८ यातनातीव्रवेदनाम् २९ सत्यत्यागनिमित्तक्षीणत्वादिकंप्राप्तोपिसत्यंनत्यक्तवानित्यन्वयः ३० भवतास्मैकिमनुगृह्यतेत्वद्दत्तापितितत्राह एवमिति किंतत्स्थानमत्राह सावर्णेरिति ३१

तर्हितावत्पर्यंतमाशायोद्रेकवदेवंविधक्लेशमनुभूयस्थीयतांकितत्राह तावत्सुतलमिति तत्रान्येषामपिक्लेशानुभवोनास्तिकिंपुनरस्यैवेतिभावेनवक्ति यत्राधयइति ३२ उपसर्गाउपद्रवाः भवदाज्ञामंतरेणेमंक पर्गमिष्यामीतिशंकामाभूदित्याह इंद्रसेनेति ३३ मृतवदेकःकथगमिष्यामीत्यतउक्तं ज्ञातिभिरिति स्वर्गस्थैरर्थ्यचेत्स्पर्द्धपालोकेशामामुपद्रविष्यंतीतितत्राह नत्वामिति ३४ राज्यंत्यक्त्वागतस्यतव शासनेवयंनतिष्ठामइतितिष्ठतांदंडमाह त्वच्छासनेति किंबहुनोक्तेनसर्वतोमद्रक्षावज्रंतवास्तीत्याह सर्वतइति ३५ नकेवलंसंनिधानविशेषाद्रक्ष्यामिकिंतुप्रत्यक्षतएवेत्यतउक्तं तत्रमामिति तत्राप्ययवन धैस्तदवस्थएवदानवादीनांसंसर्गादितिचशंकामाभूदित्याह तत्रदानवेति ३६ सद्यःकुंठइत्यकंपदसद्यःकुंठःछेदोयस्यसतथाअवनंक्ष्यतीति विनक्ष्यतीतिपाठेनिर्मूलोभविष्यतीत्यर्थः ३७ इ०भा०अष्टमस्क धेवि०टी०एकविंशोध्यायः ॥२१॥ भगवतिभक्तिमतःपुरुषस्यकिमपिदुःसाध्यंनास्तीत्येतत्प्रपंच्यतेस्मिन्नध्याये तत्रबलेर्ईर्याज्ञाकरणवक्तुमाह इत्युक्तवंतमिति भक्तेरुत्कलउद्रेकोयस्यसतथा १ समुद्यतःऊ

तावत्सुतलमध्यास्तांविश्वकर्मविनिर्मितम् ॥ यत्राधयोव्याधयश्चक्लमस्तंद्रीपराभवः ३२ नोपसर्गानिवसतांसंभवंतिममेच्छया ॥ इंद्रसेनमहाराजयाहिभोभद्रमस्तुते ३३ सुतलंस्वर्गिभिःप्रार्थ्यंज्ञातिभिःपरिवारितः ॥ नत्वामभिभविष्यंतिलोकेशाःकिमुतापरे ३४ त्वच्छासनातिगान्दैत्यान्चक्रंमेसूदयिष्यति ॥ रक्षिष्येसर्वतोहंत्वांसानुगंसपरिच्छदम् ३५ सदासन्निहितंवीरतत्रमांद्रक्ष्यतेभवान् ॥ तत्रदानवदैत्यानांसंगात्तेभावआसुरः ३६ दृष्ट्वामदनुभावंवैसद्यःकुंठोविनंक्ष्यति ३७ इतिश्रीभागवतेमहापुराणेअष्टमस्कंधेबलिविमोक्षणंनामएकविंशोध्यायः॥२१॥ श्रीशुकउवाच ॥ इत्युक्तवंतंपुरुषंपुरातनंमहानुभावोखिलसाधुसंमतः ॥ बद्धांजलिर्बाष्पकलाकुलेक्षणोभक्त्युत्कलोगद्गदयागिराब्रवीत् १ बलिरुवाच ॥ अहोप्रसादोस्यकृतःसमुद्यतःप्रपन्नभक्तार्थविधौसमाहितः ॥ यल्लोकपालैस्तदनुग्रहोमरैरलब्धपूर्वोपसदेऽसुरेर्पितः २ श्रीशुकउवाच ॥ इत्युक्त्वाहरिमानम्यब्रह्माणंसभवंततः ॥ विवेशसुतलंप्रीतोबलिर्मुक्तःसहासुरैः ३ एवमिंद्रायभगवान्प्रीत्यानीयत्रिविष्टपम् ॥ पूरयित्वादितेःकाममशासत्सकलंजगत् ४ लब्धप्रसादंनिर्मुक्तंपौत्रंवंशधरंबलिम् ॥ निशाम्यभक्तिप्रवणःप्रह्लादइदमब्रवीत् ५ ॥ प्रह्लादउवाच ॥ ॥ नेमंविरिंचोलभतेप्रसादंनश्रीर्नशर्वःकिमुतापरेते ॥ यन्नोसुराणामसिदुर्गपालोविश्वाभिवंद्यैरभिवंदितांघ्रिः ६ यत्पादपद्ममकरंदनिषेवणेनब्रह्मादयःशरणदाश्नुवतेविभूतीः ॥ कस्माद्वयंकुसृतयःखलयोनयस्तेदाक्षिण्यदृष्टिपदवींभवतःप्रणीताः ७

ध्वंवर्धमानस्यास्यतवप्रसादोअहो कुतोविस्मयइत्यतउक्तं कृतइति स्वेनेतिशेषः इतोपिविस्मयइत्याह प्रपन्नइति समाहितःएकाग्रीकृतोन्यत्रानवसरदुस्थइत्यर्थः त्वमपिलब्धेकःकिंनस्यादित्यतआत्मानंधिक्करोति यल्लोकेति असुरजातावप्युपसदेअधमेअलब्धपूर्वइतियथायोग्यमितिज्ञातव्यं २ ३ ४ लब्धप्रसादश्चनिर्मुक्तश्चतं ५ विश्वाभिवंद्यैर्ब्रह्मादिभिरभिवंदितांघ्रिःश्रीकांतोसुराणामपिनोदुर्गपालोद्वारपालश्चासीदिति यदिमंप्रसादंविरिंचादिभिर्नलभ्यतेइत्यन्वयः ६ कुसृतयःकुत्सितमार्गास्तत्रहेतुमाह खलयोनयइति तस्यतेतवकस्माद्धेतोर्दाक्षिण्यदृष्टिपदवींप्रणीताःभक्तानुकंपित्वमंतरेणेतिशेषः यमेवैषवृणुतेतेनलभ्यइतिश्रुतेः ७

भवस्त्वद्रूपत्वादाहितमपि लोकविलक्षणामितिभावेनाह चित्रमिति तवचित्रंनानाविधमीहितंचेष्टितमहो अहोहिहविस्मयइतियादवःतन्कथमितितत्राह विषमेति विषमस्वभावोसिमक्तप्रियोसिकल्प तरुस्वभावोसियत्तस्माद्विस्मयःसमदृशोविषमस्वभावत्वंसर्वात्मनोभक्तप्रियत्वेनकल्पतरुस्वभावत्वंचविस्मयहेतुरित्यर्थः ८ बलिप्रह्लादयोर्भगवद्भक्तत्वेपिबलेर्बंधनादिदुःखमभूत्किंन्विमित्तमितिशंकाब लिरप्यसुरावेशात्स्तुवन्नपिजनार्दनम् आक्षिपत्यंतराकापिप्रह्लादोनेत्यभक्तिमानित्यनेनपरिहर्तव्या आक्षेपफलंदुःखमित्यर्थः ९ १० ११ ११ १२ कर्मवितन्वतोस्ययत्तद्ब्रह्मभिर्ब्राह्मणैर्दृष्टं निरूपितंकर्मसुवैषम्यमंतरायोपहतिःयथासमविहितफलत्वस्त्वेनसमर्थंभवेत्तथातवशिष्यस्यबलेः कर्मणोवैषम्यलक्षणमपराधंसंतनुपरिहृतंकुरु कर्मरंध्रसमुन्नतंकुरुवा छिद्रंरंध्रापराधयोरित्यभिधानंब्र

चित्रंतवेहितमहोमितयोगमायालीलाविसृष्टभुवनस्यविशारदस्य ॥ सर्वात्मनःसमदृशोविषमस्वभावोभक्तप्रियोयदसिकल्पतरुस्वभावः ८ श्रीभगवानुवाच ॥ वत्सप्रह्लादभद्रंतेप्रयाहिसुतलालयम् ॥ मोदमानःस्वपौत्रेणज्ञातीनांसुखमावह ९ नित्यंद्रष्टासिमांतत्रगदापाणिमवस्थितम् ॥ मद्दर्शनमहाह्लादध्वस्तकर्मनिबंधनः १० श्रीशुकउवाच ॥ आज्ञांभगवतोराजन्प्रह्लादोबलिनासह ॥ बाढमित्यमलप्रज्ञोमूर्ध्न्याधायकृतांजलिः ११ परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः ॥ प्रणतस्तदनुज्ञातःप्रविवेशमहाबिलम् १२ अथाहोशनसंराजन्हरिर्नारायणोंतिके ॥ आसीनमृत्विजांमध्येसदसिब्रह्मवादिनाम् १३ ब्रह्मन्संतनुशिष्यस्यकर्मच्छिद्रंवितन्वतः ॥ यत्तत्कर्मसुवैषम्यंब्रह्मदृष्टंसमंभवेत् १४ शुक्रउवाच ॥ कुतस्तत्कर्मवैषम्यंयस्यकर्मेश्वरोभवान् ॥ यज्ञेशोयज्ञपुरुषःसर्वभावेनपूजितः १५ मंत्रतस्तंत्रतश्छिद्रंदेशकालार्हवस्तुतः ॥ सर्वंकरोतिनिश्छिद्रमनुसंकीर्तनंतव १६ तथापिवदतोभूमन्करिष्याम्यनुशासनम् ॥ एतच्छ्रेयःपरंपुंसांयत्तवाज्ञानुपालनम् १७ अभिनंद्यहरेराज्ञामुशनाभगवानिति ॥ यज्ञच्छिद्रंसमतनोद्बलेर्विप्रर्षिभिःसह १८ एवंबलेर्महींराजन्भिक्षित्वावामनोहरिः ॥ ददौभ्रात्रेमहेंद्रायत्रिदिवंयत्परैर्हृतम् १९ प्रजापतिपतिर्ब्रह्मादेवर्षिपितृभूमिपैः ॥ दक्षभृग्वंगिरोमुख्यैःकुमारेणभवेनच २० कश्यपस्यादितेःप्रीत्यैसर्वभूतभवायच ॥ लोकानांलोकपालानामकरोद्वामनंपतिम् २१ वेदानांसर्वदेवानांधर्मस्ययशसःश्रियः ॥ मंगलानांव्रतानांचकल्पंस्वर्गापवर्गयोः २२ उपेंद्रंकल्पयांचक्रेपतिंसर्वविभूतये ॥ तदासर्वाणिभूतानिभृशंमुमुदिरेनृप २३ ततस्त्विंद्रःपुरस्कृत्यदेवयानेनवामनम् ॥ लोकपालैर्दिवंनिन्येब्रह्मणाचानुमोदितः २४ प्राप्यत्रिभुवनंचेंद्रउपेंद्रभुजपालितम् ॥ श्रियापरमयाजुष्टोमुमुदेगतसाध्वसः २५ ब्रह्माशर्वःकुमारश्चभृग्वाद्यामुनयोनृप ॥ पितरःसर्वभूतानिसिद्धावैमानिकाश्चये २६ सुमहत्कर्मतद्विष्णोर्गायंतःपरमाद्भुतम् ॥ धिष्ण्यानिस्वानितेजग्मुरदितिंचशशंसिरे २७ सर्वमेतन्मयाख्यातंभवतःकुलनंदन ॥ उरुक्रमस्यचरितंश्रोतॄणामघमोचनम् २८

ह्मणादृष्टंवा १४ सतिछिद्रेतत्परिहारस्तदेवनास्ति अस्तिचेदपितवनामसंकीर्तनंनिश्छिद्रंकरोतीतिवक्तुमुशनेत्याह शुक्रइति यज्ञपुरुषोभवान्यस्यबलेःकर्मेश्वरःकुत.यज्ञेशइति अनेनसर्वयज्ञस्वामित्वंतव विद्यतेकिमुतैतद्यज्ञस्वामित्वंबलेस्त्वद्भक्तत्वादितिसूचितं तस्यबलेःकर्मवैषम्यंकुतोहेतोःस्यादित्यन्वयः सर्वभावेनसर्वदानेनपूजितइत्यस्माच्च १५ तवानुसंकीर्तनंमंत्रतस्तंत्रतश्छिद्रंसर्वंदेशकालोचितवस्तुतोपयथातथानिश्छिद्रंपूर्णंकरोतीत्यन्वयः १६ १७ १८ १९ २० २१ २२ २३ ततःबलियज्ञशालायाः २४ २५ २६ २७ २८

ब्रह्मादेर्महिमातिरिक्तमहिमत्वेमुरारेश्चरितस्यसंसाराख्याघसंघाताविघातदक्षत्वंघटतामपितत्कथमित्याशंक्यप्रमाणपूर्वकंतदाह पारंमहिम्नइतित्रिःगानुकंत्रीर्याणिप्रवोच नतेविष्णोजायमानोनजातइति
मंत्रदृग्वेदद्रष्टाऋषिरित्याह यस्यपुरुषस्ययोमर्त्यःपार्थिवानिरजांसिपार्थिवपरमाणून्विममेमानंकरोत्यपि छंदसिऽपत्ययोवहुलमितिवचनाल्लडर्थेलिट्जातोजायमानःउतजनिष्यमाणोवासमर्थःमहि
म्नःपारंसमाप्तिंउपैतीतिकिंनैवोपैतीत्यन्वयःपुरुषःकइतितत्राह मुरारिरिति सपद्धतिलकइतिनेत्याह उरुविक्रमतइति उरुमहद्यथाभवतितथेतिक्रियाविशेषणंकविरप्यतिक्रांतदर्शयेपीतिवा २९
यस्तस्याद्भुतकर्मणोदेवदेवस्यहरेरवतारानुचरितंशृण्वन्नर्तवेसपरांगतिंवैकुंठाख्यांयातीत्यन्वयः ३० अन्यविषयकर्मसमयेपिकीर्त्यमानमिदंभगवत्कर्मपूर्णफलप्रदंकरोतीत्याह क्रियमाणइति अथ
मंगलेदैवप्रभृतिकर्मणिक्रियमाणेसतीदमवतारानुचरितंयत्रयत्रकर्मणिकीर्त्यैततेषांपुंसांतत्तत्कर्मसुकृतंपूर्णफलदानसमर्थंविदुर्ज्ञानिनइतिशेषः३१ इतिश्रीभागवतेअष्टमस्कंधेवि०टी०द्वाविंशोध्यायः॥२२॥

पारंमहिम्नउरुविक्रमतोमुरारेर्यःपार्थिवान्यपिकविर्विममेरजांसि ॥ किंजायमानउतजातउपैतिमर्त्यइत्याहमंत्रदृगृषिःपुरुषस्ययस्य २९ यइदंदेवदेवस्यह
रेरद्भुतकर्मणः ॥ अवतारानुचरितंशृण्वन्यातिपरांगतिम् ३० क्रियमाणेकर्मणीदंदैवेपित्र्येथमानवे ॥ यत्रयत्रानुकीर्त्यैततत्तेषांसुकृतंविदुः ३१ ॥ इति
श्रीभागवतेअष्टमस्कंधेद्वाविंशोध्यायः ॥२२॥ राजोवाच ॥ भगवञ्छ्रोतुमिच्छामिहरेरद्भुतकर्मणः ॥ अवतारकथामाद्यांमायामत्स्यविडंबनाम् १ यद
र्थमदधद्रूपंमात्स्यंलोकजुगुप्सितम् ॥ तमःप्रकृतिदुर्मर्षंकर्मग्रस्तइवेश्वरः २ एतन्नोभगवन्सर्वंयथावद्वक्तुमर्हसि ॥ उत्तमश्लोकचरितंसर्वलोकसुखावहम्
३ सूतउवाच ॥ इत्युक्तोविष्णुरातेनभगवान्बादरायणिः ॥ उवाचचरितंविष्णोर्मत्स्यरूपेणयत्कृतम् ४ ॥ श्रीशुकउवाच ॥ गोविप्रसुरसाधूनांछंदसा
मपिचेश्वरः ॥ रक्षामिच्छंस्तनूर्धत्तेधर्मस्यार्थस्यचैवहि ५ उच्चावचेषुभूतेषुचरन्वायुरिवेश्वरः ॥ नोच्चावचत्वंभजतेनिर्गुणत्वाद्धियोगुणैः ६ आसीदती
तकल्पांतेब्राह्मोनैमित्तिकोलयः ॥ समुद्रोपप्लुतास्तत्रलोकाभूरादयोनव ७ कालेनागतनिद्रस्यधातुःशिशयिषोर्बली ॥ मुखतोनिःसृतान्वेदान्हयग्रीवोंति
केहरत् ८ ज्ञात्वातद्दानवेंद्रस्यहयग्रीवस्यचेष्टितम् ॥ दधारशफरीरूपंभगवान्हरिरीश्वरः ९ तत्रराजऋषिःकश्चिन्नाम्नासत्यव्रतोमहान् ॥ नारायणपरोतप्य
त्तपस्तत्सलिलाशये १०योसावस्मिन्महाकल्पेतनयःसविवस्वतः ॥ श्राद्धदेवइतिख्यातोमनुत्वेहरिणार्पितः ११ एकदाकृतमालायांकुर्वतोजलतर्पणम् ॥
तस्यांजल्युदकेकाचिच्छफर्येकाभ्यपद्यत १२

अंशिज्ञानवदंशज्ञानमपिमुक्तिसाधनंगुणाद्यविशेषादितिदर्शनायमत्स्यावतारचरितमनुवर्णयत्यस्मिन्नध्याये तत्रश्रुतवामनावतारचरितसुधापानाद्वितृष्णइवपुनरपिराजादशावताराणामादित्वेनमत्स्या
वतारमाहात्म्यंश्रोतुंपृच्छतिराजेति मायामत्स्यस्यविडंबनंयस्यांसातथा १ कथंजुगुप्सितमभूदितितत्राह तमःप्रकृतीति तमःस्वभावोयस्यसतथा दुर्मर्षंसोढुमशक्यं कर्मग्रस्तोजीवः २ लोकजुगु
प्सितंचेत्किमितिवक्तव्यमत्राह उत्तमेति ३ ४ ५ ननूच्चावचेषुसुरनरादिसंज्ञेषुभोगायतनशरीरेषुवर्तमानस्यहरेरिंद्रियगुणैरवलेपोपिसंभाव्यतेदेवदत्तवदितितत्राह उच्चावचेष्विति धीशब्देनेंद्रियाण्यु
पलक्षयति ६ आदितएववक्तुमुपक्रमते आसीदिति समुद्रैरुपप्लुताआलीनाः ७ अंतिकेविदूरतः ८ ९ १० कोसौसत्यव्रतइतितत्राह योसाविति ११ १२

अंजलितोयेन १३ १४ सःमनुःशफर्याःरक्षणार्थाय १५ १६ अलब्ध्यात्मावकाशमितिक्रियाविशेषणम् १७ १८ उदंचनंमणिकं हस्तत्रयंव्यामत्रयम् १९ पदंस्थानम् २० तत्सरोवरंआत्मनाश रीरेणावृत्यव्याप्य २१ अविदासिनिअगाधेअभिवसेतौवा २२ अनंतरंकिमकरोदितितत्राह इत्युक्तइति जलाशयेऽन्हदे असंमितमसमानंसंमितंसमानंवा २३ २४ २५ एवंविधंवीर्यंयस्यसःएवंवीर्यः अह्नायझटिति व्यानशेव्याप्तः २६ विशेषसंबंधित्वाभ्रारंज्ञानंतद्यनंयस्यसतथा ज्ञानाश्रयःकश्चिच्चेतनएवनारायणः किंनस्यादित्य तःसाक्षाद्धरिरितितुरीयमूर्तिः २७ २८ यदर्थंयत्प्रयोजनायभवतादो

सत्यव्रतोंजलिगतांसहतोयेनभारत ॥ उत्ससर्जनदीतोयेशफरींद्राविडेश्वरः १३ तमाहसातिकरुणंमहाकारुणिकंनृपम् ॥ यादोभ्योज्ञातिघातिभ्योदी नांमांदीनवत्सल ॥ कथंविसृजसेराजन्भीतामस्मिन्सरिज्जले १४ ॥ श्रीशुकउवाच ॥ सआत्मनोनुग्रहार्थंप्रीत्यामत्स्यवपुर्धरम् ॥ अजानन्रक्षणार्थां यशफर्याःसमनोदधे १५ तस्यादीनतरंवाक्यमाश्रुत्यसमहीपतिः ॥ कलशाप्सुनिधायैनांदयालुर्निन्यआश्रमम् १६ सातुतत्रैकरात्रेणवर्धमानाकमंड लौ ॥ अलब्ध्वात्मावकाशंवाइदमाहमहीपतिम् १७ नाहंकमंडलावस्मिन्कृच्छ्रंवस्तुमिहोत्सहे ॥ कल्पयौकःसुविपुलंयत्राहंनिवसेसुखम् १८ सएनां ततआदायन्यधादौदंचनोदके ॥ तत्रक्षिप्तामुहूर्तेनहस्तत्रयमवर्धत १९ नमएतदलंराजन्सुखंवस्तुमुदंचनम् ॥ पृथुदेहिपदंमह्यंयत्त्वाहंशरणंगता २० श्रीशुकउवाच ॥ ततआदायसाराज्ञाक्षिप्ताराजन्सरोवरे ॥ तदावृत्यात्मनासर्वंमहामीनोन्ववर्धत २१ ॥ मीनउवाच ॥ नैतन्मेस्वस्तयेराजन्नुदकंसलि लौकसः ॥ निधेहिरक्षायोगेनह्रदेमामविदासिनि २२ ॥ श्रीशुकउवाच ॥ इत्युक्तःसोनयन्मत्स्यंतत्रतत्राविदासिनि ॥ जलाशयेसंमितंतंसमुद्रेप्राक्षिप ज्झषम् २३ क्षिप्यमाणस्तमाहेदमिहमांमकरादयः ॥ अदंत्यतिबलावीरमांनेहोत्स्रष्टुमर्हसि २४ एवंविमोहितस्तेनवदतावल्गुभारतीम् ॥ तमाहको भवानस्मान्मत्स्यरूपेणमोहयन् २५ नैवंवीर्योजलचरोदृष्टोस्माभिःश्रुतोपिवा ॥ योभवान्योजनशतमह्नायव्यानशेसरः २६ नूनंत्वंभगवान्साक्षाद्धरि र्नारायणोव्ययः ॥ अनुग्रहायभूतानांधत्सेरूपंजलौकसाम् २७ नमस्तेपुरुषश्रेष्ठस्थित्युत्पत्त्यप्ययेश्वर ॥ भक्तानांनःप्रपन्नानांमुख्योह्यात्मगतिर्विभो २८ सर्वेलीलावतारास्तेभूतानांभूतिहेतवे ॥ ज्ञातुमिच्छाम्यदोरूपंयदर्थंभवताधृतम् २९ नतेरविंदाक्षपदोपसर्पणंमृषाभवेत्सर्वसुहृत्प्रियात्मनः ॥ यथेतरेषांपृथगात्मनांसतामदीदृशोयद्वपुरद्भुतंहिनः ३०



मत्स्यरूपंधृतंतत्प्रयोजनपूर्वकंज्ञातुमिच्छामीत्यन्वयः २९ अहंत्वत्स्वरूपज्ञानेयोग्यइत्याह नतइति हेअरविंदाक्षयथापृथगात्मनांभिन्नविषयबुद्धीनांइतरेषांतेतवपदोपसर्पणंमुधावृथाभवेत्तदप्यनेवंवि न्महत्पुण्यंकर्मकरोति तद्वास्यांततःक्षीयतइतिश्रुतिरतएवपृथगित्युक्तं सतांतथानस्यात्तत्रहेतुमाह अदीदृशइति तवाद्भुतंनोऽस्माकंइतरमत्स्यविलक्षणत्वादाश्चर्यंयद्वपुःहुवप्बीजसंतानइतिधातोः जगदुत्पादनसमर्थंरूपंअदीदृशःदर्शितवानिति हियस्मात्संतएतद्रूपज्ञानेयोग्याइत्यर्थःतवविषमस्वभावत्वात्तथात्वमितिनेत्याह सर्वेति ३०

विषयमुखंप्रेरकत्वात्प्रियःतदेतत्प्रेयमितिश्रुतेः ३१ अद्यतनादह्नऊर्ध्वंसप्तमेहनिनिमंक्ष्यतिनिमग्नंभविष्यति अप्ययांभोधौप्रलयसमुद्रे ३२ संवर्ताभसिलयजले उपस्थास्यतिसमीपमागमिष्यति ३३ सर्वैः सत्वैःप्राणिभिःउपबृंहितः पूरितः ३४ निरालोकेतमःप्रायेऋषीणांवर्चसाप्रकाशेनैवनान्येन ३५ दोधूयमानांइतस्ततोत्यतकंप्यमानांनिबध्नीहिनिबंधनंमहाहिनापाशेन ३६ ब्राह्मीब्रह्मसंबंधिनी ३७ तव सम्यक्प्रश्नैःहृदिविवृतंस्पष्टीकृतंमयानुगृहीतंमदीयंब्रह्मेतिशब्दितंमहिमानंज्ञास्यसि ३८ अन्ववैक्षतप्रतीक्ष्यस्थितः ३९ ४० ४१ ४२ अविनाशंविनाशविरोधिजीवानांशंसुखंअविनाशंसुखयुक्तंपदंविधास्य तीतिवा ४३ ४४ वरत्रेणपाशेनमधुवन्मधुसंसारंसूदितवानितिमधुसूदनःतम् ४५ अनाद्यविद्योपहतात्मसंवित्परमात्मज्ञानयेषांतेतथासाविद्यामूलकारणयस्यसतन्मूलःसचसंसारस्तन्मूलसंसारस्तस्मिन्प

इतिब्रुवाणंनृपतिंजगत्पतिःसत्यव्रतंमत्स्यवपुर्युगक्षये ॥ विहर्तुकामःप्रलयार्णवेब्रवीच्चिकीर्षितंकांतजनप्रियःप्रभुः ३१ श्रीभगवानुवाच ॥ सप्तमेद्यत नादूर्ध्वमहन्येतदरिंदम ॥ निमंक्ष्यत्यप्ययांभोधौत्रैलोक्यंभूर्भुवादिकम् ३२ त्रिलोक्यांलीयमानायांसंवर्ताभसिवैतदा ॥ उपस्थास्यतिनौःकाचिद्विशा लात्वांमयेरिता ३३ त्वंतावदोषधीःसर्वाबीजान्युच्चावचानिच ॥ सप्तर्षिभिःपरिवृतःसर्वसत्वोपबृंहितः ३४ आरुह्यबृहतींनावंविचरिष्यस्यविक्लवः ॥ ए कार्णवेनिरालोकेऋषीणामेववर्चसा ३५ दोधूयमानांतांनावंसमीरेणबलीयसा ॥ उपस्थितस्यमेशृंगेनिबध्नीहिमहाहिना ३६ अहंत्वामृषिभिःसाकंस हनावमुदन्वति ॥ विकर्षन्विचरिष्यामियावद्ब्राह्मीनिशाप्रभो ३७ मदीयंमहिमानंचपरंब्रह्मेतिशब्दितम् ॥ वेत्स्यस्यनुगृहीतंमेसंप्रश्नैर्विवृतंहृदि ३८ श्रीशु कउवाच ॥ इत्थमादिश्यराजानंहरिरंतरधीयत ॥ सोन्ववैक्षततंकालंयंहृषीकेशआदिशत् ३९ आस्तीर्यदर्भान्प्राक्कूलान्राजर्षिःप्रागुदङ्मुखः ॥ निष सादहरेःपादौचिंतयन्मत्स्यरूपिणः ४० ततःसमुद्रउद्वेलःसर्वतःप्लावयन्महीम् ॥ वर्धमानोमहामेघैर्वर्षद्भिःसमदृश्यत ४१ ध्यायन्भगवदादेशंददृशेनाव मागताम् ॥ तामारुरोहविप्रेंद्रैरादायौषधिवीरुधः ४२ तमूचुर्मुनयःप्रीतंराजन्ध्यायस्वकेशवम् ॥ सवैनःसंकटादस्मादविनाशंविधास्यति ४३ सोनु ध्यातस्ततोराज्ञाप्रादुरासीन्महार्णवे ॥ एकशृंगधरोमत्स्योहैमोनियुतयोजनः ४४ निबद्ध्यनावंतच्छृंगेयथोक्तोहारिणापुरा ॥ वरत्रेणाहिनातुष्टस्तुष्टावम धुसूदनम् ४५ राजोवाच ॥ अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ॥ यदृच्छयेहोपसृतायमाप्नुयुर्विमुक्तिदोनःपरमोगुरुर्भवान् ४६ जनोबुधोयंनिजकर्मबंधनःसुखेच्छयाकर्मसमीहतेऽसुखम् ॥ यत्सेवयातांविधुनोत्यसन्मतिंग्रंथिंविभिंद्याद्धृदयेसनोगुरुः ४७

रिश्रमस्ततोआतुराःक्लिष्टाःयदृच्छयापूर्वजन्मार्जितपुण्याभिमुखीभूतदेवेच्छयाइहलोकेविशिष्टजन्मोपसृताः पुरुषाःयमाप्नुयुः सपरमोगुरुर्भवान्नोविमुक्तिदोस्त्वित्यन्वयः ४६ कर्मनिर्मूलनंभगवत्सेवनमे वेत्याह जनइति आत्मीयकर्मणाबंधनंयस्यसतथाअयमबुधोजनः सुखमाप्नवानीतीच्छयाकर्मसमीहतेततोसुखदुःखमाप्नोतिइतियत्ततोबुधोजनोयस्येश्वरस्यसेवयाकर्मविषयामसन्मतिं विधुनोति अतः कर्मनिर्मूलनंचाप्नोतिगुरुर्ज्ञानोपदेष्टासनोहृदयेस्थितांग्रंथिंकर्मपाशकृतांभिंद्यादित्यन्वयः ४७

रूपपुमान्यत्सेवया आत्मनस्तमोलक्षणंमलंविजह्याज्जहातिनिजंवर्णंपरमात्मगतिंआनंदस्वरूपंचभजेतभजते कथमिव अग्निदाहलक्षणसेवयारुद्ररोदनंहिरण्यंस्वमलंदशविधंजह्यात्जहातिनिजवर्णंशास्त्रसि द्धंस्वरूपंभजतियथातथेत्यर्थः किंच सजीव.पुनरव्ययोऽसंवृतः आवरणरहितोभवति व्येञ्संवरणइतिधातोःगुरोर्गुरुःसपरमोनोमुक्तिदोभूयादित्यन्वयः ईशः मुक्तिदानसमर्थःईर्लक्ष्मीःतस्याःशंयस्मा त्सइतिवाजातरूपंश्रीमुकुटंहिरण्यंरुद्ररोदनमित्यभिधानं सएभवानव्ययइतिवा ४८ अन्येदेवाःअन्येगुरवोजनाश्चस्वयंसमेतामिलिताःपुंसःयस्यहरेःप्रसादायुतभागलेशकर्तुंनप्रभवंतितदनुग्रहमंतरेणे तिशेषः अहंतंत्वामीश्वरंशरणंयामीत्यन्वयः ४९ यथांधस्यपुंसःसचक्षुर्दृष्टिमानग्रणीः अग्रतोगंताकृतःयथाचाविदुषोजनस्यबुधोजनोगुरुःकृतःशास्त्रविशारदैरितिशेषः तथासुगतिंबुभुत्सतांबोद्धु मिच्छतांनोर्थदृक्पुरुषार्थद्रष्टासर्वदृशांसर्वेंद्रियाणांसमीक्षणःसाक्षीत्वंगुरुर्वृतःज्ञानोपदेशकत्वेनेतिशेषःअचक्षुरितिपाठेअयमर्थः त्वामंतरेणेतरेषांगुरुत्वंपुरुषार्थानुपयोगिसम्यग्ज्ञानहीनत्वादित्याह अचक्षुरितियथांधस्याचक्षुषोंधोग्रणीःकृतोभवतितथाऽविदुषोजनस्याबुधएवंगुरुर्भवति अंधेनैवनीयमानायथांधाःउभावप्यश्रुतग्रंथाउभावपिजडात्मकावित्यादिश्रुतिस्मृतिभ्यःत्वंचार्थदृक्शिष्यस्या पेक्षितपुरुषार्थदर्शीकुतःदर्शनसाधनत्वेनदृशोपींद्रियाणितेषांसाक्षित्वादस्माकंगुरुत्वेनवृतइति ५० एतदेवविवृणोति जनइति जनोजननाद्यभिमानीतादृगस्यजनस्यासतींगतिंइहामुत्रचोरुफलदंज्ञा नमादिशति यथायेनज्ञानेनदुरत्ययंतमःनित्यदुःखात्मकमंधंतमःप्राप्नोति तादृशमितिशेषः यथेतिपाठेयथोपदिष्टेनदुरत्ययंतमःप्राप्येततथोपदिशति नसन्नासन्नसदसदित्याद्याकारेणेत्यर्थः अंधंतमःप्रवि

यत्सेवयाग्नेरिवरुद्ररोदनंपुमान्विजह्यान्मलमात्मनस्तमः ॥ भजेतवर्णंनिजमेषसोऽव्ययोभूयात्सईशःपरमोगुरुर्गुरोः ४८ नयत्प्रसादायुतभागलेशमन्येचदेवागुरवोजनाःस्वयम् ॥ कर्तुंसमेताःप्रभवंतिपुंसस्तमीश्वरंत्वांशरणंप्रपद्ये ४९ सचक्षुरंधस्ययथाग्रणीःकृतस्तथाजनस्याविदुषोबुधोगुरुः ॥ त्वमर्कदृक्सर्वदृशांसमीक्षणोवृतोगुरुर्नःस्वगतिंबुभुत्सताम् ५० जनोजनस्यादिशतेऽसतींगतिंयथाप्रपद्येतदुरत्ययंतमः ॥ त्वमव्ययंज्ञानममोघमंजसाप्रपद्यतेयेनजनोनिजंपदम् ५१ त्वंसर्वलोकस्यसुहृत्प्रियेश्वरोह्यात्मागुरुर्ज्ञानमभीष्टसिद्धिः ॥ तथापिलोकोनभवंतमंधधीर्जानातिसंतंहृदिबद्धकामः ५२ तंत्वामहंदेववरंवरेण्यंप्रपद्यईशंप्रतिबोधनाय ॥ छिंध्यर्थदीपैर्भगवन्वचोभिर्ग्रंथीन्हृदय्यान्विवृणुस्वमोकः ५३

शंतीतिश्रुतेः ज्ञानस्यसत्वेद्वैतमंगइतितत्राह त्वमिति जनोयेनज्ञानेननिजंपदंनिर्दोषत्वेनत्वद्रूपसदृशंसच्चिदानंदलक्षणमंजसाअव्यवधानेनप्रपद्येतयच्चाव्ययमक्षयंयच्चामोघमव्यभिचारितय फलसमर्पकंत्वंतदेवज्ञानमादिशसीत्यन्वयः ५१ इतोपित्वदुपदिष्टज्ञानमेवापेक्षितपुरुषार्थसाधननान्यत् अनिमित्तबंधुत्वादिगुणपूर्णत्वेनसिद्धत्वेनवंचनाशंकानास्पदत्वादित्याशयेनाह त्वमिति सुहृत्प्रत्युपकारशून्यःप्रियश्चेश्वरश्चविषयसुखस्यापीश्वरइतिवा आत्मापूर्णानंदःगुरुर्ज्ञानोपदेष्टा जानातीतिज्ञानं अभीष्टसिद्धिरपेक्षितपुरुषार्थसाधकः लोकः सुहृत्त्वादिगुणवंतंकुतोनजानातीति तत्राह तथापीति यद्यप्यनिमित्तबंधुस्तथापिलोकोभवंतंनजानातिकुतःअंधधीःनष्टज्ञानत्वात् ज्ञाननाशःकस्मादित्यतउक्तंहृदीति दूरस्थत्वान्नतज्ज्ञानमित्यतउक्तंसंतमिति हृदीत्येतदुभयत्रयो ज्यं ५२ इदानींस्वार्थंप्रकाशयति तंत्वामिति प्रतिबोधनायतत्स्वरूपविषयज्ञानायाहंयोज्ञानोपदेष्टृत्वादिगुणोपेतस्तंत्वांशरणंप्रपद्यइत्यन्वयः देवोत्तमत्वादयमेवशरण्यइतिभावेनोक्तं देववरमिति सौंदर्यादिगुणभावेनत्वद्भक्तिरुदेतीतिभावेनोक्तंवरेण्यमिति उक्तगुणाअन्यत्रव्यभिचारिणोनेत्याह ईशमिति अन्यथेश्वरत्वानुपपत्तिःहृदय्यांअहंकारसंभूतांग्रंथिमर्थस्यदीपकैःप्रकाशकैःमन्मनाभ वमद्भक्तोमद्याजीमांनमस्कुरुइत्यादिलक्षणवचोभिः किंचस्वमोकःस्वस्वरूपंस्वाश्रमंवैकुंठंवाविवृणुप्रकाशयेत्यन्वयः ओकसीमंदिराश्रयावितिच ५३

५४ सांख्ययोगक्रियावतींज्ञानभक्तिकर्मयोगवतीं पुराणसंहितामब्रवीत् इदंश्रद्धेयमितिभावेनोक्तमात्मगुह्यमिति आचार्यैरतुतेगौतिवक्तेतिवदुपदिष्टैव शिष्टंनास्तीत्यतउक्तमशेषतइति ५५ नावि जलयाने ५६ प्रलयानामपायेअतीतेसति ततःउत्थितायवेधसेब्रह्मणेप्रत्याहरत् दैत्याहृतांस्तान्ज्ञात्वामत्याहृत्यदत्तवानित्यर्थः ५७ ५८ ५९ संवादस्यपापहरत्वे अवतारकथाकीर्तनेनार्कि प्रयोजनमत्राह अवतारमिति अस्तुश्रवणफलं कीर्तनेनकिंफलमित्यतोवाह अवतारमिति ६० बुद्धिसंग्रहार्थमवतारकथांसंकलय्यकथयति प्रलयेति सुप्तशक्तेर्विषयोपरतेंद्रियशक्तेः कार्यानभि

इत्युक्तवंतंनृपतिंभगवानादिपूरुषः ॥ मत्स्यरूपीमहांभोधौविहरंस्तत्त्वमब्रवीत् ५४ पुराणसंहितांदिव्यांसांख्ययोगक्रियावतीं ॥ सत्यव्रतस्यराजर्षेरात्म गुह्यमशेषतः ५५ अश्रौषीदृषिभिःसाकमात्मतत्त्वमसंशयम् ॥ नाव्यासीनोभगवताप्रोक्तंब्रह्मसनातनम् ५६ अतीतेप्रलयापायउत्थितायचवेधसे ॥ हत्वा सुरंहयग्रीवंवेदान्प्रत्याहरद्धरिः ५७ सतुसत्यव्रतोराजाज्ञानविज्ञानसंयुतः ॥ विष्णोःप्रसादात्कल्पेस्मिन्नासीद्वैवस्वतोमनुः ५८ सत्यव्रतस्यराजर्षेर्मायामत्स्य स्यशार्ङ्गिणः ॥ संवादंमहदाख्यानंश्रुत्वामुच्येतकिल्बिषात् ५९ अवतारंहरेर्योंमुंकीर्त्तयेदन्वहंनरः ॥ संकल्पास्तस्यसिद्ध्यंतिसयातिपरमांगतिम् ६० प्रलयपयसिधातुःसुप्तशक्तेर्मुखेभ्यःश्रुतिगणमुपनीतंप्रत्युपादत्तहत्वा ॥ दितिजमकथयद्यब्रह्मसत्यव्रतायतमहमखिलहेतुंजिह्ममीनंनतोस्मि ६१ इ तिश्रीमद्भागवतेमहापुराणेपारमहंस्यांसंहितायामष्टमस्कंधेमत्स्यचरितोपाख्यानेत्रयोविंशोध्यायः ॥ २३ ॥ ॥ छ ॥ ॥ छ ॥

सुप्तीभूतप्रकाशिशक्तेर्वा अपनीतंनिःसृतंदैत्येननीतं जिह्ममीनंमायामत्स्यं अनंतशक्तिर्भगवान्मत्स्यरूपीजनार्दनः क्रीडार्थंयाचयामासस्वयंसत्यव्रतंनृपमित्यनेनतमाह सातिकरुणंमहाकारुणिक मित्यादिनाविक्रीडितमितिज्ञातव्यं ॥ पदरत्नावलिर्नामअष्टमस्कंधसंगता ॥ प्रीत्यैमत्स्यात्मनोविष्णोरस्तुनिर्दोषवर्ण्मणः ६१ ॥ इतिश्रीमद्भागवतेमहापुराणेपारमहंस्यांसंहितायामष्टमस्कंधेटीकायां विजयध्वजतीर्थभट्टारककृतौमत्स्यावतारेत्रयोविंशोध्यायः ॥ २३ ॥

# ॥ अथ श्रीमद्भागवते नवमः स्कंधः प्रारभ्यते ॥

श्रीवेदव्यासायनमः ॥ कमलाकांतंकमलाक्षंविमलानंदंप्रणम्यच ॥ नृपवंशस्कंधविलासंनवमस्कंधंविवृणोमि १ अस्मिन्स्कंधेराजवंशवर्णनेनश्रीनारायणेभक्तिविधानार्थंभगवन्माहात्म्यमेवप्रपंच्य
ते तत्रवृत्तवर्तिष्यमाणस्कंधयोःसंगतिप्रदर्शनायवृत्तानुवादपूर्वकंवैवस्वतमनोःपुत्राणातद्वंशानामनुवंशतश्चरितानिचराजाशुकंपृच्छति मन्वंतराणीत्यादिना वदविक्रमानित्यंतेन १ २ ३ ४
विक्रमान्वंशेजातानांपुरुषाणांचरितानि ५ राज्ञाभिषिक्तानांप्रजापालनादिलक्षणःपरमोधर्मस्तंवेत्सीति ६ ७ आत्माप्यंतर्यामीइदंविश्वसएवासीत्तदधीनमेवाभूत्ननुस्वतंत्रंकिंचनप्रधानादिक
मपि तस्माद्वान्यंनपरःकिंचनासेतिश्रुतेः ८ उदस्तादुदभूत्स्वयंभूरित्यस्यविष्णावपिचवृत्तेरित्यतश्चतुराननइत्युक्तं विष्णुःस्वयभूरथभुक्रवभूर्विश्वपति·पतिरित्यभिधानम् ९ मानसोमनोजातः
ततःकश्यपात् १० ततोविवस्वतोमनोः पुत्रानाह श्रद्धायामित्यादिना आत्मवान्वशीकृतमनाः ११ १२ अप्रजस्यअपुत्रस्य इक्ष्वाकुप्रभृतिपुत्रोत्पत्तेःपूर्वंमित्रावरुणयोरिष्टिमित्रा

राजोवाच ॥ मन्वंतराणिसर्वाणित्वयोक्तानिश्रुतानिमे ॥ वीर्याण्यनंतवीर्यस्यहरेस्तत्रकृतानिच १ योसौसत्यव्रतोनामराजर्षिर्द्रविडेश्वरः ॥ ज्ञानंयो
तीतकल्पांतेलेभेपुरुषसेवया २ सवैविवस्वतःपुत्रोमनुरासीदितिश्रुतम् ॥ त्वत्तस्तस्यसुताःप्रोक्ताइक्ष्वाकुप्रमुखान्नृपाः ३ तेषांवंशंपृथग्ब्रह्मन्वंशानुच
रितानिच ॥ कीर्तयस्वमहाभागनित्यंशुश्रूषतांहिनः ४ येभूतायेभविष्याश्चभवंत्यद्यतनाश्चये ॥ तेषांनःपुण्यकीर्तीनांसर्वेषांवदविक्रमान् ५ सूतउवा
च ॥ एवंपरीक्षिताराज्ञासदसिब्रह्मवादिनाम् ॥ पृष्टःप्रोवाचभगवाञ्छुकःपरमधर्मवित् ६ श्रीशुकउवाच ॥ श्रूयतांमानवोवंशःसंक्षेपेणपरंतप ॥ नश
क्यतेविस्तरतोवक्तुंवर्षशतैरपि ७ परावरेषांभूतानामात्मायःपुरुषःपरः ॥ सएवासीदिदंविश्वंकल्पांतेन्यन्नकिंचन ८ तस्यनाभेःसमभवत्पद्मकोशोहिर
ण्मयः ॥ तस्मिन्जज्ञेमहाराजस्वयंभूश्चतुराननः ९ मरीचिर्मनसस्तस्यजज्ञेतस्यापिकश्यपः ॥ दाक्षायण्यांततोदित्यांविवस्वानभवत्सुतः १० ततो
मनुःश्राद्धदेवःसंज्ञायामासभारत ॥ श्रद्धायांजनयामासदशपुत्रान्सआत्मवान् ॥ ११ इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूषकान् ॥ नरिष्यंतंपृषध्रंचनाभागं
चनभंविभुम् १२ अप्रजस्यमनोःपूर्वंवसिष्ठोभगवान्किल ॥ मित्रावरुणयोरिष्टिंप्रजार्थमकरोद्विभुः १३ तत्रश्रद्धामनोःपत्नीहोतारंसमयाचत ॥ दुहित्र
र्थमुपागम्यप्रणिपत्यपयोव्रता १४ प्रेषितोध्वर्युणाहोताध्यायंस्तत्सुसमाहितः ॥ गृहीतेतेनहविषिवषट्कारंगृणन्द्विजः १५ होतुस्तद्व्यभिचारेणकन्ये
लानामसाभवत् ॥ तांविलोक्यमनुःप्राहनातिहृष्टमनागुरुम् १६ भगवन्किमिदंजातंकर्मवोब्रह्मवादिनाम् ॥ विपरीतमहोकष्टंमैवंस्याद्ब्रह्मविक्रिया १७
यूयंमंत्रविदोयुक्तास्तपसादग्धकिल्बिषाः ॥ कुतःसंकल्पवैषम्यमनृतंविबुधेष्विव १८

वरुणदैवत्यां १३ १४ सुसमाहितःएकाग्रचित्तः तच्छ्रद्धयोक्तंदध्यौवषट्कारमंत्रविशेषंवागृणन्स्वकर्माकरोदितिशेषः १५ तस्यकर्मणोव्यभिचारेणविपक्षवर्तिनाहेतुना वाङ्निमित्त
त्वादिला वाणीसरस्वतीभाषावागिडेलाप्रकीर्तितेति १६ इदंजातंकिमितितत्राह कर्मेति ब्रह्मवादिनांवःकर्मविपरीतंपुत्रार्थिनःकन्याफलमभूदतःकिमिदमितिकुतूहलयामि अत्रैवंभूतेप्यन्य
त्रमाभूदित्याह मैवमिति ब्रह्मविदांवःक्रियामैवंभूदित्यर्थः १७ क्वचित्स्खलनेऽन्यत्रापिनियमोनस्यादित्याशंक्यक्वचिदप्यन्यथात्वनयुक्तंयुष्माकमित्याह यूयमिति मैत्रावरुणीमिष्टिंकुर्या
त्पुत्रकामइत्यादिमंत्रद्वयज्ञःयस्यैदेवतायैहविर्गृहीतंस्यात्तांध्यायेद्वषट्करिष्यन्नितिवचनान्मनोयोगयुक्ताः नचदोषादन्यथात्वंमनसइत्याह तपसेति यूयमेवविधास्तेषुयुष्मासुसंकल्पवैषम्यंचिंतितस्या

न्यथात्वंकुतोनकुतोपिसंभाव्यते कुतइतितत्राह अनृतमिति नहिदेवेष्वनृतंदृष्टचरंतस्मादनृतंनवदेदितिश्रुतेः १८ १९ होतुर्व्यभिचारतःध्यानस्यान्यथात्वलक्षणात् २० २१ २२ तेनवेरणहेतुना सैंधवंसिंधुदेशजातम् २३ २४ नाम्नासुकुमारवनंअधस्तात्स्थितम् २५ वडवामश्वस्त्रिलिंग्यां आत्मनोदेहस्यलिंगविपर्ययंपुरुषचिह्नविपरीतं स्त्रीचिह्नम् २६ २७ ॥ ॥ इतिश्रीभागवतेमहा पुराणेनवमस्कंधेविजयध्वजकृतटीकायांप्रथमोध्यायः ॥ १ ॥ ७ ॥ एवंगुणःपुरुषस्यस्त्रीत्वापवादकगुणयुक्तः १ भासास्वतेजसा।वितिमिराःनिरस्तांधकाराः २ नीवींवस्त्रंपर्यधाद्वेष्टितं

तन्निशम्यवचस्तस्यभगवान्प्रपितामहः ॥ होतुर्व्यतिक्रमंज्ञात्वाबभाषेरविनंदनम् १९ एतत्संकल्पवैषम्यंहोतुस्तेव्यभिचारतः ॥ तथापिसाधयिष्येहं सुप्रजास्त्वंस्वतेजसा २० एवंव्यवसितोराजन्भगवान्समहायशाः ॥ अस्तौषीदादिपुरुषमिलायाःपुंस्त्वकाम्यया २१ तस्मैकामवरंतुष्टोभगवान्हरिरीश्वरः ॥ ददाविलाभवत्तेनसुद्युम्नःपुरुषर्षभः २२ सएकदामहाराजविचरन्मृगयांवने ॥ वृतःकतिपयामात्यैरश्वमारुह्यसैंधवम् २३ प्रगृह्यरुचिरंचापंशरांश्चपरमाद्भुतान् ॥ दंशितोनुमृगंवीरोजगामदिशमुत्तराम् २४ सुकुमारवनंमेरोरधस्तात्प्रविवेशह ॥ यत्रास्तेभगवाञ्छंभूरममाणःसहोमया २५ तस्मिन्प्रविष्टएवासौसुद्युम्नःपरवीरहा ॥ अपश्यत्स्त्रियमात्मानमश्वंचवडवांनृप २६ तथातदनुगाःसर्वेआत्मलिंगविपर्ययम् ॥ दृष्ट्वाविमनसोभूवन्वीक्ष्यमाणाःपरस्परम् २७ इतिश्रीभागवतेमहापुराणेनवमस्कंधेप्रथमोध्यायः ॥ १ ॥ राजोवाच ॥ कथमेवंगुणोदेशःकेनवाभगवन्कृतः ॥ प्रश्नमेनंसमाचक्ष्वपरंकौतूहलंहिनः १ ॥ श्रीशुकउवाच ॥ एकदागिरिशंद्रष्टुमृषयस्तत्रसुव्रताः ॥ दिशोवितिमिराभासाःकुर्वंतस्तमुपागमन् २ तान्विलोक्यांबिकादेवीविवस्त्राव्रीडिताभृशम् ॥ भर्तुरंकात्समुत्थायनीवीमाश्वथपर्यधात् ३ ऋषयोपितयोर्वीक्ष्यप्रसंगंरममाणयोः ॥ निवृत्ताःप्रययुस्तस्मान्नरनारायणाश्रमम् ४ तदेवंभगवानाहप्रियायाःप्रियकाम्यया ॥ स्थानंयःप्रविशेदेतत्सवैयोषिद्भवेदिति ५ ततऊर्ध्वंवनंतद्वैपुरुषावर्जयंतिहि ॥ सचानुचरसंयुक्तोविचचारवनाद्वनम् ६ अथतामाश्रमाभ्याशेचरंतींप्रमदोत्तमाम् ॥ स्त्रीभिःपरिवृतांवीक्ष्यचकमेभगवान्बुधः ७ सापितंचकमेसुभ्रूःसोमराजसुतंपतिम् ॥ सतस्यांजनयामासपुरूरवसमात्मजम् ८ एवंस्त्रीत्वमनुप्राप्तःसुद्युम्नोमानवोनृपः ॥ सस्मारस्वकुलाचार्यंवसिष्ठमितिशुश्रुम ९ सतस्यांतांदशांदृष्ट्वाकृपयाभृशपीडितः ॥ सुद्युम्नस्याशयन्पुंस्त्वमुपाधावतशंकरम् १० तुष्टःसतस्मैभगवानृषयेप्रीतिमावहन् ॥ स्वांचवाचमृतांकुर्वन्निदमाहविशांपते ११ मासंपुमान्सभवितास्त्रीमासंतपसातव ॥ इतिव्यवस्थयाकामंसुद्युम्नोवतुमेदिनीम् १२

तवती ३ ४ भगवानाहेत्यन्वयःकथं यएतत्स्थानंप्रविशेत्सयोषिद्भवेदितिवाइत्यनेनात्मवर्जमितिसूचयति ५ तद्वैतदेवनान्यत् हिशब्दोहेतौ यतःस्त्रीत्वंस्यादतइति ६ ७ सबुधस्तस्यां स्त्रीत्वमाप्तायांसुद्युम्नाख्यायां ८ ९ दशांस्त्रीत्वलक्षणांआशयन्कामयन् उपाधावतासेवत १० ११ मासमितिद्वितीया त्रिंशद्दिनेष्वप्येकस्मिन्दिनेप्यनन्यथात्वंसूचयति कालाध्वनोरत्यंतसंयोगेइतिसूत्रात् १२

पुंस्त्वलक्षणंकामंजगतींराजप्रधानभूमिम् १३ दक्षिणापथस्यदेशस्यराजानः १४ परिणतःवृद्धःप्रतिष्ठानाख्यपुरपतिःगांभूमिम् ॥ १५ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेविजयध्वजकृतटीकायां द्वितीयोध्यायः ॥ २ ॥ सुद्युम्नेसुतेवैवस्वतःश्राद्धदेवोमनुः १ इक्ष्वाकुःपूर्वजोज्येष्ठोयेषांतेतथातान् २ मनोःपुत्राणामष्टमःपुत्रोवृषध्रः गाःपालयामासकीदृशः गुरुणावसिष्ठेनगोपालःकृतःतुशब्दे नवृषान्धारयितुंयोग्यइतिनिरुक्त्येतिसूचयति गोरक्षैकनिष्ठयानेत्रेउन्मील्यजाग्रदेवगोसंनिधानेप्रतिष्ठानाद्वीरासनव्रतः ३ निशिमेघेवर्षतिसति ४ सागौः ५ बभ्रोर्गोःशिरोहनत् बभ्रुगौंः सौरभेयीचमाहेयीगोमताल्लिकेति गोःशिरच्छेदनेकोहेतुरितितत्राह निशीति निरूपपिनक्षत्रादिप्रकाशनेनविवेकज्ञानसुलभमित्यत्राह प्रलीनेति मेघच्छायाच्छादितनक्षत्रादिप्रकाशेचसति ६ वि

श्रीशुकउवाच आचार्यानुग्रहात्कामंलब्ध्वापुंस्त्वंव्यवस्थया ॥ पालयामासजगतीनाभ्यनंदन्स्मतंप्रजाः १३ तस्योत्कलोगयोराजन्विमलश्चसुतास्त्रयः ॥ दक्षिणापथराजानोबभूवुर्धर्मवत्सलाः १४ ततःपरिणतःकालेप्रतिष्ठानपतिःप्रभुः ॥ पूरूरवसउत्सृज्यगांपुत्रायगतोवनम् १५ इतिश्रीभागवतेमहापुराणे नवमेद्वितीयोध्यायः ॥ २ ॥ श्रीशुकउवाच ॥ एवंगतेथसुद्युम्नेमनुर्वैवस्वतःसुते ॥ पुत्रकामस्तपस्तेपेयमुनायांशतंसमाः १ ततोयजन्मनुर्देवमपत्यार्थं हरिंप्रभुम् ॥ इक्ष्वाकुपूर्वजान्पुत्राँल्लेभेस्वसदृशान्दश २ वृषध्रस्तुमनोःपुत्रोगोपालोगुरुणाकृतः ॥ पालयामासगायत्तोरात्र्यांवीरासनव्रतः ३ एकदा प्राविशद्गोष्ठंशार्दूलोनिशिवर्षति ॥ शयानागावउत्थायभीतास्ताबभ्रमुर्व्रजे ४ एकांजग्राहबलवान्सानुक्रोशभयातुराम् ॥ तस्यास्तुक्रंदितंश्रुत्वावृषध्रोभि ससारह ५ खड्गमादायतरसाप्रलीनोडुगणेनिशि ॥ अजानन्नहनद्बभ्रोःशिरःशार्दूलशंकया ६ व्याघ्रोपिवृक्णश्रवणोनिस्त्रिंशाग्रहतस्ततः ॥ निश्चक्रामभृशंभीतोरक्तंपथिसमुत्सृजन् ७ मन्यमानोहतंव्याघ्रंवृषध्रःपरवीरहा ॥ अद्राक्षीत्स्वहतांबभ्रुंव्युष्टायांनिशिदुःखितः ८ तंशशापकुला चार्यःकृतागसमकामतः ॥ नक्षत्रबंधुःशूद्रस्त्वंकर्मणाभवितामुना ९ एवंशप्तस्तुगुरुणाप्रत्यगृह्णात्कृतांजलिः ॥ अधारयद्व्रतंवीरऊर्ध्वरेतामुनिप्रियम् १० वासुदेवेभगवतिसर्वात्मन्यमलेपरे ॥ एकांतित्वंगतोभक्त्यासर्वभूतसुहृत्समः ११ विमुक्तसंगःशांतात्मासंयताक्षोऽपरिग्रहः ॥ यदृच्छयोपपन्नेन कल्पयन्वृत्तिमात्मनः १२ आत्मन्यात्मानमाधायज्ञानतृप्तःसमाहितः ॥ विचचारमहीमेतांजडांधबधिराकृतिः १३ एवंव्रतोवनंगत्वादृष्ट्वादावाग्निमु त्थितम् ॥ तेनोपयुक्तकरणोब्रह्मप्रापपरंमुनिः १४

वृक्णश्रवणःछिन्नकर्णमूलःनिस्त्रिंशस्यखड्गस्याग्रेणहत प्रहतः ७ निशिव्युष्टायांप्रभातायाम् ८ अकामतः बभ्रुहननेच्छाभावतोपिकृतागसंकृतापराधं अमुनाक्रूरकर्मणाशूद्रोभवितानक्षत्रबंधुरितिशशापे त्यन्वयः ९ तुशब्देनगुरावननुरूपावानित्याह कुतोवगतमेतदित्यतउक्तंप्रत्यगृह्णादिति भपात्प्रतिग्रहःकिंनस्यादित्यतउक्तंकृतांजलिरिति मुनिप्रियमूर्ध्वरेतस्त्वम् १० कितन्मुनिप्रियंव्रतमित्यतआह वासुदेवइति एकांतत्वादिकंव्रतम् ११ संयताक्षःनियमितेंद्रियःयदृच्छयाऽसंप्रार्थितागतेन १२ १३ तेनदावाग्निनाउक्तकरणःस्वीकृतदेहःदग्धदेहइत्यर्थः करणंसाधकतमेशरीरेंद्रिययोरपीति १४

उक्तमेवविवृणोति कविरिति यदाशापंप्राप तदाविषयेषुनिःस्पृहःकविर्ज्ञानीअयंनृपश्चःबंधुभिःसहसंगंविसृज्यवनंविवेश स्वरोचिषंस्वयंप्रकाशंपुरुषंचित्तेनिवेश्य कैशोरवयाअल्पवयाःतत्प्रसादेनपरंगतइत्य न्वयः १५ मानवात् मनुपुत्रात्करूशात्कारूशाइत्येवंप्रसिद्धाआसन्नित्यन्वयःक्षत्रजातयइत्यनेनगोपालत्वादिजात्यंतरनाशः किंतुतज्जातयएवइतिसूचयति १६ धृष्टान्मनुपुत्रान् नाम्नाधार्ष्टंक्षत्रमभूत्तद्वृत्त माह ब्रह्मभूतमिति ब्रह्मत्वंश्रोत्रियत्वंगतमित्यर्थःनभस्यमनुपुत्रस्यपुत्रःस्वातिमूलःतस्यपुत्रःनाम्नावसुरभवत् १७ तत्पुत्रःप्रतीकपुत्र.ओघवान् ओघवतस्तस्यसहोदर्योघवतीकन्याचाभवत् सुदर्शनोनामरा जा१८ नरिष्यवान्मनुपुत्राच्चित्रसेननामासुतोभूत्तस्यचित्रसेनस्यदक्षः १९ २० अग्नेर्जातूकर्ण्यइतिनाम २१ततोजातूकर्ण्याद्ब्रह्मकुलंजातम् तदेवाग्निवेश्यायनमितिनामांतरेणप्रसिद्धं इक्ष्वाकुप्रभृतीनांच

कविस्तदायंविषयेषुनिःस्पृहोविसृज्यसंगंसहबंधुभिर्वनम् ॥ निवेश्यचित्तेपुरुषंस्वरोचिषंविवेशकैशोरवयाःपरंगतः १५ करूशान्मानवादासन्कारूशाः क्षत्रजातयः ॥ उत्तरापथगोप्तारोब्रह्मण्याधर्मवत्सलाः १६ धृष्टाद्धार्ष्टमभूत्क्षत्रंब्रह्मभूतंगतंक्षितौ ॥ नभपुत्रोतिबलवान्स्वातिमूलोभवद्वसुः १७ वसोःप्र तीकस्तत्पुत्रओघवानोघवत्स्वसा ॥ कन्याचोघवतीनामसुदर्शनउवाहताम् १८ चित्रसेनोनरिष्यंताद्दक्षस्तस्यसुतोभवत् ॥ तस्यमीढ्वांस्ततःकूर्चइंद्रसे नस्तुतत्सुतः १९ वीतिहोत्रस्त्विंद्रसेनात्तस्यसत्यश्रवाअभूत् ॥ उरुश्रवाःसुतस्तस्यदेवदत्तस्ततोभवत् २० देवदत्तस्यभगवानग्निःस्वयमभूत्सुतः ॥ कानीनइतिविख्यातोजातूकर्ण्योमहानृषिः २१ ततोब्रह्मकुलंजातमाग्निवेश्यायनंनृप ॥ नरिष्यंतान्वयःप्रोक्तोदिष्टवंशमतःशृणु २२ नाभागोदिष्टपुत्रो न्यःकर्मणावैश्यतांगतः ॥ भलंदनःसुतस्तस्यवत्सप्रीतिर्भलंदनात् २३ वत्सप्रीतेःसुतःप्रांशुस्तत्सुतःप्रमितिर्विभुः ॥ खनित्रःप्रमितेस्तस्माच्चाक्षुषोथ विविंशतिः २४ विविंशतिसुतोरंभःखनिनेत्रोस्यधार्मिकः ॥ करंधमोमहाराजतस्यासीदात्मजोनृपः २५ तस्यावीक्षित्सुतोयस्यमरुत्तश्चक्रवर्त्यभूत् ॥ संवर्तोयाजयद्यंवैमहायोग्यंगिरःसुतः २६ मरुत्तस्ययथायज्ञोनतथान्योस्तिकश्चन ॥ सर्वंहिरण्मयंत्वासीद्यत्किंचास्यतिशोभनम् २७ अमाद्यदिंद्रःसोमे नदक्षिणाभिर्द्विजातयः ॥ मरुतःपरिवेष्टारोविश्वेदेवाःसभासदः २८ मरुत्तस्यदमःपुत्रस्तस्यासीद्राज्यवर्धनः ॥ सुधृतिस्तत्सुतोजज्ञेसौधृतेयोनरःसुतः२९ तत्सुतःकेवलस्तस्माद्बंधुमान्वेगवांस्ततः ॥ बंधुस्तस्याभवद्यस्यतृणबिंदुर्महीपतिः ३०

तुर्थंदिष्टवंशं २२ अन्यःअन्यजातीयःकर्थंवाणिज्यादिकर्मणावैश्यत्वंगतःदिष्टपुत्रोयइतिकेचित्पठंतिवक्ष्यमाणादन्यइतिवा २३ २४ २५ तस्यकरंधमस्यपुत्रअवीक्षित् यस्यावीक्षितोमरुत्तःसुतः मरुत्तं विशिनष्टिसंवर्तइतिस्तोकोसंवर्तइतितत्राह महायोगीति २६ संवर्तोनामऋषिःकीदृशं यज्ञमकारयत्येनमहायोगित्वंसंभाव्यतइत्यतस्तंयज्ञविशिनष्टि मरुत्तस्येति अनेनमरुत्तस्यापिमहायोगित्वंश्री नारायणानुग्रहपात्रत्वंसूचितं २७ द्विजातयोदक्षिणाभिरमाद्यन्संहृष्टइत्यन्वयःमरुतोदेवाःऋभवोऽमराश्चमरुतोवृंदारकाविनिर्जराइत्यभिधान विश्वेदेवाइतिविशेषणाद्धायवोवाशरिवेष्टारःभोक्तृणामपेक्षितां घृतादिनिक्षेप्तारः सभायांसीदंत्युपविशंतीतिसभासदःमत्यक्षसभायामुपविश्यसर्वंविचारयंतइत्यर्थः २८ २९ ३०

अलंबुषानामवराप्सरास्तंतृणाबिंदुर्भेजे ३१ कीदृशीलिविलेतितांविशिनष्टि यस्यामिति योगेश्वरोविश्रवाऋषिश्चइलिविलायाःपितुस्तृणाबिंदोःपरमांविद्यांप्रदायतामुद्वाह्ययस्यामिलिविलायांधनाधिपंवैश्र
वणमुत्पादयामासेत्यन्वयः ३२ ३३ ३४ इडस्पतिंअन्नपतिंवाक्पतिंवा ३५ वैशालभूपालाःविशालवंशेजाताभूपालाः ३६ इतिश्रीभागवतेमहापुराणेनवमस्कंधेवि०कृ०टी०तृतीयोऽध्यायः ॥ ३ ॥ ब्र
ह्मिष्ठःब्राह्मणनिष्ठःवेदनिष्ठोवा । तत्फलमाह योवाइति द्वितीयेह्नियोमंत्रोऽध्येतव्यःतत्रकल्पोक्तफलसिद्धयेतंमंत्रमध्यगादित्ययमर्थोद्वितीयमहरध्यगादित्युच्यते १ तस्यशर्यातेः २ विचिन्वंतीमृग
यंती वल्मीकरंध्रेवल्मीकबिले खद्योतेखद्योतरूपे खएवद्योतवइतिखद्योतः ३ सासुकन्यामुग्धभावेनअज्ञातवस्तुस्वरूपतयाबालभावत्वेनवा कंटकेनकंटकाग्रेणज्योतिषीज्योतिराश्रयेद्वेऽपेचक्षु

तंभेजेलंबुषादेवीभजनीयगुणालयम् ॥ वराप्सरायतःपुत्राःकन्याचेलिविलाभवत् ३१ यस्यामुत्पादयामासविश्रवाश्चधनाधिपम् ॥ प्रदायविद्यांपरमामृषिर्योगेश्वरःपितुः ३२ विशालःशून्यबंधुश्चधूमकेतुश्चतत्सुताः ॥ विशालोवंशकृद्राजावैशालींनिर्ममेपुरीम् ३३ हेमचंद्रःसुतस्तस्यधूम्राक्षस्तस्यचात्मजः ॥ तत्पुत्रःसहदेवस्तुकृशाश्वःसहदेवजः ३४ कृशाश्वात्सोमदत्तोभूद्योश्वमेधैरिडस्पतिम् ॥ इष्ट्वापुरुषमापाग्र्यांगतिंयोगेश्वराश्रिताम् ३५ सौमदत्तिस्तुसुमतिस्तत्सुतोजनमेजयः ॥ एतेवैशालभूपालास्तृणबिंदोर्यशोधराः ३६ इतिश्रीभागवतेनवमेतृतीयोऽध्यायः ॥२॥ श्रीशुकउवाच ॥ शर्यातिर्मानवोराजन्ब्रह्मिष्ठःसंबभूवह ॥ योवाअंगिरसांसत्रेद्वितीयमहरध्यगात् १ सुकन्यानामतस्यासीत्कन्याकमललोचना ॥ तयासार्धंवनगतोह्यगमच्च्यवनाश्रमम् २ सासखीभिःपरिवृताविचिन्वंत्यंघ्रिपान्वने ॥ वल्मीकरंध्रेददृशेखद्योतेइवज्योतिषी ३ दैवेनचोदिताबालाज्योतिषीकंटकेनसा ॥ अविध्यन्मुग्धभावेनसुस्रावासृक्ततोबहु ४ शकृन्मूत्रनिरोधोभूत्सैनिकानांचतत्क्षणात् ॥ राजर्षिस्तमुपालभ्यपुरुषान्विस्मितोब्रवीत् ५ अप्यभद्रंनयुष्माभिर्भार्गवस्यविचेष्टितम् ॥ व्यक्तंकेनापिनस्तस्यकृतमाश्रमदूषणम् ६ सुकन्याप्राहपितरंभीताकिंचित्कृतंमया ॥ द्वेज्योतिषीअजानंत्यानिर्भिन्नेकंटकेनते ७ दुहितुस्तद्वचःश्रुत्वाशर्यातिर्जातसाध्वसः ॥ मुनिंप्रसादयामासवल्मीकांतर्हितंशनैः ८ तदभिप्रायमाज्ञायप्रादाद्दुहितरंमुनेः ॥ कृच्छ्रान्मुक्तस्तमामंत्र्यपुरंप्रायात्सहानुगः ९ सुकन्याच्यवनंप्राप्यपतिंपरमकोपनम् ॥ प्रीणयामासचित्तज्ञाअप्रमत्तानुवृत्तिभिः १० कस्यचित्त्वथकालस्यनासत्यावाश्रमंगतौ ॥ तौपूजयित्वाप्रोवाचवयोमेदत्तमीश्वरौ ११

षीइवयावत् असृग्रुधिरंततःविद्धचक्षुषोः ४ सैनिकानांराजसेवकानां निरोधःस्तंभनम् ५ युष्माभिर्भार्गवस्याभद्रममंगलंविचेष्टितंकिमपिकृतमेव नतत्रसंशयइत्याह व्यक्तमिति नोमध्येकेनापि
पुरुषेणतस्यभार्गवस्याश्रमदूषणंव्यक्तंकृतमतइदसेनाशकृन्मूत्रस्तंभनंभार्गवस्यविचेष्टितमितिव्यक्तमभूदितिपुनरावृत्त्यायोजनीयं ६ तेद्वेज्योतिषी तत्त्वमजानंत्यामयाकंटकेननिर्भिन्नेइत्यन्वयः ७ ८
तस्यमुनेःसुकन्यादानलक्षणमभिप्रायंज्ञात्वाकृच्छ्रान्मुक्तःसुकन्यामुनिभ्यामितिशेषः ९ परमकोपनंअत्यंतकोपशीलंभोजनस्यसमयमतरेणान्यमयंवृथानमुंचतीत्यभिप्रायेणचित्तज्ञाअप्रमत्तेतिसध्यभावइ
तिज्ञायते १० कस्यचित्कालस्यसमागमेदत्तंयुवामितिशेषः ११

तववयोदानेनावयोः किंफलमितितत्राह ग्रहमिति ग्रहमाहुतिविशेषभागमसोमयोःसोमपानशून्ययोरपि १२ भिषक्तमौवैद्यश्रेष्ठौ १३ धमनीभिःशिराभिर्व्याप्तोदेहइतिशेषः स्वयमश्विनौच १४ आपी
च्याः षोडशवर्षप्रायाः १५ वरारोहायोषित् सरूपान्योग्यरूपान् १६ १७ १८ १९ हेअसतिदुर्वृत्तेजरयाग्रस्तत्वादसंमतंअध्वगंपांथम् २० अंबपुत्रिकेइयंमतिरन्यथागता अन्यथोक्तंविवृणोति
असतामिति असतांमार्गंगतेत्यर्थः इदंत्वत्कर्ममत्कुलदूषणंत्वेव किंतत्कर्मेतितत्राह बिभर्षीति निर्लज्जाभूत्वाजारंजरयत्युभयकुलमित्युपपतिंबिभर्षियत्तस्मात् तदेवस्पष्टयति कुलमिति नयसिप्रापय

ग्रहंग्रहीष्येसोमस्ययज्ञेवामप्यसोमयोः ॥ क्रियतांमेवयोरूपंप्रमदानांयदीप्सितम् १२ बाढमित्यूचतुर्विप्रमभिनंद्यभिषक्तमौ ॥ निमज्जतांभवानास्मिन्
ह्रदेसिद्धविनिर्मिते १३ इत्युक्तोजरयाग्रस्तदेहोधमनिसंततः ॥ ह्रदंप्रवेशितोश्विभ्यांस्वयंचामज्जतांह्रदे १४ पुरुषास्त्रयउत्तस्थुरापीच्यावनिता
प्रियाः ॥ रुक्मस्रजःकुंडलिनस्तुल्यरूपाःसुवाससः १५ तान्निरीक्ष्यवरारोहासरूपान्सूर्यवर्चसः ॥ अजानतीपतिंसाध्वीअश्विनौशरणंययौ १६
दर्शयित्वापतिंतस्यैपातिव्रत्येनतोषितौ ॥ ऋषिमामंत्र्यययतुर्विमानेनत्रिविष्टपम् १७ यक्ष्यमाणोथशर्यातिश्च्यवनस्याश्रमंगतः ॥ ददर्शदुहितुःपार्श्वेपु
रुषंसूर्यवर्चसम् १८ राजादुहितरंप्राहकृतपादाभिवंदनाम् ॥ आशिषश्चाप्रयुंजानोनातिप्रीतमनाइव १९ चिकीर्षितंतेकिमिदंपतिस्त्वयाप्रलंभितोलो
कनमस्कृतोमुनिः ॥ यात्वंजराग्रस्तमसत्यसंमतंविहायजारंभजसेऽमुमध्वगम् २० कथंमतिस्तेऽवगतान्यथाऽसतांमार्गंत्वियंमत्कुलदूषणंत्विदम् ॥
बिभर्षिजारंयदपत्रपाकुलंपितुश्चभर्तुश्चनयस्यधस्तमः २१ एवंब्रुवाणंपितरंस्मयमानाशुचिस्मिता ॥ उवाचतातजामातातवैषभृगुनंदनः २२ शशंस
पित्रेतत्सर्वंवयोरूपाभिलंभनम् ॥ विस्मितःपरमःप्रीतस्तनयांपरिषस्वजे २३ सोमेनयाजयन्वीरंग्रहंसोमस्यचाग्रहीत् ॥ असोमयोरप्यश्विनोश्च्य
वनःस्वेनतेजसा २४ हंतुंतमाददेवज्रंसद्योमन्युरमर्षितः ॥ सवज्रंस्तंभयामासभुजमिंद्रस्यभार्गवः २५ अन्वजानंस्ततःसर्वेग्रहंसोमस्यचाश्विनोः ॥
भिषजावितियत्पूर्वंसोमाहुत्याबहिष्कृतौ २६ उत्तानबर्हिरानर्तोभूरिषेणइतित्रयः ॥ शर्यातेरभवन्पुत्राआनर्ताद्रेवतोऽभवत् २७ सोंतःसमुद्रेनगरींवि
निर्मायकुशस्थलीम् ॥ आस्थितोऽभुंक्तविषयानानर्तादीनरिंदम २८ तस्यपुत्रशतंजज्ञेककुद्मिज्येष्ठमुत्तमम् ॥ ककुद्मीरेवतींकन्यांस्वामादायविभुंगतः
२९ पुत्र्यावरंपरिप्रष्टुंब्रह्मलोकमपावृतम् ॥ आवर्तमानेगांधर्वेस्थितोलब्धक्षणःक्षणम् ३० तदंतेविभुमानम्यस्वाभिप्रायंन्यवेदयत् ॥ तच्छ्रुत्वाभगवा
न्ब्रह्माप्रहस्यतमुवाचह ३१ अहोराजन्निरुद्धास्तेकालेनहृदियेकृताः ॥ तत्पुत्रपुत्रनप्तॄणांगोत्राणिचनशृण्महे ३२

सि २१ २२ २३ सोमेनहविषाअसोमयोःसोमपानरहितयोः २४ तंच्यवनंसद्योमन्युस्तदानींजातक्रोधः सवज्रभुजम् २५ अन्वजानन्अनुज्ञातवंतः पूर्वंसोमग्रहाभावःकथंस्यादितितत्राह
भिषजाविति २६ २७ कुशस्थलींद्वारवतीं २८ विभुंब्रह्माणम् २९ अपावृतंप्रकाशितं गांधर्वेगानेअलब्धक्षण.अलब्धावसरः ३० तदंतेगीतावसाने ३१ येहृदिकृतास्तेपुरुषाःकालेननिरुद्धाःमृताः न
केवलंतएवनसंतितत्पुत्रादयोपिनसंतीत्याह तत्पुत्रेति नशृण्महेनशृणुमः ३२

प्रतियातस्यात्रागतस्यतेतवाश्राव्यंनरस्यश्रोतुमयोग्यंगानंमुहूर्तंमत्वा शृण्वत.कालोयातअतिक्रांतइत्यन्वयः कियानितितत्राह त्रिनवेति त्रिनवाभि.चतुर्युगै विशिष्टत्वेनकल्पितःसप्तविंशतिचतुर्युग भेदभिन्नइत्यर्थः ३३ तर्हिकिंकरोमिकन्याचावश्यंदातव्यातइमांकस्मैदास्यामीतितत्राह तदिति ३४ ३५ पुण्यजनत्रासाद्राक्षसभयादिक्ष्ववस्थितैर्भ्रातृभिस्त्यक्तां स्वपुरं निजपुरीमागतः ३६ ककुद्मीत्वनवद्यांगींशोभनावयवांसुतांबाहुशालिनेबलायदत्वातपस्तप्तुंबदर्याख्यंनारायणाश्रमंययावित्यन्वयः ३७॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेवि०कृ०टीकायांचतुर्थोऽध्यायः ॥ ॥ ॥४॥ ॥७॥ ॥ बहूचब्राह्मणप्रसिद्धोनाभागोमनुपुत्रउच्यतेततस्तस्मादिष्टपुत्रादन्यःकथांतरसूचकोवावेदसिद्धत्वाच्चशंसाततोऽप्याप्तोवानाभानेदिष्टइत्यन्यः ततोन्यत्राख्यानात्वेदइतिशे षोवानाभानेदिष्टंशंसतीत्यादौप्राज्ञोमेधावीज्येष्ठभ्रातरोब्रह्मचारिणंविवाहानभिमुखंयविष्ठंकनिष्ठंयंनाभागंकाविं आत्मज्ञानित्वेनातिक्रांतदर्शिनंमत्वादायंकुलपारंपर्येणप्राप्तविभागयोग्यंद्रव्यंऽभजन्यदाक वेभोगमदत्वा तदासकविर्नाभागोऽवगम्यैत्यभ्रातॄनाह १ हेभ्रातरोमह्यंकिंमभांक्तेति । नाभानेदिष्टंवैमानवंब्रह्मचर्यंवसंतंभ्रातरोनिरभजन्सोब्रवीदेत्यकिंमह्यमभांक्तेतिब्राह्मणवाक्यसूचनायाभाक्तेतिपद प्रयोगः । ममभागंकिमर्थंविभक्तवंतोममभागःकोवाकल्पितइतिवाप्राक्षीदितितएतमनुब्रुवन् । भजानापितरंतवेति तवपितरंभज अनगन्छ । अमचेष्टायानितिधातुः । पादितवविभागापेक्षात र्हिगत्वातंप्रसाद्यविचारयवयंचागत्यपृच्छामइत्यर्थः एतमेवनिष्ठावंवंवदितारमित्यब्रुवन् । तस्माद्धाप्येतर्हिपितरंपुत्रादिष्टावोवदितेत्येवाचक्षतइतिच । निष्ठावतंव्यवस्थागमकंव्यवस्थापकंअतएवा

मुहूर्तंशृण्वतोऽश्राव्यंप्रतियातस्यतेनघ ॥ कालोयातस्त्रिनवाभिश्चतुर्युगविकल्पितः ३३ तद्गच्छदेवदेवांशोबलदेवोमहाबलः ॥ कन्यारत्नमिदंराजन्नररत्नायदेहिभो ३४ भुवोभारावतारायभगवान्भूतभावनः ॥ अवतीर्णोनिजांशेनपुण्यश्रवणकीर्तनः ३५ इत्यादिष्टोभिवंद्याजंनृपःस्वपुरमागतः ॥ त्यक्तांपुण्यजनत्रासाद्भ्रातृभिर्दिक्ष्ववस्थितैः ३६ सुतांदत्वानवद्यांगींबलायबलशालिने ॥ बदर्याख्यंययौराजातप्तुंनारायणाश्रमम् ३७ इतिश्रीभागवते महापुराणेनवमेचतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुकउवाच ॥ नाभागोन्यस्ततःप्राज्ञोयंमत्र्याभ्रातरःकविम् ॥ यविष्ठंव्यभजन्दायंब्रह्मचारिणमाहसः १ भ्रातरोभांक्तकिंमह्यंभजामपितरंतव ॥ किंमजार्यास्तताभांक्षुर्मापुत्रकतदादृथाः २ इमअंगिरसःसत्रमासतेऽद्यसुमेधसः ॥ षष्ठंषष्ठमुपेत्याहःकवेमुह्यंतिकर्मणि ३

गम्यवदितारंपितरमब्रुवन्नित्यर्थः। यतोनाभागादयोनिश्चयार्थंपितरंगत्वाब्रुवंस्तस्मादेतर्हिअद्यापिपुत्राःपितरंनिर्णीयव्यवस्थापकइत्याहुरित्यर्थः । सनाभागोगत्वाभ्रातृभिःसहपितरमपृच्छत्किमितितत्राह किमइति। हेततताताऽपितःमेआर्याज्येष्ठास्तद्वस्तुअभांक्षुःकिमितिपृच्छामित्वांयदाहंप्रोषितस्तदार्यास्त्वांव्यवस्थाप्यमेभागमदत्वाकिमर्थमभांक्षुरितिवात्वामंतरेणाभांक्षुरितित्वांहवावमह्यंतताभांक्षुरितिस पिताप्रत्याहमेति हेपुत्रकतन्मादृथाःतस्मिन्दायविभागेआदरंमाकार्षीरिति। तंपिताऽब्रवीन्मापुत्रकतदादृथाइति २ तर्हिममजीवनोपायःकइतिनाभागेनपृष्टःपिताप्रत्याह इमइति । अद्यइमेसुमेधसःशो भनप्रज्ञाआंगिरसःसत्रमासतेबहुकर्तृकेचिरकालीनेयज्ञेदीक्षितास्तिष्ठंति हेकवेतेऋषयः । षष्ठंषष्ठमहरुपेत्यतस्मिन्नहनिकर्तव्येवैश्वदेवेविश्वदैवत्येकर्मणिमुह्यंतित्वंमहात्मनःतान्प्रतिज्ञातव्येद्वेसूक्तेशंसयब्रूहि तेआंगिरसः । स्वःस्वर्गंयंतोगच्छंतआत्मनःसत्रपरिशेषितंस्वसत्रेपरिशिष्टंतुष्टिसाधनंद्रव्यंतेतुभ्यंदास्यंते। अथकालक्षेपमंतरेणत्वंतान्ऋषीन्गच्छसनाभागआत्मनेपित्रायथोक्तंतथाकृतवानित्यर्थः । अं गिरसोवाइमेस्वर्गायलोकायसत्रमासतेषष्ठंषष्ठमेवाहरागत्यमुह्यंतितानेतेसूक्तेषष्ठेहनिशंसयतेषांयत्सहस्रंसत्रपरिवेषणंतत्तेस्वर्यंतोदास्यंतीतितथेतितानुपैत्प्रातिगृभ्णीतमानवंसुमेधसइतितमब्रुवन्किंकामो वदसीतीदमेववःषष्ठमहःप्रज्ञापयानीत्यब्रवीदथयद्वएतत्सहस्रंसत्रपरिवेषणंतन्मेस्वर्यंतोदत्तेतितथेतितानेतेसूक्तेषष्ठेऽहन्यशंसयत् । ततोवैतेप्रयज्ञमजानन् विप्रःस्वर्गंलोकंतद्यदेतेसूक्तेषष्ठेहनिशंसतियज्ञस्य

प्रजात्यैस्वर्गंरपलोकस्यानुरूप्यात्याइति । हेसुमेधसः मानवंमांप्रतिगृह्णीतस्वीकुरुतेतिमंत्रयुक्ताकस्मिन्वनेविद्यायामथास्मदपेक्षितेविद्योपदेशकामो यस्यसत्त्वंकिंकामःपुण्यदधिकविद्यावत्वात् । द्विती येषुनानाभिमतइतितृतीयकाम इत्याह इदमेवेति । प्रथमविकल्पकामोपिभवामीत्याशयेनाह अथयदिति । सर्वयज्ञेषूपयोगमाह तद्यदिति । अनुरूप्यातिःप्रकाशःतेअंगिरसःसत्रपरिवेषणंधनंतस्मैनाभागा यदत्वास्वर्गंययुरित्यन्वयः । तेस्वर्यंतोब्रुवमेतत्तेब्राह्मणसहस्रमितीति । हेब्राह्मणवेदविद्याविशारद ३ ४ ५ कृष्णदर्शनःकृष्णवर्णतयाप्रतीयमानःकश्चिल्लोकविलक्षणःपुरुषःरुद्रःयज्ञशालायाउत्तरादि ग्भागादभ्येत्यसत्रपरिवेषणंस्वीकरिष्यंतंनाभागमुवाच कथंइदंवास्तवंयज्ञशालालक्षणवास्तुभवंवसुवस्तुममेति । तदेनंसमीकुर्वाणंपुरुषःकृष्णसंवास्युत्तरतउपोत्थायाब्रवीन्ममवाइदंममैवास्तुहमिति । इति समीकुर्वाणंराशीकृत्यस्वीकुर्वाणं । कृष्णशरीरवाससीवास्तुहवास्तवं । मूलभद्रभाषायांहकारवकारयोःपर्यायत्वांगीकारात् ६ मानवइतितर्हिपादिममेदमितिवदासेऋषिभिरिदंममदत्तमित्याह सोब्रवीन्म ह्यंवाइदमदुरिति तर्हिस्ममानवेत्युत्तरत्रापिसंबध्यते हेमानवयदित्वयाप्रतिग्रहीतमित्युच्यतेतर्हिनौआवयोस्तेपितरिप्रश्नःस्यादृत्वातपृष्ट्वानिश्चित्यमांब्रूहीत्युक्तःसनाभागःपितरंगतःतथापृष्टवान्भोपितर गिरोभिर्दक्षिणार्थंवास्तवंमह्यंदत्तद्ग्रहणसमयेकश्चित्पुरुष आगत्यमदीयमिदंवास्तवंऋषिभिर्मह्यंदत्तमितिनत्वयास्वीकर्तव्यमित्याह अतोयथार्थंवदेति ७ नाभागेनपृष्टःपितामाह यज्ञेति कचिदक्षशा

तांस्त्वंशंसयसूक्तेद्वेवैश्वदेवेमहात्मनः ॥ तेस्वर्यंतोधनंसत्रपरिशेषितमात्मनः ४ दास्यंततेऽथतान्गच्छतथासकृतवान्यथा ॥ तस्मैदत्वाययुःस्वर्गंतेमत्रप रिवेषणम् ५ तंकश्चित्स्वीकरिष्यंतंपुरुषःकृष्णदर्शनः ॥ उवाचोत्तरतोभ्येत्यममेदंवास्तवंवसु ६ ममेदमृषिभिर्दत्तमितितर्हिस्ममानवः ॥ स्यान्नौतेपि तरिप्रश्नःसगतःपितरंतथा ७ यज्ञवास्तुगतंसर्वमुच्छिष्टमृषयःक्वचित् ॥ चक्रुर्हिभागंरुद्रायसदेवःसर्वमर्हति ८ नाभागस्तंप्रणम्याहतवेशकिलवास्तुगम् ॥ इत्याहमेपिताब्रह्मन्शिरसात्वांप्रसादये ९ यत्तेपितावदद्धर्मंत्वंचसत्यंप्रभाषसे ॥ ददामितेमंत्रदृशोज्ञानंब्रह्मसनातनम् १० गृहाणद्रविणंदत्तंमत्सत्रप रिवेषितम् ॥ इत्युक्त्वांतर्हितोरुद्रोभगवान्सत्यवत्सलः ११

यमसंगेऋषयःयज्ञवास्तुगतंसर्वमुच्छिष्टमवशिष्टंरुद्रायभागंचक्रुर्हियस्मात्सदेवःसर्वमर्हति ८ मयात्वविचार्योक्तमित्युक्तोनाभागोगत्वातंरुद्रंप्रणम्याह हेईशवास्तुगतंतवकिलेतिमेपितामाह तस्मादहंशि रसात्वांप्रसादयेक्षमस्वेतिवाचासनाभागःमत्याह ९ सपुरुषोनाभागंप्रत्याह यत्तइति । तेपितासत्यलक्षणंधर्ममवदत् । त्वंचसत्यंयथातथ्यंवदसीतियत्तस्मान्मंत्रदृश‌वैश्वदेवसूक्तद्रष्टव्रतःतेतवसनातनं सदातनंवेदप्रमाणकंब्रह्मज्ञानिरपेक्षंअन्योपदेशाकांक्षारहितंब्रह्मविषयंज्ञानंददामि १० किंच यत्सत्रपरिवेषितंद्रविणंतच्चददामिगृहाणतमब्रवीत् तद्वैनोतवैवपितरिप्रश्नइतिसपितरमेनंपिताब्रवीन्ननुतेपु त्रकादुरित्यदुरेवमइत्यब्रवीत्तत्तुमेपुरुषः कृष्णशवास्युत्तरतउपोदतिष्ठन्ममवाइदंममैवास्तुहमित्यादितेतितंपिताब्रवीतस्यैवपुत्रकतत्तत्सतुभ्यंदास्यतीतिसपुनरेत्याब्रवीत्तवहवावकिलभगवइदमितिमेपि ताहेतिसोब्रवीत्तदहंतुभ्यमेवददामियएवंसत्यमवादीरिति । तस्मादेवंविदुपासत्यमेववदितव्यमितिहे पुत्रकतेंगिरसस्तवादुर्नतुदत्तवंतएवाकिमितिपृष्टेसनाभागःमअदुरेवनतत्रसंदेहइत्यब्रवीत्तर्हिकिमत्रा धर्ममितितत्राह तत्तुमइति सत्रपरिवेषितंयद्धनंतदिदंममैवेत्युक्त्वापितादत्तवान्स्वीकृतवानित्यर्थःइत्युक्तेपितानाभागंमत्याह तपितेति ११

फलमाह यएतदिति कविस्तत्त्वविज्ञानीमंत्रज्ञःऋग्वेदतात्पर्यार्थज्ञानीआत्मनः स्वपरलक्षणस्यवस्तुनोगतिंस्थितिंज्ञानंवाप्राप्नोतीतिशेषः । सएषमहस्रसनिर्मंत्रोयंनाभानेदिष्ठमुपैनंसहस्रंनमतिप्रषष्ठेनाह्ना स्वर्गंलोकंजानातियएवंवेदेत्यनेनापिफलश्रुतेरर्थः सूचितइति यदाहनाभानेदिष्ठःसहस्रसनिः वनषणसंभक्ताविति धातोः सहस्रेत्युपलक्षणमनेकजनायधनदाता सनलाभइतिधातोरनेकविषयज्ञानलाभोपेतःमंत्रोमंत्रज्ञानीपुरुषःएवमुक्तमितिहासार्थंवेद एनंपुरुषमुद्दिश्यसहस्रंउपनमति षष्ठेनाह्नाषष्ठादिनापेक्षितसूक्तपूर्वककृत कर्मणांस्वर्गसुखज्ञानात्मकलोकंसर्वाधारंहरिंप्रजानातीतिभावः १२ इतिश्रीभागवतेमहापुराणेनवमस्कंधेविजयध्वजकृतटीकायांपंचमोध्यायः॥५॥कृतंपूर्णंब्रह्मास्यास्तीति कृतीसुकृतीवा चक्रेणसुदर्शननाम्नाप्रतिहतोनिरस्तः १ २ प्रथमतस्तस्यविरक्तिमाह अंबरीषइति मह्यादिकंतत्सर्वंस्वप्नसंमितंस्वप्नवदनित्यंमेनइत्यन्वयः अव्ययांदीर्घकालीनां विभवांहिरण्यादिलक्षणं अनेनांबरीषशब्दार्थोपिसूचितःसआविष्करिष्यते अबादिकंरीषंनश्वरमितिज्ञानमस्यास्तीत्यंबरीषः रुषरिषहिंसायांमत्वर्थेअच्प्रत्ययः अबरवदीषाइच्छायस्यसतथा आकाशवद्ब्रहुलज्ञानइत्यर्थः व्यत्यासश्छांदसः अब्रह्मतस्यवारिवरणंतत्रेच्छायस्यसतथा ३ एतदेवस्पष्टयति विद्वानितिविभवनिर्वाणंहिरण्यादिसंपदा

यएतत्संस्मरेत्प्रातःसायंचसुसमाहितः ॥ कविर्भवतिमंत्रज्ञोगतिंचैवतथात्मनः १२ इतिश्रीभागवतेनवमस्कंधेपंचमोध्यायः ५ श्रीशुकउवाच ॥ नाभागादंबरीषोभून्महाभागवतःकृती ॥ नास्पृशद्ब्रह्मशापोपिचक्रप्रतिहतःक्वचित् १ राजोवाच ॥ भगवन्श्रोतुमिच्छामिराजर्षेस्तस्यधीमतः ॥ नप्राभूद्यत्रनिर्मुक्तोब्रह्मदंडोदुरत्ययः २ ॥ श्रीशुकउवाच ॥ अंबरीषोमहाभागःसप्तद्वीपवतींमहीम् ॥ अव्ययांचश्रियंलब्ध्वाविभवंचातुलंभुवि ३ मेनेतिदुर्लभंपुंसांसर्वंतत्स्वप्नसंमितम् ॥ विद्वान्विभवनिर्वाणंतमोविशतियत्पुमान् ४ वासुदेवेभगवतितद्भक्तेषुचसाधुषु ॥ प्राप्तोभावंपरंविश्वंयेनेदंलोष्ठवत्स्मृतम् ५ सवैमनःकृष्णपदारविंदयोर्वचांसिवैकुंठगुणानुवर्णने ॥ करौहरेर्मंदिरमार्जनादिषुश्रुतिंचकाराच्युतसत्कथोदये ६ मुकुंदलिंगालयदर्शनेदृशौतद्भृत्यगात्रस्पर्शेंगसंगमम् ॥ घ्राणंचतत्पादसरोजसौरभश्रीमत्तुलस्यारसनांतदर्पिते ७ पादौहरेःक्षेत्रपदानुसर्पणेशिरोहृषीकेशपदाभिवंदने ॥ कामंचदास्येनतुकामकाम्ययायथोत्तमश्लोकजनाश्रयारतिः ८ एवंसदाकर्मकलापमात्मनःपरेधियज्ञेभगवत्यधोक्षजे ॥ सर्वात्मभावंविदधन्महीमिमांतन्निष्ठविप्राभिहितःशशासह ९ ईजेश्वमेधैरधियज्ञमीश्वरंमहाविभूत्योपचितांगदक्षिणैः ॥ ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौसरस्वतीम् १० यस्यक्रतुषुगीर्वाणैःसदस्याऋत्विजोजनाः ॥ तुल्यरूपाश्चानिमिषाव्यदृश्यंतसुवाससः ११

नाशंक्षणिकंविद्वान्पुमान्यचस्माद्विभवान्मुग्धस्तमोविशति ४ परंभावमुत्कृष्टांभक्तियेनांबरीषेणइदंविश्वंलोष्ठवत्पांसुपिंडवत्स्मृतयेनभावेनवा ५ उत्कृष्टभक्तिमतःप्रवृत्तिंदर्शयति सवाइति ६ मुकुंदस्यलिंगंप्रतिमालक्षणंतेनयुक्तस्यालयस्य पादसरोजसौरभेणयुक्तायाम् ७ कामकाम्यया विषयतृष्णया उत्तमश्लोकस्यहरेर्जनानाश्रयतीतिजनाश्रयातम् ८ तस्मिन्हरौनिष्ठामनोयोगलक्षणायेषांतेतथा तादृशैर्विप्रैरभिहितःकर्मकलापंकर्मसमूहसर्वात्मभावंभक्तिंचेतिद्वयंभगवतिविदधत् ९ सरस्वतीमभिस्रोतंसरस्वत्याःस्रोतोजलप्रवाहःसयथाभिमुखोभवतितथा सरस्वतीजलमुद्दिश्येत्यर्थः उपचितासंवर्धितायज्ञस्यांगभूतादक्षिणायेषांतेतथातैःततैर्विद्यासुनिपुणैर्वसिष्ठश्चासितश्चगौतमश्चादिर्येषांतेतथातैः १० तुल्यरूपाःरूपयौवनवस्त्राभरणादिभिःसमानवेषाःअनिमिषाःउन्मीलितलोचनाः ११

यस्यांबरीषस्यमनुजैरमरप्रियःस्वर्गोपिनप्रार्थितइत्यन्वयः तत्रकिंकारणमितितत्राह शृण्वद्भिरिति अनेनमुकुंदचरितश्रवणगायनाभ्यामधिकंस्वर्गसुखंनभवत्यतःस्वर्गोनप्रार्थितइत्युक्तम् १२
यस्यकाम्यंतइतिकामाविषयभोगानोअल्पत्वाभवाञ्छिताइतिनेत्याह समृद्धाइति भोगेच्छूनामलंबुद्धिविषयाभवंतीत्यर्थः समृद्धौनिमित्तमाह स्वाराज्येति स्वराज्ये स्वरूपभूतैश्वर्येणपरिभाविताः
प्रचिताः अतएवास्यसुलभत्वेप्यन्येषांदुर्लभाइत्याह दुर्लभाइति अत्रापीदमेवनिमित्तमाह मुकुंदमिति १३ अपरोक्षज्ञानफलमाह सइति स्वधर्मेणप्रजापालनलक्षणेन १४ कथंजहावित्यत्राह
गृहेष्विति असंत्यमंगलानिअनर्थकरणानीतिमतिंबुद्धिंचकार १५ अपरोक्षज्ञानित्वेपियावद्देहंमोक्षासंभवादुद्रिक्तभक्तिभास्करादुत्फुल्लहृदयानुजस्यहरेरंबरीषेनुग्रहविशेषंदर्शयितुमाह तस्माइति १६
लोकशिक्षाप्रकटनार्थंसांवत्सरमित्युक्तंनत्वन्यकालनिषेधार्थं अन्यथाभक्तिलोपःप्रसज्येत १७ १८ संवत्सरव्रतांतेसर्वसाधनंसपदामहाभिषेकविधिः साम्राज्याभिषेकप्रकारः । वराकल्पैरुत्तमाभरणैः १९

स्वर्गोनप्रार्थितोयस्यमनुजैरमरप्रियः ॥ शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् १२ समृद्धायस्यनोकामाःस्वाराज्यपरिभाविताः ॥ दुर्लभाअपिसिद्धा
नांमुकुंदंहृदिपश्यतः १३ सइत्थंभक्तियोगेनतपोयुक्तेनपार्थिवः ॥ स्वधर्मेणहरिंप्रीणन्संगान्सर्वाञ्छनैर्जहौ १४ गृहेषुदारेषुसुतेषुबंधुषुद्विपोत्तमस्यंदन
वाजिपत्तिषु ॥ अक्षय्यरत्नाभरणायुधादिष्वनंतकोशेष्वकरोदसन्मतिम् १५ तस्माअदाद्धरिश्चक्रंप्रत्यनीकभयापहम् ॥ एकांतभक्तियोगेनप्रीतोभृत्याभिर
क्षणम् १६ आरिराधयिषुःकृष्णंमहिष्यातुल्यशीलया ॥ युक्तःसांवत्सरंवीरोदधारद्वादशीव्रतम् १७ व्रतांतेकार्तिकेमासित्रिरात्रंसमुपोषितः ॥ स्नातःकदा
चित्कालिंद्यांहरिंमधुवनेऽर्चयत् १८ महाभिषेकविधिनासर्वोपस्करसंपदा ॥ अभिषिच्यवराकल्पैर्गंधमाल्यार्हणादिभिः १९ तद्गतांतरभावेनपूजयामा
सकेशवम् ॥ ब्राह्मणांश्चमहाभागान्सिद्धार्थानपिभक्तितः २० गवांरुक्मविषाणीनांरूप्यांघ्रीणांसुवाससाम् ॥ पयःशीलवयोरूपवत्सोपस्करसंपदाम्
२१ प्राहिणोत्साधुविप्रेभ्योगृहेषुन्यर्बुदानिषट् ॥ भोजयित्वाद्विजानग्रेस्वाद्वन्नंगुणवत्तरम् २२ लब्धकामैरनुज्ञातःपारणायोपचक्रमे ॥ तस्यतर्ह्यतिथिः
साक्षाद्दुर्वासाभगवानभूत् २३ तमानर्चातिथिंभूयःप्रत्युत्थानासनार्हणैः ॥ ययाचेभ्यवहारायपादमूलमुपागतः २४ प्रतिनंद्यसतद्याच्ञांकर्तुमावश्यकंग
तः ॥ निममज्जबृहद्ध्यायन्कालिंदीसलिलेशुचौ २५ मुहूर्तार्धावशिष्टायांद्वादश्यांपारणंप्रति ॥ चिंतयामासधर्मज्ञोद्विजैस्तद्धर्मसंकटे २६ ब्राह्मणातिक्रमेदोषो
द्वादश्यांयदपारणे ॥ यत्कृत्वासाधुमेभूयादधर्मोवानमांस्पृशेत् २७ अंभसाकेवलेनाथकरिष्येव्रतपारणम् ॥ आहुरब्भक्षणंविप्राह्यशितंनाशितंचयत् २८

तद्गतांतरभावेनश्रीहरिनिष्ठमनस्कत्वेनासिद्धार्थान्कृतकृत्यान् २० २१ शतकोटिसंख्यान्यर्बुदम् २२ २३ अभ्यवहारायभोजनाय २४ आवश्यकनित्यकर्म बृहत्ब्रह्म बृहतेर्धातोर्डक्प्रत्ययः २५ ध
र्मसंकटेधर्मापदिप्राप्तायांसत्याम् २६ आमन्त्रितब्राह्मणातिक्रमेदोषोस्तिद्वादश्यामपारणे श्रीहरिप्रियद्वादशीभोजनाकरणेचदोषोस्ति । यत्तस्मादधर्मकृत्वामेसाधुभूयादुभयदोषपरिहारेणश्रेयःस्यात् ।
उभयोरेकातिक्रमलक्षणोऽधर्मोवामांनस्पृशेदितितद्द्विजैःसहचिंतयामास २६ एवंसंचिंत्यद्विजानांहार्दंस्वहार्दंचैकमेवेत्याशयेनाह अंभसेति केवलेनब्रीह्यन्नरहितेन तत्रकिंप्रमाणंइतितत्राह आहुरिति
हेविप्राः अप्भक्षणंअंभसापारणंअशितंभुक्तंपूर्वव्रतधारणार्थंभुक्तंभवति उत्तरकर्मार्थंअनशितमभुक्तंभवतीत्याहुर्वेदाइतिहियत्तादिदंयुग्मांकंचासिद्धंतस्मात्तेनैवव्रतपारणंकरिष्येइत्यन्वयः २८

ततःकिंकृतमितितत्राह इतीति प्रत्याचष्टप्रत्यैक्षत २९ ३० भ्रुकुट्याकुटिलंवक्रमाननंयस्यसतथा ३१ विष्णोरिष्टमानिनः ३२ अदत्वाशमितिशेषः ३३ जटामुत्कृत्यस्वशिरसीतिशेषः तस्मैअंबरीषाय ३४ वेपयतींकंपयंतीम् ३५ ३६ कृत्यांदग्ध्वात्मानंअभिद्रवत्तच्चक्रं स्वप्रयासंस्वप्रयत्नं । प्राणपरीप्सयास्वजीवनरक्षणेच्छया ३७ तंदुर्वाससंविविक्षुःप्रवेष्टुमिच्छुः ३८ च क्रानुयातोदुर्वासाएतानिस्थानानिबभ्रामेत्याह दिशइत्यादिना ३९ अलब्धोनाथोपालनसमर्थोयेनसतथाअरणंशरणंएषमाणःअन्वेषमाणःअजिततेजसःहरेस्तेजोरूपाच्चक्रात्त्राहिरक्ष ४० ब्रह्माकिमवादीतित्राह स्थानमिति द्विपरार्धसंज्ञेममायुःपूर्तिलक्षणेहरेःक्रीडावसानेआसन्नप्रलयइतियावत् सहविश्वंचराचरलक्षणप्रपंचेनसहितमेतन्मदीयंस्थानंभ्रूभंगमात्रेणसंदिधक्षोःसंदग्धुमिच्छोः

इत्यपःप्राश्यराजर्षिश्चिंतयन्मनसाच्युतम् ॥ प्रत्याचष्टकुरुश्रेष्ठद्विजागमनमेवसः २९ दुर्वासायमुनाकूलात्कृतावश्यकआगतः ॥ राज्ञाभिच्छंदितस्तस्यबुबुधेचेष्टितंधिया ३० मन्युनाप्रचलद्गात्रोभ्रुकुटीकुटिलाननः ॥ बुभुक्षितश्चसुतरांकृतांजलिमभाषत ३१ अहोअस्यनृशंसस्यश्रियोन्मत्तस्यपश्यत ॥ धर्मव्यतिक्रमंविष्णोरभक्तस्येष्टमानिनः ३२ योमामातिथिमायातमातिथ्येननिमंत्र्यच ॥ अदत्वाभुक्तवांस्तस्यसद्यस्तेदर्शयेफलम् ३३ एवंब्रुवाणउत्कृत्यजटांरोषविदीपितः ॥ तयासनिर्ममेतस्मैकृत्यांकालानलोपमाम् ३४ तामापतंतींज्वलतीमसिहस्तांपदाभुवम् ॥ वेपयंतींसमुद्वीक्ष्यनचचालपदान्नृपः ३५ ॥ श्रीशुकउवाच ॥ आदिष्टंभक्तरक्षायांपुरुषेणमहात्मना ॥ ददाहकृत्यांतांचक्रंक्रुद्धाहिमिवपावकः ३६ तदभिद्रवदुद्वीक्ष्यस्वप्रयासंचनिष्फलम् ॥ दुर्वासादुद्रुवेभीतोदिक्षुप्राणपरीप्सया ३७ तमन्वधावद्भगवद्रथांगंदावाग्निरुद्धूतशिखोयथाहिम् ॥ तथानुषक्तंमुनिरीक्षमाणोगुहांविविक्षुःप्रससाररमेरोः ३८ दिशोनभःक्ष्मांविवरान्समुद्राँल्लोकान्सपालांस्त्रिदिवंगतःसः ॥ यतोयतोधावतितत्रतत्रसुदर्शनंदुःप्रसहंददर्श ३९ अलब्धनाथःसयदाकुताश्चित्संत्रस्तचित्तोऽरणमेषमाणः ॥ देवंविरिंचंसमगाद्विधातस्त्राह्यात्मयोनेजिततेजसोमाम् ४० ॥ ब्रह्मोवाच ॥ स्थानंमदीयंसहविश्वमेतत्क्रीडावसानेद्विपरार्धसंज्ञे ॥ भ्रूभंगमात्रेणहिसंदिधक्षोःकालात्मनःपश्यतिकोआविष्यत् ४१ अहंभवोदक्षभृगुप्रधानाःप्रजेशभूतेशसुरेशमुख्याः ॥ सर्वेवयंयन्नियमंप्रपन्नामूर्ध्न्यर्पितंलोकहितंवहामः ४२ ॥ श्रीशुकउवाच ॥ प्रत्याख्यातोविरिंचेनविष्णुचक्रोपतापितः ॥ दुर्वासाःशरणंयातःशर्वंकैलासवासिनम् ४३ श्रीशंकरउवाच ॥ वयंनतातप्रभवामभूम्नोभवंतिकालेनभवंतिहीदृशाः ॥ यस्मिन्परेन्येप्यजजीवकोशाःसहस्रशोयत्रवयंभ्रमामः ४४

कालात्मनःकालरूपस्यहरेर्यद्भाविष्यत्कर्मकोवापुरुषस्तत्पश्यति अपरोक्षीकर्तुंसमर्थःनकोपीत्यन्वयः त्वामुपलक्षीकृत्यमदादिकंसर्वंसंहरिष्यतीतिज्ञातुंनशक्यतइतिभावः ४१ अतोमदादीनांतदनुप्रवेशः कर्तुमपिनकोपीत्यन्वयः तमेवानुकर्तुंप्रयतनंनत्वन्यदित्याशयेनाह अहमिति यन्नियमंयस्याज्ञालक्षणंगंप्रेरणंतस्येतिपूर्वेणान्वयः अर्पितंतेनैवेतिशेषः ४२ यद्यप्यनेनशंकरोपिप्रत्याख्यातस्तथापिमदजनशंकानिरासायदुर्वाससः शंकरशरणप्राप्तिमाह प्रत्याख्यातइति सर्वःशर्वःशिवःस्थाणुःशर्वःसंरोधानद्धारिरित्यतोविष्णुशंकानिरासायाह कैलासेति ४३ शंकरोपिस्वाशक्तिमेववक्तीत्याह वयमिति हेतातवयंनप्रभवामस्त्वांरक्षितुंनसमर्थाःस्यामःआचंतवत्त्वादित्याह भूम्नइति ईदृशामादृशाभूम्नःपूर्णानंदाद्धरेःसृष्टिकालेभवंतिसंहारकालेनभवंतिहियस्मात्तस्मात् यदाचेतनस्यभगवदधीनत्वंस्पष्टंतदाकिंवक्तव्यम

चेतनस्येत्याशयेनाह यस्मिन्निति यत्रयेषुअजजीवकोशेषुवयंभ्रमामतेअन्येअचेतनाअपिसहस्रशोजीवकोशाः अजोब्रह्मासएवजीवःतस्यकोशाःशरीरस्थानीयाःब्रह्मांडकोट्योयास्मिन्परेसंतिसईशानः स्वदापदःपरिहर्तास्यान्नवयमितिवाक्यशेषः ४४ अन्यतोप्यवनाशांनिवारयति अहमिति अहंसनत्कुमारादयः इतिसर्वेवयपस्यहरेर्मायामिच्छांकिंविषयामितिनविदामइत्यन्वयः ४५ ४६ दुर्विषहंसोढु मशक्यम् तर्ह्यहंकिंकरोमीतितत्राह तमेवेति ४७ ४८ अवरक्ष विश्वभावनसर्ववशीकरणसमर्थ ४९ तस्याघस्यापचितिःप्रायश्चित्तम्अघपरिहारसामर्थ्यंतवैवेत्याह मुच्यतेतिनारकोनरकस्थोयन्नाम्न्युदि तेअघान्मुच्यतेत्यन्वयः ५० आत्मरक्षार्थंदुर्वाससाप्रार्थितोभगवान्लोकसंग्रहार्थमात्ममायांप्रकटयति अहमिति अतोऽस्वतंत्रइवनत्वस्वतंत्रः स्वतंत्रस्यास्वातंत्र्यवचनंकथंसंगच्छतइतितत्राह साधु भिरिति ५१ ग्रस्तहृदयत्वंनामकिमित्यतस्तद्विवृणोतिनाहमिति साधुभिर्मद्भक्तैर्विनाहमात्मानंस्वरूपनाशासेनेच्छामि तदप्रियेप्राप्तेमज्जीवनेनकिंप्रयोजनमितिकृत्वेतिशेषः यदास्वात्मानमपिना

अहंसनत्कुमारश्चनारदोभगवानजः ॥ कपिलोऽपांतरतमोदेवलोधर्मआसुरिः ४५ मरीचिप्रमुखाश्चान्येसिद्धेशाःपारदर्शिनः ॥ विदामनवयंसर्वेयन्मा यांमाययावृताः ४६ तस्यविश्वेश्वरस्येदंशस्त्रंदुर्विषहंहिनः ॥ तमेवशरणंयाहिहरिस्तेशंविधास्यति ४७ ततोनिराशोदुर्वासाःपदंभगवतोययौ ॥ वि कुंठाख्यंयदध्यास्तेश्रीनिवासःश्रियासह ४८ संदह्यमानोऽजितशस्त्रवह्निनातत्पादमूलेपतितःसवेपथुः ॥ आहाच्युतानंतसदीप्सितप्रभोकृतागसंमा मवविश्वभावन ४९ अजानताते परमानुभावंकृतंमयाघंभवतःप्रियाणाम् ॥ विधेहितस्यापचितिंविधातर्मुच्येतयन्नाम्न्युदितेनारकोपि ५० श्रीभगवानु वाच ॥ अहंभक्तपराधीनोह्यस्वतंत्रइवद्विज ॥ साधुभिर्ग्रस्तहृदयोभक्तैर्भक्तजनप्रियः ५१ नाहमात्मानमाशासेमद्भक्तैःसाधुभिर्विना ॥ श्रियंचात्यंतिकीं ब्रह्मन्येषांगतिरहंपरा ५२ येदारागारपुत्राप्तान्प्राणान्वित्तमिमंपरम् ॥ हित्वामांशरणंयाताःकथंतांस्त्यक्तुमुत्सहे ५३ मयिनिर्बद्धहृदयाःसाधवःसमदर्शि नः ॥ वशीकुर्वंतिमांभक्त्यासत्स्त्रियःसत्पतिंयथा ५४ मत्सेवयाप्रतीतंचसालोक्यादिचतुष्टयम् ॥ नेच्छंतिसेवयापूर्णाःकुतोन्यत्कालविप्लुतम् ५५ सा धवोहृदयंमह्यंसाधूनांहृदयंत्वहम् ॥ मदन्यत्तेनजानंतिनाहंतेभ्योमनागपि ५६ उपायंकथयिष्यामितवविप्रशृणुष्वतत् ॥ अयंह्यात्माभिचारस्तेयत स्तंयाहिभवान् ५७ साधुषुप्रहितंतेजःप्रहर्तुःकुरुतेऽशिवम् ॥ तपोविद्याचविप्राणांनिःश्रेयसकरेउभे ५८ तएवदुर्विनीतस्यकल्पेतेकर्तुरन्यथा ॥ ब्रह्मं स्तद्गच्छभद्रंतेनाभागतनयंनृपम् ५९ क्षमापयमहाभागततःशांतिर्भविष्यति ६०

शासेतदाऽनन्यशरणांश्रियंनाशासइतिकिंवक्तव्यमित्याह श्रियंचेति भक्ताश्चापीदृशाइत्याह येषामिति ५२ इदंभूस्थानंपरंस्वर्गादिकम् ५३ तदत्यागेभक्त्यावशीकरणमेवकारणंनान्यदित्याहम यीति ५४ इदंचात्यागेकारणमित्याह मत्सेवयेति ५५ इतोपिमदन्यापेक्षातेषांनास्तीत्याशयेनाह साधवइति मह्यंममहृदयंप्रियम् तुशब्दोहेतौ साधवोममहृदयंअहंसाधूनांहृदयमितिय स्मात्तेमदन्यंप्रियंनजानंति अहमपितेभ्यःसाधुभ्योमनागल्पमपिप्रियमन्यन्नजानामीत्यन्वयः ५६ प्रकृतेकिमनेनायातमितितत्राहअयमितिआत्मनात्वयाकृतोभिचारःकृत्याप्रयोगःयतःयस्मै ५७ तस्मैप्रयुक्तमात्मानंकथंबाधतइतितत्राह साधुष्विति प्रहितंप्रयुक्तंक्षुद्रोपद्रवलक्षणंतेजोर्चिः तेजोबलेप्रभावेतेजस्योतिष्यर्चिषिरेतसीत्यभिधानंप्रहर्तुःप्रयोक्तुःअशिवंकुरुते विनयशून्यस्यतववियातपसी अनर्थकरेएवाभूतामितिभावेनाह तपइति ५८ अन्यथाअनर्थकरे ५९ ६०

६१ ६२ मात्राःशब्दादयः ६३ सहस्राणिअराणिदलानियस्यसतथा हेसहस्रार विप्रायदुर्वाससे इडस्पतेअन्नपते ६४ ६५ सुनामसुदर्शन धूमकेतुरग्निः ६६ अनंजनेनानिर्लेपेन ऊर्जितदैत्य दानवंबलंबाह्वादीन् वृश्चन्छिंदन्प्रधनेयुद्धे ६७ त्वत्तेजसातमःसंहृतंमहात्मनांदृशोःप्रकाशश्चसंहृतस्तंभितः एतत्परावरंसदसच्चरूपंत्वत्प्रतिमा ६८ साधुजनत्राणायखलप्रहाणायदुष्टनिग्रहायचत्र

श्रीशुकउवाच ॥ एवंभगवतादिष्टोदुर्वासाश्चक्रतापितः ॥ अंबरीषमुपावृत्यतत्पादौदुःखितोग्रहीत् ६१ तस्यतद्व्यसनंवीक्ष्यपादस्पर्शविलज्जितः ॥ अस्तावीत्तद्धरेरस्त्रंकृपयापीडितोभृशम् ६२ अंबरीषउवाच ॥ त्वमग्निर्भगवान्सूर्यस्त्वंसोमोज्योतिषांपतिः ॥ त्वमापस्त्वंक्षितिर्व्योमवायुर्मात्रेंद्रियाणिच ६३ सुदर्शननमस्तुभ्यंसहस्राराच्युतप्रिय ॥ सर्वास्त्रघातिन्विप्रायस्वस्तिभूयादिडस्पते ६४ त्वंधर्मस्त्वंधृतिःसत्यंत्वंयज्ञोखिलयज्ञभुक् ॥ त्वंलोकपालःसर्वात्मात्वंतेजःपौरुषंपरम् ६५ नमःसुनाभाखिलधर्मसेतवेह्यधर्मशीलासुरधूमकेतवे ॥ त्रैलोक्यगोपायविशुद्धवर्चसेमनोजवायाद्भुतकर्मणेस्तुते ६६ यदाविसृष्टस्त्वमनंजनेनवैबलंप्रविश्योर्जितदैत्यदानवम् ॥ बाहूदरोर्वंघ्रिशिरोधराणिवृश्चन्नजस्रंप्रधनेविराजसे ६७ त्वत्तेजसाधर्ममयेनसंहृतंतमःप्रकाशश्चदृशोर्महात्मनाम् ॥ दुरत्ययस्तेमहिमागिरांपतेत्वद्रूपमेतत्सदसत्परावरम् ६८ सत्वंजगत्त्राणखलप्रहाणयेनिरूपितःसर्वसहोगदाभृता ॥ विप्रायचास्मत्कुलदैवहेतवेविधेहिभद्रंतदनुग्रहोहिनः ६९ यद्यस्तिदत्तमिष्टंवास्वधर्मोवास्वनुष्ठितः ॥ कुलंनोविप्रदैवंचेद्द्विजोभवतुविज्वरः ७० यदिमेभगवान्प्रीतएकःसर्वगुणाश्रयः ॥ सर्वभूतात्मभावेनद्विजोभवतुविज्वरः ७१ श्रीशुकउवाच ॥ इतिसंस्तुवतोराज्ञोविष्णुचक्रंसुदर्शनम् ॥ अशाम्यत्सर्वतोविप्रंप्रदहद्राजयाच्ञया ७२ समुक्तोस्त्राग्नितापेनदुर्वासाःस्वस्तिमांस्ततः ॥ प्रशशंसतमुर्वीशंयुंजानःपरमाशिषः ७३ दुर्वासाउवाच ॥ अहोअनंतदासानांमहित्वंदृष्टमद्यमे ॥ कृतागसोपियद्राजन्मंगलानिसमीहसे ७४ दुष्करःकोनुसाधूनांदुस्त्यजोवामहात्मनाम् ॥ यैःसंगृहीतोभगवान्सात्वतामृषभोहरिः ७५ यन्नामश्रुतिमात्रेणपुमान्भवतिनिर्मलः ॥ तस्यतीर्थपदःकिंवादासानामवशिष्यते ७६ राजन्ननुगृहीतोहंत्वयातिकरुणात्मना ॥ ममाघंपृष्ठतःकृत्वाप्राणायन्मेभिरक्षिताः ७७ राजातमकृताहारःप्रत्यागमनकांक्षया ॥ चरणावुपसंगृह्यप्रसाद्यसमभोजयत् ७८ सोशित्वादृतमानीतमातिथ्यंसार्वकामिकम् ॥ तृप्तात्मानृपतिंप्राहभुज्यतामितिसादरम् ७९ प्रीतोस्म्यनुगृहीतोस्मितवभागवतस्यवै ॥ दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा ८० कर्मावदातमेतत्तेगायंतिस्वःस्त्रियोमहुः ॥ कीर्तिंपरमपुण्यांचकीर्तयिष्यतिभूरियम् ८१ ॥ श्रीशुकउवाच ॥ एवंसंकीर्त्यराजानंदुर्वासाःपरितोषितः ॥ ययौविहायसामंत्र्यब्रह्मलोकमहैतुकम् ॥ ८२ संवत्सरोत्यगात्तावद्यावत्तंनागतोगतः ॥ मुनिस्तद्दर्शनाकांक्षीराजाब्भक्षोबभूवह ८३

स्मत्कुलस्यदैवहेतवेदेवताभक्त्युत्पत्तिनिदानाय ६९ ७० ७१ ७२ ७३ महित्वंमहिमा ७४ ७५ ७६ ७७ ७८ आतिथ्यंअतिथिप्रियंअन्नं सार्वकामिकंअपेक्षिताखिलभोजनं ७९ आत्ममेधसाआत्मज्ञानेन ८० ८१ ८२ इतोगतोमुनिर्यावत्तंनृपंनागतःतावत्संवत्सरोत्यगात् मुनिदर्शनाकांक्षोराजाचतावदब्भक्षोभूत् ८३

सोंबरीषोबुद्धयामुनेर्व्यसनान्मोक्षंस्ववीर्यंच परमात्मनोनुभावःप्रभावःसामर्थ्यंयस्मिंस्ततथाभगवन्महिमोपेतंमनइत्यर्थः ८४ विरिंचःआदिःकारणंयस्यसविरिंचादिस्तंप्रपंचंयथायोग्यंअधश्चकार तुसर्वं तथात्वेब्रह्मादिभक्तिकोटचंशादंशोनैवांबरीषके । नैवास्त्यन्यस्यकस्यापितथापिहरिरीश्वरः । तात्कालिकोपचेदत्वात्तेषायजसआदिराटिति । नन्वंबरीषएवस्तुतिंकृत्वाचक्रानिवर्तनंकृतवान् नब्रह्मादयइत्यतआह । ब्रह्मादयश्चतस्कीर्तिंव्यंजयामासुरुत्तमाम् । मोहनायचदैत्यानाब्रह्मादेर्निंदनायच । अन्यार्थंचेति । निदनाय असुरकृतायेतिशेषः । अन्यार्थं अर्थवादार्थंकिंचफलानिचतु त्वज्ञापनायच विष्ण्वादिभिश्चक्रंननिवर्तितमित्याह । स्वयंविष्णुर्ब्रह्माद्याश्चनिगाशिषइति । अंबरीषस्यमनुष्याधिकारिपुभक्त्यादिगुणैरुत्तमत्वज्ञापनार्थमपि । भानुषेषूत्तमत्वाच्चेति । ब्रह्मादीनांभक्त्या दिगुणाधिक्यप्रकटनायच । तेषांभक्त्यादिभिर्गुणैरितिअन्यच्चप्रयोजनम् । ब्रह्मादेर्विष्ण्वधीनत्वज्ञापनायचकेवलंमिति । तर्हिदुर्वासाः कइतिचेद्रुद्रावतारः । दुर्वासाश्चस्वयंरुद्रइति । तथापिरुद्रत्वेपिअसुरावेशादन्याय्यवचनम् । तथाप्यन्यायमुक्तवानिति । स्वाज्ञाकारित्वेनतस्मिन्ननुग्रहविशेषाय भक्तजनमदविनाशनायचविष्णुर्निवर्तनंनाकारि । तस्याप्यनुग्रहार्थायदर्पनाशार्थमेवचेति

गतेथदुर्वाससिसोंबरीषोद्विजोपभोगातिपवित्रमाहरन् ॥ ऋषेर्विमोक्षंव्यसनाञ्चबुद्ध्यामेनेस्ववीर्यंचपरानुभावम् ८४ एवंविधानेकगुणःसराजापरात्मनिब्रह्मणिवासुदेवे ॥ क्रियाकलापैःसमुवाहभक्तिंययाविरिंचादिमधश्चकार ८५ श्रीशुकउवाच ॥ अथांबरीषस्तनयेषुराज्यंसमानशीलेषुविसृज्यधीरः ॥ वनंविवेशात्मनिवासुदेवेमनोदधद्ध्वस्तगुणप्रवाहः ८६ इत्येतत्पुण्यमाख्यानमंबरीषस्यभूपतेः ॥ संकीर्तयन्ननुध्यायन्भक्तोभगवतोभवेत् ॥ ८७ ॥ इतिश्रीभागवतेनवमस्कंधेअंबरीषोपाख्यानंनामषष्ठोध्यायः ॥ ६ ॥ श्रीशुकउवाच ॥ विरूपःकेतुमाञ्छंभुरंबरीषसुतास्त्रयः ॥ विरूपात्पृषदश्वोभूत्तत्पुत्रस्तुरथीतरः ॥ रथीतरस्याप्रजस्यास्यभार्यायांतंतवेर्थितः १ अंगिराजनयामासब्रह्मवर्चस्विनःसुतान् ॥ एतेक्षत्रप्रसूतावैपुनश्चांगिरसःस्मृताः २ रथीतराणांप्रवराःक्षत्रोपेताद्विजातयः ३ क्षुवतस्तुमनोर्जज्ञेइक्ष्वाकुर्घ्राणतःसुतः ॥ तस्यपुत्रशतंज्येष्ठाविकुक्षिनिमिदंडकाः४तेषांपुरस्तादभवन्नार्यावर्तेनृपान्नृप ॥ पंचविंशतिपश्चाच्चत्रयोमध्येपरेन्यतः ५ सएकदाष्टकाश्राद्धइक्ष्वाकुःसुतमादिशत् ॥ मांसमानीयतांमेध्यंविकुक्षेगच्छमाचिरम् ६ तथेतिसवनंगत्वामृगान्हत्वाक्रियार्हकान् ॥ श्रांतोबुभुक्षितोवीरःशशमाददपस्मृतिः ७

शास्त्रविरोधःस्यादतोभक्तिविधानार्थंतद्यशोर्थंदुष्टजनमोहनार्थंचेतिज्ञातव्यम् ८५ ८६ आख्यानफलमाह । इतीति ॥ ८७ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेविजयध्वजकृतटीकायांषष्ठोध्यायः ॥ ६ ॥ तंतवेसंतानाय १ आंगिरसउत्पत्तिनिमित्तत्वान्नाम्नाआंगिरसः २ रथीतराणांरथीतरसंततिजातानाम् ३ एकवंशसमाप्त्यान्यवंशंवक्तुमारभते क्षुवतइति क्षुतंकुर्वतःघ्राणतः घ्राणोद्गीर्णशब्दात् ४ आसमुद्रात्पुरस्तात्तुआसमुद्राच्चपश्चिमात् तयोरेवांतरंगिर्योरार्यावर्तंप्रचक्षतइत्येवंविधआर्यावर्तेपुरस्तात् पूर्वदिक्पालास्तेषांविकुक्ष्यादीनांमध्येपंचविंशतिनृपाःपश्चात्पश्चिमदिक्पालाःपंचविंशतिनृपाः अभूवन्मध्येविंध्याहिमवत्पर्वतयोर्मध्येतेषांमध्येत्रयःपालकाःअपरेचयेत्रिपंचाशदत्रशिष्टाःसप्तचत्वारिंशन्नृपाःतेअन्यतः दक्षिणतउत्तरतःपालकाअभूवन्नित्यन्वयः ५ ६ अपस्मृतिःविवेकरहितः ७

अकर्मकंकर्मायोग्यम् ८ त्यक्तविधिंआचारशून्यम् ९ नाम्नाजापकेनविप्रेणसंवादं तत्त्वविषयंसमाचरन् तेनसंवादजनितेनज्ञानेनयोगीज्ञानीसइक्ष्वाकुःपरंब्रह्मतदवाप सदेहआपाकिंमत्याह त्यक्त्वेति १० पुनर्विकुक्षिणाकिमकारीतितत्राह पितरीतिअशासदीजेसहरियज्ञैःपुष्कलदक्षिणैरितिकेचित्पठंति शासन्नीजेहरिंयज्ञैःशशादइतिविश्रुतइत्यन्ये शशमत्तीतिशशादः पुष्कलदक्षिणैः पूर्णदक्षिणैः ११ तस्यविकुक्षेः इंद्रोवाहोवाहनंयस्यसतथाकर्मभिर्विक्रमलक्षणैःअवाप्तानि १२ १३ १४ इंद्रात्मकवृषभककुदिस्थितः १५ १६ १७ तस्यपुरंजयस्यइषोःशरस्य

शेषंनिवेदयामासपित्रेतेनचतद्गुरुः ॥ चोदितःप्रोक्षणायाहदुष्टमेतदकर्मकम् ८ ज्ञात्वापुत्रस्यतत्कर्मगुरुणाभिहितंनृपः ॥ देशान्निःसारयामाससुतंत्यक्तविधिंरुषा ९ सतुविप्रेणसंवादंजापकेनसमाचरन् ॥ त्यक्त्वाकलेवरंयोगीसतेनावापयत्परम् १० पितर्युपरतेभ्येत्यविकुक्षिःपृथिवीमिमाम् ॥ शासन्नीजेहरिंयज्ञैःशशादइतिविश्रुतः ११ पुरंजयस्तस्यसुतइंद्रवाहइतीरितः ॥ ककुत्स्थइतिवाप्युक्तःशृणुनामानिकर्मभिः १२ कृतांतआसीत्समरेदेवानांसहदानवैः ॥ पार्ष्णिग्राहोवृतोवीरोदेवैर्दैत्यपराजितैः १३ वचनाद्देवदेवस्यविष्णोर्विश्वात्मनःप्रभोः ॥ वाहनत्वेवृतस्तस्यबभूवेंद्रोमहावृषः १४ ससन्नद्धोधनुर्दिव्यमादायविशिखाञ्छितान् ॥ स्तूयमानस्तमारुह्ययुयुत्सुःककुदिस्थितः १५ तेजसाप्यायितोविष्णोःपुरुषस्यपरात्मनः ॥ प्रतीच्यांदिशिदैत्यानांन्यरुणत्त्रिदशैःपुरम् १६ तैस्तस्यचाभवद्राजन्संग्रामोरोमहर्षणः ॥ यमायभल्लैरनयद्दैत्यान्येयुयुधुर्मृधे १७ तस्येषुपाताभिमुखंयुगांताग्निमिवोल्बणम् ॥ विसृज्यदुद्रुवुर्दैत्याहन्यमानाःस्वमालयम् १८ जित्वापुरंधनंसर्वमयच्छद्वज्रपाणये ॥ प्रत्ययच्छत्सराजर्षिरितिनामभिराहुतः १९ पुरंजयस्यपुत्रोभूदनेनास्तत्सुतःपृथुः ॥ विश्वगंधिस्ततश्चंद्रोयुवनाश्वस्तुतत्सुतः २० शावस्तिस्तत्सुतोयेनशावस्तीनिर्मितापुरी ॥ बृहदश्वस्तुशावस्तेस्ततःकुवलयाश्वकः २१ यःप्रियार्थंमुकुंदस्यधुंधुनामासुरंबली ॥ सुतानामेकविंशत्यासहस्रैरहनद्वृतः २२ धुंधुमारइतिख्यातस्तत्सुतास्तेप्रजज्वलुः ॥ धुंधोर्मुखाग्निनासर्वेत्रयएवावशेषिताः २३ दृढाश्वःकपिलाश्वश्चभद्राश्वइतिभारत ॥ दृढाश्वपुत्रोहर्यश्वोनिकुंभस्तत्सुतःस्मृतः २४ बर्हणाश्वोनिकुंभस्यकृशाश्वोथास्यसेनजित् ॥ युवनाश्वोभवत्तस्यसोनपत्योवनंगतः २५ भार्याशतेननिर्विण्णऋषयोस्यकृपालवः ॥ इष्टिंस्मवर्तयांचक्रुरैंद्रींतेसुसमाहिताः २६ राजातद्यज्ञसदनंप्रविष्टोनिशितर्षितः ॥ दृष्ट्वाशयानान्विप्रांस्तान्पपौमंत्रजलंस्वयम् २७ उत्थितास्तेनिशाम्याथव्युदकंकलशंप्रभो ॥ पप्रच्छुःकस्यकर्मेदंपीतंपुंसवनंजलम् २८ राज्ञापीतंविदित्वाथईश्वरप्रहितेनते ॥ ईश्वरायनमश्चक्रुरहोदैवबलंबलम् २९

पातस्याभिमुखंप्रत्यवस्थानंस्वमालयंस्वगृहंचाभित्वादैत्यादुद्रुवुरित्यन्वयः १८ सराजापुरंजित्वासर्वंपुरधनमयच्छदाप्नोत् पुनश्चतत्पुरधनंवज्रपाणयेप्रत्ययच्छत्दत्तवान्सराजर्षिर्दैत्यपुरंजयात्पुरंजयइतिनाम्नाहूतः वृषभरूपेंद्रस्यास्यवाहनत्वादिंद्रवाहइतिनाम्नाहूतःवृषभककुदिस्थितत्वात्ककुत्स्थइतिनाम्नाहूत १९ २० २१ २२ २३ २४ २५ २६ तर्षितःउदन्यया पुतः मंत्रपूतंजलम् २७ व्युदकं जलरहितंपुंसवनपुत्रोत्पत्त्यर्थमभिमंत्रितं २८ ईश्वरप्रहितेनदैवमेरितेन २९

३० स्तन्यःस्तनपानेच्छुरयंबालोभृशंरोरूयते पुनःपुनरत्यंतंरोदनंकरोतिकंधास्यति कस्यस्त्रीजनस्यस्तनंधास्यतीतिमत्वाइंद्रोहेवत्समारोदीःरोदनंमाकार्षीरित्युक्त्वादेशिनीमंगुष्ठानंतरामंगुलीमदाद सोमांधातेतिनाम ३१ तस्यमांधातुःपितायुवनाश्वः ३२ ३३ ३४ यज्ञंश्रीहरिं सर्वदेवमयंनंसर्वात्मकंमंत्रतंत्रद्रव्यादिसर्वव्यापिनं ३५ एतदेवस्पष्टयति द्रव्यमिति एआत्माव्यापीयस्यतद्यदात्मकं ३६ ३७ ३८ ३९ निर्वृतिमानंदं ४० ४१ ससौभरिरयंमुनिःस्त्रीणामसंमतोजरठःएजत्कंपमानंकंशिरोयस्यसतथा वलीपलितअतएवाप्रियइतिमत्वाअहंराज्ञाप्रत्युदाहृतः स्वयंवरेगृह्यतामितिप्रोक्तः इत्थंविचिंत्यात्मानंमांतथासाधयिष्येयथासुरस्त्रीणाममभीष्टमितिव्यवसितः ४२ ४३ क्षत्त्राकन्यांतःपुरंप्रवेशितःएकःपंचाशताराजकन्याभिर्वृतश्चाभूदितिशेषः ४४ कलिःकलहःतदर्थंसौभरिपतिपरिणय

ततःकालउपावृत्तेकुक्षिंनिर्भिद्यदक्षिणम् ॥ युवनाश्वस्यतनयश्चक्रवर्तीजजानह ३० कंधास्यतिकुमारोयंस्तन्येरोरूयतेभृशम् ॥ मांधातर्वत्समारोदीरि तींद्रोदेशिनीमदात् ३१ नममारपितातस्यविप्रदेवप्रसादतः ॥ युवनाश्वोथतत्रैवतपसासिद्धिमन्वगात् ३२ त्रसदस्युरितींद्रोंगविदधेनामतस्यवै ॥ य स्मात्त्रसंतिह्युद्विग्नादस्यवोरावणादयः ३३ यौवनाश्वोथमांधाताचक्रवर्त्यवनींप्रभुः ॥ सप्तद्वीपवतीमेकःशशासाच्युततेजसा ३४ ईजेचयज्ञंक्रतुभिरात्म विद्भूरिदक्षिणैः ॥ सर्वदेवमयंदेवंसर्वात्मकमतींद्रियम् ३५ द्रव्यंमंत्रोविधिर्यज्ञोयजमानस्तथर्त्विजः ॥ धर्मोदेशश्चकालश्चसर्वमेतद्यदात्मकम् ३६ याव त्सूर्यउदेतिस्मयावच्चप्रतिष्ठति ॥ सर्वंतद्यौवनाश्वस्यमांधातुःक्षेत्रमुच्यते ३७ शशबिंदोर्दुहितरिबिंदुमत्यामधान्नृपः ॥ पुरुकुत्समंबरीषंमुचुकुंदंचयो गिनम् ३८ तेषांस्वसारःपंचाशत्सौभरिंवव्रिरेपतिम् ३९ यमुनांतर्जलेमग्नस्तप्यमानःपरंतपः ॥ निर्वृतिंमीनराजस्यवीक्ष्यमैथुनधर्मिणः ४० जात स्पृहोनृपंविप्रःकन्यामेकामयाचत ॥ सोप्याहगृह्यतांब्रह्मन्कामंकन्यास्वयंवरे ४१ सविचिंत्याप्रियंस्त्रीणांजरठोयमसंमतः ॥ वलीपलितएजत्कइत्यहं प्रत्युदाहृतः ४२ साधयिष्येतथात्मानंसुरस्त्रीणामभीप्सितम् ॥ किंपुनर्मनुजस्त्रीणामितिव्यवसितःप्रभुः ४३ मुनिःप्रवेशितःक्षत्त्राकन्यांतःपुरमृद्धिमत् ॥ वृतश्चराजकन्याभिरेकःपंचाशतावरः ४४ तासांकलिरभूद्भूयांस्तदर्थेपोह्यसौहृदम् ॥ ममानुरूपोनायंवइतितद्गतचेतसाम् ४५ सबह्वृचस्ताभिरपारणी यश्रियाविराजत्सपरिच्छदेषु ॥ गृहेषुनानोपवनामलांभःप्रसूनसौगंधिककाननेषु ४६ महार्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ॥ स्व लंकृतस्त्रीपुरुषेषुनित्यदारमेनुगायद्द्विजभृंगवंदिषु ४७

नार्थेसौहृदंसुहृद्भावंअपोह्यपरित्यज्यतस्मिन्वरेआसक्तचेतसाम् ४५ बह्वृचःसौभरिःगृहेषुताभिःकन्याभिः रेमेइत्यन्वयःकीदृशेषुगृहेषुअपारणीयश्रियाअप्रतिघातलक्ष्म्याविराजंतिशोभमानानिचपरि च्छदैरुपकरणैः सहितानिचविराजत्सपरिच्छदानितेषुश्रियाअपारणीयःअनिवार्यःतथापिवरणयोग्यइत्यर्थइतिवा अमलान्यंभांस्यमलांभांसि प्रसूनानांसौगंधिकानिसौरभ्ययुतानिनानाविधोपवनानि च अमलांभोभिर्युतानिचप्रसूनसौगंधिकानिचकाननानियेषुतानितथातेषुअनुगायंतिद्विजवृंदानि अनुगायद्द्विजवृंदानि द्विजानांपक्षिणांवृंदानिद्विजवृंदानितान्येवबंदिनोयेषुतानितथातेषु ४६ ४७

  

एतावदेवानुवर्णयितुंशक्यंनातोधिकमित्याशयेनाह यादिति स्तंभमहंकारनिमित्तंकर्तव्याकरणलक्षणम् ४८ आज्यस्तोकैः घृतबिंदुभिः ४९ आत्मापह्नवंस्वरूपापहारणम् तपसस्तिरस्कारंवा ५० यच्चिरंधृतंब्रह्मतपःतत्प्रस्रावितंच्युतंनष्टमित्यर्थः ब्रह्मवेदस्तपस्तत्त्वमित्यभिधानम् तत्त्वमनारोपितंरूपंपुंसोज्ञातमेवतत्स्रुतमतिबद्धामितिवा ५१ लोकसंग्रहमेवापिसंपश्यन्कर्तुमर्हसीतिवाक्यार्थमनुसंधानआह संगमिति मिथुनव्राजिनात्स्त्रीपुरुषसंगोद्भूतपापान्मुमुक्षुःसंगंस्नेहलक्षणंत्यजेतइंद्रियाणिबहिःशब्दादिविषयेषुनविसृजेत्नप्रयुक्तएकाकीचरन्रहसिएकांतेअनंतेईशेचित्तंयुंजीत प्रसंगश्चेद्यदिप्रसंगोपेक्षितस्तर्हितस्मिन्हरौरातेयेषांतेतद्रतयस्तेषुसाधुषुनिर्मत्सरजनेषुप्रसंगःस्यान्नान्यत्रेत्यन्वयः ५२ अहमेकएवतपस्वीअथांभसिमंगलजलेमत्स्यसंगान्मत्स्यानांमिथःस्नेहदृष्ट्याअथानंतरंपंचाशतास्त्रीभिःसहसुरतप्रसंगेनसुतपंचसहस्रसंगआसं अथोभयकृत्यंपुत्राणांविवाहादिःकन्यकानांप्रदानादिरित्युभयकर्तव्यं तत्रयेमनोरथाःमनःसंकल्पविशेषास्तेषांउभयेनस्त्रीपुरुषद्वयेनपरकृत्यंतत्रविद्यमानानांमनोरथानांवाउभयास्मिन् इहलोकेपरलोकेचयत्कृत्यंतद्विषयमनोरथानांवाअंतमवसानंनव्रजामि तत्रेदंनिमित्तमाह मायेति शब्दादिविषयेप्रयोजनबुद्धिःमंगलानंतरारभप्रश्नकात्स्न्येंष्वथोअ

यद्वार्हस्थ्यंतुसंवीक्ष्यसप्तद्वीपवतीपतिः ॥ विस्मितःस्तंभमजहात्सार्वभौमश्रियान्वितम् ४८ एवंगृहेष्वभिरतोविषयान्विविधैःसुखैः ॥ सेवमानोनचातुष्यदाज्यस्तोकैरिवानलः ४९ सकदाचिदुपासीनआत्मापह्नवमात्मना ॥ ददर्शबह्वृचाचार्योमीनसंगसमुत्थितम् ५० अहोइमंपश्यतमेविनाशंतपस्विनःसच्चरितव्रतस्य ॥ अंतर्जलेवारिचरप्रसंगात्प्रस्रावितंब्रह्मचिरंधृतंयत् ५१ संगंत्यजेतमिथुनव्राजिनांमुमुक्षुःसर्वात्मनानविसृजेद्बहिरिंद्रियाणि ॥ एकश्चरन्रहसिचित्तमनंतईशेयुंजीततद्व्रतिषुसाधुषुचेत्प्रसंगः ५२ एकस्तपस्व्यहमथांभसिमत्स्यसंगात्पंचाशतामथसुतपंचसहस्रसंगः ॥ नातंव्रजाम्युभयकृत्यमनोरथानांमायागुणैर्हृतमतिर्विषयेर्थभावः ५३ एवंवसन्गृहेकालंविरक्तोन्यासमाश्रितः ॥ वनंजगामानुययुस्तत्पत्न्यःपतिदेवताः ५४ तत्रतप्त्वातपस्तीक्ष्णमात्मकर्शनमात्मवित् ॥ सहैवाग्निभिरात्मानंयुयोजपरमात्मनि ५५ ताःस्वपत्युर्महाराजनिरीक्ष्याध्यात्मिकींगतिम् ॥ अन्वीयुस्तत्प्रभावेनअग्निंशांतमिवार्चिषः ५६ मांधातुःपुत्रप्रवरोयोंबरीषःप्रकीर्तितः ॥ मातामहेनप्रवृत्तोयुवनाश्वस्तुतत्सुतः ५७ हरितस्तस्यपुत्रोभून्मांधातृप्रवराइमे ॥ नर्मदाभ्रातृभिर्दत्तापुरुकुत्सायचोरगैः ५८ तयारसातलंनीतोभुजगेंद्रप्रयुक्तया ॥ गंधर्वान्मोवधीत्तत्रवध्यान्वैविष्णुशक्तिधृक् ५९ नागाल्लब्धवरःसर्पादभयंस्मरतामिमम् ॥ त्रसदस्युःपौरुकुत्सोयोनरण्यस्यदेहकृत् ६०

थेत्यमरः ५३ एवंविरज्यकिमकार्षीत्तत्राहएवमिति न्यासंवित्तप्रदादित्यागलक्षणम् ५४ आत्मकर्शनंदेहस्यकृशत्वापादकम् अग्निभिःसहात्मानंदेहंदग्ध्वापरमात्मनियुयोज सायुज्यलक्षणंमोक्षमाप्तवानित्यर्थः ५५ ५६ मातामहेनमातुःपित्राशशबिंदुनातस्याबरीषस्यसुतः ५७ मांधातानामवरोयेषांतेतथा भ्रातृभिःउरगैःपुरुकुत्सायमांधातृज्येष्ठपुत्रायदत्ता ५८ भुजगेंद्रप्रेरितयातयानर्मदयारसातलंनीतःसपुरुकुत्सःतत्ररसातलेवध्यान्गंधर्वाननवधीदित्यन्वयःवध्यार्हाअन्वायेषांतेतथातान्वा ५९ नागा किमस्मैददुरितितत्राह सर्पादिति इमंगंधर्ववधलक्षणंपुरुकुत्सविक्रमंस्मरतांपुंसांसर्पादभयलक्षणं लब्धवरइत्यर्थः पुरुकुत्सस्यापत्यंपौरुकुत्सःयस्त्रसदस्युरनरण्यस्यदेहकृत्पिताअनरण्यस्त्रसदस्युसुतइत्यर्थः ६०

तस्यात्रिबंधुरस्यसुतः सत्यव्रतः त्रिशंकुरितिनामद्वयेनविश्रुतइत्यर्थः ६१ गुरोर्वसिष्ठस्यशापात्कौशिकस्यविश्वामित्रस्यतेजसाप्रभावेणसशरीरः मानुषशरीरसहितः स्वर्गंगतः अद्यापिदिविव्योम्निदृश्यतेमनुजैरे
विशेषः स्वर्गंगतः कथंमानवैर्दृश्यतइतितत्राह पातितइतितेनत्रिश्वामित्रेणबलात्तपःशक्त्यात्रैशंकवः त्रिशंकोरपत्यंहरिश्चंद्रोयोहरिश्चंद्रोनिमित्तंयस्यतद्यन्निमित्तपक्षिणोःसहायिनोःपक्षःपार्श्वंमरुत्साध्यसहायबलि
भिर्विष्विवितियादवः ६३ ६४ नापुत्रस्यलोकोस्तीतिशक्यार्थज्ञानाद्विषण्णमनाअनपत्यः सहरिश्चंद्रोनारदोपदेशात्हेप्रभोमेपुत्रोजायतामितिनिवेद्यवरुणशरणंगतइत्यन्वयः एतदेवविवृणोति यदीति हेमहाराज
यदिवीरःपुत्रोजायेततर्हितेनपुत्रेणत्वांयजे पुरुषपशुनात्वांयक्ष्येइतिहरिश्चंद्रेणोक्तेवरुणेनापितथास्त्वित्युक्तेनाम्नारोहितःपुत्रोजातइत्यन्वयः अथैनमुवाचवरुणराजानमुपधाव पुत्रोमेजायतांतेनत्वायजइति
तथेतिसवरुणंराजानमुपससार पुत्रोमेजायतांतेनत्वायजाइतितथेतितस्यहपुत्रोजज्ञेरोहितोनामेतिब्राह्मणंचैवमेवार्थमनुवदति अथवरुणआगत्यहरिश्चद्रमवादीदित्याह जातइति अंगतेसुतोजातोनेनपुत्रे
णमांयजस्वेति। सहरिश्चंद्रोवक्तिसोब्रवीदिति ६५ ६६ तंहोवाचाजनिवैतेपुत्रोयजस्वमानेनेतिसहोवाचयदावैपशुर्निर्दशोभवत्यथसमेध्योभवतिनिर्दशोन्वस्त्वथत्वायजाइति तथेतिइतिनिर्दशःदशाहाति
क्रांतःनिर्दशेजातेसहानिर्दशआस तंहोवाचनिर्दशोन्वभूद्यजस्वमानेनेतीति ६७ यद्यदापशोर्दंताजायेरन्नथतदापशुःशुचिःस्यादनंतरंत्वांयक्ष्येइत्यब्रवीत्हरिश्चंद्रः सहोवाच यदावैपशोर्दंताजायंतेअथसमे

हर्यश्वस्तत्सुतस्तस्मादरुणोथत्रिबंधुरः ॥ तस्यसत्यव्रतःपुत्रस्त्रिशंकुरितिविश्रुतः ६१ प्राप्तश्चंडालतांशापाद्गुरोःकौशिकतेजसा ॥ सशरीरोगतःस्व
र्गमद्यापिदिविदृश्यते ६२ पातितोवाक्शिरादेवैस्तेनैवस्तंभितोबलात् ॥ त्रैशंकवोहरिश्चंद्रोविश्वामित्रवसिष्ठयोः ६३ यन्निमित्तमभूद्युद्धंपक्षिणोर्बहुवार्षि
कम् ॥ सोनपत्योविषण्णात्मानारदस्योपदेशतः ६४ वरुणंशरणंयातःपुत्रोमेजायतांप्रभो ॥ यदिवीरोमहाराजतेनैवत्वांयजेइति ६५ तथेतिवरुणेनो
क्तेपुत्रोजातस्तुरोहितः ॥ जातःसुतोह्यनेनांगमांयजस्वेतिसोब्रवीत् ६६ यदापशुर्निर्दशःस्यादथमेध्योभवेदिति ॥ निर्दशेचसमागत्ययजस्वेत्याहसोब्रवीत्
६७ दंताःपशोर्यज्जायेरन्नथमेध्योभवेदिति ॥ जातादंतायजस्वेतिसप्रत्याहाथसोब्रवीत् ६८ यदापतंत्यस्यदंताअथमेध्योभवेदिति ॥ पशोर्निपतितादंता
यजस्वेत्याहसोब्रवीत् ६९ यदापशोःपुनर्दंताजायंतेथपशुःशुचिः ॥ पुनर्जातायजस्वेतिसप्रत्याहाथसोब्रवीत् ७० सान्नाहुकोयदाराजन्राजन्योथपशुःशु
चिः ॥ इतिपुत्रानुरागेणस्नेहयंत्रितचेतसा ॥ कालंवंचयताततमुक्तोदेवस्तमैक्षत ७१

ध्योभवतिदंतावास्त्वस्यजायतामथत्वायजाइतितथेतिइति सवरुणएत्याह हरिश्चद्रं अस्यदंताजाताअथमांयजस्वेतितस्यहदंताजज्ञिरेतहोवाचाज्ञतवाअस्यदंतायजस्वमानेनेति अज्ञतअजायंतयदास्यपुत्रस्य
दंताःपतंत्यथसशुद्धोभवेदित्यब्रवीत् सहोवाचयदावैपशोर्दंताः पद्यंतेअथसमेध्योभवतिदंतान्वस्यपद्यंत्वामथत्वायजाइतितथेतितस्यहदंताःपेदिरेइति पुत्रपशोर्दंताःनिपतिताःअथमांयजस्वेति वरुण
आह तंहोवाचापत्स्यतवा अस्यदंतायजस्वेतिमानेनेतीति ६८ ६९ यदापशोर्दंताःपुनर्जायंतेअनंतरंपशु शुद्ध स्यादिति सहरिश्चंद्रोब्रवीत्सहोवाचयदावैपशोर्दंताःपुनर्जायंतेथसमेध्योभवतिदंतान्वस्यपु
नर्जायंतामथत्वायजाइतितथेतितस्यदंताःपुनर्जज्ञिरेइति अस्यदंता पुनर्जाताःअथमांयजस्वेतिसवरुणोहरिश्चंद्रमेत्याह तंहोवाचाज्ञतवाअस्यपुनर्दंतायजस्वमानेनेति ७० यदाराजन्यःक्षत्रियः सान्नाहुकः
संनाहयोग्यःशस्त्रास्त्रग्रहणयोग्यःकवचवान्वाथराजपशुःशुचिरितिसहरिश्चंद्रोब्रवीत् सहोवाचयदावैक्षत्रियःसान्नाहुकोभवत्यथसमेध्योभवतिसन्नाहंनुप्राप्नोत्वथत्वायजाइतितथेतिसहसंनाहंप्रापतंहोवाच

सत्राहंतुमासोयजस्वमानेनेति ननुहरिश्चंद्र किमर्थंकालमक्षिपदितितत्राह इतीति । स्नेहपाशबद्धचेतसादशाहादिलक्षणंतंतंकालंवंचयताहरिश्चंद्रेणोक्तोवरुणोदेवःतमेक्षतप्रत्याहचेत्यन्वयः । तथात्म गग कालमेक्षतेतिवा ७१ सतथेत्युक्त्वापुत्रमामंत्रयामासततायंत्वैमह्यंत्वामददाद्धंतत्वयाहमिमंयजाइति सहनेत्युक्त्वाधनुरादायारण्यमुपातस्थौ ससंवत्सरमरण्येचचारेतिब्राह्मणप्रसिद्धंपितुश्चिकीर्षितंतदुगमुदि श्यात्मयजनंकर्तुमिष्टंतत्कर्माभिज्ञायप्राणप्रेप्सुरात्मजीवनेच्छुः रोहितोधनुरादायवनंप्राप ७२ तदनंतरंपितरंवरुणग्रस्तामत्यारभ्यप्रदायसमवंदतेत्यंतेनग्रथेनाथहैक्ष्वाकंवरुणोजग्राह तस्यहोदरजज्ञेइत्यादि ब्राह्मणप्रसिद्धोर्थोनूद्यतेइयायआजगामप्रशंसायांरूपप्रत्ययविधानात् प्रशस्तपुरुषरूपःविप्रइतियावत्इंद्रोवृद्धविप्रोभूत्वातंरोहितमेत्यपर्युवाच । अपपरीवर्जनइतिसूत्रान्निषेधवचनंकृतवान्नगंतव्यमित्युक्त वानित्यर्थः ७३ तत्रयुक्तिमाह भोरोहित नानाश्रांतायपुण्यतीर्थक्षेत्रनिषेवणेननानाविधेनश्रांतस्यजनस्यश्रीरैहिकामुष्मिकसंपदस्तीतिनृषद्वरः अनुकारीगुर्वादिवचनमशृण्वन्स्तंभवत्तिष्ठन्चर्मकारोवा जनःपापःइतिशुश्रुमःतर्हिसंचरमाणस्यएकाकिनश्चोरादिभयंस्यादितिनाशंकनीयम् चरत पुंसःइंद्रएवसखाभवतीत्यतःचरैवत्वंअटनंकुरुष्वैवंकश्चिद्ब्राह्मणोयमवोचत्कथचरैवेति नृषद्वरोनुक्तकारीचर्मकृच प्रकीर्तितइति इंद्रेणोपदिष्टोरोहितःकिंचकारेतितत्राह सोपीति समाः वत्सरान् ७४ एवंकतिवत्सरानरण्यंचचारेतितत्राह एवमिति द्वितीयंसंवत्सरमरण्येचचारेतिआदिब्राह्मणंचास्मिन्नर्थेमानं पुष्पिण्यौजंघेचरतःपुष्पिणीगर्भिणीजंघयोर्बलाचरतिअटतिनैकत्रास्ते यथाभूष्णुर्बुभूषुःपुरुषः आत्मासततंपर्यटनफलग्राहिःफलंगृह्णातियथाकिंतत्फलमाप्नोतीतितत्राह शेरइति प्रपथेमहामार्गे

**रोहितस्तदभिज्ञायपितुःकर्मचिकीर्षितम् ॥ प्राणप्रेप्सुर्धनुःपाणिररण्यंप्रत्यपद्यत ७२ पितरंवरुणग्रस्तंश्रुत्वाजातमहोदरम् ॥ रोहितोग्राममेयायतमिंद्रःप्रत्यषेधत ७३ भूमेःपर्यटनंपुण्यंतीर्थक्षेत्रनिषेवणैः ॥ रोहितायादिशच्छक्रःसोप्यरण्येचरत्समाः ७४ एवंद्वितीयेतृतीयेचतुर्थेपंचमेतथा ॥ अभ्येत्याभ्येत्यस्थविरोविप्रोभूत्वाहवृत्रहा ७५**

तीर्थयात्राश्रमेणहताअस्यपुंसः सर्वेपाप्मानःशेरेशीर्णाभवंतीति अतस्त्वमपिचरन्फलंलभस्वेत्यर्थः चरैवेत्युक्तार्थंआसीनस्यनिर्व्यापारस्यभगोभाग्यमप्यास्तआसीनंभवतिसमृद्धंनभवतितिष्ठतउत्थानंकुर्वतोभगऊर्ध्वस्तिष्ठतिउत्थानंकरोति । पुरुषच्छायेवनिपद्यमानस्यनिकृष्टोभवतीत्यर्थः । चरतःपुण्येनयथासंचरमाणस्यपुंसःभगश्चरतिप्राप्नोतितमितिशेषःभगोयोन्याभगोयत्नेयशोवीर्यार्कभूतिष्विति कलिःशयानइत्यादिनाकारणगुणःकार्यपरोयोजनीयः । तथाहि कलौजातःशयानःतामसत्वेनशुभप्रवृत्तिशून्योभवति द्वापरोजातःसंजिहानःसंशयानः इदंवाअदोवेतितत्त्वंनानिश्चिनोति । संबंधिपुत्रौदायादौद्वापरौयुगसंशयावितित्रेतायांजातउत्तिष्ठन् धर्मार्थकामलक्षणकार्योद्योगीभवति । कृतयुगेजातःकृतंविहितंचरन्संपद्यतेज्ञानसंपन्नोभवतीत्यतस्त्वंचरकोभवेत्यर्थः । युगेक्षपातेपर्यायेकृतकलीवेहितेर्थेवदिति । भूमौचरन्पर्यटन्मधुसुखंविंदतिवैअशनक्लेशोपिनास्तीत्याह स्वादिष्टमुदुंबरंफलविशेषंचरन्भक्षयन्भूमिपर्यटनंकुर्वतःइत्थंभावमाह चरान्निति । श्रवणमननाभ्यां स्वादुपुनःपुनःसेवाबुद्धिजनकंउदुंबरं अत्युत्तमंवरंवरणीयंसर्वगुणाभिरामंहारिचरणंगच्छन्नन्वेतिवा नित्यमटन्कोस्तीतितत्राह सूर्यस्येति यश्चरन्नविरतमटन्नतंद्रयते आलस्यंनकरोति । तस्य सूर्यस्यश्रेमाणंअव्याहतगमनाशिक्षांपश्य । तत्राप्येवमरण्येचरतः जीवनक्षेमस्यादितिवृत्रहारोहितं अशिक्षतेत्यन्वय ७५

[illegible] पमंसुतंशुनःशेपमक्रीणात् गवांशतंदत्त्वास्वीकृतवान् । स्वीकृत्यशुनःशेपाख्यंपशुंहरिश्चंद्रायपित्रेप्रदायपितरंसमवंदतेत्यन्व
यः [illegible] यायतस्यहत्रयःपुत्राःआसुः शुनःपुच्छःशुनःशेपःशुनोलांगूलइतितंहोवाच ऋषेहतेशतंददाम्यहमेषामेकेनात्मानंनिष्क्रीणाइ
[illegible] मध्यमेसपादयांचक्रतुःशुनःशेपेतस्यहशतदत्त्वासतमादायसोरण्याद्ग्राममेयायसपितरमेत्योवाच ततहंताहमनेनात्मानम् निष्क्री
[illegible] यादितिवरुणउवाचेति ७६ ततःपुरुषपशुप्राप्त्यनंतरमहायशाहरिश्चंद्रः पुरुषमेधेनपुरुषपशुहिंसालक्षणयज्ञेनवरुणा
[illegible] तंराजसूययज्ञकर्तुंप्रोवाचतमेतमभिषेचनीयेपुरुषंपशुमालेभेइति सोभिषेचनीयइति तादर्थ्येसप्तमी वरुणमुद्दिश्येति आक्षेभेआ
[illegible] ब्रह्मायास्यउद्गातेतिब्राह्मणार्थत्वेनास्मिन्यज्ञेहोत्रादीनाह विश्वामित्रइति आयस्यएवसामगः अयास्यसामगः साम
[illegible] ७८ तस्मैशुनःशेपायउपरिष्टाच्चतुर्दशेध्याये ७९ भूपतेर्भार्ययासहितस्यसत्यसारंसज्जनहितकरंवाक्यं धृतिंलौकिकमार्गा
[illegible] एतद्रूपमध्यस्तीतिप्रकाशनायसभार्यस्येत्युक्तम् ८० उपासनाकालेमनआदितत्त्वानांजडानांस्वस्वकारणेविलयस्तदभिमानि

षष्ठंसंवत्सरंतत्रचरित्वारोहितःपुरीम् ॥ [illegible] क्रीणान्मध्यमंसुतम् ॥ शुनःशेपंपशुंपित्रेप्रदायसमवंदत ७६ ततःपुरुषमेधेनहरिश्चंद्रोमहायशाः ॥
मुक्तोदरोयजद्देवान्वरुणादीन्महाक्रतौ ७७ विश्वामित्रोभवत्तस्मिन्होताथाध्वर्युरात्मवान् ॥ जमदग्निरभूद्ब्रह्मावसिष्ठोऽयास्यसामगः ७८ तस्मैतुष्टोददा
विंद्रःशातकौंभमयंरथम् ॥ शुनःशेपस्यमाहात्म्यमुपरिष्टात्प्रचक्षते ७९ सत्यसारंधृतिंदृष्ट्वासभार्यस्यचभूपतेः ॥ विश्वामित्रोभृशंप्रीतोददावविहतांगतिम्
८० मनःपृथिव्यांतामद्भिस्तेजसापोनिलेनतत् ॥ खेवायुंधारयंस्तच्चशब्दादौतन्महात्मनि ८१ तस्मिन्ज्ञानकलांध्यात्वातयाज्ञानंविनिर्दहन् ॥ हि
त्वातांस्वेनभावेननिर्वाणसुखसंविदा ॥ [illegible] तर्क्येणतस्थौविध्वस्तबंधनः ८२ ॥ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेहरिश्चंद्रोपा
ख्यानेसप्तमोध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

देवतानां [illegible] लक्षणोविलयः [illegible] भावलक्षणश्चिंतनीयइत्यतस्तंप्रकारमाह मनःपृथिव्यामिति अन्नमयंहिसौम्यमनःआपोमयःप्राणस्तेजोमयीवागितिश्रुतेः
[illegible] मद्भिरप्सुअंभःतेजसासंक्षिपेतत्तेजोनिलेनग्रस्येततंवायुंखेआकाशेलीनंतच्चखंशब्दादावहंकारे तमहंकारमहात्मनिमहत्त
त्त्वे [illegible] तस्मिन्महत्तत्त्वेज्ञानकलांबुद्धितत्त्वंलीयते तदभिमानिनीसरस्वतीतत्सायुज्येनस्थीयतेइतिध्यात्वातयाबुद्धिकलया ज्ञानमस्व
रूपचैतन्यंनिर्दहन् [illegible] तथा सहरिश्चंद्रःस्वभावेनस्वमहिम्नानिर्वाणेशरीररहितेसुखसंविदोयस्यसतथातेनसच्चिदानंदेनअनिर्देश्यचाप्रतर्क्यंचतत्तथाते
न [illegible] तेचश्रुतेः शब्दादौशब्दकारणेमहति आत्मनिहरौज्ञानकलांज्ञानलक्षणकामधेनुंज्ञानपूर्णइतिध्यात्वा तयातथाध्यातया
अज्ञानं [illegible] वेदाअशरीरानंदज्ञानलक्षणेन माहशैरनिर्देश्याप्रतर्क्येणस्वेनस्वभावेनस्वरूपभूतैश्वर्येणतस्थाविति वा ॥ ८२ ॥ इतिश्रीभाग
वतेमहापुराणे [illegible] ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

तस्माद्धरितार्च्चंपः। तस्माच्चंपान्निर्मितापुरीचंपानाम अतश्चंपात् यस्यसुदेवस्य १ सबाहुकः २ अनुमरिष्यतीअनुमरणंकर्तुमिच्छंती प्रजावंतंपुत्रवंतंतस्याआत्मानदेहंजानताऽपमंतर्वर्त्नीतिविदुषे त्यर्थः ३ सहसाहंतीतिसाहसोगरोत्रगर्भंपुत्रमाज्ञायसपत्नीभिरस्यैबाहुकपत्न्यैदत्तइत्यन्वयः तेनगरेणविषेणसहवर्ततइतिसगरः ४ यस्यस्यादाज्ञयापृथिवीचक्रवर्तीसईर्यतेइति सगरपुत्राःसागरास्तैः कृतत्वात्सागरःसमुद्रःतालजंघादयोद्वीपांतरवासिनोनिर्देश्याः ५ पामरान्मावधीरितिगुरोर्वाक्येनउत्सृष्टमंत्रयित्वेतिशेषः उपाकृतमित्यर्थः ६ ७ ८ सगरस्यसुमतिः केशिनीतिद्वेभार्ये तत्र सुमतिर्गरुडस्य स्वसातस्याःपुत्राः ९ १० षष्टिसहस्रसंख्यायेषामस्तीतिषष्टिसहस्रिणः उन्मिषंषनेत्रविकासकृतवान् ११ महेंद्रेणहृतचेतोयेषातेतथामुग्धाइत्यर्थः महतोऽव्यतिक्रमेणहताः चोरोहन्यतामित्यादिवचनलक्षणापराधेनैवस्वकृतदोषहताःनृपपुत्राःनतुमुनिकोपदग्धाः १२ शारदजलवन्नित्यप्रसन्नमूर्तौहरौतमोगुणकारणस्यक्रोधस्यप्रवेश उपदत्वात्क्रोधसंभूतपापाद्वीदहनत्वाच्चे

श्रीशुकउवाच ॥ हरितोरोहितादासीच्चंपस्तस्माद्विनिर्मिता ॥ चंपापुरीसुदेवोतोविजयोयस्यचात्मजः १ तरुकस्तत्सुतस्तस्माद्वृकस्तस्यापिबाहुकः ॥ सोरिभिर्हृतराज्यस्तुसभार्योवनमाविशत् २ वृद्धंतंपंचतांप्राप्तंमहिष्यनुमरिष्यती ॥ और्वेणजानतात्मानंप्रजावंतंनिवारिता ३ आज्ञायास्यैसपत्नीभिर्गरोदत्तोन्नसाहसः ॥ सहतेनैवसंजातःसगराख्योमहायशाः ४ सगरश्चक्रवर्त्यासीत्सागरोयत्सुतैःकृतः ॥ यस्तालजंघान्यवनाञ्छकान्हैहयबर्बरान् ५ नावधीद्गुरुवाक्येनचक्रेविकृतवेषिणः ॥ मुंडान्श्मश्रुधरान्कांश्चिन्मुक्तकेशार्धमुंडितान् ६ अनंतर्वाससःकांश्चिदबहिर्वाससोपरान् ॥ सोश्वमेधैरयजतसर्ववेदसुरात्मकम् ७ और्वोपदिष्टयोगेनहरिमात्मानमीश्वरम् ॥ तस्योत्सृष्टंपशुंयज्ञेजहाराश्वंपुरंदरः ८ सुमत्यास्तनयादृप्ताःपितुरादेशकारिणः ॥ हयमन्वेषमाणास्तेसमंतान्यखनन्महीम् ९ प्रागुदीच्यांदिशिहयंददृशुःकपिलांतिके ॥ एषवाजिहरश्चोरआस्तेमीलितलोचनः १० हन्यतांहन्यतांपापइतिषष्टिसहस्रिणः ॥ उदायुधाअभिययुरुन्मिमेषतदामुनिः ११ स्वशरीराग्निनातावन्महेंद्रहृतचेतसः ॥ महद्व्यतिक्रमहताभस्मसादभवन्क्षणात् १२ नसाधुवादोमुनिकोपभर्जितान्नृपेंद्रपुत्राइतिसत्वधामनि ॥ कथंतमोरोषमयंविभाव्यतेजगत्पवित्रात्मनिखेरजोभुवः १३ यस्येरितासांख्यमयीदृढेहनौर्ययामुमुक्षुस्तरतेदुरत्ययम् ॥ भवार्णवंमृत्युपथंविपश्चितःपरात्मभूतस्यकथंपृथङ्मतिः १४ योसमंजसइत्युक्तःसकेशिन्यानृपात्मजः ॥ तस्यपुत्रोंशुमान्नामपितामहहितेरतः १५

त्याह नसाधुवादइति नृपेंद्रपुत्रामुनिकोपभर्जिताइत्ययंसाधुवादोनास्तिअसंभवात्कथमितितत्राह सत्वधामनीति शुद्धस्फटिकविशदज्ञानमूर्तौश्रीकपिलदेवेरोषमयंतमःकथंविभाव्यतेउत्पद्यमवकाशंलभतेनकथमपि किंचजगत्पवित्रीकरणसमर्थस्वभावे आत्माजीवेधृतोदेहेस्वभावेपरमात्मनीतियादनः कथमिवभुवोरजःपार्थिवोधूलिःखेयथेत्ययंलुप्तोपमःवेदेहष्टत्वात् १३ इतोपितमोगुणकार्यस्यकोपस्यहरावनवसरःइत्याशयेनाह यस्येति इहजगतिसदनुग्रहाययस्ययेनेरिताग्रंथरूपेणकथिताहृढाअपेक्षितफलदानायसमर्थान्यत्रनूतनत्वेनबलिष्ठासांख्यमयीसम्यग्ज्ञानमयीनौस्तरीयथाज्ञानावामुमुक्षुर्मुक्तियोग्यःपुरुषः मृत्युपथंमृत्योर्मार्गंदुरत्ययंज्ञाननावमंतरेणात्येतुमशक्यंभवार्णवंतरते तादृशोयेनसंदृष्टेत्यर्थः तस्यपरात्मभूतस्यसाक्षान्नारायणावतारस्याविपश्चितःशुद्धज्ञानवतःश्रीकपिलस्यपृथङ्मतिःरोषरूपितामतिःकथंसंभाव्यतेइत्यन्वयः १४ योसमंजसइत्युक्तःहेनृपसकेशिन्याःसगरभार्यायाः आत्मजःपितामहःसगरः १५

पुरापूर्वजन्मनि योगीयोगाभ्यासनिपुणोसमंजस संगाद्धेतोःयोगादीश्वरोपासनालक्षणाद्विचलितोहियस्मात्तस्मात्पूर्वजातिंस्मरतीति जातिस्मरः आत्मानमसमंजसंअसमचेतःसंगतमनतिरमणीयंदर्शयन्संगंजहाविति शेषः १६ असमंजसत्वंदर्शयति आचरन्निति किंतज्ज्ञातीनांविप्रियंकर्मेतितत्राह सरय्वामितिजनमुद्वेजयन्कंपयन्तीरेक्रीडतोबालान्सरय्वानद्यांप्रास्यत्प्राक्षिपदित्यन्वयः १७ ततःकिमभूदितितत्राह एवमिति योगैश्वर्येणयुष्मद्बालाःएतेइतितान्नदीजलमग्नान्बालान्दर्शयित्वाततःस्थानाद्ययावित्यन्वयः १८ विसिस्मिरेविस्मयंचक्रुः अथासमंजसेगतेराजाचान्वतप्यतपश्चात्तापंप्रापइत्यन्वयः १९ पितरिगतेंऽशुमताकिमकारीतितत्राह अंशुमानिति पितृव्याअसमंजससहोदरास्तेपामनुमार्गंपितृव्याणांशरीरभस्महयमपिददृशेइत्यन्वयः भस्मांतेतिपाठेभस्मसमीपहयंदृष्ट्वानित्यर्थः २० अस्तौत्स्तुतवान् २१ स्तुतिर्द्वेधाविद्यमानगुणविषयाऽविद्यमानगुणविषयाच तत्रद्वितीयापिविद्वदविद्वद्विषयभेदेनाद्विविधा उभयस्याअपिस्तुतिफलंनलभ्यतेविदुषआत्मन्यविद्यमानगुणकथनेनन्हियास्तोतरिद्वेषसंभवादविदुषोऽज्ञानेनमुखविकासादिसंभवेपि स्तोतुःस्तुतिफलप्रदानशक्तिसामग्र्यभावादतःप्रथमैवश्रेयसीतिभावेनस्तौति नपश्यतीति । अजनोऽजोविरिंचःयस्यपरमात्मनोंशंत्वांनपश्यति अनंतत्वेनसाक्षादपरोक्षीकर्तुंनशक्नोति तर्हिपरोक्षतोजानातिकिंनेत्याह नेति समाधियुक्तिभिरेकाग्रीकृतचित्तयोगैरद्यापिनबुद्ध्यतेसम्यक्नजानातीत्यन्वयः । पश्यंतोपिनपश्यंतिमेरोरूपंविपश्चितःइतिवत् नयस्यतत्त्वमितिपाठेपरमात्मनोयस्यतववतत्त्वंनबुद्ध्यतइतिनकिंतुबुद्ध्यतेतथापि सम्यक्नजानातीत्यर्थः कश्छंदसांयोगमावेदधीरःकोधिष्ण्यामतिवाचपपादेतिश्रुतेः

**असमंजसआत्मानंदर्शयन्नसमंजसम् ॥ जातिस्मरःपुरासंगाद्योगीयोगाद्विचालितः १६ आचरन्गर्हितंलोकेज्ञातीनांकर्मविप्रियम् ॥ सरय्वांक्रीडतोबालान्प्रास्यदुद्वेजयन्जनम् १७ एवंवृत्तःपरित्यक्तःपित्रास्नेहमपोह्यवै ॥ योगैश्वर्येणबालांस्तान्दर्शयित्वाततोययौ १८ अयोध्यावासिनःसर्वेबालकान्पुनरागतान् ॥ दृष्ट्वाविसिस्मिरेराजन्राजाचाप्यन्वतप्यत १९ अंशुमांश्चोदितोराज्ञातुरंगान्वेषणेययौ ॥ पितृव्यखातानुपथंभस्मापिददृशेहयम् २० तत्रासीनंमुनिंवीक्ष्यकपिलाख्यमधोक्षजम् ॥ अस्तौत्समाहितमनाःप्रांजलिःप्रणतोमहान् २१ नपश्यतित्वांपरमात्मनोऽजनोनबुद्ध्यतेद्यापिसमाधियुक्तिभिः ॥ कुतोपरेतस्यमनःशरीरविसर्गसृष्टावयवप्रकाशाः २२ येदेहभाजस्त्रिगुणप्रधानागुणान्विपश्यंत्युतवातमश्च ॥ यन्मायथामोहितचेतसस्तेविदुःस्वसंस्थंनबहिःप्रकाशाः २३**

नपश्यतीति । रूपस्यनानोपायविशारदज्ञानस्यपरमात्मनस्तवतत्त्वंनबुद्ध्यतेइतिवा । एकस्याभावेप्यन्यस्यसंभवःकिंनस्यात्तथादृष्टत्वादित्याशंक्येतरविषयोयंन्यायोनपरमात्मविषयइतिभावेनाह कुतइति । अपरेविरिंचादितरेसमाधियुक्तिरहिताः कुतोहेतोःपश्यंतिजानंति दर्शनादिसद्भावेनकिमपिलिंगमित्यर्थः । अनेनचोद्यंकथंपरिहृतमित्यपितत्राह तस्येति तस्यविरिंचस्यमनसः शरीराच्चविसर्गः विशिष्टासृष्टिर्येषामरीच्यादीनांतेमनःशरीरविसर्गाःतैःसृष्टेषुशरीरावयवेषुश्रोत्रादिषुप्रकाशोअभिमानित्वेनस्थितिलक्षणोयेषांदिक्सूर्यादीनांतेमनःशरीरविसर्गसृष्टावयवप्रकाशाः अनेनइंद्रादयोमरीच्यादयःउभयेपिप्रत्युक्ताः अत्रजनोनपश्यतिनबुद्ध्यतेइत्यंगीकारेकुतोपरेइत्येतद्गतार्थत्वेनासंगतंस्यादितिबहुवचनमेवविशिष्यतेइति पदच्छेदेनविरिंचएवग्राह्यः २२ येदेहभाजःशरीरिणस्तेत्रिगुणप्रधानाःसत्वप्रधानारजःप्रधानास्तमःप्रधानाइतित्रिविधाः । तत्ररजःप्रधानाःराजसामानुषास्त्रिगुणप्रधानाःधर्मार्थकामपरायणाःगुणान्सर्गादीनेवपश्यंतिनमोक्षम् तमःप्रधानास्तामसाःअसुराःयस्यहरेर्मायया बंधशक्त्यामोहितचेतसःअन्यथाज्ञानपूर्णबुद्धयःतमोवाअंधंतमएवविशिष्टंपश्यंतिअनुभवंति तत्रनिमित्तमाह तइतितेस्वसंस्थंस्वहृदिस्थितंविष्णुंनविदुरितियत्तस्मादितिशेषःतर्हिचेतनाःकिंतेइतिनेत्याह बाहिरिति बहिर्देहादावेवप्रकाशोयेषांतेतथाअनात्मज्ञानिनइत्यर्थःआत्मैवमहेप्यइतिश्रुतेःज्ञानाश्रयत्वेनचेतनत्वेपियथार्थज्ञानंनास्तीतिभावः २३

एवंविधः ५४ रक्षःकृतंराक्षसकृतं ५५ रुशतीःक्रूराःमंत्रितत्वात् रुषरिषहिंसायांहिंसयंतीर्वा रुशशब्दे इतंचिकीर्षामइतिशब्दयंतीर्वा माधमासेरर्टस्यापइतिवचनात् ५६ कल्मषःकृष्णवर्णवत्तां व्यवायकालेसुरतसमये ५७ द्विजपत्नीराक्षसस्यकृपाजननायावध्यत्वेचानेकानिकारणान्याह नभवानित्यादिना ५८ ५९ ६० ६१ ६२ भ्रूणस्यस्वस्यस्वयमेवपुत्रस्य ब्रह्मवादिनःब्रह्मज्ञानिनः षड गवेदाध्यायिनोवा ६३ बभ्रोःसौरभेय्याःमाहेयीसौरभेयीचबभ्रुःस्याद्वृषकांक्षिणीत्यभिधानं ६४ येनपत्या मृतकंप्राणरहितशरीरंप्राणमंतरेण ६५ ६६ ६७ हेअकृतप्रज्ञअशिक्षितबुद्धे तवमृत्युरेवंगर्भा

परिवेष्यमाणंभगवान्विलोक्याभक्ष्यमंजसा॥राजानमशपत्क्रुद्धोरक्षोह्येवंभविष्यसि ५४ रक्षःकृतंतद्विदित्वाचक्रेद्वादशवार्षिकम् ॥ सोऽप्यपोंजलिनादायगु रुंशप्तुंसमुद्यतः ५५ वारितोमदयंत्यापोरुशतीःपादयोर्जहौ ॥ दिशःखमवनींसर्वांपश्यन्जीवमयींनृपः ५६ राक्षसंभावमापन्नःपादेकल्माषतांगतः ॥ व्यवायकालेददृशेवनौकौदंपतीद्विजौ ५७ क्षुधार्तोजगृहेविप्रंतत्पत्न्याहाकृतार्थवत् ॥ नभवान्राक्षसःसाक्षादिक्ष्वाकूणांमहारथः ५८ मदयंत्याः पतिर्वीरनाधर्मंकर्तुमर्हसि ॥ देहिमेपत्यकामायास्त्वकृतार्थंपतिंद्विजम् ५९ देहोयंमानुषोराजन्पुरुषस्याखिलार्थदः ॥ तस्मादस्यवधोवीरसर्वार्थ वधउच्यते ६० एषहिब्राह्मणोविद्वांस्तपःशीलगुणान्वितः ॥ आरिराधयिषुर्ब्रह्ममहापुरुषसंज्ञितम् ६१ सर्वभूतात्मभावेनभूतेष्वंतर्हितंगुणैः ॥ सोयंब्रह्म र्षिवर्यस्तेराजर्षिप्रवराद्विभो ६२ कथमर्हतिधर्मज्ञवधंपितुरिवात्मजः॥तस्यसाधोरपापस्यभ्रूणस्यब्रह्मवादिनः ६३ कथंवधंयथाबभ्रोर्मन्यतेसंमतोभवान् यद्ययंक्रियतेभक्ष्यस्तर्हिमांखादपूर्वतः ६४ नजीविष्येविनायेनक्षणंचमृतकंयथा ॥ एवंकरुणभाषिण्याविलपंत्याअनाथवत् ६५ व्याघ्रःपशुमिवाखादत्सौ दासःशापमोहितः ॥ ब्राह्मणीवीक्ष्यभर्तारंपुरुषादेनभक्षितम् ६६ शोचंत्यात्मानमुर्वीशमशपत्कुपितासती ॥ यस्मान्मेभक्षितःपापकामार्तायाःपतिस्त्व या ६७ तवापिमृत्युराधानादकृतप्रज्ञदर्शितः ॥ एवंमित्रसहंशप्त्वापतिलोकपरायणा ६८ तदस्थीनिसमिद्धेग्नौप्रास्यभर्तुर्गतिंगता ॥ विशापोद्वादशा ब्दांतेमैथुनायसमुद्यतः ६९ विज्ञायब्राह्मणीशापंमहिष्यासनिवारितः ॥ ततऊर्ध्वंसतत्याजस्त्रीसुखंकर्मणाप्रजाम् ७० वसिष्ठस्तदनुज्ञातोमदयंत्यां प्रजामधात् ॥ सावैसप्तसमागर्भमबिभ्रन्नव्यजायत ७१ जघ्नेऽश्मनोदरंतस्मात्सोऽश्मकस्तेनकथ्यते॥ अश्मकान्मूलकोजज्ञेयःस्त्रीभिःपरिरक्षितः ७२ नारी कवचइत्युक्तोनिःक्षत्रेमूलकोभवत् ॥ ततोदशरथस्तस्मात्पुत्रोऐलविलिःस्मृतः ७३ राजाविश्वसहोयस्यखट्वांगश्चक्रवर्त्यभूत् ॥ योदेवैरर्थितोदैत्यानव धीद्युधिदुर्जयान् ७४

धानसमयेदर्शितोभवेदाधानादतर्कितात्कालादितिशेषः ६८ प्रास्यनिक्षिप्य ६९ ब्राह्मण्याशापंविज्ञायसमित्रसहःस्त्रीसुखंस्त्रियंदूरीकृत्य कर्मणामैथुनलक्षणेन प्रजांसंततिंतत्याज ७० तर्हिवंशस्यकेनवि धिनापुत्रोजातइतितत्राह वसिष्ठइति तेनसौदासेनअनुज्ञातः मद्भार्यायांपुत्रमुत्पादयेति समाःसंवत्सरान् ७१ ७२ निःक्षत्रेपरशुरामेणदुष्टक्षत्रियसंहारेकृतेसति ७३ खट्वांगोदेवान्विहृत्यस्वपुरं गत्वायुर्मुहूर्तावधिकंज्ञात्वैवंमनःसंदधे ७४

कथंतर्हितितत्राह नमइति । कुलदैवात् ब्राह्मणकुलात् मेप्राणादयोनातिवल्लभाइत्यन्वयः ७१ मद्यंममर्मातिः ७६ वस्त्वप्रतिहतम् ७७ भूतभावनस्यहरेर्भावनात् उपासनादन्यत्स्वयंकर्मक्षेमसाधनंत्वे मनवृणे अविक्षिप्तेंद्रियधियः ७८ आत्मानंहरिम् ७९ किमनेनबहुनोक्तेनाप्येवंममसिद्धांतइतिसंदधाति अथेति । अथाहंतंश्रीहरिंप्रपद्यइत्यन्वयः । किंकृत्वाईशस्यहरेर्मायादिपाविकृतेपृथिव्यादिपंचभूते रचितेषुगुणेषुदेहेंद्रियादिषुगंधर्वपुरोपमेषुनश्वरेषुआत्मानिमनासिप्रकृत्यास्वतएवरूढंसंगंस्नेहलक्षणंपाशंहित्वा । त्यागेसाधनमाह विश्वभर्तुरिति । भावेनभक्त्या ८० सर्वस्मादन्यस्यहरेर्भावत्वमेकत्वविषयम ज्ञानंहित्वास्वंभावंस्वतंत्रंभावंस्थितः ८१ भावशब्दस्यलीलाद्यनेकार्थेषुवृत्तेरत्रविवक्षितःकइतितत्राह यत्तदिति उत्तरलिंगाविवक्षयायत्तदिति वेदांतिनोयभावंपरब्रह्मेतिगृणंति योगिनःसूक्ष्ममिंद्रियागो चरमाकाशवदितिसंगिरंते केचिद्वैदिकाःशून्यनाम्नाकल्पितंजल्पंति नतत्त्वमित्याह अशून्यमिति सात्वताःपांचरात्रिकाःयभगवान्वासुदेवेतिनाम्नागृणंतितंभावमास्थितइत्यन्वयःब्रह्मविदाप्नोतिपरं

मुहूर्तमायुर्ज्ञात्वैत्यस्वपुरंसंदधेमनः ॥ नमेब्रह्मकुलात्प्राणाःकुलदैवान्नचात्मजाः ७५ नश्रियोनमहीराज्यंनदाराश्चातिवल्लभाः ॥ नबाल्येपिमतिर्मह्यम धर्मेरमतेक्वचित् ७६ नापश्यमुत्तमश्लोकादन्यत्किंचनवस्त्वहम् ॥ देवैःकामवरोदत्तोमह्यंत्रिभुवनेश्वरैः ७७ नवृणेह्यवमंकर्मभूतभावनभावनात् ॥ येऽ विक्षिप्तेंद्रियधियोदेवास्तेस्वहृदिस्थितम् ७८ नविंदंतिप्रियंशश्वदात्मानंकिमुतापरे ७९ अथेशमायारचितेषुसंगंगुणेषुगंधर्वपुरोपमेषु ॥ रूढंप्रकृत्या त्मनिविश्वभर्तुर्भावेनहित्वातमहंप्रपद्ये ८० इतिव्यवसितोबुद्ध्यानारायणगृहीतया ॥ हित्वान्यभावमज्ञानंततःस्वंभावमाश्रितः ८१ यत्तद्ब्रह्मपरंसू क्ष्ममशून्यंशून्यकल्पितम् ॥ भगवान्वासुदेवेतियंगृणंतिहिसात्वताः ८२ खट्वांगाद्दीर्घबाहुश्चरघुस्तस्मात्पृथुश्रवाः ॥ अजस्तस्मान्महाराजस्तस्माद्दश रथोभवत् ८३ तस्यापिभगवानेषसाक्षाद्ब्रह्ममयोहरिः ॥ अंशांशेनचतुर्धागात्पुत्रत्वंप्रार्थितःसुरैः ॥ रामलक्ष्मणभरतशत्रुघ्नाश्चेतिसंज्ञया ८४ तस्या नुचरितंराजन्नृषिभिस्तत्त्वदर्शिभिः ॥ श्रुतंहिवर्णितंभूरित्वयासीतापतेर्मुहुः ८५ गुर्वर्थेत्यक्तराज्योव्यचरदनुवनंपद्मपद्भ्यांप्रियायाःपाणिस्पर्शाक्षमाभ्यां मृजितपथिरुजोयोहरींद्रानुजाभ्याम् ॥ वैरूप्याच्छूर्पणख्याःप्रियविरहरुषारोपितभ्रूविजृंभःत्रस्ताब्धिर्बद्धसेतुःखलदवदहनःकोसलेंद्रोवतीर्णः ८६ विश्वा मित्राध्वरेयेनमारीचाद्यानिशाचराः ॥ पश्यतोलक्ष्मणस्यैवहतानैर्ऋतपुंगवाः ८७ योलोकवीरसमितौधनुरैशमुग्रंसीतास्वयंवरगृहेत्रिशतोपनेयम् ॥ आदायबालगजलीलइवेक्षुयष्टिंसज्जीकृतंनृपविकृष्यबभंजमध्ये ८८

तस्यांतिसुषिरंसूक्ष्मंब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यतेइत्यादेःशून्यंतत्त्वमवाप्यमितिच ८२ ८३ ब्रह्ममयःवेदमुख्यार्थभूतःस्वयमंशेन लक्ष्मणादिषुअंशांशेन ८४ तत्त्वदर्शिभिःऋषिभिःवर्णितंतस्यसीता पतेर्भूरिफलतोमहत्तरमनुचरितम् ८५ त्वयापुनःपुनःश्रुतमपिशृणुष्वेत्याशयेनाह गुर्वर्थइति गुर्वर्थेपित्रर्थे पद्मपद्भ्यांपद्मोपमचरणाभ्यांमृजितपथिरुजःमार्जितमार्गक्लेशःहरींद्रानुजाभ्यांसुग्रीवलक्ष्मणाभ्यां वैरूप्यान्नासिकाच्छेदलक्षणात्प्रियायाःसीतायाःविरहोद्भूतरुषाआरोपितभ्रूविजृंभःउन्नमितभ्रूभंगःलंकायांहनुमतः आविर्भावंश्रुत्वाखलाएवदवःखलदवःतस्यखलदवस्यदाहेदहनोग्निः दवोदावोवनारण्यव ह्नीइतियादवः एवंविधोभगवान्कोसलेंद्रनाम्नाभुव्यवतीर्णइत्यन्वयः अवतास्त्विति केचित्पठंति ८६ एकपद्येनसूत्रवत्संक्षिप्तरामचरितमादितएवकिंचित्प्रपंचयति विश्वामित्रेति येनैव ८७ लोकेवीरा स्तेषांसमितौसभायांईशस्यशिवस्यविद्यमानंत्रिशतैरनेकैःपुरुषैःउपनेयंसमीपंआनेतुंयोग्यंसज्जीकृतंज्ययासहितंकृतम् ८८

उरसिअभिलभ्यमानांप्राप्नमानांआत्मनःस्वस्यरूपादिभिरनुरूपायासीताभिधाश्रीर्लक्ष्मीस्तांजित्वाप्राप्यस्वार्जितइतिवत् मार्गेव्रजन्रामोहतराजबीजांनिर्मूलितक्षत्रसंततिंमहींकृतवतोभृगुपतेःपरशुराम स्यप्ररूढं । दर्पउन्नतमदंव्यनयदपनीतवानित्यन्वयः८९ योरामःसत्याख्यपाशेनपरिवीतस्यपरिवेष्टितस्यपितुर्निदेशमाज्ञांशिरसापिपितृसंभावनार्थंजगृहइत्यन्वयः अपिर्जुगुप्सितार्थोवा । जुगुप्सायांकिं नित्तमित्यत्तउक्तं स्त्रैणस्येति । स्त्रीजितस्यसभार्यइत्यनेनतस्याअपिबहुमानातिशयंसूचयतिअमूनिवेत्यनेनराज्यलक्ष्म्यादीनांअशक्यत्याज्यतांदर्शयति । मुक्तसंगइत्यनेनाऽसंगोह्ययपुरुषइतिश्रुति सिद्धनित्यासंगतांदर्शयति अधिवासंअयोध्याम् ९० रक्षस्वसुःशूर्पणख्याःरूपंव्यकृत कर्णनासिकाच्छेदनलक्षणविकारंकारितवान् अटमानःवनइतिशेषः ९१ शूर्पणखीमुखात्सीतायाःसौंदर्यादिवि षयकथायाः श्रवणेनदीपितःप्रज्वलितोहृच्छयः कामोयस्यसतथातेनदशकंधरेणरावणेन सृष्टंप्रतिपाद्यप्रेषितं उत्सर्जनंविसर्जने विश्राणनंवितरणंस्पर्शनंप्रतिपादनमित्यभिधानं कृतैणवपुषा विरचितमृगाकारेणाश्रमतःसमीपेविचरंतंविलोक्यसीतयाप्रकृष्टः उल्लिखितोभेदितोवशीकृतइतियावत् आश्रमतोपकृष्ट दूरंनीतोरामोविशिखेनमारीचंआशुजघ्नइत्यन्वयः । उग्रोनरसिंहोहिरण्यकाशि पुनामानंअरिं उग्रोजज्ञेवीर्यायस्वधावानितिश्रुतिः रुद्रोंधकाख्यारिपुंवाउग्रः कपर्दीश्रीकंठःशितिकंठःकपालभृदित्यभिधानं ९२ निर्ऋत्यादिराक्षसविवक्षयारक्षोधमेनरावणेनविपिनेवृकवत्स्थितेन । वृ

जित्वानुरूपगुणशीलवयोनुरूपांसीताभिधांश्रियमुरस्यभिलभ्यमानाम् ॥ मार्गेव्रजन्भृगुपतेर्व्यनयत्प्ररूढंदर्पंमहींकृतवतोहतराजबीजाम् ८९ यःसत्य पाशपरिवीतपितुर्निदेशंस्त्रैणस्यचापिशिरसाजगृहेसभार्यः ॥ राज्यंश्रियंप्रणयिनःसुहृदोधिवासंत्यक्त्वाययौवनमसूनिवमुक्तसंगः ९० रक्षःस्वसुर्व्यकृतरू पमशुद्धबुद्धेस्तस्याःखरत्रिशिरदूषणमुख्यबंधून् ॥ जघ्नेचतुर्दशसहस्रमवारणीयकोदंडपाणिरटमानउवासकृच्छ्रम् ९१ सीताकथाश्रवणदीपितहृच्छये नसृष्टंविलोक्यनृपतेदशकंधरेण ॥ जघ्नेकृतैणवपुषाश्रमतोपकृष्टोमारीचमाशुविशिखेनयथाकमुग्रः ९२ रक्षोधमेनवृकवद्विपिनेसमक्षंवैदेहराजदुहित र्यपियापितायाम् ॥ भ्रात्रावनेकृपणवत्प्रियवावियुक्तःस्त्रीसंगिनामितिरतिंप्रथयंश्चचार ९३ यद्रोषतीव्रपरिवृत्तकटाक्षपातसंभ्रांतनक्रमकरोभयगीर्णघो षः ॥ सिंधुःशिरस्यर्हणंपरिगृह्यरूपीपादारविंदमुपगम्यबभाषएतत् ९४

षात्त्यावृणोत्यात्मानमितिवषांतरेणास्थितेनेत्यर्थःअसमक्षमप्रत्यक्षंरामस्येतिशेषः वैदेहराजदुहितरि सीतायामपयापितायामपनीतायां अवनेनियुक्तेनभ्रात्रालक्ष्मणेनरहितायामितिशेषः प्रियपासीत यावियुक्त लोकदृष्ट्येतिशेषः। स्त्रीसंगिनांरतिमितीत्थंप्रथयन्प्रख्यापयन्चचार अनेनविटजनशिक्षणार्थमेवंदर्शितमितिज्ञायतेप्रथयन्नित्युक्तेः । किमर्थमेवंकल्पनातत्स्वभावानुभवात्किंनस्यादितिचेन्नानि त्यपूर्णसुखज्ञानस्वरूपोसौयतोविभुः । ततोस्यरामइत्याख्यातस्यदुःखकुतोण्वपि । तथापिलोकशिक्षार्थंमदुःखोदुःखवर्तिवत् । अंतर्हितालोकदृष्ट्यासीतामासीत्स्मरन्नितिस्मृतिविरोधात् प्रियपावियुक्तत्व दर्शनमात्रंलोकदृष्ट्यपेक्षयेतिज्ञातव्यं तत्कुतोवगतमितिचेज्ज्ञानार्थंपुनर्नित्यसंबंधंस्वात्मनःश्रिया । अयोध्यायाविनिर्गच्छन्सर्वलोकस्यचेश्वरः । प्रत्यक्षंतुश्रियासार्धंजगामानादिरव्ययइतिस्मृत्याज्ञात व्यं । एवमन्यत्रापिप्रमाणसामर्थ्यात्सर्वत्राप्यनुसंधेयोऽन्यर्थइतिविशदंसमस्तं ९३ इतोपिश्रीरामःसाक्षान्नारायणावतारएवनदेवदत्ताद्यन्यतमःतस्यप्रियावियोगादिनादुःखप्रकटनमसुरजनमोहनायमा नुषावतारदेवत्वाजनशिक्षणायचेत्येतदन्यैःश्लोकैरवज्ञातुंशक्यमित्याशयेनतन्माहात्म्यंप्रकटयति यद्रोषेतियस्यरामस्यरोषेणतीव्रपरिवृत्तश्चकटाक्षः । यद्रोषतीव्रपरिवृत्तकटाक्षस्तस्यपातेनलक्ष्यवेधवद्वि षयीकरणेनसंभ्रांताइवस्वतोऽनवस्थितानक्राश्चमकराश्चयस्मिन्सतथाभयेनगीर्णोनष्टोघोषोयस्मिन्सतथाअतएवतूष्णींस्थितइत्यर्थः। अर्हणमर्घ्यपाद्यादिपूजासाधनंरूपीकरचरणादिविशिष्टावयवोपेतः९४

जडवदचेतनवद्धीर्येषांतेतथाज्ञानपूर्वप्रवृत्तिशून्याइत्यर्थ. । जडाधाराइत्यार्थोपिग्राह्यः। अनेनतावेदेवास्मत्त प्रयोजनमितिसूचयति । वेदांतेजगत्कारणस्यब्रह्मत्वंनिरणायिरामस्यतदभावात्त्वंकथमि तिचेत्तदस्याप्यस्तीत्याह त्वमिति । यस्त्वंसत्वगुणात्सुरगणान् । अस्राक्षीःरजोगुणात्प्रजेशान्मनुष्यानस्रजः । मन्योस्तमोगुणाच्चभूतपतयःभूतपतीन्प्रब्रह्मराक्षसादिलक्षणासुरान्उदभावयःसपरमा ण्वादिमहत्तत्त्वांतजगतःकर्ताभवान्नान्यः । गुणैःप्रवर्तमानस्यगुणनिमित्ताभिभवोनाशंकनीयः गुणानांतदधीनत्वादित्याशयेनाह गुणेशइति क्रोधस्यतमःकार्यत्वात्तेनतल्लक्षयति ९५ यथावमेहो विष्ठाशरीरान्निर्गताशुनासुपयोगायभवति । तथायमपिविश्रवसोदेहान्निर्गतत्वेनावमेहस्थानीयस्त्वच्छरानिर्भिन्नहृदयः । शुनामशनायस्यादित्यतोविश्रवसोवमेहमित्युक्तं । त्रैलोक्यस्यरोदनकरण त्वात्त्रैलोक्यरावणं हेवीरइहमपिवितत्यैविस्ताराय यंसेतुं ९६ विविधाद्रिकूटैर्नानाविधपर्वतशृंगैःकपींद्राणांकरैःकंपितानिभूरुहाणांवृक्षाणांअंगानिशाखोपशाखालक्षणानियेषुतानितथातैः ९७ श्च दासालंकारामेणाविष्टातदागजकुलैर्घूर्णाह्लादिनीवघूर्णाभूदितिशेषः । विहरंत्यास्मिन्नितिविहारंक्रीडास्थानं कोष्ठमतर्गृहंसद्वारंसभाद्वारंप्रशस्तसाधारणद्वारंवा । गोपुरंपुरद्वार सदःसभास्थानवलभी

तंत्वावयंजडधियोनविदामभूमन्कूटस्थमादिपुरुषंजगतामधीशम् ॥ त्वंसत्वतःसुरगणान्रजसःप्रजेशान्मन्योश्चभूतपतयःसभवान्गुणेशः ९५ कामं प्रयाहिजहिविश्रवसोवमेहंत्रैलोक्यरावणमवाप्नुहिवीरपत्नीम् ॥ बध्नीहिसेतुमिहतेयशसोवितत्यैगायंतिदिग्विजयिनोयमुपेत्यभूपाः ९६ बध्वोदधौर घुपतिर्विविधाद्रिकूटैःसेतुंकपींद्रकरकंपितभूरुहांगैः ॥ सुग्रीवनीलहनुमत्प्रमुखैर्नरेंद्रैर्लंकांविभीषणदृशाविशदाशुदग्धाम् ९७ सावानरेंद्रबलरुद्धविहा रकोष्ठसद्वारगोपुरसदोवलभीविटंका ॥ निर्भज्यमानधिषणध्वजहेमकुंभशृंगाटकागजकुलैर्ह्रदिनीवघूर्णा ९८ रक्षःपतिस्तदवलोक्यनिकुंभकुंभधूम्राक्ष दुर्मुखसुरांतनरांतकादीन् ॥ पुत्रान्प्रहस्तमतिकायविकंपनादीन्सर्वानुगान्समहिनोदथकुंभकर्णम् ९९ तांयातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशर तोमरखड्गजुष्टाम् ॥ सुग्रीवलक्ष्मणमरुत्सुतगंधमादनीलांगदर्क्षपनसादिभिरन्वितोयात् १०० तेनीकपारघुपतेरभिपत्यसर्वेद्वंद्वंवरूथमिभपत्तिरथाश्व योधम् ॥ जघ्नुर्द्रुमैर्गिरिगदेषुभिरंगदाद्याःसीताभिमर्शहतमंगलरावणेशम् १

गृहाच्छादनांतर्नाली । दारुभिःपरितोनिर्मितागोपानसीतिकीर्त्यते विटंकापक्षिपट्टिका वानरेंद्राणांबलेनसेनयारुद्धाआवारिताः विहारादयोयस्याःसातथा । आच्छादनंस्याद्वलभीगृहाणांगो पानसीदारुघुवक्रसंस्थानिप्रंबलीकंपटलांतमाहुःकपोतपालीचविटंकसंज्ञामितिहलायुधः । गोपानसीतुवलभीछादनेवक्रदारुणि कपोतपालिकायांतुविटंकंपुंनपुंसकमित्यमरः । निर्भज्यमानावानरेंद्रबले नर्निर्भिद्यमानाधिषणध्वजाःगृहालंकारहेतवःहेमकुंभाःसुवर्णकलशाःशृंगाटकाःगृहमुखाग्रतोन्नतत्रिशूलांकगृहैकदेशाःयस्यांसातथा । ध्वजोपरिस्थहेमकुंभैर्युक्ताःशृंगाटकाः चतुष्पथावा ९८ तद्वा नरेंद्रबलकृतंकर्म समहिनोदपातयत् ९९ यारावणेनप्रेरितातांयातुधानपृतनांराक्षससेनाम् १०० रघुपतेस्तेनीकपाःसेनानायकाःवरूथंरथगुप्तिमभिपत्यप्राप्य । इभाश्चपत्तयश्चरथाश्चाश्वाश्चयोधाश्चय स्मिन्तादिभपत्तिरथाश्वयोधंद्वंद्वंद्वाभ्यांद्वाभ्यांइभादिभ्यांक्रियमाणंयुद्धंअभ्युपगम्यराक्षसबलंजघ्नुरित्यन्वयः । रथगुप्तिर्वरूथोनाकूबरोनायुगंधरइतियादवः कीदृशंबलंसीताभिमर्शेनसीतापरामर्शेनसी तायाअपहारणेत्यर्थः । हतंनष्टंमंगलंपुण्यंयस्यसतथा । सचासौरावणःसीताभिमर्शहतमंगलरावण.सएवेशोयस्यतत्तथावत् १

मतितेजोवतिस्वःस्वर्गादवतीर्णैस्यंदनेरथेविभ्राजमानंक्षुरप्रैरर्धचंद्रैःअर्धचंद्र क्षुरप्रःस्यादीति प्रासःकुंतःऋष्टिःप्रसिद्धाशक्ति शतमारणीतोमरःलोहमयाद्विफल निस्त्रिंशःखड्गःपट्टिश लोहदंडइत्यर्थः श
मीचतुस्तालालोहकंटकसंचिताकेचित्शतघ्नीमपःकंटकसंछन्नांमहाशिलांवदंति भृशुंडीवृत्तायःकलसंचितादारुमयी हस्तिवरोगजत्रासहेतुरष्टमुनयःदेवदंडोश्वत्रासकरोरत्निमात्र.ध्रुवनामुद्गरःतत्रशक्त्या
वंहस्तमुक्तंशरादिकंपंत्रमुक्तंमुक्तामुक्तंनागपाशादिकंअमुक्तंछुरिकादिकमितिचतुर्विधमायुधपसंगात्कथितम् २ हेपुरुषादपुरीषराक्षसाधमथपकष्टंपुरीषंस्यात्विष्ठानिष्ठयूतमप्युनेति असताअप्रशस्तक
पात्वयाकांतासीतानःअस्माकमसमक्षंअस्मान्वंचयित्वापहृतेतियस्मादत्यक्तत्रपस्यनिर्लज्जस्यरक्षस्त्वेनजुगुप्सितस्यतेतवतस्यकर्मणः फलंकर्तुमनेकार्थत्वाद्दातुंदातुमिच्छामि तवाधुनातलघनम

रक्षःपतिःस्वबलनष्टिमवेक्ष्यरुष्टआरुह्ययानकमथाभिससाररामम्॥ स्वःस्यंदनेद्युमतिमातलिनोपनीतेविभ्राजमानमहनन्निशितैःक्षुरप्रैः२रामस्तमाहपुरुषा
दपुरीषयन्नःकांतासमक्षमसतापहृतास्वयंते ॥ त्यक्तत्रपस्यफलमद्यजुगुप्सितस्यइच्छामिकालइवकर्तुमलंघ्यवीर्यः ३ एवंक्षिपद्धनुषिसंधितमुत्ससर्जबा
णंसवज्रमिवतद्धृदयंबिभेद ॥ सोसृग्वमन्दशमुखैर्न्यपतद्विमानाद्धाहेतिजल्पतिजनेसुकृतीवरक्षः ४ ततोनिष्क्रम्यलंकायायातुधान्यःसहस्रशः ॥ मं
दोदर्यासमंतस्मिन्प्ररुदंत्यउपाद्रवन् ५ स्वान्स्वान्बंधून्परिष्वज्यलक्ष्मणेषुभिरर्दितान् ॥ रुरुदुःसुस्वरंदीनाघ्नंत्यआत्मानमात्मना ६ हाहताःस्मवयंना
थलोकरावणरावण ॥ कंयायाच्छरणंलंकात्वद्विहीनापरार्दिता ७ नवैवेदमहाभागभवान्कामवशंगतः ॥ तेजोनुभावंसीतायायेननीतोदशामिमाम् ८
कृतैषाविधवालंकावयंचकुलनंदन ॥ देहःकृतोयंगृध्राणामात्मानरकहेतवे ९ श्रीशुकउवाच ॥ स्वानांबिभीषणश्चक्रेकोसलेंद्रानुमोदितः ॥ पितृमेध
विधानेनयदुक्तंसांपरायिकम् १० ततोददर्शभगवानशोकवनिकाश्रमे ॥ क्षामांस्वविरहव्याधेःशिंशपामूलमाश्रिताम् ११ रामःप्रियतमांभार्यांदीनां
वीक्ष्यान्वकंपत ॥ आत्मसंदर्शनाह्लादविकसन्मुखपंकजाम् १२ आरोप्यारुरुहेयानंभ्रातृभ्यांहनुमद्युतः ॥ बिभीषणायभगवान्दत्त्वारक्षोगणेशताम्
१३ लंकामायुश्चकल्पांतंययौतीर्णव्रतःपुरीम् ॥ अवकीर्यमाणःकुसुमैर्लोकपालार्पितैःपथि १४ उपगीयमानचरितःशतधृत्यादिभिर्मुदा ॥ गोमूत्रयावकं
श्रुत्वाभ्रातरंवल्कलांबरम् १५ महाकारुणिकोतप्यज्जटिलंस्थंडिलेशयम् ॥ भरतःप्राप्तमाकर्ण्यपौरामात्यपुरोहितैः १६ पादुकेशिरसिन्यस्यरामंप्रत्युद्य
तोग्रजम् ॥ नंदिग्रामात्स्वशिबिराद्गीतवादित्रनिःस्वनैः १७

स्यमित्याशयेनाह कालइति कालोंतकःकालोमृत्युर्यमइतियादवः वीर्यपराक्रमेरेतस्यत्रमाहात्म्ययोरपीतिसरावगः सुकृतीभुक्तपुण्यःस्वर्गादिव ४ ५ अर्दितान्हिंसितान् ऋदाहिंसायां आत्मानंदेहं उ
मितियावत् आत्मनादेहेनहस्तेन ६ ७ नीतोयेनतंनैववेद ८ वयंचविधवाःकृताःदेहःगृध्राणामात्माजीवोजीवनायकृतः गृध्रप्राणरक्षणेनापिपुण्यंस्यादितितत्राह नरकहेतवइति नरकदुःखानुभवार्थं
ति ९ पितृमेधविधानेनशवदाहाविविधिना सांपरायिकंपरलोकसुखसाधनं १० क्षामामित्यादिकमसुरमोहनार्थं ११ १२ भ्रातृभ्यांलक्ष्मणविभीषणाभ्यां विभीषणस्यभ्रातृत्वमुपचारः १३ तीर्णं
पूर्णवनवासव्रतः १४ शतधृत्यादिभिःब्रह्मादिभिःगोमूत्रेणसहपक्वयावकाहारंभ्रातरंभरतं १५ १६ १७

स्वर्णकक्ष्यैःसुवर्णमयीकक्ष्याउदरबंधोयेषांतेतथातैर्हैमैर्हैमालंकृतैश्चित्रानानावर्णाध्वजा:येषांतैः १८ रुक्मसन्नाहैःस्वर्णनिर्मिता:सन्नाहा:कवचानियेषांतैः पुरटंसुवर्णश्रेणीभिरंगरक्षकैर्भृत्यैर्दासैःपारमेष्ठ्या न्यनर्घत्वेनप्रशस्तानिभांडानिअश्वाभरणानिपिठराद्युपकरणानिच १९ २० २१ ततस्तेभ्योभ्रातृभ्यः २२ उत्तरासंगंउत्तरीयवस्त्रंधुन्वंतःकंपयंतः २३ २४ निषंगंतूणीरऋक्षराट् जांबवान् २५ २६ २७ २८ गत्वागतान्प्राणानवाप्यतन्वः तनवःयथोत्थिताभवंति तथाविरहशुचः २९ गुरुर्वसिष्ठः ३० ३१ सिंहोपपदमासनम् । ग्रहणेहेतुमाह भ्रात्रेति भ्रात्राभरतेन

ब्रह्मघोषेणचमुहुःपठद्भिर्ब्रह्मवादिभिः ॥ स्वर्णकक्ष्यैर्गजैश्चापिहैमैश्चित्रध्वजैरथैः १८ सदश्वैरुक्मसन्नाहैर्भटैःपुरटवर्मभिः ॥ श्रेणीभिर्वारमुख्याभिर्भृत्यै श्चापात्सदोद्यतैः १९ पारमेष्ठ्यान्युपादायभांडान्युच्चावचानिच ॥ पादयोर्न्यपतत्प्रेम्णाप्रक्लिन्नहृदयेक्षणः २० पादुकेन्यस्यपुरतःप्रांजलिर्बाष्पलो चनः ॥ तमाश्लिष्यचिरंदोर्भ्यांस्नापयन्नेत्रजैर्जलैः २१ रामोलक्ष्मणसीताभ्यांविप्रेभ्योयेर्हसत्तमाः ॥ तेभ्यःस्वयंनमश्चक्रेप्रजाभिश्चनमस्कृतः २२ धुन्वंतउत्तरासंगंपतिंवीक्ष्यचिरागतम् ॥ उत्तराःकोसलामाल्यैःकिरंतोननृतुर्मुदा २३ पादुकेभरतोगृह्णाच्चामरव्यजनोत्तमे ॥ विभीषणःससुग्रीवःश्वेत च्छत्रंमरुत्सुतः २४ धनुर्निषंगाञ्छत्रुघ्नःसीतातीर्थकमंडलुम् ॥ अबिभ्रदंगदःखड्गंहैमंचर्मर्क्षराण्नृप २५ पुष्पकस्थोवृतःस्त्रीभिःस्तूयमानश्चबंदिभिः ॥ विरेजेभगवान्राजन्ग्रहैश्चंद्रइवोदितः २६ भ्रातृभिर्नंदितःसोपिसोत्सवांप्राविशत्पुरीम् ॥ प्रविश्यराजभवनंगुरुपत्नीश्चमातरम् २७ गुरून्वयस्या वरजान्पूजितःप्रत्यपूजयत् ॥ वैदेहीलक्ष्मणश्चैवयथायोग्यंप्रणेमतुः २८ पुत्रांस्तन्मातरस्तावत्प्राणांस्तन्वइवोत्थिताः ॥ आरोप्यांकेभिषिंचंत्योबा ष्पौघैर्विजहुःशुचः २९ जटानिर्मुच्यविधिवत्कुलवृद्धैःसमंगुरुः ॥ अभिषिंचद्यथैवेंद्रंचतुःसिंधुजलादिभिः ३० एवंकृतशिरःस्नानःसुवासाःसद् लंकृतः ॥ स्वलंकृतैःसुवासोभिर्भ्रातृभिर्भार्ययाबभौ ३१ अग्रहीदासनंभ्रात्राप्रणिपत्यप्रसादितः ॥ प्रजाःस्वधर्मनिरतावर्णाश्रमगुणान्विताः ३२ जुगोपपितृवद्रामोमेनिरेपितरंचतम् ॥ त्रेतायांवर्तमानायांकालःकृतसमोभवत् ३३ रामेराजनिधर्मज्ञेसर्वभूतसुखावहे ॥ वनानिनद्योगिरयोवर्षा णिद्वीपाःसिंधवः ३४ सर्वेकामदुघाआसन्प्रजानांभरतर्षभ ॥ नाधिव्याधिजराग्लानिदुःखशोकभयक्लमाः ३५ मृत्युश्चानिच्छतांनासीद्रामेराजन्यधो क्षजे ॥ एकपत्नीव्रतधरोराजर्षिचरितःशुचिः ३६ स्वधर्मंगृहमेधीयंशिक्षयन्स्वयमाचरन् ॥ प्रेम्णानुवृत्त्याशीलेनप्रश्रयावनतासती ॥ भियाह्रियाभि भावज्ञामर्तुःसीताहरन्मनः ३७ ॥ इतिश्रीभागवतेनवमस्कंधेअष्टमोध्यायः ॥ ८ ॥ ॥ श्रीशुकउवाच ॥ भगवानात्मनात्मानंरामउत्तमकल्पकैः ॥ सर्वदेवमयंदेवमीजआचार्यवान्मखैः १ होत्रेददादिशंप्राचींब्रह्मणेदक्षिणांविभुः ॥ अध्वर्यवेप्रतीचींचउदीचींसामगायसः २

३२ ३३ ३४ ३५ अनिच्छतांमरणमितिशेषः ३६ अनुवृत्त्याशुश्रूषयाशीलेनानुकूलस्वभावेन प्रश्रयेणाविनयेनअवनता ॥ ३७ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेविजयध्वजकृतटीकायांअष्टमो ध्यायः ॥ ८ ॥ आचार्यवानित्यनेनगुरुकुलवासित्वंशिक्षितत्वंचसूचयति आचार्यवान्पुरुषोवेदेतिश्रुतेः १ २

३ सौमंगल्यंमंगलसूत्रमेवावशेषितंयस्याःसातथा ४ ब्राह्मणादेवाःपूज्याइति भावोयस्यसतथातस्य वात्सल्यंस्नेहपारवश्यं भक्तिक्लिन्नधियःद्रवचित्ताः प्रत्यर्प्यदत्तंपुनर्दत्वा ५ ननुदत्तंनालमितिमत्वाप्रत्यर्पितंइतोधिकंप्रियमस्मद्योग्यमेवदत्तमतोन्यन्नापेक्षितमितिमत्वावा नप्रथमः यदृच्छालाभसंतुष्टिमतामस्माकंअनलंबुद्धिदोषोनास्तियतोतोद्वितीयएवाभिमतइत्याशयेनाह अप्रत्तमिति हेभगवंस्त्वनस्मद्धृत्तयांतर्हृदिसंविश्ययथानिद्रासुखसाधनंतथास्थित्वास्वरोचिषाज्ञानलक्षणंतमोहंसिनाशयासि यतोतस्त्वयानोऽप्रत्तमदत्तंकिंनुनकिमपीत्यतोधिकं भूदानादिकंनभवतिज्ञानधनस्यानश्वरत्वादहार्यत्वाच्च भूपालत्वात्तत्कर्मतवैवयोग्यंतस्मिन्कर्मण्यनधिकारिणोवयं तस्मादयोग्यत्वात्प्रत्यर्पणेनस्वीकारेणापहारदोषपंकलेपोनास्तिभवतइतिस्वीकृत्य तद्रक्षणंकर्तव्यमधिकृतत्वादितिभावः ६ त्वमस्मभ्यमनश्वरंधनंदत्तवान्वयंतत्प्रतिकर्तुंनशक्नुमः किंतुतुभ्यंनमनलक्षणंधनंदास्यामइत्येतावदेवेत्याशयेनाह नमइति न्यस्ततन्त्रायस्वकेषुनिक्षिप्तस्वरूपाय अर्पितांघ्रये स्वकेष्वितिशेषः न्यस्तदंडार्पितांघ्रयेइतिपाठेन्यस्तमनोवाक्कायदंडाःसंन्यासिनःतेष्वर्पितोंघ्रिर्ज्ञानलक्षणागतिर्येनसतथातस्मै अंघिलघिगत्यर्थावितिधातुःउत्तमश्लोकस्यहरेःधुरंवहतीतिउत्तमश्लोकधुर्यस्तस्मै ७ कस्यचित्पुंसोवचः ८ ९

आचार्यायददौशेषायावतीभूस्तदंतरा ॥ मन्यमानइदंकृत्स्नंब्राह्मणोर्हतिनिःस्पृहः ३ इत्ययदास्वमलंकारंवासोभ्यामवशेषितः ॥ तथाराज्ञ्यपिवैदेही सौमंगल्यावशेषिता ४ तेतुब्राह्मणदेवस्यवात्सल्यंवीक्ष्यसज्जनाः ॥ प्रीताःक्लिन्नधियस्तस्मैप्रत्यर्प्येदंबभाषिरे ५ अप्रत्तंनस्त्वयाकिंतुभगवन्भुवनेश्वर ॥ यतोंतर्हृदिसंविश्यतमोहंसिस्वरोचिषा ६ नमोब्रह्मण्यदेवायरामायाकुंठमेधसे ॥ उत्तमश्लोकधुर्यायन्यस्तदंडार्पितांघ्रये ७ श्रीशुकउवाच ॥ कदाचिल्लोकजिज्ञासुर्गूढोरात्र्यामलक्षितः ॥ चरन्वचोशृणोद्रामोभार्यामुद्दिश्यकस्यचित् ८ नाहंबिभर्मित्वांदुष्टामसतींपरवेश्मगाम् ॥ स्त्रैणोहिबिभृयात्सीतांरामोनाहंभजेपुनः ९ इतिलोकाद्बहुमुखाद्दुराराध्यादसंविदः ॥ श्रुत्वाभीतेनसात्यक्ताप्राप्ताप्राचेतसाश्रमम् १० अंतर्वत्न्यागतेकालेयमौसासुषुवेसुतौ ॥ कुशोलवइतिख्यातौतयोश्चक्रेक्रियामुनिः ११ अंगदश्चित्रकेतुश्चलक्ष्मणस्यात्मजौसुतौ ॥ तक्षःपुष्कलइत्यास्तांभरतस्यमहीपते १२ सुबाहुःश्रुतसेनश्चशत्रुघ्नस्यबभूवतुः ॥ गंधर्वान्कोटिशोजघ्नेभरतोविजयेदिशाम् १३ तदीयंधनमानीयसर्वंराज्ञेन्यवेदयत् ॥ शत्रुघ्नश्चमधोःपुत्रंलवणंनामराक्षसं ॥ हत्वामधुवनेचक्रेमथुरांनामवैपुरीम् १४ मुनौनिक्षिप्यतनयौसीताभर्त्राविवासिता ॥ ध्यायंतीरामचरणौविवरंप्रविवेशह १५ स्त्रीपुंप्रसंगएतादृक्सर्वत्रत्रासमावहः ॥ अपीश्वराणांकिमुतग्राम्यस्यगृहमेधिनः १६ ततऊर्ध्वंब्रह्मचर्यंधारयन्नजुहोत्प्रभुः ॥ त्रयोदशाब्दसाहस्रमग्निहोत्रमखंडितम् १७

बहुमुखादन्योन्यशिक्षानियतत्वेनानेकशब्देनप्रधानादतएवदुराराध्याद्दुःसाध्यात् कार्यनिष्पत्तिरहितादित्यर्थः अतएवासंविदःअन्यसंवादशून्यात्मर्यादारहिताद्वालोकाच्छ्रुत्वालोकापवादभीतेनरामेणत्यक्तासासीताप्राचेतसःप्रचेतसोवरुणस्यापत्यंवाल्मीकिःतस्याश्रमंप्राप्ता १० अंतर्वत्नीगर्भिणीयमौयमलौक्रियाः क्षत्रयोग्याःजातकादिकाः ११ १२ १३ १४ मुनौवाल्मीकौ विवरंभूविलं १५ १६ अपिपदेनलोकशिक्षार्थंसंभावितएवनत्वनुभूतइत्याह ततइति अस्याःसूमेर्देशानंतरंअखंडितंअग्निहोत्रमजुहोत् पूर्वंकाचित्खंडितमित्यर्थोनैवकिंतुततः पूर्वंचब्रह्मचर्यंधारयन्नित्यस्याप्यूर्ध्वरेतस्त्वंनार्थः किंतुब्रह्मणालक्ष्म्यासीतयासहचर्यंचरणवर्तनंधारयन्कुर्वन्नेवममयोनिर्महद्ब्रह्मेतिवचनात् अन्यथात्रयोदशसहस्रमित्युक्तिरसंगतास्यात् सर्वात्मनाराज्यकरणस्यतावत्त्वात्तस्मात्क्षितिमंडलंत्रयोदशसहस्रमब्दंब्रह्मलोकसमंकृत्वानक्षत्रमासगणितंत्रयोदशसहस्रकं ब्रह्मलोकसमंचक्रेसमस्तंक्षितिमंडलमितिवचनाच्चेत्यर्थः ऊर्ध्वोधःशब्दयोश्चवैय्यर्थ्याच्च १७

ततोऽयोध्यायाअगाद्वैकुंठमितिशेषः अंशुकैःसूर्यकिरणैःबुद्धंविकसितंपद्ममिवशोभमानंस्वपादपल्लवंस्मरतांपुंसांहृदिविन्यस्यानिधिवन्निधायआत्मज्योतिःस्वभावप्रकाशः १८ रघुपतेरिदंयशोवक्ष्य माणलक्षणंनर्किंतन्निषेव्यमितितत्राह रक्षइति राक्षसवधोयःयश्चजलधिबंधनंइदमिति रघुपतिःकोसावितितत्राहविश्वेति किंप्रयोजनमुद्दिश्यरघुपतिनामरूपग्रहणमित्याशंक्यनकिमपिप्रयोजनमुद्दि श्येत्याशयेनाह लीलेति शरीरग्रहणेनकिमपिदुःखादिकमस्यास्तीत्याशयेनाह अधिकेतिसर्वस्मादधिकंशांतमानंदपूर्णंनित्यमुक्तंधामस्वरूपंयस्यसतथातस्य यतएवंविधमहात्म्योरघुपतिरतोत्र पाणेर्धनुःपाणेस्तस्यकपयः शत्रुहननेसहायाःबलभूताःकिंन्नेत्यर्थः १९ नकेवलंनृपसभासुगायंतिअपितुदिगिभेंद्रपातेदिग्गजानांपातःसंचारोयस्मिन्लोकालोकप्रदेशेपीत्यनेनसर्वत्रेत्याह नाकपाला इंद्रादयःवसुपालाःकुबेरादयः २० यैस्पृष्टःनयनादिना दृष्टोवा चक्षुरादिना श्रुतोवा श्रोत्रादिनासंवित्तःसम्यक्ज्ञातोवानुगतोवा पृष्ठतोयातोवा कोसलाअयोध्यावासिनइत्युपलक्षणं सर्वेपीतिग्राह्यं य अपोगिनोभक्तिज्ञानयोगवंतोगच्छंतितत्स्थानंयपुरित्यन्वयः २१ पुरुषमात्रस्यश्रुतिमात्रेणापिरामनाम्नःकर्मबंधमोक्षःस्यादित्याशयेनाह पुरुषइति आनृशंस्यपरांहिंसाकर्मपरोपि अनेन रामोरामोरामइतिसर्वेषामभवत्तदा सर्वोराममयोलोकोयदारामस्त्वपालयदितिवाक्यमसूचि २२ तत्रैवंराजापृच्छति कथमिति सभगवान्भ्रात्रादिषुकथंकेनयोगेनरामोरमापतित्वेनावर्तत औ

स्मरतांहृदिविन्यस्यबुद्धंपद्ममिवांशुकैः ॥ स्वपादपल्लवंरामआत्मज्योतिरगात्ततः १८ नेदंयशोरघुपतेरिहविश्वमूर्तेर्लीलातनोरधिकशांतविमुक्तधाम्नः ॥ रक्षोवधोजलधिबंधनमस्त्रपाणेःकिंतस्यशत्रुहननेकपयःसहायाः १९ यस्यामलंनृपसदस्सुयशोधुनापिगायंत्यघघ्नमृषयोदिगिभेंद्रपाते ॥ तन्नाकपाल वसुपालकिरीटजुष्टपादांबुजंरघुपतेःशरणंप्रपद्ये २० सयैःस्पृष्टोभिदृष्टोवासंविष्टोनुगतोपिवा ॥ कोसलास्तेययुःस्थानंयत्रगच्छंतियोगिनः २१ पुरुषोरामचरितंश्रवणैरुपधारयन् ॥ आनृशंस्यपरोराजन्कर्मबंधैर्विमुच्यते २२ राजोवाच ॥ कथंसभगवान्रामोभ्रातृन्वाबंधुष्वववर्तत ॥ प्रजास्वौरसवद्रा मःकथंवाराम ईश्वरः २३ श्रीशुकउवाच ॥ अथादिशद्दिग्विजयेभ्रातृंस्त्रिदशेश्वरः ॥ आत्मानंदर्शयन्स्वानांपुरीमैक्षतसानुगः २४ आसिक्तमार्गांगंधोदैःक रिणांमदसीकरैः ॥ स्वामिनंप्राप्तमालोक्यमत्तांवासुतरामिव २५ प्रासादगोपुरसभाचैत्यदेवगृहादिषु ॥ विन्यस्तहेमकलशैःपताकाभिश्चमंडिताम् २६ पूगैःसवृंतैरंभाभिःपट्टिकाभिःसुवाससाम् ॥ आदर्शैरंशुकैःस्रग्भिःकृतकौतुकतोरणाम् २७

रसवद्यथौरसःस्वदेहोत्पन्नःपुत्रःपित्रादौकलभाषणादिनारतिप्रदत्वेनाजिह्वासुखनाममयत्वेनप्रवर्तते तथायमपिकेनप्रकारेणरामोरतिप्रदःप्रजास्ववर्तत किंच रामोबालवत्क्रीडावान्कथंकेनभावेनेश्व रोयमितिसर्वजनबुद्धाववर्ततेतीदंप्रश्नत्रयंपरिहर्तव्यमितिशेषेणान्वयः २३ प्रथमतृतीयप्रश्नौपरिहरति अथेति । अथराज्याभिषेकानंतरंभ्रात्रादौस्वाज्ञाकारित्वेनावर्तत त्रिदशेश्वरइत्यनेनमानवेश्वरत्वं किंवक्तव्यमित्यसूचि । तेनलोकानुकरणायेयंक्रीडेतिकथितमित्यर्थः । द्वितीयंपरिहरति आत्मानमिति । स्वात्मसंदर्शनेनजनस्यानंदजनकत्वेनरामइतिबुद्धिंजनयामासेत्यर्थः । पुरीनिरीक्षणंचस्वभ क्तानुकंपित्वप्रदर्शनाय २४ गंधोदैःचंदनादिगंधद्रव्यमिश्रजलैःलंकापाःनाथंरावणंनिहत्यप्राप्तंस्वामिनमालोक्यसुतरांहर्षेणमत्तामिवकरिणांमदसीकरैःमदजलबिंदुभिर्वामत्तामिवस्थिताम् २५ चैत्यंप्र पाणादिभिर्बद्धं वृक्षमूलस्थलंबद्धशालास्थलंवा २६ सवृंतैःफलस्तबकसहितैः । पूगैःक्रमुकैः । रंभाभिःकदलीस्तंभैः आदर्शैःदर्पणैरंशुकैर्वस्त्रैः स्रग्भिःमालाभिश्च । कृतकौतुकानिरचितमंगलानिचतोरणा नियस्यांसातथाताम् २७

श्रीक्ष्वराहावतारेत्वयापातालादुद्धृतांभुवमितिशेषः २८ २९ ३० विद्रुमैरुदुंबरैस्ताम्रैः कृतद्वारैः । ताम्रंशुल्वंमर्कटास्यंरक्तंकांस्यमुदुंबरमिति ३१ कांतंशोभितम् पट्टिकाभिर्वितानैः ३२ भूषणानामपिभूषणैः ३३ स्वारामाःशोभनोद्यानानितत्रचारोयेषांतेस्वारामचारास्ते शमृषभःनिरंतरंचारुतरोद्यानेषुसंचरतांईश्वरइत्यनेनातीवसौख्यंसूचयाते । अनेनापिसीतात्यागोनास्तीत्युक्तंभवति । किंचसीतयानित्यरमणात्स्वयंसुखरूपत्वात्प्रजानांसुखहेतुत्वात्सर्वजनचित्तविलयत्वेनरामइतिभावः ३४ ३५ इतिश्रीभागवतेमहापुराणेनवमस्कंधेवि०कृ०टी०नवमोध्यायः॥ ९ ॥ अथश्री





तमुपेयुस्तत्रतत्रपौराअर्हणपाणयः ॥ आशिषोयुयुजुर्देवपाहीमांप्राक्त्वयोद्धृताम् २८ ततःप्रजावीक्ष्यपतिंचिरागतंदिदृक्षयोत्सृज्यगृहान्स्त्रियोनराः ॥ आरुह्यहर्म्याण्यरविंदलोचनंमतृप्तनेत्राःकुसुमैरवाकिरन् २९ अथप्रविष्टःस्वगृहंजुष्टंस्वैःपूर्वराजभिः ॥ अनंतगृहकोशाढ्यमनर्घ्योरुपरिच्छदम् ३० विद्रुमोदुंबरद्वारैर्वैदूर्यस्तंभपंक्तिभिः ॥ स्थलैर्मारकतैःस्वच्छैर्भ्राजत्स्फटिकभित्तिभिः ३१ चित्रस्रग्भिःपट्टिकाभिर्वासोमणिगणांशुभिः ॥ मुक्ताफलैश्चिदुल्लासैःकांतकामोपपत्तिभिः ३२ धूपदीपैःसुरभिभिर्मंडितैःपुष्पमंडकैः ॥ स्त्रीपुंभिःसुरसंकाशैर्जुष्टंभूषणभूषणैः ३३ तस्मिन्सभगवान्रामःस्निग्धयाप्रिययेच्छया ॥ रेमेस्वारामचाराणामृषभःसीतयासह ३४ बुभुजेचयथाकामंकामंधर्ममपीडयन् ॥ वर्षपूगान्बहून्नृणामभिध्येयांघ्रिपल्लवः ३५ इतिश्रीभागवतेनवमस्कंधेनवमोध्यायः ॥ ९ ॥ श्रीशुकउवाच ॥ कुशस्यचातिथिस्तस्मान्निषधस्तत्सुतोनभः ॥ पुंडरीकोथतत्पुत्रःक्षेमधन्वाभवत्ततः १ देवानीकस्ततोहीनःपारिपात्रश्चतत्सुतः ॥ ततोबलस्थलस्तस्माद्वज्रनाभोर्कसंभवः २ स्वगणस्तत्सुतस्तस्माद्विधृतश्चाभवत्सुतः ॥ ततोहिरण्यनाभोभूद्योगाचार्यस्तुजैमिनेः ३ शिष्यःसकलमध्यात्मंयाज्ञवल्क्योध्यगाद्यतः ॥ योगंमहोदयमृषिर्हृदयग्रंथिभेदनम् ४ पुष्योहिरण्यनाभस्यध्रुवसंधिस्ततोभवत् ॥ सुदर्शनोथाग्निवर्णःशीघ्रस्तस्यमरुःसुतः ५ योसावास्तेयोगसिद्धःकलापग्राममास्थितः ॥ कलेरंतेसूर्यवंशंनष्टंभावयितापुनः ६ तस्मात्प्रसुश्रुतस्तस्यसंधिस्तस्याप्यमर्षणः ॥ महस्वांस्तत्सुतस्तस्माद्विश्वसाह्वोऽभ्यजायत ७ ततोबृहद्बलोयस्तुपित्रातेसमरेहतः ॥ एतेहीक्ष्वाकुभूपालाअतीताःशृण्वनागतान् ८ बृहद्बलस्यभवितापुत्रोनाम्नाबृहद्रणः ॥ उरुक्षयःसुतस्तस्यवत्सप्रीतोभविष्यति ९ प्रतिव्योमस्ततोभानुर्दिवाकोवाहिनीपतिः ॥ सहदेवस्ततोवीरोबृहदश्वोथभानुमान् १० प्रतीकाश्वोभानुमतःसुप्रतीकोथतत्सुतः ॥ भवितामरुदेवोथसुनक्षत्रोथपुष्करः ११ तस्यांतरिक्षस्तत्पुत्रःसुतपास्तदमित्रजित् ॥ बृहद्राजस्तुतस्यापिबर्हिस्तस्मात्कृतंजयः १२

रामपुत्रस्यकुशस्यसंततिमनुक्रामति कुशस्यचेति । चशब्दःसंततेरविच्छेदंसूचयति १ २ ३ अध्यात्मंपरमात्मविषयंमहानुदयोमोक्षलक्षणोयस्मात्सतथा एतदेवविशिनष्टि हृदयेति । ऋषिर्ज्ञानी ४ तस्याग्निवर्णस्यशीघ्रनामासुतः । मरुनामासुतोयस्यसमरुःसुतःतस्यशीघ्रस्यमरुःसुतोभूदितिवा ५ ६ तस्मान्मरुतः ७ समरेतेतवपित्राअभिमन्युनाहतःअनागतानुत्पत्स्यमानान् । तस्येत्येतत्पूर्वेणसंबंधयितव्यम् ८ ९ १० ११ तस्यसुतपसःसुतोऽमित्रजित् १२

१३ सुमित्रोनामराजा । निष्ठायाःवंशावलेरंतोवधिभूतःतत्रसमाप्तइत्यर्थः १४ एवदेवविंशदयाति इक्ष्वाकूगामीति । सुमित्रांतोवसानं यस्यसतथा संस्थांनाशंसमाप्तिंवा । संरंध्राध्वंसयोराणिविंस मोन्याचारवंत्रिष्विति १५ इतिश्रीभागवतेमहापुराणेनवमस्कंधेविजयध्वजकृतटीकायांदशमोध्यायः ॥ १० ॥ अनृतवत्रे । सवसिष्ठोपितंशक्रस्ययागंनिर्वर्त्यसमाप्य प्रतिपाल्यप्रतीक्षस्व । गृहपतिर्निमिः १ २ संतत्वायतइतिसत्रनायतिवासत्रंब्रह्म तद्विदांमध्येविद्वांस्तेषांसंशयच्छेता अपरैर्वसिष्ठव्यतिरिक्तैःतावन्नागमदित्यादिनागुर्वपेक्षायाःनियतत्वदर्शनात्तत्मतिसमानमगणय्य । शिष्यायशापदानंध मेइतिकृत्वाधर्मवर्तिनइत्युक्तं ३ ४ लोभान्पौरोहित्यविषयात् ५ ततःकिमभूदितितत्राह मित्रावरुणयोरिति । योमित्रावरुणयोरुर्वश्यांजज्ञेसःममप्रपितामहोवासिष्ठः तद्देहं तस्यनिमेर्देहं । गंधवस्तुषुगं धवासिततैलेषुहारिद्रादिद्रव्यविशेषेषुनिधाय ६ सत्रनामयागे ७ देहलक्षणंबंधनं किमितिदेहबंधोमाभूदितितत्राह यस्येति । यस्यदेहस्ययोगंसंबंधं । यस्यावियोगभयेनकातराः व्यग्रचित्ताः ८ हरि

रणंजयस्तस्यसुतःसंजयोभवितातततः ॥ तस्माच्छक्योथशुद्धोदोलांगलस्तत्सुतःस्मृतः १३ ततःप्रसेनजित्तस्मात्क्षुद्रकोभावितातततः ॥ कुणकोभवितात स्मात्सुरथस्तनयस्ततः ॥ सुमित्रोनामनिष्ठांतस्त्वेतेबार्हद्बलान्नृपाः १४ इक्ष्वाकूणामयंवंशःसुमित्रांतोभविष्यति ॥ यतस्तंप्राप्यराजानंसंस्थांप्राप्स्यति वैकलौ १५ इतिश्रीभागवतेमहापुराणेनवमस्कंधेदशमोध्यायः ॥ १० ॥ श्रीशुकउवाच ॥ निमिरिक्ष्वाकुतनयोवसिष्ठमवृतर्त्विजम् ॥ आरभ्यसत्रंसोप्याह शक्रेणप्राग्वृतोस्मिभो १ तन्निवर्त्यागमिष्यामितावन्मांप्रतिपालय ॥ तुष्णीमासीद्गृहपतिःसोपीद्रस्याकरोन्मखम् २ निमिःसत्रविदांविद्वान्सत्रमारभतात्म वान् ॥ ऋत्विग्भिरपरैस्तावन्नावन्नागमद्गुरुः ३ शिष्यव्यतिक्रमंवीक्ष्यनिर्वर्त्यगुरुरागतः ॥ अशपत्पततांदेहोनिमेःपंडितमानिनः ४ निमिःप्रतिददौशा पंगुरवेधर्मवर्तिने ॥ तवापिपततांदेहोलोभाद्धर्ममजानतः ५ इत्युत्ससर्जतंदेहंनिमिरध्यात्मकोविदः ॥ मित्रावरुणयोर्जज्ञेउर्वश्यांप्रपितामहः ॥ गंध वस्तुषुतद्देहंनिधायमुनिसत्तमाः ६ समाप्तेसत्रयागेथदेवानूचुःसमागतान् ॥ राज्ञोजीवतुदेहोयंप्रसन्नाःप्रभवोयदि ७ तथेत्युक्तेनिमिःप्राहमाभून्मेदेहबं धनम् ॥ यस्ययोगंनवांछंतिवियोगभयकातराः ८ भजंतिचरणांभोजंमुनयोहरिमेधसः ॥ देहंनावरुरुत्सेहंदुःखशोकभयाश्रयम् ९ सर्वत्रास्ययतोमृत्युर्म त्स्यानामुदकेयथा १० देवाऊचुः ॥ विदेहउष्यतांकामंलोचनेषुशरीरिणाम् ॥ उन्मेषणनिमेषाभ्यांलक्षितोध्यात्मसंस्थितः ११ अराजकभयंनृणांमन्य मानामहर्षयः ॥ देहंममंथुश्चनिमेःकुमारःसमजायत १२ जननाज्जनकःसोभूद्वैदेहस्तुविदेहजः ॥ मिथिलोमथनाज्जातोमिथिलायेननिर्मिता १३

भक्तजनपापहरणशीलामेधाधारणावतीधीः । धीर्धारणावतीमेधाइत्यमरःबुद्धिर्यस्यसतथातस्य हरिवत्सूर्यवत्प्रकाशमानामेधायस्येतिवातस्यविष्णोः मुनयोवाचंयमाःतंदेहंनावरुरुत्संस्वीकर्तुनेच्छामिदुः खंतीव्रवेदनाशोकःमन्युःमन्युशोकौतुशुक्स्त्रियामित्यमरः । भयंसंचलनम् ९ ततोपिदेहग्रहणेच्छानेत्याह सर्वत्रेति १० अदेहस्यास्यवासःकथंघटते अधिष्ठानाद्यभावादितितत्राह लोचनेष्विति लोचने ष्वस्यसद्भावःकथंजायतइतितत्राह उन्मेषणेति । किमस्यकर्मेति तत्राह अध्यात्मेति । परमात्मोपासनायुक्तः ११ १२ नामनिर्वचनपूर्वकंजनकस्यवंशंकथयति जननादित्यादिना । मथनेनजननमस्ये त्यस्मिन्नर्थेमिथिलेतिनिपातनं । शवानांशयनमस्मिन्नितिश्मशानमितिवत्मिथिलापुरी १३

१४ सुधृतिपिता सुधृतोजनकः १५ १६ १७ सीताजननहेतुत्वेन सीरंध्वजंगमकंज्ञापकंयस्यससीरध्वजः । ध्वजगतावितिधातुः १८ १९ २० २१ २२ २३ २४ २५ २६ गृहेषुस्थिताअपियोगेश्वरस्ययाज्ञवल्क्यस्यप्रसादेनजनकादयोद्वंद्वैःशीतोष्णादिभावैःमुक्ताआत्मारामाइत्यर्थः ॥ २७ ॥ इतिश्रीभागवतेनवमेस्कंधेजनकवंशानुवर्णनंनामवि०कृ०टी०एकादशोध्यायः ११ ॥ ७ ॥ अथसूर्यवंशकथनानंतरंयतोवंशज्ञानंपुरुषार्थसाधनमतइतिहेत्वर्थः । गुणविशिष्टपुरुषज्ञानमंतरेणवंशज्ञानेनकथंपुरुषार्थःस्यादित्यतःक्षिप्रप्रवृत्त्यर्थंतद्वंश्यान्संक्षिप्याह यस्मिन्निति १ २ इयमेववार्तासर्वत्रनान्या सर्वैःसंभावि

तस्मादुदावसुस्तस्यपुत्रोभून्नंदिवर्धनः ॥ ततःसुकेतुस्तस्यापिदेवरातोमहीपतिः १४ तस्माद्बृहद्रथस्तस्यमहावीर्यःसुधृत्पिता ॥ सुधृतोधृष्टकेतुर्वैहर्यश्वोथमरुस्ततः १५ मरोःप्रतींधकस्तस्माज्जातःकृतरथोयतः ॥ देवमीढस्तस्यसुतोविधृतोथमहाधृतिः १६ कृतिरातस्ततस्तस्मान्महारोमाथतत्सुतः ॥ स्वर्णरोमासुतस्तस्यह्रस्वरोमाव्यजायत १७ ततःसीरध्वजोजज्ञेयज्ञार्थंकर्षतोमहीम् ॥ सीतासीराग्रतोजातातस्मात्सीरध्वजःस्मृतः १८ कुशध्वजस्तस्यपुत्रस्ततोधर्मध्वजोनृप ॥ धर्मध्वजस्यद्वौपुत्रौकृतध्वजमितध्वजौ १९ कृतध्वजात्केशिध्वजःखांडिक्यस्तुमितध्वजात् ॥ कृतध्वजसुतोराजन्नात्मविद्याविशारदः २० खांडिक्यःकर्मतत्त्वज्ञोभीतःकेशिध्वजाद्द्रुतः ॥ भानुमांस्तस्यपुत्रोभूच्छतद्युम्नस्तुतत्सुतः २१ शुचिस्तुतनयस्तस्मात्सनद्वाजस्ततोभवत् ॥ ऊर्जकेतुःसनद्वाजादजोथकुरुजित्सुतः २२ अरिष्टनेमिस्तस्यापिश्रुतायुस्तत्सुपार्श्वकः ॥ ततश्चित्ररथोयस्यक्षेमाधिर्मिथिलाधिपः २३ तस्मात्समरथस्तस्यसुतःसत्यरथस्ततः ॥ आसीदुपगुरुस्तस्मादुपगोप्ताग्निसंभवः २४ वैवस्वतोथतत्पुत्रोयुयुधायत्सुभाषणः ॥ श्रुतस्ततोजयस्तस्माद्विजयोस्मादृतःसुतः २५ शुनकस्तत्सुतोजज्ञेवीरहव्योधृतिस्ततः ॥ बहुलाश्वोधृतस्तस्यकृतिरस्यमहावशी २६ एतेवैमिथिलाराजन्नात्मविद्याविशारदाः ॥ योगेश्वरप्रसादेनद्वंद्वैर्मुक्तागृहेष्वपि ॥ २७ ॥ इतिश्रीभागवतेनवमस्कंधेजनकवंशानुवर्णनंनामएकादशोध्यायः ॥ ११ ॥ श्रीशुकउवाच ॥ अथातःश्रूयतांराजन्वंशःसोमस्यपावनः ॥ यस्मिन्नैलादयोभूपाःकीर्त्यंतेपुण्यकीर्तयः १ सहस्रशिरसःपुंसोनाभिह्रदसरोरुहात् ॥ जातस्यासीत्सुतोधातुरत्रिःपितृसमोगुणैः २ तस्यदृग्भ्योभवत्पुत्रःसोमोमृतमयःकिल ॥ विप्रौषध्युडुगणानांब्रह्मणाकल्पितःपतिः ३ सोयजद्राजसूयेनविजित्यभुवनत्रयम् ॥ पत्नींबृहस्पतेर्दर्पात्तारांनामाहरद्बलात् ४ यदासदेवगुरुणायाचितोभीक्ष्णशोमदात् ॥ नात्यजत्तत्कृतेजज्ञेसुरदानवविग्रहः ५ शुक्रोबृहस्पतेर्द्वेषादग्रहीत्सासुरोडुपम् ॥ हरोगुरुसुतस्नेहात्सर्वभूतगणावृतः ६ सर्वदेवगणोपेतोमहेंद्रोगुरुमन्वयात् ॥ सुरासुरविनाशोभूत्समरस्तारकामयः ७

तोयंसोमइतिवाकिलेत्युक्तं वार्तासंभावयोःकिलेत्यमरः योदेवोविप्राणामोषधीनांअंबुगर्भाणांकुमुदादीनांपतिःपोषकः ३ ४ तत्कृतेतारार्थम् ५ असुरैःसहवर्तमानःसासुरः । उडूनानक्षत्राणांपतिःउडुपः शुक्रविशेषणंसासुरइति । संधिश्छांदसः बृहस्पतेर्द्वेषादबृहस्पतिविषयद्वेषात्हरःगुरुरांगिरास्तस्यसुतोबृहस्पतिस्तत्स्नेहात् ६ सुरासुराणांविनाशोयस्मिन्सतथातारकामयःतारकार्थंविद्यमानः ७

अजोब्रह्मा बृहस्पतिस्तारामाहेतिशेषः ८ मत्क्षेत्रात्तद्गर्भंत्यज कुतइतितत्राह आहितमिति । सांतानिकेपुत्रेतास्मिन्कुमारे ९ १० ११ अलीकलज्जयाऽनृतानिमित्तलज्जया १२ नवोचासिनकथयसि असद्वृत्तेदुराचारेअमंगलस्वरूपेवा । वृत्तंस्वरूपेचरितेवृत्तंछंदोविधासुचेति । किंवक्ष्यामीतितत्राह पितरमिति । आत्मावद्यविगूहनीमित्यनेनभस्मीकरणयोग्यत्वेसूचितेपिमातृशब्दवाच्यार्हत्वात्भस्मसान्नकुर्यामितिवक्ति १३ सांत्वयावाचा १४ ताराजनकंवक्तीत्याह सोमस्येति तंकुमारम् । आत्मापरमात्मायोनिर्जनकोयस्यसतथा १५ नामकरणेनिमित्तमाह बुद्ध्येति उदाहृतः पूर्वमितिशेषः १६ १७ आगमनेकारणांतरमाह मित्रेति १८ १९ २० नौआवयोःशाश्वतीःसमाःबहून्संवत्सरान् । रतिःग्राम्यविषयाक्रीडाऽस्तु २१ मनोहरत्वेनिमित्तमाह यदंगादिति ।

निवेदितोजोंगिरसासोमंनिर्भर्त्स्यविश्वकृत् ॥ तारांस्वभर्त्रेप्रायच्छदंतर्वत्नींबृहस्पतिः ८ त्यजत्यजाशुदुःप्रज्ञेमत्क्षेत्रादाहितंपरैः ॥ नाहंत्वांभस्मसात्कुर्यांस्त्रियंसांतानिकेसति ९ तत्याजव्रीडितातारा कुमारंकनकप्रभम् ॥ तस्यांजज्ञेदस्युहंताकुमारःकनकप्रभः १० स्पृहामांगिरसश्चक्रेकुमारेसोमएवच ॥ ममायंनतवेत्युच्चैस्तस्मिन्विवदमानयोः ११ पप्रच्छुर्ऋषयोदेवानैवोचेव्रीडिताचसा ॥ कुमारोमातरंप्राहकुपितोलीकलज्जया १२ किंनवोचस्यसद्वृत्तेपितरंमेवदाशुवै ॥ नत्वांतुभस्मसात्कुर्यामात्मावद्यविगूहनीम् १३ ब्रह्मातंतुविनिर्भर्त्स्यर्क्षेतारंमातुरंतिके ॥ तामाहूयसमप्राक्षीद्रहएवतुसांत्वया १४ सोमस्येत्याहशनकैःसोमस्तंतावदग्रहीत् ॥ तस्यात्मयोनिरकृतबुधइत्यभिधांनृप १५ बुद्ध्यागंभीरयायेनपुत्रेणापोडुराण्मुदम् ॥ ततःपुरूरवाजज्ञेइलायांयउदाहृतः १६ तस्यारूपगुणौदार्यशीलद्रविणविक्रमान् ॥ श्रुत्वोर्वशींद्रभवनेगीयमानान्सुरर्षिणा १७ तदंतिकमुपेयायदेवीस्मरशरार्दिता ॥ मित्रावरुणयोःशापादापन्नानरलोकताम् १८ निशम्यपुरुषश्रेष्ठंकंदर्पमिवरूपिणम् ॥ धृतिंविहायललनाउपतस्थेतदंतिकम् १९ सतांविलोक्यनृपतिर्हर्षेणोत्फुल्ललोचनः ॥ उवाचश्लक्ष्णयावाचादेवींहृष्टतनूरुहः २० राजोवाच ॥ स्वागतंतेवरारोहेआस्यतांकरवामकिम् ॥ संरमस्वमयासाकंरतिर्नौशाश्वतीःसमाः २१ उर्वश्युवाच ॥ कस्यास्त्वयिनसज्जेतमनोदृष्टिश्चसुंदर ॥ यदंगान्तरमासाद्यच्यवतेहरिराश्रयः २२ एतावुरणकौराजन्न्यस्तौरक्षस्वमानद ॥ संरंस्येभवतासाकंश्लाघ्यःस्त्रीणांवरःस्मृतः २३ घृतंमेवीरभक्ष्यंस्यान्नेक्षेत्वान्यत्रमैथुनात् ॥ विवाससंतत्तथेतिप्रतिपेदेमहामनाः २४ अहोरूपमहोभावंनरलोकविमोहनम् ॥ कोनसेवेतमनुजोदेवींत्वांस्वयमागताम् २५ तयासपुरुषश्रेष्ठोरमयंत्यायथार्हतः ॥ रेमेसुरविहारेषुकामंचैत्ररथादिषु २६

रमायस्यहरेरंगान्नयातिनच्यवते नित्यश्रितवक्षस्थलत्वात् सहरिस्तवाश्रयोदृष्टइत्यन्वयः । लक्ष्मीकांतस्यसन्निधिपात्रत्वादित्यर्थः २२ उरणकौमेषौन्यस्तौनिक्षेपकल्पनयास्थापितौ तस्माद्रक्षस्व । संरंस्येसम्यक्त्वयासहरतिंकरिष्ये । अस्माकमिपयमेवव्रतञ्चास्तिरित्याह श्लाघ्यइतियःश्लाघ्यःकमनीयःसएवस्त्रीणांवरःपतिरित्यन्वयः २३ समयबध्नाति नेक्षइति । मैथुनादन्यत्रसुरतसमयंअंतरेणत्वांविवाससनग्नंनेक्षेनपश्याम्यन्यथेतोगमिष्यामीतिशेषः । पुरूरवाउत्तरमाह तथेतीति । एवमुक्तंतथेतिप्रतिपेदेअभ्युपगतवान् २४ तस्यैंगितंहर्षोल्लासंदर्शयति अहोइति । भावंशृंगारादिकंनरीयंतदर्शनः भ्रमरास्तेषांलोकःसमूहःतमपिविमोहयतीतिनरलोकविमोहनंएवंविधांत्वा २५ सुराणांविहारयोग्येषुवेतथात्वेषु २६

२७ मद्वर्जमममास्थानंसभाएवंमत्वागंधर्वान्समचोदयत् २८ जाययोर्वश्या २९ नपुंसानपुंसकेननिर्वीर्येणेत्यर्थः ३० हृतापत्याहृतपुत्रा योनिशिनारीयथासंत्रस्ताशेते । दिवापुमान्पुरुषशक्तिमतीतथासंत्रस्तःशेते अद्धिपुरुषः ३१ इत्येवंवाक्सायकैः वचनबाणैर्विद्धस्ताडितः । प्रतोदैरंकुशैःकुंजेपुरंतुंशल्यिमस्येतिकुंजरः ३२ तत्रतस्मिन्समयेतेगंधर्वाः स्वाविद्युताप्रद्योतंतप्रकाशंतआलोकविषयाआसन्नित्यर्थः ३३ बभ्रामभ्रमुअनवस्थानइतिधातुः । पर्यटनंकृतवान् ३४ तस्याउर्वश्याःपंचसखीःपुरूरवाः उर्वशींदृष्ट्वाकिंचकारेतितत्राह प्राहेति । किंतत्सूक्तमित्यर्थतस्तत्प्रतीकमाह अहोजायेतिष्ठेति । हयेजायेमनसेत्यारभ्यहविषायजातिस्वर्गउत्वमपिमादयासेइत्यंतमुत्तरमत्युत्तरात्मकंसूक्तमुर्वशीवशीकरणाभिप्रायेणप्राहेत्यर्थः । हयेअहोजायेमनसातिष्ठमनःपूर्वकंपूर्ववत्तिष्ठ मांत्यक्तुंनार्हसीतिशेषः । हेघोरेसुरतशौंडे येपरतरे अहन्अहनि उत्तरोत्तरत्रदिवसेमयासुखकरंचनकुर्वत्येव । एतेनौआवयो सुरतमंत्राकरुणोक्तिपूर्वकाः । नुअद्याप्यनुदितासःअनिवृत्ताअपरिसमाप्ताः । इतियस्मादतोनैतदुचितमतोमिश्राणिसंस्थापलक्षणानिवचांसिकृणवावहैकरवावहै ३५ ३६ सारसंग्रहाभिप्रायेणमध्येकाश्चनर्चोविहायसुदेवोअद्यप्रपतेदित्येतामृचम

रममाणस्तयादेव्यापद्मकिंजल्कगंधया ॥ तन्मुखामोदमुषितोमुमुदेऽह्नगणान्बहून् २७ अपश्यन्नुर्वशीमिंद्रोगंधर्वान्समचोदयत् ॥ उर्वशीरहितंमह्यमास्थानंनातिशोभते २८ तउपेत्यमहारात्रौतमसिप्रत्युपस्थिते ॥ उर्वश्याउरणौजह्नुर्न्यस्तौराजनिजायया २९ निशम्याक्रंदितंदेवीपुत्रयोर्नीयमानयोः ॥ हतास्म्यहंकुनाथेननपुंसावीरमानिना ३० यद्विस्रंभादहंनष्टाहृतापत्याचदस्युभिः ॥ यःशेतेनिशिसंत्रस्तोयथानारीदिवापुमान् ३१ इतिवाक्सायकैर्विद्धःप्रतोदैरिवकुंजरः ॥ निशिनिस्त्रिंशमादायविवस्त्रोभ्यद्रवद्रुषा ३२ तेविसृज्योरणौतत्रप्रद्योतंतस्वविद्युता ॥ आदायमेषावायांतंनग्नमैक्षतसापतिम् ॥ ३३ ऐलोपिशयनेजायामपश्यन्विमनाअभूत् ॥ तच्चित्तोविह्वलःशोचन्बभ्रामोन्मत्तवन्महीम् ३४ सतांवीक्ष्यकुरुक्षेत्रेसरस्वत्यांचतत्सखीः ॥ पंचप्रहृष्टवदनःप्राहसूक्तंपुरूरवाः ३५ अहोजायेतिष्ठतिष्ठघोरेनत्यक्तुमर्हसि ॥ मंत्राअद्याप्यनिर्वृत्तावचांसिकृणवावहै ३६ सुदेवोयंपतत्यत्रदेविदूरंहृतस्त्वया ॥ खादंत्येनंवृकागृध्रास्त्वत्प्रसादस्यनास्पदम् ३७ ॥ उर्वश्युवाच ॥ मामृथाःपुरुषोसित्वंमास्मत्वाद्युर्वृकाइमे ॥ क्वापिसख्यंनवैस्त्रीणांवृकाणांहृदयंयथा ३८

र्थंतउदाहरति सुदेवइति । हेदेवि योहंपरावतंपरवंतंदीर्घश्छांदसः । दूरंदेशंहृतःस्वयासहपरमांरतिंगंतवैउगंतुमेव । तस्यमेअपंसुदेवःगतिलक्षणज्ञानसाधनंशरीरं । अत्रकुरुक्षेत्रेअस्यामवस्थायांवाप्रपतेत्प्रपतिष्यति कुतःअनावृत्आधाररहितः अथपतनानंतरंनिर्ऋतेर्भूमेरुपस्थेपृष्ठेशयीतपतेत् अथानिर्जीवमेनंशरीरंरभसासः भक्षणसंभ्रमाकुलाःवृकाःअद्युःखादंति पतित्वाशयित्वापिकथंचित्सप्राणंचेद्वृकाइंद्रियाणिखादंतिइति सुदेवोअद्यप्रपतेदनावृत्परावतंपरमांगंतवाउअधाशयीतनिर्ऋतेरुपस्थेधैनंवृकारभसासोअद्युरिति । हयेजायेत्यस्याउत्तरंकिमेतावाचेति तवैतयावाचाकिंकृणवैकिंकुर्वःआवयोःपूर्ववत्संगमानुपपत्तेःकिंनिमित्तंतत्राह अहमिति । अहमुपसामग्र्येवप्राक्रामिषं । यथाप्रथमोषसःअतिक्रांतत्वात्पश्चात्तनानामुषसांयोगोनघटतेतथाऽवयोरपीत्यर्थः ३७ तर्हिअहंकिंकरोमीतितत्राह पुरूरवइति । हेपुरूरवःपुनःपश्चादस्तंगृहंपरोहिगच्छ इदानीमिवंकर्तव्यंत्वयेत्यर्थः अस्तमेयायेतिश्रुतेः । किमर्थंपश्चाद्गमनमितितत्राह दुरापनेतियथावातोवायुर्गृहीतुमशक्यःतथाहमपिदुरापनादुर्ग्रहेत्यर्थः । इतिमृदुवचनोत्तरेणायंगृहंनयातीत्यभिसंधायकठिनोत्तरेणवर्तयिष्यामीतिमत्वापुरूरवोमामृथामाप्रपतःशोमात्वावृकासोअशिवासउक्षन् । नवैस्त्रैणानिसख्यानिसालावृकाणांहृदया

न्येतेत्येतदर्थंउत्तरत्वेनोर्वशीवक्ति मामृथाइति । हेपुरूरवःत्वंमामृथाःमरणंनप्रापुहि । गूढाक्षेपंकरोतिपुरुषइतिपुंल्लिंगशक्तिमत्त्वेनबलिष्ठत्वात्कामनिमित्तंमरणंतवनयुक्तं अबलायाश्चेदबलत्वेनकथंचि त्संभावितंस्यादित्यर्थः । अनेनार्थतःमामपत्तइत्येतद्विवृतंभवति । मपत्तइतिपततेर्वहुलंछंदसिरूपं कामपारवश्येनमृगंगातितोमाभ । अभ्यासस्यदीर्घाभावश्छांदसः । इमेअशिवासःअशिवाःअशुद्धिहेतवो वृकावृकासोत्वात्वांमाक्षन् उक्षतिरत्रभक्षणार्थः । मास्मात्तुर्नेलालाजलेनप्रोक्षयित्वाभक्षयेयुरित्यर्थः । स्त्रैणानिस्त्रीसंबंधीनिसख्यानि ददातिप्रतिगृह्णातिगुह्यमाख्यातिपृच्छति भुंक्तेभोजयतेचैवषड्विधंस्नेह लक्षणमिति । स्नेहलक्षणानिनसंतिसदातनानिनभवंतिवैक्वापि यथेत्यनेनसालावृकाणामितिलुप्तोपममितिसूचयति हृदयमिति । जातावेकवचनं यथासालावृकाणांहृदयानि एतान्यपिस्त्रीणांहृद यानितथेत्यर्थः ३८ एतेइत्युक्तमेवविवृणोति स्त्रियइति । किंक्रूरंस्त्रीहृदयंपुनरपिक्रूरमंगनाहृदयंइत्येतद्द्विशब्देनदर्शितं प्रियेप्रेष्ठेपिसाहसंबलात्कारलक्षणकर्मयासांतास्तथा एतदेवविविच्यदर्शयति घ्नंतीति । विस्रब्धंविश्वस्तम् ३९ अलीकविस्रंभंकपटविश्वासं अज्ञेषुपुरुषेषुअत्यंतसौख्यदाःतत्तत्कालोपभोग्यसुखप्रदानस्वादःस्यांतिकसुखदाः पुंश्चल्यइत्यस्यविवरणं स्वैरवृत्तयइति । इष्टजनशिक्षामनुपा कर्ण्यस्वेच्छानियतमद्यपानादिवृत्तयः ४० मयासहैकरात्रंवत्स्यसितसुरतलीलामनुभविष्यतीत्यर्थः ४१ समुवास संभोगलक्षणंसुरतमनुभूतवान्स्त्रियोह्यकरुणाइत्यारभ्यतथानिशामित्यंतेनोक्तामितिज्ञातव्यं

स्त्रियोह्यकरुणाःक्रूरादुर्मर्षाःप्रियसाहसाः ॥ घ्नंत्यल्पार्थेपिविस्रब्धंपतिंभ्रातरमप्युत ३९ विधायालीकविस्रंभमज्ञेष्वत्यंतसौख्यदाः ॥ नवंनवमभीप्संत्यः पुंश्चल्यस्स्वैरवृत्तयः ४० संवत्सरांतेपिभवानेकरात्रंमयेश्वर ॥ वत्स्यत्यपत्यानिचतेभविष्यंत्यपराणिभो ॥ अंतर्वत्नीमुपालक्ष्यदेवींसप्रययौपुरीम् ४१ पुन स्तत्रगतोब्दांतेउर्वशींवीरमातरम् ॥ उपलभ्यमुदायुक्तःसमुवासतथानिशम् ४२ अथैनमुर्वशीप्राहकृपणंविरहातुरम् ॥ गंधर्वानुपधावेमांस्तुभ्यं दास्यंतिमामिति ४३ तस्यसंस्तुवतस्तुष्टाअग्निस्थालींददुर्नृप ॥ उर्वशींमन्यमानस्तांनाबुध्यतचरन्वने ४४ स्थालींन्यस्यवनेगत्वागृहानध्युषितोनि शि ॥ त्रेतायांसंप्रवृत्तायांमनसित्रय्यवर्तत ४५ स्थालीस्थानंगतोश्वत्थंशमीगर्भंविलक्ष्यसः ॥ तेनद्वेअरणीकृत्वाउर्वशीलोककाम्यया ४६ उर्वशींम न्त्रतोध्यायन्नधरारणिमुत्तराम् ॥ आत्मानमुभयोर्मध्येयत्तत्प्रजननंप्रभुः ४७

४२ उपधावशरणंगच्छ धावुगतिशुद्ध्योःत्रिकरणशुद्ध्यास्तुतिंकुर्वित्यर्थः इतित्वादेवाइमआहुरैलयथेमेतद्भवसिमृत्युबंधुः प्रजातदेवान्हविषायजातिस्वर्गउत्वमपिमादयासइति ४३ अग्निस्थालींअग्निस्था पनयोग्यपात्रंउर्वशींमन्यमानोवनेचरंस्तामुर्वशींनाबुध्यत नेयमुर्वशीकिंत्वियमग्निस्थालीतिज्ञातवानित्यर्थः ४४ सपुरूरवाः अग्निस्थालींवनेन्यस्यनिक्षिप्यनिशिगृहान्गत्वातांनिशामध्युषितोभूत् अथप रस्मिन्दिवसेत्रेतायांसंप्रवृत्तायांत्रेतायुगारंभसमयेजातेसत्युर्वशींचिंतयतस्तस्यराज्ञोमनसिअग्न्याधानादिसांगयज्ञप्रकाशवेदत्रयप्रकाशितमभूदित्यर्थः ४५ तदर्थंविचार्याग्निस्थालीप्रदानाभिप्रायंज्ञात्वाअ ग्निस्थालीस्थानंगतःतत्रपुरूरवाःशमीगर्भंशमीवृक्षेणाधिष्ठितंअश्वत्थंविलक्ष्यविशेषतोदृष्ट्वास्थालीशमीजाताग्निस्तत्रअश्वत्थोजातइतिविज्ञाय शमीगर्भमश्वत्थंछित्वातेनशमीगर्भाश्वत्थेनद्वेअरणीकृत्वाउत्तराध रारणिभेदेननिधायउर्वशीलोकप्राप्तीच्छया ४६ फलविशेषार्थं जनिष्ठाअपोनर्यःसुजातःप्रोर्वशीतिरतदीर्घमायुरितिमंत्रार्थत्वेनोर्वशींध्यायन्उर्वशीमधरारणिंआत्मानंपुरूरवःशब्देनलक्षितमुत्तरारणिंच चिंतयन् उभयोरारण्योर्मध्येयत्प्रजननसाधनंतच्चमनसाध्यायन्नरणीनिर्ममंथेतिशेषः प्रभुरित्यनेनसर्वध्यानादिसामर्थ्यंदर्शयति ४७

मथितमाह तस्येति तस्यराज्ञोनिर्मथनाज्जातवेदाजातइतितत्प्रभृतिजातवेदानामाग्नेरितिसूचितं सविभावसुरग्निस्त्रय्याविद्ययावेदत्रयसंज्ञयाप्रतिपाद्योराज्ञापुत्रत्वेकल्पितइत्यन्वयः त्रिभिराहवनीयादिरूपैर्वैतइतित्रिवृत्अध्यात्मविवक्षायांअकारोकारमकारसमाहारोंकाररूपेणवर्ततइतित्रिवृत् ४८ तेनत्रिवृताग्निनाउर्वशीसालोक्यंसर्वदेवमयंसर्ववेदोत्तमं ४९ पुराकृतेःअकारावैसर्वावागितिसर्ववाङ्मयःप्रणवोव्येकः ५० त्रयीत्रिप्रकारा आग्निनाप्रजयापुत्रत्वेनकल्पितेनाग्निना ५१ इतिश्रीभागवतेमहापुराणेनवमस्कंधेवि०क्र०टी०द्वादशोध्यायः १२ ब्रह्मणोत्रिरत्रेःसोमःसोमाद्बुधःबुधात्पुरूरवाःतस्यपुत्रानाह ऐलस्येति १ २ ३ ४ कुशांबुजोगाधिरित्येकस्यनामद्वयं ५ भार्गवमृचीकं ६ कुशिकानामन्वयोयस्यसतथा कुशिकान्वयः समयइतिवा ७ श्वश्र्वाथार्पयात्रा। उभयैःसात्त्विकराजसभेदभिन्नैःमंत्रैः।





तस्यनिर्मथनाज्जातोजातवेदाविभावसुः॥ त्रय्यासविद्ययाराज्ञापुत्रत्वेकल्पितस्त्रिवृत् ४८तेनायजतयज्ञेशंभगवंतमधोक्षजम्॥उर्वशीलोकमन्विच्छन्सर्वदेवमयंहरिम् ४९ एकएवपुरावेदःप्रणवःसर्ववाङ्मयः॥ देवोनारायणोनान्यएकोग्निर्वर्णएवच ५० पुरूरवसएवासीत्त्रयीत्रेतामुखेनृप॥ अग्निनाप्रजयाराजालोकंगांधर्वमेयिवान् ५१ इतिश्रीभागवतेनवमस्कंधेऐलोपाख्यानेद्वादशोध्यायः॥१२॥श्रीशुकउवाच॥ ऐलस्यचोर्वशीगर्भात्षडासन्नात्मजानृप॥ आयुःश्रुतायुःसत्यायुरथोथविजयोजयः १ श्रुतायोर्वसुमान्पुत्रःसत्यायोश्चश्रुतंजयः॥ रयस्यास्तुतएकस्तुजयस्यतनयोमितः २ भीमस्तुविजयस्याथकांचनोहोत्रकस्ततः॥ तस्यजह्नुःसुतोगंगांगंडूषीकृत्ययोपिबत् ३ जह्नोःपुरुस्तस्यपुत्रोबलाकश्चात्मजोजकः॥ ततःकुशःकुशस्यापिकुशांबुस्तनयोवसुः ४ कुशनाभश्चचत्वारोगाधिरासीत्कुशांबुजः॥ तस्यसत्यवतींकन्यामृचीकोयाचतद्विजः ५ वरंविसदृशंमत्वागाधिर्भार्गवमब्रवीत्॥ एकतःश्यामकर्णानांहयानांचंद्रवर्चसाम् ६ सहस्रंदीयतांशुल्कंकन्यायाःकुशिकान्वयः॥ इत्युक्तस्तन्मतंज्ञात्वागतःसवरुणांतिकम् ७ आनीयदत्वातानश्वानुपयेमेवरांगनाम्॥ सऋषिःप्रार्थितःपत्न्याश्वश्र्वाचापत्यकाम्यया॥ श्रपयित्वोभयैर्मंत्रैश्चरुंस्नातुंगतोमुनिः ८ तावत्सत्यवतीमात्रास्वचरुंयाचितासती॥ श्रेष्ठंमत्वातयायच्छन्मात्रेमातुरदत्स्वयम् ९ तद्विज्ञायमुनिःप्राहपत्नींकष्टमकार्षिनः॥ घोरोदंडधरःपुत्रोभ्रातातेब्रह्मवित्तमः १० प्रसादितःसत्यवत्यामैवंभूदितिभार्गवः॥ अथतर्हिभवेत्पौत्रोजमदग्निस्ततोभवत् ११ साचाभूत्सुमहापुण्याकौशिकीलोकपावनी॥रेणोःसुतांरेणुकांवैजमदग्निरुवाहयाम् १२ तस्यावैभार्गवऋषेःसुतावसुमदादयः॥ यवीयान्जज्ञएतेषांरामइत्यभिविश्रुतः १३ यमाहुर्वासुदेवांशंहैहयानांकुलांतकम्॥ त्रिःसप्तकृत्वोयइमांचक्रेनिःक्षत्रियांमहीम् १४ दृप्तंक्षत्रंभुवोभारमब्रह्मण्यमधार्मिकम्॥ रजस्तमोवृतमहन्फल्गुन्यपिकृतेंहसि १५

चरुंश्रपयित्वाप्रपत्न्याभिमंत्र्य तवेदंतवमातुरिदमितिनिगद्यसंस्थाप्य। स्नातुंगतः ८ तावत्सदाआत्मीयचरुंश्रेष्ठंमत्वातयास्वमात्रायाचितासत्यवतीस्वचरुंमात्रेददौ मातुश्चरुंस्वयमदत्स्वीकृतवती ९ तवपुत्रश्चघोरोदंडधरः। तेभ्राताब्रह्मवित्तमः १० ११ १२ साकौशिकीसत्यवतीनदीबभूवेतिशेषः १३ भार्गवऋषेर्जमदग्नेर्यवीयान्कनिष्ठः १४ क्षत्रवधेमुख्यंकारणमाह दृप्तमिति। अहन्हतवान्। फल्गुन्यल्पे अंहस्यपराधे १५

१६ दत्तंदत्तात्रेयं परिकर्मभिःपरिचर्याभिराराध्य १७ अरातिषुदुर्धर्षत्वंवरं । अजश्रीरौत्पत्तिकीश्रीःयत्रतेजआदयोणिमादयश्चगुणाःसंतिअव्याहतगतिश्चचारइत्यन्वयः १८ १९ रेवायाःनर्मदायाः । अंभसिरुरोधप्रवाहस्तंभनंकृतवान् २० स्वशिबिरंरावणस्यसेनाविमोचनस्थानं प्रतिस्रोतःसरिज्जलैःप्रतीपगमनंस्रोतःप्रवाहोयेषांतानितथाप्रावित्स्रोतांसिचसरिज्जलानिप्रतिस्रोतःसारिज्जलानितैर्विप्लावितंप्रवाहवेगेननीतंवीक्ष्येतिशेषः । स्रोतोंबुनिर्गमद्वारेइंद्रियेषुजलस्रुतावितिच २१ यथाकेनचित्कपिर्मुक्तःपुनर्बद्धोभवतितथायंदशमुखोपिनार्जुनेनमाहिष्मत्यांसन्निरुद्धोभूदित्यन्वयः २२ २३ हविर्धान्याकामधेन्वा २४ आत्मनःस्वस्यऐश्वर्यमतिशायिनंअतीत्यवर्तमानंतदैश्वर्यंनाद्रियनादरंकुर्वन् । अग्निहोत्रीधेनुंप्रतिसाभिलाषःइच्छांकुर्वन् २५ हविर्धानीधेनुं । न

राजोवाच ॥ किंतदंहोभगवतोराजन्यैरजितात्मभिः ॥ कृतंतेनकुलंनष्टंक्षत्रियाणामभीक्ष्णशः १६ ॥ श्रीशुकउवाच ॥ हैहयानामधिपतिरर्जुनःक्षत्रियर्षभः ॥ दत्तंनारायणस्यांशमाराध्यपरिकर्मभिः १७ बाहून्दशशतंलेभेदुर्धर्षत्वमरातिषु ॥ अव्याहतेंद्रियाजश्रीस्तेजोवीर्ययशोबलम् १८ योगेश्वरत्वमैश्वर्यंगुणायत्राणिमादयः ॥ चचाराव्याहतगतिर्लोकेषुपवनोयथा १९ स्त्रीरत्नैरावृतःक्रीडन्रेवांभसिमदोत्कटः ॥ वैजयंतींस्रजंबिभ्रद्रुरोधसरितंभुजैः २० विप्लावितंस्वशिबिरंप्रतिस्रोतःसरिज्जलैः ॥ नामृष्यत्तस्यतद्वीर्यंवीरमानीदशाननः २१ गृहीतोलीलयास्त्रीणांसमक्षंकृतकिल्बिषः ॥ माहिष्मत्यांसन्निरुद्धोमुक्तोयेनकपिर्यथा २२ सएकदातुमृगयांविचरन्विपिनेवने ॥ यदृच्छयाश्रमपदंजमदग्नेरुपाविशत् २३ तस्मैसनरदेवायमुनिरर्हणमाहरत् ॥ ससैन्यामात्यवाहायहविर्धान्यातपोधनः २४ सवीरस्तत्रतद्दृष्ट्वाआत्मैश्वर्यातिशायिनम् ॥ तन्नाद्रियताग्निहोत्र्यांसाभिलाषःसहैहयः २५ हविर्धानीमृषेर्दर्पान्नरान्हर्तुमचोदयत् ॥ तांतेमाहिष्मतींनिन्युःसवत्सांक्रंदतींबलात् २६ अथराजनिनिर्यातेरामआश्रमआगतः ॥ श्रुत्वातत्तस्यदौरात्म्यंचुक्रोधाहिरिवाहतः २७ परशुंयोजयामाससतूणंचर्मकार्मुकम् ॥ अन्वधावतदुर्मर्षोमृगेंद्रइवयूथपम् २८ तमापतंतंभृगुवर्यमोजसाधनुर्धरंबाणपरश्वधायुधम् ॥ ऐणेयचर्मांबरमात्मधामभिर्युतंजटाभिर्ददृशेपुरींनृप २९ अचोदयद्धस्तिवरांश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः ॥ अक्षौहिणीःसप्तदशातिभीषणास्तारामएकोभगवानसूदयत् ३० यतोयतोसौप्रहरन्परश्वधोमनोनिलौजाःपरचक्रसूदनः ॥ ततस्ततश्छिन्नभुजोरुकंधरानिपेतुरुर्व्यांहतसूतवाहनाः ३१ दृष्ट्वास्वसैन्यंरुधिरौघकर्दमेरणाजिरेरामकुठारसायकैः ॥ विवृक्णचर्मध्वजचापविग्रहंविपातितंहैहयआपतद्रुषा ३२

रान्पुरुषान् हर्तुंनेतुंअयोजयन्नियुक्तवान् २६ २७ योजयामासउत्तेजितंकृतवान् । कार्मुकंगृहीत्वेतिशेषः । रथेयोजयामासेतिवा २८ ऐणेयचर्मकृष्णाजिनंदेवांबरंयस्यसतथातंआत्मनःस्वस्यधामतेजोयासांताःतथा । ताभिर्जटाभिर्युक्तंतंपुरीमापतंतम् २९ अर्जुनोयाअक्षौहिणीरचोदयद्रामस्ताअसूदयदित्यर्थः ३० मनोवदनिलवदोजोवेगोयस्यसतथामनोहृंगअनिलवदवष्टंभइतिवा । ओजोवष्टंभबलयोरितियादवः ३१ विग्रहोदेहः ३२

अथागत्यार्जुनः पंचशतेषु धनुष्षु बाहुभिः । बाणान्युगपदेकप्रयत्नेन संदधे अस्त्रभृतांसम्यगग्रणीरामःसमं युगपदेकस्मिन्धनुषि बद्धेषुभिः संधितशरैस्तान्पंचशतशरान् अच्छिनादित्यन्वयः ३३ पुनः रामः स्वहस्तैश्चलान्गिरीन् अंघ्रिपान्वृक्षान्मृधे उत्क्षिप्य प्रहृत्य युधि वेगादभिधावतोऽर्जुनस्य भुजान् । कठोरनेमिना शितधारेण चिच्छेदेत्यन्वयः ॥ ३४ ३५ उपावर्त्य निवर्त्य । इतस्ततः आकर्षणादिना परिक्लिष्टां क्लेशोपेताम् ३६ ३७ ३८ ३९ यथा सौरी सूर्यसंबंधिनी प्रभा रोचते तथा ब्राह्मी ब्राह्मणसंबंधिनी लक्ष्मीः क्षमया प्रकाशते ४० मूर्द्धाभिषिक्तस्य चक्रवर्तिनः ब्रह्मवधाद्ब्राह्मणहननादच्युते श्रीनारायणे बुद्धिर्यस्य स तथा ४१ ॥ इतिश्रीभागवते नवमस्कंधे वि०कृ०टी० त्रयोदशोऽध्यायः ॥ १३ ॥ चरित्वा कृत्वा १ पातागगामिति शेषः २ किंचिच्चित्ररथस्पृहा ईषच्चित्ररथे स्पृहावती जाता ३

अथार्जुनः पंचशतेषु बाहुभिर्धनुष्षु बाणान्युगपत्सु संदधे ॥ रामायरामोऽस्त्रभृतां समग्रणीस्तानेकबद्धेषुभिरच्छिनत्समम् ३३ पुनः स्वहस्तैश्चलान्मृधेऽंघ्रिपानुत्क्षिप्य वेगादभिधावतो युधि ॥ भुजान्कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं हसन्निव ३४ कृत्तबाहोः शिरस्तस्य गिरेः शृंगमिवाहरत् ॥ हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात् ३५ अग्निहोत्रीमुपावर्त्य सवत्सां परवीरहा ॥ समुपेत्याश्रमं पित्रे परिक्लिष्टां समर्पयत् ३६ स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च ॥ वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ३७ राम राम महाबाहो भवान्पापमकार्षीत् ॥ अवधीन्नरदेवं यत्सर्वदेवमयं वृथा ३८ वयं हि ब्राह्मणास्तात क्षमयार्हणतां गताः ॥ यया लोकगुरुर्देवः पारमेष्ठ्यमगात्पदम् ३९ क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा ॥ क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ४० राज्ञो मूर्धाभिषिक्तस्य वधो ब्रह्मवधाद्गुरुः ॥ तीर्थसंसेवया चांहो जह्यंगाच्युतचेतनः ४१ ॥ इतिश्रीभागवते नवमस्कंधे परशुरामचरिते त्रयोदशोऽध्यायः ॥ १३ ॥ श्रीशुक उवाच ॥ पित्रोपशिक्षितो रामस्तथेति कुरुनंदन ॥ संवत्सरं तीर्थयात्रां चरित्वाश्रममाव्रजत् १ कदाचिद्रेणुका याता गंगायां पद्ममालिनम् ॥ गंधर्वराजं क्रीडंतमप्सरोभिरपश्यत २ विलोकयंती क्रीडंतमुदकार्थं नदीं गता ॥ होमवेलां न सस्मार किंचिच्चित्ररथस्पृहा ३ कालात्ययं तं विलोक्य मुनेः शापविशंकिता ॥ आगत्य कलशं तस्थौ पुरोधाय कृतांजलिः ४ व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् ॥ घ्नतैनां पुत्रकाः पापामित्युक्तास्ते न चक्रिरे ५ रामः संचोदितः पित्रा भ्रातॄन्मात्रा सहावधीत् ॥ प्रभावज्ञो मुनेः सम्यक्समाधेस्तपसश्च सः ६ वरेण छंदयामास प्रीतः सत्यवतीसुतः ॥ वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ७ उत्तस्थुस्ते कुशलिनो निद्रापाय इवांजसा ॥ पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ८

कलशं भर्तुः पुरो निधाय तत्रैव कृतांजलिस्तस्थौ ४ घ्नत हतां कुरुत तां हतां ५ मुनेः समाधेः तपसश्च सम्यक्प्रभावज्ञः प्रतापमाहात्म्ययोः प्रभावः स्यादिति ६ छंदयामास वशीचकार । वशाभिप्रायोः श्छंद इति च । वधे अस्मृतिं वधं रामेण हता इति स्मृतिशून्यत्वलक्षणं वरं च ७ राम एतेषु मदादयो जीवंति चेज्जीवंतु नो चेन्म्रियंतामिति मत्वा सुहृद्वधो नाकारि । किंतु स्वसार्वज्ञमीश्वरत्वेन दोषाभावं च प्रकटयितुमिति भावेनेत्याह पितुरिति । वीर्यं पराक्रमे रेतसि चन्नमाहात्म्ययोरपीत्यभिधानात् । पितुस्तपोमाहात्म्यं जानता कृतमिति भावः । साक्षान्नारायणावतारस्य निरवद्यस्य सकलगुणाकरस्य भार्गवरामस्य क्षत्रहत्यादिदोषमार्जनाय तीर्थसेवा मातृभ्रातृवधात्स्वाज्ञाकारित्वेन प्रसन्नात्पितुर्वरदानमित्यादि कं कथं घटत इतीत्थं शंका । जामदग्न्यो वरं वव्रेऽनंतशक्तिरपि स्वयं । पितुर्मान्यत्वसिद्ध्यर्थं

लंकेकोकेश्वरःप्रभुरित्यादिवाक्येनपरिहर्तव्याइतिज्ञातव्यम् ८ ९ लब्धच्छिद्राः लब्धावसरा. १० विषयादाहृत्यभगवत्येवानिवेशितबुद्धिम् ११ १२ आत्मनायत्नेनात्मानंदेहैकदेशमुदरम् । यत्नेकै श्रीमत्तौवासेइतिपादवः । आत्मशब्दःपूर्वार्धे १३ दूरस्थाःस्वभिन्नदेशंगताः १४ १५ क्षत्रांतायविशेषेणक्षत्रियकुलनाशाय १६ ब्रह्मघ्नैर्ब्राह्मणहंतृभिःविहतानष्टाश्रीर्यस्याःसातथातां शीर्षभिः तस्यां मध्येस्थमध्येमाहिष्मतीमध्ये १७ अब्रह्मण्यानांब्राह्मणद्वेपिणां भयंकरांनदींचक्रइतिगतेनान्वयः । निमित्तमाह हेतुमिति । अमंगलकारिणिसति १८ स्यमंतपंचकेकुरुक्षेत्रे । शोणितान्येवोदकानियेषुतेतथातान्ह्रदान् । जलैरगाधमदेशान् १९ शिरःकायेनसंधायबर्हिषियज्ञआधायदर्भबंधनविशेषेवासर्वदेवमयंसर्वदेवोत्तमम् २० २१ उपद्रष्ट्रेन्यूनातिरिक्तकर्मसाक्षिणे परंअवशिष्टम् २२ विधूताशे

येऽर्जुनस्यसुताराजन्स्मरंतस्स्मपितुर्वधम् ॥ रामवीर्यपराभूतालेभिरेशर्मनक्वचित् ९ एकदाश्रमतोरामेसभ्रातरिवनंगते ॥ वैरंसिसाधयिषवोलब्धच्छिद्राउपागमन् १० दृष्ट्वाग्न्यागारआसीनमावेशितधियंमुनिम् ॥ भगवत्युत्तमश्लोकेजघ्नुस्तेपापनिश्चयाः ११ याच्यमानाःकृपणयारामभ्रात्रातिदारुणाः ॥ प्रसह्यशिरउत्कृत्यजग्मुस्तेक्षत्रबंधवः १२ रेणुकादुःखशोकार्तानिघ्नंत्यात्मानमात्मना ॥ रामरामेतितातेतिविचुक्रोशोच्चकैःसती १३ तदुपश्रुत्यदूरस्थाहारामेत्यार्तवत्स्वरम् ॥ त्वरयाश्रममासाद्यददृशुःपितरंहतम् १४ तेदुःखरोषामर्षार्तिशोकवेगविमोहिताः ॥ हातातसाधोधर्मिष्ठत्यक्त्वास्मान्स्वर्गतोभवान् १५ विलप्यैवंपितुर्देहंनिधायभ्रातृषुस्वयम् ॥ प्रगृह्यपरशुंरामःक्षत्रांतायमनोदधे १६ गत्वामाहिष्मतींरामोब्रह्मघ्नविहतश्रियम् ॥ तस्यांसशीर्षभिर्राज्ञांमध्येचक्रेमहागिरिम् १७ तद्रक्तेननदींघोरामब्रह्मण्यभयावहाम् ॥ हेतुंकृत्वापितृवधंक्षत्रेऽमंगलकारिणि १८ त्रिःसप्तकृत्वःपृथिवींकृत्वानिःक्षत्रियांविभुः ॥ स्यमंतपंचकेचक्रेशोणितोदान्ह्रदान्नव १९ पितुःकायेनसंधायशिरआधायबर्हिषि ॥ सर्वदेवमयंदेवमात्मानमयजन्मखैः २० ददौप्राचींदिशंहोत्रेब्रह्मणेदक्षिणांदिशम् ॥ अध्वर्यवेप्रतीचींवाउद्गात्रउत्तरांदिशम् २१ अन्येभ्योवांतरदिशःकश्यपायचमध्यतः ॥ आर्यावर्तमुपद्रष्ट्रेसदस्येभ्यस्ततःपरम् २२ ततश्चावभृथस्नानविधूताशेषकिल्बिषः ॥ सरस्वत्यांब्रह्मनद्यांरेजेव्यभ्रइवांशुमान् २३ स्वदेहंजमदग्निस्तुलब्ध्वासंज्ञानलक्षणम् ॥ ऋषीणांमंडलेसोभूत्सप्तमोरामपूजितः २४ जामदग्न्योपिभगवान्रामःकमललोचनः ॥ आगामिन्यंतरेराजन्वर्तयिष्यतिवैबृहत् २५ आस्तेद्यापिमहेंद्राद्रौन्यस्तदंडःप्रशांतधीः ॥ उपगीयमानचरितःसिद्धगंधर्वचारणैः २६ एवंभृगुषुविश्वात्माभगवान्हरिरीश्वरः ॥ अवतीर्यपरंभारंभुवोहन्बहुशोनृपान् २७

षकिल्बिषत्वमौपचारिकंलोकशिक्षार्थत्वात् नाम्नासरस्वत्यांब्रह्मनद्यांवेदमय्यांनद्याम् । व्यभ्रःमेघच्छायानिर्मुक्तः अंशुमानादित्यः । जनेतिपदाध्याहारेणावभृथस्नानविधूताशेषकिल्बिषजनइतिवा अवभृथस्नानेनविधूतमशेषंकिल्बिषंयस्यसतथा । अवभृथस्नानविधूताशेषकिल्बिषोजनोयस्यसतथा अनेनावभृथस्नानेनजनस्याशेषतःकिल्बिषंविध्वस्तंभवतीतिदर्शनायरामेणावभृथस्नानमकारीतिसूचितंभवति २३ जमदग्निस्तुसंज्ञानलक्षणंज्योतिर्मयलक्षणंस्वयोग्यदेहमाकारविशेषंलब्ध्वासप्तर्षीणांमंडलेसप्तमोऋषिरितिशेषःअभूत् २४ आगामिन्यंतरेभविष्यन्मन्वंतरे । बृहद्ब्रह्मवेदलक्षणंवर्तयिष्यतिवेदप्रवर्तकोभविष्यतीत्यर्थः २५ २६ भुवःपरंभारंकेवलंभारभूतान्नृपानहन्सहृतवान् २७

१ अपापत्पापेंद्वेशपितरःसंनिवर्तयन् ॥ अमानंतोस्यनाहात्म्यंमोहितानात्मस्यमायया ॥ मोहयन्मायपालोकचक्रेचापचितिस्वके ॥ पुरूरवापाम्निनिर्गान्दुल्कुलःशापादेसंगतिरितिशेषतात्पर्यं ।

महातेजाविश्वामित्रः २८ तस्यविश्वामित्रस्यैकशतंपुत्राआसन् तेषामेकोत्तरशतपुत्राणांमध्येयोमध्यमःसतुमधुच्छंदोनामतेनमधुच्छंदसासंयुक्तायेपंचाशत्पुत्राःतेमाधुच्छंदसनामानोभवंतिनान्ये । तस्य हविश्वामित्रस्यैकशतंपुत्राआसुरित्यादिब्राह्मणंचेममेवार्थंवक्ति २९ शुनःशेपस्यमाहात्म्यंउपरिष्टात्प्रचक्षतइत्युक्तंप्रपंचयितुमाह पुत्रंकृत्वेति । अत्रकाचित्किंवदंतीममपुत्रोभवेतिविश्वामित्रेणोक्तोय माजीगर्तःशुनःशेपोहंत्वत्पुत्राणांज्येष्ठश्चेत्तवपुत्रःस्यांतत्रापिमध्यमोनस्यांनापिकनिष्ठइतिविश्वामित्रमाह तदेवमस्त्विति विश्वामित्रःशुनःशेपंपुत्रंकृत्वाऽन्यानौरसान्पुत्रानब्रवीत् एषशुनःशेपोयुष्मा कंज्येष्ठःप्रकल्प्यतांभवद्भिरितिशेषइति शुनःशेपशब्दंशृण्वतांशुनीजातीयोयंकिमित्यन्यथाप्रतीतिंनिवारयति भार्गवमिति । भृगुवंशोद्भवः अनेनापिताकथंनिवारितास्यादित्यतआह आजीगर्तमिति । अजीगर्तस्यमुनेरपत्यं तर्हिविश्वामित्रस्यपुत्रत्वेकासंगतिरित्यतोदेवरातमिति । विश्वामित्रायदेवैःरातंदत्तंविश्वामित्रस्यदत्तपुत्रत्वेनसंबंधइत्यर्थः ३० अनेनविशेषणत्रयेणज्येष्ठत्वकल्पनार्थंवैशिष्ट्य मुक्त्वावैशिष्ट्यांतरंचाह यइति । यःशुनःशेपःहरिश्चंद्रयज्ञेअजीगर्तेनपित्रारोहितायविक्रीतःपुरुषाख्यःपशुरभूत् । यश्चब्रह्मादिदेवान्स्तुत्वातत्प्रसादात्पाशबंधनात्ससाराख्यपाशबंधनात्यूपसंबंधिरज्जुबं धनात् आत्मानंमुमुचेमोचयामासकर्मकर्तरिप्रयोगः यस्यनूनंकतमस्यामृतानांमनामहेचारुदेवस्यनामेत्यारभ्यअस्मेरायंनिधापयेत्यंतवेदवाक्येनस्तुत्वाऋग्भाष्येएतासामृचामर्थआचार्यैरेवविस्तारेणो

गाधेरभून्महातेजाःसमिद्धइवपावकः ॥ तपसाक्षात्रमुत्सृज्ययोलेभेब्रह्मवर्चसम् २८ विश्वामित्रस्यचैवासन्पुत्राएकशतंनृप ॥ मध्यमस्तुमधुच्छंदामा धुच्छंदसएवते २९ पुत्रंकृत्वाशुनःशेपंदेवरातंचभार्गवम् ॥ आजीगर्तंसुतानाहज्येष्ठएषप्रकल्प्यताम् ३० योवैहरिश्चंद्रमखेविक्रीतःपुरुषःपशुः ॥ स्तु त्वादेवान्प्रजेशादीन्मुमुचेपाशबंधनात् ३१ योरातोदेवयजनेदेवैर्गाधिसुतायसः ॥ देवरातइतिख्यातःशुनःशेपस्तुभार्गवः ३२ येमधुच्छंदसोज्येष्ठाःकुश लंमेनिरेनतत् ॥ अशपत्तान्मुनिःक्रुद्धोम्लेच्छाभवतदुर्जनाः ३३ सहोवाचमधुच्छंदाःसार्धंपंचशतातततः ॥ यन्नोभवान्संजानीतेतस्मिंस्तिष्ठामहेवयम् ॥ ३४ ज्येष्ठंमंत्रदृशंचक्रुस्त्वामन्वंचोवयंस्महि ॥ विश्वामित्रःसुतानाहवीरवंतोभविष्यथ ३५

क्तइतिनास्माभिःप्रपंच्यते ३१ देवरातशब्दनिर्वचनेनविश्वामित्रस्यतत्संबंधमाह यइति । यःदेवयजनेयज्ञेदेवैरातोरक्षितस्तैरेवगाधिसुतायविश्वामित्रायरातःदत्तः । तस्मात्सदेवरातइतिख्यातःप्रसिद्धः इत्यतोयंभार्गवः ३२ शुनःशेपोज्येष्ठत्वेनकल्प्यतामितिविश्वामित्रेणोक्ताः । येपंचाशत्पुत्रामधुच्छंदसोजन्मनाज्येष्ठास्तेशुनःशेपस्यज्येष्ठत्वंस्वात्मनःकनिष्ठत्वंचप्राप्तं । कुशलंसाधुनमेनिरे ततः किमभूदितितत्राह अशपदिति ३३ तेषांम्लेच्छभावेनशुनःशेपस्यकिमायातमितितत्राह सहेति । हेत्यनेनब्राह्मणमनुकरोति सविश्वामित्रःपंचाशतासार्धंमधुच्छंदसमुवाचह । अयंशुनःशेपोवःज्ये ष्ठोभवत्वितिविश्वामित्रेणोक्तस्येदमेववाक्यमुत्तरंसमधुच्छंदाःपंचाशतासार्धंपितरमुवाचह । ततस्तातःपिताभवान्नोस्माकंयद्विजानीतेआज्ञापयति तस्मिन्नाज्ञप्तेशुनःशेपस्यज्यैष्ठ्येअस्माकंकानिष्ठ्ये सर्वेवयमविचारेणतिष्ठामहे । प्रकाशनस्थेयाख्ययोश्चेतिसूत्रात् । निश्चितंस्थिरीकृतंचेदंकार्यमितिभावः ३४ तर्हितथाकुर्वंत्वितिपित्राउदितास्तेपुत्राःकस्यनूनमित्यादिमंत्रदृशंऋग्वेदद्रष्टारंशुनःशेपंज्ये ष्ठंचक्रुः । कथंचक्रुरितितत्राह त्वामिति । भोदेवरातवयंत्वामन्वंचः अनुवर्तमानाः । कनिष्ठाःस्मभवामहिस्मसिद्धंहेतौवा । यस्माद्वयंत्वत्कनिष्ठाअभूमतस्मात्तेज्येष्ठत्वेसंशयोमाभूदिति । अथवाहेपितः वयंस्मात्वामन्वंचःअनुवर्तमानाःस्म त्वदाज्ञाकारिणइत्यर्थइति । संतुष्टःपिताकंवरंप्रायच्छदितितत्राह विश्वामित्रइति । वीरवंतःपुत्रवंतःकर्तव्येविशिष्टप्रेरणावंतोवा ३५

कुतोयंवरोदत्तइतितत्राह यइति येभवंतोमानममिमानमनुगृह्णत परिपालनलक्षणानुग्रहंकुर्वंतः मामांवीरवंतं अकर्तेकृतवंतइतिपस्मात्तस्माद्यूयंवीरवंतोभविष्यथेति । वीरवंतमकर्तमेतिब्राह्मणवाक्यानुकरणं वेदतुल्यमितिप्रकाशयति अकर्तममवाक्यमकुर्वंत । जीवतोवाक्यकरणाद्दणसंशोधनेनच गयायांपिंडदानाच्चत्रिभिःपुत्रस्यपुत्रतेतिस्मृतेः । हेकौशिका कौशिकगोत्राः एषदेवरातोमम्भीरःपुत्रोनोयुष्माकं ज्येष्ठः । यूयंतमन्वितअनुवर्तध्वम् ३६ अन्येचाष्टकादयोनुवर्तंतामितिशेषः । उपसंहरति एवमिति यत्कौशिकगोत्रं । तद्वैश्वामित्रैःपृथग्विधमभूत् ३६ कथंतदितितत्राह प्रवरांतरमिति प्रवरांतरमाप

येमानंमेनुगृह्णंतोवीरवंतमकर्तमा ॥ एषवःकौशिकावीरोदेवरातस्तमन्वित ३६ अन्येचाष्टकहारिताजयक्रतुमदादयः ॥ एवंकौशिकगोत्रंतद्वैश्वामित्रैः पृथग्विधम् ३७ प्रवरांतरमापन्नंतद्धीत्येवंप्रकल्पितम् ॥ यःपुरूरवसःपुत्रआयुस्तस्याभवत्सुताः ३८ नहुषःक्षत्रवृद्धश्चरजीराभश्चवीर्यवान् ॥ अनेना इतिराजेंद्रक्षत्रवृद्धान्वयंशृणु ३९ क्षत्रवृद्धसुतस्यामन्सुहोत्रस्यात्मजास्त्रयः ॥ काश्यःकुशोगृत्समदइतिगृत्समदादभूत् ४० शुनकःशौनकोयस्यबह्वृचप्रवरोमुनिः ॥ काश्यस्यकाशिस्तत्पुत्रःसुराष्ट्रोदीर्घतमःपिता ४१ धन्वंतरिर्दीर्घतमसआयुर्वेदप्रवर्तकः ॥ यज्ञभुग्वासुदेवांशःस्मृतिमात्रार्तिनाशनः ४२ तत्पुत्रःकेतुमान्यस्यजज्ञेभीमरथस्ततः ॥ दिवोदासोद्युमांस्तस्मात्प्रतर्दनइतिस्मृतः ४३ सएवशत्रुजिद्वत्सोऋतध्वजइतीरितः ॥ तथाकुवलयाश्वेतिप्रोक्तोऽलर्कादयस्ततः ४४ षष्टिवर्षसहस्राणिषष्टिवर्षशतानिच ॥ नालर्कादपरोराजाबुभुजेमेदिनींयुवा ४५ आलर्कात्सन्नतिस्तस्मात्सुनीथोथसुकेतनः ॥ धर्मकेतुसुतस्तस्मात्सत्यकेतुरजायत ४६ धृष्टकेतुस्ततस्तस्मात्सुकुमारःक्षितीश्वरः ॥ वीतिहोत्रोस्यभर्गोतोभार्गभूमिरभून्नृप ४७ इतीमेकाश्यजाभूपाःक्षत्रवृद्धान्वयायिनः॥ राभस्यरभसःपुत्रोगंभीरश्चाक्रियस्ततः ४८ तस्यक्षेत्रेब्रह्मजज्ञेशृणुवंशमनेनसः ॥ शुद्धस्ततःशुचिस्तस्मात्त्रिककुब्धर्मसारथिः ४९ ततःशांतरजाजज्ञेकृतकृत्यःसआत्मवान् ॥ रजेःपंचशतान्यासन्पुत्राणाममितौजसाम् ५० देवैरभ्यर्थितोदैत्यान्हत्वेंद्रायाददाद्दिवम् ॥ इंद्रस्तस्मैपुनर्दत्वागृहीत्वाचरणौरजेः ५१ आत्मानमर्पयामासप्रह्लादात्परिशंकितः ॥ पितर्युपरतेपुत्रायाचमानायनोददुः ५२ त्रिविष्टपंमहेंद्राययज्ञभागान्समाददुः ॥ गुरुणाहूयमानेऽग्नौबलभित्तनयान्रजेः ५३ अवधीद्भ्रंशितान्मार्गान्नकश्चिदवशेषितः ॥ प्रतिक्षत्रःक्षत्रवृद्धात्संजयस्तत्सुतोजयः ५४ ततःकृतःकृतस्यापिजज्ञेवीर्यधनोनृपः ॥ सहदेवस्ततोहीनोजयत्सेनस्तुतत्सुतः ५५ संकृतिस्तस्यचजयःक्षत्रधर्मामहारथः ॥ क्षत्रवृद्धान्वयाभूपाइमेशृण्वथनाहुषान् ॥ ५६ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेचतुर्दशोध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

न्नंहियस्मात्तस्मादेवपृथग्विधंकल्पितंहिप्रसिद्धमितिभावः श्रुतायोःसंततिंविस्तृत्यपुरूरवसः । पुत्रस्यप्रथमस्यायोर्वंशंवर्णयतिबादरायणिः यइति ३८ नहुषान्वयस्यैवराज्यार्हत्वात्क्षत्रवृद्धाद्यन्वयस्यतदनर्हत्वात्सूचीकटाहन्यायमनुसंदधानःक्षत्रवृद्धाद्यन्वयंवक्तिक्षत्रवृद्धान्वयमिति ३९ ४० ४१ ४२ ४३ ४४ अलर्कादपरोराजायुवातथानबुभुजे ४५ ४६ ४७ इतीमेकाश्यजाःकाश्यस्यसंतानजाभूपाः ४८ ४९ ५० ५१ ५२ ५३ पुनरपिक्षत्रवृद्धात्प्रतिक्षत्रोभूत् ५४ ५५ ५६ इतिश्रीभागवतेमहापु० विजयध्वजटीकायांनवमस्कंधेचतुर्दशोध्यायः ॥ १४ ॥ ॥ ७ ॥ ॥ ७ ॥

अथनहुषस्यसंततिमनुक्रामति यतिरित्यादिना १ तस्यराज्यस्यपरिणामवित्फलपरिपाकपटुतांजानातीति यत्रराज्ये २ इंद्राण्याधर्षणात्शच्याःसंस्पर्शनिमित्तात्पितरिनहुषेस्वर्गस्थानात्द्विजैर्भ्रंशितेत्याजितेअजगरत्वंमहासर्पत्वंप्रापितेसति ३ यवीयसःकनिष्ठान्संयातिपूर्वान्काव्यस्यशुक्रस्यपुत्र्यादेवयान्यावृषपर्वणोदैत्यस्यपुत्र्याशर्मिष्ठयाकृतदारः ४ प्रातिलोम्येनविवाहःकथंघटतइतिपृच्छतिब्रह्मर्षिरिति ५ दैववशादिदंपाणिग्रहणंप्राप्तंनतुमानुषवदितिप्रकाशयितुमाख्यायिकांकथयति एकदेति ६ ७ सिंचतीःअन्योन्यजलप्रक्षेपंकुर्वंत्यः ८ पर्यधुराच्छादितवंत्यः ९ अजानतीशर्मिष्ठागुरुपुत्र्यावासःस्वीयंमत्वा समव्ययत्सर्वीतवती व्ययसंवरणइतिधातुः तदाप्रकुपिताप्ररब्धकोपादेवयानीदंवाक्यमुवाचेत्यन्वयः १० मह्यंममअसांप्रतमयुक्तं ११ स्वकुलप्रशंसार्थंब्राह्मणानां

श्रीशुकउवाच ॥ यतिर्ययातिःसंयातिरायतिर्वियतिःकृतिः ॥ षडिमेनहुषस्यासन्निंद्रियाणीवदेहिनः १ राज्यंनैच्छद्यतिःपित्रादत्तंतत्परिणामवित् ॥ यत्रप्रविष्टःपुरुषआत्मानंनावबुध्यते २ पितरिभ्रंशितेस्थानादिंद्राण्याधर्षणाद्द्विजैः ॥ प्रापितेजगरत्वंचययातिरभवन्नृपः ३ चतसृष्वादिशद्दिक्षुभ्रातॄन्भ्रातायवीयसः ॥ कृतदारोजुगोपोर्वींकाव्यस्यवृषपर्वणः ४ ॥ राजोवाच ॥ ब्रह्मर्षिर्भगवान्काव्यःक्षत्रबंधुश्चनाहुषः ॥ राजन्यविप्रयोःकस्माद्विवाहःप्रातिलोमकः ५ ॥ श्रीशुकउवाच ॥ एकदादानवेंद्रस्यशर्मिष्ठानामकन्यका ॥ सखीसहस्रसंयुक्तागुरुपुत्र्याचभामिनी ६ देवयान्यापुरोद्यानेपुष्पितद्रुमसंकुले ॥ व्यचरत्कलगीतालिनलिनीपुलिनेऽबला ७ जलाशयंसमासाद्यकन्याःकमललोचनाः ॥ तीरेन्यस्यदुकूलानिविजह्रुःसिंचतीर्मिथः ८ वीक्ष्यव्रजंतंगिरिशंसहदेव्यावृषस्थितम् ॥ सहसोत्तीर्यवासांसिपर्यधुर्व्रीडिताःस्त्रियः ९ शर्मिष्ठाऽजानतीवासोगुरुपुत्र्याःसमव्ययत् ॥ स्वीयंमत्वाप्रकुपितादेवयानीदमब्रवीत् १० अहोनिरीक्ष्यतांमह्यंदास्याःकर्मह्यसांप्रतम् ॥ अस्मद्धार्यंधृतवतीशुनीवहविरध्वरे ११ यैरिदंतपसासृष्टंमुखंपुंसःपरस्यवै ॥ धार्यतेयैःपरंज्योतिःशिवःपंथाश्चदर्शितः १२ येपीदमुपतिष्ठंतेलोकनाथाःसुरेश्वराः ॥ भगवानपिविश्वात्मापावनःश्रीनिकेतनः १३ वयंतत्रापिभृगवःशिष्योस्यानःपिताऽसुरः ॥ अस्मद्धार्यंधृतवतीशूद्रोवेदमिवासती १४ एवंक्षिपंतींशर्मिष्ठागुरुपत्रीमभाषत ॥ रुषाश्वसंतीनागीवधर्षितादष्टदच्छदा १५ आत्मवृत्तिमविज्ञायकत्थसेबहुभिक्षुकि ॥ किंनप्रतीक्षसेस्माकंगृहान्बलिभुजोयथा १६ एवंविधैःसुपरुषैःक्षिप्त्वाचार्यसुतांसतीम् ॥ शर्मिष्ठाप्राक्षिपत्कूपेवासस्त्वादायमन्युना १७ तस्यांगतायांस्वगृहंययातिर्मृगयांचरन् ॥ प्राप्तोयदृच्छयाकूपेजलार्थीतांददर्शह १८ दत्वास्वमुत्तरंवासस्तस्यैराजाविवाससे ॥ गृहीत्वापाणिनापाणिमुज्जहारदयापरः १९

माहात्म्यंकथयति यैरिदमित्यादिना इदंविश्वंयैर्ब्राह्मणैस्तपसासृष्टं येपरमस्यपुंसःमुखंयैरिदंपरंज्योतिर्ब्रह्माख्यंधार्यतेयैश्चशिवःपंथाःवेदमार्गोदर्शितः १२ येलोकनाथाःसुरेश्वरास्तेपीदंब्राह्मणकुलमुपतिष्ठंते अभिमुखेनर्हावरादातुप्रतीक्षंते विश्वात्माभगवानपिब्राह्मणप्रियस्तिष्ठतीतिशेषः १३ वयंतत्रब्राह्मणेषुभृगवः भृगुकुलजाः अतएवश्रेष्ठाइतिशेषः अस्याःपितावृषपर्वाऽसुरोनोस्माकंशिष्यःअस्मत्पितुःशिष्यत्वादहमपितत्पुत्रीत्वान्मान्येतियस्मात्तस्मादस्मद्धार्यंवस्त्रमिदंधृतवती यथावेदग्रहणायोग्योवृषलोवेदंधारयतितथेति १४ धर्षिताअप्रगल्भीकृतातुच्छीकृतेत्यर्थः १५ बहुकत्थसेव्यर्थवचनंवदासिभिक्षुकीत्वंस्पष्टमित्याह किंनेति बलिभुजःश्वानःकाकोवा १६ १७ १८ उत्तरमुत्तरीयं उज्जहारकूपादितिशेषः १९

प्रेमनिर्भरयास्नेहपूर्णयाहस्तंगृह्णातीतिहस्तग्राहःपाणिग्रहणकर्ता अपरोन्योनस्यात् हस्ताग्राहइतिपाठेहस्तेग्राहोग्रहणंयस्यसतथा कुंभकारवदण्प्रत्ययांतोवा २० कूपमग्नायाःममभवतोयदिदंदर्शनं एषःसंबंधःईशकृतःश्रीनारायणविहितः नपौरुषःपुरुषाकाररचितोनभवति २१ ब्राह्मणपुत्र्यास्तवब्राह्मणएवभर्तायुक्तोनक्षत्रियःप्रतिलोमप्रवेशप्रसंगादितिशंकांपरिहरति नब्राह्मणइति हेमहाभुजमे ब्राह्मणोहस्तग्राहोनभविताभविष्यति कुतइतितत्राह कचस्येति बार्हस्पत्यस्यबृहस्पतेरपत्यस्यनाम्नाकचस्यशापात्मृतसंजीवनीविद्यार्थीकचस्तत्प्रतिग्रहायबहुतिथंगुरुपरिचर्यांविधायतत्प्रसादमा प्याथतद्विद्यामादायगुरोरनुज्ञयागंतुकामंकचमुपलभ्यसर्वप्रकारेणकचस्यहितमाचरंत्यामयाभोकचत्वंममभर्ताभवेत्युक्तोमामुनाच हेदेवयानित्वयानैवंवक्तव्यंपद्वाताहमिति तदाकुपिताहंतमशपं म त्पितुरवाप्तविद्यानफलत्वितीयमाख्यायिकानेनोच्यते यमशपंपुरेति अहंपुरायंकचमशपंशप्तवतीतस्यशापादिति २२ अनंतरंययातिनाकिंकृतमित्यत्राह ययातिरिति यदनभिप्रेतंप्रीतिलोम्येनोद्वहनंत देवात्मनःदैवेनश्रीनारायणेनउपहृतमर्पितमात्मनोमनश्चतस्यांगतमनुरक्तंबुद्धातस्याःदेवयान्याःवचःप्रतिगृहीतवानित्यन्वयः २३ २४ कापोतींकपोतसंबंधिनींवृत्तिं स्तुवन्ग्रंथाधिकभयान्नकापोतीवृत्तिर्वि

तंवीरमाहोशनसीप्रेमनिर्भरयागिरा ॥ राजंस्त्वयागृहीतोमेपाणिःपरपुरंजय ॥ हस्तग्राहोपरोमाभूद्गृहीतायास्त्वयाहिमे २० एषईशकृतोवीरसंबंधोनौनपौरुषः ॥ यदिदंकूपमग्नायाभवतोदर्शनंमम २१ नब्राह्मणोमेभविताहस्तग्राहोमहाभुज ॥ कचस्यबार्हस्पत्यस्यशापाद्यमशपंपुरा २२ ययातिरनभिप्रेतंदैवोपहृतमात्मनः ॥ मनस्तुतद्गतंबुध्वाप्रतिजग्राहतद्वचः २३ गतेराजनिसावीरेतत्रस्मरुदतीपितुः ॥ न्यवेदयत्ततःसर्वंमुक्तंशर्मिष्ठयाकृतम् २४ दुर्मनाभगवान्काव्यःपौरोहित्यंविगर्हयन् ॥ स्तुवन्वृत्तिंचकापोतींदुहित्रासययौपुरात् २५ वृषपर्वातमाज्ञायप्रत्यनीकविवक्षितम् ॥ गुरुंप्रसादयन्मूर्ध्नापादयोःपतितःपथि २६ क्षणार्धमन्युर्भगवाञ्छिष्यंव्याचष्टभार्गवः ॥ कामोस्याःक्रियतांराजन्नैनांत्यक्तुमिहोत्सहे २७ तथेत्यवस्थितेप्राहदेवयानीमनोगतम् ॥ पित्रादत्तायतोयास्येसानुगायातुमामनु २८ स्वानांतत्संकटंवीक्ष्यतदर्थस्यचगौरवम् ॥ देवयानींपर्यचरत्स्त्रीसहस्रेणदासिवत् २९ नाहुषायसुतांदत्त्वासहशर्मिष्ठयोशना ॥ तमाहराजञ्छर्मिष्ठामाधास्तल्पेतुकर्हिचित् ॥ विलोक्यौशनसींराज्ञीशर्मिष्ठासुप्रजांक्वचित् ॥ तमेववव्रेरहसिसख्याःपतिमृतौसति ३१ राजपुत्र्यार्थितोपत्येधर्मंचावेक्ष्यधर्मवित् ॥ स्मरञ्छुक्रवचःकालेदिष्टमेवाभ्यपद्यत ३२

श्रीपते देवयान्यादुहित्रासह २५ प्रत्यनीकानामसुरद्वेषिणांदेवानांवक्तुमिष्टंकार्यं २६ अस्या.देवयान्याःकामोपेक्षाविशेषः स्वाभीष्टसाधनाययाभिर्यंशर्मिष्ठाभवानस्मत्प्रियायास्तामितितत्राह नैनामिति २७ यदभीष्टंतत्तथा करिष्येइत्येवमुक्त्वा वृषपर्वण्यवस्थितेसति वृषपर्वणातवकिंकर्तव्यमितिपृष्टादेवयानीमनोगतंस्वमनसिस्थितंकार्यंप्राह किंतदाह पित्रेति अहंपित्रादत्तायास्येयतोमामियंशर्मिष्ठासानुगादासीसहस्रेणसहितानुयातुअन्वागच्छतुइति २८ शर्मिष्ठातत्सर्वंश्रुत्वायद्यहंनानुगमिष्यामितदागुरुद्रोहान्मत्कुलंसर्वंनष्टंभवतीतियत्स्वानासंकटंतद्वीक्ष्यतदर्थस्यतदनुगमनलक्षणप्रयोजनस्यगौरवंगुरुप्रसादेनस्वकुलाभिवृद्धिलक्षणमस्तीति मनसानिश्चित्यस्त्रीसहस्रेणपरिवृतातथाकरिष्यामीतिपितरमुक्त्वादेवयानींदासीवत्पर्यचरत् २९ उशनासुतांदेवयानींनाहुषायनहुषपुत्राययायातयेशर्मिष्ठयासहदत्त्वातंराजानमाह किमाह क्वचित् पिशर्मिष्ठांतल्पेशयनीयस्थानेमाधाःधृतांमाकार्षीः मिथुनीभावंनकुर्वित्यर्थः ३० औशनसींदेवयानींकार्यमालोच्यरहस्येकांतेसख्याःपतिमेवययातिमेवऋतुकालेवव्रे ३१ अपत्येसंतानार्थंराजपुत्र्याशर्मिष्ठयार्थितोधर्मवित्धर्मज्ञः नकांचनपरिहरेत्सद्वृतमितिश्रुतेः स्वयमागतांपरिहर्तुमशक्यंचेतिधर्मंचावेक्ष्यशुक्रवचःस्मरन्नपिकालेदिष्टमेवदैवमेवात्रकारणमितिनिश्चित्याभ्यपद्यत ताम्भितिशेषः ३२

३३ आसुर्याः शर्मिष्ठायां ३४ ३५ हेस्त्रीकामअनृतपुरुष असत्यवादिपुरुष ज्ञानीपुरुषोमेतिवा त्वांजराविशतइतिळट्लोड्यर्थे जरात्वामाविशतामिति शापप्रदादित्यर्थः ३६ तेतवदुहितरि कामानांशब्दादिविषयाणांस्मरणेनातृप्तोस्मि अलंबुद्धिंनप्राप्तोस्मि स्मृतौवृत्तेनिषेधेस्मस्वःस्वर्गपरलोकयोरिति अतएवमनुग्रह.कर्तव्यइत्याह व्यत्यस्येति योमह्यंवयोभिदास्यतितस्मिन्नेतांजरांव्यत्यस्यस्थसंक्रमय्य तद्वयसायथाकामंभुंजइति ३७ तर्हितथास्त्वितिलब्धव्यवस्थानोययातिर्ज्येष्ठंपुत्रमुवाच प्रतीच्छगृहाण ३८ मातामहेनशुक्रेणकृतारस्येसुरतमनुभवामि ३९ कुतोनोत्सहइतितत्रा

यदुंचतुर्वसुंचैवदेवयानीव्यजायत ॥ द्रुह्युंचानुंचपूरुंचशर्मिष्ठावार्षपर्वणी ३३ गर्भसंभवमासुर्याभर्तुर्विज्ञायमानिनी ॥ देवयानीपितुर्गेहंययौक्रोधविमूर्छिता ३४ प्रियामनुगतःकामीवचोभिरभिमंत्रयन् ॥ नप्रसादयितुंशेकेपादसंवाहनादिभिः ३५ शुक्रस्तमाहकुपितःस्त्रीकामानृतपूरुष ॥ त्वांजराविशतेमंदविरूपकरणीनृणाम् ३६ ययातिरुवाच ॥ अतृप्तोस्म्यद्यकामानांब्रह्मन्दुहितरिस्मते ॥ व्यत्यस्यैतांयथाकामंवयसायोभिधास्यति ३७ श्रीशुकउवाच ॥ इतिलब्धव्यवस्थानःपुत्रंज्येष्ठमवोचत ॥ यदोतातप्रतीच्छेमांजरांदेहिनिजंवयः ३८ मातामहकृतांवत्सनतृप्तोविषयेष्वहम् ॥ वयसाभवदीयेनरंस्येकतिपयाःसमाः ३९ यदुरुवाच ॥ नोत्सहेजरयास्थातुमंतराप्राप्तयातव ॥ अविदित्वासुखंग्राम्यंवैतृष्ण्यंनैतिपूरुषः ४० तुर्वसुश्चोदितःपित्राद्रुह्युश्चानुश्चभारत ॥ प्रत्याचख्युरधर्मज्ञाह्यनित्येनित्यबुद्धयः ४१ अपृच्छत्तनयंपुत्रंवयसोनंगुणाधिकम् ॥ नत्वमग्रजवद्वत्समांप्रत्याख्यातुमर्हसि ४२ पूरुरुवाच ॥ कोनुलोकेमनुष्येंद्रपितुरात्मकृतःपुमान् ॥ प्रतिकर्तुंक्षमोयस्यप्रसादाद्विंदतेपरम् ४३ उत्तमश्चिंतितंकुर्यात्प्रोक्तकारीतुमध्यमः ॥ अधमोऽश्रद्धयाकुर्यादकर्त्तोच्चरितंपितुः ४४ इतिप्रमुदितःपूरुःप्रत्यगृह्णाज्जरांपितुः ॥ सोपितद्वयसाकामान्यथावज्जुजुषेनृपः ४५ सप्तद्वीपपतिःसम्यक्पितृवत्पालयन्प्रजाः ॥ यथोपजोषंविषयान्जुजोषाव्याहतेंद्रियः ४६ देवयान्यप्यनुदिनंमनोवाग्देहवस्तुभिः ॥ प्रेयसःपरमांप्रीतिमुवाहप्रेयसीरहः ४७ अयजद्यज्ञपुरुषंक्रतुभिर्भूरिदक्षिणैः ॥ सर्वदेवमयंदेवंसर्ववेदमयंहरिम् ४८ यस्मिन्निदंविरचितंव्योम्नीवजलदावलिः ॥ नानेवभातिनाभातिस्वप्नमायामनोरथः ४९ तमेवहृदिविन्यस्यवासुदेवंगुहाशयम् ॥ नारायणमणीयांसंनिराशीरजयत्प्रभुः ५० एवंवर्षसहस्राणिमनःषष्ठैर्मनःसुखम् ॥ विदधानोपिनातृप्यत्सार्वभौमःकदिंद्रियैः ५१ इतिश्रीभागवतेनवमस्कंधेययातिचरितेपंचदशोध्यायः ॥ १५ ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥

ह अविदित्वेति अविदित्वा अननुभूय वैतृष्ण्यंवैराग्यं ४० प्रत्याचख्युःनिराकृतवंतःअनित्येक्षणभंगुरे ४१ वयसोनंन्यूनंनिष्ठंममाज्ञाम् ४२ आत्मकृतःशरीरोत्पादनकर्तुः परलोकं ४३ उच्चारितंगुरुवनिर्गतंमलम् ४४ जुजुषेबुभुजे ४५ यथोपजोषंयथासुखम् ४६ प्रेयसःभर्तुः ४७ ४८ स्वप्नमायामनोरथवदनित्यफलमस्वतंत्रंच ४९ निराशीःकृच्छ्रदांद्र।यणादितपोभिजयत्हितः ५० कदिंद्रियैःदुष्टेंद्रियैः ५१ इतिश्रीभागवतेनवमस्कंधेविजयध्वजकृतटीकायांपंचदशोध्यायः ॥ १५ ॥

आन्यापदेशेनस्ववृत्तांतंशिक्षाकरणत्वेनस्वभार्यायैकथयति सइत्थमिति स्त्रैणःस्त्रीजितःसययातिरित्थंआत्मज्ञाननाशहेतून्कामान्विषयान्आचरन्भुंजानःआत्मनोपह्नवंनिश्यसुखहानिलक्षणनाशंवि ज्ञायनिर्विण्णोविरक्तएतांवक्ष्यमाणत्वेनबुद्धिसन्निहितांगाथाम् स्वकीयवृत्तांतरूपामगायतेत्यन्वयः १ भार्गविभृगुकुलजाते मद्विधैःमादृशैःस्त्रीजितैःपुरुषैःआचरितांवनेधीराःनिवृत्तिमार्गलक्षणेस्थिराः मुक्तसंगाःज्ञानिनोयस्यग्रामवासिनोगृहस्थस्याचरणमनुशोचंति अहोलोकस्यमौढ्यमितिपरिखिन्नाभवंतीत्यर्थः तस्यममसदृशैराचरितामित्यर्थः २ बस्तोऽजःप्रियंस्त्रीजनंकूपेसंसारलक्षणे अत्रा जसब्देनप्रकृतिपुरुषावुपलक्ष्येते ३ तीर्थंकूपजलेअवतारस्थलेवा निर्वर्त्यकिंचिदवतीर्यविषाणाग्रेणोद्धृत्यरोधसिकूपतीरेन्यधनतामितिशेषः तीर्थंमंत्राद्युपायःपायेशास्त्रेष्वंभासिपावने पात्रोपाध्याव तारेपुस्त्रीपुष्पयोनियज्ञयोरितियादवः उपायंवानिर्वर्त्यंउद्धरणोपायंदृष्ट्वेत्यर्थः ४ कांतविषयःकामोयासामस्तीतिकांतकामिन्यःश्मश्रुलंबहुलश्मश्रुयुक्तं मीढ्वांसंरेतःसेकसमर्थं यावकोविदंयावान्नभक्ष णपाटवोपेतं यावःयावकःकुल्माषःतद्भक्षणेशक्तइतिवायावःकेवलकुल्माषबलकेतोपवर्णितेइतियामकोविदमितिपठित्वामैथुनकुशलमितिव्याख्यानंमीढ्वांसमित्यनेनगतार्थत्वात्पुनरुक्तता असंप्रदाय

श्रीशुकउवाच ॥ सइत्थमाचरन्कामांस्त्रैणोपह्नवमात्मनः ॥ बुध्वाप्रियायैनिर्विण्णोगाथामेतामगायत १ शृणुभार्गव्यमूंगाथांमद्विधाचरितांभुवि ॥ धीरा यस्यानुशोचंतिवनेग्रामनिवासिनः २ बस्तएकोवनेकश्चिद्विचिन्वन्प्रियमात्मनः ॥ ददर्शकूपेपतितांस्वकर्मवशगामजाम् ३ तस्याउद्धरणोपायंबस्तःका मीविचिंतयन् ॥ निर्वर्त्यतीर्थंउद्धृत्यविषाणाग्रेणरोधसि ॥ सोत्तीर्यकूपात्सुश्रोणीतमेवचकमेकिल ४ तयावृतंसमुद्वीक्ष्यबह्व्योजाःकांतकामिनीः ॥ पीवानंश्मश्रुलंप्रेष्ठंमीढ्वांसंयावकोविदम् ५ सएकोजव्रषस्तासांबह्वीनांरतिवर्धनः ॥ रेमेकामग्रहग्रस्तआत्मानंनावबुद्ध्यत ६ तमेवप्रेष्ठतमयारममाण मजान्यया ॥ विलोक्यकूपसंलग्नानामृष्यद्बस्तकर्मतत् ७ तंदुर्हृदंसुहृद्रूपंकामिनंक्षणसौहृदम् ॥ इंद्रियाराममुत्सृज्यस्वामिनंदुःखितायया ८ सोपि चानुगतःस्त्रैणःकृपणस्तांप्रसादितुम् ॥ कुर्वन्विलिविलाकारंनाशक्नोत्पथिसंधितुम् ९ तस्यतत्रद्विजःकश्चिदजस्वाम्यच्छिनद्रुषा ॥ लंबंतंवृषणंभूयःसंद धेर्थाययोगवित् १० संवृद्धवृषणःसोपिह्यजयाकूपलब्धया ॥ कालंबहुतिथंभद्रेकामैर्नाद्यापितुष्यति ११ तथाहंकृपणःसुभ्रुभवत्याःप्रेमयंत्रितः ॥ आत्मानंनाभिजानामिमोहितस्तवमायया १२

ज्ञाताचात्रप्रसज्येत भेजंमेषमित्यपितद्वद्जशब्दस्यमेषवाचित्वाश्रवणात् ५ मीढ्वांसमितिपदंविवृण्वन्नाह सएकइति ६ रूपसंलग्नारूपगुणसंपन्नाकुचसंलग्नेतिपाठेकुचभरसन्नतमध्या प्रेष्ठतम याप्रियतमयाअन्ययाऽजयाएवंरममाणंतंविलोक्य बस्तस्यममतत्कर्मअन्यासक्तिलक्षणंनामृष्यदित्यन्वयः ७ अनेनात्मकटाक्षीकारेणस्वामिनशुक्रमित्येषोर्थःसूच्यते अन्यत्राजमं ८ सोपिबस्तोपिपयातिगन्दवाच्योपिविलिविलाकारंमैथुनानुकरणलक्षणतिर्यक्कंठोत्थितशब्दविशेषं अन्यत्तत्सत्कारादिशब्दंचकुर्वन्संधितुंतथानंकर्तुं तिर्यक्विलिविलाकारोमैथुनानुकृतौरसइत्यभि धानम् ९ अजस्वामीशुक्रःअन्यत्रप्रसिद्धः लंबंतंवृषणंउपभोगसमर्थं अच्छिनत्शस्त्रेणेतिशेषः अन्यत्रजराकरणेनपुत्रेषुजरावत्स्वासनोपायेनसदधेभोगसामर्थ्यमापादितवान् योगवित्संधानो पायज्ञःअन्यत्रजराव्यत्ययसनोपायकरणेन अर्थायमैथुनलक्षणप्रयोजनाय १० अजयारममाणइतिशेषः ११ आत्मानात्मान्यानंस्वरूपंमायायाविभ्रमलक्षणयाखुरतैश्वर्यात्वलक्षणया १२

कामभोहनाक्षविद्धस्यपुंसःनैतच्चित्रमित्याह यत्पृथिव्यामिति व्रीहियवंइत्येकवद्भावः व्रीह्यादयःमनःप्रीतिंनपूरयंतिनदुह्यंति दुहप्रपूरणइतिप्रपूरणंनामौधसोरिक्तीकरणंभांडवल्लक्षणपात्रस्यपूर्णीकर णमित्यतःस्त्रीपुंसयोरपिकामभोगादिनालंबुद्धिर्नास्तीतिभावः १३ ननुप्रावृड्डुपरमेनदीजलह्रासवत्कामानामुपभोगेनशांतिःस्यादितितत्राह नेति कामःतृष्णाकामानांविषयाणांहविषाज्येन हवि र्गव्येघृतेतोयेहेऽग्निर्कांचनचेतनइति कृष्णवर्त्माग्निः १४ नन्वेवंचेत्साधनाभावेनकदापिमुक्तिर्नस्यादितितत्राह यदेति यदासर्वभूतेषुअमंगलंपापसाधनंहिंसालक्षणंभावंस्वभावंनकुरुतेयस्तदातस्य समदृष्टेःसर्वस्यब्रह्माधीनत्वेनतत्तद्योग्यताविशिष्टवस्तुदर्शिनःपुंसःसर्वाःदिशः सुखमयतेभापयंतीतिसुखमयाःसुखप्रधानावा एकस्यामपिदिश्यणुमात्रंदुःखंनास्तीत्यर्थः भावःपदार्थसत्ताया मात्मयोनिस्वभावयोरितियादवः १५ ननुस्थाविर्येनिराहारत्वेवाविषयतृष्णात्यागेनमुक्तिःकिंस्यादितितत्राह येति सत्यंतृष्णात्यागेमुक्तिःस्यात्सएवनास्वितस्मात्ज्ञानेनतत्सुत्यागोतस्तदेवा पाद्यामित्यर्थः शर्मकामःसुखार्थी वयसाअनशनेनवाजीर्यतोजरामाप्नुवतः १६ अविविक्तासनःएकशय्यासनः १७ स्वतोविषयतृष्णानशाम्यतीत्यत्रस्वानुभवमाह पूर्णमिति १८ अतःकिंफलित

यत्पृथिव्यांव्रीहियवंहिरण्यंपशवःस्त्रियः ॥ नदुह्यंतिमनःप्रीतिंपुंसःकामहतस्यमे १३ नजातुकामःकामानामुपभोगेनशाम्यति ॥ हविषाकृष्णवर्त्मैव भूयएवाभिवर्धते १४ यदानकुरुतेभावंसर्वभूतेष्वमंगलम् ॥ समदृष्टेस्तदापुंसःसर्वाःसुखमयादिशः १५ यादुस्त्यजादुर्मतिभिर्जीर्यतोयानजीर्यते ॥ तांतृष्णांदुःखनिवहांशर्मकामोद्रुतंत्यजेत् १६ मात्रास्वस्रादुहित्रावानाविविक्तासनोभवेत् ॥ बलवानिंद्रियग्रामोविद्वांसमपिकर्षति १७ पूर्णंवर्षसहस्रंमेवि षयान्सेवतोसकृत् ॥ तथापिचानुसवनंतृष्णातेषूपजायते १८ तस्मादेतामहंत्यक्त्वाब्रह्मण्याधायमानसम् ॥ निर्द्वंद्वोनिरहंकारश्चरिष्यामिमृगैःसह १९ दृष्टंश्रुतमसद्विद्वान्नानुध्यायेन्नसंविशेत् ॥ संसृतिंचात्मनाशंचतत्रविद्वान्सआत्मदृक् २० ॥ श्रीशुकउवाच ॥ इत्युक्त्वानाहुषोजायांतदीयंपूरवेवयः ॥ दत्वा स्वांजरसंतस्मादाददेविगतस्पृहः २१ दिशिदक्षिणपूर्वस्यांद्रुह्युंदक्षिणतोयदुम् ॥ प्रतीच्यांतुर्वसुंचक्रेउदीच्यामनुमीश्वरम् २२ भूमंडलस्यसर्वस्यपूरुम र्हत्तमंविशाम् ॥ अभिषिच्याग्रजांस्तस्यवशेस्थाप्यवनंययौ २३ आम्रेडितंवर्षपूगान्षड्वर्गंविषयेषुसः ॥ क्षणेनमुमुचेनीडंजातपक्षइवद्विजः २४ सतत्र निर्मुक्तसमस्तसंगआत्मानुभूत्याविधुतत्रिलिंगः ॥ परेमलेब्रह्मणिवासुदेवेलेभेगतिंभागवतींप्रतीतः २५

मितितत्राह तस्मादिति मृगयंतेतत्त्वमितिमृगाःज्ञानिनस्तैःसहअरण्यचरैःहरिणादिभिर्वातपश्चरिष्यामीत्यर्थः १९ दृष्टश्रुतत्यागेनादृष्टाश्रुतसुखापकःकुशलःप्रयतते अरण्येकायक्लेशंविद्वानितितत्राह दृष्टमिति दृष्टंराज्यादिविभवं श्रुतं स्वर्गादिमंगलमित्युभयमसत्क्षणभंगुरंविद्वान्तन्नानुध्यायेत्तद्विषयाचिंतानकार्या नसंविशेत्भोगलक्षणप्रवेशोनकर्तव्यइत्यन्वयः कुतइतितत्राह संसृतिमिति त त्रानुध्यानसंवेशयोःसतोःसंसारंआत्मनाशंस्वरूपज्ञाननाशंविद्वान्यःसआत्मदृगात्मज्ञानीत्युच्यतइत्यन्वयः ध्यायतोविषयान्पुंसःसंगस्तेषूपजायतेइत्यादेःअनेनदृष्टश्रुतसुखस्यसदातनत्वंविद्वान्बालि शोयतांस्यदुःखोदर्कत्वज्ञानीपश्यतीतिज्ञायते २० तदीयंपूरोर्विद्यमानं २१ दक्षिणपूर्वस्यांआग्नेय्यां ईश्वरंराजानम् २२ विशांप्रजानामर्हत्तमंपूज्यतमंस्थापयित्वा २३ शब्दादिविषयेषुआ म्रेडितमभ्यस्तंपडिंद्रियवर्गंमुमुचे विषयादाहृत्यभगवद्विषयंचकारेत्यर्थः आत्मानुभूत्यापरमात्मापरोक्षज्ञानेनाविधुतात्रिभिःसत्वादिकैर्गुणैर्निर्मितंलिंगमभिमानलक्षणंयस्यसतथा विध्वस्ताध्या त्मिकाधिभौतिकाधिदैविकोलिंगोवाभागवतीभागवतधर्मलभ्यांगतिंमुक्त्यवस्थांप्रतीतः कोविदः २५

प्रस्तोभर्वचनम् २६ २७ लिंगंशरीरंत्यधुनोदमुच्र् २८ नमस्तुभ्यमितिजपित्वेतिशेषः २९ ॥ इतिश्रीभागवतेमहापुराणेविजयध्वजकृतटीकायांशोडशोध्यायः ॥ १६ ॥ यत्रपुरोर्वंशेजाज्ञिरेतेषु केचनराजर्षयोभवंति राजवंश्याःकेचनब्रह्मवंशगाश्चभवंति वंशेभवा वंश्याः १ १ ३ तस्यरौद्राश्वस्यऋतेय्वादयोदशपुत्राः ४ जगदात्मनःजगद्व्याप्यस्थितस्तोमुख्यस्यप्राणस्य ५ ६ क

श्रुत्वागाथांदेवयानीमेनेप्रस्तोभमात्मनः ॥ स्त्रीपुंसोःस्नेहवैक्लव्यात्परिहासमिवोदितम् २६ सासंनिवासंसुहृदांप्रपायामिवगच्छताम् ॥ विज्ञायेश्वरतंत्राणांमायाविरचितंप्रभो २७ सर्वत्रसंगमुत्सृज्यस्वप्नौपम्येनभार्गवी ॥ कृष्णेमनःसमावेश्यव्यधुनोल्लिंगमात्मनः २८ नमस्तुभ्यंभगवतेवासुदेवाय वेधसे ॥ सर्वभूताधिवासायशांतायबृहतेनमः ॥ २९ ॥ इतिश्रीभागवतेम०नव०ययातिचरितेषोडशोध्यायः ॥ १६ ॥ श्रीशुकउवाच ॥ पूरोर्वंशंप्रवक्ष्यामियत्रजातोसिभारत ॥ यत्रराजर्षयोवंश्याब्रह्मवंश्याश्चजज्ञिरे १ जनमेजयोभूत्पूरोस्तुप्रचिन्वांस्तत्सुतस्ततः ॥ प्रवीरोथनमस्युर्वैतस्माच्चारुपदोभवत् २ तस्यसुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः ॥ शंयातिस्तस्यहंयातीरौद्राश्वस्तत्सुतःस्मृतः ३ ऋतेयुस्तस्यकक्षेयुःस्थंडिलेयुःकृतेयुकः ॥ जलेयुःसंततेयुश्च धर्मसत्यव्रतेयवः ४ दशैतेप्सरसःपुत्रावनेयुश्चावमःस्मृतः ॥ घृताच्यामिंद्रियाणीवमुख्यस्यजगदात्मनः ५ ऋतेयोरंतिनारोभून्त्रयस्तस्यात्मजानृप ॥ सुमतिर्ध्रुवोप्रतिरथःकण्वोप्रतिरथात्मजः ६ तस्यमेधातिथिस्तस्मात्प्रस्कण्वाद्याद्विजातयः ॥ पुत्रोभूत्सुमतेरैभ्योदुष्यंतस्तत्सुतोमतः ७ दुष्यंतोमृगयांयातःकण्वाश्रमपदंगतः ॥ तत्रासीनांस्वप्रभयामंडयंतींरमामिव ८ विलोक्यसद्योमुमुहेदेवमायामिवस्त्रियम् ॥ बभाषेतांवरारोहांभटैःकतिपयैर्वृतः ९ ॥ तद्दर्शनप्रमुदितःसन्निवृत्तपरिश्रमः ॥ पप्रच्छकामसंतप्तःप्रहसन्श्लक्ष्णयागिरा १० कात्वंकमलगर्भाभेकस्यासिहृदयंगमे ॥ किंवाचिकीर्षितंत्वत्रभवत्याविजनेवने ११ व्यक्तंराजन्यतनयांवेद्म्यहंत्वांसुमध्यमे ॥ नहिचेतःपौरवाणामधर्मेरमतेक्वचित् ॥ १२ ॥ शकुंतलोवाच ॥ विश्वामित्रात्मजैवाहंत्यक्तामेनकयावने ॥ वेदैतद्भगवान्कण्वोवीरकिंकरवामते १३ आस्यतामरविंदाक्षगृह्यतामर्हणंचनः ॥ भुज्यतांसंतिनीवाराउष्यतांयदिरोचते १४ ॥ दुष्यंतउवाच ॥ उपपन्नमिदंसुभ्रुजातायाःकुशिकान्वये ॥ स्वयंहिवृणुतेराज्ञांकन्यकाःसदृशंवरम् १५ ॥ श्रीशुकउवाच ॥ ओमित्युक्तेयथाधर्ममुपयेमेशकुंतलाम् ॥ गांधर्वविधिनाराजादेशकालविधानवित् १६ अमोघवीर्योराजर्षिर्महिष्यांवीर्यमादधे ॥ श्वोभूतेस्वपुरंयातःकालेनासूतसासुतम् १७ कण्वःकुमारस्यवनेचक्रेसमुदिताःक्रियाः ॥ बध्वामृगेंद्रांस्तरसाक्रीडतिस्मसबालकः १८ तंदुरत्ययविक्रांतमादायप्रमदोत्तमा ॥ हरेरंशांशसंभूतंभर्तुरंतिकमागमत् १९

प्वाद्याःराजवंश्याःप्रस्कण्वाद्याःब्रह्मवंश्याः ७ ८ ९ १० कमलगर्भाभेपद्मोदरप्रभे । हृदयंगमेसुंदरि ११ ११ १३ अर्हणंअर्घ्यादिपूजानीवाराःदेवव्रीहयःतैरापादितमन्नमितिशेषः १४ १५ आसेराक्षसो गांधर्वइत्यादयोवहवोविवाहविधयःसंति तेषुगांधर्वविधिनास्वयंवरलक्षणेन १६ १७ समुदिताःविघ्युक्ताः १८ तंकुमारं । प्रमदोत्तमाशकुंतला १९

अशरीरिणीवाक्दैवीवाणीआह गुह्यभावयाराजानामितिशेषः त्रिभाषांयोनजानातिरीतीनांशतमेवचेत्युक्तेः । पुराणेषुभाषात्रयस्यन्यायप्रमाणत्वात् २० यथाकाष्ठशालाकुल्लींस्थितामिशक्तयुद्दीपकत्वेनाग्निराधारमात्रंभस्त्राभसमक्षणदीस्योरितिशतोस्तथामाताभस्त्रैतिरितंवीर्यआदायकरचरणावयवविशेषरेहाकारेणपरिणामप्राप्तस्यवीर्यस्यप्रथममाधारभूतस्थान्मातु:पुत्रत्वमौपचारिक । नहि कस्यमुख्यपुत्रत्वमितितत्राह पितुरेवपुत्रइति । मुख्यपुत्रत्वंपितुरेव कुतइत्यत्राह यस्मादिति सापितैवपुत्रोजातइतियस्मात्तस्मात्सपुत्रःपितुरेवेत्यर्थः । आत्मावैपुत्रनामासीतिश्रुतेः । तज्जायाजायाभवतियदस्याजायतेपुनःइतिच । पुत्रदेहस्यापिपितृदेहैकदेशस्योपादानत्वद्योतनायपितुरित्युक्त । अन्यथापितापुत्रइतिप्रयोगस्यापिसंभवात् । प्रकृतेकिमपेक्षितमितितत्राह भरस्वेति । भरस्वस्वीकुरु अन्यपुत्रंकथंस्वीकरोमीत्यतउक्तं दौष्यंतिमितिऔरसंपुत्रमित्यर्थः । अतःशकुंतलास्वैरिणीतिमावमंस्थाःअवज्ञातांनकुरु २१ ननुपुत्रेणममकिंप्रयोजनंस्यायेनभार्यास्यादितितत्राह रेतोधाइति पुत्रपुत्रः रेतोधाःरेतोधातारंपितरंयमक्षयंयोऽक्षयोऽनंतोलोकस्तंवैकुंठादिकंनयतिप्रापयति । यस्मात्पुत्रमनुशिष्टलोकमाहुस्तस्मादेनमनुशासतीतिहिश्रुतिः । नरदेवदुष्यंत दौष्यंतिंपुत्रंस्वीकुर्वितिशेषः । मयानाहितगर्भंजातपुत्रंकथंदौष्यंतिमितिवदतीतितत्राहत्वंचेति । चशब्दएवार्थे त्वमेवास्यगर्भस्यधाताआधानकर्ता । कआहेतितत्राह सत्यमिति । शकुंतलासत्यंयथार्थमेव नानृतमाह । यःपुत्रःसरेतोधातारमक्षयंनयतीतिवा सुप्तिङुपग्रहलिंगनराणामितिसूत्राद्वचत्ययोयुक्तः । अथवास्वीकारेणानर्थमाह रेतोधाइति । रेतोधाभवान्पुत्रंयमक्षयमृत्युलोकनयतिमृतमपंकरोति अस्वीकारात् । तेनसत्पुत्रहत्यादोषप्राप्तिस्तवस्यादतस्तद्भयादपिस्वीकुर्वित्यर्थः । ननुनाहरेतोधाइतिनेत्याह त्वचेति । अथवातदुक्तंश्रुत्वास्वीकरोमिकिमतइत्यतस्तल्लक्षणमाह रेतोधाइति । यमयातिशिक्षयातिशाप्यमितिपयो

यदानजगृहेराजाभार्यापुत्रावनिंदितौ ॥ शृण्वतांसर्वभूतानांखेवागाहाशरीरिणी २० माताभस्त्रापितुःपुत्रोयस्माज्जातःसएवसः ॥ भरस्वपुत्रंदौष्यंतिंमावमंस्थाःशकुंतलाम् २१ रेतोधाःपुत्रंनयतिनरदेवयमक्षयम् ॥ त्वंचास्यधातागर्भस्यसत्यमाहशकुंतला २२ पितर्युपरतेसोभूच्चक्रवर्तीमहायशाः ॥ महिमागीयतेतस्यहरेरंशभुवोभुवि २३ चक्रंदक्षिणहस्तेस्यपद्मकोशश्चपादयोः ॥ ईजेमहाभिषेकेणसोभिषिक्तोधिराट्प्रभुः २४ पंचपंचाशतैर्मेध्यैर्गंगायामनुवाजिभिः ॥ दीर्घतमसंपुरोधाययमुनायामनुप्रभुः २५ अष्टसप्ततिमेध्याश्वान्बबंधप्रददेवसु ॥ भरतस्यहिदौष्यंतेरग्निःसाचीगुणेचितः २६

गुरुः क्षितिनिवासगत्योरितिक्षयोनिवासः । रेतोधा पुत्रंगुरुनिवासंनयतीतिन्यायात् भवानपिपुत्रंस्वीकृत्यगुरुकुलवासंप्राप्यनयतिन्यायशास्त्रादिविशारदंकरोतीत्यर्थः । त्वत्पुत्रत्वसंशयोमाभूदित्याह त्वंचेति । अथवारेतोधाःअक्षयमगतिमनन्याधारंपुत्रनयतिस्वाश्रयंकरोति । सपुत्रःतंरेतोधातारंअक्षयंलोकंनयतिअनन्याधारत्वेहेतुगर्भविशेषणमाह त्वचेति । अस्यसर्वस्यप्रमाणशकुन्तलावचनमित्याह सत्यमिति । द्वितीयाचप्रथमेत्यनुवर्ततेद्वितीयाविभक्तिःसप्तसुवर्ततइतिद्वितीयायाःप्रथमात्वसंभवात्पुत्रमित्यादेःप्रथमात्वंसमामाजिकं रेतोधाइत्यस्याद्विर्विपात्वचेत्यर्थः । माताभस्त्रातिलुतोपमंहिरण्यधान्यादिग्राहिणीपात्रीभस्त्रानामयथा तथाभर्तुराहितवीर्यधारिणीमातापुत्रस्यद्वारमात्रंपितृवीर्यात्मकत्वात्पितुरेवपुत्रइतिवायोजनाशेषःपूर्ववत् २२ पितरिदुष्यंतेउपरतेमृतेसति । सदुष्यंतपुत्रःभरस्वेत्युक्तत्वात्भरतोभरेणहरिणाततस्माद्वाभूमेर्भरंभरणंतनोतीतिवाशुभेरतत्वाच्चगुरुत्वलक्षणभारेणततत्वाद्वा चक्रवर्तीआज्ञयैवधर्मोधर्मशास्ताभूदित्यन्वयः २३ नाम्नामहाभिषेकेणाभिषिक्तइतिवा २४ कोमहाभिषेकोनामयज्ञइत्यतस्तत्स्वरूपमाह पचेति । गंगायामनुसमीपतीरेपंचपचाशतैपंचाभिःपंचाशताचदीर्घतमसंपुरोधायपुरोहितंकृत्वाप्रभुरुत्तमकल्पेनयष्टुंसमर्थः । पुनर्यमुनायांअनुतीरेअष्टसप्ततिमेध्याश्वान्बबंध तदादक्षिणावसु नराशिमेवप्रददौ । भरतस्येदंचसामर्थ्यमाह भरतस्येति । कैकेयीपुत्रव्यावृत्त्यर्थं दौष्यंतेरिति । भरतस्ययज्ञेअग्निरप्रभागनेतृत्वादग्निनामासाचीगुणेचितः सचिवगुणेकृतः । साचिव्यंकृतवानित्यर्थः २५ २६

दस्मिन्यज्ञे ब्राह्मणा बद्वद्वशः सहस्रं द्विसाहस्रं गा विभेजिरे विभज्य स्वीकृतवंतः दौष्यंतिः नृपस्तस्मिन्यज्ञे त्रयस्त्रिंशच्छतमश्वान् बद्ध्वा नृपान् विस्मापयन् विस्मितं कुर्वन् उरुमायं पामहतां मायिकं देवानां मायां निजमा मेच्छामत्यगात् कांक्षितादप्यधिकं दत्तवानित्यर्थः । यज्ञे विघ्नकरीमतिक्रांतवानितिवा २७ शुक्लदतः शुक्लदंतान् कृष्णान् मृगान् कृष्णमृगान् गजान्वा भद्रो गजो मृगश्चेति हलः । मष्णारे व्रतविशेषस्य समाप्तिलक्षणे कर्मणि क्रियमाणे तच्छेषः तीर्थविशेषे वा २८ पूर्वे नृपान उदायुः मापुः अपरे पश्चात्तनानप्राप्स्यंति इदानीं तनानामुवंतीति किमुवक्तव्यं । तत्र दृष्टांतमाह बाहुभ्यामिति । अग्निष्टोमादिसाधनमंतरेण केवलबाहु भ्यां स्वर्गं यथा न गच्छति तथा आकाशं त्रिदिवो व्योम त्रिदिव्यपीतियादवः २९ सकिरातादीन् म्लेच्छान ब्रह्मण्यान् ब्राह्मणविरोधिनो नृपानहन् ३० असुरांश्च जित्वा येन भरतेन देवाः स्वौकांसि स्वस्थानानि भे जिरे सः नाकाप्सरः पाणिभिः सुरैः रसातलं नीता देवस्त्रियः पुनराहरत् आनीतवान् ३१ त्रिनवसाहस्रीः समाः सप्तविंशतिसहस्रपरिमितान वर्षान् चक्रमाज्ञां चक्रं सैन्यं जलावर्तइत्यादि चक्रमाज्ञा रथांगयोरिति ३२ भ रतस्य वैराग्यप्रकारमाह सइति चक्रं राष्ट्रं प्राणान् इंद्रियाणि लोकपालानामैश्वर्यं स्वराज्यादिकं च मृषाना गाशिरस्कमिति मत्वा उपरराम उपरतव्यापारोभूत् । आब्रह्मस्तंबपर्यंतमसारं चाप्यनित्यकमित्यादि वाक्य प्रसिद्धिं सूचयति हेत्यनेन ग्रंथांतरेतिहासेवा ३३ इदानीं तस्य संतानप्रकारं कथयति तस्येते । वैदर्भ्यः विदर्भराजपुत्र्यः । ते पुत्राः अनुरूपा अनुकूला न भवंतीति इतिराज्ञा ईरिते कथिते ताः पत्न्यस्त्यागभ

सहस्रं बद्वशो यस्मिन्ब्राह्मणा गा विभेजिरे ॥ त्रयस्त्रिंशच्छतं ह्यश्वान्बध्वा विस्मापयन्नृपान् ॥ दौष्यंतिरत्यगान्मायां देवानां गुरुमायया २७ मृगांश्छुक्लदतः कृष्णा न्हिरण्येन परिष्कृतान् ॥ अदात्कर्मणि मष्णारे नियुतानि चतुर्दश २८ भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ॥ नैवापुर्नैव प्राप्स्यंति बाहुभ्यां त्रिदिवं यथा २९ किरातहूणान्यवनानंध्रान्कंकान्खशाञ्छकान् ॥ अब्रह्मण्यान्नृपांश्चाहन्म्लेच्छान्दिग्विजयेऽखिलान् ३० जित्वा पुरासुरान्देवा येन स्वौकांसि भेजिरे ॥ देवस्त्रियो रसां नीताः प्राणिभिः पुनराहरत् ३१ सर्वकामान्दुदुहतुः प्रजानां तस्य रोदसी ॥ समास्त्रिनवसाहस्रीर्दिक्षु चक्रमवर्तयत् ३२ स सम्राड्लोकपाला नामैश्वर्यमधिराट् श्रियम् ॥ चक्रं चास्खलितं प्राणान्मृषेत्युपरराम ह ३३ तस्यासन्नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसंमताः ॥ जघ्नुस्त्यागभयात्पुत्रान्नानुरूपा इ तीरिते ३४ तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ॥ मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ३५ अंतर्वत्न्यां भ्रातृपत्न्यां मैथुनाय बृहस्पतिः ॥ प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत् ३६ तं त्यक्तुकामां ममतां भर्तुस्त्यागविशंकिताम् ॥ नामनिर्वचनं तस्य श्लोकमेतं जगुः सुराः ३७ मूढे भर द्वाजमिमं भर द्वाजं बृह स्पते ॥ यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ३८

यात्पुत्रांस्तान् जघ्नुरित्यन्वयः ३४ नन्वेवं चेद्भरतस्य पुत्राभावेन परलोकक्षेमाभावप्रसक्तइतितत्राह तस्येति । तस्य वंशे एवं वितथे उत्सन्ने सति अनुरूपवंशवर्धनेन पुत्रेण भाव्यामीति तदर्थं पुत्रार्थं नाम्ना मरुत्स्तो मेन मरुद्विषययज्ञेन यजतस्तस्य भरतस्य मरुतो नाम देवाः गुणनिमित्तेन नाम्ना भरद्वाजं सुतमुपाददुः पुत्रत्वेन दत्तवंतः ३५ कस्मादस्य भरद्वाजाख्यं येनेतन्नामयुक्तः स्यादतस्तज्ज्ञापनाय तदुत्पत्तिप्रकारमाह अंतर्वत्न्यामिति । बृहस्पतेर्भ्राता उतथ्यस्तस्य पत्न्यां अंतर्वत्न्यां उतथ्याहितशुक्रं स्थानं गतायां ममतया अंतर्गर्भे गीतिनिवारितो मैथुनाय प्रवृत्तो बृहस्पतिः रेतो भवेदितिगर्भं शप्त्वा तिरस्कृत्य स्ववीर्यं तस्यां ममतायामसृ जत् अधादित्यन्वयः ३६ ततः किमभूदितितत्राह तमिति । तं बृहस्पतिगर्भं त्यक्तुकामां किमर्थं उतथ्याख्यभर्तृत्यागशंकितां ममतां प्रति तस्य सुतस्य नाम्नो निर्वचनं । येन ज्ञायते सतथा तं श्लोकं सुरा जगुरि त्यन्वयः ३७ भो मूढे इमं द्वाजं भर भृ भरणइतिधातुः नन्वयं उतथ्यस्य क्षेत्रजं बृहस्पतेर्जातमिति द्वयोः उतथ्यक्षेत्रबृहस्पत्योर्जातत्वात् द्वाजमिति भरद्वाजनामानं । क्रियापदस्य भृवतपद साधुत्वेन नाम त्वं स्कंद धइत्यादौ द्वंद्वं धरस्कंधेत्यर्थोपपत्तेः । पुरीमवस्कंदलुनीहि नंदनमुषाण रत्नानिहरामरांगनाइतिदर्शनात् । स्कंद गतिशोषणयोरिति धातोः तदुक्तं द्वाजं इमं भर उतथ्यस्य क्षेत्रजो बृहस्पतेर्जातहतिद्वयोर्जा

सत्वात्भरद्वाजइति । यद्वाबृहस्पतेर्वाजंप्रजार्थंसंततिंभरद्धरणशीलश्चइतिवा बृहस्पतेर्निमित्ताद्भरद्वाजंप्रजासंततिंभरन् । भरंश्चासौबृहस्पतेर्वाजश्चेतिविग्रहः । भरतेःशत्रिकरणत्वादभ्यासाभावः पितरौद्वःख। भरतमत्रांभ्राता बृहस्पतेर्वाजतोवाजः । वाशब्दस्यपूर्वनिपातोज्ञातव्यः । यथाबृहस्पतेर्जातःतथोचथ्यादपीत्यर्थः ततःपितृभर्तृत्वात्बृहस्पतेर्वाजत्वादयंभरद्वाजइति तदुक्तं बृहस्पतेर्वाजःप्रजासंतर्वावियेनभृतास बृहस्पतेर्भरद्वाजइति ३८ साममतासुरैरेवंचोद्यमानाभेरेतिप्रेर्यमाणापितमात्मजंदेवंबृहस्पतिपुत्रात्मनाजातंमत्वाभर्तृत्यागशंकयात्तमात्मजंव्यसृजत् । ततोऽवाद्वाजंकिमकुर्वन्नितितत्राह मरुतइति मरुतो देवास्तंभ्रातृगर्भंमाबिभ्रन्भृतवंतइतिभरद्वाजः । तदुक्तं भरद्वाजोमरुद्भिश्चभृतोजातोद्वयोर्यतइतिममतापावाजंगतंसुतंगर्भंमरुतोऽभरन्नित्यतोवाभरद्वाजइत्येषोर्थोऽप्यत्रज्ञातव्यः भृत्वाकिंकृतवंतीरितितत्राह दत्तइति भरतस्यान्वयेवितथेसति मरुद्भिरयंभरतायदत्तःपुत्रत्वेनेतिशेषःअस्यभरतपुत्रत्वानंतरवितथेतिनामांतरमपिज्ञातव्यं वितथस्यसुतान्मन्योरित्युत्तरवचनाच्चेति ॥ ४० ॥ इतिश्रीभागवते महापुराणेनवमस्कंधेविजयध्वजकृतटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥ ७ ॥ पूरोःसप्तदशमोदौष्यंतिःतस्यान्वयःकथ्यते वितथस्येत्यादिना ॥ १ ॥ भरतादशमोरंतिदेवःतस्यमहात्म्यंभगवन्महिमोपचितत्वात्कथयतिरंतिदेवस्येत्यादिना । चशब्दोदौष्यंतिमहिम्नासमुच्चीयते २ कीदृशंयशःशत्रुविजयाल्लब्धमुतास्मादितिसंशयंनिवारयतिवीतवित्तस्येति । वीतवित्तस्यवस्तु

चोद्यमानासुरैरेवंमत्वातंदेवमात्मजम् ॥ व्यसृजन्मरुतोबिभ्रन्दत्तोयंवितथेऽन्वये ३९ इतिश्रीभा०नवमस्कंधेपुरुवंशानुकीर्तनंनामसप्तदशोऽध्यायः॥१७॥

श्रीशुकउवाच ॥ वितथस्यसुतान्मन्योर्बृहत्क्षेत्रोजयस्ततः ॥ महावीर्योनरोगर्गःसंकृतिस्तुनरात्मजः १ गुरुश्चरंतिदेवश्चसंकृतेःपांडुनंदन ॥ रंतिदेवस्य हियशइहामुत्रचगीयते २ वीतवित्तस्यददतोलब्धंलब्धंबुभुक्षतः ॥ निष्किंचनस्यधीरस्यसकुटुंबस्यसीदतः ३ व्यतीयुरष्टचत्वारिंशदहान्यपिबतःकिल॥ घृतपायससंयावंतोयंप्रातरुपस्थितम् ४ कृच्छ्रप्राप्तकुटुंबस्यक्षुत्तृड्भ्यांजातवेपथोः ॥ अतिथिर्ब्राह्मणःकालेभोक्तुकामस्यचागमत् ५ तस्मैसंव्यभजत्सोन्नमादृत्यश्रद्धयान्वितः ॥ हरिंसर्वत्रसंपश्यन्सभुक्त्वाप्रययौद्विजः ६ अथान्योभोक्ष्यमाणस्यविभक्तस्यमहीपतेः ॥ विभक्तंव्यभजत्तस्मैवृषलायहरिंस्मरन् ७ यातेशूद्रेतमभ्यागादतिथिःश्वभिरावृतः ॥ राजन्मेदीयतामन्नंसगणायबुभुक्षते ८ सआतिथ्यावशिष्टंयद्बहुमानपुरःसरम् ॥ तच्चदत्त्वानमश्चक्रेश्वभ्यःश्वपतयेविभुः ९ पानीयमात्रमुच्छेषंतच्चैकपरितर्पणम् ॥ पास्यतःपुल्कसोभ्यागादपोदेह्यशुभस्यमे १० तस्यातिकरुणांवाचंनिशम्यविपुलश्रमाम् ॥ कृपयाभृशसंतप्तइदमाहामृतंवचः ११

शून्यस्यदरिद्रस्येत्यर्थः धनाभावेदानंकथंघटतइतितत्राह लब्धमिति । स्वयंबुभुक्षाभावाद्ददातिनतुकर्तव्यत्वेनेतितत्राह बुभुक्षतइति । भोगेच्छुश्चेत्संस्वःअन्यथातदसंभवादितितत्राह निष्किंचनस्येति तर्हिभिक्षुवत्कृपणहृत्पतोवाहनिष्किंचनस्येतिभक्षणस्यकथमवगतंतादितितत्राह धीरस्येति अतद्विषयचिंतानास्तीत्यनेनाह धीरस्येति । पिपासहरमतेनतुत्रियेतिधीरस्तस्यएकाकिनःकाचिंताइति तत्राह सकुटुंबस्येति । अतएवसीदतः विम्यतःशीर्णस्यवा ३ शीर्णत्वेनिमित्तमाह अपिबतइति घृतंचपायसंचगोधूमान्नंचघृतपायससंयावम् । प्रातरुपस्थितंप्राप्तमेतद्भोक्तुकामस्य कालेभोजनसमये ४ ५ आहृत्य आनीय सर्वत्रव्याप्तं । ब्राह्मणायविभक्तस्यान्नस्यशेषंभोक्ष्यमाणस्यभोक्तुकामस्य । महीपतेरन्योतिथिरागमत् । पूर्वविभक्तमन्नंसगणायगणसहितायान्नमश्चक्रेहरयेइतिशेषः ६ ७ ८ ९ घृतविकंदत्त्वापानीयमात्रमुच्छेषमवशिष्टंतदपिएकपरितर्पणं एकस्यतृप्तिकरंनतुबहूनांपास्यतःपातुकामस्यपुल्कसोगोमांसभक्षकः १० ११

महार्द्धियुक्तां अगणितसमृद्धिसंपन्नांयोगेश्वराणांगतिमणिमादिलक्षणांमहरादिलोकंवा नकामयेनवांछामिअपुनर्भवंमोक्षंवा तर्हिकास्मिन्कांक्षाइतितत्राह आर्तिमिति । येनदेहभाजोमयार्पितजलपानादि नाक्षुधादिनिमित्तदुःखरहिताभवंतिये तेनतेषामंतस्थितामार्तिमहं प्रपद्येइत्यन्वयः येनजलेनादुःखाःतत्तेभ्योदत्वातदार्तिमद्यहंप्रपद्यइतिवा १२ एवंभाषणमात्रेणकिंफलमितितत्राह क्षुत्तृडिति कृप णस्यजंतोर्जीवस्यजलार्पणेनजीवनप्रदजलदानेनसर्वेषांसुखंस्यात्तदार्तिर्ममास्त्विति जिजीविषोर्जीवितुमिच्छतःपुंसःक्षुत्तृडादयोनिवृत्ताभवंतीत्यन्वयः अनेनक्षुदादिमतः पुंसाजलादिदानेनदातुरपि तन्निवृत्तिस्तद्दानेतदाननिवृत्तिरित्यन्वयव्यतिरेकौद्रष्टव्यौ १३ पिपासयाम्रियमाणः १४ आत्मानं मायांमहिमोपेतं । महिमापिभगवदनुग्रहविजृंभितइत्याह विष्ण्वाविति १५ १६ ईश्वरालंबनंश्रीना

नकामयेहंगतिमीश्वराणांमहर्द्धियुक्तामपुनर्भवंच ॥ आर्तिंप्रपद्येऽखिलदेहभाजामंतःस्थितांयेनभवंत्यदुःखाः १२ क्षुत्तृट्श्रमोगात्रपरिश्रमश्चदैन्यंक्लमः शोकविषादमोहाः ॥ सर्वेनिवृत्ताःकृपणस्यजंतोर्जिजीविषोर्जीवजलार्पणेन १३ एवंप्रभाष्यपानीयंम्रियमाणःपिपासया ॥ पुल्कसायाददाद्धीरोनिसर्ग करुणोनृपः १४ तस्यत्रिभुवनाधीशाःफलदाःफलमिच्छताम् ॥ आत्मानंदर्शयांचक्रुर्मायांविष्णुविनिर्मिताम् १५ सर्वेतेभ्योनमस्कृत्यनिःसंगोविगत स्पृहः ॥ वासुदेवेभगवतिभक्त्याचक्रेमनःपरम् १६ ईश्वरालंबनंचित्तंकुर्वतोऽनन्यराधसः ॥ मायागुणमयीराजन्स्वप्नवत्प्रत्यलीयत १७ तत्प्रसंगानु भावेनरंतिदेवानुवर्तिनः ॥ अभवन्योगिनःसर्वेनारायणपरायणाः १८ गर्गाच्छिनिस्ततोगार्ग्यःक्षत्राद्ब्रह्मह्यवर्तत ॥ दुरितक्षयोमहावीर्यात्तस्यत्रय्यारु णिःकविः ॥ पुष्करारुणिरित्यत्रयेब्राह्मणगतिंगताः १९ बृहत्क्षत्रस्यहोत्रोस्माद्धस्तीयद्धास्तिनापुरम् २० अजमीढोद्विमीढश्चपुरुमीढश्चहास्तिनः ॥ अज मीढस्यवंश्याःस्युःप्रियमेधादयोद्विजाः २१अजमीढाद्बृहदिषुस्तस्यपुत्रोबृहद्धनुः ॥ बृहत्कायस्ततस्तस्यपुत्रआसीद्बृहद्रथः २२ तत्सुतोविशदस्तस्यश्येनजि त्समजायत ॥ रुचिराश्वोदृढहनुःकाश्योवत्सश्चतत्सुताः २३ रुचिराश्वसुतोयाजःपृथुसेनस्तदात्मजः ॥ पारस्ततनयोनीपस्तस्यपुत्रशतंत्वभूत् २४ अणुहो नामयस्तेषांज्येष्ठोवैसत्यकोनृप ॥ संकृत्व्यांशुककन्यायांब्रह्मदत्तमजीजनत् २५ योगेशोगविभार्यायांविष्वक्सेनमधात्सुतम् ॥ जैगीषव्योपदेशेनयोगतंत्रं चकारह २६ उदक्सेनस्ततस्तस्माद्भल्लादोबार्हदीषवः ॥ यवीनरोद्विमीढस्यकृतिमांस्तत्सुतस्ततः २७ नाम्नासत्यधृतिर्यस्माद्दृढनेमिःसुपार्श्वकृत् ॥ सु पार्श्वात्सुमतिस्तस्यपुत्रःसंततिमांस्ततः २८ कृतीहिरण्यनाभाद्योयोगंप्राप्यजगौद्विषट् ॥ संहिताःप्राच्यसाम्नांवैनीपोह्युग्रायुधस्ततः २९

रायणविषयंअनन्यराधसःभगवत्सिद्धिमंतरेणान्यासिद्धिशून्यस्यतदेकनिष्ठस्येत्यर्थः । अन्यस्माद्राधःसिद्धिर्मुक्तिःतयारहितस्यभगवतएवापेक्षिताशेषपुरुषार्थत्वतः प्रत्यलीयतनष्टाभूत् मायासंसारख्या १७ तत्परंतिदेवस्यप्रसंगःकथालक्षणःतस्यानुभावेनभावसूचकेन अनुभावःप्रभावेस्यान्निश्चयेभावसूचकइतियादवः १८ ब्रह्मब्राह्मणकुलं नाम्नादुरितक्षय.तस्यत्रैय्यारुणिःकविःपुष्करारुणिश्चेतित्रयः पुत्राः ये तेक्षत्रवंशेब्राह्मणगतिंब्राह्मणरूपतांगताः १९ भरतप्रपौत्रस्यबृहत्क्षत्रस्यवंशांतरमाह बृहत्क्षत्रस्येति नाम्नाहस्ती । यद्येनहास्तिनापुरंकृतमितिशेषः २० २१ २२ २३ २५ २६ २६ २७ २८ प्राच्यसाम्नांषट्दशसंहिताः जगौ २९

३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ॥ इतिश्रीभागवतेमहापुराणेनवमस्कंधेविजयध्वजकृतटीकायांअष्टादशोऽध्याय ॥ १८ ॥ ॥ ७ ॥ ॥ अहल्यासंततिमोच्यदिवोदाससंततिंकथयति मित्रायुरिति १ २ अजमीढसुतोयोऽन्योबृहदिषोरितिशेषः अन्यस्यांभार्यायांजातःनाम्नाऋक्षः ऋक्षाज्जातःसवरणोनाम ३ ४ ५ ६ ७ जरयाराक्षस्या ८ जाह्नवःजह्नोःपुत्रः ९ १० ११ १२ अप्यक्षरसाम्यान्निर्ब्रूयात्नवाएकेनाक्षरेणछंदांसिवियतीत्यतः शंतनुशब्दंनिर्वक्ति यंयमिति यस्यसंस्पर्शंतनोनिकराभ्यामितिशेषःशंतनुसुतनुपुत्राननयतीति शतनुंशंतंशां तनयातिप्रापयतीतिवा १३

तस्यक्षेम्यःसुवीरोथसुवीरस्यरिपुंजयः ॥ ततोबहुतिथोनामपुरुमीढोप्रजोभवत् ३० नलिन्यामजमीढस्यनीलःशांतिस्तुतत्सुतः ॥ शांतेःसुशांतिस्तत्पुत्र पुरजोर्कस्ततोभवत् ३१ हर्म्याश्वस्तत्सुतस्तस्यपंचासन्मुद्गलादयः ॥ यवीनरोबृहदिषुःकांपिल्यःसंजयस्ततः ३२ हर्म्याश्वःप्राहपुत्रामेपंचानांरक्षणायहि ॥ विषयाणामलमिमेइतिपंचालसंज्ञिताः ३३ मुद्गलाद्ब्रह्मनिर्वृत्तंगोत्रंमौद्गल्यसंज्ञितम् ॥ मिथुनंमुद्गलाच्चार्म्याद्दिवोदासःपुमानभूत् ३४ अहल्याकन्यकायस्यांशतानंदस्तुगौतमात् ॥ तस्यशतधृतिःपुत्रोधनुर्वेदविशारदः ३५ शरद्वांस्तत्सुतोयस्मादुर्वशीदर्शनात्किल ॥ शरस्तंबेऽपतद्रेतो मिथुनंतदभूच्छुभम् ३६ तद्दृष्ट्वाकृपयागृह्णाच्छंतनुर्मृगयांचरन् ॥ कृपःकुमारःकन्याचद्रोणपत्न्यभवत्कृपी ॥ ३७ ॥ इतिश्रीभागवतेनवमस्कंधेसोमवंशानुकीर्तनेऽष्टादशोध्यायः ॥ १८ ॥ श्रीशुकउवाच ॥ मित्रायुश्चदिवोदासाच्च्यवनस्तत्सुतोनृप ॥ सुदासःसहदेवोथसोमकोजंतुजन्मकृत् १ तस्यपुत्रशतंतेषांयवीयान्पृषतस्ततः ॥ द्रुपदोद्रौपदीतस्यधृष्टद्युम्नादयःसुताः २ धृष्टद्युम्नाद्धृष्टकेतुर्हर्म्याःपांचालकाइमे ॥ योऽजमीढसुतोह्यन्यऋक्षःसंवरणस्ततः ३ तपत्यांसूर्यकन्यायांकुरुक्षेत्रपतिःकुरुः ॥ परीक्षित्सुधनुर्जह्नुर्निषधाश्वःकुरोःसुताः ४ सुहोत्रोभूत्सुधनुषश्च्यवनस्तत्सुतःकृती ॥ वसुस्तस्योपरिचरोबृहद्रथमुखास्ततः ५ कुशांबुमत्स्यप्रत्यग्रचेदिपाद्याश्चचेदिपाः ॥ बृहद्रथात्कुशाग्रोभूदृषभस्तस्यतत्सुतः ६ जज्ञेसत्यहितोपत्यंपुष्पवांस्तत्सुतोजहुः ॥ अन्यस्यामपिभार्यायांशकलेद्वेबृहद्रथात् ७ तेमात्राबहिरुत्सृष्टेजरयाचाभिसंधिते ॥ जीवजीवेतिक्रीडंत्याजरासंधोभवत्सुतः ८ ततश्चसहदेवोभूत्सोमापिर्यच्छ्रुतश्रवाः ॥ परीक्षिदनपत्योभूत्सुरथोनामजाह्नवः ९ ततोविदूरथस्तस्मात्सार्वभौमस्ततोभवत् ॥ जयत्सेनस्तत्तनयोराचीकोऽतोह्ययुतानभूत् १० ततश्चाक्रोधनस्तस्माद्देवातिथिरमुष्यच ॥ ऋक्षस्तस्यदिलीपोभूत्प्रतीपस्तस्यचात्मजः ११ देवापिःशंतनुस्तस्यबाह्लीकइतिचात्मजाः ॥ पितृराज्यंसमुत्सृज्यदेवापिस्तुवनंगतः १२ अभवच्छंतनूराजाप्राङ्महाभिषसंज्ञितः ॥ यंयंकराभ्यांस्पृशतिजीर्णंयौवनमेतिसः १३ शांतिमाप्नोतिचैवाग्र्यांकर्मणानेनशंतनुः ॥ समाद्वादशतद्राष्ट्रेनववर्षयदाविभुः १४ शंतनुर्ब्राह्मणैरुक्तःपरिवेत्तायमग्रभुक् ॥ राज्यंदेह्यग्रजायाशुपुरराष्ट्रविवृद्धये १५

१४ दाराग्निहोत्रादियोगंयःकुरुतेऽग्रजेस्थितेसातिसपरिवेत्ता तदुक्तं दाराग्निहोत्रसंयोगंकुरुतेयोग्रजेस्थिते परिवेत्तासइत्युक्तःपरिवित्तिस्तुपूर्वजइति । अयंशंतनुरग्रभुक्अग्रजस्यदेवापेरग्रतोराज्यंभुंक्तेइतिदेवेनावर्षणमितिविज्ञायाग्रजायाशुराज्यंदेहीत्युक्तं १५

छंदयामासप्रसादयामासशंतनोःकश्चिन्मंत्रीअश्मकःविप्रान्प्युंक्तअयंदेवापिर्यथावेदमार्गाद्भ्रंशितोभवतितथाकर्तव्यमिति तन्मंत्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितःसःदेवापिःवेदवादातिवादान् वेदार्थनिंदालक्ष णान्दोषान्गिराब्रवीदित्यन्वयः १६ ततःदेवापौविभ्रष्टेसतिअनंतरमिंद्रदेवोवृष्टवान् योगंभगवद्ध्यानम् १७ १८ १९ रामःपरशुरामःदाशकन्यायांसत्यवत्यां २० नाम्नानिमित्तेन हतगंधर्वेणेति शेषःयस्यांदाशकन्यायां २१ कृष्णोव्यासःयतःकृष्णादिदं श्रीभागवतंअध्यगामधीतवानस्मि श्रीभागवतंस्तौति हित्वेति २२ काशिराजसुतेअंबिकांबालिकेबलाद्भीष्मेणानीते २३ यक्ष्मणाक्ष

एवमुक्तोद्विजैर्ज्येष्ठंछंदयामाससोब्रवीत् ॥ तन्मंत्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितोगिरा १६ वेदवादातिवादान्वैततोदेवोववर्षह ॥ देवापिर्योगमास्थायक लापग्राममाश्रितः १७ सोमवंशेकलौनष्टेकृतादौस्थापयिष्यति ॥ बाह्लीकात्सोमदत्तोभूद्भूरिर्भूरिश्रवास्ततः १८ शलश्चशंतनोरासीद्गंगायांभीष्मआ त्मवान् ॥ सर्वधर्मविदांश्रेष्ठोमहाभागवतःकविः १९ वीरयूथाग्रणीर्येनरामोपियुधितोषितः ॥ शंतनोर्दाशकन्यायांजज्ञेचित्रांगदःसुतः २० विचित्र वीर्योवरजोनाम्नाचित्रांगदोहतः ॥ यस्यांपराशरात्साक्षादवतीर्णोहरेःकला २१ देवगुप्तोमुनिःकृष्णोयतोहमिदमध्यगाम् ॥ हित्वास्वशिष्यान्पैलादी न्भगवान्बादरायणः २२ मह्यंपुत्रायशांतायपरंगुह्यमिदंजगौ ॥ विचित्रवीर्योथोवाहकाशिराजसुतेबलात् २३ स्वयंवरादुपानीतेअंबिकांबालिकेउभे तयोरासक्तहृदयोगृहीतोयक्ष्मणामृतः २४ क्षेत्रेऽप्रजस्यवैभ्रातुर्मात्रोक्तोबादरायणः ॥ धृतराष्ट्रंचपांडुंचविदुरंचाप्यजीजनत् २५ गांधार्यांधृतरा ष्ट्रस्यजज्ञेसुतशतंनृप ॥ तेषांदुर्योधनोज्येष्ठोदुःशलाचापिकन्यका २६ शापान्मैथुनरुद्धस्यपांडोःकुंत्यांमहारथाः ॥ जाताधर्मानिलेंद्रेभ्योयुधिष्ठिर मुखास्त्रयः २७ नकुलःसहदेवश्चमाद्र्यांनासत्यदस्रयोः ॥ द्रौपद्यांपंचपंचभ्यःपुत्रास्तेपितरोभवन् २८ युधिष्ठिरात्प्रतिविंध्यःश्रुतसेनोवृकोदरात् ॥ अर्जुनाच्छ्रुतकीर्तिस्तुशतानीकस्तुनाकुलिः २९ सहदेवसुतोराजन्श्रुतकीर्तिस्तथापरे ॥ युधिष्ठिरात्तुपौरव्यांदेवकोथघटोत्कचः ३० भीमसेनाद्धि डिंबायांकाल्यांशर्वगतस्ततः ॥ सहदेवात्सुहोत्रंतुविजयासूतपार्वती ३१ करेणुमत्यांनकुलोनिरमित्रंतथार्जुनः ॥ इरावंतमुलूप्यांवैसुतायांबभ्रुवाह नम् ३२ मणिपूरपतेःसोपितत्पुत्रःपुत्रिकासुतः ॥ तवतातःसुभद्रायामभिमन्युरजायत ३३ सर्वातिरथजिद्वीरउत्तरायांततोभवान् ॥ परीक्षीणेषुकुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ३४ त्वंचकृष्णानुभावेनसजीवोमोचितोंतकात् ॥ तवेमेतनयास्तातजनमेजयपूर्वकाः ३५ श्रुतसेनोभीमसेनउग्रसेनश्चवीर्यवान् जनमेजयस्त्वांविदित्वातक्षकान्निधनंगतम् ३६

परोक्षेण अग्रजस्यभ्रातुर्विचित्रवीर्यस्य विदुरंभुजिष्यायांजनयामास २४ २५ २६ मुनिशापान्मैथुनरुद्धस्यमैथुनमरणलक्षणविघ्नवतः २७ पंचपुत्राःपूर्वंजन्मानीपितरः २८ विविच्याह युधि ष्ठिरादिति नाकुलिःनकुलपुत्रः २९ ३० शर्वगतंशर्वंभ्रातं ३१ मणिपूरपतेःसुतायां ३२ सोपिबभ्रुवाहनोपिपुत्रिकासुतात्तस्यमणिपूरपतेःपुत्रोभूदितिशेषःतवतातःहत्पिता ३३ ३४ ३५ निधनं मरणमाप्य ३६

सर्वेषामविषयाग्नौहोष्यतिहोमंकरिष्यति तुरगमेधयाअश्वमेधयाअश्वमेधयज्ञेन ३७।३८ परंपूर्ण ३९ कौशांब्यांपुर्यांवत्स्यति वासंकरिष्यति ४० ४१ ४२ ४३ ४४ संस्थामवसानम् ४५ ४६ ४७ ४८ ४९ यचस्मादिपुंजयोभविता ५० इतिश्रीभागवतेमहापुराणेनवमस्कंधेवि०कृ०टीकायांएकोनविंशोध्यायः ॥ १९ ॥ ययातिपुत्रस्यानोर्वंशंविशिनष्टि अनोरिति १ २ ३ ४ अंगादयोबलेःपुत्राअंगादि



सर्पान्वैर पैयागाग्नौसहोष्यतिरुषान्दितः ॥ कावषेयंपुरोधायतुरंतुरगमेधया ३७ समंतात्पृथिवींसर्वांजित्वायक्ष्यतिचाध्वरैः ॥ तस्यपुत्रःशतानीको याज्ञवल्क्यात्त्रयींपठन् ३८ अस्त्रज्ञानंक्रियाज्ञानंशौनकात्परमेष्यति ॥ सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ३९ विसंभकृष्णस्तस्यापिनेमिच क्रस्तुतत्सुतः ॥ गजाह्वयेहृतेनद्याकौशाम्ब्यांसाधुवत्स्यति ४० उक्तस्ततश्चित्ररथस्तस्माच्छुचिरथःसुतः ॥ तस्माच्चवृष्टिमांस्तस्यसुषेणोथमहीपतिः ४१ सुनीथस्तस्यभविताऩृचक्षुर्यत्सुखीनलः ॥ पारिप्लवःसुतस्तस्मान्मेधावीसुनयात्मजः ४२ नृपंजयस्ततोदुर्वस्तिमिस्तस्माज्जनिष्यते ॥ ततोबृहद्र थस्तस्माच्छतानीकःसुदासजः ४३ शतानीकाद्दुर्दमनस्तस्यापत्यंमहीनरः ॥ दंडपाणिर्निमिस्तस्यक्षेमकोभवितानृपः ४४ ब्रह्मक्षत्रस्यवैयोनिर्वंशोदे वर्षिसत्कृतः ॥ क्षेमकंप्राप्यराजानंसंस्थांप्राप्स्यतिवैकलौ ४५ पापानिकीर्तनादेषांविलयंयांतिकृत्स्नशः ॥ अथमागधराजानोभाविनोयेवदामि ते ४६ भवितासहदेवस्यसोमापिर्यत्सुतश्रवाः ॥ ततोयुतायुस्तस्यापिनिरमित्रोथतत्सुतः ४७ सुनक्षत्रःसुनक्षत्राद्बृहत्सेनोथकर्मजित् ॥ ततःसुतंज योविप्रःशुचिस्तस्यभविष्यति ४८ क्षेमोथसुव्रतस्तस्माद्धर्मसूत्रःसमस्ततः ॥ द्युमत्सेनोथसुमतिःसुबलोजनिताततः ४९ सुनीथःसत्यजिदथविश्वजिद्यद्रि पुंजयः ॥ बार्हद्रथाश्चभूपालाभाव्याःसाहस्रवत्सरम् ॥ ५० ॥ इतिश्रीभागवतेनवमस्कंधेसोमवंशचरितेएकोनविंशोध्यायः ॥ १९ ॥ श्रीशुकउवाच ॥ अनोःसभानरश्चक्षुःपरेक्षुश्चत्रयःसुताः ॥ सभानरात्कालनरःसंजयस्तत्सुतस्ततः १ जनमेजयस्तस्यपुत्रोमहाशीलोमहामनाः ॥ उशीनरस्तितिक्षुश्च महामनसआत्मजौ २ शिबिर्वनःक्रमिर्दक्षश्चत्वारोशीनरात्मजाः ॥ वृषदर्भःसुवीरश्चमद्रःकैकेयआत्मजाः ३ शिबेश्चत्वारएवासंस्तितिक्षोश्चरुषद्रथः ॥ ततोहेमोथसुतपाबलिःसुतपसोभवत् ४ अंगवंगकलिंगाद्याःसुह्मपुंड्रांध्रसंज्ञिताः ॥ जज्ञिरेदीर्घतपसोबलेःक्षेत्रेमहीक्षितः ५ चक्रुःस्वनाम्नाविषयान्षडिमान्प्राच्यकानिह ॥ खनपानोंगतोजज्ञेतस्माद्दिविरथस्ततः ६ सुतोधर्मरथोयस्यजज्ञेचित्ररथोऽप्रजः ॥ रोमपादइतिख्यातस्तस्मैदशरथःसखा ७ शां तांस्वकन्यांप्रायच्छदृष्यशृंगउवाहताम् ॥ देवेऽवर्षतियंरामाआनिन्युर्हरिणीसुतम् ८ वाद्यसंगीतवादित्रैर्विभ्रमालिंगनार्हणैः ॥ सतुराज्ञोनपत्यस्यनिरू प्येष्टिंमरुत्वतः ९ प्रजामदाद्दशरथोयेनलेभेऽप्रजःप्रजाः ॥ चतुरंगोरोमपादात्पृथुलाक्षस्तुतत्सुतः १०

विषयसमानाइतिज्ञायंवेक्षेत्रभार्यायांमहीक्षितइत्यनेनब्राह्मणकुलंव्यावर्तयति ५ प्राच्यकान्प्राचीविषयान् । इहभुविखनपानोनाम ६ ७ अवर्षतिसतियमृष्यशृंगंहरिणीसुतमिति । अनेनऋष्यस्य रंगस्यशृंगमिवशृंगंयस्यसतथातमतिविग्रहसूचयति ८ निरूप्यविचिंत्यमरुत्वतःइष्टिंइंद्रविषयामिष्टिं ९ येनइष्टिविशेषेण १०

११ १२ अपविद्धंअज्ञातवद्विसृष्टं कानीनंकन्यायांजातम् १३ ययातिपुत्रस्यद्रुह्योर्वंशंनिरूपयति द्रुह्योश्चेति १४ १५ ययातिपुत्रस्यतुर्वसोर्वंशंकथयति । तुर्वसोरिति १६ १७ सूचीकटाहन्याये नद्रुह्यादीनांपुत्राणांवंशंकथयित्वाबहुलत्वाद्विशेषपुण्यहेतुत्वाच्चज्येष्ठपुत्रस्ययदोर्वंशंकथयति ययातेरिति १८ १९ २० २१ २२ २३ २४ २५ २६ अनष्टंअविच्छिन्नंविष्णुस्मरणं यस्यसत

बृहद्रथोबृहत्कर्माबृहद्भानुश्चतत्सुताः ॥ ततोबृहन्मनास्तस्माज्जयद्रथउदाहृतः ११ विजयस्तस्यसंभूत्यांततोधृतिरजायत ॥ ततोधृतव्रतस्तस्यसधर्मा धिरथस्ततः १२ योसौगंगातटेक्रीडन्मंजूषांतर्गतंशिशुम् ॥ कुंत्यापविद्धंकानीनमनपत्योकरोत्सुतम् १३ वृषसेनःसुतस्तस्यकर्णस्यजगतीपतेः ॥ द्रुह्योश्चतनयोबभ्रुःसेतुस्तस्यात्मजस्ततः १४ आरब्धस्तस्यगांधारस्तस्यधर्मस्ततोधृतः ॥ धृतस्यदुर्मदस्तस्मात्प्रचेताःप्राचेतसंशतम् १५ म्लेच्छाधिपतयोभूवन्नुदीचींदिशमाश्रिताः ॥ तुर्वसोस्तुसुतोवह्निर्वह्नेर्भर्गोथभानुमान् १६ त्रिभानुस्तत्सुतोस्यापिकरंधमउदारधीः ॥ मरुतस्तत्सुतःपुत्रःपुत्रं पौरवमन्वभूत् १७ दुष्यंतंसपुनर्भेजेस्वंयंसाम्राज्यकामुकः ॥ ययातेर्ज्येष्ठपुत्रस्ययदोर्वंशंनरर्षभ १८ वर्णयामिमहापुण्यंसर्वपापहरंनृप ॥ यदोर्वंशंनरः श्रुत्वासर्वपापैर्विमुच्यते १९ यत्रावतीर्णोभगवान्परमात्मानराकृतिः २० यदोःसहस्रजित्क्रोष्टानलोरिपुरितिश्रुताः ॥ चत्वारःसूनवस्तस्यशतजित्प्र थमात्मजः ॥ महाहयोवेणुहयोहैहयश्चेतितत्सुताः २१ धर्मस्तुहैहयसुतोनेत्रःकुंतेःपितात्ततः ॥ सोहंजिरभवत्कुंतेर्महिष्माभद्रसेनकः २२ दुर्मदोभद्र सेनस्यधनकःकृतवीर्यकः ॥ कृताग्निःकृतवर्माचकृतौजाधनकात्मजाः २३ अर्जुनःकृतवीर्यस्यसप्तद्वीपेश्वरोभवत् ॥ दत्तात्रेयाद्धरेरंशात्प्राप्तयोगमहागु णः २४ ननूनंकार्तवीर्यस्यगतिंयास्यंतिपार्थिवाः ॥ यज्ञदानतपोयोगैःश्रुतवीर्यजयादिभिः २५ पंचाशीतिसहस्राणिह्यव्याहतबलाःसमाः ॥अकरोदर्जु नोराज्यंहरिंचैवान्वहंस्मरन् २६ अनष्टविष्णुस्मरणोबुभुजेक्षय्यषड्वसु ॥ तस्यपुत्रसहस्राणांपंचैवोर्वरितामृधे २७ जयध्वजःशूरसेनोवृषभोमधुरूर्जितः ॥ जयध्वजात्तालजंघस्तस्यपुत्रशतंत्वभूत् २८ क्षत्रंयत्तालजंघाख्यमौर्वतेजोपसंहृतम् ॥ तेषांज्येष्ठोवीतिहोत्रोवृष्णिःपुत्रोमधोःस्मृतः २९ तस्यपुत्र शतंत्वासीद्वृष्णिज्येष्ठंयतःकुलम् ॥ माधवावृष्णयोराजन्यादवाश्चेतिसंज्ञितम् ३० यदुपुत्रस्यचक्रोष्टोःपुत्रोवृजिनवांस्ततः ॥ वाहिस्ततोरुशेकुस्तस्य चित्ररथस्ततः ३१ शशबिंदुर्महायोगीमहाभोजोमहानभूत् ॥ चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ३२ तस्यपत्नीसहस्राणांदशासन्सुमहायशाः ॥ दशलक्षसहस्राणिपुत्राणांतास्वजीजनत् ३३ तेषांतुषट्प्रधानानांपृथुश्रवसआत्मजः ॥ धर्मोनामोशनास्तस्यहयमेधशतस्ययट् ३४ तत्सुतोरुचकस्त स्यपंचासन्नात्मजाःशृणु ॥ पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघसंज्ञिताः ३५ ज्यामघस्त्वप्रजोप्यन्यांभार्यांशैब्यापतिर्भयात् ॥ नाविंदच्छत्रुभवनात्कन्यां भ्रष्टामहार्षीत् ३६ रथस्थांतांनिरीक्ष्याहशैब्यापतिममर्षिता ॥ केयंकुहकमत्स्थानंरथमारोपितेतिवै ३७

पासंततविष्णुस्मरणोपेतः । षण्णांशव्रतुषड्वसुषड्भ्योगुणेभ्योलब्धंषड्वसुतत्तद्वसुवा २७ २८ और्वमुनेःतेजसोपसंहृतम् २९ ३० ३१ ३२ ३३ ३४ ३५ पुरुजिच्चस्वाम् ३६ ३७

स्नुषातवेत्यभिहितास्मयंतीपतिमब्रवीत् ॥ अहंवंध्याऽसपत्नीचस्नुषायुज्येतमेकथम् ३८ जनयिष्यसियंराज्ञितस्येयमुपपत्स्यते ॥ अन्वमोदंततद्विश्वेदे वाःपितरएवच ३९ शैब्यागर्भमधात्कालेकुमारंसुषुवेशुभम् ॥ सविदर्भइतिप्रोक्तउपयेमेस्नुषांसतीम् ४० इतिश्रीभागवतेमहापुराणेनवमस्कंधेविंशोऽध्यायः ॥२८॥ श्रीशुकउवाच ॥ तस्यांविदर्भोजनयत्पुत्रौनाम्नाकुशक्रथौ ॥ तृतीयंरोमपादंचवैदर्भकुलनंदनम् १ रोमपादसुतोबभ्रुर्बभ्रोःकृतिरजायत ॥ उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयोनृपाः २ क्रथस्यकुंतिःपुत्रोभूद्वृष्णिस्तस्याथनिर्वृतिः ॥ ततोदशार्हनामाभूत्तस्यव्योमःसुतस्ततः ३ जीमूतोविकृतिस्तस्यस्यभीमरथःसुतः ॥ ततोनवरथःपुत्रोजातोदशरथस्ततः ४ करंभिःशकुनेःपुत्रोदेवरातस्तदात्मजः ॥ देवक्षत्रस्ततस्तस्यमधुःकुरुवशादनुः ५ पुरुहोत्रस्त्वनोःपुत्रस्तस्यायुःसात्वतस्ततः ॥ भजमानोभजिर्दिव्योवृष्णिर्देवावृधोंधकः ६ सात्वतस्यसुताःसप्तमहाभोजश्चमारिष ॥ भजमानस्यनिम्लोचिःकिंकणोधृष्टिरेवच ७ एकस्यामात्मजाःपत्न्यामन्यस्यांचत्रयःसुताः ॥ शताजिच्चसहस्राजिदयुताजिदितिप्रभो ८ बभ्रुर्देवावृधसुतस्तयोःश्लोकौपठंत्यमुम् ॥ यथैवशृणुमोदूरात्सपश्यामस्तथांतिकात् ९ बभ्रुःश्रेष्ठोमनुष्याणांदेवैर्देवावृधःसमः ॥ पुरुषाःपंचषष्टिश्चषट्सहस्राणिचाष्टच १० येऽमृतत्वमनुप्राप्ताबभ्रोर्देवावृधादपि ॥ महाभोजोतिधर्मात्माभोजाआसंस्तदन्वये ११ वृष्णेःसुमित्रःपुत्रोभूद्युधाजिच्चपरंतप ॥ शिनिस्तस्यानमित्रश्चनिम्नोभूदनमित्रतः १२ सत्राजितःप्रसेनश्चनिम्नस्याप्यासतुःसुतौ ॥ अनमित्रसुतोयोन्यःशिनिस्तस्यचसत्यकः १३ युयुधानःसात्यकिर्वैजयस्तस्यकुणिस्ततः ॥ युगंधरोनमित्रस्यपृश्निःपुत्रोऽपरस्ततः १४ श्वफल्कश्चित्ररथश्चैवगांदिन्यांतुश्वफल्कतः ॥ अक्रूरप्रमुखाआसन्पुत्राद्वादशविश्रुताः १५ आसंगःसारमेयश्चमृदुरोमृदुविद्गिरिः ॥ धर्मोवृद्धःसुकर्माचक्षेत्रोपेक्षोरिमर्दनः १६ शत्रुघ्नोगंधमोदाद्धःप्रतिबाहुश्चद्वादश ॥ तेषांस्वसासुचाराख्याद्वावक्रूरसुतावपि १७ देववानुपदेवश्चतथाचित्ररथात्मजाः ॥ पृथुर्विदूरथाद्याश्चबहवोवृष्णिनंदनाः १८ कुकुरोभजमानश्चशुचिःकंबलबर्हिषः ॥ कुकुरस्यसुतोवृष्णिर्विलोमास्तनयस्ततः १९ कपोतरोमातस्यानुःसखायस्यचतुंबरुः ॥ अनोश्चदुंदुभिस्तस्यदरिद्रद्योतःपुनर्वसुः २० तस्याहुकश्चाहुकीचकन्याद्वावाहुकात्मजौ ॥ देवकश्चोग्रसेनश्चचत्वारोदेवकात्मजाः २१ देववानुपदेवश्चसुदेवोदेववर्धनः ॥ तेषांस्वसारःसप्तासन्शांतिदेवादयोनृप २२ शांतिदेवोपदेवाचश्रीदेवादेवरक्षिता ॥ सहदेवादेवकीचवसुदेवउवाहताः २३ कंसःसुनामान्यग्रोधःकंकःशंकुःसुभूस्तथा ॥ राष्ट्रपालोथसृष्टिश्चतुष्टिमानौग्रसेनयः २४

६ ७ ८ ९ १० ११ १२ १३ नाम्नायुयुधानःसात्यकिरितिगुणनाम्ना १४ १५ १६ १७ १८ १९ २० २१ २२ २३ औग्रसेनयःउग्रसेनपुत्राः २४

वसुदेवस्यानुजानांदेवभागादीनांस्त्रियोभार्याः २५ २६ तस्यहृदिकस्यसुताः २७ २८ यस्यवसुदेवस्यजननसमये दुंदुभ्यानकवाद्यनदनाद्गुरुदेवस्यनामांतरमस्तीत्याह वसुदेवमितिस्थानमवतारस्य २९ ३० एतेषांवसुदेवादीनांशूरस्यसख्युःपुत्रस्यकुंतेः ३१ देवहूतिदेवाहूयंतेनयेतिदेवहूतीदेवाह्वानकरीत्यर्थःतांविद्यांदुर्वाससःअलभतेतिशेषःतस्याःविद्यायाःशुचिःऋतुस्नाता ३२ प्रत्ययार्थविश्वासार्थंप्रयुक्तायाविद्यायामाहात्म्यंच भोदेवक्षमस्वयाहीति ३३ कुंत्याभिहितोरविःकुंतीमाह अमोघमिति देवसंदर्शनममोघंसफलंजानीहीतिशेषः त्वयकर्तव्यमाह आधास्यइति । मैथुनयोग्यतारुण्यादर्शनाच्छिन्नयोनिर्दुष्टास्यादितिपृथायामनोगतशंकापरिहारार्थमाह योनिरितितथाकर्तालोकस्यापवादादितिशेष ३४ ३५ तवप्रपितामहः पांडुः ३६ वसुदेवभगिनी

कंसाकंसवतीकंकासुरभूराष्ट्रपालिका ॥ औग्रसेनादुहितरोवसुदेवानुजस्त्रियः २५ शूरोविदूरथादासीद्भजमानसुतात्ततः ॥ शिनिस्तस्मात्स्वयंभोजोहृदिकस्तत्सुतोमतः २६ देवबाहुःशतधनुःकृतवर्मेतितत्सुताः ॥ देवमीढस्यशूरस्यमारिषानामपत्न्यभूत् २७ तस्यांसंजनयामासदशपुत्रानकल्मषान् ॥ वसुदेवंदेवभागंदेवश्रवसमानकम् २८ सृंजयंश्यामकंकंकमनीकंवत्सकंवृकम् ॥ देवदुंदुभयोनेदुरानकायस्यजन्मनि २९ वसुदेवंहरेःस्थानंवदंत्यानकदुंदुभिम् ॥ पृथाचश्रुतदेवाचश्रुतकीर्तिःश्रुतश्रवाः ३० राजाधिदेवीचैतेषांभगिन्यःपंचकन्यकाः ॥ कुंतेःसख्युःपिताशूरोह्यपुत्रस्यपृथामदात् ३१ साचदुर्वाससोविद्यांदेवहूतींप्रतोषितात् ॥ तस्यावीर्यपरीक्षार्थमाजुहावरविंशुचिः ३२ तदैवोपगतंदेवंवीक्ष्यविस्मितमानसा ॥ प्रत्ययार्थंप्रयुक्तामेयाहिदेवक्षमस्वमे ३३ अमोघंदेवसंदर्शमाधास्येत्वयिचात्मजम् ॥ योनिर्यथानदुष्येतकर्ताऽहंतेसुमध्यमे ३४ इतितस्यांसमाधायगर्भंसूर्योदिवंगतः ॥ सद्यःकुमारःसंजज्ञेद्वितीयइवभास्करः ३५ तंसाऽत्यजन्नदीतोयेकृच्छ्राल्लोकस्यबिभ्यती ॥ प्रपितामहस्तामुवाहपांडुर्वैसत्यविक्रमः ३६ श्रुतदेवींतुकारूषोवृद्धशर्मासमग्रहीत् ॥ यस्यामभूद्दंतवक्त्रइतिशब्दोदितेःसुतः ३७ केकयोधृष्टकेतुश्चश्रुतकीर्तिमविंदत ॥ संतर्दनादयस्तस्याःपंचासुःकैकयाःसुताः ३८ राजाधिदेव्यामावंत्यौजयत्सेनोऽजनिष्टह ॥ दमघोषश्चेदिराजःश्रुतश्रवसमग्रहीत् ३९ शिशुपालःसुतस्तस्याःकथितस्तस्यसंभवः ॥ देवभागस्यकंसायांचित्रकेतुबृहद्बलौ ४० कंसवत्यांदेवश्रवसःसुवीरइषुमांस्तथा ॥ कंकायामानकाज्जातःसत्यजित्पुरुजित्तथा ४१ सृंजयोराष्ट्रपाल्यांतुवृषदुर्मर्षणादिकान् ॥ हरिकेशहिरण्याक्षौसूरभूम्यांतुकामुकः ४२ मित्रकेश्यामप्सरसिवृकादीन्वत्सकस्तथा ॥ तक्षपुष्करसालादीन्दुर्वेश्यांवृकआदधे ४३ सुमित्रार्जुनबाणादीननीकात्सुदामनी ॥ गांडूषःकर्णिकायांवैऋतधामजयावपि ४४ ॥

नांश्रुतदेव्यादीनांविवाहंकथयति श्रुतदेवीमित्यादिना इतिशब्दोदितेःसुतःपूर्वंदितेःसुतइतिशब्दोयस्यविजयस्यसदितेःसुतःइतिशब्दःसनकादिभिर्वंशप्तोविजयःआगादितेःसुतोभूत् पश्चाद्धिरण्यकशिपुरेवाधुनादंतवक्त्रइतिजातइतिभावः ३७ नाम्नाधृष्टकेतुःकेकयविषयाधिपतित्वात्कैकयशब्दश्चशब्दःपूर्वेणसमुच्चीयते ३८ आवंत्यौविंदानुविंदौअजनिष्टजनयामास ३९ वसुदेवभ्रातृणांवंशंकथयति देवभागस्येत्यादिना ४० ४१ ४२ ४३ ४४

४५ उदपादयत् उत्पादयामास ४६ ४७ ४८ ४९ ५० ५१ ५२ ५३ ५४ ५५ ५६ ननुयदिश्रीनारायणोजीववज्जन्मकर्माणिभजेन्नर्हिसंसारानिवृत्तयेतत्सेवाव्यर्थेतितत्राह नहीति ॥ विपमादृष्टातः तथाहि जीवस्यजन्मादिमत्वेपुण्यपापकारणं विधिबद्धत्वात्तदनियतत्वादीश्वरस्यनहितेस्तः । नहिकार्यमकारणमितिन्यायात् कारणवक्तव्य चेन्लोकानुग्रहादुद्धारमिच्छैवेतिब्रूमःअनुग्रहाद्धांधस्यापि धर्मपाप्मनोःक्षयवृद्धिदर्शनमित्युक्तम् अतस्तत्सेवानव्यर्थेत्यर्थः हरेरविधिबद्धत्वेपिजन्मादिदर्शनात् अतर्कितत्वेनपुण्यादिलेपित्वेनदुःखित्वंस्यादितितत्राह ईशस्येति । ईशस्यक्वचिन्नमेदुःखित्वंस्यादिति तन्निवारणसमर्थत्वादन्यस्यतदभावात् जीवएवईशःकिनस्यादितितत्राह परस्येति । ननुकिंतद्वैलक्षण्ययेनेशादन्याजीवःस्यादितितत्राह द्रष्टुरिति । यःसर्वज्ञःसर्वविदितिश्रुते. नहिद्रष्टुर्दृष्टेर्विपरिलोपो विद्यतइत्यादेश्चसार्वज्ञ्यंजीवाद्भिन्नत्वेनमुख्यलक्षणं सार्वज्ञ्यंस्वभाविकंनतुनैमित्तिकमित्याशयेनाह आत्मनइति एवंविधःकइत्यतोवाह आत्मनइति आत्मादेहधृतौजीवस्वभावेपरमात्मनीतिपादवः ५७

पौरवीरोहिणीभद्रामदिरारोचनाइला ॥ देवकीप्रमुखाआसन्पत्न्यआनकदुंदुभेः ४५ बलंगदंसारणंचदुर्मदंविपुलंध्रुवम् ॥ वसुदेवस्तुरोहिण्यांकृतदीर्घादीन्नुद पादयत् ४६ सुभद्रोभद्रबाहुश्चदुर्मदोभद्रएवच ॥ पौरव्यास्तनयाह्येतेभूताद्याद्वादशाभवन् ४७ नंदोपनंदकृतकशूराद्यामदिरात्मजाः ॥ भद्राख्याके शिनंत्वेकमसूतकुलनंदनम् ४८ रोचनायांततोजाताहस्तहेमांगदादयः ॥ इलायांपुरुवल्कादीन्यदुमुख्यानजीजनत् ४९ त्रिपृष्ठोधृतदेवायांजातआन कदुंदुभेः ॥ शांतिदेवात्मजाराजन्प्रश्रमप्रश्रितादयः ५० राजानःकल्पवर्षाद्याउपदेव्याःसुतादश ॥ वसुहंससुवंशाद्याःश्रीदेवायाश्चषट्सुताः ५१ देव रक्षितयालब्धानवचात्रगदादयः ॥ वसुदेवःसुतानष्टावादधेसहदेवया ५२ पुरुवत्समुद्रमुख्यान्साक्षाद्धर्मोवसूनिव ॥ वसुदेवस्तुदेवक्यामष्टपुत्रानजी जनत् ५३ कीर्तिमंतंसुषेणंचभद्रसेनमुदारधीः ॥ ऋजुंसंमर्दनंभद्रंसंकर्षणमहीश्वरम् ५४ अष्टमस्तुतयोरासीत्स्वयमेवहरिःकिल ॥ सुभद्राचमहाभा गातवराजन्पितामही ५५ यदायदाहिधर्मस्यक्षयोवृद्धिश्चपाप्मनः ॥ तदातुभगवानीशआत्मानंसृजतेहरिः ५६ नह्यस्यजन्मनोहेतुःकर्मणोवामहीपते ॥ आत्ममायांविनेशस्यपरस्यद्रष्टुरात्मनः ५७ यन्मायाचेष्टितंपुंसःस्थित्युत्पत्त्यप्ययायहि ॥ अनुग्रहस्तन्निवृत्तेरात्मलाभायचेष्यते ५८ अक्षौहिणीनांप तिभिरसुरैर्नृपलांछनैः ॥ भुवआक्रम्यमाणानामभावायकृतोद्यमः ॥ ५९ ॥

ननुजीवव्यावर्तकंलक्षणंजगत्कर्तृत्वादिकंतत्प्रकृतेरतःसार्वज्ञ्यमात्रेणकथमीश्वरोजीवाद्व्यावर्त्यः । विशेषणस्यसर्वज्ञस्त्रिपुरांतकस्त्रिनयनइत्यादावन्यविषयत्वेनव्यभिचारित्वादुक्तदोषानिस्तारइतितत्रा हयन्मायेतियस्येश्वरस्याधीनायाःमायायाःप्रकृतेश्चेष्टितंपरिणामलक्षणंपुंसइत्युपलक्षणंप्रपंचस्यस्थित्युत्पत्तिसंहारायभवतिस्थित्यादेर्हेतुर्भवतीत्यर्थः तदेकविपयत्वद्योतनायचतुर्थ्यं एकवद्भावादेकत्वन प्रकृतिंपुरुषंचैवमविश्यपुरुषोत्तमइतिस्मृतिंहिशब्देनदर्शयति यदनुग्रहःप्रकृतिचेष्टायाःनिवृत्तिहेतुःनिवृत्तिश्चात्मलाभायसच्चिदानंदस्वरूपाविर्भावायब्रह्मानंदओजश्चेत्यादिश्रुत्येष्यतेनिरूप्यते ॥ हरेःमपद निर्माणादिकंतत्तत्पदार्थविशेषज्ञानंविनानयुज्यते । तद्धलादपोहितुंनपापतेमामायिकत्वादतोनिरुपमच.रितंसार्वज्ञ्यंहरेरेवान्यस्यौपचारिकमितिपदोजीवव्यावृत्तिलक्षणसत्तात्राह्युक्ते.तिभावः ५८ ननुकी दृशोनुग्रहोयेनतन्निवृत्तिःस्यादितितत्राह अक्षौहिणीनामिति भुरोभारायमाणाना असुराणामभावायनाशाय ५९

अपरिमेयानिपरिमातुमशक्यानि ६० यशोलक्षणंपराक्रमंदुःखशोकतमांसिनुदतीतिदुःखशोकतमोनुत् ६१ ततःफलमाह यस्मिन्निति । सत्कर्णपीयूषे । प्रशस्तजनकर्णामृतेयशस्तीर्थवरेयशोलक्षण शास्त्रपावनजलश्रेष्ठेश्रोत्रेएवांजलिर्यस्यसतथा । उपस्पृश्यस्नानपानाचमनानिकृत्वापापकर्मवासनाःपापकर्मकरणश्रद्धालक्षणाः ६२ श्लाघनीयेहितःपूज्यमानचरितः ६३ स्निग्धस्मितेक्षितेनोदारैर्मनो हरैर्विक्रमलीलयाविक्रमविलासेनसर्वांगसुंदरयामूर्त्याचनृलोकंमनुष्यजनं । नृनयइतियातांनयतिभक्तिपूर्वकंतत्वज्ञानांतीनिनृलोकोज्ञानिसमूहस्तमितिवा ६४ रतिकरणप्रकारदर्शयति यस्येति । मक राकारकुंडलाभ्यांचारुकर्णौताभ्यांभ्राजत्कपोलाभ्यांसुभगंसुंदरं । विलासेनसहितंहासोयस्यसतथातंनित्यउत्सवोयस्यसतथातम् तत्क्षणानंदजनकमित्यर्थःनतृप्युःनालंबुद्धिमापुः।निमेर्निमेषस्येतिष ष्ठीद्वितीयार्थे निमेर्भ्रांति । कुपिताविकासविरोधित्वात् ६५ तेषुदारेषु आत्मनिगमंआत्मज्ञानं । स्वगुणप्रतिपादकवेदलक्षणशास्त्रंवा प्रथयन्प्रख्यापयन् ६६ सकृष्णःस्वधामस्वमूलरूपंसमगात् संग

कर्माण्यपरिमेयानिमनसापिसुरेश्वरैः ॥ सहसंकर्षणश्चक्रेभगवान्मधुसूदनः ६० कलौजनिष्यमाणानांदुःखशोकतमोनुदम् ॥ अनुग्रहायभूतानांसुपुण्यं व्यतनोद्यशः ६१ यस्मिन्सत्कर्णपीयूषेयशस्तीर्थवरेसकृत् ॥ श्रोत्रांजलिरुपस्पृश्यधुनुतेकर्मवासनाः ६२ भोजवृष्ण्यंधकमधुशूरसेनदशार्हकैः ॥ श्लाघनीयेहितःशश्वत्कुरुसृंजयपांडुभिः ६३ स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ॥ नृलोकंरमयामासमूर्त्यासर्वांगरम्यया ६४ यस्याननंमकरकुंड लचारुकर्णभ्राजत्कपोलसुभगंसविलासहासम् ॥ नित्योत्सवंनततृपुर्दृशिभिःपिबंत्योनार्योनराश्चमुदिताःकुपितानिमेश्च ६५ जातोगतःपितृगृहाद्व्रजमे धितोत्रहत्वारिपून्सुतशतानिकृतोरुदारः ॥ उत्पाद्यतेषुपुरुषःक्रतुभिःसमीजआत्मानमात्मनिगमंप्रथयन्जनेषु ६६ पृथ्व्याःसवैगुरुभरंक्षपयन्कुरूणामंतः समुत्थकलिनायुधिभूपचमूः ॥ दृष्ट्याविधूयविजयेजयमुद्विघुष्यप्रोच्योद्धवायचपरंसमगात्स्वधाम ॥ ६७ ॥ इतिश्रीभागवतेमहापुराणेपारमहंस्यांसं हितायांनवमस्कंधेसोमवंशवर्णनेवंशानुचरितंनामएकविंशोऽध्यायः ॥ २१ ॥ समाप्तोयंनवमस्कंधः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

तथानेकोभूदित्यन्वयःपूर्णमदः पूर्णमदमित्याद्युपनिषद्भ्यइत्यनेनसूचयति पृथ्व्याःगुरुभरमसुरलक्षणंभूपबंधंभूपसमूहलक्षणंबंधंविधूयसंहृत्यउद्विघुष्यडिंडिमघोषंकारयित्वा परंचरणयोग्यंज्ञानंप्रोच्यविस्तरे भोपृथिव्यइति ६७ नाम्नाक्षत्रवसुंधरासुरमहावंशावलीमंदिरंव्याख्याव्याजविनोदतोऽद्यनवमस्कंधोमयाक्रीडित ॥सर्वज्ञोविजयध्वजायपतयेमह्यंमहाभूतिदोहारीहारमनोहरोहरिहरःप्रीतोस्तुविश्वंभरः १ पद रत्नावलिर्भूयान्नवमस्कंधअर्पिता ॥ तुलसीवद्धरेःपादद्वंद्वेद्वंद्वापहारिणी २ श्रीमहेंद्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थस्यकृतौपदरत्नावल्यांश्रीमद्भागवतव्याख्यायांनवस्कंधेएकविंशोऽध्यायः २१ ॥

॥ इति श्रीमद्भागवते नवमः स्कंधः समाप्तः ॥

श्रीवेदव्यासायनमः ॥ नवमस्कंधांतसंक्षिप्तंश्रीविष्णुचरितविस्तरतःश्रोतुंराजावृत्तमनूद्यवक्तुंप्रार्थयते कथितोवंशविस्तारइत्यादिना विचयाजन्मनाचैकलक्षणःसतानोवंशस्तत्रभवोवंश्यः व्यास प्रपंचो विस्तारइत्यभिधानं राज्ञांचरितंचकथितं कथनेनिमित्तमाह परमेति १ अत्रविशेषमाह यदोरिति यदोर्ययातिपुत्रस्यवंशोनितरांकथितः धर्मोभगवांस्तत्समाधियुक्तस्य शीलसमाधावितिधातुःअस्तुनामततःकिमपेक्षितमितितत्राह तत्रेति यदोर्वंशे वीर्याणिपराक्रमान् २ तात्पर्यात्पुनरुक्तमेवाह अवतीर्येति यानिभूकंटकादितिसुतहननादीनिकर्माणि विश्वात्माविश्वव्यापीत्यनेनब्रह्मत्वं ध्वनयति विस्तरतःनकेवलमर्थतःप्रपंचनमपितुशब्दतः अल्पबुद्धीनामवगंतुमशक्यत्वात् सचशब्दस्यविस्तरइत्यभिधान ३ अतीतस्कंधेहरिकथाश्रवणेनालंबुद्धिर्नाभूत्किमितितत्राह निवृत्तेति निवृत्ततर्षैर्विषयालंबुद्धिमद्भिः भवौषधात्संसाराख्यरोगपरिहारहेतुभूतौषधात् अतिमुग्धात् अन्यथाज्ञानिनः पशुघ्नादितिवापाठः ४ माहात्म्यंहरेरनुभवसिद्धंयस्मादतोवक्तव्यमित्याशयेनाह पितामहाइति पितामहाअर्जुनादयःअमरान्देवान्जयंतीत्यमरंजयास्तैः देवानामिवव्रतंअप्रजाजननलक्षणंयस्यसभीष्मःसआद्योयेषांद्रोणादीनांतेतथा तएवातिरथारथ्युत्तमास्तैः तिमि

ओंनमोभगवतेवासुदेवाय ॥ राजोवाच ॥ कथितोवंशविस्तारोभवतासोमसूर्ययोः ॥ राज्ञांचोभयवंश्यानांचरितंपरमाद्भुतम् १ यदोश्चधर्मशीलस्य नितरांमुनिसत्तम ॥ तत्रांशेनावतीर्णस्यविष्णोर्वीर्याणिशंसनः २ अवतीर्ययदोर्वंशेभगवान्भूतभावनः ॥ कृतवान्यानिविश्वात्मातानिनोवदविस्तरात् ३ निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरामात् ॥ कउत्तमश्लोकगुणानुवादात्पुमान्विरज्येतविनातिमुग्धात् ४ पितामहामेसमरेऽमरंजयैर्देवव्रताद्यातिरथैस्तिमिंगिलैः ॥ दुरत्ययंकौरवसैन्यसागरंकृत्वातरन्वत्सपदंस्मयत्प्लवाः ५ द्रौण्यस्त्रविप्लुष्टमिदंमदंगंसंतानबीजंकुरुपांडवानाम् ॥ जुगोपकुक्षिंगतआत्तचक्रोमातुश्चमेयःशरणंगतायाः ६ वीर्याणितस्याखिलदेहभाजामंतर्बहिःपूरुषकालरूपैः ॥ प्रयच्छतोमृत्युमनामयंचमायामनुष्यस्य वदस्वविद्वन् ७ रोहिण्यास्तनयःप्रोक्तोरामःसंकर्षणस्त्वया ॥ देवक्यागर्भसंबंधःकुतोदेहांतरंविना ८ कस्मान्मुकुंदोभगवान्पितुर्गेहाद्व्रजंगतः ॥ क्ववासंज्ञातिभिःसार्धंकृतवान्सात्वतांपतिः ९ व्रजेवसन्किमकरोन्मधुपुर्यांचकेशवः ॥ भ्रातरंचावधीत्कंसंमातुरद्धाऽतदर्हणम् १० देहंमानुषमाश्रित्यकतिवर्षाणिवृष्णिभिः ॥ यदुपुर्यांसहावात्सीत्पत्न्यःकत्यभवन्विभोः ११ एतदन्यच्चसर्वंमेमुनेकृष्णविचेष्टितम् ॥ वक्तुमर्हसिसर्वज्ञश्रद्दधानायविस्तृतम् १२

गिलसमहामत्स्यःकायेनदशयोजनप्रमाणमावृत्यस्थितःत्वमपिगिलतिग्रसतइतितिमिंगिलः स्मयत्पनिमिस्तंसुमागमःवत्सपदंगोवत्सपदमिव वत्सपदलघोपमं यःकृष्णःप्लववदुपायेषांतथाप्लवाः नदीतरणायनिमित्तवंशाच भीष्मादिनायत्साधनंसप्लवइति ५ इतोऽपितद्वीर्याणिश्रोतव्यानीत्याह द्रौण्यस्त्रेति मातुरुत्तरायाःकुक्षिगतःप्रविष्टः इदमत्यक्षंचेतिभावेनोक्तमेयइति मयामेय.ज्ञेय ममहाविषयः ६ भाषणोपसंभाषाज्ञानयत्नविभत्युपमंत्रणेषुवदइत्यतोवदस्वेत्यात्मनेपदप्रयोगोमाद्वितार्थवक्तव्यमितिसूचनार्थः शुकस्यवक्तव्यांशज्ञानपाटवप्रदर्शनार्थंच एतदेवप्रकाशितमभूद्विद्वान्नित्येनेन अंत.पुरुषरूपैः बहिःकालरूपैःअनामयंसंसारदुःखनिरासेनसुखं मृत्युंदुःखानुभवलक्षणं अंधंतमः प्रयच्छतोददतः बहुरूपत्वाद्बहुवचनं प्रलयांतइतिशेषः ७ एकस्यद्वयोर्योनिसंबंधानुपपत्तिःप्रश्नबीजं ८ ९ मधुपुर्यांचवसन्किंकर्मकृतवान् मातुर्भ्रातरंमातुलमित्यर्थः अतदर्हणंतस्यवधस्यायोग्यमित्यर्थः १० ११ मेमह्यम् १२

क्षुधितस्यतवदौर्बल्यान्मनोनेच्छतिश्रोतुमितितत्राह नैषेति त्यक्तोदंआचमनजलमंतरेणेतिशेषः ननु दिव्यदंत्रौपधादिकमंतरेणक्षुधादिर्कमानुषदेहंबाधतएव अतःकथंनबाधतइतितत्राह पिबतमि ति सूतंगलितम् १३ सूतःशौनकंप्रत्याह सूतइतिहेभृगुनंदनशौनकप्रत्यर्च्यप्रतिसंभाव्य राजानमितिशेषः १४ कीदृशीप्रत्यर्चेतितामाह सम्यग्व्यवसितातिं नैष्ठिकीश्रीनारायणोत्कर्षसंबंधिनी निष्ठोत्कर्षैव्यवस्थायामितियादवः निश्चलतयास्थितिर्निष्ठातद्भवतीतिवा १५ नकेवलंहरिकथाप्रश्नःप्रष्टारंपुनातिकिंतुवक्तारमपीत्याह वासुदेवेति तत्पादसलिलभागीरथी शालग्रामनदीर्वाग गंगागंगेतियो ब्रूयादित्यादेः १६ एतदन्यच्चेत्येतत्यदन्यदिदितिदिदमितिध्वनयन्कथामारितउपक्रमते भूमिरित्यादिना शतायुतैरित्यनेन संख्यातत्वसूचयति भूरिभारेणपीडितेतिशेषः १७ यथाकरुणभवतितथा रुदंती व्यसनंविविधनिरसनम् १८ १९ जगन्नाथत्वंराजादेरप्यस्तीतिदेवदेवमिति इंद्रादिव्यावृत्त्यर्थं वृषाकपिं अभीष्टदानादानंदनाच वृतषड्गुणत्वात्अकपेर्दुःखत्वेषणाच्चवृषाकपिः तम् । नीरूप स्यहरेरिंद्रियविषयत्वंकथमित्यतःपुरुषमिति तस्येदमेवशिरइत्यादेः उपतस्थेमंत्रवचनपूर्वकमुपासनांकृतवानिति उपान्मंत्रकरणेइत्यात्मनेपदं कार्यंमंत्र. येनधात्वर्थःसमर्थितःस्यादित्यतःपुरुषसूक्तेनेति२०

नैषातिदुःसहाक्षुन्मांत्यक्तोदमपिबाधते ॥ पिबंतंत्वन्मुखांभोजच्युतंहरिकथामृतम् १३ ॥ सूतउवाच ॥ एवंनिशम्यभृगुनंदनसाधुवादंवैयासकिःस भगवानथविष्णुरातम् ॥ प्रत्यर्च्यकृष्णचरितंकलिकल्मषघ्नंव्याहर्तुमारमतभागवतप्रधानः १४ श्रीशुकउवाच ॥ सम्यग्व्यवसिताबुद्धिस्तवराजर्षिस त्तम ॥ वासुदेवकथायांतेयज्जातानैष्ठिकीरतिः १५ वासुदेवकथाप्रश्नःपुरुषांस्त्रीन्पुनातिहि ॥ वक्तारंपृच्छकंश्रोतॄंस्तत्पादसलिलंयथा १६ भूमिर्दृप्तनृ पव्याजदैत्यानीकशतायुतैः ॥ आक्रांताभूरिभारेणब्रह्माणंशरणंययौ १७ गौर्भूत्वाश्रुमुखीखिन्नारुदंतीकरुणंयथा ॥ उपस्थितांऽतिकेतस्मैव्यसनंसमवो चत १८ ब्रह्मातदुपधार्याथसहदेवैस्तयासह ॥ जगामसत्रिनयनस्तीरंक्षीरपयोनिधेः १९ तत्रगत्वाजगन्नाथंदेवदेवंवृषाकपिम् ॥ पुरुषंपुरुषसूक्तेनउपत स्थेसमाहितः २० गिरंसमाधौगगनेसमीरितांनिशम्यवेधास्त्रिदशानुवाचह ॥ गांपौरुषींमेशृणुतामराःपुनर्विधीयतामाशुतथैवमाचिरम् २१ पुरैवपुंसा वधृतोधराज्वरोभवद्भिरंशैर्यदुषूपजन्यताम् २२ सयावदुर्व्याभरमीश्वरेश्वरःस्वकालशक्त्याक्षपयंश्चरेद्भुवि ॥ वसुदेवगृहेसाक्षाद्भगवान्पुरुषःपरः ॥ जनि ष्यतेतत्प्रियार्थंसंभवंतुसुरस्त्रियः २३ वासुदेवकलानंतःसहस्रवदनःस्वराट् ॥ अग्रतोभवितादेवोहरेःप्रियचिकीर्षया २४

समाधावितितादर्थ्येसप्तमी समाध्यर्थंदेवकार्यसमर्थनार्थंसमीरितांगिरं अत्यर्थामितिगीर्वाणीत्राचिहिसंप्रतिष्ठितामितिश्रुतेः तांस्तुतिगिरंसंहृत्यगुणध्यानसमवस्थायांवाकायितासमाधिध्यानसंधानप्रति ज्ञासुसमर्थनइत्यभिधानादित्यर्थः पौरुषींपुरुषेणोक्तां गमयत्यवगमयतिज्ञापयत्यर्थमितिगौर्वाक् अथकस्माद्गौरितिगच्छतीतिनिरुक्तकारनिर्वचनमपिवक्तुःश्रोतुःकर्णांतरगमनाद्युक्तम् २१ धराज्वरः भूमेःसंतापः ज्वरसंतापइतिधातुः । नकेवलंजननमेवपूर्यतेतावंतंकालमवस्थानंचापेक्षितमित्याह सयावदिति । स्वकालशक्त्यास्वरूपभूतोपसंहारकालरूपशक्त्या २२ नकेवलंदेवानामुर्व्यामवतारस्त दंगनानामपीत्याह वसुदेवेति २३ हरेरवताराविनाभूतस्यशेषावतारस्यप्रकारमाह वासुदेवेति । वासुदेवकलानंतइत्येकंपदम् । वासुदेवस्यकलयासितकेशांशेनयुक्तःशेषः । स्वेनहरिणाराजतइतिस्व राट् स्वस्यस्वतंत्रस्यहरेरधस्तच्छयनीयत्वेनराजतइतिवा । स्वमात्मानंसनकादिभ्योराजयतिप्रकाशयतीतिवा हरेरग्रतः २४

देवकार्यार्थसहायांतरवाकि योगमायेति । योगमायादुर्गा २५ महर्लोकादिभ्यःपरमम् २६ चतुर्मुखेभुवंसांत्वयित्वासत्यलोकंगतेउत्तरकथाप्रसंजयति शूरसेनइति । कार्तवीर्यमुतःपुरीमावसन्निति स प्रत्यर्थेद्वितीया । उपान्वध्याङ्वसइतिसूत्रात् २७ २८ ततःकिमत्राह तस्यामिति २९ विवाहकालेरथहयानांकविकाग्रहणेअत्यंतंबंधुनाभाव्यमितिदर्शयितुंतद्ग्राहिणमाह उग्रसेनसुतइति ३० विवाहकालेदुहित्रेपदीयमानंधनंतत्सारिवर्हनाम ३१ ३२ प्रयाणप्रक्रमेगमनारंभे ३३ प्रग्रहःकविकातद्धतम् अस्याःदेवक्याः ३४ कुलपांसन कुलधूलीकरणशीलः कचेकेशपाशे ३५ नृशंसंक्रूरकर्माणम् परिसांत्वयन्सामाभेदेनवसंबोधयन् ३६ संबंधलाभोपकृतिरमेदोगुणकीर्तनम् । सामपंचविधोभेदोदृष्टादृष्टभयंवचइतिपंचविधसामज्ञायते श्लाघनीयगुणेत्यादिना श्लाघनीयगुणेतिगुणकीर्तनं भोजय

योगमायाभगवतीययासंमोहितंजगत् ॥ आदिष्टाप्रभुणांशेनकार्यार्थेसंभविष्यति २५ श्रीशुकउवाच ॥ इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः ॥ आश्वास्यचमहीं गीर्भिःस्वधामपरमंययौ २६ शूरसेनोयदुपतिर्मथुरामावसन्पुरीम् ॥ माथुराञ्छूरसेनांश्चविषयान्बुभुजेस्वराट् २७ राजधानीततः साभूत्सर्वयादवभूभुजाम् ॥ मथुराभगवान्यत्रनित्यंसंनिहितोहरिः २८ तस्यांतुकर्हिचिच्छौरिर्वसुदेवःकृतोद्वहः ॥ देवक्याभार्ययासार्धंप्रयाणेरथमारुहत् २९ उग्रसेनसुतःकंसःस्वसुःप्रियचिकीर्षया ॥ रश्मीन्हयानांजग्राहरौक्मैरथशतैर्वृतः ३० चतुःशतंपारिबर्हंगजानांहेममालिनाम् ॥ अश्वानामयुतं सार्धंरथानांचत्रिषट्शतम् ३१ दासीनांसुकुमारीणांद्वेशतेसमलंकृते ॥ दुहित्रेदेवकःप्रादाद्याने दुहितृवत्सलः ३२ शंखतूर्यमृदंगानिनेदुर्दुंदुभयःसमम् ॥ प्रयाणप्रक्रमेतातवरवध्वोःसुमंगलम् ३३ पथिप्रग्रहिणंकंसमाभाष्याहाशरीरवाक् ॥ अस्यास्त्वामष्टमोगर्भोहंतायांवहसेऽबुध ३४ इत्युक्तःसखलः पापोभोजानांकुलपांसनः ॥ भगिनींहंतुमारब्धःखड्गपाणिःकचेऽग्रहीत् ३५ तंजुगुप्सितकर्माणंनृशंसंनिरपत्रपम् ॥ वसुदेवोमहाभागउवाचपरिसांत्वयन् ३६ वसुदेवउवाच ॥ श्लाघनीयगुणःशूरैर्भवान्भोजयशस्करः ॥ सकथंभगिनींहन्यात्स्त्रियमुद्वाहपर्वणि ३७ मृत्युर्जन्मवतांवीरदेहेनसह जायते ॥ अद्यवाब्दशतांतेवामृत्युर्वैप्राणिनांध्रुवः ३८ देहेपंचत्वमापन्नेदेहीकर्मानुगोऽवशः ॥ देहांतरमनुप्राप्यप्राक्तनंत्यजतेवपुः ३९ व्रजंस्तिष्ठन्पदैकेनयथैवैकेनगच्छति ॥ यथातृणजलूकैवंदेहीकर्मगतिंगतः ४०

शस्करेतिकीर्तिलाभकथनंहन्यात्स्त्रियमितिस्त्रीवधादकीर्तिलाभसूचनम् । भगिनीमितिसंबंधवचनम् । उद्वाहपर्वणीतिअपकृतिसूचनम् । उद्वाहपर्वणीतिसूचनाद्विवाहोऽपमेव ३७ मृत्युर्जन्मवता मित्यादिनाअदृष्टभयम् ३८ देहेपंचत्वमित्यादिनादृष्टभयंकर्मपुण्यपापविषयअवशोनिष्णुवश त्यजतेत्यजति ३९ पूर्वदेहपरित्यागेनदेहांतरप्राप्तौदृष्टांतमाह व्रजन्निति यथाव्रजन्पुरुषःएकेनपादेनातिष्ठतिएकेनगच्छतिपूर्वदेशवियोगेनदेशांतरसंयोगमाप्नोति । यथातृणजलूकातृणांतरंगृहीत्वापूर्वंतृणंत्यजतिएवंदेहीकर्मगतिंगतोभवतीत्यन्वयः कर्मणोगतिरापतिर्यस्मिन्देहेत्यजतितथातच्च देहांतरमित्यर्थः ४०

ननुदेहात्मनोरभेदेनदेहीपूर्वदेहंपरित्यज्यअभिनवदेहांतरंयातीतिकथंसंजाघटीतीतितत्राह स्वप्नइति । जाग्रद्दृष्टश्रुतपदार्थसंस्कारसमुद्बुद्धमनोरथेनअभिनिविष्टचेतनःगाढग्रस्तबुद्धिरात्मास्वप्नेईदृशं जाग्रद्देहसदृशदेहंयथापश्यति । स्वकीयत्वेनानुभवतिपरकीयत्वेनवा आत्मनएकत्वेनदेहयोर्द्वित्वेनदर्शनाद्देहात्मनोर्भेदआनुभाविकः । तथामनसानुचिंतन्आत्माद्दृष्टश्रुतस्मृतानुस्मृतंतत्तत्रकिमपिदेवा द्यन्यतमशरीरंप्रपद्यते । कदेत्यतउक्तंअपस्मृतिरितिउत्तरदेहेअभिमानितयापूर्वदेहस्मरणाभावेनमृतइत्यर्थः । हिशब्दोहेतौ यतएवमृतइत्यर्थःतदुक्तमाचार्यैःस्वप्नेयथादृष्टश्रुतरमृत्यनुसारिदेहमाप्नोत्य पस्मृतिर्मृतः पूर्वदेहस्मरणाभावात् अनभिमानत्वइति ४१ एतदेवविवृणोति यतोयतइति । सार्वविभक्तिकस्तसिरितिवचनाद्यतोयतोयत्रयत्र । मायारचितेष्वित्यादिषुसप्तमीषष्ठ्यर्थे भगवदिच्छो द्बोधितप्रकृतिनिमित्तानां । प्रकृतेरेकत्वेनसृष्टेर्नानाविध्यंकथमत्राह गुणेष्विति । कार्यकारणाभेदात्सत्वादिगुणविहितानाआत्मपंचसुदेवगंधर्वपितृमनुष्यासुरभेदेनपंचानामात्मनामध्येदैवेनअदृष्टोद्बो धकेनहरिणाचोदितंप्रेरितंमनोधावतिविषयीकरोति मनोविशिनष्टि विकारात्मकमिति । संकल्पविकल्पनिबद्धमिति यस्यमनःमरणसमयेयोग्यतानुसारेणयंयधावतिअसौदेहीतत्रतत्रप्रपद्यमानः प्र वृत्तिंलभमानः तेनदैवेनसहजायते । प्राज्ञेनात्मनाऽन्वारूढउत्सृज्ययातीतिश्रुतेः । उत्पद्यमानोपितेनसहउत्पद्यतइतिज्ञातव्यं । अत्रापियोग्यतामपेक्ष्यतत्तच्छरीरग्रहणं तदुक्तं देवादित्वंयोग्यतयात त्सकाशस्त्वनुस्मृतेः श्वेतद्वीपादितत्रापियोग्यतामप्यपेक्ष्यतु विष्णोःस्थानंविनान्यत्रवायुशक्रादिनामपि त्रैलोक्यदेशभेदेषुयोग्यतानत्वपेक्ष्यतइति अनेनव्याप्तस्यात्मनोगमनंकथमितिचोद्यंपरिहृतपर मात्मानमंतरेणनिरूपचरिताव्याप्तिर्नास्ति अणुर्ह्येषआत्मेतिश्रुतेः आलोकवद्गुणेनयथायोग्यव्याप्तिरस्तुनाम तथापिस्वरूपतोनास्त्येवव्याप्तिःज्ञात्मानश्चेतनानिर्गुणश्चेतिस्मृतेःश्रीनारायणविषयेतिनिर

**स्वप्नेयथापश्यतिदेहमीदृशंमनोरथेनाभिनिविष्टचेतनः ॥ दृष्टश्रुताभ्यांमनसानुचिंतयन्प्रपद्यतेतत्किमपिह्यपस्मृतिः ४१ यतोयतोधावतिदैवचोदि तंमनोविकारात्मकमात्मपंचसु ॥ गुणेषुमायारचितेषुदेह्यसौप्रपद्यमानःसहतेनजायते ४२ ज्योतिर्यथैवोदकपार्थिवेष्वदःसमीरवेगानुगतंविभाव्यते ॥ एवंस्वमायारचितेष्वसौपुमान्गुणेषुरागानुगतोविमुह्यति ४३ तस्मान्नकस्यचिद्द्रोहमाचरेत्सतथाविधः ॥ आत्मनःक्षेममन्विच्छन्द्रोग्धुर्वैपरतोभयम् ४४ एषातवानुजाबालाकृपणापुत्रिकोपमा ॥ हंतुंनार्हसिकल्याणीमिमांत्वंदीनवत्सल ४५**

णापि नोचेदुक्तागतिरेवेति ४२ ननुगुणानांनानात्वात्सृष्टेर्वैचित्र्यमस्तु एकस्यात्मनोनानाविधप्रतीतिःकथमितिशंकांसदृष्टांतंपरिहरति ज्योतिरिति । यथाअदोज्योतिरादित्यलक्षणंसमीरवेगानुग तंवायुवेगनिमित्तचलनेनअनुचलितमुदकपार्थिवेषुजलपूर्णशरावाद्युपाधिषुप्रतिबिंबितंविभाव्यते विविधत्वेनभाव्यते छिन्नभिन्नादिरूपेणप्रतीयते । एवमसौपुमान्स्वमायारचितेषुपरस्वोहारिरिति वचनात्स्वस्यविष्णोरिच्छयारचितेषुदेहेषुप्रतिबिंबितःअशोभनेशोभनाध्यासोरागःतेनानुगतःतन्मयांतःकरणोविमुह्यति विविधंछिन्नोभिन्नोमृतोस्मीतिमोहमज्ञानंप्रतिपद्यते यथातदेवज्योतिःपार्थिव वह्नीभूतपूर्णजलेप्रतिबिंबितंवायुवेगानुगतंविशिष्टंनिश्चलंभाव्यते छेदभेदादिरहितंप्रतीयते एवंयोग्योजीवोगुणेषुप्रतिबिंबितोरागमनुरागंस्नेहविशेषमनुगतोनिर्मुक्तद्वेषोविगतमोहोभवति अज्ञाननि मित्ताछिन्नोहाभीतिदुःखंनप्राप्नोतीतिपरिहारपरतयावायोजनीयंउभयोरपिसमाख्यानसिद्धप्रमाणत्वात् तदुक्त यथैगोदशरावेष्वित्यारभ्यपरेषांद्रोहमाचरन्नित्यतेन स्वमायेत्यत्रस्वशब्देनविष्णुरेवोच्यतेमा नसिद्धत्वात् तदुक्तं परस्वोहरिरुद्दामइतिपद्येन गुणयोगयुक्तरूढयासिद्धत्वात् मुख्यंच तदुक्तं स्वतंत्रत्वात्सुखत्वाच्चस्वनामाविष्णुरुच्यतइति । रागोऽनुरागेलाक्षायामितियादवः ४३ नन्वस्तुना त्मनोजन्मादिकंकर्मनिमित्तप्रकृतेततःकिंतत्राह तस्मादिति यतआत्मातथाविधः कर्मफलभोक्तातस्मात्सतादृशःकस्यचिद्द्रोहंहिंसानाचरेत् ततःकिंतत्राह आत्मनइतिअनर्थवाह द्रोग्धुरिति परतःपरलोके दुःखलक्षणंभयंभवतीतिशेषः ४४ परतोऽन्यस्माद्द्रोग्धुःपुरुषान्द्रोहलक्षणंभयंस्यादितिमन्त्यानिरंतरद्रोहलक्षणंदुःखंभवतीतिभयसामग्रदर्शयभेदसामग्रदर्शयति एषेति ४५

पुरुषादान्राक्षसाननुव्रतःतत्स्वभावमापन्नइत्यर्थः ४६ यःशास्त्रनिषिद्धस्तंप्राप्तकालंप्राप्तावसरंव्यसनंप्रतिव्योढुंप्रतिहंतुंइदंवक्ष्यमाणंअन्वपद्यतअपश्यत् ४७ यावद्बुद्धिबलोदयमित्यव्ययीभावः यावदवधारणेइतिसूत्रात् अपराधःशास्त्रविरोधाचरणलक्षणः ४८ किमपश्यत्तदाह मत्यर्प्यमृत्यवेमारकायकंसाय उपायाभासोऽयंयदपत्यार्पणंतत्राहवाममसुतोत्पत्तेःप्राक्कूर्नाम्रियेतचेत्यदिनम रिष्यति४९ विपर्ययोवा ममपुत्रःकंसंवाहनिष्यतीनीकिंनस्यात् कथमेतदितितत्राह धातुरिति । धातुरीश्वरस्यगतिश्चेष्टाल्लक्षणादुरत्यया अतिक्रांतुमशक्या अतःकितत्राह उपस्थितइति सर्वथातावदु पस्थितोमृत्युरस्याःनिवर्तेत निवृत्तोयदिरावणादेरिवपुनरापतेत्तर्हितदानीमस्तुकिंनावदिदानीम् ५० इतोपिधातुर्गतिर्दुरत्ययेत्येतत्सदृष्टांतमुपपादयति अग्नेरिति । यथाग्नेःगेवादिदहनमग्ना रुवियोगयोगयोःकष्ठानभिव्यक्तिव्यक्त्योः दाखवृक्षाभिमानिजीवादृष्टभेदेश्वरात्अन्यन्निमित्तंनास्ति अदृष्टइत्यादौहरिनिवेशःकस्मात् उच्यते कुंडस्थाग्नेर्दारुवियोगादौस्वतःप्रवृत्त्यभावादितिद्व

एवंससामभिर्भेदैर्बोध्यमानोऽपिदारुणः ॥ नन्यवर्ततकौरव्यपुरुषादाननुव्रतः ४६ निर्बंधंतस्यतंज्ञात्वाविचिंत्यानकदुंदुभिः ॥ प्राप्तकालंप्रतिव्योढुमि दंतत्रान्वपद्यत ४७ मृत्युर्बुद्धिमताऽपोह्योयावद्बुद्धिबलोदयम् ॥ यद्यसौनानिवर्तेतनापराधोऽस्तिदेहिनः ४८ प्रदायमृत्यवेपुत्रान्मोचयेकृपणामिमा म् ॥ सुतामेयदिजायेरन्मृत्युर्वानाम्रियेतचेत् ४९ विपर्ययोवाकिंनस्याद्गतिर्धातुर्दुरत्यया ॥ उपस्थितोनिवर्तेतनिवृत्तःपुनरापतेत् ५० अग्नेर्यथादा रुवियोगयोगयोरदृष्टतोन्यन्ननिमित्तमस्ति ॥ एवंहिजंतोरपिदुर्विभाव्यःशरीरसंयोगवियोगहेतुः ५१ एवंविमृश्यतंपापंयावदात्मनिदर्शनम् ॥ पूज यामासवैशौरिर्बहुमानपुरःसरम् ५२ प्रसन्नवदनांभोजोनृशंसंनिरपत्रपम् ॥ मनसादूयमानेनप्रहसन्निदमब्रवीत् ५३ नह्यस्यास्तेभयंसौम्ययद्वैसाऽऽहा शरीरवाक् ॥ पुत्रान्समर्पयिष्येऽस्यायतस्तेभयमुत्थितम् ॥ ५४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेप्रथमोऽध्यायः ॥ १ ॥ श्रीशुकउवाच ॥ सुहृद्वधान्निववृतेकंसस्तद्वाक्यसारवित् ॥ वसुदेवोपितंप्रीतःप्रशस्यप्राविशद्गृहम् १ अथकालउपावृत्तेदेवकीसर्वदेवता ॥ पुत्रान्प्रसुषुवेचाष्टौकन्यांचै वानुवत्सरम् २ कीर्तिमंतंप्रथमजंपुत्रमानकदुंदुभिः ॥ अर्पयामासकृच्छ्रेणसोऽनृतादतिविह्वलः ३

नात् यथाकुंडस्थितस्याग्नेर्दैवादाद्रूपमक्रमेत् ॥ देहयोगवियोगश्चतथादैवात्रचान्यथेतिवचनाच । एवंजंतोरपिशरीरवियोगसंयोगहेतोहरेरन्योदुर्विभाव्यःकेवलादृष्टलक्षणस्यकारणस्वतःप्रवृत्त्यनुपपत्ते. कार्यस्यचद्रदर्शनान्यथाऽनुपपत्त्या.श्रीनारायणएवभाव्यइत्यतस्त्वयाशास्त्रज्ञेनास्याःहननंनोचितमितिभावः ५१ आत्मनियावद्दर्शनंपरबाधलक्षणंज्ञानंविमृश्यात्मिच्यत्र स्थातावतासाद्रयामास त्वाग्रण सलोकप्रसिद्धदृष्टांतोयावांस्तावतावा ५२ प्रसन्नंस्वस्थंनूतनवदनांबुजंयस्यसतथा । प्रसन्नमुक्तसत्यस्कमितिहलःपुनः दूयमानेनमनसानिअंतस्तापंचसूचयति प्रहसन्निति वहि प्रपाद इदमहतांलक्ष णम् ५३ यावज्जीवेनाप्युक्तसंवादंविज्ञायपथास्वादीस्यात्तथाप्रदेहेतुरकिंनह्यस्याइति यतोदेवक्याः ५४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांपदरत्नावल्यांप्रथमोऽध्यायः ॥ १ ॥ अत्रकंसचरित्रकथनव्याजेनसंसारस्यानर्थरूपत्वमंपतिशुकःसुहृत्सहोदरी भार्यांवयोपरमान्प्रीतःकंसंप्रशस्य १ सर्वदेवतायस्यांसन्निहितासातथा अनुवत्सरंप्रतिवत्सरम् २ नाम्नाकीर्तिमंतम् ३

स्वात्मनःप्राणनाशेनापिसत्यमेवरक्षंतिमहांतइत्याशयेनाह किंदुःसहमिति कंसोऽसाधुष्वेकइत्याशयेनाह किमकार्यमिति कदर्याणांकुत्सितस्वामिनांदरिद्राणांवा वसुदेवःसाधुष्वेकइत्याशयेनाह दुस्त्यजमिति कृतात्मनांसत्स्वभावानां ४ ५ ६ अविजितात्मनोऽसतःकंसस्यवद्वचनंनविश्वसनीयमितिनाभ्यनंदत ७ ८ नंदाद्याइत्यारभ्यवधोद्यममित्यंतंनारदवाक्यं ९ उभयो यदुकुलगो कुलयोः १० ११ वधोद्यमं देवैःक्रियमाणमितिशेषः १२ १३ अहन्हतवान् अजनोविष्णुरवतीर्णइतिशंकया १४ परप्राणैःस्वानसूनुप्राणान्रतर्पयंतीत्यसुतृप १५ प्राक्पूर्वजन्मनि १६ शूरसेना न्विषयान् १७ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांद्वितीयोऽध्यायः ॥ २ ॥ अवतारकृपंहरेर्नकिंचिदपिभिन्नंसाक्षात्स्वरूपमेवतज्ज्ञानस्यमुक्तिहेतुत्वादित्यभिप्रायेणनिरूपयन्

किंदुःसहंनुसाधूनांविदुषांकिमपेक्षितम् ॥ किमकार्यंकदर्याणांदुस्त्यजंकिंधृतात्मनाम् ४ दृष्ट्वासमत्वंतच्छौरेःसत्येचैवव्यवस्थितिम् ॥ कंसस्तुष्टमनाराजन्प्रहसन्निदमब्रवीत् ५ प्रतियातुकुमारोऽयंनह्यस्मादस्तिमेभयम् ॥ अष्टमाद्युवयोःपुत्रान्मृत्युर्मेविहितःकिल ६ तथेतिसुतमादाययथावानकदुंदुभिः॥ नाभ्यनंदततद्वाक्यमसतोऽविजितात्मनः ७ अथकंसमुपागम्यनारदोब्रह्मनंदनः ॥ एकांतमुपसंगम्यवाक्यमेतदुवाचह ८ नंदाद्यायेव्रजेगोपायाश्चामीषांचयोषितः ॥ वृष्णयोवसुदेवाद्यादेवक्याद्यायदुस्त्रियः ९ सर्वेवैदेवताप्रायाउभयोरपिभारत ॥ ज्ञातयोबंधुसुहृदोयेचकंसमनुव्रताः १० असुराःसर्वएवैते लोकोपद्रवकारिणः ॥ गतेथवसुदेवेतुदेवकार्यार्थमुद्यतः ११ एतत्कंसायभगवान्शंसयामासनारदः ॥ भूमेर्भारावतीर्णानांदैत्यानांचवधोद्यमम् १२ ऋषेर्विनिर्गमेकंसोयदून्मत्वासुरानिति ॥ देवक्यागर्भसंभूतंविष्णुंचस्ववधंप्रति १३ देवकींवसुदेवंचनिगृह्यनिगडैर्गृहे ॥ जातंजातमहन्पुत्रंतयोरजनशंकया १४ मातरंपितरंभ्रातॄन्सर्वांश्चसुहृदस्तथा ॥ घ्नंतिह्यसुतृपोलुब्धाराजानःप्रायशोभुवि १५ आत्मानमिहसंजातंजानन्प्राग्विष्णुनाहतम् ॥ महासुरंकालनेमिंयदुभिःसव्यरुध्यत १६ उग्रसेनंचपितरंयदुभोजांधकाधिपम् ॥ स्वयंनिगृह्यबुभुजेशूरसेनान्महाबलः १७ इतिश्रीभागवतेमहापुराणेदशमस्कंधेद्वितीयोऽध्यायः २ श्रीशुकउवाच ॥ प्रलंबबकचाणूरतृणावर्तमहाशनैः ॥ मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः १ अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः॥ यदूनांकदनंचक्रेबलीमागधसंश्रयः २ तेपीडितानिविविशुःकुरुपांचालकैकयान् ॥ शाल्वान्विदर्भान्निषधान्विदेहान्मागधानपि ३ एकेतमनुरुंधानाज्ञातयःपर्युपासते ॥ मथुरायांस्थिताश्चैवयेऽक्रूराद्याविशांपते ॥ हतेषुषट्सुबालेषुदेवक्याऔग्रसेनिना ४ सप्तमोवैष्णवंधामयमनंतंप्रचक्षते ॥ गर्भोबभूवदेवक्याहर्षशोकविवर्धनः ५

स्मिन्नध्याये तत्रदुष्टेंद्रियैःसार्धंद्रियनिग्रहइवकंसःप्रलंबादिभिःसहितोयदुनिग्रहमकृतेत्यादिकंनिरूपयति प्रलंबेत्यादिना १ कदनंकलहं मागधोजरासंधःसंश्रयोयस्यसतथा तंसंश्रयतीतिवा २ ते यादवाःनिविविशुःनिवेशनंचक्रुः ३ अनुरुंधानाःअनुवर्तमानाः ४ वैष्णवंधामविष्णुतेजःसन्निहितं । हर्षशोकविवर्धनइतिउत्पत्तिप्रस्रवणाभ्यामितिशेषः हर्षसंवर्धयन्शोकंवर्धयतीतिवा ५

६ ७ पर्वतविवरेषु ८ स्वांशभागेनस्वांशांशेन अंशस्यभागोभजनंस्वीकारःतेनेनिवा ९ १० ११ दुराधिगमत्वाद्दुर्गाभद्रामंगलानीलाचेतिभद्रकाली सर्वादिशोविजयतीतिविजया विष्णोरियंवैष्णवी कौभूमौमोदतीतिकुमुदा चंडिकोपइतियातोःशत्रवेकुपितत्वाच्चंडिका सदानंदत्वात्कृष्णा मधुकुलोत्पन्नत्वान्माधवी विष्णुदयितत्वाद्वा कंसुखंनयतीतिकन्या नित्यकुमारीवा १२ मीयतेज्ञायतेइति माया मांयातीतिवा नारस्यनरसमुदायस्यअयनत्वान्नारायणी सर्वस्येष्टेतिईशाना शीर्यतइतिशारःतंसंसारघातिखंडयतीतिशारदा शत्रुविषयंशारांहिंसांददातीतिवा सर्वस्यमातृत्वादंबिका १३ बलोच्छ्र्याद्बलोबलः १४ तद्वचनंतथेतिस्पष्टीकरणंतथेत्योमिति तथाकरोमीतितद्वचःप्रतिगृह्येतिवा १५ योगनिद्रयादेवक्याःगर्भेरोहिणीप्रणीतेसति विस्रंसित स्रावित निर्गलितइतिविचुक्रुशुः१६ १७ पौरुषं धामपुरुषाकारीभूतविष्णुतेजः १८ वसुदेवप्रवेशानंतरंदेवीअच्युतस्यहरेरंशंकृष्णकेशलक्षणंदधारजगन्मंगलयतिभूभारहरणेनजगन्मंगलकरोतीतिजगन्मंगलम् शूरसुतेनवसुदेवेनसमाहितम् सर्वात्मनः

भगवानपिविश्वात्माविदित्वाकंसजंभयम् ॥ यदूनांनिजनाथानांयोगमायांसमादिशत् ६ गच्छदेविव्रजंभद्रेगोपगोभिरलंकृतम् ॥ रोहिणीवसुदेवस्य भार्यास्तेनंदगोकुले ७ अन्याश्चकंससंविग्नाविवरेषुवसंतिहि ॥ देवक्याजठरेगर्भंशेषाख्यंधाममामकम् ८ तत्संनिकृष्यरोहिण्याउदरेसंनिवेशय ॥ अथाहं स्वांशभागेनदेवक्याःपुत्रतांशुभे ९ प्राप्स्यामित्वंयशोदायांनंदपत्न्यांभविष्यसि ॥ अर्चिष्यंतिमनुष्यास्त्वांसर्वकामवरेश्वरीम् १० नानोपहारबलि भिःसर्वकामवरप्रदाम् ॥ नामधेयानिकुर्वंतिस्थानानिचनराभुवि ११ दुर्गेतिभद्रकालीतिविजयावैष्णवीतिच ॥ कुमुदाचंडिकाकृष्णामाधवीकन्यके तिच १२ मायानारायणीशानाशारदेत्यंबिकेतिच १३ गर्भसंकर्षणात्तंवैप्राहुःसंकर्षणंभुवि ॥ रामेतिलोकरमणाद्बलभद्रंबलोच्छ्र्यात् १४ श्रीशुकउवाच संदिष्टैवंभगवतातथेत्योमितितद्वचः ॥ प्रतिगृह्यपरिक्रम्यगांगतातत्तथाकरोत् १५ गर्भेप्रणीतेदेवक्यारोहिणींयोगनिद्रया ॥ अहोविस्रंसितोगर्भइति पौराविचुक्रुशुः १६ भगवानपिविश्वात्माभक्तानामभयंकरः ॥ आविवेशांशभागेनमनआनकदुंदुभेः १७ सबिभ्रत्पौरुषंधामराजमानोयथारविः ॥ दुरा सदोऽतिदुर्धर्षोभूतानांसंबभूवह १८ ततोजगन्मंगलमच्युतांशंसमाहितंशूरसुतेनदेवी ॥ दधारसर्वात्मकमात्मभूतंकाष्ठायथानंदकरंमनस्तः १९

सर्वव्यापिनोहरेर्यासर्वव्यापित्वशक्तिःसाऽस्यास्तीतिसर्वात्मकस्तम् । आत्मभूतंदेवक्यांप्रत्यगात्मस्वरूपम् आत्मनोमनसोभूतमभिव्यक्तंवा आत्मभुवश्चतुर्मुखस्यभूतमिष्टसाधकत्वादिष्टदैवंवा आनंदकरंसुकमपंचस्यापिसुखकरं कथमिव काष्ठापूर्वादिक् आनंदोऽमृतंकरोयस्यसतमानंदकरंचंद्रंनभस्तआकाशेयथादधातितथाहृद्याकाशेदधार नतुयोन्याकाशे कीदृशीकाष्ठापूर्णमनोरथा कीदृशीदेवीद्योतमाना कीदृशंचंद्रंराज्यामंधकारनिरासेनजगन्मंगलभूतम् च्युतिरहितअशाःकरायस्यसतथातपूर्णकलमित्यर्थः शूरश्चडकरःसूर्यस्तत्सुतःसुपुत्राख्योरश्मिस्तेनसमाहितंनिष्पादितं अमावास्यायांसूर्येलीनःतस्यमुपुत्राख्यरश्मिनाअभिव्यज्यतइतिशास्त्रप्रसिद्धिः सर्वासामोषधीनामंकुरजनकत्वनप्रकृष्टत्वात्सर्वात्मकंआत्मनोमनसोभिमानित्वादात्मभूत लोकविडंबनार्थंपितृमातृ प्रवेशक्रमःनतुशरीरस्वीकारार्थं तदुक्तम् आविश्यपितरंविष्णुस्वरूपेणैवमातरः । विडंबनार्थंलोकस्यनिर्जगामाप्ययथाविशत् । आनंदमात्रदेहेनजातवत्संप्रदृश्यतइत्यादिना १९

सादेवकीप्रथमंभोजेंद्रगेहेरुद्धानविरेजइति नञ्मध्यात्त्हत्यव्याख्येयम् पश्चात्सर्वंजगत्यस्मिन्निवसंतीतिसर्वजगन्निवासोविष्णुः तस्यनिवासभूता हेतुगर्भविशेषणम् नितरामत्यंतंविरेजेनरेजइतिपाठेन ञोऽध्याहार्यत्वम् अत्रदृष्टांतः दाहकाग्निशिखादाह्यतृणपटलादिनारुद्धानराजते पुनःशुष्केणतेनैवज्वलितायथाराजतेयथावासतीसरस्वतीसत्यरूपावाणीद्यूतखलेद्यूतरगस्थलेअनृतेनरुद्धानराजते सैवानिर्व्याजारोचतेतथेतिअन्यथायथास्थितकथनंदृष्टांतदार्ष्टांतिकविरोधाद्युक्तम् २० अजितंभरांविष्णुंदधानांजेतुमशक्यगर्भभरांवा अंतःस्थितविष्णुप्रभावोधितस्वदेहप्रभयागर्भरूपेणत्हृदयगुहांप्रविष्टोयद्यस्मात्तत्तस्माद्ध्रुवम् २१ अस्तुतवप्राणहरोहरिस्ततःकिमत्राह किमद्येति अद्यमेमयातस्मिन्गर्भस्थितेहरौघटनीयंउपद्रवत्वेनकर्तव्यंतत्केनप्रकारेणेतिचिंत्यते तदप्याशुकर्तव्यं नकालःक्षेपणीयः कुतोऽत्राह अर्थेति अधुनाअहमर्थतंत्रःप्रयोजनाधीनइतियत्तस्मात्कालोनक्षेपणीयइतितत्राह यथेति यथाअयमर्थतंत्रःदेवकार्यलक्षणप्रयोजनैकपरायणोगर्भस्थितोहरिःममविक्रमंजीवनलक्षणंनविहंति तथाज्ञटितिकरणीयमित्यर्थः यथाअर्थतंत्रःपुरुषःस्वविक्रमंनविहंतितथेतिवा ननुतर्हितद्वधएवश्रेयानितितत्राह स्त्रियइति अयंस्त्रियोवधोयशोहंति अस्त्वयशस्करस्ततःकिंतत्राह स्वसुरिति स्वसुर्वधःश्रियंहंति जीवन्भद्राणीतिवचनात्तदप्यास्त्वितितत्राह गुरुमत्याइति गर्भिण्यावधोनुकूलंक्षमायुर्हरतिअतोवधोनघटनीयइतिभावः २२ ननुलोकेकेषांचित्क्रूरकर्मिणादीर्घायुष्यदर्शना

## सादेवकीसर्वजगन्निवासनिवासभूतानितरांविरेजे ॥ भोजेंद्रगेहेऽग्निशिखेवरुद्धासरस्वतीद्यूतखलेयथासती २० तांवीक्ष्यकंसःप्रभयाजितंभरांविरोचयंतींभवनंशुचिस्मिताम् ॥ आहैषमेप्राणहरोहरिर्गुहांध्रुवंश्रितोयन्नपुरेयमीदृशी २१ किमद्यतस्मिन्घटनीयमाशुमेयथार्थतंत्रोनविहंतिविक्रमम् ॥ स्त्रियःस्वसुर्गुरुमत्यावधोयंयशःश्रियंहंत्यनुकूलमायुः २२ सएषजीवन्खलुसंपरेतोवर्त्ततयोऽत्यंतनृशंसितेन ॥ देहेमृतेतमनुष्यर्थकामौयशोमलंगौरभिमानिनोध्रुवम् २३ इतिघोरतमाद्भावात्सन्निवृत्तःस्वयंप्रभुः ॥ आस्तेप्रतीक्षंस्तज्जन्महरेर्वैरानुबंधवित् २४ आसीनःसंविशंस्तिष्ठन्भुंजानःपर्यटन्पिबन् ॥ चिंतयानोहृषीकेशमपश्यत्तन्मयंजगत् २५ ब्रह्माभवश्चतत्रैत्यमुनिभिर्नारदादिभिः ॥ देवैःसानुचरैःसाकंगीर्भिर्विष्णुमथास्तुवत् २६ ब्रह्मभवावूचतुः ॥ सत्यव्रतंसत्यपरंत्रिसत्यंसत्यस्ययोनिंनिहितंचसत्ये ॥ सत्यस्यसत्यमृतसत्यनेत्रंसत्यात्मकंत्वांशरणंप्रपन्नाः २७

सवापिकिंनस्यादित्यतआह सएषइतिजीवन्परेतोजीवन्मृतो नकेवलंक्रूरकर्मकर्तुरत्रजीवन्मृतमात्रंअपितुमृतेपुरुषार्थसर्वस्वहानिःस्यादित्याह देहइति। अभिमानिनोदेहेमृतेपंचत्वंप्राप्तेतंदेहमन्वर्थकामौपुरुषार्थौनश्यतःसाधकाभावात् हिशब्दोर्थकामावनुधर्मोनश्यतीतिदर्शयति तमनुगौःस्वर्गादिशब्दवाच्योलोकोनश्यति साधकाभावात्। देहमनुमानिनोऽमलंयशोनश्यतिध्रुवंतत्रनसंशयइत्यर्थः। अर्थकामयशआदिनाशेगौर्दृष्टिर्ज्ञानंनश्यति। तांदृष्टिमनुमानिनःपुंसोध्रुवंनित्यसुखानुभवलक्षणोगामोक्षोनश्यतीतिवा। स्वतोनृतस्यापिकंसस्यएवंविधज्ञानंसच्चेतनावेशादुपपद्यतेइतिक्षुद्रबाधानवकाशःगौर्दृष्टिर्दीधितिःस्वर्गइतिहलायुधः २३ भावात्कर्मणः। भावोलीलाक्रियाचेष्टाइतियादवः। स्वयंप्रभुर्ज्ञानित्वाभिमानी स्वमनसैवसमर्थइतिवा। वैरानुबंधवित् वैरअनुबंधंस्नेहंचवेत्तीतिवैरमनुस्नेहंकरोतीतिवा। विदक्रुतावितिधातुः। अनेननिरंतरतच्चिंतयास्नेहस्तकर्यते नतुतात्विकः स्वतएवप्रधानोद्भवइतिध्वनयतिनिरंतरवैरकृद्धा २४ तच्चिंताप्रकारंदर्शयति आसीनइति संविशन्शयानः हृषिरानंदःसएवकेशोयस्यसतथातं यद्वा हृषीकानामिंद्रियाणामीशइति तत्तत्पदार्थस्यकृष्णात्मकत्वमाशंक्यतन्मयत्वं २५ २६ तत्रशंकरादिभिःसमेतोब्रह्माज्ञानिसुगमगुणविशिष्टंविष्टरश्रवसमाभिष्टौति सत्यव्रतमिति वयंत्वांशरणंप्रपन्नाइत्यन्वयः कीदृशंत्वांसत्यव्रतंपूर्णानंदज्ञानलक्षणंसत्यंतदेवव्रतव्यावृत्तंरूपंयस्यसतथातंसद्भ्यःपृथिव्यप्तेजोभ्यःत्यग्रोर्वाय्वाकाशयोःपरत्वाद्विलक्षणत्वात्सत्यपर

त्रयाणांवेदानांसत्यत्वान्मुख्यार्थत्वाद्विसत्यःतं सत्यस्यावाधितप्रपंचस्ययोनिंमूलकारणंसत्येजगत्यंतर्नियामकत्वेननिहितं । सत्यस्यविश्वस्योत्तमानंदज्ञानदंसत्यंसत्यस्यप्रपंचस्यनेत्रंनेतारंसत्यात्मकं सत्यस्यप्रपंचस्यअनृतत्वादादानाच्चसत्यात्मकःतं कप्रत्ययःप्रशंसायां उतशब्दःसमुच्चयार्थः । सच्छब्दउक्तमंत्रयादित्यादिनाऽक्षरार्थोज्ञातव्य प्रामाणिकत्वात्ग्राह्यमेतादृशेनिमिद्ध यद्वा अनृतप्रियवर्ज्जं मंयथार्थकथनंसत्यंतदेवव्रतंनियमोयस्यसतथातं अजस्यावक्रतेजसइतिहिश्रुतेः । सत्यसाहेतावेदेवाइतिच । सत्यपरधर्मपालकं सत्यधर्मउदाहृतइत्यभिधानं । सत्यपरंसत्त्विरवसादनंतस्मादपरम न्यंतद्ब्रह्मेतिमित्यर्थः । अविनाशीवाअरेयमात्मेतिश्रुतेः । त्रिषुकालेषुसत्यंतेषुनष्टेष्वप्यविनष्टमित्यर्थः । सत्यस्यमुख्यप्राणस्ययोनिमुत्पादकं आत्मनएषप्राणोजायतइतिश्रुतेः । सत्येमुख्यप्रा णेनिहितंसन्निहितं सप्राणमसृजतेतिश्रुतिः सत्यमेवनेत्रंनयनंयस्यसतथा सत्यस्यप्रपंचस्यप्रकाशनात्निरुपचारितत्वेनअबाधितं अद्वैतंपरमार्थतःइतिश्रुतिः सत्यादेवास्तेनेत्रशिष्यादिषुनेतारोयस्य सतथा । तंदेवाःप्राणयंतीतिश्रुतिः सत्यमबाधितमात्मनःकंसुखंयस्यसतथा तंअबाधितस्वरूपसुख एषह्येवपरमानंदइतिश्रुतिरिति ॥ २७ ॥ ननुपंचोऽपंकेचिज्जीवकर्तृकःकेचित्प्रधानकर्तृकइत्यादि संभिरंतेतत्राह एकायनइति अत्रपत्रशब्दमध्याहृत्यान्वेतव्यं असावादिवृक्षोयत्रस्थितस्तंत्वांशरणंप्रपन्नाइतिपूर्वेणान्वयः चेतनस्यमनुष्यस्यपुरुषार्थत्वादादौभूतमंतरंगसाधनंज्ञानतेनादिनावृक्षपतइ त्यादिवृक्षःप्रपंचः । आदेर्हरेरधीनोवृक्षइतिवा मुक्तामुक्तप्रपंचपक्षीकरणापदूरस्थस्याप्यदम्शब्देनपरामर्शः । ऋचोअक्षरेपरमेव्योमन्यस्मिन्देवाअधिविश्वेनिषेदुःउतामृतत्वस्येशानइत्यादिश्रुतिःएकाचे तनाचेतनात्मकलक्षणाप्रकृतिरयनंआश्रयोयस्यसएकायनः यत्किंचजगत्यांजगदितिश्रुतिः द्विफलःप्रवृत्तिनिवृत्तिलक्षणेफलेयस्यसद्विफलः सत्त्वादिगुणामूलानियस्यसत्रिमूलः चत्वारोरसाधर्मादिमोक्षाता यस्यसचतूरसः तत्रप्रवृत्तफलस्यधर्मादयस्त्रयोरसाः निवृत्तफलस्यमोक्षएकोरसइतिविभागःपंचमात्राःशब्दादयःशिफायस्यसपंचशिफः अस्तिजायतेपरिणमतेविवर्धतेअपक्षीयतेविनश्यतीतिषड्विकारात्मा

**एकायनोऽसौद्विफलस्त्रिमूलश्चतूरसःपंचशिफःषडात्मा ॥ सप्तत्वगष्टविटपोनवाक्षोदशच्छदीद्विखगोह्यादिवृक्षः २८ त्वमेकएवास्यसतःप्रसूतिःस्थानंनि धानंत्वमनुग्रहश्च ॥ त्वन्माययासंवृतचेतसस्त्वांपश्यंतिनानानविपश्चितोये २९**

तीतिषडात्मा त्वक्चर्ममांसरुधिरमेदोमज्जास्थीनित्वग्रूपेणवर्ततेयस्यसप्तत्वक् देवगंधर्वदानवराक्षसपिशाचतिर्यङ्मानुषस्थावरलक्षणाअष्टविटपायस्यसोऽष्टविटपः नवाक्षाइंद्रियाधिष्ठानभूतायस्यसनवा क्षः अक्षोरथांगआधारेव्यवहारेबिभीतके शकटेपाशकेकर्षेचूतभेदेऽक्षइंद्रियेइतिपादनः दशच्छदाःपत्रस्थानीयानींद्रियाणिअस्यसंतीतिदशच्छदी प्रवृत्तिमार्गस्थानिवृत्तिमार्गस्थाइतिद्विप्रकाराःखगाः पुण्यापुण्यफलभागिनोजीवायस्यसद्विखगः तदुक्तं जगद्वृक्षाश्रयाइत्यादि हिशब्देनकारणस्यसःसच्चात्मवाहेगचसन्नसावित्यादिनाजगद्वृक्षस्य सनातनत्वविष्णुकारणत्वंदर्शयतिहरिरेकएवायनंयस्यासौ सतथा द्वेपुण्यपापेफलेयस्यसतथा तिस्रोजाग्रदाद्याअवस्थायस्य तिस्रोव्याहृतयोवेदावामूलंयस्यसतथा चत्वारोरसाःस्वर्गमोक्षनरकतमोलक्षणायस्यसतथा प्राणापानव्यानोदानसमानाख्याःपंचशिफा अवांतरमूलानियस्यसतथा अशनायापिपासाशोकमोहजरामृत्यवःषडात्मानःसहजायस्य सप्तच्छदासित्वक्स्थानीयानियस्य अष्टविटपाःपंचमहाभूतानिमनोबुद्ध्यहंकाराः विटपायस्यनवनवाक्षाव्यवहा रात्राष्टादशभाषायस्यसतथा तंत्रन्यायेननवशब्दस्यएकोच्चारणंपायूपस्थयोरेकत्वेननवेंद्रियाणिवा यस्यदशेंद्रियविषयाःशब्दस्पर्शादयःदशच्छदाअस्यसंतीति द्वौखगौजीवपरमात्मानौयस्य आदिरद नयोस्यःहरेरेवभूतःप्रपंचःसएववृक्षःआदिवृक्षः अनेनजगद्वृक्षस्यहरेरधीनत्ववर्णनेनहरेरत्युत्तमत्वमुक्तंभवतीति ॥ २८ ॥ ननुब्रह्मादेवानांप्रथमःसंबभूवविश्वस्यकर्ताभुवनस्यगोप्ता एकोरुद्रो नद्वितीयोऽवतस्थेइत्यादिनेतरेषामपिजगदाश्रयत्वमतीतेहरेरेवतल्लक्षणंकथंस्यादितितत्राह त्वमेकएवेति अस्यसतःसत्यजगतःप्रसूयतइतिप्रसूतिःकारणं तिष्ठत्यस्मिन्निति स्थानं निधीयतेस्मिन्निति नि धानंअनुग्रहस्तिरक्षतीत्यनुग्रहः संवृतचेतसआवृतज्ञानाःत्वानानापश्यंति येविपश्चितःतेनपश्यंतीत्यनेनहरेरेवोक्तलक्षणनान्यस्येतिनिरणायि २९

तत्तत्कालप्राप्तानर्थपरिहारलक्षणपालनंचावतारलक्षणस्वरूपग्रहणेनेत्याह विभर्षीति अवबोधआत्मन्ज्ञानस्वरूपेत्यव्यधिकरणेइत्यनेनशुक्रशोणितसंबंधनिवारयति क्षेमायतत्तत्कालप्राप्तविपत्प
रिहारलक्षणपालनाय क्षेमोनाप्राप्तरक्षायामितियादवः सत्वोपपन्नानिबलज्ञानसमाहारयुक्तानि सतामस्माकंसुखकराणि कस्मादिखलानामभद्राणि तमआद्यमंगलकराणि ३० सतांसुखा
वहानीत्येतद्विवृणोति त्वयीति अखिलसत्वधाम्निसदासर्वगुणानामाधारभूतेत्वयिसमाधिनाउपास्त्याआवेशितचेतसःतल्लक्षप्रचित्ताःयेपुरुषाःतेमहत्कृतेनतयैवोपास्त्या यथा महद्भिस्तीर्णंभवतित
थाविरचितेनप्लवेनभवाब्धिसंसारसागरंघोरंगोवत्सपदंकुर्वंति यथावत्सचरणभारकृतनिम्नस्थितजलमयत्नेनतरंतितदित्यन्वयः ३१ नन्वस्तुगोवत्सपदोपमोभवाब्धिर्महांतःतेतमुत्तीर्यकुत्रयांतीति
तत्राह स्वयंसमुत्तीर्येति हेद्युमन्तेजोमूर्ते येअदभ्रसौहृदाःस्वस्वयोग्यभक्तिपूर्णाःस्वयमकृत्रिमयाभवत्पदांभोरुहनावादुस्तरंभवार्णवंसमुत्तीर्यतीर्त्वास्थितास्तेत्रयोग्यादिषुशिष्यादिषुउपदेशेननि
धायतांभवत्पदांभोरुहनावमेवयाताः नान्यथाताभवंतीति यदतोभवान्सतएवानुगृह्णातीतिसदनुग्रहोनामेत्यर्थः ननुसत्वोपपन्नानीत्यादौसत्वगुणात्मकत्वप्रतीतेस्तत्त्वात्पुनस्तत्प्राप्तिःकथंमुक्तिः
स्यात्तस्यानिर्गुणरूपत्वादुच्यते अत्रसत्वशब्देननसत्वगुणविवक्षा किंतुज्ञानादिगुणसामग्री प्रामाणिकत्वात् तदुक्तं सदासर्वगुणाढ्यत्वादित्यादि त्वत्पादपोतेनेत्यनेनभगवद्भक्तस्याशिवादिपादपो
तपुरुषाद्वैशिष्ट्यंज्ञाप्यते तदुक्तं भगवत्पादपोतोसावित्यादि । लोकेनौतीर्णस्यतांविहायदेशांतरगतिदर्शनात्कथंतामेवाश्रिताइतियुज्यतइतिचेन्न भगवत्पादनावोवैलक्षण्यादर्थवैलक्षण्यस्यसंभवात्

विभर्षिरूपाण्यवबोधआत्मन्क्षेमायलोकस्यचराचरस्य ॥ सत्वोपपन्नानिसुखावहानिसतामभद्राणिमुहुःखलानाम् ३० त्वय्यंबुजाक्षाखिलसत्वधाम्नि
समाधिनावेशितचेतसोये ॥ त्वत्पादपोतेनमहत्कृतेनकुर्वंतिगोवत्सपदंभवाब्धिम् ३१ स्वयंसमुत्तीर्यसुदुस्तरंद्युमन्भवार्णवंभीममदभ्रसौहृदाः ॥ भवत्प
दांभोरुहनावमत्रतेनिधाययाताःसदनुग्रहोभवान् ३२ येन्येरविंदाक्षविमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः ॥ आरुह्यकृच्छ्रेणपरंपदंततःपतंत्यधो
नादृतयुष्मदंघ्रयः ३३ तथानतेमाधवतावकाःक्वचिद्भ्रश्यंतिमार्गात्त्वयिबद्धसौहृदाः ॥ त्वयाभिगुप्ताविचरंतिनिर्भयाविनायकानीकपमूर्धसुप्रभो ३४ सत्वं
विशुद्धंश्रयतेभवान्स्थितौशरीरिणांश्रेयउपायनंवपुः ॥ वेदक्रियायोगतपःसमाधिभिस्तवार्हणंयेनजनःसमीहते ३५

तदुक्तंभगवत्पादनौकायाइत्यादि अस्यार्थः याभगवत्पादनौकाइयंअन्यनौकोपमानभवति कुतःतयाभवगत्पादनावाभवाब्धितीर्त्वाश्रीहरिपादनावंतांप्राप्यसुखंतिष्ठंतीतियस्मात्तस्मादिति लोकेचकर्ण
धारादयःतयाब्धितीर्त्वातत्तीरएवतामाश्रित्यतिष्ठंतोदृश्यंतेइत्यतोऽविषमोदृष्टांतइतिसंतोष्टव्यं ३२ खलानामित्युक्तंविवृणोति येन्येइति रविंदंअंधकारः सनभवतीत्यरविंदंप्रकाशःज्ञानमितियावत्अं
धकारोरविंदांधतिमिरंतमउच्यतइत्युत्पलमाला । येसद्भ्योऽन्येखलाःतेततःपरमपदात्योगारूढाःपतंतीत्यन्वयः पतनेकारणमाह अनादृतेति । अधिराधिलघिगत्यार्थाइतिधातो·अनुपासितभगवज्ज्ञा
नाः ज्ञानाभावेकारणमाह त्वयीति । त्वय्यस्तभावात्त्वद्विषयभक्त्यभावात्अविशुद्धबुद्धयःदुष्टांतःकरणाःदुष्टज्ञानावा किंकृत्वापततीतितत्राह आरुह्येति । कृच्छ्रेणमहतायासेनपरंपदभगवत्प्राप्तिनिमित्त
योगमारुह्यसंन्यासाश्रमंप्राप्यतदनुष्ठानसामर्थ्याभावात्पतंतीत्यर्थः योगमवाप्यतद्भ्रंशेनिमित्तमाह विमुक्तेति । विमुक्तावयमित्यभिमानोयेषामस्तीति ताच्छीलिकोणिनिः हेविमुक्तेतिवा अभिमानएवभ्रं
शेकारणमित्यर्थः ३३समःसमाधिःभक्तेइतिनेत्याह तथानेति करावलंबबाहुल्यात्उत्तमाश्रमान्नभ्रश्यंतीत्यर्थः विनायकाःविघ्नाःश्रेयःप्रतिबंधिनःतेषामनीकंसेनातत्पतयः । विनायकानीकपाःतेषामूर्ध
सुउपरितनानतिक्रम्यश्रेयसएवयतंतइत्यर्थः३४अधुनाकस्मिन्नधिष्ठानेस्थितोहरिःपूज्यःकैःसाधनैरितितत्स्पष्टयति सत्वमितिस्थितावितिसप्तमीचतुर्थ्यर्थेस्थितौज्ञानस्थिरीकरणायभवान्विशुद्धसत्वंवपुः
रजस्तमोभ्यामस्पृष्टंब्रह्मादिशरीरंश्रयते । विशिनष्टि शरीरिणामिति ज्ञानार्थिनांजीवानांश्रेयउपायनंश्रेयःसाधनम् । जनोयेनब्रह्मादिशरीरेस्थितेनहरेःरणोपदिष्टमार्गेणवेदादिभिस्तवर्हणंपूजासमीहतेक

इदानीमवतारप्रयोजनंविज्ञापयति दिष्ट्येति तवजन्मनाभवतःपदःभवच्चरणस्थानीयायाःभुवःअसुरकृतभारोऽपनीतइतियच्चादिष्ट्या सर्वस्यसुखमभूत्सुष्ठ्वा सुष्ठुदिष्ट्योपजोषामितियादवः तवानुकंपितांअनुकं पाविषयांचद्रक्ष्यामःदिष्ट्येत्यभ्यासआदरार्थः पदाद्याश्रयणाद्विष्णोःपृथिव्यादिपदादिकमित्यादिस्मृतिसिद्धंभूमेर्विष्णुपदत्वं ३९ लोकानुग्रहमंतरेणान्यदवतारप्रयोजनंनास्तीतिविज्ञापयन्नीत्याह नेति नविद्यतेभवःशुक्रशोणितसंपर्कलक्षणंजन्मयस्यतथातस्यभवस्यभद्रस्यजन्मादिदोषरहितस्येत्यर्थः भवाभवेहरेमाशीःसत्तासंसारजन्मास्वितियादवः ननुकर्दमेलीयतइवहरेर्जन्मादिमत्त्वंसत्यमित्या पातंतथाचतस्यकर्माधीनप्रवृत्तत्वेनेश्वरत्वहानेर्नमोक्षार्थंतदुपासनंविधेयमितितत्राह भवइति त्वयीतिषष्ठ्यर्थेसप्तमीअभवाश्रयश्चायमात्माचेत्यभवाश्रयात्मामोक्षाश्रयःस्वामी । तस्यमुक्ताश्रयस्यस्वरूपस्य वा । तवकृताअंगीकृताःभवादयोविद्ययात्वत्स्वरूपाज्ञानेनसत्याइतिनरामन्यतेइति यतइतिशेषः । अस्यस्वस्याविद्ययाइच्छयाकृताःसत्यामन्यंतेइति यतस्तस्मात्स्वरूपानादित्वेनईश्वरत्वहान्यभा वेनत्वदुपासनमेवविधेयमितिभावः अज्ञानादेवमन्यंतेविष्णोर्जन्ममृतीनराः । स्थितिस्वरूपस्यचान्यस्मात्स्थितिंमोक्षाश्रयस्यहीतिवचनादिंद्रजालमितिमंतव्यमिति ४० भक्तसंकटपरिहारमंतरेणा न्यदवतारप्रयोजनंनतवास्तीतियतइतोनिकृष्टोत्कृष्टजातिग्रहणेनत्रिभुवनमपादित्युपसंहरतीत्याह मत्स्येति अश्वोहयग्रीवः कच्छपःकूर्मः विप्रोजामदग्न्यःत्रिभुवनंपास्यथाइतिलकारव्यत्ययः त

दिष्ट्याहरेऽस्याभवतःपदोभुवोभारोऽपनीतस्तवजन्मनेशितुः ॥ दिष्ट्यांकितांत्वत्पदकैःसुशोभनैर्द्रक्ष्यामगांद्यांचतवानुकंपिताम् ३९ नतेभवस्येशभवस्य कारणंविनाविनोदंबततर्कयामहे ॥ भवोनिरोधःस्थितिरप्यविद्ययाकृतायतस्त्वय्यभवाश्रयात्मनि ४० मत्स्याश्वकच्छपनृसिंहवराहहंसराजन्यविप्र विबुधेषुकृतावतारः ॥ त्वंपासिनस्त्रिभुवनंचतथाधुनेशभारंभुवोहरयदूत्तमवंदनंते ४१ दिष्ट्यांबतेकुक्षिगतःपरःपुमानंशेनसाक्षाद्भगवान्भवायनः ॥ माभूद्भयंभोजपतेर्मुमूर्षोर्गोप्तायदूनांभवितातवात्मजः ॥४२॥ श्रीशुकउवाच ॥ इत्यभिष्टूयपुरुषंयद्रूपमनिदंयथा ॥ ब्रह्मेशानौपुरोधायदेवाःप्रतिययुर्दि वम् ४३ ॥ इतिश्रीभा०म०दशमस्कंधेतृतीयोऽध्यायः ३ ॥ श्रीशुकउवाच ॥ अथसर्वगुणोपेतःकालःपरमशोभनः ॥ यर्ह्येवाजनजन्मर्क्षंशांतर्क्षग्रहतारकः १ दिशःप्रसेदुर्गगनंनिर्मलोडुगणोदयम् ॥ महीमंगलभूयिष्ठपुरग्रामव्रजाकरा २ नद्यःप्रसन्नसलिलाह्रदाजलरुहश्रियः ॥ द्विजालिकुलसन्नादस्त बकावनराजयः ३ ववौवायुःसुखस्पर्शःपुण्यगंधवहःशुचिः ॥ अग्नयश्चद्विजातीनांशांतास्तत्रसमिंधत ४ मनांस्यासन्प्रसन्नानिसाधूनामसुरद्रुहाम् ॥ जायमानेऽजनेतस्मिन्नेदुर्दुंदुभयोदिवि ५ जगुःकिन्नरगंधर्वास्तुष्टुवुःसिद्धचारणाः ॥ विद्याधराश्चननृतुरप्सरोभिःसमंमुदा ६

थासतिकार्यैक्येऽप्यस्माभिरेतावदेवानुष्ठीयत्तेकृतमतिनिष्प्रभावादित्याह यदूत्तमेति अस्त्वितिशेषः ४१ भगवद्भक्तबहुमानातिशयेनापिभागवतोधर्मइतिप्रदर्शनायदेवकीमाह दिष्ट्येति दिष्ट्यामंग लं दिष्ट्यास्यान्मंगलादिष्वितियादवः साक्षात्तुर्यःजाग्रदाद्यवस्थातिक्रांतः भविताभविष्यति ४२ यद्रूपमनिदंप्रत्यक्षासिद्धंजगद्विलक्षणंतपुरुषंपूर्णंयथायथावदभिष्टूययद्वायद्रूपंयथाऽनिदंप्रतीयतेतादृशै र्विशेषणैरभिष्टूय ४२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविज०कृतटी०तृतीयोऽध्यायः ॥ ३ ॥ भगवद्भक्तपर्यंतदवतारप्रयोजनंसमयेनाविर्भूतपूर्वकालादिगुणैर्विलासमाह श्रीशुकइति सर्वेषांग्रहा णामुच्चस्थानगतत्वादिगुणविशिष्टः सर्वगुणोपेतः परमंशोभनंयस्मात्सतथा अजनजन्मर्क्षंरोहिणीयत्रसतथा शांतानिप्रसन्नानिऋक्षाणिग्रहाश्चतारकायस्मिन्सतथा यर्हियदैवातिथःकालः १ तदादिशःप्रसे दुरित्यादिकमभूत् निर्मलोडुगणस्यउदयोयस्मिन्सतथा । मंगलपूर्णाःपुराणिग्रामाव्रजाकराश्चयस्यासातथा २ जलरुहाणांपद्मानांश्रियोयेषुतथा वनराजयःवनपंक्तयः ३ समिंधतज्वलिताः ४ ५ ६

सुमनांसिपुष्पाणि अनुसागरंसमुद्रस्योपांते ७ जायमानइतिद्विर्वचनंजन्मवैलक्षण्यप्रदर्शनपरम् देवस्यहरेरूपंअस्यामस्तीतिदेवरूपिणीतस्यां ८ ९ शंखगदेआदौयेषांतानिशंखगदादीनितानिचोत्कृष्टानिचायुधानियस्यसतथातं श्रीवत्सलक्ष्मंश्रीवत्सलांछनं सांद्रपयोदसौभगंसांद्रपयोदस्यजलपूर्णमेघस्येवसौभगकांतिविशेषोयस्यसतथातं १० महार्हाणिअनर्घ्याणिवैदूर्यमयकिरीटकुंडलानि महार्हवैदूर्यकिरीटकुंडलानितेषांत्विषाशोभयाकिरीटंचकुंडलेचकिरीटकुंडलानिपरिष्वक्ताआलीढाःसहस्रकुंतलायस्यसतथा ११ अस्पृशत्दास्यामीतिमनसासंकल्पितवान् मुदाहुतः १२ कृतधीःशिक्षितबुद्धिःपंडितइत्यर्थः गतभीस्त्वेनिमित्तंप्रभावविदिति १३ प्रकृतेःपरत्वेनकेवलानुभवानंदस्वरूपत्वेनसर्वबुद्धिसाक्षित्वेनचपुरुषःषड्गुणइतिभवान्पूज्यस्त्वंविदितोसिसाक्षान्नोपचारमात्रं १४ ननुसाक्षित्वेनोदासीनश्चेज्जगत्स्रष्टाकइतितत्राह सएवेति तदनुसृष्टेरनंतरंबहिरपिविद्यमानत्वात् अप्रविष्टःपूर्णस्वरूपात्प्रविष्टःसर्वगतस्यप्रवेशाप्रवेशौउपचारतोनतुदेवदत्तवन्मुख्याविल्यतइवशब्दः बहिश्चविद्यमानत्वादप्रविष्टोजगत्पतिः प्रविष्टश्चतत्रैवपूर्णरूपत्वतोविभुरित्यादेः सर्वगतरूपेणाप्रवेशः पुरुषरूपेणप्रवेशः जलेप्रतीयमानाकाशादिवदितिवा हिशब्दोऽसगत्वमाह १५ सृष्टिप्रकारदर्शयति यइति यएतेसप्तावि

मुमुचुर्मुनयोदेवाःसुमनांसिमुदान्विताः ॥ मंदंमंदंजलधराजगर्जुरनुसागरम् ७ निशीथेतमउद्भूतेजायमानेजनार्दने ॥ देवक्यांदेवरूपिण्यांविष्णुःसर्वगुहाशयः ८ प्रादुरासीद्यथाप्राच्यांदिशींदुरिवपुष्कलः ९ श्रीशुकउवाच ॥ तमद्भुतंबालकमंबुजेक्षणंचतुर्भुजंशंखगदाद्युदायुधम् ॥ श्रीवत्सलक्ष्मंगलशोभिकौस्तुभंपीतांबरंसांद्रपयोदसौभगम् १० महार्हवैदूर्यकिरीटकुंडलत्विषापरिष्वक्तसहस्रकुंतलम् ॥ उद्दामकांच्यंगदकंकणादिभिर्विरोचमानंवसुदेवऐक्षत ११ सविस्मयोत्फुल्लविलोचनोहरिंसुतंविलोक्यानकदुंदुभिस्तदा ॥ कृष्णावतारोत्सवसंभ्रमोऽस्पृशन्मुदाद्विजेभ्योऽयुतमाप्लुतोगवाम् १२ अथैनमस्तौदवधार्यपूरुषंपरंनतांगःकृतधीःकृतांजलिः ॥ स्वरोचिषाभारतसूतिकागृहंविरोचयंतंगतभीःप्रभावविद् १३ वसुदेवउवाच ॥ विदितोऽसिभवान्साक्षात्पुरुषःप्रकृतेःपरः ॥ केवलानुभवानंदस्वरूपःसर्वबुद्धिदृक् १४ सएवस्वप्रकृत्येदंसृष्ट्वाग्रेत्रिगुणात्मकम् ॥ तदनुत्वंह्यप्रविष्टःप्रविष्टइवभाव्यसे १५ यएतेऽविकृताभावाःसप्तेविकृतैःसह ॥ नानावीर्याःपृथग्भूताविराजंशयनंतव १६ सन्निपत्यसमुत्पाद्यदृश्यंतेऽनुगताइव ॥ प्रागेवविद्यमानत्वान्नतेषामिहसंभवः १७

कृताः महदहंकारपंचतन्मात्राणिभावाःपदार्थास्ते विकृतैः स्थूलीभूतैः पृथिव्यादिभिर्जन्यमानिकामकर्मादिभिर्वासहसन्निपत्यान्योन्यंमिलित्वाविराजंब्रह्मांडंसमुत्पाद्यअनुगता प्रविष्टाइवदृश्यंते बहिरपिविद्यमानत्वात् कथंभूताभावाःपृथग्भूताविश्लिष्टाः नानावीर्याःअवकाशदानादिशक्तीनानानाविधत्वाद्विभक्तशक्तित्वात्तदभिमानिदेवानामितिशेषः ननुतर्हिमेलनकर्ताकइतितत्राह शयनमिति तवशयनस्थानीयत्वात्त्वमेवमेलनकर्तेत्यर्थः १६ व्यक्तिविशेषादंडेप्रवेशमात्रमेवोत्पत्तिर्नतुसाक्षादित्याह प्रागेवेति इहब्रह्मांडेसंभवःसाक्षादुत्पत्तिर्नास्ति किंतु व्यक्तिविशेषेणप्रवेशमात्रमेव कुतः प्रागेवविद्यमानत्वात् लब्धसत्ताकत्वात्पूर्वमेवोत्पन्नत्वादित्यर्थः प्रकृतिविकृतत्वमंतरेणावांतरविकृतत्वाभावात् महदादयोऽविकृताइत्युच्यते महदादिस्त्वविकृतइत्यादग्भ्यादेस्तेषामभिव्यक्तिर्जनिरित्यभिधीयतेइत्यनेनसम्यग्व्याख्यातमाचार्यैरितिभाव्य १७

सइत्यनुवर्तते । यथातत्त्वानामचेतनत्वेनतदभिमानिनांविभक्तशक्तित्वेनचतेषामन्यस्त्वंमेलयितृत्वेनभाव्यःसएवंशरीरमुत्पाद्यसमुत्पत्तेःप्राक्पश्चादपिनिर्दोषत्वेनवर्तमानोभवान्ग्राह्यैरनुमेयैर्गुणैरिंद्रियविषयैःउत्पन्नयाबुद्ध्याज्ञानाख्यलिंगेनानुमेयानिलक्षणानिस्वातंत्र्यादीनिपस्यसतथा तेषामिंद्रियाणांगुणाग्रहःविषयज्ञापकोन्योस्तीतिज्ञायते । क्षेत्रज्ञः पुरुषोह्यात्मेत्यत्रक्षेत्रज्ञानस्यजीवनिष्ठत्वेनदर्शनान्नारायणनिष्ठत्वेनोच्यतइतिकथंतत्राह अपीति । ग्राह्यगुणेष्वस्वातंत्र्यप्रतीतेरिदंजानामीतिजीवसमवेतग्रहणशक्तिरपितन्नियतेति । तदुक्तमाचार्यैः ग्राह्यगुणेत्यादि सन्सर्वस्यज्ञातृत्वेनवर्तमानइतिवाक्यदुक्तं । ज्ञातापिसर्वभावानामिति उपहितस्यैवबाहिरंतर्विभागोनसर्वज्ञस्यभवेदित्याह अनावृतत्वादिति अव्यवधानेनद्रष्टृत्वात् । तदुक्तं सर्वत्राव्यवधानेनद्रष्टृत्वात्सर्वदस्तुनइति कुतोनास्तीतितत्राह सर्वस्येति । सर्वस्यपूर्णस्यहेतोरनुग्राहकमाह सर्वात्मनइति नह्यव्याप्तस्यसर्वस्यात्तृत्वंदेवदत्तस्येवयुज्यतेतस्मात्सर्वभक्षकत्वान्यथानुपपत्त्याऽपरिछिन्नत्वमेष्टव्यं नन्वपरिच्छिन्नस्यएकोदेवःसर्वभूतेषुगूढइत्यन्याश्रयत्वेनअवस्थानंकथमितितत्राह आत्मवस्तुनइतिआत्मन्येववसतिनपरस्मिन्नशक्तित्वेनेत्यात्मवस्तुतस्यपूर्णसामर्थ्यात् सर्वात्मासर्वभक्षणादितिच १८ ज्ञानलिंगेनशरीरेंद्रियादिभ्योभेदेनज्ञायसेइत्युक्तंतत्राज्ञानिनएवंमन्यंतइत्याह यदात्मनइति यदात्मनः परमात्मनःप्रत्यगात्मनःदृश्यगुणेषुशरीरेंद्रियादिषुसन्निधेः प्रवेशलक्षणसन्निधानादबुधैरस्वव्यतिरेकतःस्वाभेदेनव्यवस्यसेनिश्चित्यज्ञायसेइतियत्तदनुवादमनुकूलंवेदवचनंविनानमनीषितंनैवांगीकारयोग्यं कुतइतितत्राह सम्यगितिपुमान्पुरुषःपर्यंकशयनोविष्णु व्यक्तंसंशयनिरासकरणंसम्यग्वचःअपौरुषेयत्वेननिर्दोषवेदवाक्यंउपाददत्स्वीकृतवानाहेत्यन्वयःपरमात्मनोऽपिशरीरेसन्निधानादबुधैरस्वव्यतिरेकतोज्ञायसइत्यादेरयमर्थःसिद्धः यैदिदंजगदेकंएकीभूतंमामभियातितद्ब्रह्मैकएवाग्नि षड्भिनितरांसहमानोभियोद्धास्मि ।

**एवंभवान्बुद्ध्यनुमेयलक्षणोग्राह्यैर्गुणैःसन्नपितद्गुणाग्रहः ॥ अनावृतत्वाद्बहिरंतरंनतेसर्वस्यसर्वात्मनआत्मवस्तुनः १८ यदात्मनोदृश्यगुणेषुसन्निधेर्व्यवस्यसेऽस्वव्यतिरेकतोऽबुधैः ॥ विनानुवादंनचतन्मनीषितंसम्यग्वचोव्यक्तमुपाददत्पुमान् १९ त्वत्तोऽस्यजन्मस्थितिसंयमान्विभोवदंत्यनीहादगुणादविक्रियात् ॥ त्वयीश्वरेब्रह्मणिनोविरुध्यतेतदाश्रयत्वादुपचर्यसेगुणैः २०**

अथवाह्वावभियावस्त्वाप्येवमेव । अथवात्रयएतादृशामामभ्येत्यकिमुकरंतीतिकिंकुर्वंति त्वांघ्नंतीतिवार्तामाभून् । अहमेवहन्मीत्याह खलेनेति पर्षान्धान्यानिकुलित्थादीनिखलेनखलइव भूरीणिशत्रुभूतानिजगंतिप्रतिहन्मिहानिष्याम्स्वहननशक्त्यभावेपितवदुर्भगजीवाभेदवचनेनत्वांनिंदंतीतितत्राह किमिति । शत्रवोमामांकिंनिंदंति सर्वगुणाकरत्वेनदोषलेशस्पर्शाभावात् स्वतोदोषाभावेपिबलादापादयंतीहीतितत्राह अनिंद्राइति । असमर्थाइत्यर्थः प्रविष्टत्वाच्छरीरेषुजीवएवेतिदुर्धियः मन्यंतेपरमात्मानंनतन्मतमनुत्रतेदित्यादेः । तर्हिनिंदाफलंकिमिति अस्याप्येतदेवोत्तरमाह अव्यक्तमिति अव्यक्तंअप्रकाशलक्षणंव्यक्तिशून्यमंधंतमः यांतीतिचवेदवचनमुपादत्ते ऐक्यात्म्यज्ञानतोयातितमइति । तर्हिभेदज्ञानस्यकिंफलमित्यस्यापीदमेवोत्तरमित्याह व्यक्तमिति विगताजनंनिर्दोषभेदज्ञानंमुक्तिसाधनमुपाददत् भेदात्परंपदं । स्वातंत्र्यपारतंत्र्यादिज्ञानंभेददर्शिभिर्वेदितिवचनं १९ कुलालघटयोरिवकार्यकारणयोर्जगद्ब्रह्मणोर्भेदःपारमार्थिकइतिज्ञापनायसृष्टिप्रकारंस्पष्टयति त्वत्तइति । अस्यप्रपंचस्यकुलालवदायासग्रस्ततयाकर्तानायंकिंतुपूर्णानंदत्वेनेत्याशयेनाह अनीहादिति अनीहादक्लिष्टकारित्वादिति अनीहत्वेनकर्ताचेन्मृद्वाद्विकारित्वंहरेरितितत्राह अविक्रियादिति । तथाऽविकृतएवसन्सर्वंकरोतीति नन्वियंसृष्टिःगुणपूर्विकासृष्टित्वात्पटसृष्टिवदितितत्राह अगुणादिति । नन्वियंप्रतीतिविरुद्धासृष्टिर्निष्क्रियस्याक्रियाच्चअगुणस्यगुणवत्त्वमविकारिणोविकारित्वमितितत्राह त्वयीति । ईश्वरेब्रह्मणीतिपदद्वयंहेतुगर्भं ऐश्वर्यात्पूर्णशक्तितइतिवचनात् । नन्वयमीश्वरःसृष्ट्यादौप्रवर्तमानोगुणमपेक्षतेनवा प्रथमेगुणित्वंद्वितीयेसृष्ट्याद्यनुपपत्तिरितितत्राह तदाश्रयत्वादिति

१ अमीरेदमेकमेकोअग्निनि.शाल्मिह्राकिमुत्रयःकराति ॥ खलेनपर्षान्प्रतिहन्मिभूरिकिमानिंदंतिशत्रवोऽनिंद्राःइतिश्रुतिः ।

गुणैःसत्वादिभिःसृजासिनतत्रसंदेहः । तर्हिनिर्गुणस्यगुणित्वापातइतिशंकामाभूदिति तदाश्रयत्वाद्गुणानांजडत्वेनस्वतःप्रवृत्त्यनुपपत्तेस्तत्प्रवृत्त्यर्थंतत्प्रेरणाद्गुणीत्युपचर्यसे ननुमुख्यतोगुणी केवलो निर्गुणश्चेतिश्रुतेः ननुसगुणागुणवचनस्यकाक्षतिस्तर्हीत्यत्रापीदमुत्तरं तदाश्रयत्वादिति ज्ञानादिगुणैः क्षुद्रदेहत्वात्सत्वादिगुणविधुरइत्युपचर्यसे उपसंगम्यसेज्ञायसेइत्यर्थः तेषांसत्वादिगुणाना माश्रयत्वादैश्वर्यादिगुणपूर्णत्वाद्वासगुणइत्युपचर्यसेसमाव्यसइत्यर्थः । अगुणोगुणदेहत्वात्सगुणोगुणधारणात् ऐश्वर्यादिगुणित्वाद्वावासुदेवइतीर्यतेइतिवचनात् अर्थविशेषोज्ञायतइति १० त दाश्रयत्वंप्रपंचयति सत्वमिति अयमर्थः यदात्रिलोकस्थितयेत्रैलोक्यरक्षणायसत्वगुणंवर्धयन्नास्ते । तदाहयग्रीवादिरूपंशुक्लवर्णनिर्मुक्तकलंकानूनबिंबचंद्रवद्धवलवर्णंबिभर्षि जगतांवर्धयन्सत्वंयदा रक्षतिकेशवइत्यादेःखल्वलंकृतोयमर्थः । यदासर्गायतत्तत्स्वभावाभिव्यक्तयेरजोवर्धयंस्तदारजसोपबृंहितरजोगुणशक्तिव्यंजकंरक्तंजामदग्न्यादिरूपंबिभर्षिखलु वर्धयंस्तुरजोपेनजगदुत्पादयेद्धरीरित्या देः । जनस्यात्ययेप्रलयेअत्तयइतिपाठेअत्तिःसंहृतिःतस्यै यदालोकेतमोवर्धयन्तदातमसोपबृंहितंतमोगुणप्रवर्तकंकृष्णयादवादिरूपंबिभर्षिखलु । येनविनाशयेत् वर्धयंस्तुतमोलोकेतत्कृष्णंयादवादि कमितिवचनात् । ननुसर्वत्रसर्वशक्त्यभावादपूर्णताहरेरित्यस्यापिइदमुत्तरंखल्विति । जिज्ञासालक्षणावीप्साकर्तव्या तथाहि यच्छुक्लंरूपंसत्त्वंवर्धयन्बिभर्षि तद्रूपंत्रिलोकस्थितयेखलुनभवतिकिंतुसर्गसंहा राभ्यांबिभर्षि । रजोवर्धयन्रक्तरूपंबिभर्षितत्सर्गायखलुनभवतिकिंतुतत्स्थितिसंहराभ्यांचबिभर्षियत्तमोवर्धयन्कृष्णंरूपंबिभर्षितज्जनात्ययएवखलुनभवति । किंतुतत्रिलोकस्थितिसर्गाभ्यांचबिभर्षि इतिमंदमतीनांविस्पृष्टतयाभ्यासोक्तं सर्वत्रसर्वंकुरुतेविक्षेपस्तत्रकीर्तितइत्यादेः तत्तात्पर्यार्थपरतयाश्लोकार्थोज्ञातव्यः षद्लृविशरणगत्यवसादनेष्वित्यादेर्धातोःसृष्टिसंहारावितिसत्वशब्देनज्ञातव्यौ

**सत्वंत्रिलोकस्थितयेस्वमाययाबिभर्षिशुक्लंखलुवर्णमात्मनः ॥ सर्गायरक्तंरजसोपबृंहितंकृष्णंचवर्णंतमसाजनात्यये २१ त्वमस्यलोकस्यविभोरिरक्षिषुर्गृहेऽवतीर्णोसिममाखिलेश्वर ॥ राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमानानिहनिष्यसेचमूः २२ अयंतमस्यस्तवजन्ममेगृहेश्रुत्वाऽग्रजांस्तेन्यहनत्सुरेश्वर ॥ सतेऽवतारंपुरुषैःसमर्पितंश्रुत्वाधुनैवाभिसरत्युदायुधः २३ ॥ श्रीशुकउवाच ॥ अथैनमात्मजंवीक्ष्यमहापुरुषलक्षणम् ॥ देवकीतमुपाधावत्कंसाद्भीताशुचिस्मिता २४ ॥ देवक्युवाच ॥ रूपंयत्तत्प्राहुरव्यक्तमाद्यंब्रह्मज्योतिर्निर्गुणंनिर्विकारम् ॥ सत्तामात्रंनिर्विशेषंनिरीहंसत्वंसाक्षाद्विष्णुरध्यात्मदीपम् २५**

रजोरागेइतिधातोःरागशब्दस्यानेकार्थत्वेनस्थितिसंहारार्थौपिज्ञातव्यः तमुग्लानइतिधातोःग्लानशब्दस्यसृष्टिस्थितिविरोधिज्ञापकत्वेनतत्परत्वेनार्थोबोद्धव्यः । निर्गुणस्यगुणोपरक्तत्वंकथमित्यत उक्तं स्वमाययेति स्वेच्छयानुगुणाद्विष्णुर्नानारूपान्करोत्यजइत्यादिच । निषेधेवागलंकारेजिज्ञासानुनयेखल्वित्यमरः निषेधेवागलंकारेवीप्सनेनुनयेखल्वितियादवः २१ सर्वरूपेषुसर्वशक्तिरस्तीत्या शयेनस्तौति त्वमस्येति त्वदवतारेणसंहारकारणेनरक्षाकथंकारास्यादित्याशंक्यासतांहननेसतांतारतम्येनसुखसमृद्धिःस्यादित्याशयेनाह राजन्येति निर्व्यूह्यमानांप्रतिव्यूह्यमानानिहनिष्यसेनि हनिष्यसि गमयिष्यसि सतांसुखानुभवमिति शेषः चरभक्षणइतिधातोः सतांसुखाविवृद्ध्यर्थमसतांपीडनंहरेरित्यादेश्च २२ स्वात्मनिस्वभक्तेषुद्वेषवृद्धिकरत्वेनद्वेषात्मकतमोप्रवर्तीत्यतस्तदुपादायत्वस्य वर्तनमित्याशयेनाह अयंतमस्यइति तमस्यःस्वभक्तद्वेषमूर्तिः तदुक्तं तमोद्वेषात्मकंशुद्धंसत्वात्मकमुदीर्यतइतिवा जन्मभविष्यतीतिस्वपुरुषैःसमर्पितं अभिसरत्यभ्यागच्छति उदायुधःधृतायुधः २३ उपाधावत्गुणस्मरणपूर्वकंतुष्टाव २४ भगवदनुग्रहपात्रत्वाद्वेदांतनिर्णीतगुणविशिष्टंस्तौति रूपमिति यच्चस्यतद्रूपंएवंविधंमाहुः वेदाताइतिशेषः परोक्षत्वात्तदित्युच्यते कथंभूत अव्यक्तं आराधने पिस्वप्रसादमतरेणाप्रत्यक्षं तदव्यक्तमाह अव्यक्तमचलंध्रुवं तर्हिशून्यंनेत्याह आद्यंअग्रेविद्यमानं आत्मावाइदमेकएवाग्रआसीत् किमस्यसंज्ञेत्यत्राह ब्रह्मेति ब्रह्मविदाप्नोतिपरंअथकस्माद् च्यतेब्रह्मेतिबृहंतोस्मिन्गुणाः संज्ञांतरमाह ज्योतिरिति परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यते यद्वा गुणित्वेपिचेतनत्वंमाभूद्घटवदित्यत्राह ज्योतिर्ज्ञानलक्षणप्रकाशरूपं सुवर्णज्योतिः ।

साक्षीचेताश्च गुणाःसत्वादयःकिंनेत्याह निर्गुणं केवलोनिर्गुणश्च उत्पन्नक्षणेसर्वकार्याणांनिर्गुणत्वंउत्तरक्षणेनास्तीत्यादिविकारःकिंनस्यादित्यत्राह निर्विकारं निर्विकारोऽक्षरःशुद्धः अज्ञानादोषैश्चज्ञा नगुणः किंनस्याज्जीवगुणवदितितत्राह सत्तामात्रम् सर्वाशुभनिर्मुक्तगुणैकरूपम् सर्वाशुभविनिर्मुक्तगुणमात्रोपतोहरिः सत्तामात्रमतःप्राहु एवंविधमन्यत्रास्तीत्याहनिर्विशेषंनिर्गतोविशेषोयस्मात्सर्वविशेषंनिर्विशेषोखिलोत्तमः एकमेवाद्वितीयं निरीहमात्मकर्तृत्वाभिमानादिरहितं नतुक्रियाशून्यम् सइमांल्लोकानसृजतेतिश्रुतेः अनादरान्निरीहश्चसेहःसर्वकर्तापतः मसाक्षात्स्वंअन्येन विष्णु अनोक्तलक्षसंज्ञाभ्यामयंनारायणइतिमत्येत्यतःप्राकृतजनप्रत्ययोत्पत्त्येतत्सिद्धसंज्ञामाह विष्णुःणकारोबलंपकारःप्राणआत्मासपाहेतौणकारपकारावनुसहितमृचोवेद योगिभिर्ध्येयंदंस्त्विदमेवनान्यदित्याशयेनाह अध्यात्मदीपम् आत्मानमधिकृत्यवर्तमानदेहेंद्रियादिप्रकाशकंअध्यात्मयोगाधिगमेनदेवंमत्वाधीरोहर्षशोकौजहाति ॥ यत्तदितिसामानाधिकरण्येनप्रकृतेयदित्यस्यपष्ठ्यांत्यंगीकारोंकनियामकम् उच्यते सइतिपुंल्लिंगेनपरामर्शात्तद्रूपमित्यभ्युपेयते।सइतिपुनरुक्तेः।प्रथमायाःषष्ठ्यर्थत्वंनदृष्टमितिचेन्न मप्तमुप्रथमेतिसूत्रात् २५ निर्गुणत्वादिकंतल्लक्षणमेवेत्याह नष्टइति द्विपरार्धावसाने ब्रह्मणः शतायुर्लक्षणःकालःद्विपरार्धस्तस्यावसानेलोकेनष्टइतिसामान्येनोक्तंविशिनष्टि पंचमहाभूतेषुपृथिव्यादिषु अहंकारद्वाराआदिभूतंमहत्तत्त्वंगतेषुअव्यक्तेमहत्तत्त्वेअव्यक्तप्रधानगतेसति अशेषसंज्ञः

नष्टेलोकेद्विपरार्धावसानेमहाभूतेष्वादिभूतंगतेषु ॥ व्यक्तेऽव्यक्तंकालवेगेनयातेभवानेकःशिष्यतेऽशेषसंज्ञः २६ योऽयंकालस्तस्यतेऽव्यक्तबंधोचेष्टामाहुश्चेष्टते येनविश्वम् ॥ निमेषादिर्वत्सरांतोमहीयांस्तंत्वेशानंक्षेमधामप्रपद्ये २७ मर्त्योमृत्युव्यालभीतःपलायन्लोकान्सर्वान्निर्भयंनाध्यगच्छन् ॥ त्वत्पादाब्जंप्राप्ययदृच्छयाद्यस्वस्थःशेतेमृत्युरस्मादपैति २८ सत्वंघोरादुग्रसेनात्मजान्नस्त्राहित्रस्तान्भृत्यवित्रासहासि ॥ रूपंचेदंपौरुषंध्यानधिष्ण्यमप्रत्यक्षंमांसदृशांत्वंकृषीष्ठाः २९ जन्मतेमय्यसौपापोमाविद्यान्मधुसूदन ॥ समुद्विजेभवद्धेतोःकंसादहमधीरधीः ३० उपसंहरविश्वात्मन्नदोरूपमलौकिकम् ॥ शंखचक्रगदापद्मश्रियाजुष्टंचतुर्भुजम् ३१ विश्वंयदेतत्स्वतनौनिशांतेयथावकाशंपुरुषःपरोभवान् ॥ बिभर्तिसोयंममगर्भगोभूदहोनृलोकस्यविडंबनंहिहत् ३२ ॥ श्रीभगवानुवाच ॥ त्वमेवपूर्वसर्गेऽभूःपृश्निःस्वायंभुवेसति ॥ तदायंसुतपानामप्रजापतिरकल्मषः ३३ युवांवैब्रह्मणादिष्टौप्रजासर्गेयदाततः ॥ सन्नियम्येंद्रियग्रामंतेपाथेपरमंतपः ३४ वर्षवातातपहिमघर्मकालगुणाननु ॥ सहमानौश्वासरोधविनिर्धूतमनोमलौ ३५

अशेषाःसंज्ञायस्यसतथा नामानिसर्वाणियमाविशंतीतिश्रुतेः २६ कालवेगेनयातइत्यत्रप्रतीतंकालस्वातंत्र्यंनिवारयति योयमिति निमेषादिर्वत्सरांतोयोऽयंकालःतंकालंयस्याशेषसंज्ञस्तस्यतेतवचेष्टामाहुरित्यन्वयः अव्यक्तबंधोमुख्यप्राणबंधो येनत्वयायेनकालेनवा क्षेमधामनिर्भयस्थानंअभयंप्रतिष्ठाविंदतइतिश्रुतेः २७ क्षेमधामत्वंदर्शयति मर्त्यइति मृत्युरेवव्यालः तस्माद्भीतःपलायन्पलायमानःअस्मान्मर्त्यात् २८ भृत्यवित्त्रासहा भृत्यानांविविधभयनाशकोसिमांसदृशाममत्यक्षरूपीष्ठाःमत्यक्षंनकुरु ध्यानधिष्ण्यंध्यानविषयम् २९ अमत्यक्षकरणकारणमाह जन्मेति माविद्यान्जानातु समुद्विजेबिभेमि अधीरधीःचंचलबुद्धिः ३० ३१ हरेर्गर्भवासादिदुःखानुभवोनास्तीत्याशयेनाह विश्वमिति निशांतेरात्रिमध्येयथावकाशंअवकाशमनतिक्रम्य यथासादृश्यइतिसमासः ३२ अहंयुवयोस्तपःप्रभावादाविर्भावमकरनतुकर्माधीनत्वेनेतिपूर्वजन्मसंचीर्णतपोमाहात्म्यंकथयति त्वमेवेति अयंवसुदेवः ३३ प्रजासर्गे तादर्थ्येसप्तमी ततस्तदा ३४ अनुक्रमेणवर्षादिगुणान्सहमानौ श्वासरोधःप्राणायामस्तेन ३५

शीर्णपर्णवायुनापतितपत्रं कामानपुत्रादिलक्षणान् ३६ वांयुवयोः ३७ ३८ वरदराट्वरदराजः कामदित्सयाअभीष्टदानेच्छया ३९ अजुष्टग्राम्यविषयौअननुभूतमैथुनादिविषयौ ४० ४१ शीलं वृत्तं औदार्यंमाहात्म्यम् ४२ वामनत्वात्सुदरत्वात्ह्रस्वत्वाद्वा ४३ तृतीयेभवेजन्मनि ४४ मद्भवज्ञानंमज्जन्मविषयज्ञानं मर्त्यलिंगेनमनुष्यशरीरेण ४५ यास्येथेगमिष्यथः ४६ प्राकृतवत्तनुमाकृतः ४७ इयेषगंतुमैच्छत् नंदजायययानंदजायायां तर्हितदा ४८ योगमाययाहृताःप्रत्ययानांज्ञानहेतूनांइंद्रियाणांसर्वावृत्तयोयेषुतेतथातेषुनिद्रयामुग्धेष्वित्यर्थः चशब्दात्पौरेषुनिद्रांयापितेषुप्रापितेषुसत्सु मंत्रौषधादिभिर्दुरत्ययाः सर्वाद्वारश्चबृहत्कपाटायसकीलशृंखलैःपिहिताः बृहद्भिःकपाटैःअयोमयैःअर्गलैःशृंखलैश्च ४९ कृष्णवाहेकृष्णंबिभ्राणेताःकपाटद्वारःव्यशीर्यंतविवृताः यथातमः

शीर्णपर्णानिलाहारावुपशांतेनचेतसा ॥ मत्तःकामानभीप्संतौमदाराधनमीहतुः ३६ एवंवांतप्यतोर्भद्रेतपःपरमदुष्करम् ॥ दिव्यवर्षसहस्राणिद्वादशेयुर्मदात्मनोः ३७ तदावांपरितुष्टोऽहममुनावपुषानघे ॥ तपसाश्रद्धयानित्यंभक्त्याचहृदिभावितः ३८ प्रादुरासंवरदराड्युवयोःकामदित्सया ॥ व्रियतांवरइत्युक्तेमादृशोवांवृतःसुतः ३९ अजुष्टग्राम्यविषयावनपत्यौचदंपती ॥ नवव्राथेऽपवर्गंमेमोहितौममायया ४० गतेमयियुवांलब्ध्वावरंमत्सदृशंसुतम् ॥ ग्राम्यान्भोगानभुंजाथांयुवांप्राप्तमनोरथौ ४१ अदृष्ट्वान्यतमंलोकेशीलौदार्यगुणैःसमम् ॥ अहंसुतोवामभवंपृश्निगर्भइतिस्मृतः ४२ तयोर्वांपुनरेवाहमदित्यामासकश्यपात् ॥ उपेंद्रइतिविख्यातोवामनत्वाच्चवामनः ४३ तृतीयेऽस्मिन्भवेऽहंवैतेनैववपुषानघे ॥ जातोभूयस्तयोरेवंसत्यंमेव्याहृतंसति ४४ एतद्वांदर्शितंरूपंप्राग्जन्मस्मरणायमे ॥ नान्यथामद्भवज्ञानंमर्त्यलिंगेनजन्यते ४५ युवांमांपुत्रभावेनब्रह्मभावेनचासकृत् ॥ चिंतयंतौकृतस्नेहौयास्येथेमद्गतिंपराम् ४६ ॥ श्रीशुकउवाच ॥ इत्युक्त्वासीद्धरिस्तूष्णींभगवानात्ममायया ॥ पित्रोःसंपश्यतोःसद्योबभूवप्राकृतःशिशुः ४७ ततश्चशौरिर्भगवत्प्रचोदितःसुतंसमादायससूतिकागृहात् ॥ यदाबहिर्गंतुमियेषतर्ह्यजायागेगमायाऽजनिनंदजायया ४८ तयाहृतप्रत्ययसर्ववृत्तिषुद्वाःस्थेषुपौरेषुचशायितेष्वथ ॥ द्वारस्तुसर्वाःपिहितादुरत्ययाबृहत्कपाटायसकीलशृंखलैः ४९ ताःकृष्णवाहेवसुदेवआगतेस्वयंव्यशीर्यंतयथातमोरवेः ॥ ववर्षपर्जन्यउपांशुगर्जितःशेषोऽन्वगाद्वारिनिवारयन्फणैः ५० मघोनिवर्षत्यसकृद्यमानुजागंभीरतोयौघजवोर्मिफेनिला ॥ भयानकावर्तशताकुलानदीमार्गंददौसिंधुरिवश्रियःपतेः ५१ नंदव्रजंशौरिरुपेत्यतत्रतान्गोपान्प्रसुप्तानुपलभ्यनिद्रया ॥ शिशुंयशोदाशयनेनिधायतत्सुतामुपादायपुनर्गृहानगात् ५२ देवक्याःशयनेन्यस्यवसुदेवोऽथदारिकाम् ॥ प्रतिमुच्यपदोर्लोहमास्तेपूर्ववदावृतः ५३

रवेरुदये उपांशुरहसि अन्वगात्पृष्ठतआयातीत् फणाशब्दउभयलिंगः फणाद्वयोरित्यमरः ५० मघोनिइंद्रे यमानुजायमुना तोयौघजवःजलप्रवाहवेगस्तत्कृताऊर्मयोयस्यांसातथाफेनिलाफेनवतीगंभीरा यस्तोयौघजवोर्मिभिश्चफेनिलाचसातथेति भयानकाभयकरा आवर्ताःपयसांभ्रमास्तेषांशतैराकुला श्रियःपतेर्दाशरथीरामस्य सिंधुःसमुद्रइव ५१ नंदव्रजंनंदगोकुलं उपलभ्यदृष्ट्वा [illegible] गृहानितिबहुवचनेपुल्लिंगः गृहाःपुंसिचभूम्न्येवेत्यमरः गृहशब्दस्यभार्यावाचित्वेननपुंसकत्वंतद्व्यावृत्त्यर्थंबहुवचनम् ५२ दारिकांकन्यकाम् ५३

पर्यंकेवर्त्तं जातमबुध्यततस्यजातस्यलिंगंस्त्रीपुरुषविवेकलक्षणंनाज्ञासीत् तत्रनिमित्तमाह परिश्रांतेति प्रसूतिवेदनयेतिशेषः ॥ ५४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायां चतुर्थोऽध्यायः ॥ ४ ॥ देवानांदेवस्वभावोऽसुराणामसुरस्वभावोमध्यमानांमिश्रस्वभावोदुस्त्यजइत्येतदर्थंप्रतिपाद्यतेऽस्मिन्नध्याये तत्रकंसादिषुसंतोऽसंतइतिद्विजीवाः संति तदुक्तं पूतनाकंस नरकशिशुपालादिपुद्विधा जीवाःसंतस्त्वसंतश्चतत्रबंध्वादिरूपिणः विष्णोःसंतइतिज्ञेयाअसंतःशत्रुरूपिणः शुभजीवमत्राशेनकदाचिच्चनुभवुद्वयइत्यादि तत्रासतास्वभावंदर्शयितुमुपक्रमते बहिरंतइति बालध्वनिंरोदनम् १ यस्मादुर्भात्त्उद्विग्नःभीतः २ सूतीगृहमितिदीर्घश्छांदसः वैलक्षण्यद्योतकोवा ३ करुणंदयाजनकं वचनमितिशेषः स्नुषापुत्रभार्या ४ दैवेनानिसृष्टेनप्रेरितेन ५ चरमाप्रजांअवरसं

यशोदानंदपत्नीचजातंपरमबुध्यत ॥ नतल्लिंगंपरिश्रांतानिद्रयापगतस्मृतिः ॥ ५४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेश्रीकृष्णावतारवर्णनं नामचतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुकउवाच ॥ बहिरंतःपुरद्वारःसर्वाःपूर्ववदावृताः ॥ ततोबालध्वनिंश्रुत्वागृहपालाःसमुत्थिताः १ तेतुतूर्णमुपव्रज्यदेव क्यागर्भजन्मतत् ॥ आचख्युर्भोजराजाययदुद्विग्नःप्रतीक्षते २ सतल्पात्तूर्णमुत्थायकालोऽयमितिविह्वलः ॥ सूतीगृहमगाच्छीघ्रंप्रस्खलन्मुक्तमूर्धजः ३ तमाहभ्रातरंदेवीकृपणाकरुणंसती ॥ स्नुषेयंतवकल्याणस्त्रियंमाहंतुमर्हसि ४ बहवोहिंसिताभ्रातःशिशवःपावकोपमाः ॥ त्वयादैवनिसृष्टेनपुत्रिकै काप्रदीयताम् ५ नन्वहंतेह्यवरजादीनाहतसुताप्रभो ॥ दातुमर्हसिमंदायाअंगेमांचरमांप्रजाम् ६ श्रीशुकउवाच ॥ उपगुह्यात्मजामेवंरुदंत्यादीनदीन वत् ॥ याचितस्तांविनिर्भर्त्स्यहस्तादाचिच्छिदेखलः ७ तांगृहीत्वाचरणयोर्जातमात्रांस्वसुःसुताम् ॥ अपोथयच्छिलापृष्ठेस्वार्थोन्मूलितसौहृदः ८ सातद्धस्तात्समुत्पत्यसद्योदेव्यंबरंगता ॥ अदृश्यतानुजाविष्णोःसायुधाष्टमहाभुजा ९ दिव्यस्रगंबरालेपरत्नाभरणभूषिता ॥ धनुःशूलेषुचर्मासिशंखचक्रगदाधरा १० सिद्धचारणगंधर्वैरप्सरःकिन्नरोरगैः ॥ उपाहृतोरुबलिभिःस्तूयमानेदमब्रवीत् ११ किंमयाहतयामंदजातःखलुतवांतकः ॥ यत्रक्वचित्पूर्वशत्रुर्माहिंसीःकृपणान्वृथा १२ इतिप्रभाष्यतंदेवीमायाभगवतीभुवि ॥ बहुनामनिकेतेषुबहुनामाबभूवह १३ तयाभिहितमाकर्ण्यकंसःपरमविस्मितः ॥ देवकींवसुदेवंचविमुच्यप्रश्रितोऽब्रवीत् १४ अहोभगिन्यहोभाममयावांबतपाप्मना ॥ पुरुषादैरिवाभ्येत्यबहवोहिंसिताःसुताः १५ सत्वहंत्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः ॥ हाकांल्लोकान्गमिष्यामिब्रह्महेवमृतःश्वसन् १६ दैवमप्यनृतंवक्तिनमर्त्याएवकेवलम् ॥ यद्विश्रंभादहंपापःस्वसुर्निहतवान्सुतान् १७ माशोचेथांमहाभागावात्मजान्स्वकृतंभुजः ॥ जंतवोनसदैकत्रदैवाधीनाःसहासते १८

ततिम् ६ आचिच्छिदेआकृष्टवान् ७ अपोथयत्अताडयत् स्वार्थेनस्वप्रयोजनेनउन्मूलितउत्पाटितंसौहृदंस्नेहलक्षणंयस्यसतथा ८ अदृश्यतजनेनेतिशेषः ९ १० उरवःबलयःपूजायैस्तैस्तथातैः ११ त्वयाहतयामृतयातवकोर्थइतिशेषः कुतइत्यत्राह जातइति खलुविचारशून्यस्त्वम् १२ मायाभगवतीदुर्गा इतिशब्दआदिवचनः इत्यादीत्यर्थः इतिहेतुप्रकरणप्रकारादिसमाप्तिष्वितियादवः १३ सतां स्वभावंदर्शयति तयाभिहितमिति १४ बतखेदे बहवोराक्षसाः यत्क्रूरकर्मकुर्वंतिसंभूयतन्मयैकेनकृतमित्यतःपुरुषादैरितिबहुवचनम् १५ ब्रह्महाब्राह्मणंहतवान् मृतःश्वसन्जीवन्मृतः १६ १७ स्वकृतंभुजःस्वकृताद्दृष्टभुजइतियच्चन्माशोचेथां इतोपिशोकोनकर्तव्यइत्याह जंतवइति । कीटादिप्राणिनः १८

नन्वेवंतर्हिदेहस्थस्यपरमात्मनोप्यागमनापायौस्यातामितितत्राह भुवीति । यथाभुविमीमानिपार्थिवानिभूतानिचतुर्विधान्यायांत्यपयांतिच तथैतेषुभूतेषुस्थितोयमात्मापरमात्मानविपर्येति आगमा पायौनाप्नोति । कथंयथाभूरागमनापायौनाप्नोतितथेत्यर्थः यथाभूतानिउद्भूतानिभूमानिरजासिआयात्यपयांति वायुनेतिशेषः । अयमात्मानथान अनन्यार्थानत्वात्अन्वयदृष्टांतमाह यथाभू पृथ्वी काठिनत्वेनस्थिरत्वादितिशेषः १९ जंत्वागमागमवत्पुत्रादिकंविपर्येतिभुवआगमापायाभाववन्परमात्मानविपर्येतीति यदितर्हिदंज्ञानंतस्मात्कोदेतीत्याशंक्यभगवन्मायपाशुग्धचेतस्त्वेनपरमात्मवि षयाभेदज्ञानबाहुल्यात् । अनेनसंसारानिवृत्तिस्तस्याःप्राप्तिश्चस्यातामित्याह यतइति अस्वपरविवेकबुद्ध्युत्पत्तिप्रभृतिपरमात्मविषयोऽभेदोऽनेकविधोऽहंब्रह्मास्मीत्यादिकोजीवस्यप्रतीयतइति । यत स्तेनविपरीतज्ञानेनदेहयोगादिलक्षणा वास्तवीयथार्थाा संसृतिर्नैनिवर्ततइति । यतःआत्मविपर्ययःस्वस्यतमआद्यनर्थप्राप्तिश्चयतस्तस्मादात्मनिर्निश्चितिंकृत्वामानुशोचेत्यन्वयः । अहंब्रह्मास्मिदेवोस्मिना स्मिकेवलमानुषइत्यादेःसिद्धोयमर्थः । अभेदप्रतीतिःअसुरजातेरेव तल्लक्षणैर्विहीनःसन्त्रह्मदेवोस्मिवापित्वित्यादेः सर्वःस्वकृतमदृष्टभुक्तइतियस्मात्तस्मात् ब्रह्मास्मीत्याक्षेपितनतर्हिकस्येत्यतःस्वयो

भुविभौमानिभूतानियथायांत्यपयांतिच ॥ नायमात्मातथैतेषुविपर्येतियथैवभूः १९ यतोऽनेकविधोऽभेदोयतआत्माविपर्ययः ॥ देहयोगवियोगश्च संसृतिर्नैनिवर्त्तते २० तस्माद्भद्रेस्वतनयान्मयाव्यापादितानपि ॥ मानुशोचयतःसर्वःस्वकृतंविंदतेऽवशः २१ यावद्धतोऽस्मिहतास्मीत्यात्मानंमन्यते ऽस्वदृक् ॥ तावत्तदभिमान्यज्ञोबाध्यबाधकतामियात् २२ क्षमध्वंममदौरात्म्यंसाधवोदीनवत्सलाः ॥ इत्युक्त्वाऽश्रुमुखःपादौश्यालःस्वस्रोरथाग्रहीत् २३ मोक्षयामासनिगडाद्विस्रब्धःकन्यकागिरा ॥ देवकींवसुदेवंचदर्शयन्नात्मसौहृदम् २४ भ्रातुर्वचनमाश्रुत्यक्षांत्वारोषंचदेवकी ॥ व्यसृजद्वसुदेवश्चप्रह स्यतमुवाचह २५ एवमेतन्महाराजयथावदसिदेहिनाम् ॥ अज्ञानप्रभवाहंतिस्वपरेतिभिदायतः २६ शोकहर्षभयद्वेषलोभमोहमदान्विताः ॥ मिथोघ्नं तिनपश्यंतिभावैर्भावान्पृथग्दृशः २७ कंसएवंप्रसन्नाभ्यांविस्रब्धःप्रतिभाषितः ॥ देवकीवसुदेवाभ्यामनुज्ञातोऽविशद्गृहम् २८ श्रीशुकउवाच ॥ तस्यां रात्र्यांव्यतीतायांकंसआहूयमंत्रिणः ॥ तेभ्यआचष्टतत्सर्वंयदुक्तंयोगनिद्रया २९ आकर्ण्यभर्तुर्गदितंतमूचुर्देवशत्रवः ॥ देवान्प्रतिकृतामर्षादैतेयानातिकोविदाः ३०

ग्यानामेवतद्युक्तम् । परब्रह्मणएकस्यब्रह्मास्मीतिविचिंतनमित्यादेः । सर्वःपरमात्मास्वकृतंपूर्णस्वमानंदंविंदते यतोऽवशःअवगतपरमानंदः सर्वं शर्वःशिवःस्थाणुरितिच सर्वःदेवादिश्चस्वकृतंदेवोस्मीत्या दियथार्थज्ञानफलंभुंक्ते अवशोविष्णवधीनः २० २१ तर्ह्यस्यकियंतंकालंसंसारानुवृत्तिरितितत्राह यावदिति । अस्वदृगनात्मानंदेहआत्मत्वेनपश्यतीति । तदभिमानीदेहाभिमानी २२ २३ २४ २५ परमात्मानविदयैतेपुत्रादिकंविपर्येतीतिजीवपरभेदज्ञानंमुक्तिसाधनमन्यत्तमःसाधनंयथावदसिएतदेवसत्यम् एतदेवद्रढयति देहिनामिति देवोऽहंमनुषोवेतिविशेषजत्रवापित्वित्यादेःयातना शब्दमध्याहृत्यव्याख्येयम् अहंदेवाद्यन्यतमः । परमात्मामदादिजीवराशेःसत्तादिप्रदत्वेनात्यंतंप्रष्ठइतियाभिदातज्ज्ञानंदेहिनामज्ञानप्रभवायातनाहंतेतियतइत्यन्वयः ननूत्तरश्लोकेपृथग्दृशइतिभे दज्ञानिनिंदावचनादित्राप्रसएवार्थः किंनस्यादुच्यते पृथग्दृशइति पृथक्शब्दप्रयोगबलादन्योर्थस्तस्यतर्हिसकइत्युच्यते भगवद्दर्शनविरोधिदर्शनंतत्पृथग्दर्शनम् भगवद्दर्शनाद्यस्यविरोधादर्शनं धर्मित्यादेः स्वरूपभेदोहिपरजीवयोर्जीवगोमिथः परस्परेणवस्तूनांविशेषःशास्त्रदर्शितइत्यादेः उक्तएवार्थइतिसंतोष्टव्यम् २६ २७ २८ २९ ३०

अनिर्दशान् अनिर्गतानिदशाहानियैस्तेतथातानननतिक्रांतदशाहानित्यर्थः निर्दशानातिक्रांतदशाहान् ३१ ३२ अस्यतःक्षिपतः ३३ कक्ष्याकांची कक्ष्याकारिरत्राथांकांच्यांगेहेमकोष्ठकेइतियादवः ३४ ३५ क्षेमशूरैःअसयुगाविकत्थनैःरणादन्यत्रविविधजल्पैः रहोजुषाएकांतसेविना वेदशिरःप्रतिपाद्येनवा वनौकसाकैलासशिखरकांतारमंदिरेण यद्वा भासामाश्रयेणतेजोमूर्तिनेत्यर्थःओकसौदं दिराश्रयावितियादवः वनंभास्यप्लुकाननइविच ३६ तेषांमूलोत्पाटने ३७ अंगेशरीरे आमयः कुष्ठादिरूढंपदंव्याप्तंस्थानंयेनसः ३८ कःसाक्षात्मूलमित्यत्राह मुलमिति तस्यविष्णोर्मूलं

एवंचेत्तर्हिभोजेंद्रपुरग्रामव्रजादिषु ॥ अनिर्दशान्निर्दशांश्चहनिष्यामोऽद्यबालकान् ३१ किमुद्यमैःकरिष्यंतिदेवाःसमरभीरवः ॥ नित्यमुद्विग्नमनसोज्याघो षैर्धनुषस्तव ३२ अस्यतस्तेशरव्रातैर्हन्यमानाःसमंततः ॥ जिजीविषवउत्सृज्यपलायनपरापयुः ३३ केचित्प्रांजलयोभीतान्यस्तशस्त्रादिवौकसः ॥ मुक्त कक्ष्याशिखाःकेचिद्भीताःस्मइतिवादिनः ३४ नत्वंविस्मृतशस्त्रास्त्रान्विरथान्भयसन्नतान् ॥ हंस्यन्यासक्तमनसोभग्नचापानयुध्यतः ३५ किंक्षेमशूरैर्विबु धैरसंयुगविकत्थनैः ॥ रहोजुषाकिंहरिणाशंभुनावावनौकसा ३६ किमिंद्रेणाल्पवीर्येणब्रह्मणावातपस्यता ॥ तथापिदेवाःसापत्न्यान्नोपेक्ष्याइतिमन्महे ॥ ततस्तन्मूलखनननियुंक्ष्वास्माननुव्रतान् ३७ यथाऽमयोंऽगेसमुपेक्षितोनृभिर्नशक्यतेरूढपदश्चिकित्सितुम् ॥ यथेंद्रियग्रामउपेक्षितस्तथारिपुर्महान्ब ध्दबलोनचाल्यते ३८ मूलंविष्णुर्हिदेवानांयत्रधर्मःसनातनः ॥ तस्यचब्रह्मगोविप्रास्तपोयज्ञाःसदक्षिणाः ३९ तस्मात्सर्वात्मनाराजन्ब्राह्मणान्ब्रह्मवादि नः ॥ तपस्विनोयज्ञशीलान्गाश्चहन्मोहविर्दुघाः ४० विप्रागावश्चवेदाश्चतपःसत्यंदमःशमः ॥ श्रद्धादयातितिक्षाचक्रतवश्चहरेस्तनूः ४१ साहिसर्वसुराध्य क्षोह्यसुरद्विड्गुहाचरः ॥ तन्मूलादेवताःसर्वाःसेश्वराःसचतुर्मुखाः ४२ अयंचतद्वधोपायोयदृषीणांविहिंसनम् ॥ एवंदुर्मंत्रिभिःकंसःसहसंमंत्र्यदुर्मतिः ४३ ब्रह्महिंसांहितंमेनेकालपाशावृतोऽसुरः ॥ संदिश्यसाधुलोकस्यकदनेकदनप्रियान् ॥ कामरूपधरान्दिक्षुदानवान्गृहमाविशत् ४४ तेवैरजःप्रकृतयस्तम सामूढचेतसः ॥ सतांविद्वेषमाचेरुरारादागतमृत्यवः ४५ आयुःश्रियंयशोधर्मंलोकानाशिषएवच ॥ हंतिश्रेयांसिसर्वाणिपुंसोमहदतिक्रमः ४६ इति श्रीभागवतेम०दशमस्कंधेअसुरमंत्रेपंचमोऽध्यायः ॥ ५ ॥ श्रीशुकउवाच ॥ नंदस्त्वात्मजउत्पन्नेजाताह्लादोमहामनाः ॥ आहूयविप्रान्वेदज्ञान्स्नातः शुचिरलंकृतः १ वाचयित्वास्वस्त्ययनंजातकर्मात्मजस्यवै ॥ कारयामासविधिनापितृदेवार्चनंतथा २

हन्मःहनिष्यामःहविर्दुघाःयज्ञोपयोगघृतंदुहंतीः । छंदसिहकारस्यानेघकारः ४० ४१ ४२ ४३ आरात्समीपे ४४ ४५ विष्ण्वादिमहदतिक्रमफलमाह आयुरिति ४६ ॥ इतिश्रीभागवतेमहापुराणे दशमस्कंधेविजयध्वजकृतटीकायांपंचमोऽध्यायः ॥ ५ ॥ भगवदवतारेत्दृष्टमनसोनंदस्यभगवद्भक्तपतिशदेनचित्तविश्रमणेनसद्भक्तानाभगवद्भक्तिश्रद्धोदयइवसमद्वृद्धिःस्वाभाविकीतिप्रकाश्यतेऽस्मिन्न ध्याये जाताह्लादः प्रादुर्भूतानंदः १ स्वस्त्ययनमांगल्यवचनंतथापितृदेवगंधर्वार्चनंकारयामासनदयामास २

शातकुंभांतरावृतान् गर्भीकृतशातकुंभान् ३ स्वकृतस्तुतिपाठकाः सूताः परकृतस्तुतिजीविनो मागधाः प्रबंधस्तुतिपाठका बंदिनः ४ द्वारं च अजिरं च गृहांतरं च द्वाराजिरगृहांतराणि संमृष्टानि संशोधितानि संसिक्तानि चंदनजलादिना प्रोक्षितानि द्वारादीनि यासां तास्तथा चित्रध्वजपताकपास्रक्चैलपल्लवैश्चैव युतास्तोरणा यासां तास्तथा ५ विचित्रधातवः बर्हस्रजः पिच्छमालाः वस्त्राणि कांचनमालाश्च यासां ताः ती ति विचित्रधातुबर्हस्रग्वस्त्रकांचनमालिनः ६ महार्हाणि महायोग्यानि वस्त्राणि आभरणानि कंचुकानि कवचानि उष्णीषाणि शिरोवेष्टनवस्त्राणि भूषणानि येषां ते तथा ७ आकल्पं आभरणं ८ नवकुंकुमकिंजल्कानि अभिनवकुंकुमपुष्पकेसराणीव सुखपंकजभूतयः मुखकमलश्रियो यासां तास्तथा बलिभिर्युताः पृथुश्रोण्यः विशालकटितटाः ९ व्रजतीः व्रजंत्यः लोलत्वं कुंडलादीनां गमनविशेषेण

धेनूनां नियुते प्रादाद्विप्रेभ्यः समलंकृतः ॥ तिलाद्रीन्सप्तरत्नौघानशातकुंभांतरावृतान् ३ सौमंगल्यगिरो विप्राः सूतमागधबंदिनः ॥ गायकाश्च जगुर्नेदुर्भेर्यो दुंदुभयो मुहुः ४ प्रजाः संमृष्टसंसिक्तद्वाराजिरगृहांतराः ॥ चित्रध्वजपताकास्रक्चैलपल्लवतोरणाः ५ गावो वृषाश्च वत्साश्च हरिद्रातैलरूषिताः ॥ विचित्रधातुबर्हस्रग्वस्त्रकांचनमालिनः ६ महार्हवस्त्राभरणकंचुकोष्णीषभूषिताः ॥ गोपाः समाययू राजन्नानोपायनपाणयः ७ गोप्यश्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवम् ॥ आत्मानं भूषयांचक्रुर्वस्त्राकल्पांजनादिभिः ८ नवकुंकुमकिंजल्कमुखपंकजभूतयः ॥ बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः ९ गोप्यः सुमृष्टमणिकुंडलनिष्ककंठ्यश्चित्रांबराः पथि शिखाच्युतमाल्यवर्षाः ॥ नंदालयं सवलया व्रजतीर्विरेजुर्व्यालोलकुंडलपयोधरहारशोभाः १० ता आशिषः प्रयुंजानाश्चिरं पाहीति बालके ॥ हरिद्राचूर्णतैलाद्भिः सिंचंत्यो ऽजनमुज्जगुः ११ अवाद्यंत विचित्राणि वादित्राणि महोत्सवे ॥ कृष्णे विश्वेश्वरेऽनंते नंदव्रजमुपेयुषि १२ गोपाः परस्परं हृष्टा दधिक्षीरघृतांबुभिः ॥ आसिंचंतो विलिंपंतो नवनीतैश्च चिक्षिपुः १३ नंदो महामनास्तेभ्यो वासोऽलंकारगोधनैः ॥ सूतमागधबंदिभ्यो येऽन्ये विद्योपजीविनः १४ तैस्तैः कामैरदीनात्मा यथोचितमपूजयत् ॥ विष्णोराराधनार्थाय स्वपुत्रस्योदयाय च १५ रोहिणी च महाभागा नंदगोपाभिनंदिता ॥ व्यचरद्दिव्यवासःस्रक्कंठाभरणभूषिता १६ तत आरभ्य नंदस्य व्रजः सर्वसमृद्धिमान् ॥ हरेर्निवासात्मगुणै रमाक्रीडमभून्नृप १७ गोपान्गोकुलरक्षायां निरूप्य मथुरां गतः ॥ नंदः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह १८ वसुदेव उपश्रुत्य भ्रातरं नंदमागतम् ॥ ज्ञात्वा दत्तकरं राज्ञे ययौ तदवलोकनः १९ तं दृष्ट्वा सहसोत्थाय देहः प्राणमिवागतम् ॥ प्रीतः प्रियतमं दोर्भ्यां सस्वजे प्रेमविह्वलः २० पूजितः सुखमासीनः पृष्ट्वानामयमादितः ॥ प्रसक्तधीः स्वात्मजयोरिदमाह विशांपते २१ दिष्ट्या भ्रातः प्रवयस इदानीमप्रजस्य ते ॥ प्रजाशाया निवृत्तस्य प्रजा यत्समजायत २२

सवलयाः सकंठकाः सापांगनयनाः १० हरिद्रातैलचूर्णाद्भिर्जनान् सिंचंत्यः अजनं कृष्णमिति केचित् ११ उपेयुषि प्राप्तवति १२ १३ तेभ्यो गोपेभ्यः यथोचितं दत्त्वा अपूजयत् ये अन्ये विद्योपजीविनः तेभ्यश्च यथोचितं दत्त्वा १४ किं फलमुद्दिश्य एवं वितताह विष्णोरिति १५ १६ रमाक्रीडं लक्ष्मीविहारस्थानं क्रियाविशेषणं वा १७ वार्षिक्यं प्रतिवत्सरं देयं १८ तदवलोकनः तस्य नंदस्य दर्शनेच्छुः १९ २० २१ प्रवयसः वृद्धस्य इदानीं प्रजा समजायतेति यत् अतो दिष्ट्या २२

इदंचैकंमंगलमभूदित्याह दिष्ट्येति पुनःपुनर्भवतीतिपुनर्भवःतस्मिन् किंचोद्यमितितत्राह दुर्लभामिति २३ दुर्लभत्वमुपपादयति नैकत्रेति प्रियसंवासःहर्षेणनिवासः प्रियैःसहसंवासोवा चित्रक
र्मणांनानाविधपुण्यपापवतां स्रोतसोनद्याःओघेनप्रवाहेणव्यूह्यमानानांविविधनीयमानानां प्लवानांकाष्ठादीनांपोतानांवा २४ कच्चिदितिसानुनयप्रश्नः पशव्यंपशुहितं निरुजंनीरोगकरं २५
नंदस्यकृष्णोममसुतइतिभ्रांतिंनिवारयति भ्रातरिति २६ त्रिवर्गोधर्मादिःपुंसःविहितोवेदेइतिशेषः ससुहृदामनिमित्तबधनांजनानामनुभावतः प्रभावान्निश्चयाद्वाभवति हियस्मात्तस्मात् तेषुसु
हृत्सुक्लिश्यमानेषुसत्सुत्रिवर्गोर्थायप्रयोजनायनकल्पतेसमर्थोनभवति २७ सुतास्तेपिसुखिनःकच्चिदितिशेषः २८ वसुदेवस्यस्वस्यतत्त्वज्ञानमस्तीतिसूचयति नूनमिति नूनप्रायःअयजनःदृष्टप्रत्यक्षे
कार्येनिष्ठानितरांस्थितिर्यस्यसतथाहि एवंअदृष्टपरमोनदृष्टमेवजानातिनादृष्टमित्यर्थः अत्रयआत्मनःअदृष्टमव्यक्तंतत्त्वंवेदसपुमान्नमुह्यतिविपरीतज्ञानीनभवति यथातत्त्वंजानातीत्यर्थः २९ नून

दिष्ट्यासंसारचक्रेऽस्मिन्वर्तमानःपुनर्भवे ॥ उपलब्धोभवानद्यदुर्लभंप्रियदर्शनम् २३ नैकत्रप्रियसंवासःसुहृदांचित्रकर्मणाम् ॥ ओघेनव्यूह्यमानानांप्ल
वानांस्रोतसोयथा २४ कच्चित्पशव्यंनिरुजंभूर्यंबुतृणवीरुधम् ॥ बृहद्वनंतदधुनायत्रास्तेत्वंसुहृद्वृतः २५ भ्रातर्ममसुतःकच्चिन्मात्रासहभवद्व्रजे ॥
तातंभवंतंमन्वानोभवद्भ्यामुपलालितः २६ पुंसस्त्रिवर्गोविहितःसुहृदांह्यनुभावतः ॥ नतेषुक्लिश्यमानेषुत्रिवर्गोऽर्थायकल्पते २७ ॥ नंदउवाच ॥ अ
होतेदेवकीपुत्राःकंसेनबहवोहताः ॥ एकावशिष्टावरजाकन्यासापिदिवंगता २८ नूनंहिदृष्टनिष्ठोयंनादृष्टपरमोजनः ॥ अदृष्टमात्मनस्तत्त्वंयोवेदनसमु
ह्यति २९ ॥ वसुदेवउवाच ॥ करोवैवार्षिकोदत्तोराज्ञेदृष्टावयंचवः ॥ नेहस्थेयंबहुदिनंसंत्युत्पाताश्चगोकुले ३० इतिनंदादयोगोपाःप्रोक्तास्तेशौरिणाय
युः ॥ अनोभिरनडुद्युक्तैस्तमनुज्ञाप्यगोकुलम् ३१ इतिश्रीभागवतेदशमस्कंधेनंदवसुदेवसंगमेषष्ठोऽध्यायः ॥ ६ ॥ श्रीशुकउवाच ॥ नंदःपथिवचः
शौरेर्नमृषेतिविचिंतयन् ॥ हरिंजगामशरणमुत्पातागमशंकितः १ कंसेनप्रहिताघोरापूतनाबालघातिनी ॥ शिशूंश्चचारनिघ्नंतीपुरग्रामव्रजादिषु २
नयत्रश्रवणादीनिरक्षोघ्नानिस्वकर्मसु ॥ कुर्वंतिसात्वतांभर्तुर्यातुधान्यश्चतत्रहि ३ साखेचर्येकदोपेत्यपूतनानंदगोकुलम् ॥ योषित्वामाययात्मानंप्रा
विशत्कामचारिणी ४ तांकेशबंधव्यतिषक्तमल्लिकांबृहन्नितंबस्तनकृच्छ्रमध्यमाम् ॥ सुवाससंकंपितकर्णभूषणत्विषोल्लसत्कुंतलमंडिताननाम् ५ व
ल्गुस्मितापांगविसर्गवीक्षितैर्मनोहरंतींवनितांव्रजौकसः ॥ अमंसतांभोजकरेणरूपिणींगोप्यःश्रियंद्रष्टुमिवागतांपतिम् ६

मिदानीमस्मिन्कालेचउत्पाताअनर्थसूचकाः ३० अनडुद्युक्तैःवृषभयुक्तैः ३१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांषष्ठोऽध्यायः ॥६॥ गुणश्रवणवत्पराक्रमश्रवणमपिज्ञानसा
धनमितिप्रतिपादयति पूतनावधलक्षणंतच्चरितमस्मिन्नध्याये तत्रोत्पातपरिहारोनारायणशरणप्राप्त्याभवतीत्याशयेनाह नंदइति १ प्रहिताप्रेषिता पुरंराजमंदिरं नानाजनाधिवासोग्रामः व्र
जोगोकुलं २ यातुधान्यः राक्षस्यः सात्वतांभर्तुःश्रवणादीनिरक्षोघ्नानिइतरेषामितिशेषःनसंति । साक्षात्कृष्णोयत्रवसतितत्रकाशंकेतिभावः ३ योषित्वापिधाय ४ केशपाशेकेशभारेव्यति
षक्तानिगूढामल्लिकायस्यांसातथा बृहन्नितंबेनकलशस्तनाभ्यांचकृच्छ्रोभग्नोमध्योयस्याःसातथातां ५ अपांगविसर्गःकटाक्षमोक्षःवनितासंभाजनीयां व्रजौकसोगोप्यः व्रजौकसामितिपाठेमनो
हरंतीमितिसंबंधः श्रियमिवनतुश्रियं अमंसतमेनिरे ६

बालग्रहीबालकमारिका असदंतकं भसिभस्मनि विचिन्वतीमृगयंती ७ बालकमारिकाग्रहबालानांमृत्युभूतग्रहंसुरत्वेपूर्णैश्वर्ये देवदेवत्वेवा सुरैश्वर्यइतिधातुः महीत्यतिप्रशस्तोत्सवः मक्षामपी श्वरत्वेपिवा ईश्वरत्वाप्रकटनेवचनाभावेचबालभावप्रकाशनहेतुः ८ अथसात्त्विकक्रिय·स्वभावप्रकटनानंतरम् यद्वा राक्षस्याःस्वभावःप्रारभ्यते यद्वायतोनिशाचरी अथतस्मादजानमाना मंग लानंतरारंभप्रश्नकात्स्न्येष्वथोअथेति अथातोनंतराप्यथंविकल्पारंभमंगलइत्यमरयादवौ हरेःपूतनावृत्तचेष्टिताज्ञानंनास्तीत्याशयेनोक्तंनिसर्गेति ज्ञानाविर्भावतिरोभावौनस्तइतिद्योतनायनिसर्गे तिपदंदेवदत्तज्ञानवत्कतिपयपदार्थज्ञानविषयंनेश्वरज्ञानमित्यतोजगदिति हरिशब्दस्यअनेकार्थत्वेनात्रकिंचिद्विवक्षितमित्यतउक्तं अनंतमिति एककुंडलोनंतइत्यस्यापिसंदिग्धार्थत्वमित्यतउक्तम् अंतकामिति रुद्रोमाविशांतकवचनात् उक्तशंकाऽनिस्ताराादित्यतोनिसर्गेति इदंलक्षणंनारायणस्यैवनान्यस्य अहंरुद्रायधनुरातनोमियःसर्वज्ञइत्यादेः पूतनाऽनतंबालअंकमारोपयदित्यन्वयः हंतुमितिशेषः नकेवलंहरिमजानमानाऽपितुतमात्मनोंतकअजानमानापरिमितांकारोपणंच तमनतमपरिच्छिन्नंमरणशून्यंवा तमजानमानाचेत्यर्थः कथमित्यनद्दष्टांतमाह अबुद्ध्याअज्ञानेनरज्जु रियमितिधीज्ञानंयस्याःसातथासुप्तमुरगंअंकमारोपयति अबुद्धिश्चरज्जुधीश्चेतिविग्रहः तथाचाबुद्धिरज्ञानीयथासुप्तमंतकमंकमारोपयति रज्जुधीःसुप्तमुरगमितिविभागः केचिद्दृष्टांतकसुप्तंनाज्ञानं

बालग्रहीतत्रविचिन्वतीशिशून्यदृच्छयानंदगृहेऽसदंतकम् ॥ बालंप्रतिच्छन्ननिजोरुतेजसंददर्शतल्पेऽग्निमिवाहितंभसि ७ विबुध्यतांबालकमारिकाग्र हंचराचरात्मासनिमीलितेक्षणः ॥ महीसुरत्वेपिचबालभावंविभावयन्‌किंचिदुवाचनप्रभुः ८ अजानमानाथनिशाचरीहरिंनिसर्गविज्ञातजगद्विचेष्टितम् ॥ अनंतमारोपयदंकमंतकंयथोरगंसुप्तमबुद्धिरज्जुधीः ९ तांतीक्ष्णचित्तामतिवामचेष्टितांवीक्ष्यांतराकोशपरिच्छदासिवत् ॥ वरस्त्रियंतत्प्रभयाचधर्षिता निरीक्षमाणाजननीअतिष्ठत् १० तस्मिन्स्तनंदुर्जरवीर्यमुल्बणंघोरांकमादायशिशोर्ददावथ ॥ गाढंकराभ्यांभगवान्प्रपीड्यतत्प्राणैःसमंरोषसमन्वितो पिबत् ११ सामुंचमुंचेतिगिराप्रभाषिणीनिष्पीड्यमानाखिलजीवमर्मिणी ॥ विवृत्यनेत्रेचरणौभुजौमुहुर्विक्षिप्तगात्राक्षिपतीरुरावहि १२ तस्याःस्व नेनातिगभीररंहसासाद्रिर्महीद्यौश्चचचालसग्रहा ॥ रसादिशश्चप्रतिनेदिरेजनाःपेतुःक्षितौवज्रनिपातशंकया १३ निशाचरीत्थंव्यथिताव्यसुःक्षितौ विकीर्यकेशांश्चरणौभुजावपि ॥ प्रसार्यगोष्ठेनिजरूपमास्थितावज्राहतोवृत्रइवापतन्नृप १४

तमुरगमित्युरगविशेषोवा काचिन्निशाचरीउलूपिका सुप्तंहारिंसिंहंशिवाबुद्ध्येतिशेषः ध्वांक्षारातिर्निशाटनइत्यमरः ९ अतिवामचेष्टिताम् अधिकक्रूरव्यापाराम् अतिस्यादधिकार्थोक्तौप्रशंसायाम तिक्रमइतियादवः वामःक्रूरेमनोहरइतिच अंतरामध्येकोशएवपरिच्छदः परिकरभूषणलक्षणोयस्यसोंतराकोशपरिच्छदः सएवासिरंतराकोशपरिच्छदासिःसइवगूढाकारबाह्याभ्यंतरकोशालंकृत खड्गवत्स्थितेत्यन्वयः अंतराकोशपरिच्छदः वर्जितकोशलक्षणालंकारोसिर्यथातथावामचेष्टिताम्अतिवा तस्याःपूतनायाःप्रभयावरोद्भूतलक्षणयाधर्षिताविह्वलिता तस्यकृष्णप्रभयावा इदानीमे वपूतनाप्राणवियोगसूचनायजननीअतिष्ठदितिसंधिकार्याकरणम् वैदिकप्रयोगानुकरणंवा १० तस्मिन्कालेदुर्जरवीर्यंजीर्णीकर्तुमशक्यंवीर्यंयस्यसतथा अतएवोल्बणदुःसहक्रोधोपेतम् अथशब्दो विकल्पार्थः अथस्तनंददाविति विषमितितस्याःप्राणैः ११ अखिलजीवमर्मिणीसमस्तप्राणापहारिणी रुरावरोदनमकरोत् हिशब्दोहेतौश्रोतृणामनुकंपाजनकः १२ रसापातालप्रतिनेदि रेप्रतिशब्दंचक्रुः १३ व्यसुःविगतप्राणा १४

त्रिगव्यूत्यंतरेषट्क्रोशमध्येयेद्रुमाःवृक्षाःतान् गव्यूतिःस्यात्क्रोशयुगमित्यमरः १५ ईषारथदारुविशेषःकंदरोगुहारोगविशेषव्यावृत्त्यर्थंगिरीतिविशेषणम् गंडशैलःस्थूलपाषाणः १६ आरोहोनितंबः बद्ध सेतुवत् स्थिराभुजोर्वंघ्रयोयस्यतत्तथा भुजौऊरूचअंघ्रीचभुजोर्वंघ्रयः शून्यतोयंयस्मिन्शून्यतोयः सन्ह्रदइवउदरंयस्यतत्तथा १७ संतत्रसुःभीताअभूवन् तस्याःनिस्वनितेनअशनिवत्क्रूरशब्देनभिन्नानि हृत्कर्णमस्तकानियासांतास्तथा १८ तूर्णंशीघ्रम् १९ २० गोरजसागोरेणुना गोशकृतागोमयसहितेन केशवादिनामभिःललाटादिद्वादशावयवेषु २१ संस्पृष्टसलिलाःआचांताःअंगेषुन्यस्य

पतमानोपितद्देहस्त्रिगव्यूत्यंतरद्रुमान् ॥ चूर्णयामासराजेंद्रमहदासीत्तदद्भुतम् १५ ईषामात्रोग्रदंष्ट्रास्यंगिरिकंदरनासिकम् ॥ गंडशैलस्तनंरौद्रंप्रकीर्णारुण मूर्धजम् १६ अंधकूपगभीराक्षंपुलिनारोहभीषणम् ॥ बद्धसेतुभुजोर्वंघ्रिशून्यतोयन्हदोदरम् १७ संतत्रसुःस्मतद्वीक्ष्यगोपागोप्यःकलेवरम् ॥ पूर्वंतुतन्निः स्वनितभिन्नहृत्कर्णमस्तकाः १८ बालंचतस्याउरसिक्रीडंतमकुतोभयम् ॥ गोप्यस्तूर्णंसमभ्येत्यजगृहुर्जातसंभ्रमाः १९ यशोदारोहिणीभ्यांताःसमंबाल स्यसर्वशः ॥ रक्षांविदधिरेसम्यग्गोपुच्छभ्रमणादिभिः २० गोमूत्रेणस्नापयित्वापुनर्गोरजसार्भकम् ॥ रक्षाचक्रुश्चशकृताद्वादशांगेषुनामभिः २१ गो प्यःसंस्पृष्टसलिलाअंगेषुकरयोःपृथक् ॥ न्यस्यात्मन्यथबालस्यबीजन्यासमकुर्वत २२ अव्यादजोंऽघ्रिमणिमांस्तवजान्वथोरूयज्ञोऽच्युतःकटितटंज ठरंहयास्यः ॥ हृत्केशवस्त्वदुरईशइनस्तुकंठंविष्णुर्भुजंमुखमुरुक्रमईश्वरःकम् २३ चक्र्यग्रतःसहगदोहरिरस्तुपश्चात्त्वत्पार्श्वयोर्धनुरसीमधुहाऽजनश्च ॥ कोणेषुशंखउरुगायउपर्युपेंद्रस्तार्क्ष्यःक्षितौहलधरःपुरुषःसमंतात् २४ इंद्रियाणिहृषीकेशःप्राणान्नारायणोऽवतु ॥ श्वेतद्वीपपतिश्चित्तंमनोयोगेश्वरोऽवतु २५ पृश्निगर्भस्तुतेबुद्धिमात्मानंभगवान्परः ॥ क्रीडंतंपातुगोविंदःशयानंपातुमाधवः २६ व्रजंतमव्याद्वैकुंठआसीनंत्वांश्रियःपतिः ॥ भुंजानंयज्ञभु क्पातुसर्वग्रहभयंकरः २७ डाकिन्योयातुधान्यश्चकूष्मांडायेऽर्भकग्रहाः ॥ भूतप्रेतपिशाचाश्चयक्षरक्षोविनायकाः २८ कोटरारेवतीज्येष्ठापूतनामातृ कादयः ॥ उन्मादायेह्यपस्मारादेहप्राणेंद्रियद्रुहः २९ स्वप्नदृष्टामहोत्पातावृद्धबालग्रहाश्चये ॥ सर्वेनश्यंतुतेविष्णोर्नामग्रहणभीरवः ३० इतिप्रणयबद्धाभि र्गोपीभिःकृतरक्षणम् ॥ पाययित्वास्तनंमातासंन्यवीविशदात्मजम् ३१ तावन्नंदादयोगोपामथुरायाव्रजंगताः ॥ विलोक्यपूतनादेहंबभूवुरतिविस्मिताः ३२ नूनंबतर्षिःसंजातोयोगेशोवासमासतः ॥ सएवदृष्टोह्युत्पातोयथाहानकदुंदुभिः ३३ कलेवरंपरशुभिश्छित्वातत्तेव्रजौकसः ॥ दूरेक्षिप्त्वाऽवयवशोन्यद दहुःकाष्ठवेष्टितम् ३४ दह्यमानस्यदेहस्यधूमश्चागुरुसौरभः ॥ उत्थितःकृष्णनिर्भुक्तसपद्याहतपाप्मनः ३५

पृथक्करयोश्चन्यस्यआत्मनिमध्येदेहेचन्यस्य अथानंतरंमंगलकरंवाबालस्यबीजन्यासंअष्टाक्षरन्यासम् अकुर्वत २२ अत्राजादयोमूर्तिविशेषाः अंघ्रिःअंघ्री जानुजानुनीअंघ्रिमित्यन्वयः अणिमान्ग रिमानित्यर्थः २३ मधुसूदनादयश्चत्वारःचतुर्षुकोणेषु २४ २५ आत्मानंमध्यम् २६ २७ अर्भकग्रहाःबालग्रहाः २८ २९ ३० प्रणयबद्धाभिःबद्धस्नेहाभिः संन्यवीविशत् संवेशंनिद्रामकारयत् ३१ ३२ वसुदेवःऋषिःत्रिकालदर्शी योगेशःकपिलान्यतमःसमासतःसंक्षेपतः सकोचंकृत्वा जातः दृष्टःअस्माभिरितिशेषः ३३ ३४ ३५

पूतनाविष्ठोर्वैश्री सद्गतिस्वर्गी पूतनात्वसद्गतिंनरकं षद्लृविशरणगत्यवसादनेष्विति धातुः ३६ रक्ताअनुरक्ताः ३७ ३८ अपिस्वर्गगर्हितंस्वर्गंनरकमित्यर्थः अपिःपदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषि तिपाणिनिः जनैर्येनीचास्तैर्गम्यतइतिजननीगतिः स्पष्टोन्योर्थः यद्वाजनन्याइगतिंविचित्रगतिंयोग्यतानुसृतगतिमित्यर्थः इर्विंचित्रेस्मरेपुमानितियादवःअनेनापिपूतनायानरकगतिःउर्वश्याःस्वर्गग तिरितिसूचितं नुसाविकल्पांगतिं योग्यतयेतिशेषः यद्वाअनुयोग्यतासदृशौ नुपृच्छायांविकल्पेचपश्चात्सादृश्ययोरन्वित्यमरः ३९ ४० सुतेक्षणंपुत्रदर्शनम् ४१ कटधूमस्यशवधूमस्य अन्यत्रजोकसः४२ ४३ प्रोष्यप्रवासंकृत्वा ४४ फलमाह यइति ४५॥इतिश्रीभागवतेमहापुराणे दशमस्कंधेवि०टीकायासप्तमोऽध्यायः॥७॥ भगवतिभक्तिकरणार्थंअनन्यसाऽध्यमाहात्म्यंवर्ण्यतेस्मिन्नध्याये ॥ तत्रशुकःपरि

पूतनालोकबालघ्नीराक्षसीरुधिराशना ॥ जिघांसयापिहरयेस्तनंदत्वापसद्गतिम् ३६ किंपुनःश्रद्धयाभक्त्याकृष्णायपरमात्मने ॥ यच्छन्प्रियतमांकिंचि द्रक्तास्तन्मातरोयथा ३७ पद्भ्यांभक्तहृदिस्थाभ्यांवंद्याभ्यांलोकवंदितः ॥ अंगंयस्याःसमाक्रम्यभगवानपिबत्स्तनम् ३८ यातुधान्यपिसास्वर्गमवापजन नीगतिम् ॥ कृष्णभुक्तस्तनक्षीराःकिमुगावोनुमातरः ३९ पयांसियासामपिबत्पुत्रस्नेहस्नुतान्यलम् ॥ भगवान्देवकीपुत्रःकैवल्याद्यखिलार्थदः ४० तासाम विरतंकृष्णेकुर्वतीनांसुतेक्षणम् ॥ नपुनःकल्पतेराजन्संसारोऽज्ञानसंभवः ४१ कटधूमस्यसौरभ्यमवघ्रायव्रजौकसः ॥ किमिदंकुतएवेतिवदंतोव्रजमाययुः ४२ तेतत्रवर्णितंगोपैःपूतनागमनादिकम् ॥ श्रुत्वातन्निधनंस्वस्तिशिशोश्चासन्सुविस्मिताः ४३ नंदःस्वपुत्रमादायप्रोष्यागतउदारधीः ॥ मूर्ध्न्युपाघ्रायपर मांमुदंलेभेकुरूद्वह ४४ यएतत्पूतनामोक्षंकृष्णस्यार्भकचेष्टितम् ॥ निशम्यश्रद्धयामर्त्योगोविंदेलभतेरतिम् ४५ ॥ इतिश्रीभागवतेमहापुराणेपूर्वार्धे दशमस्कंधे पूतनामोक्षोनामसप्तमोध्यायः ॥ ७ ॥ श्रीशुकउवाच ॥ एवंसवद्धधेविष्णुर्नंदगेहेजनार्दनः ॥ कुर्वन्नानिशमानंदंगोपालानांसयोषिताम् १ राजोवाच ॥ येनयेनावतारेणभगवान्हरिरीश्वरः ॥ करोतिकर्णरम्याणिमनोज्ञानिचनःप्रभो २ यच्छृण्वतोपैत्यरतिर्वितृष्णासत्त्वंविशुध्यत्यचिरेणपुंसः ॥ भक्तिर्हरौतत्पुरुषेषुसख्यंतदेवसारंवदमन्यसेतत् ३ अथान्यदपिकृष्णस्यतोकाचरितमद्भुतम् ॥ मानुषंदेहमासाद्यतज्जातिमनुरुंधतः ४ विस्तरेणेहकारुण्या त्सर्वपापप्रणाशनम् ॥ वक्तुमर्हसिधर्मज्ञदयालुस्त्वमितिप्रभो ५ श्रीशुकउवाच ॥ कदाचिदुत्थापनकौतुकाप्लवेजन्मर्क्षयोगेसमवेतयोषिताम् ॥ वादित्रगी तद्विजमंत्रवाचकैश्चकारसूनोरभिषेचनंसती ६

क्षितःप्रश्नबीजमुत्थापयन्वृत्तानुवादसूचनपूर्वंकृष्णकथामाह एवमिति एवमुक्तप्रकारेणजनार्दनःदुष्टजनानर्दयतिहिनस्तीति अर्दहिंसायामितिधातुः १ कर्णरम्याणिश्रोत्रसुखजनकानि मनोज्ञानिमनः प्रीतिजनकानि २ अरतिस्तत्रवितृष्णाविशिष्टतृष्णा विषयेषुरागबुद्ध्यभावोवा सत्त्वमंतःकरणं ३ तोकाचरितंबालचरितं ४ ननुवक्ष्यमर्हांकिंददासीति तत्राह दयालुरिति ५ उत्थापनकौतुकाप्लवे बहिर्निष्क्रमणोत्सवसंभ्रमणेउत्सवहेतुकप्लवइतस्ततःप्लुतिर्यस्मिन्सतथातास्मिन् जन्मर्क्षयोगे कृष्णस्यजन्मनक्षत्रसंयोगोयास्मिन्तस्मिन्दिवसेइतिशेषः कासाप्लवइतितत्राह समवेतेति संमीलितस्त्रीणां कृ मनिम्नगहीभागेकविप्लुतिस्वगप्लवाइतियादवः स्त्रीणांमध्येसतीप्रशस्तकर्मा ६

अन्नाद्यवासआदयोयेषांतेतथातैःविप्रैःकृतस्वस्त्ययनंमांगल्यवचनंयस्यसतथा संजातानिद्रायस्येतेतथातेअक्षिणीयस्यसतथातं अशीशयत्शायितवती शयनगतमकारयदित्यर्थः ७ कःतुउत्थान कंउत्सुकयतिपश्यतीतिउत्थानकौत्सुक्य स्वार्थेष्यञ्प्रत्ययः तादृशंमनोयस्याःसातथा मनस्विनीप्रशस्तमनाः उदक्षिपत्क्षिप्तवान् ८ अथउत्क्षेपानतरं अनःशकटंव्यवर्तताविपरीतमधोमुखमपतत् अल्प कौअणुतरौप्रवालवन्मृदूअंघ्रीअल्पकप्रवालमृदंघ्रीताभ्यांहतंपीडितं ध्वस्तानिइतस्ततोविक्षिप्तानिनानारसपूर्णकुप्यात्मभाजनानियस्मिन्तत्तथा कुप्यानिद्वीपांतरस्थमृद्विशेषरचितानि चक्रंरथांगंवृतदा रु अक्षोनामचक्रप्रोतदारुविशेषः कूबरोयुगंधरः व्यत्यस्तौन्यंचितौचक्राक्षौविभिन्नोविशीर्णःकूबरश्चयस्यतत्तथा ९ तद्विपर्ययगात्विपरीतंगतं १० अव्यक्तमतीनानिश्चितबुद्धीन् नव्यक्तामातिर्येषांतेऽ

नंदस्यपत्नीकृतमज्जनादिकंविप्रैःकृतस्वस्त्ययनंसुपूजितैः ॥ अन्नाद्यवासःस्रगभीष्टधेनुभिःसंजातनिद्राक्षमशीशयच्छनैः ७ औत्थानिकौत्सुक्यमनामन स्विनीसमागतान्पूजयतीव्रजौकसः॥ नैवाशृणोद्वैरुदितंसुतस्यसारुदन्स्तनार्थीचरणावुदक्षिपत् ८ अनःशयानस्यशिशोरथाल्पकप्रवालमृद्वंघ्रिहतंव्यव र्तत ॥ विध्वस्तनानारसकुप्यभाजनंव्यत्यस्तचक्राक्षविभिन्नकूबरम् ९ दृष्ट्वायशोदाप्रमुखाव्रजस्त्रियऔत्थानिकेकर्मणियाःसमागताः ॥ नंदादयश्चाद्भुतदर्श नाकुलाःकथंस्वयंवैशकटंविपर्यगात् १० इतिब्रुवंतोऽतिविषादमोहिताजनाःसमंतात्परिवव्रुशर्तंवत् ॥ऊचुस्तदव्यक्तमतीन्गोपान्गोपीश्चबालकाः॥ रुदता नेनपादेनक्षिप्तमेतन्नसंशयः ११ नतेश्रद्दधिरेगोपाबालभाषितमित्युत ॥ अनंतस्याप्रमेयस्यबलंतस्यनवैविदुः १२ रुदंतंसुतमादाययशोदाग्रहशंकिता ॥ कृतस्वस्त्ययनंविप्रैःसूक्तैःस्तनमपाययत् १३ पूर्ववत्स्थापितंगोपैर्बलिभिःसपरिच्छदम् ॥ विप्राहुत्वार्चयांचक्रुर्दध्यक्षतकुशांबुभिः १४ येऽसूयानृ तदंभेर्ष्याहिंसामानविवर्जिताः ॥ नतेषांसत्यशीलानामाशिषोविफलाःक्वचित् १५ इतिबालकमानीयसामर्ग्यजुरुपाकृतैः ॥ जलैःपवित्रौषधिभिरभि षिच्यद्विजोत्तमैः १६ वाचयित्वास्वस्त्ययनंनंदगोपःसमाहितः॥हुत्वाचाग्निंद्विजातिभ्यःप्रादादन्नंमहागुणम् १७ गाःसर्वगुणोपेतावासःस्रग्रुक्ममालिनीः पुत्रस्याभ्युदयार्थायप्राग्जातेश्चान्वयुंजत १८ विप्रामंत्रविदोयुक्तास्तैर्याःप्रोक्तास्तथाशिषः ॥ तानिष्फलाभविष्यंतिनकदाचिदपिस्फुटम् १९ एकदारोह मारूढंलालयंतीसुतंसती ॥ गरिमाणंशिशोर्वोढुंनसेहेगिरिकूटवत् २० भूमौनिधायतंगोपीविस्मिताभारपीडिता ॥ महापुरुषमादध्यौजगतामासु चकर्म सु २१ दैत्योनाम्नातृणावर्त्तःकंसभृत्यःप्रचोदितः ॥ चक्रवातस्वरूपेणजहारासीनमर्भकम् २२ गोकुलंसर्वमावृण्वन्मुष्णंश्चक्षूंषिरेणुभिः ॥ ईरयन्सुमहा घोरशब्देनप्रदिशोदिशः २३ मुहूर्त्तमभवद्गोष्ठंरजसातमसावृतम् ॥ सुतंयशोदानापश्यत्तस्मिन्न्यस्तवतीयतः २४

व्यक्तमतयः तान्कुलवृद्धान् ११ बालभाषितवत्बालभाषितमितिविकल्प्यसंशय्य उताप्यर्थविकल्पयोरित्यमरः १२ १३ स्थापितमनइतिशेषः बलिभिःप्राणशक्तिमद्भिः सपरिच्छदंसपरिकरम् १४ इतिकृत्वास्थिताएवविप्राःसत्याशिषइत्याह यइति १५ उपाकृतैःसंस्कृतैः १६ १७ पुत्रस्याभ्युदयार्थायअभ्युदयप्रयोजनाय जातेःप्राक्संकल्पिताइतिशेषः प्राग्जातेरग्रजस्यबलभद्रस्यवा १८ १९ २० २१ २२ ईरयन्शब्दयुक्ताःकुर्वन्नित्यर्थः २३ यतोयत्रन्यस्तवतीतस्मिन्स्थले २४

शर्कराभिःअणुतरशिलाभिः २५ इतिशब्दःप्रकारवचनःआदिवचनोवा इतिहेतुप्रकारादिसमाप्तिष्वित्यमरः खरश्चंडःपवनोवायुःतेनचक्रांसवःमंडलीकृतरजांसितेषांवर्षेसमूहे सुतपदवींअविचक्षमाणा विगतदर्शनाअपश्यंतीत्यर्थः पुत्रमनुस्मरंतीनिरंतरसंचिंतनोपेताअतएवभुविपातिताअबलाअतिकरुणमशोचदित्यन्वयः २६ उपारतःउपरतःशांतःपांसुवर्षवेगोयस्यपवनस्यतथातस्मिन्सत्यपिकृष्ण स्यअंतरिक्षगमनात्प्रत्यदर्शनं उपरिचक्षुर्दौर्बल्यादित्यर्थः २७ ननुमूर्तद्रव्यादर्शनंदेशांतरसंयोगादेशांतरप्रवेशलक्षणसंयोगाद्वेत्युभयथासंभाव्यतेअत्रकथमितिस्त्रीणाशंकामपनेतुमुपक्रमते तृणावर्तइति शांतरयःनिवृत्तवेगः २८ अश्मानंश्वेतपाषाणं २९ निर्गतलोचनः निष्क्रांतनेत्रमांसपिंडः अव्यक्तवाक्यःवचनावृत्तिरहितः ३० पुरंत्रिपुरसंज्ञम् ३१ ३२ ३३ समत्वेनगुणेनअधोनक्षीयतेजातुपरमात्त

नापश्यत्कश्चनात्मानंपरंचापिविमोहितः ॥ तृणावर्तनिसृष्टाभिःशर्कराभिरुपद्रुतः २५ इतिखरपवनचक्रपांसुवर्षेसुतपदवीमबलाविचक्षमाणा ॥ अतिकरुणमनुस्मरंत्यशोचद्भुविपतितामृतवत्सकायथागौः २६ रुदितमनुनिशम्यतत्रगोप्योभृशमनुतप्तधियोऽश्रुपूर्णमुख्यः ॥ रुरुदुरनुपलभ्यनंद सूनुंपवनउपारतपांसुवर्षवेगे २७ तृणावर्तःशांतरयोवात्यारूपधरोहरन् ॥ कृष्णंनभोगतोगंतुंनाशक्नोद्भूरिभारभृत् २८ तमश्मानंमन्यमानआत्मनो गुरुमत्तया ॥ गलेगृहीतउत्स्रष्टुंनाशक्नोदद्भुतार्भकम् २९ गलग्रहणनिश्चेष्टोदैत्योनिर्गतलोचनः ॥ अव्यक्तवाक्योन्यपतत्सहबालोव्यसुर्व्रजे ३० तमंतरिक्षात्पतितंशिलायांविशीर्णसर्वावयवंकरालम् ॥ पुरंयथारुद्रशरेणविद्धंस्त्रियोरुदंत्योददृशुःसमेताः ३१ आदायमात्रेप्रतिहृत्यविस्मिताःकृष्णंचतस्यो परिलंबमानम् ॥ तंस्वस्तिमंतंपुरुषादनीतंविहायसामृत्युमुखात्प्रमुक्तम् ३२ गोप्यःसगोपाःकिलनंदमुख्यालब्ध्वापुनःप्रापुरतीवमोदम् ॥ अहोबता त्यद्भुतमेषरक्षसाबालोनिवृत्तिंगमितोऽभ्यगात्पुनः ३३ हिंस्रःस्वपापेनविहिंसितःखलःसाधुःसमत्वेनभयाद्विमुच्यते ॥ किंनस्तपश्चीर्णमधोक्षजार्चनंपूर्ते ष्टदत्तंकिमुभूतसौहृदम् ॥ यःसंपरेतःपुनरेवबालकोदिष्ट्यास्वबंधून्प्रणयन्नुपस्थितः ३४ दृष्ट्वाद्भुतानिबहुशोनंदगोपोबृहद्वने ॥ वसुदेववचोभूयोमानयामास विस्मितः ३५ एकदार्भकमादायस्वांकमारोप्यभामिनी ॥ प्रस्नुतंपाययामासस्तनंस्नेहपरिप्लुतम् ३६ पीतप्रायस्यजननीसुतस्यरुचिरस्मितम् ॥ मुखंला लयतीराजन्जृंभतोददृशेइदम् ३७ खंरोदसीज्योतिरनीकमाशाःसूर्येंदुवह्निश्वसनांबुधींश्च ॥ द्वीपान्नगांस्तद्दुहितॄर्वनानिभूतानियानिस्थिरजंगमानि ३८ संवीक्ष्यविश्वंसहसाराजन्संजातवेपथुः ॥ संमील्यमृगशावाक्षीनेत्रेआसीत्सुविस्मिता ॥ ३९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेशकटतृणावर्तभं गोनामाष्टमोऽध्यायः ॥ ८ ॥ श्रीबादरायणिरुवाच ॥ गर्गःपुरोहितोराजन्यदूनांसुमहातपाः ॥ व्रजंजगामनंदस्यवसुदेवप्रचोदितः १

स्मादधोक्षजइतिभारतवचनादधोक्षजशब्दोनिरुक्तः वापीकूपतडागादिपूर्तं अग्निहोत्रंतपःसत्यंवेदानांचानुपालनं आतिथ्यंवैश्वदेवंचइष्टमित्यभिधीयते शरणागतसंत्राणंभूतानांचाप्यहिंसनं बहिर्वेदिचय दानंतद्दत्तमभिधीयते प्रणयंस्नेहंकुर्वन् प्रणयःप्रसरःसमावित्यमरः ३४ ३५ भामिनीतेजस्विनी ३६ इदंवक्ष्यमाणंददृशेआस्यइतिशेषः ३७ रोदसीद्यावापृथिव्यौज्योतिरनीकंज्योतिर्गणं तेषापर्वताना दुहितॄःनदीः ३८ मृगशावाक्षीमृगबालाक्षी ३९ इतिश्रीभा०म०दशम०विजयध्वजकृतटीकायांअष्टमोऽध्यायः ८ हरेस्तत्तदवतारेतत्तद्योनिविहितंकर्मकर्तव्यमितिदेवजनाशिक्षणार्थंताद्विधीयतेस्मिन्नध्याये १

आनर्च पूजितवान् २ सूनृतयापथ्यार्थमधुरया पूर्णस्यकृतकृत्यस्य ३ महतांपुंसांविचलनंगमनम् ४ ज्योतिषामयनं ग्रहाणांराशेराश्यंतरगमनगोचरंज्योतिःशास्त्रंज्ञायतेअनेनेतिज्ञानं अतींद्रियंत्रिकालविषयं परावरंअतीतानागतविषयम् ५ संस्कारान्गर्भाधानादीन् संस्कारकर्तामदन्यःकिंनस्यादितितत्राह नृणामिति ६ तत्रनंदंगर्गोवक्तीत्याह गर्गइति चशब्दोहिशब्दार्थः योहंयदूनामाचार्यइति सर्वतोभुविख्यातोहिततःकिं कंसेनज्ञातेऽनर्थोभविष्यतीति सकइत्याह सुतमिति ७ कसिहिंसायामितिधातोः हिंसाशीलः अतएवपापमतिः । तर्हितकृष्णंहत्वाहनिष्यतितदानोमहाननयोऽन्यायोऽपराधोभविष्यतीतिशेषः कथमयंकंसोमयासंस्कृतंतेसुतंदेवकीसुतंमन्यते निमित्तमाह सख्यमिति तवानकदुंदुभेश्चसख्यमस्तीतिजानातिअतोनयोःसुतविनिमयोभविष्यतीतिमन्यते निमित्तांतरमप्यस्तीत्याह देवक्याइति यश्चितयन्निति हेतोः तवहंताक्वचिज्जातइतिनिश्चायकेनकन्यावचसापितस्यतद्धननानिवृत्तिर्नभवतीत्याशयेनाह श्रुत्वेति गताशंकोनष्टहनन

तंदृष्ट्वापरमप्रीतःप्रत्युत्थायकृतांजलिः ॥ आनर्चाधोक्षजधियाप्रणिपातपुरःसरम् २ सूपविष्टंकृतातिथ्यंगिरासूनृतयामुनिम् ॥ नंदयित्वाब्रवीद्ब्रह्मन्पूर्णस्य करवामकिम् ३ महद्विचलनंनृणांगृहिणांदीनचेतसाम् ॥ निःश्रेयसायभगवन्कल्पतेनान्यथाक्वचित् ४ ज्योतिषामयनंसाक्षाद्यत्तज्ज्ञानमतींद्रियम् ॥ प्रणीतंभवतायेनपुमान्वेदपरावरम् ५ त्वंहिब्रह्मविदांश्रेष्ठःसंस्कारान्कर्त्तुमर्हसि ॥ बालयोरनयोर्नृणांजन्मनाब्राह्मणोगुरुः ॥ ६ ॥ गर्गउवाच ॥ यदूनामहमाचार्यःख्यातश्चभुविसर्वतः ॥ सुतंमयासंस्कृतंतेमन्यतेदेवकीसुतम् ७ कंसःपापमतिःसख्यंतवचानकदुंदुभेः ॥ देवक्याअष्टमोगर्भोनस्त्रीभवितुमर्हति ८ इतिसंचिंतयञ्छ्रुत्वादेवकीदारिकावचः ॥ अपिहंतागताशंकस्तर्हितन्नोऽनयोमहान् ९ नंदउवाच ॥ अलक्षितेऽस्मिन्रहसिमामकैरपिगोव्रजे ॥ कुरुद्विजातिसंस्कारंस्वस्तिवाचनपूर्वकम् १० श्रीशुकउवाच ॥ एवंसंप्रार्थितोविप्रःस्वचिकीर्षितमेवतत् ॥ चकारनामकरणंगूढोरहसिबालयोः ११ अयंहिरोहिणीपुत्रोरमयन्सुहृदोगुणैः ॥ आख्यास्यतेरामइतिबलाधिक्याद्बलंविदुः १२ यदूनामपृथग्भावात्संकर्षणमुशंत्युत ॥ आसन्वर्णास्त्रयोह्यस्यगृह्णतोऽनुयुगंतनूः १३ शुक्लोरक्तस्तथापीतइदानींकृष्णतांगतः ॥ प्रागयंवसुदेवस्यक्वचिज्जातस्तवात्मजः १४ वासुदेवइतिश्रीमानभिज्ञाःसंप्रचक्षते ॥ बहूनिसंतिनामानिरूपाणिचसुतस्यते १५ गुणकर्मानुरूपाणितान्यहंवेदनोजनाः ॥ एषवःश्रेयआधास्यद्गोपगोकुलनंदनः १६ अनेनसर्वदुर्गाणियूयमंजस्तरिष्यथ ॥ पुरानेनव्रजपतेसाधवोदस्युपीडिताः १७ अराजकेरक्ष्यमाणाजिग्युर्दस्यून्समेधिताः ॥ यएतस्मिन्महाभागाःप्रीतिंकुर्वंतिमानवाः १८ नारयोऽभिभवंत्येतान्विष्णुपक्षानिवासुराः ॥ तस्मान्नंदात्मजोऽयंतेनारायणसमोगुणैः १९

शंकःआगताशंकोपिवा ८ ९ मामकैरप्यलक्षितेअज्ञातेअस्मिन्व्रजेतत्रापिरहसि १० आशीर्वचनपूर्वकंनामकरणप्रकारमाह चकारेति ११ १२ यदूनांमध्यउशंतिइच्छंति तनूःशरीराणि १३ क्वचिन्मथुरायांनिग्रहगृहे १४ अभिज्ञाःतद्धितप्रत्ययविवेकज्ञाः नकेवलमस्यवर्णनिमित्तंनामगुणानुगुणानिनामानिसंतीत्याह बहूनीति १५ कृषिर्भूवाचकःशब्दइतिवचनात् गुणानुगुणंकृष्णेतिनाम मधुहननकर्मानुरूपंमधुसूदनेति यदियूयममुमभजिष्यंस्तर्हियुष्माकंतुश्रेयआधास्यत्अकरिष्यदाशास्यतीतिवा १६ अंजःसम्यक् १७ पृथ्ववतारेअराजकेराष्ट्रे अरक्ष्यमाणाः १८ विष्णुपक्षान्विष्णुसहायान् पक्षःपार्श्वगरुत्साध्यसहायबलभित्तिष्वितियादवः १९

इत्यादि आत्मानंनंदं आत्मानंस्वम् २० व्रजताग च्छतारंगमाणौचेष्टमानौवा २१ सरीसृपंतौपुनःपुन.भृशंगच्छंतौसर्पंतौघोषाणांकिंकिणीनांप्रघोषेणप्रकृष्टनशब्देनरुचिरःघोषप्रघोषरुचिरःसचासौव्र जःतस्यकर्दमेषु आभीरपल्लीकिंकिण्योर्घोषोगोपालशब्दयोरितिवचनात् तन्नादेनाकिंकिणीस्वरेणहृष्टमनसौमुग्धप्रभीतवत् लोकंबहिर्जनमनुसृत्यविडव्यमात्रोःयशोदारोहिण्योः अंतिअंतिकेसमीपेउपे यतुःप्राप्नुवंतौ २२ घृणयादयया स्तन्यंस्नवंत्यौ अंगरागश्चंदनं मुग्धंकोमलंस्मितंमंदहासश्च अल्पदशनाअणुतरादंतायस्यतत् मुग्धस्मितंबाल्यदशनाश्चास्मिन्निति वा २३ अतिरमणीयाःकुमारलीलाः बालक्रीडाःप्रयोस्तौतथातौ यर्हियदाअंतर्व्रजेव्रजमध्येआगताआगतौ द्वासुपर्णौतिवत् तदबलाःव्रजयोषितःतदाप्रेक्ष्यत्यउत्सृतगृहाः विस्मृतगृहव्यापाराः २४ शृंगिगोगवादयः दंष्ट्रिणःसारमे यप्रभृतयः गृह्याणिगृहकर्माणि अनवस्थांव्याकुलताम् २५ नघृष्टानिअघृष्टानितानिचजानूनियेषांतेतथातैः विचक्रमतुःपादविक्षेपंचक्रतुः २६ २७ रुचिरंचतददीनंउदारंचतत्कुमारभावोचि

श्रियाकीर्त्यानुभावेनगोपायस्वसमाहितः ॥ इत्यात्मानंसमादिश्यगर्गेचस्वगृहंगते ॥ नंदःप्रमुदितोमेनेआत्मानंपूर्णमाशिषम् २० कालेनव्रजताल्पे नगोकुलेरामकेशवौ ॥ जानुभ्यांसहपाणिभ्यांरिंगमाणौविचेरतुः २१ तावंघ्रियुग्ममनुकृष्यसरीसृपंतौघोषप्रघोषरुचिरंव्रजकर्दमेषु ॥ तन्नादहृष्ट मनसावनुसृत्यलोकंमुग्धप्रभीतवदुपेयतुरंतिमात्रोः २२ तन्मातरौनिजसुतौघृणयास्नवंत्यौपंकांगरागरुचिरावुपगृह्यदोर्भ्याम् ॥ दत्वास्तनंप्रपिबतोःस्म मुखंनिरीक्ष्यमुग्धस्मिताल्पदशनंययतुःप्रमोदम् २३ यर्ह्यंगतातिरमणीयकुमारलीलावंतर्व्रजेतदबलाःप्रगृहीतपुच्छैः ॥ वत्सैरितस्ततउभावनुकृष्यमा णौप्रेक्ष्यंत्यउत्सृतगृहाजगृहुर्हसंत्यः २४ शृंग्यग्निदंष्ट्र्यसिजलद्विजकंटकेभ्यःक्रीडापरावतिबलौस्वसुतौनिषेद्धुम् ॥ गृह्याणिकर्तुमपियत्रनतज्जनन्यौशे कातआपतुरलंमनसोऽनवस्थाम् २५ कालेनाल्पेनराजर्षेरामःकृष्णश्चगोकुले ॥ अघृष्टजानुभिःपद्भिर्विचक्रमतुरंजसा २६ ततश्चभगवान्विष्णुर्वयस्यै र्व्रजबालकैः ॥ सहरामोव्रजस्त्रीणांचिक्रीडेजनयन्मुदम् २७ कृष्णस्यगोप्योरुचिरादीनकौमारचापलाः ॥ शृण्वंत्याःकिलतन्मातुरितिहोचुःसमागताः २८ वत्सान्मुंचन्क्वचिदसमयान्क्रोशसंजातहासःस्तेयंस्वाद्वत्त्यथदधिपयःकल्पितैःस्तेययोगैः ॥ मर्कान्भोक्ष्यन्विभजतिसचेन्नास्तिभांडंभिनत्तिद्रव्याला भेसगृहकुपितोयात्युपक्रोश्यतोकान् २९ हस्ताग्राह्येरचयतिविधिंपीठकोलूखलाद्यैश्छिद्रंह्यंतर्निहितवयुनेशिक्यभांडेषुतद्वित् ॥ ध्वांतागारेधृतमणि गणंस्वांगमर्थप्रदीपंकालेगोप्योयर्हिगृहकृत्येषुसुव्यग्रचित्ताः ३०

तंचपलत्वंयासुतास्तथा तन्मातुःशृण्वंत्याः ताइतिवक्ष्यमाणप्रकारेणोचुः २८ असमयानप्राप्तदोहनवेलान् अस्मदादीनांक्रोशेनसंजातोहासोयस्यसतथा अथकदाचित्स्वेनकल्पितैःस्तेययोगैः चौर्योपायैःस्तेयंचौर्यापन्नंदधिपयश्चस्वाद्वत्तिपिबतिच सकृष्णःमर्कंबालंमार्जारंवावानरंवाभोक्ष्यन्भोजयिष्यन्विभजतिविभागंकरोति नास्तिचेन्नवनीतादिभांडंभिनत्ति कदाचिदुपायानांभावेऽभावेचद्र व्यालाभेदध्यादिद्रव्याप्राप्तौकुपितः ताडनादिनाबाल्याननुक्रोश्यरोदयित्वायातीत्यन्वय. मर्कोमनसिवायौचतोकेमार्जारकीटयोरितिच २९ स्तेययोगंदर्शयति हस्तेति ह्रस्वत्वेनहस्ताग्राह्येसतिह स्तेनग्रहणार्थंपीठकाद्यैर्विविधउपायंप्रकारंरचयति शिक्यस्थितभांडेषुमध्येअंतर्निहितवयुनेअंतर्निक्षिप्तनवनीतभांडितद्वित् यथालब्धुंसुशकंतथाछिद्रंलगुडादिनाविवरंकरोतीत्यन्वयः गृहांधकारेकउपायइ तितत्राह ध्वांतागारइति अंधकारावृतगेहेधृतमणिगणं धृतसूर्यादिप्रकाशाधिकप्रकाशरत्नगणसंवीतंस्वांगंस्वदेहं अर्थप्रदीपंपदार्थप्रकाशकं कृत्वेतिशेषः कस्मिन्समयेइत्यत्राह कालइति ३०

एवंतदाधाष्टर्यान्निर्भयत्वाद्विशति गृहमितिशेषः उपविश्य चवास्तैौदेहस्यादौमेहनादीनिपुरीषोत्सर्जनादीनिकरोति स्तेयोपायैः स्तेयव्यापारैःविरचितकृतिःनिर्मितचौर्यव्यापारः शोभनानिप्रती
कान्यंगानियस्यसचार्वंगःसच्चरित्रःपुरुषोयथातथास्तेइत्यन्वयः सुप्रतीकोमार्जारोवामध्यस्थोवा सभयंनयनंयस्मिंस्तत्सभयनयनंचश्रीमुखंचसभयनयनश्रीमुखंश्रियायुक्तंमुखश्रीमुखंआस्यादवलोको
यासामस्तीतिसभयनयनश्रीमुखावलोकिन्यस्ताभिर्व्याख्यातःप्रकाश्यकथितोऽर्थःसुतविषयोव्यापारोयस्याःसातथा उपालब्धुंनिर्भर्त्सयितु इत्थशब्दःसमाप्तिवचनः ३१ ३२ भयेनस
भ्रांतानिअनवस्थितानिचंचलानिप्रेक्षणानिदर्शनानियस्यतत्तथातच्चाक्षियस्यसतथातम् ३३ तत्रकिंप्रमाणमितितत्राह वदंतीति ३४ मिथ्यावादित्वमप्यक्षतादर्शयामीत्याशयेनाह यदीति
३५ यदिअसत्यागिरोबालाःयदित्वयानमृद्भक्षिततर्हिमुखंविदारयेत्याह यद्येवमिति व्याददत्तविदारितवान् क्रीडार्थमनुजबालकःप्रशस्तमानुषबालवपुः ३६ जगज्जंगमंस्थावरम् सामान्यो
क्तंविशिनष्टि खमित्यादिना खंप्रदेशः भूगोलम् भूमंडलम् वाय्वग्नीभौमौ ३७ ज्योतिश्चक्रंअश्विन्यादिनक्षत्रमंडलम् जलतेजसीबाह्याभ्यंतरगते नभःक्रतुविशेषः अंतरिक्षंवा स्वःस्वर्गः परलोको

एवंधार्ष्ट्याद्विशतिकुरुतेमेहनादीनिवास्तैौस्तैर्योपायैर्विरचितकृतिःसुप्रतीकोयथास्ते ॥ इत्थंस्त्रीभिःसभयनयनश्रीमुखालोकिनीभिर्व्याख्यातार्थप्रहसि
तमुखीनह्युपालब्धुमैच्छत् ३१ एकदाक्रीडमानास्तेरामाद्यागोपबालकाः ॥ कृष्णोमृदंभक्षितवानितिमात्रेन्यवेदयन् ३२ साग्रहीत्वाकरेकृष्णमुपालभ्य
हितैषिणी ॥ यशोदाभयसंभ्रांतप्रेक्षणाक्षमभाषत ३३ कस्मान्मृदमदांतात्मन्भवान्भक्षितवान्रहः ॥ वदंतितावकाह्येतेकुमारास्तेऽग्रजोप्ययम् ३४
श्रीभगवानुवाच ॥ नाहंभक्षितवानंबसर्वेमिथ्याभिशंसिनः ॥ यदिसत्यंगिरस्तर्हिसमक्षंपश्यमेमुखम् ३५ यद्येवंतर्हिव्यादेहीत्युक्तःसभगवान्हरिः॥व्या
दत्ताव्याहतैश्वर्यःक्रीडामनुजबालकः ३६ सातत्रददृशेविश्वंजगत्स्थास्नुचखंदिशः ॥ साद्रिद्वीपाब्धिभूगोलंसवाय्वग्नींदुतारकम् ३७ ज्योतिश्चक्रंजलं
तेजोनभस्वान्वियदेवच ॥ वैकारिकाणींद्रियाणिमनोमात्रागुणास्त्रयः ३८ एतद्विचित्रंसहजीवकालस्वभावकर्माशयलिंगभेदम् ॥ सूनोस्तनौवीक्ष्यविदा
रितास्येव्रजंसहात्मानमवापशंकाम् ३९ किंस्वप्नएतदुतदेवमायाकिंवामदीयोबतबुद्धिमोहः ॥ अथोअमुष्यैवममार्भकस्ययःकश्चनौत्पत्तिकआत्म
योगः ४० अदोयथातन्नवितर्कगोचरंचेतोमनःकर्मवचोभिरंजसा ॥ यदाश्रयंयेनयतःप्रतीयतेसुदुर्विभाव्यंप्रणताऽस्मितत्पदम् ४१

वा वियद्वाह्यंसर्वगतंवा वैकारिकाणींद्रियाधिष्ठातृदेवतानि ३८ स्वभावःसात्विकादिः कर्मअदृष्टम् आशयःसंस्कारःलिंगंलक्षणम् सूक्ष्मशरीरंवा बुद्ध्यादिसमूहोवा भेदःतत्तद्वस्तुव्यावर्तकधर्मः
३९ शंकांप्रकटयति किमिति औत्पत्तिकः स्वाभाविकः आत्मयोगः आत्मैश्वर्यातिशयः ४० ब्रह्मविदाप्नोतिपरमितिउपनिषद्वेद्यंब्रह्मैवममपुत्रतांप्राप्तमितियस्मात्तस्मान्मयावाङ्मशक्य
मितिनदूषणंकिंतुब्रह्मादिभिःसुदुर्विभाव्यमित्याशयेनाह अदइति अदोवस्तुयथायादृशंतच्चादृशमितिचेतोमनःकर्मवचोभिः चेतोब्रह्मा मनोरुद्रः कर्मपुष्करनामादेवःइंद्रोवा वचोवह्निःबृहस्पति
र्वाउमावा अंजसासाक्षादेतैःकृतविविधतर्कगोचरविरचितनानानुमानविषयंनभवतिविरुद्धतर्कगोचरंनभवतीतिकिमितियोज्यम् नन्विदंतर्हिशून्यप्रायमितितत्राह यदाश्रयमिति यत्पदंआश्रयोयस्यत
द्यदाश्रयंजगदितिशेषः प्रलयेब्रह्माश्रयत्वेनतिष्ठतीत्यनेनजगद्ब्रह्मणोर्भेदः सिद्धः स्थितिकालेचयेनजीवनंसिध्यति सृष्टिकालेचयतःप्रतीयतेऽभिव्यज्यतेउत्पद्यतइत्यर्थः यतोवाइमानिभूतानिजायंतेयेन
जातानिजीवंति यत्प्रयंत्यभिसंविशंतीतिश्रुतिः अनेनजन्मादिकारणत्वस्वलक्षणमित्युक्तंभवति ननुघटादिवत्किमितिनज्ञायतइतितत्राह सुदुर्विभाव्यमिति सुखेनदुःखेनचविभाव्यंविशिष्टत्वेनाविरुद्धत्वेन

ज्ञेयम् सदुःशोभनदुःखयोरितियादवःनैषातर्केणमतिरापनेयाप्रोक्तान्येनैवसुज्ञानायप्रेष्ठेतिश्रुतेःद्वैतवादिभिःसम्यक् अद्वैतवादिभिःअसम्यक्ब्रह्मज्ञेयं तत्रद्वैतवादेन.अयमानेनत्वयोगाद्युक्तिःअद्वैत
ादिनःप्रमाणविरुद्धज्ञानेनेतमइतिविवेकः अयमीशस्यमहिमानमितिवीतशोकः तांस्तेमेत्याभिगच्छंतियेकेचात्महनोजनाइत्यादिश्रुतेः त्वगुभयविधपुक्तेतिलन.ह भणतेति पयसइतिपदंस्वरूपम्
ास्यनेत्वभावस्यभेदनिष्ठत्वेनद्वैतनिष्ठेनाहमित्यर्थः ४१ नित्यपरतंत्रेआत्मनिस्वातंत्र्यबुद्धिरभेदबुद्धिरित्याशयेनाह अहमिति व्रजेश्वरस्यनंदस्याखिलवित्तानिपातिरक्षतीति अखिलवित्तपायस्यहरेर्गर्भयेण
च्छयाइत्थंकुमतिःआत्मनःस्वातंत्र्यबुद्धिरहममूंबंधतःसहरिर्मेगतिः मत्स्वातंत्र्यबुद्धिमपनुद्यस्वस्वातंत्र्यज्ञापकत्वेनाश्रयोस्त्वित्यन्वयः ४२ प्रजास्नेहमयींपुनस्नेहमयीपुत्रस्नेहरूपाम् ४३ प्रवृद्धस्नेहकलि
ाहृदयाऽभूदितिशेषः ४४ प्रजास्नेहमयींमायांशृंगग्राहिकतयैवदर्शयति त्रय्येति त्रय्याऽग्निमीळइत्यादिकया उपनिषद्भिःएषपथाइत्यादिकाभिः सत्ववान्हरिःतद्विषयैःसात्वतैःसांख्ययोगैःपंचरात्रा

अहंममासौपतिरेषमेसुतोव्रजेश्वरस्याखिलवित्तपासती ॥ गोप्यश्चगोपाःसहगोधनाश्चयेयन्माययेत्थंकुमतिःसमेगतिः ४२ इत्थंविदिततत्त्वायांगोपि
कायांसईश्वरः ॥ वैष्णवींव्यतनोन्मायांपुत्रस्नेहमयींविभुः ४३ सद्योनष्टस्मृतिर्गोपीसारोप्यारोहमात्मजम् ॥ प्रवृद्धस्नेहकलिलहृदयासाथथापुरा
४४ त्रय्याचोपनिषद्भिश्चसांख्ययोगैश्चसात्वतैः ॥ उपगीयमानमाहात्म्यंहरिंसाऽमन्यतात्मजम् ४५ राजोवाच ॥ नंदःकिमकरोद्ब्रह्मन्श्रेयएवंमहोद
यम् ॥ यशोदाचमहाभागापपौयस्याःस्तनंहरिः ४६ पितरौनान्वविंदेतांकृष्णरामार्भकेहितम् ॥ गायंत्यद्यापिकवयोयल्लोकशमलापहम् ४७ श्रीशुकउ
वाच ॥ द्रोणोवसूनांप्रवरोधरयासहभार्यया ॥ करिष्यमाणआदेशंब्रह्मणस्तमुवाचह ४८ जातयोर्नौमहादेवेभुविविश्वेश्वरेहरौ ॥ भक्तिःस्यात्परमालोके
ययांऽजोदुस्तरांतरेत् ४९ अस्त्वित्युक्तःसएतेनव्रजेद्रोणोमहायशाः ॥ जज्ञेनंदइतिख्यातोयशोदासाधराभवत् ५० ततोभक्तिर्भगवतिपुत्रीभूतेजनार्द
ने ॥ दंपत्योर्नितरामासीद्गोपगोपीषुभारत ५१ कृष्णोब्रह्मणआदेशंसत्यंकर्तुंव्रजेभुवि ॥ सहरामोवसंश्चक्रेतेषांप्रीतिंस्वलीलया ५२ इतिश्रीभागवतेदश
मस्कंधेबालक्रीडावर्णनोनामनवमोऽध्यायः ॥ ९ ॥ ॥ बादरायणिरुवाच ॥ एकदागृहदासीषुयशोदानंदगेहिनी ॥ कर्मांतरनियुक्तासुनिर्ममंथस्वयंद
धि १ यानियानीहगीतानितद्बालचरितानिच ॥ दधिनिर्मथनेकालेस्मरंतीतान्यगायत २

दिशास्त्रैः यद्वा सांख्ययोगैःयथार्थज्ञानप्रतिपादकैःअक्षतर्कादिभिः सात्वतैःपंचरात्रादिवैष्णवतंत्रैः ४५ श्रेयःपुण्यंपूर्वजन्मनीतिशेषः स्याद्धर्ममस्त्रियांपुण्यश्रेयसीसुकृतंवृषइत्यमरः महानुदयः
फलंयस्माच्चतथा महान्भागोभाग्यंयस्याःसामहाभागा भागोभाग्यांशतुर्यांशाइतियादवः ४६ कृष्णरामनाम्नोरर्भकयोःबालयोःईहितंचेष्टितं विंदतिर्लाभार्थोप्यत्रज्ञानार्थः चेष्टानुकलज्ञान
लाभंनाप्नुवंतावित्ति विदज्ञानेतुवेत्तीतिविद्लृलाभेतुविंदतीतिवचनात् लोकशमलापहंजनपापहरम् ४७ प्रत्यारभ्यतेकथांतरमितिशेषः प्रत्यारंभःप्रसिद्धेहेतिरादवः ४८ महादेवइत्यनेनशंकरो
व्रोच्यतेइतिशंकाव्यावृत्त्यर्थं विश्वेति लोकेजनमध्ये ४९ ५० गोपगोपीषुमध्येनितराम् ५१ ५२ इतिश्रीभागवतेमहापुराणेविजयध्वजकृतटीकायांनवमोऽध्यायः ॥९॥ अत्रातीताध्यायसंगतिरत्र
संधेया नंदस्यगेहिनीभार्या १ दध्नोनिर्मथनंयस्मिन्सतथा तस्मिन्काले २

क्षुमनामकमितंतुनाकृतंक्षौमं सूत्रेणकांच्यानद्धंबद्धंपुत्रस्नेहातिशयेनस्नुतयोःक्षरितयोःकुचयोःयुगं पुनःकीदृशं जातःआविर्भूतःकंपश्चलनंयस्यतत्तथातत् शोभनेभ्रुवौयस्याःसासुभ्रूःबद्धयारज्ज्वा आकर्षःतेनोत्पन्नःश्रमःआलस्यतेनोपेतयोर्भुजयोश्चलतौकंकणौक्वणक्वणायमानशब्दयुक्तत्वात्तथाविधौ स्विन्नंस्वेदजलोपेतं कबरात्केशबंधात्विगलतीमालतीमल्लिकायस्याःसाकबराद्विगलन्मालती अत्रद्वितीयांतपदस्याबिभ्रतीत्यनेनान्वयः पृथुविशालम् ३ न्यषेधत्निवारितवान् ४ अतृप्तमलंबुद्धिमप्राप्तं अधिश्रितेचुल्ल्यांनिहिते अधिकंपाकंप्राप्तेवा पर्यासउत्सिच्यमानेउद्रिच्यमानेसतिप यःअवरोपयितुमितिशेषः ५ दद्भिःदंतैः दधिमंडभाजनंदधिमस्तुपूर्णपात्रं दधिमंडोभवेन्मस्त्वित्यमरः हलायुधः दृषदश्मनाशिलापुत्रकेण मृषाश्रुःअविद्यमाननेत्रजलः दुःखात्पन्नबाष्पेनअवतीर्य थः हैय्यंगवंनवनीतं अंतरबहिर्भावंअंतर्धानंवागृहांतरंवा अंतरंपरिधानीयेबाह्येस्वीयेंतरात्मनि क्रतुमध्येवकाशेचतादर्थ्येवसरेऽवधौ विशेषविवरांतार्धेष्ववसानाविनार्थयोरितियादवः ६ उत्तार्य

क्षौमंवासःपृथुकटितटेबिभ्रतीसूत्रनद्धंपुत्रस्नेहस्नुतकुचयुगंजातकंपंचसुभ्रूः ॥ रज्ज्वाकर्षश्रमभुजचलत्कंकणौकुंडलेचस्विन्नंवक्त्रंकबरविगलन्मालती निर्ममंथ ३ तांस्तन्यकामआसाद्यमथ्नंतींजननींहरिः॥ गृहीत्वादधिमंथानंन्यषेधत्प्रीतिमावहन् ४ तमंकमारूढमपाययत्स्तनंस्नेहस्नुतंसस्मितमीक्षती मुखम् ॥ अतृप्तमुत्सृज्यजवेनसाययावुत्सिच्यमानेपयसित्वधिश्रिते ५ संजातकोपःस्फुरितारुणाधरंसंदश्यदद्भिर्दधिमंडभाजनम् ॥ भित्त्वामृषाश्रुर्दृ दश्मनारहोजघासहैयंगवमंतरंगतः ६ उत्तार्यगोपीसुशृतंपयःपुनःप्रविश्यसंदृश्यचदध्यमत्रकम् ॥ भग्नंविलोक्यस्वसुतस्यकर्मतज्जहासतंचापिनतत्रपश्य ती ७ उलूखलांघ्रेरुपरिव्यवस्थितंमर्कायकामंददतंयथेप्सितम् ॥ हैय्यंगवंचौर्यविशंकितेक्षणंनिरीक्ष्यपश्चात्सुतमागमच्छनैः ८ तामात्तयष्टिंप्रसमीक्ष्य सत्वरस्ततोऽवरुह्यापससारभीतवत् ॥ गोप्यन्वधावन्नयमापयोगिनांक्षमंप्रवेष्टुंतपसेरितंमनः ९ अन्वंचमानाजननीबृहच्चलच्छ्रोणीभराक्रांतगतिः सुमध्यमा ॥ जवेनविस्रंसितकेशबंधनच्युतप्रसूनानुगतिःपरामृशत् १० कृतागसंतंप्ररुदंतमक्षिणीकषंतमंजन्मषिणीस्वपाणिना ॥ उद्वीक्षयमा णंभयविह्वलेक्षणंहस्तेगृहीत्वाभिषयंत्यवागुरत् ११ त्यक्त्वायष्टिंसुतंभीतंविज्ञायार्भकवत्सला ॥ इयेषकिलतंबद्धुंदाम्नाऽतद्वीर्यकोविदा १२

चुल्ल्याअन्यत्रनिधाय दध्यमत्रकं दधिभांडं भग्नंभिन्नं स्वसुतस्यतत्कर्मविलोक्यालोक्य ७ उलूखलांघ्रेःउलूखलबुध्नस्यचौर्येणविशंकितेकिंचिदुन्मीलननिमीलनेकुर्वाणेईक्षणेयस्यसतथातं पश्चात्पृष्ठत. ८ अभिससारगमनंप्रारब्धवानित्यर्थः गोप्याःकृष्णानुधावनंनतत्त्वबुद्ध्याकृतंकिंतुभ्रांतिबुद्ध्येत्याशयेनाह नयमिति तपसेरितंप्रेरितं क्षमसमर्थं ९ अन्वंचमानाजवविहायशनैरनुगच्छती अंचुग तिपूजनयोरितिधातुः हंसवद्गमनवतीत्यर्थः शनैर्गमनेनिमित्तमाह बृहदीति बृहत्योःस्थूलयोश्चलत्योःश्रोण्योर्भारेणाक्रांतास्तब्धगतिर्यस्याःसातथा विस्रंसितात्विस्रस्तात्केशबंधात्च्युतानांप्र सूनानांअनुगतिर्यस्याःसातथा परामृशत्पस्पर्श जग्राहवा १० अंजन्मषिणीअंजितामषिःअंजनंययोस्तेक्षंजन्मषिणी अक्षिणीनेत्रेकषंतंनिष्पीडयन्तत्तुषयंतं भीषयंती भत्सयंती नाम हस्तमुद्धृतवती ११ दाम्नावत्सपाशेन अतद्वीर्यकोविदाकृष्णमाहात्म्यमजानती १२

यशोदायाअज्ञानंप्रकटयितुंतत्स्वरूपंनिरूपयति नचेति यस्यांतःस्वतंत्रंवस्तुनैवास्ति यस्यबाह्येश्चवस्तुनास्ति सर्वत्रसत्वेनांतर्बाह्यविशेषाभावात् यस्मात्पूर्वमपरंनास्त्येव अविनाशित्वेनासिद्धत्वात् यः कृष्णःजगतःपूर्वमपरंबहिरंतश्चवर्ततइतिशेषः जगतोविनाशित्वात्परिच्छिन्नत्वाच्च यश्चजगन्मयः । तत्सत्तायाअपितदधीनत्वेनतत्त्वव्यपदेशः १३ तदव्यक्तंब्रह्मसंज्ञंकृष्णमर्भकमनुतरणान्मत्वा तदव्यक्तमाहवीतिसूत्रं मर्त्यलिंगंमनुष्यलक्षणशरीरं अक्षजमिंद्रियजंज्ञानंतदधःकृतंयस्मात्सतथा इंद्रियागोचरमित्यर्थः अनेनाव्यक्तपदंविवृतमितिज्ञातव्यम् १४ अनेनापिकृष्णस्यब्रह्मत्वंनिश्चयितुं शक्यमित्याशयेनाह तद्दामेति ॥ येनबबंधतद्दामद्व्यंगुलेनमभूदित्यन्वयः गोपिकायदातेनद्व्यंगुलेनेनान्यद्दामसंदधेतदापिन्यूनमासीदिति १५ १६ एवंस्वगेहसमस्तदामसंचयसमाप्तौसुतमाहास्यंहंत्वास्मयंती मंदंहसंतीविस्मितामवदित्यन्वयः १७ अणिमाद्यैश्वर्ययोगशक्तिःस्वाभाविकीहरेरित्यभिप्रेत्याह स्वमातुरिति मातृविषयकृपयास्वबंधनआसीत् स्वयमेवबद्धोभूदित्यन्वयः

नचांतर्नबहिर्यस्यनपूर्वंनापिचापरम् ॥ पूर्वापरंबहिश्चांतर्जगतोयोजगन्मयः १३ तंमत्वात्मजमव्यक्तंमर्त्यलिंगमधोक्षजम् ॥ गोपिकोलूखलेदाम्नाबबंधप्राकृतंयथा १४ तद्दामबध्यमानस्यस्वार्भकस्यकृतागसः ॥ द्व्यंगुलोनमभूत्तेनसंदधेऽन्यच्चगोपिका १५ यदासीत्तदपिन्यूनंतेनान्यदपिसंदधे ॥ तदपिद्व्यंगुलंन्यूनंयद्यदादत्तबंधनम् १६ एवंस्वगेहदामानियशोदासंदधत्यपि ॥ गोपीनांसुस्मयंतीनांस्मयंतीविस्मिताभवत् १७ स्वमातुःस्विन्नगात्राया विस्रस्तकबरस्रजः ॥ दृष्ट्वापरिश्रमंकृष्णःकृपयासीत्स्वबंधने १८ एवंसंदर्शिताह्यंगहरिणाभक्तवश्यता ॥ स्ववशेनापिकृष्णेनयस्येदंसेश्वरंवशे १९ नेमंविरिंचोनभवोनश्रीरप्यंगसंश्रया ॥ प्रसादंलेभिरेगोप्यायत्तत्प्रापविमुक्तिदात् २० नायंसुखापोभगवान्देहिनांगोपिकासुतः ॥ ज्ञानिनांचात्मभूतानांयथाभक्तिमतामिह २१ कृष्णस्तुगृहकृत्येषुव्यग्रायांमातरिप्रभुः ॥ अद्राक्षीदर्जुनौपूर्वंगुह्यकौधनदात्मजौ २२ पुरानारदशापेनवृक्षतांप्रापितौमदात् ॥ नलकूबरमणिग्रीवावितिख्यातौश्रियान्वितौ २३ इतिश्रीभागवतेदशमस्कंधेउलूखलबंधनंनामदशमोऽध्यायः ॥ १० ॥ राजोवाच ॥ कथ्यतांभगवन्नेतत्तयोःशापस्यकारणम् ॥ यत्तद्विगर्हितंकर्मयेनदेवर्षेस्तमः १ ॥ श्रीशुकउवाच ॥ रुद्रस्यानुचरौभूत्वासुदृप्तौधनदात्मजौ ॥ कैलासोपवनेरम्ये मंदाकिन्यांमदोत्कटौ २ वारुणींमदिरांपीत्वामदाघूर्णितलोचनौ ॥ स्त्रीजनैरनुगायद्भिश्चेरतुःपुष्पितेवने ३ अंतःप्रविश्यगंगायामंभोजवनराजिनि ॥ चिक्रीडतुर्युवतिभिर्गजाविवकरेणुभिः ४ यदृच्छयाचदेवर्षिर्भगवांस्तत्रकौरव ॥ अपश्यन्नारदोदेवौक्षीबाणौसमबुध्यत ५

१८ १९ यत्तत्त्वयंतं २० निरंतरनिरतिशयभक्तिप्रेमदैवभगवत्कर्षणनिपुणेत्याशयेनाह नायमिति आत्मैवपरमात्मैवपोतोनौर्येषांतेतथातेषाम् २१ पूर्वंजन्मनिगुह्यकौ अधुनाअर्जुननाम्नाककुभवृक्षौ २२ शापनिमित्तमाह मदादिति किंनामानावितितत्राह नलेति मदकारणमाह श्रियेति २३ इतिश्रीभागवतेदशमस्कंधेविज०टी०दशमोऽध्यायः ॥१०॥ हरेरेवसंसारान्मोक्षइतिदर्शयितुनलकूबरमणिग्रीवयोःशापमोक्षप्रकारंनिरूपयत्यस्मिन्नध्याये तत्रराजाशुकंपृच्छति राजेति यद्विगर्हितंनिंदितकर्मतत्कथ्यताम् येनकर्मणादेवर्षेस्तमोगुणकार्यक्रोधोभूत् १ २ वारुणींवारुणाज्जाताम् अंभोजवनराजिनिजलइतिशेषः ४ क्षीबाणौमत्तौ अश्लीलवचनौवा ५

पर्यंधुःसंवेष्टितवत्यः ६ ७ किंतद्वीतमितितत्राह नहीति विषयान्जुषतःसेवमानस्यपुंसःजोष्यात्सेव्यात्विषयात् श्रीमदात्श्रियाधनसंपदोत्पन्नमदादभिजात्यादेरभिजननिमित्तमदात् विद्यानिमित्तमदाचान्यःबुद्धिभ्रंशः ज्ञाननाशकरोरजोगुणःरजोविकारोनास्ति विषयादिरेवज्ञाननाशकरइत्यर्थः तत्कथमत्राह यत्रेति यत्रविषयाभिजात्यधनमदेषुस्त्रियोद्यतपात्वंअसुतर्पणमद्य पानंभवति हिशब्दोऽवधारणे हिहेतावववधारणेइतियादवः अन्योनास्त्येव मद्यपानादयोभवंत्येवेत्यर्थः आसवइतिपाठेमद्यमित्यर्थः ८ संतुरूपादयःततःकिमत्राह हन्यंतइति यत्ररूपा दिषुसत्सुइमंनश्वरदेहमजरामृत्युनश्वरंजरामृत्युरहितंमन्यमानैःपशवोभूतानि हननमत्रबहुविधंदेहवियोगकरणंधनापहरणंदेशोच्चाटनंअभिमानभंगकरणमित्यादि ९ यज्ञेपश्वालंभनवत्परलो कविषयत्वेनपुण्यसाधनायेदंहिंसनंकिंनस्यादित्यत्राह भूतध्रुगिति नायंस्वार्थःकिंतुपारलोक्यप्राप्तानंदइत्यत्राह किमिति किंशब्दःआक्षेपार्थः प्रश्नेक्षेपेविकल्पेकिमितियादवः दैनंदिनजीवनगंनरे णकिमपिनजानातीत्यर्थः किमितिनवेदेतितत्राह निरयइति यतोनिर्गमनरहितंतमोभवतीत्यर्थःअयगताविति धातुः हिंसामात्रेणतमसोऽभावेपिहिंसाविशेषेणतमःस्यात् तथाहि नित्यभूतत्वात्स त्वोद्भूतंब्रह्मतद्द्रोहःसर्वेशस्यब्रह्मणोऽनीशेनदुःखिनाजीवेनसहैकत्वकथनोपासनेप्रथमाहिंसा सार्वज्ञ्यादिगुणान्श्रुतानपहायनिर्गुणत्वचिंतनं द्वितीया तदवताराणांदुःखश्रमाज्ञानादिकल्पनंतृतीया

तंदृष्ट्वाव्रीडितादेव्योविवस्त्राःशापशंकिताः ॥ वासांसिपर्यधुःशीघ्रंविवस्त्रौनैवगुह्यकौ ६ तौदृष्ट्वामदिरामत्तौश्रीमदांधौसुरात्मजौ ॥ तयोरनुग्रहा र्थायशापंदास्यन्निदंजगौ ७ नह्यन्योजुषतोजोष्याद्बुद्धिभ्रंशोरजोगुणः ॥ श्रीमदादाभिजात्यादेर्यत्रस्त्रीद्यूतमासवम् ८ हन्यंतेपशवोयत्रनिर्दयैरजि तात्मभिः ॥ मन्यमानैरिमंदेहमजरामृत्युनश्वरम् ९ देवसंज्ञितमप्यंतेकृमिविड्भस्मसंज्ञितम् ॥ भूतध्रुक्तत्कृतेस्वार्थंकिंवेदनिरयोयतः १० देहःकिम न्नदातुःस्यान्निषेक्तुर्मातुरेववा ॥ मातुःपितुर्वाबलिनःक्रेतुरग्नेःशुनोपिवा ११ एवंसाधारणंदेहमव्यक्तप्रभवाप्ययम् ॥ कोविद्वानात्मसात्कृत्वाहंतिजंतूनृ तेऽसतः १२ मन्यमानैरिमंदेहमजरामृत्युनश्वरम् ॥ देवसंज्ञितमप्यंतेकृमिविड्भस्मसंज्ञितम् १३ असतःश्रीमदांधस्यदारिद्र्यंपरमांजनम् ॥ आत्मौप म्येनभूतानिदरिद्रःपरमीक्षते १४ यथाकंटकविद्धांगोजंतोर्नेच्छातितांव्यथाम् ॥ जीवसाम्यंगतोलिंगैर्नतथाविद्धकंटकः १५

प्रत्यक्षादिप्रमाणसिद्धस्यप्रपंचस्यतद्विवर्तत्वकथनंचतुर्थीत्यादिकंएवंविधस्यतमःप्राप्तिःस्यादितिनिरूप्यतइत्यर्थः १० ननूत्तरश्लोकेदेहस्यानिर्वाच्यत्वमुच्यतेदेहस्यजगदंतःपातित्वेनजगद्ब्रह्मविवर्त मितिकथयतःकथंतमइत्याशंक्यात्रसाधारणत्वमेवोच्यतेप्राप्तिसद्भावादित्याशयेनाह देहइति अन्नदातुःपोषयितुः निषेक्तुःगर्भाधानकर्तुः मातुःपितुःमातामहस्य विक्रेतुःद्रव्यादिप्रदानेन बलिनःबला त्कारेणग्रहीतुः ११ अव्यक्तात्प्रकृतेःप्रभवउत्पत्तिःअव्यक्तेअप्ययःप्रलयोयस्यसतथातं आत्मसात् आत्मत्वेन असतःऋते १२ प्रसंगात्प्रागुक्तंस्मारयति मन्यमानैरिति कीदृशंप्रथमंदेवसंज्ञितंमरणे कृम्यादिसंज्ञितंभवति देवोयंभट्टारकोयं कृमिक्लिन्नः विष्ठाकुलः भस्मितइति १३ ननुश्रीमदांधस्यांध्यपरिहारायकिमौषधंतत्राहेतितत्राह असतइति असतः हननादिकर्तुःदारिद्र्यंदरिद्रभावः ग्यर्थंत दंजनंआंध्यनाशनमभूदितितत्राह आत्मेतिआत्मौपम्येनआत्मसाम्येन भूतानिसुखासुखसंसक्तानि १४ अत्रदृष्टांतमाह यथेति तांकंटकव्यथांजंतोरात्मव्यतिरिक्तस्यतल्लिंगैःसुखदुःखविकासदाक्ष्यादि सूचकैर्जीवेषुसुखादिमत्तयासाम्यसाधर्म्यंगतोज्ञातवानविद्धकंटकस्तथान १५

ननुदारिद्र्यंपरमंसुखमित्युक्तंतस्यापिदुःखानुभवःप्रतीयतेतत्कथमितितत्राह दरिद्रइति निरहस्तंभःअहंमानवर्जितः विद्यादिसर्वमदैर्मुक्तःदरिद्रःयदृच्छयादैवेच्छया।यत्कृच्छ्रंप्राप्नोतितत्कृच्छ्रंतस्यदरिद्र- परंतपोभवति एतद्वैपरंतपोयद्व्याधितस्तप्यतइतिश्रुतिर्हिशब्दगृहीता १६ ननुकृच्छ्रानुभवःकथंकारंतपोभवतीत्याशंक्यतत्प्रकारं दर्शयति नित्यमिति अनुशुष्यंतिदेहगोपमनुशोषंगच्छंति इंद्रियनाश त्यदौर्बल्येप्रवृत्तिनिवृत्ती धातवितिचाकसत्ताभावादिनास्याताम् अन्नाभावादिंद्रियप्राबल्यसाध्याहिंसालक्षणाप्रवृत्तिर्नश्यतीत्यर्थः १७ ततःकिमतआह दरिद्रस्येति युज्यंते संगम्यते सत्सगतेर्फलमाह थंःतत्फलमाह सद्भिरिति रसोप्यस्यपरंदृष्ट्वानिवर्ततइतिस्मृतेः विषयतृष्णानिवर्ततइत्यर्थः ततःविषयतृष्णानिवृत्तेराराच्छीघ्रंसंसिध्यतिमुक्तोभवतीति आराद्दूरसमीपयोरितिच १८ सद्भिःक्षयादिनिर्गतिमदां धानामपिदरिद्रस्यैवश्रेयःकिंनस्यादित्याशंक्यसताम्‌उपेक्षणीयत्वेनसत्संगत्याश्रेयःसिद्धिर्दवीयसीत्याशयेनाह साधूनामिति धनमानमपहरतांदर्शनस्तंभगुणैः प्राणपणगुणरहिते,अस्ताभयपूने॰ १९.

दरिद्रोनिरहंस्तंभोमुक्तःसर्वमदैरिह ॥ कृच्छ्रंयदृच्छयाप्नोतितद्धितस्यपरंतपः १६ नित्यंक्षुत्क्षामदेहस्यदरिद्रस्यान्नकांक्षिणः ॥ इंद्रियाण्यनुशुष्यंतिहिंसा पिविनिवर्तते १७ दरिद्रस्यैवयुज्यंतेसाधवःसमदर्शिनः ॥ सद्भिःक्षिणोतितत्तर्षंततआराद्विशुध्यति १८ साधूनांसमचित्तानांमुकुंदचरणैषिणाम् ॥ उपेक्ष्यैःकिंधनस्तंभैरसद्भिरसदाश्रयैः १९ तदहंमत्तयोर्माध्व्यावारुण्याश्रीमदांधयोः ॥ तमोमदंहरिष्यामिस्त्रैणयोरजितात्मनोः २० यदिमौलोकपा लस्यपुत्रौभूत्वातमःप्लुतौ ॥ नविवाससमात्मानंविजानीतःसुदुर्मदौ २१ अतोऽर्हतःस्थावरतांस्यातांनैवंयथापुनः ॥ स्मृतिःस्यान्मत्प्रसादेनतत्रापिमद नुग्रहात् २२ वासुदेवस्यसान्निध्यंलब्ध्वादिव्यशरच्छते ॥ वृत्तेस्वर्लोकतांभूयोलब्धभक्तीभविष्यतः २३ श्रीशुकउवाच ॥ एवमुक्त्वासदेवर्षिर्ग तोनारायणाश्रमम् ॥ नलकूबरमणिग्रीवावासतुर्यमलार्जुनौ २४ ऋषेर्भागवतमुख्यस्यसत्यंकर्तुंवचोहरिः ॥ जगामशनकैस्तत्रयत्रास्तांयमलार्जुनौ २५ देवर्षिर्मेप्रियतमोयदिमौधनदात्मजौ ॥ तत्तथासाधयिष्यामियद्गीतंतन्महात्मना २६ इत्यंतरेणार्जुनयोःकृष्णस्तुयमयोर्ययौ ॥ आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम् २७ बालेननिष्कर्षयतान्वगुलूखलंतद्दामोदरेणतरसोत्कलितांघ्रिबंधौ ॥ निष्पेततुःपरमविक्रमितातिवेपस्कंधप्रवालविटपौकृतचंड शब्दौ २८ तत्रश्रियापरमयाककुभःस्फुरंतौसिद्धावुपेत्यकुजयोरिवजातवेदौ ॥ कृष्णंप्रणम्यशिरसाखिललोकनाथंबद्धांजलीविरजसाविदमूचतुःस्म २९

नन्वस्तुप्रकृतेभवैतयोःकिंक्रियतेदंडउतउपेक्षावाइत्याशंक्यदंडएवक्रियतइत्याह तदहमिति माध्व्यामधुकृतया २० तमःप्लुतौअज्ञानावृतौ विवाससंवस्त्रहीनंआत्मानंनविजानीतइतियतोऽतः २१ स्थावरताप्राप्नुमर्हथः तत्रस्थावरत्वेपि २२ स्मृतेःफलमाह वासुदेवस्येति २३ यमलार्जुनौसहोत्पन्नार्जुनौ २४ २५ २६ अंतरेणमध्येआत्मनिर्वेशमात्रेणवृक्षयोर्मध्येप्रवेशमात्रेण आत्मनःसान्निध्यमा ने णवा तिर्यग्गततिरश्चीनम् २७ यदाबालेनदामोदरेणतदुलूखलंनिष्कृष्टमाकृष्टंतदातावर्जुनौनिष्पेततुः कीदृशौउत्कलिताघ्रिबधौउन्मूलितमूलौ पवनस्यतदानींभूतत्वाद्योविक्रमितेनपराक्रमेणातिवेलैः वेलांसीमानमतिक्रांतैःस्कंधैःप्रवालैर्विटपैः अतिस्यादधिकार्थेक्रमप्रशंसायामतिक्रमइति २८ तत्रतस्यामवस्थायांकुजयोर्वृक्षयोःजातवेदौअग्नीइवउपेत्यअभिव्यज्यविरजसौशापमोक्षेणरजस्वभावनाशौबद्धांजलीसिद्धौपक्षौशिरसाऽखिललोकनाथंकृष्णंप्रणम्यइदंवक्ष्यमाणमूचतुःस्म गुणस्मरणपूर्वकमुक्तवंतावित्यन्वयः स्मृतौवृत्तनिषेधेस्मेतिच ककुभोदिशःस्फुरंतौप्रकाशयंतौ २९

व्यक्ताव्यक्तैककार्यकारणात्मकम् रूप्यत्वात्प्रतिमात्वेनसन्निधियोग्यत्वाद्रूपमुच्यते नतुसाक्षाद्रूपम् रूप्यत्वात्तुजगद्रूपंविष्णोःसाक्षात्तुस्वात्मकमित्यादिस्मृतेः ब्राह्मणाःवैदिकाः ३० सन्निधिं [illegible] त्व
मिति सर्वभूतानांदेहे आत्मनोमनसइंद्रियाणामीश्वरःस्वविषयशक्तिप्रदः नकेवलमंतरेवप्रवर्तकःबहिरपिसर्वशक्तिमत्त्वात्तच्छक्तिप्रबोधकइतिभावेनाह त्वमिति तदुक्तं विष्णुःसर्वगुणोद्रेकात्कालः [illegible]
यतेइति कलकामधेनावितिधातुः विष्णुःव्यापनशीलः व्याप्तस्याकाशवदुत्पत्तिविनाशौस्यातांनेति नेत्याह अव्ययइति जातस्यहिध्रुवोमृत्युरितिस्मृतेः अंतर्यामीतिवा आत्मांतर्यामीति ३१ प्रकृत्या
देरचेतनत्वेनस्वतःप्रवृत्त्यनुपपत्तेः तत्सत्तायाअपितदधीनत्वेनतत्त्वव्यपदेशोयुक्तइतिभावेनस्तौति त्वमिति महान्महत्तत्त्वं पूर्णगुणत्वेनपुरुषशब्दवाच्योपित्वमेवेत्याह त्वमिति अध्यक्षःसाक्षी साक्षित्वं
व्यनक्तिसर्वेति सर्वक्षेत्राणांकारणभूतानिप्राणाश्रद्धादीनिविकारशब्दवाच्यानिवेत्तिजानातितत्त्वेनपश्यतीतिसर्वक्षेत्रविकारवित् ३२ नन्वव्यक्तोहरिरितिपुरस्तादुदीरिततत्कथंदृश्यतेत्वग्र
याबुद्ध्येतीद्रियविषयत्वोक्तेरत्राह गृह्यमाणइति स्वयमेवस्वात्मानंगृह्णातिनत्वन्यइत्यर्थः तदुक्तं स्वात्मनागृह्यमाणइति किमेवंविवेकःक्रियतइतितत्राह अग्राह्यइति विकारैःप्राकृतैःमहदहंकाराद्यभिमा
निभिःब्रह्मादिभिरग्राह्यः ननुनित्यसमीपस्थाभिर्दुर्गादिभिर्ग्राह्यएवेत्यत्राह गुणैरिति सत्त्वादिभिर्गुणाभिमानिनीभिरपि ननुवेदाहमेतंपुरुषंमहांतमितिश्रुतेःब्रह्माद्यवेद्यःकथमुच्यतइतितत्राह कइति अत्र
संस्थितिशब्देनउत्पत्तिर्लक्ष्यते स्थितेरुत्पत्त्यपेक्षत्वात् इहजीवराशौकःपुमान्गुणभूतस्यहरेःक्रीडायामंतरंगस्यजगतःस्थितेरुत्पत्तेःप्राक्सिद्धम् आनीदवातंस्वधयातदेकमितिश्रुतिसिद्धम् ब्रह्मविज्ञातुमर्हति

कृष्णकृष्णमहायोगिंस्त्वमाद्यःपुरुषःपरः ॥ व्यक्ताव्यक्तमिदंविश्वंरूपंतेब्राह्मणाविदुः ३० त्वमेकःसर्वभूतानांदेहात्मेंद्रियेश्वरः ॥ त्वमेवकालोभगवान्
विष्णुरव्ययईश्वरः ३१ त्वंमहान्प्रकृतिःसूक्ष्मारजःसत्वतमोमयी ॥ त्वमेवपुरुषोऽध्यक्षःसर्वक्षेत्रविकारवित् ३२ गृह्यमाणैस्त्वमग्राह्योविकारैःप्राकृतैर्गुणैः ॥
कोन्विहार्हतिविज्ञातुंप्राक्सिद्धंगुणसंस्थिते ३३ तस्मैतुभ्यंभगवतेवासुदेवायवेधसे ॥ आत्मद्योतगुणैश्छन्नमहिम्नेब्रह्मणेनमः ३४ यस्यावताराज्ञायंतेश
रीरेष्वशरीरिणः ॥ तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसंगतैः ३५

शक्नोतिअर्हतिचेत्कएवब्रह्मजानाति क्रियःसतीरतांउमेएुंसआह्वारित्यादिश्रुतिः इदमपिदर्शनंतत्प्रसादेनेत्यंगीकर्तव्यंयमेवैषवृणुतेतेनलभ्यइतिश्रुतेः एवंह्याउत्पत्तेःप्राक्सिद्धंनिरंजनत्वेनास्थितंकोनुज्ञातुमर्ह
तिलिंगाभावात् कथंगुणानांज्ञापकानांलिंगानांसंस्थितेःविनाशनात् जगतोनष्टत्वादिति ३३ ननुतद्विषयज्ञानाभावेतदुपासनाभावेनमोक्षाशाव्यर्थेत्याशंक्य नमइत्येवकार्यंतस्यापितदर्थातिजनकत्वमती
तेरितिभावेनाह तस्माइति किंनिमित्तमेतद्विज्ञापनमितितत्राह आत्मेति आत्मनात्वयाद्योतितेतत्कार्येशक्तिमत्तयाप्रकाशितइत्यात्मद्योता तैर्गुणैःसत्त्वादिभिश्छन्नोगूहितः महिमायस्यसतथातस्मैतुच्छेत्[illegible]
हितयदासीत्तपसस्तन्महिनाजायतैकमितिश्रुतेः पिहितत्वमितरापेक्षयानस्वस्यअपरिच्छिन्नत्वेनानाच्छाद्यत्वादितिभावेनाह ब्रह्मणइति तदुक्तं छन्नोन्येषानतुस्वस्यभगवान्पुरुषोत्तमइति वेधसेनमः ३४
इदानींकृष्णोनामसाक्षाद्भगवान्[illegible] इतिज्ञापयितुंहरेर्द्विविधावताराःदेहस्थाअदेहस्थाइति तत्रदेहस्थाअंतर्याम्यादयोमत्स्याद्याअदेहस्थाइतिभावेनाह यस्येति परएहरेरव
ताराः शरीरेष्वंतर्यामित्वेनज्ञायंते अशरीरिणःशरीरव्यतिरिक्तद्यहरस्थस्येषुअशरीरिण[illegible] [illegible]नैरित्यत्राह तैस्तैरितियेयेपनसोनियमादयःशास्त्रविहितास्तैस्तैरतुल्यैःअन्यातिशा
यिभिर्मनोनियमादिभिः अतुल्यातिशयत्वंकथमत्राह तिर्यग्योनिष्विति तिर्यग्योनिषुवराहादिसंबंधिनीष्वसंगतैःअसंभाव्यैः तदुक्तं [illegible]
वीर्यैःमाहात्म्यविशेषैःभूम्युद्धरणमंदरधारणगोवर्धनोद्धारणलक्षणैरिति ३५

सत्वाहशोभवान्जनस्यभवायपुण्यलक्षणभद्राय अभवायमहत्त्ववर्धनाय सांप्रतंयदुकुलेऽवतीर्णोसीत्यन्वयः आशिषांशुभानांपतिःपालयितादाताच भागेनांशेन ३६ इदमेवरूपंमूलरूपादन्यूनमहिमेतिभावेनाह नमइति ३७ भूमन्अनवच्छिन्नज्ञानानदस्वभाव सदानुचरावनुगतावुक्तकारिणौचतौ अनुजानीहि अनुज्ञांकुरु यदृच्छयाप्राप्तमहत्संगमोभवदर्शनसाधनमभूत्किंपुनर्बुद्धिपूर्वकमितिभावेनाह दर्शनमिति ३८ इतःपरश्रीमदादिकमावयोर्नभवितव्यं यतइंद्रियाणांविषयव्यापारःस्यात्सनस्यात्किंतुतवगुणादावेववाण्यादींद्रियव्यापारःस्यादितिप्रार्थयते वाणीति ३९ ४० सानुग्रहःशापःमोक्षलक्षणानुग्रहसहितः ४१ मत्कृतात्मनांमय्येवसन्निहितमनसाम् ४२ नरवाहोवैश्रवणःतस्यनिकेतनंगृहम् ४३ बद्धोलूखलंउलूखलबद्धंश्रीकृष्णम् ४४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविज० कृत

सभवान्सर्वलोकस्यभवायप्रभवायच ॥ अवतीर्णोंऽशभागेनसांप्रतंपतिराशिषाम् ३६ नमःपरमकल्याणनमस्तेविश्वमंगल ॥ वासुदेवायशांताययदूनांपतयेनमः ३७ अनुजानीहिनौभूमन्सदानुचरकिंकरौ ॥ दर्शनंनौभगवतऋषेरासीदनुग्रहात् ३८ वाणीगुणानुकथनेश्रवणौकथायांहस्तौचकर्मसुमनस्तवपादयोर्नौ ॥ स्मृत्यांशिरस्तवसुरप्रवरप्रणामेदृष्टिःसतांदर्शनेऽस्तुभवत्तनूनाम् ३९ ॥ श्रीशुकउवाच ॥ इत्थंसंकीर्तितस्ताभ्यांभगवान्गोकुलेश्वरः ॥ दाम्नाचोलूखलेबद्धःप्रहसन्नाहगुह्यकौ ४० ॥ श्रीभगवानुवाच ॥ ज्ञातंमयापुरैवैतदृषिणाकरुणात्मना ॥ यच्छ्रीमदांधयोर्वाग्भिःशापःसानुग्रहःकृतः ४१ साधूनांसमचित्तानांसुतरांमत्कृतात्मनाम् ॥ दर्शनान्नोभवेद्बंधःपुंसोऽक्ष्णोःसवितुर्यथा ४२ तद्गच्छतंमत्परमौनरवाहानिकेतनम् ॥ संजातोमयिभावोवामीप्सितःपरमोत्सवः ४३ ॥ श्रीशुकउवाच ॥ इत्युक्तौतौपरिक्रम्यप्रणम्यचपुनःपुनः ॥ बद्धोलूखलमामंत्र्यजग्मतुर्दिशमुत्तराम् ४४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेयमलार्जुनभंगोनामैकादशोऽध्यायः ॥ ११ ॥ श्रीशुकउवाच ॥ गोपानंदादयःश्रुत्वाद्रुमयोःपततोरवम् ॥ तत्राजग्मुःकुरुश्रेष्ठनिर्घातरवशंकिताः १ भूम्यांनिपतितौतत्रददृशुर्यमलार्जुनौ ॥ बभ्रमुस्तदविज्ञायलक्ष्यंपतनकारणम् २ उलूखलंविकर्षंतंदाम्नाबद्धंचबालकम् ॥ कस्येदंकुतआश्चर्यमुत्पातभयकातराः ३ बालाऊचुरनेनेतितिरश्चीनमुलूखलम् ॥ विकर्षतामध्यगेनपुरुषावप्यचक्ष्महि ४ नतेतदुक्तंजगृहुर्नघटेतेतितस्यतत् ॥ बालस्योत्पाटनंतर्वोःकेचित्संदिग्धचेतसः ५ उलूखलंविकर्षंतंदाम्नाबद्धंस्वमात्मजम् ॥ विलोक्यनंदःप्रहसद्वदनोविमुमोचह ६ गोपीभिःस्तोभितोनृत्यन्भगवान्बालवत्क्वचित् ॥ उद्गायतिक्वचिन्मुग्धस्तद्वशोदारुयंत्रवत् ७ बिभर्तिक्वचिदाज्ञप्तःपीठकोन्मानपादुकम् ॥ बाहुक्षेपंचकुरुतेस्वानांचप्रीतिमावहन् ८

टीकायांएकादशोऽध्यायः ॥ ११ ॥ हरेर्बालक्रीडाचारितचारुतरनिरवद्यमहिमश्रवणमननोपासनानिमुक्तिसाधनानिज्ञानसाधनत्वेनभवंतीतिभावेनतन्माहात्म्यमस्मिन्नध्यायेनिरूप्यते तत्रादौपूर्वाध्यायोक्तयमलार्जुनभंगलक्षणमहिमाशेषंवक्ति गोपाइत्यादिना निर्घातरवशंकिताः मेघनिर्घोषशंकिताः १ कस्यागामिफलसूचकंकुतआश्चर्यंसहसादृश्यमानंयदद्भुतंभविष्यदनिष्टसूचकंअदृष्टमात्रप्रयुक्तंउत्पातस्तन्निमित्तभयेनकातराः व्याकुलचित्ताः उत्पातइति कातराइतिकेचित्पठंति २ ३ द्वौपुरुषौअचक्ष्महिदृष्टवंतः ४ तदुक्तंबालोक्तं ५ ६ ७ उन्मानंप्रस्थंपादुकंपादपीठं पादरक्षणंवा ८

तद्विदांभगवानेवायमवतीर्णइतिजानतांनारदादीनाम् ९ १० तत्रनंदादिषु ११ इतउत्थातव्यं १२ अनश्वशकटश्च १३ १४ असौकृष्णोबालकः कृष्णादन्यतमोबालकोनाम्रियेतेति यत्तदप्यच्युतरक्षणंअन्यबालकस्यमरणाभावः १५ औत्पातिकःउत्पातसंबंधीअनर्थकरः इतोबृहद्वनात् तावत्ततःपूर्वमेव १६ पशव्यंपशुभ्योहितं पुण्याद्रयःपुण्यवृक्षाः तृणानिवीरुधगुल्मा नियत्रतत्तथातद्वीरुधशब्दोऽकारांतोप्यस्ति पर्वताद्रीनगावगावितिच १७ युङ्ध्वंयोगकुरुध्वं १८ १९ २० नोपेयातांसमीपंनागतौ २१ अजोहवीत्आहूयामास २२ २३ २४ व्र

दर्शयंस्तद्विदांलोकआत्मनोभक्तवश्यताम् ॥ व्रजस्योवाहयन्हर्षंभगवान्बालचेष्टितैः ९ गोपवृद्धामहोत्पातानतुभूयबृहद्वने ॥ नंदादयःसमागम्यव्रज कार्यमचिंतयन् १० तत्रोपनंदनामाहगोपोज्ञानवयोधिकः ॥ देशकालार्थतत्त्वज्ञःप्रियकृद्रामकृष्णयोः ११ उत्थातव्यमितोऽस्माभिर्गोकुलस्यहितै षिभिः ॥ आयांत्यत्रमहोत्पाताःप्रजानांनाशहेतवः १२ मुक्तःकथंचिद्राक्षस्याबालघ्न्याबालकोप्यसौ ॥ हरेरनुग्रहान्नूनमनश्चोपरिनापतत् १३ चक्रवातेननीतोऽयंदैत्येनवियद्भुता ॥ शिलायांपतितस्तत्रपरित्रातःसुरेश्वरैः १४ यन्नम्रियेतद्रुमयोरंतरंप्राप्यबालकः ॥ असावन्यतमोवापितदप्य च्युतरक्षणम् १५ यावदौत्पातिकोरिष्टोव्रजंनाभिभवेदितः ॥ तावद्बालानुपादाययास्यामोऽन्यत्रसानुगाः १६ वनंवृंदावनंनामपशव्यंनवकाननम् ॥ गोपगोपीगवांसेव्यंपुण्याद्रितृणवीरुधम् १७ तत्तत्राद्यैवयास्यामःशकटान्युङ्ध्वमाचिरम् ॥ गोधनान्यग्रतोयांतुभवतांयदिरोचते १८ तच्छ्रुत्वैकधियो गोपाःसर्वेनंदपुरोगमाः ॥ उपनंदवचोराजन्प्रतिनंद्यगृहान्ययुः १९ सरित्तीरगतंकृष्णंभग्नार्जुनमथाह्वयत् ॥ रामंचरोहिणीदेवीक्रीडंतौबालकैर्भृशम् २० नोपेयातांयदाहूतौक्रीडासंगेनपुत्रकौ ॥ यशोदांप्रेषयामासरोहिणीपुत्रवत्सला २१ क्रीडंतंस्वसुतंबालैरतिवेलंसहाग्रजम् ॥ यशोदाऽजोहवीत्कृष्णंपुत्रस्नेह स्नुतस्तनी २२ कृष्णकृष्णारविंदाक्षतातएहिस्तनंपिब ॥ अलंविहारैःक्षुत्क्षांतःक्रीडाश्रांतोऽसिपुत्रक २४ प्रतीक्षतेत्वांदाशार्होभोक्ष्यमाणोव्रजाधिपः ॥ एह्यावयोःप्रियंधेहिस्वगृहान्यातबालकाः २५ जन्मर्क्षंतेऽद्यभ वितावि्प्रेभ्योदेहिगाःशुचिः ॥ धूलिधूसरितांगस्त्वंतातमज्जनमावह २६ पश्यपश्यवयस्यांस्तेमातृमृष्टान्स्वलंकृतान् ॥ त्वंचस्नातःकृताहारोविहरस्वस्व लंकृतः २७ इत्थंयशोदातमशेषशेखरंमत्वासुतंस्नेहनिबद्धधीर्नृप ॥ हस्तेगृहीत्वासहराममच्युतंनीत्वास्ववाटंकृतवत्यथोदयम् २८ अथनंदःसमा हूयगोपानिदमभाषत ॥ श्वोऽतोवृंदावनंयामोयत्ताभवथमाचिरम् २९ तच्छ्रुत्वैकधियोगोपाःसाधुसाध्वितिवादिनः ॥ रथान्स्वान्स्वान्समायुज्यय यूरूढपरिच्छदाः ३०

जाधिपःनंदगोपः धेहिदेहि हेबालकाः २९ धूलिधूसरितांगःधूलिधूसरितसर्वशरीरः २६ २७ स्ववाटंस्वव्रजं २८ २९ तदुपनंदस्यवचनं एकधियःएकस्मिन्नर्थेगतबुद्धयः रूढपरि च्छदाः शकटाधिष्ठितभांडादिसाधनाः ३०

अनःसु शकटेषु ३१ ३२ नृत्यत्सुकुचेषुकुंकुमादिकांतिर्यासांतास्तथा स्निग्धकंठ्यःकंठगुणोपेताः ३३ ३४ अर्धचंद्रवत् अर्धचंद्राकारंवत् ३५ ३६ ३७ अविदूरेसमीपे ३८ क्षेपणैः अश्मयंत्रैः पदैःपादैः कृत्रिमगोवृषैःमृद्दारुकृतगोवृषैः ३९ वृषायमाणौवृषवद्घर्षमानौनर्दंतौवृषभशब्दंकुर्वंतौ अनुकृत्यविडंब्य ४० ४१ ४२ अपरपादाभ्यांपश्चाद्गृहीत्वा ४३ कपित्थे.कपित्थशाखायुक्तफलैः कृष्णोपरि ४४ ४५ समातराशौप्रातर्भोजनसहितौ ४६ जलाशयाभ्याशंजलस्थानंमहासरइत्यर्थः स्थानेभिप्रायआशयइति महासत्त्वपहान्सत्वःपराक्रमोव्यवसायोवा

वृद्धान्बालान्स्त्रियोराजन्सर्वोपस्करणानिच ॥ अनःस्वारोप्यगोपालायत्ताआत्तशरासनाः ३१ गोधनानिपुरस्कृत्यशृंगाण्यापूर्यसर्वतः ॥ तूर्यघोषेणमहतायय़ुःसहपुरोहिताः ३२ गोप्योरूढरथानृत्यत्कुचकुंकुमकांतयः ॥ कृष्णलीलांजगुःप्रीताःस्निग्धकंठ्यःसुवाससः ३३ तथायशोदारोहिण्यावेकंशकटमास्थिते ॥ रेजतुःकृष्णरामाभ्यांतत्कथाश्रवणोत्सुके ३४ वृंदावनंसंप्रविश्यसर्वकालसुखावहम् ॥ तत्रचक्रुर्व्रजावासंशकटैरर्धचंद्रवत् ३५ वृंदावनंगोवर्धनंयमुनापुलिनानिच ॥ वीक्ष्यासीदुत्तमाप्रीतीरामममाधवयोर्नृप ३६ एवंव्रजौकसांप्रीतिंयच्छंतौबालचेष्टितैः ॥ कलवाक्यैःस्वकालेनवत्सपालौबभूवतुः ३७ अविदूरेव्रजभुवःसहगोपालबालकैः ॥ चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ ३८ क्वचिद्वादयतोवेणुंक्षेपणैःक्षिपतःक्वचित् ॥ क्वचित्पदैःकिंकिणीभिःक्वचित्कृत्रिमगोवृषैः ३९ वृषायमाणौनर्दंतौयुयुधातेपरस्परम् ॥ अनुकृत्यरुतैर्जंतूंश्चेरतुःप्राकृतौयथा ४० कदाचिद्यमुनातीरेवत्सांश्चारयतोःस्वकैः ॥ वयस्यैःकृष्णबलयोर्जिघांसुर्दैत्यआगमत् ४१ तंवत्सरूपिणंवीक्ष्यवत्सयूथगतंहरिः ॥ दर्शयन्बलदेवायशनैर्मुग्धइवासदत् ४२ गृहीत्वाऽपरपादाभ्यांसहलांगूलमच्युतः ॥ भ्रामयित्वाकपित्थाग्रेप्राहिणोद्गतजीवितम् ४३ सकपित्थैर्महाकायःपात्यमानैःपपातह ॥ तंवीक्ष्यविस्मिताबालाःशशंसुःसाधुसाध्विति ४४ देवाश्चपरिसंतुष्टाबभूवुःपुष्पवर्षिणः ॥ तौवत्सपालकौभूत्वासर्वलोकैकपालकौ ४५ सप्रातराशौगोवत्सांश्चारयंतौविचेरतुः ॥ स्वंस्वंवत्सकुलंसर्वेपाययिष्यंतएकदा ४६ गत्वाजलाशयाभ्याशंपाययित्वापपुर्जलम् ॥ तेतत्रददृशुर्बालामहासत्त्वमवस्थितम् ४७ तत्रसुर्वज्रसंभिन्नागिरेःशृंगमिवच्युतम् ॥ सवैबकोनाममहानसुरोबकरूपधृक् ४८ आगत्यतरसाकृष्णंतीक्ष्णतुंडोऽग्रसद्बली ॥ कृष्णंमहाबकग्रस्तंदृष्ट्वारामादयोऽर्भकाः ॥ बभूवुरिंद्रियाणीवविनाप्राणैर्विचेतसः ४९ तंतालुमूलंप्रदहंतमग्निवद्गोपालसूनुंपितरंजगद्गुरोः ॥ चच्छर्दसद्योऽतिरुषाऽक्षतंबकस्तुंडेनहंतुंपुनरभ्यपद्यत ५० तमापतंतंसनिगृह्यतुंडयोर्दोर्भ्यांबकंकंससखंसतांपतिः ॥ पश्यत्सुबालेषुददारलीलयामुदावहोवीरणवद्दिवौकसाम् ५१

यस्यसत्वथातं सत्वोस्त्रीजंतुषुक्लीबेव्यवसायेपराक्रमे आत्मभावेपिशाचेचद्रव्येसत्तास्वभावयोरितियादवः ४७ समहासत्वोमहासुरो वैएव स्सुरेवंतुपुनर्वैवेत्यवधारणवाचकाइत्यमरः ४८ विचेतसःज्ञानहीनाः पाषाणकल्पाः ४९ जगद्गुरोर्हिरण्यगर्भस्यपितरंअक्षतंपुनःअतिरुषातुंडद्वयेनकृष्णंहंतुंअभ्यपद्यत ५० कटस्योपादानतृणंवीरणं वीरणंश्रीतृणंविदुरिति ५१

विसिस्मिरे विस्मिताः ५२ पूर्वस्थितमाश्रमस्थानंप्रणीयनीत्वा तद्बकासुरहिंसनलक्षणंकृष्णचरितम् ५३ कृष्णेअतिशयेनाप्रियेणआदरेणयुताः तृषितेक्षणाःअलंबुद्धिराहितनेत्राः ५४ बतखेदे यतःयेभ्योभयं तेषांविप्रियंकर्तुमासीदपिस्वित् ५५ अथापितथापिएतेएनंनाभिभवंतिप्रयुताजिघांसयाहननेच्छयाएनमासाद्याग्नौपतंगइवशल्भइवनश्यंति ५६ पुरुषेणब्रह्मज्ञानमेवापाद्यमितिभावेनाह अहोइति असत्यानाभूवन्निति कुतोज्ञायतइतितत्राह गर्गइति ५७ भववेदनांसंसारदुःखम् ५८ कौमारैः कुमारावस्थासबंधिभिःविहारैः क्रीडाविशेषैःकौमारजहौकृष्णः तत्रापंचमाब्दाद्बाल्यम् आनवव र्षात्पौगंडम् आषोडशवर्षात्कैशोरम् कश्चित्स्तंभमूलेनिलीयतिष्ठति अन्यस्तु अन्विष्यतंदृष्ट्वागृह्णातीतियाक्रीडातान्निलायनम् हस्तेनस्वशरीरेणवामृत्तिकया वाजल निवारणंसेतुबंधः यथामर्कटोवा नरोविटपाद्विटपांतरंउत्प्लवतिउत्पततितथाऽकाशेउत्तुंगमृत्तिकात्तार्शेशुमाराकारोपरिशिरसिपदानिधायपतनमुत्प्लवनम् पांसुभित्तौमणीनिधायतदुपरिहस्तनिदधातिएकः एकस्त्वन्विष्यगृह्णातीत्या

तदाबकारिंसुरलोकवासिनःसमाकिरन्नंदनमल्लिकादिभिः ॥ समीडिरेचानकशंखसंस्तवैस्तद्वीक्ष्यगोपालसुताविसिस्मिरे ५२ मुक्तंबकास्यादुपलभ्यबा लकारामादयःप्राणमिवेंद्रियोगणः ॥ स्थानागततंपरिरभ्यनिर्वृताःप्रणीयवत्सान्व्रजमेत्यतज्जगुः ५३ तच्छ्रुत्वाविस्मितागोपागोप्यश्चातिप्रियादृताः ॥ प्रेत्यागतमिवौत्सुक्यादैक्षंततृषितेक्षणाः ५४ अहोबतास्यबालस्यबहवोमृत्यवोऽभवन् ॥ अप्यासीद्विप्रियंतेषांकृतंपूर्वंयतोभयम् ५५ अथाप्यभिभवं त्येनंनैवतेघोरदर्शनाः ॥ जिघांसयैनमासाद्यनश्यंत्यग्नौपतंगवत् ५६ अहोब्रह्मविदांवाचोनासत्याःसंतिकर्हिचित् ॥ गर्गोयदाहभगवानन्वभावितथैवतत् ५७ इतिनंदादयोगोपाराककृष्णकथामुदा ॥ कुर्वंतोरममाणाश्चनाविंदन्भववेदनाम् ५८ एवंविहारैःकौमारैःकौमारंजहतुर्व्रजे ॥ निलायनैःसेतुबंधैर्मर्कटो त्प्लवनादिभिः ५९ इतिश्रीभागवतेमहापुराणेदशमस्कंधेजिघांसुबकासुरवधोनामद्वादशोऽध्यायः ॥१२॥ श्रीशुकउवाच ॥ ततश्चपौगंडवयःश्रितौव्रजे बभूवतुस्तौपशुपालसंमतौ ॥ गाश्चारयंतौसखिभिःसमंपदैर्वृंदावनंपुण्यमतीवचक्रतुः १ तन्माधवोवेणुमुदीरयन्वृतोगोपैर्गृणद्भिःस्वयशोबलान्वितः ॥ पशून्पुरस्कृत्यपशव्यमाविशद्विहर्तुकामःकुसुमाकरंवनम् २ तन्मंजुघोषालिमृगद्विजाकुलंमहन्मनःप्रख्यपयःसरस्वता ॥ वातेनजुष्टंशतपत्रगंधिनानि रीक्ष्यरंतुंभगवान्मनोदधे ३ सतत्रतत्रारुणपल्लवश्रियाफलप्रसूनोरुभरेणपादयोः ॥ स्पृशच्छिखान्वीक्ष्यवनस्पतीन्मुदास्मयन्निवाहाग्रजमादिपूरुषः ४

दिशब्दगृहीतम् ५९ इतिश्रीभाग०दशमस्कंधेविजयध्वजकृतटीकायांद्वादशोऽध्यायः ॥ १२ ॥ श्रवणमननाभ्यांदुरितहरणायहरेःपौगंडवयसिक्रियमाणंविक्रमंनिरूपयत्यस्मिन्नध्याये ततःकौमा रात्पौगंडवयःनववर्षलक्षणंवयःश्रितौप्राप्तौ पशुपालत्वेनसंमतौयोग्यौ १ उदीरयन् ध्वनयन् कुसुमाकरंकुसुमोत्पत्तिस्थानम् २ मंजवःमनोहराःघोषायेषाम् अलयश्चमृगाश्चद्विजाश्चमंजुघोषैःअ लिमृगद्विजैःआकुलम् महतानारायणचरणारविंदानिरंतरमनसांमनःप्रख्यंमनस्तुल्यंनिर्मलंपयोजलंयस्यतत्तथा महन्मनःप्रख्यपयश्चतत्सरश्चमहन्मनःप्रख्यपयःसरस्तदस्यास्तीतिमहन्मनःप्रख्यप यःसरस्वान्तेन शतपत्राणांपद्मानांगंधोस्यास्तीतिशतपत्रगंधीतेनवातेनवायुना ३ पल्लवारुणश्रियायुक्तयोःपादयोःप्रसूनोरुभारेणस्पृशत्यःशिखाएवकराग्रकोटयोयेषांतेतथा तान्वनस्पतीन्वृक्षान्छा अत्रभक्तिभरभुग्नग्रीवाःपुरुषाःयथापुष्पनिचयादिनामुकुंदचरणारविंदमर्चयंति तथावृक्षाश्चपुष्पभरोपनतशाखाकराग्रैःपूजयंतीत्याक्षिप्तःशेषार्थोबोद्धव्यः ४

इमंमेवार्थविशदयति अहोइति देववर यद्वा देववरा ब्रह्मादयः अमरादेवा एतैरार्चितंसुमनःफलार्हणै पुष्पफलोपायनैः आत्मनःस्वस्यतमोपहत्यैअज्ञाननिमित्तपापनिरासाय तरुषुजन्मयेनतमोनि मित्तपापेन ५ यतोयथादेवादयोमनुष्यलिंगमवाप्यभगवंतंसेवंतेतथाएतेभ्रमराअपितेष्वेतेषु तस्मात्त्वच्चरणपद्मसेवानवरतंनहातव्यामुमुक्षुभिरितिभावेनाह एतइति अलिनोभ्रमराःभ्रमराणां पक्षमूलमलमाहुर्मनीषिणइति अखिललोकतीर्थं समस्तजनस्यस्नानलक्षणंकीर्तनयोग्यशुद्धिजननस्थानीयशास्त्रेष्वंभसिपावनेइतिच अखिलः अनल्पः लोकः प्रकाशःज्ञानंयेषांतेतथातेषां सेवायोग्यशास्त्रस्थानीयम् लुकृप्रकाशइतिधातुः अनुपथंपथगताविंतिधातुःयत्रगच्छसित्वंतत्रानुगमनलक्षणसेवांकुर्वतीत्यर्थः अनुपदंवा मुनिगणाःसर्वज्ञानादेवादीनांगणाः वेत्तावेद्यस्य सर्वस्य मुनिःसद्भिरुदाहृतइत्युत्पलमाला त्वदीयेषुवैष्णवेषुमुख्यागूढंमनुष्यलिंगधरनजहातिनत्यजंति ॥ ओहाकृत्यागइतिधातुः जहातीतिपाठेवा व्यत्ययोबहुलमितिसूत्रान्निर्णयः अमराणामा त्मदैवंकुलदैवं अनघात्मदैवमितिपाठे अनघानांनिर्दुःखानामुक्तानांआत्मदैवंमुक्तानांपरमागतिः दुःखैनोव्यसनेष्वघमित्यमरः अनघेतिपृथक्पदंवा ६ पूर्वोक्तमतिदिशति नृत्यंतीति शिखिनोमयूराः अन्यत्र केशशिखाधारिणःतापसाःहरिण्यःमृगास्त्रियःअन्यत्रहिरण्मयवत्तपस्तेजसाज्वलंतः आसांभारोऽस्तीतिहारिण्यः परोपदेशसंबंधेनहरिभक्तजनतापहारिण्यइत्युच्यंते महेशाज्ज्ञानम

श्रीभगवानुवाच ॥ अहोअमीदेववरामरार्चितंपादांबुजंतेसुमनःफलार्हणैः ॥ नमंत्युपादायशिखाभिरात्मनस्तमोपहत्यैतरुजन्मयत्कृतम् ५ एतेऽलि नस्तवयशोऽखिललोकतीर्थंगायंतआदिपुरुषानुपथंभजंते ॥ प्रायोअमीमुनिगणाभवदीयमुख्यागूढंवनेऽपिनजहत्यनघात्मदैवम् ६ नृत्यंत्यमीशिखिन ईड्यमुदाहरिण्यःकुर्वंतिगोप्यइवतेप्रियमीक्षणेन ॥ सूक्तैश्चकोकिलगणागृहमागतायधन्यावनौकसइयान्हिसतांनिसर्गः ७ एवंवृंदावनंकृष्णःश्रीमत्प्रीतम नाःपशून् ॥ रेमेसंचारयन्नद्रेःसरिद्रोधःसुमानुगः ८ क्वचिद्गायतिगायत्सुमदांधालिष्वनुव्रतैः ॥ उपगीयमानचरितःसखिसंकर्षणान्वितः ९ क्वचिच्चकल हंसानामनुकूजतिकूजितम् ॥ अभिनृत्यतिनृत्यंतंबर्हिणंहासयन्क्वचित् १० मेघगंभीरयावाचानामभिर्दूरगान्पशून् ॥ क्वचिदाह्वयतिप्रीत्यागोगोपाल मनोज्ञया ११ चकोरक्रौंचचक्राह्वभारद्वाजांश्चबर्हिणाम् ॥ अनुरौतिस्मसत्त्वानांभीतवद्व्याघ्रसिंहयोः १२

न्निच्छेन्मोक्षमिच्छेज्जनार्दनादितिस्मृतेः हरिणीसाहिरण्मयीत्यभिधानम् तेतवेक्षणेनप्रियंकुर्वंति कोकिलगणाश्चसूक्तैःकर्णरम्यैःवचनैःप्रियंकुर्वंतीति अन्यत्र कः ब्रह्माउःशिवःतयोःकिलवार्ताकीर्तनंसंभा वनाचयेषांतेकोकिलाःइंद्रादयःपरभृतःइतरप्राणिरक्षार्थंप्राणधारिणः नस्वार्थं परमभागवताइत्यर्थःस्मार्तन्यायः गृहामिति गृहमागतायातिथयेगृहिणाऽर्घ्यपाद्यादिकदातव्यमितियत्तस्मात् वनौकसोमृ गादयोवावानप्रस्थादयोवा धन्याकृतार्थाः स्वंस्वंनिवासमागतंत्वांसभाजयंति अयंसतांजातिस्वभावइत्याह सतांनिसर्गः नितरांस्वभावः इयान्एतावान्हियस्मात्तस्मादिदमुचितमितिभावः वैश्वान रःप्रविशत्यतिथिर्ब्राह्मणोगृहान् तस्यैतांशांतिंकुर्वंतिहरवैवस्वतोदकम् आशांप्रतीक्षेसंगतंसूनृतांचेष्टापूर्तेपुत्रपशूंश्चसर्वान् एतद्वृंक्तेपुरुषस्याल्पमेधसोयस्यानश्नन्वसतिब्राह्मणोगृहेइति वार्तासंभावयोःकि लेतिविश्वः ईड्यसर्वंकर ७ कृष्णएवंविधमाहात्म्यं वृंदावनमवाप्यरेमेइत्यन्वयः अद्रेःपादेषुसरितोनद्यः रोधःसु तीरेषुपशून्संचारयन् ८ रतिप्रकारंदर्शयति क्वचिदिति अनुव्रतैरनुचरैःसखिभिःसंकर्षणे नचान्वितःअनुगतः ९ हासयन्हासंजनयन् १० नामभिःप्रसूतिवारप्रयुक्तादिलक्षणैः गवांगोपालानांमनोंतःकरणंज्ञापयंत्याबोधयंत्यामनोरमयावा ११ व्याघ्रशार्दूलसिंहयोःसकाशात्भीतवत्स्वयम पिभीतोभवति १२

गोपस्यउत्संगोंकएषउपबर्हणंशिरःपीठंयस्यसतथातम् आर्यंज्येष्ठंपादसंवाहनादिभिःविश्रामयति क्रीडाश्रमक्लेशंनाशयति १३ रामकृष्णौनर्तनादिकुर्वाणान्गोपाल्लान्नृत्यादिविशेषविषयेषुप्रशशंसतुः स्खलनादिविषयेहसंतौवल्गतःउत्प्लुवतः १४ नियुद्धंबाहुवल्लीग्रहणादिद्वंद्वयुद्धं १५ १६ महात्मनःकृष्णस्यमनोहराणि स्नेहेनक्लिन्नाआर्द्राधियोयेषातेतथा १७ बाललीलामुपसंहरति एवमिति स्व माययास्वेच्छयैवानिगूढात्ममतिःप्रच्छन्नस्वरूपानुभवः अन्यापेक्षयेतिशेषःग्राम्यैःमूर्खजनैः किमर्थमेवंकृतमत्राह ग्राम्यवदिति धर्मइतिशेषः १८ शुक.परीक्षितमाह धन्येयमिति कस्माद्धन्येत्यत्राह तृ णवीरुधइति तस्यकृष्णस्यपादौस्पृशंतीतितत्पादस्पृशःकरजैर्नखै.अभिमृष्टाअभित.श्रिता:लूनाइत्यर्थः नद्यादयोदयासहितैरवलोकैरवलोकिताः गोप्य.श्रीर्यद्भुजयोरंतरंवक्षस्थलंस्पृहयतीतियत्स्पृहात स्मिन्भुजयोरंतरेणमध्येआलिंगिताइतियत्तस्मादियंपृथिवीतद्गता:पदार्थाश्चधन्याइत्यर्थः १९ यद्देवकार्यार्थमवतीर्णहरिणातच्छेषंवक्तुमुपक्रमते श्रीदामेति सुबलश्चाशोकश्चकृष्णश्चाद्यायेषांतेतथातान्

क्वचित्क्रीडापरिश्रांतंगोपोत्संगोपबर्हणम् ॥ स्वयंविश्रामयत्यार्यंपादसंवाहनादिभिः १३ नृत्यतोगायतोवापिवल्गतोयुद्ध्यतोमिथः ॥ गृहीतहस्तौ गोपाल्लान्हसंतौप्रशशंसतुः १४ क्वचित्पल्लवतल्पेषुनियुद्धश्रमकर्शितः ॥ वृक्षमूलाश्रयःशेतेगोपोत्संगोपबर्हणः १५ पादसंवाहनंचक्रुःकेचिदस्यमहा त्मनः ॥ अपरेहतपाप्मानोव्यजनैःसमवीजयन् १६ अन्येतदनुरूपाणिमनोज्ञानिमहात्मनः ॥ गायंतिस्ममहाराजस्नेहक्लिन्नधियःशनैः १७ एवंनिगू ढात्ममतिःस्वमाययागोपात्मजत्वंचरितैर्विडंबयन् ॥ रेमेरमालालितपादपल्लवोग्राम्यैःसमंग्राम्यवदीशचेष्टितम् १८ श्रीशुकउवाच ॥ धन्येयमद्यधरणी तृणवीरुधस्तत्पादस्पृशोद्रुमलताःकरजाभिमृष्टाः ॥ नद्योऽद्रयःखगमृगाःसदयावलोकैर्गोप्योंतरेणभुजयोरपियत्स्पृहाश्रीः १९ श्रीदामानामगोपालो रामकेशवयोःसखा ॥ सुबलाशोककृष्णाद्यान्गोपान्प्रेम्णेदमब्रवीद् २० रामराममहाबाहोकृष्णदुष्टनिबर्हण ॥ इतोविदूरेसुमहद्वनंतालालिसंकुलम् २१ फलानितत्रभूरीणिपतंतिपतितानिच ॥ संतिकिंत्ववरुद्धानिधेनुकेनदुरात्मना २२ सोऽतितीव्रोऽसुरोरामहेकृष्णखररूपधृक् ॥ आत्मतुल्यबलैरन्यै र्ज्ञातिभिर्बहुभिर्वृतः २३ तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन् ॥ नसेव्यतेपशुगणैःपक्षिसंघैर्विवर्जितम् २४ विद्यंतेऽभुक्तपूर्वाणिफलानिसुरभीणिच ॥ एषवैसुरभिर्गंधोविषूचीनोविगृह्यते २५ प्रयच्छतानिनःकृष्णगंधलोभितचेतसाम् ॥ वांछास्तिमहतीरामगम्यतांयदिरोचते २६ एवंसुहृद्वचःश्रुत्वा सुहृत्प्रियचिकीर्षया ॥ प्रहस्यजग्मतुर्गोपैर्वृतौतालवनंप्रभू २७ बलःप्रविश्यबाहुभ्यांतालान्संपरिकंपयन् ॥ फलानिपातयामासमतंगजइवौजसा २८

२० दुष्टनिबर्हणदुष्टजनोन्मूलन अविदूरेनिकटे तालानांआल्यापंक्त्यासंकुलंनिबिडं २१ तत्रखरतालवने फलान्यपरिपाकंप्राप्तानीतिनेत्याह पतितानीति संतुतान्यानीयभुज्यंतामितितत्राह किंत्वि ति २२ तीव्रःक्रूरः खररूपंगर्दभदेहंधारयतीतिखररूपधृक् असहायश्चेन्निष्कासनीयइतिनेत्याह आत्मेति २३ कृत:नराणामाहारोयेनसतथातस्मात् २४ नृभिरभुक्तपूर्वाणिदिक्षुसर्वत्राव्रतीतिवि षूचीनःसर्वत्रव्याप्तिमानित्यर्थः विशेषेणगृह्यतेघ्राणेंद्रियेणेतिशेषः २५ लोभआकांक्षा लुभगार्ध्येगृधुअभिकांक्षायामितिधातुः अदनाकाक्षाचेत्कालांतरेआनेष्यामीतितत्राह वांछेति २६ २७ मतंगजः वारणःओजसाबलेनअवष्टंभेनवा ओजोवष्टंभबलयोरिति २८

रासभःगर्दभः नगैर्वृक्षैःपर्वतैश्चसहितम् २९ काशब्दंगर्दभजातिजं कर्णनिष्ठुरशब्दं पर्यचरत्परितोवर्तत ३० उपक्रोष्टुंक्रोशातिरत्रक्षेपार्थः क्षेमुंपराक्स्थितःप्राङ्मुखः ३१ पदोःपादयोःभ्रामणेनपरिभ्र मणकरणेन ३२ तेनखररूपासुरशरीरेण बलेनपार्श्वस्थंतालंकंपयन्भग्नोभूत् किंचसचपार्श्वस्थःअन्यतालंसोन्योप्यपरंतालमित्येवंपरंपरया ३३ बलस्यलीलयाकर्मणा उत्सृष्टेनउत्क्षिप्तेनखरदेहेनहतता लाहताः ३४ अन्यस्यचित्रमपिरामस्यैतत्कर्मचित्रंनभवतीतिशुकःपरीक्षितमाह नैतदिति हिशब्दोधराखिलेयंननुसर्पयतीतिप्रसिद्धिंद्योतयति ३५ क्रोष्टारःक्षेमुकायाः ताच्छीलिकस्तृन्प्रत्ययः रव जादिरवंकुर्वाणावा ३६ ३७ फलप्रकरसंकीर्णांतालफलसमूहेनव्याप्ता ३८ तयोःरामकृष्णयोः ३९ आदन्भक्षितवंतः ४० ४१ गोरजसाछुरितकुंतलैःछुरितकेशपाशैःबद्धानिबर्हवन्यप्रसूनानियैस्तैःच्छन्न

फलानांपततांशब्दंनिशम्यासुररासभः ॥ अभ्यधावत्क्षितितलंसनगंपरिकंपयन् २९ समेत्यतरसाप्रत्यग्द्वाभ्यांपद्भ्यांबलंबली ॥ निहत्योरसिकाश ब्दंमुंचन्पर्यचरद्खलम् ३० पुनरासाद्यसंरब्धउपक्रोष्टुंपराक्स्थितः ॥ चरणावपरौराजन्बलायप्राहिणोद्रुषा ३१ सतंगृहीत्वाप्रपदोर्भ्रामयित्वैकपाणिना चिक्षेपतृणराजाग्रेभ्रामणत्यक्तजीवितम् ३२ तेनाहतोमहातालःपतमानोबृहच्छिराः ॥ पार्श्वस्थंकंपयन्भग्नःसचान्यंसोपिचापरम् ३३ बलस्यली लयोत्सृष्टखरदेहहताहताः ॥ तालाश्चकंपिरेसर्वेमहावातेरिताइव ३४ नैतच्चित्रंभगवतिह्यनंतेजगदीश्वरे ॥ ओतप्रोतमिदंयस्मिंस्तंतुष्वंगयथापटः ३५ ततःकृष्णंचरामंचज्ञातयोधेनुकस्यये ॥ क्रोष्टारोऽभ्यद्रवन्सर्वेसंरब्धाहतबांधवाः ३६ तांस्तानापततःकृष्णोरामश्चनृपलीलया ॥ गृहीतपश्चाच्चर णान्प्राहिणोत्तृणराजसु ३७ फलप्रकरसंकीर्णंदैत्यदेहैर्गतासुभिः ॥ रराजभूःसतालाग्रैर्घनैरिवनभस्तलम् ३८ तयोस्तत्सुमहत्कर्मनिशम्यविबुधादयः ॥ मुमुचुःपुष्पवर्षाणिचक्रुर्वाद्यानितुष्टुवुः ३९ अथतालफलान्यादन्मनुष्यागतसाध्वसाः ॥ तृणंचपशवश्चेरुर्हतधेनुककानने ४० कृष्णःकमलपत्राक्षःपुण्य श्रवणकीर्तनः ॥ स्तूयमानोऽनुगैर्गोपैःसाग्रजोव्रजमागमत् ४१ तंगोरजश्छुरितकुंतलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासम् ॥ वेणुंक्वणंतमनुगै रुपगीतकीर्तिंगोप्योदिदृक्षितदृशोऽभ्यगमन्समेताः ४२ पीत्वामुकुंदमुखसारघमक्षिभृंगैस्तापंजहुर्विरहजंव्रजयोषितोऽह्नि ॥ तत्सत्कृतिंसमधिगम्यवि वेशगोष्ठंसव्रीडहासविनयोयदपांगमोक्षः ४३ तयोर्यशोदारोहिण्यौपुत्रयोःपुत्रवत्सले ॥ यथाकामंयथाकालंव्यधत्तांपरमाशिषः ४४ विगताध्वश्रमौ तत्रमज्जनोन्मर्दनादिभिः ॥ नीवींवसित्वारुचिरांदिव्यस्रग्गंधमंडितौ ४५ जनन्युपहृतंप्राश्यस्वाद्वन्नमुपलालितौ ॥ संविश्यवरशय्यायांसुखंसुषुपतु र्व्रजे ४६ एवंसभगवान्कृष्णोवृंदावनचरःक्वचित् ॥ ययौराममृतेराजन्कालिंदींसखिभिर्वृतः ४७

मवपुष्पाणियस्यसतथा गोरजश्छुरितकुंतलबद्धबर्हवन्यप्रसूनश्च रुचिरेईक्षणेचारुहासश्चयस्यसतथातम् ४२ मुकुंदस्यमुखमेवसारघंमधु सरघायोग्यंसारघं सरघामधुमक्षिकाप्रोक्ताइतिहलायुधःअह्नि विरहजंतापंयासामपांगमोक्षःकटाक्षनिरीक्षणंव्रीडयासहितःसव्रीडश्चासौहासश्चसव्रीडहासःतस्यविगमोराहित्यविशेषणप्राप्तिर्वायस्यसतथा तासांसत्कृतिसत्कारसमधिगम्यप्राप्य ४३ ४४ मज्जन स्नानं उन्मर्दनं शरीरमलोद्वर्तनं नीवींवस्त्रंवासित्वाआच्छाद्य ४५ प्राश्यपीत्वा संविश्यशयित्वा ४६ इदानींकथांतरवक्तुमुपक्रमते एवमिति ४७

निदाघातपःग्रीष्मर्तुभवरविकिरणभवउष्णविशेषःतेनपीडिताः ४८ उपस्पृश्यआचम्यपीत्वाच ४९ ५० तथाभूतान् मृतप्रायान्ईक्षयादृष्ट्यासंप्रतीतस्मृतयःसम्यक्प्राप्तप्रत्यभिज्ञानाः ५१ विषंविषामिश्रजलंपीत्वापरेतस्यमृतस्यस्यात्मनःपुनरुत्थानंगोविंदस्यानुग्रहयुक्तनिरीक्षणकृतमन्वमंसतन्यरूपयन् ॥ ५२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधे वैजध्वजकृतटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥
हरौभक्तिमतांसंसारविषंनिर्वीर्यंभवतीतिनिदर्शयितुंअनंतरातीताध्यायेसंक्षिप्योक्तंकालियनागमर्दनमाहिमानंप्रपंचयत्यस्मिन्नध्याये तत्रराज्ञःप्रश्नमुत्थापयितुमाह विलोक्येति कृष्णांयमुनां कृष्णाहिनाकृष्णसर्पेण उदवासयत्ततोन्यत्रावासमकारयत् १ अगाधेअतलस्पर्शेन्यग्रहात्निगृहीतवान् प्रसह्यगृहीतवानित्यर्थः यथायेनप्रकारेणासीत्सप्रकारः २ ३ श्रप्यमाणंक्वाथ्यमानंपयोजलंयस्मिन्ह्रदेसतथा यस्मिन्ह्रदे ४ विप्लुष्मताविशेषेणदहता प्लुषप्लुषदाहइतिधातुः विषेणविशिष्टमुदंविषोदंतेनयुक्ताऊर्मयःविषोर्मयःयस्यसतथासचासौमारुतःविषोदोर्मिमारुतःतेनाभिमर्शिताः

अथगावश्चगोपाश्चनिदाघातपपीडिताः ॥ दुष्टंजलंपपुस्तस्यास्तृषार्ताविषदूषितम् ४८ विषांभस्तदुपस्पृश्यदैवोपहतचेतसः ॥ निपेतुर्व्यसवःसर्वेसलिलान्तेकुरूद्वह ४९ वीक्ष्यतान्वैतथाभूतान्कृष्णोयोगेश्वरेश्वरः ॥ ईक्षयाऽमृतवर्षिण्यास्वनाथान्समजीवयत् ५० तेसंप्रतीतस्मृतयउत्थायत्वजलांतिकात् ॥ आसन्सुविस्मिताःसर्वेवीक्षमाणाःपरस्परम् ५१ अन्वमंसततद्राजन्गोविंदानुग्रहेक्षितम् ॥ पीत्वाविषंपरेतस्यपुनरुत्थानमात्मनः ५२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेत्रयोदशोऽध्यायः ॥ श्रीशुकउवाच ॥ विलोक्यदूषितांकृष्णांकृष्णःकृष्णाहिनाविभुः ॥ तस्याविशुद्धिमन्विच्छन्सर्पंतमुदवासयत् १ राजोवाच ॥ कथमंतर्जलेगाधेन्यगृह्णाद्भगवानहिम् ॥ सवैबहुयुगावासीयथासीद्विप्रकथ्यताम् २ ब्रह्मन्भगवतस्तस्यभूम्नःस्वच्छंदवर्तिनः ॥ गोपालोदारचरितंकस्तृप्येतामृतंजुषन् ३ श्रीशुकउवाच ॥ कालिंद्यांकालियस्यासीद्ध्रदःकश्चिद्विषाग्निना ॥ श्रप्यमाणपयोयस्मिन्पतंत्युपरिगाःखगाः ४ विप्लुष्मताविषोदोर्मिमारुतेनाभिमर्शिताः ॥ म्रियंतेतीरगायस्यप्राणिनःस्थिरजंगमाः ५ तंचंडवेगविषवीर्यमवेक्ष्यतेनदुष्टांनदींचखलसंयमनावतारः ॥ कृष्णःकदंबमधिरुह्यततोऽतितुंगादास्फोट्यगाढरशनोन्यपतद्विषोदे ६ सार्पह्रदःपुरुषसारनिपातवेगसंक्षोभितोरगविषोच्छ्वसितांबुराशिः ॥ पर्यक्प्लुतोविषकषायविभीषणोर्मिर्भीमोधनुःशतमनंतबलस्यकिंतत् ७ तस्मिन्ह्रदेविहरतोभुजदंडघूर्णवार्घोषमंगवरवारणविक्रमस्य ॥ आश्रुत्यतत्स्वसदनाभिभवंससैन्यश्चक्षुःश्रवाःसमसरत्तदमृष्यमाणः ८

शिताआवृत्यगृहीताःयस्यह्रदस्य ५ तेनकालियेन खलानांसंयमनार्थंनिग्रहार्थंअवतारोयस्यसतथा आस्फोट्यद्विगुणीकृतहस्तप्रहारंकृत्वा गाढरशनःदृढबद्धकक्षप्रदेशः विषोदेविषमिश्रितजले ह्रदइतिशेषः ६ सर्पस्यनिवासभूतह्रदःसार्पह्रदः पुरुषसारस्यपुरुषवरस्यपुरुषश्रेष्ठस्यपुरुषोत्तमस्येत्यर्थः निपातवेगेनसंक्षोभितस्यसंचालितस्यस्वस्थानास्थितिक्लिष्टस्योरगस्यविषेणसहउच्छ्वसितःउद्वेलितःअंबुराशिर्यस्यह्रदस्यसतथा विषकषायेणविषक्वाथेनविषरागेणवाविभीषणोर्मिभिःभयंकरतरंगैर्भीमःभयजनकः रागेकाथेकषायोस्त्रीनियासेसौरभेरसेइतियादवः एवंविधोह्रदोधनुःशतंतीरस्थानमुल्लंघ्यपर्यक्प्लुत परितःउद्रिच्यगतः हरेरेतत्किंचित्रमित्याह अनंतबलस्येति लक्षयोजनविस्तारायामपरिमितभूप्लावनेपिनचोद्यंकिमुतधनुःशतमित्यर्थः ७ अंगनृपश्रृणुवरवारणविक्रमस्यगजेंद्रविक्रमस्य यद्वा अंगैरवयवैःवरणीयस्यवारणस्यविक्रमइवविक्रमोयस्यसतथा तस्यहरेर्भुजदंडाभ्यांघूर्णस्यमंद्रध्वनितयाक्षुब्धस्यवारःजलस्यघोषमाश्रुत्यतस्मात्स्वसदनाभिभवोयस्तममृष्यमा

णःअसहमानः चक्षुःश्रवाःसर्पःतंकृष्णंसमसरत्संस्तवान् बाधितुमागतवानित्यर्थः वरोनाङ्कपजामात्रोदैवादेरीप्सितवृतइति ८ अवदातःश्यामलः अवदातोरूपेपीतेश्वेतेइत्यार्यनिरामगइतिच चछाद आच्छादितवान् आवृतवानित्यर्थः ९ परिवीतंपरिवेष्टितं अदृष्टचेष्टंनिश्चेष्टं १० वत्सतर्यःगर्भाधानयोग्यवयसः ११ त्रिविधाइत्युक्तंविभ्रियते दिवीत्यादिना दिविउत्पाताः आदित्यमंडलेकबंधा दिदर्शनं निर्घातादिभिः भुविकंपादिकं आत्मनिदेहेवामनेत्रस्फुरणादि आसन्नभयशंसिनःसमीपभयसूचकाः १२ १३ १४ पशुवत्वृत्तिर्येषांतेतथा दृष्टमात्रव्यवहारिणः १५ माधवो मधुकुलो द्भवः १६ भगवल्लक्षणैहरेःपद्मध्वजादिलक्षणोपेतैःपदैश्चरणन्यासैःसूचितयासूचयंत्या पदव्यामार्गेण १७ वैशद्यायपुनरुक्तंविवृणोति तइति यवोव्रीहिविशेषः अशनिर्वज्रं हंसोलिरशानिर्द्वयोरिसम

तंप्रेक्षणीयसुकुमारघनावदातंश्रीवत्सपीतवसनंस्मितसुंदरास्यम् ॥ क्रीडंतमप्रतिभयंकमलोदरांघ्रिंसंदश्यमर्मसुरुषाभुजगश्चछाद ९ तंनागभोगपरिवीतमदृष्टचेष्टमालोक्यतत्प्रियसखाःपशुपाभृशार्ताः ॥ कृष्णेर्पितात्मसुहृदर्थकलत्रकामादुःखानुशोकभयमूढधियोनिपेतुः १० गावोवृषावत्सतर्यःक्रंदमानाःसुदुःखिताः ॥ कृष्णेन्यस्तेक्षणाभीतारुदंत्यइवतस्थिरे ११ अथव्रजेमहोत्पातास्त्रिविधाह्यतिदारुणाः ॥ उत्पेतुर्दिविभूम्यात्मन्यासन्नभयशंसिनः ॥ १२ तानालक्ष्यभयोद्विग्नागोपानंदपुरोगमाः ॥ विनारामेणगाःकृष्णंज्ञात्वाचारयितुंगतम् १३ तैर्दुर्निमित्तैर्निधनंमत्वाप्राप्तमतद्विदः ॥ तत्प्राणास्तन्मनस्कास्तेदुःखशोकभयातुराः १४ आबालवृद्धवनिताःसर्वेंगपशुवृत्तयः ॥ निर्जग्मुर्गोकुलाद्दीनाःकृष्णदर्शनलालसाः १५ तांस्तथाकातरान्वीक्ष्यभगवान्माधवोबलः ॥ प्रहस्यकिंचिन्नोवाचप्रभावज्ञोनुजस्यसः १६ तेऽन्वेषमाणादयितंकृष्णंसूचितयापदैः ॥ भगवल्लक्षणैर्जग्मुःपदव्यायमुनातटम् १७ तेतत्रतत्राब्जयवांकुशाशनिध्वजोपपन्नानिपदानिविश्पतेः ॥ मार्गेगवामन्यपदांतरांतरेनिरीक्षमाणाययुरंगसत्वराः १८ अंतर्ह्रदेभुजगभोगपरीतमारात्कृष्णंनिरीहमुपलक्ष्यजलाशयांते ॥ गोपांश्चमूढधिषणान्परितःपशूंश्चसंक्रंदतःपरमकश्मलमापुरार्ताः १९ गोप्योनुरक्तमनसोभगवत्यनंतेतत्सौहृदस्मितविलोकगिरःस्मरंत्यः ॥ ग्रस्तेऽहिनाप्रियतमेभृशदुःखतप्ताःशून्यंप्रियव्यतिहृतंददृशुस्त्रिलोकम् २० ताःकृष्णमातरमपत्यमनुप्रविष्टांतुल्यव्यथाःसमनुगृह्यशुचःस्रवंत्यः ॥ तास्ताव्रजप्रियकथाःकथयंत्यआसन्कृष्णाननेर्पितदृशोमृतकप्रतीकाः २१ कृष्णप्राणान्निर्विशतोनंदादीन्वीक्ष्यतंह्रदम् ॥ प्रत्यषेधत्सभगवान्रामःकृष्णानुभाववित् २२

रः विश्पतेःप्रजापतेःकृष्णस्य गवांमार्गेकृष्णपादेनान्यस्यगोपस्यअन्यासांगवांपादेनांतरांतरेमध्येमध्येमिश्रितइतिशेषः गवांपादेनान्यपदेनवज्रादिलक्षणेनपदेनइतरलक्षणेनपदेनांतरांतरेमध्यावि न्राभूतेवा १८ जलाशयांतेह्रदसमीपे परितःस्थितान्गोपानुपलक्ष्यपरमंकश्मलंमोहम् १९ तस्यकृष्णस्यसौहृदंचस्मितंचविलोकश्चगिरश्चतत्सौहृदस्मितविलोकगिरःताःस्मरंत्यः प्रियव्यतिहृतंविरहितम् २० अपत्यमनुप्रविष्टांआत्मनापुरस्थितन्हदेप्रविष्टांशरीरेणतीरेस्थितांकृष्णमातरंयशोदांसमनुगृह्यपरिरभ्ययशोदादुःखतुल्यव्यथाः शुचःशोकादश्रूणिस्रवंत्यः बाष्पधारयानदींकुर्वंत्य. ताः पूर्वंव्रजप्रियस्यकृष्णस्यकथाःकथयंत्यःआसन्ताअधुनात्रस्ताःकृष्णाननेर्पितनेत्राःगोप्योमृतकप्रतीकाविज्ञाताअनेनेतिशेषः २१ कृष्णएवप्राणोयेषांतेतथातान्ह्रदंनिर्विशतःप्रवेष्टुकामान् २२

आज्ञायज्ञात्वा उरगबंधात्सर्पकृतबंधनात् उदतिष्ठत् उत्थितोभूत् २३ भगवत्युत्थितेसर्पः किंक्रियोभूदित्यत्राह तत्प्रथ्यमानेति तेनकृष्णेनप्रथ्यमानवपुषावर्धमानशरीरेणव्यथितः आत्मभोगः स्वशरीरंयस्यसतथाअतएवकुपितोऽतएवश्वसन्दीर्घश्वासंकुर्वन् श्वसनरंध्रेनासिकाछिद्रेविषांबरीषंविषभ्राष्ट्रंयस्यसतथा क्लीबेंबरीषंभ्राष्ट्रोनाकंदुर्नास्वेदिनीस्त्रियामित्यमरः स्तब्धेक्षणउल्मुकमुखश्चस्तब्धे ईक्षणेउल्मुकेमुखेयस्यसतथा अंगारेलातउल्मुकइत्यमरः एवंविधोभुजंगोहरिमीक्षमाणस्तस्थावित्यन्वयः २४ तंअमुंसर्पपरिससारपरितश्चचार द्वेसृक्किणीओष्ठांतभागौ ससर्पोप्यपसरन्नूतिर्यग्गच्छन्बभ्रामचतुर्दिशंपरिवर्त्तमानोभूत् २५ हतौजसंक्षीणबलं आनम्यआनमय्यप्रह्वीकृत्य अमृतकलस्यचंद्रस्याधिगुरुःपरमगुरुः अमृतकलानामधिकोगुरुः उद्गिरणशीलइतिभावः इदंविशेषणद्वयंज्ञाना

इत्थंस्वगोकुलमनन्यगतिंनिरीक्ष्यसस्त्रीकुमारमतिदुःखितमात्महेतोः ॥ आज्ञायमर्त्यपदवीमनुवर्तमानः स्थित्वामुहूर्तमुदतिष्ठदुरंगबंधात् २३ तत्प्रथ्यमानवपुषाव्यथितात्मभोगस्त्यक्त्वोन्नमय्यकुपितःस्वफणान्भुजंगः ॥ तस्थौश्वसन्श्वसनरंध्रविषांबरीषस्तब्धेक्षणोल्मुकमुखोहरिमीक्षमाणः २४ तंजिह्वयाद्विशिखयापरिलेलिहानंद्वेसृक्किणीअतिकरालविषाग्निदृष्टिम् ॥ क्रीडन्नमुंपरिससारयथाखगेंद्रोबभ्रामसोप्यपसरन्प्रसमीक्ष्यमाणः २५ एवंपरिभ्रमहतौजसमुन्नतांसमानम्यतत्पृथुशिरस्स्वधिरूढआद्यः ॥ तन्मूर्धरत्ननिकरस्पर्शातिताम्रपादांबुजोऽमृतकलाधिगुरुर्ननर्त २६ तंनर्तुमुद्यतमवेक्ष्यतदातदीयगंधर्वसिद्धमुनिचारणदेववध्वः ॥ प्रीत्यामृदंगपणवानकवाद्यगीतपुष्पोपहारनुतिभिःसहसोपसेदुः २७ यद्यच्छिरोननमतेगरकालशीर्ष्णस्तत्तन्ममर्दखलदंडधरोंऽघ्रिपातैः ॥ क्षीणेबलेभगवतोल्बणमाशुवक्त्राद्रक्तंवमन्परमकश्मलमापनागः २८ तस्याक्षिभिर्गरलमुद्वमतःशिरस्सुयद्यत्समुन्नमतिनिःश्वसतोरुषोच्चैः ॥ नृत्यन्पदानुनमयन्सयदाबभूवपुष्पैःस्तुतोथभगवान्पुरुषःपुराणः २९ तच्चित्रतांडवविरुग्णफणातपत्रोरक्तंमुखैरुरुवमन्नृपभग्नगात्रः ॥ स्मृत्वाचराचरगुरुंपुरुषंपुराणंनारायणंतमरणंमनसाजगाम ३० कृष्णस्यगर्भजगतोतिभरावसन्नपार्ष्णिप्रहारपरिरुग्णफणातपत्रम् ॥ दृष्ट्वाऽहिराजमुपसेदुरमुष्यपत्न्यआर्ताःश्लथद्वसनभूषणकेशबंधाः ३१ तंताविपन्नमनसोथपुरस्कृतार्हाःकायंनिधायभुविभूतपतिंप्रणेमुः ॥ साध्व्यःकृतांजलिपुटाःपरमस्यभर्तुर्मोक्षेच्छवःशरणदंशरणंप्रपन्नाः ॥ ३२ ॥ नागपत्न्यऊचुः ॥ न्याय्योहिदंडःकृतकिल्बिषेऽस्मिंस्तवावतारःखलनिग्रहाय ॥ रिपोःसुतानामपितुल्यदृष्टेर्धत्सेदमंफलमेवानुशंस्यम् ३३

र्थमुक्तम् २६ उपसेदुःउपस्थिताः २७ गरकालशीर्ष्णःविषेणनीलशिरसःसर्पस्य मूर्छातुकश्मलंमोहइत्यमरः २८ शिरस्सुमध्येयद्यच्छिरः समुन्नमतितत्तच्छिरः अनुनमयन्नृत्यन्बभूव २९ अंघ्रिपातविशेषेणरुग्णंभुग्नम् अरणंशरणं क्षीरसागरशायीपस्तम् ३० गर्भेजठरेजगद्यस्यसगर्भजगत् तस्यकृष्णस्यातिभरेणावसन्नः पीडितःपार्ष्णिःपादपृष्ठभागोयःतेनकृतेनप्रहारेणपरिरुग्णंफणातपत्रंयस्यसतथातम् ३१ पुरस्कृतार्हाःअग्रेकृतपूजनाःपरमस्यसकाशात् पत्युर्मोक्षेच्छवः ३२ दंड.शासनंन्याय्योयुक्तं रिपोःसुतानामितिषष्ठीसप्तम्यर्थेरिपोःसुतेष्वपितुल्यदृष्टेः त्वंतेषुभयेष्वपराधेषुदमंदंडंधत्से कथंधत्सइतितत्राह फलमिति अनुशंस्यअपराधानुरूपंफलंअनुग्रहलक्षणदंडकरोषीत्यन्वयः ३३

ननुनिग्रहतःकथमनुग्रहोभवतीत्यत्राह अनुग्रहइति हिशब्दएवार्थेभवतासर्वपूज्येनत्वया नः अस्माकंअयमनुग्रहएवकृतोनतुविरोधःकृतः तेत्वयाक्रियमाणोदंडोऽसतामसाधुभावानांदुष्टकर्मणांतामसयं निगामानांकल्मषापहः खलुपापपरिहारकएव अमुष्यासत्त्वंकथमत्राह यदिति अमुष्यकालियनाम्नोदंदशूकत्त्वंतत्तत्प्राणिदंशनशीलयोनित्वमभूत् इतिज्ञायते यद्यस्मात्तस्मादसत्त्वंयोग्यंतथा अ तस्तेतवक्रोधःक्रोधकारणदंडोयोग्यस्यदेहिनोनुग्रहःसंमतःअस्माभिःप्रतिपन्नइत्यन्वयः दंडोपिभगवच्चीर्णोममैषोनुग्रहःकृतइत्यादिस्मृतेर्भक्तिमतएवायंविशेषइतिज्ञायते ३४ यददशूकत्वमपिनदुष्कर्मनिमि त्तमपितुपूर्वजन्मन्यत्युत्कटत्वद्विषयतपआदिप्रभावोपनतमितिमन्यामहे अत्युत्कटैःपुण्यपापैरिहैवफलमश्नुते यतोस्यगवादिप्राणिद्रोहत्वद्दशनोत्पन्नपापपरिहारायसवलक्ष्म्यादिसर्वदेवतावांछितसेवाचरणस रोजरेणुमंदिरमूर्धाभूदितिभावेनवदंति तपइत्यादिना भूदानादिलक्षणोधर्मः सर्वेषांजीवानांप्राणभूतःसर्वान्जीवयतीतित्रा ३५ तपआदिषुकस्यपुण्यस्यानुभावोयप्रभावः अध्नवस।येवा काम्यतइ तिकामाःविषयास्तान् ३६ कीदृशाविषयाइतिभावेनतानाहुः ननाकेति नाकस्यपृष्ठंसुकृतेनुभूत्वाइमंलोकंहीनतरंवाविशंतीति पारमेष्ठ्यंसत्यलोकः सार्वभौमंचक्रवर्तिपद इमारामा·सरथा·सतु र्याइत्यादिलक्षणंरसाधिपत्यंअखिलस्वर्गविभवम् योगसिद्धिरणिमादिलक्षणाः अपुनर्भवंअपक्कभक्तिलभ्यंमोक्षम् अपुनर्भवमात्राद्धिहरिसामीप्यमुत्तममित्यादिस्मृतेः ३७ किंबहुवक्तव्यमितिभावेन

अनुग्रहोयंभवताकृतोहिनोदंडोऽसतांतेखलुकल्मषापहः ॥ यद्दंदशूकत्वममुष्यदेहिनःक्रोधोपितेनुग्रहएवसंमतः ३४ तपःसुतप्तंकिमनेनपूर्वंनिरस्तमानेन चमानदेन॥धर्मोऽथवासर्वजनानुकंपयायतोभवांस्तुष्यतिसर्वजीवः ३५ कस्यानुभावोऽस्यनदेवविद्महेतवांघ्रिरेणुस्पर्शाधिकारः॥ यद्वांछयाश्रीर्ललनाच रत्तपोविहायकामान्सुचिरंधृतव्रता ३६ ननाकपृष्ठंनचपारमेष्ठ्यंनसार्वभौमंनरसाधिपत्यम् ॥ नयोगसिद्धीरपुनर्भवंवावांछंतियत्पादरजःप्रपन्नाः ३७ त दीशनाथापदुरापमन्यैस्तमोजनिःक्रोधवशोऽप्यनीशः ॥ संसारचक्रेभ्रमतःशरीरिणोयदीप्सितंस्याद्धि भवत्समक्षम् ३८ नमस्तुभ्यंभगवतेपुरुषाय महात्मने ॥ भूतावासायभूतायपरायपरमात्मने ३९ ज्ञानविज्ञाननिधयेब्रह्मणेऽनंतशक्तये ॥ अगुणायाविकारायनमस्तेऽप्राकृतायच ४० का लायकालनाभायकालावयवसाक्षिणे ॥ विश्वायतदुपद्रष्ट्रेतत्कर्त्रेविश्वहेतवे ४१ भूतमात्रेंद्रियप्राणमनोबुद्ध्याशयात्मने ॥ निर्गुणेनाभिमानेनगूढस्वा त्मानुभूतये ४२

वदंति तदिति ईशनाथशंकरस्वामिन् यद्भवत्समक्षम् भवतःसाक्षात्करणंतदापदुरापम् नचक्षुषापश्यतिकश्चिदेनंनान्यैर्देवैर्मनसानापिवाचेत्यादिश्रुतेः साधनसामग्रीमंतरेणदुष्प्रापमित्यर्थःतमसा गुणेनजनिर्जन्मयस्यसतथा अतएवक्रोधस्वभावः तथाप्यनीशोऽसमर्थः ३८ दंडोपिभगवच्चीर्णइतिस्मृत्यर्थमात्मनिज्ञापयितुकृष्णस्तुवंति नमइत्यादिना भूतावासायेत्यनेनभूतनाशेननाशःस्या दित्युच्यतेइतिशंकांनिवारयति भूतायेति सर्वदाविद्यमानाय भूसत्तायामितिधातुः ३९ अविकारायेत्युक्तंसमर्थयतेअप्राकृतायेति ४० कालायभक्तकामधेनवे कालनाभायकालाश्रयाय विश्वायरवा र्थनिप्रपंचाय तस्यविश्वस्योपद्रष्ट्रेअध्यक्षाय तस्यकर्त्रे अवांतरकारणाय प्रकृतेर्मूलकारणत्वंनिवारयति विश्वहेतवइति प्रपंचस्यमूलकारणाय विश्वस्यतदधीनत्वाद्धि चविष्णुरुदीर्यतइत्यादिस्मृतेः विश्वायविराट्पुरुषाय तत्कर्त्रेविश्वस्योत्पादनमायाप्रेरकायइत्यादिरर्थोनयुक्तःआप्रामाणिकत्वादिति ४१ विश्वस्यभगवदधीनत्वंविवृणोति भूतेति भूतानिपंचमात्राःशब्दादयःइंद्रियाणिश्रोत्रादीनि प्राणाःदश मनःसंकल्पविकल्पलक्षणम् बुद्धिर्निश्चयहेतुरेषामाशयःस्थानआत्मास्वभावोयस्यसतथातस्मै आत्मायत्नोधृतिर्बुद्धिःस्वभावोब्रह्मवर्ष्मचेत्यमरः स्थानेभिप्रायआशयइतियादवःनिर्गुणेनसत्त्वा दिगुणजन्मरहितेनाभिमानेनज्ञानेनगूढाअप्रकाशितास्वात्मानुभूतिर्यस्यसतथातस्मै ४२

अनंतायनित्यायसर्वगताय सूक्ष्मायइंद्रियाविषयाय नित्यंविभुंसर्वगतंसुसूक्ष्ममितिश्रुतेः कूटस्थायशश्वदेकप्रकाराय विपश्चितेसर्वज्ञायनिपुणबुद्धयेवा नानावादानांसिद्धांतानांअनुरोधायअनुकूलवर्तमानाय वाच्योर्थः तस्यप्रतिपाद्यत्वेयोग्यत्वंवाच्यशक्तिःवाचकःशब्दःतस्यार्थप्रतिपादनसामर्थ्यंतद्द्वयंयस्यसतथातस्मै ४३ प्रमाणमूलायप्रत्यक्षादिप्रमाणप्रतिष्ठापकायकवयेअतिक्रांतदर्शिनेशास्त्रं वेदःयोनिर्ज्ञप्तिकारणंयस्यसतथातस्मै योनिःस्त्रीणांभगेस्थानेकारणेताम्रकेपणेइतियादवः निर्देशकारणायइदंकुर्यादिदंनकुर्यादितिविधिनिषेधग्रंथयोःशास्त्रमित्यमरः प्रवृत्तायप्रवृत्तिमार्गप्रवर्तकाय निवृत्तायनिवृत्तिमार्गप्रवर्तकायच सृष्टौप्रवृत्तायप्रलयेनिवृत्तायेतिवा उभयेषांनिगमायमार्गायविषयायेत्यर्थः अयनंपदवीमार्गःपद्याचविनिगद्यतेनिगमइतिहलायुधः वेदमूर्तयेवा निश्चायकायवा निगमोनिश्चयेवेदेपरेपथिवणिक्पथइतियादवः ४४ कृष्णायउत्कृष्टानंदरूपाय भक्तजनदुरितकर्षणशीलायवाशत्रूणामग्रयेवानीलवर्णायवा कृष्णःसीसाद्यलोहेषुकृष्णोनीऽलेनलेकलौ शूद्रकाकोपिकेव्यासेव्यांतिपक्षेर्जुनेहराविति रामायरामनाम्नेअभिरामायवाप्रकृष्टद्युत्यामेयाय यद्वा प्रकृष्टधानाय प्रद्युम्नंद्रव्यंद्रदिणमितिहलायुधः । अनिरुद्धायज्ञानिनांनिरोधरहिताय ४५ गुणाःसत्त्वादयः। भक्तिज्ञानादयोवा तेषांप्रदीपायज्ञापकाय गुणात्माप्रकृतिः तस्यांस्थितःउदयःस्वरूपंयस्यसतथातस्मै गुणैःश्रोत्रादींद्रियजन्यज्ञानैःप्रत्युपलक्ष्यायअनुमेयस्वरूपाय गुणद्रष्ट्रेगुणसाक्षिणे स्वसंविदेस्वयंप्रकाशाय तद्ब्रह्म वेदाहंब्रह्मास्मीतिश्रुतिः अनेनाप्यस्याप्यन्योद्रष्टातस्याप्यन्यइत्यनवस्थानिरस्तेतिज्ञातव्यं ४६ अव्याकृताःव्याहर्तुमशक्याःसृष्ट्यादिविहारायस्यसतथातस्मै ननुव्याहर्तुमशक्यविहारश्चेत्कथंतर्हितज्ज्ञानमत्राहुः सर्वेति सर्वैर्व्याकृताविवृतासिद्धिः स्वरूपज्ञानंयस्यसतथा स्वानुग्रहेणज्ञापितस्वरूपइत्यर्थःतस्मै यद्वा सर्वव्याकृतासिद्धयेनामरूपात्मकंजगत्सर्वव्याकृतं

नमोऽनंतायसूक्ष्मायकूटस्थायविपश्चिते ॥ नानावादानुरोधायवाच्यवाचकशक्तये ४३ नमःप्रमाणमूलायकवयेशास्त्रयोनये ॥ प्रवृत्तायनिवृत्तायनिगमायनमोनमः ४४ नमःकृष्णायरामायवसुदेवसुतायच ॥ प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः ४५ नमोगुणप्रदीपायगुणात्मस्थोदयायच ॥ गुणप्रत्युपलक्ष्यायगुणद्रष्ट्रेस्वसंविदे ४६ अव्याकृतविहारायसर्वव्याकृतसिद्धये ॥ हृषीकेशनमस्तेस्तुमुनयेमौनशीलिने ४७ परावरगतिज्ञायसर्वाध्यक्षायतेनमः ॥ अविश्वायचविश्वायतद्द्रष्ट्रेविश्वहेतवे ४८ त्वंह्यस्यजन्मस्थितिसंयमान्विभोगुणैरनीहोऽकृतकालशक्तिधृक् ॥ तत्तत्स्वभावान्प्रतिबोधयस्वनःसमीक्षयामोघविहारईहसे ४९

तस्यासिद्धिरुत्पत्तिर्येनसतथातस्मै मुनयेसर्वज्ञानाय मौनशीलिने असंभावितभाषणशीलरहिताय ४७ परावरगतिज्ञायकार्यकारणस्थितिज्ञाय सर्वाध्यक्षायसर्वेषामुपरिगताय अविश्वायविश्वेभ्योजीवेभ्योन्यस्मै शरीरेषुप्रविष्टत्वाद्विश्वोजीवउदीर्यतइत्यादिस्मृतिः तात्पर्यात्पुनरुक्तमाहुः विश्वायेति जीवस्यजगदंतःपातित्वेपिचेतनत्वेनस्वातंत्र्यशंकानिवारणार्थंपृथग्जीवग्रहणं जीवस्यतदधीनत्वाद्विश्वोविष्णुरितिस्मृतः अस्योत्पत्त्यादिहेतुत्वाद्विश्वहेतुश्चकीर्तितइति ४८ प्रातिस्विकजीवाभीष्टदातृत्वात्तद्दृष्टइतिप्रपंचस्यमूलकारणंहरिरित्युक्ततत्स्पष्टयितुमाह त्वंहीति सत्यधर्मासत्यकर्माइतिश्रुतेः अमोघविहारस्त्वं अतएवानीहोक्लिष्टकर्मात्वसत्वादिगुणैरस्यजगतोजन्मादीनीहसे हियस्माद्देवस्यैषस्वभावोयमाप्तकामस्यकास्पृहेतिश्रुतेः तस्मात्तवसत्यप्रपंचस्रष्टृत्वस्वभावात् समीक्षयासम्यग्ज्ञानेननोस्मान्प्रतिबोधयस्वेत्यन्वयः यथातवजगत्स्रष्टृत्वंस्वभावस्तथास्मत्प्रतिबोधनमपिस्वभावोस्त्वित्याशय. लोकेस्वरूपशक्त्यभावाद्वरादिनामाययावान्यसहायेनवाश्रमेणकर्तृत्वंनतथातवेत्याशयेनाह अकृतेतिकालःकारणंज्ञानंवा अकृतावरादिना नान्यनिमित्तंस्वरूपमितियावत् एवंविधांशक्तिंधारयसीतिस्वरूपभूतज्ञानक्रियाशक्तिधरइत्यर्थः तदुक्तं हरेःस्वरूपशक्तिर्याकालशक्तिरुदीर्यते सदासर्वगुणात्मत्वादिति यथा स्वाधीनत्वात्सत्त्वादिगुणैःसृष्टिंकरोषितथास्वनियतदुर्गावायुभ्यांसंहारस्थितीकरोषीत्याशयेनोक्तं अकृतेति तयोरपिकालाधीनत्वेनकालशब्दवाच्यत्वादित्यर्थःतदुक्तं दुर्गाचाप्यवरातःसर्वसंहारकारित्वाद्वायुःसर्वस्यजीवनात् कालाभिमानिनावेतौदुर्गावायुश्चकीर्तिताविति ४९

विश्वायेत्यादिनाहरेर्जगदात्मकत्वमुक्तमितिमंदाशंकानिरासायस्थावराज्जंगमस्यपृथक्कृत्यत्रैविध्यकथनेनमिथोपिभेदस्तात्विकइतिदर्शनार्थंतस्यभगवत्प्रतिमात्वेनसस्त्वतःस्तवनेनहरेरतिशायितांप्रीतिर्भवतीतिभावेनाहुः तस्यैवेति यस्त्वंनमस्तुभ्यंभगवतेइत्यादिनाप्रसक्तस्तस्यतेतवैवामूस्तनवःप्रतिमास्थानीयाः शांताअशांतामूढयोनयउतेतियात्रिधाभिन्नाअमूर्रित्यर्थः त्रिलोक्याजंगमसंज्ञाहानिशेष अत्रापितारतम्यमस्तीत्याहुः शांताइतिसुखांतंसुखस्वभावमेवाप्नुवंतीतियत्तस्मात्शांतादेवाःसतामप्यवितुःतेतवप्रियाः परापूर्वेषांसख्यावृणक्तिवितर्तुराणोअपरेभिरेतीतिश्रुतिः प्रियस्यापितारतम्यविशेषद्योतकोहिशब्दः प्रियंद्विविधंअंतर्बहिश्चेति तत्रांतःप्रियाःसंतः बहिःप्रियाअसंतः अत्रापिकश्चनविशेषः संहारहेतुत्वादसंतईषदंतःप्रियाइवस्थितिहेतुत्वात्सतोविशेषातःप्रियाइत्यतोधुनेतिविशेषण तदुक्तं अंतःप्रियंबहिश्चेतिद्विधाप्रियमुदाहृतमित्यादिदेवादीनांशांतत्वादिकंसुखातंप्राप्नुयुर्यस्माद्देवाःशांताउदीरिताइत्यादिस्मृतिसिद्धं अशांताःमानुषाःप्रोक्ताःमूढयोनयोऽसुराइत्यर्थः अवनादिकर्मप्रवर्तनंचप्राणमुखेनेत्याहुः स्थातुरिति कर्मप्रवर्तनार्थंसर्वशरीरेषुस्थातुरीहतःईहचेष्टायामितिधातुः चेष्टकत्वमीहशब्दस्यप्रवृत्तिनिमित्तं अवनशब्दस्यापितदेवातईहतःप्राणस्यसकाशात्कर्मपरीप्सयाकर्मपालने

तस्यैवतेमूस्तनवस्त्रिलोक्यांशांताअशांताउतमूढयोनयः ॥ शांताःप्रियास्तेह्यधुनाऽवितुःसतांस्थातुश्चतेकर्मपरीप्सयेहतः ५० अपराधःसकृद्भर्त्रासोढव्यःस्वप्रजाकृतः ॥ क्षंतुमर्हसिशांतात्मन्मूढस्यत्वामजानतः ५१ अनुगृह्णीष्वभगवन्प्राणांस्त्यजतिपन्नगः ॥ स्त्रीणांनःसाधुशोच्यानांपतिःप्राणःप्रदीयताम् ५२ विधेहितेकिंकरीणामनुष्ठेयंतवाज्ञया ॥ यच्छ्रद्धयानुतिष्ठन्वैमुच्यतेसर्वतोभयात् ५३ ॥ श्रीशुकउवाच ॥ इत्थंसनागपत्नीभिर्भगवान्समभिष्टुतः॥मूर्छितंभग्नशिरसंविससर्जांघ्रिकुट्टनैः ५४ प्रतिलब्धेंद्रियप्राणःकालियःशनकैर्हरिम् ॥ कृच्छ्रात्समुच्छ्वसन्दीनःकृष्णंप्राहकृतांजलिः ५५ वयंखलाःसहोत्पत्त्यातामसादीर्घमन्यवः ॥ स्वभावोदुस्त्यजोनाथभूतानांयदसद्ग्रहः ५६ त्वयासृष्टमिदंविश्वंधातुर्गुणविसर्जनम् ॥ नानास्वभाववीर्यौजोयोनिबीजाशयाकृति ५७ वयंचतत्रभगवन्सर्पाजात्युरुमन्यवः ॥ कथंत्यजामस्त्वन्मायांदुस्त्यजांमोहिताःप्रभो ५८ भवान्हिकारणंतत्रसर्वज्ञजगदीश्वर ॥ अनुग्रहंनिग्रहंवामन्यसेतद्विधेहिनः ५९ श्रीशुकउवाच ॥ इत्याकर्ण्यवचःप्राहभगवान्कार्यमानुषः ॥ नात्रस्थेयंत्वयासर्पसमुद्रंयाहिमाचिरम् ६० सज्ञात्यपत्यदाराढ्योगोनृभिर्भुज्यतेनदी ॥ यएतत्संस्मरेन्मर्त्यस्तुभ्यंमदनुशासनम् ॥ कीर्तयन्नुभयोःसंध्योर्नयुष्मद्भयमाप्नुयात् ६१ योऽस्मिन्स्नात्वामदाक्रीडेदेवादींस्तर्पयेज्जलैः ॥ उपोष्यमांस्मरन्नर्चेत्सर्वपापैःप्रमुच्यते ६२

च्छयापालनंप्रवर्तनंतदिच्छयाप्राणस्यसकाशात्कर्मप्रवर्तनमिच्छातिभगवानित्यतःसमहाविभुरित्यर्थः तदुक्तं वायोःसकाशाज्जगतःप्रवृत्तिंकामयत्यजइत्यादिप्राणस्यप्राणमितिश्रुतिश्चशब्दगृहीता ५० सोढव्यःक्षंतुमर्हसीतिद्विर्वचनमादरार्थंस्वचापल्यप्रकटनार्थंच शांतानांदेवानामात्मन्स्वामिन् मूढस्येत्यस्यविवरणंत्वामजानतइति ५१ ५२ ५३ अंघ्रिकुट्टनैःअंघ्रिमर्दनैः ५४ ५५ यदसद्ग्रहोयोदुराग्रहः ५६ धातुर्हिरण्यगर्भस्यसकाशात्गुणभूतंसर्जनसृष्टिरस्यजगतः प्राधान्येनविष्णोरेषासृष्टिः विष्णुःप्रधानतः स्रष्टागुणस्रष्टाचतुर्मुखइतिवचनात् नानास्वभावाअग्नेरूर्ध्वज्वलनंवायोस्तिर्यग्गमनमित्यादिनानाविधाः स्वभावाः वीर्याणिपराक्रमादीनि ओजोवष्टंभः बीजंशुक्रादि आशयोऽभिप्रायः एषामाकृतिःस्वरूपयस्यतत् ५७ ५८ ५९ देवकार्यार्थमानुषविडंबः ६० संध्योःसंध्ययोः ६१ ममाक्रीडेक्रीडास्थाने ६२

त्वंपूर्वयस्यसुपर्णस्यभयात्नाम्नारमणकंद्वीपंहित्वाएतद्ह्रदमुपाश्रितःअथसुपर्णोमत्पादलक्षणंमत्पादलांछनमिवलांछनंयस्यसतथातंचत्वांनाद्यात् नभक्षयेत् ६३ ६४ पराध्यैरनर्घ्यत्वेनोत्तमैः ६५
६६ ६७ ६८ ॥ इतिश्रीभागवते महापुराणेविजयध्वजकृतटीकायांचतुर्दशोध्यायः ॥ १४ ॥ असमंजसंअपराधम् १ उपहार्यैःउपहारकैः गरुडादीनांपूजकैरन्यजनेनपूज्यैर्वा सर्पजनैरिहयोबलिः
मासिप्रतिमासंक्रियतइतिशेषः कीदृशःवानस्पत्यः सोमेवनस्पतिंगतेक्रियमाणः अमावास्यायांक्रियमाणइत्यर्थः यद्वा वनस्पतौक्रियमाण.सबलिःप्राड्नागानामैकमत्येनात्मरक्षणार्थंनिरूपितइ
त्यन्वयः २ आत्मनः गोपीथायगोपनायआत्मरक्षणाय ३ कद्रोरपत्यंकाद्रवेयः जातिज्ञानार्थमिदमुक्तं कदर्थीकृत्यधिकृत्य तांबलिंपूजाम् बलिशब्द.पूजार्थःस्त्रीलिंगः पूजायांस्त्रीबलिर्दै

द्वीपंरमणकंहित्वान्हदमेतदुपाश्रितः ॥ यद्भयात्ससुपर्णस्त्वांनाद्यान्मत्पादलांछनम् ६३ श्रीशुकउवाच ॥ एवमुक्तोभगवताकृष्णेनाद्भुतकर्मणा ॥ तं पूजयामासमुदानागपत्न्यश्चसादरम् ६४ दिव्यांबरस्त्रङ्मणिभिःपरार्ध्यैरपिभूषणैः ॥ दिव्यगंधानुलेपैश्चमहत्योत्पलमालया ६५ पूजयित्वाजगन्नाथंप्र साद्यगरुडध्वजम् ॥ नागराजोऽभ्यनुज्ञातःपरिक्रम्यप्रणम्यच ६६ सकलत्रसुहृत्पुत्रोद्वीपमब्धेर्जगामह ॥ तदैवसाऽमृतजलायमुनानिर्विषाभवत् ६७ अनुग्रहाद्भगवतःक्रीडामनुजरूपिणः ६८॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेकालियमर्दनोनामचतुर्दशोऽध्यायः॥ १४ ॥ राजोवाच ॥ नागालयंरमण कंकस्मात्तत्याजकालियः ॥ कृतंकिंवासुपर्णस्यतेनैकेनासमंजसम् १ श्रीशुकउवाच ॥ उपहार्यैःसर्पजनैर्मासिमासीहयोबलिः ॥ वानस्पत्योमहाबाहो नागानांप्राङ्निरूपितः २ स्वंस्वंभागंप्रयच्छंतिनागाःपर्वणिपर्वणि ॥ गोपीथायात्मनःसर्वेसुपर्णायमहात्मने ३ विषवीर्यमदाविष्टःकाद्रवेयस्तुकालियः ॥ कदर्थीकृत्यगरुडंस्वयंतंबुभुजेबलिम् ४ तच्छ्रुत्वाकुपितोराजन्भगवान्भगवत्प्रियः ॥ विजिघांसुर्महावीर्यंकालियंसमुपाद्रवत् ५ तमापतंतंतरसावि षायुधःप्रत्यभ्ययादुद्धृतनैकमस्तकः ॥ दद्भिःसुपर्णंव्यदशद्दायुधःकरालजिह्वोच्छ्वसितोग्रलोचनः ६ तंतार्क्ष्यपुत्रःसनिरस्यमन्युमान्प्रचंडवेगोमधुसू दनासनः ॥ पक्षेणसव्येनहिरण्यरोचिषाजघानकद्रूसुतमुग्रविक्रमः ७ सुपर्णपक्षाभिहतःकालियोऽतीवविह्वलः ॥ ह्रदंविवेशकालिंद्यास्तदगम्यंदुरा सदम् ८ तत्रैकदाजलचरंगरुडोभक्ष्यमीप्सितम् ॥ निवारितःसौभरिणाप्रसह्यक्षुधितोऽहरत् ९ मीनान्सुदुःखितान्दृष्ट्वादीनान्मीनपतौहते ॥ कृपया सौभरिःप्राहतत्रतत्क्षेममाचरन् १० अत्रप्रविश्यगरुडोयदिमत्स्यान्सखादति ॥ सद्यःप्राणैर्वियुज्येतसत्यमेतद्ब्रवीम्यहम् ११

त्यमेदेनाकरएवचेति ४ विजिघांसुःहंतुकामः ५ विषमेवायुधंयस्यसतथा उद्धृतनैकमस्तकःउद्धृतानेकफणः दद्भिःदंतैः व्यदशत्दंशितवान् दंताएवायुधंयस्यसतथा करालजिह्वश्चउच्छ्व
सितोग्रलोचनश्चतथा उच्छ्वसितःदीर्घश्वासोपेतः उग्रेलोचनेयस्यसतथा ६ जघानअहनत् अत्मपादैस्ताडितवानित्यर्थः ७ कालिंद्याःयमुनायाः तेनगरुडेनअगम्यंदुरासदंपश्चादीनामितिशेष ८
गरुडस्यागम्यत्वेनिमित्तमाह तत्रेति भक्ष्यतइतिभक्ष्यम् ९ तत्क्षेमंतेषांशिष्टानांक्षेमंयोग्यरक्षाम् १० खादति भक्षति प्राणवियोगमरणमाप्नोतु ११

लेलिहालेलिहानःसर्पैःछेदोभंगभयादेवमुक्तम् गरुडाद्भीत्यैवावात्सीत् सौभरेःशापातिक्रमणसमर्थेनतेनकिमर्थंन्हृदंमविरयहननंनाकारीतीयमाशंका विष्णुनाविष्णुभक्तैश्चब्रह्मशापोनुवर्त्यते ब्राह्मणानाय पीडायैवलिभिःक्षत्रियादिभिरित्यादिब्रह्मांडवचनेननिस्तुषीकर्तव्या एतद्विवक्षयावालेलिहेत्युक्तम् १२ १३ उपलभ्यदृष्ट्वा प्रमोदनिभृतात्मानःआनंदपूर्णात्मानःअभिरेभिरेआलिंगनंचक्रुः अभीत्युपसर्गात् मुख्यामुख्यभेदोद्रष्टव्यः १४ लब्धेहाःलब्धचेष्टाः पूर्वंशवप्रायाइत्यर्थः १५ १६ १७ नष्टाचलब्धाचप्रजायस्याःसातथाअश्रुकणान्बाष्पबिंदून् १८ १९ क्षुत्तृड्भ्यामुत्पन्नश्रमेणकर्शिताःअभिभवंप्राप्ताः उपकूलतःकूलसमीपे २० शुचिःपवनःतस्यबलेनोद्धूतःशुचिनाम्नोमरुतोबलेनवावृतःपरिवेष्टितः २१ निशीथेअर्धरात्रे अनंतशक्तिधृक्अमितशक्तिधृक् २२ २३ २४ २५ २६ २७ इ



तत्कालियःपरंवेदनान्यःकश्चित्सलेलिहा ॥ अवात्सीद्गरुडाद्भीतःकृष्णेनचविवासितः १२ कृष्णंह्रदाद्विनिष्क्रांतंदिव्यस्रग्गंधमंडितम् ॥ महामणिगणाकीर्णंजांबूनदपरिष्कृतम् १३ उपलभ्योत्थिताःसर्वेलब्धप्राणाइवप्रजाः ॥ प्रमोदनिभृतात्मानोगोपाःप्रीत्याभिरेभिरे १४ यशोदारोहिणीनंदोगोपागोप्यश्चकौरव ॥ कृष्णंसमेत्यलब्धेहाआसन्लब्धमनोरथाः १५ रामश्चाच्युतमालिंग्यजहासास्यानुभाववित् ॥ नरागावोवृषावत्सालेभिरेपरमांमुदम् १६ नंदंविप्राःसमागम्यगुरवःसकलत्रकाः ॥ ऊचुस्तेकालियग्रस्तोदिष्ट्यामुक्तस्तवात्मजः १७ यशोदाचमहाभागानष्टलब्धप्रजासती १८ परिष्वज्यांकमारोप्यमुमोचाश्रुकणान्बहून् १८ ततश्चास्तंगतेभानौकृष्णोवासमकल्पयत् ॥ सरामःसहगोपालैर्मात्रापित्रासगोधनैः १९ तांरात्रिंतत्रराजेंद्रक्षुत्तृड्भ्यांश्रमकर्शिताः ॥ ऊषुर्व्रजौकसोगावःकालिंद्याउपकूलतः २० एतस्मिन्नेवकालेतुव्रजेकौरवसत्तम ॥ घोरःशुचिबलोद्भूतोदावाग्निःसर्वतोवृतः २१ सुप्तान्निशीथआवृत्यप्रदग्धुमुपचक्रमे ॥ ततउत्थायसंभ्रांतादह्यमानाव्रजौकसः २२ कृष्णंययुस्तेशरणंमायामनुजमीश्वरम् ॥ कृष्णकृष्णमहाभागहेरामामितविक्रम २३ एषघोरतमोवह्निस्तावकान्ग्रसतेहिनः ॥ सुदुस्तरान्नःस्वान्पाहिकालाग्नेःसुहृदःप्रभो २४ नशक्नुमस्त्वच्चरणंसंत्यक्तुमकुतोभयम् ॥ इत्थंस्वजनवैक्लव्यंनिरीक्ष्यजगदीश्वरः २५ तमग्निमपिबत्तीव्रमनंतोऽनंतशक्तिधृक् ॥ अथकृष्णःपरिवृतोज्ञातिभिर्मुदितात्मभिः २६ अनुगीयमानोन्यविशद्व्रजंगोकुलमंडितम् २७ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपंचदशोऽध्यायः ॥ १५ ॥ श्रीशुकउवाच ॥ व्रजेविक्रीडतोरेवंगोपालच्छद्मरूपिणोः ॥ ग्रीष्मोनामर्तुरभवन्नातिप्रेयाञ्छरीरिणः १ सचवृंदावनगुणैर्वसंतइवलक्षितः ॥ यत्रास्तेभगवान्साक्षाद्रामेणसहकेशवः २ यत्रनिर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम् ॥ शश्वत्तच्छीकरर्जुष्टद्रुमापिप्पलमंडितम् ३

तिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांपंचदशोऽध्यायः ॥ १५ ॥ हरेर्भूभारहरणस्ययदंतरंगंकर्तुमवतीर्णंशेषेणतद्वक्तुमुपक्रमते व्रजइत्यादिना गोपालच्छद्मरूपिणोःगोपालावितिकपटशब्दिनोःरूपंशब्देपशौग्रंथेशोकेवृत्तौहितादिषु सौंदर्येचस्वभावेचेतियादवः नातिप्रेयान्नातिप्रियतरः धर्महेतुत्वात् १ २ वसंततुल्यत्वेनिमित्तमाह यत्रेति यत्रवृंदावने निर्झरस्यनिर्ह्रादेनशब्देननिवृत्तस्वनाःअतिलब्धस्वराःझिल्लिकाःकीटविशेषा यस्मिन्तत्तथा तस्यनिर्झरस्यसीकरैः वायुशीर्णवारिबिंदुभिः ३

सरित्नदी सरोदेवखातः एतयोः प्रस्रवणंनिर्झरं ऊर्मिस्तरंगः एतत्संबंधिवायुनाच कह्लारंसौगंधिकं कंजंपद्मं उत्पलंनीलोत्पलं एषांरेणुभिःपरागैः हारिणामनोहरेण यद्वा रेणूनांहारोहरणअस्यास्तीतिहारीतेन निदाघवन्ह्यर्केभ्योभवउत्पत्तिर्यस्यसतथादवस्तापःदवपरितापइतिधातुः अच्प्रत्ययेएतत्सिद्ध्यति वनाग्निरित्यर्थोगीकारेवह्नीत्येतद्वयर्थंभवति अतिशाद्वलेकोमलतरतृणोपेते ४ विषवदुल्बणाःचंडांशुकराःसूर्यरश्मयःयत्रशाद्वलितंबालतृणनिबिडंभुवोगतंरसंजलंननिगृह्णते किंकारणमत्राह अगाधेति अगाधंतोयंयस्याःसाअगाधतोया साचन्ह्रदिनीनदीतस्यास्तटरुहै तीरजातैर्वृक्षैःसमततःद्रवंत्याःस्यंदमानायाःपुलिन्याःविभकनद्याःशाखानद्याइत्यर्थः पुलिनैर्निमित्तैःसर्वदाद्रवीभूतस्थलत्वादित्यर्थः ५ ६ विरणयन्विविधैःस्वरैर्ध्वनयन्कृष्णःतद्वनमाविशदित्यन्वयः ७ धातुर्गैरिकः ८ ९ १० भ्रामणैःमंडलाकारेणतिर्यक्चैर्लंघनैर्देशपदान्युत्पतनैःक्षेपैःआक्षेपवचनैःपाषाणक्षेपणैर्वा आस्फोटनैःएकंहस्तंद्विगुणीकृत्येतरेणपाणिनास्फालनानिआस्फोटनानितैःपरस्परैःपाणिनापाणिमवलं

सरित्सरःप्रस्रवणोर्मिवायुनाकह्लारकंजोत्पलरेणुहारिणा ॥ नविद्यतेयत्रवनौकसांदवोनिदाघवह्न्यर्कभवोतिशाद्वले ४ अगाधतोयन्ह्रदिनीतटरुहैर्द्रवत्पुलिन्याःपुलिनैःसमंततः ॥ नयत्रचंडांशुकराविषोल्बणाभुवोरसंशाद्वलितंनिगृह्णते ५ श्रीमद्वनंकुसुमितंनदच्चित्रमृगद्विजम् ॥ गायन्मयूरभ्रमरंकूजत्कोकिलसारसम् ६ क्रीडिष्यमाणस्तत्कृष्णोभगवान्बलसंयुतः ॥ वेणुंविरणयन्गोपैर्गोधनैःसंवृतोऽविशत् ७ प्रवालबर्हस्तबकस्रग्धातुकृतभूषणाः ॥ रामकृष्णादयोगोपानन्नृतुर्युयुधुर्जगुः ८ कृष्णस्यनृत्यतःकेचिज्जगुःकेचिदवादयन् ॥ वेणुपाणितलैःशृंगैःप्रशशंसुरथापरे ९ गोपजातिप्रतिच्छन्नादेवागोपालरूपिणः ॥ ईडिरेकृष्णरामौचनटाइवनटंनृप १० भ्रामणैर्लंघनैःक्षेपैरास्फोटनविकर्षणैः ॥ चिक्रीडितुर्नियुद्धेनकाकपक्षधरावुभौ ११ क्वचिन्नृत्यत्सुचान्येषुगायकौवादकौस्वयम् ॥ शशंसतुर्महाराजसाधुसाध्वितिवादिनौ १२ क्वचिद्बिल्वैःक्वचित्कुंभैःक्वचामलकमुष्टिभिः ॥ अस्पृश्यनेत्रबंधाद्यैःक्वचिन्मृगखगेहया १३ क्वचिच्चदर्दुरप्लावैर्विविधैरुपहासकैः ॥ क्वचित्तथांदोलिकयाकर्हिचिन्नृपचेष्टया १४ एवंतौलोकसिद्धाभिःक्रीडाभिश्चेरतुर्वने ॥ नद्यद्रिद्रोणिकुंजेषुपुलिनेषुसरस्सुच १५ पशूंश्चारयतोर्गोपैस्तद्वनेरामकृष्णयोः ॥ गोपरूपीप्रलंबोऽगादसुरस्तज्जिघांसया १६ तंविद्वानपिदाशार्होभगवान्सर्वदर्शनः ॥ अन्वमोदततत्सख्यंवधंतस्यविचिंतयन् १७ तत्रोपहूयगोपालान्कृष्णःप्राहविहारवित् ॥ हेगोपाविहरिष्यामोद्वंद्वीभूययथायथम् १८ तत्रचक्रुःपरिवृढौगोपारामजनार्दनौ ॥ कृष्णसंघट्टिनःकेचिद्रोपारामस्यचापरे १९

द्याकर्षणम् विकर्षणनियुद्धेनमल्लयुद्धेन काकपक्षधरौअकृतचौलकेशधारिणौ त्रिवृत्कृतवेणीधारिणावित्यर्थः ११ १२ कुंभैःकुम्भफलैःवर्तुलाकारैःकुंभोलूखलकेक्षीबेकौशिकोगुग्गुलःपुमानित्यमरः पृष्ठतोधावमानस्यप्रष्टुमशक्यंत्वंमांस्पृशेत्युक्त्वापुरतोलीलयाधावतीतियत्तदिदमस्पृश्यक्रीडनम् वस्त्रेणनेत्रमाच्छाद्यमास्पृशोतिनिगद्यंतमुक्त्वापुरतोभ्रमणनेत्रबंधलीला दूरातरप्रदेशेस्थितवृक्षलक्षीकृत्योभाभ्यांप्राग्वृक्षस्यस्पर्शोविजयीस्यादितीयंक्रीडाधावनसंज्ञेत्यादिकमादिपदग्राह्यमितम् १३ दर्दुरप्लावैःमंडूकवदुत्पतनैः १४ द्रोणीनिम्नसानुस्थलम् अंतर्लतानिबिडोह्रस्वादिकुजः निकुंजकुंजौवाक्लीबेलतादिपिहितोदरेइत्यमरः १५ १६ १७ यस्ययोविहारस्तंवेत्तीति १८ परिवृढौनायकौ कृष्णसंघट्टिनःकृष्णपक्षीयाः १९

वाह्यवाहकत्वंविशदयति तत्रेति उवाहकृष्णोभगवानित्यत्रव्यत्ययेननेतव्यः श्रीदामाकृष्णमुवाहेति कुतएवंकिल्प्यते हरिवंशादिवचनात् तथाप्ययंदुराग्रहइतिनवक्तव्यं बहुमानविरोधेतुव्य त्यासःशब्दतोर्थतइत्यादिनिर्णयवचनात् २० २१ २२ २३ प्रलंबःकृष्णविहायराममवहत्तत्रकिकारणमत्राह अविषह्यमिति २४ धरणिधरेंद्र.एवंतराजस्तद्वद्गौरवंअतिभारवत्त्वंय स्यसतथातम् पुरटपरिच्छदःस्वर्णालंकारः तडिताद्युमताआदित्येनचसंयुक्त·तडिद्युमान् उडुपतिश्चंद्र·तद्वानंबुदइतीयमाशंकाअभूतोपमा यद्वा तडिद्वान्द्युमान्तडितायुक्तोमेघरधानेप्रलंब तडित्स्थाने पुरटपरिच्छदः चंद्रस्थानीयोरामः २५ अवरेचरमित्यलुक् २६ अथकृष्णस्तवानंतरआगतस्मृति. उपात्तमूलस्मरणः वज्ररंहसावज्रवेगेन २७ महारवंसमीरयनव्यसुःगतप्राणः

आचेरुर्विविधाःक्रीडावाह्यवाहकलक्षणाः ॥ तत्रारोहंतिजेतारोवहंतिचपराजिताः २० वहंतोवाह्यमानाश्चचारयंतश्चगोधनम् ॥ भांडीरकंनामवटंजग्मुः कृष्णपुरोगमाः २१ रामसंघट्टिनोयेतुश्रीदामवृषभादयः ॥ क्रीडायांजयिनस्तांस्तानूहुःकृष्णादयोनृप २२ उवाहकृष्णोभगवान्श्रीदामानंपरा जितः ॥ वृषभंभद्रसेनस्तुप्रलंबोरोहिणीसुतम् २३ अविषह्यंमन्यमानःकृष्णंदानवपुंगवः ॥ वहन्द्रुततरंप्रागादवरोहणतःपरम् २४ तमुद्वहन्धरणि धरेंद्रगौरवंमहासुरोविगतरयोनिजंवपुः ॥ सआस्थितःपुरटपरिच्छदोबभौतडिद्द्युमानुडुपतिमानिवांबुदः २५ निरीक्ष्यतद्वपुरलमंबरेचरत्प्रदीप्तदृग्भ्रु कुटितटोग्रदंष्ट्रकम् ॥ ज्वलच्छिखंकटककिरीटकुंडलत्विषाद्भुतंहलधरईषदत्रसत् २६ अथागतस्मृतिरभयोरिपुंबलोविहायसार्थमिवहरंतमात्मनः ॥ रुषाहनच्छिरसिदृढेनमुष्टिनासुराधिपोगिरिमिववज्ररंहसा २७ सआहतःसपदिविशीर्णशीर्षकोमुखाद्वमन्रुधिरमपस्मृतोऽसुरः ॥ महारवंव्यसुरपतत्समी रयन्गिरिर्यथामघवतआयुधाहतः २८ दृष्ट्वाप्रलंबंनिहतंबलेनबलशालिना ॥ गोपाःसुविस्मिताआसन्साधुसाध्विति राविणः २९ आशिषोऽभिगृणं तस्तेप्रशशंसुस्तदर्हणम् ॥ प्रेत्यागतमिवालिंग्यप्रेमविह्वलचेतसः ३० पापेप्रलंबेनिहतेदेवाःपरमनिर्वृताः ॥ अभ्यवर्षन्बलंमाल्यैःशशंसुःसाधुसाध्वि ति ३१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेप्रलंबासुरवधोनामषोडशोऽध्यायः ॥ १६ ॥ श्रीशुकउवाच ॥ क्रीडासक्तेषुगोपेषुतद्गावोदूरचारिणीः ॥ स्वैरंचरंत्योविविशुस्तृणलोभेनगह्वरम् १ अजागावोमहिष्यश्चनिर्विशंत्योवनाद्वनम् ॥ मुंजाटवींनिविविशुःक्रंदंत्योदावतर्षिताः २ तेऽपश्यंतःपशून्गो पाःकृष्णरामादयस्तदा ॥ जातानुतापानविदुर्विचिन्वंतोगवांगतिम् ३ तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरंकितैर्गवाम् ॥ मार्गमन्वगमन्सर्वेनष्टजीवाविचेतसः ४

२८ बलशालिनारामेण राविणः वादिनः २९ ३० माल्यैःपुष्पैः ३१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांषोडशोऽध्याय. ॥ १६ ॥ स्वभक्तजनसंसारविनाशनंहरेरेवसु शकंनान्यस्येतिनिदर्शनायदावाग्निपानप्रकटितमाहात्म्यमस्यवक्तुमुपक्रमतेऽस्मिन्नध्याये तेषांगोपानांगावःदूरचारिणीःदूरगामिन्यःस्वैरंस्वेच्छयागह्वरंगंभीरकक्षं १ मुंजाटवींइषिकाटवींशराटवीं वा उभयंचप्रचुरंतत्रेत्यर्थः शरोमुंजइषीकेतिइतिहलायुधः दावेनतापेनतर्षिताःजलंपातुकामाः २ अपश्यंतः अनुतापःपश्चात्तापः विचिन्वतःअन्वेषमाणाः ३ तासांगवांखुरैःदद्भिःदंतैःछिन्नै रंकितैःभूतलैः नष्टजीवाःजीवन्मृताः विचेतसःइतोगताःअत्रगताइतिविविधबुद्धयः वैदैवेगतचेतोयेपांतेतथा येदैवमेवचेतसावचसाचशरणंगच्छंतइत्यर्थः ४

भ्रष्टमार्गैमार्यैर्हित्वेतस्ततोगतं ततोमुंजाटव्याःसंन्यवर्त्तयन्गतमार्गमेवागंतुकामाअभवन्नित्यर्थः ५ ततःकृष्णेनकिंकारीतितत्राह ताइति भविनेदुःमत्याक्रोशंचक्रुः ६ संसारस्तुसदादुःखाकरइतिदर्शनार्थंएकदुःखशमनानंतरं दुःखांतरंवदति ततइति ततःगोदर्शनानंतरं धूमकेतुःअग्निःसारथिनावायुनासमीरितःप्रेरितोवर्धितः उल्बणोल्मुकैःक्रूरतरज्वालाभिःस्थिरजंगमान् विलेलिहानःविशेषेणास्वादयन् ७ प्रपन्नाःशरणमितिशेषः ८ ९ नूनमिदानीं १० ११ १२ १३ योगमायानुभावितंस्वरूपसामर्थ्येनप्रभावितं अमरंजरामरणशून्यंनारायणं मेनिरे १४ सायाह्नेसंध्याकाले १५ यथायावान्युगशतंकालः यासांगोपीनायेनगोविंददर्शनेनविनाक्षणःकालस्तावानभवत् १६ किंतत्कर्मेतितत्राह दावाग्नेरिति चशब्दःसमुच्चये दावाग्नि

मुंजाटव्यांभ्रष्टमार्गंक्रंदमानाःस्वगोधनम् ॥ अप्राप्यतृषितायातास्ततस्तेसंन्यवर्तयन् ५ ताआहूताभगवतामेघगंभीरयागिरा ॥ स्वनाम्नांनिनदंश्रुत्वाप्रतिनेदुःप्रहर्षिताः ६ ततःसमंताद्वनधूमकेतुर्यदृच्छयाभूत्क्षयकृद्वनौकसाम् ॥ समीरितःसारथिनोल्बणोल्मुकैर्विलेलिहानःस्थिरजंगमान्महान् ७ तमापतंतंपरितोदवाग्निंगोपाश्चगावःप्रसमीक्ष्यभीताः ॥ ऊचुःस्मकृष्णंसबलंप्रपन्नायथाहरिंमृत्युभयार्दिताजनाः ८ कृष्णकृष्णमहावीर्यहेरामामोघविक्रम ॥ दावाग्निनादह्यमानान्प्रपन्नांस्त्रातुमर्हथः ९ नूनंत्वद्बांधवाःकृष्णनचार्हंत्यवसीदितुम् ॥ वयंहिसर्वधर्मज्ञत्वन्नाथास्त्वत्परायणाः १० ॥ श्रीशुकउवाच ॥ वचोनिशम्यकृपणंबंधूनांभगवान्हरिः ॥ निमीलयतमाभैष्टलोचनानीत्यभाषत ११ तथेतिमीलिताक्षेषुभगवानग्निमुल्बणम् ॥ पीत्वामुखेनतान्कृच्छ्राद्योगाधीशोव्यमोचयत् १२ ततश्चतेऽक्षिण्युन्मील्यपुनर्भांडीरमाश्रिताः ॥ निशम्यविस्मिताआसन्नात्मानंगाश्चमोचिताः १३ कृष्णस्ययोगवीर्यंतद्योगमायानुभावितम् ॥ दावाग्नेरात्मनःक्षेमंवीक्ष्यतेमेनिरेऽमरम् १४ गाःसंनिवर्त्यसायाह्नेसहरामोजनार्दनः ॥ वेणुंविरणयन्गोष्ठमगाद्गोपैरभिष्टुतः १५ गोपीनांपरमानंदआसीद्गोविंददर्शने ॥ क्षणंयथायुगशतंयासांयेनविनाभवत् १६ ॥ श्रीशुकउवाच ॥ तयोस्तदद्भुतंकर्मदावाग्नेर्मोक्षमात्मनः ॥ गोपाःस्त्रीभ्यःसमाचख्युःप्रलंबवधमेवच १७ गोपवृद्धाश्चगोप्यश्चतदुपाकर्ण्यविस्मिताः ॥ मेनिरेदेवप्रवरौकृष्णरामौव्रजंगतौ १८ इति श्रीभागवतेमहा०दश०सप्तदशोऽध्यायः ॥ १७ ॥ श्रीशुकउवाच ॥ ततःप्रावर्ततप्रावृट्सर्वसत्त्वसमुद्भवा ॥ विद्योतमानपरिधिर्विस्फूर्जितनभस्तला १ सांद्रनीलांबुदैर्व्योमसविद्युत्स्तनयित्नुभिः ॥ अस्पष्टज्योतिराच्छन्नंब्रह्मेवसगुणंबभौ २

मोक्षंप्रलंबवधंचेतिद्वयमेवेत्यर्थः १७ एकश्चशब्दःसमाहारे चोन्वाचयेसमाहारइतियादवः व्रजंगतौकृष्णरामौदेवप्रवरौमेनिरेइत्यन्वयः १८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ नारायणभक्तिवैशद्यावैशद्यदृष्टांतत्वेनप्रावृड्ऋतुंवर्णयत्यस्मिन्नध्याये ततःग्रीष्मर्त्वनंतरं सर्वेषासत्वानास्थावरजंगमलक्षणानांपदार्थानांसमुद्भवोयस्यांसातथा सत्वं द्रव्येसत्तास्वभावयोरितियादवः विद्योतमाना. तडिदंतरेप्रकाशमानाः परिधयःपरिवेषायस्यांसातथा विस्फूर्जितंअशनिगर्जनोपेतंनभस्तलंयस्याएवंविधाप्रावृट्प्रावर्ततेत्यन्वयः १ प्रावृट्पातंदर्शयति सांद्रेति जलेनसांद्रनीलांबुदैराच्छन्नंव्योमनभोबभौ विद्युतास्तनयित्नुनागर्जितेनसहितैः अतएवास्पष्टसूर्यज्योतिः परायणज्योतिरेकंतपंतामितिश्रुतिःकथमिदसगुणचतुर्मुखाख्यब्रह्मेव २

अष्टौमासानितिद्वितीयासप्तम्यर्थेकालाध्वनोरत्यंतसंयोगेतिसूत्रात् संवत्सरमधीते क्रोशंकुटिलानदीतिप्रयोगः उदमयंजलात्मकंवसुवस्तुभूम्याविद्यमानं स्वगोभिःस्वरश्मिभिःपीतंताभिरेवमोकुमार ब्धवान्पर्जन्योगर्जन्मेघः अभिमन्यमानेनाभिमानीसविताल्लक्ष्यते पर्जन्योगर्जदभ्रेभ्रध्वनिशक्रेब्वयंयेत्रिकइति स्वगोभिरित्युक्त्यासवितेतिगम्यते अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्या ज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइतिच ३ प्रचंडश्वसनवेपिताःकंपिताः जीवनंजीवनसाधन करुणयतीतिकरुणाः यद्वा कृष्णस्यकरुणाइव अनेनभक्तिसामग्रीमताज्ञानानुवर्षतिकृष्णकटाक्षाइति सूचितंभवति ४ ग्रीष्मेतमःकृशासूर्यतपनेनकार्श्यंगता देवेनसवित्रामीढासेचिता वर्षीयसीवृद्धाअपिवृद्धिंगता काइवकाम्यतपसःपुंसःतनुस्तत्फलकाम्यतपःफलप्राप्यसपदावर्धते अनेनप्रवृ त्तिप्रकारमार्गोदर्शितः ५ निशामुखेषुसंध्यासुसूर्यादिग्रहाःनभांति पापेनकर्मणा अनेनदुर्जनवृद्ध्यासज्जनाभिभवोदर्शितः ६ पर्जन्यनिनदंमंदगर्जन्मघनाद प्राक्पूर्वं तूष्णीशयानाः मंडूकाः नियमोनाममौनेनजपादिकस्तस्यात्ययेअवसानेवेदाध्ययनशीलाभवंति अनेनविष्ण्वनुग्रहमाकाक्षमाणैःकालोवंध्योनकर्तव्यइतिदर्शितम् ७ ग्रीष्मेशुष्यतीःशोषंगच्छत्यःक्षुद्रनद्यःफल्गुजलाः अनुग्रीष्मानंतरंवर्षासुउत्पथवाहिन्यःजलाभिवृद्ध्यातीरमुद्रिच्यस्यंदमानाबभूवुः अस्वतंत्रस्यविषयरागादिवशंगतस्यपुसोदेहोवनितादिभोगेनवर्धते अनेनरजोगुणस्वभावःसूचितः ८ हरिभिः

**अष्टौमासान्निपीतंयद्भूम्याश्चोदमयंवसु ॥ स्वगोभिर्मोक्तुमारेभेपर्जन्यःकालआगते ३ तडित्वंतोमहामेघाश्चंडश्वसनवेपिताः ॥ प्राणिनांजीवनंह्यंबुमुमु चुःकरुणाइव ४ तपःकृशादेवमीढाआसीद्वर्षीयसीमही ॥ तथैवकाम्यतपसस्तनुःसंप्राप्यतत्फलम् ५ निशामुखेषुखद्योतास्तमसाभांतिनग्रहाः ॥ य थापापेनपाखंडानहिवेदाःकलौयुगे ६ श्रुत्वापर्जन्यनिनदंमंडूकाव्यसृजन्गिरः ॥ तूष्णींशयानाःप्राग्यद्वद्ब्राह्मणानियमात्यये ७ आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः ॥ पुंसोयथाऽस्वतंत्रस्यदेहोद्रविणसंपदः ८ हरिताहरिभिःशष्पैरिंद्रगोपैश्चलोहिता ॥ उच्छिलींध्रकृतच्छायानृणांश्रीरिवभूरभू त् ९ क्षेत्राणिसस्यसंपद्भिःकर्षकाणांमुदंददुः ॥ मानिनामनुतापंवाविपत्तिंतदजानताम् १० जलस्थलौकसःसर्वेनववारिनिषेवया ॥ अबिभ्रन्रुचिरंरू पंयथाहरिनिषेवया ११**

श्यामैःशष्पैःबालतृणैःहरिताश्यामला इंद्रगोपैःआषाढसमयेउत्पद्यमानैःजपाकुसुमवर्णैः कृमिविशेषैर्लोहितारक्ताच उत्कृष्टैःउत्पलैःशिलींध्रैःगुल्मविशेषपुष्पैःछत्राकैर्वा कृतच्छायाकृतशोभा भूर्नृणां श्रीरिवसंपदिवबहुविधाभूदित्यन्वयः अनेनभूमिवदेकएवचेतनोगुणविकारेणनानास्वभावमापन्नइवप्रतीयतइति संसारस्यासारत्वज्ञानेनहेयत्वेनहरौभक्तिः कर्तव्येतिसूच्यते ९ कर्षकाणामुल्ले खनादिक्रिययावर्तमानानांक्षेत्राणिकेदाराः सस्यानांसंपद्भिःफलोद्रेकाऽभिमुखलक्षणाभिर्मुदंददुः वाशब्दश्चार्थे तदजानतांकृषिक्रियाविशेषमजानतांमानिनां कृष्याद्यभिमानवतांपुंसातान्येवक्षेत्राणि अतिवृष्ट्यनावृष्टिमेदुरसामर्थ्याद्यभावादिनासस्यनाशेनविपत्तिमनुतापंचददुः पुनरुत्पत्तिनाशेनबीजंनष्टमित्यनुतापं इंद्रियाणिविषयजालादाकृष्यहरिचरणारविंदएवमनोनिदधतांक्षेत्राणिपुण्यस्थाना निसस्यसंपद्भिःज्ञानसमुद्रेकैःमुदंददति तान्येवपुण्यस्थानानितदजानतांस्नानादिक्रियाविशेषमबुध्यमानानांमानिनामहंकारिणापुंसांअयोग्यानांविपत्तिंदुःखलक्षणा बहुलवित्तव्ययेननकिमपि फलंप्राप्तमित्यनुतापंचददतीत्यतोमुमुक्षुणास्वयंविचक्षणेभ्योवाश्रुत्वाज्ञात्वाहरिचरणसरोजेभक्तिःकर्तव्येतिसूचितम् १० जलौकसःपातालवासिनः स्थलौकसःभूलोकवासिनः किंच सर्वेअंतरिक्षादिलो कवासिनः सर्वेषांसंसारदुःखंनिवारयतीतिवारिज्ञानंनववनिर्दोषंवारितस्यनितरांसेवयाऽभ्यासलक्षणयारुचिरंनिर्दोषंरूपमबिभ्रन्बिभ्रति कथंकारंजातया यथा यथावद्धरिनिषेवयाजातया ११

अपक्कयोगिनः अपक्कःपरिपाकमप्राप्तःयोगोस्यास्तीत्यपक्कयोगीतस्य गुणयुक्त्वंगुणयुक् यद्वा गुणेषुविषयेषुयुंक्तइति अतएवकामार्तं १२ नविव्यथुःनविलीनाबभूवुःकुतःगिरयःगिरणो द्रिरणसमर्थत्वाद्व्यथाभावमात्रेनिदर्शनम् नतुबुद्धिमत्त्वविवक्षायाम अनेनसर्वसहनशक्तिर्हरिभक्तानामेवेतिदर्शितम् १३ असंश्रिताजनैरनाक्रांताः अनेनसच्छास्त्रंनिरंतरमभ्यसनीयंज्ञानो त्पत्तयेइतिव्यतिरेकनिदर्शनम् १४ चलसौहृदाश्चंचलस्वभावाः विद्युतःलोकोपकारित्वाल्लोकबंधुषुमेघेषुस्थैर्यंस्थिरास्थितिनचक्रुःनापुरित्यन्वयः कामिन्यःगुणिषुत्रिविधेषुपुरुषेषुइव यथा स्थैर्यंनकुर्वंतितथा विद्युद्वच्चंचलभक्तिर्नकर्त्तव्या किंतुपूर्ववत्स्थिराइतिभावः चलसौहृदाःचलस्नेहाःमानुषस्वभावोदर्शितइतिवा १५ गुणिनिशब्दगुणोपेते नीलिमगुणयुक्तेवा वियतिमहेंद्रस्यावि र्भवमानंनिर्गुणंज्यारहितंधनुःअभात्भाति कथमिव गुणव्यतिकरेजगत्सर्जनेव्यक्तेप्रवृत्तेपुरुषोनारायणोयथागुणवान्सत्वादिगुणैःप्रवर्त्तमानोभाति सृष्टेःपूर्वंनिर्गुणःसत्वादिगुणप्रवृत्तिशून्यःगुणवान् प्रशस्तज्ञानानंदादिगुणपूर्णोवा निर्गुणः देहरहितः गुणव्यतिकरेगुणवान्देहवान्पुरुषोहिरण्यगर्भोयथेतिवा १६ स्वयाज्योत्स्नयाराजितैःसंध्यारागंप्राप्तैर्घनैश्छन्नउडुपश्चंद्रः नरराजस्वरूपाभिव्यक्ति नाप स्वभासास्वयंप्रकाशज्ञानेनभासितयाऽभिव्यक्तया अहमत्याऽहंकाराख्यया पुरुषःसंसारीयथाभिव्यक्तस्वरूपोनभवति भगवत्प्रसादानुगृहीतज्ञानलक्षणप्रकाशेनाभिव्यक्तरूपःपुरुषःस्याद्यथा

सरिद्भिःसंगतःसिंधुश्चुक्षोभश्वसनोर्मिमान् ॥ अपक्कयोगिनश्चित्तंकामार्तंगुणयुग्यथा १२ गिरयोवर्षधाराभिर्हन्यमानानविव्यथुः ॥ अभिभूयमानाव्य सनैर्यथाधोक्षजचेतसः १३ मार्गाबभूवुःसंदिग्धास्तृणैश्छन्नाअसंश्रिताः ॥ नाभ्यस्यमानाःश्रुतयोद्विजैःकालहताइव १४ लोकबंधुषुमेघेषुविद्युतश्चल सौहृदाः ॥ स्थैर्यंनचक्रुःकामिन्यःपुरुषेषुगुणिष्विव १५ धनुर्वियतिमाहेंद्रंनिर्गुणंचगुणिन्यभात् ॥ व्यक्तेगुणव्यतिकरेगुणवान्पुरुषोयथा १६ नरराजो डुपश्छन्नःस्वज्योत्स्नाराजितैर्घनैः ॥ अहंमत्याभासितयास्वभासापुरुषोयथा १७ मेघागमोत्सवाहृष्टाःप्रत्यनंदञ्छिखंडिनः ॥ गृहेषुतप्तानिर्विण्णायथा च्युतजनागमे १८ पीत्वापःपादपाःपद्भिरासन्नात्ममूर्तयः ॥ प्राक्क्षामास्तपसाश्रांतायथाकामानुसेवया १९ सरःस्वशांतरोधस्सुन्यूषुरंगापिसारसाः गृहेष्वशांतकृत्येषुग्राम्याइवदुराशयाः २० जलौघैर्निरभिद्यंतसेतवोवर्षतीश्वरे ॥ पाखंडवामशैवाद्यैर्वेदमार्गाःकलौयुगे २१

तथाशरदादिलक्षणप्रकाशेनप्रकाशितमंडलश्चंद्रइतिसूचितंभवति १७ शिखंडिनोमयूराः मेघानामागमएवोत्सवः तेनहृष्टाः रोमांचत्वंप्राप्ताः कुटुंबभरणादिनातप्ताः सज्जनदर्शनाभावाग्निनावा अतएवनिर्विण्णाःविरक्ताःसंसारहेयनुद्धियुक्ताः १८ पद्भिर्मूलैः फलैःपुष्पैःनम्रात्ममूर्तयः शाखोपशाखाभिर्नतस्वरूपाःप्राग्ग्रीष्मेतपसातपोमासोर्जिततापेनक्षामाःकृशाः यथाकामानामनुसेव याजातेनश्रमेणश्रांताःइंद्रियदौर्बल्यमाप्ताः प्राक्कुटुंबव्यवस्थायांक्षामाः पादेनग्रासेनआत्मानंपांतिरक्षंतीतिपादपाःतपस्विनःगतिसाधनत्वंत्पद्भिः शास्त्रैःअपःपुरुषार्थावाप्तिहेतुत्वात्ज्ञानरसान्पीत्वा स्वाचनप्रावरुद्धावशीकृतात्मनःपरमात्मनोमूर्तिर्विग्रहविशेषोयैस्तेतथेतिभावः यद्वाप्राक्क्षामावनिताद्यभावेनतपसाकामाग्नितापेनश्रांताजनाः कामानुसेवया पश्चादेववनितादिलाभेनानिरंतरकामभो गेनपुत्रतत्पुत्रपुष्पफलादिनानम्रात्ममूर्तयः परायणानिजशरीरायथाभवंतितथेति १९ अंगहेपरीक्षित् सारसाश्चक्रवाकाःअशांतानिजलैःपूर्णानिरोधांसितीराणियेषांतानितथा तेषुसरःस्वपि ऊषुर्हिजलप्रवाहाभिभूततीरवासस्याशक्यत्वेपितत्रैवोषुरित्यर्थः दुराशयाःग्राम्याःप्राकृतजनाःअशांतकृत्येषुअनुपरतकर्तव्येषुगृहेष्ववयथावसंति अनेनानित्यससारिस्वभावोदर्शितः २० पाखंडादिमतज्ञा नैनरकसाधकमितिज्ञातव्यम् २१

वायुभिर्नुन्नाःप्रेरिताः अमृतंजलंद्विजैरीरिताःप्रेरिताः विट्पतयोराजानःविशःप्रजाउद्दिश्यकालेकालेकालगुणंज्ञात्वाऽमृतंहेमाविमुंचंति प्रयच्छंति अमृतंव्योम्निदेवान्नेयज्ञशेषेरसायने अथाचितेजलेदु ग्धेमोक्षेस्नेहेस्त्रिगोरसइतियादवः यद्वाषष्ठमंशःइतिब्राह्मणोक्तं विशोवैश्याविशपतिभ्योराजभ्यःयथाकालममृतंकरात्मकंधनंददतीति २२ वर्षिष्ठंप्रभूतवर्षोपेतं २३ स्नुतस्तनीःक्षरितस्तन्यः २४ वनौकसोगावःमृगादयोवागुहाःददृशुरित्यन्वयः कथंभूताःप्रमुदिताःप्रकृष्टानंदाः वनेराजीराजनंयासांताःवनराज्यःमधुच्युतःमधुवन्मधुरक्षीरंच्यवतीतिमधुच्युतः गंभीरश्चासौसन्नादश्चगभीरसन्नादःते नसन्नादेनसहवर्तमानः यद्वावृष्ट्यभावसमयेमधुच्युतः वनराजीर्वनपंक्तीः ददृशुःवृष्टौसत्यांगुहाददृशुरिति वनौकसःकिरातावागिरेर्हेतोःसन्नादाराक्षसाःसन्नादाः भावप्रधानोनिर्देशःनष्टराक्षसत्वेन नादसहिताः २५ अभिवर्षतिसतिवनस्पतिकोडेगुहायांचैवनिर्विशन्उपभुंजानः २६ सभोजनीयैःसहभोक्तव्यैः २७ २८ आत्मशक्त्युपबृंहितांसंवर्धितांम् २९ व्यभ्राविगतमेघा स्वच्छांबुतस्य

थमुंचन्वायुभिर्नुन्नाभूतेभ्योह्यमृतंधनाः ॥ यथाविशोविट्पतयःकालेकालेद्विजेरिताः २२ एवंवनंतद्वर्षिष्ठंपक्वखर्जूरजंबुमत् ॥ गोगोपालैर्वृतोरंतुंसबलः प्राविशद्धरिः ॥ २३ धेनवोमंदगामिन्यऊधोभारेणभूयसा ॥ ययुर्भगवताहूताद्रुतंप्रीत्यास्नुतस्तनीः २४ वनौकसःप्रमुदितावनराजीर्मधुच्युतः ॥ गिरेर्गंभीरसन्नादसन्नादाददृशुर्गुहाः २५ ॥ क्वचिद्वनस्पतिक्रोडेगुहायांचाभिवर्षति ॥ निर्विशन्भगवान्रेमेकंदमूलफलाशनैः २६ दध्योदनमुपानीतंशिलायांसलिलांतिके ॥ संभोजनीयैर्बुभुजेगोपैःसंकर्षणान्वितः २७ शाद्वलोपरिसंविश्यसर्वतोमीलितेक्षणान् ॥ वृषान्वत्सान्वत्सतरान्गाश्चस्वोधोभरश्रमाः २८ प्रावृट्श्रियंहतांवीक्ष्यसर्वभूतमुदावहाम् ॥ भगवान्पूजयांचक्रे आत्मशक्त्युपबृंहिताम् २९ एवंनिवसतोस्तत्ररामकेशवयोर्व्रजे ॥ शरत्समभवद्व्यभ्रास्वच्छांबुपुरुषितानिला ३० शरद्वानीरजोत्पत्त्यानीराणिप्रकृतिंययुः ॥ भ्रष्टानामिवचेतांसिपुनर्योगनिषेवया ३१ व्योमोऽब्दमभ्रशाबल्यंभुवःपंकमपांमलम् ॥ शरज्जहाराश्रमिणांकृष्णभक्तिर्यथाऽशुभम् ३२ सर्वस्वंजलदाहित्वाविरेजुःशुभ्रवर्चसः ॥ यथात्यक्तैषणाःशांतामुनयोमुक्तकल्मषाः ३३ गिरयोमुमुचुस्तोयंक्वचिन्नमुमुचुःशिवम् ॥ यथाज्ञानामृतंकालेज्ञानिनोददतेनवा ३४ नैवाविंदन्क्षीयमाणंजलंगाधजलेचराः॥ यथायुरन्वहंक्षय्यंनरामूढाःकुटुंबिनः ३५

विप्रुषितेनविप्रुषाबिंदुनायुतःअनिलःस्वच्छांबुपुरुषितानिलःसयस्यांसातथा ३० शारद्याशरत्संबंधिन्यानीरजानांपद्मानांउत्पत्त्या प्रकृतिंस्वच्छतां योगभ्रष्टानांपुनर्योगनिषेवयायोगाभ्यासेन ३१ शरद्व्योम्नःअब्दं अर्थिभ्योजलस्यदातारंमेघंजहार वर्षाकालोविरतइत्यर्थः ततोभ्रशाबल्यंअभ्रंजलंदधत्मेघःनतुवर्षणंकुर्वत्तन्निमित्तंशाबल्यंव्योम्नःनिःस्रवणंजहार अभ्रच्छायाभावात् भुवःपंकंकर्दमंअपांमलंकालुष्यंचअहरत् तत्तदाश्रमोक्तानुष्ठानंयथावत्स्थितिसूचनायाश्रमिणामित्युक्तं अशुभंपातकम् ३२ सर्वस्वंजलं शुभ्रवर्चसःधवलवर्णाःत्यक्ताःपुत्रादिदुष्टैषणायैस्तेतथा ३३ शिवंजलं जान्वाननूपानूपस्थलभेदाभिप्रायेण निरीक्षणांजनमाक्षमोक्षौज्ञानिनाम् ज्ञानदानादानेयोग्यायोग्यमुहुर्तामुहुर्तकालभेदविवक्षयेतिज्ञातव्य ३४ गाधजलेचराःअल्पजलनिवासिनोमत्स्यादयः प्राणिनः क्षीयमाणंशुष्यमाणंजलंदृष्ट्वासुखंनैवाविंदन् अन्वहंक्षय्यंक्षीयमाणंअंतंगच्छदायुःअनेनसंसारस्यानित्यत्वेनअसारत्वंसंसूचितवान् ३५

शरदर्कः शरहतुसंबंधीसूर्यःतस्माज्जातःशरदर्कजःतं । कुटुंबसंबद्धंतापम् ३६ वीरुधः आसम् अंकुरिताः । अनात्मव्यतिरिक्तेषुजडेष्वित्यर्थः ३७ उपरतेउपरतविषयव्यापारे आत्मनिमग्न लि यद्वाउपेशर्वाधिपेहरौरतेसति उपरतागमः निवृत्तशास्त्रश्रवणादिकः समाधिस्थइत्यर्थः ३८ केदारेभ्यःकेदारार्थप्राणैरिंद्रियैःतेषामिंद्रियाणांनिरोधेनप्रत्याहारेण ३९ अहंदेहइतिदेहाभि मानोदेहविषयंज्ञानंतस्माज्जातंदेहाभिमानजंतापम् । बोधआत्मज्ञानम् मुकुंदोयथेतिशेषः दृष्टांतद्वयम् ४० खमाकाशंशरदाविमलानिविशदानितारकाणियस्मिंस्तथा । सत्वेनऽव्यवसायेनयु क्तंसत्वगुणोपेतंवा शब्दात्मकंब्रह्मवेदस्तस्यमुख्यवाच्यःश्रीनारायणस्तंदर्शयतीतिशब्दब्रह्मार्थदर्शनम् शब्दब्रह्माहिरण्यगर्भःतस्यार्थोहेतुःकारणमितिवा ४१ अखंडमंडलंपूर्णमंडलम् ४२ शरुतं शारदमितिशेषःअर्कजनितंतापं गोप्यःकामार्कजनितंतापंनजहुः । तत्रनिमित्तं कृष्णाहृतचेतसःकृष्णेनाहृतंचेतोयासातास्तथा ४३ पुष्पिण्यःगर्भिण्यःऋषभैरितिपाठः वृषभैरितिपाठेमातृस

गाधवारिचरास्तापमविदञ्छरदर्कजम् ॥ यथादरिद्रःकृपणःकुटुंब्यविजितेंद्रियः ३६ शनैःशनैर्जहुःपंकंस्थलान्यामंश्चवीरुधः ॥ यथाहंममतांधीराःशरी रादिष्वनात्मसु ३७ निश्चलांबुरभूत्तूष्णींसमुद्रःशरदागमे ॥ आत्मन्युपरतेयद्वन्मुनिर्व्युपरतागमः ३८ केदारेभ्यस्त्वपोगृह्णन्कर्षकादृढसेतुभिः ॥ यथा प्राणैःस्वविज्ञानंतन्निरोधेनयोगिनः ३९ शरदर्कांशुजंतापंभूतानामुडुपोऽहरत् ॥ देहाभिमानजंबोधोमुकुंदोव्रजयोषिताम् ४० खमशोभतनिर्मेघंशर द्विमलतारकम् ॥ सत्त्वयुक्तंयथाचित्तंशब्दब्रह्मार्थदर्शनम् ४१ अखंडमंडलव्योम्निरराजोडुगणैःशशी ॥ यथायदुपतिःकृष्णोवृष्णिचक्रैर्वृतोभुवि ४२ आश्लिष्यसमशीतोष्णंप्रसूनवनमारुतम् ॥ जनास्तापंजहुर्गोप्योनकृष्णाहृतचेतसः ४३ गावोमृगाःखगानार्यःपुष्पिण्यःशरदाभवन् ॥ अन्वीयमाना ऋषभैःफलैरीषक्रियाइव ४४ उदहृष्यन्वारिजानिसूर्येणकुमुदंविना ॥ राज्ञातुनिर्भयोलोकोयथादस्यून्विनानृप ४५ पुरग्रामेष्वाश्रमिणाभिंद्रयागम होत्सवैः ॥ बभौभूःपक्वसस्याढ्याकलाभ्यांनितरांहरेः ४६ वणिजोनगरात्स्वीयान्निर्गम्यार्थान्प्रपेदिरे ॥ वर्षरुद्धायथासिद्धाःस्वपिंडान्कालआगते ४७

इतिश्रीभागवतेमहापुराणेदशमस्कंधेअष्टदशोऽध्यायः ॥ १८ ॥

होदरीविवेकज्ञानशून्यत्वात्तथोक्तामित्यर्थःफलैर्बीजैरन्वीयमानाःउप्यमानाःईषत्क्रियाःशनैःक्रियमाणाःकृषिक्रियाइवफलैःस्वर्गादिलक्षणैःअनुगताईषत्क्रियाऊनातिरेकपरिहारार्थाःविलंबमानयागाक्रिया इव लाभनिष्पत्तिभोगेपुबीजेफलधनेफलइतिवा ४४ ४५ इंद्रयागमहोत्सवैःइंद्रदेवत्याग्रायणेष्टिलक्षणोत्सवैःहरेःकलाभ्यांनितरांबभौ आश्रमिणाअग्निमतांगृहस्थमात्राणांवा ४६ प्रावृषिवर्षेणरुद्धाःशरदि स्वीयान्नगरात्पत्तनान्निर्गत्यार्थान्देयादेयविषयान्प्रपेदिरे वर्षेणाब्देनतल्लक्षितकालेनेत्यर्थः रुद्धाःसाधनसामग्रीसंपत्तिपर्यंतकालेनप्रतिबद्धाःसिद्धाः मंत्रौषधतपःसपन्नाःपुरुषाःकालेफलदानाभिमुखलक्ष णेआगतेआसन्नेस्वीयान्नगरात्स्वत्वेनाभिमताद्देहान्निर्गत्यस्वपिंडान्निजफलानुभावयोग्यान्देहानूपथाप्रपचंतइत्यन्वयः वर्षोद्यीभारताचंबुवृष्टिषुप्रावृषिस्त्रियामितियादवः ४७ इतिश्रीभागवतेमहापुराणेवि जयध्वजकृतटीकायांअष्टादशोऽध्यायः ॥ १८ ॥

स्वयोग्यतानुसारेणहरौज्ञानसाधनंभक्तिःकर्तव्येत्यभिप्रैत्यस्मिन्नध्याये तत्रगोपस्त्रीणांकृष्णेस्नेहातिशयंवक्तुमुपक्रमते इत्थंशरत्स्वच्छजलमित्यादिना पद्माकराणांसुगंधोस्यास्तीतिपद्माकरसुगंधीतेन वायुनावीतंपरिवृतंइत्यमुक्तविधिना शरदास्वच्छंनिर्मलंजलयस्मिंस्तत्तथा अनेनवायोःशैत्यंसूचित न्यविशत्वनामितिशेषः नेर्विशइतिसूत्रेणलौकिकस्यात्मनेपदविधानंनतुछांदसस्य अच्युत इत्यनेनवनक्रीडाद्यभावेपिसुखच्युतिर्नास्तीतिसूचयति १ अत्रवनशब्देनवृक्षसमुच्चयउच्यतेकुसुमिताःपुष्पितांपेताःवनराजयःवृक्षपंक्तयोयस्मिस्तत्तथा शुष्मिभिर्मत्तैःस्वजातिश्रेष्ठैर्वा भृंगैर्द्विजगणैः पक्षिगणैश्चघुष्टानिशब्दितानिसरांसिअखाततटाकाः सरितःस्यंदमानानद्यःमहीध्राःपर्वतायस्मिस्तत्तथा मधुपतिर्माधवःएवंविधंवनमवगाह्यवेणुंचुकूजेत्यन्वयःकूजनंसुरतमंत्रणंकामवर्धनं सीत्कारोद्रवं श्रोत्रीणांगोपीनांकर्षणार्थमेवमुक्तं २ महः कामःतस्योदयःअंकुरीभावःयस्मात्तन्महोदयं स्मरोदयमितिकेचित्पठंतितद्वेणुगीतमाश्रित्यकाश्चिद्व्रजस्त्रियःपरोक्षकासाचिददृष्टश्रुतकृष्णस्यचरितं स्वसखीभ्योन्यवेदयन्नित्यन्वयः ३ वर्णयितुंकीर्तयितुं ४ हरेस्तदाकारदर्शनंचसुखहेतुरितिभावेनतस्यस्वरूपप्रकारंवक्ति बर्हापीडमित्यादिना बर्हंपिच्छमेवापीडंशेखरोत्तंसंयस्मिन्तत् । नटवत्वरवपुःशुभाकारं बिभ्रदितिप्रत्येकंसंबंधयितव्यं स्वपदेनस्वपादेनरमतइतिरमणंरमयत् रंध्रान्सुषिराणि ५ बर्हमेवापिच्छोयस्यसतथा वनचरवपुःकिराताकारइवाकारोयस्यसतथा शुभाकारेतनौवपु

श्रीशुकउवाच ॥ इत्थंशरत्स्वच्छजलंपद्माकरसुगंधिना ॥ न्यविशद्वायुनावीतंसगोगोपालकोऽच्युतः १ कुसुमितवनराजिशुष्मिभृंगद्विजकुलघुष्टसरःसरिन्महीध्रम् ॥ मधुपतिरवगाह्यचारयन्गाःसहपशुपालबलश्चुकूजवेणुम् २ तद्व्रजस्त्रियआश्रुत्यवेणुगीतंमहोदयम् ॥ काश्चित्परोक्षंकृष्णस्यस्वसखीभ्योन्ववेदयन् ३ तद्वर्णयितुमारब्धाःस्मरंत्यःकृष्णचेष्टितम् ॥ नाशकन्स्मरवेगेनविक्षिप्तमनसोनृप ४ बर्हापीडंनटवरवपुःकर्णयोःकर्णिकारंबिभ्रद्वासःकनककपिशंवैजयंतींचमालाम् ॥ रंध्रान्वेणोरधरसुधयापूरयन्गोपवृंदैर्वृंदारण्यंस्वपदरमणंप्राविशद्गीतकीर्तिः ५ बर्हापिच्छोवनचरवपुःकर्णयोःकर्णिकारःसव्येबाहौनिहितवदनःसज्जमन्यत्रहस्ते ॥ भ्रूविन्यासांगुलिभिरणयन्गापयन्गोपवृंदान्भूतग्रामंतर्हिरमयन्ब्रह्मगांधर्वमेव ६ इतिवेणुरवंराजन्सर्वभूतमनोहरम् ॥ श्रुत्वाव्रजस्त्रियःसर्वावर्णयंत्योभिरेभिरे ७ गोप्यऊचुः ॥ अक्षण्वतांफलमिदंनपरंविदामःसख्यःपशूननुविवेशयतोर्वयस्यैः ॥ वक्त्रंव्रजेशसुतयोरनुवेणुजुष्टंयैर्निपीतमनुरक्तकटाक्षमोक्षम् ८

रीतिच वनचरागोपावा कर्णयोःकर्णिकारइत्येकंपदं कंठेकालइतिवत् भ्रूवोर्विन्यासःभ्रूभंगविशेषःतेनसहांगुलीभिःअन्यत्रहस्तेसज्जंसक्तंरणयन्वेणुमितिशेषः अंगुलीभीरणयन्नितिवक्तव्येह्रस्वस्वच्छंदोभंगभयात्कृतं गांधर्वंब्रह्मैवभरतशास्त्रोक्तप्रकारमेव गोपवृंदान्गापयन्नितिद्विकर्मकोऽयंधातुः भूतग्रामंप्राणिसमूहंरमयन्वृंदावनंप्राविशदितिपूर्वेणान्वयः ६ अभिरेभिरेइत्यत्रयारातिःसामुल्यतः श्रियएवतद्गीतरसाविशेषज्ञत्वाच्चदन्यासांतदभावाच्चस्मादौपचारिकमभिरमणं तदुक्तं श्रीदेवीवेणुमाश्रित्यरेमेकृष्णमुखांबुजेइत्यादि सुराइतरभांडगाइत्यत्रइतरभांडानिवेणुमंतरेणान्यभूषणानिगताआविष्टाइत्यर्थः इतरेषांरामादीनांवा वेणुमूलेधनेपात्रेभांडंभूषाश्वभूषयोरितियादव. वनचरागोपावा ७ गोपस्त्रीणांवर्णनप्रकारंदर्शयति अक्षण्वतामित्यादिना यैर्यैर्व्रजेशसुतयो रामकृष्णयोर्वक्त्रंनितरांपीतंदृष्टिभिरितिशेषः तेषांतेषामक्षण्वतांचक्षुष्मतांचक्षुषामिदफलंलाभविदामोनपरंनान्यत्फलं अन्यस्यनरकदुःखफलहेतुत्वात् हेसख्यःकीदृशयोर्वयस्यैःपशूनभिनिवेशयतोःअनुसंधंगोष्ठंइतिशेषः अनुवेणोःपश्चाद्भागेजुष्टंचुंबितंअनुरक्तःस्निग्धःकटाक्षमोक्षोयस्मिंस्तत्तथा ८

चूतस्यप्रवालादिभिः अनुरक्तपरिधानेनविचित्रःनानाविधःवेषोययोस्तौतथा अनुरक्तंअनुरागोपेतं पशुपालगोष्ठ्यां गोपगोष्ठ्यांमध्ये गवांसमष्टिःसंवार्तागोष्ठ्यशालाचकथ्यतइत्युत्पलमाला क्व चक्वचित्स्थलेगायमानौतिष्ठतइतिशेषः ९ हेगोप्यःअयंवेणुःकिंकुशलंतपोलक्षणंआचरत् स्मेतिस्मरणंकर्नेऽथंकिमप्यस्तीतिवृत्तंपूर्वजन्मनिचीर्णंवा स्मृतौवृत्ते निषेधेस्मेतिच योवेणुःदामोदरस्याधरोष्ठः सएवसुधातयारसंसरागमग्र्यंगेयंयस्मिन्सःसरागमग्र्यगेयः तंरसंभुंक्तेआस्वादयाति सदर्भाःदर्भांकुरैःसहिताःतरवःहृष्टत्वचः अस्मद्वंशयोग्यमितिरोमांचितसर्वगात्राःयेनवेणुनापीतावशिष्टोयोरस त स्यौघःप्रवाहोयस्मिन्सयदवशिष्टसारसौघः तस्मिन्मार्गेकृष्णेनसंचारितेऽध्वनि अश्रुआनंदजलमुमुचुरित्यन्वयः सदर्भाः सकुशावा १० भुवोभूमेःहेसखियद्वृंदावनदेवकीसुतस्यपादांबुजाभ्यालब्धा लक्ष्मीःश्रीर्येनतत्देवकीसुतपदांबुजलब्धलक्ष्मि लक्ष्मेतिकेचित् लक्ष्मचिह्नंगोविंदस्यवेणुमनुवेणुस्वरानुकूलमेघनादशंकयावेणुस्वरानुकारेणवामत्तानांमयूराणांनृत्यंदृष्ट्वा आदृताःसादराश्चअनुकूलंचारि तंयेषांतेतथा कृष्णचारितानुकूलचारिताश्चान्येमनुष्यविजातीयाःसमस्ताःसत्वाजंतवोयस्मिंस्तदादृतानुचारितान्यसमस्तसत्वं सत्वोऽस्त्रीतिवचनात्पुंल्लिंगोप्ययंदन्द्वः आदृतौसादरार्चितावितिच ११

चूतप्रवालबर्हस्तबकोत्पलाब्जमालानुरक्तपरिधानविचित्रवेषौ ॥ मध्येविरेजतुरलंपशुपालगोष्ठ्यां रंगेयथानटवरौक्वचगायमानौ ९ गोप्यःकिमा चरदयंकुशलंस्मवेणुर्दामोदराधरसुधासरसाग्र्यगेयम् ॥ भुंक्तेस्वयंयदवशिष्टरसौघमार्गेहृष्टत्वचोऽश्रुमुमुचुस्तरवःसदर्भाः १० वृंदावनंसखिभुवोवितनोति कीर्तिंयद्देवकीसुतपदांबुजलब्धलक्ष्मि ॥ गोविंदवेणुमनुमत्तमयूरनृत्यंप्रेक्ष्यादृतानुचरितान्यसमस्तसत्वम् ११ धन्याःसुमूढमतयोपिहरिण्यएतायन्नं दनंदनमुपात्तविचित्रवेषम् ॥ आपीयवेणुरचितंचसकृष्णसाराःपूजांदधुर्विरचितांप्रणयावलोकैः १२ कृष्णंनिरीक्ष्यवनितोत्सवरूपसारंश्रुत्वाचतत्क्वणित वेणुविचित्रगीतम् ॥ देव्योविमानगतयःस्मरनुन्नसाराभ्रश्यत्प्रसूनकबरामुमुहुर्विनीव्यः १३ गावश्चकृष्णमुखनिर्गतवेणुगीतंपीयूषमुत्तभितकर्णपुटैःपि बंत्यः ॥ सानंदनम्रतनवःकवलाःस्मतस्थुर्गोविंदमात्मनिदृशाश्रुकणान्स्रवंत्यः १४ प्रायोबतांबमुनयोविहगावनेस्मिन्कृष्णेक्षणास्तदुदितंकलवेणुगीतम् आरुह्ययेद्रुमभुजान्रुचिरप्रवालान्शृण्वंत्यमीलितदृशोविगतान्यवाचः १५

सुष्ठुमूढाविवेकरहितामतिर्यासांतास्तथा कृष्णसारानुसारेणपुंमृगेण कांतमृगेणवासहिताःनंदस्यनंदनं वेणोरचितंनिःसृतंस्वरंचापीयास्वाद्यप्रणयेनसहितैःअवलोकनैःदर्शनैःउन्नतमस्तकत्वाद्धुरि ति १२ वनितानामुत्सवभूतंरूपसारंस्थिरसौंदर्यंयस्यसतथातं तत्सौंदर्यंचस्वभावेचेति सारोबलेस्थिरांशेचेतियादवः तेनक्वणितात्वातेनशब्दितात्वेणोर्वितंनिर्गतंचित्रसप्तस्वरमिश्रगीतं वीगता वितिधातुः चित्रमाश्चर्यंलेख्ययोरितियादवः देव्योदेवस्त्रियःस्मरेणनुन्नंनष्टंसारोधैर्यंयासांतास्तथाभ्रश्यत्प्रसूनकबराःविगलितपुष्पकेशभराः विगताःस्रस्ताःनीव्यःवस्त्राणिवस्त्रग्रंथयोवायासांतास्त था नीवीवस्त्रांशुकग्रंथ्योरितिच १३ उत्तभितकर्णपुटैःनिश्चलकर्णरंध्रभागैः कवलाःकवलसहिताः गोविंदमात्मनिहृदिस्मरंत्यःदृशानेत्रेणअश्रुबिंदून्स्रवंत्यः शावस्नुतस्तनपयःकवलाइतिकेचि त् शावावत्साः तेषांस्मरणेनस्नुताः संस्नुताःक्षीराणिकवलाःशष्पग्रासाःयासांतास्तथा तस्थुरित्यन्वयः कवलाःग्रासासंतीतिकवलाः अर्शआद्यच् आजाद्यतष्टाबितिटाप्प्रत्ययेकृतेकवलेतिरूपं सिद्धंभवति जायाशब्दवदितिवा १४ विगतास्त्यक्ताःस्वजातिसिद्धावाचोयैस्तेविगतान्यवाचोधृतमौनाइत्यर्थःबतआश्चर्यमिदं हेअंबपक्षिणामुनीनांचमौनत्वसामान्यादेवमुच्यते १५

यद्यदामुकुंदेनगीतंतदातदुपधार्यत्दृद्यवधार्य आवर्तैर्नाभसांभ्रमेणलक्षितेनमनोभवेनकामेनभग्नोवेगोयासांतास्तथा ऊर्मयएवभुजाःआलिंगनेनस्पर्शलक्षणेनप्रमुदिताऊर्मिभुजा आलिंगनप्रमुदितो र्मिभुजाःतैःकमलमेवोपहारोयासांतास्तथा १६ अंबुदःश्यामवर्णसाम्यात्सख्युःमुरारेःस्ववपुशातपत्रंव्यधात् कुसुमावलीभिःनंदनवनपुष्पराजिभिःसह यद्वा जलकणानिकरैःसह पुष्पंमेघपुष्पमित्य भिधानात् प्रेम्णाप्रवृद्धंसमुद्रिक्तंत्दृषितंहर्षेणरोमांचलक्षणंयस्यसतथा अभिमान्यपेक्षयैतत् १७ पुलिंद्यःशबरस्त्रियःतस्मात्कामादुत्तमाधिमनोदुःखंजहुरित्यन्वयः कीदृशाःपूर्णाःकृतकृत्याःतस्य कृष्णस्यदर्शनेनजातस्मरएवरुक्रोगोयासांताः क्रीडासमयेतृणेषुरूषितेनादिग्धेनदयितायाःप्रियतमायाः गोप्यास्तनमंडितेनस्तनयोःघट्टितेनउरुगायस्यहरेःपादाब्जयोःस्वतःअरुणयोरपिरागज ननार्थंलिप्तेनश्रीमताकुंकुमेनाननकुचेषुलिंपंत्यइति १८ हंतआश्चर्यं अयमद्रिर्गोवर्धनोहरिदासवर्यःभगवद्भक्तश्रेष्ठः कुतः ययोःरामकृष्णयोश्चरणस्पर्शादाविर्भूतप्रमोदोयोऽद्रिःसहगोगणयोस्तयोः पानीयादिभिःमानंपूजांतनोति यद्यस्मादिदमेवाहिभक्तश्रेष्ठत्वम् सुयवसंशोभनोग्रासःदैर्घ्यछादसम् सूयवसाद्गवतीहीतिदर्शनात् कंदरंगुहाग्दृहग् वृष्टौस्थातुंयोग्यम् कदंसूरणम् मूलंअकडूयमानंदीर्घा

नद्यस्तदातदुपधार्यमुकुंदगीतमावर्तलक्षितमनोभवभग्नवेगाः ॥ आलिंगनप्रमुदितोर्मिभुजैर्मुरारेर्गृह्णंति पादयुगलंकमलोपहाराः १६ दृष्ट्वातपेव्रजपशून्सहरामगोपैःसंचारयंतमनुवेणुमुदीरयंतम् ॥ प्रेमप्रवृद्धहृषितःकुसुमावलीभिःसख्युर्व्यधात्स्ववपुषांऽबुदआतपत्रम् १७ पूर्णाःपुलिंद्यउरुगायपदाब्जरागश्रीकुंकुमेनदयितास्तनमंडितेन ॥ तद्दर्शनस्मररुजस्तृणरूषितेनलिंपंत्यआननकुचेषुजहुस्तदाधिम् १८ हंतायमद्रिरबलाहरिदासवर्योयद्रामकृष्णचरणस्पर्शप्रमोदः ॥ मानंतनोतिसहगोगणयोस्तयोर्यत्पानीयसूयवसकंदरकंदमूलैः १९ गागोपकैरनुवनंनयतोरुदारवेणुस्वनैःकलपदैस्तनुभृत्सुसख्यम् ॥ अस्पंदनंगतिमतांपुलकंतरूणांनिर्योगपाशकृतलक्षणयोर्विचित्रम् २० एवंविधाभगवतोयावृंदावनचारिणः ॥ वर्णयंत्योमिथोगोप्यःक्रीडास्तन्मयतांययुः २१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेवेणुगीतवर्णनंनामैकोनविंशोऽध्यायः ॥ १९ ॥ श्रीशुकउवाच ॥ हेमंतेप्रथमेमासिनंदव्रजकुमारिकाः ॥ चेरुर्हविष्यंभुंजानाःकात्यायन्यर्चनव्रतम् १ आप्लुत्यांभसिकालिंद्याजलांतेचोदितेरुणे ॥ कृत्वाप्रतिकृतिंदेवीमानर्चुर्नृपसैकतीम् २

कारंकंदम् १९ गोपकैःसहानुवनंगाःनयतोःसंचारयतोःतनुभृत्सुशरीरिषुजंतुषुसख्यंविचित्रमिदाचेतमपिचित्रम् किंतदिति कलपदैरुदारवेणुस्वनैः विवशानांगतिमतांजगमानाम् अस्पंदनंस्थावरधर्मभजनम् तरूणांस्थावराणाम् पुलकंजंगमधर्मरोमांचभजनंविचित्रंपश्यतेतिशेषः कथमेतद्युज्यतइतितत्राह निर्योगेति नितरांयोगपाशेनयोगशक्तिलक्षणपाशेनकृतलक्षणंअस्पंदनस्पंदमानाख्यंययोस्तौतयोः यद्वा निर्योगपाशःक्षेपणाख्यःतेनकृतंयोगचिह्नंययोः २० वृंदावनचारिणोहरेरेवंविधाःयाःक्रीडास्तास्ताःमिथोवर्णयंत्योगोप्यः तन्मयतातत्स्वामितांययुरित्यन्वयः २१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायाएकोनविंशोऽध्यायः ॥ १९ ॥ भक्तिरेवभगवत्प्रसादजननीतिदर्शयितुंगोपकुमारीणांकृष्णभक्तिंनिरूपयत्यस्मिन्नध्याये तत्रतासांहरेःसर्वकार्याणामंतरंगंकात्यायनीतितदर्चनव्रतकरणेनश्रीकृष्णःप्रसन्नोभवतीतितदर्चनाविधिंकथयति हेमंतइति कार्तिकमार्गशीर्षमासौहेमंतऋतुः तत्रप्रथमेमासिकार्तिकमासे व्रतंनियमम् १ कालिंद्यायमुनायाःजलांतेजलसमीपे चशब्दएवार्थः उदितेअरुणेअरुणोदयएव सैकतींसिकतानिर्मितांप्रतिमामानर्चुःपूजांचक्रुः २

बलिभिःपरिवारदेवताविषयपूजाभिः ३ कात्यायनिकृत्यानामुत्पादके महतीमायामाहात्म्यंयस्यांसातथा तस्या संबुद्धिः महामायेमहान्योगउपायोऽस्याअस्तीतिमहायोगिनी तत्संबोधनमहायो
गिनि अधिगतेश्वरितेतुभ्यंनमोस्तु ४ इतिसमासं एवंप्रकारंवा उषसिब्राह्ममुहूर्ते ५ ६ नंदस्नुषाभूयाःस्मइत्येवंसंकल्प्यनदीमागत्यनदींप्राप्य भूयान्नंदसुतःपतिरित्यपिपाठः ७ योगेश्वरेश्वरइत्यनेनदू
रश्रवणदर्शनादिशक्तिःसूच्यतेतासांकर्मसिद्धयेसंकल्पव्रतसिद्ध्यर्थं ८ नीपमर्जुनं परितोहासोयस्मिन्तद्वचनपरिहासम ९ १० ११ क्ष्वेलितंसहवस्त्रादितं परिहासेनोदितंवा नानिर्ययुः जलादितिशेषः

गंधैर्माल्यैःसुरभिभिर्बलिभिर्धूपदीपकैः ॥ उच्चावचैश्चोपचारैःप्रवालफलतंदुलैः ३ कात्यायनिमहामायेमहायोगिन्यधीश्वरि ॥ नंदगोपसुतंदेविपतिं मेकुरुतेनमः ४ इतिमंत्रंजपंत्यस्ताःपूजांचक्रुःकुमारिकाः ॥ उषस्युत्थायगोत्रैःस्वैरन्योन्याबद्धबाहवः ५ कृष्णमुच्चैर्जगुर्यांत्यःकालिंद्यांस्नातुमन्वहम् ॥ एवंमासव्रतंचेरुःकुमार्यःकृष्णचेतसः ६ भद्रकालींसमानर्चुर्भूयान्नंदस्नुषाइति ॥ नदींकदाचिदागत्यतीरेनिक्षिप्यपूर्ववत् ॥ वासांसिकृष्णंगायंत्यो विजन्हुःसलिलेमुदा ७ भगवांस्तदभिप्रेत्यकृष्णोयोगेश्वरेश्वरः ॥ वयस्यैरागतस्तत्रवृतस्तत्कर्मसिद्धये ८ तासांवासांस्युपादायनीपमारुह्यसत्वरः ॥ हसद्भिःप्रहसन्बालैःपरिहासमुवाचह ९ अत्रागत्याबलाःकामंस्वंस्वंवासःप्रगृह्यताम् ॥ सत्यंब्रवाणिनोनर्मयद्यूयंव्रतकर्शिताः १० नमयोदितपूर्वंवाअनृतं तदिमेविदुः ॥ एकैकशःप्रतीच्छंतुसहैवोतसुमध्यमाः ११ तस्यतत्क्ष्वेलितंदृष्ट्वागोप्यःप्रेमपरिप्लुताः ॥ व्रीडिताःप्रेक्ष्यचान्योन्यंजातहासानिर्ययुः १२ एवंब्रुवतिगोविंदेनर्मणाक्षिप्तचेतसः ॥ आकंठमग्नाःशीतोदेवेपमानास्तमब्रुवन् १३ मानयंत्योवयंत्वांतुनंदराजसुतंप्रियम् ॥ जानीमोऽगव्रजश्लाघ्यदेहि वासांसिवेपिताः १४ श्यामसुंदरतेदास्यःकरवामतवोदितम् ॥ देहिवासांसिधर्मज्ञवेपितानांमहाबल ॥ शीतार्दितानांबालानांनोचेद्राज्ञेब्रुवामहे १५ श्रीभगवानुवाच ॥ भवंत्योयदिमेदास्योमयोक्तंवाकरिष्यथ ॥ अत्रागत्यस्ववासांसिप्रतीच्छतसुमध्यमाः १६ नोचेन्नाहंप्रदास्येकिंक्रुद्धोराजाकरिष्यति ॥ ततोजलाशयात्सर्वादारिकाःशीतवेपिताः १७ पाणिभ्यांयोनिमाच्छाद्यप्रोत्तेरुस्तीरमंगनाः ॥ भगवानथतावीक्ष्यमुग्धभावप्रसादितः ॥ स्कंधेनिधाय वासांसिप्रीतःप्रोवाचसस्मितः १८ यूयंविवस्त्रायदपोधृतव्रताव्यगाहतैतत्तदुदेवहेलनम् ॥ बद्ध्वांजलिंमूर्ध्न्यपनुत्तयेंऽहसःकृत्वानमोऽधोवसनंप्रगृह्यताम् ॥ १९ एकेनपाणिनानेमुरेकेनाच्छाद्यचांगनाः ॥ तावीक्ष्योवाचभगवान्भूयोधर्म्यमिदंवचः २० एकेनपाणिनायोवैप्रणमेद्देवमच्युतम् ॥ तस्यदंडःकरच्छे दइतिधर्मविदोविदुः २१ तस्मादुभाभ्यांपाणिभ्यांप्रणमेत्स्वामिनंनरः ॥ तथाचयूयंकुरुततन्मेप्रियतरंभवेत् २२

१२ नर्मणागर्हितस्नेहविनोदवचनेन १३ शीतजलेस्थित्यावेपिताःवयम् १४ तेतवदास्यःस्यामभवाम राज्ञेनंदगोपाय १५ १६ दारिकाःकुमार्यः १७ मुग्धभावेनमधुरस्वभावेनप्रसादितः प्रसाद गमितः १८ यूयंवस्त्रहीनापोजलंव्यगाहतेतियत्तदेतत् उतापकारणंदेवहेलनंदेवतापराधःअतस्तस्यांहस अपराधस्यपरिहारायउतापेऽव्ययमंशेषेतियादवः १९ २० २१ २२

विवस्त्राप्लवनंदिगंबरस्नानं व्रतच्युतिंनियमभ्रंशं तत्पूर्तिकामाःतस्यव्रतस्यपूर्णतांकामयमानाः तासामशेषकर्मणांसाक्षात्कृतंसाक्षीभूतंकृष्णंनेमुः अनेनांकिंप्रयोजनमत्राह अवद्यमिति उज्झितुं उन्मूलयितुं २३ करुणःदयाशीलः २४ तासांकृष्णेभक्त्यातिशयंकथयाति दृढमिति प्रलब्धाःवंचितवत्कारिताःहापितास्त्याजिताःमुक्तलज्जाःकारिताः प्रस्तोभिता.चाटुवचनजालंप्रापिताः क्रीडनवद्दारुयंत्रवत् अथापितथापि अमुंकृष्णंप्रति गुणेषुदोषाविष्करणमसूया तत्रहेतुमाह प्रियेति प्रियेणकृष्णेनसहसंकथनलक्षणसगेनानिवृंताः २५ प्रेष्ठस्यकृष्णस्यसंगमेसाज्जिता· सन्नद्धाः नउच्चेलुः स्थितप्रदेशादितिशेषः लज्जयाईषन्निमील्यप्रेषितानीक्षणानियासांताः यद्वा लज्जयाइषितानिगतानीक्षणानियासांतास्तथा इषुगताविति धातुः २६ पादंशरीर उत्तमानांश

इत्यच्युतेनाभिहिताव्रजाबलामत्वाविवस्त्राप्लवनंव्रतच्युतिम् ॥ तत्पूर्तिकामास्तदशेषकर्मणांसाक्षात्कृतंनेमुरवद्यमृज्झितुम् २३ तास्तथावनताद्दृष्ट्वाभगवान्देवकीसुतः ॥ वासांसिताभ्यःप्रायच्छत्करुणस्तेनतोषितः २४ दृढंप्रलब्धास्त्रपयाचहापिताःप्रस्तोभिताःक्रीडनवच्चकारिताः ॥ वस्त्राणिचैवापहृतान्यथाप्यमुंनैवाभ्यसूयन्प्रियसंगनिर्वृताः २५ परिधायस्ववासांसिप्रेष्ठसंगमसज्जिताः ॥ गृहीतचित्तानोचेलुस्तस्मिन्लज्जेषितेक्षणाः २६ तासांविज्ञायभगवान्स्वपादस्पर्शकाम्यया ॥ धृतव्रतानांसंकल्पमाहदामोदरोऽबलाः २७ संकल्पोविदितःसाध्व्योभवतीनांमदर्चनं ॥ मयानुमोदितःसोऽसौसत्योभवितुमर्हति २८ नमय्यावेशितधियांकामःकामायकल्पते ॥ भर्जिताक्वथिताधानाप्रायोबीजायनेष्यते २९ याताबलाव्रजंसिद्धामयेमारंस्यथक्षपाः ॥ यदुद्दिश्यव्रतमिदंचेरुरार्यार्चनंसतीः ३० ॥ श्रीशुकउवाच ॥ इत्यादिष्टाभगवतालब्धकामाःकुमारिकाः ॥ ध्यायंत्यस्तत्पदांभोजंकृच्छ्रान्निर्विविशुर्व्रजम् ३१ अथगोपैःपरिवृतोभगवान्देवकीसुतः ॥ वृंदावनाद्गतोदूरंचारयन्गाःसहाग्रजः ३२ निदाघार्कातपेतिग्मेछायाभिःस्वाभिरात्मनः आतपत्रायितान्वीक्ष्यद्रुमानाहव्रजौकसः ३३ हेस्तोककृष्णहेअंशोश्रीदामन्सुबलार्जुन ॥ विशालर्षभतेजस्विन्देवप्रस्थवरूथप ३४ पश्यतैतान्महाभागान्परार्थैकांतजीविनः ॥ वातवर्षातपहिमान्सहंतोवारयंतिनः ३५ अहोएषांवरंजन्मसर्वप्राण्युपजीवनम् ॥ सुजनस्येवयेषांवैविमुखायांतिनार्थिनः ३६ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ॥ गंधनिर्यासभस्मास्थितोक्मैःकामान्वितन्वते ३७ एतावज्जन्मसाफल्यंदेहिनामिहदेहिषु ॥ प्राणैरर्थैर्धियावाचाश्रेयआचरणंसदा ३८ इतिप्रवालस्तबकफलमूलदलोत्करैः ॥ तरूणांनम्रशाखानांमध्येनयमुनांगतः ३९

रिरंतुपादशब्देनभण्यतइति २७ यन्मदर्चनंतस्मिन्कृतःनंदसुतःपतिर्भूयादितिसकल्प. अनुमोदितःअनुज्ञातः २८ मत्संभोगलालसानांभवतीनांविषयौत्सुक्यंपुनःसंसारवर्तनायस्यात्अतोस्मत्संकल्पोनिघ्नइतिशंकामाभूदित्याशयेनाह नेतिकामायविषयेच्छाप्ररोहाय तत्रदृष्टांतमाह भर्जितेति धानाबीजं बीजायअंकुरोत्पादनशक्तिमते २९ आर्यार्चनं कात्यायनीपूजासतीःसत्यः ३० ३१ ३२ व्रजौकस.आहेत्यन्वयः तिग्मेतीव्रे ३३ ३४ परार्थायपरोपकारायएकांतेनानियमेनजीवनंस्वायूरक्षणंयेषातेतान् न.नारयंतिक्षुधितानस्मास्तर्पयंति ३५ सुजनस्यजन्मनःसाफल्यमेतावत् अर्थिनोयेषांविमुखा नयांतीति येअस्मासारेणतोक्मैःअंकुरै.साफल्यमेतावत् ३६ ३७ ३८ ३९

तथोभयंओमितिननेतिच १२ लौकिकींगतिंलोकसिद्धांरीतिम् १३ दानेकारणमाह मर्यातिं धियामय्युषिताःमामेवांचतयंत्यइत्यर्थः १४ द्विजसतीःद्विजपत्नीः १५ चरताबुभुक्षितेन ताच्छी लिकस्तृन्प्रत्ययः चरगतिभक्षणयोरितिधातुः १६ १७ १८ चतुर्विधभक्ष्यभोज्यलेह्यचोष्यपानात्मकं बहुगुणंमधुरादिगुणोपेतम् १९ दीर्घश्रुतेनबहुकालश्रवणेनभगवतिसूतआशयोयाभिस्ताः कदानुद्रक्ष्यामइत्यभिप्रायआशयः २० २१ किंगुणविशिष्टंददृशुरितितत्राह श्यामंहिरण्यपरिधिंसुवर्णमेखलं सुवर्णवत्पीतांबरंवा वनमाल्येनवनपुष्पेण बर्हेणमयूरपिच्छेन धातुनागैरिकेणप्रवालेननटवेषवद्वेषोयस्यासौतथातं अनुव्रतांसेकस्यचिद्वयस्यस्यस्कंधे कर्णयोरुत्पलेअलकःकुतलंकपोलेचमुखाब्जेहासोयस्यसतथातं धुनानंपरिकंपयंतम् २२ दीर्घकालमारभ्य श्रुतःप्रियतमस्योदयोदीर्घश्रुतप्रियतमोदयःसएवकर्णपूराःकर्णालंकरणानितैः यस्मिन्कृष्णेनिमग्नमनसःअवगाह्यदृढबद्धहृदयाःपूर्वंताःस्त्रियोथतंकृष्णंअक्षिविवरैरंतःप्रविश्यसुचिरपरिरभ्यआलिं

नतेयदोमितिप्रोचुर्नेनेतिचपरंतप ॥ गोपानिराशाःप्रत्येत्यतथोचुःकृष्णरामयोः १२ तदुपाकर्ण्यभगवान्प्रहस्यजगदीश्वरः ॥ व्याजहारपुनर्गोपान्दर्शयन्लौकिकींगतिम् १३ मांज्ञापयतपत्नीभ्यःससंकर्षणमागतम् ॥ दास्यंतिकाममन्नंवःस्निग्धामय्युषिताधिया १४ गत्वाथपत्नीशालायांदृष्ट्वासीनाःस्वलंकृताः ॥ नत्वाद्विजसतीर्गोपाःप्रश्रिताइदमब्रुवन् १५ नमोवोद्विजपत्नीभ्योनिबोधतवचांसिनः ॥ इतोविदूरेचरताकृष्णेनप्रेषितावयम् १६ गाश्चारयन्सगोपालैःसरामोदूरमागतः ॥ बुभुक्षितस्यतस्यान्नंसानुगस्यप्रदीयताम् १७ श्रुत्वाच्युतमुपायातंनित्यंतद्दर्शनोत्सुकाः ॥ तत्कथाक्षिप्तमनसोबभूवुर्जातसंभ्रमाः १८ चतुर्विधंबहुगुणमन्नमादायभाजनैः ॥ अभिसस्रुःप्रियंसर्वाःसमुद्रमिवनिम्नगाः १९ निषिध्यमानाःपतिभिर्भ्रातृभिर्बंधुभिःसुतैः ॥ भगवत्युत्तमश्लोकेदीर्घश्रुतधृताशयाः २० यमुनोपवनेशोकनवपल्लवमंडिते ॥ प्रचरंतंवृतंगोपैर्ददृशुःसाग्रजंस्त्रियः २१ श्यामंहिरण्यपरिधिंवनमाल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे ॥ विन्यस्तहस्तमितरेणधुनानमब्जंकर्णोत्पलालककपोलमुखाब्जहासम् २२ दीर्घश्रुतप्रियतमोदयकर्णपूरैर्यस्मिन्निमग्नमनसस्तमथाक्षिरंध्रैः ॥ अंतःप्रविश्यसुचिरंपरिरभ्यतापंप्राज्ञंयथाभिमतयोविजहुर्नरेंद्र २३ तास्तथात्यक्तसर्वाशाःप्राप्ताआत्मदिदृक्षया ॥ विज्ञायाखिलदृग्द्रष्टाप्राहमहसिताननः २४ श्रीभगवानुवाच ॥ स्वागतंवोमहाभागाआस्यतांकरवामकिम् ॥ यन्नोदिदृक्षयाभ्येताउपपन्नमिदंहिवः २५ नश्रद्धामाधिकुर्वंतिकुशलार्थनिदर्शनाः ॥ अहैतुक्यव्यवहितांभक्तिमात्मप्रियेयथा २६

ग्यतापंस्मरनिमित्तंज्वरंजहुः कथमिव यथाप्राज्ञाःसुषुप्त्यवस्थासाक्षिणः प्राज्ञंप्राप्तामिमतयःइंद्रियवृत्तयःतापत्यजाति सतासौम्यतदासंपन्नोभवतीतिश्रुतेः यद्वा भगवत्तत्त्वज्ञाननिपुणा प्राज्ञा. प्राज्ञमितिपाठेपरिरभ्येतिसंबंधः २३ त्यक्तसर्वाशाःत्यक्तसर्वातितृष्णाः आशादिगतितृष्णयोरितिच दृष्ट्वाअपरोक्षज्ञानेन तासांभक्तिंविज्ञाय अखिलदृक् अखंडज्ञानी २४ अभ्येता.अभ्यागताःयद्यस्मादिदंवःउपपन्नंयुक्तम् २५ एवंकुशलंपुण्यमेवार्थःकुशलार्थस्तस्यनितरांदर्शनंयेषांतंकुशलार्थनिदर्शनाःअर्थीसमर्थोविद्वानधिक्रियतेइतिवचनात् कुशलानिपुणाश्च अर्थनिदर्शनाश्चतेतथा यद्वाकुशलार्थेभगवान्निदर्शनमुदाहरणंयेषांतेतथाकुशलाःस्वार्थदर्शनाइतिपाठः एतेश्रद्धाविषयाभिलाषंनकुर्वंति किंतु आत्मप्रियेभगवतिअहैतुकींनिर्निमित्ता अव्यवहितांनिरंतरांभूतांभगवद्भक्तिं अधिकुर्वंति अधिकांकुर्वंतिकथमिव यथात्मप्रियेस्वभर्तरिभगवतीतिशेषः यथाशास्त्रविहितप्रकारेण तदेतत्प्रेष्ठइतिश्रुतेः देहादिभ्योतिप्रियत्वंहरेरेवेतिप्रतिपादयति यद्वास्वार्थदर्शनाःस्वर्गादिफलार्थंदृष्ट

पःकुशलाःयज्ञविद्यानिपुणाः अहैतुक्यव्यवहितांश्रद्धामास्तिक्यबुद्धिं अध्यधिकेईश्वरेनकुर्वंति व्यतिरेकदृष्टांतमाह अहैतुकीति भक्तात्मप्रियेमयियथाभक्तिंकुर्वंतिनतथेति २६ ननसर्वस्मा दधिकंकुतइत्यत्राह प्राणेति २७ यस्मादखंडेश्वरेमयिभक्तिंकुर्वंतिनान्यत्र तस्मान्मदाज्ञांकुरुतेत्याह तदिति गंतव्येनिमित्तमाह पतयइति वःपतयःद्विजातयइति अतःकालक्षेपोनोचितः निमित्तांतरमप्यस्तीत्याह स्वसत्रमिति पारविष्यंतिसंपादयिष्यंति २८ यातेतिदृशंसंपरुषंयदितुं निगमंनमेभक्तःप्रणश्यतीतिवचनं सत्यंकुरु पदावसृष्टंश्रीपादच्युतं तेनदत्तंवा तुलसीदाम श्रीतुलसीमालांकेशैर्निर्तरांवोढुंत्वद्मूलंप्राप्ताः २९ कालक्षेपात्द्विजातयअस्मान्नगृह्णंतीतिसूचितं तत्रतत्सहायाभावात्पुनर्गमनेतेनैवगृह्णंतीत्याहुः गृह्णंतीति ततः शरणंविधेहिकुरु ३० कुतएवचान्यइत्यत्राह लोकाश्चेति ३१ तवपादमूलंप्राप्ताइत्यत्रांगसंगःसूचितस्तत्राह नेति इहनृणामंगसंगोममप्रीतयेनभवति ममानुरागायचनस्यात् तस्मान्मयिमनोयुं

प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः ॥ यत्संपर्कात्प्रियाआसंस्ततःकोन्वपरःप्रियः २७ तद्यातसाध्व्योयजनंपतयोवोद्विजातयः ॥ स्वसत्रंपारयि ष्यंतियुष्माभिर्गृहमेधिनः २८ ॥ द्विजपत्न्यऊचुः ॥ मैवंविभोऽर्हतिभवान्गदितुंनृशंसंसत्यंकुरुष्वनिगमंतवपादमूलम् ॥ प्राप्तावयंतुलसिदामपदाव सृष्टंकेशैर्निवोढुमतिलंघ्यसमस्तबंधून् २९ गृह्णंतिनोनपतयःपितरौसुताबानभ्रातृबंधुसुहृदःकुतएवचान्ये ॥ तस्मात्प्रसीदपदयोःपतितात्मनांनोनान्या भवेद्गतिररिंदमतद्विधेहि ३० श्रीकृष्णउवाच ॥ पतयोनाभ्यसूयेरन्पितृभ्रातृसुतादयः ॥ लोकाश्चवोमयोपेतादेवाअप्यनुमन्वते ३१ नप्रीतयेऽनुरा गायह्यंगसंगोनृणामिह ॥ तन्मनोमयियुंजानानचिरान्मामवाप्स्यथ ३२ श्रीशुकउवाच ॥ इत्युक्ताद्विजपत्न्यस्तायज्ञवाटंपुनर्गताः ॥ तेचानसूयवस्ताभिः स्त्रीभिःसत्रमपारयन् ३३ तत्रैकाविधृताभर्त्राभगवंतंयथाश्रुतम् ॥ हृदोपगुह्यविजहौदेहंकर्मानुबंधनम् ३४ भगवानपिगोविंदस्तेनैवान्नेनगोपकान् ॥ चतुर्विधेनाशयित्वास्वयंचबुभुजेप्रभुः ३५ एवंलीलानरवपुर्नृलोकमनुशीलयन् ॥ रेमेगोगोपगोपीनांरमयन्रूपवाक्कृतैः ३६ अथानुस्मृत्यविप्रास्तेअ न्वतप्यन्कृतागसः ॥ यद्विश्वेश्वरयोर्याच्ञामहनन्नृविडंबयोः ३७ दृष्ट्वास्त्रीणांभगवतिकृष्णेभक्तिमलौकिकीम् ॥ आत्मानंचतयाहीनमनुतप्ताव्यगर्हय न् ३८ धिग्जन्मनस्त्रिवृद्विद्यांधिग्व्रतंधिग्बहुज्ञताम् ॥ धिक्कुलंधिक्क्रियादाक्ष्यंविमुखायेत्वधोक्षजे ३९

जानाःयूयंक्षिप्रंमामवाप्स्यथेत्यन्वयः अनेनाहंभक्त्यैवतुष्टोभवामि नान्येनेतिसूचितम् ३२ इतिशब्दोहेतौ ३३ विधृतापृथक्कृतात्यक्तेत्यर्थः विनिवेधेपृथग्भावेइतियादवः कर्मानुबंधनंकर्मानुगम् ३४ ३५ वाग्भिःकृते कर्मभिश्चगोगोपगोपीनामनांसिरमयन् ३६ नन्वेतेविप्राःसमीचीनाःउतासमीचीनाः नाद्यः अनुभवादर्शनात् नद्वितीयःकृष्णपरायणानांस्त्रीणांपाणिग्रहणसंबंधदर्शनात् अथकर्थान यंपइति राज्ञोमानसींशंकांपरिहरति अथेति तेविप्राःअथमंगलाःकुतोन्वतप्यन् यतःकृतागसःकृतापराधत्वात् अपराधसद्भावेकिंप्रमाणमितितत्राह अनुस्मृत्येति अनुस्मरणंप्रमाणमित्यर्थः कोसावप राधइतितत्राह यदिति अहनन्नहिंसितवंतः तिरस्कृतवंतइतियत्सइत्यर्थः नृविडंबयोःमनुष्यमनुकुर्वतोः ३७ तेषामनुतापःकथमभूदितितत्राह दृष्ट्वेति ३८ किमाकारोतावितितत्राह धिगिति ततो जन्मादिकंधिक्कुत्सितं धिग्भर्त्सनेकुत्सनेइतिच ३९

शास्त्रज्ञानप्रयोजकं मोक्षकालेफलाभावादतोभगवदनुग्रहएववरीयानित्याशयेनाहुः नूनमितिमायिनांज्ञानिनामपि अत्रहेतुमाह यद्वयमिति गुरवोद्विजातयइत्येतद्वयंमोहासंभवेहेतुः ४० दुरंत भावं अव्यवहितभक्तिं गृहाभिधानान्मृत्युपाशान्छिद्यात्छिनत्ति ४१ आसांस्त्रीणांद्विजातिसंस्कारःउपनयनलक्षणः गुरौगुरुकुलेनिवासोविद्याध्ययनार्थमितिशेषः आत्ममीमांसाब्रह्मविचारः शौचंबाह्याभ्यंतरशुद्धिः शुभाःक्रियायागादिलक्षणाः ४२ ४३ ४४ अन्यथास्मारयितृत्वेनापि तर्हि स्त्रीणांकिमर्थंकृतमितितत्राह ईशस्येति ४५ स्वात्मदोषापवर्गेण अन्यत्रचं चलत्वादिस्वकीयदोषपरित्यागेन स्थैर्यस्वभावेनेत्यर्थः ४६ ४७ ४८ ४९ ५० अथापिअनुतप्ताअपिहारीदिदृक्षवोद्रष्टुकामाअपिनाचलन्नागच्छन् कुतःकंसाद्भीताइति ॥ ५१ ॥ इतिश्रीभागवतेमहापु राणेदशमस्कंधेवि०टीकायांएकविंशोध्यायः ॥ २१ ॥ स्वयंहिमानंप्रकटयितुमुत्पथवर्तीपुरुषःसन्मार्गोपदेशेनशिक्षणीयइतिशास्त्रशासनपश्यन्कृष्णःसन्मार्गंदर्शयितुमुपक्रमतइत्याह शुकइति तत्रव्रज

नूनंभगवतोमायामायिनामपिमोहिनी ॥ यद्वयंगुरवोनृणांस्वार्थेमुह्यामहेद्विजाः ४० अहोपश्यतनारीणामपिकृष्णेजगद्गुरौ ॥ दुरंतभावंयोऽविध्यन्मृत्युपाशान्गृहाभिधान् ४१ आसांद्विजातिसंस्कारोननिवासोगुरावपि ॥ नतपोनात्ममीमांसानशौचंनक्रियाःशुभाः ४२ अथापिह्युत्तमश्लोकेकृष्णेयोगेश्वरेश्वरे ॥ भक्तिर्दृढानचास्माकंसंस्कारादिमतामपि ४३ ननुस्वार्थविमूढानांप्रमत्तानांगृहेहया ॥ अहोनःस्मारयामासगोपवाक्यैःसतांगतिः ४४ अन्यथापूर्णकामस्यकैवल्याद्याशिषांपतेः ॥ ईशितव्यैःकिमस्माभिरीशस्यैतद्विडंबनम् ४५ हित्वान्यान्भजतेयंश्रीःपादस्पर्शाशयाऽसकृत् ॥ स्वात्मदोषापवर्गेणतद्याच्ञाजनमोहिनी ४६ देशकालपृथग्द्रव्यमंत्रतंत्रर्त्विजोऽग्नयः ॥ देवतायजमानश्चक्रतुर्धर्मश्चयन्मयः ४७ सएषभगवान्साक्षाद्विष्णुर्योगेश्वरेश्वरः ॥ जातोयदुष्वित्याशृण्मह्यपिमूढानविद्महे ४८ नमस्तुभ्यंभगवतेकृष्णायाकुंठमेधसे ॥ यन्मायामोहितधियोभ्रमामःकर्मवर्त्मसु ४९ सवैनआद्यःपुरुषःस्वमायामोहितात्मनाम् ॥ अविज्ञातानुभावानांक्षंतुमर्हत्यतिक्रमम् ५० इतिकृष्णमनुस्मृत्यविप्रास्तेऽकृतहेलनाः ॥ दिदृक्षवोप्यच्युतयोःकंसाद्भीतानचाचलन् ५१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेएकविंशोऽध्यायः ॥ २१ ॥ श्रीशुकउवाच ॥ भगवानपितत्रैवबलदेवेनसंयुतः ॥ अपश्यन्निवसन्गोपानिंद्रयागकृतोद्यमान् १ तदभिज्ञोपिभगवान्सर्वात्मासर्वदर्शनः ॥ प्रश्रयावनतोऽपृच्छद्वृद्धान्नंदपुरोगमान् २ कथ्यतांमेपितःकोऽयंसंभ्रमोवउपागतः ॥ किंफलंकस्यचोद्देशःकेनवासाध्यतेमखः ३ एतद्ब्रूहिमहान्कामोमह्यंशुश्रूषवेपितः ॥ नहिगोप्यंहिसाधूनांकृत्यंसर्वात्मनामिह ४ अस्त्यस्वपरदृष्टीनाममित्रोदासविद्विषाम् । उदासीनोरिवद्वर्ज्यआत्मवत्सुहृदुच्यते ५

एवंनिवसन् १ सर्वात्मासर्वदर्शनइत्येतद्द्वयंतदभिज्ञत्वेहेतुः प्रश्रयःसेवाशीलता २ कोयंकिंविषयः मखविषयश्चेत्तत्राह किंफलमिति दृष्टमुतादृष्टंफलम् यद्वा किमर्थंसंभ्रमः अस्यसंभ्रमस्यकिंफलंसाध्यं मखश्चेदत्राह कस्येति कांदेवतामुद्दिश्यद्रव्यत्यागलक्षणःकेनाधिकारिणा हेतुनावा ३ तदेतत्पृष्टंसर्वंमह्यंब्रूहि किमर्थंमहान्कामः ममतस्मिन्कार्येमहतीआकांक्षावर्तते तुशब्दोभेदार्थःइहवाव्यवहारविशेषे यत्सर्वात्मनाकीर्त्यंवक्तुंयोग्यंतत्साधूनांगोप्यंनहि कुतइत्थंसंकल्प्यतइत्यतःप्रसिद्धत्वादित्याह हीति ४ कथमेतदवगतमितितत्राह अस्तीति निरस्तस्वकीयपरकीयबुद्धीनामन्यत्वादिसद्भावेऽपिविशेषोबुद्धेरस्तीतितत्राह अमित्रेति नविद्यतेमित्रंउदासीनःविद्विट्द्वेष्यश्चयेषांतेतथातेषांमित्रादिविशेषाभावात्स्वकीयत्वादिबुद्ध्यभावेनसाधूनांगोप्यंनास्तीतिप्रसिद्धमेवेत्यर्थः ननुचेदनानांचित्तस्यप

मित्रत्वेनसाधूनांमित्राद्यभाववचनंकंठोपरिगतवदौपचारिकं परोक्षप्रियाइवहिदेवाः प्रत्यक्षाद्विषइतिश्रुतेः षट्कर्णोभिद्यतेमंत्रइतिस्मृतेः अतःकथंगोप्यंनास्तीत्याशंक्ययोग्यतातिरेकेणामित्रादिकंना स्तीतितत्त्वं नतुसर्वात्मना अतोगोप्यंनास्त्येवेति शत्रुःसर्वथावर्ज्यः मित्रविषयेउदासीनोपितथा तस्यशत्रौकथनसंभवादरिवदसुहृद्वर्ज्यआत्मवत्सुहृद्वर्ज्यइत्यभिप्रायेणाह उदासीनइति अतस्त्व त्सुहृत्त्वाद्गोप्यमपिमह्यंब्रूहीतिभावः ५ अस्तुतववक्तव्यं अथाप्यस्माकंफलज्ञानाभावेपिसंध्योपासनादिवदनुष्ठानंघटतइत्याशंक्यसत्यज्ञानाभावेयुष्माकंफलप्राप्तिर्नस्यादित्याह ज्ञात्वेति कश्चित्ज्ञा त्वानुतिष्ठतेकश्चिदज्ञात्वातत्रविदुषःकर्मसिद्धिःअनुष्ठानफलंस्यात्अविदुषःकर्मानुष्ठानमजानतःपुंसःयथावत्फलंनभवेत् मंत्रावृत्त्याद्रव्यसंपत्त्याचऋत्विगनुगुणेनवाकिंचित्संभवेपिपूर्णफलंनस्यादित्यर्थः यथाऽविदुषोनस्यात् तथाविदुषइतिवा ६ अस्त्वन्यत्रप्रकृतेकिमितितत्राह तत्रेति तत्रदेवताकर्मणांमध्येतावत्प्रथमंक्रियायोगाःकर्मानुष्ठानप्रकाराः लौकिकवृद्धव्यवहारादवगताः गतानुगतवद्वा ७ पर्जन्यशब्दस्यगर्जन्मेघेपिवर्त्तनात्तद्व्यावृत्त्यर्थंइंद्रइति तर्हिइंद्रइत्येवालमितिचेन्न अस्यपर्जन्यशब्दस्यमेघाभिमानित्वविशेषद्योतनार्थत्वात् तत्कथमत्राह मेघाइति आत्मवत्देहवन्मूर्तयः देहाःस्वदेहोयथाभिमन्यमानत्वेनप्रेष्ठस्तथामेघाअपीतिभावः मेघैःकिंप्रयोजनंलोकस्येत्याशंक्यमिहसेचनइतिधातुनिष्पन्नमेघशब्दार्थसूचनपूर्वकंतत्प्रयोजनमाह अभिवर्षंतीति प्राणनंचेष्टाकरणं जी वनंशरीराप्यायनं अनेनप्राणशब्दविवरणंकृतं प्राणिनामितिपाठेपयसोगतेर्हेतुत्वेनपयःशब्दवाच्यत्वेजलस्यपयगतावितिधातोरर्थः ८ यतोमेघालोकोपकारिणःतत्तस्माद्वामुचांजलदानांमेघाना

ज्ञात्वाज्ञात्वाचकर्माणिजनोऽयमनुतिष्ठते ॥ विदुषःकर्मसिद्धिःस्याद्यथानाविदुषोभवेत् ६ तत्रतावत्क्रियायोगाभवतांकिंविचारिताः ॥ अथवालौकि कास्तन्मेपृच्छतःसाधुभण्यताम् ७ ॥ नंदउवाच ॥ पर्जन्योभगवानिंद्रोमेघास्तस्यात्ममूर्तयः ॥ अभिवर्षंतिभूतानांप्राणनंजीवनंपयः ८ तंतातवयम न्येचवार्मुचांपतिमीश्वरम् ॥ द्रव्यैस्तद्रेतसासिद्धैर्यजंतेक्रतुभिर्नराः ९ तच्छेषेणोपजीवंतित्रिवर्गफलहेतवे ॥ पुंसांपुरुषकाराणांपर्जन्यःफलभावनः १० यएवंविसृजेद्धर्मंपारंपर्यागतंनरः ॥ कामाल्लोभाद्भयाद्द्वेषात्सवैनाप्नोतिशोभनम् ११ ॥ श्रीशुकउवाच ॥ वचोनिशम्यनंदस्य तथान्येषांव्रजौकसाम् ॥ इंद्रायमन्युंजनयन्पितरंप्राहकेशवः १२ ॥ श्रीभगवानुवाच ॥ कर्मणाजायतेजंतुःकर्मणैवप्रलीयते ॥ सुखंदुःखंभयंक्षेमंकर्मणैवाभिपद्यते १३ अस्ति चेदीश्वरःकश्चित्फलरूपःसकर्मणः ॥ कर्त्तारंभजतेसोपिनह्यकर्तुःप्रभुर्हिसः १४

मित्यर्थः ईश्वरंअपवृष्टीनांशिक्षणसमर्थं तेषांमेघानां रेतसारतिकरलक्षणेनजलेन सिद्धैःउत्पन्नैः अन्येचनराः ९ तच्छेषेणइष्टावशिष्टेन त्रिवर्गफलहेतवेधर्मार्थकामलक्षणपुरुषार्थसिद्धये पुरुषकारा णांपराक्रमसिद्धकर्मणां फलभावनःफलसाधकः १० विपक्षेबाधकमाह यएवमिति कामाद्विषयाभिलाषात् लोभाद्वित्तव्ययशंकया भयात् राजभयात् द्वेषाद्देवताद्वेषात् ११ मन्युंक्रोधं १२ कर्मफलदातृत्वेनकर्मप्रेरयितृत्वेनकर्मशब्दवाच्यत्वेनचनारायणएवसर्वस्यकर्तेत्यभिप्रेत्यसर्वस्यकारणंकर्मैवेत्याह कर्मणेति १३ ननुप्रवृत्तेर्बुद्धिपूर्वकत्वेनकर्मणोऽचेतनत्वेनतदयोगाज्जगत्तदधीनमिति वक्तुंनयुक्तं किंतुचेतनाधीनमेवचेतनोपिनदेवदत्तवत्साधारणोभवति अपितुविशिष्टएवकश्चिदितिश्रीकृष्णहार्दानभिज्ञस्यनंदगोपस्यमानसीं शंकां गूढाभिसंधिःपरिहरति अस्तिचेदिति यदिकश्चिदीश्वरो स्तीतिमतंतर्हिसईश्वरःकर्मणःफलंसुखादिलक्षणंरूपयति अनुकूलंकरोतिददातीतिफलरूपः सहायकल्पः नस्वतंत्रइत्यर्थः एतदेवद्रढयति कर्तारमिति फलरूपत्वेनप्रयोजकत्वाज्जगतस्तदधीनत्वमाशं तंइत्यतोवाह कर्तारमिति सत्वदभिमतईश्वरोपिकर्मकर्त्तारंभजतेफलदातृत्वेनानुवर्तते नाकर्मकर्त्तारं कुतइत्यतआह नहीति सईश्वरःकर्माकर्तुःफलदानेप्रभुःसमर्थोनहि कस्मात्सामर्थ्याभावइत्यत्राह हीति उद्देश्यकारणाभावात् १४

अवांतरेश्वरत्वमभ्युपगमैवमुदितं इदानीमीश्वरएवत्वदभीष्टोनापेक्षितः वस्तुतस्तु स्वभावविहितकर्मणएवफलदातृत्वोपपत्तेः पयःस्यंदनादिवदित्याशयेनेश्वरमाक्षिपति किमिंद्रेणेति स्वस्याद्भावःसत्ताय स्यसतथा नपराधीनसत्ताकःयद्वास्वतंत्रोभावः स्वभावः तेननारायणेन विहितंकथितं अन्यथाकर्तुमनीशेनासमर्थेन १५ ननुयदिस्वभावेनैवकर्मक्रियतेतर्हिकर्तामृदंडसलिलादिबाह्यद्रव्यांकिमर्थंमपेक्ष तइत्याशंक्यतदपिस्वभावानियतमित्यतःसर्वंस्वभावाधीनमित्याह स्वभावेति हिशब्देनपयःस्यदनादिकमपिनारायणकृतमित्यभिप्रैति एतस्यवाअक्षरस्यप्रशासनेगार्गिप्राच्योन्यानद्यःस्यंदतेइति श्रुतेः स्वभावादिशब्दवाच्यस्यहरेरधीनमिदसर्वमित्यभिप्रायेणावांतरेश्वरएवात्रनिषिध्यते नतुमुख्येश्वरइत्यत्रआचार्यै.फलरूप.सकर्मणइत्याद्यवांतरेश्वरविषयमित्यभिधाय स्वभावेकर्माणिचयःसत्त्वादि षुगुणेषुच स्थितोविष्णुःसर्वकर्तापृथक्स्वंस्थश्चसर्वगइत्यादिप्रमाणंचकृष्णहार्दतात्पर्यार्थंउदाहारि यद्वासईश्वरःकर्मणोहरे फलरूपोज्ञानात्माकर्तारंकर्मभजते अकर्तुःअकर्मणःप्रभवतीतिप्रभु तदुक्तं तेन ज्ञातंफलंयस्मात्कर्मणःफलमर्पितइति अस्त्ववांतरेश्वरःकर्मफलरूपःप्रकृतेकिमायातमितितत्राह किमिति स्वस्वकर्मज्ञानविषयंबिंबभूतभगवतअनुवर्तिनांप्रतिबिंबानां नन्वैत्रैलोक्येश्वरमिंद्रकथंकर्मफल भागितितुच्छीकरोषीतितत्राह अनीशेनेति अस्मदभिमतंकर्मशब्दवाच्यंवस्तुकर्मफलभाङ्नभवतीत्याशयेनस्वाभावेत्युक्तं स्वःस्वाधीनःभावःक्रियायस्यसस्वभावः तदुक्तं नचासौकर्मफलभाङ्नास्याकि चिन्नशक्यतइत्यादि एतदेवोपपादयति स्वभावतंत्रइति हिशब्देनतेषामवांतरेशानांविष्णुवशत्वमंतरेणान्यकर्मवशत्वंनास्तीतिदर्शयति नान्यकर्मवशत्वंतुतेषांविष्णुंविनाक्वचिदिति स्वभावस्थमिदंसर्वमि त्यनेनसर्वशब्दवाच्यत्वंस्वभावस्यहरेरितिसूचितसचब्राह्मणगिर्यादिनामाविष्णुरजःपरइत्यादिस्मृतेः १६ ननुविष्णोःसर्वनामवत्त्वेएकस्यैवोच्चनीचदेहयोगवियोगप्राप्त्यादेवदत्तादिविशेषाभावेनसर्वंतदधीन

## किमिंद्रेणेहभूतानांस्वस्वकर्मानुवर्तिनाम् ॥ अनीशेनान्यथाकर्तुंस्वभावविहितंनृणाम् १५ स्वभावतंत्रोहिजनःस्वभावमनुवर्तते ॥ स्वभावस्थमिदंसर्वं सदेवासुरमानुषम् १६ देहानुच्चावचाञ्जंतुःप्राप्योत्सृजतिकर्मणा ॥ शत्रुर्मित्रमुदासीनःकर्मैवगुरुरीश्वरः १७ तस्मात्संपूजयेत्कर्मस्वभावस्थःस्वकर्मकृत् ॥ अंजसायेनवर्तेततदेवास्यहिदैवतम् १८ वर्ततेब्रह्मणाविप्रोराजन्योरक्षयाभुवः ॥ वैश्यस्तुवार्तयाजीवेच्छूद्रस्तुद्विजसेवया १९ कृषिवाणिज्यगोरक्षा कुसीदंतुर्यमुच्यते ॥ वार्ताचतुर्विधातत्रवयंगोवृत्तयोऽनिशम् २०

मितिवक्तुंनशक्यतेइतितत्राह देहानिति दुःखयतीतिदुःखीतदु.खस्वातंत्र्यात्तच्छब्दवाच्यत्वम् नतुतदनुभवतः अतःसर्वनामत्वंयुज्यतेउत्सृजातित्यजतिसृजति आपादयति जातस्यशत्र्वादिभावश्चहरिणैवे त्याह शत्रुरिति सुखंदुःखंभवोभावइत्यादिस्मृतेः यद्वायथातत्तच्छक्तिप्रेरकत्वेनब्राह्मणादिशब्दवाच्यत्वहरेस्तथाशत्रुत्वादिशब्दवाच्यत्वमित्याह शत्रुरिति कर्मशब्दवाच्योहरिरेवशत्रुत्वादिःपूज्य त्वात्तत्त्वोपदेशेनगुरुरैश्वर्यादियोगादीश्वरः १७ यस्माद्धरतिसर्वमितिगिर्यादिनामाहरिस्तस्मात्स्वविहितकर्मकृत् स्वभावस्थः नारायणार्पितसर्वेंद्रियवृत्तिःपुरुषः क्रियापतनयोःकर्मेत्यभिधानात् क्षितिधृत्यादिक्रियाश्रयत्वेनजगत्सर्जनादिक्रियाश्रयत्वेनवापरोक्षापरोक्षज्ञानविषयत्वेनवाकर्मसुपूजयेदित्यन्वयः तदुक्तं एतस्मात्कारणात्कृष्णःशक्रस्यविमदायच गिर्यादिस्थितमात्मानंपूजयामासब ल्लवैरिति स्वकर्मकृदित्युक्तविवृणोतिरिति अंजसेति येनांजसातत्त्वेनयोवर्तेत अस्यतदेवदैवतंकुलदैवम् हिलोकप्रसिद्धम् अंजसात्वरितेतत्त्वेमहदद्भुतखेदयोरितियादवः अनेनयच्छास्त्रेविघ्नेश्वरादिनामाख्या तंतदप्यस्यहरेर्नामेतिसिद्धम् १८ यस्ययत् किंकिमितितत्राह वर्ततेतिब्रह्मणावेदेनविहितेनयागादिना यद्वायोयेनकर्मणाअंजसासहितोवर्तेत अस्यतदेवकर्मदैवतमान्याहि तर्हिविप्रादेःकिंकर्मविहितमित्य त्राह ब्रह्मणेति कृच्छ्रचांद्रायणादिलक्षणेनतपसा ब्रह्मवेदस्तपस्तत्त्वमित्यमरः वार्तयाकृष्यादिलक्षणयाचतुर्विधया १९ कृषिर्भुवउल्लेखनादिक्रिया वाणिज्यसत्यानृतलक्षणक्रियादि गोरक्षापशुपाल नं वृद्ध्यर्थंद्रव्यप्रयोगःकुसीदम् तत्रकृष्यादिषुगोभिर्वृत्तिराजीवनंयेषांतेतथा २०

प्रकारांतरेणेंद्रमाक्षिपति सत्त्वमित्यादिना विश्वंसमस्तं अन्योन्यंनिमित्तीकृत्येतिशेषः २१ मेघानामिंद्रोनियोजकइत्यत्राह रजसेति रंजयतिसर्वमितिरजोभगवानभिहितः नत्वचेतनस्यरजोगुणस्य मेघेप्रेरकत्वंसंजाघटीति सिध्यंतिसंपन्नकार्याभवंतिकिंकरिष्यतिनकिमपीत्यर्थःप्रश्नेक्षेपेविकल्पेकिमितियादवः २२ इतोप्यस्मत्कुलदेवतात्वाभावादिंद्रयागोनोचितइत्याशयेनाह ननइति पुरःपुराणिग्राम स्थितिमुपादायगृहिणःसपत्नीकाः २३ एकतरंबहूनांसिद्धांतानांमध्येएकंभावंसिद्धांतमाजीव्योपजीव्यान्यंभावमुपधावतिउपास्ते सपुरुष तस्माद्भावात्क्षेमंसुखंनलभते यौवनंजरयतीतिजारः असतीबहु

मत्स्वंरजस्तमइतिस्थित्युत्पत्त्यंतहेतवः ॥ रजसोत्पद्यतेविश्वमन्योन्यंविविधंजगत् २१ रजसाचोदितामेघावर्षंत्यंबूनिसर्वतः ॥ प्रजास्तैरेवसिध्यंतिम हेंद्रःकिंकरिष्यति २२ ननःपुरोजनपदानग्रामागृहिणोवयम् ॥ वनौकसस्तातनित्यंकाननाद्रिनिवासिनः २३ आजीव्यैकतरंभावंयस्त्वन्यमुपधावति ॥ नतस्माद्विंदतेक्षेमंजारंनार्यसतीयथा २४ तस्माद्गवांब्राह्मणानामद्रेश्चारभ्यतांमखः ॥ यइंद्रयागसंभारास्तैरयंसाध्यतांमखः २५ पच्यंतांविविधाः पाकाःसूपांधःपायसादयः ॥ संयावापूपशष्कुल्यःसर्वदोहश्चगृह्यताम् २६ हूयंतामग्नयःसम्यग्ब्राह्मणैर्ब्रह्मवादिभिः ॥ अन्नंबहुगुणंतेभ्योदीयतांधेनुद क्षिणाः २७ अन्येभ्यश्चाश्वचांडालपतितेभ्योयथार्हतः ॥ यवसंचगवांदत्त्वागिरयेदीयतांबलिः २८ स्वलंकृताभुक्तवंतःस्वनुलिप्ताःसुवाससः ॥ प्रद क्षिणंचकुरुतगोविप्रानलपर्वतान् २९ एतन्ममतंतातक्रियतांयदिरोचते ॥ अयंगोब्राह्मणाद्रीणांमह्यंचदयितोमखः ३०॥ श्रीशुकउवाच ॥ कालात्म नाभगवताशक्रदर्पजिघांसया ॥ प्रोक्तंनिशम्यनंदाद्याःसाध्वगृह्णंततद्वचः ३१ तथाचविदधुःसर्वंयथाहमधुसूदनः ॥ वाचयित्वास्वस्त्ययनंतद्द्रव्येणगिरिवि प्रभूभृताम् ३२ उपहृत्यबलीन्सर्वानादृतायवसंगवाम् ॥ गोधनानिपुरस्कृत्यगिरिंचक्रुःप्रदक्षिणाम् ३३ अनांस्यनडुद्युक्तानितेचारुह्यस्वलंकृताः ॥ गोप्यश्चकृष्णवीर्याणिगायंत्यःसद्विजाशिषः ३४ कृष्णस्त्वन्यतमंरूपंगोपविश्रंभणंगतः ॥ शैलोऽस्मीतिब्रुवन्भूरिबलिमादद्बृहद्वपुः ३५ तस्मैनमोव्रजज नैःसचक्रेह्यात्मनात्मने ॥ अहोपश्यतशैलोऽसौरूपीनोऽनुग्रहंव्यधात् ३६ एषोऽवजानतोमर्त्यान्कामरूपीवनेचरः ॥ हंतिह्यस्मैनमस्यामःशर्मणेआत्म नोगवाम् ३७ इत्यद्रिगोद्विजमखंवासुदेवप्रचोदिताः ॥ यथाविधायगोपालाःसहकृष्णाव्रजंययुः ३८ इतिश्रीभागवतेदशमस्कंधेद्वाविंशोऽध्यायः ॥ २२ ॥

भर्तृका २४ २५ सूपोमुद्गान्नं अंधःकेवलान्नं संयावःभिन्नयवकृतःमुद्गामिश्रौदनोवा अपूपंपिष्टकृतम् शष्कुलीपैष्टिकामंडलाकृति. सर्वदोहःक्षीरदधितक्रादिकः २६ बहुगुणंषड्रसोपेतं २७ यवसंतृणचू र्णिका गिरयेगिरिसन्निहितायतन्नाम्नेहरये २८ २९ ३० शक्रदर्पजिघांसयाशक्रादिदेवानांअसुरावेशाद्दर्पादिकंभवतितदनुग्रहार्थंतद्दर्पादिहननेच्छया तदुक्तं अत्यल्पपरत्वसुरावेशोदेवानाचभार्णिंदर्पादि ३१ ३२ ३३ ३४ गोपविश्रंभणंगोपानांविश्वासकरं आदत्भक्षितवान् ३५ तस्मैआत्मनेपर्वतरूपिणेसकल्प्यनमनमितितत्राह अहोइति ३६ ३७ ३८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधे विजयध्वजकृतटीकायांद्वाविंशोध्यायः ॥ २२ ॥ ॥ ७ ॥ ॥

गोवर्धनोद्धरणेनस्वनाथाःसगोधनागोपालाःइंद्रकृतापदोरक्षिताः एवंभक्तिज्ञानसंपन्नान्संसारार्तान्प्राणिनोरक्षत्येवाधोक्षजइतिप्रतिपादयितुमथमध्यायआरभ्यते तत्रमुख्यप्राणमेकमंतरेणान्येषांदेवादी नामत्यल्पासुरावेशस्तस्मिन्गतेप्रकृतिभावश्चेत्युभयंदर्शयितुमुपक्रमते इंद्रइति विहतांनिराकृतां कृष्णएवनाथोयेषांतेतथातेभ्यः क्रुधद्रुहेर्ष्यासूयार्थानांयंप्रतिकोपइतिचतुर्थी कृष्णंप्रतिचकोपंकृ वानितिसूचनायेदंविशेषणं असुरावेशंप्रकटयतीतिज्ञायतेनेन हेत्यनेनशक्रकोपेनकृष्णमाहात्म्यमेवप्रकाश्यते १ अंतकारिणांप्रलयंकुर्वतामित्यनेनभगवंतमंतरेणान्यानिवर्त्यंत्वमाह सांवर्त कमिति अमुनैवजगत्क्षयकरत्वेसूचितेप्यंतकारिणामितितद्देवविशेषितं प्राचोदयत्प्रेरितवानित्यर्थः ईशंकृष्णमुद्दिश्यमन्युनाकोपेन अहमेवेशोनान्यइतिमन्युनादैत्याभिमानेनवा मन्युर्दैन्येक्रतौक्रु धीतियादवः २ मर्त्यंमरणधर्मत्वेनानित्यंकृष्णमुपाश्रित्यसर्वस्मादधिकाश्रयोयमितिकृत्वादेवस्यत्रैलोक्याधिपतेःममहेलनंअवज्ञांकृतवंतइति अनेनेशमन्युनेत्येतद्विवृतम् ३ देवस्वभावत्वादसुरा

श्रीशुकउवाच ॥ इंद्रस्तदात्मनःपूजांविज्ञायविहतांनृप ॥ गोपेभ्यःकृष्णनाथेभ्योनंदादिभ्यश्चुकोपह १ गणंसांवर्तकंनाममेघानांचांतकारिणाम् ॥ इंद्रःप्राचोदयत्क्रुद्धोवाक्यंचाहेशमन्युना २ अहोश्रीमदमाहात्म्यंगोपानांकाननौकसाम् ॥ कृष्णंमर्त्यमुपाश्रित्ययेचक्रुर्देवहेलनम् ३ यथाऽदृढैःकर्ममयैः क्रतुभिर्नामनौनिभैः ॥ विद्यामान्वीक्षिकींहित्वातितीर्षंतिभवार्णवम् ४ वाचालंबालिशंस्तब्धमज्ञंपंडितमानिनम् ॥ कृष्णंमर्त्यमुपाश्रित्यगोपामेचक्रुरप्रियम् ५ एषांश्रियाऽवलिप्तानांकृष्णेनाप्यायितात्मनाम् ॥ धुनुतश्रीमदस्तंभंपशून्नयतसंक्षयम् ६ अहंचैरावतंनागमारुह्यानुव्रजेव्रजम् ॥ मरुद्गणैर्महावेगैर्नंदगोष्ठजिघांसया ७ श्रीशुकउवाच ॥ इत्थंमघवताज्ञप्तामेघानिर्मुक्तबंधनाः ॥ नंदगोकुलमासारैःपीडयामासुरोजसा ८ विद्योतमानाविद्युद्भिर्नदंतःस्तनयित्नुभिः ॥ तीव्रैर्मरुद्गणैर्नुन्नाववृषुर्जलशर्कराः ९ स्थाणुस्थूलावर्षधारामुंचत्स्वभ्रेष्वभीक्ष्णशः ॥ जलौघैःप्लाव्यमानाभूर्नादृश्यतनतोन्नतम् १० अत्यासारातिवातेनपशवोजातवेपनाः ॥ गोपागोप्यश्चशीतार्तागोविंदंशरणंययुः ११ शिरःसुतांश्चकायेनप्रच्छाद्यासारपीडिताः ॥ वेपमानाभगवतःपादमूलमुपाययुः १२ कृष्णकृष्णमहाभागत्वन्नाथंगोकुलंप्रभो ॥ त्रातुमर्हसिदेवान्नःकुपितात्भक्तवत्सल १३ शीतवर्षातिवातेनहन्यमानमचेतनम् ॥ निरीक्ष्यभगवान्मेनेकुपितेंद्रकृतंहरिः १४ अपर्त्वत्युल्बणंवर्षमतिवातंशिलामयम् ॥ तन्मखेविहतेऽस्माभिरिंद्रोनाशायवर्षति १५

गोपितत्त्वमेवकथ्यतइत्याशयेनाह यथेति अदृढैरसारैःअन्यत्रक्षरद्दारुकृतैः कर्ममयैःबहुव्यापारसाध्यैःअन्यत्रतत्क्षणादिबहुकर्मसाधितैःकुत्सितैरल्पप्रयोजनैर्वाप्लवैः कुःपापेल्पार्थकुत्सयोरितियादवः आन्वीक्षिकीं स्वानुकूलबिंबदर्शनात्मिकांविद्यां आत्मज्ञानमित्यर्थः ४ वाचालं अस्तिचेदीश्वरःकश्चिदित्यादिशास्त्रकुत्सितभाषणं अतएववर्तेतब्रह्मणेत्यादिमानंप्रमाणमस्यास्तीतिमानिनं रज्जुचोदितामेघाइत्यादिनामत्तत्वमज्ञत्वंचलभ्यते आजीव्यैकतरंभावमित्यादिनापंडितमानित्वम् ५ अवलिप्तानांदृप्तानांआप्यायितात्मनांवर्धितमनसां धुनुतनिराकुरुत ६ नागंगजम् ७ निर्मुक्तबंधनाः गलितनिगडाः त्यक्तजलस्तंभाइत्यर्थः आसारैर्धारासंपातैः वेगवद्वर्षैरित्यर्थः ओजसास्वशक्तिलक्षणबलेन ८ स्तनयित्नुभिर्गर्जितैः स्तनयित्नुर्हिगर्जितइतियादवः जलान्येवशर्कराःश्वेतपाषाणशलाः ९ स्थाणुवत्स्थूलाः नतोन्नतंनिम्नोच्चस्थलम् १० ११ स्वकायेनशिरश्चसुतांश्चप्रच्छाद्य १२ १३ अचेतनंनिःसंज्ञम् १४ अपर्तौअनृतौअवृष्टिसमयइत्यर्थः १५

प्रतिविधिंपरिहारम् आत्मयोगेन आत्मसामर्थ्येन स्वनिर्मितोपायेनवा तमोऽज्ञानम् १६ अज्ञानहरणेनकिंप्रयोजनमित्याशंक्यसंसारबंधमानिमित्ताहंकारनाशनार्थमित्याशयेनाह नहीति मद्भावयुक्तानांमद्भक्तियुक्तानाम् इत्यमर्थश्चेत्पाठोप्येवंकिंनस्यादितिचेन्न भक्तिशब्दार्थविवरणार्थत्वात् तथाहि भावोलीलाक्रियाचेष्टाभक्त्यादिष्वर्थेषुभावशब्दप्रवृत्तेः भगवल्लीलादिप्रत्यक्षदर्शनेनसर्वकालंभगवत्येवमनोवृत्तिरितिप्रकाशनेनभक्तेस्तिमितत्वमुक्तंस्यादिति ईशोहमितिस्मयोऽत्युल्बणदर्पोनहि सतांस्वभावमाह मत्तइति प्रशमायप्रकृष्टमनिष्टायै १७ प्रशमायंजयस्तंभइत्याह तस्मादिति अहमेवपरिग्रहोमूलंयस्यसतथा पत्नीस्वीकारशपथमूलेष्वपिपरिग्रहः इतिव्रतोनियमोजयस्तंभः गोपायेपालयामि १८ कृत्वाउन्मूल्यकृतीछेदने छत्राकंशिलींध्रं यथोपजोषंयथासुखम् भग्नौबिलम् १९ २० वातवर्षनिमित्तंभयंअलंनिवारितम् अलंतुभूषणेशक्तौपर्याप्तोविनिवारणेइतियादवः तत्राणंतस्माद्भयाद्रक्षणम् २१ कृष्णेनाश्वासितमानसाः आप्यायितमनोरथाः सोप

तत्रप्रतिविधिंसम्यगात्मयोगेनसाधये ॥ लोकेशमानिनोमौढ्याद्धरिष्येश्रीमदंतमः १६ नहिमद्भावयुक्तानांसुराणामीशविस्मयः ॥ मत्तःसतांमानभंगःप्रशमायोपपद्यते १७ तस्मान्मच्छरणंगोष्ठंमन्नाथंमत्परिग्रहम् ॥ गोपायेस्वात्मयोगेनसोऽयंमेव्रतआहितः १८ इत्युक्त्वैकेनहस्तेनकृत्वागोवर्धनाचलम् ॥ दधारलीलयाकृष्णश्छत्राकमिवबालकः १९ अथाहभगवान्गोपान्हेंऽबतातव्रजौकसः ॥ यथोपजोषंविशतगिरिगर्तंसगोधनाः २० नत्रासइहवःकार्योमद्धस्ताद्रिनिपातनात् ॥ वातवर्षभयंचालंतत्त्राणंविहितंहिवः २१ तथानिर्विविशुर्गर्तंकृष्णाश्वासितमानसाः ॥ यथावकाशंसधनाःसव्रजाःसोपजीवनाः २२ क्षुत्तृड्व्यथांसुखापेक्षांहित्वातैर्व्रजवासिभिः ॥ वीक्ष्यमाणोदधाराद्रिंसप्ताहंनाचलत्पदात् २३ श्रीशुकउवाच ॥ कृष्णयोगानुभावंतंनिशम्येंद्रोऽतिविस्मितः ॥ निस्तंभोभ्रष्टसंकल्पःस्वान्मेघान्सन्यवारयत् २४ खंव्यभ्रमुदितादित्यंवातवर्षंचदारुणम् ॥ निशम्योपरतंगोपान्गोवर्धनधरोऽब्रवीत् २५ निर्यातत्यजतत्रासंगोपाःसस्त्रीधनार्भकाः ॥ उपारतंवातवर्षंव्युदप्रायाश्चनिम्नगाः २६ ततस्तेनिर्ययुर्गोपाःस्वंस्वमादायगोधनम् ॥ शकटोढोपकरणंस्त्रीबालस्थविराःशनैः २७ भगवानपितंशैलंस्वस्थानेपूर्ववत्प्रभुः ॥ पश्यतांसर्वभूतानांस्थापयामासलीलया २८ तंप्रेमवेगान्निभृताव्रजौकसोयथासमीयुःपरिरंभणादिभिः ॥ गोप्यश्चसस्नेहमपूजयन्मुदादध्यक्षताद्भिर्युयुजुस्तथाशिषः २९ यशोदारोहिणीनंदोरामश्चबलिनांवरः ॥ कृष्णमालिंग्ययुयुजुराशिषःस्नेहकातराः ३० दिविदेवगणाःसर्वेसिद्धगंधर्वचारणाः ॥ तुष्टुवुर्मुमुचुःसर्वेपुष्पवर्षाणिभारत ३१

जीवनाःव्रीहितंदुलादिशरीरयात्रासाधनैःसहिताः २२ सुखापेक्षाम् शयनासनवसनादिसुखसाधनश्रद्धाम् हित्वामुक्त्वा २३ योगानुभावंयोगैश्वर्यं अनुभावःप्रभावेस्यान्निश्चयेभावसूचकइति महापुरुषान्दृष्ट्वास्थाणुवत्प्रावण्यराहित्यंस्तंभः तद्रहितोनिस्तंभः भ्रष्टसंकल्पःगलितमनोरथः २४ व्यभ्रंविगतमेघम् वातश्चवर्षश्चवातवर्षंएकवद्भावः २५ व्युदप्रायाःविगतजलप्रायाः २६ शकटोढोपकरणंशकटगतमुपकरणंजीवनसाधनम् शकटाढोपकरणंचादाय गतौशकटपरिवर्तनेनाटोपकरणंसंभ्रमविधिर्यथा भवतितथेति २७ २८ प्रेमवेगात्प्रेमोद्रेकात्निभृताःनिश्चलाःपूर्णानंदाःवा समीयुःसमाजग्मुः २९ स्नेहकातराः स्नेहकलिलांतःकरणाः ३० ३१

३२ त्हदिस्पृशःमनोहराः त्हच्छुभ्यामुपसंख्यानमित्यलुक् ३३ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांत्रयोविंशोऽध्यायः ॥ २३ ॥ अनुस्मरणार्थमायेस्वामिवयः सप्तवर्षपर्यंतं बालचरितमनुक्रम्यतेऽस्मिन्नध्याये तत्रश्रीशुकोगोपानांसंकथनप्रकारंकथयति एवंविधानीति येगोपाःकृष्णस्यैवंविधानिकर्माणिवीक्ष्यतत्रतत्रसाक्षाद्दृष्ट्वापितस्यकृष्णस्यवीर्यंमाहात्म्यंविदंतिजानं तितेतद्वीर्यविदोनभवंति तेगोपाःसमेत्यसंभूयप्रोचुःव्याकुर्वन्नित्यन्वयः १ बालस्यैतानिकर्माण्यत्यद्भुतानि वक्तुमशक्यानिवा इतियत्तस्मादसावात्मनःस्वस्यजुगुप्सितंग्राम्येषुविषयिजनेषुजन्म कथमर्हतिनिरूप्यमाणेनयोग्यइत्यन्वयः २ कानितानिकर्माणीतितत्राहुः यतइति बिभ्रत्अविभ्रत् पुष्करंपद्मम् ३ तोकेनशिशुना आमीलिताक्षेण ईषत्फुल्लनेत्रेण महौजसःमहाबलायाःअघृष्या

शंखदुंदुभयोनेदुर्दिविदेवप्रचोदिताः ॥ जगुर्गंधर्वपतयस्तुंबुरुप्रमुखान्नृप ३२ ततोऽनुरक्तैःपशुपैःपरिश्रितोराजन्सगोष्ठंसबलोऽविशद्धरिः ॥ तथाविधा न्यस्यकृतानिगोपिकागायंत्यईयुर्मुदिताहृदिस्पृशः ३३ इतिश्रीभागवतेमहापुराणेदशमस्कंधेत्रयोविंशोऽध्यायः २३ श्रीशुकउवाच ॥ एवंविधानि कर्माणिगोपाःकृष्णस्यवीक्ष्यते ॥ नतद्वीर्यविदःप्रोचुःसमुपेत्यसुविस्मिताः १ बालकस्ययदेतानिकर्माण्यत्यद्भुतानिवै ॥ कथमर्हत्यसौजन्मग्राम्येष्वात्म जुगुप्सितम् २ यःसप्तहायनोबालःकरेणैकेनलीलया ॥ कथंबिभ्रद्गिरिवरंपुष्करंगजराडिव ३ तोकेनामीलिताक्षेणपूतनायामहौजसः ॥ पीतं स्तनंसहप्राणैःकालेनेववयस्तनोः ४ हिन्वतोऽधःशयानस्यमास्यस्यचरणावुदक् ॥ अनोऽपतद्विपर्यस्तंरुदतःप्रपदाहतम् ५ एकहायनआसीनोह्रियमा णोविहायसा ॥ दैत्येनयस्तृणावर्तमहन्कंठग्रहातुरम् ६ क्वचिद्धैयंगवस्तैन्येमात्राबद्धउलूखले ॥ गच्छन्नर्जुनयोर्मध्येबाहुभ्यांतावपातयत् ७ वनेसं चारयन्वत्सान्सरामोबालकैर्वृतः ॥ हंतुकामंबकंदोर्भ्यांमुखतोऽरिमपाटयत् ८ वत्सेषुवत्सरूपेणप्रविशंतंजिघांसया ॥ हत्वान्यपातयत्तेनकपित्थानिच लीलया ९ हत्वारासभदैतेयंतद्बंधूंश्चबलान्वितः ॥ चक्रेतालवनंक्षेमंपरिपक्वफलान्वितम् १० प्रलंबंघातयित्वोग्रंबलेनबलशालिना ॥ अमोचयद्व्रजप शून्गोपांश्चारण्यवह्नितः ११ आशीविषंमहारौद्रंदमित्वाविमदंह्रदात् ॥ प्रसह्योद्वास्ययमुनांचक्रेऽसौनिर्विषोदकाम् १२ दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषानो व्रजौकसाम् ॥ नंदतेतनयेऽस्मासुतस्याप्यौत्पत्तिकःकथम् १३ क्वसप्तहायनोबालःक्वमहाद्रिविधारणम् ॥ ततोनोजायतेशंकाव्रजनाथतवात्मजे १४ नंदउवाच ॥ श्रूयतांमेवचोगोपाव्येतुशंकाचवोऽर्भके ॥ एनंकुमारमुद्दिश्यगर्गोमेयदुवाचह १५

वष्टंभायावा ओजोवष्टंभबलयोरिति स्तनंपीतम् वयमद्राक्ष्मेतिशेषः कालेनांतकेन ४ चरणावुदक्ऊर्ध्वंहिन्वतः उत्क्षिपतःमास्यस्यमासमात्रवयस्कस्य प्रपदेनपादाग्रेणहतंपीडितम् ५ एकएवहायनोवर्षो वत्सरोयस्यसतथा तृणावर्तमहन्नितियत्कर्मतदपि ६ हैयंगवम् हैयंगवीनम् सद्योदधिमंथनेजातंनवनीतम् तस्यस्तैन्येचौर्येसति बाहुभ्यागच्छन्नितिसंबंधः ७ मुखतः मुखेगृहीत्वेतिशेषः अपा टयत् व्यदारयत् ८ तेनदैत्येनकपित्थानिकपित्थबीजानि फलेलुक् ९ क्षेमंप्राप्तरक्षणम् १० ११ दमित्वानिगृह्यउद्वास्यउच्चाटयित्वा १२ अनुरागोहृदयंगमः औत्पत्तिकः उत्पत्तिसिद्धःकथम् १३ ततोनोजायतेशंकेत्यादिनानतद्वीर्यविदइतिस्पष्टीकृतम् १४ व्येतुविगताभवतु वःयुष्माकम् प्रसक्तकथांमध्येतरंगत्वेनकथांतरमारभ्यतइतिसूचनायहकारः प्रत्यारंभेप्रसिद्धौहहाविषादशुभातिष्विति च १५

र्गाःशुक्लाद्याः १६ कश्चिन्मथुरायांवसुदेवस्यसकाशात् अभिज्ञाः वसुदेवस्यापत्यमितितद्धितप्रत्ययज्ञानपटवः १७ नकेवलमेतदेवनामरूपत्रयमेवअपितुअन्यान्यपिसंतीत्याह बहूनीति नारायणादीनि नामानुरूपाणि मधुसूदनानिकर्मानुरूपाणि १८ आधास्यत्आधास्यति यद्वा यदियूयमस्मिन्भक्त्युद्रिक्तंचित्तमकरिष्यन्तर्ह्ययंवःपुरुषार्थलक्षणमाधास्यत् लिङ्निमित्तेलृङ्क्रियातिपत्तावितिसूत्रात्अ विधिः १९ २० २१ २२ २३ आनर्चुःपूजयामासुः २४ श्रीशुकःप्रथमभागसमाप्तिसूचनायस्वेष्टदेवताकृष्णमभिष्टुवन् ततआत्मरक्षामाशास्ते देवइति यज्ञविप्लवःयज्ञभंगइत्यर्थः तस्मादुत्पन्नपारुष्य अश्मवत् वज्रपाषाणवत्कर्कशैर्वर्षैःअनिलैश्चस्त्रियासहसीदंतःकंपमाना.बालाश्चपशवश्चयस्मिंस्तत्सीदद्बालपशु आत्माशरणंरक्षितायस्यतत्तथा अनुकंपीहृदयद्रवीभावयुक्तः उत्स्मयःउ त्स्मयः निरस्तदर्पः उत्कृष्टमंदहासोवामहेंद्रस्यमदंगर्वंभिनत्तिनिर्मूलयतीतिमहेंद्रमदभित् अबलोऽस्थूलः अणुर्बालःलीलासाधनमुत्फुल्लशिलींध्रयथा तथैकेनहस्तेनशैलंशिलोच्चयंपर्वतमुत्पाट्यबिभ्रत्

वर्णास्त्रयःकिलास्यासन्गृह्णतोऽनुयुगंतनूः ॥ शुक्लोरक्तस्तथापीतइदानींकृष्णतांगतः १६ प्रागयंवसुदेवस्यक्वचिज्जातस्तवात्मजः ॥ वासुदेवइतिश्रीमानभिज्ञाःसंप्रचक्षते १७ बहूनिसंतिनामानिरूपाणिचसुतस्यते ॥ गुणकर्मानुरूपाणितान्यहंवेदनोजनः १८ एषवःश्रेयआधास्यद्गोपगोकुलनंदनः ॥ अनेनसर्वदुर्गाणियूयमंजस्तरिष्यथ १९ पुरानेनव्रजपतेसाधवोदस्युपीडिताः ॥ अराजकेरक्ष्यमाणाजिग्युर्दस्यून्समेधिताः २० यएतस्मिन्महाभागेप्रीतिंकुर्वंतिमानवाः ॥ नारयोऽभिभवंत्येतान्विष्णुपक्षानिवासुराः २१ तस्मान्नंदकुमारोऽयंनारायणसमोगुणैः ॥ श्रियाकीर्त्यानुभावेनतत्कर्मसुनविस्मयः २२ इत्यद्धामांसमादिश्यगर्गेचस्वगृहंगते ॥ मन्येनारायणस्यांशंकृष्णमक्लिष्टकारिणम् २३ इतिनंदवचःश्रुत्वागर्गगीतंव्रजौकसः ॥ दृष्टश्रुतानुभावास्तेकृष्णस्यामिततेजसः ॥ मुदितानंदमानर्चुःकृष्णंचगतविस्मयाः ॥ २४ ॥ श्रीशुकउवाच ॥ देवेवर्षतियज्ञविप्लवरुषावज्राश्मवर्षानिलैः सीदद्बालपशुस्त्रियात्मशरणंदृष्ट्वानुकंप्युत्स्मयः ॥ उत्पाट्यैककरेणशैलमबलोलीलोच्छिलींध्रंयथाबिभ्रद्गोष्ठमपान्महेंद्रमदभित्प्रीयान्नइंद्रोगवाम् २५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेचतुर्विंशोऽध्यायः ॥ २४ ॥ श्रीशुकउवाच ॥ गोवर्धनेधृतेशैलेआसाराद्रक्षितेव्रजे ॥ गोलोकादाव्रजत्कृष्णंसुरभिःशक्रएवच १ विविक्तउपसंगम्यव्रीडितःकृतहेलनः ॥ पस्पर्शपादयोरेनंकिरीटेनार्कवर्चसा २ दृष्टश्रुतानुभावोऽस्यकृष्णस्यामिततेजसः ॥ नष्टत्रिलोकेशमदइदमाहकृतांजलिः ३

वामिंद्रोगोविंदोनोऽस्मभ्यंप्रीयात्प्रीतोभवत्वित्यन्वयः पायान्नइतिपाठेनोस्मान्रक्षत्वित्यर्थः गोस्वामी गोविंदोऽधिकृतोगवामित्यमरः ॥ २५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृ टीकायांचतुर्विंशोऽध्यायः ॥ २४ ॥ तस्मिन्नप्यसुरावेशेगतेप्रकृतिरेवास्त्वितिवचनात् देवस्वभावप्रकटनपूर्वकंसुरभिक्षीराभिषेकेणशक्रस्तुत्याचहरिमाहात्म्यस्यातिसिद्धत्वान्मुमुक्षुभिस्तस्मिन्नतिशयितं भविधेयमित्यस्याध्यायस्यारंभः तत्रसुरभींद्रयोरागमनंकथयति गोवर्धनइति गोलोकाद्गवामधिकृतस्थानात्सुरभिः इंद्रस्तुस्वर्गलोकात् दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु भूमौपशौचविद्वद्भिर्गो शब्दोदशसुस्मृतइतिहलायुधः योहरेर्विरोधमाचरत्सएवाव्रजदित्यन्वयः १ विविक्तेएकांते विजिरपृथग्भावइतिधातुः जनसंमर्दराहित्यस्थलइत्यर्थः २ इदानींदृष्टःपूर्वंश्रुतोऽनुभावोयेनसतथाइद्रइदमाह ३

केदृशंतत्राह विशुद्धेति अहंतवधामगृहस्थानीयंस्वरूपंशरणंप्रपद्यइतिशेषः अनंतपदार्थराशिंगृह्णातीतिगृहं ननुगृहवत्सत्त्वादिगुणदारुभीरचितंचेत्कालांतरेजीर्णंस्यादित्यत्राह विशुद्धेति विग तंशुद्धसत्त्वंरजस्तमोमिश्ररहितंकेवलसत्त्वगुणोयस्मात्तथा चारुतरपदार्थे कुशलपुरुषेणरचितंनचेत्रयनसुभगंनस्यादित्यत्राह शांतमिति शांतंमंगलंशांतिःप्रशममंगलइति अतएवसुखनिष्ठंवाक्षो भरहितंवा नन्वेवंचेत्पाषाणाकल्पमित्यत्राह तपोमयमिति ज्ञानात्मकंयदासत्त्वमपिनसंबध्यतेतदारजःसंबधोनास्तीतिकिंवक्तव्यमितिभावेनाह ध्वस्तेति अत्रलिंगमाह मायामयइति यत्रत्वयिअयंमा यामयः भगवदिच्छानिमित्तगुणसंप्रवाहःत्रिगुणसंबंधोनविद्यते यस्मात्तस्मादितिशेषः विदसत्तायामितिधातोः जीववत्तत्संबंधोनास्ति किंतुस्रष्टृत्वादौप्रेरकत्वसंबंधोस्तीतिकृत्वानविद्यतइति कीदृशःअग्रह णानुबंधःअग्रहणमाग्रहःसएवानुबंधोगुणभूतोयस्यसतथा यद्वायत्रगुणसंप्रवाहेअग्रहणंअज्ञानमनुबध्नातीत्यग्रहणानुबंधः अनेनकार्याभावेकारणाभावोऽनुमीयतेइतिसूचितं ४ ननुखलेनपर्षान्यातिहान्मिभू रिकिंमालिंदंतिशत्रवोनिंद्राइतिश्रुतेः हरेःकामक्रोधादिदर्शनाल्लोभाद्यभावःकथंकथ्यतइत्यत्राह कुतइति तेगुणाः हेतवोनिमित्तानियेषांतेतद्धेतवः नविद्यंतइतिकुतोनुकिंवक्तव्यमित्यर्थः यद्वातस्यसंसार हेतवःकुतःकल्प्यंतइतिशेषः अबुधस्याज्ञानिनःलिंगभावाःलक्षणभूताः अत्रकारणाभावात्कार्याभावानुमानंचद्रष्टव्यमित्यर्थःयद्यपितवगुणानिमित्ताःकामादयोनसंतितथापिशासनविहिनाअदोषकरत्वात्संती त्याशयेनाह अथापीति दंडशासनंहिंसावा दंडोऽस्त्रीशासनेराज्ञांहिंसायांलगुडेगुणइतियादवः विशुद्धसत्त्वंनिर्मलसत्त्वगुणयुक्तंइत्याद्यपव्याख्यानप्रत्याख्यानायविगतशुद्धसत्त्वमित्यादिव्याख्यातमाचा

इंद्रउवाच ॥ विशुद्धसत्त्वंतवधामशांतंतपोमयंध्वस्तरजस्तमस्कम् ॥ मायामयोयंगुणसंप्रवाहोनविद्यतेतेऽग्रहणानुबंधः ४ कुतोनुतद्धेतवईशम न्युलोभादयोयेऽबुधलिंगभावाः ॥ अथापिदंडंभगवान्बिभर्तिधर्मस्यगुप्त्यैखलनिग्रहाय ५ पितागुरुस्त्वंजगतामधीशोदुरत्ययःकालउपात्तदंडः ॥हि तायचेच्छातनुभिःसमीहसेमानंविधुन्वन्जगदीशमानिनाम् ६ येमद्विधाःस्युर्जगदीशमानिनस्त्वांवीक्ष्यकालेऽभयमाशुतंमदम् ॥ हित्वार्यमार्गंप्रभजंत्य पस्मयाईहाखलानामपितेऽनुशासनम् ७ सत्वंममैश्वर्यमदप्लुतस्यकृतागसस्तेऽविदुषःप्रभावम् ॥ क्षंतुंप्रभोथार्हसिमूढचेतसोमैवंपुनर्भून्मतिरीशमेऽस ती ८ तवावतारोऽयमधोक्षजेहभुवोभराणामुरुभारजन्मनाम् ॥ चमूपतीनामभवायदेवभवाययुष्मच्चरणानुवर्तिनाम् ९ नमस्तुभ्यंभगवतेपुरुषायम हात्मने ॥ वासुदेवायकृष्णायसात्वतांपतयेनमः १० स्वच्छंदेनात्तदेहायविशुद्धज्ञानमूर्तये ॥ सर्वस्मैसर्वबीजायसर्वभूतात्मनेनमः ११

र्यैः सत्वगुणांगीकारेमायामयोयंगुणसंप्रवाहोनविद्यतइत्येतद्व्याहतंस्यादितिपरपक्षिरितिअसच्छासनेनधर्मस्थापनंप्रयोजनंसाच्छिक्षणेनांकिंफलंस्यात् किंचउभयेषांशासकाउभयेतोनैकइतीयंशंका अ सतांचसतांचैवहरिरेवानुशासकः सतांतुश्रेयसेसैवह्यनुशास्तिर्भविष्यतीत्याश्रेयवचनेनपरिहर्तव्येति ५ पितृत्वाद्गुरुत्वात्स्वामित्वाच्चहरेरेकस्यैवानुशासकत्वंनान्यस्येत्याशयेनाह पितेति पुण्यपापफल पाचकत्वेनउपात्तदंडःगृहीतशासनः हितायसतामितिशेषः गुरुरात्मवतांशास्ताशास्ताराजादुरात्मनां इहप्रच्छन्नपापानांशास्तावैवस्वतोयमइत्येतान्निरस्तामितिज्ञातव्यम् ६ सतामनुशासनंश्रेयसइ त्यभिमेतंतदिदानींव्यक्तमाह यइति हेजगदीशमद्विधामानिनःस्युःतेकालेअसुरावेशनिर्मोकसमयेप्राप्तेअभयंत्वांवीक्ष्य अस्मन्मदनिर्मूलनवीर्यंत्वांदृष्ट्वायेनमदेनत्वदपराधमकार्ष्म तंमदंहित्वाअपस्मयाः निरस्तगर्वाः आर्यमार्गंविद्वज्जनसिद्धांतंप्रभजंति नकेवलमस्माकंतवेहानुशासनं खलानामपीत्याह ईहेति ७ तत्रकर्तव्यंप्रार्थयते सत्वमिति अविदुषःअज्ञस्य ८ सतांभवायपुण्यलक्षणभद्रायदे वदत्तवज्जननंभजतोहरेरवताराःकथंभवायस्यादितीदं आवेशोवसुदेवादौदेहादानहरेःस्मृतमित्यादिपाद्मवचनेनपरिहर्तव्यम् ९ १० नकेवलंग्रंथांतरसिद्धमिदंअत्रापीत्याशयेनाह स्वच्छंदेनेति स्वच्छंदेनस्वेच्छया सर्वस्मै सर्वव्यापिने सर्वबीजायसर्वस्यमूलकारणाय ११

आसारसहितवायुभिः १२ ध्वस्तस्तंभः निरस्तस्थूलस्वभावः १३ मघोनाइंद्रेण १४ अकारिकृतः हेमघवन्इंद्र १५ पणव्यवहारइतिधातोः ह्रानादिव्यवहारसाधनत्वात्पाणिःहस्तः दंडपाणिंयमम् भ्रंशयामिविस्रस्तंकरोमि चशब्दएवार्थे अनुग्रहमेव नान्यादृक्त्तादिकं अनुग्रहानंतरमविनश्वरसपदश्चेतिसमुच्चयेवा ऐश्वर्यमीश्वरत्वं गवादिसमृद्धिःश्रीराभ्यामुद्धतेनमदेनांधः ज्ञानलक्षणचक्षूरहितः १६ मयिमनसायुक्तैः अनित्यैश्वर्यादौविस्रंभवर्जितैःभवाद्भिःस्वाधिकारेषुत्रैलोक्यरक्षणादिषुस्थीयताम् १७ अथशब्दःकथारंभे मनस्विनीशुद्धमनाः स्वसंतानैःस्ववंशजातगोभिः सहेतिशेषः १८ विश्वात्मन्विश्वव्यापिन् सनाथाःकृताःस्मइति १९ नोऽस्माकं परमकं अत्युत्तममिष्टदैव इंद्रःईश्वरः देवनांदेवजातीनां येचसाधवःऋष्यादयःतेषांभवायभद्रलक्षणायश्रेयसे २० नःइंद्रंस्वामिनत्वाम् २१

मयेदंभगवन्गोष्ठनाशायासारवायुभिः ॥ चेष्टितंविहतेयज्ञेमानिनातीव्रमन्युना १२ त्वयेशानुगृहीतोऽस्मिध्वस्तस्तंभोवृथोद्यमः ॥ ईश्वरंगुरुमात्मानंत्वामहंशरणंगतः १३ एवंसंकीर्तितःकृष्णोमघोनाभगवानमुम् ॥ मेघगंभीरयावाचाप्रहसन्निदमब्रवीत् १४ श्रीभगवानुवाच ॥ मयातेऽकारिमघवन्मखभंगोऽनुगृह्णता ॥ मदनुस्मृतयेनित्यंमत्तस्येंद्रश्रियाभृशम् १५ मामैश्वर्यश्रीमदांधोदंडपाणिंनपश्यति ॥ तंभ्रंशयामिसंपद्भ्योयस्यचेच्छाम्यनुग्रहम् १६ गम्यतांशक्रभद्रंतेक्रियतांमेऽनुशासनम् ॥ स्थीयतांस्वाधिकारेषुयुक्तैर्वःस्तंभवर्जितैः १७ अथाहसुरभिःकृष्णमभिवंद्यमनस्विनी ॥ स्वसंतानैरुपामंत्र्यगोपरूपिणमीश्वरम् १८ सुरभिरुवाच ॥ कृष्णकृष्णमहायोगिन्विश्वात्मन्विश्वसंभव ॥ भवतालोकनाथेनसनाथावयमच्युत १९ त्वंनःपरमकंदैवंत्वंनइंद्रोजगत्पते ॥ भवायभवगोविप्रदेवानांयेचसाधवः २० इंद्रंनस्त्वाभिषेक्ष्यामोब्रह्मणाचोदितावयम् ॥ अवतीर्णोऽसिविश्वात्मन्भूमेर्भारापनुत्तये २१ एवंकृष्णमुपामंत्र्यसुरभिःपयसात्मनः ॥ जलैश्चाकाशगंगायाऐरावतकरोद्धृतैः २२ इंद्रःसुरर्षिभिःसाकंचोदितोदेवमातृभिः ॥ अभ्यषिंचतदाशार्हंगोविंदइतिचाभ्यधात् २३ तत्रागतास्तुंबुरुनारदादयोगंधर्वविद्याधरसिद्धचारणाः ॥ जगुर्यशोलोकमलापहंहरेःसुरांगनाःसंननृतुर्मुदान्विताः २४ तंतुष्टुवुर्देवनिकायकेतवोह्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः ॥ लोकाःपरांनिर्वृतिमाप्नुवंस्त्रयोगावस्तदागामनयन्पयोद्रुताम् २५ नानारसौघाःसरितोवृक्षाआसन्मधुस्रवाः ॥ अकृष्टपच्यौषधयोगिरयोऽबिभ्रनुन्मणीन् ॥ कृष्णेभिषिक्तएतानिसर्वाणिकुरुनंदन २६ निर्वैराण्यभवंस्तात क्रूराण्यपिनिसर्गतः २७ इतिगोगोकुलपतिंगोविंदमभिषिच्यसः ॥ अनुज्ञातोययौशक्रोवृतोदेवादिभिर्दिवम् २८ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपंचविंशोध्यायः ॥ २५ ॥ ॥

सुरभिःआत्मनःपयसा २२ दाशार्हंदशार्हकुलतिलकं दाशंसुखादिदानमर्हतीतिवा अभ्यषिंचतदेवमातृभिश्चोदितइंद्रश्चसुरर्षिभिःसार्धमाकाशगंगायाजलैःकृष्णमभ्यषिंचादित्यन्वयः गोविंदः गोर्इंद्रोलोकोयस्यसः आलभतइतिवा गोविंदइत्यभ्यधात् अभिधानंकृतवांश्च २३ संननृतुःसमीचीनंनृत्यंचक्रुः २४ देवनिकायानांकेतवः श्रेष्ठाः गांभूमिंपयसाद्रुतांपरिप्लुतां अनयन्प्रापयामासुः २५ मधुमधुररसंस्रवंत्यः ॥ उन्मणीन्अबिभ्रन्भृतवंतः २६ २७ २८ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांपंचविंशोध्यायः ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

भक्तजनानुकंपार्थोयमवतारोनात्मार्थइतिदर्शयितुंवरुणपाशान्नंदगोपमोचनंनंदादीनांस्वलोकप्रदर्शनंचकथयत्यस्मिन्नध्याये शुकइति तत्रवरुणपाशग्रहणंकथंनंदस्याभूदितीदवन्कुमारभते एकादश्या मिति व्रतघ्नाहारोनास्तीतिनिराहारः १ आसुरींवेलांनिशीथकालम् २ वरुणभृत्येनाहृतमपिवरुणाहृतामितिवचनम् वरुणस्यस्वामित्वात् भृत्यापराधेस्वामिनोदंडइति यथातथायुज्यतइत्यर्थः ३ ४ मेमयाविधृतोदेहोऽद्यसफलोजातइतिशेषः अर्थःपुरुषार्थःकथंतदितित्राह यत्पादेति अध्वनःपारंसंसारसमुद्रस्यमार्गस्यतीरांतरम् अद्धावात्यनेनेत्यध्वा ५ ब्रह्मणेदेशादितोऽपरिच्छिन्नाय लोकदृ ष्टिंविकल्पयतीतिलोकदृष्टिविकल्पना विपरीतज्ञानापादिकेत्यर्थः मायाबंधकशक्तिःपरमात्मनेउत्कृष्टानंदस्यदात्रे ६ अकार्यवेदिनाकार्यज्ञानीनमवतीति ७ ८ बंधूनांचमुदमवहत् ९ अतींद्रियंइंद्रिया विषयम् १० नंदवर्णितकृष्णमाहात्म्यंश्रुत्वागोपानाबुद्धौकिमन्ववर्ततत्राह तइति तुशब्दोवधारणार्थोविशेषार्थोवा औत्सुक्यधियः पूर्वस्माद्विशिष्टभक्त्याहृतबुद्धयःतेगोपाःतंकृष्णमधीश्वरं

श्रीशुकउवाच ॥ एकादश्यांनिराहारःसमभ्यर्च्यजनार्दनम् ॥ स्नातुंनंदस्तुकालिंद्याद्वादश्यांजलमाविशत् १ तंगृहीत्वानयद्भृत्योवरुणस्यासुरोंऽतिकम् अविज्ञायासुरींवेलांप्रविष्टमुदकंनिशि २ गोपालास्तमपश्यंतःकृष्णरामेतिचुक्रुशुः ॥ भगवांस्तदुपश्रुत्यपितरंवरुणाहृतम् ३ तदांतिकंगतोराजन्स्वाना मभयदोविभुः ॥ प्राप्तंवीक्ष्यहृषीकेशंलोकपालःसपर्यया ४ महत्यापूजयित्वाहतद्दर्शनमहोत्सवः ॥ वरुणउवाच ॥ अद्यमेविधृतोदेहअद्यार्थोऽधिगतः प्रभो ॥ यत्पादभाजोमगवन्नवापुःपारमध्वनः ५ नमस्तुभ्यंभगवतेब्रह्मणेपरमात्मने ॥ नयत्रश्रूयतेमायालोकदृष्टिविकल्पना ६ अजानतामामकेन मूढेनाकार्यवेदिना ॥ आनीतोऽयंतवपितातत्प्रभोक्षंतुमर्हसि ७ गोविंदनीयतामेषपितातेमामकाहृतः ॥ ममाप्यनुग्रहंकृष्णकर्तुमर्हस्यशेषदृक् ८ श्रीशुकउवाच ॥ एवंप्रसादितःकृष्णोभगवानखिलेश्वरः ॥ आदायागात्स्वपितरंबंधूनांचावहन्मुदम् ९ नंदस्त्वतींद्रियंदृष्ट्वालोकपालमहोदयम् ॥ कृष्णे चसन्नतिंतेषांज्ञातिभ्योविस्मितोऽब्रवीत् १० तेत्वौत्सुक्यधियोराजन्मत्वागोपास्तमधीश्वरम् ॥ अपिनःस्वगतिंसूक्ष्मामुपाधास्यदधीश्वरः ११ इतिस्वा नांसभगवान्विज्ञायाखिलदृक्स्वयम् ॥ संकल्पसिद्धयेतेषांकृपयैतदचिंतयत् १२ जनोवैलोकएतस्मिन्नविद्याकामकर्मभिः ॥ उच्चावचासुगतिषुनवेद स्वांगतिंभ्रमन् १३ इतिसंचिंत्यभगवान्महाकारुणिकोविभुः ॥ दर्शयामासलोकंस्वंगोपानांतमसःपरम् १४ तेतुब्रह्महृदंनीतामग्नाःकृष्णमचक्षत ॥ ददृशुर्ब्रह्मणोलोकंयत्राऽक्रूरोध्यगात्पुरा १५

ब्रह्मादेरप्यधिकंईश्वरमेवंमत्वाज्ञात्वा एषोधीश्वरोनोस्माकंइष्टमकरिष्यत् तर्हिसूक्ष्मामतींद्रियांस्वगतिस्वस्थानमप्युपाधास्यदवर्शयिष्यदिति ११ बुद्ध्यामनीषितंएवंकथमवगतमित्यतःकृष्णचिंतनेना वसीयतइत्याशयेनाह इतीति स्वानामितिसर्वनामसंज्ञामंतरेणप्रयोगोज्ञानित्वविशेषद्योतनाय स्वानांज्ञातीनांहार्दंविज्ञाय तत्रहेतुरखिलदृगिति १२ सन्निहितत्वादिदमित्युक्तंविवृणोति जनइति एतस्मिन्लोकेसांसारिकसंचारस्थानेअविद्याकामकर्मादिभिर्भ्रमन्परिवर्तमानोतएवउच्चावचासुउत्कृष्टापकृष्टासुगतिषुपतितोजनःस्वांगतिंगम्यतइतिगतिः स्वबिंबभूतोनारायणस्तत्स्वस्वरूपचनवेद नजा नातीति १३ संचिंत्यगोपानुद्दिश्यलोकंवैकुंठं कीदृशंतमस प्रकृतेःपरंव्यतिरिक्तं अप्राकृतमित्यर्थः १४ तेगोपास्तंलोकंददृशुः कस्येत्यतउक्तब्रह्मणइति अनेनकृष्णब्रह्मणोरैक्यंसूचितं शून्यागार मिवापश्यन्निितत्राह कृष्णमिति तस्मिन्लोकेकृष्णंचापश्यन्नित्यर्थः १५

किंविशिष्टंकृष्णमितितत्राह सत्यमिति सत्यमबाधितम् जानातीतिज्ञानंसर्वज्ञं अंतत्रयशून्यं अविनाशिवा यत् ब्रह्मैवंविशिष्टंसत्यंज्ञानमनंतंब्रह्मेतिश्रुतिसिद्धं यच्चज्योतिःस्वयंप्रकाशमानंपरंज्योती रूपंसंपद्येतिश्रुतिवेदित यच्चसनातनंसदैकप्रकारं अजोनित्यःशाश्वतोऽयंपुराणइतिश्रौतं यच्चसमाहिताःमुनयोगुणापायेसत्त्वादिगुणनिवृत्तौआवरणाभावात्पश्यंति हिरण्मयेपरेकोशेविरजंब्रह्मनिष्कलं तच्छुभ्रंज्योतिषांज्योतिस्तद्यदात्मविदोविदुरित्यादिश्रुतिशतंहिशब्देनगृहीतं एवंविधगुणविशिष्टंब्रह्मशब्दवाच्यंकृष्णमचक्षतेतिसंबंधः किंविशिष्टागोपाःपुराऽक्रूरोयत्रह्रदेमग्नः ब्रह्मकृष्णात्मकंअध्य गात्अधिगतवान् चक्षुषाऽपश्यत् द्रक्ष्यतीतिभूतपूर्वत्वेनव्यपदेशःकथं यामकनद्दू चैमा मार्थं स्तस्माद्ब्रह्मसंनिधानात्ह्रदान्मग्नाःस्नाताः अत्रेतिहासमाचक्षते यदिपरब्रह्मत्वंतर्हिनःस्वलोकदर्श येतिगोपैःप्रार्थितेनकृष्णेनचउक्तंयादिपुष्माकंमल्लोकदिदृक्षातर्हिशुद्धेनचक्षुषाभाव्यंतदर्थमस्याः कालिंद्याःह्रदेमज्जनानंतरंद्रक्ष्यथेत्युदितास्तेतथाकृत्वाशुद्धचक्षुषातल्लोकंतत्रस्थितंसत्यादिगुणविशिष्टं ब्रह्माभिन्नंकृष्णमपश्यन्निति १६ एतदेवस्पष्टमाह नंदादयइति तुशब्दोयमभेदवक्ति १७ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांषड्विंशोऽध्यायः ॥ २६ ॥ निर्दोषभक्तिजनितब्र ह्मज्ञानमेवमुक्तिसाधनमितियाशास्त्रतात्पर्यार्थंनिर्धारणातदर्थमर्थवादंवदत्यस्मिन्नध्याये तत्रवैकुंठदर्शनानंतरंकःकथामसंगइतितत्राह भगवानपीति यद्रात्रिमुखेलोकदर्शनंतारात्रिं शारदेनशरद्दतु

सत्यंज्ञानमनंतंयद्ब्रह्मज्योतिःसनातनम् ॥ यद्धिपश्यंतिमुनयोगुणापायेसमाहिताः १६ नंदादयस्तुतंदृष्ट्वापरमानंदनिर्वृताः ॥ कृष्णंचतत्रछंदोभिःस्तूय मानंसुविस्मिताः १७ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेषड्विंशोध्यायः ॥ २६ ॥ श्रीशुकउवाच ॥ भगवानपितारात्रिःशारदोत्फुल्लमल्लिकाम् ॥ वीक्ष्यरंतुंमनश्चक्रेयोगमायामुपाश्रितः १ तदोडुराजःककुभःकरैर्मुखंप्राच्याविलिंपन्नरुणेनशंतमैः ॥ सचर्षणीनामुदगाच्छुचोमृजन्प्रियःप्रियायाइव दीर्घदर्शनः २ दृष्ट्वाकुमुदंतमखंडमंडलंरमाननाभंनवकुंकुमारुणम् ॥ वनंचतत्कोमलगोभिरंजितंजगौकलंवामदृशांमनोरमम् ३ निशम्यगीतंतदनंगवर्ध नंव्रजस्त्रियःकृष्णगृहीतमानसाः ॥ आजग्मुरन्योन्यमलक्षितोद्यमाःसयत्रकांतोजवलोलकुंडलाः ४

संबंधिनाकालेनउत्फुल्लाविकसितामल्लिकानवमल्लिकायस्यांसातां योगमायांस्वरूपसामर्थ्यं १ उडुराजश्चंद्रःप्राच्याःककुभोदिशःमुखंशंतमैःसुखकरैःकुंकुमपुष्पवदरुणैः कुभमंदायांगतावितिधातोः ककुबितियोगात्मकःशब्दः भृशंमंदगामिन्याःप्राच्याःसौंदर्यातिशयेनपूज्यायाःस्त्रियोमुखंयौवनातिशयेन उडुकल्पस्यजनस्यानुरागजनकत्वेनराजशब्दवाच्यःपुरुषःशंतमेनारुणेनकरेणहस्तेनकलहा कुलदुःखाश्रुकलिलंयथाविलिंपतिविनिर्मार्ष्टितथेतिशब्दाक्षिप्तइतिशेषः कीदृशःउडुराजःचर्षणीनांसस्यानां खरकिरणसंतापम्लानलक्षणाःशुचःमृजन्परिहरन्हिमकिरणकरेणपाणिनावा दीर्घदर्शनः दीर्घकालादर्शनंयस्यसतथा अन्यत्रबहुकालप्रवासेनदृष्टिमार्गंप्राप्तःप्रियोभर्तादर्शनीयोवा २ मुकुंदःअखंडमंडलंपूर्णमंडलं रामस्यबलभद्रस्याननमिवशोभमानंरमाणामाननमिवरमणीयंनवकुं कुमपुष्पवदरुणम् वनमुडुराजंदृष्ट्वातस्यचंद्रस्यकोमलगोभिःमृदुतररश्मिभिःरंजितंमंडितम् वामदृशांस्त्रीणांमनोरमंमनोहरम् वनंसेवायोग्यस्थलंचदृष्ट्वाकलमव्यक्तमधुरस्वरंजगावित्यन्वयः ३ अनंगवर्ध नंकामोद्रेककारणम् अन्योन्यंपरस्परमलक्षिताशयाः अज्ञातमनोभावाः पूर्वमदृष्टवनस्थानावा सकृष्णोयत्रास्तेतत्रेतिशेषःकांतस्वरंसुवर्णंतेनरचितानिलोलानिकुंडलानियासांतास्तथा ४

तदातासांभावविशेषंकथयति दुहंत्यइति दोहनक्रियांदोहनपात्रंवाअधिश्रित्यपयःश्रपयितुंचुल्ल्यामारोप्य संयावंकथदन्नमनुद्वास्यअनवरोप्य ५ परिवेषयंत्यःभुंजानानांपात्रेषुभोक्तव्यंविनिक्षिपंत्यः तत्परिवेषणम् पाययंत्यःस्तनादिकांयातिशेषः पादमर्दनादिनाशुश्रूषंत्यः ६ प्रमृजत्यःशरीरोन्मार्जनकुर्वत्यः स्थानसंमार्जनंवा अजंत्योमष्यादिना मुखकंठादिष्वाभरणादिदधानाः कंठादिषुवस्त्राणिवसनाइतिव्यत्यस्तवस्त्राभरणाः ७ वार्यमाणानिरोध्यमानागोविंदेनापहृताआकृष्टाआत्मानोमनांसियासांतास्तथा ८ अलब्धविनिर्गमाःनलब्धंविनिर्गमनंयाभिस्तास्तथा तस्यकृष्णस्यभावनयाभक्तिसंस्कारेपायुक्ताः ९ काश्चनताःस्त्रियःगुणमयंसत्त्वादिगुणविकृतदेहंजहुरित्यन्वयः अयंदेहत्यागःसंसारिणइवनकिंतुमुच्यमानस्येवेत्याह सद्यइति बंधनध्वंसोपिप्रारब्धपुण्यपापप्रणाशेनदृष्टत्वात्तत्रापितथैवेत्याह दुःसहेतिदुःसहःसोढुमशक्यःप्रेष्ठस्यकृष्णस्यविरहःसांसारिकोवियोगस्तेनोत्पन्नस्तीव्रतापः अत्युत्कटज्वरानुभवःतेनधुताशुभाःनिरस्तपापाः ध्यानेनप्राप्तःअच्युतस्याश्लेष ध्यानप्राप्ताच्युताश्लेषःतेनउद्भूतयानिर्वृत्यास्वरूपानंदाविर्भावलक्षणयाक्षीणानिप्रारब्धानिमंगलानिपुण्यानियाभिस्तास्तथा १० अनारब्धफलानांकुतोनिर्वृतिरितितत्राह तमिति जारउपपतिःपत्युरप्यधिकइतिसंभावितस्तंकृष्णंपरमात्मानंनारायणमेवसंगताःसम्यग्ज्ञातवत्यः अनेनाबिंबभूतहरिज्ञानेनप्रारब्धप्रणाशइतिसूचितं ११ जारबुद्ध्यापिसंगताइत्युक्तंतस्यतात्पर्यमजानन्निवराजापृच्छति कृष्णमिति गोप्यःकृष्णंपरंकां

दुहंत्योऽभिययुःकाश्चिद्दोहंहित्वासमुत्सुकाः ॥ पयोऽधिश्रित्यसंयावमनुद्वास्यापरायपुः ५ परिवेषयंत्यस्तद्धित्वापाययंत्यःशिशून्पयः ॥ शुश्रूषंत्यःपतीन्काश्चिदश्नंत्योऽपास्यभोजनम् ६ लिंपंत्यःप्रमृजंत्योन्याअंजंत्यःकाश्चलोचने ॥ व्यत्यस्तवस्त्राभरणाःकाश्चित्कृष्णांतिकंययुः ७ तावार्यमाणाःपतिभिःपितृभिर्भ्रातृबंधुभिः ॥ गोविंदापहृतात्मानोनन्यवर्तंतयोषितः ८ अंतर्गृहगताःकाश्चिद्गोप्योऽलब्धविनिर्गमाः ॥ कृष्णंतद्भावनायुक्तादध्युर्मीलितलोचनाः ९ दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः ॥ ध्यानप्राप्ताच्युताश्लेषनिर्वृत्त्याक्षीणमंगलाः १० तमेवपरमात्मानंजारबुद्ध्यापिसंगताः ॥ जहुर्गुणमयंदेहंसद्यःप्रक्षीणबंधनाः ११ ॥ राजोवाच ॥ कृष्णंविदुःपरंकांतंनतुब्रह्मतयामुने ॥ गुणप्रवाहोपरमस्तासांगुणधियांकथम् १२ ॥ श्रीशुकउवाच ॥ उक्तंपुरस्तादेतत्तेचैद्यःसिद्धिंयथागतः ॥ द्विषन्नपिहृषीकेशंकिमुताधोक्षजप्रियाः १३

तंजारंपतिंविदुःब्रह्मतयाश्रुतिशतगीतपरब्रह्मत्वेननविदुःअनधिकारित्वात् याएवंविधास्तासांगुणेषुविषयेषुधीर्बुद्धिर्यासांतास्तथा गुणप्रवाहोपरमःसंसारप्रवाहनिवृत्तिःकथंसंभाव्यतेनिवृत्तिमार्गलभ्याप्रवृत्तिमार्गेणकथंसंसारनिवृत्तिःस्यादिति उत्तिष्ठतजाग्रतेतिश्रुतेः १२ भक्त्यासंततयगुणथनमहिमासस्मरणसमुदितसंविदानिवृत्तियोग्यामुक्तिर्नतुकामादिना तेनस्वर्गादिप्राप्तिरेवकृष्णकामास्तदागोप्यस्त्यक्त्वादेहंदिवंगताइत्यादिस्मृतेरित्यभिप्रायहृदिकृत्वार्थवादस्यापिस्वार्थसाधनसमर्थकत्वात्तेनचोद्यंपरिहरतिशुकः उक्तमिति द्वेमुक्तीज्ञानदानुभवलक्षणानित्यदुःखानुभवलक्षणेति तेउभेअपिसिद्धिशब्दोक्ते तत्रयथाशास्त्रविहितमंगीकर्तव्यमिति तदुक्तम् सदाद्वेषिणामधरंतमःइतिमुक्तिगब्दोदितचैद्यप्रभृतीनित्यादि लोकसंग्रहार्थंकिमुताधोक्षजप्रियाइति अन्यथाकामस्त्वशुभकृच्चापिभक्त्याविष्णोःप्रसादकृदित्यादिनोदाहरिष्यत् जगत्पितामहेविष्णौजारबुद्धिःकथंघटतइतिचेत् अतएवजारबुद्ध्यापीत्यत्रापिपदेनजारबुद्धिंगर्हयामास स्त्रीणांजारेहिप्रेष्ठत्वबुद्धिःसापिनघटतइतिचेत्नसर्वेषांहरौप्रेष्ठत्वबुद्धेरविगाहतयावृत्तेस्तदेतत्प्रेयइतिश्रुतेः अयंभावःकुतोवगतइतिचेन्न जगत्पितामहेजारबुद्धिर्नयुक्तेत्याचार्यवचनात् १३

नन्वाच। यस्यापियथास्थितग्रंथाभिप्रायकथनंविनावक्रगत्याव्याख्यानेकोभिप्रायइत्याशंक्योत्तरग्रंथानुकूल्यादित्याशयेनाह नृणामिति व्यक्तिरवतारःअन्यथावतारोनघटतइत्यत्रहेतुमाह अव्यक्त स्येति ज्ञानादिगुणात्मनः भगवतोव्यक्तिर्नकेवलमसुरनिर्हरणार्थायकिंतुमोक्षलक्षणपुरुषार्थाय पुरुषार्थस्तुभगवत्प्रसादेनस्यात्सचभक्त्या साहरेर्यथास्वरूपविज्ञानेन स्वरूपविज्ञानंचगुणोत्कर्षज्ञानपूर्वकं मत्वन्यथा गुणोत्कर्षज्ञातरियादृशीस्यादितिश्रुतेः तस्माद्द्वेषादिनानित्यसुखानंदानुभवलक्षणमोक्षोवर्षानस्येनापिनस्यात् १४ नन्वेवंतर्हिद्वेषादिनाकासिद्धिमाप्नोतीतितत्राह काममिति येहरौ कामादिकंविदधतउपासतेतेतन्मयतांयांति कामाद्यात्मतामाप्नुवंतिनतुभगवन्मयतां नित्यस्तिमितानंदवारिधेःहरेः कामाद्यभावाद्धिशब्दो यंयंवापिस्मरन्भावंत्यजत्यंतेकलेवरं तंतमेवैतिकौंतेयसदात द्भावभावितइत्यादिस्मृतिसूचयति अवधारणार्थोवा कामिनःकामित्वमेवक्रोधिनःक्रोधित्वमेवेत्यादि तदुक्तं वियुक्तावपिकामिन्योविष्णुकामाव्रजस्त्रियः द्वेषिणश्चहरौनित्यद्वेषिणस्तमसिस्थिताइति विशेषद्योतकोवा तदुक्तं भक्त्याहिनित्यकामित्वंनतुभक्तिंविनाभवेत् अंतःकांततयावापिमुक्तिर्भक्तिमतांहराविति च मनुष्यविशेषदेवविशेषद्योतनार्थोपिभवति स्नेहभक्ताःसदादेवाःकामित्वेनाप्स रस्त्रियइत्यादेर्भक्त्यैवमोक्षोनान्येनसाधनेनेममर्थंविशेषंचवक्ति भक्त्यावाकामभक्त्यावामोक्षोनान्येनकेनचिदित्यतःकामभक्त्यामोक्षंस्त्रीणांवक्ति कामभक्त्याप्सरस्त्रीणामित्यादेःउपासनायाःविशेषो स्तीतिसूचयति उपास्यःश्वशुरत्वेनदेवःस्त्रीणांजनार्दनइत्यादेः तत्तद्योग्यतोपासनामंतरेणमुक्तिःकस्यापिनस्यादितीमंव्याचष्टेः योग्योपासाविनानैवमोक्षःकस्यापिसेत्स्यतीत्यादेः पतित्वपितृत्व

नृणांनिःश्रेयसार्थायव्यक्तिर्भगवतोनृप ॥ अव्यक्तस्याप्रमेयस्यनिर्गुणस्यगुणात्मनः १४ कामंक्रोधंभयंमोहंमैत्रींसौहृदमेववा ॥ नित्यंहरौविदधतोयांतितन्मयतांहिते १५ नचैवंविस्मयःकार्योभवताभगवत्यजे ॥ योगेश्वरेश्वरेकृष्णेयतएतद्विमुच्यते १६ तादृष्ट्वांतिकमायाताभगवान्व्रजयोषितः ॥ अवदद्वदतांश्रेष्ठोवाचःपाशैर्विमोहयन् १७ ॥ श्रीकृष्णउवाच ॥ स्वागतंवोमहाभागाःप्रियंकिंकरवाणिवः ॥ व्रजस्यानामयंकच्चिद्ब्रूतागमनकारणम् १८ रजन्येषाघोररूपाघोरसत्वनिषेविता ॥ प्रतियातव्रजंनेहस्थेयंस्त्रीभिःसुमध्यमाः १९ मातरःपितरःपुत्राभ्रातरःपतयश्चवः ॥ विचिन्वंतोह्यपश्यंतोमाकृढ्वंबंधुसाध्वसम् २०

विशेषंसूचयति पतित्वेनश्रियोपास्योब्रह्मणामेपितेतिचेत्यादेः गुरुत्वविशेषमपिब्रूते गुरुःश्रीब्रह्मणोर्विष्णुःसुराणांचगुरोर्गुरुरित्यादेः सर्वेषामपिज्ञानेनगुरुत्वंब्रह्मणउपास्यदैवत्वाविष्णोरि तीमंचाह गुरुर्ब्रह्मास्यजगतोदैवंविष्णुःसनातनइत्यादेः १५ यथाहिशब्दोपक्षिप्तावहवोविशेषाःशास्त्रांतरसिद्धाःसंतितस्माद्भगवतिविस्मयोनकार्यइत्युपसंहरति नचैवमिति विस्मयःआश्चर्यबुद्धि र्भगवताप्येवमकारिकिमुतास्माभिरितिदर्पोवा चित्रेदर्पेचविस्मयइतियादवः भगवत्यैश्वर्यादिगुणसामग्रीमतीत्ययहेतुरीत्यानतकल्प्यइत्याह अजइति नजायतेइत्यजःसौभर्यादियोगेश्वराअपियो गबलेनातिमानुषंकुर्वंति किमुततदीश्वरोयमितिभावेनाह योगेश्वरेश्वरइति कृष्णविषयःप्रश्नःपरिहारोन्यविषयइवेयते अतःकथंसंशयनिस्तारइतिशंकानिरासाभिप्रायेणाह कृष्णइति इदंतत्र माह यतइति यतोयस्मात्कृष्णादेतज्जगद्विमुच्यतेसंसारान्मुक्तंभवति यस्यप्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यतेनापरेणेतिश्रुतेः १६ परीक्षित्प्रश्नंपरिहृत्यबुभुत्सितकथाशेषंवक्ति तादृष्ट्वेति वाचःप रिभाषणादुर्विदैःपाशैःस्नेहलक्षणैः वदतांव्यक्तवाचांकवीनांश्रेष्ठः प्रशस्ततमः १७ वःकिंप्रियंकरवाणियुष्माकंमयाभीष्टंकर्तव्यंतत्किंतदभीष्टंजानन्नप्यज्ञइवपृच्छतिव्रजस्येति काच्चिद्व्रजस्यस्थानं अनामयं नआमयोरोगोयस्मिन्नुतत्तथा १८ ननुयातिंकाचिन्निमित्तमपेक्षतेभवदागमनंअन्यथास्यामवस्थायांनोचितमितितत्राह रजनीति घोरसत्वाराक्षसादयः १९ विचिन्वंतःमृगयंतः कृढ्वंकुरुध्वं साध्वसंभयं २०

राकेशश्चंद्रः यमुनायाअनिलेनवायुना।निर्मंथेनएजद्भिःकंपमानैःतरुपल्लवैः शोभितं यद्वा यमुनानिलानीतनीरेणैजद्भिः २१ ततोयुष्मानपश्यंतोबंधवोभयमवाप्नुवंतियस्मात्तस्मात् सतीःस त्यः २२ भूतागमनकारणमित्युक्तमुक्तंरागमूलत्वात्प्रवृत्तेरितितत्राह अथवेति मदभिस्नेहान्मदधिकरणस्नेहात् यंत्रिताशया बद्धांतःकरणाःनिर्यमिताभिप्रायावा हियस्मात्तस्मादागमनमुपप न्नं तत्कथमत्राह प्रीयंतइति ममप्रीयमाणस्यसतःसर्वेपिप्रीणंतिनचेत्तवेत्यन्वयव्यतिरेकाभ्यांप्रमितत्वात् २३ किंचअन्यदेकंशास्त्रविहितंवदामीत्याशयेनाह भर्तुरिति स्त्रीणाममायया‍अवचनया भर्तुःपत्युःशुश्रूषणंधर्मोहिलोकवेदसिद्धः भर्तरिसन्निहितोनारायणइतिबुद्ध्याशुश्रूषणंपरोधर्मोहियस्मात्तस्मात्तस्यभर्तुःबंधूनांकल्याणंचश्रेयइतिच नकेवलतद्बंधूनांश्रेयः अपितुप्रजानांसं ततिलक्षणानांचानुपोषणं समृद्धिकरणंचभवतीत्यर्थः २४ पत्युर्दौःशील्यादिदोषसद्भावेपिस्त्रीभिस्तत्त्यागोनविहितइत्याह दुःशीलइति दुःशीलःकलहादिशीलसंपन्नः दुर्भगोनिर्वीर्यःकांति विहीनोवा वृद्धःगतवयाः जडःस्वकार्यमूढःरोगीभग्नांगोऽल्पांगः कुष्ठादिव्याधिपीडितोवा ब्रह्महत्यादिदोषसद्भावेकथंनहातव्यइतितत्राह लोकइति दौःशील्यादिदोषसद्भावेपिब्रह्महत्यादिपंचमहापात करहितश्चेत्पतिःशुचिरेवनहातव्योऽन्यथाविदोषइतिभावेनलोकइत्युक्तम् २५ कामस्यपुरुषार्थत्वेनपतिदोषेणतदप्राप्त्याजन्मनोनिष्प्रयोजनत्वमापन्नमितिप्रकारांतरेणसाफल्यमापादनीयं ह्यीति वि

दृष्टंवनंकुसुमितंराकेशकररंजितम् ॥ यमुनानिलनीरैजत्तरुपल्लवशोभितम् २१ तद्यातमाचिरंगोष्ठंशुश्रूषध्वंपतीन्सतीः ॥ क्रंदंतिवत्साबालाश्चतान्पायय तदुह्यत २२ अथवामदभिस्नेहाद्भवत्योयंत्रिताशयाः ॥ आगताह्युपपन्नंतत्प्रीयंतेमयिजंतवः २३ भर्तुःशुश्रूषणंस्त्रीणांपरोधर्मोह्यमायया ॥ तद्बंधूनां चकल्याणंप्रजानांचानुपोषणम् २४ दुःशीलोदुर्भगोवृद्धोजडोरोग्यधनोपिवा ॥ पतिःस्त्रीभिर्नहातव्योलोकेप्सुभिरपातकी २५ अस्वर्ग्यमयशस्यंचफल्गु कृच्छ्रंभयावहम् ॥ जुगुप्सितंचसर्वत्रऔपपत्यंकुलस्त्रियः २६ श्रवणाद्दर्शनाद्ध्यानान्मयिभावोऽनुकीर्तनात् ॥ नतथासन्निकर्षेणप्रतियाततततोगृहान् २७ ॥ श्रीशुकउवाच ॥ इतिविप्रियमाकर्ण्यगोप्योगोविंदभाषितम् ॥ विषण्णाभग्नसंकल्पाश्चिंतामापुर्दुरत्ययाम् २८ न्यकृत्यवक्त्रवनजान्यतिताप शुष्यद्बिंबाधराणिचरणेनमहींलिखंत्यः ॥ अस्रैरुपात्तमषिभिःकुचकुंकुमानितस्थुर्मृजंत्यउरुदुःखभराःस्मतूष्णीम् २९

पक्षेबाधकमाह अस्वर्ग्यमिति चशब्दएवार्थे उपपतिःपत्युःप्रतिनिधिःउपपतिःजारस्तत्संबंधिकर्मग्राम्यलक्षणंतत्कुलस्त्रियः सर्वत्रपत्युरुत्तमाधममध्यमेषुपुरुषेषुजुगुप्सितमेवेत्यन्वयः कथं तदुच्यते अस्वर्ग्यंस्वर्गविरोध्येवनभवति किंतुअयशस्यं इहामुत्रचदुष्कीर्तिकरंच तथापिनबहुलफलंफल्गुतुच्छफलं अल्पकालविषयत्वात् कृच्छ्रंकष्टं स्यात्कष्टंकृच्छ्रमित्यमरःकृच्छ्रंकर्तुःश्रमसा धनंवा मरणादिभयजनकम् २६ ननुतवमुख्यभर्तृत्वात्त्वत्सेवनंजारसेवनवदस्वर्ग्यंनभवति किंतुपतिसेवनान्मुख्यसाधनमेवस्यादित्याशंक्यसत्यंतथापिमच्छ्रवणादिनायुष्माकंमयिभक्तिःस्यात् नतथाममसन्निकर्षनिषेवणेनयस्मात्तस्माद्भवतीभिःगृहानवाप्यमयिभक्तिःकर्तव्येत्याह श्रवणादिति २७ प्रतियातव्रजंनेहस्थेयंस्त्रीभिःसुमध्यमाइतिगोविंदभाषितअधुनाविप्रियं पश्चाद्विशेषतः प्रियंचिंतामनसिदुःखचर्याविचारं चिंताचार्दिक्ययोश्चेति २८ दुःखंरक्षयितुमाह न्यकृत्येतिवक्त्रवनजानिमुखकमलानिन्यकृत्यअधःकृत्वाबिंबफलतुल्यान्यधराणिबिंबाधराण्यतर्गतशोका ग्न्यतितापेनशुष्यंतिबिंबाधराणियेषुतानितथा कामबाणप्रविद्धांगास्विन्नयोनिर्वैरागना पादांगुष्ठनखेनाधोवदनालिखतीक्षितिमितिकामशास्त्रात्प्रसिद्धभावंदर्शयति चरणेनेत्यादिना उपात्तमषिभिरंगी कृताजनैरस्रैर्बाष्पैः उरूणांदुःखानाभारोयासांतास्तथास्मकृष्णवाक्याभिप्रायंसंस्मृत्य कामस्यदहनाग्नैस्तुदग्धांगोत्पादिताश्रुभिः नेत्रद्वारेणनिर्यातिदुःखमतर्गतंस्त्रियइति २९

तदर्थेकृष्णकृतेविनिवर्तितःसर्वकामोयाभिस्तास्तथा रुदितेनरोदनेन उपहतेक्लिष्टेसंरंभेणप्रणयकोपेनगद्गदपदंस्खलदक्षरपदंयासांतास्तथा ३० तथाविचार्यकिमब्रुवन्नितितत्राह मैवमिति नृशंसंपरुषवचनमेवंगदितुंवक्तुंनार्हसि कुतइत्यत्राह संत्यज्येति हेदुरवग्रह अवग्रहोवर्षाविघातःतद्रहितःभक्ताभीष्टवर्षणशीलेत्यर्थः शब्दादिसर्वविषयान् संत्यज्यभक्त्यातवपादमूलंभजेमतेविमुक्तावास्मान् त्यज अत्रदृष्टांतमाह देवइति ३१ शुश्रूषध्वपतीनितियदुदितंतत्राहुः यत्पतीति हेअंगस्त्रीधर्मशास्त्रविदात्वयास्त्रीणांपत्यादीनामनुवर्तनंस्वधर्मइतियत्तदस्त्येवनसंदिग्धंतर्हितानिविसृज्यागमनंकिमर्थमागताइतितत्राह तदपीति देववरेअस्मत्पित्रादीनांजामातृस्थानीयेत्वय्येतदर्पितंक्रियतइतिशेषः देवानांवरणीयेवा देवाद्यभीष्टदातरिवा नकवलंपतिस्थानीये ईशेऐश्वर्यादिगुणसंपन्नेतस्मात्सुरणीयइत्यर्थःपरमानंदविषयेपिहिपतिरयंकथंतद्विषयइत्याशंक्यनकेवलमस्माकमेवपरमानंदगोचरःअपितुसर्वेषामितिभावेनाह प्रेष्ठइति अस्माकंविशेषतोपिप्रेष्ठइत्याह बंधुरिति बंधुरूपःपरमात्माकिलतथापुरातनवार्ता तासंभाव्ययोःकिलेति यद्वात्मभूतोबंधुः ३२ इतोपित्वमेवास्माकंमुख्यःपतिरित्याशयेनाहुःकुर्वंतीति कुशलाःसारासारविवेकपटवः स्वेआत्मन् अनिमित्तबंधावात्मनिस्वामिनिवात्वयिरतिंकुर्वंतिनोस्माकंनित्याप्रियैःपत्यादिभिःकिंप्रयोजनमितिशेषःनित्याप्रियत्वंकथमितितत्राहुःआर्तिदैरिति अनेनक्रंदंतिवत्साःइत्येतत्परिहृतम् ततःकिमत्राहुःतन्नइति यस्मात्त्वंमुख्योभर्ताऽतस्तस्मात्तर्हिकिं

प्रेष्ठंप्रियेतरमिवप्रतिभाषमाणंकृष्णंतदर्थविनिवर्तितसर्वकामाः ॥ नेत्रेविमृज्यरुदितोपहतेस्मकिंचित्संरंभगद्गदगिरोब्रुवतानुरक्ताः ३० ॥ गोप्यऊचुः ॥ मैवंविभोर्हतिभवान्गदितुंनृशंसंसंत्यज्यसर्वविषयांस्तवपादमूलम् ॥ भक्त्याभजेमदुरवग्रहमात्यजास्मान्देवोयथादिपुरुषोभजतोमुमुक्षून् ३१ यत्पत्यपत्यसुहृदामनुवृत्तिरंगस्त्रीणांस्वधर्मइतिधर्मविदात्वयोक्तम् ॥ अस्त्येवतत्तदपिदेववरेत्वयीशेप्रेष्ठोभवांस्तनुभृतांकिलबंधुरात्मा ३२ कुर्वंतिहित्वयिरतिंकुशलाःस्वआत्मन्नित्यप्रियैःपतिसुतादिभिरार्तिदैःकिम् ॥ तन्नःप्रसीदवरदेश्वरमास्मछिंद्याआशांधृतांत्वयिपरामरविंदनेत्र ३३ चित्तंसुखेनभवतापहृतंगृहेषुयन्निर्विशत्युतकरावपिगृह्यकृत्ये ॥ पादौपदंनचलतस्तवपादमूलाद्यामःकथंव्रजमथोकरवामकिंवा ३४ सिंचांगनस्त्वदधरामृतपूरकेणहासावलोककलगीतजहृच्छयाग्निम् ॥ नोचेद्वयंविरहजाग्न्युपयुक्तदेहाध्यानेनयामपदयोःपदवींसखेते ३५ यर्ह्यंबुजाक्षतवपादतलंरमायादत्तक्षणंक्वचिदरण्यजनप्रियस्य ॥ अस्प्राक्ष्मतत्प्रभृतिनान्यसमक्षमंगस्थातुंत्वयाविरहिताबतपारयामः ३६

रूपःप्रसादइत्यत्राहुः मास्मेति आशामतितृष्णाम् आशादिग्गतितृष्णयोरितियादवः ३३ भर्तियातेत्यस्योत्तरमाहुः चित्तमिति हेसखेनोयाश्चित्तंउतसदापिगृहेषुनिर्विशति उपभोगहेतुनननुस्मरतिकुतइत्यत्राहुः भवतेति भवतापहृतंतस्मादितिशेषः सहिसर्वमनोवृत्तिप्रेरकःसमुदाहृतइतिवचनात् करावपिकर्मसाधनेऽपिगृह्यकृत्येगृहयोग्यकार्येसंमार्जनोपलेपनादिलक्षणेनतिष्ठतइतिशेषः अस्मत्पादौगमनसाधनेऽपितवपादमूलात् पदंएकपादन्यासमात्रमपिनचलतइत्यर्थःतस्मात्कथंव्रजंयामःकिंवाकरवामइतिनज्ञायतेइतिशेषः ३४ तर्हिभवतीनांकिमभीष्टमित्यत्राहुःसिंचेति पूरकेणप्रवाहेणहासंहितावलोकेन कलगीतेनमधुरगानेनजातोहृच्छयःकामःसएवाग्निःतंसिंचअभिषिंचशमय नोचेत्नशमयसिचेत् विरहाज्जातेनाग्निनाउपयुक्तोगृहीतोदेहोयासांतास्तथा ३५ यर्हियदाक्वचिद्दत्तक्षणंदत्तावसरम् अस्प्राक्ष्म स्पृष्टवंत्यः अरण्यजनःसंन्यस्तजनः तत्प्रभृतितदानीमारभ्य अन्यसमक्षंअन्यजनाभिमुखंनपारयामः नशक्नुमःबतअद्भुतमाश्चर्यंतवमहिमा अनेनत्वदंगस्पर्शनानंतरमन्यांगस्पर्शनशंकानिवारिता ३६

अद्यापिलक्ष्म्यातवपादपद्मद्वंद्वधूलिनिषेवणंकांक्षितंकिमुतास्माकमितिभावेनाहुः श्रीरिति अन्येषांसुराणांब्रह्मादीनांप्रयासःप्रयत्नःयस्याःश्रियःस्ववीक्षणकृतःस्वानिरीक्षणार्थंकृतः साश्रीर्वक्षसिपदंल ब्ध्वापितुलस्याः पदंयस्यतवपदांबुजरज चकमे कामितवतीयथा वयंचतद्वत्तथातस्यतवपादरजोनिषेवणायप्रपन्नाइत्यन्वयः स्ववीक्षणकृतइतिपाठेस्वदर्शनार्थमित्यर्थः ३७ वृजिनार्दनदुःखनाशन वसतीःगृहान् त्वदुपासनेआशाश्रद्धायासांतास्तथा सुंदरंचतत्स्मितंचसुंदरस्मितंतन्निरीक्षणेन उद्भूतेनतीव्रेणकामाग्निनातप्तआत्मादेहोयासांताः पुरुषभूषणपुरुषतिलक ३८ हेवीक्ष्यदर्शनीय वयंतवदा स्योभवामेत्यन्वयः आशिषिलिङ्लोटाविति आशिषिलोट् दासीभूत्वाशिषंकामयामहइत्यर्थःदासीभावेकारणमाहुः अलकेति कुंडलश्रियायुक्तंगंडस्थलंअधरसुधाचयस्यतत्तथा हसितेनयुक्तमवलोकं चप्रतिजनंदत्ताभयं भुजदंडयोर्युगंच श्रियएकरमणं प्रधानरतिस्थानं वक्षश्चविलोक्यदृष्ट्वाविचार्यवीक्ष्येतिवा ३९ अस्मत्स्मरशमनचनाचित्रमितिभावेनाहुः काश्रीति तेतवकलपदैःअव्यक्त मधुरशब्दावयवैः अमृतंश्रवणानंदकरंयद्वेणुगीतंवंशपानंतेनसमोहितात्रिलोक्यात्रिलोक्येकाश्रीत्रैलोक्यसौभगमलंकारभूतमिदंरूपसुंदरतरावयवोपलक्षमाकारंचानितरांदृष्ट्वाआर्याणांसतांचरितान्मार्गा दितिशेषःनचलेत्स्खलितानभवतीत्यन्वयःइदंनाचित्रमित्याहुः यदिति यद्यस्माद्वेणुगानात्यस्यरूपस्यस्पर्शादिनावागवादयोंतःप्रज्ञाश्चेतनराशयःपुलकानिरोमांचानि अबिभ्रन्दधुरिति ४० सर्व

श्रीर्यत्पदांबुजरजश्चकमेतुलस्यालब्ध्वापिवक्षसिपदंकिलभृत्यजुष्टम् ॥ यस्याःस्ववीक्षणकृतोऽन्यसुरप्रयासस्तद्वद्वयंचतवपादरजःप्रपन्नाः ३७ तन्नःप्रसी द वृजिनार्दनतेऽङ्घ्रिमूलंप्राप्ताविसृज्यवसतीस्त्वदुपासनाशाः ॥ त्वत्सुंदरस्मितनिरीक्षणतीव्रकामतप्तात्मनांपुरुषभूषणदेहिदास्यम् ३८ वीक्ष्यालकावृतमु खंतवकुंडलश्रीगंडस्थलाधरसुधंहसितावलोकम् ॥ दत्ताभयंचभुजदंडयुगंविलोक्यवक्षःश्रियैकरमणंचभवामदास्यः ३९ काङ्ग्यंगतेकलपदामृतवेणुगीतं संमोहितार्यचरितान्नचलेत्रिलोक्याम् ॥ त्रैलोक्यसौभगमिदंचनिरीक्ष्यरूपंयद्गोद्विजद्रुममृगाःपुलकान्यबिभ्रन् ४० व्यक्तंभवान्व्रजभयार्तिहरोऽभिजा तोदेवोयथादिपुरुषःसुरलोकगोप्ता ॥ तन्नोनिधेहिकरपंकजमार्तबंधोतप्तस्तनेषुचशिरस्सुचकिंकरीणाम् ४१ श्रीशुकउवाच ॥ इतिविक्लवितंतासांश्रुत्वा योगेश्वरेश्वरः ॥ प्रहस्यसदयंगोपीरात्मारामोप्यरीरमत् ४२ ताभिःसमेताभिरुदारचेष्टितःप्रियेक्षणोत्फुल्लमुखीभिरच्युतः ॥ उदारहासद्विजकुंददीधिति र्व्यरोचतैणांकइवोडुभिर्वृतः ४३ उपगीयमानउद्गायन्वनिताशतयूथपः ॥ मालांबिभ्रद्वैजयंतींव्यचरन्मंडयन्वनम् ४४ नद्याःपुलिनमाविश्यगोपीभिः हिमवालुकम् ॥ रेमेतत्तरलानंदिकुमुदामोदवायुना ४५

स्यस्वामित्वेनभर्तृगुणयोगादस्मत्कुलेऽभिजातत्वेनबंधुत्वेनसबंधयोग्यत्वादस्माकंत्वत्संबंधेनजारसंसर्गदोषागमनेनानिंद्यत्वंदूरोत्सारितंस्यादितिभावेनाहुः व्यक्तमिति भगवान्यथासुरलोकगो प्तावामनतयाभिजातः तथादिपुरुषोदेवोभवान्व्रजभयार्तिहरोभिजातइतिव्यक्तं इदमसंदिग्धमितियत्तत्स्माद्यथायस्मादितिवा कामाश्रितत्वेषुउभयत्रयोज्यम् ४१ विक्लवितंकामार्तवचनं न्यरीरमत् नितरांरमयामास ४२ समेताभिःमिलिताभिःउदारःउत्कृष्टःहासःद्विजादंताःकुंदामल्लिकाआसांदीधितिःकांतिर्यस्यसः द्विजाएवकुंदाःद्विजकुंदाः उदारहासेनाविवृतानांद्विजकुंदानांदीधितिर्यस्यसइ तिवा एणांकश्चंद्रः एणःकुरंगोहरिणइतिहलायुधः ४३ शतशब्दोऽनेकवाची वैजयंतींविजयावहां ४४ हिमवालुकंशीतलसैकतं तस्यानद्याः तरलैः मंदकल्लोलैः आनंदयितुंशीलम स्यास्तीतितरलानंदी कुमुदानामामोदस्यवायुस्तत्तरलानंदीकुमुदामोदवायुः तेन यद्वा तयानद्यातरलानिनृत्यंतीवस्थितानिचतान्यानंदीनिउत्फुल्लानिकुमुदानितत्तरलानंदिकुमुदानितेषा मामोदेनसौरभेणसंपृक्तेनवायुना ४५

परिरंभआलिंगनंतदेवकरालकेलीतीद्रक्रीडातस्यांनिविवस्त्रग्रंथिस्तस्यांस्तनेषुआलभनेनमोचनस्पर्शलक्षणेननर्मणाहास्योक्तयाच कराग्राणांनखानांपातैःउल्लेखलक्षणैश्च क्ष्वेलावलोकहसितैः बालसिंह
नादनिरीक्षणमंदहासैश्च रतिपतिकाममुत्तंभयन् उज्जृंभयन् उल्लोलयन्नित्यर्थः रमयांचकाररेमे बाहुपीडनकुचग्रहणाद्यैराहितेननखदंतनिखातैः बोधितस्तनुशय स्तरुणीनामुन्मिमोलशन कैरपिमारइ
तिम.घः ४६ भुविस्त्रीणांमध्येस्वात्मानमाधिक्येनाभ्यधिकंमेनिरे ४७ सौभगमदं सौभाग्यनिमित्तंमदं मानमहंकारंमदाहंकार५ोःप्रशमायनाशायप्रसादायानुग्रहायच मद्धैणप्रसादजननायच अंतरधीय
त तासांहष्ट्याअदृश्योऽभवदित्यर्थः४८॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांसप्तविंशोऽध्याय॥२७॥ हरेरेवयोगैश्वर्यमौत्पात्तिकंनान्यस्येति ज्ञापनभावेनगोपस्त्रीणांश्रीकृष्णेभक्त्य
तिशयंकथयत्यस्मिन्नध्याये तत्रगोपीनांसंतापादिप्रकारंप्रवक्तिशुकः अंतर्हितइति यूथपंगजेंद्रम् १ गत्याबालीसहखेलनगमनेनअनुरागेणस्नेहेनउदितानिस्मितानितैःरंजितानिसंपर्कगतानीक्षितानि

बाहुप्रसारपरिरंभकरालकेलीनीवीस्तनालभननर्मकराग्रपातैः ॥ क्ष्वेलावलोकहसितैर्व्रजसुंदरीणामुत्तंभयन्रतिपतिंरमयांचकार ४६ एवंभगवतःकृष्णा
ल्लब्धमानामहात्मनः ॥ स्वात्मानंमेनिरेस्त्रीणामाधिक्याभ्यधिकंभुवि ४७ तासांतत्सौभगमदंवीक्ष्यमानंचकेशवः ॥ प्रशमायप्रसादायतत्रैवांतरधीय
त ४८ इतिश्रीभागवतेमहापुराणेदशमस्कंधेसप्तविंशोऽध्यायः ॥२७॥ श्रीशुकउवाच ॥ अंतर्हितेभगवतिसहसैवव्रजांगनाः ॥ अतप्यंस्तमचक्षाणाःकरि
ण्यइवयूथपम् १ गत्यानुरागस्मितरंजितेक्षितैर्मनोरमालापविहारविभ्रमैः ॥ आक्षिप्तचित्ताःप्रमदारमापतेस्तास्ताविचेष्टाजगृहुस्तदात्मिकाः २ गति
स्मितप्रेक्षणभाषणादिषुप्रियाःप्रियस्यप्रतिरूढमूर्तयः ॥ असावहंत्वित्यबलास्तदात्मिकान्यवेदिषुःकृष्णविहारविभ्रमाः ३ गायंत्यउच्चैरमुमेवसंहताविचिक्युरुन्मत्तकवद्वनाद्वनम् ॥ पप्रच्छुराकाशवदंतरंबहिर्भूतेषुसंतंपुरुषंवनस्पतीन् ४ दृष्टोवःकच्चिदश्वत्थप्लक्षन्यग्रोधकिंशुक ॥ नंदसूनुर्गतोहृत्वाप्रेमहासा
वलोकनैः ५ कच्चित्कुरबकाशोकनागपुन्नागचंपक ॥ रामानुजोमानिनीनांदोग्धानंदस्यचात्मजः ६ कच्चित्तुलसिकल्याणिगोविंदचरणप्रिये ॥ सहत्वा
लिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः ७ मालत्यदर्शिवःकच्चिन्मल्लिकेजातियूथिके ॥ प्रीतिंवोजनयन्यातःकरस्पर्शेनमाधवः ८

रीक्षणानिअनुरागस्मितरंजितेक्षितानितैःमनोरमोआलापविहारौतयोर्विभ्रमैःशृंगारैः आक्षिप्तचित्ताः आकृष्टमनसः यायाभगवतारचिताविशिष्टचेष्टास्तास्ताजगृहुः न्यरूरुपन् तस्मिन्कृष्णेआत्माम नो
यासांतास्तथा ग्रहणंअनुकरणंयत्तदात्मिकाः तदाकारमिताइतिपाठार्थौसुष्ठुतामादधाते २ एतदेवविशिनष्टि गतीति प्रियस्यकृष्णस्यगत्यादिषुप्रतिरूढाअंकुरिता अंगीकृतामूर्तिर्यासांतास्तथातत्रानि
मित्तंदर्शयति असावीति असौकृष्णोऽहंवानुइतिविकल्प्यान्योन्यंपृष्ट्वावातदात्मिकाःतद्गतचित्ताः प्रश्नेविकल्पेनुस्विच्चेतियादवः नाविदिषुःआत्मानमितिशेषः कृष्णविहारविभ्रमवद्विभ्रमोयासांतास्त
था अनेनापितदात्मकत्वंविवृतम् ३ संगताःमिलिताः आकाशवद्भूतेषुबहिरंतरंसंतंबाह्याभ्यंतरदेशयोर्वर्तमान अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितइतिश्रुतिः ४ उन्मत्तत्वंस्पष्टयति दृष्टइति हेशब्दः
प्रत्येकमभिसंबध्यते हेन्यग्रोधवट न्यक्अधःरोधःआवरणंयस्यसः पादैरधोभूमिमावृणोतीति किंशुकपलाश पलाशःकिंशुकेपर्णेइत्यमरः रक्तपुष्पवान् ५ कुरबकःकरजःनागःनागकेसरः पुन्नागः
पुरुषस्तुंगइति दोग्धाजिह्मामधुरः ६ ७ मालतीजातिभेदः वोयुष्माभिरदर्शिदृष्टः यूथिकाशतपत्रिका ८

प्रियालोराजादनःदेवदारुर्वा कोविदारःकांचनारकः असनःपीतसारकः अक्षंशुकनासम् परार्थभविनःलोकोपकारार्थमुत्पन्नाः यमुनाकूलसमीपेजाताः रहितआत्मास्वामीकृष्णोयासांतास्तथाता साम् ९ हेक्षितिवेत्स्वयाकिंशुभंतपोलक्षणंकृतम् पर्याप्तमंगोपांगपूर्णंशुभंतेतवकिंवतामंत्रितं सत्कारपूर्वकंव्यावृत्तमस्तीत्यर्थः युगेक्षयातेपर्थश्चिकृतंक्षीवेहितेर्थवादितियादवः खेदानुकूपासंतोपविस्म यामंत्रणेष्वतेत्यमरः अस्तीतिकथमवगम्यतेइत्यत्राह केशवेति केशवस्य सुकेशभारस्यांघ्योःस्पर्शएवोत्सवस्तेनउत्पुलकितैःऊर्ध्वमुखोल्लसितैःअंगरुहैःरोमलक्षणैर्वृक्षैःविभासियत्तस्मादितिशेषः यद्वा केशवांघ्रिस्पर्शेनोत्सवामकृष्णप्रसवासर्तात्वमंगरुहैर्वृक्षैःउत्पुलकितारोमांचिताविभासियद्वाअंघ्रिस्पर्शनलक्षणेनोत्सवेनोत्पुलकितांगरुहैरंकुरितपुष्पितफलितैर्वृक्षैः हेअंघ्रिसंभवेनागयणश्रीपादसंभवेउत्प न्नेअपिपद्भ्यांभूमिरितिश्रुत्यालोकसंभाविते उरुक्रमस्यत्रिविक्रमस्यविक्रमात्पादविक्रमणात् अंगरुहैःउत्पुलकितैर्विभासिवा अहोस्वित्वराहवपुषानारायणेनकृतेनपरिरंभणेनालिंगनेनोढ्तिलक्षणेनकेशा द्वान्यतरस्यामितिसूत्रेणशोभमाना:केशाअस्यसंतीतिमत्वर्थेवप्रत्ययोविधीयतेअर्थांतरविवक्षायांगोपीनामनभीष्टत्वम् १०हेएणपत्निमृगजाये तेईश्वरःकयाचित्प्रिययाप्रियतमयाइहोपगतःसामीप्यमाप्त किं कीदृशःहेसखिमृगभार्ये गात्रैराननादिशरीरावयवैःवोयुष्माकंदृशांसुनिर्वृतिंतन्वन्नपिविस्तारयन् प्रश्ननिमित्तमाह कांतेति कांतायाःकमनीयायाःअंगसंगादालिंगनलक्षणात्संक्रांतकुचकुंकुमेनरंजितायाअ नुरागीकृतायाः अस्मत्कुलपतेःकृष्णस्यांसावलंबिन्याः कुंदस्रजः कुंदपुष्परचितमालायागंधइहवातिआगच्छतीतियत्तस्मादितिशेषः वागतिगंधनयोरितिधातुः यद्वा कांतस्यभगवतोंगसंगसंयोगोयस्याः

चूतप्रियालपनसासनकोविदारजंब्वर्कबिल्वबकुलाम्रकदंबनीपाः ॥ येऽन्येपरार्थभविनोयमुनोपकूलाःशंसंतुकृष्णपदवींरहितात्मनांनः ९ किंतेकृतंक्षि तिशुभंवतकेशवांघ्रिस्पर्शोत्सवोत्पुलकितांगरुहैर्विभासि ॥ अप्यंघ्रिसंभवउरुक्रमविक्रमाद्वाआहोवराहवपुषःपरिरंभणेन १० अप्येणपत्न्युपगतः प्रिययेहगात्रैस्तन्वन्दृशांसखिसुनिर्वृतिमीश्वरोवः ॥ कांतांगसंगकुचकुंकुमरंजितायाःकुंदस्रजःकुलपतेरिहवातिगंधः ११ बाहुंप्रियांसउपधायगृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदांधैः ॥ अन्वीयमानइहवस्तरवःप्रणामंकिंवाभिनंदतिचरन्प्रणयावलोकैः १२ पृच्छतेमालताबाहूनप्याश्लिष्टावनस्पतेः ॥ नूनंतत्करजस्पर्शाद्बिभ्रत्युत्पुलकान्यहो १३ एवंकृष्णंपृच्छमानावृंदावनलतास्तरून् ॥ व्यचक्षतवनोद्देशेपदानिपरमात्मनः १४

सातथा अत्रस्त्रीशब्दोध्याहार्यः साकांतांगसंगास्त्रीतस्याःकुचकुंकुमरंजितायाकुलपतेःकुंदस्रजः गंधोस्यास्तीतिमत्वर्थेअच्प्रत्ययात्गंधवान्वायुरिहवाति वीजयतीति गोपीनामेकवचनबहुवचना भ्यांभक्त्यातिशयपिशाचीग्रहणंसूचयति यद्वाएणपत्नीतुल्यनेत्रत्वात्सखीत्युपचर्यते वःईश्वरोभर्ता मृगःकयाचित्प्रिययाहरिण्याउपगतः आश्लिष्टोपिकिंनभवति गर्हितत्वात् अस्मत्कुलपतिरस्मान्विहाय कयाचिदालिंगितइत्याशयेनाहुः कांतेति कांतायाअंगेउरोवयवेसंगोययोस्तौकांतांगसंगौतौकुचौचकांतांगसंगकुचौतयोःकुंकुमेनरंजितायाःअरुणीभूतायाःकुलपतेःकुंदस्रजोगंधइहवाति स्वयंचनद्द श्यतेतत्सद्भावोविज्ञायतइतिव्यंग्यालंकारोक्तिः ११ विटवृत्तिमनुवर्तमानस्यपुंसोमालत्यादिपुष्पादानेच्छयातत्समीपजिगमिषासंभवेनतत्प्रश्नउपयुज्यते अश्वत्थादिप्रश्नःक्वोपयुज्यतइत्यतःसंभवंदर्शयितुमा हु बाहुमिति हेतरवःप्रणामप्रदक्षिणादिनाप्रसन्नाःसंसाराच्चारयंतीतितरवोऽश्वत्थादयः भगवच्चरणप्रियतुलसिकापुष्पमकरंदलोलैरलिकुलैरन्वीयमानोरामानुजएकबाहुंप्रियायाअंसेउपधायापरेणगृहीतप द्मःप्रणामंचरन्कुर्वन् प्रणयावलोकैःवःअभिनंदतिकिंवेत्यन्वयः श्रावण्याऽलंकारोक्तिःयद्वाइहचरन्रामानुजः प्रणयावलोकैःवःप्रणाममभिनंदतिकिंचानेनस्थावराणांभक्त्युन्नतिःसूचितेति १२नूनांनश्येन यास्तस्यकृष्णस्यकरनखस्पर्शाद्दुत्पुलकितानिपुष्पफललक्षणानिबिभ्रति ताःलताःवनस्पतेःबाहून्शाखाआश्लिष्टाअपिसंभाव्याःपश्यत अहोउन्मुखोभवतेत्यन्वयःअयंरूपकालंकारःसुरतसुखम्नारकः १३ उपसंहरति एवमिति वनोद्देशेवनप्रदेशे १४

परमात्मचरणाकृतित्वंकथमवगम्यतइतितल्लक्षणमुच्यते पदानीति लताकल्पलताआदिशब्देनचक्रादिकंगृह्यते यवादीत्यपिपाठः १५ अन्विच्छंत्य अन्वेषणंकुर्वत्य. वध्वाःकस्याश्चिद्गोपाङ्गियःपदैःचरणै निक्षिप्तैःसुपृक्तानिअंतरालेमिश्रितानि ईर्ष्यार्ताःसमब्रुवन्संलापमकुर्वन् १६ प्रकोष्ठःकरतलमूलभागः करिणासहितायाःकरिण्याःपदानियथा स्वांसन्यस्तहस्तायाःकरिण्याःपदैःसंपृक्तानि करिणाकृता निपदानिवा १७ १८ हेआल्यःसख्यःधन्यानिरपेक्षाः आलिःसत्रेसखीपंक्त्योरितियादवः निरपेक्षोगुणैःपूर्णोधन्यइत्युच्यतेबुधैरितिच ब्रह्माद्यामूर्ध्नायान्दधुरितियत्तस्माद्धन्याइत्यर्थः तस्माद्विष्णो रूतयेअभिप्रायसिद्धये रक्षासिद्धयेवा १९ ननुधन्यानांकृष्णपादतलयुक्तानांरेणूनांसंदर्शनंयुष्माकमभूदितःपरंशोकस्यकिंकारणमित्याशंक्यसत्यमथापितदीयपदसंपृक्तमन्यस्त्रीपदंसंदृश्यसंस्मृत्यमहा शोकोजायतइत्याशयेनाहुः तस्याइति गोपीनांमध्येएकागोपीकृष्णमपहृत्यवशीकृत्य अच्युताधरंअच्युतस्यहरेरच्युतंसंततस्यंदमानामृतमधरोष्ठंरहोरहस्येकांतदेशेभुंक्तेपत्ततस्तस्यागोप्याअमूनि पदानि संदृश्याधरपानंसंस्मृत्यउच्चैःक्षोभंचित्तविक्षेपंकुर्वंतितस्माच्छोकइत्यर्थः २० इदमधिकंशोककारणमित्याशयेनाहुः नेति नूनंतर्कएवंकथंतस्याःगोप्याःपदानिनलक्ष्यंतेमहृश्यंते अदर्शनेका

पदान्यव्यक्तमेतानिनंदसूनोर्महात्मनः ॥ लक्ष्यंतेहिध्वजांभोजवज्रांकुशलतादिभिः १५ तैस्तैःपदैस्तत्पदवीमन्विच्छंत्योऽग्रतोऽबलाः ॥ वध्वाःपदैःसुपृक्तानिविलोक्यार्ताःसमब्रुवन् १६ कस्याःपदानि चैतानियातायानंदसूनुना ॥ अंसन्यस्तप्रकोष्ठायाःकरिण्याःकरिणायथा १७ अनयाराधितोनूनंभगवान्हरिरीश्वरः ॥ यन्नोविहायगोविंदःप्रीतोयामनयद्रहः १८ धन्याअहोअमीआल्योगोविंदांघ्र्यब्जरेणवः ॥ यान्ब्रह्मेशौरमादेवीदधुर्मूर्ध्न्यघनुत्तये १९ तस्याअमूनिनःक्षोभंकुर्वंत्युच्चैःपदानियत् ॥ एकापहृत्यगोपीनांरहोभुंक्तेऽच्युताधरम् २० नलक्ष्यंतेपदान्यत्रतस्यानूनंतृणांकुरैः ॥ खिद्यत्सुजातांघ्रितलामुन्निन्येप्रेयसींप्रियः २१ इमान्यधिकमग्नानिपदानिवहतोवधूम् ॥ गोप्यःपश्यतकृष्णस्यभाराक्रांतानिकामिनः २२ अत्रावरोपिताकांतापुष्पहेतोर्महात्मना ॥ अत्रप्रसूनापचयःप्रियार्थेप्रेयसाकृतः २३ प्रपदाक्रमणेएतेपश्यतासकलेपदे ॥ केशप्रसाधनंत्वत्रकामिन्याःकामिनाकृतम् २४

रणमूहयंति तृणांकुरसंबंधेनखिद्यत्परिघातमाप्नुवत्सुजातंललितमंघ्रितलंयस्याःसातथा प्रेयसींउन्निन्ये उद्धृत्यनीतवान् उद्धृत्यनयनेनभूमिसंबंधाभावात्पदादर्शनमपिअतएवताहशप्रेम्णानास्माकमाग मितिशोकोस्माकम् २१ युष्मत्परित्यागवत्प्रेयसीपरित्यागेनगमनात्तत्पदादर्शनंकिंनस्यादित्यतःकुतउद्धृत्यगमनमनुमीयतइत्यतएतल्लिंगमप्रतिहतमित्याहुः इमानीति धूमाग्न्योरविनाभावव त् भारवहपुरुषपदमज्जनंभारवहनाविनाभूतंप्रत्यक्षसिद्धत्वादुद्धृत्यागमनमनुमीयतइत्यर्थः मानपितुंशीलमस्यास्तीतिमानी तस्यअधिकशृंगारोक्तिरियम् २२ अवरोहणंकेनहाधिक्यादित्याशयेनाहुः महात्मनेति कथमिदमवगतंपुष्पनिमित्तादित्यत्राहुः अत्रेतिअपचयःनखादिसंयोगेनयथाम्लानंनभवतितथामलूनं इदमपिप्रेयसाप्रेमातिशयप्रकटनम् २३ इदमपिचित्रमित्याहुः प्रपदेति द्वेगोप्यः प्रपदयोःपादाग्रयोराक्रमणंययोरस्तितेप्रपदाक्रमणेएतेपदेपादलांछनेअसकलेअतःपूर्णेउन्नतशाखापुष्पावचयेप्रियकृष्णकरावनमितशाखाग्रहणेदुस्थपदत्वात्पादमध्यपार्ष्णिरहितेपश्यतेत्यन्वयः केशमार्जन्याकेशप्रसाधनंकेशसंस्कारः कमुगताविति धातोः कामआनंदःकामोगतिर्ज्ञानंचास्यस्तइतिकामी पूर्णानंदज्ञानवानित्यर्थः तेनकामिना प्रशस्तेच्छावता २४

कर्ता स्त्रियं तानि पुष्पाणि चूडयता संस्कृतकेशपाशे सुदर्शनीयं निदधता कृष्णेनेह स्थले उपविष्टं पश्यतेति शेषः इदं ध्रुवं निश्चितं संदेहं न कुरुतेत्यर्थः अयं सर्वस्मादधिकशोकतम इत्याहुः रेमइति तयाकामिन्या रेमेच सुरतलीलामप्यनुबभूव नस्वार्थमितिसूचयंति आत्मरतइति आत्मनिस्वरूपानंदेरतः आत्मन्येवारामः क्रीडायस्य सतथा आत्मरत आत्मक्रीड इतिश्रुतिः अनेनविशेषणद्वयेनहरेर्विटवृत्तिं निषिध्यंति भगवत्प्रीतिसाधनभक्तिज्ञानादितारतम्यात्प्रीतितारतम्यममूचिइतिज्ञायते तथाचान्यागोप्यइंद्रियवृत्तयः कृष्णनीताकामिनीभक्तिर्बुद्धिर्वाग्राह्येतिबुद्धिमतातत्तत्पदानितत्तदर्थबोधकत्वेन योजनीयानीतिसंग्राह्यमितिसंतोष्टव्यं शोकादिकंचगुणनिमित्तमितिअतएवाखंडितः कामेनेतिशेषः २५ इतिशब्दआदिवचनः प्रकृष्टंकृष्णविषयंप्रलापंकुर्वत्यः विटविषयमनर्थवचनकुर्वत्यश्चाविशिष्टचेतनाश्चविपरीतचेतनाश्चकामिनांदुरात्मतांस्त्रीणामेवंदैन्यंदर्शयन्दर्शयत्यश्च २६ अहंभावः सर्वथात्याज्यइतिदर्शयितुमाह यामिति अनेनराक्षस्याः बुद्धेः स्वभावोदर्शितः २७ अत्यधिकंभजतेति हेत्वनेनविषयलोलुपानांप्रवृत्तिरीदृशीइतिदर्शयति कथांतरारंभंवा तमाह ततइति प्रत्यारंभेप्रसिद्धेहेतियादवः वनोद्देशं विषयप्रदेशं केशवंप्रशस्तकेशपाशं वनेकामिनम् २८ पारयेसमर्थयेपारगंतुं

तानिचूडयताकांतामुपविष्टमिहध्रुवम् ॥ रेमेतयाचात्मरतआत्मारामोप्यखंडितः २५ इत्येवंप्रलपंत्यस्ताश्चेरुर्गोप्योऽविचेतनाः ॥ कामिनांदर्शयन्दैन्यं स्त्रीणांचैवंदुरात्मताम् २६ यांगोपीमनयत्कृष्णोविहायान्याःस्त्रियोवने ॥ साचमेनेयदात्मानंवरिष्ठंसर्वयोषिताम् २७ हित्वागोपीःकामयानामामसौभजतेइह ॥ ततोगत्वावनोद्देशंदृप्ताकेशवमब्रवीत् २८ नपारयेऽहंचलितुंनयमांयत्रतेमनः ॥ एवमुक्तःप्रियामाहस्कंधआरुह्यतामिति २९ ततश्चांतर्दधेकृष्णःसावधूरन्वतप्यत ॥ हानाथरमणप्रेष्ठक्वासिक्वासिमहाभुज ३० दास्यास्तेकृपणायामेसखेदर्शयसन्निधिम् ॥ अन्विच्छंत्योभगवतोमार्गंगोप्योऽविदूरतः ३१ ददृशुःप्रियविश्लिष्टांमोहितांदुःखितांसतीम् ३२ तयाकथितमाकर्ण्यमानप्राप्तिंचमाधवात् ॥ अवमानंचदौरात्म्याद्विस्मयंपरमंययुः ३३ ततोगत्वावनाद्दूरंचंद्रज्योत्स्नावावद्विभाव्यते ॥ तमःप्रविष्टमालक्ष्यततोनिववृतुःस्त्रियः ३४ तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः ॥ तद्गुणानेवगायंत्योनात्मागाराणिसस्मरुः ३५ पुनःपुलिनमागत्यकालिंद्याःकृष्णभावनाः ॥ समवेताजगुःकृष्णंतदागमनकांक्षिणीः ३६ इतिश्रीभागवतेमहापुराणे दशमस्कंधेपूर्वार्द्धेअष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

नशक्नोमीतिवा यत्रगंतुं विटगतस्वभावंदर्शयितुमाह एवमिति २९ भक्त्यालभ्योनान्यथेतिभावंदर्शयति ततइति शुद्धबुद्धेःस्वभावोयमितिदर्शयितुमाह सावधूरिति हाविषण्णास्मिवने हा विषादगर्भार्तिष्वितिच हेनाथआशाप्रदहेरमणरतिप्रद । हेप्रेष्ठ प्रियतम ३० दास्याः शिक्षायोग्यायाः दासुहिंसायामितिधातुः कृपणायाः कृपाविषयायाः गाढाक्षेपातिरक्षांतिदुर्विषयगमनराहित्येनेतिगोप्यइंद्रियवृत्तयः शास्त्रविषयाः अविदूरतः ज्ञात्वासमीपेस्थिताः ३१ मुक्तेःपूर्वमपरोक्षबुद्धेः आविर्भावतिरोभावौकश्चित्स्यातामितिभावदर्शनायोच्यते प्रियेत्यादिना ३२ मानःप्राप्तिअपगेक्षउक्षणमानप्राप्तिम् ३३ यावच्चंद्रज्योत्स्नाविभाव्यतेतावद्वनाद्वनंगत्वाततश्चंद्रचंद्रिकास्तमयानतरंप्रविष्टंप्राप्तंतमआलक्ष्यदृष्ट्वा निववृतुः निवृत्ताइत्यनेनदुःशास्त्रान्निवृत्त्यसच्छास्त्राभ्यसनायपत्नंचक्रुरितिसूच्यते स्त्यैष्टयैशब्दसंघातयोरितिधातोः शास्त्रविषयाबुद्धयः ३४ सत्वबुद्धीनांस्वभावंदर्शयति तन्मनस्काइति ३५ समवेताएकविषयीकृताः तस्यकृष्णस्यागमनकांक्षिण्यः ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांअष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

वेदांतानधिकारिणांमुमुक्षुविविदिषूणांसमर्थानांहरेःसंकीर्तनमेवतदुपासनंस्यात्तत्प्रसादजनकत्वेनेत्यतः स्त्रीभूतानांगोपीनांउपासनाप्रकारंनिरूपयत्यस्मिन्नध्याये । तत्रगोप्यःविप्रसंनिहितत्वात्संबोध्यागायन् । जयतीति । कृष्णेत्यध्याहार्यम् । हेकृष्ण व्रजंतियस्मिन्निवासंगोपाइति गोपनिवासस्थानंव्रजः । अयंतेतवजन्मनाअधिकंजयति सर्वोत्कर्षेणवर्तते तत्रहेत्वंतरंचाहुः श्रयतइति । तत्रव्रजेइंदिपरमैश्वर्यइतिधातुः इंदिऐश्वर्यरातिददातीतिनित्यैश्वर्यरूपत्वादिंदिराश्रीः साऽधुनाश्रयते आश्रयतेहियस्मात्तस्माच्चेत्यर्थः । तवजन्मानिमित्तंश्रियःश्रयणच त्वयाऽविनाभूतत्वाच्छ्रयतइतिभावः स्वाभिप्रायंदर्शयंति दयितेति । हेप्रेष्ठभवान्स्वात्मनैवत्वादिदृक्षतांद्रष्टुकामानांदृश्यतांचक्षुर्विषयोभवतु त्वयिगतासवःसमर्पितप्राणाः त्वांगांविचिन्वते । साकांक्षत्वादर्शनदानंयुक्तमित्यर्थः १ व्रजजनस्यआर्तिंहंतिहिनस्तिनाशयतीतिव्रजजनार्तिहातस्यसंबोधनं व्रजजनार्तिहन्वीरशूर निजजनस्यस्मयोगर्वःतंध्वंसिस्मितवत्स्मितंयस्यसतथा तत्संबुद्धिःनिजजनस्मयध्वंसनस्मित युषपूषकामसमृद्धावितिधातोः योषितांसमृद्धिकामानांनःकामसमृद्धिपारयेतिशेषः कथंकारंपालनमत्राहुः भजेति हेसखेचारुसुंदरंतवजलरुहस्यपद्मस्यसममाननंप्रवृत्तिशून्यस्यदर्शनेच्छास्यावादकुशकिवन्मुखंदर्शयन् त्वंकिंकरीःदासीःनोभजपालयस्मस्मृत्वापत्यादीन्विहायार्धरात्रेवनंप्राप्ताइति भवेभवइतिद्विरावृत्तिःकर्तव्या जन्मनि जन्मनिकिंकरीरित्यर्थः यद्वाभवेतादर्थ्येसप्तमी अस्मद्रक्षार्थमित्यर्थः । यद्वाऽस्मज्जीवनसत्तायांविवक्षितायांअन्यथामरणमेवास्माकमापद्यतइत्यर्थः २ अलुक्समासन्यायेनशरदुदाशयइत्येकंपदं शरदुदाशयेशरत्कालसंबंधिसरोवरे साधु भूम्याद्युपद्रवमंतरेणजातमुत्पन्न अतएव स

गोप्यऊचुः ॥ जयतितेधिकंजन्मनाव्रजःश्रयतइंदिरासाधुतत्रहि ॥ दयितदृश्यतांत्वादिदृक्षतांत्वयिगतासवस्त्वांविचिन्वते १ व्रजजनार्तिहन्वीरयोषितांनिजजनस्मयध्वंसनास्मित ॥ भजसखेभवेकिंकरीःस्मनोजलरुहाननंचारुदर्शयन् २ शरदुदाशयेसाधुजातसत्सरसिजोदरश्रीमुषादृशा ॥ सुरतनाथतेशुल्कदासिकावरदनिघ्नतोनेहकिंवधः ३ विषजलाशयाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात् ॥ वृषमयाद्भयाद्विश्वतोमुखाद्वृषभतेवयंरक्षितामुहुः ४ सखलुगोपिकानंदनोभवानखिलदेहिनामंतरात्मदृक् ॥ विखनसार्थितोविश्वगुप्तयेसखउदेयिवान्सात्वतांकुले ५ विरचिताभयंवृष्णिधुर्यतेशरणमीयुषांसंसृतेर्भयात् ॥ करसरोरुहंकांतकामदंशिरसिधेहिनःश्रीकरग्रहम् ६

त्पन्नस्तंविकसितंयत्सरसिजंपद्मंतस्यउदरंअरुणायमानंअंतर्दलंतस्यश्रियशोभांमुष्णातीतिशरदुदाशयेसाधुजातसत्सरसिजोदरश्रीमुट्तयादृशा । शुल्कदासिकाःक्रीतदासीः नोनिघ्नतः मारयतःतेऽस्मदाशादिहननेकिंवधोनभवति । खड्गादेरप्यधिकोवधोऽर्धरात्रेऽस्मत्त्यागइत्यर्थः । सुरतनाथनिधुवनवीर ३ इदानीमपिअस्मद्रक्षाभवताकार्यातथायथापुराकृताइत्याशयेनाहुः विषेति विषजलाशयात्विषयुतयमुनाह्रदात् यद्वा विषजलपानेनआशयोदीर्घनिद्रामरणंतस्मात् व्यालात्सर्पात् राक्षसात्तृणावर्तनाम्नःवर्षयुक्ताद्वायोः वैद्युतानलातनिर्घातलक्षणाग्नेःवृषमयाद्वत्सासुरनिमित्ताद्भयात् किंबहुनाहेवृषभश्रेष्ठ विश्वतोमुखाद्भयात्तेत्वयावयंमुहुःरक्षिताइत्यन्वयः ४ गोप्यःस्वतत्त्वज्ञानंविज्ञापयंति सइति गोपिकानंदयतीतिगोपिकानंदनःसःभवान् हेसखेविश्वगुप्तयेजगद्रक्षार्थं सात्वतांयदूनांकुलेउदेयिवानुदयंगतः जन्मभजनाययोग्योनेत्याशयेनाहुः अखिलेति अखिलदेहिनामंतर्यामित्वेनद्रक्ष्यतिपश्यतीति । यद्वाऽतरात्मानंस्वरूपंपश्यतीति अनश्नन्नन्योअभिचाकशीतीतिश्रुतिः किंच विखनसार्थितःब्रह्मणापूजितःविरिंचिगुरुरित्यर्थः । यद्वा यःसात्वतांकुलेउदेयिवान्सभवान्गोपिकानंदनःखलुनभवतीत्यर्थःनिषेधेवागलंकारेवीप्सनेनुनयेखल्वितिच अलंखल्वोःप्रतिषेधयोःप्राचांक्त्वेतिक्त्वायोगआक्षेपापेक्षिकः । तर्हिकइतितत्राहुः अखिलेति । नखल्वितिपाठेवाक्यालंकारार्थः ५ विरिंचिगुरुश्चेदपेक्षिताशेषपुरुषार्थप्रदःस्यात्तत्रकथंनिर्णयइत्याहुः विरचितेति । श्रियःकरंगृह्णातीतिश्रीकरग्रहंशरणमीयुषांपुंसांधेहिनिधेहि । हेकांतकमनीय ६

गन्धलंकरनिधानेनपूर्यते । अपितुकुचेषुचरणनिधानंचापेक्षितमित्याहु । प्रणतेति तृणचरान्पशून्अनुगच्छतीतितृणचरानुगं फणिफणेष्वर्पितं कृणुकुरु । हृच्छयंकामं कृंद्धिछिंद्धि ७ वल्गूनिम नोहराणिवाक्यानिनिराकांक्षाणिपदात्मकानियस्यांसातथा । तथाबुधानांविदुषांमनोज्ञयाहृद्यया । मधुरयेत्यनेनग्राम्यत्वाभाषणशंकांनिराकरोतिविधिकरी·दासीः । अधरसीधुनाअधरामृतेन । आ प्यायपरवसेचयजीवयवा । मुह्यती.मोहंगच्छतीः ८ तप्तान्जीवयतीतितप्तजीवनंश्रवणमात्रेणमंगलं श्रीमत्सम्मृद्धिमत् । आततंविस्तृतंभुवियेजना.तवकथामृतंगृणंतिपानादिना । तेभूरिबहुलंदुःख यंतिखंडयतीति । भूरीणिहिरण्यादीनिददतीतिवा भूरिस्वर्णजातरूपंहिरण्यंरा.कल्याणंहेमरुक्मंसुवर्णमिति भवंतीतिशेष ९ तवकथामृतंतप्तजीवनादिफलदंचेत् अधरसीधुनाप्यायनकिमर्थमित्या शंक्यतवहसितादिनामुग्धावयंतवाधरसीधुमार्थयामहइत्याशयेनाहु· प्रहसितमिति हेप्रियप्रेम्णावीक्षणंध्यानमंगलं विहरणंविहारः विक्रमलक्षणः हृदिस्पृशःहृदयगमाः । संविद.संभाषणादयः । संविद्युद्धेप्रतिज्ञायांसंकेताचारनामसु संभाषणेक्रियाकारेविज्ञानेतोषणेपिचेतिवचनात् एतेसर्वेपिमुरतेसंभवंति । कुहककधूर्तेतिप्रणयकोपोहियस्माच्चस्मात् अधरामृतपानमार्थनम् १० त्वच्चरितंज्ञात्वे

प्रणतदेहिनांपापकर्शनंतृणचरानुगंश्रीनिकेतनम् ॥ फणिफणार्पितंतेपदांबुजंकृणुकुचेषुनःकृंद्धिहृच्छयम् ७ मधुरयागिरावल्गुवाक्ययाबुधमनोज्ञया पुष्करेक्षण ॥ विधिकरीरिमावीरमुह्यतीरधरसीधुनाप्याययस्वनः ८ तवकथामृतंतप्तजीवनंकविभिरीडितंकल्मषापहम् ॥ श्रवणमंगलंश्रीमदाततंभु विगृणंतितेभूरिदाजनाः ९ प्रहसितंप्रियप्रेमवीक्षणंविहरणंचतेध्यानमंगलम् ॥ रहसिसंविदोयाहृदिस्पृशःकुहकनोमनःक्षोभयंतिहि १० चलसियद्व्रजाच्चारयन्पशून्नलिनसुंदरंनाथतेपदम् ॥ शिलतृणांकुरैःसीदतीतिनःकलिलतांमनःकांतगच्छति ११ दिनपरिक्षयेनीलकुंतलैर्वनरुहाननंबिभ्रदावृतम् ॥ वनरजस्वलंदर्शयन्मुहुर्मनसिनःस्मरंवीरयच्छसि १२ प्रणतकामदंपद्मजार्चितंधरणिमंडनंध्येयमापदि ॥ चरणपंकजंशंतमंचतेरमणनस्तनेष्वर्पयाधिह न् १३ सुरतवर्धनंशोकनाशनंस्वरितवेणुनासुष्ठुचुंबितम् ॥ इतररागविस्मारणंनृणांवितरवीरनस्तेऽधरामृतम् १४ अटतियद्भवानह्निकाननंत्रुटिर्युगाय तेत्वामपश्यताम् ॥ कुटिलकुंतलंश्रीमुखंचतेजडवदीक्षतांपक्ष्मनुद्दृशाम् १५

नामपिदुर्बोधंकंकिमुतास्माकमितिभावेनाहुः चलसीति । पशूंश्चारयन्यद्यदाव्रजाच्चलसिगच्छसि तदाशिलतृणांकुरैःछिन्नशिखरत्वेनपरुषैरिषीकादितृणाग्रैःशिलाःशर्करास्ताभिस्तृणांकुरैश्चवा सीदतिः व्यथतीति कलिलतांनारायणोन्योवेतिसंशयपंकिलताम् ११ ननुव्याकुलचित्तानांकामोद्बोधायोगात्कृंद्धिहृच्छयमितिकथमुक्तं अत्रवदंति दिनेति । दिनपरिक्षयेसंध्याकालेवनादागच्छन्नितिशेषः वनरजस्वलंवनभूमौसतागोरजसायुक्तंदर्शयन् नीलकुंतलैरावृतम् । वनरुहंजलजंकमलंतद्वच्छोभमानमाननंबिभ्रत् त्वंनोमनसिस्मरंकामंमुहुरनिशंनूतनम् १२ धरणिमंडनंभूमिभूषणं सर्वापदिध्ये यंपद्मजार्चितंब्रह्मणाराधितम् । शंतमसुखतम आधिहन्मनोदुःखनाशन । तेचरणपंकजंनःस्तनेष्वर्पयनिधेहीत्यन्वयः १३ स्तनतटेषुचरणार्पणादुद्बुद्धज्वलितकामाग्निज्वालाशमनायतवाधरामृ तंपिपासुभ्योऽस्मभ्यंदेहीत्याहुः सुरतेति । सुरतंग्राम्यधर्मः स्वरितवेणुनाध्वनियुक्तवेणुना रागोरसःइतरेषांरसानांआस्वादनसुखंविस्मारयतीतिइतररागविस्मारणं इतरेषुमधुरेषुवस्तुषुरा गंस्नेहंविस्मारयतीतिइतररागविस्मारणंवा वितरदेहि । विश्राणनंवितरणंस्पर्शनंप्रतिपादनमितिहलायुधः १४ किंच अहोरात्रमस्माकंत्वत्संचिंतनमेवान्योव्यापारोनेष्यतेइत्याशयेनाहुः अटतीति । यद्यदायस्मिन्नह्निकाननमटतिगच्छतितदातस्मिन्नह्नित्रुटिः त्रुटीतिप्रातिपदिकग्रहणंतेनविभक्त्यंतंपदंलक्षयति । अणुद्वयलक्षणः परमाणुः त्रयःपरमाणवस्त्रसरेणुः । त्रसरेणुसमूहस्त्रुटिःसः

कालावयवः । नःत्वामपश्यतामस्माकंयुगायतेयुगवदाचरति । दिव्यद्वादशसहस्रपरिमितसमानोवर्त्तते पक्ष्मनुदंतिव्यथयंतीतिपक्ष्मनुदः । तादृश्योदृशोयासांतास्तथा । तासामनिमिषनेत्राणांतव मुखमीक्षतांईक्षमाणानामस्माकंप्रवृत्तिर्जडवदचेतनवन्निश्चेष्टनमित्यर्थः । अनेनबहुकालोपित्रुटितुल्यइतिसूच्यते । त्रुटिर्युगायतेत्वामपश्यतामितिपाठेनुमनिवस्यतवमुखमीक्षतांदृशांपक्ष्मजडवदुत्क्षेपाक्षेपलक्षणप्रवृत्ति शून्यमित्यर्थः । अनेनमानवस्याप्यनिमिषत्वंसूच्यते १५ भगवदुन्मुखस्मरणमुग्धागोप्योरतिविहारसमयोयमितिनिरूप्यसुरतसंविदांधिक्षिपंति पतीति । तेतवसकाशमागताःहिंयस्मात् हेकितवकः पुरुषःनिशियोषितस्त्यजेदित्यन्वयः आगमनेहेतुंवदंति गतिविदइति । गतिविदःआकर्षलक्षणगानज्ञस्यतवोद्गीतेनस्थितोत्थानकरगानेनमोहिताःमूर्च्छांप्रापिताः १६ किंबहुनाःकेनास्मदवस्थेयंही तिविज्ञापयंति रहसीति हृच्छयस्योदयोयस्मात्तत्तथा वक्षिस्यनिरूप्य अतिस्पृहाअतिशयितस्पृहयामुह्यते विभक्तिव्यत्ययश्छांदसः बृहतिदधातीतिबृहत् श्रियःनिवासस्थानमितिशेषःयद्वाबृहदुरःश्रिय इत्येकंपदंबहुवचनंद्रष्टॄणामनुक्षणंकांतिविशेषबाहुल्यद्योतकम् १७ यदिभवानस्मदापदंनपरिहरिष्यतितर्ह्ययमवतारोव्यर्थोभविष्यन्नचतद्युक्तं अतोस्मद्दुःखंभवताअवश्यंपरिहरणीयमितिभावेनाहुः अजे ति । भोअंगतेतवेयंव्यक्तिरवतारलक्षणाव्रजौकसांगोपानां मार्गौकसांतीर्थसार्थानांवा निवहौकसांग्रामवासिनांवावनौकसांवनवासिनां । संन्यासिनांवावानप्रस्थानांवाजलाश्रयाणांवा अलमत्यर्थं वृ

पतिसुतान्वयभ्रातृबांधवानतिविलंघ्यतेह्यच्युतागताः ॥ गतिविदस्तवोद्गीतमोहिताःकितवयोषितःकस्त्यजेन्निशि १६ रहसिसंविदंहृच्छयोदयंप्रहसि ताननंप्रेमवीक्षणम् ॥ बृहदुरःश्रियोवीक्ष्यतेमुहुरतिस्पृहामुह्यतेमनः १७ व्रजवनौकसांव्यक्तिरंगतेवृजिनहंत्र्यलंविश्वमंगलम् ॥ भजमनाक्चनस्त्व त्स्पृहात्मनांस्वजनहृद्रुजांयन्निषूदनम् १८॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेगोपीगीतंनामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ श्रीशुकउवाच ॥ इतिगोप्यः प्रगायंत्यःप्रलपंत्यश्चचित्रधा ॥ रुरुदुःसुस्वरंराजन्कृष्णदर्शनलालसाः १ तासामाविरभूच्छौरिःस्मयमानमुखांबुजः ॥ पीतांबरधरःस्रग्वीसाक्षान्मन्मथ मन्मथः २ तंविलोक्यागतंप्रेष्ठंप्रीत्युत्फुल्लदृशोबलाः ॥ उत्तस्थुर्युगपत्सर्वास्तन्वःप्राणमिवागतम् ३ काचित्करांबुजंशौरेर्जगृहेंऽजलिनामुदा ॥ काचि द्दधारतद्बाहुमंसेचंदनरूषितम् ४ काचिदंजलिनागृह्णात्तन्वीतांबूलचर्वितम् ॥ एकातदंघ्रिकमलंसंतप्तास्तनयोरधात् ५ एकाभ्रुकुटिमाबध्यप्रेमसंरंभवि ह्वला ॥ प्रत्यैक्षत्कटाक्षेणनिर्दष्टदशनच्छदा ६ अपराऽनिमिषद्दृग्भ्यांजुषाणातन्मुखांबुजम् ॥ आपीतमपिनातृप्यत्संतस्तच्चरणंयथा ७

जिनहंत्रीदुःखनाशिनी यद्यस्मात्त्वयिस्पृहायस्यसत्वत्स्पृह आत्माचासांतास्तथातासां नश्चक्षुर्विषयंमनाक्ईषदपिभज सामान्योक्त्यापुनरुक्तंकुर्वंति स्वजनेति विश्वमंगलंयद्व्यक्तरूपंस्वजनस्यहृद्रुजा अंतर्गतारोगाणांनिषूदनंनिर्मूलकरं तस्मादस्माकंस्वजनैकत्वादभीष्टंभवताकर्तव्यमितिभावः १८ इतिश्रीभागवतेमहापुराणेदशमस्कंधेवि०कृतटीकायांएकोनत्रिंशोऽध्यायः॥ २९ ॥ यथागोपीनामात्मानं प्रकाशयन् भगवांस्तथासाधनसामग्र्याज्ञानिनामपीतिममर्थंदर्शयितुमस्याध्यायस्यप्रारंभः । तत्रशुकः रोदनादिकमपिभक्त्युद्रेकलक्षणमितिदर्शयितुंगोपीनांरोदनप्रकारंकथयति इतीति । चित्रधाना नाविध्येन सुस्वरंयथाश्रोतृसुखकरंभवति तथास्वरंकुर्वत्यः अनेनपरिदेवनादिकव्यावर्तयति १ भक्त्युद्रेकोद्भूतरोदनफलमाह तासामिति । मनोमथ्नातीतिमन्मथःकाम.साक्षात्स्पष्टीकृतसर्वांगसुंदरइ दतुल्यस्तस्यापिमन्मथ.मदमथन. । मदनोमन्मथोमारः कामइतिरुद्रः । अनेनैवंविधभगवदुपासनासामर्थ्यात्समुद्भूत.सौंदर्यसागर.कामइतिसूचितंभवति २ तन्वःभोगायतनशरीराणि ३ गोपीनांभ्रा दिग्रहणादिषुहरेःकरादानादिना भक्त्यैकलभ्यः श्रीनारायणइति निदर्शयंस्तत्प्रवृत्तिंकथयति काचिदित्यादिना । चंदनरूषितलिप्तम् ४ चर्वितंभक्षितोच्छिष्टंअधात् दधार ५ प्रेमसंरंभविह्वला प्रण यकोपाकुलिता भ्रुकुटिंललाटशिरांआबध्यप्रकाश्य निर्दष्टदशनच्छदानितरांदष्टोष्ठपुटा ६ अनिमिषांनिमेषलक्षणव्यापारशून्यमितिक्रियाविशेषणं जुषाणासेवमाना ७

स्हृदिस्थितंकृत्वापुलकांगीरोमांचितगात्रा उपगुह्यालिंग्य आनंदनिर्भरापरमानंदपूर्णा ८ जनःशोकाकुलःसंसारीवा प्राज्ञंपंडितम् । दुःखशमनबोधकंपरमात्मानंवा प्राज्ञेनात्मनान्वारूढइतिश्रुतिः ९ पुरुषोविष्णुः शक्तिभिःलक्ष्मीविभूतिभिः १० अनिलश्चषट्पदाश्चानिलषट्पदाः विकसतोःकुंदमंदारयोःसुष्ठुरताःक्रीडावंतःअनिलषट्पदाःयस्मिंस्तत्तथा ११ शरत्कालचंद्रांशूनांसंदोहेननिरंतरराज्याध्वस्तंनिरस्तंदोषातमःरात्र्यंधकारोयस्मिंस्तत्तथा । कृष्णायाःयमुनायाःईहयाप्रवाहलक्षणचेष्टया आयस्ताःआयासंप्राप्ताः । तरलाअणुतरंगाएतैराचितानिआसिक्तानिचकोमलानिचवालुकानिसैकतानियत्रतत्तथोक्तं यद्वा कृष्णेहयाश्रीकृष्णमूर्तिक्रीडयाआयस्तानिचतरलानिचचलानिचातएवाचितानिइतस्ततोविकीर्णानिचशेषंसमम् । अणुस्तरंगोलोलःस्यात्तरलाकुरलस्तथेतिगोपालः आचितछन्नासिक्तयोरितिच १२ मनोरथांतंप्रार्थितार्थपूर्तिं मनोरथानामर्थानामंतंनिर्णयहेतुंपरमात्मानम् । रथगताविति धातुःश्रुतिविषयेतस्यब्रह्मणोदर्शनेनाविपर्यीकरणलक्षणेनजाताह्लादेनपूर्णार्थलक्षणेनावधूताहृद्रुजोविषयीकरणलक्षणायासांतास्तथा उत्तरीयैःप्रावरणीयवस्त्रैः । आसनंविमलोत्कर्षणीज्ञानेत्यादिक्षप्तमिवपीठम् । अन्यत्रात्मनोवायोर्बंधवे । सतोबंधुमसतिनिरविंदन्निति श्रुतिः ॥ १३ ॥ गोपीपारिषद्गतःगोपस्त्रीसमूहमध्यवर्ती । त्रैलोक्यलक्ष्मीणांत्रैलोक्यसौंदर्याणामेकंपदं स्थानम् त्रिलोकिजनसेव्यालक्ष्मीःश्रीस्तस्याएकंकेवलंपदंभोगयोग्याश्रमंवा ॥ १४ ॥

तंकाचिन्नेत्ररंध्रेणहृदिकृत्यनिमील्यच ॥ पुलकांग्युपगुह्यास्तेयोगीवानंदनिर्भरा ८ सर्वास्ताःकेशवालोकपरमोत्सवनिर्वृताः ॥ जहुर्विरहजंतापंप्राज्ञंप्राप्ययथाजनः ९ ताभिर्विधूतशोकाभिर्भगवानच्युतोनृप ॥ व्यरोचताधिकंतातपुरुषःशक्तिभिर्यथा १० ताःसमादायकालिंद्यानिर्विश्यपुलिनंविभुः ॥ विकसत्कुंदमंदारसुरतानिलषट्पदम् ११ शरच्चंद्रांशुसंदोहध्वस्तदोषातमःशिवम् ॥ कृष्णेहायस्ततरलाचितकोमलवालुकम् १२ तद्दर्शनाह्लादविधूतहृद्रुजोमनोरथांतंश्रुतयोयथाययुः ॥ स्वैरुत्तरीयैःकुचकुंकुमांकितैरचीक्लृपन्नासनमात्मबंधवे १३ तत्रोपविष्टोभगवान्सईश्वरोयोगेश्वरांतर्हृदिकल्पितासनः ॥ चकासगोपिपरिषद्गतोर्चितस्त्रैलोक्यलक्ष्म्येकपदंवपुर्दधत् १४ सभाजयित्वातमनंगदीपनंसहासलीलेक्षणविभ्रमभ्रुवः ॥ संस्पर्शनेनांककृतांघ्रिहस्तयोःसंस्तुत्यईषत्कुपितावभाषिरे १५ ॥ गोप्यऊचुः ॥ भजतोऽनुभजंत्येकएकएतद्विपर्ययम् ॥ नोभयांश्चभजंत्यन्यएतन्नोब्रूहिसाधुभो १६ श्रीभगवानुवाच ॥ मिथोभजंतियेसख्यःस्वार्थैकांतोद्यमाहिते ॥ नतत्रसौहृदंधर्मःस्वार्थंतद्धित्तनान्यथा १७ भजंत्यभजतोयेवैकरुणाःपितरोयथा ॥ धर्मोनिरपवादोऽत्रसौहृदंचसुमध्यमाः १८

अनंगंकामंदीपयतीत्यनंगदीपनः तंलीलयालालित्येनईक्षणंहाससहितंसहासंसहासलीलेक्षणेनविभ्रमंत्योऽनुदिशंसंफलंत्यःभ्रुवोयासांतास्तथा संस्पर्शनेनोत्पन्नाउत्काउत्कंठासैवांऽकंलक्षणंतेनकृतःपूर्णःअंगेशरीरेहृच्छयःकामःसंस्पर्शनोत्कांककृतांगहृच्छयःतम् । संस्तभ्यकरचरणाद्यंगस्पर्शनेनाभिव्यक्तंकामंनिरुध्येत्यर्थः १९ गोप्यःशास्त्रतत्त्वमजानंत्योहरेरकृतज्ञताकरणाभिप्रायेणपृच्छंति भजतइति । एकेकेचिद्भजतः सेवमानाननुभजंतिसेवानुकूलफलसमर्पणेनसेवंते एकेकेचित् । एतस्योक्तस्यविपर्ययंकुर्वंति फलोद्देशेनासेवमानानविशिष्टफलदानेनानुवर्तंते अन्येनोभयांश्चानुवर्तंते । यदेतत्पक्षत्रयंअत्रसाधु निर्दोषपक्षमस्माकंब्रूहिविविच्यकथयेत्यर्थः १६ तत्रपरिहारंवक्तुमुपक्रमते मिथइति । हेसख्यःयेमिथोभजंति उपकारप्रत्युपकारलक्षणांसेवांकुर्वंति तेस्वार्थैकांतोद्यमाहिस्वप्रयोजननियतप्रयत्नायस्मात्तस्मात्तेषुसौहृदंअनिमित्ततःस्नेहलक्षणोधर्मोनास्ति । ननुतर्हिकिमस्तितत्राह स्वार्थमिति । स्वप्रयोजनार्थं नित्तजानीध्वम् । विपक्षंप्रतिषेधति नेति १७ येअभजतःफलेप्विच्छाननुगतान्भजंति फलंसमर्पयंति तत्रकारणमाह करुणाइतिकरुणयंतिप्राणिनोदृष्ट्वाद्रवीकृतहृदयाभवंतीतिकरुणाः । तत्रदृष्टांतः लोकानुग्रहकरणशीलाःपितरोयथाबालादीन्दृष्ट्वागुणांतरंचास्तीत्याह धर्मइति हेसुमध्यमाः अत्रतेषुजनेषुसौहृदलक्षणोधर्मश्चानिरपवादः निर्दोषःइदंसंप्रज्ञातसमाधिस्थस्यलक्षणम् १८

असंप्रज्ञातसमाधिस्थस्यलक्षणमाह भजतोपीति । अत्रकेचिज्जना.भजतोपिफलार्थितयासेवमानानपिनभजंति स्वप्रयोजनाभावात् कथंतादित्यत्राह आत्मेति । आत्मनिपरमात्मन्येवारामःक्रीडायेषां तेतथा बाह्यप्रवृत्तिशून्याइत्यर्थःतदपिकथमित्याशंक्यसुखार्थेहिप्रवृत्तिः सुखंतुस्वतएवपूर्णमित्याशयेनाह आप्तकामाइति । काम्यतइतिकामःआनंदःहिशब्दोहेतौ । आनंदाप्तौनिमित्तमाह अकृतेति अकृतंपरमात्मानंजानंतीति तज्ज्ञानंचनिष्पापत्वादित्याह गुरुद्रुहइति । गुरूनिपापानिद्रोहितवंतोनाशितवंतइतिनास्त्यकृतःकृतेनेतिश्रुतिः नराणांक्षीणपापानामितिस्मृतिः । कीदृशाःकृतघ्नाइत्यतो नाहभजतोपीति येकेचिद्भजतःशरणार्थितयासेवमानानपिनभजंति ग्रहणलक्षणांसेवांनकुर्वंति अभजतःकुतोभजंतितत्रकारणमाह आत्मारामाइतिपरमात्माविषयमतिरहितादेहलक्षणात्मानिनितरांरताश्च तर्हिकुत्ररतिरित्यत्राह आप्तेति आप्तविस्रब्धेस्त्रीजनेकामोयेषांतेतथाएतादृशाःकृतघ्नाहिकृतंनजानंतिनाशयंतिच अतएवगुरुद्रुहः देवाहिगुरूणांद्रोग्धाइत्युच्यंते हविराद्यदानात् १९ अहमेष्वेकोऽ तिभवतीनाभाशंकामाभूदित्याह नाहमिति अपिसमुच्चयेतुशब्दोविशेषप्रकाशकः अहभजतःफलार्थितयासेवमानानभजतोपिफलार्थितयाअसेवमानान्नभजामि तदिच्छयाफलंनदास्यामि यमेवैषवृण तेतेनलभ्यइति ममविजयाशिखामणेः ततःप्रयोजनाभावात् तेभ्यःप्रयोजनंनममेत्यर्थःतर्ह्येषांसेवानिष्फलाकिंनेत्याह अमीषामिति अमीषामुभयेषायथायथासेवाःस्युःतथातथामत्तःउच्चावचाःसेवाफलसंपदःस्युरेवअर्थिनांयोग्यानामधिकारिणांकल्पवृक्षाद्यथाफलानितथेत्यर्थः २० भगवान्गोपीनांसेवास्तवनव्याजेनस्वोपासनाप्रकारंदर्शयति यथेति यथाअधनोधनहीनः दरिद्रःदैवाल्लब्धधने

भजतोपिनवैकेचिद्भजंत्यभजतःकुतः ॥ आत्मारामाह्याप्तकामाह्यकृतज्ञागुरुद्रुहः १९ नाहंसख्योभजतोपिजंतून्भजाम्यमीषामनुवृत्तयेयथा ॥ तथैवमत्तःफलसंपदःस्युरुच्चावचाःकल्पतरोरिवार्थिनाम् २० यथाऽधनोलब्धधनेविनष्टेतच्चिंतयान्यन्निभृतंनवेद ॥ एवंमदर्थार्पितलोकवेदस्वानांहिवोमय्यनुवृत्तयेऽबलाः ॥ मयापरोक्षंभजतातिरोहितंसासूयितुंनार्हथमांप्रियंप्रियाः २१ नपारयेहंनिरवद्यसंयुजांस्वसाधुकृत्यंविबुधायुषापिवः ॥ योमांभजेद्दुर्जरदेहशृंखलाःसंवृश्च्यवृद्धिंप्रतियातिसोऽधुना २२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्द्धेत्रिंशोऽध्यायः ॥ ३० ॥ ॥ छ ॥

नष्टेतच्चिंतयानष्टधननियतरतमनस्कत्वेननितरांभृतंगृहीतंअन्यन्नवेद यद्वा निभृतंस्तिमितंनिश्चलंस्थिरंपुरोवर्त्यन्यद्वस्तु हेअबलाःएवंमदर्थंमामुद्दिश्यअर्पितेलोकवेदस्वेलौकिककर्मवैदिककर्मलक्षणसर्वस्वेयासांतास्तथा तासांवोयुष्माकंअनुवृत्तयःसेवालक्षणाउपासनाअविषयानस्युरित्यन्वयः तर्हिकिमर्थंभवतांतरधायीत्याशंक्यास्माकंस्वभावोयमित्याशयेनाह मयेति अत्रभजतेतिशतृप्रत्ययः इच्छावाचीपरोक्षंभजताव्यवधानमिच्छतामयातिरोहितं पारोक्ष्यकृतं परोक्षप्रियाइवाहिदेवाइतिश्रुतिः व्यवधानमस्मत्प्रियंयस्मात्तस्मात् हेप्रियाःप्रियंमासासूयितुंअसूयासहितांमतिंकर्तुंनार्हथेत्यन्वयःसंनिकर्षोहिमर्त्यानामनादरणकारणमितिस्मृतेश्चाशिक्षणायाप्येवंकृतं २१ ननुयुष्मदनुग्रहाभावात्तत्कथमित्याशंक्यानुग्रहविशेषंकथयति नेति विबुधायुषादिव्यवत्सरकल्पितजीवनलक्षणेनापि अहंनिरवद्यसंयुजांनिर्दुष्टमनोयोगवृत्तीनांवःसुसाधुकृत्यंयुष्माकंसर्वसंमतंनिर्दोषंकर्मप्रतिकर्तुंनपारयेनशक्नोमीत्यनेनगोपीष्वधिकोनुग्रहोस्तीतिदर्शितं नकेवलंयुष्मास्वनुग्रहविशेषोममनिर्व्याजभक्त्याभजमानेकस्मिंश्चिदपिस्यादित्याशयेनाह योमामिति योमांभजेन्मामुद्दिश्यभक्तिंकरोतिसपुरुषः स्त्रीजनोवाधुनास्मिन्जन्मन्येव दुर्जरदेहशृंखलाःभक्तिज्ञानेविनाजरयितुंशिथिलीकर्तुमशक्याः लिंगशरीरलक्षणाशृंखलाःसंवृश्च्यछित्त्वा वृद्धिंस्वरूपभूतानंदलक्षणांप्रतियाति तस्यतावदेवचिरमित्यादिश्रुतेः यद्वादह्यतेसिच्यतेइतिदेहः दुर्जरादुरुच्छेदाः पुत्रमित्रादिनिबद्धस्नेहलक्षणाःशृंखलाःसंवृश्च्यभजेत्सोत सोऽधुनैवभक्तिज्ञानादिसाधनसामग्रीलक्षणांवृद्धिंप्रतियातीत्यन्वयः २२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांत्रिंशोऽध्यायः ॥ ३० ॥

भक्तिरसस्वभगवत्प्रीतिरेवानंदानुभवेकारणंनान्यत्साधनमितिनिदर्शयितुंरासक्रीडावर्णयत्यस्मिन्नध्याये तत्रूपर्येतिजक्षन्क्रीडन्रममाणइत्यादिश्रुतिः तत्रगोपीनांकृष्णविरहसमुद्भूतसंतापप्रणाशंवाक्ते
इत्थमितितापस्यागेनिमित्तमाह तत्संगेति हरेरंगसंगलक्षणसेवनेनउपचिताःफलरूपेणपरिणताःआशिषःप्रार्थनायासांतास्तथा यद्वा उपचिताःसंचिताःसमृद्धिंगताःआशिषःशुभानियासांतास्तथा
१ समृद्धफलशुभानुभवप्रकारंवक्तुमुपक्रमते तत्रेति तत्रवनेतस्यामवस्थायांअन्योन्याबद्धबाहुभिःइति रासक्रीडाप्रकारंदर्शयति समतलप्रतृणप्रदेशेवितास्तिमात्रोन्नतशंकुसंस्थाप्य तत्परितः
सर्वैः स्वपादमवष्टभ्यवृत्ताकारेणस्थित्वैकस्यावामहस्तंअन्यस्यानिकटवर्तिन्यादक्षिणपाणिनासंगृह्य स्वशक्त्यावष्टंभेनवर्तुलाकारभ्रमणचक्रवत्क्रियारासक्रीडा २ नृत्यादिषुभरतरीतिसंक्षेपुगा
तुमुपक्रांतेषुयोधिरसोल्लासोजायतेसरसः तत्संबंधीरसोरासःतदुद्रेकेणक्रीडा नृत्यविशेषःएवंविधोरासक्रीडोत्सवःकृष्णेनसम्यक्प्रवृत्तइत्यन्वयः कीदृशोगोपीनांतासांमडलेनवलयेनमंडितोलंकृतः
कथंभूतेन तासांगोपीनांमध्यंप्रविष्टेन मध्येशंकुस्थापनात्कथमध्यप्रवेशःसंगतइतितत्राह द्वयोरिति वलयस्थितानांतासांद्वयोर्द्वयोर्मध्येप्रविष्टेन एकस्येदंकथघटतइत्यतोयोगेश्वरेणेति योगैश्वर्या
देकस्यबहुत्वंघटतइतिभावः कीदृशानाकृष्णेनकंठेगृहीतानां तत्रैवंविशेषः कृष्णदक्षिणभागस्थितायाःकृष्णदक्षिणासग्रहण वामभागस्थितायास्तस्यवामस्कंधग्रहणं स्वनिकटस्थस्त्रियःकंठेगृहीतेन
तेनैवरासोत्सवःसंप्रवृत्तइतिगतेनान्वयइत्यर्थः ३ नन्वेवंकृष्णेरासक्रीडाकारिणिकेसाक्षिणइतितत्राह यन्मन्येतेति कृष्णोयदारासक्रीडाकर्तुमन्येतन्यत्द्ध्रुपदितिव्यत्ययः तावच्चदानभः औत्सुक्येनानि

श्रीशुकउवाच ॥ इत्थंभगवतोगोप्यःश्रुत्वावाचःसुपेशलाः ॥ जहुर्विरहजंतापंतत्संगोपचिताशिषः १ तत्रारभतगोविंदोरासक्रीडामनुव्रतैः ॥ स्त्रीरत्नै रन्वितःप्रीतैरन्योन्याबद्धबाहुभिः २ रासोत्सवःसंप्रवृत्तोगोपीमंडलमंडितः ॥ योगेश्वरेणकृष्णेनतासांमध्येद्वयोर्द्वयोः ॥ प्रविष्टेनगृहीतानांकंठेस्वनिक टस्त्रियः ३ यन्मन्येतनभस्तावद्विमानशतसंकुलम् ॥ दिवौकसांसदाराणामौत्सुक्यनिभृतात्मनाम् ४ ततोदुंदुभयोनेदुःस्वात्पेतुःपुष्पवृष्टयः ॥ जगुर्गंध र्वपतयःसस्त्रीकास्तद्यशोऽमलम् ५ वलयानांनूपुराणांकिंकिणीनांचयोषिताम् ॥ सप्रियाणामभूच्छब्दस्तुमुलोरासमंडले ६ तत्रापिशुशुभेताभिर्भगवा न्देवकीसुतः ॥ मध्येमणीनांहैमानांमहामरकतोयथा ७ पादन्यासैर्भुजविधुतिभिःसस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैःकुंडलैर्गंडलोलैः ॥ स्विद्य न्मुख्यःकबररशनाग्रंथयःकृष्णवध्वोगायंत्यस्तंतडितइवतामेघचक्रेविरेजुः ८

भृत्तात्मनांनिश्चलमनसां सदाराणांसभार्याणांदिवौकसांविमानशतसंकुलआसेतिशेषः ४ ततःरासोत्सवप्रारंभानंतरम् ५ ६ तत्रापिरासक्रीडायामपि यद्वा तत्रापिनभस्यपि रासमंडलएवचे त्सप्रियाणामितिपदंपूर्णार्थंलभते अन्यत्रकृष्णव्यतिरेकेणप्रियाभावात् अस्मिन्पक्षेप्रियेणबहुरूपंगतेनकृष्णेनसहितानां तत्रापिशब्दसामर्थ्यात्सारवश्यात् शिक्षार्थंनभस्यपिरासक्रीडाप्रवृत्तेतिप्रव क्यै हैमानांहिमवत्संभूतानांमणीनांमाणिक्यानामध्येमरकतश्याममणिरिव अनंतरत्नप्रभवस्येत्युक्तं रत्नजातीनामुत्पत्तिर्हिमवद्गिरेरितिप्रसिद्धं यद्वा हैमानाहेमकारसंभूतानांतत्रत्यानांमणीनांनिर्मल त्वेनकांत्यतिशयात् ७ तत्रनृत्यप्रकारंकथयति पादेति पादन्यासैर्वक्रस्थापिनपादविक्षेपविशेषैः भुजानाविधुतिभिः कंपनविशेषैः भ्रूविलासैःभ्रूभंगैः चलकुचतटैरितिकेचित् कबरेत्यादौश्लथदितिप दमध्याहार्यं श्लथंत्यः कबररशनाग्रथयःबंधविश्लेषाःयासांतास्तथा यद्वा कबररशनानामग्रंथयःअबधनानियासांताः मुच्यमानकबरकांच्यइत्यर्थः स्तनितरसनाग्रंथयइतिकेचित् स्तनघ्नइतिधातु कृष्णवध्वःकृष्णपरिग्रहाः कृष्णयुक्ताःगोपस्त्रियइतिवा भावैःपुरुषान्बध्नंतीतिवध्वः समस्तभावैःखलुबधनंस्त्रियइत्युक्तेः तंकृष्णं गायंत्योयाएवंविधास्ताः मेघचक्रेमेघमंडलेतडितइवोतिकांतिविशेष द्योतनार्थंदृष्टांतोपादानं नतुपादन्यासादिविशेषप्रकाशनार्थं अचेतनत्वात्तडितां यद्वा यत्ताडितइति तडितोयथाप्रकाशनाऽप्रकाशनेतथापादविन्यासाद्यावर्त्तनामितिदर्शनाय तडगताविविधातोःतडांतिक्षि

मंतिरोधानंमच्छंतीति क्षिप्रतिरोधानगमनशीलार्थेइत्यन्वयः ८ रक्तकंठ्यः रागयुक्तकंठगुणाः अभिमर्शः कामकलोद्बोधककरस्पर्शविशेषः यासांगीतेनइदंजगदावृतंव्याप्तं हेवसाक्षिकत्वात् ९ अभिश्रिताः स्वरांतरानंतरिताः स्वरजातीःषड्जादिस्वरभेदान् उन्निन्येउत्कृष्टत्वेनगीतवतीमूर्च्छयामासच निषादर्षभगांधारषड्जमध्यमधैवताः पंचमश्चेत्यमीसप्ततंत्रीकंठोत्थिताःस्वराइत्यमरः १० कृष्णोऽप्यदेवगी तंध्रुवमुन्निन्ये व्यक्तवर्णेनप्लावयामास तेनतस्यैवसमंगायंत्यै अत्रसमगानंनामतत्प्रशंसार्थं मुकुंदेनतद्गानानुसारेणगीतमितिज्ञातव्यम् अन्यथात्रिजगतिमुकुंदगायनसमोगायनकः कोऽस्तिस्वाविर्भूतिमंतरे ण स्रवंतीश्लथपंतीकबरबद्धमल्लिकायस्याःसातथा ११ उत्पलसौरभंउत्पलमालयासुगंधितम् १२ नाट्येननृत्येनविक्षिप्तयोःकिंचित्स्रस्तयोःकुंडलयोः त्विषेणरोचिषाभूषितेमंडिते त्विषदीप्तावितिधातोः अविकृतेत्विषइतिरूपंभवति गंडखंडे गंडमंडले समूहेमंडलेखंडमाहुःशब्दविशारदाइत्युत्पलमाला अभिदधत्यःसपत्न्याः कोपोद्बोधायवयत्किंचिन्मंत्रयंत्याः १३ अधाद्दधौ शिवंसुखयतीतिसुखम् १४ गृहीतकंठ्यआलिंगितकंठ्यः एकांतवल्लभंनिर्णीतनियतभर्तारम् विजह्रिरेक्रीडांचक्रुः १५ कर्णोत्पलंअलकः कुंतलकश्चकर्णोत्पलालकौताभ्यांविटंकंकपोलंकपोलस्याविटंकोलंकार. घर्मस्तेनस्वेदज

उच्चैर्जगुःकृतमदारक्तकंठ्योरतिप्रियाः ॥ कृष्णाभिमर्शमुदितायद्गीतेनेदमावृतम् ९ काचित्समंमुकुंदेनस्वरजातीरमिश्रिताः ॥ उन्निन्येपूजितातेनप्रीय तासाधुसाध्विति १० तदेवध्रुवमुन्निन्येतस्यैमानंचबह्वदात् ॥ काचिद्रासपरिश्रांतापार्श्वस्थस्यगदाभृतः ॥ जग्राहबाहुनास्कंधंस्रवत्कबरमल्लिका ११ तत्रै कांसगतंबाहुंकृष्णस्योत्पलसौरभम् ॥ चंदनालिप्तमाघ्रायहृष्टरोमाचुचुंबह १२ कस्याश्चिन्नाट्यविक्षिप्तकुंडलत्विषमंडितम् ॥ गंडखंडेऽभिदधत्यादात्तांबू लचर्वितम् १३ नृत्यंतीगायतीकाचित्कूजन्नूपुरमेखला ॥ पार्श्वस्थाच्युतहस्ताब्जंश्रांताऽधात्स्तनयोःशिवम् १४ गोप्योलब्ध्वाऽच्युतंकांतंश्रियएकां तवल्लभम् ॥ गृहीतकंठ्यस्तद्दोर्भ्यांगायंत्यस्तंविजह्रिरे १५ कर्णोत्पलालकविटंककपोलघर्मवक्त्रश्रियोवलयनूपुरघोषवाद्यैः ॥ गोप्यःसमंभगवताननृतुः स्वकेशस्रस्तस्रजोभ्रमरगायकरासगोष्ठ्याम् १६ एवंपरिष्वंगकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः ॥ रेमेरमेशोव्रजकामिनीभिर्यथार्भकःस्वप्रतिबिंबवि भ्रमः ॥ (?) तदंगसंगप्रमुदाकुलेंद्रियाःकेशान्दुकूलंकुचपट्टिकांवा ॥ त्यक्तुंपतिंवोढुमलंव्रजस्त्रियोविस्रस्तमाल्याभरणाःकुरूद्वह १८ कृष्णविक्रीडितंवी क्ष्यमुमुहुःखेचरस्त्रियः ॥ कामार्दिताःशशांकश्चसगणोविस्मितोऽभवत् १९ कृत्वातावंतमात्मानंयावतीर्गोपयोषितः ॥ रेमेसभगवांस्ताभिरात्मारामोऽपि लीलया २०

लंकस्यते कपोलालकारस्वेदजलेनवक्त्राणांश्रीःशोभायासांतास्तथा वलयनूपुरलक्षणवाद्यघोषैः समंभगवताचसमंभ्रमराएवगायकाःअनुस्वरदानकरायस्यांसातथा भ्रमरगायकारासगोष्ठीरासक्री डा तस्याम् १६ स्वतंत्रईश्वरोविधिनिषेधाद्यविषयःप्रतिघोविधिनिषेधविवर्जितंपुरुषमनुकुर्वन्यद्वाप्रवृत्तिधर्मविध्याद्यगोचरेकोऽपेप्रवृत्तेप्रतिघंविदुरितिच १७ तस्यकृष्णस्यांगसंगेनोत्पन्नेनप्रमोदेना नंदेनाकुलानिपूर्णानींद्रियाणियासांतास्तथा केशादीन्वोढुंपतिंकृष्णंत्यक्तुंअलंपर्याप्ता॰ शक्तिवर्जिताआसन्नित्यर्थः अपपरीवर्जनइतिसूत्रात् यद्वाशक्त्याभावेपिनिवारिता अलंतुभूषणेशक्तौपर्या प्तौशक्तिवारणेइति प्रेमकामात्मत्वात् वहनादिशक्त्यभावइत्यर्थः कुरूद्वहेतिविशेष्यसंबोधनेनकृष्णस्यभक्तिभामिनीलोलत्वंपश्येत्यभिमुखीकरणेनभक्तेरावश्यकर्तव्यत्वंसूचयति १८ सगण.रोहि ण्यादिनक्षत्रगणेनसहितः यद्वा गणनंसंख्यानंतेनसहितः १९ किमत्रसंख्येयमत्राह कृत्वेति यद्वायोगैश्वर्यात्बहुरूपग्रहेणनत्वह्नीभिः स्त्रीभिरमणंघटतइतिराज्ञःसिद्धत्वेपिमंदाशंकांपरिहरति भाव तोऽपिनिरपः ररामेतिप्रत्ययेनपरदाराभिमर्शनेनदोषोनास्तीतिवक्ष्यमाणमर्थमिहैवसूचयति यद्वा ररामचिक्रीडे रासक्रीडाविरामसूचनार्थोवा २०

इदंचभक्तपारवश्यंहरेरजस्रंस्मरेदित्याशयेनहरिचरितंवक्ति तासामिति प्रामृजत्संमार्जितवान् २१ ऋषभस्यप्रवृद्धानुन्मथितवीर्यस्यहरेःस्फुरतोश्चलतोर्मकरकुंडलयोःकुंतलानांत्विषादीप्त्यादीप्तगंडश्रि यायुक्तसुरतयोग्यहासोपेताभीष्टांगनिरीक्षणेनानंदमात्मनोदधत्यःतस्यहरेःकररुहाणांनखानांस्पर्शेनस्मरोल्लासजनकलक्षणेननखक्षतेनाभिव्यक्तःप्रमोदःप्रकृष्टआनंदोयासांतास्तथा २२ वनक्रीडांनि रूप्यजलक्रीडावक्ति ताभिरिति कृष्णस्यांगसंगेनध्वस्ताःस्रस्ताःस्रजोयासांताः सुकुचानांकुंकुमरजोभिरंजिताःरागिनाःया:ताभिर्गोपीभिः आगच्छंतिआवृत्यगच्छंतीत्यगास्तरंगास्तत्संगेनध्वस्तानिर स्ताःस्रजोयस्याःसातथा तस्याःसकुचकुंकुमरणुभिरंजितायाः यमुनायाःवाःवारिविशदित्यन्वयः गंधर्वाणांपालिभिःश्रेणीभिःश्रांतःभिन्नसेतुरितिद्वयइभराड्विशेषणं यद्वा श्रुहिंसायामितिधातोःश्रांतःनि स्यनिरस्तमृत्युःभिन्नसेतुर्विशेषितलोकमर्यादः भेदोविशेषेदलनइति अत्रविशेषोनामव्यावर्तकोधर्मोपिलक्ष्यते पृथक्पृथक्स्थापितवत्सेतुरितिवा एःकामस्यभादीप्तिंराजयतीतीभराट् कामस्यभांराजतिक्षि पतीतिवाइभराट्कृष्णःगोपीविषये गजगर्जिशब्दइतिधातोःगर्जीभिःशब्दपंक्तीभिःयद्वाभिन्नसेतुरित्यनेनगजस्यमदातिरेकसूचनेनकृष्णस्यतात्कालिकहर्षातिरेकंव्यंजयति भिन्नवेदविहितधर्ममर्यादइत्य र्थःकृष्णेस्वधामोपगतेधर्मःकंशरणंगतइत्यादिस्वोक्तिविरुद्धस्यादितिनासावगीकर्तुंयोग्यइति २३ स्वस्मिन्स्वेनवारितनपराच्चनपरेणवायस्यसतथेत्यनेनतत्तत्कालेरमणकथनंलोकमोहनापाविशेषस्मर

तासांरतिविहारेणश्रांतानांवदनानिसः ॥ प्रामृजत्करुणःप्रेम्णाशंतमेनांगपाणिना २१ गोप्यःस्फुरन्मकरकुंडलकुंतलत्विड्गंडश्रियासुरतहासनि रीक्षणेन ॥ मानंदधत्यऋषभस्यजगुःकृतानिपुण्यानितत्कररुहस्पर्शप्रमोदाः २२ ताभिर्युतःश्रममपोहितुमंगसंगध्वस्तस्रजःसुकुचकुंकुमरंजितायाः ॥ गंधर्वपालिभिरनुद्रुतआविशद्वाःश्रांतोगजीभिरिभराडिवभिन्नसेतुः २३ सोंतर्जलेयुवतिभिःपरिषिच्यमानःप्रेमेक्षितप्रहसिताभिरभिष्टुतांगः ॥ वैमानि कैःकुसुमवर्षिभिरीड्यमानोरेमेस्वयंस्वरतिरत्रगजेंद्रलीलः २४ ततश्चकृष्णोपवनेजलस्थलप्रसूनगंधानिलजुष्टदिक्तटे ॥ चचारभृंगप्रमदागणावृतोयथा मदच्युद्द्विरदःकरेणुभिः २५ एवंशशांकांशुविराजितानिशाःससत्यकामोनुरताबलागणः ॥ सिषेवआत्मन्यवरुद्धसौरतःसर्वाःशरत्काव्यकथारसाश्रयाः २६ राजोवाच ॥ संस्थापनायधर्मस्यप्रशमायेतरस्यच ॥ अवतीर्णोहिभगवानंशेनजगदीश्वरः २७ सकथंधर्मसेतूनांवक्ताकर्ताभिरक्षिता ॥ प्रतीपमा चरद्ब्रह्मन्परदाराभिमर्शनम् २८

णायवेतिगमयितव्यम् २४ कृष्णायाःयमुनायाउपवनेजलप्रसूनानिकुमुदादीनिस्थलपुष्पाणिसौगंधिककुंदादीनितेषांगंधमिश्रवायुनाजुष्टाः परिमलिताःदिक्तटाःदिगंताःयस्यसतथातस्मिन् मद च्युन्मदजलस्रवी अन्यत्रदुष्टगर्वनाशनःरदविलेखनइतिधातोः पुण्यपापयोरदोलेखनंयेनसाद्विरदः चित्रगुप्तेनपुण्यपापलेखनकर्त्रेत्यर्थः करेहस्तविषयेअणुभिःलतावत्दंडायतबाहुभिरित्यर्थःभृंगवद्गायमान प्रमदागणपरिवृतःयद्वाभृंगस्त्रियःतासांगणेनसवृतः २५ उपसंहरति एवमिति अनुरताबलागणः अनुरतस्त्रीगणः तदिच्छानुकूलरमितस्त्रीजनोवा नितरांशंसुखंयासुताःनिशाःरात्रीः एकोपिक्षणोराति क्रियांविनानहापितइति शरत्काललक्षणवर्णनेनकाव्यकथायांसंयाताःरसाःशृंगारहास्यादिरूपाः एतेषामाश्रयः आश्रयाइतिपाठेनिशाविशेषणं रसानाश्रयंतीतिरसाश्रयाः आत्मन्यवरुद्धंनिरुद्धं सौभगंसौरतंनिर्दुष्टरेतोलक्षणवीर्यंयेनसतथा सुरतक्रियावीर्यंनिरुध्यक्रियतइत्यर्थं यद्वावशीकृतयोगैश्वर्यः यद्वा आत्मनिदेहेविकाशीकृतसौंदर्यः २६ ज्ञातशास्त्रतात्पर्यार्थोपिपरीक्षितस्वनाम्नोर्थंसफलंकुर्वन् तथाश्रोतृजनविद्वज्जनचित्तसंदेहप्रहाणायपृच्छति संस्थापनायेति इतरस्याधर्मस्य हिशब्देन यदायदाहिधर्मस्यग्लानिर्भवतिभारतेत्यादिवाक्यप्रमाणयति २७ प्रतीपंप्रातिकूल्यंकिमकारीत्यत्राह अभि मर्शनं अविचार्यग्रहणम् २८

विषयभोगलौल्यात्कृतंकिंनेत्याह आत्मारामइति कोभिप्रायोऽस्यमच्चरितंचरेत् मदुक्तमेवचरेन्नचरितंचरेदितिचेति नःपरिसरवर्तिजनस्य २९ नारायणानुग्रहसुधापात्राणांस्मृतिविहितधर्मव्यति
क्रमोनदोषायदृष्टःकिमुतदूरीकृतविधिनिषेधबंधस्यहरेरित्याशयेनप्रश्नंपरिहरति धर्मेति चशब्दःकैमुत्यद्योतकः यद्यर्थोवा यद्यपीश्वराणांयोगैश्वर्यपारंगतानांसाहसःहेतुशून्योधर्मव्यतिक्रमःशास्त्र
विहिताचारविरुद्धाचारोऽजीगर्तस्यपुत्रविक्रयः विश्वामित्रस्यश्वभक्षणप्रवृत्तिः सप्तर्षीणांशवभक्षणोद्योगइत्यादिलक्षणोदृष्टःशास्त्रेतथापिसतेषानदोषायधर्मप्रतिबंधकायनभवति तत्कुतइतिहेतुगर्भ
विशेषणमाह तेजीयसामिति तेजोबलेप्रभावेचज्योतिष्यर्चिषिरेतसि नवनीतेदुर्गेइतियादवः तत्रदृष्टांतमाह वह्नेरिति अमेध्यादिदहनलक्षणोपेतस्याग्नेः ३० नन्वेवंचेत्श्रेष्ठाचरितत्वेनाश्रेष्ठस्यपरा
दराचरणप्रसंगः यद्यदाचरतिश्रेष्ठइत्यादिस्मृतेश्चेतितत्राहनेतिस्मृतिः सत्कर्मणः आचारमनुजानातिनत्वसत्कर्मणः लोकसंग्रहमेवापिसंपश्यन्कर्तुमर्हसीतिविधानाच्चेतीममर्थंहिशब्देनाविशिनष्टि हिस्याद्धि
शेषणेहेताविति यादवः मनसापिनाचरेत्किमुतकायेन विपक्षेबाधकमाह नश्यतीति णशअदर्शनइतिधातोः समूलमुच्छिन्नोभवतीत्यर्थः अदर्शनंलोपइति सूत्रात् लुपछेदनइतिधातोः मौढ्यात्क्रोधोद्रेकात्
मौर्ख्याद्वा मोहकान्मौर्ख्यमूढतइति मोहोमोहनिंतंद्रितइति कालांतरेसंजातेननिवर्तनेननाशोनस्यादित्यतः आश्विति किंचित्कालमवसरंनददातीत्यर्थः व्यतिरेकंदर्शयति यथेति यथारुद्रोविषम
पिबत् तथाहमपिविषंपास्यामीतितत्पानेननश्यति तस्मात्तन्नकर्तव्यमित्यर्थः विषपानेनाशुनाशःस्यादितिदर्शनायतदुक्तं नतुसमूलतरुच्छेदविषये विषपानान्मृतिंदृष्ट्वा अन्यस्यनिवृत्तिसंभवात् नतथा

आत्मारामोयदुपतिःकृतवान्वैजुगुप्सितम् ॥ किमभिप्रायएतन्नःसंशयंछिंधिसुव्रत २९ ॥ श्रीशुकउवाच ॥ धर्मव्यतिक्रमोदृष्टईश्वराणांचसाहसः ॥ ते
जीयसांनदोषायवह्नेःसर्वभुजोयथा ३० नैतत्समाचरेज्जातुमनसापिह्यनीश्वरः ॥ नश्यत्याश्वाचरन्मौढ्याद्यथारुद्रोऽपिबद्विषम् ३१ ईश्वराणांवचःसत्यंतथै
वाचरितंक्वचित् ॥ तेषांयत्स्ववचोयुक्तंबुद्धिमांस्तत्समाचरेत् ३२ कुशलाचरितेनैषामिहस्वार्थोनविद्यते॥विपर्ययेणवानर्थोनिरहंकारिणांप्रभो ३३ किमुताखि
लसत्त्वानांतिर्यङ्मर्त्यदिवौकसाम् ॥ ईशितुश्चेशितव्यानांकुशलाकुशलान्वयः ३४यत्पादपंकजपरागनिषेवतृप्तायोगप्रभावविधुताखिलकर्मबंधाः ॥ स्वै
रंचरंतिमुनयोपिननह्यमानास्तस्येच्छयात्तवपुषःकुतएवबंधः ३५ गोपीनांतत्पतीनांचसर्वेषामपिदेहिनाम् ॥ योंतश्चरतिसोध्यक्षएषक्रीडनदेहभाक् ३६

प्रकृतइति ३१ यद्येवंतर्ह्याप्तत्वेनेश्वरोक्तमपिग्राह्यमित्यापातमितितत्राह ईश्वराणामिति सत्यंपरमार्थत्वेनाभिष्टज्ञापकं परमार्थेर्थेवत्सत्यमितियादवःतद्वचनमेवसत्यंचेत्कुर्याद्विद्वांस्तथासक्ताश्चिकी
र्षुर्लोकसंग्रहमितिविधानंव्यर्थमितितत्राह तथैवेति क्वचिदित्युपहासादिव्यावृत्तये अनुवर्तिनांवैदिककर्ममार्गप्रदर्शनार्थंयदाचरणंतदपिसत्यंफलदर्शनात्तर्हिवचनंसत्यंकिनेत्याह तेषामिति अ
युक्तंवेदोऽप्रमाणलक्षणमित्यादिलक्षणंप्रतीतिकार्यंविषयं यद्वास्ववचसोऽयुक्तंविरोधि तेषांयदाचरितंबुद्धिमानेतन्नाचरेदितिश्रुतिश्च ३२ इतोपिशुष्कजलनारिकेलफलवन्निर्मुक्तशरीराभिमानानां
दूरीकृतकुशलाकुशलानांफलवत्त्वाद्धर्मव्यतिक्रमोनदोषायेत्याशयेनाह कुशलेति इहसंसारमंडलेअर्थः प्रयोजनंप्रारब्धकर्मनाशेनापातकदेहत्वादभीष्टत्वाच्च विपर्ययेणविपर्ययाचरणेनानर्थोनरकपा
तादिलक्षणःअत्रहेतुमाह निरहंकारिणामिति ३३ उपसंहरति किमुतेति अखिलसत्त्वानांसमस्तप्राणिनामित्यस्यविवरणं तिर्यङ्मर्त्येत्यादिना ईशितव्यानांनियम्यानांईशितुर्नियामकस्य चसमु
च्चये ईशितव्यानामचेतनानांच कुशलाकुशलान्वयः पुण्यपापफललेपःकिमुत ३४ कथांतरात्कैमुत्यन्यायंदर्शयति यत्पादेति भक्तियोगप्रभावेनविधुताविध्वस्ताखिलबंधायेषांतेतथा ननह्यमाना
अतएवपुत्रस्नेहेनबध्यमानानभवंति कर्मभिर्वा ३५ क्रीडनंक्रीडासाधनंदेहंभजतीतिक्रीडनदेहभाक् अध्यक्षःसाक्षी अयंचबंधाभावेहेतुः ३६

स्वेच्छाविग्रहस्वीकारे निस्पृहस्य किंप्रयोजनमित्यत आह अनुग्रहायेति तादृशीं मानुषदेहक्रीडां चरितं श्रुत्वा तत्परः भगवानेव परो यस्य स तथा तस्मिन्तात्पर्ययुक्तो वा यद्वा सपुरुष इव जन्ममृत्युशून्यो भवेत् ३७ स्वैरिणीवृत्तिमाश्रितानां गोपीनां ग्रहणं तद्भर्तृभिः कथं चक्रे तत् कथं च कृष्णे दोषाविष्करणमकृतमत्राह नेति गुणे दोषाविष्करणमसूया क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रतिकोपः इति चतुर्थी ३८ ब्रह्मरात्रे ब्राह्ममुहूर्ते ३९ संसारानिवृत्तिहेतुत्वादस्मिन्कृष्णविक्रीडिते श्रद्धादिकं कार्यमिति विधायकफलमाह विक्रीडितमिति चशब्दः श्रद्धातिशयजननार्थः पूर्वोक्तविक्रीडितानि यश्चारुसंसारानिवर्तकानि तथेदं चेति आशु भक्तिं प्रतिलभ्यानुदिनं कृत्वा हृद्रोगं कामम् अनिष्टं अपहिनाति प्रतित्यजति दुष्टकामत्यागएव संसारनिवृत्तिरित्यर्थः ४० ॥ इतिश्रीभागवतमहापुराणे दशमस्कंधे विजयध्वजकृतटीकायांएकत्रिंशोध्यायः ॥ ३१ ॥ मुकुंदभक्त्यासंसाराहिग्रासमोक्षस्य ज्ञानरत्नदानस्य निदर्शनाय नंदस्य सर्पान्मोक्षं शंखचूडहत्वा बलभद्राय तच्छिरोरत्नदानं चानिरूपयत्यस्मिन्नध्याये तत्र प्रथमतो गोपानां यात्राप्रकारं कथ

अनुग्रहायभक्तानांमानुषंदेहमाश्रितः ॥ भजतेतादृशींक्रीडांयांश्रुत्वातत्परोभवेत् ३७ नासूयन्खलुकृष्णायमोहितास्तस्यमायया ॥ मन्यमानाःस्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः ३८ ब्रह्मरात्रउपावृत्तेवासुदेवानुमोदिताः ॥ अनिच्छंत्योययुर्गोप्यःस्वगृहान्भगवत्प्रियाः ३९ विक्रीडितंव्रजवधूभिरिदंचविष्णोःश्रद्धान्वितोनुशृणुयादथवर्णयेद्यः ॥ भक्तिंपरांभगवतिप्रतिलभ्यकामंहृद्रोगमाश्वपहिनोत्यचिरेणधीरः ४० ॥ इतिश्रीभागवतेमहापुराणे दशमस्कंधेएकत्रिंशोऽध्यायः ॥३१॥ श्रीशुकउवाच ॥ एकदादेवयात्रायांगोपालाजातकौतुकाः ॥ अनोभिरनडुद्युक्तैःप्रययुस्तेऽम्बिकावनम् १ तत्रस्नात्वासरस्वत्यांदेवंपशुपतिंप्रभुम् ॥ आनर्चुरर्हणैर्भक्त्यादेवींचनृपतेऽम्बिकाम् २ गावोहिरण्यंवासांसिमधुमध्वन्नमादृताः ॥ ब्राह्मणेभ्योददुःसर्वेदेवोनःप्रीयतामिति ३ ऊषुःसरस्वतीतीरेजलंप्राश्ययतव्रताः ॥ रजनींतांमहाभागनंदसुनंदकादयः ४ कश्चिन्महानहिस्तस्मिन्विपिनेतिबुभुक्षितः ॥ यदृच्छयागतोनंदंशयानमुरगोग्रसीत् ५ सचुक्रोशाहिनाग्रस्तःकृष्णकृष्णमहानयम् ॥ सर्पोमांग्रसतेतातप्रपन्नंपरिमोचय ६ तस्यचाक्रंदितंश्रुत्वागोपालाःसहसोत्थिताः ॥ ग्रस्तंचदृष्ट्वासंभ्रांताःसर्पंविव्यधुरुल्मुकैः ७ अलातैर्दह्यमानोपिनामुंचत्तमुरंगमः ॥ तमस्पृशत्पदाभ्येत्यभगवान्सात्वतांपतिः ८ सवैभगवतःश्रीमत्पादस्पर्शहताशुभः ॥ भेजेसर्पवपुर्हित्वारूपंविद्याधरार्चितम् ९ तमपृच्छद्धृषीकेशःप्रणतंसमुपस्थितम् ॥ दीप्यमानेनवपुषापुरुषंहेममालिनम् १० कोभवान्परयालक्ष्म्यारोचतेऽद्भुतदर्शनः ॥ कथंजुगुप्सितामेतांगतिंवाप्रापितोऽवशः ११ सर्पउवाच ॥ अहंविद्याधरःकश्चित्सुदर्शनइतिश्रुतः ॥ श्रियास्वरूपसंपत्त्याविमानेनाचरंदिशः १२ ऋषीन्विरूपानांगिरसःप्राहसंरूपदर्पितः ॥ तैरिमांप्रापितोयोनिंप्रलब्धःस्वेनपाप्मना १३

यति एकदेति अंबिकामाहात्म्यविषयांकिंवदंतीमाकर्ण्य जातकौतुकाः उत्पन्नकुतूहलबुद्धयः अंबिकावनं दुर्गावासस्थानं वनं अनडुद्युक्तैः वृषभयुक्तैः अनोभिः शकटैः १ पशवो जीवास्तेषां पतिं प्रभुं समर्थं समर्थेधिपतौ प्रभुरिति च तत्र वने सरस्वत्यां स्यंदमानायां अर्हणैः पुष्पोपहारादिसाधनैः २ मध्वन्नं यद्वा मधुरान्नं मधुक्षौद्रम् ३ ४ यदृच्छया तस्मिन्वने आगतोभूत् आगमनेनिमित्तमाह अतिबुभुक्षित इति शयानं निद्रां कुर्वंतम् ५ मकर्षेणापन्नं विपदं गतं शरणागतं वा ६ ७ ८ ९ १० ११ १२ पाप्मना अपराधेन प्रलब्ध उपलब्धो विप्रलब्धो वा विरूपान् सौंदर्यरहितान् सोऽदर्शयदिति उप पशब्दं प्रचक्षत इति अंगिरसः पुत्रा आंगिरसः १३

१४ आपृच्छेआज्ञांप्रार्थये अमीवहन् दोषनाशन १५ १६ १७ चात्तंस्तुत्वा दाशार्हंकृष्णम् १८ निशाम्यदृष्ट्वा १९ २० विरजांबरौधौतवस्त्रौ २१ मल्लिकागंधास्वादनेनमत्ताअलिनोभ्रमरायस्मिन् मल्लिकागंधमत्तालि २२ जगतुःगानंकृतवंतौ कथंकारमितितत्राह ताविति स्वरमंडलमूर्च्छनां सप्तानांस्वराणांमंडलानांसमूहानांमूर्च्छनामेकविंशतिलक्षणांकल्पयंतौ युगपदेकस्मिन्क्षणे यद्वामंडलमावृत्तिलक्षणंसप्तस्वरास्त्रयोग्रामाएकविंशतिमूर्च्छनाइतिभरतः २३ २४ २५ तौनाथौयस्यसतन्नाथःतं कालनंद्रावणम् २६ स्वपरिग्रहंस्वस्त्रीजनं दस्युनाऽन्यायेनग्रस्ताः

शापोमेनुग्रहायैवकृतस्तैःकरुणात्मभिः ॥ यदहंलोकगुरुणापादस्पृष्टोहताशुभः १४ तंत्वाहंभवभीतानांप्रपन्नानांभयापहम् ॥ आपृच्छेशापनिर्मुक्तः पादस्पर्शादमीवहन् १५ प्रपन्नोस्मिमहायोगिन्महापुरुषसत्पते ॥ अनुजानीहिमांकृष्णसर्वलोकेश्वरेश्वर १६ ब्रह्मदंडाद्विमुक्तोहंसद्यस्तेऽच्युतदर्शनात् यन्नामगृह्णन्नखिलाञ्छ्रोतॄनात्मानमेवच १७ सद्यःपुनातिकिंभूयस्तस्यस्पृष्टःपदाहिते ॥ श्रीशुकउवाच ॥ इत्यनुज्ञाप्यदाशार्हंपरिक्रम्याभिवाद्यच ॥ सुदर्शनोदिवंयातःकृच्छ्रान्नंदश्चमोचितः १८ निशाम्यकृष्णस्यतदात्मवैभवंव्रजौकसोविस्मितचेतसस्ततः ॥ समाप्यतस्मिन्नियमंपुनर्व्रजंनृपाययुस्तत्कथयंतआदृताः १९ कदाचिदथगोविंदोरामश्चाद्भुतविक्रमः ॥ विजह्रतुर्वनेरात्र्यांमध्यगौव्रजयोषिताम् २० उपगीयमानौललितंस्त्रीजनैर्बद्धसौहृदैः ॥ स्वलंकृतानुलिप्तांगौस्रग्विणौविरजांबरौ २१ निशामुखंमानयंतावुदितोडुपतारकम् ॥ मल्लिकागंधमत्तालिजुष्टंकुमुदवायुना २२ जगतुःसर्वभूतानांमनःश्रवणमंगलम् ॥ तौकल्पयंतौयुगपत्स्वरमंडलमूर्च्छनाम् २३ गोप्यस्तद्गीतमाकर्ण्यमूर्च्छितानाविदन्नृप ॥ स्रंसद्दुकूलमात्मानंस्रस्तकेशस्रजंततः २४ एवंविक्रीडतोःस्वैरंगायतोःसंप्रमत्तवत् ॥ शंखचूडइतिख्यातोधनदानुचरोभ्यगात् २५ तयोर्निरीक्षतोरेवतन्नाथंप्रमदाजनम् ॥ क्रोशंतंकालयामासदिश्युदीच्यामशंकितः २६ क्रोशंतंकृष्णरामेतिविलोक्यस्वपरिग्रहम् ॥ यथागादस्युनाग्रस्ताभ्रातरावन्वधावताम् २७ माभैष्टेत्यभयारावौतालहस्तौमनस्विनौ ॥ आसेदतुस्तंतरसात्वरितंगुह्यकाधमम् २८ सवीक्ष्यतावनुप्राप्तौकालमृत्यूइवोद्विजन् ॥ विसृज्यस्त्रीजनंमूढःप्राद्रवज्जीवनेच्छया २९ तमन्वधावद्गोविंदोयत्रयत्रसधावति ॥ जिहीर्षुस्तच्छिरोरत्नंतस्थौरक्षन्स्त्रियोबलः ३० अविदूरइवाभ्येत्यशिरस्तस्यदुरात्मनः ॥ जहारमुष्टिनैवांगसहचूडामणिंविभुः ३१ शंखचूडंनिहत्यैवंमणिमादायभासुरम् ॥ अग्रजायाददत्प्रीत्यापश्यंतीनांचयोषिताम् ३२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविद्याधरशापविमोचनशंखचूडहननंनामद्वात्रिंशोऽध्यायः ॥ ३२ ॥

क्रोशंतीःगायथा तथाक्रोशंतंविलोक्य दस्युतस्करशार्दूलौहंतारौगांनृहिंसकावितिच २७ माभैष्टभीतामाभवतेत्यभयवाक्ययुक्तौ तालोगीतांगवाद्यविशेषः यद्वा तालस्तृणराजः सहस्तेययोस्तौ तथा मनस्विनौविशिष्टमनोयुक्तौ तरसाबलेनत्वरस्वीबलरंहसीइति २८ मरणकालः कश्चिदसुरोवा मृत्युर्यमः उद्विजन्बिभ्यत् २९ ३० ३१ ॥ ३२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांद्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

र्वीणां उपासनाप्रकारईदृशइतिदर्शयितुंगोपीनांभगवल्लीलानुस्मरणंकथयत्यस्मिन्नध्याये तत्रप्रथमतस्तासांकृष्णेभक्तिलक्षणंवक्ति गोप्यइति अकृष्टगानेनाहृतचेतस्त्वंभक्तेर्लक्षणंसूचयति १
अर्थौ एकस्यागीतंतद्वाभ्यांद्वाभ्यांश्लोकाभ्यामन्वयः एकागोपीगोप्यंतराणिसंबोधयति हेगोप्यःशृणुतेतिशेषः वामबाहुमूलेकृतंवामकपोलंयेनसतथा वल्गितानीनर्तिताभ्रूर्यस्यसतथा अधरे
र्पितोवेणुर्येनसतथा मुकुंदोयत्रयदाकोमलांगुलिभिःआश्रितमार्गआच्छादितरंध्रेवेणुमीरयतिगायतीत्यर्थः २ तदासिद्धैःसह व्योमयानवनिता विमानस्थाःस्त्रियः तद्गीतमुपधार्यश्रुत्वा विरि
अनंतरंस्वयमशक्ताःसलज्जाःकामबाणेनसमर्पितंविद्धंचित्तंयासांतास्तथा अपस्मृतानीवीवस्त्रग्रंथिर्यासांताः मुच्यमानवस्त्रग्रंथिस्मरणरहिताः कश्मलंमूर्छांययुरित्यर्थः ३ हारेणभासतइतिह
सः हारवद्विशदोहासोयस्यसतथेतिपाठार्थौ उरसिस्थिताविद्युत् विद्युदिवविष्णुंद्योतयतिश्रीवत्सांकनाम्नेति यर्हियदाकूजितवेणुर्भवति ४ तदाएत्यसमेत्यव्रजवृषादयः लिखितचित्रमिवनिश्चेष्टा
नित्यन्वयः धृतकर्णाःनिश्चलकर्णाःकवलस्तृणग्रासःनिद्रिताःकार्यांतररहिताः ५ हेआलिसखि कर्हिचित्कदाचित् यत्रयदायस्मिन्देशेस्थित्वागाःसमाह्वयति ६ तर्हितदातस्मिन्देशेस्थित
रितस्त्वीरेष्यसिवाऽनिलनीतंतत्पदांबुजरजः आमृशन् अस्पृशन्वैइत्यन्वयः कथंभूतः बर्हिणस्यमयूरस्यस्तबकैःपिच्छबंधविशेषैःधातुभिर्गिरिसंभवैः मनःशिलादिभिःपलाशैःपल्लवैः बद्धस्यमल्लपर्ा

श्रीशुकउवाच ॥ गोप्यःकृष्णेवनंयातेतमनुद्रुतचेतसः ॥ कृष्णलीलांप्रगायंत्योनिन्युर्दुःखेनवासरान् १ ॥ गोप्यऊचुः ॥ वामबाहुकृतवामकपोलो
ल्गितभ्रुरधरार्पितवेणुः ॥ कोमलांगुलिभिराश्रितमार्गंगोप्यईरयतियत्रमुकुंदः २ व्योमयानवनिताःसहसिद्धैर्विस्मितास्तदुपधार्यसलज्जाः ॥ कामम
र्गणसमर्पितचित्ताःकश्मलंययुरपस्मृतनीव्यः ३ हंतचित्रमबलाःशृणुतेदंहारहासउरसिस्थिरविद्युत् ॥ नंदसूनुरयमार्तजनानांनर्मदोयर्हिकूजितवेणुः
वृंदशोव्रजवृषामृगगावोवेणुवाद्यहृतचेतसआरात् ॥ दंतदष्टकवलाधृतकर्णानिद्रितालिखितचित्रमिवासन् ५ बर्हिणस्तबकधातुपलाशैर्बद्धमल्लपरिब
र्हविडंबः ॥ कर्हिचित्सबलआलिसगोपैर्गाःसमाह्वयतियत्रमुकुंदः ६ तर्हिभग्नगतयःसरितोवैतत्पदांबुजरजोनिलनीतम् ॥ आमृशन्पर्यसिवाबहुपुण्याः
प्रेमवेपितभुजाःस्तिमितापः ७ अनुचरैःसमनुवर्णितवीर्यआदिपूरुषइवाचलभूतिः ॥ वनचरोगिरितटेषुचरंतीर्वेणुनाह्वयतिगाःसयदाहि ८ वनलतास्तरव
आत्मनिविष्णुंव्यंजयंतइवपुष्पफलाढ्याः ॥ प्रणतभारविटपामधुधाराःप्रेमहृष्टतनवःससृजुःस्म ९

स्यमल्लपुरुषशिरःपरिकरस्यविडंबोनुकारोयस्यसतथा मयूरोबर्हिणोबर्हीनीलकंठोभुजंगभुगित्यमरः किंच बहूनिअनेकानिपुण्यानियासांतास्तथा विपुलानेकयोर्बहुरितियादवः प्रेम्णाकामोत्थे
नवेपिताःकंपिताभुजास्तरंगलक्षणायासांतास्तथा अतएवहृतवेगाः मंदीकृतस्पंदनलक्षणजवाः अतएवभग्नगतयःस्तिमितप्रवाहाःआसन्नित्यनुषंगः अनेनसरतीतिसरितइतिसरित्छब्दार्थो
विदर्शितम् ७ अनुचरैःसनकादिभिःअन्यत्रगोपैः अचलभूतिःस्थिरश्रीः भूतिःश्रीजन्मभस्मस्वितियादवः वनचरःकक्षेसंचरन् अन्यत्रवनेचरणंशयनंजलशयनइत्यर्थः यदावेणुनाध्मातं
निनाद्गिरितटेषुचरंतीः तृणभक्षणंकुर्वतीः अन्यत्रवायोस्तटवद्विस्तृतेसुखेवर्तमानागाःपशून् अन्यत्रवदवाणीराह्वयतिसनकादिभिःस्तूयमानोजलशयानः आदिपुरुषोवायुसुखेवर्तमानश्रुतीस्त
थनपूर्वकमुद्दिशति ८ तदात्मनिस्थितंविष्णुंव्यंजयंतइवपुष्पफलाढ्याः अतएवप्रणतंप्रणमनंबिभ्रतीतिप्रणतभाराः अण्प्रत्ययः विटपाःशाखायेषांतरूणांयासांलतानांवातेतास्तथा यद्वा
फलभारेणप्रणताविटपायेषांतेतथा प्रेम्णाहृष्टरोमांचितास्तनवोयेषांयासांवातेतास्तथाएवंविधावनलतास्तरवश्च मधुधारारसधाराःससृजुःस्म सृष्टवंतइत्यर्थः अन्यत्रआत्मनिहृदयेस्थितं
व्यंजयंतःअपरोक्षीकुर्वंतइवज्ञानपुष्पेणजीवन्मुक्त्यवस्थाफलेनाढ्याः प्रणतस्यभारोभरणंयेषांतेप्रणतभाराःतेविटपाभुजायेषांतेतथामूर्ध्न्यारोपितांजलिपुटाइत्यर्थः अतएवभक्त्युद्रेकेणरोमांचित

तरवः संसारतरणशीला तीर्णसंसारा वनेअरण्येरतानिवृत्तिधर्ममनुतिष्ठंतोवनेभासि ग्रीष्मेपंचाग्निज्वालासेवायां वर्षतौकाननेवनेजले हिमर्तौकंठलग्नसलिलेवसंतः वनंभास्यप्सुकाननशतेयादवः स्वभावनिर्मोकनिश्च सर्गः वा मुमुक्षवोमुच्यमानामुक्ताश्चयथायोग्यमधिकारिणोमधुधाराः ज्ञानेनैशत्वाद्यानंदांबुसंततीः ससृजुस्तत्स्वभावाबभूवुरित्यर्थः धारा स्वांगेंबुसंतत्यांसैन्याग्रेस्वर्गेतिष्वपीति स्वरेणेतिशेषः याख्यायस्तष्टिष्विति च अत्रवनचरशब्दसामर्थ्यान्मत्स्याद्यवतारविषयत्वेनापिज्ञातव्यावेतौश्लोकौ शब्दशक्तिविशारदैरितिग्रंथबाहुल्यभयादुपरम्यतइति ९ यर्हियदासंधितवेणुः अलघुगंभीरंगीतंआद्रियत् कृष्णः दर्शनीयायाः चक्षुःप्रियायाः विकचैः उत्पलैः नीलोत्पलैः कृतायामालायादिव्यगंधाया अमानुषपरिमलायाः तुलस्याश्चमधुनापीतेनमत्तैरालिकुलैः अभीष्टगातुमुपक्रांतं आर्चत् आहतौसादरार्चितावितिवि १० तदासरसिविहरतोयेसारसहंसविहंगा तेपक्षिणः एत्यसंभूय चारुणागीतेनहृतचेतसः आकृष्टबुद्धयः अतएवयताचित्ताः एकाग्रकृतमानसाः अर्धनिमीलितनेत्राः धृतमौनाः स्वजातिचापल्यरहिताः हरिमुपासतेत्यन्वयः ११ हेव्रजदेव्यः बलेनसहितः स्रजामालयाऽवतंसेनकर्णोत्पलेनचा विलासः कांतिविशेषोयस्यसतथा यद्वा स्रगवतंसयोर्विलासोयस्यसतथा आत्मशोभाजनकत्वेनधृतयोः स्रगवतंसयोः शोभाजनकइत्यर्थः क्षितिभृतोगिरेः सानुषुशिखरेषुस्थितः लोकदृष्ट्यातदानींजातहर्षः आविष्कृतानंदविशेषः कृष्णोयर्हियदावेणुरवेणआह्वयत् गाइति शेषः विश्वंदेहमाविश्यवर्तमानंप्राणिजातंउपरंभति ऊर्ध्वमुखीकरोति आह्वयतिवा नूतनंकर्तुमुपक्रमतेवा उपरंभस्तूर्ध्वमुखेप्रक्रमेनिर्वृतेतथेतिच १२ तदामेघः महतोहरेरुच्चैर्गर्जनेनकर्णबाधिर्यजन

दर्शनीयविकचोत्पलमालादिव्यगंधतुलसीमधुमत्तैः ॥ अलिकुलैरलघुगीतमभीष्टमाद्रियद्यर्हिसंधितवेणुः १० सरसिसारसहंसविहंगाश्चारुगीतहृतचेतस एत्य ॥ हरिमुपासततेयतचित्ताहंतमीलितदृशोधृतमौनाः ११ सहबलःस्रगवतंसविलासःसानुषुक्षितिभृतोव्रजदेव्यः ॥ आह्वयद्यर्हिवेणुरवेणजातहर्ष उपरंभतिविश्वम् १२ महदतिक्रमणशंकितचेतामंदमंदमनुगर्जतिमेघः ॥ सुहृदमभ्यवर्षत्सुमनोभिश्छायायाचविदधेवितपत्रम् १३ विविधगोपचरणे षुविदग्धोवेणुवाद्यमधुरांनिजशिक्षाम् ॥ तवसुतःसतियदाऽधरबिंबेदत्तवेणुरनयत्स्वरजातीः १४ सुमनसस्तदुपधार्यसुरेशाःशक्रशर्वपरमेष्ठिपुरोगाः ॥ कवयआनतकंधरगात्राःकश्मलंययुरनिश्चिततत्त्वाः १५ निजपदाब्जदलैर्ध्वजवज्रनीरजांकुशविचित्रललामैः ॥ व्रजभुवःशमयन्खुरतोदंवर्ष्मधुर्यगतिरीरितवेणुः १६

कातिक्रमणमतिलघनंस्यादितिशंकितमनाः मंदंमंदंअनुवेणुरवानुकूलंयथाभवतितथागर्जति किंच सुमनोभिःपुष्पसदृशसलिलबिंदुभिः श्यामवर्णसाम्यात्सुहृदामित्रअभ्यवर्षत् किंच छायपाश्रितपत्रं वितपात्आतपात्त्रायतइतिवितपत्र विदधेचहरेरितिशेषः सितपत्रमितिपाठेश्वेतच्छत्रमित्यर्थः वेणुरवेणव्रजदेवीराह्वयदितिवा १३ हेसतियशोदेविविधानांगवांगीतशब्दानापतयः गंधर्वाः तेषांचरणेषु गीतगतिषुविदग्धःसमर्थः यद्वा विविधानांस्वस्वजातिस्वभावचेष्टासुनानाविधानांगोपानांचरणेषुकर्मसुविदग्धःकुशलः यद्वा विविधोगोपोरक्षणतस्यचरणेषुतत्तदापद्रक्षणविधिषुप्रविष्टइत्यर्थः अधरबिंबे दत्तवेणुः अधरोष्ठबिंबफलेन्यस्तवेणुः तवसुतःयदावेणुवाद्यमधुरावेणुलक्षणवाद्येकर्णसुखहेतुंनिजाशिक्षामात्मीयगानशिक्षां प्रतिस्वरजातीःषड्जादिस्वरसामान्यान्यनयत्प्रार्थयामास १४ तदा सुमनसोदेवांगनाःसुरेश्वराश्चगीतविषयेकश्मलंमोहंययुरित्यन्वयः कीदृशाःआनतकंधरगात्राः ईषन्नतकंठदेहावयवाःकवयःगानपारज्ञानिश्चिताअप्यनिश्चिततत्त्वाःअभूतपूर्वगीतश्रवणात् गीततत्त्वनिश्च यरहिताः किंकृत्वा तद्गानमुपधार्यतात्पर्येणश्रुतिनिधाय १५ ध्वजादयएवविचित्राणि नानाकाराणिललामानिलांछनानियेषांतानितथा यद्वा ललामानितिलकायेषांतानितथा यद्वा ललामानिभूषणानि येषांतानितथातैः ललामोस्त्रीध्वजेश्रेष्ठभूषापापुंड्रविह्वयोरितिव निजपदाब्जयोर्दलैः अंगुलीलक्षणैः यद्वा निजानित्यानिअन्येनानिर्जितानिपदान्येवपादाएवाब्जानियानितेषांदलैर्विभागैःव्रजभुवःगवां

खुरतोदंखुरनिखातव्यथां अकर्षेणशमयन्परिहरन्वर्ष्मणामहताशरीरेणयुक्तोधुर्योवृषभस्तस्यगतिरिवगतिर्यस्यसवर्ष्मधुर्यगतिः यद्वा वर्ष्मधुर्यो गजराजःतद्वद्गतिरितिवेणुःशब्दितवेणुर्यः १६ तेनव्रजामितेनप्राप्तेनकृष्णेनसविलासवीक्षणेनविभ्रमोपेतवीक्षणेन अर्पितोमनोभवस्यकामस्यवेगउद्रेकलक्षणःसंस्कारोयासुतास्तथा रात्रिविशेषेवनाद्व्रजगतिगोष्ठाख्यमंदिरंगमिताःप्रापिताः वयंकश्मलेनमनोभवस्थानलक्षणेनमोहेनस्रस्तंकबरंकेशभारं वसनंवस्त्रंवास्थितिंवानविदामनजानीमइत्यन्वयः कुजगतिमितिपाठेस्थावरस्वभावमित्यर्थः ब्राह्ममुहूर्तादुत्थायकृष्णाज्ञयावनात्प्रासव्रजानांपश्चादागतस्यकृष्णस्यपुनर्दर्शनेनमुग्धानांगोपिकानांवचनमिदमितिभावः १७ मणिधरःकौस्तुभरत्नधारी दयितगंधाप्राणप्रियगंधातुलसीयस्यांसातथा तयामालयोपलक्षितः प्रणयिनःस्निग्धतमस्यानुवर्तमानस्यकस्यचिद्गोपस्यासेभुजशिरसिभुजंप्रक्षिपन्निदधानोगाआगमयन्वनाद्व्रजमावर्तयन् कृष्णःक्वचित्कदाचित्कस्मिंश्चित्कालेयत्रयस्मिन्देशेअगायत १८ तदावंचितचित्ताःप्रलोभितांतःकरणाःकृष्णगृहिण्यःकृष्णमृगपरिग्रहभूताः हरिण्योगुणगणार्णं गुणगणसमुद्रंक्वणितवेणुध्मातवेणुंकृष्णमनुगम्यउपान्वीयुः उपासतेत्यन्वयः काइव विमुक्तगृहेशाः परित्यक्तनिजपतयः उभयत्रसमानं गोपिकागोपांगनाइव अन्यत्रगोपनशीलाइव १९ हेअनघेयशोदे कुंददाम्नाकुंदपुष्पमालयालंकृतः कौतुकवेषः विवाहकालेवरस्यहस्तेयत्सूत्रंबध्यतेतत्कौतुकंतदीयोवेषः सयस्यसकुंददाम

व्रजमितेनवयंसविलासवीक्षणार्पितमनोभववेगाः ॥ व्रजगतिंगमितानविदामःकश्मलेनवसनंकबरंवा १७ मणिधरःक्वचिदागमयन्गामालयादयितगंधतुलस्या ॥ प्रणयिनोनुचरस्यकदांऽसेप्रक्षिपन्भुजमगायतयत्र १८ क्वणितवेणुमुपवंचितचित्ताःकृष्णमीयुरनुकृष्णगृहिण्यः ॥ गुणगणार्णमनुगम्यहरिण्योगोपिकाइवविमुक्तगृहेशाः १९ कुंददामकृतकौतुकवेषोगोपगोधनवृतोयमुनायाम् ॥ नंदसूनुरनघेतववत्सोनर्मदःप्रणयिनांविजहार २० मंदवायुरुपवात्यनुकूलंमानयन्मलयजस्पर्शेन ॥ वंदिनस्तमुपदेवगणायेवाद्यगीतबलिभिःपरिवव्रुः २१ वत्सलोव्रजगवांयदगाधोवंद्यमानचरणःपथिवृद्धैः ॥ कृत्स्नगोधनमपोह्यदिनांतेगीतवेणुरनुगोभृतकीर्तिः २२ उत्सवंश्रममपोह्यदृशीनामुद्वहन्खुररजश्छुरितस्रक् ॥ दित्सयैतिसुहृदाशिषएषदेवकीजठरभूरुडुराजः २३

कृतकौतुकवेषः कौतुकंविषयाभेदेहस्तसूत्रेकुतूहलइतियादवः गोपादिभिःपरिवृतःप्रणयिनांनर्मदःलीलावचनेनआनंददःतववत्सःबालःनंदसूनुर्यदायमुनायांविजहार २० तदामलयजस्पर्शेनचंदनगंधदानेनकृष्णंमानयन्वायुर्यथानुकूलोभवतितथामंदमंदंउपवातिवीजयतीत्यन्वयः किंच तदायेउपदेवगणाःदेवसमीपेवर्त्तमानाःगंधर्वाःवंदिनोवंदमानाः यद्वा मंगलपाठकाश्चवाद्येनगीतेनबलिनाउपहारेणचतंकृष्णंपरिवव्रुः २१ किंचिदुत्पन्नोपयोगज्ञानावदातिवत्सलइति व्रजगवाविषयेवत्सलःगोष्ठगोषुस्निग्धतमः अगाधःगंभीरःअन्याविज्ञातमहिमा पथिज्ञानादिवृद्धैर्वंद्यमानचरणःस्तूयमानपादन्यासः दिनांतेसंध्यायामासन्नायां कृत्स्नंगोधनंसमस्तपशुलक्षणंधनमपोह्यव्यावर्त्य गीतवेणुः गातुमुपक्रांतवेणुःअनुगैर्वयस्यैःउद्भृतामणिपंकादुद्धृत्येवप्रकाशिताकीर्तिर्यस्यसतथा २२ वनपरिभ्रमणोत्पन्नंश्रममपोह्यनिरस्यस्वद्रष्टॄणांदृशीनांउत्सवंसुखोत्सवंउद्वहन् खुररजश्छुरितस्रक गोखुरसमुत्पन्नधूल्यामिश्रितामालायस्यसतथा देववयाजठरमेवभूर्व्यक्तिस्थानंयस्यसतथा उडुराजश्चंद्रइवलुप्तोपमेयं सयच्चदाव्रजमेतितदा एषकृष्णःसुहृदामार्निमित्तबंधूनां आशिषःइष्टफलानिदित्सयादातुमिच्छयैवेतिइत्यन्वयः चंद्रोपिव्रजगवांअध्वपशूनांपथिकानावत्सःवर्षसामर्थ्यात्कामोद्रेकंलातिरातीतिवत्सलःवत्सोनामकुजेवर्षेइतियादवः गोष्ठाध्वानिवहाःव्रजाइतिच अगस्य उदयपर्वतस्यअधःशृंगेवर्तमानः उदयस्याधित्यकाशृंगंचंद्रमागांदूर्ध्वमितिज्योतिषिकाःसंगिरते वृद्धैःसप्तर्षिभिःपांथेव्योमयागेदिनांतेरात्रौकृत्स्नगोधनंसमस्तकलासमेधितचंद्रिकाख्यधनमपोह्यपरिपूर्णगीतवेणुःकविभिःवर्णितस्ववंशः अनुगैःअश्विन्यादिनक्षत्रैःउद्भृतकीर्तीराशयुपरिकृतगणनःरविकिरणसंसर्गसमुत्पन्नश्रमंनिर्धूय

उत्सवमित्युभयत्रसंबंजननसमयेक्षीराब्धितीरवालुकानववीथिषुविक्रमंकुर्वंतउच्चैःश्रवसःखुररजश्छुरितस्लक्ष्चंद्रोपि २३ श्रीकृष्णंप्रशस्यबलभद्रप्रशंसयोपसंहरति अथनिघूर्णितेतिवारुणीपानो त्थमदेनईषद्विघूर्णितलोचनःविभ्रांतनेत्रःअन्यत्रघूर्णप्रकाशः लुषप्रकाशइतिधातुः चंद्रःकीदृशःस्त्रीणांमानदःअभिमानखंडनःदोअवखंडनइतिधातुः वनानांमालासंदोलीत्रामाक्कास्याल्लीतिवनमा ली बदरश्चंद्र.तद्वत्पांडुसुंदरंवदनंयस्यसनथा मानदोबदरःसिंधु शशिनस्तुत्रेनामकमितिवचनात् बदरफलवद्रागोपेतंवदनमित्यर्थोनशोभते पांडुशब्दोप्यर्थःस्यात् बद्रोबृहस्पति.पांडुःशुक्रस्तयो र्वदनमिववदनंयस्यसतथाचंद्रः कनककुंडललक्ष्म्यामृदुगंडंमंडयन्अलंकुर्वन्नित्युभयत्रसमम् २४ दुरंतंव्रजगवांदिनतापंमोचयन्नित्यपिसमं द्विरदराजवद्विहारोगमनक्रीडायस्यसतथा इदम पिपुरुषलक्षणंसमं एवंविधएषयदुपतिःबलभद्रःयामिनीपतिश्चंद्रइवदिनांतेसायंतनसमये उदयपर्वतशिखरंव्रजमुपयातीत्यन्वयःउपयातीतिलटागोपस्त्रीणामेवनित्यमनुस्मरणंनकादाचित्कमिति सू चयति २५ एवंविधाःकृष्णलीलाअनुगायतीःअनुगायंत्यः अल्लोपश्छांदसोवृत्तभंगभयाद्वाकृतःपद्धाएवंनुवेणुंविकल्प्य नुविकल्पेनुपृच्छायामित्यमरःमहानुदय.संपद्यासांताःमहोदयाः २६ इतिश्रीभागव

मदविघूर्णितलोचनईषन्मानदःस्वसुहृदांवनमाली ॥ बदरपांडुवदनोमृदुगंडंमंडयन्कनककुंडललक्ष्म्या २४ यदुपतिर्द्विरदराजविहारोयामिनीपतिरि वैषदिनांते ॥ मुदितवक्त्रउपयातिदुरंतंमोचयन्व्रजगवांदिनतापम् २५ श्रीशुकउवाच ॥ एवंव्रजस्त्रियोराजन्कृष्णलीलानुगायतीः ॥ रेमिरेहःसुतच्चि त्तास्तन्मनस्कामहोदयाः ॥ २६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ श्रीशुकउवाच ॥ अथतर्ह्यागतोगोष्ठमरिष्टोवृषभा सुरः ॥ महींमहाककुत्कायःकंपयन्खुरविक्षताम् १ रवमाणःखरतरंपदाचविलिखन्महीम् ॥ उद्यम्यपुच्छमप्राणिविषाणाग्रेणचोद्धरन् २ किंचि त्किंचिच्छकृन्मुंचन्मूत्रयन्स्तब्धलोचनः ॥ यस्यनिर्ह्रादितेनांगनिष्ठुरेणगवांनृणाम् ३ पतंत्यकालतोगर्भाःस्रवंतिस्मभयेनवै ॥ निर्विशंतिघनायस्यककु द्यचलशंकया ४ तंतीक्ष्णशृंगमुद्वीक्ष्यगोप्योगोपाश्चतत्रसुः ॥ पशवोदुद्रुवुर्भीताराजन्संत्यज्यगोकुलम् ५ कृष्णकृष्णेतितेसर्वेगोविंदंशरणंययुः ॥ भगवा नथतद्वीक्ष्यगोकुलंभयविद्रुतम् ६ माभैष्टेतिगिराश्वास्यवृषासुरमुपाह्वयत् ॥ सपालैःपशुभिर्मंदत्रासितैःकिमसत्तम ७ बलदर्पहाहंदुष्टानांत्वद्विधानां दुरात्मनाम् ॥ इत्यास्फोट्याच्युतोरिष्टंतलशब्देनकोपयन् ॥ सख्युरंसेभुजाभोगंप्रसार्यावस्थितोहरिः ८ सोप्येवंकोपितोरिष्टःखुरेणावनिमुल्लिखन् ॥ उद्यत्पुच्छभ्रमन्मेघःक्रुद्धःकृष्णमुपाद्रवत् ९ अग्रन्यस्तविषाणाग्रःस्तब्धासृग्लोचनोच्युतम् ॥ कटाक्षिप्याद्रवत्तूर्णमिंद्रमुक्तोऽशनिर्यथा १०

तेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांत्रयस्त्रिंशोऽध्यायः ॥३३॥ अरिष्टनामासुरहननलक्षणंविक्रमंदेवकार्यसिद्धिकामुकेननारदेनोद्बोधितस्यासुरजातेःकंसस्यसज्जनोपद्रवोद्योगंचकथयत्यस्मि न्नध्याये । अथशंखचूडवधानंतरंदैत्यांतरनिग्रहलक्षणकथारभ्यते शंखचूडंनिहत्ययदागोपस्त्रीभिःसहव्रजमागत.श्रीकृष्णस्तर्हितदा । वृषभासुरःवृषभाकारोदैत्यःमहातीककुत्कायश्चयस्यसतथा १ २ रवमाणःरवंकुर्वाणः २ शकृद्गोमयं स्तब्धेस्थूणीकृतेअतिस्थिरेलोचनेयस्यसतथा निर्ह्रादितेनगर्जितेन ३ मासत्रय.दर्वाक्गर्भस्रावः ततआसप्तमात्पतनंततःप्रसवःनृणामनुष्यस्त्रीणां अचलशंकयापर्वत शंकया ४ तत्रसु त्रस्ताःभीताःआसन् ५ ६ हेमंदानिर्भाग्य ७ भुजाभोगंआभोगभुजंगुरुवृत्तभूतम् ८ उद्यतिपुच्छेभ्रमंतोमेघायस्यसतथा ९ स्तब्धेनिश्चलेअसृक्शोणितमिवरक्तेलोचनेयस्यसतथा कव्याक्षिप्यकटीस्फिजौआक्षिप्यनिक्षिप्यप्रदर्श्येत्यन्वयः कटाक्षिप्त्वेतिपाठेकटाक्षेणनिरीक्ष्येत्यर्थः अशनिर्वज्रम् १०

प्रत्यपोवाह प्रत्यपातयत् अभ्याकृष्य पृष्ठतोपनीतवानित्यर्थः तिर्यङ्नीतवान्वा ११ १२ अंबरंवस्त्रं कृत्वाउत्कृत्यविषाणमितिशेषः तेनविषाणेन १३ मूत्रशकृती अनिमीलितेक्षणः विवृतनेत्रः निर्गताकृतिर्यस्मात्सतथा निर्ऋतिर्यमःतस्यक्षयंगृहंयमलोकमित्यर्थः १४ ककुद्मिनंवृषासुर स्वजातिभिः गोपैर्देवैर्वा १५ देवोनारायणः तद्विषयंदर्शनंज्ञानंयस्यसतथा यद्वा देवंदर्शयतीति यद्वादेवानामिवदर्शनंयस्यातीन्द्रियत्वात्सतथा देवानांयद्दर्शनंमतंतद्देवयस्यदर्शनंसतथेतिवाप्यथाकंसहननंशीघ्रतमंस्यात्तथाहेतिद्योतनार्थःप्रेत्युपसर्गः अनेनदेवकार्यमेवनारदेनसाध्यते नत्वसुरकार्यमितिज्ञापयते १६ किमाहेतितदाह यशोदायाइति कन्यांदुर्गांयशोदायाःसुतां कृष्णंदेवक्याःपुत्रं रामंबलभद्रंरोहिणीपुत्रमाह वसुदेवेनतौकिंकृतावत्राह बिभ्यता त्वदितिशेषः १७ स्वस्य

गृहीत्वाशृंगयोस्तंवाअष्टादशपदानिसः ॥ प्रत्यपोवाहभगवान्गजःप्रतिगजंयथा ११ सोपविद्धोभगवतापुनरुत्थायसत्वरः ॥ आपतत्स्विन्नसर्वांगोनिःश्वसन्क्रोधमूर्छितः १२ तमापतंतंसनिगृह्यशृंगयोःपदासमाक्रम्यनिपात्यभूतले ॥ निष्पीडयामासयथार्द्रमंबरंकृत्वाविषाणेनजघानसोपतत् १३ असृग्वमन्मूत्रशकृत्समुत्सृजन्क्षिपंश्चपादाननिमीलितेक्षणः ॥ जगामकृच्छ्रंनिर्ऋतेरथक्षयंपुष्पैःकिरंतोहरिमीडिरेसुराः १४ एवंककुद्मिनंहत्वास्तूयमानःस्वजातिभिः ॥ विवेशगगवान्गोष्ठंगोपीनांनयनोत्सवः १५ अरिष्टेनिहतेगोष्ठेकृष्णेनाद्भुतकर्मणा ॥ कंसायप्राहभगवान्नारदोदेवदर्शनः १६ यशोदायाःसुतांकन्यांदेवक्याःकृष्णमेवच ॥ रामंचरोहिणीपुत्रंवसुदेवेनबिभ्यता ॥ न्यस्तौस्वमित्रेनंदेवैयाभ्यांतेपुरुषाहताः १७ निशम्यतद्भोजपतिःकोपात्प्रचलितेंद्रियः ॥ निशातमसिमादत्तवसुदेवजिघांसया १८ निवारितोनारदेनतत्सुतौमृत्युमात्मनः ॥ ज्ञात्वालोहमयैःपाशैर्बबंधसहभार्यया १९ प्रतियातेतुदेवर्षौकंसआभाष्यकेशिनम् ॥ प्रेषयामासहन्येतांभवतारामकेशवौ २० ततोमुष्टिकचाणूरशलतोशलकादिकान् ॥ अमात्यान्हस्तिपांश्चैवसमाहूयाहभोजराट् २१ भोभोनिशम्यतामेतद्वीरचाणूरमुष्टिक ॥ नंदव्रजेकिलासातेसुतावानकदुंदुभेः २२ रामकृष्णौसुतौमह्यंमृत्यूकालनिदर्शितौ ॥ भवद्भ्यामिहसंप्राप्तौहन्येतांमल्ललीलया २३ मंचाःक्रियंतांविविधामल्लरंगपरिश्रिताः ॥ पौरजानपदाःसर्वेपश्यंतुस्वैरसंयुगम् २४ महामात्रनिबोधेदंवचोममहामते ॥ गजःकुवलयापीडःप्रभिन्नकरटामुखः २५ संस्थाप्योद्वारिरंगस्यकरारोपितमुद्गरः ॥ तेनतेतत्रहंतव्यौसुतावानकदुंदुभेः २६ सोप्याकुलमतिःप्राहनिहंतव्यौकथंमया ॥ स्वस्रीयौभोजराजस्यकंसस्यजगतीपतेः २७ इत्युक्तस्तेनकंसस्तुमहामात्रेणदुर्मतिः ॥ उवाचभूयोवचनंसमेतान्श्रावयन्नृप २८ कंसउवाच ॥ शृणुध्वमेतद्वचनंमयोदितंनिशम्यसर्वेहृदिधारयंतुतत् ॥ येनाहमेतेप्वसुहृत्स्वमादितश्चरामिबंधुष्वपितस्यकारणम् २९

मित्रेविश्वसनीयेसुहृदे याभ्यांकृष्णरामाभ्यां तवपुरुषानियोगकारिणः १८ निशातंनिशितंतेजितमित्यर्थः १९ आशास्यसम्यक्शिक्षित्वा भवतामद्भृत्येषुपूज्येन २० २१ २२ मृत्यूमारकौकालेनयमेनानितरांदर्शितौ २३ मंचाःउत्तुंगस्तंभादिरचितस्थानानि मल्लरंगस्यपरितःसर्वासुदिक्षुश्रिताःस्थिताः स्वैरसंयुगयोधाकांक्षापूरकंयुद्धम् २४ हेमहामात्रहस्तिपकुवलयभूमंडलंआपीडयतीति कुवलयंकैरवं आपीडेशेखरेयस्यसतथेति प्रभिन्नकरटामुखः मदस्राविगंडमुखः २५ मुद्गरोलोहदंडः २६ जगतीपतेः राजप्रधानलोकभर्तुः जगतीराजप्रधानेपीतिहलायुधः २७ २८ २९

३० ३१ सालानांसर्जानांमंडलेनसमूहेनालंकृते ३२ ३३ नामप्रसिद्धः ३४ सर्वेषांसत्वानांप्राणिनांआशयार्थंअभिप्रेतार्थंवेत्तीतिसर्वसत्वाशयार्थवित् ३५ ३६ नितांतखेदेनअतिमात्रव्यथयाआविलोसंकुलौलोचनाशयौयस्याःसातथा ३७ गीर्वाणतुल्याश्चामरवल्लभानुगाश्च अमरवल्लभइंद्रः ३८ जराचविनाशश्चजराविनाशौतौआदीयेषांअखिलानामाधीनांतेजराविनाशाद्यखिलाधयःतान्भजितुंशीलमेषामस्तीतिजराविनाशाद्यखिलाधिभागिनः तेषांमहदंतरंविशेषः ३९ अस्तुविशेषस्ततःकिंदोषःस्यादितिधियाशंक्य इतीति ४० ननुकथमेतद्दुष्टचेष्टितंकिमप्यतिक्रम्याकरणाद्दोष्यत्वादितितत्राह इमानिति अवधार्यअवज्ञाय ४१ मलिनत्वंसदृष्टांतमाह गजेनेति अमरैरधमःगर्हितः अधमौगर्हितन्पूनाविविच देवयोनिषुनीचइतिवा ४२ मयाकृतस्य

मातामममहाभागाकदाचित्कमलेक्षणा ॥ विचचारगृहोद्यानेमंदमारुतवीजिते ३० प्रोत्फुल्लाशोकबकुलपूगपुन्नागशोभिते ॥ भ्रमद्भ्रमरसंघातेकूजत्कोकिलसंकुले ३१ नूरथच्छिखंडिनिवहेमर्कटाटोपसुंदरे ॥ वसंतसमयेरम्येसालमंडलमंडिते ३२ चरंतीतत्रमेमाताचिंतयामाससुव्रता ॥ भर्तारंकामसंतप्ताऋतुस्नातास्वलंकृता ३३ तत्रैवकश्चिद्गंधर्वोद्रुमिलोनामनामतः ॥ चरन्नंतर्हितःकालेदृष्ट्वातामेकचारिणीम् ३४ विज्ञायचिंतितंतस्याःसर्वसत्वाशयार्थवित् ॥ उग्रसेनवपुर्बिभ्रत्सस्मितालापवीक्षितम् ३५ तामाससादकामार्तःकामयानांपतिव्रताम् ॥ अजानमानासाभ्येत्यरेमेतेनसमंवने ३६ सातंविदित्वारमणेतरंसतीनितांतखेदाविललोचनाशया ॥ उवाचकस्त्वंकितवार्यगर्हितंदुरात्मनायेनकृतंत्वयेदृशम् ३७ इतिब्रुवंतींपरिसांत्वयंच्छनैःसदीर्घबाहुर्द्रुमिलोऽभ्यभाषत ॥ वयंहिगंधर्वकुलोद्भवाःप्रियेगीर्वाणतुल्यामरवल्लभानुगाः ३८ भवादृशीनांमनुजांगनानांजानीहिभद्रेसुलभावयंनच ॥ जराविनाशाद्यखिलाधिभागिनांनृणांसुराणांमहदंतरंप्रिये ३९ इतिब्रुवंतंसाभूयःप्राहक्रोधाकुलेंद्रिया ॥ किंमांसांत्वयसेभूयःकृत्वेत्थंदुष्टचेष्टितम् ४० इमानतिक्रम्यजलाग्निमेदिनीसमीरणाकाशनिशेशसूर्यान् ॥ दिक्कालधर्मानवधार्ययेनदुरात्मनेत्थंमलिनीकृताहम् ४१ गजेनेवमदांधेनपद्मिनीतनमध्यगा ॥ विशृंखलेनविमलायेनाहंमलिनीकृता ॥ सत्वंकिमितिमांभूयःसांत्वयस्यमराधम ४२ इतिब्रुवंतींप्रोवाचसभूयःशापशंकितः ॥ अनुलोमःसरोजाक्षिमनुष्यासुदिवौकसाम् ४३ नराणांदेवकांतासुप्रतिलोमोहिसंगमः ॥ जानीहिनाहमागस्कृत्तेनपंकजगंधिनि ४४ तस्मात्तेजायतेपुत्रोमद्वीर्येणवृथाभवेत् ॥ श्रीमान्धीमान्महोत्साहोनमेवाग्जायतेमृषा ४५ इत्येनंवादिनंक्रुद्धामातामममयशस्विनी ॥ प्राहसत्यज्यसंतप्तापातिव्रत्यंसुदुर्लभम् ४६ निःसेतोर्भिन्नवृत्तस्यपापस्योन्मार्गवर्तिनः ॥ क्रूरस्तेतनयोभूयात्साहसीनिर्दयोऽघृणः ४७

कर्मणःसावद्यत्वेजलाग्न्यतिक्रमणदोषापादनंस्याद्देवयोनित्वेनममत्वत्संगमोनुकूलएवविहितत्वादितिछलाभिमंविराह इतीति दिवौकसांदेवानांमनुष्यासुस्त्रीषुसंगमोऽनुलोमोऽनुकूलः ४३ मनुष्याणांदेवस्त्रीषुसंगमः प्रतिलोमोविरुद्धः शंतन्वादीनागंगादिषुसंगमोदृष्टचरोऽतःकथमेतादितिमंदाशंकापूर्वाऽवस्थामेऽस्पदोषाशकानास्तीतिहिशब्देनपरिपराति ४४ ४५ ४६ निःसेतोरित्यस्यविवरणं भिन्नवृत्तस्येति वृत्तंचारित्रं अस्यविवरणं उन्मार्गवर्तिनइति निर्दयःनिर्गताकरुणायस्मात्सतथा अघृणः अकृत्यजुगुप्सारहितः घृणाजुगुप्साकृपयोरितिच दयदानगतिशोषणादिष्विति धातोःस्वजनादिधर्मशून्यः घृणाकृपातयारहितः ४७

४८ तावकानांदेवानामितिशेषः ४९ ५० बंधुषुदुर्जनान् बंधुभूतान् दुर्जनान्वा ५१ केतेइतितत्राह उग्रसेनमिति ५२ कुतःपितृहत्यादिदोषोनास्तीतितत्राह ममेति ५३ ५४ ५५ ५६ ५७ ५८ विशसंतुसूदयंतु भूतराजायभैरवविग्रहधारिणेरुद्राय मीढुषेसमर्थायअभीष्टदात्रेवा अर्थतत्त्वक्रमप्रयोजनयाथार्थ्यवेत्तारम् यदुपुंगवंयदुश्रेष्ठम् ५९ दानशब्देनयदान्यालक्ष्यंते ॥ तेषांपते अक्रूर मैत्रंमित्रकर्म ६० सौम्यसुंदर सौम्योदिव्येसोमजीवेसुंदरेसोमदैवतेइतिच कार्यगौरवसाधनम् महतःकार्यस्यसाधनसमर्थनम् ६१ ६२ निसृष्टःक्लृप्तःअभ्युपायनैःसहितैः ६३ वैद्युतोविद्युतोनिर्ग

नानुग्राह्योदेवतानांद्विजानांचतपस्विनाम् ॥ इत्थंवदंत्यांतस्यांसक्रुद्धायांशापशंकितः ४८ तावकानांभवेच्छत्रुरित्युक्त्वांतरधीयत ॥ गतेतस्मिन्महोद्यानान्मातामम तपस्विनी ४९ केनाप्यज्ञातवृत्तांतागृहानेवाभ्यपद्यत ॥ ततःसागर्भमालंब्यकालेनैवसुषावमाम् ५० इतिमेनारदःप्राहकदाचिद्भगवानृषिः ॥ ततःप्रभृत्यहंवेद्मितानेतान्बंधुदुर्जनान् ५१ यूयंतत्रप्रमाणंहिद्विषंत्येतेपिमांसदा ॥ उग्रसेनंचदुर्बुद्धिमाहुकंचदुराशयम् ५२ वसुदेवंचकितवमन्यांश्चतदुपाश्रयान् ॥ हत्वानजायतेदोषोममगंधर्वजन्मनः ५३ तेनादेक्ष्यामिपरुषंहन्येनामितितावहम् ॥ ताभ्यांहताभ्यांबालाभ्यांकुंजरेणबलीयसा ५४ कृत्वापारत्रिकींपूजांयांतुतत्पदवीमिमे ॥ वसुदेवोग्रसेनौचतथान्यौनंददेवकौ ५५ गोपालायादवाश्चैवयेचान्येतानत्रनुव्रताः ॥ पश्यंतुविवृतैर्नेत्रैर्हन्यमानौस्वदारकौ ५६ आहूयंतांजनपदाःपश्यंतुममपौरुषम् ॥ महामात्रत्वयाभद्ररंगद्वार्युपनीयताम् ५७ द्विपःकुवलयापीडोजहितेनममाहितौ ॥ आरभ्यतांधनुर्यागश्चतुर्दश्यांयथाविधि ५८ विशसंतुपशून्मेध्यान्भूतराजायमीढुषे ॥ इत्याज्ञाप्यार्थतत्त्वज्ञमाहूययदुपुंगवम् ५९ गृहीत्वापाणिनापाणिंततोक्रूरमुवाचह ॥ भोभोदानपतेमह्यंक्रियतांमैत्रमादृतः ॥ नान्यस्त्वत्तोहिततमोविद्यतेभोजवृष्णिषु ६० अतस्त्वामाश्रितःसौम्यकार्यगौरवसाधनम् ॥ यथेंद्रोविष्णुमाश्रित्यस्वार्थमध्यगमद्विभुः ६१ गच्छनंदव्रजंतत्रसुतावानकदुंदुभेः ॥ आसातेताविहानेनरथेनानयमाचिरम् ६२ निसृष्टःकिलमेमृत्युर्देवैर्वैकुंठसंश्रयैः ॥ तावानयसमंगोपैर्नंदाद्यैःसाभ्युपायनैः ६३ घातयिष्यइहानीतौकालकल्पेनहस्तिना ॥ यदिमुक्तौततोमल्लैर्घातयेवैद्युतोपमैः ६४ तयोर्निहतयोस्तप्तान्वसुदेवपुरोगमान् ॥ तद्बंधून्निहनिष्यामिवृष्णिभोजदशार्हकान् ६५ उग्रसेनंमतिपतरंस्थविरंराज्यकामुकम् ॥ तद्भ्रातरंदेवकंचयेचान्येविद्विषोमम ६६ ततश्चैषामहीमित्रभवित्रीनष्टकंटका ॥ जरासंधोममगुरुर्द्विविदोदयितःसखा ६७ शंबरोनरकोबाणोमय्येवकृतसौहृदाः ॥ तैरहंसुरपक्षीयान्हत्वाभोक्ष्येमहींनृपान् ६८ एतज्ज्ञात्वानयक्षिप्रंरामकृष्णाविहार्भकौ ॥ धनुर्यागनिरीक्षार्थंद्रष्टुंयदुपुरश्रियम् ६९

तोभिःतस्योपमायेषांतैः ६४ ६५ मतिपितरएवएतइतिशेषः ६६ मेमित्र भवित्रीभविष्यतिननुत्वत्तोधिकाजरासंधादयःकंटकाःसंतितत्राह जरासंधइति ६७ ६८ आनयनेनिमित्तमाह इतुरिति धनुर्यागलक्षणोत्सवार्थं ६९

मनीषितंमनसाकर्तुमिष्टं मरणंज्ञात्वापिपरिहारप्रयत्नोनकृतइतियदतआत्महत्यालक्षणंयदवद्यंतस्यमार्जनंपरिहरणंभवति फलनिष्पत्तिमज्ञात्वाप्रयत्नोव्यर्थइतिनानिह्नूयइत्याह सिद्ध्येति फलसिद्धावसिद्धौचहर्षशोकाभ्यांनविषमोभूत्वाकर्मकुर्यादितिविधिशास्त्रं तर्हिफलावाप्तिःकिमधीनेतितत्राह दैवमिति फलभावनंफलकारणम् ७० तर्हिदैवनापेक्षितं किंनेत्याह मनोरथानिति जनेनक्रियमाणत्वात्वयाप्यनुष्ठेयमितिभावः यद्यपिफलसिद्धिःहर्यधीनातथापि ७१ ७२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ श्रोतॄणांमंतॄणांप्रवक्तॄणांध्यातॄणांचतुष्ट्यारोहार्थंसंकलय्यभगवद्विक्रमंवर्त्तमानंवर्तिष्यमाणंचकथयत्यस्मिन्नध्याये तत्रादौकेशिदैत्यवधलक्षणंभगवद्विक्रमंवक्तुमाह केशीति निर्दरयन्भिंदन्मनोजववत्जवोयस्यसतथा अभ्राणिचविमानानिचअभ्रविमानानि सटाभिःस्कंधदीर्घरोमभिः अवधूतानिअभ्रविमानानि तैःसंकुलंहेषितेनाश्वजातिशब्दितेनभीषितमखिलंयस्यसतथा हेषाह्रेषाचवाजिनामितिहलायुधः १ विकटंविस्तृतंआस्यकोटरं

अक्रूरउवाच ॥ राजन्मनीषितंसम्यक्तवचावद्यमार्जनम् ॥ सिद्ध्यसिद्ध्योःसमंकुर्याद्दैवंहिफलभावनम् ७० मनोरथान्करोत्युच्चैर्जनोदैवहतानपि ॥ युज्यतेहर्षशोकाभ्यामथाप्याज्ञांकरोमिते ७१ एवमादिश्यचाक्रूरंमंत्रिणश्चविसृज्यसः ॥ प्रविवेशगृहंकंसस्तथाक्रूरःस्वमालयम् ७२ इतिश्रीभागवतेमहापुराणेदशमस्कंधेचतुस्त्रिंशोऽध्याय ॥ ३४ ॥ श्रीशुकउवाच केशीतुकंसप्रहितःखुरैर्महींमहाहयोनिर्दरयन्मनोजवः ॥ सटावधूताभ्रविमानसंकुलंकुर्वन्नभोहेषितभीषिताखिलः १ विशालनेत्रोविकटास्यकोटरोबृहद्गलोनीलमहांबुदोपमः ॥ दुराशयःकंसहितंचिकीर्षुर्व्रजंसनंदस्यजगामकंपयन् २ तंत्रासयंतंभगवान्स्वगोकुलंसहेषितैर्वालविघूर्णितांबुदम् ॥ आत्मानमाजौमृगयंतमग्रणीरुपाह्वयत्सव्यनदन्मृगेंद्रवत् ३ सतंनिशम्याभिमुखोनभस्तलंपिबन्निवाभ्यद्रवदत्यमर्षणः ॥ जघानपद्भ्यामरविंदलोचनंदुरासदश्चंडजवोदुरत्ययः ४ तद्वंचयित्वातमधोक्षजोरुषाप्रगृह्यदोर्भ्यांपरिपीड्यपादयोः ॥ सावज्ञमुत्सृज्यधनुःशतांतरेयथोरगंतार्क्ष्यसुतोव्यवस्थितः ५ सलब्धसंज्ञःपुनरुत्थितोमुखंव्यादायकेशीतरसापतद्धरिम् ॥ सोप्यस्यवक्त्रेभुजमुत्तरंस्मयन्प्रवेशयामासयथोरगंबिले ६ दंतानिपेतुर्भगवद्भुजस्पृशस्तेकेशिनस्तप्तमयस्पृशोयथा ॥ बाहुश्चतद्देहगतोमहात्मनोयथामयःसंववृधेउपेक्षितः ७ समेधमानेनसकृष्णबाहुनानिरुद्धवायुश्चरणांश्चविक्षिपन् ॥ प्रस्विन्नगात्रःपरिवृत्तलोचनःपपातलंडंव्यसृजन्क्षितौव्यसुः ८ तद्देहतःकर्कटिकाफलोपमाद्व्यसोरपाकृष्यभुजंमहाभुजः ॥ अविस्मितोऽयंनिहतारिरुस्रियैःप्रसूनवर्षैर्ववृषाद्भिरीडितः ९

मुखगर्तंयस्यसतथा दुराशयःदुष्टाभिप्रायःकृष्णहननलक्षणोयस्यसतथा २ वालेनपुच्छेनविघूर्णितोविभ्रांतोंबुदोयस्यसतथातं आजौक्षेपार्थमात्मानंस्वंमृगयंतंविचिन्वंतं अजगतिक्षेपणयोरितिधातुः युद्धेवा इयमपितादर्थ्येसप्तमी अग्रणीस्तस्याभिमुखेस्थितः ३ तंनादं ४ तद्धननं सावज्ञ अवमानसहितमितिक्रियाविशेषणं ५ मुखंव्यादायविदार्य ६ तप्तंअयोनामलोहंस्पृशंतःतप्तमयंतापात्मानंपदार्थंस्पृशंतीतितप्तमयस्पृशइतिवा उपेक्षितःआमयोव्याधिः ७ विनिष्पन्नितस्ततःप्रसारयन् लंडंशकृत् तुरगस्यशकृल्लडलंकामाकारकोशयोरितिच कोशंवा ८ कर्कटीकर्कधूलता तत्फलसदृशंउर्वारुकवत्मृदुलमित्यर्थः कर्कट्याःफलंगर्भस्तत्सदृशं प्रसवेस्वयंम्रियतेयथातथा भुजापकर्षेणमृतइत्यर्थः व्यसोर्मृतस्य उस्रियैर्देवैः उस्रियाअमरादेवास्त्रिदिवेशादिवौकसइति च प्रसूनवर्षैःफलपुष्पसमूहैः प्रसूनंफलपुष्पयोरितिच ववृषाद्भिरित्यत्रताच्छीलिकःशतृप्रत्ययः अवेत्यत्रअकारलोपश्च तेनअयंवर्षैः औत्पत्तिकोगुणोलक्ष्यतइति ९

१० अप्रमेयात्मन्अपरिच्छेद्यस्वभाव नन्वेवंचेदंगुष्ठमात्रःपुरुषइत्यादिपरिमाणवचनस्यकागतिरितितत्राह योगेशेति योगिनांयोगविषयत्वेनस्वेच्छाविग्रहग्रहणेनतदुपपत्तेः योगेशत्वस्यवायुवि षयत्वमितिमंदाशंकांनिरस्यति जगदीश्वरेति आत्मनएषप्राणोजायते आकाशाद्वायुःप्राणःश्रद्धाखवायुरित्यादिश्रुतेः वायोर्जगदंतःपातित्वेनतदीशत्वंनपृथग्वक्तव्यमितिभावः कृष्णशब्दस्यबह्वर्थवि षयत्वेनोक्तविशेषणविशिष्टःकइतिसंशयनिवृत्तिःकथमितितत्राह वासुदेवेति वासुदेवशब्दस्यार्थांतरमाह अखिलेति नन्वेवंचेत्संशयस्तदवस्थइतितत्राह सात्वतामिति नन्वनेनसात्वज्जातिश्रेष्ठइत्ये वायातं नतुतदाधिपत्यमित्यतउक्तं प्रभोइति समर्थोधिपतौप्रभुरिति ११ उक्तविशेषणानामन्यत्रापिकथंचिद्वृत्तिसंभवेनापिविष्णुत्वानिश्चयइतितत्राह त्वमिति प्रत्यगात्मांतर्यामीत्यर्थः ईदृशोन्योनास्ती त्याह एकइति एकस्यचबहुष्ववस्थानंकथमितितत्राह ज्योतिरिति मथनादिनाहग्निविषयत्वेनाग्नेःसत्ताज्ञायतेनतवेतितत्राह गूढइति कथंगूढत्वमित्यतउक्तं गुहेति हृदयगुहायांशेतइति जीववत्तर्हित्वंसंसारी चेतनःकिंनेत्याह साक्षीति संसारिणामनुष्ठीयमानयोःपुण्यपापयोर्द्रष्टा वायोरंतस्थत्वेनसाक्षित्वेपिमुख्यसाक्षित्वंतवेत्याशयेनाह महापुरुषइति पुरुषोत्तमइत्यर्थः पुरुषोत्तमस्यैवमुख्यसाक्षित्वंयतो

देवर्षिरुपसंगम्यभगवत्प्रवरोनृप ॥ कृष्णमक्लिष्टकर्माणंरहस्येदमभाषत १० कृष्णकृष्णाप्रमेयात्मन्योगेशजगदीश्वर ॥ वासुदेवाखिलावाससात्वतां प्रवरप्रभो ११ त्वमात्मासर्वभूतानामेकोज्योतिरिवैधसाम् ॥ गूढोगुहाशयःसाक्षीमहापुरुषईश्वरः १२ आत्मनात्माश्रयःपूर्वंमाययासृजसेगुणान् ॥ तैरि दंसत्यसंकल्पःसृजस्यत्स्यवसीश्वरः १३ सत्वंभूधरभूतानांदैत्यप्रमथरक्षसाम् ॥ अवतीर्णोविनाशायसाधूनांरक्षणायच १४ दिष्ट्यातेनिहतोदैत्योलीलयाऽयंहयाकृतिः ॥ यस्यहेषितसंत्रस्तास्त्यजंत्यनिमिषादिवम् १५ चाणूरंमुष्टिकंचैवमल्लानन्यांश्चहस्तिनम् ॥ कंसंचनिहतंद्रक्ष्येपरश्वोहनितेविभो १६ तस्यानुशंखयवनमुराणांनरकस्यच ॥ पारिजातस्यहरणमिंद्रस्यचपराजयम् १७ उद्वाहंवीरकन्यानांवीर्यशुल्कादिलक्षणम् ॥ नृगस्यमोक्षणंपापाद्द्वार कायांजगत्पते १८ स्यमंतकस्यचमणेरादानंसहभार्यया ॥ मृतपुत्रप्रदानंचब्राह्मणस्यस्वधामतः १९ पौंड्रकस्यवधंपश्चात्काशिपुर्याश्चदीपनम् ॥ दंत वक्रस्यनिधनंचैद्यस्यचमहाक्रतौ २० यानिचान्यानिवीर्याणिद्वारकामावसन्भवान् ॥ कर्ताद्रक्ष्याम्यहंतानिगेयानिकविभिर्भुवि २१ अथतेकालरूप स्यक्षपयिष्णोरमुष्यवै ॥ अक्षौहिणीनांनिधनंद्रक्ष्याम्यर्जुनसारथेः २२

तदीश्वरत्वंतस्यैवमुख्यंनपशुपतेरितिभावेनाह ईश्वरइति १२ अलौकिकस्यवस्तुनोऽसाधारणलक्षणेनानिर्णेतुंशक्यतेइतितत्राह आत्मनेति पूर्वंजगदादौआत्मनापरप्रेरणामतरेण केनोपादाने नेत्यतउक्तं माययेति माययाप्रकृत्या कुलालस्यशालाद्यधिष्ठानदर्शनादस्याकिमधिष्ठानमितितत्राह आत्माश्रयइति सभगवान्कस्मिन्प्रतिष्ठितइतिस्वेमहिम्नीतिश्रुतेः गुणान्महदादीन् १३ अवनप्र कारंदर्शयति सत्वमिति १४ अनिमिषादेवाः सुरमत्स्यावनिमिषावितिच १५ स्वोक्तार्थेवचनंप्रमाणयितुंभाविनमर्थंदिव्यचक्षुषोपलभ्यवक्ति चाणूरमित्यादिना तेतवकरेण १६ यथेदानीं केश्यादिहननंप्रत्यक्षंभवत्येवमेवकालांतरेक्रियमाणमपिकर्महाग्विषयंभविष्यतीतिभावेनाह तस्येति तस्यकंसस्य अनुअनन्तरशंखादीनांहननामेति शंखःपंचजनासुरः १७ आदिशब्देनलक्ष्मणाहरणमाह लक्ष्मणंकालिकेचिह्नेनाग्निमुद्रांगसंगयोरितिच १८ १९ २० वीर्याणाअवश्यज्ञेयत्वमाह गेयानीति भुवीतिविशेषणेनवीर्याणासंसारनिवृत्त्यर्थमेवकृतत्वंसूचयति २१ अथभारतयुद्धेअमुष्यक्ष लयस्याविशिष्टंक्षपयिष्णोःक्षीणंकर्तुकामस्य अक्षौहिणीनामष्टादशानामितिशेषः अर्जुनसारथेरित्यनेनभारतयुद्धइतिसूचयति २२

उपास्यत्वंपुनर्विशिनष्टि विशुद्धेति भगवंतंशरणमीमहीत्यन्वयः कीदृशं विशुद्धविज्ञानघनंअप्राकृतज्ञानमूर्तिं स्वसंस्थयास्वव्यवस्थयाअपराधीनस्थित्या समाप्तसर्वार्थं समाप्ताशेषपुरुषार्थं कश्चिद्धरेर्वृत्ति र्मोघामयीतिसंगिरंतेतत्राह अमोघेति कुतएतत्कथ्यतेइतितत्राह नित्येति नित्यानिवृत्तमायागुणानांप्रकृतिगुणानांप्रवाहःपरंपरायस्मिन्स्तथा नन्वेतन्मुक्तानामप्यस्तीतितत्राह स्वतेजसेति स्वप्रभा वेण तेजोबलेप्रभावेऽस्त्रइति २३ हेआद्यंतराक्षसनाशकर्तरीश्वरंत्वांनतोस्मि ईश्वरत्वंसमर्थयते स्वाश्रयमित्यादिनाआत्माधीनयामाययाप्रकृत्यास्वेच्छयावाक्रीडार्थंक्रीडितुं विनिर्मिताशेषकल्पन विर चितसमस्तदेवब्राह्मणासुरादितत्तद्गत्तुतारतम्यलक्षणविशेषव्यवस्थानं मनुष्यविग्रहइवविग्रहोयस्यसतथात मांसदृष्ट्यामनुष्याकारमित्यर्थः मनुष्यदेहस्वीकारेकृत्यमाह धुर्यमिति धुरंवहतियोधुर्यइत्यतो यदुवृष्णिसात्वतांधुरस्यवोढारं आद्यंतधुर्यमितिविशेषणद्वयेनदुष्टविनिग्रहार्थशिष्टपालनरक्षणकार्यार्थंमनुष्यविग्रहस्वीकारइतिविज्ञायते आद्यतोमनुष्यविग्रहोयस्येत्यर्थांगीकारआदिनोराक्षसाःप्रोक्तास्तद

विशुद्धविज्ञानघनंस्वसंस्थयासमाप्तसर्वार्थममोघवांछितम् ॥ स्वतेजसानित्यनिवृत्तमायागुणप्रवाहंभगवंतमीमहि २३ त्वामीश्वरंस्वाश्रयमात्ममायया विनिर्मिताशेषविशेषकल्पनम् ॥ क्रीडार्थमाद्यंतमनुष्यविग्रहंनतोस्मिधुर्यंयदुवृष्णिसात्वताम् २४ श्रीशुकउवाच ॥ एवंयदुपतिंकृष्णंभगवत्प्रवरोमुनिः ॥ प्रणिपत्याभ्यनुज्ञातोययौतद्दर्शनोत्सवः २५ भगवानपिगोविंदोहत्वाकेशिनमाहवे ॥ पशूनपालयत्पालैःप्रीतैर्व्रजसुखावहः २६ एकदातेपशून्पालांश्चारयंतोऽद्रिसानुषु ॥ चक्रुर्निलायनक्रीडांचोरपालापदेशतः २७ तत्रासन्कतिचिच्चोराःपालाश्चकतिचिन्नृप ॥ मेषायिताश्चतत्रैकेविजह्रुरकुतोभयाः २८ मयपुत्रोमहामायोव्योमोगोपालरूपधृक् ॥ मेषायितानपोवाहप्रायश्चोरायितोबहून् २९ गिरिदर्यांविनिक्षिप्यनीतंनीतंमहासुरः ॥ शिलयापिदधेद्वारंचतुःपंचावशेषिताः ३० तस्यतत्कर्मविज्ञायकृष्णःशरणदःसताम् ॥ गोपान्नयंतंजग्राहवृकंहरिरिवौजसा ३१ सनिजंरूपमास्थायगिरींद्रसदृशंबली ॥ इच्छन्विमोक्तुमात्मानंनाशक्नोद्ग्रहणातुरः ३२ सनिगृह्याच्युतोदोर्भ्यांपातयित्वामहीतले ॥ पश्यतांदिविदेवानांपशुमारममारयत् ३३ गुहापिधानंनिर्भिद्यगोपान्निःसार्यकृच्छ्रतः ॥ स्तूयमानःसुरैर्गोपैःप्रविवेशस्वगोकुलम् ३४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेपंचत्रिंशोध्यायः ॥ ३५ ॥ श्रीशुकउवाच ॥ अक्रूरोपिचतांरात्रिंमधुपुर्यांमहामतिः ॥ उषित्वारथमास्थायप्रययौनंदगोकुलम् १ गच्छन्पथिमहाभागोभगवत्यंबुजेक्षणे ॥ भक्तिंपरामुपगतएतदेवमचिंतयत् २ अक्रूरउवाच ॥ किंमयाचरितंभद्रंकिंतप्तंपरमंतपः ॥ किंवाथाप्यर्हतेदत्तंयद्द्रक्ष्याम्यद्यकेशवम् ३

स्त्वाज्जनार्दनइतिवचनांनिरुणाद्वेविशुद्धविज्ञानघनमित्यादिविशेषणानिचोक्तानिव्याहतानिस्युरिति २५ तस्यदर्शनेनोत्सवउत्कृष्टआनंदोयस्यसतथा २५ २६ चोरपालापदेशतः वयंपशूंश्चोरयाम वयंपालयामइति अपदेशेनछद्मनसा निलायनक्रीडां निलीनकर्मलक्षणक्रीडाम् २७ २८ चोरायितःचोरवद्वर्तमानः २९ गिरिदर्यांपर्वतगुहायाम् ३० हरिःसिंहः ३१ गुरुणामहताहरिणागृहीतइति शेषः ३२ पशुमारयातित्यक्तप्राणान्करोति ३३ ३४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांपंचत्रिंशोऽध्यायः ॥ ३५ ॥ अज्ञानांभगवद्भक्तिकरणानदर्शनार्थंगोकुलयात्राकथन च्छद्मनाक्रूरस्यभक्त्युद्रेकःप्रतिपाद्यतेस्मिन्नध्याये मधुपुर्यांमथुरायां यस्यांराज्यां न्यपुंक्ततांरात्रिं १ २ भद्रंपुण्यंसाधनान्योक्तंविशिनष्टि किंतप्तमित्यादिना अर्हतेविष्णुभक्त्यादिगुणसंपन्नाय ३

ब्रह्मकीर्तनं वेदाध्ययनं ४ उक्तमनुवदति मैवामीति अहमेवमच्युतदर्शनं दुर्लभमिति आत्मानं मादमंस्यामिनावजानामि कुतइत्यत्राह स्यादिति कथमेतत्संभवतीत्यत्राह ह्रियमाणइति कश्चनविष्णुभक्तिमान् ५ भवोजन्म योगिभिः सनकादिभिः ६ बतआश्चर्यं अद्यअत्यनुग्रहं अधिकानुग्रहं अकृत अकरोत् अतिममात्यनुग्रहमितिपाठे अतिअत्यर्थं समेकृतवानित्यर्थः प्रहितः प्रेषितः अंघ्रिपद्मं विशिनष्टि कृतावतारस्येति पूर्वं ब्रह्मादयोयस्यांघ्रिपद्मस्यनखानां मंडलस्यत्विषा तेजसा दुरत्ययं तमोऽज्ञानमयवा शुचं वा अतरन् तीर्णवंतइत्यन्वयः ७ यच्चब्रह्मादिभिः सुरैरर्चितं ससात्वते पांचरात्रिकैः सहितैः यच्चगोचारणाय गवां तृणचरार्थं अनुचरैः गोपैः समं वने भ्रांतं यच्चवने गोपिकानां कुचकुंकुमेनांकितं मुद्रितं तद्द्रक्ष्यइति पूर्वत्रान्वयः ८ नूनं निश्चयात् स्मितावलोके अरुणकंजसदृशेलोचने यस्यतत्तथा स्मितसहितोऽवलोकोययोस्तेतथा गुडाः निबिडाः अलकाः कुंतलाः तैरावृतं यद्वा गुडाः गुलिकाः तद्वद्वक्राः यद्वा गुडः इक्षुविकारः तद्वत् स्निग्धा अलकास्तैरावृतं दर्शननिश्चयेशकुनं वक्ति प्रदक्षिणामिति वाइत्यनेन अन्येभारद्वाजादिपक्ष्यादयोग्राह्यंतेइतिसूचयति गुडः पिंडेक्षुविकृतेस्नुहीगुलिकयोर्गुडइतिच ९ इयुपः गतवतः उपलभनं दर्शनं भविताभविष्यति मह्यं ममदृशः नेत्रस्य संसमीचीनं फलं स्यात् नतुस्यादेव सथभेदे समीचीनेइतिच प्रश्नावधारणेनित्यसमीहानुमतेनन्वितिसंदृशइत्येकंवापदं नसंदृशेतिष्ठतीतिश्रुतिः संदर्शनसाधनस्यनेत्रस्येत्यर्थः १० चैतन्यैकरसस्यहरेर्गोपत्वेनावभासननचोद्यमितिभावेनाह यइति योहरिः

मयैतद्दुर्लभंमन्येउत्तमश्लोकदर्शनम् ॥ विषयात्मनोयथाब्रह्मकीर्तनंशूद्रजन्मनः ४ मैवंमामवमंस्यामिस्यादेवाच्युतदर्शनम् ॥ ह्रियमाणःकालनद्यांक्वचित्तरतिकश्चन ५ ममाद्यामंगलंनष्टंफलवांश्चैवमेभवः ॥ यन्नमस्येभगवतोयोगिध्येयांघ्रिपंकजम् ६ कंसोबताद्याकृतमेत्यनुग्रहंद्रक्ष्येंऽघ्रिपद्मंप्रहितोऽमुनाहरेः ॥ कृतावतारस्यदुरत्ययंतमःपूर्वेऽतरन्यन्नखमंडलत्विषा ७ यदर्चितंब्रह्मभवादिभिःसुरैःश्रियाचदेव्यामुनिभिःससात्वतैः ॥ गोचारणायानुचरैःसमंवनेयद्गोपिकानांकुचकुंकुमांकितम् ८ द्रक्ष्यामिनूनंसुकपोलनासिकंस्मितावलोकारुणकंजलोचनम् ॥ मुखंमुकुंदस्यगुडालकावृतंप्रदक्षिणंमेप्रचरंतिवैमृगाः ९ अप्यद्यविष्णोर्मनुजत्वमीयुषोभारावतारायभुवोनिजेच्छया ॥ लावण्यधाम्नोभवितोपलंभनंमह्यंननस्यात्फलमंजसादृशः १० यईक्षिताहंरहितोप्यसत्सतोःस्वतेजसापास्ततमोभिदाभ्रमः ॥ स्वमाययात्मन्रचितैस्तदीक्षयाप्राणाक्षधीभिःसदनेष्वभीयते ॥ स्वमाययात्मन्रचितेषुतत्मन्प्राणादिभिर्जंतुषुभातिचित्रधा ११

अविद्यमानंदर्शनंआत्मानियचाभिमन्येततदाद्युक्तदोषःस्यात्नचासावस्तीत्यर्थः यज्ञदत्तवद्देहस्यस्याज्ञानादिसंभवेनाहंभावशून्यत्ववचनमौपचारिकंकिंनस्यादितितत्राह अपास्तेति अपास्त निराकृतः तमोभिदाभ्यामज्ञानान्यथाज्ञानाभ्याउत्पन्नोभ्रमःप्रवृत्तिर्येनस्यसः भ्रमुअनवस्थानइतिधातोः ष्ठागतिनिवृत्ताविति अवस्थानंगत्यभावस्तदभाव.कार्येषुप्रवर्तमानमित्यर्थः वस्तुतत्त्वाज्ञानाविपरीतनिमित्तप्रवृत्तिषुक्तानभवतीत्यर्थः यद्वातमसावस्तुतत्त्वाज्ञानेनजाताभिदाइदंरजतमित्यन्यथाज्ञानंतदेवभ्रमोभ्रांतिज्ञानयस्यदूरोत्सारितंस ननुमुक्तोप्येतादृशइत्यतउक्त स्वतेजसेति सत्यंकितु बलमानदओजश्चसहोज्ञानमनाकुलं स्वरूपाण्येवजीवस्यव्यज्यतेपरमाद्भिमोरितिश्रुतेरस्यपरप्रभावेणतदात्मानमेववेदाहंब्रह्मास्मीति स्वमाययास्वेच्छया आत्मन् आत्माधारतयारचितेषुजंतुषुप्राणादिभिःसहचित्रधासुरनरतिर्यगादिनानाजातिभिन्नत्वेनभाति ननुतर्हिविकारोपिस्यादित्यत्राह तत्सन्निति तथैवसन्अदिकारएवाभ्यर्हितःश्रेष्ठइत्यर्थः सर्वैरभ्यर्हितोवा सत्सत्येभ्यर्हितेश्रेष्ठसाधीयासिभवत्यपीतिच अनेनमूलरूपोहरिर्यथानिर्विकारस्तथारूपांतरवानितिसूचितंभवति हेयदेहत्वेनाभासमानस्यकिंकर्मेतितत्राह ईक्षितेति असत्सतोःअशुभशुभयोःईक्षिताद्रष्टा जंतुभिःक्रियमाणस्यपुण्यपापलक्षणस्यकर्मणःसाक्षीत्यर्थः नत्वस्यदर्शनाभिमानलक्षणविकारःथापन्नमुद्दिश्येतिवा ११

यस्यांहरेरखिलामविहाभिःअखिलानिअमीवानिपापानिघ्नंतीत्यखिलामीवहानितैः अतएवसुमंगलैःगुणकर्मजन्मभिः विमिश्राःसंकलिताःवाचः श्रीकृष्णकृष्णसखवृष्णिवृषेत्यादिलक्षणाजगत्प्राणंतिआह्लादयंतिजीवयंतिवा शुंभंतिशोभयंतिशुभयुक्तंकुर्वंति पुनंतिपवित्रयंति वैगंगादौप्रसिद्धमित्यन्वयः यावाचस्तैःविष्ण्वादिभिःविरक्ताःशून्याःवर्जितास्स्युस्ताःसद्भिःअशोभनामताः अवबोधिता इत्यन्वयः १२ अस्त्वेवंविधमाहात्म्योभगवांस्ततःप्रकृतेकिमत्राह सचेति चशब्दएवार्थे ईश्वरएवव्रजेआस्तेकिलेत्यन्वयः सात्वतामन्वयेयदुकुलेअवतीर्णःकिंकार्यायेतितत्राह स्वसेत्विति स्वेनकृतःसेतुर्मर्यादातांपालयंतिरक्षयंतीतिस्वसेतुपालाः अमराणांवर्याःअमरवर्याः स्वसेतुपालानाममरवर्याणामिंद्रादीनांशर्मकृत् सुखकृत् देवकार्यायावतीर्णइत्यर्थः अत्रकिंप्रमाणमित्यत्राह गायंतीति देवाःव्यासादयःपुराणादिषु गेयसंभवंगानंयुक्तंतत्कथमित्यत्राह यशइति यद्यशोवितन्वन्नास्ते अशेषाणांमंगलंश्रेयस्करं तद्यशः १३ स्वमानसंप्रतिवक्ति तंत्विति अहमद्यतमेवद्रक्ष्येइत्यन्वयः दृशिमतांचक्षुष्मतांमहोत्सवं त्रैलोक्यकांतंकमनीयंरूपंदधानं भद्रंकर्णेभिःशृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राइतिश्रुतिः ममाद्यउषसःप्रभातकालावयवाःक्षणादयः सुदर्शनाःसर्वजगत्पूज्यवस्तुदर्शनप्रदाआसन्नित्यन्वयः १४ कालाख्यभुजंगस्यरंहसारंहोलक्षणविशेषेण अथास्यत्धास्यति धरिष्यत्यपिकिम् १५ यत्रनिजहस्तपद्मेसमर्हणंजलपूर्वंपूजांनिधायदत्वाकौशिकःइंद्रःजगत्त्रयेंद्रतामाप महाबलिश्च

यस्याखिलामीवहभिःसुमंगलैर्वाचोविमिश्रागुणकर्मजन्मभिः ॥ प्राणंतिशुंभंतिपुनंतिवैजगद्यास्तद्विरक्ताःस्युरशोभनामताः १२ सचावतीर्णःकिल सात्वतान्वयेस्वसेतुपालामरवर्यशर्मकृत् ॥ यशोवितन्वन्व्रजआस्तईश्वरोगायंतिदेवास्तदशेषमंगलम् १३ तंत्वद्यनूनंमहतांगतिंगुरुंत्रैलोक्यकांतंदृशिमन्महोत्सवम् ॥ रूपंदधानंश्रियईप्सितास्पदंद्रक्ष्येममासन्नुषसःसुदर्शनाः १४ अप्यंघ्रिमूलेपतितस्यमेविभुःशिरस्यधास्यन्निजहस्तपंकजम् ॥ दत्ताभयंकालभुजंगरंहसाप्रोद्वेजितानांशरणैषिणांनृणाम् १५ समर्हणंयत्रनिधायकौशिकोमहाबलिश्चापजगत्त्रयेंद्रताम् ॥ यद्वाविहारेव्रजयोषितांश्रमंस्पर्शेनसौगंधिकगंध्यपानुदत् १६ नमय्युपैष्यत्यरिबुद्धिमच्युतःकंसस्यदूतःप्रहितोपिविश्वदृक् ॥ योंतर्बहिश्चेतसएतदीहितंक्षेत्रज्ञईक्षत्यमलेनचक्षुषा १७ अप्यंघ्रिमूलेपतितंकृतांजलिंमामीक्षितासस्मितमार्द्रयादृशा ॥ सपद्यपध्वस्तसमस्तकिल्बिषोवोढामुदंवीतविशंकऊर्जिताम् १८ सुहृत्तमंज्ञातिमनन्यदैवतंदोर्भ्यांबृहद्भ्यांपरिरप्स्यतेऽथमाम् ॥ आत्माहितीर्थीक्रियतेतदैवमेबंधश्चकामात्मकउच्छ्वसत्यतः १९

लिश्चतथाइंद्रवत् यद्धस्तपंकजंसौगंधिकस्यकह्लारस्यगंधइवगंधोस्यास्तीति विहारेवनक्रीडायां अपानुदत्निराकरोत् १६ ननुकितवबहुप्रलापेनयतस्त्वंकंसभृत्यः तत्प्रहितश्चअतस्त्वय्यरिपबुद्धिंकुर्यादच्युतइतिमंदाशंकांपरिहरन्निवाह नमयीति नोपैष्यत्यपिकिं नोपैष्यत्येवेत्याह विश्वदृगिति विश्वदृक्त्वान्ममनोनैर्मल्यंविजानातीत्यर्थः एतदेवविवृणोति यइतिचेतसएतदीहितंसंकल्पलक्षणंचेष्टितंअंतर्बहिश्चस्थितमितिव्याप्तिकथनमात्रेणचेतनस्यचेष्टितसाक्षित्वंसम्यङ्नविवृतंस्यादितिक्षेत्रज्ञइत्युपादत्त इदंशरीरंकौंतेयक्षेत्रमित्यभिधीयतेइत्यादिनाक्षेत्रज्ञशब्दार्थःसम्यग्विवृतः १७ दयार्द्रयादृशायांसस्मितमीक्षितेकिं ईक्षणफलमाह सपदीति ईक्षणानंतरमपास्तकिल्बिषः सम्यङ्निराकृताशुभोऽतएववीताविविधाशंकायस्यसवीतशंकोहमूर्जितामुद्रिक्तांमुदंवोढावहिष्यामीत्यन्वयः १८ अथयदापरिरंभणेहेतुमाह सुहृत्तममिति अन्यदैवतमिष्टप्रदंयस्यनास्तिसतथा परिरंभणात्किंफलमाप्तंभवतीतितत्राह आत्मेति अतोस्मात्परिरंभणात् आत्मादेहस्तीर्थीक्रियते शुद्धजलवत्क्रियते पात्रीक्रियतेवा ज्ञानदानाययोग्योभवतीत्यर्थः अन्येषांभगवद्भक्तोद्भवतारीक्रियतेवा ज्ञानोपदेशायचाविकारीक्रियतेवा किमतइत्यत्राह बंधश्चेति कामात्मकःविषयतृष्णालक्षणोबंधःउच्छ्वसतिनिर्वीर्यःछिन्नोभवतीत्यर्थःच उच्छेदेपिसमुच्चये अतोदेहहेतुकोवाप्रवाहरूपेणसत्योवा १९

भगवत्तईक्षणसमयेइदमित्याशयेनवक्ति लब्धांगसंगमिति उरुश्रवाःपूर्णकीर्तिः व्याप्तश्रवणशक्तिमान्वा हेअक्रूरहेतातवत्सेतिसंबोधयतिच यदिजन्मभृतःजन्मनःसाफल्यंप्राप्ताः साधकमाह महीयसाति महत्तमेनभगवतायोनादृतः वागादिनासादरमर्चितोनभवति अमुष्यपुंसोयज्जन्मतत्तधिक्नंनिदामि निष्फलत्वात् २० अथश्रीकृष्णःक्षीराब्धिगाप्येवनान्यइतितस्यलक्षणमाह नेति वनस्पति वृक्षमात्रेकल्पादौपुष्पवर्जितेइत्युत्पलमालाप्यथायथास्वस्वयोग्यफलदानेन २१ इदानींबलभद्रमुद्दिश्याक्रूरश्चिंतांवक्ति किंचेति गृहीतसाचितौगृहीतपशुपादबंधनरज्जौ यदूत्तमोग्रजोऽनन्तंमानयन् स्मयन्रामः ममस्वबंधुषुवसुदेवादिषु कंसकृतंकर्मसंप्रेक्ष्यतेविचारयिष्यतीतिकिंचेत्यन्वयः पादबंधनपाशंतुपशूनांसंचितिंविदुरितिवररुचिः गृहीतमाननेअग्रजेइतिपाठेसुगमःपंथाः यद्वा यदूत्तमःगृहीता नांफलदानायशुभानांसंचितिःसंग्रहोयेनसतथा तस्मिन्सतिस्मयन्मंदस्मितंकुर्वन्कृष्णःमासंप्रेक्ष्यतइतिकृष्णविषयोवा २२ २३ अखिललोकपालानांकिरीटेषुसत्सुचूडामणिषुपादरेणवोयस्यस तथा तस्याक्षितिकौतुकानिभूमिमंगलकराणिपदानिपादतललांछनानिअब्जादिभिर्विलक्षितानिलांछितानि विवाहहस्तसूत्रेचमंगलेकौतुकंविदुरितिच २४ संभ्रमःभक्त्युद्रेकनिमित्तव्यापारविशेषः

लब्धांगसंगंप्रणतंकृतांजलिंमांवक्ष्यतेऽक्रूरततेत्युरुश्रवाः ॥ तदावयंजन्मभृतोमहीयसानैवादृतोयोधिगमुष्यजन्मतत् २० नतस्यकश्चिद्दयितःसुहृत्तमो नवाप्रियोद्वेष्यउपेक्ष्यएवच ॥ तथापिभक्तान्भजतेयथायथावनस्पतिर्यद्वदुपाश्रितार्थदः २१ किंचाग्रजोमावनतंयदूत्तमोस्मयन्परिष्वज्यगृहीतसंचितौ ॥ गृहंप्रवेश्याप्तसमस्तसत्कृतंसंप्रेक्ष्यतेकंसकृतंस्वबंधुषु २२ इतिसंचिंतयन्कृष्णंश्वफल्कतनयोऽध्वनि ॥ रथेनगोकुलंप्राप्तःसूर्यश्चास्तगिरिंनृप २३ पदानि तस्याखिललोकपालकिरीटचूडामणिपादरेणोः ॥ ददर्शगोष्ठेक्षितिकौतुकानिविलक्षितान्यब्जयवांकुशाद्यैः २४ तद्दर्शनाह्लादविवृद्धसंभ्रमःप्रेम्णोर्ध्वरो माश्रुकलाकुलेक्षणः ॥ रथादवस्कंद्यसतेष्वचेष्टतप्रभोरमून्यंघ्रिरजांस्यहोइति २५ ददर्शकृष्णंरामंचव्रजेगोदोहनंगतौ ॥ पीतनीलांबरधरौशारदांबुरुहे क्षणौ २६ किशोरौश्यामलश्वेतौश्रीनिकेतौबृहद्भुजौ ॥ सुमुखौसुंदरवरौबालद्विरदविक्रमौ २७ ध्वजवज्रांकुशांभोजैश्चिह्नितैरंघ्रिभिर्व्रजम् ॥ शोभयन्तौ महात्मानौसानुक्रोशस्मितेक्षणौ २८ उदाररुचिरक्रीडौस्रग्विणौवनमालिनौ ॥ पुण्यगंधानुलिप्तांगौस्नातौविरजवाससौ २९ प्रधानपुरुषावाद्यौजगद्धे तूजगत्पती॥अवतीर्णौजगत्यर्थेस्वांशेनबलकेशवौ ३० दिशोवितिमिराराजन्कुर्वाणौप्रभयास्वया ॥ यथामरकतःशैलोरौप्यश्चकनकाचितौ ३१ रथात्तूर्ण मवप्लुत्यसोऽक्रूरःस्नेहविह्वलः ॥ पपातचरणोपांतेदंडवद्रामकृष्णयोः ३२

उत्थानिरोमाणियस्यसतथा रोमांचितगात्रश्चायं अश्रुकलयाकुलेक्षणश्च आकुलेकलिलेईक्षणेयस्यसतथा अवस्कंद्यअवरुह्य २५ गोदोहनंस्थलमितिशेषः । गोदोहनक्रियागतावितिवा २६ श्रियो लक्ष्म्याःकांतेर्वानिकेतौमंदिरायमाणौ २७ अनुक्रोशेनदययास्मितेनसहितमीक्षणंययोस्तौतथा २८ उदारामहतीख्यातावादक्षिणावारुचिराचक्रीडाययोस्तौ । उदारोमहतीख्यातेद क्षिणेदानशौंडकइतियादवः । स्नातौशुद्धौ २९ जगत्यर्थेभूमेरर्थे अर्थप्रदाने प्रधानपुरुषावित्यादावुच्यमानागुणाबलभद्रेहरेःसंनिधानादुच्यंते नत्वौत्पत्तिकः तदुक्तं वैन्यपार्थबलेशादावाविष्टंपुरुषोत्तमं अपेक्ष्यतद्गुणाःसर्वेइत्यादौ ३० मरकतसदृशः कृष्णः रजतपर्वतसदृशोरामः कनकाचितावित्युभयोःसमं यदेतदादित्यस्यपरंकृष्णरूपमित्यत्रयथादित्यस्यकृष्णप्रभातिमिरापहा कृष्णमरकतश्यामप्रभा पिदिशोवितिमिराःकरोतीतियुक्तमितरनेनकृष्णप्रभायाअंधकारनिरासकत्वंकथमितिमंदाशंकादूरतोनिरस्तेति ३१ अवप्लुत्यअवरुह्य ३२

आह्लादआनंदः ३३ रथांगंचक्रंतेनांकितेनपाणिना ३४ ३५ मधुपर्कार्हंमधुपर्कपूज्यं मधुपर्कंचसक्षौद्रंदधिप्रोक्तंमनीषिभिरितितान्त्रिकाः आहरत्‌दत्तवान् ३६ संवाह्यपादावितिशेषः ३७ मुखवासैःकर्पूरतांबूलादिभिः ॥ ३८ ॥ इतिश्री०भ०द०वि०षट्त्रिंशोऽध्यायः ॥ ३६ ॥ गोचारणायेत्यारभ्यांकिंदाग्रजइत्यंतेनग्रंथेनपथियान्मनोरथान्चकारदध्यौतान्लेभेइत्यन्वयः ॥ करणं कारणेकालेसाधनेनुव्रतादिषु स्पष्टान्नुचारणेभेदेध्यानपद्मासनादिध्वितियादवः १ ननु मुख्यमनोरथोमोक्षःसोऽनेननलब्धःसंसारानिवृत्तेरित्यत्राह किमलभ्यमिति तत्परामुख्यभागवतास्त त्प्रसादमंतरेणान्यंनाकांक्षंतइतिभावः २ सायंतनाशनंरात्रिभोजन सायंप्रातर्द्विजातीनाभोजनंश्रुतिचोदितमितियाज्ञवल्क्यः सुहृत्सुवसुदेवादिषु वृत्तिवर्तनं आजीवलक्षणं वृत्तिर्ग्रंथाजीवयो श्चेतिच ३ माधवःमधुकुलोद्भवःयस्यकंसस्यसंदेशोयस्यसतथा यस्यकंसस्यार्थेदूतःयत्प्रयोजनमुद्दिश्येतिवा तस्यकसस्ययद्दुषुवैरानुबंधं वैरेणसंततदोषभावंप्रकृतस्यवैरस्यानुवर्तनंवा अनुबं

भगवद्दर्शनाह्लादबाष्पपूर्णाकुलेक्षणः ॥ पुलकांकितऔत्कंठ्याद्याख्यातुंनाशकन्नृप ३३ भगवांस्तदभिप्रेत्यरथांगांकितपाणिना ॥ परिरेभेऽभ्युपाकृष्य प्रीतःप्रणतवत्सलः ३४ संकर्षणश्चप्रणतमुपगुह्यमहामनाः ॥ गृहीत्वापाणिनापाणिमनयत्सानुजोगृहम् ३५ पृष्ट्वाथस्वागतंतस्मैनिवेद्यपरमासनम् ॥ प्रक्षाल्यविधिवत्पादौमधुपर्कार्हमाहरत् ३६ निवेद्यगांचातिथयेसंवाह्यश्रांतमादृतः ॥ अन्नंबहुगुणंमेध्यंश्रद्धयोपाहरद्विभुः ३७ तस्मैभुक्तवतेप्रीत्यारामःपरमधर्मवित् ॥ मुखवासैर्गंधमाल्यैःपरांप्रीतिंव्यधात्पुनः ३८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेषट्त्रिंशोऽध्यायः ॥ ३६ ॥ श्रीशुकउवाच ॥ सुखोपविष्टःपर्यंकेरामकृष्णानुमोदितः ॥ लेभेमनोरथान्सर्वान्पथियान्सचकारह १ किमलभ्यंभगवतिप्रसन्नेश्रीनिकेतने ॥ तथापितत्परराजन्नवांछंतिकिंचन २ सायंतनाशनंकृत्वाभगवान्देवकीसुतः ॥ सुहृत्सुवृत्तिंकंसस्यपप्रच्छान्यच्चिकीर्षितम् ३ पृष्टोभगवतासर्वंवर्णयामासमाधवः ॥ वैरानुबंधंयदुषुवसुदेववधोद्यमम् ४ यत्संदेशोयदर्थंवादूतःसंप्रेषितःस्वयम् ॥ यदुक्तंनारदेनास्यस्वजन्मानकदुंदुभेः ५ श्रुत्वाऽक्रूरवचःकृष्णोबलश्चपरवीरहा ॥ प्रहस्यनंदंपितरंराज्ञादिष्टंविजज्ञतुः ६ गोपान्समादिशत्सोपिगृह्यतांसर्वगोरसः ॥ उपायनानिगृह्णीध्वंयुज्यंतांशकटानिच ७ यास्यामःश्वोमधुपुरींदास्यामोनृपतेरसान् ॥ द्रक्ष्यामःसुमहत्पर्वयांतिजानपदाःकिल ८ एवमाघोषयत्क्षत्त्रानंदगोपःस्वगोकुले ॥ गोप्यस्तास्तदुपश्रुत्यबभूवुर्व्यथिताशयाः ९ रामकृष्णौपुरींनेतुमक्रूरंव्रजमागतम् ॥ काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रियः १० स्रंसद्दुकूलवलयकेशग्रंथ्यश्चकाश्चन ॥ अन्याश्चतदनुध्याननिवृत्ताशेषवृत्तयः ११ नाभ्यजानन्निमंलोकमात्मलोकंगताइव ॥ स्मरंत्यश्चापराःशौरेरनुरागस्मितेरिताः १२

धोदोषभावेप्रकृत्यादौविनश्वरे मुख्यानुयायिनिशिशौप्रकृतस्यानुवर्तनइति ४ अस्यकंसस्य नारदेनयदुक्तंतदपिकिंतदुक्तंतत्राह स्वजन्मेति ५ विजज्ञतुःविज्ञापयामासतुः ६ ७ रसानाज्यादीन् हैमानिवा रसोरागेविषेवीर्येतिक्तादौपारदेद्रवे रेतस्यास्वादनेदेहेन्निर्यासेरसशब्दयोरितिच पर्वउत्सवम् । पक्षसंधावुत्सवेचग्रंथौपर्वाविदुर्बुधाइतिदत्तः ८ क्षत्त्रायंत्रा ९ रामकृष्णौपुरीनेतुंआगतंअक्रूरंश्रुत्वाज्ञात्वागोप्यस्त्रिपएवमापन्ना बभूवुरित्यन्वयः तत्कथमितिविविच्याह काश्चिदिति । तस्यकृष्णस्यमधुपुरीगमनश्रवणकृताभ्याहृतापश्वासाभ्यांम्लानामुखश्रीर्यासांतास्तथा १० स्रंसद्दुकूलेत्यादावपितत्कृतेसंबंधयितव्यं । यद्वा तत्कृतेतिकृष्णकृते । तदनुध्यानेननिवृत्ताशेषेंद्रियवृत्तयः ११ इमंलोकंदेहं आत्मलोकंमोक्षं । हृदिस्पृशःमनोहराःहृदयंगमाःअनुरागस्मितपूर्वकमीरिताः १२

चित्राणिपदानियासुतास्तथा गतिंयात्रांचेष्टांअंगनिषयां स्निग्धहासेनसहितमवलोकनम् १३ १४ अच्युताशया.अच्युतबुद्धयः १५ हेविधात तव क्वचिद्दयानास्ति कथंप्रणयेनदेहिन जंतून्मैत्र्याभि न्नभावेनसंयोज्यएकीकृत्यपुनस्तान्देहिनःअकृतार्थान्अप्राप्तमनोरथानेववियुनक्षि वियुक्तदेहान्करोषिअहोऽत्यन्वयः । अतस्तेतवचेष्टितंअपार्थकंनिष्फल कथामिति अर्भकचेष्टितयथातथेति १६ अत्रमपाकिमवद्यमकारीतितत्राह यस्त्वामिति । यस्त्वंसुकपोलादिविशिष्टमुकुंदवक्त्रमदर्श्यदर्शयित्वापुनःपारोक्ष्यंपरोक्षविषयंचक्षुरगोचरंकरोषि यस्मात्तेत्वयाकृतमसाध्वमंगलमित्यन्वयः शोकस्यापनो दोनिरासोयेनसःशोकापनोदः स्मितलेश तथातेनसुंदरं मनोहरं स्मितस्यलेशःस्मितलेशः १७ हेविधात त्वंअक्रूरसमाख्ययाअनृशंसोयमकाठिनोयमितिगुणसमाननाम्नास्मृतःपूर्वं अधुनाक्रूरइतिस्मर्य से कुतःयेनचक्षुषामधुद्विषएकदेशेमुखाद्येकावयवेतदीयंतस्यतवविद्यमानं अखिलस्यविश्वस्यसर्गेत्वष्टौयत्सौंदर्यंतदद्राक्ष्मतत्त्वयाहि एवंदत्तंचक्षुरज्ञवत्कृतप्रवद्धरसे बतकष्टमित्यन्वयः । क्रूरोभयंकरेकं धेनृशंसेकठिनोष्णयोरितिच यद्वा तस्यमधुद्विषोविद्यमानमखिलंपूर्णंसर्गंस्वाभाविकमकृत्रिमसौष्ठवमन्यत्समं १८ इदानींकृष्णकटाक्षीकृत्यवदति नेति स्वकृतेस्वात्मानकृष्णमुद्दिश्यातुराःक्लिष्टाअपिनो स्मात्समीक्षतेनाचिंतयति यत्तस्मान्नंदसूनुःक्षणभंगसौहृदःनवप्रियःनूतनप्रियश्च कीदृशीरस्मान् गेहादीन्विहायस्वदास्यमद्धाप्रत्यक्षमुपागताःअद्धासत्येद्धा अद्धाप्रत्यक्षसत्ययोरितिच१९सुखप्रभातत्त्वेनि

हृदिस्पृशश्चित्रपदागिरःसंसुमुहुःस्त्रियः ॥ गतिंसुललितांचेष्टांस्निग्धहासावलोकनम् १३ शोकपहानिनर्माणिप्रोद्दामचरितानिच ॥ चिंतयंत्योमुकुंद स्यभीताविरहकातराः १४ समेताःसंघशःप्रोचुरश्रुमुख्योऽच्युताशयाः १५ गोप्यऊचुः ॥ अहोविधातस्तवनक्वचिद्दयासंयोज्यमैत्र्याप्रणयेनदेहिनः ॥ तांश्चाकृतार्थान्वियुनंक्ष्यपार्थकंविचेष्टितंतेर्भकचेष्टितंयथा १६ यस्त्वंप्रदर्श्यासितकुंतलावृतंमुकुंदवक्त्रंसुकपोलमुन्नसम् ॥ शोकापनोदस्मितलेशसुंदरं करोषिपारोक्ष्यमसाधुतेकृतम् १७ क्रूरस्त्वमक्रूरसमाख्ययास्मृतश्चक्षुर्हिदत्तंहरसेबताज्ञवत् ॥ येनैकदेशेखिलसर्गसौष्ठवंतदीयमद्राक्ष्मवयंमधुद्विषः १८ ननंदसूनुःक्षणभंगसौहृदःसमीक्षतेनःस्वकृतातुराअपि ॥ विहायगेहान्स्वजनान्सुतान्पतीन्स्वदास्यमद्धोपगतानवप्रियः १९ सुखंप्रभातारजनीयमाशिषः सत्याबभूवुःपुरयोषितांध्रुवम् ॥ याःसंप्रविष्टस्यमुखंव्रजस्पतेःपास्यंत्यपांगोत्कलितस्मितासवम् २० तासांमुकुंदोमधुमंजुभाषितैर्गृहीतचित्तःपरवान्म नस्व्यपि ॥ कथंपुनर्नःप्रतियास्यतेबलाग्राम्याःसलज्जाःस्मितविभ्रमभ्रुवः २१ अद्यध्रुवंतत्रदृशोलभिष्यतेदाशार्हभोजांधकवृष्णिसात्वताम् ॥ महोत्स वंश्रीरमणंगुणास्पदंद्रक्ष्यंतियेचाध्वनिदेवकीसुतम् २२

मित्तमाहुःयाइति व्रजस्पतेः गोकुलनाथस्यसकारश्छांदसः अपांगेनकटाक्षनिरीक्षणेन उत्कलितमुत्पन्नंअभीष्टवर्षकीकृतंवास्मितमेवासवममृतंपास्यंतितथा २० इदानींकृष्णदजानंत्योवदंति मनस्वीमहा मनाःअपिमुकुंदोमथुरागतः पुनर्नोस्मान्प्रतिकथंप्रतियास्यतेआगमिष्यते नकेनापीत्यन्वयः अनागमनेनिमित्तमाहुः । तासांमथुरागनानामधुमंजुभाषितैःमधुवत्पुष्परसवत्मंजुभिःश्रुतिमनोहरैर्वचनैः । गृहीतचित्तोवशीकृतचेताः अतएवपरवान्पराधीनः । परवांस्तुपराधीनोनिघ्नःपरवशःस्मृतइतिहलायुधः तासांमधुरवचनमेवकारणंनत्वन्यदित्याशयेनाहुः अबलाःसुरतधार्ष्ट्यदिधुराः । किंच ग्राम्याः अश्लीललीलाःतदपिमुख्यंनेत्याहुः । अलज्जाःलज्जारहिताः । भ्रूविलासोस्तिसुखसूचकोनेत्याहुः स्मितेनसहविभ्रमंतीभ्रूर्यासांतास्तथा समुद्रोर्मिवदुन्नस्यद्भ्रूविलासेनसुंदरी निर्भिन्नमदनंयातुबो धयेत्सावरांगनेविकामंदकः । यद्वा हेअबलास्तामथुरागनाग्राम्याःनित्यसुरतकर्मोत्सवाः स्मितास्फुटीकृताविभ्रमंतीभ्रूर्यासांतास्तथा २१ तत्रमथुरायांदाशार्हादीनांदृशःमहोत्सवोभविष्यतीतिशे षः महानुत्सवआनंदोयस्यसतथातं येदाशार्हादयःदेवकीसुतंद्रक्ष्यंतीतियत्तस्मात् येचाध्वनिद्रक्ष्यंतीतितेषांदृशांचेति २२

इदानीमक्रूरंशपंति मैतादिति एवंविधस्यातिदारुणेकर्मणिप्रवृत्तस्यैतद्विधस्यैताहशस्यवा २३ कृष्णस्येश्वरत्वंसवदंते । अनार्द्रधीरिति अनेनानिःसंगत्वंहरेर्दर्शितम् दुर्मदाःउत्तरकार्याथाःस्थविरैःकुल वृद्धैः २४ नःकिमनिष्टमकारिष्यन् विभ्रंशितानामतएवदीनचेतसाम् २५ हेगोप्यःक्षणदानिद्रावसरदाःसुरतोत्सवप्रदावा रात्र्यांतमोदुःसम् २६ अह्नःक्षयेसंध्यासमये तंकृष्णमृतेविना कृष्णादरातिशयात् अंबेतिसखींसंबोधनम् भवेमताःस्वितिशेषः २७ २८ कृतमैत्र्यादिकाकृतसूर्यमंडलाधिष्ठितनारायणोपासनादिक्रियः २९ ३० प्रत्यादेशःप्रतिवचनम् तिष्ठंतुनायांत्वितिगमननिषेधपरंवचनंवा ३१

मैतद्विधस्याकरुणस्यनामभूदक्रूरइत्येतदतीवदारुणः ॥ योसावनाश्वास्यसुदुःखितंजनंप्रियात्प्रियंनेष्यतिपारमध्वनः २३ अनार्द्रधीरेषसमास्थितोरथंतम न्वमीचत्वरयंतिदुर्मदाः ॥ गोपाजनोभिःस्थविरैरुपेक्षितंदैवंचनोऽद्यप्रतिकूलमीहते २४ निवारयामःसमुपेत्यमाधवंकिंनोऽकरिष्यन्कुलवृद्धबांधवाः मुकुंदसंगान्निमिषार्धदुस्त्यजाद्दैवेनविध्वंसितदीनचेतसाम् २५ यस्यानुरागललितस्मितवल्गुमंत्रलीलावलोकपरिरंभणरासगोष्ठयाम् ॥ नीताःस्मनः क्षणमिवक्षणदाविनातंगोप्यःकथंन्वतितरेमतमोदुरंतम् २६ योह्नःक्षयेव्रजमनंतसखःपरीतोगोपैर्विशन्खुररजश्छुरितालकस्रक् ॥ वेणुंक्वणन्स्मितकटाक्ष निरीक्षणेनचित्तंक्षिणोतितमृतेऽबकथंभवेम २७ एवंब्रुवाणाविरहातुराभृशंव्रजस्त्रियःकृष्णनिषक्तमानसाः ॥ विसृज्यलज्जांरुरुदुःस्मसुस्वरंगोविंददामो दरमाधवेति २८ स्त्रीणामेवंरुदंतीनामुदितेसवितर्यथ ॥ अक्रूरश्चोदयामासकृतमैत्र्यादिकोरथम् २९ गोपास्तमन्वसज्जंतनंदाद्याःशकटैस्ततः ॥ आदा योपायनंभूरिकुंभान्गोरससंभृतान् ३० गोप्यश्चदयितंकृष्णमनुव्रज्यानुरंजिताः ॥ प्रत्यादेशंभगवतःकांक्षंत्यश्चावतस्थिरे ३१ तास्तथातप्यतीर्वीक्ष्यस्व प्रस्थानेयदूत्तमः ॥ सांत्वयामाससंप्रेष्यैरायास्यइतिदौत्यकैः ३२ यावदालक्ष्यतेकेतुर्यावद्रेणूरथस्यच ॥ अनुप्रस्थापितात्मानोलेख्यानीवोपलक्षिरे ३३ तानिराशानिववृतुर्गोविंदविनिवर्तने ॥ विशोकाअहनीनिन्युर्गायंत्यःप्रियचेष्टितम् ३४ भगवानपिसंप्राप्तोरामाक्रूरौतथानृप ॥ रथेनवायुवेगेन कालिंदीमघनाशिनीम् ३५ तत्रोपस्पृश्यपानीयंपीत्वामृष्टंमणिप्रभम् ॥ वृक्षखंडमुपव्रज्यसरामोरथमाविशत् ३६ अक्रूरस्तावुपामंत्र्यनिवेश्यचरथोप रि ॥ कालिंद्याहृदमागम्यस्नानंविधिवदाचरत् ३७ निमज्ज्यतस्मिन्सलिलेजपन्ब्रह्मसनातनम् ॥ तावेवददृशेऽक्रूरोरामकृष्णौसमन्वितौ ३८ तौरथस्थौ कथमिहसुतावानकदुंदुभेः ॥ तर्हिस्वित्स्यंदनेनस्तइत्युन्मज्ज्यव्यचष्टसः ३९ तत्रापिचयथापूर्वमासीनौपुनरेवसः ॥ निमज्ज्यदर्शनंमेनेमृषाकिंसलिले तयोः ४० भूयस्तत्रापिसोऽद्राक्षीत्स्तूयमानमहीश्वरम् ॥ सिद्धैर्भुजंगपतिभिरसुरैर्नतकंधरैः ४१ सहस्रशिरसंदेवंसहस्रफणमौलिनम् ॥ नीलांबरंविस श्वेतंशृंगैःश्वेतमिवस्थितम् ४२ तस्योत्संगेघनश्यामंपीतकौशेयवाससम् ॥ पुरुषंचतुर्भुजंशांतंपद्मपत्रारुणेक्षणम् ४३

समीचीनतयाप्रेषयितुंयोग्यैः दौत्यकैः दूतसंबंधिभिःवाक्यैः ३२ केतुर्ध्वजःलेख्यानिचित्राणि ३३ गोविंदविनिवर्तनेकृष्णदर्शने ३४ ३५ श्याममणिप्रभम् ३६ ३७ ब्रह्मअघमर्षणसूक्तम् ब्रह्म वेदस्तपस्तत्त्वामितिच ३८ स्यंदनेरथे नस्तःनविद्येतेस्वित्किम् ३९ सलिलेतयोः रामकृष्णयोः दर्शनंमृषाकिमितिमेनइतिशेषः ४० असुरैरसुषु रतैः वशीकृतेंद्रियैरित्यर्थः ४१ विलसच्छ्वेतंच्छ्वेतपद्मना लतंतुवद्धवलम् शिखरैःसहश्वेतनामानंपर्वतम् ४२ उत्संगेभोगेवपुरंगंतत्संगहीनोजनार्दनइतिच ४३

सुभ्रूश्च उन्नसश्च सुभ्रून्नसः तम् ४४ तुंगांसश्च उरस्थलश्रीश्च तुंगांसोरस्थलश्रीः तुंगावंसौ यस्य सतथा उरस्थले श्रीर्यस्य सतथा तम् दलितश्च पल्लवश्च आकृशश्च उदरं यस्य सतथा तम् पल्लवं चमकोष्ठेवापिवि स्तृताविति वैजयंतीमाला सुंदररेखांकिता नतं तांडकोटिर्निवेशनोदरमित्यर्थः ४५ कनिष्ठिकामूलकरभः कांचीपदं कटितटं च श्रोणीचकर भवत् द्विचरं मांसलं ऊरुद्वयं चतानि तैरन्वितः ४६ ४७ ४८ ४९ नवाभिः द्विजोत्तमैः कश्यपादिभिः ५० पृथङ्मार्गैः वैदिकतांत्रिकमार्गविषयैः ५१ ५२ भावेन तद्भक्तिस्वभावेन परिक्लिन्ने आनंदाश्रुजलस्नाते आत्मलोचने यस्य सतथा ५३ सत्वं सत्वगुणम् आत्मभावं वा ५४ इतिश्रीभागवते महापुराणे दशमस्कंधे विजयध्वजकृत टीकायां सप्तत्रिंशोऽध्यायः ३७ अक्रूरस्तुतिव्यपदेशेन विद्वद्भिर्धिकारयोग्यं भगवद्गुणास्तनाम्नाकारं निरूपयत्यस्मिन्नध्याये तत्राक्रूरोभ गवंतं दृष्ट्वोत्तरं किंचकारेति परीक्षितो मानसीं शंकां शुकः परिहरति एवमिति १ नम्यस्यानम्यैर्वैशिष्ट्यस्य ज्ञापनाय व्यावर्तकलक्षणमाह अखिलेति कदाचित्कारणं कदाचिन्नेत्यन्यथा प्रतीतिनिरासाय वि भूतमिति । यदेवा निमित्तकारणत्वं तत्कदाचिन्नापगच्छतीत्यर्थः अखिलहेतुहेतुमिति पाठे उपादानकारणानामपि कारणमित्यर्थः । किंनामधेयोऽयमिति तत्राह नारायणमिति । अरविरुद्धत्वान्नारागु

चारुप्रसन्नवदनंचारुहासनिरीक्षणम् ॥ सुभ्रून्नसंचारुकर्णंसुकपोलारुणाधरम् ४४ प्रलंबपीवरभुजंतुंगांसोरस्थलश्रियम् ॥ कंबुकंठंनिम्ननाभिंवलिमत्प ल्लवोदरम् ४५ बृहत्कटितटश्रोणीकरभोरुद्वयान्वितम् ॥ चारुजानुयुगंचारुजंघायुगुलसंयुतम् ४६ तुंगगुल्फारुणनखव्रातदीधितिभिर्वृतम् ॥ नवांगु ल्यंगुष्ठदलैर्विलसत्पादपंकजम् ४७ महार्हमणिविभ्राजत्किरीटकटकांगदैः ॥ कटिसूत्रब्रह्मसूत्रहारनूपुरकुंडलैः ४८ भ्राजमानंपद्मकरंशंखचक्रगदाधरम् ॥ श्रीवत्सवक्षसंभ्राजत्कौस्तुभंवनमालिनम् ४९ सुनंदनंदप्रमुखैःपार्षदैःसनकादिभिः ॥ सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्चद्विजोत्तमैः ५० प्रह्लादनारदवसुप्रमुखैर्भाग वतोत्तमैः ॥ स्तूयमानंपृथग्भावैर्वचोभिरमलात्मभिः ५१ श्रियापुष्ट्यागिराकांत्याकीर्त्यातुष्ट्येलयाऽजया ॥ विद्ययाऽविद्ययाशक्त्यामायायाचनिषे वितम् ५२ विलोक्यसुभृशंप्रीतोभक्त्यापरमयायुतः ॥ हृष्यत्तनूरुहोभावपरिक्लिन्नात्मलोचनः ५३ गिरागद्गदयास्तौषीत्सत्वमालंब्यसात्वतः ॥ प्रण म्यमूर्ध्नाऽवहितःकृतांजलिपुटःशनैः ॥५४॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेसप्तत्रिंशोऽध्यायः ॥३७॥ श्रीशुकउवाच ॥ एवंदृष्ट्वातमक्रूरःप्रसन्नहृदयें द्रियः ॥ तुष्टावपुंडरीकाक्षंभक्त्यावनतकंधरः १ अक्रूरउवाच ॥ नतोस्म्यहंत्वाखिलहेतुहेतुंनारायणंपुरुषमाद्यमव्ययम् ॥ यन्नाभिजातादरविंदकोशाद्ब्र ह्माविरासीद्यतएषलोकः २

णास्तेषामयनम् ननु तर्हि किमयशब्दगुणाश्रयत्वेनाकाशइतिचेत्तत्राह ॥ पुरुषमिति पूर्णषड्गुणम् आकाशस्यैकगुणत्वान्महान्विशेषः । नन्वाकाशोवैनामरूपयोर्निर्वहिता इतिश्रुतेरविनाशित्वेनाखिल हेतुत्वं नरसमुदायोनारमिति नरसमुदायादिसर्वपदार्थस्यावकाशप्रदत्वेनाश्रयत्वेन नारायणशब्दवाच्यत्वमाकाशस्यापि किंनस्यादित्यतोवाह पुरुषमिति । पुरुषस्यापि पितृपितामहादिवद्ब्रह्मादिवद्ब्रह्मादी जपरंपरास्यादिति तत्राह आदिमिति । वैशेषिकरीत्या यथा परमाणोः कारणत्वं तथाऽयमप्येवमत्रापीत्यर्थः एवंविधस्यापि सगर्भकर्कटवद्विनाशित्वं स्यात्किंनेत्याह अव्ययमिति । नकेवलं स्रष्टृत्वेनास्य कार णत्वं पर्याप्तमपितु संहर्तृत्वेनापीति भावेनाह आदिमिति अदभक्षणइति धातोः अत्तृत्वादादिमित्यर्थः । संहर्तृत्वमप्यस्मिन्पर्याप्तमिति प्रकटनाय णप्रत्ययप्रयोगः जीवोजीवस्यजीवनमिति न्यायेन ॠ [illegible] सुरस्याप्यन्योऽत्तास्यादित्यतोवाह अव्ययमिति सर्वकारणे विरिंचे जाग्रति पर्याप्तकारणत्वमस्य कथमिति तत्राह यन्नाभीति । विरिंचस्य कारणत्वं तर्हि कथमिति तत्राह यतइति यतो विरिंचाल्लोको देवलोको भूरिति विशेषः २

आदिर्त्वंस्पष्टयति भूरिति आत्मनआकाशः संभूतइतिश्रुतिः आदिर्भूतादिरहंकारः अजाचआदिश्चअजादिः प्रकृत्याख्यकारणमित्यर्थः नकेवलमस्यसमस्ताचेतनहेतुत्वंकिंतुचेतनराशेरित्याशयेन वाह अजादिरिति । ब्रह्मादिचेतनसंघअजादिः येसर्वेअजादयोजगतोहेतवोयथायोग्यंकारणानि तेसर्वेत्वदंगभूताअंगेभ्योजाताः पद्भ्यांभूमिरितिश्रुतः ३ त्वदंगजाताजाद्यविज्ञातमाहात्म्यमत्येनन यानज्ञापतइतिकिंवक्तव्यमित्याशयेनाह नेति अवेदनेनिमित्तमाह अन्येति अन्यात्मतयागृहीताः एतेजीवात्मानोमत्तोन्येइतिभगवतागृहीताः ईश्वरोभ्रांतत्वात्तथागृह्णातीतिचेन्न अहंपरोहि मद्भिन्नाजीवात्मानोल्पशक्तयइत्यादेः । नहीश्वरस्यसर्वज्ञस्यभ्रांतिरुपपद्यते नहिद्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेइतिश्रुतेः । येत्वदंगेभ्योजातास्तएतेअजादयःआत्मनस्तवस्वरूपंनविदुरित्यन्वयः । अजो ब्रह्माआदिर्येषांरुद्रादीनांतेअजादयइतितद्गुणसंविज्ञानेबहुव्रीहौब्रह्मणोप्यज्ञानमापद्यते वेदाहमेतंपुरुषमितिश्रुत्यातद्विज्ञानप्रतीतेरतोब्रह्मकारणकारुद्रादयोनविदुरित्यर्थः । किंनस्यादित्यतआह अजइति । अजायागुणैर्बद्धइतिहेतुगर्भविशेषण गुणात्परदूरीभूतं अजादयइत्यत्रअजाशब्देनचित्प्रकृतिरपिग्राह्यातस्याअपिसर्वात्मनातद्विषयज्ञानाभावात् तदुक्तं यथाहरिःस्वमात्मानंवेदतद्वद्र मापिचेत्यादि । अनेनवेदाहमित्यस्यापिगतिरुक्ताभवति । अतईश्वरस्यदुर्ज्ञेयत्वात्साधनानुष्ठानवैयर्थ्यमित्याशंकापरास्ता तत्प्रसादेनयथायोग्यज्ञानसंभवाद्यथाशक्तिस्वहितमनुष्ठेयम् ४ अत्रकिं प्रमाणमित्यतोवृद्धाचारएवप्रमाणमित्याह त्वामिति । अधिष्ठानविशेषमाह साध्यात्ममिति । आत्मशब्दोक्तनरैःसहततोधिकत्वेनवर्तमानं भूतैराकाशादिभिःसहतदुत्तमत्वेनवर्तमानंदेवैर्ब्रह्मादिभिः

भूस्तोयमग्निःपवनःखमादिर्महानजादिर्मनइंद्रियाणि ॥ सर्वेंद्रियार्थाविबुधाश्चसर्वेयेहेतवस्तेजगतोंगभूताः ३ नैतेस्वरूपंविदुरात्मनस्तेअजादयोऽन्यात्मतयागृहीताः ॥ अजोनुबद्धःसगुणैरजायागुणात्परंवेदनतेस्वरूपम् ४ त्वांयोगिनोयजंत्यद्धामहापुरुषमीश्वरम् ॥ साध्यात्मंसाधिभूतंचसाधिदैवंचसाधवः ५ त्रय्याचविद्ययाकेचित्त्वांवैवैतानिकाद्विजाः ॥ यजंतेविततैर्यज्ञैर्नानारूपामराख्यया ६ एकेत्वखिलकर्माणिसंन्यस्योपशमंगताः ॥ ज्ञानिनोज्ञानयज्ञेनयजंतिज्ञानविग्रहम् ७ अन्येतुसंस्कृतात्मानोविधिनाभिहितेनवै ॥ यजंतित्वन्मयास्त्वांवैबहुमूर्त्येकमूर्तिकम् ८

सहततोविशिष्टगुणत्वेनातिष्ठंतं तत्तदुपासनार्थंतत्तदधिष्ठानेषुतत्तद्गुणप्रवर्तकत्वेनतत्तदुत्तमत्वेनवर्तमानमित्यर्थः । तदुक्तं स्थितोब्रह्मादिदेवेषुखादिभूतेषुचेश्वरइत्यादि ५ योगिनोयजंत्यद्धेतिविशेषणात्केचिदन्यथायजंतीतिध्वनितमर्थमाह त्रय्येति त्रय्याविद्ययावेदविद्ययाकर्मप्रधानप्रकाशिकया वैतानिकाःयाज्ञिकाः यज्ञकर्मशीलाइत्यर्थः । अत्र।वितानमुल्लोचेविस्ताराध्वरयोःक्षणे त्रिषुशून्येचमंदे चविषाण्युल्लेषुशृंगिण्यिति उक्तविशेषणैरयमर्थोभिज्ञायतइत्याह विततैरितिविस्तृतैः इंद्रंयजाग्निंयजेत्यादिबहुदेवत्यकर्मणामेकविषयत्वंकथंसंगच्छतइत्यत्राह नानारूपेति नानाविधानिशुक्लादिरूपाणि सौंदर्याणिवा स्वभावावायशांसिवायेषांतेनानारूपाः तेचामराःदेवाःनानारूपाअमराःतेषामाख्ययाविशिष्टंविष्णुमितिशेष. सर्वेदेवेष्वधिहरिःसर्वेदेवनियामकइत्यादिवचनबाहुल्यादुपगंतव्यं विष्णोःसर्वनामत्वंअमरेतिविशेषणेनवेदस्यवाच्याभावेनाप्रामाण्यंस्यादितिशंकानिरस्ता इदंचविष्णावेवमुख्यमिति ६ प्रवृत्तिमार्गेविहितोपासनाप्रकारमुक्त्वाऽधुनानिवृत्तिमार्गविषयोपास्तिविधानमाह एक इति तुशब्देनएषांमुख्यत्वंदर्शयति उपशमंभगवन्निष्ठाम् ७ वैदिकमतमुक्त्वातांत्रिकमतमाह अन्येत्विति अन्येपांचरात्रिकाः तुशब्देनतत्रापिबाहुविध्यमस्तीतिसूचयति संस्कृतात्मानःशिक्षितबुद्धयः संप्रदायागतप्रज्ञावाशुद्धदेहावाविहितेनविधिना पंचधाकथितेनकालेनवा पंचकालपरायणैरितिवचनात् विधौतुदैवकालौचेतिचत्वमेवमयःसर्वोत्तमइतिबुद्धिर्येषांतेतथा बहुमूर्त्यावैबहुरूपेणच भक्तानुग्रहार्थंबहुत्वग्रहणम् । निजमेकमेवेत्याह एकमूर्तिकामिति । व्यष्टशासमष्ट्याचत्वामेवयजंतीत्यर्थः ८

ननुशैवागमेषुशिवस्यपयष्टव्यत्वेनोक्तत्वात्सर्वैस्त्वामवयजंतीतिकथंयुज्यतइतितत्राह स्वामेवेति । शिवरूपिणंपुरुषार्थपूर्तिं शिवेरुद्रेरूपंनियामकमस्यास्तीतिशिवांतर्यामिणमित्यर्थः । दधीच्यादिवह्ना चार्यविभेदेनशैवपाशुपताद्युपदेष्टृभेदेनवा ९ उपसंहरति सर्वएवेति । सर्वेषांदेवानामीश्वरा इंद्रादयः तेषामपीश्वरः सर्वदेवमहेश्वरः सर्वइति कइतितत्राह यइति येइंद्रादिनानादेवतानांभक्ताः । अतएवतद्भक्तिपूर्त्यर्थमन्यधियःस्वातंत्र्यबुद्धयोयद्यपितथापितवसर्वस्वामित्वजानंतोदेवास्तद्दत्तबलिंत्वयिसमर्प्यतत्फलार्थंस्वयंस्वीकुर्वंत्यन्यथापरपतोहरत्वंतेषांस्यादतस्तत्कुर्वंति किंतु तत्फलम तवदेवतथाश्रुतत्वादितिभावः यद्वा विष्णोरन्याविलक्षणाधीर्येषांतेतथा यद्यपितथापिपूर्वोक्तदृष्टेनशास्त्रानानादेवताभक्ताःयेतेत्वत्सर्वोत्तमत्वज्ञानाभावात्तेषामित्यतःप्रभाविदुक्तं १० एतदेवविशदयति यथे ति अद्रिभ्यःप्रभवःउत्पत्तिर्यासांताःअद्रिप्रभवाः पर्जन्येनगर्जन्मेघेनआपूरिताः सिंधुंसमुद्रंत्वां गतय पूजामार्गाःपुरुषार्थसाधनानिशास्त्राणिवा येततःपूजावसानेब्रह्मार्पणबुद्ध्यावसिताइत्यर्थः ११ ननुपूजादिकंसर्वंभगवद्विषयंचेन्मतभेदःकथमुत्पद्यतइत्याशंक्यसत्वादिगुणोपरक्तत्वाच्चदाकृष्टबुद्धित्वेनतद्भेदइत्याशयेनाह सत्वमिति प्राकृता.प्रकृतिनिमित्तास्तेषुसत्वादिषुप्रोताःसम्यक् स्यूताःसंवलिताइत्यर्थः कार्यतेह्यवशइत्यादिहिशब्देनगृहीतम् १२ ननु प्राकृतपदार्थेष्ववस्थितस्यहरेस्ततोविशिष्टत्वमाहिमासंभवात्किंविशेषेणप्रणतिःप्रार्थ्यतइतितत्राह तुभ्यमिति तुभ्यंनमोस्तु

त्वामेवान्येशिवोक्तेनमार्गेणशिवरूपिणम् ॥ बह्वाचार्यविभेदेनभगवन्समुपासते ९ सर्वएवयजंतित्वांसर्वदेवमहेश्वरम् ॥ येनानादेवताभक्ताययप्यन्य धियःप्रभो १० यथाद्रिप्रभवानद्यःपर्जन्यापूरिताविभो ॥ विशंतिसर्वतःसिंधुंतद्वत्त्वांगतयोऽततः ११ सत्वंरजस्तमइतिभवंतिप्रकृतेर्गुणाः ॥ तेषुहिप्रा कृताःप्रोताआब्रह्मस्थावरादयः १२ तुभ्यंनमस्तेस्त्वविषक्तदृष्टयेसर्वात्मनेसर्वधियांचसाक्षिणे ॥ गुणप्रवाहोऽयमविद्ययाकृतःप्रवर्ततेदेवनृतिर्यगात्मसु १३ अग्निर्मुखंतेऽवनिरंघ्रिरीक्षणंसूर्योनभोनाभिरथोदिशःश्रुतिः ॥ द्यौःकंसुरेंद्रास्तवबाहवोऽर्णवःकुक्षिर्मरुत्प्राणबलंप्रकल्पितम् १४ रोमाणिवृक्षौषधयः शिरोरुहामेघाःपरस्यास्थिनखानितेऽद्रयः ॥ निमेषणंरात्र्यहनीप्रजापतिर्मेढ्रंतुवृष्टिस्तववीर्यमिष्यते १५ त्वय्यव्ययात्मन्पुरुषेप्रकल्पितालोकाःसपा लाबहुजीवसंकुलाः ॥ यथाजलेसंजिहतेजलौकसोप्युदुंबरेवामशकामनोमये १६

यःसात्विकादिनानाजनकृतपूजाविषयत्वेनोक्तस्तस्मैतेभ्योपिनमोस्त्वित्यन्वादिश्यते प्रतिविशेषणमनुसंधेयमितिद्योतनायवा अविषक्तदृष्टयेअप्रतिहतज्ञानाय एकैकस्यैकैकप्रतिहतेर्दृष्टत्वाद स्यकथमप्रतिहतज्ञानत्वमित्याशंक्य सर्वस्वामित्वेनस्वातंत्र्यप्रतीतेर्ज्ञानप्रतिबंधकाभावोयुक्तइतिभावेनाह सर्वात्मनइति सर्वेषांतत्तच्छक्तिमाकृष्यवशीकृत्यतिष्ठतइत्यर्थ तदेवविशिनष्टि सर्वेति सहिसर्वमनोवृत्तिप्रेरकःसमुदाहृतइत्यादेः यद्वा अनेनासंगत्वंस्पष्टयतइति अस्यसर्वस्वातंत्र्यमस्तीतिकथमवगंतुंशक्यमित्याशंक्य संसारस्यहरीच्छाधीनत्वज्ञानादित्याह गुणप्रवाहइति अस्यहरे र्विद्ययेच्छया अनिषेधेपुमान्विष्णावविचित्रेस्मरेगुमानितिच देवत्वोपाधिविशिष्टआत्मनीतिप्रत्येकमन्वेतव्यम् १३ नानादेवताभक्तैः क्रियमाणंयजनादिकंत्वद्विषयंकथंस्यादित्याशंक्यतेषांत्वदं शोद्भूतत्वेनत्वत्संबंधित्वादितिभावेनतेषांत्वदंगजन्यत्वमाह अग्निर्मुखमिति मुखाज्जातोग्निस्तवमुखमित्युच्यते मुखादिंद्रश्चाग्निश्चप्राणाद्वायुरजायतेत्यादावितिदंत्वपैवचप्रकल्पितमहंपश्यामीत्येवंयो जनीयं विष्णोरंगसमुद्भूताविष्णोरंगानिदेवताइत्यादेः ईक्षणंनेत्रं कंशिरः पुंसिकःकंशिरोंबुनोरित्यमरः सुरेंद्राःलोकपाला.अर्णवंवदंतीतिशेष. १४ निमेषणंनिमेषोन्मेषौ निमिषोमुकुलीभावोरात्रिरुत्फु ल्लताअहरुन्मेषः प्रजापतिर्दक्षः वीर्यंरेतः १५ संजिहतेसंजायंते जलमेवाश्रित्यतिष्ठंतीतिजलौकसः मत्स्यादयःउदुंबरेजंतुफलेमशकाःपिपीलिकाविशेषा. मनोमयेज्ञानस्वरूपे १६

पुरुषसूक्तोक्तभगवन्मूर्तिविशेषंस्तुत्वामत्स्याद्यवताराग्स्तोतुमुपक्रमते यानीति आमृष्टशुचः मार्जितशोकाः परिहृतदुःखाः पूर्वंविद्यमानान्येवरूपाणिविभार्षिनाविद्यमानानीति इदमर्थहिशब्दोबाक्ति भूतामेवविभर्तीशोऽवतारतनुंसदेत्यादेश्च १७ कारणमत्स्यायमन्वादिरक्षणंनिमित्तीकृत्यमत्स्यवेषधारिणइत्यर्थः असुरमदंस्यतिनाशयतीतिमत्स्यः पोतकर्णधारीविधातुःमत्स्यानामुदकमेवप रंजीवनमितिसूचनायप्रलयाब्धिचरायेति प्रलयाब्धिचरणमन्यस्यनशक्यमितिईश्वरत्वद्योतनायवा चशब्दोवक्ष्यमाणसमुच्चयेवर्तते मधुकैटभमृत्यवेकेशवाय १८ अकूपारायकूर्मरूपायकूर्मोवा ख्यावकूपारइति बृहतेनित्यवृद्धाय किंकृत्यमित्यतउक्तं मंदरेति १९ साधुलोकभयापह देवजनस्यबल्यादेःभयमपहंतीति क्रांतात्रिभुवनायत्रिविक्रमाय २० २१ संकर्षणादि षुहरेःसंनिधानविशेषात्तेषामवतारांतर्भावंकृत्वानमनक्रियते नतुसाक्षादधोक्षजावतारत्वेन तदुक्तं प्रद्युम्नेचानिरुद्धेचबलदेवेचकेशवइत्यादौ २२ बुद्धावतारप्रयोजनंदैत्यमोहनमेवनान्यदिति द्योतयति दैत्येत्यादिना २३ २४ आत्मादेहः आत्मजःपुत्रःअर्थोहिरण्यादिः स्वजनोबंधुजनादिः भ्रमामिभ्रांतिंकरोमि २५ अनित्यानात्मदुःखेषुविपर्ययमतिः ॥ अनित्येषुनित्यबुद्धिः

यानियानीहरूपाणिक्रीडनार्थंबिभर्षिहि ॥ तैरामृष्टशुचोलोकामुदागायंतितेयशः १७ नमःकारणमत्स्यायप्रलयाब्धिचरायच ॥ हयशीर्ष्णेनमस्तुभ्यं मधुकैटभमृत्यवे १८ अकूपारायबृहतेनमोमंदरधारिणे ॥ क्षित्युद्धारविहारायनमःसूकरमूर्तये १९ नमस्तेऽद्भुतसिंहायसाधुलोकभयापह ॥ वामना यनमस्तुभ्यंक्रांतत्रिभुवनायच २० नमोभृगूणांपतयेदृप्तक्षत्रवनच्छिदे ॥ नमस्तेरघुवर्यायरावणांतकरायच २१ नमस्तेवासुदेवायनमःसंकर्षणा यच ॥ प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः २२ नमोबुद्धायशुद्धायदैत्यदानवमोहिने ॥ म्लेच्छप्रायक्षत्रहंत्रेनमस्तेकल्किरूपिणे २३ भगवन्जीव लोकोयंमोहितस्तवमायया ॥ अहंममेत्यसद्ग्राहोभ्राम्यतेकर्मवर्त्मसु २४ अहंचात्मात्मजागारदारार्थस्वजनादिषु ॥ भ्रमामिस्वप्नकल्पेषुमूढःसुखधिया विभो २५ अनित्यानात्मदुःखेषुविपर्ययमतिर्ह्यहम् ॥ द्वंद्वारामस्तमोविष्टोनजानेत्वांजगत्पते २६ यथाऽबुधोजलंहित्वाप्रतिच्छन्नंतदुद्भवैः ॥ अभ्येतिमृ गतृष्णांवैहित्वाहंत्वापराङ्मुखः २७ नोत्सहेऽहंकृपणधीःकामकर्महतंमनः ॥ रोद्धुंप्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः २८ सोऽहंतवांघ्र्युपगतोस्म्य सतांदुरापंयच्चाप्यहंभवदनुग्रहमीशमन्ये ॥ पुंसोभवेद्यर्हिसंसरणापवर्गस्त्वय्यब्जनाभसदुपासनयामतिःस्यात् २९ नमोविज्ञानमात्रायसर्वप्रत्ययहेत वे ॥ पुरुषेशप्रधानायब्रह्मणेऽनंतशक्तये ३०

अनात्मन्यात्मबुद्धिः २६ तदुद्भवैःजलोद्भवैःशैवलादिभिः अबुधः मृगतृष्णां मृग्यंतइतिमृगाविषयास्तत्तृष्णांच २७ मनोरोद्धुंनोत्सहे २८ तथापिप्रपतइत्याशयेनाह सोहमिति यःभवः समाधानकरणाशक्तःसोहंयच्चतवांघ्र्युपगमनंच अपिशब्दएवार्थेस्वपदप्राप्तौनिमित्तंध्वनयति पुंसइति यर्हियदासंसरणात्संसारादपवर्गोमोक्षोभवेत् कस्यपुंसस्तदाह हेअब्जनाभसतांपुरुषाणां उपासनयासेवयाहेतुनात्वयिमतिःमननबुद्धिःअवतरतीत्यर्थः २९ मननविषयरूपमाह नमइति ज्ञानस्वरूपंनान्यत् मात्रंकात्स्न्र्येवधारणइतियादवः यद्वा विज्ञानंमात्रामानंप्रमाणंयस्मिन्सतथातस्मै मात्रापरिच्छेदेदेशेमवृत्तौकर्णभूषणे अक्षरावयवेमानइतिच नैघातकेणप्रतिरापनेयेतिचश्रुतिः सर्वेषांज्ञानानांहेतवेकारणाय विरिंचिशंकरयोःप्रत्ययहेतुत्वंऔपचारिकमितिभावेनाह पुरुषेति पु रुषेश्वरयोर्विरिंचिशंकरयोरप्युत्तमोत्तमाय एवंविधस्यकिनामधेयमित्यतउक्तं ब्रह्मणइति सत्यंज्ञानमनंतंब्रह्मेतिश्रुतेः विरिंच्याद्युत्तमत्वेकोहेतुरित्यतउक्तं अनंतेति ३०

वासुदेवमूर्तेर्मोक्षहेतुत्वमितिकृत्वावंनमाति नमइति सर्वभूतक्षयायसर्वभूतनिवासाय शुद्धस्फाटिकसंकाशंवासुदेवांनिरंजनमित्यादे हृषीकेशइंद्रियेश प्रभोसमर्थ ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायामष्टत्रिंशोऽध्यायः ॥ ३८ ॥ तस्मिन्निजजन्मनियोग्यतायाअभिभवोनास्ति किंतुसर्वत्राद्भुतत्वमेवयत्तदेतेषुद्वित्राध्यायेषुव्यनक्ति तत्रादावक्रूरदृष्टभगवद्रूपस्यांतर्धानकारणंकृष्णाक्रूरयोःप्रश्नोत्तराभ्यांहरेःसर्वैश्वर्यत्वाद्भुतमाहात्म्यंचवक्ति स्तुवतइति आत्मनोवपु.नटत्वेनदर्शितं नाट्यंनटनविषयंहनुमदादिरूपंयथातिरोधत्तेतथा १ आवश्यकंनित्यकर्म २ दयालुःश्रीकृष्णःआत्मनोमाहात्म्यंतेनवादयितुंअज्ञातवत्पृच्छति तमिति अद्भुतमदर्शि लक्षणैस्त्वांलक्षयामहे व्यावृत्तंपश्यामः ३ अक्रूरःपरिहरति अद्भुतानीति इहभूम्यादौयावंत्यद्भुतानिसंति विश्वात्मकेविश्वरूपेत्वयितानिविपश्यतोमे किमदृष्टंसर्वंदृष्टमेव तानिविश्वात्मकेत्वयिसंति तस्मात्त्वांविपश्यतोमेकिमदृष्टमितिवा ४ किंत्वयाद्भुतंदृष्टमितिप्रश्नस्यसर्वंदृष्टमेवेतिपरिहारः

नमस्तेवासुदेवायसर्वभूतक्षयायच ॥ हृषीकेशनमस्तेऽस्तुप्रपन्नंपाहिमांप्रभो ॥ ३१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेअष्टत्रिंशोऽध्यायः ॥ ३८ श्रीशुकउवाच ॥ स्तुवतस्तस्यभगवान्दर्शयित्वाजलेवपुः ॥ भूयःसमाहरत्कृष्णोनटोनाट्यमिवात्मनः १ सोपिचांतर्हितंवीक्ष्यजलादुन्मज्ज्यसत्वरः ॥ कृत्वाचावश्यकंसर्वंविस्मितोरथमाविशत् २ तमपृच्छद्धृषीकेशःकिंतेदृष्टमिहाद्भुतम् ॥ भूमौवियतितोयेवातथात्वांलक्षयामहे ३ ॥ अक्रूरउवाच ॥ अद्भुतानीहयावंतिभूमौवियतिवाजले ॥ त्वयिविश्वात्मकेतानिकिंमेऽदृष्टंविपश्यतः ४ यत्राद्भुतानिसर्वाणिभूमौवियतिवाजले ॥ तंत्वानुपश्यतोब्रह्मन्किंमेऽदृष्टमिहाद्भुतम् ॥ ५ ॥ श्रीशुकउवाच ॥ इत्युक्त्वाचोदयामासस्यंदनंगांदिनीसुतः ॥ मथुरामनयद्रामंकृष्णंचैवदिनात्यये ६ मार्गेग्रामजनाराजंस्तत्रतत्रोपसंगताः ॥ वसुदेवसुतौवीक्ष्यप्रीतादृष्टिंनचाददुः ७ तावद्व्रजौकसस्तात नंदगोपादयोग्रतः ॥ पुरोपवनमासाद्यप्रतीक्षंतोऽवतस्थिरे ८ तान्समेत्याहभगवानक्रूरंजगदीश्वरः ॥ गृहीत्वापाणिनापाणिंप्रश्रितंप्रहसन्निव ९ भवान्प्रविशताम‍ग्रेसहयानःपुरींव्रज ॥ वयंत्विहावमुच्याथततोद्रक्ष्यामहेपुरीम् १० अक्रूरउवाच ॥ नाहंभवद्भ्यांरहितःप्रवेक्ष्येमथुरांप्रभो ॥ त्यक्तुंनार्हसिमांनाथभक्तंतेभक्तवत्सल ११ आगच्छयामगेहान्नःसनाथान्कुर्वधोक्षज ॥ साग्रजःसहगोपालैःसुहृद्भिश्चसुहृत्तमः १२ पुनीहिपादरजसागृहान्नोगृहमेधिनाम् ॥ यच्छौचेनानुतृप्यंतिपितरःसाग्नयःसुराः १३ अवनिज्यांघ्रियुगलमासीच्छ्लोक्योबलिर्महान् ॥ ऐश्वर्यमतुलंलेभेगतिंचैकांतिनांतुया १४ आपस्तेऽङ्घ्र्यवनेजन्यस्त्रींल्लोकान्शुचयोऽपुनन् ॥ शिरसाधत्तयाःशर्वःस्वर्याताःसगरात्मजाः १५ देवदेवजगन्नाथपुण्यश्रवणकीर्तन ॥ यदूत्तमोत्तमश्लोकनारायणनमोस्तुते १६ श्रीभगवानुवाच ॥ आयास्येभवतोगेहमहमार्यसमन्वितः ॥ यदुचक्रद्रुहंहत्वावितरिष्येसुहृत्प्रियम् १७ श्रीशुकउवाच ॥ एवमुक्तोभगवतासोऽक्रूरोविमनाइव ॥ पुरींप्रविश्यकंसायकर्मावेद्यगृहंययौ १८

कथमागतइत्यतउक्तमेवस्फारयति यत्रेति यत्रभूम्यादौसंतिसर्वाणिअद्भुतानियत्रयस्मिन्त्वयिसंतितंत्वानुपश्यतोमेकिमद्भुतमदृष्टंसर्वमद्भुतंदृष्टमित्यर्थःब्रह्मन्पूर्ण ५ दिनात्ययेअपराह्णे ६ तयोर्वसुदेवसुतयोः दृष्ट्वाःप्रीताःप्रसन्नाःदृष्टिंनाददुःप्रत्यादानंनचक्रुः ७ प्रतीक्षंतःपश्यंतः ८ ९ भवान्प्रेप्रविशतां पश्चात्त्वंगृहंव्रज अवमुच्यस्कंधावरोधंकृत्वा १० ११ १२ १३ अवनिज्यप्रक्षाल्य एकांतिनाभक्तमल्पानाप्यागतिःप्राप्ताम् १४ अपुनन्शुद्धांचक्रुः १५ १६ यदुवर्यद्रुहंकंसम् १७ त्वयोक्तंकर्मपाकृतमिति १८

१९ स्फाटिकानि स्फटिकरत्ननिर्मितानि तुंगानि उच्चानि च गोपुराणि पुरद्वाराणि यस्यां सा तथा बृहंति विशालानि स्फुरंति शोभमानानि हेम्ना निर्मितानि कपाटानि तोरणानि च यस्यां सा तथा ताम्रैः रारैः आरकूटैः कोष्ठानि ... हैविशेषैर्निर्मितानि कोष्ठानि दुर्गभवनानि यस्यां सा तथा आरण्यारकूटमित्यभिधानं यद्धातु ताभ्रेण विरचिते आरकोष्ठे अट्टालावयवविशेषो यस्यां सा यद्धा ताभ्रकृतानि अरणिदलानि धार्यंते स्तथाना आरंकोष्ठं यस्यां सा त थासा च आसीमा परिखा खातनदी यस्याः सा तथा ताम्रारकोष्ठा परिखा अत एव दुरासदा दुष्प्रवेशा ताम्रारकोष्ठां परिखादुरासदामिति पठंति उद्यानैः सर्वसाधारणवनैः रम्या रमणीया च उपवनानां आरामाणां प्रमदा वनानां आलिः पंक्तिस्तया शोभिता उद्यानरम्योपवनालिशोभिताम् २० सौवर्णैः सुवर्णबद्धैः शृंगाटकैश्चतुष्पथैः हर्म्यैः धनिनां निवासैः निष्कुटैः पथिकावासैः गृहवाटीभिर्वा श्रेणीसभाभिः गृहपंक्त्यंतरालक्षम स भाभिः श्रेणी विश्या गृहपंक्तिः तत्पुरतः कृतसभाभिर्वा भवनैः प्रशस्तैः गृहैः उपस्कृता अलंकृतां वेदिषु परिष्कृतभूमिषु वलभीषु आच्छादनवक्रदारुषु पोतचित्रफलकेषु मुक्ताहारिद्भिः मुक्तावलिरश्मिमिश्रितैः वैदूर्यादि भिः २१ जुष्टेषु न्युप्तेषु जालानां गवाक्षाणां आमुखरंध्रं मुखच्छिद्रपर्यंतेषु विद्यमानेषु कुट्टिमेषु बद्धभूमिकेषु स्थलेषु आविष्टैः उपविष्टैः पारावतैः कपोतैः बर्हिभिर्मयूरैश्च नादितां शब्दितां चंदनादि जलैः संसिक्ता आर्द्रीकृ ता रथ्या रथमार्गाः आपणाः निषद्यामार्गाः पण्यवीथिकामार्गाः प्रतिगृहं पंथा चत्वरश्चतुष्पथः विस्तृतमार्गः यस्यां सा तथा तां प्रकीर्णानि व्याप्तानि माल्यांकुरलाजतंदुलानि यस्यां सा तथा २२ आपूर्णकुंभैः स्वलंकृ

ततोपराह्णे भगवान्कृष्णः संकर्षणान्वितः ॥ मथुरां प्राविशद्गोपैर्दिदृक्षुः परिवारितः १९ ददर्श तां स्फाटिकतुंगगोपुरां बृहत्स्फुरद्धेमकपाटतोरणाम् ॥ ताम्रारकोष्ठां परिखादुरासदामुद्यानरम्योपवनालिशोभिताम् २० सौवर्णशृंगाटकहर्म्यनिष्कुटश्रेणीसभाभिर्भवनैरुपस्कृताम् ॥ वैदूर्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु २१ जुष्टेषु जालामुखरंध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम् ॥ संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्यांकुरलाजतंडुलाम् २२ आपूर्णकुंभैर्दधिचंदनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः ॥ सवृंतरंभाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां सपट्टिकाम् २३ तां संप्रविष्टौ वसुदेवनंदनौ वृतौ वयस्यैर्नरदेववर्त्मना ॥ द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः २४ काश्चिद्विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः ॥ कृतैकपत्रश्रवणैकनूपुरा नांक्त्वा द्वितीयं त्वपराः स्वलोचनम् २५ अश्नंत्य एका स्तदपास्य सोत्सवा अभ्यज्यमाना अकृतोपमज्जनाः ॥ स्वपंत्य उत्थाय निशम्य निःस्वनं निपाययंत्योऽर्भमपोह्य मातरः २६ मनांसि तासामरविंदलोचनः प्रागल्भ्यलीलाहसितावलोकनैः ॥ जहार मत्तद्विरदेंद्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवम् २७ दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षितोत्स्मितसुधोक्षणलब्धमानाः ॥ आनंदमूर्तिमुपगुह्य दृशात्मलब्धं हृष्यत्त्वचो जहुरनंतमरिंदमाधिम् २८

तानि द्वाराणि येषां ते तथा स्वलंकृतद्वारा गृहा यस्यां सा तथा तां कीदृशैः आपूर्णकुंभैः दधिचंदनरसेन चोक्षितैः सिक्तैः प्रसूनानां दीपानां आवलयो येषु ते तथा तैः सपल्लवैः किसलयसहितमुखैः वृंतेन प्रसवबंधनेन सहि तास्सवृंता रंभा कदलीसंवृतरंभा तथा क्रमुकाः पूगाः तैः पट्टिकया उपर्यंततावतानवस्त्रेण सहिता सपट्टिका ताम् २३ या पूर्वं कर्णाकर्णितसौंदर्या तां नरदेववर्त्मना राजमार्गेण २४ विपर्ययकृतानि व्यत्यस्तत्वेनालं कृतानि वस्त्राणि भूषणानि यासां ताः वस्त्रस्थाने भूषणानि भूषणस्थाने वस्त्राणीति युगुलेषु मध्ये एकं विस्मृत्य एतदेव स्फारयति कृतैकेति वस्त्रं परिधानमात्रं एकं श्रवणभूषणं एकं नूपुरं च यासां ताः एकमक्त्वा एकं लोचनं नांक्त्वा अंजितं मषीकृतमकृत्वा २५ अभ्यज्यमानास्तैललेपनं कुर्वाणाः अकृतोपमज्जनाः अकृतजलस्नानाः अर्भं बालं अपोह्य तिर्यक्कृत्वा २६ प्रागल्भ्येन धाष्ट्येन लीलासहितहसितेनावलोकने न कटाक्षनिरीक्षणेन २७ श्रुतं कृष्णरूपसौंदर्यं स्त्रियः एकदापि न दृष्टो यामित्याधिं मनःपीडां तद्दर्शनेन जहुरित्यन्वयः तस्य कृष्णस्य प्रेक्षितं उत्कृष्टं स्मितं च तत्प्रेक्षितोत्स्मिते ते एव सुधा प्रेक्षितोत्स्मितसुधा तस्या उक्षणेन ... मानो यासां तास्तथा आत्मनि मनसि लब्धं स्थितं हृष्यत्त्वचः रोमांचिताः २८

सौमनस्यैःसुमनसांपुष्पाणांराशिभिः २९ आनर्चुःपूजयामासुः ३० रंगकारंवर्णकारकम् ३१ ३२ ३३ साक्षेपवाक्यंविवृणोति ईदृशानीतिपरिधत्थ परिधानंकुरुथ ३४ जिजीविषाजीवितुमिच्छालुं पंतिअवच्छेदंकुर्वंति राजकुलानिराज्ञांसमूहाः ३५ ३६ वासःकोशान् वस्त्राख्यराशीन्कोशोस्त्रीकुड्मलेदिव्येशास्त्रेथौंघगृहेतनावितिच वस्त्रकरंडकान्वा ३७ वस्त्रेपरिधानोत्तरीयेविसृज्य ३८ वायकःतंतुवायकःवेषमद्भुतालंकारं एतदेवविशदयति विचित्रेति विचित्रानानाविधावर्णाःनीलरक्तादयोयेषांतेतथातैःशैलेयैःधातुभिःआकल्पैःआभरणैः ३९ लक्षणंमुद्रा पर्वणिवपौर्ण

प्रासादशिखरारूढाःप्रीत्युत्फुल्लमुखांबुजाः ॥ अभ्यवर्षन्सौमनस्यैःप्रमदा बलकेशवौ २९ दध्यक्षतैःसोदपात्रैःस्रग्गंधैरभ्युपायनैः ॥ तावानर्चुःप्रमुदिता स्तत्रतत्रद्विजातयः३० रजकंकंचिदायांतंरंगकारंगदाग्रजः ॥ दृष्ट्वाऽयाचतवासांसिधौतान्यत्युत्तमानिच ३१ देह्यावयोःसमुचितान्यंगवासांसिचार्हतोः ॥ भविष्यतिपरंश्रेयोदातुस्तेनात्रसंशयः ३२ सयाचितोभगवतापरिपूर्णेनसर्वतः ॥ साक्षेपंरुषितःप्राहभृत्योराज्ञःसुदुर्मदः ३३ ईदृशान्येववासांसिनि त्यंगिरिवनेचराः ॥ परिधत्थकिमुद्वृत्ताराजद्रव्याण्यभीप्सथ ३४ याताशुबालिशामैवंप्रार्थ्यंयदिजिजीविषा ॥ बध्नंतिघ्नंतिलुंपंतिदृप्तंराजकुलानिच ३५ इत्थंविकत्थमानस्यकुपितोदेवकीसुतः ॥ रजकस्यकराग्रेणशिरःकायादपाहरत् ३६ तस्यानुजीविनःसर्वेवासःकोशान्विसृज्यवै ॥ दुद्रुवुःसर्वतो मार्गंवासांसिजगृहेऽच्युतः ३७ वसित्वात्मप्रियेवस्त्रेकृष्णःसंकर्षणस्तथा ॥ शेषाण्यादत्तगोपेभ्योविसृज्यभुविकानिचित् ३८ ततस्तुवायकःप्रीतस्त योर्वेषमकल्पयत् ॥ विचित्रवर्णैःशैलेयैराकल्पैरनुरूपतः ३९ नानालक्षणवेषाभ्यांकृष्णरामौविरेजतुः ॥ अलंकृतौबालगजौपर्वणीवसितेतरौ ४० त स्यप्रसन्नोभगवान्प्रादात्सारूप्यमात्मनः ॥ श्रियंचपरमांलोकेबलैश्वर्यस्मृतींद्रियान् ४१ ततःसुदाम्नोभवनंमालाकारस्यजग्मतुः ॥ तौदृष्ट्वासमुत्थाय ननामशिरसाभुवि ४२ तयोरासनमानीयपाद्यंचार्घ्यार्हणादिभिः ॥ पूजांसानुगयोश्चक्रेस्रक्तांबूलानुलेपनैः ४३ प्राहनःसार्थकंजन्मपावितंचकुलंप्रभो ॥ पितृदेवर्षयोमह्यंतुष्टाह्यागमनेनवाम् ४४ भवंतौकिलविश्वस्यजगतःकारणंपरम् ॥ अवतीर्णाविहांशेनक्षेमायचभवायच ४५ नहिवांविषमादृष्टिः सुहृदोर्जगदात्मनोः ॥ समयोःसर्वभूतेषुभजंतंभजतोरपि ४६ शाध्याज्ञापयमांभृत्यंकिमहंकरवाणिवाम् ॥ पुंसोऽत्यनुग्रहोह्येषभवद्भिर्यन्नियुज्यते ४७ इत्य भिप्रेत्यराजेंद्रसुदामाप्रीतमानसः ॥ शस्तैःसुगंधैःकुसुमैर्मालांविरचितांददौ ४८ ताभिःस्वलंकृतौप्रीतौकृष्णरामौसहानुगौ ॥ प्रणतायप्रपन्नायददतुर्व रदौवरान् ४९ सोपिवव्रेऽचलांभक्तिंतस्मिन्नेवाखिलात्मनि ॥ तद्भक्तेषुचसौहार्दंभूतेषुचदयांपराम् ५० इतितस्मैवरंदत्त्वाश्रियंचान्वयवर्धिनीम् ॥ बलमायुर्यशःकांतिंनिर्जगामसहाग्रजः ५१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्द्धेएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ६९ ॥

मास्यमावास्येइव सितेतरौश्वेतश्यामौ ४० बलंचऐश्वर्यंचस्मृतिश्चइंद्रियंचबलैश्वर्यस्मृतींद्रियाः तान् बलंशरीरशक्तिःरूपंसौंदर्यंवा ऐश्वर्यंअणिमादिःस्मृतिर्भगवत्स्मरणं इंद्रियंज्ञानेंद्रियं ४१ ४२ ४३ सार्थकंसप्रयोजनं पावितंशुद्धीकृतं ४४ ४५ ४६ शाधिशिक्षस्व कर्तव्यमनुजानीहीतिवा एतत्कुर्वितिनियुज्यतेप्रेर्यतइतियदेषः ४७ ४८ ४९ ५० ५१ ॥ इतिश्रीभागवतेमहापुराणेदशम स्कंधेविजयध्वजकृतटीकायांएकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ ७ ॥

अथनिर्गमनानंतरंधात्रीसैरंध्रींदृष्ट्वापप्रच्छेत्यन्वयः गृहीतांगविलेपभाजनांगृहीतचंदनपात्रां कुब्जांवक्रशरीरां वयसायुवतींतरुणीं वचसारसप्रदःआनंदप्रदःकामरागप्रदोवा १ हेवरोरु साधुसत्यं निर्दोषेपेशलेसत्येसाधुशब्दंप्रयुंजतइति २ यच्छाब्दविहितंननुतदेव दासी अनुलेपकर्मणिचंदनसौरभ्यकर्मणिसंमताअविप्रतिपन्ना अन्यतमःअन्येष्वपिश्रेष्ठतमः ३ धर्षितात्मा अस्ववशमनाःवशीकृतमनावा ४ सुवर्णादितरद्रजतंतेनकर्पूरोलक्ष्यते कर्पूरसंपर्केणशोभापरिमलातिशयलक्षणास्यास्तीतिसुवर्णेतरशोभिना भगवच्छरीरकांतिमपेक्ष्यसंप्राप्तः अपरभागोगुणोत्कर्षराहित्यंयेनसतथा तेन ईषद्गुणोत्कर्षप्राप्तेनवा भगवदंगसंगेनसम्यगुत्कर्षप्राप्तेनवा अनुरंजितौस्वकांत्यनुकूलरागशोभांप्राप्तौ ५ ऋज्वींकर्तुंसमींकर्तुं आत्मनोदर्शनेयत्फलंतद्दर्शयन् एष्यत्कंसहननंलोकान्प्रत्यायया त्रिविभावः ६ कुब्जायाःप्रपदेपादाग्रेस्वपादाभ्यामाक्रम्यावष्टभ्य द्वेअंगुलेउत्तानेयस्मिन्पाणौतेनद्व्यंगुलोत्तानपाणिना चुबुकेमुखाधःप्रदेशे आस्यंप्रगृह्यउदनीनमत्उन्नमयांचकार ऊर्ध्वमाकृष्टवा

श्रीशुकउवाच ॥ अथव्रजन्राजपथेनमाधवःस्त्रियंगृहीतांगविलेपभाजनाम् ॥ विलोक्यकुब्जांयुवतींवराननांपप्रच्छधात्रींवचसारसप्रदः १ कात्वंवरोरु तदिहानुलेपनंकस्यांगनेनयासिनःकथयस्वसाधु ॥ देह्यावयोरंगविलेपमुत्तमंश्रेयस्ततस्तेनचिराद्भविष्यति २ सैरंध्र्युवाच ॥ दास्यस्म्यहंतेसुरवर्यसंमतात्रिवक्रनाम्नीह्यनुलेपकर्मणि ॥ मद्भावितंभोजपतेरतिप्रियंविनायुवांकोऽन्यतमस्तदर्हति ३ रूपपेशलमाधुर्यहसितालापवीक्षितैः ॥ धर्षितात्माददौसांद्रमुभयोरनुलेपनम् ४ ततस्तावंगरागेणसुवर्णेतरशोभिना ॥ संप्राप्तापरभागेनशुशुभातेऽनुरंजितौ ५ प्रसन्नोभगवान्कुब्जांत्रिवक्रांरुचिराननाम् ॥ ऋज्वीं कर्तुंमनश्चक्रेदर्शयन्दर्शनेफलम् ६ पद्भ्यामाक्रम्यप्रपदेद्व्यंगुलोत्तानपाणिना ॥ प्रगृह्यचुबुकेह्यास्यमुदनीनमदच्युतः ७ सातदर्जुसमानांगीबृहच्छ्रोणिपयोधरा ॥ मुकुंदस्पर्शनात्सद्योबभूवप्रमदोत्तमा ८ ततोरूपगुणौदार्यसंपन्नाप्राहकेशवम् ॥ उत्तरीयांतमाकृष्यसस्मयंजातहृच्छया ९ एहिवीरगृहंयामोनत्वांत्यक्तुमिहोत्सहे ॥ त्वयोन्मथितचित्तायाःप्रसीदपुरुषर्षभ १० एवंस्त्रियायाच्यमानःकृष्णोरामस्यपश्यतः ॥ मुखंवीक्ष्यानुगानांचप्रहसंस्तामुवाचह ११ एष्यामितेगृहंसुभ्रुपुंसामाधिविकर्शनम् ॥ साधितार्थोऽगृहाणांनःपांथानांत्वंपरायणम् १२ विसृज्यमाध्व्यावाण्यातांव्रजन्मार्गेवणिक्पथैः ॥ नानोपायनतांबूलस्रग्गंधैःसाग्रजोऽर्चितः १३ ततःपौरान्पृच्छमानोधनुषःस्थानमच्युतः ॥ तस्मिन्प्रविष्टोददृशेधनुरैंद्रमिवाद्भुतम् ॥ पुरुषैर्बहुभिर्गुप्तमर्चितंपरमर्धिमत् १४ वार्यमाणोनृभिःकृष्णःप्रसह्यधनुराददे १५

नित्यर्थः ७ ८ उत्तरीयांतं उत्तरीयवस्त्रांचलं सस्मयंसमदं हृच्छयःकामः ९ त्वयाकारणेनउन्मथितचित्तायाः विलोलितमनसः १० हेत्यनेनायामितिहासोलोकेप्रवर्ततामितिसूचयस्तामाहोतेज्ञाप्य इति ११ तरुणानांपुंसांआधिविकर्शनमनःपीडापरिहारनिमित्तंगृहमागमिष्यामि किंतु किंचित्कार्यमस्तीत्याह साधितार्थइति अर्थःकंसवधलक्षणः त्वंसर्वथापरिहारार्थिनेत्याह अगृहाणामिति अगृहाणांगृहरहितानांवनवासिनामित्यर्थः पांथानांपथिकानांनोस्माकंत्वंपरायणंउत्तमाश्रयः अनेनासंगानामीश्वराणामस्माकम् भक्ताएवपूजादिनाश्रयभूताइतिदर्शितम् १२ माध्व्यामधुरया वणिजांपंथानोयेषांतेतथातैःदर्शनार्थमागतैः पण्यवीथिकास्थितैःवैश्यैश्चार्चितः नानाविधोपायनंतांबूलादिकंयेषांतेतथातैः १३ पृच्छमानःपृच्छन् १४ १५

ज्यया मौर्व्या सहितं सज्यम् निमिषपरिमितेन कालेन अनिमिषेण निमेषणरहितेन वा स्तिमितपक्ष्मणा नेत्रेणेत्यर्थः मदकरी नित्यमदजलस्रावी गजः मदद्रुकोगजो वा १६ रोदसी द्यावापृथिव्यौ १७ आततायिनः आयुधान्यातत्य विस्तृत्यागच्छंतः १८ धनुषः द्वे शकले खंडे आदाय १९ शालामुखात् धनुर्गृहद्वारात् २० वीर्यं पराक्रमम् तेजः बलप्रभावं वा प्रागल्भ्यं धाष्टर्यं रूपं सौंदर्यं एकवद्भावादेकवचनम् तेजः प्रागल्भ्यरूपं चक्षुर्ग्राह्यमिव स्थितमित्यर्थः २१ अस्तं अस्ताद्रिं शकटमुपस्कल्यं स्वावस्थानम् २२ क्षीरोपसेचनं क्षीरोपसेचकभूयिष्ठमन्नम् २३ धनूरक्षिणां वधं प्रेषितस्वबलस्य वधं च किंकृतमिति तत्राह गोविंदेति गोविंदरामाभ्यां विक्रीडितम् २४ दीर्घं प्रजागरः निद्राराहित्यं पश्यसतथा अचष्ट अपश्यत् उभयथा दौहकानि बाह्यानि च यद्वा जाग्रति स्वप्ने च दौत्यकराणि सूचकानि २५ तान्येव व्यनक्ति अदर्शनमित्यादिना प्रतिरूपेषु छायालक्षणेषु सत्स्वपि स्वशिरसोऽदर्शनम् द्वितीये चंद्रादौ असति अविद्यमानेऽपि ज्योतिषां चंद्रादीनां द्वैरूप्यं द्विमूर्तित्वं द्वौ चंद्रावित्यादि बहुवचनेन दीपा

करेण वामेन सलीलमुद्धृतं सज्यं च कृत्वा निमिषेण पश्यताम् ॥ नृणां विकृष्य प्रबभंज मध्यतो यथेक्षुदंडं मदकर्युरुक्रमः १६ धनुषो भज्यमानस्य शब्दः खं रोदसी दिशः ॥ पूरयामास यं श्रुत्वा कंसस्त्रासमुपागमत् १७ तद्रक्षिणः सानुचराः कुपिता आततायिनः ॥ ग्रहीतुकामा आवव्रुर्गृह्यतां वध्यतामिति १८ अथ तान्दुरभिप्रायान्विलोक्य बलकेशवौ ॥ क्रुद्धौ धनुष आदाय शकले तांश्च जघ्नतुः १९ बलं च कंसप्रहितं हत्वा शालामुखात्ततः ॥ निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसंपदः २० तयोस्तदद्भुतं वीर्यं निशम्य पुरवासिनः ॥ तेजः प्रागल्भ्यं रूपं च मेनिरे विबुधोत्तमौ २१ तयोर्विहरतोः स्वैरमादित्योऽस्तमुपेयिवान् ॥ कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः २२ अवनिज्यांघ्रियुगलं भुक्त्वा क्षीरोपसेचनम् ॥ ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम् २३ कंसस्तु धनुषो भंगं रक्षिणां स्वबलस्य च ॥ वधं निशम्य गोविंदरामविक्रीडितं परम् २४ दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः ॥ बहून्यचष्टोभयथा मृत्योर्दौत्यकराणि च २५ अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि ॥ असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा २६ छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः ॥ स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम् २७ स्वप्ने प्रेतपरिष्वंगः खरयानं विषादनम् ॥ यायान्नलदमाल्येकस्तैलाभ्यंगो दिगंबरः २८ अन्यानि चेत्थंभूतानि स्वप्नजागरितानि च ॥ पश्यन्मरणसंत्रस्तो निद्रां लेभे न चिंतया २९ व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्यः समुत्थिते ॥ कारयामास वै कंसो मल्लक्रीडामहोत्सवम् ३० आनर्चुः पुरुषा रंगं तूर्यभेर्यश्च जघ्निरे ॥ मंचाश्चालंकृताः स्रग्भिः पताकाचैलतोरणैः ३१ तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोगमाः ॥ यथोपजोषं विविशू राजानश्च कृतासनाः ३२ कंसः परिवृतोऽमात्यै राजमंचमुपाविशत् ॥ मंडलेश्वरमध्यस्थो हृदयेन विदूयता ३३

दयो ज्ञाह्याः द्विशिखात्वमित्यादिना २६ छायायां छिद्रप्रतीतिः सुषिरदर्शनम् कर्णौ प्रतिरुध्य करेण मां प्राणघोषस्य शरीरवायोः प्रणवमुच्चरतो मंद्रध्वनेरनुपश्रुतिः अश्रवणम् वृक्षेषु स्वर्णच्छायादर्शनम् पृथिव्यां स्वपदानां पादलांछनानामदर्शनम् २७ प्रेतपरिष्वंगः मृतालिंगनम् स्वप्ने विषादनं पंककर्दमभक्षणलक्षणम् नलदमाली दक्षिणामुखो व्रजतीति श्रुतिः पद्ममालां शिरः कृत्वा योगच्छेद्दक्षिणामुख एवं पश्यन्निशि स्वप्ने तल्लक्षणान्मृत्युमेष्यतीति स्वप्नानिदर्शनइति यद्वा चक्ररक्तपुष्पं मृणालशून्यं वर्षासु जायमानं नलदम् तत्कृतमालाधारी अभयं नलदं सेव्यमम्मृणालं जलाशयमित्यमरः २८ अन्यानि वनभू कर्णसमानाप चनेत्रं विनासिका एकजिह्वेति पंचत्वलक्षणं विबुधा विदुरित्यादीनि २९ निशि व्युष्टायां निवृत्तायां अभिसमुत्थिते उदयपर्वतादिति शेषः ३० पणवगोमुखादि तूर्यं ३१ ब्रह्माणा ब्राह्मणाः क्षत्रा मंडलेश्वराः पुरोगमा मुख्या येषां ते तथा यथोपजोषं यथासुखम् राज्ञो विशिनष्टि राजानइति ३२ विदूयता तप्यमानेन ३३

मल्लानांतालशब्दोत्तरेषु उच्चैःश्रावितवालशब्दोष्वित्यर्थः उपाध्यायाः मल्लशिक्षाचार्यास्तैःसहिताः ३४ कांश्चिन्मल्लान्नाम्नानिर्दिशति चाणूरइति येचाणूरप्रभृतयःतएवमल्लेषुप्रधानाःतएवमुपस्थानंरंगसमीपम् ३५ भोजराजेनसमाहूतायेनंदादिगोपास्तेकिमकुर्वन्नितितत्राह नंदगोपादयइति निवेदितोपायनाःदत्तप्राभृताः ३६ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांचत्वारिंशोऽध्यायः ४० कृष्णरामाभ्यांनंदादिभिःसहस्थितमुतपृथगितिसंशयनिरासार्थंतत्कर्मकथयति अथेति कृतशौचौमुखप्रक्षालनादिनाप्राप्तशुद्धी यद्वा कृतंपर्याप्तंपूर्णंशौचंशुचेरग्नेःसर्वदहनत्वंययोस्तौअग्निवत्सर्वदाहकावित्यर्थः अत्रापिविशेषोस्तीत्याह परंतपाविति शत्रूणामेवतापकौनसर्वेषामित्यर्थः मल्लदुंदुभिनिर्घोषंमल्लयुद्धोचितदुंदुभिध्वनिं मल्लयुद्धंद्रष्टुंतत्समीपमाजग्मतुः १ २ परिकरंकक्षाख्यमुदरबंधंकांचींवाकुटिलालकान्समुह्यएकीकृत्यबद्ध्वा ३ अपक्राम अपसर यमसादनंयमगृहम् ४ बलादाकर्षणेकालः मृत्युर्वा कालोमृत्यौयमेचैवेतिसंहारेंतकोरुद्रइव रुद्रोमाविशांतकइतिश्रुतिः के

वाद्यमानेषुतूर्येषुमल्लतालोत्तरेषुच ॥ मल्लाःस्वलंकृताद्दप्ताःसोपाध्यायाःसमाविशन् ३४ चाणूरोमुष्टिकःकूटःशलस्तोशलएवच ॥ तआसेदुरुपस्थानंवल्गुवाद्यप्रहर्षिताः ३५ नंदगोपादयोगोपाभोजराजसमाहुताः ॥ निवेदितोपायनास्तएकस्मिन्मंचआविशन् ३६ इतिश्रीभागवतेमहापुराणेदशमस्कंधेचत्वारिंशोऽध्यायः ४० श्रीशुकउवाच ॥ अथकृष्णश्चरामश्चकृतशौचौपरंतपौ ॥ मल्लदुंदुभिनिर्घोषंश्रुत्वाद्रष्टुमुपेयतुः १ रंगद्वारंसमासाद्यतस्मिन्गजमवस्थितम् ॥ अपश्यत्कुवलयापीडंकृष्णोऽम्बष्ठप्रचोदितम् २ बद्ध्वापरिकरंशौरिःसमुह्यकुटिलालकान् ॥ उवाचहस्तिपंवाचामेघनादगभीरया ३ अंबष्ठांबष्ठमार्गंनौदेह्यपक्राममाचिरम् ॥नोचेत्सकुंजरंत्वाद्यनयामियमसादनम् ४ एवंनिर्भर्त्सितोऽम्बष्ठःकुपितःकोपितंगजम् ॥ चोदयामासकृष्णायकालांतकयमोपमम् ५ करींद्रस्तमभिद्रुत्यकरेणतरसाऽग्रहीत् ॥ कराद्विगलितःसोऽमुंनिहत्यांघ्रिष्वलीयत ६ संक्रुद्धस्तमचक्षाणोघ्राणदृष्टिःसकेशवम् ॥ परामृशत्पुष्करेणसप्रसह्यविनिर्गतः ७ पुच्छेप्रगृह्यातिबलंधनुषःपंचविंशतिम् ॥ विचकर्षयथानागंसुपर्णइवलीलया ८ सपर्यावर्तमानेनसव्यदक्षिणतोच्युतः ॥ बभ्रामभ्राम्यमाणेनगोवत्सेनेवबालकः ९ ततोभिमुखमभ्येत्यपाणिनाहत्यवारणम् ॥ प्राद्रवत्पातयामासस्पृश्यमानःपदेपदे १० सधावन्क्रीडयाभूमौपतित्वासहसोत्थितः ॥ तंमत्वापतितंक्रुद्धोदंताभ्यांसोऽहनत्क्षितिम् ११ स्वविक्रमेप्रतिहतेकुंजरेंद्रोऽत्यमर्षितः ॥ चोद्यमानोमहामात्रैःकृष्णमभ्यद्रवद्रुषा १२ तमापतंतमासाद्यभगवान्मधुसूदनः ॥ प्रगृह्यपाणिनाहस्तंपातयामासभूतले १३

शजननेयमइवास्थितः कालांतकयमोपमःतम् ५ करींद्रकराद्विगलितः विश्लथितःसकृष्णः अमुंकरींद्रंनिहत्यमुष्टिनापहत्यकरींद्रस्यांघ्रिषुपादेष्वलीयतानिलीनोऽभूत् ६ अचक्षाणः अपश्यन् घ्राणःदृष्टिर्यस्यसतथा गजोघ्राणेनपादमध्येनिलीनंकेशवंज्ञात्वा पुष्करेणशुंडाग्रेणतंकृष्णंपरामृशत्आकृष्टवान् सकृष्णःपुष्करग्रहणात् प्रसह्यसहसाविनिर्गतः ७ विनिर्गत्यकिंचकारेतितत्राह पुच्छइति पंचविंशद्धनुःपरिमितस्थलपर्यंतम् नागंसर्पम् ८ सोच्युतः सव्यदक्षिणतोबभ्राम पुच्छंगृहीत्वेतिशेषः परिपरितआवर्तमानेनपुनःपुनःसव्यतोदक्षिणतश्चभ्रमतागजेनगृह्यतइति कथमिव बालकोभ्राम्यमाणेनगोपुच्छेनगृहीतेनभ्रमतियथातथेति ९ ततःकिमनयालीलयेतिमत्वापुच्छंमुक्त्वाकरींद्रस्याभिमुखंगत्वापाणिनावारणंआहत्यप्राद्रवदित्यन्वयः ततःकिमभूदितितत्राह यापयामासेति प्राद्रवन्कृष्णःकरींद्रंपापयामासस्वपृष्ठतआगमयामासगजोपितमन्वाद्रवदित्यर्थः १० ११ १२ १३

तेनदंतेनहस्तिपान्महामात्रान् १४ द्विपंगजं विषाणोपरक्तेनअसृजाराधिरेणमदजलविंदुमिश्र विरूढाविस्तृतास्वेदजलकणिकायस्मिंस्ताद्विरूढस्वेदकणिकं ताहशंवदनांबुरुहंययोस्तौतथा १५ १६ मल्लानामशनिरिवभासमानः उपर्यपर्येवंयोगिनांपरंतत्त्वंब्रह्म ब्रह्मवेदस्तपस्तत्त्वमितिच भोजपतेःकंसस्यमृत्युरिव नित्यमेवेतियोज्यम् १७ मनस्वीशूरोपिउद्विविजे आविजीभयचलनयोरितिधातुः भीताभूत् १८ देहप्रभयानिरीक्षतांमनःक्षिपंतौआकर्षंतौ १९ नागराःनगरवासिनःराष्ट्राःजनपदवासिनःप्रहर्षवेगेनउत्कलितमुत्फुल्लमीक्षणमाननंचयेषांतेतथा २० २१ तयोःकृष्णरामयोःरूपगुणः

पतितस्यपदाक्रम्यमृगेंद्रइवलीलया ॥ दंतमुत्पाट्यतेनैवहस्तिपानहनद्धरिः १४ मृतकंद्विपमुत्सृज्यदंतपाणीविरेजतुः ॥ अंसन्यस्तविषाणासृङ्मदबिंदुभिरंजितौ १५ विरूढस्वेदकणिकवदनांबुरुहावुभौ ॥ वृतौगोपैःकतिपयैर्बलदेवजनार्दनौ ॥ रंगंविविशतुराजन्गजदंतवरायुधौ १६ मल्लानामशनिर्नृणांनरवरःस्त्रीणांस्मरोमूर्तिमान्गोपानांस्वजनोऽसतांक्षितिभुजांशास्तास्वपित्रोःशिशुः ॥ मृत्युर्भोजपतेर्विराडविदुषांतत्त्वंपरंयोगिनांवृष्णीनांपरदेवतेतिविदितोरंगंगतःसाग्रजः १७ हतंकुवलयापीडंदृष्ट्वातावपिदुर्जयौ ॥ कंसोमनस्व्यपितदाभृशमुद्विविजेनृप १८ तौरेजतूरंगगतौमहाभुजौविचित्रवेषाभरणस्रगंबरौ ॥ यथानटावुत्तमवेषधारिणौमनःक्षिपंतौप्रभयानिरीक्षताम् १९ निरीक्ष्यतावुत्तमपूरुषौजनामंचस्थितानागरराष्ट्रकानृप ॥ प्रहर्षवेगोत्कलितेक्षणाननाःपपुर्नतृप्तानयनैस्तदाननम् २० पिबंतइवचक्षुर्भ्यांलिहंतइवजिह्वया ॥ जिघ्रंतइवनासाभ्यांश्लिष्यंतइवबाहुभिः २१ ऊचुःपरस्परंतेवैयथादृष्टंयथाश्रुतम् ॥ तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिताइव २२ एतौभगवतःसाक्षाद्धरेर्नारायणस्यहि ॥ अवतीर्णाविहांशेनवसुदेवस्यवेश्मनि २३ सएषकिलदेवक्यांजातोनीतश्चगोकुले ॥ कालमेतंवसन्गूढोववृधेनंदवेश्मनि २४ पूतनाऽनेननीतांतंचक्रवातश्चदानवः ॥ अर्जुनौगुह्यकःकेशीधेनुकोऽन्येचतद्विधाः २५ गावःसपालाएतेनदावाग्नेःपरिमोचिताः ॥ कालियोदमितःसर्पइंद्रश्चविमदःकृतः २६ सप्ताहमेकहस्तेनधृतोऽद्रिप्रवरोऽमुना ॥ वर्षवाताशनिभ्यश्चपरित्रातंचगोकुलम् २७ गोप्यश्चनित्यमुदितहसितप्रेक्षणंमुखम् ॥ पश्यंत्योविविधांस्तापांस्तरंतिस्मश्रमंमुदा २८ वदंत्यनेनवंशोऽयंयदोःसुबहुविश्रुतः ॥ श्रियंयशोमहत्त्वंचलप्स्यतेपरिरक्षितः २९ अयंचास्याग्रजःश्रीमान्रामःकमललोचनः ॥ प्रलंबोनिहतोऽनेनवत्सकोयेबकादयः ३० जनेष्वेवंब्रुवाणेषुतूर्येषुनिनदत्सुच ॥ कृष्णरामौसमाभाष्यचाणूरोवाक्यमब्रवीत् ३१ हेनंदसूनोहेरामभवंतौवीरसंमतौ ॥ नियुद्धकुशलौश्रुत्वाराज्ञाहूतौदिदृक्षुणा ३२ प्रियंराज्ञःप्रकुर्वंत्यःश्रेयोविंदंतिवैप्रजाः ॥ मनसाकर्मणावाचाविपरीतमतोऽन्यथा ३३

शब्दगुणःमाधुर्यंचतेन यद्वा रूपगुणेनकांतिगुणेनकीर्तिगुणेनवामाधुर्येणावा वाचइतिशेषः प्रागल्भ्येनवैशारद्येनचस्मारितःस्मृतिकारिताःरूपंशब्दंस्पर्शौश्लोकइत्यादेः २२ २३ एतंकालंएतावंतंकालम् २४ अंतंनाशंनीता गुह्यकःशंखचूडः २५ २६ २७ श्रमंचतरंति २८ इतिवदंतिअनेनकृष्णेन २९ ३० ३१ वीर्येणपराक्रमेणसमतौसम्यक्पृथ्व्यातौ नियुद्धंबाहुयुद्धंमल्लयुद्धमितियावत् तस्मिन्कुशलौनिपुणौ ३२ ३३

तत्कथमवगतमितितत्राह नित्येति नियुद्धेनक्रीडंतः गोपालावत्सपालाश्चगोवत्सांश्चारयंतीतिकिंवदंत्यावगतमित्यर्थः ३४ किंकलहेनफलमितितत्राह भूतानीति ३५ ३६ यूयभोजपतेःप्रजाः वयंचापिविशेषोस्ति वयंवनेचराःयूयंतत्समीपचराः अतोविशेषप्रियाश्च तथापिवयंतस्यनित्यंप्रियंकरवामोनाप्रियमितियत्तस्मान्नःपरमनुग्रहएव ३७ तत्रापिकिंचिद्वक्तव्यमस्तीत्याह बालाइति वयंबालाइतिपदतस्तुल्यबलैर्मल्लैःसमंनियुद्धमिदमित्यधर्मःअधर्मोमास्पृशेन्नस्पृशतु ३८ चाणूरःकृष्णोक्तंपरिहरति नेति ३९ अनयोऽन्यायलक्षणःअधर्मः विक्रमविक्रमस्व मुष्टिकोबलेनरामेण सहविक्रमंकरोत्विति ४० इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायामेकचत्वारिंशोऽध्यायः ४१ एवंचाणूरोक्तप्रकारेणचिंतितःसंकल्पोमनोरथोयेनसतथा इतियुद्धप्रारंभे प्रत्यारंभेप्रसिद्धौहेतिच १ तत्रमल्लयुद्धकरणप्रकारंकथयति हस्ताभ्यामिति आस्फोट्यहस्तौहस्ताभ्यामूरूचैवपरस्पर विसृज्यभूयःसंगृह्यपरिक्रम्यपरस्परमित्येकश्लोकमादित्वेनकेचित्पठंति २

नित्यप्रमुदितागोपावत्सपालास्तथास्फुटम् ॥ वनेषुमल्लयुद्धेनक्रीडंतश्चारयंतिगाः ३४ तस्माद्राज्ञःप्रियंयूयंवयंचकरवामहे ॥ भूतानिनःप्रसीदंतिसर्वभूतमयोनृपः ३५ तन्निशम्याऽब्रवीत्कृष्णोदेशकालोचितंवचः ॥ नियुद्धमात्मनोभीष्टंमन्यमानोभिनंद्यच ३६ श्रीभगवानुवाच ॥ प्रजाभोजपतेर्यूयंवयंचापिवनेचराः ॥ करवामःप्रियंनित्यंतन्नःपरमनुग्रहः ३७ बालावयंतुल्यबलैःक्रीडिष्यामोयथोचितम् ॥ भवेन्नियुद्धंमाऽधर्मःस्पृशेन्मल्लसभासदः ३८ चाणूरउवाच ॥ नबालोनकिशोरस्त्वंबलश्चबलिनांवरः ॥ लीलयेभोहतोयेनसहस्रद्विपसत्वभृत् ३९ तस्माद्भवद्भ्यांबलिभिर्योद्धव्यंनानयोऽत्रवै ॥ मयिविक्रमवार्ष्णेयबलेनसह मुष्टिकः ४० इतिश्रीभागवतेमहापुराणेदशमस्कंधेएकचत्वारिंशोऽध्यायः ४१ श्रीशुकउवाच ॥ एवंचिंतितसंकल्पोभगवान्मधुसूदनः ॥ आससादहचाणूरंमुष्टिकंरोहिणीसुतः १ हस्ताभ्यांहस्तयोर्बद्ध्वापद्भ्यामेवचपादयोः ॥ विचकर्षतुरन्योन्यंप्रसह्यविजिगीषया २ अरत्नीद्वेअरत्निभ्यांजानुभ्यांचैवजानुनी ॥ शिरःशीर्ष्णोरसोरस्तावन्योऽन्यमभिजघ्नतुः ३ परिभ्रामणविक्षेपपरिरंभावपातनैः ॥ उत्सर्पणापसर्पैश्चान्योन्यंप्रत्ययुध्यताम् ४ उत्थापनैरुन्नयनैश्चालनैःस्थापनैरपि ॥ परस्परंजिगीषंतावन्योन्यमभिचक्रतुः ५ तद्बालबलवद्युद्धंसमेताःसर्वयोषितः ॥ ऊचुःपरस्परंप्रेक्ष्यसानुकंपावरूथशः ६ महानयंबताधर्मएषांराजसभासदाम् ॥ येबालबलवद्युद्धंराज्ञोऽन्विच्छंतिपश्यतः ७ क्ववज्रसारसर्वांगौमल्लौशैलेंद्रसन्निभौ क्वचातिसुकुमारांगौकिशोरौनाप्तयौवनौ ८ धर्मव्यतिक्रमोह्यस्यसमाजस्यध्रुवंभवेत् ॥ यत्राधर्मःसमुत्तिष्ठेन्नस्थेयंतत्रकर्हिचित् ९

३ विक्षेपआकृष्यमोचनं अवपातनमधोमुखेनपातनं उत्सर्पणंउत्क्षेपः अपसर्पःपृष्ठतोगमनं ४ उन्नयनमुत्तानीकरणं अभिचक्रतुःमुख्यनियुद्धंकृतवंतौ मल्लयुद्धंनियुद्धज्ञाविंशद्भेदंप्रचक्षते द्वात्रिंशद्भेदमपरेचत्वारिंशद्विधतयोतिसंग्रामविजयवचनात् सर्वनियुद्धविधिदर्शनार्थंभगवतैविक्रीडिततत्रद्विधायाःत्वभावादयमेवार्थउपरि तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ युयुधातइत्यादिनासूच्यतेच ५ बालबलवतोः कृष्णचाणूरयोःयुद्धंतत्प्रेक्ष्य वरूथशःसंघशः ६ राजसभायांसीदंत्युपविशंतीतिराजसभासदःतेषां कोयमधर्मइत्याहुः यइति बालस्यबलवतासहयुद्धमन्विच्छंतिअनुकूलंमन्वते राज्ञःपश्यतःसतइत्यनेनउभयेषामप्यधर्मःप्राप्तइतिज्ञायते ७ कथंअधर्मआसीदितितत्राहुः क्वेति वज्रवत्साराणिबलाढ्यानिसर्वाणिअंगानिकरचरणादीनिययोस्तौतथा शैलेंद्रोमेरुस्थिरांशेर्थे पुमाष्यायेवरेथैवदितिच ८ समाजस्यसभ्यसमूहस्य अर्थतोमन्वादिवाक्यंप्रतीक्षयंति यत्रेति ९

किमित्यप्रवेशइतितत्राहुः अब्रुवन्निति विब्रुवन्विपरीतंब्रुवन् आत्मसर्वांगसंबंधमलंकिल्बिषमुच्यतइतिच अनपायिमलंकिल्बिषमित्यर्थः १० श्रमपर्यांसंश्रमवारिव्याप्तंपद्मकोशंपद्ममुकुलं ११ हेसभ्यः रामस्यमुखनपश्यतकिंपश्यतेत्यन्वयः अमर्षेणसहितोहासःसामर्षहासः तेनसंरंभेणचशोभनंचारुतरं १२ नृणांलिंगेनलक्षणेनगूढःछन्नः अयंकृष्णनामापुराणपुरुषः यद्यासुव्रजभूमिषुविक्रीडयाक्रीडे च्छयाअंचतिगच्छति पादाभ्यामितिशेषः गाश्चारयन्गिरावंचतिच ताव्रजभुवः सगिरिश्चपुण्याःपावनाः बतआश्चर्यविधेस्थितिः किंविशिष्टःवनेविद्यमानानिविचित्राणिनानावर्णानि माल्यानिपुष्पाणियस्यसतथा गिरावमरैर्देवैरार्चितांघ्रिः व्रजभुविअमरैरमलैःशुद्धांतःकरणैर्गोपालैरर्चितश्रीचरणः १३ अमुष्येश्वरस्ययल्लावण्यसारमथनोत्थंशृंगाररसमथनादुत्पन्नंनत्वेदंकृत्रिममित्याह अनन्यसिद्धमिति अन्यस्मात्प्रकृतेर्जातंनभवतीति अन्येषामाविद्यमानंवा अनुसवंप्रतिक्षणं अभिनवंनूतन ज्ञानमंतरेणदुष्प्रापं श्रियोयशसश्चैकांतधामनि यत्.स्थानरूपंद्रव्याश्रयलक्षणगुणं

नसभांप्रविशेत्प्राज्ञःसभ्यदोषाननुस्मरन् ॥ अब्रुवन्विब्रुवन्नज्ञोनरःकिल्बिषमश्नुते १० वल्गतःशत्रुमभितःकृष्णस्यवदनांबुजम् ॥ वीक्ष्यतांश्रमपर्यांसं पद्मकोशमिवांबुभिः ११ किंनपश्यतरामस्यमुखमाताम्रलोचनम् ॥ मुष्टिकंप्रतिसामर्षंहाससंरंभशोभनम् १२ पुण्यावतव्रजभुवोयदयंनृलिंगगूढःपुरा णपुरुषोवनचित्रमाल्यः ॥ गाश्चारयन्सहबलःक्कणयंश्चवेणुंविक्रीडयांऽचतिगिरावमरार्चितांघ्रिः १३ गोप्यस्तपःकिमचरन्यदमुष्यरूपंलावण्यसार मथनोत्थमनन्यसिद्धम् ॥ दृग्भिःपिबंत्यनुसवाभिनवंदुरापमेकांतधामयशसःश्रियईश्वरस्य १४ यादोहनेऽवहनने मथनोपलेपप्रेंखेंखनार्भरुदितो क्षणमज्जनादौ ॥ गायंतिचैनमनुरक्तधियोऽश्रुकंठ्यःपुण्याव्रजस्त्रियउरुक्रमचित्तयामाः १५ प्रातर्व्रजाद्व्रजतआविशतश्चसायंगोभिःसमंक्कणयतोऽस्य निशम्यवेणुम् ॥ निर्गत्यतूर्णमबलाःपथिभूरिपुण्याःपश्यंतिसस्मितमुखंसदयावलोकम् १६ एवंप्रभाषमाणासुस्त्रीषुयोगेश्वरोहरिः ॥ शत्रुंहंतुंमनश्चक्रे भगवान्भरतर्षभ १७ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ ॥ युयुधातेतथान्योन्यंतथैवबलमुष्टिकौ १८ भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः ॥ चाणू रोभज्यमानांगोमुहुर्ग्लानिमवापह १९ सश्येनवेगउत्पत्यमुष्टीकृत्यकरावुभौ ॥ भगवंतंवासुदेवंक्रुद्धोवक्षस्यताडयत् २० नाचलत्तत्प्रहारेणमालाहतइ वद्विपः ॥ बाह्वोर्निगृह्यचाणूरंबहुशोभ्रामयन्हरिः २१ भूपृष्ठेपोथयामासतरसाक्षीणजीवितम् ॥ विस्रस्ताकल्पकेशस्रगिंद्रध्वजइवापतत् २२ तथैव मुष्टिकःपूर्वंस्वमुष्ट्याऽभिहतेनवै ॥ बलभद्रेणबलिनातलेनाभिहतोभृशम् २३ प्रवेपितःसरुधिरमुद्वमन्मुखतोऽर्दितः ॥ व्यसुःपपातोर्व्युपस्थेवाताह तइवांघ्रिपः २४ ततःकूटमनुप्राप्तंरामःप्रहरतांवरः ॥ अवधील्लीलयाराजन्सावज्ञंवाममुष्टिना २५

तथाःदृग्भिःपिबंतितागोप्यः किंतपःअचरन् चक्रुरित्यन्वयः १४ यागोप्योगोदोहनादावेनंकृष्णंगायंतितागोकुलस्त्रियःपुण्याइत्यन्वयः अवहननेव्रीहिताडनकाले दधिमंथनवेलाया उपजल्पेमिथः संभाषणसमये उपलेपइतिकेचित्पठंति गोमयादिनास्थललेपनकाले प्रेंखेंखनेदोलाचलनकाले अर्भरुदितेबालरोदनकाले उक्षणेप्रांगणसेचनसमये मज्जनेस्नानकाले मार्जनइतिकेचित् आदिशब्देन स्खलनपतनादिकंग्राह्यं उरुक्रमचित्तेयामः कालविशेषोयासांतास्तथा उरुक्रमचित्तेनगतोयामोयासांताइतिवा १५ वेणुरवनिशम्यव्रजान्निर्गत्यपथिस्थित्वा १६ १७ इतरश्चाणूरः १८ ग्लानिंप्राण संदेहक्लेशम् १९ २० २१ २२ २३ उर्व्युपस्थेभूमिपृष्ठे २३ सावज्ञंआयासम् २५

२६ २७ संश्लिष्यसंगम्य वल्गंतौनृत्यंतौतौवीक्ष्य नुतनूपुरौस्तुततुलाकोटी नूतनूपुराविति केचित् तुलाकोटिस्तुनूपुरइति २८ २९ ३० निःसारयतनिर्गमयत ३१ ३२ लघिम्नापक्षिवत्लाघवेन अव्य यःयोगवित्प्रधानपुरुषेश्वरइत्यर्थः ३३ मनस्वीधीरः ३४ दुर्विषहेचउग्रेचतेजसीबलेचिषीपस्यसतथोत्ते ३५ उत्तुंगमचादवपतनादंगभंगःकथंनाभूत्तत्राह विश्वाश्रयइति विश्वमाश्रयोयस्येतिविग्रहेउक्त दोषानिस्तारइत्यतउक्तं आत्मतंत्रइति अपराधीनत्वात् ३६ ३७३८ सकंसः चीर्णपुण्यफलादानार्थंकंसेस्थितोवायुःसंसारावस्थायांतदुद्विग्नबुद्ध्याभीतबुद्ध्या अन्यत्रमरणादुद्विग्नबुद्ध्यातमीश्वरंध्या यन्नित्यदाप्यनादौपुनःदैत्यस्यमृत्युसमयेमंचेऽग्रतःस्थितंयदच्युतंअविनाशिनित्यं चक्रंसुदर्शनंआयुधंयस्यसतथा ददर्शहरेरूपमाप आविष्टइत्यर्थः अन्यस्त्वच्युतंचक्रंछन्नैवायुधंयस्यास्वमोदेवतायास्तत्र

तथैवाहिशलःकृष्णपदापहतशीर्षकः ॥ द्विधाविदीर्णस्तोशलकउभावपिनिपेततुः २६ चाणूरेमुष्टिकेकूटेतोशलेशलकेहते ॥ शेषाःप्रदुद्रुवुर्मल्लाःसर्वे प्राणपरीप्सवः २७ गोपान्वयस्यानाकृष्यतैःसंसृज्यविजह्रतुः ॥ वाद्यमानेषुतूर्येषुवल्गंतौनुतनूपुरौ २८ जनाःप्रजहृषुःसर्वेकर्मणारामकृष्णयोः ॥ ऋ तेकंसंविप्रमुख्याःसाधवःसाधुसाध्विति २९ हतेषुमल्लवर्येषुविद्रुतेषुचभोजराट् ॥ न्यवारयत्स्वतूर्याणिवाक्यंचेदमुवाचह ३० निःसारयतदुर्वृत्तौवसुदेवा त्मजौपुरात् ॥ धनंहरतगोपानांनंदंबध्नीतदुर्मतिम् ३१ वसुदेवस्तुदुर्मेधाहन्यतामाश्वसत्तमः ॥ उग्रसेनःपिताचापिसानुगःपरपक्षगः ३२ एवंविकत्थ मानेवैकंसेप्रकुपितोऽव्ययः ॥ लघिम्नोत्पत्यतरसामंचमुत्तुंगमारुहत् ३३ तमापतंतमालोक्यमृत्युमात्मनआसनात् ॥ मनस्वीसहसोत्थायजगृहेसोऽसि चर्मणी ३४ तंखड्गपाणिंविचरंतमाशुश्येनंयथादक्षिणसव्यमंबरे ॥ समग्रहीद्दुर्विषहोग्रतेजायथोरगंतार्क्ष्यसुतःप्रसह्य ३५ निगृह्यकेशेषुचलत्किरीटंनि पात्यरंगोपरितुंगमंचात् ॥ तस्योपरिष्टात्स्वयमब्जनाभःपपातविश्वाश्रयआत्मतंत्रः ३६ कंसोपिकृष्णेनजगत्त्रयैकनिवासभूतेननिपात्यसोऽध्वः ॥ तेनात्म तंत्रेणचपीडितोऽसुंतत्याजराजन्निमिषांतरेण ३७ कंसंपरेतंविचकर्षभूमौहरिर्यथेभंजगतोविपश्यतः ॥ हाहेतिशब्दःसुमहांस्तदाऽभूदुदीरितःसर्वजनैर्नरें द्र ३८ सनित्यदोद्विग्नधियातमीश्वरंपिबन्नदन्वाविचरन्स्वपन्श्वसन् ॥ ददर्शचक्रायुधमच्युतंयत्तदेवरूपंदुरवापमाप ३९ तस्यानुजाभ्रातरोऽष्टौकंकन्यग्रोध कादयः ॥ अभ्यधावन्नतिक्रुद्धाभ्रातुर्निर्वेशकारिणः ४० तथातिरभसांस्तांस्तुसंयत्तान्रोहिणीसुतः ॥ अहन्परिघमुद्यम्यपशूनिवमृगाधिपः ४१ नेदुर्दुंदुभयोव्योम्निब्रह्मेशाद्याविभूतयः ॥ पुष्पैःकिरंतस्तंप्रीताःशशंसुर्ननृतुःस्त्रियः ४२ तेषांस्त्रियोमहाराजसुहृन्मरणदुःखिताः ॥ तत्राभीयुर्विनिघ्नंत्यः स्वशीर्षाण्यश्रुलोचनाः ४३ शयानान्वीरशय्यायांपतीनालिंग्यशोचतीः ॥ विलेपुःसुस्वरंनार्योविसृजंत्योमुहुःशुचः ४४

कायुधमन्यथाज्ञानसाध्यं यद्दर्शतदेवतमोदेवतायाःरूपंनित्यदुःखलक्षणंआप दुरावापमित्युभयत्रसमं चक्रंसैन्येजलावर्तेरथांगेचक्रराष्ट्रयोः संचारेमंडलेवृत्तेछद्मभेदार्थदंभयोरितिच ३९ ४० भ्रातुर्निर्वेशोनिष्कृतिरानृण्यंतत्कारिणः सिंहव्याघ्रौमृगाधिपावितिच ४१ विभूतयःहरिविशेषसन्निधानपात्राणि ४२ ४३ वीरशय्यायांरणभूमौविलेपुः विप्रलापचक्रुः विसृजंत्यःइदंत्यः स्यागोविहापितंदानमुत्सर्जनविसर्जनेइतिहलायुधः ४५

करुणयानाथंतेपार्थयंतेइतिकरुणानाथास्तेषुवत्सलस्निग्ध तेतवविद्यमानाः येऽरुरास्तनाथास्तेवयमितिवा ४५ ४६ ४७ प्रभवउत्पादकः अप्ययःसंहारहेतुः प्रभवाप्ययौहिभूतानामितिश्रुतिः यथासुखंभवतितथानैधतेनवर्धते ४८ संस्थांमृतसंस्कारं ४९ ५० सस्वजातेआलिंगनंकुर्वाते । किंतुबद्धांजलीतस्थतुरित्यर्थः ॥ ५१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ मुरारेर्भगवतोबंधनशंकाप्रकारःप्रतिपाद्यतेस्मिन्नध्याये तत्रशुकःकंसवधानंतरंश्रीकृष्णेनकिंप्रकारीतिराज्ञोमानसप्रश्नंपरिहरति पितराविति उपलब्धःसम्यग्ज्ञातोऽर्थःवस्तुनित्यामतिहतंभगवत्स्वरूपंअस्मत्सुतोनेति याभ्यांतौतथाविधौज्ञात्वा माभूज्ज्ञातमत्स्वरूपौमाभूतामितिनिरूप्य निजामायाबंधकशक्तिंततानाविस्तृतवान् १ प्रीणयन्प्रीतिमुत्पादयन् प्रश्रयेप्रकृष्टसेवायांअवनतोमम्रः २ अस्मन्निमित्तंनित्योत्कंठितयोर्युवयोःपुत्राभ्याआवाभ्यांबाल्यपौगंडकैशोरावयोवस्थापित्रोरानंदहेतवोनागमन् युष्मत्पुरतोबाल्याद्युचितालीलानप्राप्ताइत्यर्थः ३ अप्राप्तौनिमित्तमाह नेति दैवहतयोर्भाग्यहीनयोःनौआवयोःभवत्समीपेवासोनलब्धइतियस्मात् येबालास्तेपित्रोर्गृहेस्थितायांमुदंविंदतेसापिनलब्धेत्यन्वयः विंदतेइतिछांदसः अ

हानाथप्रियधर्मज्ञकरुणानाथवत्सल ॥ त्वयाहतेननिहतावयंतेसगृहप्रजाः ४५ त्वयाविरहितापत्यापुरीयंभरतर्षभ ॥ नशोभतेवयमिव निवृत्तोत्सवमंगला ४६ अनागसांत्वंभूतानांकृतवान्द्रोहमुल्बणम् ॥ तेनेमांभोदशांनीतोभूतध्रुक्कोलभेतशम् ४७ सर्वेषामिहभूतानामेषहिप्रभवाप्ययः ॥ गोप्ताचतमवज्ञायनतथासुखमेधते ४८ श्रीशुकउवाच ॥ राजयोषितआश्वास्यभगवाँल्लोकभावनः ॥ यामाहुर्लौकिकींसंस्थांहतानांसमकारयत् ४९ मातरंपितरंचैवमोचयित्वाथबंधनात् ॥ रामकृष्णाववंदातेशिरसास्पृश्यपादयोः ५० देवकीवसुदेवश्वविज्ञायजगदीश्वरौ ॥ कृतसंवंदनौपुत्रौसस्वजातेनशंकितौ ५१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपूर्वार्धेद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ श्रीशुकउवाच ॥ पितरावुपलब्धार्थौविदित्वापुरुषोत्तमः ॥ माभूदितिनिजांमायांततानजनमोहिनीम् १ उवाचपितरावेत्यसाग्रजःसात्वतर्षभः ॥ प्रश्रयावनतःप्रीणन्नंबतातेतिसादरम् २ नास्मत्तोयुवयोस्तातनित्योत्कंठितयोरपि ॥ बाल्यपौगंडकैशोराःपुत्राभ्यामगमन्क्वचित् ३ नलब्धोदैवहतयोर्वासोनौभवदंतिके ॥ येबालाःपितृगेहस्थाविंदतेलालितामुदम् ४ सर्वार्थसंभवोदेहोजनितःपोषितःपुनः ॥ नतयोर्यातिनिर्वेशंपित्रोर्मर्त्यःशतायुषा ५ यस्तयोरात्मजःकल्पआत्मनाचधनेनच ॥ वृत्तिंनदद्यात्तंप्रेत्यस्वमांसंखादयंतिहि ६ मातरंपितरंवृद्धंभार्यांसाध्वींसुतंशिशुम् ॥ गुरुंविप्रंप्रपन्नंचकल्पोऽबिभ्रच्छ्वसन्मृतः ७

भयंप्रतिष्ठांविंदतइतिश्रुतिः ४ सर्वेषामर्थानांमोक्षादिपुरुषार्थानांसंभवउत्पत्तिर्यस्मात्सर्वार्थसंभवोदेहोयाभ्यांजनितःपुनःपोषितश्च तयोःपित्रोःशतायुषावर्षसहस्रेणापि निर्वेशंनिष्क्रतिंनयातिमर्त्यःअल्पायुः ५ अल्पायुश्चेत्कथंनिष्करोतीत्यतोयावदायुःपितृपरिचर्याकार्या अन्यथाऽनर्थःस्यादितिवाक्ये यस्तयोरिति यस्तयोःपित्रोःआत्मनःप्रेषितपुरुषमंतरेणस्वयमेवधनेनालंबुद्धिजनकेनचद्रव्येणचवृत्तिंजीवनंनदद्यात् तंप्रेत्ययमलोकेस्वमांसंखादयंति यमभटाइतिशेषः आत्मजऔरसोपिनिर्धनश्चेत्किंकुर्यादित्यतआह कल्पइति देहेनधनेनचकर्तुंसमर्थइत्यर्थः हिनात्रवृद्धौचमातापितरावितिस्मृतिंप्रमाणयति ६ सूचितस्मृतिमर्थतःप्रतिकयति मातरमिति मातरंसर्वावस्थासुमानयोग्यां पितरंवृद्धंजरसाग्रस्त भार्यांभरणयोग्यामपिसाध्वीं अक्षतव्रतांसुतंशिशुंस्वजीवनप्रवृत्तावसमर्थंगुरुंज्ञानोपदेष्टारंविप्रंज्ञानपूर्णंप्रपन्नंशरणागतंचएतानबिभ्रद्भरणमकुर्वन्सःश्वसन्नपिजीवन्नपिमृतःमृतकल्पइत्यर्थः कंचनवृद्धंकांचसाध्वींकंचनाशिशुंप्रेक्षापाङ्यानंकंचनविप्रमितिपृथग्वान्वेतव्यमिति ७

नन्वेवमस्तुपक्रतेोकिमितितत्राह तत्राविति यतएवंशात्रार्थस्तस्मात्कंसात्कसिहिंसायामितिधातोः सर्वहिंसाधिकरणत्वेनतन्नाम्नोभोजपतेर्नित्यमहोरात्रमुद्विग्नचित्तयोःअतएववामनर्चतो परिचर्याम कुर्वतोः अकल्पयोःशक्तिसामग्रीहीनयोःनौआवयोः एतेइतःपूर्वेदिवसाः मोघंव्यतिक्रांताइत्यन्वयः ८ एतदेवविशिनष्टि तत्क्षंतुमिति दुर्हृदाःदु स्थयुक्तमनसोः दुरन्तोमनदुःखयोरितिपादवः ९ वि श्वात्मनःसर्वांतर्यामिणः १० ११ १२ स्वाःप्रजाः अस्मान्नज्ञप्तुंआज्ञप्तुं यद्वा प्रजास्त्वासुकांश्चिदस्मानिति ययातिशापात्नृपासनेयदुभिर्नासितव्यंनस्थातव्यमितिशंकांत्यजेतिशेषः १३ शंका त्यागेकैमुत्येननिमित्तमाह मयीति उपासीनेसेवमानेसति १४ विश्वंसर्वंसृजतिददातीतिविश्वसृक् दिग्भ्यआनीय १५ १६ सिद्धाइतिलुप्तोपमामुक्ताइवकृष्णरामाभ्यांगतज्वराःनष्टसंतापाःकृष्णेरामेणर

तत्रावकल्पयोःकंसान्नित्यमुद्विग्नचेतसोः ॥ मोघमेतेव्यतिक्रांतादिवसावामनर्चतोः ८ तत्क्षंतुमर्हथस्तातमातर्नौपरतंत्रयोः ॥ अकुर्वतोर्वांशुश्रूषांक्लिष्टयो र्दुर्हृदोभृशम् ९ इतिमायामनुष्यस्यहरेर्विश्वात्मनोगिरा ॥ मोहितावंकमारोप्यपरिष्वज्यापतुर्मुदम् १० सिंचंतावश्रुधाराभिःस्नेहपाशेनसंवृतौ ॥ न किंचिदूचतूराजन्बाष्पकंठौविमोहितौ ११ एवमाश्वास्यपितरौभगवान्देवकीसुतः ॥ मातामहंतूग्रसेनंयदूनामकरोन्नृपम् १२ आहचास्मान्महाराजप्रजा स्त्वाज्ञप्तुमर्हसि ॥ ययातिशापाद्यदुभिर्नासितव्यंनृपासने १३ मयिभृत्यउपासीनेभवतोविबुधादयः ॥ बलिंहरंत्यवनताःकिमुतान्येनराधिपाः १४ सर्वान्स्वज्ञातिसंबंधान्दिग्भ्यःकंसभयाद्गतान् ॥ यदुवृष्ण्यंधकमधुदाशार्हकुकुरार्हकान् १५ सभाजितान्समाश्वास्यविदेशावासकर्शितान् ॥ न्यवासयत्स्व गेहेषुवित्तैःसंतर्प्यविश्वसृक् १६ कृष्णसंकर्षणभुजैर्गुप्तालब्धमनोरथाः ॥ गृहेषुरेमिरेसिद्धाःकृष्णरामगतज्वराः १७ वीक्षंतोऽहरहःप्रीतामुकुंदवदनांबुजम् ॥ नित्यप्रमुदितंश्रीमत्सदयस्मितवीक्षणम् १८ तत्रप्रवयसोप्यासन्युवानोऽतिबलौजसः ॥ पिबंतोऽक्षैर्मुकुंदस्यमुखांबुजसुधांमुहुः १९ अथनंदंसमासाद्य भगवान्देवकीसुतः ॥ संकर्षणश्चराजेंद्रपरिष्वज्येदमूचतुः २० पितर्युवाभ्यांस्निग्धाभ्यांपोषितौलालितौभृशम् ॥ पित्रोरभ्यधिकाप्रीतिरात्मजेष्वात्मनो पिहि २१ सपितासाचजननीयौपुष्णीतांस्वपुत्रवत् ॥ शिशून्बंधुभिरुत्सृष्टानकल्पैःपोषरक्षणे २२ यातयूयंव्रजंतातवयंचस्नेहदुःखितान् ॥ ज्ञातीन्वोद्रष्टु मेष्यामोविधायसुहृदांसुखम् २३ एवंसांत्वय्यभगवान्नंदंसव्रजमच्युतः ॥ वासोऽलंकारकुप्याद्यैरर्हयामाससादरम् २४ इत्युक्तस्तौपरिष्वज्यनंदःप्र णयविह्वलः ॥ पूरयन्नश्रुभिर्नेत्रेसहगोपैर्व्रजंययौ २५ अथशूरसुतोराजन्पुत्रयोःसमकारयत् ॥ पुरोधसाब्राह्मणैश्चयथावद्द्विजसंस्कृतिम् २६ तेभ्योऽदाद्द क्षिणांगावोरुक्ममालाःस्वलंकृताः ॥ स्वलंकृतेभ्यःसंपूज्यसवत्साःक्षौममालिनीः २७

मणेनरत्यावा १७ १८ तत्रमथुरायांप्रवयसोवृद्धाअपियुवानःआसन् तत्रकिमौषधमितितत्राह पिबंतइति १९ २० आत्मनःस्वस्मादपि २१ पुष्णीतांअपुष्णाताम् पोषणमकुर्वाताम् पोषरक्षणेपोषण रक्षणयोः २२ वयंनोऽस्माकंज्ञातीन्स्नेहहानिमित्तेनदुःखितान् युष्मान्द्रष्टुमेष्यामोऽधुनाव्रजंयात इदानीमागंतुककार्यमस्तितत्संसाध्यमित्याह विधायेति २३ सांत्वय्यसांत्वयित्वा सव्रजंसगोपम् वासोभिरलंकारैश्च कुप्याद्यैःरजतहेमादिव्यतिरिक्तद्रव्यश्चैश्च अकूप्यंरूप्यहेमादिकूप्यमन्यद्धनादिकमितिहलायुधः २४ २५ द्विजसंस्कृतिंब्राह्मणसंस्कारउपनयनलक्षणम् २६ गावोगाः रुक्मंसु वर्णं क्षौमाणिपुष्पमालाश्चासांसंतीतिक्षौममालिनीः २७

या०कृष्णरामयोःजन्मनक्षत्रेमनसादत्ताःसंकल्पितास्ताश्चाददात् याःकंसेनाधर्मेणहृतास्ताअपि २८ द्विजत्वमुपनीतत्वंप्राप्य लब्धसंस्कारौ लब्धदेहशुद्धी गायत्रंव्रतंगायत्रीजपनियमंब्रह्मचर्यंवा २९ प्रभवौमूलकारणे नान्येत्येकंपदं नगनाकशब्दवत् अन्यस्यासिद्धंनभवतीतिनान्यसिद्धंऔत्पत्तिकम् अतएवामलंयज्ज्ञानंतन्नरेहितैःमनुष्यचेष्टाभिश्छादयंतौ ३० यस्मादथतस्मात्काश्यंकाश्यपगोत्रजातम् ३१ यथावदुपासाद्यसमित्पाणी उपेतौस्मप्रापतुः भक्त्यादेवमिवेत्यनेनयस्यदेवेपराभक्तिर्यथादेवेतथागुराविति श्रुतिंसूचयति ३२ अंगैःशिक्षादिभि०उपनिषद्भिःवेदांतैस्तदुपयो

याःकृष्णरामजन्मर्क्षेमनोदत्तामहामतिः ॥ ताश्चाददादनुस्मृत्यकंसेनाधर्मतोहृताः २८ ततश्चलब्धसंस्कारौद्विजत्वंप्राप्यसुव्रतौ ॥ गर्गाद्यदुकुलाचार्याद्गायत्रंव्रतमास्थितौ २९ प्रभवौसर्वविद्यानांसर्वज्ञौजगदीश्वरौ ॥ नान्यसिद्धामलंज्ञानंगूहमानौनरेहितैः ३० अथोगुरुकुलेवासमिच्छंतावुपजग्मतुः ॥ काश्यंसांदीपनिंनामअवंतिपुरवासिनम् ३१ यथोपसाद्यतौदांतौगुरौवृत्तिमनिंदिताम् ॥ ग्राहयंतावुपेतौस्मभक्त्यादेवमिवादृतौ ३२ तयोर्द्विजवरस्तुष्टःशुद्धभावानुवृत्तिभिः ॥ प्रोवाचवेदानखिलान्सांगोपनिषदोगुरुः ३३ सरहस्यंधनुर्वेदंधर्मान्न्यायपथांस्तथा ॥ तथाचान्वीक्षिकींविद्यांराजनीतिंचषड्विधाम् ३४ सर्वंतदमरश्रेष्ठौसर्वविद्याप्रवर्त्तकौ ॥ सकृन्निगदमात्रेणतौसंजग्रहतुर्नृप ३५ अहोरात्रैश्चतुःषष्ट्यासंयत्तौतावतीःकलाः ॥ ततश्छंदयतांविद्यौतौकृताखौरामकेशवौ ॥ गुरुदक्षिणयाचार्यंछंदयामासतुर्नृप ३६ द्विजस्तयोस्तंमहिमानमद्भुतंसंलक्ष्यराजन्नतिमानुषींमतिम् ॥ संमंत्र्यपत्न्यासमहार्णवेमृतंबालंप्रभासेवरयांबभूवह ३७ तथेत्यथारुह्यमहारथौरथंप्रभासमासाद्यदुरंतविक्रमौ ॥ वेलामुपव्रज्यनिषीदतुःक्षणंसिंधुर्विदित्वार्हणमाहरत्तयोः ३८ तमाहभगवानाशुगुरुपुत्रःप्रदीयताम् ॥ योसाविहत्वयाग्रस्तोबालकोमहतोर्मिणा ३९ तमाहवरुणोदेवोविनयावनतःस्थितः ॥ नचाहार्षमहंदेवदैत्यःपंचजनोऽहरत् ४० अंतर्जलचरःकृष्णशंखरूपधरोऽसुरः ॥ जलमाविश्यतंहत्वागृह्यतामित्युवाचसः ४१ ततस्तौजलमाविश्यहत्वांऽतर्जलवासिनम् ॥ विदार्यजठरंतस्यनापश्यदुदरेऽर्भकम् ४२ तदंगप्रभवंशंखमादायरथमागमत् ॥ ततःसंयमनींनामयमस्यदयितांपुरीम् ॥ गत्वाजनार्दनःशंखंप्रदध्मौसहलायुधः ४३ शंखनिर्ह्रादमाकर्ण्यप्रजासंयमनोयमः ॥ तयोःसपर्यांमहतींचक्रेभक्त्युपबृंहितः ४४ उवाचावनतःकृष्णंसर्वभूताशयालयम् ॥ लीलामनुष्यहेविष्णोयुवयोःकरवामकिम् ॥ इत्युक्तस्तेनदेवेशोदेवकीनंदनोऽब्रवीत् ४५

गिभीरहस्यज्ञानैर्वासहितान् ३३ सरहस्यंप्रयोगोपसंहारसहितं धर्मपथःवर्णाश्रमधर्मलक्षणः पूर्वमीमांसालक्षणोवा न्यायपथान्ब्रह्मतर्कादितर्कशास्त्रलक्षणांश्च आन्वीक्षिकींमीमांसाशास्त्रंवेदेतिहासाद्यर्थनिर्णायकं संधिंचविग्रहंचैवयानमासनमेवच द्वैधीभावंसंश्रयंचषड्गुणान्कवयोविदुरितिषड्विधाम् ३४ सकृन्निगदमात्रेणएकवारंपाठमात्रेण ३५ चतुःषष्ट्यासंख्यपासंख्यातैरहोरात्रैःकालावयवैस्तावतीःयावत्संख्याःकलाःचतुःषष्टिकलाविद्याइत्यर्थः संयत्तौसम्यक्प्राप्तौ छंदयामासतुःप्रार्थयामासतुः ३६ महार्णवेप्रभासेतीर्थे ३७ वेलांतीरसीमाख्याम् ३८ योसौगुरुपुत्रः त्वयायहृतोर्मिणाग्रस्तःसप्रदीयतामित्यन्वयः ३९ तंकृष्णं ४० शंखमत्स्यरूपधरः ४१ ४२ ४३ ४४ सर्वभूतानामाशयोहृदयस्थानमालयोयस्यसतथातम् ४५

४६ ४७ ४८ गुरुनिष्क्रियागुरुकृतप्रतिक्रियायुष्मद्विधानांपुंसांगुरोःकोनुकामानांमध्येकामोवाशिष्यते सर्वोपिकामःसिद्धोभवतीत्यर्थः ४९ ५० तौअपश्यंत्यः ५१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ भगवन्मनोवशीकरणार्थभक्तिरेवप्रधानसाधनमितिदर्शयितुंहरेर्गोपीष्वनुकंपित्वंनिरूपयत्यस्मिन्नध्याये तत्रकृष्णउद्धवंगोकुलंगमयितुंवक्ति वृष्णीनामिति १ यएवंविधगुणोपेतउद्धवस्तमाह कच्चिद्गहसि २ मद्वियोगेनममविरहेणयआधिस्तंमत्संदेशैर्मदीयाज्ञावचनैः ३ अहमेवप्राणोजीवनंयासांतास्तथा त्यक्तदैहिकाःदूरीकृतदेहधर्माःदयितइष्टस्यदातारंप्रेष्ठंस्वशरीरादेरपिप्रियतमं आत्मानंसंततानुगतरूपं ४ स्वस्वभक्तवात्सल्यकथयति यइति येयेजनामदर्थेमांनिमित्तीकृत्यत्यक्तलोकधर्माः लोकोदेहस्तद्धर्माः अशनवसनानुलेपनादिलक्षणास्त्यक्तायैस्तेतथा यद्वा त्यक्ताःस्वर्गादिलोकविषयाः धर्माःयागादिसुकृतलक्षणाःमदर्थेमन्निमित्तेनिवृत्तौवर्तमानायेते यद्वा मामुद्दिश्यत्यक्तादत्तालोकधर्माः

श्रीभगवानुवाच ॥ गुरुपुत्रमिहानीतंनिजकर्मनिबंधनम् ॥ आनयस्वमहाराजमच्छासनपुरस्कृतः ४६ तथेतितेनोपनीतंगुरुपुत्रंयदूत्तमौ ॥ दत्त्वास्वगुरवेभूयोवृणीष्वेतितमूचतुः ४७ ततःप्रीतमनाराजन्निदंवचनमब्रवीत् ॥ सांदीपनिर्महाभागोरामकृष्णावरिंदमौ ४८ सम्यक्संपादितावत्सौभवद्भ्यांगुरुनिष्क्रिया ॥ कोनुयुष्माद्विधगुरोःकामानामवशिष्यते ॥ गच्छतंस्वगृहंवीरौकीर्तिर्वामस्तुपावनी ४९ गुरुणैवमनुज्ञातौरथेनानिलरंहसा ॥ आयातौस्वपुरंतातपर्जन्यनिनदेनवै ५० समनंदन्प्रजाःसर्वादृष्ट्वारामजनार्दनौ ॥ अपश्यंत्योबह्वहानिनष्टलब्धधनाइव ५१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेत्रिचत्वारिंशोऽध्यायः॥ ४३ ॥ श्रीशुकउवाच ॥ वृष्णीनांप्रवरोमंत्रीकृष्णस्यदयितःसखा ॥ शिष्योबृहस्पतेःसाक्षादुद्धवोबुद्धिसत्तमः १ तमाहभगवान्प्रेष्ठंभक्तमेकांतिनंक्वचित् ॥ गृहीत्वापाणिनापाणिंप्रपन्नार्तिहरोहरिः २ गच्छोद्धवव्रजंसौम्यपित्रोर्नःप्रीतिमावह ॥ गोपीनांमद्वियोगाधिंमत्संदेशैर्विमोचय ३ तामन्मनस्कामत्प्राणामदर्थेत्यक्तदैहिकाः ॥ मामेवदयितंप्रेष्ठमात्मानंमनसागताः ४ येत्यक्तलोकधर्माश्चमदर्थेतान्बिभर्म्यहम् ॥ मयिताःप्रेयसांप्रेष्ठेदूरस्थेगोकुलस्त्रियः ५ स्मरंत्यंगविमुह्यंतिविरहौत्कंठ्यविक्लवाः ॥ धारयंत्यतिकृच्छ्रेणप्रायःप्राणान्कथंचन ६ प्रत्यागमनसंदेशैर्बल्लव्यामेमदात्मिकाः ॥ इत्युक्तउद्धवोराजन्संदेशान्भर्तुरादृतः ७ आदायरथमारुह्यप्रययौनंदगोकुलम् ॥ प्राप्तोनंदव्रजंश्रीमान्निम्लोचतिविभावसौ ८ छन्नयानःप्रविशतांपशूनांखुररेणुभिः ॥ वासितार्थेनियुध्यद्भिर्नादितंशुष्मिभिर्वृषैः ९ धावंतीभिश्चवास्राभिरूधोभारेणवत्सकान् ॥ इतस्ततोविलंघद्भिर्गोभिर्वत्सैश्चगुंफितम् १० गोदोहशब्दाभिरवंवेणूनांनिःस्वनेनच ॥ गायंतीभिश्चकर्माणिशुभानिबलकृष्णयोः ११

जनविषयाः नयनाद्याचारायैस्ते अहंतान्बिभर्मितेभ्योभीतोस्मिबिभार्मिरक्षितास्मि मत्सायुज्यमावहंतीतिभक्तवश्यतादर्शयति बिभर्मिवा ५ विरहेणोत्पन्नमौत्कंठ्यंउत्कंठारागित्वंतेनविक्लवाः ६ प्रत्यागमनसंदेशैःआगमिष्यतियुष्मत्प्रेष्ठःकृष्णइत्यादिवाक्यैः मयिआत्मामतिर्मननशक्तिःमतिर्बुद्धिर्यासांतास्तथामत्स्वभावावा ७ विभावसौसूर्येनिम्लोचति अस्तंगच्छतिसतिसूर्यवह्नीविभावसूइति दिवाकरइतिकेचित् ८ यानंरथः वासितार्थेसंभोगार्थे वृषकामिनीवासितावाशुष्मंस्थेमादृढंबलमेषामस्तीतिशुष्मिणःतैः ९ ऊधोभारेणयुक्ताभिःवास्राभिर्वत्सलोलुपाभिर्गोभिश्चवत्सैश्चगुंफितंनादितं गवांयोनिनदोगुंफितियादवः इतस्ततोववृधद्भिर्गोभिश्चसुविराजितमितिपाठः २५ ववृधाद्भिरुत्पतद्भिःनृत्यद्भिर्वा इतस्ततोविलंघद्भिरितिकेचित्पठंति विलंघनंकुर्वद्भिः १० ११

१२ १३ १४ कशिपौशयनतल्पे १५ १६ मुक्तःबंधनक्लेशात् १७ दिष्ट्यादैवेनस्वकृतेन यदूनामितिषष्ठीद्वितीयार्थे कर्मपदमित्यध्याहार्यंवा १८ मातरःमातॄः गावोगाः १९ २० २१ क्रियाःगृहादिविषया. २२ तदात्मतांतस्मिन्नेवव्याप्ततां २३ महतेअर्थायप्रयोजनाय २४ नागायुतवत्प्राणोबलचेष्टायस्यसतथातम् २५ अंगुष्ठमध्यमेविस्तृतेयत्प रिमाणंसतालइत्युच्यते एतादृशतालत्रयपरिमाण प्रादेशस्तालगोकर्णइति यष्टिइक्षुदंडम् २६ सुरासुराजयंतीतिसुरासुरजितः २७ प्रेमप्रसरेणप्रेमसंदोहेनाविह्वलःविवशः २८ अवास्राक्षीत्निरंतरममुंचत् २९ ३० नूनमिदानीं ३१ नारायणशतावयौ ऐरावतोनागरगइतिवत् नारायणोनामकश्चित्किंनस्यादखिलगुरुश्चपाषाणवदितितत्राह एतावितिं एतौकृष्ण

स्वलंकृताभिर्गोपीभिर्गोवत्सैर्मंडितंसितैः ॥ अर्घ्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः १२ धूपैर्दीपैश्चमाल्यैश्चगोपावासैर्मनोरमम् ॥ सर्वतःपुष्पितवनं द्विजालिकुलनादितम् ॥ १३ हंसकारंडवाकीर्णैःपद्मखंडैश्चमंडितम् ॥ तमागतंसमालोक्यकृष्णस्यानुचरंप्रियम् १४ नंदःप्रीतःपरिष्वज्यवासुदेवधिया‌ऽर्चयत् ॥ भोजितंपरमान्नेनसंविष्टंकशिपौसुखम् १५ गतश्रमंपर्यपृच्छत्पादसंवाहनादिभिः १६ नंदउवाच ॥ कच्चिदंगमहाभागसखानःशूरनंदनः ॥ आस्तेकुशल्यपत्याद्यैर्युक्तोमुक्तःसुहृद्वृतः १७ दिष्ट्याकंसोहतःपापःसानुगःस्वेनपाप्मना ॥ साधूनांधर्मशीलानांयदूनांद्वेष्टियःसदा १८ अपिस्मरतिनःकृष्णोमातरंसुहृदःसखीन् ॥ गोपान्व्रजंचात्मनाथंगावोवृंदावनंगिरिम् १९ अप्यायास्यतिगोविंदःस्वजनंसकृदीक्षितुम् ॥ तर्हिद्रक्ष्यामतद्वक्त्रंसुनसंसुस्मितेक्षणम् २० दावाग्नेर्वातवर्षाच्चवृषात्सर्पाच्चरक्षिताः ॥ दुरत्ययेभ्योमृत्युभ्यःकृष्णेनसुमहात्मना २१ स्मरतांकृष्णवीर्याणिलीलापांगनिरीक्षणम् ॥ हसितंभाषितंचांगसर्वानःशिथिलाःक्रियाः २२ सरिच्छैलवनोद्देशान्मुकुंदपदभूषितान् ॥ आक्रीडानीक्षमाणानांमनोयातितदात्मताम् २३ मन्येकृष्णंचरामंचप्राप्ताविहसुरोत्तमौ ॥ सुराणांमहदर्थायगर्गस्यवचनंयथा २४ कंसंनागायुतप्राणंमल्लौगजपतिंतथा ॥ अवधीतांलीलयैवपशूनिवमृगाधिपः २५ तालत्रयंमहासारंधनुर्यष्टिमिवेभराट् ॥ बभंजैकेनहस्तेनसप्ताहमदधाद्गिरिम् २६ प्रलंबोधेनुकोरिष्टस्तृणावर्तोबकादयः ॥ दैत्याःसुरासुरजितोहतायेनेहलीलया २७ श्रीशुकउवाच ॥ इतिसंस्मृत्यसंस्मृत्यनंदःकृष्णानुरक्तधीः ॥ अत्युत्कंठोऽभवत्तूष्णींप्रेमप्रसरविह्वलः २८ यशोदावर्ण्यमानानिपुत्रस्यचरितानिच ॥ शृण्वत्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरा २९ तयोरित्थंभगवतिकृष्णेनंदयशोदयोः ॥ वीक्ष्यानुरागंपरमंनंदमाहोद्धवोमुदा ३० ॥ उद्धवउवाच ॥ युवांश्लाघ्यतमौनूनंदेहिनामिहमानद ॥ नारायणेऽखिलगुरौयत्कृतामतिरीदृशी ३१ एतौहिविश्वस्यचबीजयोनीरामोमुकुंदःपुरुषःप्रधानम् ॥ अन्वीयभूतेषुविलक्षणेषुविज्ञायईशातइमौपुराणौ ३२

रामौविश्वस्यप्रपंचस्यबीजयोनीबीजत्वेनरतिहेतुत्वाद्रेतस्त्वेनोपजीव्यत्वेनवायोनित्वेनस्वमहिम्नारेतोनिधानस्थानत्वेनकारणत्वेनवा कीर्तितावितिशेषः बीजंशुक्रंफलेसस्यान्नेइतियादवः योनिःस्त्रीणांभगस्थानेकारणेताम्रकेपणेइतिच यद्वा विश्वनाम्नोहरेःबीजेफलेनिष्पन्नरूपौयोनीगोवर्धनस्याद्धरणादिकर्मणातत्त्वस्ययोग्यौच योग्यंपत्रक्षमारूपधानोपाधिषुवंदनइतिलाभेनिष्पत्तिभोगेचबीजंफल

१ नारायणशब्दार्थभूतइतिक्वचित्पाठः ।

धनेफलमितिच यद्यपंनविष्णुस्तर्हिगोवर्धनोद्धरणादिकमनंकुर्यात् मानवबलासाध्यत्वादित्यादिहिशब्दोवाक्तिअज्ञामेकांलोहितशुक्लकृष्णां प्रधानादिदमुत्पन्नमित्यादिनाप्रकृतेर्बीजयोनित्वप्रतीतेःकथमे तयोर्युज्यतइतितत्राह इमाविति यस्त्वेषपुरुषःप्रकृतिरितिश्रुतेः प्रधानंप्रकृतिर्मूलकारणमित्यर्थः अनेनाग्निरिंचस्यकारणत्ववाण्यपिचिरप्रयुक्त्याशयेनाह पुरुषइति प्रकृतिपुरुषंचैवप्रविश्यपुरुषोत्तमइ त्यादेः तत्कारणत्ववाचोपिगतिरुक्ताभवतीति असंगस्यतत्प्रवेशःकथमित्यतउक्तंपुराणइति पुरमणतिप्राप्नोतीति तदेवानुप्राविशदितिश्रुतेरसंगस्यापिप्रवेशोपुज्यतइत्यर्थः यद्वा बीजयोनित्वेहेतुमाह प्रधानमिति प्रधानत्वात्सर्वस्मादुत्तमत्वात् एकमेवाद्वितीयमितिश्रुतेः उत्तमत्वंकुतइत्यत्राह पुरुषइति पुरातनपुरुषत्वात् अन्येषामर्वाचीनपुरुषत्वादित्यर्थः केवलमवतारप्रयोजनंकंसादिहननंभ वति किंतुस्वोपदिष्टज्ञानरक्षणंचेतिभावेनाह अन्वीयेति इमौपुराणौपूर्णानंदौकृष्णरामौविलक्षणेषुविविधलक्षणेषुनानाविधव्यावर्तकधर्मेषुभूतेषुअन्वीयअवतीर्य विज्ञायव्यासाचार्यनाविशिष्टज्ञानमुत्पा द्यासुरजनप्रकृतिजनेनतन्नाशंविज्ञाय तद्धननेनतिरोहितज्ञानोपदेशेनचज्ञानस्येशातेसमर्थयेतेरक्षतइत्यन्वयः ३२ जन्मादिकंश्रोतव्यंश्रीकृष्णस्यैवमोक्षहेतुत्वाचस्येतिभावेनाह यस्मिन्निति कर्माशयंश

यस्मिन्जनःप्राणवियोगकालेक्षणंसमावेश्यमनोविशुद्धम् ॥ निर्हृत्यकर्माशयमाशुयातिपरांगतिंब्रह्ममयोऽर्कवर्णः ३३ तस्मिन्भवंतावखिलात्मयोनौ नारायणेकारणमर्त्यमूर्तौ ॥ भावंव्यधत्तांनितरांमहात्मन्किंवावशिष्टंयुवयोःसुकृत्यम् ३४ आगमिष्यत्यदीर्घेणकालेनव्रजमच्युतः ॥ प्रियंविधास्यतेपि त्रोर्भगवान्सात्वतांपतिः ३५ हत्वाकंसंरंगमध्येप्रतीपंसर्वसात्वताम् ॥ यदाहवःसमागम्यकृष्णःसत्यंकरोतितत् ३६ माखिद्येतांमहाभागौद्रक्ष्यथःकृष्ण मंतिके ॥ अंतर्हृदिसभूतानामास्तेज्योतिरिवैधसि ३७ नह्यस्यास्तिप्रियःकश्चिन्नाप्रियोवास्त्यमानिनः ॥ नोत्तमोनाधमोवापिसमानस्यसमोपिच ३८ नमातानपितातस्यनभार्यानसुतादयः ॥ नात्मीयोनपरश्चास्यनदेहोजन्मकर्मवा ३९ लोकेस्यजन्मकर्माणिसदसन्मिश्रयोनिषु ॥ क्रीडार्थंसोपिसाधूनां परित्राणायकल्पते ४० सत्त्वंरजस्तमइतिभजतेनिर्गुणोमहान् ॥ क्रीडन्ननीहोऽनुगुणैःसृजत्यवतिहंत्यजः ४१ युवयोरेवनैवायमात्मजोभगवान्हरिः ॥ सर्वे षामात्मजोह्यात्मापितामातासईश्वरः ४२ दृष्टंश्रुतंभूतभवद्भविष्यत्स्थास्नुचरिष्णुमहदल्पकंच ॥ विनाच्युताद्वस्तुतयानवाच्यंसएवसर्वंपरमार्थरूपः ४३

रीरारंभकर्मसमूहं यस्मिन्मनोवानिगृह्यविनियम्यविनाश्य ब्रह्ममयःज्ञानप्रधानइत्यर्थः अर्कवत्स्फटिकवद्वर्णःप्रकाशोयस्यसतथा अतिस्वच्छइत्यर्थः ३३ भावंभक्तिं यद्वा लीलादिकंवा यद्विषय मंतरेणकिमपिनास्तीत्यर्थः व्यधत्तांव्यदधातां कृतवंतावित्यर्थः महात्मन्महात्मानिचेतनोसमेइत्यर्थः ३४ ३५ प्रतीपंप्रतिकूलम् ३६ अंतिकेकालक्षेपंविना बालबुद्धिमंतरेणकृष्णस्यदूरस्थःत्वंनास्ती त्याह अंतर्हृदीतिएधसिकाष्ठे ज्योतिरग्निः ३७ प्रेष्ठानांहृद्येववर्ततेनान्येषामितिनियमोनास्तीतिभावेनाह नहीति अमानिनः अहंममाभिमानरहितस्य योग्यतानुसारेण समानस्यसमोपिचेतिपाठः ३८ ३९ नन्वेवंविधस्यहरेःकथंजन्मादिकमुपपद्यतइतितत्राह लोकइति सदसन्मिश्रयोनिषुसुरनरतिर्यग्योनिषु ४० अनुगुणैस्तत्तत्कर्मानुकूलैःसत्वादिभिः ४१ सम्यक्प्रणिहितेआत्मनिमनसिजाय तेप्रकाशतइत्यात्मजइत्यध्यात्मम् ४२ युवयोरेकंतत्त्वंसंक्षिप्यवदामीत्याह दृष्टमिति भविष्यद्भूतंभवद्वर्तमानंस्थास्नुस्थावरंचरिष्णुजंगमंअच्युताद्विनाऽन्यत् ब्रह्मादिकंवस्तुतयास्वातंत्र्येणनैवास्ति किं तुसर्वंसएवतदधीनमेव सकीदृशःपरमार्थरूपःनित्याप्रतिहतस्वरूपइतिबुध्यध्वमिति ४३

निरूप्यप्रकाश्यवास्तून्गृहद्वारिदेहल्यादिषुवास्तुदेवताःमार्जनालेपनाक्षतादिभिः सम्यगभ्यर्च्यमंथनमममंथुः ४४ मथनरज्ज्वाविकर्षतः उल्लिखंतःकरकंकणाग्रलताः यद्वामथनरज्ज्वाऽवि कर्षतः चलद्भिर्नितंबादिभिरित्त्विषंतिकपोलादीनिअरुणकुंकुमानिआननानियासांतथाअरुणानिकुंकुमानियेषुतानितथावा ४५ येनध्वनिनादिशाममंगलंनिरस्यतेनेनादिगंतवासिनांजनानामशुभं नश्यतीत्युच्यते ४६ शातकौंभंशातकुंभेनसुवर्णेनविरचितम् ४७ ४८ प्रेतस्यमृतस्यभर्तुःकंसस्यनिष्कृतिमानृण्यमस्माभिःकरिष्यति अस्मदंडेनकर्तुमिच्छतीतिकिमित्यर्थः इतिवदंतीनांकृता ह्निकः अनुष्ठितप्रातःकालक्रियः ॥ ४९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ गोपस्त्रीणांव्यामोहोक्तिभंग्यापिश्रीकृष्णैकभक्तिर्निरूप्यतेऽ स्मिन्नध्याये तत्रगोपीनामुद्धवसंदर्शनात् हृष्टमनसांतत्त्वप्रश्नप्रकारंवक्तुमाह तंवीक्ष्येति परिमृष्टकुंडलं शाणोल्लीढवद्द्योतमानकर्णाभरणम् १ अतीवप्रशस्ततमदर्शनमवलोकनंयस्यसतथा अयंकइतिसा मान्यप्रश्नः कुतोदेशादागतइतिचविशेषप्रश्नः अच्युतस्येववेषभूषणानियस्यसतथा वैष्णवलक्षणेनेतरव्यावृत्तोऽसौकः वैष्णवेषुकिंनामधेयइतिततोऽपिविशेषप्रश्नइतिमिथोनुव्रज्यसामान्यतोऽस्मत्प्रे

श्रीशुकउवाच ॥ एवंनिशासाब्रुवतोर्व्यतीतानंदस्यकृष्णानुचरस्यराजन् ॥ गोप्यःसमुत्थायनिरूप्यदीपान्वास्तून्समभ्यर्च्यदधीन्यमंथन् ४४ तादीप दीप्तैर्मणिभिर्विरेजूरज्ज्वाविकर्षत्करकंकणस्रजः ॥ चलन्नितंबस्तनहारकुंडलत्विषत्कपोलारुणकुंकुमाननाः ४५ उद्गायतीनामरविंदलोचनंव्रजांगनानां दिवमस्पृशद्ध्वनिः ॥ दध्नश्चनिर्मंथनशब्दमिश्रितोनिरस्यतेयेनदिशाममंगलम् ४६ भगवत्युदितेसूर्येनंदद्वारिव्रजौकसः ॥ दृष्ट्वारथंशातकौंभंकस्याय मितिचाब्रुवन्४७अक्रूरआगतःकिंवायःकंसस्यार्थसाधकः ॥ येननीतोमधुपुरींकृष्णःकमललोचनः४८किंसाधयिष्यत्यस्माभिर्भर्तुःप्रेतस्यनिष्कृतिम् ॥ इ तिस्त्रीणांवदंतीनामुद्धवोऽगात्कृताह्निकः ॥ ४९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ श्रीशुकउवाच ॥ तंवीक्ष्य कृष्णानुचरंव्रजस्त्रियःप्रलंबबाहुंनवकंजलोचनम् ॥ पीतांबरंपुष्करमालिनंलसन्मुखारविंदंपरिमृष्टकुंडलम् १ सुविस्मिताःकोयमतीवदर्शनःकुतश्चकस्या च्युतवेषभूषणः ॥ इतिस्मसर्वाःपरिवव्रुरुत्सुकास्तमुत्तमश्लोकपदांबुजाश्रयम् २ तंप्रश्रयेणावनताःसुसत्कृतंसव्रीडहासेक्षणसूनृतादिभिः ॥ रहस्यपृच्छ न्नुपविष्टमासनेविज्ञायसंदेशहरंरमापतेः ३ जानीमस्त्वांयदुपतेःपार्षदंसमुपागतम् ॥ भर्त्रेहप्रेषितःपित्रोर्भवान्प्रियचिकीर्षया ४ अन्यथागोव्रजेतस्य स्मरणीयंनचक्ष्महे ॥ स्नेहानुबंधोबंधूनांमुनेरपिसुदुस्त्यजः ५ अन्येष्वर्थकृतामैत्रीयावदर्थविडंबना ॥ पुंभिःस्त्रीषुकृतायद्वत्सुमनस्स्विवषट्पदैः ६

इतिस्मृत्वातंपरिवव्रुः आवेष्टितवत्यइत्यन्वयः २ पुनस्ताभिःकिंकृतमत्राह तमिति अनेनसामान्यज्ञानंविशिष्टज्ञानपर्यवसायीतिनिरणायि प्रश्रयेणोपचारेण प्रियंसत्यंचसूनृतमितिच ३ पार्षदंपार्ष दानांसमीपवर्तिनांभृत्यानांश्रेष्ठंतैःपूज्यंवा अनुव्रतंभगवन्मनोनुकूलव्रतम् ४ अन्यथायशोदानंदगोपयोःप्रियकरणेच्छांतरेणस्मरणीयंस्मरणकारणयोग्यंनचक्ष्महेनपश्यामः गोव्रजेभुविगोष्ठे सुर भिलोकव्यावृत्त्यर्थोगोशब्दः गवांव्रजःसमूहोयस्मिन्स्थानेतत्तथातस्मिन्वा पशुजातियुक्तगोष्ठेवा ५ इतोपिस्नेहलक्षणानुग्रहंविनाऽन्यन्नास्तीतिभावेनाह अन्येष्विति अन्येषुपितृव्यतिरिक्तेषुबंधु षुमैत्रीस्नेहानुवृत्तिलक्षणामित्रभावोक्तिः अर्थकृताप्रयोजननिबद्धाइत्यन्वयः कथमिवेतितत्राहुः यावदर्थेति यद्वत्पथापुंभिःस्त्रीषुकृतामैत्री यावदर्थंयावत्प्रयोजनसमाप्तिपर्यंतंविडंबनमनुकरणमात्रंय स्याःसातथा यावदर्थंविडंबयत्यनुकरोतीतियावदर्थविडंबनावा इममर्थंदृष्टांतांतरेणद्रढयति सुमनःस्विति षट्पदैःभृंगैः ६

निःस्वंविचहीनं अकल्पंरक्षणादावसमर्थं दत्तदक्षिणंयजमानंवा ७ वीतफलंरहितंप्रणयकोपातिरेकदर्शनार्थंबहुदृष्टांतकथनं जारउपपतिः ८ उत्तरकथाप्रसंगःकइतितत्राह ददर्शेति गोविंदगतमनआदिभिस्त्यक्तलौकिकाः त्यक्ताःलोकाचाराःपुरुषाग्रतःश्लथितवसनादिदृढीकरणादिलक्षणाक्रियायाभिस्तास्तथा ९ गायंत्यः गायंतीःरुदंत्यःरुदंतीःकैशोरशैशवावस्थायां गताहिपदइतिलोकाचारविरुद्धाचरणंगानादिकम् १० तथाचकृष्णसंगमध्यानेनमुग्धाकाचिन्मधुकरंदृष्ट्वाप्रियेणकृष्णेनप्रस्थापितंप्रेषितंदूतंकल्पयित्वा इदंवक्ष्यमाणमब्रवीदित्यन्वयः ११ हेमधुरसपत्न्याःमथुरायांस्थितायाःसमानभार्यायाः अधरमधुपानलोलोद्धव तस्याआलिंगनकालेदृढ पीडितकुचाभ्यांविलुलितायांइतरततोविक्षिप्तायांमालायामनुषक्तकुचकुंकुमेनरूपितश्मश्रुभिरंचितस्त्वमस्मान्मास्पृश प्रणयकोपात्कितवबंधोइतिसंबोधयतिकितवस्यनवनीतादिपरद्रव्यचोरस्यकृष्णस्यबंधोनकेवलंत्वमेवमास्पृशकिंतुसाकितवोनस्पृशत्वितिभावेनवक्ति वहत्विति समधुपतिःश्रीकृष्णःतस्यांमथुरायांविद्यमानानांमानिनीनांमानधराणांस्त्रीणांप्रसादंप्रणयकोपशांतिलक्षणमनुग्रहप्रसादंवहतु नतमूर्धेतिशेषः कीदृशंयदुसदसिविडंब्यअनुकरणयोग्यंसोत्प्रासपूर्ववक्तव्यं सोत्प्रासःसमनाक्स्मितमिति स्वकैतवंपरस्मिन्नपिसंक्रामयितुपटुतमइतिभावेनाह यस्येति यस्यकृष्णस्यदूतस्त्वमपीदृग्धूर्तइत्यर्थः हेभ्रमरकितवबंधोउन्मत्तपुष्पबंधोसपत्न्याःभृंग्याःकुचस्पर्शनेनविलुलितमालउद्बुद्धकाम आसमंता

निःस्वंत्यजंतिगणिकाअकल्पंनृपतिंप्रजाः ॥ अधीतविद्याआचार्यमृत्विजोदत्तदक्षिणम् ७ खगावीतफलंवृक्षंभुक्त्वाचातिथयोगृहम् ॥ दग्धंमृगास्तथाऽरण्यंजारोभुक्त्वापरांस्त्रियम् ८ ददर्शगोपीर्गोविंदमनोवाग्देहचेष्टितैः ॥ कृष्णदूतोव्रजंप्राप्तउद्धवस्त्यक्तलौकिकाः ९ गायंत्यःप्रियकर्माणिरुदंत्यश्चगताह्रियः ॥ तस्यसंस्मृत्यसंस्मृत्ययानिकैशोरबाल्ययोः १० काचिन्मधुकरंदृष्ट्वाध्यायंतीकृष्णसंगमम् ॥ प्रियप्रस्थापितंदूतंकल्पयित्वेदमब्रवीत् ११ गोप्युवाच ॥ मधुपकितवबंधोमास्पृशास्मान्सपत्न्याःकुचविलुलितमालाकुंकुमश्मश्रुभिस्त्वम् ॥ वहतुमधुपतिस्तन्मानिनीनांप्रसादंयदुसदसिविडंब्यंयस्यदूतस्त्वमीदृक् १२ सकृदधरसुधांस्वांमोहनींपाययित्वासुमनसइव सद्यःकस्त्यजेन्मांभवादृक् ॥ परिचरतिकथंतत्पादपद्मंतुपद्माह्यपिबतहृतचित्ताउत्तमश्लोकजल्पैः १३

त्कुंकुमपुष्परसमिश्रमुखरोमभिरस्मान्मास्पृश ईदृक्त्वंयस्यवसतस्यदूतस्त्समधुश्रायपतिश्चेतिमधुपतिःवसंतनामापरिवृढःयत्सदसिपुष्पसमूहेविडंब्यंपरिथरीकर्तव्यमेतन्मानिनीनांभृंगीणांप्रसादंप्रसन्नभावंवहतुकरोतु कृष्णवद्वैलक्षण्यंनकरोत्वितिवा उन्मत्तःकितवोधूर्तइत्यमरः १२ कृष्णस्यकितवत्वंकथमापाद्यतेइत्यतएवमितिव्यनक्ति सकृदिति भवादृक्भवानिव पूज्यइवास्थितःकःपुरुषःमांत्यजेत्त्यजति मत्त्यागेहत्यादोषोभवति ब्राह्मणंस्वयमाहूययाचमानमकिंचनम् पश्चान्नास्तीतियोब्रूयात्तमाहुर्ब्रह्मघातकमितिस्मृतिर्वदतीतिभावेनकथितः स्वामधरसुधांअधरोष्ठामृतपाययित्वेतिनिषेधवचनाभावादुक्तदोषःकथंस्यादित्याशंक्यसकृत्पानेनास्यबहुतृष्णाजननहेतुत्वात्ततोप्याधिकइवेतिभावेनोक्तं सकृदिति तृष्णाजनकत्वंचकथमित्यतउक्तंमोहनीमिति बुद्धिमोहकरीम् मोदिनीमितिपाठेमोहकत्वशक्तिरस्यास्तीत्यर्थः अत्रनिदर्शनमाह सुमनसइति यथासुमनसःपुष्पस्यगंधमाघ्रायपुनस्तदानीमेवतत्त्यागोदृष्टचरस्तथेति तस्यसत्वतृष्णानास्तिचेत्तवापिमाभूदितिमाशंकीतिभावगर्भमाह परिचरतीति अत्रलक्ष्मीपदममरश्रीपदंचाध्याहृत्यव्याख्येयं लक्ष्मीः मथुरांगनावा तस्यकृष्णस्यपद्मकिंजल्कवत्कोमलंपादकथंकेनप्रकारेणपरिचरति शुश्रूषतइति शंकित्वाहेतुमाह अपीति

१ यद्वातस्मिन् भ्रमरएवप्रियप्रस्थापितोद्धवदृष्टिकृत्वामधुकरापदेशेनोद्धवमेवाब्रवीदित्यर्थः ।

सापिउत्तमश्लोकजल्पैः उत्तमश्लोकस्यहरेः जल्पैः मधुरवचनविशेषैर्हृतचित्तामुग्धचित्तत्वात्तृष्णयापरिचरतीत्येवंनिश्चेयं बतहर्षे चित्ताउत्तमेतिसंध्यकरणेनाप्रियत्वातिरेकदर्शनार्थमेवंकथनं नतुदोषापा दकत्वेन निर्दोषकत्वात्तस्यसर्ववैलक्षण्यप्रदर्शनार्थंचेतिज्ञाप्यतइति सुमनसइवसद्यइत्यनेनशरीरदौर्गन्ध्यंकितवपांडित्यंप्रदर्शितंप्रवयसस्त्वचेतित्यागनिमित्तानिनसंतीतिसूचयति सुमनसइवपुष्पस्य सदृशीपथापुष्पंसौरभ्येणघ्राणेंद्रियतर्पकत्वेनचसेव्यंस्यात्तथाहसद्यःसद्यस्कापथाप्रत्यग्रत्रयसिवर्त्तमानातरुणीतरुणैःपरिहर्तुंनशक्यातथेति किंचसुमनसःमालत्यालतायाःतनुत्वंयथातथाममभ्येमु ष्टिग्राह्यत्वमनेनालिंगनेसुखोद्रेकंलक्षयति यथासुमनसोदेवाःस्वसेवकंनत्यजंतितथामामपि यथाबुधाःकामकलाज्ञास्तरुणींनमुंचंतीतितथावा अतोभवादृगेवश्रीकृष्णएवनृशंसत्वेनत्यक्तवानितिवा सुमनाःपुष्पमालत्योःस्त्रीदेवबुधयोःपुमानितियादवः इतरत्सर्वंपरिहरतीतिकेचित्पठंति १३ स्वपुरतोवर्ण्यमानयाप्रियवार्तयोद्बुद्धमदनकलिकापुनरपिश्रोतुकामाअसहमानेवाधिक्षिप्तंकोपनार्थंयधि कंवक्तीतिक्रत्वातमुद्धवमाक्षिपतीवववक्ति किमिहेति षट्सुदर्शनेषुसंध्यादिषुचांघ्रिरवक्रगतिर्यस्यसतथा षट्सुविषयेषुभगवद्भक्तिपरिपंथिषुअंघ्रिःपादोयस्यसतथेतिवा तस्यसंबुद्धिःहेषडंघ्रे उद्धव अधिराधिल धिगत्यर्थाइतिधातुःत्वअगृहाणांगृहाश्रमरहितानांवनचारिणामित्यर्थः नोस्माकमिहाग्रतःपुराणंपुरेवर्तमानं यदूनामधिपतिंकिंबहुकर्णबिलपूरंगायसिनशब्दयेत्यन्वयःकैगैशब्दइतिधातुः तस्यगृहांतर्वर्ति त्वेनवनमध्यवासिपुरतोगायनमनन्वितमित्यर्थः तर्हिदंकस्याग्रतोयुक्तमितितत्राह विजयेति विजयोर्जुनस्तस्यसखाकृष्णःतस्यसखीनांमथुरांगनानांअग्रतस्तस्यकृष्णस्यप्रसंगःगायतांगीयतांत्वयेति शेषः तत्रगातुस्तवफलसिद्धिरप्यस्तीत्याह क्षपितेति तत्प्रसंगेनक्षपितानिरस्ताकुचानांरुक्संतापलक्षणायासांतास्तथा इष्टाःकृष्णप्रियाःमथुरांगनाउद्गात्रेतेतुभ्यमिष्टमभीष्टंधनादिकंकल्पयंतीत्यन्वयः त

किमिहबहुषडंघ्रेगायसित्वंयदूनामधिपतिमगृहाणामग्रतोनःपुराणम् ॥ विजयसखसखीनांगायतांतत्प्रसंगःक्षपितकुचरुजस्तेकल्पयंतीष्टमिष्टाः १४ दि विभुविचरसायांकाःस्त्रियस्तद्दुरापाःकपटरुचिरहासभ्रूविजृंभस्ययाःस्युः ॥ चरणरजउपास्तेयस्यभूतिर्वयंकाअपिचकृपणपक्षेउत्तमश्लोकशब्दः १५ वि सृजशिरसिपादंवेद्म्यहंचाटुकारैरनुनयविदुषस्तेऽभ्येत्यदौत्यैर्मुकुंदात् ॥ स्वकृतइहविसृष्टापत्यपत्यन्यलोकाव्यसृजदकृतचेताःकिंनुसंधेयमस्मिन् १६

स्यात्तेऽर्थंधनसमयइतिश्रुतेःतत्प्रसंगमितिपाठेभवान्गायतामित्यात्मनेपदेलोट् तत्प्रसंगंक्षपितेतिपाठेयायदुपतिविषयागीतिस्तांत्वंगायेतिपरस्मैपदेलोट् तस्यप्रसंगेनप्रकृष्टालिंगनलक्षणेनेति विजयसखस खीनामग्रतोयदुपतिंगायतापुंसांतेकृष्णेष्टाःस्त्रीजनाअभीष्टंकल्पयंतीतिवा १४ ननुप्रगल्भाचेत्त्वमेवंप्रलपनंविनामत्तकाशिन्यालज्जाभावात्कृष्णआगमिष्यतीतिशंकामाभूदित्याह दिवीति स्वर्गादिषुविद्य मानादेवस्त्रियःतस्यकृष्णस्यदुरापाःदुष्प्रापाःस्युःकिंतुसुप्रापाएव कर्षणमंत्रमाह कपटेति याःस्त्रियःकपटश्चरुचिरश्चहासयुक्तोयोभ्रूविजृंभःभ्रूभंगस्तस्यविषयालक्षीभूताःस्युःअध्यात्मकमानंदंपटयतिगम यतीतिकपटारुचिःस्पृहांरातिददातीतिकपटरुचिरःहेकपटेतिवा तत्रहेतुमाह चरणेति भूतिर्लक्ष्मीर्यस्यहरेश्चरणरजउपास्तेतदनुग्रहार्थमितिशेषः ननुभवत्योपितथाकुर्वंत्वित्यत्राह वयमिति तत्रवयंवनचा रिण्यःकाःस्याम अपिचपुनरपिशृणु कृपणस्यकिंपचानस्यास्मद्विधस्यजनस्यपक्षे अतिकेउत्तमश्लोकशब्दएवकर्णविषयोनतुवाच्योर्थश्चक्षुर्विषयइत्यर्थः यद्वा उत्तमश्लोकशब्दःकृपणपक्षेदीनपक्षपातीश्रुतः सोप्यस्मद्विषयोनाभूदित्यर्थः १५ प्रणतकृष्णशिरस्थितस्वपादस्मरणातिरेकविवशास्वपादमुद्धवशिरसिस्थितंमत्वावक्ति विसृजेति तवशिरसिस्थितंममपादंविसृजमुंच अहंत्वांवेद्मि अनुनयसारैःसांत्व विषयैश्चाटुकारैरापातरमणीयैःप्रियवचनैःअलंपर्याप्तं किंचदौत्येस्थितःत्वंमुकुंदंयाहि किमित्येवंकोपगर्भवचनंवदसीतितत्राह स्वकृतइति स्वकृतेस्वनिमित्तंकृष्णार्थमित्यर्थः विसृष्टापत्यपत्यन्यलोकाः त्यक्तपुत्रभर्तृबंधुजनाः अस्मानिहवनेव्यसृजदितियदतोऽकृतचेताः अकृतज्ञःकृतघ्नइत्यर्थः इतोहंत्वांसंदधामीतितत्राह किन्विति अस्यकृष्णस्यानुसंधेयंकिंनुनाकिमपीत्यन्वयः अनुनयसारैःश्रेष्ठैःवा उ पायप्रणामसंक्रांतचरणामलक्तकःशशी संध्यारुणइवाभातियस्यपापात्सवःशिवइतिवचनात् ईश्वरोऽप्यज्ञजनमोहनार्थमेवंविधलीलाजपतीति १६

प्रणयकोपातिरेकेणासंधेयत्वदोषानुत्पादयति मृगयुरिति योरामनामाभूत्वाकपींद्रंवालिनंविव्यधेहिंसितवान् कइव मृगयुर्लुब्धकइव यथालुब्धकःउपाश्रयेस्थित्वाविध्यतिमृगंतथायमपीत्याक्षेपार्थः क पेःसुग्रीवस्यइंद्रियंद्रावितवानित्यपराधंदृष्ट्वेतिस्तुत्यर्थः किंच किरातःनिषादइव स्त्रियंवि रूपांछिन्ननासिकाकर्णत्वेनसौंदर्यहीनामकृत परामृष्टायाःशूर्पणख्यामेपतिर्भवेतिविरूपविपरीतशब्दंश्रुत्वावि रूपामकरोत् नतुशुद्धस्त्रियमितिनिष्कृष्टोर्थः किनःपरमानंदिनोमुक्ताःरातंमित्रंयस्यसाकिरातः स्त्रीजितःस्त्रैणः स्त्रीजितापराभूतायेनसतथा कामयानांपतिमिच्छंतीं कामएववायानयस्याःसातथा स्मरना मरथाधिरूढत्वाद्दुष्टामित्यर्थः किंचवामनावतारेमहावहपर्वैयज्ञसबहुमानंबलेःत्रिपदपरिमितंभूम्युपहारमादायकृतघ्नइवायंबलिनामानंदैत्यंबिलवासपातालवासिनंअकृत पूजायांहेतुमाह वेदेति वेदवि दामृषीणांवर्गेणसमूहेनवंद्यइतियत्तस्मान्मुग्धाद्बलेःपूजामवाप्यापितंबद्ध्वापातालनिवासिनमकरोदित्यर्थः बलपरिवर्तनइतिधातोः बलिमिंद्रस्यविद्यमानेत्रैलोक्येपरिवर्तमानंपरकीयंस्वीयवत्वशंकृत्वाचर णलक्षणंचौर्याख्यापराधंदृष्ट्वादुष्टशिक्षणंकृतवानित्याध्यात्मार्थः बकारवकारयोःअन्योन्यात्मकमनुशासनसिद्धं कृष्णःकीदृशः वेदविदांवैदिकानांवर्गोवर्जनंयेषुतवेदाविद्वर्गाबंद्यादयःतैःवंद्यइत्यनेनाविद्य मानकथननिपुणत्वेनास्मन्मनोमोहनंकृत्वाहतवानितिसूचितं निंदास्तुतीउपसंहरति तदिति यतोऽयंकृष्णोस्मासुशोकाधानमकरोत्तस्मादसितेनमलिनेनकृष्णेनसहसख्यैःसहासनशयनादिलक्षणैरलंवा रितं असितस्यमेघश्यामस्यनित्यमुक्तस्यवा षिञ्बंधनइतिधातुः हरेःसख्यशब्देनार्चनादिकमुपलक्ष्यते अर्चनादिभिरलंभूषणमात्मनइतिशेषः निर्विण्णाचेत्किमितितत्प्रसंगंकरोषीतितत्राह दुस्त्यजइति तस्यकृष्णस्यकथार्थः चरितविषयव्यवहारोदुस्त्यजस्त्यक्तुमशक्यःपारवश्यादितिशेषः किंचदुःखंत्यजतीति यद्वातस्यकथानिवृत्तिः अशोभनंददातीति १७ गुणाअप्यनेनसूचिताइतिप्रकटनायोत्तर

**मृगयुरिवकपींद्रंविव्यधेयःकिरातःस्त्रियमकृतविरूपांस्त्रीजितःकामयानाम् बलिमपिबलिमत्त्वावेष्टयद्ध्वांक्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः १७ यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वंद्वधर्माविनष्टाः ॥ सपदिगृहकुटुंबंदीनमुत्सृज्यदीनाबहवइहविहंगाभैक्षचर्यांचरंति १८ वयमृतमिव जिह्मव्याहृतंश्रद्दधानाःकुलिकरुतमिवाज्ञाःकृष्णवध्वोहरिण्यः ॥ ददृशिमसकृदेतत्तन्नखस्पर्शतीव्रस्मररुजउपमंत्रिन्भण्यतामन्यवार्ता १९**

बंधेनगुणानेवाह यदनुचरितेति यस्यकृष्णस्यानुवचनमनुयुगंवान्ववतारंवाचरितालीलैवकर्णपीयूषंकर्णामृतंतस्यविप्रुट्बिंदुस्तस्यसकृददनेनएकवारश्रवणलक्षणेनविधूताद्वंद्वधर्मारागादिलक्षणायेषां ते तेचाविनष्टाअनुच्छिन्नज्ञानधर्माश्च अनुच्छित्तिधर्मेतिश्रुतेः विनष्टाइतिपृथक्पदंवा विगतंनष्टंनाशनयेभ्यस्तेतथा मुक्तावपिस्वरूपभेदधर्मरहितानभवंतीत्यर्थः सवाअयमात्माब्रह्मविज्ञानमयोमनोमयइ त्यादिश्रुतेः सपदिवैराग्यज्ञानानंतरंदीनंदारिद्र्यापादकंकुटुंबंविसृज्यदीनाः दीङ्क्षयइतिधातोः दीनानिर्दोषाइत्यर्थः बहवोविहंगाःविहायसनाम्नाकाशेनहरिणाधारेणगच्छंतीतिविहंगाः संन्यासिनइहजी वराशौभैक्षचर्यांज्ञानलक्षणामुद्दिश्यचरंति देहयात्रांकुर्वंति ज्ञानार्थमेवतेषांदेहधारणनोदरपूरणार्थमित्यर्थः प्रव्रजंत्येतद्धस्मवैतेपूर्वेविद्वांसःप्रजांनकामयंतेकिंप्रजयाकरिष्यामोयेषांनोयमात्मायंलोकइतितेह स्मपुत्रैषणायाश्चवित्तैषणायाश्चलोकैषणायाश्चव्युत्थायाथभिक्षाचर्यांचरंतीतिश्रुतेः १८ कृष्णवध्वोवयंयस्याजिह्मंकुटिलंव्याहृतंवचनमृतसत्यमितिश्रद्दधानाः यथाअज्ञाःकृष्णमृगवध्वोहरिण्यःकुलिकस्य मृगविश्वासकर्तुःरुतंगीतंनानाप्रकारंश्रद्दधते आस्तिक्यबुद्धिंकुर्वंति तथातस्यैतस्यसकृन्नखस्पर्शनेननखस्पर्शापेतापनोत्पन्नेनतीव्रेणस्तनानांरुजेनक्षतेनजातायातापरमांअत्युत्कटातिसुखलक्षणापीडांददृ शिमअनुबभूविमेतियत्ततोस्यवार्ताभण्यतां श्रुतयातयाप्यानंदमाशास्महइति जिह्मंमंदमल्पमपिव्याहृतमितिपदतःश्रद्दधानाःईश्वराणांवचःसत्यंतथैवाचरितंक्वचिदितिवचनात् जिह्ममदेभवक्रयोरिति स्वध्वनिसाहृदयाद्धारिणीनांकुलिकरुतवशत्वंनत्वसत्यंतादित्यध्यात्मंयोज्यंअन्यवार्तेतिकेचित् अन्यविषयंवचनंनत्वेतद्विषयं सर्वस्मादन्यस्यविलक्षणस्यभिन्नस्येतिवा १९

आत्मनःकृष्णैकचित्तत्वंदर्शयंतीग्रहाविष्टेववाक्ये प्रियेति हेप्रियसख प्रियस्यकृष्णस्यसखे पुनरागाः पश्चाद्व्यावृत्त्यागतोऽसि पुनरथमेप्रश्नेव्यावृत्तावधारणइति त्वंप्रेयसाकृष्णेनपुनःप्रेषितःअसि किमनुरुंधेकमर्थमस्मत्तःस्वीकर्तुमिच्छतीतितंवरय प्रेष्ठबंधुत्वात्त्वमस्माकंमाननीयोसि आत्मनोनेतुमागतइतिभ्रांतबुद्धिराह अंगेति अंगभोउद्धव इहस्थितानस्मान्दुस्त्यजंबंधोःकृष्णस्यपार्श्वंसमीपंनय सिध्दिंदौर्घट्यामित्यतःसपत्नीबुद्ध्यानशक्यमित्याहसततमिति श्रीनामवधूस्तस्योरसिसततमास्ते सततशब्दःआपेक्षिकइतितत्राह साकमिति अर्धांगित्वेनआस्तइति सपत्न्याःलक्ष्म्याःकदापिवियोगाभावात् त्वस्त्रीतानांतद्दर्शनमपिदुर्लभं किंपुनःसंभाषणंकिंनितरांतच्चर्वितादानंकुतस्तमांसुरतललितुंभवइत्यास्तामयंप्रसंगइति २० इदंचोन्मत्तप्रलपितसममित्याह अपीति अधुनाआर्यस्यपूज्यस्यवसुदेवस्यपुत्रःश्रीकृष्णःमधुपुर्यांबतलोकस्यमनःसंतोषंविधायआस्तेअपिकिं किंचसकृष्णःपितुर्नंदस्यगेहंमायांयशोदातंवापितरंस्मरत्यपि किंचबंधुभूतान्गोपांश्चस्मरति अपिचसकृष्ण काचित्कचनकालमादायाकिंकरीणांनोस्माकंगृहीतोपिअनुग्रहंकरोतिकिंवद कोयमनुग्रहइतितत्राह भुजमिति कदानुअगुरुवत्सुगंधंभुजमस्मन्मूर्ध्निअधास्यत्धारयिष्यति तदपिवक्तव्यमित्यर्थः यद्यागमिष्य

प्रियसखपुनरागाःप्रेयसाप्रेषितस्त्वंवरयकिमनुरुंधेमाननीयोसिमेंऽग ॥ नयसिकथमिहास्मान्दुस्त्यजंबंधुपार्श्वंसततमुरसिसौम्यश्रीर्वधूःसाकमास्ते २० अपिबतमधुपुर्यामार्यपुत्रोऽधुनास्तेस्मरतिसपितृगेहंसौम्यबंधूंश्चगोपान् ॥ क्वचिदपिसकथंनःकिंकरीणांगृहीतोभुजमगुरुसुगंधंमूर्ध्न्यधास्यत्कदानु २१ श्रीशुकउवाच ॥ अथोद्धवोनिशम्यैवंकृष्णदर्शनलालसाः ॥ सांत्वयन्प्रियसंदेशैर्गोपीरिदमभाषत २२ अहोयूयंस्मपूर्णार्थाभवत्योलोकपूजिताः ॥ वासुदेवेभगवतियासामित्यर्पितामतिः २३ दानव्रततपोहोमजपस्वाध्यायसंयमैः ॥ श्रेयोविर्विधिभिरन्यैश्चकृष्णेभक्तिर्हिसाध्यते २४ भगवत्युत्तमश्लोकेभवतीभिरनुत्तमा ॥ भक्तिःप्रवर्तितादिष्ट्यामुनीनामपिदुर्लभा २५ दिष्ट्यापुत्रान्पतीन्देहान्स्वजनान्भवनानिच ॥ हित्वावृणीतयूयंयत्कृष्णाख्यंपुरुषंपरम् २६ सर्वात्मभावोऽधिगतोभवतीनामधोक्षजे ॥ विरहेणमहाभागामहान्वोऽनुग्रहःकृतः २७ श्रूयतांप्रियसंदेशोभवतीनांसुखावहः ॥ यमादायागतोभद्राअहंभर्तुर्हिकिंकरः २८ श्रीभगवानुवाच ॥ भवतीनांवियोगोमेनहिसर्वात्मनाक्वचित् ॥ यथाभूतानिभूतेषुखंवाय्वग्निर्जलंमही २९ तथाहंचमनःप्राणबुद्धींद्रियगुणाश्रयः ॥ आत्मन्येवात्मनात्मानंसृजेहन्म्यनुपालये ३०

त्यद्यधास्यत्वसंदेहः तदागमनंकदान्वितिपृच्छामीतिवा २१ २२ पूर्णार्थाःकृतकृत्याःइतिशब्दोहेत्वर्थः २३ शास्त्रतोनियमकरणंव्रतं संयमइंद्रियनिग्रहः हितसाधनानुष्ठानंश्रेयोविधिः २४ दुर्लभेतिवचनंभक्तेःकर्तव्यत्वपरं नतुमुनीनांतादृशीभक्तिर्नास्तीति २५ यूयंकृष्णाख्यंपरमपुरुषंवृणीतेतियत्तद्दिष्ट्यासदैवानुग्रहः २६ भवतीनांसर्वात्मनाअखंडस्वामिनाहरिणासहभावोलीलाधिगतःप्राप्तइतियदतोविरहेणमहाननुग्रहःकृतइतिमन्ये २७ इदानींकृष्णसंदेशंवक्तुमुपक्रमते श्रूयतामिति २८ सर्वात्मनासर्वप्रकारेणानिरूप्यमाणेसति एतमर्थंदृष्टांतेनोपपादयति यथेति यथापंचभूतानिभूतेषुचराचरशरीरेषुकारणत्वेनानुगतानि तथाहं कानितानिभूतानीत्यतआह खमित्यादिना वाय्वग्निरितिछांदसःप्रयोगः २९ सामान्यतउक्तंविशिनष्टि अहमिति नन्वप्रमुख्यकारणत्वंकथमेतित्राह आत्मनापरमेश्वरेणामंतरेणात्मानंदेहादिसर्वंसृजेहन्मिसंहरामि अनुपालयेरक्षामीति ननुतर्हिभूतवत्त्वंतदभिन्नःकिमित्यतउक्तं आत्मनीति ३०

स्वाधारत्वेनातत्त्वेनआत्मनेत्युक्तंविवृणोति आत्मेति आत्ममायानुभावेनस्वरूपेच्छानिश्चयेन निश्चयंविशिनष्टि भूतेति भूतादीन्व्याप्यवर्तमानेन अनेनभूतादीनामवांतरकारणत्वेननतत्कारणत्वो क्तिविरोधः भूतेंद्रियगुणात्मनेत्यनेनजडरूपत्वंपरमात्मनःप्राप्तंनिवारयति आत्मेति ज्ञानमयःपूर्णज्ञानःगुणानांसत्त्वादीनामन्वयोयस्यसतथा नकेवलंज्ञानमेवगुणोस्यकिंत्वन्येप्यानंदादयःसंतीत्यतोवोक्तं गुणान्वयइति आनंदादिगुणानामन्वयोयस्मिन्सतथा ३१ उक्तार्थेकिंप्रमाणमितितत्राह सुषुप्तीति माययाहरेरिच्छयावृत्तिःस्वरूपलाभोयासांतास्तथाताभिः स्वापादिकंसकर्तृकंकार्यत्वात्घटव दित्याद्यनुमानंपक्षधर्मताबलेनेयतेज्ञायतइत्यर्थः ३२ उपजीव्यप्रमाणाभावेनानुमानस्यदुर्बलत्वंस्यादितितत्राह एतदंतइति समाम्नायःनिर्दोषआगमःएतस्यानुमानार्थस्यांतोनिर्णयोयस्मात्सतथा अंतोऽध्यवसितेमृत्याविति च नकेवलमनुमानेनायमर्थःसंपद्यतेवेदादिनापीतिभावेनचाह एतदंतइति हरितत्त्वनिर्णायकःएतज्ज्ञानपर्यवसायीत्यर्थः वासुदेवपरावेदावासुदेवपरामखाः वासुदेव

आत्ममायानुभावेनभूतेंद्रियगुणात्मना ॥ आत्माज्ञानमयःशुद्धोव्यतिरिक्तोगुणान्वयः ३१ सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते ३२ एतदंतःसमाम्नायोयोगःसांख्यंमनीषिणाम् ॥ त्यागस्तपोदमःसत्यंसमुद्रांताइवापगाः ३३ यत्त्वहंभवतीनांवैदूरेवर्त्येप्रियोदृशाम् ॥ मनसःसन्निकर्षार्थंमदनुध्यानकाम्यया ३४ यथादूरतरेप्रेष्ठेमनआविश्यवर्तते ॥ स्त्रीणांचनतथाचेतःसन्निकृष्टेऽक्षगोचरे ३५ मय्यावेश्यमनःकृत्स्नंविमुक्ताशेषवृत्तियत् ॥ अनुस्मरंत्योमांनित्यमचिरान्मामुपैष्यथ ३६ यन्मयाक्रीडितारात्र्यांवनेऽस्मिन्व्रजआस्थिताः ॥ अलब्धरासकल्याणाआपुर्मांमद्वीर्यचिंतया ३७ श्रीशुकउवाच एवंप्रियतमादिष्टमाकर्ण्यव्रजयोषितः ॥ ताऊचुरुद्धवंप्रीतास्तत्संदेशागतस्मृतीः ३८ गोप्यऊचुः ॥ दिष्ट्याऽहितोहतःकंसोयदूनांसानुगोऽघकृत् ॥ दिष्ट्याप्तैर्लब्धसर्वार्थैःकुशल्यास्तेऽच्युतोऽधुना ३९ कच्चिद्गदाग्रजःसौम्यकरोतिपुरयोषिताम् ॥ प्रीतिंनःस्निग्धसव्रीडहासोदारेक्षणार्चितः ४० कथंरतिविशेषज्ञःप्रियश्चपुरयोषिताम् ॥ नानुबध्येततद्वाक्यैर्विभ्रमैश्चानुभाजितः ४१ अपिस्मरतिनःसाधोगोविंदःप्रस्तुतेक्वचित् ॥ गोष्ठीमध्येपुरस्त्रीणांग्राम्यःस्वैरकथांतरे ४२ ताःकिंनिशाःस्मरतियासुतदाप्रियाभिर्वृंदावनेकुमुदकुंदशशांकरम्ये ॥ रेमेक्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथःकदाचित् ४३ अप्येष्यतीहदाशार्हस्तप्ताःस्वकृतयाशुचा ॥ संजीवयन्नुनोगात्रैर्यथेंद्रोवनमंबुदैः ४४

परायोगाइत्यादेःत्यागोदुर्दर्शनाभ्यासवर्जनम् सत्यंसत्यभूतंवाक्यम् अत्रदृष्टांतमाह समुद्रांताइति ३३ कस्त्यजेन्मांभवाद्दगित्युक्तिपरिहारमिवाह यस्त्विति योहमंतिकेवर्तमानोपिभवतीनांदृशांदूरेवर्तीतिप्रतीयतइतियत्तन्मदनुध्यानकाम्ययानिरंतरमदुपासनेच्छया मनःसन्निकर्षार्थंकृतमित्यन्वयः ३४ निदर्शनेनैतमर्थमुपपादयति यथेति चशब्दात्पुरुषाणामितिग्राह्यम् प्रेष्ठेप्रियतमेपदार्थेपूर्वानुभूतइतिशेषः अक्षगोचरेइंद्रियविषये ३५ लोकेप्रियतमस्मरणेफलसंदेहोनतथामत्स्मरणंफलनिश्चयादितिभावेनाह मयीति यद्विमुक्ताअशेषावृत्तयोयस्यतत्तथा तन्मनःमय्यावेश्यनित्यंमामनुस्मरंत्योयूयंशीघ्रंमांतथाउपेष्यथेत्यन्वयः ३६ अस्मिन्नर्थेस्वानुभूतमर्थंप्रमाणयति यन्मयेति यद्यथाव्रजेआस्थिताअस्मिन्वनेअलब्धरासकल्याणाःअप्राप्तगृहसुखाःयूयंमयारात्रौ क्रीडिताःमद्वीर्यचिंतयामामापुः एवमितिशेषः ३७ तत्संदेशेनागतभगवद्विशेषस्मरणाः ३८ यदूनाम्हितः आप्तैर्जनैः ३९ ४० तत्तद्वाक्यैःकथंनानुबध्येतविभ्रमैःशृंगारचेष्टाभिःअनुभाजितःसभाजितः ४१ ग्राम्याणांशब्दादिविषयलालसानांस्वैरकथांतरेस्वच्छंदविषयस्यव्यवहारविशेषेप्रस्तुतेप्रसक्ते ४२ यासुनिशासु ४३ गात्रैःस्वपदैः ४४

अदीर्घेणकालेनागमिष्यामीतिपदुक्तंतत्स्तोभनमात्रम् आगमनेनिमित्ताभावादित्याह कस्मादिति ४५ कृतात्मनःपूर्णरूपस्यअर्थोविषयःकिंक्रियेतकिंसुखंकुर्यात् ४६ कृष्णस्यपूर्णकामत्वात्तत्तथास्तुयु ष्माकंसुखानिमित्तंकितत्राह परमितिआशाअतितृष्णा ४७ नकेवलमस्माकमेवकृष्णाशादुस्त्यजा अन्यस्यापीत्याहुः कइति ४८ आक्रीडिताःक्रीडारंगीकृताः इमेसरिदादयः ४९ नंदगोपसुतंपुनःपुनः स्मारयंतिबतआश्चर्यं ननुसरिदादिदर्शनएवश्रीकृष्णस्मरणंअन्यद्दानास्तीत्यायातमितितत्राह श्रीनिकेतइति तस्यश्रीकृष्णस्यपदकेप्रशस्तपदे प्रशस्तत्वंकुतइत्यतउक्तम् श्रीनिकेतइति ५० उक्तमेवद्र ढयति गत्येति ५१ नित्यंस्वजाप्यंविज्ञापयंति हेनाथेति ऐश्वर्यमूर्ते रमायाअपिआशीःप्रद व्रजनाथानांगोपानांआर्तिनाशन मग्नंदुःखार्णवेइतिशेषः गवांविदोलाभोयस्मात्सतथा गोविंद इति ५२ ॥ इतिश्रीभागवतेम०दशमस्कंधेविजयध्वजकृतटीकायांपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ भक्तिमेवनिरूपयत्यस्मिन्नध्याये तत्रादौगोप्यःउद्धवंकृष्णबुद्ध्यापूजयंतिस्मेत्याह शुकइति १ वि

कस्मात्कृष्णइहायातिप्राप्तराज्योहताहितः ॥ विहृत्यनगरस्त्रीभिःप्रीतःसर्वसुहृद्वृतः ४५ किमस्माभिर्वनौकोभिरन्याभिर्वामहात्मनः ॥ श्रीपतेराप्तकामस्यक्रियेतार्थःकृतात्मनः ४६ परंसुखंहिनैराश्यंस्वैरिण्यप्याहपिंगला ॥ तज्जानतीनांनःकृष्णेतथाप्याशादुरत्यया ४७ कउत्सहेतसंत्यक्तुमुत्तमश्लोकसंविदम् ॥ अनिच्छतोपियस्यश्रीरंगान्नच्यवतेक्वचित् ४८ सरिच्छैलवनोद्देशागावोवेणुरवाइमे ॥ संकर्षणसहायेनकृष्णेनाक्रीडिताविभो ४९ पुनःपुनःस्मारयंतिनंदगोपसुतंबत ॥ श्रीनिकेतैस्तत्पदकैर्विस्मर्तुंनैवशक्नुमः ५० गत्याललितयोदारहासलीलावलोकनैः ॥ माध्व्यागिराहृतधियःकथंतंविस्मरामहे ५१ हेनाथहेरमानाथव्रजनाथार्तिनाशन ॥ मग्नमुद्धरगोविंदगोकुलंवृजिनार्णवात् ५२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपंचचत्वारिंशोऽध्यायः ४५ श्रीशुकउवाच ॥ ततस्ताःकृष्णसंदेशैर्व्यपेतविरहामयाः ॥ उद्धवंपूजयांचक्रुर्ज्ञात्वात्मानमधोक्षजे १ उवासकतिचिन्मासान्गोपीनांविनुदन्शुचः ॥ कृष्णलीलाकथागायन्रमयामासगोकुलम् २ यावंत्यहानिनंदस्यव्रजेऽवात्सीत्सउद्धवः ॥ व्रजौकसांक्षणप्रायाण्यासन्कृष्णस्यवार्तया ३ सरिद्वनगिरिद्रोणीर्वीक्षन्कुसुमितान्द्रुमान् कृष्णक्रीडासमरेमेहरिदासोव्रजौकसाम् ४ दृष्ट्वैवमादिगोपीनांकृष्णावेशात्मविक्लवम् ॥ उद्धवःपरमप्रीतस्तानमस्यन्निदंजगौ ५ उद्धवउवाच ॥ एताःपरंतनुभृतोभुविगोपवध्वोगोविंदएवमखिलात्मनिरूढभावाः ॥ वांछंतियद्भवभियोमुनयोवयंचकिंब्रह्मजन्मभिरनंतकथारसस्य ६

नुदन्परिहरन् कृष्णस्यलीलाःयासुतास्तथा २ अवात्सीत्उवास क्षणप्रायाणिक्षणकल्पानि ३ पार्श्वद्वयोन्नतनिम्नानिम्नकुसुमितवृक्षनिविष्टास्थलीद्रोणीसानुविशेषः व्रजौकसांकृष्णक्रीडास्मरणंयथाभवतितथेतिक्रियाविशेषणम् सुखंकृत्वारेमे हरिदासउद्धवः ४ गोपीनामेवमादिकृष्णावेशात्मविक्लवंदृष्ट्वानमस्यन्प्रावण्यकुर्वन् ५ अखिलात्मनिपूर्णात्मनिगोविंदेदृढभावाः एवंनित्यमतिवर्धमानभक्त्याएतागोपवध्वस्तनुभृतांमध्येपरमुत्तमंशरीरभरणफलमाजइत्यन्वयः मुन्यादयःसत्सुकांक्षीशिष्योच्यतइतितत्राह वांछंतीति भवभियःभद्रबुद्ध्यापिमुनयःयद्भाक्तिलक्षणंमुक्तिसाधनंवांछंति वयंचवांछामःनास्त्वित्यर्थंप्रभवाम तत्रकोहेतुरित्यतोवोक्तंभवभियइति संसारोद्विग्नबुद्धित्वादित्यर्थः भवभयादितिपाठेसंसारभयंसंदर्श्येतिल्यब्लोपेपंचमी मुनीनांब्रह्मकुलोत्पन्नोत्तमत्वात्किनिंदितुरिवब्रवीषीतितत्राह किंब्रह्मेति यत्रयेषुब्राह्मणजनेनषुअनंतस्यहरेःकथानास्तितैःकिं नकिमपिप्रयोजनम् जीवन्मृतत्वादित्यर्थः ६

इमाःस्त्रियःक्क कृष्णेएषरूढभावःक्क अन्वयानुपपत्तेःकथमिमिततत्राह वनचराइति तेऽगार्थवनचरत्वंकिंनस्यादित्यतउक्तं व्यभिचारेति व्यभिचारशीलाः अनैकांतिकस्वभावाः अनियतभर्तृभिःरति युक्ताइत्यर्थः शीलंवृत्तस्वभावयोरितिकृष्णगोपिकयोश्चिद्वोपःकिंनस्यादित्यतउक्तं परमात्मनीति अनन्वयेकिमर्थंश्रेयःप्रयच्छतीत्यतोभक्तिरेवप्रयोजिकेत्याशयेनाह नन्विति अविदुषोपिशास्त्रोक्तिमजान तोपिअनुभजतःस्वयोग्यतानुरोधेनभक्तिंकुर्वतःपुंसःईश्वरःसाक्षाच्छ्रेयस्तनोति नन्वित्यनेन भक्त्यात्वनन्यपाशक्यअहमेवंविधोर्जुनेत्यैतिह्यदर्शयति प्रश्नावधारणैतिह्यसमीहानुमतेनन्विति उपयुक्तः से वितोऽगदराजःऔषधश्रेष्ठंरोगिकमनुकूलंफलंददातियथातथात्रापीति ७ यःप्रसादव्रजवल्लवीनांगोष्ठस्थानांगोपीनांउदगात् उदितः अयंभक्त्यानितांतरतेःश्रियःस्वर्योषितांचनास्ति नन्वस्माभि रनुज्ञातंनतुशास्त्रेणेत्यर्थः कीदृशीनांस्वर्गांगनानांललितांगरुचांअखिलविलासोपेतशरीरकांतीनां कथंभूतानांगोपीनांरासक्रीडोत्सवेअस्यकृष्णस्यभुजदंडेनगृहीतकंठाश्चलब्धाशिषश्चसुरतसुखोद्बोध कत्वभवाक्यप्रबंधाश्चयास्तासांअन्याःअन्यासांस्त्रीणां बहुलंछंदसीतिविभक्तिव्यत्ययविधानात् अन्यस्त्रियईदृशप्रसादंनापुरिति कुतइतिवा ८ अहंआसांगोपीनांचरणरेणुजुषावृंदावनेप्ररूढा

क्वेमाःस्त्रियोवनचराव्यभिचारशीलाःकृष्णेक्वचैवपरमात्मनिरूढभावः ॥ नन्वीश्वरोनुभजतोविदुषोपिसाक्षाच्छ्रेयस्तनोत्यगदराजइवोपयुक्तः ७ नायंश्रियोनतुनितांतरतेःप्रसादःस्वर्योषितांचललितांगरुचांकुतोन्यः ॥ रासोत्सवेऽस्यभुजदंडगृहीतकंठलब्धाशिषांयउदगाद्व्रजवल्लवीनाम् ८ आसामहोचरणरेणुजुषामहंस्यांवृंदावनेकिमपिगुल्मलतौषधीनाम् ॥ यादुस्त्यजंस्वजनमार्यपथंचहित्वाभेजुर्मुकुंदपदवींश्रुतिभिर्विमृग्याम् ९ यावैश्रियार्चितमजादिभिराप्तकामैर्योगेश्वरैरपियदात्मनिरासगोष्ठ्याम् ॥ कृष्णस्यतद्भगवतश्चरणारविंदंन्यस्यस्तनेषुविजहुःपरिरभ्यतापम् १० वंदेनंदव्रजस्त्रीणांपादरेणुमभीक्ष्णशः ॥ यासांहरिकथोद्गीतंपुनातिभुवनत्रयम् ११ श्रीशुकउवाच ॥ अथगोपीरनुज्ञाप्ययशोदांनंदमेवच ॥ गोपानामंत्र्यदाशार्होयास्यन्नारुरुहेरथम् १२ तंनिर्गतंसमासाद्यनानोपायनपाणयः ॥ नंदादयोनुरागेणप्रावोचन्नश्रुलोचनाः १३ मनसोवृत्तयोनःस्युःकृष्णपादांबुजाश्रयाः ॥ वाचोभिधायिनीर्नाम्नांकायस्तत्प्रवणादिषु १४ कर्मभिर्भ्राम्यमाणानांयत्रक्वापीश्वरेच्छया ॥ मंगलाचरितैर्दानैरतिर्नःकृष्णईश्वरे १५ एवंसभाजितोगोपैःकृष्णभक्त्यानराधिप ॥ उद्धवःपुनरागच्छन्मथुरांकृष्णपालिताम् १६ कृष्णायप्रणिपत्याहभक्त्युद्रेकंव्रजौकसाम् ॥ वासुदेवायरामायराज्ञेचोपायनान्यदात् १७ ॥ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ ॥ ॥ छ ॥

नांगुल्मलतौषधीनांमध्येगुल्मादिकंकिमपिस्याउद्धवेयं अहोअमीषांपूर्वजन्मार्जितपुण्यराशिः यागोप्यःस्यक्तुमशक्यंस्वजनंभर्त्रादिकंआर्यपथंस्मार्तमार्गंनियतस्वभर्तृसंगविषयंहित्वा वेदशिरोभिरपि मार्गणीयांमुकुंदपदवींभेजुरित्यन्वयः ९ श्रियाऽजादिभिःब्रह्मादिभिराप्तकामैःसत्यसंकल्पैः योगेश्वरैःसनकादिभिरपिआत्मानेहृदयेनिगाप यदर्चितयागोप्यःकृष्णस्यभगवतश्चरणारविंदंस्तने षुन्यस्यपरिरभ्य कामनिमित्तसंतापंविजहुः आसामितिपूर्वेणान्वयः १० वंदेस्तौमि ११ १२ १३ नोस्माकंमनसोवृत्तयोव्यापाराःकृष्णपादपद्माश्रयाःस्यु.अस्माकंवाचोनाम्नामभिधायिनीर्वदंत्यः स्युः अस्माकंकायस्तस्यप्रवणादिषुनमस्कारादिषुस्यादित्यन्वयः १४ यत्रक्वापिदेवयोनिषु अचेतनस्यकर्मण.प्रवर्तकत्वकथंघटतइत्यतउक्त ईश्वरेच्छयेति रतिर्भक्तिलक्षणा १५ १६ ॥ १७ ॥ इतिश्री भागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांषट्चत्वारिंशोध्यायः ॥ ४६ ॥

कृष्णसैरंध्र्यादिगृहगमनम् — मूलम्

बादरायणिरुवाच ॥ अथ विज्ञाय भगवान्सर्वात्मा सर्वदर्शनः ॥ सैरंध्र्याः कामतप्तायाः प्रीतिं यच्छन्गृहं ययौ १ महार्होपस्करैराढ्यं कामोपायोपबृंहितम् ॥ मुक्तादामपताकाभिर्वितानशयनासनैः २ धूपैः सुरभिभिर्दीपैः स्रग्गंधैरपि मंडितम् ३ गृहं तमायांतमवेक्ष्य सासनात्सद्यः समुत्थाय हि जातसंभ्रमा ॥ यथोपसंगम्य सखीभिरच्युतं सभाजयामास सदासनादिभिः ४ तथोद्धवः साधुतयाभिपूजितो न्यषीददुर्व्यामभिमृश्य चासनम् ॥ कृष्णोपि तूर्णं शयनं महाधनं विवेश लोकाचरितान्यनुव्रतः ५ सा मज्जनालेपदुकूलभूषणस्रग्गंधतांबूलसुधासवादिभिः ॥ प्रसाधितात्मोपससार माधवं सव्रीडलीलोत्स्मितविभ्रमेक्षितैः ६ आहूय कांतां नवसंगमह्रिया विशंकितां कंकणभूषिते करे ॥ प्रगृह्य शय्यामधिवेश्य रामया रेमेऽनुलेपार्पणपुण्यलेशया ७ साऽनंगतप्तकुचयोरुरसस्तथाऽक्ष्णोर्जिघ्रंत्यनंतचरणेन रुजो मृजंती ॥ दोर्भ्यां स्तनांतरगतं परिरभ्य कांतमानंदमूर्तिमजहादतिदीर्घतापम् ८ सैवं कैवल्यनाथं तं प्राप्य दुष्प्रापमीश्वरम् ॥ अंगरागार्पणेनाहो दुर्भगेदमयाचत ९ आहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया ॥ रमस्व नोत्सहे त्यक्तुं संगं तेऽम्बुरुहेक्षण १० तस्यै कामवरं दत्त्वा मानयित्वा च मानदः ॥ सहोद्धवेन सर्वेशः स्वधामागमदर्द्धिमत् ११ दुराराध्यं समाराध्य विष्णुं सर्वेश्वरेश्वरम् ॥ यो वृणीते मनोग्राह्यमसत्त्वात्कुमतिर्ह्यसौ १२ अक्रूरभवनं कृष्णः सहरामोद्धवः प्रभुः ॥ किंचिच्चिकीर्षन्प्रागादक्रूरप्रियकाम्यया १३ स तान्नरवरश्रेष्ठानाराद्वीक्ष्य स्वबांधवान् ॥ प्रत्युत्थाय प्रमुदितः परिष्वज्याभ्यनंदत १४ पादावनेजनीरापो धारयञ्छिरसा नृप ॥ अर्हणेनांबरैर्दिव्यैर्गंधस्रग्भूषणोत्तमैः १५ अर्चित्वा शिरसानम्य पादावंकगतौ मृजन् ॥ प्रश्रयाऽवनतोऽक्रूरः कृष्णरामावभाषत १६ दिष्ट्या पापो हतः कंसः सानुगः पावितं कुलम् ॥ भवद्भ्यामुद्धृतं कृच्छ्राद्दुरंताच्च समेधितम् १७ युवां प्रधानपुरुषौ जगद्धेतू जगन्मयौ ॥ भवद्भ्यां न विना किंचित्परमस्ति न चापरम् १८

तथा भक्तिरयालंकितगात्रः श्रीनारायणः सत्सु बत वांछितार्थसाधनार्थं अवतीर्ण इत्येतमर्थमभिप्रेत्यास्मिन्नध्याये तत्रादौ सैरंध्र्या अभीष्टसाधनार्थं तद्गृहगमनं वक्ति अथेत्यादिना अथ कथांतरारंभः सैरंध्र्याः गंधकारिकायाः कृष्णागमनकामेन तप्तायाः यच्छन्ददन् १ महार्हैः महतां योग्यैरुपस्करैः उपकरणैरुपेतं कामोपायैः कामभोगसाधनैः उपबृंहितं पूर्णं एतानेव दर्शयति मुक्तेति वितानमुपरिपटः २ ३ येन प्रकारेणोपगमनं कार्यं यथोपसंगम्य सदासनादिभिः ४ साधुतया उचिततया अभिमृश्य परिमृज्य स्पृष्ट्वेत्यर्थः दांतं गजदंतरचितं महता धनेन विक्रीयते आपाद्यते चेति महाधनम् ५ सुधा कल्पा सवादिभिः प्रसाधित आत्मा अलंकृतदेहा सव्रीडलीलादिभिर्युक्ता ६ रतौ निमित्तमाह अनुलेपेति अनुलेपार्पणेन हरेः गंधसमर्पणेन लब्धः पुण्यलेशः पुण्यैकदेशो यया सा तथा तया ७ रुजः कामवरान् संसारज्वरान्वा स्तनांतरगतं वक्षस्थलगतम् ८ ९ १० ११ मनोग्राह्यं शब्दाद्यविषयं मनसाप्यग्राह्यं असत्त्वाद्रागदुष्टत्वात् तत्त्वनिश्चयाभावाद्वा अतएव कुमतिः कुत्सिते शब्दादौ मतिर्यस्याः सा तथा १२ मद्गृहमागंतव्यमिति प्रागुक्तं सत्यं कर्तुं अक्रूरगृहगमनं कृष्णस्य वक्ति अक्रूरेति किं पांडववृत्तांतज्ञानायाक्रूरप्रेषणकार्यं कर्तुमिच्छन् १३ आरात् दूरात् तान्वीक्ष्य १४ पादावनेजनीः पादप्रक्षालिनीः आपः इति पदच्छेदः आद्रियाह्वाच अपो धारयन् अर्हणेन योग्यपूजासाधनेन १५ मृजन् परिमृजन् मृदु पीडयन्नित्यर्थः १६ १७ जगन्मयौ जगद्व्यापिनौ तदेव विशिनष्टि भवद्भ्यामिति १८

अन्वावेश्यपदार्थानामणुत्वमहत्त्वानुकूलतयामविश्य स्वशक्तिभिःइच्छादिस्वरूपशक्तिभिः श्रुतेःप्रत्यक्षस्यचविषयः अनृतेनहिप्रत्यूढाः वाचारंभणंविकारइत्यादिश्रुतेः अयंघटोयंपटइत्यादिनि दोषार्थेंद्रियसंनिकर्षलक्षणंप्रत्यक्षं तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेः ऋतस्यतंतुंविततंविवृत्यतदपश्यदित्यादिश्रुतेः ब्रह्मादिज्ञानिप्रत्यक्षस्यचविषयोवा १९ इममेवार्थंसदृष्टांतंदर्शयति यथेति योनि षुभोगस्थानेषुउत्पत्तिमत्स्वात् भूतशब्दवाच्येषुचराचरेषुपूर्वादृष्टवशात्गमागमेषुवस्तुषुपृथिव्यादयोनानाशुक्लनीलपीताद्यात्मनाभांति आत्मास्वयंयोनिःकारणंयेषांतानितथातेषु आत्मापरमात्मा केवलआत्मतंत्रइतिविशेषणद्वयेनमहान्विशेषोस्तिमहादिभ्यइतिसूचयति २० विश्वस्यात्मयोनित्वंस्पष्टयति सृजसीति केवलत्वंस्पष्टयति नेति गुणैःसत्त्वादिभिः उत्पत्तिहेत्वभावादिति युक्तमितिभावेनाह तइति शून्यस्त्वमितिनेत्याह ज्ञानात्मनइति क्वचकस्मिंश्चिद्देशेकालेच २१ जनितोतविष्णुरितिजन्मप्रतीतेः जातस्यहिध्रुवोमृत्युरितिमरणस्यअवश्यंभावात्कथंनैवहेतुरित्युच्यतइ तिचत्राह देहेति देहादिर्येवोपाधिःदेहाद्युपाधिःतस्योत्पत्तौकारणभूतगुणकर्मणामनिरूपितत्वादसंभावितत्वात्साक्षाद्भवःशुक्रशोणितसंपर्कलक्षणंजन्मनस्यात् हियस्मादतस्तवदेहबंधोनस्यात् देहवि योगलक्षणोमोक्षश्चनैवस्याद्यावदन्यत्रस्यातामतोनोनिकामंयावद्योग्यंत्वयिविवेकःतत्त्वनिश्चायकंज्ञानंस्यादित्यन्वयः २२ साक्षाद्भवोनास्तिचेत्तर्हिकीदृशोस्तीतितत्राह त्वयेति त्वयोदितःप्रकाशितः

आत्मसृष्टमिदंविश्वमन्वावेश्यस्वशक्तिभिः ॥ ईयतेबहुधाब्रह्मन्श्रुतिप्रत्यक्षगोचरः १९ यथाहिभूतेषुचराचरेषुमह्यादयोयोनिषुभांतिनाना ॥ एवंभवा न्केवलआत्मयोनिष्वात्मात्मतंत्रोबहुधाविभाति २० सृजस्यथोलुंपसिपासिविश्वंरजस्तमःसत्त्वगुणैःस्वशक्तिभिः ॥ नबध्यसेत्वंगुणकर्मभिर्वाज्ञानात्मनस्ते क्वचनैवहेतुः २१ देहाद्युपाधेरनिरूपितत्वाद्भवोहिसाक्षान्नचिदात्मनःस्यात् ॥ अतोनबंधस्तवनैवमोक्षःस्यातांनिकामंत्वयिनोविवेकः २२ त्वयोदितो यंजगतोहितायंयदायदावेदपथःपुराणः ॥ बाध्येतपाखंडपथैरसद्भिस्तदाभवान्सत्त्वगुणंबिभर्ति २३ सत्वंप्रभोद्यवसुदेवगृहेवतीर्णःस्वांशेनभारमपनेतु मिहासिभूमेः ॥ अक्षौहिणीशतवधेनसुरेतरांशराज्ञाममुष्यचकुलस्ययशोवितन्वन् २४ अद्येशनोवसतयःखलुभूरिभागायत्सर्वदेवपितृभूतनृदेवमूर्तिः ॥ यत्पादशौचसलिलंत्रिजगत्पुनातिसत्वंजगद्गुरुरधोक्षजयाःप्रविष्टः २५ कःपंडितस्त्वदपरंशरणंसमीयाद्भक्तप्रियादृतगिरःसुहृदःकृतज्ञात् ॥ सर्वान्ददाति सुहृदोभजतोपिकामानात्मानमप्युपचयापचयौनयस्य २६ दिष्ट्याजनार्दनभवानिहनःप्रतीतोयोगेश्वरैरपिदुरापगतिःसुरेशैः ॥ छिंध्याशुनःसुतकलत्र धनाप्तगेहदेहाभिमोहरशनांभवदीयमायाम् २७ इत्यर्चितःसंस्तुतश्चभक्तेनभगवान्हरिः ॥ अक्रूरंसस्मितंप्राहगीर्भिःसंमोहयन्निव २८

अयंभवोदेहयोगलक्षणोजगतोहितायज्ञानलक्षणायभवति कथमितितत्राह यदेति २३ एतदेवाविशिनष्टि सत्वमिति अमुष्यकुलस्ययदूपपदस्य २४ हेअधोक्षज सर्वेदेवादयोमूर्तयःप्रतिमायस्यसतथा जगद्गुरुःसत्वंयावसतीःप्रविष्टः हेईश अद्यतावसतयोनोस्माकं गृहाःभूरिभागाःपूर्णभाग्याःअभवन्खलु नैतच्चित्रमित्याह यत्पादेति २५ एकमेवाद्वितीयमितिश्रुत्यर्थंगुरुमुखात्सम्यग्ज्ञातवानहंत्वामतःस्तौ मीत्याशयेनाह कइति भक्तप्रियात्ऋतगिरइतिपदच्छेदःभक्तप्रियाद्दृतगीश्चेतिवा तस्माद्भजतःसेवमानस्यसुहृदःफलापेक्षारहितस्यआत्मानमपिसायुज्यलक्षणंमोक्षमपिस्वात्मानमपिसारूप्यंवा यस्योपच यापचयौवृद्धिक्षयौनस्तइत्यनेनकृष्णस्यबाल्यवार्धकादिकंनस्वाभाविकमितिदर्शितम् २६ योगेश्वरादिभिरपिदुरापगतिःदुष्प्रापस्वरूपोभवान्नःप्रतीतःप्रतीतिविषयंगतइत्यतइदंकर्तव्यमितिप्रार्थयते किंतदित्तितत्राह छिंधीति भवदीयमायांभवदाज्ञाकरींबंधकशक्तिंछिंद्धीत्यन्वयः किंविधामत्राह सुतेति मोहलक्षणारशनांरज्जुम् २७ लोकविषयाभिर्गीर्भिःसंमोहयन् तत्त्वज्ञानंअन्यथाकुर्वन्निव त्यक्रूरस्येत्यन्वयः २८

२९ अर्हाणांपूज्यानांमध्येश्रेष्ठाःदेवाःस्वार्थाःस्वप्रयोजननिरताः आत्मार्चकेभ्योऽर्चनादितृप्तिलक्षणंप्रयोजनंप्राप्यफलानांदातारःनतुसर्वसमाइत्यर्थः साधवःस्त्वर्वतुल्याः नस्वार्थपरायणाः परार्थैकनि ष्ठाइत्यर्थः समाश्चीवत्सरेधातुसर्वेतुल्येषुवाच्यवदितियादवः ३० देवाअपिहिअम्मयादिशब्दवाच्यानभवंति तत्रसंनिहितत्वात् तासांदेवशब्दवाच्यत्वमितिभावेनाह नहीति अम्मयानिजलमया नितीर्थशब्दवाच्यानिनभवंति किंतुतत्साहितानिदैवतानि किमतइतितत्राह तइति तेउरुकालेनकृतयासेवया ३१ पांडवानांवृत्तिजिज्ञासार्थंकाचिच्छ्रेयश्चिकीर्षयेत्यस्याविवरणमेतत् गजेनस मआह्वयोयस्यसतथा हास्तिनापुरमित्यर्थः ३२ शतशृंगगिरिनिवासिभिःऋषिभिरानीताराज्ञःसहवसंतेस्मसंति स्वमाहिमानमाच्छाद्येतिशेषइत्यगतआत्मनेपदम् ३३ तत्रहेतुर्दुर्धदृगिति तत्त्वज्ञान शून्यत्वात् ३४ तद्विधास्यामःतथाकरिष्यामःशंसुखम् ३५ ३६ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांसप्तचत्वारिंशोऽध्याय॰ ४७ योग्यानांभगवतिहरौस्वतएवभक्तिःप्रका

श्रीभगवानुवाच ॥ त्वंनोगुरुःपितृव्यश्चश्लाघ्योबंधुश्चनित्यदा ॥ वयंतुरक्ष्याःपोष्याश्चअनुकंप्याःप्रजाहिवः २९ भवद्विधामहाभागनिषेव्याअर्हसत्तमाः ॥ श्रेयस्कामैर्नृभिर्नित्यंदेवाःस्वार्थानसाधवः ३० नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः ॥ तेपुनंत्युरुकालेनदर्शनादेवसाधवः ३१ सभवान्सुहृदां वैनःकिंचिच्छ्रेयश्चिकीर्षया ॥ जिज्ञासार्थंपांडवानांगच्छस्वगजसाह्वयम् ३२ पितर्युपरतेबालाःसहमात्रासुदुःखिताः ॥ आनीताःस्वपुरंराज्ञावसंतइति शुश्रुम ३३ तेषुराजांबिकापुत्रोभ्रातृपुत्रेषुदीनधीः ॥ समोनवर्ततेनूनंदुष्पुत्रवशगोंधदृक् ३४ गच्छजानीहितद्वृत्तमधुनासाध्वसाधुवा ॥ विचार्यतद्विधा स्यामोयथाशंसुहृदांभवेत् ३५ इत्यक्रूरंसमादिश्यभगवान्हरिरीश्वरः ॥ संकर्षणोद्धवाभ्यांवैततःस्वभवनंययौ ३६ इतिश्रीभागवतेमहापुराणेदशम स्कंधेपूर्वार्धेसप्तचत्वारिंशोऽध्यायः ४७ श्रीशुकउवाच ॥ सगत्वाहास्तिनपुरंपौरवेंद्रयशोंकितम् ॥ ददर्शतत्रांबिकेयंसभीष्मंविदुरंपृथाम् १ सहपुत्रंचबा ह्लीकंभारद्वाजंसगौतमम् ॥ कर्णंसुयोधनंद्रौणिंपांडवान्सुहृदोऽपरान् २ यथावदुपसंगम्यबंधुभिर्गांदिनीसुतः ॥ संपृष्टस्तैःसुहृद्वार्तांस्वयंचापृच्छदव्ययम् ३ उवासकतिचिन्मासान्राज्ञोवृत्तविवित्सया ॥ दुष्प्रजस्याल्पसारस्यखलच्छंदानुवर्तिनः ४ तेजओजोबलंवीर्यंप्रश्रयादींश्चसद्गुणान् ॥ प्रजानुरागंपार्थे षुनसहद्भिश्चिकीर्षितम् ५ कृतंचधार्तराष्ट्रैर्यद्गरदानाद्यकौशलम् ॥ आचख्यौसर्वमेतस्मैपृथाविदुरएवच ६ पृथातुभ्रातरंप्राप्तमक्रूरमुपसृत्यतम् ॥ उवाचज न्मनिलयंस्मरंत्यश्रुकलेक्षणम् ७ अपिस्मरंतिनःसौम्यपितरौभ्रातरश्चमे ॥ भगिन्योभ्रातृपुत्राश्चजामयःसख्यएवच ८ भ्रात्रीयोभगवान्कृष्णःशरण्यो भक्तवत्सलः ॥ पैतृष्वस्रेयान्स्मरतिरामश्चांबुरुहेक्षणः ९ सपत्नमध्येशोचंतींवृकाणांहरिणीमिव ॥ सांत्वयिष्यतिमांवाक्यैःपितृहीनांश्चबालकान् १०

श्यतइतिव्यनक्त्यस्मिन्नध्याये तत्रादावक्रूरस्यधृतराष्ट्रादिदर्शनंवक्ति सगत्वेति १ बाह्लीकंकुरुवंशेकंचनवृद्धंराजानंशंतनोर्भ्रातरम् भारद्वाजंभरद्वाजस्यापत्यंद्रोणम् सगौतमंसकृपम् २ तै र्भीष्मादिभिःसुहृद्वार्तांप्रतिसंपृष्टःअभूदितिशेषः अक्रूरःस्वयंचतेषामव्ययंअनामयंपृष्टवान् ३ वृत्तविवित्सयास्वपुत्रेषुवृत्तंवर्तनंसमंविषमंचेतिज्ञातुमिच्छया अल्पमन्याय्यंसारंयस्यसतथातस्य तत्रहेतुः खलच्छंदानुवर्तिनइति खलानांपुत्राणांछंदमिच्छामनुवर्तितुंशीलमस्यास्तीतितस्य ४ तेजोज्योतिर्लक्षणादीप्तिः ओजःपराभिभवलक्षणंसामर्थ्यं बलंशारीरंरूपंवावीर्यंपराक्रमः ५ ६ जन्मनिल यंजन्मगृहम् ७ जामयःभ्रातृवर्गभार्याः ८ पितृष्वसुःपुत्रान्पांडवान् ९ सपत्नमध्येशत्रुमध्ये वृकाणांमध्येस्थिताम् १०

दुमणेरुदयादुत्फुल्लपानलिन्यापथातथा अक्रूरस्यदर्शनादुद्रेचितयाभक्त्याविवशाविशेषप्रबुद्धभगवद्गुणानित्थंतत्पराकुंतीमनस्याविर्भूतंकृष्णंस्तौति कृष्णेति महानपरिच्छिन्नोयोगोज्ञानमुपायोवास्तीति तत्संबुद्धिःमहायोगिन् महत्पूज्यविशालयोरितियादवः सर्वमाप्नोतिधारयतीतिसर्वात्मा हेसर्वात्मन् गोविंदगवामिंद्र ११ मृत्युवत्भयहेतोःसंसारात् आपवर्गिकात् अपवर्गाख्यक्रियासाध्यफलप्राप्तेः साधकात् तदापादकाद्वा अपवर्गःक्रियासाध्यफलाप्तौत्यागमोक्षयोरितिवैजयंती १२ कृष्णंसीसाद्यलोहेष्वित्यतःकृष्णशब्दस्यसीसाद्येपिवृत्तेस्तन्निरासार्थं शुद्धायेति किंतत्शुद्धमत्राह ब्रह्मणइति अस्याप्यनेकार्थवृत्तेर्ननिर्णयइत्यतः परमात्मनइति दुर्भगशरीरेवसतोहरे कर्दमइवशुद्धत्वंकथंयुज्यतइतितत्राह योगेश्वरायेति योगैश्वर्यादृष्टतइत्यर्थः ननुतर्हियोगैश्वर्यनिमित्तशुद्धत्वंचेत्स्वतोनास्ती त्यायातमित्यतउक्तं योगायेति ज्ञानसंहताय ज्ञानात्मत्वेनाप्राकृतत्वात्स्वाभाविकमित्यर्थः ततःकिमत्राह त्वामिति १३ इतिएवमादिगुणपूर्णं १४ तस्याःपुत्राणांयुधिष्ठिरादीनांउत्पत्तेर्हेतुभिः दुर्वा ससोऽनुग्रहेणधर्मानिलेंद्रसंयोगादिलक्षणैः १५ यास्यन्गंतुमिच्छन् पुत्रलालसं पुत्रस्नेहकातरं बंधुभिःसहितं सौहृदोदितंसुहृद्भावेनकथितं १६ १७ १८ तमोघंदुःखमित्यर्थः पुत्रनाशेनेति

कृष्णकृष्णहायोगिन्सर्वात्मन्विश्वपालक ॥ प्रपन्नांपाहिगोविंदशिशुभिश्चावसीदतीम् ११ नान्यत्तवपदांभोजात्पश्यामःशरणंनृणाम् ॥ बिभ्यतांमृत्युसं सारादीश्वरस्यापवर्गिकात् १२ नमःकृष्णायशुद्धायब्रह्मणेपरमात्मने ॥ योगेश्वराययोगायत्वामहंशरणागता १३ इत्यनुस्मृत्यस्वजनंकृष्णंचजगदीश्वर म् ॥ प्रारुदद्दुःखिताराजन्भवतांप्रपितामही १४ समदुःखसुखोऽक्रूरोविदुरश्चमहायशाः ॥ सांत्वयामासतुःकुंतींतत्पुत्रोत्पत्तिहेतुभिः १५ यास्यन्रा जानमभ्येत्यविषमंपुत्रलालसम् ॥ प्रावदत्सुहृदांमध्येबंधुभिःसौहृदोदितम् १६ भोभोवैचित्रवीर्यत्वंकुरूणांकीर्तिवर्धन ॥ भ्रातर्युपरतेपांडौबंधूनांसम मास्थितः १७ धर्मेणपालयन्नुर्वींप्रजाःशीलेनरंजयन् ॥ वर्तमानःसमःस्वेषुश्रेयःकीर्तिमवाप्स्यसि १८ अन्यथात्वाचरँल्लोकेगर्हितोयास्यसेतमः ॥ तस्मात्समस्त्वंवर्तस्वपांडवेष्वात्मजेषुच १९ नेहचात्यंतसंवासःकस्यचित्केनचित्सह ॥ राजन्स्वेनापिदेहेनकिमुजायात्मजादिभिः २० एकःप्रसूय तेजंतुरेकएवप्रलीयते ॥ एकोनुभुंक्तेसुकृतमेकएवचदुष्कृतम् २१ अधर्मोपचितंवित्तंहरंत्यन्येल्पचेतसः ॥ संभोजनीयापदेशैर्जलानीवजलौकसः २२ पुष्णातियानधर्मेणस्वबुद्ध्यातमपंडितम् ॥ अंतेऽकृतार्थाहिन्वंतिप्राणारायःसुतादयः २३ स्वयंकिल्बिषमादायतैस्त्यक्तोनार्थकोविदः ॥ असिद्धार्थो विशत्यंधंस्वधर्मविमुखस्तमः २४

शेषः तमोराहुस्तमोघंचेतिच दुःखैनोव्यसनेष्वघमितिच १९ सर्वस्यानित्यत्वात्कचित्कस्मिंश्चिदपिविशेषस्नेहोनकार्यः योग्यतामंतरेणेतिभावेनाह नेहेति इहलोकेकस्यचित्केनचित्सहात्यंतस वासोनास्त्येव जायात्मजादिभिःसहसंवासनिदर्शनात्किंविशेष्यनिषिध्यतइत्यत्रकैमुत्यमाह स्वेनापीति २० इतोपिवैषम्यबुद्धिर्नकार्येत्याह एकइति २१ अन्येअल्पचेतसःदुर्बुद्धेरधर्मेणउप चितंअर्जितंहरंतिसंभोजनीयापदेशैःसंभोजनीयाःसहभोजनयोग्याःबंधवःअपदेशैःकपटवचनैः ममैतेऽपेक्षणीयाइतिमिथ्याहेतुभिरित्यर्थः जलानिहरंतोजलसंबंधितयाजलौकसःप्राणिनोयथाहरं ति यद्वा जलौकसोयादोगणस्यविद्यमानानिजलानियथान्येहरंति २२ यःस्वबुद्ध्याममत्वभ्रांतबुद्ध्याअधर्मेण अन्यायेनयान्पुष्णातिस्वत्वेनाभिमतास्तेप्राणादयस्त्वंतेमरणसमयेतमपंडितंअज्ञांहिन्वंतित्य जंतिअग्निर्वाग्भूत्वेतिवातंप्राणइतिश्रुतेः कीदृशाःअकृतार्थाःअपूर्णस्वप्रयोजनाःयथायोयोऽधर्मेणयान्स्वीयबुद्ध्यापुष्णातितेप्राणादयः तमपंडितंहिन्वंतीतितंचमरणांविदुरिति २३ पुनःस्वयंकिंकरोती तितत्राह स्वयमिति नार्थकोविदः स्वप्रयोजनकुशलोनभवति २५

किमन्येन बहूपन्यासेन प्रकृते किमागतमिति तत्राह तस्मादिति लोकं शरीरं स्वप्रेति लुप्तोपमा स्वप्नवत् मायावत् इन्द्रजालवत् मनोराज्यविजृंभितवदन्यत्र स्वनिमित्तं स्वप्नस्य स्वाधीनत्वप्रतीतेस्तदर्थं माया मनोरथमित्युक्तं आत्मनामनसा आत्मानं परमात्मानं भजन् शांतो भगवदेकनिष्ठः स्वपरबुद्धिं विहायात्मजेषु पांडुपुत्रेषु समो भवेत्यन्वयः २५ अनयावाचा न तृप्यामि अलंबुद्धिं न प्राप्नोमि अमृतं देवानां अमृतं व्योम्नि देवान्नेयज्ञशेषे रसायने अयाचिते जलेह्यग्नौ मोक्षणे हेम्नि गोरसे क्लीबे नात्वमरस्त्रीतु गुडूच्यामधमिश्रयोरिति च २६ सूनृतावाक् सुहाग्नः पद्वाद्यद्यपश्वासौदामनी विद्युत् विद्युल्लता यद्वा

तस्माल्लोकमिमं राजन्स्वप्नमायामनोरथम् ॥ संभजन्नात्मनात्मानं समः शांतो भव प्रभो २५ धृतराष्ट्र उवाच ॥ यथा वदति कल्याणीं वाचं दानपते भवान् ॥ तथाऽनया न तृप्यामि मर्त्यः प्राप्य यथामृतम् २६ तथापि सूनृता सौम्य हृदि न स्थीयते चले ॥ पुत्रानुरागविषमे विद्युत्सौदामनी यथा २७ ईश्वरस्य विधिं को नु विधुनोत्यन्यथा पुमान् ॥ भूमेर्भारावताराय यो वतीर्णो यदोः कुले २८ यो दुर्विमर्शपथया निजमाययेदं सृष्ट्वा गुणान्विभजते तदनुप्रविष्टः ॥ तस्मै नमो दुरवबोधविहारतंत्रसंसारचक्रगतये परमेश्वराय २९ श्रीशुक उवाच ॥ इत्यभिप्रेत्य नृपतेरभिप्रायं स यादवः ॥ सुहृद्भिः समनुज्ञातः पुनर्यदुपुरीमगात् ३० शशंस रामकृष्णाभ्यां धृतराष्ट्रविचेष्टितम् ॥ पांडवान्प्रति कौरव्य यदर्थं प्रेषितः स्वयम् ३१ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वार्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ छ ॥ ॥ दशमस्कंधपूर्वार्धः समाप्तोऽयम् ॥

विशेषणयोर्विप्रकाशवद्विविद्युल्लतावशीसौदामनी क्षणप्रभापयाम स्थिरा तथेति विधिमाज्ञां विधुनोति अन्यथा करोति अनेकार्थत्वाद्धातूनां दुर्विमर्शपथया दुर्विज्ञेयमार्गया दुरवबोध. दुर्ज्ञेयः विहारः सृष्ट्यादिव्यापारकर्मक्रिया तस्य तंत्राधीनसंसारचक्रगतिः संसारवृत्तिः प्रकारो यस्य स तथा तस्मै इत्यभिप्रेत्येति ज्ञात्वा २७ २८ २९ ३० ३१ इति श्रीभागवते महापुराणे दशमस्कंधे विजयध्वजकृतटीकायामष्टचत्वारिंशोऽध्यायः ४८

॥ इति श्रीमद्भागवते दशमस्कंधे पूर्वार्धः समाप्तः ॥

# ॥ अथ श्रीमद्भागवते दशमस्कंधे उत्तरार्धप्रारंभः ॥

॥ श्रीगणेशायनमः ॥ सच्छास्त्रस्यासच्छास्त्रेणेवकातिपयेष्वध्यायेषुश्रीकृष्णस्यजरासंधेनसहसंग्राममवर्णयति तत्त्वनिर्णयेनसदसतोर्भक्तिद्वेषाभ्यांउद्बुद्धाभ्यांविहितनिर्वाणावाप्तिर्भवति तत्रकथांप्रसं ज्ञयितुमाह अस्तीति अस्तिप्रास्तिशब्दाभ्यांअविद्यायाद्विरूपेसंशयविपरीतज्ञाननाम्नीउच्येते तत्रसंशयज्ञानसत्तामात्रमस्ति विपरीतंतदपिनास्तीत्यस्तिप्रास्नी असभुविभूसत्तायामितिधातोः यद्वा निश्चायकप्रमाणाभावेननिश्चयज्ञानाभावात्संशयविपरीतज्ञानवाचकावेतौ असुनिरसनइतिधातोः कंसस्यमहिष्यौ कसिहिंसायामितिधातोः हिंसात्मनोऽधर्मस्यमहिमबंधकत्वेनसंबंधिन्यौ पिष्लृवर्धनइति धातोः कृष्णनाम्नाधर्मेणभर्तरिस्वनिर्वाहकेकंसनाम्न्यधर्मेहतेविनाशितेस्वपितुःस्वपोषकस्यजरासंधस्य जृवयोहानावितिधातोर्वयोहानिहेतुभूताशैवीशास्त्रसंहिताजरेत्युच्यते तस्यांसंधामरणापत्तावपि नमुंचामीतिप्रतिज्ञायस्यसतथा तस्यगृहान्प्रमेयविशेषानीयतुःप्राप्यस्थिते शब्दशक्तिविचक्षणैःपुरुषैरध्यात्मविषयतयाअत्रार्थोज्ञातव्यइति ग्रंथबाहुल्यभीरुणामयानप्रदर्श्यतइति १ आत्मवैरूप्यकारण म् आत्मवैधव्यादिनिमित्तम् अन्यत्रप्रतिपादनासामर्थ्यम् २ नृनयइतिधातोःनॄन्नयान्शैवशास्त्रोक्तान्पिबतीतिनृपःशास्त्रज्ञः य प्रतिसंभूमेत्याभिधानात्पोविष्णु सएवादोदुष्टदण्डकस्तंवांतिशरणंगच्छं

श्रीशुकउवाच ॥ अस्तिप्रास्तीतिकंसस्यमहिष्यौभरतर्षभ ॥ हतेभर्तरिदुःखार्तेईयतुःस्मपितुर्गृहान् १ पित्रेमगधराजायजरासंधायदुःखिते ॥ वेद यांचक्रतुःसर्वमात्मवैरूप्यकारणम् २ सतदप्रियमाकर्ण्यशोकामर्षयुतोनृपः ॥ अयादवीमहींकर्तुंचक्रेपरममुद्यमम् ३ अक्षौहिणीभिर्विंशत्यास्तिसृ भिश्चापिसंवृतः ॥ यदुराजधानींमथुरांन्यरुणत्सर्वतोदिशम् ४ निरीक्ष्यतद्बलंकृष्णउद्वेलमिवसागरम् ॥ स्वपुरंतेनसंरुद्धंस्वजनंचभयाकुलम् ५ चिं तयामासभगवान्हरिःकारणमानुषः ॥ तद्देशकालानुगुणंस्वावतारप्रयोजनम् ६ हनिष्यामिबलंह्येतद्भुविभारंसमाहितम् ॥ मागधेनसमानीतंपश्यतां सर्वभूभृताम् ७ अक्षौहिणीभिःसंख्यातंभटाश्वरथकुंजरैः ॥ मागधोऽपिनहंतव्योभूयःकर्ताबलोद्यमम् ८ एतदर्थोवतारोऽयंभूभारहरणायमे ॥ संरक्षणा यसाधूनांकृतोऽन्येषांवधायच ९ अन्योऽपिधर्मरक्षायैदेहःसंभ्रियतेमया ॥ विरामायाप्यधर्मस्यकालेप्रभवतःक्वचित् १० एवंध्यायतिगोविंदेमगधाधिप तिर्बली ॥ मथुरांसवनोद्यानांरुरोधबहुसैनिकः ११ कलिंगश्चेकितानश्चदंतवक्त्रविदूरथौ ॥ उल्मुकोवेणुदारीचशाल्वश्चैद्यश्चदुर्मतिः १२ पूर्वद्वारंसमासा द्यरुरुधुर्मागधाज्ञया ॥ विंदानुविंदावावंत्यौविराटोदरदस्तथा १३

तीत्यादवाःवैष्णवाःतद्रहिताम् ३ एकस्थानमारभ्यषोडशस्थानेयासंख्यासाऽक्षौहिणीत्युच्यतेइति अन्येगजानांसप्तसहस्राणिद्विशतीसाशीतिः एवंरथानामपिसंख्या अश्वानामेकविंशतिसहस्रीपं चशतीविंशतिश्च पदातीनांपंचत्रिंशत्सहस्रंविंशतिभिश्चेत्यक्षौहिणीसंख्यांब्रुवते एकोगजएकोरथस्त्रयोऽश्वाःपंचपदातयइतिदशसंख्यापत्तिर्नाम त्रिगुणितापत्तिःसेनामुखमितिभिन्नंवापदं सेनामुख त्रिगुणोगुल्मनामा तत्त्रिगुणोगणनामा गणत्रिगुणावाहिनीनाम वाहिनीत्रिगुणापृतना तत्त्रिगुणाचमूः त्रिगुणिताचमूरनीकिनी दशानीकिनीत्यक्षौहिणीतिकेचित् एकभैकरथाश्वापत्तिःपंचपदा तयः पत्त्यंगैस्त्रिगुणैःसर्वैःक्रमादाख्यायथोत्तरम् सेनामुखंगुल्मगणौवाहिनीपृतनाचमूः अनीकिनीदशानीकिन्यक्षौहिणीत्यमरः ४ ५ ६ ७ ८ ९ अन्योपिदाशार्हादिरूपे स्वकालेप्रभवतःवर्धमान स्याधर्मस्यविरामायविनाशाय १० मथुरायोग्यानांपरमानंददात्रींवेदांतविद्यां तस्याश्चतुर्द्वाराणिऋगादीनि पाखंडशैववीरादयः [illegible] सैनिकाइत्यर्थः ११ १२ १३

१४ १५ १६ १७ १८ १९ क्ष्वेलंतः अट्टहासंकुर्वंतः २० कदंबःसमूहः २१ सपरिच्छदौसोपस्करणौ २२ सहस्रमराणिदलानियस्यतत्तथा २३ कौमहांमोदकोनारायणःतस्यविद्यमानाकौमोद
की त्रिषुस्थानेषुकोटिद्वयेमध्येचनतंवक्रंत्रिनतं कार्मुकंतुचतुर्हस्तमितिपादवःशार्ङ्गंशृंगविकृतं गुणेनज्ययाअन्वितंसहितम् २४ २५ २६ २७ त्वावतांत्वद्युक्तानां पक्षा त्वंदृशःत्वकोपेणांते,वार्त्तः

एकलव्योबाह्लिकश्चतथापंचनदेश्वरः ॥ रुरुधुर्दक्षिणद्वारंपौंड्रकश्चमहाबलः १४ युधामन्युर्बृहत्क्षत्रःशाल्वोभूरिश्रवास्तथा ॥ उत्तमौजाश्चरुक्मीचद्रुम
श्चैवसुदक्षिणः १५ एतेनियुक्ताराजानोजरासंधेनभारत ॥ पश्चिमद्वारमासाद्यरुरुधुर्मथुरांपुरीम् १६ द्रुपदःशिशुपालश्चत्रिगर्तोऽथजयद्रथः ॥ शकुनिःसो
मदत्तश्चकुणिंदश्चमहाबलः १७ जरासंधेनसहिताःसर्वेमदबलान्विताः ॥ उत्तरद्वारमासाद्यरुरुधुर्भरतर्षभ १८ तेनिरुद्धचचतुर्द्वाराण्युद्वेलांभोधिसन्नि
भाः ॥ सिंहनादंचकुर्वंतोदध्मुःशंखाननेकशः १९ क्ष्वेलंतोयुद्धसन्नद्धाजघ्नुर्भेरीःसहस्रशः २० तद्वीरभूपालकदंबजृंभितंयुगावसानार्णवघूर्णितोपमम् ॥ नि
शम्यकृष्णोनचचालचेतसासृगालघोषंमृगराडिवोद्धतः २१ एतस्मिन्नेवकालेतुगगनात्सूर्यवर्चसौ ॥ रथावुपस्थितौसद्यःससूतौसपरिच्छदौ २२ आयु
धानिचदिव्यानिपुराणानियदृच्छया ॥ चक्रंसुदर्शनंघोरंसहस्रारंमनोरमम् २३ गदाकौमोदकीगुर्वीनाम्नाकौमोदकीशुभा ॥ त्रिनतंकार्मुकश्रेष्ठंशार्ङ्गसंज्ञं
गुणान्वितम् २४ तीक्ष्णधारःशितमुखःखड्गोनंदकसंज्ञितः ॥ लघूशराचितौरम्यौतूणौचाक्षयसायकौ २५ तुरगाःशैब्यसुग्रीवमेघपुष्पबलाहकाः ॥ हलं
चबलभद्रस्यमुसलंचदृढंगुरु २६ इत्येतान्यायुधान्याजौगगनादागतानिसः ॥ दृष्ट्वाराजन्हृषीकेशःसंकर्षणमथाऽब्रवीत् २७ पश्यार्यव्यसनंप्राप्तंयदूनांत्वाव
तांप्रभो ॥ एषतेरथआयातोदयितान्यायुधानिच २८ यानमास्थायजह्येतद्व्यसनात्स्वान्समुद्धर ॥ एतदर्थंहिनौजन्मसाधूनामीशसत्कृतम् २९ त्रयोविंश
त्यनीकानांभूमेर्भारमपाकुरु ॥ एवंसंमंत्र्यदाशार्हौदंशितौरथिनांवरौ ३० दंशितैश्चयदुश्रेष्ठैर्बहुभिश्चसमन्वितौ ॥ निर्जग्मतुःपुरवराद्बलेनाल्पीयसानृप
३१ निर्गत्यसदनात्कृष्णोवृष्णीनाहूयसर्वशः ॥ आज्ञापयामासतूर्णंचतुर्द्वारस्यपालने ३२ वसुदेवंचनिशठंकृतवर्माणमुद्धवम् ॥ कृष्णोनिर्यातयामा
सपूर्वद्वारेणभारत ३३ उग्रसेनंसुदामानंपृथुंविपृथुमेवच ॥ हरिर्निर्यातयामासद्वारेणानुत्तरेणवै ३४ सात्यकिंचगदंचैवप्रसेनंगांदिनीसुतम् ॥ हरिःप्र
तीचीद्वारेणप्रेषयामासदुर्मदान् ३५ गोविंदस्तुमहातेजाःस्वयंदारुकसारथिः ॥ आत्ताभीष्टप्रहरणःसंकर्षणसहायवान् ३६ उत्तरेणविनिर्गम्यद्वारेणजगदी
श्वरः ॥ शंखंदध्मौमहाप्राणंदैत्यदानवभीषणम् ॥ आहदारुकमासीनंरथाग्रेमाधवःस्मयन् ३७

तेषांत्वावतामितिपाठश्छांदसः २८ साधूनांसाधुभिःसत्कृतम् कृद्योगेषष्ठी २९ त्रयोविंशत्यनीकानांत्रयोविंशत्यक्षौहिणीनांसमुत्पन्नंभूमेर्भारम् ३० ३१ ३२ ब्रह्मसूत्रादयोवसुदेवादिशब्दवाच्याः
३३ ३४ दुःखंमंदयंतिअल्पीकुर्वंतीतिदुर्मदास्तान् नुमागमाभावश्छांदसः ३५ ३६ महाप्राणंमहाघोषम् ३७

युद्धदुर्मदान् युद्धेदुष्टमदान् ३८ ३९ ४० वसुदेवादिभिश्चतुर्भिः कलिंगाद्यष्टानां कदक्षदाईसार्थावितिधातुः कदनंयुद्धम् ४१ गोविंदेनाध्मानमाध्मासितंचेतोयेषांतेतथा तेषांराजन्यानांकटकेनसैन्येन सैन्यंपिकटकोऽस्त्रियामित्यभिधानम् समूहेनवा ४२ ४३ ४४ ४५ माधवौमधुकुलेजातौसैन्येनयानध्वजैःरथध्वजैर्वाजिभिरश्वैःसारथिभिश्चसहितौ वाजीत्वश्वेशरेखगेइति अभ्रैःजलधरैरेणुभिश्च ४६ सुपर्णतालध्वजाभ्यांचिह्नितौअंकितौ हरिरामयोःकृष्णबलभद्रयोःरथौ विलक्षयंत्यःपश्यंत्यःपुरगृहम् अट्टालकंगृहोपरिगृहाद्युपरिरचितचतुरस्रस्थल हर्म्यंधनिनावास गोपुरंपुरद्वारम् अल्पवयसौ

श्रीभगवानुवाच ॥ रथंवाहयधर्मज्ञयत्रतौचैद्यमागधौ ॥ तर्पयामिनृपान्सर्वान्सायकैर्युद्धदुर्मदान् ३८ श्रीशुकउवाच ॥ इत्युक्तोदारुकस्तेनहयांस्तूर्णमचोदयत् ॥ व्यनदत्सिंहनादंचगोविंदःपरवीरहा ३९ शंखमाध्मायरामोऽपिसिंहनादंव्यनीनदत् ॥ ततोऽभूत्परसैन्यानांहृदिचिंतासवेपथुः ४० पूर्वद्वारिनृपैःसार्द्धंयदूनांकदनंमहत् ॥ आसीच्चतुर्भिरष्टानांतदद्भुतमिवाभवत् ४१ दक्षिणद्वार्यपितथागोविंदाध्मातचेतसाम् ॥ आसीद्यदूनांकदनंराजन्यकटकेनवै ४२ अपरद्वार्यपितथायदूनांदृढधन्विनाम् ॥ आसीद्राजसमाजेनसंग्रामोरोमहर्षणः ४३ तेहन्यमानायदवोराजभिःशक्रविक्रमैः ॥ नचेलुःसंगराद्राजन्लोकद्वयजिगीषवः ४४ तत्रयादवशार्दूलोविष्णुस्त्रैलोक्यवल्लभः ॥ आससादमहावीरौयत्रतौचैद्यमागधौ ४५ जरासुतस्तावभिवीक्ष्यमाधवौमहाबलौघेनबलीयसावृणोत् ॥ ससैन्ययानध्वजवाजिसारथीसूर्यानलौवायुरिवाभ्ररेणुभिः ४६ सुपर्णतालध्वजचिह्नितौरथौविलक्षयंत्योहरिरामयोर्मृधे ॥ स्त्रियःपुराट्टालकहर्म्यगोपुरंसमाश्रिताःसंमुमुहुःशुचार्दिताः ४७ हरिःपरानीकपयोमुचांमुहुःशिलीमुखात्युल्बणवर्षपीडितम् ॥ स्वसैन्यमालोक्यसुरासुरार्चितंव्यघूर्णयच्छार्ङ्गशरासनोत्तमम् ४८ गृह्णन्निषंगादथसंदधच्छरान्विकृष्यमुंचञ्छितबाणसंचयम् ॥ निघ्नन्रथान्कुंजरवाजियूथपान्निरंतरंयद्वदलातचक्रम् ४९ ततःशशांकाकृतिपांचजन्यंमहारवंदैत्यकुलापचारम् ॥ मुखेनिधायाशुपुपूरयादवानाश्वासयन्क्षत्रियकूटघाट्टितान् ५० नृपास्तदाकर्ण्यतुकर्णनिष्ठुरंक्रमेणनिर्भिन्नहृदोबभूविरे ॥ यदुप्रवीराश्चसमुद्यतायुधारणेनृपाञ्जघ्नुरनीकसंयुताः ५१ ततश्चतुर्द्वारगतान्महीपतीन्यदुप्रवीराःपरिभूयसर्वशः ॥ चक्रुःशरौघैःसहसैकवाहिनआप्यायिताःशार्ङ्गरवेणशौरिणा ५२ ततोहरिंचैद्यपतिर्मंडलीकृतकार्मुकः ॥ भर्त्सयन्कृष्णकृष्णेतितिष्ठतिष्ठेतिचाब्रवीत् ५३ तमभ्यधावद्गोविंदोविमुंचन्सायकान्बहून् ॥ मंडलीकृतकोदंडस्तैलधौताञ्छितान्शरान् ५४ ततःपंचशरान्घोरानादायदमघोषजः ॥ चतुर्भिस्तुरगानाशुविव्याधैकेनसारथिम् ५५

अल्पसेनौकृष्णरामौमागधंप्रलयार्णवोपमसेनंदृष्ट्वासमुत्पन्नयाशुचा ४७ व्यघूर्णयत् विस्फारयामास परानीकपयोमुचांशत्रुसेनामेघानाम् ४८ श्रीकृष्णस्यहस्तलाघवंकथयति गृह्णन्निति निषंगात्तूणीरात् भ्राम्यमाणमलातचक्रंउल्मुकमंडलंनिरंतरांछिद्ररहितंनंदुःशंखंपद्मचक्रवत् ४९ दैत्यकुलस्यापचारंनाशकर क्षत्रियाणांकूटेनसमूहेन घाट्टितान्सदोष्टितान् ५० क्रमेणतत्तद्योग्यतानुसारेण ५१ एकवाहिनःएकवाहनगतान् पृष्ठवाहनहीनानित्यर्थः ५२ ५३ ५४ दमघोषजःशिशुपालः ५५

सिंहनादंव्यनदन्सिंहनादंचकार ५६ वीरःशूरोस्तिबलवान्शक्तिमानसि ५७ धानुष्मत्त्वंधनुष्मतांमाहात्म्यम् ५८ आशुगैःशरैः ५९ ६० यदूनंदयतिबलेनसमर्द्धयतीतियदुनंदनः ६१ ६२ ६३ ६४ कालांतमारुतेनप्रलयकालवायुना ६५ ६६ निर्भिन्नकुंभाःविदलीकृतमूर्धानः अनीकशःराशिशः करिप्रभृतयोनिर्भिन्नकुंभादयोऽभूवुरित्यन्वयः ६७ अंगप्रसूताःदेहोत्पन्नाःअसृगापगाःरुधिरनद्यः भुजाएवाहयोयासुतास्तथा एवमुत्तरत्रापि कच्छपाःकूर्माःद्विपाएवद्वीपाःअंतरद्वीपाः हयाएवग्रहाग्राहाः ६८ धनुस्तरंगैःआयुधगुल्मैश्चसंकुलाः आस्फूर्जिताः उन्नतस्थलादधः तज्जलध्वनय तैराव तैःजलभ्रमणैश्चभयानकाःभयप्रदाः वृत्तफलकध्वनयोवास्फूर्जितास्तएवआवर्त्ताः महामणिप्रवेकाःप्रवेकाउत्तमाएवाश्मानःआभरणान्येवशर्करायासुतास्तथा ६९ संकर्षणेनएवंविधाश्च

भूयोदशाशुसंधायविव्याधमधुसूदनम् ॥ व्यनदत्सिंहनादंचतदद्भुतमिवाभवत् ५६ ततस्तमाहगोविंदःसाधुसाध्वितिपूजयन् ॥ भोभोचैद्यमहेष्वास वीरोऽसिबलवानसि ५७ अतोमेपश्यदुर्बद्धेधानुष्मत्त्वंस्वयंरणे ॥ इतिब्रुवतिगोविंदेराजानःसर्वएवते ५८ विव्यधुर्निशितैर्बाणैर्युगपद्येनमाधवम् ॥ तांस्तान्प्रत्येकशःकृष्णोविद्ध्वापंचभिराशुगैः ५९ सारथिंचतुरोवाहाननयद्यमसादनम् ॥ त्रिभिस्त्रिभिःशरैर्भूयोप्येकैकंनृपतीन्रणे ६० वक्षस्यास्येल लाटेचविव्याधयदुनंदनः ॥ ततश्चत्रिंशतांराज्ञांत्रिंशत्कार्मुकमाहवे ६१ त्रिंशद्भिःसायकैराशुचिच्छेदयदुपुंगवः ॥ दमघोषसुतस्यापिधनुश्छित्त्वात्रिभिः शरैः ६२ ध्वजंचमुकुटच्छत्रेचकर्त्तप्रहसन्निव ॥ ततोदशहरिर्भल्लान्शार्ङ्गेसंधायमाधवः ६३ आकर्णांतंसमाकृष्यचैद्यंविव्याधसंगरे ॥ तेनराजन्यकटकांवि भ्रांतंशरताडितम् ६४ कालांतमारुतोद्धूतशैलद्रुमलतोपमम् ॥ त्रातारंनाध्यगच्छद्वैहताश्वरथसारथि ६५ शरान्विमुञ्चञ्जलजंचपूरयन्विस्फूर्जय न्कार्मुकमुग्रपौरुषः ॥ विलोकयन्मागधसैन्यमाहवेनिरंतरंयद्वदलातचक्रम् ६६ निर्भिन्नकुंभाःकरिणोनिपेतुरनीकशोऽश्वाःशररुग्णकंधराः ॥ रथाहता श्वध्वजसूतनायकाःपदातयश्छिन्नभुजोरुकंधराः ६७ संछिद्यमानद्विपदेभवाजिनामंगप्रसूताःशतशोऽसृगापगाः ॥ भुजाहयाःपूरुषशीर्षकच्छपाहताद्विप द्वीपहयग्रहाकुलाः ६८ करोरुमीनानरकेशशैवलाधनुस्तरंगायुधगुल्मसंकुलाः ॥ आस्फूर्जितावर्त्तभयानकामहामणिप्रवेकाभरणाश्मशर्कराः ६९ प्रवर्त्ति ताभीरुभयावहामृधेमनस्विनांहर्षवहाःपरस्परम् ॥ विनिघ्नतारीन्मुसलेनदुर्मदान्संकर्षणेनापरिमेयतेजसा ७० बलंतदंगार्णवदुर्गभैरवंदुरंतपारंमगधेंद्रपा लितम् ॥ क्षयंप्रणीतंवसुदेवपुत्रयोर्विक्रीडितंतज्जगदीशयोःपरम् ७१ स्थित्युद्भवांतंभुवनत्रयस्ययःसमीहतेऽनंतगुणःस्वलीलया ॥ नतस्यचित्रंपरप क्षनिग्रहस्तथापिमर्त्यानुविधस्यवर्ण्यते ७२

सृगापगाः प्रवर्तिताइत्यन्वयः ७० अंगहेविष्णुरात यन्मगधेंद्रेणपालितंअर्णववदुर्गंअतएवभैरवंदुरंतपारंचतुरविपयतीरांतरंअनवासिनसमासिंवा तद्बलंकृष्णरामाभ्यांक्षयंप्रणीतमित्यन्वयः जगदी श्वराभ्यामनायासेनकृतमेतद्युद्धमित्याह वसुदेवपुत्रयोरिति जगदीशयोःवसुदेवपुत्रयो.तद्युद्धंपरंकेवलंविक्रीडितं क्रीडामात्रमेव ७१ योनंतगुणोभुवनत्रयस्यस्वलीलयास्थित्युद्भवांतंसमीहतकरोति स्थि तिःउद्भवश्चअंतश्चतत्तथामिथोविरुद्धत्वादेकवद्भावः यद्यपितस्यहरेःपरपक्षनिग्रहःचित्रंनभवति तथापिमर्त्यानुविधस्यमनुष्यधर्ममनुकुर्वतोहरेस्तद्युद्धमुद्भयवतारार्थंवर्ण्यतेप्रशस्यतइत्यन्वयः ७२

सीरेणंबलभद्रमापेतिशेषः ७३ ७४ ७५ व्यंसयित्वा वंचयित्वा ७६ ७७ हतानीकश्चहतसेनश्चअवशिष्टासुश्चअवशिष्टप्राणश्चसतथातं हतानीकावशिष्टास्विति पाठेक्रियाविशेषणम् ७८ ७९ मुक्तोविसृष्टः ८० ८१ ८२ ८३ पुरंप्रविशतिसातिदुंदुभ्यादयोनेदुरित्यन्वयः ८४ कौतुकाभिर्दंडमालाभिराबद्धतोरणाम् ८५ निचीयमानःराशीक्रियमाण. ८६ यदुराजा

हतेषुसर्वसैन्येषुजरासंधोमहाबलः ॥ विद्रुतेष्ववशिष्टेषुरथेनैकेनसीरिणम् ७३ तावुभौगिरिसंकाशौमत्ताविवमहागजौ ॥ परस्परमयुध्येतांसामर्षौबलशालिनौ ७४ मागधस्तुगदांगुर्वीमादायामर्षविह्वलः ॥ भ्रामयित्वाशतगुणंचिक्षेपबलवक्षसि ७५ तामापतंतींतरसागदांशृंगोपमांगिरेः ॥ व्यंसयित्वाहलधरोमुधाचक्रेस्मथन्निव ७६ व्यर्थीकृत्यगदांतस्यमुसलेनहलायुधः ॥ पोथयित्वारथेक्षुब्धोनिहत्यरथसारथी ७७ जग्राहविरथंरामोजरासंधंमहाबलम् ॥ हतानीकावशिष्टासुंसिंहःसिंहमिवौजसा ७८ बध्यमानंहतानीकंपाशैर्वारुणमानुषैः ॥ वारयामासगोविंदस्तेनकार्यचिकीर्षया ७९ समुक्तोलोकनाथाभ्यांव्रीडितोवीरसंमतः ॥ वनंविविक्षुस्तपसेवारितःपथिराजभिः ८० हतेषुसर्वानीकेषुनृपोबार्हद्रथस्तदा ॥ उपेक्षितोभगवतामागधोदुर्मनाययौ ८१ मुकुंदोप्यक्षतबलोनिस्तीर्णारिबलार्णवः ॥ गृहीत्वामागधेंद्रस्यधनंस्त्रीकोशवाहनम् ८२ विकीर्यमाणःकुसुमैस्त्रिदशैरनुमोदितः ॥ माथुरैरभिसंगम्यविज्वरैर्मुदितात्मभिः ॥ उपगीयमानविजयःसूतमागधबंदिभिः ८३ शंखदुंदुभयोनेदुर्भेरीतूर्याण्यनेकशः ॥ वीणावेणुमृदंगानिपुरंप्रविशतिप्रभौ ८४ सिक्तमार्गांहृष्टजनांपताकाभिरलंकृताम् ॥ निर्घुष्टांब्रह्मघोषेणकौतुकाबद्धतोरणाम् ८५ निचीयमानोनारीभिर्माल्यदध्यक्षतांकुरैः ॥ निरीक्ष्यमाणःसस्नेहंप्रीत्युत्कलितलोचनैः ८६ आयोधनगतंवित्तमनंतंवीरभूषणम् ॥ यदुराजायतत्सर्वमाहृतंप्रादिशत्प्रभुः ॥ ८७ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्द्धेएकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ श्रीशुकउवाच ॥ तृतीयेमासिभूयश्चराजाबार्हद्रथोबली ॥ दिवानिशंतप्यमानःस्मरन्पूर्वपराभवम् १ आहूयसर्वभूपालान्चकारकलहोद्यमम् ॥ समस्त्यान्मालवांश्चेदीनूकुरुपांचालकेरलान् २ कुलिंदकुंतलावंतिकाशिगांधारसृंजयान् ॥ कलिंगकेकयानांध्रानदशार्णान्वंगसैंधवान् ३ माद्रानत्रिगर्तान्सौवीरान्पार्वतेयांश्चसर्वशः ॥ आहूयाक्षौहिणिगणैस्त्रयोविंशतिभिर्युतः ४ समागधानातिक्रम्यपश्चिमाभिमुखोययौ ॥ आकर्षन्निवभूपालानगजाश्वरथवल्गमान् ५ आगत्यमथुरांरोद्धुंप्राविशद्यमुनातटे ॥ स्कंधावारेणमहताराजभिर्बहुभिर्वृतः ६ उपगीयमानोन्यरमत्सूतमागधबंदिभिः ॥ तदाकर्ण्यरणोद्योगंमागधस्यबलीयसः ७ मंत्रयामासशर्वर्यांकृष्णःसंकर्षणादिभिः ॥ वसुदेवोद्धवाक्रूरशैनेयाहुकसारणैः ८ एभिरालोच्यशर्वर्यांसम्यङ्निर्धारितक्रियः ॥ उपस्यनुदितेसूर्येसमाहूयभटोत्तमान् ९

पउग्रसेनाय ॥ ८७ ॥ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायामेकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥७॥ ॥ १ २ ३ ४ ५ स्कंधावारेणसैन्यनिवेशार्थंवस्त्रैर्विरचितपुरांतःपुरादिगृहनिचयेन ६ ७ ८ ९

१० ११ १२ १३ १४ १५ १६ हयगताविति धातुः हयत्यनेनेतिहयः वैराणं पल्याणं अश्वपृष्ठासनमित्यर्थः श्रेणीबद्धाः पंक्तिबद्धाः पंजरं गजानां पृष्ठे शत्रुमुक्तशररक्षार्थं यंत्रगृहं १७ अनादत्तप्रहरणाः अस्वीकृतायुधाः १८ पीतवाससः श्रीकृष्णस्य प्रवेशे प्रवेशसमये १९ विभ्रांतं अनवस्थानं २० २१ तदा जरासंधसेनावस्थाप्रकारं कथयति केचिदिति २२ पर्याणमुभयपार्श्वावलंबकमापदंक

त्रिधाविभज्यगोविंदःस्वसेनांचतुरंगिणीम् ॥ न्ययोजयदमेयात्मामागधेंद्रबलंप्रति १० संकर्षणंचहार्दिक्यंगदंसारणमेवच ॥ वामेनप्रेषयामासमार्गेणम धुसूदनः ११ सात्यकिंविपृथुंचैवपृथुमुद्धवमेवच ॥ दक्षिणेनैवमार्गेणप्राहिणोत्सेनयासह १२ स्वयंकतिपयैर्युक्तोरथैःकमललोचनः ॥ अग्रेमगधराजस्यप्र विवेशमहद्बलम् १३ सासेनाबहुनागाश्वरथपादातिसंकुला ॥ प्रसुप्तायमुनातीरेविस्रब्धारमतेसुखम् १४ उदयाद्रिसमारोहत्यर्केतमसिनश्यति ॥ नी डस्थेष्वेवकूजत्सुविहंगेषुततस्ततः १५ विकसत्सुसरोजेषुगायत्स्वलिकुलेषुच ॥ प्रविवेशबलंभीमंमागधेंद्रस्यदुर्जयम् १६ हयाश्वाबद्धवैराणाःश्रेणी बद्धाःसमंततः ॥ कुंजराश्वतदाराजन्ननारोपितपंजराः १७ अनादत्तप्रहरणाभटाश्चाबद्धमूर्धजाः ॥ अप्रविष्टास्ववर्माणस्तदानारूढवाहनाः १८ रथाश्चा बद्धतुरगाःसर्वतोनुद्धृतध्वजाः ॥ सेनायांमगधेंद्रस्यप्रवेशेपीतवाससः १९ त्रिदिक्ष्वापतितंसैन्यंदृष्ट्वातद्राजमंडलम् ॥ इतिकर्तव्यतामूढंविभ्रांतंसमप द्यत २० केचिद्भटाःसमापेतुर्भयात्केचिच्चदुद्रुवुः ॥ केचिदात्तप्रहरणास्त्वभिससुररीन्रणे २१ केचिद्भिन्नवर्माणश्छिन्नपादोरुबाहवः ॥ रिपूनेवा भ्यवर्तंतक्रोधोद्वृत्तारुणेक्षणाः २२ केचिद्धयानपर्याणानारुह्यदृढविक्रमाः ॥ मर्दयंतोरिपून्युद्धेविमलंलेभिरेयशः २३ राजानःसहसोद्बुध्यदृष्ट्वासैनिकसं क्षयम् ॥ विनारणोपस्करणंचक्रुःकेचनसंगरम् २४ केचिद्विसृज्यशिबिरंविविशुर्गहनंवनम् ॥ केचिन्मागधमासाद्यविजयस्वेतिचाब्रुवन् २५ रथेनैकेनगोविंदः प्रविश्यरिपुवाहिनीम् ॥ जघानसुबहून्वीरान्सायुधान्सरणोद्यमान् २६ संकर्षणोपिबलवान्महत्यासेनयावृतः ॥ बलंप्रविश्यवामेनमर्दयामास मागधम् २७ शैनेयोपिमहाबाहुर्दक्षिणेनैववर्त्मना ॥ प्रविश्यचतुरंगेणसैन्येनमहताऽर्दयत् २८ एवंसाव्यथितासेनामागधेंद्राभिरक्षिता ॥ दुद्रावत्रा स्यमानावैक्षणमात्रेदिशोदश २९ तामनुद्रुत्यवार्ष्णेयःसात्यकिःपंचयोजनम् ॥ निहत्यमागधंसैन्यंजयीव्यावर्ततारहवात् ३० मतंगजान्पर्वतसन्निभा न्बहून्निगृह्यसोपस्करतोमरांकुशान् ॥ रथांश्वशस्त्रध्वजवाजिसंयुतान्निनायकृष्णोमथुरांमनोरमाम् ३१ छत्राणिहेमांबररत्नमिश्रितान्यनेकवालव्यजना निमाधवः ॥ किरीटपट्टांगदकुंडलांशुकान्यवापकृष्णोऽगणितानिसंयुगे ३२ हलायुधोमागधकोशवाहनप्रजावरोधायुधभूषणादिकम् ॥ निर्योजितः कंसभिदारणाजितंयदुप्रवीरायधनंन्यवेदयत् ३३ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥ छ ॥

विकावा २३ रणोपस्करणं युद्धसाधनं २४ २५ २६ २७ २८ २९ मगधस्य अधिपतिः मागधः तस्य मागधस्य विद्यमानमपि मागधं सैन्यं अन्यथा मागधं निहत्येत्यनन्वितं स्यात् ३० ३१ हेमांबरादीनि छत्राणीत्यस्य विशेषणानि ३२ ३३ इतिश्रीभागवते महापुराणे दशमस्कंधे उत्तरार्धे विजयध्वजकृतटीकायां पंचाशत्तमोऽध्यायः ५०

रणश्लाघीअत्युत्कटरणमाकांक्षमाणः १ २ वारकांताकदंबैःगणिकास्त्रीनिकरैः ३ मांगल्यैर्मंगलद्योतकैः ४ ५ ६ ७ ८ द्वंद्वेनयुद्धेन ९ १० सत्क्रियांसत्कारं ११ राज सैन्यसहितं दृष्टदर्शनकौतुकंस्वप्नकौतुकंयेनसतथास्वप्नेकौतुकंदृष्टाकौतूहलबुद्धिर्भवति तथाबाणमंपदंदृष्टवानित्यर्थः दर्शनंचक्षुषिस्वप्नेबुद्धिशास्त्रोपलब्धिष्विति १२ १३ १४ रथानांनियुतंलक्षं १५

श्रीशुकउवाच ॥ मागधस्तुरणश्लाघीमाधवेनपराजितः ॥ जगामशोणितपुरंबाणंद्रष्टुंबलेःसुतम् १ तंतथायांतमाकर्ण्यवृतराजन्यमंडलम् ॥ मित्रंपरा जितंयुद्धेविष्णुनादानवेश्वरः २ अलंकृतैर्गजैरश्वैर्विचित्रस्यंदनैर्भटैः ॥ वारकांताकदंबैश्वसूतमागधबंदिभिः ३ ध्वजैःपताकैश्छत्रैश्चमांगल्यैःपटहस्वनैः ॥ सुवर्णतोरणैश्चित्रैर्दीपैःकलशदर्पणैः ४ उपतस्थेजरासंधंबाणोबाहुसहस्रवान् ॥ तौदृष्ट्वापरमास्निग्धौपरस्परमनोऽनुगौ ५ पूजांचक्रतुरन्योन्यमन्योन्य प्रियकारिणौ ॥ ततोऽब्रवीज्जरासंधोबाणमाभाष्यसंसदि ६ दानवेंद्रनिबोधेदंगोपेनाधर्मचारिणा ॥ रात्रौचौर्यप्रतापेनवंचितोऽस्मिदुरात्मना ७ गृही ताबहवस्तुंगामातंगामदशालिनः ॥ तुरंगमाश्चबहवोरथाश्चसपरिच्छदाः ८ द्वंद्वेनसज्जमानंमामिमेभूपानसेहिरे ॥ निरुद्धस्तैरहंभूपैरेतैःसमसुखासुखैः ९ त्वत्सन्निधिमिहायातःसाहाय्यंकुरुमेप्रभो ॥ इत्युक्तस्तंनिजपुरंप्रवेश्यबलिनंदनः १० सराजमंडलायाशुकारयामाससत्क्रियाम् ॥ भोजनस्नानशयन गंधतांबूलपूर्वकैः ११ अर्हणैरर्हयामाससराजन्यंजरासुतम् ॥ तंभुक्तवंतंविश्रांतंदृष्टदर्शनकौतुकम् १२ अलंकृतंसहनृपैरासीनंकांचनासने ॥ उवाचदान वपतिर्नृपानाभाष्यसादरम् १३ बाणउवाच ॥ जरासंधनिबोधेदंनमृषाकथ्यतेमया ॥ एतेगजाइमेअश्वाइदंराज्यमिमाःप्रजाः ॥ त्वदधीनमिदंविश्वंय च्चान्यद्वस्तुविद्यते १४ श्रीशुकउवाच ॥ इत्युक्त्वाप्रददौतस्मैमागधायबलेःसुतः ॥ गजानांषष्टिसाहस्रंरथानांनियुतंतथा ॥ प्रयुतंचतुरंगाणांमनोमारु तरंहसाम् १५ दानवानांप्रसिद्धानांमायासंग्रामवेदिनाम् ॥ त्रिशतंस्वात्मसाम्यानांददौबाणोबलेःसुतः १६ विचित्रशिबिकाछत्रव्यजनाकल्पवाससाम् ॥ असंख्यातंददौराजन्भांडशय्यासनादिकम् १७ कुंभांडकूपकर्णंचमंत्रिणौदैत्यसत्तमौ ॥ आज्ञापयामासबाणःसाहाय्यार्थंकुरूद्वह १८ क्षसुरासुरसंवा तसंहारणपटुर्हरिः ॥ कुंभांडकूपकर्णौक्वबराकौबाणमंत्रिणौ १९ अजानतोविष्णुशक्तिंभूपालाविनशिष्णवः ॥ चक्रुर्भूयोरणोद्योगंमागधेनप्रचोदिताः २० बाणेनसमनुज्ञातोमागधःशोणितात्पुरात् ॥ निर्गत्यानेकभूपालचतुरंगबलान्वितः ॥ दिनैःकतिपयैर्भूयोमथुरामन्वपद्यत २१ संनिरुध्यपुरद्वारं गोपुराट्टालतोरणैः ॥ दीर्घिकोपवनोद्यानैरुपेतंसालभूषितम् २२ कुंतैःकुठारैःकुद्दालैर्दंडभारैश्चभूरिभिः ॥ कर्षणस्थैश्चपाषाणैर्दंभजपरितःपुरम् २३ भज्यमानेपुरेतस्मिन्श्रुत्वामागधमागतम् ॥ सन्नाहभेरीःसन्नाद्यरामकृष्णावमर्षिणौ २४

१६ १७ १८ अथजरासंधेनसहयोद्धुंश्रीकृष्णस्याशक्यमितिमंदाशंकापरिहरति क्वेति वराकौपंढातेलनिःसारौ १९ २० २१ सालैःप्राकारैर्भूषितं २२ दंडभारैर्दीर्घकुद्दालनिशितधाराग्रसंपदं दैःकर्षणस्थैःपाषाणयंत्रनिहितैः २३ २४

२९ दीप्तौक्रोधेनज्वलितौ २६ २७ २८ २९ आहवलालसौयुद्धोत्सुकौ ३० ३१ शतसंमितैःशतसंख्यापरिमितैः ३२ छिन्नपुष्कराःद्विधाकृतहस्ताः ३३ ३४ ३५ कङ्कानांलोहए

रथाश्वकुंजरानीकैःसायुधैःसपरिच्छदैः ॥ सात्यकिंकृतवर्माणमुग्रसेनंतथागदम् २५ आहुकंवसुदेवंचपुरस्कृत्यमहाबलौ ॥ निर्जग्मतुरसंभ्रांतौदीप्तौकेस रिणौयथा २६ मथुरायाविनिर्गत्यकृष्णःकमललोचनः ॥ पांचजन्यंमहाशंखंप्रदध्मौरिपुभीषणम् २७ ततःप्रववृतेयुद्धंयदूनांक्षत्रियैःसह ॥ कुंभांडकूप कर्णौचदानवौबाणमंत्रिणौ २८ दैत्यसैन्येनमहतावृतौमायाविशारदौ ॥ युयुधातेमहावीर्यौमाययावृष्णिभिःसह २९ स्वसैन्यंमाययाक्लिष्टंदृष्ट्वायादवस त्तमः ॥ विज्ञानास्त्रेणतन्मायामपास्यनिमिषांतरे ॥ सात्यकिंकृतवर्माणंप्रोवाचाहवलालसौ ३० आभ्यांभवंतौरणदुर्मदाभ्यांरणंसुघोरंकुरुतांरणाग्रिणौ ॥ तावेवमुक्तौकदनंभयानकंमहाबलौसंप्रतिचक्रतुर्नृप ३१ चापेनैकेनगोविंदःक्षत्रियैःशतसंमितैः ॥ युयुधेनहितच्चित्रंराजन्विश्वात्मनोहरेः ३२ केचिद्धताःसमाप तुःकुंजराश्छिन्नपुष्कराः॥ निपेतुर्बहवोराजंस्तुरंगाःकृत्तकंधराः ३३ विशीर्णैरास्तृतापृथ्वीस्यंदनैश्छिन्नबंधनैः ३४ भटाश्वरुधिराक्ताङ्गाश्छिन्नपादोरुबाहवः ॥ पेतुःकृत्तमहामूलाःकिंशुकाइवपुष्पिताः ३५ शार्ङ्गमुक्ताःशरगणाःकंकबर्हिणवाससः ॥ तैलाक्तानतपर्वाणःस्वर्णपुंखाअयोमुखाः ॥ एकैकस्मिन्दशदशभटेचा श्वेशतंशतम् ३६ रथेरथेचसाहस्रमयुतंचगजेगजे ॥ अदृश्यंतपरानीकेतदद्भुतमिवाभवत् ३७ तथातैर्वर्धमानेषुचतुरंगेषुमागधः ॥ रथेनक्रोडचिह्नेनबल भद्रमुपाद्रवत् ३८ सपूर्ववैरंनृपतिःस्मरन्नुरुपारथंमहाकांचनतालकूबरम् ॥ आलक्ष्यदूरादधिगम्यरंहसाजरासुतःप्राहहलायुधंगदी ३९ आदत्स्वतेमुस लंरामतूर्णंयेनाहितानिच्छसिजेतुमाहवे ॥ बलंचबाह्वोस्तवदर्शयाशुमेयावद्गदांनप्रहराम्यहंत्वयि ४० इत्येवमुक्तोमगधेश्वरेण संकर्षणोमर्षणविह्वलेक्षणः ॥ आदायघोरंमुसलंतडित्प्रभंदंडंयथासूर्यसुतोयुगक्षये ४१ आवर्तयित्वामुसलंहलायुधःसहस्रकृत्वोरिपुदर्पहारिणम् ॥ धूमांकुरोद्गारिणमाशुतस्मैचिक्षेप राजन्व्यनदद्धरित्रीयथा ४२ रामबाहुविमुक्तेनमुसलेनजरासुतः ॥ साश्वसूतेरथेक्षुब्धेक्षणेनव्यंसितःस्वयम् ४३ ततःकालायसींगुर्वींगिरिकूटोपमांगदाम् बिभ्रद्गुर्वींपदापृथ्वींचालयन्नभ्ययाद्बलम् ४४ तमापतंतमालोक्यविरथंरोहिणीसुतः ॥ तमेवाभ्यद्रवत्पद्भ्यांविसृज्यस्यंदनंरणे ४५ पश्यतांसर्वभू तानांमागधःक्रोधविह्वलः ॥ आवर्तयन्गदांगुर्वीमयःसारमयींदृढाम् ॥ अभ्येत्यगदयारामंप्रजहारननादच ४६ तांगदांपतितांवक्षस्यश्मकुट्टनिभांदृ ढाम् ॥ वामेनजगृहेरामःस्वहस्तेनकुरूद्वह ४७ विसृज्यसगदांतूर्णमुरस्याहत्यमागधम् ॥ जग्राहाश्लिष्यबलिनंबलवान्रोहिणीसुतः ४८ ब बंधपद्भ्यांजठरंमागधस्यहलायुधः ॥ चकारकुक्षौतत्कंठंततस्तौपेततुर्भुवि ४९

ह्रानांबर्हिणांमयूराणांपक्षाएववासांसियेषांते ३६ ३७ क्रोडचिह्नेनवराहलक्षणेनध्वजेन ३८ कांचनतालश्चकूबरःयुगंधरश्चयस्मिन्सतथा ३९ ४० सूर्यसुतोयमः ४१ धारित्रीसिंहः ४२ स्वयंमागधोव्यंसितोवंचितः ४३ कालायसींकृष्णायोमयीम् ४४ , ४५ ४६ अश्मकुट्टनिभांअश्मसारसमाम् ४७ ४८ ४९

५० ५१ ५२ ५३ ५४ कामपालोबलभद्रःजत्रुणिवक्षःस्कंधयोर्मध्येशांसेस्कंधमूले ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ अनापृच्छ्यगमिष्यामीत्यनुक्त्वा ६५ ६





तयोर्निपतितोराजन्नुपर्यासीद्धलायुधः ॥ तंमागधःक्षणेनाथश्चकारामितविक्रमः ५० ततउत्थायतौवीरौक्रोधसंरक्तलोचनौ ॥ भूयोजग्राहतुर्घोरौमत्तौद्वाविवकुंजरौ ५१ तावुभौपरमक्रुद्धौपरस्परवधैषिणौ ॥ उरसोरःसमाहत्यभ्रमिमौचक्रतुरणे ५२ एवंधनुःशतशतंतावाकृष्यपरस्परम् ॥ निकटस्थान्द्रुमान्शैलांश्चूर्णयामासतुर्नृप ५३ तंविसृज्यजरासंधोगदामादायदुर्मदः ॥ उदातिष्ठदमेयात्मारामोपिसमहाबलः ॥ क्षणादादत्तमुसलंप्रहर्तुमुपचक्रमे ५४ तंकामपालोमुसलेनमूर्ध्निजत्रुण्यंसेभुजयोर्नाभिदेशे ॥ ऊरौचजानौजठरेचवक्षस्यनेकशोवैप्रजहारयुद्धे ५५ तंमागधोवक्षसिकंधरेचमुखेललाटेचुबुकेतथांऽसे ॥ नाभौनितंबेचतथैवपार्श्वेसमंसमानीप्रजहाररामम् ५६ एवंप्रहरतोस्तत्ररामनागधयोर्मृधे ॥ राजानोरणसंविग्नाबभूवुर्भृशपीडिताः ३७ क्रमेणतेविमनसोनिवृत्तकदनोद्यमाः ॥ आसन्नासन्ननिधनंमन्वानामागधेश्वरम् ५८ सात्यकिस्तुमहातेजाःसंगरेबाणमंत्रिणा ॥ युध्यमानास्त्रिभिर्बाणैःकुंभांडेनसमर्दितः ५९ सोऽतिविद्धोमहाबाहुःक्रुद्धःसर्पइवश्वसन् ॥ आददेपंचनागचान्कुंभांडंहंतुमाहवे ६० ततोहाहारवोजज्ञेसेनायांदैत्यमंत्रिणः ॥ सात्यकिरतंमहाबाहुराकृष्याकर्णमाशुगैः ६१ विव्याधकुरुशार्दूलकुंभांडंबाणमंत्रिणम् ॥ नाभौकंठेललाटेचहृदिमूर्ध्न्यपिदानवम् ६२ अभिविद्धारथोपस्थेनिषसादविचेतनः ॥ तंविचेतनमालोक्यदुर्मनास्तस्यसारथिः ॥ अपोवाहरणात्तूर्णंरथेनभरतर्षभ ६३ कूपकर्णस्तुदैतेयःप्रसक्तःकृतवर्मणा ॥ गतंकुंभांडमालोक्यप्राप्तंचप्राणसंशयम् ॥ विसृज्यकृतवर्माणमपायात्समरांगणात् ६४ तौविसृज्यरणंदैत्यावनापृच्छ्यचभूपतिम् ॥ अविसृष्टौमागधेनहतशेषबलान्वितौ ॥ दैत्यौतेनैवमार्गेणजग्मतुःशोणितंपुरम् ६५ इतिश्रीभागवतेमहा॰दशमस्कंधेउ॰एकपंचाशत्तमोध्यायः ॥ ५१ ॥ श्रीशुकउवाच ॥ बाणसेनांगतांदृष्ट्वाशस्त्रौघेनभृशार्दिताः ॥ राजपुत्राविमनसोबभूवुर्नृपसत्तम १ गतांचदानवीसेनांश्रांतांश्चवरणीपतीन् ॥ दृष्ट्वाकृष्णंचयुध्यंतंरामस्यवत्स्यंबधेबलम् २ समागधंगृहीत्वाजौमौलौवामेनपाणिना ॥ प्रहर्तुमैच्छच्छिरसिमुसलेनहलायुधः ३ ततोऽतरिक्षेवनवोपवर्धरांशुश्राववाणींविशदाशरीरिणीम् ॥ नरामवध्योभवताजरासुतःसुखीनिवर्तस्वरणादितिस्फुटम् ४ वचस्तदाकर्ण्यहलायुधोबलीविसृज्यचास्थायरथंरणांगणात् ॥ न्यवर्ततब्रह्मर्षिसिद्धसंघैरभिष्टुतोमागधसूतवंदिभिः ५ जरासुतःसंप्रतिनम्रकंधरोनृपैश्चयुद्धाभिजितैःसमन्वितः ॥ हतावशेषाल्पबलेनसंवृतोनिवृत्तयुद्धःप्रययौस्वकंपुरम् ६ श्रीशुकउवाच ॥ गोविंदस्तुमहातेजाःसपत्नांञ्छरसंचयैः ॥ आच्छाद्यभूपान्विद्राव्यहत्वाचसुबहून्रणे ७

तिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायामेकपंचाशत्तमोऽध्यायः ५१ विमनसःयुद्धविरतमनसः १ दानवस्यबाणस्यविद्यमानाम् २ मौलौसंयतकेशे मौलिःसंयतकेशेषुचूडायांमुकुटेप्ययमिति ३ घर्घरागंभीरां गाभीर्येनूपुरारावेघर्घरःसमुदाहृतइति अशरीरिणींशरीररहीनांदैवीमित्यर्थः ४ ५ ६ ७

सम्यक्प्रीतपुरुषैःमहतीविद्याशास्त्रविषयायेषांतेतथातैः ८ ९ १० ११ १२ १३ १४ १५ मथुरांरक्षितुंनिर्गम्यनिर्धार्यं पंचम्यर्थेवाद्वितीया १६ ९ गरौःवनेोद्देशवनेउन्नतप्रदेशे वृक्षमूलेनिवासिनंकृता
वासं कंचनलोकविलक्षणम् १७ १८ १९ फलंलाभःआनंदःचेतनस्यमूलंज्ञानंतेएवकृतेपूर्णेआहारोयस्यसतथातम् २० प्रणामंचक्रतुरित्यादिनाप्रतीयमानःकृष्णभार्गवरामयोःनम्यनंतृभावोभेदाऽवि

संस्तूयमानःसंतुष्टैःसूतमागधबंदिभिः ॥ ब्राह्मणैश्चमहाविद्यैःस्तोत्रंकुर्वद्भिरुच्चकैः ८ अन्वीयमानोभगवान्प्राविशन्मथुरांपुरीम् ॥ हृष्टपुष्टजनाकीर्णांतुंगप्रा
कारतोरणाम् ९ चलत्कदलिकोपेतांदीपांकुरविराजिताम् ॥ प्रविशन्राजमार्गेणस्त्रीभिःप्रासादसंस्थितैः १० पुष्पैश्चलाजांजलिभिःकीर्यमाणोऽभ्यराजत ॥
उपायनानिदिव्यानिपुष्पस्रगनुलेपनान् ११ प्रियंकरामाधवाभ्यामुपजहुःपुरौकसः ॥ एवंसराजमार्गेणगत्वायादवसत्तमः १२ सभांप्रविश्यविपुला
मुपविश्यवरासने ॥ रामेणसहितोवीरःशैनेयेनचधीमता १३ पूजितोयदुभिर्विप्रैर्दिविशक्रइवामरैः ॥ तत्रासीनैर्बुद्धिमद्भिर्यदुवृद्धैर्महात्मभिः १४ उग्रसे
नोद्धवमुखैरक्रूरप्रमुखैर्हरिः ॥ समाभाष्याभ्यनुज्ञातःसंकर्षणसहायवान् १५ द्रष्टुकामोमहादुर्गंगोमंतंपर्वतोत्तमम् ॥ निर्गम्यमथुरांप्रातर्दक्षिणाभिमुखो
ययौ १६ सरामानुगतःश्रीमानुत्तीर्ययमुनांहरिः ॥ देशान्बहूनतिक्रम्यपर्वतान्सरितोगिरौ १७ गच्छन्कचिद्वनोद्देशेवृक्षमूलनिवासिनम् ॥ ददर्शकंचन
मुनिंजटामंडलमंडितम् १८ चीरकृष्णाजिनधरंकमंडलुविराजितम् ॥ माधवौसमुपाविष्टंतेजसाभास्करोपमम् १९ फलमूलकृताहारंवृतंशिष्यशतै
र्मुनिम् ॥ दृष्ट्वापरमसंतुष्टौरामकृष्णौजगत्पती २० प्रणामंचक्रतुर्वीरौयथान्यायमतंद्रितौ ॥ इदंचोवाचभगवान्कृष्णस्तंमुनिपुंगवम् २१ नमस्तेभार्ग
वश्रीमन्जामदग्न्यतपोधन ॥ रामकृष्णौस्मृतावावांकिंचित्तेश्रवणंगतौ २२ इत्युक्तस्तेनधर्मात्मावासुदेवेनभार्गवः ॥ निरीक्ष्यमाधवौप्राहप्रीत्युत्फुल्लमुखे
क्षणः २३ स्वागतंतेयदुश्रेष्ठसाग्रजायमहात्मने ॥ जानेत्वांयदुषूत्पन्नंभगवंतमधोक्षजम् २४ कार्याणांकारणंपूर्वंजगतामादिपूरुषम् ॥ नमस्तेपुंडरीका
क्षविश्वलोकैककारण २५ किमर्थमिहसंप्राप्तौभवंतौविश्ववंदितौ ॥ इत्युक्तौजामदग्न्येनप्राहतूरामकेशवौ २६ गोमंतंद्रष्टुमिच्छावोदुर्गंहेतोरिहप्रभो ॥
तदाकर्ण्याब्रवीद्रामोजामदग्न्योजनार्दनम् २७ एवमस्तुमहाबाहोगोमंतंगच्छसाग्रजः ॥ करवीरपुरंनामतन्मूलेपरिपालितम् २८ शृगालवासुदेवेनसयु
वांनसहिष्यति ॥ तंहत्वासमरेशैलंगोमंतंसाध्ववाप्स्यथ २९ इत्युक्तौतेनरामेणजामदग्न्येनमाधवौ ॥ तमनुज्ञाप्यसर्वज्ञंजग्मतुर्दक्षिणामुखौ ३० तौ
तथायदुशार्दूलौगच्छंतौदक्षिणापथम् ॥ ददर्शतुश्चगोमंतमभ्रंकषमहाद्रुमम् ३१

नाभावंगमयति तत्कथमुभयोर्विष्णुत्वेसंगच्छतइत्याशंक्य सर्वावताराभिन्नोपिसर्वैशक्तिरपिस्वयं पूज्यपूजकनीचोच्चंमोहनायदुरात्मनां अखंडैकरसोविष्णुर्दर्शयेत्तत्रतत्रहीतिषाड्गुण्यवचनेनपरिहर
णीयेति २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० अभ्रंकषामहांतोद्रुमाःयस्मिन्सतथातं अभ्राणिमेघान्कषंत्युल्लिखंतीत्यभ्रंकषाः कषतेर्धातोरभ्रादिपूपपदेषुखश्प्रत्ययोभवति ३१

३२ ३३ ३४ ३५ पदातिनौपादैःसचरमाणौ रथादिरहिताविव्यर्थः ३६ ३७ वासुदेवौवसुदेवपुत्रौकृष्णशृगालौ ३८ वासुदेवस्यशृगालनाम्नः ३९ ४० प्रियसुहृद्यथातथापूजितौ ४१ तदी यैस्तस्यविद्यमानैः ४२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांद्विपंचाशत्तमोऽध्यायः ॥५२॥ सालःसर्ज्जः तालस्तृणराजः तमाल.कालस्कंधः प्रियालोराजादनःअ शोकोवंजुलःसालंसर्जंचसूरयः तृणराजस्तालःकथ्यते कालस्कंधस्तमालःस्यात् राजादनःप्रियालःस्यात्वंजुलोऽशोकउच्यते १ कदंबोहरिप्रियः निंबःपिचुमंदः पिचुमंदस्तुनिंबःस्यात् हिंतालोवन

करवीरपुरंचैवतन्मूलेतुंगतोरणम् ॥ दृष्ट्वाविचित्रप्राकारंहर्म्यप्रासादगोपुरम् ३२ शंखमाध्मापयामासशंखचक्रगदाधरः ॥ तस्यशंखध्वनिंश्रुत्वाबभूव क्रोधविह्वलः ३३ शृगालोवासुदेवाख्यःप्रत्यगाद्यदुनंदनौ ॥ सोऽभ्येत्यबहुपादातितुरंगरथकुंजरः ३४ अभ्यवर्षच्छरौघेणछादयन्निवमाधवौ ॥ तद नीकमनाधृष्यंदृष्ट्वायादवसत्तमौ ३५ योधयामासतुर्वीरौद्वावेवाजौपदातिनौ ॥ सैन्यंचबाणपूगेनव्यथितंभृशविह्वलम् ३६ दृष्ट्वाशृगालभूपालस्तावधा वदमर्षणः ॥ तमायांतमभिप्रेक्ष्यरथिनंधृतकार्मुकम् ॥ न्यवारयद्वासुदेवोवेलेववरुणालयम् ३७ तावुभौपरमक्रुद्धौवासुदेवौमहाबलौ ॥ युयुधातेतथाऽ न्योन्यमन्योन्यवधकांक्षिणौ ३८ सतथाविद्यमानस्यवासुदेवस्यसंगरे ॥ शिरोजहारगोविंदःक्षणेनमुकुटोज्ज्वलम् ३९ ततस्तत्सैनिकाःसर्वेहतशेषाः कुरूद्वह ॥ कृष्णेनस्वामिनिहतेदुद्रुवुःसर्वतोदिशम् ४० ततस्तौरामगोविंदौकरवीरपुरंमहत् ॥ प्रविश्यपूजितौविप्रैर्वणिग्भिश्चयथाप्रियं ४१ तद्राजाश्व थानीककोशादिधनसंचयम् ॥ मथुरांप्रेषयामासतदीयैर्भृत्यपूरुषैः ४२ इतिश्रीभागवतेमहापुराणेदशमस्कंधेद्विपंचाशत्तमोऽध्यायः ५२ श्रीशुकउवाच गोमंतंपर्वतश्रेष्ठंतुंगद्रुमलतान्वितम् ॥ सालतालतमालाढ्यंप्रियालाशोकशोभितम् १ कदंबनिंबहिंतालपूगपुन्नागशोभितम् ॥ आरह्यकदलीखंडमंडि तंमत्तकोकिलम् २ भ्रमद्भ्रमरसंघातप्लवंगाकंपितद्रुमम् ॥ फलभारनतैःस्कंधैर्नारिकेलैर्विराजितम् ३ बहुप्रस्रवणोपेतंसुच्छायंनिर्मलोदकम् ॥ रम्यंदद शतुर्वीरौप्रदेशंरामकेशवौ ४ तत्रप्रवर्षणंनामशृंगंपर्वतमूर्धनि ॥ अवापतुर्यत्रमेघानित्यंवर्षंत्यविक्लवाः ५ तत्रारुह्ययदुश्रेष्ठौपश्यंतौहिदिशोदश ॥ रम माणौयथाकाममूषतुःपर्वतोत्तमे ६ एतस्मिन्नेवकालेतुक्षीरोदसागरोत्तमे ॥ निवासेदेवदेवस्यशंखचक्रगदाभृतः ७ उपासीनोमहाबाहुःश्रीमान्वैरोचनो बलिः ॥ जहारदेवदेवस्यकिरीटंरत्नचित्रितम् ८ इंद्रनीलसहस्राढ्यंगोमेदकशताचितम् ॥ पद्मरागमहानीलमुक्ताफलविराजितम् ९ पुष्परागप्रवाला ढ्यंदिव्यकांचननिर्मितम् ॥ हृतंदानववीरेणविदित्वापुरपालकः ॥ तमन्वधावत्त्वरितंवैनतेयोविहंगराट् १०

क्रमुकः नागःनागकेसरः पूगोतिसारोग्रामक्रमुकः पुन्नागःसुरपर्णिका २ ३ बहुभिःप्रस्रवणैर्निर्झरैरुपेतं ४ ५ ६ ७ उपासीनोमहाबाहुरित्यादिनामुक्तगम्येक्षीरसागरेबलिनादानवेंद्रेणदरेःकिरीटहरणं गरुडेनतंजित्वाकिरीटमादायागच्छतामार्गेगोमंतेवसंतंश्रीकृष्णंदृष्ट्वाकिरीटहीनेतच्छिरसितन्निधानमुच्यते तत्रसंशयः अमुक्तस्यबलेर्गमनं अजमनिद्रस्वप्नमितिश्रुतेः नित्यनिरस्तनिद्रस्यहरेःकिरीट ग्रहणमित्यादिकंकथंसंगच्छतइतीयमाशंका बहूनिस्थानजातानिकृष्णस्यक्षीरसागरइत्यादिमाहात्म्यवचनेनपरिहृतेतिज्ञातव्यम् ८ ९ १०

११ १२ १३ नमोनमइतिपुनरुक्तिरादरार्था पुरुषायेत्युक्तेजीवायेतिशंकास्यात् अतस्तन्निरासार्थंकारणेतिकारणंबंधमोक्षयोरितिश्रुतेः जीवस्यापिकारणत्वप्रतीतेर्निस्तुषत्वेनशंकानिवृत्त्येनारायणा
पेति अयंशब्दोदेवदत्तादिशब्दवत्सांकेतिकोनभवति किंतुगुणनिबद्धइतिभावेनाह अखिलेति नतर्हिशौर्यादिगुणयोगोस्त्वेत्यत्राह सुरारिराक्षसवत्संहारीवेभ्रकोप्येनमाश्रयतीत्यत्राह नारायणेति
नारोनरसमुदायस्तदाश्रयोनारायणःतस्मै ननुसर्वाश्रयत्वंराजवद्बहिस्थत्वेनोतांतःस्थत्वेनाहोस्विद्वायुवदुभयरूपेण नाद्यः अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितइतिश्रुतिव्याकोपात् नद्वितीयः
कर्मभोगप्राप्तेः नतृतीयः अखंडात्मनोद्वित्वायत्वानुपपत्तेरितितत्राह अखिलेति १४ सृष्टिसंहारयोश्चतुर्मुखपंचमुखहेतुत्वोक्तेरस्याखंडहेतुत्वंकथमितितत्राह हिरण्यगर्भत्वमिति मूलेथादिकालेहिर

तमंतरेसमासाद्यदानवेंद्रंदुरासदम् ॥ कृत्वायुद्धंमहाघोरंजित्वादानवपुंगवम् ११ गृहीत्वारत्ननिचयंकिरीटंभास्करोपमम् ॥ आगच्छन्ददृशेदेवंदेवकीनंदनं हरिम् १२ वसंतंसाग्रजंरम्येगोमंतेपर्वतोत्तमे ॥ तस्यमूर्ध्निनिधायाशुकिरीटंदिव्यभूषणम् ॥ प्रणम्यपादयोर्मूर्ध्नास्तोतुंसमुपचक्रमे १३ गरुडउवाच ॥ नमोनमःकारणपूरुषायनारायणायाखिलवल्लभाय ॥ सुरारिसंहारणकारणायनारायणायाखिलकर्मसाक्षिणे १४ हिरण्यगर्भत्वमुपेत्यमूलेसृजस्यशेषं भुवनंसएव ॥ नारायणात्मन्परिपासिभूयोजहार चांतेभगवन्शिवात्मन् १५ तंत्वाय दोर्वंशकरंसुरेशंजानेऽवतीर्णंभुवनेवृषाकपिम् ॥ अहंहिभृत्यस्तव वैनतेयोब्रूहिक्रियांकिंकरवाणिदेव १६ श्रीशुकउवाच ॥ इत्युक्त्वादेवदेवेशंप्रणिपत्यविहंगराट् ॥ जानुनीधरणींकृत्वातस्थौप्रांजलिरग्रतः १७ तंदृष्ट्वायाद वश्रेष्ठोगरुडंपक्षिपुंगवम् ॥ प्रीत्युत्फुल्लमुखोदोर्भ्यांपस्पर्शांगंतदुत्तमम् १८ गच्छभद्रयथाकाममेहिकालेमयास्मृतः ॥ इत्युक्त्वातंविसृज्योभावीश्वरौ रामकेशवौ १९ फलमूलकृताहारौपीतनिर्झरवारिणौ ॥ अवरुह्यगिरेःशृंगात्करवीरपुरंगतौ २० तत्रतौचतुरोमासानुषित्वाभरतर्षभ ॥ महत्यासेनयासा र्धंजग्मतुर्मथुरांपुरीम् २१ शृगालंनिहतंश्रुत्वामागधःक्रोधविह्वलः ॥ आजगामकुरुश्रेष्ठमहत्यासेनयावृतः २२ तेनसार्धमभूद्युद्धंसप्ताहंरामकृष्णयोः ॥ तदापराजितोयुद्धेमागधोबहुसैनिकः २३ जगाममागधानेवबहुभिःक्षत्रियैःसह ॥ रामकृष्णौचधर्मज्ञौसूतमागधबंदिभिः २४ स्तूयमानौविविशतुः सानुगौमथुरांपुरीम् ॥ एवंसप्तदशकृत्वस्तावदक्षौहिणीबलः २५ युयुधेमागधोराजायदुभिःकृष्णपालितैः ॥ अक्षिण्वतबलंसर्वंवृष्णिभिःकृष्णतेजसा २६ हतेषुतेष्वनीकेषुत्यक्तोऽयादरिभिर्नृप ॥ अष्टादशमसंग्रामेआगामिनितदंतरा २७ नारदप्रेषितोवीरोयवनःप्रत्यदृश्यत ॥ रुरोधमथुरामेत्य तिसृभिर्म्लेच्छकोटिभिः २८

ण्यगर्भःसृष्ट्वातदंतर्यामित्वेनतन्नामवाच्यत्वमुपेत्य भूयःपश्चान्नारायणात्मन्नारायणनामपरमात्मन्पुनःशिवात्मानंसृष्ट्वातदंतर्यामित्वेनतन्नामवाच्यं तदुक्तं ब्रह्मस्थोब्रह्मनामासौरुद्रस्थोरुद्रनामकइत्यादि
१५ एवंविधोविष्णुस्त्वमित्याह तंत्वेति भुवनेप्रसिद्धंवृषाकपिंविष्णुमवतीर्णंतत्सृष्ट्यादिहेतुंचजानइत्यन्वयः विष्णौरुद्रेवृषाकपिरित्यतोयदोर्वंशकरमित्यादिक्रियाविशेषणकर्तव्यं धर्मप्रेरकत्वेनफलवर्ष
णाद्वृषः कस्यसुखस्यापातृत्वात्कपिः यद्वाअकाद्दुःखात्शरणागतंजगत्पातीतिवृषाकपिरिति १६ १७ तस्यउत्तममंगंउत्तमांगंशिरइत्यर्थः १८ १९ २० २१ २२ २३
२४ २५ अक्षिण्वत अक्षीयत २६ २७ २८

२९ उभयतोमागधाद्यवनाच्चयामंवृजिनंदुःखम् ३० अस्येतिषष्ठीतृतीयार्थे अनेनसह चावयोर्युध्यतोः ३१ दुःखंगच्छत्यस्मिन्नितिदुर्गं सुदुरोरधिकरणइतिगमेर्डप्रत्ययः विशिनष्टि द्विप देति द्विपदेयेषांतेतथाद्विपदः पदेतिनिपातोविवक्षितः मनुष्यैरगम्यमित्यर्थः ३२ ३३ त्वष्टुर्विश्वकर्मणोविद्यमानंत्वाष्ट्रम् किंतद्विज्ञानमत्राह शिल्पनैपुणमिति शिल्पविद्यापटुत्वम् ३४ र थ्याराजमार्गः वीथीवणिजांमार्गः यथावास्तुवास्तुलक्षणमनतिक्रम्य दिविस्पृग्भिःहट्टुभ्यामुपलक्ष्यानमित्यलुक्समासः ३५ राजतै.रजतमयैररपुटैर्लोहविशेषैः कुम्भैःकोष्ठैरंतर्गृहै ३६ रत्नकूटैःरत्न

नृलोकेचाप्रतिद्वंद्वोवृष्णिन्श्रुत्वात्मसंमतान् ॥ तंदृष्ट्वाऽचिंतयत्कृष्णःसंकर्षणसहायवान् २९ अहोयदूनांवृजिनंप्राप्तंह्युभयतोमहत् ॥ यवनोऽयंनिरुं द्धेऽस्मानद्यत्र्योवामहाबलः ३० मागधोऽप्येतिदुष्टात्मापरश्वोनैवसंशयः ॥ आवयोर्युध्यतोरस्ययद्यागच्छेज्जरासुतः ३१ बंधून्वाधिष्यत्यथवानेष्य तेस्वपुरंबली ॥ तस्मादद्यविधास्यामोदुर्गंद्विपददुर्गमम् ३२ तत्रज्ञातीन्समाधायययवनंघातयामहे ॥ इतिसंमंत्र्यभगवान्दुर्गंद्वादशयोजनम् ३३ अं तःसमुद्रेनगरंकृष्णोऽद्भुतमचीक्लृपत् ॥ दृश्यतेयत्रहित्वाष्ट्रंविज्ञानंशिल्पनैपुणम् ३४ रथ्याचत्वरवीथीभिर्यथावास्तुविनिर्मितम् ॥ सुरद्रुमलतोद्यान विचित्रोपवनान्वितम् ३५ हेमशृंगैर्दिविस्पृग्भिःस्फाटिकाट्टालगोपुरैः ॥ राजतारपुटैःकोष्ठैर्जुष्टंहैमैःस्वलंकृतैः ३६ रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥ वास्तोष्पतीनांचगृहैर्वल्लभीभिश्चनिर्मितम् ३७ चातुर्वर्ण्यजनाकीर्णंयदूनांचगृहैर्लसत् ॥ सुधर्मांपारिजातंचमहेंद्रःप्राहिणोद्धरेः ३८ यत्रचावस्थितो मर्त्योमर्त्यधर्मैर्नयुज्यते ॥ यत्रियंदेवदेवस्यविष्णोःक्षीरोदवासिनः ३९ श्यामैककर्णान्वरुणोहयान्शुक्लान्मनोजवान् ॥ ददौसहस्रसंख्यातान्देवदेवायतो यराट् ४० अष्टौनिधिपतिःकोशान्रत्नपूर्णानविक्षयान् ॥ तथान्येलोकपालाश्चददुःस्वाधिकृतंधनम् ४१ यद्यद्भगवतादत्तमाधिपत्यंस्वसिद्धये ॥ सर्वं प्रत्यर्पयामासुर्हरौभूमिगतेनृप ४२ तत्रयोगप्रभावेणनीत्वास्वान्भगवान्हरिः ॥ मथुरायाश्चरामेणकृष्णःसमनुमंत्रितः ४३ निर्जगामपुरद्वारात्पद्ममाली निरायुधः ४४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेत्रिपंचाशत्तमोऽध्यायः ५३ ॥ श्रीशुकउवाच ॥ तंविलोक्यविनिष्क्रांतमुज्जिहानमिवोडुप म् ॥ दर्शनीयतमंश्यामंपीतकौशेयवाससम् १ श्रीवत्सवक्षसंभ्राजत्कौस्तुभामुक्तकंधरम् ॥ पृथुदीर्घचतुर्बाहुंनवकंजारुणेक्षणम् २ नित्यप्रमुदितंश्रीमत्सु कपोलंशुचिस्मितम् ॥ मुखारविंदंबिभ्राणंस्फुरन्मकरकुंडलम् ३ वासुदेवोह्ययमितिपुमान्श्रीवत्सलांछनः ॥ चतुर्भुजोऽरविंदाक्षोवनमाल्यतिसुंदरः ४ लक्षणैर्नारदप्रोक्तैर्नान्योभवितुमर्हति ॥ निरायुधश्चरन्पद्भ्यांयोत्स्येऽनेननिरायुधः ५

शृंगैः वास्तोष्पतीनांवास्तुदेवतानाम् ३७ ३८ मर्त्यधर्मैर्जरादिलक्षणैःक्षीरोदशायिनोविष्णोर्यास्त्रियंहृद्यंतदर्पिददौ ३९ ४० निधिपतिःकुबेरः अष्टौकोशान्निधीन् आविक्षयानव्ययान्स्वाधि कृतंस्वकीयत्वेनाभिमतम् ४१ क्षीरोदविमथनेहरिणादत्तम् ४२ योगप्रभावेणमथुरास्थितपदार्थराशिर्यथाद्वारकास्थितोभवतितथाकरणसामर्थ्येनरामेणसमनुमंत्रित.सहितः ४३ ४४ इतिश्रीभागव तेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांत्रिपंचाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ ७ ॥ ॥ उज्जिहानमुद्यतम् १ २ ३ ४ ५

जिघृक्षुर्ग्रहणेच्छुः ६ दूरमद्रिकंदरंप्रतिनीतःपदेपदेहस्तप्राप्तमिवात्मानंदर्शयित्वेतिशेषः दर्शयताआत्मानमितिशेषः ७ अहताशुभः अनष्टपापः ८ ९ १० ११ १२ कस्यपुत्रइतिशेषः यवनमर्दितवान्ददिखितवान् १३ १४ तेषांसुराणांरक्षाम् १५ स्वःपालंस्वर्गरक्षाकरं परिपालनाज्जातात्कृच्छ्रात् १६ उज्झितास्त्यक्ताः १७ तुल्यकालीनास्तत्कालसमानजाताः कालिताःकालेनविना

इतिनिश्चित्ययवनःप्राद्रवंतंपराङ्मुखम् ॥ अन्वधावज्जिघृक्षुस्तंदुरापमपियोगिनाम् ६ हस्तप्राप्तमिवात्मानंहरिणासपदेपदे ॥ नीतोदर्शयतादूरंयवनेशोऽद्रिकंदरम् ७ पलायनंयदुकुलेजातस्यतवनोचितम् ॥ इतिक्षिपन्ननुगतोनैनंप्रापाहताशुभः ८ एवंक्षिप्तोपिभगवान्प्राविशद्गिरिकंदरम् ॥ सोपिप्रविष्टस्तत्रान्यंशयानंददृशेनरम् ९ नन्वसौदूरमानीयशेतेमामिहसाधुवत् ॥ इतिमत्वाच्युतंमूढस्तंपदासमताडयत् १० सउत्थायचिरंसुप्तःशनैरुन्मील्यलोचने ॥ दिशोविलोकयन्पार्श्वेतमद्राक्षीदवस्थितम् ११ सतावत्तस्यरुष्टस्यदृष्टिपातेनभारत ॥ देहजेनाग्निनादग्धोभस्मसादभवत्क्षणात् १२ ॥ राजोवाच ॥ कोनामसपुमान्ब्रह्मन्कस्यकिंवीर्यएववा ॥ कस्माद्गुहागतःशिश्येकिंतेजोयवनार्दनम् १३ श्रीशुकउवाच ॥ सइक्ष्वाकुकुलेजातोमांधातृतनयोमहान् ॥ मुचुकुंदइतिख्यातोब्रह्मण्यःसत्यसंगरः १४ सयाचितःसुरगणैरिंद्राद्यैरात्मरक्षणे ॥ असुरेभ्यःपरित्रस्तैस्तद्रक्षांसोऽकरोच्चिरम् १५ लब्ध्वागुहंतेस्वःपालंमुचुकुंदमथाऽब्रुवन्॥राजन्विरमतांकृच्छ्राद्भवान्नःपरिपालनात् १६ नरलोकंपरित्यज्यराज्यंनिहतकंटकम् ॥ अस्मान्पालयतोवीरकामास्तेसर्वउज्झिताः १७ सुतामहिष्योभवतोज्ञातयोऽमात्यमंत्रिणः ॥ प्रजाश्चतुल्यकालीनानाधुनासंतिकालिताः १८ कालोबलीयान्बलिनांभगवानीश्वरोऽव्ययः ॥ प्रजाःकालयतेक्रीडन्पशुपालोयथापशून् १९ वरंवृणीष्वभद्रंतेऋतेकैवल्यमात्मनः ॥ एकएवेश्वरस्तस्यभगवान्विष्णुरव्ययः २० एवमुक्तःसवैदेवानभिवाद्यमहायशाः ॥ अयाचतगुहाधिष्ठोनिद्रांतुबहुकालिकीम् २१ तथेत्युक्तस्तुतैर्देवैर्मुचुकुंदोमहामनाः ॥ अशयिष्टगुहाविष्टोनिद्रयादेवदत्तया २२ यवनेभस्मसान्नीतेभगवान्सात्वतर्षभः ॥ आत्मानंदर्शयामासमुचुकुंदायधीमते २३ तमालोक्यघनश्यामंपीतकौशेयवाससम् ॥ श्रीवत्सवक्षसंभ्राजत्कौस्तुभेनविराजितम् २४ चतुर्भुजंरोचमानंवैजयंत्याचमालया ॥ चारुप्रसन्नवदनंस्फुरन्मकरकुंडलम् २५ प्रेक्षणीयंत्रिलोकस्यसानुरागस्मितेक्षणम् ॥ अपीच्यवयसंमत्तमृगेंद्रोदारविक्रमम् २६ पर्यपृच्छन्महाबुद्धिस्तेजसातस्यविस्मितः ॥ शंकितःशनकैराजादुर्धर्षमतितेजसा २७ मुचुकुंदउवाच ॥ कोभवानिहसंप्राप्तोविपिनेगिरिगह्वरे ॥ पद्भ्यांपद्मपलाशाभ्यांविचरस्युरुकंटके २८

शिताः १८ कालयतेउभयपदी कालःकइतितत्राह भगवानिति अव्ययःस्वरूपतोऽवयवतोगुणतोपिनाशरहितः १९ २० आत्मनस्तुबहुकालिकींबहुकालभोग्याम् २१ २२ २३ २४ २५ त्रिलोकस्यमध्येदर्शनीयगुणम् २६ अतितेजसाअधिकतेजसा २७ गिरिगह्वरेप्रवेष्टुमशक्ये २८

तेजस्विनां ज्योतिष्मतां पुंजीभूतमेकं तेजः किंस्वित् सामान्योक्तं विशिनष्टि भगवानिति २९ त्रयाणां ब्रह्मविष्णुशिवानां मध्ये पुरुषर्षभं पुरुषश्रेष्ठं विष्णुं मन्ये यद्वा त्रयाणां ब्रह्मरुद्रेंद्राणां त्रेताग्नीनां वा तत्र हेतुमाह यदिति गुहाध्वांतमित्युपलक्षणं ब्रह्मांडगुहाव्यापितिमिरमपि प्रदीपो न गृहांतर्वर्तिज्योतीरूपं रत्नगृह्यते किंतु मूर्योऽपि ३० अव्यलीकं सत्यं शुश्रूषतां श्रोतुकामानाम् ३१ ऐक्ष्वाकाः इक्ष्वाकुकुले जाताः ३२ ३३ ३४ हतौजसः नष्टतेजसः ३५ ह्रादः निःस्वनः ३६ मातुं संख्यातुं न शक्यं ते कुतः अनंतत्वात् अतोऽनंतानामनंताइत्येव परिसंख्यानमन्यथानंतत्वहानिः ३७ अनंतत्वमाह क्वचिदिति कश्चित् कइव ब्रह्मैव सोऽपि मे जन्मानि गुणकर्माभिधानानि न विममे ३८ अनुक्रमंतः निरंतरं पठतः ३९ ४० भारायमाणानां भारवदाचरतां कर्तुः क्यङ् सलोपश्चेति पाणिनिः गृहेभायांल

किंस्वित्तेजस्विनां तेजो भगवान्स्वां विभावसुः ॥ सूर्यः सोमो महेंद्रो वा लोकपालोऽपरोऽपि वा २९ मन्ये त्वां देवदेवानां त्रयाणां पुरुषर्षभम् ॥ यद्बाधसे गुहाध्वांतं प्रदीपः प्रभया यथा ३० शुश्रूषतामव्यलीकमस्माकं नरपुंगव ॥ स्वजन्मकर्मगोत्रं वा कथ्यतां यदि रोचते ३१ वयं तु पुरुषव्याघ्र ऐक्ष्वाकाः क्षत्रबंधवः ॥ मुचुकुंद इति प्रोक्तो यौवनाश्वात्मजः प्रभो ३२ चिरप्रजागरश्रांतो निद्रयोपहतेंद्रियः ॥ शयेऽस्मिन्विजने कामं केनाप्युत्थापितोऽधुना ३३ सोऽपि भस्मीकृतो नूनमात्मीयेनैव पाप्मना ॥ अनंतरं भवान्श्रीमान्लक्षितोऽमित्रशासनः ३४ तेजसा तेऽविषह्येण भूरि द्रष्टुं न शक्नुमः ॥ हतौजसो महाभाग माननीयोऽसि देहिनाम् ३५ एवं संभाषितो राज्ञा भगवान्भूतभावनः ॥ प्रत्याह प्रहसन्वाण्या मेघनादगभीरया ३६ श्रीकृष्ण उवाच ॥ जन्मकर्माभिधानानि संति मेऽग सहस्रशः ॥ न शक्यंतेऽनुसंख्यातुमनंतत्वान्ममापि हि ३७ क्वचिद्रजांसि विममे पार्थिवान्युरुजन्मभिः ॥ गुणकर्माभिधानानि न मे जन्मानि कर्हिचित् ३८ कालत्रयोपपन्नानि जन्मकर्माणि मे नृप ॥ अनुक्रमंतो नैवांतं गच्छंति परमर्षयः ३९ तथाप्यद्यतनान्यंग शृणुष्व गदतो मम ॥ विज्ञापितो विरिंचेन पुराऽहं धर्मगुप्तये ४० भूमेर्भारायमाणानामसुराणां क्षयाय च ॥ अवतीर्णो यदुकुले गृह आनकदुंदुभेः ४१ वदंति वासुदेवेति वसुदेवसुतं हि माम् ॥ कालनेमिर्हतः कंसः प्रलंबाद्याश्च सद्द्विषः ४२ अयं च यवनो दग्धो राजंस्ते तिग्मचक्षुषा ॥ सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः ४३ प्रार्थितः प्रचुरं पूर्वं त्वयाहं भक्तवत्सलः ॥ वरान्वृणीष्व राजर्षे सर्वान्कामान्ददामि ते ४४ मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम् ४५ श्रीशुक उवाच ॥ इत्युक्तस्तं प्रणम्याह मुचुकुंदो मुदान्वितः ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ४६ मुचुकुंद उवाच ॥ विमोहितोऽयं जन ईश मायया त्वदीयया त्वां न भजत्यनर्थदृक् ॥ सुखाय दुःखप्रभवेषु सज्जते गृहेषु योषित्पुरुषश्च वंचितः ४७ लब्ध्वा जनो दुर्लभमत्र मानुषं कथंचिदव्यंगमयत्नतोऽनघ ॥ पादारविंदं न भजत्यसन्मतिर्गृहांधकूपे पतितो यथा पशुः ४८

क्षणे ४१ निमित्तं कथयति वसुदेवेति ४२ तिग्मचक्षुषा चंद्रनेत्राग्निना ४३ ४४ ४५ ४६ अनर्थदृक् स्वपुरुषार्थदर्शी न भवतीत्यर्थः यद्वा अनर्थं संसारमर्थं पश्यतीति दुःखप्रभवेषु दुःखहेतुषु पुरुषेण वंचिता योषित् तया पुनः पुरुषश्च वंचितः ४७ मायया मोहितत्वमुपपादयति लब्ध्वेति अत्र कर्मभूमौ मानुषमंगं देहं असत्सु विषयेषु मतिर्यस्य स तथा अंधकूपे पतितः पशुर्यथा स्वरूपं न भजति तथा गृहलक्षणांधकूपे ४८

मर्त्यात्मबुद्धेर्देहात्मबुद्धेः ४९ देहात्मबुद्धित्वंदर्शयति कलेवरइति दुरंतविषयचिंतयादुष्टोमदोविद्याभिजनलक्षणोयस्यसतथा ५० धनादिनिमित्तमदस्यदुष्टत्वंकथमत्राह प्रमत्तमिति क्षुधाजिह्वयासृक्किणीलिलिहन् ५१ किमत्रप्रमाणमित्यतःप्रत्यक्षमेवेत्याह पुरेति योदेहःपुरानरदेवसंज्ञितः सएवदेहोदुरत्ययेनकालेनविट्कृमिभस्मसंज्ञितोभवतीतिशेषः श्वादिभक्षितोविष्ठासंज्ञितोभवति अदग्धःकृमिसंज्ञितः दग्धःभस्मसंज्ञितइतिविशेषः ५२ इदंचलज्जाकरमित्याह निर्जित्येति दिक्चक्रंदिङ्मंडलम् अभूतविग्रहःअजातयुद्धः वयसाकुलेनदानेनविद्ययाचसमैराजभिर्वंदितःबहिरेवंविधःपुरुषो मैथुन्यपरेषुग्राम्यसुखमात्ररतेषुयोषितांक्रीडामृगोगीयतइत्यन्वयः ५३ त्वद्भक्तिरहितस्यपुंसःकर्मकरणंगजस्नानतुल्यमितिभावेनाह करोतीति हेमहीशनिवृत्तभोगः तदपेक्षयातेषांभोगानांसजातीयभोगेच्छयापुनर्निष्ठितस्तद्योग्यदेवतापूजासुनितरांस्थिरोयःकर्माणितदनुगुणंतपश्चकरोति सपुनश्चधनादिददत्भूयाद्भूयसेमहतोराधसेसंपदेप्रवृद्धतर्षः अत्युद्रिक्ततृष्णः सुखायनकल्पतइत्यन्वयः सुखंनाममुक्ति

ममैषकालोऽजितनिष्फलोगतोराज्यश्रियोन्नद्धमदस्यभूपतेः ॥ मर्त्यात्मबुद्धेःसुतदारकोशभूष्वासज्जमानस्यदुरंतचिंतया ४९ कलेवरेऽस्मिन्घटकुड्यसन्निभेनिरूढमानोनरदेवइत्यहम् ॥ वृतोरथेभाश्वपदात्यनीकपैर्गांपर्यटंस्त्वागणयन्सुदुर्मदः ५० प्रमत्तमुच्चैरितिकृत्यचिंतयाप्रवृद्धलोभंविषयेषुलालसम् ॥ त्वमप्रमत्तःसहसाभिपद्यसेक्षुल्लेलिहानोऽहिरिवाखुमंतकः ५१ पुरारथैर्हेमपरिष्कृतैश्चरन्मतंगजैर्वानरदेवसंज्ञितः ॥ सएवकालेनदुरत्ययेनतेकलेवरोविट्कृमिभस्मसंज्ञितः ५२ निर्जित्यदिक्चक्रमभूतविग्रहोवरासनस्थःसमराजवंदितः ॥ गृहेषुमैथुन्यसुखेषुयोषितांक्रीडामृगःपूरुषईशनीयते ५३ करोतिकर्माणितपःसुनिष्ठितोनिवृत्तभोगस्तदपेक्षयाददत् ॥ पुनश्चभूयासमहंस्वराडितिप्रवृद्धतर्षोनसुखायकल्पते ५४ भवापवर्गोभ्रमतोयदाभवेज्जनस्यतर्ह्यच्युतसत्समागमः ॥ सत्संगमोयर्हितदैवसद्गतौपरावरेशेत्वयिजायतेमतिः ५५ मन्येममानुग्रहईशतेकृतोराज्यानुबंधापगमोयदृच्छया ॥ यःप्रार्थ्यतेसाधुभिरेकचर्ययावनंविविक्षुद्भिरखंडभूमिपैः ५६ नकामयेऽन्यंतवपादसेवनादकिंचनप्रार्थ्यतमाद्वरंविभो ॥ आराध्यकस्त्वांह्यपवर्गदंहरेवृणीतआर्योवरमात्मबंधनम् ५७ तस्मादिसृज्याशिषईशसर्वतोरजस्तमःसत्वगुणानुबंधनाः ॥ निरंजनंनिर्गुणमद्वयंपरंत्वांज्ञप्तिमात्रंपुरुषंव्रजाम्यहम् ५८ चिरमिहवृजिनार्तस्तप्यमानोऽनुतापैरवितृषषडमित्रोलब्धशांतिःकथंचित् ॥ शरणदसमुपेतस्त्वत्पदाब्जंपरात्मन्नभयमृतमशोकंपाहिमापन्नमीश ५९

लक्षणम् तर्हिकदामोक्षःस्यादत्राह भवेति हेअच्युतनानायोनिषुभ्रमतोजनस्ययदासत्संगमः तर्हितदाभवापवर्गःस्यात् भगवज्ज्ञानफलंमोक्षःकथमन्यतःस्यादितितत्राह सत्संगमइति यर्हियदासत्संगमःस्यात्तदैवत्वयिश्रवणादिलक्षणःसंगमःस्यात् तस्मात्परावरेशेमुक्तामुक्तस्वामिनित्वयिमतिस्त्वत्प्रसादजनकंज्ञानंस्यात् ५५ अतोज्ञानद्वारासत्संगमोमुक्तिसाधनमसत्संगमोऽनर्थहेतुरितिगृहादिसंगत्यागःसत्संगहेतुरित्याशयेनाह मन्यइति तेत्वयाराज्यानुबंधापगमःराज्यस्यतदनुबंधकस्यकोशादेश्चापगमस्त्यागः एकचर्यया एकएवचरेद्भिक्षुरितिवचनात्एकाकित्वेनवरगंअखंडभूमिपैःसार्वभौमैःविविक्षुद्भिःप्रवेष्टुमिच्छद्भिः ५६ फलितमाह नेति आर्योज्ञानी आत्मनःस्वस्यबंधनंसंसारकारणंवरम् ५७ तर्हिकिंकरोषीतितत्राह तस्मादिति आशिषःस्वर्गादिसंपदः रजसामानुषः तमसाराक्षसादिः सत्वेनदेवादिः ज्ञप्तिमात्रंज्ञानघनम् ५८ अधुनाकर्तव्यंकिंतत्राह चिरमिति वृजिनार्तःदुःखक्लिष्टः एतदेवविवृणोति तप्यमानइति अवितृषःसतृष्णःउरुकृच्छ्रविपर्ययेकथंचिल्लब्धशांतिःलब्धमोक्षःप्रसत्यागइत्यर्थः ऋतंशश्वदेकप्रकारम् आपन्नंसंसारकूपेपतितम् उरुकृच्छ्रेवृजिनार्तइतित्रा ५९

६० वरैःप्रलोभितइतियत्तदप्रमादायविद्धि नैतच्चित्रमित्याशयेनाह नेति ६१ क्षीणादुष्कर्मवासनायस्मिन्तत्तथा उत्थितंविषयाभिमुखम् ६२ ६३ ६४ केवलंमाम् केवलोनिर्गुणश्चेतिश्रुतेः ६५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांचतुःपंचाशत्तमोऽध्यायः ॥ ५४ ॥ इक्ष्वाकोर्वंशंनंदयतीतिइक्ष्वाकुनंदनःसन्नम्यसम्यङ्नत्वा १ क्षुल्लकान्गुणतःपरिमाणतश्चाल्पमानान् २ इदंतत्त्वमुतातत्त्वमिदमितिसंशयोमुक्तोयेनसतथा ३ ४ भक्तमनुसरति भगवानिति यवनेनाहृतमानीतम् ५ त्रयोविंशत्यनीकपःत्रयोविंशदक्षौहिणीपतिः ६ रथनागाश्वपत्तिम

श्रीभगवानुवाच ॥ सार्वभौममहाराजमतिस्तेविमलोर्जिता ॥ वरैःप्रलोभितस्यापिनकामैर्विहतायतः ६० प्रलोभितोवरैर्यत्त्वमप्रमादायविद्धितत् ॥ नधीर्मय्येकभक्तानामाशीर्भिर्भिद्यतेक्वचित् ६१ ज्ञानिनामेकभक्तानांप्राणायामादिभिर्मनः ॥ नक्षीणवासनंराजन्दृश्यतेक्वचिदुत्थितम् ६२ विचरस्व महींकामंमय्यावेशितमानसः ॥ अस्त्वेवंनित्यदातुभ्यंभक्तिर्मय्यनपायिनी ६३ क्षत्रधर्मस्थितोजंतून्नवधीर्मृगयादिभिः ॥ समाहितस्तत्तपसाजह्यघं मामुपाश्रितः ६४ जन्मन्यनंतरेराजन्सर्वभूतसुहृत्तमः ॥ भूत्वाद्विजवरस्त्वंवैमामुपैष्यसिकेवलम् ६५ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धे चतुःपंचाशत्तमोऽध्यायः ५४ श्रीशुकउवाच ॥ इत्थंसोऽनुगृहीतोंगकृष्णेनेक्ष्वाकुनंदनः ॥ तंपरिक्रम्यसन्नम्यनिश्चक्रामगुहामुखात् १ सवीक्ष्यक्षुल्लकान्मर्त्यान्पशून्वीरुद्वनस्पतीन् ॥ मत्वाकलियुगंप्राप्तंजगामदिशमुत्तराम् २ तपःश्रद्धायुतोवीरोनिःसंगोमुक्तसंशयः ॥ समाधायमनःकृष्णेप्राविशद्गंधमादनम् ३ बदर्याश्रममासाद्यनरनारायणाश्रमम् ॥ सर्वद्वंद्वसहःशांतस्तपसाराधयद्धरिम् ४ भगवान्पुनराव्रज्यमथुरांयवनाहृतम् ॥ हत्वाम्लेच्छबलंनिन्येतदीयंद्वारकांधनम् ५ नीयमानेधनेगोभिर्नृभिश्चाच्युतचोदितैः ॥ आजगामजरासंधस्त्रयोविंशत्यनीकपः ६ ततोराजाजरासंधःकालांतानलसन्निभः ॥ विधायमकरव्यूहंरथनागाश्वपत्तिमत् ॥ अंतश्चकारगोविंदंव्यूहरयानिमिषांतरे ७ ततोविलोक्यगोविंदोवृक्षमुत्पाट्यरंहसा ॥ गजान्रथान्हयान्युद्धेपोथयामासदुर्मदः ८ कृष्णेनहन्यमानास्तेवृक्षेणरिपुकुंजराः ॥ पेतुर्गतासवोभूमौवज्रनुन्नाइवाद्रयः ९ रथाश्वरथिभिर्युक्ताःसतुरंगाःसचोदकाः ॥ निष्पिष्टाइवनकापिदृश्यंतेकुरुसत्तम १० रामस्तुमुष्टिनाचाजौकुंजरान्मदशालिनः ॥ जघानकुपितःशैलान्वज्रेणेवसुरेश्वरः ११ राममुष्टिप्रहारेणविकीर्णस्यंदनान्नृप ॥ नव्यदृश्यंतभूपृष्ठेचूर्णिताःशीर्णपर्णवत् १२ यवनस्यधनंविश्वंगच्छंतंद्वारकामनु ॥ निहत्ययादवान्विश्वांस्तद्धृत्वाजरासुतः १३ अभ्यवर्ततसंग्रामेरामकृष्णौकुरूद्वह ॥ विलोक्यवेगरभसंरिपुसैन्यस्यमाधवौ १४ तंचापतंतमालोक्यसहितंसबलैर्नृपैः ॥ कीर्यमाणौशरौघेणवृश्चेवकरिपोतकौ १५ विरथौविप्रहरणौविवर्माणौविसैनिकौ ॥ मनुष्यचेष्टामापन्नौराजन्दुद्रुवतुर्द्रुतम् १६

दितिक्रियाविशेषणम् रथादिमंतमितिव्यत्ययेनवायोज्यम् ७ दुर्मदोयथाजंतून्हंतितथा लुप्तोपमम् ८ अद्रयोगिरयः अद्रयोर्कगिरिद्रुमाइति ९ सतुरंगाःसचोदकाःससादिनः निष्पिष्टाःहताः १० ११ १२ यादवैर्द्वारकांगच्छंतंनीयमानंयवनस्यविश्वंधनंदृष्ट्वाअनुद्रुत्ययादवान्निहत्यनिर्जित्य १३ वेगरभसंयागसंभ्रमम् १४ १५ १६

॥ १७ ॥ प्रमाणंज्ञानंबलेयत्तांनवेत्तीतिअप्रमाणवित् ॥१८॥ १९ ॥ गोमंतंपर्वतमारुह्य ॥२०॥ प्रवर्षणाख्यंतस्यगोमंतस्यशृंगमापतुरितिशेषः तत्रशृंगेआसतुःउपविविशतुः ॥ २१ ॥ २२ ॥ २३ ॥

विहायवित्तंप्रचुरमभीतौभीरुभीतवत् ॥ पद्भ्यांपद्मपलाशाभ्यांचेरतुर्बहुयोजनम् १७ पलायमानौतौदृष्ट्वामागधःप्रहसन्बली ॥ अन्वधावद्रथानीकैरी
शयोरप्रमाणवित् १८ प्रहृत्यदूरंसंश्रांतौतुंगमारुहतांगिरिम् ॥ तावारुरुहतुर्वीरौगोमंतमुदितेरवौ १९ सिद्धचारणगंधर्वविद्याधरनिषेवितम् ॥ आरुह्य
शैलंगोमंतंरामकृष्णौत्वरान्वितौ २० प्रवर्षणाख्यंतच्छृंगंयत्राब्दानित्यवर्षिणः ॥ तत्रतावासतूराजन्फलमूलाशनौसुखम् २१ जरासंधस्तुतुष्टात्माता
वनुद्रुत्यमाधवौ ॥ रुरोधशैलंगोमंतंमहत्यासेनयावृतः २२ सभूपालान्समाहूयस्वानुगान्युद्धदुर्मदान् ॥ कलिंगंकुंजरपतिंसुराष्ट्राधिपतिंतथा २३ जयद्र
थंसिंधुपतिंसोमदत्तंचकौरवम् ॥ गांधारराजंशकुनिंवैदर्भंरुक्मिमेवच २४ सुदक्षिणंचकांबोजंविराटंमत्स्यभूपतिम् ॥ एतानाज्ञापयामासपूर्वस्यांदिशि
भूपतीन् २५ पांचालराजंद्रुपदंदमघोषंचचेदिपम् ॥ ब्रह्मदत्तंचशाल्वेशमेकलव्यंनिषादपम् २६ बाह्लिकंचकुरुश्रेष्ठंयुधामन्युंचदुर्जयम् ॥ विंदानुविंदावा
वंत्यौकाशिराजंचपौंड्रकम् २७ आज्ञापयामासनृपानेतान्वीरोजरासुतः ॥ गिरिंगोमंतमारोढुंदक्षिणस्यांदिशिप्रभो २८ द्रुमंकिंपुरुषाधीशंदंतवक्रंसहानु
जम् ॥ वीरंविदेहराजानंभूरिश्रवसमेवच २९ करूषेशंबृहद्बापंदाशार्णंचशतध्वजम् ॥ शैब्यंसुवीरराजानंदरदंचमहारथम् ३० एतान्महीपतीन्राजाजरासं
धोऽमितद्युतिः ॥ प्राहगोमंतमारोढुंपश्चिमस्यांदिशिद्रुतम् ३१ त्रिगर्तंचसुशर्माणंबलिनंवेणुदारिणम् ॥ कुलिंदंचमहासत्वंकेकयानपिभूपतीन् ३२ शिशु
पालंचभूपालंभीष्मकंचापिदुर्जयम् ॥ पुरस्कृत्यारुरोहाशुकौबेर्यांमागधोदिशि ३३ एवंगोमंतमारुह्यसर्वर्तुफलपादपम् ॥ विचित्यतत्रसर्वत्राप्यधःशृं
गात्प्रवर्षणात् ३४ चिच्छिदुःसकलान्वृक्षान्नापश्यन्राममाधवौ ॥ गिरौविलीनावाज्ञायनाधिगम्यपदंनृप ३५ ददाहगिरिमेधोभिःसमंतादग्निमुत्सृजन्
ततउत्प्लुत्यतरसादह्यमानात्तुतावुभौ ३६ दशैकयोजनोत्तुंगान्निपेततुरधोभुवि ॥ अलक्ष्यमाणौरिपुणासानुगेनयदूत्तमौ ३७ स्वपुरींपुनरायातौसमुद्रपरि
खांनृप ॥ सोऽपिदग्धावितिमृषामन्वानोबलकेशवौ ३८ बलमाकृष्यसुमहन्मगधान्मागधोययौ ॥ अष्टादशेतुसंग्रामेजित्वायादवसत्तमौ ३९
दमःस्वराष्ट्रेन्यवसज्जितादिङ्मंडलोनृप ॥ माधवौतुमहात्मानौप्रविश्यद्वारकांपुरीम् ४० स्तूयमानौदिवारात्रंसूतमागधबंदिभिः ॥ वृतावानंदबहुलैर्बंधु
भिःसुखमूषतुः ४१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेपंचपंचाशत्तमोऽध्यायः ५५ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ एधोभिःकाष्ठैः ॥ ३६ ॥ ३७ ॥ समुद्रएवपरिखाखातंनदीयस्याःसातथा ॥ ३८ ॥ ३९ ॥
॥ ४० ॥ ४१ ॥ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांपंचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ७ ॥

परापूर्वैषांसख्यांवृणक्तिवितर्तुराणोअपरेभिरेतीत्यादिश्रुत्यर्थदीपकन्यायेनदर्शयत्यस्मिन्नध्याये तत्रश्रीकृष्णोयुद्धेकुंतीसुतैर्वद्धंपांचालभूपतिंश्रुत्वाहृष्टस्तद्वृत्तांतविवित्सयावत्समीपेकृतवर्माणंप्रेषयामा सेति कथयति कदाचिदिति १ ब्राह्मणैरुक्तम् २ ३ ४ ५ ६ वासुदेवंशृगालनामानं वरुणालयेसमुद्रे ७ ८ ९ १० ११ १२ १३ १४ १५ आनंदनिर्भरः आनंदपूर्णोबभूवेत्यनेनपूर्णानंदत्वं सदातनंनकादाचित्कमितिसूचयति भूसत्तायामितिधातोः सत्तायाःसदातनत्वादिति १६ १७ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वज०टीकायांषट्पंचाशत्तमोऽध्यायः ॥ ५६॥

श्रीशुकउवाच ॥ कदाचिद्देवकीपुत्रोरामशैनेयसंयुतः ॥ सेव्यमानःसभायांवैनानादेशेश्वरैर्नृपैः १ पांचालराजंद्रुपदंबालैःकुंतीसुतैर्मृधे ॥ बद्धंशुश्राव कौरव्यब्राह्मणैःसत्रयाजिभिः २ तच्छ्रुत्वाहृष्टहृदयःकृतवर्माणमच्युतः ॥ नगरंहस्तिनपुरंप्रेषयामासवेदितुम् ३ सगत्वाहास्तिनपुरंवृद्धंकुरुपितामह म् ॥ ददर्शद्रोणविदुरधृतराष्ट्रकृपैर्वृतम् ४ युधिष्ठिरंचराजानंचतुर्भिर्भ्रातृभिर्वृतम् ॥ सभाजयामासपृथांकुंतींचहार्दिकात्मजः ५ युधिष्ठिरोऽपिपप्रच्छसा नुगंकंसमर्दनम् ॥ हतंचकालयवनंजरासंधंचनिर्जितम् ६ वासुदेवंचनिहतंकरवीरपुरेश्वरम् ॥ द्वारवत्याश्चकरणंनगर्यावरुणालये ७ हतौचहंसडिभकौ ब्रह्मदत्तंचदुर्जयम् ॥ श्रुत्वाहार्दिक्यवचनाद्यथार्थेनयुधिष्ठिरः ८ मेनेत्रैलोक्यसाम्राज्यंस्वहस्तगतमक्षयम् ॥ सभाजितश्चहार्दिक्यःसुखसंभाषणादि भिः ९ पांडुपुत्रैस्तथाकुंत्यासौहार्दस्रुतबाष्पया ॥ हार्दिक्यस्ताननुज्ञाप्यबांधवान्पृथयासह १० मातृष्वसेयान्धर्मज्ञानभिवाद्ययथावयः ॥ गांगेये नाभ्यनुज्ञातोधृतराष्ट्रेणचानघ ११ विदूरेणांगराजेनद्रोणेनचकृपेणच ॥ प्राज्ञेनाचार्यपुत्रेणतथादुर्योधनेनच १२ कृतवर्माभ्यनुज्ञातोनिर्गत्यगजसाह्व याद ॥ द्वारकांवृष्णिनिलयामाजगामादिनात्यये १३ सप्रविश्यसभांदिव्यामनेकनृपसेविताम् ॥ दृष्ट्वागोविंदमासीनंकांचनेपरमासने १४ वीजन्नामर संघातसहितंवनमालिनम् ॥ आचचक्षेऽखिलंतस्ययथादृष्टंयथाश्रुतम् १५ वृत्तांतंकौरवेयाणांनगरेगजसाह्वये ॥ तदाकर्ण्यहरिःसर्ववृत्तांतंजगदीश्वरः १६ पौरुषंपांडुपुत्राणांबभूवानंदनिर्भरः १७ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेषट्पंचाशत्तमोऽध्यायः ५६ श्रीशुकउवाच ॥ आनर्ताधिप तिःश्रीमान्रेवतोरेवतींसुताम् ॥ ब्रह्मणाचोदितःप्रादाद्बलायेतिपुरोदितम् १ राजोवाच ॥ रेवतोनामराजासौब्रह्मणाचोदितःकथम् ॥ तदहंश्रोतुमि च्छामिविस्तरेणमहामुने २ श्रीशुकउवाच ॥ रेवतोनामराजासीत्पुराधर्मार्थतत्त्ववित् ॥ रेवतीनामतस्यैकाजज्ञेकन्यायशस्विनी३ सब्रह्माणंययौप्रष्टुंकस्मै दास्यामितामिति ॥ अदत्त्वायाच्यमानोपिनानाजनपदेश्वरैः ४ सभायांब्रह्मणस्तत्रगंधर्वौहाहाहूहू ॥ तस्मिन्नगायतांकालेग्राममूर्छाविचक्षणौ ५

अनित्यत्वात्संसारोहेयस्तदर्थंकामक्रोधादिनिलयाद्देहात्संविदेवाहर्तव्येतिदर्शनायोत्तराध्यायत्रयस्यप्रारंभः आनर्तविषयाधिपतिः १ २ धर्मार्थौधर्मविषयोविष्णुस्तस्यतत्त्ववेत्तीति धर्मस्यअर्थस्यचतत्त्वंवे त्तीति धर्मस्यार्थस्यतत्त्वंहरिविषयत्वलक्षणंवेत्तीतिवा ३ येयंममकन्यातांप्रतियाचकत्वसंभवात् कुतोनदत्तेत्यत्राह अदत्त्वेति ब्रह्मणःसर्वस्यगुरुत्वात्गुर्वनुज्ञापूर्वकक्रियमाणंसर्वंफलवादित्यभिसंधायया चकेभ्योनदत्तेतिभावः ४ तत्रतस्मिन्नवसरे ग्राममूर्छाविचक्षणौसप्तस्वरगानविशेषविदग्धौ स्वराणांमंडलंग्रामआरोहावरोहः मूर्छासप्तस्वराःत्रयोग्रामाएकविंशतिमूर्छनाइतिभरतः ५

अल्पार्थेकिंचिदित्यव्यय अल्पकालमित्यर्थः६ ७ ८ त्वदभीष्टवरोनास्तितदानींतनकालीयानामतीतत्वादितिब्रह्मावक्ति तंप्राहेति तवतेतुभ्यंमनुष्यस्यसुबहूनियुगानिक्षणमात्रमिवगतानीति ९ तत्रनि मित्तमाह आश्राव्यमिति १० तर्हिकिंकर्त्तव्यमिति तत्राह इदानीमिति ११ १२ आदियुगंकृतंनाम १३ १४ १५ १६ तेषांपारंयथा तस्यहरेर्विवाहलक्षणंचरितंश्रोतुमिच्छामि १७ माध्वीःमधु

राजाऽतिष्ठद्रहिःकिंचित्तद्विरामप्रतीक्षया ॥ गीतावसानेपप्रच्छप्रणिपत्यापितामहम् ६ एषामेभगवन्कन्याकस्मैदास्यइमामिति ॥ तंप्राहपद्मभूःकस्ते राजपुत्रोविरोचते ७ तत्रान्यांश्चमहीपालानाचक्ष्वेतिकुरूद्वह ॥ ततस्तान्रेवतःप्राहभूपालान्विषयेश्वरान् ८ सतानाकर्ण्यनृपतीन्प्रहस्योवाचरेवतम् ॥ युगानितुबहून्यत्रगतानितवभूपते ९ क्षणमात्रमिवाश्राव्यंशृण्वतोगीतमेतयोः ॥ क्वेदानींतववतेभूपाःसुतायाःसदृशावराः १० इदानींराजशार्दूलयदुवंशविवर्द्धनौ ॥ वसुदेवगृहेजातौरामकृष्णाह्वयौप्रभू ११ तत्रसंकर्षणायेमांकन्यांयच्छस्वभूपते ॥ इत्युक्तस्तेनभूपालस्तंप्रणम्यपुरंगतः ॥ रामायप्रददौकन्यांरूपिणींबाहुशालिने १२ तामादियुगसंभूतांदीर्घदेहांमहाभुजः ॥ आकृष्यलांगलेनांसेसमांचक्रेहलायुधः १३ भगवानपिगोविंदउपयेमेकुरूद्वह ॥ वैदर्भींभीष्मकसुतामिंदिरांशांस्वयंवरे १४ प्रमथ्यतरसाराज्ञःशाल्वादींश्चैद्यपक्षगान् ॥ पश्यतांसर्वभूतानांतार्क्ष्यपुत्रःसुधामिव ॥ १५ ॥ राजोवाच ॥ भगवान्भीष्मकसुतांरुक्मिणींरुचिराननाम् ॥ राक्षसेनविवाहेनउपयेमइतिश्रुतम् १६ भगवन्श्रोतुमिच्छामिकृष्णस्यामिततेजसः ॥ यथामागधशाल्वादीन्जित्वातत्पारमागमत् १७ ब्रह्मन्विष्णुकथाःपुण्यामाध्वीर्लोकमलापहाः ॥ कोनुतृप्येतशृण्वानःश्रुतज्ञोनित्यनूतनाः १८ श्रीशुकउवाच ॥ राजासीद्भीष्मकोनामविदर्भाधिपतिर्महान् ॥ तस्यपंचाभवन्पुत्राःकन्यैकाचवरानना १९ रुक्म्यग्रजोरुक्मरथोरुक्मबाहुरनंतरः ॥ रुक्मकेशोरुक्ममालीरुक्मिण्येषांस्वसासती २० सोपश्रुत्यमुकुंदस्यरूपवीर्यगुणश्रियः ॥ गृहागतैर्गीयमानास्तंमेनेसदृशंपतिम् २१ तांबुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम् ॥ कृष्णश्चसदृशींभार्यांसमुद्वोढुंमनोदधे २२ बंधूनामिच्छतांदातुंकृष्णायभगिनींनृप ॥ रुक्मीनिवार्यकृष्णद्विट्चैद्यायसमकल्पयत् २३ तदवेत्यासितापांगीवैदर्भीदुर्मनाभृशम् ॥ विचिंत्याप्तंद्विजंकंचित्कृष्णायप्राहिणोद्द्रुतम् २४ द्वारकांससमभ्येत्यप्रतीहारैःप्रवेशितः ॥ अपश्यदाद्यंपुरुषमासीनंकांचनासने २५ दृष्ट्वाब्रह्मण्यदेवस्तमवरुह्यनिजासने ॥ उपवेश्यार्हयांचक्रेयथात्मानंदिवौकसः २६ तंभुक्तवंतंविश्रांतमुपगम्यसतांगतिः ॥ पाणिनाऽभिमृशन्पादावव्यग्रस्तमपृच्छत २७ कच्चिद्द्विजवरश्रेष्ठधर्मस्तेवृद्धसंमतः ॥ वर्ततेनातिकृच्छ्रेणसंतुष्टमनसःसदा २८ संतुष्टोयर्हिवर्तेतब्राह्मणोयेनकेनचित् ॥ अहीयमानःस्वाद्धर्मात्सह्यस्याखिलकामधुक् २९ असंतुष्टःसुखंविप्रनाप्नोत्यपिसुरेश्वरः ॥ अकिंचनोपिसंतुष्टःशेतेसर्वांगविज्वरः ३०

रा' १८ वरंमनोहरंआननंयस्याःसातथा १९ २० गृहागतैर्जनैः २१ २२ २३ असितापांगीनीलकटाक्षस्थला आप्तंविश्वस्तम् २४ २५ २६ अव्यग्रःअसंभ्रांतः २७ २८ यःस्वाद्धर्मादहीयमानःस्वधर्मत्यागीनस्यात् २९ सुरेश्वरोप्यसंतुष्टःसुखंनाप्नोति अकिंचनोदरिद्रोपिसंतुष्टःअलंबुद्धिः ३०

स्वतोलाभोयस्यधनस्यतत्तथातेन ३१ तस्यविषयेराष्ट्रे सराजामेप्रियः ३२ आगमनकारणंपृच्छतियतइति यतःकारणात्तत्स्वकारणम् ३३ परमेष्ठिनासर्वोत्तमेन ३४ अर्थःआत्मास्वरूपं परस्यसतथां सुकृतविषयोवा स्पृहयान्निवकामयमानइव ३५ हेभुवनसुंदर श्रोतॄणांकर्णविवरनिर्विश्यांगतापंशरीरसंतापंहरतःसम्यग्गमोव्याप्तिर्येषांतेतथातान् स्वरूपाभिन्नान्वातेतवगुणान् श्रुत्वातेतवभुवनमंगलमंगलंपरमुत्कृष्टंरूपंचश्रुत्वामेचित्तंत्वय्यपत्रपमाविशति ३६ महती विशाला मनोगुणेनेतिशेषः धामतेजः कुलवतीशुद्धवंशा नरलोकोमुक्तावुरूपंचस्तस्यमनोभिरा मंमनांस्यभिरमयतीति ३७ अभिवृतःआभिमुख्येनवृतः एतद्रक्तप्रियत्वादिकं पादसरोजदास्याममम यतोऽंघ्रिप्रणतास्मि ३८ तत्तस्मात्हेअंगहेअंबुजाक्षमांजायांविधेहिचशब्दएवार्थे अस्याः

विप्रान्स्वलाभसंतुष्टान्साधून्भूतसुहृत्तमान् ॥ निरहंकारिणःशांतान्नमस्येशिरसाऽसकृत् ३१ कच्चिद्वःकुशलंब्रह्मन्राजतोयस्यहिप्रजाः ॥ सुखंवसंतिविषयेपाल्यमानाःसमेप्रियः ३२ यतस्त्वमागतोदुर्गंनिस्तीर्येहयदिच्छया ॥ सर्वंमेब्रूह्यगुह्यंचेत्किंकार्यंकरवामते ३३ एवंसंपृष्टसंप्रश्नोब्राह्मणःपरमेष्ठिना ॥ विधायलिखितंपत्रंपादयोःप्रणनामतम् ३४ तदादायजगन्नाथःस्मितसुंदरलोचनः ॥ वाचयामासधर्मात्मासादरंस्पृहयन्निव ॥ ३५ ॥ रुक्मिण्युवाच ॥ श्रुत्वागुणान्भुवनसुंदरसंगमांस्तेनिर्विश्यकर्णविवरंहरतोंगतापम् ॥ रूपंपरंभुवनमंगलमंगलंतेत्वय्यच्युताविशतिचित्तमपत्रपंमे ३६ कात्वामुकुंदमहतीगुणशीलरूपविद्यावयोद्रविणधामभिरात्मतुल्यम् ॥ धीरापतिंकुलवतीनवृणीतकन्याकालेनृसिंहनरलोकमनोभिरामम् ३७ तत्त्वंमयाप्यभिवृतःपतिरिंदिरायाभक्तप्रियःकृपणलोकशरण्यईशः ॥ मत्त्वैतदंगतवपादसरोजदास्याःकामंकुरुप्रियतमप्रणतास्मितेऽंघ्रिम् ३८ तन्मेभवान्खलुवृतःपतिरंगजायामात्मार्पितश्चभवतोऽत्रविभोविधेहि ॥ मावीरभागमभिमर्शतुचैद्यआराद्गोमायुवन्मृगपतेर्बलिमंबुजाक्ष ३९ पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिरलंभगवान्परेशः ॥ आराधितोयदिगदाग्रजएत्यपाणिंगृह्णातुमेनदमघोषसुतादयोन्ये ४० श्वोभाविनित्वमजितोद्वहनेविदर्भान्गुप्तःसमेत्यपृतनापतिभिःसमेतैः ॥ निर्मथ्यचैद्यमगधेंद्रबलंप्रसह्यमांराक्षसेनविधिनोद्वहवीर्यशुल्काम् ४१ अंतःपुरांतरचरामनिहत्यबंधूंस्त्वामुद्वहेकथमितिप्रवदाम्युपायम् ॥ पूर्वेद्युरस्तिमहतीकुलदेवियात्रायस्यांबहिर्नववधूर्गिरिजामुपेयात् ४२ तत्रैत्यमांरथपदातिगजाश्वयुक्तःसंमथ्यशाल्वमगधान्सहचैदिभूपान् ॥ आदायमांसहचरीभिरथोरमेशोगृह्णातुपाणिमुपनीयपुरींस्वकीयाम् ४३ यस्यांघ्रिपंकजरजःस्नपनंमहांतोवांछंत्युमापतिरिवात्मतमोपहत्यै ॥ यर्ह्यंबुजाक्षनलभेयभवत्प्रसादंजह्यामसून्व्रतकृशाशतजन्मभिःस्याम् ४४

मेममात्मादेहःभवतोऽर्पितएव वीरस्यतवभागमात्मानं आरात्दूरात् स्यातुंयोग्यश्चैद्योमाऽभिमर्शतुमास्पृशतुतत्रदृष्टांतमाह गोमायुवदिति गोमायवःशृगालाःमृगपतेःसिंहस्यबलिमुपहारम् ३९ ४० उद्वहनेविवाहेश्वोभाविनिश्वःप्रभातेभविष्यतिसतिसमेतैःपृतनापतिभिःगुप्तांविदर्भान्समेत्यराक्षसेनविधिनाबलात्कन्याहरणलक्षणेन वीर्यशुल्कमौल्यंयस्याःसातथातांमाम् ४१ नववधूर्दर्शनाय ४२ ४३ यथोमापतिःश्रीहरिचरणसरसिजरजःस्नपनंकरोतितस्यतवयदिभवत्प्रसादंपज्यानुग्रहंनलभेय तर्हिअसून्प्राणान्जह्यांत्यक्ष्यामि किंचशतजन्मभिःव्रतकृशातवभार्यैवस्यामित्यर्थः ४४

४५ ४६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांसप्तपंचाशत्तमोऽध्यायः ॥ ५७ ॥ ७ ॥ १ ममद्वेषाद्रुक्मिणाविवाहोनिवारितइतमिमर्थमहंवेदवेद्मि २ एधसः काष्ठादग्नेःशिखांज्वालां ३ उद्वाहर्क्षंविवाहनक्षत्रं ४ हयैर्युक्तं ५ ६ कार्याणिविवाहयोगकार्याणिअकारयत् ७ उक्तमेवस्पष्टयति पुरमिति प्राक्संमृष्टारत्यक्तावस्कराःपश्चात्संसिक्ताःगोमयोदकादिभिर्मोक्षितामार्गादयोयस्मिंस्तत्तथा ८ ९ १० सुस्नाताऽभूदितिशेषः कृतंकौतुकेकुतूहलेमहोत्सवेमंगलंयस्याःसातथा यद्वा कृतंकौतुकंहस्तसूत्रलक्षणमंगलंयस्याःसातथा आबध्नंतिकरेसूत्रंयांगल्यं,थनव

श्रीशुकउवाच ॥ इतिपत्रगतंविश्रंविमृश्यमधुसूदनः ॥ संदेशंराजक न्यायास्तंब्राह्मणमवैक्षत ॥ ब्राह्मणउवाच ४५ इत्येतेगुह्यसंदेशायदुदेवमयाहृताः ॥ विमृश्ययुक्तंयच्चात्रक्रियतांतदनंतरम् ४६ इतिश्रीभागवतेमहापुराणेद शमस्कंधेसप्तपंचाशत्तमोध्यायः ५७ श्रीशुकउवाच ॥ वैदर्भ्याःसतुसंदेशंनिशम्ययदुनंदनः ॥ प्रगृह्यपाणिनापाणिंप्रहसन्द्विजमब्रवीत् १ श्रीभगवानुवाच ॥ तथाऽहमपितच्चित्तोनिद्रांनाध्यगमंनिशि ॥ वेदाहंरुक्मिणाद्वेषान्ममोद्वाहोनिवारितः २ तामानयिष्यउन्मथ्यराजन्यापसदान्मृधे ॥ मत्परामनवद्यांगीमेधसोऽग्नेःशिखामिव ३ उद्वाहर्क्षंचविज्ञायरुक्मिण्यामधुसूदनः ॥ रथः संयुज्यतामाशुदारुकेत्याहसारथिम् ४ सचाश्वैःशैब्यसुग्रीवमेघपुष्पबलाहकैः ॥ युक्तंरथमुपानीयतस्थौप्रांजलिरग्रतः ५ आरुह्यस्यंदनंशौरिर्द्विजमारोप्यतूर्णगैः ॥ आनर्तादेकरात्रेणविदर्भानगमद्धयैः ६ राजासकुंडिनपतिःपुत्रस्नेहवशंगतः ॥ शिशुपालायस्वांकन्यांदास्यन्कार्याण्यकारयत् ७ पुरंसंमृष्टसंसिक्तमार्गरथ्याचतुष्पथम् ॥ चित्रध्वजपताकाभिस्तोरणैःसमलंकृतम् ८ स्रग्गंधमाल्याभरणैर्विरजांबरभूषणैः ॥ जुष्टंस्त्रीपुरुषैःश्रीमद्गृहैरगुरुधूपितैः ९ पितॄन्देवान्समभ्यर्च्यविप्रांश्चविधिवन्नृप ॥ भोजयित्वायथान्यायंवाचयामासमंगलम् १० सुस्नातासुदतीकन्याकृतकौतुकमंगला ॥ अहतांशुकयुग्मेनभूषिताभूषणोत्तमैः ११ चक्रुःसामर्ग्यजुर्मंत्रैर्वध्वारक्षांद्विजोत्तमाः ॥ पुरोहितोऽथर्वविद्वैजुहावग्रहशांतये १२ हिरण्यरूप्यवासांसितिलांश्चगुडमिश्रितान् ॥ प्रादाद्धेनूश्चविप्रेभ्योराजाविधिविदांवरः १३ एवंचेद्यपतीराजादमघोषःसुतायवै ॥ कारयामासमंत्रज्ञैःसर्वमभ्युदयोचितम् १४ मदच्युद्भिर्गजानीकैःस्यंदनैर्हेममालिभिः ॥ पत्त्यश्वसंकुलैःसैन्यैःपरीतःकुंडिनंययौ १५ तंवैविदर्भाधिपतिःसमेत्याभिप्रपूज्यच ॥ निवेशयामासमुदाकल्पितान्यनिवेशने १६ तत्रशाल्वोजरासंधोदंतवक्रोविदूरथः ॥ आजग्मुश्चैद्यपक्षीयाःपौंड्रकाद्याःसहस्रशः १७ कृष्णरामद्विषोयत्ताःकन्यांचैद्यायसाधितुम् ॥ यद्यागत्यहरेत्कृष्णोरामाद्यैर्यदुभिर्वृतः १८

स्त्रियइति कौतुकंविषयाभोगेहस्तसूत्रेकुतूहले कामेख्यातेमंगलेचेतियादवः अहतांशुकयुग्मेननूतनवस्त्रयुगलेन अंशुकंकेवलेवस्त्रेसूक्ष्मवस्त्रोत्तरीययोरितिच ११ ग्रहानेतान्रक्षयाविवृणोमीत्याद्यथर्ववेदोक्तवित् १२ रूप्यंरजतं १३ सुतायशिशुपालाय १४ पूर्वोक्तयात्राशेषंकथयति मदच्युद्भिरिति मदच्युद्भिःमदजलस्राविभिः १५ तदर्थंकल्पितेन्यस्मिन्निवेशनेगृहे १६ तत्रकुंडिनपुरे १७ १८

१९ २० २१ वरोवरणीयआरोहोजघनप्रदेशोयस्याःसातया प्रत्यापत्तिपुनरागमनं २२ त्रियामांतरितःरात्रिमात्रव्यवहितःअल्पराधस.मंदीभूतकार्यसिद्धेः २३ २४ २५ गौरोरुणोसितेपीतइति गौरीशब्दस्यानंतस्यानेकार्थवाचित्वेन।निश्चयइत्यतोरुद्राणीति सामान्यविवक्षायांगंगायाअपितत्पत्नीत्वेनसंशयानिस्तारइत्यतोगिरिजेति गिरिजामेनकात्मजेत्यभिधानं नन्वभिधानस्ययोगबलानुसारित्वेनप्रवृत्तेर्नद्याअपिगिरिजात्वादित्यतःसतीति सतीयोगविसृष्टदेहातांजन्मनाशैलवधूंप्रपेदेइति ध्यानकालज्ञा २६ वामऊरुरस्फुरत् नेत्रभुजावस्फुरतां प्रियभाषिणःअभीष्टकार्यशंसिनः २७



योत्स्यामःसहिताःसर्वैइतिनिश्चितमानसाः ॥ आजग्मुर्भूभुजःसर्वेसमग्रबलवाहनाः १९ श्रुत्वैतद्भगवान्रामोविपक्षीयनृपोद्यमम् ॥ कृष्णंचैकंगतंहर्तुंकन्यांकलहशंकितः २० बलेनमहतासार्द्धंभ्रातृस्नेहपरिप्लुतः ॥ त्वरितःकुंडिनंप्रागाद्गजाश्वरथपत्तिभिः२१भीष्मकन्यावरारोहाकांक्षंत्यागमनंहरेः ॥ प्रत्यापत्तिमपश्यंतीद्विजस्याचिंतयत्तदा २२ अहोत्रियामांतरितउद्वाहोमेऽल्पराधसः ॥ नागच्छत्यरविंदाक्षोनाहंवेद्म्यत्रकारणम् २३ सोपिनावर्ततेऽद्यापिमत्संदेशहरोद्विजः ॥ अपिमय्यनवद्यात्मादृष्ट्वाकिंचिज्जुगुप्सितम् २४ मत्पाणिग्रहणेनूनंनायातिहिकृतोद्यमः ॥ दुर्भगायानमेधातानानुकूलोमहेश्वरः २५ देवीवाविमुखागौरीरुद्राणीगिरिजासती ॥ एवंचिंतयतीबालागोविंदहृतमानसा ॥ न्यमीलयतकालज्ञानेत्रेअश्रुकलाकुले २६ एवंवध्वाःप्रतीक्षंत्यागोविंदागमनंनृप ॥ वामऊरुर्भुजोनेत्रमस्फुरन्प्रियभाषिणः २७ अथकृष्णविनिर्दिष्टःसएवद्विजसत्तमः ॥ अंतःपुरचरांदेवींराजपुत्रींददर्शह २८ सातंप्रहृष्टवदनमव्यग्रात्मगतिंसती ॥ आलक्ष्यलक्षणाभिज्ञासमपृच्छच्छुचिस्मिता २९ आवेदयामासतस्यैसंप्राप्तंयदुनंदनम् ॥ उक्तंचसत्यवचनमात्मोपनयनंप्रति ३० तमागतंसमाज्ञायवैदर्भीहृष्टमानसा ॥ नपश्यंतीब्राह्मणायप्रियमन्यन्ननामसा ३१ प्राप्तौश्रुत्वास्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ ॥ अभ्ययात्तूर्यघोषेणरामकृष्णौसमर्हणैः ३२ मधुपर्कमुपानीयवासांसिविरजांसिसः ॥ उपायनान्यभीष्टानिविधिवत्समपूजयत् ३३ तयोर्निवेशनंश्रीमदुपकल्प्यमहामतिः ॥ ससैन्ययोःसानुगयोरातिथ्यंविदधेयथा ३५ एवंराज्ञांसमेतानांयथावीर्यंयथावयः ॥ यथाबलंयथावित्तंसर्वैःकामैःसमर्हयत् ३६ कृष्णमागतमाकर्ण्यविदर्भपुरवासिनः ॥ आगत्यनेत्रांजलिभिःपपुस्तन्मुखपंकजम् ३७ अस्यैवभार्याभवितुंरुक्मिण्यर्हतिनापरा ॥ असावप्यनवद्यात्माभैष्म्याःसमुचितःपतिः ३८ किंचित्सुचरितंयन्नस्तेनतुष्टस्त्रिलोककृत् ॥ अनुगृह्णातुगृह्णातुवैदर्भ्याःपाणिमच्युतः ३९ श्रीशुकउवाच ॥ एवंप्रेमकलाबद्धावदंतिस्मपुरौकसः ॥ कन्याचांतःपुरात्प्रागाद्भटैर्गुप्तांऽबिकालयम् ४० पद्भ्यांविनिर्ययौद्रष्टुंभवान्याःपादपल्लवम् ॥ परिवारैःकतिपयैर्युक्तोयादवनंदनः ४१

२८ अव्यग्रात्मगतिमसंभ्रांतनिजगमनं २९ ३० ३१ ३२ ३३ ३४ किमितिनगरप्रवेशाप्रदानंकृष्णरामयोरितितत्राह आवेद्येति जरासंधादिराजभिर्नगरंपूर्णमितिविद्यमानवकाशमित्यालेख्याविज्ञाप्य ३५ ३६ ३७ ३८ ३९ ४० ४१

वेत्राणिझर्झरायराजाज्ञासूचकयष्टयश्चहस्तेषुयेषांतैस्तथातैःकंचुकिभिःदौवारिकैः छन्नलिंगैः ४२ ४३ ४४ ४५ धौत पादकरांबुजामक्षालितपादहस्तपद्मा ४६ भवयसोवृद्धाःविधिज्ञाःस्त्रीशास्त्रकुशलाः ४७ ४८ ४९ पतिमतीःभर्तृमत्यः ५० शेषाःअक्षताःअविशिष्टाराजस्त्रियोवा ५१ मुनिव्रतंमौनव्रतं उपकंठेसमीपे पौलोम्याःशच्याः ५२ ५३ ५४ देवमायांलक्ष्मीं श्यामांद्रव

साचानुध्यायतीसम्यङ्मुकुंदचरणांबुजम् ॥ यतवाङ्मातृभिःसार्धंसखिभिःपरिवारिता ४२ गुप्ताराजभटैःशूरैःसन्नद्धैरुद्यतायुधैः ॥ वेत्रझर्झरहस्तैश्च वृद्धैःकंचुकिभिस्तथा ॥ मृदंगशंखपणवास्तूर्यभेरीश्चजघ्निरे ४३ नानोपहारबलिभिर्वारमुख्याःसहस्रशः ॥ स्रग्गंधवस्त्राभरणैर्द्विजपत्न्यःस्वलंकृताः ४४ गायंतश्चस्तुवंतश्चगायकावाद्यवादकाः ॥ परिवार्यवधूंजग्मुःसूतमागधबंदिनः ४५ आसाद्यदेवसदनंधौतपादकरांबुजा ॥ उपस्पृश्यशुचिः शांताप्रविवेशांबिकांतिकम् ४६ तांवैप्रवयसोबालांविधिज्ञाविप्रयोषितः ॥ भवानींवंदयांचक्रुर्भवपत्नींभवान्विताम् ४७ नमस्येत्वांऽबिकेभीक्ष्णंस्वसंतानयुतांशिवाम् ॥ भूयात्पतिर्मेभगवान्कृष्णस्तदनुमोदताम् ४८ अद्भिर्गंधाक्षतैर्धूपैर्वस्त्रमाल्यविभूषणैः ॥ नानोपहारबलिभिःप्रदीपावलिभिःपृथक् ४९ विप्रस्त्रियःपतिमतीस्तथातैःसमपूजयत् ॥ लवणापूपतांबूलकंठसूत्रफलेक्षुभिः ५० तस्यैस्त्रियस्ताःप्रददुःशेषांयुयुजुराशिषः ॥ ताभ्योदेव्यैनमश्चक्रेशेषांश्चजगृहेवधूः ५१ मुनिव्रतमथत्यक्त्वानिश्चक्रामांबिकागृहात् ॥ उपकंठेसुरेशस्यपौलोम्याश्चनिकेतनम् ५२ तौविदर्भप्रसूतानांनृपाणांकुलदेवते ॥ तदंतिकमुपागम्यशचींसुरपतिप्रियाम् ५३ चिराराधितपादाब्जांसाप्रणम्यविनिर्ययौ ॥ प्रगृह्यपाणिनाधात्रीरत्नमुद्रोपशोभिताम् ॥ धृतानेकातपत्राद्यांवीजच्चामरसंकुलाम् ५४ तांदेवमायामिववीरमोहिनींसुमध्यमांकुंडलमंडिताननाम् ॥ श्यामांनितंबार्पितरत्नमेखलांव्यंजत्स्तनींकुंतलशंकितेक्षणाम् ५५ शुचिस्मितांबिंबफलाधरद्युतिशोणायमानद्विजकुंदकुड्मलाम् ॥ पदाचलंतींकलहंसगामिनींसिंजत्कलंनूपुरपादशोभिताम् ५६ विलोक्यवीरामुमुहुःसमागतायशस्विनस्तत्कृतहृच्छयार्दिताः ॥ यांवीक्ष्यतेनृपतयस्तदुदारहासव्रीडावलोकहृतचेतसउज्झितास्त्राः ५७ पेतुःक्षितौगजरथाश्वगताविमूढायात्राच्छलेनहरयेऽर्पयतींस्वशोभाम् ॥ सैवंशनैश्चलयतीपदपद्मकोशौप्राप्तिंतदाभगवतःप्रसमीक्षमाणा ५८ उत्सार्यवामकरजैरलकानपांगैःप्राप्तान्ह्रियैक्षतनृपान्ददृशेऽच्युतंसा ॥ तांराजकन्यांरथमारुरुक्षतींजहारकृष्णोद्विषतांसमीक्षताम् ५९ रथंसमारोप्यसुपर्णलक्षणंराजन्यचक्रंपरिभूयमाधवः ॥ ततोययौरामपुरोगमैःशनैःशृगालमध्यादिवनागहृद्धरिः ६० ॥ इतिश्रीभा०महापुराणेदशमस्कंधेउत्तरार्धेअष्टपंचाशत्तमोऽध्यायः॥ ५८ ॥

श्रीशुकउवाच ॥ तंमानिनःस्वाभिभवंयशःक्षयंपरेजरासंधवशानसेहिरे ॥ अहोधिगस्मद्यशआत्तधन्विनांगोपैर्हृतंकेसरिणांमृगैरिव १

इवपी कुंतलैरावरकैःशंकितमिवईक्षणंयस्याःसातथातां ५५ ५६ ५७ ५८ ५९ नागहृद्गजहरोहरिःसिंहः ६० इतिश्रीभागवतेमहापुराणेविजयध्वजकृतटीकायांअष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ७ ॥ परैःअरिभिःकृत.तं केकेपरेइतितत्राह जरासंधइति ॥ १ ॥

॥ २ ॥ यादवानामनीकानांयूथानिसमूहास्तान्पांतिरक्षंतीतियादवानीकयूथपाः ॥ ३ ॥ अश्वपृष्ठादिषुस्थित्वा ॥ ४ ॥ आसारोवेगवान्वर्षइति सुमध्यमा रुक्मिणीऐक्षदैक्षतद्दृष्टवती ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ करभाःकनिष्ठिकायामूलप्रदेशाः गर्दभादश्वायांजातोऽश्वतरः ॥ ९ ॥ आत्मनोजयकांक्षिभिः जयप्रकाशकैःजयेच्छुभिर्वा ॥ १० ॥ हृतदारंबलादपहृतभार्यंपुरुषं ॥ ११ ॥ प्रियाप्रिययो सुखदुःखयो निष्ठाव्यवस्थानियतत्वं निष्ठोत्कर्षेव्यवस्थ.यामिति ॥ १२ ॥ कुहकेच्छयामायिकेच्छया ॥ १३ ॥ योहंत्रयोविंशतिभि.सैन्यैरक्षौहिणीभिःशौरेःसप्तदशसंयुगानिसप्तदशसंयुगेषुपराजित परपश्चा

इतिसर्वेसुसंरब्धावाहानारुह्यदंशिताः ॥ स्वैःस्वैर्बलैःपरिक्रांताअन्वीयुर्धृतकार्मुकाः २ तानापततआलोक्ययादवानीकयूथपाः ॥ तस्थुस्तेसन्मुखाराजन्विस्फूर्ज्यस्वधनूंषिते ३ अश्वपृष्ठेगजस्कंधेरथोपस्थेचकोविदाः ॥ मुमुचुःशरवर्षाणिमेघाअद्रिष्वपोयथा ४ पत्युर्बलंशरासारैश्छन्नंवीक्ष्यसुमध्यमा ॥ सव्रीडमैक्षत्तद्वक्त्रंभयविह्वललोचना ५ प्रहस्यभगवानाहमामैस्त्वंवामलोचने ॥ विनंक्ष्यत्यधुनैवैतत्तावकैःशात्रवंबलम् ६ तेषांतद्विक्रमंवीरागदसंकर्षणादयः ॥ अमृष्यमाणानाराचैर्जघ्नुर्हयगजान्रथान् ७ पेतुःशिरांसिरथिनामश्विनांगजिनांभुवि ॥ सकुंडलकिरीटानिसोष्णीषाणिचकोटिशः ८ हस्ताःसासिगदेष्वासाःकरभाऊरवोऽङ्घ्रयः ॥ अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसिच ९ हन्यमानबलानीकावृष्णिभिर्जयकांक्षिभिः ॥ राजानोविमुखाजग्मुर्जरासंधपुरःसराः १० शिशुपालंसमेत्याथहृतदारमिवातुरम् ॥ नष्टत्विषंगतोत्साहंशुष्यद्वदनमब्रुवन् ११ राजानऊचुः ॥ भोभोपुरुषशार्दूलदौर्मनस्यमिदंत्यज ॥ नप्रियाप्रिययोराजन्निष्ठादेहिषुदृश्यते १२ यथादारुमयीयोषिन्नृत्यतेकुहकेच्छया ॥ एवमीश्वरतंत्रोऽयमीहतेसुखदुःखयोः १३ शौरेःसप्तदशाहंवैसंयुगानिपराजितः ॥ त्रयोविंशतिभिःसैन्यैर्जिग्यएवमहंपरम् १४ तथाप्यहंनशोचामिनप्रहृष्यामिकर्हिचित् ॥ कालेनदैवयोगेनजानन्विद्रावितंजगत् १५ अधुनापिवयंसर्वेवीरयूथपयूथपाः ॥ पराजिताःफल्गुतंत्रैर्यदुभिःकृष्णपालितैः १६ रिपवोजिग्युरधुनाकालआत्मानुसारिणि ॥ तदावयंतुजेष्यामोयदाकालःप्रदक्षिणः १७ श्रीशुकउवाच ॥ एवंसंबोधितोमित्रैश्चैद्योऽगात्सानुगःपुरम् ॥ हतशेषाःपुनस्तेऽपिययुःस्वंस्वंपुरंनृपाः १८ रुक्मीतुराक्षसोद्वाहंकृष्णद्विडसहन्स्वसुः ॥ पृष्ठतोऽनुगमत्कृष्णमक्षौहिण्यावृतोबली १९ रुक्म्यमर्षीसुसंरब्धःशृण्वतांसर्वभूभुजाम् ॥ प्रतिजज्ञेमहाबाहुर्दंशितःसशरासनः २० अहत्वासमरेकृष्णमप्रत्यूह्यचरुक्मिणीम् ॥ कुंडिनंनप्रवेक्ष्यामिसत्यमेतद्ब्रवीमिवः २१ श्रीशुकउवाच ॥ इत्युक्त्वारथमारुह्यसारथिंप्राहसत्वरः ॥ चोदयाश्वान्यतःकृष्णस्तस्यमेसंयुगंभवेत् २२ अद्याहंनिशितैर्बाणैर्गोपालस्यसुदुर्मतेः ॥ नेष्येवीर्यमदंयेनस्वसामेप्रसभंहृता २३ विकत्थमानःकुमतिरीश्वरस्याप्रमाणवित् ॥ रथेनैकेनगोविंदमन्वधावतरंहसा २४

स्तोहंतावतीभिःसंभूयैकंसेनादिविकलंकृष्णंजिग्ये तथाप्युभयथापिएकमष्टादशंसंग्रामंवा ॥ १४ ॥ १५ ॥ फल्गुतंत्रैःअल्पसेनादिपरिच्छदैः ॥ १६ ॥ प्रदक्षिणःअनुकूलः ॥ १७ ॥ १८ ॥ असहमानः ॥ १९ ॥ २० ॥ अप्रत्यूह्यअनावृत्य अन्यस्याद्दत्त्वेतिवा ॥ २१ ॥ २२ ॥ २३ ॥ २४

॥ २५ ॥ अरेनीचसंबोधनंतदेवव्यनक्ति यदूनामिति ॥ २६ ॥२७॥ ततःपूर्वमेवमुंच ॥ २८ ॥ २९ ॥ ३० ॥ परिघंपरिघातनं पट्टिशंलोहदंडं शक्तितोमरैःसहचिच्छेदाद्विमुखस्तोमरः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ परित्रासेनपरितोभयेनकंपितमंगंयस्याःसातथातया शुष्यन्मुखाचरुद्धकंठाचतया करुणःकरुणाकरः ॥ ३७ ॥ प्रवपन्वपनंमुंडनंकुर्वन्व्यरूपयत् सौंदर्यहीनमकरोत् ॥ ३८ ॥ ३९ ॥ ४० ॥ श्मश्रुकेशानांवपनलक्षणंवैरूप्यंसुहृदोबंधोर्वधंकृतवान् ॥ ४१ ॥ इदानींरुक्मिणींसांत्वयति मैवेति हेसाध्विरुक्मिणिअस्मान्प्रति स्वस्मादन्यःअत्रहेतुर्यतइति ॥ ४२ ॥ नन्वस्तुसुखादेःस्वयंहेतुरथापिबंधोर्देहवियोगकरणलक्षणोवधोलोकाचारोनभवति जुगुप्सितत्वादितितत्सत्यमित्याह बंधुरिति वधार्होदोषोयस्यसतथा द्वितीयबंधुशब्दोहेत्वर्थः तर्हिकिंकर्तव्यमित्यत्राह

सगत्वानर्मदांदेवींतरंतंमधुसूदनम् ॥ आसाद्ययुद्धसन्नद्धस्तिष्ठतिष्ठेतिचाब्रवीत् २५ धनुर्विकृष्यसुदृढंजघ्नेकृष्णंत्रिभिःशरैः ॥ आहचात्रक्षणंतिष्ठयदूनांकुलपांसन २६ कुत्रयासिस्वसारंमेमुषित्वाध्वांक्षवद्धविः ॥ हरिष्येऽद्यमदंमंदमायिनःकूटयोधिनः २७ यावन्नमेहतोबाणैःशयीथामुंचदारिकाम् ॥ धनुर्विकृष्यसुदृढंजघ्नेकृष्णंत्रिभिःशरैः २८ स्मयन्कृष्णोधनुश्छित्वाषड्भिर्विव्याधरुक्मिणम् ॥ अष्टाभिश्चतुरोवाहान्द्वाभ्यांसूतंध्वजंत्रिभिः २९ सचान्यद्धनुरादायकृष्णंविव्याधपंचभिः ॥ तैस्ताडितःशरौघैस्तुचिच्छेदधनुरच्युतः ३० पुनरन्यदुपादत्ततदप्याच्छिनदच्युतः ॥ परिघंपट्टिशंशूलंचर्मासीशक्तितोमरैः ३१ यद्यदायुधमादत्ततत्सर्वंसोऽच्छिनद्विभुः ॥ ततोरथादवप्लुत्यगृहीत्वाखड्गचर्मणी ३२ कृष्णमभ्यद्रवत्क्रुद्धःपतंगइवपावकम् ॥ तस्यचापततःखड्गंतिलशश्चर्मचेषुभिः ३३ छित्त्वाऽसिमाददेतिग्मंरुक्मिणंहंतुमुद्यतः ॥ दृष्ट्वाभ्रातृवधोद्योगंरुक्मिणीभयविह्वला ॥ पतित्वापादयोःपत्युरुवाचकरुणंसती ३४ रुक्मिण्युवाच ॥ योगेश्वराप्रमेयात्मन्देवदेवजगत्पते ॥ हंतुंनार्हसिकल्याणभ्रातरंमेमहाभुज ३५ श्रीशुकउवाच ॥ इत्युक्त्वाजगृहेपादौकृपणादीनभाषिणी ॥ भ्रातरंत्रातुकामासाकृष्णस्यजगतीपतेः ३६ तयापरित्रासविकंपितांगयाशुचाचशुष्यन्मुखरुद्धकंठया ॥ कातर्यविस्रंसितहेममालयागृहीतपादःकरुणोन्यवर्तत ३७ चैलेनबद्ध्वातमसाधुकारिणंसश्मश्रुकेशंप्रवपन्व्यरूपयत् ॥ तावत्समीयुर्जितशत्रुसैन्यायदुप्रवीरानलिनींयथागजाः ३८ कृष्णांतिकमुपव्रज्यददृशुस्तत्ररुक्मिणम् ॥ तथाभूतंहतप्रायंदृष्ट्वासंकर्षणोविभुः ३९ विमुच्यबद्धंकरुणोभगवान्कृष्णमब्रवीत् ४० बलभद्रउवाच ॥ असाध्विदंत्वयाकृष्णकृतमस्मिन्जुगुप्सितम् ॥ वपनंश्मश्रुकेशानांवैरूप्यंसुहृदोवधः ४१ मैवास्मान्साध्व्यसूयेथाभ्रातुर्वैरूप्यचिंतया ॥ सुखदुःखदोनचान्योस्तियतःस्वकृतभुक्पुमान् ४२ बंधुर्वधार्हदोषोपिनबंधुर्वधमर्हति ॥ त्याज्यःस्वेनैवदोषेणहतःकिंहन्यतेपुनः ४३ क्षत्रियाणामयंधर्मःप्रजापतिविनिर्मितः ॥ भ्रातापिभ्रातरंहन्याद्येनघोरतरस्ततः ४४ राज्यस्यभूमेर्वित्तस्यस्त्रियोमानस्यतेजसः ॥ मानिनोऽन्यस्यवाहेतोःश्रीमदांधाःक्षिपंतिहि ४५

त्याज्यइति त्यागोदेशनिर्यातनादिलक्षणः किंत्याज्यइत्यतोमृतमारणदोषापत्तेरितिभावेनाह हतइति ॥ ४३ ॥ तर्ह्येतदीदृशंकर्मकिमितिक्रियतइतिअतोऽयंन्यायः क्षत्रियेभ्योन्यत्रनक्षत्रियाणामित्याह क्षत्रियाणामिति कोसौधर्मइत्यत्राह भ्रातापीति ततस्तस्माद्राजायेनकर्मणाघोरतरइत्युच्यते धर्मविषयोवाऽघोरतरोधर्मइति ४४ ननुतर्हिसर्वःसर्वंहन्यादित्यतिप्रसंगइत्यत्राह राज्यस्येति मानिनःदेहाभिमानवंतःअन्यस्यस्त्रीजनस्यवाक्षिपंतिघ्नंति राज्यादेःसर्वस्यहेतोरितिसंबंधः ४५

२० २१ २२ २३ अविश्रमंनिरंतरम् २४ २५ सर्वभूतानांप्राणादिमदंप्राणःप्राणनंचेष्टाशक्तिःओजःअवष्टंभशक्तिःसह शरीरसामर्थ्यं बलंस्थौल्यम् २६ सृष्टानामधिपःसृष्टेपुवसन्कालःसंहर्ता आत्मनांचेतनानांपरः आत्मापरमचेतनः नित्योनित्यानामितिश्रुतिः २७ उत्कलितेनउन्नतेनरोषेणजातैः कटाक्षमोक्षैर्नेत्रपातैःक्षोभितानक्रास्तिमिंगिलाश्चयस्मिन्सतथा स्वयशोरूपः उज्ज्वलितादग्धा



एकोविवेशभगवानवस्थाप्यबहिःप्रजाः ॥ तत्रदृष्ट्वामणिश्रेष्ठंबालक्रीडनकंकृतम् ॥ हर्तुंकृतमतिस्तस्मिन्नवतस्थेऽर्भकांतिके २० तमपूर्वंनरंदृष्ट्वाधात्रीचुक्रोशभीतवत् ॥ तच्छ्रुत्वाभ्यद्रवत्क्रुद्धोजांबवान्बलिनांवरः २१ सवैभगवतातेनयुयुधेस्वामिनात्मनः ॥ पुरुषंप्राकृतंमत्वाकुपितोनानुभाववित् २२ द्वंद्वयुद्धंसुतुमुलमुभयोर्विजिगीषतोः ॥ आयुधाश्मद्रुमैर्दोर्भिःक्रव्यार्थेश्येनयोरिव २३ आसीत्तदष्टविंशाहमितरेतरमुष्टिभिः ॥ वज्रनिष्पेषपरुषैरविश्रममहर्निशम् २४ कृष्णमुष्टिविनिष्पातनिष्पिष्टांगोरुबंधनः ॥ क्षीणसत्त्वःस्विन्नगात्रस्तमाहातीवविस्मितः २५ जानेत्वांसर्वभूतानांप्राणओजःसहोबलम् ॥ विष्णुंपुराणंपुरुषंप्रभविष्णुमधीश्वरम् २६ त्वंहिविश्वसृजांस्रष्टासृष्टानामपियोवसन् ॥ कालःकलयतामीशःपरआत्मातथात्मनाम् २७ यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत्क्षुभितनक्रतिमिंगिलोऽब्धिः ॥ सेतुःकृतःस्वयशउज्ज्वलिताचलंकारक्षःशिरांसिभुविपेतुरिषुक्षतानि २८ इतिविज्ञातविज्ञानमृक्षराजानमच्युतः ॥ व्याजहारमहाराजभगवान्देवकीसुतः २९ अभिमृश्यारविंदाक्षःपाणिनाशंकरेणतम् ॥ कृपयापरयाभक्तंमेघगंभीरयागिरा ३० मणिहेतोरिहप्राप्तावयमृक्षपतेबिलम् ॥ मिथ्याभिशापंप्रमृजन्नात्मनोमणिनामुना ३१ इत्युक्तःस्वांदुहितरंकन्यांजांबवतींमुदा ॥ अर्हणार्थंसहमणिंकृष्णायोपजहारसः ३२ अदृष्ट्वानिर्गमंशौरेःप्रविष्टस्यबिलंजनाः ॥ प्रतीक्ष्यद्वादशाहानिदुःखितास्तेपुरंययुः ३३ निशम्यदेवकीदेवीरुक्मिण्यानकदुंदुभिः ॥ सुहृदोज्ञातयोऽशोचन्बिलात्कृष्णमनिर्गतम् ३४ सत्राजितंशपंतस्तेदुःखिताद्वारकौकसः ॥ उपतस्थुर्महामायांदुर्गांकृष्णोपलब्धये ३५ तेषांतुदेव्युपस्थानात्प्रत्यादिष्टाशिषांभवन् ॥ प्रादुर्बभूवसिद्धार्थःसदारोहर्षयन्हरिः ३६ उपलभ्यहृषीकेशंमृतंपुनरिहागतम् ॥ सहपत्न्यामणिग्रीवंसर्वेजातमहोत्सवाः ३७ सत्राजितंसमाहूयसभायांराजसन्निधौ ॥ प्राप्तिंचाख्यायभगवान्मणिंतस्मैन्यवेदयत् ३८ सचातिव्रीडितोरत्नंगृहीत्वाऽवाङ्मुखस्ततः ॥ अनुतप्यन्स्वभवनमगमत्स्वेनपाप्मना ३९ सोनुध्यायंस्तदेवाघंबलवद्विग्रहाकुलः ॥ कथंमृजाम्यात्मरजःप्रसीदेद्वाच्युतःकथम् ४० किंकृत्वासाधुमह्यंस्यान्नशपेद्वाजनोयथा ॥ अदीर्घदर्शनंधिङ्मांमूढंद्रविणलोलुपम् ४१

इषुक्षतानि शरच्छिन्नानि २८ २९ शंकरेणसुखकरेण ३० ३१ ३२ ३३ ३४ उपतस्थुःअभजन् ३५ ततःकिमभूदत्राह तेषामिति हरिस्तेषांप्रादुर्बभूवेत्यन्वयः देव्याउपस्थानान्निषेवणात्प्रत्यादिष्टाशिषाअभ्यागताभ्युदयाना भवन्पूज्यः सिद्धार्थःनित्यलब्धप्रयोजनः प्रत्यादिष्टाशिषइतिपाठेप्रथमंनष्टकृष्णाख्याशिषोभवन्तेषां तुशब्दोहेत्वर्थः देव्युपस्थानाद्धेतोरित्यर्थः अनेनापदिप्राप्तायांदेवताशरणंकर्तव्यमित्युक्तंभवति ३६ ३७ आख्यायोक्त्वा ३८ स्वेनपाप्मनानुतप्यन्पश्चात्तापंकुर्वन् ३९ ४० मह्यंममअदीर्घदर्शनंभविष्यज्ञानहीनम् ४१

तस्यपापस्य ४२ ४३ ४४ फलभागिनःप्रयोजनांशमेवस्वीकुर्मः ॥ ४५ ॥ इ०भा०द०त्रि०टी०षाष्ठितमोऽध्यायः ॥ ६० ॥ अज्ञानिनांतमःप्राप्तिसाधनंज्ञानिनांभगवद्धृदयुद्रेककारणंलोकविडंबनार्थं भगवच्चरितविशेषंपूर्वाध्यायार्थबीजंनिरूपयत्यस्मिन्नध्याये अपिनासंदेहनिवारयति कुल्यंशवदहनानंतरंतद्दुःखजिहासयातद्गृहगमनंतस्यकरणेतन्निमित्तीकृत्येत्यर्थः १ २ अंतरमवकाशम् ३ भ्रातरंप्रसेनमन्वियात्अनुगतःस्यात्मृतोस्तुतंहन्मीत्यर्थः ४ ५ क्रंदंतीनांवैक्लव्यस्वरंकुर्वतीनां सौनिकवन्मारकवत्राक्षसवदित्यर्थः ६ ७ प्रास्यनिक्षिप्य ८ अस्राक्षौअश्रुजलकलिलेक्षणौ ९ १०

दास्येदुहितरंतस्मैस्त्रीरत्नंरत्नमेवच ॥ उपायोयंसमीचीनस्तस्यशांतिर्नचान्यथा ४२ एवंव्यवसितोबुद्ध्यासत्राजित्स्वसुतांशुभाम् ॥ मणिंचस्वयमुद्यम्यकृष्णायोपजाहरताम् ४३ तांसत्यभामांभगवानुपयेमेयथाविधि ॥ बहुभिर्याचितांशीलरूपौदार्यगुणान्विताम् ४४ भगवानाहनमणिंप्रतीच्छामोवयंनृप ॥ तवास्तुदेवभक्तस्यवयंहिफलभागिनः ४५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेषष्टितमोध्यायः ॥ ६० ॥ श्रीशुकउवाच ॥ विज्ञातार्थोपिगोविंदोदग्धानाकर्ण्यपांडवान् ॥ कुंतींचकुल्यकरणेसहरामोययौकुरून् १ भीष्मंकृपंसविदुरंगांधारींद्रोणमेवच ॥ समदुःखौसमागम्यहाकष्टमितिहोचतुः २ लब्ध्वैतदंतरंराजन्शतधन्वानमूचतुः ॥ अक्रूरकृतवर्माणौमणिःकस्मान्नगृह्यते ३ योस्मभ्यंसंप्रतिश्रुत्यकन्यारत्नंविगर्ह्यनः ॥ कृष्णायादात्ससत्राजित्तस्माद्भ्रातरमन्वियात् ४ एवंभिन्नमतिस्ताभ्यांसत्राजितमसत्तमः ॥ शयानमवधील्लोभात्सपापःक्षीणजीवितः ५ स्त्रीणांविक्रोशमानानांक्रंदंतीनामनाथवत् ॥ हत्वापशून्सौनिकवन्मणिमादायजग्मिवान् ६ सत्यभामाचपितरंहतंवीक्ष्यशुचार्पिता ॥ व्यलपत्ताततातेतिहाहतास्मीतिमुह्यती ७ तैलद्रोण्यांमृतंप्रास्यजगामगजसाह्वयम् ॥ कृष्णायविदितार्थायतप्ताचख्यौपितुर्वधम् ८ तदाकर्ण्येश्वरौराजन्ननुसृत्यनृलोकताम् ॥ अहोनःपरमंकष्टमित्यस्राक्षौविलेपतुः ९ आगम्यभगवांस्तस्मात्सभार्यःसाग्रजःपुरम् ॥ शतधन्वानमारेभेहंतुंहर्तुंचतंमणिम् १० ततःपांचालनगराद्याज्ञसेन्याःस्वयंवरम् ॥ घुष्यतायज्ञसेनेनप्रेषितोदूतआगतः ११ आहूतस्तेनगोविंदोगत्वापांचालकेपुरे ॥ ददर्शसाग्रजस्तत्रकिशोरान्पांडुनंदनान् १२ अदृष्टपूर्वान्सुव्यक्तंब्रह्मरूपधरान्नृपान् ॥ तैर्विद्धलक्ष्यैःपौरुष्यप्रतिलब्धमनोरथैः १३ कुंभकारस्यशालायांसमागम्याभिवंद्यच ॥ पितृष्वसामनुज्ञाप्यराजानंचयुधिष्ठिरम् १४ निहंतुंशतधन्वानंतूर्णंद्वारावतीमियात् ॥ सोपिकृष्णोद्यमंज्ञात्वाभीतःप्राणपरीप्सया १५ साहाय्येकृतवर्माणमयाचतसचाब्रवीत् ॥ नाहमीश्वरयोःकुर्यांहेलनंरामकृष्णयोः १६ कोनुक्षेमायकल्पेततयोर्वृजिनमाचरन् ॥ कंसःसहानुगोवीरोयद्द्वेषात्त्याजितःश्रिया १७ जरासंधःसप्तदशसंयुगाद्विरथोगतः ॥ प्रत्याख्यातःसचाक्रूरंपार्ष्णिग्राहमयाचत १८

याज्ञसेन्या.द्रौपद्याः ११ १२ ब्रह्मरूपधरान्ब्राह्मणवेषंबिभ्राणान् पौरुषेणपराक्रमेणप्रतिलब्धोमनोरथोयेषांतैस्तथातैः १३ पितृष्वसांपितृष्वसारंकुंतीम् १४ १५ १६ वृजिनमपराधं अपराधकार्यत्वेनिमित्तानिकथयति कंसइति १७ प्रत्याख्यातोनिराकृतःकृतवर्मणेतिशेषः पार्ष्णिग्राहंपृष्ठबलं १८

१९ २० २१ उच्छिलींध्रंछत्राकारं २२ २३ शतयोजनगंशतयोजनगमनसमर्थम् २४ गरुडोध्वजेयस्यसतथातंरथं २५ मिथिलानगर्याः २६ पद्भ्यामातिःसततंगमनंयस्यससतथा तस्य तिग्मनेमिनाचंडधाराग्रेण व्यचिनोत्अन्वेषणंकृतवान् २७ २८ अन्वेषन्मार्गणंकुर्वन् २९ ३० अर्हण्यंपूज्यं ३१ कालेकृष्णवियोगसमये ३२ ३३ बंधो सत्राजितःसांपरायिकाः प्रेतविषयाः ३४ व्यूषतुःप्रवासंचक्रतुःप्रयोजकौ शतधन्वनःप्रेरकौ ३५ ३६ ३७ इतिशब्दःप्रकारवचनः अंगेतिसंबोधनं एकेकेचित् पूर्वपुरुषैरुक्तपुराणवचनमुपादिशंतिप्रवदंति कथमितितत्राह

सोप्याहकोविरुध्येतविद्वानीश्वरयोर्बलम् ॥ यंकैलासाश्रयःशंभुर्ननामाशिरसाहरिम् १९ योहंसडिंभकौयुद्धेजितवान्वरदुर्मदौ ॥ आशीविषोमहानागो येननिर्वासितोह्रदात् २० यइदंलीलयाविश्वंसृजत्यवतिहंतिच ॥ चेष्टांविश्वसृजोयस्यनविदुर्मोहितायथा २१ यःसप्तहायनःशैलमुत्पाट्यैकेनपाणिना दधारलीलयाबालउच्छिलींध्रमिवार्भकः २२ नमस्तस्मैभगवतेकृष्णायाद्भुतकर्मणे ॥ अनंतायादिभूतायकूटस्थायात्मनेनमः २३ प्रत्याख्यातःसतेनापि शतधन्वामहामणिम् ॥ तस्मिन्न्यस्याश्वमारुह्यशतयोजनगंययौ २४ गरुडध्वजमारुह्यरथंरामजनार्दनौ ॥ अन्वयातांमहावेगैरश्वैराजन्गुरुद्रुहम् २५ मिथिलायाउपवनेविसृज्यपतितंहयम् ॥ पद्भ्यामधावत्संत्रस्तःकृष्णोऽप्यन्वद्रवद्रुषा २६ पदातेर्धावतस्तस्यपदातिस्तिग्मनेमिना ॥ चक्रेणशिरउत्कृत्य वाससोर्व्यचिनोन्मणिम् २७ अलब्धमणिरागत्यकृष्णआहाग्रजांतिकम् ॥ वृथाहतःशतधनुर्मणिस्तत्रनविद्यते २८ ततआहबलोनूनंसमणिःशतधन्वना ॥ कस्मिंश्चित्पुरुषेन्यस्तस्तमन्वेषन्पुरंव्रज २९ अहंवैदेहमिच्छामिद्रष्टुंप्रियतरंमम ॥ इत्युक्त्वामिथिलांराजन्विवेशयदुनंदनः ३० तंदृष्ट्वासहसोत्थायमैथिलःप्रीतमानसः ॥ अर्हयामासविधिवदर्हण्यैःसमर्हणैः ३१ उवासतस्यांकतिचिन्मिथिलायांसमाविभुः ॥ ततोऽशिक्षद्गदांकालेधार्तराष्ट्रःसुयोधनः ३२ मानितःप्रीतियुक्तेनजनकेनमहात्मना ॥ केशवोद्वारकामेत्यनिधनंशतधन्वनः ॥ अप्राप्तिंचमणेःप्राहप्रियायाःप्रियकृद्विभुः ३३ ततःसकारयामास क्रियांबंधोर्हतस्यवै ॥ साकंसुहृद्भिर्भगवान्यायाःस्युःसांपरायिकाः ३४ अक्रूरःकृतवर्माणौश्रुत्वाशतधनोर्वधम् ॥ व्यूषतुर्भयवित्रस्तौद्वारकायाःप्रयोजकौ ३५ अक्रूरेप्रोषितेऽरिष्टान्यासन्वैद्वारकौकसाम् ॥ शारीरामानसास्तापामुहुर्दैविकभौतिकाः ३६ ततोऽपृच्छद्दद्विरिष्टंद्वानुग्रसेनपुरोगमान् ॥ कस्मादिहारिष्टान्यासन्महतासुचिरेणनः ३७ इत्यंगोपादिशंत्येकेविस्मितावैगदाभृतः ॥ निवासनिकटेकिंवाघटेतारिष्टदर्शनम् ३८ देवेऽवर्षतिकाशीशःश्वफल्कायागतायगाम् ॥ स्वसुतांगांदिनींप्रादात्ततोवर्षत्स्मकाशिषु ३९ तत्सुतस्तत्प्रभावोसावक्रूरोयत्रतत्रसः ॥ देवोऽभिवर्षतेतत्रनोपतापानमारिकाः ४०

गदाभृतइति श्रीकृष्णस्यनिवासनिकटेअरिष्टदर्शनमशुभदर्शनंघटेतांकिंचनघटेत ३८ स्वराष्ट्रेदेवेपर्जन्येऽवर्षतिकाशीशःकाशिराजः स्वराष्ट्रंप्रत्यागतायश्वफल्कायश्वक्रूरपित्रे गांस्वातिषयभूमिं नाम्नागांदिनींस्वसुतांचप्रादात् ३९ किमनेनेतितत्राह तत्सुतइति तत्प्रभावःश्वफल्कप्रभावः अतोक्रूरोयत्रदेशेतत्रदेवोभिवर्षतितस्मिन्देशेउपतापादयोनभवंति ४०

अवर्षणादिसंभवेन्यच्चनिमित्तमस्तीतिभावेनोच्यते नैतावतेति इहअवर्षणादावेतावदक्रूरप्रवासनमेवकारणंनभवति किंतु स्यमंतकगमनंचकारणमितिचवृद्धवचः श्रुत्वाक्रूरंवरामंचसमानीयानयित्वा ४१ ४२ ४३ किंकृत्वास्वीकुर्युरितितत्राह निनीयेति अपःपिंडांश्चनिनीयदत्वाअशेषतःपित्रादिविषयमृणंचविमुच्यगृह्णीयुरितिपूर्वेणान्वयः ४४ तर्हितथास्त्वितिनेत्याह किंत्विति प्रत्येतिविश्वासंकरोति प्र स्ययस्तुख्यातिरंप्रविश्वासाधीनहेतुष्विति शांतिंमंगलं शांतिःप्रशममंगलइति ४५ वर्ततेतथेतिशेषः रुक्मवेदयःसुवर्णमेखलाःआरब्धःउक्तः ४६ रजोमिथ्यावादलक्षणांधूलिं ४७ तदर्थमणिनिमित्तं ४८ स्वात्मनाइतितृतीयाषष्ठ्यर्थे ४९ स्नेहाद्विसब्धविश्वस्तं ५० ५१ फलमाह यइति शांतिंमुक्तिं ५२ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्द्धेविज० एकषष्टितमोऽध्यायः ॥ ६१ ॥ तत्तदधिकारि

इतिवृद्धवचःश्रुत्वानैतावदिहकारणम् ॥ इतिदूतैःसमानीयरामाक्रूरौजनार्दनः ४१ अक्रूरंमानयन्कृष्णःकथयित्वाप्रियाःकथाः ॥ विज्ञाताखिलतत्त्वज्ञः स्मयमानउवाचह ४२ ननुदानपतेन्यस्तस्त्वय्यसौशतधन्वना ॥ स्यमंतकोमणिःश्रीमान्विदितःपूर्वमेवनः ४३ सत्राजितोऽनपत्यत्वाद्गृह्णीयुर्दुहि तुःसुताः ॥ दायंनिनीयापःपिंडान्विमुच्यर्णमशेषतः ॥ तथापिदुर्धरोह्यन्यैस्त्वय्यास्तांप्रापितोमणिः ४४ किंतुमामग्रजःसम्यङ्नप्रत्येतिमणिंप्रति ॥ दर्शयस्वमहाभागबंधूनांशांतिमावह ४५ अव्युच्छिन्नामखास्तेद्यवर्ततेरुक्मवेदयः ॥ एवंसामभिरारब्धःश्वफल्कतनयोमणिम् ४६ आदायवास साच्छन्नंददौसूर्यसमप्रभम् ॥ स्यमंतकंदर्शयित्वाज्ञातिभ्योरजआत्मनः ४७ मार्ज्जयामासलोकेशअभिभाष्यहलायुधम् ॥ दृष्ट्वामणिंहलधरस्तदर्थंप्रो ष्यआगतः ४८ योग्योहमितिमन्वानश्चक्रमेकुरुपुंगव ॥ सत्यभामापितृधनंमन्वानास्वात्मनोचितम् ४९ ग्रहीतुमैच्छाद्विस्रब्धंहरेश्चित्तमजानती ॥ जांबवत्यपिशुल्कार्थंपित्रादत्तंममेतिह ५० स्पृहांचक्रेमणौतस्मिन्सर्वंविज्ञायमाधवः ॥ अक्रूरस्यकरेभूयोमणिंप्रत्यर्पयद्विभुः ५१ यस्त्वेतद्भगवतईश्वर स्यविष्णोर्वीर्याढ्यंवृजिनहरंसुमंगलंच ॥ आख्यानंपठतिशृणोत्यनुस्मरेद्वादुष्कीर्तिंदुरितमपोह्ययातिशांतिम् ५२ इतिश्रीभागवतेमहापुराणेदशमस्कं धेउत्त० एकषष्टितमोऽध्यायः ॥६१॥ श्रीशुकउवाच ॥एकदापांडवान्द्रष्टुंप्रतीतान्पुरुषोत्तमः॥इंद्रप्रस्थंगतःश्रीमान्युयुधानादिभिर्वृतः १ दृष्ट्वातमागतंपार्थामु कुंदमखिलेश्वरम् ॥ उत्तस्थुर्युगपद्वीराःप्राणंमुख्यमिवागतम् २ परिष्वज्याच्युतंवीराअंगसंगहतैनसः ॥ सानुरागस्मितंवक्त्रंवीक्ष्यतस्यमुदंययुः ३ युधि ष्ठिरस्यभीमस्यकृत्वापादाभिवंदनम् ॥ फाल्गुनंपरिरभ्याथयमाभ्यामभिवंदितः ४ परमासनमासीनंकृष्णाकृष्णमनिंदिता ॥ नवोढाव्रीडिताकिंचि च्छनैरेत्याभ्यवंदत ५ तथैवसात्यकिःपार्थैःपूजितश्चाभिवंदितः ॥ निषसादासनेन्येचपूजिताःपर्युपासते ६

णांतत्तद्योग्यगुणोपसंहारार्थंभक्तवात्सल्यादिविशेषंकथयति कतिपयैरध्यायेषु तत्रादौहरेर्भक्तवात्सल्यंदर्शयितुमाह एकदेति एकदाकस्मिंश्चिद्वसरेप्रतीतान्शौर्यादिगुणेनप्रख्यातान्कोविदान्वा भग वद्दत्तयाभरणेनभूषितान्वा प्रतीतोभूषितेख्यातेज्ञानेप्रत्यर्थितेबुधइतियादवः प्रतीतःप्रथितेख्यातेवित्तविज्ञानकोविदइत्यमरः १ मुकुंदंमुक्तिप्रदं शरीरंप्रत्यागतंप्रविष्टंमुख्यप्राणंदृष्ट्वाचक्षुरादींद्रिया णियथोत्तिष्ठंति २ अच्युतस्यांगसंगेन ३ ४ कृष्णाद्रौपदी ५ ६

तस्यैकृताभिवंदनः अभिरंभितःआलिंगितः परिपृष्टबांधवस्तयेतिशेष. ७ क्लेशापायात्मदर्शनंक्लेशनाशकरस्वरूपदर्शनं जतुगृहादावनुभूतांस्तांश्चबहून्क्लेशान्स्मरंतीतंकृष्णमाहेत्यन्वयः ८ किमत्राह तदेवेति हेकृष्ण यद्यदास्मरतांनोवृत्तंज्ञातुंत्वयायदामेभ्राताऽक्रूरःप्रेषितः तदैवास्माकंकुशलमभूदित्यन्वयः कथमेतदत्राह यदिति यदित्युत्तरत्रापिसंबध्यतेहेतुत्वेन अस्मत्कुशलंस्मरतात्वयासनाथाः स्वामिवंतःकृताइतियत्पांडवानामुपद्रवोनकर्तव्यःयतस्तेकृष्णनाथाअस्मान्घ्नंतीति ९ किंच यदास्वयंवरकृतेपांचालेषुस्थितानस्माननुस्मृत्य यस्त्वमागतःतदातेनत्वयात्वद्गुणानुसंस्मृत्याहंसुखोपिताआशुंइत्यन्वयः १० इदानीमागमनविलंबःकिमितिकृतइतिकुंत्याहार्दशंकापरिहरन्नाह इतीति ११ १२ सीरधरोहलधरःबलभद्रइत्यर्थः १३ १४ कार्ययंत्रित.कार्यवश. ईश्वरस्यतवइदंवचनंलोकचेष्टा

पृथांसमागम्यकृताभिवंदनस्तयातिहार्दार्द्रदृशाऽभिरंभितः ॥ आपृष्टवांस्तत्कुशलंसहस्नुषांपितृष्वसारंपरिपृष्टबांधवः ७ तमाहप्रेमवैक्लव्यरुद्धकंठाश्रुलोचना ॥ स्मरंतीतान्बहून्क्लेशान्क्लेशापायात्मदर्शनम् ८ तदैवकुशलंनोभूत्सनाथाःकृतावयम् ॥ ज्ञातुंनःस्मरताकृष्णभ्रातामेप्रेषितस्त्वया ९ पांचालेषुस्थितानस्मान्स्वयंवरकृतेयदा ॥ अनुस्मृत्यागतोयस्त्वंतेनस्मासंसुखोषिता १० इत्युक्तापांतदाकुंत्यांप्राहयोगेश्वरःस्वयम् ॥ पांचालेषुस्थितानेत्यसुतांस्तेछद्मरूपिणः ११ कुंभकारस्यशालायामुषितान्सहभार्यया ॥ दृष्ट्वागतोहंदिवसेतस्मिन्नेवाविलंबितः १२ निहंतुंशतधन्वानंसत्यभामापितुर्द्रुहम् ॥ शतधन्वानिदुर्बुद्धौहतेसीरधरोऽग्रजः १३ कुपितोमामनादृत्यविदेहान्विमनाययौ ॥ एतावंतंमहाकालंतदागमनकांक्षया १४ पुरएवावसंक्षापिनामच्छंकार्ययंत्रितः ॥ इत्येवंवादिनंकुंतीप्राहस्नेहपरिप्लुता १५ नतेस्तिस्वःपरइतिविश्वस्यसुहृदात्मनः ॥ तथापिस्मरतांसर्वान्क्लेशान्हंसिहृदिस्थितः १६ इतिवैवार्षिकान्मासान्राज्ञासोभ्यर्चितःसुखम् ॥ जनयन्नयनानंदमिंद्रप्रस्थौकसांविभुः १७ एकदारथमारुह्यविजयोवानरध्वजम् ॥ गांडीवंधनुरादायतूणौचाक्षयसायकौ १८ साकंकृष्णेनसन्नद्धोविहर्तुंविपिनंवनम् ॥ बहुव्यालमृगाकीर्णंप्राविशत्परवीरहा १९ तत्राविध्यच्छरैर्व्याघ्रान्सूकरान्महिषान्रुरून् ॥ शरभान्गवयान्खड्गान्हरिणाञ्छशशल्यकान् २० तान्निन्युःकिंकराराज्ञेमेध्यान्पर्वण्युपागते ॥ तृट्परीतःपरिश्रांतोबीभत्सुर्यमुनामगात् २१ तत्रोपस्पृश्यविशदंपीत्वामृष्टमणिप्रभम् ॥ कृष्णौददृशतुःकन्यांचरंतींचारुदर्शनाम् २२ तामासाद्यवरारोहांसुदतींरुचिराननाम् ॥ पप्रच्छप्रेषितःसख्याफाल्गुनःप्रमदोत्तमाम् २३ कात्वंकस्यासिसुश्रोणिकुतोवाकिंचिकीर्षसि ॥ मन्येत्वांपतिमिच्छंतींकन्यांकथयशोभने २४

नुसारिनतुतथ्यमितिभावेनप्रतिवक्ति इतीति १५ स्वःस्वकीयःपरःपरकीयःशत्रुपक्षभवःशत्रुमित्रविभागाभावेजनार्दनोमुरारिर्मधुसूदनःपार्थसारथिरित्यादीनिनामानिविक्रमनिमित्तानिकथमत्राह तथापीति १६ इतिसंलापेवार्षिकान्वर्षाकालसंबंधिनः राज्ञाभ्यर्चितःउवासेतिशेषः १७ १८ विपिनंगंभीरम् १९ महिषान्वनमहिषान् रुरून्कृष्णमृगान् शरभानष्टपदान् खड्गान्मृगविशेषान् हरिणान्सामान्यमृगान् शल्यकान्शल्लान् २० राज्ञेयुधिष्ठिरायपर्वणिश्राद्धोचितेयजनकालेवा २१ कृष्णौयादवेंद्रार्जुनौ २२ सख्याकृष्णेन २३ कन्यादीक्षामुत्पन्नरजसं अतएवपतिकामयमानां कनदीक्षाविविधातुःअनवाप्तपतिःकन्याजातवीर्यावरार्थिनीत्युत्पलमाला २४

वरेण्यंप्रार्थनीयम् २५ अनाथवत्सलः २६ २७ गुडाकेशःघनकेशःजितनिद्रोवा यथाकालिंदीऊचेतथासोपिवासुदेवाय २८ २९ ३० ३१ ३२ ३३ ३४ राजाधिदेव्याःराजाधिदेवीति नामधेयायाः ३५ नीलेत्याह्वयोनामयस्याःसानीलेत्याह्वया आमयशब्दःस्मृतौवाक्येप्यास्तुसंतापकोपयोरितियादवः ३६ वीरान्शूरान्गंधयंतिहिंसयंतीतिवीरगंधाः तान् गंधोछेदेगंधिंहिंसायां घ्राणग्राहेभकीर्तितइति वीरस्यराहोर्गंधइवगंधोयेषांतेतथातान् वीरोराहोर्हरौशक्रइतिवा महांतोघनामेघायथानीलास्तेतथातान् यद्वा महाकठिनान्महामुद्गरानिवास्थितान्वा घनाःस्थलीनस्‌ पातमेघकाठिन्यमुद्गराइति ३७ वृषजिद्भ्यांलब्धुंयोग्याम् सैन्येनसेनासमूहेन ३८ गुरुणाबहुमानेनमहित्वेन ३९ अभिमतमभीष्टवरंवरणयोग्यरूपम् वरोनाक्‌त्रज्ञाप्राज्ञोर्देवादेःप्सि

कालिंद्युवाच ॥ अहंदेवस्यसवितुर्दुहितापतिमिच्छती ॥ विष्णुंवरेण्यंवरदंतपःपरममास्थिता २५ नान्यंपतिंवृणेवीरतमृतेश्रीनिकेतनम् ॥ तुष्यतांमे सभगवान्मुकुंदोऽनाथवत्सलः २६ कालिंदीतिसमाख्यातावसामियमुनाजले ॥ निर्मितेभवनेपित्रायावदच्युतदर्शनम् २७ तथाऽवदद्गुडाकेशोवासुदे वायसोपिताम् ॥ रथमारोप्यतद्विद्वान्धर्मराजमुपागमत् २८ वसंस्तत्रहृषीकेशःशक्रप्रस्थेयथासुखम् ॥ विश्वकर्माणमाहूयशिल्पविद्याविशारदम् २९ अद्भुतंकारयामासनगरंधर्मसूनवे ॥ सप्रासादपुरद्वारगोपुराट्टालतोरणम् ३० पुरंदरपुरप्रख्यंस्वानांप्रियचिकीर्षया ॥ अथपार्थैरनुज्ञातःसुहृद्भिःस्वजना न्वितः ३१ आययौद्वारकांभूयःसात्यकिप्रमुखैर्वृतः ॥ अथोपयेमेकालिंदींपुण्येनक्षत्रऊर्जिते ३२ रूपयौवनसंपन्नांमनोनयननंदिनीम् ॥ वितन्वन्पर मानंदंस्वानांपरममंगलम् ३३ विंदानुविंदावावंत्यौदुर्योधनवशानुगौ ॥ स्वयंवरेस्वभगिनींकृष्णकामांन्यषेधताम् ३४ राजाधिदेव्यास्तनयांमित्रविंदां पितृष्वसुः ॥ प्रसह्यहृतवान्कृष्णोराजन्राज्ञांप्रपश्यताम् ३५ नग्नजिन्नामकौशल्यआसीद्राजाऽतिधार्मिकः ॥ तस्यसत्याऽभवत्कन्याराजन्नीलेतिआह्व या ३६ तांनशेकुर्नृपावोढुमजित्वासप्तगोवृषान् ॥ तीक्ष्णशृंगान्सुदुर्धर्षान्वीरगंधान्महाघनान् ३७ तांश्रुत्वावृषजिल्लभ्यांभगवान्सात्वतांपतिः ॥ जगाम कौशलपुरंसैन्येनमहतावृतः ३८ सकौशलपतिःप्रीतःप्रत्युत्थानासनादिभिः ॥ अर्हणेनापिगुरुणापूजयन्प्रत्यनंदत ३९ वरंविलोक्याभिमतंसमागतं नरेंद्रकन्याचकमेरमापतिम् ॥ भूयादयंमेपतिराशिषांपतिःकरोतुसत्यायदिमेधृतव्रतः ४० अर्चितंपुनरित्याहनारायणजगत्पते ॥ आत्मनादेवपूर्णस्य करवाणिकिमल्पकः ४१ यत्पादपंकजरजःशिरसाबिभर्तिश्रीरब्जजश्चगिरिशःसहलोकपालैः ॥ लीलातनुःस्वकृतसेतुपरीप्सयायःकालेदधत्सभगवा न्स्वकृतेनतुष्येत् ४२ श्रीशुकउवाच ॥ तमाहभगवान्कृष्णःकृतासनपरिग्रहः ॥ मेघगंभीरयावाचासस्मितंकुरुनंदन ४३

तावृतामिति आशिषांभार्याभिलाषाणांपतिःसाधकः आशीरुरगदंष्ट्रायांशुभवाक्याभिलाषयोः यदिमेमयाव्रतःव्रतसमूहोधृतःअनुपयुक्तत्वेननिविवत्भवत्कृतस्तर्हिससत्यःसच्चिदानंदात्माश्रीकृष्णः करोतुममपाणिग्रहणंकरोत्वितिशेषः व्रतानांसमूहइत्यास्मिन्नर्थेअच्प्रत्ययः यदिसत्याधृतव्रतोस्तितर्हिसव्रतःस्वफलत्वेनकृष्णंनःपतिंकरोत्वितिवा ४० आत्मनास्वलाभेन ४१ स्वकृतसेतुपरीप्स यास्वकल्पितवर्णाश्रमलक्षणसेतुपालनेच्छया मयिस्थितः स्वेनैवकृतेनकर्मणा ४२ ४३

विदुषोविद्वांसः स्वयंवरादन्यत्रकालेअयाचितारंवरमुत्तममाहुः पुरुषार्थभागिनांप्रयोजनांशभाजांप्रभूणांमध्येसअर्थाधीतोवेलांकालंविनाह्वाययत्यात्मानांमतिशेषः आह्वानामितिपाठेसोयाचितास्व यंवरकालंविनापिस्वहूतिंप्रभूणामाह्वानमर्हतीतिशेषः वेलेतिपाठेप्रभूणामाह्वानंविनापिसएववेलाकालःस्वयंवराख्यइत्याहुरित्यर्थः ४४ सामान्यमुक्त्वाविशिनष्टि नरेंद्रेति राजन्यबंधोःराज्ञांवं शेजातस्य निजधर्मवर्तिनःक्षात्रधर्ममनुवर्तमानस्य शुल्कदावेतनप्रदाः ४५ ४६ कन्यायाःवरपरीप्सयावरेच्छया ४७ दुर्दांताःअशक्याशिक्षाः दुरवग्रहाग्रहीतुमशक्याः ४८ ४९

श्रीभगवानुवाच ॥ अन्यत्रकालेविदुषःस्वयंवरादयाचितारंवरमाहुरुत्तमम् ॥ साहिप्रभूणांपुरुषार्थभागिनांवेलांविनाह्वाययतिक्षितीश्वर ४४ नरेंद्रया च्ञाकविधिर्विगर्हिताराजन्यबंधोर्निजधर्मवर्तिनः॥ तथापियाचेतवसौहृदेच्छयाकन्यांत्वदीयांनहिशुल्कदावयम्४५ राजोवाच ॥ कोन्यस्तेभ्यधिकोनाथ कन्यावरइहेप्सितः ॥ गुणैकधाम्नोयस्यांगेश्रीर्वसत्यनपायिनी ४६ किंत्वस्माभिःकृतःपूर्वंसमयःसात्वतर्षभ ॥ पुंसांवीर्यपरीक्षार्थंकन्यावरपरीप्सया ४७ सप्तैतेगोवृषावीरदुर्दांतादुरवग्रहाः ॥ एतैर्भग्नाःसुबहुशोभिन्नगात्रानृपात्मजाः ४८ यदिमेनिगृहीताःस्युस्त्वयैवयदुनंदन ॥ वरोभवानभिमतोदुहितुर्मे श्रियःपते ४९ श्रीशुकउवाच ॥ एवंसमयमाकर्ण्यबद्ध्वापरिकरंप्रभुः ॥ आत्मानंसप्तधाकृत्वान्यगृह्णाल्लीलयैवतान् ५० बद्ध्वातान्दामभिःशौरिर्भग्नदर्पा न्हतौजसः ॥ व्यकर्षल्लीलयाबद्धान्बालोदारुमयान्यथा५१ ततःप्रीतःसुतांराजन्ददौकृष्णायविस्मितः ॥ तांप्रत्यगृह्णाद्भगवान्विधिवत्सदृशीम्प्रभुः ५२ राजप त्न्यःस्वदुहितुःकृष्णंलब्ध्वाप्रियंपतिम् ॥ लेभिरेपरमानंदंजातश्चपरमोत्सवः ५३ शंखभेर्यानकानेदुर्गीतवाद्यद्विजाशिषः॥ नरानार्यःप्रमुदिताःसुवासःस्रग लंकृताः ५४ दशधेनुसहस्राणिपारिबर्हमदाद्विभुः॥ युवतीनांत्रिसाहस्रंनिष्कग्रीवसुवाससाम् ५५ नवनागसहस्राणिनागाच्छतगुणान्रथान् ॥ रथाच्छ तगुणानश्वानश्वाच्छतगुणान्नरान् ५६ दंपतीरथमारोप्यमहत्यासेनयावृतौ ॥ स्नेहप्रक्लिन्नहृदयोयापयामासकौशलः ५७ पारिबर्हंचसंगृह्यद्वारकामेत्य सत्यया ॥ रेमेयदूनामृषभोभगवान्देवकीसुतः ५८ श्रुतकीर्तेःसुतांभद्रामुपयेमेपितृष्वसुः ॥ कैकेयींभ्रातृभिर्दत्तांकृष्णःसंतर्दनादिभिः ५९ सुतांचमद्रा धिपतेर्लक्ष्मणांलक्षणैर्युताम् ॥ स्वयंवरेजहारैकःससुपर्णःसुधामिव ६० अन्याश्चैवंविधाभार्याःकृष्णस्यासन्सहस्रशः ॥ भौमंहत्वातन्निरोधादाहृताश्चा रुदर्शनाः ६१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ राजोवाच ॥ यथाहतोभगवताभौमोनीतायथास्त्रियः ॥ निरुद्धायास्तदाचक्ष्वविक्रमंशार्ङ्गधन्वनः १ श्रीशुकउवाच ॥ द्वारवत्यांमहाभागेनिवसत्यच्युतेनृप ॥ दीनेनोद्विग्नचित्तेनसमागम्यत्रिविष्टपात् २

परिकरंचैलोष्णीषादिलक्षणं ५० ५१ ५२ ५३ गीतवाद्यानिद्विजाशिषश्चतथाप्रमुदिताअभूवन्नितिशेषः ५४ पारिबर्हंस्त्रीधननिकायं ५५ ५६ ५७ ५८ ५९ ६० भौमंह त्वातस्यभौमस्य निरोधात्तत्कारागृहादाहृताःआनीताः ६१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांद्विषष्टितमोऽध्यायः ॥ ६२ ॥ यथाकथंपृष्टस्तत्सर्वं १ २

हृतेकुंडलेयस्यसहृतकुंडलःहृतकुंडलोबंधुर्मातायस्यसतथातेननरकेणहृतंअमराद्रौमेरौस्थानंयस्यसतथा ३ प्राग्ज्योतिषपुरंनरकस्यनगरम् ४ कृमतमगरमग्राह हिमाद्राविति जलेना ग्निनानिलेनवायुनादुर्गमंगंतुमशक्यं मुरपाशानामयुतैःअनकैःषट्सहस्रैरित्यर्थःयद्वा मुरपाशैरयुतैरसंबद्धैःपृथक्कृतैःशस्त्रदुर्गैःदुर्गमपिगिर्यादिक्रमेण ५ ६ अमंदमनल्पम् ७ ८ ९ १०

हृतच्छत्रेणशक्रेणहृतकुंडलबंधुना ॥ हृतामराद्रिस्थानेनज्ञापितोभौमचेष्टितम् ३ इंद्रमाश्वास्यगोविंदःसुसंपूज्यविसृज्यच ॥ सभार्योगरुडारूढःप्राग्ज्योतिषपुरंययौ ४ हिमाद्रौतुंगशिखरेजलाग्न्यनिलदुर्गमम् ॥ गिरिदुर्गैःशस्त्रदुर्गैर्मुरपाशायुतैर्वृतम् ५ ससंप्राप्यभटैर्गुप्तंदानवेंद्रपुरंमहत् ॥ गदयानिर्बिभेदाद्रिंप्राकाराकारसंस्थितम् ६ तन्निर्भिद्यप्रविश्यांतःशस्त्रदुर्गाणिसायकैः ॥ चक्रतंमौरवंपाशंचक्रेणामंदमच्छिनत् ७ क्षुरमालांतथाघोरांनिचकर्तासिनाहरिः ॥ वायव्यास्त्रेणसलिलंवारुणास्त्रेणपावकम् ८ हरिर्निमिषमात्रेणनाशयामासभारत ॥ शंखनादेनतीव्रेणमनांसिचमनस्विनाम् ९ पांचजन्यध्वनिंकृत्वायुगांताशनिभीषणम् ॥ मुरःशयानउत्तस्थौदैत्यःपंचशिराजलात् १० त्रिशूलमुद्यम्यसुदुर्निरीक्ष्योयुगांतसूर्यानलरोचिरुज्ज्वलः ॥ ग्रसंस्त्रिलोकानिवपंचभिर्मुखैरभ्यद्रवत्तार्क्ष्यसुतंयथोरगः ११ आविध्यशूलंतरसागरुत्मतेनिरस्यवक्त्रैर्व्यनदत्सपंचभिः ॥ सरोदसीसर्वदिशोंतरंमहानापूरयन्नंडकटाहमावृणोत् १२ तमापतंतंत्रिशिखंगरुत्मतेचकर्तबाणद्वितयेनकेशवः ॥ मुखेषुतस्यापिशरान्समर्पयन्पुनर्गदांसोप्यमुचन्मधुद्विषे १३ तामापतंतींगदयागदाग्रजोगदांमृधेनिर्बिभिदेसहस्रधा ॥ उद्यम्यबाहूनभिधावतोदिशःशिरांसिचक्रेणजहारलीलया १४ व्यसुःपपातांभसिकृत्तकंधरोनिकृत्तपक्षोद्रिरिवेंद्रतेजसा ॥ पपातविष्णोःशिरसिप्रमोदिनीप्रसूनवृष्टिर्निहतेमुरेसुरे १५ तस्यात्मजाःसप्तपितुर्वधातुराश्चिकीर्षवस्तस्यरणेप्रतिक्रियाम् ॥ ध्रुवश्चविष्णुःश्रवणोविभावसुर्नभोवसुस्वानरुणश्चसप्तमः १६ रथान्समारुह्यवृषप्रयुक्तान्भौमप्रयुक्ताभवनान्निराक्रमन् ॥ अयुंजतासज्यशरासनान्भटाःशक्त्यर्ष्टिशूलानजितेरुषोल्बणान् १७ तच्छस्त्रकूटंभगवान्समार्गणैरमोघवीर्यस्तिलशश्चकर्तह ॥ तान्योद्धुमिच्छूननयद्यमक्षयंनिकृत्तशीर्षोरुभुजांघ्रिकार्मुकान् १८ ततोद्भुततरंगत्वाभटाराजपुरंमहत् ॥ हतान्मुरसुतान्सर्वान्नरकायन्यवेदयन् १९ स्वानीकपानच्युतचक्रसायकैर्हतान्निशम्याशु चुकोपभूमिजः ॥ निरीक्ष्यदुर्मर्षणमास्रवन्मदैर्गजैःपयोब्धिप्रभवैर्निराक्रमत् २० रथैरनेकसाहस्रैर्गजैश्चबहुभिर्वृतः ॥ महत्यासेनयायुक्तश्चायादायोधनंबली २१ दृष्ट्वासभार्यंगरुडोपरिस्थितंसूर्योपरिष्टात्सतडिद्घनंयथा ॥ गृहीतकोदंडमुदारशंखकौमोदकीचक्रधरंचतुर्भुजम् २२ नीलजीमूतसंकाशंदृष्ट्वातंगजवाहनम् ॥ शंखमाध्मायगोविंदःसिंहनादंव्यनीनदत् २३

११ निरस्यमुक्त्वा आपूरयन्नादेनेतिशेषः १२ १३ १४ प्रमोदिनीसंतोषजननी १५ १६ भौमेनप्रयुक्ताःप्रेरिताःनिराक्रमन्निर्गताः आसज्यज्यामारोप्य १७ कूटंसमूहम् १८ १९ २० आयोधनंयुद्धस्थानम् २१ सूर्योपरिष्टात्स्थितंतडितासहितंघनंमेघम् २२ २३

लोहेनायसानिर्मिता तेनशतघ्नीप्रयोगेणविव्यथे व्यथताडनइतिधातोःताडितोभूत् २४ २५ ततोनुतदनंतरं २६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्द्धेविजयध्वजकृतटीकायांत्रिषष्टितमोऽ





वरूथिनीदैत्यपतेःसुघोरानशरान्ववर्षाच्युतमूर्ध्निदुर्जया ॥ कृष्णेसभौमोऽव्यसृजच्छतघ्नींलोहायसींतेनभृशंसविव्यथे २४ अनेकबाणान्निर्मुक्तान्नरकेणस्म यन्निव ॥ चकर्तबाणैर्युगपत्तदद्भुतमिवाभवत् २५ ततोनुसैन्यंभगवान्गदाग्रजोविचित्रपत्रैर्निशितैःशरौघैः ॥ निकृत्तबाहूरुशिरोध्रविग्रहंचकारतूर्णंनृपसा श्वकुंजरम् २६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेत्रिषष्टितमोऽध्यायः ॥६३॥ श्रीशुकउवाच ॥ यानियोधैःप्रयुक्तानिशस्त्रास्त्राणिकुरूद्वह ॥ अच्छिनत्केशवस्तीक्ष्णैःशरैरेकैकशस्त्रिभिः ॥ ऊह्यमानःसुपर्णेनपक्षाभ्यांनिघ्नतानृगजान् १ गरुत्मताहन्यमानास्तुंडपक्षनखैर्गजाः ॥ तुरंगमाश्वदुर्द्धर्षाः पेतुरुर्व्यांगतासवः २ दृष्ट्वाविद्रावितंसैन्यंगरुडेनार्दितंस्वकम् ॥ तंभौमःप्राहरच्छक्त्यावज्रेणवहरिर्गिरिम् ३ तयातिविद्धोगरुडोमालाविद्धइवद्विपः ॥ नकिंचिदपिराजेंद्रचचालनरकाहवे ४ ततःकार्मुकमादायनरकःशरसंचयान् ॥ मुमोचकृष्णेतान्सर्वानच्छिनत्केशवःशरैः ५ ततोर्धचंद्रंनरकःसुसंधायश रासने ॥ आकृष्टुकामंविज्ञायतच्चापंकेशवोच्छिनत् ६ ततःकालायसमयींगदांगुर्वींधरासुतः ॥ आददेतांक्षुरप्रेणचकर्तमधुसूदनः ७ ततोनिशातंपरशुंभौ मःपरबलार्दनः ॥ प्राहिणोद्विष्णवेतंचचिच्छेदश्रीधरोऽसिना ८ ततःकृष्णायचिक्षेपतोमरान्पंचसप्ततिम् ॥ चकारसिंहनादंचनरकःपरवीरहा ९ तांस्तो मरान्कुरुश्रेष्ठशरेणैकेनकेशवः ॥ चिच्छेदयौगपद्येनतदद्भुतमिवाभवत् १० शूलंभौमोच्युतंहंतुमाददेवितथोद्यमः ॥ तद्विसर्गात्पूर्वमेवनरकस्यशिरो हरिः ॥ अपाहरद्गजस्थस्यचक्रेणक्षुरनेमिना ११ सकुंडलंचारुकिरीटभूषितंबभौपृथिव्यांपतितंसमुज्ज्वलत् ॥ हाहेतिसाध्वित्यृषयःसुरेश्वरामाल्यैर्मुकुं दंविकिरंतईडिरे १२ हत्वाहारैर्नरकंदैत्यवर्यंमरुद्गणैःसहितोलोकपालैः ॥ समाहूतःपौरमुख्यैःसभार्यःप्राग्ज्योतिषंप्राविशद्द्रष्टुकामः १३ तत्रापश्यद्यदुश्रे ष्ठोविचित्रंमणिपर्वतम् ॥ छत्रंचवारुणंहृद्यंसलिलस्राविभारत १४ शक्रायप्राहिणोद्भूयःकेशवोमणिपर्वतम् ॥ वरुणायतथाछत्रंप्राहिणोद्दैत्यकिंकरैः १५ तान्विसृज्यहरिर्देवान्स्वयमेवजगत्पतिः ॥ प्राविशद्भौमसदनंपुरंदरपुरोपमम् १६ ततोधराकृष्णमुपेत्यकुंडलेप्रतप्तजांबूनदरत्नभास्वरे ॥ पौत्रंचवीरंभ गदत्तसंज्ञितंनिवेद्यमालामपिवैजयंतीम् १७ अस्तौषदिथविश्वेशंदेवीदेववरार्चितम् ॥ प्रांजलिःप्रणताराजन्भक्तिप्रवणयाधिया १८ पृथिव्युवाच ॥ नम स्तेदेवदेवेशशंखचक्रगदाधर ॥ भक्तेच्छोपात्तरूपायपरमात्मन्नमोस्तुते १९ नमःपंकजनाभायनमःपंकजमालिने ॥ नमःपंकजनेत्रायनमस्तेपंकजांघ्रये २०

ध्यायः ॥ ६३ ॥ गरुडस्यपक्षाभ्यांनिघ्नताअहतानृगजानच्छिनत् १ २ हरिरिंद्रः ३ ४ ५ आकृष्टुकामंआकर्णपूर्णमाकर्षणेच्छुं ६ नाम्नाक्षुरप्रेणशरेण ७ ८ ९ १० क्षुरनेमिनानिशितनेमिना ११ १२ १३ १४ १५ १६ १७ भक्त्याप्रवणया सततयाधियाबुद्ध्या १८ भक्तेच्छयाउपात्तंस्वीकृतंरूपं १९ २०

वासुदेवायसर्वत्रस्थित्वाद्योतमानाय विष्णवेसच्चिदानंदरूपाय पुरुषायपूर्णषड्गुणायआदेर्ब्रह्मणोबीजायव्यंजकाय २१ अस्यप्रपंचस्यजनयित्रेउत्पादकाय ब्रह्मणेवेदादिशब्दराशिवेद्याय सर्वशब्द वाच्यत्वेहेतुमाह अनंतेति अनंतावैवेदाइतिश्रुतेः चराचरात्मन् चराचरमात्मादेहःप्रतिमास्थानीयोयस्यसतथा परमात्मन्प्रत्यक्स्वरूप २२ सिसृक्षुःस्रष्टुकामः उत्कटस्त्वंरजोगुणंबिभर्षिउपाद त्सेनिरोधायसंहारायसंवृतंज्ञानसंवरणकारणंतमोगुणं स्थानाय जगत्स्थित्यैसत्त्वगुणं कालःप्राणिनामदृष्टपाचकः एवंविधःकइतितत्राह प्रधानइति प्रधानःपुरुषोसिपुरुषोत्तमोसीत्यर्थः उत्तमः पुरुषस्त्वन्यइतिस्मृतेः पुरुषत्वेपिपरिच्छिन्नत्वंनास्तीत्याह अपारइति यद्वा जगत्कारणंप्रधानपुरुषइतिकेचित्संगिरंते तदाशंकानिवारयति प्रधानइति प्रधानशब्दवाच्यः पुरुषशब्दवाच्यश्चत्वमेव तर्हिपरिशिष्यमाणःकइत्यत्राह अस्येति अस्यप्रपंचस्यपारःपरिशिष्यमाणःसंसारनदीपारःतीरांतरशब्दवाच्यस्त्वमित्यर्थः २३ सृष्ट्यादिकर्तात्वमित्युक्त्यैवाखंडकर्तृत्वप्रतीतावपिधात्रादिशब्दाभ्यां विरिंचादेरपिकर्तृत्वशंकामिदानींनिवारयति अहमिति अहंनाम्नापृथिवी मीयंतइतिमात्राणिशब्दादिविषयाः मानंस्वविषयज्ञानंस्वसत्वेनत्रायंतइतिवा देवाइंद्रियाभिमानिनः कर्ताअहंकाराभिमानी

नमोभगवतेतुभ्यंवासुदेवायविष्णवे॥ पुरुषायादिबीजायपूर्णबोधायतेनमः२१ अजायजनयित्रेस्यब्रह्मणेनंतशक्तये ॥ चराचरात्मन्लोकेशपरमात्मन्नमोस्तु ते २२ त्वंवैसिसृक्षूरजउत्कटःप्रभोतमोनिरोधायबिभर्षिसंवृतम् ॥ स्थानायसत्त्वंजगतोजगत्प्रभोकालःप्रधानःपुरुषोऽस्यपारः २३ अहंपयोज्योतिरथानि लोनभोमात्राणिदेवामनइंद्रियाणि ॥ कर्तामहानित्यखिलंतुकारणंत्वय्यद्वितीयेभगवन्नयंभ्रमः२४ तस्यात्मजोयंतवपादपंकजंभीतःप्रपन्नार्तिहरंप्रसादितुम् तत्पालयैनंकुरुहस्तपंकजंशिरस्यमुष्याखिलकल्मषापहम् २५ श्रीशुकउवाच ॥ इतिभूम्यार्चितोवाग्भिर्भगवान्भक्तिनम्रया ॥ प्रसन्नःप्रददौतस्मैभग दत्तायचाभयम् २६ राज्येनियोज्यतंवंश्येतदमात्यांश्चतत्पदे॥ भौमावरोधकांतानांश्रेणींसंप्राविशद्धरिः २७ तत्रराजन्यकन्यानांषट्सहस्राधिकायुतम्॥भौ माहृतानांविक्रम्यराजभ्योददृशेहरिः २८ तंप्रविष्टंस्त्रियोवीक्ष्यताःसर्वानवयौवनाः ॥ स्वलंकृताविचित्रांग्योनरवर्यविमोहिताः २९ मनसावव्रिरेऽभीष्टं पतिंदैवोपपादितम् ॥ भूयात्पतिरयंमह्यंधातातमनुमोदताम् ३० इतिसर्वेश्वरेकृष्णेतानार्योहृदयंदधुः ॥ ताःप्राहिणोद्द्वारवतींसुमृष्टविरजांबराः ३१ स रैरुष्ट्रैर्महाकोशान्रथांश्चद्रविणंमहत् ॥ ऐरावतकुलेभांश्चचतुर्दंतान्मदोत्कटान् ३२

महान्महत्तत्त्वाभिमानीविरिंचःतुशब्दएवार्थे इतिशब्दःसमाप्तिवचनःमहदाद्यभिमान्यंतमखिलकारणंअद्वितीयेचत्वय्येवत्वमेवधारयसीत्यर्थः आतिथ्यवत्कदाचिन्नेत्याह भगवन्निति हेऐश्वर्यादिगुणार्णव अयंजगद्भ्रमःचक्रभ्रमणवद्विश्वस्यपरिवर्तनंत्वन्नियतमित्यर्थः भ्रमशब्दस्यारोपार्थत्वांगीकारेअर्थक्रियानुपपत्तिरिति २४ सांप्रतंतवकिंविधेयमित्यत्राह तस्येति अयंपुरोवर्तीतस्यनरकस्यात्मज औरसः पुत्रइतिजानीहीतिशेषः तर्हिकिमितिमत्प्रणामंनकरोतीत्यत्राह तवेति तवप्रपन्नार्तिहरंपादपंकजंप्राप्यत्वांप्रसादयितुंभीतस्त्रस्तइत्यन्वयः ततःकिमत्राह तदिति यतोभीतस्ततस्तस्मात्तत्पालनंचैतदेवेत्याह कुर्विति अनेनकिंफलंस्यादित्याशंक्यपापनिमित्तंसर्वमनर्थजातंतन्नाशेसर्वसुखंस्यादितिभावेनाह अखिलेति यद्वा प्रपन्नार्तिहरभगवंतंप्रसादयितुंतवपादपंकजंभीतःसंचालितःप्राप्तइत्यर्थः भीतिभयसचल नयोरितिधातुः अतोरक्षेत्याह तदिति २५ २६ वंश्येवंशप्राप्ते तत्पदेअमात्यपदे श्रेणींपंक्तिशालांवा २७ २८ २९ ३० ३१ ऐरावतकुलेजातानिभान् ३२

पांडुरान्श्वेतदेहान् ३३॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्द्धेविजयध्वजकृतटीकायांचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ १ २ ३ गवज्वरैःनष्टसंतापैः ४ ५ उपतस्थेसमीपेतस्थौ ६ भामतेजः अस्याःअस्तीतिभामिनी चिरकालदृष्टम् ७ श्वश्वाःभर्तुर्मातुः ८ ९ सत्यभामामाशिषायोजयति नतेजरेति वैरूप्यंसौंदर्याभावः विप्रियंकलहः १० ११ हृद्यगंधंहृदयप्रियगंधम् १२ काम्यतंवनसं पदितिशेषः कामइतिवा १३ १४ सारंगनादितान् भृंगनादितान् १५ १६ विविधचित्रंमुख्यंमिश्रफलयास्मिन्सविचित्रः चित्रमालेख्यमिश्रयोरिति मिश्रयाविलमुख्ययोरितिच १७ एतस्यवृक्षस्यफ

भगदत्तायदत्त्वैकंसुप्रतीकंततोपरान्॥ पांडुरांश्चचतुःषष्टिंप्रेषयामासकेशवः ३३ ॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेचतुःषष्टितमोऽध्यायः ॥ ॥६४॥ श्रीशुकउवाच ॥ हत्वानरकमत्युग्रंदानवंदानवांतकः॥ आरुह्यगरुडंप्रायात्प्राग्ज्योतिषपुरान्नृप १ सगच्छन्गगनेविष्णुर्वेदितुंदेवमातरम् ॥ जगामत्रिदशावासंसहितःसत्यभामया २ स्वर्गद्वारंगतोविष्णुर्दध्मौशंखंमहास्वनम् ॥ उपाजग्मुस्तदाकर्ण्यसार्घ्यपाद्यादिवौकसः ३ पूजितस्तैःसुरैःकृष्णो भक्तिनम्रैर्गतज्वरैः ॥ सुरेंद्रभवनंदिव्यंप्रविवेशमनोरमम् ४ तत्रशक्रःसमंशच्यापूजयामासकेशवम् ॥ रत्नाभरणैर्दिव्यैर्गंधमाल्यैश्वशोभनैः ५ ततःप्रायात्पुरींमातुरदित्याःसहभार्यया ॥ दृष्ट्वोपतस्थेतंदेवीपुत्रमायांतमच्युतम् ६ ववंदेतांहरिस्तंसापूजयामासभामिनी ॥ आशीर्भिःपरमप्रीताचिरंदृष्टंयदूत्तमम् ७ सत्यभामापिकौरव्यश्वश्र्वाःक्षणेनचोदिता ॥ पादयोःकुंडलेतस्यानिधायप्रणनामवै ८ स्नुषामाश्लिष्यसंतुष्टासापुनर्लब्धकुंडला ॥ आनंदबाष्पप्रचुराप्राहेदंकश्यपप्रिया ९ नतेजरानवैरूप्यंकांतेनसहविप्रियम् ॥ भूयात्कल्याणिसुव्यक्तंमत्प्रसादात्कदाचन १० ततोनुज्ञाप्यतांदेवींत्रिदशानपिकेशवः ॥ आरुह्यप्रययौतार्क्ष्यंसहितःसत्यभामया ११ महात्मनागगनेदेवदेव्यौगरुत्मतानीयमानौविचित्रम् ॥ अपश्यतांनंदनंचारुगुप्तंशचीभर्तुर्दयितंहृद्यगंधम् १२ वनंदृष्ट्वादिव्यगंधंसुपुष्पंकृष्णंसत्याप्राहपाणौगृहीत्वा ॥ प्रविश्यास्मिन्साधुचित्रंविहर्तुंमुहूर्तमेकाम्यतेकेशवेति १३ अथावरुह्यगरुडात्तस्यावचनगौरवात् ॥ प्रविवेशवनंकृष्णःपालितंशक्रकिंकरैः १४ तत्रापश्यत्तरून्दिव्यान्मत्तसारंगनादितान्॥ फलभारनतान्भूरिप्रसूनरजसावृतान् १५ चलत्किसलयोपेतान्विहंगध्वनिशोभितान् ॥ विचरंतीतथातत्रपारिजातंमहाद्रुमम् १६ दृष्ट्वापप्रच्छगोविंदंविस्मयाकुललोचना ॥ कोनामायंतरुर्देवविचित्रोभुवनत्रये १७ सत्यमेतस्यवृक्षस्यकृतार्थाःफलभागिनः ॥ प्रवालमूलोविपुलोजातरूपमहातनुः १८ इंद्रनीलच्छदच्छन्नोलसद्वैदूर्यवेदिकः ॥ माणिक्यपुष्पोविविधमुक्ताफलफलान्वितः १९

लभागिनःकृतार्थाः इतिसत्यमित्यन्वयः वैचित्र्यंकथयाति प्रवालेति प्रवालोरत्नविशेषएवमूलंशिफायस्यसतथा विपुलोविस्तृतः जातरूपंसुवर्णमेवमहातनुर्यस्यसतथा १८ इंद्रनीलमेवच्छदःपत्रंइंद्रनीलच्छदःतेनछन्नःसंवृतः लसद्वैदूर्यंरत्नमेववेदिःपरिष्कृताभूमिर्यस्यसलसद्वैदूर्यवेदिकः माणिक्यरत्नान्येवपुष्पाणियस्यसमाणिक्यपुष्पः विविधानितारतम्योपेतानिमुक्ताफलान्येवफलानिविविधमुक्ताफलानितैरन्वितः १९

गोमेदरत्नान्येवपक्कानिगोमेदपक्कानितेषांप्रकारापस्यसतथा वज्ररत्नान्येवकिंजल्कानिवज्रकिंजल्कानितैरंजितोऽरुणीकृतः स्थूलाःशाखाःस्फुरंतिमरकतरत्नान्येवस्थूलशाखाःस्फुरन्मरकतस्थूलशाखाः तासांशतेनविराजितः २० २१ मंस्यंतिनिरूपयंति २२ २३ तस्मात्समुद्राज्जातानांफलानांभोक्तृभिः २४ २५ जयकांक्षिभिःजयेच्छुभि जितयुद्धैर्वा २६ व्यलीकैःकपटवचनैः २७ तरुग्रहणेनिमित्तमाह

गोमेदपक्कप्रकरोवज्रकिंजल्करंजितः ॥ स्फुरन्मरकतस्थूलशाखाशतविराजितः २० तरुरेषजगन्नाथमनोमेहरतेभृशम् ॥ नेतव्योयंपुरींवृक्षोयद्यहंतेप्रि यप्रभो २१ छायायामुपविष्टांमामन्यपत्न्यस्तवानघ ॥ द्रक्ष्यमंस्यंतिदयितांसर्वाभ्योमांतवाच्युत २२ इत्युक्तोदेवकीपुत्रःसत्ययाप्रियकांतया ॥ प्राहनाथंतरुंभद्रेनेतव्योनंदनाद्वनात् २३ पुराक्षीरांबुधेर्जातोमथ्यमानात्सुरासुरैः ॥ शक्रायदत्तःसकलैःसदातत्फलभोक्तृभिः २४ तन्नाहार्यमना दृत्यमयामित्रंशतक्रतुम् ॥ तरुरत्नंसरोजाक्षिधर्ममेवानुतिष्ठता २५ नीयमानेचवृक्षेस्मिन्पारिजातेशुचिस्मिते ॥ संग्रामोजायतेघोरस्त्रिदशैर्जयकां क्षिभिः २६ इत्युक्तादेवदेवेनसत्यभामापुनर्हरिम् ॥ प्राहभीषयसेकिंमांव्यलीकैःकंसमर्दन २७ नाभ्यनंदद्दुराचाराशचीमांगृहमागताम् ॥ हेतु र्हिवृक्षस्तस्यायंभर्तृपौरुषगर्विता २८ नेतव्यःसर्वथावृक्षःपारिजातोयमच्युत ॥ प्रियाहंतवचेन्नाथनोचेद्विरमसांप्रतम् २९ इत्युक्तःसत्ययाकृष्णस्ता ननाहत्यरक्षकान् ॥ उत्पाट्यारोपयामासपारिजातंगरुत्मति ३० ततोनिवारयामासुर्गोविंदंवनपालकाः ॥ केचिद्द्रुततरंजग्मुर्देवेंद्रायनिवेदितुम् ३१ कृष्णकृष्णनहर्तव्यस्तरुरेषोऽमरार्चितः ॥ हरसेयदितस्यत्वंफलंसद्योनुभोक्ष्यसि ३२ प्राप्तोपिनपुरींकृष्णसहानेनमहीरुहा ॥ सद्यःपश्यसिदेवेंद्रं पृष्ठतोऽभ्युद्यतायुधम् ३३ सुरेंद्रांतिकमासाद्यद्रुतंतेवनरक्षकाः ॥ उपविष्टंसमंशच्याशक्रंदृष्ट्वाऽब्रुवन्नृप ३४ ॥ वनरक्षकाऊचुः ॥ अवज्ञायाखिलान्देवा न्निद्राणींचत्वयासह ॥ जहारकृष्णदयितापारिजातंमहाद्रुमम् ३५ उक्ताऽस्माभिर्भृशंदेववारयद्भिर्हरिप्रिया ॥ उपालभ्याहरद्वृक्षंभर्तृपौरुषगर्विता ३६ श्रीशुक उवाच ॥ इत्याकर्ण्याप्रियंशक्रोदंडाहतइवोरगः ॥ शचींविलोक्यपार्श्वस्थांनामृष्यत्तत्पराभवम् ३७ सन्नाहोद्योगमाघोष्यसन्निपात्यचसैनि कान् ॥ लोकपालान्समाहूयनिश्चक्रामसुरेश्वरः ३८ ऐरावतंचतुर्दंतमारुह्यवरवारणम् ॥ गृहीतवज्रंगच्छंतमनुजग्मुर्दिवौकसः ३९ वैश्वानरस्तुतुर गमारुह्यदृढदंशितः॥ घोरांशतघ्नीमादायस्त्रुवपुच्छांययौरणम् ४० यमस्त्वारुह्यमहिषंदंडमादायवीर्यवान् ॥ मृत्युकालादिभिर्युक्तोयुद्धार्थीशक्रमन्वगात् ४१ निर्ऋतिश्चमहातेजाघोरमास्थायपौरुषम् ॥ असिहस्तोमहाबाहुर्युद्धायप्रययौनृप ४२ मकरंभीषणाकारमारुह्यवरुणस्त्वरन् ॥ पाशोद्यतकरःप्रायाद्यु द्धायानुशचीपतिम् ४३ वायुःकृष्णमृगारूढोदंशितस्तोमरायुधः ॥ सुरेश्वरमनुप्रायाद्योद्धुंचक्रभृतासह ४४

नेति २८ विरम प्रियभाषणमितिशेषः २९ ३० ३१ ३२ ३३ ३४ ३५ उपालभ्यभर्त्सयित्वा ३६ ३७ सन्नाहोयुद्धोद्योगार्थंविद्यमानंगोमुखं सन्निपात्यसंमेलयित्वा सैनिकान्सेनानायकान् ३८ ३९ स्त्रुवंपुच्छेयस्याःसाताम् ४० मृत्युकालादिभिःप्रभृतिभिः ४१ ४२ ४३ चक्रभृताकृष्णेन ४४

नरवाहनोवैश्रवणः ४५ ४६ सुवर्णसुषिरैःकाहलैः ४७ क्ष्वेलितैःसिंहनादैःआस्फोटितैःभुजास्फालैः ४८ ४९ ५० ५१ ॥ इतिश्रीभागवतेमहापुराणेउत्तरार्धेविजयध्वजकृतटी

ऊढांचतुर्भिःपुरुषैःशिबिकांनरवाहनः ॥ योद्धुकामस्त्वरन्प्रायाद्विष्णुनामुद्गरायुधः ४५ ईशानोवृषभंतुंगमारुह्यशितशूलभृत् ॥ वासवेनसमंप्रायाद्भूतकोटिसमन्वितः ४६ भेरीशंखमृदंगैश्चपणवानकगोमुखैः ॥ सुवर्णसुषिरैर्दिव्यैःकांस्यतालैश्चभूरिभिः ४७ रथनेमिनिनादैश्चहयानांस्वरनिःस्वनैः ॥ क्ष्वेलितास्फोटितैर्वीरैःसंग्रामाह्वानगर्जनैः ४८ तिष्ठतिष्ठेतिमायाहिक्कयासीतिपुनःपुनः ॥ प्रवदद्भिःसुरगणैःशतशोथसहस्रशः ४९ कंपयद्भिश्चशस्त्रौघैःप्रेषयद्भिश्चवाहनम् ॥ पुरोहमितिगच्छद्भिःशतशोथसहस्रशः ५० घोरैर्ज्याघातनिर्घोषैःसिंहनादैश्चभूरिभिः ॥ अभिदुद्रुवुरुद्वृत्ताःसिंहंगोमायवोयथा ५१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेपंचषष्टितमोऽध्यायः ॥ ६५ ॥ श्रीशुकउवाच ॥ सुरानभिद्रुतान्दृष्ट्वासत्याहजगत्पतिः ॥ इमेप्राहुणिकाःप्राप्तास्तववृंदारकाइति १ तथाब्रुवाणेदेवेशेप्रेषितादेवसैनिकाः ॥ नदंतोमुमुचुःकृष्णेशरवृष्टिंकुरूद्वह २ ततःशार्ङ्गंसमादायसत्याव्यसनाविक्लवा ॥ मुक्तांश्चिच्छेदबाणौघैस्ताञ्छरान्देवसैनिकैः ३ ततोवैश्रवणःश्रीमान्बहुभिर्गुह्यकैर्वृतः ॥ विस्फारयंस्तालमात्रंकार्मुकंकनकाटवि ४ स्वर्णपुंखाञ्शरान्मुञ्चन्सिंहवद्धनदन्मुहुः ॥ अभिदुद्रावसमरेतिष्ठतिष्ठेतिचाब्रवीत् ५ तैःपंचभिःशरैःसत्यानिशितैर्मर्मभेदिभिः ॥ अर्पयामासवेगेनविशालेजठरेनृप ६ सोतिविद्धोरणेबाणैस्त्रिभिर्भल्लैर्हरिप्रियाम् ॥ अयोधयद्धनपतिःसिंहनादंव्यनीनदत् ७ तानप्राप्तानर्धचंद्रैस्त्रिभिश्चिच्छेदसाशरैः ॥ भूयोष्टभिःशरैर्देवीवत्सदंतैर्मनोजवैः ८ विव्याधगुह्यकपतेर्ललाटेकुरुपुंगव ॥ पीडितस्तैर्भृशंबाणैःपौलस्त्यःक्रोधविह्वलः ९ संदधेनिशितान्बाणानेकविंशतिसंयुगे ॥ तानंतरेसत्यभामासायकैःसप्तभिर्नृप १० चिच्छेदनिमिषार्धेनत्रिधैकैकंहरिप्रिया ॥ सत्यभामाततःक्रुद्धापौलस्त्यस्यमहद्धनुः ११ अर्धचंद्रेणचिच्छेदमुष्टिदेशेद्विधानृप ॥ ततोन्यच्चापमादायसज्यंकृत्वाधनेश्वरः १२ ववर्षशरजालानिक्रोधात्सर्पइवश्वसन् ॥ सर्वांस्तान्सायकान्संख्येशरैःसन्नतपर्वभिः १३ चिच्छेदलीलयादेवीतदद्भुतमिवाभवत् ॥ ततःक्रुद्धोवैश्रवणःसत्यभामांविलोक्यच १४ प्राहपश्यहनिष्यामित्वामद्यममपौरुषम् ॥ इत्युक्त्वातालमात्रंतुचापंगुह्यकसत्तमः ॥ १५ पश्यतांसर्वदेवानांमार्ष्टुकामःपराभवम् ॥ संदधेसूदितुंदेवीमर्धचंद्रंशरोत्तमम् १६ तदवेत्यमनस्तस्यक्षुरप्रेणहरिप्रिया ॥ चिच्छेदकार्मुकंतस्यमुष्टिदेशेकुरूद्वह १७ ततोमुद्गरमादायघोरंदानवभीषणम् ॥ भ्रामयित्वाशतगुणंदेव्यैचिक्षेपवित्तपः १८

काथांपंचषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ ७ ॥ ॥ प्राहुणिकाःसंभावनयाभोजयितव्याःवृंदारकादेवाः १ २ ३ कनकाविद्धाटवीःकोटिर्यस्यतत्तथा ४ ५ विशालेजठरेविस्तृतेउदरे ओदनप्रैवेविशेषः ६ ७ वत्सदंतैःशरविशेषैः ८ ९ अंतरेमध्ये १० ११ १२ १३ १४ १५ १६ १७ १८

१९ निवृत्तसंग्रामःनिवृत्तयुद्धः २० २१ २२ २३ काश्यपपुत्रस्यगरुडस्य २४ २५ २६ वार्धिपतौवरुणे २७ २८ २९ असाधारणंलोकोत्तरं ३० सायकाचि

तंमुद्गरंमहाघोरमायातंकुरुपुंगव ॥ वामेनपाणिनाकृष्णोजग्राहोच्चैर्जहासच १९ ततोनिवृत्तसंग्रामोविदुद्रावधनेश्वरः ॥ शशंसदेवींकृष्णश्चसमाश्लिष्या भिपूजयन् २० पलायितेधनपतौसंग्रामेकंसवैरिणा ॥ वरुणोभ्यद्रवत्कृष्णंपाशमुद्यम्यसंयुगे २१ तमायांतमभिप्रेक्ष्यताक्ष्र्योमकरवाहनम् ॥ अभ्यद्र वन्महासत्त्वःशार्दूलइवगोवृषम् २२ तयोःसमभवद्युद्धंघोरंताक्ष्र्यजलेशयोः ॥ यथादेवासुरेयुद्धेबलिवासवयोरिव २३ तत्रकाश्यपपुत्रस्यकंठेपाशंज लेश्वरः ॥ क्रुद्धश्चकर्षविन्यस्यसिंहःसिंहामिवौजसा २४ तंपक्षकोट्यागरुडःसमुद्धृत्यजलेश्वरम् ॥ पद्भ्यांगृहीत्वामकरंचिक्षेपवरुणालये २५ कृच्छ्राद्गृही तपाशस्तुवरुणोगतवाहनः ॥ पदातिरेवसंग्रामाद्विदुद्रावयथागतम् २६ तथागतेवार्धिपतौसंग्रामेवायुपावकौ ॥ सममेवाभ्यवर्ततांगोविंदंकुरुसत्तम २७ पावकःपंचभिर्बाणैर्मारुतश्चतथात्रिभिः ॥ आयोधयद्धृषीकेशंतदद्भुतमिवाभवत् २८ ततःप्रहस्यगोविंदोबाणेनैकेनपावकम् ॥ विव्याधसमभिश्चैवस मीरणमरिंदमः २९ एकेनाग्निःक्षुरप्रेणगाढंवक्षसिताडितः ॥ तमसाधारणंमत्वाविदुद्रावरणाद्द्रुतम् ३० दृष्ट्वासमीरणोयुद्धादपयातंहुताशनम् ॥ सा यकाचितसर्वांगमात्मानंचातिविह्वलः ३१ विदित्वापुंडरीकाक्षंसंग्रामेप्रत्युपस्थितम् ॥ न्यवर्ततकुरुश्रेष्ठप्राणत्राणपरायणः ३२ ततोमाहिषमारुह्यदंड मुद्यम्यभास्वरम् ॥ कृष्णमभ्यद्रवद्युद्धेयमःक्रोधारुणेक्षणः ३३ तमुद्यतमहादंडंदृष्ट्वाकमललोचनः ॥ गदांविसृज्यतद्धस्तात्पातयामासभूतले ३४ गद यातांडितेदंडेत्रस्तहस्तःपरेतराट् ॥ विदुद्रावपरावृत्यमहिषेणकुरूद्वह ३५ वैवस्वतंगतंदृष्ट्वानिर्ऋतिर्भयविह्वलः ॥ नाभ्यवर्ततगोविंदंयोद्धुंविदितत द्बलः ३६ शंकरस्तुमहातेजास्त्रिशूलीवृषवाहनः ॥ अनेकभूतसंघातैःकृष्णमभ्यद्रवद्रणे ३७ तावुभौलोकविख्यातौबलिनौवीर्यशालिनौ ॥ चक्रातेकदनं घोरंपरस्परजयैषिणौ ३८ ईशानोदशभिर्बाणैःकृष्णंताक्ष्र्यंचपंचभिः ॥ विव्याधसमरेराजन्तिष्ठतिष्ठेतिचावदत् ३९ततःशार्ङ्गंसमादायकृष्णःपरपुरंजयः ॥ त्रिंशद्भिर्युगपद्बाणैर्विव्याधवृषवाहनम् ४० गरुडःपन्नगरिपुःपद्भ्यांचाद्राभ्यांचसंयुगे ॥ पक्षाभ्यांचंचुकोट्याचमर्दयामासतंवृषम् ४१ भूयोपिकृष्णोना राचैःपंचाशत्प्रमितैर्नृप ॥ योधयामाससमरेशंकरंलोकशंकरम् ४२ ततस्त्रिशूलमाविध्यनिशितंघोरदर्शनम् ॥ प्राहिणोद्वासुदेवायकुपितोधूर्जटिर्नृप ४३ दृष्ट्वात्रिशूलमायांतंकेशवस्तंनिवारितुम् ॥ गदांकौमोदकींगुर्वींप्राहिणोद्दैत्यमर्दनीम् ४४ तेवैकौमोदकीशूलेकृत्वानभसिसंगरम् ॥ ज्वलमानेम हाघोरेपेततुःसममंभुवौ ४५ निपात्याब्धौत्रिशूलंतद्गदाकौमोदकीपुनः ॥ आससादकरंविष्णोस्त्रिशूलमपिशूलिनः ४६

तसर्वांगं शरसंचितसर्वावयवम् ३१ ३२ ३३ ३४ परेतराट्यमः ३५ ३६ ३७ कदनंयुद्धम् ३८ ३९ ४० चंचुकोट्या तुंडकोट्या वृषनंदिकेश्वरम् ४१ ४२ धूर्जटिःशंकरः ४३ ४४ ४५ ४६

पन्नगभूषणःसर्पालंकारःशिवःपार्ष्णिभ्यामास्फालनेनचोदयन्प्रेरयन् ४७ शूलपाणिनासहितंनंदिनं ४८ त्रिशूलित्वंगणस्यापिसंभवनीति वृषवाहनइति ४९ ॥ इतिश्रीभागवतेम०दशमस्कंधेउत्तरार्धेवि जयध्वजकृतटीकायांषट्षष्टितमोध्यायः ॥ ६६ ॥ १ २ ३ ४ ततवपुकंन्याय्यंत्रीजित स्येतिशेषः न्याय्येसंयुक्तमितियादवः ५ सःहइतिच्छेदःसशक्रःयुद्धप्रारंभे ६ ७ गात्रंगात्राण्यदयन्नानृगानृती



ततउद्यम्यनिशितंखड्गंपन्नगभूषणः ॥ कृष्णमभ्यद्रवत्संख्येपार्ष्णिभ्यांचोदयन्वृषम् ४७ तूर्णंगृहीत्वाबाहुभ्यांविषाणेतस्यनंदिनः ॥ सशूलपाणिंचिक्षेप वैनतेयोधनुःशतम् ४८ ततोविसृज्यसंग्रामंत्रिशूलीवृषवाहनः ॥ प्रमथैःसहितःप्रायात्कुरुश्रेष्ठयथागतम् ४९ ॥ इतिश्रीभागवतेम०दशमस्कंधेउत्त०षट्ष ष्टितमोऽध्यायः ॥६६॥ श्रीशुकउवाच ॥ ततःस्वयंदेवपतिस्तुंगमारुह्यवारणम् ॥ किरीटीबद्धतूणीरःप्रगृहीतशरासनः १ अभ्यद्रवद्रणेकृष्णंगजःकेस रिणंयथा ॥ पारिजातकृतेराजन्पौलोम्यावचनंस्मरन् २ तमायांतमभिप्रेक्ष्यहरिःपरपुरंजयः ॥ शंखंदध्मौमहानादंदिशःसमभिपूरयन् ३ तमभिद्रुत्यदे वेंद्रोमहद्विस्फारयन्धनुः ॥ क्षुरप्रेणसुतीक्ष्णेनकृष्णंविव्याधसंगरे ४ हरिर्विद्धःक्षुरप्रेणदेवराजेनवक्षसि ॥ प्रहस्यसाधुशक्रोसियुक्तंतइतिचाब्रवीत् ५ भूयोपिबाणान्दशदेवराजःसंधायचापेभुजगेंद्रकल्पे ॥ आकर्णपूर्णंविनिकृष्यकृष्णेमुमोचचक्रेसहसिंहनादम् ६ तानंतरेकंसरिपुर्महात्माछित्त्वात्रिधैकेनश रेणबाणान् ॥ विव्याधबाणैर्दशभिःसुधौतैःपुरंदरंआरतलीलयैव ७ तेशरादेवराजस्यगात्रंनिर्भिद्यसात्वति ॥ शोणिताक्ताःप्रदृश्यंतेभूयोवेगेननिर्गताः ८ पु नश्चशक्रःकोदंडेशरान्संधायषोडश ॥ मुमोचाकृष्यगोविंदस्तांश्चकर्तशरैस्त्रिभिः ९ भूयोपिबाणैस्त्रिंशद्भिःसुरराजानमाहवे ॥ आयोधयद्धरिस्तेचममज्जुः शक्रवक्षसि १० ततश्चुकोपदेवेंद्रोदंडाहतइवोरगः ॥ प्रेषयामासतोत्रेणतार्क्ष्यप्रतिमहागजम् ११ सगजःप्राप्यगरुडंपाकशासनचोदितः ॥ चतुर्भिर्घट्टया मासदंतैर्बाहुयुगांतरे १२ ततस्तुंडेनगरुडःपक्षाभ्यांचतथानखैः ॥ अर्दयामासकौरव्यगजमैरावताह्वयम् १३ शक्रस्तुवज्रमुद्यम्यघोरंदानवभीषणम् ॥ पश्यतांसर्वभूतानांप्रजहारवृषाकपिम् १४ तमागतंमधुरिपुर्वज्रंदुश्च्यवनायुधम् ॥ वामेनपाणिनाविष्णुर्जग्राहप्रजहासच १५ निरायुधःसुरपतिर्गरुडा र्दितवाहनः ॥ व्यावर्तततरणाद्राजन्व्रीडावनतकंधरः १६ तंदृष्ट्वाभ्रष्टसंकल्पंपलायनपरायणम् ॥ सत्यभामासुरपतिंप्रहसंतीदमब्रवीत् १७ सत्यभामो वाच ॥ एहिशक्रनिवर्तस्वमायाहिकुलिशायुध ॥ पलायनमयुक्तंहिपौलोम्यावल्लभस्यते १८ ऐश्वर्यमत्तापौलोमीभर्तृपौरुषगर्विता ॥ अवमंस्यातिसद्य स्त्वांभार्यारणपराजितम् १९ इत्थंदेव्यागिरंशक्रःसोपालंभमुदीरिताम् ॥ निशम्याभिमुखोभूत्वाप्राहदेवींशुचिस्मिताम् २०

तिक्रियाविशेषणं सकवचंनिर्भिद्य ८ ९ आहवेयुद्धे १० तोत्रेणगजताडनचर्मणा ११ बाहुयुगांतरेवक्षसि १२ १३ १४ दुश्च्यवनायुधंइंद्रायुधं अजेयप्रहारार्थमायुधसमासमितिदर्श यितुं पुनर्वचनमितिज्ञातव्यं १५ १६ १७ निवर्तस्व पुनरागच्छ मापाहि मागच्छ प्रहसंतीत्यस्यतात्पर्यंदर्शयति पौलोम्येति १८ अवमंस्यतिअवज्ञास्यति १९ २०

गतासुरत्वेशइंद्रःप्रतिवक्ति येनेति २१ तनुबलःअल्पबलःमातर्यूवस्येतिपाठःऊधस्यमूधसिजातंक्षीरंमातरिविरोधंहेपिशिताशनि याज्ञियान्नेचमांसेचपिशितंदेवभोजनमिति २२ २३ २४ भूरिबा

इंद्रउवाच ॥ येनामरासुरमहोरगयक्षसिद्धागंधर्वकिन्नरपिशाचनिशाचराद्याः ॥ सृष्टास्त्रिलोकगुरुणारणमूर्ध्नितेनकोवानयातिपरिभूतिमलंविरुध्य २१ वत्सोयथातनुबलःसकृदेत्यमातुरूधस्यपानसमयेकुरुतेविरोधम् ॥ तद्वद्वयंचनिजशैशवमप्रमेयेनाथेविरुध्यपिशिताशनिदर्शयाम २२ ॥ इतिसत्राजितःपुत्रीमुक्त्वाभारतसत्तम॥कृतांजलिःप्रणम्याहवासुदेवंपुरंदरः२३ इंद्रउवाच॥ नमस्तेदेवदेवेशपुंडरीकाक्षमाधव॥क्षमस्वमत्कृतंविश्वमपराधंजगत्पते २४ नमांत्वदेकशरणंशरणागतवत्सल॥भूरिबालिशमक्षांतपरित्यक्तुंत्वमर्हसि २५ ऐरावतश्चकुलिशंपारिजातश्चपादपः॥ देवराज्यंचभगवन्निर्यंचाप्यमरावती २६ त्वदधीनमिदंविश्वमहमाज्ञाकरस्तव॥ अत्रपद्मोचतेनेतुंनीयतांतद्यथेच्छया २७ किंतुवक्ष्यामिगोविंदमूलंत्वयिविरुध्यतः॥ रमसेमानुषेलोकेभगवंस्त्वमनन्यधीः २८ तत्रनीतेपारिजातेभवताकल्पपादपे ॥ तेनसाजायतेस्वर्गान्निर्विशेषावसुंधरा २९ तेनाहंयदुशार्दूलविरोधंकृतवांस्त्वयि ॥ तत्क्षंतव्यंत्वयादेवकार्याकार्यविजानता ३० श्रीशुकउवाच ॥ इत्युक्तोदेवराजेनदेवदेवोजनार्दनः॥ पुरंदरंकुरुश्रेष्ठप्राहप्रहसिताननः ३१ श्रीभगवानुवाच ॥ अपराधस्त्वयाशक्रनकश्चिदपिचेष्टितः॥ यत्कृतंतन्मयैवागस्त्वभेदादावयोःपरम् ३२ यत्त्वयाद्यसहस्राक्षचेष्टितंसाध्वसाधुवा ॥ मयैवतत्कृतंसर्वेनात्रकार्याविचारणा ३३ पारिजातस्तरुश्रेष्ठोमयाचारूढेतरुर्दिवम् ॥ मन्निदेशात्सहस्राक्षस्वयमेष्यतिनंदनम् ३४ इत्युक्तोवासुदेवेनदेवराजःकुरूद्वह ॥ गोविंदंसत्यभामांचप्रसाद्यगरुडंतथा ३५ पुत्रोमेरक्षितव्यस्तेश्यालोबीभत्सुरित्यपि ॥ भूयोभूयःप्रार्थयित्वाकृतानुज्ञःपुरंदरः ३६ सार्धंसकलदिक्पालैर्ध्वजःपुरंययौ ॥ पुरंदरंसादिक्पालंविसृज्ययदुनंदनः ३७ गरुडंप्राहकौरव्ययास्यामोद्वारकामिति ॥ गोविंदंसत्यभामांचपारिजातंचपादपम् ३८ गरुडःपन्नगारिपुलीलयैववहन्ययौ ॥ संप्रविश्यपुरींरम्यांद्वारतोरणभूषिताम् ३९ पताकामालिनींदिव्यांसिक्तसंमृष्टभूतलाम् ॥ ऊढोपायनतांबूलस्रग्गंधकलशाक्षतैः ४० उपस्थितैर्यदुश्रेष्ठैःपूजितश्चाभिवंदितः ॥ तूर्यमंगलनिर्घोषैर्वेदस्वाध्यायनिःस्वनैः ४१ प्रविवेशसभांदिव्यांसुधर्मांवृद्धसेविताम् ॥ आहुकंवसुदेवंचबलभद्रंतथाग्रजम् ४२ अभिवाद्ययथान्यायंपूजितस्तैर्यथोचितम् ॥ उपविष्टःसभामध्येकांचनेपरमासने ४३ रराजराजशार्दूलबृहस्पतिपुरोगमैः ॥ लोकपालैरुपासीनैर्दिविवज्रधरोयथा ४४ प्रांगणेसत्यभामायाःपारिजातंमहाद्रुमम् ॥ स्थापयामासगोविंदःसर्वतोमणिकुट्टिमे ४५

लिशंअधिकमूर्खम् २५ २६ २७ मूलंनिमित्तं अनन्यधीःतत्रैवनिरतबुद्धिः २८ २९ ३० ३१ त्वयायत्कृतंतदागःमयैवकृतंविद्धि आवयोःपरमत्यभेदान्त्वयिस्थितत्वात्ममैवापराधंकारयितापरिहरीष्यत्यर्थः एतदेवविवृणोतियत्त्वयेति ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ मणिकुट्टिमेमणिबद्धस्थाने ४५

योषित्सार्थेननिरंतरपत्न्यासहेतिशेषः४६ ४७ ४८ ४९एकानंगादुर्गा सुभद्राचित्रातारेतिच अनुत्पन्नरजाश्यामातद्दृष्टावरवर्णिनी अप्रसूताभवेद्गौरीतिच ५० आनीतःप्रमदानांसार्थोयेनसतथातं ५१ ५२ ५३ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ सोयंमनुष्यलोकः पुत्रेण जय्यइतिश्रुतिविहितसदाचारोमुख्यदतीर्थैर्देवादिभिरनुष्ठेयइतिदर्शयितुं श्रीकृष्णस्यतदनुष्ठानप्रकारंशंबरासुरवधलक्षणंविक्रमंचकथयत्यस्मिन्नध्याये लोकस्यजनस्यशंसुखंकरोतीतिलोकशंकरःतं देवदेवोनारायणःईशःस्वामीयस्यसतथातं आराध्यलोकदृष्ट्याइतिशेषः १ २ ३ प्राग्रुद्रमन्युनादग्धोपःकामःभूयरतमेवरुद्रमेवदेहोत्पत्तयेप्रत्यपद्यत ४ सएवकामःकृष्णवीर्यसमुद्भवोवैदर्भ्यांजातःउपात्तदेहः कादृशःवासुदेवस्यांशः प्रद्युम्नोयस्मिन्नाविष्टःसतथाअतएवतदभि

आयांतंदेवकीपुत्रंयोषित्सार्थेनभूरिणा ॥ श्रुत्वाद्रष्टुमुपाजग्मुःसकलायादवस्त्रियः ४६ वसुदेवस्तुकौरव्यरोहिण्याद्याःस्त्रियोखिलाः ॥ आजग्मुःकेशवंद्रष्टुंजितशत्रुमनामयम् ४७ सद्दृष्ट्वामातरोविष्णुर्देवक्यासहसंगताः ॥ चक्रेप्रणाममाशीर्भिस्ताश्चतंप्रत्यपूजयन् ४८ रुक्मिण्याद्यास्तथासप्तमहिष्यःकृष्णवल्लभाः ॥ प्रणेमुर्देवमभ्येत्यदिव्यरूपाःस्वलंकृताः ४९ रेवतीरामदयितात्रिवक्राचयशस्विनी ॥ एकानंगाचतन्वंगीचित्राचवरवर्णिनी ५० अन्याश्चकुरुशार्दूलभोजवृष्ण्यंधकस्त्रियः ॥ आनीतप्रमदासार्थंजितशत्रुमनामयम् ५१ गोविंदंसत्यभामांचाप्यानीतममरद्रुमम् ॥ प्रीत्युत्फुल्लमुखाःसर्वेकौतुकाद्द्रष्टुमीयुः ५२ दंसमेतायथाजोषंलाजप्रसवतंदुलैः ॥ स्पृष्ट्वामूर्ध्निमुकुंदस्यजग्मुःस्वंस्वंनिवेशनम् ५३ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ श्रीशुकउवाच ॥ आराध्यदेवदेवेशंशंकरंलोकशंकरम् ॥ तपसातोषयित्वातंकैलासगिरिवासिनम् १ रुक्मिण्यांतनयंलेभेदग्धकामंपुनर्हरिः ॥ वीरंप्रद्युम्ननामानंरूपौदार्यगुणान्वितम् २ राजोवाच ॥ पुत्रार्थमीश्वरंदृष्ट्वास्वयंलब्धवरोहरिः ॥ अवापकीदृशंपुत्रंकिंनामानंवदस्वमे ३ श्रीशुकउवाच ॥ कामस्तुवासुदेवांशोदग्धःप्राग्रुद्रमन्युना ॥ देहोपपत्तयेभूयस्तमेवप्रत्यपद्यत ४ सएवजातोवैदर्भ्यांकृष्णवीर्यसमुद्भवः ॥ प्रद्युम्नइतिविख्यातःसर्वतोऽनवमःपितुः ५ तंशंबरःकामरूपीहृत्वातोकमनिर्दशम् ॥ सविदित्वात्मनःशत्रुंप्रास्योदन्वत्यगाद्गृहम् ६ तंनिर्जगारबलवान्मीनःसोप्यपरैःसह ॥ वृतोजालेनमहताग्रहीतोमत्स्यजीविभिः ७ तंशंबरायकैवर्ताउपाजन्हुरुपायनम् ॥ सूदामहानसंनीत्वाऽवद्यन्स्वधितिनाऽद्भुतम् ८ दृष्ट्वातदुदरेबालंमायावत्यैन्यवेदयन् ॥ नारदोऽकथयत्सर्वंतस्याःशंकितचेतसः ९ बालस्यतत्त्वमुत्पत्तिंमत्स्योदरनिवेशनम् ॥ साचकामस्यवैपत्नीरतिर्नामयशस्विनी १० पत्युर्निर्दग्धदेहस्यदेहोत्पत्तिंप्रतीक्षती ११ निरूपिताशंबरेणसासूपौदनसाधने ॥ कामदेवांशिशुंबुद्ध्वाचक्रेस्नेहंसदार्भके १२

धानमेवास्याभिधानमित्याह प्रद्युम्नइति सर्वतोवीर्यादिभिः पितुरनवमःकृष्णस्यपुत्रत्वेयोग्यः ५ तोकंसद्योजातशिशुं निर्गतोदशमोदिवसोयस्मात्सनिर्दशःतं उदन्वतिसमुद्रे ६ अपरैर्मत्स्यैर्जालेनासिचा वृतः सस्यूतः मत्स्यजीविभिर्दाशैः ७ कैवर्ताःमत्स्यमारकाः कैवर्तौदाशधीवराविितिच महानसंपाकस्थानं स्वधितिनापरशुना परश्वधःकुठारःस्यात्परशुःस्वधितिस्तथा अवद्यन्अवाद्यन्अखंडयन् दोअवखंडनइति धातुः ८ मायावतीशंबरस्यमहानसाध्यक्षस्त्री ९ किमकथयदत्राह बालस्येति मत्स्योदरनिवेशनंमत्स्योदरप्रवेशम् १० ११ पक्वानासूपानांमुद्गानांबाह्युपदंशानामोदनस्यचसाधनेसंस्कारे यद्वा सूपादिसाधनेअध्यक्षतयासाधनेसेकसाधनेविध्युपायनिवृत्तिषु मरणेमृतसंस्कारेवाचनेनूनमेवच सेनाग्रेयातनायाचसेचनेस्फूर्तिसेवयोरिति १२

कृष्णस्यापत्यंकार्ष्णिः विभ्रमंविकारं यद्वा देवाचन्यतमइतिविशिष्टभ्रमं १३ रतिरात्मनोधनैस्वंपतिमुपतस्थेआभिमुख्येनतस्थौ किमात्मधना निमुवर्णानीमिनेत्याह सव्रीडेति व्रीडयासाहितोहासः सव्रीडहासःउत्तमोविभ्रमःउत्कृष्टाशृंगारचेष्टा ईक्षणंकटाक्षनिरीक्षणंतैः १४ मातृभावंमातुःस्वभावं सुरतकामिनी १५ अधिकृतापत्नीवधूत्तमा १६ त्वांनिर्दशंइतिपाठः १७ मोहनशोषणद्रावणाभिर्मायाभिः १८ कुररस्यस्त्रीकुररी उत्क्रोशःकुररोमतइति मृतप्रजानष्टापत्या १९ महामायामहासामर्थ्या २० ओष्ठमवष्टभ्यदंष्ट्रादंतैरितिशेषः २१ २२ नादमितिक्रियाविशेषणं वज्रनिष्पेषःस्फूर्ज

नातिदीर्घेणकालेनसकार्ष्णीरूढयौवनः ॥ जनयामासनारीणांवीक्षंतीनांचविभ्रमम् १३ सातंपतिंपद्मदलायतेक्षणंप्रलंबबाहुंनरलोकसुंदरम् ॥ सव्रीडहासोत्तमविभ्रमेक्षितैःप्रीत्योपतस्थेरतिरात्मनोधनैः १४ तामाहभगवान्कार्ष्णिर्मातस्तेमतिरन्यथा ॥ मातृभावमतिक्रम्यवर्तसेकामिनीवमे १५ रतिरुवाच ॥ भवान्नारायणसुतःशंबरेणहृतोगृहात् ॥ अहंतेऽधिकृतापत्नीरतिःकामोभवान्प्रभो १६ एषत्वानिर्दशंसिंधावक्षिपच्छंबरोसुरः ॥ मत्स्योऽग्रसीत्तदुदरादिहप्राप्तोभवान्प्रभो १७ तमिमंजहिदुर्धर्षंदुर्जयंशत्रुमात्मनः ॥ मायाशतविदंत्वंचमायाभिर्मोहनादिभिः १८ परिशोचतितेमाताकुररीवमृतप्रजा ॥ पुत्रस्नेहाकुलादीनाविवत्सागौरिवातुरा १९ प्रभाष्यैवंददौविद्यांप्रद्युम्नायमहात्मने ॥ मायावतीमहामायासर्वमायाविनाशिनीम् २० सचशंबरमभ्येत्यसंयुगायसमाह्वयत् ॥ अवष्टभ्योष्ठमाक्षेपैःक्षिपन्संजनयन्कलिम् २१ सोधिक्षिप्तोदुर्वचोभिःपदाहतइवोरगः ॥ निश्चक्रामगदापाणिरमर्षात्ताम्रलोचनः २२ गदामाविध्यतरसाप्रद्युम्नायमहात्मने ॥ प्रक्षिप्यव्यनदन्नादंवज्रनिष्पेषनिष्ठुरम् २३ तामापतंतींभगवान्प्रद्युम्नोगदयागदाम् ॥ अपास्यशत्रवेक्रुद्धःप्राहिणोत्सगदांनदन् २४ सचमायांसमाश्रित्यदैतेयींमयदर्शिताम् ॥ निर्ममेऽश्ममयंवर्षंकार्ष्णौवैहायसोऽसुरः २५ बाध्यमानोऽस्त्रवर्षेणरौक्मिणेयोमहारथः ॥ सत्त्वात्मिकांमहाविद्यांसर्वमायोपमर्दिनीम् २६ ततोगौह्यकगांधर्वपैशाचोरगराक्षसीः ॥ प्रायुंक्तशतशोदैत्यःकार्ष्णिर्व्यधमयत्सताः २७ निशातमसिमुद्यम्यसकिरीटंसकुंडलम् ॥ शंबरस्यशिरःकायात्ताम्रश्मश्रुजहारतत् २८ आकीर्यमाणोदिविजैःस्तुवद्भिःकुसुमोत्करैः ॥ भार्ययाऽम्बरचारिण्यापुरंनीतोविहायसा २९ अंतःपुरवरंराजन्ललनाशतसंकुलम् ॥ विवेशपत्न्यागगनाद्विद्युतेवबलाहकः ३० तंदृष्ट्वाजलदश्यामंपीतकौशेयवाससम् ॥ प्रलंबबाहुंताम्राक्षंसुस्मितंरुचिराननम् ३१ अलंकृतमुखांभोजंनीलवक्रालकालिभिः ॥ कृष्णंमत्वास्त्रियोभीतानिलिल्युस्तत्रतत्रह ३२ उपधार्यशनैरीषद्वैलक्षण्येनयोषितः ॥ उपजग्मुःप्रमुदिताःसस्त्रीरत्नंशुचिस्मिताः ३३ अथतत्रासितापांगीवैदर्भीवल्गुभाषिणी ॥ अस्मरत्स्वसुतंनष्टंस्नेहस्नुतपयोधरा ३४

थुस्तद्वच्चिष्ठुरोनादोयथाभवतितथाव्यनदत् स्फूर्जथुर्वज्रनिष्पेषइतिहलायुधः २३ २४ दैतेयींदैत्यानांकुलेदेवतामिवाविद्यमानांवैहायसःविहायसिगगनेस्थितः २५ सत्त्वात्मिकांबलज्ञाननिधिविष्णुदैवत्यांमहाविद्यांविज्ञानास्त्रसंज्ञां २६ गौह्यकादीन्यस्त्राणिप्रायुंक्त गुह्यकास्त्रंगौह्यकंव्यधमयदनाशयत् २७ ताम्रश्मश्रुकपिलरुचिरश्मश्रु २८ २९ बलाहकोमेघः ३० ३१ निलिल्युःनिलीनाः ३२ वैलक्षण्येनकृष्णलक्षणविपरीतलक्षणानिकरेण ३३ असितापांगीनीलरुचिरकांतनेत्रांता ३४

नरवैदूर्यःनरश्रेष्ठःनराकारंवैदूर्यरत्नमिवशोभमानइविवा कस्यपुत्रः कयास्त्रियाधृतोगर्भइतिशेषः इयंकाकेनवालब्धा ३५ प्रकारांतरेणशंकते ममेति ३६ साद्ृष्यंसादृश्यं साद्ृष्यं केनेतितत्राह आकृत्येति ३७ नूनंनिश्चयः ३८ मीमांसमानायांविचारयंत्यां ३९ ४० ४१ ४२ ४३ नारीणांविभ्रमंजनयामासेति यदुक्तंनतच्चित्रंमतव्यमित्याह यंवाइति यंदृष्ट्वात स्यप्रद्युम्नस्यमातरःहरेःपत्न्य मनसिजार्द्रहृदाकामरसक्लिन्नमनस्काःरेनोरुभावाःबहुविधशृंगारचेष्टायुक्ताः अंगुष्ठनखमुखमूलेनकरयुगपीडनादिविकारलक्षणलक्षिताअभूवन्नित्यन्वयः किंविशिष्टाः पितृस रूपतयापितृसाद्ृष्येणनिजेशोऽस्मत्पतिरयमितिभावोभिप्रायोयासांतास्तथाताः तस्मिन्कामेमदनेतच्चित्रंनखलु काम्यतइतिकामस्तस्मिन्कामेअक्षविषयेचक्षुर्गोचरेकिमुइतोपिचित्रनेत्याह रमेति १

कोन्वयंनरवैदूर्यःकस्यवाकमलेक्षणः ॥ धृतःकयावाजठरेकेयंलब्धाथकेनवा ३५ ममचाप्यात्मजोनष्टोनीतोवासूतिकागृहात् ॥ एतत्समवयोरूपोय दिजीवतिकुत्रचित् ३६ कथंत्वनेनसंप्राप्तंसारूप्यंशार्ङ्गधन्वनः ॥ आकृत्यावयवैर्गत्यास्वरहासावलोकनैः ३७ सएववाभवेन्नूनंयोमेगर्भेधृतोर्भकः ॥ अमुष्मिन्प्रीतिरधिकावामःस्फुरतिमेभुजः ३८ एवंमीमांसमानायांवैदर्भ्यांदेवकीसुतः ॥ देवकीवसुदेवाभ्यांनारदेनमहात्मना ३९ अन्यैश्चया दवश्रेष्ठैरुत्तमश्लोकआविशत् ॥ विदितार्थोपिभगवांस्तूष्णीमासजनार्दनः ४० नारदोऽकथयत्सर्वंशंबराहरणादिकम् ॥ तच्छ्रुत्वामहदाश्चर्यंकृष्णांतः पुरयोषितः ४१ देवकीवसुदेवश्चकृष्णरामौतथास्त्रियः ॥ दंपतीतौपरिष्वज्यरुक्मिणीचययुर्मुदम् ४२ नष्टंप्रद्युम्नमायांतमाकर्ण्यद्वारकौकसः ॥ अहोमृतइवायातोबालोदिष्ट्येतिचाब्रुवन् ४३ यंवैमुहुःपितृसरूपनिजेशभावास्तन्मातरोयदभजन्रहरूढभावाः ॥ चित्रंनतत्खलुरमास्पदबिंबबिंबेकामेस्मरेऽक्षविषयेकिमुतान्यनार्यः ४४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेशंबरवधोनामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ श्रीशुकउवाच ॥ पौंड्र कोनामराजावैतस्मिन्कालेकुरूद्वह ॥ द्वारकांवृष्णिनिलयांनिरुध्यबहुसैनिकः १ अर्दयामासकृष्णेनविदित्वारहितांनिशि ॥ तंकामपालःशैनेयोवसुदेवोद्धवा दयः २ उग्रसेनश्चकौरव्ययेचान्येयदुपुंगवाः ॥ अर्पयामासुरायांतंकालयोग्यमिवातिथिम् ३ ॥ राजोवाच ॥ कश्चासौपौंड्रकोनामकस्मिन्देशेमहीप तिः ॥ कस्यवातनयोब्रह्मन्सर्वंमेतद्वदस्वमे ४ ॥ श्रीशुकउवाच ॥ अपुत्रःकाशिराजोवैकन्यांसुतनुसंज्ञिताम् ॥ प्रायच्छद्वसुदेवायराज्यशुल्कांकुरूद्व ह ५ तत्रजज्ञेमहाबाहुर्दिवाकरसमद्युतिः ॥ कुमारःपौंड्रकोनामबलवीर्यमदान्वितः ६ वसुदेवसुतत्वाच्चवासुदेवेतिशब्दितः ॥ जातेतस्मिन्महाराजो वसुदेवोमहाद्युतिः ७ राज्यंतस्मिन्समारोप्यसकोशबलवाहनम् ॥ उवाहकंसावरजांदेवकींदेवतोपमाम् ८

मास्पदस्यलक्ष्मीमूर्तेःश्रीकृष्णस्यबिंबादखंडलक्षणोपेताद्देहादुद्भूतेजातेआत्मावैपुत्रनामासीतिश्रुतेः श्रीकृष्णस्यबिंबरूपपक्षलक्षणंतत्सर्वमस्यबिंबस्यनिर्धार्यतइतिश्रीकृष्णदेहप्रतिबिंबभूतइत्यर्थःबिंबोस्त्रीमं डलसमप्रतिमासुखलक्ष्मसु प्रतिरूपेप्रतिकृतौस्यात्बिंबकापालइति अन्यनार्यःतन्मातृव्यतिरिक्ताःस्त्रियःस्मृतेपिविमुह्यंति दृष्टाःकिमुतदिदंसर्वंकृष्णमाहात्म्यविलासइतिसमर्थविशेषणइत्यनेनदर्शयति ४४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांअष्टषष्टितमोऽध्यायः ॥ ६८ ॥ नयस्यस्वःपरइतीममर्थंसत्यंकर्तुंपौंड्रकवधलक्षणंविक्रमंकथयितुमुत्तराध्यायआरंभः तस्मिन्काले १ कृष्णरहितांविदित्वा कामपालोबलभद्रः २ अर्पयामासुःशरानितिशेषः ३ ४ राज्यमेवशुल्कंपरस्यांसातथातां ५ ६ नामांतरमाह वसुदेवेति ७ ८

९ उद्विजवेभीतिंकरोति भयकरणमात्मनएवफलतीतिद्योतनायस्मरमाणइति १० द्वारकांसमेत्यापपृच्छ ११ परशर्वर्यामपररात्रेउषःकाले १२ १३ १४ १५ बालैरज्ञैःप्रस्तोभितोऽविद्यमानगुणेनप्रस्तुतोमूढाक्षेपमुक्तोवा १६ १७ १८ अस्मच्चिह्नानिचक्रादीनि मांशरणमेहि १९ कत्थनंव्यर्थभाषणं २० अनुअनंतरंउत्स्रक्ष्येत्याजयिष्येत्वदीयानिचिह्नानि २१ २२ रवा

निरुद्धोभोजराजेनकंसेनानकदुंदुभिः ॥ कदाचिदपिनप्रायात्करवीरपुरीमपि ९ अमद्यमात्मापत्न्यमग्रात्वत्वंतथात्मनः ॥ स्मरमाणःसकाशीशोथद्रुतुद्विजतेऽनिशम् १० सकृष्णरहितांश्रुत्वासमेत्यद्वारकांनिशि ॥ विमृद्यबलभद्रेणशैनेयेनापिनिर्जितः ११ निहतानेकसाहस्रहयकुंजरसैनिकः ॥ जगामपरशर्वर्यांपुरींवाराणसींनृप १२ प्रभातायांतुशर्वर्यांहरिर्बदरिकाश्रमात् ॥ आययौताक्ष्यमारुह्यद्वारकांरामपालिताम् १३ सपताकैःसार्घ्यपाद्यैर्यदुवृष्ण्यंधकादिभिः ॥ अभिवर्णितवृत्तांतःप्राविशत्केशवःसभाम् १४ कदाचित्पौंड्रकोनामकाशिराजःप्रतापवान् ॥ वासुदेवोहमित्यज्ञोदूतंकृष्णायप्राहिणोत् १५ त्वंवासुदेवोभगवानवतीर्णोजगत्पतिः ॥ इतिप्रस्तोभितोबालैर्मेनेस्वात्मानमच्युतम् १६ दूतस्तुद्वारकामेत्यसभायामास्थितंहरिम् ॥ कृष्णंकमलपत्राक्षंराजसंदेशमब्रवीत् १७ वासुदेवोवतीर्णोहमेकएवनचापरः ॥ भूतानामनुकंपार्थंत्वंतुमिथ्याभिधांत्यज १८ यानित्वमस्मच्चिह्नानिमौढ्याद्बिभर्षिभीतवत् ॥ त्यक्त्वैहिमांत्वंशरणंनोचेद्देहिममाहवम् १९ कत्थनंतदुपाकर्ण्यपौंड्रकस्याल्पमेधसः ॥ उच्चकैरुग्रसेनाद्याःसभ्याःप्रजहसुस्तदा २० उवाचदूतंभगवान्परिहासकथामनु ॥ उत्स्रक्ष्येमूढचिह्नानियैस्त्वमेवंविकत्थसे २१ मुखंतवविधायाज्ञकंकगृध्रवटैर्वृतम् ॥ शयिष्यसेहतस्तत्रभविताशरणंशुनाम् २२ इतिदूतस्तदाक्षेपंस्वामिनेसर्वमाहरत् ॥ कृष्णोपिरथमारुह्यप्रायात्काशींससैनिकः २३ पौंड्रकोपितदुद्योगमुपलभ्यमहारथः ॥ अक्षौहिणीभिःसहितोनिश्चक्रामपुराद्द्रुतम् २४ तमापतंतरथोपस्थेसुवर्णगरुडेस्थितम् ॥ सुवर्णबाहुयुगलमपश्यत्पौंड्रकंहरिः २५ शंखार्यसिगदाशार्ङ्गधृच्छ्रीवत्सलक्षितम् ॥ बिभ्राणंकौस्तुभमणिंवनमालाविभूषितम् २६ कौशेयवाससीपीतेवसानंगरुडध्वजम् ॥ आमुक्तमाल्याभरणंस्फुरन्मकरकुंडलम् २७ दृष्ट्वातमात्मनासाम्यंकृत्रिमंवेषमास्थितम् ॥ यथानटंरंगगतंविजहासभृशंहरिः २८ क्षणेनतंकाशिपतेःसैनिकाद्दृढधन्विनः ॥ शरैराच्छादयामासुर्मेघाःशैलमिवांभसा २९ केचिद्गजान्रथानश्वानास्थायरणमूर्द्धनि ॥ शूलैर्गदाभिःपरिघैःशक्त्यृष्टिप्रासतोमरैः ॥ असिभिःपट्टिशैर्बाणैःप्रहरन्नरयोहरिम् ३० तस्यकाशिपतेर्मित्रंपार्ष्णिग्राहोपरोनृपः ॥ अक्षौहिणीभिस्तिसृभिरुपायान्नृपसंगरम् ३१ कृष्णस्तुतत्पौंड्रककाशिराजयोर्बलंगजस्यंदनवाजिपत्तिमत् ॥ गदासिचक्रेषुभिरार्दयद्भृशंयथायुगांतेहुतभुक्प्रभाज्वलन् ३२

भिनेपौंड्रकाय २३ २४ २५ २६ आमुक्तमाल्याभरणंबद्धमालालंकारम् २७ २८ २९ ऋष्टिःखड्गविशेषः प्रहरन्प्राहरन् ३० पार्ष्णिग्राहंपृष्ठतोगोप्तारम् ३१ प्रभयाज्वलन् ३२

पदायोधनंयुद्धस्थानंतद्भमाविश्यन्वयः अवखंडितैरुच्छिन्नैःखांडिखंडने द्विपदःपदातयः मनस्विनांशूराणांमानवर्धनंभूतपतेराक्रीडनंश्मशानम् ३३ किमाह शौरिरितितत्राह यदिति भवान्दूतवाक्येन वासुदेवोवतीर्णोहमित्यादिलक्षणेनयन्मामाह तत्पश्येतिशेषः किंतदितितत्राह तानीति यान्युत्सृजेतिभवानाहरणेतान्यस्त्राण्युत्सृजामिमुंचामि ३४ अद्यत्वयाहंयदेववासुदेवत्यभिधानमृषाकृतत स्त्वांत्याजयिष्येप्रहापयिष्यामि यदिसंयुगंनेच्छामितर्हित्वांशरणंव्रजामीति ३५ ३६ ३७ ३८ संशयिरेसंशयंचक्रिरे ३९ ४० सस्थाविधिंप्रेतक्रियां अपचितिंअनृणत्वंप्रतिक्रियांवा अर्चनांवामपचि

आयोधनंतद्रथवाजिकुंजरद्विपत्खरोष्ट्रैररिणावखंडितैः ॥ बभौचतन्मानवहंमनस्विनामाक्रीडनंभूतपतेरिवोल्बणम् ३३ अथाहपौंड्रकंशौरिर्भोभोपौं ड्रकयद्भवान् ॥ दूतवाक्येनमामाहतान्यस्त्राण्युत्सृजामिते ३४ त्याजयिष्येऽभिधानंमेयत्त्वयाज्ञमृषाकृतम् ॥ व्रजामिशरणंतेद्ययदिनेच्छामिसंयुगम् ३५ इतिक्षिप्त्वाशितैर्बाणैर्विरथीकृत्यपौंड्रकम् ॥ शिरोऽहरद्रथांगेनवज्रेणेंद्रोयथागिरेः ३६ तथाकाशिपतेःकायाच्छिरउत्कृत्यपत्रिभिः ॥ न्यपातयत्काशिपुर्यांपद्मकोशमिवानिलः ३७ एवंमत्सरिणंहत्वापौंड्रकंससखंहरिः ॥ द्वारकामाविशत्सिद्धैर्गीयमानकथामृतः ॥ ३८ ॥ श्रीशुकउवाच ॥ शिरःपतितमालोक्यराजद्वारिसकुंडलम् ॥ किमिदंकस्यवावक्त्रमितिसंशयिरेजनाः ३९ राज्ञःकाशिपतेर्ज्ञात्वामहिष्यःपुत्रबांधवाः ॥ पौराःशोकहताराजन्नाथनाथेत्युपाद्रवन् ४० सुदक्षिणस्तस्यसुतःकृत्वासंस्थाविधिंपितुः ॥ निहत्यपितृहंतारंयास्याम्यपचितिंपितुः ४१ इत्यात्मनाभिसंधायसोपाध्यायोमहेश्वरम् ॥ सुदक्षिणोऽर्चयामासपरमेणसमाधिना ४२ प्रीतोऽविमुक्तेभगवांस्तस्मैवरमदाद्विभुः ॥ पितृहंतुर्वधोपायंसवव्रेवरमीप्सितम् ४३ दक्षिणाग्निंपरिचरब्राह्मणैःसहऋत्विजः ॥ आभिचारविधानेनसचाग्निःप्रमथैर्वृतः ४४ साधयिष्यतिसंकल्पमब्रह्मण्येप्रयोजितः ॥ इत्यादिष्टस्तथाचक्रेकृष्णायाभिचरन्नृप ४५ ततोग्निरुत्थितःकुंडान्मूर्तिमानतिभीषणः ॥ तप्तताम्रशिखाश्मश्रुरंगारोद्गारिलोचनः ४६ दंष्ट्रोग्रभ्रुकुटीदंतकठोरास्यःस्वजिह्वया ॥ आलिहन्सृक्किणीनग्नोविधुन्वन्त्रिशिखंज्वलत् ४७ पद्भ्यांतालप्रमाणाभ्यांकंपयन्धरणीतलम् ॥ सोभ्यधावद्वृतोभूतैर्द्वारकांप्रदहन्दिशः ४८ तमाभिचारदहनमायांतंद्वारकौकसः ॥ विलोक्यतत्रसुःसर्वेवनदाहेयथामृगाः ४९ अक्षैःसभायांक्रीडंतंभगवंतंभयातुराः ॥ त्राहित्राहीतिलोकेशवह्नेःप्रदहतःपुरम् ५० श्रुत्वातज्जनवैक्लव्यंदृष्ट्वास्वानांचसाध्वसम् ॥ धरणीशःप्रहस्याहमाभैष्टेत्यवितास्म्यहम् ५१ सर्वस्यांतर्बहिःसोथकृत्यांमाहेश्वरींविभुः ॥ विज्ञायतद्विघातार्थंपार्श्वस्थंचक्रमादिशत् ५२

तिःप्रेतक्षयेनिष्कृतौव्ययइवि ४१ आत्मनामनसाइत्यभिसंधायसंकल्प्य ४२ अविमुक्तेकाश्यां अविमुक्तेश्वरनामक्षेत्रविशेषेवाप्रीतः ४३ दक्षिणाग्निमन्वाहार्यनामानंपरिचरपूजय आभिचारविधानेनक्षुद्रप्रयोगप्रकारेण ४४ अब्रह्मण्येब्राह्मणाचारविरुद्धाचारेप्रयोजितः आदिष्टःईश्वरेणेतिशेषः अभिचरन्कृत्याप्रयोगंकुर्वन् ४५ ४६ त्रिशिखंशूलमितिशेषः ४७ ४८ आभिचारदहनंकृत्यालक्षणाग्निम् ४९ अक्षैर्दुरोदरैः ५० धरणीशःभूमीशःधरणंयस्यतद्धरणितस्यत्रैलोक्यस्यवा अवितास्मिरक्षितास्मि ५१ ५२

सुदर्शनंनामचक्रंअस्त्रं खंबिलंव्योमवा स्वमिंद्रियेदिविव्योम्निताम्रेद्वाराम्युपायपोरितिपादवः ५३ अभिचारःकृत्याग्निः ५४ तदनुसुदक्षिणदहनानंतरं अंतःप्रविष्टं कोष्ठमंतर्गृहं वरूथंरथगु शिशालाम् ५५ ५६ एतच्चरित्रश्रवणादिफलमाह यइति ५७ तावुभौश्रोताश्रावयिताचब्रह्महत्यादिभिरुपलक्षितेभ्योऽशुभेभ्यः ५८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांएकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ तीर्थयात्रायांबहुविधंपुण्यंनिमित्तंकालेततोपिविशिष्टं तत्रस्नानात्तत्पात्रत्यागात्संदर्शनात्पुण्यवतांपुण्यराशेरितरेषामप्यघक्षयाच्छुद्धातःकरणत्वेननिर्मलाकृष्णविषयाभक्तिःमुक्तावानंदविशेषंमुक्तिंचददातीतिकृत्स्नालौकिकाचारविडंबयतः कृष्णस्यतीर्थयात्रादिलक्षणंचरितंकथयत्यस्मिन्नध्याये तत्रादौतीर्थयात्रायांनिमित्तमाह अथेति कल्पक्षयइत्य

तत्सूर्यकोटिप्रतिमंसुदर्शनंजाज्वल्यमानंप्रलयानलप्रभम् ॥ स्वतेजसाखंककुभोथरोदसीचक्रंमुकुंदस्यझटित्यपूरयत् ५३ कृत्यानलःप्रतिहतःसरथांगपाणेरस्त्रौजसानृपविभग्नमुखोनिवृत्तः ॥ वाराणसींप्रतिसमेत्यसुदक्षिणंतंसर्त्त्विग्जनंसमदहत्स्वकृतोभिचारः ५४ चक्रंचविष्णोस्तदनुप्रविष्टंवाराणसींसाट्टसभालयापणाम् ॥ सगोपुराट्टालककोष्ठतोरणांसकोशहस्त्यश्वरथान्नशालिनीम् ५५ दग्ध्वावाराणसींसर्वांविष्णुचक्रंसुदर्शनम् ॥ भूयःपार्श्वमुपातिष्ठत्कृष्णस्याक्लिष्टकर्मणः ५६ यएतच्छ्रावयेन्मर्त्यउत्तमश्लोकविक्रमम् ॥ समाहितोवाशृणुयात्सर्वपापैःप्रमुच्यते ५७ तावुभौसर्वपापेभ्योब्रह्महत्यादिभिर्नृप ॥ विमुच्यदेहावसानेविष्णुलोकंप्रयास्यतः ५८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउ०एकोनसप्ततितमोऽध्यायः ॥६९॥ श्रीशुकउवाच ॥ अथैकदाद्वारवत्यांवसतोरामकृष्णयोः ॥ सूर्योपरागःसुमहानासीत्कल्पक्षयेयथा १ तंज्ञात्वामनुजाराजन्पुरस्तादेवसर्वशः ॥ स्यमंतपंचकंक्षेत्रंजग्मुःश्रेयोविधित्सया २ निःक्षत्रियांमहींकुर्वन्रामःशस्त्रभृतांवरः ॥ नृपाणांरुधिरौघेणयत्रचक्रेमहाह्रदान् ३ ईजेचभगवान्रामोयत्रास्पृष्टोपिकर्मणा ॥ लोकस्यसंग्रहायैषोयथान्योघापनुत्तये ४ महत्यांतीर्थयात्रायांतत्रागुर्भारतीःप्रजाः ॥ कृष्णःषोडशसाहस्रमहिषीशिबिकान्वितः ५ पुत्रपौत्रजनानीकैर्वारकांताकरेणुभिः ॥ नगरस्त्रीकदंबैश्चप्रियासार्थैश्चसंयुतः ६ वृष्णयश्चतथाक्रूरवसुदेवगदादयः ॥ ययुर्भारततत्क्षेत्रंस्वमघंक्षपयिष्णवः ७ शठप्रद्युम्नसांबाश्चसुचंद्रोद्धवसारणाः ॥ आहुकंकृतवर्माणंसंस्थाप्यपुररक्षणे ८ तेरथैर्देवधिष्ण्याभैर्हयैश्चतरलप्रभैः ॥ गजैर्बृहद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ९ व्यरोचंतमहाभागाःपथिकांचनमालिनः ॥ वेदवादित्रनिर्घोषैःशंखदुंदुभिनिःस्वनैः १० गायंतःकृष्णकृष्णेतिगोविंदेतिचसंततम् ॥ ककुभःपूरयन्नादैर्जग्मुःसर्वेकुरूद्वह ११ स्यमंतपंचकंप्राप्यक्षेत्रंत्रैलोक्यविश्रुतम् ॥ तृणैःपर्णैस्तथाकाष्ठैश्चक्रिरेभवनानिच १२

नेनसर्वग्रासंलक्षयति १ पुरस्तादुपरागादितिशेषः स्यमंतपंचकंकुरुक्षेत्रं स्यमंतानांह्रदानांपंचकंयस्मिंस्तत्तथा २ एतदेवस्पष्टयति निःक्षत्रियामिति निषिद्धःक्षत्रियायस्यांसातथाताम् यत्रदेशे यत्पंचमहाह्रदांश्चक्रेतत्स्यमंतपंचकं ३ कर्मणाहत्यानिमित्तपापोत्पत्त्येन अस्पृष्टोपिलोकसंग्रहायेति विकर्मणेतिकेचित्पठंति ४ भारतीःभारतखंडेविद्यमानाः ५ वारकांताःगणिकास्तदारूढकरेणुभिः ६ ७ ८ तरलानांतरंगाणांप्रभावत्प्रभावेषांतेतथा अतिधवलप्रभाइत्यर्थः तैर्विद्याधरद्युतिभिः ९ १० ११ १२

कंबलाजिनवस्त्राणांवितानैरितिशेषः ११ अनेकइतिपदच्छेदः बहवइत्यर्थः निंदिताश्चतुर्वर्णेभ्यःपृथक्कृताः १४ शंसितव्रताःनिर्मलव्रताःस्नातकाःदंडसोदककमंडलुधराःगृहमेधिनःपंचयज्ञाधिकारिणः १५ कुब्जाःवक्रांगाःवामनाह्रस्वावयवाःपंडकाःक्लीबाःव्यंगाःहस्ताद्यवयवहीनाःकिमर्थमिततत्राह कर्मेति १६ कटकंवलयः १७ १८ वासासिस्रजश्चरुक्ममाला स्वर्णमालाःआसांसती तिवासःस्रक्रुक्ममालिन्यःताः १९ २० २१ २२ २३ २४ सचापलाश्चापल्येनसहिताःअपांगदृशःकटाक्षवीक्षणानियासांतास्तथा अभिरेभिरेआलिंगनंचक्रुः २५ २६ २७ केयकथेतितत्राह

कंबलाजिनवस्त्राणांशिबिराणिमहीभृताम् ॥ आसन्विचित्ररूपाणिशतशोथसहस्रशः १३ तत्राजग्मुर्नृपाऽनेकेब्राह्मणाश्चसहस्रशः ॥ वैश्याःशूद्राश्च निःसंख्यायेचान्येवर्णनिंदिताः १४ ऋषयश्चमहात्मानोविख्याताःशंसितव्रताः ॥ सोपाध्यायाःसाग्निहोत्राःस्नातकागृहमेधिनः १५ अंधाश्चबधिरा श्चैवकुब्जावामनपंडकाः ॥ व्यंगाजडाश्चमूकाश्चकर्मक्षयपरीप्सवः १६ गोविंदचरणांभोजरेणुरंजितमस्तकाः ॥ कटकांगदकेयूरहारकुंडलभूषणाः १७ स्रग्गंधादिव्यवसनाःकलत्रैःखेचराइव ॥ तत्रस्नात्वामहाभागाउपोष्यसुसमाहिताः १८ ब्राह्मणेभ्योददुर्धेनूर्वासःस्रग्रुक्ममालिनीः ॥ रामह्रदेषुवि धिवत्पुनराप्लुत्यवृष्णयः १९ ददुःस्वर्णंद्विजाग्र्येभ्यःकृष्णेनोभक्तिरस्त्विति ॥ स्वयंचतदनुज्ञातावृष्णयःकृष्णदेवताः २० भुक्त्वोपविविशुःकामंस्निग्ध च्छायांघ्रिपांघ्रिषु ॥ तत्रागतांस्तेददृशुःसुहृत्संबंधिनोनृपान्२१मत्स्योशीनरकौशल्यविदर्भकुरुसृंजयान् ॥ कांबोजकैकयान्मद्रान्कुंतिगांधारकेरलान्२२ अन्यांश्चैवात्मपक्षीयान्पराश्चशतशोनृपान् ॥ नंदादीन्सुहृदोगोपान्गोपीश्चोत्कंठिताश्चिरम् २३ अन्योन्यसंदर्शनहर्षरंहसाप्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ॥ आश्लिष्यगाढंनयनैःस्रवज्जलाहृष्यत्त्वचोरुद्धगिरोययुर्मुदम् २४ स्त्रियश्चसंवीक्ष्यमिथोतिसौहृदाःसचापलापांगदृशोऽभिरेभिरे ॥ स्तनैःस्तनान्कुंकुमपं करूषितान्निहत्यदोर्भ्यांप्रणयाश्रुलोचनाः २५ ततोभिवाद्यतेवृद्धान्यवीयैरभिवादिताः ॥ स्वागतंकुशलंपृष्ट्वाचक्रुःकृष्णकथांमिथः २६ पृथाभ्रातृन्स्वसृ वीक्ष्यतत्पुत्रान्पितरावपि ॥ भ्रातृपत्नीर्मुकुंदंचजहौसंकथयाशुचः २७ कुंत्युवाच ॥ आर्यभ्रातरहंमन्येआत्मानमकृताशिषम् ॥ यद्वाआपत्सुमद्वार्तांना नुस्मरथसत्तमाः २८ सुहृदोज्ञातयःपुत्राभ्रातरःपितरावपि ॥ नानुस्मरंतिस्वजनंयस्यदैवमदक्षिणम् २९ वसुदेवउवाच ॥ अंबमास्मानसूयेथादेवक्रीड नकान्नरान् ॥ ईशस्यहिवशेलोकःकुरुतेकार्यतेथवा ३० कंसप्रतापिताःसर्वेवयंयातादिशोदश ॥ एतर्ह्येवपुनःस्थानंदैवेनासादिताःस्वसः ३१ श्रीशुक उवाच ॥ वसुदेवोग्रसेनाद्यैर्यदुभिःसेवितान्नृपाः ॥ आसन्नच्युतसंदर्शपरमानंदनिर्भराः ३२ भीष्मोद्रोणोंऽबिकापुत्रोगांधारीससुतातथा ॥ सदाराःपांडवाः कुंतीसंजयोविदुरःकृपः ३३ कुंतिभोजोविराटश्चभीष्मकोनग्नजिन्महान् ॥ पुरुजिद्द्रुपदःशैब्योधृष्टकेतुश्चकाशिराट् ३४

आर्येति आर्यभ्रातर्ज्येष्ठभ्रातःवसुदेवअकृताशिषंअचीर्णपुण्यम् अस्मदापत्सुमद्वार्तांनानुस्मरथेतियत्तस्मादितिशेषः २८ तत्रकिंकारणमिततत्राह यस्येति अदक्षिणंविपरीतवृत्ति २९ देवक्रीड नकान्देवस्येश्वरस्यक्रीडोपकरणभूतान्ईशस्यवशेस्थितोलोकःकर्माणिकुरुते संगेनकार्यतेवा कार्यतेह्यवशइतिस्मृतेः ३० कंसेनप्रतापिताःसंतापंप्रापिताःएतर्हिइदानींस्वसःहेभगिनि ३१ ३२ ३३ ३४

३५ ३६ कृष्णपरिग्रहान्कृष्णाश्रयान् ३७ ३८ तुशब्दोऽवधारणार्थःचशब्दःसमाहारार्थःयस्यकृष्णस्यवदनान्निःसृतंवचःवागात्मकंशास्त्रंब्रह्मसूत्रादिलक्षणंइदंजगत्पुनात्येव यस्यपादावनेजन
पयश्चपुनाति कालाग्निनाभर्जितभगानिदग्धवीर्याभूःयस्यांघ्रिपद्मस्पर्शेनइद्धासमृद्धाशक्तिर्यस्याःसातथासाऽस्मदर्थेखिलार्थानाभिवर्षति तंकृष्णमसकृत्पश्यथेतियस्मातस्माज्जन्मभाजइतिगतेनान्वयः ३९
इतोपियूयंजन्मभाजइत्याशेयनाह तद्दर्शनेति निरयवर्त्मनिइष्टप्रदद्दैवविरहितमार्गे अतएवदुःखविषयेगृहेवर्तंतांवर्तमानानांस्वर्गापवर्गविरमःदुःखासंभिन्नप्रदेशःस्वर्गःकर्मसाध्यप्रदेशःअपवर्गोमोक्षः
तयोर्विरामोयस्मात्सतथा मुक्तेरवदातेत्यर्थः अपवर्गःक्रियासाध्यफलाप्तौत्यागमोक्षयोरिति यद्वा विशेषेणरमणंयस्मात्सतथा ज्ञानादेवस्वर्गोज्ञानादेवापवर्गःइतिश्रुतेःकिमुतसंन्यासिनामितिचशब्दःएवं
विधोविष्णुःस्वयमंशावेशमंतरेणयेषांयुष्माकंगृहेआस्ते यूयंतस्यहरेर्दर्शनंचस्पर्शनंचानुपथश्चानुगमनंचप्रजल्पश्चशय्याचआसनंचअशनंचतानिइमानियस्यसयौवनस्यपिंडस्यदेहस्यसतिसतथातस्यापि

दमघोषोविशालाक्षोमैथिलोमद्रकेकयाः ॥ युधामन्युःसुशर्माचससुताबाह्लिकादयः ३५ राजानोन्येचराजेंद्रयुधिष्ठिरपुरोगमाः ॥ श्रीनिकेतंवपुःशौरेः
सस्त्रीकावीक्ष्यविस्मिताः ३६ अथतेकृष्णरामाभ्यांसम्यक्प्राप्तसमर्हणाः ॥ प्रशशंसुर्मुदायुक्तास्तुष्टाःकृष्णपरिग्रहान् ३७ अहोभोजपतेयूयंजन्मभाजो
नृणामिह ॥ यत्पश्यथासकृत्कृष्णंदुर्दर्शमपियोगिनाम् ३८ यन्निःसृतंवेदमयंपुनातिपादवनेजनपयस्तुवचश्चशास्त्रम् ॥ भूःकालभर्जितभगापियदंघ्रि
पद्मस्पर्शोद्धशक्तिरभिवर्षतिनोखिलार्थान् ३९तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौवनपिंडबंधाः॥येषांगृहेनिरयवर्त्मनिवर्ततांचस्वर्गापवर्गविर
मःस्वयमासविष्णुः ४० नंदस्तत्रयदून्प्राप्तान्श्रुत्वाकृष्णपुरोगमान् ॥ तत्रागमद्वृतोगोपैस्तरसातद्दिदृक्षया ४१ तंदृष्ट्वावृष्णयोहृष्टास्तन्वःप्राणमिवोत्थिताः
॥ परिषस्वजिरेगाढंचिरदर्शनकातराः४२वसुदेवःपरिष्वज्यसंप्रीतःप्रेमविह्वलः ॥ स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासंचगोकुले ४३ कृष्णरामौपरिष्वज्यापित
रावभिवाद्यच ॥ नकिंचनोचतुःप्रेम्णासाश्रुकंठौकुरूद्वह ४४ तावुत्संगंसमारोप्यबाहुभ्यांपरिरभ्यच ॥ यशोदाचमहाभागासुतौविजहतुःशुचः ४५
रोहिणीदेवकीचैवपरिष्वज्यव्रजेश्वरीम् ॥ स्मरंत्यौतत्कृतांमैत्रींबाष्पकंठ्यौसमूचतुः ४६ कोविस्मरेतवांमैत्रीमनुवृत्तांव्रजेश्वरि ॥ अथवाप्यैंद्रमैश्वर्यंय
स्यानेहप्रतिक्रिया ४७ एतावदृष्टपितरौयुवयोःस्मपित्रोःसंप्रीणनाभ्युदयपोषणपालनानि ॥ प्राप्योषतुर्भवतिपक्ष्महपद्मदृक्ष्गोन्यस्तावकुत्रचभयौनस
तांपरस्तात् ४८

डस्यबंधःदृढालिंगनंयेषांतेतथा तस्माज्जन्मसाफल्यंयुष्माकमितिशेषः ४० ४१ ४२ ४३ कृष्णरामयोर्जनमोहनाविडंबंकथयति कृष्णरामाविति ४४ ४५ व्रजेश्वरींयशोदाम् समूचतुःसंभाषणंच
क्रतुः ४६ यस्याः मैत्र्याः वांयुवयोः ४७ एतौकृष्णरामौयुवयोःपित्रोःसमीपेन्यस्तौयुवयोःसंप्रीणनादीनिप्राप्यऊषतुःसंप्रीणनं संप्रीतिःअभ्युदयोजातकाद्यभिवृद्धिकर्म रसायनादिपुष्टिकरणंपो
षणम् कीदृशौअदृष्टपितरौपितशब्दास्पदास्मदर्शनमप्राप्तौ सतांपरस्तात्सज्जनेभ्योन्यत्राकुतश्चनभयौकुत्रचित्भययुक्तौनभवतः कुत्रचेत्युक्तंसांक्षिपातेनकारेण सत्सुभययुक्तावित्यर्थः ब्राह्मणादिसज्ज
नवधाद्बिभ्यतौ यद्वा बाल्येविडंबनार्थंसज्जनमंतरेणदृष्टेभ्योनाकुत्रचभयौनाबिभ्यतावित्यर्थःतत्रदृष्टांतमाह पक्ष्मेति पद्मयथासमीपन्यस्तत्वात्पक्ष्मेत्येकत्वंनंद्विवचनार्थे पक्ष्मणीअक्ष्णोःनेत्रयोः
कुतश्चिद्भयनिवारके तथायुवामितिशेषः ४८

गोप्यश्चिरकालादिष्टंकृष्णमुपलभ्यदृष्ट्वासच दृग्भिः हृदिकृतंअलंपरिरभ्यतद्भावंतास्मिन्योग्यांभक्तिमापुरित्यन्वयः कीदृशंनित्ययुजांनित्यमनोयोगिनामपिदुरापम् दुरापमित्यनेनभक्तेरेवप्राधान्यंसूचयति याःगोप्यःयत्प्रेक्षणेतादर्थ्येसप्तमी प्रेक्षणार्थंदृष्टिषुनेत्रेषुपक्ष्मणांकृतंनिमेषलक्षणंकर्मशपंति पक्ष्मकर्तारंविधिंचेत्यनेनभक्त्यतिशयोदर्शितः ४९ ५० स्वानांयदूनामर्थंचिकीर्षवःअभीष्टंकर्तुकामाःअन्यासंगा दन्यकार्यासक्तेश्चिरायितान्चिरादनागतान् कृपणेषुचेतोयासांतास्तथा ५१ यथायथावदवबुध्यास्मास्विदमेवविशंकये किंतदितितत्राह नूनमिति ५२ एतदेवविवृणोति वायुरिति ५३ प्रेष्ठवियोगाद स्माकंअनुतापइतितत्राह मयीति ५४ ममपरिच्छिन्नत्वेमद्वियोगशंकातदेवनास्तिसर्वगतत्वादितिहिशब्दसूचितहेतुंव्यनक्ति अहंहीति आदिः कारणम् अंतः संहर्ता आद्यंतकालेवर्तमानोवा ननूक्तशंकायाःकःपरिहारइतितत्राह अंतरमिति हेअंगनाःयथाखादिभूतानिभौतिकानांघटकविवक्षयैकवचनम् ५५ आत्मनापरमात्मनाततइतिखादीनिततानिजीवस्ततइतियोज्यम् विद्याविद्यभा वादौपचारिकोव्यपदेशइतितत्राह उभयमिति यत्पदुक्तंशास्त्रीयंअथतस्मादुभयंजीवभूतशब्दवाच्यंतत्त्वंपरेसर्वोच्चमेअक्षरेब्रह्मणिमय्याततमितिपश्यथेत्यन्वयःअनेनेदंश्रद्धेयमितिआयातमितिज्ञायते

गोप्यश्चकृष्णमुपलभ्याचिरादभीष्टंयत्प्रेक्षणेदृशिषुपक्ष्मकृतंशपंति ॥ दृग्भिर्हृदीकृतमलंपरिरभ्यसर्वास्तद्भावमापुरपिनित्ययुजांदुरापम् ४९ भगवांस्ता स्तथाभूताविविक्तउपसंगताः ॥ आश्लिष्यानामयंपृष्ट्वाप्रहसन्निदमब्रवीत् ५० अपिस्मरथनःसख्यःस्वानामर्थचिकीर्षवः ॥ गतांश्चिरायितान्शत्रुपक्षक्षपणचेतसः ५१ अप्यवध्यायथास्मान्स्विदकृतज्ञाविशंकया ॥ नूनंभूतानिभगवान्युनक्तिवियुनक्तिच ५२ वायुर्यथाघनानीकंतृणंतूलंरजांसिच ॥ संयोज्य क्षिपतेभूयस्तथाभूतानिभूतकृत् ५३ मयिभक्तिर्हिभूतानाममृतत्वायकल्पते ॥ दिष्ट्यायदासीन्मत्स्नेहोभवतीनांमदापनः ५४ अहंहिसर्वभूताना मादिरंतोंतरंबहिः ॥ भौतिकानांयथाखंवार्भूर्वायुर्ज्योतिरंगनाः ५५ एवमेतानिभूतानिभूतेष्वात्मात्मनाततः ॥ उभयंमय्यथपरेपश्यताभातमक्षरे ५६ श्रीशुकउवाच ॥ अध्यात्मशिक्षयागोप्यएवंकृष्णेनशिक्षिताः ॥ तदनुस्मरणध्वस्तजीवकोशास्तमध्यगुः ५७ नताःस्मतेनाथपदारविंदंयोगेश्वरैर्हृ दिविचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबंगेहंजुषामपिमनस्युदियात्सदानः ५८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्द्धेसप्तति तमोऽध्यायः ॥ ७० ॥ श्रीशुकउवाच ॥ तथानुगृह्यभगवान्गोपीनांसगुरुर्गतिः ॥ युधिष्ठिरमथापृच्छत्सर्वांश्चसुहृदोऽव्ययम् १

५६ स्त्रीणामयंउपदेशोघटपृष्ठसलिलासेकवद्व्यर्थइतितत्राह अध्यात्मेति देहमधिकृत्यवर्तमानानांपरमात्मादितत्त्वानांशिक्षयोपदेशलक्षणयाशिक्षिताः विद्योपादानंकारिताः तदनुस्मरणेनत स्यकृष्णस्यनिरंतरोपासनयाजातज्ञानाग्निनाध्वस्तोदग्धःजीवकोशःलिंगशरीराभिमानोयासांतास्तथा तम् कृष्णमध्यगुःतंज्ञातवत्यः ५७ ज्ञातकृष्णतत्त्वाइदंजगुरित्याह नताःस्मेतिअसमुच्ची त्यस्याशिषिप्रयोगः नताभवामेतिप्रार्थयामहे जन्मांतरेपित्वत्पादाब्जनमनमाशास्महइत्यर्थः ननुकिमस्यमाहात्म्यंयेनतन्नमनमर्थनीयमितितत्राह योगेश्वरैरिति यत्याश्रमिवत्ज्ञानदुर्बलानेत्याह अगाधेति किमर्थंविचिंत्यमितहेतुगर्भविशेषणमाह संसारेति संसारकूपपतितानांअस्मादुत्तरणावलंबंऊर्ध्वगमनलक्षणाधिश्रेणिहस्ताधारं किंच गेहंजुषांगेहाख्यदेहपोषणनिरतानामपिनोमनसिसदो दियात्निरंतरमुदेतु त्वत्स्वरूपमितिशेषः ॥ ५८ ॥ इतिश्रीभागवतेमहा० दशमस्कंधेउत्त० वि० टीकायांसप्ततितमोऽध्यायः ॥ ७० ॥ श्रोत्रादीनांभक्त्यतिशयजननायाविस्मरणायातीताध्यायेषुउक्तंकृष्ण विक्रमंसंक्षेपतोनुक्रामत्यस्मिन्नध्याये तत्रादावुपोद्घातंरचयति तथेति यथोपदिष्टंज्ञानंसुदृढंस्यात्तथाज्ञानोपदेशेनानुगृह्यगतिःमुक्तिलक्षणानंददत्वेनेत्याशयः अव्ययमनामयंकुशलमित्यर्थः १

तस्यहरेः पादेक्षयाचरणनिरीक्षणेनहतांहसःनिर्मूलपापाः २ किंविधांकथामूचुरिति तत्राह कुतइति तेजनाःकर्णपुटैःमहन्मनस्तोमुखानिःसृतंमहतांव्यासादीनांमनस्तःमनःपूर्वकंमुखकमलाभिः सृतंगलितंत्वच्चरणांबुजासवंतवपादकमलकथामृतंकचित्कस्मिंश्चित्प्रसंगेपिअलंपिबंतिअलंबुद्धिराहित्येनसेवंते तेषामशिवःअशुभःपंथाःकुतःस्यादित्यन्वयः कीदृशोशिवमार्गइतितत्राह देहंभृतइति देहंभृतःउदरंभराःतत्कृतमशिवमार्गप्राप्तंव्यसनंप्रेक्ष्यउच्छ्वसंतिदीर्घंश्वसंति यद्वा येदेहभृतःशरीरिणःकर्णपुटैःत्वच्चरणांबुजासवंपिबंति तत्तस्यतवकृतंचरितमुच्छ्वसंतिलोकेउपदिश्यविकासयंतिविस्तारयंति तेषामशिवःकुतइति ३ ननुनारायणचरणकमलामृतपायिनाममंगलंनास्तीत्यनेनान्येषामस्तीत्यायातंतत्रभवंतःकेइतितत्राह तंत्वेति तंत्वानताःस्मइत्यन्वयः यस्यपादाब्जसुधापायिनाममंगलं नास्तितं अस्यदेवदत्तवदन्याधीनत्वेकिमेतन्नमनफलमित्यत्राहः आत्मधामआत्मैवधामगृहलक्षणंआश्रयोयस्यसतथातं स्वाश्रयमित्यर्थः स्वाश्रयत्वंचेतोपिमहतादेवाद्यन्यतमेनानियतेनकिन्नस्यादत्राहुःविबुधेति विबुधानामात्मागतिःस्वभावगमकंस्वामिनमाश्रयंवा स्वभावगमकत्वंकथमत्राहुःत्र्यवस्थमिति तिस्रोवस्थाजाग्रदाद्यायस्मात्सतथातं अनेनदेवानांजाग्रल्लक्षणानिमिषस्वभावं दैत्यानांसुप्तिलक्षणाज्ञानस्वभावंमनुष्याणांस्वप्नलक्षणमिश्रज्ञानस्वभावंगमयतीतिज्ञातव्यं नन्ववस्थात्रयनिर्यंतृत्वेतत्कृतंश्रमलक्षणदुःखमनिवारितमापतेदेवदत्तवदत्राहुः आनंदेति आनंदानांसंप्लवोम

तएवंलोकनाथेनपरिपृच्छ्यसुसत्कृताः ॥ प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः २ कुतोशिवस्त्वच्चरणांबुजासवंमहन्मनस्तोमुखनिःसृतंक्वचित् ॥ पिबंतियेकर्णपुटैरलंप्रभोदेहंभृतस्तत्कृतमुच्छ्वसंतिहि ३ तंत्वात्मधामंविबुधात्मगतिंत्र्यवस्थमानंदसंप्लवमखंडविकुंठबोधम् ॥ कालोपसृष्टनिगमावपनात्तयोगमायाकृतिंपरमहंसगतिंनताःस्म ४ इत्युत्तमश्लोकशिखामणिंजनेष्वभिष्टुवत्स्वच्युतकौरवस्त्रियः ॥ समेत्यगोविंदकथांमिथोऽगृणन्त्रिलोकगीतांशृणुवर्णयामिते ५ द्रौपद्युवाच ॥ हेवैदर्भ्यच्युतोभद्रेहेजांबवतिकौशले ॥ हेसत्यभामेकालिंदिशैब्येरोहिणिलक्ष्मणे ६ हेकृष्णपत्न्यएतन्नोब्रूतवोभगवान्स्वयम् ॥ उपयेमेयथालोकमनुकुर्वन्स्वमायया ७ रुक्मिण्युवाच ॥ चैद्यायमाऽर्पयितुमुद्यतकार्मुकेषुराजस्वशेषभटशेखरितांघ्रिरेणुः ॥ निन्येमृगेंद्रइवभागमजाविवूथात्तच्छ्रीनिकेतचरणाब्जसमर्चनाय ८॥ सत्यभामोवाच ॥ योमेसनाभिवधतप्तहृदाततेनलिप्ताभिशापमपमार्ष्टुमुपाजहार ॥ जित्वर्क्षराजमथरत्नमदात्सतेननीतच्छिदादिशतमांप्रभवेपिदत्ताम् ९

हौघोयस्मिन्सतथातंपूर्णानंदमित्यर्थः नन्वनुभवलक्षणसाधनाभावात्पाषाणानामपिपूर्णानंदःकिंनस्यादत्राहुःअखंडेतिअखंडःनिरंतरःअविकुंठःविभिन्नः बोधोयस्यसतथातंत्वाभिन्ननिष्कलमप्रज्ञानमित्यर्थः नन्वेवंविधस्यजननंकिमर्थमत्राहुः कालेति कालेनगुणेनोपसृष्टउत्सन्नोनिगमोवेदादिशास्त्रनिचयस्तस्यावपनायपुनरभिव्यक्तिलक्षणांकुरीकरणायात्तागीकृतायोगमायाकृतिःस्वरूपभूतेच्छयादेहोयेनसतथातं आकारोदेहआकृतिरितियादवः उक्तार्थंसर्वस्वेकिंप्रमाणमत्राहुः परमेति परमहंसानांवेदांतैकनिष्ठानांसंन्यासिनांगतिर्ज्ञानंयस्मिन्सतथातं भगवत्स्वरूपविषयंपरमहंसज्ञानप्रमाणमितरेषामित्यर्थः ४ अच्युतस्यकौरवाणांचस्त्रियःसमेत्यएकत्रमिलित्वायांकथामगृणन्तांवर्णयामित्वंशृणु ५ प्रश्नप्रतिवचनपूर्वकांशृण्विति नगानवदत्रेतिविवेकायाह द्रौपदीति हेषोडशसहस्रकृष्णपत्न्यःपृथङ्नामग्रहणंबाहुल्यान्नकृतं स्वेच्छयालोकमज्ञजनमनुकुर्वन्अच्युतोभगवान्स्वयंवोयुष्मान्यथायेनविधिनाउपयेमेतांविधिमस्माकंब्रूतेत्यन्वयः ६ ७ राजसुजरासंधादिषुमायांअशेषभटानामित्युपलक्षण राज्ञांशेखरितःमूर्द्धसुशेखरइवधांघ्रिरेणुर्येनसतथा भागंतदर्थत्वेनक्लृप्तांशं नग्राम्यभोगेच्छयेत्यत्राह श्रीनिकेतेति श्रीत्यनेनतद्भागंसूचयति अजानामवीनांयथा ८ सनाभेःसहोदरस्यप्रसेननाम्नोवधेनतप्तहृदासंतप्तहृदयेन मेततेनतातेनपित्राऽऽलिप्ताभिशापंकथितमिथ्यादोषंअपमार्ष्टुंपरिहर्तुंऋक्षराजानंजांबवंतंजित्वारत्नमुपाजहार अथतेनकृष्णेनभगवतानीत

च्छित्वा प्रसेदलक्षणापराधःसमेपितामां प्रभवेकर्तुमकर्तुमन्यथाकर्तुंसमर्थायआदिशतदत्तवान्रत्वंचादात् कीदृशींमामन्यस्मैवाचादत्तामपि यद्वा ऋक्षरा.जांजित्वारत्नमाहरत् आहृत्यचतद्रत्नंमत्पित्रेअदात्ते नरत्नेनसहभगवतानीतच्छित्तसपितातस्मैप्रभवेआदिशतेत्यन्यत्समं ९ देहविकृतिंपरिमाणतोवर्णतश्चविलक्षणदेहंकृष्णंप्रत्यक्षदृष्ट्याआज्ञायसम्यक्ज्ञात्वाअनेनश्रीकृष्णेनात्रिनवहानिसप्तविंशतिदिनान्य भियुध्यएनंकृष्णंनिजनाथदेवंस्वकुलस्वामिदेवताभूतंसीतापतिंपुनर्ज्ञात्वामेपिताजांबवान्अवधीरणंअवज्ञानमर्हणंअपराधपरिहारयोग्यंपूजासाधनंमामगिनासहपादौप्रगृह्योपाहरत्कृष्णायेतिशेषः यद्वा अवधिरवधानंनिश्चयज्ञानंयत्तस्येरणप्रेरणयेनसोवधीरणःदशरथपुत्रोवतीर्णोयमितिविशिष्टज्ञानजनकइत्यर्थ. त पराजितइतिवापाठः अज्ञायेतिच त्वममुष्याधुनाकीदृशीत्यत्राह अहमिति अपिमायंमपं कुर्याच्छेदोभंगंनकारयेदितिवचनात्त्रिनवहानीति यद्वोत्तराकारगुणस्तैर्ज्ञास्यकल्पतोगुणइत्यननपूर्वपरस्थानयोःगुणादेशेनरूपंसिद्धंभवति १० याहमिदानींतद्गृहमार्जनीतांयांस्वपादस्पर्शकाम्यया तपश्चरंतींविज्ञायसख्यार्जुनेनसहोपेत्यममपाणिमग्रहीत् याकृष्णदेवताममपाणिमग्रहीत्अहंतद्गृहमार्जनीतिवा यायइतिव्यत्ययेनान्वयोवा ११ यःकृष्णःद्विपारिःसिंहःश्वयूथंविजित्यात्मनेऌप्तंबालि

जांबवत्युवाच ॥ आज्ञायदेहविकृतिंनिजनाथदैवंसीतापतिंत्रिनवहान्यमुनाभियुध्य ॥ ज्ञात्वावधीरणमुपाहरदर्हणंमांपादौप्रगृह्यमणिनाहममुष्यदासी १० कालिंद्युवाच ॥ तपश्चरंतीमाज्ञायस्वपादस्पर्शकाम्यया ॥ सख्योपेत्याग्रहीत्पाणिंयाहंतद्गृहमार्जनी ११ मित्रविंदोवाच ॥ योमांस्वयंवरमुपेत्यविजित्यभूपान्निन्येश्वयूथमिवचात्मबलिंद्विपारिः ॥ भ्रातॄंश्चमेऽपकुरुतःस्वपुरंश्रियोगात्तस्यास्तुमेनुभवमंघ्र्यवनेजनांभः १२ नीलोवाच ॥ सप्तोक्षणोतिबलवीर्यसुतीक्ष्णशृंगान्पित्राकृतान्क्षितिपवीर्यपरीक्षणाय ॥ तान्वीरदुर्मदहनस्तरसानिगृह्यक्रीडन्बबंधहयथाशिशवोऽजतोकान् १३ यइत्थंवीर्यशुल्कांमांदासीभिश्चतुरंगिणीम् ॥ पथिनिर्जित्यराजन्यान्निन्येतद्दास्यमस्तुमे १४ भद्रोवाच ॥ पितामेमातुलेयायस्वयमाहूयदत्तवान् ॥ कृष्णेकृष्णायतच्चित्तामक्षौहिण्यासखीजनैः १५ तस्यमेपादसंस्पर्शोभवेज्जन्मनिजन्मनि ॥ कर्मभिर्भ्राम्यमाणायायेनतच्छ्रेयआत्मनः १६ लक्ष्मणोवाच ॥ ममापिराज्ञ्यच्युतजन्मकर्मचश्रुत्वामुहुर्नारदगीतमासह ॥ चित्तंमुकुंदेकिलपद्महस्तयावृतःस्वयंयस्तुविहायलोकपान् १७ ज्ञात्वाममृमतंसाध्विपितादुहितृवत्सलः ॥ बृहत्सेनइतिख्यातस्तत्रोपायमचीकरत् १८

मुपहारमिव स्वयंवरेभूपानुपेत्यविजित्यभ्रातॄन्अपकुरुतोऽपकुर्वतःसतःमांनिन्येस्वपुरंचागात् अनुभवंजन्मनिजन्मनिममतस्यहेरंघ्र्यवनेजनांभोरित्यन्वयः अपकरणेहेतुःश्रियइति संपदोहेतोः श्रीःपद्मायांकांतिसंपदोरिति तस्याअशंमामितिवा १२ अत्यधिकेबलवीर्येसुतीक्ष्णानिशृंगाणिचयेषांतेतथातान् बलशक्तिर्वीर्यंविक्रमदुर्मदान्घ्नंतीतिदुर्मदहनःअजतोकान्छागशिशून् १३ ततःकिमकारीतितत्राह यइति दासीभिःसहमांनिन्ये १४ हेकृष्णेद्रौपदि १५ येनपादस्पर्शेनात्मनोमेतच्छ्रेयः स्यात् सपादस्पर्शोभवेत् १६ हेराज्ञिद्रौपदि यस्तुलोकपानिंद्रादीन्विहायपद्महस्तया स्वयंवृतः तस्मिन्मुकुंदेममचित्तमासेत्यन्वयः १७ द्रौपदीस्वयंवरेद्रौपद्याः पार्थवरेच्छयामत्स्यः कृतो यथातथामेपितातत्रोपायमचीकरत् १८ इदमुपायमतोविशिनष्टि अयंत्विति तुशब्देनान्याशक्यं दर्शयति अयंमत्स्योदीर्घस्थूणशिखरेऽवलंबितोबहिराच्छन्नः व्यवहितसर्वांगः अदर्शनाद्वेधोऽसुकरइतितत्राह दृश्यतइति समत्स्यः परंकेवलंजलेदृश्यतेवेणुनालनिर्गतच्छायाजलेप्रतिबिंबितत्वेनच धुर्विषयइत्यर्थः तदनेनाधोमुखेनजलेच्छायामवलोक्यवेद्धव्यइतिपार्थकृतलक्ष्यवेधादधिकामुकरमितिज्ञायते १९

उपाध्यायाश्चाचार्याः पुरोहितावा २० हेपार्थेति सिद्धेकार्येभोगार्थमयिधियोयेषांतेमाद्धिय: २१ व्यसृजन्मुक्तवंतः आकोटचांधनुरग्रपर्यंतं २२ तस्यमत्स्यस्यस्वरूपावास्थितिनाविंदन्नज्ञातवंतः २३ मत्स्याभासंमत्स्याकारं यत्तोऽभयेनबाणानसृजत्नाच्छिनच्च तर्हिकिंकृतमत्राह परस्पृशइति २४ २५ अभिजितिदिनमध्यमुहूर्तेसति २६ भुविजयशब्दोऽपतत्व्याप्तोभूत् २७ दिशइतिलक्षणयादिक्षुस्थितान्नृपान्भ्रमयतीकामविकारसूचकनानाचेष्टाकुलान्कारयंती तद्रंगंतत्स्वयंवरस्थलं चलेनपादविक्षेपेणपेशलाभ्यांसुंदराभ्यां वृत्तेस्वरूपेस्वेतरवस्तु

यथास्वयंवरेराज्ञिमत्स्यःपार्थेच्छयाकृतः ॥ अयंतुबहिराच्छन्नोदृश्यतेसजलेपरम् १९ श्रुत्वैतत्सर्वतोभूपाआययुर्मेत्पितुःपुरम् ॥ सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाःसहस्रशः २० पित्रासंपूजिताःसर्वेयथावीर्यंयथावयः ॥ आददुःसशरंचापंवेद्धुंपार्षतिमाद्धियः २१ आदायव्यसृजन्केचित्सज्जीकर्तुमनीश्वराः ॥ आकोटचांज्यांसमाकृष्यपेतुरेकेमुनाहताः २२ सज्यंकृत्वापरेवीराःप्राग्ज्योतिमगधेश्वरौ ॥ भीमोदुर्योधनःकर्णोनाविंदंस्तदवस्थितिम् २३ मत्स्याभासंजलेदृष्ट्वाज्ञात्वाचतदवस्थितिम् ॥ पार्थोयत्तोसृजद्बाणान्नाच्छिनत्पस्पृशेपरम् २४ राजन्येषुनिवृत्तेषुभग्नमानेषुमानिषु ॥ भगवान्धनुरादायसज्यंकृत्वाऽथलीलया २५ तस्मिन्संधायविशिखंमत्स्यंवीक्ष्यसकृज्जले ॥ छित्वेषुणाऽपातयत्तंसूर्येचाभिजितिस्थिते २६ दिविदुंदुभयोनेदुर्जयशब्दोपतद्भुवि ॥ देवाश्चकुसुमासारान्मुमुचुर्हर्षविह्वलाः २७ तद्रंगमाविशमहंकलनूपुराभ्यांपद्भ्यांदिशोभ्रमयतीचलपेशलाभ्याम् ॥ वृत्तेपिधायपरिधायचकौशिकाग्र्येसव्रीडहासवदनाकबरीधृतस्रक् २८ उन्नीयवक्त्रमुरुकुंडलकुंतलत्विट्गंडस्थलंशिशिरहासकटाक्षमोक्षम् ॥ राज्ञोनिरीक्ष्यपरितःशनकैर्मुरारेरंसेनुरक्तहृदयाविदधेस्वमालाम् २९ ततोमृदंगपटहाःशंखभेर्यानकादयः ॥ निनेदुर्नटनर्तक्योननृतुर्गायकाजगुः ३० एवंवृतेभगवतिमायेशेनृपयूथपाः ॥ नसेहिरेयाज्ञसेनिस्पर्धिनोहृच्छयातुराः ३१ मांरथंसमारोप्यलसद्धयचतुष्टयम् ॥ शार्ङ्गमुद्यम्यसन्नद्धस्तस्थावीशश्चतुर्भुजः ३२ दारुकश्चोदयामासकांचनोपस्करंरथम् ॥ मिषतांद्विषतांराज्ञिवृकाणांमृगराडिव ३३ तेत्वसर्ज्जंतराजन्यानिषेद्धुंपथिकेचन ॥ संयत्ताउद्धृतेष्वासाग्रामसिंहायथाहरिम् ३४ तेशार्ङ्गच्युतबाणौघैर्नुन्नबाह्वंघ्रिकंधराः ॥ निपेतुःप्रधनेकेचिदेकेसंत्यज्ययदुद्रुवुः ३५ ततःपुरींपतिजयभूत्यलंकृतांरविच्छदध्वजपटचित्रतोरणाम् ॥ कुशस्थलींदिविभुविचाभिसंस्तुतांतदासमाविशत्तरणिरिवस्वकेतनम् ३६ पितामेपूजयामाससुहृत्संबंधिबांधवान् ॥ महार्हवासोलंकारैःशय्यासनपरिच्छदैः ३७ दासीभिःसर्वसंपद्भिर्भटेभरथवाजिभिः ॥ आयुधानिमहार्हाणिददौपूर्णस्यभक्तितः ३८

भ्योव्यावृत्तरूपे कौशिकाग्र्येकृमिकोशोत्थतंतुकृतवस्त्रश्रेष्ठे यद्वावृत्तेजघनेपरिधाय वृत्तेपीनेस्तनद्वयेपिधायवा कबर्यांधृतास्रक्मालायस्याःसातथा २८ शिशिरवत्तुषारवद्धवलोहासःस्निग्धोवा २९ ३० हेयाज्ञसेनिद्रौपदि ३१ ईशःशिवोनेत्याह चतुर्भुजइति ३१ ३३ ग्रामसिंहाःसारमेयाःहरिंसिंहम् ३४ नुन्नाःछिन्नाःबाहवश्चांघ्रयश्चकंधराश्चयेषांतेतथा प्रधनेयुद्धे ३५ पत्युःस्वामिनःकृष्णस्य जयभूत्याजयश्रियाअलंकृतां यथाजयलक्ष्मीरुत्कृष्टातथालंकृतांवा रविच्छदध्वजपटाश्चचित्रतोरणाश्चयस्यांसातथातां रविंछादयंतीतिरविच्छदाःआतपप्रतिष्टंभकाःचित्रानानावर्णास्तोरणाः स्वकेतनं आत्मीयोदयशिखरिशिखरम् ३६ ३७ पूर्णस्यअन्यपालकरहितस्य ३८

दासित्वंचतपआदिपुण्यनिचयेनमाप्तमितिज्ञापनायोक्तं सर्वेति अद्धायथार्थभूतया अद्धाप्रत्यक्षसत्ययोरिति ३९ षोडशसहस्रास्त्रियःस्वविवाहप्रकारंकथयंति भौमामिति यःकृष्णःक्षितिजयेभूमंडलविजयेराज्ञोनिर्मथ्यहृतराजकन्याःज्ञात्वासगणंभौमंनिहत्यतेननरकेणरुद्धाःनिरोधलक्षणसंसृतेर्मोक्षंस्मरंतीर्नोस्मान्पादांबुजंपरिनिनायसमीपंप्रापयामास पादांबुजंमेवायितुम्ऽज्ञात्वा नकामुकबुद्ध्या कुतः आप्तकाम. ४० वयमपिभगवत्पादरजःसेवामंतरेणनान्यदैश्वर्यपदमाशास्महेइत्याहु. नवयमिति साम्राज्यमुत्तरदेशराज्यं स्वाराज्यं पूर्वदेशराज्यं भौज्यदक्षिणदेशराज्यं वैराज्यंपश्चिमदेशराज्यं पारमेष्ठ्यंचक्रवर्तिपदं आनंत्यंसर्वदेशाधिपत्यंवा हरेःपदंइंद्रपदंवासाम्राज्यंचक्रवर्तिपदं स्वाराज्यंस्वर्गराज्यंभौज्यमंतरिक्षराज्यं वैराज्यंपाताळराज्यं अणिमादिराज्यंवा पारमेष्ठ्यंब्रह्मपदं आनंत्यंमोक्षंवा नकामयामहेकिंतुगदाभृतोहरेःपदंकामयामहे ४१ किमर्थमत्राह एतस्येति एतस्यगदाभृतःश्रीमत्पादरजःमूर्ध्नावोढुं कीदृशंश्रियोलक्ष्म्याःकुचलिप्तकुंकुमरजोगंधाढ्यम् ४२ व्रजस्त्रियः

आत्मारामस्यतस्येमावयंवैगृहदासिकाः ॥ सर्वसंगनिवृत्त्याद्धातपसाचबभूविम ३९ महिष्यऊचुः ॥ भौमंनिहत्यसगणंयुधितेनरुद्धाज्ञात्वाथनःक्षितिजयेहृतराजकन्याः ॥ निर्मथ्यसंसृतिविमोक्षमपिस्मरंतीःपादांबुजंपरिनिनाययआप्तकामः ४० नवयंसाध्विसाम्राज्यंस्वाराज्यंभौज्यमप्युत ॥ वैराज्यंपारमेष्ठ्यंवाआनंत्यंवाहरेःपदम् ४१ कामयामहएतस्यश्रीमत्पादरजःश्रियः ॥ कुचकुंकुमगंधाढ्यंमूर्ध्नावोढुंगदाभृतः ४२ व्रजस्त्रियोयद्वांछंतिपुलिंद्यस्तृणवीरुधः ॥ गावश्चारयतोगोपैःपादस्पर्शंमहात्मनः ४३ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्द्धे एकसप्ततितमोध्यायः ७१॥ श्रीशुकउवाच॥ श्रुत्वापृथासुबलपुत्र्यथयाज्ञसेनीमाधव्यथक्षितिपपत्न्यउतस्वगोप्यः ॥ कृष्णेखिलात्मनिहरौप्रणयानुबंधंसर्वाविसिस्म्युरलमश्रुकलाकुलाक्ष्यः १ इतिसंभाष्यमाणासुस्त्रीभिःस्त्रीषुनृभिर्नृषु ॥ आययुर्मुनयस्तत्रकृष्णरामदिदृक्षया २ द्वैपायनोनारदश्चच्यवनोदेवलोसितः ॥ विश्वामित्रःशतानंदोभारद्वाजोथगौतमः ३ रामःसशिष्योभगवान्वसिष्ठोगालवोभृगुः ॥ पुलस्त्यःकश्यपोत्रिश्चमार्कंडेयोबृहस्पतिः ४ द्वितस्त्रितश्चैकतश्चब्रह्मपुत्रस्तथांगिराः ॥ अगस्त्योयाज्ञवल्क्यश्चवामदेवादयोपरे ५ तान्दृष्ट्वासहसोत्थायप्रागासीनानृपादयः ॥ पांडवाःकृष्णरामौचप्रणेमुर्लोकवंदितान् ६ तानानर्चुर्यथासर्वेसहरामोच्युतोर्चयत् ॥ स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ७ उवाचसुखमासीनान्भगवान्धर्मगुप्तनुः ॥ सदसस्तस्यमहतोयतवाचोनुशृण्वतः ८ श्रीभगवानुवाच ॥ अहोवयंजन्मभृतोलब्धकार्त्स्न्येनतत्फलम् ॥ देवानामपिदुष्प्रापंयद्योगेश्वरदर्शनम् ९ किंस्वल्पतपसांनृणामर्चायांदेवचक्षुषाम् ॥ दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् १०

यत्पादरजोवांछंति नकेवलंव्रजस्त्रियएववांछंतिपुलिंद्यादयोपीत्याहुःपुलिंद्यइति गावःगाः ४३ इतिश्रीभागवतेमहा० दशमस्कंधेउत्तरार्धेविज० टीकायांएकसप्ततितमोध्यायः ७१॥७॥ हरेर्ज्ञानिप्रियत्वं यज्ञस्यतदेकविषयत्वंतत्र्यंतेर्मुक्तिसाधनत्वंपुत्रमित्रादिस्नेहस्यसंसारमूलत्वमित्यादिकमध्यायद्वयेकथयति तत्रव्यासादिमुनीनांआगमनवक्तृपृथादिस्त्रीणांसंतोषोद्रेकंकथयति पृथेत्यादिना यामाधव्यः माधवपत्न्यःतासांकृष्णेप्रणयानुबंधंदृष्ट्वेतिशेषः विसिस्म्युःविस्मिताःअभवन्नित्यन्वयःसत्यादीनांभक्तिप्रवाहंदृष्ट्वावा १ इदानीमृषीणामागमनप्रकारंवक्ति इतीति २ ३ ४ द्वितस्त्रितैकताःसहोदराः त्रितःकूपेवहितोदेवान्हववऊतयेइतिश्रुतेः ५ मागुत्थायाथानर्चुः नमनादिनेतिशेषः ६ ७ धर्मगुप्धर्मगोप्त्रीतनुर्यस्यसतथा ८ तत्फलंजन्मफलं ९ नृणांयुष्मद्दर्शनादिकंदुष्प्रापमितिकिंवक्तव्यमित्याह स्वल्पेति अर्चायामितिसप्तमीप्रथमार्थे अर्चाप्रतिमैवदेवइति चक्षुर्दर्शनंयेषांतेतथा अर्चापूजाप्रतिष्ठयोरिति १०

ननुबाह्मुखानांनृणांतीर्थादिदर्शनादेर्जन्मनःसाफल्यंस्यात्किंसाधुदर्शनादिनेतितत्राह तइति तत्रसंनिहितास्तेदेवाअप्युरुकालेनकालक्षेपंकृत्वैवपुनंति नतुतदानीमेव तत्रकिंकारणमित्यत्रयेदमेवोत्तरं कलनमेवकालःज्ञानंतावदंत कलज्ञानइतिधातुः उरुणागुरुणोपदिष्टज्ञानेनतत्स्वरूपंतन्मंत्रतदंगाचरणादिकंज्ञात्वा समुपास्यत दर्शनंप्राप्यतत्प्रसादेनाघक्षयइत्यतोगुरूपदेशःकारणमित्यर्थः प्रकृतेकिमनेनेत्यत्राह दर्शनादिति साधवःस्वदर्शनादन्यथाज्ञानमपगमयंति एवशब्दःगुरूपदेशंव्यवच्छिनत्ति ११ नन्ववचनिमित्तमन्यथाज्ञानंजायतेतत्राग्न्यादयःस्व दर्शनादघक्षपयित्वाऽन्यथाज्ञानंनाशयति ततोजन्मसाफल्यमितितत्राह नेति कस्याघंनहरंतीत्यतउक्त भेदकृतःअन्यथाज्ञानिनःपुंसःदाहकत्वादिशक्तिदर्शनादयमेवाग्निशब्दप्रवृत्तिहेतुरित्यन्यथाज्ञानंबहिर्मुखानांजायते मनःमनोभिमानीदेवः मनोब्रह्मेत्युपास्तेतिश्रुतिः एवकारेणकियत्कालोव्यवच्छिन्नइतितत्राह मुहूर्तेति अत्रप्रतीतार्थमपहायतत्रसंनिहितदेवताकल्पनंनिष्प्रमाणकमित्यादिशंका प्राक्तैर्दृश्यमानतुनद्रवंतीर्थमुच्यतेइत्यादिनापरिहर्तव्या भेदस्यान्यथाज्ञानत्वंचभिन्नस्याभेदतोदृष्टिरितिप्रमाणसिद्धं नन्वियंव्यवस्थाकुतःऋष्यादिभ्योदेवानांउत्तमत्वादित्यतः उत्तमाअपिदेवेशाअवरान्विदुषोनृणां पूजायैसंप्रयच्छंतिपरोक्षत्वमियायतइत्यादेः १२ इतोपिविद्वज्जनपूजानृभिःकार्येत्याशयेनाह यस्येति यस्यपुरुषस्यात्रिधातुकेप्राधान्यात्पृथिव्यप्तेजःकृतेवातपित्तश्लेष्माकुलेवा कुणपेशववदचेतनदेहेआत्मबुद्धिःअहमितिज्ञानं

**नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः ॥ तेपुनंत्युरुकालेनदर्शनादेवसाधवः ११ नाग्निर्नसूर्योनचचंद्रतारकंनभूर्जलंखंश्वसनोथवाङ्मनः ॥ उपासिताभेदकृतोहरंत्यघंविपश्चितोघ्नंतिमुहूर्तसेवया १२ यस्यात्मबुद्धिःकुणपेत्रिधातुकेस्वधीःकलत्रादिषुभौमइज्यधीः ॥ यत्तीर्थबुद्धिःसलिलेनकर्हिचिज्जनेष्वभिज्ञेषुसएवगोखरः १३ श्रीशुकउवाच ॥ निशम्येत्थंभगवतःकृष्णस्याकुंठमेधसः ॥ वचोदुरन्वयंविप्रास्तूष्णीमासन्भ्रमद्धियः १४ चिरंविमृश्यमुनयईश्वरस्येशितव्यताम् ॥ जनसंग्रहइत्यूचुःस्मयंतस्तंजगद्गुरुम् १५ ऋषयऊचुः ॥ यन्मायपातत्त्वविदुत्तमावयंविमोहिताविश्वसृजामधीश्वरम् ॥ यदीशितव्यायतिगूढईहयाअहोविचित्रंभगवद्विचेष्टितम् १६ अनीहएतद्बहुधैकआत्मनासृजत्यवत्यत्तिनबध्यतेयथा ॥ भौमैर्हिभूमिर्बहुनामरूपिणीअहोविभूम्नश्चरितंविडंबनम् १७**

देहोहमित्यन्यथाज्ञानमित्यर्थः यस्य चकलत्रादिषुअसद्वार्यादिपुस्वधीः मदीयाएतेअहमेषांभर्तानान्यइतिस्वकीयत्वबुद्धिः विषयभोगलौल्यतत्रनिमित्तं यस्यभौमेभूविकारेशिलादौइज्यधीःपूज्यबुद्धिः यद्यस्यजलेद्रवरूपेतीर्थबुद्धिःअघक्षयबुद्धिः यस्याभिज्ञेषुशास्त्रतत्वज्ञेषुकर्हिचिदपिनपूज्यत्वबुद्धिःसगोखरःगविपृथिव्यांगर्दभःनापरः गोस्पर्शनादिनाशुद्धिःस्यादितिगौश्चासौखरश्चेतिविग्रहोनसंगच्छतइत्युक्तएवार्थः १३ अकुंठमेधसःअप्रतिहतज्ञानस्य दुरन्वयंअन्वेतुमशक्यंदुर्ज्ञेयमित्यर्थः भ्रमतीअनवस्थाधीर्येषांतेतथा १४ मुनयःकिमकुर्वन्पुनरितितत्राह चिरमिति ईश्वरस्यजगन्नियंतुरीशितव्यतांविद्वज्जनान्प्रतिदास्यभावंचिरंविमृश्यअयजनसंग्रहःउन्मार्गप्रवृत्तिरिवाचारलक्षणइतिमत्वातंजगद्गुरुमूचुरित्यन्वयः १५ अहोहरेर्विडंबनमितिकुतूहलादुत्पन्नमंदस्मितंकुर्वतःकिंस्वाश्रमगमनमुतबालकथामाहोस्वित्तत्त्वविषयंकिंचिदूचुरित्याशंक्यतत्त्वविषयमेवेत्याह यन्मायपेति तत्त्वविदुत्तमावयंयस्यमाययाविमोहिताः सभवानीहयालोकचेष्टयागूढईशितव्यायतिअनीशवदाचरतीति यस्मादहोभगवतोविचेष्टितंविचित्रं लोहितादिडाज्भ्यःक्यषितिक्यष्प्रत्ययः १६ चेष्टायामतर्क्यत्वमुपपादयति अनीहइति आत्मनापरप्रेरणामंतरेण यथाभूमिःभौमैःस्वविकृतैःपदार्थैर्बहुनामरूपिणीकार्यरूपेणबध्यतेयथा तथाभवान्नबध्यतइत्यन्वयः योभवाननीहः कूटस्थएतज्जगद्बहुधासृजत्यवत्यत्तीति तस्मादहोविभूम्नश्चरितं कीदृशंविडंबयतीतिविडंबनम् १७

यथापिलाकविडंबनशक्तयामोहयसि तथापि कालसज्जनोपप्लुवसमयेवेदपथंचाविभार्षि वर्णाश्रमात्मावर्णाश्रमास्थापनाचार्यः १८ यतोवेदमार्गप्रणेतातवतस्त्वैतवब्राह्मणकुलंशुक्लत्वंचकस्यादि स्यत्राह यत्रेति यत्रब्राह्मणकुलेअव्यक्तंपरंब्रह्मसुव्यक्तंव्यवधानमंतरेणउपलब्धंदृष्टंयत्तस्मात्शास्त्रयोनेःवेदप्रतिपाद्यस्यात्मनस्तवसद्धामप्रशस्तंस्थानंयतःसंभावयति यत्तस्माद्भवान्ब्रह्मण्यगुण. ब्रा ह्मणप्रियत्वगुणलक्षणशिखामणिः १९ २० नकेवलंजन्मनएवसाफल्यमासीत् किंतुविद्यादेरपीति तत्रानिमित्तंत्वयासंगम्योति त्वंनःत्वत्संगत्याश्रेयसांसकाशात्परःपुरुषार्थइतियत् २१ २२ एकस्त्वमेवारामःक्रीडावनंयेषांतेतथा २३ अघौघंमर्षयतिनाशयतीत्यघौघमर्षंताहशस्यतीर्थस्यगंगाशब्दवाच्यस्यास्पदंस्थिराश्रयंसुष्ठुविपक्काःपरिपाकंप्राप्ताःयोगाध्यानलक्षणाःतैःउत्सिक्तया उद्रिक्तयाभक्त्याउपहृतःसम्यगुन्मूलितआशयःस्थानंयस्यसतथा सजीवकोशःजीवाख्यसन्निधानस्थानीयंलिंगशरीरंयेषांतेतदुत्सिक्तभक्त्युन्मूलितस्थानालिंगशरीराःभवत्तोगतिस्थानंवैकुंठलक्षणम् २४ २५ उपसंगृह्यअनुज्ञामितिशेषः बभाषइदंव्यत्ययोबहुलमितिसूत्रात् बभाषेइदमितिछांदसः २६ सर्वेदेवायेषुसंनिहितास्तेसर्वेदेवास्तेभ्यः सर्वत्रदेवोदेवनंप्रकाशनंयेषांतेतथातेभ्यइतिवानिर्हारो

अथापिकालेस्वजनाभिगुप्त्यैबिभर्षिसत्त्वंखलनिग्रहाय ॥ स्वलीलयावेदपथंसनातनंवर्णाश्रमात्मापुरुषःपरोभवान् १८ ब्रह्मतेहृदयंशुक्लंतपःस्वाध्यायसंयमैः ॥ यत्रोपलब्धंसुव्यक्तमव्यक्तंचततःपरम् १९ तस्माद्ब्रह्मकुलंब्रह्मन्शास्त्रयोनेस्त्वमात्मनः ॥ सभाजयसिसद्धामतद्ब्रह्मण्यगुणोभवान् २० अद्यनोजन्मसाफल्यंविद्यायास्तपसोदृशः ॥ त्वयासंगम्यसंगत्यायत्त्वंनःश्रेयसांपरः २१ नमस्तस्मैभगवतेकृष्णायाकुंठमेधसे ॥ स्वयोगमाययाच्छन्नमहिम्नेपरमात्मने २२ नयंविदंत्यमीभूपाएकारामाश्चवृष्णयः ॥ मायाजवनिकाच्छन्नमात्मानंकालमीश्वरम् २३ तस्याद्यतेददृशिमांघ्रिमघौघमर्षतीर्थास्पदंहृदिधृतंसुविपक्वयोगैः ॥ उत्सिक्तभक्त्युपहृताशयजीवकोशाआपुर्भवद्गतिमथानुगृहाणभक्तान् २४ श्रीशुकउवाच ॥ इत्यनुज्ञाप्यदाशार्हंधृतराष्ट्रंयुधिष्ठिरम् ॥ राजर्षेस्वधिष्ण्यंगंतुंमुनयोदधिरेमनः २५ तद्वीक्ष्यतानुपव्रज्यवसुदेवोमहायशाः ॥ प्रणम्यचोपसंगृह्यबभाषेदंसुयंत्रितः २६ वसुदेवउवाच ॥ नमोवःसर्वदेवेभ्यऋषयःश्रोतुमर्हथ ॥ कर्मणाकर्मनिर्हारोयथास्यान्नस्तदुच्यताम् २७ नारदउवाच ॥ नातिचित्रमिदंविप्रावसुदेवोबुभुत्सया ॥ कृष्णंमत्वार्भकंयन्नःपृच्छतिश्रेयआत्मनः २८ सन्निकर्षोहिमर्त्यानामनादरणकारणम् ॥ गांगंहित्वायथान्योऽम्भस्तत्रत्योयातिशुद्धये २९ यस्यानुभूतिःकालेनलयोत्पत्त्यादिनास्यवै ॥ स्वतोन्यस्माच्चगुणतोनकुतश्चनरिष्यति ३० तंक्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ॥ प्राणादिभिःस्वविषयैरुपगूढमज्ञोमेनेससूर्यमिवमेघहिमोपरागैः ३१

मूलच्छेदः १७ आत्मनःस्वस्यश्रेयःशिवंनःपृच्छतीतियत्तदिदंनातिचित्रंमर्त्यस्वभावादितिशेषः २८ कोयंमर्त्यस्वभावइतितत्राह सन्निकर्षइति तत्रगंगातीरेस्थितोन्यःपृथग्जनःबालिशः शुद्धंयद्गांगंगंगासंबंधिजलंहित्वाऽन्यांभःतटाकादिस्थंजलंयथायातितथायंविचारइत्यर्थः २९ यस्यानुभूतिःस्वरूपचैतन्यं कालेनास्यजगतोलयोत्पत्त्यादिनातदंतःपातित्वेनस्वतःस्वनिमित्तेनान्यस्मात्सत्वादिगुणाच्चकुतश्चनान्यतोऽधर्मतोनरिष्यतिनहिंसितंननष्टंस्यात् रिषहिंसायामितिधातुः ३० अज्ञःअज्ञानिवद्वसुदेवःस्वविषयैःस्वेनगृह्यमाणैःप्राणादिभिरिंद्रियादिभिःप्राकृतैर्गूढंमेनइत्यन्वयः क्लेशैरविद्यास्मितरागद्वेषाभिनिवेशैः कर्मपरिपाकैः पुण्यापुण्यफलैस्त्याज्यानुभोगैः परितापेतिपाठेआध्यात्मिकाभिधेयैर्विकारैः भौतिकैर्गुणप्रवाहैः सृष्ट्यादिभिरव्याहतोऽनभिभूतोनुभव. अनुभावोमाहात्म्यंयस्यसतथातं अत्रहेतुगर्भविशेषणद्वयमाह ईश्वरमद्वितीयमिति उपरागोराहुणामेघादिभिराच्छन्नप्रकाशरूपंसूर्यमप्रकाशंमन्यतेयथातथेति ३१

प्रश्नप्रतिवचनमकृत्वार्पत्किंचित्कथनंकिंकेनसंगतमितिमंदाशंकांपरिहर्तुमाह अथेति ३२ साधुभिः विद्वद्भिर्निरूपितः ३३ कर्मणाकर्मनिर्वापणंपंकांभसापंकप्रक्षालनमिवानुपपन्नमित्याशंक्यब्रह्मार्पणबुद्ध्यानुष्ठितंसत्समर्थंभवति चिकित्सितद्रव्यमिवेत्याशयेनाह चित्तस्येति कविभिःशमोपनिष्ठताबुद्धेरितिशास्त्रचक्षुषायश्चित्तस्योपशमोभगवदेकनिष्ठालक्षणोदर्शितः सुगमोयोगउपायश्चित्तक्लेशलक्षणः आत्मनः परमात्मनोमुदावहः संतोषजनकोधर्मश्चाहिंसालक्षणः कर्मनिर्वापणसाधनं ३४ उक्तंनिगमयति अयमिति अयंब्रह्मार्पणबुद्ध्यानुष्ठितः स्वस्तिमंगलस्यनिष्पापस्यमोक्षस्यवाऽयनमाश्रयः द्विजातेस्त्रैवर्णिकस्यगृहमेधिनः गृहस्थस्य आप्रवित्तेनन्यायार्जितधनेनशुक्लेननिर्मलेन ३५ इदानीशुद्धांतःकरणस्यसंन्यासप्रकारानिरूपयति वित्तैषणामिति बुधः संसारस्यासारतांविद्वान्यज्ञदानैरनुष्ठितैर्वित्तैषणांवित्तेच्छांविसृजेदितिसर्वत्रयोज्यं गृहैर्गृहस्थाश्रमैःसहदारसुतैषणां आत्मनइहामुत्रलोके धीरास्त्यागशक्तिमंतःग्रामेग्राम्यविषयेत्यक्तैषणाइत्येनेनब्रह्मचारिणामपिसंन्यासंसूचयतियदहरेवविरजेत्तदहरेवप्रव्रजेदितिविधिः ३६ तत्रातिशयितवैराग्याभावेएवंविधस्यसन्यासानाधिकारइतिस्मार्तपक्षमाहुः ऋणैरिति त्रिभिर्ऋणैर्युक्तोजातः तानृणविशेषाननिस्तीर्यगृहादित्यजन्नधःपतेत्

अथोचुर्मुनयोराजन्नाभाष्याऽनकदुंदुभिम् ॥ सर्वेषांशृण्वतांराज्ञांतथैवाच्युतरामयोः ३२ कर्मणाकर्मनिर्हारएषसाधुनिरूपितः ॥ यच्छ्रद्धयायजेद्विष्णुंसर्वयज्ञेश्वरंमखैः ३३ चित्तस्योपशमोयोवैकविभिःशास्त्रचक्षुषा ॥ दर्शितःसुगमोयोगोधर्मश्चात्ममुदावहः ३४ अयंस्वस्त्ययनःपंथाद्विजातेर्गृहमेधिनः ॥ यच्छ्रद्धयाप्तवित्तेनशुक्लेनेज्येतपूरुषम् ३५ वित्तैषणांयज्ञदानैर्गृहैर्दारसुतैषणाम् ॥ आत्मलोकैषणामेवंकालेनविसृजेद्बुधः ॥ ग्रामेत्यक्तैषणाःसर्वेययुर्धीरास्तपोवनम् ३६ ऋणैस्त्रिभिर्द्विजोजातोदेवर्षिपितॄणांप्रभो ॥ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्यत्यजन्पतेत् ३७ ब्रह्मचर्यसुताभ्यांवैऋषिपित्रोर्महामते ॥ यज्ञैर्देवर्णमुन्मुच्यनिर्ऋणोशरणोभवेत् ३८ वसुदेवभवान्नूनंभक्त्यापरमयाहरिम् ॥ जगतामीश्वरंभेजेसयद्वांपुत्रतांगतः ३९ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ श्रीशुकउवाच ॥ इतितद्वचनंश्रुत्वावसुदेवोमहामनाः ॥ तानृषीनृत्विजोवव्रेमूर्ध्नानम्योपसृत्यच १ तएवमृषयोराजन्वृताधर्मेणधार्मिकम् ॥ तस्मिन्नयाजयन्क्षेत्रेमखैरुत्तमकल्पकैः २ तद्दीक्षायांप्रवृत्तायांवृष्णयःपुष्करस्रजः ॥ स्नाताःसुवाससोराजन्राजानःसुष्ठ्वलंकृताः ३ तन्महिष्यश्चमुदितानिष्ककंठ्यःसुवाससः ॥ दीक्षाशालामुपाजग्मुरालिप्तावस्तुपाणयः ४ नेदुर्मृदंगपटहशंखभेर्यानकादयः ॥ ननृतुर्नटनर्तक्यस्तुष्टुवुस्तत्रमागधाः ५ जगुःसुकंठ्योगंधर्व्यःसुगीतंसहभर्तृकाः ॥ तमभ्यषिंचन्विधिवदक्तमभ्यग्रमृत्विजः ६

ऋणबीजभर्जनवैराग्याग्न्यभावादितिशेषः ३७ तत्रऋणनिवारणप्रकारमाह ब्रह्मचर्येति अनेनवेदाध्ययनंसूचयति अशरणः गृहरहितः ३८ कर्मनिर्हारणप्रश्नस्यप्रतिवचनमुक्त्वाजनसंग्रहणायेदंत्वयापृष्टमस्माभिरितितदनुस्मृत्यप्रोक्तं भवतस्तज्जन्मांतरानुष्ठानशुद्धस्यनेदानींकर्तव्यमस्तीतिममत्वंध्वनयंतः संबोधयंति वसुदेवेति नूनंनिश्चयः यद्यस्मात्भेजइत्यनेनालिटानद्यतनेनपरोक्षवाचिना बहूनिपुरातनानिहरिभक्तिनिमित्तानिजन्मानिसूचितानि बहूनांजन्मनामंतेज्ञानवान्मांप्रपद्यतइतिस्वोक्तेः ३९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेवि०टीकायांद्विसप्ततितमोऽध्यायः ॥ ७२ ॥
१ धर्मेणकल्पोक्तेनविधिना उत्तमकल्पकैः राजसूयसमैः ईषदसमाप्तोकल्पब्देश्यदेशीयरइतिसूत्रात् २ दीक्षास्याद्व्रतसंग्रहइति पुष्करस्रजः कमलबीजमालाऽवलंबिकंठाः ३ आलिप्ताश्चंदनेनेतिशेषः हिरण्यादिवस्तुपाणयः हिरण्यंरजतंवापिगृहीत्वाक्रमुकंफलं शालांविशेयुर्वपत्नीःशपेयुस्तन्वधालुराइतिवचनात् ४ ५ अव्यग्रमव्याकुलं ६

७ होतापोतानेष्टाप्रशास्ताअध्वर्युराग्नीध्रोमैत्रावरुणइत्येवमाद्योक्तऋत्विजःषोडश दीक्षितस्त्वेक इतिसप्तदश सदस्येनवासह वृत्रहण इंद्रस्ययज्ञे ८ जीवात्मामीशौस्वरूपभूताभिर्विभूतिभिः मूर्तिमतीभिः अणिमामहिमागरिमालघिमाप्राप्तिरेवच ईशित्वंचवशित्वंचतथाप्राकाम्यमेवचेतिसमाख्याताभिःनानाविधचेतनराशिसमुदायेनतत्तद्योग्यतानुसारेणसभाजनसमये ऽऽक्षिताभिः ९ द्रव्यज्ञानोपपदयोः क्रिययोर्यज्ञलक्षणयोःईश्वरं द्रव्यपज्ञदानयज्ञयोःस्वामिनमित्यर्थःकथमीजइतितत्राह अनुयज्ञेति अनुशब्दोवीप्सावचनःतंतंयज्ञमनु विधिनाकल्पोक्तप्रकारेणअग्निहोत्रादिलक्षणैःअग्निहोत्रेष्ट्यादिचिह्नैः प्राकृतैर्यज्ञैःप्रकृतिक्रतुभिःवैकृतैर्यज्ञैःसौत्रामण्यादिभिरुत्तरक्रतुभिः १० यथाम्नातंयथाकथितं महातिधनानियासांतास्तथा ११ पत्नीसंयाजःपत्नीभिःक्रियमाणः काश्यनदेवताउद्दिश्ययजनं अवभृथःसमाप्तिःकर्मस्थानंउभयत्रेष्टिविशेषाश्चभवंति तैश्चरित्वाताश्चकृत्वेत्यर्थः १२ पूजयदपूजयत् स्त्रियःस्त्रीभ्यः १३ पारिबर्हेणपूजाद्रव्येणविदर्भादींश्चापू

पत्नीभिरष्टादशभिःसोमराजमिवोडुभिः ॥ ताभिर्दुकूलवलयहारनूपुरकुंडलैः ॥ स्वलंकृताभिर्विबभौदीक्षितोजनसंवृतः ७ तस्यर्त्विजोमहाराजनूत्नकौशेयवाससः ॥ सप्तदशविरेजुस्तेयथावृत्रहणोऽध्वरे ८ तदारामश्चकृष्णश्चस्वैःस्वैर्बंधुभिरन्वितौ ॥ रेजतुःस्वसुतैर्दारैर्जीवेशौस्वविभूतिभिः ९ ईजेऽनुयज्ञंविधिनाअग्निहोत्रादिलक्षणैः ॥ प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् १० अथर्त्विग्भ्योऽददात्कालेयथाम्नातंसुदक्षिणाः ॥ स्वलंकृतेभ्योलंकृत्यगोभूकन्यामहाधनाः ११ पत्नीसंयाजावभृथ्यैश्चरित्वाथमहर्षयः ॥ सस्नूरामह्रदेविप्रायजमानपुरःसराः १२ स्नातोलंकारवासांसिबंदिभ्योदात्तथास्त्रियः ॥ ततःस्वलंकृतान्वर्णानाश्वभ्योन्नेनपूजयत् १३ बंधून्सदारान्ससुतान्पारिबर्हेणभूयसा ॥ विदर्भकोशलकुरूनकाशिकेकयसृंजयान् १४ सदस्यर्त्विक्सुरगणान्नृभूतसूतचारणाः ॥ श्रीनिकेतमनुप्राप्यशंसंतःप्रययुःक्रतुम् १५ धृतराष्ट्रोनुजोद्रोणोभीष्मोद्रौणिःकृपस्तथा ॥ नारदोभगवान्व्यासः सुहृत्संबंधिबांधवाः १६ बंधून्परिष्वज्ययदून्सौहृदाक्लिन्नचेतसः ॥ ययुर्विरहकृच्छ्रेणस्वदेशांश्चापरेजनाः १७ नंदस्तुसहगोपालैर्महत्यापूजयार्चितः ॥ कृष्णरामोग्रसेनाद्यैर्न्यवसद्बंधुवत्सलः १८ वसुदेवोंजसोत्तीर्यमनोरथमहार्णवम् ॥ सुहृद्वृतःप्रीतमनाइदमाहकरेस्पृशन् १९ वसुदेवउवाच ॥ भ्रातरीशकृतःपाशोनृणांयःस्नेहसंज्ञितः ॥ तंदुस्त्यजमहंमन्येसुराणामपियोगिनाम् २० अस्मास्वप्रतिकल्पोयंयत्कृतंज्ञानसत्तमैः ॥ मैत्र्यर्पिताफलावापिननिवर्तेतकर्हिचित् २१ प्रागकल्पास्तुकुशलंभ्रातर्वोनाचरेमहि ॥ अधुनाश्रीमदांधाक्षानपश्यामपुरःसतः २२ माराज्यश्रीरभूत्पुंसःश्रेयस्कामस्यमानद ॥ स्वजनानुतबंधून्वानपश्यतिययांधदृक् २३ एवंसौहृदशैथिल्यचित्तआनकदुंदुभिः ॥ रुरोदतत्कृतांमैत्रींस्मरन्नश्रुविलोचनः २४

जयादितिशेषः १४ सदस्यर्त्विगादयःप्रययुरित्यन्वयः १५ अनुजोविदुरः १६ १७ १८ १९ २० युष्माभिर्ज्ञानेनसत्तमैरस्मासुयत्कृतंसोयंस्नेहपाशोऽप्रतिकल्पः असदृशः याचास्माभिर्युष्मास्वर्पितामैत्रीअफलावापिनिष्फलावापिकर्हिचिदपिननिवर्तेतनिवृत्त्यास्मत्तइतिशेषः २१ एतदेवविवृणोति प्रागिति हेभ्रातःप्राग्वःकुशलंनाचरेमहि कुतः अकल्पा असमर्थाः कंसेनोपद्रुतत्वात् अधुनाश्रीमदांधाक्षाःवयंपुरःसतःपुरःस्थितानपश्यामइतियदतइतिशेषः २२ ययाराज्यश्रिया २३ सौहृदेनस्नेहेनशैथिल्यंशिथिलस्वभावंप्राप्तंचित्तंयस्यसतथा २४

२५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ सुखंगुणोपसंहारार्थंसम्यक्त्वविज्ञानेहरेर्भक्तिवि धानंसुगकमितिपुनरपिहरेर्माहात्म्यंनिगद्यतेऽस्मिन्नध्याये तदर्थंवसुदेवःकृष्णरामौसंबोध्यवक्ति अथेति १ पुत्रयोःकृष्णरामयोःधाम्नस्तेजसः माहात्म्यलक्षणस्यपूर्वकंवदतांमुनीनांवचःश्रुत्वातयो र्वीर्यैर्माहात्म्येजातविश्रंभः पुनरंकुरितविश्वासः २ अहंवांप्रधानपुरुषौजानेवांयथाऽस्यविश्वस्यसकाशात्परौविलक्षणत्वेनोत्तमौभवतस्तथेति यद्वास्यजगतस्तत्त्वंजाने ३ तत्कथमितितत्राह यत्रेति यत्रयस्मिंस्तिष्ठति यस्मिन्निदमितिश्रुतिः येनजातानिजीवंतीतिश्रुतिः यतोवाइमानिभूतानिइतियस्यब्रह्मक्षत्रंचोभेभवतओदन मृत्युर्यस्योपसेचनमितिकाठकाः यस्माइदंक्रियतइति सच्चत्यच्चाभव दिति यथास्थितंयदाकालेइदंस्यात् तथातदाऽस्मात् ब्रह्मैवेदंविश्वमितिश्रुतिः इदंजगत्साक्षात्स्पष्टानिर्विचारंप्रधानपुरुषेश्वरशब्दवाच्योभगवानेवस्यात्तत्सत्तायाअपितदधीनत्वात् यद्वा य

नंदस्तुसख्युःप्रियकृत्प्रेम्णागोविंदरामयोः ॥ अद्यश्वइतिमासांस्त्रीन्यदुभिर्मानितोवसत् २५ ततःकामैःपूर्यमाणःसव्रजःसहबांधवः ॥ परार्ध्याभ रणक्षौमनानानर्घ्यपरिच्छदैः २६ वसुदेवोग्रसेनाभ्यांकृष्णार्जुनबलादिभिः ॥ आदायपारिबर्हंतंयापितोयदुभिर्ययौ २७ तदागोप्यश्चगोपाश्चगो विंदचरणांबुजे ॥ मनःक्षिप्तंपुनर्हर्तुमनीशामथुरांययुः २८ द्रोणोभीष्मोंगराजश्चबाह्लीकाविदुरादयः ॥ सपुत्रोधृतराष्ट्रश्चजग्मुःस्वंस्वंनिकेतनम् २९ अ न्येचसर्वराजानोदेवयात्रार्थमागताः ॥ गतेमासत्रयेभूयःस्वानेवविषयान्ययुः ३० पांडवाश्चमहात्मानःपृथाचनृपसत्तम ॥ अनुज्ञाताःकेशवेनबाष्पगद्गद् भाषिणः ३१ शक्रप्रस्थंययुःसर्वेस्वजनैःपरिवारिताः ॥ बंधुषुप्रतियातेषुवृष्णयःकृष्णदेवताः ३२ परिवार्यहृषीकेशंययुर्द्वारवतींपुरीम् ३३ ॥ इतिश्रीभागवते महापुराणेदशमस्कंधेउत्तरार्धेत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ श्रीशुकउवाच ॥ अथैकदात्मजौप्राप्तौकृतपादाभिवंदनौ ॥ वसुदेवोभिनंद्याहप्रीत्यासंकर्षणा च्युतौ १ मुनीनांवदतांश्रुत्वापुत्रयोर्धामसूचकम् ॥ तद्वीर्यजातविश्रंभःपरिष्वज्याभ्यभाषत २ कृष्णकृष्णमहायोगिन्संकर्षणसनातन ॥ जानेवामस्यय त्साक्षात्प्रधानपुरुषौपरौ ३ यत्रयेनयतोयस्ययस्मैयद्यद्यथायदा ॥ स्यादिदंभगवान्साक्षात्प्रधानपुरुषेश्वरः ४ एतन्नानाविधंविश्वमात्मसृष्टमधोक्षज ॥ आत्मनानुप्रविश्यात्मन्प्राणान्जीवोबिभर्ष्यजः ५ प्राणादीनांविश्वसृजांशक्तयोयाःपरस्यताः ॥ पारतंत्र्याद्वैसादृश्याद्द्वयोःश्चेष्टैवचेष्टितम् ६ कांतिस्तेजः प्रभासत्ताचंद्राग्न्यर्कक्षविद्युताम् ॥ यत्स्थैर्यंभूभृतांभूमेर्वृत्तिर्गंधोऽर्थतोभवान् ७

त्रयस्मिन्नधिष्ठानेयेनसाधनेनयतोमृदःयस्यसंबंधेनयस्मैदेवदत्तायपद्वस्तुयथाप्रकारेणयदायस्मिन्काले ४ तदिदंकथितमेवस्पष्टत्वाय कथयति एतदिति आत्मनात्वयासृष्टंआत्मनाअनुपहतस्वरूपेणआ त्मन्नात्मनिप्राणानिंद्रियाणिजीवोजीवनप्रदः ५ प्राणादीनांमुख्यप्राणादीनांयाःशक्तयस्ताःपरस्यहरेर्विद्यमानाः तत्रहेतुः पारतंत्र्येति वैसादृश्याद्वैलक्षण्यात् तदुपपादयति द्वयोरिति द्वयोर्जीवे शयोःश्रेष्ठेअतिशयेनोत्तमेहरौचेष्टितंयस्मात्तस्मादित्यर्थः यथावायोःशक्त्यातृणपर्णादीनांचालनंयथावायुरूपस्पर्शत्वाशरादीनांवेगवती गतिस्तथाप्रकृतेइतिभावः ६ पदार्थगुणानांतदधीनत्वमाह कांतिरित्यादिना चंद्राग्न्यर्कर्क्षाणांसविद्युतांखद्योतादीनांमध्येचंद्रस्ययाकांतिः अग्नेर्यत्तेजः सूर्यस्ययाप्रभा विद्युदादीनांयासत्ता भूभृतांयत्स्थैर्यं भूमेर्यावृत्तिः सस्यादीनांजीवनत्वं योगंधोगुणस्तत्सर्व मर्थतोभिधेयत्वंपद्भवानान्यः ७

क्रियायांयत्तर्पणं तृप्तिः प्राणनंचेष्टा द्रवत्वैस्यंदनं ताआपश्च तासांरसो गुणश्च वायोःयेओजआदयः तेसर्वेत्वधीनप्रवृत्तिनिमित्ताःओजोवष्टंभः सहोमर्षणं बलंशक्तिःचेष्टास्पंदनम् गतिःसर्पणम् ८ यो दिशामवकाशः सत्वंयश्चस्फोटोव्योमनिआश्रयःसत्वं निर्दोषःशब्दआगमइतिवचनात् वर्णक्रमलक्षणोर्थव्यंजकःशब्दस्त्वं किंच स्फोटोवेणुदारणादौजन्योध्वनिराश्रयःशंखादिजन्यस्त्वमित्यर्थः अव स्वरातिगगरइतिश्रुतेः आकृतीनांब्रह्मादिप्राणिनांदेवानांयाःपृथकृतीःपृथक्क्रियाः अनिमेषादिलक्षणास्ताश्चत्वदधीनाः ९ इंद्रियाणामिंद्रियमिंद्रवणंतदनुग्राहकादेवाःसूर्यादयश्चत्वंबुद्धेरवबोधोज्ञान जननशक्तिःजीवस्यसत्यनुस्मृतिःस्मरणशक्तिश्चभवान् १० पंचभूतानांकारणंभूतादिस्तामसाहंकारः चक्षुरादींद्रियाणांकारणंतैजसाहंकारः विकल्पानांजरादिशून्यत्वेनपरमात्मव्यपदेशानांविविधाःक ल्पाःव्यापाःयेषांतेषांवादेवानांकारणंवैकारिकाहंकारः संकल्पविकल्पानांमनोवृत्तीनांवा अनुशायिनांजीवानांकारणंप्रधानंप्रकृतिस्त्वंमहदादीनांवा ११ सर्वभावानामादिस्त्वामितिनिरूप्याधुनांतका लावस्थायित्वंचतवेतिसमर्थयते नश्वरेष्विति इहनश्वरेषुनाशशीलेषुभावेषुपदार्थेषुयोऽनश्वरःअविनाशीभावस्तद्द्रव्यंत्वमसि सूक्ष्मार्थत्वान्निदर्शनेनावगमयति तथाहि द्रव्यंप्रधानंत द्विकारेषुपृथिव्यादिषुपदार्थेषुप्रलयेनश्वरेषुद्रव्यमात्रंकेवलंस्वरूपभूतंप्रधानमेवनिरूपितं तत्त्वज्ञैरितिशेषःयद्वा द्रव्यंपरमाणुतत्संयुक्तेषुघटादिपदार्थेषुनश्वरंद्रव्यमात्रंपरमाणुमात्रंनिरूपितम् परमाणुत्व वादिभिरितिशेषः १२ नन्वेवंतर्हिप्रधानादेर्नित्यत्वेनपरमात्मानियतत्वमायातमितितत्राह सत्वमिति इतिशब्दोहेत्वर्थः जगदुत्पत्त्यादिहेतवःसत्वादयोगुणायेयाश्चतेषांगुणानांवृत्तयोव्यापाराःते

तर्पणंप्राणनंचापांद्रवत्वंताश्चतद्रसः ॥ ओजःसहोबलंचेष्टागतिर्वायोस्तवेश्वर ८ दिशांत्वमवकाशोसिशब्दस्त्वंस्फोटआश्रयः ॥ नादोवर्णस्त्वमोंकार आकृतीनांपृथक्कृतीः ९ इंद्रियंत्विंद्रियाणांत्वंदेवाश्चतदनुग्रहाः ॥ अवबोधोभवान्बुद्धेर्जीवस्यानुस्मृतिःसती १० भूतानामसिभूतादिरिंद्रियाणांचतै जसम् ॥ वैकारिकंविकल्पानांप्रधानमनुशायिनाम् ११ नश्वरेष्विहभावेषुतदसित्वमनश्वरः ॥ यथाद्रव्यविकारेषुद्रव्यमात्रंनिरूपितम् १२ सत्त्वंरज स्तमइतिगुणास्तद्वृत्तयश्चयाः ॥ त्वय्यद्धाब्रह्मणिपरेकल्पितायोगमायया १३ तस्मान्नसंत्यमीभावायर्हित्वय्यविकल्पिताः ॥ त्वंचामीषुविकारेषुसन्स दाव्यावहारिकः १४ गुणप्रवाहएतस्मिन्नबुद्धास्त्वखिलात्मनः ॥ गतिंसूक्ष्मामबोधेनसंसरंतीहकर्मभिः १५

ताश्चपरेब्रह्मणितद्वृत्त्याप्तेतदव्याप्तेचदेशेव्याप्तेत्वयिअद्धाअनिर्वचनीयत्वेनकल्पिताःसमर्थिताः एतस्मिन्खल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेत्यादिवेदांतवाक्यैः सत्वादिगुणानांप्रधानस्वरूपत्वेनतेषां तदाधारत्वकथनेप्रधानस्यतदाश्रयत्वंकिमुवक्तव्यमिति परमाणुपक्षेशुक्लवर्णेनसत्वेनाप्याःरजसापार्थिवाः सतमसावरकेणवायवीयाःपरमाणवोलक्ष्यंते इतिशब्देनादित्ववाचिनातैजसालक्षिताइति चतुर्विधागुणास्तंतुस्थानीयाःपरमाणवोयास्तद्वृत्तयःसंयोगलक्षणास्त्वयिकल्पिताःत्वत्प्रेरितत्वेनकार्यकरणक्षमत्वेनसमर्थिताइत्यर्थः किमनेननियमेनेत्यतउक्तं योगमाययेति योगमाययास्वसमवेते च्छया १३ व्यतिरेकंदर्शयति तस्मादिति यर्हियदाअमीभावास्त्वय्यविकल्पिताःत्वदाधारत्वेनानिरूपिताःतदातस्मादनाधारतयानसंति स्वरूपतएवनश्यंति तस्मात्तत्सत्तापित्वदधीनेत्यर्थः ए तदेवविशदयति त्वंचेति अमीषुविकारेषुविविधप्रकारेषुपदार्थेषुत्वंचत्वमेवसन्सद्भावंकुर्वन्सदाव्यावहारिकःहानादिव्यवहारनिर्वाहकःनान्यइत्यर्थः १४ नन्वेवंतर्हिकस्मादेतस्यसंसारइतितत्राह गुणेति एतस्मिन्गुणप्रवाहेसंसारेअखिलात्मनः अखंडस्वामिनःतवसूक्ष्मामतींद्रियांगतिं स्थितिं सर्वव्यापीसर्वनियामकइत्यादिलक्षणामबुद्धाऽज्ञात्वातेनाबोधेनाज्ञानेनइहकर्मभिः संसरंतीत्यन्वयः तत्त्वाज्ञानात्संसारइतिभावः १५

ननुभवतुमनुष्यत्वलाभात्ज्ञानंसुलभंतस्मान्मोक्षोपिस्यादित्याशंक्यसर्वंचत्वत्प्रसादमंतरेणदुर्लभमित्याह यदृच्छयेति यदृच्छयाभगवदिच्छया तत्रोद्बुद्धचारब्धपुण्यकर्मणा नृतांमनुष्यत्वंप्राप्यइहमनुष्यश
रीरेत्वन्माययास्वार्थेप्रमत्तस्यममवयोगतम् वृथेतिशेषः अतःसुकल्पंक्षमंफलप्रदंज्ञानंदुर्लभमभूदितिशेषः नितरांममत्वंत्वन्मायया १६ स्वार्थप्रमादःकीदृशइतितत्राह असाविति असौदेहोहमस्यदेहस्यान्व
यादिषुइंद्रियकलत्रादिषुममैवेतेसंतइतिसुदृढैर्ममत्वेनबध्नाति नकेवलंमामेव किंतुसर्वमिति भावेनोक्तंसर्वमिति १७ त्वदनुग्रहान्ममकिंचित्ज्ञानमुत्पन्नमितिभावेनाह युवामिति प्रधानपुरुषेश्वरौप्रकृतिजी
वेश्वरौ १८ अतःकिंतत्राह तत्तइति इंद्रियलालसेनइंद्रियाणांशब्दविषयभोगेच्छयामर्त्येमृत्युशिरस्केदेहेआत्मदृक्अहमितिदर्शनम् यत्परेपरमात्मनित्वयिअपत्यबुद्धिः पुत्रत्वज्ञानम् १९ सूतीगृह
इति अजःशुक्रशोणितसंपर्कजन्यशरीररहितः भवान्सूतीगृहेअरिष्टेअहंयज्ञोविष्णुरितिनौजगाद नन्वितियत्तस्मादनुयुगंनिजक्षमधर्मरक्षायैनानातनूःसुरनरादिनानाविधशरीराणिविदधत्कुर्वन्त्वंपु
नःरक्षावसानेतास्तनूःजहासितिरोदधासि कथंदधातीत्यतउक्तम् गगनवदिति यथायुगयुग्मंकार्यकारणद्वयात्मकपदार्थजातमनुअणुबृहदनुकूलत्वेननानाभवति पुनस्तद्गगनंतत्पदार्थजातस्य
कारणावशेषेस्वयमेवैकमेवभवतितथेत्यर्थः हेउरुगायभूम्नःपूर्णानंदस्यतवविभूतीनांमायामाहात्म्यंकोवेद वेदचेत्ब्रह्मैववेतिवायुवानान्यःअनेनगगनादस्याविशेषोदर्शितः २० ब्रह्माद्यन्यतममंत

यदृच्छयानृतांप्राप्यसुकल्पामिहदुर्लभम् ॥ स्वार्थेप्रमत्तस्यवयोगतंत्वन्माययेश्वर १६ असावहंममैवैतेदेहेवास्यान्वयादिषु ॥ स्नेहपाशैर्निबध्नातिभवान्सर्वमिदंजगत् १७ युवांननःसुतौसाक्षात्प्रधानपुरुषेश्वरौ ॥ भूभारदैत्यक्षपणेअवतीर्णौतथात्थिह १८ तत्तेगतोस्म्यरणमद्यपदारविंदमापन्नसंसृतिभयापहमार्तबंधो ॥ एतावतालमलमिंद्रियलालसेनमर्त्यात्मदृक्त्वयिपरेयदपत्यबुद्धिः १९ सूतीगृहेननुजगादभवानजोनौसंजज्ञइत्यनुयुगंनिजधर्मगुप्त्यै ॥ नानातनूर्गगनवद्विदधज्जहासिकोवेदभूम्नउरुगायविभूतिमायाम् २० श्रीशुकउवाच ॥ आकर्ण्येत्थंपितुर्वाक्यंभगवान्सात्वतर्षभः ॥ प्रत्याहप्रश्रयानम्रःप्रहसन्श्लक्ष्णयागिरा २१ वचोवःसमवेतार्थंतातैतदुपमन्महे ॥ यन्नःपुत्रान्समुद्दिश्यतत्त्वग्रामउदाहृतः २२ अहंयूयमसावार्यइमेचद्वारकौकसः ॥ सर्वेप्येवंयदुश्रेष्ठविमृश्यंसचराचरम् २३ आत्माह्येकःस्वयंज्योतिर्नित्योन्योनिर्गुणोगुणैः ॥ आत्मसृष्टैस्तत्कृतेषुभूतेषुबहुधेयते २४ खंवायुर्ज्योतिरापोभूस्तत्कृतेषुयथाशयम् ॥ आविस्तिरोल्पभूर्येकोनानात्वंयात्यसावपि २५

रेणप्रत्यक्षंभगवतासल्लापःकस्यसुलभोऽतोवसुदेवस्यभाग्यमतिविचित्रमितिभावेनकृष्णस्यप्रतिवचनप्रकारंकथयति आकर्ण्येत्यादिना २१ समवेतार्थंश्रुतिस्मृत्युपपन्नार्थं प्रसिद्धार्थंवा २२
युष्मदादिविश्वमहमेवमदधीनमेवनान्याधीनम् सर्वंखल्विदंब्रह्मेतिश्रुतिसिद्धम् २३ मत्समोनास्तीत्याह एकइति केवलःद्वितीयवर्जितःत्वंवाकइत्यतउक्तम् आत्मेति आत्मशब्देनकिंदेहउच्य
तइत्यतःस्वयंज्योतिर्नित्यइति अनेनविशेषणद्वयेनजीवोपिव्यावृत्तः तस्यनित्यानभिभूतस्यस्वयंज्योतिष्ट्वाभावाद्धरेस्तद्भावात् ब्रह्मवेदाहंब्रह्मास्मीतिश्रुतेःबलमानंदओजश्चेतिवा अहमेवेत्युक्त्याऽभे
दःकिंनस्यादित्यतउक्तम् अन्यइति अहमस्मादन्योन्यविलक्षणः कुतःनिर्गुणःसत्वादिगुणनिमित्तवैपरीत्याभावात् अन्यस्यतद्भावात् कार्यतेह्यवशःकर्मसर्वःप्रकृतिजैर्गुणैरित्यादेः ननुतर्ह्यप्राप्त
निषेधःकस्मादिततत्राह इंद्रियपूर्णेषुभूतेषुप्राणिदेहेषुबहुधेयतेयथारुचिज्ञायते जनेनेतिशेषः यथात्मानिमित्तैर्गुणैःपंचभूतैःतैर्विरचितेषु शेषसमम् २४ एतदेवद्रढयति खंवायुरिति खा
दीनितत्कृतेषुवस्तुषुयथाशयंयथास्थानम् स्थितानिभवंति तथाअसौहरिरपिअल्पेष्वल्पत्वेनभूरिषुमहत्त्वेनाविस्तारः प्रकाशितातिरस्तारएकनानात्वंएकस्यानेकसंख्याविषयत्वंयातीत्यन्वयः अत्रा
यंभावः स्वसृष्टतत्तद्वस्तुनियमार्थंतत्तद्वस्तुपरिमाणभूतंगृह्णातीतिवाक्यिकाः २५

विनष्टंनामकुत्सितमाधिर्यस्यसविनष्टनामाधिः नामकुत्सनसंभाव्यप्रकाशेषुनिगद्यतइति २६ अथमंगलाचरितमारभ्यते सर्वदेवतापस्यांसान्निहिताःसातथा २७ समाश्राव्यसंबोध्य २८ २९ मेमत्तःसकाशात् कालेनविध्वस्तधर्मसेतूनाम् ३० भागोभजनंस्वीकारस्तेनगतिंशरणंगतास्मि ३१ पितृस्थानाद्यमलोकात् ३२ ३३ ३४ तथात्मनःस्वस्यसुतरामिष्टदैवम् ३५ तज्जलं पादावनिर्णिक्तजलंयस्यपादजलैराब्रह्मचतुर्मुखपर्यंतंजगत्पुनत्पुनातिशुध्यति छांदसोयंप्रयोगः आदित्यःसुपथाऽकरदित्यादिष्विव ३६ अमृतभक्षणंरसायनभोजनं अमृतंव्योम्निदेवान्नेयज्ञशेषेरसायने अयाचितेजलेजग्धौमोक्षणेहेम्निगोरसे क्लीबेनात्वमरेस्त्रीतुगुडूच्यांमघामिक्षयोरितियादवप्रकाश.इंद्रसेनोबालिः गोत्रंनाम्निकुलेऽचलेइति आत्मादेहेधृतौजीवेधैर्यइतिवाप्रेमविभिन्नयास्नेहप्रवृद्धयाधियाभग वत्पदांबुजंभ्रमन्शरणंगच्छन्प्रदक्षिणंकुर्वन्वा हाशुभमितिस्मरन् हाविषादशुभार्तिष्विति बभाषेतिसभ्रमाद्व्यत्ययः बभारेतिपाठे पादाबुजबभार गद्गदाक्षरंवचोजगादेतियोज्यम्

एवंभगवताराजन्वसुदेवउदाहृतम् ॥ श्रुत्वाविनष्टनामाधिस्तूष्णींप्रीतमनाअभूत् २६ अथतत्रकुरुश्रेष्ठंदेवकीसर्वदेवता ॥ श्रुत्वानीतंगुरोःपुत्रमात्मजाभ्यांशुचिस्मिता २७ कृष्णरामौसमाश्राव्यपुत्रान्कंसविहिंसितान् ॥ स्मरंतीकृपणाप्राहवैक्लव्यादश्रुलोचना २८ देवक्युवाच ॥ रामरामाप्रमेयात्मन्कृष्णयोगेश्वरेश्वर ॥ वेदाहंवांविश्वसृजामीश्वरावादिपूरुषौ २९ कालविध्वस्तसेतूनांराज्ञामुच्छास्त्रवर्तिनाम् ॥ भूमेर्भारायमाणानामवतीर्णौक्षयायमे ३० यस्यांशांशांशभागेनविश्वस्थित्युदयोलयः ॥ भवंतिकिलविश्वात्मंस्तंत्वाद्याहंगतिंगता ३१ चिरान्मृतसुतादानेगुरुणाकिलचोदितौ ॥ आनिन्यथुःपितृस्थानाद्गुरवेगुरुदक्षिणाम् ३२ तथामेकुरुतंकामंयुवांयोगेश्वरेश्वरौ ॥ भोजराजहतान्पुत्रान्कामयेद्रष्टुमाहृतान् ३३ श्रीशुकउवाच ॥ एवंसंचोदितौमात्रारामकृष्णौकुरूद्वह ॥ सुतलंसंविविशतुर्योगमायामुपाश्रितौ ३४ तस्मिन्प्रविष्टावुपलभ्यदैत्यराड्विश्वात्मदैवंसुतरांतथात्मनः ॥ तद्दर्शनाह्लादपरिप्लुताशयःसद्यःसमुत्थायननामसान्वयः ३५ तयोःसमानीयवरासनंमुदानिविष्टयोस्तत्रमहात्मनोस्तयोः ॥ दधारपादाववनिज्यतज्जलंसवृंदआब्रह्मपुनद्यदंबुभिः ३६ समर्हयामासमहाविभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ॥ स्रग्धूपदीपामृतभक्षणादिभिःस्वगोत्रवित्तात्मसमर्पणेनच ३७ सइंद्रसेनोभगवत्पदांबुजंभ्रमन्मुहुःप्रेमविभिन्नयाधिया ॥ बभाषहानंदजलाकुलेक्षणःप्रहृष्टरोमानृपगद्गदाक्षरम् ३८ बलिरुवाच ॥ नमोनंतायमहतेनमःकृष्णायवेधसे ॥ सांख्ययोगवितानायब्रह्मणेपरमात्मने ३९ दर्शनंवांहिभूतानांदुष्प्रापमतिदुर्लभम् ॥ रजस्तमःस्वभावानांयन्नःप्राप्तंयदृच्छया ४० दैत्यदानवगंधर्वासिद्धविद्याधरादयः ॥ यक्षरक्षःपिशाचाश्चभूतप्रमथनायकाः ४१

३७ ३८ वेधसेश्रमेणकर्त्रेसांख्ययोगयोर्ज्ञानकर्मणोर्वितानोविस्तारःयेनसतथातस्मै सांख्ययोगशास्त्रकारायवा दृष्टकपिलादिभ्योव्यावर्तनायाह ब्रह्मणइति नन्वमुनाव्यावृत्तिःकथमत्राह परमात्मनइति ३९ अव्यक्तस्वभावयोर्वयोर्दर्शनमनुग्रहसाध्यंनतुप्रयत्नसाध्यमितिभावेनाह दर्शनमिति वांदर्शनंभूतानादुष्प्रापं हियस्मात्तस्माद्रजस्तमःस्वभावानानोतिदुर्लभयद्युष्मद्दर्शनंप्राप्तंतद्यदृच्छयादेवयोर्युवयोरनुग्रहान्मुख्यीभूतयेच्छयेतिमन्यइतिशेषः ४० रजस्तमःस्वभावफलंप्रकटयन्तामसत्वंनामचूडारत्नंनिर्मलीकर्तुंदर्शनकृतमित्याशयेनाह दैत्येति येदैत्यदानवास्तेवयंच शास्त्रंवेदादिग्रंथएवशरीरंमतिर्यल्लक्षणयस्यास्तीतिशास्त्रशरीरीर्वास्वन् शास्त्रंग्रंथनिर्देशयोरिति विशुद्धसत्वधाम्निकेवलज्ञाननिधानेत्वयिनित्यनिबद्धवैराःअन्येराक्षसाश्चतादृशानिबद्धवैराइत्यतोनकोप्यस्मद्गुणोयुष्मद्दर्शनइतिशेषः ४१

४२ ननुनित्यागुसंघातलक्षणांतःकरणगुणेनाविर्भूतज्ञानगुणोस्तीतिमाशंकि यतःसुरादीनामपिनास्ति कुतोस्माकमितिभावेनाह केचनेति कचनचैद्यादयःउद्धद्धवैरेणकाचिदुद्धतवैरेणभक्ताःकेचनगो पीजनाःकामतोभक्ताःसन्निकृष्टाःसहवर्तमानाःसत्वसंरब्धाउद्रिक्तसत्वगुणाः प्राणात्ययेप्यनुज्झितयुष्मद्भक्तिनिश्चयाःसुरगंधर्वादयस्तथाऽनादिद्वेषसंरंभादिनाभक्तानभवंतिकिंपुनिश्चलभक्तारिधव. ४३ अपितथापितेयोगेशाःज्ञानोपायश्रेष्ठाःप्रायोबहुलंतवयोगमायांजगत्सृष्ट्याद्यनुसंहितस्वरूपमहात्म्यंनविदंति कथंइदमित्थमेवंभूतमितिनजानंतिवयंकुतोहेतोर्बुध्यामहइति ४४ अधुनास्वाशयंवि ज्ञापयति तन्नइति यतोयुष्मद्भक्तिज्ञानाभ्यामनुग्रहएवंप्रार्थनीयस्तत्तस्मान्नस्तथाप्रसीद कथं यथाएकउत्तमपुत्रादिस्नेहलक्षणसघरहितएव सत्वंश्रीनारायणएवसखायेषांतेतथातैर्युष्मद्भक्तैःसहच रामिवर्तमानोभवामि किंकृत्वागृहांधकूपान्निष्क्रम्यनिर्गतोभूत्वा कीदृशोहंशातःयुष्मन्निष्ठायुक्तः कथमत्राह निरपेक्षैःसन्यासिभिःविमृग्ययोरन्वेषणीययोर्युष्मत्पदारविंदयोःधिषणाधीर्यस्यसतथा धिषणांधिष्ण्यंगृहंवा, अस्तुनिवासस्थानंकिंजीवनमत्राह विश्वेति विश्वस्यपक्षपातित्वेनशरणयोरक्षित्रोरंघ्र्योःसेवयोपलब्धाप्राप्तावृत्तिर्जीविकायस्यसतथा ४५ सत्सेवनमपियुष्माच्छिक्षयै

विशुद्धसत्वधामन्यद्धात्वयिशास्त्रशरीरिणि ॥ नित्यंनिबद्धवैरास्तेवयंचान्येचतादृशाः ४२ केचनोद्वद्धवैरेणभक्ताःकेचनकामतः ॥ नतथासत्त्वसंरब्धाः संन्निकृष्टाःसुरादयः ४३ इदमित्थमितिप्रायस्तवयोगेश्वरेश्वर ॥ नविदंत्यपियोगेशायोगमायांकुतोवयम् ४४ तन्नःप्रसीदनिरपेक्षविमृग्ययुष्मत्पादारविंदधिषणःस्वगृहांधकूपात् ॥ निष्क्रम्यविश्वशरणांघ्र्युपलब्धवृत्तिःशांतोयथैकउतसर्वसखैश्चरामि ४५ शाध्यस्मानीशितव्येशनिष्कामान्कुरुनः प्रभो ॥ पुमान्यच्छ्रद्धयातिष्ठंश्चोदनायाविमुच्यते ॥ ४६ ॥ श्रीभगवानुवाच ॥ आसन्मरीचेःषट्पुत्राऊर्णायांप्रथमेंतरे ॥ देवलंजहसुर्वीक्ष्यसुतान्छ पितुमुद्यतम् ४७ तेनासुरीमगुर्योनिममुनावद्यकर्मणा ॥ हिरण्यकशिपोःशापात्पुत्रास्तेयोगमायया ४८ देवक्याजठरेजाताराजन्कंसविहिंसिताः ॥ सातान्शोचत्यात्मजान्स्वांस्तइमेध्यासतेंतिके ४९ इतएतान्प्रणेष्यामोमातृशोकापनुत्तये ॥ ततःशापविनिर्मुक्तालोकंयास्यंतिविज्वराः ५० स्मरोद्गीथः परिष्वंगःपतंगःक्षुद्रभृद्घृणी ॥ षडिमेमत्प्रसादेनपुनर्यास्यंतिमद्गतिम् ५१ इत्युक्त्वातान्समादायइंद्रसेनेनपूजितौ ॥ पुनर्द्वारावतीमेत्यमातुःपुत्रानयच्छताम् ५२ तान्दृष्ट्वाबालकान्देवीपुत्रस्नेहस्नुतस्तनी ॥ परिष्वज्यांकमारोप्यमूर्ध्न्यजिघ्रदभीक्ष्णशः ५३ अपाययत्स्तनंप्रीतासुतस्पर्शपरिस्नुतम् ॥ मोहितामाययाविष्णोर्यथासृष्टिःप्रवर्त्तते ५४ पीत्वामृतंपयस्तस्याःपीतशेषंगदाभृतः ॥ नारायणांगसंस्पर्शप्रतिलब्धात्मदर्शनाः ५५

वभाव्यमितिभावेनाह शाधीति यस्मिञ्छासनेश्रद्धयातिष्ठन्स्थिरःसन्चोदनायाविधिनिषेधलक्षणायाःसंसृतेर्विमुच्यते ४६ शाधीतिवाक्यंश्रुतवान्कृष्णस्त्वयाधुनेदंकर्तव्यमितिवक्तुमुपक्रमते आसन्नित्यादिना प्रथमेमनोरंतरेयेपुत्रास्तेकस्मिंश्चित्कालेसुतान्शापितुंशिक्षयितुंउद्यतंदेवलंवीक्ष्यजहसुः ४७ अमुनाअपहासलक्षणपापकर्मणानिमित्तेनदेवलेनासुरीयोनिमगुःआपुःकालनेमेः पुत्रत्वेनइतिशेषः तेकालनेमेर्जाताःपुत्राहिरण्यकशिपोःशापेनयोगमाययादेवक्याउदरेनीताःततोजाताःकंसेनविहिंसिताइत्यन्वयः ४८ सादेवकी अधुनाकुत्र आसतइत्यतआह तइमइति ४९ ततःकिमत्राह इतइति ५० अभिज्ञानार्थं तन्नामानिनिर्दिशति स्मरइत्यादिना मद्गतिमत्स्थानम् ५१ अयच्छतांदत्तवंतौ ५२ अजिघ्रदाघ्राणंकृतवती ५३ सुतानांस्पर्शेनपरिस्नुतंक्षरितंस्तनं[illegible] मा ययामहिम्ना ५४ अमृतमिवस्वादु तत्तुल्योपमं तस्याःदेवक्याःस्तनपयःगदाभृतःकृष्णस्यकृष्णेनपीतशेषं नारायणस्यांगस्पर्शेनप्रतिलब्धंआत्मदर्शनंआत्मज्ञानंयेषांतेतथा ५५

५६ कृष्णस्यसंसमीचीनांअबाधितांसुष्ठुचितानान्यस्येतिकृष्णसंसूचितांमायांमहिमानम् ५७ अनेनैंद्रजालंआतिदेशेनोपसंहरति एवमिति कृष्णेनसंसूचितेयंमाया अथापिबह्वचःसंवीत्यतोवोपसं हरतिएवमिति ५८ फलमाह यइतिअमृतवात्रिमलकीर्त्तेः जगतोघपापदुःखंवाभिनत्तीतिजगदघभित् भक्तानांसत्प्रशस्तंकर्णपूरंकर्णाभरणं तस्यहरेःक्षेमधाममोक्षलक्षणंस्थानंयाति ५९ इतिश्रीभागव तेम०दशमस्कंधेवि०टीकायांचतुःसप्ततितमोध्यायः ॥ ७४ ॥ प्रेक्षावतांभगवत्तत्वविज्ञानेऽधिकारइतिलक्षणवृत्त्यातन्माहात्म्यंकथयत्यस्मिन्नध्याये तत्रश्रुतभगवन्माहात्म्योराजाविशेषविवित्सयाशुकंपृच्छ तिसर्वासामिति किमत्रसंशयबीजमित्यतउक्तं गोविंदेत्यनेन १ सर्वासुप्रेमवान्मय्येवप्रेमवान्इत्युक्तममुना २ एकस्यांकिमतिप्रतीयतइतिप्रश्नावकाशोनास्तीतिभावेनपरिहरति महिषीणामिति ३ कथंप्रख्यातिरितितावक्तुमुपक्रमते कदाचिदिति तच्चरितं ४ स्वस्याःरुक्मिण्यास्तल्पेतोलिमेस्थितं ५ राजन्हरिचरितमतिचित्रमितिभावेनतत्स्वरूपलक्षणमाह यइति ६ यद्गृहंरुक्मिण्यैक्लृप्तंतस्मिन्नं

तेनमस्कृत्यगोविंदंदेवकींपितरंबलम् ॥ मिषतांसर्वभूतानांययुर्धामविहायसा५६तान्दृष्ट्वादेवकींदेवीमृतागमननिर्गमम् ॥ मेनेसुविस्मितामायांकृष्णसंसूचि तांनृप ५७ एवंविधान्यद्भुतानिकृष्णस्यपरमात्मनः ॥ वीर्याण्यनंतवीर्यस्यसंत्यनंतानिभारत ५८ सूतउवाच ॥ यइदमनुशृणोतिश्रावयेद्वामुरारेश्चरितम मृतकीर्तेर्वर्णितंव्याससुपुत्रैः ॥ जगदघभिदलंतद्भक्तसत्कर्णपूरंभगवतिकृतचित्तोयातितत्क्षेमधाम ५९ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेचतुः ॥ सप्ततितमोऽध्यायः ॥७४॥ राजोवाच ॥ सर्वासांमहिषीणांतुगोविंदासक्तचेतसाम् ॥ मय्येवप्रेमवान्विष्णुरितिनिश्चितचेतसाम् १ समःसर्वासुवाकृष्ण एकस्यांप्रेमवानुत ॥ तन्मेत्वंशंसतच्छ्रोतुंरतिरस्तिममप्रभो २ श्रीशुकउवाच ॥ महिषीणांतुसर्वासांप्रथमाभीष्मनंदना ॥ प्रेमवानधिकंतस्यामिति प्रख्यातिरूर्जिता ३ कदाचित्प्रेमकलहःकेशवेनतयासमम् ॥ कृतस्तच्छृणुकौरव्यकात्स्न्येनकथयामिते ४ कर्हिचित्सुखमासीनंस्वतल्पस्थंजगद्गुरुम् ॥ पतिंपर्यचरद्भैष्मीव्यजनेनसखीजनैः ५ यएतल्लीलयाविश्वंसृजत्यत्त्यवतीश्वरः ॥ सहिजातःस्वसेतूनांगोपीथाययदुष्वजः ६ तस्मिन्नंतर्गृहेभ्राजन्मु क्तादामविलंबिना ॥ विराजितेवितानेनदीपैर्मणिमयैरपि ७ मल्लिकादामभिर्दिव्यैर्द्विरेफकुलनादितैः ॥ जालरंध्रप्रविष्टैश्चगोभिश्चंद्रमसोरुणैः ८ पारिजा तवनामोदवायुनोद्यानशालिना ॥ धूपैरागरवैराजन्जालरंध्रविनिर्गतैः ९ पयःफेननिभेशुभ्रेपर्यंकेकशिपूत्तमे ॥ उपतस्थेसुखासीनंजगतामीश्वरंपतिम् १० वालव्यजनमादायरत्नदंडंसखीकरात् ॥ तेनवीजयतीदेवीउपासांचक्रईश्वरम् ११ सोपाच्युतंक्वणयतीमणिनूपुराभ्यांरेजेंगुलीयवलयव्यजनाग्रहस्ता ॥ वस्त्रांतगूढकुचकुंकुमशोणहारभासानितंबधृतयाचपरार्ध्यकांच्या १२

तर्गृहेपर्यंकेदंतविहितमंचेकशिपूत्तमेतालिमेमृदुवस्त्रप्रावरणास्तरणेसुखासीनंपतिमुपतस्थइत्यन्वयः मुक्तादाम्नांविलंबोस्यास्तीतिमुक्तादामविलंबितेन उपरिबद्धचित्रपटेनेत्यर्थः ७ अरुणैरित्यने नचंद्रोदयकालभवागावोलक्ष्यंते ८ पारिजातानांमंदाराणांवनस्यकाननस्यामोदेनयुक्तेनवायुनाशोभिते कीदृशेन उद्यानइवशालिनामनोहरेण पारिजातवनस्यसंभजनीयस्यसेव्यस्यामो दस्यसंबंधिनावायुनावा आगरवैरगुरुसंपृक्तैः ९ पयःफेननिभजलबुद्बुदवन्मसृणे १० किंकर्मैतिवत्राह वालव्यजनमिति ११ उपाच्युतमच्युतस्यसमीपे उन्नमदवनमतोःपादयोर्मणिनूपुराभ्यां क्वणयती अंगुलीयाख्यवलयेनव्यजनेनचयुक्तहस्ताग्रंयस्याःसातथा पृथक्कृतेवलयेहस्तमूलेतिवक्तव्येंनतुहस्ताग्रेवि वस्त्रांतेनवस्त्रांचलेनगूढयोःकुचयोःलिप्तकुंकुमचूर्णसंबंधेनशोणस्यरक्तस्यहारस्य मुक्तादाम्नोभासायुक्तोपलक्षणेतृतीया नितंबधृतयाकटिप्रदेशवेष्टितयापराद्ध्यकांच्याअनर्घ्यरशनयाचयुक्ता १२

हरिःनीलनीरदकांतिः श्रीकृष्णःपालीलयाधृततनोर्भगवतः अनुरूपरूपाअनुकूलसौंदर्या अनुगुणवृत्तावा तांरुक्मीणीं आबभाषइत्यन्वयःनिष्कंग्रैवेयकंअलककुंडलाभ्यांनिष्कालंकृतकंठेनचयुक्तवक्त्रोउ
ल्लसत्स्मितमेवसुधायस्याःसातथाताम् १३ ईप्सिता प्रार्थिता श्रीमद्भिःश्रीकटाक्षविषयैर्हेराजपुत्रि १४ वरेगुणानाह प्राप्तानिति वाचादत्ता देववृषोपमान्देवश्रेष्ठसमानान् १५ स्ववरणांगीकारेदो
षानाहराजभ्यइति अर्थीत्यादिगुणोपेतान्नृपान्हित्वा राजभ्यइत्यादिदोषयुक्तानस्मान्कस्मात्प्राप्तेरपन्वयः १६ एवंविधपुरुषप्राप्तौयोषितांभयंभवतीत्याह पुंसामिति अलोकपथमीयुषालोकाविलक्षणमा
र्गवर्तिनांपुंसांपदवीमास्थिताःयोषितः प्रायःसीदंतीत्यन्वयः १७ अस्मादोषाच्चवयंनवरणीयाइत्याह निष्किंचनाइति आढ्याराजकुमार्यः १८ अपचैकोहेतुर्लोकेविवाहेइत्याह ययोरिति ऐश्वर्याकृतिरै
श्वर्ययुक्ताकारः भवः सौंदर्यं १९ एतद्गुणागुणसर्वस्वं अदीर्घसमीक्षयाअल्पबुद्ध्या मुधावृथा २० २१ २२ स्मयनुत्तयेअहंकारनिरासाय असतांदुरात्मनांतेजोपहरताअभिमानलक्षण

तांरुक्मिणींश्रियमनन्यगतिंनिरीक्ष्ययालीलयाधृततनोरनुरूपरूपा ॥ प्रीतःस्मयन्नलककुंडलनिष्ककंठवक्त्रोल्लसत्स्मितसुधांहरिराबभाषे १३ श्रीभगवानुवाच ॥ राजपुत्रीप्सिताभूपैर्लोकपालविभूतिभिः ॥ महानुभावैःश्रीमद्भीरूपौदार्यबलोर्जितैः १४ तान्प्राप्तानर्थिनोहित्वाचैद्यादीन्स्मरदुर्मदान् ॥ दत्ताभ्रात्रास्वपित्राचकस्माद्देववृषोपमान् १५ राजभ्योबिभ्यतःसुभ्रुसमुद्रंशरणंगतान् ॥ बलवद्भिःकृतद्वेषान्प्रायस्त्यक्तनृपासनान् १६ अस्पष्टवर्त्मनांपुंसामलोकपथमीयुषाम् ॥ आस्थिताःपदवींसुभ्रुप्रायःसीदंतियोषितः १७ निष्किंचनावयंशश्वन्निष्किंचनजनप्रियाः ॥ तस्मात्प्रायेणनोह्याढ्यानभजंतिसुमध्यमे १८ ययोरात्मसमंवित्तंजन्मैश्वर्याकृतिर्भवः ॥ तयोर्विवाहोमैत्रीचनोत्तमाधमयोःक्वचित् १९ वैदर्भ्येतदविज्ञायत्वयाऽदीर्घसमीक्षया ॥ वृतावयंगुणैर्हीनाभिक्षुभिःश्लाघितामुधा २० अथात्मनोनुरूपंवैभजस्वक्षत्रियर्षभम् ॥ येनत्वमाशिषःसत्याइहामुत्रचलप्स्यसे २१ चैद्यशाल्वजरासंधदंतवक्त्रादयोनृपाः ॥ द्विषंतिमांवरारोहेरुक्मीचापितवाग्रजः २२ तेषांवीर्यमदांधानांदृप्तानांस्मयनुत्तये ॥ आनीतासिमयाभद्रेतेजोपहरताऽसताम् २३ उदासीनावयंनूनंनस्त्र्यपत्यार्थकामुकाः ॥ आत्मलब्ध्यास्महेपूर्णानिहात्मसदृशाःक्रियाः २४ एतावदुक्त्वाभगवानात्मानंवल्लभामिव ॥ मन्यमानामविश्लेषात्तद्दर्पघ्नउपारमत् २५ इतित्रिलोकेशपतेस्तदात्मनःप्रियस्यदेव्यश्रुतपूर्वमप्रियम् ॥ आश्रुत्यभीताहृदिजातवेपथुश्चिंतांदुरंतांरुदतीजगामह २६ पदासुजातेननखारुणश्रियाभुवंलिखंत्यश्रुभिरंजनासितैः ॥ आसिंचतीकुंकुमरूषितौस्तनौतस्थावधोमुख्यतिदुःखरुद्धवाक् २७

प्रभावप्रणाशंकुर्वतामयानीतासीत्यन्वयः २३ स्वभावंसूचयति उदासीनाइति उदासीनाविषयव्यापारशून्याः खपुष्पादिवदप्रसिद्धावा नस्त्र्यपत्यार्थकामुकाःकलत्रपुत्रधनलोलुपान आत्मलब्ध्यास्व
रूपलाभेनपूर्णाअलंबुद्धयःआस्महे इहक्रियाश्चआत्मसदृशाःकर्माणिजीवकर्मतुल्यानिनभवंतिअतिमानुषाणीत्यर्थः २४ अविश्लेषान्निरंतरसाहित्येनास्थितेरात्मानवल्लभामिवमन्वानांप्रियतमाम् २५
यदाहरिणैतादृशंदुःखकरंवचनमुक्त्वोपरतंतदादेवीआत्मनःप्रियस्यात्रिलोकेशपतेरश्रुतपूर्वमप्रियंवचनमाश्रुत्यदुरंतांचिंतांजगाम प्रत्ययारंभेप्रतिवचनोपक्रमेद्धौइतिवचनात् इतिवचनोपक्रमभीताअएवहृ
दिजातवेपथुःउत्पन्नकंपा तल्लक्षणमाह रुदतीति २६ एतदेवविवृणोति पदेति रक्तनखप्रभयाअरुणाश्रीर्यस्यसतथातेनसुजातेनकोमलेनपदाभुवंलिखंती अंजनासितैःकृष्णैःअश्रुभिःकुंकुमरूषितौस्तनौ
आसिंचतीअधोमुखीभूत्वावतस्थावित्यन्वयः २७

सुखदुःखादिभिर्विनष्टाइदंकर्तव्यमित्यपश्यंतीबुद्धिर्यस्याःसातथा श्लथद्विगलद्वलयोपस्यसतथातस्मात् केशान्प्रविकीर्यदेहश्चपपातकीदृशः विभ्यत्संचलन्कंपमानइत्यर्थः रंभाकदली २८ हास्यंनाम शृंगारादिष्वेकोरसःतस्यप्रौढिंसमुद्रेकं करुणःकरुणारसंप्राप्तः अस्यविवरणमन्वकंपतेति २९ चतुर्भुजःकृष्णःद्वाभ्यांभुजाभ्यांउत्थाप्यद्वाभ्यांकेशान्समूह्यएकीकृत्यबद्ध्वावर्कंप्रामृजत्इतिद्योतनायचतु र्भुजइतिमत्युक्तम् ३० अश्रूणांकलाययोस्तेतथा शुचोपहतौकुशौस्तनौच अनन्याविषयांअन्यस्पर्शनायोग्याम् ३१ अतदर्हांप्रेमगर्भविषादवचनायोग्याम् ३२ मामांमातिमाऽसूयेथाःगुणेदोषदर्शनंनकुरु तस्याःतववचःश्रोतुकामेनमयाक्ष्वेल्यानर्मलक्षणलीलयाचरितंकृतम् ३३ प्रेमसहितसंरंभेणस्फुरिताधरंकंपमानाधरोष्ठंकटाक्षेणतिर्यक्दर्शनेनारुणापांगेनरक्तनेत्रप्रांतेनसुंदरभ्रुकुटीतटम ३४ कामिव त्जनविडंबनंमयाकारीत्याशयेनाह अयमिति प्रियासहनर्मैःस्नेहगर्भपरिहासवचनैर्यामःकालावयवोनीयतइतियदयमेवगृहस्थानांगृहेषुपरमोलाभोहीत्यन्वयः ३५ द्विविधंवाक्यइष्टसाधनावबोधकमेकमेकं दुःखपरिहारात्मकंतत्रपश्चादुक्तंदुःखविनाशकमितिभावेनाह सैवमिति ३६ पूर्वोक्तमभीष्टसाधनावबोधकत्वेनोपादेयमितिसूचयितुमाह बभाषइति ३७ देववृषोपमान्नृपान्हित्वास्मान्कस्माद्वृतवतीत्यत्राह

तस्याःसुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतोव्यजनंपपात ॥ देहश्चविक्लवधियःसहसैवमुह्यन्रंभेववातविहताप्रविकीर्यकेशान् २८ श्रीशुकउवाच ॥ तद्दृष्ट्वाभगवान्कृष्णःप्रियायाःप्रेमबंधनम् ॥ हास्यप्रौढिमजानंत्याःकरुणःसोऽन्वकंपत २९ पर्यंकादवरुह्याशुतामुत्थाप्यचतुर्भुजः ॥ केशान्समूह्यतद्वक्त्रंप्रामृजत्पद्मपाणिना ३० प्रमृज्याश्रुकलेनेत्रेस्तनौचोपहतौशुचा ॥ आश्लिष्यबाहुनाराजन्ननन्यविषयांसतीम् ३१ सांत्वयामाससांत्वज्ञःकृपयाकृपणांप्रभुः ॥ हास्यप्रौढिभ्रमच्चित्तामतदर्हांसतांगतिः ३२ श्रीभगवानुवाच ॥ मामावैदर्भ्यसूयेथाजानेत्वांमत्परायणाम् ॥ त्वद्वचःश्रोतुकामेनक्ष्वेल्याचरितमंगने ३३ मुखंचप्रेमसंरंभस्फुरिताधरमीक्षितुम् ॥ कटाक्षेपारुणापांगंसुंदरभ्रुकुटीतटम् ३४ अयंहिपरमोलाभोगृहेषुगृहमेधिनाम् ॥ यन्नर्मैरीयतेयामःप्रिययाभीरुभामिनि ३५ सैवंभगवताराजन्वैदर्भीपरिसांत्विता ॥ ज्ञात्वातांपरिहासोक्तिंप्रियत्यागभयंजहौ ३६ बभाषऋषभंपुंसामीक्षतीभगवन्मुखम् ॥ सव्रीडहासरुचिरस्निग्धापांगेनभारत ३७ रुक्मिण्युवाच ॥ नन्वेतदेवमरविंदविलोचनाहयद्वैभवान्भगवतःसदृशोविभूम्नः ॥ क्वस्वेमहिम्न्यभिरतोभगवांस्त्र्यधीशःक्वाहंगुणप्रकृतिरज्ञगृहीतपादा ३८

नन्विति यद्वा इहजीवराशौआत्मसदृशानसंति अस्माकंक्रियाश्चनेत्यस्योत्तरमाह नन्विति वाइत्ययंकृष्णोक्तवाक्यार्थारंभेवर्तते नन्वित्यनुमतार्थेभवान्यदाहसमोनास्तीतिएतदेवंननुअनुमतं कथंतत्राह नेति विभूम्नः देशतःकालतोगुणतश्चापरिच्छिन्नस्यव्याप्तस्यभवतः सदृशोन्योनास्ति किंतुभवानेव रामरावणयोर्युद्धमितिवत् मत्सदृशीत्वमसीतिनेत्याह क्वेति भगवानैश्वर्यादिगुणसामग्रीसमुद्रोभवान्क राजादिवदन्याधीनत्वंकिंनस्यादितितत्राह स्वइति अनेनस्वार्थाक्रियानास्तीत्युक्तंभवतिसत्त्वादिगुणप्रवर्तकत्वेनप्रकृतिशब्दवाच्याहंक्व तर्हित्रिलोक्यांकश्चिन्मत्समःस्यादित्यतोनेतिभावेनाह त्र्यधीशइति त्रयाणांलोकानांत्रयाणांवेदानांत्रयाणांगुणानांवा ईशइत्यनेनइंद्रादिनिरासोभूदित्येतल्लोकपालविभूतिभिरित्यस्योत्तरं ब्रह्माद्यन्यतमोपिनेतिभावेनाह अन्योति अन्यैर्ब्रह्मादिभिः अनेन महानुभावैरित्यस्योत्तरं क्वाहमित्यमुनाश्रीमद्भिरित्यादेः ३८

राजभ्योविभ्यतःसुप्तइतियदुक्तंतदर्धांगीकारेणपरिहरति सत्यमिति । हेउरुक्रम बल्यादेरभिमानिजनशिरोरत्नराजिराजितमहापादन्याससमुद्रेऽतःशेत इतिसत्यं किंतु राजभ्योबिभ्यतइत्यसत्यं तर्हि तद्व्यर्थमुक्तंनेत्याह भयादिति राजृदीप्ताविितिधातोःकार्यप्रकाशमानेभ्यःस्वशक्तिद्योतकेभ्यःसत्वादिगुणेभ्योभयादिवसज्जनशिक्षार्थंइवशब्दः संसारावृत्तिहेतुभ्योगुणेभ्योविभ्यज्जनःसमुद्रिक्तसुखार्थी समुद्रादिजलवासेनयथातपस्यतितथाहमिति । यद्वा पंचभूतमुद्रासहितत्वात्समुद्रेशरीरेऽतर्हृदिशेतेयत्सत्यंतत् दीप्यत्शब्दादिगुणेभ्योभयादिवांगुष्ठमात्रः । अंगुष्ठमात्रःपुरुषइतिश्रुते । शरीरांतस्थस्य जीवादविशेषाज्जननादिकमपिस्यादितितत्राह उपलंभनमात्रइति । केवलचिन्मयः अतोनदेहधर्माअस्यस्युरितिभावः । एकत्रस्थितयोर्जीवेशयोर्विशेषःकथमत्राह आत्मेति । आत्मातथाविधस्वभाव. किंनामधेयोभवानित्यतोवाह आत्मेति । आत्मासुखमेवाददातिनाण्वपिदुःखमित्यात्मा जीवस्तुशरीरमादायशरीरांतराणिनिर्मिमीतइतितच्छब्दवाच्यः बलवद्भिःकृतद्वेषानित्यस्यतात्पर्यंवक्ति यइ ति यःअनित्यकेंद्रियगुणैःकृतविग्रहःसत्वंतादृङ्माहात्म्यः बलवानिंद्रियग्रामइतिस्मृतेः बलवंतिपरिवर्तनवंतिनानायोनिष्वित्यतोनित्यानींद्रियाणीत्युच्यंते नियंतुमशक्यत्वाद्बलवंतीति भवत्प्रसा दादितरेषांइंद्रियजयोभवतस्तुस्वतइति पराञ्चिखानिव्यतृणात्स्वयंभूरितिश्रुतेः । प्रायस्त्यक्तनृपासनानित्यत्राह त्वत्सेवयेति तवसेवायस्याःसाहंत्वत्सेवातयात्वत्सेवयामयानृपासनंनृपपदंनृपशब्द वाच्यमात्रं नतुनॄन्पातीतिनृपालनरक्षणार्थोपेतं अंधंतमःप्राविविधुतंतत्त्यजनंकृतमित्यर्थः तस्माद्भवानेवनृपशब्दमुख्यार्थत्वात्तत्त्वज्ञैःसर्वैस्त्यक्तंदत्तंनृपासनंयस्मैसत्यक्तनृपासनः । शिशुपालादयएवत्य क्तमुज्झितंनृपासनंयैस्तेतथात्वत्सेवयाहेतुनावातेत्यक्ताः ३९ अस्पष्टवर्त्मनामित्यस्यार्थमाह त्वत्पादेति तवपादपद्ममकरंदसेविनांमुनीनावर्त्मस्वरूपंस्फुटस्पष्टंतथापित्वदुक्तंसत्यंनृपशुभिरज्ञानिभि

## सत्यंभयादिवगुणेभ्यउरुक्रमांतःशेतेसमुद्रउपलंभनमात्रआत्मा ॥ योनित्यकेंद्रियगुणैःकृतविग्रहस्त्वंत्वत्सेवयानृपपदंविधुतंतमोंधम् ३९ त्वत्पादपद्मम करंदजुषांमुनीनांवर्त्मस्फुटंनृपशुभिर्ननुदुर्विभाव्यम् ॥ यस्मादलौकिकमिवेहितमीश्वरस्यभूमंस्तवेहितमथोअनुमेभवंति ४० निष्किंचनोननुभवान्न यतोऽस्तिकिंचिद्यस्मैबलिंबलिभुजोप्यहरंत्यजाद्याः ॥ नत्वाविदंत्यसुतृपोंऽतिकमाढ्यतांधाःप्रेष्ठःसतांबलिभुजामपियोंऽतरास्से ४१ त्वंवैसमस्तपुरुषा र्थमयःफलात्मायद्वांछयासुमतयोविसृजंतिकृत्स्नम् ॥ तेषांविभोसमुदितोभवतःप्रसादस्त्वय्यांचयश्चरतयोःसुखदुःखिनोर्न ४२

दुर्विभाव्यंदुर्ज्ञेयंतस्मादस्पष्टमित्युच्यते । यद्वा मुनीनांवर्त्मनृपशुभिःस्फुटंदुर्विभाव्यंकिमुतववर्त्मेति अलोकपथमीयुषामित्यस्याप्ययमर्थइत्याह यस्मादिति । हेभूमन्नीश्वरस्यतवेहितमलौकिकमिवय स्मादथोतस्मात्तवेहितमनुकूलान्िममईहितानिभवंति अलौकिकानीतिशेषः तवेहितमनुक्रियमाणानिममेहितान्यलौकिकानियस्मात्तस्मात्किमुतवेहितमलौकिकमितिवा ४० निष्किंचनावय मितीदंनिबोधयतःकिंचित्किंचिन्मात्रंनास्तिकिंतुसर्वमेवास्त्यतोभवानिष्किंचनइत्युच्यते नत्वनाढ्यत्वंनिष्किंचनत्वमित्याह यस्माइति सर्वप्राणिदत्तबलिभुजोप्यजाद्यायस्मैबलिंहरंति सभवान्नि ष्किंचनइतिविदुषांपरिषदिमशोभतइतिशेषः तस्मात्प्रायेणनोह्याढ्यानभजंतीत्यत्रावधारयामहे नत्वेति आढ्यतांधाःऐश्वर्यमदांधाःत्वात्वानविदंतिनजानंतिनलभंतेचेत्यन्वयः दूरस्थत्वान्नविदंतीति नेत्याह अंतिकमितिनेदिष्ठं नेदिष्ठमंतिकतममित्यमरः अत्रहेतुरसुतृपइति स्वेंद्रियपोषणपरत्वात् अतिकस्थत्वंस्पष्टयति बलिभुजामिति यस्त्वंबलिभुजांब्रह्मादीनामप्यंतरास्सेतिष्ठसिकिमुतेतरेषांनि यंतृत्वेनेतिशेषः अत्रप्रमाणमाह प्रेष्ठइति सतांप्रियतमः प्रियोहिज्ञानिनोऽत्यर्थमहंसचममप्रियइत्यतोज्ञानिदर्शनंप्रमाणं कस्मैदेवायहविषाविधेम इमारुद्रायस्थिरधन्वनेगिरइत्यादिश्रुतिः ४१ ययोरेवसमांवित्तइत्याद्युक्तमनुवदति त्वंवाइति वैशब्दोहेत्वर्थः त्वंफलात्मासुखात्मा परमानंदस्वरूपोवैयस्मात्तस्मात्समस्तपुरुषार्थमयोऽर्थ्यतइत्यर्थः मयट्प्रत्ययःप्रधानार्थः । सर्वस्मात्प्रा धान्यस्वरूपः समस्तपुरुषैरर्थ्यमानस्वरूपइत्यर्थः येसुमतयःसम्यग्ज्ञानिनोयस्यतववांछयाअनुग्रहेच्छयाकृत्स्नंपुत्रमित्रवित्तादिसर्वंविसृजंतिमुंचंति त्यक्तसर्वैषणाइत्यर्थः अनेनप्रकृतेकिमागतमत्राह

तेषामिति हेविभोतेषांसुमतीनांभवतश्चप्रसादःपूर्णसुखलक्षणोगुणःसमुदितःसम्यगुक्त' समानोवानास्तीत्यस्यकोभिप्रायइत्यतउक्तं यथेति चोऽप्यर्थे यश्चकोपिनास्तीत्यर्थः ननुयुवयोःकोपिगुणः समोनास्तिकिमत्राह त्रय्यांचेति त्रय्यांचशब्दात्स्मृतिष्वपिचतयोर्युवयोर्यश्चकोपिगुणोस्ति सकइत्यतोरतयोरित्यनेनसूचितः अग्निष्टोमेनस्वर्गकामोयजेतेतिवेदोक्तकर्मकर्तृत्वेनसुमतीनांत्रयीरतत्वं भवतोवेदप्रतिपाद्यत्वेनचेत्येवमाकारेणसमत्वं ननुजीवस्यचेतनत्वेनज्ञानानंदादिगुणोऽस्त्येवातःकथसमोगुणोनास्तीत्यत्राह सुखदुःखिनोरिति सुखदुःखिनोर्युवयोर्मध्येकेवलपरिपूर्णसुखोभवास्ते सुमतयोभवज्ज्ञानपर्यंतंदुःखिनइति ननुपश्चात्समगुणत्वमापन्नं योवानंदाद्विमुक्तःज्ञानानंदीभवतीतिश्रुतेरितियमाशंका अल्पसंपूर्णशक्तित्वादल्पपूर्णसुखत्वतइतिस्मृतिवचनेनपरिहरणीया यद्वा येसुमतयःकृत्स्नंविसृजंतितेषांभवतःपुंसांभवदीयपुरुषाणांयस्त्वंफलात्मा।परमानंदमोक्षरूपःसमुदितःसम्यगुक्तः त्रय्यांत्रिवेदाविहितमार्गेवर्तमानयोःसुखदुःखिनोःधर्माधर्मानुष्ठानेनतत्तत्फलभुजोर्हि तत्प्रतिषिद्धकर्तॄणांयस्त्वंफलात्मानसमुदितःसत्वमेवृतोसीत्यन्वयः ४२ भिक्षुभिःश्लाघितामुचेत्यस्योत्तरंशृणु त्वमिति न्यस्तोवाङ्मनःकायलक्षणोदंडोयैस्तेन्यस्तदंडा तैर्मुनिभिःवाचंयमैःनिर्जितेंद्रियग्रामैःयतिभिरित्यर्थः गदितानुभावःस्पष्टीकृतप्रभावस्त्वं अदीर्घसमीक्षयेतिपदुक्तंतत्राह आत्मेति जगतामात्मास्वामीभजतामात्मदःसायुज्यमुक्तिप्रदश्चेतिदीर्घसमीक्षयानिश्चित्यमेमयात्वमभिहितःवृतोसि हिर्हेतावववधारणइतियादवः भवत.भवज्जायमानमुदीरितमुदीरणप्रेरणंयस्यसभवद्भवदुदीरितःसचासौकालःभवद्भवदुदीरितकाल.तस्यगंधेनध्वस्ताशिष.निरस्तसंपदःअब्ज्यो

त्वंन्यस्तदंडमुनिभिर्गदितानुभावआत्मात्मदश्चजगतामितिमेवृतोऽसि ॥ मुक्त्वाभवद्भवदुदीरितकालगंधध्वस्ताशिषोऽब्जभवनाकपतीन्कुतोऽन्यान् ४३ सत्यंवचस्तवगदाग्रजयश्मभूपान्विद्राव्यशार्ङ्गनिनदेनजहर्थमांत्वम् ॥ सिंहोयथास्वबलिमीशपशुंस्वभागंतेभ्योभयाद्यदुदधिंशरणंप्रपन्नः ४४ यद्वांछया नृपशिखामणयोंऽगवैन्यजायंतनाहुषगदादयऐकपत्यम् ॥ राज्यंविसृज्यविविशुर्वनमंबुजाक्षसीदंतिनानुपदवींतइहास्थिताःकिम् ४५ कान्त्रीवृणीततवपादसरोजगंधमाघ्रायसन्मुखरितंजनतापवर्गम् ॥ लक्ष्म्यालयंत्वविगणय्यगुणालयाढ्यंमर्त्याशिषोरुभयमर्थविविक्तदृष्टिः ४६ तंत्वानुरूपमभजंजगतामधीशमात्मानमत्रचपरत्रचकामरूपम् ॥ स्यान्मेतवांघ्रिशरणंश्रुतिभिर्भ्रमत्यायेवैभजंतिउतयांत्यनृतापवर्गम् ४७

जातोब्जःब्रह्मा सोद्धृषएवपुरुषंसमुद्धृत्यामूर्छयदितिश्रुतेः भवोरुद्रःनाकपतिरिंद्रःएतान्मुक्त्वा अन्यांश्चैद्यादीन्मुक्त्वेतिकुतःकिमुवक्तव्यमित्यर्थः एषामदीर्घसमीक्षयावृतासीत्यर्थः ४३ राजभ्योबिभ्यतइत्येतत्प्रकारांतरेणाक्षिपति । सत्यमिति हेगदाग्रज चशब्दएवार्थे यस्त्वमेवशार्ङ्गनिनदेनभूपान्विद्राव्यमांजहर्थहृतवानसि कथमिवयथासिंहःस्वभागंपशुलक्षणंस्वबलिंस्वस्यभरणेयोग्यंहरतितथातेभ्योराजभ्योभयाद्यदुदधिंशरणंप्रपन्नइतिपत्तत्तववचः सत्यंसाधुभावंत्यजतीति अस्मद्व्यामोहनार्थमुक्तमितिभाव: ४४ प्राय:सीदंतियोषितइत्यत्रवाक्ति यद्वांछयेति नृपशिखामणयोंऽगादयोयस्यतवश्रीपादनिषेवणवांछयाऐकाधिपत्यंराज्यंसाम्राज्यंविसृज्यवनंविविशुः तेराजानःसीदंतिकिंतवानुपदवींनास्थिताःकिं आस्थायनसीदंतीत्यर्थ: अंबुजाक्षेत्यनेननयनयोःस्निग्धंगुणंसूचयति ४५ ४६ स्थिरबुद्धित्वेनपुरुषाणांविषादाभावेपिभीरूणांस्त्रीणांसस्यादितिमदाशंकांश्लोकद्वयेनपरिहरति केति कान्त्रीसततरमणकांक्षिणीजनतायाःजनसमूहस्यापवर्गोमोक्षोयस्मात्सतथातं सद्भिःमुखरितंमुख्यत्वेनेरितंदत्तमुपदिष्टं प्रधानीकृतमित्यर्थ: एवंविधंतवपादसरोजगंधमाघ्रायानिषेव्य पुनरत्रपरत्रचकामरूपंत्वामविगणय्यमर्त्याशिषानाशशिरस्कसंपदाकारणेनउरुभयंगुरुतरभीतिमंतंजनंवृणीतेत्यन्वय: कीदृशंत्वां लक्ष्म्याःसकलसंपदआलयंशौर्यादिगुणानामालयंअतएवाढ्यंच यस्त्वमविशेषेणस्त्रीपुरुषाणामर्थनीयगुणरत्नाकरस्तंत्वामभजं चैद्यादीन्हित्वेतिशेषः कथंविधंत्वामनुरूपमनुकूलसौंदर्यं जगतामधीशंजगतामीश्वराणांब्रह्मादीनामपिसंपत्प्रदं अतएवात्मानंतेषांस्वामिनं कीदृश्यहंचअर्थविविक्तदृष्टिःअर्थोयमितिविवेकीकृतदृष्टिः अत्यन्तज्ञानेत्यर्थ.

किंवहुनेत्याशयेनाह स्यादिति कीदृश्याःभ्रमस्याःभ्रमःतिअन्वयस्याः साभ्रमतिः तस्याविपरीतज्ञानिनामशिन्त्याइत्यर्थः केनेयमवगम्यतइत्यतउक्तं श्रुतिभिरिति श्रुतिप्रमाणेनासिद्धायाइतिशेषः अभ्र माभ्रमतामत्रीयावेदैरधिगम्यतइत्यादिस्मृत्याच मुखंतुवदनेमुख्यइतियादवः तीत्यन्नमितिश्रुतिः पारत्रिककामरूपत्वंदर्शयति यइति येत्वामभजंतितउतएवानृतापवर्गसंसारान्मोक्षंयांतीत्यन्वयः तमेवंवि द्वानमृतइहभवतीतिश्रुतिर्वेशब्देनगृहीता ४७ नृपाणाहेयत्वेदोषांतरमाह कस्याइति हेअच्युतस्वतःपरतोवाच्युतिरहित भवतोपदिष्टानृपाश्रैयादयःकस्याःस्त्रियःस्युः नकस्याअपिभवंतीत्यर्थः सर्वदो षेष्वधिकोदोषोयमितिभावेनाह यत्कर्णमूलमिति हेअरिकर्शन मृडोरुद्रः रुद्रविरिंचसभासुगीतायुष्मत्कथायेषांनृपाणांकर्णमूलंनोपययायान्नोपगच्छातितइतिशेषः तासांस्युरितिपाठेयासांकर्णमूलंतासां स्त्रीणां तेनृपाःस्युरित्यर्थः ४८ एतदेवस्पष्टयति त्वक्श्मश्रुरोमेति यात्वीतवपदाब्जमकरंदमजिघ्रतीअसेवमानासाजीवच्छवंजीवन्मृतंपुरुषंभजति तत्रनिमित्तंकाममतिरिति अस्यसंपदमाह त्वगिस्त्वगा दिभिःपिनद्धंबद्धं अंतर्मांसादिभिःसंवृतं ननुविग्रहोप्येतादृशःकृष्णस्यकिंनस्यादविशेषादितिचेन्न आनंदश्मश्रुरानंदकेशइत्यादिश्रुतेर्हेतोः कालात्ययापदिष्टत्वात् ४९ अहमप्येतादृशीनेत्याह अस्तीति चरणयोरनुरागःपराभक्तिरस्तीतिभक्तेःसर्वदैकप्रकारत्वंकथयति मयातवनकोप्यर्थइतिभावेनाह आत्मन्निति आत्मन्नात्मनि ममतुत्वत्तोमहानर्थोस्तीतिभावेनाह मयिचेति मयिमहाधिकारिण्यः भक्तेरनतिरिक्ताइष्टिरनुग्रहलक्षणायस्यसतथा भक्त्यनुकूलानुग्रहइत्यर्थस्तस्यचशब्दोभक्तेरन्वयव्यतिरेकसूचकः तत्कुतइतिचेत्तथएएवदेवःपरोक्ष रामरस्तवाएनमाहुः भक्ताइत्यादिश्रुतिसिद्धत्वात् अनेनै वतारतम्यंसूचयति अथातोभक्तिमीमांसेतिश्रुतिविहितत्वात् अन्योन्यंहेतुहेतुमद्भावंच मिलितौवाएतौभवतोयदनुग्रहश्चभक्तिश्चेतिश्रुतिसिद्धमनुवदति मिलितावन्योन्यंहेतुहेतुमद्भावोपेतौ भक्त्यनुकू

कस्यास्युरच्युतनृपाभवतोपदिष्टाःस्त्रीणांगृहेषुखरगोश्वबिडालभृत्याः ॥ यत्कर्णमूलमरिकर्शन नोपयायाद्युष्मत्कथामृडविरिंचसभासुगीता ४८ त्वक् श्मश्रुरोमनखकेशपिनद्धमंतर्मांसास्थिरक्तकृमिविड्कफपित्तवातम् ॥ जीवच्छवंभजतिकाममतिर्विमूढायातेपदाब्जमकरंदमजिघ्रतीस्त्री ४९ अस्त्यंबुजा क्षममतेचरणानुरागआत्मन्रतस्यमयिचानतिरिक्तदृष्टेः ॥ यर्ह्यस्यवृद्धयउपात्तरजोतिमात्रोमामीक्षसेतदुहनःपरमानुकंपा ५० नैवालीकंभरत्येवंवचस्ते मधुसूदन ॥ अंबायाइवहिप्रायःकन्यावादरतिःक्वचित् ५१ मुग्धायाश्चापिपुंश्चल्यामनोभ्येतिनवंनवम् ॥ बुधोसतींनबिभृयात्तांबिभ्रदुभयच्युतः ५२

लानुग्रहविशेषंकथयति यर्हीति यर्हियदास्यजगतोभिवृद्धयेसृष्टिलक्षणायैउपात्तंस्वीकृतंरजोतिमात्रंकेवलंरजोयेनसतथा यद्वा उपात्ताःमलयेमूलरजसिअतीताःसंगताःमात्राअंशायेनसतथा मूलर जोगुणोपादानवानित्यर्थः तदुतदेवमामीक्षसे हविशेषतइत्यर्थः यदास्थितिलक्षणायैउपात्तारजसोतिरिक्तामात्रासत्वलक्षणायेनसतथा तदामामीक्षसे यदातिवृद्धिरहितोवर्धनंछेदनंसंहारस्तस्मै उपात्तारजोतिक्रांतामात्रातमोलक्षणायेनसतथा अत्रेक्षणंनामतत्तत्कार्यमनुस्मृत्यरजआदिमदधीनतत्तद्गुणाभिवर्धनमभिप्रेतं तदुक्तं अथत्रिगुणाह्येषाप्रकृतिरगुणोवावविष्णुःसयदाह्यरजारजोस्याउ द्धर्षयतीत्यादिश्रुतौनैतत्स्वप्रयोजनमुद्दिश्येतिनःअस्मानुद्दिश्यकृतापरमकृपेतिभावः ५० भगवतिभगवदुक्तेरेवंतात्पर्यंप्रकाश्यानिगमयति नैवेति हेमधुसूदनतेतववचःअलीकंअसत्यलक्षणंभारंनभर तिनतुबिभर्त्येव भृञ्भरणइतिधातुः कथमिवअंबायाःकन्यावादरतिरिव यथामातुःकन्याप्रदानकथायांरतिस्तात्पर्याभिनिवेशलक्षणानालीकंभवति प्रायःएवायमर्थोऽनुमतोहि समुच्चयेनुमत्यां चाप्येवसाम्येवधारणइतियादवः क्वापिमातूरतिरलीकंभरातितववचःक्वाप्यलीकनभवत्येवैतदुक्तं क्वचिदिति कचित्क्वापि ५१ इदानींकृष्णस्यनियतदारत्वमात्मनोनियतपातिव्रत्यंचध्वनयतीदेवीपुं श्चलीमर्थवादयति मुग्धायाइति अस्यार्थआचार्यैःकोत्रलिख्यते प.मसतींबुधोनाबिभृयात् यावताबिभ्रद्दृष्टादृष्टच्युतोभवतितस्याःअपिपुंश्चल्यास्त्वयिमनोनवंनवमभ्येतीति मूर्छयामोहिन्यामूढत्वंएवयो रपि तत्रतत्रसुलभमुपलब्धमितिमंदाशंका अमुग्धैवतुमुग्धेवत्वदुःखादुःखितेवच श्रीर्दर्शपेद्वारिअैवनैवैतौमोहदुःखिनावित्यादिरमृत्यापारिहर्तव्या ५२

भगवत्योक्तंभगवताकिमनुमतांविमतामितिविकल्पंपरिहरति साध्विति एतद्वचः प्रलंभिताप्रस्तोभिता अन्वर्थमनुकूलार्थम् ५३ हेकामिनिईश्वरियंयंकामंकामयसेसर्वैस्त्वयिनित्यदासंतिहियस्मात्तस्मा त्त्वांविभूतिकामयसेनकामयीत्यर्थः यद्वायंयंकामंकामयसेतान्मयिकामयस्व तेषाममावाद्वच्मीत्याह संतीति तस्मात्प्रियवचनमुक्तंकामयति ५४ भर्तुःस्नेहःपातिव्रत्यंचाभीष्टसंपत्प्राप्तौनिमित्तं तत्त्वास्तीत्याह उपलब्धमिति उपलब्धंदृष्टं तत्रहेतुर्यद्वाक्यैरिति मयिसंलग्नाधीनापकर्षिताअन्यत्रननीतायचस्मान्नित्यमुक्तत्वादावयोःदांपत्यंनित्यम् ५५ तत्रमुक्तिमंतरेणदांपत्यापेक्षयास्मद्भजनमयुक्त मित्याशयेनाह यइति ५६ ननुतर्हिसंपदर्थेभगवद्भजनंयुक्तमेवेतितत्राह मामिति सतःसत्यस्यमोक्षस्यपतिंयेसंपल्लक्षणभोगाः कथंतेषांभोगानांनिरयेसत्त्वमितितत्राह मात्रात्मकत्वादिति मात्रात्मः कत्वात्तेषांभोगानांशब्दादिविषयैर्विनाभूतत्वान्निरयेसुसंगमःसुलभ.संगमइत्यर्थः ५७ सर्वभक्तेषुत्वमेवमुख्यभक्तेत्याशयेनाह दिष्ट्येति हेगृहेश्वर्ययुतेदेवित्वयामय्यनुवृत्तिःभक्तिःकृतेतियत्तद्दिष्ट्यात्वदन्ये षांभवमोचनीवा असावनुवृत्तिःखलैःसुदुष्करादुराशिषःदुष्टेच्छायाःपत्यासहदुर्वाक्यायाःवा असुंभरायाःस्वप्राणपोषणपरायाः विकृतिजुषःजारलक्षणव्याजसेवमानायाःस्त्रियःसुतरांसुदुष्करादिष्ट्या

श्रीभगवानुवाच ॥ साध्व्येतच्छ्रोतुकामैस्त्वंराजपुत्रिप्रलंभिता ॥ मयोदितंयदन्वर्थंसर्वंतत्सत्यमेवहि ५३ यंयंकामयसेकामंमयिकामयकामिनि ॥ संतिह्येकांतभक्तायास्तवकल्याणिनित्यदा ५४ उपलब्धंपतिप्रेमपातिव्रत्यंचतेनघे ॥ यद्वाक्यैश्चाल्यमानायानधीर्मय्यपकर्षिता ५५ येमांभजंतिदांपत्येतप सान्रतचर्यया ॥ कामात्मानोपवर्गेशंमोहितामममायया ५६ मांप्राप्यमानिन्यपवर्गसंपदंवांछंतियेसंपदएवसत्पतिम् ॥ तेमंदभाग्यानिरयेपियेस्युर्मात्रात्म कत्वान्निरयेसुसंगमः ५७ दिष्ट्यागृहेश्वर्ययुतेमयित्वयाकृतानुवृत्तिर्भवमोचनीखलैः ॥ सुदुष्करासौसुतरांदुराशिषोह्यसुंभरा याविकृतिंजुषःस्त्रियः ५८ नत्वादृशीं प्रणयिनींगृहिणींगृहेषुपश्यामिमानिनिययास्वविवाहकाले ॥ प्राप्तान्नृपानविगणय्यरहोहरोमेप्रस्थापितोद्विजउपस्थितसत्कथस्य ५९ भ्रातुर्विरूपक रणंयुधिनिर्जितस्यप्रोद्वाहपर्वणिचतद्वधमक्षगोष्ठ्याम् ॥ दुःखंसमुत्थमसहास्मदयोगभीत्यानैवाब्रवीःकिमपितेनवयंजितास्ते ६० दूतस्त्वयात्मलभनेसुवि विक्तमंत्रःप्रस्थापितोमयिचिरायतिशून्यमेतत् ॥ मत्वाजिहासुरिदमंगमनन्ययोग्यंतिष्ठेस्ततस्त्वयिवयंप्रतिनंदयामः ६१ श्रीशुकउवाच ॥ एवंसौरतसं लापैर्भगवान्देवकीसुतः ॥ स्वरतोरमयारेमेनरलोकंविडंबयन् ६२ तथान्यासामपिस्त्रीणांगृहेषुगृहवानिव ॥ आस्थितोगृहमेधीयान्धर्माँल्लोकगुरुर्जुष न् ॥ ६३ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

गृहंमंगलमंदिरंच ऐश्वर्ययुतश्चादिष्ट्यागृहैश्वर्ययुतःतस्मिन्नितिवा ५८ श्लोकत्रयेणदेव्याःपूर्वोक्तांभक्तिंलालयति नत्वादृशीमित्यादिनाउपस्थितासमीपंप्रापितात्वत्सत्कथा यस्यसतथातस्यरहोहरः हःअतिरहसि ५९ विरूपकरणंकेशवपनं प्रोद्वाहपर्वणिविवाहलक्षणोत्सवदिवसेअक्षगोष्ठ्यांद्यूतविशेषक्रीडायां तस्यभ्रातुर्वधं अस्मदयोगभीत्याअस्मद्विरहभयेन ६० आत्मलभनेस्वलाभार्थंसुष्ठुविवि क्तमंत्रःस्पष्टीकृतरहोवचनःचिरायतिविलंबनंकुर्वतिसति एतज्जगच्छून्यंअसदमंगलंमत्वाऽनन्ययोग्यंअन्यपुरुषसंगायोग्यमिदंअंगंजिहासुस्तिष्ठेरितियावत् ६१ देव्यागुणाब्रह्मायुषापिवक्तुंनशक्याइ तिसंक्षिपतीत्याह श्रीशुकइति सौरतसंलापैःसुरतसंबंधिमिथोभाषणैः नरलोकंमनुष्यजनंविडंबयन्अनुकुर्वन् ६२ इदमन्यत्रातिदिशति तथेति गृहवान्गृहस्थइवआस्थितःउद्धतश्चप्रकाशितः आङउद्ध मनइतिसूत्रम् ॥ ६३ ॥ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांपचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ छ ॥

अध्यायद्वयेनलोकविडंबनानुचरितंकथयति तेनसतांज्ञानाभिवृद्धिरसतामन्यथेति तत्रादावेकैकस्यांदशदशपुत्राआसन्नित्यादिकथयति एकैकशइति सर्वात्मसंपदाअन्यूनदेहादिस्वभावसमृद्ध्या १ अनपगंअपगमरहितम् २ एवमपिपराजयःस्त्रीणामेवेत्याह चार्विति ३ स्मायःमंदस्मितंतेनयुक्तोवलोकःस्मायावलोकः तरयलवेनाल्पेनदर्शितेनभावेनस्पंदनलक्षणक्रिययाहारिणामनोहरेणभ्रुवोमंडलवलयेनमहिताःसौरतमंत्राः सुरतवर्धनमंत्राः एतैःशौंडैःपटुत्वमाप्तैःकामबाणैःकरणैःसंभोगसाधनैः यस्यहरेरिंद्रियंरेतोलक्षणंविमथितुंआलोडयितुंस्रावयितुंवा वशीकृतकामत्वेनदृढवीर्यत्वात् ४ याःपत्न्यःपक्ष्मकटाक्षैःस्थूणांतरेणस्तंभव्यवधानेनस्वीप्सितंसुतरामभीष्टंकृष्णमैक्षन्अपश्यन्ताइतिशेषः केनउच्यतेलक्ष्म्याःकांत्याएकधामप्रधानगृहंचसरसंसस्नेहंप्लुतंदीर्घीकृतंसृतंवावीक्षणंदर्शनंलक्ष्म्येकधामसरसप्लुतवीक्षणंतेन स्वभवनेष्वधिरूढंउत्तुंगमंचारूढअपिसभावनार्थं सतीःसत्यःस्थूणांतरेकिमर्थंवीक्षणमित्यतउक्तं नवसंगमेति ५ सुरतादन्यत्रकालेतासांलीलाविशेषमाह रामाइति रामाः

श्रीशुकउवाच ॥ एकैकशस्ताःकृष्णस्यपुत्रान्दशदशाबलाः ॥ अजीजनन्ननवमान्पितुःसर्वात्मसंपदा १ गृहादनपगंवीक्ष्यराजपुत्र्योच्युतंस्थितम् ॥ आत्मनोऽभंसतप्रेष्ठंनतत्तत्त्वविदःस्त्रियः २ चार्वब्जकोशवदनायतचारुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ॥ संमोहिताभगवतोनमनोविजेतुंस्वैर्विभ्रमैःसमशकन्वनिताविभूम्नः ३ स्मायावलोकलवदर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः ॥ पत्न्यस्तुषोडशसहस्रमनंगबाणैर्यस्येंद्रियंविमथितुंकरणैर्नशेकुः ४ याःस्वीप्सितंस्वभवनेष्वधिरूढमुच्चैर्लक्ष्म्येकधामसरसप्लुतवीक्षणेन ॥ ऐक्षन्सतामपिपतिंचसतीःकटाक्षैःस्थूणांतरेणनवसंगमलज्जयैव ५ रामागृहेविहरतःपुरतःकराभ्यांबद्धेक्षणाःस्वदयितस्यमुदाहसंत्यः ॥ गात्रांतराण्यपिदधुर्निजपूरुषस्यक्लेशावहान्यपितदंगजभंगभीताः ६ तासांयादशपुत्राणांकृष्णस्त्रीणांपुरोदिताः ॥ अष्टौमहिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणंतितान् ७ चारुदेष्णःसुदेष्णश्चचारुदेहश्चवीर्यवान् ॥ सुचारुश्चारुगुप्तश्चभद्रचारुस्तथापरः ८ चारुचंद्रोतिचारुश्चचारुमान्दशमोहरेः ॥ प्रद्युम्नप्रमुखाजातारुक्मिण्यानवमाःपितुः ९ भानुःसुभानुःस्वर्भानुःप्रभानुर्भानुमांस्तथा ॥ चंद्रभानुर्बृहद्भानुरतिभानुस्तथाष्टमः १० स्वर्भानुःप्रतिभानुश्चसत्यभामात्मजादश ॥ सांबःसुमित्रःपुरुजिच्छतजिच्चसहस्रजित् ११ विजयश्चित्रकेतुश्चवसुमान्द्रविणःक्रतुः ॥ जांबवत्याःसुताह्येतेसांबाद्याःपितृसंमताः १२ भानुश्चंद्रोश्वसेनश्चचित्रगुर्वेगवान्वृषः ॥ आमःशंकुर्वसुःश्रीमान्कुंतिर्नाग्नजितेःसुताः १३ श्रुतःकविर्वृषोवीरःसुबाहुर्भद्रएकलः ॥ शांतिर्दर्शःपूर्णमास्यःकालिंद्याःसोमकोपरः १४

स्त्रियःगृहेविहरतःस्वदयितस्यकराभ्यांपुरतोबद्धेक्षणाः मुदारोमांचहेतुहर्षेणहसंत्यःसाट्टहासंकुर्वत्यः निजपूरुषस्यनिजभर्तुःक्लेशावहानिक्लेशाकराण्यपिगात्रांतराणिविषयेभ्यःस्पर्शयोग्येभ्योगात्रेभ्योऽन्यत्गात्राण्यपिदधुःवस्त्रादिनापिहितानिचक्रुरित्यन्वयःकीदृश्यःतस्यांगजस्याश्लेषलक्षणकामस्यभंगेभीताअपीति ६ इदानींतासांपृथक्पृथक्पुत्रान्वक्तुमुपक्रमते तासामिति दशदशपुत्रायासांताःदशपुत्राः तासांतासांकृष्णस्त्रीणांमध्येयाःपुरोदिताःपूर्वोक्ताःअष्टौमहिष्यस्तासांतान्पुत्रान्प्रद्युम्नादीन्गृणंतितत्रत्याइतिशेषः ७ प्रद्युम्नादन्येकिंनामानइतितत्राह चारुदेष्णइत्यादिना ८ ९ एवंक्रमेणसत्यभामादिसुतानुक्रामति भानुरित्यादिना एकःशत्रुःचद्रस्यस्वर्भानूराहुरिवअपरःलोकस्यभानुःसूर्यइवस्वःस्वर्गंपुरोस्थितः १० ११ १२ नाग्नजितेःनग्नजित्पुत्र्याःनीलायाः १३ वृषविशेषणंवीरइतिअपरःसोमकोपिकालिंद्याःसुतः १४

माद्र्याःलक्ष्मणायाः १५ १६ रोहिण्याःभद्रायाः १७ भोजकटेपुरेस्थितस्यरुक्मिणःपुत्र्याम् १८ एतेषांमातरःकृष्णभार्याणांषोडशसहस्राणि १९ अरेःकृष्णस्यपुत्रायप्रद्युम्नाय तंकृष्णं रंध्रमवसरं २० द्विषोःशत्रुभूतयोःवैवाहिकींविवाहसंबंधिनीम् अतीतकथानेदानींवक्तुंशक्येतिनेत्याह अनागतमिति विप्रकृष्टंदूरस्थंव्यवहितंमूर्त्तद्रव्यांतरितम् २१ अर्धांगीकारेणपरिहरति यद्यपीति व्यतरद्दत्तवान् भागिनेयाय सहोदर्याःपुत्रायेतिसूचितं प्रियइष्टं तदेवआचष्टे कुर्वन्निति इदंदानेकारणम् २२ ननुततःपरंवैरंमुक्तवान्किंनततोधिकमभूत्कथमत्राह तदेवेति श्रीशैलनि लयंश्रीपर्वतवासिनंमल्लिकार्जुननामानमित्यर्थः २३ छंदयामासअभीष्टंदत्तवान् वशाभिप्रायपोश्छंदइति २४ शत्रुसंघानांमनसेतिशेषः अजेयाच्छेद्यत्वेतथास्त्वितिमित्युक्त्वा तस्यकृष्णभक्तिंद

प्रघोषोगात्रवान्सिद्धोबलःप्रबलउर्ध्वगः ॥ माद्र्याःपुत्रामहाशक्तिःसहओजोपराजितः १५वृकोहर्षोनिलोनीलो वह्निर्नोन्नादएवच ॥ महाशापोवनोवह्निर्मि त्रविंदात्मजाःक्षितिः १६ संग्रामजिद्बृहत्सेनःशूरःप्रहरणोरिजित् ॥ जयःसुभद्रोभद्राश्चोवामआयुश्चसप्तकः ॥ दीप्तिमांस्ताम्रपत्राद्यारोहिण्यास्तनयाहरेः १७ प्रद्युम्नाच्चानिरुद्धोभूद्रुक्मवत्यांमहाबलः ॥ पुत्र्यांचरुक्मिणोराजन्नाम्नाभोजकटेपुरे १८ एतेषांपुत्रपौत्राश्चबभूवुःकोटिशोनृप ॥ मातरःकृष्णजा तानांसहस्राणिचषोडश १९ ॥ राजोवाच ॥ कथंरुक्म्यरिपुत्रायप्रादाद्दुहितरंयुधि ॥ कृष्णेनपरिभूतस्तंहंतुंरंध्रंप्रतीक्षते २० एतदाख्याहिमेब्रह्मन्द्विषो र्वैवाहिकींक्रियाम् ॥ अनागतमतीतंचवर्तमानमतींद्रियम् ॥ विप्रकृष्टंव्यवहितंसम्यक्पश्यंतियोगिनः २१ श्रीशुकउवाच ॥ यद्यप्यनुस्मरन्वैरंरु क्मीकृष्णावमानितः ॥ व्यतरद्भागिनेयायसुतांकुर्वन्स्वसुःप्रियम् २२ तदेवानुस्मरन्वैरंरुक्मीकृष्णावमानितः ॥ तोषयामासतपसाश्रीशैलनिलयंहरम् २३ तपसाराधितोरुद्रोरुक्मिणावरदर्षभः ॥ वरेणच्छंदयामाससचवव्रेदृढंधनुः २४ अजेयंशत्रुसंघानामच्छेद्यंत्रिदशैरपि ॥ तथेतिकार्मुकंदत्वावाक्यंचो वाचशंकरः २५ यदाविरुध्यसेविष्णौतदेतत्कार्मुकंनृप ॥ हित्वातदात्वामामेवप्रतिपत्स्यतिनान्यथा २६ इत्युक्त्वाकार्मुकंदत्त्वाशंकरोनव्यदृश्यत ॥ सो पिलब्धवरोराजाप्राप्यभोजकटंपुरम् २७ तेनचापेनसकलान्नृपान्प्रख्यातपौरुषान् ॥ वशेचकारसंग्रामेरुक्मीकृष्णस्मृतेनृप २८ विरोद्धुंवासुदेवेनरुक्मीनै वाकरोन्मनः ॥ धनुर्लोभान्महाराजनमैत्रीमप्यकल्मषाम् २९ यद्यप्यनुस्मरन्वैरंगिरिशस्यस्मरन्वचः ॥ वृतःस्वयंवरसाक्षादनंगोंगयुतस्तया ३० रा ज्ञःसमेतान्निर्जित्यजहारैकरथोयुधि ॥ अनिरुद्धोरुक्मवत्यांतस्यांजज्ञेमहारथः ३१ जहाररयंचित्रलेखाबाणपुत्र्याप्रचोदिता ॥ सहस्रबाहुर्बाणश्चयत्कृते द्विभुजोभवत् ३२ रुक्मिण्यास्तनयांराजन्कृतवर्मसुतोबली ॥ उपयेमेविशालाक्षःकन्यांचारुमतींकिल ३३ दौहित्रायानिरुद्धायपौत्रींरुक्म्यददाद्धरेः ॥ रोचनांबद्धवैरोपिस्वसुःप्रियचिकीर्षया ३४ जानन्नधर्मंतद्योगंस्नेहपाशानुबंधनः ॥ तस्मिन्नभ्युदयेराजन्रुक्मिणीरामकेशवौ ३५

शंयितुंवक्ति वाक्यंचेति २५ २६ २७ २८ तर्हिबंधुमैत्रांनिर्दुष्टात्माकार्पीत्किंनेत्याह मैत्रीमिति अपितुबंधुकृत्याकरणेनकल्मषमकरोत् २९ मैत्र्यकरणेविरोधाकरणेचानिमित्तमाह यदीति अनंगश्चेत्किमवलोक्यवृतइत्यतउक्तमंगयुतइति ३० ३१ यमानिरुद्धं ३२ कृतवर्मणःसुतःपुत्रः ३३ रुक्मीस्वदौहित्रायहरेःपौत्रायानिरुद्धायेतिशेषःस्वपौत्रीमदात् ३४ तस्मिन्नभ्युदयेऽनि रुद्धविषयेविवाहेप्रवृत्तेसति ३७

३६ बलंबलमद्रं तद्व्यसनीद्यूतक्रियापरः ३७ पराजयेपणंग्लहम् ३८ कलिंगःदंतवक्रःत्वांजितवान्तानशिक्षतअग्रेइतिभावः ३९ ४० अर्बुदंदशकोटिग्रनम् ४१ ४२ ४३ आकाशसरस्वती किमाहेतितत्राह बलेनेति ४४ तामाकाशवाणीं ४५ ४६ अष्टपदेनअक्षफलकेन ४७ ४८ ४९ हरेःश्यालेरुक्मिणिनिहतेसति ५० भार्ययासहानिरुद्धंवररथंआरोप्यरामादयोदशार्हकाःसिद्धाखिलार्थाःसंपन्नसमस्ताभीष्टाः तत्रहेतुःमधुसूदनेति ५१ इतिश्रीभागवतेमहापुराणे दशमस्कंधेउत्त०वि०टीकायांषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ७ ॥ यथापूर्वमुक्तंतथाअत्यवासयत् अतीताप्यकरोत् य

पुरंभोजकटंजग्मुःसांबप्रद्युम्नकादयः ॥ तस्मिन्प्रवृत्तउद्वाहेकलिंगप्रमुखान्नृपाः ३६ दृप्तास्तेरुक्मिणंप्रोचुर्बलमक्षैर्विनिर्जय ॥ अनक्षज्ञोबलोराजन्नपितद्व्यसनीमहान् ३७ इत्युक्तोबलमाहूयतेनाक्षैरुक्म्यदीव्यत ॥ शतंसहस्रमयुतंरामस्तत्राददेपणम् ३८ तंतुरुक्म्यजयत्तत्रकालिंगःप्राहसद्बलम् ॥ दंतान्संदर्शयन्नुच्चैर्नामृष्यत्तद्धलायुधः ३९ ततोलक्षंरुक्म्यगृह्णाद्ग्लहंतदजयद्बलः ॥ जितवानहमित्याहरुक्मीकैतवमाश्रितः ४० मन्युनाक्षुभितःश्रीमान्समुद्रइवपर्वणि ॥ जातारुणाक्षोतिरुषान्यर्बुदंग्लहमाददे ४१ तंचापिजितवान्रामोधर्मेणच्छलतोब्रवीत् ॥ रुक्मीजितंमयात्रेमेवदंतुप्राश्निकाइति ४२ तथेत्याहकलिंगोपिदंतान्संदर्शयन्सीरिणः ॥ ततःकोपपरीतात्मातूष्णीमासीद्धलायुधः ४३ तदाऽब्रवीन्नभोवाणीबलेनैवजितोग्लहः ॥ धर्मतोवचनेनैवरुक्मीवदतिवैमृषा ४४ तामनादृत्यवैदर्भोदुष्टराजन्यचोदितः ॥ संकर्षणंपरिहसन्बभाषेकालचोदितः ४५ नैवाक्षकोविदायूयंगोपालावनगोचराः ॥ अक्षैर्दीव्यंतिराजानोबाणैश्चनभवादृशाः ४६ रुक्मिणैवमधिक्षिप्तोराजभिश्चोपहासितः ॥ क्रुद्धस्त्वष्टपदेनैनंजघानोद्वाहपर्वणि ४७ कालिंगराजंतरसागृहीत्वादशमेपदे ॥ दंतानपातयत्क्रुद्धोयोऽहसद्विवृतैर्द्विजैः ४८ अन्येनिर्भिन्नबाहूरुशिरसोरुधिरोक्षिताः ॥ राजानोदुद्रुवुर्भीताबलेनपरिघार्दिताः ४९ निहतेरुक्मिणिश्यालेनाब्रवीत्साध्वसाधुवा ॥ रुक्मिणीबलयोराजन्स्नेहभंगभयाद्धरिः ५० अथोऽनिरुद्धंसहभार्ययावरेरथंसमारोप्ययग्रुःकुशस्थलीम् ॥ रामादयोभोजकटाद्दशार्हकाःसिद्धाखिलार्थामधुसूदनाश्रयाः ५१॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेषट्सप्ततितमोऽध्यायः ॥७६॥ श्रीशुकउवाच ॥ तथाताभिर्वरस्त्रीभिरमयमाणोजनार्दनः ॥ दिनानिहतसापत्न्यःसुबहून्यत्यवासयत् १ राजोवाच ॥ तासांषोडशसाहस्रमहिषीणांजनार्दनः ॥ तूसिंकथंचकारैकोमानुषंदेहमाश्रितः २ श्रीशुकउवाच ॥ हंततेकथयिष्यामिश्रोतॄणांविस्मयावहम् ॥ यथाचकारबह्वीनामेकस्त्रीसिंजनार्दनः ३ नरकंनिहतंश्रुत्वातथोद्वाहंचयोषिताम् ॥ कृष्णेनैकेनबह्वीनांतद्दिदृक्षुःस्मनारदः ४ चित्रंबतैतदेकेनवपुषायुगपत्पृथक् ॥ गृहेषुद्व्यष्टसाहस्रंस्त्रियएकउदावहत् ५ इत्युत्सुकोद्वारवतींदेवर्षिर्द्रष्टुमागमत् ॥ पुष्पितोपवनारामद्विजालिकुलनादितम् ६

थात्यवासयत् तथातवकथयामीतित्रा १ २ ३ नरकंनिहतंश्रुत्वातथाएकेनकृष्णेनबह्वीनांयोषितांचोद्वाहंश्रुत्वानारदस्तद्द्रष्टुंतादिदृक्षुरभूदित्यन्वयः ४ ततःकिमितितत्राह चित्रमितिएकःएकेनवपुषापृथक्गृहेषुद्व्यष्टसाहस्रंस्त्रियएकस्मिन्मुहूर्तेउदावहदितियत्तदिदंविचित्रमाश्चर्यमितिच ५ सतोषादुत्सुकोभूत्वदेवर्षिः कृष्णचेष्टितंद्रष्टुंद्वारवतीमागमदित्यन्वयः कीदृशंद्वारवतीनामपुरंपुष्पिता उपवनारामायस्मिस्तत् द्विजानामलीनांपक्षिणांकुलेननादितम् ६

उत्फुल्लेंदीवरादिभिःछुरितेषुमिश्रितेषुसरस्सुहंसादिभिरुच्चैःप्लुतस्वरेण कूजितं यद्वा सामान्यत उक्तंनारदागमनंविशिनष्टि पुष्पितेत्यादिना प्रथमतोद्विजादिनादितंपुष्पितोपवनारामम्प्राप पश्चादुत्फुल्लेंदीवरादिभि छुरितेषुसरस्सुहंसादिभिरुच्चैःकूजितस्थलमाप ७ ततःपश्चात्स्फाटिकराजतैःस्फाटिकादिनिर्मितैःनवभिःनूतनैःप्रासादलक्षणैर्जुष्टंस्थलमाप कीदृशैर्महामरकतप्रख्यैःइंद्रनीलविहितसोपानैःस्वर्णरत्नानिसुवर्णश्रेष्ठानिपरिच्छदायेषांतानियथा अत्युत्तमसुवर्णजल्पविचित्रितानीत्यर्थःतैः ८ किंच विभक्तैःविभक्तरथ्यापथैःरथमार्गैश्चत्वरैरापणैश्चशोभितांततःपरंशालाभिःसभाभिरतिरुचिरां सुरालयैःदेवगृहैश्चमनोरमांयामेयचंदनोदकादिनासंसिक्तामार्गाश्चांगणानिचवीथयश्च गृहपंक्तिपुरोमार्गाश्चसंसिक्तमार्गांगणवीथयः ताश्चगेहानिचास्याःसंतीतिसंसिक्तमार्गांगणवीथिगेहिनीता पतंत्यःविवरणावरणेकुर्वत्यःपताकायेषांतेपतत्पताकाः तेचध्वजाःपतत्पताकध्वजास्तैःवारितःस्तंभितआतपोयत्रसातथातां एवंविधायातस्यांकुशस्थल्यामंतर्भागेहरेःपुरंसर्वसंपदापूर्णस्थानमस्तीतिशेषःसर्वधिष्ण्यपैः

उत्फुल्लेंदीवरांभोजकह्लारकुमुदोत्पलैः ॥ छुरितेषुसरस्सूच्चैःकूजितंहंससारसैः ७ प्रासादलक्षैर्नवभिर्जुष्टंस्फाटिकराजतैः ॥ महामरकतप्रख्यैःस्वर्णरत्नपरिच्छदैः ८ विभक्तरथ्यापथचत्वरापणैःशालासभाभीरुचिरांसुरालयैः ॥ संसिक्तमार्गांगणवीथिगेहिनीपतत्पताकाध्वजवारितातपाम् ९ तस्यामंतःपुरंश्रीमदर्चितंसर्वधिष्ण्यपैः ॥ हरेःस्वकौशलंयत्रत्वष्ट्राकात्स्न्येंनदर्शितम् १० तत्रषोडशभिःसद्मसहस्रैःसमलंकृतम् ॥ विवेशैकतमंशौरेःपत्नीनांभवनंमहत् ११ विष्टब्धंविद्रुमस्तंभैर्वैदूर्यफलकोत्तमैः ॥ इंद्रनीलमयैःकुड्यैर्जालैर्मरकतोत्तमैः १२ वितानैर्निर्मितैस्त्वष्ट्रामुक्तादामविलंबिभिः ॥ दांतैरासनपर्यंकैर्मण्युत्तमपरिष्कृतैः १३ दासीभिर्निष्ककंठीभिःसुवासोभिरलंकृतम् ॥ पुंभिःसकंचुकोष्णीषसुवस्त्रमणिकुंडलैः १४ रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वांतंविचित्रवलभीषुशिखंडिनोंग ॥ नृत्यंतियत्रविहितागुरुधूपमक्षैर्निर्यातमीक्ष्यघनबुद्धयउन्नदंतः १५ तस्मिन्समानगुणरूपवयःसुवेषदासीसहस्रयुतयाऽनुसवंगृहिण्या ॥ विप्रोददर्शचमरव्यजनेनरुक्मदंडेनसात्वतपतिंपरिवीजयंत्या १६ तंसन्निरीक्ष्यभगवान्सहसोत्थितःश्रीपर्यंकतःसकलधर्मभृतांवरिष्ठः ॥ आनम्यपादयुगलंशिरसाकिरीटजुष्टेनसांजलिरवीविशदासनेस्वे १७ तस्यावनिज्यचरणौतदपःस्वमूर्ध्नाबिभ्रज्जगद्गुरुतरोपिसतांपतिर्हि ॥ ब्रह्मण्यदेवइतियद्गुणनामयुक्तंतस्यैवयच्चरणशौचमशेषतीर्थम् १८ संपूज्यदेवऋषिमादिऋषिःपुराणोनारायणोनरसखोविधिनोदितेन ॥ वाण्याभिभाष्यमितयामृतकल्पयाचप्राहप्रभोभगवतःकरवामकिंते १९

समस्तैःब्रह्मादिभिरर्चितं धिष्ण्यंगृहं मध्यगृहपतिर्ब्रह्मा परितःपतयइंद्रादयःयत्रपुरेत्वष्ट्राविश्वकर्मणा ९ १० ततःपरितःकृष्णस्यपत्नीनांषोडशभिःसद्मसहस्रैःगृहसहस्रैःसंदर्शनीयतयालंकृतं भवनानामेकतमं भवनम् ११ कीदृशंतद्गृहमत्राह विष्टब्धमिति मूलेअग्रेचफलकोत्तमानियेषांतेतथातै.जालैःगवाक्षैः १२ मुक्तादामविलंबिभिःअवलंबमानमौक्तिकमालैः दांतैर्गजदंतनिर्मितैः १३ १४ अक्षैर्गवाक्षैःनिर्यातंनिर्गतंविहितागुरुचूर्णधूपंदृष्ट्वाशिखंडिनोमयूराः १५ चामरव्यजनेनचामराख्यव्यजनेन तस्मिन्भवनेआविवेशउपविष्टः १६ १७ भोपरीक्षिन्नैतच्चित्रमित्याह ब्रह्मण्यदेवइतीति यस्यचरणशौचजलमशेषांस्तीर्थंपवित्रीभूतान्करोतीतिअशेषतीर्थं यद्वाऽशेषाणितीर्थानियस्मिन्तत्तस्यहरेःब्रह्मण्यदेवइतियत्तद्गुणनामतस्यैवयुक्तमित्यवधारयेत्यर्थः १८ शास्त्रोदितेनविधिनासंपूज्य १९

तत्रनारदः प्रतिवक्ति नेति त्वयिअद्भुतंनैवमानादिदानामितिशेषः स्वैरावतारःस्वेच्छावतारइतिसुष्ठुविदाम २० अथदृष्टंतवांघ्रियुगलंध्यायंश्चरामि यथास्मृतिःस्यात्तथानुगृहाण २१ २२ अक्षाभिरक्षैःदी व्यंतंदेवनक्रियांकुर्वंतम् २३ अविदुषेवपूर्वंगृहेनारदागमनमजानतेवहरिणाभवान्कदायातइत्यसौनारदःपृष्टः २४ २५ २६ क्वापिगृहेब्राह्मणदत्तावशेषितमन्नम् २७ असिचर्मभ्यांशिष्यवर्त्मसुचरंतंशि ष्याञ्छिक्षयंतम् २८ २९ वारमुख्याभिरबलाभिरावृतंवेष्टितम् ३० ददतमितिपाठःददंतमितिपाठेददानइत्यस्यधातोःशत्रादेशः ३१ ३२ ३३ ३४ कालेप्राप्तेविध्युक्तप्रकारेणउपनायनंउपनयनं स्व

नारदउवाच ॥ नैवाद्भुतंत्वयिविभोखिललोकनाथेमैत्रींजनेषुदधतश्चदमंखलानाम् ॥ निःश्रेयसायजगतांस्थितिरक्षणाभ्यांस्वैरावतारउरुगायविदामसुष्ठु २० दृष्टंतवांघ्रियुगुलंजनतापवर्गंब्रह्मादिभिर्हृदिविचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबंध्यायंश्चराम्यनुगृहाणयथास्मृतिःस्यात् २१ ततोन्यदाविशद्गेहंकृष्णपत्न्याःस्मनारदः ॥ योगेश्वरेश्वरस्यांगयोगमायांविवित्सया २२ दीव्यंतमक्षैस्तत्रापि प्रियया चोद्धवेनच ॥ पूजितःपरयाभ क्त्याप्रत्युत्थानासनादिभिः २३ पृष्टश्चाविदुषेवासौकदायातोभवानिति ॥ क्रियतेकिंनुपूर्णानामपूर्णैरस्मदादिभिः २४ अथापिब्रूहिनोब्रह्मन्जन्मैतच्छो भनंकुरु ॥ सतुविस्मितउत्थायतूर्णमन्यदगाद्गृहम् २५ तत्राप्यचष्टगोविंदंलालयंतंशिशून्सुतान् ॥ ततोन्यस्मिन्गृहेपश्यन्मज्जनायकृतोद्यमम् २६ जुह्वंतंचवितानाग्नीन्यजंतंपंचभिर्मखैः ॥ भोजयंतंद्विजान्क्वापिभुंजानमवशेषितम् २७ क्वापिसंध्यामुपासीनंजपंतंब्रह्मवाग्यतम् ॥ एकत्रचासिचर्मभ्यां चरंतंशिष्यवर्त्मसु २८ अश्वैर्गजैरथैःक्वापिविचरंतंगदाग्रजम् ॥ क्वचिच्छयानंपर्यंकेस्तूयमानंचवंदिभिः २९ मंत्रयंतंचकस्मिंश्चिन्मंत्रिभिश्चोद्धवादिभिः ॥ जलक्रीडारतंक्वापिवारमुख्याबलावृतम् ३० कुत्रचिद्द्विजमुख्येभ्योददतंगाःस्वलंकृताः ॥ इतिहासपुराणानिशृण्वंतंमंगलानिच ३१ हसंतंहास्यकथयाक दाचित्प्रिययागृहे ॥ क्वापिधर्मंसेवमानमर्थकामौचकुत्रचित् ३२ ध्यायंतमेकमात्मानंपुरुषंप्रकृतेःपरम् ॥ शुश्रूषंतंगुरून्क्वापिकामैर्भोगैःसपर्यया ३३ कु र्वंतंविग्रहंकैश्चित्संधिंचान्यत्रकेशवम् ॥ कुत्रापिसहरामेणाचिंतयंतंसतांशिवम् ३४ पुत्राणांदुहितॄणांचकालेविध्युपनायनम् ॥ दारैर्वरैस्तत्सदृशैःकल्प यंतंविभूतिभिः ३५ प्रस्थापनोपनयनैरपत्यानांमहोत्सवान् ॥ वीक्ष्ययोगेश्वरेशस्ययेषांलोकाविसिस्मिरे ३६ यजंतंसकलान्देवान्क्वचित्क्रतुभिरूर्जि तैः ॥ पूर्तयंतंक्वचिद्धर्मंकूपारामालयादिभिः ३७ चरंतंमृगयांक्वापिहयमारुह्यसैंधवम् ॥ घ्नंतंतीर्थेपशून्मेध्यान्परीतंयदुपुंगवैः ३८ अव्यक्तलिंगप्रकृति मंतःपुरचरादिषु ॥ क्वचिच्चरंतंयोगेशंतत्तद्भावबुभुत्सया ३९ अथोवाचहृषीकेशंनारदःप्रहसन्निव ॥ योगमायाबलंवीक्ष्यमानुषीमीयुषोगतिम् ४०

गृहप्रत्यानयनंब्राह्मणीकारणंकल्पयंतंपुत्राणांदारैःसहदुहितॄणांवरैःसहयोगंकल्पयंतम् ३५ प्रस्थापनंपरगृहंप्रतिदुहितृप्रेषणंउपनयनंस्वगृहंप्रत्यानयनं येषामितिषष्ठीद्वितीयार्थे लोकाःयानिकर्माणिवी क्ष्यविसिस्मिरेतानिकुर्वंतंकर्मणामाचरणंवीक्ष्येतिवा ३६ कूपादिभिःपूर्तयंतंपूताख्यधर्ममाचरंतम् ३८ सैंधवंसिंधुदेशभवं तीर्थेशास्त्रविहितान्पात्रेप्राप्तेवायज्ञेवा ३८ अव्यक्तलिंगप्रकृतिंअस्पष्टलक्षणस्व भावं तेषांतेषांभावानांपदार्थानांबुभुत्सयास्वभावजिज्ञासया ३९ मानुषींगतिंमनुष्यक्रीडाम् ४०

आत्मनित्त्हृदयेनिर्भातस्यप्रकाशितस्यभवतःपादयोर्निषेवया ४१ आप्लुतानितिपाठेयशसातीर्थेनस्नातानित्यर्थः ४२ लोकानुकारिचरितदर्शनेननारदस्यान्यथाज्ञाननिवारयन्निततत्त्वमुपदिशति ब्रह्मन्निति इमंलोकमास्थितः तंधर्मंकर्तारंअनुमोदकःअनुज्ञाता ४३ उपसंहरति इतीति इतिशब्दआदिवचनः ४४ ४५ इत्यर्थधर्मकामेषुअवहितात्मनाकृष्णेन ४६ ४७ साक्षान्मोक्षहेतुत्वात् भगवच्चरितमिदंमुमुक्षुभिरभ्यसनीयमाश्वसनीयंनतुविटवृत्तवदुपेक्षणीयमितिभावेनाह यानीतिअंगविष्णुरात विश्वविलयोद्भववृत्तिषुहेतुर्हरिः यानिअनन्यविषयाणिकर्माणिचकारयस्तुतानिगायतिशृणोतिअनुजानातिवा तस्यपुंसोपवर्गमार्गेभगवतिभक्तिर्भवतिहियस्मात्तस्मादवश्यंमुमुक्षुणासेव्यानीति ४८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांसप्तसप्ततितमोऽध्यायः ॥ ७७ ॥ राज्ञांदैनंदिननित्यानियमप्रकारंकथयत्यास्मिन्नध्याये तत्रादौमाधवीनांग्राम्यधर्मलौल्यातिशयंकथयति अथेत्यादिना १ वयांसिकोकिलादीनि बांदिन.कृष्णंबोधयतीवोपत

नारदउवाच ॥ विदामयोगमायांतेदुर्दर्शामपियोगिनाम् ॥ योगेश्वरात्मन्निर्भातभवत्पादनिषेवया ४३ अनुजानीहिमांदेवलोकांस्तेयशसाप्लुतान् ॥ पर्यटामितवोद्गायन्लीलांभुवनपावनीम् ४२ श्रीभगवानुवाच ॥ ब्रह्मन्धर्मस्यवक्ताहंकर्तारमनुमोदकः ॥ शिक्षयंस्तंलोकमिममास्थितःपुत्रमाखिदः ४३ श्रीशुकउवाच ॥ इत्याचरंतंसद्धर्मान्प्राक्सद्यान्गृहमेधिनाम् ॥ तमेवसर्वगेहेषुसंतमेकंददर्शह ४४ कृष्णस्यानंतवीर्यस्ययोगमायामहोदयम् ॥ मुहुर्दृष्ट्वाऋषिरभूद्विस्मितोजातकौतुकः ४५ इत्यर्थधर्मकामेषुकृष्णेनावहितात्मना ॥ सम्यक्सभाजितःप्रीतस्तमेवानुस्मरन्ययौ ४६ एवंमनुष्यपदवीमनुवर्तमानोनारायणोखिलभवायगृहीतशक्तिः॥ रेमेचषोडशसहस्रवरांगनानांसव्रीडसौहृदनिरीक्षणहासजुष्टः ४७यानीहविश्वविलयोद्भववृत्तिहेतुःकर्माण्यनन्यविषयाणिहरिश्चकार॥यस्त्वंगगायतिशृणोत्यनुमोदतेवाभक्तिर्भवेद्भगवतिह्यपवर्गमार्गे ४८॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्त०सप्तसप्ततितमोऽध्यायः ॥७७॥ श्रीशुकउवाच ॥ अथोषस्युपवृत्तायांकुक्कुटान्कूजतोशपन् ॥ गृहीतकंठ्यःपतिभिर्माधव्योविरहातुराः १ वयांस्यरूरुवन्कृष्णंबोधयंतीविबंदिनः ॥ गायत्स्वलिष्वदभ्रपुमंदारवनवायुभिः २ मुहूर्तंतंतुवैदर्भीनामृष्यदपिशोभनम् ॥ परिरंभणविश्लेषात्प्रियबाह्वंतरंगता ३ ब्राह्मेमुहूर्तेउत्थायवार्युपस्पृश्यमाधवः ॥ दध्यौप्रसन्नकरणआत्मानंतमसःपरम् ४ एकंपरंज्योतिरनन्यमव्ययंस्वसंस्थयानित्यनिरस्तकल्मषम् ॥ ब्रह्माख्यमस्योद्भवनादिहेतुभिःस्वलक्षणैर्लक्षितभावनिर्वृतिम् ५ अथाप्लुतोंभस्यमलेयथाविधिक्रियाकलापंपरिधायवाससी ॥ चकारसंध्योपगमादिसत्तमोहुतानलोब्रह्मजजापवाग्यतः ६

स्युःनित्योद्बुद्धत्वादिवेति मंदारवनवायुभिःपारिजातवनवायुभिःसह २ तंमुहूर्तोपलक्षितकालम् प्रियस्यकृष्णस्यबाह्वंतरंवक्षस्थलम् ३ नित्यप्रसन्नांतःकरणःआत्मानंस्वयमेव ४ इतरवस्तुभ्यआत्मानंव्यावर्तयति एकमिति एकंमुख्यंस्वरूपभेदशून्यंवा आदित्यादिज्योतिभ्यःपरंविलक्षणम् परंज्योतीरूपंसंपद्यतेतिश्रुतिः अनन्यंअन्याधीनस्वभावरहितंनअन्यःस्वतंत्रोयस्मात्सतथातंवा अद्वयंअसदृशं स्वसस्थयास्वव्यवस्थयास्वमहिम्नास्वाकारेणवा नित्यनिरस्तदोषं किंतस्यनामधेयमत्राह ब्रह्माख्यमिति स्वलक्षणैःस्वरूपलक्षणैःव्यावर्तकधर्मैःअस्यजगतःउद्भवनादिहेतुभिःसृष्ट्यादिहेतुभिर्लक्षिताभावनिर्वृतिःस्वरूपानंदोयस्यसतथातम् यदेषआकाशआनंदोनस्यात्इतिश्रुतेः ५ संध्योपगमादिसंध्योपासनादिकंक्रियाकलापंचकार ब्रह्मजजाप नियतस्वाध्यायाध्ययनंकृतवान् गायत्रींवा जप्तवान् ६

सआत्मनःकलाःस्वसंनिधानविशेषोपेतान् आत्मवान् स्वाधीनप्रयत्नः स्वाधीनमनावा ७ साध्वीनांपादबंधनादिक्रियानपेक्षाणाम् गृष्टीनांप्रथमप्रसूतानाम् ८ बद्वंबद्वंबद्वंवद्वयंएकैकस्मैविप्राय ९ गोविप्र
देवताःवयोवृद्धांश्च गुरुभूतान्यश्वत्थादीनिनमस्कृत्य एतत्सर्वंकीदृशमत्राह आत्मेति आत्मनःसंभूर्तिसंनिधेःप्रतिमाम् मंगलानितिलादीनि १० नरलोकस्यमुक्तामुक्तस्यभूषणंअलंकारभूतम् ११
आदर्शंदर्पणम् गवादींश्चप्रेक्ष्यदेवताःप्रतिष्ठिताः कामिनामर्थिनांकामान्काम्यान्पदार्थान्किंबहुनासर्वान्कामैःपृथक्पृथक्पतोष्यसंतोषंजनयित्वा स्वयमपिप्रत्यनंदत संतुष्टोभूदित्यन्वयः १२ द्र
व्यसंविभागक्रममाह संविभज्येति विप्रादींतुद्दिश्यस्रगादिभिस्तृतीयाचद्वितीयार्थे प्रायुंक्तस्वयंस्वीचकार १३ तावत्तदा १४ १५ स्त्रीणांमनः १६ यन्निविष्टानांयत्रसभायामुपविष्टानांअ

उपस्थायार्कमुद्यंतंतर्पयित्वात्मनःकलाः ॥ देवानृषीन्पितॄन्वृद्धान्विप्रानभ्यर्च्यचात्मवान् ७ धेनूनांरुक्मशृंगीणांसाध्वीनांमौक्तिकस्रजाम् ॥ पयस्विनीनांगृष्टीनांसवत्सानांसुवाससाम् ॥ ८ ददौरूप्यखुराग्राणांक्षौमाजिनतिलैःसह ॥ अलंकृतेभ्योविप्रेभ्योबद्वंबद्वंदिनेदिने ९ गोविप्रदेवतावृद्धान्गुरुभूतानिसर्वशः ॥ नमस्कृत्वात्मसंभूर्तिमंगलानिसमस्पृशत् १० आत्मानंभूषयामासनरलोकविभूषणम् ॥ वासोभिर्भूषणैःस्वीयैर्दिव्यस्रगनुलेपनैः ११ अवेक्ष्याज्यंतथादर्शंगोवृषद्विजदेवताः ॥ कामिनांसर्ववर्णानांपौरांतःपुरचारिणाम् ॥ प्रादात्कामान्पृथक्कामैःप्रतोष्यप्रत्यनंदत १२ संविभज्याग्रतोविप्रान्स्रक्तांबूलानुलेपनैः ॥ सुहृदःप्रकृतीर्दारान्प्रायुंक्तचततःस्वयम् १३ तावत्सूतउपानीयस्यंदनंपरमाद्भुतम् ॥ सुग्रीवाद्यैर्हयैर्युक्तंप्रणम्यावस्थितोग्रतः १४ गृहीत्वापाणिनापाणिंसारथेरथमारुहत् ॥ सात्यक्युद्धवसंयुक्तःपूर्वाद्रिमिवभास्करः १५ ईक्षितोंतःपुरस्त्रीणांसव्रीडप्रेमवीक्षितैः ॥ कृच्छ्राद्विसृष्टोनिरगाज्जातहासोहरन्मनः १६ सुधर्माख्यांसभांसर्वैर्वृष्णिभिःपरिवारितः ॥ प्राविशद्यन्निविष्टानांनसंत्यंगषडूर्मयः १७ तत्रोपविष्टःपरमासनेविभुर्बभौस्वभासाककुभोवभासयन् ॥ वृतोनृसिंहैर्यदुभिर्यदूत्तमोयथोडुराजोदिवितारकागणैः १८ तत्राथमंत्रिणोराजन्नानाहास्यरसैर्विभुम् ॥ उपतस्थुर्नटाचार्यानर्तक्यस्तांडवैःसमम् १९ मृदंगवीणामुरजवेणुतालतलस्वनैः ॥ ननृतुर्जगुस्तुष्टुवुश्चसूतमागधवंदिनः २० तत्रस्थाब्राह्मणाःकेचिदासीनाब्रह्मवादिनः ॥ पूर्वेषांपुण्ययशसांराज्ञांचाकथयन्कथाः २१ तत्रैकःपुरुषोराजन्नागतोऽपूर्वदर्शनः ॥ विज्ञापितोभगवतेप्रतीहारैःप्रवेशितः २२ सनमस्कृत्यकृष्णायपरेशायकृतांजलिः ॥ राज्ञामावेदयद्दुःखंजरासंधोपरोधजम् २३ येतुदिग्विजयेतस्यसन्नतिंनाययुर्नृपाः ॥ प्रसह्यरुद्धास्तेनासन्नयुतेद्वेगिरिव्रजे २४ ॥ राजानऊचुः ॥ कृष्णकृष्णाप्रमेयात्मन्प्रपन्नभयभंजन ॥ वयंत्वांशरणंयामोभवभीताःपृथग्धियः २५ लोकोविकर्मनिरतःकुशलेप्रमत्तःकर्मण्ययंत्वदुदितेभवदर्चनेस्वे ॥ यस्तावदस्यबलवानिहजीविताशांसद्यश्छिनत्त्यनिमिषायनमोस्तुतस्मै २६

शनपानादिषडूर्मयोनसंतिनबाधंते १७ नृसिंहैःपुरुषश्रेष्ठैः १८ नानाविधैःहास्यैःहसनविषयैरसैःरागजनकवचनैः १९ नटादयोननृतुःसूतादयोजगुः २० गानानंतरंकःप्रसंगइत्यत्राह तत्रस्थाइति ष्ठागतिनिवृत्तिवाचिनाशयित्वमुपतिष्ठत्वंवासूच्यते अत्रतयोःकोविवक्ष्यतइत्यतउक्तम् आसीनाइति २१ तत्रतस्यामवस्थायाम् २२ जरासंधनकृतोपरोधोनिरोधः तस्माज्जातम् २३ गिरिव्रजेनगरे २४ पृथग्धियःयथार्थज्ञानशून्याः २५ अयथार्थज्ञानीकिंकरोतिकिंचतस्यफलमितितत्राह लोकइति उक्तार्थोयम् २६

भगवानत्रकिमर्थमवतीर्णइतितत्राह कालइति चशब्दएवार्थेसमुच्चयेवा सतांरक्षणाय खलानांदुष्टानांनिग्रहाय इदंजगत्अस्मिन्जगतिकलयाऽवतीर्णोभगवानितिकिंवदंती एवद्रूपंविनानान्यत् कार्यंकिंनाकिमपि कुतःकालःतत्तत्कालेतत्तत्कार्यसाधनसमर्थत्वात् कःखलःकोवासन्निति विशिनष्टि कश्चिदिति हेईशकश्चिज्जनस्त्वदीयंनिदेशमतियातिअतिक्रामतिसखलःकिंसुकृतमृच्छति किं स्वित्त्वदीयंनिदेशमतियातिलंघयति सोऽसन्किंसुकृतमृच्छतीतिवयंनविद्मः एकःसुखच्छेदकंलोकंएकःसुखकरंऋच्छतीतिभवान्वेत्तीतिवाक्यार्थः अतिस्यादाधिकार्थोक्तौप्रशंसायामतिक्रमइति २७ स्वर्गादिसुखस्यनिर्विषयत्वेनराज्यसुखात्परंनकिमपीतिकेषांचित्प्रवादस्तत्राह स्वप्नायितमिति । स्वप्नायितंस्वप्नवत्क्षणिकं तदपिनस्वाधीनमित्याह परतंत्रमिति । तत्रतन्नित्यमित्याशयश्चतन्मरणत योषेसेनमृतकेनशवकल्पेनशरीरेणराज्यधुरंवहामइत्यस्यान्यत्किंसुखमस्तीतितर्हितद्धानौबह्वायासात्क्लेशःस्यादितितत्राह हित्वेति यदनीहलभ्यनिवृत्तिमार्गस्थैःसाध्यमात्मनिसुखंतद्धित्वाकृपणावयं क्लिश्यामहे एवंविधंज्ञानमस्तिचेत् किमितिक्लेशइत्यतउक्तं तवेति २८ किमिदानीमावश्यकंतद्वदकिंबहुसिद्धानुवादेनेतितत्राह तन्नइति । वियुंक्ष्वियोजय अयुतमतंगजवीर्यंअयुतगजपराक्रमं

कालोभवान्जगदिदंकलयावतीर्णःसद्रक्षणायखलनिग्रहणायचान्यत् ॥ कश्चित्त्वदीयमतियातिनिदेशमीशकिंवाजनःसुकृतमृच्छतितन्नविद्मः २७ स्वप्नायितंनृपसुखंपरतंत्रमीशश्वद्भयेनमृतकेनधुरंवहामः ॥ हित्वायदात्मनिसुखंतदनीहलभ्यंक्लिश्यामहेतिकृपणास्तवमाययेति २८ तन्नोभवान्प्रणतशोकहरांघ्रियुग्मोरुद्धान्वियुंक्ष्वमगधाधिपकर्मपाशात् ॥ योभूभुजोयुतमतंगजवीर्यमेकोबिभ्रद्रुरोधभवनेमृगराडिवावीः २९ योवैत्वया द्विनवकृत्वउदात्तचक्रोभग्नोमृधेखलुभवंतमनंतवीर्यम् ॥ जित्वानृलोकनिरतंसकृदूढदर्पोयुष्मत्प्रजारुजतिनोऽजितताद्विधेहि ३० इतिमागधसंरुद्धाभवद्दर्शनकांक्षिणः ॥ प्रपन्नाःपादमूलंतेदीनानांशंविधीयताम् ३१ ॥ श्रीशुकउवाच ॥ राजदूतेब्रुवत्येवंदेवर्षिःपरमद्युतिः ॥ बिभ्रत्पिंगजटाभारंप्रादुरासीद्यथा रविः ३२ गायन्गिरामधुरयाप्रियकर्माणिजन्मच ॥ द्रावयन्नघसंघांश्चलोकान्विरमयन्भृशम् ३३ तंदृष्ट्वाभगवान्कृष्णःसर्वलोकेश्वरेश्वरः ॥ ववंदउत्थितःशीर्ष्णासंसभ्यःसानुगोमुदा ३४ सभाजयित्वाविधिवत्कृतासनपरिग्रहम् ॥ बभाषेसूनृतैर्वाक्यैःश्रद्धयातर्पयन्मुनिम् ३५ अपिस्विदद्यलोकानांत्रयाणामकुतोभयम् ॥ ननुभूयान्भगवतोलोकान्पर्यटतोगुणः ३६ नहितेऽविदितंकिंचिल्लोकेष्वीश्वरकर्तृषु ॥ अथपृच्छामहेयुष्मान्पांडवानांचिकीर्षितम् ३७ नारदउवाच ॥ दृष्टामयातेबहुशोदुरत्ययामायाविभोविश्वसृजश्चमायिनः ॥ भूतेषुभूमंश्चरतःस्वशक्तिभिर्वह्नेरिवच्छन्नरुचोरुचोद्भुताः ३८ तवेहितंकोर्हतिसाधुवेदितुंस्वमाययेदंसृजतोनियच्छतः ॥ योविद्यथानात्मतयावसीयतेतस्मैनमस्तेस्वविलक्षणात्मने ३९

बिभ्रत् २९ उदात्तंउन्नतंचक्रंसैन्यंयस्यतउदात्तचक्रः आशुचआश्वेव तस्यप्रतिक्रियाम् ३० ३१ ३२ ३३ ३४ ३५ अथत्रयाणांलोकानामकुतोभयमपिभयनास्तिहि लोककुशलाकुशलजिज्ञासयापर्यटतोभवतोमहान्गुणोभवतीत्याह नन्विति ३६ पक्षिवत्पर्यटताऽज्ञेनमयाकिंप्रयोजनमत्राह नहीति ईश्वरःकर्तायेषांतथातेषु अथतस्मात् ३७ मायामाहात्म्यानि मायिन नित्याव्याहतमाहात्म्यस्य दारुषुछन्नरुचःवह्नेरुचइवतवरुचोप्यद्भुताश्चित्या. ३८ वह्नेरुचोमथनादिनाव्यज्यंतेनतथातवरुचइतिभावेनाह तवेति । कुतोनिर्वेदनामितितत्राह यइति । योभवानविद्ययाऽज्ञानेनात्मतयाथस्वामितयावसीयतेनिश्चीयतेशरीरैरिभिरितिशेषः । इतियदतोवेदनंदुःशकमित्यर्थ. । तर्हितत्सत्यंकिंनेत्याह स्वेति । स्वतोविलक्षणस्वरूपाय तस्मात्त्वामित्वमेवसत्यमिति तत्राज्ञानमेवकारणमित्यर्थःस्वरूपतोविरुद्धलक्षणस्वामिनेकदाप्यनुपहतस्वामिनइत्यर्थंइतिवा ३९

अज्ञानंमोकदापिनस्पृशेत्अस्तुतज्ञानमेवनित्यंप्रज्वालितंभूयादितिप्रार्थयते जीवस्येति । अज्ञानतःसंसरतोजीवस्यानर्थवहाच्छरीरतोविमोक्षणंनजायतइतियत्तस्मादेतदेहहानायलीलावतारैस्त्वंस्वयशः प्रदीपकंज्ञानंप्रज्वालयेस्तदर्थमहंशरणंप्रपद्यइत्यन्वयः । अनेनलीलावताराविषयाज्ञानंदूरीकृत्यतत्त्वज्ञानमेवविकसितंकुर्वित्युक्तंभवति ४० यतस्त्वत्प्रसादादरमदादेर्विज्ञानंतत्राकिंचिदपिविज्ञाप्यमपश्यामि अथापितथापिअशेषपुरुषार्थप्राप्तौभगवद्भक्तेःमुख्यहेतुत्वेपिनरदेवानांविडंबनंयज्ञकरणम् ४१ पारमेष्ठ्येनउत्तमकल्पेनब्रह्मपदप्राप्तिहेतुनावा ४२ ४३ अत्यावसायिनःअंत्यजातयोपि ईक्षादर्शनमभिमर्शनंस्पर्शनादिलक्षणंचैषांइतीक्षाभिमर्शिनः ४४ उक्तमेवस्फोरयति यस्येति हेअमलयशःमंगलकीर्त्तेन यस्यतवाथकल्याणमतएवामलंनिर्दोषयशःविश्वपुनाति ननु गितत्वेयशसोविश्वपुनानत्वं कथमित्यतउक्तं दिवीत्यादि घटांतरदीपवत्अस्पष्टस्यापिकथमित्यतउक्तं दिशांवितानमितिदिशामतेषुविशेषेणतानोविस्तारोयस्यतत्तथा तथापिनचोरवदित्याह प्रथितामिति । अथजन्मप्रभृतिश्रीमत्पादलक्षणास्पदंगतातवपादरजोवहोर्मिर्मंदाकिनीच विश्वंपुनाति अतस्तवमाहात्म्यंकिंवक्ष्यामीत्यतोनमोनमइत्युपरमामीतिवाक्यार्थः ४५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेवि

जीवस्ययत्संसरतोविमोक्षणंनजायतेनर्थवहाच्छरीरतः ॥ लीलावतारैःस्वयशःप्रदीपकंप्रज्वालयेस्त्वंतदहंप्रपद्ये ४० अथाप्याश्रावयेब्रह्मन्नरदेवविडंबनम् ॥ राज्ञःपैतृष्वसेयस्यभक्तस्यचचिकीर्षितम् ४१ यक्ष्यतित्वांमखेंद्रेणराजसूयेनपांडवः ॥ पारमेष्ठ्यकामोनृपतिस्तद्भवाननुमोदताम् ४२ तस्मिन्देवक्रतुवरेभवंतंवैसुरादयः ॥ दिदृक्षवःसमेष्यंतिराजानश्चयशस्विनः ४३ श्रवणात्कीर्तनाद्ध्यानात्पूयंतेंत्यावसायिनः ॥ तवब्रह्ममयस्येशकिमुतेक्षाभिमर्शिनः ४४ यस्यामलंदिवियशःप्रथितंरसायांभूमौचतेमलयशोथदिशांवितानम् ॥ मंदाकिनीचतवपादरजोवहोर्मिःश्रीमत्पदास्पदगताथपुनातिविश्वम् ४५ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेअष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ श्रीशुकउवाच ॥ इत्युदीरितमाकर्ण्यदेवर्षेरुद्धवोब्रवीत् ॥ सभ्यानांमतमाज्ञायकृष्णस्यचमहामतिः १ उद्धवउवाच ॥ यदुक्तमृषिणादेवसाचिव्यंयक्ष्यतस्त्वया ॥ कार्यंपैतृष्वसेयस्यरक्षाचशरणैषिणाम् २ यष्टव्यंराजसूयेनदिक्चक्रजयिनाविभो ॥ अतोजरासुतवधउभयार्थोमतोहिमे ३ अस्माकंचमहानर्थोह्येतेनैवभविष्यति ॥ यशश्चतवगोविंदराज्ञोबंधाद्विमुच्यतः ४ सर्वैर्दुर्विषहोराजानागायुतसमोबले ॥ बलिनामपिचान्येषांभीमसेनबलंविना ५ द्वैरथेसतुजेतव्योनशताक्षौहिणीयुतः ॥ ब्रह्मण्योभ्यर्थितोविप्रैर्नप्रत्याख्यातिकर्हिचित् ६

जय०टीकायांअष्टसप्ततितमोध्यायः ॥ ७८ ॥ एकांतभक्तानांभक्त्यतिशयजननायहरेर्बंधुकृत्याचरणलक्षणमाहात्म्यंकथयति । तत्रादौकृष्णकटाक्षसूचिततत्कार्यविशेषउद्धवःस्वांनीतिंवक्ति इतीति १ तद्भवाननुमोदतामितिदेवर्षिणायदुक्तंतस्यायमभिप्रायःहेदेवत्वयायक्ष्यतःयागंकरिष्यतःपैतृष्वसेयस्ययुधिष्ठिरस्यसाचिव्यंसाहाय्यंकार्यंकर्तव्यमिति किंचशरणैषिणाराज्ञारक्षाचकार्या २ कार्यद्वयसाधनोपायंवक्ति यष्टव्यमिति । तेनराज्ञाराजसूयेनयज्ञेनयष्टव्यं नकृष्ण्यादिनेवयागमात्रेणतथापित्थिक्रत्पेनभाव्यमित्याह दिक्चक्रेति । दिङ्मंडलंजितवता तत्रामृत्वाजरासंधःकरंनददातीति यदतोजरासुतवधउभयेषामर्थःप्रयोजनं ३ युधिष्ठिरकार्यंसिद्धवत्कृत्वास्वकार्यमभिष्टौति अस्माकमिति एतेनजरासंधवधेन विमुच्यतःविमोचयतः ४ दुर्बलैर्दुर्विषहोस्तुबलिनांतुविषहइत्यतउक्तं बलिनामिति तर्हिदंदुःखसाध्यंनेत्याह भीमसेनेति ५ द्वैरथेद्वंद्वयुद्धे तत्रोपायमाह ब्रह्मण्यइति ६

तीक्ष्णश्चैवप्रचंडश्चवृकोनामानलोमतः सपांडवस्यजठरेतेनभीमोवृकोदरइति । हननेनिश्चयेकोहेतुरित्यतउक्तं तवेति त्वयासहगंतव्यंतदर्थमित्यर्थः ७ तत्कुतइतितत्राह निमित्तमात्रमिति । कालइत्याख्यरूपंसंज्ञारूपमस्यास्तीति कालाख्यारूपीतस्य ८ हेकृष्णतत्रेदंकर्मलोकक्षेमकरमितिभावेनाह गायंतीति राज्ञांदेव्यःमहिष्यःचशब्दादेव्यःगृहेषुतेतवइदंकर्मगायंति इदमिकितत्राह स्वशत्रुवि आत्मनःस्वामिनोनिरोधान्मोक्षणं कथंगायंतीत्यतोलुप्तोपमामाह गोप्यइति चशब्दोयथावचनःगोप्यःयथाकुंजरपतेः गजेंद्रस्यनक्राद्विमोक्षणंनक्राख्यवधच यद्वा कुवलयापीडस्यात्मविमोक्षणं शरीरवियोगलक्षणंमरणं चाणूरादिस्वशत्रुवधंच जनकात्मजायाः सीतायाःरावणबंधाद्विमोक्षणं रावणाख्यशत्रुवधंच मुनयोवाल्मीक्यादयः वयंच तथापित्रोःदेवकीवसुदेवयोःकंसविहितशृंखलायाः विमोक्षणं कंसाख्यशत्रुवधंगायामस्तथेत्यर्थः देव्योदेवस्त्रियोगृहेषुविमानेषुस्थित्वामोक्षणमित्यादिवा ९ किंबहुनोक्तेनायंजरासंधवधोनेकप्रयोजनोपेतइत्याह जरासधेति भूभारहरणार्थत्वेना

ब्रह्मवेषधरोभूत्वातंभिक्षेतवृकोदरः ॥ हनिष्यतिनसंदेहोद्वैरथेतवसन्निधौ ७ निमित्तमात्रमीशस्यविश्वसर्गनिरोधयोः ॥ हिरण्यगर्भःशर्वश्चकालाख्यारूपिणस्तव ८ गायंतितेविशदकर्मगृहेषुदेव्योराज्ञांस्वशत्रुवधमात्मविमोक्षणंच ॥ गोप्यश्चकुंजरपतेर्जनकात्मजायाःपित्रोश्चलब्धशरणामुनयोवयंच ९ जरासंधवधःकृष्णभूर्यर्थायोपकल्पते ॥ प्रायःकालविपाकेनतवचाभिमतःक्रतुः १० श्रीशुकउवाच ॥ इत्युद्धववचोराजन्सर्वतोभद्रमच्युतः ॥ देवर्षिर्यदुवृद्धाश्चरामश्चप्रत्यपूजयन् ११ अथादिशत्प्रयाणायभगवान्देवकीसुतः ॥ भृत्यान्दारुकजैत्रादीननुज्ञाप्यगुरून्विभुः १२ सानिर्गस्यावरोधान्स्वान्स्वसुतान्सपरिच्छदान् ॥ संकर्षणमनुज्ञाप्ययदुराजंचशत्रुहा ॥ सूतोपनीतंस्वरथमारुहद्गरुडध्वजम् १३ ततोरथद्विपभटसादिनायकैःकरालयापरिवृतआत्मसेनया ॥ मृदंगभेर्यानकशंखगोमुखैःसंघुष्टयावैककुभोनिराक्रमत् १४ प्रियाश्चकाञ्चनशिबिकाभिरच्युतंसहात्मजाःपतिमनुसुव्रताययुः ॥ वरांबराभरणविलेपनस्रजःसुसंवृतानृभिरसिचर्मपाणिभिः १५ नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिःपरिजनवारयोषितः ॥ स्वलंकृताःपटकुटिकंबलांबराद्युपस्कराययुरधियुज्यसर्वशः १६ बलंबृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ॥ दिवांशुभिस्तुमुलरवंबभौरवेर्यथार्णवःक्षुभिततिमिंगिलोर्मिभिः १७ अथोमुनिर्यदुपतिनासभाजितःप्रणम्यतंहृदिनिदधद्विहायसा ॥ निशम्यतद्व्यवसितमाहृतार्हणोमुकुंदसंदर्शननिर्वृतेंद्रियः १८ राजदूतमुवाचेदंभगवान्प्रेमयागिरा ॥ माभैष्टदूतभद्रंवोघातयिष्यामिमागधम् १९ इत्युक्तःप्रस्थितोदूतोयथावदवदन्नृपान् ॥ तेपिसंदर्शनंशौरेःप्रत्यैक्षंतमुमुक्षवः २० आनर्तसौवीरमरूंस्तीर्त्वाविनशनंहरिः ॥ नदीर्गिरीनतीयायपुरग्रामव्रजाकरान् २१

वतीर्णत्वात्तत्रकालांतरेदुर्योधनादिभारावरोपणहेतुत्वेनाभिमतःक्रतुरित्याहप्रायइति १० सर्वतोभद्रंसर्वप्रकारेणभद्रम् ११ १२ १३ ततःकिमभूदितितत्राह ततइति ककुभःदिशःसंघुष्टयासंघोषयंत्या १४ प्रियाश्चाच्युतंपतिंअनुययुः वस्त्रैःसुसंवृताः असिचर्मपाणिभिःनृभिःपरिवृताः १५ ततोबहिर्नरोष्ट्रादिभिःपरिवृताः परिजनयुतवारयोषितश्च पटकुट्यःवस्त्रनिर्मितमंदिराणि पटकुटिकंबलांबराणिआदिर्येषांतेतथा तेचउपस्कराःपरिकरायेषांतेतथा अधियुज्यसंयुज्यआरोप्यवा १६ रवेरंशुभिःदिवादिनंयथाभातिबृहद्ध्वजपटादेरुदाहरणमिदं क्षुभिततिमिंगिलोर्मिभिरर्णवोयथोतिनरोष्ट्रादेर्निदर्शनम् १७ हरेर्व्यवसितंनिश्चितंनिशम्यागात् १८ प्रेमस्नेहंयातीतिप्रेमयासोमपाशब्दवद्रूपंनेयम् १९ २० विनशनंकुरुक्षेत्रं आकरंरत्नाद्युत्पत्तिस्थानम् २१

दृषद्वतींचक्रनदीम् २२ २३ २४ २५ रमाश्रीरालयाभूःतयोरालयंश्रीधराश्रयमित्यर्थः विस्मृतःलोकेविद्यमानःविविधभ्रमोयेनसतथा २६ प्रेमजलेनआनंदाश्रुजलेनाकुलानीन्द्रियाणियस्यसतथा २७ २८ उपसमीपेसमेत्यमंत्रणशीलाः २९ ३० पर्यस्तःपरिवृतः ३१ ३२ चंदनांबुसंसिक्तवर्त्मकुरुराजधामददर्शेत्यन्वयः प्रतिसद्मप्रतिगृहम् ३३ ३४ उच्छ्रितवीक्षितेनसस्मितनिरीक्षणेन ३५ उडुप

ततोदृषद्वतींतीर्त्वामुकुंदोथसरस्वतीम् ॥ पांचालानथमत्स्यांश्वशक्रप्रस्थमथागमत् २२ तमुपागतमाकर्ण्यप्रीतोदुर्दर्शनंनृणाम् ॥ अजातशत्रुर्निरगात्सोपाध्यायःसुहृद्वृतः २३ गीतवादित्रघोषेणब्रह्मघोषेणभूयसा ॥ अभ्ययात्सहृषीकेशंप्राणाःप्राणमिवागतम् २४ दृष्ट्वाविक्लिन्नहृदयःकृष्णंस्नेहेनपांडवः ॥ चिराद्दृष्टंप्रियतमंसस्वजेस्मपुनःपुनः २५ दोर्भ्यांपरिष्वज्यरमामलयालयंमुकुंदगात्रंनृपतिर्हताशुभः ॥ लेभेपरांनिर्वृतिमश्रुलोचनोहृष्यत्तनुर्विस्मृतलोकविभ्रमः २६ तंमातुलेयंपरिरभ्यनिर्वृतोभीमःस्मयन्प्रेमजलाकुलेंद्रियः ॥ यमौकिरीटीचसुहृत्तमंमुदाप्रवृद्धबाष्पाःपरिरेभिरेच्युतम् २७ अर्जुनेनपरिष्वक्तोयमाभ्यांचाभिवादितः ॥ ब्राह्मणेभ्योनमस्कृत्यवृद्धेभ्यश्चयथार्हतः २८ मानिनोमानयामासकुरुसृंजयकेकयान् ॥ सूतमागधगंधर्वावंदिनश्चोपमंत्रिणः २९ मृदंगशंखपटहवीणापणववेणुभिः ॥ ब्राह्मणाश्चारविंदाक्षंतुष्टुवुर्ननृतुर्जगुः ३० एवंसुहृद्भिःपर्यस्तःपुण्यश्लोकशिखामणिः ॥ संस्तूयमानोभगवान्विवेशालंकृतंपुरम् ३१ संसिक्तवर्त्मकरिणांमदगंधतोयैश्चित्रध्वजैःकनकतोरणपूर्णकुंभैः ॥ मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गंधैर्नृभिर्युवतिभिश्चविराजमानम् ३२ उद्दीप्तदीपावलिभिःप्रतिसद्मजालनिर्यातधूपरुचिरंविलसत्पताकम् ॥ मूर्धन्यहेमकलशैरजतोरुशृंगैर्जुष्टंददर्शभवनैःकुरुराजधाम ३३ प्राप्तंनिशम्यनरलोचनपानमात्रमौत्सुक्यविश्लथितकेशदुकूलबंधाः ॥ सद्योविसृज्यगृहकर्मपतींश्चतल्पेद्रष्टुंययुर्युवतयःस्मनरेंद्रमार्गे ३४ तस्मिन्सुसंकुलइभाश्वरथद्विपद्भिःकृष्णंसभार्यमुपलभ्यगृहाधिरूढाः ॥ नार्योविकीर्यकुसुमैर्मनसोपगुह्यसुस्वागतंविदधुरुच्छ्रितवीक्षितेन ३५ ऊचुःस्त्रियःपथिनिरीक्ष्यमुकुंदपत्नीस्तारायथोडुपसहाःकिमकार्यमूभिः ॥ यच्चक्षुषांपुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ३६ तत्रतत्रोपसंगम्यपौरामंगलपाणयः ॥ चक्रुःसपर्यांकृष्णायश्रेणीमुख्याहतैनसः ३७ अंतःपुरजनैःप्रीत्यामुकुंदःफुल्ललोचनैः ॥ ससंभ्रमैरभ्युपेतःप्राविशद्राजमंदिरम् ३८ पृथाविलोक्यभ्रात्रेयंकृष्णंत्रिभुवनेश्वरम् ॥ प्रीतात्मोत्थायपर्यंकात्सस्नुषापरिषस्वजे ३९ गोविंदंगृहमानीयदेवदेवेशमादृतः ॥ पूजायांनाविदत्कृत्यंप्रमोदोपहतोनृपः ४० पितृष्वसुर्गुरुस्त्रीणांकृष्णश्चक्रेभिवादनम् ॥ स्वयंचकृष्णयाराजन्भगिन्याचाभिवादितः ४१ श्वश्र्वासंचोदिताकृष्णाकृष्णपत्नीःसुवर्चसः ॥ आनर्चरुक्मिणींसत्यांभद्रांजांबवतींतथा ४२ कालिंदींमित्रविंदांचशैब्यांनाग्नजितींसतीम् ॥ अन्याश्चाभ्यागतायास्तावासःस्रङ्मंडनादिभिः ॥ ४३ सुखंनिवासयामासधर्मराजोजनार्दनम् ॥ ससैन्यंसानुगामात्यंसभार्यंचनवंनवम् ४४

सहाःउडुपेनचंद्रेणसहिताःताराः अमूभिःकिंशुभमकारि ३६ श्रेणीमुख्याःनगरप्रधानाः ३७ ३८ भ्रात्रेयंभ्रातुःपुत्रम् ३९ ४० भगिन्यासुभद्रयाच ४१ श्वश्र्वापृथया ४२ ४३ ४४

४५ येनमयेनदिव्यासभाराज्ञआहृताभगवदाज्ञयानिर्मायदत्ता ॥ ४६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांनवसप्ततितमोऽध्याय. ॥ ७९ ॥ ॥ ७ ॥ ॥
राजसूययज्ञार्थायपांडवानांदिशांजयोजरासंधवधश्चश्रीनारायणप्रसादायत्तइतितन्माहात्म्यत्वेनप्रतिपादयत्यस्मिन्नध्याये तत्रादौयुधिष्ठिरःआगतंश्रीकृष्णंस्वचिकीर्षितंविज्ञापयति एकदेति १
आभाष्यअभिमुखीकृत्य एतेषांसर्वेषांश्रोत्रादींद्रियतृप्तिजनकंइदंवक्ष्यमाणंवचनमुवाच हेत्यनेनकर्तव्यतामूचयति २ पावनीःशुद्धिकरीःभवत‌विभूती सन्निधानविशेषस्थानंद्रादिदेवताःयष्टुका
मः ३ तत्कार्यंभवदनुग्रहेणैतद्दुःसाधनमित्याह त्वत्पादुकेति अभद्रनशनेअशुभविध्वंसनसमर्थे परिचरंतिनित्यंपूजयंति व्यवहिताश्चेतिछंदसिव्यवधानेप्युपसर्गाणांक्रियायोगःसिद्धः प्रचान्वस्य
महतोमहनीत्यादौ अनेनभागवतस्यवेदतुल्यत्वेनाध्येयत्वादौतात्पर्यंदर्शयति भवापवर्गंसंसारत्यागंविंदंति ननुतर्हिनानेनाभीष्टसिद्धिरितितत्राह आशासतइति यदितेसेवकाःआशासतेआशिष
ऐहिकासिद्धीःकामयंते तर्हिताअपिविंदंति अन्येअनुपासकानोभयंविंदंतीतिभयंविंदतीतिशेषः ४ यतोभवच्चरणसेवाफलमनुभवसिद्धमतोलोकोपिप्रत्यक्षप्रमाणोस्यमाहात्म्यंदर्शयपकरोतिव

तर्पयित्वाखांडवेनवह्निंपांडवसंयुतः ॥ मोचयित्वामयंयेनराज्ञोदिव्यासभाहृता ४५ उवासकतिचिन्मासान्राज्ञःप्रियचिकीर्षया ॥ विहरन्रथमारुह्यफा
ल्गुनेनभटैर्वृतः ॥ इतिश्रीभा०म०द०उ०नवसप्ततितमोऽध्यायः ॥ ७९ ॥ श्रीशुकउवाच ॥ एकदातुसभामध्येआस्थितोमुनिभिर्वृतः ॥ ब्राह्मणैःक्ष
त्रियैर्वैश्यैर्भ्रातृभिश्वसमन्वितः १ आचार्यैःकुलवृद्धैश्वज्ञातिसंबंधिबांधवैः ॥ सर्वेषामेवचैतेषामाभाष्येदमुवाचह २ ॥ युधिष्ठिरउवाच ॥ क्रतुराजेनगो
विंदराजसूयेनपावनीः ॥ यक्ष्येविभूतीर्भवतस्तत्संपादयनःप्रभो ३ त्वत्पादुकेअविरतंपरियेचरंतिध्यायंत्यभद्रनशनेशुचयोगृणंति ॥ विंदंतियेकमल
नाभभवापवर्गमाशासतेयदितआशिषईशनान्ये ४ तद्देवदेवभवतश्चरणारविंदसेवानुभावमिहपश्यतुलोकएषः ॥ येत्वांभजंतिनभजंत्यपियेउभयेषां
निष्ठांप्रदर्शयविभोकुरुसृंजयानाम् ५ नब्रह्मणःस्वपरभेदमतिस्तवस्यात्सर्वात्मनःसमदृशःस्वसुखानुभूतेः ॥ संसेवयासुरतरोरिवतेप्रसादःसेवानुरूपउद
योनविपर्ययोत्र ६ श्रीभगवानुवाच ॥ सम्यग्व्यवसितंराजन्भवताशत्रुकर्शन ॥ कल्याणीयेनतेकीर्तिर्लोकाननुभविष्यति ७ ऋषीणांपितृदेवानांसु
हृदामपिनःप्रभो ॥ सर्वेषामेवभूतानामीप्सितःक्रतुराडयम् ८ विजित्यनृपतीन्सर्वान्कृत्वाचजगतींवशे ॥ संभृत्यसर्वसंभारानाहरस्वमहाक्रतुम् ९ एतेतु
भ्रातरोराजन्लोकपालांशसंभवाः ॥ वशेस्मितवतातादुर्जयोयोऽकृतात्मभिः १०

स्याह तादिति अपिकृष्णत्वमपिभजदभजतामुभयेषामपिजयलक्षणोत्कर्षव्यवस्थापयेत्याह येत्वामिति निष्ठोत्कर्षव्यवस्थायांनाशेतेव्रतयाच्मयोरितियादवः अनुभावःप्रभावेस्यादिति ५ सर्वसमस्यहरेर्वै
षम्यंमयापाचतइतिविभ्यादिवपरिहरति नेति ब्रह्मणःपूर्णस्यसर्वात्मनः सर्वस्वामिनःन नुपरापूर्वेपासख्यावृणक्तीत्यादिकथमित्यत्राह समदृशइति यथावस्तुदर्शिनः स्वरूपसुखस्यानुभतिरनुभवःपूर्णानंदो
हमितियस्यसतथातस्य अयमपिस्वपरबुद्ध्यभावेहेतुः नन्वसुराणांदुःखोदयःसुराणांसुखोदयइत्ययंविशेषःकस्मादत्राह संसेवयेति उदयतीत्युदयः अतोत्रजगतिविपर्ययोनविषमोनोदेति ६ येनव्यवसि
तेनक्रतुराजेनअनुभविष्यति सत्वयाऽनुवर्त्यते ७ नकेवलंतवाभीष्टोयमृष्यादीनांसर्वेषामपिहृदयंगमइत्याह ऋषीणामिति ८ तत्रेत्थंभावमाह विजित्येति सर्वसंभारान्संभृत्यसंपाद्यआहरस्वकुरुष्व ९
सांप्रतंसर्वजयेहृःशक्योनेतिभावेनाह एतइति लोकपालांशैःसंभवोयेषांतेतथा योहअकृतात्मभिःअनुत्पादितमत्प्रसादैः १०

भवतोदुर्जयत्वेनाकिमस्माकमितितत्राह नेति मत्परंमद्भक्तांविभूतिभिरुपस्करसंपाद्भिः ११ विष्णोस्तेजसाप्रभावेणउपबृंहितान्परिपूरितान् १२ १३ पक्ष्यतेयष्टुकामाय १४ अत्रादिग्विजये जरासंधोजितोमारितोवेतितत्प्रसंगोनाकर्णितइतिराज्ञोहार्दांशंकांपरिहरन्निशदिग्विजयात्प्रागेवतद्वधोवृत्तइतितेनात्रप्रसक्तइतिवृत्तंतद्धननमनुवदति श्रुत्वेति ननु दिशांजयादनंतरंतद्वधःकिंनस्याद्यथा स्थितमन्यथानूद्यतेकिमर्थमितिचेन्न निर्णयग्रंथविरोधात् ननुपूर्वापराभावेकिंप्रमाणंप्रयोजनमितिचेदुच्यते पूर्वाःकथाःपरंब्रूयुःपराः पूर्वंतथैवच । मोहनार्थायदुष्टानासर्वेव्यत्यासइष्यत इत्यादिवाक्यम् किंच जरासंधंनिहत्यैवपांडवैस्तुदेशोजिताइत्यादिस्पष्टवचनम् भगवतएवजरासंधमजितंश्रुत्वातज्जयःकथमितिध्यायतोयुधिष्ठिरस्यउद्धवोयमुपायमुवाच तमाहहरिरित्यन्वयः १५ हेतिसूचित मितिहासंस्पष्टयति भीमसेनइत्यादिना ब्राह्मलिंगधराःब्राह्मणलक्षणानिबिभ्राणाः यतोयत्र १६ आतिथ्यवेलायांआतिथ्यपूजासमये आदित्येदिनपथ्यंगाहमानइत्यर्थः १७ १८ दुर्मर्षंदुःसहं

नकश्चिन्मत्परंलोकेतेजसायशसाश्रिया ॥ विभूतिभिर्वाविभवैर्देवोपिकिमुपार्थिवाः ॥ ११ ॥ श्रीशुकउवाच ॥ निशम्यभगवद्गीतंप्रीत्युत्फुल्लमुखांबुजः ॥ भ्रातॄन्दिग्विजयेऽयुंक्तविष्णुतेजोपबृंहितान् १२ सहदेवंदक्षिणस्यामादिशत्सहसृंजयैः ॥ दिशिप्रतीच्यांनकुलमुदीच्यांसव्यसाचिनम् ॥ प्राच्यांवृकोदरंराजन्कैकेयैःसहमद्रकैः १३ तेविजित्यनृपान्वीरानाजन्हुर्दिग्भ्यओजसा ॥ अजातशत्रवेभूरिद्रविणंनृपयक्ष्यते १४ श्रुत्वाऽजितंजरासंधंनृपतेर्ध्यायतोहरिः ॥ आहोपायंतमेवाद्यउद्धवोयमुवाचह १५ भीमसेनोऽर्जुनःकृष्णोब्रह्मलिंगधरास्ततः ॥ जग्मुर्गिरिव्रजंतातबृहद्रथसुतोयतः १६ तंगत्वातिथ्यवेलायांगृहेषुगृहमेधिनम् ॥ ब्रह्मण्यंसमयाचंतराजन्याब्रह्मलिंगिनः १७ राजन्विद्ध्यतिथीनस्मानर्थिनोगृहमागतान् ॥ तन्नःप्रयच्छभद्रंतेयद्वयंकामयामहे १८ किंदुर्मर्षंतितिक्षूणांकिमकार्यमसाधुभिः ॥ किंनदेयंवदान्यानांकःपरःसमदर्शिनाम् १९ योऽनित्येनशरीरेणसतांगेयंयशोध्रुवम् ॥ नाचिनोतिस्वयंकल्पःसवाच्यःशोच्यएवसः २० हरिश्चंद्रोरंतिदेवउंछवृत्तिःशिबिर्बलिः ॥ व्याधःकपोतोबहवोह्यध्रुवेणध्रुवंगताः ॥ २१ ॥ श्रीशुकउवाच ॥ स्वरैराकृतिभिस्तांस्तुप्रकोष्ठैर्ज्याहतैरपि ॥ राजन्यबंधून्विज्ञायदृष्टपूर्वानचिंतयत् २२ राजन्यबंधवोह्येतेब्रह्मलिंगानिबिभ्रति ॥ ददामिभिक्षितंतेभ्यआत्मानमपिदुस्त्यजम् २३ बलेर्नुश्रूयतेकीर्तिर्विततादिक्ष्वकल्मषा ॥ ऐश्वर्याद्भ्रंशितस्यापिविप्रव्याजेनविष्णुना २४ श्रियंजिहीर्षतेंद्रस्यविष्णवेद्विजरूपिणे ॥ जानन्नपिमहींप्रादाद्वार्यमाणोपिदैत्यराट् २५ जीवताब्राह्मणार्थायकोन्वर्थःक्षत्रबंधुना ॥ देहेनपतमानेननेहतांविपुलंयशः २६ इत्युदारमतिःप्राहकृष्णार्जुनवृकोदरान् ॥ हेविप्राव्रियतांकामोददाम्यात्मशिरोपिवः २७ श्रीकृष्णउवाच ॥ युद्धंनोदेहिराजेंद्रद्वंद्वशोयदिमन्यसे ॥ युद्धार्थिनोवयंप्राप्ताराजन्यानान्नकांक्षिणः २८ असौवृकोदरःपार्थस्तस्यभ्राताऽर्जुनोह्ययम् ॥ अनयोर्मातुलेयंमांकृष्णंजानीहितेरिपुम् २९

परःशत्रुः परोरिपरमात्मनोरिति १९ आचिनोति संचिनोतिउपार्जितंकरोतिवाच्योनिंद्यः २० अध्रुवेणशरीरेण २१ २२ २३ श्रूयतेकिंश्रूयतएवहीतियोज्यम् इंद्रस्यश्रियंबलाज्जिहीर्षताहर्तुकामेनाविष्णुना ऐश्वर्याद्भ्रंशितस्य २४ वार्यमाणःशुक्रेणेतिशेषः २५ यःक्षत्रबंधुःपतमानेनदेहेनविपुलंयशोनेहतांनेहतेनापादयति तेनब्राह्मणार्थायजीवताक्षत्रबंधुनाकोन्वर्थोभवति नकोपीतिविचिंत्य २६ २७ द्वंद्वशोयुद्धंद्वंद्वयुद्धम् २८ वीप्सां त्रीन्प्रतिस्पष्टयन्निर्दिशति असाविति २९

भोगैः स्रक्चंदनादिलक्षणैर्धनैर्वा २६ ग्रहाआदित्यादयः २७ प्रीणय्य प्रीतिंजनयित्वा २८ कृतानिकार्याणि २९ प्रकृतिभ्यःविश्वस्तभृत्येभ्य. ३० ३१ खांडवप्रस्थमिंद्रप्रस्थं दुर्हृदांशत्रूणाम् ३२ शांत मूर्तं प्राप्तमनोरथोऽभूदितिशेषः ३३ ३४ ३५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्त०विजयध्वजकृतटीकायामेकाशीतितमोऽध्यायः ॥८१॥ श्रोतृमनोहरक्षमाजनकंवीरवीर्यवर्धनंहरेःसमवृत्तिनिद र्शनंशिशुपालवधंनिगदत्यस्मिन्नध्याये तत्रादौयुधिष्ठिरोभगवंतंस्तुत्वातदनुज्ञयाराजसूयप्रारंभणंवक्ति एवमित्यादिना १ यस्यत्वत्रिलोकगुरवःब्रह्मादयः २ ईशमानिनांईश्वरोहमहभोगीत्याद्यभिमानवतां दीनानामात्मतत्त्वज्ञानाभावात्काष्ठगत्याक्रणानामनुशासनंदुर्मार्गप्रवृत्तित्यागेनसन्मार्गवर्तनम् ३ प्रेक्षावतइवहरेरनुशासनादिप्रवृत्तिःस्वप्रयोजनोद्देशपूर्विकेत्यकृतार्थत्वप्रसंगइतितत्राह नहीति तेजः प्रभावलक्षणाप्रभा कर्मभिःशुभाशुभलक्षणैः नकर्मणावर्धतेनोकनीयानितिश्रुतेः एकस्यापिसमाधिकसद्भावंतौकिंनस्यातामितितत्राह अद्वितीयस्येति अस्यापिपरिच्छिन्नत्वेकथमिति मंदाशंकांपरिहर

भोजयित्वावरान्नेनसुस्नातान्समलंकृतान् ॥ भोगैश्चविविधैर्युक्तांस्तांबूलाद्यैर्नृपोचितैः २६ तेपूजितामुकुंदेनराजानोमृष्टकुंडलाः ॥ विरेजुर्मोचिताः क्लेशात्प्रावृडंतेयथाग्रहाः २७ रथान्सदश्वानारोप्यमणिकांचनभूषितान् ॥ प्रीणय्यसूनृतैर्वाक्यैःस्वदेशान्प्रत्ययापयत् २८ तएवंमोक्षिताःकृच्छ्रात्कृष्णेनसुमहात्मना ॥ ययुस्तमेवध्यायंतःकृतानिचजगत्पतेः २९ जगदुःप्रकृतिभ्यस्तेमहापुरुषचेष्टितम् ॥ यथान्वशासद्भगवांस्तथाचक्रुरतंद्रिताः ३० जरासंधंघातयित्वाभीमसेनेनकेशवः ॥ पार्थाभ्यांसंयुतःप्रायात्सहदेवेनपूजितः ३१ तेगत्वाखांडवप्रस्थंशंखान्दध्मुर्जितारयः ॥ हर्षयंतःस्वसुहृदो दुर्हृदांचासुखावहाः ३२ तच्छ्रुत्वाप्रीतमनसइंद्रप्रस्थनिवासिनः ॥ मेनिरेमागधंशांतंराजाचाप्तमनोरथः ३३ अभिवाद्याथराजानंभीमार्जुनजनार्दनाः ॥ सर्वमाश्रावयांचक्रुरात्मनायदनुष्ठितम् ३४ निशम्यधर्मराजस्तुकेशवेनानुकंपितः ॥ आनंदाश्रुकणान्मुंचन्प्रेम्णानोवाचकिंचन ३५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेएकाशीतितमोऽध्यायः ॥ ८१ ॥ श्रीशुकउवाच ॥ एवंयुधिष्ठिरोराजाजरासंधवधात्प्रभो ॥ कृष्णस्यचानुभावंतंश्रुत्वाप्रीतस्तमब्रवीत् १ युधिष्ठिरउवाच ॥ यस्यत्रिलोकगुरवःसर्वलोकमहेश्वराः ॥ वहंतिदुर्लभंलब्ध्वाशिरसैवानुशासनम् २ सभवानरविंदाक्षदीनानामीशमानिनाम् ॥ धत्तेनुशासनंभूमंस्तदत्यंतविडंबनम् ३ नह्येकस्याद्वितीयस्यब्रह्मणःपरमात्मनः ॥ कर्मभिर्वर्द्धतेतेजोह्रसतेचयथारवेः ४ नचतेऽजितभक्तानांममाहमितिमाधव ॥ त्वंतवेतिचनानाधीःपशूनामिववैकृता ५ इत्युक्त्वायाज्ञियेकालेवव्रेयुक्तान्सऋत्विजः ॥ कृष्णानुमोदितःपार्थोब्राह्मणान्ब्रह्मवादिनः ६ द्वैपायनोभरद्वाजःसुमंतुर्गौतमोऽसितः ॥ वसिष्ठश्च्यवनःकण्वोमैत्रेयःकवषस्त्रितः ७

ति ब्रह्मणइति बहिस्तथाऽस्तुअंतःपरिच्छिन्नइतितत्राह परमात्मनइति आत्मनोजीवात्परत्वेनपूर्णत्वेनमीयमानस्यपरमात्मनइत्यर्थः रवेःप्रभामंदोष्णत्वादिविशेषःकालोपाधिकोनस्वाभाविकइतिभव त्येवंनिदर्शनं हरेस्तूक्तविशेषणसामर्थ्यात्सोपिनेत्यवगमयितव्यं ४ हरेरद्वितीयत्वेकिंपुनर्न्यायेनाह नचेति हेअजितमाधवलक्ष्मीपते तेतवभक्तानांपुत्रादौममेतिदेहादावहमितिदेहांतरेत्वमितितदीयक्षे त्रादौतवेतिनानाधीर्नास्तिचशब्दःसर्वत्रेश्वरसत्तांपश्यतामित्यस्मिन्नर्थेवर्ततेकीदृशीनानाधीःयथापशूनांसंस्काररहितानांबुद्धिर्वैकृताविविधप्रकारास्वार्थैताद्वितः ५ याज्ञियेयज्ञकरणयोग्ये युक्तान्कल्पोक्तन्यायवेदिनः ६ ७

८ ९ उपहूतांमुनयः यथान्येअनुपहूताअपितत्राजग्मुःतत्रद्रोणादयोप्युपहूताः १० ११ यत्रयज्ञकरणमभीष्टतमंतं देवयजनंस्वर्णलांगलैः सुवर्णलांगलैःसुवर्णमयहलैः कृष्टोल्लिख्यसंशोध्यभालांकृत्वा तत्रयथान्यायनृपंदीक्षायांचक्रुरित्यन्वयः १२ वरुणस्ययज्ञे वरुणं अनूक्तंसमात्तदृत्यतात्पर्यात्पुनरुक्तंकरोति इंद्रादयइति १३ १४ १५ १६ प्रचेतसंवरुणं सूत्येसोपाभिषवसंबंधिन्यहनि पशुसंज्ञपनदिवसेवा १७ अग्रार्हणार्हंअग्रपूजास्वीकारयोग्यंविमृशतःविचारयंतः १८ अनेकांत्यान्नानाबुद्धित्वात्सर्वेषांगुणानामेकत्वानियमाद्वाअच्युतःगुणतःस्वरूपतोवानक्षीणैश्वर्यंगुणज्येष्ठ्योग्याग्रयजनं गुणाःश्रुताःसुविरुद्धाश्चदेवेसंतीत्यादिश्रुतिवाक्यंहिनासूचयति सात्वतःतंत्रप्रणेतारएतेषांपतिःस्वामीगतिश्च इदंचाग्रपूजायोग्यत्वेलिंगम् १९ इंद्रोवैसर्वेषांश्रेष्ठः अग्निर्वैदे

विश्वामित्रोवामदेवःसुमतिर्जैमिनिःक्रतुः ॥ पैलःपराशरोगर्गोवैशंपायनएवच ८ अथर्वाकश्यपोधौम्योरामोभार्गवआसुरिः ॥ वीतिहोत्रोमधुच्छंदा वीरसेनोकृतव्रणः ९ उपहूतास्तथाचान्येद्रोणभीष्मकृपादयः ॥ धृतराष्ट्रःसहसुतोविदुरश्चमहामतिः १० ब्राह्मणाःक्षत्रियावैश्याःशूद्रायज्ञदिदृक्षवः ॥ तत्रेयुःसर्वराजानोराज्ञांप्रकृतयोनृप ११ ततस्तदेवयजनंब्राह्मणाःस्वर्णलांगलैः ॥ कृष्ट्वातत्रयथान्यायंदीक्षयांचक्रिरेनृपम् १२ हैमाःकिलोपकरणोवरुणस्ययथापुरा ॥ इंद्रादयोलोकपालाविरिंचभवसंयुताः १३ सगणाःसिद्धगंधर्वाविद्याधरमहोरगाः ॥ मुनयोयक्षरक्षांसिखगाःकिन्नरचारणाः १४ राजानश्चसमाहूताराजपत्न्यश्चसर्वशः ॥ राजसूयंसमीयुःस्मराज्ञःपांडुसुतस्यवै १५ मेनिरेकृष्णभक्तस्यसूपपन्नमविस्मिताः ॥ अयाजयन्महाराजयाजकादेववर्चसः १६ राजसूयेनविधिवत्प्रचेतसमिवामराः ॥ सूत्येहन्यवनीपालान्याजकान्सदसस्पतीन् १७ अपूजयन्महाभागान्यथावत्सुसमाहिताः ॥ सदस्याग्रार्हणार्हंवैविमृशंतःसभासदः १८ नाध्यगच्छन्ननैकांत्यात्सहदेवस्तदाब्रवीत् ॥ अर्हतिह्यच्युतःश्रैष्ठ्यंभगवान्सात्वतांपतिः १९ एषवैदेवताःसर्वादेशकालधनादयः ॥ यदात्मकमिदंविश्वंक्रतवश्चयदात्मकाः २० अग्निराहुतयोमंत्राःसांख्यंयोगश्चयत्परः ॥ एकएवाद्वितीयोसावैतदात्म्यमिदंजगत् २१ आत्मनात्माश्रयःसभ्याःसृजत्यवतिहंत्यजः ॥ विविधानीहकर्माणिजनयन्न्यानपेक्षया २२ ईहतेयदयंसर्वंश्रेयोधर्मादिलक्षणम् ॥ तस्मात्कृष्णायमहतेदीयतांपरमार्हणम् २३ एवंचेत्सर्वभूतानामात्मनश्चार्हणंभवेत् ॥ सर्वभूतात्मभूतायकृष्णायानन्यदर्शिने २४ देयंशांतायपूर्णायदत्तस्यानंत्यमिच्छता २५ ॥ श्रीशुकउवाच ॥ इत्युक्त्वासहदेवोभूत्तूष्णींकृष्णानुभाववित् ॥ तच्छ्रुत्वातुष्टुवुःसर्वेसाधुसाध्वितिसत्तमाः २६ श्रुत्वाद्विजेरितंराजाज्ञात्वाहार्दंसभासदाम् ॥ समर्हयद्धृषीकेशंप्रीतःप्रणतविह्वलः २७

वानांमुखमित्यादेःइंद्रादिषुसत्स्वस्यकथंसंभवोभवतीतितत्राह एषवाइति योदेवानामितिश्रुतिंवाइत्यनेनगृह्णाति अचेतनमपितदधीनसत्ताकमित्याह देशेति किंबहुनासर्वमपितद्व्याप्तमित्याह यदात्मकमिति तात्पर्यात्पुनरुक्तकरोति क्रतवइति २० सांख्यंयथार्थज्ञानं योग.कर्मलक्षणः य.परोविषयोयस्यसतथा उपसंहरति एकइति एतदात्माधीनम् २१ हेसभ्याः एतदात्म्यविवरणमात्मेतिउकार्थसमर्थनंसृजतीत्यादि २२ फलहेतुत्वाच्चायमेवात्रयोग्यतमइत्याह यदयमिति २३ एतत्पूजैवसर्वपूजास्यादितिभावेनाह एवंचेति स्वस्मादन्यस्यापास्वातंत्र्यंनपश्यतीत्यनन्यदर्शीतस्मै देवै सहवर्ततइतिसहदेवोदेववतोपिग्राह्यः भारतेवद्वचनादग्रपूजादानाद्युक्तः २४ २५ सत्तमाःसतांश्रेष्ठाः २६ २७

२८ २९ ३० ३१ ईशःकालोदुरत्ययःइतिश्रुतिःसत्यवतीअबाधितार्था तदुपपादयति वृद्धानामिति ३२ मामनूध्वंहेसर्वेसदसस्पतयः किंबालभाषितंतदाह कृष्णइति ३३ ३४ अतिव्रज्याति क्रम्य कुलकर्माणिएतेइत्याह गोपइति ३५ एतदेवविवृणोतिवर्णेति ३६ यदोर्वंशेजातत्वात्कथंकुलाभावइतितत्राह ययातिनेति ३७ अब्रह्मवर्चसःगायत्रीजपसंबंधतेजोरहिताः ब्रह्मवेदस्तत्संबंधवचो युक्तान्देशान्वा समुद्रमित्यादिनादाशसाम्यमापादयति ३८ शिवारुतंसृगालशब्दितम् ३९ ४० कुतोनिर्गमनमितितत्राह निंदामिति ४१ ४२ ४३ स्ववचनंसत्यकर्तुंतावत्ततःपूर्वमेवकृष्णःक्षुरांतच

तत्पादाववनिज्यापःशिरसालोकपावनीः ॥ सभार्यःसानुजामात्यःसकुटुंबोवहन्मुदा २८ वासोभिःपीतकौशेयैर्भूषणैश्चमहाधनैः ॥ अर्हयित्वाश्रुपूर्णाक्षोनाशकत्समवेक्षितुम् २९ इत्थंसभाजितंवीक्ष्यसर्वेप्रांजलयोजनाः ॥ नमोजयेतिनेमुस्तंखात्पेतुःपुष्पवृष्टयः ३० इत्थंनिशम्यदमघोषसुतःस्वपीठादुत्थायकृष्णगुणवर्णनजातमन्युः ॥ उत्क्षिप्यबाहुमिदमाहसदस्यमर्षात्संश्रावयन्भगवतेपरुषाण्यभीतः ३१ ईशोदुरत्ययःकालइतिसत्यवतीश्रुतिः ॥ वृद्धानामपियद्बुद्धिर्बालवाक्यैर्विभिद्यते ३२ यूयंपात्रविदांश्रेष्ठामामनूध्वंबालभाषितम् ॥ सदसस्पतयःसर्वेकृष्णोयत्संमतोर्हणे ३३ तपोविद्याव्रतधरान्ज्ञानविध्वस्तकल्मषान् ॥ परमर्षीन्ब्रह्मनिष्ठान्लोकपालांश्चपूजितान् ३४ सदसस्पतीनतिव्रज्यगोपोयंकुलपांसनः ॥ यथाकाकःपुरोडाशंसपर्यांकथमर्हति ३५ वर्णाश्रमकुलापेतःसर्वधर्मबहिष्कृतः ॥ स्वैरवर्तीगुणैर्हीनःसपर्यांकथमर्हति ३६ ययातिनैषांहिकुलंशप्तंसद्भिर्बहिष्कृतम् ॥ वृथापानरतंमत्तंसपर्यांकथमर्हति ३७ ब्रह्मर्षिसेवितान्देशान्हित्वैतेऽब्रह्मवर्चसः ॥ समुद्रंदुर्गमाश्रित्यबाधंतेदस्यवःप्रजाः ३८ एवमादीन्यभद्राणिबभाषेनष्टमंगलः ॥ नोवाचकिंचिद्भगवान्यथासिंहःशिवारुतम् ३९ भगवन्निंदनंश्रुत्वादुःसहंतत्सभासदः ॥ कर्णौपिधायनिर्जग्मुःशपंतश्चेदिपंरुषा ४० निंदांभगवतःशृण्वन्तत्परस्यजनस्यच ॥ ततोनापैतियःसोपियात्यधःसुकृताच्च्युतः ४१ ततःपांडुसुताःक्रुद्धामत्स्यकैकेयसृंजयाः ॥ उदायुधाःसमुत्तस्थुःशिशुपालजिघांसवः ४२ ततश्चैद्यस्त्वसंभ्रांतोजगृहेखड्गचर्मणी ॥ भर्त्सयन्कृष्णपक्षीयान्राज्ञःसदसिभारत ४३ तावदुत्थायभगवांस्तान्निवार्यस्वयंरुषा ॥ शिरःक्षुरांतचक्रेणजहारापततोरिपोः ४४ शब्दःकोलाहलोप्यासीच्छिशुपालेहतेमहान् ॥ तत्राततायिनोभूपादुद्रुवुर्जीवितैषिणः ४५ चैद्यदेहस्थितंज्योतिर्वासुदेवमुपाविशत् ॥ पश्यतांसर्वभूतानामुल्केवभुविखाच्च्युता ४६ जन्मत्रयानुगुणितवैरसंरब्धयाधिया ॥ ध्यायंस्तन्मयतांयातोभावोहिभवकारणम् ४७ वर्णितंतदुपाख्यानंमयातेबहुविस्तरम् ॥ वैकुंठवासिनोर्जन्मविप्रशापात्पुनःपुनः ४८

क्रेणक्षुरधारसुदर्शनेनरिपोःशिरोजहारेत्यन्वयः ४४ ४५ ज्योतिर्जयचैतन्यात्मकं खादाकाशाच्च्युतोल्काभुवीव ४६ जन्मत्रयेनुगुणितेनसंवर्धितेनवैरेणशत्रुभावेनविशिष्टेनेतरेणज्ञानेनसंरब्धयासमुद्रिक्तयाधियाध्यायंस्तन्मयतांद्वेषमयतांअसुरोभगवत्प्रधानतांजययोयातःतथाहि भावोभक्तिर्भवकारणंमोक्षस्यकारणंभवति ४७ तयोरुपाख्यानंवैकुंठवासिनोर्जयविजययोर्विप्रशापात्पुनःपुनर्जन्म ४८

भगवतेऽग्रपूजासमर्पणेनयुधिष्ठिरःकृतकृत्यःकिमुतऋत्विगादिभ्योपियथाविहितदक्षिणामदादितितत्राह ऋत्विग्भ्यइत्यादिना एकराट्चक्रवर्ती ४९ ५० राजसूयावभृथविहितकर्मणा ब्रह्मणांविप्राणां क्षत्रियाणांमंडलेश्वराणांसभामध्ये सुराडिंद्रः ५१ ५२ बंधुभूतशिशुपालवधलक्षणंहरेःकर्मनपुण्यसाधनंकिंतुतद्विपरीतकारणमितिमंदाशंकांपरिहरन्फलमाह इदमिति ॥ ५३ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ अनेनानंतरातीताध्यायोक्तमेवप्रश्नपूर्वकंविस्तृत्यकथयति अजातशत्रोरित्यादिना १ २ ३ ४ ५ ६ ७ ऋत्विजश्चसदस्या

ऋत्विग्भ्यःससदस्येभ्योदक्षिणांविपुलामदात् ॥ सर्वान्संपूज्यविधिवच्चक्रेवभृथमेकाराट् ४९ माधयित्वाक्रतुंराज्ञःकृष्णोयोगेश्वरेश्वरः ॥ हत्वाचचेदिपंतत्रविजहारयथासुखम् ५० राजसूयावभृथ्येनस्नातोराजायुधिष्ठिरः ॥ ब्रह्मक्षत्रसभामध्येशुशुभेसुरराडिव ५१ राज्ञासभाजिताःसर्वेसुरमानवखेचराः ॥ कृष्णंक्रतुंचशंसंतःस्वधामानिमुदाययुः ५२ यइदंकीर्तयेद्विष्णोःकर्मचैद्यवधादिकम् ॥ राज्ञांमोक्षविधानंचसर्वपापैःप्रमुच्यते ॥ ५३ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्द्धेशिशुपालवधोनामद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ राजोवाच ॥ अजातशत्रोस्तंदृष्ट्वाराजसूयमहोदयम् ॥ सर्वेमुमुदिरेब्रह्मन्देवायेचसमागताः १ दुर्योधनंवर्जयित्वाराजानऋषयःसुराः ॥ इतिश्रुतंनोभगवंस्तत्रकारणमुच्यताम् ॥ २ ॥ श्रीशुकउवाच ॥ पितामहस्यतेयज्ञेराजसूयेमहात्मनः ॥ बांधवाःपरिचर्यायांतस्यासन्प्रेमबंधनाः ३ भीमोमहानसाध्यक्षोधनाध्यक्षःसुयोधनः ॥ सहदेवस्तुपूजायांनकुलोद्रव्यसाधने ४ सतांशुश्रूषणेजिष्णुःकृष्णःपादावनेजने ॥ परिवेषणेद्रुपदजाकर्णोदानेमहामनाः ५ युयुधानोविकर्णश्चहार्दिक्योविदुरादयः ॥ बाह्लीकपुत्राभूर्याद्यायेचसंतर्दनादयः ६ निरूपितामहायज्ञेनानाकर्मविशारदाः ॥ प्रवर्तंतेस्मराजेंद्रराज्ञःप्रियचिकीर्षया ७ ऋत्विक्सदस्यबहुवित्सुसुहृत्तमेषुस्विष्टेषुसूनृतमहार्हणदक्षिणाभिः ॥ चैद्येचसात्वतपतेश्चरणंप्रविष्टेचक्रुस्ततस्त्ववभृथस्नपनंद्युनद्याम् ८ मृदंगशंखपणवसतूर्यानकगोमुखाः ॥ वादित्राणिविचित्राणिनेदुरारान्महोत्सवे ९ नर्तक्योनन्नृतुर्हृष्टागायकायूथशोजगुः ॥ वीणावेणुतलोन्नादस्तेषांसदिवमस्पृशत् १० चित्रध्वजपताकाग्रैरिभेंद्रस्यंदनार्वभिः ॥ स्वलंकृतैर्भटैर्भूपानिर्ययूरुक्ममालिनः ११ यदुसृंजयकांबोजाःकुरुकेकयकोशलाः ॥ कंपयंतोभुवंसैन्यैर्यजमानपुरःसरैः १२ सदस्यर्त्विग्द्विजश्रेष्ठाब्रह्मघोषेणभूयसा ॥ देवर्षिपितृगंधर्वास्तुष्टुवुःपुष्पवर्षिणः १३ स्वलंकृतानरानार्योगंधस्रग्भूषणांबरैः ॥ विलिंपंतोभिषिंचंतोविजन्हुर्विविधैरसैः १४ तैलगोरसगंधोदहरिद्रासांद्रकुंकुमैः ॥ पुंभिर्लिप्ताःप्रलिंपंत्योविजन्हुर्वारयोषितः १५ गुप्तानृभिर्निरगमन्नुपलब्धुमेतद्देव्योयथादिविविमानवरैर्नृदेव्यः ॥ तामातुलेयसखिभिःपरिषिच्यमानाःसव्रीडहासविकसद्वदनाविरेजुः १६

अबहुविदश्चतेतथातेषुसुहृत्तमेषुस्विष्टेषुसुपूजितेषुसत्सु ततःकालव्यवधानमंतरेण ८ आराद्दूरेसमीपेच ९ १० ११ १२ १३ रसैश्चहरिद्रादिरागजलैः १४ एतदेवाह तैलेत्यादिना १५ नृदेव्यःराज्ञः एतदुपलब्धुंचक्षुर्विषयंस्यकर्तुंनिरगमन्नित्यन्वयः देव्यःदेवस्त्रियः मातुलेयैःसखिभिश्च १६

हतीभिःजलसेचनपात्रैः मलधियांविषयाविष्टानां रुचिरैर्भूषणैःसमेताः १७ १८ पत्नीसंयाजावभृथ्याख्योष्टिभिश्चरित्वाकृत्वा १९ २० अहते अधौते २१ २२ २३ २४ २५ २६
२७ २८ २९ ३० ३१ यस्मिन्पुरेविश्वसृजाकृष्णेनतस्मिन्ताभिःश्रीभिःसहद्रुपदराजसुतापतिमुरतस्थइत्यन्वयः ३२ ३३ स्वचक्षुपास्वदृष्टिभूतेन ३४ ३५ वालव्यजनसंकुलैःचामरास्तैभि

तादेवरानुतसखीन्सिषिचुर्दृतीभिःक्लिन्नांबराविकृतिगात्रकुचोरुमध्याः ॥ औत्सुक्यमुक्तकबरच्यवमानमाल्याःक्षोभंदधुर्मलधियांरुचिरैःसमेताः १७ स सम्राड्रथमारूढःसदश्वंरुक्ममालिनम् ॥ व्यरोचतस्वपत्नीभिःक्रियाभिःक्रतुराडिव १८ पत्नीसंयाजावभृथ्यैश्चरित्वातेतमृत्विजः ॥ आचांतंस्नापयां चक्रुर्गंगायांसहकृष्णया १९ दिविदुंदुभयोनेदुर्नरदुंदुभिभिःसमम् ॥ मुमुचुःपुष्पवर्षाणिदेवर्षिपितृमानवाः २० सस्नुस्तत्रततःसर्वेवर्णाश्रमयुताजनाः ॥ अथराजाऽहतेक्षौमेपरिधायस्वलंकृतः २१ ऋत्विक्सदस्यविप्रादीनानर्चाभरणांबरैः ॥ बंधून्ज्ञातीन्नृपान्मित्रान्सुहृदोन्यांश्चसर्वशः २२ अभीक्ष्णं पूजयामासनारायणपरोनृपः २३ सर्वेजनाःसुररुचोमणिकुंडलस्रगुष्णीषकंचुकदुकूलमहार्घ्यहाराः ॥ नार्यश्चकुंडलयुगालकवृंदजुष्टवक्त्रश्रियःकनक मेखलयाविरेजुः २४ अथर्त्विजोमहाशिक्षाःसदस्याब्रह्मवादिनः ॥ विप्रक्षत्रियविट्शूद्राराजानोयेसमागताः २५ देवर्षिपितृभूतानिलोकपालाः सहानुगाः ॥ पूजितास्तमनुज्ञाप्यस्वधामानिययुर्मुदा २६ हरिदासस्यराजर्षेराजसूयमहोदयम् ॥ नैवातृप्यन्प्रशंसंतःपिबन्मर्त्योयथामृतम् २७ ततो युधिष्ठिरोराजासुहृत्संबंधिबांधवान् ॥ प्रेम्णानिवासयामासकृष्णंचत्यागकातरः २८भगवानपितत्रांगन्यवात्सीत्तत्प्रियंकरः ॥ प्रस्थाप्ययदुवीरान्स्वान्सा
रोराजासुहृत्संबंधिबांधवान् ॥ प्रेम्णानिवासयामा सकृष्णंचत्यागकातरः २८ भगवानपितत्रांगगन्यवात्सीत्तत्प्रियंकरः ॥ प्रस्थाप्ययदुवीरान्स्वान्सां बादींश्चकुशस्थलीम् २९ इत्थंराजाधर्मसुतोमनोरथमहार्णवम् ॥ सुसमुद्रंसमुत्तीर्यकृष्णेनासीद्गतज्वरः ३० एकदांतःपुरेतस्यवीक्ष्यदुर्योधनःश्रियम् ॥ अतप्यद्राजसूयस्यमहित्वंचाच्युतात्मनः ४१ यस्मिन्नरेंद्रदितिजेंद्रसुरेंद्रलक्ष्म्योनानाविभांतिकिलविश्वसृजोपक्लृप्ताः ॥ ताभिःपतिंद्रुपदराजसुतोपतस्थे यस्यांविषक्तहृदयःकुरुराजएषः ३२ यस्मिंस्तदामधुरिपोर्महिषीसहस्रंश्रोणीभरेणशनकैःक्वणदंघ्रिशोभम् ॥ वक्षःसुचारुकुचकुंकुमशोणहारंश्रीमन्मुखं चचलकुंतलकुंतलाढ्यम् ३३ सभायांमयक्लृप्तायांक्वापिधर्मसुतोविराट् ॥ वृतोनुजैर्बंधुभिश्चकृष्णेनापिस्वचक्षुषा ३४ आसीनःकांचनेसाक्षादासनेमघवा निव ॥ पारमेष्ठ्याश्रियाजुष्टःस्तूयमानश्चबंदिभिः ३५ उपास्यमानोविप्रेंद्रैर्नानादेशसमागतैः ॥ दोधूयमानोधवलैर्वालव्यजनसंकुलैः ॥ रराजराजशा र्दूलोदिविदेवपतिर्यथा ३६ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्द्धेत्र्यशीतितमोऽध्यायः ॥ ८३ ॥ श्रीशुकउवाच ॥ तत्रदुर्योधनोराजापरीतो भ्रातृभिःप्रियैः ॥ किरीटमालीन्यविशदसिहस्तःक्षिपन्रुषा १ तवायुभिः दोधूयमानःवीज्यमानः ३६ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधे
उत्तरार्धेविजयध्वजकृतटीकायांत्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ७ ॥ द्वित्रेष्वध्यायेषुशाल्ववधमाहात्म्यंकथयति तत्रादौभूभारहरणहेतुदुर्योधनस्यतेजःक्षतिंचवक्ति तत्रेत्यादिना तत्रसभायाम् १

आचितंनिचितंव्याप्तमितिहलायुधः २ पुरःअग्रतःस्फाटिकमणि निवद्धाम् ३ ४ योगेश्वरेणश्रीकृष्णेनानुज्ञातः साम्नासांत्ववचनेन ५ ६ ७ आत्मनास्वेनैवईहितंचेष्टितंआत्मनिमनसिस्मर न्भद्रमितिशेषः तत्रकथांतरंवक्तुंतन्नारदागमनमाह तदेति ८ ९ १० ११ १२ १३ १४ १५ रुक्म्यादीन्राज्ञःसमाजंसंमेलनम् आनृण्यंऋणाभावकरणम् १६ शिशुपालद्रुम

स्थलेप्यम्बुभ्रांतंहरिनीलोपलाचिते ॥ स्थलंपुष्करिणींमत्वासर्वेवंजहसुर्जनाः २ आगच्छन्नेवमुर्वीशःपुरःपुष्करिणींक्वचित् ॥ विलोक्यस्फाटिकांभूमिमन्वानोव्यपतज्जले ३ जहासभीमस्तंदृष्ट्वास्त्रियोभूपाश्चकेचन ॥ निवार्यमाणाअप्यंगराज्ञाकृष्णानुमोदिताः ४ अजातशत्रुराकर्ण्यवस्त्रस्रग्भूषणादिकम् ॥ संप्रेष्याह्वापयामाससाम्नायोगेश्वरेणच ५ तदनादृत्यसत्कारंव्रीडावनतकंधरः ॥ जाज्वल्यमानहृदयोनजगामतदंतिकम् ६ सव्रीडितोवाग्वदनोरुषाज्वलन्निष्क्रम्यतूर्णींप्रययौगजाह्वयम् ॥ हाहेतिशब्दःसुमहानभूत्तदाजातशत्रुर्विमनाइवाभवत् ७ बभूवतूर्ष्णींभगवान्भुवोभरंजिहीर्षुरात्मेहितमात्मानिस्मरन् ॥ तदाविरासीज्जगदीशसन्निधौमुनिःसुराराधितपादपंकजः ८ उपेत्यनारदःसर्वैःसदस्यैरभिपूजितः ॥ कृष्णेनाभ्यर्चितःसम्यगुपविष्टोनृपांतिके ९ उवाचधर्मराजस्तंप्रणिपत्ययथाविधि ॥ भवान्सर्वत्रगोब्रह्मन्सर्वकालेष्वसंगतः १० नृपाणांशौर्ययुक्तानांसर्वमंडलवासिनाम् ॥ इदानींकतमःशूरोनित्योद्योगेनवर्त्तते ११ इतितेनोदितांवाणीमाकर्ण्यमुनिरब्रवीत् १२ नारदउवाच ॥ भग्नदर्पानृपाःसर्वेकृष्णेनाप्रतिमौजसा ॥ वसंतिविषयेस्वेस्वेनष्टचेष्टागतश्रियः १३ एकएवमहोत्साहःक्षत्रियाणांदुराग्रही ॥ जातःशाल्वेषुनृपतिर्बहुपादातिवाहनः १४ भ्रातर्युपरतेयुद्धेविष्णुनालोकजिष्णुना ॥ ब्रह्मदत्तसुतेहंसेयमुनायांमहात्मना १५ कृष्णद्विडेत्यराज्ञोसौरुक्म्यादीन्कुंडिनेपुरे ॥ समाजंकारयामासभ्रातुरानृण्यकांक्षया १६ शिशुपालद्रुममुखैर्दंतवक्त्रपुरःसरैः ॥ पराजितेषुसंग्रामेजरासंधादिषुप्रभो १७ शाल्वःप्रतिज्ञामकरोच्छृण्वतांसर्वभूभुजाम् ॥ अयादवींक्ष्मांकरिष्येपश्यंतुममपौरुषम् १८ इतिमूढःप्रतिज्ञायतपसेप्राविशद्वनम् ॥ गतेतस्मिन्बहून्वर्षान्प्रतीक्ष्यतदुपागमम् १९ तदनंतरजोमात्यैरभिषिक्तोनृपार्थिभिः ॥ तपस्तस्त्वासनृपतिर्देवंपशुपतिंप्रभुम् २० आराधयामासवनेपांसुमुष्टिंसकृत्क्सन् ॥ संवत्सरांतेभगवान्संतुष्टःसउमापतिः २१ वरेणच्छंदयामासशाल्वंशरणमागतम् ॥ देवासुरमनुष्याणांगंधर्वोरगरक्षसाम् २२ अभेद्यंकामगंवव्रेसयानंवृष्णिभीषणम् ॥ तथेतिगिरिशादिष्टोमयःपरपुरंजयः २३ पुरंनिर्मायशाल्वायप्रादात्सौभमयस्मयम् ॥ सलब्ध्वाकामगंयानंतमोधामदुरासदम् २४ आययौस्वंजनपदंसमग्रबलवाहनम् ॥ इदानींराजपुत्राणांसएवोद्योगवान्नृप २५

दुर्मुखैःसहजरासंधादिषुसत्सु १७ १८ १९ तस्यशाल्वस्यानंतरजोऽनुजः २० २१ छंदयामास तृप्तमकरोत् २२ अयस्मयंअयोमयम् अयस्मयादीनिच्छंदसीतिपाणिनिः नीलरश्मिपुंजात्मकत्वात्तमोधामेत्युच्यते २४ २५

२६ २७ सूनृतैःसूनृताभिः २८ २९ स्वसैनिकान्स्वसेनानायकान् ॥ ३० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्त०विजयध्वजकृतटीकायांचतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ ७ ॥ तथामहोत्सवसमेतत्वेन शाल्व संक्रुद्धोभूदितिशेषः १ २ आगत्यचांतरिक्षेतंविमानमावसंस्तस्मिन्विमानेस्थितःयुयुधेइत्यन्वयः ३ संप्रहारप्रकारमाह पुरीमिति अट्टालोऽट्टः तोलिकावीथिकागृहपंक्तिमध्यपद्धतिरित्यर्थः ४ विहायसआकाशादासारोवेगवान्वर्षस्तस्सहिताःशर्कराःक्षुद्रपाषाणाः चक्रवातोमंडलवायुः ५ शंसुखम् ६ ७ ८ ९ १० उष्णागावोयस्यसउष्णगुःसूर्यः

इतिधर्मसुतःश्रीमान्श्रुत्वातन्नारदोदितम् ॥ पार्श्वेभगवतःशौरेःशनैर्मुखमवैक्षत २६ निशम्यतद्वासुदेवोधैर्यसारोनिराकुलः ॥ किंचित्प्रहस्यास्तुनामेत्याहसाहिमहात्मता २७ पूजयित्वाऋषिंसम्यक्सूनृतैर्गीर्भिरच्युतः ॥ चिराभिलषितःसोपिप्राप्तःसाध्वित्यचिंतयत् २८ उग्रसेनंयदुपतिंयुयुधानंचमाधवः ॥ अक्रूरंकृतवर्माणमन्यांश्चयदुपुंगवान् २९ प्रेषयामासरक्षायैद्वारवत्याःस्वसैनिकान् ३० ॥ इतिश्रीभा०म०द०उ०चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ श्रीशुकउवाच ॥ तथावसतिगोविंदेशक्रप्रस्थेमहात्मनि ॥ ससानुजेचैवनृपेकृतकृत्येयुधिष्ठिरे १ आकर्ण्यशाल्वःसंक्रुद्धोदमघोषसुतंहतम् ॥ जरासंधंचसुहृदंराजसूयंक्रतुंकृतम् २ ययौद्वारावतींशाल्वोवैरंवृष्णिकृतंस्मरन् ॥ तमावसन्नंतरिक्षेयुयुधेभरतर्षभ ३ पुरींबभंजोपवनान्युद्यानानिचसर्वशः ॥ सगोपुराणिद्वाराणिप्राकाराट्टालतोलिकाः ४ विहायसोविमानाग्र्यान्निपेतुःशस्त्रवृष्टयः ॥ शैलाद्रुमाश्चाशनयःसर्पाआसारशर्कराः ॥ प्रचंडश्चक्रवातोभूद्रजसाच्छादितादिशः ५ इत्यर्द्यमानासौभेनकृष्णस्यनगरीभृशम् ॥ नाभ्यपद्यतशंराजन्त्रिपुरेणयथामही ६ प्रद्युम्नोभगवान्वीक्ष्यमथ्यमानानिजाःप्रजाः ॥ माभैष्टेत्यभ्यधाद्वीरोवाचःपित्रोरनुस्मरन् ७ सात्यकिश्चारुदेष्णश्चसांबोक्रूरःसहानुजः ॥ हार्दिक्योभानुविंदश्चगदश्चशुकसारणौ ८ अपरेचमहेष्वासारथयूथपयूथपाः ॥ निर्ययुर्दंशितागुप्तारथनागाश्वपत्तिभिः ९ ततःप्रववृतेयुद्धंशाल्वानांयदुभिःसह ॥ यथासुराणांविबुधैस्तुमुलंरोमहर्षणम् १० तांचसौभपतेर्मायांदिव्यास्त्रैरुक्मिणीसुतः ॥ क्षणेननाशयामासनैशंतमइवोष्णगुः ११ विव्याध पंचविंशत्यास्वर्णपुंखैरयोमुखैः ॥ शाल्वस्यध्वजिनीपालंशरैःसन्नतपर्वभिः १२ शतेनाताडयच्छाल्वमेकैकेनास्यसैनिकान् ॥ विव्याधदशभिर्नेतॄन्वाहनानित्रिभिस्त्रिभिः १३ तदद्भुतंमहत्कर्मप्रद्युम्नस्यमहात्मनः ॥ दृष्ट्वातंपूजयामासुःसर्वेऽस्यपुरवासिनः १४ बहुरूपैकरूपंतद्दृश्यतेनचदृश्यते ॥ मयमायाकृतंयानंदुर्विभाव्यंजनैरभूत् १५ क्वचिद्भूमौक्वचिद्व्योम्निक्वचिगिरिमूर्ध्निक्वचिद्गिरौ ॥ अलातचक्रवद्भ्राम्यत्सौभंतद्दुरवस्थितम् १६ यत्रयत्रोपलक्ष्येततस्यसौभस्यसैनिकः ॥ शाल्वस्ततस्ततोऽमुंचन्शरान्सात्वतयूथपाः १७ शरैरग्न्यर्कसंकाशैराशीविषदुरासदैः ॥ पीड्यमानःपुरानीकःशाल्वोमुह्यत्परैरिति १८

११ १२ १३ अस्यप्रद्युम्नस्य १४ १५ दुरवस्थितंनैकत्रस्थितमभूदितिशेषः १६ तस्यसौभस्यसैनिकःसेनासहितःशाल्वःयत्रयत्रोपलक्ष्येत सात्वतयूथपाः ततःशरानमुंचन्नित्यन्वयः १७ इतिपरैःशरैःअर्द्यमानःपुरस्थितानीकः १८

शाल्वस्यानीकपाः सेनानायकाःतेषांशस्त्राणामाघैः १९ २० रथिनिप्राणसंदिग्धेसारथीरथमाहरेत् जीवयेद्युद्धतःसाधुयुद्धकर्मविशारदइतियुद्धधर्मवित् २१ अपसर्पणंअपसरणं २२ कुतोसाध्वि त्यतस्तदाह नेति माद्विना २३ धर्मसाधनाद्युद्धादपगतोहापितृभ्यांपृष्टःतत्रापित्रोरात्मनामयाकृतमक्षमंकिंनुकथनुवक्ष्यइत्यन्वयः २४ किंवेददु.सहमित्याह व्यक्तमिति जामयःसहोदर्यःकथंकथयं तीतितत्राह क्लैब्यमिति हेवीरमृधेन्यैःसहकथंक्लैब्यंगतस्तत्कथ्यतामिति २५ कोयधर्मइतितत्राह सूतइति १६ उपसृष्ट उपद्रुतः २७ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउ०विजयध्वजकृतटीकायांपंचा

शाल्वानीकपशस्त्रौघैर्वृष्णिवीराभृशार्दिताः ॥ नतत्यजूरणंस्वंस्वंलोकद्वयजिगीषवः १९ शाल्वामात्योद्युमान्नामप्रद्युम्नात्प्राक्प्रपीडितः ॥ आसाद्यगद यागुर्व्याव्याहत्यव्यनदद्बली २० प्रद्युम्नंगदयाशीर्णवक्षस्थलमरिंदमम् ॥ अपोवाहरणात्सूतोधर्मविद्दारुकात्मजः २१ लब्धसंज्ञोमुहूर्तेनकार्ष्णिःसारथि मब्रवीत् ॥ असाध्विदमहोसूतयद्रणान्मेऽपसर्पणम् २२ नयदूनांकुलेजातःश्रूयतेरणविच्युतः ॥ विनामत्क्लीबचित्तेनसूतेनप्राप्तकिल्बिषात् २३ किन्नु वक्ष्येभिसंगम्यपितरौरामकेशवौ ॥ युद्धात्सम्यगपक्रांतःपृष्टस्तत्रात्मनाक्षमम् २४ व्यक्तंमेकथयिष्यंतिहसंत्योभ्रातृजामयः ॥ क्लैब्यंकथंगतोवीरसहा न्यैःकथ्यतांमृधे २५ सूतउवाच ॥ धर्मंविजानतायुष्मत्कृतमेतन्मयाविभो ॥ सूतःकृच्छ्रगतंरक्षेद्रथिनंसारथिंरथी २६ एतद्विदित्वातुभवान्मयापो हितोरणात् ॥ उपसृष्टःपरेणेतिमूर्च्छितोगदयाहतः २७ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्द्धेपंचाशीतितमोऽध्यायः ॥ ८५ ॥ श्रीशुक उवाच ॥ इतिसूतोदितांवाणीमाकर्ण्ययदुनंदनः ॥ पुनरात्तप्रहरणःसूतमाहरणांगणे १ पश्यसूतद्युमानेषदंशितोधृतकार्मुकः ॥ नयमांद्युमतःपार्श्वंवीरस्ये त्याहसारथिम् २ आद्रवंतंस्वसैन्यानिद्युमंतंरुक्मिणीसुतः ॥ प्रतिहत्यरुषाविध्यन्नाराचैरष्टभिःस्मयन् ३ चतुर्भिश्चतुरोवाहान्सूतमेकेनचाहनत् ॥ द्वा भ्यांचकेतुधनुषीद्युमतोन्येनवैशिरः ४ गदःसात्यकिरक्रूरःसांबश्चशुकसारणौ ॥ वसुदेवोग्रसेनौचजघ्नुःसौभपतेर्बलम् ५ पेतुःसमुद्रेबहवःशाल्वेयाभिन्न कंधराः ॥ एवंयदूनांशाल्वानांनिघ्नतामितरेतरम् ६ रणंत्रिनवरात्रंतुतुमुलंरोमहर्षणम् ॥ इंद्रप्रस्थंगतःकृष्णआहूतोधर्मसूनुना ७ राजसूयेनिवृत्तेचशि शुपालेरणेहते ॥ अलक्षयद्दुःशकुनान्घोरान्संग्रामशंसिनः ८ कुरुवृद्धाननुज्ञाप्यमुनींश्चब्राह्मणैःसह ॥ अन्वीयमानःसामात्यैःपांडवैर्निर्ययौपुरात् ९ स गत्वाकिंचिदध्वानंस्थापयित्वापुरौकसः ॥ पृथासुताननुज्ञाप्यप्रणतानश्रुलोचनान् १० सुवर्णशिबिकारूढैरवरोधवधूजनैः ॥ गजाश्वरथपादातिसह स्रैरपिसंयुतः ॥ अन्वीतराजकटकःप्रतस्थेपश्चिमामुखः ११ शाल्वोपिकुरुशार्दूलविमानेनखचारिणा ॥ अपावृत्यरणाद्द्राष्टुंस्वमेवाभ्यार्दितोययौ १२ गच्छमानस्यशाल्वस्यसांबोभिद्रुत्यपृष्ठतः ॥ शाल्वामात्यंक्षेमधूर्तिंबाणैर्निन्येयमक्षयम् १३

शीतितमोऽध्यायः ॥ ८५ ॥ यदूत्रंदयतीतियदुनंदनः एषद्युमान् दंशितोरणांगणेआस्तेइतिशेषः ततःकिंतत्राह नयेति १ २ ३ ४ ५ ६ त्रिनवरात्रंसप्तविंशद्रात्रं अरिमत्सरेकृष्णःप्रायःइंद्रप्रस्थमिति ७ ८ ९ १० ११ रणादपावृत्यरणविहायेत्यर्थः १२ १३

अखिलात्समस्तप्रकृतिजनात् वल्लभं प्रियतमं १४ ससज्ज संगतः १५ १६ १७ १८ साल प्राकारः प्रतोली विशिखा रथ्या इतिहलायुधः प्रतोलीरेव प्रतोलिका प्रस्तरापूर्णदीर्घिका पाषाणपूरितपारी खां गंतुमितिशेषः १९ २० २१ २२ २३ २४ २५ २६ २७ २८ सव्यंहस्तं २९ ३० सख्युर्भार्यां शिशुपालस्य संकल्पजाया रुक्मिणी ३१ ३२ अपुनरावृत्तिमरणं यमगृहं वा ३३ ३४ यस्यत

सेनापतिंविविंदाख्यंशाल्वस्याखिलवल्लभम् ॥ निरुध्यपथिगच्छंतंप्रद्युम्नःप्राहरच्छरैः १४ प्रद्युम्नेनातिविद्धोसौगृहीत्वाखड्गचर्मणी ॥ ससज्जरौक्मिणेयेन तदभूद्रणमद्भुतम् १५ मंडलानिविचित्राणिचरतस्तस्यसंगरे ॥ कृपाणेनयदुश्रेष्ठःशिरःकायादपाहरत् १६ विभ्रष्टमार्गासासेनाहतप्रवरयूथपा ॥ विदुद्राव यथाकामंप्राणत्राणपरायणा १७ देवोपिद्वारकामेत्यवेगेनगरुडध्वजः ॥ ददर्शनगरींभग्नप्रासादाट्टालगोपुराम् १८ विशीर्णतोरणांरुग्णतुंगसालप्रतोलिकाम् ॥ विध्वस्तोपवनोद्यानांप्रस्तरापूर्णदीर्घिकाम् १९ निःस्वाध्यायवषट्कारामालोक्यद्वारकांपुरीम् ॥ अपृच्छत्कृतवर्माणंकिमेतदितिदुर्मनाः २० तेनोक्तंसर्वमाकर्ण्यशाल्वराजविचेष्टितम् ॥ प्रतिजज्ञेयदुपतिःशृण्वतांसर्वसात्वताम् २१ अनुद्धृत्यतमद्यैवसौभंहत्वादुरात्मकम् ॥ सौभंनिपात्यजलधौप्रवेक्ष्येद्वारकामिति २२ सरथंशैब्यसुग्रीवमेघपुष्पबलाहकैः ॥ युक्तंबहुप्रहरणमग्रावस्थितदारुकम् २३ आरुह्यभगवान्विष्णुर्गरुडध्वजमुत्तमम् ॥ प्रययौसौभपदवींमनोमारुतरंहसा २४ तथागत्वासुदूरंतमंभोधेःकुक्षिमाश्रितम् ॥ ददर्शसौभंतन्मध्येशाल्वंचसमलंकृतम् २५ शाल्वश्चकृष्णमालोक्यहतप्रायबलेश्वरः ॥ प्राहरत्कृष्णमूतायशक्तिंभीमांदृढांमृधे २६ तामापतंतींनभसिमहोल्कामिवरंहसा ॥ आसयंतींदिशःशौरिःसायकैःशतधाच्छिनत् २७ तंचषोडशभिर्बाणैर्विद्ध्वासौभंचखेचरम् ॥ अविध्यच्छरसंदोहैःखंसूर्यइवरश्मिभिः २८ शाल्वःशौरेस्ततःसव्यंसशार्ङ्गंशार्ङ्गधन्वनः ॥ बिभेदन्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम् २९ हाहाकारोमहानासीद्यदूनांतत्रपश्यताम् ॥ विनद्यसौभराडुच्चैरिदमाहजनार्दनम् ३० यत्त्वयायुधिदुर्बुद्धेभ्रातरौमेमहाबलौ ॥ निहतौहंसडिभकौयमुनायांदुरात्मना ॥ यद्भूयोमूढनःसख्युर्भार्यांप्यपहृतात्वया ३१ यच्चमंदसभामध्येदमघोषसुतःसखा ॥ व्यापादितःक्षत्रियाणांपश्यतांहतचेतसाम् ३२ तंत्वाद्यनिशितैर्बाणैरपराजितमानिनम् ॥ नयाम्यपुनरावृत्तिंयदितिष्ठेर्ममाग्रतः ३३ इतितेनोदितांवाणीमाकर्ण्यमधुसूदनः ॥ प्राहार्दितोबाणगणैःपुनरात्तशरासनः ३४ वृथात्वंकत्थसेमंदनपश्यस्यास्त्यतिकौतुकम् ॥ पौरुषंदर्शयत्वंनःशूराणांफल्गुभाषणम् ३५ इत्युक्त्वाभगवान्शाल्वंगदयाभीमवेगया ॥ तताडजत्रौसंरब्धःसचकंपेवमन्नसृक् ३६ ततःशाल्वःसमुत्पत्यखड्गनानकदुंदुभेः ॥ उत्कृत्यशिरआदायखस्थंसौभंसमाविशत् ३७

वातिकौतुकमितिव्याख्यातंवीर्यंनास्ति सत्वंवृथाकत्थसेपौरुषंअस्तिचेद्दर्शय शूराणांचभाषणंफल्गुमितंवीर्यप्रकटनंवाञ्छितमित्यर्थः यद्वा शूराणांपौरुषंदर्शयभाषणंफल्गुतुच्छंविकत्थनमित्यर्थः ३५ ३६ शाल्वस्यशक्तिप्रकटनायतन्मायाप्रकारमाह ततइति ३७

श्रीकृष्णः शाल्वसृष्टांमायांअवलोक्यकिमकरोदत्राह ततइति ततोवसुदेवशिरोहरणानंतरंमुहूर्तंकालंतत्रयुद्धेअनुतिष्ठत्अन्वतिष्ठत्अन्ववर्तत कीदृशः प्रकृतौचिदानंदघनस्वभावेउपस्थितोपिशाल्वमायांज्ञानवपिप्रकृतावुपप्रकृतिसमीपेस्थितःअज्ञानविव पुनःकिंचकारेतितत्राह ततोमुहूर्तान्महानुभावःअपरिमितप्रभावः सहरिः स्वजनस्यस्वभक्तजनस्यानुकूलात्संगतःवचनप्रसंगात् तद्वसुदेवशिरोहरणमबुध्यत कथंतदत्राह आसुरीमिति शाल्वेनप्रकृतांप्रयुक्तां मूलबलमाह मयइति मयेनासुररक्षणोदितामुपदिष्टामित्यर्थः तदुक्तं जानन्शाल्वकृतांमायामजानन्निवकेशवः अन्ववर्तताकिंचिच्चिति बुद्धा किंकृतमत्राह प्रकृताविति कृतीच्छेदनइतिधातोः बुद्धामायाःप्रकृतौनिर्मूलनेसम्यक्स्थितोभूदितिशेषः ततस्तामाहरद्धिभुरितिवचनात् अज्ञानप्रकटनंकस्मादत्राह प्रकृताविति प्रकृतिर्नि[illegible]नशरीरस्थत्वादसुरजनमोहनार्थंत्वाच्च एवमेवतुसर्वत्रपरमात्मासनातनः विद्धश्चरुधिरस्रावीकथंचिदजयत्परं इत्यादिदर्शयेद्विष्णुर्मोहयन्मायपाजगदिति चिदानंदघनस्वभावइत्येतत्कुतइतिचेन्न चिदानंदघनस्यास्यकुतोवेधादिसंभवोदित्यस्मात्स्वजनानुसंगतइतीदमपिसद्रतेःइतिसिद्धं यदचरस्तन्वावावृधानोबलानीद्रप्रब्रुवाणोजनेषु मायेत्सातेयानियुद्धान्याहुर्नाद्यशत्रुंननुपुराविवित्सइत्यादिश्रुतिसिद्धोयमर्थः तथाहि हेइंद्र तन्वावावृधानः स्वरूपेणभृशंवर्धमानस्त्वंबलानिवीर्याणिविक्रमलक्षणानिअचरःअकृतेतियत्स्वजनेषुप्रब्रुवाणःव्याकुर्वाणोवर्ततेइतिशेषः तस्मात्स्वभावरहस्यंस्वजनाजानंति

ततोमुहूर्तात्प्रकृतावुपस्थितस्तत्रानुतिष्ठत्स्वजनानुसंगतः ॥ महानुभावस्तदबुध्यतासुरींमायांसशाल्वप्रकृतांमयोदिताम् ३८ नतत्रदैत्यंनपितुःकलेवरं प्रबुद्धआत्मातदपश्यदच्युतः ॥ स्वप्नेयथाचांबरचारिणंरिपुंसौभस्थमालोक्यनिहंतुमुद्यतः ३९ एवंवदंतिराजर्षेऋषयःखेचरान्विताः ॥ यत्स्ववाचोविरुध्यंतेतन्नूनंतेस्मरंतिनु ४० क्वशोकमोहौस्नेहोवाभयंवायेऽज्ञसंभवाः ॥ क्वचाखंडितविज्ञानज्ञानैश्वर्यैश्वराजितः ४१ यत्पादसेवार्जितयात्मविद्ययाहिन्वंत्यनाद्यात्मविपर्ययग्रहम् ॥ लभंतआत्मीयमनंतमैश्वरंकुतोनुमोहःपरमस्यसद्गतेः ४२ इतितैरुदितांवाणीमाकर्ण्यकमलेक्षणः ॥ ससौभंहंतुमारेभेशाल्वंकुरुकुलोद्वह ४३ ततोनिशातमादायचक्रंकृष्णःसुदर्शनम् ॥ आग्नेयास्त्रेणाभिमंत्र्यप्राहिणोत्सौभनाशनम् ४४

त्यर्थः शाल्वादिशत्रुणाक्रियमाणानियानियुद्धानिआहुःपुराणादौएतानित्वामुद्दिश्यसामयोदितामाया इत् इंद्रजाललक्षणैवत्वंपुराप्रथमतोमुहूर्तंशत्रुसुस्तत्रोटनान्मायांनाविवित्सेनज्ञातवानासि अद्याधुना विवित्से ननुपश्चात्सासिद्धाभूदित्यर्थः ३८ एतदेवस्पष्टयति नेति अच्युतःज्ञानच्युतिरहितः तात्पितु कलेवरंचनापश्यत्प्रबुद्धःमायामितिशेषः आत्मापरमात्मानिदर्शयति स्वप्नइति यथास्वप्नेकरितुरगादीन्पश्यतितत्प्रबुद्धः तान्पदार्थान्नपश्यति बुद्धाकिंकृतमत्राह अंबरचारिणमिति ३९ तद्रष्टॄणामृष्यादीनामपिज्ञानलोपोनास्तिकिंपुनःहरेरितिभावेनाह एवमिति कथंवदंतीत्यत्राह यत्स्ववाचइति स्वस्यस्वतंत्रस्यहरेर्वाचोवेदलक्षणायन्मोहादिकंहरिविषयंप्रतिविरुध्यंतेविरोधवंत्योभवंति हरेर्मोहादिकंनसहंतइत्यर्थः अजस्यावक्रचेतसइतिश्रुतेः नूनंतार्किकाउपक्रमादिवेदतात्पर्यलिंगकोविदास्तेवैविकः तन्मोहादिकंस्मरंतितुर्किंनैवस्मरंतीत्यर्थः येषांस्ववाचोविरुध्यंतेहरेर्मोहादिवादिन्यःपरस्परविरोधिन्यःस्युःतेशास्त्रप्रणेतारःतादृशीर्वाच स्मरंतिपुराणादौनैवेतिवा ४० प्रत्युतविपरीतमेववदंतीत्याहक्वेति येशोकादयोऽज्ञानतःसंभवायेषांतेतथा ४१ तदेवद्रढयति यत्पादेति आत्मविद्ययापरमात्मज्ञानेनअनादिकालेनआत्मविपर्ययग्रहंमनसिस्थितमन्यथाज्ञानंहिन्वंति नाशयंति नतावदेव किंतु हरितत्त्वंचजानंतीत्याह लभंतइति आत्मीयमात्मनः परमात्मनोविद्यमानंतमैश्वरमीश्वरत्वंलभंतेजानंति यद्वा स्वयोग्यमैश्वरमीश्वरानुगृहीतमनंतंमोक्षंलभंतेप्राप्नुवंति ४२ ४३ ४४

आब्रह्मसदनंब्रह्मसदनंब्रह्मलोकपर्यंतम् ४५ ४६ सौभंनामपुरम् ४७ ४८ अनंतैरनेकसंख्यैःहरिःशिरः ४९ ५० शिरोमणिकिरीटं हरोजबिभेद हशस्विदं शतंसहस्रमयुतंनियुतंप्रयुता र्बुदे न्यर्बुदंशस्वर्वृंदंचानेस्वर्वंखर्वमर्बुदमितियादवः ५१ ५२ ५३ पुरुमायिनःअनेकशतमायावतः ५४ ५५ ५६ ५७ सानंदंआनंदसहितंइत्यर्थोविषयानंदःनस्वरूपानंदइत्यर्थःस्यात्सो नुपपन्नः विज्ञानमानंदंब्रह्मेतिश्रुतेः ५८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्थेविजयध्वजकृतटीकायांषडशीतितमोऽध्यायः ॥ ८६ ॥ नृगस्यकृकलासशरीरान्मोक्षकरणमाहात्म्यं

तन्नारायणहस्ताभ्यांमुक्तमाग्नेयमंत्रितम् ॥ जज्वालाब्रह्मसदनंज्वालामालातिभीषणम् ४५ ततोवैमानिकाःसर्वेतेविहायविहायसम् ॥ सुदर्शनोष्मणा तप्तादुद्रुवुःसर्वतोदिशम् ४६ तदर्कशतसंकाशंसौभंभित्त्वाद्विधापुरम् ॥ भूयोनारायणकरंप्रापभूपसुदर्शनम् ४७ ततःसमुद्रेन्यपतत्पुरंविच्छिन्नबंधनम् ॥ गदापाणिर्दुराधर्षःशाल्वोपिप्रत्यदृश्यत ॥ तंप्रेषयामासगदांकृष्णमुद्दिश्यदुर्मतिः ४८ ततोरथंदैत्यबलोपनीतंमंस्थायशाल्वोबहुशस्त्रसंचयम् ॥ अवा किरन्कृष्णशिरस्यनंतैर्महायुधैश्चव्यनदद्वारिर्यथा ४९ तांगदांप्रेषितांतेनछित्त्वाबाणैस्त्रिधाहरिः ॥ पांचजन्यमुपाध्मायसिंहनादंव्यनीनदत् ५० तंशस्त्र पूगैःप्रहरंतमोजसाशाल्वंशरैःशौरिरमोघविक्रमः ॥ विद्ध्वाऽच्छिनद्वर्मधनुःशिरोमणिंरथंचशत्रोर्गदयारुरोजह ५१ तत्क्षणहस्तेरितयाविचूर्णितः पपाततोयेगदयासहस्रधा ॥ विसृज्यतंभूतलमास्थितोगदामुद्यम्यशाल्वोच्युतमभ्यगाद्द्रुतम् ५२ आधावतोभीमगदस्यबाहुंभल्लेनछित्त्वाथरथांगमद्भुत म् ॥ वधायशाल्वस्यलयार्कसन्निभंबिभ्रद्बभौसार्कइवोदयाचलः ५३ जहारतेनैवाशिरःसकुंडलंकिरीटयुक्तंपुरुमायिनोहरिः ॥ वज्रेणवृत्रस्ययथापुरंदरोब भूवहाहेतिवचस्तदानृणाम् ५४ तस्मिन्निपतितेपापेसौभेचाब्धौनिपातिते ॥ देवदुंदुभयोनेदुर्ववर्षुःपुष्पवृष्टयः ५५ स्तूयमानोमुनिगणैःसूतमागधबं दिभिः ॥ आजगामततःसैन्यैःपुरींद्वारवतींहरिः ५६ संप्रविश्यपुरींरम्यांपताकाखंडमंडिताम् ॥ अलंकृतामलंकारैःसिक्तसंमृष्टचत्वराम् ५७ पूजितोयदु भिर्वृद्धैःपौरजानपदैस्तथा ॥ रमयन्व्यष्टसाहस्रमहिषीःप्रेमविह्वलाः ॥ उवासदेवकीपुत्रःसानंदंकुरुनंदन ॥ ५८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधे उत्तरार्द्धेशाल्ववधोनामषडशीतितमोऽध्यायः ॥ ८६ ॥ श्रीशुकउवाच ॥ उपविष्टंसुधर्मायांकदाचित्स्वक्षत्रियैर्वृतम् ॥ विज्ञापयद्वेत्रपाणिर्द्वास्थोऽभ्येत्यज नार्दनम् १ शक्रप्रस्थाद्द्विजःकश्चिदागत्यद्वारितिष्ठति ॥ प्रवेशितव्योवादेवनवेतियदुसत्तम २ प्रवेशयेतिकृष्णेनद्वास्थेनोक्तेनसत्वरः ॥ प्रवेशितःप्रण म्याहब्राह्मणःपुरुषोत्तमम् ३ धर्मज्ञोधार्तराष्ट्रेणमूढेनाधर्मचारिणा ॥ अक्षैःपराजितोयातःसभार्यःसानुजोवनम् ४ ब्राह्मणेनोदितांवाणीमित्याकर्ण्यसुदुः श्रवाम् ॥ क्रोधोद्विग्नमनास्तूर्णमुत्तस्थेहरिरासनात् ५ सरथंदारुकानीतमारुह्यसहसत्वया ॥ महत्यासेनयासार्धंययौयत्रपृथासुताः ६

हरेःब्राह्मणप्रियत्वंचार्थवादरूपेणकथयत्यस्मिन्नध्याये तत्रादौयुधिष्ठिरस्यराज्यभ्रंशेनवनवासनिमित्तंवक्तुमुपक्रमते उपविष्टमित्यादिना १ २ कृष्णेनप्रवेशयेत्युक्तेनद्वास्थेनप्रवेशितः ३ ४ इतिवाणीसुष्टुदुःश्रवांश्रोतुमशक्यांकर्णदुःसहामित्यर्थः ५ ६

अनुशोचत् अन्वशोचत् शुचप्रकाशइतिधातोःशोकंप्रकाशयन्नतुसत्यशोकः ७ अनुभुक्तानिअनुभूतानिअन्योन्यव्यसनानि ८ हेतुवाक्यैःइतिहासविषयैःवचनैः ९ सत्यभामयाद्रौपदींसमाश्वास्येत्यतः सत्यभामासमन्वितइत्युक्तम् १० ११ अन्यान्भूकंटकान् १२ १३ विचिन्वंतःअन्वेषणंकुर्वंतः सत्त्वंप्राणिनम् १४ कृकंकलासयतिनर्तयतीतिकृकलासः शिरःश्राघ्रं

वनेवसंतंराजानंब्राह्मणैःपरिवारितम् ॥ दृष्ट्वानुशोचत्सुभृशंसानुजंयदुनंदनः ७ व्यसनान्यनुभुक्तानिवर्णयित्वापरस्परम् ॥ उषित्वातत्रतांरात्रिंपांडवैःसह केशवः ८ हेतुवाक्यैःसमाश्वास्यधर्मराजंयुधिष्ठिरम् ॥ भीमसेनार्जुनौचैवयमौचयदुनंदनः ९ पांचालींद्रौपदींसाध्वींसत्यभामासमन्वितः ॥ आश्वास्यताननुज्ञाप्यब्राह्मणांश्चसहस्रशः १० सुभद्रामभिमन्युंचरथमारोप्यमाधवः ॥ आजगामवनाद्राजन्पुरींद्वारवतींप्रभुः ११ सप्रविश्यपुरींदिव्यांपार्थविश्लेषदुर्मनाः ॥ उवासपालयन्पृथ्वींधर्मेणान्यांश्चकालयन् १२ एकदोपवनंराजन्जग्मुर्यदुकुमारकाः ॥ विहर्तुंसांबप्रद्युम्नचारुभानुगदादयः ॥ १३ क्रीडित्वासुचिरंतत्रविचिन्वंतःपिपासिताः ॥ जलंनिरुदकेकूपेददृशुःसत्त्वमद्भुतम् १४ कृकलासंगिरिनिभंवीक्ष्यविस्मितचेतसः ॥ तस्यचोद्धरणेयत्नंचक्रुस्तेकृपयान्विताः १५ चर्मभिस्तंतथापाशैर्बद्ध्वापतितमर्भकाः ॥ नाशक्नुवन्समुद्धर्तुंकृष्णायाचख्युरुत्सुकाः १६ तत्रगत्वारविंदाक्षोभगवान्विश्वभावनः ॥ वीक्ष्योज्जहारवामेनतंकरेणसलीलया १७ सउत्तमश्लोककराभिमृष्टोविहायसद्यःकृकलासरूपम् ॥ संतप्तचामीकरचारुवर्णःस्वर्ग्यद्भुतालंकरणांबरस्रक् १८ मूत्वामुकुंदस्यपदारविंदंननाममूर्ध्नापतितोवरणयाम् ॥ पप्रच्छविद्वानपितस्यकर्मजनेषुविख्यापयितुंमुकुंदः १९ श्रीभगवानुवाच ॥ कस्त्वंमहाभागवरेण्यरूपोदेवोत्तमंत्वांगणयामिनूनम् ॥ दशामिमांत्वंकतमेनकर्मणासंप्रापितोह्यतदर्हःसुभद्रः २० आत्मानमाख्याहिविवित्सतांनोयन्मन्यसेऽगक्षममत्रवक्तुम् २१ इतिस्मराजासंपृष्टःकृष्णेनानंतमूर्तिना ॥ प्रतीतःप्रणिपत्याहकिरीटेनार्कवर्चसा २२ नृगउवाच ॥ नृगोनामनरेंद्रोहमिक्ष्वाकुतनयःप्रभो ॥ दानिष्वाख्यायमानेषुयदितेकर्णमस्पृशम् २३ किंनुतेऽविदितंनाथसर्वभूतात्मसाक्षिणः ॥ कालेनाव्याहतदृशोवक्ष्येथापितवाज्ञया २४ यावंत्यःसिकताभूमेर्यावंत्योदिवितारकाः ॥ यावंत्योवर्षधाराश्चतावतीरददांस्मगाः २५ पयस्विनीस्तरुणीःशीलरूपगुणोपपन्नाःकपिलाहेमशृंगीः ॥ न्यायार्जिताःरूप्यखुराःसवत्सादुकूलमालाभरणाददावहम् २६ स्वलंकृतेभ्योगुणशीलवद्भ्यःसीदत्कुटुंबेभ्यऋततव्रतेभ्यः ॥ तपःश्रुतब्रह्मवदान्यवद्भ्यःप्रादांयुवभ्योद्विजपुंगवेभ्यः ॥ २७ गोभूहिरण्यायतनाश्वहस्तिनःकन्याःसदासीस्तिलरूप्यशय्याः ॥ वासांसिरत्नानिपरिच्छदान्रथानिष्टंचयज्ञैश्चरितंचपूर्तैः २८ कस्यचिद्द्विजमुख्यस्यभ्रष्टागौर्ममगोधने ॥ संपृक्ताऽविदुषासाचमयादत्ताद्विजातये २९

कृकंविदुरितिच १५ १६ १७ १८ १९ २० विवित्सतांज्ञातुकामानां यद्यदि २१ २२ तवकर्णमस्पृशंतर्हिज्ञातुंयोग्यइत्यर्थः २३ अन्यथापिज्ञातुंशक्यइत्याह किंन्विति २४ सिकतारजांसि अददांस्मअददाम् दादानइतिधातुःलुङागमश्छांदसः २५ २६ २७ २८ भ्रष्टाअभ्यस्तदेशंविहायान्यदेशंगता संसृष्टासंकुलिता अविदुषाअजानता २९

तस्यागोःस्वामीपूर्वतनोनाथःअन्यःप्रतिग्रहीताममेतिप्रतिगृह्याब्रवीत् ३० विवदमानौविप्रतिपद्यमानौ भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषुवदइत्यत्रआत्मनेपदम् भ्रमःसंभ्रमः ३१ ३२ ३३ अपाक्रमत्अपगतवान् ३४ याम्यैर्यमस्यविद्यमानैः ३५ भुंक्ष्वभोक्ष्यसे ३६ तवदानस्यधर्मस्यअंतंनास्तितज्जन्यलोकान्पश्यइत्युक्तोहंप्राक्अशुभंभुंजेइत्यवदम् इत्युक्तेसयमःतर्हि पतेतिमांप्राह ३७ ३८ ३९ देवगतिस्वर्गं ४० यत्रक्कापियोनिविशेषेसतःसंभवतः ४१ सर्वभावायसंपूर्णैश्वर्याय सर्वोत्पादनकर्त्रेवा अखंडलीलायेतिवा ४२ ४३ परिजनंपारितउपासमानंजनम् ४४

तांनीयमानांतत्स्वामीदृष्ट्वोवाचममेतितम् ॥ ममेतिप्रतिग्राह्याहनृगोमेदत्तवानिति ३० विप्रौविवदमानौमामूचतुःस्वार्थसाधकौ ॥ भवान्दाताऽपहर्तेति तच्छ्रुत्वामेऽभवद्भ्रमः ३१ अनुनीतावुभौविप्रौधर्मकृच्छ्रंगतेनमे ॥ गवांलक्षंप्रगृह्णीतांदास्याम्येषाप्रदीयताम् ३२ भवंतावनुगृह्णीतांकिंकरस्याविजानतः ॥ समुद्धरतमांकृच्छ्रात्पतंतंनिरयेऽशुचौ ३३ नान्यांप्रतीच्छेवैराजन्नित्युक्त्वास्वाम्यपाक्रमत् ॥ नान्यंगवामप्ययुतमिच्छामीत्यपरोययौ ॥ ३४ ततोऽहंकालयोगेनमृतःपरममायया ॥ एतस्मिन्नंतरेयाम्यैर्दूतैर्नीतोयमक्षयम् ३५ यमेनपृष्टस्तत्राहंदेवदेवजगत्पते ॥ त्वंपूर्वमशुभंभुंक्ष्वउताहोनृपतेऽशुभम् ३६ नांतंदानस्यधर्मस्यपश्यलोकांश्चभास्वतः ॥ पूर्वमेवाशुभंभुंजइतिप्राहपतेतिसः ३७ तावदद्राक्षमात्मानंकृकलासंपतन्प्रभो ॥ ब्रह्मण्यस्यवदान्यस्यतवदासस्यकेशव ३८ स्मृतिर्नाद्यापिविध्वस्तातवसंदर्शनार्थिनः ॥ देवदेवजगन्नाथगोविंदपुरुषोत्तम ३९ नारायणहृषीकेशपुण्यश्लोकाच्युताव्यय ॥ अनुजानीहिमांकृष्णयातुंदेवगतिंप्रभो ४० यत्रक्कापिसतश्चेतोभूयान्मेत्वत्पदास्पदम् ४१ नमस्तेसर्वभावायब्रह्मणेऽनंतशक्तये ॥ कृष्णायवासुदेवायगोपानांपतयेनमः ४२ इत्युक्त्वातंपरिक्रम्यपादौस्पृष्ट्वास्वमौलिना ॥ अनुज्ञातोविमानाग्र्यमारुहत्पश्यतांनृणाम् ४३ कृष्णःपरिजनंप्राहभगवान्देवकीसुतः ॥ ब्रह्मण्यदेवोधर्मात्माराजन्याननुशिक्षयन् ४४ दुर्जरंबतब्रह्मस्वंभुक्तमग्नेर्मनागपि ॥ तेजीयसोपिकिमुतराज्ञामीश्वरमानिनाम् ४५ नाहंहालाहलंमन्येविषंयस्यप्रतिक्रिया ॥ ब्रह्मस्वंहिविषंप्रोक्तंनास्यप्रतिविधिर्भुवि ४६ हिनस्तिविषमत्तारंवह्निरद्भिःप्रशाम्यति ॥ कुलंसमूलंदहतिब्रह्मस्वारणिपावकः ४७ ब्रह्मस्वंदुरनुज्ञातंभुक्तंहंतित्रिपूरुषम् ॥ प्रसह्यातिबलाद्भुक्तंदशपूर्वान्दशापरान् ४८ राजानोराजलक्ष्म्याश्चनात्मपातंप्रचक्षते ॥ निरयेयेऽभिमन्यंतेब्रह्मस्वंसाधुबालिशाः ४९ गृह्णंतियावतःपांसून्रुदतामश्रुबिंदवः ॥ विप्राणांहृतवित्तानांवदान्यानांकुटुंबिनाम् ५० राजानोराजकुल्याश्चतावंतोब्दान्निरंकुशाः ॥ नरकेतुविपच्यंतेब्रह्मदायापहारिणः ५१ स्वदत्तांपरदत्तांवाब्रह्मवृत्तिंहरेतयः ॥ षष्टिर्वर्षसहस्राणिविष्ठायांजायतेकृमिः ५२

अग्नेरपिदुर्जरंजीर्णांकर्तुमशक्यम् मनागल्पमपि किंपुनरन्यस्येत्यर्थः ४५ प्रतिविधिःप्रतिक्रियानास्ति ४६ ब्रह्मस्वाख्यारणिजन्यपावकः ४७ दुरनुज्ञातंअनुज्ञांविनाभुक्तंअननुज्ञातंवा प्रसह्य अविचार्य ४८ राज्यलक्ष्म्याराजश्रियःपातंनिरयेआत्मपातंचनप्रचक्षतेनपश्यंति येब्रह्मस्वंसाधुमन्यंतेतेबालिशाः ४९ ५० ५१ ५२

यद्ब्रह्मस्वंजग्ध्वाऽल्पायुषोभवंति ५१ ब्रुह्मतद्रोहंमकुरुत ५४ ५५ ५६ सर्वलोकानांपावनःशुद्धिकर्ता ५७ ५८ ५९ ६० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ भगवच्छिक्षितकेशाविष्टस्यशेषावतारस्यबलभद्रस्यहरिमाहात्म्याविनाभूतंमाहात्म्यंवर्णयत्यनेनप्रारिप्सितेनाध्यायत्रयेण तत्रप्रथमेयमुनाप्रदहरणलक्षणंविक्रमंवक्तुंबलस्यगोकुलगमनंवक्ति द्वितीयेद्विविदवधलक्षणंतृतीयेकौरवगर्वनिर्वापणार्थंतत्पुराकर्षणलक्षणंवक्तुंदुर्योधनसुताहरणवक्ति १ पितरौयशोदानंदौगोपौ २ इतिसमाप्ताभिवादनादिकर्माणंतंराममंकमा

न्नमेब्रह्मधनंभूयाद्यज्जग्ध्वाल्पायुषोनृपाः ॥ पराजिताश्च्युताःस्थानाद्दवंत्युद्वेजितान्नृपाः ५३ विप्रंकृतागसमपिनैवद्रुह्यतमामकाः ॥ घ्नंतंबहुशपंतंवानमस्कुरुतनित्यशः ५४ यथाहंप्रणमेविप्रान्सर्वकालंसमाहितः ॥ तथानमतयूयंचयोऽन्यथामेसदंडभाक् ५५ ब्राह्मणार्थोह्यपहृतोहर्तारंपातयत्यधः ॥ अजानंतमपिह्येनंनृगंब्राह्मणगौरिव ५६ एवंविश्राव्यभगवान्मुकुंदोद्वारकौकसः ॥ पावनःसर्वलोकानांविवेशनिजमंदिरम् ५७ श्रीशुकउवाच ॥ सद्भिःसमागमोराजन्कदाचिन्नाफलोभवेत् ॥ विमुक्तोनरकाद्राजानृगःसाधुसमागमात् ५८ साधूनांदर्शनंस्पर्शंकीर्तनंस्मरणंतथा ॥ तीर्थानामिवपुण्यानांसर्वमेवहिपावनम् ५९ एतच्छ्रुत्वात्वयासंतःसदोपास्याःपरंतप ॥ ब्रह्मस्वंनैवहर्तव्यंयदीच्छासिपरांगतिम् ६० इतिश्रीभागवतेमहापुराणेदशमस्कंधे उत्तरार्द्धे नृगाख्यानेसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ श्रीशुकउवाच ॥ बलभद्रःकुरुश्रेष्ठभगवान्रथमास्थितः ॥ सुहृद्दिदृक्षुरुत्कंठःप्रययौनंदगोकुलम् १ परिष्वक्तश्चिरोत्कंठैर्गोपैर्गोपीभिरेवच ॥ रामोभिवाद्यपितरावाशीर्भिरभिनंदितः २ चिरंनःपाहिदाशार्हसानुजोजगदीश्वर ॥ इत्यारोप्यांकमालिंग्य नेत्रैःसिषिचतुर्जलैः ३ गोपवृद्धांश्चविधिवद्यविष्ठैरभिवादितः ॥ यथावयोयथासख्यंयथासंबंधमात्मनः ४ तमुपेत्याथगोपालाहास्यहस्तग्रहादिभिः ॥ विश्रांतंसुखमासीनंपप्रच्छुःपर्युपासिताः ५ पृष्टश्चाकथयत्स्वेषुप्रेमगद्गदयागिरा ॥ कृष्णेकमलपत्राक्षेसंन्यस्ताखिलराधसः ६ कच्चिन्नोबांधवारामसर्वेकुशलमासते ॥ कच्चित्स्मरथनोरामयूयंदारसुतान्विताः ७ दिष्ट्याकंसोहतःपापोदिष्ट्यामुक्ताःसुहृज्जनाः ॥ निहत्यनिर्जित्यरिपून्दिष्ट्यादुर्गंसमास्थिताः ८ गोप्योहसंत्यःपप्रच्छूरामसंदर्शनादृताः ॥ कच्चिदास्तेसुखंकृष्णःपुरस्त्रीजनवल्लभः ९ कच्चित्स्मरतिवाबंधून्पितरंमातरंचसः ॥ अपिवास्मरतेऽस्माकमनुसेवांमहाभुजः १० मातरंपितरंभ्रातॄन्पतीन्पुत्रान्स्वसॄरपि ॥ यदर्थेहिन्मदाशार्हदुस्त्यजान्स्वजनान्प्रभो ११ तानःसद्यःपरित्यज्यगतःसंछिन्नसौहृदः ॥ कथंनुतादृशंस्त्रीभिर्नश्रद्धीयेत भाषितम् १२

रोप्यनेत्रैश्चक्षुर्नाडीनिर्गतैः नेत्रंनाड्यांतरोर्मूलइतियादवः ३ यविष्ठैःकनिष्ठैः ४ हास्येनमंदस्मितेनहस्तग्रहेणआदिशब्देनपरिरंभणादिकंगृह्यते ५ संन्यस्ताखिलराधसः समर्पितसमस्तसंपदः ६ ७ ८ रामसंदर्शनेनादृताःजातबहुमानाः ९ अस्माकमनुसेवांस्मरस्तेनवा १० यस्यकृष्णस्यार्थेहदस्नेहर्निमित्तंमात्रादीन्स्वजनान्हिन्मअत्याक्ष्म छांदसप्रयोगः ११ स्त्रीभिस्तादृशंगुडजिह्विकालक्षणं भाषितंकथंनुनश्रद्धीयेतश्रद्धेयमेवेत्यर्थः १२

अस्मदन्यानैवश्रद्दधतइत्याहुः कथमिति परस्त्रियःअस्मदन्यस्त्रियः अन्यत्रउत्तमस्त्रियः अनवस्थितात्मनःचंचलमनसःअन्यत्रसंगरहितस्य कृतघ्नस्यअनुपकारिणःअन्यत्रकारिणःविनाशिन कृष्णस्य पुमर्थीनस्यान्यत्रपूर्णानंदस्यमुधावचः कथंनगृह्णंति अन्यत्रवचःमुधाकथंनगृह्णंतिसार्थमेवगृह्णंतीत्यर्थः वैचित्रानानाविधाःकथाःवाक्यप्रबंधायस्यसतथातस्य उभयत्रसम कीदृश्य सुंदरस्मिता वलोकेनउच्छ्वसितेनोद्धतेनस्मरेणआतुराःअन्यत्रनिरंतरस्मरणपरवत्यः ११ हरयेप्रेम्णाकंपंत्योमिथोजल्पंति किंनइति हेगोप्यःअपराःकथाःकथयतस्तस्यकृष्णस्य कथयानःकिंप्रयोजनं तस्यकृष्ण

कथंनुगृह्णंत्यनवस्थितात्मनोवचःकृतघ्नस्यमुधापरस्त्रियः ॥ कृष्णस्यवैचित्रकथस्यसुंदरस्मितावलोकोच्छ्वसितस्मरातुराः १३ किंनस्तत्कथयागोप्यः कथाःकथयतापराः॥ यात्यस्माभिर्विनाकालोयदितस्यतथैवनः १४ श्रीशुकउवाच ॥ इतिप्रहसितंशौरेर्जल्पितंचानुवीक्षितम् ॥ गतिंप्रेमपरिष्वंगंस्मरंत्यो रुरुदुःस्त्रियः १५ संकर्षणस्ताःकृष्णस्यसंदेशैर्हृदयंगमैः ॥ सांत्वयामासभगवान्नानानुनयकोविदः १६ द्वौमासौतत्रचावात्सीन्मधुंमाधवमेवच॥रामःक्षपासुभ गवान्गोपीनांरतिमावहन् १७ पूर्णचंद्रकरामृष्टेकौमुदीगंधवायुना ॥ यमुनोपवनेरेमेसेवितेस्त्रीगणैर्वृतः १८ वरुणप्रेषितादेवीवारुणीवृक्षकोटरात् ॥ पतंती तद्वनंसर्वंस्वसौरभेणाध्यवासयत् १९ तंगंधंमधुधारायावायुनोपहृतंबलः ॥ आघ्रायोपगतस्तत्रललनाभिःपपौसमम् २० नेदुर्दुंदुभयोव्योम्निववृषुःकुसुमैर्मु दा ॥ गंधर्वामुनयोरामंतद्वीर्यैरीडिरेमुदा २१ उपगीयमानचरितोवनिताभिर्हलायुधः ॥ वनेषुव्यचरत्क्षीबोमाहेंद्रइववारणः २२ शुभैककुंडलोमत्तोवैज यंत्याचमालया ॥ बिभ्रत्स्मितमुखांभोजंस्वेदप्रालेयभूषितम् २३ सचाजुहावयमुनांजलक्रीडार्थमीश्वरः ॥ निजवाक्यमनादृत्यमत्तइत्यापगांबलः २४ अनागतांहलाग्रेणकुपितोविचकर्षह ॥ पापेत्वंमामवज्ञाययन्नायासिमयाहुता २५ नेष्येत्वांलांगलाग्रेणशतधाकामचारिणीम् ॥ एवंनिर्भर्त्सिताभी तायमुनायदुनंदनम् २६ उवाचचकितावाचंपतित्वापादयोर्नृप २७ यमुनोवाच ॥ रामराममहाबाहोनजानेतवविक्रमम् ॥ यस्यैकांशेनविधृताजग तीजगतःपते २८ परंभावंभगवतोभगवन्मामजानतीम् ॥ मोक्तुमर्हसिविश्वात्मन्प्रपन्नांभक्तवत्सल २९ ततोव्यमुंचद्भगवान्याचितोयमुनांबलः ॥ विज गाहजलंस्त्रीभिःकरेणुभिरिवेभराट् ३० कामंविहृत्यसलिलादुत्तीर्णायासितांबरे ॥ भूषणानिविचित्राणिददौकांतिमतींस्रजम् ३१ वसित्वावाससीनीले मालामाधायकांचनीम् ॥ रेजेस्वलंकृतस्ताभिर्माहेंद्रइववारणः ३२

स्यचयस्माभिर्विनाकालोयाति तथातर्हितेनविना नःकालोपियातीत्यन्वयः १४ शुकःस्त्रीणांधैर्यशिथिलंवचनंवज्रयारोपमार्मितलोकसिद्धमित्याशयेनाह इतीति इत्थमुक्त्वाशौरेःकृष्णस्यप्रहसित दिचस्मरंत्योरुरुदुरित्यन्वयः १५ १६ मधुमाधवंवसंततुं १७ कौमुदीकुमुद्वतीतस्याःगंधेनसंपृक्तेनवायुनासेविते १८ अध्यवासयत्संस्कारोपेतमकरोत् १९ २० ईडिरेतुष्टुवुः २१ क्षीबःमद्घूर्णितः २२ स्वेदमालेयेनघर्मांदिमजलेनभूषितम् २३ २४ हेपापे आहुताआहता २५ २६ २७ २८ भावमभिप्रायंमाहात्म्यंवा २९ ३० असितांबरेनीलवस्त्रे ददौयमुनेतिशेषः ३१ ३२

आकृष्टेनवर्त्मनामार्गेणदृश्यते ३२ एकानिशेवव्रजस्त्रीणांमाधुर्यैःसौंदर्यैःकर्णरम्यवचनैःआक्षिप्तमाकृष्टंचित्तंयस्यसतथातस्य ३४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेनिजपध्वजकृतटीकाया
मष्टाशीतितमोऽध्यायः ८८ अनंतस्यशेषस्य तेनविष्णुनाप्रमेयस्यज्ञेयस्य १ २ सख्युर्नरकस्यअपचितिंनिष्कृतिम् ३ ४ वेलयासमुद्रजलाभिवृद्ध्याकूलानीचभूमीःसमुद्रतीरानिकटस्थितदेशान् अनाश

अद्यापिदृश्यतेराजन्यमुनाकृष्टवर्त्मना ॥ बलस्यानंतवीर्यस्यवीर्यंसूचयतीवहि ३३ एवंसर्वानिशायाताएकेवरमतोव्रजे ॥रामस्याक्षिप्तचित्तस्यमाधुर्यैर्व्रज
योषिताम् ३४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेअष्टाशीतितमोऽध्यायः ८८ ॥ राजोवाच ॥ भूयोऽहंश्रोतुमिच्छामिरामस्याद्भुतकर्मणः ॥
अनंतस्याप्रमेयस्ययदन्यत्कृतवान्प्रभुः १॥ श्रीशुकउवाच ॥ नरकस्यसखाकश्चिद्द्विविदोनामवानरः ॥ सुग्रीवसचिवःसोथभ्रातामैंदस्यवीर्यवान् २ स
ख्युःसोपचितिंकुर्वन्वानरोराष्ट्रविप्लवम् ॥ पुरग्रामाकरान्घोषानदहद्वह्निमुत्सृजन् ३ क्वचित्सशैलानुत्पाट्यतैर्देशान्समचूर्णयत् ॥ आनर्तान्सुतरामेत्यथ
त्रास्तेशन्नहाहरिः ४ क्वचित्समुद्रमध्यस्थोदोर्भ्यामुद्धृत्यतज्जलम् ॥ देशान्नागायुतप्राणोवेलाकूलानमज्जयत् ५ आश्रमानृषिमुख्यानांकृत्वाभग्नवनस्प
तीन् ॥ अदूषयच्छकृन्मूत्रैरग्नीन्वैतानिकान्खलः ६ पुरुषान्योषितोदृप्तःक्ष्माभृद्द्रोणीगुहासुसः ॥ निक्षिप्यचाप्यधाच्छैलैःपेशस्कारीवकीटकम् ७ तंदे
शंविप्रकुर्वन्वैधर्षयंश्चकुलस्त्रियः ॥ श्रुत्वासुललितंगीतंगिरिंरैवतकंययौ ८ तत्रापश्यद्यदुपतिंरामंपुष्करमालिनम् ॥ सुदर्शनीयसर्वांगंललनायूथमध्यग
म् ९ गायंतंमदिरांपीत्वामदविह्वललोचनम् ॥ विभ्राजमानंवपुषाप्रभिन्नमिववारणम् १० दुष्टःशाखामृगःशाखामारूढःकंपयन्द्रुमान् ॥ चक्रेकिलकिला
शब्दमात्मानंसंप्रदर्शयन् ११ तस्यधार्ष्ट्यंकपेर्वीक्ष्यतरुण्योजातिचापलम् ॥ हास्यप्रियाविजहसुर्बलदेवपरिग्रहाः १२ ताहेलयामासकपिर्भ्रूक्षेपैःसंमु
खादिभिः ॥ संदर्शयन्गुदंतासांरामस्यचनिरीक्षतः १३ तंग्राव्णाप्राहरत्क्रुद्धोबलःप्रहरतांवरः ॥ सवंचयित्वाग्रावाणंमदिराकलशंकपिः १४ गृहीत्वाहेल
यामासधूर्तस्तंकोपयन्हसन् ॥ भ्रत्वानिर्भिद्यकलशंवासांस्यास्फालयन्बलात् १५ कदर्थीकृत्यबलवान्विप्रचक्रेमदोद्धतः ॥ तस्याप्याविनयंदृष्ट्वादेशांश्च
तदुपद्रुतान् १६ क्रुद्धोमुसलमादत्तहलंचारिजिघांसया ॥ द्विविदोपिमहावीर्यःशैलमुत्पाट्यपाणिना १७ अभ्येत्यतरसातेनबलंमूर्धन्यताडयत् ॥ तंतु
संकर्षणोमूर्ध्निपतंतमचलंरुषा १८ प्रतिजग्राहभगवान्मुसलेनाहनच्चतम् ॥ मुसलाहतमस्तिष्कोविरेजेरक्तधारया १९ गिरिर्यथागैरिकयाप्रहारंनान्वचिं
तयत् ॥ पुनरन्यंसमुत्पाट्यकृत्वानिष्पत्रमोजसा २० तेनाहनत्सुसंक्रुद्धस्तंबलःशतधारुजत् ॥ ततोन्यमुत्पाट्यजघ्नेतंचापिशतधाच्छिनत् २१

यदित्यर्थः ५ वैतानिकान्यज्ञसंबंधिनः ६ क्ष्माभृद्द्रोणीगुहासुपर्वतनितंबगुहासु ७ ८ ९ प्रभिन्नंमदजलस्राविणम् १० ११ कपिजातिवापलंदृष्ट्वा १२ हेलयामासअवज्ञातवान्‌ संमुखादिभिःपुरःस्थि
त्यादिभिः १३ १४ १५ १६ १७ १८ गैरिकयागिरिधातुरसधारया १९ २० अरुजत्चूर्णयामास २१

२२ २३ २४ २५ सकंटकाःवनस्पतयोयस्मिन्सतथा २६ जगतोव्यतिकरंनाशमावहतिकरोतीतिजगद्व्यतिकरावहस्तम् २७ ॥ १८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृत टीकायामेकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ ७ ॥ समितिशब्देनसंगरसभेगृह्येतेउभेअपिशब्देनवाचाजयतीतिसमितिंजयः खश्प्रत्ययोमुमागमोनुस्वारः समितिः संगरसभयोरित्यभिधानम् १ अका मांकुमारकामविधुराम् २ अस्मत्प्रसादोपचिताः संवर्धिताः अतएवनोमहींभुंजते दत्तामस्माभिरितिशेषः ३ निगृहीतंबद्धं शीर्णदंताः भग्नदंताः ४ ५ एतेइत्यवलोक्यसांबंबद्धुमारेभिरे असंगताः वि

एवंयुध्यन्भगवताभग्नेभग्नेपुनःपुनः ॥ आकृष्यसर्वतोवृक्षान्निर्वृक्षमकरोद्वनम् २२ ततोमुंचच्छिलावर्षंबलस्योपर्यमर्षितः ॥ तत्सर्वंचूर्णयामासलीलया मुसलायुधः २३ सबाहूतालसंकाशौमुष्टीकृत्यकपीश्वरः ॥ आसाद्यरोहिणीपुत्रंदोर्भ्यांवक्षस्यरूरुजत् २४ यादवेंद्रोपितंदोर्भ्यांत्यक्त्वामुसललांगले ॥ जत्रावताडयत्क्रुद्धःसोपतद्रुधिरंवमन् २५ चकंपेतेनपततासकंटकवनस्पतिः ॥ पर्वतोनृपशार्दूलवायुनानौरिवांभसि २६ जयशब्दोनमःशब्दःसा धुसाध्वितिचांबरे ॥ सुरसिद्धमुनींद्राणामासीत्कुसुमवर्षिणाम् २७ एवंनिहत्यद्विविदंजगद्व्यतिकरावहम् ॥ संस्तूयमानोभगवाञ्जनैःस्वपुरमाविशत् ॥ २८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेवि०द्विविदवधोनामएकोननवतितमोऽध्यायः ॥ ८९ ॥ श्रीशुकउवाच ॥ दुर्योधनसुतांराज न्लक्ष्मणांसमितिंजयः ॥ स्वयंवरस्थामहरत्सांबोजांबवतीसुतः १ कुरवःकुपिताऊचुर्दुर्विनीतोऽयमर्भकः ॥ कदर्थीकृत्यनःकन्यामकामामहरद्बलात् २ बध्नीतेमंदुर्विनीतंकिंकरिष्यंतिवृष्णयः ॥ येस्मत्प्रसादोपचितांदत्तांनोभुंजतेमहीम् ३ निगृहीतंसुतंश्रुत्वायद्येष्यंतीहवृष्णयः ॥ भग्नदर्पाःशमंयांतिशीर्ण दंताइवाहयः ४ इतिकर्णःशलोभूरिर्यज्ञकेतुःसुयोधनः ॥ सांबमारेभिरेबद्धुंकुरुवृद्धानुमोदिताः ५ दृष्ट्वानुधावतःसांबोधार्तराष्ट्रान्महारथः ॥ प्रगृह्यरुचिरंचापंतस्थौसिंहइवैकलः ७ तेतंजिघृक्षवःक्रुद्धास्तिष्ठतिष्ठेति वादिनः ॥ आसाद्यधन्विनोबाणैःकर्णमुख्याःसमाकिरन् ८ सोऽतिविद्धःकुरुश्रेष्ठकुरुभिर्यदुनंदनः ॥ नामृष्यत्तत्परिभवंदंडाहतइवोरगः ९ विस्फार्य सुमहच्चापंसर्वान्विव्याधसायकैः ॥ कर्णादीन्षड्रथान्वीरांस्तावद्भिर्युगपत्पृथक् १० चतुर्भिश्चतुरोवाहानेकैकेनचसारथीन् ॥ रथिनश्चमहेष्वासास्तस्यत त्तेऽभ्यपूजयन् ११ तंतुतेविरथंचक्रुश्चत्वारश्चतुरोहयान् ॥ एकस्तुसारथिंजघ्नेचिच्छेदान्यःशरासनम् १२ तेतथाविरथंकृत्वाकृच्छ्रेणकुरवोयुधि ॥ कु मारंबद्ध्वाकन्यांचस्वपुरंजयिनोऽविशन् १३ तच्छ्रुत्वानारदोक्तेनराजन्संजातमन्यवः ॥ कुरून्प्रत्युद्यमंचक्रुरुग्रसेनप्रचोदिताः १४

नामूताः ६ एकलःअपुरुषद्वितीयः ६ जिघृक्षवःग्रहीतुकामाः ८ ९ हयानामग्रण्यंअग्रणीभवंकर्मतेनसहवर्ततइतिसहयाग्रण्यास्तान्यावंतः तावद्भिःशरैः १० एतदेवविवृणो ति चतुर्भिरिति सांबस्यतत्कर्मसंदृश्यकुरवः किमकुर्वन्नत्राह महेष्वासाइति ११ अत्रसांबस्यपराजयोनास्तीतिभावेनाह चत्वारइति १२ गृह्यगृहीत्वाजयिनोजेतुकामाएवनतुलब्ध जयाइतितात्पर्यार्थः १३ नारदोक्तेननारदवचनेन १४

कलिविरोधम् १५ १६ १७ १८ १९ २० परम्परांशिवंसुखममामयंआरोग्यमविक्लवंधाष्टर्ययुक्तम् २१ २२ अधर्मेणअबध्नीतबंधनमकार्षं मृष्येसहेयम् २३ २४ आरुरुक्षतिआरो ढुमिच्छति २५ यौनेयेनयोनिनिमित्तेनसंबंधेयेषांतेतथा तत किमत्राह सहइति २६ अस्मद्दत्तेत्युक्तंविवृणोति चामरेति महार्हंमहनीयंआसनंभुंजंति भजति अन्योपद्रवमंतरेणरक्षति गु जोनवनइतिपाणिनिः २७ दातॄणामस्माकंप्रतीपैः विरोधिभिः दत्तैरमृतैःक्षीरादिरसैःविषात्मनापरिणतैः दातॄणांमरणप्रदत्वेनप्रतीपैः २८ अवरुंधीतप्राप्नोति सिंहग्रस्तउरणःअविर्यथाकवलेनगृह्णाति

सांत्वयित्वातुतान्रामःसंक्रुद्धान्वृष्णिपुंगवान् ॥ नैच्छत्कुरूणांवृष्णीनांकलिंकलहशंकितः १५ जगामहास्तिनपुरंरथेनादित्यवर्चसा ॥ ब्राह्मणैःकुलवृ द्धैश्चवृतश्चंद्रइवग्रहैः १६ गत्वागजाह्वयंरामोबाह्योपवनमाश्रितः ॥ उद्धवंप्रेषयामासधृतराष्ट्रायशांतये १७ सोऽभिवंद्यांबिकापुत्रंभीष्मंद्रोणंचबा ह्लिकम् ॥ दुर्योधनंचविधिवद्ब्रवीद्राम मागतम् १८ तेऽपिप्रीताःसमाकर्ण्यप्राप्तंरामंसुहृत्तमम् ॥ तमर्चयित्वाभिययुःसर्वेमंगलपाणयः १९ तंसंगम्ययथा न्यायंगामर्घ्यंचन्यवेदयन् ॥ तेषांयेतत्प्रभावज्ञाःप्रणेमुःशिरसाबलम् २० बंधून्कुशलिनःश्रुत्वापृष्ट्वाशिवमनामयम् ॥ परस्परमथोरामोबभाषेऽविक्लवंव चः२१ उग्रसेनःक्षितीशेशोयद्वआज्ञापयत्प्रभुः ॥ तदव्यग्रधियःश्रुत्वाकुरुध्वंमाविलंबितम् २२ यद्यूयंबहवस्त्वेकंजित्वाऽधर्मेणधार्मिकम् ॥ अबध्नीताथतन्मृ ष्येबंधूनामैक्यकाम्यया २३ वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमंवचः ॥ कुरवोबलदेवस्यनिशम्योचुःप्रकोपिताः २४ अहोमहच्चित्रमिदंकालगत्यादुरत्ययम् ॥ आरुरुक्षत्युपानद्वैशिरोमुकुटसेवितम् २५ एतेयौनेयसंबंधाःसहशय्यासनाशनाः ॥ वृष्णयस्तुल्यतांनीताअस्मद्दत्तनृपासनाः २६ चामरव्यजनेशंख मातपत्रंचपांडुरम् ॥ किरीटमासनंमह्यंभुंजंत्यस्मदुपेक्षया २७ अलंयदूनांनरदेवलांछनैर्दातृप्रतीपैःफणिनामिवामृतैः ॥ येऽस्मत्प्रसादोपचिताहिया दवाआज्ञापयंत्यद्यगतत्रपाबत २८ कथमिंद्रोपिकुरुभिर्भीष्मद्रोणार्जुनादिभिः ॥ अदत्तमवरुंधीतसिंहग्रस्तइवोरणः २९ ॥ श्रीशुकउवाच ॥ जन्मबंधु श्रियोन्नद्धमदास्तेभरतर्षभ ॥ आश्राव्यरामंदुर्वाक्यैरव्यांपुरआविशन् ३० दृष्ट्वाकुरूणांदौःशील्यंश्रुत्वावाच्यानिवाच्यताम् ॥ अवोचत्कोपसंरब्धो दुष्प्रेक्ष्यःप्रहसन्मुहुः ३१ नूनंनानामदोन्नद्धाःशांतिंनेच्छंत्यसाधवः ॥ तेषांहिप्रशमोदंडःपशूनांलकुटोयथा ३२ अहोयदून्सुसंरब्धान्कृष्णंचकुपितंशनैः ॥ सांत्वयित्वाहमेतेषांशममिच्छन्निहागतः ३३ तइमेमंदमतयःकलहाभिरताःखलाः ॥ तस्मात्तंमामवज्ञायदुर्भाषान्मानिनोऽब्रुवन् ३४ नोग्रसेनःकिलवि भुर्भोजवृष्ण्यंधकेश्वरः ॥ शक्रादयोलोकपालायस्यादेशानुवर्तिनः ३५ सुधर्माक्रम्यतेयेनपारिजातोऽमरांघ्रिपः ॥ आनीयभुज्यतेसोऽसौनाकिलाध्यास नार्हकः ३६ यस्यपादयुगंसाक्षाच्छ्रीरुपास्तेऽखिलेश्वरी ॥ सनार्हतिकिलश्रीशोनरदेवपरिच्छदान् ३७

सिंहग्रस्तमितिपाठे कवलमादातुंनशक्तः २९ अटव्यामुपवनेस्थितंरामम् ३० वाच्यानिवाच्यतांअपवादानिशपितान्अपवादताम् ३१ प्रशमःशांतिकरः लकुटःयष्टिः ३२ ३३ ३४ ३५ सो ऽसौकृष्णः ३६ ३७

श्रद्धामहेआकांक्षामहे सर्वैरुपासितंनिषेवितंतीर्थंभागीरथीअस्याअपितीर्थंशुद्धिकरं अस्यकृत्स्नस्य ३८ ३९ अनुशासिताशिक्षाकरः ४० ४१ ४२ ४३ ४४ कुटुंबीनामितिदीर्घश्छांदसः ४५ क्रीडनकान्क्रीडासाधनानि ४६ अंतेजगत्संहारे परिशिष्यमाणोऽद्वितीयः शेषे ४७ जगद्बिभ्रतःतेकोपोऽखिलशिक्षार्थं सत्वंस्थित्यादितत्परः । सद्भिरत्रहलधरेयथोचितंग्राह्यमनुचितमंतर्यामिविषयमितितात्पर्यमवगंतव्यम् ४८ विश्वस्यप्रपंचस्यानुग्रहार्थकर्मविक्रमलक्षणोव्यापारोयस्यसतथा तस्यसंबुद्धिःहेविश्वकर्मन् ४९ संविग्नैर्भयसंभ्रांतैःवेपमानानांकंपमानानां अंगो

यस्यांघ्रिपंकजरजोऽखिललोकपालमौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ॥ ब्रह्माभवोहमपियस्यकलाकलांशाःश्रद्धामहेसुचिरमस्यनृपासनंक्व ३८ भुज्यतेकुरुभिर्दत्तंभूखंडंवृष्णिभिःकिल ॥ उपानहःकिलवयंस्वयंतुकुरवःशिरः ३९ अहोऐश्वर्यमत्तानांमत्तानामिवमानिनाम् ॥ असंबद्धागिरोरुक्षाःकःसहेतानुशासिता ४० अद्यनिष्कौरवींपृथ्वींकरिष्यामीत्यमर्षितः ॥ गृहीत्वाहलमुत्तस्थौदहन्निवजगत्त्रयम् ४१ लांगलाग्रेणनगरमुद्विदार्यगजाह्वयम् ॥ विचकर्षसगंगायांप्रहरिष्यन्नमर्षितः ४२ जलयानमिवाघूर्णंगंगायांनगरंपतत् ॥ आकृष्यमाणमालोक्यकौरवाजातसंभ्रमाः ४३ तमेवशरणंजग्मुःसकुटुंबाजिजीविषवः ॥ सलक्ष्मणंपुरस्कृत्यसांबंप्रांजलयोऽब्रुवन् ४४ रामरामाखिलाधारप्रभावंनविदामहे ॥ मूढानांनःकुटुंबीनांक्षंतुमर्हस्यधीश्वर ४५ स्थित्युत्पत्तिलयानांत्वमेकोहेतुर्निराश्रयः ॥ लोकान्क्रीडनकानीशक्रीडतस्तेवदंतिहि ४६ त्वमेवमूर्ध्नीदमनंतलीलयाभूमंडलंबिभर्षिसहस्रमूर्धन् ॥ अंतेचयःस्वात्मनिरुद्धविश्वःशेषेऽद्वितीयःपरिशिष्यमाणः ४७ कोपस्तेऽखिलशिक्षार्थंनद्वेषान्नचमत्सरात् ॥ बिभ्रतोभगवान्सत्त्वंस्थितिपालनतत्परः ॥ ४८ नमस्तेसर्वभूतात्मन्सर्वशक्तिधराव्यय ॥ विश्वकर्मन्नमस्तेस्तुत्वांवयंशरणंगताः ४९ एवंप्रपन्नैःसंविग्नैर्वेपमानायनैर्बलः ॥ प्रसादितःसुप्रसन्नोमाभैष्टेत्यभयंददौ ५० दुर्योधनःपारिबर्हंकुंजरान्षष्टिहायनान् ॥ ददौद्विदशसाहस्रान्नियुतानितुरंगमान् ५१ रथानांषट्सहस्राणिरौक्मणांसूर्यवर्चसाम् ॥ दासीनांनिष्ककंठीनांसहस्रंदुहितृवत्सलः ५२ प्रतिगृह्यतुतत्सर्वंभगवान्सात्वतर्षभः ॥ ससुतःसस्नुषःप्रायात्सुहृद्भिरभिवंदितः ५३ ततःप्रविष्टःस्वपुरींहलायुधःसमेत्यबंधूननुरक्तचेतसः ॥ शशंससर्वंयदुपुंगवानांमध्येसभायांकुरुषुस्वचेष्टितम् ५४ अद्यापिचपुरंह्येतत्सूचयद्रामविक्रमम् ॥ समुन्नतंदाक्षिणतोगंगायामनुदृश्यते ५५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेनवतितमोऽध्यायः ॥ ९० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

पांगानांअयनैराश्रयैः ५० ५१ रौक्माणिहेमचितान्याभरणान्येषांसंतीतिरौक्मिणस्तेषाम् ५२ ५३ ५४ रामविक्रमोजलरेखावत्नश्वरोन किंतुसर्वचक्षुर्विषयइत्याह अद्यापीति रामविक्रमंसूचयन्नगरंदाक्षिणतःसमुन्नतंदृश्यतइत्यन्वयः ५५ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायानवतितमोऽध्यायः ॥ ९० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

यमेवैषवृणुतेतेनलभ्यइत्यादिश्रुत्यर्थंदृढीकरणायहरेर्भक्तिप्रियत्वमाहात्म्यंवक्ति तत्रश्रुतदेवबहुलाश्वविषयामितिहासंशुकोवदति वृष्णिष्विति भक्तिमंतरेणान्यमर्थमनाकांक्षमाणःपूर्णार्थइत्युच्यते कृष्णविषयगाथारचनात्कविरलंपटःशब्दादिविषयेच्छारहितः १ मिथिलायांनगर्यांगृहाश्रमेस्थितःसभार्यइत्यर्थः अनीहयाअप्रयत्नेनागताहार्यैः प्राप्तप्राप्तव्यः प्राप्तभोज्योवा नितरांवर्तितासहस्रनामा द्विजपक्रियायेनसतथा नित्यंनामनिकामयोरितियादवः २ ननुप्रयत्नाभावेकथंशरीरयात्रास्येत्यत्राह यावदिति । अनुदिनंयावन्मात्रमुपनमतिदैवात्प्राप्तंभवति अयंततोधिकंनाकांक्षते तर्हिकेनालंबुद्धिरत्राह तथसेति ३ यथाश्रुतदेवः ४ ततःकिमायातमत्राह तयोरिति नियतैरेकांतभक्तैः ५ ६ मुनीनांनामानिनिर्दिशति नारदइत्यादिना ७ तउपतस्थुःनिषेवयांचक्रुः ८ ९ सेवाफलमाह तेभ्यइ

श्रीशुकउवाच ॥ वृष्णिष्वासीद्यदुश्रेष्ठःश्रुतदेवइतिश्रुतः ॥ कृष्णैकभक्त्यापूर्णार्थःशांतःकविरलंपटः १ सउवासविदेहेषुमिथिलायांगृहाश्रमे ॥ अनीहयागताहार्योनिवर्तितजपक्रियः २ यावन्मात्रंत्वहरहर्दैवादुपनमत्ययम् ॥ नाधिकंतपसातुष्टःक्रियाश्चक्रेयथोचिताः ३ तथातद्राष्ट्रपालोभूद्बहुलाश्वइतिश्रुतः ॥ मैथिलोनिरहंमानउभावप्यच्युतप्रियौ ४ तयोःप्रसन्नोभगवान्दारुकेणाहृतंरथम् ॥ आरुह्यसहितोविप्रैर्मिथिलांप्रययौप्रभुः ६ नारदोवामदेवोऽत्रिःकृष्णोरामोसितोऽरुणिः ॥ अहंबृहस्पतिःकण्वोमैत्रेयश्च्यवनादयः ॥ ... सहितःसात्वतश्रेष्ठोमुनिभिस्तत्त्वदर्शिभिः ॥ कदाचित्कौरवश्रेष्ठविदेहान्प्रययौप्रभुः ६ नारदोवामदेवोऽत्रिःकृष्णोरामोसितोऽरुणिः ॥ अहंबृहस्पतिःकण्वोमैत्रेयश्चपराशरः ॥ वसिष्ठःकश्यपश्चैवभरद्वाजोथगौतमः ७ तत्रतत्रसमायांतंपौराजानपदान्विताः ॥ उपतस्थुःसार्घ्यहस्ताग्रहाःसूर्यमिवोदितम् ८ आनर्तधन्वकुरुजांगलकंकमत्स्यपांचालकुंतिमधुकेकयकोशलार्णाः ॥ अन्येचतन्मुखसरोजमुदारहासस्निग्धेक्षणंनृपपपुर्दृशिभिर्नृनार्यः ९ तेभ्यःस्ववीक्षणविनष्टतमिस्रदृग्भ्यःक्षेमंत्रिलोकगुरुरर्थदृशंचयच्छन् ॥ शृण्वन्दिगंतधवलंस्वयशोऽशुभघ्नंगीतंसुरैर्नृभिरगाच्छनकैर्विदेहान् १० तेऽच्युतंप्राप्तमाकर्ण्यपौराजानपदानृप ॥ अभ्ययुर्मुदितास्तस्मैगृहीतार्हणपाणयः ११ दृष्ट्वातमुत्तमश्लोकंप्रीत्युत्फुल्लाननाशयाः ॥ कैर्धृतांजलिभिर्नेमुःश्रुतपूर्वंयथामुनीन् १२ स्वानुग्रहायसंप्राप्तंमन्वानौतंजगद्गुरुम् ॥ मैथिलःश्रुतदेवश्चपादयोःपेततुःप्रभोः १३ निमंत्रयेतांदाशार्हमातिथ्येनसहद्विजैः ॥ मैथिलःश्रुतदेवश्चयुगपत्संहतांजली १४ भगवांस्तदभिप्रेत्यतयोःप्रियचिकीर्षया ॥ उभयोराविशद्गेहमुभाभ्यांतदलक्षितः १५ श्रोतुमप्यसतांदूरान्जनकःस्वगृहागतान् ॥ आनीतेष्वासनाग्र्येषुसुखासीनान्महामनाः १६ प्रवृद्धभक्त्युरुत्कर्षहृदयास्राविलेक्षणः ॥ नत्वातदंघ्रीन्प्रक्षाल्यतदपोलोकपावनीः १७

इति स्ववीक्षणेनदर्शनेनविनष्टंतमिस्रंयस्याःसातथा विनष्टतमिस्रानिरस्ताज्ञानादृक्ज्ञानंयेषांतेतथातेभ्यः तेभ्यःपौरेभ्यःक्षेमंयच्छन्अर्थदृशमपरोक्षज्ञानंचददन् एकस्मिन्दिगंतेप्यनन्यथागीयमानत्वाद्दिगंतधवलम् १० ११ स्वधृतांजलिरितिपाठेकैर्मूर्ध्निधृतांजलिपुटैरित्यर्थः १२ सत्यभूतानिर्दोषानंदज्ञानघनं १३ निमंत्रयेताभोजनार्थंक्षणंकृतवंतौ आतिथ्येन अतिथियोग्येनकर्मणा १४ तदलक्षितः ताभ्यांरूपाभ्यामलक्षितः अज्ञातरूपद्वयइत्यर्थः १५ अथबहुलाश्वःईश्वरपूजयाचक्रइत्यन्वयः । तान्नत्वाकीदृशान्श्रोतुमपिदूरान्कर्णाविषयान् १६ अतिवृद्धभक्त्युत्कर्षहृदयश्चास्राविलेक्षणश्चसतथा अस्रंनेत्रजलम् १७

कैःसाधनैरत्राह गंधेति १८ आमृजन्संवाहनंकुर्वन् १९ सुहृदितियदथतस्मात् २० दर्शनहेतुमाह स्ववचइति । भवान्प्रियोहिज्ञानिनोऽत्यर्थमहंसचममप्रियइति यत्स्ववचस्तदृतंकर्तुंअस्मदृग्गोचरोभूदित्यन्वयः भक्तेनापिकृतज्ञेनभाव्यमितिभावेनाह यदेति आत्मास्वामीअनंतः अंतत्रयहीनः अरजाः सात्विकः त्वमेकांतभक्तानांप्रियइतियदायस्मात्तस्मात् २१ एवंवित्उक्तार्थज्ञःकोनुपुरुषः त्वच्चरणांभोजंविसृजेत् कृतज्ञश्चेन्नमुंचतीत्यर्थः एकांतभक्तप्रियोऽयंकिंददातीतितत्राह निष्किंचनानामिति २२ लोकोपकारायावतारोनतुस्वार्थायेत्याह यइति तच्छात्यैःसारोन्मूलनायत्रैलोक्यस्यविकृतान्विरोधिनोपहंतीतित्रैलोक्यविकृतापहः विकृतंदुष्कृतं २३ शांतंसुखपूर्तिस्तपःज्ञानंनिर्दोषपूर्णानंदज्ञानं ईयुषेप्राप्तवते २४ राजास्वगृहनिवासायभगवत्प्रार्थयते दिनानीत्यादिना २५ मिथिलायांविद्यमानानांनरयोषितां २६ तत्रश्रुतदेवेनकिंनुकृतमत्राह श्रुतदेवइति स्वगृहान्प्राप्तमच्युतंमत्वाज्ञात्वा २७ तृणपीठेकटे अवनिजेप्रक्षालयामास २८ २९ सिद्धार्हं

सकुटुंबोवहन्मूर्ध्निपूजयांचक्रईश्वरम् ॥ गंधमाल्यांबराकल्पधूपदीपार्घ्यगोवृषैः १८ वाचामधुरयाप्रीणन्निदमाहान्नतर्पितान् ॥ पादावंकगतौविष्णोरामृजञ्छनकैर्मुदा १९ राजोवाच ॥ भवान्वैसर्वभावानामात्मासाक्षीसुहृद्विभुः ॥ अथनस्त्वत्पदांभोजंस्मरतांदर्शनंगतः २० स्ववचस्तदृतंकर्तुमस्मद्दृग्गोचरोभवान् । यदात्थैकांतभक्तानामात्माऽनंतोऽरजाःप्रियः २१ कोनुत्वच्चरणांभोजमेवंविद्विसृजेत्प्रभो ॥ निष्किंचनानांशांतानांमुनीनांयस्त्वमात्मदः २२ योऽवतीर्ययदोर्वंशेनॄणांसंसरतामिह ॥ यशोवितेनेतच्छांत्यैत्रैलोक्यविकृतापहः २३ नमस्तुभ्यंभगवतेकृष्णायाकुंठमेधसे ॥ नारायणायऋषयेसुशांततपईयुषे २४ दिनानिकतिचिद्भूमन्गृहेनोनिवसद्विजैः ॥ समेतःपादरजसापुनीहीदंनिमेःकुलम् २५ इत्युपामंत्रितोराज्ञाभगवाँल्लोकभावनः ॥ उवासकुर्वन्कल्याणंमिथिलानरयोषिताम् २६ श्रुतदेवोऽच्युतंप्राप्तंस्वगृहाञ्जनकोयथा ॥ नत्वामुनीन्सुसंहृष्टोधुन्वन्वासोननर्तह २७ तृणपीठबृसीष्वेतानानीतेषूपवेश्यसः ॥ स्वागतेनाभिनंद्यांघ्रीन्सभार्योऽवनिजेमुदा २८ तदंभसामहाभागआत्मानंसगृहान्वयम् ॥ स्नापयांचक्रउद्धर्षोलब्धसर्वमनोरथः २९ सिद्धार्हणोशीरशिवामृतांभसामृदासुरभ्यातुलसीकुशांबुजैः ॥ आराधयामासयथोपपन्नयासपर्ययासत्त्वविवर्धमानया ३० सतर्कयामासकुतोममापतद्गृहांधकूपेपतितस्यसंगमः ॥ यःसर्वतीर्थास्पदपादरेणुभिःकृष्णेनचास्यात्मनिकेतभूसुरैः ३१ सूपविष्टान्कृतातिथ्यान्श्रुतदेवउपस्थितः ॥ सभार्यःस्वजनापत्यउवाचांघ्र्यभिमर्शनम् ३२ ॥ श्रुतदेवउवाच ॥ अद्यनोदर्शनंप्राप्तःपरःपरमपूरुषः ॥ यइदंशक्तिभिःसृष्ट्वाविभजत्यात्मसत्तया ३३

णंसर्षपःउशीरंवालव्यजनं जयावा शिवाश्रेयसी अमृताप्रसिद्धा एताभिर्युक्तेन जलेन सुरभ्यासुगंधयामृदा सत्वेनात्मशक्त्याविवर्धमानया ३० सर्वतीर्थानामास्पदपादरेणुभिः आश्रयचरणरेणुभिः सहकृष्णेनअध्यात्मापरमात्मानिकेतोनिलयःआश्रयोयेषांतेअध्यात्मनिकेताः तैर्भूसुरैर्ब्राह्मणैश्चयःसंगमःसगृहांधकूपेपतितस्यममकुतोऽपतत् तस्मात्त्वःपुण्यादभूदितितर्कयामासअचिंतयदित्यन्वयः ३१ अंघ्र्यभिमर्शनंपादसंमर्दनंकुर्वन् ३२ किमाहेत्याशंक्यकृष्णनामावेदांतप्रतिपाद्यःसाक्षात्श्रीनारायणएवनदेवदत्तादिवदेकइतिभावेनाह अद्येति यःसत्त्वादिगुणसृष्टाभिःशक्तिभिर्महदादिभिरिदंजगत्सृष्ट्वात्मसत्तयाब्रह्मव्यतिरिक्तेनाविविधाकारेणविभजतितत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेः सएवंपरमपुरुषःश्रीकृष्णःअद्यनोदर्शनंप्राप्तोनान्यइतिशेषः ३३

ननुसन्घटःसन्पटइतिसदनुविद्धतयाप्रतीतेःब्रह्मव्यतिरिक्तंजगन्नास्तीत्याशंक्यसदृष्टांतंपरिहरति यथेति यथाशयानःस्वपन्पुरुष आत्मनःपरमात्मनःमाययाइच्छयाप्रबोधितेनस्वमनोगतकारितुरगादि संस्कारेणैवपरंस्वव्यतिरिक्तंस्वाप्नंलोकंसृष्ट्वाअवरुध्यस्वविषयीकृत्वाअवभासतेपृथक्प्रकाशते तथा भवान्जगतिस्थितोपि ततोव्यतिरिक्तमात्मानप्रकाशयतिष्ठतीत्यर्थः ३४ अलौकिकासिद्धवस्तुसत्तायां किंप्रमाणमितितत्राह शृण्वतामिति यःस्वकथांशृण्वतांगदतांहृदिस्थइत्यनेनश्रवणवचनेप्रमाणत्वेनज्ञातव्यइतिदर्शितं शश्वद्दर्शिनामभिनंदतांसंवसताममलात्मनांनृणांनित्यंहृदिस्थइत्यनेनप्रत्य क्षप्रमाणंदर्शितमिति ३५ नन्वेवंतर्हिकस्मान्मादृशानांतज्ज्ञानाभावइत्याशंक्योपासनाभावादुपासनंचकर्मप्रतिबद्धमितिभावेनाह हृदिस्थइतिउपासकैरपिनस्वप्रयत्नेनज्ञेयः किंतु स्वप्रसादेनैवेत्याशयेनाह आत्मेति आत्मनांजीवानांशक्तिभिः प्रयत्नादिलक्षणाभिःअग्राह्योनज्ञेयः मुह्यंतियंसूरयइत्यादिस्वोक्तिंस्मारयति हिशब्देनदेवदत्तवच्छरीरीचेत्कथमग्राह्यइत्यत्राह अर्थाकारइति अर्थ्यतइत्यर्थ आनंदःऋगतावितिधातुःयद्वाअर्थशब्देनज्ञानंच ज्ञानानंददेहइत्यर्थः अर्थोवस्तुअप्रतिहतंतदाकारइतिवा कुतएवमंगीकारइत्यत्राह अगुणात्मकइति सत्त्वादिगुणनिर्मितदेहवान्नभवतिएवं

यथाशयानःपुरुषोमनसावात्ममायया ॥ सृष्ट्वालोकंपरंस्वाप्नमवरुध्यावभासते ३४ शृण्वतांगदतांशश्वद्दर्शिनामभिनंदताम् ॥ नृणांसंवसतांनित्यंहृदि स्थोयोऽमलात्मनाम् ३५ हृदिस्थोप्यथदूरस्थःकर्मविक्षिप्तचेतसाम् ॥ आत्मशक्तिभिरग्राह्योह्यर्थाकारोगुणात्मकः ३६ नमोस्तुतेध्यात्मविदांपरात्मने सर्वात्मनेस्वात्मविभक्तमूर्त्तये ॥ सकारणाकारणलिंगमीयुषेस्वमाययासंवृतदृष्टयेनमः ३७ सत्वंशाधिस्वभृत्यान्नःकिंदेवकरवामते ॥ एतदंतोनृणांक्लेशो यद्भवानक्षगोचरः ३८ श्रीशुकउवाच ॥ तदुक्तमित्युपाकर्ण्यभगवान्प्रणतार्त्तिहा ॥ गृहीत्वापाणिनापाणिंप्रहसंस्तमुवाचह ३९ श्रीभगवानुवाच ॥ ब्रह्मं स्तेऽनुग्रहार्थायसंप्राप्तान्विद्ध्यमून्मुनीन् ॥ संचरंतिमयालोकान्पुनंतःपादरेणुभिः ४० देवाःक्षेत्राणितीर्थानिदर्शनस्पर्शनार्चनैः ॥ लोकान्पुनंतिकालेन तदप्यर्हत्तमेक्षया ४१ ब्राह्मणाजन्मतःश्रेष्ठाःसर्वेषांप्राणिनामिह ॥ तपसाविद्ययातुष्ट्याकिमुमत्कलयापुनः ४२ नब्राह्मणान्मेदयितंरूपमेतच्चतुर्भुजम् ॥ सर्ववेदमयोविप्रःसर्वदेवमयोह्यहम् ४३ दुष्प्रज्ञाअविदित्वैवमवजानंत्यसूयवः ॥ गुरुंमांविप्रमात्मानमर्चादाविज्यदृष्टयः ४४ चराचरमिदंविश्वंभावयेचास्यदैवतम् ॥ मद्रूपाण्येभिरेतस्यांधत्तेविप्रोमदीक्षया ४५

विधस्त्वमस्माकंदर्शनंप्राप्तइतिपूर्वेणान्वयः ३६ एवंविधत्वान्ममनमनमंतरेणत्वदुपासनंदुःसाध्यमितिभावेनाह नमइति अध्यात्मविदांपरमात्मादितत्त्वज्ञानिनां परमात्मनेअशेषपुरुषार्थ दात्रे सर्वात्मनेसर्वव्यापिने स्वात्मविभक्तमूर्तयेस्वात्मनैवविभक्तस्वरूपाय सकारणंजगदकारणंलिंग अकारणंकारणांतरशून्यस्वरूपंप्रधानमेवंद्वेईयुषेव्याप्तवतेस्वमाययास्वसामर्थ्येनअसंवृतदृष्टये अव्यवहितज्ञानाय ३७ यच्चदाभवानक्षगोचरःस्यात्एतदंतोऽयमवधिर्यस्यसतथा नृणांक्लेशःपरिश्रमः ३८ ३९ ब्रह्मन्तपस्विन् ४० देवादिभ्योयच्छुद्धत्वंतदर्हत्तमा नांपूज्यानांब्राह्मणादीनामीक्षयादर्शनेन अपिशब्दोऽवधारणार्थः ४१ ४२ ब्राह्मणभक्तिजननार्थंअर्थवादमाह नब्राह्मणादिति ब्राह्मणस्योत्तमत्वेहेतुमाह सर्वेति एवमप्यावयोर्विशेषोस्ती तिहिशब्देनाह ४३ असूयवःगुणेषुदोषाविष्करणशीलाःदुष्प्रज्ञाएवंगुरुर्विप्रंमत्सन्निधानपात्रंअविदित्वाअवजानंति आत्मानंमामर्चादौअवजानंतिकथंअर्चैवहारिरितिदृष्टयः ४४ ब्राह्मणपूजया सर्वंमपिपूजितंस्यादितिभावेनाह चराचरमिति इदंचराचरंविश्वंभावयेकल्पयेब्रह्मणीतिशेषः अस्यब्राह्मणस्यदैवतमहमितिशेषः विप्रस्यसर्ववेदमयत्वमुक्तंस्पष्टयति मद्रूपाणीति विप्रोमदीक्षयाप्रत्य

त्रिपादकस्त्वज्ञानेनएतस्यांसर्वैर्वेदायत्पदमामनंति इत्यादिश्रुत्या वायुनावैगौतमसूत्रेणायंचलोकः परश्चलोकः सर्वाणिचभूतानिसदृब्धानिभवंतीतिश्रुतिसिद्धैरभिश्चराचरैःसहमद्रूपाणिधत्ते ४५ अतिपा दनच्छलेनफलितमाह तस्मादिति ४६ ४७ भक्तेषुप्रसादलक्षणस्नेहवान् ४८ ॥ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांएकनवतितमोऽध्यायः ॥ ९१ ॥ ॥

शिवंभजंस्तामसात्वन्यतमंविष्णुंनिषेवमाणःसात्विकएवशिवस्याप्यन्यापरिहार्यापत्तिसमुच्छित्तिकरोनारायणः किमुतेतरेषामित्यर्थसारंवृकसुराख्यायिकयाख्यापयति तत्रराजा आख्यायिकामुत्थाप यितुंपृच्छति देवासुरेति दिगंबरत्वेनलोकदृष्टयाशिवमशुद्धवत्प्रतीयमानंनिर्धनंवा शिवोलोकेपद्मरागेहरेकालेशिवेजलइत्यतःपद्मरागराहित्येननिर्धनत्वंलक्ष्यते अशिवमकीलंअनर्गलंसर्ववरप्रदमित्य र्थः लक्ष्मीपतिमित्यनेनधनित्वमुपलक्षयति तथापि तद्भक्ताधनिनोनभवंति १ एतद्धनित्वाधनित्वसंदेहेतन्निरासप्रयत्नोघटतेतदभावेव्यर्थइत्यत्राह संदेहइति नचायमौपचारिकइत्याह महानिति सं देहबीजांतरमाह विरुद्धेति श्मशानेपिशाचगणैःपरिवृतत्वेनाटनशीलंरुद्रस्य इंद्रादिदेवैःपरीतत्वेनावस्थानंहरेः असुरादीनामपिवरदानेच्छवत्त्वेनगतित्वमाश्रयत्वंईशानस्य देवादीनांसमृद्धिचिकीर्षु त्वेनहरेः तथाचात्रप्रभ्वोःसमर्थयोर्विषयेमहानस्माकंसंदेहोस्ति हियस्माच्चन्निरसनप्रयासःसार्थकइत्यर्थः २ जीवानांत्रैविध्यकेनाप्यनभिभूतप्रमितंदेवासुरमनुष्येष्वित्यनेनसूचितं तत्रशिवःस्वल्पसपृ

तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्नानुश्रद्धयार्चय ॥ एवंविदार्चितोस्म्यद्धानान्यथासुविभूतिभिः ४६ श्रीशुकउवाच ॥ सइत्थंप्रभुणादिष्टःसहकृष्णान्द्विजो त्तमान् ॥ आराध्यैकांतभावेनमैथिलश्चापतुर्गतिम् ४७ एवंस्वभक्तयोराजन्भगवान्भक्तभक्तिमान् ॥ उषित्वादिश्यसन्मार्गंपुनर्द्वारवतीमगात् ४८ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेएकनवतितमोऽध्यायः ॥९१॥ राजोवाच ॥ देवासुरमनुष्येषुयेभजंत्यशिवंशिवम् ॥ प्रायस्तेधनिनोब्रह्मन्नतु लक्ष्मीपतिंहरिम् १ एतद्वेदितुमिच्छामिसंदेहोत्रमहान्हिनः ॥ विरुद्धशीलयोःप्रभ्वोर्विरुद्धांभजतोर्गतिम् २ श्रीशुकउवाच ॥ शिवःशक्तियुतःशश्वत्त्रि लिंगोगुणसंवृतः ॥ वैकारिकस्तैजसश्चतामसश्चेत्यहंत्रिधा ३ ततोविकाराह्यभवन्षोडशामीषुपंचसु ॥ उपाधावन्विभूतीनांसर्वासामश्नुतेगतिम् ४ ह रिस्तुनिर्गुणःसाक्षात्पुरुषःप्रकृतेःपरः ॥ ससर्वदृगुपद्रष्टातंभजन्निर्गुणोभवेत् ५

हसत्वेनबहुलेनतमसारजसास्पृष्टत्वेनतदनुसृतस्वभावत्वेनहीनियतप्रकृतिबद्धत्वेनतत्तत्प्राणिस्वभावसेवानुगुणफलदानक्षमत्वेनावशइवतादृशंफलंवितरति हरिस्तुस्वाधीनसत्त्वादिगुणत्वेनतत्प्रवर्तक त्वेनतच्छक्त्यनुपहतशक्तित्वेनप्रकृतिपरत्वेनतन्निर्मितशरीररहितत्वेनतत्स्व भावेनकूटस्थत्वेननित्यनिर्दोषज्ञानानंदतनुत्वेनस्वसेवकेभ्यःस्वानुगुणंफलंप्रयच्छतीतिभावेनपरिहरति शिवइत्यादिना शक्तियु तःप्रकृतिसंबद्धःअतएवशश्वत् त्रीणिलिंगानिवैकारिकादीनियस्यसतथा ननु प्रकृतेरेकत्वेनतत्संबंधेनैकविध्यमेवोचितं नत्रैविध्यं अन्यथा चातुर्विध्यंकिंनस्यादित्यतउक्तं गुणसंवृतइति गुणानांत्रित्वात्त त्संबंधेनत्रित्वंयुक्तंनचातुर्विध्यादिकंसूचितं त्रैविध्यंस्पष्टयति वैकारिकइति अहंअहंकारात्मकोरुद्रः ३ ततःअहंकारात्षोडशविकाराअभवन्नितिशेषःपंचभूतानिदशेंद्रियाणिएकंमनः ननु किमायातंप्र कृतइतितत्राह अमीष्विति योभूतानामध्ये अमीषुपंचस्वाकाशादिष्वधिष्ठानप्रकारेषुनिधाय्य शिवमुपाधावत्सेवमानोभवति सपुरुषस्तस्मात्सर्वासांविभूतीनांगतिंसेवानुसारेणफलमश्नुते अत्रग्रंथबाहु ल्यभयात् विशेषविशदीकरणादुपरम्यते ४ तुशब्देनसत्त्वादिगुणराहित्यमेवनतुज्ञानादिगुणराहित्यंविवक्ष्यते तथात्वेसर्वदृगित्याद्यनुपपन्नंस्यात् हरिरविनश्वरंअनंतकालीनंफलंददाति रुद्रस्त्वनि त्यंदुःखोदर्कंददातीत्यादिविशेषंना दर्शयति उपद्रष्टा साक्षीसर्वेभ्योद्रष्टृभ्योऽधिकद्रष्टा नान्योवा नान्योऽतोस्तिद्रष्टेतिश्रुतेः ५

नधनित्वंफलंददातीत्यस्यकथंपरिहारआगतःतंवकुमुपक्रमते निवृत्तेष्विति ६ भूभारहरणायप्रवृत्तेनधर्मकथनंकोपयुज्यतइत्यत्राह नृणामिति अनेन नकेवलमवतारप्रयोजनंभूभारहरणमपितु नृणांसंसारनिर्मूलनलक्षणानिःश्रेयसंचेत्युक्तंभवति ७ अनुग्रहंकर्तुंशनैःयावत्यावत्प्रेमवर्धते तावत्तावद्धरिष्ये धनस्यमदहेतुत्वादेतद्धरणं तत्फलमाह ततइति अस्याधनस्यस्वजनाःदुःखदुःखि तंदुःखातिशयोपेतंएनमधनंत्यजंति ८ ततोधनाभावात्सयदाधनेहया वितथोद्योगोनिर्विण्णःस्यात्तदा मत्परैःकृतमैत्रस्यतस्यानुग्रहंमुक्तिलक्षणंकरिष्यइत्यन्वयः ९ यतोहंभजमानस्यधनंहरिष्या मि अतस्तत्परमंब्रह्मवेदांतवेद्यंसूक्ष्मंनित्याव्यक्तंचिन्मात्रं प्रकृतिप्राकृतवैकृतज्ञानशून्यं सत्प्रशस्तंअनंतकंअंतत्रयवर्जितंसुदुराराध्यंमांहित्वा अन्यान्भजते परंब्रह्मत्वादयः सुदुराराध्यत्वेहेतवः १० अन्योपासकास्तेमद्व्यानतस्तान्देवानपिजहतीतिभावेनाह ततइति यतोमामवज्ञायान्यानुपासतेअतएवदोषात् ११ देवेषु के शापप्रसादसमर्थास्तत्रापि सद्यःशापप्रसादाः कइतितत्राह शापेति

निवृत्तेष्वश्वमेधेषुराजायुष्मत्पितामहः ॥ शृण्वन्भगवतोधर्मानपृच्छदिदमच्युतम् ६ सआहभगवांस्तस्मैप्रीतःशुश्रूषवेप्रभुः ॥ नृणांनिश्रेयसार्थाय योऽवतीर्णोयदोःकुले ॥ ७ ॥ श्रीभगवानुवाच ॥ यस्याहमनुगृह्णामिहरिष्येतद्धनंशनैः ॥ ततोऽधनंत्यजंत्यस्यस्वजनादुःखदुःखितम् ८ सयदावित थोद्योगोनिर्विण्णस्याद्धनेहया ॥ मत्परैःकृतमैत्रस्यकरिष्येतदनुग्रहम् ९ तद्ब्रह्मपरमंसूक्ष्मंचिन्मात्रंसदनंतकम् ॥ अतोमांसुदुराराध्यंहित्वाऽन्यान्भजतेपु नः १० ततस्तआशुतोषेभ्योलब्धराज्यश्रियोद्धताः ॥ प्रमत्तावरदान्देवान्विस्मरंत्यवजानते ११ श्रीशुकउवाच ॥ शापप्रसादयोरीशाब्रह्मविष्णुशिवाद यः ॥ सद्यःशापप्रसादोऽगशिवोब्रह्माचनाच्युतः १२ अत्रैवोदाहरंतीममितिहासंपुरातनम् ॥ वृकासुरायगिरिशोवरंदत्त्वापसंकटम् १३ वृकोनामासुरःपुत्रः शकुनेःपथिनारदम् ॥ दृष्ट्वाशुतोषंपप्रच्छदेवेषुत्रिषुदुर्मतिः १४ सआदिदेशगिरिशमुपाधावस्वसिद्धये ॥ सोऽल्पाभ्यांगुणदोषाभ्यामाशुतुष्यतिकुप्यति १५ दशास्यबाणयोस्तुष्टःस्तुवतोर्बंदिनोरिव ॥ ऐश्वर्यमतुलंदत्त्वाततआपसुसंकटम् १६ इत्यादिष्टस्तमसुरउपाधावत्स्वगात्रतः ॥ केदारआत्मक्रव्येणजुह्वन्न ग्निमुखंहरम् १७ देवोपलब्धिमप्राप्यनिर्वेदात्सप्तमेऽहनि ॥ शिरोऽजिहीर्षुरसिनातत्तीर्थक्लिन्नमूर्धजः १८ तदामहाकारुणिकःसधूर्जटिर्यथावयमग्निरिवो त्थितोनलात् ॥ निगृह्यदोर्भ्यांभुजयोर्न्यवारयत्तत्स्पर्शनाद्भूयउपाकृताकृतिः १९ तमाहचांगालमलंवृणीष्वमेयथाभिकामंवितरामितेवरम् ॥ शिवेन जीवेनवृणांप्रपद्यतामहोत्वयात्माभृशमर्द्यतेवृथा २० देवात्सवव्रेपापीयान्वरंभूतभयावहम् ॥ यस्ययस्यकरंशीर्ष्णिधास्येसम्रियतामिति २१ तच्छ्रु त्वाभगवान्रुद्रोदुर्मनाइवभारत ॥ ओमितिप्रहसंस्तस्मैददौवरमृतंयथा २२

१२ शिवःसद्यःशापप्रसादइत्येतत्कथमित्यत्रइतिहासंवक्ति अत्रेति १३ १४ १५ १६ अग्निमुखमुद्दिश्य जुह्वन्निति च्छांदसः जुह्वन् होमंकुर्वन् १७ देवोपलब्धिं देवदर्शनं असिना शिरोहर्तु कामोऽभूत् १८ करचरणाद्यवयवी उपाकृताकृतिःउत्पन्नस्वरूपः १९ यथाभिकामंनितरांकाममनतिक्रम्यनृणांपतिप्रियतमंवस्तुसजीवः जीवनंप्राणधारणंतेनजीवेनप्रपद्यतांप्रपन्नोभवतुभवा निति शेषः केनेत्यतउक्तंशिवेनमयेति किंचजीवोसुधाहरणतत्परः अनेनपूर्वमायुःपरीक्षेतपश्चाल्लक्षणमादिशेदितिवचनात् जीवनंसर्वस्मादभीष्टमित्युक्तंभवति किंचातइति तत्राह अहोइति आत्माशरीरं अर्द्यतेहिंस्यते अहोयस्मात्तस्मात् २० २१ ओमित्युक्त्वा प्रहसन्आत्मनोदैन्यमप्रकाशयन् २२

अबिभेत् भीतवान् २२ उपसृष्टः उपद्रुतः दिवोंतमवसानं यावदस्ति भूमेः कोष्ठानां विवराणां अवसानं च यावत् भुवोधरमधः स्थलं पातालं च यावत्तावत्पर्यंतं पराधावत् २४ तल्लोकवासिनः शून्यप्रायाः किमत्राह अजानंत इति प्रतिविधिं प्रतिक्रियां २५ २६ दारकोबालब्रह्मचारी २७ २८ आत्माशरीरं २९ पुंभिरर्थितं ३० ३१ तस्यरुद्रस्यवाक्यं पैशाच्यंकर्मश्मशानाटनलक्षणं ३२ ३३ जगद्गुरौ जगद्गिरणशीले ३४ ३५ ३६ ३७ ३८ ३९ ४० आख्यायिकाकथनादिफलमाह यइति अव्याकृतानित्यशक्तिसमुद्रस्य संसृतिभिः पुत्रमित्रादिबंधलक्षणाभिः ४१

सतद्वरपरीक्षार्थंशंभोःशीर्ष्णिवृकासुरः ॥ स्वहस्तंदातुमारेभेसोबिभेरस्वकृताच्छिवः २३ तेनोपसृष्टःसंत्रस्तःपराधावत्सवेपथुः ॥ यावदंतंदिवोभूमेः कोष्ठानामवरंभुवः २४ अजानंतःप्रतिविधिंतूष्णीमासन्सुरेश्वराः ॥ ततोवैकुंठमगमद्भास्वरंतमसःपरम् २५ यत्रनारायणःसाक्षान्न्यासिनांपरमागतिः ॥ शांतानान्यस्तदंडनांयतोनावर्ततेगतः २६ तंतथाव्यसनंदृष्ट्वाभगवान्वृजिनार्दनः ॥ दूरात्प्रत्युदितोभूपदारकोयोगमायया २७ मेखलाजिनदंडाक्षैस्तेजसाग्निरिवज्वलन् ॥ अभिवादयामासचतंकुशपाणिर्विनीतवत् ॥ २८ ॥ श्रीभगवानुवाच ॥ शाकुनेयभवान्व्यक्तंश्रांतःकिंदूरमागतः ॥ क्षणंविश्रम्यतांपुंसआत्मायंसर्वकामधुक् २९ यदिनःश्रवणायालंयुष्मद्व्यवसितंविभो ॥ भण्यतांपुरुषःसाधोपुंभिःस्वार्थंसमीहते ॥ ३० ॥ श्रीशुकउवाच ॥ एवंभगवतापृष्टोवचसामृतवर्षिणा ॥ गतक्लमोऽब्रवीत्तस्मैयथापूर्वमनुष्ठितम् ३१ श्रीभगवानुवाच ॥ एवंचेत्तर्हितद्वाक्यंवयंनश्रद्दधीमहि ॥ योदक्षशापात्पैशाच्यंप्राप्तःप्रेतपिशाचराट् ३२ रुषाक्रांतशरीरोऽसौनसत्यंवदतेहरः ॥ क्रोधयुक्तेकुतःसत्यंमूढोऽसित्वंमहासुर ३३ यदिवस्तत्रविश्रंभोदानवेंद्रजगद्गुरौ ॥ तर्ह्यंगापिस्वशिरसिहस्तन्यासःप्रदर्यताम् ३४ यद्यसत्यंवचःशंभोःकथंचिद्दानवर्षभ ॥ तदैनंजह्यसद्वाचंनचवक्ताऽनृतंपुनः ३५ इत्थंभगवतश्चित्रैर्वचोभिःससुपेशलैः ॥ भिन्नधीर्विस्मृतःशीर्ष्णिस्वहस्तंकुमतिर्न्यधात् ३६ अथापतद्भिन्नशिरावज्राहतइवक्षणात् ॥ जयशब्दोनमःशब्दःसाधुशब्दोभवद्दिवि ३७ मुमुचुःपुष्पवर्षाणिहतेपापेवृकासुरे ॥ देवर्षिपितृगंधर्वामोचितःसंकटाच्छिवः ३८ मुक्तंगिरिशमभ्याहभगवान्पुरुषोत्तमः ॥ अहोदेवमहादेवपापोऽयंस्वेनपाप्मना ३९ हतःकोनुकुतश्चापिजंतुर्वैकृतकिल्विषः ॥ क्षेमीस्यात्किमुविश्वेशेकृतपापोजगद्गुरौ ४० यएवमव्याकृतशक्त्युदन्वतःपरस्यसाक्षात्परमात्मनोहरेः ॥ गिरीशमोक्षंकथयेच्छृणोतिवाविमुच्यतेसंसृतिभिस्तथारिभिः ४१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेवृकासुरवधोनामाष्टाशीतितमोऽध्यायः ॥ ९२ ॥ श्रीशुकउवाच ॥ सरस्वत्यास्तटेराजन्नृषयःसत्रमासत ॥ वितर्कःसमभूत्तेषांत्रिष्वधीशेषुकोमहान् १ तस्यजिज्ञासयातेवैभृगुंब्रह्मसुतंनृप ॥ तज्ज्ञप्त्यैप्रेषयामासुःसोऽभ्यगाद्ब्रह्मणःसभाम् २

॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायामष्टाशीतितमोध्यायः ॥ ९२ ॥ ७ ॥ विष्णोःसमोऽधिकोस्तीति संशयनिरासायतस्य भक्तानुकंपित्वप्रकटनायच मुमुक्षुभिः क्षमागुणएवाप्यस्तत्प्रसादजनकइतिद्योतनायचतस्मिन्निरतिशयभक्तिजननायचास्याध्यायस्यप्रारंभः तत्रादौमुनीनांसत्रसमयेजिज्ञासाप्रकारंदर्शयति सरस्वत्याइति वितर्कोजिज्ञासा त्रिषुब्रह्मादिषुअधीशेषुअधिकेश्वरेषुच महानुत्तमः १ तस्याधिकस्यवाङ्त्यनेनलोकसंशयनिरासायमंदाधिकारिणां दृढनिश्चयाय नस्वार्थं परिज्ञातवेदांतार्थत्वात्स्वेषामिति निर्धारयति २

३ आत्मनःस्वस्यात्मनिमनस्यात्मजापभृगवेउत्थितंमन्युमशीशमत् शांतंकृतवान् प्रभुःसमर्थःप्रभुःभृगोःपितृत्वेनस्वामी ४ महेश्वरइतिसांकेतिकंनाम अन्वर्थागीकारेप्रकृतानुपपत्तेः भ्रातरंमुदेतिभ्रातृशब्दप्रयोगाच्च ५ श्मशानवासित्वेनाशुभाचारइतिमत्वा ६ ७ ८ ९ तेतुभ्यं निषीदोपविश आगसमपराधं १० अहमेवगतंगतिः आश्रयोयेषांतेमद्गतास्तान् तीर्थकारिणाशुद्धिकारिणा तीर्थशास्त्रेष्वंमसिपावनइतियादवः ११ असुरजनमोहनार्थमाह अद्येति अद्याहंलक्ष्म्याःश्रियएकांतेननियमेनभाजनंपात्रमस्मि भूतिर्लक्ष्मीः भूतिःश्रीजन्ममयस्मस्मिविति नित्यकृतवाल्यापिअद्यप्रभृति वत्स्यतिस्पष्टवासंकरिष्यति भवतानित्यशक्तेनपादेनज्ञानेनहतंनष्टंअंहोयस्मिंस्तत्तथा नित्यसत्त्वाज्ञानात्मकत्वेनदोषरहितमितिवा तस्मिन्निति तथावाह्यार्थः कथायादिवाक्यार्थः १२ श्रियासहि

मतस्मैब्रह्मणेस्तोत्रंचक्रेसत्वपरीक्षया ॥ तस्मैचुक्रोधभगवान्प्रज्वलन्स्वेनतेजसा ३ सआत्मन्युत्थितंमन्युमात्मजायात्मनःप्रभुः ॥ अशीशमद्यथावह्निं शमयेद्वारिणाप्रभुः ४ ततःकैलासमगमत्सतंदेवोमहेश्वरः ॥ परिरब्धुंसमारेभेउत्थायभ्रातरंमुदा ५ नैच्छत्तमशुभाचारइतिदेवश्चुकोपह ॥ शूलमुद्यम्यतंहंतुमारेभेतिग्मलोचनः ६ पतित्वापादयोर्देवीसांत्वयामासतांगिरा ॥ इतिक्रुच्छ्रात्ततोमुक्तःकैलासाद्व्रजताचलात् ७ मुनिर्जगामवैकुंठंयत्र देवोजनार्दनः ॥ शयानंश्रियउत्संगेपदावक्षस्यताडयत् ८ ततउत्थायभगवान्सहलक्ष्म्यासतांगतिः ॥ स्वतल्पादवरुह्याशुननामशिरसामुनिम् ९ आहतेस्वागतंब्रह्मन्निषीदात्रासनेक्षणम् ॥ अजानतामागसंनःक्षंतुमर्हसिमानद १० पुनीहिसहलोकंमांलोकपालांश्चमद्गतान् ॥ पादोदकेनभवतस्तीर्थानांतीर्थकारिणा ११ अद्याहंभगवन्लक्ष्म्याआसमेकांतभाजनम् ॥ वत्स्यत्युरसिनोभूतिर्भवत्पादहतांहसि १२ श्रीवत्सामिनिनामापिजायतांपादलक्षणः ॥ १३ ॥ श्रीशुकउवाच ॥ एवंब्रुवाणेवैकुंठेभृगुस्तत्सार्द्रयागिरा ॥ निर्वृतस्तर्पितस्तूष्णींभक्त्युत्कंठोऽश्रुलोचनः १४ पुनःस्वसत्रमासाद्यमुनीनांब्रह्मवादिनाम् ॥ स्वानुभूतमशेषेणराजन्भृगुरवर्णयत् १५ तंनिशम्याथमुनयोविस्मितामुक्तसंशयाः ॥ भूयांसंश्रद्दधुर्विष्णुंयतःशांतिर्यतोऽभयम् २६ धर्मःसाक्षाद्यतोज्ञानंवैराग्यंचचतुर्विधम् ॥ ऐश्वर्यंचाष्टधायस्माद्यशश्चात्ममलापहम् १७ मुनीनांन्यस्तदंडानांशांतानांसमचेतसाम् ॥ अकिंचनानांसाधूनांयमाहुःपरमांगतिम् १८ सत्त्वंयस्यप्रियामूर्तिर्ब्राह्मणास्त्विष्टदेवताः ॥ भजंत्यनाशिषःशातायंवानिपुणबुद्धयः १९ त्रिविधामूर्तयस्तस्यराक्षसाअसुराःसुराः ॥ गुणास्तन्माययासृष्टास्तत्त्वंतत्रार्थदर्शनम् २० ॥ श्रीशुकउवाच ॥ इत्थंसारस्वताविप्रान्नृणांसंशयनुत्तये ॥ पुरुषस्यपदांभोजसेवयातद्गतिंगताः २१

तवत्समुरःश्रीवत्सं उरोवत्संचवक्षश्चभुजांतरमुदीर्यतइतिऊत्पलमालाभिधानं पादलक्षणःपादांकःश्रीवत्समिति नामजायतामित्यन्वयः १३ १४ १५ भूयांसमत्युत्तमंयतोयस्माद्धरेःशांतिर्मोक्षोमंगलंवा पुंसइतिशेषः १६ एकांतभक्तानांयर्माद्दिष्वनपेक्षालक्षणवैराग्यमात्मनोमनसोमलनाशनं १७ १८ यस्यहरेःसत्वंगुणः प्रियामूर्तिःश्रेष्ठप्रतिमा यस्येष्टदेवताब्राह्मणाः अनाशिषोनिष्कामाः १९ तत्रतेषुगुणेषु सत्वंनामगुणः आर्थसर्वपूज्यंश्रीहरिंदर्शयतीत्यार्थदर्शनस्तद्विषयज्ञानोत्पादकः २० यत्फलावसायि तदेवप्रमाणपदवीमध्यास्ते इतिगावेनफलमाह इत्थमिति सारस्वताःसरस्वतीतीरवासिनः इत्थंनृणांसंशयनिरासायप्रवृत्ताः पुरुषस्यहरेः गतिज्ञानंतेनवैकुंठंगताः २१

आख्यानफलमाह इतीति मुनितनयस्यपद्मगर्भपीयूषंमुखकमलोदरनिःसृतंसुधाधारोपचितंपरस्यपुंसः सुश्लोकैराकलितमित्येतदाख्यानंश्रवणपुटैरभीक्ष्णंपिबन्योवर्तते अथसपांथःपथिकः इदंसुखसाधनम् इवेतिपरिभ्रमणेनेतस्ततःपर्यटनेनप्राप्तंपरिश्रमंजहातीत्यन्वयः २१ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांत्रिनवतितमोऽध्यायः ॥ ९३ ॥ यदनंतनिगमनिकरनिरूपितगुणगणाकरंब्रह्मतदेवकृष्णनाम्नावतीर्णंनान्यदित्यतोमुमुक्षुभिरत्रभक्तिःइतरत्रविरक्तिमूलाकर्तव्येतिविधीयतेऽस्मिन्नध्याये तत्रनारदनारायणसंवादलक्षणमितिहासमुत्थापयितुंशुकंपरीक्षित्पृच्छति ब्रह्मन्नित्यादिना हेब्रह्मन्पूर्णकाम सर्वेवेदायत्पदमामनंतीतिश्रूयते तत्रश्रुतयःसाक्षादामनंत्युतलक्षणयावा तत्रनप्रथमइत्याह कथमितिसाक्षात्चरंतिवर्ततेवाचकत्वेनातिशेषः तस्यकानुपपत्तिरत्राह अनिर्देश्यइति यत्तदद्रश्यमितिश्रुतेः नाद्वितीयइत्याह निर्गुणइति केवलोनिर्गुणश्चेतिश्रुते' गुणैः प्रवर्तमानस्यकथंनिर्गुणत्वमुपपद्यतइत्यत्राह सदसतइति निर्गुणेगुणसमर्पकत्वेनश्रुतीनांसंचरणंकथमितिदौर्घट्यमापादयितुंशक्यते यादृग्वस्तुतादृशावेदकत्वेनकोपिविरोधइतितत्राह गुणवृत्तयइति गुणार्पकत्वेनगुणवृत्तियांसांतास्तथा तुविग्रीवो वपोदरःसुबाहुरंधसोमदे गुणाःश्रुताःसुविरुद्धाश्चदेवेइत्यादिश्रुतेःअतएवनःसंशयंछिंधीतिवाक्यशेषः १ श्रुतयःसत्त्वादिगुणराहित्येननिर्गुणेज्ञानानंदादिगुणगणमणिमालालंकृतविग्रहेब्रह्मणिसाक्षाद्वर्ततइतिपरिहारमभिप्रेत्यपीठिकामारचयति बुद्धीति बुद्ध्यादिसर्जनेनकिंप्रयोजनमत्राह मात्रार्थमिति मात्रापरिच्छेदेदेशेप्रवृत्तौकर्णभूषणइत्यतोमात्राप्रवृत्तिःशब्दानामितिशेषः तदर्थं मनसाअग्रेसंकल्पयत्यथवाचाव्याहरतीतिश्रुतेः किमतोत्राह

**इत्येतन्मुनितनयस्यपद्मगंधपीयूषंभवभयभित्परस्यपुंसः ॥ सुश्लोकैःश्रवणपुटैःपिबन्नभीक्ष्णंपांथोऽध्वभ्रमणपरिश्रमंजहाति ॥ २२ ॥ इतिश्रीभागवते महापुराणेदशमस्कंधेउत्तरार्धेत्रिनवतितमोऽध्यायः ॥ ९३ ॥ राजोवाच ॥ ब्रह्मन्ब्रह्मण्यनिर्देश्येनिर्गुणेगुणवृत्तयः ॥ कथंचरंतिश्रुतयःसाक्षात्सदसतःपरे १ श्रीशुकउवाच ॥ बुद्धींद्रियमनःप्राणान्जनानामसृजत्प्रभुः ॥ मात्रार्थंचभवार्थंचआत्मनेकल्पनायच २ सैषाह्युपनिषद्ब्राह्मीपूर्वेषांपूर्वजैर्धृता ॥ श्रद्धयाधारयेद्यस्तांक्षेमंगच्छेदकिंचनः ३**

भवार्थंचेति भवोभद्रेहरेप्राप्ताविव्यतो भवोभद्रंकल्याणंपुण्यमितियावत् तदर्थं स्वाध्यायप्रवचनेएवेतिनाकोमौद्गल्यः तद्धितपस्तद्धितपइतिश्रुतिः चशब्दौसमुच्चयार्थौ बुद्ध्यादींद्रियपूर्विकाशाब्दीप्रवृत्तिरपिनस्वर्गादिविषया किंतुपरमात्मविषयैव पुण्यसाधनमित्यभिप्रायेणाह आत्मनइति संध्यकरणात्सदसद्विलक्षणएवात्मा तमात्मानमुद्दिश्यशब्दराशेःप्रवृत्तिरितिभावः ततःपरमप्रयोजनमाह कल्पनायेति कल्पनायपरमात्मज्ञानाय सत्येनलभ्यस्तपसाह्येषआत्मासम्यग्ज्ञानेनब्रह्मचर्येणनित्यमितिश्रुतेः चशब्देनमोक्षायेतिसूचयति तमेवंविद्वानमृतइहभवतिज्ञानेनामृतीभवतीतिश्रुतेः अनेनवक्तृविवक्षापूर्विकाशब्दप्रवृत्तिरित्यतोबुद्धींद्रियादिमतएवसुप्रयुक्तशब्देनज्ञातपरब्रह्मतत्त्वगुणोपसंहारज्ञानप्रसन्नभगवत्सारूप्यादिमोक्षप्राप्तेःशब्दानांश्रीहरिविषयत्वंसाक्षादंगीकर्तव्यमित्युक्तंभवति २ शब्दमात्रस्यहयैकविषयत्वमुक्त्वाधुनावेदांतविज्ञानसु निश्चितार्थाइतिवचनादुपनिषद्भागस्यतद्गुणगणावेदकत्वेनमुख्यवृत्त्याविषयत्वमितिभावेनाह सैषेति हिशब्दोहेतौ ईशबुद्धिस्थिताःसदेतिवचनात् याश्रीमन्नारायणबुद्धिस्थितासैषोपनिषद्वेदांतापरपर्यायापूर्वेषांपूर्वजैःब्रह्मादिभिःधृताअध्ययनरूपेण नतुकृतानित्यवाक्यत्वात् नित्ययानित्ययास्तौमीत्यादेःहियस्मात्तस्मात्यस्तांश्रद्धयाधारयेत्सक्षेमंमोक्षंगच्छेत् ब्रह्मज्ञानलभ्यस्यमोक्षस्यकथंश्रुतिधारणयामोक्षःस्यादित्यत्राह ब्राह्मीति अथकस्मादुच्यतेब्रह्मेतिबृहंतोह्यस्मिन्गुणाइतिश्रुतेःब्रह्मगुणावेदकत्वेनतज्ज्ञानद्वारमुक्तिहेतुत्वोपपत्तेःज्ञानंचविरक्त्यादिमतएवस्यादितिभावेनाह अकिंचनइति ३

भवच्छिष्यत्वेनममभवदुक्तिःप्रमाणमस्तु इतरेषांकथमिति शंकामाभूदितिभावेनाह अत्रेति अत्रश्रुतयः कथंचरंतीत्यस्मिन्नर्थे गाथां त्रिषट्पादलक्षणप्रबद्धांकथां नारायणोदितांनारायणेनकथिताम् ४ नारायणस्यसंगमःकथमभून्नारदस्येत्यत्राह एकदेति ५ कस्मिन्खंडेनारायणाश्रमः तत्रकिंकुर्वन्किंप्रयोजनआस्तइतितत्राह योसाविति तपसोंगवैकल्यपरिहारायसाकल्यादित्युक्तं धर्मःसुकृतंविहिता चारोवा ज्ञानंस्वपरपदार्थावगाहि शमोनिष्ठा एतैःउपेतःलोकहष्ट्यैतदुक्तम् तत्राश्रमेउपविष्टंतम् ७ तस्मैनारदायेमांगाथामवोचत् गाथांविशिनष्टि यइति। ब्रह्मवादः ब्रह्मविषयागाथा ८ पुरातत्रत्यानांजनलो कस्थितानांमानसानामूर्ध्वरेतसांमुनीनांस्वायंभुवंस्वयंभूपुत्रैःक्रियमाणं ब्रह्मसत्रंब्रह्मयज्ञंब्रह्मविचारलक्षणोयज्ञोजनलोकेभवादित्यर्थः ९ यत्रश्वेतद्वीपेब्रह्मणिश्रुतयःशेरते अन्यबोधकत्वव्यापारमंतरेणतद्गुण बोधनपराएवसंति तंश्वेतद्वीपंत्वयिगतवतिब्रह्मवादःसंप्रवृत्तइत्यन्वयः १० कथमत्राह तत्रेतिमुनयः कीदृशाइत्यत्राह तुल्येति अरिःशत्रुः ११ एकंप्रवचनंप्रकृष्टंवचनंयस्यसतथा प्रवक्ताव्याख्यातेत्यर्थः तंअ परेशुश्रूषवःश्रोतारः योत्रप्रवक्तासश्रेष्ठइत्यत्रतात्पर्यंज्ञातव्यं सनकाद्याःसमाःसर्वेतत्रश्रेष्ठःकुमारकइतिवचनात् १२ सएकःकथंप्रावोचदत्राह स्वसृष्टमिति ब्रह्मलयेस्वसृष्टमिदंजगदापीयसंहृत्यशक्तिभिः श्रीभूदुर्गाख्याभिर्विभक्तप्रकृतिमूर्तिभिःसहशयानंयोगनिद्रांकुर्वाणंपरंपरमात्मानं तदंतेब्रह्मप्रलयावसाने श्रुतयस्तल्लिंगैःसंसारनिर्मूलनादिब्रह्मलक्षणैर्बोधयांचक्रुरित्यन्वय॰ अत्रेदंतात्पर्यं मूलप्रकृतिः

अत्रतेवर्णयिष्यामिगाथांनारायणोदिताम् ॥ नारदस्यचसंवादमृषेर्नारायणस्यच ४ एकदानारदोलोकान्पर्यटन्भगवत्प्रियः ॥ सनातनमृषिंद्रष्टुंययौना रायणाश्रमम् ५ योसौभारतवर्षेस्मिन्क्षेमायस्वस्तयेनृणाम् ॥ धर्मज्ञानशमोपेतःसाकल्यादास्थितस्तपः ६ तत्रोपविष्टमृषिभिःकलापग्रामवासिभिः ॥ परीतंप्रणतोपृच्छदिदमेवकुरूद्वह ७ तस्माअवोचद्भगवानृषीणांशृण्वतामिमाम् ॥ योब्रह्मवादःपूर्वेषांजनलोकनिवासिनाम् ८ ॥ श्रीभगवानुवाच ॥ स्वायंभुवब्रह्मसत्रंजनलोकेभवत्पुरा ॥ तत्रत्यानांमानसानांमुनीनामूर्ध्वरेतसाम् ९ श्वेतद्वीपंगतवतित्वयिद्रष्टुंतदीश्वरम् ॥ ब्रह्मवादःसुसंवृत्तःश्रुतयो यत्रशेरते १० तत्राप्ययमभूत्प्रश्नस्त्वंमांयमनुपृच्छसि ॥ तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ११ अपिचक्रुःप्रवचनमेकंशुश्रूषवोपरे १२ सनं दनउवाच ॥ स्वसृष्टमिदमापीयशयानंसहशक्तिभिः ॥ तदंतेबोधयांचक्रुस्तल्लिंगैःश्रुतयःपरम् १३

श्रीभूरूपाभ्यांविष्णुनासहशेते श्रुतिनाम्नादुर्गारूपेणविष्णुंस्तौति जयजयेति पुंशक्तिविषयबोधनवचनं दुर्गाख्यायाअपितादृक्शक्तिमत्त्वात्तदर्थत्वेनभगवदाज्ञयागृहीतविग्रहत्वाच्चश्रुतीनामनंतत्वेनाधिगं तुमशक्यत्वात्दुर्गानाम्नोपितथात्वाच्चकालीभद्रेत्यादिबहुरूपत्वप्रतीतेश्चश्रुतेश्चानंतत्वेनवाक्यभेदाच्छ्रुतयइति बहुवचनंचयुज्यते तदुक्तं श्रीर्भूमिरितिरूपाभ्यांप्रकृतिर्विष्णुनासह। शेतेश्रुतिस्वरूपेणस्तौ तिब्रह्मलयेहरिम् एकाप्यनंतरूपासावाक्यभेदात्सरस्वती अनादिनिधनानित्यास्तौतिनारायणंप्रभुमिति अनेनेदंपौरुषेयवाक्यत्वादितरवाक्यवदितिप्रत्युक्तंयावद्ब्रह्मविष्ठितंतावतीवागितिश्रुतेः त्रिरूपायाः रमायाःशक्तिशब्दाभिधेयत्वंवेदापरपर्यायाः शक्तेश्चेतनाभिधेयत्वंविष्णोःस्वरूपभूतशक्तेःशक्यत्वगुणयोगेनयुज्यते नित्याव्यवधानादितिविशेषशक्तित्वाच्च। विष्णोःस्वरूपशक्तेःसाशक्यत्वाच्छक्तिरेवतु नित्याव्यवहितत्वाच्चविशेषाच्छक्तिनामिकेतिवचनात्सामान्यवाचिनोपिशक्तिशब्दस्यविशेषानेष्टत्वं पंकजादिशब्दवद्युज्यतेपंकाज्जातंपंकजमितिशैवलादिषुवृत्तिसंभवेपिपद्मएववर्तते विमादावपिब्रह्मश ब्दस्यवृत्तियोगेपिचतुर्मुखएव रुद्रशब्दस्यरौद्रगुणयोगेनातपेवृत्तावपिशंकरएव आदित्यशब्दस्यादितिपुत्रसामान्यवाचित्वसंभवेपिसूर्यएवेत्यानूह्यं यथैवपंकजंब्रह्मारुद्रइत्यादिकंपदमितिवचनात् उमा दीनामपिप्रकृतिशब्दवाच्यत्वेनप्रसिद्धेःकथं उच्यते अपरप्रकृतित्वंतासां लक्ष्म्याएवपरमप्रकृतित्वं तदुक्तम् श्रीःपराप्रकृतिःप्रोक्ताब्रह्माणीत्ववरातथः उमाशचीमुख्यास्तस्याअवराःसंप्रकीर्तिताइति १९

निरयबुद्धस्यहरेः कादाचित्कबोधनंविडंबनमात्रं नतुसत्यमितिहृदिकृत्वा लौकिकमवमनुसरति यथेहि अनुजीविनइत्यनेनवेदांतानांतदेकनिष्ठत्वंसूच्यते राजवज्जयशब्दाद्यानित्यबुद्धस्यबोधनं विडं बमात्रंकेवास्यनिद्राविधापृतेर्हरेरितिच १४ श्रुतयोपिलक्ष्मीविभूतयः पुराणस्यस्त्रीशूद्रादिश्रुतिगोचरत्वेनश्रुत्यर्थएवगृह्यतेनतुशब्दइत्यभिप्रेत्यकथितं श्रुतयऊचुरिति जयजयेति नित्यविजया धिकरणस्यहरेर्लोटैण्यत्कालविजयोनाशास्यते किंतुविजयप्रकाशनंभक्तानुकंपित्वेनजयंप्रकाशयेत्यर्थः सर्वदाजयतोविष्णोर्जयस्तस्यप्रकाशनामित्यादि । अत्रराजवादिशांजयांनप्रार्थ्यते किंतुदुस्त रप्रकृत्यादेरित्याशयेनाह जहीति हेअजित दोषैर्जन्ममृदुःखाज्ञानादिभिरानंदज्ञानादयोजीवगुणागृहीताःसंवृतायया सादोषगृहीतगुणां तामजां अजगतिक्षेपणयोरितिधातोःजीवगुणाक्षेपिकांजहि हन तथा परमाच्छादिकांजहिगमयअपसारयेतियावत् एतेअपिप्रकृतिशब्दवाच्ये अथान्येप्रकृतीदुष्टेनृपप्रातिस्विकंस्थितेइत्यादेः एतेनजयजयेत्यारभ्यसंवृतधिसंवृतेत्यंताश्रुतिर्गृहीता अरातिंतंद्रीं प्र कृत्याच्छन्नत्वाविशेषाज्जीवात्मनोःकोविशेषइतितत्राह त्वमसीति त्वंयचस्मादात्मनास्वतएवअसंभिन्नोतएवावरुद्धः अनपगतःसमस्तःपूर्णोभगऐश्वर्यादिगुणोयस्यसतथा अनपगतपूर्णैश्वर्या दिगुणोसीत्यर्थः । भगोयोन्यांभगोयस्थेयशोवीर्यार्कभूतिषु । कांतीच्छाज्ञानवैराग्यधनैश्वर्यतपःसुचेतियादवः । अतस्त्वत्प्रतिबिंबभूतस्यजीवस्यप्रकृत्याच्छादितत्वात् त्वत्प्रसादसंस्रेत्यैश्वर्यादयागुणाःनप्र काशंते अनेनह्येषह्यानंदइत्यारभ्यस्वतोसित्वमित्यंताग्रहीता । इतोपिविशेषोस्तीत्याह अजेति अजहेविष्णो जगदोकसांजगदाश्रयभूतानांश्रीब्रह्मादीनांसृष्ट्याद्यखिलशक्त्यवबोधक रमायाइत्या रभ्यअनंतेसीत्यंताऽनेनसूचिता इदानींगुणवृत्तयःश्रुतयःनिर्गुणेब्रह्मणिकथंचरंतीत्यस्यपरिहारमाह क्वचिदजयेति निगमस्तत्त्वनिश्चायकोवेदः क्वचित्सृष्टिकालेआत्मनाजीवेन अजयाप्रकृत्याच अनुच

यथाशयानंसम्राजंबंदिनस्तत्पराक्रमैः ॥ प्रत्यूषेऽभ्येत्यसुश्लोकैर्बोधयंत्यनुजीविनः १४ ॥ श्रुतयऊचुः ॥ जयजयजह्यजामजितदोषगृहीतगुणांत्वमसि यदात्मनासमवरुद्धसमस्तभगः ॥ अजजगदोकसामखिलशक्त्यवबोधकतेक्वचिदजयात्मनानुचरतोनुचरेन्निगमः ॥१॥ १५ बृहदुपलब्धमेतदवशेषतया यतउदगास्तमस्यविकृतेविकृतः ॥ अतऋषयोदधुस्त्वयिमनोवचनाचरितंकथमयथाभवंतिभुविदत्तपदानिनृणाम् २ ॥ १६ ॥

रतः प्रवर्तमानस्यतेतवानुचरेत्चित्तानुवर्तित्वेनविधिनिषेधरूपेणवर्तते हरेस्तदगोचरत्वाल्लयेकेवलंस्तुतिरूपेण जीवानांनिर्देहकत्वेनतत्प्रयोजनकोनेतिशेषः । लयस्यत्वष्टमोभागःसृष्टिकालउदा हृतः । तत्रैववेदसंचारोह्यन्यदास्तुतिमात्रकइतिस्मृतिः । यस्माद्विधिनिषेधविषयोजीवस्तस्मात्सृष्टिकृत्वावेदैर्जीवान्बोधयित्वातदुक्तमनुष्ठायस्वज्ञानमुत्पाद्यत्वंप्रसन्नःतत्स्थांपिशाचवद्वर्तमानांअजांप्रकृतिं जहीति । अनेनसृष्टिकालएवगुणमयेजगतिवर्तमानाःसदानिर्गुणेपरमेश्वरएववर्ततइतिप्रश्नपरिहारोदर्शितः यजेत नहंतव्य इत्यादिविधिनिषेधानास्तुतिपरत्वंयुक्तं कथ यत्प्राप्त्यर्थयत्क्रियमाद्विधिनिषेधाव र्तंतेसत्वमजांजहीतियोजनोपपत्तेः धिष्ण्यादीनांनियंताय:पूज्य:प्राप्यश्चतद्भता । इत्यादिस्तुतिरूपेणविध्यादिश्रुतयोपितु । हरिंवदतिसर्वेषांतन्नामत्वादथापिचेतिस्मृतेः अस्यसृजतोहितइतिप्रभृति मातेक्षणोत्यगादितिपर्यंतंमूलश्रुतिरियम् । हनहिंसायामितिधातुः । पृथक्श्रुतित्वान्नपूर्वापरसंबंधःउपलक्षणत्वादनंतत्वाच्छ्रुतीनांसर्वश्रुत्यर्थोपबृंहितत्वाच्चतेषाश्लोकानांनसर्वश्रुतीनापृथगुक्तिः । स र्वश्रुत्यर्थसंपन्नान्श्लोकान्सत्यवतीसुतः । एकैकशाखाश्रुत्यर्थाअंगौस्वोपलक्षणान् । बबंधतान्भागवतेप्रतिश्लोकपृथक्श्रुतिरित्याचार्यैरेवोक्तत्वान्नास्माभिर्मिथ.सबंधार्थंप्रपंच्यते ॥ १ ॥ १५ बृहद्वि दृष्टमवशेषितंयत्स्वरूपमीशस्यतमोधिकस्य सर्वाधिकत्वेनतमोहिदुर्गांततस्तथैनंविबुधायथाऽगुरित्यौदालकायनश्रुत्यर्थनिबद्धोयंश्लोकः बृहदुपलब्धमिति नथाहि अविकृतेतमसि । तमआसीत्तमसागू ढमग्रइतिश्रुतेः । नित्यतमोविषयेत्वमुदगाउत्कृष्टत्वंगतःसूक्ष्मप्रकृतेरपित्वमधिकोसियतःअतोबृहत्त्वेन बृहवृद्धावितिधातोःपूर्णत्वेनएतत्स्वरूपमुपलब्धं । वेदेषुदृष्टंकथमत्राह अवशेषतयेति इतइदमधिक मितोपीदमधिकमितिसर्वाधिकत्वेनततोधिकाभावेनावशेषितत्वेनपरिशेषप्रमाणासिद्धत्वेनेत्यर्थः । सएषरसानारसतमःपरमपरार्ध्योष्टमोयदुद्गीथइतिश्रुतिः द्वितीयार्थेतृतीयार्थेपंचम्यर्थेचसप्तमी चतुर्थ्यर्थेच

संयोकाविषयेपिचतांविदुरितिमहाव्याकरणवचनात्विषयपंचम्यौयुज्येते कीदृशस्त्वं अविकृतःविकाररहितः अतऋषयोब्रह्मादिज्ञानिनस्त्वंसर्वोत्तमइत्येतदर्थंपराणित्वयितानिमनोवचनाचरितमित्ये कवद्भावविवक्षयैकवचनं मनोवचनाचरितानिदधतामितिदधुः शिक्षांधृतवंतः पुंसांत्वयितानिमनआदीनिकथमयथाअतद्विषयाणिभवंतीतिदधुः तत्रदृष्टांतःनृणांपदंभूमौनिक्षिपामीतिप्रवर्तमानानांच त्वार्निनिहितानिपदानियथाभूमेरन्यत्रनभवंतितथेत्यर्थः जलवृक्षादेराधारशक्तिमत्त्वेपिभूम्यंतर्भावान्नपृथगुक्तिः अतस्तथाबृहत्त्वेनदधुरितिवा अतःशब्दश्चहेत्वर्थेतथत्यर्थेचवर्तते उभयार्थेचभव तियथाशब्दविदोविदुरितिवचनात् अनिर्देश्यमप्येकदेशेननिर्दिष्टंभवतीत्युक्तं कथमपथाभवंतीत्यनेन यथासर्वभूमिमसंचरन्नप्येकदेशसचारेणभूसंचारीभवतितथेति निरपेक्षबृहत्त्वस्यज्ञानाज्ज्ञानं भवेत्परं । बृहत्त्वमेवतुगुणैःसर्वैरुद्दिश्यतेयतइतिसामान्यसंहितायाम् २ १६ त्यजंतितापंयउतेभवत्कथाइतिस्मयुक्ताःकिमुतेस्वरूपगाः । परावरेशेशपदंभजंतःपरंपरानंदमनारतंतदितीद्दद्युम्नश्रुतिग्रथित स्यइतिश्लोकस्यायमर्थः इतिशब्दोहेत्वर्थः पुनरवधारणार्थः पुनरमथमेप्रश्नेव्यावृत्तावधारणेइति हेपरमपरावरेशेश तेतवाजस्रसुखानुभवं अनारतमजस्रं सुखंपरानंदःअनुभवःज्ञानंयस्यतत्त था तत्पदंस्वरूपंभजंति अनन्याश्रयत्वात्स्वधामापरमः तेनविधुताःआशयगुणादुःखाद्याः कालगुणाउत्पत्त्यादयोयैस्तेमुक्ताःतपांसितापाञ्जहुरितिकिमुतपुनःवक्तव्यमेव हेत्र्यधिपतेत्रिलोकीनाथ सु रपःदर्शनादिमायाविचक्षणाः अखिललोकस्यमलंक्षपयतीतिआखिललोकमलक्षपणःतंतवकथामृताब्धिमवगाह्यापितपांसिजहुरितियस्मादितिशेषः ३ १७ अनिशमनुश्वसंत्यसुखोद्गारितास्तवरिपवो दांतिवत्तमसिप्रविष्टाः । तवगुणप्रथनाःपरिहायतमःपर्यातितेपदमजस्रमनंतसुखमितिपंगिश्रुत्यर्थरूपस्यहतयइवेत्यस्यश्लोकस्यायभावः महदहमादयः ब्रह्मरुद्राद्यभिमन्यमानानिमहदहंकारादितत्त्वा

## इतिसूरयस्त्र्यधिपतेऽखिललोकमलक्षपणंतवकथामृताब्धिमवगाह्यतपांसिजहुः ॥ किमुतपुनःस्वधामविधुताशयकालगुणाःपरमभजंतियेपदमजस्रसुखा नुभवम् ॥ ३ ॥ १७ दृतयइवोच्छ्वसंत्यसुहृदोयदितेमहदहमादयोऽडमसृजन्यदनुग्रहतः ॥ पुरुषविधान्वयोऽत्रचरमोत्तममध्यमादिषुयस्तवसदसतःप्र रंप्रथयेदविशेषमृतम् ॥ ४ ॥ १८ उदरमुपासतेयर्हिवर्त्मनिसूक्ष्मदृशःपरिसरपद्धतिंहृदयमारुणयोदहरम् ॥ ततउदगादनंतनपथार्थशिरःपरमंपुनरि हयत्समेत्यनपततिकृतांतमुखे ॥ ५ ॥ १९

नि यस्यानुप्रवेशलक्षणानुग्रहतोब्रह्मांडमसृजन् तस्यात्यंतोपकारकस्यतेतवयचसुहृदःसर्वमिथ्यात्ववादिनःतर्हितेदृतयःकारुशा लोपामग्निधमनानिर्मितचर्मविशेषाइवोच्छ्वसंतितमसिप्रविष्टाःदुःखभराक्रांतत्वाच्छिन्नष्टप्राणबलादीर्घश्वासंकुर्वंति अत्रचरमोत्तममध्यमादिषु चरमामनुष्योत्तमाः उत्तमाइंद्रादिदेवाःमध्यमाऋषिगंधर्वाः आदिःमुक्तसमुदायेप्रथमोब्रह्मा एषुपुरुषेषुयस्तवाजस्रंऋतमेकप्रकारंनित्यमितियावत् अनंतसुखंअविशेषंविषयविशेषनिमित्तक्षणभगुरसुखमंतरेणस्वरूपभूतापरिमितानंदपूर्णं सदसत.परंप्रथयेत् जानाति शिष्यादिषूपदिश्यप्रख्यापयतिच सःपुरुषविधस्यजीवदेहगतत्वेनतदाकारस्यतवान्वयः अनुकूलाप्राप्तिर्यस्यतथा असक्तोदेहपुयेषजीववदेहगोपियत् अथवापुविधातृत्वात्पुंविधःपु रुषोत्तमइतिवचनात् तादृशंत्वामाप्नोतीत्यर्थः प्रथयतीतिप्रथनः ॥ ४ ॥ १८ तंमपदाभ्यांप्रापद्यतब्रह्मेमंपुरुषंयत्प्रपदाभ्यामपद्यतब्रह्मेमंपुरुषंतस्मात्प्रपदेतस्मात्प्रपदेइत्याचक्षते शफा.खुराइत्यन्ये पांपशूनांतदूर्ध्वमुदसर्पत्ताऊरूअभवतामुरुग्रणीहीत्यब्रवीत्तदुदरमभवदुर्वैवमेकुर्वित्यब्रवीत्तदुरोभवदुदरंब्रह्मेतिशार्कराक्षाउपासतेहृदयंब्रह्मेत्यारुणयोब्रह्माहैवताईऊर्ध्वंत्वेवोदसर्पत्तच्छिरोऽश्रयतयाच्छिरोऽश्र यतोच्छिरोभवत्तच्छिरसःशिरस्त्वंताएताःशीर्षंञ्छ्रियःश्रिताश्चक्षुःश्रोत्रमनोवाक्प्राणःश्रयंतेऽस्मिञ्छ्रियोयएवमेतच्छिरसःशिरस्त्वंवेदेत्यादिश्रुतेः कस्मिन्नहमुत्क्रांतउत्क्रांतोभविष्यामिकस्मिन्वाप्रति ष्ठितेप्रतिष्ठास्यामीतिसप्राणमसृजतेतिश्रुतेः प्राणएवैनमनुप्रविशतिप्राणप्रविशंतमितरादेवताः नप्राणादपरःपरमनुप्रविशति प्राणएवैनमनुभुंक्ते प्राणमितरादेवतानः प्राणादपरःपरमनुभुंक्ते प्राणएवैनम

न्वानंदीभवतिप्राणयितरादेवतानप्राणादपर:परमन्वानंदीभवति तस्मादाहु:प्राण:पद्धतिरितिहिरण्यनाभश्रुतेश्चार्थमतिनिधिरुदरमुपासतइतितस्याभिप्राय: शर्कराक्षुद्रपाषाणेसुसूक्ष्मेखंडितेगुडइति शर्करातुशिलाभेदेऽश्मभेदाल्पकपालयो: शर्करंतत्रदेशेपुसितायांशकलेगुडइतिच अत:शर्कराक्षा:सूक्ष्मदृष्टय:तेषुख्याता:शार्कराक्षा:तएववर्त्मनिब्रह्मणिसूक्ष्मदृष्टय:हरेरशेषविशेषाम्विजानंतोयहियस्मात्प्राणं मत्युरुयूणीहीत्यब्रवीदितिवचनादुदरनामकंब्रह्मोपासते उदरंपूर्णंब्रह्मउद्गत:अर:परिच्छेदोयस्मात्तदुदरं पूर्णमित्येकार्थत्वात् यस्माचारुणयोहृब्धयनात्हृदयनामकंब्रह्मोपासते यस्माचेतरंयांहूकेयाद योदहरमाकाशादप्यतिसूक्ष्मं परिसरोमुख्यप्राण:पद्धतिर्मार्गोयस्यसतथा परिसरस्यपद्धतिर्वातदुपासतेतद्ब्रह्मतत:हृद:नंदनपथाब्रह्मनाडीद्वाराशिर.प्रत्युद्गात् अथयत्परमंब्रह्मपुनरिहहृदयादिषु स्थितंउपास्यतत्समीपमुपेत्यकृतांतमुखेसंसारेनपतंतीत्यन्वय: ५ १९ योजविवद्योनिषुभात्यनंतोमूढैस्तमोगैर्भरताधिगम्य: निचाय्यतंशाश्वतमात्मसंस्थंतादिच्छवोत्मन्यदधुर्महांतइतिकमठश्रुत्यर्थग्राहिण:स्वकृतविचित्रेतिश्लोकस्यार्थउच्यते स्वकृतविचित्रयोनिषु स्वनिर्मितसुरनरादिनानाविधशरीरेषुविशन्निवविशन्जीवस्तद्वदज्ञानांयस्त्वंचकास्सि कथमिव अनलवत्स्वकृतानुकृति: यथाऽनल:स्वकृतस्यानुकृतिर्यस्यसतथा स्वकृतदार्वादेरपमयनेगच्छन्तस्थापनेतिष्ठन् अनुवर्तते एवंस्वकृतशरीरादिष्वनुवर्तसेतद्गत:सन्नित्यर्थ: ज्ञानिमतमाह हेतुतयेति सर्वहेतुतयाभरतेन भेज्ञानात्मकेविष्णौ रतेनवायुनामत:ज्ञात: रतत्वाज्ज्ञानात्मकेविष्णावथवापिजगद्भृते:भरतोवायुरुद्दिष्टोभारतीतत्सरस्वतीतिस्मृते: वितथासुअन्यथाभवंतीषुअशाश्वतीष्वपिसंभाविताखसंभावितास्वपिअमूषुयोनिषु अवितथात्वेनअन्यथाभूत्वैवशाश्वतत्वेन उरुविधबहुविधंतिष्ठंत निकटधिय:त्वत्समीपस्थबुद्धय:महांतस्ते तवत्वामभिविपत्यमनसाभिगम्यमनसिनयंतिध्यायंतीत्यर्थ: योनिवद्याह्वयोजीवस्त्वज्ञानांतद्वदे

स्वकृतविचित्रयोनिषुविशन्निवहेतुतयाभरतमतश्चकास्स्यनलवत्स्वकृतानुकृति: ॥ अपिवितथास्वमूष्ववितथोरुविधंमनसिनिकटधियोनयंत्यभिविपत्य तव ॥६॥ २० प्रक्रमवत्स्वसत्कृतंसर्वेषुपुरुषेषुसर्वासुधीषुस्थित्वात्वांतुबहिरंतरसञ्चरणेपि ॥ तवपुरुषवदंत्यखिलशक्तिपुत:स्वकृतम् ७ २१ इतिविमृशंति कवयोनिगमावपनंयजंतउपासतेभवमध्यविनिश्वसिता: ॥ दुरवगमात्मतत्त्वनिगमायतवाङ्मनसश्चरितमहामृताब्धिपरिवर्तपरिश्रमणा: ८ २२

वतु प्रकाशतेपरोदेवस्तेनयात्यधरंतम: सर्वहेतुवयैवेशंप्राणोजानातितत्त्वत: तेनचासौपरोदेवस्तत्परयातिकेशवं इंधनानयनेत्वग्निर्यथैवानीयतेसह एवंदेहगतोविष्णु:सहगच्छेन्निजेच्छया अशाश्वतेषु देहेषुशाश्वतंबहुधास्थितं निचाय्यमनसासंतोजानंतिनिकटेच्छवइत्यादितंत्रभागवतेसिद्धोयमर्थ: ॥ ६ ॥ २० निदुसीदगणपतेगणेपुत्वामाहुर्विप्रतमंकवीनां नऋतेत्वत्क्रियतेकिंचनारेमहामर्कमघवंचित्रमर्चेत्यादिश्रुत्यभिप्रायगर्भस्यप्रक्रमवदित्यस्यश्लोकस्यायमर्थ: सर्वेषुपुरुषेपुसर्वधीषुसर्वेंद्रियेपुचस्थित्वा श्रीब्रह्मादिषुप्रक्रमवत्प्रकृष्टक्रमयुक्तत्वेन स्वसत्कृतंस्वात्मनैवसत्कृतंत्वांवदंति किंच हेपुरुषबहिरंत:अंडाद्बहिश्च असञ्चरणे असदमंगलंचरणंकर्मयस्यासावसञ्चरण:तस्मिन्पापाचारेस्थित्वापापाचारमपि स्वात्मन:पूजात्वेनैवकारयंतंत्वांवदंति तुशब्देनयथाकरणंतस्याधोगत्यर्थमितिसूचयति किंबहुनातत्सर्वंतवस्वकृतं अनन्यापेक्षयात्वयैवकृतंवदंतिकुतइतितत्राह अखिलेतिसर्वपुरुषेंद्रियशक्तिप्रेरकत्वात् श्रुतिश्लोकयो:सर्वत्रैकार्थत्वाभावोनैकतन्नियतत्वद्योतनायज्ञायते श्रीब्रह्मरुद्रपूर्वेषुक्रमात्स्थित्वाजनार्दन: स्वात्मानमर्चयत्यद्धाबहिरंतरसत्सुच असतामधमाचारोहरिदृष्ट्यात्मपूजनं तस्याऽधोगमनायेतिश्रुतिराहाखिलक्रियमित्यादिना त्रिपादोयंश्लोक: ७ २१ विमथ्यवेदाब्धिमतिश्रमेणज्ञात्वापरेशंमुनयोविमुक्ता: मृशंतियज्ञैश्चयजंतिनित्यमुपासतेवेदफलप्रदंतमितिकुशिकश्रुतिप्रतिरूपस्यइतिविमृशंतीतिश्लोकस्यायमर्थ: प्राणिनोभवमध्येविनिश्वसिताइतियतोत:कवयो विमृशंतीति सामान्येनोक्तंविशिनष्टि निगमेति हेदुरवगमात्मतत्त्व दुर्ज्ञेयनिजस्वरूपच रितलक्षणमहामृताब्धे:परिवर्तनेनमथनेनपरिश्रमणा: चरगतिभक्षणयोरित्यतस्त्वत्तत्त्वावगीतहेतुर्वेदश्चरितशब्देनोच्यते सएवमहासमुद्र:तस्यपरिवर्तनंपरिलोडनंमथनमितियावत् तेनपरिश्रांताइतियत:अतोभवमध्याद्विनिश्वसिता: मुक्ता: निगमानामावपनस्थानं निगमानांततोभिव्यक्तेस्ततएवफलप्रदत्वाद्विषय

१ प्रक्रमवत्स्वसत्कृतपुरुषेषुधीषुतुबहिरंतरसञ्चरणे तवपुरुष० इतिपाठान्तरं लिखितपुस्तके।

त्वाचानिगमावपनंत्वांविमृश्यपज्ञादिभिर्यजंतेउपासते सजातीयविजातीयप्रत्ययानंतरितत्वेनध्यायंति कीदृशः निगमविषयेषुआयतवाङ्मनसः विस्तृतवाङ्मनोव्यापाराइत्यनेनवेदैर्नैवविज्ञातभगव
त्त्वाइत्युक्तंभवति ॥ ८ ॥ २२ नाकिंचिदभिवांछंतियतयःसुसदाश्रयाः प्रेष्ठस्यपरमणस्यात्मैप्रियवद्देहदृष्टपइत्यर्थद्योतकस्यनपरिलषंतीत्यस्यायंभावः ईश्वरेत्यनेनभुत्यंतरमत्राप्यनुकूलंलक्षयतिके
चिद्यतयःकिंचिदपवर्गलक्षणमुपासनाफलमपिनपरिलषंतिनवांछंति तत्रनिमित्तमाह चरणेति चरणसरोजसेविनांहंसानांसंन्यासिनांकुलस्यसमूहस्यसंगेनसेवालक्षणेनविसृष्टगृहाः गृह्णंतित्यक्तुंन
मुंचंतीतिगृहाःभार्यापुत्रादयोविसृष्टाःसंत्यक्तायैस्ते अनेनसुसदाश्रया इतिविवृतं किंच त्वदनुपथंत्वन्मार्गानुकूलमार्गंत्वत्प्राप्त्यनुसारित्वादिदमात्मनःस्वस्यसुहृदंनिमित्तबंधुभूतंकुलायंशरीरं प्रिय
वच्चिच्छरीरंत्वच्चरंतिपश्यंति प्रियेसर्वतःप्रियतमेआत्मनिसर्वदानकर्तरित्वयि तथाहितेतवचत्मप्राप्तपरिहारेणउन्मुखाःअभिमुखाः ॥९॥ २३ असुर्यानामतेलोकाअंधेनतमसावृताः तांस्तेप्रेत्याभिगच्छं
तियेकेचात्महनोजनाइतिश्रुतिसूचिताभिप्रायस्यनचरमंत्यस्यायमर्थः असदुपासनयाऽन्यथोपासनयाब्रह्माहमित्याद्युपासनया आत्महनःआत्मानंघ्नंतोजनाः असुर्यान्सुष्ठुरमणरूपत्वादसुरप्राप्यत्वा
च्चनित्यानिरतिशयदुःखान्निरस्तसमस्तसुखान् लोकानानुवंतीत्येतन्नचरमंत्यहोइत्यनेनलक्ष्यते सुखलक्षणारातिरेवनास्तीतिन किंतुनित्यदुःखमनुभवंतिच अहोआश्चर्यंअन्यथोपासकानामनर्थपरंपरा किंच
यदनुशयाःयस्मिन्ननुशयोयेषांतेतथा यत्रानुशयानास्तमस्येवभ्रमतीत्यर्थः कुतोत्राह अभवाइति ततउत्थायपुनर्जन्मवर्जिताः जन्माभावेनदेहाभावेदुःखभोगाभावइतितत्राह कुशरीरभृतइति
नित्यदुःखभोगसाधनंकुत्सितंनिचंशरीरंबिभ्रतीति नकेवलंभगवद्द्वेषिणामेतादृशलोकप्राप्तिःअपितुतद्भक्तद्वेषिणामपितल्लोकावाप्तिरितिभावेनाह निभृतेत्यादिना निभृतंपरिपूर्णमोक्षार्थेहृदयंज्ञानंयस्य

नपरिलषंतिकेचिदपवर्गमपीश्वरतेचरणसरोजहंसकुलसंगविसृष्टगृहाः ॥ त्वदनुपथंकुलायमिदमात्मसुहृत्प्रियवच्चरंतितथोन्मुखास्त्वयिहितेप्रियआत्म
नि च ९ २३ नचरमंत्यहोअसदुपासनयात्महनोयदनुशयाभ्रमंत्यभवाःकुशरीरभृतः ॥ निभृतमोक्षहृदययोगयुजोहृदयंमुनयउपासतेतदरयोपियपुः
स्मरणात् १० २४ स्वनुरागतश्चवानुरगेंद्रभोगदंडविषक्तधियोवयमपितेसमासमदृशोंघ्रिसरोजसुधाम् ॥ कइहवेदनुवक्तुमपेतजन्मलयोयतउद्गा
दृषिरनुदेवगणाउभये ११ २५

सनिभृतमोक्षहृदयोवायुःतेनयोगेननियोगेनयुजोयुक्ताःनियमिताःसंतः येमुनयोज्ञानिनःहृद्ग्रयनात्हृदयंभगवंतमुपासतेतेषांमुनीनामरयोद्वेषिणोपितदेवश्रीनारायणद्वेषिप्राप्यंतमोयपुरित्यन्वयः नित्य
दुःखसंपूर्णंनिरस्तानंदमव्ययं तमोयांत्यन्यथाज्ञानाद्द्वेषाद्वाहरिसंश्रयेइति हरिसंश्रयेहरिभक्तजने निभृतोमोक्षाविस्रावणस्तद्योगात्तत्प्रसादतः जानंतिपरमंदेवंनान्यथातुकथंचनेति।स्मरणादित्युत्तरश्लोका
र्थाय १० २४ त्वंवेत्थनापरस्तेस्वरूपंननित्यवाङ्नागभोगप्रियस्य कुतोब्रह्माप्राप्तलोकश्चदेवास्तथाप्राप्ताजनिमंतोयतोस्मादितिसांकृतिश्रुत्यर्थभूतस्यायमर्थःहेस्मरणात्स्वनुरागसुष्ठुअनुरागःस्नेहोयस्य
सतथातस्यसंबुद्धिःस्वनुरागेति स्मरणादेवअनुरक्तइत्यर्थः यत्तवसच्चिदानंदलक्षणंतत्तेस्वरूपंभवान्वेदनान्योवेत्ति अनेनत्वंवेत्थनापरस्तेस्वरूपमितिविवृतं भवत्पोमत्स्वरूपविदंतिहीतितत्राहुः उरगेंद्रेति
उरसागच्छंतीत्युरगाःतेषामिंद्रउरगेंद्रस्तस्यभोगएवदंडस्तस्मिन्विषक्ताधीर्यस्यसतथातस्यतेतवअंघ्रिसरोजसुधामुद्दिश्यवयंनित्यवाचोपिसमासमदृशः सर्वमाहात्म्यस्यवेदैरपिवक्तुमशक्यत्वादस
मदृशः माहात्म्योपमितज्ञानाभावाः वेदागम्यमाहात्म्यस्यापिवेदैरेवगम्यत्वात्समदृशः तुल्यज्ञानाः अतइहजगति अन्यःकोनुपुमान्माहात्म्यंवक्तुंवेद अमुनानित्यवाङ्नागभोगप्रियस्यकुतइत्येत
द्विवृतं कोद्धस्मान्वेदान्त्वांचवेत्ति अपेतजन्मलयःउत्पत्तिनाशरहितःयतस्त्वत्तःऋषिर्ब्रह्माउदगादुत्पन्नः अतोजन्मादिरहितोनभवति देवगणाअपिउक्तगुणानेत्याहु ब्रह्मणोन्वनंतरं उभयेप्राप्तपदाःप्राप्य
पदाश्चदेवगणाः अनेनकुतोब्रह्माप्राप्तलोकाश्चदेवास्तथाप्राप्ताजनिमंतोयतोस्मादितिश्रुतिर्व्याख्याता महिम्नःसर्वशोनुक्तेर्वेदाश्चासमदर्शिनः तस्याप्यवेदगम्यत्वात्तथैवसमदर्शिनइतिवाक्यंचानुगृहीतम्

नासदासीन्नोसदासीत्तदानीन्नासीद्रजोनोव्योमापरोयत् किमावरीवःकुहकस्यशर्मन्नंभः किमासीद्गहनंगभीरमित्यादिश्रुत्यर्थानुरूपस्यतर्हिनसन्नचासदित्यस्यश्लोकस्यभावःकथ्यते यदा भवान्प्रलये शास्त्रअध्यापकपरंपराप्राप्तंवेदमपकृष्यआत्मनिनिधायशयीत अध्येत्रभावेशास्त्रप्रवृत्त्यभावात् तर्हितदासत्स्थूलमंडादिकंनासीत् असत्सूक्ष्ममहदादिकंचनासीत् उभयंअग्निरापश्च नचकालजवःज राद्यापादकलक्षणः किंबहुनातत्रकिमपिवस्तुनासीदित्यर्थः हेअजअसतःसूक्ष्मरूपात् त्वत्तःसतःस्थूलरूपस्यजगतः परमेश्वरपर्यंतयथाक्रमंजनिंमृतिंच सर्वस्मात्परमात्मनि भिदां भेदंच विपणोव्य वहारः त्वत्सेवालक्षणधनेदत्तेसुखपदार्थलक्षणफलंदेयामितिसंकल्पलक्षणइत्यतःफलंलक्ष्यते विशिष्टफलापेक्षामृतेयेस्मरंतितेषांध्वनिंउपाविशवाचिसन्निहितत्वेनतदुक्तविद्ययाज्ञातुंशक्योसीत्यर्थः त त्रेत्थंभावमाहुः आरुवतःवेदादिभिःस्तुवतोवायोःप्रसादाच्चयास्मरंतिनान्यथेत्यर्थः सर्ववेदादिरूपेणप्राणस्यारुवतःसदा प्रसादाद्येविजानंतिसूक्ष्मात्स्थूलजनिंक्रमात् मृतिंचसर्वजीवादेरीशस्यव्यतिरि क्ततां जानंतियेनिराकांक्षास्तेषांवाचिजनार्दनइति सूक्ष्माणिमहदादीनिस्थूलान्यंडादिकानिच उभयंत्वाग्निरापश्चनाकिंचित्प्रलयेभवदितिवचनादस्यश्लोकस्यायमेवार्थः नसदसद्वैलक्षण्यार्थइति १२ २६ सत्वादिकंदेहमथोमनश्चसत्वादिबद्धंचवदंत्यसंतः परंपुमांसंनसुरास्तुतेहिजीवाःसुदृष्टाःपरमार्थरूपाइतिश्रुत्यर्थोपनिबद्धस्यात्रिगुणमयइत्यस्यायमर्थः पुमान्जीवात्रिगुणमयःसत्त्वादिगुणबद्धइति जी वस्यापित्रिगुणबद्धताअबोधकृताअज्ञानकृता यतस्तस्मादवबोधरसेत्वयीतिसप्तमीषष्ठ्यर्थे त्रिवृत्त्रिगुणात्मकंमनःत्वयितवापिसदिवविद्यतइत्यर्थः असतांपक्षोभवतिनतुसतां सतांपक्षस्त्वयमित्या हुःमनुजादयइति आत्मविदःसम्यक्परमात्मतत्त्वज्ञानिनः मनुजानामादयोदेवाः भवतस्त्रिगुणातीतत्वाद्भवानेवपरमानंदस्त्वदन्यादिदमशेषंजीवजातंआर्ततयास्थितमित्येवंविमृशंतिजानंति त्रैगुण्य

## तर्हिनसन्नचासदुभयंनचकालजवःकिमपिनतत्रशास्त्रमपकृष्यशयीतयदा ॥ जनिमसतःसतोमृतिमजात्मनियेचभिदांविपणमृतेस्मरंत्युपदिशध्वनिमारु वतः १२ २६ त्रिगुणमयःपुमानितियद्बोधकृतात्वयिनतुभवेत्तदवबोधरसे ॥ सदिवमनस्त्रिवृत्त्वयिभवत्यसतांमनुजादयोविमृशंत्यशेषमिदमात्तत याऽत्मविदः १३ २७ नहिविकृतंत्यजंतिकनकस्यतदात्मतयास्वकृतमनुप्रविष्टइदमात्मतयारसितम् ॥ तवयेपरिचरंत्यखिलतत्त्वनिकेततयानतेपदा क्रमंत्यविगणय्यशिरोनिर्ऋतेः १४ २८

देहेंद्रियकामासुराजानतेहारिं त्रिगुणातीतमीशेशमतःपूर्णसुखंसुराः जानंतिगुणबद्धत्वाज्जीवानार्तांश्चकृत्स्नशः अनार्तस्यप्रसादेनतेषामार्तिविनाशनामितिचैतन्यविवेके १३ २७ सदेवंयेपरंयं तिब्रह्मानंदमजाक्षरं । एकमेवाद्वयंनित्यंनिर्ऋतस्तेशिरोगताइतिश्रुत्यर्थेनग्रथितस्यनहिविकृतमित्यस्यश्लोकस्यायंभावः यथाकनकस्यविकृतंविविधकृतंकुंडलादिरूपंकनकंविनापरित्यक्तुंनशक्यते नेदंक नकंसर्वमिति तत्रहेतुः तदात्मतयेति कनकस्वरूपत्वेनप्रमाणसिद्धत्वात् तथास्वकृतमिदंजगदनुप्रविष्टोभवान्मूलरूपंविनापरित्यक्तुंनशक्यः तत्रहेतुरात्मतयेति एकस्वरूपत्वात् कीदृशंजगत्प्रवि ष्टः रसितंलसितं आत्मनाप्रकाशितंजगत्प्रविष्टस्तस्मात्सर्वगतोविष्णुरितिज्ञातव्यइतितात्पर्यार्थः एवंविधज्ञानेनकिंप्रयोजनंतदाह तवेति येतवअखिलतत्त्वानिसर्वपदार्थाःअधिष्ठानतयानिकेतना नि अधिष्ठानतयाआश्रयोपस्यसतथातस्यभावस्तत्तातया स्वरूपंज्ञात्वापरिचरंतिपूजयंति यद्वा अखिलतत्त्वानांनिकेततयातज्ज्ञानिनः ऋतात्मकब्रह्मप्राप्तिविरुद्धत्वान्निर्ऋताख्यस्यसंसारस्याशिरः स्फुटंपदाक्रमंति मनुकिंकृत्वा अविगणय्यसंसारमितिशेषः आचार्यैरत्रपायाःश्रुतयोव्येतुपरंपरासिद्धास्तास्ताएवोदाहृयंतेनत्वन्याः लोकप्रत्ययार्थंतत्रश्रुत्युक्ताधिकार्थंपुराणानिचोपात्तानि य थैवकुंडलंत्यक्त्वानादातुंकनकांशकं । तस्यैवतदवस्थत्वात्केवलाभेदतःस्फुटं । एवंसुरासुरनरेष्वास्थितोभगवान्हरिः । नैवभेदेनमंतव्योजीवभेदेतुसत्यपि । येतथाभिन्नमीशेशंपश्यंतिपरमर्षयः ऋ तप्राप्तिविरुद्धत्वात्संसारनिर्ऋतेःशिरः अगणय्यपदाक्रम्यवैष्णवंनिलयंययुरितिगारुडे १४ २८

परिवयसइतिश्लोकस्यार्थभावः येतेदेवास्त्वत्पादैकाश्रयास्तान्विबुधानपिगिरावैदिकवाचापरिवयसेपरितोबध्नासि वेदोक्तकर्मानुष्ठानेनप्रवर्त्तयसइत्यर्थः वयबंधनइतिधातोः कानिव दाम्नापशूनिव त्वयिदृढसौहृदाः गाढबद्धस्नेहपाशाःपुरुषाःपुनंतिननुजगदितिशेषः तेत्वद्विमुखाःद्वेषिणोनपुनंति प्रत्युतमलीमसंकुर्वंतीतिशेषः अनेनत्रयतिगाइवयःसुरादिकांस्तन्मनसोजगदपुनन्शुचयोनपरेइतिविवृतम् शुद्धिरपित्वन्निपतेत्यत्राहुःत्वमिति अखिलकारकशक्तिधरः परिपूर्णकर्तृकारयितृशक्तिधरस्त्वमेकएवनान्यःकुतःस्वराट्चक्रवर्ती अस्मत्स्वामीकिमस्मानाज्ञापयसीतिप्रतीक्ष्यसर्वदाविवृतनयनत्वात् येअनिमिषाःदेवास्तेतवबलिमुद्वहंतिमनुजैर्दीयमानंसम्यगर्दंतिच अनेनसएकईशःपरिपूर्णशक्तिर्वलिंहराइतरेस्युःसुराःसुखिनइत्येतत्व्याख्यातम् समभेदेसमीचीनसुष्ठुपूजासुखेषुचेतियादवः तत्रतत्रपुराणवाक्योदाहरणेनैतच्छ्रुत्यर्थत्वेनश्लोकोग्रथितइतिनिश्चीयते साश्रुतिरपिप्रमाणीक्रियते १५ २९ वर्षभुजइत्यस्यश्लोकस्यार्थभावःयेयत्रयस्मिन्पदेत्वयाधिकृताःअधिकारंप्राप्ताः विश्वसृजस्तेभवतश्चकिताः भीताः तत्रस्थित्वाभवतोविदधतिबलिमितिशेषः कस्मैकेइव वर्षभुजःखंडेशाः अखिलक्षितिपतेश्चक्रवर्तिनइव यदिपुरुषोविमुक्तासंतोयस्मात्सविमुक्तःसन्तस्याविमुक्तस्ततः परस्परकाशात् विरहेमुक्तौउदीक्षयेत् परमात्मनएवमुक्तिरितिपश्येत् तमेवंविद्वानमृतइहभवतिनान्यःपंथाअयनायविद्यतेइतिश्रुतेः हेअज तर्हिंयेस्थिरचरजातयः स्थिरत्वंचरत्वंचजातिर्येषांतेतथाते अनिमित्तयुजःस्युः अःपरमात्मानिमित्तंयुक्योगोसंसारस्ययेषांतेतथा भगवन्नियोगादेवसंसारभाजइत्यर्थः मुक्तेस्त्वन्नियतत्वाद्बंधोपित्वदधीनइतिभावः खंडाधीशाःसार्वभौमस्यपद्बद्धब्रह्मेशाद्याःकुर्वतेतेनुशास्ति त्वं

## परिवयसेपशूनिवगिराविबुधानपितांस्त्वयिदृढसौहृदानपुनंतिनतेविमुखाः ॥ त्वमेकःस्वराडखिलकारकशक्तिधरस्तवबलिमुद्वहंतिसमदंतिचयेऽनिमिषाः १५ २९ वर्षभुजोखिलक्षितिपतेरिवविश्वसृजोविदधतियत्रयेत्वधिकृताभवतश्चकिताः ॥ स्थिरचरजातयःस्युरजयेत्वनिमित्तयुजोविरहउदीक्षयेद्यदिपरस्यविमुक्तस्ततः १६ ३० नहिपरमस्यकश्चिदपरोनपरस्यभवेद्वियतइवात्रयस्यचशून्यतुलंदधतः ॥ अपरिमिताध्रुवास्तनुभृतोयदिसर्वगतास्तर्हिनशास्यतेतिनियमोध्रुवतेचतथा १७ ३१

मुक्तिदोबंधदोतोमतोनस्वज्ञानदोऽज्ञानदश्चासिविष्णोइतिशांडिल्यश्रुतेः आत्मानंमुक्तिदंविष्णुंयदिपुंसउदीक्षयेत् मुमस त्रस्तथाबंधस्ततएवेतिसेत्स्यतीतिस्मृत्यनुगृहीतश्लोकस्यार्थमनुवदतीति १६ ३० नहिपरमस्येतिश्लोकस्यार्थभावः अनात्माणात्परस्योत्तमस्य सर्वंसंदधतःयस्यपरमस्यतेतवकश्चिदपरःस्वतंत्रोनभवेत्हेशून्यतुलसमानवर्जित यस्यअत्रजीवसमुदायेव्ययतःसर्वंजानतःसर्वज्ञस्येत्यर्थः अयगतावितिधातोःगत्यर्थानांज्ञानार्थत्वात् इवयथाप्राणस्यनापरःस्वतंत्रःतद्वत्प्राणःश्रीरन्योवात्वांविनास्वतंत्रोनास्ति त्वमेवस्वतंत्रः हेसर्वपूर्ण यदिततःतस्मात्प्राणात्तनुभृतोजीवाःध्रुवाःप्राणाधीनाः जीवाःकियंतःसंतीत्यर्थः तर्हिसत्यं तेअपरिमिताः असंख्याताः नन्वेवंचेत् एकमेवाद्वितीयंइत्यादिश्रुतिवाक्यविरोधइतितत्राह नहीति श्रुतेरयंनियमोर्थोजीवानाशास्यताअधीनतानेत्यत्रार्थेनहि किंतुस्वगतभेदस्यईश्वरांतरस्यास्वतंत्रस्यचनिषेधोनियमः तत्रकिंप्रमाणमत्राह ध्रुवतइति अतोन्यदार्त्तंनेहनानास्तिकिंचन नतत्समश्चाभ्यधिकश्चदृश्यते इत्यादिश्रुतिस्मृतयस्त्वथध्रुवतेच तवस्वतंत्रोनापरोयद्वदत्रप्राणान्यस्तुल्यशून्यस्यसंधिन् प्राणाधीनाअमिताजीवसंघाःप्राणोवशेतेप्रकृतिश्चभूमन्इतिश्रुतिरनेनगृहीता स्वतंत्रोनापरःकश्चिद्विष्णोःप्राणपतेःप्रभोरित्यादिस्मृतेः श्रुतिरपिसत्यार्थेत्यर्थः १८ ३१

मुच्यतेतत्त्वसंबुद्धादाचार्यात्पुरुषोभवात् एतावेवस्वतोऽबद्धौपरमःप्रकृतिस्तथेतिकल्पश्रुत्यर्थतया देशतःकालतश्चैवसमव्याप्तावजावुभौ ताभ्यामुभययोगाभ्यांजायंतेपुरुषाःपरेइतिकौठरव्यश्रुत्यर्थत याचग्रथितस्याजनपरिमुच्यतेइत्यस्यार्थभावः हेअजनलोकविलक्षण जन्मरहितोविवा समंएकप्रकारतयाततंव्याप्तं अनंतमदुष्टतयानिर्दोषत्वेनअनुजानतासम्यक्ज्ञानवताचार्येणउपदिष्टमार्गेण अत्रज गतिज्ञानवान्पुरुष. सततात्संततमज्ञानकल्पितादृवात्संसारात्परिमुच्यतेसम्यक्मुक्तोभवति कथमनुजानतेतितत्राह नेति अजशब्दस्यानेकवृत्तित्वेनानिश्चयइत्यतःप्रकृतिपूरुषयोरीति तयोरुद्भवउत्पात्ति नंघटतइतियतस्ततःप्रकृतिपूरुषौविनान्योबंधरहितोनाविद्यते मुख्यतोऽजशब्दप्रवृत्तिनिमित्तान्यथानुपपत्त्यानघटतइत्युक्तंभवति तदुभययोःप्रकृतिपूरुषयोर्युजोर्योगयोरसुभृतोजीवाभवतिदेशतःकालत श्चयत्रपरमस्तत्रप्रकृतिर्यत्रप्रकृतिस्तत्रपरमइत्युभययुजोः तत्रदृष्टांतःजलबुद्बुदवत् जलबुद्बुदानियथोत्पद्यंतेतथेति सम्यग्ज्ञानवदाचार्यान्मुच्यतेपुरुषोभवात् द्वावेवानित्यमुक्तौतुपरमःप्रकृतिस्तथेतिस्मृतेः १८ ३२ योनःपिताजनितायोविधाताधामानिवेदभुवनानिविश्वा योदेवानानामधाएकएवतंसंप्रश्नंभुवनायंत्यन्या तआयजंतद्रविणंसमस्माऋषयःपूर्वेजरितारोनभूना असूर्तेसूर्तेरजसिनिषत्तेयेभूतानिस मकृण्वन्निमानिइत्यादिश्रुतेः ब्रह्मेशेंद्रादिसंनाम्नांयेर्थभूतागुणामताःपूर्तीशित्वत्वद्रष्टृत्वप्रमुखास्तेहरेःसदेति अतस्तुसर्वनामासौसर्वकर्त्ताचकेशवइत्यादिस्मृतीनांचार्थत्वेनसंहब्धस्यत्वायितइमइतिश्लोकस्या र्यभावः मधुनिनिलिल्युरितिवक्तव्येमधुनिलिल्युरितिपाठोगाथाभंगभयात्समानेलोपइतिन्यायाच्चकृतःततोइतिपाठोपिवैलक्षण्यज्ञापनायाकारि ततताविपितरित्यर्थः ततेतिताततेतिश्रुतिः अउ आनंदपूर्ण त्वादनामा सर्वस्मादुत्कृष्टत्वादुनामा आनंदत्वादनामासावुत्कृष्टत्वादुनामकः एतन्नामद्वयविष्णोर्ज्ञात्वापापैःप्रमुच्यतइतिस्मृतेः तयोःसंधिः ओइत्यनेननाम्नोर्नाभिन्नश्चाभेदः उनाम्नःसबुद्धिरसूचियेगुणाःश्रु

अजनपरिमुच्यतेत्रभवात्सततात्सममनुजानतातमनंतमदुष्टतया ॥ नघटतउद्भवःप्रकृतिपुरुषयोरजयोरुभययुजोर्भवंत्यसुभृतोजलबुद्बुदवत् १८ ३२

त्वयितइमेततोविबुधनामगुणाःपरमेऽमृतइवार्णवेमधुनिलिल्युरशेषरसाः ॥ नृपुतवमाययास्वगतयाकुशलंत्वयिसुधियांगभेदमनुधातुमनुप्रभवः ॥ कथमनुवर्तिनांभवभयंतवभ्रुकुटीसृजतिमुहुर्नृणाम् १९ ३३

वाःसुविरुद्धाश्चदेवेसंतीत्यादिश्रुतौप्रतीतास्तइमेविबुधनामगुणाःविबुधानामिंद्रादीनांनाम्नामर्थभूताःपरमैश्वर्यादिगुणाःअमृतेनित्यमुक्तेपरमेत्वयिनिलिल्युः निलीनतयास्थिताः कस्मिन्केइव मधुन्यर्णवे मकरंदमधुलक्षणसमुद्रेअशेषगुणपुष्परसाइव यतोऽशेषगुणाकरोभवान् अतोनृषुसुधियःनिर्धारणेसप्तमी नृणांमध्येसम्यक्ज्ञानिनःस्वगतयासुष्ठुन्यैरनवगतयामाययास्वेच्छयात्वयिभेदं समस्तादन्योविशि ष्टगुणःपरइतिभेददर्शनलक्षणं कुशलमनुविधातुमनुप्रभवः सम्यक्समर्थाः अनेनअज्ञानिनांनिलीनाः ज्ञानिनामभिव्यक्ताःगुणाइत्यतस्तेषांसद्भावोदर्शितइति तदुक्तं अन्याविज्ञातयाविष्णोःशक्त्यैवकुशलं जनाः कुर्वंतिकुशलेषूच्चभेददर्शनमेवतु पूर्णानंदादिसंपत्तिर्विष्णोर्ज्ञात्वेतरेषुच तदपेक्ष्याविफल्गुमात्रज्ञानतद्भेददर्शनं अनाद्यनंतोभेदोयंस्वभावःपरजीवयोः स्वतोवापरतोवापिनकदाचित्प्रणश्यति एवं ज्ञानवतांविष्णुर्बहुजन्मनदास्यति अनुवृत्तिर्यद्यनल्पासाहिसर्वेश्वरःप्रभुरिति अनेनकथमनुवर्तिनांभवभयंतवभ्रुकुटीसृजतिमुहुर्नृणामित्येतदर्थोविवृतः तथाहि यथातवगुणविधानसामर्थ्यंतथाअनुकूल भूतत्वत्प्रसादानुपार्चिनां मुहुर्निरंतरंसेवमानानांतवभ्रुकुटीभवभयंकथंसृजति नकथमपिप्रत्युतनिर्मूलयतीत्यर्थः यःपाताजनिताचैवकल्पकोनित्यपोषकः प्रापकःसर्वदेवानांपदानांपुरुषोत्तमः स वेदेवाभिधावाच्योभूतभव्यभवत्प्रभुः विचार्यःसर्वदेवेशैस्तंब्रह्माद्यायजंतिच त्रिगुणात्मकस्रष्टारस्तथापिनयजंतितं यतःपूर्णेशशक्त्यैवतेषांयजनमिष्यते अतःसर्वेश्वरोविष्णुरेकएवमहागुणइत्यनेनब्रह्मादी नामसंबद्धगुणत्वंस्वातंत्र्येणसर्वकर्तृत्वमित्यादिकंदूरतोऽपहास्तितमितिज्ञातव्यम् १९ ३३

यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनइतिश्रुतेः देवाअपिसुयोगाद्यायर्ततेसर्वसाधनैः पुत्रदारादिभिःसार्धनोच्छ्वसंतीहसंसृतौ गुरोरनुग्रहमृतेसाधनंनहरेःप्रियं गुरूपदेशात्तुहरिंप्राप्नोत्येवनसंशयइतिस्मृत्यनुगृहीतायाःश्रुतेः अभिप्रायगर्भस्यइहभवभ्रमणेष्वित्यादिश्लोकद्वयस्यअयमभिसंधिः हेऽजितभक्तभक्त्यावशीकृत जयोविष्णोश्चवायोश्चभक्त्यातत्प्रीतिसाधनं जगदीशयोःकुतोह्येनोःसर्वशक्त्योर्वलाज्जयइतिवचनात् भक्तिलक्षणसाधनसामग्र्याविष्णोःप्रसादोजयोनाम हेहरेयइहसंसारेव्यसनशताब्धितारंगुरोश्चरणमपहायहृषीकवायुभिरुदात्तमहत्तुरगैः कर्माणियतंतीत्यन्वयः व्यसनानांशतमेवाब्धिर्व्यसनशताब्धिःतंतारयतीतियःतं षण्णवत्यंगुलोयस्त्वित्यादिलक्षणोपेतस्यगुरोश्चरणमितिसेवेहलक्ष्यते तासेवात्यक्त्वाउदात्तःसारथिः रथोपरिस्वीकरणादुदात्तःसारथिर्मतइतिवचनात् वायुरेवोदात्तोयेषांतेतथा पृथक्पदत्वंछांदसं हृषीकाण्येव महांतस्तुरगामहत्तुरगा.महादेशाभावश्छांदसः २० ३४ तैस्सेउच्छ्वसंतिनिःश्वसंतीत्यन्वयः अत्रदृष्टांतः जलधावकृतकर्णधराःअकृतकर्णधरःकर्णधारोयैस्तेतथा वणिजःसांयात्रिकाइवेत्यर्थः पतमाना.कीदृशाःस्वजनसुतात्मदारधनधामधराःस्वजनसुतादिमरणोपेताःआत्मादेहः धामगृहं जितहृषीकइत्येकंवापदंउक्तमेवविवरणं येचदेवकल्पाःपुरुषाःभवचरणेषुभवाद्विषयेषुकर्मसु सुजातभुवःसुष्ठुजातस्थानाः उत्तमयोग्यतायुक्ताःहृषीकलक्षणवायुसारथियुक्ततुरगैरतिलोलंबुद्धिचांचल्यंविनानिष्कामत्वेनयतंतितेस्वजनादियुक्ताउच्छ्वसंति उत्कृष्टंश्वसंतिप्राणंतिजीवंतीत्यर्थः श्वसप्राणनइतिधातुः किंकृत्वा गुरोश्चरणमपहायहानंत्यागमपाकृत्य गुरुचरणनिषेवणंकृत्वेत्यर्थः मास्त्वकृतःकृतेनेतिश्रुतेरकृतोभगवानेवकर्णधारोयेषांतेतथा दैवानुकूलकर्णधाराइत्यर्थः तेउपायविदःसुयोगज्ञाः किंतुनृणांयानिविहितानिसाधनानिसुखशांतिमतित्वयि सुखस्यापिसुखं

इहभवभ्रमणेषुसुजातभुवोजितहृषीकवायुभिरुदात्तमहत्तुरगैः ॥ यइहयतंत्यनतिलोलमुपायविदोव्यसनशताब्धितारमपहायगुरोश्चरणम् २० ३४ वणिजइवोच्छ्वसंत्यकृतकर्णधराजलधौस्वजनसुतात्मदारधनधामधराः ॥ सुखशांतिमतित्वयिहिसंतिहिनतानिनृणांविभवउद्यतिश्रयतआत्मनिसर्वरसे २१ ३५ इतिसदजानतांमिथुनतोरतयेचरतांसुखयतिकोन्विहाद्यविजनेस्वनिरस्तभगे ॥ भुविपुण्यतीर्थसदनान्यृषयोनिविशंत्यतस्त्वानुभवतःपदांबुजं हृदाघभिदंदधाति ॥ सकृन्मनस्त्वयिचिदात्मनिनित्यसुखेनपुनरुपासतेपुरुषसारहरावसथम् २२ ३६

शंदुःखमिश्ररहितसुखमित्यर्थः तस्यांतिमतिपूर्तिमतिपूर्णसुखेइत्यर्थः यस्मिंस्त्वयिनसंतिहि गुर्वभावात्तस्माद्विभवेविगतसंसारेदेहाभिमानरहितेजीवन्मुक्तेगुरावुद्यति उपदिशतिसाधनजातमुपदिशतिसति सर्वरसेसर्वस्मात्सारभूते आत्मनिपरमात्मनि श्रयतएव तत्साधनसर्वस्वंतत्प्रीतिजनकत्वेनश्रीहरिंविषयीकरोतीत्यर्थः षण्णवत्यंगुलोयस्तुतालास्योदशतालकः दशपादेशकःसप्तपदोहस्तचतुष्टयः कलमत्रयांगुलश्चैववाग्मीसंदेहवर्जितः .वासुदेवैकशरणोगुरुरित्युच्यतेबुधैः गुरुलक्षणसंपूर्णःसाक्षादेकश्चतुर्मुखः ततःशेषेंद्रवह्न्याद्याःक्रमादेवप्रकीर्तिताः इत्यादिवाक्यमत्रप्रमाण देवायोग्यतयाजाताविष्णुपादांबुजाश्रयाः तथापिसाधनैस्तेषांतत्प्राप्तिर्गुर्वनुग्रहादितिच २१ १५ ब्रह्माज्ञात्वेतिलोकप्रवृत्तिप्रवर्त्ततांकोनुमोक्षंददाति अतोब्रह्मोपासतेसाधुधीरानाहंभावस्तेपुरुद्राधिवासइतिश्रुतेः महाभाग्यंतुकैवल्यमज्ञानांकःप्रदास्यति अतःसंतोविजानंतिहारितेत्वनहंकृताइतिस्मृत्यर्थसंग्राहिण्याअर्थरूपस्य इतिसदजानतामित्यस्यश्लोकस्यायमर्थः इतिशब्दःप्रकारवचनः इतिलोकेदृश्यमानप्रकारेणसद्ब्रह्मअजानतांब्रह्माज्ञानिनांमिथुनतःस्त्रीपुंसभावेनरतयेग्राम्यधर्मांचरतांप्रवर्त्तमानानांकोनुपुरुषः अद्यइहविजनेमोक्षविषयेसुखयति नकोपिमोक्षंददातीत्यर्थः कीदृशेविजने स्वनिरस्तभगेसुष्ठुअनिरस्तोभगऐश्वर्यादिगुणोयस्मिन्सतथातस्मिन्यतस्त्वदज्ञानिनापरमानंदलक्षणमोक्षभावः अतःभुविस्थाने पुण्यंशुद्धिकरंतीर्थंशास्त्रमेवसदनंशरणंयेषांतेतथा तेऋषयोदेवादय. त्वामेवसंतंज्ञात्वाभवतःपदांबुजंहृदानिविशंति कीदृशंअघभिदंपापनाशनं किंचमनोमननसमर्थमंतःकरणं नित्यसुखेचिदात्मनित्वयिदधातिच अत्रप्रधानसाधनमाहुः हेपुरुषसारपुरुषोत्तमपुनश्चपश्चात् हरस्यरुद्रस्यावसथंअहंकारं सकृदपिनोपासतेनकुर्वंतीत्यर्थः २२ ३६

पज्जीवमीशंमवदंतितकैंस्तच्चेश्वरोवचनंसंदधाति नासीदादौमरणेनोभविष्यन्मृषाततोहीशितृत्वंस्वंपेष्वितिश्रुत्यर्थंद्योतकस्यस्मृत्यनुगृहीतस्यइदमप्यथोवदंतिचेदित्यादिश्लोकस्येदंतात्पर्यं इदंजगत् नपातीत्यपःपापालनेइतिधातुःसोस्यास्तीत्यपिअनीश्वरमित्यर्थः अपिगर्हितमसत्यंअतएवाप्रतिष्ठमितिवा असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरमित्यादेः नमत्तोन्यईश्वरश्चेतनत्वादित्यादितर्कैर्वदंतिचेदथो तस्मात्कुतः सर्वात्मनाएतदपिवचनंभगवत्प्रेरणयेत्यवगंतव्यं तर्हितर्कःप्रामाणिकःस्यादितितत्राह नन्विति तर्कांव्यभिचरंतिनन्वित्यन्वय.अत्रव्यभिचारित्वंपक्षधर्मत्वादिलक्षणाभावः तथाहि विशिष्टपक्षीकारस्यसिद्धांतविरुद्धत्वादनुपपत्तिः निर्विशेषेश्वरपक्षीकारेहेतोरसिद्धिरित्यादिदूषणमुपेक्ष्याचार्यैःकालात्ययापदिष्टत्वंप्रादर्शि वेदोक्तोजीवव्यतिरिक्तेश्वरोनतर्कैरपनेतुंशक्यः यतस्तर्काव्यभिचारिणइति अनश्नन्नन्योअभिचाकशीतिश्रुतेः जीवेश्वरौविरुद्धधर्माक्रांतत्वेनभिन्नौ छायातपवदित्यादेश्च दूषणांतरमाह क्वचिदिति अभेदस्यासिद्धावसिद्धौचतर्कस्यविशेषानापादकत्वेनाप्रयोजकत्वात् अपिपासो.पयःपानवत् भोजनस्येष्टसाधनत्ववर्कोज्वरितादौव्यभिचार्यत्वेनव्यर्थश्च सर्वशरीरसमवेतसुखदुःखानुसंधातृत्वेनकायपरिमाणोजीवइतिक्षपणकदर्शनपरिकल्पितस्तर्कोपिमृषैव अणुशरीरस्थस्यकर्मादिवशाद्धस्त्यादिशरीरप्राप्तौविकारित्वापत्ते. ननुतर्हितर्कैःप्य.किंप्रयोजनमत्राह ततइति यतोदुष्टास्ततोभयदृग्व्यवहितयेभयबुद्धीनांबुद्धिव्यवधानायतर्काभवंतिनतुधीराणां विदुषां ननुकिमितिप्रवृत्ताइतितत्राह विकल्पइति विर्निषेधेपृथग्भावइतिवचनात् विकल्पोवेदविरुद्धकल्पना जगतोमिथ्यात्वं जीवस्यब्रह्मणोऽभेदे।जगत् क्षणिकषड्गुणईश्वरइत्यादिलक्षणांधपरंपरयैवान्वहमुषितः प्रवर्तित: अंधेनैवनीयमानायथांधाइतिश्रुतिः अधपरंपरायाश्चकोवलंबइतितत्राह भ्रमतीति भारतीवेदवाणीचभ्रमतिबहुधावक्ति तात्पर्यार्थावबोधाकुशलानज्ञानुद्दिश्येतिशेषः इ

**इदमप्यथोवदंतिचेन्ननुतर्काव्यभिचरंतिक्वचित्क्वचिन्मृषाच ॥ ततोभयदृग्व्यवहितयेविकल्पउषितोन्वहमंधपरंपरयाभ्रमतिभारतीचतवोरुवृत्तिभिरुढजवा२३ ३७ नयदिदमग्रआसनभविष्यदतोनिधनादनिमित्तकमंतरात्वयिविभातिमृषैकरसे ॥ अतउपगीयतेद्रविणजातिविकल्पपथैर्वितथमनोविलासमिदमित्यवयंतिबुधाः २४ ३८**

तिपस्मात्तस्मादंधपरंपरा बहूक्तिरन्यथाज्ञप्ति परिवृत्तिश्चकथ्यते भ्राम इत्येवविद्वद्भिस्तथाचंक्रमणंक्वचित् इत्यतोभ्रमस्यबहूक्तित्वंसिद्धं वेदस्यबहुधोक्ते.किंकारणमत्राह तवोर्विति उरुशब्देनानंतत्वंवृत्तिशब्देनगुणकर्माणिविवक्ष्यंते भवतोगुणकर्मणामनंतत्वात्तानिवक्तुमूढजवात्वरावतीवेदवाणी अतोवेदेपिबहुधावचनात्तदर्थनिर्णयशक्त्यभावात्योग्यतावशाद्विपरीतप्रतीतेश्चविरुद्धकल्पनायुक्ताअंधपरयाऽसुराणाम् २३ ३७ जीवस्येश्वरत्वेबाधकमाह नेति इदमीश्वरत्वमग्रेउत्पत्ते पूर्वंजीवेषुगर्भस्थेषुनासनास्ति नभविष्यत् यदिगर्भस्थईशोभवेत्तर्हिउत्तरत्रापिअभविष्यत् नचतथेति यस्मादतोनिधनान्मरणादनंतरमपिनरकादिगमनान्नविद्यतइत्यर्थः ननुअस्येशोहमितिकिंनिमित्ताप्रतीतिरत्राह अनिमित्तकमिति अःविष्णुर्निमित्तंयस्यतत् अनिमित्तकंभगवन्निमित्तकमेव तस्यजन्ममरणयोरंतरामध्येत्वयिजीवेमृषैवेशितृत्वंभाति नतुवस्तुतः त्वंजीवः कुतः एकरसेप्रधानसारेनचवस्तुतः जीवःसर्वोत्तमसारः मृषैवतथामन्यते अतोभ्रांतिरेवतथाज्ञानेप्रयोजकेत्याह अतइति यतोजीवःसर्वसारोनभूयादतोद्रविणजातिविकल्पपथैर्जीवउपगीयतइत्यन्वयः भ्रांत्याजीवोद्रविणवान् अभिजातिमानित्यादिसाक्षिविरुद्धकल्पनामार्गैःकथ्यतेअज्ञैरितिशेषः विद्वद्भिस्तुभवानेवद्राविणदिमानित्युच्यते कुतः यतस्तपोदमाद्याअभिजन्मकारणभूताःगुणाःश्रवतएव कथमेतदितितत्राह वितथेति यतोभिजात्यादिगुणास्तवमुख्याःअतइदंजीवस्येश्वरत्वंबुधास्तत्त्वज्ञानिनोवितथमनोविलासंमिथ्यामनोविकारमित्यवयंतिजानंति गुणाएताभिजात्याख्यास्तद्वानेवाभिजातिमान् अतोभिजात्यवान्विष्णुस्तदन्येतूपचारतइतिवचनात् येजगत्प्रवदंत्यज्ञाजीवादन्येशवर्जितम् तेषामपितुतांवाचभीशएवददात्यजः नचतर्कैर्भेदेदीशोजीवोवेदनिरोधतः इत्यादिस्मृत्यर्थत्वेनश्रुत्यंतरमप्यूह्यम् २४ ३८

---

१ स्वपतीतिस्वपाःजीवास्तेष्वित्यर्थइतिदीपिका।

स्मरन्ब्रह्मगुणान्नित्यमुक्तोब्रह्मसरूपताम् दुर्भगांप्रकृतिंत्यक्त्वाहरत्वाचान्यांदुरन्वयाम् यातितच्चपरेशानात्सहिपूज्योथपूजकः तस्यैकस्यस्वतंत्रत्वात्सचानंतगुणोविभुरितिश्रुत्यर्थरूपस्यउदगात्पुमानित्य स्यायमर्थः अनुशब्दोविकल्पार्थः श्रुतिष्वनुगीतगुणान् चशब्दात्त्वत्कर्माणिचजुषन् तदनुगुणस्मरणमनु उदगात्संसारादितिशेषःअस्मात्संसारान्मुक्तोभवतीत्यर्थः तवसरूपतांचभज ति कश्चित्सायुज्यंकश्चित्सारूप्यंकश्चित्सालोक्यंच यद्वागुणस्मरणमनुगुणाननुकूलान्प्रातरादिकालविशेषान्जुषन् यद्वायंपुमान् परमेणत्वयात्तभगाम् अपहृतप्रयत्नलक्षणशक्तिमातिस्विर्कीपूर्वोक्तां द्विविधांनीचांतांप्रकृतिंजहातीत्यजाति जिहातिहंतिच तदुभयमपित्वमेवजहास्युताजिहासिच उतत्यागवधयोःसमुच्चयोर्थः जिहातिरावणंसंख्येराघवःपरमात्मविदितेच स्वातंत्र्यात्प्रकृतित्यागकर्ता नारायणःपरः यद्यप्येषाजीवसंस्थाहंताचभगवान्प्रभुरितिच किंच महसिअसुरजनमोहनायशिवादीन्पूजयसि महीयसेचसुरजनेनपूज्यसेच अणिमाद्यष्टगुण.व्याप्तगुणोवा अशूव्याप्ताविति धातुः अपरिमेयभगः दुर्ज्ञेयपरमैश्वर्यादिगुणः २६ ३९ यदिनसमुच्चरंतीत्यस्यायमर्थः यदियतयोपिहृदिकामजडात्जडशरीराविष्टकामात् नसमुच्चरंतिसम्यङ्नोद्गच्छंति नोत्थिताभवंतिविष यकामाःस्युरित्यर्थः तर्हिहृदिगतोपितेषामसतामप्रशस्तकर्मणांपुंसांदुरधिगमोदुर्ज्ञेयःअस्मृतकंठमणिरितिलुप्तोपमाविस्मृतकंठमणिःपुरुषोयथाकंठस्थितंमणिंनजानातितथेत्यर्थ. अनेनसयथाका मोभवति तत्क्रतुर्भवतितत्कर्मकुरुतेतदाभिसंपद्यतइतितुकामयमानइत्येताद्विवृतंहेभगवन् अनुतृप्तयोगिनांअनुतृप्तानांविषयालंबुद्धिप्राप्तानांनिष्कामानामित्यर्थःनिवृत्तिमार्गस्थानांपुंसांभवतोधीनादन धिरूढपदात्अनारूढवैकुंठादिब्रह्मस्थानादज्ञानामनवगतादज्ञातादंतकात्कालादिलक्षणादभयोऽभयप्रदःपूर्णानंदादिलक्षणांमुक्तिंददातीत्यर्थः इंद्रियाभिमानिदेवानांवियोगाभावलक्षणांच अमुनाच

**उदगात्पुमाननुगीतगुणांश्चजुषन्भजतिसरूपतांतदनुत्वमुतजहासिजिहासिताम् ॥ अहिरिवत्वचंपरमात्तभगांमहसिमहीयसेष्टगुणोऽपरिमेयभगः २६ ३९ यदिनसमुच्चरंतियतयोपिहृदिकामजडाद्दुरधिगमोऽसतांहृदिगतोऽस्मृतकंठमणिः ॥ अनुतृप्तयोगिनामभयोभगवन्ननवगतांतकादनधिरूढपदाद्भवतः २६ ४० तदवगमार्थसितासितयोर्गुणविगुणयोर्नहिदेहभृतांसगिरः ॥ अनुययुरत्रहंसकुलगीतपरंपरयानतुषावरणाइवरजांसिवांति ॥ वयसासहयच्छ्रुतयस्त्वयिसफलंपतंतिनपतंतिबंधनाः २७ ४१**

यथा कामयमानोयोकामोनिष्काम आप्तकाम आत्मकामोनतस्यप्राणाउत्क्रामंति ब्रह्मैवसन्ब्रह्माप्येतीतिश्रुतिव्याख्यानम् अस्याःश्रुतेःविशेषार्थः निषिद्धकामयुक्तानामसतांतुविशेषतःदुर्ज्ञेयोभगवान्वि ष्णुर्हृदिस्थोऽस्मृतहारवत्इत्यादिवाक्यादेवअवगंतव्यः देवाश्चऋषयश्चैवसुभक्त्याकामिनोपितु इत्यादिनाकामित्वेयतित्वमप्रयोजकमित्युक्तम् २६ ४० सकलश्रुतिस्मृतिभावसंग्रहात्मनस्तदवग मार्थसितासितयोरित्यस्यायंभावः देहभृतांजीवानांसागिरःगिरावाचासहिताःश्रोत्रादयः गुणविगुणयोस्तदवगमायासितासितयोर्नानुययुर्हीत्यन्वयः द्वितीयार्थेषष्ठी गुणरूपाश्रीःविगुणोनिर्गुणोविष्णु स्तौपूर्वप्रस्तुतोविष्णुस्तच्छब्देनपरामृश्यते तस्यहरेरवगमोयस्याःसातदवगमातयाश्रियाध्यैतेज्ञायतेसम्यगित्यर्थःपरमस्तेनसिताबद्धासर्वदातदधीनत्वेनवर्तवेइतिश्रीःअसितोऽबद्धोनित्यमुक्तोविष्णु स्तौश्रीश्रीधरौनानुययुःआनुकूल्येनयथास्थितरूपगुणविषयत्वेननप्रापुःतद्विषयीकरणोपायमाह अत्रेति अत्रजीवराशौ हंसकुलगीतपरंपरयेति हंसानांब्राह्मणानांकुलेनगीतस्यउपदिष्टस्यज्ञानस्यप रंपरयाइंद्रियाण्यनुययुश्चश्रुतयश्चानुययुरित्युपसंख्यानंकर्तव्यम् अत्ररजांसीति रजःशब्दोपादानाद्रजोगुणप्रधानामनुष्याउपलक्ष्यंते तुषाआवरणंकवचंयेषांतेतुषावरणाः.तुषावरणास्तंडुलपदार्थाःरजां सीवयथाधूलीर्नवांतिनस्पृशंतीत्यर्थ. तथाचश्रुतयः वयसामहताकालेनसहरजोरूपान्मनुष्यान्नवांतिप्राप्तफलान्नकुर्वंतीतियदतोबध्नंतीतिबंधनाःविधिनिषेधरूपेणपुरुषंबध्नंत्यः श्रुतयः सात्विकानामर्थेत्व यिसफलंपतंति त्वद्गुणगणान्प्रकाशयत्वदुपासकानाम् पुरुषार्थहेतवोभवंति राजसानांबुद्धिव्यामोहकत्वेनत्वयिनपतंतिपुरुषार्थःहेतवोनस्युरित्यर्थ. अनेन ज्ञानातिप्रकृतिर्विष्णुर्ज्ञेयोविष्णुश्चनिर्गुणः

तावुभौनविजानंतिअतेब्रह्मपरंपरामितिमहोपनिषद्विवृता अन्येसर्वेश्रियाबद्धाःश्रीर्बद्धाविष्णुनैवतु बंधश्चविष्णुतंत्रत्वंमुक्तानांचश्रियस्तथेत्यादिगारुडपुराणार्थोपिसंगृहीतः २७ ४१ इतिशब्दआदिवचनः एवमादिश्रुत्यागीतमात्मानुशासनं ब्रह्मज्ञानमाश्रुत्यश्रुत्वा हृदिकृत्वा आत्मनःपरमात्मनोगतिंस्वरूपस्थितिंज्ञात्वा ४२ व्योमायनमहात्मभिः ब्रह्माश्रयेषूत्तमैः तैःपूर्वजैःसनकादिभिः अशेषाणासमीचीनानांआम्नायानापुराणानामुपनिषदांचरसः सारइतिसमुद्धृतः ४३ ब्रह्मदायादब्रह्मपुत्रनारद काम्यानांनिधनंनाशकरं यद्वा कामानामभीष्टानाफलानांनिधनकुलगृहंवा निधनोस्त्रीकुलेनाशेनिद्विशेकूरस्वह्योरितिपादवः ४४ पूर्णःस्वतस्तृप्तः ४५ सर्वभूतानाधाताधृतिपोषणयोःकर्ता यःसर्वभूतानामितिमस्तुतास्तेजीवाः यस्यतवकलाःप्रतिबिंबाशा ४६ ऋषिरूपत्वाहषिः ४७ अत्रनारदेनव्यासायकथाकथनंस्तुत्यर्थंनतुज्ञापनाय कथाःकथयतीशस्यव्यासस्यांतेसनारदः स्तुत्यर्थंतस्यदेवस्यज्ञापनायनतुकचिदित्यादि ४८ त्वयायःप्रश्नःकृतः तत्प्रश्नवचनमुद्दिश्यैतत्परिहारव

श्रीभगवानुवाच ॥ इत्येतद्ब्रह्मणःपुत्राआश्रुत्यात्मानुशासनम् ॥ सनंदनमथानर्चुःसिद्धाज्ञात्वात्मनोगतिम् ४२ इत्यशेषसमाम्नायपुराणोपनिषद्रसः ॥ समुद्धृतःपूर्वजैस्तैर्व्योमायनमहात्मभिः ४३ त्वंचैतद्ब्रह्मदायादश्रद्धयात्मानुशासनम् ॥ धारयन्भजमेकामंकामानांनिधनंनृणाम् ४४ एवंसगुरुणादिष्टो गृहीत्वाश्रद्धयात्मवान् ॥ पूर्णःसवस्ततोराजन्प्राहवीरव्रतोगुरुम् ४५ नारदउवाच ॥ नमस्तस्मैभगवतेकृष्णयामलमूर्तये ॥ योधातासर्वभूतानामभ योयस्यतेकलाः ४६ इत्याद्यमृषिमामंत्र्यतच्छिष्यांश्चामहात्मकान् ॥ ततोऽगादाश्रमंसाक्षात्पितुर्द्वैपायनस्यमे ४७ सभाजितोभगवताकृतासन परिग्रहः ॥ तस्मैतद्वर्णयामासनारायणमुखाच्छ्रुतम् ४८ तदेतद्वर्णितंराजन्यश्चप्रश्नःकृतस्त्वया ॥ येनब्रह्मण्यनिर्देश्येनिर्गुणेपिमनश्चरेत् ४९ यो ह्यात्माजगदादिमध्यनिधनोयोऽव्यक्तजीवेश्वरोयःसृष्ट्वेदमनुप्रविश्यऋषिणाचक्रेपुनःसंहिताम् ॥ यंसंपद्यजहात्यजामनुशयीसुप्तःकुलायंतथातंकैवल्यनिर स्तयोनिमभयंध्यायेदजस्रंहरिम् ५० ॥ इतिश्रीभागवतेमहपुराणेदशमस्कंधेउत्तरार्धेश्रुतिगीतेचतुर्नवतितमोऽध्यायः ॥ ९४ ॥ राजोवाच ॥ सभाजयि त्वाबहुधाश्रुतेदेवंश्रियःपतिः ॥ आगतोद्वारकांभूयःकिंचकारमहामुने १ ॥ श्रीशुकउवाच ॥ उपप्लाव्यंगतान्पार्थान्गोग्रहेजितकौरवान् ॥ शुश्रावतीर्णसम यान्बलेनमहतावृतान् २ संप्रहृष्टमनाःकृष्णोमहत्यासेनयावृतः ॥ सात्यकिंकृतवर्माणमुद्धवंशठसारणौ ३ अभिमन्युंचसौभद्रंपुरस्कृत्यमहामतिः ॥ अक्षौहिण्याप्तनयासहितःसत्यसंगरः ४ शंखदुंदुभिनिर्घोषैर्द्रष्टुंप्रायाद्युधिष्ठिरम् ॥ संधिमिच्छन्कौरवाणांकुर्वाणंदौत्यमच्युतम् ५ मूढोग्रहीतुमारेभे विनाशिष्णुःसुयोधनः ॥ सतत्रानंतरूपत्वंदर्शयित्वामहाभुजः ६

चनंवर्णितं येमवर्णितप्रकारेणानिर्देश्येनिर्गुणेब्रह्मणिमनश्चरेत् तथेति ४९ उपासनार्थंस्वलक्षणलक्षयति योहीति आत्माजगदादिमध्यनिधनानिउत्पत्तिस्थितिसंहाराःयस्मात्सतथायश्चाव्यक्तजीवयोःप्रकृतिचेतनयोरीश्वरः यश्चेदंसृष्ट्वा ऽनुप्रविष्टःयश्चऋषिणाऋषिरूपेणपुराणसंहितांचक्रे अनुशयीजीवः यंपुनःसंपद्यप्राप्यअजांबंधकशक्तिजहाति सुप्तःकुलायंशरीरादावभिमानचयथात्यजतितंकैवल्यनिरस्तयोनिंसमाधिकाभावेननिराकृतकारणंतंहरिंअजस्रंनिरंतरंध्यायेदित्यन्वयः ५० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउ० विजयध्वजकृतपदरत्नावल्यांचतुर्नवतितमोऽध्यायः ९४ पांडवकौरवयुद्धकथनव्याजेनश्रीकृष्णमाहात्म्यंप्रदर्शयत्यस्मिन्नध्याये तत्रराजापृच्छति सभाजयित्वेति १ गोग्रहेगोग्रहणे तीर्णवनवासाज्ञातवासलक्षणसमयान् २ ३ सत्यसंगरःसत्यप्रतिज्ञःसत्ययुद्धोवा ४ ५ ६

विभीषिकांभयं ७ अनुयुज्यंतेअनुयुक्ताःक्रियंते ८ ९ १० ११ १२ मातृसोदराः मातृपक्षेणसोदराः १३ १४ १५ १६ १७ १८ व्यूहांशिबिरं १९ २० २१ २२ योगमाय

कृत्वाविभीषिकांघोरांपांडवान्पुनराययौ ॥ विवृद्धमत्सराःसर्वेराजानोजातमन्यवः ७ युद्धायैवानुयुज्यंतेनसंधिमनुकांक्षिणः ॥ युधिष्ठिरस्तुधर्मात्मापुर स्कृत्यजनार्दनम् ८ कुरुक्षेत्रंययौराजन्युद्धायभ्रातृभिःसह ॥ अक्षौहिण्याविराटोपिमत्स्यराजोमहामनाः ९ युधिष्ठिरमनुप्रायात्सपुत्रःकुरुसत्तमः ॥ द्रुपदश्चशिखंडीचधृष्टद्युम्नश्चदुर्जयः १० अक्षौहिणीभिस्तिसृभिरनुजग्मुर्युधिष्ठिरम् ॥ अक्षौहिण्यापरिवृतःसात्यकिर्युद्धलालसः ११ नियोगाद्वासुदेवस्य मायादनुयुधिष्ठिरम् ॥ अक्षौहिण्यापरिवृताःकैकेयाःपंचभूभृतः १२ अनुजग्मुर्धर्मपुत्रंराजानंमातृसोदराः ॥ धृष्टकेतुस्तदाराजाशैब्यश्चनरपुंगवः १३ अन्वयातांनृपश्रेष्ठावक्षौहिण्यायुधिष्ठिरम् ॥ तेगत्वापांडवाःसर्वेनारायणपुरोगमाः १४ स्वैरमूषुःकुरुक्षेत्रेप्रतीक्षंतःसुयोधनम् ॥ सुयोधनो पिकौरव्यमानीभ्रातृशतैर्वृतः १५ द्रोणभीष्मकृपद्रौणिकर्णबाह्लीकसौबलैः ॥ हार्दीकसाल्वमद्रेशभगदत्तजयद्रथैः १६ अन्यैश्चराजशार्दूलैर्ना नादेशसमुद्भवैः ॥ शंखदुंदुभिनिर्घोषैर्भेरीपटहनिःस्वनैः १७ पूरयन्ककुभोवीरःप्रययौकंपयन्महीम् ॥ तेसमेत्यकुरुक्षेत्रेराजानःकुरुपांडवाः १८ स्थ मंतपंचकेचक्रुर्व्यूहमुद्यतिभास्करे ॥ अक्षौहिण्यःकौरवाणामेकादशदुरात्मनाम् १९ सप्तपांडुसुतानांचकर्शितानांवनेभृशम् ॥ तथाव्यूहेष्वनीकेषुता वकेष्वितरेषुच २९ गांडीवधन्वीकवचीबद्धतूणतलत्रवान् ॥ आरूढस्यंदनःपार्थोददर्शरिपुवाहिनीम् २१ उपाध्यायान्पितॄन्भ्रातॄन्मातुलान्स्वास्त्रिया न्सुतान् ॥ शिष्यान्सपौत्रान्दौहित्रान्श्यालान्संबंधिबांधवान् ॥ दृष्ट्वानिर्वेदमापन्नोहंतुंनैवाकरोन्मनः २२ तंविषण्णमनश्चित्तंक्ष्पालुमविघातिनम् ॥ प्रबो ध्यप्रेरयामासकेशवोयोगमायया २३ त्यक्तशस्त्रायशांतायबंधून्प्रतिक्ष्पालवे ॥ दर्शयामासपार्थायविश्वरूपंजनार्दनः २४ संबोधितःकंसभिदातथा वासवनंदनः ॥ भूयोजग्राहकोदंडंयुद्धायाच्युतसारथिः २५ प्रारब्धंभारतंयुद्धंश्रुत्वासंकर्षणोबली ॥ अशक्नुवन्वारयितुंकिंकरोमीत्यचिंतयत् २६ प्रवृत्तंभारतंयुद्धमवेक्ष्योद्वेगविह्वलः ॥ तीर्थव्याजेनतत्याजरामःपरिचितांभुवम् २७ सेनापतिःपांडवानांधृष्टद्युम्नोमहारथः ॥ गांगेयोधार्तराष्ट्राणांवृद्धः कुरुपितामहः ॥ सकुर्वन्नाहवंघोरंनिहतोदशमेहनि २८ भारद्वाजंततोद्रोणंसेनापत्येसुयोधनः ॥ न्ययोजयत्सयुयुधेदिवसान्पंचभूपते २९ तस्मिन्युध्य तिदुर्धर्षेसैंधवेनदुरात्मना ॥ अभिमन्युस्तवपितानिहतोरणमूर्धनि ३० पुत्रशोकाभिसंतप्तःप्रतिजज्ञेधनंजयः ॥ जयद्रथंहनिष्यामिश्वोभूतइतिभारत ३१ तस्यांनिशायांगोविंदस्त्वारुह्यगरुडंहरिः ॥ सुप्तमर्जुनमादायकैलासमभिजग्मिवान् ३२ तत्रगत्वाविरूपाक्षंदृष्ट्वासंभाष्यवांछितम् ॥ साधयित्वा र्जुनस्याशुस्वायोधनमुपाययौ ३३ ततोपरदिनेयुद्धमासीद्घोरंजनक्षयः ॥ मम्रुर्महीभुजस्तत्रबहवोबाहुशालिनः ३४

पासवरूपसामर्थ्येन २३ २४ २५ २६ परिचितामागम्यस्तां २७ २८ २९ ३० ३१ ३२ विरूपाक्षंरुद्रं ३३ जनक्षयश्चासीत् ३४

३५ ३६ ३७ ३८ ३९ अर्धदिनोनैःअष्टादशदिनैःअर्धदिनसहितैःसप्तदशदिनैः ४० ॥ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांपंचनवतितमोऽध्यायः ॥ ९५ ॥ सितकेशावेशिनोबलभद्रस्यचरितंकृष्णमाहात्म्यानुस्यूतमेवातस्तदपिपुरुषार्थोपयोगिभवतीत्यनेनाध्यायद्वयेननिरूपयति तत्रादौश्रुतकृष्णवैभवोविस्मितमनाः राजाभगवंतंनमति अष्टादशेति मायया माहिम्ना व्यापादनंनिधनं विश्वात्मनेसर्वांतर्यामिणे १ हरिकथाश्रवणस्यप्रत्यक्षफलमाह शृण्वतइति वैक्लव्यंपारवश्यंकथाश्रवणतात्पर्यं विस्मयःस्मयभावः भीतिःविहिताकरणेप्रत्यवायबुद्धिः २ प्रबुद्धानिप्रफुल्लानि स्वविषयइतिशेषः ३ आत्माभोगायतनं आनंदनिर्भरःपूर्णानंदः ४ कृतार्थश्चेत्तूष्णींभवेतितत्राह अपिचेति किंचिदित्यव्ययं शब्दतोल्पमर्थतोमहांतमित्यतोवाव्ययः ५ ६ भो

हतेषुरणदक्षेषुराजपुत्रेष्वनेकशः ॥ जयद्रथोपिपार्थेननिहतोदिवसात्यये ३५ दिनानिपंचद्रोणोपिकृत्वायुद्धमतंद्रितः ॥ पंचमेहनिसंध्यायांधृष्टद्युम्नेनपातितः ३६ ततःसेनापतिःकर्णोभूत्वाचक्रेमहारणम् ॥ दिनद्वयांतेपार्थेनसचसंख्येनिपातितः ३७ शल्योऽप्यर्धदिनंकृत्वासेनापत्यमरिंदम ॥ मध्यंदिनगतेसूर्येधर्मराजेनपातितः ३८ युयुधातेततोवीरौगदयादीर्घवैरिणौ ॥ भीमदुर्योधनौकोपात्परस्परवधैषिणौ ३९ अष्टादशाक्षौहिणीनांतत्पतीनांचमृध्यताम् ॥ अष्टादशैर्दिनैरासीदर्धोनैःसंक्षयोमहान् ४० ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्द्धेपंचनवतितमोऽध्यायः ॥ ९५ ॥ राजोवाच ॥ अष्टादशाक्षौहिणीनांतावद्भिर्माययादिनैः ॥ व्यापादनंयेनकृतंतस्मैविश्वात्मनेनमः १ शृण्वतोमेकथास्तस्यचरितानिचसंवशः ॥ वैक्लव्यंविस्मयोभीतिर्वर्धतेमेपुनःपुनः २ मन्येप्रायेणपाप्मानंजीर्णममदुरत्ययम् ॥ इंद्रियाणिप्रबुद्धानिप्रसन्नंचमनोभृशम् ३ क्षुत्तृष्णेचप्रशांतेमेआत्माचानंदनिर्भरः ॥ प्रसादात्तवधर्मज्ञकृतार्थोऽहमिहाभवम् ४ अपिचश्रोतुमिच्छामिकिंचिदर्थंतपोधन ॥ युध्यतःसुहृदोदृष्ट्वानिवारितुमशक्नुवन् ५ तीर्थस्नातुंगतोरामःकिंचकारतपोधन ६ ॥ श्रीशुकउवाच ॥ तीर्थाभिषेकव्याजेनमध्यस्थःप्रययौकिल ॥ स्नात्वाप्रभासेसंतर्प्यदेवर्षिपितृमानवान् ७ सरस्वतींप्रतिस्रोतंययौब्राह्मणसंवृतः ॥ पृथूदकंबिंदुसरस्त्रितकूपंसुदर्शनम् ८ विशालंब्रह्मतीर्थंचचक्रंप्राचींसरस्वतीम् ॥ यमुनामनुयात्येषगंगामनुचभारत ९ जगामनैमिषंयत्रऋषयःसत्रमासते ॥ तमागतमभिप्रेत्यमुनयोदीर्घसात्रिणः १० अभिवंद्ययथान्यायंप्रणम्योत्थायचार्चयन् ॥ सोऽर्चितःसपरीवारःकृतासनपरिग्रहः ११ रोमहर्षणमासीनंशिष्यमैक्षन्महामुनेः ॥ प्रत्यवस्थायिनंसूतमकृतप्रह्वणांजलिम् १२ अध्यासीनंचतान्विप्रांश्चुकोपोद्वीक्ष्यमाधवः ॥ कस्मादसाविमान्विप्रानध्यास्तेप्रतिलोमजः १३ धर्मपालांस्तथैवास्मान्वधमर्हतिदुर्मदः ॥ ऋषेर्भगवतोभूत्वाशिष्योऽधीत्यबहूनिच १४ सेतिहासपुराणानिधर्मशास्त्राणिसर्वशः ॥ अदांतस्याविनीतस्यवृथापंडितमानिनः १५

जनादिनामानवसंतर्पणं ७ प्रतिस्रोतंप्रवाहाभिमुखं पृथूदकंनामतीर्थंत्रितस्यमुनेःकूपं ८ विशालमप्येकंतीर्थं ९ आभिमेत्याभिगम्य १० ११ प्रत्यवस्थायिनंआभिमुख्येनास्थितं प्रह्वणंनमनं १२ तान्विप्रानध्यासीनंतेषांमध्येउच्चासनेस्थितं माधवोमधुकुलोद्भवः प्रतिलोमजःविपरीतजन्मा १३ अस्मानिविद्वितीयापंचम्यर्थे १४ सेतिहासपुराणान्यधीत्यसुदुष्टस्यमतिजन्मनः १५

गुणायपुण्यफलप्रदानलक्षणायनभवंति एतदर्थंदुष्टनिग्रहार्थः १६ असद्वधान्निवृत्तोपि १७ मरणस्यावश्यंभाविन्वात् १८ ब्रह्मासनंब्राह्मणमध्येब्राह्मणयोग्यासनम् १९ अस्यनि धनंत्वयाअजानतेव यद्वा जानतावा । ब्राह्मणवधसमानदोषोवमित्याशयेनाह ब्रह्मेति भवतआम्नायोविधिर्निषेधशास्त्रिशास्त्रनियामक इदंकुरु नेदमिति नियतानास्ति कुतइत्यत्राह योगेश्वरस्येति २० विध्यगोचरत्वात्ऋषयःस्वहार्दंनिज्ञापयंति यदीति , यदिभवान्त्वंब्रह्महत्यायाएतत्पावनंशुद्धिलक्षणंपरिहारंचरिष्यति तर्हिलोकसंग्रहंकरिष्यति कुतोत्राह नेति २१ प्रथमेकल्पेउत्तमकल्पे यावान्विषयोविधिः सत्वेवविधिर्भवद्भिर्विधीयताम् २२ तस्यव्रतंदीर्घमायुःसत्वमिंद्रियंदूरश्रवणदूरदर्शनादिशक्तिमत्साधये किंबहुनायद्यदाशासितंकामितंतत्तत्साधयइत्याह आशासितमिति

नगुणायभवंत्यस्यनटस्येवाजितात्मनः ॥ एतदर्थोहिलोकेस्मिन्नवतारोमयाकृतः १६ वध्यामेधर्मध्वजिनस्तेहिपातकिनोऽधिकाः ॥ एतावदुक्त्वाभगवा न्निवृत्तोऽसद्वधादपि १७ भावित्वात्तंकुशाग्रेणकरस्थेनाहनत्प्रभुः ॥ हाहेतिवादिनःसर्वेऋषयःखिन्नमानसाः १८ ऊचुःसंकर्षणंदेवमधर्मस्तेकृतः प्रभो ॥ अस्यब्रह्मासनंदत्तमस्माभिर्यदुनंदन १९ आयुश्चास्याक्षयंतावद्यावत्सत्रंसमाप्यते ॥ अजानतेवाचरितंत्वयाब्रह्मवधोयथा ॥ योगेश्वरस्यभव तोनाम्नायोविनियामकः २० यद्येतद्ब्रह्महत्यायाःपावनंलोकपावन ॥ चरिष्यतिभवांल्लोकसंग्रहोनान्यचोदितः ॥ २१ ॥ बलभद्रउवाच ॥ चरिष्येवध निर्वेशंलोकानुग्रहकाम्यया ॥ नियमःप्रथमेकल्पेयावान्सतुविधीयताम् २२ दीर्घमायुर्बतैतस्यसत्वमिंद्रियमेवच ॥ आशासितंयद्यदुतसाधयेयोगमा यया २३ ऋषयऊचुः ॥ अस्त्रस्यतववीर्यस्यमृत्योरस्माकमेवच ॥ यथाभवेद्वचःसत्यंतथारामविधीयताम् २४ बलभद्रउवाच ॥ आत्मावैपुत्रउत्पन्न इतिवेदानुशासनम् ॥ तस्मादस्यभवेद्वक्ताआयुरिंद्रियवीर्यवान् २५ किंवःकामोमुनिश्रेष्ठाब्रूताहंकरवाणितत् ॥ अजानतश्चापचितिंयथाभेबुध्यतांबुधाः २६ ऋषयऊचुः ॥ इल्वलस्यसुतोघोरोबल्वलोनामदानवः ॥ सदूषयतिनःसर्वान्सत्रमेत्यचपर्वणि २७ तंपापंजहिदाशार्हतन्नःशुश्रूषणंपरम् ॥ पू यशोणितविण्मूत्रसुरामांसाभिवर्षिणम् २८ ततश्चभारतंवर्षंपरीत्यसुसमाहितः ॥ चरित्वाद्वादशान्मासांस्तीर्थस्नायीविशुध्यसे ॥ २९ ॥ इतिश्रीभाग वतेमहापुराणेदशमस्कंधेउत्तरार्धेबलदेवतीर्थयात्रायांषण्णवतितमोऽध्यायः ॥ ९६ ॥ श्रीशुकउवाच ॥ ततःपर्वण्युपावृत्तेप्रचंडःपांसुवर्षणः ॥ भीमो वायुरभूद्राजन्पूयगंधश्चसर्वशः १ ततोऽमेध्यमयंवर्षंबल्वलेनविनिर्मितम् ॥ अभवद्यज्ञशालायांसोप्यदृश्यतशूलधृक् २ तंविलोक्यबृहत्कायंभिन्नांज नचयोपमम् ॥ तप्तताम्रशिखाश्मश्रुदंष्ट्रोग्रभ्रुकुटीमुखम् ३ सस्मारमुसलंरामःपरसैन्यविमर्दनम् ॥ हलंचदैत्यदमनंतौतूर्णमुपतस्थतुः ४

२३ अस्त्रवीर्ययोरमोघत्वंमृत्योरनावृत्तित्वमस्मद्वचसश्चावंध्यफलत्वंयथास्यात्तथाविधीयताम् २४ पुराणानांवक्तापुत्रःस्यात २५ हेबुधाःयुष्माभिर्वरोदत्तइत्यजानतोमेपचितिंऽपरिहारंबुध्य ताम् २६ आपश्चित्तंविधातुमाहुः इल्वलस्येति २७ २८ २९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांषण्णवतितमोऽध्यायः ॥ ९६ ॥ १ २ तप्तताम्रवत्प्र काशमानाभिःशिखाश्मश्रुदंष्ट्रोग्रभ्रुकुटीभिर्युक्तंमुखंयस्यतत्तथातं शिखाश्चश्मश्रूणिचदंष्ट्राश्चउग्रभ्रुकुटीचाशिखाश्मश्रुदंष्ट्रोग्रभ्रुकुट्यःउग्राभ्रुकुटीउग्रभ्रुकुटी ३ ४

५ ६ ७ श्रियोधामानिअम्लानानिचपंकजानियस्यांसातथाताम् ८ यत सरोवरात् आस्रवत् अस्यंदत् ९ स्रोतेनप्रवाहेण १० शोणंनदं ११ सप्तशाखाभेदेनसमुद्रंगता सप्तगोदावरीताम् वेणींकृष्णवेणीं १२ १३ १४ १५ १६ १७ १८ अस्पृशत्ददौ स्थानंदूरंअनंतक्षेत्रं १९ धूर्जटेःशिवस्य २० २१ अनुतीर्थनामतीर्थं २२

तमाकृष्यहलाग्रेणबल्वलंगगनेचरम् ॥ मुसलेनाहनत्क्रुद्धोमूर्ध्निब्रह्मद्रुहंबलः ५ सोपतद्भुवनिभिन्नललाटासृक्समुत्सृजन् ॥ मुंचन्नार्तस्वरंशैलोयथाव ज्रहतोऽसुरः ६ संस्तुत्यमुनयोरामंप्रयुज्यापितथाशिषः ॥ अभ्यषिंचन्महार्हाभिर्वृत्रघ्नंविबुधायथा ७ वैजयंतींददुर्मालांश्रीधामाम्लानपंक जाम् ॥ रामायवाससीदिव्येदिव्यान्याभरणानिच ८ अथतैरभ्यनुज्ञातःकौशिकीमेत्यब्राह्मणैः ॥ स्नात्वासरोवरमगाद्यतःसरयुरास्रवत् ९ स्रोतेनसरयूं प्रायात्प्रयागमुपगम्यसः ॥ स्नात्वासंतर्प्यदेवादीन्जगामपुलहाश्रमम् १० गोमतींगंडकींस्नात्वाविपाशांशोणमाप्लुतः ॥ गयांगत्वापितॄनिष्ट्वागंगासाग रसंगमम् ११ उपस्पृश्यमहेंद्राद्रौरामंदृष्ट्वाभिवाद्यतम् ॥ सप्तगोदावरींवेणींपंपांभीमरथींतथा १२ स्कंदंदृष्ट्वाययौरामःश्रीशैलंगिरिशालयम् ॥ द्रमिलेषु महापुण्यंदृष्ट्वाद्रिंवेंकटंप्रभुः १३ कामकोष्णींपुरींकांचींकावेरींचसरिद्वराम् ॥ श्रीरंगाख्यंमहापुण्यंयत्रसन्निहितोहरिः १४ ऋषभाद्रिंहरेःक्षेत्रंदक्षिणामथुरां तथा ॥ समुद्रसेतुमगमन्महापातकनाशनम् १५ तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्योहलायुधः ॥ कृतमालांताम्रपर्णींमलयंचकुलाचलम् १६ तत्रागस्त्यंसमा सीनंनमस्कृत्याभिवाद्यच ॥ योजितस्तेनचाशीर्भिरनुज्ञातोगतोर्णवम् १७ दक्षिणंतत्रकन्याख्यांदुर्गांदेवींददर्शसः ॥ ततःफल्गुनमासाद्यपंचाप्सरसमु त्तमम् १८ विष्णुःसन्निहितोयत्रस्नात्वाऽस्पर्शद्गवायुतम् ॥ स्थानंदूरंहरेःस्थानंयत्रसन्निहितोहरिः १९ ततोतिव्रज्यभगवान्केरलांस्त्रिगर्तकान् ॥ गोकर्णाख्यंशिवक्षेत्रंसान्निध्यंयत्रधूर्जटेः २० तत्रद्वैपायनंदृष्ट्वाशूर्पाकारमगाद्बलः ॥ तापींपयोष्णींनिर्विंध्यामुपस्पृश्याथदंडकम् २१ प्रविश्यरेवाम गमद्यत्रमाहिष्मतीपुरी ॥ अनुतीर्थमुपस्पृश्यप्रभासंपुनरागमत् २२ श्रुत्वाद्विजैस्तुकथितंकुरुपांडवसंयुगम् ॥ सर्वराजन्यनिधनंभारमेनेहृतंभुवः २३ सभीमदुर्योधनयोर्गदाभ्यांयुध्यतोरणम् ॥ वारयिष्यन्विनशनंजगामयदुनंदनः २४ युधिष्ठिरस्तुतंदृष्ट्वायमौकृष्णार्जुनावपि ॥ अभिवाद्याभवंस्तूष्णीं किंविवक्षुरिहागतः २५ गदापाणीउभौदृष्ट्वासंरब्धौविजयैषिणौ ॥ मंडलानिविचित्राणिचरंताविदमब्रवीत् २६ युवांतुल्यबलौवीरौहेराजन्हेवृकोदर एकंप्राणाधिकंमन्यउतैकंशिक्षयाधिकम् २७ तस्मादेकतरस्येहयुवयोःसमवीर्ययोः ॥ नलक्ष्यतेजयोन्योवाविरमत्वफलोरणः २८ नतद्वाक्यंजगृहतुर्बद्ध वैरौनृपार्थवत् ॥ अनुस्मरंतावन्योन्यंदुरुक्तंदुष्कृतानिच २९ दिष्टंतदनुमन्वानोरामोद्वारवतींययौ ॥ उग्रसेनादिभिःप्रीतैर्ज्ञातिभिःसमुपागतः ३०

भुवएतत्पृतंभारंहृतंश्रुत्वाएतन्एतर्हिभुवोभारंहृतंमेनइतिशेषइतिवा २३ विनशनंयुद्ध २४ किंवक्तुकामआगतइतिमत्वा २५ २६ प्राणाधिकंबलाधिकं २७ अन्यःपरा जयोवा विरमतुशांतोभवतु २८ दुष्कृतानि जतुगृहदाहादीनि २९ तद्युद्धंदिष्टंदैवकृतम् ३०

बलभद्ररामस्यविक्रमश्रवणादिनाकिंफलंभवतीतितत्राह ईदृग्विधानीति २१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांसप्तनवतितमोऽध्यायः ॥ ९७ ॥ अनेनाध्यायद्वयेनकृपण ब्राह्मणकृपातिशयकथनेनहरिभक्तस्यकेवलंनपारत्रिकमेवफलम् अपितुऐहिकमप्यतिविस्मयकरंस्यादितीदृशंमाहात्म्यंवक्ति तत्रप्रथमतोभारतयुद्धंसमाप्यकृष्णस्यहास्तिनपुरप्रयाणप्रकारंप्रख्यापयति भगवानपीति १ शून्यंशवादिनापिहितम् प्रयातुंगंतुम् अष्टादशाक्षौहिणीभ्यःशिष्टानाह कृपश्चेति २ ३ ४ ५ भगवत्सेवामंतरेणराज्यानिच्छुनित्यतोयत्नतइतियुक्त्याप्रतिपाद्येत्यर्थः

ईदृग्विधान्यसंख्यानिबलस्यबलशालिनः ॥ अनंतस्याप्रमेयस्यकर्माण्यद्भुतकर्मणः ॥ शृण्वन्गृणंश्चतद्भक्त्याविष्णोःसदयितोभवेत् ॥ २१ ॥ इतिश्री भागवतेमहापुराणेदशमस्कंधेउत्तरार्धेबलदेवचरितेसप्तनवतितमोऽध्यायः ॥ ९७ ॥ श्रीशुकउवाच ॥ भगवानपिगोविंदःसाधयित्वास्ववांछितम् ॥ सुयोधनेमहाबाहौनिहतेगदयारणे १ विसृज्यायोधनंशून्यंप्रयातुमुपचक्रमे ॥ कृपश्चकृतवर्माचद्रौणिश्चरथिनांवरः २ अवशिष्टामहात्मानःसुयोधनबलेत्रयः ॥ पंचपांडुसुतावीराःसात्यकिश्चमहाबलः ३ वैश्यापुत्रोयुयुत्सुश्चशिष्टाःकृष्णपुरोगमाः ॥ तान्पुरस्कृत्यगोविंदोमुनिवृंदसमन्वितः ४ जगामहास्तिनपुरंधृतराष्ट्रंप्रसादितुम् ॥ गांधारींधृतराष्ट्रंचविदुरंचमहामतिम् ५प्रसाद्यपांडवान्स्वेस्वेराज्येसंस्थाप्ययत्नतः ॥ स्तूयमानोमुनिगणैःसूतमागधवंदिभिः६ अनुयातःपांडुपुत्रैःप्रेमबाष्पाविलेक्षणैः ॥ताननुज्ञाप्यसोत्कंठान्रथेनादित्यवर्चसा ७ शंखदुंदुभिनिर्घोषैर्वेदमंगलनिस्वनैः ॥ पुण्याहमंत्रघोषैश्चद्वारकांप्रययौहरिः ८ विचित्रतोरणांरम्यांचलत्कदलिकाकुलाम् ॥ अलंकृतांपौरजनैःसिक्तसंमृष्टभूतलाम् ९ उपस्थितःपौरजनैःपालिकांकुरधारिभिः ॥ योषिद्भिर्वारमुख्याभिर्भूषिताभिश्चभूषणैः १० वहद्भिर्दीपमुकुरकलशस्रक्फलाक्षतान् ॥ उपस्थितोब्राह्मणैश्चपुत्रैःपौत्रैःसहानुजैः ११ प्रविवेशपुरींदिव्यांदिवसेपूजितोहरिः ॥ संप्रविश्यसभांदिव्यांसुधर्मांलोकविश्रुताम् १२ आहुकंवसुदेवंचरामंचैवाभ्यवादयत् ॥ प्रणम्यमातरोविश्वाःकांचनेपरमासने १३ उपविश्ययथाजोषंपूजितोयदुपुंगवैः ॥ रराजरजनीनाथोयथाग्रहगणैर्दिवि ॥ १४ हतावशिष्टैर्भूपालैस्तत्पुत्रैश्चमहाबलैः ॥ अभिषिक्तैर्यथास्थानंसेव्यमानोदिवानिशम् १५ अवतीर्णमहाभारांविश्वांविश्वंभरोहरिः ॥ धर्मराजंपुरस्कृत्यधर्मेणैवान्वशासत १६ राजोवाच ॥ भगवन्यानिचान्यानिमुकुंदस्यमहात्मनः ॥ वीर्याण्यनंतवीर्यस्यश्रोतुमिच्छामहेप्रभो १७ कोनुश्रुत्वासकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाम् ॥ विरमेतविशेषज्ञोविषण्णःकाममार्गणैः १८ सावागनंतस्यगुणान्गृणीतेकरौचतत्कर्मकरौमनश्च ॥ स्मरेद्वसंतांस्थिरजंगमेषुशृणोतितत्पुण्यकथाःसकर्णः १९

६ ७ वेदघोषमंगलानिःस्वनाः मंगलवचनानिवैः ८ ९ उपस्थितोभिगतःअंकुरपूरितपालिकापात्रविशेषैः १० ११ १२ मातरोमातॄः १३ यथाजोषंयथासुखम् १४ १५ १६ १७ १८ राजाएतदेवइंद्रियकृत्यमितिवक्ति सावागिति याऽनंतस्यगुणान्गृणीतेसैववाक् यौतत्कर्मकरौतावेवकरौ अनेनकरोतीतिकरइतिकर्तर्यच्प्रत्ययःसफलइतिसूचितं यस्थिरजंगमेषुवसंतंहरिं स्मरेत्तदेवमनः मनज्ञानइतिधातोः स्मरणलक्षणंज्ञानं यस्तस्यहरेःकथाःशृणोतिसकर्णः कुणआकर्णनइतिधातुः १९

चराचरभेदेनोभयलिंगंउभयप्रतिमामानमेवचदेवशिरः श्रयतइतिशिरः श्रिञ्सेवायामितिधातोर्नमनलक्षणसेवायांशिरःइतिनिपात्यते यदुभयलिंगंपश्यतितदेवचक्षुः चष्टेपश्यतीतिचक्षुःचक्षुदर्शनइति धातुःतस्यहरेर्जनानांयानिविष्णोःपादोदकंनित्यंभजंति पानस्नानलक्षणांसेवांकुर्वंति अथमंगलानितानिएवांगानिनान्यानि २० २१ २२ तथाविधाभर्तृवन्मलिनवस्त्रा २३ म्लायताम्लानं गच्छता अशनयावेपमानेत्येकंपदम् अशनयाअशनेच्छयाकंपमाना २४ २५ सीदते अवसन्नायदरिद्राय २६ अर्थकामान्यच्छतीतिकिन्नुवक्तव्यम् किंचजगद्गुरुःअन्यमुक्तेभ्योन्यमिष्टंनप

शिरस्तुतस्योभयलिंगमानमेत्तदेवयत्पश्यतितद्धिचक्षुः ॥ अंगानिविष्णोरथतज्जनानांपादोदकंयानिभजंतिनित्यम् २० सूतउवाच ॥ विष्णुरातेनसंपृष्टोभगवान्बादरायणिः ॥ वासुदेवेभगवतिनिमग्नहृदयोब्रवीत् २१ श्रीशुकउवाच ॥ कृष्णस्यासीत्सखाकश्चिद्ब्राह्मणोब्रह्मवित्तमः ॥ विरक्तइंद्रियार्थेषुप्रशांतात्माजितेंद्रियः २२ यदृच्छयोपपन्नेनवर्तमानोगृहाश्रमी ॥ तस्यभार्याकुचेलस्यक्षुत्क्षामाचतथाविधा २३ पतिव्रतापतिंप्राहम्लायतावदनेनसा ॥ दरिद्रंसाध्व्यशनयावेपमानाभिगम्यच २४ ननुब्रह्मन्भगवतःसखासाक्षाच्छ्रियःपतिः ॥ ब्रह्मण्यश्चशरण्यश्चभगवान्सात्वतर्षभः २५ तमुपैहिमहाभागसाधूनांचपरायणम् ॥ दास्यतिद्रविणंभूरिसीदतेतेकुटुंबिने २६ आस्तेऽधुनाद्वारवत्यांभोजवृष्ण्यंधकेश्वरः ॥ स्मरतःपादयुगलमात्मानमपियच्छति २७ किन्वर्थकामान्भजतोनान्यमिष्टंजगद्गुरुः ॥ सएवंभार्ययाविप्रोबहुशःप्रार्थितोविभुः २८ अयंहिपरमोलाभउत्तमश्लोकदर्शनम् ॥ इतिसंचिंत्यमनसागमनायमनोदधे २९ अथास्त्युपायनंकिंचिद्गृहेकल्याणिदीयताम् ॥ याचित्वाचतुरोमुष्टीन्विप्रान्पृथुकतंदुलान् ३० चैलखंडेनतान्बद्ध्वाभर्त्रेप्रादादुपायनम् ॥ सतानादायविप्राग्र्यःप्रययौद्वारकांकिल ३१ कृष्णसंदर्शनंमह्यंकथंस्यादितिचिंतयन् ॥ त्रीणिगुल्मान्यतीयायतिस्रःकक्ष्याश्चसद्विजः ३२ विप्रोगम्यांधवृष्णीनांगेहेष्वच्युतधर्मिणाम् ॥ गृहाणिद्व्यष्टसाहस्रमहिषीणांहरेर्द्विजः ३३ विवेशैकतमंश्रीमद्ब्रह्मानंदंगतोयथा ॥ तंविलोक्याच्युतोदूरात्प्रियापर्यंकआश्रितः ३४ सहसोत्थायचाभ्येत्यदोर्भ्यांपर्यग्रहीन्मुदा ॥ सख्युःप्रियस्यविप्रर्षेरंगसंगातिनिर्वृतः ३५ प्रीतोव्यमुंचदब्बिंदून्नेत्राभ्यांपुष्करेक्षणः ॥ अथोपवेश्यपर्यंकेस्वयंसख्युःसमर्हणम् ३६ उपहृत्यावनिज्यास्यपादौपादावनेजनीः ॥ अग्रहीच्छिरसाराजन्भगवाँल्लोकपावनः ३७ व्यलिंपद्दिव्यगंधेनचंदनागुरुकुंकुमैः ॥ धूपैःसुरभिभिर्मित्रंप्रदीपावलिभिर्मुदा ३८

च्छतिकिंतुभजतःपुरुषस्ययच्छत्येवेत्यर्थः यद्वानापरमपुरुषःअन्यमभीष्टंयच्छतीत्यतःतमुपैहीत्यन्वयः २८ २९ ३० चैलखंडेनजीर्णवस्त्रखंडेन ३१ गुल्मानिशिबिराणिकक्ष्याः पुरप्रकोष्ठानि कक्ष्यकच्छेवरत्रायांकांच्यांगेहैमकोष्ठकइतियादवः ३२ अंधवृष्णीनांगृहेषुमध्येयानिद्व्यष्टसाहस्रमहिषीणांगृहाणि गम्यगत्वा तेष्वेकतमंगृहंविवेशेत्यन्वयःद्विजत्वंक्षात्रियस्याप्यस्तीतिविप्रइति ३३ आनंदंगतोमुक्तोब्रह्मविशतियथातथा ३४ पर्यग्रहीदाश्लिष्टवान् ३५ ३६ पादावनेजनीरपःपादप्रक्षालनजलानि ३७ ३८

धमनिसंततांशिरासहस्राचितगात्रम् ३९ ४० ४१ संभृतःसभाजितःसंगृहीतोवा ४२ गुरुकुलेसतांस्वेषांकालेपूर्वस्मिन्याःगाथावृत्तास्ताः कथयांचक्रतुः ४३ ४४ सभवान्सदृशीभार्यालब्धापिकिंनवा य थाप्राकृतस्यचित्तंगृहेपुकामविहतंभवतितथाप्यायस्तेचित्तंगृहेषुभार्यादिष्वकामविहतंकामनाविषयेच्छयाविहतंनस्यात् ४५ तद्भवचित्तंधनेष्वपिनैवातिप्रीयते कथमेतदत्राह विदितमिति ४६ केचिन्निवृ त्तिमार्गस्थाःप्रकृतिंदेहाभिमानलक्षणांदैवींदेवाधीनां ४७ तात्पर्यांत्पुनरुक्तंकरोति कश्चिदिति यतोयस्मिन्गुरुकुलवासेविज्ञेयंविज्ञायतमसः अज्ञानस्यपारंप्रकृतेर्वावैकुंठमश्नुते ४८ इतोपिगुरुकुलवासःक र्तव्यइत्याह सवाइति यस्माद्द्विजातेःसाक्षात्सत्कर्मणांसंभवोजन्मसगुरुकुलेवासोवाइत्यन्वयः अत्रहेतुमाह आद्यइति ज्ञानदोगुरुःआश्रमिणांआद्यःहियस्मात्तस्मात्यथाहमिति ४९ ज्ञानमपियन्मुक्तिस

अर्चित्वावेद्यतांबूलंगांचस्वागतमब्रवीत् ॥ कुचैलंमलिनंक्षामंद्विजंधमनिसंततम् ३९ देवीपर्यंचरच्चैव्याचामरव्यजनेननवै ॥ अंतःपुरजनोदृष्ट्वाकृष्णे नामलकीर्तिना ४० विस्मितोभूत्सविप्राग्र्यमवधूतंसभाजितम् ॥ किमनेनकृतंपुण्यमवधूतेनाभिक्षुणा ४१ श्रियाहीनेनलोकेस्मिन्गर्हितेनाधमेनच ॥ योसौत्रिलोकगुरुणाश्रीनिवासेनसंभृतः ४२ पर्यंकस्थांश्रियंहित्वापरिष्वक्तोग्रजोयथा ॥ कथयांचक्रतुर्गाथांपूर्वंगुरुकुलेसताम् ४३ आत्मनोललितौ राजन्करौगृह्यपरस्परम् ॥ अपिब्रह्मन्गुरुकुलाद्भवतालब्धदक्षिणात् ४४ समावृत्तेनधर्मज्ञाभार्योढासदृशीनवा ॥ प्रायोगृहेषुतेचित्तमकामविहतंतथा ४५ नैवातिप्रीयतेतद्वद्धनेषुविदितंहिमे ॥ केचित्कुर्वंतिकर्माणिकामैरहतचेतसः ४६ त्यजंतःप्रकृतिंदैवींयथाहंलोकसंग्रहः ४७ कच्चिद्गुरुकुलावासंब्रह्म न्स्मरसिनौयतः ॥ द्विजोविज्ञायविज्ञेयंतमसःपारमश्नुते ४८ सवैसत्कर्मणांसाक्षाद्द्विजातेरिहसंभवः ॥ आद्योगुरुर्ह्याश्रमिणांयथाहंज्ञानदोगुरुः ४९ ते स्वर्थकोविदाब्रह्मन्वर्णाश्रमवतामिह ॥ येमयागुरुणावाचातरंत्यंजोभवार्णवम् ५० नाहमिज्यात्प्रजातिभ्यांतपसोपशमेनवा ॥ तुष्येयंसर्वभूतात्मागुरुशुश्रूष यायथा ५१ अपिनःस्मर्यतेब्रह्मन्वृत्तंनिवसतांगुरौ ॥ गुरुदारैश्चोदितानामिंधनानयनेक्वचित् ५२ प्रविष्टानांमहारण्यमपर्तौसुमहद्द्विज ॥ वातवर्षमभूत्तीव्रंनि ष्ठुराःस्तनयित्नवः ५३ सूर्यश्चास्तंगतस्तावत्तमसासंवृतादिशः ॥ निम्नंकूलंजलौघेननप्राज्ञायतकिंचन ५४ वयंभृशंतत्रमहानिलांबुभिर्निहन्यमानामुहुरंबुसंप्लु वे ॥ दिशोऽविदंतोथपरस्परंवनेगृहीतहस्ताःपरिबभ्रमातुराः ५५ एतद्विदित्वा उदितेरवौसांदीपनिर्गुरुः ॥ अन्वेषमाणोनःशिष्यानाचार्योऽपश्यदातुरान्ददृश्य ५६

धनंतद्वदेवगुरुरित्याह तेत्विति गुरुणागुरुरूपेणमयाप्युक्तयावाचार्थंजःशिक्षितापेपुरुषामवार्णवंतरंति तेत्विहवर्णाश्रमवतांमध्येअर्थकोविदाःस्वप्रयोजनसंपादनपटवइत्यन्वयः ५० सर्वेषुसाधनेष्विद मेवभगवदनुग्रहांतरंगमित्याह नेति इज्यायजनं प्रजननंप्रजातिः संततिर्जननं नापुत्रस्यलोकोस्तीतिश्रुतिः ५१ अनुग्रहविशेषस्मरणार्थंउभयोरनुभूतविशेषंस्मारयति अपीतिगुरौनिवसतानोयत्कर्मतत् स्मर्यतेतामपिस्मर्यतेकिं ५२ अपर्तौवर्षाकालंअंतरेणजातपुत्तवर्षं ५३ इदंनिम्नमिदंकूलमिति किंचनस्थूलजलप्रवाहेणनप्रज्ञायतनज्ञातमभूत् ५४ अंबुसंप्लवेजलप्रवाहेदिशोऽविदंतःअजानंतःपरिबभ्रमप रितोभ्रांतावभूविम ५५ विद्रित्वार्दितइत्यनेनदुःखातिशयंदर्शयति कथमेतदत्राह अन्वेषमाणोदिति ५६

आत्मादेहः ५९ गुरुनिष्कृतंगुरुप्रत्युपकारः सर्वोर्थोयस्मात्सतथासर्वार्थैआत्माशरीरंवस्यार्पणंयत्तत् ५८ ५९ उक्तमतिदिशति इत्थमिति इत्थंविधान्यनेकानिव्यसनान्यःसांत्रितिशेषः तानिव्य सनानिगुरोरनुग्रहेणानिस्तीर्यं पुमान्प्रशांतयेप्रकृष्टसुखवृत्तयेपूर्णःकृतार्थःस्यात् ६० अस्माभिर्गुरुकुलवासेइदंकृतमितिविशेष्यांकिंवक्तव्यंसर्वमप्यनुष्ठितमितिब्राह्मणआह किमिति सत्यकामे नभवतासहयेषांनागुरुकुलवासोऽभूत्तैरस्माभिःगुरुकुलवासेकिमानिर्वृत्तंनकृतांकिं सर्वमपाचीर्णमेव ६१ किंत्विदमस्माकंयुक्तंतवतुअत्यंतविडंबकमित्याह यस्येति । छंदोमयवेदमुख्यप्रतिपाद्यं आवपनंजगदुत्पत्तिक्षेत्रंब्रह्मयस्यतवदेहःस्वरूपंतस्यतवयोयंगुरुषुवासः सोपमत्यंताविडंबनंअनुकारइति ६२ इतिश्रीभागवतेमहापुराणेदशमस्कंधेविजयध्वजकृतटीकायांअष्टनवतितमोऽध्याय ॥९८॥

अहोमेपुत्रकायूयमस्मदर्थैतिदुःखिताः ॥ आत्माहिप्राणिनांप्रेष्ठस्तमनादृत्यमत्पराः ५७ इयदेवहिसच्छिष्यैःकर्तव्यंगुरुनिष्कृतम् ॥ यद्वैविशुद्धभावेनस र्वार्थात्मार्पणंगुरौ ५७ संतुष्टोहंद्विजश्रेष्ठाःसत्याःसंतुमनोरथाः ॥ छंदांस्ययातयामानिभवंत्विहपरत्रच ५९ इत्थंविधान्यनेकानिवसतांगुरुवेश्मसु ॥ गुरोरनुग्रहेणैवपुमान्पूर्णःप्रशांतये ६० ब्राह्मणउवाच ॥ किमस्माभिरनिर्वृत्तंदेवदेवजगद्गुरो ॥ भवतासत्यकामेनयेषांवासोगुरावभूत् ६१ यस्यछंदोम यंब्रह्मदेहआवपनंविभो ॥ योयंसतस्यगुरुषुवासोऽत्यंतविडंबनम् ६२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेअष्टनवतितमोऽध्यायः ॥ ९८॥ श्रीशुकउवाच ॥ सइत्थंद्विजवर्येणसहसंकथयन्हरिः॥ सर्वभूतमनोभिज्ञःस्मयमानउवाचतम् १ ब्रह्मण्योब्राह्मणंकृष्णोभगवान्प्रहसन्प्रिय ॥ प्रेम्णानिरीक्ष णेनैवप्रेक्षन्खलुसतांपतिः २ श्रीभगवानुवाच ॥ किमुपायनमानीतंब्रह्मन्मेभवतागृहात् ॥ अल्पमप्याहृतंभक्तैःप्रेम्णाभूर्येवमेभवेत् ३ भूर्यप्यभक्तोप हृतंनमेतोषायकल्पते॥ पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति ॥ तदहंभक्त्युपहृतमश्नामिप्रयतात्मनः ४ इत्युक्तोपिद्विजस्तस्मैव्रीडितःपतयेश्रियः॥ पृथुकप्रसृतिंराजन्नप्रायच्छदवाङ्मुखः ५ सर्वभूतात्मदृक्साक्षात्तस्यागमनकारणम् ॥ विज्ञायाचिंतयन्नायंश्रीकामोमाऽभजत्पुरा ६ पत्न्याःपातिव्रताया स्तुसखाप्रियचिकीर्षया ॥ प्राप्तोमामस्यदास्यामिसंपदोमर्त्यदुर्लभाः ७ इत्थंविचिंत्यवसनाच्चीरबद्धंद्विजन्मनः ॥ स्वयंजहारकिमिदमितिपृथुकतंदुला न् ८ एकमुष्टिंसकृज्जग्ध्वाद्वितीयांजग्धुमाददे ॥ तावच्छ्रीर्जगृहेहस्तंतत्परापरमेष्ठिनः ९ एतावतालंविश्वात्मन्सर्वसंपत्समृद्धये ॥ अस्मिन्लोकेथवामु ष्मिन्पुंसस्त्वत्तोषकारणम् १० ब्राह्मणस्तांतुरजनीमुषित्वाऽच्युतमंदिरे ॥ भुक्त्वापीत्वासुखंसुस्वामेनआत्मानामिंद्रवत् ११ श्वोभूतेविश्वभावेनस्वसखे नाभिवंदितः ॥ जगामस्वालयंतातपथ्यनुव्रज्यनंदितः १२ सचालब्ध्वाधनंसख्युर्नचयाचितवान्स्वयम् ॥ स्वगृहंव्रीडितोऽगच्छन्महद्दर्शननिर्वृतः १३

संकथयन्संलापंकुर्वन् १ २ दारिद्र्यत्वेनभूरिद्रव्याभावात्भवतोमहतोल्पंमनस्तुष्टिकरंनस्यादितिनानीतमितिशंकामाभूदित्याह अल्पमिति आहृतमानीतंद्रव्यभूरित्वाभूरित्वेअप्रयोजकोकिंतुभक्तिरेवे त्यनेनादर्शी ३ ४ ५ सर्वभूतानामात्मदृक्स्वभावज्ञः आत्मादेहेधृतौजीवेस्वभावेपरमात्मनीतियादवः ६ ७ चीरंपटच्चरंजीर्णवस्त्रमित्यर्थः इदचीरबद्धंकिमित्युक्त्वाद्विजन्मनःपृथुकतंदुलान् स्वयमाजहार ८ ९ १० ११ अनुव्रज्यअनुगम्य नंदितः कृष्णेनेतिशेषः १२ महतःकृष्णस्यदर्शननिर्वृत. १३

१४ अहंब्राह्मणानांविभाणांबंधुरितिस्मृत्वा १५ भ्रातरोयथाभ्रातरमितिशेषः १६ १७ दिविआकाशे १८ माद्यन्मदंगच्छन् १९ अंतर्हृदयइतितस्मिन्क्षणेस्थितचित्तगत्यास्वगृहं विकर्षमाणः २० २१ स्वमंदिरंदृष्ट्वाइदंकिंकस्यचेदंस्थानंइदंतदितितद्द्वारकाविधंकथमभूत् २२ एवंमीमांसमानंजिज्ञासमानंतंनरादयःप्रत्यगृह्णन् अभ्यायपुरित्यन्वयः २३ २४ २५ २६ सनिजमंदिरंप्रविष्टोभूत् २७ २८ द्युमंतिद्युतिमंति २९ ३० निर्व्यग्रःनिःसंभ्रमः ३१ ममैतद्देवसमृद्धिहेतुर्महाविभूतेर्यदूत्तमस्यावलोकतोन्यान्निमित्तंनैवोपपद्येत सएवहेतुरित्यन्वयः ३२ चः

अहोब्रह्मण्यदेवस्यदृष्टाब्रह्मण्यतामया ॥ यद्दरिद्रतमोलक्ष्मीमाश्लिष्टोबिभ्रतोरसि १४ क्वाहंदरिद्रःपापीयान्क्वकृष्णःश्रीनिकेतनः ॥ ब्रह्मबंधुरितिस्माहंबाहुभ्यांपरिरंभितः १५ निवासितःप्रियाजुष्टेपर्यंकेभ्रातरोयथा ॥ महिष्यावीजितःश्रांतोवालव्यजनहस्तया १६ शुश्रूषयापरमयापादसंवाहनादिभिः ॥ पूजितोदेवदेवेनविप्रदेवेनदेववत् १७ स्वर्गापवर्गयोःपुंसांरसायांदिविसंपदाम् ॥ सर्वासामपिसिद्धीनांमूलंतच्चरणार्चनम् १८ अधनोयद्धनंप्राप्यमाद्यन्नुच्चैर्नमांस्मरेत् ॥ इतिकारुणिकोनूनंधनंमेऽभूरिनाददात् १९ इतितच्चित्तगत्यांतःप्राप्तोनिजगृहांतिकम् ॥ सूर्यानलेंदुसंकाशैर्विमानैःसर्वतोवृतम् २० विचित्रोपवनोद्यानैःकूजद्द्विजकुलाकुलैः ॥ प्रोत्फुल्लकुमुदांभोजकह्लारोत्पलवारिभिः २१ जुष्टंस्वलंकृतैःपुंभिःस्त्रीभिश्चहरिणाक्षिभिः ॥ किमिदंकस्यचस्थानंकथंतदिदमित्यभूत् २२ एवंमीमांसमानंतंनरानार्योऽमरप्रभाः ॥ प्रत्यगृह्णन्महाभागंगीतवाद्येनभूयसा २३ पतिमागतमाकर्ण्यपत्न्युद्धर्षातिसंभ्रमात् ॥ निश्चक्रामगृहात्तूर्णंरूपिणीश्रीरिवालयात् २४ पतिव्रतापतिंदृष्ट्वाप्रेमोत्कंठाश्रुलोचना ॥ मीलिताक्ष्यनमद्बुद्ध्यामनसापरिषस्वजे २५ पत्नींवीक्ष्यविस्फुरंतींदेवींवैमानिकीमिव ॥ दासीनांनिष्ककंठीनांमध्येभांतींसविस्मितः २६ प्रीतःस्वयंतयायुक्तःप्रविष्टोनिजमंदिरम् ॥ मणिस्तंभशतोपेतंमहेंद्रभवनंयथा २७ पयःफेननिभाःशय्यादांतारुक्मपरिच्छदाः ॥ पर्यंकाहेमदंडानिचामरव्यजनानिच २८ आसनानिचहैमानिस्रग्वस्त्राभरणानिच ॥ मुक्तादामविलंबीनिवितानानिद्युमंतिच २९ स्वच्छस्फटिककुड्येषुमहामरकतेषुच ॥ रत्नदीपान्भ्राजमानान्ललनारत्नसंयुतान् ३० विलोक्यब्राह्मणस्तत्रसमृद्धिंसर्वसंपदाम् ॥ तर्कयामासनिर्व्यग्रःस्वसमृद्धिमहेतुकीम् ३१ नूनंबतैतन्ममदुर्भगस्यशश्वद्दरिद्रस्यसमृद्धिहेतुः ॥ महाविभूतेरवलोकतोन्यन्नैवोपपद्येतयदूत्तमस्य ३२ नन्वब्रुवाणोदिशतेसमक्षंयाचिष्णवेभूर्यपिभूरितेजाः ॥ पर्जन्यवत्तत्स्वयमीक्षमाणोदाशार्हकाणामृषभःसखामे ३३ किंचित्करोत्युर्वपियत्स्वदत्तंसुहृत्कृतंफल्ग्वपिभूरिकारि ॥ मयोपनीतंपृथुकैकमुष्टिंप्रत्यग्रहीत्प्रीतियुतोमहात्मा ३४

स्वयमब्रुवाणस्तूष्णीकःपर्जन्यवत् अक्षयंशंदिशतेददातितेनयोपस्मैविष्णवेअभूर्यपिधनंददाति भूरितेजाःअनल्पप्रभावोभवति सएतादृशमहिमादाशार्हकाणामृषभःश्रीकृष्णःमेसखानन्वनुमतं लोकेनेतिशेषः ३३ भक्तदत्तमेवहरेस्तृप्तिजनकत्वेनानंतफलत्वेनपरिणमतिनाभक्तदत्तमित्याह किंचिदिति । यत्सुष्टुभक्तिपूर्वमदत्तंतदुर्वपिकिंचित्करोतिफलतइतिशेषः त्रैविद्यामांसोमपाःपूतपापायज्ञैरिष्ट्वास्वर्गतिमित्यादेः सुहृत्कृतंपूजनंफल्गुअपिअल्पमपिभूरिकारि एतत्कुतोदृष्टमत्राह मयेति हेतुगर्भविशेषणमेतत् ३४

यतोत्रभक्तिरेवप्रधानकारणमतःसैवसंपाद्येतिभावेनाह तस्यैवेति योहमनादिकालमारभ्यतच्चरणैकशरणः तस्यैवमेसौहृदादिस्यादित्यन्वयः नकेवलस्यहरेः भक्तिलक्षणसंगेनपूर्यते अपितुतद्भक्तसंगोपि स्यादितिप्रार्थयते महानुभावेनेति भगवतासहविषज्जतः विशेषेणसंगंकुर्वतःमेतत्पुरुषप्रसंगः तस्यहरेः पुरुषेषुब्रह्मादिष्वपिप्रकृष्टसंगश्चस्यादित्यन्वयः ३५ हरिरैहिकमैश्वर्यंनददातीतिमंदजनानुमितरवदोषापमार्जनायेयंसंपादितेतिभावेनाह भक्तायेति ३६ त्यक्त्वाऽहंममतामितिशेषः ३७ देवदेवस्येत्यनेनसर्वप्रमुखं यज्ञपतेरित्यनेनसर्वदेवत्वंचहरेरेवमुख्यमितिसूचितं अनेनइतरैर्ब्राह्मणभक्तिरेवावश्यंकर्तव्येतितात्पर्यंविधीयतेनतुतस्पोति ३८ तस्यविप्रस्यकासिद्धिरभूत्तत्राह एवमिति अजितंनामभगवंतंस्वभक्तैःपराजितं दृष्ट्वातस्यहरेर्ध्यानवेगेनउद्ग्रथितमुन्मुक्तंआत्मबंधनंयस्यतथा

तस्यैवमेसौहृदसख्यमैत्रीदास्यंपुनर्जन्मनिजन्मनिस्यात् ॥ महानुभावेनगुणालयेनविषज्जतस्तत्पुरुषप्रसंगः ३५ भक्तायचित्राभगवान्हिसंपदोराज्यंविभूतीर्नसमर्थयत्यजः ॥ अदीर्घबोधायविचक्षणःस्वयंपश्यन्निपातंधनिनांमदोद्भवम् ३६ इत्थंव्यवसितोबुद्ध्याभक्तयातीवजनार्दने ॥ विषयान्जायायात्यक्त्वाबुभुजेनातिलंपटः ३७ तस्यवैदेवदेवस्यहरेर्यज्ञपतेःप्रभोः ॥ ब्राह्मणाःप्रभवोदैवंनतेभ्योविद्यतेपरम् ३८ एवंसविप्रोभगवत्सुहृत्तदाद्दृष्ट्वास्वभृत्यैरजितंपराजितम् ॥ तद्ध्यानवेगोद्ग्रथितात्मबंधनस्तद्धामलेभेऽचिरतःसतांगतेः ३९ एवंब्रह्मण्यदेवस्यश्रुत्वाब्रह्मण्यतांनरः ॥ लब्धभावोभगवतिकर्मबंधात्प्रमुच्यते ४० ॥ इतिश्रीभा०म०दशमस्कंधेउत्तरार्धेपृथुकोपाख्यानेएकोनशततमोऽध्यायः ॥९९॥ श्रीशुकउवाच ॥ कदाचिद्वाजिमेधेनयष्टुमुद्यम्यकेशवः ॥ महींप्रदक्षिणीकर्तुंप्राहिणोत्प्रोक्षितंहयम् १ हार्दिक्यंकृतवर्माणंयुयुधानंचसात्यकिम् ॥ चारुदेष्णंसुदेष्णंचप्रद्युम्नंसांबमेवच २ अंशुमंतंसुभानुंचबहूंस्त्वन्यांश्चयादवान् ॥ रक्षणार्थंतुरंगस्यप्राहिणोद्यदुनंदनः ३ तेवैप्रदक्षिणंकृत्वावसुधांप्रोक्षितंहयम् ॥ उपानिन्युरदीर्घेणकालेनभरतर्षभ ४ यष्टुकामंहरिंश्रुत्वाहयमेधेनभारत ॥ आजग्मुर्दीर्घतपसोमुनयःशंसितव्रताः ५ होतारंचतथाध्वर्युंमुद्गातारंचकेशवः ॥ कल्पयित्वायथान्यायंतथान्यानपिऋत्विजः ६ ऋषिभिर्ब्राह्मणश्रेष्ठैर्यज्ञविद्याविचक्षणैः ॥ दीक्षांप्रपेदेभगवान्कृतपुण्याहमंगलः ७ तमुपास्तुंमहीपालानानाजनपदेश्वराः ॥ आजग्मुर्दैवसंकाशाःकिरीटमुकुटोज्ज्वलाः ८ पांडवाश्चमहीपालायज्ञदर्शनमिच्छवः ॥ आहूतावासुदेवेनद्वारकामाययुर्नृप ९ तस्मिंस्तथावर्तमानेहयमेधेमहोत्सवे ॥ आसंस्तृप्ताद्विजाभोज्यवस्त्रगोभूमिकांचनैः १० दीक्षांप्रविश्यगोविंदःकामैस्तर्पयतिद्विजान् ॥ भुंजानेषुद्विजाग्र्येषुप्रत्यगृह्णत्सुवांछितम् ११ आसीनेषुयथायोगंभूपालेषुसमंततः ॥ वदत्सुमाशब्दइतिवेत्रझर्झरपाणिषु १२

तद्भक्तैरेवप्राप्यंतद्धामवैकुंठादिलक्षणं ३९ एतच्चरितोपासकस्यफलमाह एवमिति लब्धभावोलब्धभक्तिः अनेनास्यविप्रस्येतरभक्तवैलक्षण्यमुक्तंस्यादितितात्पर्यमवगंतव्यम् ४० इतिश्रीभागवते महापुराणेद०विलसद्भक्तजकृतटीकायांएकोनशततमोऽध्यायः ॥ ९९ ॥ लोकसंग्रहायाश्वमेधयज्ञकरणमन्यासाध्यमृतविप्रपुत्रानयनमाहात्म्यंचानिरूपयत्यस्मिन्नध्याये तत्राहौहयरक्षणादिप्रकारंवक्ति कदाचिदिति उद्यम्यउद्योगंविधाय १ २ बहून् सैन्याःसेनानायकाएषांतेतथातान् यदूनंदयतीतियदुनंदनः ३ ४ हयमेधेनाश्वमेधेन दीर्घकालंतपोयेषांतेतथा ५ ६ ७ उपास्तुंनिषेवितुंकिरीटैःमुकुटैः सुवर्णैश्चोज्ज्वलाः ८ ९ १० ११ वेत्रेणझर्झराःकर्कशाःपाणयोयेषांतेतथातेषु १२

तृणमूलधरःतृणानांमूलंवृषांधारयतीति तृणमूलंयष्टिंचधारयतीतिवा १३ १४ १५ हिंसाविहारादिकर्मयुक्तंनृपंतिभजंत्यःसीदंति १६ द्वितीयंद्विवारं तृतीयंत्रिवारंपुनश्चतुर्वारं १७ १८ २१ केनापिपुंसानीयते २० किमाहेत्यत्राह किंब्राह्मणेति इहत्वन्निवासस्थानेधनुर्धरोनास्तिकिंगित्यब्रवीत् २१ धनुर्धरेणकिंकार्यमत्राह राजन्यबंधोरिति एते ब्राह्मणाराजन्यबंधोर्हेतोःसत्रमासतेवै २२ राजापिसएवश्रेयानितरोदुःखहेतुरित्याह यत्र यत्रयस्मिन्देशेराजन्यवेषेणासुंभरानराजीवंतितस्मिन्देशेस्थितास्तेभृत्याराज्ञाभरणीयाः ब्राह्मणाःधनदारात्मजैःसहशोचंतीत्यन्वयः यद्वा यत्रयेषुराजसुसत्सुब्राह्मणाधनादिभिःसहशोचंतितेराजन्यवेषेणनटाएवजीवंतिनतुसद्वंश्याः कुतःअसुंभराःस्वप्राणपोषणपरायणावैयस्मात्तस्मादीनयो

तृणमूलधरःकश्चिद्ब्राह्मणोऽभ्येत्यसत्वरः ॥ चुक्रोशआर्त्तउद्बाहुर्यज्ञवाटमुखेस्थितः १३ क्षुत्क्षामकंठःशुष्कास्योगलद्बाष्पाकुलेक्षणः ॥ इदंचोवाचविज पन्नातुरोदीनमानसः १४ ब्रह्मद्विषःशठधियोलुब्धस्यविषयात्मनः ॥ क्षत्रबंधोःकर्मदोषात्पंचत्वंमेगताःसुताः १५ हिंसाविहारंनृपतिंदुःशीलमजि तेंद्रियम् ॥ प्रजाभजंत्यःसीदंतिदरिद्रानित्यदुःखिताः १६ एवंद्वितीयंविप्रर्षिस्तृतीयंत्वेवमेवच ॥ इत्युक्त्वासपुनश्चैवचुक्रोशभृशदुःखितः १७ तदाकर्ण्यार्जुनोमानीसमुत्थायवरासनात् ॥ अपृच्छत्स्वयमासाद्यब्राह्मणंकेशवांतिकात् १८ किमासन्नेभकाब्रह्मंस्तवकेनासिदुःखितः ॥ ब्रूहितत्त्वम शेषेणत्वामद्यसुखयाम्यहम् १९ इत्युक्तोब्राह्मणःप्राहजातोजातोर्भकोमम ॥ नीयतेतातकेनापितत्क्षणेसूतिकागृहात् २० तदाकर्ण्यार्जुनःप्राहस्मय मानइवद्विजम् ॥ किंब्राह्मणत्वन्निवासेइहनास्तिधनुर्धरः २१ राजन्यबंधोरेतेवैब्राह्मणाःसत्रमासते २२ धनदारात्मजैर्भृत्यायत्रशोचंतिब्राह्मणाः ॥ तेवैराजन्यवेषेणनटाजीवंत्यसुंभराः २३ अहंप्रजावांरक्षिष्येभगवन्दीनयोरिह ॥ अनिस्तीर्णप्रतिज्ञोग्निंप्रवेक्ष्येऽहतकल्मषः २४ ब्राह्मणउवाच ॥ संकर्षणोवासुदेवःप्रद्युम्नोधन्विनांवरः ॥ अनिरुद्धोऽप्रतिरथोनत्रातुंशक्नुवंतियत् २५ तत्कथंनुभवान्कर्मदुष्करंजगदीश्वरैः ॥ चिकीर्षतिहिबालिश्यात्तन्न श्रद्दध्महेवयम् २६ अर्जुनउवाच ॥ नाहंसंकर्षणोब्रह्मन्नकृष्णःकार्ष्णिरेवच ॥ अहंधनंजयोनामगांडीवंयस्यकार्मुकम् २७ मावमंस्थाममब्रह्मन्वीर्यंत्र्यं बकतोषणम् ॥ मृत्युंविजित्यप्रधनेप्यानयिष्येतवप्रजाः २८ इतिविस्रंभयित्वातंकृष्णमाहार्जुनोनृप ॥ अनुज्ञांदेहिभगवन्ब्राह्मणार्थंप्रयास्यतः २९ य जतांवाजिमेधेनभवानेभिर्महात्मभिः ॥ इतिब्रुवंतंबीभत्सुमनुज्ञांप्रेप्सुमच्युतः ३० बद्धतूणंसगांडीवंस्मयमानोब्रवीद्वचः ॥ श्रीभगवानुवाच ॥ अहमे वागमिष्यामिनत्वयाशक्यतेर्जुन ॥ तमसाधारणंभूतंमन्धयेनहतोर्भकः ३१

युवयोःअहतकल्मषःमिथ्याप्रतिज्ञत्वात् २३ २४ तत्रार्जुनस्याहंकाराविष्करणायब्राह्मणोवक्तिसंकर्षणइति संकर्षणादयस्त्रातुंनशक्नुवंतियद्यस्मात्तस्माज्जगदीश्वरैर्दुष्करंकर्मकथंचिकीर्षति बालिशोबालम् अयोरितिवचनात् बालिश्यात् आत्मशक्त्यनभिज्ञानात् इहकर्मणितववाक्यंनश्रद्दध्महे २५ २६ अत्रार्जुनःस्वगर्वमुद्घट्टयति अर्जुनइति धनंजयोरणेरणइतिश्रुतिप्रसिद्धेःअहंधनंजयोनामप्रख्यातः धनुष्म चाहेत्याह गांडीवमिति २७ मावमंस्थाअवमाननंकुरु मृत्युंयमं २८ ततःकिंफलितमत्राह इतीति २९ तत्रकृष्णोहंकारिणोदेवप्रसादोनस्यादितिशिक्षवानर्जुनंनिराकुर्वन्निववक्ति इतीति बद्धतूणं पृष्ठबद्धतूणीरम् ३० अल्पकार्येहेतोस्त्वद्गमनंकिमर्थमित्यत्राह तमसाधारणमिति भूतंदेवयोनिम् ३१

अर्जुनःस्वगर्वंमुद्रल्पाति सलोकपालइति ३२ ३३ मूतंदेवयोनिम् ३४ ३५ अभितउद्दिश्य ३६ ३७ ३८ ३९ ४० युधांवर युध्यंतीतियुधोयोधास्तेषांवर पौरुषाणांपुरुषपराक्रमाणांनिदर्शनंदृष्टांतः ४१ ४२ ४३ ४४ सूतिकागारंसूतिकागृहं शरैर्न्यरुणत् आवृतवान् ४५ भगवदनुग्रहरहितस्यसाधनबाहुल्येनाकिंफलमितिभावेनाह ततइति ४६ तदनंतरंकिमभूदित्यत्राह तदेति अथार्जुनंविनिंदाति तवेति ४७ यस्यममार्भकंपरित्रातुंनशेकुःसोहंकृष्णस्यसन्निधौयस्यतवविकत्थनंश्रद्दधेवैतत्वाधिक् आत्मश्लाघिनः स्वस्यतवधनुश्चाधिक् नदाधिकेश्वरः तेभ्यःप्रद्युम्नादिभ्योधिकेश्वरश्शक्तः

अर्जुनउवाच ॥ सलोकपालोदेवेंद्रःखांडवेविजितोमया ॥ किरातरूपीयुद्धेनतोषितस्त्र्यंबकः ३२ निवातकवचाश्चैववासवेनापिदुर्जयाः ॥ मयैवनिहताःसंख्येहिरण्यपुरवासिनः ३३ तेभ्योधिकतरंभूतंकिंनुदानवसूदन ॥ बिभीषयसिमांकस्मादनुज्ञांदेहिसांप्रतम् ३४ श्रीशुकउवाच ॥ इत्युक्तःप्रद्दौकृष्णस्त्वनुज्ञांसव्यसाचिने ॥ निर्ययौयज्ञशालायाःसगृहीतशरासनः ३५ रथमास्थायविपुलंसमुच्छ्रितकपिध्वजम् ॥ अग्रेब्राह्मणमारोप्यतद्ग्राममभितोययौ ३६ तत्रगत्वाप्रविष्टायांतत्पत्न्यांसूतिकागृहम् ॥ ब्राह्मणंप्राहबीभत्सुरवरोप्यरथान्नृप ३७ अर्जुनउवाच ॥ याहिस्वभवनंब्रह्मन्नभयंतवसर्वतः ॥ दत्तंमयाद्यतद्गीतांपत्नीमाश्वासयाशुते ३८ इतिविस्रंभितोविप्रःफाल्गुनेनपरंतप ॥ जगामस्वगृहेप्रीत्यापार्थवीर्यंनिशम्यतत् ३९ प्रसूतिकालआसन्नेभार्यायाद्विजसत्तमः ॥ प्रोवाचद्रुतमभ्येत्यपार्थंशस्त्रभृतांवरम् ४० एहिपार्थमहाबाहोयत्तोभवयुधांवर ॥ अत्रपूर्वकृतानांहिपौरुषाणांनिदर्शनम् ४१ श्रीशुकउवाच ॥ इत्युक्तोरथमारुह्यसज्यंकृत्वातुगांडिवम् ॥ त्वरन्जगामबीभत्सुःसूतिकाभवनांतिकम् ४२ ब्राह्मणोपिप्रविश्याहमुहूर्तेसूतिकागृहे ॥ गतेतुपाहिपाहीतिमृत्योरर्जुनमातुरः ४३ सउपस्पृश्यशुच्यंभोनमस्कृत्यमहेश्वरम् ॥ दिव्यास्त्राणिचसंस्मृत्यसज्यंगांडीवमाददे ४४ न्यरुणत्सूतिकागारंशरैर्नानास्त्रयोजितैः ॥ तिर्यगूर्ध्वमधःपार्थश्चकारशरपंजरम् ४५ ततःकुमारःसंजातोविप्रपत्न्यारुदन्मुहुः ॥ सद्योऽदर्शनमापेदेसशरीरोविहायसा ४६ तदाहविप्रोविजयंविनिंदन्कृष्णसन्निधौ ॥ मौढ्यंपश्यतमेयोहंश्रद्दधेक्लीबकत्थनम् ४७ नप्रद्युम्नोऽनिरुद्धोवानरामोनचकेशवः ॥ यस्यशेकुःपरित्रातुंकोन्यस्तदधिकेश्वरः ४८ धिगर्जुनंमृषावादंधिगात्मश्लाघिनोधनुः ॥ दैवोपसृष्टंयोमौढ्यादानिनीषतिदुर्मतिः ४९ एवंशपतिविप्रर्षौविद्यामास्थायफाल्गुनः ॥ ययौसंयमिनीमाशुयत्रास्तेभगवान्यमः ५० विप्रापत्यमचक्षाणस्ततऐंद्रीमगात्पुरम् ॥ आग्नेयींनैर्ऋतींसौम्यांवायव्यांवारुणीमथ ५१ रसातलंनाकपृष्ठंधिष्ण्यान्यन्यान्युदायुधः ॥ ततोलब्धद्विजसुतोह्यनिस्तीर्णप्रतिश्रुतः ५२ अग्निंविविक्षुःकृष्णेनप्रत्युक्तःप्रतिषेधता ॥ दर्शयेद्विजसूनूंस्तेमावध्यात्मानमात्मना ५३ एतेनकीर्तिंविमलांमानुष्यंस्थापयिष्यसि ॥ इतिसंभाष्यभगवानर्जुनंसमहेश्वरः ५४

४८ किमित्येवंनिंदसीतितत्राह दैवेति दैवेनोपसृष्टयोरुपद्रुतयोरावयोःपुत्रमानिनीषतिआनेतुमिच्छति ४९ विद्यांमनुष्यागम्यगमनसामर्थ्यकरीम् ५० नैर्ऋतींनिर्ऋतेर्विद्यमानांदिशंसौम्यांसोमस्य वायव्यांवायोःवारुणींवरुणस्य ५१ अनिस्तीर्णप्रतिश्रुतः असाधितप्रतिज्ञः ५२ प्रत्युक्तःनेत्युक्तःप्रतिषेधतानिषेधंकुर्वताकथंनेत्युक्तइतितत्राह दर्शयइति आत्मनैवस्वयंआत्मानमावधीर्माहिंसीःसंधिरार्षः ५३ एतेनपुत्रादानादिनात्वन्निमित्तेनमानुष्यंमनुष्यलोकस्थांयथास्यात्तथाईश्वरादपिमहानुत्तमः ५४

५५ ५६ ५७ गगनंछादयतीतिगगनच्छदं गुणच्युतः मौर्व्यामुक्तः ५८ चक्रानुपथेसुदर्शनगमनानुकूलमार्गेकृतद्वारेणसमश्नुवानंगच्छंतंयदूत्तमंप्रसमीक्ष्यअक्षिणीपिदधइत्यन्वयः अनंत पारंअंतपारवर्जितम् ५९ ततःसलिलंप्रविश्यगतोभवनंददर्शेत्यन्वयः बलीयसानभस्वतावायुनाएजद्भिःकंपमानैर्बृहद्भिरूर्मिभिःतरंगैर्भीषणं तत्रसलिले ६० तस्मिन्भवनेअनंतंददर्शासितांबरा भंभ्वेवाभ्रवत्शोभमानं शितिःनीलःकंठोयस्यसःशितिकंठःजिह्मगःनम्रगात्रस्तम् ६१ तस्यानंतस्यभोगेसुखमासनंयस्यसतथातद्भोगसुखासनःतम् ६२ ६३ परमेष्ठिनांब्रह्मणांपतिम् ६४

सहैवरथमास्थायप्राचींदिशमवीविशत् ॥ सप्तद्वीपान्सप्तसिंधून्सप्तसप्तगिरीनथ ॥ लोकालोकंतथातीत्याविवेशसुमहत्तमः ५५ तत्राश्वाःशैब्यसुग्रीवमे घपुष्पबलाहकाः ॥ तमसाभ्रष्टगतयोबभूवुर्भरतर्षभ ५६ तान्दृष्ट्वाभगवान्कृष्णोमहायोगेश्वरेश्वरः ॥ सहस्रादित्यसंकाशंस्वचक्रंप्राहिणोत्पुरः ५७ तमःसुघोरंगगनच्छदंमहद्विदारयद्भूरितरेणरोचिषा ॥ मनोजवंनिर्विविशेसुदर्शनंगुणच्युतोरामशरोयथाचमूः ५८ द्वारेणचक्रानुपथेयदूत्तमंपरा त्परंज्योतिरनंतपारम् ॥ समश्नुवानंप्रसमीक्ष्यफाल्गुनःप्रदीपिताक्षःपिदधेऽक्षिणीउभे ५९ ततःप्रविष्टःसलिलंनभस्वताबलीयसैजद्बृहदूर्मिभीषणम् ॥ तत्राद्भुतंवैभवनंद्युमत्तमंभ्राजन्मणिस्तंभसहस्रशोभितम् ६० तस्मिन्महाभीममनंतमद्भुतंसहस्रमूर्द्धन्यफणामणिद्युतिम् ॥ विभ्राजमानंद्विगुणेक्षणोल्ब णंसितांबराभंशितिकंठजिह्मगम् ६१ ददर्शतद्भोगसुखासनंविभुंमहानुभावंपुरुषोत्तमोत्तमम् ॥ सांद्रांबुदाभंसुपिशंगवाससंप्रसन्नवक्त्रंरुचिरस्मितेक्ष णम् ६२ महामणिव्रातकिरीटकुंडलप्रभापरिष्वक्तसहस्रकुंतलम् ॥ प्रलंबचार्वष्टभुजंसकौस्तुभंश्रीवत्सलक्ष्मंवनमालयावृतम् ६३ सुनंदनंदप्रमुखैः स्वपार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ॥ पुष्ट्याश्रियाकीर्त्यजयाखिलर्द्धिभिर्निषेव्यमाणंपरमेष्ठिनांपतिम् ६४ ववंदआत्मानमनंतमच्युतोजिष्णुश्च तद्दर्शनजातसाध्वसः ॥ सचाहभूमापरमेष्ठिनांप्रभुर्बद्धांजलिंसस्मितपूर्वयागिरा ६५ द्विजात्मजास्तेयुवयोर्दिदृक्षयामयोपनीताभुविधर्मगुप्तये ॥ कला वतीर्णाऽवनेर्भरासुरान्हत्वेहभूयस्त्वरयैतमंतिकम् ६६ पूर्णकामावपियुवांनरनारायणावृषी ॥ धर्ममाचरतांस्थित्यैवृषभौलोकसंग्रहम् ६७ इत्या दिष्टौभगवतातौकृष्णौपरमेष्ठिना ॥ ओमित्यानंदभूमानमादायद्विजदारकान् ६८ न्यवर्ततांस्वकंधामसंप्रहृष्टौयथागतम् ॥ विप्रायददतुःपुत्रान्यथारू पंयथावयः ६९ निशम्यवैष्णवंधामपार्थःपरमविस्मितः ॥ यत्किंचित्पौरुषंपुंसांमेनेकृष्णानुकंपितम् ७० तथाप्रविश्यगोविंदोयज्ञवाटंपुनःस्वयम् ॥ पूर्णपुरोहितैर्विप्रैर्ऋत्विग्भिःक्षत्रियर्षभैः ७१ प्रायश्चित्तंतुचलनेदीक्षायांयउदाहृतः ॥ तंचकारयथान्यायंब्राह्मणैरनुमोदितः ७२ समाप्ययज्ञंविधिव त्तर्पयित्वार्थिनोद्विजान् ॥ ऋत्विग्भ्यःपूजयित्वान्यानृषींश्चकुरुसत्तम ७३

अच्युतःकृष्णःजिष्णुरर्जुनः ६५ युवयोःकृष्णार्जुनयोः ६६ जगतःस्थित्यैलोकसंग्रहंधर्मम् ६७ कृष्णौयदूत्तमार्जुनौ आनंदभूमानंपूर्णानंदम् ६८ प्रसूयतांप्रसवंगच्छतां रूपंयथाप्रसूतिकालेयद्रूपंतादृशं रूपंदधानान् ६९ पुंसायत्किंचित्पौरुषंकृष्णानुकंपितंमेने ७० ७१ दीक्षायांमध्येचलनेततउत्थायगमनेप्रायश्चित्तमुद्दिश्यपशुःकर्मविशेषउदाहृतःतंचकार ७२ ७३

अवभृथनिमित्तमज्जनम् ७४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांशततमोऽध्यायः ॥ १०० ॥ हरेरवाशिष्टभूभारदंतवक्रविदूरथवधलक्षणंयच्चरितंतत्कथयत्यस्मिन्न ध्याये तत्रतद्धटनप्रकारमाह उद्वापनेति उद्वापनस्नानहेतोः अवभृथस्नानहेतोः १ २ ३ ४ अरुणत्ररुरोध जंबुकःशृगालः ५ पारोक्ष्यसौहृदंमृतिलक्षणात्प्रत्यक्षत्वेपिबंधुनायत्कर्तव्यंसौहृदंश्रेमतत्कु र्वन्कर्तुकामः ताच्छीलिकश्शतृप्रत्यय. ६ ७ वेलाजलवृद्धिः सिंधुंनदीं कालिंगःकलिंगविषयनाथः ८ ९ मातुलोवसुदेवः तत्पुत्र.पारदारिकःपरस्त्रीरतिसमुत्सुकः १० भ्रातरौमातृसो

यमुनायांमहानद्यांकृत्वाऽवभृथमज्जनम् ॥ विजहारयथाकामंमहर्षिभिर्यदूत्तमः ७४ ॥ इतिश्रीभागवतेमहापुराणेदशस्कंधेउ०शततमोऽध्यायः ॥ १००॥ श्रीशुकउवाच ॥ उद्वापनस्नानहेतोर्यमुनातीरमागतम् ॥ श्रुत्वातूर्णंकलिंगेशोदंतवक्त्रःसहानुजः १ महत्यासेनयायुक्तोगजानीकसमन्वितः ॥ गच्छंतं द्वारकांकृष्णंपथिरोद्धुंसमाययौ २ सोभ्येत्यपथिगच्छंतंवृतंयदुकुमारकैः ॥ कांताषोडशसाहस्रशिबिकापरिवारितम् ३ राजसंघानुगच्छंतंमहर्षिगणसेवितम् ॥ ऋत्विक्पुरोहिताचार्यब्राह्मणैश्चसमन्वितम् ४ दंतवक्त्रोरुणन्मूढोमृगेंद्रंजंबुकोयथा ॥ रुक्मिणःशिशुपालस्यपौंड्रकस्यचदुर्मतेः ५ परलोकगतानांचकुर्वन्पारोक्ष्यसौहृदम् ॥ पदातिःपथिसंरोद्धुंगदापाणिःप्रकंपयन् ६ पद्भ्यांमहींमहाराजमहासत्वोव्यदृश्यत ॥ तंतथायांतमालोक्यगदामादायसत्वरः ७ अवप्लुत्यरथात्कृष्णःसिंधुंवेलेवप्रत्यगात् ॥ गदामुद्यम्यकालिंगोमुकुंदंप्राहदुर्मदः ८ दिष्ट्याकृष्णभवानद्यममदृष्टिपथंगतः ॥ त्वामद्यद्वंद्वयुद्धेनहानिष्याम्यविलंबितम् ९ त्वंमातुलेयोनःकृष्णमित्रध्रुक्पारदारिकः ॥ विश्वासघातीबंधुघ्नःसततंकलहप्रियः १० पौंड्रकंमातुलेयंमेसंख्येसूदितवानसि ॥ रुक्मीचशिशुपालश्चभ्रातरौमेत्वयाहतौ ११ अतस्त्वांगदयामंदहनिष्येवज्रकल्पया ॥ तेनानृण्यमुपैम्यद्यमित्राणांमित्रवत्सलः १२ बंधुरूपमरिंहत्वाव्याधिंदेहचरंयथा ॥ इतिलोकप्रवादोस्तितेनदोषोपिनास्तिमे १३ एवंरूक्षैर्ववचनैःकृष्णंतोत्रैरिवद्विपम् ॥ गदयाऽताडयत्कृष्णंसिंहवद्व्यनदच्चसः १४ गदयाभिहतोप्याजौनचचालयदूत्तमः ॥ गदयाभ्यहनत्कृष्णःकौमोदक्यास्तनांतरे १५ गाढनिर्भिन्नहृदयउद्वमन्रुधिरंमुखात् ॥ प्रसार्यकेशबाह्वंघ्रिगतासुर्व्यपतद्भुवि १६ ततःसूक्ष्मतरंज्योतिःकृष्णमाविशदद्भुतम् ॥ पश्यतांसर्वभूतानांयथाचैद्यस्यसंगरे १७ भ्रातरंनिहतंदृष्ट्वादंतवक्त्रंविदूरथः ॥ मूर्छितोभ्रातृशोकेनाप्यसिचर्मसमाददे १८ सोवप्लुत्यरथात्तूर्णंविधुन्वन्खड्गमुत्तमम् ॥ अभिदुद्रावगोविंदंपद्भ्यामुर्वीप्रकंपयन् १९ तस्यबाणेनचिच्छेदखड्गंयादवनंदनः ॥ ततोजग्राहनिशितांशक्तिंवीरोविदूरथः २० तयाप्रहर्तुंगोविंदमभिनिश्चित्यसंगरे ॥ क्षणेनाभिससाराजौचापमुक्तोयथाशरः २१ तस्यचापततःकृष्णश्चक्रेणक्षुरनेमिना ॥ शिरोजहारराजेंद्रसकिरीटंसकुंडलम् २२

दरीपुत्रत्वेन ११ आनृण्यंऋणाभावम् १२ देहचरंदेहगतम् १३ रूक्षैर्वचनैर्व्यथयित्वेतिशेषः १४ १५ १६ दंतवक्रगतासुरःकृष्णंशांतापरपर्यायंतमोविशत् अन्यस्तुद्वारपालः कृष्णं उत्कृष्टानंदरूपश्रीहरिम् १७ असियुक्तंचर्म १८ १९ २० २१ २२

कालयामासद्रावयामास वारणादिकमित्यत्रगजाश्वरथादिकंगृह्यते २३ पुष्परथंविवाहयोग्यरथम् २४ २५ २६ पशुदृष्टीनांअज्ञजनबुद्धीनांपक्षेजीयतेजयतीतिईयतेज्ञायते २७ ब्रह्माद्यन्यतमेनापि तत्कर्मसमाप्तिंकर्तुंनशक्यतेकिंपुनर्मयेतिभावेनाह तस्येति २८ स्कंधमारभ्यपदैत्यहननंतदादितःउपसंहरति एवमिति २९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायांएकाधिकशततमोऽध्यायः ॥ १०१ ॥ अनेनाध्यायद्वयेनगृहस्थधर्मानुकरणलक्षणंहरेःसंनिधानात्सर्वतीर्थोत्तमत्वंद्वारकायाश्चकथ्यते तत्रप्रथमद्वारकापुरवर्णयति सुखमिति १ हर्म्येषुधनिनांयोग्येषुसमृद्धसद्गृहेषुसौधेषुसुधाधवलितेषूत्तमगृहेषु २ ३ निर्विशद्भिःमिथउपभुंजानैःभृंगविहंगैर्नादितायांयोपवत्कृतायाम् ४ ५ वासितामलतोयेषुपारिमलीकृतजलेषु ६ ह्रादिनीषुनदीषु स्वयोषिता

एवंनिहत्यसमरेदंतवक्त्रविदूरथौ ॥ कालयामासतत्सैन्यंजगृहेवारणादिकम् २३ भूयःपुष्परथंदिव्यमारुह्यसमलंकृतम् ॥ सहितःसात्वतगणैरीडितःसुरमानवैः २४ मुनिभिःसिद्धगंधर्वैर्विद्याधरमहोरगैः ॥ अप्सरोभिःपितृगणैर्यथाकिन्नरचारणैः २५ उपगीयमानविजयःकुसुमैरभिवर्षितः ॥ वृतश्चवृष्णिप्रवरैर्विवेशालंकृतंपुरम् २६ एवंयोगेश्वरःकृष्णोभगवान्देवकीसुतः ॥ ईयतेपशुदृष्टीनांजीयतेजयतीतिसः २७ तस्यकर्माण्युदाराणिपुण्यश्लोकस्यभारत ॥ शक्यंतेकथितुंनैववर्षाणामयुतैरपि२८एवमारभ्यराक्षस्याःपूतनायाःपरंतप ॥ भूभारभूतानसुराञ्जघानमधुसूदनः २९ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेएकाधिकशततमोध्यायः ॥ १०१ ॥ श्रीशुकउवाच ॥ सुखंस्वपुर्यांन्यवसद्द्वारकायांश्रियःपतिः ॥ सर्वसंपत्समृद्धायांजुष्टायांवृष्णिपुंगवैः १ स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकांतिभिः ॥ कंदुकैर्हर्म्यसौधेषुक्रीडंतीभिस्तडिद्द्युभिः २ नित्यंसंकुलमार्गायांमदच्युद्भिर्मतंगजैः ॥ स्वलंकृतैर्भटैरश्वैरथैश्चकनकोज्ज्वलैः ३ उद्यानोपवनाढ्यायांपुष्पितद्रुमराजिषु ॥ निर्विशद्भृंगविहगैर्नादितायांसमंततः ४ रेमेषोडशसाहस्रपत्नीनामेकवल्लभः ॥ तावंतिविभ्रद्रूपाणितद्गृहेषुमहर्धिषु ५ प्रोत्फुल्लोत्पलकह्लारकुमुदांभोजरेणुभिः ॥ वासितामलतोयेषुकूजद्द्विजकुलादिभिः ६ विजहारविगाह्यांभोह्रदिनीषुमहोदयः ॥ कुचकुंकुमलिप्तांगःपरिरब्धःस्वयोषिताम् ७ उपगीयमानोगंधर्वैर्मृदंगपणवानकान् ॥ वादयद्भिर्मुदावीणाःसूतमागधवंदिभिः ८ सेव्यमानोच्युतस्ताभिर्हसंतीभिश्चरेचकैः ॥ प्रतिषिंचन्विचिक्रीडेमुखरःशक्तिभिःस्वयम् ९ ताःक्लिन्नवस्त्रविवृतोरुकुचप्रदेशाःसिंचंत्यउद्धृतबृहत्कबरप्रसूनाः ॥ कांतस्यचेतनजिहीर्षतयोपगुह्यजातस्मरोत्स्मयलसद्वदनाविरेजुः १० कृष्णस्तुतत्स्तनविषज्जितकुंकुमस्रक्क्रीडाभिसंगतसकुंतलकुंदगंधः ॥ सिंचन्मुहुर्युवतिभिःपरिषिच्यमानोरेमेकरेणुभिरिवेभपतिःपरीतः ११

भितिषष्ठीतृतीयार्थे ७ वीणाइतिद्वितीया८ रेचकैःजलप्रक्षेपणचर्मपात्रैः शक्तिभिर्भार्यादिभिःसह ९ क्लिन्नान्यार्द्राणिवस्त्राणियासांताः विवृताउरुप्रदेशाःकुचप्रदेशाश्चयासांताः बृहंतिकबराणिबृहत्कबराणिउद्धृतानिउन्मुक्तानिबृहत्कबरपूरितानिप्रसूनानियासांताः कांतस्यकमनीयस्यकृष्णस्य चेतनजिहीर्षयाचित्तवशीकरणेच्छया उपगूह्यनउपगूहनक्रियपाजातेनाविर्भूतेनस्मरोत्स्मयेन उत्कृष्टेनमंदस्मितेनलसंतिवदनानियासांताः १० तासांस्तनेभ्यःविषज्जितानिसंक्रांतानिकुंकुमानितत्स्तनविषज्जितकुंकुमानितैर्मिश्रास्रग्यस्यसतथा कुंतलैःसहवर्तमानःसकुंतलः क्रीडायामभिसंगतश्चायंसकुंतलश्चकुंदगंधश्चतथाकुंदपुष्पवत्गंधोयस्यसतथासिंचन्जलमितिशेषः ११

अनिवार्यइत्यस्यविवरणमीश्वरइतिरमाभीरामाभिर्रुक्मीसाविधानयुक्ताभिर्वा निजसौख्यसंधुतःस्वरूपानंदसमुद्रमग्नःगार्हकमेधिकान्गृहस्थाश्रमयोग्यधर्मांश्वरन्कुर्वन् १२ नवसंगमेपाळज्जासैव स्थितातया अनुरागादियुक्तया १३ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेविजयध्वजकृतटीकायां द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ धर्मार्थकामानांपदंविषयंसंदर्शयन्त्रिवर्गानामाश्रयो गृहस्थइतिसम्यक्दर्शयन् द्वारकामावसतिश्रीकृष्णइतिशेषः १ ततःपरंकिमत्रेत्याह एवमिति भूचक्रंभूमंडलं द्वारका मुन्यादिभिःपूर्णानिबिडाआसीदित्यन्वयः २ ३ पिंडारकादितीर्थक्षेत्रे भ्योद्वारकोत्तमतीर्थमित्याह पिंडारकादित्यादिना ४ कुमारनिलयात्कुमारपर्वतात् ५ ६ द्वारकामितिशेषः ७ ८ स्तुतिस्तोत्रपरायणाः स्तुतिरप्रबंधरूपा स्तोत्रंप्रबंधरूपं तज्जपैक

गृहेषुतासामनिवार्यईश्वरोनिरस्तसाम्यातिशयोव्यवास्थितः ॥ रेमेरमाभिर्निजसौख्यसंप्लुतोयथेतरोगार्हकमेधिकांश्वरन् १२ इत्थंरमापतिमवाप्यप तिंस्त्रियस्ताब्रह्मादयोपिपदवींनविदुर्यदीयाम् ॥ भेजुर्मुदाऽविरतमेधितयानुरागहासावलोकनवसंगमलज्जयैव १३ इतिश्रीभागवतेमहापुराणेदशमस्कं धेउत्त० द्व्यधिकशततमोध्यायः ॥ १०२ ॥ श्रीशुकउवाच ॥ एवंवेदोदितंधर्ममनुतिष्ठन्सतांगतिः ॥ गृहेधर्मार्थकामानांमुहुःसंदर्शयन्पदम् १ एवंशास तिभूचक्रंचक्रपाणौजनार्दने ॥ द्वारकावृष्णिनिलयायोजनद्वादशायता २ मुनिभिर्ब्राह्मणैश्चैवक्षत्रियैश्चापिवैदिभिः ॥ आसीत्पूर्णाकुरुश्रेष्ठसततंस मलंकृता ३ पिंडारकात्कुरुक्षेत्राच्छालग्रामाच्चपुष्करात् ॥ वाराणस्याःप्रयागाच्चवेंकटाच्छ्रीगिरेरपि ४ स्थानंदूराच्चगोकर्णाच्चंद्रतीर्थाच्चशोभनात् ॥ सह्याद्रेश्चभृगुक्षेत्रात्कुमारनिलयादपि ५ गोदावरितटात्पुण्यान्नर्मदानिकटादपि ॥ शूर्पाकारात्प्रभासाच्चपुण्याद्बदरिकाश्रमात् ६ पावनान्नैमि षारण्याद्ब्रह्मदुर्गाच्चदुर्गमात् ॥ आययुर्मुनयःशांतानित्यव्रतपरायणाः ७ अब्भक्षवायुभक्षाश्चनिराहारादृढव्रताः ॥ वल्कलाजिनसंवीताजटिनश्चा पिमुंडिनः ८ त्रिकालस्नायिनश्चैवमौनव्रतपरायणाः ॥ वेदस्वाध्यायनिरताःस्तुतिस्तोत्रपरायणाः ९ ध्यानैकतानमनसःसमाधौकृतनिश्चयाः ॥ त्वगस्थि मात्रावयवाःशिराधमनिसंतताः १० आगत्यमुनयोराजन्सर्वतःशांतचेतसः ॥ उपासतमहाराजनित्यंतत्त्वैकचिंतकाः ११ क्षत्रियैश्चमहावीर्यैर्ब्राह्मणैश्चतपो धनैः ॥ सूतैश्चमागधैश्चैवश्लोकस्तुतिपरायणैः १२ पूर्णमंगलघोषैश्चवादित्राणांचनिःस्वनैः ॥ निर्घुष्टाब्रह्मघोषैश्चद्वारकाकुरुनंदन १३ क्षेत्राणामपि सर्वेषांतीर्थानांचाघहारिणाम् ॥ देवदेवस्यसान्निध्यादग्रण्याचबभूवसा १४ आस्थितस्यपरंधर्मंकृष्णस्यगृहमेधिनः ॥ आसन्षोडशसाहस्रमहिष्यस्तु शताधिकाः १५ तासांस्त्रीरत्नभूतानामष्टौयाःप्रागुदाहृताः ॥ रुक्मिणीप्रमुखाराजंस्तत्पुत्राश्चानुपूर्वशः १६ एकैकस्यांदशदशकृष्णोऽजीजनदात्म जान् ॥ यावंत्यआत्मनोभार्यास्त्वमोघगतिरीश्वरः १७ तेषामुद्दामवीर्याणामष्टादशमहारथाः ॥ आसन्नुदारयशसस्तेषांनामानिमेशृणु १८

परायणाः ९ ध्यानैकतानमनसःश्रीहरिगुणगणसंचिंतनायामेवाविस्तृवमनसः समाधौचित्तनिग्रहेकृतनिश्चयाः समीचीनाधिष्ठानलक्षणमुक्तौवा शिरारेखाः १० सर्वतआगत्य ११ १२ १३ अग्रण्याअग्रण्येतिच्छांदसःउत्तमोत्तमाश्रया १४ कृष्णस्यषोडशसाहस्रमहिष्यः १५ तासांमध्येयारुक्मिणीप्रमुखाअष्टौमहिष्यः प्रागुक्ताः अनुपूर्वशःतत्पुत्राश्चोक्ताः १६ आत्मनोयावत्योभार्याःतास्वेकस्यामेकस्यांभार्यायांदशदशात्मजानजीजनत् १७ तेषांपुत्राणांमध्येअष्टादशमहारथाःआसन् १८

श्रीकृष्णस्मरणार्थंसंक्षिप्यतद्गुणान्कथयति तीर्थमिति तीर्थंकीर्तिलक्षणंनृणांचक्रेपत्. यदुष्वजनिप्रादुर्भूतःयस्यपादशौचंपादप्रक्षालनजलंस्वःसरित्स्वर्गनदीगंगाभूत्यस्यस्वरूपंऐश्वर्यादिषड्गुणैराप्तंपूर्णं यस्यउरसिवक्षसोपरिरमासर्वदास्ते यस्यशास्त्रंशासकंवचनंतत्प्रमाणंलोकस्येतिशेषः यच्छास्त्रंवेदादिशास्त्रंतत्प्रमाणमितिवासदसद्व्यक्तयःकार्यकारणव्यक्तयः यदनुयस्यानंतरंविद्यमानायदनुकूलत्वे नसत्तासंबंधिन्यः धर्मायत्रयद्विषयत्वेनवर्ततेतस्यकृष्णस्यैतत्क्षितिभारहरणंनचित्रं किंत्वस्माकमेव हेत्वंतरमाह काळेति १७ देवकीजन्मवादःदेवकीपुत्रत्वेनवादःकीर्तिर्यस्यसतथासजननिवासः जगन्निवासोजयति कथमत्राह नियमेति भूभारक्षपणार्थंनियमेनभूमौकृतानिपदानिपादन्यासपद्मानिपानितैः स्वदोर्भिश्चदस्युपीडांकुर्वन्नितिशेषः उभयदृशीनांअंतर्बहिःस्थितरूपस्यदृशि॰दर्शनये षांतेषांमुदंकुर्वन् अबलानांस्त्रीणांश्रीनिकेतात्ममूर्त्यालक्ष्मीमंदिरात्मस्वरूपेण स्निग्धहासेक्षयास्निग्धमंदस्मितशोभितरूपकटाक्षनिरीक्षणेनच स्मरवपु काममूर्तिरिवस्थितः १८ जगतआदौम

तीर्थंचक्रेनृणांयोयदजनियदुषुस्वःसरित्पादशौचंयाड्श्राप्तंस्वरूपंपरउरसिरमासर्वदायस्यचास्ते ॥ यच्छास्त्रंचप्रमाणंयदनुचसदसद्व्यक्तयोयत्रधर्माःकृष्णस्यैतन्नचित्रंक्षितिभरहरणंकालचक्रायुधस्य १७ जयतिजननिवासोदेवकीजन्मवादोनियमकृतपदाब्जैर्दस्युपीडांस्वदोर्भिः ॥ मुदमुभयदृशीनांश्रीनिकेतात्ममूर्त्यास्मरवपुरबलानांस्निग्धहासेक्षयाच १८ योह्यात्माजगदादिमध्यनिधनोयोऽव्यक्तजीवेश्वरोयःसृष्ट्वेदमनुप्रविष्टऋषिणाचक्रेपुनःसंहिताम् ॥ यंसंपद्यजहात्यजामनुशयीसुप्तःकुलायंयथातंकैवल्यनिरस्तयोनिमभयंध्यायेदजस्रंहरिम् १९ इत्थंपरस्यनिजधर्मरिरक्षयात्तलीलातनोस्तदनुरूपविडंबनानि ॥ कर्माणिकर्मकषणानियदूत्तमस्यगायेदमुष्यपदयोरनुवृत्तिमिच्छन् ४० मर्त्यस्तयानुसवमेधितयानुवृत्त्याश्रीमत्कथाश्रवणकीर्तनचिंतयैति ॥ तद्धामदुष्करकृतंजनतापवर्गंग्रामाद्वनंक्षितिभुजोपिययुर्यदर्थे ४१

ध्येनिधनेवर्त्ततइतिजगदादिमध्यनिधनः जगदुत्पत्तिस्थितिसंहारकर्ता अव्यक्तजीवयोरीश्वरः ऋषिणाव्यासात्मनाभागवतींसंहितां अनुशयीजीवःयंसंपद्यप्राप्य अजांबंधकशक्तिंजहाति सन्नासोस्यतदासंपन्नोभवतीतिश्रुतेः सुप्तःपरमात्मानंप्राप्तः यथाकुलायंशरीराभिमानंत्यक्त्वास्ते तथाकैवल्येनसच्चिदानंदस्वरूपस्थित्यानिरस्तयोनिंनित्यनिरस्तप्रकृतिम् ३९ इत्थंएवंविधस्ययदूत्तमस्य कर्माणिविक्रमलक्षणानिगायेदित्यन्वयः निजधर्मरिरक्षयास्वकल्पितधर्मरक्षणेच्छया तस्यानुकूलविडंबनानिकर्मकषणानिदुष्कर्मनिराकरणसमर्थानि अनुवृत्तिंअनुगमनमिच्छन् ४० मर्त्यःतयानुवृत्त्यातस्यहरेर्धामलोकमेति कीदृश्या श्रीमत्याःकथायाःश्रवणकीर्तनचिंतनलक्षणया दुष्करेणतपसाकृतंसाधितं जनतायाःक्रियासाध्यफलरूपजनतापवर्गं यस्यहरेर्धामार्थेक्षितिभुजोपिग्रामाद्वनं ग्रामंविहायवनंययुःयांति किंपुनरन्यइति ४१

स्कंधार्थमुपसंहरति यइदामीति व्यासपुत्रैःशुकादिभिः जगतोऽघंपापंभिनत्तीतिजगदघभित्तद्भक्तानांकर्णावतंसंकर्णालंकारायमानं श्रवणादिफलमाह भगवतीति क्षेमधामसमोक्षलक्षण
णादिकुर्वताइत्थंभाव्यमित्यतउक्तं भगवतीति सर्वोत्तमोपिभगवान्गुणभावंजनार्दनः । दर्शयेद्वासुदेवोपिह्यात्मनोजवितामपि अज्ञाशक्तादिभावस्तुकुतस्तस्याखिलेशितुः । कुतश्चजवितातस्यप्र
, शिशुः ॥ कुतोदोषाःसर्वगुणपूर्णस्यानंदवारिधेरित्येतत्प्रमाणअज्ञजनेनकृष्णेक्रियमाणसर्वशंकानिराकरणार्थंभगवत्पादैःस्कंधांतेदर्शितमितिज्ञातव्यमिति ॥ ४२ ॥ योऽयाचित्रिदशैःकुमारइ

सूतउवाच ॥ यइदमनुशृणोतिश्रावयेद्वामुरारेश्चरितममृतकीर्तेर्वर्णितंव्यासपुत्रैः ॥ जगदघभिदलंतद्भक्तकर्णावतंसंभगवतिकृतचित्तोयातितत्क्षेमधाम
४२ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेउत्तरार्धेश्रीकृष्णावतारचरित्रेत्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ

येनक्षितौजन्मयेनसुरासुहृत्समुदयोयेनत्रिलोक्यापिसा ॥ येनाधायियुधिष्ठिरोनिजपदेधर्मोपियेनांकुरिश्रीकृष्णंतमकृष्णकृष्णदयितंवंदामहेसंततम् ॥ १ ॥ पदरत्नावलिर्नामदशमस्कंधसंगता ॥ कृ
प्रीत्यासमाप्तेयंविद्वन्मानसहर्षिणी ॥ २ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेश्रीमन्महेन्द्रतीर्थश्रीपदशिष्यविजयध्वजकृतपदरत्नावल्यांटीकायामुत्तरार्धेत्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

॥ श्रीवेदव्यासायनमः ॥ जयतिजगतिजन्माद्यस्यविश्वस्ययस्मादमलनिगममुख्यावेचमाहात्म्यधाम ॥ द्रुहिणतनयऋचेशौरयेयत्स्वरूपंयदुपातिरपियास्यन्नुद्धवायस्वधाम १ वेदव्यासमहंवदेवेदव्यासेकवेदिनम् ॥ वेदव्यासजनारातिवेदव्यासमुनीनपि २ रत्नानामंबुधिःपात्रंतेजसामुष्णदीधितिः ॥ एवमेकादशस्कंधोवेदांतार्थैकसंनिधिः ३ दशमस्कंधरथ्यायागत्वांतंसार्थवित्पुनः ॥ गाहएकादशस्कंधतीर्थंविष्णुपदीमिव ४ ॥ इहनानाव्यसनराशिभारावभुग्नशिरसाकलिमलावकुंठितमनसांदुःखपरिहारसुखावाप्तीचाकांक्षमाणानांतदुपायमजानतांपुंसामुपकारायकरुणाकरेणबादरायणेनकृतभागवतपुराणकल्पतरोरनेकस्कंधपुष्पराशेर्मकरंदभूतएकादशस्कंधआरभ्यते। तत्रएकादशस्कंधमुत्थापयितुंवृत्तमनुवदति कृत्वेति जविष्ठमितिपाठेबृहत्तममित्यर्थः भारविशेषणम् यविष्ठमितिनीचमित्यर्थःकलिविशेषणम् स्वगोत्रकलहस्वानंदितत्वात् अवतारयन्अवतारयितुकामः ताच्छीलिकार्थेशतृप्रत्ययः भुवोभारंनिरहरदितिशेषेणान्वयःकथमित्यत उक्तम् दैत्यवधकृत्वेति अनेननस्वप्रयोजनार्थंकिंतुपरार्थंइतिज्ञातव्यम् १ एतदेवविवृणोति येकोपिताइति ईशःक्षितिभारंनिरहरदित्यन्वयः इदंनिर्हरणमपिस्वैश्वर्यद्योतकमितिज्ञापनायेशेतिपदम् येसपत्नैःकृतैर्दुर्वादादिभिःसुबहुकोपिताःपांडुसुतास्तान्निमित्तंकृत्वाइतरेतरतःसमेतान्परान्शत्रून्हत्वा २ भूभारनिर्हरणप्रकारंवक्ति भूभारेति किमचिंतयदत्राह मन्यइति अवनेर्भारोगतोपिअगतोननुइतिमन्यतेतत्रहेतुर्यदिति नन्विदमप्यन्यतःप्रा

श्रीशुकउवाच ॥ कृत्वादैत्यवधंकृष्णःसरामोयदुभिर्वृतः ॥ भुवोवतारयन्भारंयविष्ठंजनयन्कलिम् १ येकोपिताःसुबहुपांडुसुताःसपत्नैर्दुर्द्यूतहेलनकचग्रहणादिभिस्तान् ॥ कृत्वानिमित्तमितरेतरतःसमेतान्हत्वापरान्निरहरत्क्षितिभारमीशः २ भूभारराजपृतनायदुभिर्निरस्यगुप्तैःस्वबाहुभिरचिंतयदप्रमेयः ॥ मन्येऽवनेर्ननुगतोप्यगतोपिभारोयद्यादवंकुलमहोअविषह्यमास्ते ३ नैवान्यतःपरिभवोस्यभवेत्कथंचिन्मत्संश्रयस्यविभवोन्नहनस्यनित्यम् ॥ अंतःकलिंयदुकुलस्यविधायवेणुसंबस्यवह्निमिवशांतिमुपैमिधाम ४ एवंव्यवसितोराजन्सत्यसंकल्पईश्वरः ॥ शापव्याजेनविप्राणांसंजह्रेस्वकुलंविभुः ५ स्वमूर्त्यालोकलावण्यनिर्मुक्त्यालोचनंनृणाम् ॥ गीर्भिस्तांस्मरतांचित्तंपदैस्तामीक्षतांक्रियाः ६ आच्छिद्यकीर्तिंसुश्लोकांवितत्यह्यंजसानुकौ ॥ तमोनयातरिष्यंतीत्यगात्स्वंपदमीश्वरः ७ ॥ राजोवाच ॥ ब्रह्मण्यानांवदान्यानांनित्यंवृद्धोपसेविनाम् ॥ विप्रशापःकथमभूद्वृष्णीनांकृष्णचेतसाम् ८ यन्निमित्तोयदोःशापोयादृशोद्विजसत्तम ॥ कथमेकात्मनांभेदएतत्सर्वंवदस्वमे ९

प्तपरिभवंकिनस्यादत्राह नैवेति विभवेनोन्नहनंसमृद्धिर्यस्यतच्चथातस्यतस्मादयमुपायइत्याह अंतःकलिमिति वेणुसंघस्यांतःकलिर्मिथःसंघर्षणलक्षणःतस्माज्जातंवह्निं शांतिमंगलंधाम शांतीप्रशममंगलेइतियादवः यद्वा अंतःकलिंशांतिंयदुकुलस्यनाशहेतुम् ४ चिंताफलमाह एवमिति ५ पुनर्हरिणाकिमकारीत्यत्राह स्वमूर्त्येति ईश्वरःस्वपदमगादित्यन्वयः किंकृत्वेति लोकलावण्येषुसमुदितेषुयाबहुमानबुद्धिःतस्यानिर्मुक्तिर्ययासातथातयास्वमूर्त्यानृणांलोचनंआच्छिद्यआकृष्यगीर्भिःसहनांमूर्तिंस्मरतांनृणांचित्तमाच्छिद्य पदैःपादन्यासैःतांपश्यतांजनानांक्रियाःकर्माण्याच्छिद्ययद्वापादसौंदर्यादिगुणनिमग्नानांअन्यक्रियासुमनोनचलतीतितामीक्षतांपदैराच्छिद्य ६ कौभूमौसुष्ठुश्लोकःस्तुतिर्यस्याःसासुश्लोकातांकीर्तिमंजसातत्त्वेनावितन्वन् विस्तारयन् किंप्रयोजनमत्राह तमइति अनयाकीर्त्यातमस्तरिष्यंतीतिकृत्वा ७ श्रुतविप्रशापोराजापदुनाअसंभावितोपानितिभावेनपृच्छति ब्रह्मण्यानामित्यादिना शापासंभवेब्रह्मण्यादित्रयोहेतवः ८ यदोःकुलस्ययन्निमित्तःकिंनिमित्तःयादृशःकीदृशःएकात्मनांएकमनस्कानाम् भेदोमिथोवैरलक्षणः ९

शुकःप्रश्नंमवदन्पुनरुक्तंकरोति बिभ्रदित्यादिना सकलसुंदरगुणानांसन्निवेशंनिधानस्थानं ग्रामगृहमास्थायगृहेस्थित्वेत्यर्थः १० प्रश्नंपरिहरति कर्माणीति पुण्यनिवहानिपुण्यकारणानियदु देवउग्रसेनस्तस्यगेहेउग्रसेनाधिकृतद्वारवत्यांनिवसताकालात्मनाकृ(?)येननिग्रहःप्रेरिताःपिंडारकंक्षेत्रंप्राप्ताइत्यन्वयः ११ १२ उपसंगृह्यसांबमितिशेषः १३ अन्तर्वत्नीगर्भिणी असितेक्षणानीलने त्रा १४ १५ प्रलब्धाःवंचिताः सद्योर्थेत्तहसाहेतुशून्येयुक्तंपिसांप्रतमितिपादद्वयं हेमंदाःनिर्भाग्याः १६ तस्मिन्नुदरे १७ किंदुष्कृतम् १८ १९ २० २१ तरलैस्तरंगैःवेलायांतीरे क्षुण्णानिसंसक्तानि एरकादीर्घसूचीसुखतृणविशेषाः २२ शल्येषुशल्याख्यशरेलुब्धकोव्याधः २३ सर्वेषामर्थःपुरुषार्थोयस्मात्सतथासर्वैरर्थ्यतइतिवा ॥ २४ ॥ इतिश्रीभागव

श्रीबादरायणिरुवाच ॥ बिभ्रद्वपुःसकलसुंदरसन्निवेशंकर्माचरन्भुविसुमंगलमाप्तकामः ॥ आस्थायधामरममाणउदारकीर्तिःसंहर्तुमैच्छतकुलंस्थितकृत्यशेषः ॥ कर्माणिपुण्यनिवहानिसुमंगलानिगायज्जगत्कलिमलापहराणिकृत्वा ॥ कालात्मनानिवसतायदुदेवगेहेपिंडारकंसमगमन्मुनयोनिसृष्टाः ११ विश्वामित्रोसितःकण्वोदुर्वासाभृगुरंगिराः ॥ कश्यपोवामदेवोत्रिर्वसिष्ठोनारदादयः १२ क्रीडंतस्तानुपव्रज्यकुमारायदुनंदनाः ॥ उपसंगृह्यपप्रच्छुरविनीताविनीतवत् १३ तेवेषयित्वास्त्रीवेषैःसांबंजांबवतीसुतम् ॥ एषापृच्छतिवोविप्राअंतर्वत्न्यसितेक्षणा १४ प्रष्टुंविलज्जतीयुष्मान्प्रब्रूताऽमोघदर्शनाः ॥ प्रसोष्यंतीपुत्रकामाकिंस्वित्संजनयिष्यति १५ एवंप्रलब्धामुनयस्तानूचुःसहसानृप ॥ जनयिष्यतिवोमंदामुसलंकुलनाशनम् १६ तच्छ्रुत्वातेतिसंत्रस्ताविमुच्यसहसोदरम् ॥ सांबस्यददृशुस्तस्मिन्मुसलंखल्वयस्मयम् १७ किंकृतंमंदभाग्यैर्नःकिंवदिष्यंतिनोजनाः ॥ इतिविह्वलितागेहानादायमुसलंययुः १८ तच्चोपनीयसदसिपरिम्लानमुखश्रियः ॥ राज्ञआवेदयांचक्रुःसर्वयादवसन्निधौ १९ श्रुत्वाऽमोघंविप्रशापंदृष्ट्वाचमुसलंनृप ॥ विस्मिताभयसंत्रस्ताबभूवुर्द्वारकौकसः २० तच्चूर्णयित्वामुसलंयदुराजःसआहुकः ॥ समुद्रसलिलेप्रास्यल्लोहंचास्यावशेषितम् २१ कश्चिन्मत्स्योग्रसील्लोहंचूर्णानितरलैस्ततः ॥ उह्यमानानिवेलायांलग्नान्यासन्किलैरकाः २२ मत्स्योगृहीतोमत्स्यघ्नैर्जालेनान्यैःसहार्णवे ॥ तस्योदरगतंलोहंशल्येषुंलुब्धकोऽकरोत् २३ भगवान्ज्ञातसर्वार्थईश्वरोपितदन्यथा ॥ कर्तुंनैच्छद्विप्रशापंकालरूप्यन्वमोदत ॥ २४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेप्रथमोध्यायः ॥ १ ॥ ॥ श्रीशुकउवाच ॥ गोविंदभुजगुप्तायांद्वारकायांकुरूद्वह ॥ अवात्सीन्नारदोऽभीक्ष्णंकृष्णोपासनलालसः १ कोनुराजन्निंद्रियवान्मुकुंदचरणांबुजम् ॥ नभजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः २

तेमहापुराणेएकादशस्कंधेश्रीमद्देवतीर्थपूज्यपादशिष्यविजयध्वजतीर्थकृतौप्रथमोध्यायः ॥ १ ॥ ॥ अतःकतिपयैरध्यायैर्वसुदेवनारदसंवादच्छलेनहरेस्तत्त्वंतदवाप्तिसाधनंतदधिकारिलक्षणंचेत्यादिनिरूपयति तत्रवाद्यच्छिकस्यनारदस्यातःपुरवासिनावसुदेवेनसहसंगमःकथंसंजाघटीतिशंकांपरिहर्तुमाह गोविंदेति वनवासिनोनारदस्यजनसंकुलपुरनिवासहेतुःकृष्णेति १. श्लोकाद्विद्वयस्य किमतःपुंसोपिहरिश्रवणादिश्रद्धातिशयोजायते किंपुनःसम्यग्विज्ञाततत्त्वस्य नारदस्येतिभावेनाह कोन्विति सर्वतोमृत्युःमरणंयस्यसतथा २

अस्तुकंप्रकृतेकिमत्राह तमेकदेति ३ स्तुत्यासंतोषोद्रेकात्श्रातेव्याथकथनेबुद्ध्युत्कासाभवतीत्याशयेननारदंस्तौति भगवन्नित्यादिना स्वस्त्ययेइति धिरायेत्यादिप्रयोगवत् यात्रासंचारणं पित्रोर्यात्राशिशूनां उत्तमश्लोकःहरिःसएववर्त्मयस्यसतथा यद्वा उत्तमोहरिस्तस्यश्लोकइवश्लोकोयेषांतेतथामहांतस्तेषांवर्त्मयस्यसतथामहन्मार्गानुवर्तीत्यर्थःतस्य ४ ननुसर्वभूतसुहृत्त्वेसात्विकत्वंप्रयोजकंतदेवानामप्यस्त्यतःकिंविशेषतःस्तूयतइतितत्राह भूतानामिति भूतानित्रिविधानिसात्विकराजसतामसमिश्राणीदि तत्रदेवानांचरितंसात्विकभूतानांसुखायैवआत्मभजनेबुद्धिमुत्पाद्य सुखलक्षणफलदानं तामसानांदुःखायतद्विपर्ययबुद्धिमुत्पाद्यदुःखलक्षणफलदानं राजसानांसुखदुःखलक्षणमिश्रफलायमिश्रकर्मबुद्धिमुत्पाद्यसुखादिमिश्रफलदान इदं चशब्दगृहीतं द्वितीयश्चशब्दः समुच्चयार्थः भवादृशानांचरितंनतथेत्याह सुखायेति एवशब्देनदुःखंव्यावर्तयति अच्युतात्मनामित्यनेनव्यापारांतरंनिवारयति हिशब्देनतेषांतदस्तीतिसूचयति देवानामात्मभजनेबुद्धिमुत्पाद्यानुत्पाद्यचसुखादिफलदातृत्वमस्तीत्युक्तंतत्स्पष्टयति भजंतीति येपुरुषाःयथायेनप्रकारेणदेवान्भजंतितेदेवाअपितथाकृतकर्मानुसारेणतान्पुरुषान्भजातिफलदानेनसन्नद्धाभवंति नचदेवेषुवैषम्यादिकमाशंकनीयमित्येतन्निदर्शनेनदर्शयति छायेति कर्मसचिवाः छायावत्पुरुषकृतकर्माधीनाछायायथापुरुषानुकृतातथेत्यर्थः भवादृशानतथेत्याह साधवइति आत्मनोभजनेबुद्धिमुत्पाद्यफलदाःसुराः।

तमेकदातुदेवर्षिर्वसुदेवोगृहागतम् ॥ अर्चितंसुखमासीनमभिवंद्येदमब्रवीत् ३ वसुदेवउवाच ॥ भगवन्भवतोयात्रास्वस्तयेसर्वदेहिनाम् ॥ कृपणानां यथापित्रोरुत्तमश्लोकवर्त्मनः ४ भूतानांदेवचरितंदुःखायचसुखायच ॥ सुखायैवहिसाधूनांत्वादृशामच्युतात्मनाम् ५ भजंतियेयथादेवान्देवाअपितथैवतान् ॥ छायेवकर्मसचिवाःसाधवोदीनवत्सलाः ६ ब्रह्मंस्तथापिपृच्छामोधर्मान्भागवतांस्तव ॥ यान्श्रुत्वाश्रद्धयामर्त्योमुच्यतेसर्वतोभयात् ७ अहंकिलपुरानंतंप्रजार्थेभुविमुक्तिदम् ॥ अपूजयंनमोक्षायमोहितोदेवमायया ८ यथाविचित्रव्यसनाद्भवेस्मिन्विश्वतोभयात् ॥ मुंचेमह्यंजसैवाद्धातथानःशाधिसुव्रत ९ श्रीशुकउवाच ॥ राजन्नेवंकृतप्रश्नोवसुदेवेनधीमता ॥ प्रीतस्तमाहदेवर्षिर्हरेःसंस्मारितोगुणैः १०

उत्तमानांजनानांचनिकृष्टानांविपर्ययः । शुभाशुभफलानांतुकर्मणाविबुधाःसदा । प्रवर्तकायथायोग्यमृषयःकरुणांसदा । सुखमिच्छंतिभूतानांप्रायोदुःखासहानृणां । तथापितेभ्यःप्रवरादेवाएवहरेःप्रियाःइत्येतदस्मिन्नर्थेप्रमाणम् ६ ननुसाधुभ्योदेवानामुत्तमत्वेमीष्टार्थप्रश्नस्तान्प्रतिस्याद्यथावत्प्रश्नपरिहारवक्तृत्वसामर्थ्यादितितत्राह ब्रह्मन्निति यद्यपिदेवाःप्रशस्तानिश्चितार्थास्तथापिमानुषत्वेनास्मदृष्टयगोचरत्वाद्युष्माकंतन्निश्चितार्थज्ञानसामर्थ्याच्चत्संनिधानपात्रत्वाच्च वयंतुतवत्वांधर्मान्पृच्छामइत्यन्वयः ननुकिमत्राहिंसालक्षणोधर्मउतन्यायाचाराद्यन्यतमइत्यत्राह भागवतानिति अवश्यवक्तव्यत्वेतल्लणमाह यानिति अनेनयद्धर्मश्रवणमपिसर्वभयमोचकंकिमुततदनुष्ठानमितिदर्शितम् ७ भवताभगवद्विषयधर्माचरणंकृतंकिमधुनातद्विषयप्रश्नइतितत्राह अहमिति ८ नन्वपुत्रस्यजीवत्पुत्रमुखदर्शनाल्लोकावाप्तिःश्रूयतेअतःकथंप्रजार्थइतिनिंदाध्वनिरितितत्राह यथेति अस्मिन्भवेजन्मनिविचित्रव्यसनात्नानाक्लेशात्विश्वतोभयाच्चयथांजसाक्षिप्रमुचेमहि तथापुनरद्धाप्रत्यक्षशाधीत्यन्वयः अद्धामत्यक्षसत्ययोरितियादवः अनेनवसुदेवस्यपुत्रीभूतश्रीकृष्णमुखेंदुदर्शनादशेषव्यसनाकुलसंसारान्मुक्तेर्निश्चितत्वेपिविशेषप्रश्नोलोकहितायेतिज्ञातव्यम् ९ वसुदेवेनपृष्टोनारदःकिंचित्तगुणोभूदितिराज्ञोहार्दंचेच्चपरिहरति राजन्निति हरेर्गुणैःसंस्मारितोहरिरितिशेषः १०

---

१ देवा: शुभाशुभकर्म कारयित्वा सुखदुःखफलं ददति साधवस्तु सुखमेव तथापि साधूना देवापेक्षयाश्रैष्ठ्यं न इत्यर्थं ।

बुद्धिविकासायप्रष्टारंस्तौति सम्यगिति विश्वस्याभीष्टस्यभावनमुत्पादनंयेभ्यस्तेतथातान् ११ एतदेवविवृणोति श्रुतइति देवशब्दस्यविश्वांतर्भावेपिपृथक्ग्रहणमनिवर्त्यदोषपरिहारसामर्थ्यसूचनार्थंकृतं एतदेवापिशब्देनासूचयत् ब्रह्महत्यासहस्रस्यपापंशाम्येत्कथंचन नपुनस्त्वदवज्ञानेकल्पकोटिशतैरपि इममर्थंहिशब्देनसूचयति १२ ममाप्यनेनपुण्यबुद्धिरभूदित्याशयेनाह त्वयेति नित्यंस्मृतोपीदानींविशेषतःस्मारितोगुणकथनप्रश्नेन १३ धीमत्त्वेनवसुदेवस्यनारदोक्तौविस्रंभेपिस्वकपोलकल्पितत्वेनन श्रद्धेयमितिमंदाशंकापनोदायतत्प्रश्नपरिहारत्वेनजनकार्षभसंवादमितिहासंवक्ति अत्रेति १४ निश्चवजननायान्वयशुद्धिंकथयति प्रियव्रतइत्यादिना १५ अवतारप्रयोजनमाह मोक्षेति १६ यन्नाम्नाभारतमिति यस्यनाम्नाएतद्वर्षंभारतमितिविख्यातंअद्भुतंपुण्यसाधनानिमित्तत्वेन १७ तत्पदवींतस्यहरेःपदवीं अयनंलोकमित्यर्थः १८ तेषांमध्येनवास्यभूमंडलस्यनवद्वीपपतयःअभवन्तेषांमध्येएकाशीतिसंख्याताद्विजातयोबभूवुः किंकर्माणइत्यत्राह कर्मेति कर्मतंत्रप्रणेतारःकर्मकांडप्रणेतारः १९ तेषांमध्येनवसंख्यातामुनयोभवन्तत्रापिविशेषमाह ऊर्ध्वमंथिनइति ऊर्ध्वंमंथारेतएषामस्तीतिऊर्ध्वमंथिनःऊर्ध्वरेतसः संन्यासव्रतधारिणइत्यर्थः स्पष्टमाह श्रमणाइति श्रमणा

नारदउवाच ॥ सम्यगेतद्व्यवसितंभवतासात्वतर्षभ ॥ यत्पृच्छसेभागवतान्धर्मांस्त्वंविश्वभावनान् ११ श्रुतोनुपठितोध्यातआदृतोवानुमोदितः ॥ सद्यःपुनातिसद्धर्मोदेवविश्वद्रुहोपिहि १२ त्वयापरमकल्याणःपुण्यश्रवणकीर्तनः ॥ स्मारितोभगवानद्यदेवोनारायणोमम १३ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ आर्षभाणांचसंवादंविदेहस्यमहात्मनः १४ प्रियव्रतोनामसुतोमनोःस्वायंभुवस्ययः ॥ तस्याग्नीध्रस्ततोनाभिर्ऋषभस्तत्सुतःस्मृतः १५ तमाहुर्वासुदेवांशंमोक्षधर्मविवक्षया ॥ अवतीर्णंसुतशतंतस्यासीद्ब्रह्मपारगम् १६ तेषांवैभरतःश्रेष्ठोनारायणपरायणः ॥ विख्यातंवर्षमेतद्यन्नाम्नाभारतमद्भुतम् १७ समुक्तभोगांत्यक्त्वेमांनिर्गतस्तपसाहरिम् ॥ उपासीनस्तत्पदवींलेभेवैजन्मभिस्त्रिभिः १८ तेषांनवनवद्वीपपतयोस्यसमंततः ॥ कर्मतंत्रप्रणेतारएकाशीतिर्द्विजातयः १९ नवाभवन्महाभागामुनयोह्यर्थशंसिनः ॥ श्रमणावातरशनाआत्मविद्याविशारदाः २० कविर्हरिरंतरिक्षःप्रबुद्धःपिप्पलायनः ॥ आविर्होत्रोथद्रुमिलश्चमसःकरभाजनः २१ तएतेभगवद्रूपंविश्वंसदसदात्मकम् ॥ आत्मनोव्यतिरेकेणपश्यंतोव्यचरन्महीम् २२

भिक्षवः तत्रापिविशेषमाह वातरशनाइतिवातएवरशनाकटिसूत्रंयेषांतेतथादिगंबराःपरमहंसाइत्यर्थः आत्मविद्यायांवेदांतशास्त्रेविशारदाःपटवः २० एतन्नामनिरुक्तिज्ञानादयमर्थःसिद्धइति तन्नामान्याह कविरित्यादिना द्रुतंमिलंमिथोमेलनंवेदार्थानामेकीकरणंयेनसतथा चाम्यंतिवेदतत्त्वार्थाइतिचमावेदतत्त्वार्थपायिनः तेषुसारश्चमसःसृगतावितिधातोःडप्रत्ययः करेभांतंजनयतिप्रकाशयतीतिकरभाजनःहस्तामलकवत्प्रतिभातवेदार्थइत्यर्थः २१ आत्मविद्यावैशारद्यंचात्मभेदज्ञानेनेतिभावेनाह तएतइति येमुनित्वेनोक्तास्तएतेमहींव्यचरन्नित्यन्वयःकिंविशिष्टाः विश्वंपूर्णंसदसदात्मकंकार्यकारणव्यापिभगवद्रूपंआत्मनाजीवाद्व्यतिरेकेणवैलक्षण्येनपश्यंतइति यद्वा सदसदात्मकंकार्यकारणात्मकंभगवद्रूपंभगवतोमूर्तिंप्रतिमास्थानीयविश्वंप्रपंचमात्मनोहरेर्व्यतिरेकेणपश्यंतइति यद्वा विश्वमंतःप्रविश्यवर्तमानंसदसदात्मकंबहिश्चजगत्व्याप्यवर्तमानभगवद्रूपंब्रह्मसद्मात्मनोंतर्यामिणोहरेरव्यतिरेकेणाभेदेनपश्यंतः अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितइतिश्रुत्यर्थरसमनुभवंतइत्यर्थः विश्वस्यपरमात्मनोऽभेददर्शनंसदसदात्मकमितिविशेषणेनविरुद्धमनंगीकारात्जहदजहल्लक्षणाप्यप्रामाणिकीत्युपेक्षणीयंतन्मतमिति २२

महीसंचरणंचारकाणामप्यस्तिकिंविशेषमहात्म्यमेषामत्राह अव्याहतेति मुक्ताःजीवन्मुक्ताःमुनिचारणादीनांभुवनानिलोकांश्चेतिसुरसिद्धादीनांलोकांश्चरंतीतिकिंकर्मवशात्नेतिआह कामाथीति बल्व
तार्थतिषेधकामतोपिसंचरणंदुःशकंस्यादित्यतउक्तं अव्याहतेति २३ किमनेनप्रकृतइतितत्राह तएकदेति अंजनाभस्यहरेःपुत्राःआञ्जनाभाः २४ इदमुपगमनन्द्वेषजनकंनिमित्ताभावात् किंतुसंप्री
तिजनकंतल्लक्षणदर्शनादित्याह तानिति उपतस्थिरेसांजलिपुटाउत्थायासेवंत २५ तत्रविदेहेनइतरेभ्यःकिंविशेषणसेवितमत्राह विदेहइति अभिप्रेत्यसम्यग्ज्ञात्वा २६ ब्रह्मपुत्रोपमान्सनकादि
तुल्यान्तांस्तुवन्पप्रच्छ अभीष्टमितिशेषः २७ स्तुतिप्रकारःकथ्यतेमन्यइत्यादिना २८ २९ किमभीष्टमप्राक्षीदत्राह अतइति यतोवैकुंठप्रियदर्शनंदुर्लभमतः करतलप्राप्तरत्नत्वात् भवतोयेनानिः
श्रेयानःस्यात्तदात्यंतिकंक्षेमंमंगलसाधनमिति मोक्षसाधनंपृच्छामइत्यर्थः कार्येणकारणमुपलक्ष्यतइतिन्यायोपपत्तेःनकेवलंप्रश्नप्रतिवचनाभ्यांतत्परिहारलक्षणंप्रयोजनंलभ्यते अपितुतयोश्चिरकाला

अव्याहतेष्टगतयःसुरसिद्धसाध्यगंधर्वयक्षनरकिन्नरनागलोकान् ॥ मुक्ताश्चरंतिमुनिचारणभूतनाथविद्याधरद्विजगवांभुवनानिकामम् २३ तएकदानिमेःसत्र
मुपजग्मुर्यदृच्छया ॥ वितायमानमृषिभिरांजनाभामहात्मनः २४ तान्दृष्ट्वासूर्यसंकाशान्महाभागवतान्नृप ॥ यजमानोऽग्नयोविप्राःसर्वएवोपतस्थिरे
२५ विदेहस्तानभिप्रेत्यनारायणपरायणान् ॥ प्रीतःसंपूजयांचक्रआसनस्थान्यथार्हतः २६ तान्रोचमानान्स्वरुचाब्रह्मपुत्रोपमान्नव ॥ पप्रच्छपरम
प्रीतःप्रश्रयावनतोनृपः २७ विदेहउवाच ॥ मन्येभगवतःसाक्षात्पार्षदान्वोमधुद्विषः ॥ विष्णोर्भूतानिलोकानांपावनायचरंतिहि २८ दुर्लभोमानुषो
देहोदेहिनांक्षणभंगुरः ॥ तत्रापिदुर्लभंमन्येवैकुंठप्रियदर्शनम् २९ अतआत्यंतिकंक्षेमंपृच्छामोभवतोनघाः ॥ संसारेस्मिन्क्षणार्धोपिसत्संगःशेवधिर्नृ
णाम् ३० धर्मान्भागवतान्ब्रूतयदिनःश्रुतयेक्षमम् ॥ यैःप्रसन्नःप्रपन्नायदास्यत्यात्मानमप्यजः ३१ ॥ नारदउवाच ॥ एवंतेनिमिनापृष्टावसुदेवमहत
माः ॥ प्रतिपूज्याब्रुवन्प्रीत्याससदस्यर्त्विजंनृपम् ३२ कविरुवाच ॥ मन्येकुतश्चिद्भयमच्युतस्यपादांबुजोपासनमत्रनित्यम् ॥ उद्विग्नबुद्धेरसदात्मभा
वाद्विश्वात्मनायत्रनिवर्ततेभीः ३३ येवैभगवताप्रोक्ताउपायाह्यात्मलब्धये ॥ अंजःपुंसामविदुषांविद्धिभागवतान्हितान् ३४ यानास्थायनरोराजन्
नप्रमाद्येतकर्हिचित् ॥ धावन्निमील्यवानेत्रेनस्खलेन्नपतेदिह ३५

पेक्षितत्वेनप्रष्टृवक्तृपुरुषयोश्चतावत्कालंस्थित्यपेक्षितत्वेनलब्धेनतत्संगेनसुखनिधिलक्षणंप्रयोजनंचेत्यभिप्रेत्यतत्संगंस्तौति संसारइति शेवधिः सुखनिधिः ३० प्रधानसाधनेसाधनान्यपिवक्तव्यानीत्या
ह धर्मानिति श्रुतयेश्रवणायक्षमंयोग्यं कल्याणोऽऋक्दक्षसंज्ञायोग्यायुक्ताहिताक्षमाइतियादवः ३१ ३२ अब्रुवन्निति बहुवचनात् यद्रूपमुत्पन्नंतदल्पबुद्धेरेकस्यबहुभिर्विचक्षणैर्युगपदुच्यमानवचना
र्थावधारणंदुःशकमितिनिवारयति कविरिति अत्रसंसारे असत्यमंगलेदेहादावहमित्याद्यात्मभावादुद्विग्नबुद्धेःपुरुषस्यनित्यमच्युतस्यहेयोपादेयांशरहितस्यहरेः श्रीपादपद्मोपासनमकुतश्चिद्भयं
नकुतश्चिद्भयंयस्मात्तत्तथातदहंमन्यइतिमम राद्धांतइत्यर्थः विशिनष्टि विश्वात्मनेति यत्रयस्मिन्नुपासनेकृतेविश्वात्मनासर्वात्मनासंसारभीतिर्निवर्ततेतदेवानुष्ठेयंपुरुषेणेति ३३ हरेरंघ्रिनिषेवणमेवमुख्यो
भागवतोधर्मइतिमनसिनिधायतदंगत्वेनोच्यमानायोगाअपिभागवतधर्माइत्याह येवाइति आत्मलब्धयेपरमात्मज्ञानाय भागवतान्धर्मानितिशेषः ३४ नप्रमाद्येतअनवधानवान्नभवति प्रमादो
नवधानमित्यभिधानात् आत्मानात्मविवेकज्ञानवान्स्यादित्यर्थः कथमित्येतस्मिन्नर्थेलुप्तोपमामाह धावन्निति यथानेत्रेउन्मील्यधावन्निहशर्करादिस्थलेनस्खलेन्नपतेत्तथाभागवतधर्मरथाधिरूढः ३५

भगवत्कथितोपायविधिःकीदृशइतितत्राह कायेनेति । स्वभावंयोग्यतामनुसृतोनुगतःमनसासंकल्पाद्यधिकरणेनबुद्ध्यानिश्चयज्ञानाधिकरणेनआत्मनामत्यामननलक्षणज्ञानाधिकरणेनअहंहरिमर्चया मीत्यादिलक्षणेनाहंकारेणवा कायादिनायदर्चनादिकंकरोतिसर्वक्रियासुस्वस्यास्वातंत्र्यज्ञानेनतत्सर्वंपरस्मैनारायणायास्त्वितिसमर्पयेत् सोयमात्मप्रसादजनकत्वेनतज्ज्ञानोपायइतिभावः ३६ विप क्षेबाधकतर्कमुद्राव्यविपर्ययेवसानमाह भयमिति अस्मृतिरज्ञानंविपर्ययोऽन्यथाज्ञानं एतेईशादपेतस्यईशानुग्रहरहितस्यप्रकृतिबद्धस्यपुंसोयस्यहरेर्मायायेच्छयास्तः ताभ्यांअज्ञानान्यथाज्ञानाभ्याद्विती याभिनिवेशतःद्वितीयेदेहगेहादौअहंममेत्यभिनिवेशनाद्दुरभिमानःस्यात्तस्माद्भयंसंसारलक्षणंस्यादितियस्मात्अतोगुरौपरमात्मदेवतायांचआत्मामनोयस्यसतथातस्मात्तज्ज्ञानवान्यथायोग्यंगुरुपरमपुरुष योर्भक्तिंकुर्वाणोबुधस्तंहरिमाभजेत्सर्वसमर्पणपूर्वकमुपासीतेत्यर्थः ३७ एतदेवसोदाहरणंविवृणोति अविद्यमानइति धियाध्यातुर्विषयानितिशेषःध्यायतोविषयानस्येतिस्मृतेः । पुंसईशाधीनत्वेन स्वस्याविद्यमानोपिद्वयोदेहगेहादिःस्वकीयत्वेनावभातिहियस्मात् कथमिव यथास्वप्नयुतमनोरथःस्वप्नेजाग्रत्त्वेनानिधिमुत्थापकोशमापाद्यप्रकृतिवर्गमावध्यराज्यंकरिष्यामीतिमनोरथःसत्त्वेनप्रतीयते तथादेहादावीशाधीनेस्वाधीनत्वबुद्धिःसंसारःतस्माच्चादृशसंसारनिवृत्तयेतत्कर्मतद्देहादिकर्मविषयोयस्यतत्तथातत्संकल्पविकल्पवृत्तियुक्तंमनःश्रीनारायणेनिदध्यात् ततोहरिप्रसादादभयंसंसारनिवृत्तिल क्षणोमोक्षःस्यादित्यन्वयः । सर्वसमर्पणलक्षणोपासनाभावेब्रह्मज्ञानंनस्यात्तदभावेसंसारनिवृत्तिर्नस्यात्अतस्तदर्थंसर्वसमर्पणलक्षणमुपासनंकर्तव्यमितिभावः । आत्मनादेहगेहादिद्वयशब्देनभण्यते ।

कायेनवाचामनसेंद्रियैर्वाबुद्ध्यात्मनावानुसृतःस्वभावम् ॥ करोतियद्यत्सकलंपरस्मैनारायणायेतिसमर्पयेत्तत् ३६ भयंद्वितीयाभिनिवेशतःस्यादीशादपेतस्यविपर्ययोऽस्मृतिः ॥ तन्माययातोबुधआभजेत्तंभक्त्यैकयेशंगुरुदेवतात्मा ३७ अविद्यमानोप्यवभातिहिद्वयोध्यातुर्धियास्वप्नमनोरथौयथा ॥ तत्कर्मसंकल्पविकल्पकंमनोबुधोनिरुध्यादभयंततःस्यात् ३८ शृण्वन्सुभद्राणिरथांगपाणेर्जन्मानिकर्माणिचयानिलोके ॥ गीतानिनामानितदर्थकानिगायन्विलज्जोविचरेदसंगः ३९ एवंव्रतःस्वप्रियनामकीर्त्याजातानुरागोद्रुतचित्तउच्चैः ॥ हसत्यथोरोदितिरौतिगायत्युन्मादवन्नृत्यतिलोकबाह्यः ४०

अविद्यमानंजीवस्यप्रतिभातितदीयवत् । जाग्रद्वत्सुयथास्वप्नःप्रतिभातिमनोरथः विद्यमानवदेवैवंदेहादीशवशेस्थितं । विभातिस्ववशत्वेनसैषासंसृतिरुच्यते । तस्मात्तद्विषयंत्यक्त्वामनोविष्णौनिवेशये दित्येतन्मानसिद्धमेतदर्थजातं नन्वत्रदेहादेरसत्त्वाभिप्रायेणस्वप्नादिदृष्टांतःकिंनस्यादितिचेन्न उदाहृतस्मृतिविरोधात् । तस्मात्स्वातंत्र्यस्यैवानिषेधःक्रियतइति । द्वयशब्देनभेदमनूद्यतन्निषेधःक्रियत इत्यर्थोप्युक्तप्रमाणविरुद्धइत्युक्तमनाकुलमिति ३८ अयमपिभागवतोधर्मइत्याह शृण्वन्निति एवमात्मज्ञानोत्पादनसमर्थंभगवदुपासनांगभूतसर्वसमर्पणाख्यभागवतधर्ममनुष्ठितोदेहाद्यभिमानविधुरस्य भगवदेकस्वातंत्र्यज्ञानिनोनिरंतरंहरौमनोनियुंजमानस्यइयंप्रवृत्तिरित्यतोवाह शृण्वन्निति । तदर्थकानिजन्मकर्मविषयाणि ३९ एवंश्रवणाद्याचरतोपरोक्षज्ञानजननीभक्तिःस्यादित्याह एवंव्रत इति । प्रियस्यहरेर्नामकीर्त्याजातानुरागःसंवर्धितभक्त्युद्रेकःअनेनभक्त्युद्रेकोनुमंतव्यइतिभावेनाह हसतीति लोकबाह्यइत्यनेनभक्तबाहुविध्यंदर्शयति कश्चिल्लोकबाह्योलोकविलक्षणः कश्चिल्लोक वद्बाह्यलिंगप्रदर्शकःकश्चिल्लोकवत्बाह्यवदुभयलक्षणोपेतश्च । तदुक्तं केचिदुन्मादवद्भक्ताबाह्यलिंगप्रदर्शकाः । केचिदांतरभक्ताःस्युःकेचिच्चैवोभयात्मकाः । मुखप्रसादाद्दार्ढ्याच्चभक्तिर्ज्ञेयानचान्यतः । हसना दिलक्षणमुन्मादादावतिव्याप्तमित्यतउक्तंमुखप्रसादादिति । नन्वयमर्थोमुखेननोक्तइत्यतउक्तमथोइति । अथोशब्दोऽप्यर्थःहसनादेरतिव्याप्तत्वान्मुखप्रसादाद्यपेक्षितमित्यर्थः विकल्पार्थोवासचलो कबाह्यइत्यनेनस्पष्टीकृतइति ४०

इदानीमेवंविधोपासकस्यहरेरुपासनार्थमधिष्ठानविशेषमाह खंवायुमित्यादिना खादीनांयानियानिशब्दप्रवृत्तिनिमित्तानितानिसर्वाणिहरेरधीनत्वेनतदेकनिष्ठगुणावेदकानिउपासकानांचतत्तद्यो
ग्यतावशात्तत्तदधिष्ठानबाहुल्यंचोपयुज्यते हरेरावासस्थानत्वात्तेषुतदुपासनाविधानमितिभावेनाह हरेरिति यत्किंचभूतमुत्पन्नंतत्सर्वंहरेःशरीरंविषयभोगायतनत्वादावासस्थानं यःपृथिव्यांति
ष्ठन्पृथिव्याइत्यादिश्रुतेः प्रकर्षेणमनस्तन्नतंकुर्यात्किंतदभेदेनेत्याह अनन्यामिति अन्यःस्वामीनविद्यतेयस्यसोऽनन्यःतंब्रह्मपरिणामत्वेनसर्वस्यतच्छरीरत्वात्तदभेदेनोपासनोच्यतेचेतिचेन्न
सर्वंहरेर्वंशत्वेनशरीरंतस्यभण्यतइत्याविरोधात् ४१ एवंखाद्यधिष्ठानेषुसन्निहितस्यहरेस्ततोभिन्नत्वेननतत्स्वामित्वेनचोपासनाभक्त्यादिपुष्टिंकरोतिनान्यथेतिसोदाहरणमाह भक्तिरिति खा
दिषुस्थितंहरिंप्रपद्यमानस्योपासीनस्यतथापरेपरमात्मविभक्तिःस्वेस्वास्मिन्ननुभावोस्वातंत्र्यज्ञानंअन्यत्रसंसारेविरक्तिरित्येषत्रिक.त्रिकत्वसंख्यांप्राप्तएककालःस्यादितिशेषः यथाबुभुक्षोरश्नतःपुंसोनुघा
संप्रातिकवल्क्षुदपायःपुष्टिरुदरपूर्तिलक्षणातुष्टिरलंबुद्धिश्चेत्येतत्त्रयंस्यात् ४२ पूर्वोक्तार्थमनूद्यतत्फलमाह इतीति प्रीत्याभजतोन्वनंतरंभगवत्प्रबोधः भगवदपरोक्षज्ञानमनंतरंपूर्वस्मादधिकासंसारावि
रक्तिरनंतरअधिकाभक्तिरित्येतानिसाधनानिभागवतस्यभवंतीतियस्माच्चतोनंतरंसाक्षात्तुर्यावस्थालक्षणांपरामुत्तमांशांतिंस्वयोग्यांमुक्तिमुपैतीत्यन्वयः अत्रपूर्वाधिक्यविवक्षयाप्रबोधादीनांहेतुमद्भावक

खंवायुमग्निंसलिलंमहींचज्योतींषिसत्वानिदिशोद्रुमादीन् ॥ सरित्समुद्रांश्चहरेःशरीरंयत्किंचभूतंप्रणमेदनन्यम् ४१ भक्तिःपरेस्वेनुभवोविरक्तिरन्यत्रचैष
त्रिकएककालः ॥प्रपद्यमानस्ययथाश्नतःस्युस्तुष्टिःपुष्टिःक्षुदपायोनुघासम् ४२ इत्यच्युतांघ्रिंभजतोनुवृत्त्याभक्तिर्विरक्तिर्भगवत्प्रबोधः॥भवंतिवैभागवतस्य
राजन्ततःपरांशांतिमुपैतिसाक्षात् ४३ राजोवाच ॥ अथभागवतंब्रूतयद्धर्मोयादृशोनृणाम् ॥ यथाचरतियद्ब्रूतेयैर्लिंगैर्भगवत्प्रियः ४४ हरिरुवाच ॥
सर्वभूतेषुयःपश्येद्भगवद्भावमात्मनः ॥ भूतानिभगवत्यात्मन्येषभागवतोत्तमः ४५ ईश्वरेतदधीनेषुबालिशेषुद्विषत्सुच ॥ प्रेममैत्रीकृपोपेक्षायःकरोति
समध्यमः ४६ अर्चायामेवहरयेपूजांयःश्रद्धयेहते ॥ नतद्भक्तेषुचान्येषुसभक्तःप्राकृतःस्मृतः ४७ गृहीत्वापींद्रियैरर्थान्योनद्वेष्टिनहृष्यति ॥
विष्णोर्मायामिमांपश्यन्सवैभागवतोत्तमः ४८

थनंनाविरुद्धमितिज्ञातव्यम् ४३ भगवत्संबंधीभागवतइतिसामान्यतोज्ञातभागवतोपिविशेषविवक्षयालोकोपकारायपृच्छति अथेति अथप्राप्तावसरःपृच्छामीतिशेषः किंतत्राह भागवतमिति
भागवतमुत्तममध्यमाधमसंज्ञं यद्धर्मःकिंधर्मःयादृशःकीदृशःयथाकथं ४४ तत्रप्रथमप्रश्नंपरिहरति सर्वभूतेष्विति सर्वभूतेषुस्थितस्यात्मनःपूर्णस्यहरेःभगवान्सर्वगुणपूर्णःतस्यभावोभगवद्भावः सर्व
गुणपूर्णतांआत्मन्यात्मनिभगवतिभूतानिचपश्येत्पश्यति सर्वभूतेष्वात्मनःस्वस्यभगवद्भावंब्रह्मत्वंपश्यन्भागवतोत्तमइत्यर्थस्यपूर्णत्वादात्मशब्दउक्तःकश्चित्सर्वंनरोत्तमइतिवाक्यविरुद्धत्वादनादर्त्तव्यम्
४५ मध्यमभागवतमाह ईश्वरइति ईश्वरेप्रेमतदधीनेषुसत्सुमैत्रींबालिशेषुअज्ञेषुकृपांद्विषत्सुउपेक्षां चशब्दात्सर्वस्यजगतस्तद्वशत्वंनजानाति ४६ अधमभागवतमाह अर्चायामिति एवशब्दे
नार्चायाअन्यत्रस्थितविष्णुज्ञानंतत्पूजांचव्यावर्तयति तद्भक्तेषुनकेवलपूजानेहतेअपितुतारम्यंनजानाति अन्येषूपेक्षकेषुशत्रुषुद्वेषप्रकारंनजानाति विष्णुज्ञानंचकिंचिदुच्चत्वेनप्राकृतःप्रकृतिनिर्मितं
स्वर्गादिकंप्राप्यततोघोरलोकंयाति मध्यमभक्तस्यापिस्वर्गएवनिरयोनैव ४७ यथाचरतीत्येतंप्रश्नंपरिहरति गृहीत्वेति इमांलोकयात्राविष्णोर्मायांइच्छाधीनांपश्यन्निंद्रियैरर्थाञ्छब्दादीन्विषयान्गृहीत्वा
वियोग्यताविरेकेणाधिकंनद्वेष्टिनहृष्यति। अयमेवयद्धर्मइत्यस्यपरिहारःसदसत्सुयथायोग्यंहर्षद्वेषौ सवसतांवृद्धिन्हासकरोधर्मः। सर्वंहरेर्वंशत्वेनशरीरंतस्यभण्यते। अनन्याधिपतित्वान्नतदनन्यमुदीर्यते

नचाप्यभेदोजगताविष्णोःपूर्णगुणस्यत्विवि। एतद्धरेःशरीरं यत्किंचभूतंप्रणमेदनन्यामित्यत्रप्रमाणं। पूर्णत्वादात्मशब्दोक्तःकश्चित्सर्वनरोत्तमः । सोपिनारायणोनान्यःसचसर्वेषुसंस्थितः। तद्वशाइतरेसर्वे
श्रीब्रह्मेशपुरःसराः। सएवतुस्वभक्तेषुस्थित्वानुग्रहकारकः। अज्ञेष्वज्ञानयंताचद्विषत्सुद्वेषकारकः। तत्प्रेरितास्तदन्येतुप्रियद्वेषादिकारिणः। अतस्तत्प्रेरणादेवप्रेमा चाममजज्ञिरे। इतिपश्यतियोवुद्ध्यासतु
भागवतोत्तमः। सर्वाधिकंपृथग्विष्णुंक्षीरसागरवासिनं। ज्ञात्वातत्रप्रेमयुक्तस्तद्भक्तेषुचमैत्रयुक्। कृपावांश्चतदज्ञेषुतद्द्वेषीणामुपेक्षकः। तद्वशत्वंनजानातिसर्वस्यजगतोपितु। तमाहुर्मध्यमंभक्तमर्चायामेवसंस्थि
तं। विष्णुंज्ञात्वातदन्यत्रनैवजानातियःपुमान्। तारतम्यंचतद्भक्तेर्नजानातिकथंचन । अवजानंश्चतद्भक्तानात्मनोभक्तिदर्पत. । उपेक्षकोपिवातेषुनस्मरेदथवापितान् । मानुषेषुयथाकश्चित्किंचिदुच्चःप्रदृश्य
ते। एवमेवोच्चताविष्णोरल्पांपश्यतिचान्यतः । तेतुभक्ताधमाःप्रोक्ताःस्वर्गादिफलभोगिनः । तेविघ्निताअधोयातितद्भक्तानामुपेक्षकाः । कुर्युर्विष्णावपिद्वेषदेवादेवावमानिनः । पूजिताविष्णुभक्तिचना
वज्ञेयास्तवःसुराः । उपेक्षकेषुदेवानांभक्तिनाशंस्वपहारिः । करोतितेनविभ्रष्टाःसंसरंतिपुनःपुनः। अधोवायांतिविद्वेषात्पूज्यादेवास्ततःसदा। यस्तान्द्वेष्टिसतंद्वेष्टियस्ताननुसचानुतम्। ऐकात्म्यभागतवि
द्विदेवैस्तद्भक्तिपूरितैः। उपेक्षकस्तुदेवानांपदैवनिरयोपगः। तदातुकिमुवक्तव्यमुपेक्षायांजनार्दने। विष्णोरुपेक्षकंसर्वेविद्विषंत्यधिकंसुराः। पतत्यवश्यंतमसिहारिणातैश्चपातितः। भुंक्तेस्वर्गफलंनित्यंनिरयंनै
वगच्छति। विष्णोस्तुमध्यमोभक्तोजायतेमानुषेषुच। अस्मरन्देवतायस्तुभजतेपुरुषोत्तमं। योग्यःसंस्मरतेदेवानयोग्योद्वेष्टिकेशवं। यस्तूत्तमोभागवतःसमुक्तिंपरमांव्रजेत्। विष्णुनासर्वदेवैश्चमोदतेसाहिनि
त्यदाइति। समाख्यानबलात्सिद्धोयंसर्वभूतेष्वित्याद्युक्तार्थइति । विष्णुमायाविष्णिवच्छाधीना । विष्णोरिच्छानुसार्येतज्ज्ञात्वायोग्यान्नचाधिकंहृष्यतिद्वेष्टिवायस्तुसवैभागवतोत्तमः । इत्येतद्गृहीत्वापींद्रि
येरर्थानित्यर्थमानं। सतांवृद्धिकरोधर्मस्त्वसतांन्हासकारणः। अयंतुनिश्चितोधर्मोह्यधर्मोन्योविनिश्चितः। इर्षःसत्सुतथासत्सुधर्मोधर्मविपर्ययः। तेषांवृद्धौतथाहानौसर्वज्ञेयमशेषतः। एतदर्थंचधर्माणामर्था

देहेंद्रियप्राणमनोधियांयोजन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ॥ संसारधर्मैरविमुह्यमानःस्मृत्याहरेर्भागवतप्रधानः ४९ यःकामकर्मबीजानिपश्यत्येषांचसंभ

वम् ॥ वासुदेवैकनिलयःसवैभागवतोत्तमः ५०

दावैदिकादिका। मूलधर्मविरुद्धातुसानग्राह्याकथंचनेत्येतदपिगृहीत्वापीत्यत्रमानम् ४८ कैर्लिंगैरित्येतंप्रश्नंपरिहराति देहेंद्रियप्राणधियामिति संसारधर्मैःसंसारस्वभावैःदेहादिनांजन्मादिकृच्छ्रैरविमुह्यमा
नस्तत्तद्वस्तुतत्तत्त्वंयथावज्जानन्योवर्ततेसभागवतप्रधानइत्यन्वयःतत्रहेतुमाह स्मृत्येति देहादीनामचेतनत्वेनजन्मादिकृच्छ्रानुभवोनुपपन्नइत्यतस्तात्पर्यार्थोन्योयुक्तोवक्तव्यः सकइत्याशंका देहेंद्रियप्रा
णाधियांत्रिधैवत्वाभिमानिन. । तत्रोत्तमादेवतास्ताःसर्वदोषविवर्जिताः। गुणैःसर्वैःसुसंपन्नाविरिंचादुत्तरोत्तरं। मध्यमागुणदोषेताअधमाअसुरामताः। तेसर्वेदोषसंयुक्ताआचित्तादुरोत्तरं। तेभ्योन्योमानुषो
जीवस्ताभ्यांदेवासुरावपि। जीवाभिमानिनश्चैवत्रिविधाःसंप्रकीर्तिताः। जीवमान्युत्तमोब्रह्मामध्यमःस्वयमेवतु। अधमःकलिरुद्दिष्टस्तत्रमध्यमनीचयोः। मृतिजन्मक्षुधादुःखप्रभृत्याखिलमेवतु। नोत्तमस्य
तुजीवस्यदेहादेश्चकथंचन। जन्मादिकृतदुःखंतुदेहमान्यसुरस्यह। सुप्त्याद्यप्ययजंदुःखमसुरेंद्रियमानिनः। क्षुन्निमित्ततुयद्दुःखंप्राणमान्यसुरस्यतत्। भयतर्षादिजंदुःखंमनोमान्यसुरस्यच। केवलंचांतरंदुःखं
बुद्धिमान्यसुरस्यतत्। नीचोस्मीतितुयद्दुःखमहमान्यसुरस्यतत्। अतीतादेःस्मृतेर्दुःखंचित्तमान्यसुरस्यच। जीवमान्यसुरस्यस्यात्सर्वतत्समुदायतः। एवमेवसुखंदेवेषूभयंमध्यमेषुच। असुराणामधर्मस्यवृ
द्ध्यासुखमपीष्यते। देवानानैवकेनापिदुःखंप्रीतिस्तुधर्मतः। अधर्मोपिप्रीतयेस्यादसुराणांतमोगतेः। देवानांपुण्यपापाभ्यांसुखमेवोत्तरोत्तरं । तेषांदुःखादिकंकिंचिदसुरावेशतोभवेत् । प्राणस्यनासुरावे
शोहरिणाचसमोहिसः । संपूर्णानुग्रहाद्विष्णोःप्राणःपूर्णगुणोमतः । असुराणांसुखाद्याश्चदेवावेशादुदीरिताः । स्वतस्तुनिर्गुणाःसर्वेसर्वदोषात्मकामताः । विविच्यैवंजगत्सर्वस्वात्मानंचपृथक्स्थितं । सर्वं
तथ्यपृथक्सर्वंविष्णुंसर्वोत्तमोत्तमं । जानंतियेभागवतास्तउक्ताउत्तमोत्तमा इत्यनेनपरिहृतेतिज्ञातव्यम् ४९ कामकर्मबीजान्यविद्याप्रकृत्यादीनि एषांकामादीनाम् ५०

जन्मकर्मभ्यांब्राह्मणादिजन्मनागुरुकुलवासादिकर्मणाब्राह्मणादिवर्णैःब्रह्मचर्याद्याश्रमैः ब्राह्मणत्वादिजातिभिश्चसंज्ञितेसंकेतितेयः कामकर्मबीजैरुत्पन्नस्तस्मिन्देहेयस्याहंभावोब्राह्मणोहमित्यादिलक्षणो नास्तिसभागवतोत्तमइति ५१ इदमप्येकंलक्षणमित्याह नयस्येति यस्यभागवतस्यचित्तेप्राकृतांतःकरणेविद्यमानेसंसारे स्वात्मनिकेवलात्मभावेस्वरूपावस्थानेमोक्षेवायःस्वोजीवःपरःपरमात्मेतिजीवपर योरभिदाअभेदोनास्तिअभेदज्ञानंनास्तीत्यर्थः यश्चसर्वभूतसमःब्रह्मादिमानुषांतानिभूतानियथावत्तारतम्येनपश्यतिसभागवत्तोत्तमः नक्वापिजीवंविष्णुत्वेसंसृतौमोक्षएववा यःपश्यतिसुरादींश्चयथोत्कर्ष प्रपश्यति ससर्वभूतसमदृग्विष्णुंसर्वोत्तमंस्मरन् । इत्यतः । नैवंत्वयानुमंतव्यंदृष्टोजीवोमयेतिह । सर्वभूतगुणैर्युक्तंदेवंत्वंज्ञातुमर्हसीत्यतश्च नैवंत्वयानुमंतव्यंजीवात्माहमितिक्वचित् । सर्वैर्गुणैःसुसंपन्नंदेवंमांज्ञातुमर्हसि इत्यतश्च प्रमाणाद्यस्यस्वकीयपरकीयबुद्धिभेदोनास्तीतियथोनोपपन्नः किंतूक्तइतिशांतोभगवन्निष्ठायुक्तः ५२ विकुंठस्यस्मृतिर्येषांतेतथातैःत्रिभुवनविभवहेतुभिःकारण भूतैरजेशसुरादिभिर्ब्रह्मरुद्रपूर्वदेवादिभिर्मृग्यादन्वेषणीयात् भगवत्पदारविंदात्योलवनिमिषार्धमपिनचलतिसवैष्णवाग्र्य. स्मस्मृतइत्यन्वयः ५३ उरुविक्रमःपदन्यासविशेषःययोस्तौउरुविक्र मौतावंघ्रीतयोःशाखाअंगुल्यस्तासांनखमणयः नखाएवमणयःतेषांचंद्रिकयाज्योत्स्नयानिरस्ततापेउपसीदतांसेवमानानांहृदयेऽनुपसीदताहृदिप्रभवतिमःतापःकथंपुनःप्रभवतीत्यन्वयः ५४ स्खल

नयस्यजन्मकर्मभ्यांनवर्णाश्रमजातिभिः ॥ संज्ञितेस्मिन्नहंभावोदेहेवैसहरेःप्रियः ५१ नयस्यस्वःपरइतिचित्तेस्वात्मनिवाभिदा ॥ सर्वभूतसमःशांतःसवै भागवतोत्तमः ५२ त्रिभुवनविभवहेतुभिर्विकुंठस्मृतिभिरजेशसुरादिभिर्विमृग्यात् ॥ नचलतिभगवत्पदारविंदाल्लवनिमिषार्धमपिस्मसवैष्णवाग्र्यः ५३ भगवतउरुविक्रमांघ्रिशाखानखमणिचंद्रिकयानिरस्ततापे॥हृदिकथमुपसीदतांपुनःसप्रभवतिचंद्रइवोदितेऽर्कतापः ५४ विसृजतिहृदयंनयस्यसाक्षाद्धरिरव शाभिहितोप्यघौघनाशः ॥ प्रणयरशनयाधृतांघ्रिपद्मःसभवतिभागवतप्रधानउक्तः ५५ ॥ इतिश्रीभागवतेमहा०एकादशस्कंधेवसुदेवनारदसंवादेजा यंतेयोपाख्यानेविदेहप्रश्नेद्वितीयोध्यायः ॥२॥ राजोवाच ॥ परस्यविष्णोरीशस्यमायिनामपिमोहिनीम् ॥ मायांवेदितुमिच्छामोभगवंतोब्रुवंतुनः १ नानुतृप्येजुषन्युष्मद्वचोहरिकथामृतम् ॥ संसारतापनिष्टप्तोमर्त्यस्तत्तापभेषजम् २ अंतरिक्षउवाच ॥ एभिर्भूतानिभूतात्मामहाभूतैर्महाभुज ॥ सस र्जोच्चावचान्याद्यःस्वयमात्मप्रसिद्धये ३

नाविना अवशेनाभिहितःकथितः प्रणयरशनयाभक्तिलक्षणपाशेनधृतांघ्रिपद्मःबद्धपादपद्मःयादृशोपच्छुतइत्यनयोःप्रश्नयोःपरिहारौ धृतोर्ध्वपुंड्रत्वादिकंसंततगुणनामसंकीर्तनत्वंचेतियेशंखचक्रांकितबा हुमूलइत्यादिषुप्रसिद्धत्वादनुक्ताविति ५५ ॥ इतिश्रीभागवतेमहा०विज०टीकायांएकादशस्कंधेद्वितीयोध्यायः ॥२॥ परस्यपूर्णस्यमायिनांज्ञानिनांमोहिनींमायांसृष्ट्यादिषुप्रवर्तमानांइच्छाशक्तिजडप्रकृ तिवैभवंच १ तत्रतत्रभागवतेमायाविषयप्रश्नपरिहारावनेकशःकृतावित्यत्राश्रद्धेयमिदंनेतिभावेनाह नानुतृप्येइति हरेःकथामृतंयस्मिंस्तत्तथातद्भेषजंसंसारतापशांतिकरऔषधम् २ परिहार मवेक्ष्यप्रश्नःसंगच्छतइत्यतःपरिहारोपिमायाद्वैविध्यविषयएवेतिभावेनोपोद्घातंरचयति एभिरित्यादिना अत्रायंभावःआदौस्वयंपरमात्मास्वेच्छोद्बोधितयाप्रकृत्यामहदहंकारादिक्रमेणचतुर्विंशतित त्त्वानिसृष्ट्वापुनस्तैरसमेतैःस्तुतःवान्यमुप्रविश्यसंयोज्यतदुपादानत्वेनब्रह्मांडमुत्पाद्यतस्तैःसहप्रविश्य ब्रह्मादिपृथिव्यंतानांतत्त्वानांरूपांतराणिसृष्ट्वातैर्महाभूतैःपंचभिरुच्चावचानिशरीराणिससर्जत्रि विधान्जीवांस्त्रिविधैःशरीरैःसंयोजयामास किंप्रयोजनमुद्दिश्येत्यतउक्तम् आत्मप्रसिद्धयइति आत्मनोहरेःप्रसिद्धिःख्यातिःप्रतीतिःज्ञानमितियावत्तदर्थंपरमात्मतत्त्वज्ञानायेत्यर्थः ३

१ शत्रुषुशत्रुत्वेनमित्रेषुमित्रत्वेनउदासीनेषुउदासीनत्वेनज्ञानंसमत्वं एतद्विपरीतंअसमत्वं । २ अत्रभूतानामित्यध्याहार्यम् भूतानांपरमात्मतावसानार्थमित्यर्थः ।

जीवकल्यांब्रह्मैवभोगायतनेशरीरेस्थित्वाकर्मफलंभुंक्तइत्यद्वैतमतंमत्याह एवंसृष्ट्वेति सपरमात्मोक्तविधयास्थविष्ठैःएनःसृष्ट्यास्थूलभावंप्राप्तैःपंचधातुभिर्महाभूतैः भूतानिशरीराणिसृष्ट्वा तत्तददृष्टानुसारेणजीवेनसहतान्यनुप्रविश्यात्मानंस्वंएकधामनोनियंतृरूपेणदशधादशेंद्रियनियामकरूपेणविभजन्विभक्तंकुर्वन्गुणान्विषयसारानानंदानवजुषतइत्यन्वयः । विभजन्नित्यनेनजीवात्मनामल्पशक्तित्वेनस्वात्मनोभिन्नत्वमवशत्वेनकर्मफलभोक्तृत्वंस्वस्यपूर्णशक्तित्वेनस्वातंत्र्यंचध्वनयति ४ नन्विंद्रियाणामशुभेषुविषयेष्वपिप्रवृत्तेःनत्स्थस्याशुभभोगोपिप्रसज्येत अतःकथंगुणानेवजुषतइत्यत्राह गुणैरिति योगुणानेवजुषतइतिप्रस्तुतःसपरमात्मात्मनाप्रद्योतितैर्विषयाभिमुखत्वेनप्रेरितैर्गुणैरिंद्रियैर्गुणान्भुंजानोवर्ततइत्यन्वयः लड्डवाचिशानचाशुभमेवभुंक्तेकदापिनाशुभमितिध्वनयति नाशुभंसहरिःपिबेदितिस्मृतेः । एकस्मिन्नेवभोगायतनेस्थितयोरनयोरेकस्यहरेर्गुणैकभोक्तृत्वेकोहेतुरित्यत्राह प्रभुरिति समर्थोयेपतौप्रभुरितिवचनात् सामर्थ्यमाधिपत्यंचानिमित्तमित्यर्थः स्वतंत्रास्वतंत्रयोःअमितभेदानंगीकारेबाधकमाह मन्यमानइति इदमित्यव्ययं । आत्मावाइदमितिश्रुतेः सर्वाधिकत्वेनवर्तमानंतंपरमात्मानंइदंसृष्टंदेहयोगेनोत्पन्नंइदंजीवाख्यंवस्त्वितिमन्यमानोजीवइहसंसारेसज्जते मृतःपरस्तमसिसज्जतइत्यन्वयः ५ एतदेवविवृणोति कर्माणीति सनिमित्तानिपूर्वकर्मभयत्नसंस्काराख्यबीजसहितानिकर्मभिर्व्यापारैःकर्मेंद्रियैर्वाकुर्वन्सुखेतरंदुःखंप्रतिभ्रमतीत्यन्वयः ।

**एवंसृष्टासभूतानिस्थविष्ठैःपंचधातुभिः ॥ एकधादशधात्मानंविभजन्जुषतेगुणान् ४ गुणैर्गुणानसभुंजानआत्मप्रद्योतितैःप्रभुः ॥ मन्यमानइदंसृष्टमात्मानमिहसज्जते ५ कर्माणिकर्मभिःकुर्वन्सनिमित्तानिदेहभृत् ॥ तत्तत्कर्मफलंगृह्णन्भ्रमतीहसुखेतरम् ६ इत्थंकर्मगतीर्गच्छन्बह्वभद्रावहःपुमान् ॥ आभूतसंप्लवात्सर्गप्रलयावश्नुतेऽवशः ७ धातूपप्लवआसन्नेव्यक्तंद्रव्यगुणात्मकम् ॥ अनादिनिधनःकालोह्यव्यक्तायविकर्षति ८ शतवर्षमनावृष्टिर्भविष्यत्युल्बणाभुवि ॥ तत्कालोपचितोष्णार्कोलोकांस्त्रीन्प्रतपिष्यति ९ पातालतलमारभ्यसंकर्षणमुखानलः ॥ दहन्नूर्ध्वशिखोविष्वग्वर्धतेवायुनेरितः १० सांवर्तकोमेघगणोवर्षतिस्मशतंसमाः ॥ धाराभिर्हस्तिहस्ताभिर्लीयतेसलिलेविराट् ११**

शरीरेदोषहानेनगुणभोक्तारमीश्वरं शरीरस्थतयाजीवंमन्यमानःपतत्यधः तत्सृष्टाहिसदाजीवादेहादेर्जनिमत्त्वत नित्यानंदैकदेहोसौविष्णुस्तच्चैकतानयोरित्यनेनप्रमितोयमर्थः ६ जीवपरयोरभेददर्शिनःपुंसःकदानुतमःप्रवेशइत्यतःप्रलयपर्यंतमेवदेहयोगावियोगलक्षणौजन्ममृत्यूततःपरंतमःप्रवेशइत्याशयेनाह इत्थमिति कर्मगतीःकर्मनिमित्तयोनिलक्षणफलानि बहून्यभद्राणिपापान्यावहत्यात्मन्याधत्तइतिबह्वभद्रावहः । आभूतसंप्लवात्जगत्प्रलयपर्यंतंसर्गप्रलयौजन्ममरणे योगिवत्स्वच्छंदतयास्यातामित्यतउक्तंअवशइति । आभूतसंप्लवाज्जन्मजीवेशत्वंविजानतः । ततःपतत्यधोयस्मादुत्थानंनैवतुकर्हिचिदितिवचनात् । अवशःपश्चादंधेतमसिपततीत्यर्थः ७ एवमीश्वरमायानियतादव्यक्तात्सृष्टिसमासतोभिधायप्रलयंसंक्षिप्याह धातूपप्लवइति । धातूनांपृथिव्यादिपंचभूतानांउपप्लवेप्रलयेद्रव्यगुणात्मकंपंचभूतशब्दादिगुणमयंव्यक्तंब्रह्मांडंअनादिनिधनःकालोविष्णुःअव्यक्तायसूक्ष्मप्रकृतयेविकर्षतिप्रकृत्यवशेषंकर्तुमिच्छतीत्यर्थः । कालाख्यःकलनाद्विष्णुर्व्यक्तमव्यक्तंगमयतीतिवचनात् विष्णुरेवकालशब्देनोक्तः विकर्षतीत्यनेनकालशब्दोपिनिरुक्तः ८ संक्षिप्योक्तंप्रलयमादितोवक्ति शतवर्षमिति । तत्कालेनतेनप्रलयकालेनउपचितःसंवर्धितः उष्णोगुणोयस्यसतथासचासावर्कश्चसतत्कालोपचितोष्णार्कः ९ १० विराड्ब्रह्मांडम् ११

---

१ शरीरे दोषहानेनेत्युक्त्या गुणैर्गुणान्सभुंजान इत्यत्रगुणपदमेवव्यावर्तकमित्युक्तंभवति । शरीरस्थतयेत्यादिना मन्यमानइदंसृष्टमात्मानमिहमन्यते इतिविवृतम् । तत्सृष्टाहिसदाजीवा इत्यादिना जीवेश्वराभेदस्यबाधितत्वमुपपादितंवेदितव्यम् । टी० । १ जीवस्येशत्वंविजानतः ।

सलिलेविलीनंब्रह्मांडमुत्सृज्यवैराजोब्रह्मांडांतर्वर्तीपुरुषोब्रह्माअव्यक्तंपरमात्मानंविशते अव्यक्तशब्दार्थंस्पष्टीकुर्वन्तंविशिनष्टि सूक्ष्ममिति यद्वा निरिंधनोनलः सूक्ष्मंव्याप्तमग्निमिवेति १२ संक्षेपविस्तराभ्यांतुकथयंतिमनीषिणः बहुवारस्मृतेस्तस्यफलबाहुल्यकारणादितिवाक्यार्थंसफलंकुर्वन्नुक्तार्थंप्रपचयाति वारिणेति तेनज्योतिषाहृतरसंपीतरसतमसातमोगुणानुस्यूतेनवायुनाअवकाशेन आकाशेन १३ १४ कालात्मनासंहारमूर्तिनाहरिणाहृतशब्दाख्यगुणंआत्मानिपरमात्मानि । पुनरपिविस्तारयति इंद्रियाणीति । अत्रेदतात्पर्यंनभस्तामसाहंकारमाविशति । तैजसानींद्रियाणि मनोबुद्धिश्चवैकारिकैःइंद्रियाभिमानिभिर्देवैः सहवैकारिकंतैजसात्मकंअहंकारंप्रविशति । एवंत्रिविधोहमहंकारःस्वगुणैःस्वकार्यैःसहात्मनिमहत्तत्त्वेलीयते । तन्महत्तत्त्वमात्मनिव्याप्तेपरमात्मनिप्रविष्टं भवति । वैराजःपुरुषःपृथिव्यादीनिस्वकृतकार्याणिव्युत्क्रमेणस्वस्वकारणेषुखादिषुविलाप्यस्वयंचतत्कारणगतत्वेनतत्तत्कार्यप्रवर्तकः तत्तत्कारणगतरूपेणैकीभूयमूलरूपीसन्नाकाशवदतिसूक्ष्ममव्यक्तंप्रविशतीति १५ १६ उपसंहरति एषेति । भगवतःएषामायाभक्तेच्छातस्याधीनाप्रकृतिश्चास्माभिर्वर्णिता निमित्तोपादानत्वविवक्षयेतिशेषः कीदृशीत्रिवर्गात्रयाणांगुणानांवर्णोवर्णनंयथाहरेर्भ

ततोविराजमुत्सृज्यवैराजःपुरुषोनृप ॥ अव्यक्तंविशतेसूक्ष्मंनिरिंधनइवानलः १२ वारिणाहृतगंधाभूःसलिलत्वायकल्पते ॥ सलिलंतद्धृतरसंज्योतिष्ट्वायोपकल्पते १३ हृतरूपंतुतमसावायौज्योतिःप्रलीयते ॥ हृतस्पर्शोवकाशेनवायुर्नभसिलीयते १४ कालात्मनाहृतगुणंनभआत्मनिलीयते ॥ इंद्रियाणिमनोबुद्धिःसहवैकारिकैर्नृप १५ प्रविशंतिह्यहंकारंस्वगुणैरहमात्मनि १६ एषामायाभगवतःसर्गस्थित्यंतकारिणी ॥ त्रिवर्णावर्णिताऽस्माभिःकिंभूयःश्रोतुमिच्छसि ॥ १७ ॥ राजोवाच ॥ यथैतामैश्वरींमायांदुस्तरामकृतात्मभिः ॥ तरंत्यंजःस्थूलधियोमहर्षइदमुच्यताम् १८ प्रबुद्धउवाच ॥ कर्माण्यारभमाणानांदुःखहत्यैसुखायच ॥ पश्येत्पाकविपर्यासंमिथुनीचारिणांनृणाम् १९ नित्यार्तिदेनवित्तेनदुर्लभेनात्ममृत्युना ॥ गृहापत्याप्तपशुभिःकाप्रीतिःसाधितैश्चलैः २० एवंलोकंपरंविद्यान्नश्वरंकर्मनिर्मितम् ॥ अतुल्यातिशयध्वंसाद्यथामंडलवर्तिनाम् २१ तस्माद्गुरुंप्रपद्येतजिज्ञासुःश्रेयउत्तमम् ॥ शाब्देपरेचनिष्णातंब्रह्मण्युपशमाश्रयम् २२

क्तस्यास्तथासौसातथातस्त्वादित्रिगुणानांवर्णोलेपः स्वरूपत्वेनसंबंधोयस्याःसातथाप्रकृतिः तदुक्तं त्रिवर्णावरणादुक्तात्रिगुणानांहरेर्मतिःगुणात्मकत्वात्प्रकृतिस्त्रिवर्णेतिप्रकीर्त्यते तत्रतुप्रकृतिस्ताथांतारकाहुहरेर्मतिः उभयंविष्णुमायोक्तज्ञातव्यमुभयंतथेतिबहूनांमस्तुतत्रादेषेत्यत्रांकपरामृश्यतइतिसंदेहपरिहार.कथमितिचेन्न बहूनांसहानिर्देशएकयाभिधयैवतु तथैवाभिधयातेषांपर।मृश्यैकमुच्यते इतितदुपपत्तेः १७ श्रुतमायाविभवोराजामायाशब्दवाच्यबंधकशक्तिजयोपायंपृच्छति यथेति ईश्वरस्येयमैश्वरीतांमायांबधकशक्तिमजस्तरसातरंत्येनंजीवंनसंसारयामीत्यनुग्रहोन्मुखीकारयंतिअन्यस्यनितरांलंघनमेवकुर्वंतीत्यर्थः १८ मायासंतरणेच्छोःप्रथमसाधनंविरक्तिरितिज्ञापयन्प्रबुद्धःप्रश्नंपरिहर्तुमुपक्रमते कर्माणीति पाकविपर्यासोनामकर्मफलवैपरीत्यंदुःखानिवृत्तिसुखानवाप्तिचमिथुनीचारिणांस्त्रीपुंसाम् १९ वित्तादिसमृद्ध्यासुखोभाति.स्यादित्यत्राह नित्येति २० अनित्यफलत्वात्स्वर्गादयोहेयाइत्याह एवमिति अतुल्यातिशयैर्देवैर्ध्वंसादधःपातनान्मंडलवर्तिनांपुढरंगेवर्तमानानांयथाप्रध्वंसः २१ इहामुत्राविरक्तेनपुरुषेणांककार्यमत्राह तस्मादिति २२

१ बहूनामनेकेषांपदार्थानां एकयाऽभिधया एकेनशब्देन सहयुगपन्निर्देशेपि तयैवाभिधया तेषामनेकेषां मध्ये एकं परामृश्य उच्यत इतियोज्यम् ॥

गुरुकुलेकिमनुष्ठेयमप्राह तत्रेति । गुरुश्चआत्माचदैवतंयस्यसतथा आत्माविष्णुः मिथुनीचारिणामित्यनेनामिथुनानामेवश्रेयोमोक्षोनामिथुनानामित्याक्षेप।देवाःसजायामुच्यंतेमानुषाउभयात्मकाः । वि जयाएवयोगेशास्तेषांयायैवयोग्यता । तथातथैवमुच्यंतेनान्यथातुकथंचनेतिवचनेनपरिहृतइति हरिगुरुप्रसादसाधनमाह अमाययेति २३ भागवतान्धर्मानाह सर्वतइति शिक्षेदित्यनुवर्तते साधवएकविधाउतबहुविधाःएषुसंगःकर्तव्यःइतिविधीयतइतिअस्यानेकविधाइत्युत्तर तर्हिकतिविधाइत्यस्यत्रिविधाइति तत्रापिविशेषोबहुलःसएषग्रंथांतरेविस्तृतः । संतस्तुत्रिविधाःप्रोक्ताउत्तमामध्यमा धमाः । उत्तमादेवतास्तत्रऋष्याद्यामध्यमामताः । अधमामानुषोत्कृष्टास्तेचापित्रिविधामताः । तत्राधमेषुयेषांतुसंगोविप्रायवैभवेत् । तेषामुत्तमसंगःस्यतषांसंगंपरित्यजेत् । आदौतुतेषामपिचसं गउत्तमसंगतेः । साधनत्वान्नतुल्याज्योयदित्युक्तुंनशक्यते । तदातेपितथानेयायथाविघ्नोनवैभवेत् । तदुच्चसंगते क्वापितदादोषोनजायते । प्रयोजनायतेषांतुसंगःसर्वात्मनेष्यते । सर्वथाचैवदेवेषुसंगोमु निगणेषुच । भाव्योहितंविनानैवपुरुषार्थःकचिद्भवेत् । विशेषतःस्वोत्तमेषुविनासंगंनमुच्यते । स्वनीचेषुतुदेवेषुविनाप्यगनयूयते । तस्मात्सत्सूत्तमेष्वेषुसंगःकार्योविशेषतः । अनाद्यनंतकालेषुनचहाप्यः कथंचन । सतांतदुत्तमेशेशेकिमुविष्णौपरात्परइति । किंच ज्ञानोत्पत्त्यावंतरंगसत्संगैवयामंतरेणविवक्षितार्थज्ञानासिद्धिर्नस्यात् अतोदुर्बलेनापिसाकार्या तदुक्तं बह्वपेक्षोहिजिज्ञासुरतोदेहादिवृत्तये । किं चित्सत्स्वपिसंगीस्यादशक्येसतिवर्तते । कृतकृत्यस्त्यजेत्संगंसदागुरुसुरादिषु । संगीस्यान्नाहितत्संगविनातुसुखभाग्भवेत् । तस्मादनाद्यनंतैवभक्तिर्गुरुसुरादिषु । अन्यत्रकृत्यावेक्षास्यादितिसंगवि

## तत्रभागवतान्धर्मान्शिक्षेद्गुर्वात्मदैवतः ॥ अमाययानुवृत्त्याचतुष्येदात्मात्मदोहरिः २३ सर्वतोमनसोसंगमादौसंगंचसाधुषु ॥ दयांमैत्रींप्रश्रयंचभूते ष्वद्धायथोचितम् २४ शौचंतपस्तितिक्षांचमौनंस्वाध्यायमार्जवम् ॥ ब्रह्मचर्यमहिंसांचसमत्वंद्वंद्वसंज्ञयोः २५ सर्वत्रात्मेश्वरान्वीक्षांकैवल्यमनिकेतन म् ॥ विविक्तचीरवसनंसंतोषंयेनकेनचित् २६ श्रद्धांभागवतेशास्त्रेऽनिंदामन्यत्रचापिहि ॥ मनोवाक्कायदंडंचसत्यंशमदमावपि २७ श्रवणंकीर्तनंध्या नंहरेरद्भुतकर्मणः ॥ जन्मकर्मगुणानांचतदर्थेखिलचेष्टितम् २८ इष्टंदत्तंतपोजप्तंपूर्तंयच्चात्मनःप्रियम् ॥ दारान्सुतान्गृहान्प्राणान्परस्मैसन्निवेदयेत् २९

निर्णयइति २४ २५ . सर्वत्रदेशकालादिष्वात्मनःस्वामिनईश्वरस्यान्वीक्षांमाहात्म्यानुकूलनिरीक्षणंकैवल्यमेकांतित्वंमकृतिप्राकृतादिमिश्रराहित्यंच चीरवसनंवल्कलं संतोषमलंबुद्धिम् २६ भागव तशास्त्रेवेदादितंत्रे तदुक्तं । श्रद्धाभागवतेतंत्रेवेदेभारतपंचमे । विष्णोरव्यवधानेनवक्तृत्वात्सर्वथाभवेदिति । अन्यत्रकलाविद्यासुज्योतिःशास्त्रेषु अनिंदांनिंदाराहित्यंयतीनामितिशेषः । तदुक्तं कलावि द्यास्वनिंदाचव्यवधानेनकेशवे । प्रवेशाद्यतिभिःकार्याह्यन्यथानिरयंव्रजेत्इत्यादिना । श्रद्दधातीतिश्रद्धासर्वसाधारणचेतनधर्मोगुणःश्रद्धास्तिक्यबुद्धिःसाद्विविधा अत्रोक्तमस्तीत्येकाममात्रप्रयोजनमस्ती त्यन्या तत्रप्रथमायतेरपिकलासुकार्यानाद्वितीयाप्रयोजनाभावात् उभयंचपंचरात्रादिभगवच्छास्त्रेषुकार्यं तद्विरोधिषुशास्त्रेषुसर्वैरविशेषेणसदानिंदाकार्या तदभावेतमएवपरायणंअतःसुराएवतान्नि दनंकुर्वंति सदाविज्ञाततात्पर्यार्थत्वात् तदुक्तं श्रद्धास्त्वास्तिक्यबुद्धिःस्यादिसादिप्रतिपाद्यंनचापरामित्यंतेन किंच भवच्छास्त्रविरोधिशास्त्राभ्यासेनअंधंतमोपिश्रूयते अंधंतमःप्रविशंतीतिश्रुतौ नकेव लंयतेःकलाभ्यःप्रयोजनाभावःकिंचाल्पज्ञस्यगृहिणोपीतीममर्थंहिशब्देनध्वनयति गृहिणोप्यल्पबोधस्येतिवाक्यात् २७ हरेर्जन्मादीनांश्रवणंतदर्थेश्रवणार्थंअखिलचेष्टितअखिलव्यापारःतदर्थंभक्तिज ननार्थंहरेरखिलचेष्टितमितिवा २८ यदात्मनःप्रियंयद्देहादिकंचतत्सर्वंपरस्मैपरमात्मनेनिवेदयेत् २९

---

१ नारदपञ्चरात्रागमे । भारतं पञ्चमं यस्यासौभारतपञ्चमः । अव्यवधानेनमुखतएवविष्णोर्वक्तृत्वात् विष्णुप्रतिपादकत्वादित्यर्थः ।

कृष्णात्मैवनाथोयेषांतेतथा मानुषेषुचापिसौहृदंशिक्षेतकिमुदेवादिषुउभयत्रभगवतिभागवतेषुचमहत्सुब्रह्मादिदेवेषुचपरिचर्यां नचैतावतापूर्यंते साधुषुनृषुस्वोत्तमोद्देश्यर्थः ३० भगवद्यशउद्दिश्य परस्परानुकथनंरतिःसुखंतदाधिक्यंतुष्टिरन्यत्रनिवृत्तिश्च ३१ रत्यादीनांपरिपाकमाह स्मरंतइति । उत्पुलकामुद्गतपुलकाम् ३२ भागवतानांप्रवृत्तिप्रकारमाह क्वचिदिति । परंभगवंतंमनसाशर णमेत्यनिर्वृताः ३३ उपसंहरतिइतीति तदुत्थयाभागवतधर्माभ्यासोद्रेकोत्थया ३४ ब्रह्मवित्तमाःहियस्मात्तस्माद्यूयंब्रह्मणोनिष्ठांब्रह्मादिजीवराशेरुत्कर्षंवक्तुमर्हथ निष्ठोत्कर्षंव्यवस्थायांनाशेंत्ये व्रतयाच्ञयोरितियादवः ३५ तदुत्कर्षोपिजन्मादिकारणत्वेनस्वप्नाद्यवस्थाप्रवर्तकत्वेनतदनभिभूतशक्तित्वेनमनआदीन्द्रियाभिमानिदेवाज्ञात्वेन हिजननादिराहितत्वेनज्ञातुंशक्यतइत्याशयेनप्रश्नं परिहरति स्थितीत्यादिना । योस्यजगतःस्थित्यादिहेतुःस्वस्यहेतुरन्योनास्तीत्यहेतुःस्वप्नादिषुसन्निर्दोषत्वेनस्थितः । यश्चबहिःप्रलयेमुक्तौचवर्त्तमानः येनदेहेंद्रियादीनिचरंतिवर्तंते हृदयं मनः संजीवितानियदधीनानि हेनरेंद्रतत्तत्त्वंपरं सर्वस्मादुत्कृष्टंअवेहीत्यन्वयः ३६ इतोपिहरिःसर्वोत्कृष्टः यतोस्यप्रसादंविनारुद्रादिदेवैर्नज्ञेयइत्याह नैनमिति विशतिरत्रज्ञानार्थः मनआदिशब्दे मत्तदभिमानीलक्ष्यते अचेतनत्वेनज्ञानक्रियासंभवात् तथाचायमर्थः मनोरुद्रादिःएनंनारायणंनाविशतिनजानाति वागुतसरस्वत्यादिकमपिनविशतीत्यनुवर्तते चक्षुःसूर्यः आत्माब्रह्मावायुश्चान्येप्रा णाद्यभिमानिनश्चनजानंतीत्यर्थः अपिशब्दात्तत्प्रसादेनैकदेशंजानंतीतियोज्यं तत्रोदाहरणमाह यथेति यथास्वाःअर्चिषः प्रधानाग्नेःपुत्राःअनलंप्रधानाग्निंतदनुग्रहमंतरेणनाविशंति ननुनित्यावि योगित्वेनअनंतवेदाद्यात्मत्वाच्चश्रीर्ज्ञातुमर्हतीतितत्राह शब्दइति निर्दोषःशब्दआगमइतिनिर्दोषशब्दराश्यभिमानिनीलक्ष्मीः बोधकादन्यत् अबोधकंपरमेश्वरादितरल्लौकिकानंदज्ञानादिकं

एवंकृष्णात्मनाथेषुमनुष्येषुचसौहृदम् ॥ परिचर्यांचोभयत्रमहत्सुनृषुसाधुषु ३० परस्परानुकथनंपावनंभगवद्यशः ॥ मिथोरतिर्मिथस्तुष्टिर्निवृत्तिर्मिथआ त्मनः ३१ स्मरंतःस्मारयंतश्चमिथोघौघहरंहरिम् ॥ भक्त्यासंजातयाभक्त्याबिभ्रत्युत्पुलकांतनुम् ३२ क्वचिद्रुदंत्यच्युतचिंतयाक्वचिद्धसंतिनंदंतिवदंत्य लौकिकाः ॥ नृत्यंतिगायंत्यनुशीलयंत्यजंभवंतितूष्णींपरमेत्यनिर्वृताः ३३ इतिभागवतान्धर्मान् शिक्षन्भक्त्यातदुत्थया ॥ नारायणपरोमायामंजस्त रतिदुस्तराम् ३४ राजोवाच ॥ नारायणाभिधानस्यब्रह्मणःपरमात्मनः ॥ निष्ठामर्हथनोवक्तुंयूयंहिब्रह्मवित्तमाः ३५ पिप्पलायनउवाच ॥ स्थित्यु द्भवप्रलयहेतुरहेतुरस्ययःस्वप्नजागरसुषुप्तिषुसन्बहिश्च ॥ देहेंद्रियासुहृदयानिचरंतियेनसंजीवितानितदवेहिपरंनरेंद्र ३६ नैनंमनोविशतिवागुतचक्षुरा त्माप्राणेंद्रियाणिचयथानलमर्चिषःस्वाः ॥ शब्दोप्यबोधकनिषेधतयात्ममूलमर्थोक्तमाहयदृतेननिषेध्यसिद्धिः ३७

यत्तस्यनिषेधतयाआनंदोहरेर्नेदृशानंदोज्ञानरूपःनेदृशज्ञानरूपइत्यादिनिषेधरूपेणआत्ममूलंस्वकारणं अर्थोक्तमर्थतःपरिशेषतःसिद्धत्वेनोक्तमाहअर्थशब्देनात्रपारिशेष्यप्रमाणमुच्यते नलक्षणावृत्तिः कथमत्राह यदृतइति यत्सर्वविलक्षणानंदादिकंविनानिषेध्यस्यैतन्नभवतीतिनिषेधवचनार्थस्यलौकिकानंदादेःसिद्धिर्नस्यात् प्रत्यक्षादिप्रमाणसिद्धत्वात्सास्तिअतःपरिशेषप्रमाणसिद्धत्वाप्रमितमेवेत्यर्थः प्रतीतार्थंपरित्यज्याप्रतीतार्थकल्पनायांकिंप्रमाणमितीयंशंका । ब्रह्माद्यायंनजानंतिकरणाद्यभिमानिनः । जानंत्यनुग्रहाच्चास्यप्रधानाग्नेयथार्चिषः । अग्निपुत्रानमस्तस्यैयमाहश्रीश्चतत्स्फुटं । वेदकृपापरं देवंवैलक्षण्यात्समस्ततः । आनंदोनेदृशानंदइत्युक्तेलोकतःपरम् । प्रतिभातिनचाभातियथावद्दर्शनांत्रिनेत्यनेनपरिहर्तव्योति एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिच ३७

१ मनआदीनांजडत्वेनभगवति प्रवेशाभाव उच्यते नच प्रवेशाभावोक्तेः प्रयोजनमस्ति ततोविशतिरत्र ज्ञानार्थः । तेन नविशति न जानातीत्युच्यते नचैतद्युक्तम् मनआदीनांजडत्वेनाज्ञातृत्वप्रसक्तेरेवाभा वात् । अतस्तन्निषेधोनुपपन्न इत्याशंक्यतात्पर्यमनुसृत्याह । मनोरुद्रादिरित्यादि । २ इंद्रियाद्यभिमानिनः

मुमुक्षुणाविद्याविद्येज्ञातव्ये विद्यांचाविद्यांचयस्तद्वेदोभयंसहअविद्ययामृत्युंतीर्त्वाविद्ययामृतमश्नुतेइतिश्रुतेस्तत्राविद्यांनिरूप्यअविद्यांनिरूपयति सत्वमिति जीवंहरेरूपमितिप्रवदंत्यज्ञाइतिशेषः के चिदादौस्थितमेकंत्रिवृत्त्रिगुणात्मकंप्रधानमितिसंगिरंति प्रधानादिदमुत्पन्नमितिश्रुतिः सत्वंरजस्तमइतिकेचित् सूत्रंवायुर्महान्ब्रह्माअहंरुद्रइत्येकेहरेरूपमितिवदंति किंबहुनाउरुशक्तिब्रह्मैवज्ञान क्रियार्थफलरूपतयाज्ञानक्रियाशब्देनज्ञानकर्मेंद्रियाण्यर्थशब्देनशब्दादिविषयाःफलशब्देनसुखदुःखेचोच्येते एषारूपत्वेनभातीत्यपरे सदसत्कार्यकारणरूपत्वेनावभातीति ननुसच्चत्यच्चाभवदितिश्रुतेः कार्यकारणादिरूपदर्शनस्याविद्यात्वंकथमत्राह तयोरिति तयोःकार्यकारणयोःपरंविलक्षणंभिन्नंब्रह्मेतियद्यस्मात्तस्मात्तदात्मनादर्शनमविद्येत्यर्थः । त्रिगुणात्मकंप्रधानंचरजःसत्वंतमस्तथा । प्राणो महानहंकारोजीवास्तदभिमानिनः । ज्ञानात्मकानींद्रियाणितथाकर्मात्मकानिच । शब्दाद्यर्थाःसुखंदुःखमितिप्रोक्तंद्विधाफलं एतत्सर्वंहरेरूपमित्याहुर्ज्ञानदुर्बलाः । सएवबहुशक्तित्वाद्भातिचैषांतथातथा । ए वंकारणकार्याख्यंसमस्तंहरिमेवतु । केचित्पश्यंतिचव्यक्तंकेचिदाहुरपंडिताः । एवंकारणकार्येभ्यःपरमानंदरूपिणं । अज्ञानाद्बहुधाप्राहुरेकंसंतंसुदुर्जनाः । रूप्यत्वात्तद्वशत्वाच्चतद्रूपंचैतदीर्यते । नतुतस्यस्व रूपत्वात्क्विदोषानंदरूपिणः । तथाजडाजडैक्यंस्यात्कुतःपूर्णाल्पमोदयोः । पूर्णाल्पज्ञानयोश्चैवपूर्णशक्त्यल्पशक्तयोः । निर्दुःखदुःखान्वितयोःस्वतंत्रपरतंत्रयोः । अतःसर्वगुणैर्युक्तंसर्वदोषविवर्जितं । अन्याभे देनविज्ञायतमंएवप्रपद्यते । निष्कृष्टंसर्वतोविष्णुंसर्वतश्चविलक्षणं । ज्ञात्वापूर्णगुणंयातिमुक्तिंनास्त्यत्रसंशयइति प्रमाणसिद्धत्वादुक्तएवार्थोनतुसदनुविद्धत्वात्सर्वस्यतद्रूपत्वमिति ३८ किंच कार्याद्यभिन्नत्वेत

सत्वंरजस्तमइतित्रिवृदेकमादौसूत्रंमहानहमितिप्रवदंतिजीवम् ॥ ज्ञानक्रियार्थफलरूपतयोरुशक्तिब्रह्मैवभातिसदसच्चतयोःपरंयत् ३८ नात्माजजाननम रिष्यतिनैधतेसौनक्षीयतेसचनविध्यतिचारिणाहि ॥ सर्वत्रशश्वदनपाय्युपलब्धिमात्रंप्राणोयथेंद्रियबलेनविकल्पितंसत् ३९ अंडेषुपेशिषुतरुष्ववनि स्थितेषुप्राणेनजीवउपधावतितत्रतत्र ॥ छन्नेमतींद्रियगुणेहमिवप्रसुप्तेकूटस्थआसयमृतेतदनुस्मृतिर्नः ४०

ब्रह्मजन्मादिमत्त्वंप्रसज्यतेनचतत्तथातस्माद्भिन्नमेवेतियुक्तिमाह नात्मेति कालत्रयसंबंधित्वान्नौपचारिकोयंनिषेधः तथाजन्मादिमत्पदार्थस्थत्वेनतद्धर्मत्वंनौपचारिकंब्रह्मणइत्यत्राह सर्वत्रेतिसर्वेषु जन्मादिमत्सुपदार्थेषुशश्वदेकविधंनविकारिअतएवानपायिविनाशरहितंतत्रहेतुगर्भविशेषणमुपलब्धिमात्रमिति प्रकृत्यादिमिश्ररहितज्ञानात्मकत्वादित्यर्थः अदृष्टत्वादसत्कल्पमिदमत्राह इंद्रियेति स ह्यइंद्रियेषुदृश्यमानंदर्शनादिबलेनविकल्पितंविविधंकल्पितंदर्शनशक्तिदंश्रवणशक्तिदंज्ञानशक्तिदमितिकथमिवयथेंद्रियगतःप्राणइंद्रियशक्त्यादर्शनादिशक्तिप्रदत्वेनाविकल्पितइति तदुक्तं यथेंद्रियगतः प्राणस्तेषांशक्त्याविकल्प्यते दृष्टिदःश्रुतिदश्चेतिमतिदोज्ञानदस्तथा । इत्यादिभेदतोवाच्यएकएवमहाबलः दृष्ट्यादिशक्तिस्तस्यैवयतोनान्यस्यकस्यचित् एवंसद्रूपकंब्रह्मतत्तच्छक्त्याविकल्प्यते एकमेवमहाशक्तिप्राणस्यापिबलप्रदमिति । जीवप्राणधारणइतिधातोःहरेःजीवशब्दवाच्यत्वंप्राणस्यापिशक्तिप्रदत्वंचयुज्यते । अहंहिजीवसंज्ञोवैमयिजीवःसनातनः । मैवंत्वयानुमंतव्यंदृष्टोजीवोमयेतिह । अहंश्रेयोविधास्यामियथाधिकारमीश्वरइतिप्रमाणाद्दह्यमानगृहांतरस्थितयोगिवत्ब्रह्मणोपितत्तत्पदार्थस्थत्वेपितत्तद्दोषलेपसंबंधोनास्तीतियुक्तम् ३९ नानायोनिषुवर्तमानस्यजीवस्यदेहाद्देहांतरप्राप्तौ सुप्तौवास्वातंत्र्यप्रतीतेरस्यैक्यानुपपत्त्याप्राणस्यक्षीरनीरवत्सहावस्थानेपिपरमात्माधीनत्वाच्चहरेःसर्वोत्कृष्टत्वमप्रतिहतमितिभावेनाह अंडेष्विति जीवस्तत्रतत्रतेषुतेषुअंडेषुपक्ष्यादिकोशेषुतेषुतज्जन्येषु स्युपलक्ष्यते पेशीजरायुस्तद्वत्सुपेशिषुजरायुजेष्वित्यर्थः । पेशीजरायुरुद्दिष्टःसुवर्णंपेशउच्यते । मृदुर्पिंडश्चपेशंस्यात्क्वचिद्द्रुमपीष्यते इत्यभिधानं । तरुषुउद्भिज्जेषुअवनिस्थितेषुस्वेदजेषुभूस्वेदेनजातमत्कुण

१ किंचिद्वस्वितिशेषः

विशरीरेषुप्रवेक्ष्यन्पूर्वदेहंहित्वाप्राणंप्रविश्यपरमात्मानंप्रविष्टनप्राणेनपरमात्मनासहोपधावतिगच्छतिप्रविशति । देहादेहांतरगतौप्रविशेत्प्राणमेवतु । जीवःप्राणःपरात्मानमेवंसुप्तावपिस्फुटम् । तद न्यादेवताःसर्वाःप्राणस्यैववशेस्थिताः । ईषच्चसुप्तवद्यांतिनैवमानुषजीववत् । स्वर्गस्थानांनतुस्वाप.प्रायोदेहेपिनाज्ञता । मृतिसुप्तिप्रबोधादौनियंताहरिरेकराट् । तमृतेनैवचावस्थानावस्थावान्नचस्मृ तिः । ततस्तुदेवदेवेशःप्राणःप्राणेश्वरोहरिः । नहरेरीशितात्वन्यःसाहिसर्वाधिकोमतइतिउक्तार्थेमानम् । मर्तांद्रियगुणेबुद्धींद्रियाणांगुणेशब्दादिविषयवृत्तिलक्षणव्यापा रेछन्नेसंवृतेप्यहमिवाहंकार चप्रसुप्तेसर्वेंद्रियप्रवृत्त्युपरमेणदेहाभिमानाभावलक्षणायांसुप्तौप्राणंप्रविश्यछन्नः । प्राणेनकूटस्थेनिर्विकारहृदयस्थेपरमात्मन्यास परमात्मानंविशिनष्टि यमृतइति यंपरमात्मानंऋतेतदनुस्मृतिः तस्यानुस्मृतिरेवनस्यात् । एतावंतंकालंसुखमस्वाप्समितिसुखपरामर्शोनस्यादित्यर्थः । तदापरमात्माकृष्टशक्तित्वेनाभियानिदेशानांज्ञानजनकशक्त्यभावोनदोषाय । तदन्यादेवताःसर्वाइत्युक्तत्वात् ४० इदानींसर्वोत्कृष्टत्वेनसर्वस्माद्भिन्नस्यसर्वोपकारकत्वेनश्रेष्ठस्यपरमात्मतत्वस्यापरोक्ष्यंकदानुस्यादितिसोदाहरणतत्साधनमाह यहींति यार्हियदाप्रद्मनाभचरणेपणयाअनुदिनंप्रवृद्धयोव्यांभक्त्याचेत सःसत्वादिगुणकर्मजातानिमलानिविधमेत्परिहरेत्तदातस्मिन्चेतसिशुद्धेआत्मतत्त्वंपरमात्मस्वरूपंसाक्षादुपलक्ष्यतेअपरोक्षीक्रियते कथमिवयथासवितृप्रकाशोयत्दृशौनिर्मलेचक्षुषिदृश्यतइति ३१

यर्ह्यंब्जनाभचरणैषणयोरुभक्त्याचेतोमलानिविधमेद्गुणकर्मजानि ॥ तस्मिन्विशुद्धउपलभ्यतआत्मतत्वंसाक्षाद्यथामलदृशौःसवितृप्रकाशः ४१ रा जोवाच ॥ कर्मयोगंवदतनःपुरुषोयेनसंस्कृतः ॥ विधूयेहाशुकर्माणिनैष्कर्म्यंविंदतेपरम् ४२ एवंप्रश्नमृषीन्पूर्वमपृच्छंपितुरंतिके ॥ नाब्रुवन्ब्रह्मणः पुत्रास्तत्रकारणमुच्यताम् ४३ आविर्होत्रउवाच ॥ कर्माकर्मविकर्मेतिवेदवादोनलौकिकः ॥ वेदस्यचेश्वरात्मत्वात्तत्रमुह्यंतिसूरयः ४४ परोक्षवादो वेदोयंबालानामनुशासनम् ॥ कर्ममोक्षायकर्माणिविधत्तेह्यगदंयथा ४५

निमिर्ज्ञानयोगंश्रुत्वाकर्मयोगंपृच्छति कर्मयोगमिति येनकेनप्रकारेणसंस्कृतः शुद्धः ४२ ब्रह्मणःपुत्राःसनकादयःकारणंपरिहारवचनेनिमित्तम् ४३ आविर्होत्रः जानंतोपिहिदुर्ज्ञेयःप्रश्नोयंज्ञा निनामपि । इतिवेदयितुंब्रह्मपुत्रानोचुर्निमेःगुरइतिवाक्यात्ज्ञानिनामपिदुर्ज्ञेयत्वंनिमित्तमित्यभिप्रेत्यतैःप्रश्नपरिहारःआदौनकृतइतिसूचयन्प्रश्नपरिहरति कर्मेति इदंकर्मप्रशस्तंइदकर्मकर्तुमयो ग्यंइदंविकर्मविरुद्धंकर्मेतिवेदगतोवादोविचारोनलौकिकःलोकविषयोवेदबहिर्मुखजनगोचरोनभवति किंतुवेदविचारकुशलपुरुषविषयएवेत्यर्थःकुतस्तत्राह वेदस्येति चशब्दएवार्थे ईश्वरात्मत्वाचे श्वरविषयत्वादेव वैदिकानामपितत्प्रसादंविनासुज्ञेयोनेतिभावेनाह तत्रेति तत्रवेदार्थविचारे ४४ ननुवेदस्येश्वरविषयत्वंकथंयुज्यतेस्वर्गकामोयजेतेत्यादिकर्मविषयत्वप्रतीतेरतआह परोक्षेति प रोक्षतोवादोवचनंयस्यसतथा अयंवेदोमुख्ययावृत्त्यासाक्षाद्ब्रह्मवक्तृपमुख्ययाकर्मच किमर्थमेवंकल्प्यतेइत्यत्राह बालानामिति अल्पज्ञानिनामनुशासनकुर्वन्वेदोंतःकरणशुद्धयेदुष्कर्ममोक्षाय ब्रह्मार्पणबुद्ध्यातदुद्दिश्यकर्माणिविधत्ते । कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाइत्यादिलक्षणोहियस्मात्तस्मादुभयथापिब्रह्मविषयत्वमविहतंवेदस्य एकस्योभयविषयत्वंकुत्रदृष्टंअत्राह अगदंयथेतियथा यदैकमेवद्रव्यमपथ्यजनकंतदेवौषधीकृतमपथ्यंपरिहर्तुंभवतितथेत्यर्थः पद्वैकंपर्दकचिकित्साभेदाज्ज्वरवातयोःपरिहारायप्रभवति प्रकृतेपितथेति ४५

---

१ जीवस्यापिप्रकृतत्वेपिकूटस्थपदोक्तपरमात्मैवाभयोग्यतयापरामृश्यतइतिभावः दी० । ईश्वरमततिप्राप्नोतीति ईश्वरात्मा तस्यभावस्तत्त्वम् । यात्राभिप्रेतत्वादितिहृदयम् ।

वेदस्यापौरुषेयत्वेनविभ्रमलंभादिदोषाभावादज्ञेनापिवेदोक्तंकृतंसुकर्मेत्याशंक्यभगवदज्ञकृतंविकर्मतत्ज्ञानकृतमेवसुकर्मेइतिविविनक्ति नाचरेदिति स्वयंसर्वपूजितमिदमिष्टप्रदंदैवंनजानातीत्यज्ञः अतएवा जितेंद्रियःविषयलंपटःयोनापुरुषोवेदोक्तंकर्माचरेत्करोति समृत्योर्मृत्युमतीवदुःखमुपैतिकेनकारणेनेत्यतउक्तम् विकर्मणेति वेदोक्तकर्मणोविकर्मत्वंकुतइत्यतउक्तम् अधर्मेणेति एषमेसर्वधर्माणांध र्मोधिकतमोमतः। यद्भक्त्यापुंडरीकाक्षंस्तवैरर्चेन्नरःसदेतिभीष्मोक्तेरनेवंवित्कर्मणोऽधर्मत्वात्। यद्यनेवंवित्महत्पुण्यकर्मकरोतितद्धास्यांततःक्षीयतएवेतिश्रुतिर्हिशब्दआददाति । अनेनेश्वरार्पणमौ षधमेवकर्मणोनश्वरफलरोगविनाशयनित्यसुखहेतुरित्युक्तंभवति ४६ तर्हिस्वर्गेलोकेनभयंकिंचनास्तीतिश्रुतिःकथंसंगच्छतइतितत्राह रोचनार्थमिति अल्पबुद्धेर्बहिर्मुखस्ययोग्यस्यउत्पिपादयिपुर्द यालुरिवतास्मिन्बुद्धचवत्सरार्थंगुडजिह्विकान्यायमनुसदधानोमधुरंमुक्तिफलंगर्भीकृत्यस्वर्गादिपुण्यंमधुररसमिवप्रकाशयतदर्थंकर्मविदधान अधीतश्रुतवेदार्थस्यसमुत्पन्नजिज्ञासस्यक्षणभंगुरफलत्वात्स्व र्गादौवैराग्यमुत्पाद्यश्रीनारायणचरणारविंदभक्तिमुत्पाद्यतदुपासनासंभूतसंवित्संजातप्रसादसुलभापवर्गेतात्पर्यपर्यवसायिनीफलश्रुतिःसंगताभवतीति। अज्ञात्वाकुर्वतःकर्मस्खलनात्पापकारणं। तदेवार्प यतोविष्णोर्नैवपापायतद्भवेत्। मनोदोषविहीनस्यनतुदोषवतःक्वचित्। सत्सुकेशवपूर्वेषुक्रमशोभक्तिहीनता। असद्भक्तिस्तथास्नेहोबहुमानमथापिवा। स्वोत्तमानांप्रियत्यागादात्मप्रियचिकीर्षया। अधिकेष्वे

नाचरेद्यस्तुवेदोक्तंस्वयमज्ञोऽजितेंद्रियः ॥ विकर्मणाह्यधर्मेणमृत्योर्मृत्युमुपैतिसः ४६ वेदोक्तमेवकुर्वाणोनिःसंगोर्पितमीश्वरे ॥ नैष्कर्म्यांलभतेसिद्धिंरो चनार्थफलश्रुतिः ४७ यआशुहृदयग्रंथिंनिर्जिहीर्षुःपरात्मनः ॥ विधिनोपचरेद्देवंतंत्रोक्तेनचकेशवम् ४८ लब्ध्वानुग्रहमाचार्यात्तेनसंदर्शितागमः ॥ महापुरुषमभ्यर्चेन्मूर्त्याभिमतयात्मनः ४९ शुचिःसंमुखआसीनःप्राणसंयमनादिभिः ॥ पिंडंसंशोध्यसंन्यासकृतरक्षोऽर्चयेद्धरिम् ५० अर्चादौहृदयेवापि यथालब्धोपचारकैः ॥ द्रव्यक्षित्यात्मलिंगानिनिष्पाद्यप्रोक्ष्यचासनम् ५१ पाद्यादीनुपकल्प्याथसंनिधाप्यसमाहितः ॥ हृदयादिकृतन्यासोमूलमंत्रे णचार्चयेत् ५२ सांगोपांगांसपार्षदांतांतांमूर्तिंस्वमंत्रतः ॥ पाद्यार्घ्याचमनीयाद्यैःस्नानवासोविभूषणैः ५३ गंधमाल्याक्षतस्रग्भिर्धूपदीपोपहारकैः ॥ सांगंसंपूज्यविधिवत्स्तवैःस्तुत्वानमेद्धरिम् ५४

वनीचोच्चभक्तिर्व्यत्यासएववा। स्वोत्तमस्यात्मनश्चैवसमस्नेहोथवाभवेत् कार्येषुबहुमानोवास्वात्मनःसमतापिवा। आधिक्येपिकिमुवक्तव्यमात्मनःशक्तिहापनम्। शक्तस्याशक्तवत्कर्ममनोदोषाइतीरिता। इत्यनेनोक्ततात्पर्यार्थोबोद्धव्यः ४७ इदानींभगवदर्चनप्रकारंकथयति यआश्विति तंत्रोक्तेनपंचरात्रोक्तेन ४८ तंत्रोक्तसंप्रदायमजानतःकथमर्चनाघटतइतितत्राह लब्ध्वेति अव्यग्रमिति क्रियाविशेषणंबहुकालंपरीक्ष्याचार्यंलब्ध्वेत्यस्मिन्नर्थेवर्तते तेनाचार्येणसंदर्शितागमःसम्यक्दर्शितशास्त्रसंप्रदायः ४९ पिंडंशरीरंसम्यक्मंत्राक्षरन्यासेनकृतात्मरक्षः। परीक्ष्यैवगुरुःशिष्यंशिष्योपिगु रुंप्रव्रजेत्। अन्यथानरकायैवप्रायश्चित्तंगुरोस्तथेत्यनेनाव्यग्रत्वमुभयोरप्यपेक्षितमिति अत्रोक्तक्रियाविशेषणत्वेनप्रयुक्तमिति ५० अर्चाकारिणांबाहुविध्यादधिष्ठानविशेषमाह अर्चादाविति द्र व्यंलिंग शिलाद्यं क्षितिर्लिंगं स्थंडिलं आत्मलिंगंमनोलक्षणं। द्रव्यलिंगशिलाद्यस्यादात्मलिंगंमनोमयम्। अथवास्थंडिलंचैवविष्णोर्लिंगंप्रकीर्तितमिति अस्मादयमेवात्राविवक्षितोर्थः ५१ हृदयादिकृत मंत्रन्यासःसांगोपांगामंगमंत्रवाच्यमूर्तिभिःसहिताम् ५२ ५३ ५४

न्मयंतत्प्रधानं विष्णोर्भृत्योहमित्येवंसदास्याद्भगवन्मयः नैवाहंविष्णुरस्मीतिविष्णुःसर्वेश्वरोह्यजः । इतिवचनात्स्वामित्वमेवार्थोनतुतत्स्वरूपत्वं स्वमात्मानमित्युत्तरत्रैक्यविधानादत्रापिसएवार्थः किं
स्यादितिचेन्न स्वंस्वतंत्रमात्मानंव्याप्तमित्यर्थोपपत्तेः । स्वादानात्स्वात्मनोव्याप्त्याविष्णुःस्वात्मेतिकथ्यते । नतुजीवस्वरूपत्वात्सहिविश्वेश्वर.प्रभुरितिप्रमाणोपेतत्वात्हिशब्देनास्यार्थस्यबहुप्रमाण
सिद्धिंद्योतयति ५५ ५६ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविज०टी०तृतीयोध्यायः ॥ ३ ॥ स्वच्छंदजन्मभिःस्वेच्छावतारैः कर्ताकरिष्यति १ द्रुमिलःभगवद्गुणकर्मणामनंतत्वात्प्रश्नोदुष्परि
रइतिभावेनाह योवाइति २ नन्वेवंचेल्लोकेप्रश्नप्रतिवचनेगुरुशिष्यभावौचनस्तइतिदोषपरिहारायथाशक्तिप्रवक्ष्यामीत्यभिसंधायाह भूतैरिति भूतैरित्युपलक्षणं । महदहंकारौपंचभूतानिचय
सत्त्वतदापुरुषाभिधानमवाप यदाचमहदादिचतुर्विंशतितत्त्वै.विराजंब्रह्मांडाख्यंपुरंविरच्यस्वांशेनतस्मिन्प्रविष्ट.तदापुरुषाभिधानमवाप । यदाचात्मसृष्टैःपृथिव्यादिपंचभूतैर्ब्रह्मांडांतःपुरंजाताव
च्चमं पुराणिशरीराणिविरचय्यस्वांशेनपुरुषरूपेणतस्मिन्प्रविष्टःतदापुरुषाभिधानमवाप । विष्णोस्तुपुरुषाख्यानित्रीणिरूपाण्यथोविदुः । प्रथममहतःस्रष्टृद्वितीयंत्वंडसंस्थितं । तृतीयंदेहिनांदेहतानि
त्वाविमुच्यत इति । पुरुषरूपविष्णुज्ञानस्यमुक्तिहेतुत्वोक्तेःसाक्षात्सच्चिदानंदानिपुरुषरूपाणिविष्णोरभिन्नानीतिज्ञातव्यं । नर पुरुष-तेनसृष्टंनारंतस्याश्रयोनारायण. नरसृष्टत्वान्नारंब्रह्मांडंतदाश्र

आत्मानंतन्मयंध्यायन्मूर्तिंसंपूजयेद्धरेः ॥ शेषमाधायशिरसिस्वधाम्न्युद्वास्यसत्कृतम् ५५ एवमग्न्यर्कतोयादावतिथौहृदयेचयः ॥ यजेश्वरंस्वमात्मानम
चिरान्मुच्यतेहिसः ५६ ॥ इतिश्रीभागवतेम०एकादशस्कंधेवसुदेवनारदसंवादेजायंतेयोपाख्यानेविदेहप्रश्नेतृतीयोध्यायः ॥ ३॥ राजोवाच ॥ यानिया
नीहकर्माणियैर्यैःस्वच्छंदजन्मभिः ॥ चक्रेकरोतिकर्तावाहरिस्तानिब्रुवंतुनः १ ॥ द्रुमिलउवाच ॥ योवाअनंतस्यगुणाननंतानतुक्रमिष्यन्सतुबालबुद्धिः ॥
रजांसिभूमेर्गणयेत्कथंचित्कालेननैवाखिलशक्तिधाम्नः २ भूतैर्यदापंचभिरात्मसृष्टैःपुरंविराजंविरचय्यतस्मिन् ॥ स्वांशेनविष्टःपुरुषाभिधानमवापनारा
यणआदिदेवः ३ यत्कायएषभुवनत्रयसन्निवेशोयस्येंद्रियैस्तनुभृतामुभयेंद्रियाणि ॥ ज्ञानांशकेनविशतोबलमोजईहासत्त्वादिभिःस्थितिलयोद्भव
आदिकर्ता ४ आदावभूच्छतधृतीरजसास्यसर्गेविष्णुःस्थितौक्रतुपतिर्द्विजधर्मसेतुः ॥ रुद्रोप्ययायतमसापुरुषःसआद्यइत्युद्भवस्थितिलयाःसततंप्रजासु ५

योधिनरस्यविश्वमानंनारंशरीरंतदाश्रयोपि संसारिव्यावृत्त्यर्थंआदिदेवइति ३ एतदेवविशिनष्टि यत्कायइति भुवनत्रयसंनिवेशोयस्यकायेशरीरेभगवच्छरीराधारत्वेनवर्ततइत्यर्थः । तनुभृतामुभयेंद्रि
याणिज्ञानकर्मोत्पादकानींद्रियाणियस्यहरेरिंद्रियैःप्रेरितानिप्रवर्तंते अनेनशरीरातस्थत्वमुक्त कथंप्रेरकत्वमित्यतउक्तं ज्ञानांशकेनेति ज्ञानस्वरूपेणांतःशरीरंविशतः नकेवलंश्रवणादीनियादींद्रियप्रेरि
तानिअपितुबलादीन्यपीत्याह बलमिति सत्त्वादिभिर्गुणैःस्थितिश्चलयश्चउद्भवश्चयस्मात्सतथाअतआदिकर्तेत्युच्यते ४ एतदेवविवृणोति आदाविति अस्यजगतःसर्गेतादर्थ्येसप्तमीसृष्ट्यर्थंरजसागुणेनतं
ब्रह्माणंसृष्ट्वादावभ्रेतदंतर्यामित्वेननाम्नाशतधृतिःशतानंदोब्रह्मेत्यभूत्अस्यस्थितौनाम्नाविष्णुरभूत् स्थित्यैहेतुत्वंवक्ति क्रतुपतिरिति क्रतवोद्विजधर्माश्चनिमित्तान्येतैर्जगत्स्थापयतीत्यर्थः । सत्त्वेनेतिग्रा
ह्यंतमसागुणेनास्याप्ययायतंरुद्रंसृष्ट्वातदंतर्यामित्वेननाम्नारुद्रोभूदतःसआद्यःपुरुषाकारेणएतत्साधननाम्नापुरुषोभूदितिभावः । उपसंहरति इतीति सततमितिवीप्सोपलक्षणं कालंकालंप्रजासुउद्भव
स्थितिलयाइति एवंप्रकारेणहरेर्वर्तंते नान्यस्मादितिनिश्चितं तदुक्तं ब्रह्मणिस्थोसृजद्विष्णुःस्थित्वारुद्रेत्वभक्षयत् पृथक्स्थित्वाजगत्पातितद्ब्रह्मत्याह्वयोहरिरिति अतइयकल्पनाक्लिष्टेतिनमंतव्यम् ५

हरीरूपांतरैरपित्रिजगत्स्थितिंकरोतीत्याशयेनमाहात्म्यप्रकटनपूर्वकंतान्याह ' धर्मस्येत्यादिना । धर्मस्यसकाशात्तपआलोचनइतिधातोः आलोचनंनिश्चयज्ञानंस्वमात्मानंतपतिजानातीतितपःस्वरूपाः स्वरूपभूतःप्रभावोयस्यसः स्वप्रभावःस्वविषयज्ञानरूपश्चासौस्वरूपभूतप्रभावरूपश्चेत्यर्थः स्वशब्दःपदद्वयेनसंबध्यते अवतारप्रयोजनमाह नैष्कर्म्येति नैष्कर्म्यलक्षणंयोगंभुक्तिसाधनंज्ञानप्रदत्तरदयंच जनशिक्षार्थंयोगमुपासनालक्षणंध्यानंचचारकृतावतारप्रयोजनोपिलोकानुग्रहकातरोभगवेकत्रआश्रमविशेषआस्तेइन्याह अद्यापीति ६ श्रीनारायणंप्रागंचविनान्यान्सुरानपिपरेआजमादिवाङ्गिनःकामादयः आविशंतिकिमुतान्यानितिभावेनेंद्रस्याज्ञानंहरेर्महिम्नोऽप्रतिहतत्वंचप्रकटयितुवक्ति इंद्रोपीति । एषनारायणोनास्यएस्वंनाकेविद्यमानसुखमैश्वर्यलक्षणांजिघृक्षति गृहीतुमिच्छतीतिनिरूप्य ज्ञानरूपानपिसुरान्विनाप्राणंकंचित्परे । आविशंतिह्यतस्तेषामज्ञानादिनतुस्वतः । अथैनमेवमाप्नोद्योयंमध्यमःप्राणःएवमेतादेवताःपाप्मनाविद्धाइत्यादिश्रुतिस्मृतिभ्योयमर्थःसिद्धः । सकामोबदर्युराख्यंवदरीत्युपपदाश्रमेत्याख्यायस्यसतथातंबदरिकाश्रमं अप्सरोगणादिभिःसहगत्वास्त्रीणांप्रेक्षणेषुभिर्नयनलक्षणशरैराविध्यत् । अमुंभगवंतमितिशेषः । तस्यहरेर्महिमामाहात्म्यंनजानातीत्यतन्महिज्ञःउपलक्षणमेतत्इंद्रादिरप्येवंअनेनमुख्यप्राणोपिभगवदनुग्रहादसुरकृतपीडायाअविषयः । किमुतहरिरसुराविष्टकामादिपीडायाइतिन्यायोदर्शितः । तंहासुराऋत्वाविदध्वसुर्यथाश्मानमाखणमृत्वाविध्वंसतैवंहैवविध्वंसमानाविष्वंचोविनेशुरितिश्रुतेः

धर्मस्यदक्षदुहितर्यजनिष्टमूर्त्यांनारायणोनरइतिस्वतपःप्रभावः ॥ नैष्कर्म्यलक्षणमुवाचचचारयोगंयोद्यापिचास्तऋषिवर्यनिषेवितांघ्रिः ६ इंद्रोपि नाकसुखमेषजिघृक्षतीतिकामंन्ययुंक्तसगणंसबदर्युपाख्यम् ॥ गत्वाप्सरोगणवसंतसुमंदवातैःस्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ७ विज्ञायशक्रकृतमक्रममादिदेवःप्राहप्रहस्यगतविस्मयएजमानान् ॥ माभैर्विभोमदनमारुतदेववध्वोगृह्णीतनोबलिमशून्यमिमंकुरुध्वम् ८ इत्थंब्रुवत्यभयदेनरदेवदेवेसव्रीडनम्रशिरसःसघृणंतमूचुः ॥ नेत्थंविभोत्वयिपरेविकृतिर्विचित्रास्वारामधीरनिकरानतपादपद्मे ९ त्वांसुन्वतांसुरकृताबहवोंतरायास्तान्कोविलंघ्यपरमंव्रजतात्पदंते ॥ नान्यस्यबर्हिषिबलिंर्ददतःस्वभागंधत्तेपदंत्वमविताद्यदिविघ्नमूर्ध्नि १० क्षुत्तृट्त्रिकालगुणमारुतजैह्व्यशैश्न्यादस्मादपारजलधेरतितीर्यकेचित् ॥ क्रोधस्ययांतिविफलस्यवशंपदेगोर्मज्जंतिदुश्चरतपश्चवृथोत्सृजंति ११

७ अक्रमंअस्थानेपदन्यासमन्यायलक्षणं इममाश्रमम् ८ अविकृतिः अविकारः स्वारामाश्चधीराश्चस्वारामधीराःतेषांनिकरःसमूहस्तेनानतंपादपद्मंयस्यसतथातस्मिन् ९ भवतामल्पशक्तित्वादविकारःकिंनस्यादित्याशंक्यवयंभवंतंमत्यल्पबलाअन्यान्प्रतिबलवंतइतिभावेनाहुः त्वामिति । सुन्वतांभजमानानांयेअंतरायाःकस्तान्विलंघ्य तेपरमंपदंव्रजतात् नकोपि व्रजतिचेत् कोवायुरेव नान्यइत्यर्थः सावाएषादेवतैतासांदेवतानांपाप्मानंमृत्युमपहत्याथैनांमृत्युमत्यवहत्सायदामृत्युमत्यमुच्यतसोग्निरभवदितिश्रुतिश्चोक्तार्थेबलवत्प्रमाण । नन्वेवंतर्हिवायुमंतरेणभजतामितरेषांभगवत्प्राप्तिलक्षणामुक्तिर्नस्यादित्याशंक्य भगवदनुग्रहेसतिकाप्यापहुस्तरानस्यादितिभावेनाहुः नेति त्वमविताबर्हिषिस्वभागंददतःपुंसोयदिविघ्नमूर्ध्निपदंधत्तेतर्हिसबलिरन्यस्यनतवैव यदिविघ्नमूर्ध्निपदंनदध्यात्तर्हिबलिरपित्वत्प्रीतिजनकोनस्यात् नचायंतथा तस्मात्तर्केणभक्तेःप्राधान्यंतथैवविघ्ननिवृत्तिरितिदर्शितंभवति १० किंबहुनाकामादिजयादपिक्रोधजयएवदुःसाध्यःतवसोपिगोष्पदतरणवत्सुशकइतिविज्ञापयंति क्षुत्तृडिति चत्वारोमासाःशीतकराःचत्वारउष्णहेतवःचत्वारोवर्षहेतवइतित्रिकालगुणाः शीतोष्णवर्षसंज्ञाः जैह्व्यंजिह्वाप्रभवंशैश्न्यंशिश्नप्रभवंव्यसनं क्षुदादिव्यसनमपारजलधेरतितीर्यउत्तीर्यकेचित्पंडिताःभवदनुग्रहरहिताःविफलस्यप्रतिक्रियाकरणशक्त्यभावेनफलरहितस्यात्मनाशादिविविधफलस्यक्रोधस्यवशंयांतितेगोष्पदेमज्जंतिदुश्चरतपश्चवृथोत्सृजंति ११

इतिशब्दःप्रश्नोत्तिवचनः ११ रूपिणीःप्रशस्तरूपाः १३ वृद्ध्वंस्वीकुरुत १४ सुराणांबंदिनःबंदिग्रहणपटवः १५ १६ येयेहरेरवतारास्तेतेसर्वेप्येवंविधमाहात्म्यांबुध्यइतिज्ञाप्यते हंसस्वरूपीति । विष्णुःकलयाहंसरूप्यवतीर्णोजगतांशिवायात्मयोगंपरमात्मज्ञानमवदत् । एवंदत्तादावप्यन्वेतव्यम् । कुमारोनामहरेरूपातरसनत्कुमारादियोगीश्वरज्ञानोपदेष्टा । कुमारनामातु हरिर्ब्रह्मचारीवपुःस्वयं । सनत्कुमारायपरमोवाचजगदीश्वरइत्यनयास्मृत्या । विष्णोःसनत्कुराख्याच्छुश्रुवुर्ज्ञानमुत्तमम् । सनत्कुमारप्रमुखायोगेशाःपरमेश्वरात् इत्यनयाचोक्तार्थःसिद्धइति हयास्येहय ग्रीवावतारे तेनमधुभिदाश्रुतयआहृताः १७ मात्स्येवतारेइलाभूमिर्गुप्ता अप्ययेप्रलयेसत्यव्रतोनाममनुःसप्तऋषयश्चगुप्ताःअंभसःक्ष्मामुद्धरतोहरेःक्रोडेवराहावतारेदितिजोहिरण्याक्षोहतः । अमृतो त्पत्त्यपेक्षीरसमुद्रोन्मथनेमंदराद्रिः तापसोनामहरिरिभराजंग्राहादमुंचत् १८ व्यासावतारेसस्तुन्वतःश्रमणाब्धिःसगानृषींश्चसंसाराब्धिपतितान्संसाराब्धेरमूमुचत् । सुपर्णाऋषयोव्यासंनाथमा

इतिप्रगृणतांतेषांस्त्रियोत्यद्भुतदर्शनाः ॥ दर्शयामासशुश्रूषामर्चनंकुर्वतीर्विभुः १२ तेदेवानुचराद्दृष्ट्वास्त्रियःश्रीरिवरूपिणीः ॥ गंधेनमुमुहुस्तासां रूपौदार्यहृतश्रियः १३ तानाहदेवदेवेशःप्रणतान्प्रहसन्निव ॥ आसामेकतमांवृङ्ध्वंसवर्णांस्वर्गभूषणाम् १४ ओमित्यादेशमादायनत्वातंसुरबंदिनः ॥ उर्वशीमप्सरःश्रेष्ठांपुरस्कृत्यदिवंययुः १५ इंद्रायानम्यसदसिशृण्वतांत्रिदिवौकसाम् ॥ ऊचुर्नारायणबलंशक्रस्तत्रासविस्मितः १६ हंसस्वरू प्यवदद्च्युतआत्मयोगंदत्तःकुमारऋषभोभगवान्पितानः ॥ विष्णुःशिवायजगतांकलयावतीर्णस्तेनाहृतामधुभिदाश्रुतयोहयास्ये १७ गुप्ताप्ययेम नुरिलाऋषयश्चमात्स्येक्रोडेहतोदितिजउद्धरतोंभसःक्ष्माम् ॥ कौर्मेधृतोद्रिरमृतोन्मथनेस्वपृष्ठेग्राहात्प्रपन्नमिभराजममुंचदार्तम् १८ संस्तुन्वतोब्धिपति तान्श्रमणानृषींश्चशक्रंचवृत्रवधतस्तमसिप्रविष्टम् ॥ देवस्त्रियोसुरगृहेपिहिताअनाथाजघ्नेसुरेंद्रमभयायसतांनृसिंहे १९ दैवासुरेयुधिसदैत्यपतीन्सुरार्थे हत्वांतरेषुभुवनान्यदधात्कलाभिः ॥ भूत्वाथवामनइमामहरद्बलेःक्ष्मांयाच्ञाछलेनसमदाददितेःसुतेभ्यः २० निःक्षत्रियामकृतगांचत्रिःसप्तकृत्वोरामस्तु हैहयकुलाप्ययभार्गवाग्निः ॥ सोब्धिंबबंधदशवक्त्रमहन्सलंकांसीतापतिर्जयतिलोकमलघ्नकीर्तिः २१ भूमेर्भरावतरणाययदुष्वजन्माजातःकरिष्यति सुरैरपिदुष्कराणि ॥ वादैर्विमोहयतियज्ञकृतोऽतदर्हान्शूद्रान्कलौक्षितिभुजोन्यहनिष्यदंते २२ एवंविधानिकर्माणिजन्मानिचजगत्पतेः ॥ भूरीणि भूरियशसोवर्णितानिमहाभुज २३ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेवसुदेवनारदसंवादेजायंतेयोपाख्यानेविदेहप्रश्नेचतुर्थोध्यायः ॥ ४ ॥ ६ ॥

नायपुःसदा । ध्वांतंनिवर्तयास्माकंमुमुक्षीविवादिनः । इतिवचनाद्व्यासावतारेइयंकथेतिज्ञायते नृसिंहेनरसिंहावतारेतमसिप्रविष्टंकर्तव्यमूढमिंद्रंवृत्रवधतोदोषादमूमुचत् । सतामभयायासुरेंद्रंजघ्ने असुरगृहेपिहिताः अनाथाःदेवस्त्रियःअप्सरसश्चव्यमोचयदिति । स्मरणात्तुनृसिंहस्यशक्रोमुक्तोबृहद्वधात् । हिरण्यकहृताश्चापितथैवाप्सरसांगणाइतिवचनसिद्धेयंकथा १९ उपेंद्ररूपोहरिःदेवासुरयुद्धे सुरार्थेदैत्यपतीन्हत्वा अंतरेषुमन्वंतरेषुभुवनान्यदधात्वामनोभूत्वायाच्ञाछलेनबलेरिमांक्ष्मामहरत् हृत्वाचतामदितेःसुतेभ्यःसमदादित्यन्वयःतदुक्तं उपेंद्ररूपीभगवान्प्रतिमन्वंतरंविभुः । असुरान्हंतिनि यतंश्राद्धदेवेचवामनइति २० निःक्षत्रियांक्षत्रियरहितांहैहयकुलाप्ययार्थंउज्ज्वलितभार्गवाग्निःभृगुकुलोत्थवह्निःलंकामहन्हतवान्दशवक्त्रंचाहन्हतवान्लोकंजयति २१ बुद्धोपज्ञकृतोवादैर्वेदमोहयति कल्कीकलेरंतेशूद्रान्क्षितिभुजोन्यहनिष्यत् २२ निगमयति एवंविधानीति २३ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांचतुर्थोध्यायः ॥ ४ ॥ ७ ॥

श्रुतभगवद्भक्तलोकविशेषोराजाभगवद्विमुखानांकस्मिस्थानेस्थितिरितिपृच्छति भगवंतमिति हेआत्मवित्तमाः १ हरेःपितृत्वेनात्यंतोपकर्तृत्वात्तदभजनादिद्वेषोधःपातहेतुरितितदभक्तानांतम स्येवनिष्ठेतिवक्तुंभगवदवयवेभ्योवर्णाश्रमाणामुत्पत्तिप्रकारमाह मुखेति शमादिगुणैः २ एषामुत्पन्नानांमध्येआत्मप्रभवंस्वोत्पादकंपितरमित्यर्थः पितुर्हरेः स्थानाद्वैकुंठादिलक्षणाद्भ्रष्टाः ३ श्रुत्या द्यर्थविचारानधिकृतत्वेनदूरीकृतहरिकथाश्रवणकीर्तनादिसाधनानांस्त्रीशूद्रादीनांश्रेयःसाधनमाह दूरेहरिकथाइति भवादृशानामनुकंपाविषयत्वेनहरिकथाश्रवणादधिकारिणःस्युरितिभावः अच्यु तस्यकीर्तनंयेषामस्तितेअच्युतकीर्तनाः तेचदूरे ४ विप्रादीनांहरिभक्त्यभावेश्रुतिविचारोनमोक्षहेतुरित्याह विप्रइति विप्रादयःश्रौतेनश्रुतिविचारयोग्येनजन्मनाहेतुनाहरेःपदांतिकप्राप्ताहरि पदसमीपप्राप्तियोग्याःयद्यप्यथापिआम्नायेनसहवादःविवादोयेषामस्तीतिआम्नायवादिनःहरिभक्तिलक्षणमुख्यार्थापरिज्ञानात् मुह्यंतितत्त्वंनजानंतीत्यतोजन्मादिकंअप्रयोजकंकिंतुहरिभक्तिरेवेत्यर्थः ५ ननुवेदोक्तकर्मणांतत्त्वज्ञानोत्पत्तेःकथंतेषांमोहःकर्मणाज्ञानमातनोतीतिश्रुतेरित्याशंक्यआम्नायविवादित्वेनसम्यक्तदुदितकर्मतत्त्वापरिज्ञानादिदोषग्रहग्रस्तत्वादित्याह कर्मणीति अकोविदत्वेहे तुःस्तब्धाइति तत्रमूर्खाइतिमूढत्वेन अन्यवःश्रोतुंअक्यमित्यतः पंडितमानिनइति अतोमूढाःययामाध्व्यास्वर्गादिमधुवादिन्यागिरासद्योमधूनिगिरतीवस्थितयावाचाउत्सुकाःजिह्वारसंस्रवंतःतथा

राजोवाच ॥ भगवंतंहरिंप्रायोनभजंत्यात्मवित्तमाः ॥ तेषामशांतकामानांकानिष्ठाविजितात्मनाम् १ चमसउवाच ॥ मुखबाहूरुपादेभ्यःपुरुषस्याश्रमैःसह ॥ चत्वारोजज्ञिरेवर्णागुणैर्विप्रादयःपृथक् २ यएषांपुरुषंसाक्षादात्मप्रभवमीश्वरम् ॥ नभजंत्यवजानंतिस्थानभ्रष्टाःपतंत्यधः ३ दूरेहरिकथाःकेचिद्दूरेचाच्युतकीर्तनाः ॥ स्त्रियःशूद्रादयश्चैवतेऽनुकंप्याभवादृशाम् ४ विप्रोराजन्यवैश्यौचहरेःप्राप्ताःपदांतिकम् ॥ श्रौतेनजन्मनाथापिमुह्यंत्याम्नायवादिनः ५ कर्मण्यकोविदाःस्तब्धामूर्खाःपंडितमानिनः ॥ वदंतिवादकान्मूढाययामाध्व्यागिरोत्सुकाः ६ रजसाघोरसंकल्पाःकामुकाअभिमन्यवः ॥ दांभिकामानिनःपापाविहसंत्यच्युतप्रियान् ७ वदंतितेन्योन्यमुपासितस्त्रियोगृहेषुमैथुन्यपरेषुचाशिषः ॥ यजंत्यसृष्टान्नविधानदक्षिणावृत्त्यैपरंघ्नंतिपशूनतद्विदः ८ श्रियाविभूत्याभिजनेनविद्ययात्यागेनरूपेणबलेनकर्मणा ॥ जातस्मयेनांधधियःसहेश्वरान्सतोवमन्यंतहरिप्रियान्खलाः ९ सर्वेषुशश्वत्तनुभृत्स्ववस्थितंयथाखमात्मानमभीष्टमीश्वरम् ॥ वेदोपगीतंचनशृण्वतेबुधामनोरथानांप्रवदंतिवार्तया १०

वादकान्स्वर्गादिविषयवचनविशेषान्वदंति ६ किंचातइति अतआह रजसेति तत्रजनितेनरजसारागेणघोरोनिष्ठुरःपश्वालंभनादिलक्षणःसंकल्पोयेषांतेतथाकामुकाःविषयलोलुपाःतद्विघ्नकर्तॄन्प्र भिमन्यवःअभितःमन्युरेवप्रधानोयेषांतेतथाएवंविधाःपापाःअच्युतप्रियान्विहसंतिपृथक्पृथक्दोषानुक्त्वाविहसंतीत्यन्वयः ७ एतदेवविवृणोति वदंतीति गृहेषुस्थित्वान्योन्यमाशिषोवाक्यप्रबंधा न् निजगुणोत्कर्षलक्षणान्वदंति तत्रहेतुरुपासितस्त्रियइति किंचासृष्टान्नविधानदक्षिणाअदत्ताअविभ्युक्तगुरुदक्षिणाः परंकेवलवृत्त्यैजीवनोपायार्थंपशूनजादीन्घ्नंति नत्वालभंतेकुतोऽतद्विदस्तत्त्वाज्ञाः ८ श्रियाशरीरकांत्याविभूत्याअणिमाद्यैश्वर्येणश्रीविभूत्यादिनाजातस्मयेनसमृद्धमदेन अवमन्यंतेअवजानंति ९ हरिप्रियावज्ञानमेवहर्यवज्ञानंतथापीदमधिकमितिभावेनाह सर्वेष्विति ह रेःशशविषाणवदसिद्धस्यावज्ञाकथंकारंसंगच्छतइत्यतोवातदवज्ञानप्रकारमाह सर्वेष्विति तत्रहेतुमाह अबुधाइति हर्यवज्ञानेऽपिश्रीसेवायाविष्णुसेवात्वात्तद्वतांकथमधःपातःस्यादितीयमाशंका चेतुविष्णुमवज्ञायश्रियमेवद्युपासते उपेक्ष्यवाहरिंतेतुमूत्वायाज्याःपतंत्यधः इत्यनेनपरिहर्तव्या राजमीत्यभावेप्रकृतिवर्गप्रीत्याकिंप्रयोजनमभीष्टफलानुदयात् हृदयंगमजनप्रीत्यभावेपरिवृढहृदप्रीतेि

रपिमोदेतितत्साधकाभावादेवंप्रकृतेपिविष्णुप्रीत्यभावेलक्ष्म्यादिप्रीतिरपिअभीष्टफलदा नस्याल्लक्ष्म्यादिप्रीत्यभावेपरविष्णुप्रीतिरपिअभीष्टवर्षिणीनस्यात् अतोयथायोग्यंविष्णुप्रीतेरनुकूलान्धर्मानि रितिशास्त्रगुरूपदेशेनतत्तद्विष्णुजनभक्तिःकर्तव्येत्यत्रइयमेवविधेयानान्या तस्याश्चोदनाभावेपिनिम्नजलस्पंदनवत्स्वतःप्रवृत्तेः १० एवंकुर्वाणाअसुरप्रकृतयोनदेवप्रकृतयःतेषांवर्षायुतायुतकालेनापिप्र वृत्त्यदर्शनादुक्तनिदर्शनसाम्याचेत्याह लोकइति लोकेजंतोर्जन्मप्रभृतिमतःप्राणिनोव्यवायादिसेवा।नित्याःसदातनाःसंति तुशब्दोद्रव्यव्ययसद्भावसूचकःतत्रमद्यादिसंगयातामदेव्यादियज्ञान्विहायचोदना विधिर्नहितेषामस्तितदुक्तं व्यवायामिषमद्यानिहरेःपूजार्थमेवतु।वामदेव्योनामयज्ञोव्यवायोहरिपूजनम्। पितृयाज्ञोदेवयज्ञोमांसेनहरिपूजनं। व्यवाययज्ञेमद्यंतुसोमात्मकतयेष्यते।क्षत्रियादेर्नविप्राणांवि प्रोदोषेणालिप्यते। अरागतःप्रवृत्तिःस्याद्रागोदोषस्यकारणम्। घ्राणभक्षोथवायज्ञेदेवैःसर्वस्यचेष्यते।पैष्टमद्यस्यमाध्व्यादिक्षात्रियस्यनदुष्यति। दैवैरत्यैवचप्रीतिर्विष्णोःपुत्रात्तुमानुषे।तस्माद्विहितया श्रेपुरागंभुक्तायथाविधि समाहितोहारेस्मृत्वावर्तन्याजीहरमेवेदीति। विधिर्नास्तिचेत्किमिति तत्रास्थीयतइतितत्राह व्यवस्थितिरिति। यज्ञान्विहायतेषुव्यवाया।दिषुस्थितिःसुरैवग्रहःशरणंएणंतेतथाहरि विमुखाःवैरिष्ठा। ततःकिंतत्राह आसुरीति। निषिद्धक्रियापात्वात् असुरजनस्यवृत्तिर्जीविका नसुरांपिबेदितिश्रुतेः ११ एतदेवविवृणोति धनमिति यतोयस्माद्धर्मादस्यसविज्ञानंज्ञानमुत्पद्यते अनुज्ञानो त्पत्तेरनंतरंप्रशांतिःप्रकृष्टामुक्तिर्भवति योधर्मश्चधनाद्भवतितादृक्धर्मैकफलंधनंयेकलेवरस्यार्थे गृहेपुकलत्रादिषुयुंजंतिप्रयुंजंते कामस्यापिपुरुषार्थत्वात्तदर्थंप्रयोगोयुक्तइतितत्राह मृत्युमिति। अनेन कामलक्षणपुरुषार्थस्यक्षणभंगुरत्वमुक्तं अतईदृशीप्रवृत्तिरासुरीत्यर्थः धनंपुष्टिलक्षणमोक्षहेतुरित्येवंविधधनस्यान्यविषयत्वंकुर्वतांआसुरीप्रवृत्तिरितिकिमुवक्तव्यमितीममर्थंहिशब्देनसूचयति १२ व्य

लोकेव्यवायामिषमद्यसेवानित्यास्तुजंतोर्नहितत्रचोदना ॥ व्यवस्थितिस्तेषुविहाययज्ञान्सुराग्रहैरासुरवृत्तिरिष्टा ११ धनंहिधर्मैकफलंयतोस्य ज्ञानंसविज्ञानमनुप्रशांतिः ॥ गृहेषुयुंजंतिकलेवरस्यमृत्युंनपश्यंतिदुरंतवीर्यम् १२ यद्घ्राणभक्षोविहितःसुरायास्तथापशोरालभनंनहिंसा ॥ एवंव्यवायःप्रजयानरत्यैइमंविशुद्धंनविदुःस्वधर्मम् १३ येत्वनेवंविदोसंतस्तथासदाभिमानिनः ॥ पशून्द्रुह्यंतिविस्रब्धान्प्रेत्यखादंतितेचतान् १४ द्विषंतःपरकायेषुस्वात्मानंहरिमीश्वरम् ॥ मृतकेसानुबंधेस्मिन्बद्धस्नेहाःपतंत्यधः १५

वायादीनांयज्ञेषुविहितत्वमर्थादुक्तं तद्विधानप्रकारमाह यद्घ्राणेति। अयमर्थः सुरायाघ्राणभक्षइतियत्सविप्रादीनांदैवयज्ञविशेषेविवक्षितः तथायत्पशोरालभनंतत्देवयज्ञेविहितंपशुमालभेतेतिहिं सानविहिता। नहिंस्यात्सर्वभूतानीइतिच। यथाघ्राणभक्षादिकंविहितमेवंव्यवायः. पितृयज्ञेप्रजयासंतत्यर्थंविहितो रत्यैइंद्रियभोगार्थंन अत्रापिव्यवायाख्यपितृयज्ञेक्षत्रियस्यघ्राणभक्षंमंतरेणसुरा विहिता। व्यवाययज्ञेमद्यंतुसोमात्मकतयेष्यते। क्षत्रियादेर्नविप्राणांविप्रोदोषेणलिप्यते। अरागतःप्रवृत्तिःस्याद्रागोदोषस्यकारणं। घ्राणभक्षोथवायज्ञेदेवैःसर्वस्यचेष्यते इतिचोक्तं किमत्रमाथितमत्राह इ ममिति धर्मस्वरूपाज्ञानमेवभ्रांतिकारणमित्यर्थः। यज्ञेष्वालंभनंप्रोक्तंदेवतोद्देशतःपशोः। हिंसानामतदन्यत्रतस्मात्तानाचरेद्बुधः। यतोयज्ञेमृताऊर्ध्वंयांतिदैवेचपैतृके। अतोलाभादालभनंस्वर्गस्यतुनमा रणमितिवचनाद्यज्ञेपशोरालंभनंनमारणमित्युक्तम् १३ तत्रकेमारकामारकानांपशूनांकितत्फलमित्यत्राह येत्विति असंतोऽप्रशस्तकर्माणःत्रैवर्गिकाणांस्वहतपशुभिःखादनमेवप्रेत्यप्रजनफलं १४ किंचाभेदज्ञानाभावतोप्यधिकदुःखदःलोकःस्यादित्याह द्विषंतइत्यादिना। स्वात्मानंस्वाधारंस्वस्मिन्नास्थच। स्वेमहिम्नीतिश्रुतेःपरकायेषुस्वकायेपुचसंतंकार्यपनोजीवादन्यंद्विषतोऽसहमानाः। आप्त त्वादात्मशब्दोक्तंस्वस्मिन्नपिपरेषुच। जीवादन्यनपश्यंतिश्रुत्वैवंविद्विषंतिच। एतांस्त्वमासुरान्विद्धिलक्षणैःपुरुषाधमानितिस्मृतिः प्रतीतार्थवाणिकः १५

१ उपरिष्टादशश्लोकेएव।

एतदेवविशदयति येकैवल्यमिति येकैवल्यंयथार्थज्ञानंअसंप्राप्ताःयेचमूढतांचातीताःपंडितंमन्यास्तोत्रिवर्गसाधनयोग्यमभिजन्मयस्यसतथातादृशमात्मानंपातयंति तमसीतिशेषः यद्वा अभेदज्ञानिनांगति
मुक्तेदार्भौमिश्रज्ञानिनांस्थितिमाह यइति केवलोहरिरितिज्ञानरहिताःअस्मादृशोनभवतिभगवान्किंतुग्रामणीवत्प्रयोजकइतिज्ञानवतोयेतेभुक्तपुण्यफलाःआत्मानंस्वर्गान्मनुष्यलोकंप्रतिपातयंति तेतंभु
क्त्वास्वर्गलोकंविशालंक्षीणेपुण्येमर्त्यलोकंविशंतीतिच १६ उभयेपित्रैवर्गिकाःअधःपततीत्युक्तंतत्रकेषांकुत्रनिपातइत्यतोऽयोनिपातंविविनक्ति येतत्रेति तत्रोभयेषुत्रैवर्गिकेषुयेआत्महनःपरमात्मानं
द्विषंतःतेतमोविशंतीत्यन्वयःसीदंत्यवसीदंतिदुःखैकभाजोभवंति अशांताइत्यस्यविवरणंवासुदेवपराङ्मुखाइति अत्यायासरचितगृहादीन्हित्वाकालात्मनाभगवताध्वस्तःब्रह्मत्वंगमिष्यामइत्यादिमनो

येकैवल्यमसंप्राप्तायेचातीताश्चमूढताम् ॥ त्रैवर्गिकाभिजन्मानमात्मानंपातयंतिते १६ येतत्रात्महनोशांताअज्ञानेज्ञानमानिनः ॥ सीदंत्यकृतकृत्या
वैकालध्वस्तमनोरथाः १७ हित्वात्यायासरचितगृहापत्यसुहृच्छ्रियः ॥ तमोविशंत्यनुच्छासंवासुदेवपराङ्मुखाः १८ ॥ राजोवाच ॥ कस्मिन्कालेस
भगवान्किंवर्णःकीदृशोनृभिः ॥ नाम्नावाकेनविधिनापूज्यतेतदिहोच्यताम् १९ करभाजनउवाच ॥ कृतंत्रेताद्वापरंचकलिरित्येषुकेशवः ॥ नानावर्णा
भिधाकारोनानैवविधिनेज्यते २० कृतेशुक्लश्चतुर्बाहुर्जटिलोवल्कलांबरः ॥ कृष्णाजिनोपवीताक्षान्बिभ्रद्दंडकमंडलू २१ मनुष्यास्तुतदाशांतानिर्वैराः
सुहृदःसमाः ॥ यजंतितपसादेवंशमेनचदमेनच २२ हंसःसुपर्णोवैकुंठोधर्मोयोगेश्वरोमलः ॥ ईश्वरःपुरुषोव्यक्तःपरमात्मेतिगीयते २३ त्रेतायांरक्त
वर्णोसौचतुर्बाहुस्त्रिमेखलः ॥ हिरण्यकेशस्त्रय्यात्मास्रुक्स्रुवाद्युपलक्षणः २४ तंतदामनुजादेवंसर्वदेवमयंहरिम् ॥ यजंतिविद्ययात्रय्याधर्मिष्ठाब्रह्मवा
दिनः २५ विष्णुर्यज्ञःपृश्निगर्भःसर्वदेवउरुक्रमः ॥ वृषाकपिर्जयंतश्चउरुगायइतीर्यते २६ द्वापरेभगवान्श्यामःपीतवासानिजायुधः ॥ श्रीवत्सादि
भिरंकैश्चलक्षणैरुपलक्षितः २७ तंतथापुरुषंमर्त्यामहाराजोपलक्षणम् ॥ यजंतिवेदतंत्राभ्यांपरंजिज्ञासवोनृप २८ नमस्तेवासुदेवायनमःसंकर्षणाय
च ॥ प्रद्युम्नायानिरुद्धायतुभ्यंभगवतेनमः २९ नारायणायऋषयेपुरुषायमहात्मने ॥ विश्वेश्वरायरामायसर्वभूतात्मनेनमः ३० इतिद्वापरउर्वीशस्तुवं
तिजगदीश्वरम् ॥ नानातंत्रविधानेनकलावपियथाशृणु ३१ कृष्णवर्णंत्विषाकृष्णंसांगोपांगास्त्रपार्षदम् ॥ यज्ञैःसंकीर्तनप्रायैर्यजंतिहिसुमेधसः ३२ ध्ये
यंसदापरिभवघ्नमभीष्टदोहंतीर्थास्पदंशिवविरिंचिनुतंशरण्यम् ॥ भृत्यार्तिहंप्रणतपालभवाब्धिपोतंवंदेमहापुरुषतेचरणारविंदम् ३३

रथोयेषांतेतथा अनुच्छासंश्वासमोक्षलक्षणसुखरहितंतमःविशंति १७ १८ मुमुक्षुभिःअधोक्षजईक्षणीयइतिनिरणायितत्रराजापृच्छति कस्मिन्निति तत्सर्वम् १९ २० सामान्यतउक्तं
विशिनष्टि कृतइति कस्मिन्कालइत्यस्योत्तरंकृतइति किंवर्णइत्यस्योत्तरंशुक्लइति कीदृशइत्यस्योत्तरंचतुर्बाहुरित्यादि नाम्नेत्यस्योत्तरंहंसइत्यादि केनविधिनेत्यस्योत्तरंतपसेत्यादि शांतइ
त्याद्यधिकारिलक्षणंएवमुत्तरत्रापि २१ २२ २३ त्रिमेखलःत्रिगुणितमेखलः २४ सर्वदेवमयंसर्वदेवप्रधानम् २५ २६ २७ २८ २९ ३० कलावपि यथेज्यते तथाशृणु ३१ ३२ ३३

यच्चरणारविंदमार्यवचसापितृवचनेनअरण्यमगात् यच्चदयितेप्सितंमायामृगंअन्वधावत्तच्चरणारविंदंवंदामहेइत्यन्वयः ३४ उपसंहरति एवमिति सामान्यविधानमिदं विशेषविधिस्तुस्वगुरूपदे शगम्यइतिशास्त्रहृदयंरहस्यत्वान्नोक्तंशास्त्रांतरासिद्धत्वाच्चेत्यदोषः तदुक्तं ध्रुवंतयैवमुच्येतयांमूर्तिमदिशेद्गुरुः। शिष्याणांयोग्यताभिज्ञोविग्रहानिस्तुतद्युगइति यस्मिन्युगेस्वयमुत्पन्नःतत्पूर्वयुगावतीर्णहरे णागुरूपदिष्टेनअभीष्टसिद्धिर्भवति अवतीर्णंहरेर्मूर्त्यातत्पूर्वयुगजेनच। नृसिंहमूर्त्याचतथायाचान्यांमाइशेद्गुरुरिति ३५ कृतादेःकलेःपुण्यहेतुत्वात्स्तौति कलिमित्यादिना सारभागिनःसारग्राहिणः ३६ ३७ ३८ तथाकलौभविष्यंतिजायंतेकचित्कचिद्देशेतथासंभूताःनारायणपरायणाःस्युः यत्रद्रमिलेषुताम्रपर्ण्यादिनद्यःसंति प्रतीचीमहानदीनाम्नावेत्रवतविराहक्षेत्रात्सह्यागिरिभित्त्वापश्चिमसमु द्रंस्यंदमाना ३९ ४० देवर्षिपितृभूतासनृणांपूजकाश्चस्युः ४१ सामान्यमुक्त्वाविशेषमाह देवर्षीति योसाधारणयापरिचर्ययासर्वात्मनाशरण्यंमुकुंदंशरणगतोभवतिसोयंदेवादीनांकिंकरोऋणी चनभवति स्वोत्तमान्विनेतिशेषःतेषांकिंकरःऋणीचअत्रेदंतात्पर्यं सर्वात्मनाहरिभक्ताः सर्वथाहरिभक्ता' भक्ताइतित्रिविधाः तत्रदेवेशाःसर्वात्मनाभक्ताःदेवाःसर्वथाभक्ताःतदितरेभक्ताइति अत्रापियेयेभ

त्यक्त्वासुदुस्त्यजसुरेप्सितराज्यलक्ष्मींधर्मिष्ठआर्यवचसायदगादरण्यम् ॥ मायामृगंदयितेप्सितमन्वधावद्वंदामहेपुरुषतेचरणारविंदम् ३४ एवंयुगा नुरूपाभ्यांभगवान्युगवर्तिभिः ॥ मनुजैरिज्यतेराजन्श्रेयसामीश्वरोहरिः ३५ कलिंसभाजयंत्यार्यागुणज्ञाःसारभागिनः ॥ यत्रसंकीर्तनेनैवसर्वःस्वार्थोभि लभ्यते ३६ नह्यतःपरमोलाभोदेहिनांभ्राम्यतामिह ॥ यतोविंदेतपरमांशांतिंनश्यतिसंसृतिः ३७ कृतादिषुप्रजाराजन्कलाविच्छंतिसंभवम् ॥ यत्र संकीर्तनान्नृणांहरिर्दास्यत्यसंभवम् ३८ कलौतथाभविष्यंतिनारायणपरायणाः ॥ क्वचित्क्वचिन्महाराजद्रमिलेषुचभूयशः ३९ ताम्रपर्णीनदीयत्रकृत मालापयस्विनी ॥ कावेरीचमहापुण्याप्रतीचीचमहानदी ४० येपिबंतिजलंतासांमनुजामनुजेश्वर ॥ प्रायोभक्ताभगवतिवासुदेवेमलाशयाः ४१ देव र्षिभूताप्तनृणांपितृणांनकिंकरोनायमृणीचराजन् ॥ सर्वात्मनायःशरणंशरण्यंगतोमुकुंदंपरिहृत्यकर्तम् ४२ स्वपादमूलंभजतःप्रियस्यत्यक्तान्यभावस्यह रिःपरेशः ॥ विकर्मयच्चोत्पतितंकथंचिद्धुनोतिसर्वंहृदिसन्निविष्टः ४३ ॥ नारदउवाच ॥ धर्मान्भागवतानित्थंश्रुत्वाथमिथिलेश्वरः ॥ जायंतेयान्मुनीन्प्री तःसोपाध्यायोह्यपूजयत् ४४

क्त्वधिकास्तेतेअवरेषांस्वामिनउत्तमर्णाश्च स्वावरेषांकिंकरऋणीचनस्यात् । सर्वात्मनाहरेर्भक्तादेवेशाएवकेवलम् । देवास्तुसर्वथाभक्ताभक्ताएवेतरेस्मृताः । हरिभक्त्यधिकाश्चैवकिंकरश्चाप्यृणीतथा । ह रिभक्तोनेतरेषांवासुदेवव्यपाश्रयात् । द्विधैवस्वोत्तमर्णानिदातव्यानीतराणिच । दातव्येभ्योविमुच्येतनेतरेभ्यःकथंचन । कथंदेवाद्यनुपकृतोमनोमोक्षेपिवर्तयेत् । बिंबत्वात्तदधीनंहिस्वरूपंसर्वशोयतइ तिस्मृतिश्चशब्दगृहीता एवंविधस्यापिहरिभक्तस्यपूर्वादृष्टोपनतविकर्मणाधःपातःस्यादितितत्राह स्वपादमूलमिति । त्यक्तोन्यःस्वतंत्रोहमितिभावोयेनसतथातस्य सर्वदाभगवदधीनोस्मीतिभावयुक्तस्ये त्यर्थः कथंचिद्भ्रमवदहष्टत्वात्यदुत्पतितंविकर्मतद्धुनोति । इतरभक्तैर्देवाउदकादिभिरपिश्रीहरिस्मरणपूर्वकपूज्याअन्यथामोक्षोनस्यात् । तदुक्त उदकैश्चनमस्कारैःस्मृतिभिर्मनसातथा । यतिभिश्चापि संपूज्यादेवामोक्षमियासुभिः । मध्येविष्णुमनुस्मृत्यनान्यथातुकथंचनेति तत्रापिप्राधान्येनश्रीहरिध्यानंकर्तव्यतत्सन्निधानसंबंधविशेषादेवतास्मरणं प्राधान्येनहरिर्ध्येयस्तत्संबंधात्सुरादयः । ध्येयाना न्यस्तकाचिद्ध्यायेद्रावनुपयोगित्वादितिविशेषवचनात् ४३ नारदःसिद्धेभ्योभगवत्तत्त्वंविज्ञायततःराजाकिमकरोदितिवसुदेवस्यहार्दंप्रश्नंपरिहरति धर्मानिति ४४

४५ ४६ ४७ आत्मादेह ४८ मुक्तेरंतरंगसाधनंभक्तिरेवेतिदर्शयितुंवैरप्रधानासुरावेशाद्वैरमिश्रभक्तानामपिभक्त्यास्वस्वयोग्यंफलंभवतीतिकिमुतनित्यानुरक्तबुद्धीनामितिकैमुत्यन्यायमाह वैरेणेति । शिशुपाला दिषुस्थितात्असंतस्तन्नामानस्तत्साम्यद्वेषयोग्यफलंनरकादिकक्षगमापु.तस्थाःसंतस्तस्यहरेःसाम्यंनिर्दोषत्वादिलक्षणंफलमापुः । अनुरक्तधियःकेवलभक्ताः किंपुन.भक्तियोग्यफलमापुरितिकिंवक्तव्यं अतोभक्तिरेवमुख्येत्यर्थः । पौंड्रकादिषुदैत्येषुसुराशाःसंतिसर्वशः । बहुमानफलंविष्णोस्तेयांत्यादायसद्गतिं । विद्वेषस्यफलंयत्तुतदादायासुरास्तम । यांत्यतोनैवविद्वेषोविष्णौकार्यःकथचनेतिवच नात्प्रामाणिकोयमर्थः आकृतधियः स्वबुद्धौतदाकारवतः ४९ उक्तार्थमुपसंहरन्कृष्णेपत्यबुद्धिविहायसर्वेश्वरबुद्धिरेवकर्तव्येत्याह मापत्यबुद्धिमिति ५० हतवेहंतु हंनवाउरातिश्रुतिः अस्यानि श्वस्य ५१ ५२ ब्रह्मभूयायस्वस्वयोग्यपूर्णानंदत्वाय ५३ ॥ इतिश्रीभागवतेमहा०एकादशस्कंधेविजयध्वजकृतटीकायांपंचमोध्यायः ॥ ५ ॥ स्वाभीष्टस्वलोकप्राप्तयेभक्तमुख्यब्रह्मादिप्रार्थनामुधार्द्रां

तेचांतर्दधिरेसिद्धाःसर्वलोकस्यपश्यतः ॥ राजाधर्मानुपातिष्ठन्नवापपरमांगतिम् ४५ त्वमप्येतान्महाभागधर्मान्भागवतान्श्रुतान् ॥ आस्थितःश्रद्धया युक्तोनिःसंगोयास्यसेपरम् ४६ युवयोःखलुदंपत्योर्यशसापूरितंजगत् ॥ पुत्रतामगमद्यद्वांभगवानीश्वरोहरिः ४७ दर्शनालिंगनालापैःसशय्यासनभो जनैः ॥ आत्मावांपावितःकृष्णेपुत्रस्नेहंप्रकुर्वतोः ४८ वैरेणयंनृपतयःशिशुपालपौंड्रशाल्वादयोगतिविलासविलोकनाद्यैः ॥ ध्यायंतआकृतधियःशयना सनादौतत्साम्यमापुरनुरक्तधियःपुनःकिम् ४९ मापत्यबुद्धिमकृथाःकृष्णेसर्वात्मनीश्वरे ॥ मायामनुष्यभावेनगूढैश्वर्येपरेव्यये ५० भूभारासुरराजन्यहं तवेगुप्तयेसताम् ॥ अवतीर्णस्यनिर्वृत्यैयशोलोकेवितन्यते ५१ ॥ श्रीशुकउवाच ॥ एतच्छ्रुत्वामहाभागोवसुदेवोतिविस्मितः ॥ देवकीचमहाभागा जहतुर्मोहमात्मनः ५२ इतिहासमिमंपुण्यंधारयेद्यःसमाहितः ॥ सविधूयेहशमलंब्रह्मभूयायकल्पते ५३ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधे वसुदेवनारदसंवादेपंचमोऽध्यायः ॥ ५ ॥ बादरायणिरुवाच ॥ अथब्रह्मात्मजैर्देवैःप्रजेशैरावृतोभ्यगात् ॥ भवश्चभूतभव्येशोययौभूतगणैर्वृतः १ इंद्रोमरुद्भिर्भगवानादित्यावसवोश्विनौ ॥ ऋभवोंगिरसोरुद्राविश्वेसाध्याश्चदेवताः २ गंधर्वाप्सरसोनागाःसिद्धचारणगुह्यकाः ॥ ऋषयःपितरश्चैवसवि द्याधरकिन्नराः ३ द्वारकामुपसंजग्मुःसर्वेकृष्णदिदृक्षवः ॥ वपुषायेनभगवान्नरलोकमनोरमः ॥ यशोवितन्वन्लोकेषुसर्वलोकमलापहम् ४, तस्यां विभ्राजमानायांसमृद्धायांमहर्षिभिः ॥ व्यचक्षतावितृप्ताक्षाःकृष्णमद्भुतदर्शनम् ५ स्वर्गोद्यानोद्भवैर्माल्यैश्छादयंतोयदूत्तमम् ॥ गीर्भिश्चित्रपदार्थाभिस्तु ष्टुवुर्जगदीश्वरम् ६ ॥ देवाऊचुः ॥ नताःस्मतेनाथपदारविंदंबुद्धींद्रियप्राणमनोवचोभिः ॥ यच्चिंत्यतेंतर्हृदिभावयुक्तैर्मुमुक्षुभिःकर्ममयोरुपाशात् ७ त्वं माययात्रिगुणयात्मनिदुर्विभाव्यंव्यक्तंसृजस्यवसिलुंपसितद्गुणस्थः ॥ नैतैर्भवानजितकर्मभिरज्यतेवैयःस्वेसुखेव्यवहितेभिरतोनवद्यः ८

कृतचित्तस्यहरेस्तदभ्यनुज्ञानेस्वकुलसंहरणोपक्रमश्च समृद्धभक्तिसमुद्रमग्नोद्धवोपसत्तिप्रकारश्चास्मिन्नध्याये कथ्यते तत्रनथमब्रह्मादिप्रार्थनाप्रकारःप्रारभ्यते अथेत्यादिना आत्मजैरात्मनोमनसो जातैःसनकादिभिः संक्षिप्योक्तंविवृणोतिभवश्चेत्यादिना १ २ ३ दिदृक्षुत्वेहेतुमाह वपुषेति सर्वलोकमलापहंयशोलोकेषुवितन्वन्भगवान्नरलोकमनोरमइतियेनतस्मादितिशेषः या स्वयंकारितातस्यामासीनम् ४ ५ माल्यैःपुष्पैः ६ यत्पदारविंदमंतर्हृदिबुद्धींद्रियप्राणमनोवचोभिमानिभिर्देवैश्चिंत्यते ७ ब्रह्मादिदेवैश्चिंत्यत्वेततोप्युत्कृष्टत्वगुणेनभाव्यम् तात्किमस्यनिर्गुणस्यास्त्वित्यत्राह त्वमित्यादिना माययात्वदिच्छयानियतयात्रिगुणयाप्रकृत्याआत्मनिआत्माधारत्वेनव्यक्तंब्रह्मांडम् । अचेतनस्यपुरुषसंबंधित्वेनप्रवृत्तिदर्शनादिच्छागात्रेणप्रकृत्यास्

ष्ट्यादिककथमुपपद्यतइत्यतउक्तं तद्गुणस्यइति । प्रकृतिगुणेषुस्थित्वानियतैर्गुणैः ननुगुणसंबंधाज्जीववत्पुण्यपापलक्षणकर्मबद्धतास्यादेवेतितत्राह नैतैरिति एतैर्गुणनिमित्तैःअनेनदुःखानुभवोपिनास्ती त्युक्तंभवति अत्रहेतुगर्भंविशेषणमाह यइतियःप्रकाशरूपःयाप्रापणइतिधातोः यात्यवगच्छतिसर्वमिति सर्वज्ञइत्यर्थः । अतएवाव्यवहितेस्वरूपसुखेभिरतः अतएवानवद्यःदुःखादिनिमित्तदोषाभावात् ८ त वकीर्तिश्रवणपूर्णसच्छ्रद्धयासंसारिणामपिसात्विकानांगुणनिमित्तपापादिलेशाभावेनात्यंतिकीशुद्धिर्भवतिकिमुतनवेतिभावेनाह शुद्धिरिति हेईड्यदुराशयानांनृणांतथाविद्यादिभिःशुद्धिर्नस्यात् यथास त्वात्मनांपुंसांतेतवयशसिप्रवृद्धसच्छ्रद्धयाशुद्धिःस्यादित्यन्वयः अनेनत्रयोपिगुणाअशुद्धिहेतवउतनेतिशंकापहास्तिता सत्वगुणस्यभगवत्कथारतिहेतुत्वाच्छुद्धिकरत्वेनज्ञानजनकत्वेनमुक्तिहेतुत्वात् ९ अस्तुनित्यनिर्दुःखानंदःसृष्ट्यादिकर्ताचततःकिंयुष्माकमितितत्राहुः स्यान्नइति । योमुनिभिःक्षेमायआर्द्रहृदोह्यमानःयश्चसवनशःत्रिकालेआत्मविद्भिःस्वरूपविज्ञानविद्भिःसात्विकैःपुरुषैःसमविभूतिभिःसम विक्रमैर्वासुदेवादिभिर्व्यूहैरर्चितः तवसोंघ्रिरशुभाशयधूमकेतुःस्यादित्यन्वयः १० पुनरप्यंघ्रिंविशेषयंति यश्चिंत्यतइति त्रय्याविदत्रयेणनिरुक्तविधिनास्वहविर्गृहीत्वाप्रयतपाणिभिर्याजकैःअध्वराग्नौ विचिंत्यते उतापिअर्थविकल्पयोरित्यभिधानंयश्चाध्यात्मयोगेउतपरमात्मध्यानेपिआत्ममायाजिज्ञासुभिःयोगिभिःपरमभागवतैःपरीष्टःसम्यक्पूजितः ११ किंचयेयंश्रीर्भगवतीपर्युष्टयावर्जितम्लानभावया निर्मोत्फुल्लयासद्रूपयेपतितयावनमालयासहप्रतिपक्षवत्संस्पर्द्धिनी अस्पर्धिनी स्पर्धावतीवतिष्ठतीत्यर्थः । अस्पर्द्धिनीस्पर्द्धिनीवश्रीरास्तेवनमालया । नहिस्पर्द्धादयोदोषाःसविद्रूपांस्पृशंतितां इतिवच

शुद्धिर्नृणांनतुतथेड्यदुराशयानांविद्याश्रुताध्ययनदानतपःक्रियाभिः ॥ सत्वात्मनामृषभतेयशसिप्रवृद्धसच्छ्रद्धयाश्रवणसंभृतयायथास्यात् ९ स्या न्नस्तवांघ्रिरशुभाशयधूमकेतुःक्षेमाययोमुनिभिरार्द्रहृदोह्यमानः ॥ यःसात्विकैःसमविभूतिभिरात्मविद्भिर्व्यूहार्चितःसवनशःस्वर्गातिक्रमाय १० यश्चिंत्य तेप्रयतपाणिभिरध्वराग्नौत्रय्यानिरुक्तविधिनास्वहविर्गृहीत्वा ॥ अध्यात्मयोगउतयोगिभिरात्ममायाजिज्ञासुभिःपरमभागवतैःपरीष्टः ११ पर्युष्टयाप तितयावनमालयेयंसंस्पर्धिनीभगवतीप्रतिपक्षवच्छ्रीः ॥ यःसुप्रणीतममुयार्हणमाददानोभूयात्सदांघ्रिरशुभाशयधूमकेतुः १२ केतुस्त्रिविक्रमसतांत्रि पतत्पताकोयस्तेभयाभयकरोसुरदेवचम्वोः ॥ स्वर्गायसाधुषुखलेष्वितरायभूम्नःपादःपुनातुभगवन्जगतामघंनः १३ नस्योतगावइवयस्यवशेभवंति देवाश्चयस्तनुभृदायुषिरज्यमानाः ॥ कालस्यतेप्रकृतिपूरुषयोःपरस्यशंनस्तनोतुचरणःपुरुषोत्तमस्य १४

नात् यथामुयाश्रियासुप्रणीतमर्हणमर्चनमाददानआस्ते यद्वा अवयविनोधर्मआदानादिरवयवस्यकथंयुज्यतइत्यत्राह यइति । यःप्रकाशरूपःपूर्वत्रैयच्छब्दरूपःअत्रतुअकारांतइति अनेनलोकवि लक्षणत्वेनहरेरवयवस्यपादस्यावयविवत् स्वातंत्र्येणादानादिधर्मोयुक्तइतिज्ञातव्यम् १२ हेभगवन्भूम्नःतेपादोनोस्माकंजगतांचाघंपुनातु यस्त्रिविक्रमसतःत्रयोविक्रमाएवप्रशस्तकर्माणियस्यसतथातस्य प्रशस्तेकर्मणित्वथेत्यादि तेतवकेतुर्ध्वजश्चयोवेदाएवपतंत्यश्चलंत्यःपताकायस्यसतथा । यश्चासुरदेवचम्वोःभयाभयकरः किंच यः साधुषुस्वर्गायसुखायखलेष्वितरायदुःखाय भवतीति १३ सुख दुःखयोःकारणत्वेनहरेःपादस्यस्वातंत्र्यंप्रत्यक्षमितिभावेनाह नस्योतगावइति सुखदुःखयोर्नियंतारइंद्रियाभिमानिनोदेवाश्चयस्यपादस्यवशेवर्ततेनासिनासिकायांओतगावःस्वामिनइव यश्चतनुभृतांशरी रिणांआयुषिशतवर्षलक्षणेरज्यमानःसंबद्ध्यमानःतावत्कालंस्थित्वातेयश्चदुःख्यहमितिअभिमानशून्यश्चेतितनुभृदायुषिरज्यमानाः पुरुषोत्तमस्यतेचरणोनःशंतनोत्वित्यन्वयः । ब्रह्मणासंपारित्यक्तो मृतइत्युच्येनरइत्यनेनश्रीहरिसंबंधोदेहिनांविज्ञायते । तदभिमानशून्यत्वेहेतुमाह प्रकृतीति अत्रापिहेतुमाह कालस्येति कालप्रेरकस्यतस्यसकाशात्परस्यवा १४

१ यजदेवपूजेतिधातोःकर्मणिक्तप्रत्ययेयकारस्यइकाररूपेसंप्रसारणेजातेइष्टामीतिरूपम् ॥

सृष्ट्यादिगुणपूर्णत्वाच्चकालइत्याशयेनाह अस्येति अस्यजगतउदयादीनांहेतुरसि । प्रधानादिदमुत्पन्नमितिश्रुतेः प्रकृत्यादीनांजगद्धेतुत्वादिदंकथमत्राह अव्यक्तेति अव्यक्तादीनांहेतुरसि अतःकालःकालनिर्मातृत्वाच्चकालइत्याह कालमात्रइति सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषादधीतिश्रुतेः हरेर्विधांतरेणकालशब्दवाच्यत्वमाह त्रिणाभिरिति तिस्रश्चातुर्मास्यलक्षणानाभयोयस्यसतथा गभीररयःअलक्षितापारवेगःसोयंकालस्त्वंत्वमितिकइतितत्राह उत्तमेति पुरुषोत्तमशब्दवाच्यः । संहारकर्तृत्वंविशिनष्टिअखिलेति अधुनायादवाद्यखिलजगन्निरासेप्रवृत्तः यद्वापुरुषोत्तमत्वंविवृणोति अस्येति अनेनकथंतद्विवृतमभूदित्यतउक्तंअव्यक्तेति कालस्वरूपाज्ञानेअस्यापमुत्पत्तिसमयःइतिनिश्चयोनस्यादत्रोक्तंकालेति कालस्वरूपज्ञातातंनिर्मातावा कीदृशःकालःयेनतद्विशेषज्ञानीस्यादाह सोयमिति । हरिःयकालंविशेषतोजानातिसोयंकालएवंविशिष्टइत्यन्वयःकथमत्राह त्रिणाभिरिति अखिलस्यसमस्तप्रपंचस्यापचयेसंहारेचप्रवृत्तःअनेनसृष्ट्यादिविशेषविशिष्टंकालंजानातीत्युक्तंभवति अतश्चकिमवसितमत्राह उत्तमेति । एवंविधात्कालादप्युत्तमस्त्वमित्यर्थः अनेनप्रकृतिपुरुषकालमहत्तत्वेभ्यउत्तमत्वात्पुरुषोत्तमइत्युक्तंभवति तदुक्तम् कालाज्जीवात्तथाव्यक्तान्महतश्चोत्तमो यतः । उत्तमःपुरुषस्तस्माद्भगवान्विष्णुरुच्यतइति १५ व्यक्तसृजस्यस्यासिहेतुरितिश्लोकद्वयेनकथितंसर्जनंविवृणोति त्वत्तइति त्वत्तोब्रह्मांडंजगदुत्पद्यतइतियदुक्तंतत्प्रधानमधिकृत्यप्रधानादिशब्दवाच्यान्रमादीनधिकरणंकृत्वावर्तते तथाहिमहाप्रलयेलक्ष्म्यासहरममाणान्नारायणाख्यात्त्वत्तोवतीर्णःपुमान्पुरुषनामामोघवीर्योभवान्प्रधानाभिमानित्वात्तन्नाम्न्यारमायांमहांतमिवास्थितंस्ववीर्यंगर्भंधत्ते । पुरुषनामानंचतुर्मुखंप्रधानाख्यांगायत्रींचसृष्टवानित्येकोर्थःसपुमांश्चतुर्मुखोमहांतमिवगर्भंमहत्तत्वाभिधंआत्मानंश्रद्धाभिधांगायत्रींचप्रधाननाम्न्यांगायत्र्यांधत्तेसृष्टवानित्यपरः ता

**अस्यासिहेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपिकालमात्रः॥ सोयंत्रिणाभिरखिलापचयेप्रवृत्तःकालोगभीररयउत्तमपूरुषस्त्वम् १५ त्वत्तःप्रधानमधिकृत्यपुमान्स्ववीर्यंधत्तेमहांतमिवगर्भममोघवीर्यः ॥ सोयंत्वयानुगतआत्मनआंडकोशंहैमंससर्जबहिरावरणैरुपेतम् १६ तत्तस्थुषश्चजगतश्चभवानधीशोयन्माययोत्थगुणविक्रियोपनीतान् ॥ अर्थान्जुषन्नपिहृषीकपतेनलिप्तोयेन्येस्वतःपरिहृतानपिबिभ्यतिस्म १७**

भ्यांमहत्तत्वाख्यश्रद्धाख्याभ्यांशेषोहंकारापरनामाजातःइत्यन्योर्थः नारायणाख्यःपरमःशेतेलक्ष्म्यान्वितोलये । सएवपुरुषाख्यंतुद्वितीयंरूपमात्मनः । कृत्वारमायांपुरुषनामानंतुचतुर्मुखम् । प्रधानाख्यांचगायत्रींससर्जपुरुषात्मकः । चतुर्मुखःसपुरुषोमहत्तत्वाभिधंपुनः । प्रधाननाम्न्यांगायत्र्यांससर्जात्मानमेवतु । श्रद्धाभिधांचगायत्रींताभ्यांशेषोन्वजायत इत्यादिवाक्यात्सकृदुक्तवाक्यस्यान्वयभेदोपुच्यते सोयंमहत्तत्वाख्योब्रह्मायोनारायणादभिव्यक्तःपुरुषनामातेनत्वयानुगतःप्रविष्टः श्रद्धाख्यगायत्रीसृष्टाहंकारादितत्त्वैःसहात्मनःपरमात्मनःप्रवेशादुत्पादनसमर्थैर्बहिर्नवभिरावरणैरुपेतंहैममांडकोशंससर्जेत्यन्वयः । ब्रह्मणःआंडकोशसृष्टत्वंगीकारेव्यक्तंसृजसीत्यस्याविरोधनिरासार्थंत्वयानुगतइत्युक्तम् १६ ननुतवसहकारिकारणत्वंमुख्यकारणत्वंचतुर्मुखस्यातःस्वामित्वंचतस्येतितत्राह तत्तस्थुषइति । यतोयदनुप्रवेशमंतरेणएषांतत्वानांसर्जनशक्तिर्नास्तितदनुप्रवेशोस्तिचतत्तस्माद्भवास्तस्थुषोजगतश्चाधिकईशः । नन्वेतदधीशत्वंकथंज्ञायतइतितत्राह यदिति । माययाइच्छयाउत्थगुणविक्रियप्रासंबंधप्रकृतिगुणविकारेणोपनीतान्प्राप्तानर्थान्विषयास्तादीद्रियेषुस्थित्वाजुषन्नपिनलिप्तइतियत्तेनाधीशइतिज्ञायते । हृषीकपतेयइतिसंबुध्येंद्रियस्वामिस्त्वस्यजीवस्यसत्त्वोपिनलिप्त [illegible] दीशनियतत्वदर्शनाच्चहरेरिंद्रियेशत्वंमुख्यमितिज्ञायते । ननुयोगिष्वनेकांतोर्थोलेपहेतुरत्राह येन्यइतियेन्येयोगिनःसनकादयःपरिहृ [illegible] नेतिद्वितीयापंचम्यर्थे । स्वतःभवतःप्रसादात्परिहृतेभ्योविषयेभ्योबिभ्यतिस्म । अनर्थस्मृत्वेतिशेषः । भीत्रार्थानांभयहेतुरित्यतः पंचमी । अनेनविषयालेपनयोगिनांयच्चद्भगवदःप्रसादात् । सादिच । भगवतस्तुस्वतोनअन्यानेपजांनित्यंचेत्युक्तंभवति १७

विषयालेपोनामतदजितत्वंइत्याह स्मायेति । स्मायोमंदहासस्तेनसहितोवलोकः तस्यकवेनसहदर्शितोभावःशृंगारचेष्टा तया हारिमनोहरंभ्रूमंडलंतेनसहप्रहितःप्रयुक्त सौरतः सुरतेविद्यमानोगंत्रःते नशौंडैर्निशितैरनंगस्यबाणायमानैःकरणैः आलिंगनादिलक्षणैःसाधनैर्विमथितुंविलोडयितुंजेतुमित्यर्थः १८ यद्ययंभगवान्देवदत्तवाद्विषयलंपटत्वेनस्त्रीजितस्तर्हितत्कथानदीस्नानंपापनाशनंनस्या च्चतथानिःसंगत्वेनस्त्रीजितोनैवेतितत्कंगर्भीकृत्यस्तुवंति विभ्रदिति । सप्तसुप्रथमेतिसूत्राद्विभ्रदितिप्रथमापष्ठचर्थे । त्रिलोक्याःयदनन्यसाध्यंनत्सर्वंविभ्रतस्तवअमृतकथोदवहा. अमृतकथालक्षणानद्यः पादावनेजसरितश्चेतियत्तीर्थद्वयंतदुपस्पृशांतिस्नानादियोग्यंकुर्वंति अत्रांकिंप्रमाणमत्राह आनुश्रवमिति । श्रुतिप्रसिद्धं सम्यक्स्रवंतिसरितोनधेनाअंतर्हृदामनसापूयमानाइत्यादेः । कुतोभूदित्यतउक्तंअं घ्रिजमिति । अंघ्रिलंघनमतिक्रमणंशत्रूणांपराक्रमलक्षणकथेत्यर्थः । अन्यत्तुप्रसिद्धम् । अधिलघिगत्यर्थाविति धातुः । कैःकरणैःश्रुतिभिःश्रवणैरंगसगैश्चांकिफलमुद्दिश्यशमलानिमलानिहतुम् । मलविष्ठा

स्मायावलोकलवदर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौंडैः ॥ पत्न्यस्तुषोडशसहस्रमनंगबाणैर्यस्येंद्रियंविमथितुंकरणैर्नशेकुः १८ बिभ्रत्तवामृत कथोदवहास्त्रिलोक्याःपादावनेजसरितःशमलानिहंतुम् ॥ आनुश्रवंश्रुतिभिरंघ्रिजमंगसंगैस्तीर्थद्वयंशुचिषदस्तदुपस्पृशंति १९ बादरायणिरुवाच ॥ इ त्यभिष्टूयविबुधैःसेशःशतधृतिर्हरिम् ॥ अभ्यभाषतगोविंदंप्रणम्यांबरमाश्रितः २० ब्रह्मोवाच ॥ भूमेर्भारावतारायपुराविज्ञापितःप्रभो ॥ त्वमस्मा भिरशेषात्मंस्तत्तथैवोपपादितम् २१ धर्मश्चस्थापितःसत्सुसत्यसंधेषुवैत्वया ॥ कीर्तिश्चदिक्षुविक्षिप्तासर्वलोकमलापहा २२ अवतीर्ययदोर्वंशेबिभ्रद्रूप मनुत्तमम् ॥ कर्माण्युदारवृत्तानिहितानिजगतोऽकृथाः २३ यानितेचरितानीशमनुष्याःसाधवःकलौ ॥ शृण्वंतःकीर्तयंतश्चतरिष्यंत्यंजसातमः २४ यदुवंशेऽवतीर्णस्यभवतःपुरुषोत्तम ॥ शरच्छतंव्यतीयायपंचविंशाधिकंप्रभो २५ नाधुनातेखिलाधारदेवकार्यंऽवशेषितम् ॥ कुलंचविप्रशापेननष्टप्रा यमभूदिदम् २६ ततःस्वधामपरमंविशस्वयदिमन्यसे ॥ सलोकाँल्लोकपालान्नःपाहिवैकुंठकिंकरान् २७ श्रीशुकउवाच ॥ संस्तुतोभगवानित्थंविबु धैःपद्मजादिभिः ॥ प्रतिनंद्याहतान्राजन्मायामनुजईश्वरः २८ श्रीभगवानुवाच ॥ अवधारितमेतन्मेयदात्थविबुधेश्वराः ॥ कृतंवःकार्यमखिलंभूमेर्भारो वतारितः २९ तदिदंयादवकुलंवीर्यशौर्यश्रियोद्धतम् ॥ लोकंजिघृक्षत्रुद्धंमेवेलामिवमहार्णवः ३०

ऽघयोर्नश्चतियादवः शुचावभ्रौसीदतिनिषीदतितिष्ठतीतिशुचिषत्तस्यचंद्रार्कमंडलस्यस्यवा १९ २० २१ २२ २३ २४ पंचविंशाधिकंपंचविंशत्यधिकं तदुक्तं वत्सराणांशतंचैवन्यूनांपंचविंशकंअव तीर्णस्यकृष्णस्यपदाप्रागात्तदाहरिम् । स्वस्थानगमनापेक्षीब्रह्मातुष्टावसामरइति २५ अवशिष्टदेवकार्यापेक्षयापिनस्थेयंइत्याह नाधुनेति यदुकुलमवशिष्टमपेक्ष्यापिनस्थेयमित्याह कुलंचेति २६ याद वानांदेवत्वात्तत्स्थितौकलेरप्रवेशात्तस्यचापेक्षितत्वात्तत्कुलसंहारार्थंकिंचित्कालस्थित्यपेक्षायांतत्कृत्वाझटितिस्वधामप्रवेष्टव्यमित्याशयेनाह ततःस्वधामेति तदुक्तंच संवत्सरद्वयंचैवपश्चात्स्थित्वाजना र्दनः अभिपेदेपरंस्थानंचतुर्मासाधिकंपुनरिति २७ २८ अवधारितंनिश्चितम् २९ तर्हिकालक्षेपेकिंकारणंतत्राह तदिदमिति मेमत्तःलोकंजिघृक्षतिग्रसितुमिच्छति ३०

१ पंचविंशाधिकं शरच्छतमित्यनेन पंचविंशतिवत्सराधिकशतमित्यर्थे प्रमाणमाह वत्सराणामिति । अत्रेच संवत्सरद्वयंचैवपश्चात्स्थित्वाजनार्दनः । अभिपेदेपरंस्थानंचातुर्मास्याधिकंपुनः ॥

अनुपसंहारेकोदोषइतितत्राह अनेनेति । उल्बणेनवीर्यशौर्यादिगुणैस्तीक्ष्णेनानेनयादवकुलेनसतोपदुकुलस्योल्लंघनत्वंयुगधर्मादविग्यतीत्यभिप्रायेणोक्तमाचार्यैः । सतामपिकलौप्राप्तेविकारोमनसोभवेत् तस्मात्संहृत्यसंजन्हेनैतेस्युःपापिनस्त्विति । पुनर्लोकविवृद्ध्यर्थमौचरेयादिकान्हारिः । आविश्यरक्षामकरोज्जगतःपुरुषोत्तम । स्वात्मनःसहपानेनपुरुषार्थोधिकोभवेत् । इत्यनुग्रहबुद्ध्याचसंजन्हेस्वकुलं विभुरिति ३१ एतदंतेएतस्ययदुकुलसंहारस्यांते तवप्रीत्यैभवनंयास्यामि ३२ ३३ ३४ ३५ ३६ यत्रप्रभासेदक्षशापादुत्पन्नाद्यक्ष्मणःकिल्बिषात्प्रमुक्तोभूत् ३७ उशिजोऽग्नीन् ३८ ३९ ४० आरिष्टा

यद्यसंहृत्यदृप्तानांयदूनांविपुलंकुलम् ॥ गंतास्म्यनेनलोकोयमुल्बणेनविनंक्ष्यति ३१ इदानींनाशआरब्धःकुलस्यद्विजशापतः ॥ यास्यामिभवनंब्रह्मन्नेतदंतेतवानघ ३२ श्रीशुकउवाच ॥ इत्युक्तोलोकनाथेनस्वयंभूःप्रणिपत्यतम् ॥ सहदेवगणैर्देवःस्वंधामसमपद्यत ३३ अथतस्यांमहोत्पातान्द्वारवत्यांसमुत्थितान् ॥ विलोक्यभगवानाहयदुवृद्धान्समागतान् ३४ श्रीभगवानुवाच ॥ एतेवैसुमहोत्पाताव्युत्तिष्ठंतीहसर्वतः ॥ शापश्चनःकुलस्यासीद्ब्राह्मणेभ्योदुरत्ययः ३५ नवस्तव्यमिहास्माभिर्जिजीविषुभिरार्यकाः ॥ प्रभासंसुमहापुण्यंयास्यामोद्यैवमाचिरम् ३६ यत्रस्नात्वादक्षशापाद्गृहीतोयक्ष्मणोडुराट् ॥ विमुक्तःकिल्बिषात्सद्योभेजेभूयःकलोदयम् ३७ वयंचतस्मिन्नाप्लुत्यतर्पयित्वापितॄन्सुरान् ॥ भोजयित्वोशिजोविप्रान्नानागुणवतांधसा ३८ तेषुदानानिपात्रेषुश्रद्धयोप्यमहांतिवै ॥ वृजिनानितरिष्यामोदानैर्नौभिरिवार्णवम् ३९ श्रीशुकउवाच ॥ एवंभगवतादिष्टायादवाःकुरुनंदन ॥ गंतुंकृतधियस्तीर्थंस्यंदनान्समयूयुजन् ४० तन्निरीक्ष्योद्धवोराजन्श्रुत्वाभगवतोदितम् ॥ दृष्ट्वारिष्टानिघोराणिनित्यंकृष्णमनुव्रतः ४१ विविक्तउपसंगम्यजगतामीश्वरेश्वरम् ॥ प्रणम्यशिरसापादौप्रांजलिस्तमभाषत ४२ उद्धवउवाच ॥ देवदेवेशयोगेशपुण्यश्रवणकीर्तन ॥ संहृत्यैतत्कुलंनूनंलोकंसंत्यक्ष्यतेभवान् ॥ विप्रशापंसमर्थोपिप्रत्यहन्नयदीश्वरः ४३ नाहंतवांघ्रियुगलंक्षणार्धमपिकेशव ॥ त्यक्तुंसमुत्सहेनाथस्वधामनयमामपि ४४ तवविक्रीडितंकृष्णनृणांपरममंगलम् ॥ कर्णपीयूषमास्वाद्यत्यजत्यन्यस्पृहांजनः ४५ शय्यासनाटनस्थानस्नानक्रीडाशनादिषु ॥ कथंत्वांप्रियमात्मानंवयंभक्तास्त्यजेमहि ४६ त्वयोपभुक्तस्रग्गंधवासोलंकारचर्चिताः ॥ उच्छिष्टभोजिनोदासास्तवमायांजयेमहि ४७ वाताशनाऋषयःश्रमणाऊर्ध्वमंथिनः ॥ ब्रह्माख्यंधामतेयांतिशांताःसंन्यासिनोमलाः ४८ वयंत्विहमहायोगिन्भ्रमंतःकर्मवर्त्मसु ॥ त्वद्वार्तयातरिष्यामस्तावकैर्दुस्तरंतमः ४९ स्मरंतःकीर्तयंतस्तेकृतानिगदितानिच ॥ गत्युत्स्मितेक्षणोत्क्ष्वेलियन्नृलोकविडंबनम् ५०

नि अशुभानि ४१ ४२ भवान्समर्थोपिविप्रशापंनप्रत्यहन् यत्तस्मान्नूनमिदानीं लोकंसंत्यक्ष्यते ४३ ४४ ४५ शय्यासनादिषुप्रियम् ४६ तवाधीनांमायांप्रकृतिम् ४७ श्रमणाभिक्षावृत्तय. ४८ तावकैःतवभक्तैःसहत्वद्वार्तया ४९ गत्युत्स्मितेक्षणोत्क्ष्वेलियन्नृलोकविडंबनं तानिचतच्चस्मरंतःउत्पन्नतत्त्वज्ञानोप्युद्धवोभ्रमंतइत्यात्मनोवप्रतावक्तीति । यत्साधूनांस्वभावइतिप्रदर्शनाय । आत्मनोवमतांब्रूयुरुत्तमाअपिसर्वशः । कदाचिदेवस्वगुणान्निर्गेयन्वेहिंसायवइतिवचनादुक्तयुक्तमिति ५०

एकःश्रीहरिरेवसर्वोत्तमइतिमावोयस्यसएकांतिनंमुख्यंप्रियमितिवा एकेमुख्यान्यकेवलाइत्यभिधानम् २१ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांषष्ठोऽध्यायः ॥६॥ भगवान्यद
यधूतसंवादव्याजेनस्वतत्त्वमुद्धवायोपदिशत्यध्यायत्रयेणतत्रादावुद्धवोक्तंस्वाभीष्टमितिवदन् ब्रह्मादीनांस्वलोकगमनाभिलाषंदेवकार्यकरणेनावतारप्रयोजनंस्वयात्रानंतरंद्वारवत्याःसमुद्रेमज्जनंलोक
स्यपापबुद्धित्वेनामंगलत्वंकलिग्रस्तलोकादुद्धवस्यनिर्याणप्रेरणंस्वस्मिन्मनःप्रविश्यमहीपर्यटननियोगमित्यादिवाक्ये यदात्थ त्यादिना । मांस्वलोंकगतंकर्तुमभिकांक्षिणः १ २ स्वर्गारोहणान
तरंसप्तमेदिवसे ३ यर्हियदा ४ अधर्मरुचिरितिपदच्छेदः ५ ६ क्षितिसंचरणइत्थभावविशेषमुपादिशति यदिदमिति । मनआदिसर्वेन्द्रियैर्गृह्यमाणंयदिदंविश्वंतदिदंनश्वरंक्षणभंगु...द्धे । नन्विदमनिर्वा
च्यंतर्हीतितत्राहविद्धीति । विद्धीत्युभयत्रसबध्यते । मनोमयींमायांचमन्मनःप्रधानप्रकृतिनिर्मितांविद्धिमेबुद्धिप्रधानीकृत्यप्रकृत्याराचितत्वात् नानिर्वाच्यांविद्धिमूढइतिवन्मायामयामितिप्रयोगोयुज्यते ।
अचेतनप्रकृतेःकार्यात्मकत्वंअस्तुचेतनायाःकथमितिइयमाशंका प्रकृतिःसापरामह्यंरोदसीलोकधारिणी । ऋतासत्याऽमराऽजय्यालोकानामात्मसंज्ञितेत्यनेनपरिहर्तव्या प्राधान्यापेक्षयोपपद्यतइत्यर्थः ७

॥ श्रीशुकउवाच ॥ एवंविज्ञापितोराजन्भगवान्देवकीसुतः ॥ एकांतिनंप्रियंभृत्यमुद्धवंसमभाषत ५१ ॥ इतिश्रीभागवतेमहा० एकादशस्कंधेषष्ठोऽध्यायः ॥६॥
श्रीभगवानुवाच ॥ यदात्थमांमहाभागतच्चिकीर्षितमेवमे ॥ ब्रह्माभवोलोकपालाःसर्वेमामभिकांक्षिणः १ मयानिष्पादितंह्यत्रदेवकार्यमशेषतः ॥ यदर्थ
मवतीर्णोहमंशेनब्रह्मणार्थितः २ कुलंवैशापनिर्दग्धंनंक्ष्यत्यन्योन्यविग्रहात् ॥ समुद्रःसप्तमेह्येनांपुरींचप्लावयिष्यति ३ यर्ह्येवायंमयात्यक्तोलोकोऽयंनष्टमं
गलः ॥ भविष्यत्यचिरात्साधोकलिनापिनिराकृतः ४ नवस्तव्यंत्वयैवेहमयात्यक्तेमहीतले ॥ जनोऽधर्मरुचिर्भद्रभविष्यतिकलौयुगे ५ त्वंतुसर्वंपरि
त्यज्यस्नेहंस्वजनबंधनम् ॥ मय्यावेश्यमनःसम्यक्समदृग्विचरस्वगाम् ६ यदिदंमनसावाचाचक्षुर्भ्यांश्रवणादिभिः ॥ नश्वरंगृह्यमाणंचविद्धिमायांमनो
मयीम् ७ पुंसोयुक्तस्यनानार्थभ्रमःसगुणदोषकृत् ॥ कर्माकर्मविकर्मेतिगुणदोषधियोभिदा ॥ ८ तस्माद्युक्तेंद्रियग्रामोयुक्तचित्तइदंजगत् ॥ आत्मनीक्ष
स्वविततमात्मानंमय्यधीश्वरे ९

एवंमाधान्यज्ञानपूर्वकंभक्त्यामयिमनोयुंजानस्ययोगिनोनर्थोपशमोनान्यस्येत्याह पुंसइति । अयुक्तस्यमयिमनोयोगरहितस्यपुंसोमत्प्रेरितप्रकृतिरचितेनानाविधेर्थेयोभ्रमोमामंतरेणस्वकर्तृत्वज्ञानंसभ्रमगुणदो
षकृत् स्वर्गनरककृत् अनेनतद्भोग्यसुखदुःखात्मकःअपारःसंसारोलक्ष्यतइतिज्ञातव्यंतदुक्तं । स्वर्गाद्याश्चगुणाःसर्वेदोषाःसर्वेतथैवच । आत्मनःकर्तृताभ्रांत्याजायंतेनात्रसंशयः । परमात्मानमेवैकंकर्तारंवेत्तियः
पुमान् । समुच्यतेस्मात्संसारात्परमात्मानमेतिचेति । भ्रमस्यनिमित्तमाह कर्मेति । सर्वंहिपरमेश्वरःकरोतीतिईश्वराधीनक्रियायांइदमयाक्रियते इदंमयानाक्रियते इदंविपरीतंक्रियतइति कर्माकर्मविक
र्मेतिभिदाबुद्धिभ्रमोगुणाभ्यांरजस्तमोभ्यांदोषधियोदोषबुद्धेःपुरुषस्यभवतीतियत्तस्माद्भ्रमस्यमूलकारणंरजस्तमसोःशक्तिविज्ञायतौपरिहृत्यविषयादाहृत्यमय्येवस्थापनेनयुक्तं रजयोयुक्ताचित्तस्त्वम् ।
इदंजगदात्मनिविरिंचेईक्षस्वकार्यकारणात्मकेजगतिविततंविस्तृतशक्तिमात्मानंविरिंचंअधीश्वरेमयिईक्षस्वमदाधारंपश्येत्यन्वयः । तदुक्तं आत्मशब्दोदितोब्रह्मापरमात्माभिधोह्यहम् । सर्वंब्रह्माणि
वीक्षस्वमयिब्रह्माणमेवचेति ८ ९

वल्ववत्यातिबंधकेसत्यंतरायैरुक्तवीक्षणप्रकारोनिहतःस्यादित्यत्राह ज्ञानेति शरीरिणामात्मवद्भूतः । आत्मौपम्येनसर्वत्रसमंपश्यतियोर्जुनेतिवचनात् । आत्मौपम्येन सर्वाणिभूतानि पश्यन्नित्यर्थः आ
त्मनःपरमात्मनोनुभवेनैवतुष्टः । आत्मामनोयस्यसतथा अनेनतदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशादितिसूत्रार्थोदर्शितइति १० एवंविधज्ञानिनःकर्मकरणप्रकारंश्लोकद्वयेनाह दोष
बुद्ध्येति । यःशांतःक्रोधरहितज्ञानविज्ञानाभ्यांवैष्णवसिद्धांतेनिश्चलःपर्वतवत्स्थिरोविश्वंमदात्मकंममसर्वस्वातंत्र्यान्मदधीनंपश्यन्नतएवममाधिष्ठानत्वे नसर्वभूतसुहृत् विश्वेषांभूतानां निरुपाधिकमैत्रि
कृदतएवोमयातीतः ऐहिकामुष्मिकविषयविरक्तोनिषिद्धाचरणाद्दोषःस्यादितिदोषबुद्ध्यातद्दोषानुत्पत्तयेनिषेधान्निषेधवचनान्ननिवर्ततेविहितकरणात्सुखादिगुणोभवतीतिगुणबुद्ध्याविहितंनकरोतिकिंत
र्हियथार्भकःफलानुसंधानरहितः । क्रीडालक्षणंकार्यंकरोतितथा । किंतुस्वतंत्रकर्तानारायणएवमयिस्थित्वाविहितकरणेप्रेरयतिनिषिद्धान्निवर्तयतितद्भक्तिरेवममतत्फलमितिनिरूप्यकर्मकरोति । सपुन
र्नविपद्येतसंसारलक्षणांविपदंनप्राप्नोतीत्यन्वयः ॥ कर्तृत्वमात्मनोयस्माज्ज्ञानानिष्ठोनमन्यते ॥ अतोकुर्वन्निसदादोषबुद्ध्यानानिंदति ॥ गुणबुद्ध्यानविहितंकित्वीशप्रेरितोस्म्यहम् ॥ सएवत्वमयिस्थि
त्वानिर्द्यानिधकरोत्यजः ॥ नमेदोषोनचगुणःकर्तृत्वाभावतःस्फुटम् । स्वतंत्रत्वान्नचेशस्ययेज्ञास्तेषुभवेदपि । इतिमत्वानिवर्तेतानिषात्कुर्याद्गुणानितिवाक्यसिद्धोयमर्थः ॥ येअज्ञास्तेष्वज्ञेषुदोषोगुणश्च

ज्ञानविज्ञानसंयुक्तआत्मभूतःशरीरिणाम् ॥ आत्मानुभवतुष्टात्मानांतरायैर्विहन्यसे १० दोषबुद्ध्योभयातीतोनिषेधान्ननिवर्तते ॥ गुणबुद्ध्याचविहित
नकरोतियथार्भकः ११ सर्वभूतसुहृच्छांतोज्ञानविज्ञाननिश्चलः ॥ पश्यन्मदात्मकंविश्वंनविपद्येतवैपुनः १२ श्रीशुकउवाच ॥ इत्यादिष्टोभगवतामहा
भागवतोनृप ॥ उद्धवःप्रणिपत्याहतत्त्वजिज्ञासुरच्युतम् १३ उद्धवउवाच ॥ योगेशयोगविन्यासयोगात्मन्योगसंभव ॥ निःश्रेयसायमेप्रोक्तस्त्यागःसं
न्यासलक्षणः १४ त्यागोयंदुष्करोभूमन्कामानांविषयात्मभिः ॥ सुतरांत्वयिसर्वात्मन्नभक्तैरितिमेमतिः १५ सोयंममाहमितिमूढमतिर्विगाढस्त्वन्मायया
विरचितात्मनिसानुबंधे ॥ तत्त्वंजसानिगदितंभवतायथाहंसंसाधयामिभगवन्ननुशाधिभृत्यम् १६ सत्यस्यतेस्वदृशआत्मनआत्मनोन्यंवक्तारमीशविबु
धेष्वपिनानुचक्षे ॥ सर्वेविमोहितधियस्तवमाययेमेब्रह्मादयस्तनुभृतोबहिरर्थभावाः १७

भवेदित्यर्थः अनित्यामेगुणानस्युर्दोषानैवकथंचन । इतिमत्वाशुभंकुर्यान्निवर्तेदशुभादपि।ज्ञानीस्वकर्तृतामानादीशकर्तृत्वनिश्चयात् । किंतुपूर्णगुणायैवनतुदोषापनुतये ।नचाल्पगुणसिद्ध्यर्थंबालवत्कृतनिश्च
यइत्येतदप्युक्तार्थेमानम् । वैलक्षण्याद्धरेर्भिन्नंतच्चत्रत्वाच्चदात्मकम् । इतिविश्वंप्रपश्यंतिज्ञाननिष्ठाहरेःप्रिया इत्येतज्ज्ञानार्थिनाविश्वमेवद्रष्टव्यमित्यस्मिन्नर्थेमानम् ११ १२ १३ योगस्ययमनियमादेरीश
योगस्यज्ञानस्यविशेषेणन्यासोदेवादिषुयेनसतथातस्यसंबोधनंयोगविन्यासेति । योगात्मन्ज्ञानस्वरूप योगसंभवउपायजनक । ज्ञानंतुयोगशब्दोक्तंयुज्यतेनेनयत्सुखं । क्वचिद्योगउपायःस्यात्क्वचिच्चित्त
निरोधनमिति । त्यागंदानाद्व्यावर्तयतिसंन्यासलक्षणइति । सर्वदुष्टसंगपरित्यागलक्षणइत्यर्थः १४ ततःकिमत्राह त्यागइति कामानामयंत्यागःसुतरांत्वय्यभक्तैर्दुष्करः १५ त्वन्माययासोहमु
रुवनाभासानुबंधेविरचितात्मनिनिर्मितदेहेममाहमितिमूढमतिरतएवविगाढइतिनत्तस्माद्रंजसानिगदितंयथासाधयामितथाभृत्यंमांशाधीत्यन्वयः १६ तत्रमत्स्वरूपोपदेष्टामत्तोन्यःकिंनस्यादत्राह
सत्यस्येति तेतवस्वरूपस्यवक्तारमात्मनस्त्वत्तोन्यंपुरुषंनानुचक्षेनपश्यामि । कीदृशस्यसत्यस्यसाधुज्ञानादेगुणस्य स्वदृशःस्वयंप्रकाशमानस्य आत्मनःसर्वव्यापिनः । मनुष्येष्वभावोपिदेवेषुस्यादतउक्तं
विबुधेष्वपि उक्तंविशिनष्टि सर्वइति । ब्रह्माआदिःकारणंयेषांरुद्रादीनांतेतथोक्ताः । तेविमोहितधियःपरोक्षज्ञानवंतः । कुतस्तत्राह तनुभृतइति । शरीराभिमानित्वादतएवबहिरर्थभावामोक्षतदु

पयोगिभ्योन्यत्रापिकामयुक्ताः । अस्यश्लोकस्यार्थः अशरीरःसदाजिष्णुःपूर्णानंदस्वतःसदा । इच्छाचक्रीडयैवास्यनफलाययतोविभोः । अतोबाह्यार्थकामोपिनिष्कामइतिकथ्यते । ब्रह्मानिरभिमानि त्वाच्छरीर्यप्यशरीरवान् नित्यानंदोपपोग्यन्यकामस्योज्झितिवःसदा । बहिरर्थविनिर्मुक्तस्तथापितनुधारणात् । अमूढांमूढइतिवदुच्यतेचसरस्वती । रुद्राद्यास्तन्वभीमानाद्बहिरर्थयुजस्तथा । सर्वे षांब्रह्मपदवीयोग्यानांपूर्वमेवतु । अभावस्त्वपरोक्षस्यमोहोज्ञानस्यभण्यते । ब्रह्मणस्त्वंशरूपेषुभारत्याज्ञानवर्जनं । ब्रह्मगायत्रिभावेतुनांशावतरणंक्वचित् । शतजन्मसुपूर्वंतुज्ञानोदयउदीर्यते । अपरो क्षेणपारोक्ष्यात्पूर्णज्ञानंसदैवतु । शतजन्मगतायाश्चआपरोक्ष्योज्झितिर्भवेत् । क्वचित्क्वचित्सरस्वत्याअशावतरणेष्विति शक्तिविवेकग्रंथादवगतइति । अशरीरोवायुरभ्रंविद्युत्स्तनयित्नुरशरीराणिवाएता नीतिचश्रुतिरत्रमानं । श्रुतिभिस्तानितत्वात्तुस्तनयित्नुर्हरिःस्मृतः । अभ्रंभूताभिभरणाच्छ्रीर्वायुर्भरतःस्मृतः । विद्युत्तुभारतीप्रोक्ताएतएवाशरीरिणः । व्यत्यासेनापिनामस्यादेतेषांमहतांसदा । इत्यनेन श्रुत्युक्ताएतएवेतिज्ञायते १७ यस्माद्भगवतोन्योवक्तानास्तितस्मादहं नारायणंशरणंप्रपद्ये ममज्ञानोपदेशायेति शेषः भवंतंपूज्यंअनवद्यत्वंपूज्यत्वेहेतुःअनवद्यत्वेहेतुःएवमनंतपारत्वंतर्हिस्वस्याज्ञानप्राप्तंअत स्तंसर्वज्ञमितिबलवत्प्रतिदंयकेनज्ञानंक्वचिदलब्ध्वंस्यादतउक्तईश्वरमिति । देशप्रभुवदीश्वरस्यापिस्थानच्युतिःस्यादत्राह अखंडेति अखंडमपरिच्छिन्नंअविकुंठंआविनाशिचधिष्ण्यंस्थानंयस्यसतथा । ननु उभयत्रसंबध्यतेशरणप्राप्तौहेतुमाह निर्वेदेति । कुतोनिर्वेदइत्यत्राह वृजिनेति एवंविशिष्टोपिनारायणोन्यःकिंनस्यादत्राह नरसखमिति । एतद्विशेषणंहरेरेवेतिकुतइतीयमाशंका । विष्णोर्वायोरनंतस्यात्रिभि रंशैर्नरःस्मृतः । संद्रैश्चतुर्भिःपार्थस्तुद्वाभ्यांतुबललक्ष्मणावित्यनेनपरिहर्तव्या १८ लोकतत्त्वविचक्षणस्योद्धवस्यपुनस्तत्त्वज्ञानप्रश्नःकिमर्थइत्याशंक्यपरोक्षलोकतत्त्वज्ञानस्यसत्स्नेहमंतरेणोत्पन्नस्यपुरुषार्थ

तस्माद्भवंतमनवद्यमनंतपारंसर्वज्ञमीश्वरमखंडविकुंठधिष्ण्यम् ॥ निर्विण्णधीरहमुहर्वृजिनाभितप्तोनारायणंनरसखंशरणंप्रपद्ये १८ श्रीभगवानुवाच ॥ प्रायेणमनुजालोकेलोकतत्त्वविचक्षणाः ॥ समुद्धरंतिह्यात्मानमात्मनैवाशुभाशयात् १९ आत्मनोगुरुरात्मैवपुरुषस्यविशेषतः ॥ यत्प्रत्यक्षानुमाना भ्यांश्रेयोसावनुविंदते २०

साधनत्वंनस्यात् प्रत्युतानर्थहेतुत्वंचअपरोक्षज्ञानानुत्पादादित्याशयेनाह प्रायेणेति । अस्यायमक्षरयोजना प्रायेणबहुलम् लोकेयेमनुजाःलोकेतत्त्वेचविचक्षणाःसत्स्नेहनिर्मुक्तपरोक्षज्ञाननिपुणास्तेआत्मनैव प्रयत्नेनैवाशुभाशयात् ल्यब्लोपेपंचमी पापफलदुःखबहुलंतमःप्राप्यात्मानंसमुद्धरंतितिनिर्मूलयंतिहियस्मात्तस्मात्सत्स्नेहयुक्तालोकतत्वपरोक्षज्ञानविद्याविशारदाःआत्मनैवसात्विकमन सैवाविर्भूतापरोक्षज्ञा नेनैवाशुभाशयात्पापकारणात्संसारादात्मानंसमुद्धरंत्युन्नयंति पन्नगंकूपादिवेति अनेनभगवद्भक्त्युत्पन्नंज्ञानंपुरुषार्थोपयोगीतिज्ञानसमुद्रमप्रस्यापिममश्रेयसेभगवदपरोक्षज्ञानोत्पत्तिप्रकारोवक्तव्यइति तत्प्रश्नःसार्थकइति यत्नेकैश्चमनस्यात्माइत्यभिधानादात्मशब्दोपन्नादाविवर्ततेइतिसिद्धम् । पारोक्ष्येणैवतत्त्वतुलोकंचापिवदंतिये । तेपिसत्स्नेहनिर्मुक्तास्तमोयातिविनिश्चयात् । आपरोक्षनचज्ञानंतेषामु त्पद्यतेक्वचित् । इतिवचनादुक्तोर्थभेदसिद्धइतिसंतोष्टव्यम् १९ आत्मनैवेत्येवकारेणश्रेयःसंप्राप्तौसात्विकमनसःप्राधान्यमुक्तंतदेवमतिपादयति आत्मनइति आत्मनोजीवराशेःश्रेयःसंपादनेगुरुरुपदेष्टा त्मैवमनएव मनसावाअग्रेसंकल्पयत्यथवाचाव्याहरतीतिश्रुतेः अतसातत्यगमनइतिधातोःनिष्पन्नेनात्मशब्देनशरीरमेवलक्ष्यते तस्यैवगमनसंभवात्तत्रापिविशेषतःपुरुषार्थलक्षणश्रेयःसंप्राप्तौपुरुषस्यम नुष्यशरीरंप्राप्तस्यआत्मनःआत्मैवगुरुरितिसंबध्यते कुतएतदत्राह यदिति असौपुरुषःमानुषशरीरंप्राप्तोजीवः प्रत्यक्षानुमानाभ्यां श्रेयःपुरुषार्थंविंदतइतियदतइतिमनःपूर्वकंचक्षुराद्युपलब्ध्यादिनाब्री ह्यादिसंपल्लक्षणश्रेयःप्राप्तिदर्शनेनयागादिसाधनसामग्र्यास्वर्गादिश्रेयःप्राप्यत इत्यनुमीयतइति २०

एतदेवविशदयति पुरुषत्वइति पुरुषत्वेमनुष्यशरीरप्राप्तौसत्यांचसांख्ययोगविशारदाधीराःसर्वशक्त्युप बृंहितंमायाविस्तारंयथायोग्यंविश्वरूपपर्यंतंप्रपश्यंति । यद्वा आसंतापःआसंसारसंतापंविवि धंतारयतीत्याविस्तारस्तम् । आस्तुसंतापकोपयोरितियादवः । नित्याविर्भूतनैर्मल्यंवा २१ बह्वीष्वासुपूर्षुकापूस्तवप्रेष्ठेतितत्राह तासामिति २२ तत्रकारणमाह अत्रमामिति । अत्रपुरुषशरीरेभक्ति योगयुक्तायोगिनः स्वतोवाह्यमीश्वरंमामद्धाप्रत्यक्षीकर्तुंमार्गंयंतिविचार्यज्ञातुंयतंते हेतुभिःसद्युक्तिभिः अनुमानतःविनिर्दोषपंचावयवलक्षणवाक्यात्मकैः किंप्रमाणकैश्चक्षुरादिनागृह्यमाणैरूपादिभि रात्मनःपरमात्मनोलिंगैर्गमकैर्ज्ञापकैर्जीवस्यदर्शनादिस्वातंत्र्यभावेनतत्कर्तान्यईश्वरोप्यस्तीत्यनुमीयतइति २३ यथाहंसंसाधयामितथामांशाधीत्युद्धववाक्यमवधारयन्नुक्तमर्थमितिहासेनसंवेदयति अत्रेति अत्रपुरुषशरीरेअहंनिर्मार्गेणेनसुलभइत्येतस्मिन्नर्थेअवधूतयदुसंवादरूपमितिहासंपुरावृत्तमुदाहरति अस्यैवविवरणंपुरातनमिति अमिततेजस.अनल्पबलस्य तेजोबलंप्रभावेकेज्योतिष्यपिच

पुरुषत्वेचमांधीराःसांख्ययोगविशारदाः ॥ आविस्तारंप्रपश्यंतिसर्वशक्त्युपबृंहितम् २१ एकद्वित्रिचतुष्पादोबहुपादस्तथापदः ॥ बह्व्यःसंतिपुरःसृष्टास्तासांमेपौरुषीप्रिया २२ अत्रमांमार्गयंत्यद्धायुक्ताहेतुभिरीश्वरम् ॥ गृह्यमाणैरात्मलिंगैःस्वबाह्यमनुमानतः २३ अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥ अवधूतस्यसंवादंयदोरमिततेजसः २४ अवधूतंद्विजंकंचिच्चरंतमकुतोभयम् ॥ कविंनिरीक्ष्यनिपुणंयदुःपप्रच्छधर्मवित् २५ कुतोबुद्धिरियंब्रह्मन्नकर्तुस्तेविशारदा ॥ यामासाद्यभवाल्लोकंविद्वांश्चरतिबालवत् २६ प्रायोधर्मार्थकामेषुविवित्सायांचमानवाः ॥ हेतुनैवसमीहंतेआयुषोयशसःश्रियः २७ त्वंतुकल्पःकविर्दक्षःसुभगोमृतभाषणः ॥ नकर्तानीहसेकिंचिज्जडोन्मत्तपिशाचवत् २८ जनेषुदह्यमानेषुकामलोभदवाग्निना ॥ नतप्यसेग्निनामुक्तोगंगांभःस्थइवद्विपः२९त्वंहिनःपृच्छतांब्रह्मन्नात्मन्यानंदकारणम् ॥ ब्रूहिस्पर्शविहीनस्यभवतःकेवलात्मनः ३० श्रीभगवानुवाच ॥ यदुनैवंमहाभागोब्रह्मण्येनसुमेधसा ॥ पृष्टःसभाजितःप्राहप्रश्रयावनतंद्विजः ३१ ब्राह्मणउवाच ॥ संतिमेगुरवोराजन्बहवोबुद्ध्युपाश्रिताः ॥ यतोबुद्धिमुपादायमुक्तोटामीहतान्शृणु ३२ पृथिवीवायुराकाशआपोग्निश्चंद्रमारविः ॥ कपोतोऽजगरःसिंधुःपतंगोमधुकृद्गजः ३३ मधुहाहरिणोमीनःपिंगलाकुररोर्भकः॥ कुमारीशरकृत्सर्पऊर्णनाभिःसुपेशकृत् ३४ एतेमेगुरवोराजन्चतुर्विंशतिराश्रिताः ॥ शिक्षावृत्तिभिरेतेषामन्वशिक्षमहंततः ३५ यतोयदनुशिक्षामियथावानाहुषात्मज ॥ तत्तथापुरुषव्याघ्रनिबोधकथयामिते ३६

पिरेतसीतिच २४ २५ अकर्तुर्निषिद्धाचरणरहितस्यअशनादिप्रवृत्तिशून्यस्यच २६ बालवत्संचरणंज्ञानसंपादनायकिंनस्यादित्याशंक्य सत्यंनायंमनुष्यधर्मः किंतु तेषांधर्मादिष्वेवप्रवर्तनंआत्मतत्त्वविवित्सायांसत्यांचेत्याह प्रायइति । प्रायोमानवाःपरमात्मतत्त्वविवित्सायासत्यांचेहधर्मादिष्वेवसमीहंतेप्रवर्तंते आयुरादिप्राप्तयेचहेतुना तत्प्राप्तिसाधनसामग्र्येण २७ शक्त्यादिसाधनसामग्र्यभावादेवनस्थानमितितत्राह त्वंत्विति २८ २९ स्पर्शविहीनस्यविषयभोगविहीनस्यकेवलात्मनःशरीरमात्रपरिग्रहस्य ३० ३१ बुद्ध्युपाश्रिताः बुद्ध्यासंगृहीताःयतोयेभ्यःशिक्षावृत्तिमुपादाय शरीराभिमानमुक्तःतान्गुरून् ३२ ३३ ३४ एतेषांपृथिव्यादीनांशिक्षाकरणवृत्तिभिः ३५ यतोयस्मात्पृथिव्यादेर्यद्वर्तनं शिक्षामि शिक्षेतत्तथानिबोधबोधातिःपरस्मैपदी ३६

क्षितेःशिक्षितांबुद्धिमाह भूतैरिति तद्दैवंविदंतीतत्द्विदःतेषांदैवज्ञानांमार्गात् तद्विद्वानितिपाठे तस्यदैवस्यवशानुगत्वंजानन्मार्गात् सत्तामितिशेषः क्षितेर्व्रतमचलत्वंअतएवाचलेतिपृथिव्यानामांतरम् ३७ भूमेःशिक्षितंव्रतांतरबुद्धिंचाह शश्वदिति सर्वदापरेषागुरुदेवादिसज्जनानांअर्थेआत्मनःसर्वेहासकलचेष्टांसंभवंवृद्धिंच। सज्जनार्थेनुअन्येतएहिकींवृद्धिमात्मनः इत्यादेरयमेवार्थइतिशिक्षेत नियमेनेतिशेषः ३८ एवंविधज्ञानानिशिक्षमाणस्यमुनेर्वृत्तिमकारमाह प्राणवृत्त्येति। मुनिर्यावत्प्राणवृत्त्याशरीरयात्रयासंतुष्येत् तावत्यैवनिर्वहेत् एवकारव्यावर्त्यमाह नैवेति तत्रापिज्ञाननाशकारणानिमनोविक्षेपनिमित्तानिचद्रव्याणिनसेवेतेत्याशयेनाह ज्ञानमिति ३९ वायोःशिक्षितांबुद्धिरितितत्राह विषयेष्विति विषयेष्वाविशन् विषयाननुभवन्योग्यात्मायोगीजीवः गुणदोषसंबंधेननविषज्जेत संसक्तोनभवेत् मानादिनानाधर्मेषु ४० पार्थिवेषुपृथिवीकार्येषुप्रविष्टःतद्गुणाश्रयःजन्मदुःखादिदेहधर्माश्रयः गुणैर्दुःखादिभिः ४१ नभसःशिक्षितमाह अंतरिति मुनिर्वितततस्यव्याप्तस्याकृतितः आत्मनः परमात्मनः । नभोवदव्यवच्छेदमखंडत्वंदेहेषुअसंगत्वंभावयेच्चिंतयेत् कुत्र कथमतउक्तं स्थिरजंगमेषुचराचरात्मकेषुवस्तुषुअतरात्मभावेनअंतर्यामित्वेनअणुत्वव्याप्त्याबहिर्ब्रह्मभावेनबृहत्वेनमहत्त्वव्याप्त्याइदंकेनासिद्धमत्राह समन्वयेनेति। उपक्रमादितात्पर्ययुक्तप्रमाणेनब्रह्मणःआत्मभावेनस्वैक्येनेत्यन्यथाव्याख्यानम् । जीवांतर्यामिकोविष्णुरात्मनामास्समीरितः। तस्यतुब्रह्म

**भूतैराक्रम्यमाणोपिधीरोदैववशानुगैः ॥ तद्विद्वांनचलेन्मार्गादनुशिक्षन्क्षितेर्व्रतम् ३७ शश्वत्परार्थसर्वेहांपरार्थैकांतसंभवम् ॥ साधुःशिक्षेतभूभृत्तोनुशिक्षंव्रतांतरम् ३८ प्राणवृत्त्यैवसंतुष्येन्मुनिर्नैवेंद्रियप्रियैः ॥ ज्ञानंयथाननश्येतनावकीर्येतवाङ्मनः ३९ विषयेष्वाविशन्योगीनानाधर्मेषुसर्वतः ॥ गुणदोषान्वयेनात्मानविषज्जेतवायुवत् ४० पार्थिवेष्विहदेहेषुप्रविष्टस्तद्गुणाश्रयः ॥ गुणैर्नयुज्यतेयोगीगंधैर्वायुरिवात्मदृक् ४१ अंतर्बहिश्चस्थिरजंगमेषुब्रह्मात्मभावेनसमन्वयेन ॥ व्याप्त्याव्यवच्छेदमसंगमात्मनोमुनिर्नभोवद्विततस्यभावयेत् ४२ तेजोंऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः ॥ नस्पृश्यतेनभस्तद्वत्कालसृष्टैर्गुणैःपुमान् ४३ स्वच्छःप्रकृतितःस्निग्धोमाधुर्यस्तीर्थवन्नृणाम् ॥ मुनिःपुनात्यपांमित्रमीक्षणस्पर्शकीर्तनैः ४४ तेजस्वीतपसादीप्तोदुर्धर्षोदूरभाजनः ॥ सर्वभक्षोपियुक्तात्मानादत्तेपापमग्निवत् ४५**

रूपत्वाद्बहिरंतस्तथैवच। पश्येदाकाशवद्व्याप्तिमसंगत्वंचानित्यशः। इतिप्रमाणविरुद्धं तस्मान्नांगीकर्तव्यःसोर्थइति ४२ असंगप्रकारमाह तेजइति यथानभोवायुनेरितैर्मेघाद्यैर्नस्पृश्यते तद्वत्तथापुमान्परःपुरुषःकालसृष्टैःतेजोंऽबन्नमयैर्गुणैर्विषयैर्नस्पृश्यतेइत्यन्वयः ४३ अद्भ्यःशिक्षितांबुद्धिमाह स्वच्छइति तीर्थवद्गंगादिशुद्धजलवत् । प्रकृतितः स्वभावतःस्वच्छः। प्रकृतिःपंचभूतेषुस्वभावेमूलकारणइत्यभिधानम्। ननुजीवस्यस्वच्छगुणत्वेजीवपरयोःकोविशेषइतीयमाशंका। स्वच्छत्वादयोगुणाहरेःस्वतःसिद्धाजीवस्येष्टव्यास्वीकर्तव्याइतिपरिहर्तव्या तदुक्तं। गुणान्जीवस्यचेष्टव्यान्सिद्धान्विष्णोर्गुणांस्तथा। तत्तद्दृष्ट्वाविविच्यैवपृथगेवसुधीःसदेति। माधुर्यःसुखहेतुः। मधुनामसुखंविद्यान्माधुर्यंसुखहेतुना सुखेरतिर्वासंप्रोक्ताशब्दतत्त्वविचक्षणैरितिवचनात्। मुनिर्मित्रंस्वाश्रितंपुनाति ईक्षणमीक्षा ४४ अग्नेःशिक्षितांबुद्धिमाह तेजस्वीति तेजस्वीप्रभाववान् अन्यत्रार्चिष्मान् तपसाउपवासादिना अन्यत्रसंतापहेतुज्वालयादीप्तःप्रकाशनशक्तिमान्दुर्धर्षःपराभवयितुमशक्यः। पराभवोधर्षणंस्यादवज्ञानमथापिवा। नतत्स्वसुमदाकुर्यात्सहसाशयनंनचेतिवचनात् दूरभाजनोदूरान्निषेव्यःयुक्तात्मापरमात्मनियुक्तमनाः। एवंविधोज्ञानी सर्वभक्षोपि पापंनादत्ते अपरोक्षज्ञानिनोपि सर्वभक्षणं सर्वज्ञानुमतिःप्राप्तस्यैवदर्शनादित्यापाद्विषये कथं अग्निवत् ४५

क्वचिच्छन्नः दुष्टजनसन्निधौ क्वचित्स्पष्टःस्वजनसमीपे आत्मज्ञानादिलक्षणंश्रेयःइच्छतांपुंसामुपास्यः दातॄणांप्रागुत्तराशुभंदहन् सर्वत्रसर्वंभुंक्ते मुन्यग्न्योःसमामिदम् ४६ अग्नेःशिक्षितंपरमात्मज्ञानमाह स्वमाययेति । स्वमाययास्वेच्छाधीनप्रकृत्यासृष्टंसदसल्लक्षणंस्थूलसूक्ष्मरूपंजगत्प्रविष्टः तत्तत्स्वरूपः तत्तत्पदार्थानुगुणरूपईयते । कथंएधसिप्रविष्टःएधोरूपोऽग्निरिव । अत्रजीवस्यछन्नत्वंपरमात्मनःप्रविष्टत्वंचेतिविशेषणंज्ञातव्यम् । जीवस्यछन्नतांशिक्षेत्प्रविष्टत्वंपरात्मनः । तत्तद्गुणाविडंबंचवह्नेःसर्वंयथापिवेतिवचनात् । अल्पदारौयथाल्पोऽग्निरेवमल्पशरीरगः । दृश्यतेपरमात्मापिस्थूले स्थूलशरीरग इति ४७ चंद्रमसःशिक्षितांबुद्धिमाह विसर्गाद्याइति विविधाःसर्गाद्याःजननाद्याःश्मशानांताःमरणांतादेहस्यैव नात्मनोजीवस्य चंद्रस्यकलानांक्षयादिकंयथा नचंद्रस्वरूपस्य ४८ कालवेगेनप्रतिक्षणमपिदेहादीनांसूक्ष्मावुत्पत्तिनाशौस्तइतिसोदाहरणमाह कालेति कालाख्यनद्योघवेगेनभूतानांप्राणिनांआत्मनोदेहस्यनित्यावपिसदाप्रभावापिभवाप्ययौउत्पत्तिनाशौनदृश्येतेसूक्ष्मत्वादितिशेषः । यथाग्नेरर्चिषांज्वालानांप्रवाहविशेषः यथापुरूरवसोजराअश्विभ्यामेवदृष्टेतिगीतातात्पर्यवचनंसद्भावप्रमाणं भूतानांचेतनानामात्मनःपरमात्मनःप्रभवाप्ययावित्यन्यथाव्याख्यानं । अवयव्यवयवानांचगुणानांगुणिनस्तथा । शक्तिशक्तिमतोश्चैवक्रियायास्तद्वतस्तथा । स्वरूपांशांशिनोश्चैवनित्याभेदाजनार्दने । जीवस्वरूपेषुतथातथैवप्रकृतावपि । चिद्रूपायामतोनांशाअगुणाअक्रियाअपि । हीनाअवयवैश्चेतिकथ्यंतेतेत्वभेदतः । पृथग्गुणाद्यभावाच्चनित्यत्वादुभयोरपि । विष्णोरचिंत्यशक्तेश्चसर्वंसंभवतिध्रुवं । क्रियादेरपिनित्यत्वंव्यक्त्यव्यक्तिविशेषणं।भावाभावविशेषेणव्यवहारश्चतादृशः।विशेषस्यवि

क्वचिच्छन्नःक्वचित्स्पष्टउपास्यःश्रेयइच्छताम् ॥ भुंक्तेसर्वत्रदातॄणांदहन्प्रागुत्तराशुभम् ४६ स्वमाययासृष्टमिदंसदसल्लक्षणंविभुः ॥ प्रविष्टईयतेतत्तत्स्वरूपोऽग्निरिवैधसि ४७ विसर्गाद्याःश्मशानांताभावादेहस्यनात्मनः ॥ कलानामिवचंद्रस्यकालेनालक्ष्यवर्त्मना ४८ कालेनह्योघवेगेनभूतानांप्रभवाप्ययौ ॥ नित्यावपिनदृश्येतेआत्मनोऽग्नेर्यथार्चिषाम् ४९ गुणैर्गुणानुपादत्तेयथाकालंविमुंचति ॥ नतेषुसज्जतेयोगीगोभिर्गाइवगोपतिः ५० बुद्धिसंस्थेनभेदेनव्यक्तस्थइवतद्गतः ॥ लक्ष्यतेस्थूलमतिभिरात्माचांबुस्थितार्कवत् ५१

शिष्टस्याप्यभेदस्तद्वदेवतु । सर्वंचाचिंत्यशक्तित्वाद्युज्यतेपरमेश्वरे । तच्छक्त्यैवचजीवेषुचिद्रूपप्रकृतावपि । भेदाभेदौतदन्यत्रह्युभयोरपिदर्शनात् । कार्यकारणयोश्चापिनिमित्तंकारणंविनेति । प्रमाणविरुद्धत्वाज्जडस्येत्यंगीकर्तव्यं । अनंगानांचेतनानांक्रियावत्त्वंचाचिंत्यैश्वशक्तिनिपतत्वाद्युज्यतत्यास्मिन्नर्थे । आत्मनिचैवंविचित्राश्चहि । सर्वोपेताचतद्दर्शनात् । सर्वधर्मोपपत्तेश्च । स्वाभाविकीज्ञानबलक्रियाच । यत्रासप्तऋषीन्परएकमाहुरित्यादिप्रमाणांतरंच । नचेशशक्तिर्मायामयी । विनादोषान्श्रुतमध्यावगम्यंतथास्मृतंपरमेसत्यरूपं । नैवासत्यंक्वचिदस्मिन्परेशोसर्वंयुक्तंपूर्णशक्तेःसदैवेतिश्रुतिविरोधात् ४९ सूर्यादनुशिक्षितांबुद्धिमाह गुणैरिति योगीयथाकालंविहितकालेगुणैरिंद्रियैःगुणान्शब्दादिविषयान्उपादत्तेविमुंचतिच तेषुविषयेषुनसज्जतेनासक्तोभवति । कथमिव गोपतिःसूर्यःगोभिःरश्मिभिःगाइवजलानीव ५० नकेवलंअसंगत्वमेवसूर्यात्शिक्षितमपितुजीवपरमात्मवैलक्षण्यंचेतिभावेनाह बुद्धिसंस्थेनेति तस्यजीवस्यशरीरगतःआत्मापरमात्मास्थूलमतिभिःप्रमाणज्ञानरहितैःबुद्धिसंस्थेनभेदेनबाह्यांतःकरणविषयमिथ्याज्ञानेनव्यक्तंशरीरं तत्स्थोजीवइवसादृश्येनसुखीदुःखीतिलक्ष्यतेदुःखाद्यधिकरणदेहगतत्वात्कथं अंबुस्थितार्कवत् यथापरमार्कस्वरूपानभिज्ञैःबिंबभूतोजलेप्रतिबिंबवार्कवत् अचेतनःशिरःपादादिरहितोवर्तुलश्चेतिकल्प्यतेतथेति । तस्मात्तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीतीत्यादिश्रुतितात्पर्यवेदिभिर्निर्मलचित्तैःसूक्ष्मेक्षणैःजीवपरयोर्वैलक्षण्यंज्ञानेंद्रियौगिभिर्भाव्यमन्यथाऽसुरमतप्रवेशइति दृष्टांतप्येवमेवज्ञातव्यं बिंबप्रतिबिंबयोरिव जीवपरयोर्भेदोव्यावहारिको नतुयथार्थइतिमतं ।बुद्धिसंस्थस्त्वात्मभेदोव्यक्तस्थोजीवउच्यते। तेनैवसहसंस्था

नात्परात्मास्थूलबुद्धिभिः । जीववल्लक्ष्यतेविष्णुर्यथैवांबुस्थितार्कवत् । परमार्कःपारिमाण्याद्रतुलत्वादिनातथा । अर्कस्वरूपानभिज्ञैःशिरःपादादिवर्जितः अचेतनश्चकल्प्येततत्तेजोमात्रदर्शिभिः । सूर्य देहादिभिर्बहितेजोमंडलमेवतु । दृश्यतेस्थूलमतिभिरेवमेवजानार्दनइतिप्रमाणाविरुद्धत्वादुपेक्षणीयम् ५१ मुक्तिसाधनेषुप्रथमतःआपाद्यांविरक्तिलक्षणंसाधनामितिकपोतशिक्षितांविरक्तिमाह नातिस्नेहइति

नातिस्नेहःप्रसंगोवाकर्त्तव्यःक्वापिकेनचित् ॥ कुर्वन्विंदेतसंतापंकपोतइवदीनधीः ५२ कपोतःकश्चनारण्येकृतनीडोवनस्पतौ ॥ कपोत्याभार्ययासार्धं मुवासकतिचित्समाः ५३ कपोतौस्नेहगुणितहृदयौगृहधर्मिणौ ॥ दृष्टिंदृष्ट्यांगमंगेनबुद्धिंबुद्ध्याबबंधतुः ५४ शय्यासनाटनस्थानवार्त्ताक्रीडाशना दिषु ॥ मिथुनीभूयविस्रब्धौचेरतुर्वनराजिषु ५५ यद्यद्वांछतिसाराजन्तदर्थमनुकंपितः ॥ तंतंसमानयत्कामंकृच्छ्रेणाप्यजितेंद्रियः ५६ कपोतीप्रथ मंगर्भंगृह्णतीकालआगते ॥ अंडानिसुषुवेनीडेस्वपत्युःसन्निधौसती ५७ तेषुकालेव्यजायंतरचितावयवाहरेः ॥ शक्तिभिर्दुर्विभाव्याभिःकोमलांगतनू रुहाः ५८ प्रजाःपुपुषतुःप्रीतौदंपतीपुत्रवत्सलौ ॥ शृण्वंतौकूजितंतासांरुवंतौकलभाषितैः ५९ तासांपतत्रैःसुस्पर्शैःकूजितैर्मुग्धचेष्टितैः ॥ प्रत्युद्गमै रदीनानांपितरौमुदमापतुः ६० स्नेहानुबद्धहृदयावन्योन्यंविष्णुमायया ॥ विमोहितौदीनधियौशिशून्पुपुषतुःप्रजाः ६१ एकदाजग्मतुस्तासाम शनार्थंकुटुंबिनौ ॥ परितःकाननेतस्मिन्नर्थिनौचेरतुश्चिरम् ६२ दृष्ट्वातांल्लुब्धकःकश्चिद्यदृच्छातोवनेचरः ॥ जगृहेजालमातत्यचरतःस्वालयांतिके ६३ कपोतश्चकपोतीचप्रजापोषेसदोत्सुकौ ॥ गतौपोषणमादायस्वनीडमुपजग्मतुः ६४ कपोतीस्वात्मजान्वीक्ष्यबालकाञ्जालसंवृतान् ॥ तानभ्यधाव त्क्रोशंतीक्रोशतोभृशदुःखिता ६५ सासकृत्स्नेहगुणितादीनचित्ताजमायया ॥ स्वयंचाबध्यतशिचाबद्धान्पश्यंत्यपस्मृतिः ६६ कपोतश्चात्मजा न्बद्धानात्मनोप्यधिकप्रियान् ॥ भार्यांचात्मसमांदीनोविललापातिदुःखितः ६७ अहोमेपश्यतापायमल्पपुण्यस्यदुर्मतेः ॥ अतृप्तस्याकृतार्थस्यगृ हास्त्रैवर्गिकाहताः ६८ अनुरूपानुकूलाचयस्यमेपतिदेवता ॥ शून्येगृहेमांसंत्यज्यपुत्रैःस्वर्यातिसाधुभिः ६९ सोहंशून्येगृहेदीनोमृतदारोमृतप्रजः ॥ जिजीविषेकिमर्थंवाविधुरोदुःखजीवितः ७० तांस्तथैवावृतांश्छिग्भिर्मृत्युग्रस्तान्विचेष्टतः ॥ स्वयंचकृपणःशिक्षुपश्यन्नप्यबुधोपतत् ७१ तंलब्ध्वालुब्ध कःक्रूरःकपोतंगृहमेधिनम् ॥ कपोतकान्कपोतींचसिद्धार्थःप्रययौगृहम् ७२ एवंकुटुंब्यशांतात्माद्वंद्वारामःपतत्रिवत् ॥ पुष्णन्कुटुंबंकृपणःसानुबंधो वसीदति ७३ यःप्राप्यमानुषंलोकंमुक्तिद्वारमपावृतम् ॥ गृहेषुखगवत्सक्तस्तमारूढच्युतंविदुः ७४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेअवधू तगीतेसप्तमोध्यायः ॥ ७ ॥

५२ ५३ स्नेहगुणितहृदयावित्येतद्दर्शयाति दृष्टिमित्यादिना ५४ शय्यासनादिषुमिथुनीभूयवर्तमानाम् ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ ६४ ६५ शिचापक्षिग्राहिजालेन ६६ ६७ ६८ ६९ ७० ७१ ७२ ७३ आरूढाद्वृक्षात्च्युतंपतितम् ७४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांसप्तमोध्यायः ॥ ७ ॥ ॥ ७ ॥

नकर्तुमीहसेकिंचिदितियदुराजप्रश्नंपरिहरन्नेतत्संसारसुखंयथादुःखशिरस्कत्वेनानाकांक्ष्यंनसाध्यंचतथास्वर्गसुखमित्याह सुखमिति यथैंद्रियकंसुखंपतननिश्चयात्स्वर्गेनरकेचास्तितथाश्रोत्रादींद्रि
यविषयशब्दादिसुखंअस्त्येवेति यत्तस्माद्बुधोदुःखशिरस्कंसुखंनेच्छेतकुतएवतत्साधनेप्रवर्ततइत्यन्वयः अनेनैहिकसुखायनप्रवर्तनीयमितिकिंवक्तव्यमित्युक्तंभवति १ तर्हिदेहयात्राकथंकारंवर्ततइ
त्यतोऽजगराडुपात्तबुद्धिमाह ग्रासमिति दिष्टेन दैवेनदैवंदिष्टंभागधेयमित्यभिधानं ग्रासस्तुकवलार्थकइतिच विसृष्टंदत्तंयदृच्छयैवापतितंअतर्कितत्वेनोपपन्नं अक्रियःयत्नरहितः अजगरोयथाग्र
सेत्तथामुनिरितिशेषः २ ननुयदृच्छयापिग्रासालाभेकिंकुर्यात्तत्राह । शयीतेति अनुपक्रमःक्रियारंभरहितः यदि यदृच्छयापिग्रासोनोपनमेत् तर्हिमहाहिरिव बहून्यहानिशयीत तत्रनिमित्त दिष्टभुगि
ति यदृच्छाप्राप्तभोगत्वादित्यर्थः ३ ननुतर्ह्यन्नबलस्यदेहस्यान्नाभावेपतनंस्यादित्याशंक्य सत्यंबहिर्मुखस्यैतत्त्रयोगारूढस्यत स्यभगवद्गुणगणामृतध्यानलक्षणपानपूर्णबलवद्देहत्वादितिभावेनाह ओजइ
ति करचरणादींद्रियशक्तिमानपियोगारूढः शरीरयात्रार्थंनेहेतनचेष्टेत कीदृशःशयानः सर्वप्रवृत्तिशून्यः तर्हिनिद्रालुःस्यादत्राह वीतनिद्रइति निद्रानिरासव्यापारसद्भावादित्याह बिभ्रदिति
अन्नस्मरणेनध्यानंलक्षयति ओजः सहोबलात्मनाब्रह्मणायुक्तंदेहंबिभ्रत्ध्यायन्अन्यत्रतादृशादृष्टानिमित्तं ईशशक्तेरचित्यत्वादित्यर्थः अतएवाकर्मकंनिश्चेष्टंउद्देश्यरहितंवा ४ समुद्राच्छिक्षितांमतिमा
ह मुनिरिति अनंतपारः अंतपाररहितबुद्धिःअनंतेनपारःपूर्तिस्तृप्तिलक्षणायस्यसतथेतिवा पारतीरांतरंमोक्षंपारःपूर्तिस्तथापुमानित्यभिधानं अन्यत्रानिश्चिततीरांतरः स्तिमितोदोनिश्चलजलः

ब्राह्मणउवाच ॥ सुखमैंद्रियकंराजन्स्वर्गेनरकएवच ॥ देहिनांयद्यथादुःखंतस्मान्नेच्छेततद्बुधः १ ग्रासंविसृष्टंदिष्टेनमहांतंस्तोकमेवच ॥ यदृच्छयैवापतितं
ग्रसेदजगरोऽक्रियः २ शयीताहानिभूरीणिनिराहारोनुपक्रमः ॥ यदिनोपनमेद्ग्रासोमहाहिरिवदिष्टभुक् ३ ओजःसहोबलयुतंबिभ्रद्देहमकर्मकम् ॥
शयानोवीतनिद्रश्चनेहेतेंद्रियवानपि ४ मुनिःप्रसन्नगंभीरोदुर्विगाह्योदुरत्ययः ॥ अनंतपारोह्यक्षोभ्यस्तिमितोदइवार्णवः ५ समृद्धकामोहीनो
वानारायणपरोमुनिः ॥ नोत्सर्पेतनशुष्येतसरिद्भिरिवसागरः ६ दृष्ट्वास्त्रियंदेवमायांतद्भावैरजितेंद्रियः ॥ प्रलोभितःपतत्यंधेतमस्यग्नौपतंगवत् ७

निर्विकल्पकमोवा ५ समृद्धकामःसमृद्धाभीष्टार्थःनोत्सर्पेतउत्सिक्तोनभवेतहीनोवादरिद्रोवेतिशेषः नशुष्येतयथाप्रावृषिसमुद्रः समृद्धजलाभिःग्रीष्मेशुष्कजलाभि सरिद्भिः ६ शलभाच्छिक्षितांबुद्धि
माह दृष्ट्वेति । देवस्यमायांमोहकशक्तिं भावैःशृंगारचेष्टाभिः अत्र । महतांवनिताकामःपतत्यंधेतमस्यलं । अन्यत्रनिरयंयातिदुःखवान्स्याद्विपर्ययइतिवचनात् । अधःपातेविशेषोस्तीतिज्ञातव्यंमा
याशब्दस्येंद्रजालार्थमंतरेणमोहकारणत्वार्थःकथमित्येतच्चोद्यं मोहकारणभूतातुमायेत्याहुर्मनीषिणः। अविद्यमानंमेत्युक्तंतज्ज्ञापयतियतस्वय। कुत्रचिज्ज्ञानरूपंसल्लाभरूपंचभण्यते। मयंप्राचुर्यमुद्दिष्टंमाया
स्यात्प्रचुरेत्यपीत्यनेनपरिहर्तव्यं । तस्माद्याविवक्षितातामनुसृत्यार्थोवक्तव्यइतिज्ञायते ननुतर्हिमायाशब्दस्यानेकार्थवृत्तित्वात्कुत्रमुख्यार्थइतीयंशंका स्वतंत्रंपरमार्थाख्यंस्वतंत्रैकाहरेर्मतिः सैवमाया
समुद्दिष्टामुख्यतस्तत्स्वरूपिका । इत्यनेनपरिहर्तव्या परमार्थनिष्ठस्यस्वतंत्रशब्दस्यगुणनिष्ठत्वंकथमित्येतत् । मतिमन्मतिभेदोपिनाविष्णोःक्वचिदिष्यतेइत्यनेनपरिहृत मायायाःईशेच्छावाचित्वेजगत
स्तन्मयत्वंकथमिति इदमपि पारमार्थ्येननास्त्येवतदन्यत्तद्वशंयतः। अनाद्यनंतकालेपिविद्यमानमपिध्रुवं। अतोमायामयंप्राहुःसर्वंतद्वशगंयतः। इतिअमुनापरिहृतं किंच विश्वस्यपराधीनत्वादसदादिश
शब्दवाच्यत्वं नत्वविद्यमानत्वात्तर्हिजगन्नास्त्येवेतिकथं अस्वतंत्रत्वादित्युत्तरं प्रवाहरूपेणानित्यत्वात्सदातनत्वंयुक्तं श्रौतत्वाद्विश्वस्यमिथ्यात्वंकिंनस्यादितिचेन्न हरेरिच्छाधीनत्वान्मायामात्रत्वात्त

१ माङ् माने इति धातोर्माशब्दस्य ज्ञानरूपत्वमुच्यते । याप्रापणे इति धातोर्याशब्दस्यप्राप्यमित्यर्थः माया चामैयाचेतिसमासउक्तार्थः

हिंश्रुतेश्कागातिरिति चेन्नएकस्यैवपरमार्थत्वादितिसर्वप्रमाणसिद्धं स्वाधीनंसदितिप्रोक्तंपराधीनमसत्स्मृतं। अविद्यमानमेतस्माज्जगदाहुर्विपश्चितः। अनाद्यनंतकालेषुविद्यमानमपिध्रुवं। अस्वातंत्र्यात्तुना स्त्येवेत्येवंवाच्यंजगत्सदा सदावृत्तेर्विद्यमानमितिब्रूयाच्चदिक्वचित्। तथापिनाशवद्धीदंप्रवाहाद्यस्यनित्यता अतोनित्यत्वमित्याहुःप्रपंचोह्यास्तियद्यपि विष्णोरिच्छावशत्वाच्चमायामात्रमितिस्फुटं परमार्थंचै कमेवस्वातंत्र्याद्विष्णुमव्ययं यदिकल्पयतीदंयःसएवविनिवर्तयेत् विष्णुस्तस्मात्तद्वशत्वान्नास्तीतिद्वैतमुच्यते स्वातंत्र्येणहरौज्ञातेपराधीनत्वनिश्चयात् इत्याहुरुपदेष्टारआचार्यास्तत्त्ववेदिनः यथैवराज निज्ञातेनान्योस्तीतिस्फुटंवचः स्वातंत्र्यात्पारतंत्र्याच्चतद्भृत्यादिपुत्रत्त्वापि यथैकच्छत्रवांश्चैवएकवीरइतीववा तथैवसर्वप्राधान्याददि्वतीयोहरिःस्मृतः एवंमुक्ताविजानंतिसायुज्येप्रापिताविभोः अनंतकालं द्र्यंतोजगदेतच्चराचरं तस्यैकस्यह्यविज्ञानात्केवलंभ्रांतिरूपकं जगदुक्तत्वातमोयांतित्वीशितव्येशशापतः इति अनेनप्रपंचोयादिविद्येतेत्यादिश्रुतिरपिविवृतासत्यत्वार्थे पुत्रोमयादिविद्यतेमरिष्यंत्येवतेध्रुवं य दिराज्यंकरोत्येषनश्यत्येतदसंशयमिति धृतराष्ट्रस्यवचनाद्यदिशब्दस्यविपर्ययपर्यवसानेवस्तुत्वार्थःप्रतीयते तथात्रापि यदिशब्दस्तत्रवस्तुत्वेअस्वातंत्र्येचसंशये अवस्तुशब्दश्चाशक्तेह्यल्पशक्तौचकीर्त्यतइ

योषित्सुतल्पाभरणांबरादिद्रव्येषुमायारचितेषुमूढः ॥ प्रलोभितात्माह्युपभोगबुद्ध्यापतंगवन्नश्यतिनष्टदृष्टिः ८ स्तोकंस्तोकंग्रसेद्ग्रासंदेहोवर्तेतयावता ॥ गृहानहिंस्रन्नातिष्ठेद्वृत्तिंमाधुकरींमुनिः ९ अणुभ्यश्चमहद्भ्यश्चशास्त्रेभ्यःकुशलोनरः ॥ सर्वतःसारमादद्यात्पुष्पेभ्यइवषट्पदः १० सायंतनं श्वस्तनंवानसंगृह्णीतभिक्षितम् ॥ पाणिपात्रोदरामत्रोमक्षिकेवनसंग्रही ॥ मक्षिकाइवसंगृह्णन्सहतेनविनश्यति ११ पदापियुवतींभिक्षुर्नस्पृशेद्दारवीमपि ॥ स्पृशन्करीवबध्येतकरिण्याअंगसंगतः १२ नाधिगच्छेत्स्त्रियंप्राज्ञःकर्हिचिन्मृत्युमात्मनः ॥ बलाधिकैःसहन्येतगजैरन्यैर्गजोयथा १३ नदेयंनो पभोग्यंचलुब्धैर्यद्दुःखसंचितम् ॥ भुंक्तेस्वमपितत्त्वान्योमधुहेवार्थविन्मधु १४ सुदुःखोपार्जितैर्वित्तैराशासानांगृहाशिषः ॥ मधुहेवाग्रतोभुंक्तेयतिर्वैगृहमेधिनाम् १५ ग्राम्यगीतंनशृणुयाद्यतिर्वनचरःक्वचित् ॥ शिक्षेतहरिणाद्बद्धान्मृगयोर्गीतमोहितात् १६

त्यनेनयदिशब्दस्यावस्तुत्वार्थोपिज्ञायते ७ प्रागुक्तश्लोकार्थमेवविवृणोति योषिदिति मायारचितेषुभगवदिच्छारचितेषुभोगसाधनेषुतल्पादिषुयोषिज्जनेषूपभोगबुद्ध्याविषयभोगसाधनबुद्ध्याप्रलोभि तात्माविवशमनाःशलभवन्नश्यतीत्यन्वयः ८ मधुकरशिक्षितमतिमुपदिशति स्तोकमिति मधुकरस्यविद्यमानावृत्तिंसमातिष्ठन्मुनिर्गृहान्व्रजेदित्यन्वयः ९ अत्राणुत्वमहत्त्वेसख्ययोच्यतेनत्वर्थतःसारंभ गवज्ज्ञानजननींभक्तिम् १० भिक्षितंभिक्षयालब्धमन्नंसायंतनंसायंतनार्थंश्वस्तनंश्वस्तनार्थंचनसंगृह्णीत कथंतर्हिभोजनमत्राह पाणीति पाणिपात्रत्वेनोदरमात्रत्वेनवाभुंजानइतिशेषः संग्रहेकोदोषइत्यत्राह मक्षिकाइति तेनधनेनसहविनश्यतिचोरादिनेतिशेषः ११ गजात्किमुपात्तमत्राह पदेति करिण्याअंगसंगतःस्पृशन्करीवबध्यते १२ एतदेवाविवृणोति नाधिगच्छेदिति १३ मधुहनोपिकाबुद्धिराजितेति तत्राहनदेयमिति लुब्धैर्यद्दुःखेनसंचितंनदेयं दानयोग्यंन नोपभोग्यंस्वस्योपयोग्यंचन तत् स्वंवित्तमर्थविदन्योभुंक्ते कथमिव मधुहामकरंदसंग्रहीमधुवत् १४ किमनेनात्मनोलब्धमत्राह सुदुःखेति द्विजितेंद्रियग्रामः १५ हरिणात्श्रोत्रेंद्रियजयोलब्धइत्याह ग्राम्येति अहंवनचरोयतिर्ग्राम्याणांगीतंवचनंनशृणुयादितीममर्थंहरिणात्शिक्षे कीदृशात् मृगयोर्गीतमोहित्वेनबद्धात् १६

ग्राम्यगीतश्रवणेकाहानिरिति तत्राह नृत्येति क्रीडनकांधः क्रीडासाधनवद्बंधः १७ मत्स्याज्जिह्वेंद्रियजयप्रकारंकथयति जिह्वयेति अतद्बुद्धिरतत्त्वज्ञः १८ रसजयोदुष्परिहारइत्युपपादयतिइंद्रि याणीति रसनंरसनेंद्रियंअसौरसनारस्येस्वविषयेवर्धते १९ जिह्वेंद्रियजयएवेंद्रियजयो नान्यइत्याह तावदितिरसोरागः रसोरागेविषेवीर्येइतियादवः २० पिंगलायावैराग्यमुपाशिक्षितमितिवक्तुमुपक्रम ते पिंगलेति २१ सैकदासंकेतेवित्तसमयेकांतमुपनेष्यतीआत्मसमीपंप्रापयंतीगृहद्वार्यभूदित्यन्वयः २२ मार्गआगच्छतःपुरुषान्वीक्ष्य तान्पुरुषान्वित्तवतःशुल्कदान्कांतान्मेने २३ अस्मादन्योभूरि दोबहुद्रव्यप्रदःस्यादितिमत्वा २४ २५ विचाशयावित्तातितृष्णयाचिंतायाश्छेदनहेतिःशस्त्रम् २६ यथागीतंतथाममसकाशाच्छृणु २७ श्रोतव्यत्वेहेतुमाह निर्वेदइति यथानिशितोसिःपाशानांछेदनेहे तुर्हितःतथानिर्वेदस्तृष्णालक्षणपाशानांहियस्माचस्मात् अत्रापिहेत्वंतरमाह नहीति २८ विततिर्विस्तारःबालिशायेनतस्मात् २९ कथंबालिशेत्यत्राह संतमिति नित्यमविनाशिनम् ३० आत्मामनः

नृत्यवादित्रगीतानिजुषन्ग्राम्याणियोषिताम् ॥ आसांक्रीडनकांधःस्यादृष्यशृंगोमुनिर्यथा १७ जिह्वयाथप्रमाथिन्याजनोरसविमोहितः ॥ मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तुबडिशैर्यथा १८ इंद्रियाणिजयंत्याशुनिराहारामनीषिणः ॥ वर्जयित्वातुरसनमसौरस्येहिवर्धते १९ तावज्जितेंद्रियोनस्याद्विजितान्येंद्रियःपुमान् ॥ नजयेद्रसनंयावज्जितंसर्वंजितेरसे २० पिंगलानामवेश्यासीद्विदेहनगरेपुरा ॥ तस्यामेशिक्षितंकिंचिन्निबोधनृपसत्तम २१ सास्वैरिण्येकदाकांतंसंकेतउपनेष्यती ॥ अभूत्कालेगृहद्वारिबिभ्रतीरूपमुत्तमम् २२ मार्गआगच्छतोवीक्ष्यपुरुषान्पुरुषर्षभ ॥ तान्छुल्कदान्वित्तवतःकांतान्मेनेर्थकामुका २३ आगतेष्वपयातेषुसासंकेतोपजीविनी ॥ अथान्योवित्तवान्कोपिमामुपेष्यतिभूरिदः २४ एवंदुराशयाध्वस्तनिद्राद्वार्यवलंबिनी ॥ निर्गच्छंतीप्रविशतीनिशीथंसमपद्यत २५ तस्यावित्ताशयाशुष्यद्वक्त्रायादीनचेतसः ॥ निर्वेदःपरमोजज्ञेचिंताहेतिःसुखावहः २६ तथानिर्विण्णचित्तायागीतंशृणुयथामम २७ निर्वेदआशापाशानांपुरुषस्ययथाह्यसिः ॥ नह्यंगाजातनिर्वेदोदेहबंधंजिहासति २८ ॥ पिंगलोवाच ॥ अहोमेमोहविततिंपश्यताविजितात्मनः ॥ याकांतादसतःकामंकामयेयेनबालिशा २९ संतंसमीपेरमणंरतिप्रदंवित्तप्रदंनित्यमिमंविहाय ॥ अकामदंदुःखभयादिशोकमोहप्रदंतुच्छमहंभजेऽज्ञा ३० अहोमयात्मापरितापितोवृथासांकेत्यवृत्त्यातिविगर्ह्यवार्तया ॥ स्त्रैणान्नराद्यार्थतृषोऽनुशोच्यात्क्रीत्वाहिवित्तंरतिमात्मनेच्छती ३१ यदस्थिभिर्निर्मितवंशवंश्यस्थूणंत्वचारोमनखैःपिनद्धम् ॥ क्षरन्नवद्वारमगारमेतद्विण्मूत्रपूर्णंमदुपैतिकाऽन्या ३२ विदेहानांपुरेह्यस्मिन्नहमेकैवमूढधीः ॥ यान्यमिच्छंत्यतःस्वस्मादात्मदात्कांतमच्युतात् ३३

अतिगर्ह्यावार्ताकिंवदंतीयस्याःसातथातयासंकेतस्यभावःसांकेत्यं द्रव्यंतेनवृत्तिराजीविकातयायथाहंवित्तमुद्दिश्यआत्मनादेहेनअर्थतृषाविषयतृष्णयाअनुशोच्यान्स्त्रैणान्नरान्क्रीत्वा रतिमिच्छंत्यासं त थेतिशेषः ३१ यदर्थंग्राम्यमाकांक्षंतेतदीदृशंहीत्याह यदिति त्वचारोमनखैरित्येकंपदंस्थूणाःस्तंभाःमदन्याकीदृशीएतद्देहाख्यमगारंगृहमुपैतीत्यन्वयः वंशाःदीर्घदारुविशेषाःवंश्यावंशप्रोतास्तिरश्चीनवे णवःक्षरंतिस्रवंतिनवद्वाराणियस्यतत्तथाअनेनान्यकातानांहेयत्वमुक्तंभवति ३२ इतोपिहेयाइतिभावेनाह विदेहानामिति स्वस्मात्स्वकीयात्स्वस्वामिनइत्यर्थः अतोजगतःअतोन्यस्माद्भिन्नादित्यर्थः अतिपेशपुंसान्विष्णोवितियादवः यद्वाऽतोस्मात्सर्वमनोवृत्तिप्रेरकत्वेनप्रसिद्धात् ३१

योयंसुहृत्प्रेष्ठानांमिष्टःनाथतेऐश्वर्येणवर्ततइतिनाथःशरीरिणामात्मानियंताचतमात्मनामनसैवविक्रीयानेनाच्युतेनसह इयंपिंगलासामान्यावेश्यानभवति किंतुविशिष्टाप्सरःस्वेका अन्यथा अस्या नैतादृशीबुद्धिरुत्पद्यते तदुक्तं भगवद्भार्यतायोग्याःकाश्चिदप्सरसःस्त्रियः। रमावेशात्कदाचित्स्युस्तास्वेकापिंगलाभवेत् ।तदन्यासांमहादोषोभगवद्भर्तृतास्मृताविति ३४ लोकसिद्धकांतत्यागे लोकविलक्षणकांतस्वीकारेअलंबुद्धिगोचरकामादानृत्वमाद्यंतवत्त्वंचनिमित्तमित्याह कियदिति तेनराभार्यायामेकियत्प्रियव्यभजन्विभजेयुरित्यन्वयः तर्हिदेवाःकांताःसंतीत्यत्राह देवाइति ३५ विश्ववंचविध्वंसिनिभगवतिप्रसन्नेकिमसुलभमितिभावेनाह नूनमिति नूनमिदानीम् ३६ समुद्भूतप्रभूतभगवद्भक्तिसुधापिंगलापुनःशब्दादिविषयनिमित्तक्लेशामाभूवन्निति प्रार्थयते मैवमिति येनानिर्वेदेनसंसारबंधंनिर्हृत्यपरिहृत्यशमंभगवन्निष्ठालभ्यंसच्चिदानंदलक्षणंसर्वविलक्षणंब्रह्मप्राप्नोतीत्यन्वयः कुतोमाभूवन्नितिअतोवाह येनेति पुरुषोनुबंधंभगवद्भक्तिनिर्हृत्यभस्मकृत्वाशमंशमलंसुखो

सुहृत्प्रेष्ठतमोनाथआत्माचायंशरीरिणाम् ॥ तंविक्रीयात्मनैवाहंरमेऽनेनयथारमा ३४ कियत्प्रियंतेव्यभजन्कांतामेकामदानराः ॥ आद्यंतवंतोभार्याया देवावाकालविद्रुताः ३५ नूनंमेभगवान्प्रीतोविष्णुःकेनापिकर्मणा ॥ निर्वेदोयंदुराशायायन्मेजातःसुखावहः ३६ मैवंस्युर्मंदभाग्यायाःक्लेशानिर्वेदहेतवः ॥ येनानुबंधंनिर्हृत्यपुरुषःशममृच्छति ३७ तेनोपकृतमादायशिरसाग्राम्यसंगताः ॥ त्यक्त्वादुराशाःशरणंव्रजामितमधीश्वरम् ३८ संतुष्टा श्रद्दधत्येतद्यथालाभेनजीवती ॥ विहराम्यमुनैवाहमात्मनारमणेनवै ३९ संसारकूपेपतितंविषयैर्मुषितेक्षणम् ॥ ग्रस्तंकालाहिनात्मानंकोन्योस्मात्त्रातु मीश्वरः ४० आत्मैवह्यात्मनोगोप्तानिर्विद्येतयदाखिलात् ॥ अप्रमत्तइदंपश्येद्ग्रस्तंकालाहिनाजगत् ॥ ४१ ॥ ब्राह्मणउवाच ॥ एवंव्यवसितमतिर्दुराशाःकांततर्षजाः ॥ छित्त्वोपशममास्थायशय्यामुपविवेशसा ४२ आशाहिपरमंदुःखंनैराश्यंपरमंसुखम् ॥ यथासंछिद्यकांताशांसुखंसुष्वापपिंगला ॥ ४३ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेपिंगलागीतेऽष्टमोध्यायः ॥ ८ ॥ ब्राह्मणउवाच ॥ परिग्रहोयंदुःखाययद्यत्प्रियतमंनृणाम् ॥ अनंतसुखमाप्नोतितद्विद्वान्यस्त्वकिंचनः १ सामिषंकुररंजघ्नुर्बलिनोयेनिरामिषाः ॥ तदामिषंपरित्यज्यससुखंसमविंदत २ नमेमानावमानौस्तोनचिंतागेहपुत्रिणाम् ॥ आत्मक्रीडआत्मरतोविचरामीहबालवत् ३ द्वावेवचिंतयामुक्तौपरमानंदआप्लुतौ ॥ योविमुग्धोजडोबालोयोगुणेभ्यःपरंगतः ४

परमंनरकमृच्छतीतिएतस्मादितिशेषः ३७ तन्निष्ठामाह तेनेति तेनहरिणाउपकृतमनुगृहीतंनिर्वेदंशिरसादायग्राम्यसंगतादुराशाःत्यक्त्वा ३८ एतदत्यंतंश्रद्दधतीश्रद्दधाना ३९ अस्मादन्यःकःआत्मानंत्रातुं मुषितेक्षणंनष्टज्ञानम् ४० आत्मनःस्वस्यगोप्ताआत्मापरमात्मैव यदाखिलान्निर्विद्येततदेतज्जगत्कालाहिनाग्रस्तंपश्येत् ४१ कांततर्षजाःकांततृष्णाजाताः ४२ इममितिहासंश्रद्धापयाति आप्नोति ॥ ४३ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांअष्टमोध्यायः ॥ ८ ॥ तिरश्चीनात्कुरराख्यखगात्किंचिद्विशिष्टंज्ञानंशिक्षितमत्राह परिग्रहइति नृणांप्रियतमंयद्यद्वित्तंतस्य परिग्रहःतस्यवित्तस्यार्ततोनाशाद्दुःखायभवति १ ततःकिंफलितमत्राह तदिति तत्तस्मात्योविद्वान्सोकिंचनोभवेदिममर्थंचित्तीकरोतीति सामिषामिति २ तज्ज्ञानफलमाह नमइति इहपुत्रवतांयावित्तैषणादिचिंतासापिनास्ति ३ ननुतर्हिकीदृशस्यचिंतानास्तीत्यत्राह द्वाविति गुणेभ्यःसत्वादिभ्यःपरंविलक्षणंईश्वरंगतोज्ञातःपरमात्मगुणामृतमनुभवन्नित्यर्थः ४

कुमार्याःशिक्षितज्ञानमाह क्वचिदिति वृण्वानान्वरणेच्छून्अर्हणमभ्यागतपूजनम् ५ शालीन्कलमान्दृषदि व्रीहिकुट्टपाषाणे शालयःकलमाद्याश्चषष्टिकाद्याश्चपुंस्यमीत्यमरः यथामहत्परिमाणं भवतितथास्वनंचक्रुरितिक्रियाविशेषणम् ६ महतीविशाहोत्सवेवर्तमानातद्योग्येत्यर्थः अभ्यागतसमयेव्रीहिताडनंदारिद्र्यसूचकमिति व्रीडितालज्जिता ७ घोषोअवघ्नंत्याइत्यत्रांधिकार्येणा भ्यागतैःशंखस्वनोनश्रुतइतिसूच्यते संधिश्चविवक्षावशात्क्रियतइतिवैयाकरणैरुक्तत्वाच्च निरभिनत्निरभिदत् ८ इदंकथंसंभाव्यतइत्यत्राह लोकानिति ९ एकाकित्वस्यविपक्षेबाधक माह वासइति अत्रदुर्जनैःसहवासोनिषिध्यतेनतुसाद्भिःतस्यविहितत्वात् असज्जनैःस्तुसंवासोनकर्तव्यःकथंचन । यावद्यावच्चबहुभिःसज्जनैःसतुमुक्तिद इतिवचनात् १० इषुकाराच्छिक्षितबुद्धि प्रकारमाह मनइत्यादिना एकत्रपरमात्मनिब्रह्मणि ११ मनोयोजनेनकिंफलंयेनावश्यकर्तव्यस्यादत्राह यस्मिन्निति यन्मनोदुष्कर्मरेणून्मुंचति तद्ब्राह्मचिन्मनोनिर्वाणंनाशमुपैति कथमिव अनिंधनंज्योतिरिवेतिलुप्तोपमं । ब्राह्मंमनोविलीनंस्यान्मुक्तौचिन्मात्रकंमनः । तेनैवानुभवेत्सर्वंस्वात्माभिन्नेनमुक्तिगमितिवचनात् ब्राह्ममेवनश्यतिनचिन्मात्रंतन्नाशेविषयानुभावोक्तिर्विरुध्येतेति

क्वचित्कुमारीत्वात्मानंवृण्वानान्गृहमागतान् ॥ स्वयंतानर्हयामासक्वापियातेषुबंधुषु५ तेषामभ्यवहारार्थंशालीन्दृषदिपार्थिव ॥ अवघ्नंत्याःप्रकोष्ठस्था श्चक्रुःशंखाःस्वनंमहत् ६ सातंजुगुप्सितंमत्वामहतीव्रीडिताततः ॥ बभंजैकैकशःशंखान्द्वौद्वौपाण्योरशेषयत् ७ उभयोरप्यभूद्घोषोअवघ्नंत्याःस्मशंखयोः ॥ तत्राप्येकंनिरभिनदेकस्मान्नभवेद्ध्वनिः८ अन्वशिक्षमिमंतस्याउपदेशमरिंदम ॥ लोकाननुचरन्नेताँल्लोकतत्त्वविवित्सया ९ वासोबहूनांकलहोभवेद्वार्ताद्वयो रपि ॥ एकएवचरेत्तस्मात्कुमार्याइवकंकणः १० मनएकत्रसंयुज्याज्जितश्वासोजितासनः ॥ वैराग्याभ्यासयोगेनध्रियमाणमतंद्रितः ११ यस्मिन्मनो लब्धपदंयदेतच्छनैःशनैर्मुंचतिकर्मरेणून् ॥ सत्वेनवृद्धेनरजस्तमश्चविधूयनिर्वाणमुपैत्यनिंधनम् १२ तदेवमात्मन्यवरुद्धचित्तोनवेदकिंचिद्बहिरंतरंवा ॥ यथेषुकारोनृपतिंव्रजंतमिषौगतात्मानददर्शपार्श्वे १३ एकचार्यनिकेतःस्यादप्रमत्तोगुहाशयः ॥ अलक्ष्यमाणआचारैर्मुनिरेकोल्पभाषणः १४ गृहारं भोहिदुःखायविफलश्चाध्रुवात्मनः ॥ सर्पःपरकृतंवेश्मप्रविश्यसुखमेधते १५ एकोनारायणोदेवःपूर्वसृष्टंस्वमायया ॥ संहृत्यकालकलयाकल्पांतइदमी श्वरः १६ एकएवाद्वितीयोभूदात्माधारोऽखिलाश्रयः ॥ कालेनात्मानुभावेनसाम्यंनीतासुशक्तिषु १७

१२ अचिन्मनोनाशानंतरं चिन्मनसाध्यानप्रकारमाह तदेवमिति अनिकेतनत्वेनएकत्वेनचसंचरणंदुःखहेतुकर्मानारंभश्चसर्पाच्छिक्षितमित्याह एकचारीति अत्रएकचारित्वादिकंविधेयंनतु विशेषणं गुहायांहृत्कमलमध्येगूढायांपरदेवतायां आशयोंतःकरणंयस्यसतथा निरंतरंभगवदुपासनापरइत्यर्थः अल्पेनाशनादिनातोषणंतृप्तिर्यस्यसतथा १४ अध्रुवात्मनःअनित्यदेहस्यजी वस्य अत्रलुप्तोपमामाह सर्पइति । अनेननिवासोपायोऽपिदर्शितइति १५ उर्णनाभेरुपशिक्षितमाह एकइति । एकःकेवलःनिरपेक्षःनारायणोदेवःस्वमाययास्वेच्छयाकल्पांतेकालकलयास हारकांशेनपूर्वसृष्टमिदंजगत्संहृत्यएकत्वसंख्याविशिष्टोभूत् १६ कालादीनांतदासत्त्वात् कथमिदमुपपद्यतेइतितत्राह अद्वितीयइति । एतादृशोन्योनास्तीत्येवोच्यतेनतुसर्वात्मनासर्वनिषेधेनतथा सतिसर्वस्यतेनैक्यंउपपन्नंस्यान्नचतदुक्तम् कुतोत्राह अखिलाश्रयइति नह्याधाराधेययोरेकत्वंक्वापिदृष्टचरम् नन्वेतदृष्टांतेनतस्याधारांतरकल्पनंस्यादत्राह आत्माधारइति नन्वेतद्युक्तिविरुद्धमत्राहई श्वरइति । एतदेवविवृणोति कालेनेति । आत्मनःस्वस्यानुभवेनतत्तत्कालोचितसृष्ट्यादिभावसूचकेनकालेनतदंतर्पामिणासत्वादिगुणवाच्यासुशक्तिषु साम्यंसाम्यावस्थांनीतासुसतीषुप्रधानपु

रुषधीश्वेश्वरस्वस्योरीश्वरः आदिपुरुषः परावराणां कार्यकारणानां परमो ऽत्रापरमंतरेणास्ते तत्रांकिनामेत्यत्राहकैवल्येति । समाधिकरणेतइति सत्वादिगुणानांशक्तिशब्दवाच्यत्वेकिंप्रमाणमित्येतच्चोद्यम् प्रकृतिश्चगुणाश्चैवशक्यत्वाच्छक्तयःस्मृताः । विष्णोःस्वरूपभूतातुशकनाच्छक्तिरुच्यते इत्यनेनपरिहृतामितिज्ञातव्यम् । कालप्रकृत्यादिप्रवर्तनोदासीनत्वाभिप्रायेणैकइतिवापुनरुक्तम् । कालप्रकृतिजीवादीनांस्वेतरस्यप्रवर्तनात् । तन्निमित्तस्यकार्यस्यविष्णुरेकइतीर्यते साहिकालादिकंसर्वंवर्तयत्यमितद्युतिरितिवचनात् १७ १८ संहारप्रकारमुक्त्वातस्मात्सृष्टिप्रकारमाह केवलेति । निरुपाधिकोजडदेहरहितः कालेनकालांतर्यामिणा आत्मनःस्वस्मात् अनुभावोजन्मव्यक्तिर्यस्यसतथा तेनस्वमायांस्वाधीनप्रकृतिंसंक्षोभयनृसृष्ट्यभिमुखींकुर्वन्तयाप्रकृत्यासूत्रप्राणंब्रह्माणंचसृजतिमायायाःस्वरूपमाह तामिति । विश्वतोमुखंसर्वदिक्षुयथासुखंभवतितथासृजतीं यस्मिन्प्रकृतिस्वरूपेयेनप्रधानेन प्रकृतौविलीनःसंसारमेतीतिश्रुतिः । कालेनपृष्टस्युपहितेनतेनैतावतासापेक्षत्वम् । आत्मानुभावेनस्वसामर्थ्येनेतिवा १९ २० अत्रोदाहरति । यथेतिऊर्णालालांवक्त्रतोमुखेनसंतत्यविसृत्ययथायथेच्छम् २१ पेशस्कृतःशिक्षितांबुद्धिमाह यत्रेति । देहीयत्रयत्रस्नेहसांक्लिष्टधियामनोधारयेत्तत्तत्सरूपतांतस्यतस्यसदृशरूपतांयाति अत्रेदंतात्पर्यंस्निग्धयाधियाध्यायतिचेत्स्निग्धरूपंसुखरूपंयाति द्वेषधियाचिंतयतिचेद्विष्टरूपंदुःखरूपंयातीत्यादियोज्यम् । तदुक्तं भयादपिहरिंभक्त्याचिंतयंस्तत्सरूपताम् । पेशस्कारिवदायातिद्विषन्द्वेषस्वरूपतामिति । द्विषअप्रीताविति धातोःसुखरूपस्यापिहरेर्द्वेषस्यदुःखरूपत्वात्तत्स्वरूपतांयातीतियुक्तम् । सुखरूपस्यविद्वेषोदुःखरूपइतीर्यते । तस्माद्दुःखंसदायातिद्विषवान्पुरुषोत्तमइतिच । रावणा

सत्त्वादिष्वादिपुरुषःप्रधानपुरुषेश्वरः ॥ परावराणांपरमआस्तेकैवल्यसंज्ञितः १८ केवलानुभवानंदसंदोहोनिरुपाधिकः ॥ कालेनात्मानुभावेनस्वमायां त्रिगुणात्मिकाम् १९ संक्षोभयनसृजत्यादौतयासूत्रमरिंदम ॥ तामाहुस्त्रिगुणांव्यक्तिंसृजतींविश्वतोमुखम् ॥ यस्मिन्प्रोतमिदंविश्वंयेनसंसरतेपुमान् २० यथोर्णनाभिर्हृदयादूर्णांसंतत्यवक्त्रतः ॥ तयाविहृत्यभूयस्तांग्रसत्येवंमहेश्वरः २१ यत्रयत्रमनोदेहीधारयेत्सकलंधिया ॥ स्नेहाद्द्वेषाद्भयाद्वापियातितत्तत्सरूपताम् २२ कीटःपेशस्करंध्यायन्कुड्यांतेनप्रवेशितः ॥ यातितत्साम्यतांराजन्पूर्वरूपमसंत्यजन् २३ एवंगुरुभ्यएतेभ्यएषामेशिक्षितामतिः ॥ स्वात्मोपशिक्षितांबुद्धिंशृणुमेवदतःप्रभो २४

दीनां रामादिद्वेषाद्विदुःखानंदभगवत्स्वरूपप्राप्त्युक्त्यासुखावाप्तिरितिश्रुतेःकागतिरितिचेदुच्यते तत्ररक्षोरूपादीनांद्वेषाद्दुःखावाप्तिर्जयादीनामेवतत्स्वरूपप्रवेशेनसुखावगतिः । नृसिंहद्वेषतोदुःखंरक्षोरूपेणरावणः । अगाच्चरामविद्वेषाच्छिशुपालस्तथैवच । ततोभक्त्यापरंयातोद्वेषरूपात्तमोगतिरिति । तस्मात्सर्वगुणोद्रेकिविद्वेषात्सर्वदोषवान् भवेदितिसरूपत्वंद्वेषादेःपुरुषस्यहीतिमानात् । यथोपासनंफलानवाप्तौश्रुतिव्याकोपश्चस्यात् । तंयथायथोपासतेतदेवभवतीतितंभूरितिदेवाउपासांचक्रिरेतेबभूवुस्तस्माद्भ्राष्येतर्हिसुप्तोभूर्भूरित्येवप्रश्वसित्यभूतिरित्यसुरास्तेहपराबभूवुरित्यादिश्रुतेः२२ अत्रोदाहरति कीटइतिननुभवदिष्टार्थेविषममुदाहरणंद्वेषात्तत्समतामाप्यवगमाद्दुच्यतेमह्यंभोजनंदास्यतीतिस्नेहस्यबाहुल्येनक्रमेणाल्पस्यद्वेषस्यसर्वात्मनानिवर्तनेनस्नेहस्यप्रवर्धनेनचतत्समतावाप्तिरिति सत्यप्यल्पविद्वेषेभोजनंदास्यतीतितु । स्नेहबाहुल्यतःकीटःपेशस्कारिसमोभवेत् । द्वेषेसर्वात्मनानष्टेस्नेहेचैवविवर्धति । सरूपतातदैवस्यात्कीटस्यैवंहरेरपीति किंच हरेःफलदातृत्वविशेषात्पेशस्कृतस्तदभावादल्पद्वेषोपिहरेःप्रसादाजनकइत्यनयोर्नसर्वसाम्यंलोकेचतथादर्शनात् अत्यल्पोपिहरेर्द्वेषःस्नेहस्यानुदयंकरः । सोयंविशेषोनान्यस्यफलदाताचकेशवः । नहिपेशस्कृतःकिंचित्फलदातृत्वमिष्यते स्वातंत्र्याद्विद्विषांचैवकेशवोनसुखप्रदइतिवचनात् २३ उपसंहरति एवमिति स्वदेहाच्छिक्षितमतिमाह स्वात्मेति २४

देहोममगुरुरित्यवैहीत्यन्वयः कुतोत्राह विरक्तीति सत्वंबन्धज्ञानसमाहारोनिधीयतेऽस्मिन्परमेश्वरेइतिसत्वनिधनःतं सततमतिशयेनोच्चैरुदर्करूपःज्ञानसुखरूपः इतिसततात्युदर्कोभगवांस्तंबिभ्रत्देहःविरक्ति विवेकहेतुत्वात्सत्वनिधनस्यसततात्युदर्कस्यहरेरधिष्ठानत्वाच्चयथावत्तत्त्वविचारसाधनत्वाच्चगुरुत्वमित्यर्थः। तर्हिहेयत्वंकुतइतितत्राह तथापीति पारक्यंपरकीयंमातृपित्रादेरधीनमित्यवसितोनिश्चितः २५ योहरिणाकरुणयामनुष्यजन्मप्रापितेनानेनदेहेनसर्वस्मात्श्रेष्ठंविनासेवते तस्यायंवृक्षबीजमिवसंसारपरंपरारंभकबीजमित्यनर्थहेतुरित्याह जायेत्यादिना जायादीनांप्रियचिकीर्षयाकर्माणिवितन्वन्योजा यादीन्पुष्णातिसवृक्षधर्मावृक्षसमानोंतेमुक्कच्छ्राज्जायादिपोषणएवावरुद्धमनाःस्वस्यबीजमिवस्थितंस्वदेहंसृष्ट्वावसीदाति नित्यक्लेशवान्भवतीत्यन्वयःयथैकोवृक्षोबीजेनबीजांतरपरंपरारंभणहेतुस्तथायंदे होपिकसृज्जायादिपोषणलक्षणबीजैर्देहांतरपरंपरारंभकारणमित्यर्थः २६ अवसीदतीत्युक्तंविवृणोति जिह्वेति अमुंससारिणकर्मशक्तिःपाण्यादिलक्षणापूर्वादृष्टशक्तिर्वा २७ अनेनसर्वभोगायतनेभ्योविशि ष्टज्ञानेंद्रियादिमत्तयापुरुषार्थोपयोगित्वेनास्यश्रैष्ठ्यादनेनरसादिविषयान्विजित्य पुरुषार्थायसाधनानुष्ठानंविधेयमन्यथानर्थपरंपरातदवस्थैवेत्युक्त तत्रसर्वस्मादस्यशरीरस्यश्रैष्ठ्यंकथंअवसीयतइतितत्रा

देहोगुरुर्ममविरक्तिविवेकहेतुर्बिभ्रत्स्मसत्वनिधनंसततात्युदर्कम् ॥ तत्त्वान्यनेनविमृशामियथातथापिपारक्यमित्यवसितोविचराम्यसंगः २५ जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्पुष्णातियःप्रियचिकीर्षितयावितन्वन् ॥ सोंतेसुकृच्छ्रमवरुद्धमनाःस्वदेहंसृष्ट्वास्वबीजमवसीदतिवृक्षधर्मा २६ जिह्वैकतोमुमपकर्षतिकर्हितर्षाशिश्नोन्यतस्त्वगुदरंश्रवणंकुतश्चित् ॥ घ्राणोन्यतश्चपलदृक्क्वचकर्मशक्तिर्बह्व्यःसपत्न्यइवगेहपतिंलुनंति २७ सृष्ट्वापुराणिविविधान्यजयात्मशक्त्यावृक्षान्सरीसृपपशून्खगदंशमत्स्यान् ॥ तैस्तैरतुष्टहृदयःपुरुषंविधायब्रह्मावबोधधिषणंमुदमापदेवः २८ लब्ध्वासुदुर्लभमिदंबहुसंभवांतेमानुष्यमर्थदमनित्यमपीहधीरः ॥ तूर्णंयतेतनपतेदनुमृत्युयावन्निःश्रेयसायविषयःखलुसर्वतःस्यात् २९ एवंसंजातवैराग्योविज्ञानालोकआत्मनि ॥ विचरामिमहीमेतांमुक्तसंगोऽनहंकृतिः ३० नह्येकस्माद्गुरोर्ज्ञानंसुस्थिरंस्यात्सुपुष्कलम् ॥ ब्रह्मैतदद्वितीयंवैगीयतेबहुधर्षिभिः ३१ श्रीभगवानुवाच ॥ इत्युक्त्वासयदुंविप्रस्तमामंत्र्यगंभीरधीः ॥ वंदितोभ्यर्चितोराज्ञाययौप्रीतोयथागतम् ३२

सृष्ट्वेति अजयाप्रवृत्त्याआत्मशक्त्यास्वाधीनसामर्थ्योपेतयापुराणिशरीराणिपुरुषंपुरुषशरीरंअवबोधमिएणज्ञानाश्रयम् २८ इदानींपरमपुरुषार्थायप्रयतनीयामित्यर्थतःसूचितंस्पष्टमाह लब्ध्वेति बहुसंभवांतेबहुजन्मावसानेअनुमृत्युपृष्ठतोनुपततितकं शरीरयात्राप्रयत्नोपिनानुष्ठेयइत्याह विषयइति धीरःअनित्यमर्थदामिदशरीरंयावन्नपतेत्ततःपूर्वमेवानिःश्रेयसाययतेतेत्यन्वयः २९ निश्चितार्थमाह एवमितिआत्मनिविज्ञानालोकःपरमात्मविषयविज्ञानलक्षणप्रदीपःप्रकाशः ३० एकस्माद्गुरोःस्वार्थसिद्धेर्बाहुल्यात्किंप्रयोजनंसर्वस्मादसंगत्वादिकएवतात्पर्यार्थइत्यत्राह नहीति सुष्ठुपुष्कलपूर्णं तत्रहेतुमाह ब्रह्मेतिबहुधार्गीयमानत्वादल्पबुद्धेर्निश्चयोनस्यादित्यर्थः हीत्यनेन एकस्मात्तुगुरोर्ज्ञानंजायतेनैवकस्यचित् । एकस्मादेवजायेतयोग्योब्रह्मपदस्यतु । स्वयंतूपदिशेज्ज्ञानंवैरिंचिपदयोगिनः । अनुग्रहात्तेनचापिज्ञानंदद्याद्विमुक्तिदः । ज्ञानंप्राप्यबहुभ्योपिनतेमुक्तिश्चतुर्मुखात् । ज्ञानमप्राप्यतेषांतुज्ञानदोविष्णुरेवहीतिवाक्योक्तविशेषंसिंहावलोकनन्यायेनसूचयति ३१ ३२

सर्वेब्रह्मणिचित्तंयस्यसतथा ३३ इतिश्रीभागवतेम० एकादशस्कंधेविज० टीकायांनवमोध्यायः ॥ ९ ॥ मुमुक्षुणाहरेरपरोक्षज्ञानमापाद्यमितिइतिहासमुखेनोक्तंतत्साधनानिनिरूपयत्यस्मिन्नध्याये । तत्रादौवर्णाश्रमाचाराचरणप्रकारमाह मयोदितेष्विति अकामात्माफलाभिसंधिरहितमनाःभूत्वा १ सर्वसाधनेषुवैराग्यंप्रथममापाद्यमित्याह अन्वीक्षेतेति अंतःकरणशुद्धिहेतुनावर्णाश्रमादिविहिताचारेणविशुद्धात्मापुमान्गुणेषुशब्दादिषुतत्त्वज्ञानेनपुरुषार्थसाधनतानिश्चयज्ञानेनविषयात्मनांविषयेष्वासक्तचित्तानांदेहिनां सर्वेषां कर्मारंभाणांविपर्ययफलवैपरीत्यंअन्वीक्षेतेत्यन्वयः अन्वीक्षणंनाम यथावस्तुदर्शनं तदेवपुरुषार्थसाधनंनान्यत् २ शुक्तिरजतादिज्ञानवन्मुमुक्षुणाहेयमिदंज्ञानमितिभावेनैतदुपपादयति सुप्तस्येति यथासुप्तस्यजाग्रत्वेनविषयाणामालोकोयथावाध्यायतोमनोरथांश्चनानात्मकत्वाद्वस्तुस्थितेरन्यथात्वाद्विफलःअतएवाविद्यमानःतथान्यधीगुणैःस्वबाह्यबुद्धिस्थगुणैः अस्वरूपैःकामक्रोधादिभिरभेदोहंक्रोध्यहंकामयितेत्यादिलक्षणोयोसौहेयइतिअर्थः । वस्तुस्थितेरन्यथात्वंनानात्वमितिकीर्तितं । ज्ञानस्यैवतुनानात्वान्नस्यात्कामाद्यहंमतिः । कामादिषुस्वधीस्थेषुकेवलंजीवसंस्थितिः । इतिबुद्धिरभेदःस्यात्सनकार्यःकथंचन । अदुष्टकामश्चिद्रूपोजीवाभिन्नस्वरूपतः । दुष्टकामोमनोधर्मस्तस्माद्धेयःसदैवसइतिप्रमाणेनहेयत्वंज्ञायतेइत्यर्थः ३ अकामात्मेत्युक्तंविवृणोति निवृत्तमिति फलानपेक्षणयथावस्तुज्ञानपूर्वंयत्कर्मतन्निवृत्तंतदेवसेवेतकुर्यात् अनीदृशंयत्कर्मतत्प्रवृ

अवधूतवचःश्रुत्वापूर्वेषांनःसपूर्वजः ॥ सर्वसंगविनिर्मुक्तःसमचित्तोबभूवह ३३ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेअवधूतगीतंनामनवमोध्यायः ९ ॥ श्रीभगवानुवाच ॥ मयोदितेष्ववहितःस्वधर्मेषुमदाश्रयः ॥ वर्णाश्रमकुलाचारमकामात्मासमाचरेत् १ अन्वीक्षेतविशुद्धात्मादेहिनांविषयात्मनाम् ॥ गुणेषुतत्त्वज्ञानेनसर्वारंभविपर्ययम् २ सुप्तस्यविषयालोकोध्यायतोवामनोरथः ॥ नानात्मकत्वाद्विफलस्तथाभेदोन्यधीगुणैः ३ निवृत्तंकर्मसेवेतप्रवृत्तंमत्परस्त्यजेत् ॥ जिज्ञासायांसंप्रवृत्तोनाद्रियेत्कर्मचोदनाम् ४ यमानभीक्ष्णंसेवेतनियमान्मत्परःक्वचित् ॥ मदभिज्ञंगुरुंशांतमुपासीतमदात्मकम् ५ अमान्यमत्सरोदक्षोनिर्ममोदृढसौहृदः ॥ असत्वरोर्थजिज्ञासुरनसूयुरमोघवाक् ६ जायापत्यगृहक्षेत्रस्वजनद्रविणादिषु ॥ उदासीनःसमंपश्यन्सर्वेष्वर्थमिवात्मनः ७

त्तंत्यजेन्नकुर्यात् अहमेवंपरोयस्यसमत्परःअनेनाकामात्मनोनुयस्यकर्मविधानंप्रतीतिविरुद्धमितिपरास्तं निष्कामंज्ञानपूर्वंचनिवृत्तमितिचोच्यते । निवृत्तंसेवमानस्तुब्रह्माभ्येतिसनातनमिति एतदत्रमानं ननुसकामस्यकर्मविधानात्तत्यागःकथमत्राह जिज्ञासायामिति जिज्ञासायांब्रह्मविचारेकर्मचोदनांकर्मविधिंब्रह्मज्ञानोत्पत्तौप्रवृत्तानांसर्वशब्दानांकर्मादिविषयत्वांगीकारेविरोधापत्तेःज्ञानान्तरलक्षणत्यागोविधीयते नतुसर्वात्मनाअंतःकरणशुद्धिद्वाराज्ञानांगत्वेनांगीकार्यत्वादित्यतोनाद्रियेदित्युक्तम् ४ ननु यमादचोदनापिनादरणीयाकिं नेत्याह यमानिति यमानियमाः अहिंसासत्यमस्तेयमसंगोह्रीरसंचयः । आस्तिक्यंब्रह्मचर्यंचमौनंस्थैर्यंक्षमाभयं । शौचंजपस्तपोहोमःश्रद्धातिथ्यंमदर्चनं । तीर्थाटनंपरार्थेहातुष्टिराचार्यसेवनमितिवक्ष्यति क्वचिद्विहितकालेनिवृत्तादिवत्ज्ञानोत्पत्तौगुरूपासनमप्यंतरंगमित्याह मदभिज्ञमिति मय्येवआत्मध्यानसमर्थाबुद्धिर्यस्यसवथातं मामेवनित्यंध्यायेद्योमदात्मासंप्रकीर्तितइतिवचनात् ५ तस्यगुरुप्रसादजनकगुणानाह अमानीत्यादिना वित्तरक्षमप्रतीतिनिर्गमोनिर्गर्वकैवण्यत्वान्नत्रस्मिन् ६ सर्वेषुजायापत्यादिष्वात्मनःस्वस्यार्थमिवप्रयोजनंउभयोःसमंनतुविशेषंपश्येत् इवोभयेचसादृश्येइतिचयावत्प्रयोजनंपश्येदितिवा ७

किंच जीवपरमात्मानावपिपरस्परंदेहादेश्चभिन्नत्वेनज्ञातव्यावितिसदृष्टांतमाह विलक्षणइति स्वदृक्स्वयंप्रकाशः ईक्षितास्यसर्वस्यद्रष्टा आत्मापरमात्मास्थूलसूक्ष्मदेहाद्विलक्षणोभिन्नआत्माजी
वश्चहरेर्देहाद्भिन्नइतिज्ञातव्यावितिशेषः दाह्याद्दारुणोन्यःपावकः ८ प्राप्तस्यहिप्रतिषेधइतिन्यायादनयोरभेदशंकाया किंबीजमत्राह निरोधइति यथाजीवोनिरोधादींस्तत्कृतान्देहकृतान् गुणानाध
से एवंपरोपिदेहमनुप्रविष्टोदेहगुणानाधत्तइत्यन्वयः निरोधोमरणं अणुत्वंबृहत्त्वंनानात्वंसुरनरादिनानाजातिविशिष्टत्वमनयोर्वैलक्षण्याज्ञानंबीजमित्यर्थः ९ इदमेवाज्ञानंसंसारकारणमित्याह यइति
योसौसत्त्वादिगुणैर्विरचितोदेहःअयंपुरुषस्यजीवस्यार्थेहियस्मादविद्यास्थितात्मनःअविद्यायांअज्ञानेस्थितमनसःपुंसोयंसंसारस्तन्निबंधः देहाभिमाननिमित्तकः १० अदेहधर्मवान्विष्णुर्देहधर्मवदीयं
से जीवस्त्वदेहधर्मापिपरतोदेहधर्मवान्। स्वयंत्वनभिमानःसन्नज्ञानामेवदर्शयेत् । विष्णुर्जीवस्वाभिमानीयावन्मुक्तिपदंव्रजेदितिवचनाद्विष्णोर्देहधर्मवदाभानमज्ञानांनतुज्ञानिनांजीवस्यस्वतोदेहधर्मराहि
तस्यापिदेहाभिमानादितिविवेकलक्षणोविचारःकर्तव्यइत्युपसंहरति तस्मादिति उक्तप्रकारेणाजिज्ञासयाआत्मस्थंदेहांतस्थितंकेवलंदुर्भगदेहिभोग्यदुःखरहितमात्मानंश्रीनारायणंपरंविलक्षणंसंगम्य
ज्ञात्वास्यजीवस्यवस्तुबुद्धिंशक्तबुद्धिंनिरसेत्त्यजेत् कथंयथाक्रमंजिज्ञासयाब्रह्मादिजीवराशेःयथास्वरूपतारतम्यंविचार्यज्ञात्वापरब्रह्मभावबुद्धिंत्यजेदित्यर्थः । अवस्त्वशक्तमुद्दिष्टंशक्तंवस्त्विहभण्यते । त
स्मादेकंपरंब्रह्मवस्तुशब्दोदितंसदेतिलक्षणवचनात् ११ ननुज्ञानोत्पत्त्यर्थंगुरूपास्तिःकर्तव्येत्युक्तं तत्रकथंकारंज्ञानमुत्पद्यतेयेनजीवस्यब्रह्मभावबुद्धितृणदहनंस्यादित्यतस्तत्प्रकारमाह आचा

विलक्षणःस्थूलसूक्ष्माद्देहादात्मेक्षितास्वदृक् ॥ यथाग्निर्दारुणोदाह्याद्दाहकोन्यःप्रकाशकः ८ निरोधोत्पत्त्यणुबृहन्नानात्वंतत्कृतान्गुणान् ॥ अनुप्र
विष्टआधत्तेएवंदेहगुणान्परः ९ योसौगुणैर्विरचितोदेहोयंपुरुषस्यहि ॥ संसारस्तन्निबंधोयंपुंसोविद्यास्थितात्मनः १० तस्माज्जिज्ञासयात्मानमात्म
स्थंकेवलंपरम् ॥ संगम्यनिरसेदस्यवस्तुबुद्धिंयथाक्रमम् ११ आचार्योरणिराद्यास्यादंतेवास्युत्तरारणिः ॥ तत्संधानंप्रवचनंविद्यावह्निःसुखावहः १२
वैशारदीसातिविशुद्धबुद्धिर्धुनोतिमायांगुणसंप्रसूतिम् ॥ गुणांश्चसंदह्ययदात्म्यमेतत्स्वयंचशाम्यत्यसमिद्यथाग्निः १३ अथैषांकर्मकर्तॄणांभोक्त्
णांसुखदुःखयोः ॥ नानात्वमथनित्यत्वंलोककालागमात्मनाम् १४

र्यइति १२ विद्यावह्निःसुखावहत्वंनित्यदुःखहेतुजीवब्रह्मैक्यबुद्धिशुष्कतरुदाहेननित्यानंदनिदानत्वादितिभावेनाह वैशारदीति विविधंशारंसुखदुःखलक्षणंसंसारंद्यतीतिविशारदोविष्णुस्तस्यावि
द्यमानावैशारदीसाअतिविशुद्धाबुद्धिःअपरोक्षबुद्धि.गुणसंप्रसूतिंअयोग्यकामादिजननींमायापिशाचवत्स्थितांजीवस्वरूपाच्छादिकांनिरस्यपरमाच्छादिकांविधुनोतिउद्घाटयति अयोग्यकामादिगुणां
श्चसंदह्यएतद्दुःखादिकंयदात्म्यंयस्यामायायाःस्वरूपाधीनंतादृशीं स्वयंसाबाह्यांतःकरणजाबुद्धिश्चतदंतःकरणंचदग्ध्वाअसमिन्निरिंधनोग्निरिवशाम्यति स्वरूपज्ञानेनैवस्वरूपमीश्वरादिकंचानुभवतिमुक्ता
विविशेषः । पिशाचवत्स्थितामायातूच्यतेजीवगासदा । दह्यतेतद्गुणाःसर्वेसाचप्रांतिस्विकीनरइतिप्रमाणवचनादुक्तंयुक्तं अनेनबाह्यांतःकरणनश्यतिस्वरूपांतःकरणजन्यज्ञानेनस्वस्वरूपेश्वरादिकंअनुभव
तीत्येतत्संसिद्धावगतमतोन्यत्प्रमाणंवक्तव्यमितीयंशंका । बाह्यांतःकरणाज्जन्यंज्ञानंनश्यतिमुक्तिगे स्वरूपज्ञानतोभोगान्मुक्तोभुंक्तेयथेष्टतइत्यनेनपरिहर्तव्येतिज्ञातव्यं । एतच्छब्देनदुःखादिरपरोक्ष
तयोच्यते कांचिद्विश्वंकांचिद्ब्रह्मकांचिद्विचनितार्येऽइतिवचनात् । एतच्छब्देनदुःखादिकमत्रोच्यत इतियुक्तं । तप्तलोहाम्बुनाशवत्भेदज्ञानविनाशादात्मैकत्वमेव ननानात्वमतएवतेषां नित्यत्वंचव्यावहारि
कमेवेतिमद्व्याख्यानंतदुत्तरग्रंथविरुद्धत्वान्नविदुषांपरिषदिसामंजस्यंधत्ते १३ तत्कथमत्राह अथेति । एषामितिप्रत्यक्षं लोककालागमात्मना।मित्यनेनभेदेप्रत्यक्षमनुमानमागमंचप्रमाणयति। लोकेकाले

आगमेवेदेचात्मामातिर्येषांतेतथातेषांलोककालवेदज्ञानामित्यर्थः अनेनज्ञानतारतम्यंचसूचितं तस्मात्पुण्यकर्मकर्तॄणांपापकर्मकर्तॄणांमिश्रकर्मकर्तॄणांअतएवसुखदुःखमिश्रभोक्तॄणांएषांनानात्वमथैषां नित्यत्वंचमन्यसेजानासि यदित्वं तस्मान्नमयाभेदसाधनेप्रयतनीयमित्यतः अत्माभेदोनुपपन्नइति । देहापेक्षमनित्यत्वंजीवानांजननंतथा । स्वतस्त्वजाश्चनित्याश्चबहव सुखदुःखिण' । उत्तमाजीवसंघास्तुनी चावैनित्यदुःखिनइत्यतश्चनित्यत्वंजननंसुखैकभोक्तृत्वंचयुज्यते इयंव्यवस्थाकस्मादितितत्राह सर्वभावानामिति यथासर्वेषांदेवासुरमनुष्यादिजातिभिन्नानांभावानांजीवानांसंस्थाव्यवस्थायोग्यताऔ त्पत्तिकीस्वाभाविकीहियस्माच्चस्माच्चतदाकृतिभेदेनदेवासुरादिशरीरभेदेनतथाजायतेजीवसंगस्तस्य धीर्ज्ञानंचयोग्यतानुसारेणभिद्यतेअनेनोत्तमयोग्यतावतांभेदज्ञानेधिकारइतरेषामुभयेषांयथासंभवम न्यत्रेत्युक्तंभवति १४ १५ ननुदृश्यमानत्वादनित्यानामपिजन्मादिकर्मास्तुतन्मायामयमितिमाशंकेत्याह एवमपीति एवमपिनित्यत्वेपिअत्रजननादिलक्षणसंसारेसर्वेषांदेहिनांकालावयवतःरात्रिदि नाद्यवच्छिन्नेषुकालावयवेषुदेहयोगतःदेहसंबंधेनजन्मादयोभावाःअसकृत्संति प्रवाहतःसत्याइत्यर्थः देहापेक्षमनित्यत्वंजीवानामित्येतदत्राप्यनुसंधेयम् १६ ननुसदनुविद्धत्वात्सत्यत्वंनस्वतइ त्याशंक्यार्थक्रियायोग्यत्वात्स्वाभाविकमेवेतिभावेनाह तत्रापीति । तत्रापिजन्मादिमतिजगत्यपिकर्मणाकर्तुःजातावेकवचनंअस्वातंत्र्यंकर्मफलसुखदुःखानांभोक्तुरस्वातंत्र्यंचउत्तमानामवरानियतत्व मवरजनस्योत्तमत्वंलक्ष्यतेदृश्यते । भवतेतिशेषः ततःकिमत्राह कोन्विति । कोन्वर्थःपुरुषार्थःसुखलक्षणःविवशंनीचवशंपुरुषंभजेन्नकोपिपुरुषार्थः । कंपुरुषंपुरुषार्थःप्राप्नोतीत्यस्यापिइदमेवंव्याख्येयं

**मन्यसेसर्वभावानांसंस्थाह्यौत्पत्तिकीतथा ॥ तत्तदाकृतिभेदेनजायतेभिद्यतेचधीः १५ एवमप्यत्रसर्वेषांदेहिनांदेहयोगतः ॥ कालावयवतःसंतिभावाजन्मा दयोसकृत् १६ तत्रापिकर्मणांकर्तुरस्वातंत्र्यंचलक्ष्यते ॥ भोक्तुश्चसुखदुःखानांकोन्वर्थोविवशंभजेत् १७ नदेहिनांसुखंकिंचिद्विद्यतेविदुषामपि ॥ तथाच दुःखंमूढानांवृथाहंकारिणांपरम् १८ यदिप्राप्तिंविघातंचजानंतिसुखदुःखयोः ॥ तेप्यद्धानविदुर्योगंमृत्युर्नप्रभवेद्यथा १९ कोन्वर्थःसुखयत्येनंकामोवा मृत्युमंतिके ॥ आघातंनीयमानस्यवध्यस्येवपदेपदे २० श्रुतंचदृष्टवद्दुष्टंस्पर्धासूयात्ययाव्ययैः ॥ बह्वंतरायैर्विहतंकार्षिवच्चापिनिष्फलम् २१**

विशिष्टपुरुषवशंपुरुषंभजेदिति । अत्रविशेषस्तु स्वाधिकानांवशत्वात्तुपरमंसुखमेवतु । तदन्येषांवशेयस्तुकिंसुखंतस्यमण्यतां स्वाधिकानांवशत्वंचतेषांभक्तिमतःसुखम् तदन्येषांतुदुःखायतस्माद्भक्त्य धिकोभवेदित्यनेनावगतव्यः । अनेनमुक्तावन्यनियतत्वेसंसारधर्मत्वात्तदर्थेनप्रयतनीयमितिशंकानिरस्ता १७ अत्रकैमुत्यमाह नेति विदुषामपिदेहिनांदेहाभिमानिनांयदासुखंनविद्यते तथातदादुःखमू ढानांअहंकारिणांचसुखंनास्तिइतिकिंपुन पुनःशब्दः प्रस्तुतार्थेतथाशब्दउदीर्यतइतिवचनात् पुनःशब्दःतथाशब्दार्थेवर्तते दुःखमूढेभ्योप्यहंकारिणामात्मन्यविद्यमानगुणारोपवतांसुखंनास्तीतिकिं पुनस्तरामितिचयोज्यम् । यावद्देहाभिमानित्वंअधिकंतावद्दुःखित्वंचज्ञातव्यमित्यतोदेहाभिमानिनश्चदुःखमूढाइत्युक्तम् परमित्यनेनाभिमानित्वमेवप्रयोजनमिति १८ नन्वस्त्वज्ञानांदुःखादिकंतत्परिहार मात्युपायानभिज्ञानादग्निष्टोमादिनातदभिज्ञानांतोसुखप्राप्तिदुःखपरिहारौस्यातामित्येतदनूद्यपरिहरति यदीति येतुलोकेविद्वत्त्वेनप्रसिद्धाःपुरुषाःयदिसुखस्यप्राप्तिंदुःखस्यविघातंपरिहारंजानंतीतिमतंते प्यद्धासत्यंयथार्थयोगमुपायंनविदुः कुतोनविदुरत्राह मृत्युरिति यथायेनोपायेनमृत्युःसंसारोनप्रभवेन्नांगीकुर्यात्तंदेह मानित्वेबहुतरदुःखग्रस्तत्वादित्यर्थः १९ नन्वर्थकामौतयोरुपायःस्यातामत्राह कोन्वितिअंतिकेस्थितमृत्युमेनंपुरुषम् अत्रदृष्टांतमाह आघातमिति आघातंमरणस्थानंप्रतिनीयमानस्यवध्यस्यपुंसोयथासुखंनास्तितथेति २० ननुस्वर्गकामस्यसुखहेतुत्वादन्यथातत्कर्मानुष्ठा नंव्यर्थंस्यादतःकथंकामोवानसुखयतीतितत्राह श्रुतंचेति कामस्यकर्मद्वारासुखहेतुत्वेपितान्नित्यंनक्षणिकत्वात् दृष्टवत्कर्मनिर्मितमंदिरादिवाद्विष्वकर्मीयशास्त्रासिद्धत्वंत्वप्रयोजकम् नचमुक्तिवन्नित्यत्व

मितिवाच्यम् ज्ञानसाध्यत्वविशेषात् स्वर्गकामेनानुष्ठीयमानमग्निष्टोमादिकंनिश्चितफलंनस्याद्बह्वंतरायविहतकृष्यादिकामवदित्याह स्पर्धेत्यादिना यथाकृषिवाणिज्यादिकंमिथःस्पर्द्धासूयादिबहुं तरायैर्विहतंभवति स्पर्धादिप्रयुक्ताभिचारिकर्मणाउन्मादादिनाप्यग्निष्टोमाद्यनुष्ठानमपिकुंठितम् अत्ययोविध्यतिक्रमणं अप्ययोंतरालेमरणम् २१ ननुसत्कृष्यादिरिवस्वनुष्ठितोग्निष्टोमादिधर्मःकर्मफलजनकःकिंनस्यादत्राह अंतरायैरिति तेनधर्मेणअर्थकामयोःसुखहेतुत्वाभावेपिस्वनुष्ठितस्यधर्मस्यतद्धेतुत्वंस्यादित्यतोवाह अंतरायैरिति २२ निजधर्मार्जितान् २३ देवीनामप्सरसाम् २४ सुराक्रीडेषुदेवक्रीडास्थानवनेषु २५ समाप्यतेक्षीयते २६ स्वतोसुराणांवैष्णवाचार्यैर्यज्ञंकृत्वास्वर्गंगत्वाकर्मफलंभुक्त्वामर्त्यलोकमागतानागतिमाह यादिति २७ आलभ्यहिंसित्वा २८ मनुष्ययाज्ञिकस्यस्थितिमाह कर्माणीति मर्त्यधर्मिणोमरणधर्मिणःपुरुषस्यतत्रदेहेकिंसुखंलभ्यतेनकिमपीत्यर्थः २९ नकेवलंलोकत्रयस्यानित्यफलत्वंततउपरितनानांसत्यलोकपर्य

अंतरायैरविहतोयदिधर्मःस्वनुष्ठितः ॥ तेनापिनिर्जितंस्थानंयथागच्छातितच्छृणु २२ इष्ट्वेहदेवतायज्ञैःस्वर्लोकंयातियाज्ञिकः ॥ भुंजीतदेववत्तत्रभोगान्दिव्यान्निजार्जितान् २३ स्वपुण्योपचितेशुभ्रेविमानऊपगीयते ॥ गंधर्वैर्विहरन्मध्येदेवीनांहृद्यवेषधृक् २४ स्त्रीभिःकामगयानेनकिंकिणीजालमालिना ॥ क्रीडन्नवेदात्मपातंसुराक्रीडेषुनिर्वृतः २५ तावत्प्रमोदतेस्वर्गेयावत्पुण्यंसमाप्यते ॥ क्षीणपुण्यःपतत्यर्वागनिच्छन्कालचालितः २६ यद्यधर्मरतःसंगादसतांवाजितेंद्रियः ॥ कामात्माकृपणोलुब्धःस्त्रैणोभूतविहिंसकः २७ पशूनविधिनालभ्यप्रेतभूतगणान्यजन् ॥ नरकानवशोजंतुर्गत्वायात्युल्बणंतमः २८ कर्माणिदुःखोदर्काणिकुर्वन्देहेनतैःपुमान् ॥ देहमाभजतेतत्रकिंसुखंमर्त्यधर्मिणः २९ लोकानांलोकपालानांमद्भयंकल्पजीविनाम् ॥ ब्रह्मणोपिभयंमत्तोद्विपरार्धपरायुषः ३० गुणाःसृजंतिकर्माणिकालोनुसृजतेगुणान् ॥ जीवस्तुगुणसंयुक्तोभुंक्तेकर्मफलान्यसौ ३१ यावत्स्याद्गुणवैषम्यंतावन्नानात्वमात्मनः ॥ नानात्वमात्मनोयावत्पारतंत्र्यंतदैवहि ३२ यावदस्यास्वतंत्रत्वंतावदीश्वरतोभयम् ॥ यएतत्समुपासीरंस्तेमुह्यंतिशुचार्पिताः ३३ कालआत्मागमोलोकःस्वभावोधर्मएवच ॥ इतिमांबहुधाप्राहुर्गुणव्यतिकरेऽसति ३४

नानामप्येवमेवेत्याह लोकानामिति ३० एवंमनुष्यादिब्रह्मपर्यंतंलोकानांलोकपालानांचसृष्ट्यादिकर्त्रीकालाख्येनभगवतामायागुणोपादानत्वेनतत्कर्मानुगुणंप्रवर्त्यते तस्मादस्यज्ञानमेवात्यतदुःखनिवर्तकत्वेननित्यंसुखदायीतिभावेनोपसंहरति गुणाइति गुणाःसत्वादयःप्रकृतेःकर्मफलभोक्तृत्वमितिमतंप्रत्याह जीवस्त्विति । तुशब्देनाचेतनस्यभोक्तृत्वानुपपत्तिंदर्शयति सत्वादिगुणयुक्तः ३१ एवंजीवपरभेदंप्रतिपाद्यतदभेदमतमनूद्यदूषयति यावदित्यारभ्ययावदीश्वरतोभयमित्यंतोग्रंथःपूर्वपक्षीयःयएतन्मतंउपासीरन्सेवतेतेंधतमसिमुह्यंतिदुःखोद्रेकात् ३२ ३३ तर्हिस्वसिद्धांतःकइतित्राह कालइति गुणव्यतिकरेअसतिमुक्तिदशायांबहुधाकालादिभिर्नामभिर्मामुपासतेइतिप्राहुर्वेदादयइतिशेषः कालःसर्वगुणोद्रेकादाप्तत्वादात्मनामकः । आगमोवगतेरस्यलोकोज्ञानस्वरूपतः । स्ववशत्वात्स्वभावोयंधारणाद्धर्मइत्यपि । उपासतेसदामुक्ताःपरानंदैकभागिनः । तदेतत्तत्त्वमज्ञात्वाप्राहुर्दुर्मतयःपरे । यावत्स्याद्गुणवैषम्यंतावन्नानात्वमात्मनः । भेदबुद्धिस्तुयावत्स्यात्तावदीश्वरतंत्रता यावदीश्वरतंत्रत्वंतावत्तस्माद्भयंभवेत् । उपासतेयएवंतुनित्यंशोकेपतंतिते । महातमस्यनानंदेतस्मान्नैवंविचिंतयेत् । तस्मान्नित्यतनानात्वंजीवानामीशतंत्रता । स्वाधिकानांवशत्वंचमुक्तावपिसदेष्यते

एवंज्ञात्वाविमुच्यंतेपरानंदंप्रजंतिचेत्तिप्रमाणात्कालादिनामानिहरेरेवमुख्यार्थानीत्यतोगुणपूर्णस्यहरेःदुःखसमुद्रमग्नेनजीवेनैक्यंदूरतोपाकृतमितिभावः । कःकामधेनावितिधातोः कमनीयानांगुणानांधेनुराधारइतिकालः । सर्वेषांसर्वस्यादाप्रत्वात्श्रेष्ठत्वादात्माआगच्छतिअवगच्छति जानाति सर्वमित्यागमः । लुक्प्रकाशइतिधातोःप्रकाशापरपर्यायज्ञानस्वरूपत्वात्लोकः स्वाधीनोभावः सत्तालक्षणोयस्यसःस्वभाव स्वतंत्रइत्यर्थः धारयतिसर्वमितिधर्मः २४ भगवदुक्त्यासम्यक्ज्ञातजीवपरभेदोप्युद्धवःस्थूलमतीनामपिनिस्तुषंविविच्यभेदज्ञापयितुंपृच्छति गुणेष्विति स्वतोऽनपावृतः । अदेहीपरमात्मादेहजेषुगुणेषुस्पर्शादिविषयेषुवर्तमानोपिगुणैर्विषयैर्नबध्यतेउतबध्यते द्वितीयेकथंबध्यतइति ३९ क्वार्थइतितत्राह कथमिति । यदिबद्धस्तर्हिकेनप्रकारेणवर्तेत लोके बद्धस्यप्रवृत्त्यदर्शनात् चेष्टादिलिंगाभावेनतज्ज्ञानंचदुरापादमितिभावेनाह कैरिति । बद्धस्यापिभोगाभावेमरणंस्यादतः किंभुंजीतेति । भुंजानस्यहानोपादानेदृष्टे तत्रायंकिंजहाति बद्धःशयनाद्यन्यतमंकरोतितत्रायंकिंकरोति ३६ ब्रूहिपरिहारेणस्पष्टीकुरु एवंपृच्छतस्तवकोभिप्रायःइत्यतएकजीववादिमतमवलंब्यप्रश्नबीजमाह नित्येति कुतएतदितिचेन्नमेमोक्षोनबंधनमित्यादिपरिहारात् शिष्योपिपूर्वपक्षस्थस्तुदेवात्ममतंब्रुवन् नैवदूष्यत्यसत्येनास्थिरत्वार्थहितद्धचइतिवचनादुद्धवस्यनासत्यतादोषोपि ॥ ३७ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांदशमोध्यायः ॥ १० ॥ ॥ मेदज्ञानमेवमुक्तिसाधनंतत्साधनंभक्तिस्तस्यावैराग्यंइत्येतत्सर्वमेतास्मिन्नध्यायेकथयति तत्रादौगुणेष्वित्यादिनायदुद्धवस्यचोद्यंतत्परिहरति बद्धइत्यादिना बद्धोमुक्तइतिव्याख्या जीवस्येतिशेषः

उद्धवउवाच ॥ गुणेषुवर्त्तमानोपिदेहजेष्वनपावृतः ॥ गुणैर्नबध्यतेऽदेहीबध्यतेवाकथंविभो ३५ कथंवर्त्तेतविहरेत्कैर्वाज्ञायेतलक्षणैः ॥ किंभुंजीतोतविसृजेच्छयीतासीतयातिवा ३६ एतदच्युतमेब्रूहिप्रश्नंप्रश्नविदांवर ॥ नित्यमुक्तोनित्यबद्धएकएवेतिमेमतिः ॥ ३७ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेभगवदुद्धवसंवादेदशमोध्यायः ॥ १० ॥ श्रीभगवानुवाच ॥ बद्धोमुक्तइतिव्याख्यागुणतोमेनवस्तुतः ॥ गुणस्यमायामूलत्वान्नमेमोक्षोनबंधनम् १ शोकमोहौसुखंदुःखंदेहापत्तिश्चमायया ॥ स्वप्नेयथात्मनःख्यातिःसंसृतिर्नतुवास्तवी २

हिशब्दएवार्थेजीवस्यैवेत्यर्थः स्वतःचिद्रूपस्यकथंघटतइत्यत्राह गुणतइति सत्वादिगुणसंबंधान्निरवयवस्यएतत्संबंधःकथमत्राह मइति गुणानांजीवस्यचममवशत्वान्मदधीनप्रवृत्तित्वाच्चदुर्घटघटकशक्तिमत्वान्ममेत्यर्थः तर्हिशैवलावृतशरीरवन्नकदाप्यस्यसुखमत्राह नवस्तुतइति वस्तुवृत्त्यानास्तितन्निवर्तकेश्वरेच्छाधीनत्वान्नमिथ्येत्यर्थ. गुणसंबंधत्वाद्बद्धएवतौकिंनस्यातामत्राह गुणस्येतिजातिविवक्षयाएकवचनं गुणानांमायामूलत्वात्तत्प्रवर्तकत्वेनसंबंधः स्वतोहंनिर्गुणइत्यतोबंधमोक्षौनस्तइतिभावः । ब्रह्मणएवमायामयौबंधमोक्षौनाविद्ययानजीवस्येत्यंगीकर्तुमुचितप्रतीतत्वान्नाप्रमाणकोध्याहारोयुक्तइतीदंचोचं अमायत्वान्निर्गुणोहंबधमोक्षौनचापिमे मदधीनस्यजीवस्यबधमोक्षौसदैवेत्त्वितस्पष्टप्रमाणवचनेनपरिहृतौभीतत्वन्मनोरथकल्पनामत्रनप्रकाशयेति १ जीवस्यसंसारोवास्तवोनचेत्तर्हिकस्मादयमस्येत्याशंक्याज्ञानादितिसोदाहरणमाह शोकमोहाविति । माययाअज्ञानेनयथास्वप्नेस्वप्नोयामित्यज्ञानेनात्मनःशोकमोहादिख्यातिस्तथास्वरूपाज्ञानेनशोकादिनतुस्वरूपस्यतस्यसुखात्मकत्वात्तस्मादर्थक्रियाकारित्वेनसंसृतिःसत्यपिनवास्तवीप्रतिहंतुमशक्याभवतीत्यर्थः । स्वप्नोयमित्यविज्ञानात्स्वप्नेदुःखमुपाश्नुते । निजस्वरूपानुभवराहित्याचद्वद्देवतु । जाग्रद्दुःखमपिमोक्षंविष्णुतत्त्वंनपश्यतः । तस्मात्तदस्वभावत्वात्सदप्येतदवास्तवमितिवचनात् । स्वप्नदृष्टांतेनसंसारस्यनमिथ्यात्वमुच्यतइति २

अत्रमायानिष्कृतिः किंनस्यात्तथाप्रसिद्धेरित्यतस्तन्निराकरणमाह विद्याविद्येइति । ममतनूप्रतिमावत्स्थितेकिंकार्यइत्यत्राह शरीरिणांदेहिनांबंधमोक्षकरीआद्येअनादितोविद्यमानेमेमायथाप्रकृत्या निर्मितेममेच्छावशंगतेच साक्षात्स्वरूपत्वे विद्याविद्येममतनूप्रतिमावत्सदोदिते । सदातद्व्यतिरिक्तस्यनित्यज्ञानसुखात्मनः । मदिच्छावशगेनित्यमविद्यानिर्मितागुणाः । सत्वाद्यामदधीनत्वादविद्यापाल मेगुणाः । अविद्याचैवविद्याचगुणाःसत्वादिकाअपि । देहोत्पत्तिःसुखंदुःखंसर्वमेतन्मदिच्छया । अतोहंबंधमोक्षाभ्यांरहितोनित्यमेवतु । मुक्तशब्दोदितोबंधराहित्यात्नविमोक्षत इतिप्रमाणविरोधआपद्यते । मो क्षबंधकत्वंचाभिमानिदेवतासामर्थ्यात्तत्रश्रियाभिमतप्राकृतसत्त्वगुणजाताविद्या । दुर्गादिकृततमोगुणजातात्वविद्या । तदुक्तं श्रीस्तुविद्यासमुद्दिष्टादुर्गाविद्याप्रकीर्तिता । तेत्वनादीहरेरिच्छानियतेसर्वदे वस्थिति ३ अदेहीबध्यतेचेत्कथंबध्यतइतिपरमात्मविषयप्रश्नःमेगुणतोबंधमोक्षावितिपरिहारोपि तत्रजीवस्यैवतावितिभवद्भिरुच्यते अतइदंकथंसंगच्छतइतितटस्थशंकांपरिहरन्नुपसंहराति एकस्ये ति जीवपरमात्मेतिद्विविधंतत्त्वंतयोरेकस्यैवजीवस्यबंधमोक्षौसकइत्यतोममांशस्येति सकिंस्वरूपांशइत्यतोजीवस्येति जीवोभिन्नांशइति भिन्नांशस्येवजीवस्यबंधमोक्षौनमेकाचित् । अभिन्नांशास्तु मत्स्याद्यातेजसःकालवह्निवत् । जीवाभिन्नांशकास्तत्रतेजसःप्रतिबिंबवदितिअनेनसिद्धंकिमुक्तंस्यादत्राह एवमिति एवमुक्तविधस्यजीवस्याविद्ययानादिबंधस्तयाविद्ययेतरत्मोक्षलक्षणंश्रेयःस्तइत्यर्थः अतःपरमात्माकथंबध्यतइतिप्रश्नोनोपपन्नइतिभावः ४ एकस्मिन्भोगायतनेस्थितयोर्जीवपरयोरेकस्यजीवस्यैवतौस्तइतियदुच्यतेतत्रविवेकज्ञानकथंस्यादत्राह अथेति यतोजीवस्येवबंधमो

## विद्याविद्येममतनूविद्ध्युद्धवशरीरिणाम् ॥ मोक्षबंधकरीआद्येमाययामेविनिर्मिते ३ एकस्यैवममांशस्यजीवस्यैवंमहामते ॥ बंधोस्याविद्ययानादिर्वि द्ययाचतथेतरः ४ अथबद्धस्यमुक्तस्यवैलक्षण्यंवदामिते ॥ विरुद्धधर्मिणोस्तातस्थितयोरेकधर्मिणि ५ सुपर्णावेतौसदृशौसखायौयदृच्छयैतौकृतनीडौ चवृक्षे ॥ एकस्तयोःखादतिपिप्पलान्नमन्योनिरन्नोपिबलेनभूयान् ६

क्षौअथतस्माद्बद्धस्यजीवस्यमुक्तस्यविष्णोर्वैलक्षण्यंअस्वातंत्र्यादिस्वातंत्र्यादिलक्षणंतेतुभ्यंवदामीत्यन्वयः मुक्तनामत्वंचहरेरेवमुख्यं नित्यशुद्धमुक्तेत्यादिपदानांहरावेवेत्यन्वयादित्यादिपुरुषोत्तम व्याख्यानवचनात्सिद्धं मुक्तस्यतुनमेमोक्षोबंधाभावात्कथंचन । मुक्तइत्यपिनामैतद्दीप्यतेसौदिवाकरः । इतिवद्बंधराहित्यान्नतुवृक्षादिदीप्तिवत् । कादाचित्कतयावाच्यंबंधाभावादमोक्षतः । जीवस्य बंधमोक्षस्तुमत्प्रसादात्कदाचनेतितत्वोदयवचनाच्चोक्तार्थसिद्धिः बद्धस्यजीवस्य बद्धजीवाइमेसर्वेपूर्वबंधसमन्वयात् । नित्यमुक्तस्ततोविष्णुर्मुक्तनामासदोदितः । अबद्धत्वादमोक्षोपिदीप्यतेसौ रविर्यथेतिस्पष्टप्रमाणात्सतिवैलक्षण्येबद्धाबद्धव्यवस्थावक्तुंशक्यातदेवकथमित्यतउक्तं विरुद्धधर्मिणोरिति ५ तत्रप्रथममेकधर्मिणीत्युक्तंविवृणोति सुपर्णाविति पूपालनपूरण योरितिधातोःसुष्ठुपालकत्वात्पूर्णत्वाद्धरिःपाल्यत्वादपूर्णत्वाच्चजीवोपि सुपर्णइत्युच्यते अयंचविरुद्धधर्मेप्वंतर्भूयतेचिदानंदत्वेनसदृशौवृक्षसमानधर्मेदेहेस्थितत्वात्सखायौयदृच्छयाप्यदृष्टप्रेरकेच्छ या अथविरुद्धधर्मानाह एकइति पिप्पलंकर्मफलंजीवादन्योहरिर्निरन्नेभोगरहितोपिबलेनभूयान्पुष्टः । अदनानिमित्तबलंनास्तीत्यर्थः आत्मानंस्वंअन्यंजीवंचअंधोभगवद्विषयज्ञानविधुर.बद्धोभगवदधी नः । अनेनश्लोकद्वयेनद्वासुपर्णासयुजासखायेत्यातिश्रुतिर्विवृता । अत्रानश्नन्नन्योअभिचाकशीतीत्यादौयदशनाद्यभावेनहरेरवस्थानमुच्यते । तदुःखाद्यनशनमेवनतुसुखानदनमित्यादिसर्वं अनत्तृत्वंह

१ विष्णोर्मुक्तशब्दवाच्यत्वेदैवीमीमांसासूत्रंप्रमाणत्वेनोदाहरति ॥ नित्यशुद्धेति । अन्वयादित्यस्यशक्तितात्पर्यलक्षणसंबंधादित्यर्थः

रेर्दुःखानत्तृत्वादुच्यतेसदा । विषयान्विनापिपूर्णत्वात्स्वरूपानंदभोगिनः । सुखमन्त्येवहिसदासर्वत्रापिस्थितोविभुः । स्वादोरदनवद्योत्तिजीवोऽस्वाद्यपियत्सदा । अनारतंपारवश्यात्स्वाद्वत्तीतिततःश्रुति रिति । अस्वादुस्वादुवद्योत्तिजीवोनैवंजनार्दनः । अतोनात्तीतिवचनमश्नतोपिशुभसदेति । साशनानशनत्वेननरदेवौयथोदितौ । अत्तिविनाप्यदौर्बल्यात्तथानात्तिहरेर्भुजइति । बहुप्रमाणसिद्धोयमर्थःतदेवात्रोक्तम् । निरन्नोपिबलेनभूयानितीति । स्वयंत्वत्त्येवतथापिनादनानिबंधनंतस्यबलम् कुतः यत्रासुपर्णाअमृतस्यभागमनिमेषंविदथाभिस्वरांति । इनोविश्वस्यभुवनस्यगोपाःसमाधीरःपाकमत्रा विवेश । यस्मिन्वृक्षेमध्वदःसुपर्णानिविशंतेसुवतेचाधिविश्वे । तस्येदाहुःपिप्पलंस्वाद्वग्रेतन्नोन्नशद्यःपितरंनवेदेत्यादिवाक्यशेषात् । वृक्षेस्थित्वामध्वदःसुपर्णायस्मिन्ननश्नंति सुपर्णेअधिविश्वेसुपर्णाःनिविशं तेतदाधारत्वेनसुवते चतस्यैवसुपर्णस्य स्वादुपिप्पलंअन्यस्तुस्वादुवदश्नाति नस्वादुयावत्पितरंपरमात्मानंनवेदेति । सुपर्णौद्वौशरीरस्थौजीवश्चपरमस्तथा । पारवश्यादनाज्जीवस्तत्रात्तीतिश्रुतोश्रुतः । स्ववं शेनादनाद्विष्णुर्नात्तीत्यत्रापिसंश्रुतः । सएवाहिशुभस्यात्ताजीवोत्तास्येववेदनादितिवचनादत्रजीवपरमात्मानावेवोच्येते नसामान्यपक्षिणाविविज्ञायते सर्ववाअत्तीतितददितेरदितित्वंथस्यब्रह्मचक्षत्रंचोभे भवतओदनः अत्ताचराचरग्रहणात् । अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवचेतीत्यादेश्चअत्तृत्वस्यलिंगत्वेनोक्तत्वाल्लिंगस्योभयसप्रतिपन्नत्वेननिर्णयहेतुत्वाद्धरेर्नसर्वात्मनानत्तृत्वमत्रोच्यते । किंतुअशुभानत्तृ त्वेनानत्तृत्वश्रुतेःकृतार्थत्वेनप्रामाण्यसंभवाच्छ्रुतिशरणानामस्माकंनकापिक्षतिरिति । जीवोमुक्तोपिनोजीवान्परमात्मानमेवच । वेत्तिसर्वात्मनाविष्णुर्वेत्त्येकःपुरुषोत्तमः । तस्यप्रसादतःकिंचिद्ब्रह्माद्या अपिजानते । अन्यजीवोनपेक्ष्यैकोजानातितुचतुर्मुखः । समास्तेनतदन्येतुलेशज्ञानाःक्रमात्स्मृताइत्यनेनआत्मानमन्यंचसवेदेत्येतद्विवृतं सर्वज्ञत्वलिंगंहियैकनिष्ठंतदुक्तं सान्यहंवेदसर्वाणिनत्वंवेत्थपरंतपे त्यादि मुक्तेष्वतिव्याप्तमिदंलिंगमितिचेन्न । अज्ञाजीवास्तुकथ्यंतेमुक्ताअप्यल्पवेदनात् । ज्ञइत्येवोच्यतेनित्यंसर्ववेत्तृत्वतोहरिरितिवचनात् । अनाद्यविद्ययांधत्वंजीवस्ययदियोग्यता । प्रयत्नश्चानुकूलः

आत्मानमन्यंचसवेदविद्वानपिप्पलादोनतुपिप्पलादः ॥ योविद्ययांधःसतुनित्यबद्धोविद्यामयोयःसतुनित्यमुक्तः ७ देहस्थोपिनदेहस्थोविद्वान्स्वप्नाद्यथोत्थितः ॥ अदेहस्थोपिदेहस्थःकुमतिःस्वप्नदृग्यथा ८

स्यादंतवद्भवाविद्धन्नम् । नित्यमेवान्यथांधत्वमयोग्यामानुषादयः । बद्धत्वंसर्वजीवानांनियमान्नित्यमेवतु । बद्धत्वंविष्णवधीनत्वमंधत्वंतददर्शनम् । अतःक्वचिदनित्यत्वमंधतायाभविष्यति । मुक्तस्यापितुबद्धत्वमस्तियत्सहरेर्वशः । मुक्ताख्याद्दुःखमोक्षात्स्याद्बद्धाख्याहर्यधीनतः । नित्यबद्धाअपिततोमुक्तादुःखविमोक्षतः । नित्यमुक्तस्त्वेकएवहरिर्नारायणःप्रभुः । तत्तंत्रत्वात्स्वतंत्रत्वंतस्यैकस्यनचापरइत्यनेनसोपपत्तिकेन योविद्ययांधःसतुनित्यबद्धोविद्यामयोयःसतुनित्यमुक्तइत्येतद्विवृतं शतंसहस्राणिचतुर्दशेहपरागतिर्जीवगणस्यदैत्य । आरोहणंतत्कृतमेवविद्धिस्थानंतथानिःशरणंचतेषामितिजीवगणस्यगतिबाहुल्यप्रवेशनिर्गमनप्रतीतेर्नित्यमुक्तत्वंहरेर्लिंगंनहरेरन्यत्रगतमतःसएवनित्यमुक्तः ननुमुक्तैःसेव्यत्वेपुक्तमुक्तंतत्कथमितिचेन्न । कृष्णोमुक्तैरिज्यतेवीतमोहैःमुक्तानांपरमागतिरितिवचनात् तर्ह्येषांकदानुमुक्त्यपेतिचेन्न सर्वात्मनापंचदशकलानांत्यागानंतरंतदाख्या तदुक्तं कलाःपंचदशत्यक्त्वाश्वेतद्वीपनिवासिनां । मुक्ताख्येतिपश्चादपिस्वतन्त्राइत्यतोविष्णवधीनास्तइतियत्प्रसादात्कलामोक्षःतदधीनत्वमस्तु नान्याधीनतास्त्यतःस्वाधिकानांवशोस्थितताइति अन्याधीनत्वादधिकंदुःखंनास्तीत्यतउक्तम् नचास्मादधिकंकिंचित्सुखमस्तिहरेर्विनेति अतोनित्यमुक्तत्वंचस्वतंत्रत्वंनान्यनिष्ठमित्युपसंहरति नित्यमुक्तःसएवैकःस्वतंत्रःसंयतःसदेति ६ ७ ननुउभयोर्देहस्थत्वाविशेषादेकस्यमुक्तत्वेनदुःखानदनंइतरस्यबद्धत्वेनदुःखादनकथमित्याशंक्याविद्वत्वाविद्वत्त्वेकारणमितिभावेनाह देहस्थोपीति विद्वान्नित्यनिर्दुःखानंदानुभवःसर्वज्ञःश्रीहरिर्देहस्थोपिदेहाभिमानाभावान्नदेहस्थोपितत्रपदुःखंनात्तीति कथंस्वप्नादुत्थितःपुरुषस्तद्गतदुःखादिकंनात्तितथेति कुमतिरविद्वान्जीवोदेहाभिमानित्वादेहादन्योपिदेहस्थोयथास्वप्नदृक्तद्गतदुःखादिकंभुंक्तेतथेति ॥ ८ ॥

एतदेवविवृणोति इंद्रियैरिति गुणैर्हरेरप्रधानैर्जीवैः श्रोत्रादींद्रियैः गुणेष्वप्रधानेष्वर्थेषु विषयेषु गृह्यमाणेषु सत्सु यस्त्वविक्रियः कृशोऽहंछिन्नोऽहमित्यादिविकाररहितो विद्वान् परमात्मा सनाहंकुर्यादित्यन्वयः शरीरस्थोपि विद्वत्त्वान्न विष्णुर्बद्ध्यते क्वचित् । अविद्वत्त्वात्तु तत्रैव देहे जीवस्तु बद्ध्यते । स्वप्नदृग्यदि मे जीवाः हरिः स्वप्नोऽस्थितो यथा । सदात्मनो विहीनोपि ज्ञापनार्थमुदीर्यते इत्यनेन आत्मनोवशगैर्जीवैरात्मनो वशगेषु च। दुःखेषु गृह्यमाणेषु मन आदिभिरिंद्रियैः । अहं दुःखीति नैवेशोऽह्यहंकुर्यात् परः पुमान् । जीवगन्धेन तद्दुःखं विष्णुः पश्यति सर्वदा। अतो न दुःखभाग्विष्णुः स्वातंत्र्यात्पुरुषोत्तमः । पारतंत्र्यादहं दुःखीत्येवं जीवः प्रपश्यति । तस्मात्तद्दुःखभाक्कोऽपि यावदीशः प्रसीदतीति अनेन चानयोः श्लोकयोरर्थो विवृत इति जीवगन्धेनेति तद्दुःखं विष्णुः पश्यति सर्वदेत्यनेन अभिचाकशीतीत्यस्यार्थः सूचित इति ९ जीवस्याहं स्वमतिरपि अभिमान एवानर्थप्रवाहहेतुरित्याह दैवेति दैवाधीनेस्मिन् शरीरे वर्तमानोऽबुधोऽज्ञो जीवः अस्मिन्कर्मण्यहं गुणभूतोऽस्वतंत्र ईशाधीनः इति भाव्येन भावनीयेन कर्मणा अहमेव कर्तास्मीति मन्यमानस्तत्र शरीरे नितरां बध्यते इति अस्वतंत्रः स्वतंत्रोऽस्मीत्येवं जीवः प्रभावयन् बध्यते हीशकोपेन राजभावेन भृत्यवदिति वचनात् स्वातंत्र्यकर्तृत्वाभिमानोऽत्र विवक्षित इति अप्राप्यस्वातंत्र्यदैवाधीन इत्यनेन सूचितम् १० कालोपि शरीरशीर्णतामीरयतीति शरीरस्य कालाधीनत्वं वर्तहि कथं कारं न बध्यत इति तत्राह एवमिति एवं शयनादिषु स्वस्य स्वातंत्र्याभिमानेन बध्यमानस्तत एवापारदुःखमनुभुंजन् विद्वांस्तु विरक्तः यत्र तत्र हरिः स्वातंत्र्यं विद्वांस्तत्र तत्र शरीरयात्रार्थं गुणान् विषयानाददन् स्वीकुर्वंस्तथा कर्तृत्वाभिमानी वन्न बध्यत इत्यन्वयः गुणान् पुण्यलक्षणानाददन् उपार्जयन्निति वा भेदज्ञानिन एवबद्धत्वं नाभे

इंद्रियैरिंद्रियार्थेषु गुणैरपि गुणेषु च ॥ गृह्यमाणेष्वहंकुर्यान्न विद्वान्यस्त्वविक्रियः ९ दैवाधीने शरीरेऽस्मिन्गुणभाव्येन कर्मणा ॥ वर्त्तमानोऽबुधस्तत्र कर्त्तास्मीति निबद्ध्यते १० एवं विरक्तः शयनआसनाटनमज्जने ॥ दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ११ नतथा बद्ध्यते विद्वांस्तत्र तत्राददन्गुणान् ॥ प्रकृतिस्थोप्यसंसक्तो यथा खं सविताऽनिलः १२ वैशारद्येक्षयाऽसंगशितया छिन्नसंशयः ॥ प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते १३ यस्य स्युर्वीतसंकल्पाः प्राणेंद्रियमनोधियाम् ॥ वृत्तयः स विनिर्मुक्तो देहस्थोपि हि तद्गुणैः १४ यस्यात्मा हिंस्यते हिंस्रैर्येन किंचिद्यदृच्छया ॥ अर्च्यते वा क्वचित्तत्र न तु विक्रियते बुधः १५ न स्तुवीत न निंदेत कुर्वतः साध्वसाधु वा ॥ वदतो गुणदोषाभ्यां वर्जितः समदृङ्मुनिः १६

दज्ञानिन इत्यनेनोच्यते इति किं न स्यादिति चेन्न नित्यबद्धोपि जीवोऽयथात्मनो नित्यबद्धताम् । विष्णुना नित्यमुक्तत्वं तस्य वेत्ता समुच्यते । तदधीनत्वबंधे तु विद्यमानेप्यदुःखभाक् । देहस्थोपि न दुःखी स्याद्यवत्कि मुमुक्षिग इति वचनात् जीवभिन्नविष्णुज्ञानाद्बंधमोक्ष इत्यस्योपपत्तेः । एतद्ध्यानफलमाह प्रकृतिस्थोपीति असंगेन वैराग्येण शितया तेजितया वैशारद्या विशारदमूलया विष्णोरनुग्रहादुत्पन्नया ईक्षया अपरोक्षज्ञानेन छिन्नसंशयो तत एवासंसक्तः प्रकृतिस्थः शरीरस्थोपि ज्ञानी स्वप्नात् प्रतिबुद्ध इव नानात्वान्मिथ्याज्ञानान्निवर्तत इत्यन्वयः । नानात्वमिति वैमिथ्याज्ञानं कुत्रचिदुच्यते । वस्तुयाथात्म्यतोन्यत्वाज्ज्ञानस्योज्झो विवक्षित इति वचनात् नानात्वशब्दस्य मिथ्याज्ञानवाचित्वस्य प्रसिद्धेः उक्तं युक्तम् ११ १२ १३ वाय्वाकाशयोः सर्वत्र सत्त्वे पि तन्निमित्तलेपान्वयो यथा नास्ति तथेति पूर्वोक्तजीवन्मुक्तावस्थामेव विशदयति यस्येति यस्य प्राणेंद्रियमनोधियां चेष्टादिलक्षणा वृत्तयः वीतसंकल्पाः फलानुसंधानरहिताः स्युः स देहस्थोपि तद्गुणैर्देहधर्मैर्निर्मुक्तो नारिकेलकपालमुक्तांतस्थनारिकेलवदित्यन्वयः १४ यावच्छरीरापातं जीवन्मुक्तः कथं कारं तिष्ठतीत्यत्राह यस्येति आत्मा देहः मनो वा हिंस्रैर्हिंसाशीलैः प्राणिभिः येन केनचित्केन चिद्यदृच्छया प्राप्तेन चंदनादिना वा तत्र तस्यामवस्थायां स बुधः न विक्रियते इति १५ एतद्विशदयति न स्तुवीतेति कुर्वतः पुरुषान् साध्वादि गदतो वा गुणदोषाभ्यां अल्पेन तुच्छेन गुणेन दोषमात्रेण च वर्जितो न तु गुणमात्रेण वर्जित इत्यर्थः दोषश्चैव गुणश्चाभावी शतं त्रीनमेव शावित्यादिवाक्यविरोधः सर्वगुणवर्जित इति अंगीकार इति भावः १६

तन्मतंकथमत्राह नकुर्यादिति आत्मारामोमुनिःसाधुकुर्याद्वदेद्ध्यायेच्चअसाधुनकुर्यान्नवदेन्नध्यायेच्चशुभजीवानुद्दिश्येतिशेषः अतीतानागतज्ञानीत्रैलोक्योद्धरणक्षमइत्यादेः साधुनकुर्यादित्यर्थोनोप पद्यतेइति आत्मारामइत्यत्रऽऽत्मशब्देनपरमात्माएवोच्यतेनचीवाद्यन्यतमः १७ तदेकनिष्ठेनभक्त्याधीतवेदादिशब्दराशिःफलवान्स्यादन्यथानिष्फलएवेत्याह शब्देति परेब्रह्मणिनानिष्णीया न्निष्ठितोनियतोनस्यायादितर्हितस्यपुंसःश्रमःवेदाध्ययनायासोभ्रममज्ञानंतमासिपरिभ्रमणंवाफलमस्येतिभ्रमफलःस्यात् अधेनुमदोग्ध्रींगांरक्षतइवयथातथास्यतदाज्ञानपरिभ्रमएवावशिष्यते नतुजीव नफलमितिभावः यद्वाभ्रमफलःमयत्नफलःश्रमःकायक्लेशः ।स्थितिशब्देननियमःक्वचिज्जीवनमुच्यते । उत्थितत्वंक्वचिच्चैवक्वचिद्रातिविरोधितेति अत्रनिष्णातःनिष्णीयादितिशब्देननियमउच्यतइतिभावः अधेन्वाचरतिमाययैषवाचंशुश्रुवाँअफलामपुष्पामितिश्रुतेः १८ एतमेवार्थंदृष्टांतबाहुल्येनद्रढयति गांदुग्धेति पराधीनंपरप्रेष्यंकुर्वतंदेहअतीर्थीकृतांविषयोपरक्तांकृष्णगोषुसपन्नक्षीरतमा सतीसासती साध्वीपतिव्रता परान्नःपरपिंडादःपरजातःपरैधितः सोयंमनुष्यलोकःपुत्रेणजय्यः अनपत्यंपरंमन्येकदपत्याच्छुचांपदात् । नार्थस्यधर्मैकांतस्यकामोलाभायहिस्मृतः । वाचस्तुगोविंदगुणस्तवेफलमि त्यादेः यस्त्वेवंविधंगवादिकंरक्षतिसदुःखदुःखी दुःखंधत्तमासिनित्यदुःखानुभवोवर्ततइत्यर्थः १९ अन्यदेवतायसंगपरवाचोरक्षणफलंकिंनस्यादत्राह यस्यामिति यस्यजगतःस्थित्युद्भवप्राणनिरोधलक्ष णंकर्म दुग्धदोहांतुगांरक्षेत्क्षीरमात्रप्रयोजनः । यथातद्वद्धरेरन्यवाचोधारणमिष्यतेइतिवचनादन्यविषयवाचानित्यानंदलक्षणमोक्षफलंनस्यादतोमुमुक्षुःतन्नकुर्यादतोतत्त्वजिज्ञासाऽनर्थकरीतिमज्जिज्ञा

नकुर्यान्नवदेत्किंचिन्नध्यायेत्साध्वसाधुवा ॥ आत्मारामोनयावृत्त्याविचरेज्जडवन्मुनिः १७ शब्दब्रह्मणिनिष्णातोननिष्णीयात्परेयदि ॥ श्रमस्तस्यश्र मफलोह्यधेनुमिवरक्षतः १८ गांदुग्धदोहामसतींचभार्यांदेहंपराधीनमसत्प्रजांच ॥ वित्तंत्वतीर्थीकृतमंगवाचंहीनांचयोरक्षतिदुःखदुःखी १९ यस्यांनमे पावनमंगकर्मस्थित्युद्भवप्राणनिरोधमस्य ॥ लीलावतारेहितकर्मवास्याद्वंध्यांगिरंतांबिभृयान्नधीरः २० एवंजिज्ञासयापोह्यनानात्वभ्रममात्मनि ॥ उपारमेतविरजंमनोमय्यर्प्यसर्वगे २१ यद्यनीशोधारयितुंमनोब्रह्मणिनिश्चलम् ॥ मयिसर्वाणिकर्माणिनिरपेक्षःसमाचर २२ श्रद्धालुर्मेकथाःशृण्वन्सु भद्रालोकपावनीः ॥ गायन्ननुस्मरन्कर्मजन्मचाभिनयन्मुहुः २३ मदर्थेधर्मकामार्थानाचरन्मदपाश्रयः ॥ लभतेनिश्चलांभक्तिंमय्युद्धवसनातने २४ स त्संगलब्धयाभक्त्यामयिमांसउपासते ॥ सवैमेदर्शितंसद्भिरंजसाविंदतेपदम् २५ उद्धवउवाच ॥ साधुस्तवउत्तमश्लोकमतःकीदृग्विधःप्रभो ॥ भक्तिस्त्व य्युपयुज्येतकीदृशीसद्भिरादृता २६

सैवपुरुषार्थसाधनं तद्भक्तमुद्दिश्यनकुर्यान्नवदेदितिविधीयतेतत्त्वजिज्ञासुरिति २० उपसंहरति एवमिति वस्त्वयथार्थज्ञानंनानात्वभ्रमभेवतत्त्वजिज्ञासयापोह्यनिरस्यउपारमेतप्रवृत्तिमार्गादितिशेषः ना नात्वभ्रमोभेदभ्रमइतिमतं जीवस्येशत्वविज्ञानंजीवानामेकतावथा । ईशस्यबहुताज्ञानमीशस्यानीशतातथा ॥ जगतोऽसत्यताज्ञानंनानात्वभ्रमउच्यते ॥ इत्यनेनाविरुद्धत्वा भ्रमाद्यनुभूषुभिरिति २१ नन्वस्तुजीवन्मुक्तस्यसमर्थस्यहरौनिरंतरंमनोनिधायोपास्तिस्तदितरस्यमुमुक्षोरुपासनोपायःकथमितितत्राह यदिति कृतानिमयिसमर्प्यकुर्वाणानिमाद्विषयत्वेनसमाचर २२ निष्कामत्वेनमामुद्दिश्य कर्मकुर्वाणस्येत्थंभावमाह श्रद्धालुरिति २३ मत्कथाश्रवणादिनाकिंफलंस्यादित्यतउक्तं लभतइति निरंतरस्मृतिफलांभक्तिंलभते २४ सापिसत्संगलब्धाचेत्भगवदपरोक्षज्ञानमुत्पद्यतेनस्वयोग्यमुक्तिम पिजमयतीत्याह सत्संगेति पदंवैकुंठादिस्थानम् २५ सद्भिरितिप्रस्तुतसल्लक्षणज्ञोप्युद्धवोलोकोपकारायतल्लक्षणंपृच्छति साधुस्तवइति साधुत्वासाधुत्वयोर्मनःशुद्ध्यशुद्धिनिमित्तत्वात्साधुत्वेनवर्तमानानां पुंसांमनःकीदृग्विधंभवतिसाधवःकिंलक्षणाइत्यर्थः कीदृशीकिंलक्षणाभक्तिस्त्वय्युपयुज्येतत्वदुत्तमप्रसादयोगजननीसद्भिरादृतासंभाविता आदृतौसादराचिंतावित्यमरः २६

एतस्सद्भक्तयोर्लक्षणम् २७ स्पष्टार्थस्यदुरवबोधत्वाद्दुष्परिहरइतिनेत्याह त्वंब्रह्मेति स्वेच्छयोपात्तंस्वीकृतंपृथग्वपुःशोभनाकारंवसुदेवादिशरीरंयेनसःस्वेच्छोपात्तपृथग्वपुः शुभाकारेतनौवपुरितियादवः
नित्यानंदशरीरोपिवसुदेवादिदेहगः ॥ प्रदर्शयेज्जनिंस्वस्यानित्यंदेहादिवर्जितः ॥ वसुदेवादिदेहेषुप्रवेशस्तस्यभण्यते ॥ देहोपादानमितितुनह्यन्योदेहइष्यते ॥ अन्याभिमतदेहेषुप्रविष्टःसर्वदाहरिः ॥
नान्यानभिमतोदेहोविष्णोरस्तिकदाचन ॥ अतोऽशरीरोभगवान्पुत्रताभिमतिस्तुया ॥ वसुदेवादिकानांतुसैवमिथ्यामतिर्भवेत् ॥ अन्याहंभावयुग्देहएवासौहरिरास्थितः ॥ नतदन्येषुदेहेषुक्वाचित्तस्यप्रवे
शनम् ॥ मम्पुत्रस्त्वयामितिभ्रामणायपदाहरेः ॥ वसुदेवादिदेहेषुतनूपात्तिस्तुसागतिः ॥ अनुपात्तशरीरस्यतनूपात्तिरितीष्यते ॥ तद्देहंपितृदेहत्वेउपावृत्तेयतोहरिरितिएतदस्मिन्नर्थेमानम् २८ भगवा
न्सल्लक्षणंवक्तीत्याह भगवानिति सर्वदेहिनामकृतद्रोहःअनवद्यआत्मामनोयस्यसतथा २९संक्षिप्तंकिंचनमश्नयोग्यंधनंनविद्यतेइत्यकिंचनः सकोपेकिंचनव्यर्थेमुधेतियादवःअनीहोनिषिद्धाचरणवर्जितः
वैष्णवधर्मेस्थिरःनिश्चलःअहमेवशरणंयस्यसमच्छरणःमुनिःमद्गुणमननशीलः ३० अप्रमत्तोविहिताचारेप्रमादरहितः गभीरात्माअनवगाह्यमनोगतिः आपदिधृतिमान् जिताःषट्कामादिगुणाः षाडि
द्रियविषयावायेनसतथा अमानीआत्मन्यविद्यमानगुणाभिमानरहितःमानदःज्ञानोपदेष्टा कल्पःविहितक्रियाकरणनिपुणःकृपालुत्वंमनोधर्मः कारुणिकत्वंकायिकधर्मइतिपृथगुक्तं कविःसर्वज्ञः

एतन्मेपुरुषाध्यक्षप्रपन्नायचकथ्यताम् २७ त्वंब्रह्मपरमंव्योमपुरुषःप्रकृतेःपरः ॥ अवतीर्णोसिभगवन्स्वेच्छोपात्तपृथग्वपुः २८ श्रीभगवानुवाच ॥
कृपालुरकृतद्रोहस्तितिक्षुःसर्वदेहिनाम् ॥ सत्यसारोनवद्यात्मासमःसर्वोपकारकः २९ कामैरहतधीर्दांतोमृदुःशुचिरकिंचनः ॥ अनीहोमितभुक्शांतः
स्थिरोमच्छरणोमुनिः ३० अप्रमत्तोगभीरात्माधृतिमाञ्जितषड्गुणः ॥ अमानीमानदःकल्पोमैत्रःकारुणिकःकविः ३१ आज्ञायैवगुणान्दोषान्मयादिष्टा
नपिस्वकान् ॥ धर्मान्संत्यज्ययःसर्वान्मांभजेत्सचसत्तमः ३२ ज्ञात्वाज्ञात्वाथयेवैमांयावान्यश्चास्मियादृशः ॥ भजंत्यनन्यभावेनतेमेभक्ततमामताः ३३
मल्लिंगमद्भक्तजनदर्शनस्पर्शनार्चनम् ॥ परिचर्यास्तुतिप्रह्वगुणकर्मानुकीर्त्तनम् ३४ मत्कथाश्रवणेश्रद्धामदनुध्यानमुद्धव ॥ सर्वलाभोपहरणंदास्ये
नात्मनिवेदनम् ३५ मज्जन्मकर्मकथनंममपर्वानुमोदनम् ॥ गीततांडववादित्रगोष्ठीभिर्मद्गृहोत्सवः ३६

३१ सामान्यलक्षणमुक्त्वाविशेषलक्षणमाह आज्ञायेति चशब्दएवार्थे योमयावेदादिरूपेणादिष्टान्गुणान्दोषान्अपिआज्ञायसम्यग्ज्ञात्वैवस्वकान्स्वविहितान्धर्मान्भागवतसंज्ञान्मायिसंत्यज्यसमर्प्य
मांभजेत्सएवसत्तमइत्यन्वयः ३२ भक्तेरनेकविधत्वेपिउत्तमोत्तमायाःशुश्रूषितत्वेनपृष्टत्वात्तंप्रश्नंपरिहरति ज्ञात्वेति अथसतांलक्षणकथनानंतरमात्यंतिकभक्तलक्षणमुच्यते यद्वा शास्त्रगुरूपदेशतोभ
गवन्माहात्म्यंज्ञात्वाथचाविशेषेताज्ञात्वेतिवीप्सयामाहात्म्यज्ञानेनपुनःपुनर्विशेषंद्योतयति तदुक्तं ज्ञात्वादिममाहात्म्यंतत्रोत्सुकतयापुनः । विशेषाच्चविशेषेणज्ञात्वामामश्नुतेधिकमितिपरिमाणतो
यावानस्मिस्वरूपतोयोस्मिलक्षणतोयादृशोस्मीतितत्त्वेनयेऽनन्यभावेनात्युत्तमभक्त्यामांचैवंभजंतितेभक्ततमाःनिरतिशयभक्तामतानानात्वेनज्ञाताइत्यन्वयः अत्रतमप्प्रत्ययेनभक्तानांबाहुविध्यप्रकाशने
नभक्तेरपिवथात्वंसूचयतीति ३३ इदानींसर्वसाधारणंभक्तिलक्षणमाह मल्लिंगेति अत्रकर्तव्यपदमध्याहृत्यान्वेतव्यंविधिप्रकारत्वात् सर्वलाभोपहरणंसर्वलाभस्यद्रव्यस्योपहरणं हरावर्पणंदास्येन
सहात्मनिवेदनमात्मसमर्पणं यद्वा दास्येनसहात्मनिमनसिनिवेदनं ३४ ३५ पर्वानुमोदनंउत्सवानुज्ञानंउत्सवंदृष्ट्वाहर्षोवा ३६

३७ अर्चाप्रतिमा उद्यमःकरणादौप्रयत्नःउद्यानोपवनादिकर्मण्युद्यमोवा सद्मनिसंमार्जनोपलेपाभ्यांउद्यमोवा ३८ मद्ग्रहेमपत्नगृहशुश्रूषणंतदमायया सेकमंडलवर्तनैःएकेनमुख्येनमंडलेनसहितैःअवांतरमंडलकरणैःकर्तव्यमितिशेषः सेकमंडलवर्तनैरितिकेचित्पठंति चंदनादिजलप्रोक्षणसेकःमंडनमलंकारः वर्तनंप्रदक्षिणवर्तनं विशेषजीवनंप्रोक्तंवर्तनंगमनंतथेतिच ३९ मेनिवेदितंदीपावलोकंनोपयुंज्यात्स्वप्रयोजनायनस्वीकुर्यात् ४० हविराद्यर्पणेसुष्ठूपायमाह यद्यदिति आनंत्यायअनश्वरफलायमोक्षायेत्यर्थः अनंतंवैष्णवंक्षेत्रमितिस्मृते ४१ अधिकारिणांयोग्यतायाअनेकविधत्वेनफलविशेषायमदर्चनाधिष्ठानंचोपदिशामीत्याह सूर्यइति हेभद्र ४२ तत्तत्साधनंचार्चनार्थमाह सूर्येत्विति गोष्ठेस्थितागा यवसादिनापूजयेदितिशेषः ४३ बंधुर्जामाताऽयमिति सत्कृत्यासत्कारेण हृदिखेहृदयाकाशेध्याननिष्ठयाउत्कृष्टध्यानेन वायौमुख्यप्राणेमुख्यधियासर्वदेवोत्तमोवायुरितिज्ञानेन तदुक्तं सर्वदेवोत्तमोवायुरितिज्ञानान्नचापरं । प्रियमास्तिहरेःकिंचित्तथावायोर्हरेर्विदइति हेररुत्तमत्वविदःवायोरपीत्यर्थः । कुतः भारतीवायुलक्ष्मीनामात्मनश्चयथाक्रमं आधिक्यज्ञानतोविष्णुःसर्वतःसंप्रसीदतीतिवचनात् वायुर्भीमोभीमनादोमहौजाः इत्यनेनापिहेतुपू

यात्राबलिविधानंचसर्ववार्षिकपर्वसु ॥ वैदिकीतांत्रिकीदीक्षामदीयव्रतधारणम् ३७ ममार्चास्थापनेश्रद्धामम सद्मनिचोद्यमः ॥ उद्यानोपवनाक्रीडपुरमंदिरकर्मणि ३८ संमार्जनोपलेपाभ्यांसेकमंडलवर्तनैः ॥ गृहेशुश्रूषणंमह्यंदासवद्यदमायया ३९ अमानित्वमदंभित्वंकृतस्यापरिकीर्तनम् ॥ अपिदीपावलोकंमेनोपयुंज्यान्निवेदितम् ४० यद्यदिष्टतमंलोकेयच्चातिप्रियमात्मनः ॥ तत्तन्निवेदयेन्मह्यंतदानंत्यायकल्पते ४१ सूर्योऽग्निर्ब्राह्मणोगावोवैष्णवःखंमरुज्जलम् ॥ भूरात्मासर्वभूतानिभद्रपूजापदानिमे ४२ सूर्येतुविद्ययात्रय्याहविषाग्नौयजेतमाम् ॥ आतिथ्येनतुविप्राग्र्येगोष्ठेगायवसादिना ४३ वैष्णवेबंधुसत्कृत्याहृदिखेध्याननिष्ठया ॥ वायौमुख्यधियातोयेद्रव्यैस्तोयपुरस्कृतैः ४४ स्थंडिलेमंत्रहृदयैर्भोगैरात्मानमात्मनि ॥ क्षेत्रज्ञंसर्वभूतेषुसमत्वेनयजेतमाम् ४५ धिष्ण्येष्वेतेषुमद्रूपंशंखचक्रगदांबुजैः ॥ युक्तंचतुर्भुजंशांतंध्यायन्नर्चेत्समाहितः ४६ इष्टापूर्तेनमामेवंयोयजेतसमाहितः ॥ लभतेमयिसद्भक्तिंमत्स्मृतिंसाधुसेवया ४७ प्रायेणभक्तियोगेनसत्संगेनविनोद्धव ॥ नोपायोविद्यतेसध्र्यक्प्रायणंहिसतामहम् ४८ अथैतत्परमंगुह्यंशृण्वतोयदुनंदन ॥ सुगोप्यमपिवक्ष्यामित्वंमेभृत्यःसुहृत्सखा ४९ इतिश्रीभा०महापुराणेएकादशस्कंधेभगवदुद्धवसंवादेएकादशोऽध्यायः ११

र्वकत्वेनवायोःसर्वदेवोत्तमत्वादुक्तएवार्थः । तस्माद्वायुरेवव्यष्टिर्वायुःसमष्टिरयंपुनःमृत्युंजयतियएवंवेदेत्यनेनचवायुज्ञानस्यापमृत्युंजयत्वोक्तेश्च । पंचभूतमनोबुद्धिरुद्राणांमातिदेहकं । बाह्यतश्चापिनेतृत्वाद्वायुर्व्यष्टिःसमष्टिकइतिवचनेनवायोर्व्यष्टिंसमष्टिंचसम्यक्ज्ञात्वाममोयुंज्यात् द्रव्यैःपुष्पैः ४४ मंत्रहृदयैर्नमोंतैर्मंत्रैः आत्मनिस्वशरीरेमनसिवाआत्मानमंतर्यामिणं क्षेत्रज्ञंजीवांतर्यामिणंसर्वभूतेषुसमत्वेनएकप्रकारेणविकारमंतरेणस्थितंभोगैःस्रग्गंधादिधनैः भोगोराज्येधनेसौख्येइति । आत्मशब्देनात्रजीवःकिंनस्यात्तस्यपूजनस्यतंत्रेष्वविहितत्वात् । क्षेत्रज्ञःपुरुषोह्यात्मासंसारीचेतनोमतइत्याभिधानाच्चेतिचेन्न आत्मनिस्थोहरिःपूज्यआत्मनामाशनादिकैः । तत्संबंधादात्मशब्दोजीवस्याप्युपचारतइतिवचनादात्मामुख्योहरिरेवेतिज्ञायते । तत्रविधानस्यहरेरधिष्ठानत्वेनपीठार्चनवत्तदर्चनोपपत्त्यासार्थकत्वात् ४५ एतेष्वधिष्ठानेषुध्यानप्रकारमाह धिष्ण्येष्विति धिष्ण्येषुस्थानेषु ४६ पूजाफलमाह इष्टेति ४७ प्रायेणेत्यवधारणंसांख्येनयथार्थज्ञानेन सतांप्रकर्षेणायनमाश्रयः ४८ उत्तराध्यायेवक्ष्यमाणार्थंप्राशस्त्यंकथयति अथेति वक्तव्येहेतुमाह भृत्यइति। ज्ञानेनभर्तुर्योग्यःसुपूजितहृन्मनोयस्यसुहृत् आपदिहितकर्तृत्वात्सखा ४९ इतिश्रीभा०म०एकादश०वि०टी०एकादशोऽध्यायः ११

भगवद्गुणोत्कर्षज्ञानपूर्विका भक्तिरेव परमपुरुषार्थांतरंगमितीममर्थं समर्थयते तत्रादौ गुणोत्कर्षज्ञानाननुरक्तयोगादीनां विवक्षितपुरुषार्थसाधनत्वं न भवतीत्याह नरोधयतीति योगोप्यादरोधयति वशी करोति त्यागो दानं यथा मयि संगः गुणसंप्रीतिर्भक्तिपूर्विका सर्वपूर्णगुणत्वमतिर्यथा मामवरुंधे वशीकरोति तथा योगादयो न रोधयंति संगस्तु गुणसंप्रीतिर्गुणवत्त्वेति निश्चयात् । स चेद्दूरो भवेत्तेन मुच्य तेनात्र संशयः । अपरोक्षदर्शहेतुर्भवेत्तस्या वादिक्षमः । अन्यथा सुखभागेव मद्दृशिर्मोक्षकारिणमितिवचनादुक्त एवार्थः न तु मंत्रमात्रम् १ २ भगवानुक्तमर्थं प्रख्यापयति मत्संगेनेति दैतेयाः प्रह्लादयः बहवो मत्संगेन मत्पदं प्राप्ताः त्वाष्ट्रो वृत्रः अवंतिको ऽवधूतो भिक्षुः यातुधानाः इत्याद्युक्तं शृगग्राहिकतया दर्शयितुं विभीषण इत्यादि पुनर्वचनं वणिक् तुलाधारः मयो नाम शूद्र. तेगोप्यादयो यन्मां प्राग्[illegible] ताइत्यन्वयः ३ ४ ५ ६ साधनं वेनात्वामुपागतास्ते सर्वे किं नाम कुर्वतीति तत्राह मत्संगादिति गुणसंप्रीतेरपि न वेदादिभ्य उत्पन्नेत्याह नाधीतेति ७ तर्हि केनेत्यत्राह केवलेनेति । केवलेन निर्दोषेण भावेन भक्तियोगेन केवलेनेति विशेषणाद्द्वेषयुक्ता भक्तिर्मुक्तिसाधनम् । ज्ञात्वापि हरिं विद्वेषी तमो यातिन संशय इति वचनात् । भावेनापरोक्षज्ञानोत्पादकस्वभावेनेति विशेषणाद्विशेषरू पाज्ञानेपि मोक्षो नियतः विशेषरूपस्याज्ञोपि गुणवत्त्वेति निश्चयः । गुणसंप्रीतिमान्नित्यं तं दृष्ट्वा मुक्तिमेष्यतीत्युक्तेः । ज्ञानोत्पत्तेः पूर्वमपि भगवल्लीलाद्यनुकारेण परमानंदः स्यादित्यतो भावेनेति । अथवा सुखभा

श्रीभगवानुवाच ॥ नरोधयति मां योगो न सांख्यं धर्म एव च ॥ न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणाः १ व्रतानि यज्ञाश्छंदांसि तीर्थानि नियमा यमाः यथावरुंधे मत्संगः सर्वदुःखापहो हि माम् २ मत्संगेन हि दैतेया यातुधाना मृगाः खगाः ॥ गंधर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ३ विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोंत्यजाः ॥ रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन्युगेनघ ४ बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः ॥ वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ५ सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः ॥ व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथापरे ६ तेनाधीतश्रुतिगणा नोपासितमहत्तमाः ॥ अव्रतातप्ततपसो मत्संगान्मामुपागताः ७ केवलेन हि भावेन गोप्यो गावः खगा मृगाः ॥ येन्ये मूढधियो नागाः सिद्धा मामीयुरंजसा ८ यं न योगेन सांख्येन दानव्रततपोध्वरैः ॥ व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ९ रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ॥ विगाढभावेन न मे वियोगतीव्राधयोन्यं ददृशुः सुखाय ताः १०

गेव स्याद्यावद्दर्शनोपगम इति स्मृतेः ८ भक्तिरहितं ज्ञानमपि न मत्प्रापकं किमुतान्यत्साधनजालमिति भावेनाह यमिति । यं मां राहुवधयत्नवानपि । हरिसंगविहीनस्तु हरेर्दर्शनवानपि । न मुच्यते खिलज्ञोपि तमो यातिविनिश्चयात् । गुणैरन्यैर्विहीनस्तु तद्भक्तोप्यापि सक्रमात् । संगवान्सुखभागेव स्याद्गुणैर्मुक्तिमेति वा । स्वभक्तसंगहीनस्य व्युत्क्रमात्संगिनोपि वा । स्वसंगविघ्नकृद्विष्णुस्तत्सज्जे तेषु तत्र चेति । अनेन भगवद्भक्तेस्तद्भक्तभक्तेरन्वयव्यतिरेकौ दर्शिताविति ध्वनितामित्यनेन श्लोकेन ज्ञायते । गोपिकाद्यादिवंगत्वा हरिं ज्ञात्वा यथातथं । परं पदं ययुः पूर्वसंगादेव सुमोचिता इति वचनाद्भक्तिजनितज्ञानेन मुक्तिमाप्नोति न केवलज्ञानेनेत्यभिप्रायेण न सांख्येनेत्युक्तम् । उपलक्षणमेतत् दानादिष्वप्यनुसंधेयमेतत् । श्रोतव्यं च श्रुतं चैव वक्तव्यं कार्यमेव च । निवर्त्यं च हरेः पूजेत्येवं कुर्यान्न चाक्रमात् । एवकर्तातु संन्यासी सर्वोत्सर्गाद्धरेः स्मृतः । अन्यथा नैव संन्यासी निष्क्रियोपि शिलायथेत्येवं लक्षणवान् संन्यासी न तु शिलावन्निष्क्रिय इत्यभिप्रेत्य वेणुमात्रभृत्संन्यासी न मामाप्नोतीति । किंच नाहं कर्ता तु सर्वस्य कर्तैको विष्णुरव्ययः । इति विज्ञातु संन्यासी नान्यथा तु कथंचन । मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वर इति लक्षणांतरवानेव संन्यासी न रक्तपटधारीत्यर्थः ९ गोपीनामपि भक्तिरपरोक्षज्ञानांतरंगा न तु रतिनिमित्तेति प्रकटयितुं वक्ति रामेणेति नागो[illegible]मत्तोन्यद्वस्तु सुखाय न ददृशुरित्यन्वयः १०

अत्रहेतुमाह यासामिति । ताःक्षपाः ११ आत्मानं । स्वस्वरूपम् । अदःस्वर्गमिदंजगत् तत्रदृष्टांतमाह यथेति । समाधौमुनयोनामरूपेयथानाविदंति अब्धितोयेप्रविष्टानद्यश्च अनेनभक्त्यतिशयो दर्शितइति १२ तत्फलमाह मत्कामाइति मामेवकामयंतइतिमत्कामाःअस्वरूपविदोऽबलाःजारमांरमणंमत्वासंगान्मांपरंमंज्ञात्वामामापुरित्यन्वयः आसांब्रह्मज्ञानंकथंउदभूत् उच्यते संसारज रयतीतिजारःतंनित्यानंदप्रदत्वेनरमयतीतिरमणःतंसर्वतोविलक्षणस्वभावस्यास्यविष्णोःस्वरूपंविदंतीत्यस्वरूपविदःइत्येवंगुणसप्रीतितोमाब्रह्मज्ञात्वेति गोपिकाद्यादिवंगत्वाहरिंज्ञात्वायथातथामित्येत दत्रापिप्रमाणत्वेनोदाहर्तव्यमितिज्ञातव्यम् १३ यतोमुमुक्षूणामहमेवशरणमतस्त्वमपिमांशरणंव्रजेत्युपसंहरति । तस्मादिति । प्रतिकर्मचोदिताचोदनांनानाकर्मविधिमुत्सृज्यप्रवृत्त्यादिकंचमयिसमर्प्य सर्वदेहिनामात्मानंस्वामिनंयस्मिन्नकुतोभयमस्तितमेकमा सर्वात्मभावेनसर्वस्वामिबुद्धिक्रियाशरणंयाहीत्यन्वयः १४ १५ प्रथमतोवायौमुख्याधियेत्युक्त्वाविशेषतोगोपिकाप्रशसनंकृतमितिसंशयबी जंहृदिकृत्वोद्धवश्चोदयति संशयइति भक्तेषुवायोःसर्वोत्तमत्वमुक्त्वाविशेषतोगोपीस्तुवतस्तववाचंशृण्वतोममात्मस्थोमनोगतःसशयोवायुरुत्तमोगोप्योवेत्येवमाकारोननिवर्तते प्रत्युतयेनवचनेनमेम नोभ्राम्यति निर्धारितैककोटिस्थिरंनेत्यन्वयः १६ गोपिकाअपिमामापुःकिमुवाय्वाद्याइतिगोपिकाप्रशंसनंकृतमितिपरिहारंहृदिकृत्वावायुरेवसर्वैर्गुणैःसर्वोत्तमःसएवहिरण्यगर्भश्चेतिदर्शयितुंभ

तासांक्षपाःप्रेष्ठतमेननीतामयैववृंदावनगोचरेण ॥ क्षणार्धवत्ताःपुनरंगतासांहीनामयाकल्पसमाबभूवुः ११ तानाविदन्मय्यनुसंगबद्धधियःस्वमात्मा नमदस्तथेदम् ॥ यथासमाधौमुनयोऽब्धितोयेनद्यःप्रविष्टाइवनामरूपे १२ मत्कामारमणंजारमस्वरूपविदोऽबलाः ॥ ब्रह्ममांपरमंप्रापुःसंगाच्छतसहस्र शः १३ तस्मात्त्वमुद्धवोत्सृज्यचोदितांप्रतिचोदनाम् ॥ प्रवृत्तंचनिवृत्तंचश्रोतव्यंश्रुतमेवच १४ मामेकमेवशरणमात्मानंसर्वदेहिनाम् ॥ याहिसर्वात्म भावेनयस्मिन्नस्त्यकुतोभयम् ॥ १५ ॥ उद्धवउवाच ॥ संशयःशृण्वतोवाचंतवयोगेश्वरेश्वर ॥ ननिवर्ततआत्मस्थोयेनभ्राम्यतिमेमनः ॥ १६ ॥ श्री भगवानुवाच ॥ यएषजीवोविवरप्रसूतिःप्राणेनघोषेणगुहांप्रविष्टः ॥ मनोमयंसूक्ष्ममुपैतिरूपंमात्रास्वरोवर्णइतिस्थविष्ठम् १७ यथानलःखेऽनिलबंधुरु ष्मावलेनदारुण्यधिमथ्यमानः ॥ अणुःप्रजातोहविषासमिध्यतेतथैवमेव्यक्तिरियंहिवाणी १८ एवंगतिःकर्मरतिर्विसर्गोघ्राणोरसोदृक्स्पर्शःश्रुतिश्च ॥ संकल्पविज्ञानमथाभिमानःसूत्रंरजःसत्त्वतमोविकारः ॥ १९ ॥ ॥ ॥

गवान्हिरण्यगर्भस्यसर्वोत्तमत्वंवक्ति यएषइति योविवरप्रसूतिः विशेषेणवराणामहंकाराद्यभिमानिनांप्रसूतिरुत्पत्तिः यस्मात्सतथा उत्पादकइत्यर्थः । एषजीवःजीवप्राणधारणइतिधातोःप्रकृष्टानंदलक्षणस्यहरेर्विशेषाधिष्ठानत्वात्तन्नामाब्रह्मा । प्राणेन विष्णुनाघोषेणवेदात्मिकयाप्रकृत्यालक्ष्म्याचसहगुहांरुद्रादीनांहृदयगुहांप्राविष्टःसन्मनोमयंरुद्रादीनामनसिनियंतृत्वेनस्थितमतएवसूक्ष्मंपरमाणुकल्परूपमुपैति । किंच मात्रास्वरोवर्णइतिमात्रास्वरवर्ण त्रयात्मकंवेदाख्यंस्थविष्ठंरूपमुपैति १७ अनेनवेदादीनिविष्णुप्रकृतिब्रह्मणामभिव्यक्तिस्थानानीत्युक्तं तत्रप्रकृतिब्रह्मणोर्विशेषेणवेदादिकममव्यक्तिस्थानमित्याह यथेति । अनिलोबंधुर्यस्य सतथाउष्मोष्णः अनलोदारुणिसंवलेनमथ्यमानोअणुत्वेनप्रजातोहविषाघृतेनयथासमिध्यतेतथेयंवेदवाणीमेव्यक्तिःव्यक्तिस्थानंवेदवाण्येवविशेषतोमत्तत्त्वव्यंजिकेत्यर्थः १८ प्रकृत्यादीनांव्य क्तिस्थानत्वेपिममश्रोत्रादीन्यपिवेदादिवद्विशेषतोव्यक्तिस्थानानीत्याह एवमिति । पदादीनिगत्यादिशब्दवाच्यानिइंद्रियेंद्रियविषययोरुभयोर्ग्रहणायैवमुक्तं संकल्पोमनः । विज्ञानंबुद्धिःअभिमानोहं कारवृत्तिविशेषव्यंजकंतस्यरूपांतरम् । सूत्रंवायुः । सत्वसहितंतमःविकारोब्रह्मांडःएतानिहरेरधिष्ठानरूपाणिभवंतीतिज्ञातव्यानि ॥ तदभिमानिन्योदेवताश्च यस्तपसितिष्ठन्श्रोत्रेतिष्ठन्नित्यादेः १९

१ मन्निका-नेयासात।इ०न्नु।७ । २ अतिप्रियतमेन मया ।

विवरप्रसूतिरित्युक्तंकारणत्वंगुहांप्रविष्टइत्युक्तव्याप्तिंचविविच्यसोदाहरणमाह अयंहीति । मांरमांचांतरेणवर्णाद्यात्मकवेदादिसर्वशब्दवाच्योयमब्जयोनिर्ब्रह्मानिदामकत्वेनसर्वोत्तमत्वाज्जीवास्त्रिवृ

ज्ज्ञानानंदबलात्मकोव्यक्तःसूक्ष्मःजगतामाद्यएकएवाहंकारादिपृथिव्यंतानिव्यष्टिनिकार्याण्यनुप्रविश्य विशेषेण श्लिष्टशक्तिरनपगतसामर्थ्यएवतत्तन्नियामकरूपैर्बहुधैवभाति तत्त्ववादिनामितिशेषः

कथमिवयद्वद्यथाकलमादिबीजानियोनिंभूमिलक्षणांप्रतिपद्यबह्वंकुराणिभवंतीति एवंपरमात्मानुगृहीतोब्रह्माहंकारादिषुबहुधाव्यक्तीभवतीति । योविवरप्रसूतिर्योनिद्वाराप्रसूयतएषजीवइतिसंज्ञांलभत

इत्यन्यथाव्याकुर्वंतेतन्मतं सुपर्णशेषरुद्रादिप्रसूतिस्तुचतुर्मुखः । सर्वजीवोत्तमोजीवोगुणैर्ज्ञानसुखादिभिः । विष्णुभक्त्यादिभिःसर्वैर्नियमात्सार्वकालिकं । मुक्तावपिनसदेहःसहिदेवेनविष्णुना । प्राणः

प्राणेनजगतामीशोनरमयातथा । वेदात्मिकयाचसहितःसूक्ष्मःसन्मनसिस्थितः । वेदादीनांतुसर्वेषांमात्रावर्णस्वरेषुच । स्थलरूपीमदातिष्ठन्नेवंश्रोत्रादिकेषुच । सर्वेषांप्रेरकोह्येकोज्ञानानंदबलैस्त्रिवृत् ।

नित्यशक्तिःसर्वगःसन्बहुधैवप्रतीयते । तस्मिन्नोतमिदंसर्वंपटेलक्षणतंतुवत् । सएववायुरुद्दिष्टोवायुर्हिब्रह्मतामगान् । विशेषेणहरेर्व्यक्तिस्थानान्येतानिसर्वशः । मनआदीन्यहंकारोब्रह्मावेदात्मिकार

मा । त्रिगुणात्मिकाचसैवश्रीःसैवोक्तासंविदात्मिका । तस्याअपिनियंतैकोविष्णुःसर्वेश्वरेश्वरः । यथादारुषुसूक्ष्मःसन्मथितोग्निःप्रसिध्यते । तथावेदादिषुहरिर्मथितःसम्प्रदृश्यते । व्यक्तिस्थानान्यथैता

निवेदादीनिहरेर्विदुरित्यनेनप्रमाणवाक्येननिरस्तमितिनास्माभिस्तद्दूषणायप्रयत्यते । मनसिव्यक्तितांयामितस्माद्व्यक्तिर्हिमेमनइत्येतत्स्पष्टंच २० नन्वेवतर्हिचतुर्मुखएवजगदाकारेणविवर्ततइतिकिं

नस्यादत्राह यस्मिन्निति । यस्मिन्विरिंचेतंतूनांवितानस्यपट्टाद्याकारस्यसंस्थावास्थितिःपटाधारतयातंतुविरचितपट्टाद्याकारस्यपटाद्यथाभेदःप्रत्यक्षसिद्धस्तथाविरिंचाधारंजगद्विरिंचाद्भिन्नंउपल

अयंहिजीवस्त्रिवृदब्जयोनिरव्यक्तएकोजगतांयथाद्यः ॥ विश्लिष्टशक्तिर्बहुधैवभातिबीजानियोनिंप्रतिपद्ययद्वत् २० यस्मिन्निदंप्रोतमशेषमोतंपटयथा तंतुवितानसंस्था ॥ यएषसंसारतरुःपुराणःकर्मात्मकःपुष्पफलेप्रसूते २१ द्वेअस्यबीजेशतमूलस्त्रिनालःपंचस्कंधःपंचरसप्रसूतिः ॥ दशैकशाखोद्विसुपर्णनीडस्त्रिवल्कलोद्विफलःसंप्रविष्टः २२

क्षणमेतत् । विरिंचश्चश्रीश्चैवयदाधारौमाद्भिन्नाविति तदुक्तं यथैववस्त्रेदीर्घंचतिर्यग्वापिसुसंस्थिता । तंतुभिःक्रियमाणैवपट्टाद्याकारसंस्थितिः । यथाजीर्णानिवस्त्राणितत्वाधाराणिवापुनः । कंथावयव

भूतानितद्वदेतच्चतुर्मुखे । सोपितद्वद्धरौनित्यंसंश्रिताश्रीरपिस्फुटमिति ॥ उक्तंविशिनष्टि यएषइति । यएषसंसारतरुर्जगद्वृक्षःपुष्पफलेस्वर्गमोक्षौप्रसूते साविरिंचेओतप्रोतश्चइतिशेषः २१ जगद्वृक्ष

स्यब्रह्मबीजमित्युक्तंतद्विवृणोति द्वेअस्येति । जगद्वृक्षस्यबीजेद्वेब्रह्माचैवसरस्वती । मूलभूतानिकर्माणिमनोबुद्धिरहंकृतिः । नालत्वेनसमुद्दिष्टाःखमाद्याःस्कंधसंज्ञिताः । एकादशेंद्रियाण्येवशाखास्तुत्रि

गुणास्त्वचः । प्रवृत्तंचनिवृत्तंचफलेअस्यप्रकीर्तिते। पुष्पमैहिकमुद्दिष्टंरसाःशब्दादयस्तथा । प्रवृत्ताश्चनिवृत्ताश्चपक्षिणस्तत्रसंस्थिताः । वृक्षस्यपृथिवीवच्छ्रीर्विष्णुराकाशवायुवत् । तस्याअपिसदाधारएवं

ज्ञात्वाविमुच्यते इत्यनेनव्याख्यातोयंश्लोकः । तथापिस्पष्टत्वायकिंचिदुच्यते अस्यजगद्वृक्षस्यजलवच्चभूमिवच्चब्रह्मासरस्वत्यौद्वेबीजेव्यंजकेनतुवटबीजादिवदंकुरोत्पत्त्यनंतरंनाशाशिरस्के अतएवस्वका

र्यतोगुणतोरूपतश्चमहत्यौ शतमित्युपलक्षणंअनेकविधान्यसंख्यातानिकर्माणिमूलानियस्यशतमूलोजगत्तरुःत्रयेनालाअहंकारबुद्धिमनोभिमानिनोरुद्रेंद्रचंद्रायस्यसत्रिनालः । पंचाकाशादिभूतानिस्कं

धायस्यसपंचस्कंधः । पंचानांरसानांशब्दादीनांप्रसूतिर्यस्मात्सपंचरसप्रसूतिः । दशएकंचेंद्रियाणिशाखायस्यसएकादशेंद्रियशाखः । द्विविधाःसुपर्णाःप्रवृत्तिमार्गस्थानिवृत्तिमार्गस्थाश्चपक्षिणः । पुण्य

पापलक्षणपक्षवंतस्तेषानीडंयस्मिन्सद्विसुपर्णनीडः त्रीणिसत्वरजस्तमोलक्षणानित्रिवल्कलानित्वचोयस्यसत्रिवल्कलः द्वेप्रवृत्तिनिवृत्तिलक्षणेफलेयस्यसद्विफलःसंविष्णवाख्यमाकाशंप्रविष्टअत्रेदतात्प

र्यं लक्ष्मीपतेरप्यायनात्वाद्ब्रह्मादेरपिरूपकर्तृत्वादभिव्याधारत्वात्सुखदत्वाच्चवायुवदवकाशदत्वाच्चव्योमवद्विष्णुः बीजभूतावपिह्यस्यब्रह्माचैवसरस्वती । नारिण्येतेजगत्सृष्टौवटवृक्षादिबीजवत् । स

कार्यतोमहांतोचगुणतोरूपतस्तथा। पृथिव्युदकवत्तस्माद्बीजत्वंनतुबीजवत् । व्यंजकत्वान्नचाल्पत्वान्महाक्ष्मावद्गमास्मृता। अंडोमहाक्ष्मासंप्रोक्तस्ततःपृथ्व्युदकंतथा ।जायतेनित्यशस्तस्माद्धुक्तंभुक्तंन दीयते। तत्राप्युदकवद्ब्रह्मामृद्वच्चापिसरस्वती । जलाधारायतोमृचसर्वाधाराव्यवस्थिता। अन्यथातुरजोभूतानीयंतवायुनाखिला ।अथवासर्वनाशःस्याज्जलाधारातत:स्मृता । वटादिबीजवत्तस्यपुण्या पुण्यमुदीरितं। बाह्मोदवच्चाग्निवच्चविष्णुरेवंप्रकीर्तितः इत्येतत्। व्रीह्यादिवत्तुमूलत्वंकर्मणांजगतःस्मृतं। उदवत्पृथिवीवच्चब्रह्मणोवाचएवच ।मूलमूवाच्छिद्रयश्चैवमूलभूरंडमुच्यते।बाह्मोदाग्नीरखंवत्तुविष्णो र्नीजत्वमुच्यते । इत्येतच्चप्रोक्तार्थेप्रमाणं । तत्तज्जीवदेहादिषुस्थित्वातत्तन्मनआदींद्रियगणतत्तद्योग्यतानुसारेणश्रीहरिगुणोपसंहारेप्रेरयित्वाहरिभक्त्यादिसाधनसामग्रीसंपादनेनहरेःप्रीतिसमुद्रेम ग्नोब्रह्मासर्वाधिकारिभ्यउत्तमोत्तमइतिज्ञायते तदुक्तं देहेंद्रियमनश्चक्षुस्थितोभक्त्यादिसाधकः सुपर्णशेषरुद्रादेरपिब्रह्माचतुर्मुखः अतोभक्त्यादिकाःसर्वेगुणास्तस्यैवसर्वगाः। अतिरक्ताश्चसंपूर्णाःसु पर्णादेःशताधिकाः।सुपर्णादिभिरज्ञातास्तदभीमानवर्जिताः। ब्रह्मणस्तुपुनःसंतितेपांकर्ताजनार्दनः । तस्मात्सर्वाधिकोब्रह्मागुणैःसर्वैर्नसंशयः। वर्णस्थोवर्णनामासौस्वरस्थःस्वरनामकः। मनस्थश्चमनो नामातन्नामाचक्षुरादिगः। तस्यसर्वाणिनामानिमुख्यतःकवयोविदुः। तत्स्थानत्वादिंद्रियादेर्वर्णाद्यैश्चोपचारतः। एवमस्योपचारेणविष्णोःसाक्षात्तुमुख्यतइति । अनेनमात्रास्वरोवर्णइतिक्रमेणेत्यादि नावर्णस्वरादीनांविष्णोरनंतरंचतुर्मुखेमुख्यत्वमुक्तमितिज्ञातव्यं किंच कृष्णप्रियाभ्योगोपीभ्योभक्तितोद्विगुणाधिकाः। महिष्योष्टौविनायास्ताःकथिताःकृष्णवल्लभाः । ताभ्यःसहस्रसमितायशोदानं दगेहिनी। ततोप्यभ्यधिकादेवीदेवकीभक्तितस्ततः। वसुदेवस्ततोजिष्णुस्ततोरामोमहाबलः। नततोभ्याधिकःकश्चिद्भक्त्यादौपुरुषोत्तमे।विनाब्रह्माणमीशेशंसहिसर्वाधिकःस्मृतः। इत्यनेनसर्वाधिकारि

अदंतिचैकंफलमस्यगृध्राग्रामेचराएकमरण्यवासाः ॥ हंसायएवंबहुरूपमिष्टंमायामयंवेदसवेदवेदम् २३ एवंगुरूपासनयैकभक्त्याविद्याकुठारेणशि तेनधीरः ॥ विवृश्च्यजीवाशयमप्रमत्तःसंपद्यचात्मानमथत्यजास्त्रम् २४ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेद्वादशोऽध्यायः ॥ १२ ॥

भ्योब्रह्मणोधिकभक्तिमत्त्वंगोपिकादिष्वपिभक्तितारतम्यमस्तीत्युक्तं अतोरामेणसार्धंमथुरांप्रणीतिश्वाफल्किनेत्यादौप्रतीयमानभक्तितारतम्याभावशंकानिरस्ता पापद्वेषादिकादोषाअवराणानसंशयः। भक्त्यादिगुणपूगस्तुपराणामाविरिंचतः। स्वातंत्र्यात्सर्वदेहेषुस्थितानामपिसर्वशः। स्पृशंतेनैवदोषैस्तेगुणदानैकमत्पराः यदुक्तंचेमाःप्रजाःशोचंत्यमेवासांतद्भवतिपुण्यमेवामुंगच्छति नहवैदेवान्पापंगच्छ तीति श्रुतिस्मृतिभ्यांप्रजार्जितभक्त्यादिगुणपूगस्पर्शएवमनआदींद्रियाणांअभिमानिदेवानांनतुतदर्जितपापादिस्पर्शइतीनिर्णीतत्वान्नात्रशंकाकार्येति २२ अस्यजगद्वृक्षस्यैकंफलंप्रवृत्तकर्मफलंस्वर्गा दिलक्षणंग्रामेचरागृध्राःविषयलोलुपाःकर्मिणोऽदंति एकंनिवृत्तिलक्षणंकर्मफलंमोक्षंअरण्यवासाहंसाःश्रीनारायणाख्यक्षीरपायिनोज्ञानिनोभुंजतइति एतद्वृक्षवर्णनफलमाह यइति यःपुरुषः एवंबहुरूपंबहुविधमिष्टंभोगायतनत्वेनाभीष्टंमायामयंभगवदिच्छानिमित्तमूलप्रकृत्युपादानकर्तृकंजगद्वृक्षंवेदसपुरुषोवेदवेद यतःप्रसूताजगतःप्रसूतिरित्यादिवेदार्थवेदेति २३ एतद्विद्याफलमाह ए वमिति एवमुक्तप्रकारेणसद्गुरूपासनयाप्रधानभक्त्यानिशितेनविद्याकुठारेणप्राकृतातःकरणजन्यज्ञानपरशुनाजीवाशयंबाह्यांतःकरणंविवृश्च्याछित्त्वानिर्मलीकृत्यप्राकृतांतःकरणजन्यज्ञानमस्त्रंससारनि रासकरंत्यज अथतज्ज्ञानत्यागानंतरंनिजज्ञानेनात्मानंपरमात्मानंसंपद्यमुक्तौयथायोग्यसुखमनुभवसिचेतिभावः। प्राकृतांतःकरणजंज्ञानमस्त्रमितिच्छिदं। तदेवतेनसंछेद्यंचित्तंप्रकृतिसंभवं। तेनैवसहसंत्य ज्यनैवपूर्वंकदाचन। ज्ञानंप्रकृतिजंवापिमूलनाशेविनश्यति। ततःपरस्वरूपेणज्ञानेनैवजनार्दनं । वेत्तिमुक्तस्तथात्मानंजीवानन्यांश्चसर्वशः। इतिवाक्यान्नज्ञानमात्रोच्छेदोविवक्षितः। किंतुप्राकृतस्येति २४ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांद्वादशोध्यायः ॥ १२ ॥

संसारच्छेदकरंवाह्यांतःकरणजंज्ञानंस्वधर्मेणमपिविनाश्यस्वयंचनश्यतीत्युक्तंतत्प्रपंचयन्भक्तेरुत्पत्तिप्रकारादिकंकथयत्यस्मिन्नध्याये तत्रसत्वादिगुणाआत्मनोबुद्धेःकिंवेतिसंशयेभगवान्निर्धारयति स त्वमिति बुद्धेरंतःकरणस्यविद्यमानाइतिशेषः नात्मनोजीवस्यतत्रसात्विकादिभेदेनांतःकरणंत्रिविधं ततःकिंतत्राह सत्वेनेति सत्वेनसत्वगुणविशिष्टेनांतःकरणेनान्यतमौराजसतामसौभावौहन्यात् सत्वंसात्विकमंतःकरणंसत्वेनतज्जनितज्ञानेनहन्यात् १ सत्वेनान्यतमौहन्यादित्येतद्विवृणोति सत्वादिति शुद्धात्सत्वात्पुंसोमद्भक्तिलक्षणोधर्मोभवेत् धर्मःकिमुद्रेचयतीतितत्राह सात्विकेतितता धर्मात्पुनःसत्वोद्रेकःतस्मादुद्रिक्तसात्विकोपात्तयाबुद्ध्याभक्त्याज्ञानंवत पुनः सत्वोद्रेकःतस्मात्पुनःधर्मोद्रेकःप्रवर्तते उद्रिक्तभक्तिधर्मपूरितांतःकरणोब्रह्मार्पणबुद्ध्याधर्ममेवकरोतीत्यर्थः २ धर्मफल माह धर्मइति सधर्मोरजस्तमश्चहन्यात् पुनःकथमस्यवृत्तिरितितत्राह सत्ववृत्तिरिति सत्वेनभक्तिस्वभावेनवृत्तिर्वर्तनंभवतिभक्तिमयोवर्ततइत्यर्थः भक्तिप्रतिबंधकेऽधर्मेसतिकथंतत्राहेतितत्राह आश्विति उभयेरजसितमसिचहतेतन्मूलस्त्वधर्मआशुनश्यतीतिअतोयुक्तमुक्तमिति ३ भक्तिज्ञानसाधनान्यागमादयोत्रसत्वादिगुणकृताइत्याह आगमइति सत्वादयोगुणाएवहेतवोयेषांतेतथा अ नेनैवचसात्विकादिभेदेनत्रिविधाइत्युक्तंभवति ४ तत्तद्भेदज्ञानंकथमत्राह तत्तदिति ज्ञानवृद्धाएषामागमादीनांमध्येयद्यत्प्राश्वितिप्रचक्षतेतत्तत्सात्विकं यद्यन्निंदंतितत्तामसं यदुपेक्षितप्रचक्षतेतद्राजसमि तिजानीहीतिशेषः ५ किमर्थमेवंविभागवचनंयेनोपयोग्यंस्यादत्राह सात्विकानीति सत्वंसत्वस्वभावस्तद्विवृद्धयेकिंजतइतितत्राह ततइति ततः सत्वाद्भक्तिसाधनंधर्मःततोधर्मात्ज्ञानंस्यात्किंचह

श्रीभगवानुवाच ॥ सत्त्वंरजस्तमइतिगुणाबुद्धेर्नचात्मनः ॥ सत्वेनान्यतमौहन्यात्सत्वंसत्वेनचैवहि १ सत्वाद्धर्मोभवेद्वृद्धात्पुंसोमद्भक्तिलक्षणः ॥ सा त्विकोपात्तयाज्ञानंततोधर्मःप्रवर्तते २ धर्मोरजस्तमोहन्यात्सत्ववृत्तिरनुत्तमा ॥ आशुनश्यतितन्मूलोह्यधर्मउभयेहते ३ आगमोऽपःप्रजादेशःकालःकर्मच जन्मच ॥ ध्यानंमंत्रोथसंस्कारोदशैतेगुणहेतवः ४ तत्तत्सात्विकमेवैषांयद्यद्वृद्धाःप्रचक्षते ॥ निंदंतितामसंतत्तद्राजसंतदुपेक्षितम् ५ सात्विकान्येवसेवे तपुमान्सत्वविवृद्धये ॥ ततोधर्मस्ततोज्ञानंवाचःस्मृतिरपोहनम् ६ वेणुसंघर्षजोवह्निर्दग्ध्वाशाम्यतितद्वनम् ॥ एवंगुणव्यत्ययजोदेहःशाम्यतितत्क्रिया ७ ॥ उद्धवउवाच ॥ विदंतिमर्त्याःप्रायेणविषयान्पदमापदाम् ॥ तथापिभुंजतेकृष्णतत्कथंश्वखराजवत् ८ ॥ श्रीभगवानुवाच ॥ अहमित्यन्यथाबु द्धिःप्रमत्तस्ययथाहृदि ॥ उत्सर्पतिरजोघोरंततोवैकारिकंमनः ९

रिविषयावाचोहरिविषयास्मृतिरपोहनंभगवद्भिन्नत्यागःइत्येतेभवंति ६ एवमुत्पन्नवृत्तिज्ञानस्यनाशंसदृष्टांतमाह वेण्विति तन्मूलनिर्वाणंयथातथाकथयामःतथाहि यस्मिन्वनेवेणवःसंतितेषांवेणू नांसंघर्षाज्जातोवह्निस्तद्वनंदग्ध्वास्वयमपिशाम्यत्येवंगुणव्यत्ययजःसत्वादिगुणानांव्यत्ययादन्योन्यनाशात्पृथक्स्थितादुद्रिक्तात्सत्वाज्जातोवेदोवृत्तिज्ञानंस्वकारणमंतःकरणंविनाश्यनिर्मूलंस्वयंचावि नश्यतीत्यन्वयः विनिषेधेपृथग्भावइति। अतिस्यादधिकार्थोक्तौप्रशंसायामतिक्रमेइतियादवः। वेदशब्दस्यप्रसिद्धार्थंपरित्यज्यापासिद्धकल्पनेकिंनियामकउच्यते उपक्रमंब्रूमः मुक्ताश्चाधीयतेवेदान्जड ज्ञानविवर्जिताः। स्वरूपभूतज्ञानेनपश्यंतःसर्वमंजसेतिवाक्यंच विदज्ञानइतिधातोश्च अविनाशीवाअरेयमात्मानुच्छित्तिधर्मेतिश्रुतेः नस्वरूपज्ञाननाशउपपन्नः स्वरूपहानिप्रसंगात् एतत्सामगायन्ना स्तेइत्यादिश्रुतिविरोधाच्चवेदोपशमोनोपपन्नइति ७ विषयाणामापदांपदत्वंजानतोपितानेवसेवंतेतत्रकिंकारणमितिनात्रेनपृच्छति विदंतीति श्वाचखरश्चअजश्चश्वखराजाःतद्वत् ८ अकर्तर्यात्मनिअ हंकर्तेतिकर्तृत्वाभिमानमेतितन्मूलरागोत्सिक्तमनःकारकःकामःकारणमित्युत्तरमाह अहमितीति अथनरार्थ यदाप्रमत्तस्यहृदिअहंकर्तेत्यन्यथाबुद्धिरुत्सर्पति उत्कर्षति तथाघोरंरजउत्सर्पतिउदेति ततोरागोदयादुच्छ्वसितंमनोवैकारिकंविविधविकाराकरंभवति ९

स्यासाविकारस्यमनसोविविधकल्पनयायुतः संकल्पइदमित्थंकरिष्यामिइदमेकंकरिष्येइत्यादिलक्षणउदेति एवंविविधसंकल्पेनदुर्मतेरशोभनबुद्धेः गुणानांशब्दादीनांध्यानाद्दुःसहःकामःस्यादित्य न्वयः १० कामस्यदुःसहत्वमुपपादयति करोतीति रजावेगविमोहितत्वेनकामवशंगतःतस्मादविजितेंद्रियस्तस्मात्कर्माणिदुःखोदर्काणिसंपश्य न्नपिपुनःकर्माणिकरोतीत्यन्वयः एद्वा कामम यत्नेनअविजितेंद्रियोभवतितेनचक्षुरादींद्रियजयाभावेनवनितादिकंपश्यन्रजोवेगेनवीर्यद्रेकेणविमोहितः विवेकज्ञानशून्यत्वेनविह्वलितांगोदुःखफलानिकर्माणिकरोति कामसौख्यायविषयान् भुंक्तेइति ११ ननुविषयाणांसमुद्रतरंगवदावर्तमानत्वान्नसंसारादस्योत्थानंस्यात्पुरुषायुषसहस्रेणापितस्मान्मोक्षशास्त्राविधानंव्यर्थमित्याशंक्य अज्ञस्यैवं नतत्त्वज्ञस्येत्याह रजस्तमोभ्यामिति विद्व च्छब्दविवरणंदोषदृष्टिरिति पुनःशब्दोवीप्सार्थोदोषदृष्टिरित्यनेनसंबध्यते विद्वान्यदपिपचपिरजस्तमोभ्यांविक्षिप्तधीःतथाप्यतंद्रितोभूत्वाहरौमनोयुंजन्पुनर्दोषदृष्टित्वाद्विषयेषुनसज्जतेशरीर यात्रार्थंविषयान्सेवमानोपितैःप्रतिबद्धोनभवतीति १२ एतदेवविवृणोति अप्रमत्तइति हिशब्दःसर्वशास्त्रप्रसिद्धत्वद्योतकःमनोविषयेभ्यआकृष्यशनैःशनैर्मय्यर्पयन्स्थापयन्युंजतिध्यायेत् योगःसं हननोपायध्यानसंगतिमुक्तिष्वितियादवः मामितिशेषःअनिर्विण्णःअनालस्यःअज्ञमितिबुद्धिवैराग्यशून्योवा १३ सनकादियोगींद्रयोगसपत्त्यभावात्तार्थयोगःसाधीयानत्राह एतावानिति यथामनो मय्येवचावेश्यतेतादृशोयोगःएतावान्नान्यइति सनकादिभिरादिष्टइत्यद्धासत्यं अद्धाप्रत्यक्षसत्ययोरितिच १४ लोकोपकारायमेरुशृंगोपरिस्थितौषधोपदेशवत्सनकाद्यादिष्टयोगोपदेशनमित्यश्रद्धेय

रजोयुक्तस्यमनसःसंकल्पःसविकल्पकः ॥ ततःकामोगुणध्यानाद्दुःसहःस्याद्धिदुर्मतेः १० करोतिकामवशगःकर्माण्यविजितेंद्रियः ॥ दुःखोदर्काणिसं पश्यन्रजोवेगविमोहितः ११ रजस्तमोभ्यांयदपिविद्वान्विक्षिप्तधीःपुनः ॥ अतंद्रितोमनोयुंजन्दोषदृष्टिर्नसज्जते १२ अप्रमत्तोहियुंजीतमनोमय्यर्प यन्शनैः ॥ अनिर्विण्णोयथाकालंजितश्वासोजितासनः १३ एतावान्योगआदिष्टोमच्छिष्यैःसनकादिभिः ॥ सर्वतोमनआकृष्यमय्यद्धावेश्यतेयथा १४ उद्धवउवाच ॥ यदात्वंसनकादिभ्योयेनरूपेणकेशव ॥ योगमादिष्टवानेतद्रूपमिच्छामिवेदितुम् १५ श्रीभगवानुवाच ॥ पुत्राहिरण्यगर्भस्यमानसाःसन कादयः ॥ पप्रच्छुःपितरंसूक्ष्मांयोगस्यैकांतिकींगतिम् १६ सनकादयऊचुः ॥ गुणेष्वाविशतेचेतोगुणाश्चेतसिचप्रभो ॥ कथमन्योन्यसंत्यागोमुमुक्षोः संतितीर्षतः १७ श्रीभगवानुवाच ॥ एवंपृष्टोमहादेवःस्वयंभूर्भूतभावनः ॥ ध्यायमानःप्रश्नबीजंनाभ्यपद्यतकर्मधीः १८

मितिभावेनपृच्छति यदेति १५ दृष्टसाधनावबोधकत्वेनाप्तमूलकत्वेनवेदएवप्रमाणंइतिश्रद्धेयमित्याशयेनपरिहर्तुमितिहासमाह पुत्राइति योगस्यज्ञानस्यगतिं १६ किंज्ञानविषयोयंप्रश्नइतितत्राह गुणेष्विति पुंसांचेतोगुणेषुशब्दादिष्वाविशते गुणाःशब्दादिविषयाश्चेतसिसंस्काररूपेणवर्तंतेतत्रसंतितीर्षोःसंसारनदींतर्तुकामस्यमुमुक्षोर्मुक्तियोग्यस्याधिकारिण कथमन्योन्यसंत्यागःविषयेभ्यश्चेतसः आकर्षणंचेतसःविषयाणामाकर्षणपृथक्करणमित्यर्थःतदुच्यतामितिशेषः १७ तत्रब्रह्मणाकिमुक्तमितितत्राह एवमिति प्रश्नोबीजंयस्यसःप्रश्नबीजःतंपरिहारम् अन्यमनस्कइवास्थितत्वादित्याह कर्मधी रिति अस्यार्थःगुणानांचेतसश्चकर्मकारणमितिमन्वानःअन्यमनस्कत्वेकिंकारणमित्यस्येदमेवोत्तरम् कर्मणिसर्वकर्तरिहरौधीर्यस्यकर्मणाहरिणैवपरिहारोवक्तव्यइतिधीर्यस्यसतथाकर्मभगवंतमेवध्यायती तिवा तदेतदुक्तं ब्रह्मपृष्टस्तुयोगींद्रैःसनकाद्यैर्मनोगतैः कारणंविषयेष्वद्धाकर्मैतिमत्यपद्यत हेतुरन्योपितत्रास्तीत्येवजानन्नपिप्रभुः विशेषतोमनस्तत्रनाधाज्ज्ञानन्हरेःप्रियं स्वात्मन्यपरिहारोक्तिस्त दाह्यासीद्धरेःप्रिया अतःसतत्प्रियंजानन्नाकरोत्तद्विचारणम् तमेवाचिंतयद्देवःप्रश्ननिर्णयकारणात् भ्रमतीवमनःक्वापिब्रह्मणोविष्णुमायया सर्वज्ञस्यापियत्रात्मावक्तुमिच्छेज्जनार्दनः तज्ज्ञात्वाचिंतितं तस्यचिंतयत्स्वयमेवतु नरस्यचिंतितस्यर्थसहितद्भाविवित्सदा अन्येत्वज्ञानसंयुक्तामोहमीयुर्यथाक्रमं तस्यमध्यंदिनेसूर्येक्षोभवत्सोभमात्रकं नैवाज्ञानंयथासूर्येतमोनास्तिकदाचनेतिएतस्मिन्वाक्ये १८

नन्वेवंतर्हिसनकादीनांप्रश्नोनिरर्थोबाल्प्रश्नवदितिशंकायामुरिदितिभावेनाह समामिति प्रश्नस्यपारः पूरणंपरिहारइतियावत्तस्मिन्निश्चयोयस्यसतथातम् १९ २० २१ ज्ञानविधुरयोनिस्त्वेनरंऽरूपेण स्वेनोक्तार्थेप्रामाण्यजननायकोभवानितितत्प्रश्नंविघटयति वस्तुनइति आत्मनोवस्तुनःपरमात्मवस्तुनोभवत्पक्षेयद्यनानात्वमेकत्वविवक्षितंतर्हिं अनानात्वेएकत्वपक्षेकोभवानितीदृशःप्रश्नःकथंघटेत सिद्धविषयत्वादितिशेषः हेविप्राःवःप्रश्नोयद्यनेकाश्रयःनानात्वाश्रयः तर्ह्यपिकोभवानितिवक्तुंकथंघटेत अनेकस्मिन्बहुत्वसंख्याविशिष्टेवस्तुनिएकत्वसंख्याविशिष्टत्वेनवक्तुमनुपपन्नत्वात् २२ सिद्धविषयत्वंकथमत्राह पंचात्मकेष्विति देवमनुष्यपितृगंधर्वासुरभेदेनपंचविधेषुभूतेषुजीवेषुहिरण्यगर्भावरत्वात्चद्वैचत्वाभावापेक्षयावस्तुतोवस्तुवृत्त्यासमानेषुसत्सुब्रह्माभिवंदितचरणारविंदंमांमुहिश्यकोभवानि तिवाचारंभोपस्वसतथावाचारब्धइत्यर्थः वःप्रश्नोनिरर्थकःनिर्विषयइति २३ कुतोनिरर्थकइतितत्राह मनसेति मनआदींद्रियैर्यद्गृह्यतेतदहंनभवाम्येवेतियस्मात्तस्मान्निर्विषयइत्यन्वयः त्वत्प्रसादात्स्वस्यत्वेनतुतस्मात्प्रश्नःकृतइतितत्राह मत्तोन्यदिति नेत्यनुषज्यतेअन्यदितिभावनिर्देशःयन्मनआदिभिर्विवार्यमत्तोन्यत्तेनैवज्ञायतेतदहंनभवाम्येवेतिबुध्यध्वमितीदंअंजसातत्त्वम् अंजसात्वरितेतत्त्वमित्यभिधानम् विचार्यनिर्णीतस्यापिपुनःसंशयकारणंपरिकल्प्यसंशयोनकर्तव्यःअतःकोभवानितिप्रश्नोनारब्धव्यःकिंतुगुणेष्वाविशतेचेतइत्येवप्रश्नआरब्धव्यइतिभावः । नयुष्माकंमयिप्रश्नोघटतेयंकथंचन । मामृतेनहिवंचोस्तिविरिंचेःकापिकश्चन । अभिवंदितपादंमांविरिंचेनकथंपुनः । पृच्छथान्यसमायस्मादवरत्वेचतुर्मुखात् । देवामनुष्याःपितरोगंधर्वाअसुरास्तथा । इतिपंचात्मकंसर्वंब्रह्मणस्त्ववरंयतः । यन्मदन्यद्विचारेणज्ञायतेब्रह्मचास्म्यहम् । इतिजानीध्वमद्वैवमत्प्रसादाद्विमदृशिः । अन्यत्स्वभावतोदृश्यंममप्रेरणयैवतु । तस्माद्विवक्षितार्थेतुप्रश्नारंभोनमद्गतइतिसमाख्यानवलाद्

समामाचिंतयद्देवःप्रश्नपारविनिश्चयम् ॥ तस्याहंहंसरूपेणसकाशमगमंतदा १९ दृष्ट्वामांतउपाव्रज्यकृत्वापादाभिवंदनम् ॥ ब्रह्माणमग्रतःकृत्वापप्रच्छुः कोभवानिति २० इत्यहंमुनिभिःपृष्टस्तत्त्वजिज्ञासुभिस्तदा ॥ यदवोचमहंतेभ्यस्तदुद्धवनिबोधमे २१ वस्तुनोयद्यनानात्वमात्मनःप्रश्नईदृशः ॥ कथंघटेतवोविप्रावक्तुंवानेकआश्रयः २२ पंचात्मकेषुभूतेषुसमानेषुचवस्तुतः ॥ कोभवानितिवःप्रश्नोवाचारंभोह्यनर्थकः २३ मनसावचसादृष्ट्यागृह्यतेन्यैरपींद्रियैः ॥ अहमेवनमत्तोन्यदितिबुध्यध्वमंजसा २४ गुणेष्वाविशतेचेतोगुणाश्चेतसिचप्रजाः ॥ जीवस्यदेहउभयंगुणाश्चेतोमदात्मनः २५ गुणेषुवाविशच्चित्तमभीक्ष्णंगुणसेवया ॥ गुणाश्चचित्तप्रभवामद्रूपउभयंत्यजेत् २६

त्वएवार्थोनान्यःस्वकपोलकल्पितइति किंच इदंहिविश्वंभगवानिवेतरइत्यतश्चहरेर्जगतोभेदःसिद्धइतिसकलशास्त्राणांमोक्षेहितात्पर्यमोक्षश्चप्रकृतिप्राकृतविवेकज्ञानाद्विष्णोः तदुक्तं प्रकृतेर्व्यतिरिक्तोयःपुरुषश्चोविकथ्यते तंविद्वान्परमात्मानंवासुदेवेतियंविदुः प्रकृतेःप्राकृताचैवव्यतिरिक्तंगुणादिकं येविदुःपरमात्मानंतेयांतिपरमंपदं नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्वह । बहूनांपुरुषाणांहियथैकायोनिरुच्यते । तथातंपुरुषंविश्वमाख्यास्यामिगुणाधिकमिति बहुप्रमाणेषु २४ इदानींसनकादीनांप्रश्नंपरिहरति गुणेष्वित्यादिना हेप्रजाःब्रह्मजत्वेनप्रकृष्टजन्मत्वात्तथासंबोधन वःचेतोगुणेष्वाविशतेगुणाश्चेतसीति प्रश्नस्यायंपरिहारः मय्येवआत्मामनःयस्यसमदात्मातस्यजीवस्यगुणाश्चेतश्चेत्युभयंदेहेदग्धमभवत् दहभस्मीभावइत्यस्योभयपदित्वेएतद्रूपंसिद्ध्यति २५ पंचधातुवद्गुणवित्तभस्मीभावोज्ञानाग्निनेत्युक्तं तत्रसकेनप्रकारेणोदेतीत्यत्राह गुणेष्विति अभीक्ष्णंनिरंतरंगुणानांविषयाणांसेवयाचित्तंचेतोगुणेषुविषयेष्वाविशत्तदेकनिष्ठंवर्तते गुणाश्चचित्तप्रभवाः चित्तेप्रभवोयेषातेतथा चित्तेसंस्काररूपेणवर्तंतेहरिस्मरणमतिक्रम्यप्रतीयंतइत्यर्थः ततःकिमत्राह मद्रूपइति तत्रविद्वान्मद्रूपेममस्वरूपेचेतोगुणाश्चेत्युभयंत्यजेत्इदमुक्तंभवति मनआदींद्रियाणिमदंतर्यामिणिहरौस्थितानितदाधारापीतत्प्रेरितानिविषयेषुवर्ततेविषयाश्चविष्णुस्थाविष्ण्वाधाराविष्णुप्रेरितामममोगसाधनानीत्यपरिवगौगुणादित्यागइति । विष्णुस्थाविषयाःसर्वेविष्णावेवमनोमम । इतिमय्यर्प्यतत्सर्वंत्यजेत्तत्तत्रनाधतइतिवचनात् मुमुक्षुभिरेवमेवनित्यमनुसंधेयम् २६

नन्वस्यगुणसंगस्यस्वाभाविकत्वेपुरुषायुषानंत्येनापित्यागोनसुलभइतितत्राह जाग्रदिति जाग्रदाद्यवस्थागुणतोगुणद्वारेणबुद्धिवृत्तयः । बुद्ध्यात्मकत्यावृत्तिवर्तनंयासांतास्तथात्मकतिगुणसंबंधाज्जीवस्य जाग्रदाद्यवस्थावर्तित्वंनस्वाभाविकोगुणसंगइत्यर्थः । तात्पर्यमाह तासामिति । तासांजाग्रदाद्यवस्थानांसाक्षित्वेनवर्तमानोजीवः स्वतस्ताभ्योविलक्षणोविनिश्चितइत्यन्वयः २७ नन्वयमस्वाभाविकःस्वतएवनिवर्तनेनतत्साधनप्रयत्नापेक्षेत्याशंकांपरिहर्तुमुक्तानुवादपूर्वकंतत्साधनंकथयति यर्हीति आत्मनोजीवस्यायंसंसृतिबंधःसत्वादिगुणप्रवृत्तितः । इतियर्हियस्मात्तस्मात्तुर्येगुणत्रयातीतेमयिस्थितस्तंबंधंजह्यात्मदुपासनासमुद्रेकसमुद्भूतज्ञानाविर्भूतमत्प्रसादेनबंधंत्यजतीत्यर्थः । कोयंबंधत्यागोनामयेनहेयत्वेनवर्ण्यतेइतितत्राह त्यागइति । विषयारूढबाह्यांतःकरणत्यागएवबंधत्यागोनामनान्यदिति २८ नन्वनेनोपायेनगुणनिमित्तबंधत्यागोस्तुअहंकारनिमित्तबंधत्यागस्यकउपायइतिमंदाशंकामहंकारकृतबंधोपिगुणहेतुकएवेत्येकएवनामांतरेणोच्यतेउपायोप्ययमेवेत्याशयेनपरिहरति अहंकारकृतमिति । अस्वरूपेप्यहंकारममकाराभ्यांरजोगुणोत्थिताभ्यांकृतमिमंबंधमात्मनोजीवस्यार्थविपर्ययंदुःखलक्षणमर्थंविद्वान्निर्विद्यानित्यासारतांबुद्धिकृत्वातुर्येभगवतिस्थितःसंसारचिंतांत्यजेदित्यन्वयः २९ ननुकियंतंकालंसंसारानुवृत्तिरत्राह यावदिति हरेःस्वातंत्र्यादियुक्तिभिर्जीवस्यास्वातंत्र्यादियुक्तिभिरनयोर्जीवपरयोरेकत्वबुद्धिःएकस्यहरेर्भिन्नत्वबुद्धिरितिनानार्थधीर्मिथ्याज्ञानंयावन्ननिवर्ततेतावदसौजाग्रत्यपिस्वपन्निद्रालुरज्ञःसंसार्येव स्वप्नेजागरणंयथाजाग्रत्त्वबुद्धिः । भिन्नस्यत्वेकभावेनतथैकस्यचभेदतः । ज्ञाननानार्थधी·प्रोक्तानानात्वादर्थतद्धियोरितिवचनात् । उक्तएवार्थोनान्यइति ३० अभेदज्ञानस्यश्रुतियुक्तिसिद्धत्वात्तस्यैवमुक्तिहेतुत्वात्तस्यचग्राह्यत्वाच्चेतनाद्भिन्नस्यजडस्यतदेकत्वकल्पनमद्वितीयस्यात्मनोभेदकल्पनम् नानार्थधीरित्यर्थकल्पनोप

**जाग्रत्स्वप्नसुषुप्तिश्चगुणतोबुद्धिवृत्तयः ॥ तासांविलक्षणोजीवःसाक्षित्वेनविनिश्चितः २७ यर्हिसंसृतिबंधोयमात्मनोगुणवृत्तितः ॥ मयितुर्येस्थितोजह्यात्त्यागस्तद्गुणचेतसाम् २८ अहंकारकृतंबंधमात्मनोर्थविपर्ययम् ॥ विद्वान्निर्विद्यसंसारचिंतांतुर्येस्थितस्त्यजेत् २९ यावन्नानार्थधीःपुंसोननिवर्ततयुक्तिभिः ॥ जाग्रत्यपिस्वपन्नज्ञःस्वप्नेजागरणंयथा ३० असत्त्वादात्मनोन्येषांभावानांतत्कृताभिदा ॥ गतयोहेतवश्चास्यमृषास्वप्नदृशोयथा ३१ योजागरेबहिरनुक्षणधर्मिणोर्थान्भुंक्तेसमस्तकरणैर्हृदितत्सदृक्षान् ॥ स्वप्नेसुषुप्तउपसंहरतेसएकःस्मृत्यन्वयात्त्रिगुणवृत्तिदृगिंद्रियेशः ३२**

पत्तेरुक्तमानस्यात्मेतरस्यमिथ्यात्वेनसर्वस्योपपत्तिरितितत्राह असत्त्वादिति । आत्मनोज्ञानादिगुणपूर्णस्यहरेरन्येषांभावानांब्रह्मादिसर्वपदार्थानामसत्त्वादशक्तत्वात्तेषांस्वदशक्तिमताहरिणाभिदादिकृताकथायुक्तयाकेनमानेनवाकृतासिद्धा केनापिनसिद्धेत्यर्थः । तत्त्वमस्यात्माद्वितीयःबोधत्वादित्यादिमानसद्भावादत्राह गतयइति । गमयंत्यवगमयंत्यभीष्टमर्थमितिगतयोवचनानि हेतवोलिंगानिचास्याभिमतानिमृषानसाधकानिस्वप्नदृशोयथास्वप्नेस्यजाग्रत्त्वज्ञानानियथाअविद्यमानानिनस्वाभीष्टसाधकानिस्वमतरीत्याचैवमित्यभिप्रायः । अभिदादिकृतैतेषांभावानांपरमेश्वरे । यतोसत्त्वमशक्तत्वाद्भावानांतस्यशक्तता । ततःसत्वेसाधुभावःसत्वामित्युच्यतेबुधैः । साधुभावश्चशक्तस्यततोन्यासाधुताकुतः । अभेदेजगतोविष्णोर्यावाचोपेचहेतवः । स्वप्नजाग्रत्कल्पनवत्सर्वेतेभ्रमदर्शिनइतिवचनात् ३१ ननुपरमात्मभेदस्याप्रामाण्येनतद्भेदस्यभ्रमत्वंकथमापाद्यतइत्याशंक्यप्राप्तिमापाद्यप्रतिषेधति योजागरइति । योजीवस्यदक्षिणाक्षिस्थितोविश्वाख्योहरिर्जागरेजाग्रदवस्थायांक्षणधर्मिणः क्षणकालवर्तित्वलक्षणधर्मवतोबहुविधानर्थान्भुंक्ते अस्वतंत्रजीवस्यदर्शयति स्वप्नेवकंठस्थःसमस्तकरणःसम्यग्वशीकृतेंद्रियः तैजसाख्योविष्णुःहृदिमनसिसंस्काररूपेणस्थितांस्तत्सदृक्षान्जाग्रदर्थसदृशान्पदार्थान्जीवस्यदर्शयति यश्चसुप्तसुप्त्यवस्थायांहृदिस्थितःप्राज्ञाख्यःपरःउपसंहरतेइंद्रियाणीतिशेषः । विषयेभ्यइंद्रियाण्याहृत्यजीवानंदंपश्यतितंचस्वरूपानंदंभोजयतिस्वयंचविहितानंदंभुंक्तेसविश्वादित्रिरूपः एकःभेदरहितः कुतइतितत्राह स्मृत्यन्वयादिति स्मृतीत्युपलक्षणम् श्रुतिस्मृतिमानेभ्यइत्यर्थःभुंक्तइत्यस्यानुभवतीत्यर्थंपरित्यज्यदर्शयतीत्यर्थकथनेकिंनिया

मकमत्राह त्रिगुणेति त्रिगुणवृत्तीःजाग्रत्स्वप्नसुषुप्तीःपश्यतीतित्रिगुणवृत्तिदृक् । दक्षिणाक्षिस्थितोविश्वुर्मुक्तेर्थान्जाग्रतिस्थितान् । कंठसस्थस्तथास्वप्नान्जीवानंदंचसुप्तिगः । श्रुत्यन्वयात्स्मृतिभ्य असएकःपरमेश्वरः । अस्वतंत्रस्यजीवस्यस्वतंत्रोजाग्रदादिदः । स्वयंस्वप्नादिहीनःसन्क्रीडतेपुरुषोत्तमइति । स्वप्नेशारीरमभिप्रहत्यासुप्तःसुप्तानभिचाकशीतीत्यादिश्रुतिस्मृतिभ्यउक्तएवार्थःअत्रहरेःसा क्षित्वंसुखैकभोक्तृत्वंचतात्पर्यार्थः । नन्वनानंदानुभवस्तदतीतत्वान् कुतइतितत्राह इंद्रियेशइति इंद्रियप्रवृत्तिसमर्थस्यतद्भोग्यदुःखानुभवस्यानुचितत्वात् अनेनतुर्यस्यविश्वाद्येकत्वमुक्तंभवति ३२ उक्तार्थानुवादपूर्वकमुक्तज्ञानफलंविधत्ते एवमिति एवमुक्तविधंविमृश्यालोच्य कथमित्युक्तंस्मारयति गुणतइति सत्त्वादिगुणतउद्भूतान्मननान्मनउदिष्टइतिमनसोजीवस्यजाग्रदाद्यवस्थामन्मा ययामदिच्छयामयिमदाधारत्वेनकृताविहिताःपर्याप्ताइतिनिश्चितार्थाः यूयमनुकूलश्रुत्यादिमानेनसतांमहतांउक्त्यावचनेनतीक्ष्णेननिशितधारेणज्ञानाख्यासिनाहार्दंहृदिरूढमखिलसंशयाधिसंछि द्यमामभजतेत्यन्वयः । अनेनमुक्तिरप्युक्ताभवतीतिज्ञातव्यम् ३३ ननुजाग्रदादिषुप्रवर्तकत्वेनवर्तमानस्यहरेःविश्वादिरूपाणांभेदोनास्तीत्युक्तंतत्रवृत्तिभेदेनप्रतीयमानोभेदःकथंप्रत्येतव्यइत्यत्रा ह ईक्षेतेति । जाग्रदादिषुप्रतीयमानमिमंपरमात्मभेदंविभ्रमज्ञानमूलंवीक्षेत । जाग्रदादिकरोदेवःपरमात्मैकएवतु । इतिविक्षितसततंमुच्यतेसंसृतेरतइतिवचनात् । अज्ञाननिमित्तहेतुमाह मनस इति । मनसोविलासंमनोविकाररूपत्वात् एतत्कुतोत्राह दृष्टमिति । गुरूपदिष्टशास्त्रदृष्ट्यापदाविभ्रमोयमितिदृष्टस्तदैवनष्टोभवतिपत्तस्मात् इतोपिमनोविलासइत्याह अतिलोलमिति श्रुत्यादिवि चारोक्षिप्रविनाशित्वात्अत्रदृष्टांतोपमामाहअलातचक्रमिति अलातचक्राकारभ्रमवत्परमात्मभेदभ्रमंविद्यादित्यर्थः एवंसुरनराद्याहिततत्तन्नियंतृभेदोपिभ्रांतइत्याशयेनाह विज्ञानमिति विज्ञानमानं

एवंविमृश्यगुणतोमनसस्त्र्यवस्थामन्माययामयिकृताइतिनिश्चितार्थाः ॥ संछिद्यहार्दमनुमानसदुक्तितीक्ष्णज्ञानासिनाभजतमाखिलसंशयाधिम् ३३ ई क्षेतविभ्रममिमंमनसोविलासंदृष्टंविनष्टमतिलोलमलातचक्रम् ॥ विज्ञानमेकमुरुधेवविभातिमायास्वप्नेयथात्रिगुणसर्गकृतोविकल्पः ३४ दृष्टिंततःप्रति निवर्त्यनिवृत्ततर्षस्तूष्णींभवेन्निजसुखानुभवोनिरीहः ॥ संदृश्यतेक्वचयदीदमवस्तुबुद्ध्यात्यक्तंभ्रमायनभवेत्स्मृतिरानिपातात् ३५

दंब्रह्मेतिश्रुतेः । एकंस्वगतभेदशून्यंब्रह्मनानारूपमिवभाति अज्ञानामितिशेषः । यथास्वप्नएकैवगजादिमायाबहुधाप्रतीयतेतथेति मिथ्याज्ञानकारणमाह त्रिगुणेति सत्त्वादिभिस्त्रिभिर्गुणैस्तत्सर्गैस्त त्कार्यैःपापादिभिश्चकृतःपर्याप्तोविकल्पोमिथ्याज्ञानंकारणमितिशेषः । तमआदिगुणनिमित्तपापादिदुष्कर्मदूषितांतःकरणानामज्ञानामासुरप्रकृतीनांसच्चिदानंदरूपमेकंबाहुविधप्रतीयतइतिभावःदेह भेदेष्ववस्थासुप्रादुर्भावेषुकेवलम् । ज्ञानानंदैकसद्रूपंभ्रांत्याभिन्नंप्रपश्यति । साचभ्रांतिर्विनश्येतयदाभ्रांतित्ववेदनम् । अतिक्षिप्रंविनश्येच्चनस्थिरंदिग्भ्रमादिवत् । त्रिगुणैर्बाधिताजीवाज्ञप्तिमात्रंजानर्द नम् । पश्यंतिबहुधास्वप्नेयथैकंबहुधाक्वचित् । अभिन्नोपिविभिन्नेषुव्यवहारोयथाभवेत् । तथैवव्यवहारायशक्तत्वान्नैवदूषणं । ईशस्यतुतदन्येषामपियच्छक्तिदायकः । इत्यनेनमानेन । अशक्योप्यतिश क्योपिविनिवर्तयितुंभ्रमः ईशस्थोगुरुसंपत्त्यायादिशुद्धमनाःपुमान् इत्यनेनमानेननिर्णीतत्वादिदमेवतात्पर्येणज्ञातव्यम् । अन्यदुःशास्त्रमितिसिद्धम् ३४ एवंविधंमिथ्याज्ञानंमोक्षार्थिनाहेयमितिभावेनाह दृष्टिमिति । यतोपापफलंमिथ्याज्ञानंततोनिवृत्ततर्षःविषयाभिलाषरहितःदृष्टिंमिथ्याज्ञानंप्रतिनिवर्त्यपरमात्मभेदादिदर्शनरहितोभूत्वातूष्णींभवेत्निरंतरध्यानमंतरेणप्रवृत्त्यंतरविधुरःस्यात् । किमनेन पाषाणवदवस्थानेनेतितत्राह निजेतिअनेनस्वरूपसुखस्यानुभवोयस्यसतथा ननुनित्यनैमित्तिकादिक्रियादर्शनात् प्रवृत्त्यंतरशून्यःकथमत्राह निरीहइति । निषिद्धचेष्टाविधुरोभवति नतुक्रियामात्रशून्यः ननुसंसारवशात्वर्तनंमूढजनस्थितंभ्रमंदृष्ट्वास्वयंमुह्यतीतिकिंनस्यादित्यत्राह संदृश्यतइति । यदिक्वचिन्मूढजनेस्थितमिदंपरमात्मभेदज्ञानंज्ञानिनांसंदृश्यतेतथाप्यवस्तुबुद्ध्याअविद्यमानोयंभेदभ्रमइ तिज्ञानेनत्यक्तंमिथ्याज्ञानंपुनर्भ्रमाय भ्रमजननायनभवेत् तत्रनिमित्तमाह स्मृतिरानिपातादिति । न्यक्भावेनपातोयस्मिन्तन्निपातमंधंतमःमोक्षमारभ्यतावत्पर्यंतंस्मृतिर्यस्मात्ज्ञानिनोनिपातपर्यं

वेस्मृतिर्ज्ञानियस्तीतियत्तस्मादित्यर्थः । ज्ञानफलंमोक्षःकर्मफलंस्वर्गएवंमिथ्यानफलमंधंतमइतिस्मरतिज्ञानीति । निन्यंकृभावानैकामयोरितियादवः ३५ ननुत्रिगुणसर्गकृतोविकल्पइत्यत्रात्रिगुणबद्धानां
विकल्पइत्युक्तंतत्रज्ञानिनोपिदेहवत्त्वेनत्रिगुणत्वाद्विकल्पःसंभाव्यतइत्यत्राह देहंचेति । निरंतरंभगवंतंध्यायन्जीवस्वरूपमारभ्यपरमात्मपर्यंतानितत्त्वानितत्तत्स्वरूपंयथावदभ्यगमदेहादिविलक्षण
तयातारतम्येनापरोक्षीचकारेतियत्तस्माद्देहाभिमानरहितोध्यानरूढोवावास्थितमुत्थितंवादेहंनानुपश्यतिकीदृशंदेहं दैवादुपेतंप्राप्तंदैववशाद्भगवत्प्रेरितकर्मवशात्वियुक्तंचमदिरामदांधःमद्यपानजातम
दविस्मृतात्मज्ञानःपुरुषःपरिवृतंआच्छादितंवासोयथाहृढीकरणादियत्नंनकरोतीत्यतःत्रिगुणकृतदेहाभिमानाभावात्तत्कृतविकल्पोनास्तीतिभावः ३६ दैवादुपेतमित्येतत्स्पष्टयति देहोपीति ।
ननुस्वयंदेहपोषणादिमयत्नोदासीनश्चेत्कथंतिष्ठतइत्यतोवाह देहइति । दैववशगःस्वादृष्टप्रेकरश्रीहर्यधीनोदेहोपितावत्प्रतिसमीक्षतेप्रतीक्ष्यावतिष्ठते । कार्यस्यजडस्यकारणावस्थानमंतरेणावस्थानं
कथमत्राह सासुरीति प्राणवृत्तिसहितत्वात् । कियंतंकालमत्राह कर्मेति । यावत्स्वारंभकंस्वोत्पादकादृष्टलक्षणंकर्मास्तितत्समाप्तौपततीत्येवार्थेखलुशब्दःतथाप्यभिमानोभवत्यवेत्यत्राह तमिति ।
अधिरूढसमाधियोगअसंप्रज्ञातसमाधिस्थः । सप्रपंचंतंदेहंपुनर्नभजेत् पूर्वंयथातथाहृतंनकरोतीत्यन्वयः । आदरोभजनंभक्तिर्बहुमानंचसेवनं । पर्यायवाचकाःसर्वेस्मृतिस्तज्जन्यकर्मचेतिवचनात् ।

देहंचनश्वरमवस्थितमुत्थितंवासिद्धोनपश्यतियतोध्यगमत्स्वरूपम् ॥ दैवादुपेतमुतदैववशादपेतंवासोयथापरिकृतंमदिरामदांधः ३६ देहोपिदैववशगः
खलुकर्मयावत्स्वारंभकंप्रतिसमीक्षतएवसासुः ॥ तंसप्रपंचमधिरूढसमाधियोगःस्वाप्नंपुनर्नभजतेप्रतिबुद्धवस्तुः ३७ मयैतदुक्तंवोविप्रागुह्यंयत्सांख्ययो
गयोः ॥ जानीतमागतंयज्ञंयुष्मद्धर्मविवक्षया ३८ अहंयोगस्यसांख्यस्यसत्यस्यर्तस्यतेजसः ॥ परायणंद्विजश्रेष्ठाःश्रियःकीर्तेर्दमस्यच ३९ मांभजंति
गुणाःसर्वेनिर्गुणंनिरपेक्षकम् ॥ सुहृदंप्रियमात्मानंसाम्यासंगादयोगुणाः ४० इतितेछिन्नसंदेहामुनयःसनकादयः ॥ सभाजयित्वापरयाभक्त्यागृणतसंस्त
वैः ४१ तैरहंपूजितःसम्यक्संस्तुतःपरमर्षिभिः ॥ प्रत्यायस्वकंधामपश्यतःपरमेष्ठिनः ॥ ४२ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेत्रयोदशोध्यायः
॥ १३ ॥ उद्धवउवाच ॥ वदंतिकृष्णश्रेयांसिबहूनिब्रह्मवादिनः ॥ तेषांविकल्पःप्राधान्यमुताहोएकमुख्यता १

कथमिवमतिबुद्धवत् यथास्वप्नादुत्थितःस्वाप्नंस्वप्नदृष्टंदेहंनभजेत्तथेति ३७ इतिहासंगमयति मयैतदिति ३८ कर्मयोगस्यसांख्यस्ययथार्थज्ञानस्यसत्यस्ययथार्थभाषणस्यऋतस्यभूतहितोपदे
शिवेदस्यतेजसोबलस्यब्रह्मवर्चसस्यवाश्रियःसंपदः ३९ सर्वेगुणाअसंपूर्णगुणरूपाअप्रधानाः ब्रह्मादिदेवाएवंविधंमांभजंति किंगुणाश्चमांभजंति कीदृशं निर्गुणंप्रकृतिगुणवर्जितंआत्मानंसंपूर्णगुण
रूपकंअतएवनिरपेक्षकं अपूर्णगुणस्यहिगुणापेक्षानचसास्यास्तीतिअतएवसुहृदंअनिमित्तबंधुंअतएवाहमेवसेव्यइत्युक्तं प्रियंतदेतत्प्रेयतइतिश्रुतेः । अपूर्णगुणरूपास्तुसंपूर्णगुणरूपकं । भजंतिप
रमंब्रह्मदेवास्त्रिगुणवर्जितमितिवचनात् । केअगुणाइतितत्राह साम्यासंगादयइति ज्ञानादिगुणानांतारतम्येपिसर्वसामान्यादनभिधानं साम्यादीनांप्रदभावाद्विशेषोक्तिरितिज्ञातव्यम् ४० सन
कादीनांभगवदुक्त्याछिन्नसंदेहत्वस्यकिंलक्षणमित्यत्राह इतीति । इतीत्यनेनसमाप्तिः ४१ पूजितःसम्यक्संस्तुतः इत्येताभ्यांचछिन्नसंशयत्वंलक्षयति ४२ ॥ इतिश्रीमहाभाग०वि०कृतटीकायां
एकादशस्कंधेत्रयोदशोऽध्यायः ॥ १३ ॥भगवत्साक्षात्कारायसर्वस्मादुत्तमसाधनंभक्तिरेवतद्भूताचेत्थंध्येयोहरिरितिद्वयमस्मिन्नध्यायेविवृत्ते । तत्रोद्धवप्रश्नपूर्वकंविद्याम्नायंकथयति वदतीति ।
श्रेयांसिप्रशस्तानिसाधनानितेषांसाधनानांयथायथवासावेतिवादिदंभववादिंवेतिविकल्पोवासंभूयसर्वेषांप्राधान्यमुतैकस्यमुख्यता अन्येषांचतदुपसर्जनत्वंचेति १

भवतानपेक्षितःअन्यापेक्षारहितोखिलसाधनोत्तमोभक्तियोगउदाहृतःतथापित्रह्मवादिमतानांकागतिरितिशेषः । येनभक्तियोगेन २ वेदमूलान्येवश्रेयांसितत्रमत्प्रीतिसाधनंभक्तिलक्षणोधर्मःश्रेयसा मुत्तमइतिदर्शयितुंश्रद्धाजननायवेदोक्तपरंपरामाह कालेनेत्यादिना । कालेनकालशक्त्या मदात्मकोमद्विषयः ३ मनवेस्वायंभुवायकीदृशोयंतद्धितप्रत्ययइत्येतस्यस्पष्टयति पुत्रायेति । स्वयंभुवः पुत्रत्वात्स्वायंभुवइत्यर्थः । अत्रमनोःपूर्वजत्वंरुद्रेंद्रकुमारान्विनेतिग्राह्यं । रुद्रामिंद्रंकुमारंचविनैवान्याग्रजोमनुः ब्रह्मपुत्रेष्वादिसृष्टावन्यथात्वंपुनर्जनेरितिवचनात् । आदिसृष्टौपूर्वजायेतेधिकाःसर्वतो गुणैः । अनाद्यनंतकालेपुमुक्तावपियथाक्रममितिच ४ ५ रजःसत्वतमोभुवइतिपाठः ६ याभिःप्रकृतिभिःभूतानांअतिभेदेपिवेदस्यैकत्वेनतदर्थोप्येकविधएवेतितत्राह यथाप्रकृतीति । वेदवाचः त्रिधाःसर्वविधमार्थविशेषार्थप्रतिपादकावाचः स्वमनीषार्थंप्रमाणवत्प्रतिभांतीत्यर्थः ७ ततःकितत्राह एवमिति । यथाप्रकृतिवैचित्र्याद्वेदवागर्थप्रतीतिवैचित्र्यमेवंमतयोपिविचित्राः । ननुश्रु तिमूलत्वेनगुरुपरंपरागतत्वेनसर्वेषामपिमतानांप्रामाण्यमवगतंस्यादत्राह पारंपर्येणेति । अनेनमदुक्तपारंपर्येणागतानिकेषांचिद्देवादीनामेवतानिप्रमाणान्यन्यानिराजसादीनीत्यर्थः । विरक्तत्वापेक्षया

भवतोदाहृतःस्वामिन्भक्तियोगोनपेक्षितः ॥ निरस्यसर्वतःसंगंयेनत्वय्याविशेन्मनः २ ॥ श्रीभगवानुवाच ॥ कालेननष्टाप्रलयेवाणीयंवेदसंज्ञिता ॥ मयादौब्रह्मणेप्रोक्ताधर्मोयस्यांमदात्मकः ३ तेनप्रोक्ताचपुत्रायमनवेपूर्वजायसा ॥ ततोभृग्वादयोगृह्णन्सप्तब्रह्ममहर्षयः ४ तेभ्यःपितृभ्यस्तत्पुत्रादेवदानवगुह्यकाः ॥ मनुष्याःसिद्धगंधर्वाःसविद्याधरचारणाः ५ किंदेवाःकिन्नरानागारक्षःकिंपुरुषादयः ॥ बह्व्यस्तेषांप्रकृतयोरजःसत्वतमोभुवः ६ याभिर्भूतानिभिद्यंतेभूतानांमतयस्तथा ॥ यथाप्रकृतिसर्वेषांचित्रावाचःस्रवंतिहि ७ एवंप्रकृतिवैचित्र्याद्भिद्यंतेमतयोनृणाम् ॥ पारंपर्येणकेषांचित्पाखंडमतयोऽपरे ८ मन्मायामोहितधियःपुरुषाःपुरुषर्षभ ॥ श्रेयोवदंत्यनेकांतंयथाकर्मयथारुचि ९ धर्ममेकेयशश्चान्येकामंसत्यंदमंशमम् ॥ अन्येवदंतिस्वार्थंवैऐश्वर्यंत्यागभोजने ॥ केचिद्यज्ञंतपोदानंव्रतानिनियमान्यमान् १० आद्यंतवंतएवैषांलोकाःकर्मविनिर्मिताः ॥ दुःखोदर्कास्तमोनिष्ठाःक्षुद्रानंदाःशुचार्पिताः ११ मय्यर्पितात्मनःसभ्यनिरपेक्षस्यसर्वतः ॥ मदात्मकंसुखंयत्तत्कुतःस्याद्विषयात्मनाम् १२ अकिंचनस्यदांतस्यशांतस्यसमचेतसः ॥ मयासंतुष्टमनसःसर्वाःसुखमयादिशः १३

केषांचिदित्युक्तंवामशैवादीनितामसत्वेनपाखंडानीत्याह । पाखंडेति ८ अत्रनानामतत्वेमुख्यकारणंकिमितितत्राह । मन्मायेति । अनेकांतंनानाविधं यथारुचियथेच्छम् ९ एतदेवविशदयति धर्ममेकइति त्यागोभिमानत्यागः । भोजनंवास्वादः १० एतत्साधनसाध्यान्लोकानाह आद्यंतवंतइति । एषांकर्मनिर्मितालोकास्तेपामाद्यंतवत्त्वेपियावल्लोकंसुखमस्तिकिंनेत्याह दुःखोदर्का इति । तमोनिष्ठाः अंधकारप्रचुराः । मद्भक्तिवर्जितंश्रेयोयेमन्यंतेदुराशयाः । तेषांमंतेतमोघोरमनंतंप्राप्यतेध्रुवमितिवचनात् असम्मतानिष्ठानांतमएव । बृहस्पत्युक्तत्वेपिहरिभक्तिराहित्यात् । अल्पानंदत्वेशुचार्पितत्वेहेतुः ११ भगवद्धर्मसाध्यलोकसुखवत्तल्लोकसुखमपिनिर्दुष्टंकिंनस्यादविशेषादत्राह मयीति । अहमात्माप्रापकोयस्यतन्मदात्मकंमय्यर्पितआत्मामनोयस्यसत्स्येसाधुगुणपूर्णेममात्मा स्वभावोयस्यतथेविवा यथाहंनिर्दोषस्वभावः तथेदमपीत्यनयोक्त्याविशेषोदर्शितः इतीतरानुमानस्यतर्काभावेनदौर्बल्यात्त्वत्तुल्यमित्यर्थः १२ एवंविधस्यमदर्पितात्मनोनकेवलममुत्रसुखित्वं इहापिसुखित्वंस्यादित्याह अकिंचनस्येति अकिंचनस्येत्यत्रएकैकोपिसुखित्वेहेतुःकिमुतसमुदितइतिभावेनोक्तं मयाःसुखमयाइति १३

स्वय्यर्पितात्मनोपिपारमेष्ठ्याद्याकांक्षायांतत्पदानांदुःखमिश्रसुखरूपत्वात्सर्वत्रसुखित्वंकथमित्याशंक्याह नपारमेष्ठ्यमिति । मय्यर्पितात्मामामेवसुखमिच्छति मदन्यत्किमपिनेच्छतीतियतस्तस्मात्तस्यनिराकांक्षत्वेनसर्वत्रसुखमेवेतिभावः १४ अन्यभक्तेषुप्रीतिविशेषोस्तीतिदर्शयितुंभक्तेःकर्तव्यत्वंचनिदर्शयन्निवउद्धवंअतिस्तौति नतथेति अनेनमनुष्यादिभक्तेषुभिक्षान्नप्रदानवत्कृपानिमित्तप्रीतिर्लक्ष्म्यादिषुप्रियापुत्रादिप्रीतिवत्सार्वकालिक्यांतराप्रीतिरस्तीतिसूचितम् । कृपानिमित्तायाप्रीतिर्नीचभक्तेषुसाधिका । आंतरैवतुयाप्रीतिःसातूच्चेषुयथाक्रमं यथाकश्चित्स्वमात्मानंप्रियंपुत्रमथापि वा । अतिहायकृपायुक्तोभिक्षवेन्नंददात्यपि । कदाचिदेवनपुनःस्वात्मादेःसार्वकालिकं । योगक्षेमवहत्वंचानित्यंस्वात्मादिषुस्फुटं । एवमेवपरेशस्यभक्तेषुश्रियेजादिषुइतिवचनात् । यादवेभ्यस्तुसर्वेभ्य उद्धवोभर्यवत्प्रियः । उद्धवाच्चप्रियतमःप्रद्युम्नस्तुमहारथः । तस्मादपिप्रियतमोरामःकृष्णस्यसर्वदा । नैवतस्मात्प्रियतमोविनैवैकंचतुर्मुखं । सर्वेभ्योपिप्रियतमाहरेःश्रीरेववल्लभा । नैवतस्याप्रियतमोविना स्वात्मानमेवात्वित्यतोपिसर्वयादवेभ्योविशिष्टभक्तउद्धवइतिप्रकटनायविशिष्यस्तुतउद्धवइतिभावः १५ ननुप्रतीतार्थंपरित्यज्यान्यार्थविशेषकल्पनेकोहेतुरित्याशंक्यातिदेशोहेतुरितिभावेनाह निरपेक्षमिति स्वांघ्रिरेणुभिर्ब्रह्मांडंपूयेयशोधयामीत्यनुव्रजामि । अनुगच्छतोममपादधूलयोवायुनापुरतोगच्छंतिभक्तेनिपतंत्योतितरांशोधयंतीदंसजलभूमिपादविक्रमेसिद्धंभवतीतिततःपूयेय शुद्धोभवानीत्यन्यर्थेनयुक्तः । यत्सेवयामाहात्म्यमाप्तः । सहरिस्तदनुगमनेनतत्पादरेणुसंपर्केणशुद्धोभवतीतिनयुज्यतेसदोषस्यशुद्धिप्रार्थनंदृष्टंनिर्दोषस्यनघटतइत्युक्तएवार्थः । अनुगच्छतिविष्णुस्तुस्वभक्तत

**नपारमेष्ठ्यंनमहेंद्रधिष्ण्यंनसार्वभौमंनरसाधिपत्यम् ॥ नयोगसिद्धीरपुनर्भवंवामय्यर्पितात्मेच्छतिमद्विनान्यत् १४ नतथामेप्रियतमआत्मयोनिर्नशंकरः ॥ नचसंकर्षणोनश्रीर्नैवात्माचयथाभवान् १५ निरपेक्षंमुनिंशांतंनिर्वैरंसमदर्शनम् ॥ अनुव्रजाम्यहंनित्यंपूयेयस्वांघ्रिरेणुभिः १६ निष्किंचनामय्यनुरक्तचेतसःशांतामहांतोखिलजीववत्सलाः ॥ कामैरनालब्धधियोजुषोयेतेनैरपेक्ष्यंहिविदुःसुखंमम १७ बाध्यमानोपिमद्भक्तोविषयैरजितेंद्रियः ॥ प्रशस्तयापिमद्भक्त्याविषयैर्नाभिभूयते १८ यथाग्निःसुसमिद्धार्चिःकरोत्येधांसिभस्मसात् ॥ तथामद्विषयाभक्तिरुद्धवैनांसिकृत्स्नशः १९ नसाधयतिमांयोगोनसांख्यंधर्मउद्धव ॥ नस्वाध्यायस्तपस्त्यागोयथाभक्तिर्ममोर्जिता २०**

स्यशुद्धये । तस्यांघ्रिरेणुभिर्वर्तिनीतैरग्रेसरःशुचिः । अग्रतोगमनेविष्णोःपादस्पृष्टंरजोभवेत् । अतःस्वभक्तंपूयेयेत्यनुव्रजातिकेशव इतिवचनात् । अनेननिष्कामत्वादिगुणसंपन्नत्वेनसेवमानेषुभक्तेषुत्वय्यतिशयितप्रीतिरस्तीत्युक्तंभवति १६ एवंभजतांनिर्दुःखानंदानुभवोभविष्यतीत्यत्रकिमानमित्याशंक्यब्रह्मादिज्ञानिप्रत्यक्षंप्रमाणमितितिनिदर्शयति निष्किंचनाइति । येनिष्किंचनाःनिष्किंचनत्वादि गुणपूर्णाःकामैर्विषयैरनालब्धधियोप्रतिहतबुद्धयःअजुषश्चविषयानसेवमानाश्चतेममसकाशान्नैरपेक्ष्यंविषयानपेक्षंस्वरूपसुखंस्यादितिविदुर्हीत्यन्वयः । ननुबिंबभूतस्यविष्णोःस्वरूपसुखसद्भावेमानमस्तिचेत्प्रतिबिंबजीवस्वरूपसुखाविर्भावेभक्त्यादिसाधनसामग्रीसंपादनयत्नोनितरांसफलःस्यात्तत्रकिंमानमित्यत्रापीदमुत्तरंभवतीत्याह निष्किंचनाइतिममनैरपेक्ष्यंसुखमस्तीतिविदुरित्यन्वयः । हिशब्दश्चयत्रापिप्रमाणमस्तीतिसूचयतिज्ञानिप्रत्यक्षलक्षणप्रमाणसद्भावाद्भक्त्यादिसाधनमवश्यमापादनीयमितिभावः १७ ननुत्वद्भक्तस्यापिविषयग्राहग्रस्ततयाभक्तिलोपेनाधःपातःसंभाव्यतइतिभक्तिविधानंव्यर्थमितितत्राह बाध्यमानइति विषयैर्बाध्यमानत्वेनाजितेंद्रियोपिप्रशस्तयामद्भक्त्याविषयैर्नाभिभूयते । विषयनिषेवयाप्राप्तदोषेणाधोनपततीत्यन्वयः १८ कथमिवेतितत्राह यथेति एनांसि पापानि १९ भक्त्यानुपहितबुद्धिनानुष्ठितधर्मादयोमदपरोक्षंनजनयंतीत्याह नेति २०

१ श्रीश्राजश्चश्रियजौतावादिर्येषांतेश्रियजादयःतेषुअत्रेहयइच्छादसः ।

भक्तिप्रधानधर्मादीनांतत्साधनवद्भक्तेरपितत्साहित्यापाएवतत्साधनत्वमत्राह भक्त्येति । भक्तेःप्राधान्येगुणादर्शनात्कथंतदुन्नतिरुच्यतेइतितत्राह भक्तिरिति । संभवाज्जननादिरूपसंसारात् यद्वा सोत्पत्त्यनंतरमेवपुनातिनतुकालक्षेपेण २१ भक्तिनायकहीनानांधर्मादीनामप्रयोजकत्वमर्थादुक्तं अधुनातत्प्रकाशयति धर्मइति । हिशब्दोनायमात्माप्रवचनेनलभ्यइतिश्रुतिंसूचयति २२ यद्यपिमहांतोवैष्णवसिद्धांताचलनत्वादिनैवास्यभक्तिरस्तीतिजानंतेतथापिबाह्यानांसुबोधायभक्तेःप्रत्यक्षलक्षणान्याह कथमिति २३ समीचीनभक्तियुक्तःपुरुषोपिसर्वंपुनातिकिंपुनर्भक्ति रित्याशयेनाह वाग्गद्गदेति । अत्र चित्तद्रवस्तथाधैर्यप्रसादोभक्तिलक्षणः आधिक्येनतुतत्रापिस्थैर्यमेवाविशेषतः । दंभस्यचलभक्तेश्चयस्माद्रुदयादिकंभवेत् । दंभादिपरिहारार्थंनिगृह्णीयाच्चधीरधीः । अतश्चाध्यात्मिकैःक्लेशैराधिभूताधिदैवतैः । वाक्यैश्चवेदतंत्रार्थैरुपदेशैश्चतादृशैः । बलवच्छासनैर्वापियस्यभक्तिर्नचाल्यते । सएवपरमोभक्तोविष्णोर्हृदयवल्लभइतिविशेषाश्चग्राह्याः २४ भक्तिःपुनाती त्युक्तंतत्रशुद्धिप्रकारंसदृष्टांतमाह यथेति । अग्निनासुखवायुसंयोगेनोज्ज्वलितेनध्मातंदाहविशेषंप्राप्तंहेममलंअष्टादशदोषलक्षणंस्वरूपंनिर्दोषभास्वरलक्षणं आत्मासत्स्वभावोजीवोनाद्यविद्याकामक र्मफलिलंकर्मानुशयमंतःकरणंभक्तियोगेनविधूयनिर्मलीकृत्यअथोमंगलमूर्तिमांभजतइत्यन्वयः २५ द्वित्र्यादिगुणाधिक ध्मातहेमवत्भक्तियोगोद्रेकक्रमेणशुद्धमात्मामनःभगवत्सूक्ष्मत

भक्त्याहमेकयाग्राह्यःश्रद्धयात्माप्रियःसताम् ॥ भक्तिःपुनातिमन्निष्ठासकाममपिसंभवात् २१ धर्मःसत्यदयोपेतोविद्यावातपसान्विता ॥ मद्भक्त्यपेत मात्मानंनसम्यक्प्रपुनातिहि २२ कथंविनारोमहर्षंद्रवताचेतसाविना ॥ विनानंदाश्रुकलयाशुध्येद्भक्त्याविनाशयः २३ वाग्गद्गदाद्रवतेयस्यचित्तंरुद त्यभीक्ष्णंहसतिक्वचिच्च ॥ विलज्जउद्गायतिनृत्यतेचमद्भक्तियुक्तोभुवनंपुनाति २४ यथाग्निनाहेममलंजहातिध्मातंपुनःस्वंभजतेचरूपम् ॥ आत्माचक र्मानुशयंविधूयमद्भक्तियोगेनभजत्यथोमाम् २५ यथायथात्मापरिमृज्यतेसौमत्पुण्यगाथाश्रवणाभिधानैः ॥ तथातथापश्यतिसूक्ष्मतत्त्वंचक्षुर्यथैवांजनसं प्रयुक्तम् २६ विषयान्ध्यायतश्चित्तंविषयेषुविषज्जते ॥ मामनुस्मरतश्चित्तंमय्येवप्रविलीयते २७ तस्मादसदभिध्यानंयथास्वप्नमनोरथम् ॥ हित्वामयि समाधत्स्वमनोमद्भावभावितम् २८ स्त्रीसंगसंगिनासंगंत्यक्त्वादूरतआत्मवान् ॥ क्षेमेविविक्तआसीनश्चिंतयेन्मामतंद्रितः २९

त्वंपश्यतीत्याह यथेति । परिमृज्यतेशोध्यतेतत्त्वंसूक्ष्मंसूक्ष्मतत्त्वं अत्रदृष्टांतांतरंचाह चक्षुरिति २६ कर्मसाचिवराहित्येनभक्तिपूर्वकध्यानमात्रेणचित्तंकथंत्वयिनिरंतरंविलग्नंभवतीत्यत्राह विष यानिति आत्मानुभवएवात्रमानंनमानांतरमन्वीक्षणीयमितिभावेनविषयनिदर्शनमुक्तम् । चित्तंस्वरूपचैतन्यमित्यर्थः २७ माथितमाह तस्मादिति यथास्वप्नमनोरथंस्वप्नवन्मनोरथवच्चासदभिध्या नंअशुभंविषयध्यानंहित्वा । नन्वेवंतर्हित्वदासक्तिवच्चित्तस्यविषयासक्तिरपिग्राह्याकिमित्यतोवा[illegible]शंकांपरिहरन्नुपसंहरति तस्मादिति । अज्ञानामपिबुद्ध्यवतारार्थंविषयसक्तिनिदर्शनमुक्त नतुग्राह्यार्थ त्वेनेतिच तस्माद्भावोभक्तिःमयिमत्कथाभावितंतन्मयीकृतं २८ स्वरूपबाह्यांतःकरणभोग्यत्वभेदेनद्विविधाविषयाःतत्रपूर्वेमुक्तावपेक्षणीयाद्वितीयाःसांसारिकाः अनर्थजनकत्वान्मुमुक्षुणाअव श्यंहेयास्तथाहितत्सेवातिरेकेणेश्वरोहमित्यादिलक्षणाकेशवेन्यथाबुद्धिर्जायते । जन्मप्रभृतिपुरुषेणसहवर्तमानत्वात् । सुखक्षयहेतुत्वेनरुयादिशब्दवाच्याः रीङ्क्षयइतिधातोः तस्याःसंगोयेषांते स्त्रीसंगाःतत्संगानांसंगोयेषामितिस्त्रीसंगसंगिनःतेषांसंगंदूरतःपरिहृत्यमत्सेवैवकर्तव्येश्वरोममस्वामीतत्किंकरोहमित्यादिलक्षणेतिभावेनाविषयास्त्यक्तव्याइत्याशयेनाह स्त्रीसंगेति अनेनस्त्रीरागिणां संगोपिपरिहर्तव्यइत्युक्तंभवति । केशवेत्वन्यथाबुद्धिःसैवस्त्रीसंप्रकीर्तितेत्यादिवाक्यमत्रप्रमाणं क्षेमेमंगलस्थले २९

नन्वन्येषुहत्यादिषुअधःपातहेतुषुहेयेषुसत्सुकिंविशेष्यस्त्रीसंगसंगिसंगोदूरतस्त्याज्यइत्युच्यतइत्यतआह नतथेति । यथास्यपुंसःयोषित्संगाद्विषयिभिर्जुष्टत्वाद्योषिच्छब्दवाच्यायाईश्वरोहमित्याद्यनेक विधान्यथाबुद्धेरधिकरणलक्षणसंगाद्यथातत्संगिसंगतःमिथ्याज्ञानिसेवालक्षणसंगात्क्लेशोबंधश्चांधंतमोलक्षणश्चभवेत् । तथान्यप्रसंगतःपिपीलिकादिवधलक्षणान्नभवेदित्यन्वयः अत्रपातकविशेषास्तत्फ लानिच । परदारदर्शिप्रोक्ताक्षुद्रपातकसंज्ञिताः । उपपातकतद्वत्स्त्रिश्चवर्णबाह्येषुपातकम् । महापातकसंज्ञंतुपित्रादेर्दारधर्षणम् । दारदृष्टिःस्वोत्तमानांमानुषाणांस्वभावतः । सुमहापातकंप्रोक्तंतद्वातिस्तुमह त्तमः । ऋषिदारेषुमनसोगतिरेवततोधिकम् । देवदाराभिकामानांसंगिसंगस्ततोधिकः । किमुविष्णोस्ततोयोषित्संगस्यव्यत्ययास्थिते । नसमंपातकंक्वापिनहिस्वकृ याभिकामिनः । अवज्ञातामाधवादेस्तस्माच्चदूरतस्त्यजेत् । मानुषेषुतुदुःखित्वंक्षुद्रपापफलंस्मृतं । पापंतुवर्णबाह्यत्वंतिर्यग्योनिगतिस्तथा । सहस्रवर्षंनरकंक्षुद्रपातकजंफलम् । तथोपपातकाच्चापिनरकंयुगमा त्रकं । चतुर्युगावसानंतुपातकस्यफलंस्मृतं । महापातकजन्यंचकल्पावधिसमीरितं । सुमहापातकाच्चापियावद्ब्रह्मलयोभवेत् । तत्पराणांपातकानांफलमंधंतमःस्मृतं । अधोधोदुःखमतुलंविष्णुदाराभि मर्शनात् । यथादपिहिदाराणाधर्षणंकोपकारणं । तस्माद्देव्यःसदावंद्याअभिवाभिकामतइति । धर्ममतस्ववचनाद्विशेषःपातकानांफलानांचद्रष्टव्यः ३० ध्यायेन्मामतंद्रितइत्यत्रोक्तंध्यानप्रकारंपृच्छ

नतथास्यभवेत्क्लेशोबंधश्चान्यप्रसंगतः ॥ योषित्संगाद्यथापुंसोयथातत्संगिसंगतः ३० ॥ उद्धवउवाच ॥ यथात्वामरविंदाक्षयादृशंवायदात्मकम् ॥ ध्या येन्मुमुक्षुरेतन्मेध्यानंत्वंवक्तुमर्हसि ३१ श्रीभगवानुवाच ॥ समआसनआसीनःसमकायोयथासुखम् ॥ हस्तावुत्संगआधायस्वनासाग्रकृतेक्षणः ३२ प्रा णस्यशोधयेन्मार्गंपूरकुंभकरेचकैः ॥ विपर्ययेणापिशनैरभ्यसेन्निर्जितेंद्रियः ३३ हृद्यविच्छिन्नमोंकारंघंटानादंबिसोर्णवत् ॥ प्राणेनोदीर्यतत्राथपुनःसंवे शयेत्स्वरम् ३४ एवंप्रणवसंयुक्तंप्राणसंयममभ्यसेत् ॥ दशकृत्वस्त्रिषवणंमासादर्वाग्जितानिलः ३५ हृत्पुंडरीकमंतस्थमूर्ध्वनालमधोमुखम् ॥ ध्यात्वो र्ध्वमुखमुन्निद्रमष्टपत्रंसकर्णिकम् ३६ कर्णिकायांन्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरम् ॥ वह्निमध्येस्मरेद्रूपंममैतद्ध्यानमंगलम् ३७ समंप्रशांतंसुमुखंदीर्घचा रुचतुर्भुजम् ॥ सुचारुसुंदरग्रीवंसुकपोलंशुचिस्मितम् ३८ समानकर्णविन्यस्तस्फुरन्मकरकुंडलम् ॥ हेमांबरंघनश्यामंश्रीवत्सश्रीनिकेतनम् ३९ शं खचक्रगदापद्मवनमालाविभूषितम् ॥ नूपुरैर्विलसत्पादंकौस्तुभप्रभयायुतम् ४०

ति यथेति । यादृशंकीदृशंयदात्मकंकिमात्मकम् ३१ समाहितेनमनसाध्यानंकर्तव्यं एतदुपायंप्रथमतोवक्ति समआसनइत्यादिना ३२ विपर्ययेणरेचकादिक्रमेण ३३ अत्रप्राणशब्दोद्विरावर्तनीयः हृदिनिरंतरंप्राणेनोच्चार्यमाणंओंकारंघंटानादवत्कर्णरमणीयंबिसोर्णवत्पद्मनालतंतुवदविच्छिन्नंवायुद्वारापेर्यमाणंप्राणशक्त्योदीर्यउच्चार्याथतत्रस्वहृदि स्थितेप्राणेस्वरमुदात्तलक्षणंपुनर्व्यावृत्तंयथातथा संवेशयेत्समीचीनंकुर्यादित्यन्वयः । ऊर्णाभ्रूमध्यमावर्ततंतौमेषादिलोमसूत्रेतियादवः । पुनरप्रयमप्रश्नव्यावृत्तावचधारणइति ३४ प्रणवेनसंयुक्तंप्राणसंयमंप्राणायामं मासादर्वाक्मासात्पूर्वमेवानि लोजितःप्राणप्रसादंप्राप्तइत्यर्थः उपास्यप्राणतोनुज्ञांहृदिस्थात्प्राप्यसेवकः । अनुज्ञानंतरंमासाद्वशेप्राणोभाविष्यति । प्रसादभाक्त्वंसंप्रोक्तंप्राणविष्णोर्जयास्त्विति । नाहिसर्वविजेतारौविजेयौकेनचित्क्वचित् अपेक्षितंफलंतेनदीयतेतज्जितंत्विति । यथाजितावसुमतीयथामोक्षपदांजितामितिप्रभंजनप्रमाणवचनादुक्तम् ३५ कथंस्थितंत्वामितिप्रश्नंपरिहरति । हृत्पुंडरीकेति ३६ यादृशमितिप्रश्नंपरिहरति वह्निरूपइति ३७ यदात्मकमित्यस्यपरिहारःप्रशांतमित्यनेनसूचितः । निर्दोषमकष्टानंदस्वभावमित्यर्थः ३८ ३९ ४०

४१ विषयपाशाकृष्टत्वेनाविशेंद्रियैर्ध्यानंकथमुपपद्यतइत्यतस्तदुपायमाह इंद्रियाणीति तस्मिन्ध्येयएवास्थितमनाः ४२ सर्वव्यापकंसर्वांगविषयंचित्तमाकृष्यैकत्रएकस्मिन्मुखाद्यवयवेसर्वविश्वरस्मरणाश क्तावेकस्मिन्नवयवेधारयेदित्यर्थः ४३ तत्रमुखादौलब्धपदमाकृष्यव्योम्निसर्वांगेषुधारयेदित्यर्थः । व्योमेतिव्याप्तशब्दः स्याद्विशेषादोततांयतइतिवचनात् विशेषादोतत्वमवयवाना मित्यर्थः । मय्येवम नसआरोहोयस्यसमदारोहःपुरुषः । तच्चधारणलक्षणंध्यानंतयन्ह्यास्वतएवमनसस्तत्रैवसमाहितत्वादयत्नेनजन्हुतीगंगाप्रवाहगमनत्रचिंतयेन् । तदुक्तं यावत्समग्रस्मरणमचलंकेशवेभवेत् । समग्रंचित येचावयवमात्रेविचलेत्ततः । प्रत्यंगधारणंकुर्यान्मनोयावत्समग्रगं । प्रत्यंगाभ्यासतोयावत्समग्रेशुस्थिरंमनः । तदापुनःसमग्रंतुधारयेद्यत्नतोबुधः । यथातुधारणोत्साहंविनातत्राचलंमनः । तिष्ठेत्त्यक्त्वा समुद्योगंशंखचक्रांबुजांकिते । आरूढचेताःपरमेशृंगाराद्येकधामनि । नैवान्यच्चिंतयेत्तस्मात्पूर्णानंदाच्चतुर्भुजात् ततोन्यस्मरणेतस्मान्मनश्चलतिसुस्थिरम् । धारणार्थंप्रयत्नेनतस्मात्तदुभयंत्यजेत् । यावत्स्वारूढचेताःस्याद्विष्णोरूपेचतुर्भुजइति ४४ उपासनाफलमाह एवमिति एवंनिरंतराभ्यासरतंप्रतिदिनंप्रवृद्धप्रेम्णामय्येवसमाहितमतिस्तत्परिपाकेसत्यात्मनिदेहेआत्मानंज्ञानाद्यभीष्टदातृत्वेनस्वा मिनंमामेवविचष्टेजीवात्पृथक्स्थितंपश्यति विनिषेधेपृथक्भावइतियादवः सर्वात्मन्सर्वस्वामिनिज्योतिषिज्योतिर्मयेमयिसंयुतंमदाधारतयास्थितं तस्माज्जातंतस्मिन्नेवोतामितिज्योतिर्जीवंचपश्य

द्युमत्किरीटकटककटिसूत्रांगदैर्युतम् ॥ सर्वांगसुंदरंहृद्यंप्रसादसुमुखेक्षणम् ॥ सुकुमारमभिध्यायेत्सर्वांगेषुमनोदधत् ४१ इंद्रियाणींद्रियार्थेभ्योमनसा कृष्यतन्मनाः ॥ बुद्ध्यासारथिनाधीरःप्रणयेन्मयिसर्वतः ४२ तत्सर्वव्यापकं चित्तमाकृष्यैकत्रधारयेत् ॥ नान्यानिचिंतयेद्भूयःसुस्मितंभावयेन्मुखम् ४३ तत्रलब्धपदंचित्तमाकृष्यव्योम्निधारयेत् ॥ तच्चत्यक्त्वामदारोहोनकिंचिदपिचिंतयेत् ४४ एवंसमाहितमतिर्मामेवात्मानमात्मनि ॥ विचष्टेमयिस र्वात्मन्ज्योतिर्ज्योतिषिसंयुतम् ४५ ध्यानेनेत्थंसुतीव्रेणयुंजतोयोगिनोमनः ॥ संयास्यत्याशुनिर्वाणंद्रव्यज्ञानक्रियाभ्रमः ४६ ॥ इतिश्रीभागवतेमहापुरा णेएकादशस्कंधेचतुर्दशोऽध्यायः ॥ १४ ॥ छ ॥ श्रीभगवानुवाच ॥ जितेंद्रियस्ययुक्तस्यजितश्वासस्ययोगिनः ॥ मयिधारयतश्चेतउपतिष्ठंतिसिद्धयः १ ॥ उद्धवउवाच ॥ कयाधारणयाकास्वित्कथंवासिद्धिरच्युत ॥ कतिवासिद्धयोब्रूहियोगिनांसिद्धिदोभवान् २

ति । तारतम्येनाबिंबभावेनास्थितास्तत्वाभिमानिनोदेवताद्रष्टासर्वाधारंमामंतेपश्यतीतिभावः । समाधियोगेसंपूर्णेहृदिपश्यतिकेशवम् । जीवंतत्प्रतिबिंबंचतेनैवसहसस्थितं । तदाधारंतदंतःस्थंतेनैवस हवांसदा । आनंदज्ञानशक्त्याद्यैःसदातदवरंगुणैः । जीवन्मुक्तौचमुक्तौवासततंतद्वशेस्थितमित्येतदत्रमानम् । स्वयंप्रकाशरूपत्वाज्जीवोपिज्योतिरुच्यतइतिच ४५ दर्शनफलमाह ध्यानेनेति सुती व्रेणनिशितेनइत्थमुत्पन्नध्यानेनानिदिध्यासेनदर्शनेनयुंजतः सर्वस्मात्प्रेष्ठोयमितिध्यायतोयोगिनोज्ञानिनोद्रव्यज्ञानक्रियाभ्रमः मदीयोयमितिदेहविषयेज्ञानेंद्रियकर्मेंद्रियविषयेचभ्रमतोतिभ्रमरूपंशाक्त मन्नोनिर्वाणंनाशंआशुसंयास्यतियातीत्यन्वयः ४६ ॥ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥ ७ ॥ परंज्ञानफलममृतमेवनाकित्वाणिमादिसि द्धिरप्यैहिकीत्येतदस्मिन्नध्यायेनिरूपयति तत्रादौ नापृष्टःकस्यचिद्ब्रूयादित्यतः प्रश्नबीजमुत्थापयति जितेंद्रियस्येति १ सिद्धयइतिश्रुत्वाउद्धवःकीदृश्याधारणयाकाकासिद्धि. ताश्चकतिसं ख्याताःसंतीतिपृच्छति कयेति २

---

१ वेञ्तंतुसंतानेदिवादिः ऊयते व्याप्नोति इति ओवत्तस्यभावः ओतता

कतिवेतिप्रश्नंपरिहरति सिद्धयइति। धारणायोगपारगैःधारणाख्ययोगपारंगतैरत्रोत्पन्नज्ञानस्यापितत्तद्योगसिद्धयेतत्तदधिष्ठानगततत्तद्भगवद्रूपविशेषानुस्मरणंधारणेत्युच्यते। तस्मात्सिद्धीनांमुख्यतो ज्ञानफलत्वेपिधारणाफलत्वमुपचारोन्यथानुत्पन्नज्ञानस्यापिधारणमात्रेणतत्सिद्धिप्रसंगइति। असुराणातुभगवत्क्षमयाहेतवइतिचतासामष्टादशसिद्धीनांमूलभूताअष्टौसिद्धयोमय्येवप्रधानामुख्याअन्ये पुदेवेषूपचरिताइतिमत्प्रधानाः। सर्वाधिकाअणिमाद्याविष्णोर्नान्यस्यकस्यचित्। स्वाभाविकाविरिंचस्यमत्प्रसादात्पराधिकाइति। स्वाभाव्येष्विति वचनात् ताएवअष्टैवगुणभूतानामनूर्मिमत्त्वाद्या नामपिहेतवः। निःसीमाष्टगुणाभावात्सिद्धयोष्टादशस्मृताः। देवेभ्योन्यत्रदेवानांसिद्धयोष्टैवसंमताइति ३ कास्ताअष्टेतितत्राह। अणिमेत्यादिना। मूर्तेःस्वरूपस्याणिमादिसिद्धिः इंद्रियैरन्यैंद्रियैर्विषय प्राप्तिःश्रुतेषुदृष्टेषुवस्तुषुप्राकाश्यशक्तिप्रेरणमेवेशितृत्वम् गुणेष्वसंगएववशित्वम्। यस्मिन्कामोयस्यसयत्कामस्तत्काममवाप्स्यतिइतियत्प्राकाम्यम्। यादृशानंदकामःस्यात्तादृशानंदसंभवःभोगान्विनैव प्राकाम्यमणिमादेःपृथग्यतइतिवचनात् ४ ५ इदानीमष्टादशसिद्धीरुद्दिशति अनूर्मिमत्त्वमित्यादिना। अणिमामहिमालघिमाप्राप्तिःप्राकाश्योशितावशिताप्राकाम्यमित्यष्टमहासिद्धयः अनूर्मिमत्त्वम् दूरश्रवणम् दूरदर्शनम्। मनोजवःकामरूपंपरकायप्रवेशनं स्वच्छंदमृत्युर्देवानांसहक्रीडानुदर्शनम्। यथासंकल्पसंसिद्धिराज्ञाप्रतिहतागतिः। अद्वंद्वं त्रिकालज्ञत्वम् परचित्ताद्यभिज्ञता अग्निस्तंभः अर्कस्तंभः। जलस्तंभोविषादिस्तंभः। अत्रादिशब्देनशस्त्रास्त्रनखदंतताडनशापादिभिरप्रतिहतिर्गृहीता इयंसंभूयसप्तदशीसिद्धिः अपराजयइत्यष्टादशसिद्धयःअणिमाद्यष्टसिद्धिभ्योजाताः एवमुभये संभूयपविंशाःगारिम्णासहसप्तविंशाःअर्थांतर्भावभेदेनाष्टसिद्धीनामष्टादशसिद्धयइतिकेषांचित्पक्षः। तथाहि अनूर्मिमत्त्वस्यप्राकाम्यांतर्गतत्वेनतेउभेएका दूरश्रवणदूरदर्शनत्रिकालज्ञत्वपरचित्ताद्यभिज्ञता

श्रीभगवानुवाच ॥ सिद्धयोष्टादशप्रोक्ताधारणायोगपारगैः ॥ तासामष्टौमत्प्रधानाताएवगुणहेतवः ३ अणिमामहिमामूर्तेर्लघिमाप्राप्तिरिंद्रियैः ॥ प्राकाश्यंश्रुतदृष्टेषुशक्तेःप्रेरणमीशिता ४ गुणेष्वसंगोवशितायत्कामस्तदवाप्स्यति ॥ एतामेसिद्धयःसौम्यअष्टावौत्पत्तिकामताः ५ अनूर्मिमत्त्वंदेहेस्मिन्दूरश्रवणदर्शनम् ॥ मनोजवःकामरूपंपरकायप्रवेशनम् ६

नांप्राकाश्यांतर्भावेनचतस्रएकाकामरूपत्वस्याणिमामहिमालघिमांतर्भावेनैका। अग्निस्तंभार्कस्तंभजलस्तंभविषस्तंभशस्त्रास्त्रशापादिस्तंभानांईशित्ववशित्वांतर्भावेपंच अपराजयोपिईशित्वांगतइति षट् मनोजवकामरूपपरकायप्रवेशस्वच्छंदमृत्युतादेवैःसहितत्क्रीडानुदर्शनाज्ञाप्रतिहतानांप्राप्त्यंतर्भावेनषट् अत्रकामरूपत्वस्यद्विवारोक्तिः रूपभेदेननविरुध्यते। गारिम्णःसैवहेतुःस्यान्महिमाहेतुधारणात्। प्रायोष्टसिद्धिकथनेष्वतोनपृथगुच्यतइति। प्राप्तिःप्रकाश्ययोश्चापिधारणैकापिसंभवेत्। अतएैक्येनताउक्तागरिमाणपृथक्क्वचित्इति। मूलभूतास्तुसिद्धीनांदेवानामष्टसिद्धयः। सर्वासिद्धप्रधानास्तास्तज्जाअष्टादशस्मृताः। अष्टस्वंतर्गतास्तास्तुतदपेक्षतयाल्पकाइति। अनूर्मिमत्त्वसिद्धिस्तुप्राकाम्यांतर्गतास्मृता। दूरश्रुतिर्दूरदृष्टिस्त्रिकालज्ञत्वमेवच। परचित्ताद्यभिज्ञानंप्राकाश्यांतर्गतानिच अणिमादित्रयांतश्चकामरूपत्वमिष्यते। अग्न्यर्काम्बुविषादीनांप्रतिष्टंभोवशित्वगः। मनोजवःकामरूपंपरकायप्रवेशनम्। स्वच्छंदमृत्युतादेवैःसहक्रीडेष्टसाधनम्। प्राप्त्यंतर्गतान्याहुराज्ञाप्रतिहतिस्तथा। अग्निस्तंभोरविस्तंभउदकस्तंभएवच। विषस्तंभस्तथाशस्त्रशापादिस्तंभएवच। ईशित्वांतर्गतान्याहुरपराजयमेवच। एवमष्टादशाष्टभ्योजायंतेसिद्धयःक्रमात्। अष्टादशाभ्यश्चान्यास्तुजायंतेसिद्धयोमिताः। अनूर्मिमत्त्वंदुःखस्याभावमात्रमुदाहृतम्। यथेष्टानंदसंप्राप्तिःप्राकाम्यमितिकीर्त्यते। दुःखाभावोपिप्राकाम्येनेतरसुखिवेष्यते। प्राकाश्यंसर्ववेदादिज्ञानमेवाविदोविदुः। सहस्रयोजनांतंतुदूरदर्शनमिष्यते। दूरश्रवणमप्येवंतस्मिन्नेवयुगेस्थिते। वेदादिकंविनाप्रोक्तात्रिकालज्ञातिताबुधैः। शरीरस्थंविनादेहेपरचित्ताद्यभिज्ञता। अन्येंद्रियैर्दर्शनादियथासंकल्पवेगिता। प्राप्तिरित्युच्यतेसाद्भिःस्वमनःसमवेगिता। मनोजवइतिप्रोक्तःपश्चाद्याकारतातथा। कामरूपत्वमुद्दिष्टंस्वदेहत्यागतःपरे। परकायप्रवेशःस्यात्कुगादवीक्तनःस्मृतः। स्वच्छंदमृत्युतादेवैःक्रीडाचंद्रादिभिर्विना। यथासंकल्पसिद्धिश्च

प्यब्रपानसुखादिषु । चक्षुर्द्देश्येष्वणुत्वंतुअणिमासंप्रकीर्तिता । महिमाचापिसंप्रोक्तात्रिलोकांतरपूरणात् । चक्षुर्दृश्येपिवाह्यत्वंलघिमासंप्रकीर्तिता । त्रिलोकसमभारस्तुगरिमाचापिकीर्तिता । पूर्वशक्तेः कोटिगुणसत्पुंद्रकस्तथेशिता । भुविस्थैःप्राणिभिःप्रोक्तकरणंचापिकीर्त्यते । आज्ञाप्रतिहतिर्ब्राह्मादर्वागस्त्रानिपातनम् । विनामहातपस्वींश्चशापाप्रतिहतिःस्मृता । अपराजयोमनुष्येभ्योवशित्वंचाप्यलोमता । दाहादिसहनंचापिप्रतिष्ठंभइतीर्यते । इतिषड्विंशतिप्रोक्तागरिम्णासहसप्तवा । विंशतिस्तुसुरेभ्योन्यदेवेष्वष्टैवसिद्धयः । यतोनिःसीमकास्त्वेषांदेवानामष्टसिद्धयःअतोष्टादशसिद्धीनांतदंतर्भावइष्यते । देवेष्विंद्रेशवायुश्रीविष्णूनामुत्तरोत्तरम् । सिद्धयःपरिपूर्णास्तुविष्णोरेकस्यनान्यगाइति । श्रुतेषुतुयथायोगंक्षिप्रग्रहणमेवतु । उक्तंप्राकाश्यमन्येषांदेवानामश्रुतेष्वपि । ऋषीणांमिश्रभावेनभासतेकिंचिदश्रुतम् । विषयेभ्योधिकसुखव्यक्तिःप्राकाम्यमेवतु । इतरेषांसुराणांतुनिःसीमानंदभोजनम् । एवमेवतुनिःसीमादेवानामष्टसिद्धयः । उत्तरोत्तरमत्राधिपावद्विष्णुःसुपूर्णभुगिति । अग्न्यादिशक्तिसंस्तंभश्चाग्निसंस्तंभइष्यतेइति । एकस्मात्सिद्धयोविष्णोःस्थानभेदात्पृथग्विधाः । एकस्थानगतायाःस्युःसुस्थिरोपासनायदीनि । नानाकोशगतवाक्यबलादुक्ताएवांतर्भावाःसंख्याश्चनान्याःशुकतीर्थाद्युक्तविधाइवि अप्रतिहताआसमंताद्गतिर्यस्याआज्ञायाःसातथाआज्ञाअप्रतिहतागतिः ६ ७ ८ मनोयोगेनयद्धारणंध्यानंतेनजायमानाःसिद्धयोयोगधारणासिद्धयः संख्याविषयंप्रश्नंपरिहृत्यइदानींकयाधारणया इत्यादिप्रश्नंपरिहरति यथेति ९ तत्रतावत्प्रथमोद्दिष्टाणिमासिद्धिप्रापकंध्यानप्रकारमाह भूतसूक्ष्मेति । भूतसूक्ष्माणांपार्थिवादिपरमाणूनामात्मनिनियामकेपरमाणुषुस्थितेमयितन्मात्रापरिमितत्वेनमनोधारयन्ध्यायन्नणिमानमेवाप्नोति अनेनयद्वस्तूपमितंरूपंस्वयमपितत्परिमितोभवतीत्युक्तंभवति तन्मात्रावयवेसूक्ष्मेपरमाण्वभिधानके । प्रत्येकमणुरूपंतुविष्णुंध्यायन्नणुर्भवेदितिवचनात् प्रकारां

स्वच्छंदमृत्युर्देवानांसहक्रीडानुदर्शनम् ॥ यथासंकल्पसंसिद्धिराज्ञाप्रतिहतागतिः ७त्रिकालज्ञत्वमद्वंद्वंपरचित्ताद्यभिज्ञता ॥ अग्न्यर्काम्बुविषादीनांप्रतिस्तंभोपराजयः ८ एताश्चोद्देशतःप्रोक्तायोगधारणसिद्धयः ॥ ययाधारणयायास्याद्यथावास्यान्निबोधमे ९ भूतसूक्ष्मात्मनिमयितन्मात्रंधारयन्मनः ॥ अणिमानमवाप्नोतितन्मात्रोपासकोमम १० महत्यात्मन्मयिपरेयथासंस्थंमनोदधत् ॥ महिमानमवाप्नोतिभूतानांचपृथक्पृथक् ११परमाणुमयेचित्तंभूतानाम पिरंजयन् ॥ कालसूक्ष्मात्मकेयोगीलघिमानमवाप्नुयात् १२ धारयन्मय्यहंतत्त्वेमनोवैकारिकेऽखिलम् ॥ सर्वेंद्रियाणामात्मत्वंप्राप्तिंप्राप्नोतिमन्मनाः १३

तरेणाणुत्वप्राप्तिप्रतिपत्तिमाह तन्मात्रेति । ममतन्मात्रोपासकःतस्याकाशादिगुणस्यशब्दादेर्यत्सूक्ष्ममात्रंपरिमाणंतत्परिमाणस्यममस्वरूपस्योपासकोपितत्परिमितरूपोभवतीत्यर्थः । आकाशवत्सूक्ष्मतापोव्यापित्वेनैवमन्यते । तन्मात्रव्यापिनंविष्णुंचिंतयन्सत्तथाभवेदितिवचनात् । अणुत्वंच । चक्षुर्दृश्येष्वणुत्वंतुअणिमासंप्रकीर्तिताइत्युक्तविधंच १० व्याप्तस्यहरेरेकैकावयवध्यानंपरिच्छिन्नवस्तु महत्त्वकारणमाह महतीति । महतिव्याप्तेआत्मन्आत्मनिस्वामिनिमयियथासंस्थंयथावस्तुपरिमाण तथास्थितेमनोदधत्पुरुषोमहिमानंमहत्त्वमवाप्नोतितदेवविशिनष्टि भूतानामिति । अस्मात् स्थूलतांप्राप्नुवानीत्यपेक्षायांतस्मात्स्थूलतांप्राप्नोति । ततोन्यस्मान्महत्त्वमाप्नुवानीत्यपेक्षायांतस्मादितिपृथक्पृथक्भूतानासकाशान्महत्त्वमाप्नोतीत्यर्थःपरेपरमात्मनि । सर्वनामसंज्ञाविकल्पात् नास्त्यस्य ११ लघिमासिद्धिप्रापिणींप्रतिपत्तिमाह परमाणुमयइति । कालसूक्ष्माणां कालपरमाणूनांआत्मकेआत्मनिव्यापके तत्स्वरूपंविशिनष्टि परमाणुमयेभूतानांसकाशादतिशयेनाणुस्वरूपेमयिचित्तंरंजयन्अनुरक्तंकुर्वन्तदेकनिष्ठत्वेनकुर्वन्लघिमानमाप्नोति १२ प्राप्तिसिद्धयाधारणामाह धारयन्निति । वैकारिके अहंतत्त्वेव्यापकेमयिमनोधारयन्नखिलंनिवृत्तबहिर्वृत्तियथातथाधारयन्सर्वेंद्रियाणांआत्मत्वंस्वामित्वेनस्वेच्छानियतत्वमाप्नोति ततःकिमत्राह प्राप्तिमिति । अन्येंद्रियैर्विषयदर्शनादिलक्षणप्राप्तिमाप्नोति । अन्येंद्रियैर्दर्शनादियथासंकल्पयोगिता । प्राप्तिरित्युच्यतेसाद्भिरिति च । मन्मनाइत्यनेनांतरालेअन्यमनस्कत्वंनिवारयति १३

प्राकाश्यप्राप्तिप्रकारंकथयति महतीति महतिमहत्तत्त्वेसूत्रेमुख्यप्राणेवात्मनिव्याप्तेमयिमानसंधारयन्नव्यक्तजन्मनःअव्यक्तस्याविविकरलक्षणस्थूलत्वापादनकर्तुर्मेप्रसादात्पारमेष्ठ्यंपरमेष्ठिनोब्रह्मणःप्रसादलभ्यंप्राणभारत्योःप्रसादाच्चसर्ववेदादिज्ञानश्रैष्ठ्यापादकंप्राकाश्यंविंदतइत्यन्वयः । प्राकाश्यंसर्ववेदादिज्ञानमेवविदोविदुः । सर्वेगुणास्तुप्राणस्यपरमात्मप्रसादतः । प्राणविष्णोःप्रसादनभारत्याःसंप्रकीर्तिताः । प्रसादात्तुत्रयाणांचाप्यानंदादिःसदागुणइति १४ ईशित्वप्राप्तिप्रकारमाह विष्णाविति । परमाण्वादिरूपःकालोविग्रहःप्रतिमायस्यसकालविग्रहःतस्मिन्नधीश्वरेअधीश्वरस्वगुणविशिष्टे । अनेनयोयोगुणउपासकस्याभिलषितःतंतंगुणंतस्मिन्ननुसंहृत्योपासनंकर्तव्यमित्युक्तंभवति । सर्वत्राधीश्वरत्वादौविद्यमानेपीत्यादिविष्णाव्याप्तेमयिचित्तंधारयन्नीशित्वमवाप्नोति । कीदृशंक्षेत्रंशरीरस्थावरादिपदार्थसमूहोवा क्षेत्रज्ञाजीवाएषांचोदनंनियमनंयस्मात्तत्क्षेत्रज्ञचोदनं भुविस्थितैःप्राणिभिरुक्तकारकत्वंपूर्वशक्तेःकोटिगुणशक्त्युद्रेकश्चेत्युक्तमनेन १५ वशितावाप्त्युपायमाह नारायणइति । नारायणेतुर्याख्येभगवच्छब्दशब्दितऐश्वर्यादिषड्गुणानुपसंहृत्यमयिमनआदधद्योगीवशितामियादवाप्नोति असंगत्वादिलक्षणोममधर्मोयस्यसमद्धर्मः १६ प्राकाम्यसिद्धिकारणमाह निर्गुणइति । यत्रयस्मिन्नानंदेप्राप्तकामोन्येच्छावसीयतेसमाप्तोभवति । कामःकाम्यःकमनीयोविषयोनास्तीतिवा । यथेष्टानंदसंप्राप्तिःप्राकाम्यमितिकीर्त्यतेइतिच । प्रगतमासमतात्काम्यंयस्मात्तच्चथा । अत्रनिर्गुणत्वब्रह्मत्वगुणावुपसंहार्यौ १७ अनूर्मिमत्त्वसमाधिमाह श्वेतद्वीपपताविति । शुद्धोनिर्दुःखधर्मयधर्मफलदातरिश्वेतद्वीपपतौमयिमनोधारयन्श्वेततांयातिनिर्दुःखत्वमाप्नोति । शुद्धःश्वेतःसुखीश्वेतःश्वेतवर्णःकाचिद्भवेत्इति ॥

महत्यात्मनियःसूत्रेधारयन्मयिमानसम् ॥ प्राकाश्यंपारमेष्ठ्यंमेविंदतेव्यक्तजन्मनः १४ विष्णौचाधीश्वरेचित्तंधारयन्कालविग्रहे ॥ सईशित्वमवाप्नोति क्षेत्रक्षेत्रज्ञचोदनम् १५ नारायणेतुरीयाख्येभगवच्छब्दशब्दिते ॥ मनोमय्यादधद्योगीमद्धर्मोवशितामियात् १६ निर्गुणेब्रह्मणिमयिधारयन्विशदंमनः ॥ परमानंदमाप्नोतियत्रकामोवसीयते १७ श्वेतद्वीपपतौचित्तंशुद्धेधर्ममयेमयि ॥ धारयन्श्वेततांयातिषडूर्मिरहितोनरः १८ मय्याकाशात्मनिप्राणेमनसाघोषमुद्वहन् ॥ तत्रोपलब्धाभूतानांहंसोवाचःशृणोत्यसौ १९ चक्षुस्त्वष्टरिसंयोज्यत्वष्टारमपिचक्षुषि ॥ मांतत्रमनसाध्यायन्विश्वंपश्यतिसूक्ष्मदृक् २० मनोमनसिसंयोज्यदेहंतदनुवायुना ॥ मद्धारणानुभावेनतत्रात्मायत्रवैमनः २१ यदामनउपादाययद्यद्रूपंबुभूषति ॥ तत्तद्भवेन्मनोरूपंमद्योगबलमाश्रितः २२

कथंनिर्दुःखत्वमाप्तंस्यादत्राह षडिति षडूर्मिराहित्यंविवृतममरइत्यनेनअनूर्मिमत्त्वंदुःखस्याभावमात्रमुदाहृतमिति १८ दूरश्रवणसिद्ध्युपायमाह मयीति । आकाशात्मनिआकाशव्यापिनिप्राणेस्थितेमयिमनसाघोषंशब्दमुद्वहन्नाकाशस्थप्राणस्थोहरिःशब्दप्रवर्तकस्तस्याधारश्चेतिध्यायन् हंसःशरीराभिमानविधुरोजीवोसौ तत्राकाशेउपलब्धानामासमतात्स्थितानांभूतानांवाचःशृणोतीत्यन्वयः । त्यागात्पूर्वशरीराणांनवानांसंचयेनच । जीवंहंसइतिप्राहुस्तद्धेतुत्वाद्धरिंपरमित्यतोवाहंसोजीवः १९ दूरदर्शनोपायमाह चक्षुरिति । त्वष्टासूर्यश्चक्षुर्नियामकःआश्रयश्च तत्रचक्षुषिसूर्येचस्थितंमां । सहस्रयोजनांतंतुदूरदर्शनमिष्यते । दूरश्रवणमप्येवंतस्मिन्नेवयुगेस्थितेइतिविशेषः २० मनोजवप्रापकधारणप्रकारमाह मनइति । यदायोगिनोमनोवेगेनगंतुमिच्छातदामनोमनसिमनस्तत्त्वेवायुनासंयोज्यतदनुमनोनुदेहमपिवायुनासंयोज्यमद्धारणानुभावेनमनस्तत्त्वांतर्यामिणोममध्यानसामर्थ्येनयत्रमनस्तत्रात्माशरीरमनुगच्छतीत्यन्वयः । स्वमनःसमवेगिता मनोजवइतिप्रोक्तइतिच २१ कामरूपाद्युपायमाह यदेति । यदामनउपादायस्थिरीकृत्ययद्यद्रूपंगजादिरूपंबुभूषतिभवितुमिच्छतिगजादिरूपःस्यामितितदागजाद्याकारस्यगजाद्यंतर्यामिणोममयोगबलंध्यानबलंआश्रितोयोगीतत्तन्मनोगतगजादिरूपंभजेदित्यन्वयः । गजादिरूपमाकांक्षन्गजादिस्थितमीश्वरं । ध्यायन्गजादिरूपःस्यात्पश्चाद्याकारतातथा । कामरूपत्वमुद्दिष्टंइतिच २२

परकायप्रवेशोपायमाह परकायमित्यस्यायमर्थः परकायंविशन्सिद्धआत्मानंस्वांतस्थंहरिंतत्रपरकायेभावयेदेवंभाविनःप्रकृष्टानंदरूपत्वात्प्रणयनकर्तृत्वाच्चप्राणः। परमात्मावायुभूतोवायौभूतोवाय्वंतर्गतः। पिंडंहित्वाइतरदृष्ट्या स्वदृष्ट्यानत्यक्तायोगिनसमादायपरकायेप्रविशेदित्यन्वयः। स्वदेहात्यागतःपरेपरकायप्रवेशःस्यादिति परकायस्थितंहरिं ध्यायन्विशेत्परेकायेवाय्वंतरगत.पुमान् । प्राणनामा हरिःप्रोक्तस्तस्मिन्व यु.समाश्रितः ॥ वायावंतर्गतोजीवोदेहादेहंप्रयास्यतीतिच २३ स्वच्छंदमृत्युताप्रकारमाह पाष्ण्र्योति प्राणंहृदुरःकंठमूर्द्धस्वारोप्यषडाधारस्थितंविष्णुंध्यायन्ब्रह्मरंध्रेणतनुमुत्सृजेन प्राणंब्रह्मणिनीत्वाप्राणनामानंबहिस्थेब्रह्मनाम्निस्मृन्वेत्यर्थः। युगादर्वाक्तनास्मृतास्वच्छंदमृत्युतेति षडाधारस्थितंविष्णुंध्यायन्नायु क्षयंविना। यदिमृत्युमभीप्सीतत थाप्राप्नोत्यसंशयम् । प्राणस्थप्राणना मानंबाहिस्थेब्रह्मनामके । विष्णुंविष्णावनुस्मृत्यविसृजेदेहमंजसेति । अनेकस्यहरेर्नीतिस्तद्गतस्यहरेःस्मृतिः । नहिनेय क्वचिन्कापिकेनचिरस्ववशत्वतःइतिच २४ देवसहितक्रीडानुदर्शनसिद्धिधारणामाह विहरिष्यन्निति सुराणामाक्रीडेविहरिष्यन्विहर्तुकामोयोगीसत्वगुणंमत्स्थंविभावयेत् सुरस्त्रियोविमानेनसत्ववृत्तिमुपतिष्ठंतिसमीपमाप्नुवतीत्यन्वयः देवैःक्रीडाचंद्रादिभिर्विनेति २५ यथासंकल्पसिद्धि ध्यानमाह यथेति । सत्येसंकल्पेमयिमनोयुंजानोयथायथामत्परःपुमान्बुद्ध्यासंकल्पयेत् । यंयंगुणमुपसंहृत्यमामुपास्तेतथातथातत्काम्यमाप्नोतीत्यन्वयः । यथासकल्पसिद्धिश्चाप्यन्नपानसुतादिषुइति

**परकायंविशन्सिद्धआत्मानंतत्रभावयेत् ॥ पिंडंहित्वाविशेत्प्राणोवायुभूतःषडंघ्रिवत् २३ पाष्ण्र्यापीड्यगुदंप्राणंहृदुरःकंठमूर्द्धसु ॥ आरोप्यब्रह्मरंध्रेण ब्रह्मनीत्वोत्सृजेत्तनुम् २४ विहरिष्यन्सुराक्रीडेमत्स्थंसत्वंविभावयेत् ॥ विमानेनोपतिष्ठंतिसत्ववृत्तिंसुरस्त्रियः २५ यथासंकल्पयेद्बुद्ध्यायथावामत्परःपु मान् ॥ मयिसत्येमनोयुंजंस्तथातत्समुपाश्नुते २६ योवैमद्भावमापन्नईशितुर्वशितुःपुमान् ॥ कुतश्चिन्नविहन्येततस्यचाज्ञायथामम २७ मद्भक्त्याशु द्धसत्वस्ययोगिनोधारणाविदः ॥ तस्यत्रैकालिकीबुद्धिर्जन्ममृत्यूपबृंहिता २८ अग्न्यादिभिर्नहन्येतमुनेर्योगमयंवपुः ॥ मद्योगश्रांतचित्तस्ययाद सामुदकंयथा २९ मद्विभूतीरभिध्यायन्श्रीवत्सास्त्रविभूषिताः ॥ ध्वजातपत्रव्यजनैःसभवेदपराजितः ३० उपासकस्यमामेवंयोगधारणयापुनः ॥ सिद्धयःपूर्वकथिताउपतिष्ठंत्यशेषतः ३१**

२६ आज्ञाप्रतिहतिसिद्धिधारणाप्रकारंदर्शयति यइति । यःपुमानीशितुर्वशितुःमदितिपंचमीषष्ठ्यर्थे ममभावंभावनामीशितृत्ववशितृत्वादिगुणोपसंहारलक्षणांभक्तिसेवामापन्नःतस्यपुंसः आज्ञाकुत श्चनहेतोर्नविहन्येत यशब्दएवार्थेयथाममाज्ञा वैसिद्धं । आज्ञाप्रतिहतिर्ब्रह्मादर्वागत्रविघातनम् । विनामहातपस्वीश्चशापप्रतिहतिःस्मृतेरेत्यलब्धशब्दतोवागृहीतं भावोमनश्चभक्तिश्चकावेदभ्यासइष्य तइतिच २७ त्रिकालज्ञत्वसिद्धिसाधनमाह मद्भक्त्येति धारणाविदः त्रिकालांतर्यामिहरिस्मरणप्रकारज्ञस्यजन्ममृत्यूपबृंहितासृष्टिसंहारविषयिणीबुद्धिर्ज्ञानंस्यादितिशेषः वेदादिकंविनाप्रोक्तात्रिकालज्ञा नितावुधैरिति त्रिकालप्रेरकंविष्णुंध्यातुःकालत्रयज्ञतेतिच २८ अग्न्यादिस्तंभोपास्तिप्रकारमाह अग्न्यादिभिरिति योगमयंध्यानमयं एतदेवविशिनष्टि मद्योगश्रांतचित्तस्येति अग्न्यादीनांऔष्ण्यादि शक्तिस्तंभकाह्लादकत्वादिगुणार्णवस्यममध्यानंमद्योगः । तेनश्रांतंतदेकनिष्ठंचित्तंयस्यसतथातस्य । अग्न्यादिशक्तिस्तंभअग्निसंस्तंभइष्य.इ.ति । यादसांवपुः । अग्न्यादिषुहरिंध्यायस्तत्प्रतिस्तंभको भवेदितिच २९ अपराजितसिद्ध्युपायमाह मद्विभूतीरिति मद्विभूतीःममविविधभूतीःअपराजितःमनुष्यैरितिशेषः ३० उक्तानामनुक्तानाचसिद्धीनामवरोधोऽपरोक्षीकृततत्त्वस्यतत्सिद्धीराकांक्षमाण स्यममोपासकस्योक्तविधयातत्तत्सिद्धिप्राप्तियोग्यगुणोपास्तिंकुर्वतएवेत्याह उपासकस्येति उपासनयापरोक्षीकृततत्त्वस्यपुनरुपासनकार्यकालेकुर्वतःकार्यसिद्धिःस्यादित्यतोयोगधारणयापुनरित्युक्तं । योगधारणयासिद्ध्युपायध्यानेन ३१

निरंतरध्यानरतस्यपुंसःसिद्धिर्नैरूपणमात्रेणभवतिनचिरध्यानापेक्षास्तीत्याशयेनाह जितेंद्रियस्येति । दांतस्योपरतस्यजितश्वासस्यप्राप्तवायुप्रसादस्यजितात्मनः प्राप्तमनोजयस्य । उपास्यवा युंप्रथमंवायौसुष्ठुपरोक्षिते। अनुज्ञातस्ततस्तंद्रुतत्रतत्रहरिंस्मरेत्। कृत्वाऽपरोक्षंतंचापिकालेकालेस्मरेत्पुनः।अभीष्टकार्यसिद्धिःस्यात्तस्यनास्त्यत्रसंशयः। अकामोयदिवायुचध्यात्वाहृष्ट्वाहरिंतथा। नांकिंचि त्कामयेत्पश्चात्साक्षिमंमुक्तिमेष्यतीति ३२ भगवद्ध्यानेनाणिमादिसिद्धीनांसौलभ्येपितदर्थोपास्तिर्नप्रशस्तेत्याह अंतरायानिति । एतान्सिद्धिविशेषानुउ तमंयोगंमुक्तियोग्यंध्यानंयुंजतःकुर्वतःसंपद्यमा नस्य मत्प्रसादमाप्तुकामस्यकुतोंतरायाइतितत्राह कालेति । यदियोगफलंभुंक्तेपुनःकाममपास्यतु । तेनैवक्रमयोगेनवायुंदृष्ट्वाहरिंतथा। एष्टव्यामुक्तिपदवीनान्यथातुकथंचन । पूर्वदृष्टिर्हिकामार्थेपश्चा न्मोक्षार्थमिष्यते। येषांतुजन्मतःसिद्धिस्तेषांदोषोनतुकश्चिदिति ३३ जन्मादिभ्योयोगएवसाधनोत्तमइत्याह जन्मौषधीति । यावतीर्यावंत्य·यो।गेनध्यानेन एतादृशोयोगोविशिष्टदेवताभिरेवसुलभ्यो नसर्वैरित्याह यैर्यैरिति । यैर्यैःकैश्चित्कैश्चिदेवजन्मादिभिर्योगगतिंव्रजेत्। कुतइतितत्राह सर्वासामिति मृदोघटकारणत्वेपिनतत्स्वामित्वंकिंतुकुलालस्यैवेत्यतउक्तं पतिरिति। कुलालस्वामित्वंयावद्द्रव्यग तीत्यतःप्रभुरिति समर्थेनमयाविशिष्टाएतास्मिन्योगेधिकृताःस्युरितिसंकल्पितत्वाद्युक्तमित्यर्थः।जन्मादिभिःकैश्चिदेवप्राप्यतेयोगजंफलम्।योगेनसर्वैःप्राप्येत योगेयत्नंततःकुरु।कश्चिदर्थेपियच्छब्दःप्रश्नार्थे पिक्वचिद्भवेत्।कचित्परामर्शवाचीकचिदापेक्षवाचकः।इतिवचनाद्यैरितियच्छब्देनकश्चिदर्थउच्यते ३४ नकेवलंसिद्धीनामेवहेतुःकिंतुयोगादीनामपीतिभावेनाह अहमिति ब्रह्मवादिनांवेदांतानामित्यर्थः ३५

जितेंद्रियस्यदांतस्यजितश्वासात्मनोमुनेः ॥ मद्धारणांधारयतःकानुसिद्धिःसुदुर्लभा ३२ अंतरायान्वदंत्येतान्युंजतोयोगमुत्तमम् ॥ मयासंपद्यमानस्य कालक्षपणहेतवः ३३ जन्मौषधितपोमंत्रैर्यावतीरिहसिद्धयः ॥ योगेनाप्नोतिताःसर्वायैर्यैर्योगगतिंव्रजेत् ॥ सर्वासामपिसिद्धीनांहेतुःपतिरहंप्रभुः ३४ अ हंयोगस्यसांख्यस्यधर्मस्यब्रह्मवादिनाम् ३५ अहमात्मांतरोबाह्योनावृतःसर्वदेहिनाम् ॥ यथाभूतानिभूतेषुबहिरंतःस्वहंतथा ॥ ३६ ॥ इतिश्रीभागव तेमहापुराणेएकादशस्कंधेपंचदशोऽध्यायः ॥ १५ ॥ उद्धवउवाच ॥ त्वंब्रह्मपरमंसाक्षादनाद्यंतमपावृतम् ॥ सर्वेषामपिभावानांप्राणःस्थित्यप्ययोद्भवः १ उच्चावचेषुभूतेषुदुर्ज्ञेयमकृतात्मभिः ॥ उपासतेत्वांभगवन्याथातथ्येनब्राह्मणाः २ येषुयेषुचभावेषुभक्त्यात्वांपरमर्षयः ॥ उपासीनाःप्रपद्यंतेसंसिद्धिंतद्वद स्वमे ३ गूढश्चरसिभूतेषुभूतात्माभूतभावनः ॥ नत्वांपश्यंतिभूतानिपश्यंतंमोहितानिते ४

कीदृशस्त्वमितितत्राह अहमितिअहंसर्वदेहिनामात्माप्रेष्ठःस्वामीअंतर्यामिरूपेणांतरः । अंतःस्थित्वारतिकृत् अनेनप्रेष्ठत्वंविवृत ब्रह्मरूपेणबाह्योबहिष्ठःबहिष्ठस्यापिब्रह्मांडस्यैवान्येनावृतोस्तीत्यतोना वृतइति अव्रजनंविश्वंभापितुदृष्टांतयति यथेति पंचमहाभूतानिभूतेषुजीवादिवस्तुषुअंतर्बहिश्चव्याप्नोतीति ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेवि०टीकायांपंचदशोऽध्यायः ॥ १५ ॥ अधिकारिणामनेकविधत्वेनयोग्यतायाउपास्तेःफलस्यतथाविधत्वाच्चदानुकूल्येनतत्तदुपासनार्थंतत्तद्गुणोपसंहारायस्वभूतीरुपदिशत्यस्मिन्नध्याये । तत्रोद्धवःस्वप्रश्नप्रवचनेतात्पर्यजननायप्रवक्तारंकृष्णं वेदांतवेद्यंब्रह्मत्वदनुग्रहेणमयाज्ञातमितिभावेनवक्ति। त्वंब्रह्मेत्यादिना। साक्षात्परमंब्रह्मत्वंतवैवअन्येषाममुख्यमितिभावेनोक्तमनाद्यंतमिति । प्रकृतेःकथंचिदुक्तविशेषणसभवेपिविकारित्वादमुख्यमिति भावेनोक्तमपावृतमिति एवंविधस्यव्यावर्तकलक्षणमाह सर्वेषामिति । अपिरेवार्थेत्वमेवसर्वेषांभावानांप्राणःश्रेष्ठकःस्थित्यप्ययोद्भवश्चसृष्टिस्थितिसंहारकर्ता । सत्तायाअपित्वदेकाधीनत्वात्तत्वोक्तिः १ जन्मादिकर्तृत्वविशिष्टत्वेनोपास्योपित्वमेवेत्याह उच्चावचेष्विति । ब्राह्मणामुनयोयाथातथ्येननिर्दुःखानंदानुभवरूपत्वेनस्थितत्वात् २ नन्वेवमुक्तानुवादोस्तुतवापेक्षिताशःकइतितत्राह येष्विति येषुयेषु केषुकेषु यथाकथंचदुपासनं भासनोपसंभापज्ञानपत्वविमत्युपमंत्रणेषुवदइत्यतोवदस्वेत्यात्मनेपदम् ३ बहुगुणत्वतोपिममत्वस्वरूपज्ञानंदुःसाधनमितिभावेनाह गूढइति। तेत्वया ४

स्वप्रश्नंविशिनष्टि याःकाश्चेति । महाविभूतेःब्रह्मादिदेवाद्यचिंत्यैश्वर्यस्यत्वत्सन्निधानविशेषात्स्वजात्युत्तमाःयास्ताविभूतीराख्याहीत्यन्वयः । तेत्वयाऽनुभाविताःनिश्चिताः । यद्वा हेतवदिभूतीःअनुभावि ताःउपासिताःमहाद्भिरितिशेषः हेतीर्थपद ५ परिहरति एवमिति युयुत्सुनायोद्धुकामेन विशसनेयुद्धे ६ किमभिप्रायेणपृच्छतीतितत्राह ज्ञात्वेति । ततोयुद्धात्कीदृशःअहहताअयंहतइतिनिरूप्यत्यौ किकोबहिर्जनस्वभावोऽज्ञइत्यर्थः ७ ८ आत्मासर्वगुणईश्वरोहममीषाम् भूतानांसुहृत् अनुपकृतबंधुःकुतइतितत्राह अहमिति । ननुइयमुक्तिरैक्याख्यंकितत्राह तेषामिति । सृष्टिस्थित्यादिहे तुत्वाद्भूतानिहरिरुच्यते । ननुभूतस्वरूपत्वात्साहिसर्वैश्वरेश्वर इतिवस्तुतत्वेएतस्मात्प्रमाणात्सृष्ट्यादिहेतुत्वात्तदधीनत्वादैक्योक्तिर्नस्वरूपैक्यादितिभावः ९ विभूतीराह अहंगतिरिति । गतिमताज्ञानव तांगतिर्ज्ञानमहंज्ञानंज्ञानवतामहमिति तद्वत्सुनित्यसन्निहितमित्यर्थः कलयतांसंहरतांकालःकालाभिमानी । स्वस्वजात्युत्तमत्वंतुभवेद्यद्रूपसान्निधे । विभूतिरूपंतत्प्रोक्तमिंदिरादिषुसंस्थितम् । त थाविधःस्थितंरूपंविभूतीत्येवशब्दितम् । सर्वसाधारणंरूपमंतर्यामीतिचोच्यते । यथाकृष्णात्मनादुष्टहंताव्यासात्मनासमः । असमोप्येकरूपोपिसामर्थ्यात्पुरुषोत्तमः । इत्यनेनविभूतीनामभगवद्रूपसान्नि ध्यानात्स्वजात्युत्तमत्वादिकंनिर्णीतं । ब्रह्मरुद्रेंद्रजीवेभ्यःपृथगेवव्यवस्थितम् । विभूतिरूपंविष्णोस्तुतद्गश्रेष्ठैककारणम् । तदेवब्रह्मरुद्रादिनामाभिवाच्यमंजसा । तदेवदेवेष्विंद्रोस्मितथारुद्रेषुशंकरः । इत्या दिनोक्तंकृष्णेननेंद्राद्याजीवसंचयाः । इत्यनेनब्रह्मादिभ्योभिन्नंतन्नामकत्वेनोच्यतइतिविभूतीरितिज्ञातव्यम् । प्रधानोज्ञानिनांब्रह्माज्ञानमानीहृदिस्थितः । सएवकालमानीतुसंहर्तॄणांप्रभुःस्मृत इतिवचना

याःकाश्चभूमौदिविवैरसायांविभूतयोदिक्षुमहाविभूतेः ॥ तामह्यमाख्याह्यनुभावितास्तेनमामितेतीर्थपदांघ्रिपद्मम् ५ श्रीभगवानुवाच ॥ एवमेतदहंपृ ष्टःप्रश्नंप्रश्नविदांवर ॥ युयुत्सुनाविशसनेसपत्नैरर्जुनेनवै ६ ज्ञात्वाज्ञातिवधंगर्ह्यमधर्मंराज्यहेतुकम् ॥ ततोनिवृत्तोहंताहंहतोयमितिलौकिकः ७ सतदा पुरुषव्याघ्रोयुक्त्यामेप्रतिबोधितः ॥ अभ्यभाषतमामेवंयथात्वंरणमूर्धनि ८ अहमात्मोद्धवामीषांभूतानांसुहृदीश्वरः ॥ अहंसर्वाणिभूतानितेषांस्थित्युद्भ वाप्ययः ९ अहंगतिर्गतिमतांकालःकलयतामहम् ॥ गुणानांचाप्यहंसौम्यंगुणिन्यौत्पत्तिकोगुणः १० गुणिनामप्यहंसूत्रंमहतांचमहानहम् ॥ सूक्ष्मा णामप्यहंजीवोदुर्जयानामहंमनः ११ हिरण्यगर्भोदेवानांमंत्राणांप्रणवस्त्रिवृत् ॥ अक्षराणामकारोस्मिपदानिच्छंदसामहम् १२

त्युक्तं गुणानांमध्येसौम्यमहम् । उमेनानं दानुभवेनसहितःसोमस्तस्यभावःसौम्यं सर्वगुणाधिकोयं । आनंदानुभवस्तूमउत्कृष्टानुभवात्स्मृतः । तद्युक्तत्वंतथासौम्यंगुणनामधिकंहितत् । भक्त्यादिगुणपूगोपिदुःखहेतुत्वभावनात् । निष्फलोभवतिह्यद्धा प्रीतस्यसफलोभवेत् । तस्मादानंदमानंतुगुणेषूत्कृष्टमुच्यते । यस्याभिमानीब्रह्मैकोभक्तिज्ञानादिकस्यच । श्रद्धाभिमानिनीदेवीतथैवतुसरस्वती । तदन्येषागुणानांतुतदन्येविबुधाःस्मृताः गुणानांतुप्रभुर्ब्रह्मा तस्मादेकश्चतुर्मुखइत्युक्तेः । आनंदमानंहरिरानंदइतिज्ञानमित्यर्थः । गुणिनांमध्येगुणिनिस्थितोयऔत्पत्तिकोगुणः । सूत्रवायुःसोहमित्यर्थः अपिशब्दःसूत्रस्यौत्पत्तिकगुणाभिमानित्वंसमुच्चिनोति । तदुक्तं औत्पत्तिकगुणोनामशुभप्राप्त्यैकयोग्यता । तस्याभिमानीप्राणस्तुसाहिसर्वगुणाधिकइति । गुणानांगुणयोग्यत्वंयत्सर्वगुणिषुस्थितं । वायुस्तदाभिमान्येकःसर्वगुण्यधिकस्ततइतिचमहतांस्थूलानांमहान्महत्त्व त्वम् १० ११ त्रिवृत्अकारउकारमकारात्मकःछंदसांवेदानांपदानिपद्यंतइतिवाच्यानिवेदानांमुख्यार्थः । उक्तंच स्वयूथानामथाधिक्येस्वजातीनामथापिवा । यत्कारणविभूत्याख्याविष्णोस्तद्रूपमुच्यतेइति वर्णांशानिपदान्याहुःपादाश्चापितदीश्वराः । पादानामीश्वरार्धर्चास्तदीशाऋचएवतु । ऋचामधीशावर्गाश्चतेषांसूक्तमधीश्वरं । सूक्ताधीशास्तथाध्यायास्तेषामीशास्तथाष्टकाः । तदधीशास्तथाशाखावेदाश्चापित दीश्वराः । वेदानामीश्वरावाच्यावाच्यानामीश्वरोहरिः । नहरेरीश्वरःकश्चित्कदाचित्क्वापिविद्यतइति । पदंपदसहस्रेणयश्चरंत्वापराध्यतइतिवत् । पदतुवाचकंप्रोक्तंक्वाचिद्वाच्यमपीष्यतइतिअत्रेदंतात्पर्यमव गंतव्यं । सर्ववेदाभिमानिन्योदेव्योलक्ष्मीस्ततोधिका । वेदाभिमानिनीसाक्षात्सविष्णोर्दूरवर्तिस्थिता । यज्ञाख्यासैवविष्णोस्तुयत्नूरस्थलमाश्रिता । हरिणारतियोगस्थादक्षिणाख्यापिसैवतु । उत्तरोत्तरतः

सापिविशिष्टादक्षिणामुखे । एवंवेदाभिमानिभ्योदेवेभ्यःसर्वएवतु । तदर्थक्षपाःपतयस्तस्वास्तस्यास्तथोत्तमाः। शच्याइंद्रस्ततश्चोमातस्यारुद्रस्ततोवरः । भारतीप्राणएवास्यास्ततःश्रीस्तद्वरोहरिरिति
१२इंद्रोरुद्रादीन्विनासर्वदेवानामुत्तमः। ऋतेरुद्रादिकानिंद्रःसर्वदेवाधिकस्ततः। ऋतेभीमंफाल्गुनश्चपांडवेभ्योधिकस्ततः।तथाशुक्रःकवीशस्तुबृहस्पत्यादिकानृते। यमःसंयमतामीशः शंकरादीन्विनैवतुइति
१३ १४ १५ १६ द्युमतांप्रकाशवताम् १७ धातूनांगैरिकाणाम् १८ गार्हस्थ्यंचयतित्वंचदेवेष्वेकत्वमागतम् ।। प्राधान्योक्तिर्यतित्वस्यगार्हस्थ्यस्यक्वचित्क्वचिदितिच तुर्यश्चतुर्थोयत्याश्रमः १९ स्रो
तसांनदीनांतीर्थानांशुद्धजलानाम् रूपांतरविवक्षयात्रिपुरघ्नइत्यादि २० गहनानांगभीराणाम् २१ वसिष्ठोभ्यधिकस्तेषांमनुष्याणांपुरोधसांइत्युक्तेः मनुष्याणांपुरोधसांअधिकोवसिष्ठःब्रह्मिष्ठानांवैदिका
नांसेनान्यांसेनापतीनाअग्रण्यांश्रेष्ठानांअजःब्रह्मा २२ ब्रह्मयज्ञःस्वाध्याययज्ञःवाय्वग्न्यर्कांबुवाचामात्मानियामकःशुचीनांशुद्धिकराणांशुचिःशुचिकरः२३ योगानामात्मसरोधःमनोरोधःमंत्रोगुह्योक्तिः
मंत्रणादिषुगुह्योक्तिरितियादवःकौशलानांशुभहेतूनांआन्वीक्षिकीतत्त्वविद्या । ख्यातिवादिनांज्ञानवादिनांमध्येविकल्पोविशिष्टकल्पोजीवेशादिभेदवादी जीवेशादिविशेषंयोयथार्थेनप्रकल्पयेत् । कलिमार

इंद्रोहंसर्वदेवानांवसूनामस्मिहव्यवाट् ॥ आदित्यानामहंविष्णूरुद्राणांनीललोहितः १३ ब्रह्मर्षीणांभृगुरहंराजर्षीणामहंमनुः ॥ देवर्षीणांनारदोहंहावि
र्धान्यस्मिधेनुषु १४ सिद्धेश्वराणांकपिलःसुपर्णोहंपतत्रिणाम् ॥ प्रजापतीनांदक्षोहंपितृणामहमर्यमा १५ मांविद्ध्युद्धवदैत्यानांप्रह्लादमसुरेश्वरम् ॥
सोमंनक्षत्रौषधीनांधनेशंयक्षरक्षसाम् १६ ऐरावतंगजेंद्राणांयादसांवरुणंप्रभुम् ॥ तपतांद्युमतांसूर्यंमनुष्याणांचभूपतिम् १७ उच्चैःश्रवास्तुरगाणांधातू
नामस्मिकांचनम् ॥ यमःसंयमतांचाहंसर्पाणामस्मिवासुकिः १८ नागेंद्राणामनंतोहंमृगेंद्रःशृंगिदंष्ट्रिणाम् ॥ आश्रमाणामहंतुर्योवर्णानांप्रथमोनघ
१९ तीर्थानांस्रोतसांगंगासमुद्रःसरसामहम् ॥ आयुधानांधनुरहंत्रिपुरघ्नोधनुष्मताम् २० गिरीणामस्म्यहंमेरुर्गहनानांहिमालयः ॥ वनस्पतीनामश्व
त्थओषधीनामहंयवः २१ पुरोधसांवसिष्ठोहंब्रह्मिष्ठानांबृहस्पतिः ॥ स्कंदोहंसर्वसेनान्यामग्रण्यांभगवानजः २२ यज्ञानांब्रह्मयज्ञोहंव्रतानामविहिंस
नम् ॥ वाय्वग्न्यर्कांबुवागात्माशुचीनामप्यहंशुचिः २३ योगानामात्मसंरोधोमंत्रोस्मिविजिगीषताम् ॥ आन्वीक्षिकीकौशलानांविकल्पःख्यातिवादि
नाम् २४ स्त्रीणांतुशतरूपाहंपुंसांस्वायंभुवोमनुः ॥ नारायणोमुनीनांचकुमारोब्रह्मचारिणाम् २५ धर्माणामस्मिसंन्यासःक्षेमाणामबहिर्मतिः ॥ गुह्या
नांसतनृतंमौनंमिथुनानांप्रजापतिः २६ संवत्सरोस्म्यनिमिषामृतूनांमधुमाधवौ ॥ मासानांमार्गशीर्षोहंनक्षत्राणांतथाभिजित् २७अहंयुगानांचकृतंधीराणां
देवलोसितः ॥ द्वैपायनोस्मिव्यासानांकवीनांकाव्यआत्मवान् २८ वासुदेवोभगवतांत्वंतुभागवतेष्वहम् ॥ किंपुरुषाणांचहनूमान्विद्याध्राणांसुदर्शनः२९

भ्यवाविष्णोराधिक्यादुत्तरोत्तरं । नियमेनैवकेनापिनहेयःसर्वकल्पकः। सर्वज्ञानिविशेषेभ्यःसज्ञानीसर्वथाधिकः।इतिवचनात् उक्तएवार्थः अत्रापिभेददृष्ट्याभिमानेनचेत्युक्तंविद्यात्मानिभिदाबोधइतिचवक्ष्य
ति २४ शतरूपावरास्त्रीणांपुंसामभ्यधिकोमनुः । तयोरभ्यधिकौनित्यमिंद्राणींद्रौशुभैर्गुणैरिति ॥ नारायणऋष्यवतारः २५ धर्माणांसुकृतानांक्षेमाणांप्राप्तरक्षणां अबहिर्मतिःप्रत्यगात्मज्ञानगुह्या
नांगोप्यानांमौनंवाचंयमत्वं असप्रज्ञातसमाधिस्थत्वंवा २६ अनिमिषांकालावयवानाम् २७ धीराणांगंभीराणां व्यासानांवेदविभागंकुर्वाणानां कवीनांवाग्मिनाम् २८ भगवतामैश्वर्यादिषड्गुणवतां
देवानां ऐश्वर्यादिगुणैःषड्भिःसामग्र्यात्सर्वदेवताः । भगवच्छब्दवाच्याश्चसाक्षात्तुभगवान्हरिः। निरपेक्षंतुसामग्र्यंतस्यसर्वाधिकंयतइतिवचनात् । त्वंतुभागवतेष्वहमित्यत्रतात्पर्यार्थोयं सर्वभागवताधी
शउद्धवोभगवत्प्रियः। तस्मादभ्यधिकोजिष्णुःप्रियत्वेभक्तितोहरेः। तस्मादभ्यधिकोरामःकृष्णात्वभ्यधिकाततः। तस्याअभ्यधिकोभीमोनतुतत्सदृशःक्वचिदितिस्मृतिप्रामाणिकः तुरप्यद्धेवधारणेइतिच२९

पेशसांमुकुलानांमध्ये ३० कितवानांदीव्यताम् । छलग्रहोद्यूतम् ३१ सहोबलवतामोजःओजोस्मि ओजोवष्टंभबलयोरितिप्रमाणं सात्वतांभागवतानांकर्माहमितिविद्धि सात्वतांपांचरा त्रिकाणांश्रियादिनवमूर्तीनांआदिःस्वकीयमूर्तिरहं कीदृश्यस्ताः पुरापूर्वकालेप्रथमतःपूज्याइत्यर्थः । विष्णोःश्रियोब्रह्मणश्चवायोःसंकर्षणस्यच । सुपर्णस्यचसंप्रोक्ताःप्रत्येकंनवमूर्तयः । पूज्याःसात्वततं त्रेषुतत्राद्यामूर्तयोहरेः । प्रधानास्ताहिसर्वासांमूर्तीनांहरिमूर्तयः । अभेदादेवमूर्तीनामेकमूर्तिश्चसास्मृतेतिमानम् । किंच स्वरूपतश्चगुणतोनविशेषःकथंचन ।विष्णोस्तुनवमूर्तीनांपूजाचनवधेष्यतइतिवच नादासांस्वरूपत्वंसिद्धम् । नारायणःपरंब्रह्मवासुदेवादिकास्तथा । नरसिंहवराहौचपरंज्योतिर्हरेर्नव इंदिराचरमालक्ष्मीर्हिरण्यागगनातथा रक्तारक्ततरामूर्तिर्विभूतिश्चश्रियोनव ब्रह्माचतुर्मुखोधाताविधा ताविधिरेवच । कर्ताविरिंचोभूतेशःशतानंदश्चतानव । धनंजयमृतेचैववायोश्चनवमूर्तयः । शेषोनंतोनरश्चैवलक्ष्मणोबलएवच । संकर्षणोनीलवासाजगद्रक्षोजलेशयः । सुपर्णोगरुडश्चैववैनतेयोमहाशनः । नववर्णःपंचवर्णःपन्नगाशोमृताकरः ।तथैवसर्ववेदात्मासुपर्णोनवधास्मृतइतिवचनान्मूर्तिभेदोज्ञातव्यः ३२ गंधर्वाणांविश्वावसुःअप्सरसांपूर्वचित्तिः अहमस्मि गंधमात्रगंधाख्यविषयः ३३ तेजिष्ठानांआ त्विष्मताम् ३४ प्रतिसंक्रमःसंहारः ३५ गतिःपादविषयः उक्तिर्वागिंद्रियविषयः उत्सर्गोपानस्य उपादानंहस्तयोः आनंदउपस्थस्य स्पर्शस्त्वगिंद्रियस्याहमितिशेषः आस्वादोजिह्वाकर्म श्रु तिःकर्णयोःअवघ्राणंघ्राणेंद्रियस्यसर्वेंद्रियाणामिंद्रियंइंद्रियशक्तिप्रदः ३६ विकरोब्रह्मांडं पुरुषोब्रह्मांडांतःस्थितः अव्यक्तंअचेतनप्रकृतिःरजआदिकमप्यहंरजआदिस्थत्वात् रजआदिनामा सत्त्व

रत्नानांपद्मरागोस्मिपद्मकोशस्तुपेशसाम् ॥ कुशोस्मिदर्भजातीनांगव्यमाज्यंहविःष्वहम् ३० व्यवसायिनामहंलक्ष्मीःकितवानांछलग्रहः ॥ तितिक्षा स्मितितिक्षूणांसत्वंसत्ववतामहम् ३१ ओजःसहोबलवतांकर्माहंविद्धिसात्वताम् ॥ सात्वतांनवमूर्तीनामादिमूर्तिरहंपुरा ३२ विश्वावसुःपूर्वचित्तिर्गंध र्वाप्सरसामहम् ॥ भूधराणामहंस्थैर्यंगंधमात्रमहंभुवः ३३ अपांरसश्चपरमस्तेजिष्ठानांविभावसुः ॥ प्रभासूर्येंदुताराणांशब्दोहंनभसःपरः ३४ ब्रह्म ण्यानांबलिरहंवीराणामहमर्जुनः ॥ भूतानांस्थितिरुत्पत्तिरहंवैप्रतिसंक्रमः ३५ गत्युक्त्युत्सर्गोपादानमानंदस्पर्शलक्षणम् ॥ आस्वादश्रुत्यवघ्राणम हंसर्वेंद्रियेंद्रियम् ३६ पृथिवीवायुराकाशआपोज्योतिरहंमहान् ॥ विकारःपुरुषोव्यक्तंरजःसत्वंतमःपरः ॥ अहमेतत्प्रसंख्यानंज्ञानंतत्त्वविनिश्चयम् ३७ मयेश्वरेणजीवेनगुणेनगुणिनाविना ॥ सर्वात्मनापिसर्वेणनभावोविद्यतेक्वचित् ३८

दिनामविष्णोस्तुसत्त्वादिस्थस्यकेवलं। जीवस्यस्यचतन्नामजीवादेरुपचारतइत्यादिवचनात् गत्यादितमःपर्यंताःपदार्थाःतत्स्वरूपंकिंनेत्याह परइति । परोविलक्षणोभिन्नः तन्नियंतृत्वात्तत्वोपदेशः य स्ययस्यस्वभावोयस्तत्तन्नामाहरिःपरः। नियामकःस्वभावस्यतत्तच्छब्दादिनामवान् । वैशेषाख्याविभूतिश्चविभूतिश्चस्वभावजा।द्विधाविभूतिर्विज्ञेयाविष्णोस्तुपरमात्मनइतिवचनात्एतत्प्रसंख्यानंएतेषाम व्यक्तादीनांतत्त्वानांप्रकृष्टसंख्यानंगणनंयस्मात्तत्तथाज्ञानंवाहं भगवद्विषयत्वादिदमश्रद्धेयमितिनेत्याह तत्त्वेति हरेरनारोपितंस्वरूपंयेनिश्चयतीतितत्त्वनिश्चयम् ३७ ननुगतिर्गतिमतामित्याद्युक्तषष्ठ्यर्थेन पृथक्कृताःपदार्थास्तेषुतवव्याप्तिर्नास्तीत्यायातं । तथाच पुरुषेणेदंव्याप्तमित्यादिश्रुतिविरोधःप्राप्तइतितत्राह मयेति। मयाविनाक्वचिदपिभावःपदार्थोनविद्यतइत्यन्वयःषण्णवत्यंगुलादिलक्षणपरिच्छि न्नपुरुषाकारेणत्वयाविनाकथंनास्तीत्युच्यतइतितत्राह सर्वेणेति सर्वंसमाप्नोषिततोसिसर्वइतिस्मृतेःसर्वव्याप्यतिष्ठना । ननुबहिरेवव्याप्तोनत्वंतरितिमंदाशंकांपरिहरति सर्वात्मनेति । सर्वेषामंतश्चव्या प्तेनननुसर्वव्याप्तस्यापिव्योम्नःकोविशेषइत्यतोवाह सर्वात्मनेति सर्वनियामकेन ननुज्ञानादिगुणरहितस्यनियंतृत्वंकथंयुज्यतोनिर्गुणश्चेतिश्रुतेरत्राह गुणिनेति यःसर्वज्ञइतिश्रुतिः ननुकदाचिदंडेनोयथादं डाभावेनादंडिस्तथास्यापिसंभाव्यतेत्यत्राह गुणेनेति विज्ञानमानंदंब्रह्मेतिश्रुतेःनकेवलंगुणानामेवतदभिन्नत्व माणधारकत्वादिक्रियाणामपीतिभावेनाह जीवेनेतिननुगुणीचेन्नगुणःसचेन्नगुणीतियुक्ति

विरोधइतितत्राहईश्वरेणेति अघटितघटकेन अनेनवैशेष्याख्यास्वभावजेतिद्विधाविभूतिरुक्तेतिज्ञातव्यं। वैशेषाख्याविभूतिस्तुविभूतिश्चस्वभावजा। द्विधाविभूतिर्विज्ञेयाविष्णोस्तुपरमात्मनइतिवचनात् ३८ एवंविभूतीनांअनंतत्वमुक्तस्पष्टयति संख्यानमिति कालेनसर्वगुणात्मकेनमयाअसंख्यत्वात्तथानक्रियतेनाविज्ञानात् अनंतमितिवेत्तीशस्त्वनंतंत्वंतवत्तथा। अनंतस्याहिसंख्यानेनतुसर्वज्ञताभवेत्। अनंतम पिवेत्तीशःप्रत्येकंदविशेषतः । सर्वज्ञत्वान्नसंख्यानमनंतस्यकुतोहिसेतिवचनात् ३९ स्वभावजाविभूतवैशेषाख्याकीदृशीत्यत्राह तेजइति । यत्रयत्रयस्मिन्यस्मिन्पुरुषेतेजआदयोगुणाविशिष्टाः संतिसमेंशकः वैशिष्ट्यापादकमदंशयोगी। सौभगंशुभैकमाविवं। भगऐश्वर्यादिकःत्यागोनिषिद्धत्यागः ४० उपसंहरति एताइति यथान्यैर्वाचाजीवादीनांनामादिकमग्निमित्रइत्यस्यनामदेवदत्त स्याभिधानंइत्यादिप्रकारेणसंकेतित्वेनक्रियते तथान्यपदार्थेष्वेतेसर्वेशब्दामनोविकाराःमनसावाअग्रेसंकल्पयत्यथवाचाव्याहरतीतिश्रुतेः मनःसंकल्पविषयानतुमुख्यवाचकाइत्यर्थः ४१ विभूति ज्ञानस्यफलितार्थमाह वाचमिति। यतःसर्वशब्दोमय्येवस्वतोमुख्यस्तस्मादितरविषयत्वंविहायवागादिकंमय्येवकुर्वित्यर्थः । प्राणंसर्वचेष्टांमद्विषयांतद्वारेणेंद्रियाणिमद्विषयाणिकृत्वाआत्मनाप्रयत्ने नात्मानंपरमात्मानलक्ष्यत्वेनात्मानजीवमापिसर्वात्मनायच्छ नियम्यनियामकलक्षणसंबंधचरस्त्वंपुनःसंसाराध्वनेनकल्पसइत्यन्वयः ४२ वागादीनास्वविषयाकरणेबाधकमाह योवाइति यतिःप्र

संख्यानंपरमाणूनांकालेनक्रियतेमया ॥ नतथामेविभूतीनांसृजतोंडानिकोटिशः ३९ तेजःश्रीःकीर्तिरैश्वर्यंह्रीस्त्यागःसौभगंभगः ॥ वीर्यंतितिक्षाविज्ञानंयत्रयत्रसमेंशकः ४० एतास्तेकीर्तिताःसर्वाःसंक्षेपेणविभूतयः ॥ मनोविकाराएवैतेतथावाचाभिधीयते ४१ वाचंयच्छमनोयच्छप्राणंयच्छेंद्रियाणिच ॥ आत्मानमात्मनायच्छनभूयःकल्पसेध्वने ४२ योवैवाङ्मनसीसम्यक्नसंयच्छेद्धियायतिः ॥ तस्यव्रतंतपोज्ञानंस्रवत्यामघटांबुवत् ४३ तस्माद्वचोमनःप्राणान्नियच्छेन्मत्परायणः ॥ मद्भक्तियुक्तयाबुद्ध्याततःपरिसमाप्यते ४४ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेषोडशोऽध्यायः ॥१६॥ उद्धवउवाच ॥ यस्त्वयाभिहितःपूर्वंधर्मस्त्वद्भक्तिलक्षणः ॥ वर्णाश्रमाचारवतांसर्वेषांद्विपदामपि १ यथानुष्ठीयमानेनत्वयिभक्तिर्नृणांभवेत् ॥ स्वधर्मेणारविंदाक्षतन्ममाख्यातुमर्हसि २ पुराकिलमहाबाहोधर्मंपरमकंभवान् ॥ यमाहत्वयिभक्तेभ्योब्राह्मणेभ्यश्चमाधव ३ सइदानींसुमहताकालेनामित्रकर्शन ॥ प्रायोंतर्भवितामर्त्यलोकेप्रागनुशासितः ४

यत्नवान् स्रवतिनिष्फलंभवति ४३ मत्सर्वोत्तमज्ञानमेवमुक्तिसाधनमित्युपसंहरति तस्मादिति ततःज्ञानसामग्र्यनंतरंसमाप्यतेसंसारइतिशेषः वाङ्मनःप्राणबुद्ध्यादिनियच्छेत्केशवेपरे। सर्वश ब्दाभिधेयत्वंतस्यज्ञात्वाविशेषतः। मुख्यवृत्त्याभिधेयत्वमन्येषांमनसोभ्रमात्। तस्मात्तथाचिंतयतःस्वेज्ज्ञानंयथातथां तस्मान्मनोवचःप्राणान्माधवैकपरायणान्। कुर्याद्धितत्तपोह्यग्र्यंमहाधर्मोत्तमश्चसइति यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि। ज्ञानमात्मनिमहतिनियच्छेच्छांतआत्मनीतिवाक्यद्वयंतूक्तार्थेप्रमाणम् ४४ ॥ इतिश्रीभाग०महा०विज०टी०एकादशस्कंधेषोडशोऽध्यायः ॥ १६ ॥ तच्च वर्णादिभिरनुष्ठीयमानेनस्वधर्मेणभगवद्भक्तिर्भवतीत्यतस्तद्वर्णविभागंतत्तत्स्वधर्मंनिरूपयत्यस्मिन्नध्यायद्वये तत्रोद्धवउक्तार्थमनूद्यज्ञातव्यांशंपृच्छति यस्त्वयेति पूर्वंत्वयायस्त्वद्भक्तिलक्षणःत्वद्भक्तिरेवलक्षण संपद्यस्यसतथाभिहितः १ तेनस्वधर्मेणानुष्ठीयमानेनवर्णाश्रमाचारवतांनृणांयथात्वयिभक्तिर्भवेत्तत्तथाख्यातुमर्हसीत्यन्वयः द्विपदामपिवर्णादिहीनानामपियोधर्मस्तेनापीतियोज्यम् २ ननुमयोक्तो धर्मस्त्वयाज्ञातश्चेत्पुनःकिमितिवक्तव्यइतितत्राह पुरेति ३ सधर्मइदानींप्रायोंतर्भविताविरोभूतः ४

अस्यधर्मस्यवक्तास्वदन्योनास्तीत्याह वक्तेति तेतवधर्मस्यविरिंचोस्विइत्यत्राह सभायामिति त्वत्प्रसादंविनाविरिंचोपिनवक्ष्यतीत्यापिपदार्थः विनाप्रसादंविष्णोर्नधर्मंब्रह्मापिवक्ष्यति । तत्प्रसादेनव कुंकुमब्रह्मास्यतिनापरइतिवचनात् यत्रसभायांकलाः प्राणाद्यामूर्तिधराःअंगोपांगावयववंतः समाणमसृजतप्राणाच्छ्रद्धांखंवायुर्ज्योतिरापः । पृथिवींद्रियंमनोन्नमन्नाद्वीर्यंतपोमंत्राःकर्मलोकेषुनाम चताइमाःषोडशकलाःपुरुषायणाइत्यादिश्रुतेः ५ यदाब्रह्मसभायामपित्वदृतेन्योनास्तिकिमुतभूतलइतिभावेनाह कर्त्रेति भवतात्यक्तेमहीतलेविनष्टंधर्मंकःपुरुषःप्रवक्ष्यतीत्यन्वयः कर्तेतिपाठयोभवा न्धर्मस्यकर्तात्वेनभवता ६ ततःकिमत्राह त्वमिति यतोन्योनास्ति अनस्त्वद्भक्तिलक्षणोधर्मोयस्ययथाविधीयेततथामेवर्णयेत्यन्वयः ७ ८ धर्मःधर्मविषयः ९ नृणांवर्णोहंसइति हं साभिधानः कृतयुगम् पर्याप्तयुगम् १० अग्रेकृतेप्रकृष्टोनवोभगवद्गुणा नाम्येनसप्रणवओंकारस्तद्रूपस्तद्व्याख्यानरूपोवेदएकएवनऋगादिभेदेनाविभक्तः ओमित्येतदक्षरमिदंसर्वंतस्योपव्याख्यानभूतंभवद्भ विष्यदितिसर्वमोंकारएवेतिश्रुतिः तस्यविषयःकइत्यतउक्तं धर्मइति सकइत्यतोहमिति किंविशिष्टःवृषरूपधृक् चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्येत्यादिश्रुतिः एवंविधंत्वांपिकिं प्रमाणमत्राह उपासतइति हंसाइत्यस्यविवरणंमुक्तकिल्बिषाइति ११ अधुनात्रेतायुगेवेदादिप्रवर्तनप्रकारमाह त्रेतामुखइति त्रेतामुखेत्रेतारंभेमेममहृदयात् मेधादनासरस्वतीत्यस्याःप्रकृष्टो

वक्ताकर्ताविताचान्योधर्मस्याच्युततेभुवि ॥ सभायामपिवैरिंच्यांयत्रमूर्तिधराःकलाः ५ कर्त्राविन्नाप्रवक्त्राचभवतामधुसूदन ॥ त्यक्तेमहीतलेदेवविनष्टं कःप्रवक्ष्यति ६ त्वमतःसर्वधर्मज्ञधर्मस्त्वद्भक्तिलक्षणः ॥ यथायस्यविधीयेततथावर्णयमेच्युत ७ ॥ बादरायणिरुवाच ॥ इत्थंतुभृत्यमुख्येनपृष्टःसभग वान्हरिः ॥ प्रीतःक्षेमायमर्त्यानांधर्मानाहसनातनान् ८ ॥ श्रीभगवानुवाच ॥ धर्मएषतवप्रश्नोनैःश्रेयसकरोनृणाम् ॥ वर्णाश्रमाचारवतांतमुद्धवनिबोध मे ९ आदौकृतयुगेवर्णोनृणांहंसइतिस्मृतः ॥ कृतकृत्याःप्रजाजात्यातस्मात्कृतयुगंविदुः १० वेदःप्रणवएवाग्रेधर्मोहंवृषरूपधृक् ॥ उपासतेतपोनिष्ठाहंसा मांमुक्तकिल्बिषाः ११ त्रेतामुखेमहाभागप्राणान्मेहृदयात्त्रयी ॥ विद्याप्रादुरभूत्तस्याअहमासंत्रिवृन्मुखः १२ विप्रक्षत्रियविट्शूद्रामुखबाहूरुपादजाः ॥ वैराजात्पुरुषाज्जाताय आत्माचारलक्षणाः १३ गृहाश्रमोजघनतोब्रह्मचर्यंहृदोमम ॥ वक्षस्थलाद्वनेवासोन्यासःशीर्षण्यवस्थितः १४ वर्णानामाश्रमा णांचजन्मभूम्यनुसारतः ॥ आसन्प्रकृतयोनृणांनीचैर्नीचोत्तमोत्तमाः १५ शमोदमस्तपःशौचंसंतोषःक्षांतिरार्जवम् ॥ मद्भक्तिश्चदयासत्यंब्रह्मप्रकृतय स्त्विमाः १६ तेजोबलंधृतिःशौर्यंतितिक्षौदार्यमुद्यमः ॥ स्थैर्यंब्रह्मण्यमैश्वर्यंक्षत्रप्रकृतयस्त्विमाः १७

विरिंचःतस्मात्प्राणाच्चयीविद्यात्रित्वसंख्याविशिष्टत्वेनवेदविद्याप्रादुरभूत् त्रीन्वेदान्वृणवइतित्रिवृतोब्राह्मणास्तएवमुखंद्वारंयस्यसतथा अहंतस्याविद्यायाआसंविभ्रद्वारात्रय्याअभिव्यक्तोहमित्यर्थः विप्राणांतस्योपदेष्टृत्वात् १२ तत्रविप्रमुखत्वंकिंविशेष्योच्यतेक्षत्रादिमुखत्वंकिंनस्यादित्याशंक्यममसर्वावयवेभ्योमुखस्यमुख्यत्वाद्भागाधिकरणत्वात्तत्त्वज्ञापनरूपवागधिकारत्वाच्चेतिभावेनाह वि प्रेति सवकस्माद्रूपविशेषाद्विप्राद्युत्पत्तिरत्राह वैराजादिति वैराजात्ब्रह्मांतर्यामिणःयेआत्माचारलक्षणाःस्वस्वविहिताचारएवलक्षणंयेषांतेतथा १३ इदानीमाश्रमोत्पत्तिस्थानमाह गृहाश्रमइति व नेवासःवानप्रस्थः १४ प्रमावयवानांविशेषाभावेपिमंदमतिमपेक्ष्यजन्मस्थानमनुसृत्यवर्णादीनांस्वभावविशेषोस्तीत्याह वर्णानामिति प्रकृतयःस्वभावाःस्वभावभेदानीचादिशब्दवाच्याश्चेत्याह नीचैरि ति नीचप्रकृतिःशूद्रःनीचोत्तमोवैश्यःउत्तमःक्षत्रियःउत्तमोत्तमःविप्रःनीचनीचोंतेवसायी १५ नीचैरित्यादिविप्रादिक्रमविपर्ययंनिवारयितुंविप्रादिस्वभावलक्षणमाह शमइत्यादिना १६ तेजःप्रभावःबल शक्तिः । अर्थहानौचबंधूनांवियोगेष्वपिसंपादि तयोःप्राप्तौचसर्वस्यचित्तस्यस्थापनंधृतिः १७

धर्मार्थमेषुविश्वासोयस्तदास्तिक्यमुच्यते । न्यायार्जितंधनंधान्यमन्यद्वापात्मदीयते । अर्थिभ्यःश्रद्धयायुक्तंदानमेतदुदाहृतं । अर्थोपचये अर्थार्जने अतुष्टिरलंबुद्ध्यभावः १८ १९ शौचंतुद्विविधंप्रोक्तंबा ह्यमाभ्यंतरंतथा मृज्जलाभ्यांतथावाह्यमनःशुद्धिरथापरं इत्येतद्विपरीतमशौचं अनृतंअयथार्थभाषणं जीवब्रह्मैक्यभाषणमित्यर्थः कर्मणामनसावाचापरद्रव्येषुनिःस्पृहः । अस्तेयमितिसंप्रोक्तमृषिभिस्त त्त्वदर्शिभिः इत्येतदन्यत् स्तेयपरकीयब्रह्मत्वमात्मीयत्वेनवचनमित्यर्थः शुष्कविग्रहःनिष्फलकलहःशुक्तिरजतांनिदर्शनीकृत्यजगान्मिथ्येतिकथालक्षणःकामोनिषिद्धविषयाभिलाषः लक्ष्मीपतिरहमित्या द्यभिलाषलक्षणइत्यर्थःक्रोधस्तत्त्वोक्तावसहिष्णुता तर्षोऽनलंबुद्धिःब्रह्मगणदूषणोक्ताविस्यर्थः २० साधारणधर्ममाह अहिंसेति कर्मणामनसावाचासर्वभूतेषुसर्वदा । अक्लेशजननंप्रोक्तमहिंसात्विहयोगि भिः । सत्यभूतंहितंप्रोक्तंनयथार्थाभिभाषणं । असत्यमपितत्सत्यमुत्तमानांहियद्वचः । विष्णुवैष्णवविषयेद्रव्यत्यागे लोभाभावःअन्यत्रगुणः २१ आनुपूर्व्यात् अष्टवर्षंब्राह्मणमुपनयीतेत्यादिश्रुत्याविहित प्रकारेणेत्यर्थः उपनयनलक्षणंद्वितीयंजन्मप्राप्यब्रह्मत्रयीसंज्ञंदांतउपरतोविष्णुभक्तइत्यर्थः वाग्यतोमितभाषणः २२ मेखलादीन्वासआर्द्रांश्चदधत् २३ स्नानादिषुवाग्यतःकाष्ठमौनवान्जपेउच्चारेमूत्रो

आस्तिक्यंदाननिष्ठाचअदंभोविप्रसेवनम् ॥ अतुष्टिरर्थोपचयेवैश्यप्रकृतयस्त्विमाः १८ शुश्रूषणंद्विजगवांदेवानांचाप्यमायया ॥ तत्रलब्धेनसंतोषःशूद्र प्रकृतयस्त्विमाः १९ अशौचमनृतंस्तेयंनास्तिक्यंशुष्कविग्रहः ॥ कामःक्रोधश्चतर्षश्चस्वभावोऽन्तेवसायिनाम् २० अहिंसासत्यमस्तेयमकामक्रोधलो भता ॥ भूतप्रियहितेहाचधर्मोयंसार्ववर्णिकः २१ द्वितीयंप्राप्यानुपूर्व्याज्जन्मोपनयनंद्विजः ॥ वसन्गुरुकुलेदांतोब्रह्माधीयीतवाग्यतः २२ मेखलाजि नदंडाक्षब्रह्मसूत्रकमंडलून् ॥ जटिलोधौतदंतश्चवासःपीठकुशान्दधत् २३ स्नानभोजनहोमेषुजपोच्चारेचवाग्यतः ॥ नच्छिंद्यान्नखरोमाणिकक्षोपस्थग तान्यपि २४ रेतोनावकिरेज्जातुब्रह्मव्रतधरःस्वयम् ॥ अवकीर्णेवगाह्याप्सुयतासुस्त्रिपदींजपेत् २५ अग्न्यर्काचार्यगोविप्रगुरुवृद्धसुरान्नमेत् ॥ समाहितउ पासीतसंध्येचयतवाग्जपेत् २६ आचार्यंमांविजानीयान्नावमन्येतकर्हिचित् ॥ नमर्त्यबुद्ध्यासूयेतसर्वदेवमयोगुरुः २७ सायंप्रातरुपानीयभैक्षंतस्मैनिवे दयेत् ॥ यच्चान्यदप्यनुज्ञातउपभुंजीतसंयतः २८ शुश्रूषमाणआचार्यंसदोपासीतनीचवत् ॥ यानशय्यासनस्थानेनातिदूरेकृतांजलिः २९ एवंवृत्तोगुरुकु लेवसेद्भोगविवर्जितः ॥ विद्यासमाप्यतेयावद्बिभ्रद्व्रतमखंडितम् ३० यद्यसौछंदसांलोकमारोक्ष्यन्ब्रह्मविष्टपम् ॥ गुरवेविन्यसेद्देहंस्वाध्यायार्थंबृहद्व्रतः ३१

त्सर्गेपुरीषोत्सर्जनेच गुरुणाचोपदिष्टोपिवेदबाह्यविवर्जितः । विधिनोक्तेनमार्गेणमंत्राभ्यासोजपःस्मृतः । अधीत्यवेदसूत्रेवापुराणेसेतिहासके । यदेवध्ययनंतच्चतदभ्यासोजपःस्मृतः २४ नावकिरेन्नउत्सृ जेत् प्रसक्तगुरुणापूर्वमुपदिष्टोभ्यनुज्ञया । धर्मार्थमात्मसिद्ध्यर्थमुपायग्रहणंव्रतं । प्राणापानसमायोगःप्राणायामउदीरितः । ब्रह्मव्रतधरःब्रह्मचर्यव्रतधरः । कर्मणामनसावाचासर्वावस्थासुसर्वदा । सर्वत्रमै थुनत्यागंब्रह्मचर्यंप्रचक्षते । स्वप्नेसुंदर्यादिदर्शनेयदृच्छयारेतोवकीर्यप्स्ववगाह्यनिमज्ययतासुःप्राणायामोपेतस्त्रिपदींगायत्रींजपेदित्यन्वयः स्वप्नेपिरेतस्स्खलनेप्रायश्चित्तंविधीयतइतिस्मृतेः २५ अतोदेवाश्च वंतुनःइत्यादेरपिअगन्यर्कव्यतिरिक्तसुराअपिमंतव्याइत्यर्थः २६ २७ २८ २९ स्रक्चंदनादिभोगवर्जितःएवंवृत्तइत्येकंपदं उक्तसदाचारनिरतइत्यर्थःकियंतंकालमेवंवासइतितत्राह विद्येति ३० असौबृहद्व्रतःब्रह्मचारीयदिछंदसांवेदानांलोकमारोक्ष्यन्आरोढुकामोभवतिस्वाध्यायार्थंस्वाध्यायैकप्रयोजनंदेहंगुरवेविन्यसेत्गुरुशुश्रूषांकुर्यादित्यर्थः कीदृशंब्रह्मणाधिकृतंविष्टपंविष्टंपातिरक्षतीतिब्र ह्मविष्टपंसत्यलोकमित्यर्थः ३१

कश्चिच्चविज्ञानविशेषेत्वदुपासनमत्राह अग्नाविति आत्मनिसूर्येहृदयेवा अग्नावित्यादिसम्यग्भेदेनिर्धारितेपि सर्वथैक्येनोपास्तिर्नकर्तव्येतिनिश्चयार्थमाह अपृथग्धीरितिअयथावस्तुज्ञानंपृथ ग्धीःयस्यनास्तिसोऽपृथग्धीःअन्याचैक्यविषयमिथ्याज्ञानराहितइत्यर्थःदृष्टफलमाह ब्रह्मवर्चस्वीति ३२ अप्रतिपक्षस्यानुमानस्येवाविहितोपासनस्याभीष्टसाध्यासिद्धौसामर्थ्यस्यादित्यतःप्रतिपक्षंप्रति निषेधति स्त्रीणामिति क्ष्वेलनंजिह्वास्फोटःनर्मवचनंवास्मरणादिकमादिशब्दगृहीतं अगृहस्थःब्रह्मचारी अग्रतःप्रथमतः ३३ सर्वाश्रमसाधारणधर्ममाह शौचमित्यादिना ३४ सर्वभूतेषुमद्भावःममव्याप्तिलक्ष णसत्ता ३५ ब्रह्मचर्यानुष्ठानफलमाह एवमिति तीव्रतप सादग्धःकर्माशयःबाह्यांतःकरणंयस्यसतथा अतएवामलःसंसारमलमुक्तोभवति ३६ अथेति प्रमेयांतरारंभविषय ब्रह्मचर्याश्रमानंतरअवेक्ष्यन् गृहस्थाश्रमंयदीच्छुकामःस्नायात्स्नातकोभवेत् ३७ द्विजोत्तमेनानाश्रमतयानस्थेयमित्याह गृहमिति ३८ गृहार्थीचेत्कीदृशीमुद्वहेदत्राह गृहार्थीति यांसवर्णांअनुक्रमादितिपाठः ३९ द्विजन्मनांब्राह्म

अग्नौगुरावात्मनिचसर्वभूतेषुमांपरम् ॥ अपृथक्धीरुपासीतब्रह्मवर्चस्व्यकल्मषः ३२ स्त्रीणांनिरीक्षणस्पर्शसंलापक्ष्वेलनादिकम् ॥ प्राणिनोमिथुनीभू तानगृहस्थोग्रतस्त्यजेत् ३३ शौचमाचमनंस्नानंसंध्योपासनमार्जवम् ॥ तीर्थसेवाजपोस्पृश्याभक्ष्यासंभाष्यवर्जनम् ३४ सर्वाश्रमप्रयुक्तोयंनियमः कुलनंदन ॥ मद्भावःसर्वभूतेषुमनोवाक्कायसंयमः ३५ एवंब्रह्मव्रतधरोब्राह्मणोग्निरिवज्वलन् ॥ मद्भक्तस्तीव्रतपसादग्धकर्माशयोमलः ३६ अथानंत रमावेक्ष्यन्यथाजिज्ञासितागमः ॥ गुरवेदक्षिणांदत्वास्नायाद्गुर्वनुमोदितः ३७ गृहंवनंचोपविशेत्प्रव्रजेद्वाद्विजोत्तमः ॥ आश्रमादाश्रमंगच्छेन्नान्यथा मत्परश्चरेत् ३८ गृहार्थीसदृशींभार्यामुद्वहेदजुगुप्सिताम् ॥ यवीयसींतुवयसायासवर्णाह्यनुक्रमात् ३९ इज्याध्ययनदानानिसर्वेषांचद्विजन्मनाम् ॥ प्रतिग्रहोध्यापनंचब्राह्मणस्यैवयाजनम् ४० प्रतिग्रहंमन्यमानस्तपस्तेजोयशोनुदम् ॥ अन्याभ्यांचैववर्जीवेतशीलैर्वादोषदृक्तयोः ४१ ब्राह्मणस्यहिदे होयंक्षुद्रकामायनेष्यते ॥ कृच्छ्रायतपसेचेहप्रेत्यानंतसुखायच ४२ शिलोंछवृत्त्यापरितुष्टचित्तोधर्मंमहांतंविरजंजुषाणः ॥ मय्यर्पितात्मागृहएवतिष्ठ न्नातिप्रसक्तःसमुपैतिशांतिम् ४३ समुद्धरंतियेविप्रंसीदंतंमत्परायणम् ॥ तानुद्धरिष्येनाचिरादापदोनौरिवार्णवात् ४४ सर्वाःसमुद्धरेद्राजापितेवव्यस नात्प्रजाः ॥ आत्मानमात्मनाधीरोयथागजपतिर्गजान् ४५ एवंविधोनरपतिर्विमानेनार्कवर्चसा ॥ विधूयेहाशुभंकृत्स्नमिंद्रेणसहमोदते ४६ सीदन्वि प्रोवणिग्वृत्त्यापण्यैरेवापदंतरेत् ॥ खड्गेनवापदाक्रांतोनश्ववृत्त्याकथंचन ४७ वैश्यवृत्त्यातुराजन्योजीवेन्मृगययापदि ॥ चरेद्वाविप्ररूपेणनश्ववृत्त्या कथंचन ४८

णक्षत्रियवैश्यानां इज्यायजनम् ४० प्रतिग्रहंतपस्तेजोयशोनुदंमन्यमानःपुरुषःअन्याभ्यांयाजनाध्यापनाभ्यांजीवेतेत्यन्वयः तयोर्याजनाध्यापनयोर्दोषदृक्शीलैःशिलोंछवृत्त्यावाजीवेत् ४१ शिलों छवृत्तेःक्लेशरूपत्वात्किमितिसाप्रशस्तेतिविधीयतेइत्यत्राह ब्राह्मणस्येति क्षुद्रकामायाल्पभोगाय ४२ शिलोंछवृत्तेःसुखसाधनत्वात्सैवानिषेव्येतिभावेनाह शिलोंछेति शांतिंमोक्षं ४३ अपदःपदहीनात् आपदइतिवा ४४ ४५ ४६ आपद्धर्ममाह सीदन्निति दारिद्र्येणसीदन्नश्यन् वणिजांवृत्त्याकथमापत्तरणमत्राह पण्यैरिति आपदाक्रांतः खड्गेनवाक्षत्रधर्मेणेत्यर्थः श्ववृत्त्यानीचसेव या ४७ वैश्यवृत्त्यागोरक्षणादिलक्षणया ४८

कारुककियांकटादिक्रियांसंपादिनैवेत्याह कृच्छ्रादिति ४९ गृहस्थधर्ममाह वेदेत्यादिनायथोदयंसंपदामितिशेषः । मद्रूपाणिमत्यतिमास्थानीयानि । मतिमावद्धेर रूपंतिर्यङ्नरसुरादयः । साक्षाद्रूपाणिमत्स्यादीन्यभिन्नान्येवसर्वदेतिवचनात् ५० शुक्लेनशुद्धेन ५१ भयजनतात्पर्येइदमेवप्रथमसाधनमित्याह कुटुंबेष्विति । अदृष्टंस्वर्गादिकंदृष्टवद्गृहादिकवन्नश्वरंपश्येत् ५२ कुटुंबेष्वसंगतयाप्रवर्तनोपायमाह पुत्रेत्यादिना । पांथसंगमइतिलुप्तोपमा । पांथानांसंगमइवपुत्रादीनांसंगमइति । एतेपुत्रादयोदेहमनुभवंत्येवअरुच्याहदृष्टांतांतरमाह स्वप्नइति । पांथसंगमःकचिद्भवतिकचिन्न नतथास्वप्नःअपितुनिद्रामनुगतएव ५३ मयिमनसायुक्तः ५४ आश्रमादाश्रमंगच्छेदित्ययंविधिःकाल्पनिकइत्याह कर्मभिरिति ५५ एवंमुक्तिसाधनमुक्त्वेदानींसंसारमार्गंसिततोनर्थंचवक्ति यस्त्विति । ममाहमित्यन्य

शूद्रवृत्तिंभजेद्वैश्यःशूद्रोवैकारुकक्रियाम् ॥ कृच्छ्रान्मुक्तोनगर्ह्येणवृत्तिंलिप्सेतकर्मणा ४९ वेदाध्यायीस्वधास्वाहाबल्यन्नाद्यैर्यथोदयम् ॥ देवर्षिपितृभूतानिमद्रूपाण्यन्वहंयजेत् ५०यदृच्छयोपपन्नेनशुक्लेनोपार्जितेनवा ॥ धनेनापीडयन्भृत्यान्न्यायेनैवाहरेत्क्रतून् ५१ कुटुंबेषुनसज्जेतनप्रमाद्येत्कुटुंब्यपि ॥ विपश्चिन्नश्वरंपश्येददृष्टमपिदृष्टवत् ५२ पुत्रदाराप्तबंधूनांसंगमःपांथसंगमः ॥ अनुदेहंभवंत्येतेस्वप्नोनिद्रानुगोयथा ५३ इत्थंपरिमृशन्मुक्तोगृहेष्वतिथिवद्वसेत् ॥ नगृहैरनुबध्येतनिर्ममोनिरहंकृतिः ५४ कर्मभिर्गृहमेधीयैरिष्ट्वामामेवभक्तिमान् ॥ तिष्ठेद्वनंवोपविशेत्प्रजावान्वापरिव्रजेत् ५५ यस्त्वासक्तमतिर्गेहेपुत्रवित्तैषणातुरः ॥ स्त्रैणःकृपणधीर्मूढोममाहमितिबध्यते ५६ अहोमेपितरौवृद्धौभार्याबालात्मजासती ॥ अनाथामामृतेदीनाःकथंजीवंतिदुःखिताः ५७ एवंगृहाशयाक्षिप्तहृदयोमूढधीरयम् ॥ अतृप्तस्ताननुध्यायन्मृतोंधंविशतेतमः ५८ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेवर्णाश्रमविभागयोगोनामसप्तदशोऽध्यायः ॥ १७ ॥ श्रीभगवानुवाच ॥ वनंविविक्षुःपुत्रेषुभार्यांन्यस्यसहैववा ॥ वनमेववसेच्छांतस्तृतीयंभागमायुषः १ कंदमूलफलैर्वन्यैर्मेध्यैर्वृत्तिंप्रकल्पयेत् ॥ वसीतवल्कलंवासस्तृणपर्णाजिनानिच २ केशरोमनखश्मश्रुमलानिबिभृयाद्दती ॥ नधावेदप्सुमज्जेतत्रिकालंस्थंडिलेशयः ३ ग्रीष्मेतप्येतपंचाग्नीन्वर्षास्वासारषाड्जले ॥ आकंठमग्नःशिशिरएवंवृत्तस्तपश्चरेत् ४ अग्निपक्वंसमश्नीयात्कालपक्वमथापिवा ॥ उलूखलाश्मकुट्टोवादंतोलूखलएववा ५ स्वयंसंचिनुयात्सर्वमात्मनोवृत्तिकारणम् ॥ देशकालबलाभिज्ञोनाददीतान्यदाहृतम् ६ वन्यैश्चरुपुरोडाशान्निर्वपेत्कालचोदितान् ॥ नतुश्रौतेनपशुनामांयजेतवनाश्रमी ७ अग्निहोत्रंचदर्शंचपूर्णमासंचपूर्ववत् ॥ चातुर्मास्यानिचमुनेराख्यातानिचनैगमैः ८

थाज्ञानेन ५६ ५७ गृहाशयागृहेष्वतितृष्णया आशादिगतितृष्णयोरिति ५८ इतिश्री०एकादशस्कंधेवि०टीकायांसप्तदशोऽध्यायः॥१७॥वनेचोपविशेदित्युक्तवानप्रस्थस्यप्रवृत्तिप्रकारमाह वनमित्यादिना । तृतीयभागमायुषःचतुर्मासाधिकंत्रयोविंशद्वर्षपरिमितम् १ वन्यैर्वनभवैः २ व्रतीवानप्रस्थव्रतवान् धावनंपलायनम् तेजनंवा ३ वर्षासुवर्षंतीआसारषाड्वेगवर्षमपिसहतइति ४ कालपक्वंकदलीफलादिउलूखलीउलूखलावहतनीवारादिनावर्तमानःअश्मकुट्टःअश्मना चूर्णितपिष्टादिवृत्तिः । दंताएवोलूखलोयस्यसतथादंतचूर्णितभोज्यइत्यर्थः । गजदंतनिर्मितोलूखलोवा ५ संचिनुयात्संग्रहंकुर्यात् अन्यदाहृतमन्येनानीतम् ६ कालचोदितान्अस्मिन्कालइदमितिविहितान् ७ पूर्ववत्गृहस्थाश्रमेयथा तथावनेअग्निहोत्रादिकंकुर्यादितिविशेषः । नैगमैःकल्पशास्त्रज्ञैः ८

तपोमयंज्ञानरूपंऋषीणांलोकान्प्राप्नुयादिति ९ एवंकृच्छ्रतश्चीर्णैतपोमदपरोक्षायनियोक्तव्यंअन्यथायुंजानःसर्वंहास्यइत्याह यस्त्विति । निःश्रेयसंमदपरोक्षलक्षणंपुरुषार्थसाधनं १० स्वाश्रमविहि तकर्मकरणासमर्थश्चेत्किंकुर्यादत्राह यदेति ११ क्रमप्राप्तंप्रव्रजनपूर्वकंयतिधर्ममाह यदेति । धर्मविपाकेषुधर्मफलेषुदुःखत्वाभिरयात्मसुनरकसमानरूपेषु १२ प्रव्रजनेइत्थंभावमाह इष्ट्वेति प्राणेअं तर्याग्नीन् १३ देवान्सम्यक्संपूज्यतेभ्योनुज्ञामादायैवसंन्यासःकार्योन्यथातेदारादिषुसन्निधायविघ्नंविधायाधःपातयंतीत्याशयेनाह विप्रस्येति । वैइत्यनेन असंपूज्यन्यासिष्णुंतंदेवावै पातयंत्यधः । सुसंपूज्यन्यसिष्णुंतंदेवाएवानुजानतेइतिवाक्यंसूचयति हिशब्देन अथवातद्यशोवृद्ध्यैवविघ्नंतीवपुनःपुनः । तात्पर्याद्धिप्रितोदेवैर्नोत्थातुंशक्नुयात्काचिदिति । मानसूचयति १४ मौनेनवा ग्दंडः अनीहयानिषिद्धाचरणत्यागेनदेहदंडः अनिलायामेनचेतोदंडः १५ १६ १७ १८ १९ आत्मनापरमात्मनाक्रीडायस्यसतथा आत्मनोरतंसुखंयस्यसतथा आत्मवान्वशीकृत मनाः विविक्तंक्षेमंक्षेत्रंशरणंयस्यसतथा यद्वा पुरुषार्थोत्तममोक्षशरणः मद्भावेनमद्भक्त्याविमलाशयःविशुद्धबुद्धिः २० तस्योपास्तिप्रकारमाह आत्मानमिति मुनिर्यतिरात्मानंपरमात्मानमेकंप्रधानं

एवंचीर्णेनतपसामुनिर्धमनिसंततः ॥ मांतपोमयमाराध्यऋषिलोकादुपैतिमाम् ९ यस्त्वेवंकृच्छ्रतश्चीर्णंतपोनिःश्रेयसंमहत् ॥ कामायाल्पीयसेयुंज्याद्बालिशःकोपरस्ततः १० यदासौनियमेऽकल्पोजरयाजातवेपथुः ॥ आत्मन्यग्नीन्समारोप्यमच्चित्तोग्निंसमाविशेत् ११ यदाधर्मविपाकेषुलोकेषुनिरयात्मसु ॥ विरागोजायतेसम्यङ्न्यस्ताग्निःप्रव्रजेत्ततः १२ इष्ट्वायथोपदेशंमांदत्त्वासर्वस्वमृत्विजे ॥ अग्नीन्स्वप्राणआवेश्यनिरपेक्षःपरिव्रजेत् १३ विप्रस्यवैसंन्यसतोदेवादारादिरूपिणः ॥ विघ्नंकुर्वंत्ययंह्यस्मानाक्रम्यसमियात्परम् १४ बिभृयाच्चेन्मुनिर्वासःकौपीनाच्छादनंपरम् ॥ त्यक्तंनदंडपात्राभ्यामन्यत्किंचिदनापदि १५ दृष्टिपूतंन्यसेत्पादंवस्त्रपूतंपिबेज्जलम् ॥ सत्यपूतांवदेद्वाचंमनःपूतंसमाचरेत् १६ मौनानीहानिलायामदंडोवाग्देहचेतसाम् ॥ नह्येतेयस्यसंत्यंगवेणुभिर्नभवेद्यतिः १७ भिक्षांचतुर्षुवर्णेषुविगर्ह्यान्वर्जयंश्चरेत् ॥ सप्तागारानसंक्लृप्तांस्तुष्येल्लब्धेनतावता १८ बहिर्जलाशयंगत्वातत्रोपस्पृश्यवाग्यतः ॥ विभज्ययाचितंशेषंभुंजीताशेषमाहृतम् १९ एकश्चरेन्महीमेतांनिःसंगःसंयतेंद्रियः ॥ आत्मक्रीडआत्मरतआत्मवान्समदर्शनः ॥ विविक्तक्षेमशरणोमद्भावविमलाशयः २० आत्मानंचिंतयेदेकमभेदेनमयामुनिः २१ अन्वीक्षेतात्मनोबंधंमोक्षंचज्ञाननिष्ठया ॥ बंधइंद्रियविक्षेपोमोक्षएषांचसंयमः २२

सर्वोत्तमंचिंतयेत् किंच मयाअभेदेन उपलक्षणमेतत् मत्स्याद्यवताराभिन्नत्वेनस्वगतभेदराहित्येनमयालक्ष्म्यासहेतिवाअत्रांकमानमत्राप्युत्तरंमयेति पूर्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यतेइतिश्रुति प्रमाणेनक्षेत्रज्ञःपुरुषोज्ञात्मेतिमयासिद्धमात्मानंस्वंअभेदेनचिंतयेत् किंतुएकमभ्यंचिंतयेत् एकेमुख्यान्यकेवलाइति अन्यमीशमस्यमहिमानामितिवीतशोकइतिमयाहेतुना यद्वाआत्मावाइदमेकएवाग्रआसीदितिश्रुत्यामयासिद्धमात्मानंएकंमुख्यंचिंतयेत् अभेदेनजीवैनैक्यंनचिंतयेदित्यर्थः सत्यंभिदासत्यंभिदेतिश्रुत्याख्यमयासिद्धत्वात् लक्ष्मीप्रमाणयोर्मास्यान्निषेधेचाधिकीत्यंतेइत्यभिधानम् २१ भगवदुपास्त्याविदमंतरंगमित्याह अन्वीक्षेतेति ज्ञाननिष्ठयात्मनःस्वस्यबंधंमोक्षंचात्मनोहरेःसकाशादन्वीक्षेत नन्वयंहरिरस्यबंधमोक्षौकथमापादयतीतितत्राह बंधइति इंद्रियाणांविषयेषुविक्षेपः प्रसारणंचबंधःस्यादेषामिंद्रियाणांसंयमोनिग्रहोविषयेभ्यःआहृत्यप्रतिस्थापनलक्षणोमोक्षइति २२

यतएवंतस्मादित्यांविधेयमित्याह तस्मादिति कर्मेंद्रियाणामैक्येनमनसासहषट्ज्ञानेंद्रियाणिआत्मानिभाविमहत्सुखंलब्ध्वातुच्छकामेभ्योविरक्तोभूत्वाविषयेनिरपेक्षत्वेनात्मानिसुखंलब्ध्वेतिवा २३ पुण्यशब्दःदेशादिभिःप्रत्येकंसंबध्यते २४ पदंस्थानं अभीक्ष्णमित्यनेनपुरादिषुविकल्पइतिज्ञायते वानप्रस्थाश्रमस्थेपुनित्यंभैक्षाचरणस्यार्किक्षिप्रफलमित्यतआह संसिध्यतीति शिलांधसा शिलावृत्तिविहितान्नेनशुद्धंसत्वंअंतःकरणंयस्यसतथा असंमोहोमिथ्याज्ञानरहितःआशुसंसिध्यतिअपरोक्षज्ञानंप्राप्नोति २५ संसिद्धस्यदर्शनप्रकारंविधत्ते नेति एतज्जगद्वस्तुतयापरब्रह्मत्वेन अत्र हेतुः विनश्वरंदृश्यमानमिति एवंपश्यतावैराग्यानुसंधानंकर्तव्यमित्याह असक्तेति इहामुत्रासक्तचित्तःस्यात् ततःकिमत्राह विरमेदिति चिकीर्षितात्कर्तुमिष्टात्कर्मादेर्विरमेत्कृतकृत्योभवेदित्यन्वयः २६ एतदेवस्पष्टयति यदेतदिति मनोवाक्प्राणैःसमृतंसंपन्नंआत्मनिहरौस्थितं ऋचोअक्षरेपरमेव्योमन्नित्यादिश्रुतेः यदेतत्प्रत्यक्षंजगत्सर्वंमायेतितर्केणाचेतनप्रकृतिकृतत्वेन अनुष्ठिता नुगुणमायातीत्याय:फलं । तन्मानेतिमाशब्दोनिषेधार्थः । तथाचमायेतिनिष्फलमुच्यते । मायमितिवक्तव्येमायेतिस्त्रीलिंगत्वेनवचनमत्यंतास्वातंत्र्यप्रकटनायेत्यतोस्यज्ञानेन प्रयोजनाभावात्तै तत्सुखायस्यादितित्यक्तास्वतंत्रत्वात्स्वोविष्णुरन्यसंवादराहित्येनमुक्तिफलप्रदत्वात् तत्स्थःतदेकशरणोभूत्वातज्जगन्नस्मरेद्विष्णुमेवप्रयोजकंस्मरेदित्यन्वयः यदिविष्णुःस्वतंत्रोनस्यात्तर्हितज्जगत्साक्षिपर्वनस्यात्तत्त्वोनित्यसुखंस्यान्नचैवंतस्मात्सएवतथैवेत्यादितर्केण विश्वंमिथ्यादृश्यत्वादित्यादितर्केणमायामयत्वंप्रपंचस्योच्यतइत्येतत्पूर्वोत्तरग्रंथविरोधात् विश्वंसत्यमित्यादिश्रुतिप्रामाण्याद

तस्मान्नियम्यषड्वर्गंमद्भावेनचरेन्मुनिः ॥ विरक्तःक्षुल्लकामेभ्योलब्ध्वात्मनिसुखंमहत् २३ पुरग्रामव्रजान्सार्थान्भिक्षार्थंप्रविशंश्चरेत् ॥ पुण्यदेशसरिच्छैलवनाश्रमवतींमहीम् २४ वानप्रस्थाश्रमपदेष्वभीक्ष्णंभैक्ष्यमाचरेत् ॥ संसिध्यत्याश्वसंमोहःशुद्धसत्वःशिलांधसा २५ नैतद्वस्तुतयापश्येद्दृश्यमानंविनश्वरम् ॥ असक्तचित्तोविरमेदिहामुत्रचिकीर्षितात् २६ यदेतदात्मनिजगन्मनोवाक्प्राणसंभृतम् ॥ सर्वंमायेतितर्केणस्वस्थस्त्यक्त्वानतत्स्मरेत् २७ ज्ञाननिष्ठोविरक्तोवामद्भक्तोवानपेक्षकः ॥ सलिंगानाश्रमान्मुक्त्वाचरेदविधिगोचरः २८ बुधोबालकवत्क्रीडेत्कुशलोजडवच्चरेत् ॥ वदेदुन्मत्तवद्विद्वान्गोचर्यांनैगमश्चरेत् २९ वेदवादरतोनस्यान्नपाखंडीनहैतुकः ॥ शुष्कवादविवादेनकंचित्पक्षंनसंश्रयेत् ३०

स्मदुक्तार्थे त्रिगुणाप्रकृतिर्मायातज्जत्वाद्विश्वमीदृशं । अनाद्यनंतकालेषुमायेत्याहुर्विपश्चितः । अचेतनत्वान्नैवैतत्प्रयोजकतयास्मरेत् । चेतनत्वंस्वतंत्रत्वंसचैकोविष्णुरेवतु । आयस्तुफलमादिष्टंप्रोक्तंमायेतिनिष्फलं । फलाल्पत्वाचुमाधैषासंप्रोक्तात्रिगुणात्मिका । महाफलप्रदत्वात्तुविष्णुरायइतीरितइतिप्रमाणसद्भावाच्चेत्युपेक्षणीयम् २७ ज्ञानपरिपाकंप्राप्तस्ययतेर्वृत्तिप्रकारंविधत्ते ज्ञाननिष्ठइतिज्ञानस्यनिष्ठोत्कर्षोयस्यसतथा वाशब्दौसमुच्चयार्थौनविकल्पार्थौअन्योन्यनियमार्थौवाअनपेक्षकःशिष्यसंग्रहाद्यनिच्छुःसलिंगान्दंडादिलक्षणसहितान्मुक्त्वाविधेरगोचरः अयंयतिरयंव्रतीत्यादिरूपव्यवहारागोचरश्चरेद्विविक्तेअरण्येवर्ततएवइत्यर्थः यद्वा वेदोक्तविधिचकितत्वेनसंध्योपासनादिनकरोतिकिंतुजलस्रोतोवत्स्वतएवकरोति २८ तंप्रकारंवक्ति बुधइति गोचर्यांगोवच्चर्याअन्नवच्चरणमित्यर्थः नैगमःवेदोक्तविधिनावर्तमानःइत्यनेनाविधिगोचरइत्यत्रविध्यतिक्रमोनार्थइतिनिरणायि २९ नैगमइत्युक्तंविशदयति वेदेति वेदेनसहवादोविवादः विप्रतिपत्तिस्तत्ररतोनस्यात् कुतर्केणवेदस्यजीवब्रह्मणोरेकत्वार्थकथनपरोनस्यादित्यर्थः वेदेनसहवादोयोवेदवादइतीरितः । तर्केणवेदस्यान्यार्थकल्पनंतद्विदोविदुः । तन्नकुर्यात्कदाचिच्चतत्कुर्वन्वेदहाभवेदितिवचनादुक्तएवार्थः वेदविचारविधुरइत्यर्थोनैव ।किंच पाखंडीपाशुपतादिदर्शनाभिमानीचनस्यात् हैतुकी अक्षपादादिदर्शनाभिमानीचनस्यात् शुष्कवादविवादेनप्रसंगतःप्राप्तनिरर्थवादकलहेन योगसांख्यकणादाक्षपादावैहेतुवादिनः । पश्चोशशाक्तबुद्धाद्याःपाखंडाइतिकीर्तिताः इतिवचनाच्च ३०

नोद्विजेद्दुर्जनाद्योद्विग्नःस्यात् ३१ ३१ वैराकरणेकिन्निमित्तमत्राह एकइति परःसर्वोत्तमः आत्मापरमात्माएकएवभूतेषुचराचरसंज्ञेषुआत्मनिस्वस्मिंश्चावस्थितोहियस्मात्तस्मादधिष्ठानत्वाद्वैरंनकु
र्याच्चदाप्रियत्वादित्यर्थः एकोदेवःसर्वभूतेषुगूढइतिश्रुतेः अत्रदृष्टांतमाह स्वयद्वदिति यद्वद्यथाआकाशउदपात्रेषुघटादिषुएकएवस्थितस्तथेत्यत्र विशेषस्तु घटादिषुमहाकाशोनिर्विशेषश्चसंततः।
घटाद्यपचक्षपस्तुतथैवान्योघटानुगः। घटनाशेथनाशःसन्मध्यमाकाशइष्यते। एकदेशाभिमानेत्वादिन्याकाशात्त्रयःस्मृताः। महाकाशोभिन्नगजोभिन्नास्तत्रतुमध्यमा। क्षुद्रविन्नास्तादितरएवमाः[illegible]
त्रास्मृतः। महाख्वत्परस्तत्रात्मजीवाश्चमध्यखवत्स्मृताः। घटानुगस्तत्प्रोक्ताअसुरानित्यदुःखिनः। महाकाशत्रयःमर्त्ये आकाशाइतेस्मृताः। परमात्मनरशेतद्वज्जीवाःसर्वेविसंस्थिताः। एवंविष्ण्वात्मक
मिदंजगत्पश्येत्प्रतिसवेत्यस्मान्मानादवगंतव्यः केवलंनाकाशवत्भूतानांपरमात्मनश्चव्याप्यव्यापकमत्रंथापितुतस्माद्विशेषोप्यस्तीत्याह भूतानीति । एकःपरमात्माएवात्माव्यापकश्चादातायेषांतानी
मान्येकात्मकानि कमत्ययः स्वार्थेविशिनष्टि भूतानामेकएवात्मार्थैकोभूतेषुसंवतः। एकोभूतानिचादत्तेतस्मादेकात्मकानित्विति वचनात् ३३ अशनसिद्धयसिद्धयोरपिमद्भक्तिन्हासेनकर्तव्यइतिभावेना
ह अलब्ध्वेति देवस्यममतंत्रितंअधीनम् ३४ ननुतर्हिप्रयत्नोपितदर्थंनकर्तव्यइतितत्राह आहारार्थमिति ननु नाहारंचिंतयेत्प्राज्ञइतिनिषेधःकथमत्राह युक्तमिति यावत्प्राणधारणार्थमपिचिंतनं
विहितत्वाद्युक्तम् नवाआजीविष्यामिमानस्वादचिंतिश्रुतेः अशनालाभेदेहस्यप्राणवियोगस्तेनदेहस्यपंचत्वंरागादीनास्वस्वकारणसंपत्तिस्तत्रपुरुषार्थोपयोपयोगितत्त्वविमर्शोनसंभाव्यतेऽतःपुरुषा

नोद्विजेतजनाद्धीरोजनंचोद्वेजयेन्नतु ॥ अतिवादांस्तितिक्षेतनावमन्येतकंचन ३१ देहमुद्दिश्यपशुवद्वैरंकुर्यान्नकेनचित् ३२ एकएवपरोह्यात्माभूतेष्वा
त्मन्यवस्थितः ॥ स्वयद्वदुदपात्रेषुभूतान्येकात्मकानिच ३३ अलब्ध्वानविषीदेतकालेकालेऽशनंक्वचित् ॥ लब्ध्वानहृष्येद्धृतिमानुभयंदेवतंत्रितम्
३४ आहारार्थंसमीहेतयुक्तंतत्प्राणधारणम् ॥ तत्त्वंविमृश्यतेतेनतद्विज्ञायविमुच्यते ३५ यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ॥ तथावासस्तथाश
य्यांप्राप्तंप्राप्तंभजेन्मुनिः ३६ शौचमाचमनंस्नानंनतुचोदनयाचरेत् ॥ अन्यांश्चनियमान्ज्ञानीयथाहंलीलयेश्वरः ३७ नहितस्यविकल्पाख्यायाचमद्वीक्ष
याहता ॥ आदेहांतंक्वचित्ख्यातिस्ततःसंपद्यतेमया ३८ दुःखोदर्केषुकामेषुजातनिर्वेदआत्मवान् ॥ अजिज्ञासितमद्धर्मोगुरुंमुनिमुपाव्रजेत् ३९ तावत्प
रिचरेद्भक्तःश्रद्धावाननसूयकः ॥ यावद्ब्रह्मविजानीयान्मामेवगुरुमादृतः ४०

र्थोनुदयोतोदेहयात्रार्थमशनाचिंतनमावश्यकमित्याशयेनाह तत्त्वमिति तेनदेहेनतत्त्वंविमृश्यते तत्त्वं ३५ फलितमाह यदृच्छयेति ३६ शौचादिकर्माणिस्वभावतएवकुर्यान्नतुविधिचकित
त्वेनेत्याशयेनाह शौचमिति ज्ञानीयतिः स्वभावतोधर्मपरोनविधेश्चकितश्चरेत्। अल्पंफलंहि चाकितेस्वभावेफलमुत्तममितिवचनात् ३७ अत्रहेतुमाह नहीति तस्यज्ञानिनोविकल्पाख्याश्रौतस्मार्तविरु
द्धकल्पनाख्याक्रियान हियस्मादतोज्ञानीविधिंविहायस्वतएवश्रौतादिक्रियांकुर्यादित्यन्वयः ज्ञानिनोपियावद्देहंनिषिद्धेपिमनोगमनात्कथंनास्तीत्यत्राह मद्वीक्षयेतिआदेहांतंप्रारब्धकर्मनिबद्धदेहपातप
र्यंतं ज्ञानिनोपिक्वचिन्निषिद्धविषयेख्यातिर्मनोगतिलक्षणप्रतीतिःस्यात्सापिमद्वीक्षयाज्ञानप्रपन्नमत्कटाक्षनिरीक्षणेनहतास्वप्रक्तिमुद्बोधयितुमसमर्थःस्यादितिशेषः ततःप्रारब्धकर्ममूलदेहपातादनंतरं
मयासंपद्यतेमत्प्रसादेनाविर्भूतस्वरूपानंदोभवतीत्यर्थः निषिद्धंमनसाकल्प्यमतोविहितमाचरेत्। अज्ञोज्ञस्यतुसंकल्पःस्वभावाद्विहितानुगः। शरीरधर्मिणःक्वापिनिषिद्धेपिमनोव्रजेत्। तथापितस्यनानर्थो
मोक्षेनैवान्यथाव्रजेदितिस्मृतेः ३८ एवंविधज्ञानप्राप्तावुपायमाह दुःखोदर्केष्विति उपाव्रजेदित्युपसर्गेणमुक्तिपर्यंतंगुरुनिकटेनिवासःकर्तव्यइतिज्ञायते ३९ शुश्रूषेत्साहितस्तावद्यावज्ज्ञानोदयो
गुरुं। ततःपरंचशुश्रूषेद्यथातस्याप्रियंभवेदितिस्मृत्यर्थंस्पष्टमाह तावदिति यावद्ब्रह्मांविजानीयात्तावद्गुरुमेवपरिचरेदित्यन्वयः आदृतइत्यनेनज्ञानोदयानंतरमपिगुरुशुश्रूषाकर्तव्येतिज्ञायते ४०

वेषमात्रधारिणोयतयःपूज्याइत्यस्मिन्पक्षेबाधकमित्याह यस्त्विति प्रचंडेंद्रियाणांसारथिर्मनोयस्यसतथा त्रिदंडंत्रिवेणुलक्षणम् ४१ सुरानात्मस्थंस्वांतर्यामिणमात्मानंप्रेष्ठंमांचानिह्नुतेनिराकरोति सोस्माल्लोकादमुष्मात्स्वर्गादेश्चविहीयतेअधःपततीत्यर्थः ४२ यत्यादीनांविशेषतःकर्तव्यधर्ममाह भिक्षोरिति यतेःशमाहिंसेधर्मौ वानप्रस्थानांतपईक्षाआलोचनचधर्मः गृहस्थानामादिनाप्राणिरक्षेज्यायागश्च द्विजस्यब्रह्मचारिणः आचार्यसेवनंगुरुकुलवासः ४३ गृहस्थस्याग्रतःआदौगंतुरवगंतुस्तत्त्वादेरीतिविशेषः ४४ एतैर्धर्मैःसाध्यमाह इतीति ४५ मत्प्राप्तौभक्तिरेवप्रयोजिकेत्याह भक्त्येति ४६ स्वविहितधर्मेणनिर्णिक्तंधौतंसत्त्वमंतःकरणंयस्यसतथानिर्णीतंतत्त्वेनज्ञातमद्गतिः ४७ भक्तिरेवममपरमप्रीतिसाधनं वर्णादिविहितधर्मोपिभक्तिसंवलितएवेतिभावेनाह वर्णेति ४८ उपसंहरति एतदिति चशब्दएवार्थेयथामांसमियात्तथैवाभिहितम् ४९ ॥ इतिश्रीभा०म०एकादश०वि०टीकायामष्टादशोध्यायः ॥ १८ ॥ हरेःप्रसादजनकज्ञानमेवतस्यभक्तिस्तस्याःयमादयःक्रष्णोब्रह्मेतियच्चज्ञानतत्त्सर्वमस्मिन्नध्यायेनिरूप्यते तत्रप्रथमतःउत्पद्यमानंतदेवंविधंप्रसादसंपादकमितिभावेनवक्ति योविद्येति योविद्यायाः वेदांतादिलक्षणाया'श्रुतेनश्रवणेनसपन्नउत्पन्नज्ञानआनुमानि

यस्त्वसंयतषड्वर्गःप्रचंडेंद्रियसारथिः ॥ ज्ञानवैराग्यरहितस्त्रिदंडमुपजीवति ४१ सुरानात्मानमात्मस्थंनिह्नुतेमांचधर्महा ॥ अविपक्वकषायोस्मादमुष्माच्चविहीयते ४२ भिक्षोर्धर्मःशमोहिंसातपईक्षावनौकसः ॥ गृहिणोभूतरक्षेज्याद्विजस्याचार्यसेवनम् ४३ ब्रह्मचर्यंतपःशौचंसंतोषोभूतसौहृदम् ॥ गृहस्थस्याप्यृतौगंतुःसर्वेषांमदुपासनम् ४४ इतिमांयःस्वधर्मेणभजेन्नित्यमनन्यभाक् ॥ सर्वभूतेषु मद्भावोमद्भक्तिंविंदतेचिरात् ४५ भक्त्योद्धवानपायिन्यासर्वलोकमहेश्वरम् ॥ सर्वोत्पत्त्यप्ययंब्रह्मकारणंमोपयातिसः ४६ इतिस्वधर्मनिर्णिक्तसत्त्वोनिर्ज्ञातमद्गतिः ॥ ज्ञानविज्ञानसंपन्नोविरक्तःसमुपैतिमाम् ४७ वर्णाश्रमवतांधर्मएषआचारलक्षणः ॥ सएवमद्भक्तियुतोनिःश्रेयसकरःपरः ४८ एतत्तेभिहितंसाधोभवान्पृच्छतियच्चमाम् ॥ यथास्वधर्मसंयुक्तोभक्तोमांसमियात्परम् ४९ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेवर्णाश्रमविभागयोगोनामअष्टादशोध्यायः ॥ १८ ॥ श्रीभगवानुवाच ॥ योविद्याश्रुतसंपन्नआत्मवानानुमानिकः ॥ मायामात्रमिदंज्ञात्वाज्ञानंचमयिसंन्यसेत् १ ज्ञानिनस्त्वहमेवेष्टःस्वार्थोहेतुश्चसंमतः ॥ स्वर्गश्चैवापवर्गश्चनान्योर्थोमदृतेप्रियः २ ज्ञानविज्ञानसंसिद्धाःपदंश्रेष्ठंविदुर्मम ॥ ज्ञानीप्रियतमोतोमेज्ञानेनासौबिभर्तिमाम् ३ तपस्तीर्थंजपोदानंपवित्राणीतराणिच ॥ नालंकुर्वंतितांसिद्धिंयाज्ञानकलयाकृता ४

कल्पकमादियुक्त्यानिर्धूतसंशयविपर्ययश्चआत्मवान्ममात्मास्वामीईश्वरीरितिनिश्चितहरितत्त्वोमामपरोक्षीकृत्यमद्भिन्नमिदंजगत्मायामात्रमादिच्छोद्बोधितोपादानप्रकृतिनिर्मितत्वात्तन्मात्रंज्ञात्वातज्ज्ञानंचममेदंज्ञानंहरिपूजालक्षणंतत्प्रसादेनोत्पन्नंतदधीनंचेति मयिसंन्यसेत्सम्यगर्पयेदित्यन्वयः त्रिगुणाप्रकृतिर्मायापश्येत्तन्मात्रकंजगत् निर्मिमीतेजगत्सर्वमतोमायेतिसास्मृता इतिवचनात् इदंज्ञानंहरेःपूजाहरेरेवोदितंसदा । इयंवीनंचसर्वंश्रेयेवंन्यासोहरौस्मृतइतिवचनात् उक्तप्रकारएवहरौज्ञानन्यासोनप्रकारांतरः १ कस्मात्त्वयिज्ञानमंन्यासइत्यतस्तन्निमित्तमाह ज्ञानिनइति तुशब्दस्तारतम्यद्योतकःस्वस्वार्थआनंदलक्षणोयस्मात्सतथाहेतुर्ज्ञानोत्पादकःसमतोज्ञातःइतोपीत्याहस्वर्गश्चेति २ स्वार्थप्राप्तिप्रकारमाह ज्ञानेति विदुर्लभते निगमयति ज्ञानीति प्रियतमत्वेनिमित्तमाह ज्ञानेनेति ३ तपआदिनोभवच्छुद्धिमतस्तववप्रियत्वेनज्ञानंविशेष्यकिंस्तौषीतितत्राह तपइति याशुद्धिर्ज्ञानलेशेनकृतातांशुद्धिंतपआदीनिअलंसम्यक्नकुर्वंतीत्यन्वयः ४

यतःसर्वेश्रेयःसाधोज्ञानस्योत्तमसाधनत्वमतःस्वयापीदमेवसंपादनीयमित्याह ज्ञानेति स्वात्मानंपरमात्मानं वैवाएतमभिवदंतिस्वात्मेतिश्रुतिः ५ कस्येदंदृष्टफलंयेनविश्रभ्यभजनीयंस्यादत्राह ज्ञानेति आत्मनिहृदये समीचीनासिद्धिर्मुक्तिर्यस्मात्सतथातं ६ ननुतवापिदेहित्वेनजन्मादिनादुःखादिसंभवात्कथंत्वत्प्राप्तिर्मुक्तिःस्यादित्याशंक्यस्वतश्चिदानंदरूपस्यममजन्मादिर्नास्ति सदेहस्यैव ममतु तादृशोदेहएवनास्तिनिर्गुणत्वात्कुतोजन्मादिःअतोनित्यनिर्दुःखानंदानुभवस्यममप्राप्तिरेवमुक्तिरितिभावेनाह त्वयीति हेउद्धवयस्त्रिविधोजन्मस्थितिसंहारलक्षणोविकारस्त्वय्याश्रयतिसंप्रतिवर्ततेस मायानिर्मितोनतुस्वाभाविकः अन्यस्यंनिर्मितंजीवेजन्मादिहरिणापतः । तस्मान्मायेतितत्प्राहुर्मायानिर्माणमुच्यते । नहिजीवस्यजन्मादिःस्वतोनित्यस्यसंभवेत् । सृष्टेःप्राक्प्रलयेचैवयतोजन्मादि नास्यहि । तस्मान्मध्येपिनास्यास्तिदेहादिस्थंतुविष्णुना । कर्मभिर्निर्मितंजीवेप्रलयेयन्नजीवगं । यन्नविद्येताहेलयेयन्नविद्येतमुक्तिगे । जीवस्यनस्वभावोसौप्रायेणेतिविनिश्चितमितिप्रकाशिकाया किंच मा यैवकर्मनिमित्तंसृपतोजन्मादिनिमित्तं । देहादिकंपरेशेनमायाजन्मादितेनातित्यस्माच्च अतर्कितोपपन्नत्वदागतत्वान्नस्वाभाविकइत्याह अंतरेति योजन्मादिरंतरासृष्टिकालेआपततिकर्मवशादागच्छति आद्यन्तयोर्नप्रलयमुक्त्योर्नविद्यते । यन्नविद्येतविलयेयन्नविद्येतमुक्तिगे । जीवस्यनस्वभावोसावित्युक्तत्वाच्च उक्तोर्थोयंतवाप्यनुभवसिद्धइत्याशयेनाह जन्मादयइति तस्यपरिणामरूपस्यदेहस्यदृश्यम॥

ज्ञानविज्ञानसंहितंज्ञात्वास्वात्मानमुद्धव ॥ ज्ञानविज्ञानसंपन्नोभजमांभक्तिभावितः ५ ज्ञानविज्ञानयज्ञेनमामिष्ट्वात्मानमात्मनि ॥ सर्वयज्ञपतिंमांवैसं सिद्धिंमुनयोऽगुः ६ त्वय्युद्धवाश्रयतियस्त्रिविधोविकारोमायांतरापततिनाद्यपवर्गयोर्यः ॥ जन्मादयोस्यवदमीतवतस्यकिंस्युराद्यंतयोर्यदसतोस्तितदेवमध्ये ७॥ उद्धवउवाच॥ ज्ञानंविशुद्धंविपुलंयथैतद्वैराग्यविज्ञानयुतंपुराणम् ॥ आख्याहिविश्वेश्वरविश्वमूर्तेत्वद्भक्तियोगंचमहद्विमृग्यम् ८ तापत्रयेणाभिहतस्यघोरेसंतप्यमानस्यभवाध्वनीश ॥ पश्यामिनान्यच्छरणंतवांघ्रिद्वंद्वातपत्रादमृताभिवर्षात् ९ दष्टंजनंसंपतितंबिलेस्मिन्कालाहिनाक्षुद्रसुखोरुतर्षम् ॥ समुद्धरैनंकृपयापवर्ग्यैर्वचोभिरासिंचमहानुभाव १० श्रीभगवानुवाच ॥ इत्थमेतत्पुराराजाभीष्मंधर्मभृतांवरम् ॥ अजातशत्रुःपप्रच्छसर्वेषामनुशृण्वताम् ११ निवृत्तेभारतेयुद्धेसुहृन्निधनविह्वलः ॥ श्रुत्वाधर्मान्बहून्भीष्मंमोक्षधर्मानपृच्छत १२ तानहंतेभिधास्यामिदेवव्रतमुखाच्छ्रुतान् ॥ ज्ञानविज्ञानवैराग्यश्रद्धाभक्त्युपबृंहितान् १३ नवैकादशपंचत्रीन्भावान्भूतेषुयेनवै ॥ ईक्षेताथैकमप्येषुतज्ज्ञानंममनिश्चितम् १४

नजन्मोदयोस्यचिदानंदस्वरूपस्यतवस्युः किंवाप्रतिवद बलमानंदओजश्चसहोज्ञानमनाकुलइत्यादेः उपसंहरति आद्यंतयोरिति । असतइतिहेतुगर्भविशेषणं अस्वतंत्रत्वादवस्तुनोजगतःआद्यंतयोः प्रलयेमुक्तौचयज्जीवस्यास्तिचिदानंदस्वरूपंतदेवमध्येसृष्टिकालेपिस्वरूपंतस्मादाभिमानिकःसंसारोयदपरोक्षज्ञानेननिवर्ततइतिभावः । ज्ञानिनोमनुष्योहंइत्यनुभवतःसुखैकरूपामुक्तिःकथंसेत्स्यति अन्यस्यअन्यात्मत्वानुपपत्तेरित्याशंक्यकालत्रयेपिजीवस्यैकरूपत्वेनाभिमानिकआगंतुकःसंसारोमत्प्रसादेननिवर्ततेइत्यतोवाह त्वयीति । आद्यंतयोरनुगमादाद्यंतराचितस्यतु । आद्यंतेभाविनोम ध्येकथमन्यादृशंवपुरित्यतःसिद्धं किंच अनित्यत्वात्तुदेहस्यतस्यजन्मादिकंभवेत् । मुक्तिप्रलयसंबंधेकथंजीवेतादृश्यतेइति अनित्यस्यगुणामध्येभवेयुःस्वतएवतु । नतुस्वतस्तुनित्यस्यकादाचित्कगुणैर्यु तमिति ७ एतत्ज्ञानं यथास्यततथाख्याहि ८ ९ १० ११ १२ ज्ञानंदृष्टंतस्यउत्तरत्वेनधर्माणाकथनंकथंसंगच्छतइत्यतउक्तं ज्ञानेति १३ येनज्ञानेनभूतेषुजीवेषुस्थितान्नवैकादशपंचत्रीन्भावान् अष्टाविंशतितत्त्वान्यन्वीक्षेतलक्षणंतत्तच्छक्तिस्वरूपपूर्वकंपश्यतिएषुतत्त्वेषुतन्नियामकतयास्थितमेकंतत्त्वेभ्यःप्रधानंतत्रतत्रपतिंहरिमपिपश्यति । तन्ममनिश्चितंज्ञानम् अपिपृथिव्यादिपंचभूतबुद्ध्यहंका रचित्तमूलप्रकृतयोनव मनसासहश्रोत्रादींद्रियाण्येकादश त्रयःसत्वादयोगुणाःशब्दादयःपंच ज्ञात्वातत्त्वानितेष्वीशंसर्वतत्त्वेश्वरंप्रभुं जानन्ज्ञानीभवेत्–इति ॥१४॥

नन्विदंज्ञानंचेद्विज्ञानंतर्हिकिंतत्राह एतदेवेति हिशब्दोविशेषद्योतकः स्वस्यपाद्विश्लेषतोयोग्यंज्ञानंतद्विषयस्यांबिंबस्यज्ञानेनसाहितमेतदेवज्ञानंविज्ञानंविद्धीतिशेषः स्वस्ययोग्यंज्ञानंविशेषतः पूर्वोक्तमेवयोजा
नन्सविज्ञानीभवत्युतेतिवचनमत्रमानं तस्यापितत्वेशविषयत्वात्कथंविज्ञानंनेतितत्राह नतथेति यद्यपितत्तत्वंतदीश्वरविषयंतथापितथैवपूर्वोक्तप्रकारेणतत्वानिज्ञात्वासर्वतत्वेश्वरंविषयीकुर्वन्ज्ञानंविज्ञा
नंनभवति स्वयोग्यपुरुषार्थसाधनत्वात्तस्मात्स्वबिंबज्ञानविशिष्टमेवविज्ञानमित्यर्थः हरेस्तत्वेष्वेकत्वात्प्राधान्यंकुतइत्यतआह एकेनेति नोस्माकंतत्वानांमध्येएकेनान्यनिरपेक्षेणतत्वेनयद्यत्रस्थित्वा
यदाधारत्वेनत्रिगुणात्मनांसत्वादिगुणनिर्मितदेहानांभावानांस्थित्युत्पत्त्यप्ययाःस्युः १५ यच्चतत्वमादावंतेसृष्टेःप्राक्प्रलयादूर्ध्वंमध्येस्थितिकालेचसर्वज्ञं पुनस्तत्प्रतिसंक्रामतेस्यसृष्टस्यसंहारेचेसृज्यजंग
दन्वयात्प्रविशति पश्चाशिष्येतअवशिष्टमविनाशितदेवसत्स्वतंत्रं सत्वंस्वातंत्र्यमुद्दिष्टंतच्चकृष्णेनचापरे ।अस्वातंत्र्यात्तदन्येषामसत्त्वंविद्धिभारतेतिवचनाद्धरेरेवतत्वेषुप्रधानंतत्वमितिभावः १६ अत्रांकिं
प्रमाणमितितत्राह श्रुतिरिति नैकमेवोक्तार्थेसर्वोत्तमत्वेहरेःप्रमाणमपितुश्रुत्यादिचतुष्टयमपि ऐतिह्यमागमभेदः प्रयोजनमाह प्रमाणेष्विति एवंवेदादिप्रमाणैर्विदिताशेषतत्वतदीशविशेषतयाज्ञानविज्ञानस
पन्नःपुरुषोविकल्पाद्विरुद्धकल्पनाज्जीवस्वातंत्र्यज्ञानादिलक्षणाद्विरज्यतेविरक्तोभवति मिथ्याज्ञानरहितोभवतीत्यर्थःसोपिप्रामाणिकश्चेत्कथमित्यतउक्तं प्रमाणेष्विति श्रुत्यादिप्रमाणेषुअन्यप्राधान्यस्या

एतदेवहिविज्ञानंनतथैकेनयेनयत् ॥ स्थित्युत्पत्त्यप्ययानस्युर्भावानांत्रिगुणात्मनाम् १५ आदावंतेचमध्येचयज्ञंसृज्यंयदन्वयात् ॥ पुनस्तत्प्रतिसंक्रामेयच्छिष्येततदेवसत् १६ श्रुतिःप्रत्यक्षमैतिह्यमनुमानंचतुष्टयम् ॥ प्रमाणेष्वनवस्थानाद्विकल्पात्सविरज्यते १७ कर्मणांफलरूपत्वादाविरिंचादमंगलम् ॥ विपश्चिन्नश्वरंपश्येददृष्टमपिदृष्टवत् १८ भक्तियोगःपुरैवोक्तःप्रीयमाणायतेऽनघ ॥ पुनश्चकथयिष्यामिमद्भक्तेःकारणंपरम् १९ श्रद्धामृतकथायांमेशश्वन्मदनुकीर्तनम् ॥ परिनिष्ठाचपूजायांस्तुतिभिःस्तवनंमम २० आदरःपरिचर्यायांसर्वांगैरभिवंदनम् ॥ मद्भक्तपूजाभ्यधिकासर्वभूतेषुमन्मतिः २१ मदर्थेष्वंगचेष्टाचवचसामद्गुणेरणम् ॥ मय्यर्पणंचमनसःसर्वकामविवर्जनम् २२ मदर्थेचपरित्यागोभोगस्यचसुखस्यच ॥ इष्टंदत्तंहुतंजप्तंमदर्थंयद्व्रतंतपः २३ एवंधर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ॥ मयिसंजायतेभक्तिःकोन्योर्थोस्यावशिष्यते २४ यदात्मन्यर्पितंचित्तंशांतंसत्वोपबृंहितम् ॥ धर्मंज्ञानंसवैराग्यमैश्वर्यंचाभिपद्यते २५ यदर्पितंतद्विकल्पइंद्रियैःपरिधावति ॥ रजस्वलमसन्निष्ठंचित्तंविद्धिविपर्ययम् २६

नवस्थानाच्चात्पर्यार्थज्ञानेस्थित्यभावात्चोरवत्पलायमानत्वादित्यर्थः प्रमाणानांनानात्वप्रतीयमानानांतात्पर्यार्थपरिज्ञानतःउत्पन्नाद्वा १७ वैराग्यंविशिनष्टि कर्मणामिति आविरिंचान्मनुष्यमारभ्याविरिं
चपर्यंतंजगत्अमंगलंअसारंअतएवनश्वरंपश्येत् अदृष्टस्वर्गादिकमपिदृष्टवत्गृहादिवत्पश्येत् कर्मणांफलरूपत्वात्१८विरक्तोमयिभक्तिंकुर्यादितिभावेनाह भक्तियोगइति १९ निरतिशयभक्त्युत्पत्तौकारण
वक्तिश्रद्धेति अमृतवज्जरामरणहारिण्यांहरिकथायांपरिनिष्ठाआस्थाअत्यापद्यपिनेमंनियमंमुंचामीतिनिश्चयः २० अभिवंदनंप्रणामः मन्मतिःसंनिहितइतिमत्स्मरणं २१ मदर्थेषुअहमेवार्थोयेषांतेतथा
तेषुपरमभागवतेषुअंगचेष्टाशरीरावयवैःनृत्यलक्षणचेष्टा २२ मदर्थेमत्प्रीत्यर्थं २३ निर्धनस्यहस्तप्राप्तेकारणंवराटकेनाकिमित्याह कोन्यइति अस्यपुरुषस्य २४ यदासत्वगुणेनोपबृंहितंसंबंधितंअतएव
शांतंचित्तंमय्यर्पितंभवतितदाधर्मादिकमाप्नोतीत्यनेनधर्माद्यर्थोविशिष्टोस्तीत्येतत्परिहृतम् २५ विपक्षेबाधकमाह यदीति यदितच्चित्तंविकल्पोर्पितमिंद्रियैरापानादितेषुविषयेषुधावति तर्हितच्चित्तंरजस्वलं
रजोदूषितंराजसमसन्निष्ठंतामसंचविपर्ययंदुःखकारणंचविद्धि २६

धर्मादिकमपिपप्रच्छइत्युक्तंतद्विशिनष्टि धर्मइति ऐकात्म्यदर्शनमित्येतत् एकःप्रधानउद्दिष्टोविष्णोःप्राधान्यदर्शनं । ऐकात्म्यदर्शनंमोक्षसर्वज्ञानोत्तमंचतदित्यनेनव्याख्यातम् २७ तत्रतत्रभक्तिसाधना नियमादयःकथ्यंते तत्स्वरूपविवित्सयावत्रोद्धवःपृच्छति यमइत्यादिना २८ २९ श्रीमन्वलोकिंस्वित् ३० ३१ ३२ विपरीतमुक्तेभ्योन्यदोषः ३३ ३४ ३५ दुहंतिफलानीतिशेषः ३६ ३७ दंड न्यासःअशाद्मविहितदंडत्यागः दंडत्यागइतिवापाठः स्वभावविजयःस्वमनोजयः समदर्शनंयथावस्तुदर्शनम् ३८ कर्मस्वसंगःनाहंकर्तेति ३९ इष्टंधनंधर्मःभगवत्तमोहं यज्ञःयज्ञेनइज्यइत्यर्थः ज्ञानसंदे शःज्ञानोपदेशःदक्षिणा ४० ऐश्वरोभावोममैश्वरत्वभावनंभगः आत्मनिभिदाबोधःसर्वतःविलक्षणोहरिरितिज्ञानंविद्या ४१ दुःखात्ययात्सुखमोक्षलक्षणंसुखं कामानांविषयाणांसुखापेक्षादुःखं ४२ दे

धर्मोमद्भक्तिकृत्प्रोक्तोज्ञानंचैकात्म्यदर्शनम् ॥ गुणेष्वसंगोवैराग्यमैश्वर्यंचाणिमादयः २७॥ उद्धवउवाच ॥ यमःकतिविधःप्रोक्तोनियमोवारिकर्शन ॥ कः शमःकोदमःकृष्णकातितिक्षाधृतिःप्रभो २८ किंदानंकिंतपःशौर्यंकिंसत्यंकमलेक्षण ॥ किमव्रंत्रपिजननंकिंचशौचंजनार्दन २९ कस्त्यागःकिंधनंश्रेष्ठं कोयज्ञःकाचदक्षिणा ॥ पुंसःकिंस्विद्बलंश्रीमद्भगोलाभश्चकेशव ३० काविद्याह्रीःपराकाश्रीःकिंसुखंदुःखमेवच ॥ कःपंडितःकश्चमूर्खःकःपंथाउत्पथ श्चकः ३१ कःस्वर्गोनरकःकःस्वित्कोबंधुरुतकिंगृहम् ॥ कआढ्यःकोदरिद्रोवाकृपणःकःकईश्वरः ३२ एतान्प्रश्नान्ममब्रूहिविपरीतंचसत्पते ॥ ३३ ॥ श्रीभगवानुवाच ॥ अहिंसासत्यमस्तेयमसंगोह्रीरसंचयः ॥ आस्तिक्यंब्रह्मचर्यंचमौनंस्थैर्यंक्षमाभयम् ३४ शौचंजपस्तपोहोमःश्रद्धातिथ्यंमदर्चनम् तीर्थाटनंपरार्थेहातुष्टिराचार्यसेवनम् ३५ एतेयमाःसनियमाउभयोर्द्वादशस्मृताः ॥ पुंसामुपासितास्तातयथाकामंदुहंतिहि ३६ शमोमन्निष्ठताबुद्धेर्द मइंद्रियसंयमः ॥ तितिक्षादुःखसंमर्दोजिह्वोपस्थजयोधृतिः ३७ दंडन्यासःपरंदानंकामत्यागस्तपःस्मृतम् ॥ स्वभावविजयःशौर्यंसत्त्वंचसमदर्शनम् ३८ ऋतंचसूनृतावाणीकविभिःपरिकीर्तिता ॥ कर्मस्वसंगमःशौचंत्यागःसंन्यासउच्यते ३९ धर्मइष्टंधनंनृणांयज्ञोहंभगवत्तमः ॥ दक्षिणाज्ञानसंदेशः प्राणायामःपरंबलम् ४० भगोमऐश्वरोभावोलाभोमद्भक्तिरुत्तमः ॥ विद्यात्मनिभिदाबाधोजुगुप्साह्रीर्विकर्मसु ४१ श्रीर्गुणानैरपेक्षाद्याःसुखंदुःखात्य यात्सुखम् ॥ दुःखंकामसुखापेक्षापंडितोबंधमोक्षवित् ४२ मूर्खोदेहाद्यहंबुद्धिःपंथामान्निगमःस्मृतः ॥ उत्पथश्चित्तविक्षेपःस्वर्गःसत्वगुणोदयः ४३ नरक स्तमउन्नाहोबंधुर्गुरुरहंसखे ॥ गृहंशरीरंमानुष्यंगुणाढ्योह्याढ्यउच्यते ४४ दरिद्रोयस्त्वसंतुष्टःकृपणोयोजितेंद्रियः ॥ गुणेष्वसक्तधीरीशोगुणसंगी विपर्ययः ४५

हादावहंबुद्धिर्यस्यसतथा मन्निगमःमद्विषयोवेदः । सत्वगुणोदयःसत्वगुणाभिवृद्धिःस्वर्गः ४३ तमउन्नाहःअज्ञानोन्नतिःनरकः । भक्त्यादिगुणाढ्यः ४४ असंतुष्टोविषयासंतोषवान्दरिद्रः । विषये दोषबुद्धिःसौबुद्धिःप्राणांवशेस्थितः । कृपणःसतुसंप्रोक्तोगुणबुद्धिविपर्ययइति । गुणेषुविषयेषुअसक्तधीःस्वतंत्रःईश्वरःगुणसंगी ... विपर्ययोविपरीतःज्ञेयः । पुरुषार्थमविर्यस्यविषयेष्व भिवेहिनः । विपरीतःसतुज्ञेयःस्यात्मनोविपरीतगइतिवचनात् वित्तासंतोषमात्राद्दरिद्रः सर्वविषयसंगीविपरीतः ४५

निरूपितांपरिहृत्वाःशास्त्रतात्पर्यार्थंकथयति किंवार्णितेनेति गुणदोषयोर्लक्षणमुद्दिश्यबहुनावर्णितेनकिं विहितकरणाद्गुणःनिषिद्धकरणाद्दोषःइतिगुणदोषदृष्टिर्दोषःभगवत्प्रियत्वाप्रियत्वमंतरेणेतिशे षःउभयवर्जनंगुणःउभयोर्गुणदोषयोर्भेददर्शनस्यागोगुणइत्यर्थः अत्रहरेर्यत्प्रियंसगुणः यदप्रियंसदोषः इतिसतामतमितितात्पर्यं यद्वा बहुनावर्णितेनकिंगुणदोषयोर्लक्षणंस्वरूपंदुर्ज्ञानमितिशेषः कथ मत्राह गुणेति गुणदोषयोरन्योन्यदृष्टिर्दोषःउभयवर्जनंगुणःअत्रापिहरिप्रियत्वादिप्रयोजनमिति ४६ ४७ इतिश्रीभा०म०एकादशस्कंधे०वि०टी०एकोनविंशोध्यायः ॥१९॥ अधिकारिणामनेकविधत्वे नसाधनानामपितथात्वात्केषांचिदंतर्भावविवक्षयाकर्मयोगादिभेदेनत्रिधाविभज्यतत्स्वरूपंकथयत्यस्मिन्नध्याये । तत्रभगवत्प्रियएवगुणस्तदप्रियोदोषइतिभगवदभिप्रायज्ञोप्युद्धवोविविच्यज्ञापनायपृच्छ ति विधिश्चेत्यादिना । हेअरविंदाक्ष ईश्वरस्यतेतववििधिश्चप्रतिषेधश्चविधिनिषेधलक्षणोनिगमोवेदः कर्मणांगुणंदोषंचापेक्षते विहितकरणाद्गुणोनिषिद्धकरणाद्दोषइतिवक्तीत्यर्थः १ तदधिकारा पादकवर्णाश्रमाणांविकल्पंभेदंचप्रतिलोमजोनधिकार्यनुलोमजोधिकारीतिप्रतिलोमानुलोमजंच अत्रापिविशिष्टमातापितृजातोविशिष्टाधिकारीतिच धर्मार्जितंद्रव्यं कुरुक्षेत्रादिदेशं जातःपुत्रःकृष्ण केशइत्यादिलक्षणंवयश्चवसंतादिकालंचेतिद्रव्यदेशवयःकालाःतथापुण्यफलंस्वर्गंपापफलंनरकंचापेक्षतइतिसर्वत्रयोज्यम् २ संशयबीजमुत्थापयति गुणेति । तववचस्तुगुणदोषभिदादृष्टिमंतरे णव्यर्थं विहितप्रतिषिद्धकर्मणांगुणदोषभेददर्शनंविहायगुणदोषयोर्भेदो नास्तीत्येवंविधं तत्रनिषेधविधिलक्षणंविहितनिषिद्धकरणहेतुगुणदोषभेददर्शिवेदवचनंकथंतुनिःश्रेयसपुरुषार्थपर्यवसायिस्या

एतेउद्धवतेप्रश्नाःसर्वेसाधुनिरूपिताः ॥ किंवार्णितेनबहुनालक्षणंगुणदोषयोः ४६ गुणदोषदृशिर्दोषोगुणस्तूभयवर्जनम् ॥ ४७ ॥ इतिश्रीभागवतेएका दशस्कंधेएकोनविंशोध्यायः ॥ १९ ॥ उद्धवउवाच ॥ विधिश्चप्रतिषेधश्चनिगमोहीश्वरस्यते ॥ अपेक्षतेऽरविंदाक्षगुणदोषंचकर्मणाम् १ वर्णाश्रमवि कल्पंचप्रतिलोमानुलोमजम् ॥ द्रव्यदेशवयःकालान्स्वर्गंनरकमेवच २ गुणदोषभिदादृष्टिमंतरेणवचस्तव ॥ निःश्रेयसंकथंनुस्यान्निषेधविधिलक्षणम् ३ पितृदेवमनुष्याणांवेदश्चक्षुस्तवेश्वर ॥ श्रेयस्त्वनुपलब्धेर्थेसाध्यसाधनयोरपि ४ गुणदोषभिदादृष्टिर्नियमात्तेनहिस्वतः ॥ नियमेनापवादश्चभिदायाइ तिहिभ्रमः ५ श्रीभगवानुवाच ॥ योगास्त्रयोमयाप्रोक्तानृणांश्रेयोविधित्सया ॥ ज्ञानंकर्मचभक्तिश्चनोपायोन्योस्तिकुत्रचित् ६

त् तदर्थमेवप्रवृत्तस्यतदनुचितम् १ कुतोत्राह पितृदेवेति । हेईश्वरतववेदोनुपलब्धेर्थेअप्रत्यक्षेश्वरधर्मादिविषये साध्येसुखादौसाधनेकर्मादावपिपित्रादीनांश्रेयश्चक्षुर्दिव्यमेवचक्षुरित्यन्वयः ४ लौ किकंपूर्वपक्षमुपसंहरति गुणेति । यतोवेदउत्तमंचक्षुस्तेनकारणेननियमाद्गुणदोषभेददृष्टिःस्वतोहिस्वाभाविक्येव ननुतर्हीत्थंनिश्चितवतस्तवकिमितिभ्रमइतितत्राह नियमेनेति । चशब्दएवार्थे भवताभि हिताःगुणदोषयोर्भेदस्यनियमेनैवापवादउच्यतेइतियस्मात्तस्माद्भ्रमःसंजातइत्यतोनिश्चयंभवंतंपृच्छामीतिभावः ५ स्वतःसर्वगुणात्मातुविष्णुरेकःसनातनः । अन्यत्सर्वंतत्प्रियत्वाद्गुणोदोषस्तथाप्रियम् एवंज्ञानवतांदृष्टिरत्रस्तत्त्वावगच्छति । कालदेशविशेषेतुप्रीतिभेदमपेक्ष्यतु । अविज्ञातवतस्तस्यमर्यादावेदतःकृता । गुणदोषभिदानास्तिभगवत्प्रियमंतरा । गुणदोषदृशेर्दोषोह्यन्यत्रभगवत्प्रियात् । गुणार्थंदोषतामीयुर्दोषाश्चगुणतांक्वचित् । अतोदोषोनदोषःस्यान्नगुणोपिगुणोभवेत् । भगवत्प्रीतिविज्ञानाद्गुणदोषभिदायदि । पश्येत्तत्तद्गुणायैवविपर्यासंनकारयेत् । गुणदोषभिदाक्वापिस्वातंत्र्येणन हिक्वचित् । इत्यनेनास्यतात्पर्यार्थोविज्ञायते । यद्वा गुणदोषभिदादृष्टिर्नियमात्तेतवमतेस्वतोनहिप्रत्युतगुणदोषभिदायाःअपवादोपि अतोभ्रमइतिगुणदोषयोर्विहिताविहितकर्मानुष्ठानपरिनिष्ठितत्वंवेदो क्तमितिवक्ष्यमाणवादितत्तात्पर्यार्थोनांकिंतुमत्प्रियाप्रियविवेकाज्ञानपरिनिष्ठाविषयःस्वतस्तुगुणदोषत्वदृशेर्भेदेनवस्तुना । दोषोपिगुणएवस्याद्भगवत्प्रीतितोगुणः । दोषस्तुतद्वैपरीत्यादितिदृष्ट्याभवेद्गुणः । का लदेशविशेषेणप्रीत्यज्ञानाज्जगत्स्थितेः । मर्यादागुणदोषाणांकृतावेदेषुसर्वशइत्येतदेव । स्वेस्वेधिकारेयानिष्ठासगुणःपरिकीर्तितः । विपर्ययस्तुदोषःस्यादुभयोरेषनिर्णयइत्यादिनावक्ष्यते । अतःविहि

तावत्तुष्ठानपरिनिष्ठितत्वेन गुणदोषभेदनियमोक्तिर्मत्प्रियादिविवेकाज्ञानविषयेतिभावेन भगवानुद्धवप्रश्नं परिहरिष्यंस्त्रिवेनक्रीडीकृत्यमुक्तत्युपायानाह योगास्त्रयइति । योगाउपायानृणामर्थःसमर्थोविद्वानि तिगुणविशिष्टानां नृणयइतितथातोः तान्निर्दिशति ज्ञानमिति अन्ययोगव्यवच्छिनत्ति नेति ६ तत्रज्ञानयोगाधिकारिणआह निर्विण्णानामिति इहकर्मसुनिर्विण्णानांन्यासिनासनकादीनांइतिशेषः सन कायाज्ञानयोगाभक्तियोगाश्चदेवताः । मानुषाःकर्मयोगाश्चत्रिधैतेयोगिनःस्मृताः । सर्वेषांसर्वयोगैश्चमाप्यामुक्तिनसंशयः । तथापितुविशेषेणसतेषामभिधीयतेइतिवचनमत्रमानं ज्ञानादिगुणानांत्रिषुसत्वे पिसामान्यविशेषविवक्षयाविभागोपुज्यतेप्रमाणानांसत्त्वात् कर्मयोगाधिकारिणआह तेष्विति ज्ञानभक्तियोगिनोपेक्ष्यज्ञानभक्त्योरल्पत्वात्कर्मयोगिनइति ७ भक्तियोगाधिकारिणआह यदृच्छयेति तुशब्दोविशेषंसूचयति यःपुमानिति जातावेकवचनं यदृच्छयास्वादृष्टोद्बोधितभगवदिच्छयाजातश्रद्धामत्कथादौविशिष्टश्रद्धावत नर्निर्विण्णाःनित्योत्पन्नसंसारासारज्ञानत्वान्नकादाचित्कनिर्वेदाः नाति सक्ताःनित्यसपूर्णभोगत्वान्नकादाचित्कविषयाःनातिसक्तायेपुरुषाः अस्यैत्येषाभक्तियोगोमुख्यभक्तित्वान्मुख्यसिद्धिदइत्यन्वयः उक्तमेतल्लक्षणंदेवानामेवेतिदेवाएवभक्तियोगिनइत्यर्थः भगवद्गुणानुसारे पर्वेदार्थोनीयतेहियैः । भक्तियोगास्तुतेप्रोक्तास्तादृशाहिसुराःसदा । अगानुसारिवेदार्थज्ञात्वातदनुसारतः । भगवद्गुणायैर्नीयंतेतेप्रोक्ताज्ञानयोगिनः । कर्माणिशास्त्रतोज्ञात्वातत्प्राधान्यानुसारतः । विज्ञाता यैर्गुणाविष्णोर्ज्ञेयास्तेकर्मयोगिनः । भक्तिर्ज्ञानंचकिंचित्तुपश्चात्तेष्वपिजायते । तथापिकर्मयोगास्तेकर्मपूर्वत्वकारणात् । भगवद्गुणानुरागित्वमधिकंभक्तियोगिनां । तस्मात्तेभ्योधिकाह्येतुदेवाएवविशेषतः।

**निर्विण्णानांज्ञानयोगोन्यासिनामिहकर्मसु ॥ तेष्वनिर्विण्णचित्तानांकर्मयोगस्तुकर्मिणाम् ७ यदृच्छयामत्कथादौजातश्रद्धस्तुयःपुमान् ॥ नानिर्वि ण्णोनातिसक्तोभक्तियोगोस्यसिद्धिदः ८ तावत्कर्माणिकुर्वीतननिर्विद्येतयावता ॥ मत्कथाश्रवणादौवाश्रद्धायावन्नजायते ९ स्वधर्मस्थोयजन्यज्ञैरनाशीः काम उद्धव ॥ नयातिस्वर्गनरकौयद्यन्यन्नसमाचरेत् १० अस्मिँल्लोकेवर्तमानःस्वधर्मस्थोनघःशुचिः ॥ ज्ञानंविशुद्धमाप्नोतिमद्भक्तिंवायदृच्छया ११ स्व र्गिणोप्येतमिच्छंतिलोकंनिरयिणस्तथा ॥ साधकंज्ञानभक्तिभ्यामुभयंतदसाधकम् १२ ननरःस्वर्गतिंकांक्षेन्नारकींचविचक्षणः ॥ नेमंलोकंचकांक्षेतदेहा वेशात्प्रमाद्यति १३**

ईषद्वैराग्यमल्पंतुपूर्वंदेवेषुजायते । पश्चाद्विरागोप्यधिकोदेवानांनात्रसंशयः । ज्ञानाधिक्यंतुदेवानांभक्त्याधिक्यंतथैवच । विरागोभ्यधिकस्तेषांसदैवसनकादिना। ज्ञानाधिक्यान्मनुष्येभ्योप्रण्यंतेज्ञानयो गिनःनतुज्ञानादिकास्तेवैदेवेभ्यस्तुकथंचन । देवानामपिकर्मित्वविद्यतेयद्यपिस्फुट। तथापिप्रस्त्यवायित्वान्मनुष्याःकर्मयोगिनः । त्रियोगाभ्यधिकोब्रह्मासर्वेभ्यःपरमोविभुः । महायोगेश्वरेशेशस्तस्माद्ब्रह्मा चतुर्मुखइतिवचनात्समस्तंयुक्तम् ८ ज्ञानभक्तियोगिनामपिज्ञानभक्त्युदयात्पूर्वंज्ञानभक्तिसाधनत्वादंतःकरणशुद्धिद्वाराकर्मयोगःकर्तव्यतामर्हतीत्याह तावदिति देवादित्वयोग्यानांमनुष्याणांइदंज्ञातव्य यद्वा कर्मयोगिनमेवविशिनष्टि तावदिति ९ कर्मणांबंधकत्वेनज्ञानभक्तिद्वाराश्रेयःकारणत्वंकथमित्याशंकापरिहरन्तत्करणप्रकारमाह स्वधर्मस्थइति ज्ञानयोगीनिरागीनिष्कामःअन्यान्निषिद्धंनकरोति चेत् १० विहितकर्मणास्वर्गादिकमप्राप्यंचेत्किंतर्हिलभ्यमत्राह अस्मिन्निति वाशब्दउपमानेसमुच्चयेवा यथाज्ञानमाप्नोतितथाभक्तियोगंमद्भक्तिंच कर्मयोगीचशुद्धज्ञानभक्ती ११ ज्ञानभक्तिसाधनत्वा न्मनुष्यशरीरमुत्तममित्याह स्वर्गिणइति । लोकंदेहंनिरयिणःनारकाःज्ञानभक्तिभ्यांपुरुषार्थसाधकतदुभयंस्वर्गनरकस्थशरीरंज्ञानभक्त्योरसाधकंफलरूपत्वात्तस्मान्मानुषमुत्तममित्यर्थः १२ बुभूषु णानरकस्वर्गमनुष्यगतयःसदुःखत्वात्प्रमादहेतुत्वाच्चनाकांक्ष्याइत्याह ननरइति इमंमनुष्यलोकंदेहप्रवेशात्प्रमाद्यतिप्रमादवान्भवति १३

---

१ तथाचत्वसमानाधिकरणगुणानांमध्येज्ञानादीनामाधिक्यविवक्षयाज्ञानयोगित्वाद्युक्तिः ।

नन्वस्तुनिराकांक्षस्तदुत्तरंकार्यंकिमत्राह एवमिति । पुरोक्तप्रकारेणस्वर्गादीनांदुःखादिमत्त्वाद्विद्वानिदंमनुष्यशरीरंमर्त्यमप्यर्थसिद्धिदंज्ञात्वामृत्योरभावायसंसारस्योन्मूलनायघटेतेत्यन्वयः १४ किं चातइत्यत्राह छिद्यमानमिति । खैरिंद्रियैर्गच्छतिजानातिविषयानितिखगोजीवः कालावयवैस्त्रुटिलवादिलक्षणैश्छिद्यमानंस्वदेहउत्सृज्यक्षेमंमोक्षंयाति अलंपटोविरक्तोज्ञानसामग्रीमान् कथमिव खे गच्छतीतिखगःपक्षीकलच्छेदनइतिधातोः कालावयवैःपरश्वधादिनिशिताग्रैःछिद्यमानमात्मनाकृतनीडंनरस्तांविहायक्षेमंप्राप्तरक्षामिव अलंपटउत्पतनसमर्थःपटगतावितिधातुः १५ उ क्तमेवविशदयति अहोरात्रैरिति परंपरमात्मानंसंसारादुपशाम्यति परंवृक्षांतरंउपगम्यशाम्यतिशांतदुःखोभवति निरीहःनिर्णीतहरिचेष्टः १६ मानुषत्वमवाप्यसंसारसमुद्रतरीस्वभक्तिमकु र्वतःपुंसोधःपातएवेत्याह नृदेहमिति । सुष्ठुकल्पंवृक्षवदभीष्टसाधनंप्लवसंसारनदीतरणतरीं गुरुरेवकर्णधारोयस्यसतथातं मयानुकूलेननभस्वतावायुनेरितंनृदेहंप्राप्ययःपुमान्भवाब्धिंमध्यंनतरेत् समार्गेणइतिलुप्तोपमा वेगाख्यसंस्कारनाशेशरवत्शरीरनाशेअधःपततीत्यन्वयः । मद्भक्तिगुणत्वाभावान्नरकभूमिंप्राप्नोतीत्यर्थः १७ उपास्तिप्रकारमाह यदेति यौपरमात्मनिरक्तोनुरक्तोतिस्नि ग्धोतएवसंयतेंद्रियोयोगीयदारंभेषुकर्मोपक्रमेषुनिर्विण्णोआत्मनोभ्यासेनपुनःपुनःप्रयत्नेनमनोचलंधारयेत् १८ शश्वद्विषयोपरक्तमनसोचलत्वेनधारणंदुष्करमपिप्रयत्नेनभाव्यमितिभावेनाह धार्यम

एवंविद्वान्पुरामृत्योरभावायघटेतसः ॥ अप्रमत्तइदंज्ञात्वामर्त्यमप्यर्थसिद्धिदम् १४ छिद्यमानंकालावयवैःकृतनीडंवनस्पतिम् ॥ खगःस्वदेहमुत्सृज्य क्षेमंयातिह्यलंपटः १५ अहोरात्रैश्छिद्यमानंबुद्ध्वायुर्भयवेपथुः ॥ मुक्तसंगःपरंबुद्ध्वानिरीहउपशाम्यति १६ नृदेहमाद्यंसुलभंसुदुर्लभंप्लवंसुकल्पंगुरुकर्ण धारम् ॥ मयानुकूलेननभस्वतेरितंपुमान्भवाब्धिंनतरेत्समार्गणः १७ यदारंभेषुनिर्विण्णोविरक्तःसंयतेंद्रियः ॥ अभ्यासेनात्मनोयोगीधारयेदचलंमनः १८ धार्यमाणंमनोयर्हिभ्राम्यदाश्वनवस्थितम् ॥ अतंद्रितोनुरोधेनमार्गेणात्मवशंनयेत् १९ मनोगतिंनविसृजेज्जितप्राणोजितेंद्रियः ॥ सत्त्वसंपन्नयाबु द्ध्यामनआत्मवशंनयेत् २० एषवैपरमोयोगोमनसःसंग्रहःस्मृतः ॥ हृदयज्ञत्वमन्विच्छन्दम्यस्यैवार्वतोमुहुः २१ सांख्येनसर्वभावानांप्रतिलोमानु लोमतः ॥ भवाप्ययावनुध्यायेन्मनोयावत्प्रसीदति २२ निर्विण्णस्यविरक्तस्यपुरुषस्यात्मवेदिनः ॥ मनस्त्यजतिदौरात्म्यंचिंतितस्यानुचिंतया २३

णमिति । यर्हियदाधार्यमाणमपि आशुविषयेषुभ्राम्यल्लक्ष्येनावस्थितंतदाप्यतंद्रितोनिरालस्योभूत्वानुरोधेनानुकूलेनमार्गेणमनआत्मवशंनयेदित्यन्वयः १९ दार्ढ्यार्थंपुनरुक्तमाह मनइति । अगतिं विरुद्धगतिंविषयगतिंप्रति नाभावान्यविरोधेष्वितियादवः सत्त्वगुणसंपन्नया २० सर्वस्मान्मनसःसंयमनप्रधानमित्युपसंहरति एषइति अभ्यासेनतुकौंतेयवैराग्येणचगृह्यतइति एतस्यसंवादमाह वाइत्यनेनयोगउपायःसंग्रहःसंयमःमनःसंग्रहेणकिंस्यादत्राह हृदयेति हृदयज्ञत्वंमत्प्रियत्वंअन्विच्छन्मनोयच्छेदितिशेषः ततःकिमत्राह दमश्चेति मत्प्रियत्वमिच्छतःपुंसःमत्प्रसादेनतदिंद्रि यनिग्रहश्चभवतीतिशेषःमुहुरित्यनेनक्षणमपिविषयानुगतंनस्यादितिध्वनयति २१ अस्तुमनोवशंनयेदितितत्केनप्रकारेणस्यादितितत्राह सांख्येनेति यावन्मनःप्रसीदतितावत्सर्वभावानां ब्रह्मादिसर्वपदार्थानांसांख्येनतत्त्वज्ञानेनप्रतिलोमानुलोमतः भवाप्ययौअनुक्रमतःसृष्टिंव्युत्क्रमतःसंहारमनुध्यायेद्धरेरितिशेषः २२ अनेनयोगेनमनःप्रसन्नंस्यात्किमत्राह निर्विण्णस्येति । निर्विण्ण स्यस्वर्गादिभोगोऽनित्यइतिज्ञानवतोऽतएवतस्मिन्विरक्तस्यशोभनाध्यासबुद्धिरहितस्यात्मवेदिनः । आत्मानात्मविवेकज्ञस्यदौरात्म्यंकामक्रमलादिचिंतितस्यध्यानविषयस्यहरेरनुचिंतयापुनःपुनर्नि रंतरस्मरणेनमनस्त्यजतीत्यन्वयः २३

स्मरणात्पूर्वंभाविनोयमादयोप्यावश्यकाइतिभावेनाह यमादिभिरिति प्रयत्नसाध्ययमादिभ्यःसुखसाध्योपायांतरमाह ममार्चेति । अर्चाप्रतिमाहरेः सन्निधानस्यमुख्याधिष्ठानत्वात्प्रतिमेतिसतोप्यत्रवि
वक्षिताइतिज्ञातव्यं तत्राप्यशक्तानांस्थावरंचग्राह्यम् । पुनरपिविकल्पोस्तिकिंनेत्याह नेति एतैरुक्तैरुपायैर्विनान्यैरुपायैश्चित्तवृत्तिनिरोधलक्षणंयोगंमनोनस्मरेदित्यर्थः २४ योगिनःप्रमादिकपापप
रिहारोपायप्रकारमाह यदीति योगेनध्यानेन अन्यंयत्नंनकुर्यादितिशेषः यंत्रमितिपाठेअन्यत्साधनंनास्तीत्यर्थः २५ विहिताविहितकरणयोर्गुणदोषत्वाभावेकयोर्भगवत्प्रियाप्रियनिबंधनत्वेन
गुणदोषत्वेइत्युद्धवप्रश्नंपरिहरति स्वेस्वेइति उभयोर्गुणदोषयोरेषनिर्णयइत्यन्वयः विधिनिषेधबद्धेदेवादिजनंप्रतिमयायमधिकारस्तुभ्यंदत्तोयमधिकारस्त्ववेति यथायथोपदिष्टंतथातथास्वेधिकारेविहि
तकर्मणियानिष्ठाव्रतंनियमःसगुणःमत्प्रीतिजनकत्वात्परिकीर्तितोमयेतिशेषः विपर्ययोऽनधिकारेअविहितेकर्मणियानिष्ठासदोषःपरिकीर्तितोमदप्रीतिहेतुत्वात्तुशब्देननिषिद्धस्यवृत्रहत्यादेः गुण
त्वंविहितस्याप्यसुरादिकृतस्यदोषत्वंचवक्ति इंद्रोवैवृत्रंहत्वामहानात यईशृणोत्यलकंशृणोतीत्यादिवचनात् २६ विहिताविहितकरणगुणदोषनियमोकिंभगवत्प्रियाप्रियविषयेत्याशयेनाह कर्मणामि
ति विधिनिषेधात्मकोवेदोजात्यशुद्धानांस्वतःअशुद्धानांकर्मणांनियमेनगुणदोषभेदमपेक्षतइतियोनियमस्त्वयोक्तः सनियमोमदिष्टोगुणोमदनिष्टोदोषइति विवेकमजानतांपुंसां नतुविदुषांपक्षइ
तिविहितकरणेनगुणोनिषिद्धकरणेनदोषइत्यनेनगुणदोषविधानेनांहसात्याजनेच्छयानियमोमयाकृतः । स्वतोऽशुद्धानांगुणत्वंकथंस्यादित्यतउक्तंस्वित विध्यनुसारेणानुष्ठानेगुणत्वमेवस्यादि

**यमादिभिर्योगपथैरान्वीक्षिक्याचविद्यया ॥ ममार्चोपासनाभिर्वानान्यैर्योग्यंस्मरेन्मनः २४ यदिकुर्यात्प्रमादेनयोगीकर्मविगर्हितम् ॥ योगेनैवदहेदंहोनान्यंयत्नंकदाचन २५ स्वेस्वेधिकारेयानिष्ठासगुणःपरिकीर्तितः ॥ विपर्ययस्तुदोषःस्यादुभयोरेषनिर्णयः २६ कर्मणांजात्यशुद्धानामनेननियमःकृतः ॥ गुणदोषविधानेनसंगानांत्याजनेच्छया २७ जातश्रद्धोमत्कथासुनिर्विण्णःसर्वकर्मसु ॥ वेददुःखात्मकान्कामान्परित्यागेप्यनीश्वरः २८ ततोभजेतमांप्रीतःश्रद्धालुर्दृढनिश्चयः ॥ जुषमाणश्चतान्कामान्दुःखोदर्कांश्चगर्हयन् २९**

त्यर्थः । विध्यनुसारित्वंचमत्प्रियोपहितत्वमित्यपिविशेषंतुशब्दएववक्ति । भगवत्प्रियाप्रियत्वेगुणदोषयोःकारणत्वंचेद्वेदेतद्विधानंकिमर्थंक्रियतइत्यतोवाह कर्मणामिति । गुडजिह्विकान्यायेनांहसां
त्याजनेच्छयास्वतोऽशुद्धानांकर्मणां अनेनगुणदोषविधानेननियमःकृतोनतुप्रियाप्रियत्वनिषेधेन कर्मबहिर्मुखानांकर्मणिप्रवृत्त्युद्बुद्धचक्षतारार्थंशाखाचंद्रन्यायवदन्यथाजात्यशुद्धानांशुद्धत्वंनस्यादतोमत्प्रियाप्रि
यत्वेगुणदोषयोःकारणं अनेवंवित्महत्पुण्यंकर्मकरोतितद्धास्यांततःक्षीयतएवेतिश्रुतेरित्यर्थःगुणदोषयोःकारणंभगवत्प्रियाप्रियत्वनियमःकस्मादित्यतोवाह कर्मणामिति अंहसात्यागेच्छयाजात्यशुद्धा
नांकर्मणामनेनगुणदोषविधानेनमत्प्रियत्वाप्रियत्वनियमःकषायेपरिचूर्णवदन्यथाजात्यशुद्धानांपापहरणसामर्थ्यानुदयादचिकित्सितौषधवत् यथापकेनपंकांभइतिवत्स्यादतोमत्प्रियत्वेनमदर्पणेनकर्मकृ
त्यमितिभावः २७ मत्प्रियाप्रियविवेकज्ञानेनगुणदोषविदोभक्तियोगिनोदेवाइत्याशयेनभक्तियोगिनांस्थितिविदधानोनिगमयति जातश्रद्धइति यतोमत्प्रियाप्रियनिबंधौगुणदोषौततोमांभजेतेत्यन्वयः
कीदृशोभक्तियोगीप्रारब्धादृष्टाद्विषयपरित्यागेनीश्वरोपिशास्त्रज्ञानेनमत्कथासुजातश्रद्धत्वेनसर्वकर्मसुनिर्विण्णोयःकामान्विषयान्दुःखानामापकान्वेद २८ यश्चप्रीतःश्रद्धालुःसत्यापिभगवदुपास्तिनमुंच
तीत्यर्थःअतएवदृढनिश्चयोभजन्विरोधिनःकामान्जुषमाणश्च दुःखोदर्कान्निषिद्धान्कामान्गर्हयंश्चसइत्यर्थः २९

१ यदिभगवत्प्रीतिकरएवधर्मःतदप्रीतिकरएवाधर्मःसचवेदविहितोस्तुमावा तर्हिवेदविधानस्यवैयर्थ्यमित्यतोज्ञानवतांदेवानामत्रैयर्थ्यत्वत्रस्था अज्ञानामानुषादीनांवेदविधिरपेक्षितएवेत्याशयेनभक्तियोगिनोदेवाइत्युक्तम्॥

विषयलेविनोयोगिनःकर्दमगतेपतत्पर्णवच्चतःकदाप्युत्थानंनस्यादित्यत स्तद्भजनफलमाह प्रोक्तेनेति । उक्तलक्षणेनभक्तियोगेनासकृत्सदानिरंतरं मांभजतोमुनेरपरोक्षज्ञानिनोभक्तियोगिनोहृदिस्थिता अनभीष्टाःकामाःसर्वेनिर्मूलतयानश्यंति कदा मयिहृदिस्थितेप्रकाशमानेसति ३० एतदेवविवृणोति भिद्यतइति हृदयग्रंथिःप्राकृतांतःकरणाख्योबंधःलिंगशरीरलक्षणः अखिलात्मनिसर्वगतेमयिदृष्टे अपरोक्षितेसतीतिशेषः ३१ यस्मात्पूर्वकर्मणांविनाशेनाकिंचिद्भक्तस्योपमर्दनउत रस्य अश्लो ग पाके योगि नःसर्व गुरुार्थे तनः तस्मादिहजीवराशौमदात्मनोमदेकचित्तस्यमद्भक्तियुक्तस्ययोगिनोदेवजा तेज्ञानाच्छ्रेयोनभवेत्वैराग्याच्चतस्मादित्यन्वय. । नन्वेवंतर्हिज्ञानवैराग्याभ्यांश्रेयउक्तिःकथमित्यतउक्तं प्रायइति भक्त्यनुसारिज्ञानवैराग्येविनाअन्यस्माज्ज्ञानाद्वैराग्याच्चश्रेयोनिषिध्यते देवानांरागित्वे पिमुक्तिसंभवात् । रागिणोपिविमुच्यंतेदेवानात्स्यत्रसंशयः । रागापनोदनार्थंचज्ञानंसाध्यंयतीश्वरैरितिवचनात् किंच स्मर्तव्याविषयेदोषायतिभिर्नतुदैवतैः । हरिरेवसदापूज्यइत्यर्थेदैवतैरपीतिच ३२ कर्मादिनाप्राप्यंयच्छ्रेयोनतत्त्वद्भक्तस्यास्यादित्याशंकामाभूदित्याह यत्कर्मभिरिति यदिवांछतितर्हिलभतेनतत्रेतरापेक्षास्तीत्यर्थः योगेनप्राणायामलक्षणेनध्यानेनवा ३३ ३४ ननुयदीतिव्यर्थंरा गिणांतेषांसर्वाभिलाषसंभवादितितत्राह नाकिंचिदिति रागिणोपितेभक्तिफलबुद्ध्यानकिंचिद्वांछंति ३५ सुखंनवांछतिचेत्तेदुःखयोग्याःकिंनेत्याह नैरपेक्ष्यमितिनैरपेक्ष्यमकल्मषंनिष्पापंपरंपूर्णंनिःश्रे यसंप्राहुरितियस्मात्तस्मात् । त्वदेकपरायणानांतेषांत्वत्तःकिंसुखलक्षणंफलंअन्यथापाषाणत्वमपिश्रेयःस्यादित्याशंकांपरिहरन्नुपसंहरति तस्मादिति निराशिषःसंसारविषयनिर्मुक्तस्यमसकाशा

प्रोक्तेनभक्तियोगेनभजतोमासकृन्मुनेः ॥ कामाहृदिस्थानश्यंतिसर्वेमयिहृदिस्थिते ३० भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः ॥ क्षीयंतेचास्यकर्माणिम यिदृष्टेखिलात्मनि ३१ तस्मान्मद्भक्तियुक्तस्ययोगिनोवैमदात्मनः ॥ नज्ञानंनचवैराग्यंप्रायःश्रेयोभवेदिह ३२ यत्कर्मभिर्यत्तपसाज्ञानवैराग्य तश्चयत् ॥ योगेनदानधर्मेणश्रेयोभिरितरैरपि ३३ सर्वंमद्भक्तियोगेनमद्भक्तोलभतेंजसा ॥ स्वर्गापवर्गंमद्धामकथंचिद्यदिवांछति ३४ नकिंचित्सा धवोधीराभक्ताह्येकांतिनोमम ॥ वांछंत्यपिमयादत्तंकैवल्यमपुनर्भवम् ३५ नैरपेक्ष्यंपरंप्राहुर्निःश्रेयसमकल्मषम् ॥ तस्मान्निराशिषोभक्तिर्निरपेक्षस्यमे भवेत् ३६ नमय्येकांतभक्तानांगुणदोषोद्भवागुणाः ॥ साधूनांसमचित्तानांबुद्धेःपारमुपेयुषाम् ३७ एवमेतान्मयादिष्टाननुतिष्ठंतिमेपथः ॥ क्षेमंविंदंति मत्स्थानंयद्ब्रह्मपरमंविदुः ॥ ३८ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ छ ॥

न्निरपेक्षस्यतस्यभक्तिरानंदरूपिणीभवेदित्यन्वयः । यतोभक्तिविषयेणभक्तायफलंदेयमतइति । यदिदद्याद्भक्तियोगफलंमोक्षमपीश्वरः । भक्तियोगफलत्वेनतद्गृह्णीयुरेवते । इत्यस्माद्वाक्यात्मुक्ति फलाद्भक्तिलक्षणसाधनस्याधिकानंदबुद्ध्येत्यर्थः ३६ भक्तियोगिनोरागिणश्चेत्तेषांविषयागुणदोषोद्भावकाःस्युरितितत्राह नेति । कामित्वेपितेषांभक्तिफलात्मनाविषयभोगाभावाद्गुणा विषयागुणदो षोद्भावकाःनभवंति । कुतःसमचित्तानांसमत्वेनमत्प्रियाविहितकरणान्मदप्रियनिषिद्धवर्जनाच्च एतदपिकुतइत्यतउक्त बुद्धेरिति बुद्धेःप्रकृतेःपारंप्राप्तकामानां मदेकहितकरणत्वस्ययुक्तत्वादित्यर्थः । अ नेनैषांवैराग्यमपिअधिकमित्युक्तंभवति तदुक्तं कामिनोपिस्वयंकामान्भुंजतेनफलात्मना । तस्माद्विरागेप्यधिकोदेव एवहिताहशाइति ३७ त्रयाणामपियोगिनांफलमाह एवमेतानिति कर्मयोगिनः क्षेमंविंदंति ज्ञानयोगिनोवैकुंठादिमत्स्थानं भक्तियोगिनोब्रह्म तत्रापिमुख्यभक्तिभाक्ब्रह्मापरमब्रह्माविंदतीति । उत्तमोभक्तियोगस्तुज्ञानयोगस्तुमध्यमः । अधमःकर्मयोगश्चब्रह्मैकोमुख्यभक्तिभाक् । ज्ञानमप्यधिकंतेषांनियतंभक्तियोगिनां । उदेतिभगवद्भक्त्यातद्ब्रह्मज्ञानयोगिनः । भक्त्यंशकंयतोज्ञानंज्ञानस्नेहात्मिकाहिसा । तथापिज्ञानयोगित्वंमानुषज्ञानतोधिकं । भक्तियोगेततोयत्नःकार्योविद्वद्भिरं जसा । इत्यतःफलतारतम्यमवगंतव्यम् ३८ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांविंशोऽध्यायः ॥ २० ॥

कर्मयोगिनांभगवत्प्रियत्वेनद्रव्यदेशादिशुद्धिकथनपूर्वकंकर्मकरणप्रकारंवक्तुमस्मिन्नध्याये । तत्रकथितानांत्रयाणामप्येकमननुतिष्ठतांगतिमाह यएतामिति भक्तिज्ञानक्रियात्मिकांभक्तिज्ञानकर्मयोग विषयाम् १ यथागुणदोषौमत्प्रियाप्रियोपहितविहिताविहितकरणनिबंधनौ । एवगुणदोषमूलेपुण्यपापनिबंधनेशुद्ध्यशुद्धीअपिमत्सन्निधानविशेषतदभावकृतेनब्राह्मणजात्यधिकृतेइतिपू र्वोक्तानुवादपूर्वंशुद्ध्यशुद्धिव्यवस्थामाह स्वेस्वेइति उक्तार्थोयम् २ पंचभूतात्मकत्वेनसमानेष्वपिवस्तुषु द्रव्यस्यशुद्धिःअशुद्धिःगुणदोषौशुभाचशुभौचमत्सन्निधानविशेषतदभावकृतत्वेनविधीय ते । किमर्थमेतदुक्तं । विचिकित्सार्थंशुद्ध्यशुद्धीविवेकज्ञानेनपुण्याधिक्येनसुखाधिक्यंभवतिइतिज्ञापनार्थमिति पंचभूतात्मकत्वेनसमतासर्ववस्तुषु । हरिसन्निधिवैशेष्याद्विशेषश्चमहान्सदेतिवचनात् ३ एतदेवविवृणोति धर्मार्थमिति । सुकृतादिप्रयोजनमुद्दिश्यधर्म्यंधर्मसाधनंधुरमुद्वहतामया पात्रार्थंशरीरयापनार्थं ४ शुद्ध्यशुद्धीइत्युक्तमेवविवृणोति भूमीति । स्थावरादीनांआब्रह्मपर्यंतानाजीवानां आत्मनासंयुताःशारीराःभूम्यादयःपंचधातवोमहाभूतानि ५ पंचभूतात्मकत्वेनसमानेष्वपिस्थावरादिब्रह्मांतेषुधातुःपरमेश्वरः यउत्रिधातुपृथिवीमितिश्रुतिः तस्यसन्निधानविशेषाच्छुद्धचैतदसंनिधानविशे षादशुद्धचैवभेदेनतारतम्यलक्षणेनविषमाणिनामरूपाणिविकल्प्यंतेविविधत्वेनकल्प्यंतेव्यवहारयोग्यायोग्यानिक्रियंते विद्वद्भिर्मयाचेतिशेषः । किमर्थमेतेषांदेहित्वेनमत्यक्षलणानांजीवानांस्वार्थसिद्ध येस्वयोग्येपुरुषार्थसिद्धयेइति । आब्रह्मस्थावरादीनांआस्मृतिलक्षणज्ञानयोग्यानामित्यर्थःवाक्यस्मरणयोरङ्घ्रिदितिवचनात् । यद्यद्धरेःसन्निहितंतत्तच्छुद्धितरंमतम् । स्वतःशुचितमोविष्णुःसान्निध्यं

श्रीभगवानुवाच ॥ यएतांमत्कथांहित्वाभक्तिज्ञानक्रियात्मिकाम् ॥ क्षुद्रान्कामान्बलैःप्राणैर्जुषंतःसंसरंतिते १ स्वेस्वेधिकारेयानिष्ठासगुणःपरिकीर्तितः ॥ विपर्ययस्तुदोषःस्यादुभयोरेषनिश्चयः २ शुद्ध्यशुद्धीविधीयेतेसमानेष्वपिवस्तुषु ॥ द्रव्यस्यविचिकित्सार्थंगुणदोषौशुभाशुभौ ३ धर्मार्थं व्यवसायार्थंयात्रार्थमितिवानघ ॥ दर्शितोयंमयाचारोधर्ममुद्वहताधुरम् ४ भूम्यंब्वग्न्यनिलाकाशाभूतानांपंचधातवः ॥ आब्रह्मस्थावरादीनांशारीराआत्मसंयुताः ५ वेदेननामरूपाणिविषमाणिसमेष्वपि ॥ धातुषूद्धवकल्प्यंतएतेषांस्वार्थसिद्धये ६ देशकालादिभावानांवचनान्ममसत्तम ॥ गुणदोषौविधीयेतेनियमार्थंहिकर्मणाम् ७ कृष्णसारोथदेशानांब्राह्मणानांशुचिर्भवेत् ॥ कृष्णसारोप्यसौवीरकीकटासंस्कृतेरिणः ८ कर्मण्योगुणवान्कालो द्रव्यतःस्वतएववा ॥ यतोनिवर्ततेकर्मसदोषोकर्मकःस्मृतः ९

चस्वभावतइतिवचनात् ६ देशादीनांश्रुतिस्मृतिलक्षणंममसुखोद्गतंवचनमेवगुणदोषयोर्विवेकाभित्याह देशेति अयंदेशोयंकालएतद्द्रव्यमितिइमानिकर्मयोग्यानिनेतराणीतिममवचनाद्देशादीनांगुण दोषौविधीयेते कर्मणांनियमार्थंफलसाधनार्थम् ७ कीदृशादेशाःशुचयइत्यतस्तानाह कृष्णसारइति । ब्राह्मणानांकर्मकरणायकृष्णसारोनाममृगोदेशानाशुचिःशुद्धिकरोभवेत् कृष्णसारोयंदेश मधिवसतिसदेशःशुचिरित्यर्थः अथशब्देनकृष्णसारविधुरोपिदेशःशुचिरितिसूचयति नदीसमुद्रगिरयआश्रमाश्चवनानिच । नगराणिचदिव्यानिशालग्रामादयस्तथा । तेषांसमीपगाश्चैवदेशायोजनमा त्रतः । कर्मण्यास्तुसमाख्यातास्तदन्येकीकटाःस्मृताः । तदन्येपितुयेदेशाःकृष्णसारोषिताःस्वतः । कर्मण्याएवतेज्ञेयाइतिवचनात् । उक्तस्यापवादमाह कृष्णसारोपीति कृष्णसारोपिसौवीरकीकटासं स्कृतेरिणेभ्योन्यदेशस्यशुचिहेतुः एषास्ववासोपशुचिकरोनेत्यर्थः खर्पराशुचितोदेशोऽसंस्कृतइत्युच्यतेतदुक्तं यदिनाध्युषिताःखलैरिति तत्रापिविशेषोस्तीत्युक्तं खलैरध्युषिताश्चापियदिसद्भिरधिष्ठि ताः । कर्मण्याइतिविज्ञेयाविष्णुलिंगानियत्रवइति ईरणदेशःलावणिकउपद्वीपादिकः ८ देशानिरूप्यकर्मयोग्यंकालमाह कर्मण्यइति विज्ञेयाइत्यादिप्रमाणसिद्धोयमर्थइतिप्रकटनाय कर्मण्यइति स्मृत्युक्तशब्दानुवादः गुणवान्वृत्तिमान् कालःकर्मण्यःयज्ञादिकर्मयोग्यःसवद्धिविधःद्रव्यतःस्वतइति वाशब्देनद्वावपियोग्याविति किं एवशब्देनतृतीयोनास्तीतिनिश्चीयते द्रव्यतः कर्मण्योवसंतादि

लक्षणः स्वतःकर्मण्यः संध्यादिलक्षणः । कालस्यगुणवत्त्वंनामकिं येनकर्मांवर्तेतइतितंविविनक्ति यतइति । यतोयस्मिन्कालेनिषिद्धात्कर्मनिवर्तेतेनक्रियतेसकालःसदोषोनिषिद्धोकर्मकःकर्मानहा निशीथादिलक्षणःस्मृत । निशीथोमध्यमारात्रीराक्षसानांतुगोचरःइत्यादिना यतोदोषात्कर्मनिवर्तेतेतेनदोषेणयुक्तःकालःसदोषत्वादकर्मकः९ द्रव्यस्यशुद्ध्यशुद्धिप्रकारोपिबहुविधइत्याह द्रव्यस्येत्यादि ना ताम्रादेर्द्रव्यस्याम्लादिद्रव्यसंयोगेनशुद्धिः भांडादिद्रव्यस्यमूत्रोच्छिष्टामेध्यसुरादिसंयोगेनाशुद्धिःमहतांवचनेनचशुद्ध्यशुद्धीस्तः तद्यथा अभक्ष्यत्वपतितपात्रत्वंचालाबुनोदृष्टं केषांचित्प्रक्षालनादि संस्कारेणशुद्धिः असंस्कारेणाशुद्धि गर्दभयानमसंस्कृतवाणीत्यादेः केषांचिदयोग्यापहृतगृहादिद्रव्यविशेषाणांकालतःशुद्धिःअन्नादीनाकालेनाशुद्धिःअन्नादीनांमहत्त्वेश्वादिस्पर्शेपृष्ठाशत्यागेनशिष्ट स्यशुद्धिःअथवान्नस्याल्पतयाल्पत्वेनशुनास्पृष्टस्यतस्याशुद्धिः अल्पस्यापिपापस्यपिपीलिकाहननादेरशुचित्वंन । महतोद्रव्यस्यवधादशुद्धिः १० शक्त्याशुद्धिः शक्तस्यपुंसःतीर्थपात्रादिनाब्राह्मणपात्र सादिनावाशुद्धिः अशक्तस्यज्वरादिरोगपीडितस्यदेवार्चनादिलक्षणेनेनित्यकर्मानुष्ठानेनशुद्धिः अशुद्धस्यापिमहतांवाचाशुद्धिःशुद्धस्यापिबहूनांवाचात्वशुद्धिः बुद्धिरपिशुद्ध्यशुद्धिहेतुस्तथाहिसुरा पानादिपापानिश्चयेअशुद्धिः हरिकथाश्रवणादिषुपुण्यानिश्चयेशुद्धिःतथाहिसमृद्धिःसंपदात्मनःशुद्ध्यशुद्ध्योःकारण सत्पात्रदानादिसद्व्ययेनशुद्धि.असत्पात्रप्रदानगणिकादिभोगविषयादशुद्धिः अन्येमां सविशेषाः सोमादिद्रव्यविशेषाश्चदेशावस्थानुसारतःशुध्यंत्यशुध्यंतिहि तथाहि मांसविशेषाविंध्यादुत्तरदेशेशुद्धाःदक्षिणदेशेत्वशुद्धाःतथासोमादिद्रव्यविशेषायज्ञकर्मादावस्थायामेवशुद्धाःनान्यदा ११

**द्रव्यस्यशुद्ध्यशुद्धीचद्रव्येणवचनेनवा ॥ संस्कारेणाथकालेनमहत्त्वाल्पतयाथवा १० शक्त्याशक्त्याचवाग्बुद्ध्यासमृद्ध्याचतथात्मनः ॥ अन्येशुद्ध्यंतिहितथादेशावस्थानुसारतः ११ धान्यदार्वस्थितंतूनांरसतैजसचर्मणाम् ॥ कालवाय्वग्निमृत्तोयैःपार्थिवानांयुतायुतैः १२ अमेध्यलिप्तंयद्येनगंधलेपंव्यपोहति ॥ भजतेप्रकृतिंतस्यतच्छौचमुपदिश्यते १३ स्नानदानतपोवस्थावीर्यसंस्कारकर्मभिः ॥ मदभ्यासान्मनःशौचंकृत्वाकर्माचरेद्द्विजः १४ मंत्रस्यचपरिज्ञानंकर्मशुद्धिर्मदर्पणम् ॥ धर्मःसंपाद्यतेसद्भिरधर्मस्तुविपर्ययैः १५**

पार्थिवानांपृथिवीविकाराणांधान्यादीनांयुतायुतैःकालादिभिःशुद्धिः धान्यानामामयुतेनैकेनकालेनदारुपात्राणामस्थ्नांशंखादीनांचयुताभ्यांमृत्तोयाभ्यांतंतूनामयुतेनकेवलेनतोयेनआज्यादिरसानांतै जसानांकांस्यादीनांचायुतेनाग्निना चर्मणांयुताभ्यांमृत्तोयाभ्यांशुद्धिरित्यर्थः १२ यदमेध्यलिप्तंयेनगंधलेपंचव्यपोहतितेनतस्यप्रकृतिंभजते तस्यवस्तुनस्तच्छौचशुद्धिरुपादिश्यते १३ कर्मांगशु द्धिप्रकारमाह स्नानेति अवस्थायौवनादिलक्षणा वीर्यमाहात्म्यंशक्तिर्वा संस्कारऊर्ध्वपुंड्रादिधारणं कर्मनित्यसंध्यावंदनादिमत्पूजावसानं एभिर्मनःशौचंचमनसःशुद्धिंकृत्वाभीक्ष्णंकर्माचरेत् म दभ्यासान्ममध्यानाभ्यासाच्च १४ ऋष्याद्युपेतस्यमंत्रस्यपरिज्ञानमापादनीयमितिशेषः कर्मणःशुद्धिःकथमित्यतउक्तं कर्मेति मदर्पणंब्रह्मार्पणमस्त्विति एतैःसाध्यंकिमत्राह धर्मइति धर्मोमद्भ क्तिलक्षणःसंपाद्यते तत्राधिकारिणआह सद्भिरिति विपर्ययैर्मदर्पणमकुर्वाणैरसद्भिरेतैरधर्मःपापलक्षणःसपाद्यतइत्यन्वयः आंतर.सन्निधिर्विष्णोर्बाह्यःसन्निधिरेवच । द्विविधःसन्निधिःप्रोक्त.कृत्रिमोबा ह्यउच्यते । स्वाभाविकस्त्वांतरःस्यात्प्रतिमाजीवगोयथेतिवचनेनसन्निधानार्थंब्रह्मार्पणंकर्तव्यमितिज्ञायते १५

१ अयोग्यामोक्षानधिकारिणः ।

इतोऽपिभगवदर्पणंकर्तव्यमन्यथाकृतहान्यकृताभ्यागमौस्यातामिति भावेनाह क्वचिदिति क्वचित्कर्मणिविहितत्वे नगुणोऽपिदोषःस्यात् मदभक्तेनानर्पितत्वेनानुष्ठितत्वादंतवदितिशेषः । अपिविधिनाब्रा
ह्मणोऽपिनहंतव्यइतिनिषेधविधिना दोषोपिगुणःस्यात् यथेंद्रस्यवृत्रहत्याऋषिनारायणप्रीतिजनकत्वात् ननुगुणदोषविधाननियमः कथमत्राह गुणेति गुणदोषाभ्यामर्थनियमःस्वर्गनरकादिफलानि
यमस्तौगुणदोषौ विदंतिजानंतीतितद्विदःमनुष्यादयस्तेषामेवबाधतेक्लेशकरोभवति प्रयत्नसाध्यत्वात् एवशब्देनतिर्यगादयोव्यावर्त्यंतेश्रुतेर्ग्रहणशक्त्यभावात्तेषामतो मनुष्यादीन्प्रतिविधीयमानौगुण
दोषौभगवदर्पणाभावेस्वर्गनरकादिफलंदत्तइत्युक्तं तद्विधानंतद्विदामित्यनेनमनुष्यादिष्वपिशुभाशुभज्ञानयोग्यवयसां तदजानतांमहानज्ञानजोदोषोमूर्खाणांतिर्यगादीनातदभावश्चेतिसूच्यते । वर्षाच्चतुर्द
शादूर्ध्वंयेनवि[illegible]शुभाशुभं । तेषामज्ञानजोदोषःसुमहान्कर्मजादपीति । तिरश्चामिंद्रियाशक्तेनदोषोज्ञानजोभवेत् । गुणोऽपिनैवकाश्चित्स्याद्यतोज्ञानबहिष्कृताइतिवचनात् १६ गुणदोषनिमित्तबाधायथानस्या
त्तथप्रकारांतरेणाहद्वाभ्यां समानेति अपतितानांविप्रादीनांसमानकर्माचरणेमदर्पणेनात्मयोग्यकर्माचरणेपातकनस्यात् तथापूर्वमपतिताविप्रादयोयेनकर्मणापतंतितेषांतत्समानकर्माचरणेतप्तसुरापानतप्तस्त्रीमूर्त्या
श्लिंगनादिकेदेहत्यागेवदोषलक्षणंतत्कर्मपातकंचनभवति तथाशयानःशूद्रश्चब्राह्मणादिपातित्यहेतुभिःलशुनभक्षणादिभिरधोनपतति अधइतिविशेषणात्सुरापानादिभिरेवपतति कुतोनपततीत्यत
उक्तंऔत्पत्तिकइति तस्यशूद्रस्यलशुनभक्षणादिलक्षणैर्गुणैरमुख्यैःकर्मभिःसंगःऔत्पत्तिकःस्वभाविकोयतस्तस्मात्स्वायोग्यएवकर्मणिपततीत्यर्थः । त्रैवर्णिकाःसंचरंतोवेदकर्मप्रवर्तनात् । शयानःशूद्रउदि
ष्टोवेदकर्माप्रवर्तनात् । नतस्याभक्ष्यजोदोषःशुश्रूषायांप्रवर्ततः । यथासुवर्णस्यमलंशुक्रंताम्रस्यनैवतत् । एवंविप्रादिदोषैस्तुनशुद्रोदोषतामियात् । मलंतुतस्यापिमलंयथैवंशूद्रजन्मनः । स्वधर्मप्रतिरूपस्यच

**क्वचिद्गुणोऽपिदोषःस्याद्दोषोऽपिविधिनागुणः ॥ गुणदोषार्थनियमस्तद्भिदामेवबाधते १६ समानकर्माचरणेपतितानांनपातकम् ॥ औत्पत्तिकोगुणैः संगोनशयानःपतत्यधः १७ यतोयतोनिवर्तेतविमुच्येततततस्ततः ॥ एषधर्मोनृणांक्षेमःशोकमोहभयापहः १८ विषयेषुगुणध्यानात्पुंसःसंगस्ततोभवेत् ॥ संगात्तत्रभवेत्कामःकामादेवकलिर्नृणाम् १९ कलेर्दुर्विषहःक्रोधस्तमस्तदनुवर्तते ॥ तमसाग्रस्यतेपुंसश्चेतनाव्यापिनीततः २० तयाविरहितः साधोजंतुःशून्यायकल्पते ॥ ततोऽस्यस्वार्थविभ्रंशोमूर्छितस्यमृतस्यच २१**

रणंदोषत्वंपततामितिवचनात् १७ किंबहुनोक्तेनसर्वतोऽप्यभिमानपरित्यागेनश्रीनारायणसमर्पणमेवसमस्तदोषनाशकरमित्याह यतोयतइति यतःयतःकर्मणोनाहंकर्तेति निवर्तेत अहंकारराहित्येनयच्च
त्कर्मपरमेश्वरार्पणबुद्ध्याकरोतिततस्ततःकर्मणोविमुच्येत तत्तत्कर्मबंधकंनस्यादित्यर्थः तत्कर्तव्यतायानुद्धयवतारार्थंस्तौति एषइति एषःपरमेश्वरसमर्पणलक्षणोधर्मःक्षेमःसंसारमुक्तिहेतुः मयिस
र्वाणिकर्माणिसंन्यस्याध्यात्मचेतसेत्यादेः १८ विपक्षेबाधकमनर्थलक्षणमाह विषयेष्विति अयमर्थः भगवदर्पणबुद्धिराहित्येनक्रियमाणंकर्मशब्दादिविषयेषुगुणबुद्धिंजनयति मृगतृष्णिकापयःपूर
मतीवतत्रनुनिरंकुशस्यपुंसोविषयेषुगुणध्यानात्सुखसाधनत्वध्यानात्तेषुस्नेहलक्षणःसंगःस्यात् ततस्तेषुकामःइच्छास्यादिच्छातःकलिःकलहद्रावणइतिधातोः चेतनधर्मज्ञानद्रावणहेतुरधर्मोज्ञानात्मा
विशति १९ कलेरावेशात्स्वाभीष्टपरिपंथिषुसत्सुदुर्विषहःक्रोधःस्याच्चदनुद्वेषानवरंतमोवर्तते ततस्तमसिमग्नस्यपुंसःव्यापिनीद्रियसंतताचेतनासुखानुभवशक्तिस्तमसादुःखोद्रेकेणग्रस्यतेनष्टाभवति २०
तयानुभवशक्त्यारहितोजंतुरासुरोजीवःशून्यायसुखनाशायकल्पतेनित्यत्वाच्चेतनस्यनस्वरूपेणनाशःकिंतुसर्वात्मनासुखनाशएवेत्याह ततइति । चशब्दएवार्थेततोमृतस्यअंधंतमःपतनानंतरअस्यमू
र्छितस्यदुःखसमुद्राभिभूतत्वेनानिःसंज्ञस्य । स्वार्थस्यसुखस्यविभ्रंशःस्वरूपतोहानिर्भवति २१

---

१ तद्विदामेवेत्यनेनावधारणेनगुणदोषपरिज्ञानशून्यानागुणदोषार्थनियमोनबाधतेइत्युच्यते इतिभाति अतस्तदनुवादेनतात्पर्यमनुव्याख्याति तद्विदइति । २ शसुखेनोनंशूनतस्यभावःशून्यं तस्मैदुःखायेत्यर्थः पृषो
दरादित्वात्साधु

नकेवलं सर्वात्मनासुखनाशःतस्यनिरतिशयदुःखमपिभवतीत्याह विषयेतिविषसाम्यंयातीतिविषयोदुःखंतस्याभिनिवेशेनसमुद्रेकेणात्मानंनवेद अपरंप्रतियोगिनंचनवेत्ति स्वानुभवमंतरेणनांकिंचिद्वेत्ती त्यर्थः स्वपरविषयज्ञानंनास्तिचेच्छून्यवादप्रवेशआपन्नइतितत्राह वृक्षेति भगवद्भागवतप्रद्वेषातिशयेननित्यंतमःपतितोनिरंतरंदुःखमेवानुभवन्यमकिंकरैरविरतंवृश्च्यमानत्वेनवृक्षजीविकयावृक्षजी वनवद्व्यर्थंजीवन् निष्प्रयोजनोग्रस्तवयाः दुःखपरीतायुःइतिवच्छ्वसन्नास्ते इत्यन्वयः दोषिणोगुणवत्त्वेनश्रूयंतेविषयाःसदा। असतांसंगतेस्तेषुदोषाःश्रोतुंदुर्लभाः।अतोनित्यगुणध्यानात्तद्गुणेप्रीतिमा न्भवेत्। अतस्तत्रभवेत्कामःकामिनंकलिराविशेत्। अधर्माज्ञानरूपेणकलिनाविष्टदेहिनः। सत्सुक्रोधोदुर्विषहस्ततस्तमसिपात्यते। अंधेतमसिमग्नस्यचेतनेंद्रियसंगता। सुखानुभवशक्तिर्यासाविनश्यतिस र्वदा। तदाक्षमूनभावेनशून्यइत्युच्यतेनरः। सर्वात्मनातुशंभ्रंशस्तस्यदुःखविवर्धनः। अमूर्छितस्यचभवेन्मृत्यनंतरमेवच। दुःखाख्यविषयावेशान्नात्मानंपरमेवच। यथावद्वेत्तिपतितस्तमस्यंधेकदाचन। वृक्षवद्वृश्च्यतेनित्यंनिष्प्रयोजनजीवनः। नित्यदुःखपरीतायुर्दृतिवत्प्रश्वासित्यपि। इतिवचनादासुरजनविषयोयमितिज्ञायते २२ श्रुतिविहितत्वात्स्वर्गादिविषयेच्छासतांस्यादित्याशंक्यैतद्विषयद र्शकेनस्वर्गादिविषयस्यानित्यसुखहेतुत्वेननतत्रेच्छाकार्या श्रुतिर्भैषज्यरोचनार्थमिक्षुदंडदानवत्स्वर्गादिवादिनीमुख्यतोमुक्तिपरेत्याह फलश्रुतिरिति इयंफलश्रुतिः मोक्षफलश्रवणत्वेनचरितार्थ त्वात् नस्वर्गादिकुसुमश्रुतिस्तथात्वेवेदस्यानर्थहेतुत्वंस्यान्नतद्युक्तम्। स्वर्गादिकामनायुक्तस्त्वैहिकेष्वपिसज्जते। तत्रापिदेवकामेभ्योविशेषंचाभिवांछति। ततस्तमसिपातःस्यादतोवेदःकथंहितान्।

विषयाभिनिवेशेननात्मानंवेदनापरम्॥ वृक्षजीविकयाजीवन्व्यर्थंग्रस्तवयाःश्वसन् २२ फलश्रुतिरियंनृणांनःश्रेयोरोचनंपरम्॥ श्रोतुर्विवक्षयाप्रोक्तंयथा भैषज्यरोचनम् २३ उत्पत्त्यैवहिकामेषुप्राणेषुस्वजनेषुच॥ आसक्तमनसोमर्त्याआत्मनोनर्थहेतुषु २४ नतानविदुषःस्वार्थंभ्राम्यतोवृजिनाध्वनि॥ कथंयुं ज्यात्पुनस्तेषुतांस्तमोविशतोबुधः २५ एवंव्यवसितंकेचिदविज्ञायकुबुद्धयः॥ फलश्रुतिंकुसुमितामवेदज्ञावदंतिहि २६ कामिनःकृपणालुब्धाःपुष्पेषु फलबुद्धयः॥ अग्निमुग्धाधूमितांताःस्वलोकंनविदंतिते २७

काम्यत्वेनाभिचक्षीतसर्वंजानन्स्वयंसदेतिवचनात् तदुपपादयति नइति नोस्माकंसकाशाच्छ्रेयोमोक्षरूपंतदेवरोचयतिकामयति स्वर्गादेरनित्यतादिदोषज्ञानान्मोक्षस्यादोषताज्ञानाच्चेति भैषज्यरोच नेप्रतीक्षुदंडंददातीति यथातथाईषदुत्तमस्यमंदाधिकारिणःश्रोतुर्विवक्षयाभिमुखीकरणायप्रोक्तं नतुतत्रतात्पर्यविवक्षया मंदाधिकारिणानित्यंतपसैवप्रतीक्षितुं। मोक्षोनशक्यतेधैर्यात्ततःस्वर्गादिकंवदेत्। स्वर्गादिष्वल्पफलतांज्ञापयित्वापिमोक्षदं। वेदंवक्तुंतूत्तमानांनित्योवेदःप्रवर्तते। इक्षुदंडंददातीतियथाभैषज्यरोचनं। एवंमंदेषूत्तमेषुमोक्षमाहात्म्यमुच्यते। नह्यल्पफलभाग्वेदोवासुदेवैकसंश्रयइतिवचनात् २३ फलश्रुतेर्मोक्षैकार्थत्वेयुक्तिमाह उत्पत्त्येति उत्पत्त्यास्वभावतएवात्मनोनर्थत्वेहेतुषुकामादिष्वासक्तमनसोयेमर्त्यास्तान्वृजिनाध्वनिसंसारेभ्राम्यतोतएवस्वार्थमविदुषोजनास्तेषांस्वार्थोपायबुधोजान न्वेदस्तेषुननियुंज्यात् नियुंजानश्चेदुन्मत्तवाक्यवदप्रमाणंस्यादित्याशयेनाह कथमिति विषयाभिनिवेशेनतमोविशतस्तान्पुनस्तेषुविषयेषुवेदःकथंयुज्यान्नकथमपियुनक्तिउन्मत्तवाक्यसाम्यप्रा प्तिभयादितिशेषः कामादिपुनतान्प्रापयान्इतिवापदच्छेदः तथाचैक्यवाक्यंप्राप्नोति २४ २५ स्वमतंप्रदर्श्यासुरमतंप्रदर्शयति एवमिति केचिदसुरपक्षीयाःवेदस्यैवमुख्यंव्यवसितंनिश्चयमवि ज्ञायफलश्रुतिंफलंमोक्षस्तद्विषयांश्रुतिंकुसुमितांस्वर्गविषयांवदंति अतएवावेदज्ञाइति २६ एतदेवोपपादयति कामिनइति कामिनोनिषिद्धकामिनः नतुयोग्यकामवंतोनिषेध्याः अयोग्यभार्या पुत्रादिकामितानर्थसाधिनी। योग्यकामाद्धरेःप्रीतिरतोब्रह्मादयोमलाःभार्यापुत्रादिसंयुक्तावासुदेवमुपासतइतिप्रमाणात्। एवंविधाअसुराइत्याभिप्रेत्यकृपणादिशब्दाः प्रयुक्ताः। ननुस्वर्गकामइतिश्रुतेः

१ नृणांइतिसामानाधिकरण्यनान्वयेकृष्णोपिमनुष्येषुकश्चनेतिप्रतीत्यतोत.सकाशादितिपदमध्याहार्यंतात्पर्यमनुसृत्य। २ अयोग्यकामवंतः।

स्वर्गादिष्वेवस्पष्टार्थत्वात्कथंपुष्पेषुफलबुद्ध्यइतिनिंदाक्रियतेइतितत्राह अग्निमुग्धाइति । मामविज्ञायाग्निरेवेज्यतेइतिमुग्धाःमिथ्याज्ञानिनःप्रत्यक्षफलमाह धूमेति । मिथ्याज्ञानित्वंकथमत्राह स्व
लोकमिविस्वलोकंस्वाश्रयंपरमात्मानंनाविदंति ३ नेनस्वर्गकामाःस्वर्गकामशब्दार्थमपिनविदंतीतिज्ञापितं । नित्यानंदोहरेर्भक्तिज्ञानाद्याःस्वर्गशब्दिताः । पुत्रभार्यापशुवित्ताद्याःसर्वमोक्षगतंफलं । उद्दिश्य
स्वर्गकामस्ययजनंश्रुतिचोदितं । तदविज्ञायपुष्पाख्यमनित्यंस्वर्गमिच्छवः । यजंतिमंदमतयोवेदवादपरायणाइतिमानेनस्वर्गशब्दविवरणात् स्त्रीभिर्यानैर्वाइत्यादिचात्रमानम् २७ कोसावाश्रयइतित
आह नतइति । येउक्थेनप्राणेनशाःशासनंयेषांतेउक्थशासःअंधेतमसिपातयित्वाप्राणेनदंडयाअसुतृपःकेवलेंद्रियारामास्तेयइदंव्याप्तोयतश्चेदंजातंहृदिस्थंमांनजानंतीत्यन्वयः विष्णुभक्तान्सदावायुः
शासयेत्तमसिक्षिपन् । विष्णुभक्तान्विमोक्षायप्रापयित्वासुखंनयेदितिच अज्ञानंनिदर्शयति यथेति यथानीहारचक्षुषःनीहारावृतदृष्टयःपदार्थान्यथावन्नविदंति २८तथा तेमेमतमविज्ञाय । मोक्षाख्यंफलमे
वाहस्वर्गादिवचनंतुयत् ।असुराणामयंस्वर्गशब्दःपुष्पात्मकंवदेत् । देवानांहरिसंप्राप्तिंवेदोविष्णुपरोयतः । इत्येतत्सिद्धमविदित्वा ततःकिमत्राह परोक्षेति परोक्षमंधंतमःतद्विषयःतत्प्राप्तियोग्यः आत्मा
स्वरूपंयेषांतेतथा अंधंतमःपरोक्षंचपंचकष्टंतथोच्यते । इतिवाक्यसिद्धं कामिनःकृपणाइत्यादिनैवंविधाअसुराइत्यर्थतउक्ताःइदानींस्पष्टयति हिंसायामिति अयंभावः येकामिनःतेषामसुराणांयदियदा
हिंसायांकामः तदायज्ञएवनचोदना । यद्यदात्मनोहिंसनमिष्टंतत्तद्विहितमितिकुतर्कैःप्रतिपाद्यज्ञंप्रापयंति आसुरोविहितांहिंसांविहितत्वेनवर्णयेत् । आसुरायाज्ञिकाःसर्वेनारायणपराङ्मुखाइति

**मतेमामंगजानंतिहृदिस्थंयइदंयतः ॥ उक्थशासोह्यसुतृपोयथानीहारचक्षुषः २८ तेमेमतमविज्ञायपरोक्षविषयात्मकाः ॥ "यथापशून्विनिघ्नंतिहिंस्यंते**
**प्रेत्यतैस्तुते ॥ " हिंसायांयदिकामःस्याद्यज्ञएवनचोदना २९ हिंसाविहाराह्यालब्धैःपशुभिःस्वसुखेच्छया ॥ यजंतेदेवतायज्ञैःपितृन्भूतपतीन्खलाः**
**३० स्वप्नोपममसुंलोकमसंतंश्रवणप्रियम् ॥ आशिषोहृदिसंकल्प्यत्यजंत्यर्थान्यथावणिक् ३१ रजःसत्वतमोनिष्ठारजःसत्वतमोजुषः ॥ उपासतेइंद्रमु**
**ख्यान्देवादीन्नतथैवमाम् ३२ इष्ट्वेहदेवतायज्ञैर्गत्वारंस्यामहेदिवि ॥ तस्यांतइहभूयास्ममहाशालामहाकुलाः ३३**

वचनात् २९ एषांप्रत्यक्षान्यथानुपपत्त्यासुरत्वंस्पष्टमित्याह हिंसाविहाराइति आलब्धैःहिंसितैः ३० अमुंलोकमुद्दिश्यअसंतमनित्यं अर्थहानिरेवैषांनस्वाभीष्टप्राप्तिरित्याह आशिषइति हृदिस्व
गाशिषः संकल्प्ययास्वामइतिनिरूप्यवणिग्यथातथाअर्थांस्त्यजति ३१ संतुवापितृभूतपतीनांयष्टारोसुराः इंद्रादिदेवतार्चकाःकथमित्याशंक्यायथावत्तदर्चनाभावादित्याह रजइति एवंविधायाज्ञि
कास्तामसाः कुतः विष्णुंविहाययेदेवान्पितॄन्भूतेशमेवच । साम्येनवापूजयंतितेज्ञेयाआसुरागणाइतिस्मृतेः तेष्वपिविशेषोस्ति तामससात्विकास्तामसराजसास्तामसतामसाइति तत्रतेसर्वेइंद्रमुख्या
न्देवादीन्मांचयथोपासतेरजःसत्वतमोनिष्ठाःरजःसत्वतमोजुषोभवंति कथं तामससात्विकव्रताः किंचित्स्वर्गादिसुखोपेतानिरयदुःखोद्रिक्तान्लोकान्जुषंते तामसराजसव्रताःकेवलंनिरयदुःखाकुल
लोकान् तामसतामसव्रताः अंधंतमोदुःखाविलान्लोकान्सेवंतइत्यन्वयः तामसेषुतुयेसत्वानिरयप्रचुरास्तुते । ईषत्स्वर्गादिसंयुक्तास्तमोनिष्ठास्तुतेस्मृताः । केवलंनिरयेनिष्ठायेतेतामसराजसाः । अंधेतम
सियेनिष्ठास्तेवैतामसतामसाः । एवंत्रिभेदयुक्तास्तुयाज्ञिकाविष्णुवर्जिताः । इत्यनेनत्रैविध्यंप्रामाणिकं निष्ठोत्कर्षव्यवस्थापांनाशंतेव्रतयाच्ञयोरितिवचनात् रजआदिव्रतयुक्ताःरजआदिलोकाश्रयाइत्यं
तइत्यर्थः ३२ तत्प्रार्थनाप्रकारमाह इष्ट्वेति रंस्यामहेरंतुमिच्छामः इहभूमौ अनेनायथोपासनंचदर्शितंनित्यानंदलक्षणमोक्षाकांक्षानुगुणगुणोपसंहाराभावात् ३३

---

१ इदमर्धंप्रक्षिप्तमितितात्पर्यदीपिकाश्रीनिवासतीर्थीयेत्यादिग्रंथविमर्शेनेक्ततेसतिभाति क्वचित्मूलकोशेष्वनुपलंभाच्च । २ अत्रमनुष्याधमाःतामससात्विकाः । प्रधानदैत्यानुगाःतामसराजसाःकल्पादिप्रधानदैत्याः
तामसतामसाइतिविवेकोगीतातात्पर्यानुसारेणमंतव्यः

अयथोपासनेनिमित्तमाह एवमिति पुष्पितयास्वर्गादिपुष्पविषययावाचाव्याक्षिप्तंमनोयेषांतेतथातेषांमानिनांअतिस्तब्धानामितिविशेषणद्वयेन मनःसमीचीनत्वजनकतत्त्वज्ञगुर्वादिसेवापिदूरीभूते तिध्वनयति ३४ स्वर्गादिपरस्यवेदस्यमुक्तिपरत्वंकथंघटतइत्यत्राहवेदाइति स्वतएवपूर्णस्वरूपत्वात् ब्रह्मात्माविष्णुःसएवविषयोयेषांतेब्रह्मात्मविषयावेदाः नारायणपरावेदाइत्यादेः ब्रह्मत्वंपू र्णतामोक्षातदस्यस्वतएवतु । सब्रह्मात्मासमुद्दिष्टोवासुदेवःसनातनइतिच अनेनब्रह्मात्मप्राप्तिलक्षणमोक्षपरत्वमविनाभूतवेदस्येतिज्ञायते उक्तशंकायाःपरिहारःकथमायातइत्यतउक्तं त्रिकांडविष याअपीति यद्यपि ब्रह्मदेवकर्मकांडविषयाअधिकारिभेदेनप्रतीयंतेतथाप्युत्तमाधिकारिणांकांडद्वयपरत्वंविहायब्रह्मगुणप्रतिपादनद्वारामोक्षपरत्वंस्पष्टमितिभाव सर्ववेदानांब्रह्मात्मपरत्वंसत्यंचेन्मुख तःकिमितिनप्रतीयतइतितत्राह परोक्षेति किमनेनप्रयोजनमत्राह परोक्षमिति परोक्षप्रियाइवहिदेवाइतिश्रुतिः चशब्दान्मद्भक्तानांदेवादीनांप्रियमित्यर्थोवगम्यते ३५ परोक्षत्वान्ममप्रसादंवि नावेदार्थोदुरवबोधइत्याह शब्दब्रह्मेति तर्हिनिरधिकारित्वात्डिवित्थडवित्थादिशब्दवदवाच्योवेदइत्यतउक्त प्राणेति अत्रप्राणादिशब्दैर्ब्रह्मादयोविवक्ष्यंते प्राणेंद्रियमनोभिःमयितेज्ञायतइतिप्राणेंद्रि यमनोमयं मेयत्वान्मयउद्दिष्टोवेदःप्राणादिभिःसदेतिवाक्यात्वाक्यत्वेपौरुषेयत्वेनचलौकिकवाक्यवदनित्यंपारिमितंचनेत्याह अनंतेति अंतोविनाशउद्दिष्टःपारःपरिमितिस्तथा । अनंतपारोवेदोयंताभ्यां सरहितोयतइत्येवचनमत्रोदाहृत्यार्थोवक्तव्यः समुद्रवदित्यल्पाधिकारिणोपेक्ष्योक्तंनतूत्तमाधिकारिणइति ३६ वेदस्यप्रतीयमानोर्थोनचेद्व्याख्याभावेनवैयर्थ्यमापन्नमत्राह मयेति अनंतगुण पूर्णत्वाद्भूम्नाब्रह्मादिशब्दवाच्येनमयोपबृंहितंमत्प्रतिपादकत्वेनपूर्णार्थोपेतं किमत्रप्रमाणमत्राह भूतेष्वितिभूतेषुघोषरूपेणलक्ष्यतेकथमिवाबिसेषूर्णेवशब्दब्रह्मेतिशेषः ३७ प्राणादिभिर्मीयतइत्यु

एवंपुष्पितयावाचाव्याक्षिप्तमनसांनृणाम् ॥ मानिनांचातिस्तब्धानांमद्वार्तापिनरोचते ३४ वेदाब्रह्मात्मविषयात्रिकांडविषयाअपि ॥ परोक्षवादोवेदो यंपरोक्षंममचप्रियम् ३५ शब्दब्रह्मसुदुर्बोधंप्राणेंद्रियमनोमयम् ॥ अनंतपारंगंभीरंदुर्विगाह्यंसमुद्रवत् ३६ मयोपबृंहितंभूम्नाब्रह्मणानंतशक्तिना ॥ भूतेषुघोषरूपेणबिसेषूर्णेवलक्ष्यते ३७ यथोर्णनाभिर्हृदयादूर्णामुद्वहतेमुखात् ॥ आकाशाद्घोषवान्प्राणोमनसास्पर्शरूपिणा ३८

क्तंतंप्रकारमाह यथेति यथोर्णनाभिर्हृदयादूर्णामुद्धृत्यमुखादुद्वहतेनिष्कासयतिपुनर्ग्रसतिच एवंघोषवानाकाशगुणशब्दव्यक्तिमान्छंदांसिमयितेनेनेतिछंदोमयोमृतमयोमत्प्रसादेनमोक्षदःप्राणःआ स्पर्शोविष्णुःतंरूपयतीतिरूपास्पर्शरूपिप्राणस्यमनस्तेनस्वमनसासहस्रदवीमदनंतरूपविषयांओंकारेणुत्रिमात्राचनंतमात्रावसानप्रणवैर्व्यंजितांस्पष्टव्यक्तांतद्व्याख्यानरूपांस्पर्शादिवर्णैरलंकृतांगुह्यदर्शना दिभेदेनविचित्राभिर्नानाविधाभिरेकाशीतिसंख्याताभिर्भाषाभिर्विततां चतुरुत्तरैश्चतुर्वर्णैरधिकोष्णिग्युक्तैर्गायत्र्यादिच्छंदोभिश्चविततांअनंतपारांविनाशपरिमाणरहितांबृहतींश्रुतिंहृदयाकाशादु द्धृत्यसृजतिउच्चारयतिरुद्रादिभ्यउपदिशतिपुनःकल्पांतेस्वस्मिन्नेवाक्षिपतेविदधातीत्यन्वयः चतुरुत्तरत्वनियमोजगत्यंतानामेवगायत्र्याउष्णिक्चतुर्वर्णाधिकेत्यादिचतुरुत्तरैःजगत्यंतानामेवचतुरु त्तरत्वनियमः भुंक्तेयदाखिलान्स्पर्शान्नास्पर्शोविष्णुरुच्यते । तस्यप्रकाशकंनित्यंनमस्येप्राणमेकलं । प्राणस्यैवमनोनित्यंवासुदेवंप्रकाशयेदितिच । मीयंतेनेनछंदांसिप्राणश्छंदोमयस्ततइतिच त्रि मात्रमादितःकृत्वायावच्चानंतमात्रकाः । प्रणवास्तेपिभेदेनह्यनंताःपरिकीर्तिताः । एकमात्रोत्तराःसर्वेवासुदेवाभिधायकाः । तेषांव्याख्यानरूपाहिसर्वेवेदाःप्रकीर्तिताः । ओंकारेणान्वितास्तस्मात्सदोच्चा र्याहरेःप्रियैरिति उक्तार्थेप्रमाणं गुह्यदर्शनभाषेचभाषाचैवसमाधिका । तिस्रस्तुमूलभाषाःस्युरेकैकाचात्रिधापुनः । गुह्यदर्शनसंज्ञाचगुह्यगुह्यातथापरा । एवमादिक्रमेणैवत्वेकाशीतिविभेदिताः । भाषास्त त्रचगुह्याचप्रसिद्धार्थेध्वनन्विता।गुह्यार्थेतत्परैर्वाधोमेणिमित्यादिकाचसा ।दर्शनान्यबलंब्येवशुपत्यादिनांतुया। बहुश्रुतिविरुद्धंतुवदेत्सादर्शनात्मिका।अंतेनिषेधसंयुक्ताभस्मस्नानादिकाचसा ।यथाप्रदश्य

१ ॐकारस्यैकत्वेनोंकारेष्विति बहुवचनायोगादित्यतःॐकाराणांबहुत्वाद्बहुवचनामित्यत्रप्रमाणमाह ॥ त्रिमात्रेति ॥ ॐकारव्यंजितामितिपाठःकाल्पनिकः । २ अधोमणिमविंददित्यादिका प्रतीतार्थे योग्यता । मायातुप्रमेयज्ञानेनार्थःगुरूपदेशादिनामणिज्ञानोत्तमंलब्धवानितिगोप्योर्थः मणिपूर्वंप्रधानंचेत्युत्तमस्यवचोभवेदित्यभिधानम् ॥

मानार्थसमाधिःसाप्रकीर्तिता ।विष्णुःपरमइत्यःचासाचाविद्भिरीरितेतिवचनात् संप्रदायज्ञैर्गुरुचरणशरणैरेवपुरुषैर्ज्ञेयोयमर्थइति भस्मस्नानविधानंतुश्रुत्युक्तदर्शनानुगं।भस्मस्नानंततोब्राह्मंविधानंतुनृसिंह गोइतिवाक्याद्देतेनिषेधयुक्तत्वात्भस्मस्नानानादरोपिकर्तव्यइति ३८ ३९ ४० गायत्र्यादिच्छंदसांक्रमोपिछंदोवैचित्र्यायुक्ताविश्वइत्याशयवानाह गायत्रीति छंदस्तुनवपादंयज्जगादिःपुच्यतेबुधैरितिवचना ज्जगत्यायच्छंदोनवपादात्मकमित्यर्थः ४१ मुख्यप्राणोपिमत्प्रसादादेववेदार्थंजानाति मुख्यतःसर्ववेदार्थतत्त्वमहमेवजानामीत्याशयवानाह किंविधत्तइति विकल्पयेत्विविधरूपत्वेनकल्पयेत् लोकेवि द्वज्जनमध्येमदन्यःकापुरुषःइत्यस्याःश्रुतेःहृदयंतात्पर्यार्थंवेदकोपिनवेदचेत्कोवायुर्मत्प्रसादाद्वेत्तीत्यर्थः४२ संध्यामुपासीतेत्यादेःसंध्योपासनादिविधिलक्षणमर्थमंतरेणान्यमर्थंभगवान्कथंवेत्तीतितत्राह मामिति संध्यामुपासीतेत्यादिविधिलक्षणोवेदोमामुद्दिश्यविधत्तेसंध्यावंदनादेर्मद्विषयत्वात् ध्येयःसदासवितृमंडलमध्यवर्तीत्यादेःयदादित्यगतंतेजोजगद्भासयतेऽखिलमित्यादेश्च सत्यंज्ञानमनंतंब्रह्मे त्यादिसत्यत्वादिगुणवाचकोवेदः सत्यत्वादिगुणविशिष्टंमामभिधत्ते चत्वारिवागित्यादिषुवेदादिवाच्यत्वाद्वागाख्यंमांवागित्यनूद्यचत्वारीतिमांविविधंकल्पयित्वावासुदेवसंकर्षणादिरूपविशिष्टत्वेनध्येय इति नसुरांपिबेत्ब्राह्मणोनहंतव्यइत्याद्यपोहभागोसुरऐश्वर्यइतिधातोःसुराणामैश्वर्यादिमद्गुणानांपानंममस्यादितिविचिंतनं वेदैकवेद्यत्वेनब्राह्मणोविष्णुर्नास्तीतिचिंतनमित्यादिमदप्रियमपोह्यनिषिध्या त्मानमेवलोकमुपासीतेत्यादिमद्विषयोपासनंवेदतात्पर्यार्थइत्यस्याःश्रुतेःहृदयमेववेदोतिगतेनान्वयः । विधिभागेहरेःपूजैवाभिधानेचतद्गुणाः । विकल्पेतद्वहुत्वंचाप्यपोहेतुतदप्रियं । उच्यतेसर्ववेदेषुतत्त्वे

छंदोमयोमृतमयःसहस्रपदवींप्रभुः ॥ ओंकाराद्व्यंजितांस्पर्शस्वरोष्मांतस्थभूषिताम् ३९ विचित्रभाषावितताछंदोभिश्चतुरुत्तरैः ॥ अनंतपारांबृहतींसृजत्या क्षिपतेस्वयम् ४० गायत्र्युष्णिगनुष्टुप्चबृहतीपंक्तिरेवच ॥ त्रिष्टुब्जगत्यतिच्छंदोह्यत्यष्ट्यतिजगद्विराट् ४१ किंविधत्तेकिमाचष्टेकिमनूद्यविकल्पयेत् ॥ इत्यस्याहृदयंलोकेनान्योमद्वेदकश्चन ४२ मांविधत्तेभिधत्तेमांविकल्प्यापोह्यतेह्यहम् ४३ एतावान्सर्ववेदार्थःशब्दआस्थायमांभिदाम् ॥ मायामात्रमनूद्यांतेप्रतिषिध्यप्रशाम्यति ४४ ॥ इतिश्रीभागवतेमहा०एकादशस्कंधेएकविंशोध्यायः ॥ २१ ॥ उद्धवउवाच ॥ कतितत्त्वानिविश्वेशसंख्यातान्यृषि भिःप्रभो ॥ नवैकादशपंचत्रीण्यात्थत्वमिहशुश्रुम १

दत्तवहीतिवचनात् सुराहरेर्गुणाःप्रोक्तास्तेमेस्युरितिचिंतनं । सुरापानमितिप्रोक्तंतन्नकुर्यात्कथंचन । ब्राह्मणोविष्णुरुद्दिष्टःसनास्तीत्यभिचिंतनं। ब्रह्महत्यासमुद्दिष्टातांनकुर्यात्कथंचन। इत्याद्यपोहवाक्या र्थश्चित्योविष्णुर्बुधैर्जनैरितिवचनाच्च ४३ नकेवलंकतिपयवाक्यार्थःसर्ववेदार्थोप्येवमेवेतिभावेनोपसंहरति एतावानिति कदानुवेदस्यविश्रमइतितत्राह शब्दइति निर्दोषःशब्दोवेदः अभिदांमामास्थाय सर्वावतारेषुभेदरहितोविष्णुरितिप्रतिष्ठाप्यमायामात्रंमदिच्छोद्भूतदृष्टनिर्मितंशरीरादिकंबंधमनूद्यनिरूप्यतस्यप्रतिषेधार्थमुपासनादिकंविधायांतेमोक्षेज्ञानोदयेनजीवस्यशरीरादिकंप्रतिषिध्यप्रशाम्यति स्थिमितसमुद्रवत्स्वभावोपास्तिरूपेणातिष्ठतीत्यन्वयः नभिदायस्यसोभिदः अभिदश्चासावमश्चेत्यभिदाःतममिदां अइतिब्रह्मेति अनिषेधेपुमान्विष्णावितियादवः प्रपंचनिषेधोवेदस्यार्थोनेनोच्यतइतिमतं सर्वावताररूपेषुनिर्भेदत्वाददोषतः । अभेदोविष्णुरुद्दिष्टस्तमेवोक्तातदिच्छया । निर्मितंदैहिकंबंधंतस्योपासनयैवतु। प्रतिषिध्यविमोक्षेतुस्वभावोपास्तिरूपतः।प्रतिशाम्यतिवेदोयंवासुदेवैकसंश्रयइतिसमा रूपयानिरस्तामितिज्ञातव्यंविचात्मनिभिदावोधइतिभेदज्ञानस्याविद्यात्वोक्तेश्चेति ४४ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायाएकविंशोध्यायः ॥ २१ ॥ भगवत्सृष्टानांतत्त्वानांसं ख्यानंजीवस्यहरेश्चभेदंनिरूपयत्यास्मिन्नध्याये तत्रादौभगवदुपदेशाज्जाततत्त्वस्वरूपोप्युद्धवोऋषिभिरुक्तत्त्वानांबहुधासंख्यायमानत्वात् युक्तीर्ज्ञातुकामःपृच्छति कानीति त्वंनवेत्यादीनितत्त्वान्यात्थ वयंचशुश्रुम तत्रऋषिभिःसंख्यातानितान्येवउत्तराणि १

संशयनिमित्तमाह केचिदिति २ ऋषयस्तत्त्वानां संख्यानामेतावत्त्वं यद्विवक्षयाकयायुक्त्यापृथग्गायंतितनोस्माकमिदं सयुक्तिकंवक्तुमर्हसि ३ ऋषयइतिस्वयोक्तत्वात्सर्वेषुपक्षेषुयुक्तिशंकानकार्येत्या शयेनपरिहरति युक्तयइति यथाब्राह्मणावेदविचारकुशलाऋषयोभाषंते संक्षेपविस्ताराभ्यांवदंति तथासर्वेषुपक्षेषुयुक्तयः संतीत्यन्वयः स्वकपोलकल्पितत्वेनवदतांमतंप्रमाणंकथंस्यादितितत्राह मायामिति मदीयांमायांममसामर्थ्यमुद्गृह्यआलंब्यनानाविधंतत्त्वसंख्यांवदतांऋषीणांमतंकिंनुदुर्घटं किमनुपपन्नं सर्वंप्रामाणिकमेवेत्यर्थः विष्णोःसामर्थ्यमालंब्यतत्त्वसंख्यांमुनीश्वराः । चक्रुर्हि तदविज्ञायविवदंत्यल्पबुद्धयः। तत्रापिकारणंविष्णोःशक्तिर्यस्याविकारतः। अव्यक्तादेर्विकल्पोयंमनसःसंप्रजायते। विरुद्धकल्पनंतच्चवासुदेवैकनिष्ठया। निरहंकारयानश्येद्विवादैकाश्रयंहितादितिवाक्या च्छ्रीनारायणसामर्थ्यमेवमायोच्यते नानिर्वाच्याविद्येति ४ ननुप्रामाणिकंचेत्किमितिविप्रतिपद्यंतेइत्याशंक्यतन्मतत त्त्वापरिज्ञानादितिभावेनाह नैतदिति त्वंयथात्थ एतदेवंनभवति दुष्ट त्वादहंयद्वच्मितत्तथानिर्दोषत्वादिति तदविज्ञायविदंत्यल्पबुद्धयःइत्यत्रापिमच्छक्तिरेवहेतुरित्याह एवमिति तत्रापिकारणंविष्णोःशक्तिरिति ५ सत्वादिभेदेनयासामितिबहुवचनं यासांमच्छक्ती नांसकाशाज्जातादव्यक्तादितत्त्वानांव्यतिकराद्विकाराद्मनसोयोविकल्पःविरुद्धकल्पोमिथ्याज्ञानलक्षणः सएवाविवदतांविवदमानानांपदमाश्रयआसीत् तत्त्वसंख्याविवक्षाभेदेनबहुविधान्मनोविका राद्भवतीत्यर्थः यस्याविकारतः अव्यक्तादेर्विकल्पोयंमनसःसंप्रजायते। विरुद्धकल्पनमिति कदानुविकल्पोपशमइत्यत्राह प्राप्तइतिदमःइंद्रियनिग्रहःतद्वाराशमेप्राप्तेमन्निष्ठायांप्रवृद्धायांसविकल्पो

केचित्षड्विंशतिंप्राहुरपरेपंचविंशतिम् ॥ सप्तैकेनवषट्केचिच्चत्वार्येकादशापरे ॥ केचित्सप्तदशप्राहुःषोडशैकेत्रयोदश २ एतावत्त्वंहिसंख्यानमृषयोयद्विव क्षया ॥ गायंतिपृथगायुष्मन्निदंनोवक्तुमर्हसि ३ श्रीभगवानुवाच ॥ युक्तयःसंतिसर्वत्रभाषंतेब्राह्मणायथा ॥ मायांमदीयामुद्गृह्यवदतांकिंनुदुर्घटम् ४ नैतदेवं यथात्थत्वंयदहंवच्मितत्तथा ॥ एवंविवदतांहेतुःशक्तयोमेदुरत्ययाः ५ यासांव्यतिकरादासीद्विकल्पोवदतांपदम् ॥ प्राप्तेशमदमेऽप्येतिवादस्तमनुशाम्यति ६ परस्परानुप्रवेशात्तत्त्वानांपुरुषर्षभ ॥ पौर्वापर्यप्रसंख्यानंयथावक्तुर्विवक्षितम् ७ एकस्मिन्नपिदृश्यंतेप्रविष्टानीतराणिच ॥ पूर्वस्मिन्वापरस्मिन्वातत्त्वे तत्त्वानिसर्वशः ८ पौर्वापर्यमतोमीषांप्रसंख्यानमभीप्सताम् ॥ यथाविविक्तंयद्युक्तंगृह्णीमोयुक्तिसंभवात् ९ अनाद्यविद्यायुक्तस्यपुरुषस्यात्मवेदनम् ॥ स्वतोनसंभवेद्यस्मात्ततोन्यःपुरुषोभवेत् १०

व्येतिशनयाति ६ तमनुविकल्पनाशानंतरंविवादोपिशाम्यति तच्चवासुदेवैकनिष्ठयानिरहंकारयानश्येत्तविवादैकाश्रयंहितदिति ६ तत्त्वानामनेकविधसंख्यानेयुक्तिमाह परस्परानुप्रवेशादिति कार्य कारणरूपाणांतत्त्वानांपरस्परानुप्रवेशात् कारणेषुकार्यानुप्रवेशात्क्वचित्कार्येषुकारणानुप्रवेशात्अंतर्भावाच्चतथाप्रवेशेनपृथगेवावस्थनाच्च पौर्वापर्यप्रसंख्यानंन्यूनाधिकत्वेनतत्त्वानांगणनंवक्तुर्विवक्षि तंयथातथाक्रियतेपूर्वासंख्याअल्पाअपराबह्वीतत्संबंधित्वंपौर्वापर्यम् ७ एतदेवविवृणोति एकस्मिन्निति इतराणितत्त्वानिएकस्मिन्पूर्वस्मिन्कारणेतत्त्वेअपरस्मिन्कार्येतत्त्वेवाप्रविष्टानिदृश्यंतेपि यस्मात्तस्मादमीषांतत्त्वानांगणनमिच्छतांपौर्वापर्यंपूर्वापरसंबंधिमसंख्यानमपियुज्यतइत्यर्थःनन्विदमार्षमतंतवचित्तेंगीकार्यमुतनेतितत्राह यथेति ऋषिभिरुक्तमिदंयथावदेवविविक्तंपृथक्पृथक्स्पष्टं अ तएवयुक्तंचेति यद्यस्मात्तस्माद्गृह्णीमः हेतुंस्पष्टयति युक्तिसंभवादिति यद्युक्तंयथाविविक्तंतत्तथागृह्णीमःकुतोयुक्तिसंभवादितिवा ८ ९ तैरेवापिभिरप्यनाद्यविद्याबद्धादस्वतंत्राज्जीवात्सर्वथान्यःपरमेश्वरः स्वीकर्तव्यइतिभावेनाह अनादीतिअनादिकालंआरभ्याविद्याकामकर्मयुक्तपुरुषस्यपुराणिशरीराणिसरतोजीवस्यात्मवेदनंस्वस्वरूपाविर्भावलक्षणंज्ञानंतथात्मनःपरमात्मनोऽपरोक्षलक्षणंज्ञानंचस्वतःस्वश क्त्यानसंभवेदुक्तहेतोरितियस्माच्चस्मात्पुरुषःपूर्णषड्गुणोविष्णुस्ततोजीवादन्योभवेदित्यंगीकर्तव्यम् १०

अत्रेदमप्यनुसंधेयमित्याह पुरुषेति हृदिस्थितःवाजीवानांज्ञानोत्पादनात्पुरुषनाम्नोवाहिःस्थित्वाज्ञानफलमुक्तिदानादीश्वरनाम्नश्चाण्वपिवैलक्षण्यंनद्रष्टव्यं भेददर्शनेऽनर्थमाह तदन्येति तयो पुरुषेश्वरयो अन्यत्वकल्पनामेवदृष्टिलक्षणाअपार्था तत्स्वरूपादरगमनप्रयोजनानर्थकारिणीचेत्यर्थः ज्ञानात्मनोजीवस्यज्ञानोत्पादनंकथंघटतइतितत्राह ज्ञानंचेति प्रकृतेर्गुणः सत्वगुणजन्यं स्वरूपभूतंज्ञानंतुस दाजीवस्यविष्णुवा। नियतंप्राकृतंज्ञानंप्रकटंयातेनैवदीयतइतिवचनात् ११ जन्यज्ञानस्यप्राकृतत्वंसाधयति प्रकृतेरिति तुशब्दोविशेषद्योतकः प्रकृतेर्गुणसाम्यप्रलयेवर्तमानस्यआत्मनोजीवस्ययथा सत्वंरजस्तमइतिप्रकृतेर्गुणाआवरकानभवंतिईश्वरेच्छाविषयप्रवृत्तिशून्यत्वात् तदास्वरूपज्ञानादिगुणाअपिभवंति तथासृष्टिकालेजीवस्वरूपतेर्गुणैरावृतंभवति गुणानांवीर्यमाह स्थितीति १२ किया यातंअनेनप्रकृतइत्यत्राह सत्वमिति इहसृष्टिकालेसत्वंज्ञानंसत्वगुणजन्यं रजोगुणजन्यंकर्म तमोगुणजन्यमज्ञानमित्युच्यते प्रलयकालात्सृष्टिकालेऽयंविशेषइतिवाह्यज्ञानंप्राकृतमितिसिद्धं यद्वा प्रलयेतुसृ ष्टवपिप्रकृतेर्गुणाःआत्मनःपरमात्मनोनविशेषापादकाःकिंतुजीवस्यैव कथमत्राह सत्वमिति सत्वादयोजीवस्यवाह्यज्ञानादिविशेषजनकाइति अंतस्थःपुरुषोनामज्ञानदःसर्वदेहिनां । वहिस्थईश्वरो नामज्ञानादिफलदोहरिरितिवाक्यात् । पुरुषाख्योहृद्गतस्तुविष्णुर्जीवविवोधकः । फलदातातुवाह्येनयईशेनाभिदांवदेत् । तथैवान्यस्वरूपेषुविष्णोर्योभेददर्शकः । येचजीवेश्वराभेदंपश्यंतेनर्थभागिनइति वाक्याच्चपुरुषेश्वरावुक्तार्थाविनिसिद्धं इदानींऋषिभिरुक्ततत्त्वानांसंख्याभेदंवक्ष्यन्तत्त्वकारणस्वरूपंतावदाह गुणव्यतिकरइति सत्वादिगुणानांमहदाद्यात्मनाव्यतिकरोयस्मात्सभगवान् गुणव्यति

पुरुषेश्वरयोरत्रनवैलक्षण्यमण्वपि ॥ तदन्यकल्पनापार्थाज्ञानंचप्रकृतेर्गुणः ११ प्रकृतेर्गुणसाम्येतुप्रकृतेर्नात्मनोगुणाः ॥ सत्वंरजस्तमइतिस्थित्युत्प त्त्यंतहेतवः १२ सत्वंज्ञानंरजःकर्मतमोऽज्ञानमिहोच्यते ॥ गुणव्यतिकरःकालःस्वभावःसूत्रमेवच १३ पुरुषःप्रकृतिर्व्यक्तमहंकारोनभोनिलः ॥ ज्योतिरा पश्चक्षितिरितितत्त्वान्युक्तानिमेनव १४ श्रोत्रंत्वग्दर्शनंघ्राणोजिह्वेतिज्ञानशक्तयः ॥ वाक्पाण्युपस्थपाय्वंघ्रिकर्माण्यंगोभयंमनः १५ शब्दःस्पर्शोरसोगंधो रूपंचेत्यर्थजातयः ॥ गत्युक्त्युत्सर्गशिल्पानिकर्मायतनसिद्धयः १६ सर्गादौप्रकृतिर्ह्यस्यकार्यकारणरूपिणी ॥ सत्वादिभिर्गुणैर्धत्तेपुरुषोऽव्यक्तमीक्षते १७

करःकिंनामधेयइत्यतउक्तं कालइति कालकामधेनावितिधातोःसर्जनेनब्रह्मादीनामभीष्टदोग्धृत्वात्कालनामाइत्यर्थः अनेनकारणत्वानुपपत्तिरपिपरिहृतेतिज्ञायते कारणस्यनामांतरंचाह स्वभावइति स्वतंत्रोभावःस्वभावःस्वरूपभूतोभावोभूतिरैश्वर्ययस्यसतथाइतिवास्वाधीनोभावःसत्तायस्यसतथेतिवा स्वनियतोभावोजन्मादिलीलायस्यसतथेतिवा वायुनावैगौतमसूत्रेणेत्यादेर्वायोरेवसर्जना दिप्रतीतेःकथमयमेवसर्वकर्तेतितत्राह सूत्रमिति सूत्रंसर्वाधारः अक्षरमंबरांतधृतेरितिसूत्रादेतल्लिंगंभगवदेकनिष्ठमित्येवशब्देनावधारयतिचशब्देनयोदेवानामितिश्रुतेर्वायुशब्दःसावकाशइतिदर्शयति १३ नवैकादशपंचत्रीनित्यत्रनवतत्त्वानिवक्ति पुरुषइत्यादिना पुरुषोहिरण्यगर्भःप्रकृतिर्गायत्रीव्यक्तोरुद्रःअहंकारःस्कंदः यदापुरुषशब्देनविरिंचस्यैववाच्यता। परस्यपृथगुक्त्यैवव्यक्तस्तत्रतुशंकरः। तदा हंकारशब्देनस्कंदस्यैववचोभवेदितिवाक्यादयंनियमःप्रामाणिकइत्यर्थः १४ एकादशतत्त्वान्याह श्रोत्रमित्यादिना ज्ञानशक्तयःज्ञानेंद्रियाणिकर्माणिकर्मेंद्रियाणिउभयंसंकल्पविकल्पात्मकंमनः १५ एषांविषयानाह शब्देति अर्थजातयःविषयसामान्यानि अनेनपंचतत्त्वान्युक्तानि कर्मायतनसिद्धयःकर्मेंद्रियविषयाःपायूपस्थयोर्विषयावुत्सर्गशब्देनोक्तौ द्विविधत्वात्पंचकद्वयंपंचेत्यनेनद्विरावृत्तिर्ग्राह्या पंचपंचेति तथाचशब्दादिशिल्पांतानिदशतत्त्वानि १६ त्रीनितिसत्वादिगुणात्रीणितत्त्वानिइतिवक्तुंसत्त्वादिगुणप्रवृत्तिमाह सर्गादाविति अस्यजगतःसर्गादौउपादानकारणात्मकजडप्रकृत्यभिमानिनी चिद्प्रकृतिर्हिहरिरवाविभिमित्तकारणरूपिणीअंतर्नियंतृरूपेणप्रवेशात्कार्यरूपिणीचसत्वादिभिःश्रीभूर्दुर्गेतिरूपभेदेनसत्वादिगुणाभिमानिनीर्धत्तेजगदितिशेषः एवंचपुरुषादितमोगुणांतानिहरिणासहचतुस्त्रिंश

त्त्वानीतिभागवतंमतं परस्परानुप्रवेशादित्युक्तप्रुक्तंविवृणोति पुरुषइत्यादिना कालादिनाम्नाहरिणानुगृहीतःपुरुषनाम्नाहिरण्यगर्भःसृष्ट्यर्थमव्यक्तनाम्नीसरस्वतीमीक्षतेसंक्षोभ्यइतिमत्वाव्यक्तादित
त्वानिसरस्वतींनिमित्तीकृत्यसृजतीत्यर्थः १७ अतएवकार्यकारणरूपेणसृष्टाव्यक्तादयोधारणशीलत्वाद्धातुनामानस्तत्वविशेषाः पुरुषेक्षयापुरुषस्यहरेःकटाक्षगोचरत्वेन संहताःसंश्लिष्टाःप्रकृते
र्बलाद्विकुर्वाणाः लब्धवीर्याःकार्यकारणशक्त्यन्विताः अंडंब्रह्मांडंसृजंतीत्यन्वयः यद्वा जडप्रकृतिरस्यजगतःसर्गादौसत्त्वादिगुणैर्जगद्धत्ते पुरुषोविष्णुरव्यक्तंप्रकृतिमीक्षते तन्नियंताधातवोंडंसृजं
तीतिकार्यकारणभावादन्योन्यानुप्रवेशोयुक्तइतिवक्तुंसृष्टिकथनं सृज्यसृष्टिस्वरूपत्वादन्योन्यानुप्रवेशिनः। तिष्ठंतितात्विकादेवाविशेषप्रीतिकारणादितिवचनात् अतस्तत्वानामल्पसंख्यात्वंयुक्तं १८
तत्रसत्वादीन्गत्यादींश्चविनाहरिणासहिबानिषड्विंशतितत्वानि महदहंकारौब्रह्मरुद्रावंगीकृत्यस्कंदविनापरमात्मनासहपंचविंशतिः। व्यक्तिविनाचतुर्विंशतिरित्येतानि न्यूनसंख्याकतत्वानिसिद्धवत्कृ
त्यसप्तैकइत्यादिन्यूनसंख्यानिकथयति सप्तैवेति यत्रयस्मिन्पक्षेसप्तैवधातवस्तदैवंगणनंकर्तव्य शब्दाद्यर्थाःखादयश्चैकीकारंगताःपंचषष्ठोज्ञाननामाब्रह्मासप्तमउभयाधारः अभिमन्यमानाभिमा
निनांआधारःआत्मापरमात्माइतिसप्तत्वं ततःशब्देनज्ञानात्मनावनुकृष्येते दशेंद्रियाण्येकीकृत्यैकंतत्वमसवःपंचप्राणाः देहइति देहाभिमानीदिवाकरः ज्ञानात्मानावितिनवतत्वानि ज्ञानशब्दो
दितोब्रह्मातदाधारोहरिःस्मृतइति सर्वदेहाभिमानीतुदेहिनांतुदिवाकरइतिच इंद्रियात्मेंद्रएवैकःप्राणोनामप्रजापतिरितिचदेहप्राणौपंचेंद्रियाणिवा ज्ञानात्मभ्यांनवेतिवा यद्वा वागादीनामनोधीन

व्यक्तादयोविकुर्वाणाधातवःपुरुषेक्षया ॥ लब्धवीर्याःसृजंत्यंडंसंहताःप्रकृतेर्बलात् १८ सप्तैवधातवइतियत्रार्थाःपंचखादयः ॥ ज्ञानमात्मोभयाधारस्त
तोदेहेंद्रियासवः १९ षडित्यत्रापिभूतानिपंचषष्ठःपरःपुमान् ॥ तैर्युक्तआत्मसंभूतैःसृष्ट्वेदंसमुपाविशत् २० चत्वार्येवेतितत्रापितेजआपोन्नमात्मनः ॥
जातानितैरिदंजातंजन्मावयविनःखलु २१ संख्यानेसप्तदशकेभूतमात्रेंद्रियाणिच ॥ पंचपंचैकमनसाआत्मासप्तदशःस्मृतः २२ तद्वत्षोडशसंख्यानेआ
त्मैवमनउच्यते ॥ भूतेंद्रियाणिपंचैवमनआत्मात्रयोदश २३ इतिनानाप्रसंख्यानंतत्वानामृषिभिःकृतम् ॥ सर्वंन्याय्यंयुक्तिमत्वाद्विदुषांकिमशोभनम्
२४ उद्धवउवाच ॥ प्रकृतिःपुरुषश्चोभौयद्यप्यात्मविलक्षणौ ॥ अन्योन्यापाश्रयात्कृष्णदृश्यतेनाभिदातयोः २५

त्वेनमनसैकत्वंपंचश्रोत्रादींद्रियाणिदेहप्राणौपरमात्मनासहेतिनव १९ षडित्यत्रैवंसंख्यानं महदादिकारणानांकार्यानुप्रवेशेनपंचाकाशादिभूतानिपरमपुरुषःषष्ठइतिषट् नवसप्तत्रयोदश
त्वेकेषांचित्कार्याणांकारणानुप्रवेशइतिज्ञेयं आत्मनःसंभूतैस्तैराकाशादिपंचभूतैर्युक्तःआत्माइदंसृष्ट्वासमुपाविशत् २० चत्वार्येवेति तानिकानीत्यत्राह तत्रापीति तत्रापिपंचस्व
प्यात्मनोजातानितेजआपोन्नमितित्रीणिआत्मैकइतिचत्वारि अन्नंपृथिवी अवयविनइदजन्मतैः तेजआदिभिर्जातंव्यक्तंखलुअवयवीदेहः २१ सप्तदशसंख्यानेत्वेवंगणनंपंचभूतानिपंचमात्राः
पंचश्रोत्रादींद्रियाणिइतिपंचदशएकेनमनसासहआत्मापरमात्मासप्तदशइतिसप्तदशकं भूतमात्रेत्यनेनैकादशतत्वसंख्यानमपिज्ञेयं पंचभूतानिपंचमात्राश्चैकःपरमात्मेति । भूतानिमात्राश्चपरस्तत्त्वै
कादशकंस्मृतमिति २२ षोडशसंख्यानितत्वानितद्वत्भूतमात्रेंद्रियाणिपंचपंचेत्युक्तवत् तर्हिपूर्वस्मात्कोविशेषइत्यतउक्तं आत्मनेति आत्मनःसान्निधिस्थत्वान्मनसस्तयोरेकत्वेन आत्मनःस
न्निधिस्थत्वान्मनसस्तुतदुक्तितः । उक्तोभवेत्तदात्मातुतत्वंषोडशकंपदेत्युक्तेः एवशब्दोवीप्साद्योतकःभूतानिपंचेंद्रियाणिपंचमनआत्माब्रह्मापरमात्माचेति त्रयोदशतत्वानि भूतेंद्रियाणिचमनाब्रह्मा
विष्णुस्तथैवच । एवंत्रयोदशैवाहुस्तत्वानिमुनयोवराइति आत्मेतिपरमात्माचाविरिंचश्चापिकथ्यते । वायुर्मनश्चदेहश्चस्वयमित्यपिकुत्राचिदिति २३ उपसंहरति इतीति २४ उद्धवएवतत्त्वसंख्या
विषयानुपपत्तिशंकापरिहारश्रवणेनतद्विषयेनिःशंकोपीदानींप्रकारांतरेणशंकते प्रकृतिरिति अत्रपुरुषोविष्णुःप्रकृतिर्जडसज्ञातावुभौयद्यप्यात्मविलक्षणौस्वरूपतएवभिन्नौ अतएवचाभिदाचेतिवैलक्षण्यं

प्रकीर्तितमिति अतोवैलक्षण्यंभेदःतथाप्यनयोरन्योन्यापाश्रयात्भिदानदृश्यतेतत्कुतइतिचोद्याभिप्रायः २५ अन्योन्यापाश्रयत्वंविवृणोति प्रकृताविति हिशब्दोहेतौ हरेःप्रकृतेराधारत्वेनतत्व
उत्तमत्वंप्रकृतेस्तदधीनत्वेनतत्परत्वमंतरेणानयोरन्योन्याधारत्वमेवदृश्यते हियस्मात्तस्मान्मंदमतेर्मेसंशयंछेत्तुमर्हसीत्यन्वय पद्मेशेत्यनेनहरेःप्रकृत्युत्तमत्वंत्वंवक्तव्यमितिजानन्नप्युद्धवोलोकविषयमं
दमतित्वमात्मन्युपचरतीतिज्ञ.तव्यम् २६ एतदेवप्रामाणिकमितिभावेनाह त्वत्तइति तनुशक्तितोऽल्पबुद्धित्वात्तामसादिशरीरबलाद्वाज्ञानस्यप्रमोषोपित्वत्तः शक्तिःकासूर्बलंलक्ष्मीरिति कामुर्बुद्धौकुवा
च्यस्त्वित्यभिधानाच्छक्तिशब्देनबुद्धिरित्युच्यते आत्ममायायाःस्वसामर्थ्यस्यत्वदधीनप्रकृतेर्वागतिस्थिति आधारःप्रकृतेर्विष्णुर्नाधारस्तुहरेःक्वचित् । तथाप्यव्यक्तगोयद्दृश्यतेमदचेतसामितिपाद्मोक्तव
चनात्प्रकृत्याधारत्वंहरेरितरत्रमंदमतिविवक्षयेतिहिशब्दद्वयेनदर्शयति २७ आत्मविलक्षणावितियत्त्वदुक्तंतत्तथैवेतिभावेनपरिहरति प्रकृतिरिति चशब्दोवैलक्षण्यानुकर्षार्थोऽवधारणार्थश्च प्रकृतिपुरुषा
वन्योन्यविलक्षणावेवेत्यर्थःवैलक्षण्याविवेकःकिंकृतइतितत्राह विकल्पइति मिथ्याज्ञानकृतः ननुविकल्पःकिंकारणकइतितत्राह एषइति एषविकल्पःतमःकारणकइतिप्रतिज्ञायते तथाहि
गुणव्यतिकरात्मकएषसर्गोवैकारिकःविकारनिमित्तःसचगुणव्यतिकरस्त्रिविधः सत्वरजस्तमसामेकैकप्राधान्येनत्रैविध्यं तत्रतमःप्रधानानामेवसत्वानाविरुद्धकल्पनंयस्मात्तस्मात्तमएवकारणम् २८
नकेवलंतमएवप्रकृतिरीश्वरेच्छाचकारणमित्याह ममेति अंगउद्धव मममायाममेच्छागुणमयीज्ञानादिगुणमयी सत्वादिगुणमयी मममायामदधीनाप्रकृतिश्च गुणैर्गुणभूतैर्महदहंकारादिभिः

प्रकृतौलक्ष्यतेह्यात्माप्रकृतिश्चतथात्मनि ॥ एतन्मेपुंडरीकाक्षमहांतंसंशयंहृदि ॥ छेत्तुमर्हसिपद्मेशवचोभिस्तत्त्वनैपुणैः २६ त्वत्तोज्ञानांहिजीवानांप्रमोष
स्तनुशक्तितः ॥ त्वमेवह्यात्ममायायागतिंवेत्थनचापरः २७ श्रीभगवानुवाच ॥ प्रकृतिःपुरुषश्चेतिविकल्पःपुरुषर्षभ ॥ एषवैकारिकःसर्गोगुणव्यति
करात्मकः २८ ममांगमायागुणमय्यनेकधाविकल्पबुद्धिचगुणैर्विधत्ते ॥ वैकारिकस्त्रिविधोध्यात्ममेकमथाधिदैवमधिभूतमन्यत् २९ दृग्रूपमर्कश्चपरत्ररं
ध्रेपरस्परंसिध्यतिनस्वतोसौ ॥ आत्मायदेषामुपरामआद्यःस्वयानुभूत्याखिलसिद्धसिद्धिः ३०

सत्वादिगुणैर्वानेकधाविकल्पबुद्धिंविधत्तेकरोति महत्तत्त्वविकाराज्जातत्वाद्वैकारिकोहंकारस्त्रिविधः महत्तत्त्वाद्विकुर्वाणादहंतत्वमजायतइत्यादिनाप्रसिद्धं वैकारिकोमहांश्चैवतथाहंकारएवच । त
थैवसात्विकश्चांशोवैकारिकइतित्रिधेतिच सोपांत्रिविधोपित्रिविधः अध्यात्मादिभेदेन २९ एतत्त्रैविध्यंदृग्ग्राहिकपैवदर्शयति दृग्रूपमिति रंध्रेगोलके दृक्चक्षुरिंद्रियंतदध्यात्ममुपलक्षण
मेतत् अध्यात्ममिंद्रियाणितैजसाहंकारस्वरूपाणि तैरेवविपरीतज्ञानंजायते अहंकारेविद्यमानेभ्रमोभवतिनान्यदेतिवचनात् परत्रदेहाद्बहिर्यद्रूपंतदधिभूतम् तामसंपरत्रादेवियोर्कस्तदधिदैवतं
वैकारिकं अनेनकिंप्रयोजनमत्राह परस्परमिति अध्यात्मादिगतचक्षुरादीतरेतरापेक्षयासिद्ध्यति ज्ञानाख्यंप्रयोजनंभवति असौसिद्धिःस्वतोन एकैकस्मादस्यात् चक्षुराद्यन्यतमाभावेज्ञानं
नोदेतीत्यर्थः नैतावतापरस्परासिद्धिःपूर्यतइत्याह आत्मेति यदात्माप्रपत्नोजडाहंकारोवास्तितदाप्यिदंवैकारिकंज्ञानं । प्रकृतिप्राकृतव्यतिरिक्तंजीवपरमात्मस्वरूपकदानुविशदंदृश्यतइत्यत्राह ए
षामिति आत्मेत्यनुवर्तते यदैषांप्रकृतिप्राकृतानाउपरामःअत्यंतोच्छेदनलक्षणामुक्तिस्तदास्वयानुभूत्यास्वरूपज्ञानेनात्माजीवआद्यःआत्मापरमात्माचज्ञायतइतिशेषः कीदृशोहरिरखिलस्यसिद्ध्यसि
द्धीज्ञानाज्ञानेयस्मात्सतथा सर्वस्यज्ञानाज्ञानहेतुरित्यर्थः सम्यक्ज्ञानंहरेःशक्त्यातन्मुक्तस्यविशेषतः । देवतानुग्रहोनित्योमुक्तस्यापिह्यपेक्ष्यते । नित्यंतत्प्रतिबिंबत्वाज्जीवानामेवकृत्स्नशः । बाह्यज्ञा
नंचमुक्तस्यनजडाहंकृतेःक्वचित् । किंतुस्वरूपशक्त्यैवदेवेभ्यश्चाभिजायत इतिवचनात् ३०

उक्तव्याप्यमतिदिशति एवमिति चक्षुर्जिह्वादिनासहत्वगादिश्रवणादिचैवमध्यात्मादिभेदेनत्रिविधंसादिचानित्यमन्योन्यापेक्षत्वात् कीदृशंत्वगादि चित्तयुक्तं अनेनचित्तंमनोपित्रिविधमितिज्ञातते चयु रितिपुनर्वचनमवधारणार्थम् ३१ तामसाहंकारोपिविकल्पहेतुरितिसूचितंपुरस्ताच्चेदिदानींस्पष्टयति योसाविति योसौमोहाविकल्पहेतुरज्ञानान्यथाज्ञानहेतुर्विकारःसत्वादिगुणक्षोभोमहत्तत्वंतेनकृतःसो हमहंकारस्त्रिवृत्त्रिरूपत्वेनवर्तते त्रिःप्रकारमाह वैकारिकइति वैकारिकस्तामसऐंद्रियइंद्रियोत्पत्तिहेतुः तैजसश्चेति प्रयोजनमाह जगतइति जगतःप्रसूतिःसृष्टिर्यस्मात्सतथा जगत्सृष्टिहेतुरित्यर्थः अनेनप्रकृतेःकारणत्वंगतमत्राह प्रधानेति प्रधानंप्रकृतिर्मूलंमहत्तत्वद्वाराकारणंयस्यसतथा ३२ महदादिकार्यानुगतस्यहरेरपिगुणक्षोभकृतोविकारःस्यादितितत्राह आत्मेतिआत्मापरमा त्मागुणक्षोभकृतविकारवान्नपरिज्ञानमयत्वात् पूर्णज्ञानस्वरूपत्वात्विकाराभिमानित्वमंतरेणज्ञानस्वरूपत्वेनआत्माजीवोपिनगुणक्षोभकृतविकारइति विकल्पस्वरूपमाह विवादइति जीवेश्वराभे दंजगन्मिथ्यात्वादिकमसदस्ति जीवेश्वरभेदप्रपंचादिकंसन्नास्तीतिभिदयावस्तुयाथार्थ्यादिविपर्ययेणार्थनिष्ठःपदार्थनिष्ठोविवादोविकल्पोभवति केषामित्यतउक्तंव्यर्थइति सविकल्पोव्यर्थोप्यविच मानविषयोपितथानिष्प्रयोजनोपिस्वलोकात्स्वाश्रयात्त्वत्तःपरावृत्तधियामपगतबुद्धीनांपुंसांनोपरमेतपुनःपुनर्वर्द्धतइत्यर्थः असदस्तिचसन्नास्तीत्येवंभेदाद्विवादनं। सदैवहरिपादाब्जविमुखानांप्रवर्तते इतिमानहिशब्दगृहीतम् ३३ त्वद्विमुखानांस्वकृतकर्ममूढानामेषांपुनर्भवोस्तीतिसिद्धं तत्रनित्यानांजीवानांजन्ममृतीकीदृश्यौकर्मांतरकारणंचकिमितिपृच्छत्युद्धवः । त्वत्तइति त्वत्तःपरावृत्तधियः

एवंत्वगादिश्रवणादिचक्षुर्जिह्वादिनासादिचचित्तयुक्तम् ३१ योसौगुणक्षोभकृतोविकारःप्रधानमूलोजगतःप्रसूतिः ॥ अहंत्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामसऐंद्रियश्च ३२ आत्मापरिज्ञानमयोविवादोह्यस्तीतिनास्तीतिभिदार्थनिष्ठः ॥ व्यर्थोपिनैवोपरमेतपुंसांमत्तःपरावृत्तधियांस्वलोकात् ३३ उद्धवउवाच ॥ त्वत्तःपरावृत्तधियःस्वकृतैःकर्मभिःप्रभो ॥ उच्चावचान्यथादेहान्गृह्णंतिविसृजंतिच ३४ तन्ममाख्याहिगोविंददुर्विभाव्यमनात्मभिः ॥ नह्येतत्प्रायशोलोकेविद्वांसःसंतिवंचिताः ३५ श्रीभगवानुवाच ॥ मनःकर्ममयंनृणामिंद्रियैःपंचभिर्युतम् ॥ लोकाल्लोकंप्रयात्यन्यमात्मातदनुवर्तते ३६ ध्यायन्मनोहिविषयान्दृष्टान्वानुश्रुतानथ ॥ उद्यत्सीदत्कर्मतंत्रंस्मृतिस्तदनुशाम्यति ३७ विषयाभिनिवेशेननात्मानंयत्स्मरेत्पुनः ॥ जंतोर्वैकस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः ३८

स्वतोनित्याजीवाअहंजातोहंमृतइत्यभिमानेनस्वकृतैः कर्मभिर्यथोच्चावचान्देहान्गृह्णंतिविसृजंतिच ३४ तद्ग्रहणादिकंतथाममाख्याहि बुद्धिबलविधुरैर्दुर्ज्ञेयंचेदपिबुद्धिमद्भ्यःश्रोतुंशक्यत्वा त्किमितिममाख्येयमितिनिर्बंधइतितत्राह नहीति प्रायशःसंतिनावगच्छंतिनजानंतीत्यर्थः अंचुगतिपूजनयोरितिधातुः गतिर्ज्ञानार्थः वंचितामोहितास्त्वयेतिशेषः ३५ नित्यानांजीवानांदेहग्रहणादौ कारणंकर्मइतरन्मनोपीत्याशयवान्परिहरति मनइति मरणकालेकर्ममयंकर्मसंस्कारोपचितंलिंगात्मकंसूक्ष्मैःपंचभिरिंद्रियैर्युतंमनोलोकाद्देहादन्यंलोकंदेहंप्रयाति तदात्माजीवः । तन्मनोनुवर्तते कर्मेश्वर स्तन्मयंतत्प्रधानंतयोरितामितिवाअनादितःप्रकृतिमयेनतेनबद्धत्वात्तदनुवर्तनंयुक्तम् ३६ मनःप्रधानःपुरुषोनुवर्ततइत्यनेनमनसःप्रयोजकत्वंप्रतीयतेतत्कथमत्राह ध्यायन्निति मनोदृष्टानथवाश्रुतान्विषया न्ध्यायन्स्यादितिहियस्मात्तस्मात्पुरुषप्रवृत्तौमनःप्रयोजकमितिशेषः । इतोपिमनःप्रयोजकमित्याह अथेति अथयदाकर्मतंत्रंविषयसंस्कारसमुद्भवंमनःसीदाद्विपन्नमात्मनोदेहादुद्गतंभवति तदातदनुम नोनुजीवस्यस्मृतिरर्थस्मरणंशाम्यतिनश्यति देहांतराभिमानपर्यंतमितिशेषः ३७ मरणमेवस्पष्टयति विषयेति कस्यचित्कर्महेतोरुत्तरदेहंप्रवेक्ष्यन्विषयाभिनिवेशेनउत्तरदेहाभिनिवेशेनजंतोर्मनआत्मा नंपूर्वदेहंनस्मरेत्स्मरणसमर्थंनस्यादितियत् सात्यंतविस्मृतिर्मृत्युरित्यन्वयः वाइत्यनेनजातस्यहिध्रुवोमृत्युरितिस्मृतिप्रसिद्धिंद्योतयति ३८

इदानींजन्मस्पष्टयति जन्मेति पुंसोदेहादिष्वहंममेदमित्याद्यात्मतयात्मीयत्वेनसर्वभावेनसर्वचेष्टयासमस्ताभिप्रायेणविषयस्वीकृतिंदेहाभिमानंजन्मप्राहुरित्यन्वयः देहादिस्वयंस्वकीयश्चनभवतिपरमात्माधी नत्वादितितुशब्देनविशेषितेर्थेउदाहरति यथेति जाग्रदिदमित्ययंस्वप्नोयथाअविद्यमानोयथाचमनोरथविषयोप्यविद्यमानोनत्वनिर्वचनीयः परस्यापिजीवस्यातोजन्ममृतियुक्तेइतिभावः स्वाप्नइतिपाठे स्वप्नेजायमानोजाग्रच्चमत्यपायोयथाअविद्यमानइत्यर्थः ३९ अत्यंतविस्मृतिंसोदाहरणंस्पष्टयति स्वप्नमिति यथास्वप्नादेरुत्थितःस्वप्नस्पष्टंमनोरथंचप्राक्तनमर्थंतद्विषयंचासौस्वप्नादिद्रष्टानस्मरतितथातत्रदे हांतराभिमानेसतिपूर्वंपुरातनमात्मानं देहंनस्मरति इवशब्दःकेषांचिन्महात्मनांस्मरणंसंभवतीत्यस्मिन्नर्थे अस्मरणेकारणमाह अपूर्वमितिचशब्दएवार्थेअपूर्वंपश्चात्तनंनूतनंदेहमेवानुपश्यति यत्तदिति यद्वा विषयाभिनिवेशमेवस्पष्टयति स्वप्नमिति प्राक्तनंस्वप्नंमनोरथंचयथानस्मरति असौतथाप्राक्तनजन्माद्यनुभूतमर्थंविषयंचनस्मरति किंतत्रनिमित्तमत्राह तत्रेति तत्रदेहांतरप्राप्तौपूर्वमनादिमेवात्मानंअपूर्वंसा दिमिवानुपश्यतिइतियस्मात्तस्माद्विषयाभिनिवेशएवकारणमित्यर्थः ४० अत्रजीवस्यानादिनित्यत्वंदेहस्यसादित्वेनानित्यत्वंतत्राभिमानानभिमानलक्षणेजन्ममृतीइत्युक्तं तत्रजीवस्यानादिनित्यत्वेयुक्ति मुक्तंतदेवकथमत्राह ईदृशेति वस्तुनिजीवतत्त्वेविज्ञायविचारेणज्ञातेसति जीवस्यानादिनित्यत्वंज्ञायते तथाहि ईदृशःइदानींतनकालवर्त्येवायास्यतीत्यायएष्यत्कालवर्तीचायमेवसःअतीतकाल संबंधइतित्रैविध्यंजीवस्यत्रिकालवर्तित्वमाति तदेवानादिनित्यत्वंदेहस्यतदभावादतोयुक्तमुक्तं ईदृशायासइत्यत्रयासइतिदीर्घस्यलोपोवक्तव्यः क्षैप्रेदीर्घलोपइति यत्ज्ञानमंतरेणपुरुषार्थोनस्यात्तत्राक्षि प्रमेयत्वंनीयामितिज्ञापनायप्रयुक्तदीर्घोलुप्यतइतिसूत्रादत्रातइतिप्रयोगाच्च अनित्यशरीरसंबंधेनजीवस्याप्यानित्यत्वमापद्यतइतितत्राह बहिरिति बहिर्नारिकेलकपालवत् बहिष्ठोदेहोजीवाद्भिन्नोनारिकेल

**जन्मत्वात्मतयापुंसःसर्वभावेनभूरिद ॥ विषयस्वीकृतिंप्राहुर्यथास्वप्नमनोरथः ३९ स्वप्नंमनोरथंचार्थंप्राक्तनंनस्मरत्यसौ ॥ तत्रपूर्वमिवात्मानमपूर्वं चानुपश्यति ४० ईदृशायासविज्ञायत्रैविध्यंभातिवस्तुनि ॥ बहिरंतर्भिदाहेतुर्जनोसज्जनकृद्यथा ४१ नित्यदाह्यंगभूतानिभवंतिनभवंतिच ॥ कालेना लक्ष्यवेगेनसूक्ष्मत्वात्तन्नदृश्यते ४२ यथार्चिषांस्रोतसांचफलानांवावनस्पतेः ॥ तथैवसर्वभूतानांवयोवस्थाचतत्कृता ४३**

वदंतःस्वांतर्वर्तिनोजीवस्यभिदायाअनित्यत्वादिविशेषस्याहेतुः आपादकोनभवति भेदोविशेषदलनइत्यभिधानं जीवस्यानादिनित्यत्वेपरमात्मनाअभेदःप्राप्तइत्यतोवाह बहिरिति बहिरंतर्वर्तिनोहरे र्भिदायाहेतवोदुःखादयोयस्यसबहिरंतर्भिदाहेतुः अस्तुहरेर्भेदोजीवस्यदेहाद्भेदःकथमित्यतोवाह बहिरिति अयमेवबहिरंतस्थत्वधर्मःआत्मानात्मनोर्वैलक्षण्येभिदाहेतुर्विशेषहेतुरित्यर्थः देहस्यानात्म त्वंसोदाहरणमाह जनइति यथाअसज्जनोऽसज्जनकृत्मायोसज्जनोसज्जनंपुत्रमेवजनयतीतिपितृज्ञानात्पुत्रदौरात्म्यंज्ञायते एवमनित्योदेहोनित्यंदेहंजनयतीति अतोदेहस्यानित्यत्वाज्जीवस्यत्रैकालिकव र्तित्वेनानित्यत्वात् देहस्यानात्मत्वमतएवजीवाद्भिन्नत्वंचासिद्धं असाधुजनएवजीवपरयोरभेदंवक्तीतिसोदाहरणमाह जनइति यथाऽसाधुजनएवासाधुजनंकरोतिनसाधुःएवमासुरोजनोपिसतंभेदमसंतंकरो तिअतोऽसाधुजनपरंपरादौरात्म्यंसाधुजनवाक्याज्ज्ञायतइत्यर्थः ४१ देहस्यानित्यत्वप्रकारमाह नित्यदेति नित्यदाप्रतिक्षणंभूतानिजीवाधिष्ठितदेहाअंशतोभवंत्युपचितानिभवंतिनभवंतिच अपचि तानिभवंतिच किमितिनदृश्यतेइतितत्राह कालेनेति उपचयापचययोःसूक्ष्मत्वाल्लिंगवेद्यत्वाच्चक्षुषातन्नदृश्यते ४२ तदेवसोदाहरणंवक्ति यथेति यथार्चिरादीनांसेयज्वालेत्यादिप्रतीतिः कालकृ तावयासर्वभूतानांसर्वप्राणिदेहानांवयोवस्थाबाल्यकौमाराद्यवस्थातेनकालेनकृता ४३

---

१ महाव्याकरणमिदसूत्रं । २ संहितत्याउच्चारणकालेउच्चार्यमाणोदीर्घः पदकालेलुप्यतइत्यत्रप्रयोगंदर्शयति अत्रातइति अत्रातआहुःपरमंजरित्रमित्यत्र अत्रतेआहुः परमंजारेश्वमितिपदच्छेदात् ।

नन्वस्तुकालकृततत्वमत्रविवेकःकथमित्यत्रउक्तमेवविवृणोति सोयमिति यथाप्रतिक्षणमग्निज्वालादीनामागमविगमभाववत्सोयंदीपइतिप्रत्यभिज्ञानंमृषेति नञोध्याहारः सएवायं दीपइत्यादिप्रत्यभिज्ञामृषा तथामृषागीर्भिर्मृषा पुषांपुंसांकेषांचिद्विशेषाणामागमात् केषांचिदपगमात् सएवायंपुमानितिदेहविषयोव्यवहारोमृषाविवेकिनासचायंदेहइत्यादिकोनमृषा सचायमितितुज्ञानंनमृषायंसएवतुइतिज्ञानंमृषैवस्यादित्यादेर्विशेषविवेकोयुज्यते ४४ ननुदेहस्यैवविकारश्चेदहंजातोहमृतइतिप्रतीतिः कथमत्राह आद्यइति आद्यउत्पत्तिरहितोमरोमरणरहितः आद्यंतशून्यइत्यर्थः अव्ययःशरीरसयोगवियोगयोरपि वृद्धिक्षयादिरहितःसजीवः स्वकृतकर्मबीजेनजायतेम्रियतेचेतिव्यवहारोभ्रांत्याविवेकज्ञानराहित्येनयथादारुसंयुक्तोग्निरुत्पत्तिविनाशवानित्युच्यते तस्मान्नित्यस्यजीवस्यजननमरणप्रतीतिरविवेककृतेत्यर्थः सचायमितितुज्ञानंनमृषायंसएवतु। इतिज्ञानंमृषैवस्याद्भेदाभेदौयतस्तनोः। अभेदएवजीवस्यनित्यंप्रत्येकशःपृथक्। देहदीपनदीवारिफलादीनापृथक्कतः। भेदाभेदौपरिज्ञेयौकार्यकारणयोरपि। गुणस्यगुणिनश्चैवजातिव्यक्त्योस्तथैवच। तथावयव्यवयवयोःक्रियायास्तद्वतस्तथा। एवंजडेषुनियमश्चिद्रूपेष्वभिदैवतु। येधर्मानियमेनैवधर्मिणोनवियोगिनः। जडस्थाअप्यभिन्नास्तेभिन्नाभिन्नावियोगिनइतिवचनात् यावद्द्रव्यभाविनामभेदोयावद्द्रव्यभाविनाभेदाभेदावितिनिर्णयइति ४५ जन्मादिकंजीवस्यनैवेत्युक्त्यादेहस्यासिद्धंद्रढयति निषेकेति ४६ चिद्रूपस्यजीवस्यजडशरीरसबंधःकथंघटतइतितत्राह एताइति अन्यस्यहरेरधीनामनोरथमयीरेतास्तनूःसत्त्वादिगुणसंगादुपादत्तेअभिमनुते अभिमानंजहातिच हरेरिच्छागुणसंगश्चवटकइत्यर्थः ४७ अभिमानस्वीकारोजन्मतदत्यंतविस्मृतिर्मरणमित्यु

सोयंदीपोर्चिषांयद्वत्स्रोतसांतदिदंजलम् ॥ सोयंपुमानितिनृणांमृषागीर्धीर्मृषायुषाम् ४४ आद्यःस्वकर्मबीजेनजायतेसोप्ययःपुमान् ॥ म्रियतेचामरोभ्रांत्यायथाग्निर्दारुसंयुतः ४५ निषेकगर्भजन्मानिबाल्यकौमारयौवनम् ॥ वयोमध्यंजरामृत्युरित्यवस्थास्तनोर्नव ४६ एतामनोरथमयीर्ह्यन्यस्योच्चावचास्तनूः ॥ गुणसंगादुपादत्तेक्वचित्कश्चिज्जहातिच ४७ आत्मनःपितृपुत्राभ्यामनुमेयौभवाप्ययौ ॥ भवाप्ययौहिवस्तूनामभिज्ञाद्वयलक्षणौ ४८ तरोर्बीजविकाराभ्यांयोविद्वान्जन्मसंयमौ ॥ तरोर्विलक्षणोद्रष्टाएवंद्रष्टातनोःपृथक् ४९

क्तंतद्द्वयंनिष्प्रमाणकत्वेनमायामयंकिंनस्यादत्राह आत्मनइति आत्मनोदेहस्यभवाप्ययौजन्मनाशौपितृपुत्राभ्यांलिंगाभ्यांअनुमेयौ तथाहिस्वदेहात्पुत्रदेहोजातः यत्तस्माज्जन्मसिद्धंयथाचपितृशरीरंविनष्टंपुत्रेणदृष्टंयत्तस्मात्तदपिप्रत्यक्षंसिद्धमेवंदेहस्यजननमरणेसिद्धेइतिभावः ननुतर्हिदेहस्यविद्यमानेजातोमृतइतिचेतनविषयत्वेनकथंव्यपदिश्यतइतितत्राह भवाप्ययाविति वस्तूनांनित्यानांजीवानांजातोहंमृतोहमितिव्यपदिश्यमानौभवाप्ययौअभिज्ञाद्वयलक्षणौअभिज्ञाद्वयंजातोमृतइतिअभिमानद्वयमेवलक्षणंययोस्तौ तथाहियस्मात्तस्माद्व्यपदेशइतिभावः ४८अभिमानमात्रसमर्थनेनकिंप्रयोजनमित्याशंक्यअभिमानपरित्यागेनैवसंयमलक्षणोर्थइतिभावेनाह तरोरिति यस्तरोर्जन्मसंयमौबीजविकाराभ्यांबीजाद्विकाराच्चविद्वान्जानाति यथातेनविदुषातद्वर्तःस्थितआत्मातन्नियामकः परमात्माचतरोर्विलक्षणोद्रष्टः एवंदेहस्यजन्मसंयमौद्रष्टाजीवःतन्नियामकःसर्वज्ञःपरमात्माचतनोःपृथक्भिन्नइत्यर्थः अनेनतरोर्बीजविकारदृष्टांतेनविद्वान्देहाभिमानंत्यक्त्वासंयमंयाति सर्वस्माद्धरेर्भेदं जानातीत्युक्तमत्रकिंप्रमाणमित्यतोवाह तरोरिति विद्वद्दर्शनंमानमित्यर्थः योबीजविकाराभ्याजन्मसंयमौविद्वास्तरोरवस्थागतस्तरोर्विलक्षणोयथादृष्टएवंदेहस्यजन्मादेर्द्रष्टाजीवाच्छरीराद्भिन्नइतिस्वानुभवसिद्धमुक्तमितिभावः बीजाद्यवस्थासंयुक्ताद्वृक्षाद्द्रष्टायथापृथक्। एवंविकारिणोविष्णुर्जीवश्चपृथगेवहीतिवचनात् ४९

१ सोयमितिश्लोकेसोयंपुमानितिदेहविषयकप्रत्यभिज्ञायाःभ्रांतित्वमुच्यतेतदनुपपन्नं तथात्वेदेहस्यक्षणिकत्वापत्तेरितिशंकानिरासकत्वेनप्रवृत्ततात्पर्यानुरोधेनप्रत्यभिज्ञाद्वयंप्रदर्श्ययोजयति। तथाचप्रत्यभिज्ञासावधारणानिरवधारणाचेतिद्विविधा। आद्याभ्रमरूपा। जडेभेदाभेदसद्भावात्। द्वितीयाभेदाविरोधित्वात्प्रमैव २ तथाचायंप्रयोगःमदीयोदेहःउत्पत्तिमान्पुत्रदेहत्वात्म पुत्रदेहवत्। मदीयोदेहःविनाशवान्पितृदेहत्वान्मत्पितृदेहवत्इति।

विकारिणोर्देहाज्जीवपरमात्मादिभेदेनज्ञानंमुक्तिसाधनंतदभेदज्ञानंसंसारकारणमित्याह प्रकृतेरिति प्रकृतेर्देहादेरात्मानंजीवंपरमात्मानंचतत्त्वेनाविविच्यसम्यक्भिन्नमज्ञात्वाअतएवाबुधः पुमान्संसारंप्रतिपद्यते अज्ञानेनिमित्तमाह स्पर्शेति स्पर्शाविषयास्तत्रासक्तत्वान्मूढः ५० संसारतारतम्यमपिसत्वादिगुणनिमित्तमित्याह सत्त्वसंगादिति सत्वसंगात्सात्विकसंगलब्धपुण्यकर्मणाऋष्यादीन्प्राप्नोति रजसाराजसकर्मणाआसुरमानुषानासुरादिकंप्राप्नोति तामसकर्मणाब्रह्मराक्षसादिभूततिर्यग्योनित्वमाप्नोति ५१ स्वतःसात्विकानांसुरादीनांदुःखित्वमितरेषांसुखित्वमित्यादिविपरीतानुभवःकथमत्राह नृत्यतइति यथालोकेनर्तनादिकुर्वतःपश्यन्स्वयचतान्पुरुषाननुकरोति नृत्यादिकरोति एवमनीहोपिदुःखाद्यनुभवायोग्योपिबुद्धिगुणान्दुःखादीन्पश्यन्ननुभवन्नहंदुःखीत्यादिममत्वेनानुकार्यनेहारिणेतिशेषः दुःखशोकादयःसर्वेप्रबुद्धिगुणाइति । सुखज्ञानेतुजीवस्यशक्तिस्नेहस्तथैवच । विपर्ययेणासुराणांजीवबुद्धिगुणामताः । आत्मनोपिगुणाबुद्धिकृताबुद्धिगुणाइति । उच्यंतेसुखदुःखाद्याःपरमात्मकृताइति ।इतिवचनात् ५२ स्वतःसुखादिरूपाणांचितनानांदुःखादिरूपत्वप्रत्ययोभ्रांतइत्येवंबहुदृष्टांतैःसमर्थ्यते यथेत्यादिना यथाप्रचलताजलेनतीरस्थास्तरवोपिचलाश्चलनधर्मवंतइवदृश्यंते यथाचभ्राम्यमाणेचक्षुषाभूर्भ्राम्यतीवदृश्यते ५३ यथाचमनोरथधियोमनोरथविषयाःमृषावृथा यथाचस्वप्नदृष्टोविषयानुभवोपिमृषा हेदाशार्हउद्धव आत्मनोजीवस्यसंसारोपिवृथाअल्पप्रयोजनः अल्पप्रयोजनं

प्रकृतेरेवमात्मानमविविच्याबुधःपुमान् ॥ तत्त्वेनस्पर्शसंमूढःसंसारंप्रतिपद्यते ५० सत्वसंगादृषीन्देवान्रजसासुरमानुषान् ॥ तमसाभूततिर्यक्त्वंभ्रामितोयातिकर्मभिः ५१ नृत्यतोगायतःपश्यन्यथैवानुकरोतितान् ॥ एवंबुद्धिगुणान्पश्यन्ननीहोप्यनुकार्यते ५२ यथांभसाप्रचलतातरवोपिचलाइव ॥ चक्षुषाभ्राम्यमाणेनदृश्यतेभ्राम्यतीवभूः ५३ यथामनोरथधियोविषयानुभवोमृषा ॥ स्वप्नदृष्टश्चदाशार्हतथासंसारआत्मनः ५४ अर्थेह्यविद्यमानेपिसंसृतिर्ननिवर्तते ॥ ध्यायतोविषयान्पुंसःस्वप्नेप्यर्थागमोयथा ५५ तस्मादुद्धवमाभुंक्ष्वविषयानसदिंद्रियैः ॥ आत्माग्रहणनिर्भातंपश्यन्वैकल्पिकंभ्रमम् ५६ क्षिप्तोवमानितोसद्भिःप्रलब्धःशापितोपिवा ॥ ताडितःसन्निरुद्धोवावृत्त्यावापरिहापितः ५७ निष्ठितोमूत्रितोवाज्ञैर्बहुधैवंप्रकंपितः ॥ श्रेयस्कामःकृच्छ्रगतआत्मनात्मानमुद्धरेत् ५८ उद्धवउवाच ॥ यथैवमनुबुध्येयंवदनोवदतांवर ॥ सुदुःसहमहंमन्येआत्मन्यसदतिक्रमम् ५९

यत्तन्मृषेत्येवतदुच्यते ।इतिवचनात् ५४ अस्वरूपत्वेकिमितिननिवर्ततइतितत्राह अर्थइति अर्थेदुःखित्वादिलक्षणेविषयेअविद्यमानेपिसंसृतिःसंसृष्टदुःखित्वादिप्रत्ययोननिवर्ततेकिंतुवर्ततएव अनिवृत्तौनिमित्तमाह ध्यायतइति निरंतरंशब्दादिविषयध्यानमनिवृत्तौकारणमित्यर्थःतत्कुत्रदृष्टमत्राह स्वप्नइति ध्यायतइत्यनुवर्ततेजाग्रद्दृष्टतुरगाद्यर्थध्यानात्स्वप्नेप्यर्थागमस्तुरगाद्यर्थागमोयथाननिवर्ततेउपादानादिव्यवहारानुभवात् अत्रयथांभसेत्यादिदृष्टांतानांप्रपंचमिथ्यात्वेनतात्पर्यं किंतुदेहसंबंधात्सुखरूपाणांजीवानां अहंदुःखीत्यादिप्रत्ययस्य यथास्वतःशुक्लःशंखोपिजपाकुसुमसन्निधानाल्लोहितइतिशंखविषयेलोहित्यप्रत्ययस्यमिथ्यात्वंइष्टंतथात्रापीतिसंतोष्टव्यम् ५५ फलितमाह तस्मादिति आत्मनोजीवपरमात्मनोःस्वरूपाग्रहणेननिष्पन्नंवैकल्पिकंविरुद्धकल्पनाजनितंभ्रमंपश्यन् ५६ दुःसहविषयोपद्रवेपितत्परिहारप्रयत्नोनकार्यःकिंतु विषयेभ्यःप्रत्याहृतमनसास्वात्मानसंसारादुद्धर्तुंप्रयतेतेतिशिक्षयति क्षिप्तइत्यादिना ५७ ५८ विषयाःसोढव्याइतियद्धरिणोक्तंतत्रोद्धवश्चोदयति यथेति यथावत्स्पष्टीकुरु हेतवचरणालयान्वरणैकशरणान्तेइतरेषांविदुषामप्यसतामात्मन्यतिक्रमंदुःसहंमन्ये तत्रहेतुगर्भविशेषणमाह प्रकृतिरिति प्रकृतिर्बलीयसीहि अहममेतिदेहाभिमानस्वभावोबलिष्ठोऽपरिहार्यःपरमात्तस्मादितिशेषः ५९

६०॥इतिश्रीभागवतेमहापुराणेएकादशस्कंधेवि०क०टी०द्वाविंशोध्यायः॥२२॥भक्तिमंतरेणसर्वसंन्यासोदुःखहेतुरितरःसुखहेतुरित्येतस्मिन्नध्यायेसमर्थ्यते तपृष्ट.कृष्णः उद्धवःकिमाहेतिराज्ञोमानसींशं कांपरिहराति सएवमिति आशंसितःप्रष्टुमीशमभिवदनायाकांक्षाकारितः १ किमाहेतितत्राह बाह्येति अत्रजीवराशौबाह्यांतर्भंजनः बाह्यात.शत्रुशोपकरःसाधुर्वैसाधुश्चेत्यभिमनश्चसज्जनोवादुर्जनोवारैर्न दुरुक्तैर्भिन्नमात्मानंमनःसमाधातुमीश्वरःसमर्थःयद्वा योदुरुक्तैर्भिन्नमात्मानंसमाधातुमीश्वरःससाधुःसज्जनोवैकुतःबाह्यांतर्भजनोहीति २ ३ अत्रश्रीकृष्णःसुवचोयायेतिहासंवक्ति कथयंतीति इदन्तत्पृष्टे ४ विपाकंफलनिष्पत्तिं ५ वार्त्तावृत्तिःकुसीदादिवैश्यजीवनोपायवान्कदर्यःदारिद्र्यभावेनोपेत.कामीपरवित्तस्पृहावान् ६ लुब्धत्वेहेतुमाह ज्ञातयइति अत्रकेमुत्यमाह शून्येति निजधनजातमन्यत्रनिधा यस्वबंधनशून्यगृहेतिष्ठन्आत्मास्वयंकामैःकाम्यैरशनादिभि ७ पुत्रादिभिरपिकृतप्रियेणभवतिकिमुतान्यैरितिभावेनाह दुःशीलस्येति ८ नकेवलंकुपिताःपुत्रादयःप्रियंनचेरुःपंचयज्ञभागभुजोदेवाश्च

विदुषामपिविश्वात्मन्प्रकृतिर्हिबलीयसी ॥ ऋतेत्वद्धर्मनिरताञ्छांतांस्तेचरणालयान् ६० ॥ इतिश्रीभागवतेमहा०एकादशस्कंधेद्वाविंशोध्यायः ॥ २२ ॥
श्रीशुकउवाच ॥ सएवमाशंसितउद्धवेनभागवतमुख्येनदशार्हवर्यः ॥ सभाजयन्भृत्यवचोमुकुंदस्तमाबभाषेश्रवणीयवीर्यः १ श्रीभगवानुवाच ॥
बाह्यांतर्भंजनोह्यत्रसाधुर्वैदुर्जनेरितैः ॥ दुरुक्तैर्भिन्नमात्मानंयःसमाधातुमीश्वरः २ नतथातप्यतेविद्धःपुमान्बाणैर्हिमर्मगैः ॥ यथातुदंतिमर्मस्थाअस तांपरुषेषवः ३ कथयंतिमहापुण्यमितिहासमिहोद्धव ॥ तमहंवर्णयिष्यामिनिबोधसुसमाहितः ४ केनचिद्भिक्षुणागीतंपरिभूतेनदुर्जनैः ॥ स्मर ताधृतियुक्तेनविपाकंनिजकर्मणः ५ अवंतिषुद्विजःकश्चिदासीदाढ्यतमःश्रिया ॥ वार्तावृत्तिःकदर्यस्तुकामीलुब्धोतिकोपनः ६ ज्ञातयोतिथय स्तस्यवाङ्मात्रेणाप्यनर्चिताः ॥ शून्यावसथआत्मापिकालेकामैरनर्चितः ७ दुःशीलस्यकदर्यस्यद्रुह्यतःपुत्रबांधवाः ॥ दारादुहितरोभृत्याविषण्णाना चरन्प्रियम् ८ तस्यैवंयक्षवित्तस्यच्युतस्योभयलोकतः ॥ धर्मकामविहीनस्यचुक्रुधुःपंचभागिनः ९ तदवध्यानविस्रस्तपुण्यस्कंधस्यभूरिद ॥ अर्थोप्यगच्छन्निधनंबह्वायासपरिश्रमः १० ज्ञातयोजगृहुःकिंचित्किंचिद्दस्यवउद्धव ॥ दैवतःकालतःकिंचिद्ब्रह्मबंधोर्नृपार्थिवात् ११ सएवंद्रविणेनष्टेध र्मकामविवर्जितः ॥ उपेक्षितश्चस्वजनैश्चिंतामापदुरत्ययाम् १२ तस्यैवंध्यायतोदीर्घंनष्टरायस्तपस्विनः ॥ खिद्यतोबाष्पकंठस्यनिर्वेदःसुमहानभूत् १३ सचाहेदमहोकष्टंवृथात्मामेनुतापितः ॥ नधर्मायनकामाययस्यार्थायासईदृशः १४ प्रायेणार्थाःकदर्याणांनसुखायकदाचन ॥ इहचात्मोपतापा यमृतस्यनरकायच १५ यशोयशस्विनांशुद्धंश्लाघ्यायेगुणिनांगुणाः ॥ लोभःस्वल्पोपितान्हंतिश्वित्रोरूपमिवेप्सितम् १६

पीतिवक्ति तस्येति यस्यार्थेयक्षवित्तस्यरक्षवित्तवदनुपभोगवित्तस्य ९ ततःकिमभूदत्राह तदवध्यानेति तदवध्यानेनतेषांदेवानांअवज्ञाजातकोपेनविस्रस्तःक्रमेणविनष्टः पुण्यस्कंधः पुण्यसमूहो यस्यसतथातस्य । पुण्यस्कंधःपुण्यलक्षणभुजःशिरोवा विस्रस्तंशिथिलबंधनंवा सुकृतनाशबलमाह अर्थइति १० नाशप्रकारमाह ज्ञातयइति नृपार्थिवात्नृराजात् ११ योग्य स्यधननाशोवैराग्यहेतुरित्याशयेनाह सइति १२ तपस्विनःसंतापवतः १३ निर्वेदप्रकारमाह सचेति आत्मादेहोयस्यमे १४ नसुखायेत्युक्तंस्पष्टयति इहचेति १५ अर्थलोभेपि यशआदिगुणसर्वस्वहानिकरइत्याह यशइति श्वित्रःश्वेतकुष्ठम् १६

आत्मोपतापंपायेत्युक्तंकिंवृणोति अर्थस्यसाधनेइति साधनेआयासः सिद्धेसाधितेउत्कर्षेरक्षणेचत्रासःचिंते व्ययेचचिंता नाशेत्रासःउपभोगेचभ्रमोबुद्धिभ्रंशः पिशाचावेशेनेतिशेषः १७ किंच इदंदक्ष्य माणंवित्तस्यानेककारणंभवतीतिभावेनाह स्तेयमिति स्मयोऽहंकारःमदोदर्पःभेदोद्वैधीभावःराजादिभ्योव्यसनानिविविधनिरसनानि १८ ततःकिंकर्तव्यमत्राह तस्मादिति १९ अर्थःकथंद्वैधीभावंकरोतीतिचेत्ताह भिद्यंतइति भिद्यतेदीर्यंते भाणिमात्रमपिप्रतिपक्षीभवतीत्याह एकयेति २० संतुशत्रवस्तेकिंकुर्वंतीतितत्राह अर्थेनेति हिरण्यर्थंवधारणार्थोवा २१ जन्मांतरैर्देवादिजन्मविशेषैरपिप्राप्यमानुष्यलब्ध्वातत्रद्विजात्वपत्नालब्ध्वातद्विजात्वपत्वमनादृत्यपेर्थार्जनादिकर्मणासर्वशुभंघ्नंतितेअशुभागतिंगच्छंति २२ इदमेवविशिनष्टि स्वर्गेति तस्माद्देवामानुष्यंप्रार्थयंतेइत्यतोवाह स्वर्गेति धामनिवासस्थानेलोकेशरीरं २३ कथमनर्थयामत्वंवित्तस्येत्याशंक्यपोग्येभ्योऽप्रदानेनाधःपातहेतुत्वादित्याह देवेति भागिनःअंशभागयोग्यानुद्दिश्यात्मानंपततिपातयति २४ वित्तवयोबलैःकुशलसाधन

अर्थस्यसाधनेसिद्धउत्कर्षेरक्षणेव्यये ॥ नाशोपभोगआयासस्त्रासश्चिंताभ्रमोनृणाम् १७ स्तेयंहिंसानृतंदंभःकामःक्रोधःस्मयोमदः ॥ भेदोवैरमविश्वासःसंस्पर्धाव्यसनानिच १८ एतेपंचदशानर्थाह्यर्थमूलामतानृणाम् ॥ तस्मादनर्थमर्थाख्यंश्रेयोर्थीदूरतस्त्यजेत् १९ भिद्यंतेभ्रातरोदाराःपितरःसुहृदस्तथा ॥ एकयार्थच्छयासद्यःसर्वेचाप्यरयःकृताः २० अर्थेनाल्पीयसाह्येतेसंरब्धादीप्तमन्यवः ॥ त्यजंत्यसून्त्रथाघ्नंतिसहसोत्सृज्यसौहृदम् २१ लब्ध्वाजन्मांतरैःप्रार्थ्यंमानुष्यंतद्द्विजाग्र्यताम् ॥ तदनादृत्ययेस्वार्थंघ्नंतियांत्यशुभांगतिम् २२ स्वर्गापवर्गयोर्द्वारंप्राप्यलोकमिमंपुमान् ॥ द्रविणेकोनुषज्जेतमर्त्योनर्थस्यधामनि २३ देवर्षिपितृभूतानिज्ञातीनन्यांश्चभागिनः ॥ असंविभज्यचात्मानंयक्षवित्तःपतत्यधः २४ व्यर्थयार्थेहयावित्तंप्रमत्तस्यवयोबलम् ॥ कुशलायनसिध्यंतिजरठःकिंनुसाधयेत् २५ तस्मात्संक्लिश्यतेऽविद्वान्व्यर्थयार्थेहयासकृत् ॥ कस्यचिन्माययानूनंलोकोयंसुविमोहितः २६ किंधनैर्धनदैर्वाकिंकामैर्वाकामदैरुत ॥ मृत्युनाग्रस्यमानस्यकर्मभिर्वोतजन्मदैः २७ नूनंमेभगवांस्तुष्टःसर्वदेवमयोहरिः ॥ येननीतोदशामेतांनिर्वेदश्चात्मनःप्लवः २८ सोहंकालावशेषेणशोषयिष्येंगमात्मनः ॥ अप्रमत्तोखिलार्थेषुयदिस्यात्सिद्धआत्मनि २९

स्यशक्यत्वादधःपातःकथमत्राह व्यर्थयेति व्यर्थयार्थेहयाऐहिकामुष्मिकार्थंप्रमत्तस्ययस्यवित्तादीनिकुशलायनसिध्यंतिसाधनानिनभवंति सजरठःजरसंगतःकिंनुसाधयेत् नाकिमपि २५ निगमयति तस्मादिति अविद्वान्संक्लेशेकारगमनुमिनोति कस्यचिदिति चिच्छब्दएवार्थे अथकस्यपरमानंदरूपस्यहरेर्मायययैवसामर्थ्येनैवविषयसुखेविमोहितइतितर्कयामि कस्यचिल्लोकविलक्षणस्येतिवा २६ एवंतर्कयतस्तस्यपरमात्मप्रसादायत्तंवैराग्यस्थैर्यंवक्ति किंधनैरिति मृत्युनाकालेन २७ अत्रहेतुमाह येनेति एतादृशाविरक्तिलक्षणानीतइतियेनतेनहेतुनायेनहरिणाप्रसन्नेनेतिवा कीदृशोनिर्वेदस्तत्राह निर्वेदइति आत्मनःसंसारनदीतरणप्लवःतरीरूपः २८ निर्वेदस्यांकिंलक्षणमित्यतःसंन्यासइति तन्निश्चयंवक्ति सोहमिति शेषेणकिंसाध्यमत्राह यदीति यदियेनशोषणेनसंन्यासलक्षणेननिर्वेदसाध्येनतपसात्मनिपरमात्मविषयेसिद्धःज्ञानीस्यांतादृशमंगशोषणंकरिष्यामीत्यर्थः २९

---

१ द्वैधीभावः। २ स्त्रीद्यूतमद्यविषयाणिर्त्राणिएवचपंचदशेत्यर्थः ।

   

नवदंभवचनमित्याह तत्रेति अल्पेनकिंसाध्यमितिनमंतव्यमित्याह मुहूर्तेनेति ३० विरज्यानेनकिमकारीत्यत्राह इतीति हृदयग्रंथिंमनोबंधम् ३१ अलक्षितःअज्ञातः ३२ ३३ त्रिवेणुदंडंचीराणिजीर्णवस्त्राणि ३४ दर्शितानिप्रदायपुनराददुः ३५ आचयंतिवादयंति ३६ ३७ ३८ ३९ दौर्वादंयंतिदुर्वचनंकारयंति ४० ४१ किमकरोदेवंपरिभूतइतितत्राह परिभूतइति सात्विकींस्वाभाविकीं ४२ कीदृशींगाथामगायतेतितत्राह नायमिति अयंजनःपरितोवर्तमानःतर्हिकिंदेवादयइतितत्राह नदेवतेति देवतादेवाःआत्मादेहः ग्रहाःआदित्यादयःतर्हिकिंकारणमत्राह मनइति यत्संसारचक्रंपरिवर्तयेत्तन्मनःपरंकारणमामनंतीत्यन्वयः ४३ मनसःकारणत्वंविवृणोति मनइति प्राकृतंलिंगशरीररूपंप्रलयेसूक्ष्मरूपेणस्थितंमनःसृष्टिकालेगुणानात्मनिसृजते वै सात्विकादिभेदेनत्रिविधंबाह्यावयवोपचितंभवतीत्यर्थः अतएवबलीयः कार्यकारणसमर्थंततस्तस्माच्चमनसःसात्विकादिभेदेनत्रिविधानिविलक्षणानिकर्माणिभवंति विलक्षणानीत्युक्तंविवृणोति शुक्लानीति तेभ्यःकर्मभ्यःसवर्णाःशुक्लादिवर्णयोग्याःगतयोभवंतिअनेनसर्व

तत्रमामनुमोदेरन्देवास्त्रिभुवनेश्वराः ॥ मुहूर्तेनब्रह्मलोकंखट्वांगःसमसाधयत् ३० श्रीभगवानुवाच ॥ इत्यभिप्रेत्यमनसाह्यावंत्योद्विजसत्तमः ॥ उन्मुच्यहृदयग्रंथिंशांतोभिक्षुरभून्मुनिः ३१ सचचारमहीमेतांसंयतात्मेंद्रियानिलः ॥ भिक्षार्थंनगरग्रामानसंगोऽलक्षितोविशत् ३२ तंवैप्रवयसंभिक्षुमवधूतमसज्जनाः ॥ दृष्ट्वापर्यभवन्भद्रबह्वीभिःपरिभूतिभिः ३३ केचित्त्रिवेणुंजगृहुरेकेपात्रंकमंडलुम् ॥ पीठंचैकेक्षसूत्रंचकंथांचीराणिकेचन ३४ प्रदायचपुनस्तानिदर्शितान्याददुर्मुनेः ॥ अन्नंचभैक्षसंपन्नंभुंजानस्यसरित्तटे ३५ मूत्रयंतिचपापिष्ठानिष्ठीवंत्यस्यमूर्धनि ॥ यतवाचंवाचयंतिताडयंतिनवक्तिचेत् ३६ तर्जयंत्यपरेवाग्भिस्तेनोयमितिवादिनः ॥ बध्नंतिरज्ज्वातंकेचिद्बध्यतांबध्यतामिति ३७ क्षिपंत्येकेवजानंतएषधर्मध्वजःशठः ॥ क्षीणवित्तइमांवृत्तिमग्रहीत्स्वजनोज्झितः ३८ अहोएषमहासारोधृतिमान्गिरिराडिव ॥ मौनेनसाधयत्यर्थंबकवद्दृढनिश्चयः ३९ इत्येकेविहसंत्येनमेकेदौर्वादयंतिच ॥ तंवबंधुर्निरुरुधुर्यथाक्रीडनकंद्विजम् ४० एवंसभौतिकंदुःखंदैविकंदैहिकंचयत् ॥ भोक्तव्यमात्मनोदिष्टंप्राप्तंप्राप्तमबुध्यत ४१ परिभूतइमांगाथामगायतनराधमैः ॥ पातयद्भिःस्वधर्मस्थोधृतिमास्थायसात्विकीम् ४२ भिक्षुरुवाच ॥ नायंजनोमेसुखदुःखहेतुर्नदेवतात्माग्रहकर्मकालाः ॥ मनःपरंकारणमामनंतिसंसारचक्रंपरिवर्तयेद्यत् ४३ मनोगुणान्वैसृजतेबलीयस्ततश्चकर्माणिविलक्षणानि ॥ शुक्लानिकृष्णान्यथलोहितानितेभ्यःसवर्णागतयोभवंति ४४ अनीहआत्मामनसःसमीहितंहिरण्मयोमत्सखउद्विचष्टे ॥ मनःस्वलिंगंपरिगृह्यकामान्जुषन्निबद्धोगुणसंगतोऽसौ ४५

स्यसुखादीनांपरंकारणंमनइत्यवगतम् ४४ ननुमनसःपरमकारणत्वंविवक्षितंचेत्परमात्मनःकारणत्वमपहस्तितंस्यादितितत्राह अनीहइति आत्मापरमात्मामनसःसमीहितंसंसारावृत्तिहेतुभूतंकर्मउद्विचष्टेउत्कृष्टसाक्षित्वेनपश्यतिकीदृशः अनीहःमनोवत् क्लिष्टकारीनभवतीत्यनेनहरेःप्रशस्तकर्तृत्वंज्ञायते साक्षित्वेनदेहांतवर्तमानस्यदुःखादिकंस्यादित्यतउक्तंहिरण्मयइति पूर्णस्वरूपानंदःस्वस्यदुःखाभावेहेतुमाह मत्सखइतिपूर्णानंदोहरिर्मत्सखोतियस्मात्तस्मात्परेषांदुःखकारणंमनइतिभावः अचेतनत्वेनस्वतःप्रवृत्त्यनुपपन्नस्यमनसःकारणत्वंकथमत्राह मनइति असौनिबद्धोदेहाभिमानीजीवः स्वलिंगंलिंगशरीररूपंमनःपरिगृह्यगुणसंगतःविषयस्नेहतःकामान्विषयान्जुषन्नास्तइति विषयानुरक्तचेतनानुगृहीतस्याचेतनस्यापिमनसःकारणत्वंयुक्तमितिभावः नह्यमनाःपुमांस्तिष्ठतीतिश्रुतेःमनसःसंसारकारणत्वमुक्तं तत्रकिंप्रमाणमित्यतोवाह अनीहइति परमात्मनोदर्शनंप्रेरणंचप्रमाणम् ४५

एवंविधसंसारनिवृत्तौकउपायइत्यतस्तस्यमनसोनिग्रहएवेत्याह दानमिति मनोनिग्रहलक्षणांताःमनोवशीकरणस्वरूपानिर्णयाः कुतइत्यत्राह परइति ४६ मनःसमाधानस्यपरमयोगत्वमुपपादय ति समाहितमिति यस्यमनःसमाहितंपरमात्मध्यानयोगयुक्तंतस्यदानादिभिःकिंकर्तव्यंवद यस्यमनोदानादिभिरसंयतंविनश्येच्चेदेभिर्दानादिभिरपरंसाध्यंकिंनाकिमपि ४७ ननुतर्हिमनःसमयनंक र्तव्यंतच्चाशक्यंकिमित्याशंक्यस्वतंत्रत्वान्नशक्यमितिभावेनाह मनइति ब्रह्मश्रीविष्णुभ्योन्येदेवामनोवशेभवंति तत्रगुणभूतस्यमनसःपुरुषबंधकत्वप्रकारःकथमित्यतोवाह मनइति हिशब्देन ऋते ब्रह्मर्षीकस्यमनोप्रातिवशंकाचित् । श्रियंसरस्वतींचापियातिवातत्प्रसादतइतिवाक्यंप्रमाणयति विष्ण्वादींश्चतुरोविनाअन्यस्यवशंनयांति कुतोत्राह भीमइति सहसःसहनशक्तिमतः सहीयानतिशाये नसहनशक्तिमान् भीमोरुद्रस्तन्मनइतिविद्वन्मतं ततःकिमत्राह नेति विष्ण्वादीन्विनान्यःकश्चित्तन्मनोनात्याविशत्नातिक्रांतवान् तत्रहेतुः सहिदेवदेवः सभीमोदेवस्यसात्विकमनसोदेवोभि मानीयस्मात्तस्मात् ४८ रुद्रेणाभिमन्यमानंवैकारिकमपिमनोद्विविधंसात्विकंतामसमिति प्रथमंविष्ण्वादिदेवताप्रसादेनजय्यंद्वितीयंविष्णुप्रसादंविनादुर्जयं। विष्णुवध्यकालनेमिनाभिमतत्वात् । अतोमित्रै र्मर्त्यैःसहविग्रहोऽसतांभवतीत्याशयेनाह तमिति । अयमक्षरार्थःअत्रजीवराशौकेचिद्विमूढास्तामसाःपूर्वापरादिदिग्नभिज्ञास्तत्तयोर्मनसोस्तंतामसमनोलक्षणंशत्रुंसुखविरोधिनंनविजित्यमित्रैर्मर्त्यैरसद्विग्र हंकुर्वंति । कीदृशंशत्रुं दुर्जयंदुष्टेनपापिनाकालनेमिनाजितत्वाद्वशीकृतत्वाज्जेतुमशक्यत्वात् । अतएवासह्यवेगवायुवन्मुष्टिग्रहणायोग्यमरुंतुदंक्षतनिहितलवणवत्दुःखकरं अनेनशत्रुशब्दोपिविवृतः ।

**दानंस्वधर्मोनियमोयमश्चश्रुतानिकर्माणिचसद्व्रतानि ॥ सर्वेमनोनिग्रहलक्षणांताःपरोहियोगोमनसःसमाधिः ४६ समाहितंयस्यमनःप्रशांतंदानादिभिः किंवदतस्यकृत्यम् ॥ असंयतंयस्यमनोविनश्येद्दानादिभिश्चेदपरंकिमेभिः ४७ मनोवशेन्येह्यभवंतिदेवामनश्चनान्यस्यवशंसमेति ॥ भीमोहिदेवःसह सःसहीयान्नाव्याविशत्तत्सहिदेवदेवः ४८ तंदुर्जयंशत्रुमसह्यवेगमरुंतुदंतन्नविजित्यकेचित् ॥ कुर्वंत्यसद्विग्रहमत्रमर्त्यैर्मित्रैरुदासीनरिपुंविमूढाः ४९ देहंमनोमात्रमिदंगृहीत्वाममाहमित्यंधधियोमनुष्याः ॥ एषोहमन्योयमितिभ्रमेणदुरंतपारेतमसिभ्रमंति ५०**

विष्णुप्रसादेनजय्यइत्याह । उदासीनेति । विष्णुभक्तादुदासीनानांरिपुंनतुभक्तयातदुपास्तौपतमानानामित्यर्थः । मस्तुतसात्विकंमनोविहायतामसमनःपरामर्शः कथंयुज्यतइतीयमाशंका एकस्थाना धिपत्येतुभिन्नानामपियुज्यते । अभेदेनपरामर्शःसादृश्येचापिवस्तुनोरित्यनेनापिपरिहर्तव्या । यद्वा तन्मनस्तंतमोभिमानिनंकालनेमिनंनविजित्यमित्रैरसद्विग्रहंकुर्वंति कीदृशंतंशत्रुं । अनेनश त्रुमजित्वामित्रकलहोबालकलहवत्परिहासहेतुरित्युक्तंभवति ४९ दुष्टाभिमानबलोपचितशक्तितामसमनोनिर्मितदेहाभिमानमात्रेणैवोत्पन्नमिथ्याज्ञानेनजीवस्यनित्यनिरयप्राप्तिहेतुत्वात्सएवजेतव्यइ तिभावेनाह देहमिति । इदमित्यव्ययं मनोमात्रंमनसानिर्माणमुपगतंदेहंगृहीत्वाममेदमहमितिस्वातंत्र्यभ्रमेणएषदेहोहमित्यनात्मनः आत्मभ्रमेणान्योदेहोयमित्यपिभ्रमेणाहमन्यइतिआत्मनोऽ नात्मभ्रमेणमिथ्याज्ञानेनांधधियोस्तंगतयथार्थज्ञानामनुष्याःदुरंतपारेतमसिपतित्वाभ्रमंतिपुनःपुनर्दुःखसमुद्रएवमग्नावर्ततइत्यतोबुद्धिमतातज्जयेएवप्रयतितव्यमितिभावः देहमात्रंस्वमात्मानंयःपरं चप्रपश्यति । अंधेतमसिमग्नस्यनोत्थानंतस्यकुत्रचिदितिवचनान्मिथ्याज्ञानिनामंधंतमोनियतमितिज्ञायते ५०

१ भीमोरुद्रः व्योमकेशोभवोभीमइत्यभिधानात् । २ सहसःवायोःसकाशात् तदनुग्रहेणेतियावत् । देवस्यभर्गःसहसोयतोजनीतिश्रुतौसहःशब्दस्यवायौप्रयोगदर्शनात् ।

सर्वमनसःसुखदुःखकारणत्वमुक्तंतत्रतर्हितरयप्रतीयमानंसुखदुःखकारणत्वं अभिमाननिमित्तमेवेतिजानतास्वकृतंभुंजानेनपुरुषेणसोढव्यं तत्रकोपोनकार्यइत्याह जनइत्यादिनाग्रंथेन । अस्यजीवस्यसुखदुःखयो.र्हेतुर्जनःपरदेहश्चेद्यदितर्हिअत्रदेहेवर्तमानस्यदेहव्यतिरिक्तस्यात्मनोनिर्मुक्तकपालनारिकेलवत्स्थितस्यकिंस्यान्नकिमपिदुःखंस्यात्तर्हिकस्यतदत्राह हीति । तद्दुःखंविवेकेनाविचारितेसतिभौमयोःपृथिवीकार्ययोस्ताड्यताडकयोरेवहियस्मात्तस्माच्चदात्मनोभिमानकृतंदुःखमितिजानन्नेषामध्येकतमायकुप्येदित्यन्वयः । तत्रोदाहरणंजिह्वामिति । स्वदांद्भिःस्वदंतैःतस्याजिह्वायावेदनायांसत्यामनेनदेहस्याचेतनत्वेनाभिमानजन्यंदुःखमित्युक्तंभवति । जनशब्दःस्वतोजीवेक्वचिद्देहेचवर्तते । इतिवचनाज्जनशब्दोत्रदेहवाची ५१ देहस्याचेतनत्वेनदुःखहेतुप्रवृत्त्ययोगात् अभिमानस्यचपरार्धीनत्वेनायुक्तमुक्तं किंतु देवतायाःसर्वस्मात्प्राधान्येनतद्धेतुत्वमुचितमित्यत्राह दुःखस्येति । यदिदुःखस्यहेतुर्देवतेत्युच्यतेतद्वचनमस्तुविचारितेनघटते तथाहि विकारयोर्विकाराभिमानिनोर्देवयोःसकाशादुत्पद्यमानंतद्दुःखमभिमाननिमित्तमेव तत्रनिरभिमानस्यात्मनस्तेनकिंस्यादतःस्वामिदेवान्प्रतिकोपोनकार्यइतिभावःतत्रोदाहरणं यदंगमिति यदास्वदेहेविकाराभिमानींद्रादिदेवताभिमन्यमानहस्ताद्यंगेनचक्षुराद्यंगंक्वचिद्विहन्यतेतदातत्सोढव्यमेव अन्यथापुरुषःकस्मैक्रुध्येत हस्तादेरकारणत्वादयोग्यक्रोधादेर्मनएवकारणमत्रेति अविकाराश्चतेदेवा विकाराइतिशब्दिताः।अभिमानाद्विकारस्यस्वतःशक्ताअपिभुवमितिवाक्याद्विकारशब्दवाच्यत्वंयुक्तंदेवानां ५२ मनसोपिसुखादिहेतुत्वमभिमानमंतरेणविचारासहमित्याह आत्मेति यद्यात्मामनोदुःखादिकारणस्यादितिमतंतत्रपृच्छामःदुःखादिकारणंभवन्म

जनोस्यहेतुःसुखदुःखयोश्चेत्किमात्मनश्चात्रहिभौमयोस्तत् ॥ जिह्वांक्वचित्संदशतिस्वदद्भिस्तद्वेदनायांकतमायकुप्येत् ५१

दुःखस्यहेतुर्यदिदेवतास्तुकिमात्मनस्तत्रविकारयोस्तत् ॥ यदंगमंगेनविहन्यतेक्वचित्क्रुध्येतकस्मैपुरुषःस्वदेहे ५२

आत्मायदिस्यात्सुखदुःखहेतुःकिमन्यतस्तत्रनिजःस्वभावः ॥ नह्यात्मनोन्यद्यदितन्मृषास्यात्क्रुध्येतकस्मैनसुखंनदुःखम् ५३

ग्रहानिमित्तंसुखदुःखयोश्चेत्किमात्मनोजस्यजनस्यतेवै ॥ ग्रहैर्ग्रहस्यैवभवंतिपीडाःक्रुध्येतकस्मैपुरुषस्ततोन्यः ५४

नःस्वतोवापरतोवानाद्यइत्याह । किमन्यतइति । अन्यतोदुःखस्वभावत्वेनविलक्षणान्मनसस्तत्रसुखस्वभावेआत्मनिचेतनोकिंभवतिनकिमपि उभयोःसुखादिस्वभावःसिद्धइतिभावेनाह निजइति । चेतनस्यसुखस्वभावोमनसोदुःखस्वभावोनिजोनित्यःसदातनइत्यर्थः । निजमात्मीयनित्ययोरितियादवः । द्वितीयंमत्याह नहीति । आत्मनोन्यत्दुःखकारणंनहिअहंदुःखीस्यामितिदुःखंदृश्यतेयदितथापितन्मृषास्यात्शुक्तिरजतवत् । अन्यस्यान्यात्मत्वंनदृष्टचरमित्याह नसुखमिति । सुखंसुखरूपंदुःखंदुःखरूपंनभवति दुःखरूपंसुखरूपंनभवत्यतोभिमानंविनान्यन्निरूपणअप्रामाणिकमितिविद्वान्कस्मैक्रुध्येतेत्यन्वयः । जीवस्यसुखरूपस्यनदुःखंक्वचिदिष्यते । अतोमनोभिमानेनदुःखीभवतिनान्यथेतिवाक्यमत्रमानं । यद्वा यदिमनःसुखादिहेतुस्तर्हितत्स्यादुक्तंहिमनोभिमाननिमित्तंतत्दुःखंविनातत्रसुखस्वभावआत्मन्यन्यतोमनसोदुःखंस्यात्किंनस्यादेव कुतोत्राह निजइतिमनोधर्मोदुःखमात्मनोनिजस्वभावोनहिकुतःतदात्मनोन्यद्धि प्रतीयमानस्यकागतिरत्राह यदीति । जपाकुसुमसामीप्याच्छ्वस्यलौहित्यमिवमृषास्यादतोन्यस्यान्यत्वनेत्याह नसुखमिति जीवस्यसुखरूपस्यनदुःखंक्वचिदिष्यतइत्यादेरभिमाननिमित्तंदुःखमनएवदर्शयतीत्यंगीकार्यम् ५३ देहस्यदुःखादिहेतुत्वेबाधकमाह ग्रहाइतिगृह्णात्वाद्ग्रहाःदेहाःआत्मनोदुःखादेर्निमित्तंचेदाविवेकदशायांअस्तुअजस्यस्वतोजन्मादिरहितस्यनममेतिविवेकिनोजनस्यजीवस्यतेदेहाःदुःखादेर्निमित्तंस्युः किंवैनैवस्युःअतोग्रहैर्देहैःपीडाःदेहनिमित्तपीडाःग्रहस्यप्रविषयग्रहणरूपस्यमनसएवभवंति मनोभिमानेसत्येवतेस्युरित्यर्थः ततोदेहादन्यःपुरुःपुरुषब्रह्मसरतीतिब्रह्मज्ञानीकस्मैक्रुध्येतेत्यन्वयः ५५

कर्मैवास्तुसुखदुःखयोर्हेतुरस्तुतथाप्यात्मनोजीवस्याजडत्वेसत्यतोनेनानिष्टंस्यात्किमितिशेषस्तर्हि कस्येदमत्राह तद्धीति तदु:खादिकंजडेजडात्मकेमनसि हि यस्मात्ततःकिमत्राह देहइति देहे वर्तमानोयंस्वतंत्रंपरमात्मानंस्वस्वरूपंचवेत्तीतिस्वावित् । सुपर्णःसुखात्मकःपुरुषःकस्मैकुध्येत कर्मणेकुप्यतीत्यत्राह नहीति । जडात्मकमनआद्यभिमाननिमित्तदुःखादिककर्ममूलंनहियस्मात्कर्मणेपिनकुप्येत यद्वा कर्ममूलमनआदेरभिमाननिमित्तंदुःखादिस्वतस्तस्यनास्तीति ५१ यदिदुःखादेर्हेतुःकालोस्तीतिमतंतर्हिनित्यसुखरूपस्यविवेकिनःआत्मनःकिमनिष्टंतन्नकाकालनोदुःखादिलक्षणमनिष्टंप्राप्तमत्राह तत्रेति तत्रतथासत्यसौदुःखादिस्तदात्मनःकालाधीनदेहस्यैवप्राप्तमात्मनोनित्यत्वेनकालानधीनत्वाद्देहस्यतद्दर्शनाच्च तच्चनयुक्तंदेहस्यजडत्वात् तत्सोदाहरणमाह नाग्नेरिति लुप्तोपममेतत् यथाग्नेस्तापनिमित्तंदुःखंयथाचहिमस्यतद्धिमनिमित्तंदुःखंनजडत्वादेवंदेहस्यापिकालादिसंबंधेविद्यमानेपिनदुःखंयुक्तं ननुतर्हितदंतर्वर्तिनोहरेस्तद्दुःखंस्यादत्राह नपरस्येति परस्यप्रकृतिविलक्षणस्यबोद्धुःसर्वज्ञस्यहरेस्तद्दुःखंनयुज्यते तस्माज्जीवस्यमनोभिमानमात्रंदुःखकारणमतःकस्मैकुध्येतेति । मदाकालादिसंबंधाद्दुःखंदेहस्ययुज्यते । तथापिनैवदुःखीसजडत्वान्निपमेनतुआत्मनःसुखरूपत्वान्नदुःखंयुज्यतेकाचित् । तस्मान्मनोभ्रमेणैवदुःखीजीवोनचान्यथा । सर्वेषांमनसोनेतामनोरूपास्त्रिलोचनः । तद्वशाःसर्वदेवाश्चतेनैवसुखदुःखिनः । नियंतातस्यचप्राणस्ततोपिबलवत्त

कर्मास्तुहेतुःसुखदुःखयोर्वैकिमात्मनस्तद्धिजडेजडत्वे ॥ देहस्त्ववित्पुरुषोयंसुपर्णःकुध्येतकस्मैनहिकर्ममूलम् ५५ कालोस्तुहेतुःसुखदुःखयोश्चेत्किमात्मनस्तत्रतदात्मनोसौ ॥ नाग्नेर्हितापोनहिमस्यतत्स्यात्कुध्येतकस्मैनपरस्यबोद्धुः ५६ नकेनचित्क्वापिकथंचनास्यद्वंद्वोपरागःपरतःपरस्य ॥ यथात्मनःसंसृतिरूपिणःस्यादेवंप्रबुद्धोनबिभेतिभूतैः ५७ एतांसमास्थायपरात्मनिष्ठामध्यासितांपूर्वतमैर्महर्षिभिः ॥ अहंतरिष्यामिदुरंतपारंतमोमुकुंदांघ्रिनिषेवयैव ५८ श्रीभगवानुवाच ॥ निर्विद्यनष्टद्रविणोगतक्लमःप्रव्रज्यगांपर्यटमानइत्थम् ॥ निराकृतोसद्भिरपिस्वधर्मादकंपितोसौमुनिराहगाथाम् ५९ सुखदुःखप्रदोनान्यःपुरुषस्यात्मविभ्रमः ॥ मित्रोदासीनरिपवःसंसारस्तमसःकृतः ६० तस्मात्सर्वात्मनातातनिगृहाणमनोधिया ॥ मय्यावेशितयायुक्तएतावान्योगसंग्रहः ६१ यएतांभिक्षुणागीतांब्रह्मनिष्ठांसमाहितः ॥ धारयन्श्रावयन्शृण्वन्द्वंद्वैर्नैवाभिभूयते ॥ ६२ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेत्रयोविंशोध्यायः ॥ २३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

रः । तन्नियंताहरिःसाक्षात्परमानंदलक्षणः । इतिवाक्यमुक्तार्थेप्रमाणम् ५६ नपरस्येत्येतद्विवृणोति नकेनचिदिति यथासंसृतिरूपिणःसंसारकारणस्वभाववतःआत्मनोमनसोयथाद्वंद्वोपरागःद्वंद्वाख्यराहुग्रहणंतथास्यपरतःपरस्यहरेर्द्वंद्वोपरागोनस्यात् इदमेवश्रद्धेयमितिभावेनाह एवमिति । एवंप्रबुद्धःएवंविधज्ञानी एवंविधैरज्ञानिभूतैःखलैःकृतादुपद्रवान्नबिभेति ५७ एवंविरक्तिर्भगवदंघ्रिभक्तिद्वारासंसारनिर्मोकहेतुरित्याह एतामिति मुकुंदांघ्रिनिषेवयैव एतांपरमात्मनिष्ठांमनःसंयमलक्षणव्यवस्थांसमास्थायस्थिरीकृत्यपरमात्मज्ञानलक्षणांवाप्राप्य अत्रप्रमाणमाह अध्यासितामिति सम्यगनुष्ठितां तमःअज्ञाननिमित्तंसंसारम् ५८ श्रद्धेयेयंगाथेतिभावेनाह निर्विद्येति ५९ गाथायास्तात्पर्यार्थमाह सुखेति आत्मनिमनसिरूढोविविधभ्रमएवसुखदुःखप्रदःअन्योनैव ततोमित्रोदासीनरिपुलक्षणश्चसंसारःस्वमनःस्वमनोहेतुकः ६० मनोनिग्रहयोगमाह तस्मादिति एतावान्मनःसंयमनलक्षणः ६१ फलमाह यइति ब्रह्मनिष्ठांब्रह्मोत्कर्षज्ञानपूर्वकमनोनिग्रहलक्षणाम् ॥ ६२ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजयकृतटीकायांत्रयोविंशोध्यायः ॥ २३ ॥ ॥ ७ ॥ ॥

सृष्ट्यादियाथार्थ्यज्ञानंमिथ्याज्ञाननिवर्तकमितिकथयत्यस्मिन्नध्याये तत्रान्यथोंपिनैवोपरमंतेत्युक्तविकल्पनिवर्तकोप.यः कइत्युद्धवस्यहार्दशंकांपरिहर्तुकामआह अथेति सांख्यंयथार्थज्ञानंपूर्वैःपुरातनैः विकल्पनिवर्तकत्वेननिश्चितम् १ ननुविकल्पेसतितद्धानायसांख्यवचनप्रतिज्ञानंसंगच्छतेसएवनसंभवति तथाहि किमुत्पत्तिप्रभृतिसांख्यंविकल्पितमुतांतराले नाद्यःस्वभावस्यानिवृत्त्यनुपपत्तेरिति तत्राह आसीदिति अथोआरंभेसृष्टिसमयेज्ञानमर्थश्चैकमेवयथैकार्थोविषयः तथैवज्ञानंविषयमनतिक्रम्यवर्तमानमासीत् किमनेनोक्तंभवतीत्यत्राह अकल्पितमिति संशयविपर्ययाविषयत्वमुक्तंभवति कस्मिन्कालेइदमुत्पन्नमत्राह कृतयुगइति तत्रापिकदेत्यतउक्तं आदाविति संशयाद्यन्यथाभावःकस्मान्नाभूदितितत्राह यदेति कृतयुगमारभ्यत्रेतायुगजनाविवेकानिपुणाइतियदायस्मात्तस्मादिति शेषः पुरुषबुद्धिदौर्बल्यनिमित्तंज्ञानस्यान्यथात्वं सात्त्विकत्वेनतदानींतनानांतदभावादेकप्रकारमेवज्ञानमितिभावः अथाथोनंतराप्यर्थौविकल्पारभमंगलद्योतियादवः। यथैवार्थस्तथाज्ञानंज्ञानार्थैक्यमुदाहृतं। तथाकृतयुगेप्रायस्तदन्येषुतुकुत्रचिदितिवाक्येनविज्ञानवादिमतमत्रोच्यतइत्येतन्निरस्तम् २ द्वितीयेकिंकारणमत्राह तन्मयेति तत्सत्यंज्ञानार्थैक्येनमिथोविरोधराहित्येनाबाधितंज्ञानंपश्चात्त्रेतायांद्विधाइदंवादोवेतिसंशयमापन्नंसमभवत्संजातंततद्वापरादौइदमेवनान्यदितिविपरीतप्रत्ययेनसमभिन्नमभवदित्यन्वयः समभेदेसमीचीनेसुष्टुपूजासुखेष्विति। कालस्वभावयोःसदातनत्वेनसदाविकल्पसंभवात् चेतनस्यापिदेवदत्ताद्यन्यतमस्याल्पबुद्धित्वेनानंतवेदादिशब्दराश्यर्थस्वरूपस्यावगाढुमशक्यत्वेनकारणत्वानुपपत्तेस्तत्तद्योग्यफलदानसमर्थेन वैषम्यादिदोषविधुरेणसर्वज्ञेनकारणेनभाव्यमितिभावेनाह मयेति फलंरूपयतिहितंकारयतीतिफलरूपःतेनतामसादिजीवानांस्वस्वयोग्यतमआदिफलदात्रेत्यर्थः केवलेनमयातथास्त्वितिविकल्पितंतामसादिजीवबुद्धिमनुसृत्यनानेवकल्पि

श्रीभगवानुवाच ॥ अथतेसंप्रवक्ष्यामिसांख्यंपूर्वैर्विनिश्चितम् ॥ यद्विज्ञायपुमान्सद्योजह्याद्वैकल्पिकंभ्रमम् १ आसीज्ज्ञानमथोह्यर्थएकमेवाविकल्पितम् ॥ यदाविवेकनिपुणाआदौकृतयुगेजनाः २ तन्मयाफलरूपेणकेवलेनविकल्पितम् ॥ वाङ्मनोगोचरंसत्यंद्विधासमभवद्बृहत् ३ तयोरेकतरोह्यर्थःप्रकृतिःसोभयात्मिका ॥ ज्ञानंत्वन्यतमोभागःपुरुषःसोभिधीयते ४

तंअनंतशब्दराशिगोचरस्यबृहत्तरस्यदुर्ज्ञेयत्वेनअश्रद्धेयत्वंनेतिभावेनोक्तं वागिति शब्दोवाग्गोचरोर्थोमनोगोचरस्ताभ्यामुत्पाद्यमानत्वेनचकल्पितमितिशेषः यद्वा तच्छब्दार्थात्मकमुभयंबृहत्तरमिति यस्मात्तस्माद्वाङ्मनसयोरगोचरत्वाच्चद्विधाभूदिति ३ सम्यग्विषयविषयीकरणमंतरेणज्ञानार्थैक्यमत्रनोच्यतइतिभावेनज्ञानार्थाभिमानिदेवतास्वरूपंतावदाह तयोरिति तयोर्ज्ञानार्थयोरेकतरोयोर्थो विषयलक्षणःसप्रकृतिर्गायत्रीनाम्न्याप्रकृत्याभिमन्यमानइत्यर्थः सापिनस्वतंत्रेत्याह सेति साप्रकृतिरुभयोर्लक्ष्मीविष्णुसंज्ञयोरावयोरात्मादेहःप्रयत्नश्चयस्याःसातथामयाश्रियाचसृष्टानुग्राह्याचेत्यर्थःअन्यतमोभागोज्ञानंयत्सोपिपुरुषः पुरुषनाम्नाब्रह्मणाभिमन्यमानमित्यर्थः सोप्युभयात्मकइत्यनुसंधेयं मयाश्रियाचसृष्टःअनुग्राह्यश्चेत्यभिधीयते। ज्ञानाभिमानीपुरुषःसब्रह्मासमुदाहृतः। अर्थाभिमानीप्रकृतिर्गायत्रीसाप्रकीर्तिता। तयोर्नियामकोविष्णुःश्रीश्चानुग्राहिकास्मृता। वायुस्तुब्रह्मणःपुत्रःप्रकृतौसमजायत। त्रिगुणात्मासमुद्दिष्टःप्रायःसत्वात्मकस्तथा। गायत्रीचैवसावित्रीतथैवचसरस्वती। एवंत्रिरूपाप्रकृतिरेकासत्वादिभेदतः। तासुवीर्यंसमुत्सृष्टंब्रह्मणैकत्वमागतं। ससूत्रात्मासमुद्दिष्टोवायुर्लोकप्रणायकः। तस्यापिसूत्रंभगवान्धारणाद्विष्णुरव्ययः। सूत्रपुत्रस्त्वहंकारःसरुद्रःसमुदाहृतः। सूत्रात्मनामहांश्चैवसहजातश्चतुर्मुखः। तस्यापिपुत्रोहंकारःसचानंतउदाहृतः। अनंतादपिरुद्रोभूद्ब्रह्मणश्चेतिसत्रिधा। वैकारिकोब्रह्मजस्तुतैजसोवायुजःस्मृतः। तामसोनंतजश्चैवसएकोगुणभेदतः। इतिस्मृतिसूचकेनहिशब्देनकिमत्रप्रमाणमितिशंकांपरिहरति ४

---

१ ज्ञायतेअनेनेतिज्ञानं साधन शास्त्रं प्रसिद्धंज्ञानंचग्राह्यं एवमुत्तरत्रापि एवंसतिवाङ्मनोगोचरत्वसंभवति। २ उत्पत्तिप्रभृतिविकल्पितस्यसांख्यंनिवर्तकमुतेतिकचित्पाठः।

प्रतिज्ञान्तर्सांख्यप्रवचनंविनाज्ञानार्थैक्यादिकथनंकिंकेनसंगतमित्यतस्तत्स्वरूपंवक्ति तमोरजइत्यारभ्यएषसांख्यइत्यंतेन वायुस्तुब्रह्मणःपुत्रःप्रकृतौसमजायत । त्रिगुणात्मासमुद्दिष्टःप्रायःसत्वात्मकस्त थेत्यादिव्याख्यातमपिमंदमत्युपकारायकिंचिद्व्याक्रियते तथाहि सृष्ट्यादौमत्तोगुणत्रयाभिमानिन्यालक्ष्म्यापुरुषप्रकृतौब्रह्मगायत्र्याख्येजाते वाशब्दश्चार्थे तदनुमयालक्ष्म्याचपुरुषानुमतेनपुरुषना म्नोब्रह्मणःस्वमतुंप्रेरण्याचप्रक्षोभ्यमाणायास्तस्याःप्रकृतेः तमोरजःसत्वमितिगुणाभिमानानित्रीणिरूपाणिगायत्रीसावित्रीसरस्वतीसंज्ञान्यभवन् ५ ततःकिमभूदत्राह तेभ्यःसमभवत्सूत्रमिति अयंभा वः तेषुरूपेषुपुरुषनाम्नाब्रह्मणागर्भाधानेकृतेसातितेभ्यःपृथक्पृथक्जातंपश्चादेकत्वमापन्नंसूत्रमभवत् कीदृशं मत्सूत्रेणचसंयुतं ममसर्वाधारेणरूपेणसंयुतंसर्वजगदाधारवायुतत्त्वमुत्पन्नमित्यर्थः वायु र्नावैगौतमसूत्रेणेत्यादिनावायोःसर्वाधारत्वंप्रसिद्धं अत्रसूत्रशब्देनमहतत्त्वाभिमानिनोब्रह्मणोद्वितीयंचतुर्मुखाख्यरूपंवायुनासहोत्पन्नमितिज्ञातव्यं सूत्रात्मनामहांश्चापिइतिप्रमाणानुगुण्यात् ततो विकुर्वतइत्यस्यायमर्थः तस्माद्विकुर्वतः सृष्टिकामात्सूत्रनाम्नोब्रह्मणःसाजज्ञे योविमोहकोहंकारोनंतः अयमेवसूत्रनाम्नोवायोरपिजज्ञे विकुर्वतःसूत्रनाम्नोब्रह्मणोयोविमोहकोवैकारिकोरुद्रःसो पिजज्ञे पुनश्चविकुर्वतः सूत्रनाम्नोवायोर्विमोहकस्तैजसरुद्रःसजज्ञे योब्रह्मजोनंतःतस्मादपिविकुर्वतःयोविमोहकोहंकारस्तामसःसजज्ञेइतिवैकारिकोब्रह्मजस्तैजसोवायुजस्तामसोनंतइतिरुद्रस्त्रिधाजातः

तमोरजःसत्त्वमितिप्रकृतेरभवन्गुणाः ॥ मयाप्रक्षोभ्यमाणायाःपुरुषानुमतेनवा ५ तेभ्यः समभवत्सूत्रंमत्सूत्रेणचसंयुतम् ॥ ततोविकुर्वतोजातोयोहंकारो विमोहकः ६ वैकारिकस्तैजसश्चतामसश्चेत्यहंत्रिवृत् ॥ तन्मात्रेंद्रियमनसांकारणंचिदचिन्मयः ७ अर्थस्तन्मात्रकोजज्ञेतामसादिंद्रियाणिच ॥ तैजसाद्देवता आसन्नेकादशचवैकृतात् ८ मयासंचोदिताभावाःसर्वेसंहत्यकारिणः ॥ अंडमुत्पादयामासुर्ममायतनमुत्तमम् ९ तस्मिन्नहंसमभवमंडेसलिलसंस्थिते ॥ मम्नाभ्यामभूत्पद्मंविश्वाख्यंतत्रचात्मभूः १० सोसृजत्तपसायुक्तोरजसामदनुग्रहात् ॥ लोकान्सपालान्विश्वात्माभूर्भुवःस्वरितित्रिधा ११ देवानामो कआसीत्स्वर्भूतानांचभुवःपदम् ॥ मर्त्यादीनांचभूर्लोकःसिद्धानांत्रितयात्परम् १२ अधोसुराणांनागानांभूमेरोकोसृजत्प्रभुः ॥ त्रिलोक्यांगतयःसर्वाः कर्मणांत्रिगुणात्मनाम् १३

६ इदमेवस्पष्टयति वैकारिकइति त्रैविध्यस्यप्रयोजनमाह तन्मात्रेति तन्मात्रशब्देनपंचभूतानिलक्षितानि श्रोत्रादीनींद्रियाणिमनःशब्देनइंद्रियाभिमानिनोदेवाश्चैषांकारणंतामसाद्यहंकारत्रयं त्रिविधो रुद्रःकीदृशःचिदचिन्मयःवशीकृतचेतनाचेतनप्रपंचः चिदाचिद्वशेसर्वसरुद्रश्चिदचिन्मयइतिमानं ७ उक्तमेवविवृणोति अर्थइति तामसादहंकारात्तन्मात्रकोर्थःपंचभूतलक्षणःतैजसाहंकारादिंद्रिया णिवैकृताद्वैकारिकान्मनसासहतदभिमानिन्यएकादशदेवताआसन् ८ एवंसृष्टैश्चतुर्विंशतिसंख्यैर्महदादितत्त्वैःकिंकृत्यमत्राह मयेति ९ आयतनत्वंदर्शयति तस्मिन्निति चिदानंदशरीरस्तुप्रविष्टोंडेह रिःस्वयं । तन्नाभेर्भूतदेहोभूत्पद्मादपिचतुर्मुखः । चतुर्मुखस्तुसर्वांडेव्याप्तदेहोमहातपाः । हरिस्तुसर्वव्याप्तोपिभूतदेहोनतुक्वचित् । नैवास्यप्राकृतोदेहःप्रादुर्भावेष्वपिक्वचित् । इत्यनेनहरेर्भूतदेहोनास्तीति ज्ञायतेप्रममवंसमीचीनत्वयाव्याप्तोभवं नतूत्पन्नोभवामीत्यर्थः १० तपसाज्ञानेन ११ ओकोनिवासस्थानं त्रितयात्परंमहरादिकं १२ कर्मभेदेनत्रिलोक्याःस्थानभेदमाह त्रिलोक्यामिति १३

महर्लोकादिप्राप्तौकिंसाधनमत्राह योगस्येति मद्गतिर्मत्प्राप्तिः नैवविष्णवाद्भक्तस्यमहर्लोकादिकागतिः। भक्त्युद्रेकात्क्रमादूर्ध्वंयावद्विष्णोःप्रवेशनं। एवंज्ञानंविनासापिमहर्लोकादिकागतिः। ज्ञानोद्रेकात्क्रमादूर्ध्वंयावद्विष्णोःप्रवेशनं। नित्यंशोभनरूपस्यापरोक्षेणदर्शनं। मुहूर्तमात्रंज्ञानंस्यान्महाज्ञानंततोधिकं। ज्ञानेनब्रह्मलोकःस्यान्महाज्ञानाद्धरेर्गतिः। सदैवाखंडितंध्यानंतपइत्युच्यतेबुधैः। अपरोक्षदृशायुक्तंनित्यंक्षणमात्रकालया। अपरोक्षदृशानित्यमेकमात्रायुजायुतं। योगनाम्नासमुद्दिष्टंध्यानंनित्यमखंडितं। तच्चतुर्भागयानित्यमपरोक्षदृशायुतं। पादयोगसमुद्दिष्टंध्यानंनित्यमखंडितं पादयोगान्महर्लोकोजनोलोकस्तुयोगतः। तपसस्तुतपोलोकःप्राप्यतेनान्यतःक्वचिदिति स्मार्तवाक्येनमहर्लोकादिप्राप्तावपिसाधनविशेषाअवगंतव्याः १४ भक्तियोगरहितस्यकास्थितिरत्राह मयेति कालात्मनाज्ञानाद्यात्मनाधात्राकारकेणमयाप्रेरितकर्मयुक्तमिदंजगदेतस्मिन्गुणप्रवाहेउन्मज्जतिसृष्टंभवतिनिमज्जतिसंहृतंभवति १५ तमेवप्रेरणप्रकारंविवृणोति अणुरिति अतीतानागतवर्तमानत्वेनयोयोभावःपदार्थःप्रसिध्यतिउत्पन्नोवर्तते तत्सर्वमुभयसंयुक्तंमयाचित्प्रकृत्याचसरस्वत्यापुरुषेणहिरण्यगर्भेणसंयुक्तमस्माभिः प्रविश्यप्रेरितंचयस्मात्तस्मादद्यापिसर्वंद्वंद्वीभूयस्थितंदृश्यते १६ ननुकार्याणांनिमित्तकारणेनभेदःकुलालेदृष्टइतिनतत्रशंका किंतूपादानकारणेनकथमितितत्राह यस्त्विति। तुःस्याद्भेदेवधारणइतिवचनात्। तुशब्दोविशेषंव्यक्तिपरस्यमहदादिकार्यस्ययःसत्वादिकारणविशेषः आदिरुपादानकारणंघटस्य

योगस्यतपसश्चैवज्ञानस्यगतयोमलाः ॥ महर्जनस्तपःसत्यंभक्तियोगस्यमद्गतिः १४ मयाकालात्मनाधात्राकर्मयुक्तमिदंजगत् ॥ गुणप्रवाहएतस्मिन्नुन्मज्जतिनिमज्जति १५ अणुर्बृहत्कृशःस्थूलोयोयोभावःप्रसिद्ध्यति ॥ सर्वेप्युभयसंयुक्तंप्रकृत्यापुरुषेणच १६ यस्तुयस्यादिरंतश्चसवैमध्यंचतस्यसत् ॥ विकारोव्यवहारार्थोयथातैजसपार्थिवाः १७ यदुपादायपूर्वस्तुभावोविकुरुतेपरम् ॥ आदिरंतोयतोयस्मिंस्तत्सत्यमभिधीयते १८

मृदिव अंतश्चलयस्थानंचयस्मात्तस्मात्तस्यकार्यस्यमध्येचसवैनान्यःइत्यतउपादानकारणेनाभेदःकार्यस्येतिनिश्चीयते मृद्धटइतिभावानुरक्तप्रत्ययवेद्यत्वात्व्यवहारार्थः हानोपादानादिव्यवहारविषयोविकारोविविधप्रकारइत्येकस्मिंस्ततोनष्टेनष्टःपटइत्यौपचारिकसामानाधिकरण्येविनष्टतंतुनैवपटस्यभेदः नान्यैरतोभेदाभेदइतिजानीहि कथमत्रोदाहरणमाह यथेति यथालोहमृदाद्युपात्तघटादिपदार्थाः विनाशिस्वरूपेणभेदवंतोप्यादावंतेमध्येचकारणेनाभिन्नाअनुभूयंतेइति प्रकृतेस्तुविकाराणांकोप्यंशोभेदउच्यते। तथैवैकांशतोभेदःसोपिनाभेदवर्जितः। भेदाभेदमतःप्राहुरभेदवातयोर्बुधाइतिप्रमाणासिद्धोविशेषस्तुनदृश्यते यद्वा व्यवहारार्थोव्यवहारनिवर्तकोविकारोविनाशलक्षणः तस्यावयवस्येतनभेदइतितन्मध्यइतिवा १७ ब्रह्मणोविकारात्प्रपंचइतिकेचित्तन्मतंप्रत्याह यदुपादायेति यद्वाकुरुत्यन्निमित्तंब्रह्मइतरकारणेभ्योव्यावर्तयति यदिति तुशब्दोब्रह्मणोमुख्यत्वमभिप्रैतिपूर्वोभावःउपादानलक्षणःपदार्थःप्रकृत्यादिर्यद्ब्रह्मोपादायनिमित्तकारणतयाआदायपरस्यब्रह्मणःसामर्थ्यमाश्रित्यापरंकार्यरूपभावमुद्दिश्यविकुरुतेविकारयतिच यतोब्रह्मणोस्यआदिरंतश्चयस्मिन्ब्रह्मणिमध्येचावस्थितिस्तद्ब्रह्मसत्यंपरमार्थलक्षणंस्वतंत्रंविकारादिदोषविधुरंचेत्यर्थः पारमार्थिकसत्यत्वंस्वातंत्र्यमभिधीयते। तद्विष्णोरेवनान्यस्यवदन्येषांसदास्तितेतिवचनात् १८

१ योगस्तपोज्ञानमितित्रीणिसाधनान्युक्तानि महरादिवैकुंठांतानि पंचफलान्युक्तानि अतःकथमितिचेन्नसत्यं योगपदेन पादयोगः योगश्चेतिद्वय तपइत्येकं ज्ञानंमहाज्ञानंचेतिद्वय क्रमेणमहरादिलोकसाधनानीत्याशयेन तत्तत्साधनलक्षणमाह नित्यशइत्यादिना।

इतोपिविकारमंतरेणमुख्यंकारणंब्रह्मैव प्रकृत्यादीनांसत्तायास्तदधीनत्वादितिभावेनाह प्रकृतिरिति सत्वादिगुणरूपाप्रकृतिरस्यजगतःउपादानमात्रंपरःपुरुषःहिरण्यगर्भः आधारःकालोपिरूपांतरेणाहि रण्यगर्भएवसतोजगतोभिव्यंजकःनिमित्तकारणंउपादानमाधारोव्यंजकइतिकारणत्रयंब्रह्मसर्वशक्तिपूर्णोहमेवतेषांतच्छक्तिप्रदोहमित्यर्थः हिशब्देन।कालाभिमानीब्रह्मातुकालइत्याभिशब्दित।सर्वजीवाभि मानीसपरःपुरुषउच्यते। प्रकृतिर्नामतत्पत्नीप्रकृतेरभिमानिनी।सापसूतेजगत्सर्वंसूत्रमारभ्यसर्वंशइतिसूचयति तुशब्दःप्रकृत्यादिभ्योब्रह्मणोमहान्विशेषोस्तीतिसूचयति तदुक्तं आधारोव्यंजकश्चैवप्रसवी ताचकेशवः। कालप्रकृतिपुंसांचतन्मूलप्रकृतेरपि।आधारोव्यंजकश्चैवसर्वस्यापिनियामकइति १९ इतोपिजगतःसृष्ट्यादेर्मुख्यकारणंब्रह्मैवइतिभावेनसृष्ट्यादेःकालावधिमाह सर्गइति अयमर्थःयावत्तास्थ तिरस्त्विवत्तावत्सर्गउत्पत्तिरपिपौर्वापर्येणप्रवर्ततेयावदीक्षणंयदालयःस्यादितिहरेःस्मरणंतदास्थित्यंतःस्थितेरंतःप्रलयोभवतीति उत्पत्यादिकंभगवत्कर्तृकमित्यर्थः २० अधुनाक्रमप्राप्तंलयंनिरूप यति विराडिति विराडंडकोश भुवनैःसहपंचत्वायकल्पतेपंचत्वानंतरमपिअविशेषायसत्वादिगुणानुद्रेकायनाशायेत्यर्थः विशेषेणगुणोद्रेकाद्विशेषंपृथिवीस्मृतेतिवचनात् अंडकोशनाशानंतरंपृथिवी लयोपिसूच्यतेनेनेतिलोकानांचतुर्दशसंख्योपेतानांकल्पःविकल्पनाविकल्पोवांतरकल्पोविविधकल्पनाचयस्मिन्सतथा समयासाद्यमानःविनाशायप्रेर्यमाणः २१ अविशेषायेतिप्रस्तुतंपृथिव्या

प्रकृतिर्ह्यस्योपादानमाधारःपुरुषःपरः ॥ सतोभिव्यंजकःकालोब्रह्मतत्त्रितयंत्वहम् १९ सर्गःप्रवर्ततेतावत्पौर्वापर्येणनित्यशः ॥ महान्गुणविसर्गार्थःस्थित्यं तोयावदीक्षणम् २० विराण्मयासाद्यमानोलोककल्पविकल्पकः ॥ पंचत्वायाविशेषायकल्पतेभुवनैःसह २१ अन्नेप्रलीयतेमर्त्यमन्नंधानासुलीयते ॥ धानाभूमौप्रलीयंतेभूमिर्गंधेप्रलीयते २२ अप्सुप्रलीयतेगंधआपश्चस्वगुणेरसे ॥ लीयतेज्योतिषिरसोज्योतीरूपेप्रलीयते २३ रूपंवायौसचस्पर्शोली यतेसोपिचांबरे ॥ अंबरंशब्दतन्मात्रइंद्रियाणिस्वयोनिषु २४ योनिर्वैकारिकेसौम्यलीयतेमहतीश्वरे ॥ शब्दोभूतादिमप्येतिभूतादिर्महतिप्रभुः २५ सलीयतेमहान्स्वेषुगुणेषुगुणवत्तमः ॥ तेव्यक्तेसंप्रलीयंतेतत्कालेलीयतेव्यये २६ कालोमायामयेजीवेजीवआत्मनिमय्यजे ॥ आत्माकेवलआत्मस्थोवि कल्पापायलक्षणः २७ एवमन्वीक्षमाणस्यकथंवैकल्पिकोभ्रमः ॥ मनसोहृदितिष्ठेतव्योम्नीवार्कोदयेतमः २८

दिलयंविविच्याह अन्नइति अन्नाभिमानिनायभिमन्यमानानांचएकोक्त्यानिरूप्यमाणोलयोभिमानिनोभिमन्यमानस्यस्वकारणेभिमन्यमानेविवक्षितइतिदेव्यामौषधिमानिन्यांलीयतेन्नाभिमानीत्युक्तेः अन्नमन्नाभिमानिनीधानास्वौषधीषुओषध्यभिमानिन्यांदेव्यांगंधेस्वसूक्ष्मरूपे २२ २३ इंद्रियाणिस्वयोनिषुतैजसाहंकारेइंद्रियाभिमानिनश्चस्वयोनौवैकारिकाहंकारे २४ योनिर्वैकारिकस्तैज सश्चाहंकारःविकारजत्वाद्वैकारिकंमहति चतुर्मुखेलीयतेईश्वरेईशनशक्तिमति विकारजत्वात्तुमहान्वैकारिकउदाहृतः। ईशनादीश्वरश्चैवब्रह्माबृहत्गतःस्मृतइतिस्मृतेः। भूतादिंतामसाहंकारंसभूतादि रेतद्द्वारेणमहतिमहत्तत्वाभिमानिनि २५ समहान्स्वेषुगुणेषुकारणेषुगुणाभिमानिनीषुगायत्रीसावित्रीसरस्वतीषुतेगुणास्ताःसत्वादिगुणवाच्यास्तिस्रःअव्यक्तेप्रकृत्याख्यस्वमूलरूपेतदव्यक्तमव्य क्ताभिमानिनीगायत्रीपुरुषाभिधेविरिंचेपत्यौलीयते सपुरुषःकालनाम्निस्वास्मिन् २६ कालाख्योविरिंचःमायामयेजीवेमूलप्रकृत्यभिमानिन्यामहालक्ष्म्यांजीवनाम्नीश्रीरजेआत्मनिमायिविशे षरतिलक्षणंरूपमाप्नोति आत्मस्वरूपंवक्ति आत्मेति आत्मापूर्णगुणःकेवलःप्रकृतिसंबंधविधुरोसमाधिकश्चआत्मस्थअनन्याधारःअतएवलयादिहीनः विकल्पापायलक्षणःसम्यग्ज्ञानस्वरूपः मिथ्या ज्ञानापगमोलक्षणंयस्यसतथेतिवा २७ कथितसृष्ट्यादिस्मरणफलमाह एवमिति वैकल्पिकोभ्रमःविरुद्धकल्पनालक्षणमन्यथाज्ञानंमनसउत्पन्नंहृदिबुद्धौ २८

उक्तार्थंउपसंहरति एषइति प्रतिलोमेनविपरीतक्रमेणसंहारकथनंअनुलोमेनयथाक्रमेणसृष्टिकथनंसंशयग्रंथिहेतिकःसंसारबंधत्वनदहनेअग्नेर्ज्वालायमानःपरावरदृशासर्वज्ञेन गायत्रीचैवसावित्रीतथैवतुसरस्वती। एवंत्रिरूपाप्रकृतिर्ब्रह्मपत्नीप्रकीर्तिता। महत्तत्वात्मकोब्रह्मातज्जत्वात्तत्रलीयते। गुणाधिकःपतिरपितस्याःसत्वादिभेदतःत्रिविधामूलरूपायांप्रकृत्यासाप्रलीयते। प्रकृतिर्मूलरूपासाब्रह्मपत्नीजगन्मयापुरुषाभिधेविरिंचेतुसर्वस्मिन्कालसंज्ञके। कालाभिधोविरिंचस्तुमहालक्ष्म्यांविलीयते। जीवमायेतियामाहुःसाचसत्वादिभेदतः। त्रिविधैकत्वमापन्नाविष्णावेवविलीयते। हरेरत्यंतसामीप्यंलयोलक्ष्म्याःप्रकीर्तितः। पुरुषेणातिसामीप्यंप्रकृतेर्लयउच्यते। ब्रह्माचप्रकृतिश्चैवमुक्तिगौविलयेपवः। अतस्तौभिन्नदेहौनुज्ञानमात्रौसमीपगाविस्यादिप्रमाणसिद्धत्वात् सर्वज्ञेनपरमाप्तेनमयाप्रोक्तत्वाच्चेदंमुमुक्षुभिरवश्यंग्राह्यमितिभावः २९ इतिश्रीभाग०महा०एकादशस्कंधेविज०टी०चतुर्विंशोध्यायः॥ २४॥ उक्तज्ञानाधिकारीसात्विकएवेत्यभिप्रेत्यसत्वादिगुणानावृत्तीर्विवक्त्यस्मिन्नध्याये तत्रप्रथममभिश्रावृत्तीराह गुणानामिति सत्वादिगुणानाममिश्राणांचमध्येयेनगुणेनपुमान्यथाभवेत्तथातच्छंसतोमेसकाशादिदमुपधारय १ इतराभ्याममिश्रागुणवृत्तीराह शमइति ईक्षाज्ञानं स्मृतिरखंडशास्त्रार्थस्मरणं त्यागोनिषिद्धस्य अ

एषसांख्यविधिःप्रोक्तःसंशयग्रंथिहेतिकः॥ प्रतिलोमानुलोमाभ्यांपरावरदृशामया॥ २९॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेचतुर्विंशोध्यायः॥ २४॥ श्रीभगवानुवाच॥ गुणानामप्यमिश्राणांपुमान्येनयथाभवेत्॥ तन्मेपुरुषवर्यैदमुपधारयशंसतः १ शमोदमस्तितिक्षेक्षातपःसत्यंदयास्मृतिः तुष्टिस्त्यागोस्पृहाश्रद्धाह्रीःक्षमानिस्तुतिर्धृतिः २ कामईहामदस्तृष्णास्तंभआशीर्भिदासुखम्॥ मनोत्साहोयशःप्रीतिर्हास्यंवीर्यंबलोद्यमः ३ क्रोधोलोभोनृतंहिंसामायादंभोक्षमाकलिः॥ शोकमोहौविषादार्तीनिद्राशाभीरनुद्यमः ४ सत्वस्यरजसश्चैवतमसश्चानुपूर्वशः॥ वृत्तयोवर्णितप्रायाःसन्निपातमथोशृणु ५ सन्निपातस्त्वहमितिममेत्युद्धवयामतिः॥ व्यवहारःसन्निपातेमनोमात्रेंद्रियासुभिः ६ धर्मेचार्थेचकामेचयदासौपरिनिष्ठितः॥ गुणानांसन्निकर्षोयंश्रद्धारतिधनावहः ७

स्पृहानिषिद्धेच्छाराहित्यं निस्तुतिरात्मप्रशंसावर्जनं धृतिर्विपद्यपिचित्तस्यानुद्वेगः एतेगुणायस्यसंतिससात्विकःसांख्यज्ञानाधिकारीत्युक्तमनेन २ रजोगुणवृत्तीराह कामइति कामोविषयरागः ईहानिषिद्धचेष्टा तृष्णानलंबुद्धिः स्तंभउक्तानंगीकारित्वं आशीःधनाकांक्षा भिदाभेदकरणंअन्यथाज्ञानंवा असुखंदुःखं राजसस्यदुःखं तामसस्यदुःखंभवतीतिकिंवक्तव्यमित्यभिप्रायेणोक्तं तदुक्तं राजसेपियद्यदुःखंतामसेकिमुतेतितत्। राजसेदुःखवचनंतामसोतिविवक्षयेति। एवंविधगुणोराजसइत्यर्थः ३ तमोगुणवृत्तीराह क्रोधइति मायाकपटंअविद्यमानमहिमप्रकटनंदंभः अस्थानेऽपिक्रोधोऽक्षमा कलिःकलहः मोहोऽज्ञानं आशोत्कंठा एवंविधस्तामसाधिकारीति ४ उक्तवृत्तीःविविनक्ति सत्वस्येति सन्निपातंगुणानांमिश्रतांपुरुषनिष्ठतयाह संन्निपातइति देहकलत्रादौयोहंकारः ममकारश्चसत्वादिगुणानांमिश्रतालक्षणः मात्राःशब्दादयः सन्निपातेसति ५ ६ मनोमात्रेंद्रियासुभिर्व्यवहारोभिज्ञानादिलक्षणोभवतीत्युक्तंविवृणोति धर्मेचेति यदासौपुरुषोधर्मादौपरिनिष्ठितोभवतितदातस्यायगुणानांसन्निकर्षः श्रद्धादिकरोभवति यदाधर्मेनिष्ठातदाश्रद्धा यदार्थेनिष्ठातदाधनकारी यदाकामेनिष्ठातदारतिकरोतीत्यर्थः ७

यर्हिगृहाश्रमेपुमान्प्रवृत्तिलक्षणांनिष्ठांभजमानःस्वधर्मंचानुतिष्ठेत्तत्रसागुणानांसमितिःमिश्रीभावइतिद्रष्टव्यं ८ व्यवहारस्यसन्निपातमूलत्वेऽपंसात्विकः इत्यादिकथंघटतइतितत्राह पुरुषमि
ति शमादिभिः लिंगैःपुरुषंसत्वगुणयुक्तंअनुमायात् अनुमानेनजानातु कामादिभिरप्येवं ९ स्वभक्तेष्वेवसात्विकादिविवेचनप्रकारंदर्शयति यदेत्यादिश्लोकद्वयेन १० आशिषःसंपदआशास्य
मनस्यभिसंधाय ११ एवंविधविभागस्यगुणहेतुत्वेतवापितत्स्यात्किमितितत्राह सत्वमिति सत्वादयोगुणाउक्तवक्ष्यमाणविशेषापादकाजीवस्यैवमेनैव तत्रहेतुगर्भविशेषणमाह चित्तजाइति
भूतानांपंचानांसमुदायरूपबाह्यांतःकरणेचित्तेजायंतेऽव्यंजंतइतिचित्तजाःममप्रकृत्यादिसंबंधराहित्यात् जीवेतद्युक्तंतत्संबंधसद्भावादित्याह यैरित्वति भूतानामुपादानानांसकाशादुत्पन्नैर्वृत्तिभि
र्व्यक्तैःसज्जमानोनिबध्यतइतितस्मान्ममगुणकृतानर्थनशकयेतिभावः १२ संक्षिप्योक्तंसत्वादिगुणानांवृत्तिंप्रपंचयति यदेति इतरौरजस्तमसी सत्वस्यस्वरूपमाह भास्वरमिति १३ रजस्त
मःसत्वगुणौजयेत्रजःस्वभावमाह संगेति विषयसंगकारिभेदकारिचपलताकारिच १४ तमोगुणोरजःसत्वेगुणौजयेत् आशयाअतितृष्णयामूढइत्यनेनतमःस्वभावोदर्शितः १५ यदाचित्तंप्रसन्न

प्रवृत्तिलक्षणांनिष्ठांपुमान्यर्हिगृहाश्रमे ॥ स्वधर्मेचानुतिष्ठेतगुणानांसमितिर्हिसा ८ पुरुषंसत्वसंयुक्तमनुमायाच्छमादिभिः ॥ कामादिभीरजोयुक्तंक्रो
धाद्यैस्तमसावृतम् ९ यदाभजतिमांभक्त्यानिरपेक्षःस्वकर्मभिः ॥ तंसत्वप्रकृतिंविद्यात्पुरुषंस्त्रियमेववा १० यदाआशिषआशास्यमांयजेतस्वकर्मभिः ॥
तंरजःप्रकृतिंविद्याद्धिंसामाशास्यतामसम् ११ सत्वंरजस्तमइतिगुणाजीवस्यनैवमे ॥ चित्तजायैस्तुभूतानांसज्जमानोनिबध्यते १२ यदेतरौजये
त्सत्वंभास्वरंविशदंशिवम् ॥ तदासुखेनयुज्येतधर्मज्ञानादिभिःपुमान् १३ यदाजयेत्तमःसत्वेरजःसंगभिदाचलम् ॥ तदादुःखेनयुज्येतकर्मणायशसा
श्रिया १४ यदाजयेद्रजःसत्वेतमोमूढोलयंजनः ॥ युज्यतेशोकमोहाभ्यांनिद्रयाहिंसयाशया १५ यदाचित्तंप्रसीदेतइंद्रियाणांचनिर्वृतिः ॥ देहेभयंम
नोसंगंतत्सत्वंविद्धिमत्पदम् १६ विकुर्वन्क्रिययाचाधीरनिवृत्तिश्चचेतसः ॥ गात्रास्वास्थ्यंमनोभ्रांतंरजएतैर्निशामय १७ सीदच्चित्तंविलीयेतचेत
सोग्रहणेक्षमम् ॥ मनोनष्टंतमोग्लानिस्तमस्तदुपधारय १८ एधमानेगुणेसत्वेदेवानांबलमेधते ॥ असुराणांचरजसितमस्युद्धवरक्षसाम् १९ सत्वा
ज्जागरणंविद्याद्रजसास्वप्नमादिशेत् ॥ प्रस्वापंतमसाजंतोस्तुरीयंत्रिष्वसंगतम् २० उपर्युपरिगच्छंतिसत्वेनाब्रह्मणोजनाः ॥ तमसाधोधआमुख्या
द्रजसांतरचारिणः २१ सत्वेप्रलीनाःस्वर्यांतिनरलोकंरजोलयाः ॥ तमोलयास्तुनिरयंयांतिमामेवनिर्गुणाः २२

मिंद्रियाणांनिर्वृतिराह्लादश्चदेहेअभयंमनःअसंगंचभवति तदातन्मत्पदंमत्स्थानंसत्वंविद्धि १६ क्रिययाविकुर्वन्भवतिचेतसोविषयादनिवृत्तिश्चभवति गात्रास्वास्थ्यंशरीरावयवानांविजृंभणं एतैर्लिंगैरि
दंरजइतिनिशामयपश्य १७ तमोगुणवर्तनप्रकारंस्पष्टयति सीददिति यदाचित्तंस्मरणकारणंअंतःकरणंसीदत्नश्यत् अथवाविलीयेतचेतसोग्रहणेबहुस्मरणशक्तेश्चेतनायाग्रहणेअक्षममसमर्थंमनोनष्टं
भवति तमःअज्ञानंग्लानिर्ग्लानताचभवतितदातमोगुणवर्तनमुपधारय १८ मुमुक्षुणासत्वमेवसेवनीयमितिभावेनाह एधमानइति १९ तुरीयमवस्थास्वरूपंत्रिषुगुणेष्वसंगतंसंबद्धंनभवति २०
इतोपिसत्वमेवश्रेयःसाधनमित्याह उपरीति आब्रह्मणोब्रह्मलोकपर्यंतंआमुख्यादंधतमःपर्यंतअंतरचारिणःस्वर्गादौचरंति २१ सत्वेसत्वगुणप्रवृद्धौप्रलीनाःमृताःस्वर्गं रजसिप्रवृद्धेलयोयेषांतेरजोलयाः
तमोलयाइत्येतदनेनव्याख्यातंनिर्गुणास्तमआदिगुणानभिभूताआत्यंतिकभक्तिसाधना. २२

वाशब्दश्चार्थे मदर्पणत्वेननिष्फलत्वेनफलानुसंधानराहित्येनयत्कर्मतन्निजकर्मवर्णाश्रमविहितंकर्मसात्विकंकर्म २३ गुणनिमित्तकर्मभेदंनिरूप्यज्ञानभेदमाह कैवल्यमिति कैवल्यंकेवलंयथाशास्त्रप्रतिपादितंतत्स्वंतद्विषयंज्ञानंकेवलकेवलमेवकैवल्यंज्ञानंसात्विकंअग्निष्टोमादिकर्मनिष्ठंप्राकृतंबहिर्मुखजनप्रियंवैषयिकंनिर्गुणंमुक्तिसाधनं तदुक्तं नैर्गुण्यसाधनंयत्तन्निर्गुणंपरिकीर्तितमिति यथाशास्त्रोक्तविज्ञानंकेवलंज्ञानमुच्यते। स्वदृष्टशास्त्रानुकूल्याददृष्टानांतुभक्तितः। गुणानांतुहरौभावंविनिश्चित्यतदाश्रयात्। यथाशास्त्रानुसंधानंज्ञानंचहरिसश्रयमितिच २४ इदानीगुणनिमित्तक्षेत्रभेदमाह वनमिति मन्निकेतनंमदाश्रयंदेवालयादि २५ इदानींकर्तृभेदमाह सात्विकइति असंगीकारकःकर्तानिष्कामत्वेनकर्मणांकर्तेत्यर्थः स्मृतिविभ्रष्टःश्रुत्याद्यविहितकारित्वेनसत्कर्मणःभ्रष्टः निर्गुणो मोक्षगामी २६ श्रद्धाभेदमाह सात्विकीति आध्यात्मिकीयथाश्रुतशास्त्रविषया श्रुतशास्त्रानुसारेणयाश्रद्धापरमात्मनि। सासात्विकीतदन्यस्याप्यनुसारेणनिर्गुणा। अश्रुत्वापिप्रमाणंयोवासुदेवैकसंश्रयः। सनिर्गुणोभागवतःसमुद्दिष्टोमनीषिभिरितिस्मृतेः। श्रुतशास्त्रार्थश्रद्धावत्तदनुसारेणअश्रुतशास्त्रार्थेषुतदुक्तप्रकारेणमत्सेवायामत्सेवार्थंयाश्रद्धासानिर्गुणा तदन्यस्याप्यनुसारेणनिर्गुणेत्युक्तेः २७ आहारभेदमाह पथ्यमिति अनायस्तमक्लिष्टं इंद्रियप्रेष्ठंइंद्रियप्रीतिकरं आर्तिदंचाशुचिच २८ सुखभेदमाह सात्विकमिति आत्मोत्थंपरोक्षज्ञानशास्त्रश्रवणसंजातं यत्तस्मादात्मनोमतेर्ज्ञाना

मदर्पणंनिष्फलंवासात्विकंनिजकर्मतत् ॥ राजसंफलसंकल्पंहिंसाप्रायादितामसम् २३ कैवल्यंसात्विकंज्ञानंकर्मनिष्ठंतुराजसम् ॥ प्राकृतंतामसंज्ञानंमन्निष्ठंनिर्गुणंस्मृतम् २४ वनंतुसात्विकोवासोग्रामोराजसउच्यते ॥ तामसंद्यूतसदनंमन्निकेतंतुनिर्गुणम् २५ सात्विकःकारकोसंगीरागांधोराजसःस्मृतः ॥ तामसःस्मृतिविभ्रष्टोनिर्गुणोमदपाश्रयः २६ सात्विक्याध्यात्मिकीश्रद्धाकर्मश्रद्धातुराजसी ॥ तामस्यधर्मेयाश्रद्धामत्सेवायांतुनिर्गुणा॥ २७ पथ्यंपूतमनायस्तमाहार्यंसात्विकंस्मृतम् ॥ राजसंचेंद्रियप्रेष्ठंतामसंचार्तिदाशुचि २८ सात्विकंसुखमात्मोत्थंविषयोत्थंतुराजसम् ॥ तामसंमोहदैन्योत्थंनिर्गुणंमदपाश्रयम् २९ द्रव्यंदेशःफलंकालोज्ञानंकर्मचकारकः ॥ श्रद्धावस्थाकृतिर्निष्ठात्रैगुण्याःसर्वएवाहि ३० सर्वेगुणमयाभावाःपुरुषाव्यक्तनिष्ठिताः ॥ दृष्टंश्रुतमनुध्यायेद्बुद्ध्यावापुरुषर्षभ ३१ एताःसंसृतयःपुंसांगुणकर्मनिबंधनाः ॥ येनेमेनिर्जिताःसौम्यगुणाजीवेनचित्तजाः ३२ भक्तियोगेनमन्निष्ठोमद्भावायप्रपद्यते ३३ तस्माद्देहमिमंलब्ध्वाज्ञानविज्ञानसंभवम् ॥ मय्येवब्रह्मणापूर्णोनबहिर्नांतरश्चरेत् ॥ ३४ ॥ ॥ इतिश्रीभागवते महापुराणेएकादशस्कंधेपंचविंशोध्यायः ॥२५॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

दुत्थंसुखंसात्विकं परोक्षज्ञानमात्मोत्थमित्यादेःमदपाश्रयंमदपरोक्षज्ञानजन्यसुखंनिर्गुणं। अपरोक्षेणदर्शनं विष्ण्वाश्रयंसुखनित्यंगमयेत्तत्प्रसादतइतिभगवतःस्वरूपसुखमिदंनेत्यतोमदपाश्रयमित्युक्तं नतुविष्णोःस्वरूपंतुसुखंकेनचिदाप्यते। तस्यैवविषयत्वात्तुतत्सुखंचेतिभण्यते। परोक्षज्ञानगोयस्माद्विषयःस्वमनोगतः। अतआत्मोत्थमित्येवसुखमाहुर्विपश्चितइतिच २९ किंबहुनासर्वेपदार्थास्त्रिगुणसंबंधेनत्रिविधाइत्याह द्रव्यमिति फलंस्वर्गादि कालःप्रातरादिः अवस्थाजाग्रदादिलक्षणा कृतिःक्रिया निष्ठाव्रतम् ३० तदेवविवृणोति सर्वइति पुरुषेणविष्णुनाअव्यक्तेनाश्रियास्वयंनिष्ठिताःव्यवस्थापिताः सत्वादिकृतसंसारजयोपायमाह दृष्टमिति वाशब्दश्चार्थे शास्त्रेणश्रुतंबुद्ध्याचशास्त्रार्थरूपेणदृष्टंचपरंब्रह्मानुध्यायेन्निरंतरंस्मरेत् ३१ अनेनध्यानेनकिंफलमत्राह एताइति एवमुपासकेनयेनजीवेनचित्तजाताःसत्वादिगुणाःनिर्जितास्तेनगुणकर्मनिबंधनाःसंसृतयश्चप्रागुक्ताःनिर्जिताभवंतीतिशेषः ३२ ननुत्वत्प्राप्तिमंतरेणसंसृतिजयेनकिंतत्राह भक्तीति ३३ प्रार्थितार्थमाह तस्मादिति ज्ञानविज्ञानयोःसंभवोयस्मात्सतथातं व्यवधानेनशास्त्रद्वारा जातंज्ञानंपरोक्षज्ञानं अपरोक्षेणजातंविज्ञानंनिर्गुणमितिरंगिरंते सत्वाद्गुणाज्जातमपिव्यवधानाविनैवतु

मुक्तिदंनिर्गुणंमोक्षैव्यवधानेनसात्विकमित्युक्तेः यत्तःसंसारमोक्षोमद्भावस्तस्मान्मानुषंदेहंलब्ध्वासर्वोत्तमंमांविज्ञायब्रह्मणासर्वगुणपूर्णेनमय्येवपूर्णश्चरितार्थोनापुरुषोबहिर्विषयेषुनाचरेत् आंतरएवइंद्रियैःम
स्यगात्मविषयत्वेनैवचरेदित्यर्थःसंसारस्यांतत्वादंतोहंतस्मिन्मयिरतोभूत्वेतिवा अंतरच्छिद्रःइंद्रियव्याजीनचरेत्स्यादितिवा अंतोरुयवसितेमृत्यौसभावेपरमात्मनिइतिआंतरोमांविनानचरेदितिवा ३४
इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांपंचविंशोध्यायः ॥ २५ ॥ अनंतरातीताध्यायेसर्वतःसंगमुत्सृज्यमन्निष्ठैवकार्येत्युक्तमेवार्थमितिहासपूर्वकंप्रपंचयत्यस्मिन्नध्याये तत्रादा
वुक्तमपिब्रह्मध्यानफलंविश्वासजननायपुनराह मल्लक्षणमिति मांलक्षयतीतिमल्लक्षणंमुद्रायस्यसतथातंमद्धर्मभागवतसंज्ञंआत्मस्थंहृदिस्थंसमुपैतिदर्शनेनेतिशेषः पश्यतीत्यर्थः १ दृष्टतत्त्वस्यतस्ययावद्देह
पातंस्थितिप्रकारमाह गुणमय्येति पुमान्सज्ञानीअवस्तुभिरमंगलैःगुणैःशब्दादिभिर्नयुज्यतेनसंबध्यतेयोग्यतातिरेकेणासेवनात् तत्रकारणमाह ज्ञानेति परतत्त्वाद्यशेषतत्त्वापरोक्षज्ञाननिष्ठयागुणम
य्यासंख्यादिगुणरूपयाजीवयोन्यालिंगशरीराख्यमाययाविमुक्तस्तदभिमानरहितइत्यर्थः मायामात्रेषुप्रकृतिनिमित्तेष्ववस्तुतोस्वातंत्र्येणदृश्यमानेषुगुणेषुशरीरेषुवर्तमानोपि वस्तुस्वतंत्रमुदिष्टमस्वतंत्रमव
स्तुचेतिवचनादवस्तुतइत्यनेननमिथ्यात्वमुच्यते तन्निवृत्त्यर्थसाधनसामग्रीविधानवैयर्थ्यापत्तेः २ ज्ञानिनायोग्यतातिरेकेणविषयनिषेवानकार्येत्युक्तं किमुतज्ञानार्थिनेत्यत्रकैमुत्यमाह संगमिति शिश्नोदर

श्रीभगवानुवाच ॥ मल्लक्षणमिमंकायंलब्ध्वामद्धर्ममास्थितः ॥ आनंदंपरमात्मानमात्मस्थंसमुपैतिमाम् १ गुणमय्याजीवयोन्याविमुक्तोज्ञाननिष्ठया॥ गुणेषुमायामात्रेषुदृश्यमानेष्ववस्तुतः ॥ वर्तमानोपिनपुमान्युज्यतेऽवस्तुभिर्गुणैः २ संगंनकुर्यादसतांशिश्नोदरतृपांक्वचित् ३ तस्यानुगस्तमस्यंधेपत त्यंधानुगोंधवत् ४ ऐलःसम्राडिमांगाथामगायतबृहच्छ्रवाः ॥ उर्वशीविरहान्मुह्यन्निर्विण्णःशोकसंयुतः ५ त्यक्त्वात्मानंव्रजंतींतांनग्नउन्मत्तवन्नृपः ॥ विलपन्नन्वगाज्जायेघोरेतिष्ठेतिविक्लवः ६ कामानतृप्तोनुजुषन्क्षुल्लकान्वर्षयामिनीः ॥ नवेदगणनांयांतीं मुर्वश्याकृष्टचेतनः ७ ऐलउवाच ॥ अहोमेमोह विस्तारःकामकश्मलचेतसः ॥ देव्यागृहीतकंठस्यनायुःखंडाअनुस्मृताः ८ नाहंवेदाभिनिर्मुक्तःसूर्योवाभ्युदितोमृषा ॥ मुषितोवर्षपूगानांबताहा निगतान्युत ९ अहोमेआत्मसंमोहोयेनात्मायोषिताहृतः ॥ क्रीडामृगश्चक्रवर्तीनरदेवशिखामणिः १० सपरिच्छदमात्मानंहित्वातृणमिवे श्वरम् ॥ यांतींस्त्रियंचान्वगतंनग्नउन्मत्तवद्रुदन् ११ कुतस्तस्यानुभावःस्यात्तेजईशित्वमेववा ॥ योन्वगच्छंस्त्रियंयांतींस्मरबाणविताडितः १२

एवतर्पयंतीतिशिश्नोदरतृपःतेषामसतांसंगंस्नेहलक्षणंनकुर्यात् ३ करणेबाधकमाह तस्येति तस्यासतइतिजातवेकवचनं अनेनविषयसंगोनकर्तव्यइतिकिवक्तव्यमित्युक्तंभवति ४ संगात्कस्यानर्थः कस्यचसुखकरोनिर्वेदश्चाभूदितिउद्धवस्यमानसींशंकांपरिहर्तुमैलोपाख्यानमाह ऐलइति गाथांशिक्षाकरंवचनम् ५ जायेघोरेतिष्ठेत्यनेन हयेजायेमनसातिष्ठघोरेवचांसिमिश्राकृणवावहैन्वितीदंसूचय ति ६ वर्षयामिनीःवर्षरात्रीःउद्दिश्ययांतींगणनांनवेद अज्ञानेहेतुमाह उर्वशीति ७ मोहविस्तारःअज्ञानविस्तार. आयुःखंडाःअहोरात्रविभागाः ८ उक्तमेवविवृणोति नाहमिति अहंवर्षपूगानांसंख्या मयोग्यानिगतानिअहान्युतनवेदकिमुतान्यानि सूर्योदयादिनाज्ञातुंशक्यत्वात् कथमेतदत्राह अभिनिर्मुक्ता इति सूर्येणाभ्युदितोऽहरंशःसूर्येणाभिनिर्मुक्तःकालोरात्र्यंशइतिमृषाविवेकज्ञानाभावात्कुतो त्राह मुषितइति तत्संयेनज्ञानस्यमुष्टत्वात्अभिनिर्मुक्तइत्यादिराजाविशेषणंवा ९ पुनरपिपश्चादनुतपन्नाह अहोइति आत्मामनोधृतिगुणोवा क्रीडामृगश्चकृतइतिशेषः १० क्रीडामृगत्वंलक्षयति सप रिच्छदमिति हस्त्यश्वादिपरिकरोपेतम् ११ अनुभावादिगुणैःस्त्रीसंगदोषलेपोनस्यादिति तत्राह कुतइति अनुभावस्तत्त्वनिश्चयःतेजःसामर्थ्यं ईशित्वयोगशक्तिविशेषः अनेनसंगदोषंमार्ष्टुनसमर्था एवगुणाइत्युक्तंभवति स्मरबाणेत्यनेनानुगमनेहेतुरुक्तः १२

विद्यादयोपिसंगदोषंमार्ष्टुंनप्रभवाइत्याह किंविद्ययेति १३ जातनिर्वेदोराजास्वात्मानंधिक्करोति स्वार्थस्येति स्वार्थविषयेअकोविदंस्वप्रयोजनज्ञानपाटवरहितमित्यर्थः १४ आत्मभूशब्दस्यानेकार्थत्वेन अत्रकइतिशंकानिवृत्तयेकामइति १५ संसारकामवैरिणिशार्ङ्गिणिजाग्रतिप्रभुर्नास्तीतिवचनंकथंयुज्यतइतितत्राह आत्मारामइति १६ बोधकाभावादेवमभूदितिनेत्याह बोधितस्येति किमेतया वाचेत्यादिसूक्तवाक्येन १७ एतयोर्वश्यारहसिरतयाकिंनुसुखंनकिमपिप्रत्युतदुःखमेवतत्रदृष्टांतःरज्ज्वांवैसर्पचेतसइति यथारज्ज्वांसर्पबुद्धेर्भयलक्षणंदुःखंतथा अन्यथाबुद्धे किंकारणमत्राह द्रष्टुरितिद्रष्टुरीश्वरस्यस्वरूपाविदुषःकिंचयोहंयादृशईश्वराधीनसत्ताकोहंतस्यममईश्वरस्वरूपाज्ञानंमत्स्वरूपाज्ञानेकारणमित्यर्थः रथांगपाणेःस्वरूपाज्ञानेस्वस्वरूपाज्ञानेवाजितेंद्रियत्वमेवकारणमित्याह यदिति १८ इतोपिसर्वस्याप्यज्ञानमेवकारणमित्याह क्वायमिति सौमनस्यंसौंदर्यं दौर्गंध्यादिदुर्गुणाधिकरणस्यदेहस्यसौमनस्यादिगुणसमवायोनघटतइतियस्मात्तस्मादनाद्यविद्ययाभगवत्स्वरूपाज्ञानेनाध्यासःअस्मिन्नुत्तद्बुद्धिरभूदित्यर्थः १९ अध्यासंप्रपंचयति पित्रोरिति भार्यायाअपिभोगार्हत्वाद्विषयकोटयंतर्भावःयोदेहःपित्रादीनामस्येतिनावसीयतेननिश्चीयते २० तस्मिन्नुतुच्छानांपंचानांभूतानांनिष्ठोत्कर्षोय

किंविद्ययाकिंतपसाकिंत्यागेनश्रुतेनवा ॥ किंविविक्तेनमौनेनस्त्रीभिर्यस्यमनोहृतम् १३ स्वार्थस्याकोविदंधिङ्मांमूर्खंपंडितमानिनम् ॥ योहमीश्वरतां प्राप्यस्त्रीभिर्गोखरवज्जितः १४ सेवतोवर्षपूगान्मेउर्वश्याअधरासवम् ॥ नतृप्तआत्मभूःकामोवह्निराहुतिभिर्यथा १५ पुंश्चल्यापहृतंचित्तंकोन्वन्यो मोचितुंप्रभुः ॥ आत्मारामेश्वरमृतेभगवंतमधोक्षजम् १६ बोधितस्यापिदेव्यामेसूक्तवाक्येनदुर्मतेः ॥ मनोगतोमहामोहोनापयात्यजितात्मनः १७ किमेतयानोपकृतंरज्ज्वांवैसर्पचेतसः ॥ द्रष्टुःस्वरूपाविदुषोयोहंयदजितेंद्रियः १८ क्वायंमलीमसःकायोदौर्गंध्याद्यात्मकोशुचिः ॥ क्वगुणाःसौमनस्याद्याह्यध्यासोविद्ययाकृतः १९ पित्रोःकिंस्वंनुभार्यायाःस्वामिनोग्नेःश्वगृध्रयोः ॥ किमात्मनःकिंसुहृदामितियोनावसीयते २० तस्मिन्कलेवरेमेध्ये तुच्छनिष्ठेविषज्जते ॥ अहोसुभद्रंसुनसंसुस्मितंचमुखंस्त्रियः २१ त्वङ्मांसरुधिरस्नायुमेदोमज्जास्थिसंहतौ ॥ विण्मूत्रपूयेरमतांकृमीणांकियदंतरम् २२ अथापिनोपसज्जेतस्त्रीषुस्त्रैणेषुचार्थवित् ॥ विषयेंद्रियसंयोगान्मनःक्षुभ्यतिनान्यदा २३ अदृष्टादश्रुताद्भावान्नभावउपजायते ॥ असंप्रयुंजतः प्राणान्शाम्यतिस्तिमितंमनः २४ तस्मात्संगोनकर्तव्यःस्त्रीषुस्त्रैणेषुचेंद्रियैः ॥ विदुषांचाप्यविश्रब्धःषड्वर्गःकिमुमादृशाम् २५ ॥ श्रीभगवानुवाच ॥ एवंप्रगायन्नृपदेवदेवःसउर्वशीलोकमथोविहाय ॥ आत्मानमात्मन्यवगम्यमांवैउपारमज्ज्ञानविधूतमोहः २६

स्मिन् तुच्छानिष्ठाव्यवस्थाचयस्यसतथेतिवा तस्मिन्नमेध्यकलेवरेसुभद्रमितिविषज्जतेपुरुषःअहोभ्रांतिरिति २१ इतोपिस्त्रीष्वर्थबुद्धिंकुर्वन्भ्रांतइत्याह त्वगिति संहतौत्वगादिसान्निबिडेदेहेरमतांरममाणानांकृमीणांकीटकानांचांतरंव्यवच्छेदनंकियत् २२ स्त्रीष्वभिरमणमपिगर्हितंयस्मात्अथतस्मात्अर्थवित्स्वप्रयोजनवित्स्त्रीषुस्त्रीलोकेषुचनोविषज्जेतयद्यपिविशेषोनास्तितथापीदंनकर्तव्यमित्यतोवाह अथापीति स्त्रीसंगादिवर्जनेमनोवशीकरणमेवप्रथमसाधनं अन्यथासर्वंकुंजरस्नानवन्निष्फलंस्यादितिभावेनाह विषयेतिअन्यदाविषयेंद्रियसंयोगाभावेमनःक्षोभोनास्ति २३ तदुपपादयति अदृष्टादिति भावोमनः अदृष्टादश्रुताद्भावाद्वस्तुनोनोपजायते विकारविशिष्टंभवति संयोगलक्षणसंबंधाभावात् अतोदृष्टश्रुतवस्तुन्येवसंबंधसमर्थंमनः ततश्चप्रकृतेकिमनेनेतितत्राह असंप्रयुजतइति यतोविषयेंद्रियसंयोगात्क्षुभ्यंभवत्यतःप्राणानींद्रियाणिविषयेषुअसंप्रयुंजतःविषयेभ्यआकृष्यस्ववशेकुर्वतःपुंसःआकर्षणपाशाभावात्स्तिमितंनिश्चलंमनःशाम्यति भगवदेकनिष्ठंभवतीत्यर्थः २४ उक्तं निगमयति तस्मादिति कुतइतितत्राह विदुषामिति २५ २६

जन्मप्रभृत्यभ्यस्तस्यदुःसंगस्यत्यागोदुःशकइतिनमंतव्यःसत्संगेनस्वयमेवाशिथिलीभूतस्यसुलभइतिभावेनाह ततइति तृणगूढावलंबरहितकूपपतनवत्दुःसंगोनर्थकरणंइतियत्ततःतेकिमस्यकुर्वंतीति तत्राह संतइतिसंतएवस्यमनोवाक्कायकर्मभिःसम्यक्शरणंगतस्यपुंसोमनोव्यासंगंमनसोदुष्टेषुसंगंउक्तिभिःश्छिंदंति २७ एवंविधमाहात्म्याश्चैतेकथंज्ञातव्याइतितल्लक्षणमाह संतइति २८ अनपेक्षतादिगुणानामन्यत्रापिदर्शनात्तेषामपिदुःसंगनिवर्तकत्वंस्यादित्याशंक्यतच्छक्त्युद्बोधकगुणसद्भावादन्यत्रतदभावादितिभावेनाहतेष्विति ततःकिमत्राह ताइति ताःकथाख्याउक्तयोमनोव्यासंगं छिंदंतीत्यर्थः २९ त्वद्भक्तिर्हिसमस्तव्यसनच्छेत्रीतदनुदयेताभिःकिमत्राह तायेशृण्वंतीति ३० भक्तेःसाधनोत्तमत्वमाह भक्तिमिति ३१ एतमर्थंसोदाहरणंसमर्थयते यथेति विभावसुमग्निंनिषेवमाणस्यशीतादिकंयथानश्यतितथासाधुंसत्पुरुषंसेवमानस्यमनोव्यासंगविनाशोभवतीत्यर्थः ३२ इतोपिसंतःसेव्याइत्याह निमज्ज्येति तथातेसंतःपुंसांपरायणमप्सुमज्जतां दृढानौरिव ३३ सत्स्वपिप्रधानःसत्वहमेवेतिसोदाहरणमाह अन्नमिति लुप्तोपमेयंक्षुधितानांअन्नंप्राणोयथाप्रकृष्टचेष्टाप्रदंयथाप्रेत्यमरणानंतरंधर्मोवित्तंनृणांसुखायस्यात्तथाआर्तानांशरणरक्षि

ततोदुःसंगमुत्सृज्यसत्सुसज्जेतबुद्धिमान् ॥ संतएवास्यछिंदंतिमनोव्यासंगमुक्तिभिः २७ संतोनपेक्षामच्चित्ताःप्रशांताःसमदर्शनाः ॥ निर्ममानिरहंकारानिर्द्वंद्वानिःपरिग्रहाः २८ तेषुनित्यंमहाभागमहाभागेषुमत्कथाः ॥ संभवंतिहितानृणांजुषतांप्रपुनंत्यघम् २९ तायेशृण्वंतिगायंतिह्यनुमोदंतिचादृताः ॥ मत्पराःश्रद्दधानाश्चभक्तिंविंदंतितेमयि ३० भक्तिंलब्धवतःसाधोःकिमन्यदवशिष्यते ॥ मय्यनंतगुणेब्रह्मण्यानंदानुभवात्मनि ३१ यथोपाश्रयमाणस्यभगवंतंविभावसुम् ॥ शीतंभयंतमोप्येतिसाधुंसंसेवतस्तथा ३२ निमज्ज्योन्मज्जतांघोरेभवाब्धौतेपरायणम् ॥ संतोब्रह्मविदःशांतानौर्दृढेवाप्सुमज्जतां ३३ अन्नंहिप्राणिनांप्राणआर्तानांशरणंत्वहम् ॥ धर्मोवित्तंनृणांप्रेत्यसंतोऽर्वाग्बिभ्यतोरणम् ३४ संतोदिशंतिचक्षूंषिबहिरर्कःसमुत्थितः ॥ देवताबांधवाःसंतःपितामाताहमेवच ३५ चेतसैलासुतोप्येवमुर्वश्यालोकनिःस्पृहः ॥ मुक्तसंगोमहीमेतामात्मारामश्चचारह ३६ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेषड्विंशोध्यायः ॥ २६ ॥ उद्धवउवाच ॥ क्रियायोगंसमाचक्ष्वभवदाराधनंप्रभो ॥ येनत्वांयेयथार्चंतिसात्वताःसात्वतर्षभ १ एतद्वदंतिमुनयोमुहुर्निःश्रेयसंनृणाम् ॥ नारदोभगवान्व्यासआचार्योंगिरसःसुतः २

ताहमेवपदतःसंसाराद्बिभ्यतोजनस्यारणंशरणंसंतइति ३४ तदुपपादयति ॥ संतइति ॥ यथासमुत्थितउदितोर्कोबहिश्चक्षुर्दिशति तथासंतःआंतरंचक्षुर्दिशंति बहुवचनादादित्यादधिकप्रयोजकत्वं सूचयति सत्वप्रधानोहरिरित्यस्यावगतिःकथमभूदित्यत्राह देवताइति देवतादयोहमेवेत्यनेनसत्वप्रधानत्वंअवगतंहरेरिति विष्णोश्चसत्वप्रधानत्वान्नसतांविद्यतेपरं । इत्याहुर्वेदविदुषःसाहिसर्वेश्वरेश्वरइतिवाक्यंचशब्देसूचयति ३५ स्वोक्तमर्थमितिहासेनसंगमयति चेतसेति चेतसैवंनिरुध्यैवेतिशेषः ॥ ३६ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांषड्विंशोध्यायः ॥ २६ ॥
कर्मयोगानुष्ठानप्रकारंप्रपंचयत्यस्मिन्नध्याये तत्रोद्धवोधिष्ण्येष्वित्यादिनासंक्षिप्योक्तंक्रियायोगंविस्तरतोविविदिषुःपृच्छति क्रियायोगमित्यादिना क्रियातुनिष्कृतौशिक्षाचिकित्सापायकर्मसु । कारणारंभपूजासुसंप्रधारणचेष्टयोरित्यतोविवक्षितमाह भवदाराधनमिति येसात्वताःसात्वततंत्रोक्तविधानंविद्वांसस्तेयेनकेनत्वांयथाकथमर्चंति १ इदमेववक्तव्यंइतिकिंकिमन्यत्रस्यादितितत्राह एतदिति मुनयःएतद्भवदाराधनंनृणां निःश्रेयसंपुरुषार्थसाधनंमुहुर्मुहुरनुक्षणंवदंति आप्तत्वेतान्निर्दिशति नारदइत्यादिना आंगिरसःसुतःआचार्योबृहस्पतिः २

इतोपिइदमेवश्रोतव्यंनान्यदित्याह निःसृतमिति ऋषिवचनानांविकल्पसंभवात्कथंनिर्णयइत्यतोवाह निःसृतमिति भवदाज्ञयाअसुरजनमोहनायान्यथावदाम्छिवोपिइदंग्राह्यत्वेनाह देव्याइति देव्याइत्यनेनाम्नसूलत्वंसूचयति १ उत्तमश्रोतॄणामर्थायोक्तमस्तु नापरेषामधिकारइतिनाश्रद्धेयमितिभावेनाह एतद्वैसर्वेति संमतंसमानम् ४ अनेनकर्मबंधविध्वंसाभावान्नानुष्ठानार्हमितिने त्याह कर्मेति ५ कर्मकांडस्यापरिमितत्वेनतज्ज्ञानस्यचदुःसाधनत्वेनमंदमतीनांतदुक्तानुष्ठानंदूरोत्सारितमित्यतोनादरणीयमितिन मंतिकुरुकिंतुयत्संक्षिप्योक्तंतत्त्वत्प्रश्नपरिहारत्वेनवक्ष्यामीत्याह नहीति कर्मकांडस्यपंचरात्रागमस्य चशब्दोनसमुच्चये किंतु केषांचिदेवानंतपारत्वंनसर्वेषामस्मदादिबुद्धिविषयत्वादित्यस्मिन्नर्थे ६ वैदिकोवेदाधिकारिविषयोग्निष्टोमादिस्तांत्रिकःतंत्राधिकारिविषयःपुष्पांजल्यादिमिश्रःस्त्रीशूद्रादिविषयोनामसंकीर्तनादिःमखोयागःपूजालक्षणः तत्तदधिकारिणमाह त्रयाणामिति ईप्सितेनयोग्येन ७ स्वनिगमेनस्वशाखयाविहितंयथातथाद्विजत्वमुपनयनं प्राप्य ८ अर्चादीन्यधिष्ठानानिउत्तरोत्तरंशस्तानियथायोग्यम् ९ उभयैर्वैदिकैस्तांत्रिकैरपिमंत्रैः १० संध्योपास्त्यादिकर्माणियानितैःममपूजांप्रकल्पयेत् किमर्थमेवंसंकल्पइतितत्राह सम्यगिति

निःसृतंतेमुखांभोजाद्यदाहभगवानजः ॥ पुत्रेभ्योभृगुमुख्येभ्योदेव्यैचभगवान्भवः ३ एतद्वैसर्ववर्णानामाश्रमाणांचसंमतम् ॥ श्रेयसामुत्तमंमन्येस्त्रीशूद्राणांचमानद ४ एतत्कमलपत्राक्षकर्मबंधविमोचनम् ॥ भक्तायचानुरक्तायब्रूहिविश्वेश्वरेश्वर ५ श्रीभगवानुवाच ॥ नह्यंतोनंतपारस्यकर्मकांडस्यचोद्धव ॥ संक्षिप्तंवर्णयिष्यामियथावदनुपूर्वशः ६ वैदिकस्तांत्रिकोमिश्रइतिमेत्रिविधोमखः ॥ त्रयाणामीप्सितेनैवविधिनामांसमर्चयेत् ७ यथास्वनिगमेनोक्तंद्विजत्वंप्राप्यपूरुषः ॥ यथायजेतमांभक्त्याश्रद्धयातन्निबोधमे ८ अर्चायांस्थंडिलेग्नौवासूर्येप्सुहृदिवाद्विजे ॥ द्रव्येणभक्तियुक्तोर्चेत्स्वगुरुंमाममायया ९ पूर्वंस्नानंप्रकुर्वीतधौतदंतोंगशुद्धये ॥ उभयैरपिचस्नानंमंत्रैर्मृद्ग्रहणादिभिः १० संध्योपास्त्यादिकर्माणिवेदतंत्रोदितानिमे ॥ पूजांतैःकल्पयेत्सम्यक्संकल्पःकर्मपावनः ११ शैलीदारुमयीलौहीलेप्यालेख्याचसैकती ॥ मनोमयीमणिमयीप्रतिमाष्टविधास्मृता १२ चलाचलेतिद्विविधाप्रतिष्ठाजीवमंदिरं ॥ उद्वासावाहनेनस्तःस्थिरायामुद्धवार्चने १३ अस्थिरायांविकल्पःस्यात्स्थंडिलेतुभवेद्द्वयम् ॥ स्नपनंतुविलेप्यायामन्यत्रपरिमार्जनम् १४ द्रव्यैःप्रसिद्धैर्मद्यागःप्रतिमादिष्वमायया ॥ भक्तस्यचैवयथालब्धैर्हृदिभावेनचैवहि १५ स्नानालंकरणंप्रेष्ठमर्चायामेवतूद्धव ॥ स्थंडिलेतत्त्वविन्यासोवह्नावाज्यप्लुतंहविः १६ सूर्येचाभ्यर्हणंप्रेष्ठंसलिलेसलिलादिभिः ॥ श्रद्धयोपाहृतंश्रेष्ठंभक्तेनममवार्यपि ॥ गंधोधूपःसुमनसोदीपोन्नाद्यंचकिंपुनः १७

सम्यक्मत्पूजात्वेनसंकल्पःकर्मशुद्धिकरइत्यर्थः ११ अर्चायामित्युक्तप्रतिमाभेदमाह शैलीति शैलीशिलामयी लोहेनकांस्यताम्रादिनानिर्मितालौही लेप्याऔषधरससंलिप्तशिला लेख्यापटादिलिखितचित्रलक्षणा सैकतीतत्तत्कालोचितसिकतयाकृता मनोमयीध्यानकालोचितप्रतिबिंबिताकृतिः मणिमयासूर्यकांतादिरचिता १२ जीवमंदिरंदेहःइदमपिचशांतभूतंस्थिरायांप्रतिमायामर्चनेउद्वासावाहनेनस्तः १३ अन्यत्रशिलादिष्वेव स्नपनंविलेप्यायां तुशब्दात्स्थंडिलादावपिपरिमार्जनंस्नपनमित्युच्यते १४ प्रसिद्धैस्तंत्रेषुप्रशस्तत्वेननिरूपितैःसामग्र्यभावेयथालब्धैः हृदिभक्त्याभावेनध्यानेन द्रव्यध्यानसमुच्चयेचशब्दः एवशब्दोभक्तेःसार्वत्रिकत्वे हिशब्दोज्ञानाद्याधिक्ये १५ तत्त्वस्यहरेःसच्चिदानंदरूपस्यविन्यासःसन्निधानंतत्त्वानांप्राणश्रद्धादीनांविन्यासोवा १६ सूर्येपुष्पादिभिरभ्यर्हणंप्रेष्ठंअतिशयितप्रीतिजनकं सर्वस्माद्भक्तिपूर्वकमुपाहृतंप्रेष्ठमित्याह श्रद्धयेति १७

प्रागुदग्वासीनः संमुखः अभिमुखः १८ कृतषडंगन्यासः कलशमप्रोदकपात्रं प्रोक्षणीयंपुष्पादिपात्रम् १९ २० देशिकोमंत्रज्ञः हृदादिमंत्रैर्नमआदिलक्षणैः २१ ध्येयस्वरूपमाह पिंडइति प्राणायामो ज्ज्वलितवाय्वग्निसंशुद्धेपिंडेदेहेहृत्पद्मस्थां जीवःकलायस्याःसाजीवकलातांबिंबस्वरूपामित्यर्थः हृदिस्थायाहरेर्मूर्तिर्जीवोयत्प्रतिबिंबकः । यद्वशेवर्ततेजीवःसातुजीवकलास्मृतेतिवचनात् ध्याये त् । नादांतेसिद्धभावितां नादःशब्दःअंतेवसानं सर्वात्मनाशब्देनुरक्तत्वान् शब्दागोचरतयासिद्धैःसनकादिभिरुपासितां शब्दैःसर्वात्मनानुकीर्नादांतस्थातुसामतेत्युक्तेः २२ व्याप्त्यव्याप्तिभूता नित्यंवर्तमाना याजीवकला तदाशरीरव्यापिन्याभगवन्मूर्त्याव्याप्तेपिंडेदेहेसंपद्यसम्यक्प्रतिपत्तिकृत्वातन्मयःएवंध्यानेनभगवत्प्रधानोभूत्वाअर्चादिषुआवाह्यसंस्थाप्यसंनिरुध्यन्यस्तांगंमातृका दिमंत्राक्षरैर्न्यस्तत्तत्तदवयवंमांप्रपूजयेदित्यन्वयः व्याप्तोभूतश्चनित्यंपदात्मभूतोहरिस्ततः । जीवस्यतत्प्रधानत्वंतन्मयत्वमुदाहृतमितिवचनात् । अतसातत्यगमनइतिधातोःमनप्रत्ययादात्मेतिरूपं व्याप्तो

शुचिःसंभृतसंभारःप्राग्दर्भैःकल्पितासनः ॥ आसीनःप्रागुदग्वार्चेदर्चायांत्वथसंमुखः १८ कृतन्यासोमदर्चांचपाणिनाभिमृजेद्बुधः ॥ कलशंप्रोक्षणीयंचयथावदुपसादयेत् १९ तदद्भिर्देवयजनंद्रव्याण्यात्मानमेवच ॥ प्रोक्ष्यपात्राणित्रीण्यद्भिस्तैस्तैर्द्रव्यैश्चसादयेत् २० पाद्यार्घ्याचमनीयार्थंत्रीणिपात्राणिदेशिकः ॥ हृदाशीर्ष्णाथशिखयागायत्र्याचाभिमंत्रयेत् २१ पिंडेवाय्वग्निसंशुद्धेहृत्पद्मस्थांपरांमम ॥ अण्वींजीवकलांध्यायेन्नादांतेसिद्धभाविताम् २२ तयात्मभूतयापिंडेव्याप्तेसंपद्यतन्मयः ॥ आवाह्यार्चादिषुस्थाप्यन्यस्तांगंमांप्रपूजयेत् २३ पाद्योपस्पर्शनार्घ्यादीनुपचारान्प्रकल्पयेत् ॥ धर्मादिभिश्चनवभिःकल्पयित्वासनंमम २४ पद्ममष्टदलंतत्रकर्णिकाकेसरोज्ज्वलम् ॥ उभाभ्यांवेदतंत्राभ्यांमह्यंतूभयसिद्धये २५ सुदर्शनंपांचजन्यंगदासीषुधनुर्हलान् ॥ मुसलंकौस्तुभंमालांश्रीवत्संचानुपूजयेत् २६ नंदंसुनंदंगरुडंप्रचंडंचंडमेवच ॥ महाबलंबलंचैवकुमुदंकुमुदेक्षणम् २७ दुर्गांविनायकंव्यासंविष्वक्सेनंगुरून्सुरान् ॥ स्वेस्वेस्थानेत्वभिमुखान्पूजयेत्प्रोक्षणादिभिः २८ चंदनोशीरकर्पूरकुंकुमागुरुवासितैः ॥ सलिलैःस्नापयेन्मंत्रैर्नित्यदाविभवेसति २९ स्वस्त्ययनधर्मानुवाकेनमहापुरुषविद्यया ॥ पौरुषेणापिसूक्तेनधामनीराजनादिभिः ३० वस्त्रोपवीताभरणपत्रस्रग्गंधलेपनैः ॥ अलंकुर्वीतसप्रेममद्भक्तोमांयथोचितैः ३१ पाद्यमाचमनीयंचगंधंसुमनसोज्ज्वलम् ॥ धूपदीपोपहाराणिदद्यान्मेश्रद्धयार्चकः ३२ गुडपायससर्पींषिशष्कुल्यापूपमोदकान् ॥ संयावंदधिसूपांश्चनैवेद्यंसतिकल्पयेत् ३३ अभ्यंगोन्मर्दनादर्शदंतधावाभिषेचनम् ॥ अन्नादिनृत्यगीतानिसर्वाणिस्युस्तथान्वहम् ३४

पिभगवान्विष्णुर्वेहेसर्वगयत्वतः । भक्तस्यफलदोयस्माद्वयाप्तिकृत्तस्यतेनसइति अनेनमयिस्थित्वास्वयमेवस्वात्मानंआवाहयत्यर्चयत्यहंतदधीनतयावाहनादिकरोमीत्याद्युक्तंभवति २३ धर्मादिभिः विमलादिभिःनवभिःशक्तिभिश्चासनंपीठंकल्पयित्वा २४ तत्रधर्मादिक्लृप्तेपीठेअष्टदलंपद्मंध्यात्वातत्रमत्कृतिसन्निहितेपद्मेमांपूजयेत् वेदतंत्राभ्यांमह्यंमहनीयंपूजनीयंउभयसिद्धयेवेदतंत्रमोक्षफलसिद्धये २५ अन्यनंतरम् २६ २७ मध्यावाहितप्रधानदेवताभिमुखान् प्रोक्षणीयादिभिःअर्घ्यादिभिः २८ २९ स्वस्त्ययसूक्तेनविष्णुसूक्तेनधर्मानुवाकेन धर्मासमंतात्विवृतंव्यापतुरित्यादिसूक्तेन । महापुरुषविद्यया जितंतेपुंडरीकाक्षेत्यादिकयापौरुषेणसूक्तेनापि धामसूक्तं समुद्रादूर्मिरिति पावमानंसूक्तं नीराजनं । नितरांरंजयेत्तस्मात्पावमानंतुमंडल । विष्णुंनीराजनंतस्माद्विद्वद्भिःसमुदाहृतमिति वचनात् आदिशब्दोक्तैरुद्रोजज्ञेवीर्यायेत्यादिसूक्तैःस्तुतिंकुर्यात् ३० ३१ ३२ संयावंगोधूमपायसं राजान्नंवा वित्तेसति ३३ ३४

मेखलावर्तवेदिभिःसहविहिते उदितंज्वलितम् ३५ ३६ ३७ ३८ हविषासर्पिषाभिप्लुतानिमिश्रितानिदारूणिसमिधःप्रास्यहुत्वाआघारौकोणात्कोणंप्रतिहुत्वार्चाविधानतःपूजाविधानतः ३९ धर्मादिमंत्रैःधर्मादिभ्यश्चयथान्यायंहविर्जुहुयादितिशेषः पुनःस्विष्टकृतंकुर्यात् ४० अभ्यर्चार्यामितिपाठे अभिमुखोभूत्वाअर्चायांसन्निहितंभगवंतंनमस्कृत्येत्यर्थः ४१ सुरभिमन्मुखवासतांबूलाद्यं चदत्वानंतरंचामराद्युपचारैःअर्हयेत्संभावयेत् ४२ नकेवलंउपगायन्गृणन्छृण्वंश्चकितुममकर्माणिअन्यैःकीर्तयित्वाभिनयन् सर्वेषांप्रकाशयन् अर्थांतरंचाह मत्कथाइति अनेनाभिनयशब्दार्थो पिविवृतः किमुक्तंस्यादत्राह मुहूर्तःक्षणिकइति मत्कथार्थमेवंमुहूर्तः क्षणश्चास्येत्यस्मिन्नर्थेठप्रत्ययः मत्कथातिवाहितसर्वकालोभवेदित्यर्थः ४३ स्तवैर्मुक्तकश्लोकनिबंधनैः ४४ परस्परबद्धाभ्यांबा हुभ्यांसहशिरःमत्पादयोः ४५ शेषांमाल्याक्षतादिदत्तां शेषोत्री अन्यस्मिन्नुपयुक्तः माल्याक्षतादिदानेस्त्रीतियादवः ४६ यत्रयेष्वर्चादिषुयथाश्रद्धातथामामर्चयेत् ४७ अर्चानुभावतःप्रतिमासा

विधिनाविहितेकुंडेमेखलावर्तवेदिभिः ॥ अग्निमाधायपरितःसमूहेत्पाणिनोदितम् ३५ परिस्तीर्याथपर्युक्षेदन्वाधायययथाविधि ॥ प्रोक्षणीयानिद्रव्याणिप्रोक्ष्याग्नावावहेतमाम् ३६ तप्तजांबूनदप्रख्यंशंखचक्रगदांबुजैः॥ लसच्चतुर्भुजंशांतंपद्मकिंजल्कवाससम् ३७ स्फुरत्किरीटकटककटिसूत्रवरांगदम् ॥ श्रीवत्सवक्षसंभ्राजत्कौस्तुभंवनमालिनम् ३८ ध्यायन्नभ्यर्च्यदारूणिहविषाभिप्लुतानिच ॥ प्रास्याज्यभागावाघारौदत्वाचाज्यप्लुतंहविः ३९ जुहुयान्मूलमंत्रेणषोडशर्चावधानतः ॥ धर्मादिभ्योयथान्यायंमंत्रैःस्विष्टकृतंबुधः ४० अभ्यर्च्याग्निंनमस्कृत्यपार्षदेभ्योबलिंहरेत् ॥ मूलमंत्रंजपेद्ब्रह्मस्मरन्नारायणात्मकम् ४१ दत्वाचमनमुच्छेषंविष्वक्सेनायकल्पयेत् ॥ मुखवासंसुरभिमत्तांबुलाद्यमथार्हयेत् ४२ उपगायन्गृणन्नृत्यन्कर्माण्यभिनयन्मम ॥ मत्कथाःश्रावयन्शृण्वन्मुहूर्तक्षणिकोभवेत् ४३ स्तवैरुच्चावचैःस्तोत्रैःपौराणैःप्राकृतैरपि ॥ स्तुत्वाप्रसीदभगवन्नितिवंदेतदंडवत् ४४ शिरोमत्पादयोःकृत्वाबाहुभ्यांचपरस्परम् ॥ प्रपन्नंपाहिमामीशभीतंमृत्युग्रहार्णवात् ४५ ततःशेषांमयादत्तांशिरस्याधायसादरम् ॥ उद्वासयेच्चेदुद्वास्यंज्योतिर्ज्योतिषितत्पुनः ४६ अर्चादिषुयथायत्रश्रद्धामातत्रचार्चयेत् ॥ सर्वभूतेष्वात्मनिचसर्वात्माहमवस्थितः ४७ एवंक्रियायोगपथैःपुमान्वैदिकतांत्रिकैः ॥ अर्चानुभावतःसिद्धिंमत्तोविंदत्यभीप्सिताम् ४८ मदर्चांसंप्रतिष्ठाप्यमंदिरंकारयेद्दृढम् ॥ पुष्पोद्यानानिरम्याणिपूजांतत्रोत्सवाश्रिताम् ४९ पूजादीनांप्रवाहार्थंमहापर्वसुचान्वहम् ॥ क्षेत्रापणपुरग्रामान्दत्वामत्सार्ष्टितामियात् ५० प्रतिष्ठयासार्वभौमंसद्मनाभुवनत्रयम् ॥ पूजादिनाब्रह्मलोकंत्रिभिर्मत्साम्यतामियात् ५१ मामेवनैरपेक्ष्येणभक्तियोगेनविंदति ॥ सभक्तियोगंलभतेएवंयःपूजयेतमाम् ५२

मध्यात् ४८ ४९ ५० प्रवाहरूपेणप्रवर्तनार्थं प्रतिष्ठागृहकरणपूजानाफलतारतम्यमाह प्रतिष्ठयेत्यादिना मत्साम्यतांनिर्दुःखानंदानुभवरूपताम् ५१ ज्ञानंविनाप्रतिष्ठादिभिरेवसाम्यताकथं स्यादत्राह मामेवेति नैरपेक्ष्येणभक्तियोगेनैवमांविंदति साम्यंलभते । निर्दुःखत्वंहरेःसाम्यंनतादृशसुखात्मता । सर्वोत्तमस्तदानंदःकथकस्यचिदाप्यते । आधिपत्यंत्रिलोकस्ययोग्यानामिंद्रतास्मृता अयोग्यानांत्रिलोकेपिपूज्यत्वंसमुदाहृतं । तद्भवेत्परयाभक्त्याविष्णोरालयकारिणः । ततोप्युद्रिक्तयाभक्त्याविष्णुंपूजयतःसदा । अवाप्यतेब्रह्मलोकस्तदुद्रिक्तश्चमुच्यते इतिमानाद्विशेषोऽवगंतव्यः ॥ नन्वेवंतर्हिप्रतिमादिपूजाव्यर्थेतितत्राह एवमिति यएवंमांपूजयेत्सभक्तियोगंलभते तेनमामाप्नोतीतिशेषः अनेनज्ञानभक्तिद्वारेणभगवत्प्राप्तिरित्युक्तंभवति ५२

देवस्वापहरणेमहान्दोषइत्याह यइति ५३ नकेवलंमतिमादिपूजाकर्तुरुक्तंफलंसाहाय्यकर्तॄणांयथायोग्यंफलंभवतीत्याह कर्तुरिति सारथेःकार्यहेतोःप्रेत्यकर्मणांफलभागिनोभवंतीत्यर्थः फलता रतम्यमाह भूयइति भूयसिमहतितत्फलंभूयोभवति ५४ इतिश्रीभागवतेम०एकादशस्कंधेवि०टी०सप्तविंशोध्यायः ॥ २७ ॥ हरेःपरमस्वातंत्र्यंतदधीनसत्ताकत्वेनजगतोस्वंतमस्वातंत्र्यमेतादृशतत्त्वज्ञानेन सत्यवंधनिवर्तनंनाभेदज्ञानेनेत्यादिकमुपदिशत्यस्मिन्नध्याये तत्रादौदुर्जनस्वभावतत्कृतपापकर्मप्रशंसननिंदाभ्यांसज्जनस्वभावतदनुष्ठितपुण्यकर्मस्तुत्यनिंदाभ्यांचावश्यमवस्थेयंपुरुषेणेतिशिक्षयति प रस्वभावेत्यादिना परोरिपरमात्मनोरित्यतःपरःशत्रुः जीवब्रह्मणोर्वैलक्षण्यसत्यतायाःअसहमानित्वादितिशेषः तस्ययःस्वभावःयानितदाचरितानिपापकर्माणितानिसर्वाणिनप्रशंसेत्नप्रशंसयेच्चानिंदयोन्नि देच्चकिंचपरःपरमात्मापरेश्रीनारायणेस्वभावःआत्मामनोयस्यसतथा यद्वा परोलोकबाह्योज्ञानीतस्यस्वभावःतेनाचीर्णानिपुण्यकर्माणिचइतरैर्नगर्हयेत्स्वयंनगर्हेच्चप्रत्युतप्रशंसेत्प्रशंसयेच्च एतादृशःपुरु षोदुर्लभइतितत्राह विश्वमिति प्रकृत्याचेतनयापुरुषेणहिरण्यगर्भेणसहस्थितंविश्वमेकेनपरमात्मनात्मकंव्याप्तमेकात्मकंपश्यन्नुसयथार्थज्ञानीभवितैवातोनदुर्लभइति अनेनतथापश्यतएवयथार्थज्ञानं भवतीत्युक्तंभवति नप्रशंसेत्तनिंद्यास्तुप्रशंस्यान्नैवनिंदयेत् । उभयंयःकरोत्येतदसत्यात्सपतत्यधः यःप्रशंस्यान्नप्रशंसेन्निंद्योयेननिंद्यते । सोपितद्वद्धोयातियतोरिवदुदासकइतिवाक्यात् परस्वभावकर्म णांप्रशंसानिंदाचनकार्येतिप्रतीतार्थःकिंनस्यादितीयंशंकादूरोत्सारितेतिज्ञातव्यं १ उक्तार्थानंगीकारेबाधकमाह परस्वभावेति परोन्योहरिविमुखस्तेननिंद्यस्तस्यस्वभावकर्माणिस्तौति परोवरणीयः स्तुत्यःश्रीहरिपरायणः तस्यस्वभावकर्माणिनिंदातिसपुरुषःअसत्याभिनिवेशात्तोमिथ्याज्ञानाभिनिवेशतःस्वस्थानाद्भ्रश्यतेअंधंतमोयातीत्यन्वयः यःप्रशंस्यान्नप्रशंसेदित्यादेरस्याप्युक्तएवार्थः २

युःस्वदत्तांपरैर्दत्तांहरेतसुरविप्रयोः ॥ वृत्तिंसजायतेविड्भुक्वर्षाणामयुतायुतम् ५३ कर्तुश्चसारथेर्हेतोरनुमोदितुरेवच ॥ कर्मणांभागिनःप्रेत्यभूयोभूय सितत्फलम् ५४ ॥ इतिश्रीभागवतेम०एकादशस्कंधेसप्तविंशोध्यायः ॥२७॥ श्रीभगवानुवाच ॥ परस्वभावकर्माणिनप्रशंसेन्न गर्हयेत् ॥ विश्वमेकात्मकंपश्य न्प्रकृत्यापुरुषेणच १ परस्वभावकर्माणियःप्रशंसतिनिंदति ॥ सआशुभ्रश्यतेस्थानादसत्याभिनिवेशतः २ तैजसेनिद्रयापन्नेपिंडस्थोनष्टचेतनः ॥ मा यांप्राप्नोतिमृत्युंवातद्वन्नानार्थदृङ्मनः ३ किंभद्रंकिमभद्रंवाद्वैतस्यावस्तुनःकियत् ॥ वाचोदितंतदनृतंमनसाध्यातमेवच ४

असत्याभिनिवेशेनिमित्तमाह तैजसइति निद्राशब्देननिद्रासुनिद्रेतिद्विविधानिद्रोच्यते तत्रनिद्रास्वापापरपर्यायासुनिद्रामरणकालीना तथाचैवमस्यश्लोकस्यार्थः तैजसेतैजसाहंकारकार्येश्रोत्रादीद्रिय गणेमनसिचनिद्रयादैनंदिनस्वापेनापन्नेसुप्तेसतिपिंडस्थोजीवोनष्टचेतनःसुप्तोभवति सदास्वापेजाग्रतामन्वीश्वरेच्छयाप्रबोधितमनोगतसंस्कारजन्यत्वान्मायांस्वप्नंप्राप्नोति सुनिद्रयापन्नेमृत्युंमरणं प्राप्नोति नानाविधसंस्काराविष्टमनःस्वप्नदशायांनानार्थप्रदंदृष्टहिजाग्रदाद्यवस्थायांकिमुवर्णनीयमितिभावेनाह तदिति तन्मनएवनानार्थदंनानाविधविषयप्रत्यायकंहिप्रसिद्धत्वान्मनएवमिथ्याप्र त्ययनिमित्तमितिभावः तैजसाहंकृतेजांतइंद्रियग्रामकेपरात् । निद्रयावशमापन्नेजीवःस्यान्नष्टचेतनः । अतोविष्णोर्विशेसर्वेनव्याप्तमितिस्मरेदिति । निद्राचैवसुनिद्राचद्विधानिद्राप्रकीर्तिता । तत्रनि द्राभवेत्स्वप्नसुनिद्रामृतिकालगेति । मनोमात्रस्वरूपत्वात्स्वप्नोमायेतिकथ्यते । इत्येतैर्वाक्यैरुक्तएवार्थोंगीकार्यइति १ अवस्तुनोनित्यप्रविहतलक्षणवस्त्वजानतोद्वैतस्याशुभस्यमिथ्याज्ञानिनः पुंसआशीर्वादादिनाकिमद्भद्रंभवति कालगुणात्स्वाद्गुणाद्वाभद्रतिचेदपितत्कियदेवात्यल्पमेव भद्रवदभद्रमपिविशेषापादकंनभवतीत्याह किमभद्रमिति नित्यमशुभात्मनःतस्याविशेषतःअभद्रंकिनकि मपि भवतिचेदपितत्कियदेव यत्नवतोपिमायावादिनःस्वयोग्यादाधिक्येननभवतीतियस्मात्तस्मादशुभंजीवमुद्दिश्यसज्जनवाचोदितमुक्तंमनसाशुभादिकंभवत्वितिध्यातंचिंतितमपिअनृतमसत्यमेवाविशे षापादकंनभवतीत्यर्थः अनेनचैष्णवेनावैष्णवमुद्दिश्यतत्प्रशंसादिवदाशीर्वादादिकंनकर्तव्यमित्युक्तंभवति उच्यतेध्यायतेवापिकुनरंप्रतियच्छुभं । असत्यमेवभवतिस्वभावोऽसत्वमेवयदितिवचनात्

द्वैतानिषेधोनक्रियतइत्यन्यथाव्याख्यानंचशब्दसूचितेन एकंतुशुभमुद्दिष्टमशुभंद्वैतमुच्यते । पुंसोऽशुभस्यकिंभद्रंकिमभद्रंविशेषतः । सर्वदाशुभरूपत्वाद्विशेषोत्यल्पएवहीतिवाक्येननिरस्तत्वादुपेक्षणीयमितिभावः ४ ननुस्वभावतोऽशुभजीवस्यसदाप्यशुभरूपत्वात् अन्यस्माच्छुभाशुभयोरत्यल्पत्वात्तद्विपयशुभवचनादेरप्यनृतत्वादशुभदेहादिकमपिनाशुभकारणमितितत्राह छायाप्रत्युदकाभासाइति हिशब्दोयाथार्थ्ये यथाछायाप्रत्युदकाभासाजीवमपेक्ष्यासंतोपिनिःशक्ताअप्यर्थकारिणोऽर्थक्रियाकारिणोदृष्टाः एवंदेहादयोभावाअमंगलाअप्यामृत्युतोंधतमःप्रवेशपर्यंतंभयमित्युपलक्षणं शुभाशुभफलंयच्छंति अशुभजीवानामितिशेषः नीहारःप्रत्युदंचैवधूम्रमित्यापिशब्द्यतइत्यतः प्रत्युदकंनीहारः आभासाःसूर्यकांतादयः नेदंरजतमितिवन्नेयंछायेतिबाधकप्रत्ययानुदयात् एतदृष्टांतेननदेहादीनांमिथ्यात्वंविवक्षितं किंतुनिःशक्तित्वमेव व्यपेक्ष्यजीवंदेहादिनिःशक्तत्वादवस्त्वपि । पुनःशुभाशुभनृणांयच्छेदेवशुभाशुभं । छायानीहारकाभासानिःशक्ताअपिकार्यदाः । एवंशुभादिदेहादेर्भवेत्कार्यंशुभादिकं । एतद्वचनाद्भयमभयमितिवापदच्छेदः ५ सत्यसंकल्पेनसत्यकर्मणानिरस्तकुहकेनपरमेश्वरेणस्रष्टृत्वादिदंसर्वंसत्यंनमिथ्याभूतमितिभावेनाह आत्मैवेति प्रकृत्याद्युपसर्जनंविनासजनादिकंकर्तुंसमर्थइत्यर्थेएवशब्दः परमात्मैवेदंसर्वंसृजतित्रातिहरतिविश्वात्मास्वयमेवस्वात्मनैवसृज्यतेत्रायतेह्रियतेचदीपाद्दीपांतरवत् ईश्वरइत्यनेनकर्मकर्तृत्वाविरोधंपरिहरति प्रभुरित्यनेनचमानुषेष्वेतावंतंकालंस्थास्यामीतिचिंतनमेवात्मनस्त्राणंनान्यदखंडस्वामित्वात्समर्थत्वाच्चेतिसूचयति दीपाद्दीपांतरंयद्वत्सृष्टिरीशस्यकीर्त्यते । एतावत्कालमाशिष्येमानुषेष्वितिचिंतनं । विष्णोस्त्राणंसमुद्दिष्टंस्वस्यैवस्वेच्छयातु । दीपादीपांतरस्येवद्वैकीभावश्चसंहृतिरितिवचनात् अविद्ययाक्षिप्तमतिःस्वात्मानंसृजतीत्यादिदुर्मतंनिरस्तमित्यादिबोद्धव्यं ह्रियतइत्यनेनदीपांतरस्यदीपइवैकीभावःसंहारइतिदर्शयति ५

छायाप्रत्युदकाभासाह्यसंतोप्यर्थकारिणः ॥ एवंदेहादयोभावायच्छंत्यामृत्युतोभयम् ५ आत्मैवतादिदंविश्वंसृज्यतेसृजतिप्रभुः ॥ त्रायतेत्रातिविश्वात्माह्रियतेहरतीश्वरः ६ तस्मान्नह्यात्मनोमुष्मादन्योभावोनिरूपितः ॥ निरूपितेयंत्रिविधानिर्मूलाभातिरात्मनि ७ इदंगुणमयंविद्धित्रिविधंमाययाकृतम् ८

र्णमदःपूर्णमिदंपूर्णात्पूर्णमुदच्यते । पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यतइतिश्रुतेः ६ ननुहिरण्यगर्भादेःस्रष्टृत्वादिवादिनिर्वेदजाग्रतिकथहरेरेवस्रष्टृत्वादिकमवधार्यतइतिशंकांधिक्कुर्वन्निवपरिहरन्नुपसंहरतितस्मादिति । यस्मान्निरवकाशप्रमाणबलाद्धरेरेवसृष्ट्यादिकर्ताततस्मादमुष्मात् आत्मनोहरेरन्योभावःसृष्ट्यादिकर्ताननिरूपितःकुत्रापिवेदइत्यन्वयः । ननुपितृवपुत्रादेर्हरेरपिसृष्ट्यादिकर्तान्यःकिंनस्यादित्याद्दित्यतोवाह तस्मादिति । यस्मात्स्वात्मनैवस्वयंसृज्यतेइत्यादिकंप्रामाणिकंतस्मादात्मनःपरमेश्वरस्यभावःसृष्ट्यादिकर्तामुष्माद्धरेरन्योनास्ति सृष्टिस्थितिश्चसंहाराभावनंसमुदाहृतं । तद्यःकरोतिपुरुषःसभावइतिकीर्तितइतिवचनात् भावशब्दस्यसृष्ट्यादिकर्तृत्वशब्दवाच्यत्वंसिद्धं अनेनोक्तशंकायाःकःपरिहारआयातइतितत्राह निरूपितेति अन्येनसृष्टिस्थितिसंहारइतित्रिविधामतिर्विद्वद्भिर्नैवनिरूपितानिर्मूलाप्रमाणवर्जिता अन्यस्मात्सृष्टिसंहारौस्थितिश्चपरमात्मनः । निरूपितानविद्वद्भिःप्रमाणाभावतोहरेरिति विद्वद्भिरितिविशेषणादासुरमतएवतथाप्रतिभातमितिज्ञायते ७ परमात्मनःसत्वादिगुणरहितत्वादन्यतःसृष्ट्यादिकंनयुक्तंगुणस्यगुणबद्धत्वादन्यतोयुज्यतइत्याशयेनाह इदमिति माययाहरेरिच्छयाकृतमिदंत्रिविधंसृष्टिस्थितिसंहाराइतित्रित्वसंख्याविशिष्टमात्मनिजीवेगुणमयंसत्वादिगुणाधीनंविद्धि नपरमात्मनइतिशेषः गुणसंबंधयोग्यानामुत्पत्त्याद्याःस्युरन्यतः । सर्वदानिर्गुणस्यास्यसर्गाद्याःस्युःकुतोन्यतइति अतोविशेषःकल्प्यतइति अनेनसत्वादिगुणेषुकारणत्वेसिद्धेषुकथमन्योभावोनास्तीतिसमंजसंस्यादितीयमाशंकापरिहृताविद्धीतिपुरुषार्थोपायांगत्वादिदमेवावश्यंज्ञेयमितिनिर्धारयति माययेत्यनेनगुणानामचेतनत्वेनस्वतःप्रवृत्त्यनुपपत्तेः । कार्येषुप्रवर्तकत्वेनहरेर्मुख्यकारणत्वमेवधृतम् ८

---

१ अन्यपुरुषात् । २ गुणवतोजीवस्य । ३ परमात्मनःसकाशात् ।

परस्वभावेत्यादिशिक्षितज्ञानफलमाह एतद्विद्वानिति मदुदितमेतद्विद्वान् ९ सूर्यवदित्युक्तंदार्ष्टांतिकेकथमित्यतोविवृणोति प्रत्यक्षेणेति प्रत्यक्षादिप्रमाणबलेनेदंगुणमयमाद्यंतवत्त्वादसदसमर्थमस्व॰ श्रमितिज्ञात्वा असमर्थमसत्योक्तसमर्थसत्यकीर्तितमितिवचनात् असत्त्वंनशून्यत्वमत्राभिप्रेतं इहजगतिनिःसंगोनिर्लेपः निगमेनवेदेनात्मसंविदासाक्षिणा १० स्वप्रकाशत्वेनजडत्वेनदेहपरम॰ त्मनोः संसारासंभवंजानन्नप्युद्धवोविवेकार्थंलोकदयालुःपृच्छति नैवेति निःसंगइत्यनेनप्रस्तुतःसंगलक्षणःसंसारःकस्यात्मनोहरेरुतदेहस्यद्रष्टृदृश्ययोरुभयोरपिनसंभवति अनात्मस्वदृशोरन न्यत्वाज्जडत्वात्दृश्यस्य स्वदृक्त्वात्स्वयंप्रकाशत्वात्द्रष्टुरतःकस्येयंसंसृतिरुपलभ्यते ११ देहस्थस्यहरेरियमपिनयुज्यतइत्याह आत्मेति अग्निवदीश्वरःदारुवद्देहःजीवपक्षस्तुपरमात्मकोटावेव भूतत्वान्नपृथगुक्तः कस्येतिपुनरुक्तिरवश्यपरिहारवक्तव्यार्था १२ जीवस्यैवसंसृतिरितिभावेनाह यावदिति आत्मनोजीवस्ययावद्देहेंद्रियप्राणैःसन्निकर्षणंसंबंधःतावत्संसारःकस्येत्यत्रउक्तम् ७ विवेकिनइति नित्यानंदादपार्थोपिअविवेकिनइतिविशेषणाद्विवेकिनोमोक्षहेतुत्वात्फलवानपि फलवान्मोक्षहेतुत्वान्नित्यानंदादपार्थकः । जीवात्मनस्तुसंसारःस्वप्नवच्चंचलत्वतइतिवचनात् ११ संसृत्यभावस्यैवफलरूपत्वान्निरर्थएवसंसारइतिअवधारयति अर्थेपीति अपिशब्दोअल्पफलार्थःउच्यते निष्फलत्वेनयदत्यल्पफलंभवेदितिवचनात् अर्थेअविद्यमानेपि अस्मात्संसारात्प्रयो जनाभावेपिपुंसःसंसृतिर्नानिवर्तते तत्रेदंनिमित्तंध्यायतोविषयानिति कथमिव अस्यस्वप्नदर्शिनोपथानर्थागमःप्रयोजनविधुरव्यवहारावाप्तिर्भवति अत्रापिनिमित्तंध्यायतइति यथास्वप्ना

एतद्विद्वान्मदुदितंज्ञानविज्ञाननैपुणः ॥ ननिंदतिनचस्तौतिलोकेचरतिसूर्यवत् ९ प्रत्यक्षेणानुमानेननिगमेनात्मसंविदा ॥ आद्यंतवदसज्ज्ञात्वानिःसंगो विचरेदिह १० उद्धवउवाच ॥ नैवात्मनोनदेहस्यसंसृतिर्द्रष्टृदृश्ययोः ॥ अनात्मस्वदृशोरीशकस्येयमुपलभ्यते ११ आत्माव्ययोगुणःशुद्धःस्वयंज्योतिरनावृ तः ॥ अग्निवद्दारुवदचिद्देहःकस्येतिसंसृतिः १२ श्रीभगवानुवाच ॥ यावद्देहेंद्रियप्राणैरात्मनःसंनिकर्षणम् ॥ संसारःफलवांस्तावदपार्थोप्यविवेकिनः १३ अर्थेप्यविद्यमानेपिसंसृतिर्ननिवर्त्तते ॥ ध्यायतोविषयानस्यस्वप्नेऽनर्थागमोयथा १४ यथाह्यप्रतिबुद्धस्यप्रस्वापोबह्वनर्थभृत् ॥ सएवप्रतिबुद्धस्यनवै मोहायकल्पते १५ शोकहर्षभयक्रोधलोभमोहस्पृहादयः ॥ अहंकारस्यदृश्यंतेजन्ममृत्युश्चनात्मनः १६ देहेंद्रियप्राणमनोभिमानोजीवोंतरात्मागुण कर्ममूर्तिः ॥ सूत्रंमहानित्युरुधेहगीतःसंसारआधावतिकालतंत्रः १७ ॥

थानांअस्थिरत्वेपिनिरंतरविषयानुस्मरणसंततसंस्कारसंतत्यानर्थागमोननिवर्तते एवंसंसारोपि १४ अज्ञानिनएवसंसारोऽनर्थकरःनज्ञानिनइत्याह यथाहीति अप्रतिबुद्धस्यस्वप्नावस्थामास्थितस्ययथाप्रस्वापोबह्वनर्थकृत्सएवप्रस्वापःप्रतिबुद्धस्यप्रमोहायनकल्पते एवंसंसृतिरज्ञानिनामनर्थकृत् सैवज्ञानिनांमोहायनैव विषयलोलुपत्वेनदुर्जनस्याफलःसज्जनस्यस्वस्वरूपानंदापेक्षयाफलोपिमज्ज्ञानेनस्वरूपानंदसाधनत्वेनसफलत्वादल्पफलइतिहेयःसंसारइत्यवधारणार्थंपुनर्वचनमितिभावः १५ जीवस्यापिसंसारःअभिमानिकएवनस्वाभाविकःअन्यथातन्निवृत्तिसाधनविधानानुपपत्तिरित्याशयेनाह शोकेति शोकादयोजन्ममृत्युश्चाहंकारस्यसकाशाज्जीवस्यदृश्यंतेनस्वतः परमात्मनस्त्वन भिमानात्सुतरामसंभवइत्यर्थः परमात्मनएवनिषेधेनजीवस्येत्येतत् अहंकारस्यसकाशात्दृश्यतेनात्मनःस्वतः । अहंकारात्तुसंसारोभवेज्जीवस्यनस्वतः । कुतश्चिदानंदतनोःस्वरूपेच्छायुतस्यसइत्यनेन निरस्तम् १६ कयायुक्त्याजीवस्यैवसंसारइतितत्राह देहेति देहेंद्रियप्राणमनसांसंघतोभिमानोयस्यसतथासर्वेषांअंतःस्थित्वासर्वमादत्तइत्यंतरात्माचगुणैःकर्मभिश्चारब्धामूर्तिर्यस्यसतथा सूत्रंमहा नित्याद्यधिकारनामभिर्बहुधापुराणेपुगीतश्चकालतंत्रःकालाभिमानीदुर्गाधीनांजीवःपुरुषोहिरण्यगर्भोपिसंसारआधावतिकिमुतान्येजीवाइतिकैमुत्यन्यायलक्षणयायुक्त्याजीवस्यैवसंसारइतिनिश्चीयते । सं सारयुक्तब्रह्मापिसर्वजीवेश्वरेश्वरः । विष्ण्वधीनःसदाज्ञानीकिमुतान्येल्पचेतनाइति अनेनजीवोपाध्यवच्छिन्नस्यपरमात्मनःसंसारइतिमतंनिरस्तमितिज्ञातव्यम् १७

नन्वेवंप्रबलस्यसंसारस्यसमुच्छेदःकथंकारंस्यादत्राह अमूलमिति मुनिर्निरंतरानुस्मरणसमर्थःपुरुषःएतत्संसारकारणमज्ञानंमदुपासनयाजातत्वात् निशितेनज्ञानेनाछित्त्वापुनस्तत्रातृष्णोनिःसंगोभूत्वा गांविचराति यावच्छरीरानिपातमितिशेषः यदज्ञानेनोत्पन्नंतज्ज्ञानेनानिवर्तेतइतितत्कारणमाह अमूलमिति विष्णुकारणककर्ममूलं बलवत्कारणेनजन्यस्यानिवृत्तिःकथमितिचोद्यमनेनपरिहृतं ज्ञानस्यापितत्कारणकत्वात् अज्ञानस्यतत्कारणकत्वेकथितंयुक्तंतदेवकथमित्यतउक्तंबहुरूपेति मनआदिषुसन्निहितबहुरूपेणतेनरूप्यतेतदद्दष्टानुगुणंनिरूप्यतेप्रेर्यतइतिबहुरूपरूपंमनोवचःप्राणशरीराणि कर्मविषयोपरयसतथाअहंमंतावक्तेत्याद्याकारेणजायमानामित्यर्थः १८ ज्ञानासिश्चक्रियाकारोनिशितःस्यादितितद्विषयप्रकारमाह ज्ञानमिति सत्यंज्ञानमनंतंब्रह्मेतिश्रुतेरखंडंब्रह्मैवविजानीहीत्यन्वयः कथमस्यजगतःआद्यंतयोःकेवलंस्वतंत्रमेववर्तते यच्चकालःपूर्णगुणत्वात्फलपाचकत्वात् यच्चहेतुर्निमित्तकारणंयच्चजगतोमध्येपितदेवतत्त्वेनवर्ततेनान्यथा यच्चान्यतोविविक्तत्वाद्विवेकः यच्चानितरां गमयतिप्रापयतीतिनिगमः यच्चसर्वैरालोच्यत्वात्तपःतपआलोचनइतिधातुः प्रतिप्रतिअक्षेष्विंद्रियेषुस्थितत्वात्प्रत्यक्षं आचार्यसंप्रदायसिद्धत्वादैतिह्यं अथवेदादिप्रमाणसिद्धत्वादनुमीयमानत्वादनु मानं अनेनास्मिन्नर्थेप्रत्यक्षादिप्रमाणमुक्तंभवति १९ जगतआदिमध्यावसानेषुब्रह्मणएवाप्रतिहतस्वातंत्र्यंसोदाहरणंस्पष्टयति यथेति यथाहिरण्यंरथाद्युपरिस्वकृतंअतिचित्रितंपुरस्ताच्चित्रिताया पूर्वरथादेःपृथगितिशेषः पश्चाच्चसर्वस्यहिरण्मयस्यद्रव्यस्यहिरण्यत्यागलक्षणनाशानंतरंचपृथगेवमध्येचस्वर्णखचितदशायां तदेवस्वर्णरथःस्वर्णशंखइत्यादिनानापदेशैर्व्यवहारयोग्यंतदेवहिरण्यंदार्वा दिपृथगेव तद्वत्तथास्वतंत्रोहमस्यजगतोप्यादावंतेमध्येसुरनरादिनानाव्यपदेशैस्तत्तदंतर्यामितयामुख्यतयाव्यवहार्यःपृथगेवस्थितः। रथोपस्थेपरिष्कारात्पूर्वंदारुमयाद्रथात्। सुवर्णंव्यवहारायमुख्यंरथ परिष्कृतं। मध्येचांतेरथोपस्थान्निष्कृष्यपृथगास्थितं। यद्वदेवंहरिःसाक्षाज्जगदेहात्पृथक्स्थितः। पूर्वंजगतिसंस्थश्चजगदंतेपृथक्स्थितः। सएवमुख्योजगतःस्वातंत्र्यात्परमेश्वरइति तच्चान्नियामकस्यै

**अमूलमेतद्बहुरूपरूपंमनोवचःप्राणशरीरकर्म ॥ ज्ञानासिनोपासनयाशितेनछित्त्वामुनिर्गांविचरत्यतृष्णः १८ ज्ञानंविवेकोनिगमस्तपश्चप्रत्यक्षमैतिह्यमथानुमानम् ॥ आद्यंतयोरस्ययदेवकेवलंकालश्चहेतुश्चतदेवमध्ये १९ यथाहिरण्यंस्वकृतंपुरस्तात्पश्चाच्चसर्वस्यहिरण्मयस्य ॥ तदेवमध्येव्यवहार्यमाणंनानापदेशैरहमस्यतद्वत् २० विज्ञानमेतत्त्रिपदस्थमंगगुणत्रयंकारणकार्यकर्तृ ॥ समन्वयेनव्यतिरेकतश्चयेनैवतुर्येणतदेवसत्यम् २१**

वनामसर्वंसुरादिकं। तत्संबधादुदीर्पितव्यवहृत्यैसुरादिषुइतिच एकलंकेवलंचेतिस्वातंत्र्यमभिधीयते। स्वतंत्रस्तुहरिःसाक्षात्परिष्कृतहिरण्यवदितिचोवि सुरनराद्यंतस्थःसुरनराद्युपाधीनांनानात्वेप्यहमेक एवयथाहिरण्मयकृतंपिंडीकृतंकुंडलाद्याकारेणविविधंपुनरेकमेवतथाहमपि यथासुवर्णमकृतंक्रियतेकुंडलादिकं। पुनरेकीभवत्यद्धातद्वद्विष्णुरजोपिसन्। सुराद्यंतःस्थितोभूत्वापुनरेकोभवेद्विभुरितिव चनात् किंचदार्वाद्यल्पफलंसुवर्णमेवतन्निमित्तकारणंमहाफलंतथाजगदल्पफलमस्वतंत्रंचनाहंतथाकिंतुस्वतंत्रोमहाफलहेतुश्चेति प्रत्येकंनतुदार्वादिस्वतंत्रंविक्रियागतं। महाफलंस्यात्स्वर्णंतुस्वतंत्रंविक्रि योपगं। तद्वत्स्वतंत्रोभगवान्प्रवृत्तावन्यदन्यथेतिवाक्यात् २० इतोपिमोक्षादिदातृत्वेननिरुपचरितस्वातंत्र्यंहरेरेवेत्याह विज्ञानमिति अंगएतद्ब्रह्मविज्ञानं निर्दोषज्ञानस्वरूपंकुतस्त्रिपदस्थंत्रीनुत्त माधममध्यमान्जीवान्त्रिषुपदेषुमोक्षादिषुस्थानेषुस्थापयतीतिमोक्षसंसारतमआख्यपददातृइत्यर्थः चेतनानामपिज्ञानात्मत्वेनमोक्षदातृत्वंकिंनस्यादित्याशंक्यतत्सत्तादेर्यदिच्छाधीनत्वेनप्रतीतिः त देवविज्ञानं विज्ञानमानंदंब्रह्मेतिश्रुतेरित्यभिप्रायेणाह गुणत्रयमिति येनेतितृतीयाषष्ठ्यर्थे येनयस्यतुर्येणतुर्यस्यजाग्रदाद्यवस्थातीतस्यविशुद्धज्ञानमूर्तेःसमन्वयेनइच्छायाः सत्वेनानुग्राहकलक्षणा भिमुख्येनगुणत्रयादिकं सर्वमस्तीतिशेषः व्यतिरेकतोऽसत्वेनास्तितदेवकेवलमित्युक्तं केवलपदंसर्वत्रानुवर्तनीयं तत्केवलमेवसत्यंसदास्तित्वेनस्वतंत्रमेव सत्यपदंचानुवर्तनीयंविज्ञानंसत्यंत्रिपद स्थंसत्यमिति गुणत्रयसत्वादिकारणंमहदहंकाराद्युपादानंकार्यंदेहादिकर्तृकालकर्मादिनिमित्तकारणं स्वतंत्र्यमेवसत्यत्वंविष्णोरन्यस्यसत्यता। प्रवाहतःसदास्तित्वंपुंप्रकृत्योःसदास्तितेतिवचनात् ईश्वरेच्छासदसद्भावाभ्यांअस्तित्वनास्तित्वेइतितस्यस्वातंत्र्यमनुपद्यतमिति २१

ननुब्रह्मव्यतिरिक्तस्यस्वातंत्र्यसंभवेकथंतस्यस्वातंत्र्यमनुपहतमितितत्राह नयदिति यदुत्पत्तेःपुरस्तात्केवलंनयन्नाशात्पश्चादुतस्वतंत्रंनयच्चमध्येचस्थितिकालेचकेवलंनयत्परेणभूतमुत्पन्नंयत्परेणभासि दंसत्तादिमद्व्यपदेशमात्रंस्वतंत्रमितिवाङ्मात्रं अतस्तद्ब्रह्मैवसत्परमसत्यमितिमेमनीषा तत्स्वातंत्र्येणनैवास्तियदुत्पत्तिविनाशवत् । स्वातंत्र्येणास्तितातस्ययत्सत्ताज्ञानदंसदेति । अनेनकालत्रय सत्त्वप्रतिषेधेनसदसद्विलक्षणंजगदितिनिरस्तं नन्वसच्चेन्नप्रतीयेतसच्चेन्नबाध्येतेत्यन्यथानुपपत्तिप्रमाणसद्भावात्सदसद्वैलक्षण्यापलापोनयुज्यतइत्याशंक्यप्रपंचस्यासत्त्वोक्त्यास्वातंत्र्यमेवनिषिध्यते न नुप्रतीत्यन्यथानुपपत्त्यानिर्वचनीयत्वंपरमार्थसत्त्वाभावेननाशोपपत्तेः २२ सच्चेन्नबाध्येतेत्यस्याप्यन्यथोपपत्तेरितिभावेनाह अविद्यमानइति सदसद्वैलक्षण्यमनुपपन्नंचेज्जगदसदेवस्यादितिशून्य वादिमतंवक्तनेनमत्याह अविद्यमानइत्यादिना वैकारिकःविकारयोग्योराजसःसर्गःरजोगुणसंबंधीसर्गोयस्यप्रपंचस्यसतथाएषःप्रपंचः अविद्यमानोपिअसन्नप्यस्वतंत्रोपिअवभासते स्वतंत्रइतिअज्ञा नामितिशेषः यतःस्वयंज्योतिर्ब्रह्मपरमार्थसत्स्वतंत्रंविभातिविदुषामितिशेषः इतोप्यविद्यमानत्वमस्वातंत्र्यमेवनत्वन्यादितिभावेनाह अतइति ब्रह्ममूलप्रकृतिश्श्रोत्रादींद्रियाणि अर्थाः शब्दादयः आत्माजीवः विकाराइंद्रियाभिमानिदेवाः एवमादिभिश्चित्रंविचित्रंजगदतोब्रह्मतएवविभातीत्यतोनानिर्वाच्यंनचान्यमित्यर्थः तस्यभासासर्वमिदंविभातीतिश्रुतेः अविद्यमानतानामजगतःपरतंत्रता । यथा शर्करतुपुत्रादिरसविस्युच्यतेजनैरीति जगतोनास्तितासैवयापराधीनतासदा । अभावस्तुकुतस्तस्ययद्विभातीहसर्वदेति । प्रमाणद्वयेनकथितएवार्थःनस्वकपोलकल्पितः २३ एवंतावज्ज्ञातव्यांशंज्ञात्वा मुनिनापरंकर्तव्यंकिमित्यत्राह एवमिति एवमुक्तप्रकारेणविवेकबुद्ध्यासर्वस्माद्वैलक्षण्यज्ञानेनानुगृहीतैर्हेतुभिःनिर्दोषोपपत्तिभिः परापवादेनपरस्यापवादेननेदंनेदमितिनिषेधमुखेन एषआ

नयत्पुरस्तादुतयन्नपश्चान्मध्येचयन्नव्यपदेशमात्रम् ॥ भूतंप्रसिद्धंचपरेणयत्तत्तदेवसत्स्यादितिमेमनीषा २२ अविद्यमानोप्यवभासतेयोवैकारिकोराजससर्गएषः ॥ ब्रह्मस्वयंज्योतिरतोविभातिब्रह्मेंद्रियार्थात्मविकारचित्रम् २३ एवंस्फुटंब्रह्मविविच्यहेतुभिःपरापवादेनविवेकबुद्ध्या ॥ छित्त्वात्मसंदेहमुपारमेतस्वानंदतुष्टोखिलकामुकेभ्यः २४ नात्मावपुःपार्थिवमिंद्रियाणिदेवाह्यसुर्वायुजलंहुताशः ॥ मनोन्नमात्रंधिषणाचसत्वमहंकृतिःखंक्षितिरर्थसाम्यम् २५ समाहितैःकःकरणैर्गुणात्माभिर्गुणोभवेत्तस्सुविविक्तधाम्नः ॥ विक्षिप्यमाणैरुतकिंनुदूषणंघनैरुपेतैर्विगतैरवेःकिम् २६

त्मानेतिनेतीतिश्रुतेः स्फुटंब्रह्मविविच्यपृथक्कृत्यज्ञात्वात्मसंदेहंमनसिस्थितंसंशयंछित्त्वाखिलकामुकेभ्यः अनल्पतृष्णाजननशीलेभ्योविषयेभ्यउपारमेत शब्दादिविषयोपरमेसुखानुत्पत्तिरत्राह स्वानंदतुष्टइति स्वानंदानुभवेनालंबुद्धिप्राप्तः अनेनजीवपरभेदज्ञानमेवमुक्तिसाधनंनाभेदज्ञानमतःश्रेयोर्थिभिरभेदमतंसर्वथाहेयमितिदर्शितं २४ परापवादप्रकारंविवृणोति नात्मेति अत्रनेतिप्रत्येकंसंबंधितव्यं पार्थिवंवपुःशरीरं आत्मापरमात्मानभवति इंद्रियाणिनहिदेवाइंद्रियाभिमानिनोनहिवायुजलहुताशः वायुजलहुताशनकृतशरीराभिःमुख्यप्राणश्चन वायुरेवस्वयंप्रा णस्तत्रस्थेचोदतेजसी । उदेनतेजसाचैवप्राणस्यहिकृतंवपुरित्यस्मात् प्राणस्यवायुरूपस्यभूतत्रयकृतंवपुः । यतोहिपार्थिवंनात्रखंचात्यल्पमुदाहृतमित्यस्माच्चोक्तंयुक्तंमनश्चात्मान अन्नमात्रअन्नंपृथिवीमात्रं गंधादिमात्राचन एकवद्भावविवक्षयाप्हस्वत्वं धिषणाप्राकृतबुद्धिश्चनसत्त्वंमूलबुद्धिः अहंकृतिरहंकारतत्त्वंखंमहाकाशंन क्षितिर्दर्शनादिक्रियाचनअहंशृणोम्यहंस्पृशाम्यहंपश्यामीतिसर्वार्थेषुसमानत्वादहंका राभिमानविशेषोर्थसाम्यंचात्मानभवतीत्यर्थः नदेहोनेंद्रियप्राणमनोबुद्ध्यहमादयः । विष्णुश्चिदानंदतनुःसहिजीवाधिपःसदेतिवाक्यात् सवाएषआत्मानेतिनेतिश्रुत्यर्थएवविव्रियते २५ इंद्रियस माधानविक्षेपयोर्हरिप्रियाप्रियसाधनत्वेनोच्यमानत्वात्ताभ्यांहरेरपिगुणदोषौस्यातांकिंतत्राहसमाहितैरिति गुणात्मभिःशब्दादिविषयमनस्कैःपुरुषैःस्वविषयत्वेनसमाहितैरेकाग्रचित्तत्वेनस्थापितैःकरणै रिंद्रियैःतत्सुविविक्तधाम्नःतेभ्यइंद्रियेभ्योविषयेभ्यश्चपृथग्भूतस्वरूपस्यप्राकृतेंद्रियराहितस्यभगवतः कोगुणोभवेत्नकोपि विषयेषुविक्षिप्यमाणैरितस्ततःआकृष्यमाणैरिंद्रियैर्हरेःकिंदूषणंनाकिमपिदूषणं

अत्रोदाहरणमाह घनैरिति आह्लादरूपैर्घनैरुपेतैःसर्वाह्लादगुणरूपस्यरवेःकिंभवेत्नाकिमपिप्रयोजनं विगतैर्दोषोपिभवेत्किंनभवेदेव यथारवेःगुणदोषाभावेपिअन्येषांघनैरुपेतैश्छाययासुखंभवेत् विगतैस्तापेनदुःखंभवेत् तथासमीहितकरणैःसमाधानकर्तुःसुखंविक्षिप्तैर्दुःखंभवेदितिभावः समाहितेपिजीवेनाविक्षिप्तेवानतुकचित्। विशेषोविद्यतेविष्णोस्तथापितुसमाहिते । प्रीतोभवतिवैनित्यंसर्वधर्मकृतोपिचेतिएतदुक्तार्थेमानम् २६ ननुहरेरपिसत्वादिगुणकार्येषुदेहादिषुस्थितस्यतत्कृतगुणदोषौजीववत्किंनस्यातामित्याशंक्यआकाशवदसंगएवनदोषवानित्याह यथेति यथानभोवाय्वादीनांगुणैःस्पर्शादिभिर्नसज्जतेतत्कृतविशेषवन्नभवति वाशब्दश्चार्थः अत्रनभसिगतागतैश्चदेहादिभूतकार्यैर्गुणैश्चसत्वादिगुणतत्कार्याणामसारतयातदंतर्वर्तमानमक्षरंब्रह्मससृतिहेतुभिःसत्वादिगुणैस्तन्मयैरागादिदोषैश्चासंगत्तमसंबद्धमेवअत्रहेतुःपरमिति सत्वादिगुणेभ्यःउत्तमत्वेनविलक्षणं अनेननिःसंगत्वेनमनःसमाधानासमाधानाभ्यांहरेर्गुणदोषाभावेपिविषयसंगाज्जीवस्यतौस्यातामितिदर्शितम् २७ तर्हिमुमुक्षोःसाधनविधानंव्यर्थमितिनमंतव्यं सर्वदोषाणांसंगमूलत्वात्सएवमुमुक्षुणापुरुषेणनिर्मूलनीयइत्याह तथापीति हरेर्गुणदोषाभावेपितावन्मायारचितेषुप्रकृतिनिर्मितेषुगुणेषुविषयेषुसंगःपरिवर्जनीयःकियंतंकालंवर्जनीयोन्यथास्त्रीभिर्वापानैर्वेत्यादिश्रुतेःसगुणविषयास्यादित्यतोवधिमाह मद्भक्तीति दृढेनमद्भक्तियोगेनयावद्रजस्तमश्चतज्जनितं कषणकर्षणेनायतेगच्छतीतिकषायपापंचानिरस्येतमुक्तिपर्यंतमितिशेषः अयगताविति धातुः २८ व्यतिरेकेदोषमाह यथेति यथानृणामसाधुचिकित्सितआमयःसम्यक्चिकित्साभावात्पुनःपुनः प्ररोहन्नंकुरीकुर्वन्नामयिनं संतुदति एवमपक्वकषायकर्मसर्वेषुविषयेषुसंगोयस्यतत्सर्वसंगंमनःकुयोगिनंअपरिपक्वयोगयुक्तपुरुषंविध्यतितस्यभगवद्ध्यानविघ्नंकरोतिपुनःपुनर्विषयाभिलाषप्ररोहादितिभावः २९ नन्वेवंतर्हिअपरिपक्वयोगवतामनादिकर्ममूलांतराय

यथानभोवाय्वनलांबुभूगुणैर्गतागतैर्वात्रिगुणैर्नसज्जते ॥ तथाक्षरंसत्वरजस्तमोमलैरसंगतंसंसृतिहेतुभिःपरम् २७ तथापिसंगःपरिवर्जनीयोगुणेषुमायारचितेषुतावत् ॥ मद्भक्तियोगेनदृढेनयावद्रजोनिरस्येततमःकषायम् २८ यथामयोसाधुचिकित्सितोनृणांपुनःपुनःसंतुदतिप्ररोहन् ॥ एवंमनोपक्वकषायकर्मकुयोगिनंविध्यतिसर्वसंगम् २९ कुयोगिनोयेविहितांतरायैर्मनुष्यभूतैस्त्रिदशोपसृष्टैः ॥ तेप्राक्तनाभ्यासबलेनभूयोयुंजंतियोगंनतुकर्मतंत्रम् ३० करोतिकर्मक्रियतेचजंतुःकेनाप्यसौचोदितआनिपातात् ॥ नतत्रविद्वान्प्रकृतौस्थितोपिनिवृत्ततृष्णःस्वसुखानुभूत्या ३१ तिष्ठंतमासीनमुतव्रजंतंशयानमुक्षंतमदंतमन्नम् ॥ स्वभावमन्यत्किमपीहमानमात्मानमात्मस्थमतिर्नवेद ३२

विहतानांयोगापरिपाकेनभगवत्प्राप्तिरापतितेतितत्राह कुयोगिनइति कुयोगिनोध्यानपरिपाकरहितास्त्रिदशोपसृष्टैराधिदैविकैर्मनुष्यभूतैर्मनुष्यैर्वनिताभिराध्यात्मिकैर्भूतैराधिभौतिकैरंतरायैर्विहताहियस्मात्तस्मात्तेअपक्वयोगिनःप्राक्पूर्वजन्मनिकृतध्यानाभ्यासबलात्तत्वेनयोगंध्यानंयुंजंतिकुर्वंति भूयोमत्प्रसादेनतत्परिपाकेनमामवाप्नुवंतीतिशेषःकर्मलक्षणतंत्रंसाधनंनानुतिष्ठंतीत्यन्वयः अतोमद्योगाभ्यासोनव्यर्थोनमदप्राप्तिश्चेतिभावः ३० नन्वत्रकैश्चित्कर्मैवपूर्वाभ्यासेनावशैःक्रियतेनयोगोभ्यस्यतेकैश्चित्पूर्वाभ्यासेनयोगएवाभ्यस्यतेनकर्मक्रियतइत्यत्रवासनातिरिक्तप्रयोजकेनभाव्यं सकइतिचोद्यपरिहरति करोतीति योग्ययोगिलक्षणोजंतुर्जीवःकर्मकरोतीतिप्रत्यक्षं तत्रासौकेनापिपुरुषेणचोदितःप्रेरितएवक्रियतेकार्यतेआनिपाताच्छरीरापातपर्यंतं अनेनवासनाद्यतिरिक्तप्रयोजककर्तास्तीत्यवगतसचपूर्णानंदोहरिरेवएषउएवसाधुकर्मकारयति यदेषआकाशआनंदोनस्यादितिश्रुतेः ननुतर्हिविद्वदविदुषोःकोविशेषइत्यत्राह नतत्रेति इदंसर्वंविद्वान्प्रकृतौप्रकृतिविकृतमहदादिविकृतपंचभूतैर्निर्मितदेहेस्थितोपिस्वसुखानुभूत्याभगवदनुग्रहाविर्भूतस्वरूपानुभवानंदेनविषयेभ्योनिवृत्ततृष्णःकर्माणिकुर्वन्नपितत्रकर्मसुनसज्जतइतिशेषः ३१ अधुनायोगिनोऽसंप्रज्ञातसमाध्यवस्थामाह तिष्ठंतमिति मद्देहादिष्वासीनोव्रजन्छयानइत्यादिक्रियाःकुर्वन्हरिरेवेत्यात्मस्थमतिः परमात्मन्येवस्थितमतिस्तिष्ठंतमासीनमित्यादिक्रियाकरमात्मानंदेहंनवेद किंबहुनापारतंत्र्याद्यतरेणपरमात्मनोन्यत्किमपिनवेदेत्यर्थः स्वभावंदेहस्यांप्रयाप्रियलक्षणम् ३२

यदिकश्चित्प्रारब्धकर्मवशात्तद्धितामिवपश्यतितथापिस्वतंत्रतयानपश्यतीत्याह यदिस्मेति यदिस्मरणवासनयाहरेरन्यदसदिंद्रियार्थममंगलमिंद्रियविषयंदेहगेहादिजगत्कर्मनिबंधनतयापश्यति म
नीषीतथापिवस्तुतयास्वतंत्रतयानमन्यते तत्कुतइत्यतउक्तं नानेति तत्स्वतंत्रत्वंनानानुमानेनोत्पत्त्यादिमत्त्वविधानानुमानेनविरुद्धंहि एतमर्थंनिदर्शयति स्वप्नमिति यथास्वप्नदृक्स्वप्नादु
त्थायोत्थितःस्वतिरोदधानंअनित्यंपरतंत्रंस्वस्वप्नंजाग्रत्त्वेननमन्यतेस्वप्नजाग्रत्त्वस्यनानानुमानविरुद्धत्वात् नहिस्वप्नंपश्यन्स्वप्नंबाध्यतेमन्यतेअपितुस्वप्नमद्राक्षमित्यबाध्यमेवजानातिस्वातंत्र्यमारोपितं
पश्यतीतिभावः तथाविद्वानपिजगदबाध्यमेवस्वातंत्र्यमारोपितंपश्यतीतिभावः नानामानविरुद्धंहिस्वातंत्र्यंजगतःसदा । स्वतंत्रोभगवान्विष्णुरेकएवनसंशयइत्यनेन अस्त्येवस्वाप्नमखिलंवासनाद्व
यमात्मनि । जाग्रदेतदितिज्ञानंयत्तदेवभ्रमादिकं । तद्वज्जगदिदंसर्वंविद्यमानंनसंशयः । स्वतंत्रमेतदित्येतुयज्ज्ञानंतद्भ्रमात्मकमित्यनेनच । उत्थितोनैवजाग्रत्त्वंकाचित्स्वप्नस्यपश्यति । स्वातंत्र्यमेवजगतो
ज्ञानवान्नैवपश्यतीत्यनेनासिद्धत्वात् स्वप्नदृष्टांतबलेनजगतोबाध्यत्वमुच्यतइत्येतदासुरमतमित्यवगम्यते ३३ ननुजगत्स्वातंत्र्यप्रतीतौकिकारणमित्याशंक्याज्ञानकारणमित्याशयेनाह पूर्वमितिज्ञानोद
यात्पूर्वमात्मनिपरमात्मनिअज्ञानंगृहीतंपरमात्मस्वरूपविषयत्वेनाज्ञानमार्जितंजीवेनेतिशेषःनकेवलंतत्स्वरूपविषयमेवेत्यतउक्तं गुणकर्मचित्रमितिभगवतोगुणविषयत्वेनकर्मविषयत्वेनचचित्रंनानाविधं अ
ज्ञानसद्भावेप्रमाणमाह अविविक्तमिति एतमहंनजानामीतिविवेकशून्यं नन्वेतदज्ञाननिवृत्तौकामतिभटीतितत्राह अंगेति अंगेत्यामंत्रणेनभयंनाकार्षीरित्याह पुनःपुनरीक्षयाहरेःस्वरूपस्य
गुणानांकर्मणांचालोचनलक्षणोपासनाजनितज्ञानेनतदज्ञानंनिवर्ततेपुनस्तदज्ञानंनगृह्यते ज्ञानोदयानंतरंआत्मापरमात्मापिनविसृज्यःस्वस्वरूपसुखाविष्कारादिलक्षणापरोक्षज्ञानेनापरोक्षीकृतोनपरोक्षी

**यदिस्मपश्यत्यसदिंद्रियार्थंनानानुमानेनविरुद्धमन्यत् ॥ नमन्यतेवस्तुतयामनीषीस्वप्नंयथोत्थायतिरोदधानम् ३३ पूर्वंगृहीतंगुणकर्मचित्रमज्ञानमा
त्मन्यविविक्तमंग ॥ निवर्ततेतत्पुनरीक्षयैवनगृह्यतेनापिविसृज्यआत्मा ३४ यथाहिभानोरुदयोनृचक्षुषांतमोनिहन्यान्नचसंविधत्ते ॥ एवंसमीक्षानिपुणा
सतीमेहन्यात्तमिस्रंपुरुषस्यबुद्धेः ३५ एषस्वयंज्योतिरजोप्रमेयोमहानुभूतिःसकलानुभूतिः ॥ एकोद्वितीयोवचसांविरामोयेनेरितावाग्रचनाश्चरंति ३६
एतावानात्मसंमोहोयद्विकल्पस्तुकेवले ॥ आत्मामृतेस्वमात्मानमचलंयन्नपश्यति ३७**

भवति तस्यजगत्स्वातंत्र्यंचनप्रतीयतइत्यर्थः अन्यैर्ज्ञातेपिचाज्ञातेनविशेषोहरेःक्वचित् । तेषामेवाविशेषःस्यादज्ञानापगमेनत्वितिवचनाज्जीवस्यैवविशेषोनहरेर्विशेषइतिचज्ञातव्यंज्ञानार्थेनेतिभा
वः ३४ ममसाक्षात्कारेणाज्ञानंनिवर्ततइत्युक्तं तत्रतेनममकश्चनविशेषोनास्तीतिसमर्थितंसोदाहरणमाह यथेति हिशब्दःसाक्षिसूचकोयथाभानोःसूर्यस्यउदयोनृचक्षुषांतमोनिहन्यान्नतुतमः
संविधत्तेकमप्यतिशयंनाधत्ते एवंवैराग्यादिसाधनसामग्र्यानिपुणासतीमेसमीक्षापुरुषस्यसर्वदाश्रीनारायणशरणंगतस्यबुद्धेस्तमिस्रंहन्यात्नतुममकंचनविशेषंकुर्यात् ३५ बहुशःश्रुतपरमात्मस्वरूप
स्यापितवस्वरूपंकीदृशमित्युद्धवस्यांतरंचोद्यंपरिहरति एषइति एषोहंस्वयंज्योतिःस्वतएवपूर्णप्रकाशःअतएवाजःअतएवाप्रमेयःमहतीअनुभूतिर्ज्ञप्तिर्यस्यसमहानुभूतिः सर्वज्ञइत्यर्थः सकलानु
भूतिः पूर्णसुखानुभवएकःज्ञानानंदादिगुणाभिन्नत्वात्स्वगतभेदरहितः अद्वितीयःसर्वोत्तमःअप्रमेयत्वाद्वेदादिवाचामगोचरः वाचामगोचरश्चेत्तदीयज्ञापनंकथंवर्तीवर्तीतितत्राह येनेति वाग्रच
नाःवैदिकलौकिकसर्ववाग्व्यवहारायेनेरिताःवर्ततइत्यनेनभगवदनुगृहीतवाग्व्यवहारविषयत्वेनतज्ज्ञानमुदेतीतिज्ञातव्यं ज्ञानानंदाद्यभिन्नत्वादेकःसर्वोत्तमत्वतः । अद्वितीयोमहाविष्णुःपूर्णत्वात्पुरुषः
स्मृतइतिवचनात् ३६ एवंज्ञानंज्ञेयस्वरूपंनिरूप्यमिथ्याज्ञानस्वरूपंतत्कारणाज्ञानस्वरूपंचविविच्यानिरूपयति एतावानिति यद्विकल्पःप्रमाणविरुद्धंकल्पनंजीवस्वातंत्र्यपरमात्मास्वातंत्र्यजी
वपराभेदादिविषयोयएतावानात्मसंमोहःमनोभ्रमः भ्रमत्वंबाधकज्ञाननिश्चेयं तत्कथमत्राह केवलइति आत्माजीवःकेवलेस्वतंत्रेअमृतेनित्यमुक्तेपरमात्मनिस्थितस्तदाधारतयास्थितंस्वमा

स्मानेरवस्वभावंकदाप्यनपनोद्यास्वातंत्र्यमचलंस्थिरंनपश्यातिय यावत्तावद्भ्रमोननिवर्ततइत्यतःस्वस्वभावाज्ञानंनिमित्तंतन्निवृत्तौभ्रमोनिवर्ततइतिनिश्चीयते । एतावानात्मसंमोहोयद्विरुद्धस्यकल्पनं । परपरात्माश्रयान्जीवान्निश्चयंननपश्यतीतिवचनात् नाद्वैतज्ञानेनभेदभ्रमोनिवर्ततइत्यर्थः २७ इतोपिपचविधभेदभ्रमअद्वैतज्ञानेनानिवर्ततइत्युपदेशोनविदुषांपरिषादिस्वारस्यमाधत्तेइतिभावेनाह य नामाकृतिभिरिति नामाकृतिभिर्नामरूपैर्ग्राह्यज्ञेयंपंचवर्णंपंचभूतात्मकंपंचभेदात्मनावर्तनीयंजगत्तदबाधितमद्वैतज्ञानबाध्यंनभवति जगदबाधितमित्ययं व्यर्थोवादोनभवति किंत्वर्थवादः यथार्थवाद एवकुतःसूरयोजीवंपरमात्मानंचद्वयंद्वित्वसंख्याविशिष्टंविदंतिज्ञात्वापरमानंदंलभंतइतिभावः अनेनजगत्ज्ञानबाध्यमितिवदंतोऽपंडिताःअन्येतुपंडिताइत्युक्तंभवति पंचभूतात्मकंविश्वंभ्रांतिरिस द्रूपपंडिताः । वदंतिपंडितास्त्वद्धाजगदाहुरबाधितं । प्रवाहरूपेणसदाविष्णोरिच्छावशेस्थितमितिवचनात् २८ पूर्वमंतरायहतयोगाःकुयोगिनोजन्मांतरेपियोगमभ्यसंतीत्युक्तमधुनातस्मिन्जन्मन्येव मासयोगांतरायपरिहारंवक्तुमाह योगिनइति कालेयोगाभ्यासविहितसमयेप्रभातादिलक्षणे योगंयुंजतउपसर्गैरुपद्रवैर्विधिर्वक्ष्यमाणः २९ कोयमितितमाह योगधारणयेति योगधारणयायमानि यमादीनामावर्तनेन ४० अनुध्यानेनतत्तदंतरायविहितपरिहारसमर्थहरिस्मरणेननामसंकीर्तनादिभिरित्यनेनाधिकारिणःकालविशेषांश्चलक्षयति अशुभदान्विघ्नान् ४१ रसायनादिनानाविधोपायैः

यन्नामाकृतिभिर्ग्राह्यंपंचवर्णमबाधितम् ॥ व्यर्थोनाप्यर्थवादोयंद्वयंविंदंतिसूरयः २८ योगिनोपक्वयोगस्ययुंजतःकालउत्थितैः ॥ उपसर्गैर्विहन्येतत्तत्रायं विहितोविधिः २९ योगधारणयाकांश्चिदासनैर्धारणान्वितैः ॥ तपोमंत्रौषधैःकांश्चिदुपसर्गान्विनिर्दहेत् ४० कांश्चिन्ममानुध्यानेननामसंकीर्तनादिभिः योगेश्वरानुवृत्त्यावाहन्यादशुभदाञ्छनैः ४१ केचिद्देहमिमंधार्यसुकल्पंवयसिस्थितम् ॥ विधायविविधोपायैरथयुंजंतिसिद्धये ४२ इहवर्षशताशी त्यातदायासोह्यपार्थकः ॥ अंतवत्त्वाच्छरीरस्यफलस्येववनस्पतेः ४३ योगंनिषेवतोनित्यंकायश्चेत्कल्पतामियात् ॥ तच्छ्रद्दध्यान्नमतिमान्योगमु त्सृज्यमत्परः ४४ योगचर्यामिमांयोगीविचरन्मत्पदाश्रयः ॥ नांतरायैर्विहन्येतनिस्पृहःस्वसुखानुभूः ४५ ॥ इतिश्रीभागवतेमहापुराणेएकादश स्कंधेअष्टाविंशोध्यायः ॥ २८ ॥ ॥ ॥ ७ ॥ ॥ ॥ ॥ ७ ॥ ॥

शरीरस्यनाशार्थंतरायपरिहारस्यसुशकत्वेनासिद्धसाधनसौलभ्यार्थंयोगधारणादिविधानमत्राह केचिदिति केचिदविवेकिनःपरेणधार्यसुकल्पमिंद्रियसामर्थ्योपेतंवयसिस्थितंतारुण्यवयसोपेतं अ थशरीरस्यचिरस्थायित्वानंतरंयोगसिद्धयेयुंजंतिमनइतिशेषः ४२ तेषामविवेकित्वंकुतइतितत्राह इहेति तदायासःतस्यदेहस्यपोषणायासः अपार्थकत्वमाह अंतवत्त्वादिति ४३ योगस्यशरीररक्षण योगत्वाभावात्ततदायासस्यततत्फलदत्वान्नवैयर्थ्यंशरीररक्षणायासस्येत्याशंक्याह योगमिति नित्यंयोगंभगवद्ध्यानलक्षणंरसायनंनिषेवतःसेवमानस्यपुंसश्चेद्यदिकायःकल्पतांसमर्थत्वमियात्मा प्नोति तत्तर्हिसमतिमान्योगमेवश्रद्दध्यात् तंयोगमुत्सृज्यान्यत्ररसायनादौश्रद्धांनकुर्यादित्यन्वयःमत्परइत्यनेनमतिमत्त्वंविवृतं अनेनयोगस्यापिशरीररक्षणफलवत्त्वात् रसायनादौप्रवर्तमानाअविवे किनोऽतोमतिमद्भिर्मद्योगएवाभ्यसनीयइतिसिद्धं ४४ अतउक्तयोगांतरायपरिहारमाचरन्नेवयोगपारंगमिष्यतीतिभावेनाह योगचर्यामिति स्वसुखंस्वस्वरूपसुखमनुभवतीतिस्वसुखानुभूरित्यनेनयोगः सर्वापेक्षितअशेषपुरुषार्थसाधनमित्युक्तंभवति ४५ ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांअष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ ॥ ७ ॥ ॥

निर्विघ्नयोगाचरणसाध्यंहरेर्भक्तानुकंपितत्वंकथिततत्त्वज्ञानप्रशंसातन्निरतानांश्रेयस्त्वंउद्धवस्यहरौभक्त्यातिशयलक्षणंतस्यभगवद्भक्तिप्राप्तिंचकथयत्यस्मिन्नध्याये आदावुद्धवउक्तयोगाचरणस्यअशक्त त्वंमनसिकृत्वातत्सिद्ध्युपायंपृच्छति सुदुश्चरामितिअनात्मनोमनोजयरहितस्याधीरस्यवा पुमान्यथाभवदुक्तोपायेनासिध्येत्पुरुषार्थवान्भवेत्तथातद्योगसाधनंमेब्रूहीत्यन्वयः १ तदकथनेकोन र्थइतितत्राह प्रायशइति मौनसयमाभ्यां कर्षितंविषीदतिविशेषान्नष्टंभवति योगाचरणसाधनेऽज्ञातेमनोविषीदति २ अथोतस्मात्तज्ज्ञाःपरमहंसाएवभवदुक्तयोगाधिकारिणइतिभावेनाह अथो इति योगकर्मभिःयोगाख्यकर्मभिःअतएवमानिनोज्ञानिनस्त्वन्माययाहंकारादिरूपयानाविहताइत्यर्थः ३ भक्तौस्थित्वापिप्रकृत्याविहतत्वंत्वद्दासेषुचित्रमितिविज्ञापयति किंचित्रमिति त्वदनन्य शरणेषुदासेषुआत्मदइतियदतोच्युतअशेषबंधोस्तवैतच्चित्रंकिं एतत्कुत्रदृष्टमितितत्राह यइति ईश्वराणांब्रह्मादीनांश्रीमत्किरीटमणिसंघट्टितपादपीठः स्वयंयोगोकुलेपशुभिः पशुपालैश्चसहात्म तत्त्वेनरोचयःप्रकाशितवान्तस्यतवदासेष्वेतच्चित्रंकिमित्यन्वयः ४ भगवद्भक्तमाहात्म्यंतन्माहात्म्याविनाभूतमुक्तंतद्विशदयन्सारासारज्ञानमाह तंत्वेति योब्रह्मादिशिरोभिःश्रीमत्किरीटमणिघट्टित पादपीठःतंत्वांसुकृतवित्सुष्ठुकृतोपकारज्ञःसारज्ञःकःविसृजेत् कीदृशंत्वांअखिलानांआत्मनांजीवानांदयितंप्रेष्ठमीश्वरमणिमाद्यैश्वर्याकारमाश्रितानांसर्वार्थदंअभीष्टाशेषपुरुषार्थदम् किंच कोवा

उद्धवउवाच ॥ सुदुश्चरामिमांमन्येयोगचर्यामनात्मनः ॥ यथांजसापुमान्सिध्येत्तन्मेब्रूह्यंजसाच्युत १ प्रायशःपुंडरीकाक्षयुंजतोयोगिनोमनः ॥ विषीदत्यसमाधानान्मौनसंयमकर्षितम् २ अथोतआनंददुघंपदांबुजंहंसाःश्रयेरन्नरविंदलोचन ॥ सुखंचविश्वेश्वरयोगकर्मभिस्त्वन्माययामीविहतानमानिनः ३ किंचित्रमच्युततवैतदशेषबंधोदासेष्वनन्यशरणेषुयदात्मदस्त्वम् ॥ योरोचयत्सहमृगैःस्वयमीश्वराणांश्रीमत्किरीटमणिघट्टितपादपीठः ४ तं त्वाखिलात्मदयितेश्वरमाश्रितानांसर्वार्थदंसुकृतविद्विसृजेतकोनु ॥ कोवाभजेत्किमपिविस्मृतचित्तवृत्तिःकिंवानवेदतवपादरजोमृतांभः ५ नैवोपयंत्य पचितिंकवयस्तवेशब्रह्मादयोपिनतमूर्द्धसदास्मरंतः ॥ योंतर्बहिस्तनुभृतामशुभंविधुन्वन्नाचार्यचैत्यवपुषास्वगतिंव्यनक्षि ६ श्रीशुकउवाच ॥ इत्युद्धवेनात्यनुरक्तचेतसापृष्टोजगत्क्रीडनकःस्वशक्तिभिः ॥ गृहीतमूर्तित्रयईश्वरेश्वरोजगादसप्रेममनोहरस्मितः ७ श्रीभगवानुवाच ॥ हंततेवर्णयिष्यामि ममधर्मान्सुमंगलान् ॥ यान्श्रद्धयाचरन्मर्त्योमृत्युंजयतिदुर्जयम् ८ कुर्यात्सर्वाणिकर्माणिमदर्थंशनकैःस्मरन् ॥ मय्यर्पितमनश्चित्तोमद्धर्मात्ममनोरतिः ९ देशान्पुण्यान्संश्रयेतमद्भक्तैःसाधुभिःश्रितान् ॥ देवासुरमनुष्येषुमद्भक्ताचरितानिच १०

पुरुषःकिमप्यस्वतंत्रंदेवंभजेत्यदिभजेत्तर्हिअसौविस्मृतचित्तवृत्तिरसारज्ञःचित्तवृत्तिविस्मृतिमुपपादयति किंवेति तवशिवशिरोमौलिमालायितंपादरजोमृतांभोनवेदकिंवा नैववेदेत्यतोऽसौपशुरेवेत्यर्थः ५ एवमनिमित्तबंधुत्वेनसर्वस्माद्युपकारकस्यभवतःप्रत्युकारंकर्तुंकवयोपिनसमर्थाइत्याह नैवेति नतमूर्द्धत्वेनसदास्मरंतःकवयोब्रह्मादयोपितवापचितिंप्रत्युपकारंनैवोपयांति क्रियमाणउपकारः कीदृशइतितंप्रकारमाह यइति तनुभृतामंतर्बहिःस्थित्वाअशुभंविधुन्वन्यस्त्वमाचार्यश्चचैत्यःचित्तस्थश्चाचार्यचैत्यःब्रह्मातस्यांतर्यामिवपुषास्वगतिंस्वयोग्यज्ञानंव्यनक्षिव्यक्तीकरोषि आचार्यस्यचि त्तस्यवपुषेतिवा ६ उद्धवेनपृष्टोभगवान्किमकरोदितिपरीक्षितोमानसंचोद्यंपरिहरति शुकइत्याह इतीति जगत्क्रीडनकंजगत्क्रीडासाधनंयस्यसतथा जगत्क्रीडनस्वशक्तिभिरित्येकंवापदम् गृहीतंमूर्तीनांआत्मांतरात्मापरात्माइतिसंज्ञानांत्रयंयेनसतथा जाग्रत्स्वप्नसुषुप्तिप्रेरकत्वेनतत्स्थत्वेपिजाग्रदाद्यवस्थाक्लेशपरिहारसमर्थइत्यतईश्वरेश्वरइति आत्मांतरात्मापरमात्मेतिमूर्तित्रयंहरेः । जाग्रत्स्वप्नसुषुप्तीनांसृष्ट्यादेश्चप्रवर्तकमित्यत्रप्रमाणम् ७ मृत्युंजननमरणात्मकंसंसारंजयति ८ मद्धर्मेषुमदात्मसुमद्रूपेषुचमनोरतिर्यस्यसतथा ९ मद्भक्तानांआचरितानि १०

पृथक्स्वयमेवसत्रेणबहुभिःसहवामह्यंमत्प्रीत्यर्थंममयात्रामहोत्सवंअयनादिलक्षणंकुर्यात् ११ आत्मनिहृदिआत्मानमंतर्यामिणं यथाशरीरस्थंखंआकाशंनिर्लेपंतथा १२ इत्येवंपूर्वोक्तगुणविशिष्टत्वेनसर्वभूतानिप्रविश्यस्थितइतिभावनामद्भावःतेनमन्यमानः । सर्वभूतेष्वास्तिविष्णुरितिमद्भावेनसर्वाणिभूतानिममालयत्वेनमन्यमानःइतिवायोजनाभेदः सर्वभूतेष्वास्तिविष्णुरितिभावःसतांमतः । अर्चनेसर्वभूतानामादित्येतद्भूतात्मनेतिवचनात्सर्वभूतार्चनायांविशेषोज्ञातव्यःकेवलमप्राकृतंज्ञानमेवाश्रयन् १३ केवलज्ञानप्रकारंदर्शयति ब्राह्मणइति ब्राह्मणादिषुसर्वत्रावस्थितं ब्रह्मसममेकप्रकारंपश्यन्समदृक्मतःसतामितिशेषः १४ एवंभावनाफलमाह नरेष्विति नरेषुमामभीक्ष्णंभावयतःपुंसोसद्भावःमयिभक्तिःस्याद्वास्यादेव योमत् मत्तोभावोमुक्तिलक्षणाभूतिश्चस्यादेव भगवद्बंधकशक्तिलक्षणप्रतिबंधकेसतिकथंमुक्तिःस्यादत्राह मायेतिसाहंकाराअहंकारसहकारिणीमायापि तिरस्कारंयाति हिशब्देन भक्त्याप्रसन्नोभगवान्दद्यान्मुक्तितथाप्युग्रामितिस्मृतिंसूचयति १५ भक्तिमताएवंभाव्यमित्याह विसृज्येतिभक्तःस्वयंदैहिकींआत्मस्थांमनसिस्थितांदृश्यव्रीडांदृश्यमानांलज्जांविसृज्य आश्वचंडालगोखरंदंडवद्भूमौप्रणमेदित्यन्वयःब्राह्मणादीन्प्रतिभूमौदंडवन्नमनंअन्यांश्चंडालादीन्प्रतिमानसस्मरणमितिभेदः अत्राप्यंतर्यामिणःस्मरणंप्रणामइतिशेषः ( प्राणइतिविशेषः ) १६ एतदुपासनावधिमाह यावदिति यावत्सर्वेषुभूतेषुविष्णुरस्तीति । मद्भावोमद्विषयंज्ञानंनोपजायते तावद्वाङ्मनःकायवृत्तिभिरेवमुपासीतेत्यन्वयः १७ एवमुपासीनस्यपरोक्षज्ञानिनोमतिप्रकारमाह सर्वमिति तस्योपासकस्यसर्वंजगत्ब्रह्मात्मकं ब्रह्मणातंस्वीकृतमधीनत्वेनवर्तितामितिमननंहरेःप्रीतिजनकमित्यर्थः ब्रह्मणात्तमिदंसर्वंयत्किंचित्सचराचरं । इतिपश्येतयोविद्वान्सहिब्रह्मात्मविन्मतः । इतिविशिष्टवचनान्नब्रह्मैक्यमुच्यतइतिसिद्धं फलमाह विद्ययेति विद्ययाज्ञानेनात्ममनीषयास्वरूपभूतबुद्ध्यावाच्युतंपरमात्मानंस्वात्मादेःपरमन्यंपरिपश्यतीत्यन्वयः चशब्देनान्यमीशामितिश्रुतिंप्रमाणयति १८ अन्येनापिमुक्तिःस्यात्किमनेनेतितत्राह अयंहीति सर्वकल्पानांसर्वमोक्षोपायानांमध्येअयमुपायोहिसध्रीचीनोमतइतिममसिद्धांतइत्यनेनाप्तिमूलत्वेनान्योक्तानामाभासत्वंसूचयति अयमिति कइत्यतउक्तं मद्भावइति १९ अंगोद्धवास्यधर्मस्योपक्रमेकृतेपितन्मात्रस्यध्वंसोनाशोनैवभवति अस्यधर्मस्यकर्तुःअण्वपिअणुमात्रोपिघूर्मारआयासलक्षणोनास्ति कुतः अनाशिषःनिष्कामस्यमद्धर्मस्यनिर्गुणत्वान्मुक्तिसाधनत्वान्मयासम्यग्व्यवसितंनिश्चितमतोनान्यधर्मसमोमद्धर्मइत्यर्थः २० अस्यैवोत्तमत्वमुपपादयति योयइति अन्यदेवतोद्देशेनक्रियमाणोयोयोधर्मोध्यानार्चनादिलक्षणःक्रियतेपुंभिरितिशेषः सतेतवनिष्फलायकल्पते एतदेवाह वदायासइति तदायासस्तत्रक्रियमाणप्रयत्नोनिरर्थःस्यात्कथमिवनयादेरिवदुर्नयरूपाधर्मस्येव नयादिर्दुर्नयःप्रोक्तोयन्नयंसोतिसर्वदेतिवचनात् २१

पृथक्सत्रेणवामह्यंममयात्रामहोत्सवम् ॥ कारयेन्नृत्यगीताद्यैर्महाराजविभूतिभिः ११ मामेवसर्वभूतेषुबहिरंतरवस्थितम् ॥ ईक्षेतात्मनिचात्मानंयथाखममलाशयः १२ इतिसर्वाणिभूतानिमद्भावेनमहाद्युते ॥ सभाजयेन्मन्यमानोज्ञानंकेवलमाश्रयन् १३ ब्राह्मणेपुल्कसेस्तेनेब्रह्मण्येर्केस्फुलिंगके ॥ अक्रूरेक्रूरकेचैवसमदृक्पंडितोमतः १४ नरेष्वभीक्ष्णंमद्भावंपुंसोभावयतोचिरात् ॥ स्याद्वामायातिरस्कारंसाहंकाराप्ययातिहि १५ विसृज्यस्वयमात्मस्थांदृश्यव्रीडांचदैहिकीम् ॥ प्रणमेद्दंडवद्भूमावाश्वचंडालगोखरम् १६ यावत्सर्वेषुभूतेषुमद्भावोनोपजायते ॥ तावदेवमुपासीतवाङ्मनःकायवृत्तिभिः १७ सर्वंब्रह्मात्मकंतस्यविद्ययात्ममनीषया ॥ परिपश्यतिचपरंपरमात्मानमच्युतम् १८ अयंहिसर्वकल्पानांसध्रीचीनोमतोमम ॥ मद्भावःसर्वभूतेषुमनोवाक्कायकर्मभिः १९ नह्यंगोपक्रमेध्वंसोनघूरस्योद्धवाण्वपि ॥ मयाव्यवसितंसम्यङ्निर्गुणत्वादनाशिषः २० योयोपरोमनोधर्मःकल्पतेनिष्फलायते ॥ तदायासोनिरर्थःस्यान्नयादेरिवसत्तम २१

बुद्धिमतांनिश्चयज्ञानवतांबुद्धिर्निश्चयात्मिकैषामनीषिणांमनसासारेच्छावतांमनीषामनसासारान्वेषणमेतत् अनृतेनक्षणेक्षणेअन्यथाभवताअतएवमर्त्येनशरीराख्यजगताऋतंशश्वदेकप्रकारंसत्यंब्रह्ममाप्नोतीतियत्तस्मात् एकदाज्ञानरूपेणयंनतिष्ठतिसर्वदा । चपलत्वात्सत्यमपिह्यनृतजगदुच्यतइति । सर्वदैकप्रकारत्वात्सत्यंब्रह्मसदोच्यतइतिवाक्यद्वयेनसत्यानृतशब्दयोरुक्तएवार्थइति २२ सुगमोयोगोवक्तव्यइतित्वयापृष्टेनमयायोगउक्तइत्युपसंहरति एषइति २३ ब्रह्मवादःसंसारमोचकब्रह्मज्ञानमेवेत्याशयेनाह अभीक्ष्णशइति २४ सुविविक्तंतवप्रश्नमवधार्यमयोक्तंसनातनंब्रह्मगुह्यंवेदरहस्यंपरिहारमपिधारयन्पुरुषःपरंब्रह्मजानातिज्ञात्वाप्राप्नोतिचेत्यन्वयः २५ प्रचयगमनफलमाह यएतदिति सुपुष्कलंयावदपेक्षितंतावज्ज्ञानंब्रह्मैवदायःपितृधनंयस्यसब्रह्मदायःतस्य यद्वा ब्रह्मदश्चायोअर्थागमोयस्यसतथातस्यआत्मनाप्रसन्नेनमनसाआत्मानमद्विषयज्ञानदत्वामत्स्वरूपंददामि २६ अध्येतुःफलमाह यइति मादर्शयन् २७ श्रोतुःफलमाह यइति २८ अज्ञातांशंसम्यग्वक्तुंस्वोक्तज्ञानेअवधृतिंपृच्छति अपीति समुपधारितमपिकिं मोहश्चविगतोप्यसौमनोभवःमनःशल्यत्वेनजातःशोकश्चनष्टःकिम् २९ एतस्यज्ञानस्योपदेष्टुर्महाफल

एषाबुद्धिमतांबुद्धिर्मनीषाचमनीषिणाम् ॥ यत्सत्यमनृतेनेहमर्त्येनाप्नोतिमामृतम् २२ एषतेभिहितःकृत्स्नोब्रह्मवादस्यसंग्रहः ॥ समासव्यासविधिनादेवानामपिदुर्गमः २३ अभीक्ष्णशस्तेगदितंज्ञानंविस्पष्टयुक्तिमत् ॥ एतद्विज्ञायमुच्येतपुरुषोनष्टसंशयः २४ सुविविक्तंतवप्रश्नंमयोक्तमपिधारयन् ॥ सनातनंब्रह्मगुह्यंपरंब्रह्माधिगच्छति २५ यएतन्ममभक्तेषुसंप्रदद्यात्सुपुष्कलम् ॥ तस्याहंब्रह्मदायस्यददाम्यात्मानमात्मना २६ यएतत्समधीयीतपवित्रंपरमंशुचि ॥ सपूयेताहरहर्मांज्ञानदीपेनदर्शयन् २७ यएतच्छ्रद्धयानित्यमव्यग्रंशृणुयान्नरः ॥ मयिभक्तिंपरांकुर्वन्कर्मभिर्नसबध्यते २८ अप्युद्धवत्वयाब्रह्मसखेसमुपधारितम् ॥ अपितेविगतोमोहःशोकश्चासौमनोभवः २९ नैतत्त्वयादांभिकायनास्तिकायशठायच ॥ अशुश्रूषोरभक्तायदुर्विनीतायदीयताम् ३० एतैर्दोषैर्विहीनायब्रह्मण्यायप्रियायच ॥ साधवेशुचयेब्रूयाद्भक्तिःस्याच्छूद्रयोषिताम् ३१ नैतद्विज्ञायजिज्ञासोर्ज्ञातव्यमवशिष्यते ॥ पीत्वापीयूषममृतंपातव्यंनावशिष्यते ३२ ज्ञानेकर्मणियोगेचवार्तायांदंडधारणे ॥ यावानर्थोनृणांताततावान्मोहश्चतुर्विधः ३३ मर्त्योयदात्यक्तसमस्तकर्मानिवेदितात्माविचिकीर्षितोमे ॥ तदामृतत्वंप्रतिपद्यमानोमयात्मभूयायचकल्पतेसौ ३४ ॥ श्रीशुकउवाच ॥ सएवमादर्शितयोगमार्गस्तदोत्तमश्लोकवचोनिशम्य ॥ बद्धांजलिःप्रीत्युपरुद्धकंठोनकिंचिदूचेश्रुपरिप्लुताक्षः ३५

संभवेपियोग्यायैवोपदेष्टव्यंनायोग्यायेत्याह नैतदिति ३० शूद्राणांयोषितांचयदिभक्तिःस्यात्तर्हितेभ्योपिब्रूयादित्यन्वयः ३१ इदमेवमुक्तिसाधनंनान्यदित्याशयेनाह नैतदिति ३२ तर्हिलोकाएतत्किमितिनविविदिषंतीतितत्राह यावानिति नृणांयावान्ज्ञातव्यार्थोभवेत्तावांश्चतुर्विधोमोहइत्येतदुपलक्षणंपंचपर्वाविद्याप्रतिरुद्धत्वान्नज्ञातुमिच्छंतीत्यर्थः ३३ नन्वेवंचेद्विविदिषाभावेनकदाप्यनुदयोमुक्तेरत्राह मर्त्यइति अयंमोक्षंप्राप्नोत्वितिमोक्षोपायप्रतिमेमयाचिकीर्षितोभवेत् यदामदुद्देशेनमर्त्यस्त्यक्तसमस्तकर्माहरिरेवमयिपरिस्थित्वासर्वकर्मकरोतिअहंतदधीनएवकर्मकरोमिनस्वतंत्रइतिहरावेवनिवेदितात्माचभवतितदाऽमृतत्वंप्रतिपद्यमानःप्राप्नुयोग्योभवन्नसौमयात्मभूयायनिर्दुःखानंदानुभवरूपमोक्षायैवकल्पतइत्यन्वयः यमेवैषवृणुतेतेनलभ्यइतिश्रुतेः ३४ उद्धवस्यभक्त्यतिशयलक्षणमाह सएवमिति ३५

३६ अप्युद्धवेत्याद्युक्तंपरिहरति विद्रावितइति योमोहमयांधकारोमेमनआश्रितः सएवतवसन्निधानान्मोहांधकारापगमःकथमत्राह विभावसोरिति हेऽजायतमश्चाभिप्रभवति किंतुनैव ३७ हरेःस्वात्मन्यनुकंपातिशयंहेतुंकरोति प्रवर्द्धितेति हिशब्दोहेतौ अनुकंपितामयिप्रवर्धितेतिमन्ये विज्ञानमयःप्रदीपोदत्तोहियस्मात्तस्मादितिशेष· अत.सर्वस्याद्युपकारत्वाद्भवानेवानिषेव्यइति भावेनाह हित्वेति ३८ कीदृशोमोहांधकरोयोसौज्ञानासिनाछिन्नइतितत्राह वृक्णश्चेति योसृष्टिविवृद्धयेत्वयाप्रसारितोविस्तारित.सएषस्वमाययाएनसंसारंयामीत्युद्भूतनिजेच्छयाप्रादुर्भूतात्मावे बोधाख्यहेत्यावृक्णश्चेत्यन्वयः ३९ स्वात्मनोभगवदेकशिष्यत्वंप्रकटयन्नाह नमइति ४० भगवाननुशाधीत्युक्तविवृणोति गच्छेति ईक्षयाज्ञानेनमत्पादतीर्थोदैःमिश्रितत्वेनप्रवृद्धाशेषपापविध्वंसशक्ति

विष्टभ्यचित्तंप्रणयेनपूर्णंधैर्येणराजन्बहुमन्यमानः ॥ कृतांजलिःप्राहयदुप्रवीरंशीर्ष्णास्पृशंस्तच्चरणारविंदम् ३६ ॥ उद्धवउवाच ॥ विद्रावितोमोहमयों धकारोयआश्रितोमेतवसन्निधानात् ॥ विभावसोःकिंनुसमीपगस्यशीतंतमोभिप्रभवत्यजाद्य ३७ प्रवर्धितामेभवतानुकंपितादत्तोहिविज्ञानमयःप्रदीपः ॥ हित्वाकृतज्ञस्तवपादमूलंकोन्यःसमीयाच्छरणंत्वदन्यम् ३८ वृक्णश्चमेसुदृढस्नेहपाशोदाशार्हवृष्ण्यंधकसात्वतेषु ॥ प्रसारितःसृष्टिविवृद्धयेत्वयास्वमा ययाह्यात्मसुबोधहेतिना ३९ नमोस्तुतेमहायोगिन्प्रपन्नमनुशाधिमाम् ॥ यथात्वच्चरणांभोजेरतिःस्यादनपायिनी ४० श्रीभगवानुवाच ॥ गच्छोद्ध वमयादिष्टोबदर्याख्यंममाश्रमम् ॥ तत्रमत्पादतीर्थोदेस्नानोपस्पर्शनैःशुचिः ४१ ईक्षयालकनंदायाविधूताशेषकल्मषः ॥ वसानोवल्कलान्यंगवन्यभु क्सुखनिस्पृहः ४२ तितिक्षुर्द्वंद्वमात्राणांसुशीलःसंयतेंद्रियः ॥ शांतःसमाहितधियाज्ञानविज्ञानसंयुतः ४३ मत्तोनुशिक्षितंयत्तेविविक्तमनुभावयन् ॥ मय्यावेशितवाक्चित्तोमद्धर्मनिरतोभव ४४ अतिव्रज्यगतीस्तिस्रोमामेष्यसिततःपरम् ४५ श्रीशुकउवाच ॥ सएवमुक्तोहरिमेधसोद्धवःप्रदक्षिणंतंपरि सृत्यपादयोः ॥ शिरोनिधायाश्रुकलाभिरार्द्रधीर्न्यषिंचदद्वंद्वमथोनुचक्रमे ४६ सुदुस्त्यजस्नेहवियोगकातरोनशक्नुवंस्तंपरिहातुमातुरः ॥ कृच्छ्रंययौ मूर्धनिभर्तृपादुकेबिभ्रन्नमस्कृत्ययथौपुनःपुनः ४७ ततस्तमंतर्हृदिसन्निवेश्यगतोमहाभागवतोविशालाम् ॥ यथोपदिष्टंजगदेकबंधुनातपःसमास्थायह रेरगाद्गतिम् ४८ यदेतदानंदसमुद्रसंभृतंज्ञानामृतंभागवतायभाषितम् ॥ कृष्णेनयोगेश्वरसेवितांघ्रिणासच्छ्रद्धयासेव्यजगद्विमुच्यते ४९ श्रीशुकउ वाच ॥ भवभयमपहंतुंज्ञानविज्ञानसारंनिगमकृदुपजह्रेभृंगवद्वेदसारम् ॥ अमृतमुदधितश्चापाययद्भृत्यवर्गान्पुरुषमृषभमाद्यंकृष्णसंज्ञंनतोस्मि ॥ ५० ॥ इतिश्रीभागवतेमहापुराणेएकादशस्कंधेउद्धवबदरीप्रवेशोनामएकोनत्रिंशोध्यायः ॥ २९ ॥ ॥ छ ॥ ॥

युक्तायाअलकनंदायाःजलस्नानोपस्पर्शनैःशुद्धः ४१ ४२ ४३ ४४ तिस्रःगतीःजाग्रत्स्वप्नसुषुप्तिलक्षणाः ४५ हरिमेधसाविष्णुनाआत्मनोहारिस्मेधयतीतिहारिमेधास्तेन ४६ अनुचक्रम इत्युक्तेस्वाभिप्रायंविवृणोति सुदुस्त्यजेति ४७ विशालांबदरीं ४८ नकेवलमेतज्ज्ञानमुद्धवस्यैवफलप्रदंनिषेवमाणानामितरेषामपीत्याह यदेतदिति आसेव्य ४९ भगवतोभक्तानुकंपिता विस्मयमानःशुक.उत्तरग्रंथानुवर्तनार्थंभगवत्प्रसादमाकांक्षमाणोभगवंतंनमति भवभयमितिअहंतमाद्यंसर्वज्ञंपुरुषर्षभंपुरुषोत्तमंनतोस्मीत्यन्वयः योभवभयमपहर्तुंउन्मूलयितुंनिजयशोमृतंभृत्यवर्गान्पालय श्चास्तेकीदृशंज्ञानविज्ञानेएवसारंवरंवरणीयंस्वादुयस्मिंस्तत्तथा निगमकुमुदद्रभ्रंवेदलक्षणकुमुदैकदेशासिद्धं अनेनवेदानामनंतत्वेपितत्तद्योग्यानुसारेणोदितमितिज्ञायते अतएववेद्यसारंवेद्येपुज्ञातव्येषुसारं

श्रेष्ठं ननुवेदैकदेशासिद्धंचेत्स्वाधेक्षिवसामग्र्यभावान्नेदमुपादेयमितितत्राहउदधिकल्पमिति योग्यताविशेषादधिकारिणांपूर्णत्वेनसमुद्रसमानं भृंगवत्यथाभृंगोभृंगीमधुपाययातितथेति ५१ इतिश्रीभाग वतेमहापुराणेएकादशस्कंधेविजयध्वजकृतटीकायांएकोनत्रिंशोऽध्यायः ॥ २९ ॥ भगवतोमायालक्षणमाहात्म्यंप्रकटयितुंयादवानामिथोवधानिमित्तनिधनंसज्जनचेतोनुरागजननायचतुर्भुजत्वादिनिज रूपलक्षणदर्शनंदुर्जनमनोमोहनायजराख्यव्याधशरविद्धपादत्वंतत्स्वर्गदानमित्येतत्सर्वमस्मिन्नध्यायेवक्ति तत्रादौपरीक्षित्प्रश्नप्रकारंभगवद्वाक्येनयादवानांद्वारकायाःनिर्गत्यप्रभासप्रयाणंतीर्थस्नानपूर्वं कंविप्रादिपूजनंचवक्ति ततोमहाभागवतइत्यादिना १ अत्यजत् अतिरत्रातिशयेवर्तते अतिःस्यादधिकार्थोक्तौप्रशंसायामतिक्रमइतियादवः। अजहरणइतिधातोर्भूलोकात्स्वर्गलोकंप्रत्यहरत् २ प्राकृत रूपवत्अप्राकृतरूपंचादिव्यं त्यक्तुमयोग्यंस्वात्मैकत्वेनसतांश्रवणमनोगे।चरत्वात्सारूप्यमुक्तिदत्वाचेतिभावेनाहप्रत्याकृष्टुमितिअबलायत्रयस्मिन्हरेरंगेमग्नंनयनप्रत्याकृष्टुंततआनेतुंनशेकुः सतांकर्णा

राजोवाच ॥ ततोमहाभागवतेउद्धवेनिर्गतेवनम् ॥ द्वारवत्यांकिमकरोद्भगवान्भूतभावनः १ ब्रह्मशापोपसंसृष्टेस्वकुलेयादवर्षभः ॥ प्रेयसींसर्वनेत्राणां तनुंसकथमत्यजत् २ प्रत्याक्रष्टुंनयनमबलायत्रमग्नंनशेकुःकर्णाविष्टंनसरतियशोयत्सतामात्मलग्नम् ॥ यच्छ्रीवाक्यंजनयतिरतिंकिंनुमानंकवी नांदृष्ट्वाजिष्णोर्युधिरथगतंयच्चतत्साम्यमीयुः ३ श्रीशुकउवाच ॥ दिविभुव्यंतरिक्षेचमहोत्पातान्समुत्थितान् ॥ दृष्ट्वासीनान्सुधर्मायांकृष्णःप्राहयदूनि दम् ४ श्रीभगवानुवाच ॥ एतेघोरामहोत्पाताद्वार्वत्यांयमकेतवः ॥ मुहूर्तमपिनस्थेयमत्रवोयदुपुंगवाः ५ स्त्रियोबालाश्चवृद्धाश्चशंखोद्धारंव्रजंत्वितः ॥ वयंप्रभासंयास्यामोयत्रप्रत्यक्सरस्वती ६ तत्राभिषिच्यशुचयउपोष्यसुसमाहिताः ॥ देवतापूजयिष्यामःस्नपनालेपनार्हणैः ७ ब्राह्मणांस्तुमहाभागा न्कृतस्वस्त्ययनावयम् ॥ गोभूहिरण्यवासोभिर्गजाश्वरथवेश्मभिः ८ विधिरेषह्यरिष्टघ्नोमंगलायनमुत्तमम् ॥ देवद्विजगवांपूजाभूतेषुपरमादृता ९ इतिसर्वेसमाकर्ण्ययदुवृद्धामधुद्विषः ॥ तथेतिनौभिरुत्तीर्यप्रभासंप्रययूरथैः १० तस्मिन्भगवतादिष्टंयदुदेवेनयादवाः ॥ चक्रुःपरमयाभक्त्यासर्वश्रेयो पबृंहितम् ११ ततस्तास्मिन्महापानंपपुर्मैरेयकंमधु ॥ दिष्टविभ्रंशितधियोयादवानष्टमंगलाः १२ महापानाभिमत्तानांवीराणांदृप्तचेतसाम् ॥ कृष्णमा याविमूढानांसंघर्षःसुमहानभूत् १३

विष्टमात्मलग्नंमनोमंदिरंयच्चयशःकंसहंतृत्वादिलक्षणंनसरतिकर्णादेर्नापसरति ततोयत्सतामितिकेचित्पठंति यद्रूपंचयच्छ्रीवाक्यंयस्यश्रीमद्वाक्यंमनःकर्णयोरर्तिनिर्दुःखसुखंजनयतिकरोतिवा श्री वाचामितिपाठेलक्ष्म्यावचसांरतिंजनयति श्रोतॄणामितिशेषः पंचांकितृतीयोतिशयइतिसूत्रात् सुखपूर्णकवीनानुमानंमानानुसारिचइदंसर्वस्मिन्नुक्तार्थेमानभवति कोनुमानइतिपाठेदेहःकःसुखात्मकःकवी नांमानानुसारीत्यर्थःयच्चयुधिभारताख्योजिष्णोर्जयमूर्तेरर्जुनस्यरथगतंदृष्ट्वातत्साम्यंतस्यस्वरूपस्यनिर्दोषत्वादिलक्षणसाम्यमीयुरापुः भीष्मादयइतिशेषःइत्यतएतादृशंरूपंकथमाहरदित्यन्वयः ३ राज्ञापृष्टःशुकोत्राह दिवीति ४ द्वारवत्यांदृश्यंते ५ ६ ७ ८ ९ १० ११ कदंबरसधारातुमदिरानिर्मितमधु । मैरेयमितिसप्रोक्तयत्पानाद्भ्रश्यतेमनइति दिष्टेनदैवसंज्ञेनभगवता १२ संघर्षःकलहः १३

वेलायांसमुद्रजलसीम्नि १४ अर्वाणोऽश्वाः दाद्रैर्वैतैः १५ १६ १७ अध्वर्युदाइतिकेचिद्यादवविशेषाः १८ १९ एरकाःसमुद्रतीररुहःसूचीमुखतृणानिजघ्नुरुदपाटयन् २० २१ २२ एरकायुक्तमुष्ट्याख्यपरिघैः २३ २४ २५ पौरुषंपूर्णषड्गुणभगवद्विषयंयोगध्यानसमास्थायसम्यगेकाग्रचित्तत्वेनकृत्वायोगंयोगनामानंविष्णुमाविश्यात्मानस्वांतर्यामिणमात्मानिव्यापिभगवद्रूपेसंयोज्यैकीभवतीतिसांचिंत्यदेहंतत्यजेइत्यन्वयः आत्मनेपदप्रयोगेणसुखेनदेहत्यागंसूचयति २६ २७ भगवतादेहंत्यक्त्वादिवंनगतंतत्प्रदर्शनमसुरजनमोहनार्थंकृतमितिज्ञापयन्शुकोहरे

युयुधुःक्रोधसंरब्धावेलायामाततायिनः ॥ धनुर्भिरसिभिर्भल्लैर्गदाभिस्तोमरर्ष्टिभिः १४ पततपताकैरथकुंजरार्वाभिःखरोष्ट्रगोभिर्महिषैर्नरैरपि ॥ मिथः समेत्याश्वतरैःसुदुर्मदान्यहञ्छरैर्दद्भिरिवद्विपावने १५ प्रद्युम्नसांबौयुधिरूढमत्सरावक्रूरभोजावनिरुद्धसात्यकी ॥ सुभद्रसंग्रामजितौसुचारुगदौसुमित्रासुरथौसमीयतुः १६ अन्येचयेवैनिशठोल्मुकादयःसहस्रजिच्छतजिद्भानुमुख्याः ॥ अन्योन्यमासाद्यमदांधकारिताजघ्नुर्मुकुंदेनविमोहिताभृशम् १७ दाशार्हवृष्ण्यंधकभोजसात्वताअध्वर्युदामाधुरशूरसेनाः ॥ विसर्जनाःकुकुराकुंतयश्चमिथस्तुजघ्नुःसुविसृज्यसौहृदम् १८ पुत्रास्त्वयुध्यन्पितृभिर्भ्रातृभिश्च स्वस्रीयदौहित्रपितृव्यमातुलैः ॥ मित्राणिमित्रैःसुहृदःसुहृद्भिर्ज्ञातींस्त्वहन्ज्ञातयएवमूढाः १९ शरेषुहीयमानेषुभज्यमानेषुधन्वसु ॥ शस्त्रेषुक्षीयमाणेषुमुष्टिभिर्जह्नुरेरकाः २० तावज्रकल्पाह्यभवन्परिघामुष्टिनाहृताः ॥ जघ्नुर्द्विषस्तैःकृष्णेनवार्यमाणास्तुतंचते २१ प्रत्यनीकंमन्यमानाबलभद्रंचमोहिताः ॥ हंतुंकृतधियोराजन्नापन्नाआततायिनः २२ अथतावपिसंक्रुद्धावुद्यम्यकुरुनंदन ॥ एरकामुष्टिपरिघौचरंतौजघ्नतुर्युधि २३ ब्रह्मशापोपसृष्टानांकृष्णमायावृतात्मनाम् ॥ स्पर्द्धाक्रोधःक्षयंनिन्येवैणवोऽग्निर्यथावनम् २४ एवंसर्वेषुनष्टेषुकुलेषुस्वेषुकेशवः ॥ उत्तारितोभुवोभारइतिमेनेऽवशेषितः २५ रामःसमुद्रवेलायांयोगमास्थायपौरुषम् ॥ तत्यजेयोगमाविश्यसंयोज्यात्मानमात्मनि २६ रामनिर्याणमालोक्यभगवान्देवकीसुतः ॥ निषसादधरोपस्थेतूष्णीमासाद्यपिप्पलम् २७ बिभ्रच्चतुर्भुजंरूपंभ्राजिष्णुप्रभयास्वया ॥ दिशोवितिमिराःकुर्वन्विधूमइवपावकः २८ श्रीवत्सांकंघनश्यामंतप्तहाटकवर्चसम् ॥ कौशेयांबरयुग्मेनपरिवीतंसुमंगलम् २९ सुंदरस्मितवक्त्राब्जंनीलकुंतलमंडितम् ॥ पुंडरीकाभिरामाक्षंस्फुरन्मकरकुंडलम् ३० कटिसूत्रब्रह्मसूत्रकिरीटकनकांगदैः ॥ हारनूपुरमुद्राभिःकौस्तुभेनाविराजितम् ३१ वनमालापरीतांगंमूर्तिमद्भिर्निजायुधैः ॥ कृत्वोरौदक्षिणंपादमासीनंपंकजारुणम् ३२ मुसलावशेषायःखंडकृतेषुर्लुब्धकोजरः ॥ मृगाकारंतच्चरणंविव्याधमृगशंकया ३३ चतुर्भुजंतंपुरुषंदृष्ट्वासकृतकिल्बिषः ॥ भीतःपपातशिरसापादयोरसुरद्विषः ३४ व्याधउवाच ॥ अजानताकृतमिदंपापेनमधुसूदन ॥ क्षंतुमर्हसिपापस्यउत्तमश्लोकमेनघ ३५

स्वदानींतनस्वरूपप्रकारंसूते बिभ्रदिति २८ २९ ३० ३१ ३२ अत्रश्रीकृष्णोसुरजनमोहकरींमायांप्रकटयतिजराख्यव्याधेनेत्याह मुसलेति मुसलावशेषायःखंडेनकृतइषु शरोयस्यसमुसलावशेषायःखंडकृतेषुःचूर्णितमुसलावशिष्टायःखंडेनकृतशरवानित्यर्थः मृगाकारंमृगत्वबुद्धिजनकम् ३३ ३४ अजानतामया ३५

आसाध्वनुचितम् ३६ तंमृगलुब्धकंमृगलोभिनमिति ३७ तत्रकृतब्रह्महत्यादिदोषपरिहारसद्भावेप्यत्रकृतदोषपरिहारोनास्त्येवतेनाधःपातएवातोमद्वधएवश्रेयानितिभावेनाह यस्येति वि
रिंचरुद्रादयोस्याविरिंचस्यतनयामरीच्यादयोगिरांपतयःबृहस्पत्यादयःतएतेयस्यतवात्मयोगरचितंस्वरूपसामर्थ्योपायेनकृतंसृष्ट्यादिकंनाविदुः तत्रनिमित्तमाह त्वन्माययेति त्वन्माययावंधकशक्त्या
विहतदृष्टयःमलुप्तज्ञानाःयस्मात्तस्मादितिशेषः असद्गतयोऽप्रशस्तव्याधयोनिर्गताःअतएवज्ञानशून्याः वयंतस्यतेतवएतच्चरितमंजोगृणीमःकिं नैवज्ञातुंशक्ताइत्यतःएतन्स्तुत्यादिकर्मणाप्येतत्पापप
रिहारोपायाज्ञानादधःपातात्पूर्वमेवमांजहीत्यर्थः सुमतयइतिकेचित्पठंति अनेनकैमुत्यन्यायोदर्शितइतिज्ञायते ३८ भगवान्भक्तवत्सलत्वान्मयिभक्तिरेवाखिलपापध्वंसिनीतिभावंकृत्वावाक्ति माभै
रिति माभैर्भयंमाकार्षीः एषकृतःशरवेधोमेकामःकामितःकांक्षितइत्यर्थः हिशब्देनदुष्टजनमोहनप्रयोजनंसूचयति अतःकिमस्मैफलंददासीतितत्राह याहीति सुकृतिनांपदमित्यनेनत्वमपिसुकृतमेवा
स्त्वितिध्वनयति ३९ नेदंमाकृतपुरुषोक्तवत्कालांतरेपिसदेहकरमितिभावेनाह इतीति ४० प्रासंगिकंसमाप्यकथाशेषंप्रस्तौति दारुकइति अन्विच्छन्नन्वेषणंकुर्वन्नूतंकृष्णंनाधिगम्याविज्ञाय

यस्यानुस्मरणंनृणामज्ञानध्वांतनाशनम् ॥ वदंतितस्यतेविष्णोमयाऽसाधुकृतंविभो ३६ तमाशुजहिवैकुंठपाप्मानंमृगलुब्धकम् ॥ यथापुनरहंत्वेवंन कुर्यांसदतिक्रमम् ३७ यस्यात्मयोगरचितंनाविदुर्विरिंचरुद्रादयोस्यतनयाःपतयोगिरांये ॥ त्वन्माययाविहतदृष्टयएतदंजःकिंतस्यतेवयमसद्गतयोगृणीमः ३८ ॥ श्रीभगवानुवाच ॥ माभैर्जरत्वमुत्तिष्ठकामएषकृतोहिमे ॥ याहित्वंमदनुज्ञातःस्वर्गंसुकृतिनांपदम् ३९ ॥ श्रीशुकउवाच ॥ इत्यादिष्टोभगवताकृष्णेनेच्छाशरीरिणा ॥ त्रिःपरिक्रम्यतंनत्वाविमानेनदिवंययौ ४० दारुकःकृष्णपदवीमन्विच्छन्नाधिगम्यतम् ॥ वायुंतुलसिकामोदमाघ्रायाभिमुखंययौ ४१ तंतत्रतिग्मद्युतिमायुधैर्वृतंह्यश्वत्थमूलेकृतकेतनंपतिम् ॥ स्नेहप्लुतात्मानिपपातपादयोरथादवप्लुत्यसबाष्पलोचनः ४२ अदृश्यतस्तेचरणांबुजंप्रभोदृष्टिःप्रनष्टातमसिप्रविष्टा ॥ दिशोनजानेनलभेचशांतिंयथानिशायामुडुपेप्रनष्टे ४३ ॥ ॥ श्रीशुकउवाच ॥ ॥ इतिब्रुवतिसूतेवैरथोगरुडलांछनः ॥ खउत्पपातराजेंद्रसाश्वध्वजउदीक्षितः ४४ तमन्वगच्छन्दिव्यानिविष्णुप्रहरणानिच ॥ तेनातिविस्मितात्मानंसूतमाहजनार्दनः ४५ श्रीभगवानुवाच ॥ गच्छद्वारवतींसूतज्ञातीनांनिधनंमिथः ॥ संकर्षणस्यनिर्याणंबंधुभ्योब्रूहिमद्दशाम् ४६ द्वारकायांनचस्थेयंभवद्भिश्चस्वबंधुभिः ॥ मयात्यक्तांयदुपुरींसमुद्रःप्लावयिष्यति ४७ स्वंस्वंपरिग्रहंसर्वेआदायपितरौचनः ॥ अर्जुनेनान्विताःसर्वेइंद्रप्रस्थंगमिष्यथ ४८

पुनस्तुलसिकामोदोयस्यसतथातं वायुमाघ्रायज्ञात्वातुलसिकामोदवाय्वभिमुखम् ४१ तत्राश्वत्थमूलेकृतकेतनंतंकृष्णंदृष्ट्वा ४२ प्रभातेतवचरणांबुजमदृश्यतोऽपश्यतोममदृष्टिःप्रनष्टाअस्तंगता
दृश्यमानायाःकथंनाशइत्यतउक्तं तमसीति फलमाह दिशइति शांतिंमंगलं शांतिःप्रशममंगलइतियादवः उडुपेचंद्रेप्रनष्टेअस्तंगते अत्रोडुभिःसचंद्रस्यादर्शनंविवक्षितं अन्यथानक्षत्रप्रेक्षणेनापि
दिगादिविवेकोपपत्तेरित्यतउडुपपदप्रयोगइति आहाश्रितइतिपाठे पादप्रपन्नःसूतःकृष्णमाहयोहतेचरणांबुजमाश्रितःतस्यमेदृष्टिःप्रनष्टेतियोजना ४३ इदमप्यतिमाहात्म्यंहरेरितिभावेनाह इती
ति उदीक्षितःहरिणाऊर्ध्वंगतोदृष्टःअत्रचेतनानियतरथादचेतनप्रवृत्तिदर्शालौकिकानांभगवन्माहात्म्यबुद्धिरितरेषांज्ञानिनांप्रेमलक्षणसंज्ञयागतिंपश्यतांचैतन्यात्मकानिअच्युतरथादीनित्यहोविश्वमूर्तेर्मा
हात्म्यमितिज्ञातव्यम् ४४ तेनरथादिगमनेन ४५ ४६ ४७ ४८

पुत्रादावुपेक्षकः एतांसंसारवृत्तिंमन्मायायामदिच्छयारचनाप्रकारोयस्याःसामन्मायारचनातां ४९ दुर्मनाःदुःखितांतःकरणः पुरींद्वारवतीसंज्ञां ५० इतिश्रीभागवतेमहापुराणेएकादशस्कंधेविज यध्वजकृतटीकायांत्रिंशोऽध्यायः ॥ ३० ॥ हरेःस्वनिर्याणप्रकारादिकंकथयत्यस्मिन्नध्याये तत्रादौब्रह्मादीनामागतिमाह अथेति भवान्यारुद्राण्योमया १ द्विजाऋषयः २ ३ ४ विभूतीः स्वसंनिधानस्थानविशेषानिंद्रादीन् आत्मानंस्वमात्मनिमूलरूपे ५ आग्नेय्यायोगधारणयाजातेनाग्निनातनुमदग्ध्वापरंपदंस्वकंधामाविशत् आग्नेय्यान्येधारणयादेहंदग्ध्वापरंपदं । यांतिदेवाःस मस्ताश्चतेषामन्यांतनुंहरिः । नृसिंहरूपीसर्वैषांभित्वाताभिरलंकृतः । नृत्यतेप्रलयेदेवःस्वयंकृष्णादिरूपवान् । अदग्ध्वैवतनुयातिनित्यानंदस्वरूपतइतिवचनादुक्तार्थएवांगीकरणीयइतिभावः ६ तंकृष्ण मनु ७ अत्राप्येकंमाहात्म्यातिशयमाह देवादयइति ८ यथामर्त्यैरभ्रमंडलंभित्वाकाशेयांत्याःसौदामिन्याःगतिर्नलक्ष्यतेतथाकृष्णस्यगतिर्दैवतैर्नलक्ष्यते ९ १० जन्मादिव्रतोहरेस्तनुमदग्ध्वेतिकथं

त्वंतुमद्धर्ममास्थायज्ञाननिष्ठउपेक्षकः ॥ मन्मायारचनामेतांविज्ञायोपशमंव्रज ४९ श्रीशुकउवाच ॥ इत्युक्तस्तंपरिक्रम्यतंनमस्कृत्यपुनःपुनः ॥ तत्पादौ शीर्ष्ण्युपाधायदुर्मनाःप्रययौपुरीम् ५० इतिश्रीभागवतेमहापुराणेएकादशस्कंधेत्रिंशोऽध्यायः ॥ ३० ॥ श्रीशुकउवाच ॥ अथतत्रागमद्ब्रह्माभवान्याचसमं भवः ॥ महेंद्रप्रमुखादेवामुनयःसप्रजेश्वराः १ पितरःसिद्धगंधर्वाविद्याधरमहोरगाः ॥ चारणायक्षरक्षांसिकिन्नराप्सरसोद्विजाः २ द्रष्टुकामाभगवतोनि र्याणंपरमोत्सुकाः ॥ गायंतश्चगृणंतश्चशौरेःकर्माणिजन्मच ३ ववृषुःपुष्पवर्षाणिविमानावलिभिर्नभः ॥ कुर्वंतःसंकुलंराजन्भक्त्यापरमयायुताः ४ भगवान्पितामहंवीक्ष्यविभूतीरात्मनोविभुः ॥ संयुज्यात्मनिचात्मानंपद्मनेत्रेन्यमीलयत् ५ लोकाभिरामांस्वतनुंधारणाध्यानमंगलाम् ॥ योगधारणयाग्ने य्यादग्ध्वाधामाविशत्स्वकम् ६ दिविदुंदुभयोनेदुःपेतुःसुमनसश्चखात् ॥ सत्यंधर्मोधृतिर्भूमौकीर्तिःश्रीश्चानुतंययुः ७ देवादयोब्रह्ममुखानविशंतंस्व धामनि ॥ अविज्ञातगतिंकृष्णंददृशुश्चातिविस्मिताः ८ सौदामिन्यायथाकाशेयांत्याहित्वाभ्रमंडलम् ॥ गतिर्नलक्ष्यतेमर्त्यैस्तथाकृष्णस्यदैवतैः ९ ब्र ह्मरुद्रादयस्तेतुदृष्ट्वायोगगतिंहरेः ॥ विस्मितास्तांप्रशंसंतःस्वंस्वंलोकंययुस्तदा १० राजन्परस्यतनुभृज्जननाप्ययेहामायाविडंबनमवेहियथानटस्य ॥ सृष्ट्वात्मनेदमनुविश्यविहृत्यचांतेसंहृत्यचात्ममहिम्नोपरतःसआस्ते ११ मर्त्येनयोगुरुसुतंयमलोकनीतंत्वांचानयच्छरणदःपरमास्त्रदग्धम् ॥ जिग्येऽंतकां तकमपीशमसावनीशःकिंस्वावनेस्वरनयन्मृगयुंसदेहम् १२

घटतइतितत्राह राजन्निति परस्यसर्वविलक्षणस्यपरमात्मनस्तनुभृद्वज्जननवदप्ययवच्चइहाचेष्टायातांमायाविडंबनंस्वेच्छानुकरणमवेहियथानटस्यराजादिरूपग्रहणविषयचेष्टा प्रजापतिश्चरतिगर्भेअंतः अजायमानोबहुधाविजायते । अजातोजातवद्विष्णुरमृतोमृतवत्तथा । माययादर्शयन्नित्यमज्ञानांमोहनायचोतिप्रमाणबाहुल्याद्धरेरयंस्वभावइत्यर्थः स्वतोदेहाद्यभावेहरेःसर्जनादिकंकथंयुज्यतइतितत्राह सृष्ट्वेति सहरिरात्मनास्वरूपशक्त्येदंजगत्सृष्ट्वानुविश्यावतारैर्विहृत्यांतेप्रलयेसंहृत्यचात्ममहिम्नोपरतःस्वमहिम्निस्थितआस्ते अनेनस्वमहिम्नैवसर्वंघटतइत्युक्तंभवति ११ एवमपिमृगयुविद्धत्वंहरे र्जननादिकमापादयतीत्यत्राह मर्त्येनेति यःकृष्णःमर्त्येनशरीरेणसहयमनीतलोकंयमेननीतोलोकंसमुद्दिश्ययःसतथात यमेनस्वलोकानीतमित्यर्थः गुरोःसांदीपनेःसुतं द्रौणेःपरमास्त्रदग्धंत्वांचानय त् तथायोबाणपुरेंतकंरुद्रमपिजिग्ये रुद्रोमाविशांतकइतिश्रुतेः यद्वापारिजातहरणेअंतकंयममपिजिग्येइति अंतकांतकमितिपाठेयमस्याप्यंतकरुद्रमित्यर्थः सोनीशोअन्येशरहितःश्रीकृष्णइशित

नौसर्वेशानांरुद्रादीनामपिईशत्वंतनोतीतिईशतनुस्तस्मिन्देहेमृगयोरनीश्वरःस्यात्किं नरथादेवातोपिसामर्थ्यप्रकटनायविप्रशापमनुस्मरन्नाविद्धएवस्वभक्तंव्याधशरीरान्मोचयंस्तेनशल्येषुणाविद्धइवतस्य स्वात्मानंप्रकाश्यतेनप्रसादितस्तस्मैस्वलोकंददावित्यर्थः ११ तर्हिकिमितिबलभद्रादीन्सदेहान्स्वलोकंनानैषीदितितत्राह तथापीति यद्यपिअशेषास्थितिसंभवाप्ययेषुअनन्यहेतुःस्वयमेवहेतुर्हेत्वंतरादिव र्जितः कुलालस्यमृद्दंडादिशक्त्यपेक्षावत्प्रकृत्यादिशक्त्यपेक्षितत्वेनकथंहेत्वंतरंनास्तीत्यतउक्तं अशेषशक्तिधृगितितथापिबलभद्रादीनांवपुःप्रणेतुंनैच्छत्भगवान्मर्त्येनमरणशीलेनशरीरेणकिंप्रयोजन मितिभावेनात्रशेषितंहारिणेतिशेषः अनेनापिकिंप्रयोजनमतउक्तं स्वस्थगतिंस्वभक्तानांस्वविषयज्ञानलक्षणयोगगतिंप्रदर्शयन्नेवंप्रदर्शनमेवंप्रयोजनमित्यर्थः अतःसमर्थोपिप्रयोजनाभावान्ननीतवानित्यर्थः

तथाप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् ॥ नैच्छत्प्रणेतुंवपुरत्रशेषितंमर्त्येनकिंस्वस्थगतिंप्रदर्शयन् १३ यएतांप्रातरुत्थायकृष्णस्यपदवींपराम् ॥ प्रयतःकीर्तयेद्भक्त्यातामेवाप्नोत्यनुत्तमाम् १४ दारुकोद्वारकामेत्यवसुदेवोग्रसेनयोः ॥ पतित्वाचरणावस्त्रैर्न्यषिंचत्कृष्णविच्युतः १५ कथयामासनिधनंवृष्णीनांकृत्स्नशोनृप ॥ तच्छ्रुत्वोद्विग्नहृदयाजनाःशोकविमूर्छिताः १६ तत्रस्वत्वरिताजग्मुःकृष्णविश्लेषविह्वलाः ॥ व्यसवःशेरतेयत्र ज्ञातयोघ्नंतआयुधैः १७ देवकीरोहिणीचैववसुदेवस्तथासुतौ ॥ कृष्णरामावपश्यंतःशोकार्ताविजहुःस्मृतिम् १८ प्राणांश्चविजहुस्तत्रभगवद्विरहातुराः उपगृह्यपतींस्ताताचितामारुरुहुःस्त्रियः ॥ रामपत्न्यश्चतंदेहमुपगृह्याग्निमाविशन् १९ ॥ ॥ ॥ ॥ ॥

अतःस्वशरीरेणेतुंनैच्छदित्यर्थोनुपपन्नःउक्तहेतुविरुद्धत्वात् असंभवाच्चेति जगतोमोहनार्थायभगवान्पुरुषोत्तमः । दर्शयन्मानुषींचेष्टांतथामृतकवद्विभुः । प्रकाशयेद्देहोपिमोहायचदुरात्मनां । माय यामृतकंदेवस्तदासृष्ट्वाप्रदर्शयेत् । कुतोहिमृतकंतस्यमृत्यभावात्परात्मन इतिप्रमाणसद्भावाच्च १३ एतज्ज्ञानस्यपरमप्राप्तिहेतुत्वाच्चोक्तएवार्थइतिभावेनोक्तमुपसंहरति यएतामिति १४ कृष्णोक्तोदारुकः किमकरोदितितत्कथाशेषमाह दारुकइति १५ १६ १७ भगवद्विषयांस्मृतिंविजहुःक्षणमितिशेषः १८ १९

तदात्मिकास्तदेकचित्ताः अग्नावंतर्दधैभैष्मीसत्यभामावनेतथा । नतुदेहवियोगोस्तितयोःशुद्धचिदात्मनोरितिप्रमाणाद्रुक्मिणीसत्यभामयोरंतर्धानमवगंतव्यम् ॥ अन्याःषण्महिष्योऽग्नौदेहंत्यक्तवं
त्यइतिभावः २० आत्मानस्वम् ३१ सांपरायिकंपरेतविषयंकर्म २१ २३ २४ २५ २६ २७ अन्यत्रग्रंथांतरेइहास्मिन्ग्रंथेपरमहंसगतौपरमहंसानामाश्रयेहरौशरणेवा २८ ॥ यत्तत्त्वंनिगमो

वसुदेवपत्न्यस्तद्गात्रंप्रद्युम्नादीन्हरेःस्नुषाः ॥ कृष्णपत्न्योविशन्नग्निंरुक्मिण्याद्यास्तदात्मिकाः २० अर्जुनःप्रेयसःसख्युःकृष्णस्यविरहातुरः ॥ आ
त्मानंसांत्वयामासकृष्णगीतैःसदुक्तिभिः २१ बंधूनांनष्टगोत्राणामर्जुनःसांपरायिकम् ॥ हतानांकारयामासयथावदनुपूर्वशः २२ द्वारकांहरिणात्यक्तां
समुद्रोप्लावयत्क्षणात् ॥ वर्जयित्वामहाराजश्रीमद्भगवदालयम् २३ नित्यंसन्निहितस्तत्रभगवान्मधुसूदनः ॥ स्मृत्याशेषाशुभहरःसर्वमंगलमंगलः २४
स्त्रीबालवृद्धानादायहतशेषान्धनंजयः ॥ इंद्रप्रस्थंसमावेश्यवज्रंतत्राभ्यषेचयत् २५ श्रुत्वासुहृद्वधंराजन्नर्जुनात्तेपितामहाः ॥ त्वांतुवंशधरंकृत्वाज
ग्मुःसर्वेमहापथम् २६ यएतद्देवदेवस्यविष्णोःकर्माणिजन्मच ॥ कीर्तयेच्छ्रद्धयामर्त्यःसर्वपापैःप्रमुच्यते २७ इत्थंहरेर्भगवतोरुचिरावतारवीर्याणि
चास्यचरितानिचसंमतानि ॥ अन्यत्रचेहचश्रुतानिगृणन्मनुष्योभक्तिंपरांपरमहंसगतौलभेत २८ इतिश्रीभागवतेमहापुराणेपारमहंस्यांसंहितायामे
कादशस्कंधेमौसलंनामएकत्रिंशत्तमोध्यायः ॥ ३१ ॥ ॥ एकादशस्कंधःसमाप्तः ॥ ॥ ॥ छ ॥ ॥ ॥ छ ॥

पिबंतुमनलंशास्त्रेंदुवल्लीक्षितंब्रह्माद्याःकिमुतावलंबविधुरानिर्दोषचित्ताअपि ॥ अप्येवंजलवेगवन्मतिगतेरेषांसदैकंपदंतद्ब्रह्माख्यमखंडबुद्धिहृदयावासंभवंदेपरम् ॥ १ ॥ एकादशस्कंधगतापदरत्नावलि
स्त्वियम् ॥ अधिग्रीवंमुकुंदस्यवनमालेवराजताम् ॥ इतिश्रीमन्महेंद्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थभट्टारकस्यकृतौश्रीमद्भागवतटीकायांपदरत्नावल्यामेकादशस्कंधेएकत्रिंशोध्यायः ॥ ३१ ॥

श्रीवेदव्यासायनमः ॥ पद्मवासालयं नत्वा पद्मभूपूर्वसर्गीडचं ॥ द्वादशस्कंधं व्याकुर्वे द्वादशात्मप्रीत्यैनित्यम् ॥ १ ॥ श्रीनारायणकृपाशिष्टवंशादिकथनेनतन्माहात्म्यमेवकथयत्यस्मिन्स्कंधे तत्रप्रथमेऽध्याये वंशशेषंकथयति यइति अंत्यःवंशावसानभवः कस्यवंशांतेभवइत्यतउक्तं बार्हद्रथइति स्वामिनंरिपुंजयमात्मजंस्वस्येतिशेषः १ यश्चस्यप्रद्योतस्यसुतःपालकोनाम यत्तादित्यस्याव्ययत्वात्षष्ठी यद्वा यःपालकोयस्यपत्पालकःसतस्यसुतइति २ प्रद्योतनेनसाकंपंच तेषांराज्यावधिकालमाह अष्टेति भोक्ष्यंति पालयंति भुजोनवनइत्यतःपरस्मैपदंपूर्ववंशावैलक्षण्यद्योतनार्थोवाव्यत्यासः ३ ४ ५ ६ महानंदिविशिनष्टि महानंदिरिति ७ महानंदिवंशभवःकइति कश्चिदिति महापद्मसख्ययासंख्यातासेनामहापद्मातस्याःपतिः कुलक्षत्रविनाशकृद्ततःकुलक्षत्राभावात् ८

श्रीवेदव्यासायनमः॥ श्रीशुकउवाच ॥ योंत्योरिपुंजयोनामभविष्योथबार्हद्रथः ॥ तस्यामात्यस्तुशुनिकोहत्वास्वामिनमात्मजम् १ प्रद्योतसंज्ञंराजानंकर्तायत्पालकःसुतः ॥ विशाखयूपस्तत्पुत्रोभविताचाजकस्ततः २ नंदिवर्धनस्तत्पुत्रःपंचप्रद्योतनाइमे ॥ अष्टत्रिंशोत्तरशतंभोक्ष्यंतिपृथिवीमिमाम् ३ शिशुनागस्ततोभाव्यःकाकवर्णस्तुतत्सुतः ॥ क्षेमधर्मातस्यसुतःक्षेत्रज्ञःक्षेमधर्मजः ४ विधिसारःसुतस्तस्याजातशत्रुर्भविष्यति ॥ दर्भकस्तत्सुतोभाव्योदर्भकस्याजयस्ततः ५ नंदिवर्धनआजेयोमहानंदिश्चतत्सुतः ॥ शैशुनागादशैतेवैषष्ट्युत्तरशतत्रयम् ६ समाभोक्ष्यंतिपृथिवींकुरुश्रेष्ठकलौनृपाः ॥ महानंदिसुतोराजन्शूद्रीगर्भोद्भवोबली ७ महापद्मपतिःकश्चित्कुलक्षत्रविनाशकृत् ॥ ततोनृपाभविष्यंतिशूद्रप्रायास्त्वधार्मिकाः ८ सएकच्छत्रांपृथिवीमनुल्लंघितशासनः ॥ शासिष्यतिमहापद्मोद्वितीयइवभार्गवः ९ तस्यचाष्टौभविष्यंतिसुमाल्यप्रमुखाःसुताः ॥ यइमांपृथिवींराजन्भोक्ष्यंतिस्मशतंसमाः १० नवनंदान्द्विजःकश्चित्प्रपन्नानुद्धरिष्यति ॥ तेषामभावेजगतींमौर्याभोक्ष्यंतिवैकलौ ११ सएवचंद्रगुप्तंवैद्विजोराज्येभिषेक्ष्यति ॥ तत्सुतोवारिसारस्तुततश्चाशोकवर्धनः १२ सुयशाभवितातस्यसंगतःसुयशःसुतः ॥ शालिशूकस्ततस्तस्यसोमशर्माभविष्यति १३ शतधन्वाततस्तस्यभवितातुबृहद्रथः ॥ मौर्याह्येतेनवनृपाःसप्तत्रिंशच्छतोत्तरम् १४ समाभोक्ष्यंतिपृथिवींकलौकुरुकुलोद्वह ॥ हत्वाबृहद्रथंमौर्यंतस्यसेनापतिःकलौ १५ पुष्यमित्रस्तुशुंगाह्वःस्वयंराज्यंकरिष्यति ॥ अग्निमित्रस्ततस्तस्मात्सुज्येष्ठोभवितातंतः १६ वसुमित्रोभद्रकश्चपुलिंदोभवितातंतः ॥ ततोघोषःसुतस्तस्माद्वज्रमित्रोभविष्यति १७ ततोभागवतस्तस्माद्देवभूतिःकुरूद्वह ॥ शुंगादशैतेभोक्ष्यंतिभूमिंवर्षशताधिकम् १८ ततःकण्वानियंभूमिर्यास्यत्यल्पगुणान्नृपान् ॥ शुंगंहत्वादेवभूतिंकण्वोमात्यस्तुकामिनम् १९

सप्तमहापद्मोनाम्नानंदः ९ १० नंदेनसहनवसंख्यान्नंदान्नंदवंशजानुद्धरिष्यत्यापदइतिशेषः मौर्यामुरवंशजाःहीनजातयःकैवर्ताः ११ कथंभोक्ष्यंतीत्यतआह सएवेति सएवनवनंदाचार्यः १२ १३ मौर्यसंज्ञाअपिमौर्याः १४ वंशव्यत्यासंकथयति हत्वेति १५ पुष्यमित्रइत्यादिजातिप्रयुक्तनाम शुंगइत्यादिविशेषनाम १६ १७ शुंगाःशुंगवंशजाः १८ कण्वाः कण्ववंशजाः तान्नृपान्यास्यति . अल्पगुणाओषध्यादिगुणसंपत्तिरहिता कथंकण्वान्यास्यतीत्यतआह शुंगमिति शुंगंशुंगाख्यंराजानंदेवभूतिंहत्वा नाम्नावसुदेवःकण्वः तस्यशुंगस्यामात्यःकामिनंग्राम्यकर्मासक्तम् १९

कण्वायनाः कण्ववंशभवाः कण्वानांचतुर्थः सुशर्माभूमिश्चैवसुदेवादयः काण्वायनाः वर्षाणांत्रीणिशतानिपंचचत्वारिंशद्वर्षाणिचभूमिंभोक्ष्यंति तस्य सुशर्मणोभृत्यः २० २१ २२ तस्यवृषलस्यभ्राता २३ २४ हालेयःहलान्मेयः २५ २६ २७ २८ २९ ३० एतेआभीरादयोमौनव्यतिरिक्ताः पंचषष्टिनृपाएकोनशताधिकंवर्षसहस्रंपृथिवींभोक्ष्यंति ततःपूर्वोक्ताएवैकादशमौनाः त्रीण्यब्दशतानिक्षितिंभोक्ष्यंतिमौनाः मौनकुलेजाताःएकादशत्रीणिअब्दशतानि ३१ कुलेमौनकुलेसंस्थितेनष्टेकिलिकिलायांनगर्यांतस्यशिशुनंदेर्भ्राताभूतवंशोपवंगरैर्युक्ताः षट्षट्वर्षाण्यधिकानि ३२ ३३ बा

स्वयंकरिष्यतेराज्यंवसुदेवोमहामतिः ॥ तस्यपुत्रस्तुभूमित्रस्ततोनाराणःसुतः २० सुशर्माख्योथनृपतिःकण्वानांभवितातततः ॥ काण्वायनाइमेभूमिंचत्वारिंशच्चपंचच २१ शतानित्रीणिभोक्ष्यंतिवर्षाणांचकलौयुगे ॥ हत्वाकण्वंसुशर्माणंतद्भृत्योवृषलोबली २२ गांभोक्ष्यत्यंध्रजातीयःकंचित्कालमसत्तमः ॥ कृष्णनामाचतद्भ्राताभवितापृथिवीपतिः २३ श्रीशांतकर्णस्तत्पुत्रःपौर्णमासस्तुतत्सुतः ॥ लंबोदरस्तुतत्पुत्रस्तस्माच्छिबिलकोनृप २४ मेघस्वनःशिबिलकाद्दटमानस्तुतस्यच ॥ अनिष्टकर्माहालेयस्तलकस्तस्यचात्मजः २५ पुरीषभेरुस्तत्पुत्रस्ततोराजासुनंदनः ॥ चकोरोबहुकोयस्यशिवस्वातिरिरंदमः २६ तस्यापिगोमतीपुत्रःपुरीमान्भवितातततः ॥ शिवशिराःशिवस्कंदोयज्ञश्रीस्तत्सुतस्ततः २७ विजयस्तत्सुतोभाव्यश्चंद्रबीजःसुलोमधीः ॥ एतेत्रिंशन्नृपतयश्चत्वार्यब्दशतानिच २८ षट्पंचाशच्चपृथिवींभोक्ष्यंतिकुरुनंदन ॥ सप्ताभीराआंध्रभृत्यादशगर्दभिनोनृपाः ॥ कंकाःषोडशभूपालाभविष्यंत्यतिलोलुपाः २९ ततोष्टौयवनाभाव्याश्चतुर्दशतुरुष्कराः ॥ भूयोदशगुरुंडाश्चमौनाएकादशैवतु ३० एतेभोक्ष्यंतिपृथिवींदशवर्षशतानिच ॥ नवाधिकांचनवतिंमौनाएकादशक्षितिम् ३१ भोक्ष्यंत्यब्दशतान्यंगत्रीणिवैसंस्थितेकुले ॥ किलिकिलायांनृपतयोभूतनंदोथवंगिरिः ३२ शिशुनंदिश्चतद्भ्रातायशोनंदिःप्रवीरकः ॥ इत्येतेवर्षशतंभविष्यंत्यधिकानिषट् ३३ तेषांत्रयोदशसुताभवितारश्चबाह्लिकाः ॥ पुष्पमित्रोथराजन्योदुर्मित्रोस्यतथैवच ३४ एककालाइमेभूपाःसप्तांध्राःसप्तकोसलाः ॥ वैदूरपतयोभाव्यानैषधास्ततएवहि ३५ नैषधानांतुभविताविश्वस्फूर्जिःपुरंजयः ॥ करिष्यत्यपरान्वर्णान्पुलिंदयदुमद्रकान् ३६ प्रजाश्चाब्रह्मभूयिष्ठाःस्थापयिष्यतिदुर्मतिः ॥ वीर्यवान्क्षत्रमुत्साद्यपद्मवत्यांसवैपुरि ३७ अनुगंगमाप्रयागंगुप्तांभोक्ष्यतिमेदिनीम् ॥ सौराष्ट्रावंत्याभीराश्चशूद्राअर्बुदमालवाः ३८

बाह्लीकाःबाह्लीकदेशपतयः ३४ तथासप्तांध्राःअंध्रदेशपतयःकोसलाःकोसलविषयपतयः । वैदूरपतयःवैदूराख्यनगरपतयोनिषधाश्च एतेतत्तद्देशनामभिःप्रख्याताःतुल्यकालाःअखंडमंडलेषुभूपाःततएवतेभ्योबाह्लीकेभ्यएवभाव्याभविष्यंति ३५ ततश्चनैषधानांविषयाणांराजापुरंजयःशत्रूगामितिशेषः सपुलिंदयदुमद्रकानवरान्नीचान्वर्णान्करिष्यति किंबहुनासर्वाःप्रजाश्चापिविवक्षिताः ३६ ब्रह्मभूयिष्ठाःबहुलवेदाविदः स्थापयिष्यतिस्थिरीकरिष्यति ३७ अनुगंगंगंगासमीपे आप्रयागंप्रयागाख्यक्षेत्रपर्यंतं दीर्घांमेदिनींपद्मवत्यांपुरिस्थितिंकृत्वाआप्रयागंगुप्तांपालितांतदनंतरंसौराष्ट्राश्चआवंत्याश्चआभीराश्चशूद्राश्चअर्बुदाश्चमालवाश्च ३८

व्रात्याः संस्कारहीनाः द्विजाः शूद्रप्रायाः जनाधिपतयो भविष्यंति ३९ ४० किंच एते सर्वे अधर्मानृतपराः अधर्मे अनृते च परिनिष्ठिताः फल्गुदाः अल्पदातारः ४१ उदितास्तमितप्रायाः बहुकूपौदयमस्तं गतमेव जानंति नापरं अल्पकालावस्थायिनो वा असंस्कृताः गर्भाधानादिसंस्कारहीनाः ४२ प्रजा भक्षयिष्यंति धनापहारादिना पीडयिष्यंति किंच एवंविधा ये तेषां तत्र नाथा जनपदा देशवर्तिनो मनुष्याः तच्छीलाचारवादिनः तेषां शीलं आचारश्च वादश्च तद्वंतः ४३ ४४ ॥ इतिश्रीभागवते महापुराणे द्वादशस्कंधे विजयध्वजकृतटीकायां प्रथमोऽध्यायः ॥ १ ॥ कल्क्यवतारं तच्चरितं च युगविभागलक्षणं च वक्ष्यस्मिन्नध्याये तत्रादौ कलिवैभवमाह ततश्चेति कालक्षपानंतरं धर्मादयो नंक्ष्यंतीत्यन्वयः कारकाभावादिति शेषः १ यदि कलौ नृणां वित्तमस्ति तर्ह्येव तेषां जन्मादयः पूज्याः स्युरिति शेषः अर्थं धर्मो यं न्याय इति व्यवस्थायां बलमेव कारणं धनमिति वा पाठः २ अभिरुचिरन्योन्यस्नेहलक्षणेच्छा हेतुः न कुलगोत्रादिशास्त्रीयप्रयोगः व्यावहारिके क्रयविक्रयादिव्यवहारविषये शाठ्यं एव हेतुः अतिरतिः अतितराम्

व्रात्या द्विजा भविष्यंति शूद्रप्राया जनाधिपाः ॥ सिंधोस्तटं चंद्रभागां कांचीं काश्मीरमंडलम् ३९ भोक्ष्यंति शूद्रा व्रात्याश्च म्लेच्छाश्चाब्रह्मवर्चसः ॥ तुल्यकालाइमे राजन्म्लेच्छप्रायाश्च भूभृतः ४० एते धर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥ स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः ४१ उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः ॥ असंस्कृताः क्रियाहीना रजसा तमसावृताः ४२ प्रजास्ते भक्षयिष्यंति म्लेच्छा राजन्यरूपिणः ॥ तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः ४३ अन्योन्यतो राजभिश्च क्षयं यास्यंति पीडिताः ४४ इतिश्रीभागवते महापुराणे द्वादशस्कंधे प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया ॥ कालेन बलिना राजन्नंक्ष्यत्यायुर्बलं स्मृतिः १ वित्तमेव कलौ नॄणां जन्माचारगुणोदयः ॥ धर्मन्यायव्यवस्थायां कारणं बलमेव हि २ दांपत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके ॥ स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ३ लिंगमेवाश्रमख्याताविन्योन्यापत्तिकारणम् ॥ अवृत्त्या न्यायदौर्बल्यं पांडित्ये चापलं वचः ४ अनाढ्यतैवासाधुत्वे साधुत्वे दंभ एव तु ॥ स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ५ दूरे वार्ययनं तीर्थं लावण्यं केशधारणम् ॥ उदरंभरता स्वार्थः सत्यत्वे धाष्टर्यमेव हि ६ दाक्ष्यं कुटुंबभरणे यशोऽर्थे धर्मसेवनम् ॥ एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमंडले ७ ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ॥ प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ८

नोदर्शनीयता विशेषः सूत्रं तंतुलक्षणम् ३ आश्रमाणां ख्यातौ ज्ञाने ब्रह्मचर्यादाश्रम इति वक्तव्ये अन्योन्यापत्तिकारण आश्रमादाश्रमांतरप्राप्तिकारणं लिंगमुपाध्यायादिलक्षणं लांछनं अन्यायदौर्बल्ये अन्यायाकरणे अवृत्तिर्वृत्तिराहित्यं वृत्त्यभाव एव हेतुः कृतो न्यायो न्याय इत्यर्थः अचापलं अचंचलता लक्षणं वचः कारणमित्यनुवर्तते ४ अनाढ्यता दरिद्रत्वं असाधुत्वे दुष्टत्वे स्वं मम जायाऽस्तीति स्वीकार हेतुः ५ साधनं शरीरस्य शुद्धिरलंकारो वा ५ दूरे वार्ययनं दूरतरजलपात्राय गम्यते तत्तीर्थं न तु गर्वादि केशधारणं धम्मिल्लधारणं उदरंभरता स्वोदरपूर्णता स्वार्थः स्वप्रयोजनं ६ ७ ब्रह्म ब्राह्मणाः दस्यूनां धर्माणि चौर्यादीनि येषां तैस्तथा तैः ८

आच्छिन्नंदारद्रविणाःबलादाकृष्टभार्यावित्ताः क्षौद्रंमधु । मधुमद्यंमधुक्षौद्रंमधुपुष्परसंविदुरित्यभिधानं । शाकादिभोजनंयेषांतेतथा ९ दुर्भिक्षकरनिमित्तपीडिताः हिमंनीहारः १० क्षुत्तृषातृष्णयाव्या धिभिःकुष्ठादिभिः ११ १२ चौर्यार्थंनानावृत्तयोयेषांतेतथा १३ छागअत्रतुगभावोलिंगव्यत्यासं प्रति गृहयोनाएवबधुत्वंयोनिसंबंधमात्रं १४ अणुप्रायेषुकक्षमाषप्रचुरासु जनशून्यप्रायेषु १५ १६ विष्णोर्जन्मकर्मचसाधूनांधर्मत्राणापदुष्कर्मापनुत्तयेचस्यादितिशेषः १७ शंबलग्रामेमुख्यस्यप्रधानस्यनाम्नाविष्णुयशसःब्राह्मणस्यभवनेगृहे १८ आशुगंशीघ्रगामिनं १९ नृपलिंगच्छदःराजच्छद्मवान् २० वासुदेवस्यांगरागस्यचंदनाद्यनुलेपनस्यप्रशस्तपुण्यगंधेनयुक्तंवायुंस्पृशंतीतिवासुदेवांगरागातिपुण्यगंधानिलस्पृशःतेषां २१ प्रजाविसर्गःसततीनामुत्पत्तिःस्थविष्ठःबहुलः २२ प्रजासूतिःसंतानोत्पत्तिः २३ कृतप्रारंभलक्षणांतरमाह यदेति तिष्यःपुष्यःचंद्रसूर्यबृहस्पतीनांयदापुष्यनक्षत्रयोगःतदाकृतयुगंभविष्यति यद्यपिप्रतिद्वादशाब्देकराशौबृहस्पतौवर्तमानेत्रिकास्वभावा

आच्छिन्नदारद्रविणायास्यंतिगिरिकाननम् ॥ शाकमूलामिषक्षौद्रफलपुष्पादिभोजनाः ९ अनावृष्ट्याविनंक्ष्यंतिदुर्भिक्षकरपीडिताः ॥ शीतवातातपः प्रावृड्हिमैरन्योन्यतःप्रजाः १० क्षुत्तृड्भ्यांव्याधिभिश्चैवसंतप्स्यंतेचचिंतया ॥ त्रिंशद्विंशतिवर्षाणिपरमायुःकलौनृणाम् ११ क्षीयमाणेषुदेहेषुदेहिनां कलिदोषतः ॥ वर्णाश्रमवतांधर्मेनष्टेवेदपथेनृणाम् १२ पाखंडप्रचुरेधर्मेदस्युप्रायेषुराजसु ॥ चौर्यानृतवृथाहिंसानानावृत्तिषुवैनृषु १३ शूद्रप्रायेषुवर्णेषुच्छागप्रायासुधेनुषु ॥ गृहप्रायेष्वाश्रमेषुयौनिप्रायेषुबंधुषु १४ अणुप्रायेष्वोषधीषुशमीप्रायेषुस्थास्नुषु ॥ विद्युत्प्रायेषुमेघेषुशून्यप्रायेषुसद्मसु १५ इत्थंकलौगतप्रायेजनेषुखरधर्मसु ॥ धर्मत्राणायसत्वेनभगवानवतरिष्यति १६ चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः ॥ धर्मत्राणायसाधूनांजन्म कर्मापनुत्तये १७ शंबलग्राममुख्यस्यब्राह्मणस्यमहात्मनः ॥ भवनेविष्णुयशसःकल्किःप्रादुर्भविष्यति १८ अश्वमाशुगमारुह्यदेवदत्तंजगत्पतिः ॥ असिनासाधुदमनमष्टैश्वर्यगुणान्वितः १९ विचरन्नासिमान्क्षोण्यांहयेनाप्रतिमद्युतिः ॥ नृपलिंगच्छदोदस्यून्कोटिशोनिहनिष्यति २० अथतेषांभवि ष्यंतिमनांसिविशदानिवै ॥ वासुदेवांगरागातिपुण्यगंधानिलस्पृशाम् २१ पौरजानपदानांवैहतेष्वखिलदस्युषु ॥ तेषांप्रजाविसर्गश्चस्थविष्ठःसंभविष्यति २२ वासुदेवेभगवतिसत्वमूर्तौहृदिस्थिते ॥ यदावतीर्णोभगवान्कल्किर्धर्मपतिर्हरिः ॥ कृतंभविष्यतितदाप्रजासूतिश्चसात्विकी २३ यदाचंद्रश्चसूर्यश्चतथातिष्येबृहस्पतिः ॥ एकराशौसमेष्यंतितदाभवतितत्कृतम् २४ येतीतावर्तमानायेयेभविष्यंतिपार्थिवाः ॥ तेतउद्देशतःप्रोक्तावंशाजाःसूर्यसोमयोः २५ आरभ्यभवतोजन्मयावन्नंदाभिषेचनम् ॥ एतद्वर्षसहस्रंतुशतंपंचदशोत्तरम् २६

स्यात्तुतेषांत्रयाणामपिपुष्येयोगःसंभवतितथापितेषांसहप्रयोगोत्राविवक्षितःसमेष्यंतीतिवचनात् २४ एवंनवमस्कंधमारभ्यानुक्रांतंवैवस्वतमनोर्वंशद्वयमुपसंहरति येतीताइति उद्देशतःसंक्षेपतः २५ कलियुगावांतरविशेषमाह आरभ्येति वर्षसहस्रंपंचदशोत्तरशतंचेतिकयापिविवक्षयावांतरसंख्येयं वस्तुतःपरीक्षिन्नंदयोरंतरंद्वाभ्यामनंवर्षाणांसार्धसहस्रंभवति यतःपरीक्षित्समकालमागधमार्जारि मारभ्यरिपुंजयांताविंशतिराजानःसहस्रवत्सरंभोक्ष्यंतीत्युक्तंनवमस्कंधे येबार्हद्रथभूपालाभाव्याःसहस्रवत्सरमिति ततःपरंचप्रद्योतनाअष्टत्रिंशदुत्तरं शिशुनागाश्चषष्ट्युत्तरशतत्रयंभोक्ष्यंतिपृथिवीमित्यत्रैवोक्तम् २६

कलेःप्रवृत्तिवृद्धिवचनिरूपयितुंकालज्ञानोपलक्षणमाह सप्तर्षीणामिति अयमर्थः प्रागग्रेशकटाकारं तारासप्तकंसप्तर्षिमंडलं तत्रांकिचिदुन्नतरेखायाअग्रस्थानीयोमरीचिः ततःपश्चादानम्रयुगंधराकारोव सिष्ठःसभार्यःततःपश्चादीषदुन्नतस्तेषांमूलस्थानीयोंगिराः ततःपश्चाच्चतुरस्रतारावतुष्केईशान्येत्रिः ततोदक्षिणतःपुलस्त्य.पुलस्त्यात्पश्चिमत.पुलहःततउत्तरतःक्रतुःएवंस्थितेतेषांमध्येयौपूर्वौउदय समयेप्रथममुदितौपुलहक्रतुसंज्ञौतयोस्तुमध्येतयोःपूर्वयोश्चमध्येयत्समंदक्षिणतःसमदेशावस्थितमश्विन्यादिषुयदन्यतमंनक्षत्रंदृश्यते २७ यत्तेनतथैवयुक्ताःनृणामब्दशतंतिष्ठंति तेत्वद्विजास्त्वदीये कालेअधुनामघांआश्रितावर्तंते २८ तेषुऋषिषुमघासुवर्तमानेषुसत्सु २९ पराक्रांतुंस्वसामर्थ्यंदर्शयितुम् ३० कियंतकालाविवरणमित्यत्रउक्तं द्वादशेति ३१ अस्तुकलेःपरंकंचित्कालं हित्वापश्चाद्वृद्धिःसाकदेतितत्राह यदेति ३२ कृष्णस्वर्गारोहणानंतरंकंचित्कालंहित्वापश्चादाविष्टःकिंकलिरुतत्तस्मिन्नेवाहनीति संदेहंव्यवच्छिनत्ति यस्मिन्निति ३३ ततःकियान्कालःकृतमारं

सप्तर्षीणांतुयौपूर्वौदृश्येतेउदितौदिवि ॥ तयोस्तुमध्येनक्षत्रंदृश्यतेयत्समंनिशि २७ तेनैतेऋषयोयुक्तास्तिष्ठंत्यब्दशतंनृणाम् ॥ तेत्वदीयेद्विजाःकालेअ धुनाचाश्रितामघाम् २८ विष्णुस्तुभगवान्भानुःकृष्णाख्योसौदिवंगतः ॥ तदाविशत्कलिर्लोकंपापेयद्रमतेजनः २९ यावत्सपादपद्माभ्यांस्पृशन्नास्तेरमापतिः ॥ तावत्कलिर्वैपृथिवींपराक्रांतुंनचाशकत् ३० यदादेवर्षयःसप्तमघासुविचरंतिहि ॥ तदाप्रवृत्तस्तुकलिर्द्वादशाब्दशतात्मकः ३१ यदा मघाभ्योयास्यंतिपूर्वाषाढांमहर्षयः ॥ तदानंदात्प्रभृत्येषःकलिर्वृद्धिंगमिष्यति ३२ यस्मिन्कृष्णोदिवंयातस्तस्मिन्नेवतदाहनि ॥ प्रतिपन्नंकलियुग मितिप्राहुःपुराविदः ३३ दिव्याब्दानांसहस्रेतुप्रतियातेपुनःकृतम् ॥ भविष्यतियदानॄणांमनआत्मप्रकाशकम् ३४ इत्येषमानवोवंशोयथासंख्यायते भुवि ॥ तथाविट्शूद्रविप्राणांवंशाज्ञेयायुगेयुगे ३५ एतेषांनामलिंगानांपुरुषाणांमहात्मनाम् ॥ कथामात्रावशिष्टानांकीर्तिरेवस्थिताभुवि ३६ देवापिःशंतनोर्भ्रातामरुश्चेक्ष्वाकुवंशजः ॥ कलापग्रामआसातेमहायोगबलान्वितौ ३७ ताविहैत्यकलेरंतेवासुदेवानुशिक्षितौ ॥ वर्णाश्रमयुतंधर्मं पूर्ववत्प्रथयिष्यतः ३८ कृतंत्रेताद्वापरंचकलिश्चेतिचतुर्युगम् ॥ अनेनक्रमयोगेनभुविप्राणिषुवर्तते ३९ राजन्नेतेमयाप्रोक्तानरदेवास्तथापरे ॥ भूमौममत्वंकृत्वांतेहित्वेमांनिधनंगताः ४० कृमिविड्भस्मसंज्ञांतेराजनाम्नोपियस्यच ॥ भूतध्रुक्तत्कृतेस्वार्थंकिंवेदनिरयोयतः ४१ कथंसेयमखंडाभूःपूर्वैर्मेपुरुषैर्धृता ॥ मत्पुत्रस्यचपौत्रस्यमत्पूर्वावंशजस्यच ४२

भविष्यतीतित्राह दिव्येति यदायस्मिन्कृतयुगेआत्मप्रकाशकंपरमात्मप्रकाशकंभवतीतिशेषः ३४ इतिशब्दःसमाप्तिपर्यंतंकथितः एषमानवोवंशःवैवस्वतमनुसंबंधीभुविजथासंख्यायतेतथाविट्शूद्र विप्राणांवंशाअपियुगेयुगेज्ञेयाबोद्धव्याइत्यतिदेशोयम् ३५ एतेषांसत्त्वेकिंज्ञापकमत्राह एतेषामिति नामलिंगयुक्तानांअनेनैतिह्यंप्रमाणमुक्तंभवति ३६ कृतेधर्मप्रतिष्ठापकःकइतितत्राह देवापिरिति महायोगबलान्वितौमहाज्ञानबलयुक्तौअणिमाद्यैश्वर्ययुक्तौवा ३७ ३८ कतियुगानीत्यत्राह कृतमिति ३९ एषामज्ञानमाह राजन्निति ४० राजनाम्नापियस्यशरीरस्यांतेनाशेकृमिविड्भस्म संज्ञास्ताहशंशरीरंप्राप्यभूतध्रुक्तत्कृतेस्वार्थंमनुतेनपरमप्रयोजनंयतोभूतद्रोहान्निरयोभवतितंवेदकिंनवेदैव यस्यपुरुषशरीरस्यांतइतिवा ४१ स्वार्थमननप्रकारमाह कथमिति भवंत्यस्यांसत्त्वानीतिभूः सेयंमत्पूर्वैःपुरुषैःधृतासेयंभूर्ममाखंडाराजांतरानधिकृताकथंस्यान्मत्पुत्रस्यमत्पौत्रस्यचमद्वंशजस्य अहंपूर्वोयस्यांसामत्पूर्वाचकथंस्यादितिमत्वा ४२

तेजोबन्नमिदंकायमात्मतयानित्यत्वेनमुधागृहीत्वाअमीराजानोममत्वेनगृहीत्वाउभौमहींचदेहंच हित्वाअदर्शनंमरणंगताभवंतीत्यन्वयः ४३ सांप्रतंतेष्वेकोपिनास्तीत्याशयेनाह यइति पुराणा दिगतकथासुकथामात्राःसर्वात्मनाकथैवयेषांतेतथाकृताःस्वरूपतोनसंतीतिशेषः ४४ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेविजयध्वजकृतटीकायांद्वितीयोऽध्यायः ॥ २ ॥ चतुर्युगधर्मविभागःकालदो षपरिहारश्चेत्येतदस्मिन्नध्यायेभिधीयतेतत्रादौराज्ञांमौढ्यदर्शनेनभूमेःपरिहासप्रकारमाह दृष्ट्वेति आत्मनोनितरांजयेऽव्यग्रान्स्वदेकपरायणान् १ मौढ्यत्वमुपपादयति येनेति २ कीदृशस्तेषांका मइतितत्राह पूर्वमिति षड्वर्गसंख्यादिलक्षणं निर्जयेनात्मोत्कर्षःषांडिंद्रियविषयंवाअनेनभूम्येकसाधनाग्रहंसूचयति राजमंत्रिणःराजाचमंत्रिणश्चराजमंत्रिणः मंत्रीबुद्धिसहायःस्यादिति ततोमं त्रिजयानंतरंसचिवःकर्मसहायः अमात्याःकर्मसचिवाइत्यमरः आप्ताःविश्वस्ताः । अथपश्चात्कंटकान्क्षुद्रशत्रून् ३ एवंक्रमेणराज्ञोजित्वापृथिवींजेष्यामःवशीकरिष्यामःइत्याशयातितृष्णया अंतकंमृ त्युम् ४ एवंकेचित्पुनःमांजित्वाप्यतितृष्णयाब्धिंविशंतीत्यनेनद्वितीयादिजयार्थंसूचयति भूजयादिनानकिमपिप्रयोजनमपित्वंततवोनर्थएवावशिष्यतेमनोजयफलापेक्षयेत्याह कियदितिश्रा

तेजोबन्नमयंकायंगृहीत्वात्मतयामुधा ॥ महींममतयाचोभौहित्वांतेदर्शनंगताः ४३ येयेभूपतयोराजन्भुंजतेभुवमोजसा ॥ कालेनतेकृताःसर्वेकथामात्राः कथासुवै ४४ इतिश्रीभागवतेम०द्वादशस्कंधेद्वितीयोऽध्यायः ॥ २ ॥ ॥ ७ ॥ श्रीशुकउवाच ॥ दृष्ट्वात्मनिजयव्यग्रान्नृपान्हसतिभूरियम् ॥ अहोमांवि जिगीषंतिमृत्योःक्रीडनकान्नृपाः १ कामएषनरेंद्राणांमोघःस्याद्विदुषामपि ॥ येनफेनोपमेपिंडेयेनविस्रंभितान्नृपाः २ पूर्वंनिर्जित्यषड्वर्गंजेष्यामोराजमं त्रिणः ॥ ततःसचिवपौराप्तकरींद्रानथकंटकान् ३ एवंक्रमेणजेष्यामःपृथ्वींसागरमेखलाम् ॥ इत्याशाबद्धहृदयानपश्यंत्यंतिकेंतकम् ४ समुद्रावरणांजि त्वामांविशंत्यब्धिमोजसा ॥ कियदात्मजयस्यैतन्मुक्तिरात्मजयेफलम् ५ यांविसृज्यैवमनवस्तत्सुताश्चकुरूद्वह ॥ गतायथागतंयुद्धेतांमांजेष्यंत्यबुद्धयः ६ मत्कृतेपितृपुत्राणांभ्रातॄणांचापिविग्रहः ॥ जायतेह्यसतांराज्येममताबद्धचेतसाम् ७ ममैवेयंमहीकृत्स्नानतेमूढेतिवादिनः ॥ स्पर्धमानामिथोघ्नंति म्रियंतेमत्कृतेनृपाः ८ पृथुःपुरूरवागाधिर्नहुषोभरतोर्जुनः ॥ मांधातासगरोरामःखट्वांगोधुंधुहारघुः ९ तृणबिंदुर्ययातिश्चशर्यातिःशंतनुर्गयः ॥ भगी रथःकुवलयाश्वःककुत्स्थोनैषधोनृगः १० हिरण्यकशिपुर्वृत्रोरावणोलोकरावणः ॥ नमुचिःशंबरोभौमोहिरण्याक्षोथतारकः ११ अन्येचबहवोदैत्याराजा नोयेमहेश्वराः ॥ सर्वेसर्वविदःशूराःसर्वेसर्वजितोजिताः १२ ममतांमय्यमर्त्यायांकृत्वोच्चैर्मर्त्यधर्मिणः ॥ कथावशेषाःकालेनह्यकृतार्थाःकृताअहो १३

त्मजयस्यमनोजयस्यफलापेक्षयैतद्भूजयादिकंकियत्फलं आत्मजयेकिंफलंयेनायमेवसाध्यःस्यादितितत्राह मुक्तिरिति आत्मजयेमुक्तिरेवफलंपरमात्तस्मादितिशेषः ५ इतोपिमज्जयकामा अज्ञाएवेत्याह यामिति मनवस्तत्सुताश्चयांमांविसृज्ययथागतायाताःअबुद्धयःतांमांजेष्यंतीत्यन्वयःआत्मजयवतांत्यागशक्तिरन्येषामन्यथेतिसूचयति ६ नकेवलमितरेषांमत्कृतोविग्रहोपितुशरीर संबंधिनामपिरयादित्याह मत्कृतइति अपिशब्दःपुत्रादीनामित्यनेनसंबंधयितव्यः अयमपिप्रायिकइत्याह असतामिति असतामप्रशस्तकर्मणां ७ किंप्रकारोविग्रहइतितत्राह ममेति ८ तत्रकांश्चिन्नृपान्निर्दिशति पृथुरित्यादिना ९ १० ११ १२ एतेमर्त्यशरीरधर्मिणः सर्वेप्यमर्त्यायांनित्यायांमयिविषयेममतांकृत्वाअकृतार्थाःअसाधितपुरुषार्थाःकालेनतलिनाकथावशे षाःकृताःहियस्मात्तस्मादमीषांअज्ञानमहो अतआत्मजयेनभाव्यमित्यर्थः १३

निगमयति कथाइतिलोकेषुयशोवितायविस्तूत्यपरेयुषांलोकंमाप्तानांमहीयसांमन्वादीनांउत्तमानांपुरुषाणामिमाःकथास्तेकथितामयेतिशेषः किमर्थंकथिताइतितत्राह विज्ञानेति वचोविभूतेः वचसांविभूतयोविविधभवनविषयावा विज्ञानवैराग्यविवक्षयायोग्यस्यपुंसोविज्ञानंवैराग्यंस्यातामित्यभिप्रेत्यविवृताः नतुपारमार्थ्यंपरमार्थउत्तमार्थोवेदमुख्यार्थोभगवांस्तत्संबंधविवक्षयानैवतस्यादोधि निषेधाविषयत्वात्विज्ञानविवक्षयाअपिमदुक्तएवग्राह्योनान्योक्तइत्याह वचोविभूतीरिति अन्यवाचोविभूतयोवचसांबहुत्वान्नपारमार्थ्यमुत्तमपुरुषार्थसाधनज्ञानमुद्दिश्यनभवंतीत्यर्थः वाचोविग्लापनंहि तदितिश्रुतेः १४ कुतइतरावाचोविभूतयःपुरुषार्थोपयोगिन्योनस्युरित्यतआह यत्रेति यत्रयस्यांवाचिउत्तमश्लोकगुणानुवादःसंगीयतेपुरुषस्तामेववाचंशृणुतात्शृणोत्वित्यर्थः श्रीहरिभक्त्यनुत्पादक त्वादितरावाचोहेयाइत्यर्थः अन्यावाचोविमुंचथेतिश्रुतेः १५ ज्ञातकलिदोषपरिहारोपिराजालोकोपकारायपृच्छति केनेति कलेरुत्पन्नान्दोषान्विधमिष्यंतिपरिहरिष्यंतिउपचितान्संवृद्धान्तदु पायस्वरूपंयथायथावत् १६ कालस्यविष्णोर्गतिंगमनप्रकारंच १७ सूचीकटाहन्यायेनयुगधर्मस्वरूपमादौवक्ति कृतइति तज्जनैःकृतयुगजनैः केचत्वारःपादाइत्यत्राह सत्यमिति वि

कथाइमास्तेकथितामहीयसांवितायलोकेषुयशःपरेयुषाम् ॥ विज्ञानवैराग्यविवक्षयाविभोयशोविभूतीर्नतुपारमार्थ्यम् १४ यत्रोत्तमश्लोकगुणानुवादः संगीयतेभीक्ष्णममंगलघ्नः ॥ तमेवनित्यंशृणुतादभीक्ष्णंकृष्णेमलांभक्तिमभीप्समानः ॥ १५ ॥ राजोवाच ॥ केनोपायेनभगवन्कलेर्दोषान्कलौजनाः ॥ विधमिष्यंत्युपचितांस्तन्मेब्रूहियथामुने १६ युगानियुगधर्मांश्चमानंप्रलयकल्पयोः ॥ कालस्येश्वररूपस्यगतिंविष्णोर्महात्मनः १७ श्रीशुकउवाच ॥ कृतेप्रवर्ततेधर्मश्चतुष्पात्तज्जनैर्धृतः ॥ सत्यंदयातपोदानमितिपादाविभोर्नृप १८ संतुष्टाःकरुणामैत्राःशांतादांतास्तितिक्षवः ॥ आत्मारामाःसमदृशःप्रायशःश्रमिणोजनाः १९ त्रेतायांधर्मपादानांतुर्यांशोहीयतेशनैः ॥ अधर्मपादैरनृतहिंसासंतोषविग्रहैः २० तदाक्रियातपोनिष्ठानातिहिंस्रानलंपटाः ॥ त्रैवर्गिकास्त्रयीवृद्धावर्णाब्रह्मोत्तरानृपाः २१ तपःसत्यदयादानेष्वर्धंह्रसतिद्वापरे ॥ हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः २२ यशस्विनोमहाशालाःस्वाध्यायाध्ययनेरताः ॥ आढ्याःकुटुंबिनोहृष्टावर्णाःक्षत्रद्विजोत्तमाः २३ कलौतुधर्महेतूनांपर्यासोधर्महेतुभिः ॥ एधमानैःक्षीयमाणोह्यंतेसोपिविनंक्ष्यति २४ तस्मिन्लुब्धादुराचारानिर्दयाःशुष्कवैरिणः ॥ दुर्भगाभूरितर्षाश्चशूद्रदासोत्तराःप्रजाः २५

भोर्धर्मस्यतेपादाः १८ तत्राश्रमिणांस्वभावमाह संतुष्टाइति समदृशःवस्तुयाथार्थ्यज्ञानिनःकरुणयंतीतिकरुणाः आश्रमिणइत्यनेनभार्याद्यवियोगमाह नित्यगृहस्थाइत्यर्थः १९ तुर्यांश श्चतुर्थांशोदानलक्षणःपादोहीयतेह्रसति पादहानौप्रतिपक्षमाह अधर्मेति २० तदात्रेतायांयज्ञादिक्रियातपोनिष्ठाभवंतिनलंपटाःविषयरागिणोनभवंति त्रैवर्गिकाःत्रिवर्गसहिताःत्रयीवृद्धाःवेद विद्यायांविशारदास्त्रैविद्याइत्यर्थः ब्रह्मोत्तराब्राह्मणोत्तराः ब्राह्मणाधिकाः २१ अधर्मलक्षणैःअधर्मस्वरूपपादैःहिंसातुष्ट्यनृतद्वेषैः हिंसातुष्ट्यनृतलक्षणद्वैधांद्वित्वंयेषांतेतथातैःअतुष्टियुतमनृतम तुष्ट्यनृतं धर्मस्यतपःसत्यदयादानेषुपादेष्वर्धंह्रसति अनेनद्वापरशब्दोनिरुक्तः २२ महाशालाइत्यनेनयज्ञकर्तारः २३ पर्यासोनिरासः सोपिसत्यलक्षणोपिधर्मोवा २४ शुष्कवैरिणःनिष्प्रयोजनवैरि णः शूद्रदासोत्तराःप्राधान्येनशूद्राणांदासाः २५

सत्वादयोगुणाआत्मनिमनसिपरिवर्तंतेपर्यायेणवर्तंते २६ कथंतत्राह प्रसीदतीति यदासत्वंप्रसीदतितदामनआदीनिप्रसन्नानिभवंति लक्षणांतरमाह ज्ञानइति यद्यदाज्ञानादिरुचिस्तदा कृतएत त्कल्प्यतइत्यत्राह यादिति मनआदिप्रसादेनज्ञानाद्यभिरुचिर्ज्ञायतइतियद्यस्मात्तस्मादिति २७ देहिनांयदा काम्यंतइतिकामास्तेषुकर्मसुयशसिचापादनीयमितिस्नेहविशेषोभवति तदाबुद्धिमान् रजोवृत्तिस्त्रेतेतिजानीतजानातु २८ यदाआत्मनिलोभादयोदृश्यंतेतदारजस्तमःरजस्तमोगुणवृत्तियुतंद्वापरंजानातु २९ यदामायादयोदृश्यतेयत्रसकालिस्तामसस्तमोगुणवृत्तिमानित्युपलक्ष्यते विषादनंविषण्णता ३० यस्मात्कलिदोषात्क्षुद्रदृशअल्पज्ञानाःलोकोपद्रवकर्मज्ञानावा वृत्तिहीनाजीवनोपायरहिताःअसतीरसत्यः ३१ दस्यूत्कृष्टाःदस्यूपद्रुताः क्रूषहिंसायामिति

सत्वंरजस्तमइतिदृश्यंतेपुरुषेगुणाः ॥ कालसंचोदितास्तेवैपरिवर्तंतआत्मनि २६ प्रसीदातियदासत्वंमनोबुद्धींद्रियाणिच ॥ तदाकृतयुगंविद्याज्ज्ञानेत पसियद्रुचिः २७ यदाधर्मेषुकामेषुभक्तिर्यशसिदेहिनाम् ॥ तदात्रेतारजोवृत्तिरितिजानीतबुद्धिमान् २८ यदालोभस्त्वसंतोषोमनोदंभोथमत्सरः ॥ कर्म णांचापिकाम्यानांद्वापरंतद्रजस्तमः २९ यदामायानृतंतंद्रानिद्राहिंसाविषादनम् ॥ शोकोमोहोभयंदैन्यंसकलिस्तामसःस्मृतः ३० यस्मात्क्षुद्रदृ शोमर्त्याःक्षुद्रभाग्यामहाशनाः ॥ कामिनोवृत्तिहीनाश्चस्वैरिण्यश्चस्त्रियोऽसतीः ३१ दस्यूत्कृष्टाजनपदावेदाःपाखंडदूषिताः ॥ राजानश्चप्रजाभक्षाः शिश्नोदरपराद्विजाः ३२ अव्रताबटवोशौचाभिक्षवश्चकुटुंबिनः ॥ तपस्विनोग्रामवासान्यासिनोत्यर्थलोलुपाः ३३ ह्रस्वकायामहाहाराभूर्यप त्यागतह्रियः ॥ शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ३४ पणयिष्यंतिवैक्षुद्राःकिराटाःकूटकारिणः ॥ अनापद्यपिमंस्यंतेवार्तांसाधुजुगुप्सिताम् ३५ पतिंत्यक्ष्यंतिनिर्द्रव्यंभृत्याअप्यखिलोत्तमम् ॥ भृत्यंविपन्नंपतयःकौलंगाश्चापयस्विनीः ३६ पितृन्भ्रातॄन्सुहृज्ज्ञातीन्हित्वासौरतसौहृदाः ॥ श्वशुर श्यालसंवादादीनाःस्त्रैणाःकलौनराः ३७ शूद्राःप्रतिग्रहीष्यंतितपोवेषोपजीविनः ॥ धर्मंवक्ष्यंत्यधर्मज्ञाअधिरुह्योत्तमासनम् ३८ नित्यमुद्विग्नम नसोदुर्भिक्षंकरकर्शिताः ॥ निरन्नेभूतलेराजन्ननावृष्टिभयातुराः ३९ वासोन्नपानशयनव्यवायस्नानभूषणैः ॥ हीनाःपिशाचसंदर्शाभविष्यंतिकलौप्रजाः ४० कलौकाकिणिकेप्यर्थेविगृह्यत्यक्तसौहृदाः ॥ त्यक्ष्यंतिहिप्रियान्प्राणान्हनिष्यंतिस्वकानपि ४१ नरक्षिष्यंतिमनुजाःस्थविरौपितरावपि ॥ पु त्रंभार्यांचकुलजांक्षुद्राःशिश्नोदरंभराः ४२ कलौनराजञ्जगतांपरंगुरुंत्रिलोकनाथंनतपादपंकजम् ॥ प्रायेणमर्त्याभगवंतमच्युतंयक्ष्यंतिपाखं डविभिन्नचेतसः ४३

भाक्षुः ३२ बटवोब्रह्मचारिणः अव्रताःमहाव्रतादिव्रतहीनाःअग्निकार्यादिव्रतहीनावा ३३ भूर्यपत्याःबहुसंतानाः ३४ क्षुद्राःदरिद्राःकिराटाःपारिणतफलानिपणायिष्यंतिविक्रेष्यंति कूटकारिणःधातुर्वादकरणशीलाःवार्ताकुसीदादिवैश्यवृत्तिं ३५ अखिलोत्तमंकुलादिनेतिशेषः कौलंकुलेविद्यमानंविपन्नंआपदंप्राप्तंभृत्यंपतयस्त्यक्ष्यंति अपयस्विनीःक्षीररहितागाश्चत्य क्ष्यंतीतिशेषः ३६ सौरतेसुरतमंत्रविषये सौहृदंप्रेमयेषांतेतथा श्वशुरश्यालाभ्यांसहसम्यक्वादोयेषांतेतथा ३७ ३८ ३९ पिशाचवत्संदर्शोदर्शनंयेषांतेतथा ४० विगृह्यविग्र हंवैरंकृत्वाकाकिणिकेर्थेअत्यल्पधनविषये ४१ ४२ पाखंडशास्त्रेणाद्वैतविषयेणविभिन्नचेतसःव्यामोहितचित्ताः ४३

किंमाहात्म्योयंभगवान्येनतद्यजनंसप्रयोजनंस्यादितितत्राह यन्नामधेयमिति विमुक्तंकर्मलक्षणमर्गलंतालकीलंयस्यसतथाविध्वस्तकर्मबंधनइत्यर्थः ४४ केनोपायेनेत्यादिनापृष्टंपरिहर्तुमाह पुंसामित्यादिना द्रव्यदेशात्मसंभवान्द्रव्यदेशस्वभावोद्भूतान्किमपिनावशिष्यतेतःसर्वमित्युक्तम् ४५ चित्तस्थितिभावेनानासाधनमाह श्रुतइत्यादिना अशुभमित्युपलक्षणम् प्रथमकर्मभोगायतनप्रारंभप्रवृत्तिसंपादिताशुभमित्यर्थः ४६ मंदाधिकारिणःक्षिप्रप्रवृत्त्यर्थंसदृष्टांतमाह यथेति शास्त्रोक्ताष्टादशदोषाद्दुर्वर्णमित्यनेनगृह्यते धातुजंगैरिकसमुद्भूतवा आत्मगतःचित्तगतःअशुभाशयंपापराशिंपापसंपृक्तजडमनोवा ४७ विद्यादिनांतःकरणशुद्ध्याश्रेयःस्यात्किंचित्तस्थेनहरिणेतितत्राह विद्येत्यादिनाप्राणनिरोधःप्राणायामःअतरात्माअंतःकरणं हृदिस्थेसति ४८ उपसंहरति तस्मादिति ४९ आत्मभावंआत्मनिभक्तिंनयतिप्रापयति सर्वमादत्तइतिसर्वात्मा सर्वस्यसंभवोयस्मात्ससर्वसंभवः ५० कलिःकेवलंनदोषाकरएवापितुगुणापादकोपिभवति औषधोपचितद्रव्यवदित्याह

यन्नामधेयंम्रियमाणआतुरःपतन्स्खलन्वाविवशोगृणन्पुमान् ॥ विमुक्तकर्मार्गलउत्तमांगतिंप्राप्नोतियक्ष्यंतिनतंकलौजनाः ४४ पुंसांकलिकृतान्दोषान्द्रव्यदेशात्मसंभवान् ॥ सर्वंहरतिचित्तस्थोभगवान्पुरुषोत्तमः ४५ श्रुतःसंकीर्तितोध्यातःपूजितश्चादृतोपिवा ॥ नृणांधुनोतिभगवान्हृत्स्थोजन्मायुताशुभम् ४६ यथाहेम्निस्थितोवह्निर्दुर्वर्णंहंतिधातुजम् ॥ एवमात्मगतोविष्णुर्योगिनामशुभाशयम् ४७ विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजाप्यैः ॥ नात्यंतशुद्धिंलभतेंतरात्मायथाहृदिस्थेभगवत्यनंते ४८ तस्मात्सर्वात्मनाराजन्हृदिस्थंकुरुकेशवम् ॥ म्रियमाणोह्यवहितस्ततोयासिपरांगतिम् ४९ म्रियमाणैरभिध्येयोभगवान्परमेश्वरः ॥ आत्मभावंनयत्यंगसर्वात्मासर्वसंभवः ५० कलेर्दोषनिधेराजन्नस्तिह्येकोमहान्गुणः ॥ कीर्तनादेवकृष्णस्यमुक्तबंधःपरंव्रजेत् ५१ कृतेयद्ध्यायतोविष्णुंत्रेतायांयजतोमखैः ॥ द्वापरेपरिचर्यायांकलौतद्धरिकीर्तनात् ५२॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेयुगानुवर्णनंनामतृतीयोऽध्यायः ॥ ३ ॥ श्रीशुकउवाच ॥ कालस्तेपरमाण्वादिर्द्विपदर्धावधिर्नृप ॥ कथितोयुगमानंचशृणुकल्पलयावथ १ चतुर्युगसहस्रंतुब्रह्मणोदिनमुच्यते ॥ सकल्पोयत्रमनवश्चतुर्दशविशांपते २ तदंतेप्रलयस्तावद्ब्राह्मीरात्रिरुदाहृता ॥ त्रयोलोकाइमेयत्रकल्पंतेप्रलयायहि ३ एषनैमित्तिकःप्रोक्तःप्रलयोयत्रविश्वसृक् ॥ शेतेनंतासनोविश्वमात्मसात्कृत्यचात्मभूः ४ द्विपरार्धेत्वतिक्रांतेब्रह्मणःपरमेष्ठिनः ॥ तदाप्रकृतयःसप्तकल्पंतेप्रलयायवै ५

कलेरिति ५१ ध्यानादिप्रधानसाधनमंतरेणकीर्तनमात्रेणसंसारबंधनिर्मोक्षःकथमित्याशंक्यतत्तद्युगेषुभगवत्क्षमत्वेनयुक्तमित्यभिप्रेत्याह कृतइति कृतेयत्तत्स्यादित्यर्थः ॥ ५२ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेविजयध्वजकृतटीकायांतृतीयोऽध्यायः ॥ ३ ॥ भगवत्कटाक्षप्रेक्षणाक्षिप्तकल्पप्रलयप्रकारतत्स्वरूपंभागवतप्रवृत्तिंचकथयत्यस्मिन्नध्याये तत्रादावुक्तमनूद्यवक्तव्यंप्रतिविध्यते कालइति कथितस्तृतीयस्कंधे अथकल्पप्रलययोरपिकालाधीनत्वेनतत्स्वरूपश्रवणानंतरं १ यत्रदिने २ यस्यादिनस्यांते ब्राह्मीब्रह्मसंबंधिनीयत्ररात्रौ ३ यत्रप्रलयेआत्मसात्कृत्यआत्मनिनिधाय ४ सप्तप्रकृतयः महदहंकारावाकाशादिपंचभूतानि ५

यत्रप्रकृतिप्रलयेसंघातश्चतुर्विंशतितत्त्वसमूहात्मकः प्रलयप्रकारमाह विघातइति विघातेप्रलयेउपसादितेआसन्नेसति ६ कलद्रवणइतिधातोःकालेनद्रवणहेतुना ७ सामुद्रंसमुद्रस्यविषमा नंरसंजलं दैहिकंदेहस्यविद्यमानंरसंरेतोलक्षणंवीर्यं भूमेरसंतिक्तादिलक्षणम् ८ सांवर्तकःप्रलयकालीनः सत्वशून्यान्प्राणिरहितान्भूविवरान्पातालादीन् ९ १० राजसावृतंस्वंधूम्रस्थानम् ११ चित्रवर्णानिनीलादिनानाविधानि १२ ब्रह्मांडविवरांतरंब्रह्मांडबिलविशेषंब्रह्मांडबिलोदरंवा एकोदकंउदकात्मकंभवति पंचभूतगुणलयप्रकारमाह तदेति उपप्लवेप्रलये १३ नीरसाःआपः १४ तद्राहितंरूपरहितंतेजोवायौलीयते १५ सवायुःखंविशति तदनुशब्दगुणलयानंतरंतैजसानींद्रियाणितैजसाहंकारेलीयंतेइतिशेषः १६ वैकारिकादेवाःवैकारिकाहंकारेस्वगुणैःसह १७ तंमहां तं बीजंव्यंजकंअव्याकृतंमूलप्रकृतिः कालेनहरिणाचोदितंप्रेरितंसत्वादिगुणान्ग्रसते १८ मूलप्रकृतिस्वरूपंवक्ति नतस्येति तस्याव्यक्तस्यत्रुटिलवादिकालावयवैःपरिणामादयोगुणानसंति

एषप्राकृतिकोराजन्प्रलयोयत्रलीयते ॥ आंडकोशस्तुसंघातोविघातउपसादिते ६ पर्जन्यःशतवर्षाणिभूमौराजन्नवर्षति ॥ तदानिरन्नेह्यन्योन्यंभक्ष्यमा णाःक्षुधार्दिताः ॥ क्षयंयास्यंतिशनकैःकालेनोपद्रुताःप्रजाः ७ सामुद्रंदैहिकंभौमंरसंसांवर्तकोरविः ॥ रश्मिभिःपिबतेघोरैःसर्वंनैवविमुंचति ८ ततःसांवर्त कोवह्निःसंकर्षणमुखोत्थितः ॥ दहत्यनिलवेगोत्थःशून्यान्भूविवरानथ ९ उपर्यधःसमंताच्चशिखाभिर्वह्निसूर्ययोः ॥दह्यमानंविभात्यंडंदग्धगोमयपिंडव त् १० ततःप्रचंडपवनोवर्षाणामधिकंशतम् ॥ परःसांवर्तकोवातिधूम्रंखंरजसावृतम् ११ ततोमेघकुलान्यंगचित्रवर्णान्यनेकशः ॥ शतवर्षाणिवर्षंतिन दंतिरभसस्वरैः १२ ततएकोदकंविश्वंब्रह्मांडविवरांतरम् ॥ तदाभूमेर्गंधगुणंग्रसंत्यापउपप्लवे १३ग्रस्तगंधातुपृथिवीप्रलयत्वायकल्पते ॥ अपांरसमथोते जस्तालीयंतेथनीरसाः १४ ग्रसतेतेजसोरूपंवायुस्तद्रहिततदा ॥ लीयतेचानिलेतेजोवायोःखंग्रसतेगुणम् १५ सवैविशतिखंराजंस्ततश्चनभसोगुणम् ॥ शब्दंग्रसतिभूतादिर्नभस्तमनुलीयते १६ तैजसानींद्रियाण्यंगदेवावैकारिकागुणैः १७ महान्ग्रसत्यहंकारंगुणाःसत्वादयश्चतम् ॥ ग्रसतेव्याकृतंबीजंगु णान्कालेनचोदितम् १८ नतस्यकालावयवैःपरिणामादयोगुणाः ॥ अनाद्यनंतमव्यक्तंनित्यंकारणमव्ययम् १९ नयत्रवाचोनमनोनसत्वंतमोरजोवा महदादयोमी ॥ नप्राणबुद्धींद्रियदेवतावानसन्निवेशःखलुलोककल्पः २० नस्वप्नजाग्रन्नचतत्सुषुप्तंनखंजलंभूरनिलोऽग्निरर्कः ॥ सुषुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतंपदमामनंति २१ लयःप्राकृतिकोह्येषपुरुषाव्यक्तयोर्यदा ॥ शक्तयःसंप्रलीयंतेविवशाःकालविद्रुताः २२

तदव्यक्तंमूलप्रकृतिं विश्वसृजांकारणंआमनंतीतिशेषः इतरविशेषणमुक्तयोःसाम्यमित्याशयेनाह अनादीति १९ कालेनेत्युक्तस्यहरेःस्वरूपंदर्शयति नयत्रेति वागादयोयत्रकंचनविशेषंनापादयंती तिशेषः २० आकाशाद्यन्यतमवच्चनभवतीत्याह नस्वप्नेति सवाएषआत्मानेतिनेतीतिश्रुतेः सुषुप्तवत्सुखरूपं सुखमस्वाप्सम् इतिसुप्तिपदेनसुखंलक्ष्यते शून्यवत्सूक्ष्मंअतएवाप्रतर्क्यंतर्कागोच रंमूलभूतंसर्वस्यप्रधानकारणंपदंचतद्इतिपदंगम्यमित्यर्थः २१ कालाख्यपरमात्मस्वरूपमुक्त्वालयंनिर्दिशति लयइति यदायस्मिन्लयेकालविद्रुताःकालेनसद्यःप्रजीवनादयःअतएवविवशाःइयं धीनाःपुरुषाव्यक्तयोर्ब्रह्मरुद्रयोःशक्तयःपृथिव्यादयःसंप्रलीयंतेएषलयःप्राकृतिकोहिनामेतिशेषः २२

चराचरेवशिष्यमाणांकिंतत्राह बुद्धीति तदाश्रयेआश्रयंतेऽनेनचराचरेणत्याश्रयंप्रपंचाधारभूतंज्ञानंनित्यनिर्दोषज्ञानात्मकंब्रह्म बुद्धींद्रियार्थरूपेणबुद्ध्याद्यज्ञानात्मिकयालक्ष्म्याज्ञानहेतुत्वेनबुद्धिशब्द वाच्ययात्रय्यासुक्तश्रेण्यावाचक्षुरादींद्रियविषयसौंदर्यातिशयेनभातिज्योतीरूपेणवर्तते कथंकारंवर्ततइतितत्राह अन्वयव्यतिरेकाभ्यामिति प्रपंचसद्भावासद्भावाभ्यांकालाभ्यांवर्ततइति यद्वा बुद्धी द्रियात्मकदेहाकारेणबुद्धिवान्मनोवानित्यादिश्रुतेः अनेनसंविदेवपरितोविराजतेइतिपूर्वाचार्यवचनाज्ज्ञातृज्ञेयविवर्जितज्ञानमितिव्याख्यानंप्रत्युक्तं ग्राहकज्ञानस्यपाषाणकल्पत्वेनहेयत्वात् नासदासी दितीतग्वस्तुनिषेधाद्धात्रादिसद्भावःकथमत्राह आद्यंतवदिति यच्छरीरयोगवियोगवत्तदवस्त्वस्वतंत्रंयदादावंतेचवर्तमानंलक्ष्म्यादितत्त्वंतदप्यस्वतंत्रंयदादिनिधनयुक्तंउत्पत्तिनाशवत्तद्वस्तुनोब्रह्मणो व्यतिरिक्तनभवतितदप्यस्तत्वेनतत्ज्ञानेलीयतइतियन्मतंतदासुरं तदुक्तं जीवविष्ण्वोरभेदश्चदेहयोगवियोजने । विष्णोर्दुःखप्रणित्वादिपराभावस्तथैवच । अस्वातंत्र्यश्चवेदादावुक्तवद्भासतेविभोः । क्वचि त्कचिद्विमोहायदैत्यादीनांदुरात्मनामिति २२ एतमर्थंसोदाहरणमाह दीपइति दीपादिकंज्योतिषस्तेजसस्तत्वात्तच्छक्तिमंतरेणपृथक्स्वातंत्र्येणप्रकाशकंनभवेत्एवंबुद्ध्यादिकमपिमारुतान्मुख्यप्रा णादपिपृथक्ज्ञानजननशक्तिमन्नवायुनावैगौतमसूत्रेणप्राणेनहीदमित्यादिश्रुतेः किमुतपरब्रह्मणः एतस्माज्जायतेप्राणआत्मनएवप्राणोजायतेब्रह्मणोवाएतानिकरणानीतिश्रुतेः २४ नस्वप्नेत्यत्र स्वप्नाद्यवस्थाअपिनब्रह्मणइत्युक्तंतर्हिकस्यताइतितत्राह बुद्धेरिति बुध्यंज्ञानंधीयतेऽस्मिन्नितिबुद्धिर्जीवःतस्यजागरणादिकमुच्यतेह सतासोम्येत्यादिश्रुतिसिद्धअथहैतत्पुरुषःस्वपितिनामेतिचश्च नेनजाग्रदादीनांनिरालंबनतयामिथ्यात्वमपास्तं ननुसुप्त्याद्यवस्थावद्विश्वादीनामपिनानात्वंसत्यंस्यादितितत्राह मायामात्रमिति प्रत्यगात्मनिपरमात्मनिस्थितंनानात्वंमायया स्वेच्छयामात्रंनिर्मि

बुद्धींद्रियार्थरूपेणज्ञानंभातितदाश्रयम् ॥ अन्वयव्यतिरेकाभ्यामाद्यंतवदवस्तुयत् २३ दीपश्चक्षुश्चरूपंचज्योतिषोनपृथग्भवेत् ॥ एवंधीःखानिमा त्राश्चनस्युरप्युतमारुतात् २४ बुद्धेर्जागरणंस्वप्नंसुषुप्तिरितिहोच्यते ॥ मायामात्रमिदंराजन्नानात्वंप्रत्यगात्मनि २५ यथाजलधराव्योम्निभवंतिनभवंति च ॥ ब्रह्मणीदंतथाविश्वमुपयात्युदयाप्ययम् २६ एतेह्यवयवाःप्रोक्ताःसर्वावयविनामिह ॥ विनार्थेनप्रतीयेरन्पटस्येवांगतंतवः २७ यत्सामान्य विशेषाभ्यामुपलभ्येतसभ्रमः ॥ अन्योन्यापाश्रयात्सर्वमाद्यंतवदवस्तुच २८

तंत्रांतनस्वाभाविकंएतेनकृष्णरामादिरूपाणांमिथोमूलरूपेणभेदोनिरस्तःतदुक्तं प्रत्येकंविष्णुरूपाणांभ्रांतिमात्राभिदामता । जगतश्चैवविष्णोस्तुसत्योभेदःसदैवतु । यथाकाशघनौनित्यंभिन्नावेवपरस्परं एवमीशोजगच्चैवभिन्नावेवपरस्परमिति २५ नन्वेवंतर्हिजगद्ब्रह्मणोश्चभेदोऽपारमार्थिकःस्यादित्यतःसोदाहरणंभेदस्यसत्यत्वंसमर्थयते यथेति उदयाप्यययोर्मिथोविरुद्धधर्मत्वादेकवद्भावः इदंवि श्वंब्रह्माधारत्वयासृष्टिसंहारौयातिगगनघनयोराधाराधेययोर्भेदोयथासत्यस्तथाजगद्ब्रह्मणोरपीतिएतदप्युक्तं यथाकाशघनावित्यादिना २६ ननुजगद्ब्रह्मणोरिवावयवावयविनामपिभेदःसत्येव किंनस्यात्पटस्यामीतंतवइतितत्प्रतीतेरितितत्राह एतइति सर्वेषामवयविनांमहदादीनांयेअवयवाःप्रोक्ताःखादयःएतेर्थेनाविनाभेदव्यवहारमंतरेणप्रतीयेरन् हियस्मात्तस्मादभिन्नाइतिशेषः कथ मभेदइत्यत्राह पटस्येति पटस्यावयवास्तंतवोऽवयविनापटेनाभिन्नाइतियथागीकर्तव्यंतंतुःपटःमृद्घटःशुक्लःपटइत्याद्यभेदव्यवहारदर्शनात् प्रत्येकंतंतुनाभेदेपिसमुदायरूपेणाभेदइतिप्रकटनायतंतवइ तिबहुवचनं अतएव अवयव्यवयवाभेदात्कोटघंशोभेदईरितः । सोपिभेदोनचाभेदात्पृथगेवप्रवर्ततइतिवाक्यमत्रगृहीतं अनेनकार्यकारणादीनांभेदइतियन्मतमपास्तं पटस्यतंतवइतिप्रयोगःपट स्यशौक्ल्यमितिवाविष्कर्षणार्थः सोपिश्रीहरिनियतइतिनयुक्तिविरोधः अवयव्यवयवानांतुकार्यकारणवस्तुनां । एकएवनियंतासौहरिर्नारायणःपरइतिवाक्यादवगंतव्यः २७ नन्वेवंचेदवयवि निसत्यवयवनाशेतस्यापितदभेदःस्यादत्राह यदिति यावद्द्रव्यभाविसामान्यमित्युच्यते अयावद्द्रव्यभाविविशेषइति तत्रयद्वस्तुनष्टावयवाभिन्नमित्युपलभ्येतसामान्यात्पदवत्तु सबुद्धेर्भ्रमःकुतः

अन्योन्यापाश्रयाद्विश्लेषात्तस्मादाद्यंतवदवस्त्वेव यद्वा हनुमद्भीमांशानांवाध्वांशिनांसामान्यविशेषशक्तिदर्शनात्कथमभेदःसंगच्छतइतितत्राह यदिति अन्योन्यापाश्रयाअन्योन्याभेदविषयं माणात् असुरजनमोहाधिकृतत्वेनाद्यतवत्त्वादवस्तुसर्वमविद्यमानमेव २८ यथावयव्यवयववादीनांअभेदोदुरवबोध.एवंपदार्थानामनंतत्वात्तत्स्वरूपभेदोपिपरमात्मानमंतरेणदुर्ज्ञेयइत्याशयेना ह विकारइति विनिषेधेपृथग्भावइत्यतःपृथक्कारोनानाविधोभेदः प्रत्यगात्मानंसाक्षीभूतंश्रीनारायणंअंतरेणाणुरल्पोपिनिरूप्योनास्तिसएवनिरूपयितुंशक्तः । नासत्त्वान्नेत्याह ख्यायमानइति प्रतीयमानस्यासत्त्वंजुगुप्सितंप्रमाणविरोधादित्यपिशब्दः २९ नन्वेकस्यप्रतिभानंतुकृतकान्नविशिष्यतइतिवान्निर्धारणायोग्यइतितत्राह नहीति यद्यविद्वान्ब्रह्मरूपाणांनानात्वंमन्यतेतर्हापिसत्यस्य ब्रह्मणोरूपाणां नानात्वंसत्यंनभवति अविद्वन्मतत्वात् ननुयुक्ताह्यस्यहरयःशतादशेतिश्रुतेःकथंसत्यंनेत्यत्राह नानात्वमिति नेत्यनुवर्तते छिद्रयोर्बाह्यांतस्थाकाशयोः यद्वद्यथानाना त्वंनास्ति एकएवमहाकाशोघटेजायमानेबहिरंतश्चेतिद्वित्वसंख्यामुपैतिउत्पद्यमानोनीलिमाकरोप्याकाशोद्वित्वमेति तत्रप्राग्उक्तोहरेरूपमितियातःपश्चादुक्तोजीवानामित्यर्थविशेषोहिशब्देनोपात्तः उक्तंच महाकाशोबहिस्थश्चघटाद्यंतस्थएवच । द्वेधासमुदितोन्यौचद्वावाकाशौप्रकीर्तितौ । घटरूपरतदन्यश्चमहाकाशात्परोलघुः । महाकाशवदेवात्रपरमात्मासनातनः । घटांतस्थमहाकाशप्रतिमां तर्गतोविभुः । घटस्यांतर्गताकाशोमहाकाशात्परोमतः । तद्वद्देवादयःसर्वेजीवामुक्त्युपयोगिनः । तमोगाश्चैवयेसर्वेघटरूपस्ववत्त्वराइति ज्योतिषोराधिदैवाध्यात्मसंज्ञयोः सहस्रंवाआदित्यस्यरश्मयआसु

विकारःख्यायमानोपिप्रत्यगात्मानमंतरा ॥ ननिरूप्योह्यणुरपिस्याच्चेत्सभ्रमआत्मनः २९ नहिसत्यस्यनानात्वमविद्वान्यदिमन्यते ॥ नानात्वंछिद्रयो र्यद्वज्ज्योतिषोर्वातयोरपि ३० यथाहिरण्यंबहुधासमीयतेनृभिःक्रियाभिर्व्यवहारवर्त्मसु ॥ एवंवचोभिर्भगवानधोक्षजोव्याख्यायतेवैदिकलौकिकैर्जनैः ३१ यथाघनोर्कप्रभवोर्कदर्शिनोह्यर्कांशभूतस्यचचक्षुषस्तमः ॥ एवंत्वहंब्रह्मगुणस्तदीक्षितोब्रह्मांशकस्यात्मनआत्मबंधनः ३२ घनोयदार्कप्रभयाविदीर्यते चक्षुःस्वरूपंपरमीक्षतेतदा ॥ यदाह्यहंकारउपाधिरात्मनोजिज्ञासयानश्यतितर्ह्यनुस्मरेत् ३३ यदैवमेतेनविवेकहेतिनामायामयाहंकरणात्मबंधनम् ॥ छित्त्वाच्युतात्मानुभवोवतिष्ठतेतमाहुरात्यंतिकमंगसंप्लवम् ३४

नाडिष्वातताइतिश्रुतेर्वातयोर्वायुप्राणसंज्ञयोराधिदैवमथाध्यात्ममितिश्रुतेश्च अत्रापिविशेषःपूर्ववदवगंतव्यइति ३० बहुत्वसंख्यावाचिन्या श्रुतेःकिंविनिगमकमत्राह यथेति बहुधाकटककुं डलाद्यात्मनाहेमनानासंज्ञाविषयंसमीयतेतथाभगवानापदेवोनरोवराहःशुक्लःपीतोह्रस्वोणुर्दीर्घोमहानितिविविधाकारेणव्याख्यायतेप्रकाश्यतइति ३१ हरेस्तत्त्वस्वरूपंनिरूप्यसंसारप्रकारमाह य थेति अर्कशब्देनाग्नेर्जीवायवउच्यंते तेजःसंबंधेनधूमउपलक्ष्यतेअर्कप्रभवःधूमस्तेजोजलमरुद्भ्यःप्रभवउत्पत्तिःयस्यसतथाअर्केणनभसिदर्शितःसूर्यप्रकाशेसत्येवदृश्यतेनान्यथायथाघनःसूर्यदर्शनप्रतिबं धकः आपोवाअर्कइतिश्रुते॰ यथार्कांशस्यचक्षुषस्तमःसूर्यदर्शनेप्रतिबंधकंआदित्यश्चक्षुर्भूत्वाक्षिणीप्राविशदितिश्रुतेःएवमेवाहंकारोब्रह्मापेक्ष्यगुणोऽमुख्यःतदीक्षित॰तेनप्रकाशितःब्रह्मांशकस्यजीवस्य पादोस्यविश्वाभूतानीतिश्रुतेः ब्रह्मणोभिन्नांशस्यआत्मनोजीवस्यात्मानंमतिज्ञानंबध्नातीत्यात्मबंधनः आत्मादेहेधृतोजीवइत्यादोयादवप्रकाशेनप्रतीयमानत्वात्तद्ब्रह्मावेदाहंब्रह्मास्मीतिश्रुतेःब्रह्म णोविशेषभूतइतिवा ३२ यदाघनोर्कप्रभयाविदीर्यतेनष्टोभवतितदासूर्यांशंचक्षुःस्वरूपस्वादिवंरविमीक्षतेयथाएवंजीवस्यात्मनः परमात्मनोदर्शनेउपाधिनिमित्तभूतोहंकारोजिज्ञासया परमात्मोपासनयातथानश्यतितर्हितदाजीवः परंपरमात्मानमनुस्मरेत्अनुकूलस्मरणसमर्थोभवतीत्यन्वयः हिशब्देनभिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाइतीदंवाक्यमग्राहि ३३ असपज्ञा तसमाधिस्थलक्षणमाह यदेति एवमुक्तरीत्ययोद्भूतयैवयाविवेकहेतिनानिशितज्ञानायुधेनमायामयाहंकरणात्मबंधनंभगवदिच्छानिर्मितलिंगशरीरलक्षणाहंकारजनितसंसारहेतुंछित्त्वाथस्थूलात्मा

नुभवः नित्यमुक्तपरमात्मापरोक्षदर्शनेनासंप्रज्ञातसमाधिस्थोनिर्मुक्तलिंगशरीराभिमानोवतिष्ठते एतमेवआत्यंतिकंसंपूर्वंप्रलयमाहुः असंप्रज्ञातसमाधिस्थावस्थायाःनामांतरमिदम् ३४ इदानीं दैनंदिनजन्मप्रलयावाह नित्यदेति दिनेदिनेब्रह्मादीनांसर्वभूतानामुत्पत्तिलयौस्तइतिएकेसूक्ष्मज्ञावदंतीत्यनेनान्वयः ३५ चेतनानांनिर्विकारत्वेनजन्माद्यसंभवात्कथमुच्यतेनित्यदाजन्माद्यस्तीतितत्राह कालेति कालस्रोतोजवेनकालनदीप्रवाहवेगेनक्षिप्रंह्रियमाणस्यनीयमानस्यदेहस्य ३६ प्रतिदिनंजीवस्योर्वारुकविकारवत्परिमाणाद्यवस्थाःकिंनस्युरिति तत्राह अनाद्यंतवतेतिआकाशेज्योतिषांनक्षत्राणांयथास्थितेर्लयोनास्तितथाचेतनस्येतिशेषः ३७ उक्तमुपसंहरति नित्यइत्यादिना कालस्यकालांतर्यामिणोहरेर्गतिःस्थितिरीदृशीदुरवबोधेति ३८ परमप्रमेयमुपसंहरति एताइति यत्रोद्यतःक्षितितलोद्धरणायबिभ्रत्क्रौडींतनुमित्यारभ्ययाःकथाःएताःजगद्विधातुस्त्वंचतुर्मुखस्यास्तीतिअतोखिलसत्त्वधाम्नइतिसत्त्वगर्भमुदरंभरत्वमित्यतोनारायणस्येति सत्त्वोत्थाजिमुधुकीडेइतियादवःविस्तरतःकथनंकिंनस्यादितितत्राह कार्त्स्न्येनेति अजोब्रह्मा ३९ कथाकथनप्रयोजनमाह संसारेति प्लवोनौः ४० कथारसनिषेवणायभागवतपुराणमेवमुख्यसाधनमित्यभिप्रेत्यतस्याप्तिमूलत्वज्ञापनाय

नित्यदासर्वभूतानांब्रह्मादीनांपरंतप ॥ उत्पत्तिप्रलयावेकेसूक्ष्मज्ञाःसंप्रचक्षते ३५ कालस्रोतोजवेनाशुह्रियमाणस्यनित्यदा ॥ परिणामाद्यवस्थास्ताजन्मप्रलयहेतवः ३६ अनाद्यंतवतानेनकालेनेश्वरमूर्तिना ॥ अवस्थानैवदृश्यंतेवियतिज्योतिषामिव ३७ नित्योनैमित्तिकश्चैवतथाप्राकृतिकोलयः ॥ आत्यंतिकश्चकथितःकालस्यगतिरीदृशी ३८ एताःकुरुश्रेष्ठजगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः ॥ लीलाकथास्तेकथिताःसमासतःकार्त्स्न्येननाजोप्यभिधातुमीशः ३९ संसारसिंधुमतिदुस्तरमुत्तितीर्षोर्नान्यःप्लवोभगवतःपुरुषोत्तमस्य ॥ लीलाकथारसनिषेवणमंतरेणपुंसोभवेद्विविधदुःखदवार्दितस्य ४० पुराणसंहितामेतामृषिर्नारायणोव्ययः ॥ नारदायपुराप्राहकृष्णद्वैपायनायसः ४१ सवैमह्यंमहाराजभगवान्बादरायणः ॥ इमांभागवतींप्रीतःसंहितांवेदसंमिताम् ४२ एतांवक्ष्यत्यसौसूतऋषिभ्योनैमिषालये ॥ दीर्घसत्रेकुरुश्रेष्ठसंपृष्टःशौनकादिभिः ४३ अत्रानुवर्ण्यतेऽभीक्ष्णंविश्वात्माभगवान्हरिः ॥ यस्यप्रसादजोब्रह्मारुद्रःक्रोधसमुद्भवः ४४ त्वंचराजन्मरिष्येतिपशुबुद्धिमिमांजहि ॥ नजातःप्रागभूतोद्यदेहवत्त्वंननंक्ष्यसि ४५ नभविष्यसिभूत्वात्वंपुत्रपौत्रादिरूपवान् ॥ बीजांकुरवद्देहादेर्व्यतिरिक्तोयथानलः ४६

मूलंदर्शयति पुराणेति ४१ संहितांवेदसाहतात्वज्ञापनायवेदसंमितामिति ४२ ४३ अस्याःविषयमाह अत्रेति कुतोस्याइतरेभ्यःश्रैष्ठ्यं येनादरेणग्राह्यास्यादित्यतोवाह अत्रेति विष्णुत्वभिन्नत्वेन ब्रह्मान्यतमःकिंनस्यादित्यत्राह यस्येति अनेनात्मावैपुत्रनामासीदितिवाक्यप्राप्ततदात्मशंकापिदूरीकृतेति ४४ ननुजातोमृतोहमितिबुद्धेर्विक्रियायाःकथंचेतनस्यपरिणामाद्यवस्थाभावइत्याशंक्यासिद्धालोकन्यायेनतस्याविकारित्वमाह त्वंचेति मरिष्येतिसंधिभावेनघटादिनाशवैलक्षण्यंदेहवियोगस्यदर्शयति वैलक्षण्यमेवदर्शयति नेति नजायतेम्रियतेवाकदाचिदित्यादेःदेहवदित्येतत्प्रत्येकमभिसंबध्यतेनेदिचत्वदेहवन्नजातःतर्हिप्रागसन्नेत्याह प्रागिति देहवत्प्रागभूतोनुत्पन्नअद्यदेहवन्नपारंगमासि ४५ देहांतरवन्नभविष्यसिपुत्रपौत्रादिरूपवान्भूत्वाइदंदेहवन्ननंक्ष्यसि कथमिवपुत्रादिरूपवानेतितत्राह बीजेति बीजांकुरपरंपरायथातथा कस्मान्नाशाभावइतितत्राह देहादेरिति हेतुगर्भविशेषणंअत्रापिनिदर्शनंयथानलइति दार्वादेरितिशेषः पुत्रादिरूपत्वेत्वभेदोपिप्राप्तइत्यतोवाह यथाबीजपरंपरायाभेदःप्रमितः तथाप्रकृतइति शेषःभाग्वत् ४६

नतु जातोमृतइत्यभेदप्रतीतेस्तद्व्यतिरेकः कथमनलदृष्टांतःपरमात्मनिसंगतइतिवत्राह स्वप्नइति आत्मनोजीवस्यस्वप्नेस्वशिरश्छेदोयथाविथ्यास्तथापंचत्वादि इदंस्यानुभावसिद्धमित्याह दृश्यादि ति स्वदेहस्यपंचत्वादिपश्यसीतियस्मात्तदात्माअजोनजातोऽमरोनमृतश्चेतितस्माद्देहस्यैवजन्मादयोनचैतनस्येतिसिद्धम् ४७ अधुनाप्रसंगात्संसारावस्थाविशेषमरणादेःप्रकारमाह घटइति घटेभिन्नेक पालीभूतेघटाकारपरिमितोघटाकाशोनीलिमाकारवद्दृश्याकाशःस्यात्पुरायथातथेत्यर्थः एवंदेहेमृतेसतिजीवःसंसारीब्रह्मतत्त्वंयथाकर्मस्वर्गनरकादिकंसंपद्यते घटांतरस्थमहाकाशैकदेशेबहिस्थस्यथाकाशोभवति यथातथापुराजीवःप्राणधारकः परमात्मांतर्यामीब्रह्मव्याप्तस्वरूपमाप्नोतिघटांतर्गतभूताकाशःपुरायथामहाकाशाधीनःपश्चादपितदधीनतामापद्येत तथाचरमेदेहांतेलिंगशरीरेमृतेनष्टेजीवोमु क्तियोग्यआत्मापरंज्योतिःसंपद्यते अयमर्थोमहाकाशोबहिःस्थश्चघटाद्यंतस्थएवेति तत्त्वसहितावचनादवगंतव्यइतिब्रह्ममोक्षंपुनरावृत्तिशून्यंवा ४८ प्रकारांतरेणसंसारावस्थामाह मनइति आत्म नोजीवस्यमनःसुरनरादिदेहान्गुणान्कर्माणिआवृत्तिहेतुभूतानिपुण्यपापलक्षणानिचसृजतिआपादयति शब्दादिविषयासक्तिहेतुभूतानिवा एवंविधंमनःसत्किंतत्राह तदिति मायाजडप्रकृतिः तन्मन उत्पादयतिसृजतइत्यात्मनेपदप्रयोगेणचिन्मिश्रंमनइतिसूचयति ततोजडमनसोजीवस्यसंसारोवर्ततइतिविशेषः ४९ कियंतंकालंजन्मात्मकःसंसारइतितत्राह स्नेहेति यावद्यावंतंकालंतैलादिस्नेह द्रव्याधिष्ठानस्थितवर्त्यग्निसंयोगस्तावत्तावंतंकालंदीपस्यदीपत्वंप्रकाशसामर्थ्यं एवंदेहकृतोदेहादिकर्मनिमित्तकृतोभवइत्यन्वयः ५० तैलाद्यभावेनयथादीपादेःशून्यताएवंजीवस्यापिदेहाद्यभावेनशून्य

स्वप्नेयथाशिरश्छेदःपंचत्वाद्यात्मनस्तथा ॥ यस्मात्पश्यसिदेहस्यततआत्माह्यजोऽमरः ४७ घटेभिन्नेयथाकाशआकाशःस्याद्यथापुरा ॥ एवंदेहेमृतेजीवो ब्रह्मसंपद्यतेपुनः ४८ मनःसृजतिवैदेहान्गुणान्कर्माणिचात्मनः ॥ तन्मनःसृजतेमायाततोजीवस्यसंसृतिः ४९ स्नेहाधिष्ठानवर्त्यग्निसंयोगोयावदीयते ॥ तावद्दीपस्यदीपत्वमेवंदेहकृतोभवः ५० रजःसत्वतमोवृत्त्याजायतेऽथविनश्यति ॥ नतत्रात्मास्वयंज्योतिर्योव्यक्ताव्यक्तयोःपरः ५१ आकाशवद्ध्रुवाधारोध्रु वोनानामितस्ततः ॥ एवमात्मानमात्मस्थमात्मनैवामृशप्रभो ५२ बुद्ध्यानुमानगर्भिण्यावासुदेवानुचिंतया ॥ चोदितोविप्रवाक्येननत्वांधक्ष्यतितक्षकः ५३ मृत्यवोनोपसर्पंतिमृत्यूनांमृत्युमीश्वरम् ॥ अहंब्रह्मपरंधामब्रह्माहंपरमंपदम् ५४ एवंसमीक्ष्यचात्मानमात्मन्याधायनिष्कले ५५

स्यमापातमत्राह रजइति मनसोरजआदिगुणोपजीवनेनदेहोजायतेइत्यादि तत्रतस्यामवस्थायामपियोव्यक्ताव्यक्तयोर्देहप्रकृत्योः परोविलक्षणःसआत्माजीवोनजायतेनवर्धतेननश्यति कुतःस्वयंज्यो तिर्ज्ञानात्मा ५१ इदानीमुपास्तिप्रकारंविधत्ते आकाशइति आकाशवत्ततोव्याप्तोध्रुवाधारोनित्याधारोध्रुवोनित्यश्चयः नानामितः तत्तद्वस्तुपरिमाणपरिमितश्चैवंविधमाहात्म्योपेतमात्मस्थंस्वहृदयकुहर निलयमात्मानंपरमात्मानमात्मनैवसर्वप्रयत्नेनामृश सम्यग्विचार्योपास्स्व प्रभोइत्युपास्तिसामर्थ्यमाह ५२ दुर्मरणदोषदुष्टस्यममदेहत्यागेपिमोक्षोनास्तीतिनाचिंतयेत्याशयेनाह बुद्ध्येति आत्मा स्वस्वेतरवृत्तिस्वानाक्रांतनित्यनिष्ठाधिकरणमेयत्वावात्मवदितिदेहःस्वस्वेतरवृत्तिस्वानाक्रांतमित्यनिष्ठाधिकरणमेयत्वात्घटवदित्यनुमानगर्भिण्यावासुदेवानुचिंतयाहरेर्निरंतरसदुपासनयावर्तमानंत्वांवि प्रकुमारवाक्येनचोदितःप्रेरितस्तक्षकोनधक्ष्यति दृष्टदोषेणनापादयतीत्यन्वयः ५३ मृत्यूनांमारकाणांमृत्युंमारकंईश्वरंउपसमीपेस्थितंमृत्यवोनसर्पंतित्वांनप्राप्नुवंति दंशदोषापरदर्शनेप्रकारांतरेणो पायमाह अहमिति नहन्यतइत्यहं नहीयतइतिवाकदापिनजहातिस्वशक्तिमितिवाएवंविधमीश्वरंविहायकदापिनतिष्ठत्यस्वातंत्र्यादित्यर्थः ५४ उपासनाफलमाह एवमिति एवंविधस्त्वंनिष्कले आत्मनिपरमात्मानंसमाधायसंयुज्यसमीक्ष्यसम्यग्ध्यायन्विषयुक्तानैःपदेदशंतंतक्षकंलेलिहानंसर्पंनद्रक्ष्यसिइतरसर्पवदितिशेषः आत्मनोहरेःपृथक्त्वानंत्येणस्थितविश्वंशरीरंनप्रपश्यसीत्यन्वयः १६

५६ अवांतरप्रमेयमुपसंहरति एतदिति चेष्टेतिपाठेसाकथितेतिशेषः ५७ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेविजयध्वजकृतटीकायांचतुर्थोध्यायः ॥ ४ ॥ ७ ॥ श्रीनारायणानुग्रहेणपरीक्षितोदेहावि योगलक्षणंमरणं जनमेजयस्यपितृभक्तिप्रदर्शनायसर्पयाग शक्रस्यचशक्रस्यस्वविमानपातोपेक्षांकथयत्यस्मिन्नध्याये तत्रादौपरीक्षितःशुकानुज्ञानदानप्रार्थनाप्रकारंवक्तुमाह एतादिति एतत्पुराणंनिखि लंपूर्णमात्मानंपश्यतीतिनिखिलात्मदृक्तेनसमस्तस्वामिदृशावा १ सिद्धःसंपादितपुरुषार्थदेहः २ दीनेष्वनुग्रहइतियत्तदिदं ३ कोयमनुग्रहइतितमाह पुराणेति ४ भयाभावेनिमित्तमाह प्रविष्टइतिनिर्वा

दशंतंतक्षकंपादेलेलिहानंविषाननैः ॥ नद्रक्ष्यसिशरीरंचविश्वंचपृथगात्मनः ५६ एतत्तेकथितंतातयथात्वंपृष्टवान्नृप ॥ हरेर्विश्वात्मनश्चेष्टांकिंभूयःश्रोतुमि च्छसि ५७ इतिश्रीभा०म०द्वादशस्कंधेचतुर्थोऽध्यायः ॥४॥ सूतउवाच ॥ एतन्निशम्यमुनिनाभिहितंपरीक्षिद्व्यासात्मजेननिखिलात्मदृशासमेन ॥ तत्पा दपद्ममुपसृत्यनतेनमूर्ध्नाबद्धांजलिस्तमिदमाहसविष्णुरातः १ परीक्षिदुवाच ॥ सिद्धोस्म्यनुगृहीतोस्मिभवताकरुणात्मना ॥ श्रावितोयच्चमेसाक्षादना दिनिधनोहरिः २ नात्यद्भुतमिदंमन्येमहतामच्युतात्मनाम् ॥ दीनेषुतापतप्तेषुभूतेषुयदनुग्रहः ३ पुराणसंहितामेतामश्रौषंभवतोवयम् ॥ यस्यांखलूत्त मश्लोकोभगवाननुवर्ण्यते ४ भगवंस्तक्षकादिभ्योमृत्युभ्योनबिभेम्यहम् ॥ प्रविष्टोब्रह्मनिर्वाणमभयंदर्शितंत्वया ५ अनुजानीहिमांब्रह्मन्वाचंयच्छाम्य धोक्षजे ॥ मुक्तकामाशयंचेतःप्रवेश्यविसृजाम्यसून् ६ अज्ञानंचनिरस्तंमेज्ञानविज्ञाननिष्ठया ॥ भवतादर्शितंक्षेमंपरंभगवतःपदम् ७ ॥ सूतउवाच ॥ इत्युक्तस्तमनुज्ञायभगवान्बादरायणिः ॥ जगामभिक्षुभिःसाकंनरदेवेनपूजितः ८ परीक्षिदपिराजर्षिरात्मन्यात्मानमात्मना ॥ समाधायपरंध्या ध्यावस्पंदासुर्यथातरुः ९ प्राक्कूलेबर्हिष्यासीनोगंगाकूलउदङ्मुखः ॥ ब्रह्मभूतोमहायोगीनिःसंगश्छिन्नसंशयः १० तक्षकःप्रहितोविप्राःक्रुद्धेनद्विज सूनुना ॥ हंतुकामोनृपंगच्छन्ददर्शपथिकाश्यपम् ११ तंतर्पयित्वाद्रविणैर्निवर्त्यविषहारिणम् ॥ द्विजरूपप्रतिच्छन्नःकामरूपोऽदशन्नृपम् १२ ब्रह्म भूतस्यराजर्षेर्देहोहिगरलाग्निना ॥ बभूवभस्मसात्सद्यःपश्यतांसर्वदेहिनाम् १३ हाहाकारोमहानासीद्भुविखेदिक्षुसर्वतः ॥ विस्मिताह्यभवन्सर्वेदेवा सुरनरादयः १४ देवदुंदुभयोनेदुर्गंधर्वाप्सरसोजगुः ॥ ववृषुःपुष्पवर्षाणिविबुधाःसाधुवादिनः १५ जनमेजयःस्वपितरंश्रुत्वातक्षकभक्षितम् ॥ यथा जुहावसंक्रुद्धःसर्पान्सत्रेसहद्विजैः १६ सर्पसत्रेसमिद्धेग्नौदह्यमानान्महोरगान् ॥ दृष्ट्वेंद्रंभयसंविग्नस्तक्षकःशरणंययौ १७ नापश्यत्तक्षकंतत्रराजापारीक्षि तोद्विजान् ॥ उवाचतक्षकःकस्मान्नदह्येतोरगाधमः १८ तंगोपायतिराजेंद्रइंद्रःशरणमागतम् ॥ तेनसंस्तंभितःसर्पस्तस्मान्नाग्नौपतत्यसौ १९

णमानंदंप्राकृतशरीररहितंवा ५ कामानामाशयःशयनंयस्मात्तच्च्छचेतोनिगृह्याधोक्षजेप्रवेश्ये ६ क्षेमंमंगलं क्षेमोनामाप्तरक्षायांमोक्षेप्यर्थेतुमंगलइतियादवः ७ ८ अस्पंदासुर्निश्चलेंद्रियःशिपयथा पादशून्येंद्रियइत्यर्थः ९ ब्रह्मणिभूतः १० हेविप्राः ११ १२ अहिगरलाग्निनासर्पविषाग्निना १३ १४ १५ कथांतरमारभ्यते जनमेजयइत्यादिना १६ १७ तत्रयज्ञे कुंडाग्नौ १८ १९

हेविमाःपात्यतामितिशेषः २० मरुत्वतामरुद्भिर्युक्तेन २१ ब्रह्मोदिताक्षेपैःब्राह्मणोत्कर्षणमंत्रवचनैः २१ आंगिरसोंगिरोगोत्रप्रभवः किमित्यत्रेंद्रेणोपेक्षाकारिस्वपातेनहींद्रस्यब्राह्मणेभ्योभिभवोभवेदेवो त्तमत्वादितिशंकानकार्या जनमेजयस्यस्वसंतानोद्भवत्वेनतत्प्रीतिकामेनेंद्रेणेयमुपेक्षाकृता स्वसंतानोद्भवंकीर्त्यायाजयन्जनमेजयं । शक्तोप्यशक्तवद्यष्टुरिंद्रआसीदुपेक्षकः । एवमेवऋषीणांचकीर्तियोजय वामुना । कृतोपेक्षामहेंद्रेणकिमुविष्णुःपरात्परः । तस्माद्विष्णोरशक्यंनभूतभव्यभवत्स्वपि । नचानिष्टंगुणैरेवपूर्णोनारायणःसदेति २३ अथतस्मात् २४ मरणंदेहवियोगलक्षणंगतिःपरलोकावाप्तिलक्ष णास्वेनस्वतंत्रेणहरिणैवोद्बोधितेनस्वानुष्ठितेनकर्मणातेनस्वकर्मोद्बोधकेनहरिणाविनासुखदुःखयोःप्रदातान्योनास्ति २५ कर्मणःकारणत्वेसर्पादिनामृतोविष्णुमित्रइतिकथमुपपद्येतेत्याशंक्यतेपिकर्मनि मित्तीकृत्यकारणामितिभावेनाह सर्पेति आदिशब्देनवृक्षादिभ्यःपतनंगृह्यते सुखादिभोगहेतुत्वाच्चकर्मप्रधानकारणमित्याह भुक्त इति २६ फलितमाह तस्मादिति संस्थीयेतसमाप्तंभवतु आभिचारिकं जनोपद्रवकारकंकर्म एकस्यापराधेनानपराधिबहुजननाशेनपापमेवस्यादितिभावेनाह सर्पाइति ननुतज्जातित्वात्तक्षकापराधएषामपराधस्तस्मादनागसोनस्युः । एकःपापानिकुरुतेफलंभुंक्तेमहाजनः । इ त्याशंक्यतक्षकस्याप्यपराधोनास्तिदैवेनतद्दर्शनेनस्वकृतकर्मपूर्वकेणपरीक्षितोमरणस्यक्लृप्तत्वादितिभावेनाहजनैरिति दिष्टंदैवकृतंकर्मफलम् २७ इत्यादियुक्तिपूर्वकेणवचसा वाक्पतिंबृहस्पतिं वाग्वैबृहती

परीक्षितइतिश्रुत्वाप्राहर्त्विजउदारधीः ॥ महेंद्रस्तक्षकोविप्रानाग्नौकिमितिपात्यते २० तच्छ्रुत्वाजुहुवुर्विप्राःसहेंद्रंतक्षकंमखे ॥ तक्षकाशुपतस्वेहस हेंद्रेणमरुत्वता २१ इतिब्रह्मोदिताक्षेपैःस्थानादिंद्रःप्रचालितः ॥ बभूवसंभ्रांतमतिःसविमानःसतक्षकः २२ तंपतंतंविमानेन सहतक्षकमंबरात् ॥ विलो क्यांगिरसःप्राहराजानंतंबृहस्पतिः २३ नैषत्वयामनुष्येंद्रवधमर्हतिसर्पराट् ॥ अनेनपीतममृतमथायमजरामरः २४ जीवितंमरणंजंतोर्गतिःस्वेनैवकर्म णा ॥ राजंस्तेनविनानान्योप्रदातासुखदुःखयोः २५ सर्पचोरादिवह्न्यंबुक्षुत्तृड्व्याध्यादिभिर्नृप ॥ पंचत्वमृच्छतेजंतुर्भुंक्तेआरब्धकर्मच २६ तस्मा त्सत्रमिदंराजन्संस्थीयेताभिचारिकम् ॥ सर्पाअनागसोदग्धाजनैर्दिष्टंहिभुज्यते २७ इत्युक्तःसतथेत्याहमहर्षेर्मानयन्वचः ॥ सर्पसत्रादुपरतःपूजयामास वाक्पतिम् २८ सैषाविष्णोर्महामायाबाध्ययावाकलक्षणा ॥ ययामुह्यंत्यस्यैवात्माभूतेषुगुणवृत्तिभिः २९ नयत्रदुर्भाव्यतयाविराजतेमायात्मवादिस कृदात्मवादिभिः ॥ नयाद्विवादोविविधस्तदाश्रयोमनश्चसंकल्पविकल्पवृत्तियत् ३०

तिश्रुतेः तद्भर्तोःकरपत्योश्चोरदेवतयोरितिसुट्तलोपश्च २८ सुखादेर्जीवादृष्टमेवमुख्यंकारणंनान्यदित्याशंकांपरिहरति सैषेति यादृष्टोद्बोधिकासैषामहामायाभहदपरिमितंमाहात्म्यंतस्यविष्णोस्तस्माच्च दुर्गात्रोच्यते बाध्यस्थितत्वाद्बाध्यात्मत्वेनजानाति सत्वादिगुणवृत्तिभिःकारणैःविषयवृत्तिभिर्व्यापारैरितिशेषः २९ मुह्यन्नात्मापरमात्मेतिशंकामपाकरोति नेति आत्मवादिभिःउपनिषद्वि चारचतुरैःपुरुषैः असकृद्बहुवारमात्मवादेपरमात्मविचारेकृतेसतिमायामोहनशक्तिर्यत्रहरौनाविराजतेमोहकत्वेननप्रवर्ततेअन्यैर्दुर्विभाव्यतयास्थिताउपक्रमादितात्पर्यलिंगैः क्रियमाणएवविचारोनिर्णायकोनतु यथाप्रतीतार्थइत्याह नेति विविधोयाद्विवादःतदाश्रयोब्रह्मविषयोनभवति यद्वाचानभ्युदितमितिश्रुतेः तर्हिमनसमर्थस्यमनसोविषयत्वंस्यादत्राह मनश्चेति चोप्यर्थः मनोपियद्ब्रह्मनाविषयीकरो ति यन्मनसानमनुतइतिश्रुतेः संकल्पविकल्पाभ्यांवृत्तिर्यस्यततथाअनेनमनसोऽस्थिरत्वेनविषयीकरणसामर्थ्यंनास्तीतिसूचितं मनसावाअग्रेसंकल्पयत्यथवाचाव्याहरतीतिश्रुतेः वाचोविषयोने तिकिंवक्तव्यमितिकैमुत्यन्यायोप्यदर्शि अत्रवागादिशब्देनतदभिमानिदेवताव्यावृत्त्यर्थंतेतासांजडत्वेनप्रवृत्त्यनुपपत्तेः ३०

सृज्यंविश्वंयत्रनवर्तते साधकतयेतिशेषः उभयोर्देवासुरयोःपरंविलक्षणंआनंदलक्षणंश्रेयःसृजतादददतायेनदैषम्यनैर्घृण्येनाप्येतेइतिशेषः त्रिभिःसत्वादिगुणैर्धर्मार्थकामैर्वान्वितोजीवःस्वयंयत्रनकंचनविशेषमापादयतीतिशेषः यस्तदेतत्ब्रह्मजानातितन्मुनिः सज्ञानीषडूर्मीर्निषेध्यविरमेतकृतार्थोदितिशेषः कीदृशंब्रह्मउत्सादितबाध्यबाधकंउत्सादितौबाध्यबाधकौयेनतत्तथा २१ किंनामधेयब्रह्मेति तत्राह परंपदमिति यन्नेतिनेतिइत्यसद्व्युत्सिसृक्षवोविचक्षणाःयदेवंस्थितंतद्वैष्णवंपदमामनंतिइदंगीत्यन्वयःकीदृशंतस्मिन्नेवसमाहितैःकरणैरवसितंसम्यग्वशीकृतम् ३२ अत्रप्रमाणमाह तदेतदिति ३३ अतिवादान्दुष्टवचनानि ३४ श्रेयःप्राप्तौतस्मादिदंप्रकृष्टसाधनमित्याशयेनाह नमइति श्रीकृष्णचरणारविंदप्रणतिस्मरणपूर्वकंभागवतपुराणलक्षणसंहिताश्रवणमननादिकंमुख्यसाधनमित्यर्थः ॥ ३५ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेविजयध्वजकृतटीकायांपंचमोध्यायः ॥ ५ ॥ भगवन्माहात्म्यप्रकटनायतस्मैरितेनचतुर्मुखेननादादिवेदांतशब्दराशिमुद्धृत्याध्यापनेनपुत्रेभ्योविश्राणनंतच्छिष्येभ्योविभज्यदानमनुयुगंपुनरपितद्विभागंपुराणप्रवर्तनंचनिगदतिअनेनाध्यायेन तत्रादौशौनकः सूतंवेदविभागंपृच्छति पैलादिभिरिति वेदव्यासेनवेदादरभिव्यक्तिर्मूलवेदविभक्तिश्चकथंकेनेतिरूपयति व्यासशिष्यैरित्यनेनकस्मिन्युगेकिंविभेक्तवदान्यस्यन्नुताविभक्तानिति वेदाचार्यैरित्यनेनवेदोपयोगिकल्पप्रणयननिपुणैरिति महात्मभिरित्यनेनतपोबलाद्वेददर्शनसमर्थैरिति अभिधेहीत्यनेनान्वर्थ

नयत्रसृज्यंसृजतोभयोःपरंश्रेयश्चजीवस्त्रिभिरन्वितःस्वयम् ॥ तदेतदुत्सादितबाध्यबाधकंनिषिध्यचोर्मीन्विरमेततन्मुनिः ३१ परंपदंवैष्णवमामनंतितद्यन्नेतिनेतीत्यतदुत्सिसृक्षवः ॥ विसृज्यदौरात्म्यमनन्यसौहृदाहृदोपगुह्यावसितंसमाहितैः ३२ तदेतदधिगच्छंतिविष्णोर्यत्परमंपदम् ॥ अहंममेतिदौर्जन्यंनयेषांदेहगेहजम् ३३ अतिवादांस्तितिक्षेतनावमन्येतकंचन ॥ नचेमंदेहमाश्रित्यवैरंकुर्वीतकेनचित् ३४ नमोभगवतेतस्मैकृष्णायाकुंठमेधसे ॥ यत्पादांबुरुहध्यानात्संहितामध्यगामिमाम् ॥ ३५ ॥ इतिश्रीभागवतेमहा०द्वादशस्कंधेपंचमोऽध्यायः ॥ ५ ॥ शौनकउवाच ॥ पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः ॥ वेदाश्चकतिधाव्यस्ताएतत्सौम्याभिधेहिनः ॥१॥ सूतउवाच ॥ समाहितात्मनोब्रह्मन्ब्रह्मणःपरमेष्ठिनः ॥ हृद्याकाशादभून्नादोवृत्तिरोधाद्विभाव्यते २ यदुपासनयाब्रह्मन्योगिनोमलमात्मनः ॥ द्रव्यक्रियाकारकाख्यंधूत्वायांत्यपुनर्भवम् ३ ततोऽभूत्त्रिवृदोंकारोयोव्यक्तप्रभवःस्वराट् ॥ यत्तल्लिंगंभगवतोब्रह्मणःपरमात्मनः ४

नामपूर्वकंवदेति १ तत्रादौसूचितःसूतःप्रश्नपरिहर्तुंकथामाह समाहितात्मनइति संसमीचीनेनिर्दुःखानंदानुभवेदरावाहितआत्मामनोयस्यसतथातस्य ब्रह्मपदस्यानेकार्थत्वात्तद्विशेषितमर्थमाह परमेष्ठिनइतिशब्दस्याकाशविशेषगुणत्वेनततोभिव्यक्तिर्युक्तेतिसूचयति हृद्याकाशादिति तत्सत्वेकिंप्रमाणमत्राह वृत्तिरोधादिति सनादःसर्वेंद्रियवृत्तिस्तंभाद्घ्राणवृत्तिनिरोधाच्चाविभाव्यतेज्ञायते योगिनेतिशेषः २ किममुनानादेनशून्यकल्पेनफलमितितत्राह यदुपासनयेति यस्यनादस्योपासनयायोगिनोद्रव्याणिपंचभूतानितन्निर्मितदेहोवा क्रियाकर्मेंद्रियं कारकंज्ञानेंद्रियंएवंव्यआख्यातंप्रकाशितंउत्पन्नमितियावत्आत्मनोमनसोमलंधूत्वाअपुनर्भवंमोक्षंयांतीत्यन्वयः ओंगुनपुंसकास्यापंनादोब्रह्मविनिर्मितः । घंटादिनादसदृशोमुक्तिस्वर्गादिदोनित्रिभुरितिवचनादपुनर्भवंतारतम्योपेतंफलमाप्नुवंतीतिभावः ३ ततोनादात्घंटानादानुकारात् त्रीन्अकारोकारमकाराख्यान्वर्णान्वृणोतीतित्रिवृत् ओंकारोभूदभिव्यक्तःअव्यक्तस्यप्रपंचस्यप्रभवउत्पत्तिर्यस्यसतथा भूतभवद्भविष्यादिनिखिलंओंकारएवेतिश्रुतेः वर्णपक्षेअव्यक्तस्यहरेःसकाशात्प्रभावोयस्यसतथा स्वतएवराजतीतिस्वराट्स्वयंप्रकाशमानइत्यर्थःस्वपरमात्मानराजयतीतिवा एतदेवाह यत्तदिति यत्तदोंकाराख्यंवस्तुहरेर्लिंगंज्ञापकं ओंतत्सदितिनिर्देशोब्रह्मणस्त्रिविधःस्मृतः इतिवचनात् चतुर्मुखप्रवृत्तयेपरमात्मनइति ४

अंऊनंयोपपतिदेत्यादेरितिशू यंपरंब्रह्मपश्यतीतिशून्यदृक् सोवह्मापरोक्षीयश्चसुप्तःब्रह्मप्राप्तःसइमंस्फोटंप्रणवलक्षणंध्वनिंशृणोति कइवश्रोतेवश्रगश्रानिव श्रोतामताइतिश्रुतेः अनेनास्यसर्वोपशाण
मुक्तंभवति· किंचयेनोंकारेणवाग्वेदलक्षणाव्यज्यतेअकारस्यप्रणवात्मकत्वादकारोवैसर्वावागितिश्रुतेःप्रणवस्यवेदादित्वादकारस्यापिसर्वादित्वादाम्रेशादिमत्त्वाद्धेतिश्रुतेः आत्मनःपरमात्मनःउत्पद्यमान्
आकाशोयस्यव्यक्तिःस्थानं आत्मनआकाशःसंभूतइतिश्रुतिःआकाशात्सर्वमुत्पद्यतइतिच ५ पूर्वलिंगत्वेनतद्विषयत्वमुक्तंअधुनावाचकत्वेनाह स्वधाम्नःस्वप्रकाशस्य ॐकाररूपस्वनिगमत्वमाह स
इति सओंकारःसनातनंसदातनंसर्वमंत्रोपनिषद्वेदानांबीजंफललक्षणांकुरजनकशुक्रस्थानीयंस्त्रीघंटानादवदविच्छिन्नत्वेनोच्चार्यमाणंसर्वमंत्रादीनांजप्तानांफलदानसामर्थ्यं जनयतीतिभावः ६ त्रि
वृदित्युक्तंविवृणोति तस्येति अकाराद्यास्त्रयोवर्णास्तस्योंकारस्यावयवाआसन्नित्यन्वयः हेत्यनेनसोयमात्माध्यक्षरमोंकारोधिमात्रंपादानामंत्राःअकारोकारमकाराइत्यादिप्रसिद्धिमाहयद्वावृत्त्य
भिव्यक्तौप्रत्यारंभःक्रियतइतिसूचयति । प्रत्यारंभे प्रसिद्धौहेत्यभिधानं एभ्यःभूर्भुवःस्वरितिनामाभिव्यक्तिवक्ति धार्यंतइति यैरकाराद्यैस्त्रयोभावाव्याहृतिलक्षणाधार्यंतेव्याहृतिभ्योक्षरसमाम्नायोव्य
ज्यतेज्ञानादिगुणानामर्थोविषयभूतेहरौवृत्तिर्येषांतितथोक्ताः सर्ववेदोक्तगुणार्णवनारायणलीलाव्याहरणाद्व्याहृतयइत्यर्थः यद्वाभूरादिलोकेषुशब्दादिगुणानांभोगलक्षणप्रयोजनप्रवर्तकाः ७ ततोव्याहृति

शृणोतियइमंस्फोटंसुप्तःश्रोतेवशून्यदृक् ॥ येनवाग्व्यज्यतेयस्यव्यक्तिराकाशआत्मनः ५ स्वधाम्नोब्रह्मणःसाक्षाद्वाचकःपरमात्मनः ॥ ससर्वमंत्रोपनि
षद्वेदबीजंसनातनम् ६ तस्यह्यासंस्त्रयोवर्णाअकाराद्याभृगूद्वह ॥ धार्यंतेयैस्त्रयोभावागुणनामार्थवृत्तयः ७ ततोक्षरसमाम्नायमसृजद्भगवानजः ॥
अंतस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ८ तेनासौचतुरोवेदांश्चतुर्भिर्वदनैर्विभुः ॥ सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ९ पुत्रानध्यापय
त्तांस्तुमहर्षीन्ब्रह्मकोविदान् ॥ तेतुधर्मोपदेष्टारःस्वपुत्रेभ्यःसमादिशन् १० तेपरंपरयाप्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः ॥ चतुर्युगेष्वथव्यस्ताद्वापरादौ
महर्षिभिः ११ क्षीणायुषःक्षीणसत्वान्दुर्मेधान्वीक्ष्यकालतः ॥ वेदान्ब्रह्मर्षयोव्यस्यन्हृदिस्थाच्युतनोदिताः १२ अस्मिन्नप्यंतरेब्रह्मन्भगवाँल्लो
कभावनः ॥ ब्रह्मेशाद्यैर्लोकपालैर्याचितोधर्मगुप्तये १३ पराशरात्सत्यवत्यामंशांशकलयाविभुः ॥ अवतीर्णोमहाभागवेदंचक्रेचतुर्विधम् १४ ॠ
गथर्वयजुःसाम्नांराशीनुद्धृत्यवर्गशः ॥ चतस्रःसंहिताश्चक्रेसूत्रैर्मणिगणानिव १५

म्योक्षरसमाम्नायमकारादिहकारांतानामक्षराणांसमीचीनंसंप्रदायंगुरुपारंपर्यक्रममसृजदित्यन्वयः । कोसौक्रमइतितंस्पष्टयति अंतस्थेति यरलवाअंतस्थाः शषसहाऊष्माणः अचःस्वराः कादयोमाव
सानाःस्पर्शाः । एकमात्रोभवेद्ध्रस्वोद्विमात्रोदीर्घउच्यते । त्रिमात्रस्तुप्लुतोज्ञेयोव्यंजनंत्वर्धमात्रकंइत्यतआदिशब्दोविवृतः ८ तेनाक्षरसमाम्नायेनसव्याहृतिकान्भूर्भुवःसुवरितिवाएतास्तिस्रोव्याहृतयइत्या
दिव्याहृतिसहितान्सोंकारानोमित्येतदक्षरमिदंसर्वमित्याद्योंकारसहितान् विनियोगमाह चातुर्होत्रेति चतुर्भिर्होतृभिःक्रियमाणंकर्मचातुर्होत्रम् ९ ब्रह्मकोविदान्वेदविचारविचक्षणान् तेपुनः १०
तेवेदाःचतुर्युगेषुतत्तच्छिष्यैःपरंपरयाप्राप्ताःयथाचतुर्मुखेनाधीताअध्यापितास्तथा अध्ययनंप्राप्ताइत्यर्थः । उक्तापवादमाह अथेति अथअनंतरंद्वापरादौमहर्षिभिर्वेदाव्यस्ताअभूवन् ११
एतदेवविवृणोति क्षीणायुषइति नन्वेषांस्वातंत्र्यमागतितांयतितआह हृदिस्थेति १२ ननुसत्यवतीसुतेनवेदाःकस्मिन्युगेव्यस्ताइत्यत्राह अस्मिन्निति अस्मिन्प्राक्तनेवैवस्वतेंतरे १३ १४
एतदेवविवृणोति ऋगिति ऋगादीनांराशीन्वर्गशोवर्गसंख्ययोद्धृत्यचतस्रःसंहिताश्चक्रे सूत्रैःस्यूतान् १५

तासांसंहितानांमध्येएकैकाम् १६ एकैकामित्युक्तंविशिनष्टि पैलायेति १७ तथासाम्नामुद्धृतांछंदोगसंहितांजैमिनयेआह १८ १९ इंद्रप्रमितिरपिस्वसंहितांचतुर्द्धाव्यस्यविभज्यशि ष्याणांनामानिनिर्दिशति बोध्यायेति हेभार्गवइंद्रप्रमितिरपिआत्मवान्परमात्मज्ञानी २० कविनाम्नामांडूकेयमृषिंचस्वसंहितांअध्यापयत्तस्यमांडूकेरस्य २१ तस्यसुतोवेदमित्रस्यपुत्रः वात्स्यादिषुपंचसु अधाददात् २१ तस्यशाकल्यस्यशिष्यःसनिरुक्तांनिरुक्तसंहितां २३ बाष्कलिःपूर्वोक्तबाष्कलपुत्रःप्रतिशाखाभ्यःपूर्वोक्तसर्वशाखाभ्यः उद्धृत्यवालखिल्याख्यसंहितांचक्रेतांनाम्नावालखि ल्यसंहितांबालायनिप्रभृतयोदधुःअधीतवंतः २४ उक्ताएताःसंहितानाम्नाविशिनष्टि बह्वृचाइतिऋग्वेदसंहिताः किमनेनछंदसांव्यासेनश्रुतेनाधीतेनानिःश्रेयसानुपयुक्तेनेतितत्राह श्रुत्वेति २५ चरकास्तीर्थसेवकाःअध्वर्यवोयज्ञकर्मणिनिपुणाः ऋत्विग्विशेषाः २६ तस्यवैशंपायनस्यशिष्योयाज्ञवल्क्योगुरुमित्याह हेभगवन्गुरोब्रह्महत्यांहःक्षपणायव्रतंचेकारितियस्मात्तस्मादंहःअल्पबलस्सारा

तासांसचतुरःशिष्यानुपहूयमहामतिः ॥ एकैकांसंहितांब्रह्मन्नेकैकस्मैददौविभुः १६ पैलायसंहितामाद्यांबह्वृचाख्यामुवाचह ॥ वैशंपायनसंज्ञायनिग दाख्यंयजुर्गणम् १७ साम्नांजैमिनयेप्राहतथाछंदोगसंहिताम् ॥ अथर्वांगिरसींनामस्वशिष्यायसुमंतवे १८ पैलःस्वसंहितामूचेइंद्रप्रमितयेमुनिः ॥ बाष्कलायचसोप्याहशिष्येभ्यःसंहितांस्वकाम् १९ चतुर्धाव्यस्यबोध्याययाज्ञवल्क्यायभार्गव ॥ पराशरायाग्निमित्रेइंद्रप्रमितिरात्मवान् २० अ ध्यापयत्संहितांस्वांमांडूकेयमृषिंकविम् ॥ तस्यशिष्योवेदमित्रःसौभर्यादिभ्यऊचिवान् २१ शाकल्यस्तत्सुतस्तांतुपंचधाव्यस्यसंहिताम् ॥ वात्स्य मौद्गल्यशालीयगोमत्यशिशिरेष्वधात् २२ जातूकर्ण्यश्चतच्छिष्यःसनिरुक्तांस्वसंहिताम् ॥ व्यलीकपैंगिपैलालविरजेभ्योददौमुनिः २३ बाष्कलिः प्रतिशाखाभ्योवालखिल्याख्यसंहिताम् ॥ चक्रेबालायनिर्गाम्यकासाराश्चैवतांदधुः २४ बह्वृचाःसंहिताह्येताएभिर्ब्रह्मर्षिभिर्धृताः ॥ श्रुत्वैतच्छंदसां व्यासंसर्वपापैःप्रमुच्यते २५ वैशंपायनशिष्यावैचरकाध्वर्यवोऽभवन् ॥ यच्चेरुर्ब्रह्महत्यांहःक्षपणायगुरोर्व्रतम् २६ याज्ञवल्क्यस्तुतच्छिष्यआहाहोभगव न्कियत् ॥ चरितेनाल्पसाराणांचरिष्येहंसुदुष्करम् २७ इत्युक्तोगुरुरप्याहकुपितोयाह्यलंत्वया ॥ विप्रावमंत्राशिष्येणमदधीतंत्यजाश्विति २८ देवरा तसुतःसोपिछर्दित्वायजुषांगणम् ॥ ततोगतोथमुनयोददृशुस्तान्यजुर्गणान् २९ भूत्वातित्तिरयोब्रह्मंस्तल्लोलुपतयाददुः ॥ तैत्तिरीयाइतियजुःशाखाआ सन्सुपेशलाः ३० याज्ञवल्क्यस्ततोब्रह्मन्छंदांस्यधिगवेषयन् ॥ गुरोरविद्यमानानिसूपतस्थेर्कमीश्वरम् ३१ याज्ञवल्क्यउवाच ॥ ॐनमोभगवतेआ दित्यायाखिलजगदात्मस्वरूपेणकालरूपेणचचतुर्विधभूतनिकायानांब्रह्मादिस्तंबपर्यंतानामंतर्हृदयेषुबहिरपिआकाशइवोपाधिनाव्यवधीयमानोभगवा नेकएवक्षणलवनिमेषाद्यवयवोपचितसंवत्सरगणेनतोयादानविसर्गाभ्यामिमांलोकयात्रामनुवहति १

णामेतेषांचरितेनकियत्किंप्रयोजनंस्यादहंदुश्चरंव्रतंचरिष्येकरिष्यामीति २७ ततोगुरुणाकिमुक्तमत्राह इतीति विप्रावमंत्राब्राह्मणावज्ञाकर्त्राशिष्येणत्वयालं इतोयाहिकिंचमदधीतंआशुत्य जतत्यजेति. २८ देवरातसुतःयाज्ञवल्क्यः ततोगुरुकुलात् २९ तल्लोलुपतयायजुर्गणग्रहणेच्छावत्त्वेनाददुःस्वीचक्रुः ३० छंदांस्यधिगवेषयन्नभ्येतुंमृगयन्नर्कंपरमानंदरूपत्वादाङ्गिरात्मार्च नाचसूर्योपायमित्वाचतन्नामानमीश्वरंनारायणंसूपतस्थेतुष्टाव ३१ ॐब्रह्मनाम्ने ॥ ॐस्याद्ब्रह्मण्यनुज्ञायामितियादवः अथकस्मादुच्यतेब्रह्मेतिबृहंतोह्यस्मिन्गुणाइतिश्रुतेः गुणैरोतत्वादोंकार

स्याप्ययमेवार्थः इममेवार्थं सूचयति भगवत इति भगवते षड्गुणपूर्णाय अयं वसिष्ठादिविदिदानींतनो भगवानित्याह आदित्याय आदिभवाय पुरातनाय यद्वा अखंडितैश्वर्याय एतत्द्वयमुपपादयति अखिलेति यो भगवान्ब्रह्मादिस्तंबपर्यंतानां अंडजादिभेदेन चतुर्विधभूतसमूहानां हृदयेष्वतः खिलजगदात्मस्वरूपेण समस्तजगदंतर्यामिस्वरूपेण स्थितो बहिरपि क्षणलवनिमेषाद्यवयवोपचितसंवत्सरग णलक्षणेन कालरूपेणाकाश इवव्यवधीयमानः तोयादानविसर्गाभ्यां प्रत्यब्दं ते यस्य आदानं शोषणं विसर्गो वृष्टिस्ताभ्यामिमां लोकयात्रामनुवहति यद्वा घटाद्युपाधिनाकाश इव सुरनरादिशरीरोपाधि नाव्यवधीयमानः परिच्छिद्यमान इति १ हे विबुधर्षभ हे सवितः तव पदद्दामंडलमनुसवनं तपति प्रकाशते इह वाव इत्यलंकारार्थः हे तपन प्रकाशनशील तत्सम्यभिधीमहि सम्यक्चिंतयामः कीदृ शं मंडलं अहरहराम्नायविधिना वेदोक्तप्रकारेणोपतिष्ठमानानां सेव्यमानानामखिलानां दुरितानां दुष्पापानां दुःसहानां वृजिनानां दुःखानां बीजानि दुष्कर्माण्यवभर्जयितुं शीलमस्यास्तीति अस्मिन्नेवार्थे ल्युट्प्र त्ययः २ इह भुवि यो वाव स्वनिकेतनानां स्वाश्रयाणां स्थिरचरनिकराणामात्मा स्वामी अंतःस्थित्वा सुखप्रेरकश्च तत्त्वमनारोपितस्वभावः स्वयं तेषामनात्मन अचेतनप्रायान्मनइंद्रियासुगणान्प्रचोदयति प्रेर यति अनेन विशेषणद्वयेन तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयादित्ययं विवृतः यो नो धियं ज्ञानसाधनत्वादिंद्रियाणि प्रचोदयात्तस्य सवितुर्जगत्स्रष्टुः भर्गः सकलदुःखबीजभर्जनकं वरे ण्यं रमणीयं तन्मंडलं धीमहीति आप्रा द्यावापृथिवी अंतरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेति ३ अतिकरालं वदनं यस्य स तथा स एवांधकारः अज्ञानलक्षणस्तन्नाम्ना अजगरग्रहेण गृहीतं ग्रस्तं मृतकमिव शव

यदिह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जनं भगवतः समभिधीमहि तपनमंडलम् ॥ २ य इह वाव स्थिरचरनिकराणां स्वनिकेतनानां मनइंद्रियासुगणाननात्मनस्त्वं स्वयमात्मांतर्यामी प्रचोदयति ३ य एवेमं लोकमतिकरालवदनांधकारसं ज्ञाजगरग्रहगृहीतं मृतकमिव विचेतनमवलोक्यानुकंपया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यआत्मावस्थाने प्रवर्तयत्यवनिपा धिपतिरिसाधूनां भयमुदीरयन्नटति परित आशापालैस्तत्रतत्र कमलकोशांजलिभिरुपहृतार्हणः ४ अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरु भिरभिवंदितमहमयातयामयजुष्काम उपसरामीति ५ सूत उवाच ॥ एवं स्तुतः स भगवान्वाजिरूपधरो रविः ॥ यजूंष्ययातयामानि मुनयेऽदात्प्रसादि तः ३२ यजुर्भिरकरोच्छाखा दश पंच सुतैर्विभुः ॥ जगृहुर्वाजसन्यस्ताः काण्वमाध्यंदिनादयः ३३ जैमिनेः सामगस्यासीत्सुमंतुस्तनयो मुनेः ॥ सुम न्वांस्तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ३४ सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् ॥ सहस्रसंहिताभेदं चक्रे साम्नां ततो द्विजः ३५

वच्चेतनकल्पमिमं लोकं जनमवलोक्य द्रवीकृतचित्तवृत्त्या परमकारुणिको यो भवानीक्षयैव कटाक्षनिरीक्षणेनैव तमुत्थाप्यानुदिनमात्मनः परमात्मनो वस्थानं प्राप्तिर्यस्मात्तत्तथा तस्मिन्स्वधर्माख्ये श्रेयसि प्रवर्त यत्येव चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेरिति श्रुतेः कालप्रणायकोऽपश्च भवानाशापालैरिंद्रादिभिः कमलकुड्मलांजलिभिस्तत्रतत्र समुपाचितोऽसाधूनां मरणभयमुदीरयन्परितः अटति परिव र्तते आप्रा द्यावापृथिवी अंतरिक्षमिति श्रुतेः तस्मै तुभ्यं नम इति पूर्वेणान्वयः ४ स्वाभिप्रायमुद्घाटयति अथेति यस्मादयातयामयजुष्कामोऽथ तस्मात्त्रिभुवनगुरुभिरभिवंदितं तव चरणनलिनयुगल मुपसरामि शरणं गतोऽस्मीति तुष्टाव इत्यर्थः ५ वाजिरूपधरः अश्वरूपधरः अयातयामानि अगतसाराणि वीर्यवंतीत्यर्थः ३२ वाजसनः सूर्यस्ततः आगताः शाखा वाजसन्यः ताः शाखाः काण्वादयो माध्य दिनादयश्च ३३ सामगापत्नीति सामगः तस्य जैमिनेस्तनयः सुमंतुर्नाम तस्य सुमंतोः सुतः सुमन्वान्नाम ताभ्यां सुमंतुसुमन्वभ्यां पुत्रपौत्राभ्यां क्रमेणैकामेकां प्राह ३४ सुकर्मापि तस्य जैमिनेः शिष्य स हानितप्रज्ञावान्सामवेदाख्यतरोः साम्नां सहस्रं संहितारूपं भेदं चक्रे ३५

कौसल्यःकोसलपुत्रः हिरण्यनाभश्चपौष्यंजिश्चसुकमणःशिष्यौजगृहतुःसामशाखामितिशेषः . अन्यआवंत्यउदीच्यश्चसामशाखांजगृहतुरितिशेषःपौष्यंज्यावंत्ययोश्चापिसामगाःपंचशतानिशिष्याआसन् ३६ ३७ तेषांसमुदितानांमतानांनामानीतिपौष्यंजिशिष्यालौगाक्ष्यादयःनाम्नाशतंशतंसंहिताजगृहुः ३८ हिरण्यनाभस्यशिष्यःनाम्नाकृतःचतुर्विंशतिसंहिताःस्वशिष्येभ्यऊचेशेषाअन्याःसंहिताआत्मज्ञानवानावंत्यःस्वशिष्येभ्यऊचे ३९ सोपिसुमंतोः शिष्योपिपध्याय ४० कुमुदादयःपथ्यशिष्याः ४१ बभ्रुसैंधवायनौपथ्यशिष्यस्यअंगिरसोंगिरोगोत्रेविद्यमानस्यशुनकस्यशिष्यौअधीयेतांअधीतवंतौ शुनकस्तुद्विधाकृत्वादददावेकांतुबभ्रवे। द्वितीयांसंहितांप्रादात्सैंधवायनसंज्ञितेइति सावर्ण्याद्याश्चसैंधवादीनांशिष्याः ४२ आथर्वणाचार्याःअथर्ववेदाचार्याःपाठतोर्थतश्चाथर्ववेदप्रवर्तकाइत्यर्थः पौराणिकान्पुराणाचार्यान् ४३ ४४ मत्पितुर्मुखात्पुराणसंहितामधीयंत त्रय्यारुण्यादयःकथंएकैकामधीतवंतःत्वंतुकथंसर्वानधीतवानितितत्राह अहमिति अहमेतेषांशिष्यःसर्वांपुराणसंहितामपठं ४५ व्या

हिरण्यनाभःकौसल्यःपौष्यंजिश्चसुकर्मणः ॥ शिष्यौजगृहतुश्चान्यआवंत्योब्रह्मवित्तमः ३६ उदीच्याःसामगाःशिष्याआसन्पंचशतानिवै ॥ पौष्यंज्यावंत्ययोश्चापितांश्चोदीच्यान्प्रचक्षते ३७ लौगाक्षिर्मांगलिःकुल्यःकुसीदःकुक्षिरेवच ॥ पौष्यंजिशिष्याजगृहुःसंहितास्तेशतंशतम् ३८ कृतोहिरण्यनाभस्यचतुर्विंशतिसंहिताः ॥ शिष्यऊचेस्वशिष्येभ्यःशेषाआवंत्यआत्मवान् ३९ अथर्ववित्सुमंतुश्चशिष्यमध्यापयत्स्वकाम् ॥ संहितांसोपिपथ्यायवेददर्शायचोक्तवान् ४० शौक्लायनिर्ब्रह्मबलिर्मोदोषःपिप्पलायनिः ॥ वेददर्शस्यशिष्यास्तेपथ्यशिष्यानथोशृणु ॥ कुमुदःशुनकोब्रह्मन्जाजलिश्चाप्यथर्ववित् ४१ बभ्रुःशिष्योप्यंगिरसःसैंधवायनएवच ॥ अधीयेतांसंहितेद्वेसावर्ण्याद्यास्तथापरे ४२ नक्षत्रकल्पःशांतिश्चकश्यपांगिरसादयः ॥ एतेआथर्वणाचार्याःशृणुपौराणिकान्मुने ४३ त्रय्यारुणिःकश्यपश्चसावर्णिरकृतव्रणः ॥ शिंशपायनहारितौषड्वैपौराणिकाइमे ४४ अधीयंतव्यासशिष्यात्संहितांमत्पितुर्मुखात् ॥ एकैकामहमेतेषांशिष्यःसर्वाःसमध्यगाम् ४५ काश्यपोहंचसावर्णीरामशिष्योकृतव्रणः ॥ अधीमहिव्यासपुत्राद्यतस्तोमूलसंहिताः ४६ पुराणलक्षणंब्रह्मन्ब्रह्मर्षिभिर्निरूपितम् ॥ शृणुष्वबुद्धिमाश्रित्यवेदशास्त्रानुसारतः ४७ सर्गोथविसर्गश्चवृत्तिरक्षांतराणिच ॥ वंशोवंशानुचरितंसंस्थाहेतुरपाश्रयः ४८ दशभिर्लक्षणैर्युक्तंपुराणंतद्विदोविदुः ॥ केचित्पंचविधंब्रह्मन्महदल्पव्यवस्थया ४९ अव्याकृतगुणक्षोभान्महतस्त्रिवृतोहमः ॥ भूतसूक्ष्मेंद्रियार्थानांसंभवःसर्गउच्यते ५० पुरुषानुगृहीतानामेतेषांवासनामयः ॥ विसर्गोयःसमाहारोबीजाद्वीजंचराचरः ५१

सपुत्रान्छ्रीशुकात् ४६ प्रसंगात्पुराणलक्षणंवक्तुंमतिजानीतेपुराणेति ४७ वृत्तिश्चरक्षाचअंतराणिचवृत्तिरक्षांतराणि ४८ पुराणस्यमहदल्पव्यवस्थयाकचित्स्थलेपंचविधंपंचलक्षणप्रकारोपेतम् ४९ तत्रसर्गादिकंक्रमेणलक्षयति अव्याकृतेति अव्याकृतगुणक्षोभात्प्रकृतिगुणानामन्योन्यसंयोगलक्षणसंचलनान्महतःमहत्तत्वस्यवैकारिकादिभेदेनात्रिवृतोहमः अहंकारस्यभूतसूक्ष्मेंद्रियार्थानांचभूतसूक्ष्मेंद्रियविषयाणांसंभवोजन्मभूतमात्रेंद्रियार्थानांजन्मेत्यग्रस्तादुक्तम् ५० पुरुषेणभगवतानुगृहीतानांअनुप्रवेशलक्षणानुग्रहवतामेतेषांतत्त्वानांतत्काशाद्वा[illegible]समाहार[illegible]नुसृतिःसृष्टिःसाविसर्गोजीवः अजीवश्चचेतनाचेतनलक्षणःचराचरःचराचरात्मकोब्रह्मांडसर्गः ब्रह्मणोगुणवैषम्याद्विसर्गःपौरुषःस्मृतइति ५१

पंचानांभूतानांपंचभूतान्येवान्योन्यंवृत्तिर्जीवनमन्नमित्यर्थः तेजोवृत्तिःपार्थिवानिदारूणीत्यादि यद्वा भूतानांपिशाचानांभूतानिमनुष्यलोकस्थानिशरीररुधिराणि पिशाचोगुह्यकःसिद्धोभूतोमीदेवयोन
यइत्यमरः। चराणांगतिमतां अचराणिस्थावरतुल्यानिव्रीह्यादीनिवृत्तिः ईशेनहरिणाकृताकल्पिता। अहस्तानिसहस्तानांसहस्तानिचतुष्पदां। अणूनितातमहतांजीवोजीवस्यजीवनमित्युक्तं तत्रैवंस्थि
तिर्नृणांवृत्तिःकामादिच्छातःफलमूलादीनिचोदनयाविधिनातत्तत्क्रियानुसारेणविहिताचरुपुरोडाशादिलक्षणा ५२ युगेयुगेविश्वस्यअनुयोग्याअच्युतावतारेहा हरेरवतारेणचेष्टा परिरक्षणंरक्षा यदायदा
हिधर्मस्येतिगीतायां कुत्रेति तत्राह तिर्यगिति येरवतारैस्त्रयीद्विषः वेदवैरिणोऽसुराहन्यंतेतेषांचारितवर्णनंरक्षणमित्यर्थः स्थितिर्वैकुंठविजयइतिपोषणंतदनुग्रहइतिच ५३ एतन्मन्वंतरंषड्विधमुच्य
ते षण्णांकथाकथनंमन्वंतरमित्यर्थः तत्रांशकानामितिशेषः मन्वतरेषुतद्धर्माइतिमन्वादिधर्मकथनमित्यर्थः ५४ मनुप्रसूतानांराज्ञामन्वयोवंशइत्युच्यते कीदृशस्त्रैकालिकोभूतभविष्यद्वर्तमानवि
षयः एतत्कथनमत्रेतिवंशस्यानुचरितंनामतेषांराज्ञांवृत्तिकथनंयेवंशधराउत्सन्नवंशंधृतवंतस्तेषांचवृत्तम् ५५ अस्यजगतःस्वभावतश्चतुर्धालयःसंस्थेतिकविभिःप्रोक्ता ५६ यंचप्रलयेपरमात्मानमनु
विश्वशायिनंस्वपंतमाहुःअपरेअव्याकृतंअव्याकृताकाशवन्निर्विकारमाहुःसोऽविद्यपाकर्मकारकःकर्मकर्ता अस्यजगतःसर्गादिनिमित्तभूतोजीवोहेतुरित्युच्यते जीवसमुदायःसुखदुःखप्राप्तयेतंहेतुंकृत्वाज

वृत्तिर्भूतानिभूतानांचराणामचराणिच ॥ कृतेशेननृणांतत्रकामाच्चोदनयापिवा ५२ रक्षाच्युतावतारेहाविश्वस्यानुयुगेयुगे ॥ तिर्यङ्मर्त्यर्षिदेवेषुहन्यंतेयै
स्त्रयीद्विषः ५३ मन्वंतरंमनुर्देवामनुपुत्राःसुरेश्वराः ॥ ऋषयोंशावताराश्चहरेःषड्विधमुच्यते ५४ राज्ञांमनुप्रसूतानांवंशस्त्रैकालिकोन्वयः ॥ वंशानुचरि
तंतेषांवृत्तंवंशधराश्चये ५५ नैमित्तिकःप्राकृतिकोनित्यआत्यंतिकोलयः ॥ संस्थेतिकविभिःप्रोक्ताचतुर्धास्यस्वभावतः ५६ हेतुर्जीवस्यसर्गादेरविद्या
कर्मकारकः ॥ यंचानुशायिनंप्राहुरव्याकृतमुतापरे ५७ व्यतिरेकान्वयौयस्यजाग्रत्स्वप्नसुषुप्तिषु ॥ मायामयासुतद्ब्रह्मजीववृत्तिष्वपाश्रयः ५८ पदा
र्थेषुयथाद्रव्यंतन्मात्रंरूपनामसु ॥ बीजादिपंचतांतासुह्यवस्थासुयुतायुतम् ५९ विरमेतयदाचित्तंहित्वावृत्तित्रयाश्रयम् ॥ योगेनवातदात्मानंवेदना
स्मान्निवर्तते ६० एवंलक्षणलक्ष्याणिपुराणानिपुराविदः ॥ मुनयोष्टादशप्राहुःक्षुल्लकानिमहांतिच ६१

गतःसृष्ट्यादिकंप्रवर्ततइतिनिरोधोस्यानुशयनमात्मनःसहशक्तिभिरिति ५७ अपाश्रयंलक्षयति व्यतिरेकान्वयाविति अपगतआश्रयोयस्यसतथाअद्वितीयइत्यर्थःअद्वितीयत्वंकथमुच्यते अन्वयव्यतिरे
काभ्यांज्ञायतइति यस्यहरेर्जीववृत्तिषुजीवानांजीवनोपायभूतासुजाग्रत्स्वप्नसुषुप्तिषुव्यतिरेकान्वयौस्तः जाग्रदाद्यभावेपिविद्यतइतिव्यतिरेकःतद्भावेप्यस्तीत्यन्वयः मायामयासुश्रीहरीच्छारचितासुतद्ब्र
ह्मव्यपाश्रयइत्युच्यते ५८ प्रकारांतरेणआश्रयंलक्षयति पदार्थेष्विति रूपनामयुक्तेषुपदार्थेषुयद्द्रव्यमुपादानादिकारणभूतंप्रकृत्याख्यंतन्मात्रंपदार्थस्वरूपंतस्मिन्द्रव्येबीजादिपंचतातासुजन्मादिमरणा
वसानास्ववस्थासुयुतायुतं अन्वयव्यतिरेकाभ्यांयद्वर्ततेतद्ब्रह्मापाश्रयं यद्वा रूपनामप्रपंचपदार्थेषुयुतायुतमन्वयव्यतिरेकलक्षणानुमानेनयत्तन्मात्रंविज्ञानानंदमात्रंद्रव्यंद्रुतंज्ञेयंयद्बीजत्वाद्यवस्थासुव
स्तुनः पंचत्वावसानलक्षणावस्थासुयुतायुतंवर्ततेतद्ब्रह्मेति ५९ एतादृशब्रह्मप्राप्तिःकदास्यादितितत्राह विरमेतेति वृत्तित्रयाश्रयंजाग्रत्स्वप्नसुषुप्तिलक्षणवृत्तित्रयविरूढंचित्तंहित्वावृत्तित्रयाद्विरमेतउ
परतंभवति तदायोगेनध्यानलक्षणयोपासनयानिरंतरंश्रीनारायणकथाश्रवणलक्षणोपासनयाचात्मानं परमात्मानंवेदजानातिलभतेप्राप्नोतिच ततःकिमत्राह नेति आत्माजीवःपुनर्निवर्ततेनै
वनचपुनरावर्तते नचपुनरावर्ततइतिश्रुतेः ६० उपसंहरन्नेवपुराणानांक्षिप्रप्रवृत्तयेसंख्यामाह एवमिति क्षुल्लकानिश्लोकसंख्ययापरिमितानिनत्वर्थतःकानिचिदर्थतःश्लक्ष्णतःफलतोपिमहांति ६१

तानिक्रमेणनिर्दिशति ब्राह्ममित्यादिना ६२ त्रिषट्अष्टादश ६१ अत्रशिष्यप्रशिष्यैःशाखाप्रणयनंवेदपुराणकर्तुर्ब्रह्मणोनाभिमतंकृतमितिमाशंकीत्याह ब्रह्मणेति शिष्यादीनामेतच्छा खाप्रणयनंब्रह्मणैवसमाख्यातंकथितं कीदृशंब्रह्मतजोविदीपनंब्रह्मतेजसःप्रकाशकं निरर्थकंप्रणयनंकिमर्थंकृतमित्यतोवाह ब्रह्मेति ब्रह्मणःपरमात्मनस्तेजसःप्रभावस्यविदीपनंप्रकाशनकरम् ६४ इति श्रीभागवतेमहापुराणेद्वादशस्कंधेविजय०टीकायाषष्ठोऽध्यायः ॥ ६ ॥ अस्मिन्नध्यायेमार्कंडेयकथाव्याजेनहरेर्निरतिशयमाहात्म्यंब्रूते पुराणविभागसंगेनपुराणकर्तुर्मार्कंडेयस्यचरितंतत्रशौनकःसू तंपृच्छतिसूतेति वदभगवत्कथायोतिनींकथामितिशेषः १ येनकल्पांतेनइदंजगद्ग्रस्तंतस्मिन्कल्पांतेप्युर्वरितःअवशिष्टः २ अस्मत्कुलसंबंधित्वात्तच्चरितमवश्यंश्रवणार्हमित्याशयवानाह सवाइति तस्यभूतानांमध्येकोपिसंप्लवोलयोनजायते लुङ्र्थेलट् पंचभूतानांकोपिसंप्लवोनाशइतिवा ३ तस्यामवस्थायांप्रलयइवार्णवेपुरुषंददर्शकिलेतिवा यतःसंशयान्महाकौतूहलविष

ब्राह्मंपाद्मंवैष्णवंचशैवंलैंगंचगारुडम् ॥ नारदीयंभागवतमाग्नेयंस्कंदसंज्ञितम् ६२ भविष्यंब्रह्मवैवर्तंमार्कंडेयंसवामनम् ॥ वाराहंमात्स्यंकौर्म्यंचब्रह्मांडाख्यमितित्रिषट् ६३ ब्रह्मणैतत्समाख्यातंशाखाप्रणयनंमुने ॥ शिष्यशिष्यप्रशिष्याणांब्रह्मतेजोविदीपनम् ६४॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधे वेदशाखाप्रणयनंनामषष्ठोध्यायः ॥ ६ ॥ शौनकउवाच ॥ सूतजीवचिरंसाधोवदनोवदतांवर ॥ तमस्यपारेभ्रमतांनृणांत्वंपारदर्शनः १ आहुश्चिरायुष मृषिंमृकंडुतनयंजनाः ॥ यःकल्पांतेप्युर्वरितोयेनग्रस्तमिदंजगत् २ सवाअस्मत्कुलोत्पन्नःकल्पेस्मिन्भार्गवर्षभः ॥ नैवाधुनापिभूतानांसंप्लवःकोपिजायते ३ एकएवार्णवेभ्राम्यन्ददर्शपुरुषंकिल ॥ वटपत्रपुटेतोकंशयानंत्वेकमद्भुतम् ४ एषनःसंशयोभूयान्जातःकौतूहलंयतः ॥ तन्नश्छिंधिमहायोगिन्पुराणेष्वपिसंमतः ॥ ५ ॥ सूतउवाच ॥ प्रश्नस्त्वयामहर्षेयंकृतोलोकभ्रमापहः ॥ नारायणकथायत्रगीताकलिमलापहा ६ प्राप्तद्विजातिसंस्कारोमार्कंडेयःपितुःक्रमात् ॥ छंदांस्यधीत्यधर्मेणतपःस्वाध्यायसंयुतः ७ बृहद्व्रतधरःशांतोजटिलोवल्कलांबरः ॥ बिभ्रत्कमंडलुंदंडमुपवीतंसमेखलम् ८ कृष्णाजिनंसाक्षसूत्रंकुशांश्चनियमर्द्धये ॥ अग्न्यर्कगुरुविप्रांश्चस्वर्चयन्संध्ययोर्हरिम् ९ सायंप्रातःसगुरवेभैक्ष्यमाहृत्यवाग्यतः ॥ बुभुजेगुर्वनुज्ञातःसकृन्नोचेदुपोषितः १० एवंतपःस्वाध्यायपरोवर्षाणामयुतायुतम् ॥ आराधयन्हृषीकेशंजिग्येमृत्युंसुदुर्जयम् ११ ब्रह्माभृगुर्भवोदक्षोब्रह्मपुत्राश्चयेपरे ॥ नृदेवपितृभूतानितेनासन्नतिविस्मिताः १२ इत्थंबृहद्व्रतधरस्तपःस्वाध्यायसंयमैः ॥ दध्यावधोक्षजंयोगाद्ध्वस्तक्लेशोंतरात्मना १३ तस्यैवंयुंजतश्चित्तंमहायोगेनयोगिनः ॥ व्यतीयायमहान्कालोमन्वंतरषडात्मकः १४ एतत्पुरंदरोज्ञात्वासप्तमेस्मिन्किलांतरे ॥ तपोविशंकितोब्रह्मन्नारेभेतद्विघातनम् १५ गंधर्वाप्सरसःकामंवसंतंमलयानिलम् ॥ मुनयेप्रेषयामासरजस्तोकमदौतथा १६

योर्थःममसंशयच्छेदनंकथमुपपद्यतइतितत्राह पुराणेष्वपिति ज्ञातृत्वेनसमतोभवानिति ५ मार्कंडेयकथायालोकाज्ञाननिवारणसामर्थ्यंकुतइत्यत्राह नारायणेति यत्रमार्कंडेयकथायांतत्कथाविषयःप्रश्नः ६ पितुर्मृकंडोःप्राप्तद्विजातिसंस्कारःअन्नप्राशनोपनयनांतब्राह्मणसंस्कारान्प्राप्तः ७ बृहद्व्रतधरःब्रह्मचारिव्रतधरः ८ हरिस्मरन्निति शेषः ९ नोचेदनुज्ञाभावे १० ११ तेनकर्मणा १२ मनोयोगादंतरात्मनांतर्यामिणाध्वस्तक्लेशः १३ १४ अस्मिन्सप्तमेमन्वंतरेतपसोविशंकितस्तद्विघातनंतस्यतपसोविघ्नम् १५ रजोगुणं स्तोभमद्रोव्यर्थकर्मदर्पौच अ न्नकामादयोमूर्तिमंतोनिर्दिश्यंते १६

१७ . १८ आटोपंसविलासनृत्यम् १९ उत्तंभयन्वर्धयन् २० उद्यंश्चंद्रोयस्यसतथासचानिशावक्त्रःप्रदोषोयस्यसतथा कुसुमाकरः वसंतःप्रवालस्तबकालिभिः.भृंगैर्गायन्द्रुमलतामुकुलैः सहासीदाविरितिशेषः २१ आत्तचापेषुर्धनुर्ज्यासहितबाणःस्वःस्त्रीयूथपतिःस्वर्गस्त्रीगणनाथः २२ अग्निंहुत्वोपासीनमग्निसमीपेतिष्ठंतं दुराधर्षचलितेंद्रियंकर्तुमशक्यम् २३ २४ २५ पुंजकस्थल्याःअप्सरसांप्रधानायाःकस्याश्चिदप्सरसःकेशविभ्रंशितस्रजःकेशभागात्विभ्रंशिताविभ्रष्टास्रक्यस्याःसातथातस्याः २६ अनुकंदुकंउत्पतत्कंदुकानुकूलंयथाभवतितथाचलत्या.सूक्ष्मम पुतरं त्रुटितमेखलंत्रुटिताछिन्नामेखलाकांचीयस्यतत्तथावत् २७ स्वेनात्मनाजितम् २८ अर्भकाअहिप्रबोध्येव २९ अहमोऽहंकारस्यभावंनागात्कपालमुक्तनारिकेलफलवद्देहाभिमानरहितइत्यर्थः

तेवैतदाश्रमंजग्मुर्हिमाद्रेःपार्श्वउत्तरे ॥ पुष्पभद्रानदीयत्रचित्राख्याचशिलाविभो १७ तत्राश्रमपदंपुण्यंपुण्यद्रुमलतान्वितम् ॥ पुण्यद्विजकुलाकीर्णंपु ण्यामलजलाशयम् १८ मत्तभ्रमरसंगीतंमत्तकोकिलकूजितम् ॥ मत्तबर्हिनटाटोपंमत्तद्विजकुलाकुलम् १९ वायुःप्रविष्टआदायहिमनिर्झरसीक रान् ॥ सुमनोभिःपरिष्वक्तोववावुत्तंभयन्स्मरम् २० उद्यच्चंद्रनिशावक्त्रःप्रवालस्तबकालिभिः ॥ गायन्द्रुमलताजालैस्तत्रासीत्कुसुमाकरः २१ अन्वीयमानो गंधर्वैर्गीतवादित्रयूथपैः ॥ अदृश्यतात्तचापेषुःस्वःस्त्रीयूथपतिःस्मरः २२ हुत्वाग्निंसमुपासीनंददृशुःशक्रकिंकराः ॥ मीलिताक्षंदुराधर्षंमूर्तिमंतमिवानलम् २३ ननृतुस्तस्यपुरतःस्त्रियोऽथोगायकाजगुः ॥ मृदंगवीणापणवैर्वाद्यंचक्रुर्मनोरमम् २४ संदधेऽस्त्रंस्वधनुषिकामःपंचमुखंतदा ॥ मधुर्मदोरजस्तोभइंद्रभृत्याव्य कंपयन् २५ क्रीडंत्याःपुंजकस्थल्याःकंदुकैःस्तनगौरवात् ॥ भृशमुद्विग्नमध्यायाःकेशविभ्रंशितस्रजः २६ इतस्ततोभ्रमद्दृष्टेश्चलंत्याअनुकंदुकम् ॥ वा युर्जहारतद्वासःसूक्ष्मंत्रुटितमेखलम् ॥ २७ विससर्जततोबाणंमत्वातंस्वजितंस्मरः ॥ सर्वंतत्राभवन्मोघमनीशस्ययथोद्यमः २८ तइत्थमपकुर्वंतोमुने स्तत्तेजसामुने ॥ दह्यमानानिववृतुःप्रबोध्याहिमिवार्भकाः २९ इतींद्रानुचरैर्ब्रह्मन्धर्षितोपिमहामुनिः ॥ यन्नागादहमोभावंनतच्चित्रंमहत्स्वपि ३० दृष्ट्वानिस्तेजसंकामंसगणंभगवान्स्वराट् ॥ श्रुत्वानुभावंब्रह्मर्षेर्विस्मयंसमगात्परम् ३१ तस्यैवंयुंजतश्चित्तंतपःस्वाध्यायसंयमैः ॥ अनुग्रहायाविरासीन्नरना रायणोहरिः ३२ तौशुक्लकृष्णौनवकंजलोचनौचतुर्भुजौरौरववल्कलांबरौ ॥ पवित्रपाणीउपवीतकंत्रिवृत्कमंडलुंदंडमृजुंचवैणवम् ३३ पद्माक्षमालामुतजंतु मार्जनंवेदंचसाक्षात्तपएवरूपिणौ ॥ तपत्तडिद्वर्णपिशंगरोचिषाप्रांशूदधानौविबुधर्षभार्चितौ ३४ तेवैभगवतोरूपेनरनारायणावृषी ॥ वीक्ष्योत्थायादरे णोच्चैर्ननामांगेनदंडवत् ३५ एतत्संदर्शनानंदानियतात्मेंद्रियाशयः ॥ हृष्टरोमाश्रुपूर्णाक्षोनसेहेतावुदीक्षितुम् ३६ उत्थायप्रांजलिःप्रह्वऔत्सुक्यादाश्लिष न्निव ॥ नमोनमइतीशानौबभाषेगद्गदाक्षरम् ३७

३० निस्तेजसंदुर्बलं स्वराडिंद्रः ३१ नरेणयुक्तोनारायणःनरनारायणः ३२ रुरोर्विद्यमानंरौरवंवल्कलंचांबरंवाययोरतौ ३३ जंतुमार्जनंपिंजरचितपुंजिचामरविशेषमित्यर्थ.वेदंदर्भमुष्टिं तपत्प्रकाशमानातडित्पचडित्तद्वद्वर्णेनपिशंगरोचिषाकपिलप्रभयातपएवरूपिणौप्रांशूअत्युच्छ्रितौदधानौजग्मतुरितिशेषः उपवीतादिकंवदधानौरूपविशेषणम् ३४ तौनरनारायणावृषीवीक्ष्यन नाम नमनेहेतुमाह तेइति तेहरेरूपेवैयस्मात्तस्मात् ३५ तयोःसंदर्शनादुत्पन्नेनानंदेननियतात्मेंद्रियाशयायस्यसतथा ३६ गद्गदाक्षरंवचः ३७

३८ पादाभ्यांपादावुद्दिश्यगरिष्ठौ गुरूणांब्रह्मादीनामपिगुरू ३९ अपरिमितमहिम्नोर्युवयोःपुरतोयत्किंचिद्वर्णनंकिंवर्णये न्यकिमपि माहात्म्यानामनंतत्त्वात्तदेकदेशमपिवर्णयितुंनशक्तोस्मि प्राणादींद्रियाणांत्वन्नियतत्वेनत्वत्प्रसादायत्तत्वादितिशेषः एतत्कथमित्याशंक्यसर्वेंद्रियनायकःप्राणोपिभगवन्नियतएवचेष्टतेकिमुतान्यानीतिभावेनाह यदुदीरितइति येनत्वयोदीरितःप्रेरितोसुःप्राणः तमनुप्राणमनुतनुभृतांमनइंद्रियाणिमत्प्रेरितानिस्पंदंतिचेष्टंते किंवाजशर्वयोश्चेंद्रियाणिपेनप्रेरितानि अनेनाजशर्वयोःसमत्वेनत्वदप्रेरितानिविषयेषुप्रवर्ततेअतोव्यभिचारीणोहेतुरितिनिरस्तं अथा पित्वादींद्रियप्रवृत्तौहेतोर्व्यभिचारस्तदवस्थइतिमंदाशंकांपरिहरति स्वस्येति स्वस्येंद्रियाण्यपित्वत्प्रेरितानि यद्यप्येवंस्वतंत्रोसित्वमथापिभजतापुंसांभावबद्धोसिभक्तिबद्धोसि तस्मात्परतंत्रइव प्रतीयसेमादृशानामित्यर्थः ४० भावबद्धत्वदर्शयति मूर्तीइति हेभगवन्भक्तवत्सलस्यभगवतइमेमूर्तीनरनारायणसंज्ञेत्रिलोक्याःक्षेमायरक्षायै शत्रुकृतसंतापनाशायमृत्युजित्यैसंसाराख्यशत्रुजयायभव तः किंच त्वंनानाअनुपमान्यतनूर्नानाविधाअनुपमाअसदृशीरन्याअनयोरितरास्तनूर्मूर्तीर्बिभर्षि त्रिलोकीक्षेमादिकार्यायेतिशेषः किंच ऊर्णनाभिरिवइदंसर्वंयथापूर्वंसृष्ट्वापुनर्यथापूर्वंग्रससि अनेनमायाविकृतबहुरूपग्रहणंनचित्रंस्यादितिशंकापरिहृता सत्यप्रपंचस्रष्टुरीश्वरस्यतन्नियमनार्थंतावद्रूपग्रहणोपपत्तेः तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेः यद्वा अतनूरप्राकृतशरीरस्त्वंयथासर्वंमि दंसृष्ट्वापुनर्ग्रससितथानुपमानिनानाविधानिशरीराणिबिभर्षिग्रससिअंतर्गतानिकरोषि। त्रिलोकीक्षेमोदयेमरणं। क्षेमानन्यतरमेकीकरणमितिविशेषः भगवतइमेमूर्तीचतथेति ४१ एतमर्थंप्रमाणय

तयोरासनमादायपादयोरवनिज्यच ॥ अर्हणेनानुलेपेनधूपमाल्यैरपूजयत् ॥ ३८ सुखमासनमासीनौप्रसादाभिमुखोमुनिः ॥ पुनरानम्यपादाभ्यांग रिष्ठाविदमब्रवीत् ३९ मार्कंडेयउवाच ॥ किंवर्णयेतवविभोयदुदीरितोसुःसंस्पंदतेतमनुवाङ्मनइंद्रियाणि ॥ स्पंदंतिवैतनुभृतामजशर्वयोश्चस्वस्याप्य थापिभजतामसिभावबद्धः ४० मूर्तीइमेभगवतोभगवंस्त्रिलोक्याःक्षेमायतापविरमायचमृत्युजित्यै ॥ नानाबिभर्ष्यनुपमान्यतनूर्यथेदंसृष्ट्वापुनर्ग्रससिसर्व मिवोर्णनाभिः ४१ तस्यावितुःस्थिरचरेशितुरंघ्रिमूलंयत्स्थंनकर्मगुणकालरजःस्पृशंति ॥ यद्वैस्तुवंतिनिनमंतियजंत्यभीक्ष्णंध्यायंतिवेदहृदयामुनयस्तदा प्त्यै ४२ नान्यत्तवांघ्र्युपनयादपवर्गमूर्तेःक्षेमंजनस्यपरितोभयईशविद्मः ॥ ब्रह्माबिभेत्यलमतोद्विपरार्ध्यधिष्ण्यःकालस्यतेकिमुततत्कृतभौतिकानाम् ४३

ति तस्येति यत्स्थंयस्मिन्पादमूलेस्थितंपुरुषं कर्मगुणकालरजःदुष्कर्मगुणाःसत्वादयः कालोजन्मादिहेतुःरजः आर्तवंशुक्रशोणिताख्यं एकवद्भावविवक्षयैकवचनं नस्पृशंतिनोत्पतंतिनदुः खमापादयंति वेदस्यहृदयंयेषांतेवेदहृदयाःवेदतात्पर्यज्ञामुनयोब्रह्मादयःस्थिरचरेशितुरवितुःपालकस्यतवअंघ्रिमूलंस्तुवंति पादोस्यविश्वभूतानित्रिपादस्यामृतंदिवीतिनितरांनमंति नमोविष्णवे महतेकरोमीतियजंति त्रियंबकंयजामहेसुगंधिंपुष्टिवर्धनमितिध्यायंत्यात्मानमेवलोकमुपासतइतियद्यस्मात्तस्मान्त्वदंघ्रिसेवायांतदेवमानंवाऽस्यर्थः तस्यपदंघ्रिमूलंयत्स्थंकर्मादयोनस्पृशंति तत्तवपाद मूलंभजामीत्येकवाक्यंवा ४२ किमर्थमेतदेवस्तुवंतिनिर्दुःखसुखावाप्तयेअन्यत्किंनस्यादितितत्राह नेति हेईशअपवर्गमूर्तेपुरुषार्थस्वरूप यस्त्वंपरितोऽभयःसर्वस्मादभयःजनस्यतवांघ्र्युपनयादं घ्रिशरणमात्रेरन्यत्क्षेमंनविद्मः परितोभियइतिवापाठः जनस्येतिविशेषणंसर्वस्माद्भीर्भययस्यसतथातस्यजनस्यत्वदन्यःक्षेमकर्ताब्रह्मास्ति प्रजापतेनत्वदेतान्यन्यइतिश्रुतेः तत्राह ब्रह्मेति यतःप रितोभयःअतोद्विपरार्धसंबंधिधिष्ण्यंयस्यसतथासब्रह्माकालस्यतेतवसकाशाद्बिभेति यन्मानिशम्यसदनादुरुकंपमानं योअस्कभायदुत्तरंसधस्थंविचक्रमाणस्त्रेधोरुगायइतिश्रुतेः भूतग्रामस्यविचित्रा दृष्टत्वात्कस्यचिद्भिर्भयत्वोपपत्तेर्ब्रह्मणस्तुलोकविडंबनत्वेनतथाभावःकिंनस्यादितिमंदाशंकांकैमुत्यन्यायेनपरिहरति किमुतेति अतइत्युत्तरत्रापिसंबध्यते ब्रह्माप्यलंबिभेतियतोतस्तत्कृतभौतिकाना तेनब्रह्मणाकृतानिभौतिकानिशरीराणियेषांतेतथातेषांप्राणिनांभयमस्तीतिकिमुतेत्यन्वयः ४३

सेवायामित्थंभावमाह तद्वैइति ऋतधियःएकप्रकारबुद्धेर्निश्चलबुद्धेरित्यर्थः आत्मगुरोःजीवगुरोःपरस्यपरमात्मनस्तवपादमूलंगतेदेहाद्यभिमानंहित्वाएवंभजामितर्हि तेतत्प्रसादात्सर्वमनीषितार्थंविंदेयइत्य न्वयः कीदृशंआत्मच्छिदंआत्मनाशहेतुंअतएवापार्थंपुरुषार्थलक्षणप्रयोजनशून्यं असदभद्रंअनभिज्ञमात्रंकेवलाज्ञाननिर्मितंकेवलाविद्वत्कृतंवा अनेनदेहेऽहंभावोभवहेतुस्तदभावोमुक्तिहेतुरितिकथितंभगवति ४४ देहाहंभावस्यनिमित्तेरजस्तमसीतदभावस्यसत्वंत्वान्नियतामितिभावेनाह सत्वमिति हेईशआत्मबयो सत्वंरजस्तमइतिगुणास्त्वयालीलाधृताः जगन्निर्माणक्रीडायैभृताः अंगीकृताः ननुजीवन्दानि शंकिकर्तुंशक्यापेनधार्याःस्युरितितत्राह स्थितीति अस्यजगतःस्थित्यादिहेतवः किमात्मकाइतितत्राह मायामयाइति इच्छात्मकाःयदपियद्यपितथापि सत्वमयःसात्विकःप्रशांत्यैमुक्त्येभवति अन्येराजसतामसाःप्रशांत्यैनस्युः किंतुदेहाहंभावेनसंसारायस्युरित्यर्थः यद्वा सत्वादन्येरजस्तमसीशांत्यैनस्यातां पुनःकस्मैभवतइतितत्राह नृणामिति याभ्यांरजस्तमोभ्यांनृणांव्यसनादयः स्युःचएवार्थे त्रिविधानांनृणांमध्येसत्वमयएवइतिवा ४५ उपसंहरन्नेदसत्वंस्तौति तस्मादिति यस्मात्सत्वमेवानिःश्रेयसहेतुस्तस्मादिहकुशलाःभगवन्नथकल्याणानांतावकानांउपासायोग्यांस्वतोद पितांशुक्लांतवतनुंभजंति तावकानामितिकिंविशिष्योच्यतइतितत्राह यत्सात्वताइति सात्वताःसाधुगुणयुक्ताःपुरुषाःसत्वंसत्वगुणप्रवर्तकंपुरुषइतिरूपंशब्दोयस्यतत्तथा पुरुषशब्दवाच्यमित्यर्थः उशंति कामयंतइतियचस्मात्तस्माद्विशेषवचनम् यतःपुरुषरूपात्लोकोऽभयंविंदतिआत्मसुखमुतापिलभतेतस्मादन्यदभयादिदंन यद्वा यतःसत्वाल्लोकोरक्षितोभवति अभयमुतात्मसुखमाप्नोतिअन्यद्भज

तद्वैभजाम्यृतधियस्तवपादमूलंहित्वेतदात्मच्छिदमात्मगुरोःपरस्य ॥ देहाद्यपार्थमसदित्यनभिज्ञमात्रंविंदेयचेत्तर्हिसर्वमनीषितार्थम् ४४ सत्वंरजस्त मइतीशतवात्मबंधोमायामयाःस्थितिलयोदयहेतवोस्य ॥ लीलाधृतायदपिसत्वमयःप्रशांत्यैनान्येनृणांव्यसनमोहभियश्चयाभ्याम् ४५ तस्मात्तवेहभ गवन्नथतावकानांशुक्लांतनुंस्वदयितांकुशलाभजंति ॥ यत्सात्वताःपुरुषरूपमुशंतिसत्वंलोकोयतोभयमुतात्मसुखंनचान्यत् ४६ तस्मैनमोभगवतेपुरु षायभूम्नेविश्वायविश्वगुरवेपरदेवतायै ॥ नारायणायऋषयेचनरोत्तमायहंसायसंयतगिरेनिगमेश्वराय ४७ यंवैनवेदविततातक्षपथैर्भ्रमद्धीःसंतंस्वखेष्व सुषुहृद्यपिदृक्पथेषु ॥ त्वन्माययावृतमतिःसउएवसाक्षादद्यस्तवाखिलगुरोरुपपद्यवेदम् ४८ यद्दर्शनंनिगमआत्मरहःप्रकाशंमुह्यंतियत्रकवयोजपरा यतंतः ॥ तंसर्ववादविषयप्रतिरूपशीलंवंदामहेपुरुषमात्मनिगूढबोधम् ४९ ॥ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेमार्कंडेयोपाख्यानेनाराय णस्तवोनामसप्तमोध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

स्तमइतियद्वयंस्वरूपसुखादिहेतुर्नभवति ४६ निरंतरध्यानासमर्थस्योपास्तिप्रकारमाह तस्माइति विश्वाय विश्वनाम्ने अस्यसर्वनामसंज्ञानास्तिअर्थांतरत्वात्तत्प्रेक्षणशीलत्वेन ॥ संयतगिरेमितभाषणाय ४७ भवत्साक्षात्कारोभवत्प्रसादायत्तोनस्वप्रयत्नसाध्यइत्याह यमिति हेवितत यःपुरुषोक्षपथैः शब्दादिभिः भ्रमद्धीर्यत्वांनवेद कीदृशंखखेषुस्वेंद्रियेषुअसुषुप्राणेषुहृद्यपिदृक्पथेषुहाग्विषयेषुएवसं तमिदोषत्वेनवर्तमानं ज्ञापकाभावान्नजानंतीतिनेत्याह तवेति अखिलगुरोस्तववेदंज्ञापकप्रमाणंउपपद्यापिसःसाक्षादद्यः अदनयोग्यःविषयभोगशीलः तस्यतवमाययाबंधकशक्त्याआवृतमतिःआच्छा दितज्ञानस्तस्मात्त्वत्प्रसादेनत्वज्ज्ञानंसुलभमित्यर्थः ४८ त्वज्ज्ञानस्यकिंमाहात्म्यंयेनत्वदनुग्रहेणसर्वथापाद्यंस्यादितितत्राह यद्दर्शनमिति यस्यतवदर्शनंज्ञाननिगमेतत्वनिर्णायकेवेदेप्रतिपादितं आत्म रहःप्रकाशोयस्मात्तत्तथातत् अजपराः विष्णुपरायणायतंतःकृतोपास्तिप्रयत्नाः कवयोयत्रपरमात्मरहस्येमुह्यंतिइदमित्थमिति ज्ञातुंउपदेष्टुंचनशक्नुवंतितं भगवंतंवंदामहइत्यन्वयः सर्ववादा नांसर्वसिद्धांतानांविषयाणांप्रतिपाद्यानांअर्थानांप्रतिरूपशीलंविरुद्धस्वभावंतदुक्तान्यथास्थितस्वभावमित्यर्थः आत्मनिजीवविषयेगूढबोधंजीवेनाज्ञातस्वरूपमित्यर्थःआत्मनास्वेनेतिवा ४९ ॥ इति श्रीभागवतेमहापुराणेद्वादशस्कंधेविजयध्वजकृतटीकायांसप्तमोऽध्यायः ॥ ७ ॥

संस्तुतइति १ आत्मनोहरेःसमाधिनोपासनाजन्यज्ञानेनसिद्धःकृतकृत्यः २ प्रतीच्छस्वीकुरु ३ भवन्माहात्म्यप्रकटनेनवरंवरयिष्यन्नपि भगवद्दर्शनादितरोवरोऽनभीष्टोमुमुक्षोरितिहृदिकृत्वाप्रतिवक्ति जितमिति ४ यदाकांक्षापूरकंमायस्तदेवसाध्यमस्यतदभावात्पथितृणमिवेदमपिवंध्यमितितत्राह वांछतीति भक्तियोगपक्केनभक्त्युपासनाभ्यांपरिपाकंप्राप्तेनवाक्षगोचरोभूदितिशेषः ५ ननूक्तंस्त्यंतथापिभवत्समाधेरेतदेवफलंनान्यदस्तीतिभातिकिमत्राह अथापीति मायाघटमानघटकशक्तिलक्षणांलोकोपकारकयथार्थज्ञानजनकत्वेनेंद्रजाललक्षणानेतिभावेनाह यथेति सतःपरब्रह्मणःसर्वस्मात्भिदांवैलक्षण्यंवेद तादृशीं द्रष्टुमिच्छामिनेंद्रजाललक्षणामित्यर्थः ६ सस्मयंसस्मितंतथाद्रक्ष्यसीत्युक्त्वा ७ आत्मानिस्वस्मिन् ८ किंबहुनासर्वत्रचव्यापकंभावद्रव्यैःमनःकल्प्यपुष्पादिद्रव्यैः अर्हितश्चे

सूतउवाच ॥ संस्तुतोभगवानित्थंमार्कंडेयेनधीमता ॥ नारायणोनरसखःप्रीतआहभृगूद्वहम् १ श्रीभगवानुवाच ॥ भोभोब्रह्मर्षिवर्योसिसिद्धआत्मसमाधिना ॥ मयिभक्त्यानपायिन्यातपःस्वाध्यायसंयमैः २ वयंतेपरितुष्टाःस्मत्वद्बृहद्व्रतचर्यया ॥ वरंप्रतीच्छभद्रंतेवरदेशादभीप्सितम् ३ ॥ ऋषिरुवाच ॥ जितंतेदेवदेवेशप्रपन्नार्तिहराच्युत ॥ वरेणैतावतालंनोयद्भवान्समदृश्यत ४ वांछंत्यजादयोयस्यश्रीमत्पादाब्जदर्शनम् ॥ मनसायोगपक्केनसभवान्मेऽक्षगोचरः ५ अथाप्यंबुजपत्राक्षपुण्यश्लोकशिखामणे ॥ द्रक्ष्येमायांययालोकःसपालोवेदसद्भिदाम् ६ सूतउवाच ॥ इतीरितोर्चितःकाममृषिणाभगवान्मुने ॥ तथेतिसस्मयंप्रागाद्बदर्याश्रममीश्वरः ७ तमेवंचिंतयन्नर्थमृषिःस्वाश्रमएवसः ॥ वसन्नग्न्यर्कसोमांबुभूवायुवियदात्मसु ८ ध्यायन्सर्वत्रचहरिंभावद्रव्यैरपूजयत् ॥ क्वचित्पूजांविसस्मारभक्तिप्रसरसंप्लुतः ९ तस्यैकदाभृगुश्रेष्ठपुष्पभद्रातटेमुनेः ॥ उपासीनस्यसंध्यायांब्रह्मन्वायुरभून्महान् १० तंचंडशब्दंसमुदीरयंतंबलाहकाअन्वभवन्करालाः ॥ अक्षस्थविष्ठामुमुचुस्तडिद्भिःस्वनंतउच्चैरभिवर्षधाराः ११ ततोव्यदृश्यंतचतुःसमुद्राःसमंततःक्ष्मातलमाग्रसंतः ॥ समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्तगभीरघोषाः १२ अंतर्बहिश्चाद्भिरतिद्युभिर्खरैःशतह्रदाभीरुपतापितंजगत् ॥ चतुर्विधंवीक्ष्यसहात्मनामुनिर्जलप्लुतांक्ष्मांविमनाःसमत्रसत् १३ तस्यैवमुद्वीक्षतऊर्मिभीषणःप्रभंजनाघूर्णितवार्महार्णवः ॥ आपूर्यमाणोवरषद्भिरंबुदैःक्ष्मामप्यधाद्द्वीपवर्षाद्रिभिःसमम् १४ सक्ष्मांतरिक्षंसदिवंसभागणंत्रैलोक्यमासीत्सहसाद्भिराप्लुतम् ॥ सएकएवोर्वरितोमहामुनिर्बभ्रामविक्षिप्तजटोजडांधवत् १५ क्षुत्तृट्परीतोमकरैस्तिमिंगिलैरुपद्रुतोवीचिनभस्वताहतः ॥ तमस्यपारेपतितोभ्रमन्दिशोनवेदखंगांचपरिश्रमोषितः १६ क्वचिन्मग्नोमहावर्तेतरलैस्ताडितःक्वचित् ॥ यादोभिर्भक्ष्यतेक्वापिस्वयमन्योन्यघातिभिः १७

रित्यर्थः क्वचित्कदाचित् विस्मरणेकारणंभक्तिप्रसरसंप्लुतइति ९ वरदानफलंनकुमुपक्रमते तस्येति तस्याश्रमेमहान्वायुरभूत् १० तंवायुमन्वनंतरंतेबलाहकाःअभ्यभितःअक्षस्थविष्ठाः अक्षोरथांगनीपादंडस्तद्वत्स्थूलतमावर्षधारामुमुचुःतडिद्भिःसह ११ समीरवेगेनोन्नतोर्मिभिःसहउग्रनक्रैर्भयानकस्यभयंकरस्यावर्तस्यगभीरागंभीराघोषायेषांतेतथा १२ घनैर्मेघैरभिवृष्टाभिरद्भिरुपतापितम् द्युभिर्विद्युद्भिर्मतीभिःशतह्रदाभिस्तडिद्भिश्चोपतापितंदग्धवत्कृतं क्ष्मामभिजलप्लुतांवीक्ष्य १३ अप्यधात्छादितवांस्तस्यमुनेरुद्वीक्षतः १४ सदिवंस्वर्गेणसहितं सभागणंसनक्षत्रगणंजडवत्अंधवत् १५ वीचिनभस्वतातरंगवायुनाभ्रमंत्यादिशोयस्यसतथा वष्टिभागुरिरल्लोपमितिवचनात् टाबंतोदिशाशब्दः परिश्रमोषितःदुःखसमुद्रवासी १६ तरलैस्तरंगैः १७

१८ १९ ककुदिउन्नतस्थले २० तस्यवटस्य २१ २२ श्वासेनमुखवायुनाएजतांकंपमानानामलकानांव्रातेनमिश्रयाश्रियायुक्तं कर्णदाडिमंकर्णाभरणंयस्यसतथातं ईषच्छोणाभ्रिष्टा २३ पद्मगर्भ वत्अरुणावपांगौनेत्रांतौयस्यतंश्वासैरेजंत्यश्चलंत्योवलयस्तिर्यक्रेखास्ताभिः संविग्नगंभीरानाभिर्यस्यसतथाचलमुदरंयस्यसतथा श्वासैजद्बलिसंविग्ननिम्ननाभिश्चलोदरश्चसतथातं दलोदरमितिवापाठः दलवदश्वत्थदलवत्पत्रवत्उदरंयस्येति २४ धयंतंपिबंतं २५ अद्भुतभावेनाश्चर्यलीलाचेष्टयाशंकितःसन्नपिपुरःप्रसमारसमीपंगतः २६ सभार्गवःमार्कंडेयःतावत्ततःपूर्वमेवश्वसितेनांतर्गच्छतासहाशि शोरंतःशरीरंमशकोयथातथाविशादित्यन्वयः तत्रोदरांतेविन्यस्तमदोविश्वंकृत्स्नशोऽचष्टदृष्टवान्दृष्ट्वाचपुरायथाबहिर्विस्मितोमुह्यत्तथा मुह्यदित्यन्वयः अत्रमोहोनामाश्चर्यबुद्धिरेवनत्वन्यथाज्ञानतथात्वेमा चीनाचीर्णपुण्यराशेर्वैयर्थ्यापत्तेरिति २७ विश्वंविशिनष्टि खंरोदसीइत्यादिना आश्रमवर्णवृत्तयोयास्ताश्च२८महांतिभूतानिपंचभूतानिनानायुगकल्पनंयेनसतथातंकालंच अन्यद्यत्किंचिद्व्यवहारकारण

क्वचिच्छोकंक्वचिन्मोहंक्वचिद्दुःखंसुखंभयम् ॥ क्वचिन्मृत्युमवाप्नोतिव्याध्यादिभिरुपद्रुतः १८ अयुतायुतवर्षाणांसहस्राणिशतानिच ॥ व्यतीयुर्भ्रमतस्त स्मिन्विष्णुमायावृतात्मनः १९ सकदाचिद्भ्रमंस्तस्मिन्पृथिव्याःककुदिद्विजः ॥ न्यग्रोधपोतंददृशेफलपल्लवशोभितम् २० प्रागुत्तरस्यांशाखायांत स्यापिददृशेशिशुम् ॥ शयानंपर्णपुटकेग्रसंतंप्रभयातमः २१ महामरकतश्यामंश्रीमद्वदनपंकजम् ॥ कंबुग्रीवंमहोरस्कंसुनासंसुंदरभ्रुवम् २२ श्वासै जदलकव्रातमिश्रश्रीकर्णदाडिमम् ॥ विद्रुमाधरभासेषच्छोणायितसुधास्मितम् २३ पद्मगर्भारुणापांगंहृद्यहासावलोकनम् ॥ श्वासैजद्बलिसंविग्ननि म्ननाभिचलोदरम् २४ चार्वंगुलिभ्यांपाणिभ्यामुन्नीयचरणांबुजम् ॥ मुखेनिधायविप्रेंद्रधयंतंवीक्ष्यविस्मितः २५ तद्दर्शनाद्वीतपरिश्रमोमुदाप्रोत्फुल्ल हृत्पद्मविलोचनांबुजः ॥ प्रहृष्टरोमाद्भुतभावशंकितःप्रष्टुंपुरस्तंप्रससारबालकम् २६ तावच्छिशोर्वैश्वसितेनभार्गवःसोंतःशरीरंमशकोयथाविशत् ॥ त त्राप्यदोन्यस्तमचष्टकृत्स्नशोयथापुरामुह्यदतीवविस्मितः २७ खंरोदसीभगणानद्रिसारान्द्वीपान्सवर्षान्ककुभःसुरासुरान् ॥ वनानिदेशान्सरितःपुराक रान्खेटान्व्रजानाश्रमवर्णवृत्तयः २८ महांतिभूतान्यथभौतिकान्यसौकालंचनानायुगकल्पकल्पनम् ॥ यत्किंचिदन्यद्व्यवहारकारणंददर्शविश्वंसदिवा वभासितम् २९ हिमालयंपुष्पवहांचतांनदींनिजाश्रमंयत्रऋषीनपश्यत् ॥ विश्वंविपश्यञ्छ्वसतःशिशोर्वैबहिर्निरस्तोन्यपतल्लयाब्धौ ३० तस्मिन्पृ थिव्याःककुदिप्ररूढंवटंचतत्पर्णपुटेशयानम् ॥ तोकंचतत्प्रेमसुधास्मितेननिरीक्षितोपांगनिरीक्षणेन ३१ अथतंबालकंवीक्ष्यनेत्राभ्यांधिष्ठितंहृदि ॥ अभ्ययादतिसंक्लिष्टःपरिष्वक्तुमधोक्षजम् ३२ तावत्सभगवान्साक्षाद्योगाधीशोगुहाशयः ॥ अंतर्दधेऋषेःसद्योयथेहानीशनिर्मिता ३३ तमन्वथवटोब्रह्मन्स लिलंलोकसंप्लवम् ॥ तिरोधायिक्षणादस्यस्वाश्रमेपूर्ववत्स्थितः ३४ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेभगवन्मायादर्शनंनामाष्टमोऽध्यायः ॥ ८ ॥

द्वानोपादानादिसमर्थंतच्चाद्राक्षीत् सादिवसत्वेनयथार्थत्वेनैवावभासितंप्रकाशितंनमिथ्याभूतत्वेन २९ पुनःकिमभूदत्राह विश्वमिति बहिःश्वसतःशिशोःश्वासेनबहिर्निरस्तोनुन्नःप्रलयाब्धौन्यपतत् ३० तद्वचतोकंचवीक्ष्यतस्यशिशोःप्रेमसुधायाःप्रेमामृताद्दुद्भूतस्मितसहितेनापांगनिरीक्षणेननिरीक्षितोभूदित्यन्वयः ३१ अथतंबालकंपरिष्वक्तुमभ्यगात् ३२ अनीशेनासमर्थेननिर्मिताइहमायालक्षणा चेष्टायथाक्षिप्रमंतर्धीयतेतथेयमंतर्धानचेष्टाऽयार्थेनिदर्शनमिदंनतुमिथ्यात्वे ३३ अंतर्हितंभगवंतमनुलोकस्यसंप्लवोयस्मात्तत्तथा तिरोधायितिरोहितमभूत् ३४ ॥ इतिश्रीभागवतेमहापुराणेद्वा दशस्कंधेविजयध्वजकृतटीकायांअष्टमोध्यायः ॥ ८ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

मार्कंडेयःपुनःकिमकार्षीत्तत्कथांशृण्वतांहर्षभक्तिसमुद्रेककरीतिहार्दंशौनकादीनांचोद्यंपरिहरति सएवमिति यःपूर्ववत्स्वाश्रमेस्थितःसःयोगमायायाःअणिमादिविभूतेःवैभवंव्याप्तिंदत्तरूपशक्तेःप्रभावेन १ यस्यहरेर्मायया मोहनशक्त्याविबुधाअज्ञानकातराइतिपदद्वयेनान्योन्यविरुद्धेनमायाशब्दोऽव्याख्यातइतिज्ञातव्यम् २ निभृतात्मानंपूर्णमनसं हराववेनितरांधृतमनसंवा दिदिक्षोर्भि ३ ४ निभृतोननुपूर्णएव तपापायेवर्षाकाल ऋषीणांव्रातोव्रतसमूहोयस्यसतथा पूर्वविशेषणार्थेहेतुरयं अस्यमुनेः ५ रुद्रःप्रतिवक्ति नैवेति मोक्षमपिनेच्छतिकिमुतान्याआशिषःतत्रहेतुमाह ॥ भक्तिर्मीति ६ यद्यप्येवंतथापिभवत्यावचनगौरवाद्यतिष्यामहइत्याशयेनाह अथापीति हैमवानीति एतेनसाधुना मुनिनासहसंकथनेन किंप्रयोजनमत्राह अयंहीति साधूनांसमागमःसंगतिः ७ समुपेयायसंप्रापअयंसाधारणोभगवान्किंतुवेदसिद्धएवेत्याशयेनाह ईशानइति अनेनश्रीहरिज्ञानमपिरुद्रप्रसादात्फलवत्स्यादित्युक्तंभवति तत्कुतइत्यत्राह ईश्वरइति श्रोत्रादींद्रियवतांजी

सूतउवाच ॥ सएवमनुभूयेदंनारायणविनिर्मितम् ॥ वैभवंयोगमायायास्तमेवशरणंययौ १ ऋषिरुवाच ॥ प्रपन्नोऽस्म्यंघ्रिमूलंतेप्रपन्नाभयदंहरे ॥ य न्माययापिविबुधामुह्यंत्यज्ञानकातराः २ सूतउवाच ॥ तमित्थंनिभृतात्मानंवृषेणदिविपर्यटन् ॥ रुद्राण्याभगवान्रुद्रोददर्शस्वगणैर्वृतः ३ अथो मातमृषिंवीक्ष्यगिरिशंसमभाषत ॥ पश्येमंभगवन्विप्रंनिभृतात्मेंद्रियाशयम् ४ निभृतोनन्दषिव्रातस्तपापायेयथार्णवः ॥ कुर्वस्यतपसःसाक्षात्संसिद्धिंसिद्धिदोभवान् ५ श्रीभगवानुवाच ॥ नैवेच्छत्याशिषःक्वापिब्रह्मर्षिर्मोक्षमप्युत ॥ भक्तिंपरांभगवतिलब्धवान्पुरुषेऽव्यये ६ अथापिसंवदिष्यामो भवान्येतेनसाधुना ॥ अयंहिपरमोलाभोनृणांसाधुसमागमः ७ इत्युक्त्वासमुपेयायभगवान्ससतांगतिः ॥ ईशानःसर्वविद्यानामीश्वरःसर्वदेहिनाम् ८ तयोरागमनंसाक्षादीशयोर्जगदात्मनोः ॥ नवेदरुद्धधीवृत्तिरात्मानंविश्वमेवच ९ भगवांस्तदभिज्ञायगिरिशोयोगमायया ॥ आविशत्तद्गुहाकाशंवायुश्छिद्रमिवेश्वरः १० आत्मन्यपिशिवंप्राप्तंतडित्पिंगजटाधरम् ॥ त्र्यक्षंदशभुजंप्रांशुमुद्यंतमिवभास्करम् ११ व्याघ्रचर्मांबरंशूलधनुरिष्वसिचर्मभिः ॥ अ क्षमालाडमरुककपालंपरशुंसह १२ बिभ्राणंसहसाभातंव्यचष्टहृदिविस्मितः ॥ किमिदंकुतएवेतिसमाधेर्विरतोमुनिः १३ नेत्रेउन्मील्यददृशेसगणंसोमयागतम् ॥ रुद्रंत्रिलोकैकगुरुंननामशिरसामुनिः १४ तस्मैसपर्यांव्यदधात्सगणायसहोमया ॥ स्वागतासनपाद्यार्घ्यगंधस्रग्धूपदीपकैः १५ आहत्वात्मानुभावेनपूर्णकामस्यतेविभो ॥ करवामकिमीशानयेनेदंनिर्वृतंजगत् १६ नमःशिवायशांतायसत्वायप्रमृडायच ॥ रजोजुषेप्यघोरायनमस्तुभ्यंतमोजुषे १७

वानांशिवाधीनत्वेनतत्तदिंद्रियसाध्यस्यज्ञानस्यापितत्प्रसादायत्तत्वंयुक्तम् ८ तदामुनिनाकिमकारीतितत्राह तयोरिति अहंकाररूपेणजगदात्मनोरिति अज्ञानेकिकारणमत्राह रुद्धधीवृत्तिरिति धीपूर्वकत्वादिंद्रियवृत्तेस्तद्रोधेसर्वेंद्रियरोधोयुक्तइतिरुद्धधीवृत्तिरित्युक्तं आत्मानंस्वंविश्वंपुरोवर्तिसर्वम् ९ योगमाययाअणिमादियोगसामर्थ्येनछिद्रंरोमकूपादिसुषिरम् १० नकेवलंबहिरेवआत्मन्यस्मिन्नपि ११ इषुपुंकंधनुश्चअसिश्चचर्मचतानितैर्युक्तं करेडमरुकअणुतरंतंतुपर्वाढचंचर्मपिनद्धमुखंदारुवाद्यम् १२ व्यचष्टअपश्यत् १३ सहउमयासोपाधर्विंदादित्यादेः १४ १५ पूर्णकामस्यतवंव्यनाकि येनत्वयाजगन्निर्वृतंभवति १६ सत्वायपराक्रमयुक्ताय सद्गसशरणंवातिगच्छतीति सत्वस्तस्मैवा प्रमृडायप्रकृष्टपालाय तत्तद्भक्तयोग्यतानुसारेणरक्षार्थंसत्वादिगुणप्रवर्तकत्वात्सत्वायरजोजुषइत्युक्तम् १७

१८ अपोत्रब्राह्मणेभ्योयेषांत्रयाणांदर्शनममार्घंतत्रहेतुमाह मर्त्यइति मर्त्योऽमृतंमुक्तिंविंदतेयद्यस्मादर्शनात्येभ्योमृतंवा १९ ब्राह्मणभक्तिंदर्शयति ब्राह्मणाइति ब्राह्मणाब्रह्मवादैकनिष्ठाः साधवोरागादिदोषविधुराः शांताभगवन्निष्ठापारंगताः अतएवनिःसंगाःदुष्टसंगरहिताः अतएवभूतेषुसज्जनेषुवत्सलाःस्निग्धाः एकांतेनविष्णुरेवसर्वोत्तमोनान्यइतिनिर्णयेनास्मासुभक्ताःयोग्यतातिरेकेणवैरशून्याः समंब्रह्मतद्दर्शनंयेषांतेतथा २० यएवंविधांस्तान्वदतिस्तुवंतीत्यादिसपर्यांकुर्वंतइत्यर्थःअहंब्रह्माचहरेःपृथक्स्वतंत्रौनतदधीनावेव तत्रहेतुरीश्वरइतिईर्लक्ष्मीः शंरूपः शतानंदस्तयोर्वरईशादीज्ञानाच्चवरइतियस्मात्तस्मात्द्वयोर्वरइत्युक्तं पूर्यंकेइत्यतोवाह अहमिति स्वयमित्यनेनहरेरेवस्वातंत्र्यंनावयोरावांतदधीनावितिस्पष्टमुक्तंअत्राप्ययमेवहेतुरीश्वरइति ईशऐश्वर्यइति धातोरनुपहतैश्वर्यमूर्तित्वादीश्वरइत्युच्यते २१ इतोपिब्राह्मणाएवपूज्यायतएवंविधंतत्त्वंतवजानंतीत्याह नतइति तेब्राह्मणामयिस्थितत्वान्मयीत्युच्यमानेहरावजेचास्थितत्वादजशब्दवाच्येचपृथक्स्थितेअच्युतेचाभिदामण्वपिपरमाणुमात्रमपिनचक्षतेनपश्यति किंचजनस्यजननवतः स्थावरजंगमरूपस्यप्रपंचस्यात्मनोंतर्यामिणश्चभिदांनपश्यंति अपिशब्देनकोदेवइतिश्रुतिप्रमाणयति तत्तस्माद्वयंयुष्मानखिलैःपूज्यानीमहिबुध्यामहे यद्वा मयिभिदामन्यथाज्ञानंविष्णुरयामितिकिंचित्साम्येनापिनपश्यंत्यपितुततोविलक्षणत्वेनतत्कटाक्षाहितशक्तित्वेनजगत्संहर्तृत्वेनततोनंतांशर्हं।

सूतउवाच ॥ एवंस्तुतःसभगवान्महादेवःसतांपतिः ॥ परितुष्टःप्रसन्नात्मामहर्षिंतमभाषत १८ श्रीमहादेवउवाच ॥ वरंवृणीष्वनःकामंवरदेशावयंत्रयः ॥ अमोघंदर्शनंयेषांमर्त्योयद्विंदतेमृतम् १९ ब्राह्मणाःसाधवःशांतानिःसंगाभूतवत्सलाः ॥ एकांतभक्ताअस्मासुनिर्वैराःसमदर्शनाः २० सलोकालोकपालास्तान्वंदंत्यर्चंत्युपासते ॥ अहंचनपृथग्ब्रह्मास्वयंचहरिरीश्वरः २१ नतेमय्यच्युतेऽजेचभिदामण्वपिचक्षते ॥ नात्मनश्चजनस्यापितद्युष्मान्वयमीमहि २२ नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः ॥ तेपुनंत्युरुकालेनयूयंदर्शनमात्रतः २३ ब्राह्मणेभ्योनमस्यामोयेऽस्मद्रूपंत्रयीमयम् ॥ बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः २४ श्रवणाद्दर्शनाद्वापिमहापातकिनोपिवः ॥ शुध्येरन्नंत्यजाश्चापिकिमुसंभाषणादिभिः २५ सूतउवाच ॥ इतिचंद्रललामस्यधर्मगुह्योपबृंहितम् ॥ वचोमृतायनमृषिर्नातृप्यत्कर्णयोःपिबन् २६ सचिरंमाययाविष्णोर्भ्रामितःकर्शितोभृशम् ॥ शिववागमृतध्वस्तक्लेशपुंजस्तमब्रवीत् २७ ऋषिरुवाच ॥ अहोईश्वरचर्येयंदुर्विभाव्याशरीरिणाम् ॥ यन्नमंतीशितव्यानिस्तुवंतिजगदीश्वराः २८ धर्मंग्राहयितुंप्रायःप्रवक्तारश्चदेहिनाम् ॥ आचरंत्यनुमोदंतेक्रियमाणंस्तुवंतिच २९

नत्वेनैवमतत्त्वंपश्यंतिचतुर्मुखेयथास्थितंपश्यंति अच्युतेचतथायथाश्रुतिविहितमात्मनश्चेतनसमुदायस्य जन्यतइतिजनोदेहस्तदादिजडस्यापितत्त्वंयथातथाअन्यथानपश्यंति २२ सर्वस्माच्छुद्धिहेतुत्वाच्चब्राह्मणाएवपूज्याइत्याह नहीति २३ अस्माभिश्चसंभाव्यत्वाद्विप्राएवश्रेयांसइत्याह ब्राह्मणेभ्यइति त्रयीमयंवेदमुख्यप्रतिपाद्यंआत्मनिसम्यगाधानमवस्थानंसन्निधानलक्षणंयस्यतच्चधातपआलोचनंस्वाध्यायोऽध्ययनंसंयमोवागादिनियमस्तैर्बिभ्रतिआचारहीनंनपुनंतिवेदाइत्यतरतपइत्यादि २४ नकेवलदर्शनाच्छुद्धिरपितुश्रवणादपीतिसमुचितत्वादाह श्रवणादिति तद्वधिकशुद्धिःकस्मादितितत्राह किम्विति आदिपदेननामस्मरणंगृह्यते २५ चंद्रललामस्यचंद्रशेखरस्यधर्मगुह्योपबृंहितंधर्मरहस्यगूढंअमृतायनंअमृतवद्दुर्लभंनकर्णयोर्हितम् २६ भ्रामितःसमाधेःसंचालितःअतएवकर्शितः अनेनसंयमिनांसमाधेरन्यत्सुखंनास्तीतिज्ञापितम् २७ इयंवाग्लक्षणाचेष्टाईशितव्यानिभवादीन्नियम्यानिबद्धकुलानिस्तुवंतियच्चरमात्तरमात् २८ मुनिःस्वयमेवस्तवनादेरभिप्रायंवक्ति धर्ममिति नकेवलंदेहिनांधर्मस्यप्रवक्तारआचरंतिचआचरतोनुमोदतेक्रियमाणंधर्मंस्तुवंतिच २९

नतुविध्यादिवर्जितानांभवतांधर्माचरणादिनातेजःक्षतिःस्यादित्यत्राह नेति वृत्तिस्तुग्रंथसंदर्भेइतिवचनात्स्वमायामयवृत्तिभिःस्वेच्छयाकृतावृत्तियेषांतेतथातैःस्तवादिभिर्वृतेनैतावताकर्मणाभग वतोनुभावःप्रभावोनप्रदुष्येतप्रदुष्टोनभवति कुहकैरिंद्रजालव्यापारैर्मायिनोनुभावःनिश्चयोयथातथेति ३० प्रकारांतरेणदोषाभावमाह सृष्टेति योभगवान्मनसास्वेच्छयाइदंविश्वंसृष्ट्वातेषांमिद्ध पेष्वांतःप्रविश्यदर्शनादिकुर्वद्भिर्गुणैरिंद्रियैरहंकर्तेति निरूप्यजीवइवाभातीत्येतावताजीववत्दुष्टोनभवति कथमिदस्त्वमहम्भगवदिच्छयोद्बोधितमानसवासनयाकारितुरगादिपदार्थान्स्रष्ट्वायथातद्द्रष्टा वालिप्तोनभवति ३१ तस्मैभगवतेनमइत्यन्वयःत्रयःसत्वादयोगुणायस्यसतथातस्मैगुणित्वंदोषत्वेनव्याप्तंदृष्टत्वादत्राह केवलायेति निर्दोषाय निर्दोषत्वंमुक्तस्याप्यस्तीतितत्राह अद्वितीयायेति मुक्तनिर्दोषत्वंहरिप्रसादायत्तंनहरेस्तथातस्य समाधिकशून्यत्वात् कथमयमर्थःसंपद्यतइत्यत्राह गुरवइति ब्रह्मादीनांस्वात्मरहस्योपदेष्टृत्वेनगुरुत्वात्तेषांसिद्धइत्यर्थः निराकारस्योपदेष्टृत्वं कथंघटतइतितत्राह ब्रह्मेति ज्ञानादिगुणाकाराय बृहंतोह्यस्मिन्गुणाइतिश्रुतावस्मिन्नितिवचनादाकारःसिद्धइति ३२ यतएवंनिरूप्यमाणोहरेरधिकःसमोवानास्तिसर्वश्रेष्ठश्चातस्तद्दर्शनमंतरेण

नैतावताभगवतःस्वमायामयवृत्तिभिः ॥ प्रदुष्येतानुभावस्तेमायिनःकुहकैर्यथा ३० सृष्टेदंमनसाविश्वंस्वात्मनानुप्रविश्ययः ॥ गुणैःकुर्वद्भिराभातिकर्तेवस्वप्नदृग्यथा ३१ तस्मैनमोभगवतेत्रिगुणायगुणात्मने ॥ केवलायाद्वितीयायगुरवेब्रह्ममूर्तये ३२ कंवृणेऽतःपरंभूमन्वरंत्वद्वरदर्शनात् ॥ यद्दर्शनात्पूर्णकामःसत्यकामःपुमान्भवेत् ३३ वरमेकंवृणेथापिपूर्णकामाभिवर्षणात् ॥भगवत्यच्युतेभक्तिंतत्परेषुतथात्वयि ३४ सूतउवाच॥इत्यर्चितोभिष्टुतश्चमुनिनासूक्तयागिरा ॥तमाहभगवाञ्छर्वःशर्वयाचाभिनंदितः ३५ कामस्तेमहर्षेसत्योभक्तिमांस्त्वमधोक्षजे ॥ आकल्पांतंयशःपुण्यमजरामरतातथा ३६ ज्ञानंत्रैकालिकंब्रह्मन्विज्ञानंचाविरक्तिमत् ॥ ब्रह्मवर्चस्वितामूयात्पुराणाचार्यतास्तुते ३७ सूतउवाच ॥ एवंवरान्समुनयेदत्वागात्त्र्यक्षईश्वरः ॥ देव्यैतत्कर्मकथयन्ननुभूतंपुरामुना ३८ सोप्यवाप्तमहायोगमहिमाभार्गवोत्तमः ॥ विचरत्यधुनाप्यद्धाहरावेकांततांगतः ३९ अनुवर्णितमेतत्तेमार्कंडेयस्यधीमतः ॥ अनुभूतंभगवतोमायावैभवमद्भुतम् ४० एतत्केचिदविद्वांसोमायासंसृतिमात्मनः ॥ अनाद्यावर्तितंनृणांकादाचित्कंप्रचक्षते ४१

त्वत्परकन्यंकंवरंवृणे वरंवरेण्यंदर्शनंज्ञानंयस्यसतथातस्मात् एतदेवाह यद्दर्शनाद्येनोपदिष्टज्ञानाद्वापुमान्पूर्णकामःस्यात्अतएवसत्यकामश्च ३३ मद्दर्शनात्पूर्णकामस्त्वेवरंवृणीष्वेतिमद्वचनं व्यर्थंसमभूदितिमाशंकीत्याह वरमिति यद्यपिवरोनप्रार्थनीयस्तथापित्वद्वचनसाफल्यायैतंवरंवृणेपूर्णकामाभिवर्षणादितिशेषःकोसौवरइतितत्राह भगवतीति तत्परेषुतद्भक्तश्रेष्ठेत्वय्यपिच ३४ श र्वयापार्वत्यासह ३५ त्वंअधोक्षजेभक्तिमान्भूयाइतिशेषःआकल्पांतंपुण्यंयशोजरामरणताचभूयात्तवेतिशेषः ३६ किंच वरांतरंचस्यादित्याह ज्ञानमिति ३७ अमुनामार्कंडेयेन ३८ अवाप्तमहा योगमहिमा प्राप्तमहाज्ञानमहिमाप्राप्तमहाणिमादियोगमहिमावा एकांततांनियतभक्तताम् ३९ ज्ञानवतोमार्कंडेयस्ययदेतदनुभूतंहरेर्मायावैभवंतेनुवर्णितमेतन्नृणांमध्येकेचिदविद्वांसआत्मनोहरेर्मायाप्र सृतिसामर्थ्यंविस्तारंकादाचित्कंप्रचक्षते । अकालेप्रदर्शितत्वेनकादाचित्कंकिंनस्यादत्राह अनादीतिअनादिकालवर्तिनं ननूतनं यद्वोपसंहरतिअनुवर्णितामिति मार्कंडेयस्यैतच्चरितंतेनुवर्णितंकिंतच्च रित्यत्राह अनुभूतमिति ,श्रद्धेयत्वेयतमेदमाह एतदिति ४० ४१

इतोप्येतच्छ्रद्धयेतिफलमाह पठति अनुभावेनभावितंसंवर्द्धितं तयोरुभयोःश्रावयितृश्रोत्रोःकर्माशयसंसृतिः कर्मणामाशयःस्थानंदेहस्तन्निमित्तसंसारोनभवेदितिस्वरूपनाशएवोच्यते अस्यश्रीहरिभक्तिर्मुख्यहेतुरतोच्युतांभक्तिमित्याह ४२ इतिश्रीभागवतेमहापुराणेविजयध्वजकृतटीकायांनवमोध्यायः ॥ ९ ॥ स्थूलमतीनामुपासनार्थंपुरुषरूपस्यहरेर्यजनप्रकारंवदत्यस्मिन्नध्याये अत्रसद्भुत्सयाशौनकःपृच्छति अथेति बुद्धिसन्निहितत्वादिममित्युक्तं समस्ततंत्रराद्धांतेसर्वपंचरात्रतंत्रलक्षणशास्त्रोक्तसिद्धांतेउक्तंयद्भागवतंभगवद्विषयंतत्त्वंतद्ब्रवीचीति १ तांत्रिकाःश्रीनारायणपूजाविधायकशास्त्रपटवः श्रियःपतेःपत्युःप्रयोगरूढैःभावल्याद्विसंज्ञावैकल्पिकाइतिबोद्धव्यं परिचर्यायांपूजायांयैर्भूम्यादिपदार्थैःअंगोपांगायुधाकल्पंअंगानिपादादीनिउपांगानिगरुडादीनिकल्पयत्याकल्पमाभरणकौस्तुभादि २ तान्पदार्थान् क्रियायोगंपूजालक्षणंबुभुत्सतांज्ञातुकामानांक्रियानैपुण्येनक्रियापटुत्वेन अमर्त्यतांमरणराहित्यं मुक्त्याख्यं ३ वेदागमतंत्राभ्यांवेदाख्यागमेनतंत्रशास्त्रेणच पद्मजादिभिराचार्यैः प्रतिपादितायास्ताविभूतीः ४ मायाप्रकृतिःआदिशब्देनमहदहंकारशब्दांसिपंचभूतानिचगृह्यंते विकाराइंद्रियादयःविराट् ब्रह्मांडंसचित्केचेतनसहितेयस्मिन्ब्रह्मांडेभुवसत्रयंदृश्यते ५ एतद्ब्रह्मांडं

य एवमेतद्भृगुवर्यवर्णितंरथांगपाणेरनुभावभावितम् ॥ संश्रावयेत्संशृणुयादुतोभयोस्तयोर्नकर्माशयसंसृतिर्भवेत् ४२ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेनवमोध्यायः ॥ ९ ॥ शौनकउवाच ॥ अथेममर्थंपृच्छामोभवंतंबहुवित्तमम् ॥ समस्ततंत्रराद्धांतेभवान्भागवततत्त्ववित् १ तांत्रिकाःपरिचर्यायांकेशवस्यश्रियःपतेः ॥ अंगोपांगायुधाकल्पंकल्पयंतियथैवयैः २ तन्नोवर्णयभद्रंतेक्रियायोगंबुभुत्सताम् ॥ येनक्रियानैपुणेनमर्त्योयायादमर्त्यताम् ३ सूतउवाच ॥ नमस्कृत्वागुरून्वक्ष्येविभूतीर्वैष्णवीरपि ॥ यावेदागमतंत्राभ्यामाचार्यैःपद्मजादिभिः ४ मायाद्यैर्नवभिस्तत्त्वैःसविकारैरयंविराट् ॥ निर्मितोदृश्यतेयस्मिन्सचित्केभुवनत्रयम् ५ एतद्वैपौरुषंरूपंभूःपादौद्यौःशिरोनभः ॥ नाभिःसूर्योक्षिणीनासेवायुःकर्णौदिशःप्रभोः ६ प्रजापतिःप्रजननमपानोमृत्युरीशितुः ॥ तद्बाहवोलोकपालामनश्चंद्रोभ्रुवोर्यमः ७ लज्जोत्तरोधरोलोभोद्युतिर्ज्योत्स्नास्मयोभ्रमः ॥ रोमाणिभूरुहाभूम्नोमेघाःपुरुषमूर्धजाः ८ यावानयंवैपुरुषोयावत्यासंस्थयामितः ॥ तावानसावपिमहान्पुरुषोलोकसंस्थया ९ कौस्तुभव्यपदेशेनस्वात्मज्योतिर्बिभर्त्यजः ॥ तत्प्रभाव्यापिनीसाक्षाच्छ्रीवत्समुरसाविभुः १० स्वमायांवनमालाख्यांनानागुणमयींदधत् ॥ वासश्छंदोमयंपीतंब्रह्मसूत्रंत्रिवृत्स्वरम् ११ बिभर्तिसांख्यंयोगंचदेवोमकरकुंडले ॥ मौलिंपदंपारमेष्ठ्यंसर्वलोकनमस्कृतम् १२ अव्याकृतमनंताख्यमासनंयदधिष्ठितम् ॥ धर्मज्ञानादिभिर्युक्तंसत्त्वंपद्ममिहोच्यते १३ ओजःसहोबलयुतंमुख्यतत्त्वंगदांदधत् ॥ अपांतत्त्वंदरवरंतेजस्तत्त्वंसुदर्शनम् १४

पौरुषंरूपंपुरुषसन्निधानयोग्यप्रतिमारूपं येरंगादिकंकल्पयंतितानाह भूरिति अत्रविवरणपूर्ववदूह्यं ६ प्रजापतिर्दक्षःप्रजननमुपस्थ ७ उत्तरोष्ठोलोभःलज्जाअधरोष्ठोद्युतिःस्वरूपकांतिः ज्योत्स्नाभ्रमोभ्रांतिःस्मयोदर्पविशेषः एतावतीअंगकल्पना ८ सोयंपुरुषःब्रह्मांडाख्यःलोकसंस्थयायावत्यासंस्थयामितःपरिमितोसौमहान्पुरुषस्तदंतरस्थपुरुषोभगवानपितावान्तावत्परिमाणोपेतः ९ उपांगान्याह कौस्तुभेति अजोविष्णुःस्वात्मज्योतिःज्योतिःस्वरूपःयद्वा स्वाधीनब्रह्माख्यज्योतिः श्रीरित्यध्याहार्यंसाक्षाच्छ्रीस्तस्यश्रीवत्सस्यप्रभाव्याप्नोतीतितत्प्रभाव्यापिनीतितादृशंश्रीवत्समुरसाबिभर्ति १० स्वांमायांश्रियंनानावर्णगुणमयीं छंदोमयंवेदस्वरूपं त्रिवृत्त्रिवर्णात्मकंस्वरंप्रणवलक्षणंब्रह्मसूत्रंदधत् ११ सांख्यंज्ञानंयोगंकर्मएतद्द्वयाख्येमकरकुंडले पारमेष्ठ्यंपदस्थानंमौलिंकिरीटम् १२ यदधिष्ठितमासनंपीठंतदनंताख्यंअव्याकृतंविकाररहितंसत्त्वसत्त्वगुणाभिमानिनीश्रीःपद्मम् १३ मुख्यतत्त्वंमुख्यप्राणरूपंगदांदधत् १४

नमोनिभमाकाशवन्नीलवर्णनमस्तत्वरूपमसिंनंदकंतमोमयंतमोगुणवदाच्छादनकरंचर्मंदधत् पुण्यकर्मस्वरूपेइषुधीच १५ अस्यहरेःस्यंदनमाकृतिःपृथिवअस्याभिव्यक्तिः तन्मात्राणिशब्दादीनि इंद्रियार्थाःकर्मेंद्रियविषयाःक्रियामताः विसर्गादीनिकर्माणिज्ञातव्यानि १६ देवयजनंहरेःपूजास्थानं चक्राब्जादिकंमंडल आत्मनःपरमात्मनःसकाशात्संस्कारःशरीरशुद्धिर्दीक्षादीक्षयाहिदेहशुद्धिः भगवतःपरिचर्याआत्मनःस्वस्यदुरितक्षयः पापनाशनं १७ भगवान्पूज्यःभगशब्दात्माभगशब्दस्वरूपऐश्वर्यादिगुणस्वरूपइत्यर्थः धर्मयशआख्येचामरव्यजने १८ निजधामतद्वैकुंठंतदभिमानिदेवता आतपत्रंत्रिवृच्छिवियोवेदः सुपर्णाख्योयज्ञंपुरुषंयज्ञपुरुषंवहति १९ साक्षादनपायिनीनित्यावियोगिनीश्रीर्हरेरात्मभूतार्धदेहानाम विष्वक्सेनःपार्षदाधिपोविदितःतंत्रमूर्तिः तंत्रग्रंथाभिमानी २० अष्टौनंदादयोद्वास्थाःहरेरणिमाद्यागुणास्तदाश्रिताःमूर्तिव्यूहेमूर्तिस्थापनेवासुदेवःसंकर्षणप्रद्युम्नोनिरुद्धःस्वयमभिधीयते २१ सभगवानेवविश्वादिशब्दवाच्यइतिभाष्यते अर्थेंद्रियाशयज्ञानैःवृत्तिभिः अर्थज्ञानलक्षणवृत्त्याजाग्रदवस्थयाविश्वःमनआदींद्रियगतवासनालक्षणज्ञानवृत्त्यास्वप्नावस्थयातैजसः आशयःसुषुप्तिस्तदवस्थाज्ञानलक्षणवृत्त्यावर्तमानःप्राज्ञःएतावंतंकालंसुखमस्वाप्संइत्यनुभवात् किमेतेभिन्नाइत्यत्राह ततइतिततोव्याप्तोऽपरिच्छिन्नइत्यर्थः बहुत्वसंख्यामात्रयोगित्वंनतुमिथोभिन्नत्वम् २२ अंगादिकथनस्योपयोगमाह अंगेति अंगा

नभोनिभंनभस्तत्वमसिंचर्मतमोमयम् ॥ कालरूपंधनुःशार्ङ्गंतथाकर्ममयेषुधी १५ इंद्रियाणिशरानाहुराकूतिरस्यस्यंदनम् ॥ तन्मात्राण्यस्याभिव्यक्तिरिंद्रियार्थाःक्रियामताः १६ मंडलंदेवयजनंदीक्षासंस्कारआत्मनः ॥ परिचर्याभगवतआत्मनोदुरितक्षयः १७ भगवान्भगशब्दार्थंलीलाकमलमुद्वहन् ॥ धर्मंयशश्चभगवान्चामरव्यजनेभजत् १८ आतपत्रंतुवैकुंठंनिजधामाकुतोभयम् ॥ त्रिवृद्वेदःसुपर्णाख्योयज्ञंवहतिपूरुषम् १९ अनपायिनीभगवतीश्रीःसाक्षादात्मनोहरेः ॥ विष्वक्सेनस्तंत्रमूर्तिर्विदितःपार्षदाधिपः २० नंदादयोष्टौद्वाःस्थाश्चतेणिमाद्याहरेर्गुणाः ॥ वासुदेवःसंकर्षणःप्रद्युम्नःपुरुषःस्वयम् ॥ अनिरुद्धइतिब्रह्मन्मूर्तिव्यूहेभिधीयते २१ सविश्वस्तैजसःप्राज्ञस्तुरीयइतिवृत्तिभिः ॥ अर्थेंद्रियाशयज्ञानैर्भगवान्भाव्यतेततः ।२२ अंगोपांगायुधाकल्पैर्भगवांस्तच्चतुष्टयम् ॥ बिभर्तिस्मचतुर्मूर्तिर्भगवान्हरिरीश्वरः २३ द्विजऋषभसएषब्रह्मयोनिःस्वयंदृक्स्वमहिमपरिपूर्णोमाययाचस्वयैतत् ॥ सृजतिहरतिपातीत्याख्ययानावृताक्षोविसृजतइवनिरुक्तस्तत्परैरात्मलभ्यः २४

दिशब्दवाच्यवासुदेवाद्यावरणैर्भगवान्पूज्यइत्येतदर्थंत्वेनकथनमित्यर्थः अंगादिचतुष्टयस्यापिहरिरेवाधारइत्याह तदिति चतुर्मूर्तिर्भगवानंगादिचतुष्टयंबिभर्त्तितत्रायंविभागःअंगात्मकाःवासुदेवाद्याःस्वयमुपांगादिषुब्रह्मादिषुसंनिहितत्वेनपूजाकालेतथास्मरणार्थंस्मेत्युक्तं भगवान्वसिष्ठाद्यन्यतमोनेत्याह हरीरिति हरिरपिपुरंदराद्यन्यतमःकिनस्यादित्यतउक्तमीश्वरइति सोपिसदाशिवःस्यादतउक्तंचतुर्मूर्तिरिति सोष्टमूर्तिरितिप्रसिद्धः २३ यद्वेदांतवेद्यंतदेवात्रपुरुषरूपेणोच्यते तस्मादिदंमुमुक्षुभिःश्रद्धयोपास्यमितिश्लोकद्वयेनाह द्विजऋषभेति हेद्विजवृषभ तत्परैस्तद्भक्तैः आत्मलभ्यःआत्मनियमनसिलभ्यःप्रकाश्योभवति यद्वात्मनैवस्वानुग्रहेणैवलभ्यःप्राप्यःयमेवैषवृणुतेतेनलभ्यइतिश्रुतेः किंलक्षणकःकोयंपुरुषइतितत्राह माययेति स्वयामाययास्वेच्छयैवसृजतीत्याद्याख्यणानिरुक्तःकथंसृजतीतिस्रष्टाहरतीतिहरःपातीतिपाता स्रष्टापातातथैवात्तानिखिलस्यैकएवत्वित्यादेः अत्रकिंप्रमाणंतत्राह ब्रह्मेति ब्रह्मवेदादिशब्दराशियोनिर्ज्ञप्तिकारणंयस्यसतथा वेदादिशब्दराशिरस्मिन्नर्थेमानमित्यर्थः चतुर्मुखस्यापिसृष्ट्यादिकर्तृत्वस्यप्रमितत्वात्कथंहरेरेवेतिनिश्चीयते ब्रह्मादेवानांप्रथमःसंबभूवेतिश्रुतिरित्यतोवाह ब्रह्मेति ब्रह्मणश्चतुर्मुखस्ययोनिःकारणं योब्रह्माणंविदधातीतिश्रुतेः लोकवत्परोपदेशेनकर्मणिनप्रवर्तते किंतुस्वरूपज्ञानेनेत्याशयेनाह स्वयंदृगिति स्वयंभूतज्ञानत्वेपिकर्मण्यपेक्षाविनाभूतंदृष्टमत्राह स्वमहिमेति स्वेमहिम्नीतिश्रुतेः स्वयंप्रकाशज्ञानस्यप्रज्ञोदयानस्य

मेघाद्यावरणैनैवहरेर्ज्ञानस्यापितस्यादित्यत्राह अनावृताक्षइति आवरणरहितदृष्टिःकथंप्रकाशयतइत्यत्राह विसृजतइति स्रष्टायःमित्युपासमानस्यविविधंसृजतइतिप्रकाशतेसं॰र्गयमिति॰॰॰संहर
तीव रक्षतीव इतरस्यउपलक्षणमेतत् याम्यान्गुणानुपसंहृत्यो गस्तेतत्तद्गुणत्वेनप्रकाशतइति २४ श्रीकृष्णकृष्णेत्युक्तार्थः २५ एवमुपास्तिंकुर्वतःफलमाह यइदमिति कल्पेउषसिमहापुरुषलक्षणं
जपतिसजन्माद्हृदयगुहायांशेतइतिहृदयगुहाशयंब्रह्मजानाति कुशेशयमितिवत् ॥ २६ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेविजयध्वजकृतटीकायांदशमोऽध्यायः ॥ १० ॥ सर्वोपास्यत्वेप्या
दित्यरथस्यैवहरेर्गृहस्थैर्विशेषतउपास्तिःकर्तव्येतितत्स्थितिप्रकारंकथयत्यस्मिन्नध्याये तत्रशौनकः पृच्छति शुकइति शुकोभगवान्विष्णुरातायपृथङ्नामरूपादिसप्तकोगणोमासिमासिनानानामानं
सूर्यंभगवंतंनिषेवमाणः सौरेःसूर्यस्याविद्यमानेस्यदनेरथेनानावसतितथा अन्येचऋषयोगंधर्वाप्सरसोनागाइत्यादिपंचमस्कंधेयदाह १ तदातेषांपृथङ्नामानिपृथक्कर्माणिचानुक्तान्यत श्रद्दधाना
नांनोस्माकंतानिब्रूहीत्यन्वयः सूर्यात्मनःसूर्यांतर्यामिणोहरेर्व्यूहंस्थितिंविशेषंचवद सूर्यात्मनोहरेःपरितःस्थितंतेषांव्यूहंपृथक्पृथगितिशेषइतिवा २ अयंकल्पोहरेर्बुद्धिपूर्वप्रणीतत्वान्नमिथ्याभूत
इतिभावेनाह अनादीति लोकंतंत्रयतिव्यापारयतीतिलोकतंत्रोलोकप्रवृत्तिहेतुरयंसूर्यादिः लोकेषुपरिवर्ततेउदयादिनिमित्तव्यापारायउदयादिकंगच्छतीत्यर्थः कीदृशः सर्वदेहिनामात्म

श्रीकृष्णकृष्णसखवृष्णिवृषावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ॥ गोविंदगोद्विजसुरार्तिहरावतारतीर्थश्रवःश्रवणमंगलपाहिभृत्यान् २५ यइदंकल्पउ
त्थायमहापुरुषलक्षणम् ॥ तच्चित्तःप्रयतोजप्त्वाब्रह्मवेदगुहाशयम् ॥ २६ ॥ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेदशमोऽध्यायः ॥ १० ॥ शौनकउ
वाच ॥ शुकोयदाभगवान्विष्णुरातायपृच्छते ॥ सौरोगणोमासिमासिनानावसतिसप्तकः १ तेषांनामानिकर्माणिनियुक्तानामधीश्वरैः ॥ ब्रूहिनःश्रद्दधा
नानांव्यूहंसूर्यात्मनोहरेः २ सूतउवाच॥ अनाद्यविद्ययाविष्णोरात्मनःसर्वदेहिनाम् ॥ निर्मितोलोकतंत्रोयंलोकेषुपरिवर्तते ३ एकएवहिलोकानांसूर्यआ
त्मादिकृद्धरिः ॥ सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ४ कालोदेशःक्रियाकर्ताकारणंकार्यमागमः ॥ द्रव्यंफलमितिब्रह्मन्नवधोक्तोजयाहरिः ५ मध्वादि
षुद्वादशसुभगवान्कालरूपधृक् ॥ लोकतंत्रायचरतिपृथग्द्वादशभिर्गुणैः ६

नोविष्णोःअनाद्यविद्याकारणशून्येच्छयानिर्मितः सूर्याचंद्रमसौधातायथापूर्वमकल्पयदितिश्रुतेः ३ सरतीतिसूर्यइतिसूरिप्राप्यत्वात्सूर्यइतितच्छब्दप्रवृत्तिनिमित्तस्यतदेकाधीनत्वान्मुख्य
कर्ताहरिःएकएवेत्याह एकएवेति लोकानामुभयेषांआत्मासूर्यआत्माजगतस्तस्थुषश्चेतिश्रुतिः दिनस्यादिकृत्कृतीच्छेदनइतिधातोर्दिनादिच्छित् अस्तकर्ताच प्रातरुत्थायाथसंध्यामुपासीते
तिश्रुतेः सर्ववेदोक्तक्रियामूलमतएवऋषिभिर्बहुधोदितः उदितमितिपाठेतत्स्वरूपंनानात्वेनकथितं अत्रद्वादशसूर्येष्वेकःस्वयंहरिरन्यत्रांतर्यामित्वेनेतिविशेषः ४ नानात्वमुपपादयति का
लइति अजयामाययानाद्यविद्ययानवधोक्तःकालःप्रातरादिः देशःसमादिः क्रियाअनुष्ठानं कर्ताब्राह्मणादिः कारणमिंद्रियं कार्यंदेहः द्रव्यंचर्वादि भूतपंचकंवा आगमोवेदादिशास्त्रं फलंस्वर्गा
दि कालादिपुस्थित्वातत्कर्मकारकत्वेनकालादिशब्दवाच्यत्वेननवधाहरिरुक्तः इतिज्ञातव्यम् ५ एकएवहरिःसर्वप्रेरयतीत्युक्ततत्प्रकारंदर्शयति मध्वादिष्विति कालरूपधृक्भगवान्लोकतंत्रायलोक
व्यापारायमध्वादिषुचैत्रादिषुद्वादशसुमासेषुद्वादशभिर्गुणैर्द्वादशविधकालगुणैःपृथक्पृथक्चरतीत्यन्वयः ६

१ गोपवनिताव्रजभृत्यगीतेतिपाठांतरम् ।

इदानींतेषांनामान्याह धातेत्यादिना धातासूर्यः कृतस्थलीअप्सरा:हेतीराक्षस: वासुकिर्नाग: रथकृत्तक्षा पुलस्त्य:ऋषि: तुंबुरुर्गंधर्वः अमीधात्रादयोमधुमासंनयंति तेउक्तक्रियाप्रवर्तकत्वेनत न्यासमतिपारयंति ७ अर्यमासूर्यः पुलहोऋषिः अथौजा:तक्षा प्रहेतीराक्षस:पुंजकस्थलीअप्सरा:नारदोगंधर्व:कच्छनीरोनाग: एतेमाधवमासाधिपतिमाधवनामाननयंति शरणंप्राप्योपास ते एवमुत्तरत्राप्यनुसंधेयं ८ मित्र:सूर्य:अत्रि.ऋषि:पौरुषेयोराक्षस:तक्षकोनाग·मेनकाप्सरा: हाहागंधर्व:रथस्वनस्तक्षा ९ वसिष्ठऋषि.वरुण·सूर्यः रंभाप्सरा· सहजन्योराक्षस· हूहूर्गंधर्वः शुक्रोनाग:चित्रस्वनस्तक्षा १० इंद्र:सूर्य·विश्वावसुर्गंधर्व:स्रोतातक्षा एलापत्रोनाग: अंगिराऋषि: प्रम्लोचाप्सरा: स्वर्योनामराक्षस. ११ विवस्वानादित्य:उग्रसेनोगंधर्व: व्याघ्रोराक्षसः आसारगणस्तक्षा भृगुर्ऋषि: अनुम्लोचाअप्सरा: शंखपालोनाग: १२ पूषाआदित्य. धनंजयोनाग: वातोराक्षस·सुषेणस्तक्षा सुरुचिर्गंधर्व: घृताच्यप्सरा: गौतमोऋषि: १३ ऋतुरप्स रा: वर्चागंधर्व:भरद्वाजऋषि:पर्जन्यआदित्य:सेनजित्तक्षा विश्वोराक्षस: ऐरावतोनाग: १४ अंशुरादित्य:कश्यपऋषि:तार्क्ष्यस्तक्षा धृतसेनोगंधर्व: उर्वशीअप्सरा: विद्युच्छंकु.राक्षस:महाशंखो

धाताकृतस्थलीहेतिर्वासुकीरथकृन्मुने ॥ पुलस्त्यस्तुंबुरुरितिमधुमासंनयंत्यमी ७ अर्यमापुलहोथौजाःप्रहेतिःपुंजकस्थली ॥ नारदःकच्छनीर श्चनयंत्येतेस्ममाधवम् ८ मित्रोत्रिःपौरुषेयोथतक्षकोमेनकाहाहाः ॥ रथस्वनइतिह्येतेशुक्रमासंनयंत्यमी ९ वसिष्ठोवरुणोरंभासहजन्यस्तथाहूहूः ॥ शुक्रश्चित्रस्वनश्चैवशुचिमासंननंत्यमी १० इंद्रोविश्वावसुःस्रोताएलापत्रस्तथांगिराः ॥ प्रम्लोचाराक्षसःस्वर्योनभोमासंनयंत्यमी ११ विवस्वानुग्रसे नश्चव्याघ्रआसारणोभृगुः ॥ अनुम्लोचाशंखपालोनभस्याख्यंनयंत्यमी १२ पूषाधनंजयोवातःसुषेणःसुरुचिस्तथा ॥ घृताचीगौतमश्चेतितपोमासंनयं त्यमी १३ ऋतुर्वर्चाभरद्वाजःपर्जन्यःसेनजित्तथा ॥ विश्वऐरावतश्चैवतपस्याख्यंनयंत्यमी १४ अथांशुःकश्यपस्तार्क्ष्योधृतसेनस्तथोर्वशी ॥ विद्युच्छंकुर्महाशंखःसहोमासंनयंत्यमी १५ भगःस्फूर्जोरिष्टनेमिरूर्णआयुश्चपंचमः ॥ कर्कोटकःपूर्वचित्तिःसहस्याख्यंनयंत्यमी १६ त्वष्टाऋचीकतनयः कंबलश्चतिलोत्तमा ॥ ब्रह्मरातोथशतजिद्धृतराष्ट्रइषंभराः १७ विष्णुरश्वतरोरंभासूर्यवर्चाश्चसत्यजित् ॥ विश्वामित्रमुखाएतऊर्जमासंनयंत्यमी १८ एता भगवतोविष्णोरादित्यस्यविभूतयः ॥ स्मरतांसंध्ययोर्नृणांहरंत्यंहोदिनेदिने १९ द्वादशस्वपिमासेषुदेवोसौषड्भिरस्यवै ॥ चरन्समंतात्तनुतेपरत्रेहचसन्मतिम् २० सामर्ग्यजुर्भिस्तल्लिंगैर्ऋषयःसंस्तुवंत्यमुम् ॥ गंधर्वास्तंप्रगायंतिनृत्यंत्यप्सरसोग्रतः २१

नाग: १५ भगआदित्य: स्फूर्जोराक्षस.अरिष्टनेमिर्ऋषि:ऊर्णोगंधर्व: आयुस्तक्षा कर्कोटकोनाग: पूर्वचित्तिरप्सरा: १६ त्वष्टाआदित्य.ऋचीकतनयोराक्षस: कंबलाख्योनाग:तिलोत्तमा प्सरा: ब्रह्मरातऋषि.शतजित्तक्षा धृतराष्ट्रोगंधर्वइषंबिभ्रतीतिइषंभरा. इषमासप्रणेतारइत्यर्थ: १७ विष्णुरादित्य: अश्वतरोनाग:रंभाप्सरा: सूर्यवर्चागंधर्व: अश्वोराक्षस· सत्यजित्तक्षा विश्वामित्रऋषि. १८ उपसंहरन्नेवतत्कथनप्रयोजनमाह एताइति आदित्यांतर्यामिणोहरे: ध्येय:सदासवितृमंडलमध्यवर्तीइतिवचनमत्रप्रमाणं १९ एतदभिप्रेत्यपुनरपिलोकद्वयोपभोज्य फलमाह द्वादशस्विति द्वादशसुमासेषुषड्भिर्गणैर्धात्रादीनृतषट्संख्यामुपगतै:सहसमंताच्चरन् देवोस्यसेवकस्येहपरत्रचलोकेचसन्मतिंनिर्दु:खस्वानंदानुभवलक्षणांतनुते यथायोग्यंविस्तृत्यददाती त्यर्थ २० इदानींतेषांकर्माण्याह सामेति सामर्ग्यजुर्भिस्तल्लिंगैस्तल्लक्षणैस्तत्तत्स्वगमकैर्वाक्यैर्वाउभक्षंतिसम्यग्नियोजयंति ग्रामण्यस्तक्षाण.नैर्ऋताराक्षसा: २१

१ चैत्रं । २ वैशाखं । ३ ज्येष्ठं । ४ आषाढं । ५ श्रावणं । ६ भाद्रपदं । ७ माघं । ८ फाल्गुनं ९ मार्गशीर्षं । १० पुष्यमासं । ११ अश्विनमासं । १२ कार्तिकमासं । मासक्रमानुल्लंघनंकौमौक्तिदिशा ।

२१ एवंगणनमंतरेणान्येपिसंतीत्याह वालखिल्याइति २३ अध्यायार्थमुपसंहरति एवमिति तपतिआवर्तयति २४ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेविजयध्वजकृतटीकायांएकादशोध्यायः ॥११॥ उपसंहारमुखेनानुसंधातुंद्वादशस्कंधात्मकंभागवतार्थंसंक्षिप्यकथयत्यस्मिन्नध्यायेएतद्वइत्यादिना एताद्विष्णोश्चरितं तद्वक्तव्यत्वेहेतुमाह भवद्भिरिति प्रश्नेति विस्मितदंसूचयति नराणामितिन राणांमध्येसतांपुरुषाणांमध्येश्रोतुमुचितं अनेनाधिकारसामर्थ्यंसूचितं १ २ श्रोतव्यार्थेमुख्यहेतुमाह अत्रेति अत्रश्रीभागवतेकस्मान्मुख्यत्वमत्राह सर्वेति वृत्रादिसर्वपापहंतृत्वामिंद्रस्याप्यस्तीत्य तउक्तंनारायणइति नायसांकेतिकनारायणइत्याह हृषीकेशइति हृषीकाणामीशोजीवोपिस्यादतआह भगवानिति ऐश्वर्यादिगुणसमुद्रोहिभगवान्एवंविधोनान्यइत्याह सात्वतांपतिरिति ३ सगुण

उन्नह्यंतिरथंनागाग्रामण्योरथयोजकाः ॥ चोदयंतिरथंपृष्ठेनैर्ऋतावलशालिनः २२ वालखिल्याःसहस्राणिषष्टिर्ब्रह्मर्षयोमलाः ॥ पुरतोभिमुखंयांतिस्तु वंतःस्तुतिभिर्विभुम् २३ एवंह्यनादिनिधनोभगवान्हरिरीश्वरः ॥ कल्पेकल्पेस्वमात्मानंव्यूह्यलोकानवत्यजः २४ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधे एकादशोध्यायः ॥११॥ सूतउवाच ॥ नमोधर्मायमहतेनमःकृष्णायवेधसे ॥ ब्राह्मणेभ्योनमस्कृत्यधर्मान्वक्ष्येसनातनान् १ एतद्वःकथितंविप्राविष्णोश्च रितमद्भुतम् ॥ भवद्भिर्यदहंपृष्टोनराणांपुरुषोचितम् २ अत्रसंकीर्त्यतेसाक्षात्सर्वपापहरोहरिः ॥ नारायणोहृषीकेशोभगवान्सात्वतांपतिः ३ यत्तद्ब्रह्म परंगुह्यंजगतःप्रभवाप्ययम् ॥ ज्ञानंचसदुपाख्यानंप्रोक्तंविज्ञानसंयुतम् ४ भक्तियोगश्चव्याख्यातोवैराग्यंचतदाश्रयम् ॥ पारिक्षितमुपाख्यानंनारदाख्या नमेवच ५ प्रायोपवेशोराजर्षेर्विप्रशापात्परीक्षितः ॥ शुकस्यब्रह्मर्षभस्यसंवादश्चपरीक्षितः ६ योगधारणयोत्क्रांतिःसंवादोनारदाजयोः ॥ अवतारानु गीतंचसर्गःप्राधानिकोग्रतः ७ विदुरोद्धवसंवादःक्षत्तृमैत्रेययोस्ततः ॥ पुराणसंहिताप्रश्नोमहापुरुषसंस्थितिः ८ ततःप्राकृतिकःसर्गःसप्तवैकृतिकास्तथा ॥ ततोब्रह्मांडसंभूतिर्वैराजःपुरुषोयतः ९ कालस्यस्थूलसूक्ष्मस्यगतिःपद्मसमुद्भवः ॥ भुवउद्धरणेंभोधेर्हिरण्याक्षवधोयतः १० ऊर्ध्वतिर्यगधःसर्गोरुद्र सर्गस्तथैवच ॥ अर्धनारीनरस्याथयथास्वायंभुवोमनुः ११ शतरूपाचयास्त्रीणामाद्याप्रकृतिरुत्तमा ॥ संतानोधर्मपत्नीनांकर्दमस्यप्रजापतेः १२ अवतारोभगवतःकपिलस्यमहात्मनः ॥ देवहूत्याश्चसंवादःकपिलेनचधीमता १३ नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम् ॥ ध्रुवस्यचरितंपश्चात्पृ थोःप्राचीनबर्हिषः १४

मेवोक्तंनिर्गुणमतंनेत्याह यत्तदिति जगतःप्रभवाप्ययकर्तृत्वात्परंगुह्यंब्रह्मतत्प्रोक्तंतद्विषयेज्ञानंसतांउपाख्यानयेनतत् ४ साभक्तिराश्रयोयस्यतत्तदाश्रयं अत्रेत्येतत्प्रतिवाक्यमनुसंधातव्यम् ५ ६ योग धारणयाब्रह्मरंध्रस्फरणलक्षणया नारदाजयोर्नारदब्रह्मणोः अवताराणामनुगीतंकथनं प्राधानिकःप्रकृतिसर्गःसिसृक्षुत्वविशेषः ७ ८ प्राकृतिकःप्रकृतिविकृतः तेसप्तमहदहंकारपंचभूतानीतिवैकृतिकाः इंद्रियविषयाःयतोयत्रब्रह्मांडे ९ पद्मसमुद्भवोनाभेरितिशेषःअंभोधेर्भुवउद्धरणाउद्धारः १० ऊर्ध्वतिर्यगधःसर्गःदेवतिर्यगसुरसृष्टिःअर्धनारीनरस्यब्रह्मण.सकाशात्स्वायंभुवोमनुर्यथोत्पन्नस्तथा ११ स्त्रीणांमध्येआद्याप्रकृतिःस्त्रीसाशतरूपाचयथोत्पन्नातथा १२ १३ नवब्रह्मसमुत्पत्तिः नवप्रजापतीनांमरीच्यादीनांसकाशात्सृष्टिःतेषामुत्पत्तिर्वा १४

१५ १६ यतःसंततेर्देवासुरनरादयःआसन् १७ मन्वंतरानुचरितं मन्वंतरराजानुचरितं १८ १९ २० तारोपाख्यानंताराथादैत्याउपाख्यानम् ११ सुकन्यायाश्चरितं ककुत्स्थस्य

नारदस्यचसंवादस्ततःप्रैयव्रतंद्विजाः ॥ नाभेस्ततोनुचरितमृषभस्यभरतस्यच ॥ द्वीपवर्षसमुद्राणांगिरिनद्युपवर्णनम् १५ ज्योतिश्चक्रस्यसंस्थानंपाताललनरकास्थितिः ॥ दक्षजन्मप्रचेतोभ्यस्तत्पुत्राणांचसंततिः १६ यतोदेवासुरनरास्तिर्यङ्नगखगादयः ॥ त्वाष्ट्रस्यजन्मनिधनंपुत्रयोश्चदितेर्द्विजाः १७ दैत्येश्वरस्यचरितंप्रह्लादस्यमहात्मनः ॥ मन्वंतरानुचरितंगजेंद्रस्यविमोक्षणम् १८ मन्वंतरावतराश्चविष्णोर्हयशिरादयः ॥ कौर्म्यंमात्स्यंनारसिंहंवामनंचजगत्पतेः १९ क्षीरोदमथनंतद्वदमृतार्थेदिवौकसाम् ॥ देवासुरमहायुद्धंराजवंशानुकीर्तनम् २० इक्ष्वाकुजन्मतद्वंशःसुद्युम्नस्यमहात्मनः ॥ इलोपाख्यानमत्रोक्तंतारोपाख्यानमेवच २१ सूर्यवंशानुकथनंशशादाद्यानृपादयः ॥ सौकन्यमथशार्यातंककुत्स्थस्यचधीमतः २२ खट्वांगस्यचमांधातुःसौभरेःसगरस्यच ॥ कोशलेंद्रस्यचरितमद्भुतंकिल्बिषापहम् २३ निमेरंगपरित्यागोजनकानांचसंभवः ॥ रामस्यभार्गवेंद्रस्यनिःक्षत्रीकरणंभुवः २४ ऐलस्यसोमवंशस्यययातेर्नहुषस्यच ॥ दौष्यंतेर्भरतस्यापिशंतनोस्तत्सुतस्यच २५ ययातेर्ज्येष्ठपुत्रस्ययदोर्वंशोनुकीर्तितः ॥ यत्रावतीर्णोभगवान्कृष्णाख्योजगदीश्वरः २६ वसुदेवगृहेजन्मतस्यवृद्धिश्चगोकुले ॥ तस्यकर्माण्यपाराणिकीर्तितान्यसुरद्विषः २७ पूतनासुपयःपानंशकटोच्चाटनंशिशोः ॥ तृणावर्तस्यनिष्पेषस्तथैवबककवत्सयोः २८ धेनुकस्यसहभ्रातुःप्रलंबस्यचसंक्षयः ॥ गोपानांचपरित्राणंदावाग्नेःपरिसर्पतः २९ दमनंकालियस्याहेर्महाहेर्नंदमोक्षणम् ॥ व्रतचर्याचकन्यानांयत्रतुष्टोव्रतैःप्रभुः ३० प्रसादोयज्ञपत्नीभ्योविप्राणांचानुतापनम् ॥ गोवर्धनोद्धारणंचशक्रस्यसुरभेरथ ३१ यज्ञाभिषेकःकृष्णस्यस्त्रीभिःक्रीडाचरात्रिषु ॥ शंखचूडस्यदुर्बुद्धेर्वधोरिष्टस्यकेशिनः ३२ अक्रूरागमनंपश्चात्प्रस्थानंरामकृष्णयोः ॥ व्रजस्त्रीणांविलापश्चमथुरालोकनंततः ३३ गजमुष्टिकचाणूरकंसादीनांतथावधः ॥ मृतस्यानयनंसूनोःपुनःसांदीपनेर्गुरोः ३४ मथुरायांनिवसतायदुचक्रस्ययत्प्रियम् ॥ कृतमुद्धवरामाभ्यांयुतेनहरिणाद्विजाः ३५ जरासंधसमानीतसैन्यस्यबहुशोवधः ॥ पातनंयवनेंद्रस्यकुशस्थल्यानिवेशनम् ३६ आदानंपारिजातस्यसुधर्मायाःसुरालयात् ॥ रुक्मिण्याहरणंयुद्धेप्रमथ्यद्विषतोहरेः ३७ हरस्यजृंभणंयुद्धेबाणस्यभुजकृंतनम् ॥ प्राग्ज्योतिषपतिंहत्वाकन्यानांहरणंचयत् ३८ चैद्यपौंड्रकशाल्वानांदंतवक्रस्यदुर्मतेः ॥ शंबरोद्विविदःपीठोमुरःपंचजनादयः ३९ माहात्म्यंचवधस्तेषांवाराणस्याश्चदाहनम् ॥ भारावतरणंभूमेर्निमित्तीकृत्यपांडवान् ४० विप्रशापापदेशेनसंहारःस्वकुलस्यच ॥ वसुदेवस्यसंवादोनारदेनसुरर्षिणा ४१

चरितं २२ २३ २४ सोमवंशो
द्ववस्यैलस्येलापुत्रस्यचरितं २५ २६ २७ २८ २९ यत्रव्रतचर्यायाम् ३० ३१ यज्ञःपूजाअभिषेकःतयोर्द्वैक्यम् ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ दाहनंदहनम् ४० ४१

यत्रोद्धववासुदेवसंवादे आत्मविद्या परमात्मविद्याः अखिला अनुवर्णितत्वेनोक्ताः वर्णाश्रमविनिर्णयश्चोक्तः ४२ युगलक्षणं तदनुरूपा वृत्तिश्च उपप्लवो नाशः राजमार्गे भेदे नोत्पत्तिस्त्रिविधा प्राकृतिकी नैमित्ति कीनित्याचा ४३ विष्णुदत्तस्य परीक्षितः ४४ महापुरुषविन्यासः महापुरुषस्यांगोपांगादिस्थितिविशेषः सूर्यस्य स्थितिश्च इतिसमाप्तिपर्यंतं सर्वमुक्तं ४५ श्रुत्वाश्रुतं कृत्वा ४६ अतिशयितो वातः प्रभंस नीरं नीरदमिव ४७ अधोक्षजो भगवान्याभिर्गीर्भिर्न कीर्त्यते ता गिरोऽसत्कथामृषा निष्फलाः असतीरसत्योऽमंगलाः यद्वचो भगवद्गुणोदयं तदेव सत्यं अमोघफलम् ४८ पुनरपि स्तौति तदेवेति तदेव पुण्यं पुण्य करं रुचिरं सुंदर महानुत्सवो येन तत्तथा ४९ नयद्वच इत्यादि श्लोकत्रयं व्याख्यातार्थं ५० ५१ ५२ ननु वर्णाश्रमाचारादिना निःश्रेयसं स्याद्वर्णाश्रमाचारयुतो गृहस्थोऽपि विमुच्यत इत्यतोऽच्युतभाववर्जित

उद्धवस्यच संवादो वासुदेवस्य चाद्भुतः ॥ यत्रात्मविद्या ह्यखिलाः प्रोक्ता धर्मविनिर्णयाः ॥ ततो मर्त्यपरित्याग आत्मयोगानुभावतः ४२ युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः ॥ चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा ४३ देहत्यागश्च राजर्षेर्विष्णुदत्तस्य धीमतः ॥ शाखाप्रणयनमृषेर्मार्कंडेयस्य सत्कथाः ४४ महापुरुषविन्यासः सूर्यस्य जगदात्मनः ॥ इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोऽहमिहास्मि वः ४५ लीलावतारकर्माणि कीर्तितानीह सर्वशः ॥ पतितः स्खलितो वा र्तः क्षुत्त्वा वा विवशो ब्रुवन् ॥ हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ४६ संकीर्त्यमानो भगवाननंतः श्रुतानुभावो व्यसनं हि पुंसाम् ॥ प्रविश्य चित्तं विधुनोत्य शेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ४७ मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः ॥ तदेव सत्यं तदु हैव मंगलं तदेव पुण्यं भगवद्गुणोदयम् ४८ तदेव पुण्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम् ॥ तदेव शोकार्णवशोषणं नृणां यत्रोत्तमश्लोकयशोऽनुगीयते ४९ नयद्वचश्चित्रपदं हरेर्यशो जगत्पवि त्रं प्रगृणीत कर्हिचित् ॥ तद्ध्वांक्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ५० स वाग्विसर्गो जनताघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि ॥ ना मान्यनंतस्य यशोंऽकितानि यच्छृण्वंति गायंति गृणंति साधवः ५१ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम् ॥ कुतः पुनः शश्वदभद्रमीश्वरे नचार्पितं कर्म यदप्यकारणम् ५२ यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु ॥ अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ५३ अविस्मृतिः कृष्णपदारविंदयोः क्षिणोत्यभद्राणि शमं तनोति च ॥ सत्त्वस्य शुद्धिं परमात्मभक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ५४ यूयं द्विजाग्र्या बत भूरि भागा यच्छश्वदात्मन्यखिलात्मभूतम् ॥ नारायणं देवमदेवमीशमबाह्यभावा भजताविवेश्य ५५ अहं च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात् ॥ प्रा योपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम् ५६ एतद्वः कथितं विप्राः कथनीयोरुकर्मणः ॥ माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ५७

त्राह यश इति यच्च अच्युतभाववर्जितस्तर्हि वर्णाश्रमाचारतपःश्रुतादिषु परः परिश्रमः यशःश्रियामेवार्थेन त्वात्यंतिकासिद्धये भवति ननु अच्युतभावः केन स्यादत्राह अविस्मृतिरिति गुणानुवादश्रवणादिभि रुद्भूताच्युतभक्तेः पुंसः श्रीधरपादपद्मयोरविस्मृतिः निरंतराभ्यासलक्षणं स्मरणं भवति ५३ सा कर्तुं किं करोति फलमित्याह अविस्मृतिरिति सत्त्वस्यांतःकरणस्य ५४ यूयमबाह्यभावा अनन्यभक्ताः अदेवं देवेभ्योऽन्यं नारायणं देवमात्मनि मनस्याविवेश्य भजतो तेन यस्मात्तस्माद्भूरिभागा अतिभाग्यवंतः ५५ अहं च भूरिभाग इति ध्वनयति अहं चेति भवद्भिरहं चात्मतत्त्वं संस्मारितः ममापीदमात्मतत्त्वमाम्नाय तः प्राप्तमित्याह श्रुतमिति प्रसंगोऽप्यनुकूल इत्याह प्रायेति ५६ ५७

यामंक्षणंचनान्यानंतरितार्थाद्वितीया आत्मानंमनः ५८ कालविशेषमाह द्वादश्यामिति ५९ देशविशेषमाह पुष्करइति पुष्करेवराहक्षेत्रे भयात्संसारभयात् ६० अत्रवेद१५॥ [भा०]
र्तितास्तेपिसंहितापाठादिकुर्वतोभीष्टानिददतीत्याह देवताइति ६१ किंचऋगादीन्यधीत्ययत्फलंस्यात्तदेतत्संहितामधीत्यस्यादित्याह ऋचइति मधुकुल्यामधुनद्यः मधुनद्यादिकथनंसुखवि
शेषार्थं ६२ नकेवलमैहिकंकिंतुमुक्तिरपीतिकथयति पुराणेति यद्विष्णोःपरमंपदंतद्व्रजेत् ६३ अंबुधिमेखलांभूमिम् ६४ इतरपुराणेभ्योस्यमाहात्म्याधिक्यात्फलाधिक्यंमाहात्म्याधिक्यंच
प्रतिपदंमत्यक्षरंचश्रीनारायणस्यगुणरागमातिपाकत्वेनेत्याह कलिमलेति कलिमलंसंसारंचकालयति नाशयतीतिकलिमलसंसृतिकालनः इतरत्रपुराणेषु इहपुराणे अशेषमूर्तिः कथाप्रसंगैः
६५ सूतोग्रंथावसानेपिगुरुनमस्कारंकरोति स्वसुखेति स्वातंत्र्यात्स्वःपरमात्मातन्निष्ठंसुखंस्वसुखंतेन निभृतंपूर्णंचेतोयस्यसतथा स्वरूपसुखश्चनिभृतज्ञानश्चस्वसुखनिभृतचेताः चेतोज्ञानमितिवातेन
सुखेनव्युदस्तान्यभावःनिरस्तान्यविषयबुद्धिःतेनविज्ञानेननिरस्तान्यज्ञानइतिवा अपिकृत्यकृत्योपि अजितस्यहरेरुचिरपालीलयाआकृष्टसारःविवशीकृताचित्तस्थैर्यःतस्यहरेःसंबंधि अतएवतत्त्वदीपकं

यश्चसंश्रावयेन्नित्यंयामंक्षणमनन्यधीः ॥ श्रद्धावान्यश्चशृणुयात्पुनात्यात्मानमेवसः ५८ द्वादश्यामेकादश्यांवाशृण्वन्नायुष्यवान्भवेत् ॥ पठत्यनश्नन्प्रयतःपूतोभवतिपातकी ५९ पुष्करेमथुरायांचद्वारवत्यांयतात्मवान् ॥ उपोष्यसंहितामेतांपठित्वामुच्यतेभयात् ६० देवतामुनयःसिद्धाःपितरोमनवोनृपाः ॥ यच्छंतिकामान्बहुलान्शृण्वतोयेन्नकीर्तिताः ६१ ऋचोयजूंषिसामानिद्विजोधीत्यानुविंदते ॥ मधुकुल्याःपयःकुल्याघृतकुल्याश्चतत्फलम् ६२ पुराणसंहितामेतामधीत्यप्रयतोद्विजः ॥ प्रोक्तंभगवताविष्णोस्तत्पदंपरमंव्रजेत् ६३ विप्रोधीत्याप्नुयात्प्रज्ञांराजन्योंबुधिमेखलाम् ॥ वैश्योनिधिपतित्वंचशूद्रःशुद्ध्येतपातकात् ६४ कलिमलसंहतिकालनोखिलेशोहरिरितरत्रनगीयतेह्यभीक्षणम् ॥ इहतुपुनर्भगवानशेषमूर्तिःपरिपठितोनुपदंकथाप्रसंगैः ६५ स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ॥ व्यतनुतकृपयायस्तत्वदीपंपुराणंतमखिलवृजिनघ्नंव्याससूनुंनतोस्मि ६६ तमहमजमनंतमात्मतंत्रंजगदुदयस्थितिसंयमात्मशक्तिम् ॥ द्युपतिभिरजशक्रशंकराद्यैर्दुरवसितस्तवमच्युतंनतोस्मि ६७ उपचितनवशक्तिभिःस्वआत्मन्युपरचितस्थिरजंगमपालनाय ॥ भगवतउपलब्धिमात्रधाम्नेसुरऋषभायनमःसनातनाय ६८ इतिश्रीभागवतेमहापुराणेद्वादशस्कंधेपारमहंस्यांसंहितायांप्रतिसंक्रमणलक्षणंनामद्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

पुराणं व्यतनुतव्याख्ययाविस्तृतवान्तंव्याससूनुंशुकंनतोस्मि ६६ गुरुनमस्कारानंतरंतदुपदिष्टस्वरूपंश्रीनारायणंनमति तमिति योभागवतस्याद्यपद्यमारभ्यप्रतिपादितस्तंनतोस्मीत्यन्वयः ज
गदुदयादिषुआत्मशक्तिस्वरूपशक्तिं आत्मतंत्रंस्वतंत्रं अजंसर्वज्ञंदेहवत्त्वएवज्ञानोत्पत्तेःअस्यतदभावात्स्वज्ञानेनैवसर्वंजानातीतिदेशतःकालतोगुणतश्चानंतंद्युपतिभिर्ज्ञानपतिभिरजशंकराद्यैःदुरवसि
तस्तवंअनिश्चितस्तुतिं अच्युतंमायानिमित्तच्युतिरहितम् ६७ उपचितनवशक्तिभिः मूलप्रकृतिमहदहंकारमनःपंचभूताख्यनवशक्तिभिः आत्मनिस्वाधारतयाउपरचितयोः स्थिरजंगमयोःपालनंये
नसतथातस्मै उपलब्धिमात्रधाम्नेकेवलज्ञानस्वरूपाय सुरऋषभायदेवोत्तमाय सनातनायसदातनाय शब्दमात्रैकविषयायनमः अनेनश्लोकद्वयेनजन्माद्यस्ययइत्यादेरर्थोदर्शितइति ६८ ॥ सत्यंज्ञा
नमनंतमच्युतमजंनिर्दुःखसौख्योदधिनिर्दोषामितवेदवेदितमहंवंदेमुकुंदंसदा ॥ यद्भक्त्याकमलाब्जजेरगिरिशानंतादिदेवाःपदसायुज्यंप्रसरंत्यनेकविधयासत्योविरत्याचतम् १ व्याख्याभागवतस्य

कृष्णरचितात्वत्प्रीतिकामात्मनाभीतश्चेत्प्रददासितत्प्रतिनिधिंबध्नीन्वारिष्येवरान् ॥ माद्विंकंकचनतांतवधृतिभवपादारविंदात्मनासंसक्तिसुखनीर्थशास्त्रविजराहारस्यपारंतया २ पदरत्नावलीकंठेराजतांहिसुरद्विषः । वनमालेवमालेवमौक्तिकीकृष्णवल्लभा ३ ॥ इतिश्रीमन्महेंद्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थयतीन्द्रकृतायांश्रीमद्भागवतटीकायांपदरत्नावल्यांद्वादशस्कंधेद्वादशोऽध्यायः ॥ १२ ॥ स्तवैर्वेदैश्चस्तुन्वंतिस्तुवंति उपनिषच्छब्दस्याकारांतत्वं ध्यानेनावस्थितंनिश्चलंतद्गतंयन्मनस्तेनयस्यांतंनविदुःसुरासुरगणाः १ पृष्ठेभ्राम्यत्अमंदोगरिष्ठोमंदरगिरिस्तस्यग्रावाणस्तेषामग्राणितैःकंडूयनात्सुखेनानिद्रालोःनिद्राशीलस्य येषांश्वासानिलानांसंस्कारास्तेषांकलाश्चलेशास्तदनुवर्तनवशात् जलनिधेरंभसांयातायातंनविश्राम्यति ननुसमुद्रक्षोभादेवतन्नसंस्काररवशात्तत्राह वेलाक्षो

सूतउवाच ॥ यंब्रह्मावरुणेंद्ररुद्रमरुतस्तुन्वंतिदिव्यैस्तवैर्वेदैःसांगपदक्रमोपनिषदैर्गायंतियंसामगाः ॥ ध्यानावस्थिततद्गतेनमनसापश्यंतियंयोगिनोयस्यांतंनविदुःसुरासुरगणादेवायतस्मैनमः १ पृष्ठेभ्राम्यदमंदमंदरगिरिग्रावाग्रकंडूयनान्निद्रालोःकमठाकृतेर्भगवताश्वासानिलाःपांतुवः ॥ यत्संस्कारकलानुवर्तनवशाद्वेलानिलेनांभसांयातायातमतंद्रितंजलनिधेर्नाद्यापिविश्राम्यति २ पुराणसंख्यासंभूतिमस्यवाच्यप्रयोजने ॥ दानंदानस्यमाहात्म्यंपाठादेश्चनिबोधत ३ ब्राह्मंदशसहस्राणिपाद्मंपंचोनषष्टिकम् ॥ श्रीवैष्णवंत्रयोविंशच्चतुर्विंशतिशैवकम् ४ दशाष्टौश्रीभागवतंनारदंपंचविंशतिः ॥ मार्कंडेयंनवाग्नेयंदशपंचचतुःशतम् ॥ चतुर्दशभविष्यंस्यात्तथापंचशतानिच ५ दशाष्टौब्रह्मवैवर्तंलिंगमेकादशैवतु ६ चतुर्विंशतिवाराहमेकाशीतिसहस्रकम् ॥ स्कांदंशतंतथाचैकंवामनंदशकीर्तितम् ७ कौर्मंसप्तदशख्यातंमात्स्यंतच्चचतुर्दश ॥ एकोनविंशत्सौपर्णंब्रह्मांडंद्वादशैवतु ८ एवंपुराणसंदोहश्चतुर्लक्षउदाहृतः ॥ तत्राष्टादशसाहस्रंश्रीभागवतमिष्यते ९ इदंभगवतापूर्वंब्रह्मणेनाभिपंकजे ॥ स्थितायभवभीतायकारुण्यात्संप्रकाशितम् ॥ आदिमध्यावसानेषुवैराग्याख्यानसंयुतम् १० हरिलीलाकथाव्रातामृतानंदितसत्सुरम् ॥ सर्ववेदांतसारंयद्ब्रह्मात्मैकत्वलक्षणम् ॥ वस्त्वद्वितीयंतन्निष्ठंकैवल्यैकप्रयोजनम् ११ प्रौष्ठपद्यांपौर्णमास्यांहेमसिंहसमन्वितम् ॥ ददातियोभागवतंसयातिपरमांगतिम् १२ राजंतेतावदन्यानिपुराणानिसतांगणे ॥ यावन्नदृश्यतेसाक्षाच्छ्रीमद्भागवतंपरम् १३ सर्ववेदांतसारंहिश्रीभागवतमिष्यते ॥ तद्रसामृततृप्तस्यनान्यत्रस्याद्रतिःक्वचित् १४ निम्नगानांयथागंगादेवानामच्युतोयथा ॥ वैष्णवानांयथाशंभुःपुराणानामिदंतथा १५ क्षेत्राणांचैवसर्वेषांयथाकाशीह्यनुत्तमा ॥ तथापुराणव्रातानांश्रीमद्भागवतंद्विजाः १६

मस्तस्यनिभेनामिषेण २ पुराणसंख्यास्तासांसंभूतिंसमाहारंवा अस्यश्रीभागवतस्यवाच्यंविषयः प्रयोजनंदानंचतस्यपाठादेश्चमाहात्म्यंनिबोधत ३ त्रयोविंशत्त्रयोविंशतिः चतुर्विंशतिसहस्राणि शैवकंशिवपुराणम् ४ मार्कंडेयंनव वाह्नित्विविपाठः अग्निपुराणंदशपंचसहस्राणिचत्वारिंशतानि ५ ६ स्कांदंशताधिकैकाशीतिसाहस्रम् ७ सौपर्णंगरुडपुराणंएकोनविंशत्एकोनविंशतिः ८ पुराणानांसंदोहःसमूहःचतुःसंख्याकएव ९ १० हरिलीलाकथानांव्रातःसएवामृतंतेनानंदिताःसंतःसुराश्चयेनतत् तन्निष्ठंतद्विषयम् ११ प्रौष्ठपद्यांभाद्रपद्यांहेमसिंहसमन्वितंस्वर्णसिंहासनारूढम् १२ १३ तद्रसएवामृतंतेनतृप्तस्य १४ १५ १६

श्रीमद्भागवतंपुराणममलंयद्वैष्णवानांप्रियंयस्मिन्पारमहंस्यमेकममलंज्ञानंपरंगीयते ॥ यत्रज्ञानविरागभक्तिसहितंनैष्कर्म्यमाविष्कृतंतच्छृण्वन्विपठन्विचारणपरोभक्त्याविमुच्येन्नरः १७ कस्मैयेनविभासितोयमतुलोज्ञानप्रदीपःपुरातद्रूपेणचनारदायमुनयेकृष्णायतद्रूपिणा ॥ योगीन्द्रायतदात्मनाथभगवद्राताय कारुण्यतस्तच्छुद्धंविमलंविशोकममृतंसत्यंपरंधीमहि १८ नमस्तस्मैभगवतेवासुदेवायसाक्षिणे ॥ यइदंकृपयाकस्मैव्याचचक्षेमुमुक्षवे १९ योगीन्द्रायनमस्तस्मैशुकायब्रह्मरूपिणे ॥ संसारसर्पदष्टंयोविष्णुरातममूमुचत् २० भवेभवेयथाभक्तिःपादयोस्तवजायते ॥ तथाकुरुष्वयोगेशनाथस्त्वंमेयतःप्रभो २१ नामसंकीर्तनंयस्यसर्वपापप्रणाशनम् ॥ प्रणामोदुःखशमनस्तंनमामिहरिंपरम् २२ ॥ इतिश्रीमद्भागवतेमहापुराणेपारमहंस्यांसंहितायांवैयासिक्यामष्टादशसाहस्र्यांसंहितायांद्वादशस्कंधेवमृतोक्तौत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ ५४ ॥ ॥ ॥ ६५ ॥

१ ब्रह्मस्वब्रह्मरूपेण २ तस्मिन्नारदेनारदरूपमस्या स्तीतित द्रूपीतेनस्वात्मदेव ३ व्यनाय ४ तदात्मनात्मनात्मना ५ अथ गुरुरथशुकरूपेणः

# विक्रीस तयार.

खालीं लिहिलेले ग्रन्थ चांगल्या जाड कागदावर मोठया सुन्दर टायपानीं आह्मीं छापिलेले विक्रीस तयार आहेत, प्रत्येक ग्रन्थाच्या दरएक अध्यायापूर्वी उत्कृष्ट चित्रें दिलीं आहेत, व प्रत्येक पृष्ठाखालीं कठीण शब्दाचे अर्थ दिले आहेत.

## प्राकृत.

| ग्रन्थ | रु. | आ. |
|---|---|---|
| एकनाथी भागवत..................रु. | ४ | ८ |
| जैमिनी अश्वमेध .. .................. | ३ | ८ |
| संतलीलामृत ....... ......... ... .. | १ | १२ |
| नाथलीलामृत. ......... ..... ...... | २ | ० |
| पांडवप्रताप......... ................ | ३ | ० |
| भक्तविजय ....... ............... .. | २ | ८ |
| हरिविजय ............................ | १ | ६ |
| रामविजय ............................ | १ | ६ |
| काशीखंड ............................ | ३ | ८ |
| दासबोध ....... ... ............. .. | १ | १२ |
| कथासारामृत ......... .. ........... | २ | ८ |
| शिवलीलामृत .. ............... .. | ० | ८ |
| शनिमाहात्म्य ... ....... ......... | ० | २ |
| व्यङ्कटेशस्तोत्र ..................... | ० | १ |
| सिंहासनबत्तिशी .. .. ........ ...... | ० | ३ |
| उपयुक्त सर्वसंग्रह ( ४० विषय ).. | १ | ४ |
| गणेशप्रताप.. ............ ........ | ३ | ० |
| वेषधारीपंजाबी ( कादंबरी ) ...... | १ | १ |
| विक्रमचरित्र ......... ....... | ० | १० |
| सटीक... | ० | १० |

## संस्कृत.

| ग्रन्थ | रु. | आ. |
|---|---|---|
| वाल्मीकि रामायण, सटीक . . रु. | १२ | ० |
| सुन्दरकाण्ड, वाल्मीकिरामायण ... | १ | ० |
| रामायणमाहात्म्य .. .. .. | ० | ८ |
| श्रीमद्विष्णुपुराण सटीक ... ... .. | ३ | ० |
| पौषमासमाहात्म्य .. . ... . ...... | ० | ६ |
| माघमासमाहात्म्य ........... ...... | ० | १० |
| फाल्गुनमासमाहात्म्य. ........ ... . | ० | ८ |
| मार्गशीर्षमासमाहात्म्य ...... ....... | ० | ६ |
| ज्येष्ठमासमाहात्म्य ... ...... ........ | ० | ६ |
| आषाढमासमाहात्म्य............. .. | ० | ६ |
| श्रावणमासमाहात्म्य .. .......... | ० | ८ |
| कार्तिकमासमाहात्म्य............. .. | ० | ८ |
| मलमासमाहात्म्य. ... ... ... . | ० | ६ |
| मेघदूत .. . ... ... | ० | ३ |
| समासचन्द्रिका.......................... | ० | १ |
| समासचक्र. .......................... | ० | १ |
| शब्दरूपावली .......... .. . .. | ० | २ |
| शंकरानंदगीतकम् टिप्पणीसहितम् .. . | ० | ६ |
| संतोपाख्यानरामायण ............. .... | १ | ८ |

## संस्कृत.

| ग्रन्थ | रु. | आ. |
|---|---|---|
| अमरमार ( संस्कृत इंग्रेजी आणि इंग्रेजी संस्कृत कोश ) .. ... ... .. रु० | १ | ० |
| धातुरूपावली . . ... . ... ...... | ० | ३ |
| ग्रन्थरत्नमाला ( मासिक पुस्तक ) वर्षाची वर्गणी... . ..... ..... | ४ | ० |
| श्रीभानुदत्तस्य-रसतरङ्गिणीं टिप्पणीस० | ० | १० |
| श्रीनागनाथस्य-भावशतक टिप्पणीस० | ० | ४ |
| शङ्कराचार्यस्य-सुन्दरलहरी टिप्पणीयुता. | ० | ४ |
| अध्यात्मप्रदीपिका पाठान्तरैः समेता | ० | ६ |
| भागवतचम्पू टिप्पणीसमेता ...... . | १ | ४ |
| कटाक्षशतकम् टिप्पणीयुतम् ........ | ० | ४ |
| कामाक्षिस्तुतिशतकम् . ............. | ० | ४ |
| कृष्णामृततरङ्गिका सटीका........ . | ० | ४ |
| प्रश्नोत्तररत्नमाला सटीका .. ... .. | ० | ३ |
| प्रशस्तिकाशिका ...... . ......... .. | ० | ६ |
| विष्णुसहस्रनाम शङ्कराचार्यकृत भाष्यास० | ० | ८ |
| हलायुधस्य कविरहस्यम् . | ० | ८ |
| शुकविरचित निर्वाणाष्टकम् .. . | ० | २ |
| भार्गवचम्पू. टिप्पणीसमेता ......... | ० | ८ |

## संस्कृत.

| ग्रन्थ | रु. | आ. |
|---|---|---|
| श्रीनिवासचम्पूः टिप्पणीसमेता ... रु० | १ | ५ |
| सुभाषितरत्नाकरः ... .. . .... | २ | [illegible] |
| आर्याशतक टिप्पणीयुतम .. | ० | [illegible] |
| अम्बाष्टक सटीकम् ...... . . . | ० | २ |
| नृसिंहपुराण टिप्पणीयुतम् .. | १ | ८ |
| चौरपञ्चाशिका .. . .. | ० | २ |
| सिद्धांतचन्द्रिका सटीका.. .. ... | ० | [illegible] |
| कलिविडंबन. ............ ...... | ० | २ |
| सटीकसचूर्णिकश्रीमद्भागवतं .. . . | १२ | [illegible] |
| रसतरङ्गिणी टिप्पणीसमेता . ... . | ० | १० |
| गीतगौरीपतिसटीक . ...... .... | ० | १२ |
| नाटवाटप्रहसनं टिप्पणीसमेतं .. ... | ० | ६ |
| उत्तररामचरित्रचम्पू टिप्पणीसमेता.. | ० | १० |
| धर्मविजयनाटकं छायासमेत ... . | ० | १[illegible] |
| श्रीवाग्भट अलंकारशास्त्रं टिप्पणीसमेतम् | १ | [illegible] |
| सूर्यसहस्रनामावली. . . ............ | ० | २ |
| देवीसहस्रनामावली ....... . .. . | ० | २ |
| गणेशसहस्रनामावली .. ............ | ० | २ |
| शिवसहस्रनामावली ................ | ० | २ |

॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यश्रीविजयध्वजतीर्थमुनीन्द्रप्रणीतया पदरत्नावल्याख्यया व्याख्यया समेतम् ।

वैराजस्थऐनापुरेउपाख्यबाळाचार्यतनूजन्मन उद्धवाचार्यतः पित्रेउपाख्यकृष्णशास्त्रितश्च संशोध्य.

"गोपाळनारायणकम्पनी" नामजनताधिपेन विनायकनारायण इत्याख्येन मुम्बय्यां स्वकीये मुद्रायन्त्रेऽङ्कित्वा प्रकाशितम् ।

शके १८१४ ख्रिस्ताब्दे १८९२.

## संस्कृत.

| पुस्तक | रु. | आ. |
|---|---|---|
| विष्णुसहस्रनाम | रु० ० | १॥ |
| विष्णुसहस्रनामावली | ० | २ |
| कृष्णभक्तिचन्द्रिका | ० | ९ |
| वैद्यमनउत्सव | ० | ७ |
| कुवलयाश्वविलासः | १ | ० |
| नीतिवाक्यामृतम् | १ | ० |
| राघवपान्डवीयंसटीकम् | २ | ० |
| राधाविनोद सटीक | ० | २ |
| रामार्यगुच्छा | ० | २ |
| भागीरथीचम्पूः | १ | ४ |
| षट्पदमञ्जरी सटीक | ० | ४ |
| धातुकारिकावली | ० | २ |
| भाद्रपदमासमाहात्म्य | ० | १० |
| वैशाखमासमाहात्म्य | ० | ८ |
| रघुवंश इंग्रजीभाषांतरासहित | २ | १२ |
| सप्तशती रेशमी | ० | ५ |
| भगवतगीतारेशमी | ० | ६ |
| हरिवंशसटीक | ६ | ० |
| अध्यात्मरामायणसटीक | २ | ० |
| सत्यगणपतिव्रतकथा | ० | ४ |
| चातुर्मासमाहात्म्य | ० | ८ |
| गायत्रीपुरश्चरण | ० | ४ |
| चैत्रमासमाहात्म्य | ० | १२ |
| रतिमन्मथनाटक छायासमेतम् | ० | १० |
| मुद्गलाचार्यकृतआर्यासटीक | ० | १० |

## संस्कृत.

| पुस्तक | रु. | आ. |
|---|---|---|
| भामिनीविलासः सटीकः | रु० १ | ० |
| महाभारत सटीक | ४० | ० |
| श्रीकृष्णजन्मखंड | १ | ८ |
| देवीभागवत | ७ | ० |
| गीताश्रीधरी टीका | १ | ४ |
| ऋग्वेदसंहिता | ४ | ० |
| ऋग्वेद सायनाचार्यकृतभाष्यासहीत | ५० | ० |
| धर्मसिंधु | ३ | ० |
| विजयध्वजी भागवत | १० | ० |
| स्तोत्ररत्नाकर | १ | ० |
| बोधायनसनिर्णयप्रयोगमाला | ६ | ० |
| मार्कंडेय पुराण | ४ | ८ |
| ऋग्वेदी ब्रह्मकर्म | ३ | ८ |
| हिरण्यकेशी ब्रह्मकर्म | ४ | ० |
| व्रतराज टिप्पणीसहीत | ५ | ० |
| पंचदशी सटीक | ३ | ० |
| यजुर्वेद ( तैत्तिरेयकृष्ण ) सहिता | ३ | ० |
| योगवासिष्ठ सटीक | २० | ० |
| अमरकोश सटीक | १ | ० |
| हटयोगप्रदीपिका सटीक | २ | ८ |
| बृहज्जातक सटीक | २ | ० |
| वीरसिंहावलोकन | १ | १२ |
| शंकरानंदीगीता | ५ | ० |
| सतोपस्यानरामायण | २ | ८ |
| महाशिवपुराणम् सटीकम् | १६ | ० |

## संस्कृत.

| पुस्तक | रु. | आ. |
|---|---|---|
| श्रीमद्भागवतं विजयध्वजीसं० | रु० १० | ० |
| आनन्द रामायणम् | ५ | ० |
| श्रीमद्भागवतं गुटकात्मकं | ३ | ८ |
| गरुडपुराणं ( प्रेतकल्पः ) सटीकम् | १ | ० |
| स्तोत्ररत्नाकर | १ | ० |
| सिद्धान्तकौमुदी | २ | ८ |
| क्रियापद प्रकाशः | ० | १२ |
| रामाश्वमेध | २ | ८ |
| कथासरित्सागर | ६ | ० |
| कुवलयानन्द सटीक | १ | ८ |
| दशकुमार चरित्र | १ | ८ |
| पञ्चदशी सटीक | ३ | ० |
| गीतगोविन्द सटीक | १ | ० |
| श्रीवेङ्कटेश महात्म्य | ५ | ० |
| कुमार सम्भव | २ | ० |
| मध्वविजयमूळ | ० | १२ |
| भोजचम्पू | १ | ० |
| अमरकोशमूळ | ० | [illegible] |
| मध्वविजय सटीक | ५ | ० |
| अनुभूति प्रकाश | २ | ४ |
| अमरकोश ( रामाश्रमी टीका ) | ५ | ० |
| बाणकृत कादंबरी सटीक | ५ | ० |
| रामाश्वमेध | ३ | ८ |
| किरातार्जुनीय काव्य | १० | [illegible] |

## संस्कृत

| पुस्तक | रु. | आ. |
|---|---|---|
| गीतामधुसुदनी टीका | [illegible] | [illegible] |
| गीतामृततरङ्गिणी भाषाटीका | [illegible] | ४ |
| बृहज्ज्योतिषार्णव सटीक | ३ | [illegible] |
| सर्वार्थचिंतामणि | [illegible] | १२ |
| भोजप्रबंध | ० | ८ |
| शाकुन्तलनाटक सटीक | २ | ४ |
| पञ्चरत्नीगीता | ० | ५ |
| लघुकौमुदी | ५ | ८ |
| हितोपदेश | ० | [illegible] |
| नलचम्पू सटीक | २ | |
| रघुवंश सटीक | १ | |
| तर्कसंग्रह | [illegible] | |
| साम्बपुराण | २ | [illegible] |
| गर्गसंहिता | ५ | [illegible] |
| एकादशीमाहात्म्य | ० | १० |
| संस्कार भास्कर | ३ | [illegible] |
| चिकित्साक्रमकल्पवल्ली | ३ | [illegible] |

याखेरीज आमुचे बुकडीपोंत मराठी, इङ्ग्रजी संस्कृत, गुजराथी, हिन्दुस्थानी, शालोपयोगी, इत्यादि सर्व प्रकारची पुस्तकें माफक दराने मिळतील.

गोपाळ नारायण आणि कंपनी,